नमो नमो निम्मल दंसणस्स

पंचम गणधर श्री सुधर्मास्वामिने नमः

# ३५/१ बृहत्कल्प -छेदसूत्रम्

## सटीकं

[द्वितीयं छेद सूत्रम्]

पीठिका एवं मू. ७ पर्यन्त : उद्देशकः -१-

[भद्रबाहुस्वामि रचितं मूलं (स्वोपज्ञनिर्युक्तियुक्तं) + संघदासगणि विरचितं भाष्यं + मलयगिरि आचार्य एवं क्षेमकीर्ति आचार्य विरचिता वृत्तिः]

### बृहत्कल्प - पीठिका

॥ १ ॥ प्रकटीकृतनिःश्रेयसपदहेतुस्थविरकल्प-जिनकल्पम् ।
नम्राशेषनरा-ऽमरकल्पितफलकल्पतरुकल्पम् ॥

॥ २ ॥ नत्वा श्रीवीरजिनं, गुरुपदकमलानि बोधविपुलानि ।
कल्पाध्ययनं विवृणोमि लेशतो गुरुनियोगेन ॥

॥ ३ ॥ भाष्यं क चाऽतिगम्भीरं ?, क्व चाऽहं जडशेखरः ।
तदत्र जानते पूज्या, ये मामेवं नियुञ्जते ॥

॥ ४ ॥ अद्‌भुतगुणरत्ननिधौ, कल्पे साहायकं महातेजाः ।
दीप इव तमसि कुरुते, जयति यतीशः स महातेजाः ॥

**वृ-** इह शिष्याणां मङ्गलबुद्धिपरिग्रहाय शास्त्रस्याऽऽदौ मध्येऽवसाने चावश्यं मङ्गलमभिधातव्यम्, यत आदिमङ्गलपरिगृहीतानि शास्त्राणि परगामीनि भवन्ति, मध्यमङ्गलपरिगृहीतानि शिष्यबुद्धिव्यारोपितानि स्थिरपरिचितान्युपजायन्ते, पर्यन्तमङ्गल-समलङ्कृतानि शिष्य-प्रशिष्यपरम्परागमनतः स्फातीभवन्ति । उक्तं च-

तं मंगलमादीए, मज्झे पज्जंतए य सत्थस्स ।
पढमं सत्थत्थाविग्घपारगमनाय निद्दिट्ठं ॥
तस्सेव य थेज्जत्थं, मज्झिमयं अंतिमं पि तस्सेव ।
अव्वोच्छित्तिनिमित्तं, सिस्स-पसिस्सादिवंसस्स ॥

**वृ-** तत्राऽऽदिमङ्गलं पापप्रतिषेधकत्वादिदं सूत्रम्- "नो कप्पइ निग्गंथाण वा निग्गंथीण वा आमे तालपलंबे अभिन्ने पडिगाहित्तए" (मू १) इति, मध्यमङ्गलं "कप्पति निग्गंथाण वा निग्गंथीण वा पुरत्थिमेणं जाव अंगमगहातो इत्तए" एवमादि, पर्यवसानमङ्गलं "छव्विहा कप्पट्ठिती पन्नत्ता" इत्यादि । तच्च मङ्गलं चतुर्धा वक्ष्यमाणस्वरूपम् । तत्र यद् नोआगमतो भावमङ्गलं तद् द्विविधं सूत्रभणितं सूत्रस्पर्शिकनिर्युक्तिभणितं च, भाष्यभणितमित्यर्थः, सूत्रस्पर्शिकनिर्युक्तेर्भाष्यस्य

च सम्प्रत्येकग्रन्थत्वेन जातत्वात् । अथ कः सूत्रमकार्षीत् ? को वा निर्युक्तिम् ? को वा भाष्यम् ? इति, उच्यते-

इह पूर्वेषु यद् नवमं प्रत्याख्याननामकं पूर्वं तस्य यत् तृतीयमाचाराख्यं वस्तु तस्मिन् विंशतितमे प्राभृते मूलगणेषूत्तरगुणेषु चापराधेषु दशविधमालोचनादिकं प्रायश्चित्तमुपवर्णितम्, कालक्रमेण च दुःषमानभावतो धृति-बल-वीर्य-बुद्ध्या-ऽऽयुःप्रभृतिषु परिहीयमानेषु पूर्वाणि दुरवगाहानि जातानि, ततो 'मा भूत् प्रायश्चित्तव्यवच्छेदः' इति साधूनामनुग्रहाय चतुर्दशपूर्वधरेण भगवता भद्रबाहुस्वामिना कल्पसूत्रं व्यवहारसूत्रं चाकारि, उभयोरपि च सूत्रस्पर्शिकनिर्युक्ति । इमे अपि च कल्प-व्यवहारसूत्रे सनिर्युक्तिके अल्पग्रन्थतया महार्थत्वेन च दुःषमानुभावतो हीयमानमेधा-ऽऽयुरादिगुणानामिदानीन्तनजन्तूनामल्पशक्तीनां दुर्ग्रहे दुरवधारे जाते, ततः सुखग्रहण-धारणाय भाष्यकारो भाष्यं कृतवान्, तच्च सूत्रस्पर्शिकनिर्युक्त्यनुगतमिति सूत्रस्पर्शिकनिर्युक्तिर्भाष्यं चैको ग्रन्थो जातः । एष शास्त्रस्योपोद्घातः । अनेन चोपोद्घातेनाभिहितेन सूत्रादयोऽर्था अतिव्यक्ता भवन्ति, यथा दीपेनाऽपवरके तमसि । उक्तं च-

वत्तीभवंति दव्वा, दीवेण [illegible] ।
वत्तीभवंति अत्था, उवघाएणं तहा सत्थे ॥

उपोद्घाताभिधानमन्तरेण पुनः शास्त्र स्वतोऽतिविशिष्टमपि न तथाविधमुपादेयतया विराजते, यथा नभसि मेघच्छन्नश्चन्द्रमाः । उक्तं च-

मेघच्छन्नो यथा चन्द्रो, न राजति नभस्तले ।
उपोद्घातं विना शास्त्रं, न राजति तथाविधम् ॥

तत्र सूत्रभणितं "नो कप्पति निग्गंथाण वा निग्गंथीण वा आमे तालपलंबे" इत्यादि । सूत्रस्पर्शिकनिर्युक्तिभणितमिदम्-

[भा.१] काऊण नमोक्कारं, तित्थयराणं तिलोगमहियाणं ।
कप्पव्ववहाराणं, वक्खाणविहिं पवक्खामि ॥

वृ- 'कृत्वा' विधाय 'नमस्कारं' प्रणामम्, केभ्यः ? इत्याह-'तीर्थकरेभ्यः' तीर्यते संसार-समुद्रोऽनेनेति तीर्थं-द्वादशाङ्गं प्रवचनं तदाधारः सङ्घो वा, तत्करणशीलास्तीर्थकरास्तेभ्यः । गाथायां षष्ठी चतुर्थ्यर्थे प्राकृतत्वात् । उक्तं च- छट्ठिविभत्तीए भन्नइ चउत्थी इति ।

किंविशिष्टेभ्यः ? इत्याह-'त्रिलोकमहितेभ्यः' त्रयो लोकाः समाहृताः, समवसरणे त्रयाणामपि सम्भवात् । तथाहि-समागच्छन्ति भगवतां तीर्थकृतां समवरणेष्वधोलोकवासिनो भवनपतयः, तिर्यग्लोकवासिनो वानमन्तर-तिर्यक्पञ्चेन्द्रिय मनुष्य ज्योतिष्काः, ऊर्ध्वलोकवासिनः कल्पोपपन्नका देवाः । त्रिलोकेन महिताः-पूजिताः त्रिभिर्वा लोकैर्महितास्त्रिलोकमहितास्तेभ्यः । नमस्कारं कृत्वा किम् ? इत्याह-कल्पश्च व्यवहारश्च कल्प-व्यवहारौ तयोः 'व्याख्यानविधिम्' अनुयोगविधिं प्रकर्षेण भृशं वा वक्ष्यामि प्रवक्ष्यामि ननु कल्पो व्यवहारश्चेति द्वौ ग्रन्थौ, ततः 'कल्प-व्यवहारयोः' इति प्राप्तम्, कथमुच्यते 'कल्प-व्यवहाराणाम्' ? इति, अत आह भाष्यकृत्-

[भा.२] सज्झयपायवयणाण विभासा जत्थ जुज्जते जं तु ।
अज्झयणनिरुत्ताणि य, वक्खाणविही य अनुओगो ॥

वृ- मलयगिरिप्रभृतिव्याकरणप्रणीतेन लक्षणेन संस्कारमापादितं वचनं संस्कृतम्, प्रकृतौ भवं प्राकृतं स्वभावसिद्धमित्यर्थः, तेषां संस्कृत-प्राकृतवचनानां 'विभाषा' वैविक्त्येन भाषणं कर्त्तव्यम्। तच्चैवम्-

ए-ओकारपराइं, अंकारपरं च पायए नत्थि।
व-सगारमज्झिमाणि य, क-चवग्ग-तवग्गनिहणाइं ॥

अस्या इयमक्षरगमनिका-एकारपर ऐकारः, ओकारपर औकारः, अंकारपर अः इति विसर्जनीयाख्यमक्षरम्, तथा वकार-सकारयोर्मध्यगे चे अक्षरे श-षाविति, यानि च कवर्ग-चवर्ग-तवर्गनिधनानि ङ-ञ-ना इति, एतान्यक्षराणि प्राकृते न सन्ति ॥ तत एतैरक्षरैर्विहीनं यद् वचनं तत् प्राकृतमवसातव्यम्। एभिरेव ऐ औ अः श ष ङ ञ न इत्येवंरूपैरुपेतं संस्कृतम्। एषां संस्कृत-प्राकृतवचनानां विभाषा "जत्थ जुज्जते जं तु" 'यत्र' प्राकृते संस्कृते वा 'यद्' वचनम्-एकवचन-द्विवचनादि 'युज्यते' घटामटति तद् वक्तव्यम्। तत्र संस्कृते एकवचनं द्विवचनं बहुवचनं च भवति, यथा-वृक्षः वृक्षाः; प्राकृते त्वेकवचनं बहुवचनं वा, न तु द्विवचनम्, तस्य बहुवचननाभिधानात्, "बहुवयणेण दुवयणं" मिति वचनात्। ततः 'कप्पव्ववहाराण' मित्यदोषः॥

अथः ल्पशब्दस्य व्यवहारशब्दस्य च कोऽर्थः ? को वा तयोः कल्प-व्यवहाराध्ययनयोः प्रतिविशेषः ? तत आह-'अध्ययननिरुक्तानि च' वक्तव्यानि, निश्चितमुक्तं निरुक्तम्, अक्षरार्थ इत्यर्थः, अध्ययनयोः निरुक्तानि अध्ययननिरुक्तानि, तानि च वक्तव्यानि। तद्यथा-कल्पशब्दोऽनेकार्थाभिधायी-क्वचित् सामर्थ्ये, यथा-वर्षाष्टप्रमाणश्चरणपरिपालने कल्पः, समर्थ इत्यर्थः। क्वचिद् वर्णनायाम्, यथा-अध्ययनमिदमनेन कल्पितम्, वर्णितमित्यर्थः। क्वचिच्छेदने, यथा-केशान् कर्त्तर्या कल्पयति, छिनत्तीत्यर्थः। क्वचित् करणे क्रियायाम्, यथाकल्पिता मयाऽस्याऽऽजीविका, कृता इत्यर्थः। क्वचिदौपम्ये, यथा-सौम्येन तेजसा च यथाक्रममिन्दु-सूर्यकल्पाः साधवः। क्वचिदधिवासे, यथा-सौधर्मकल्पवासी शक्रः सुरेश्वरः। सक्तं च-

सामर्थ्ये वर्णनायां च, छेदने करणे तथा।
औपम्ये चाऽधिवासे च, कल्पशब्दं विदुर्बुधाः ॥

इह सर्वेष्वप्यर्थेषु गृह्यते, सर्वत्रापि घटमानत्वात्। तथाहि-सामर्थ्ये तावदेवम्-कल्पाध्ययनमधीत्यातीचारमलिनस्य साधोः समर्थ प्रायश्चित्तेन विशोधीमापादयितुम्। वर्णनेऽपि-यावन्तः प्रायश्चित्तप्रकारास्तान् वर्णयतीदमध्ययनम्; अथवा मूलगुणान् उत्तरगुणांश्च कल्पयति वर्णयतीति कल्पः। उक्तं च-

कप्पम्मि कप्पिया खलु, मूलगुणा चेव उत्तरगुणा य।
ववहारे ववहरिया, पायच्छित्ता-ऽऽभवंते य ॥

छेदनेऽपि-तपःशोधिमतिक्रान्तस्य पञ्चकादिच्छेदनेन पर्यायं छिनत्ति। करणेऽपि-यद् दत्तं प्रायश्चित्तं तत्र तथा प्रयत्नं करोति कल्पाध्ययवेत्ता यथा तत् पारं नयति; अथवा कल्पयति जनयत्याचार्यकमिति कल्पः, तथाहि-करोत्याचार्यकं कल्पाध्ययनवेत्ता सम्यगिति। औपम्येऽपिकल्पाध्ययनवेदनाद् भवति पूर्वधराणां कल्पः सदृश इति कल्पः, तथाहि-कल्पाध्ययनेऽधीते भवति पूर्वधरसदृशः प्रायश्चित्तविधावाचार्य। अधिवासेऽपि-कल्पाध्ययनवेत्ता

कल्पे मासकल्पे वर्षाकल्पे वा कारणमन्तरेण परिपूर्ण कारणवशत ऊनमतिरिक्तं वा, अथवा कल्पे स्थविरकल्पे जिनकल्पे वाऽधिवसतीति कल्पः ॥ तथा विधिवद् अवहरणाद् व्यवहारः, यदि वा विधिवद्वपाद् हरणाद्य व्यवहारः; यस्य नाऽऽभवति तस्य हायपति, यस्याऽऽभवति तस्मै ददाति व्यवहाराध्ययनवेत्तेति व्यवहार इत्यर्थः उक्तं च-

अत्थिय-पच्चत्थीणं, हाउं एकस्स ववति बीयस्स।
एएण उ ववहारो, अहिगारो एत्थ उ विहीए॥

तदेवं कल्पस्य व्यवहारस्य च पृथग् विभिन्नं निरुक्तमिति महान् प्रतिविशेषः ॥ "वक्खाणविहि" इत्यस्य व्याख्यानम् अनुयोग इति ॥

तत्र तमेव व्याख्यानविधिमभिधातुकाम इदमाह-

[भा.३] नंदी य मंगलट्ठा, पंचग कुग तिग दुगे य चोद्दसए।
अंगगयमनंगगए, कायव्व परूवणा पगयं॥

अनुयोगारम्भाय प्रशमतो मङ्गलार्थं नन्दिर्वक्तव्यः। सतु "पंचग" इति ज्ञानपञ्चकात्मानः। ज्ञानपमकं द्विकेन भेदेन व्यवस्थितम्, तद्यथा-प्रत्यक्षं च परोक्षं च। प्रत्यक्षस्य त्रिको भेदोऽवधिमन-पर्याय-केवलभेदात्, परोक्षस्य द्विक भेदः आभिनिबोधिकश्रुतभेदात्। तत्र श्रुतस्य चतुर्दशको भेदः। तथा कुतोऽपि विशेषात् श्रुतं 'अङ्गतमनङ्गगतं' अङ्गप्रविष्टमङ्गबाह्यं चेत्यर्थः। एतेषां पदानां प्ररूपणा कर्त्तव्या। ततः प्रकृतमभिधातव्यम्॥ तत्र "नंदी य मंगलट्ठा" इत्यस्य भावनार्थमाह-

[भा.४] नंदी मंगलहेउं, न यावि सा मंगलाहि वइरित्ता।
कज्जाभिलप्पनेया, अपुढो य पुढो य जह सिद्धा॥

वृ- 'नन्दि' ज्ञानपञ्चकरूपः 'मङ्गलहेतोः' मङ्गलनिमित्तं वक्तव्यः। आह यदि मङ्गलनिमित्तं नन्दिर्वक्तव्यः ततः स मङ्गलादेकान्तेन भिन्नः प्राप्तः, अन्यथा 'तदुत्पादननिमित्तं तस्योपादान'मिति व्यवहारानुपपत्तेः; उपादानं हि तस्य सिद्धस्य सतो भवति, उत्पाद्यं चाद्याप्यसिद्धम्, ततः कथमनयोरभेदः? किन्तु भेद एव; तत आह-न चापि 'सः' नन्दिर्मङ्गलाद् व्यतिरिक्तः, अपिशब्दाद् व्यतिरिक्तोऽपि स्यादव्यतिरिक्त इत्यर्थः। कथमेतच्छ्रद्धेयम्? इति चेत्, अत आह- "कज्जे" त्यादि। यथा कार्या-ऽभिलाप्य-ज्ञेयानि कारणा-ऽभिलाप-ज्ञानेभ्यः पृथक्त्वा-ऽपृथक्त्वसिद्धानि तथा नन्देर्मङ्गलमपि। तथाहि-कार्यं पटः, कारणं तन्तवः, तत्र तन्तव एव पुरुषव्यापारम-पेक्ष्याऽऽ-तानवितानभावेन परिणममानाः पटकार्यरूपतया परिणमन्ते, तेषु च तथापरिणतेषु सत्सु नकार्य-कारणयोर्भेदः किन्तु अभेदः; एवमिहापि नन्दिर्ज्ञानपञ्चकाभिधानरूप उत्तरत्तरशुभाध्यवसाय-विशेषसम्भवसव्यपेक्षतर-तमभावेन परिणममानो वाञ्छिताधिगतिलक्षणमङ्गलरूपतया परिममत इति नन्दि-मङ्गलयोरभेदः। प्राचीनां त्ववस्थामपेक्ष्य भेदः, यथा तन्तुभ्यः पटस्य। तथाऽभिलापशब्देन कदाचिदभिलाप्यस्याभिलाप्यमानता उच्यते, 'अभिलपनमभिलापः' इति व्युत्पत्तेः; कदाचित् तद्वाचकशब्दः, 'अभिलाप्यते वस्त्वभिलाप्यमनेने'ति व्युत्पादनात्। तत्र यथाऽभिलाप्यमानतोच्यते तदाऽभिलापा-ऽभिलाप्ययोरभेदः, धर्म-धर्मिभावात्; यदा तु तद्वाचकशब्दस्तदा भेदः, शब्दा-ऽर्थयोर्भिन्नदेशस्थत्वाद् भिन्नस्वरूपत्वाच्च। ज्ञानशब्देनापि क्वचिद् ज्ञेयस्य ज्ञानमत्तोच्यते, 'ज्ञातिर्ज्ञान'मिति भावे व्युत्पादनात्; कदाचिदात्मधर्म, 'ज्ञायतेऽनेनेति ज्ञान'मिति करणे

व्युत्पत्तेः। तत्र यदा ज्ञायमानता तदा ज्ञान-ज्ञेययोरभेदः, धर्म-धर्मभावात्; यदा त्वात्मधर्मस्तदा भेदः, भिन्नस्वरूपत्वात्। एवमिहापि नन्दिशब्दो यदा भाववचनः 'नन्दनं नन्दि'रिति तदा नन्दनं-समृद्धीभवनं वाञ्छितस्याधिगतिरित्यनर्थान्तरम्, मङ्गलमपि चैवंस्वरूपमिति परस्परम भेदः; यदा तु प्राचीनावस्थामपेक्ष्य करणसाधनो नन्दिशब्दः 'नन्द्यतेऽनेनेति नन्दि'रिति तदा भेदः, कालभेदेन भेदादिति ॥ सम्प्रति नन्देर्मङ्गलस्य च प्ररूपणा कर्तव्या, तत्र मङ्गलशब्दोच्चारणमिति प्राक् मङ्गलवृद्धिहेतुर्भवतीति प्रथमतो मङ्गलशब्दस्य प्ररूपणामाह-

[भा.५]　　नामं ठवणा दविए, भावम्मि य मंगलं भवे चउहा।
　　　　एमेव होइ नंदी, तेसिं तु परूवणा इणमो ॥

**वृ-**मङ्गलं 'चतुर्धा' चतुःप्रकारं भवति, तद्यथा-नाममङ्गलं स्थापनामङ्गलं द्रव्यमङ्गलं भावमङ्गलं च। 'एवमेव' नानादिभेदेन चतुःप्रकारो भवति नन्दि। 'तेषां च' नाममङ्गलादीनाम् 'इयं' वक्ष्यमाणस्वरूपा प्ररूपणा ॥ तामेवाह-

[भा.६]　　एगम्मि अनेगेसु व, जीवद्व्वे वे तव्विवक्खे वा।
　　　　मंगलसन्ना नियता, तं सन्नामंगलं होइ ॥

**वृ-** एकस्मिन् जीवद्रव्ये 'तद्विपक्षे वा' अजीवद्रव्ये अनेकेषु वा जीवद्रव्येष्वजीवद्रव्येषु वा या मङ्गलमिति संज्ञा 'नियता' नियमिता तद् नाम-नामवतोरभेदोपचारात् 'संज्ञामङ्गलं' नाममङ्गलं भवति ॥ उक्तं नाममङ्गलम्, स्थापनामङ्गलमाह-

[भा.७]　　जा मंगल त्ति ठवणा, विहिता सब्भावतो व असतो वा।
　　　　तत्थ पुण असब्भावे, मंगलठवणागतो अक्खो ॥

**वृ-** या मङ्गलमिति स्थापना 'सद्भावतो वा' सद्भूताकारनिवेशनेन 'असतो वा' सद्भूताकारस्याभावतो विहिता सा स्थापनामङ्गलम्। तत्र पुनरसद्भावे स्थापना मङ्गल-स्थापनागतोऽक्षः, उपलक्षणमेतद्, वराटकादिर्वा। इयमत्र भावना-अक्ष-वराटकादिषु या मङ्गलमिति स्थापना विहिता, न तत्र कश्चिन्मङ्गलानुगत आकार इत्यसद्भावतः स्थापनामङ्गलम्

[भा.८]　　जे चित्तभित्तिविहिया, उ घडादी ते य हुंति सब्भावे।
　　　　तत्थ पुन आवकहिया, इत्तंति जे देवलोगेसु ॥

**वृ.** ये तु चित्रभित्ती-चित्रकुड्ये विहिता घटादयः, आदिशब्दात् स्थालादिपरिग्रहः, ते 'सद्भावे' सद्भावतः स्थापनामङ्गलानि भवन्ति। तत्र ये देवलोकेषु चित्रभित्तौ विहिता घटादयस्ते स्थापनामङ्गलानि यावत्कथिकानि भवन्ति, अर्थादापन्नं यानि मनुष्यलोके तानीत्वराणि। यावत्कथिकानि नाम शाश्वतिकानि, इत्वराण्यशाश्वतानि ॥ द्रव्यमङ्गलमाह-

[भा.९]　　उत्तरगुणनिप्फन्ना, सलक्खणा जे उ होंति कुंभाई।
　　　　"तं दव्वमंगलं खलु, जह लोए अट्ठ मंगलगा ॥

**वृ-**इह उत्तरगुणनिष्पन्नत्वं मूलगुणनिष्पन्नापेक्षया, ततः प्रथमतस्तद् भाव्यते-मूलो नाम पृथिवीकायादिजीवः, तस्य गुणात्-प्रयोगात् पुद्गलानां द्रव्यादित्वेन व्यापारणाद् निष्पन्नं मूलगुणनिष्पन्नं मृद्रव्यादि। तस्मादुत्तरगुणेन-परापरप्रयोगेण चक्र-दण्ड-सूत्रोदकादिपुरुष-प्रयत्नेनेत्यर्थः, ये निष्पन्नाः 'सलक्षणाः' लक्षणसम्पन्नाः "अच्छिद्रा अखण्डा वारिपूर्णा

पद्मोत्पलप्रतिच्छन्नाः'' इत्यादिलक्षणोपेताः कुम्भादयः, आदिशब्दात् स्थालादिपरिग्रहः, तद् द्रव्यमङ्गलं भवति। यथा लोकेऽष्टौ मङ्गलानि॥

[भा.१०/१] नेगंतियं अनच्चंतियं च दव्वे उ मंगलं होइ।

वृ. तत् पुनरनन्तरोक्तं द्रव्यमङ्गलमनैकान्तिकमनात्यन्तिकं च भवति। तथाहि-न पूर्णकलश एकान्तेन सर्वेषां मङ्गलम्, येन चौरस्य कर्षकस्य च शकुनतया रिक्तं घटं प्रशंसन्ति शकुनविदः, गृहप्रवेशे पुनः पूर्णम्॥ उक्तं च-

चोरस्स करिसगस्स य, रित्तं कुड्यं जनो पसंसेइ।
गेहपवेसे मन्नइ, पुन्नो कुंभो पसत्थो उ॥

तत एवमनैकान्तिकम्। नाप्यात्यन्तिकम्, यथा कोऽपि शोभनैर्द्रव्यमङ्गलैर्विनिर्गतः, तेन चाग्रे किञ्चिदशोभनं दृष्टम्, येन तानि सर्वाण्यपि प्राक्तनानि प्रतिहतानि, तत एवमनात्यन्तिकमिति। उक्तं द्रव्यमङ्गलम्, अधुना भावमङ्गलमाह-

[भा. १०/२] तव्विवरीयं भावे, तं पि य नंदी भगवती उ॥

वृ- 'तद्विपरीतम्' ऐकान्तिकमात्यन्तिकं च 'भावे' भावविषयं मङ्गलम्। तथाहि-न तत् भावमङ्गलं कस्यचिद्भवति कस्यचिन्न भवति, किन्तु सर्वस्याविशेषेण भवतीत्यैकान्तिकम्; न च केनाप्यन्येन प्रतिहन्यत इत्यात्यन्तिकम्। 'तच्च' भावमङ्गलं भगवान् नन्दिर्वक्ष्यमाणोऽवगन्तव्यः। गाथायां स्त्रत्वं प्राकृतत्वात्॥ आह यथा नामादीनि चत्वारि मङ्गले समवतारितानि तथा किमन्येष्वप्यवतार्यन्ते ? किं वा न ? इति, उच्यते-अवतार्यन्त, सर्वस्यापि चतुःप्रत्यवतारान्तर्गतत्वात्॥ एतदेवाह-

[भा.११] जह इंदो त्ति य एत्थं, तु मग्गणा होति नाममादीणं।
सव्वानुवायि सन्ना, ठवणादिपया उ पत्तेयं॥

वृ- यथा इन्द्र इति उक्ते 'अत्र' इन्द्रे नामादीनां चतुर्णां मार्गणा भवति। तथाहि-किमनेन नामेन्द्र उक्तः ? उत स्थापनेन्द्रः ? उत स्थापनेन्द्रः ? आहोस्विद् द्रव्येन्द्रः ? उताहो भावेन्द्रः ? इति। तथा सर्वत्रापि द्रष्टव्या। उक्तं च-

जत्थ य जं जाणिज्जा, निक्खेवं निक्खिवे निरवसेसं।
जत्थ वि य न जाणिज्जा, चउक्कयं निक्खवे तत्था॥

वृ-तत्र 'संज्ञा' नाम सर्वेषु-नाम-स्थापना-द्रव्य-भावेषु अनुपाति-अनुवर्तनशीलम्। तथाहि-नामेन्द्रोऽपि स्थापनेन्द्रोऽपि द्रव्येन्द्रोऽपि भावेन्द्रोऽपि च इन्द्र इत्यभधानेनाविशेषत उच्यते। स्थापनादीनि तु पदानि 'प्रत्येकं' स्वस्वव्यवस्थितानि, न परस्परमनुगमनशीलानि, ततो न नामप्रवृत्तिमात्रदर्शनतो नामेन्द्रप्रतिपत्तयः किन्तु भिन्नलक्षणवशात्॥ अतस्तल्लक्षणमाह-

[भा.१२] अत्ताभिप्पायकया, सन्ना चेयणमचेयणे वा वि।
ठवणादीनिरविक्खा, केवल सन्ना उ नामिंदो॥

वृ- चेतनेऽचेतने वा द्रव्ये या आत्माभिप्रायेण-स्वेच्छया इन्द्रप्रभृति संज्ञा कृता, साऽपि स्थापनादिसापेक्षा स्यादत आह-स्थापनादीनां-स्थापना-द्रव्य-भावानां निरपेक्षा, किमुक्तं भवति ? -यत्र स्थापनादीनामेकमपि नास्ति किन्तु 'केवला' एका संज्ञा तदर्थनिरपेक्षा स नामेन्द्रः॥

उक्तं नामेन्द्रलक्षणम्, अधुना स्थापनेन्द्रलक्षणमाह-

[भा.१३] सब्भावमसब्भावे, ठवणा पुण इंदकेउमाईया।
इत्तरमनित्तरा वा, ठवणा नामं तु आवकहं ॥

वृ- 'स्थापना' स्थापनेन्द्रः पुनः सद्भावेऽसद्भावे च 'इन्द्रकेत्वादिका' इन्द्रकेतुप्रभृतिको द्रष्टव्यः, अत्राऽऽदिशब्दादिन्द्रप्रतिमा-ऽक्ष-वराटकादिपरिग्रहः। इयमत्र भावना-या इन्द्र इति स्थापना अक्ष-वराटिकादिषु असदभावेन, या चेन्द्रकेत्विन्द्रप्रतिमादिषु सद्भावतः स स्थापनेन्द्रः॥ आह नाम-स्थापनयोः कः प्रतिविशेषः ? उच्यते- "इत्तर" इत्यादि। स्थापना इत्वरा अनित्वरा च भवति, यावद्रव्यभाविनी अथावद्द्रव्यभाविनी चेत्यर्थः; नाम पुनर्नियमात् 'यावत्कथिकं' यावद्रव्यभावि; एष प्रतिविशेषः ॥ द्रव्येन्द्रमाह-

[भा.१४] दव्वे पुन तल्लद्धी, जस्सातीता भविस्सते वा वि।
जो वा वि अनुवउत्तो, इंदस्स गुणे परिकहेइ ॥

वृ- 'द्रव्ये' द्रव्यविषयः पुनः इन्द्रो यस्य 'तल्लब्धि' इन्द्रलब्धि अतीता भविष्यति च स प्रतिपत्तव्यः। किमुक्तं भवति ? -यः पूर्वमिन्द्रत्वं प्राप्तो यश्च प्राप्स्यति स यथाक्रमं भूतभावत्वाद् भाविभावत्वाच्च द्रव्येन्द्रः। उक्तं च-

भूतस्य भाविनो वा, भावस्य हि कारणं तु यल्लोके।
तद् द्रव्यं तत्त्वज्ञैः, सचेतना-ऽचेतनं कथितम् ॥

यो वाऽपि इन्द्रस्य गुणान् परस्मै परिकथयति, परमनुपयुक्तः, सोऽपि द्रव्येन्द्रः, "अनुपयोगोद्रव्य" मिति वचनात् ॥ उक्तो द्रव्येन्द्रः, सम्प्रति भावेन्द्रमाह-

[भा.१५] जो पुन जहत्थजुत्तो, सुद्धनयाणं तु एस भाविंदो।
इंदस्स व अहिगारं, वियाणमाणो तदुवउत्तो ॥

वृ- यः पुनः 'यथार्थेन' यथावस्थितेनार्थेन परमैश्वर्यलक्षणेन "इदु परमैश्वर्ये" इति वचनात् साक्षादिन्द्रनाम-गोत्राणि कर्माणि वेदयत इत्यर्थः, स भावेन्द्रः। एषः 'सुद्धनयानां' शब्दादीनां यथावस्थितार्थग्राहकाणां वर्तमानविषयिकाणां सम्मतः, न शेषो नामेन्द्रादि। अथवा 'इन्द्रस्य इन्द्रसब्दस्य' 'अधिकारम्' अर्थं जानन् 'तदुपयुक्तः' तस्मिन्-इन्द्रशब्दार्थे उपयुक्तो भावेन्द्रः, "उपयोगो भावनिक्षेपः" इति वचनात् ॥ अत्र पर आह-

[भा.१६] न हि जो घडं वियाणइ, सो उ घडीभवइ ने य वा अग्गी।
नाणं ति य भावो त्ति य, एगट्ठमतो अदोसो त्ति ॥

वृ-न हि यो घटं विजानाति स घटीभवति, यस्य वा अग्निविज्ञानं सोऽग्नि, प्रत्यक्षविरोधात् ततो यदुक्तं "इंदस्स वाऽहिगारं विजाणमाणो तदुवउत्तो" इति तन्मिथ्या। अत्र सूरिराह-ज्ञानमिति भाव इति वा, चशब्दादध्यवसाय इति वा उपयोग इति वा एकार्थम् अतोऽदोषः। इयमत्र भावना-अर्था-ऽभिधान-प्रत्ययास्तुल्यनामधेयाः, तथाहि-घटोऽपि बाह्यो घट इत्युच्यते, घटशब्दोऽपि घट इति, घटज्ञानमपि घट इति; ज्ञानं च ज्ञानिनोऽपृथग्भूतम्, अतो घटज्ञान्यपि घट इत्युच्यते; अग्निज्ञान्यपि अग्निरित्यदोषः ॥ एतदेव भावयति-

[भा.१७] जमिदं नाणं इंदो, न व्वतिरिच्चति ततो उ तन्नाणी ।
तम्हा खलु तब्भावं, वयंति जो जत्थ उवउत्तो ॥

वृ- यद् इदं इन्द्र इति ज्ञानं तस्मान्न 'ज्ञानी' इन्द्रज्ञानी व्यतिरिच्यते । तस्माद् यो 'यत्र' इन्द्रादौ उपयुक्तः तस्य 'तद्भावं' इन्द्रादिभावं तत्त्वविदस्सूरयो वदन्ति ॥ ज्ञान-ज्ञानिनोरभेद एव कथं सिद्धः ? इति चेत्, उच्यते-विपक्षेऽनेकदोषप्रसङ्गात् । तमेवाह-

[भा.१८] चेयण्णस्स उ जीवा, जीवस्स उ चेयणाओ अन्नत्ते ।
दविर्य अलक्खणं खलु, हविज्ज न य बंधमोक्खा उ ॥

वृ- चैतन्यस्य जीवात् जीवात् चेतनाया अन्यत्वे 'द्रव्यं' जीवद्रव्यं 'अलक्षणं' "चेतनालक्षणो जीवः" इतिलक्षणरहितं भवेत् । चेतनाया घटादिवज्जीवादप्येकान्तव्यतिरिक्तत्वात् "लक्षणाभावे च लक्ष्यस्याऽप्यभावः" इति खरशृङ्गवदत्यन्तासन् जीवः । यश्चाऽत्यन्तासन् स न बध्यते, बन्धस्य वस्तुधर्मत्वात्; नाऽपि मुच्यते, बन्धाभावादिति बन्ध-मोक्षावपि न स्याताम् । अथ मन्येथाः 'अचेतनोऽपि स बध्यते मुच्यते च' इति तदप्ययुक्तम्, अचेतनानामप्येवं धर्मास्तिकायादीनां बन्ध-मोक्षप्रसक्तेः । तस्मात्साधूक्तम् "इन्द्रशब्दार्थं जानन् तदुपयुक्तो भावेन्द्रः" इति ॥

सम्प्रति नामेन्द्र-स्थापनेन्द्रयोः प्रकारान्तरेण प्रतिविशेषमभिधित्सुराह-

[भा.१९] जह ठवणिंदो थुव्वइ, अनुग्गहत्थीहिं तह न नामिंदो ।
एमेव दव्वभावे, पूयाथुतिलद्धिनाणत्तं ॥

वृ- यथा स्थापनेन्द्रो अनुग्रह एवार्थोऽनुग्रहार्थ स येषामस्ति तेऽनुग्रहार्थिनस्तैः वाग्भि स्तूयते पुष्पादिभिरर्च्यते च, न तथा नामेन्द्रो माणवकः । ततो महान् नामेन्द्र-स्थापनेन्द्रयोः प्रतिविशेषः । 'एवमेव' अनेनैव प्रकारेण द्रव्येन्द्रे भावेन्द्रे च पूजा-स्तुति-लब्धिभिर्नानात्वमवसातव्यम् । तद्यथा-द्रव्येन्द्रोऽपि नामेन्द्र इवाऽनुग्रहार्थिभि र्न स्तूयते नाऽपि पूज्यते, यस्तु भावेन्द्रः स स्थापनेन्द्र इव स्तूयते पूज्यते च; ततो द्रव्येन्द्र-भावेन्द्रयोरपि महान् प्रतिविशेषः । अन्यच्च द्रव्येन्द्र इन्द्रलब्धिहीनः, यस्तु भावेन्द्रः स तल्लब्धिसम्पन्नः । तथाहि-स सामानिकत्रायस्त्रिंशकादिपरिवृतो विशिष्टद्युतिमान् स्फीतं राज्यमनुभवति । उपयोगचिन्तायामपि भावेन्द्र उपयोगलब्धिमान्, द्रव्येन्द्र उपयोगलब्ध्या परित्यक्तः ॥ तदेवमुक्तः सर्वत्र चतुष्कनिक्षेपप्रदर्शनायेन्द्रशब्दस्य निक्षेपः । सम्प्रति प्रस्तुतमुच्यते-तत्र परः प्रश्नयति 'किमर्थं मङ्गलग्रहणम् ?' इति, आह-

[भा.२०] विग्घोवसमो सद्धा, आयर उवयोग निज्जराऽधिगमो ।
भत्ती पभावणा वि य, नियनिहिविज्जाइ आहरणा ॥

वृ- मङ्गले प्रकृते सति रोगादिविघ्नोपशमो भवति । तदुपशमे च प्रतिबन्धकाभावान्महता प्रबन्धेनाऽऽचार्येणाऽनुयोगः प्रारभ्यते । तथाऽनुयोगप्रारम्भे शिष्यस्य शास्त्रग्रहणे महती श्रद्धोपजायते । श्रद्धावतश्च शास्त्रवधारणे महानाऽऽदरः । कृतादरस्य शास्त्रविषयेऽनवरतमुपयोगः । यदा यदा चोपयोगस्तदा तदा सम्यग्ज्ञानत्वान्महती ज्ञानावरणीयस्य कर्मणो निर्जरा । ज्ञानावरणकर्मनिर्जरणाच्च स्फुटः स्फुटतरः शास्त्रस्याधिगमः । अधिगतशास्त्रस्य च गुरौ शास्त्र प्रवचने च निकृत्रिमा भक्तिरुल्लसति । ततः प्रभावना, तां दृष्ट्वाऽन्येषामपि तथा श्रद्धादीनां करणात् । यदि पुनर्न क्रियते मङ्गलं तत एषां विघ्नोपशमादिभावानामप्रसिद्धिः । अत्र 'उदाहरणानि'

दृष्टान्ता नृप-निधि-विद्यादयः, आदिशब्दाद् योगो मन्त्राश्च परिगृह्यन्ते । तत्रैवं नृपदृष्टान्तस्य भावना, यथा-कोऽपि पुरुषः कार्यार्थी राजानमधिगन्तुकामो मङ्गलभूतानि पुष्पादीन्यादाय तत्समीपमुपगच्छति । उक्तं च-

पुप्फपुडियाइ जं पइ, गोरसघडओ करेइ कज्जाइं ।
मणिबंधम्मि पयलिते, सानुग्गह होंति सव्वगहा ॥

उपगत्य चाऽञ्जलिं करोति, पादयोश्च प्रणिपतति, ततो राजा तुष्यति, तुष्टे च तस्मिन् यस्तदधीनोऽर्थः स सिध्यति । अथैवमुपचारं न करोति तदा न तुष्यति, तोषाभावे च तदधीनस्यार्थस्याप्रसिद्धि ॥ एवं निधिमुत्खनितुकामो विद्यां मन्त्रं वा साधयितुकामो यदि द्रव्य-क्षेत्र-काल-भावयुक्तमुपचारं करोति, तद्यथा-द्रव्यतः पुष्पादिषु, क्षेत्रतः स्मशानादिषु, कालतः कृष्णपक्ष-चतुर्दश्यादिषु, भावतः प्रतिलोमा-ऽनुलोमोपसर्गसहिते, तदा निधिं विद्यां मन्त्रं वा साधयति । द्रव्याद्युपचाराभावे ते निध्यादयो न सिध्यन्ति । तस्माद् यो यत्रोपचारः स तत्र कर्त्तव्यः ॥

एतदेवाह-

[भा.२१] जो जेन विना अत्थो, न सिज्झई तस्स तव्विहं करणं ।
विवरीय अभावेन य, न सिज्झई सिज्झई इहरा ॥

**वृ.** योऽर्थो येन विना न सिध्यति तस्य निष्पत्तये तद्विधं करणमवश्यमुपादातव्यम्, यथा घटं साधयितुकामेन चक्र-दण्ड-मृत्पिण्डादिकम् । यतो विपरीतैः करणैः सर्वथा करणानामभावेन च सोऽधिकृतोऽर्थो न सिध्यति, यथा घटं साधयितुकामस्य विपरीततुरि-वेमाद्युपकरणोपादाने सर्वथा चक्र-दण्ड-सूत्रोदकादीनामुपकरणानामभावे वा घटः । 'इतरथा' अविपरीतोपकरणसद्भावे सिध्यति, यथा घटं साधयितुकामस्य यथावस्थितानां चक्र-दण्ड-सूत्रोदकादीनामुपादाने घटम् । न सिध्यन्ति च मङ्गलमन्तरेण विघ्नोपशमादयो भावा इति मङ्गलोपादानं पुनरपि ॥

आह यदि शास्त्रस्याऽऽदि-मध्या-ऽवसानेषु मङ्गलम्, ततः सामर्थ्यादिदमायातम् 'अपान्तरालद्वयममङ्गलम्' इति, अत्राह-

[भा.२२] जयवि य तिट्ठाण कयं, तहि वि हु दोसो न बाहए इयरो ।
तिसमुब्भवदिट्ठंता, सेसं पि हु मंगलं होइ ॥

**वृ-** यद्यपि 'त्रिषु स्थानेषु' आदि-मध्या-ऽवसानरूपेषु कृतं मङ्गलं तथापि 'इतरः' अपान्तरालद्वयामङ्गलत्वलक्षणो दोषो न बाधते, तस्यैवाभावात् । कथमभावः ? इति चेत्, अत आह-"तिसमुब्भवे" त्यादि । त्रिभ्यः-गुड-समिति-घृतेभ्यः समुद्भवो यस्य स मोदकः तद्दृष्टान्तात् शेषमपि 'हुः' निश्चितं मङ्गलं भवति । इयमत्र भावना-मोदक इव सकलं शास्त्र त्रिधा विभज्यते, तत्राऽऽदिमो भाग आदिमङ्गलेन मङ्गलीकृतः, मध्यमो मध्यमङ्गलेन, अन्तिमोऽन्तमङ्गलेन, ततः कुतोऽपान्तरालद्वयामङ्गलत्वप्रसङ्गः ॥

स्यादेतत्, यदिदं शास्त्रमारब्धमेतदाऽऽदि-मध्या-ऽवसानेषु सर्वात्मना मङ्गलम् ततो यद्यन्यत् तस्य मङ्गलमुपादीयते तदाऽनवस्थाप्रसङ्गः-कृतेऽपि मङ्गले पुनरन्यन्मङ्गलमुपादेयम् विशेषाभावात्, तत्राऽप्यन्यदित्येवं मङ्गलानन्त्यप्रसक्तेः । अथ नन्दी मङ्गलम्, शास्त्र पुनरमङ्गलम्, केवलं तद् नन्द्या मङ्गलीक्रियते, नन्वेवं तर्हि यदा नन्दीव्याख्यानमकृत्वा शास्त्र व्याख्यातुमारभ्यते

तदा शास्त्रममङ्गलम्, अमङ्गलत्वाच्च न ज्ञानम्, ज्ञानाभावाच्च न कर्त्तव्यस्तस्याऽनुयोग इति, अत्राह-

[भा.२३] न वि य हु होयऽनवत्था, न वि य हु मंगलममंगलं होइ।
अप्पपराभिव्वत्तिय, लोणुण्हपदीवमादि व्व ॥

वृ- नाऽपि च 'हुः' निश्चितं भवत्यनवस्था, यतो नन्दी शास्त्रदनर्थान्तरभूता, शास्त्रं च स्वतः समस्तं मङ्गलम्, न च तस्य मङ्गलभूतस्य सतोऽन्यन्मङ्गलमुपादीयते, ततो नाऽनवस्था-प्रसङ्गः। यदापि नन्द्या व्याख्यानमकृत्वा शास्त्रमारभ्यते तदापि तच्छास्त्रं मङ्गलमिति तदमङ्गलं न भवति। एवंतावन्नन्द्या अनर्थान्तरतायाममङ्गलत्वमनवस्था च परिहृता। सम्प्रत्यर्थान्तरत्वमधिकृत्य परिह्रियते- यद्यपि शास्त्रदर्थान्तरभूता नन्दी तथाप्यमङ्गलत्वमनवस्था च न भवति, कथम् ? इत्याह-"अप्पपर" इत्यादि। नन्दी आत्मनापि मङ्गलं शास्त्रमपि च मङ्गलीकरोति, शास्त्र-मप्यात्मनाऽपि मङ्गलं नन्दीमपि च मङ्गलीकरोति। एवमात्म-पराभिव्यक्तितो द्वयोरपि मङ्गलयोरे-कीभूतयोः सुष्ठुतरो मङ्गलभावो भवति। कथमिव ? इत्यत आह-"लोणुण्हपदीवमादि व्व"। यथा द्वयोर्लवणयोरेकीभूतयोः सुष्ठुतरो लवणभावः, द्वयोर्वा उष्णयोरेकत्र मिलितयोः सुष्ठुतर उष्णतरभावः, यथा वा द्वयोः प्रदीपयोः समुदितयोः प्रकाशभावः, आदिशब्दात्मधुर-शीतल-स्नेहादिद्रव्याणां परिग्रहः; एवमिहापि द्वयोर्मङ्गलयोरेकीभूतयोः सुष्ठुतरो मङ्गलभावः। स्यादेतत् एवमपि प्रसजत्यनवस्था, तृतीयादिमङ्गलोपादाने सुष्ठुतरमङ्गलभावोपपत्तेः; न प्रजति, प्रयोजनाभावात्, तथा लोकव्यवहारदर्शनात्। तथाहि-लोके कस्यचिदातुरस्य शर्करापलद्वयमौषधं केनाऽपि भिषग्वरेणोपादेशि, तत्र यद्यपि तृतीयादिशर्करापलप्रक्षेपे विशिष्टतमो मधुरभावो भवति तथापि तन्न प्रक्षिप्यते, प्रयोजनाभावात्। एवमिहाप्यन्यत् तृतीयादिकं मङ्गलं नोपादीयते, प्रयोजनाभावादिति ॥ तदेवं "नदी य मंगलट्ठा" इति व्याख्यातम्।

अधुना मङ्गलस्येव नन्दया अपि चतुःप्रकारं निक्षेपमाह-

[भा.२४] नंदी चतुक्क दव्वे, संखबारसग तूरसंघातो।
भावम्मि नाणपनगं, पच्चक्खियरं च तं दुविहं ॥

वृ- नन्द्याश्चतुष्को निक्षेपः, तद्यथा-नामनन्दी स्थापनानन्दी द्रव्यनन्दी भावनन्दी च। तत्र नामस्थापने सुप्रतीते। द्रव्यनन्दी द्विधा-आगमतो नोआगमतश्च। तत्राऽऽगमतो नन्दिशब्दार्थज्ञाता तत्र चाऽनुपयुक्तः, "अनुपयोगो द्रव्यम्" इति वचनात्। नोआगमतस्त्रेधा-ज्ञशरीरं भव्यशरीरं तद्व्यतिरिक्ता च। तत्र यद् नन्दीशब्दार्थज्ञस्य शरीरं जीवविप्रमुक्तं तद् भूतभावत्वाद् ज्ञशरीरद्रव्यनन्दी। यस्तु बालको नेदानीं नन्दीशब्दार्थमवबुध्यतेऽथ चाऽवश्यमायत्यां भोत्स्यते स भाविभावत्वाद् भव्यशरीरद्रव्यनन्दी। तद्व्यतिरिक्ता शङ्खद्वादशकस्तूर्यसङ्घातः। स चायम्-

भंभा मुकुंद मद्दल, कडंब झल्लरि हुडुक्क कंसाला।
काहल तलिमा वंसो, पणवो संखो य बारसमो ॥

भावतो द्विधा-आगमतो नोआगमतश्च। तत्राऽऽगमतो नन्दिशब्दार्थस्य ज्ञाता तत्र चोपयुक्तः। तत्र मूलद्वारगाथायां यत् "पंचके"ति भणितं तस्य व्याख्यानमाह-भावे नोआगमतो नन्दी 'ज्ञानपञ्चकं' पञ्चविधं ज्ञानम्-आभिनिबोधिकज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्यवज्ञानं केवलज्ञानं च। "दुग"त्ति भणितं तस्य व्याख्यानमाह-भावे नोआगमतो नन्दी 'ज्ञानपञ्चकं'

पञ्चविधं ज्ञानम्-आभिनिबोधिकज्ञानं श्रुतज्ञानमवधिज्ञानं मनःपर्यवज्ञानं केवलज्ञानं च। "दुग"त्ति अस्य व्याख्यानम्-'तद्' ज्ञानपञ्चकं द्विविधं प्रज्ञप्तम्, तद्यथा-प्रत्यक्षम् 'इतरच्च' परोक्षम् ॥

सम्प्रति प्रत्यक्ष-परोक्षयोः स्वरूपमाह-

[भा.२५] जीवो अक्खो तं पइ, जं वट्टति तं तु होइ पच्चक्खं ।
परतो पुन अक्खस्सा, वट्टंतं होइ पारुक्खं ॥

वृ- "अश् भोजने" अश्नाति-भुङ्क्ते यथायोगं सर्वानर्थानिति अक्षः, यदि वा "अशौङ् व्याप्तौ" अश्नुते-ज्ञानेन व्याप्नोति सर्वान् ज्ञेयानिति अक्षः-जीवः, उभयत्राऽप्यौणादिकः सक्प्रत्ययः, तं प्रत्यव्यवधानेन यद् वर्त्तते ज्ञानं भवति परोक्षम् । तथा द्रव्येन्द्रिय-मनांसि पुद्गलमयत्वात् पराणि, तेभ्यः पुनरक्षस्य वर्त्तमानं ज्ञानं भवति परोक्षम् । किमुक्तं भवति ?-यदिन्द्रियद्वारेण मनोद्वारेण वाऽऽत्मनो ज्ञानमुपजायते तत् परोक्षम्, पृषोदरादित्वात् परशब्दात् परः सकारागमः। यदि वा परैर्द्रव्येन्द्रिय-मनोभिरक्षसम्बन्धो यस्मिंस्तत् परोक्षमिति व्युत्पत्ति ॥

अत्रैव मतान्तरं दूषयितुमाह-

[भा.२६] केसिंचि इंदियाइं, अक्खाइं तदुवलद्धि पच्चक्खं ।
तं तु न जुज्जइ जम्हा, अग्गाहगमिंदियं विसए ॥

वृ- 'केषाञ्चिद्' वैशेषिकादीनामक्षाणीन्द्रियाण्यभिप्रेतानि, तेषामुपलब्धि प्रत्यक्षम्, एवं च "चाक्षुषादिविज्ञानं प्रत्यक्षम्" इत्यापन्नम्। एतद् दूषयति-"तं तु" इत्यादि। 'तद्' वैशेषिकाद्युक्तं 'न युज्यते' न घटामश्चति, यस्मादि 'इन्द्रियं' चक्षुरादि पुद्गलमयत्वेनाचेतनत्वात्स्वरूपेणाग्राहकं 'विषयस्य' रूपादेः। ततः कथमुपपद्यते 'तदुपलब्धि प्रत्यक्षम्' ? उपलब्धेरेवाभावात् ॥

तमेवोपलब्ध्यभावं भावयति-

[भा.२७] न वि इंदियाइं उवलद्धिमंति विगतेसु विसयसंभरणा ।
जह गेहगवक्खाइं, जो अनुसरिया स उवलद्धा ॥

वृ- न वै इन्द्रियाण्युपलब्धिमन्ति, तेषु विगतेष्वपि तद्विषयस्य संस्मरणात्, यथा गेहगवाक्षाः। किमुक्तं भवति ? - यथा गेहगवाक्षैरुपलब्धेष्वर्थेषु गेहगवाक्षाणामुपरमेऽपि पुरुषस्य संस्मरणभावान्न ते गवाक्षा उपलब्धारः, तथा विगतेष्वपीन्द्रियेषु तद्विषय उपलभ्यत आत्मनेति व्यापकविरुद्धोपलब्धि, 'तस्योपलम्भः' इतिव्यवस्था हि तस्य स्मरणेन व्याप्ता, अन्यथा तद्यवस्थायाः कर्त्तुमशक्यत्वात्, तद्विरुद्धं चात्रान्यस्य स्मरणमुपलभ्यत इति। कथम् ? कस्तत्रोपलब्धा ? इति चेत्, अत आह-योऽनुस्मर्त्ता स तत्रोपलब्धा, आत्मा उपलब्धा इत्यर्थः। तथा च प्रयोगः-येषु विगतेष्वपि यद्विषयो येन स्मर्यते स तत्रोपलब्धा, यथा गेहगवाक्षेषु पुरुषः, विगतेष्वपि चेन्द्रियेषु तद्विषयः स्मर्यत आत्मना। स्मरणं हि प्रतिनियतत्वन्निमितवत्त्वेन संव्याप्तम्, न चोपलम्भादन्यन्निमित्तमस्ति, ततो विपक्षाद् व्यापकानुपलब्ध्या निवर्त्तमानमुपलम्भपूर्वकत्वेन व्याप्तत इति प्रतिबन्धसिद्धिः ॥

अन्यच्च-

[भा.२९] अपरायत्तं नाणं, पच्चक्खं तिविहमोहिमाईयं ।
जं परतो आयत्तं, तं पारोक्खं हवइ सव्वं ॥

वृ- यद् ज्ञानम् 'अपरायत्तं' नोत्पत्तौ परस्य वशवर्त्ति तत् प्रत्यक्षम् । तच्च वक्ष्यमाणं त्रिविधमवध्यादिकम् । यच्चोत्पत्तौ 'परतः' परस्याऽऽयत्तं तत् सर्वं भवति परोक्षम् । चाक्षुषादिकमपि च विज्ञानमुत्पत्त परस्य चक्षुरादेरायत्तम् अतः परोक्षम् ॥

सम्प्रति त्रिविधं प्रत्यक्षं द्विविधं च परोक्षमुपदर्शयति-

[भा.३०] ओहि मनपज्जवे या, केवलनाणं च होंति पच्चक्खं ।
आभिनिबोहियनाणं, सुयनाणं चेव पारोक्खं ॥

वृ- अवधिज्ञानं मनःपर्यवज्ञानं केवलज्ञानं च भवति प्रत्यक्षम् । आभिनिबोधिकज्ञानं श्रुतज्ञानं च परोक्षम् ॥ तत्राऽवधिज्ञानं चतुर्विधम्, तद्यथाः द्रव्यतः क्षेत्रतः कालतो भावतश्च, तत्र द्रव्यतस्तावदाह-

[भा.३१] विवरीयवेसधारी, विज्जंजणसिद्ध देवताए वा ।
छाइय सेवियसेवी, बीयादीओ वि पच्चक्खा ॥

वृ-नेपथ्यपरावर्त्ततो गुटिकाप्रयोगतः स्वरपरावर्त्ततो वर्णपरावर्त्ततो विपरीतं वेषं धारयन्तीति विपरीतवेषधारिणस्ते, तथा ये विद्यासिद्धा अञ्जनसिद्धा देवतया वा च्छादिताः, ये च तैः सेवितसविनः, ये च बीजादयः कुशूलादिन्यस्तास्ते सर्वेऽवधिज्ञानिनः प्रत्यक्षाः ॥

[भा.३२] पुढवीइ तरुगिरिया सरीरादिगया य जे भवे दव्वा ।
परमाणू सुहदुक्खादओ य ओहिस्स पच्चक्खा ॥

वृ. तथा-यानि पृथिव्यां यानि तरुषु यानि च गिरिषु, गाथायामेकवचनं समाहारत्वात्, द्रव्याणि, यानि च शरीरादिगतानि द्रव्याणि, ये च परमाणवः, ये 'सुख-दुःखादयः' इन्द्रियमनः-शरीरस्वास्थ्या-ऽस्वास्थ्यरूपास्तेऽप्यवधेः प्रत्यक्षाः ॥

[भा.३३] अच्चंतमनुवलद्धा, वि ओहिनाणस्स होंति पच्चक्खा ।
ओहिन्नाण परिगया, दव्वा असमत्तपज्जाया ॥

वृ- अत्यन्तं चक्षुरादिनाऽनुपलब्धा अपि पदार्था अवधिज्ञानस्य भवन्ति प्रत्यक्षाः । अवधिज्ञानेन च द्रव्याणि 'परिगतानि' परिज्ञातानि भवन्ति असमासपर्यायाणि, न समस्ताः पर्याया द्रव्याणां ज्ञातुं शक्यन्त इति भावः । यदि हि समस्तानपि पर्यायान् जानीयात्ततः स केवली भवेत् ॥ उक्तं द्रव्यतोऽवधिज्ञानम्, अधुना क्षेत्रादित आह-

[भा.३४] खित्तम्मि उ जावइए, पासइ दव्वाइँ तं न पासइ या ।
काले नाणं भइयं, को सो दव्वं विना जम्हा ॥

वृ-क्षेत्रे जघन्यत उत्कर्षतो वा यावन्ति द्रव्याणि पश्यति तत् क्षेत्रं न पश्यति, अवधिज्ञानस्य मूर्त्तविषयत्वात्, "रूपिष्ववधेः" इति वचनात्, क्षेत्रस्य चामूर्त्तत्वात् । तत्र जघन्यतः क्षेत्रपरिमाणं "जावतिया तिसमयाऽऽहारगस्स०" इत्यादिना, उत्कर्षतः "सव्वबहुअगनिजीवा०" इत्या-दिनाऽभिहितम् । शेषं तु तदन्तर्गतं मध्यममिति । तथा 'काले' कालविषये ज्ञानं 'भक्तं' विकल्पितम्, भवति वा न वेति भावः । कथम्? इति चेत्, उच्यते-इह यदि कालद्रव्यं समयक्षेत्रभावि समयमात्रं परिणाम्यभ्युपगम्यते तदा तदमूर्त्तत्वान्नाऽवधिज्ञानविषयः । यदि पुनः कोऽसौ नाम 'द्रव्यं' द्रव्यपर्यायं विनाऽन्यः कालः ? यस्माद् द्रव्यस्यैवाऽवस्थाविशेषः कालः, यत उक्तम्- दव्वस्स चेव सो

पज्ञातो इति। तदा सोऽवधिज्ञानिनः प्रत्यक्षः, पर्यायाणामपि कतिपयानामवधिज्ञानगोचरत्वात्। भावतोऽनन्तान् भावान् जानाति सर्वभावानामनन्तभागम्। शेषं तु वक्तव्यमावश्यकटीकातोऽवसातव्यम् ॥ उक्तमवधिज्ञानम्, अधुना मनःपर्यवज्ञानमाह-

[भा.३५]  तं मनपज्जवनाणं, जेन वियाणाइ सन्निजीवाणं।
दट्ठुं मनिज्जमाणे, मनदव्वे मानसं भावं ॥

वृ- येन संज्ञिजीवानां मनोद्रव्याणि "मणिज्जमाणे" इति 'मन्यमानानि' मननेन व्यापार्यमाणानि दृष्ट्वा 'मानसं भावं जानाति' चिन्तितमर्थमवबुध्यते तन्मनः पर्यवज्ञानम् ॥

एतदेव सनिदर्शनं भावयति-

[भा.३६]  जाणइ य पिहुजणो वि हु, फुडमागारेहिं मानसं भावं।
एमेव य तस्सुवमा, मनदव्वपगासिए अत्थे ॥

वृ- 'पृथग्जनोऽपि' लोकः 'हुः' निश्चितं स्फुटम् आकारैर्मानसं भावं जानाति, एवमेव 'तस्यापि' मनःपर्यवज्ञानिनो मनोद्रव्यप्रकाशितेऽर्थे उपमा द्रष्टव्या। किमुक्तं भवति ? -यथा प्राकृतो लोकः स्फुटमाकारैर्मानसं भावं जानाति तथा मनःपर्यवज्ञान्यपि मनोद्रव्यगतानाकारनवलोक्य तं तं मानसं भावं जानातीति। एतदपि द्रव्य-क्षेत्र-काल भावैर्यथा नन्द्यध्ययने तथा चिन्तनीयम् ॥ गतं मनःपर्यवज्ञानम्, अधुना केवलज्ञानमाह-

[भा.३७]  पंकसलिले पसाओ, जह होइ कमेण तह इमो जीवो।
आवरणे झिज्जंते, विसुज्झए केवलं जाव ॥

वृ-यथा पङ्ककलुषिते सलिले तकतकचूर्णयोगतः 'प्रसादः' प्रसन्नता क्रमेण भवति, तथाऽयं जीवोऽपूर्वकरणगुणस्थानकादारभ्य क्षपकश्रेणिमारूढो विशुद्ध-विशुद्धतराध्यवसायप्रभावतः क्षीयमाणे आवरणे तावद् विशुध्यति यावत् क्षीणकषायगुणस्थानकचरमसमये ज्ञानावरणपञ्चकाऽन्तरायपञ्चक-दर्शनावरणचतुष्टयक्षयं कृत्वाऽनन्तरसमये केवलज्ञानसामादयति ॥

कथम्भूतं यत्केवलम् ? इत्याह-

[भा.३८]  दव्वादिकसिणविसयं, केवलमेगं तु केवलन्नाणं।
अनिवारियवावारं, अनंतमविकप्पियं नियतं ॥

वृ-केवलज्ञानं 'द्रव्यादिकृत्स्नविषयं' द्रव्यादीनि कृत्स्नानि-समस्तानि विषयो यस्य तत्तथा, 'केवलम्' असहायं मत्यादिज्ञाननिरपेक्षत्वाद्, 'एकम्' असाधारणमन्यसदृशत्वात्, अनिवारितव्यापारं अविरहितोपयोगत्वात्, अनन्तं ज्ञेयानन्तत्वाद्, 'अविकल्पितं' विकल्परहितं-भेदरहितमित्यर्थः, प्रथमत एवाशेषतदावरणविगमात्, 'नियतं' सर्वकालभावि ॥

उक्तं केवलज्ञानम्, अधुना परोक्षमाभिनोवोधिकज्ञानमभिधित्सुराह-

[भा.३९]  पच्चक्ख परोक्खं वा, जं अत्थं ऊहिऊण निद्दिसइ।
तं होइ अभिनिबोहं, अभिमुहमत्थं न विवरीयं ॥

वृ- 'प्रत्यक्षम्' इन्द्रियविषयं 'परोक्षम्' इन्द्रियविषयातिक्रान्तं यद् अर्थमूहित्वा 'निर्दिशति' निर्णयपुरस्सरं ब्रूते 'एष एवंभूतोऽर्थ' इति, तद् अर्थंप्रति 'अभिमुखं' यथार्थविषयं आभिनिबोधिकम्, 'न विपरीतं' नाऽन्यथाभिमुखम्, तस्यायथार्थतया मिथ्यारूपत्वात् ॥ तच्च द्विधा-इन्द्रियनिश्रित-

मनिन्द्रियनिश्रितं च । अनिन्द्रियं मनः । सम्प्रतीन्द्रिया-ऽनिन्द्रिययोर्विषयविभागमाह-

[भा.४०] अत्थानंतरचारिं, नियतं चित्तं तिकालविसयं तु ।
अत्थे य पडुप्पन्ने, विनियोगं इंदियं लहइ ।।

वृ- अर्थे-शब्दादाविन्द्रियव्यापारानन्तरं चरति-व्याप्रियत इत्येवंशीलमर्थानन्तरचारि इन्द्रिये प्रथमं व्यापृते पश्चान्मनो व्याप्रियत इति भावः; 'नियतं' नियतार्थविषयम्, नैककालमनेक-विषयमित्यर्थः, 'चित्तं' मनः । पुनः कथम्भूतम्? इत्याह-'त्रिकालविषयं' त्रिष्वपि कालेषु यथायोग्यं विषयो यस्य तत्तथा । 'इन्द्रियं पुनः' चक्षुरादिकं 'विनियोगं' व्यापारं लभते 'प्रत्युत्पन्ने' वर्त्तमानेऽर्थे, वर्त्तमानार्थविषयम् नाऽतीता-ऽनागतार्थविषयमिति भावः ।।

[भा.४१] मतिविसयं मतिनाणं, मतिपुव्वं पुन भवे सुयन्नाणं ।
तं पुन समतिसमुत्थं, परोवदेसा स सव्वं पि ।।

वृ- मतिज्ञानं 'मतिविषयं' मत्यनुसारि, यस्य यादृशी मतिस्तस्य तदनुसारं मतिज्ञानं प्रवर्त्तत इत्यर्थः । श्रुतज्ञानं पुनर्भवति 'मतिपूर्वं' मतिकारणकम्, श्रुतज्ञानं हि वाच्य-वाचकभावेन शब्दप्लावितस्याऽर्थस्य ग्रहणम्, वाच्य-वाचकभावेन च शब्दः प्रवर्त्तते मत्यवधारितेऽर्थ इति । 'तत् पुनः' श्रुतज्ञानं सर्वमपि मूलभेदापेक्षया द्विविधम्, तद्यथा-स्वमतिसमुत्थं 'परोपदेशाद्वा' परोपदेशसमुत्थं चेत्यर्थः । तत्र स्वमतिसमुत्थं प्रत्येकबुद्धानां पदानुसारिप्रज्ञानां वा, परोपदेशसमुत्थमस्मदादीनाम् ।। तत् कतिविधम् ? इति तद्भेदप्रदर्शनार्थमाह-

[भा.४२] अक्खर सण्णी सम्मं, साईयं खलु सपज्जवसियं च ।
गमियं अंगपविट्ठं, सत्त वि एए सपडिवक्खा ।।

वृ- अक्षरश्रुतं संज्ञिश्रुतं सम्यक्श्रुतं सादिश्रुतं सपर्यवसितं गमिकम् अङ्गप्रविष्टमिति । एतानि सप्ताऽपि पदानि सप्रतिपक्षाण्यवगन्तव्यानि, ततश्चतुर्दशप्रकारं भवति । तद्यथा-अक्षर-श्रुतमनक्षरश्रुतं संज्ञिश्रुतमसंज्ञिश्रुतं सम्यक्श्रुतं मिथ्याश्रुतं सादिश्रुतमनादिश्रुतं सपर्यवसि-तमपर्यवसितं गमिकमगमिकम् अङ्गप्रविष्टमनङ्गप्रविष्टं च ।। तत्राऽक्षरश्रुतप्रतिपादनार्थमाह-

[भा.४३] अक्खरतिगरूवणया, पढमनयादेसतो न तं खरति ।
अभिलप्पा पुण भावा, होंति खरा अक्खरा चेव ।।

वृ- अक्षरत्रिकस्य-संज्ञाक्षरस्य लब्ध्यक्षरस्य व्यञ्जनाक्षरस्य चेत्यर्थः रूपणका-प्ररूपणा कर्त्तव्या । तत्र यद् व्यञ्जनाक्षरं तत् प्रथमनयः-नैगमनयस्तस्याऽऽदेशेन 'न क्षरति' न स्वभावाच्चलति, नित्यमित्यर्थः । तथा च तन्मतानुसारिणो मीमांसका नित्यं शब्दमातिष्ठमानाः प्रतीता एव । ये पुनरभिलाप्या भावास्ते क्षराश्च भवन्त्यक्षराश्च । तत्र क्षरा घटादयः, अक्षरा धर्मास्तिकायादयः ।।

अथ कीदृशं संज्ञाक्षरम् ? इति तत्प्रतिपादनार्थमाह-

[भा.४४/१] संठाणमगाराई, अप्पाभिप्पायतो व जं जस्स ।

वृ- यद् लिपिभेदतः संस्थानमकारादेः, यथा-कलशाकृतिष्टकारः, तत् तथासंस्थान-विशिष्टमकारादि संज्ञाक्षरम् । अथवा 'आत्माभिप्रायतः' आत्मेच्छया यद् यस्य संस्थानं चिह्नविशेष-रूपं क्रियते तत् संज्ञाक्षरम् ।। सम्प्रति लब्ध्यक्षरमाह-

[भा.४४/२] लद्धी पंचविगप्पा, जस्सुवलंभो उ जो अत्थो ।।

वृ- लब्धिः 'पञ्चविकल्पा' पञ्चभेदा । अत्र 'लब्धि' इति पदैकदेशे पदसमुदायोपचाराद् 'लब्ध्यक्षरम्' इति प्रतिपत्तव्यम् । ततोऽयमर्थः-पञ्चविधं लब्ध्यक्षरम्, तद्यथा-श्रोत्रेन्द्रियलब्ध्यक्षरं जिह्वेन्द्रियलब्ध्यक्षरं चक्षुरिन्द्रियलब्ध्यक्षरं घ्राणेन्द्रियलब्ध्यक्षरं स्पर्शनेन्द्रियलब्ध्यक्षरं च । उपलक्षणमेतत्, तेन षष्ठं नोइन्द्रियलब्ध्यक्षरमप्यवगन्तव्यम् । अथ कीदृशं षट्प्रकारमपि लब्ध्यक्षरम् ? अत आह-'यस्य' श्रोत्रादेः श्रोत्र-चक्षु-र्घ्राण-जिह्वा-स्पर्शनेन्द्रियाणां मनसश्च य उपलम्भः 'अर्थ' शब्दादिस्तमुपलभ्य याऽक्षराणां लब्धिरुपजायते तत् श्रोत्रेन्द्रियादिलब्ध्यक्षरम् । किमुक्तं भवति ?-श्रोत्रेण शङ्खशब्दमुपलभ्य तदनन्तरं 'शङ्ख' इत्येवंरूपयोर्द्वयोरक्षरयोर्या लब्धिस्तत् श्रोत्रेन्द्रियलब्ध्यक्षरम् ।। प्रकारान्तरेण लब्ध्यक्षरभेदानाह-

[भा.४५] सामन्न विसेसेण य, दुविहुवलद्धी उ पढमिय अभेया ।
तिविहा य अनुवलद्धी, उवलद्धी पंचहा बिइया ।।

वृ- अथवा 'उपलब्धि' उपलब्ध्यक्षरं 'द्विविधं' द्विप्रकारम्, तद्यथा-'सामान्येन विशेषेण च' सामान्यलब्ध्यक्षरं विशेषलब्ध्यक्षरं चेति भावः । तत्र 'प्रथमिका' सामान्योपलब्धिसामान्योयपलब्ध्यक्षरं अभेदम्, सामान्ये भेदाभावात् । इहोपलब्धिरनुपलब्ध्यपेक्षा, ततस्तस्या अपि प्ररूपणा कर्त्तव्येत्यत आह-'त्रिविधा' त्रि[illegible]ऽनुपलब्धिः । [illegible]पुनः द्वि[illegible] विशेषोपलब्धि-विशेषोपलब्ध्यक्षरं सा पञ्चप्रकारा ।। तानेव त्रीन् पञ्च च भेदानाह-

[भा.४६] अच्चंता सामन्ना, य विस्सुती होइ अनुवलद्धीओ ।
सारिक्ख विवक्खोभय, उवमाऽऽगमतो य उवलद्धी ।।

वृ- अनुपलब्धिरेवं त्रिधा भवति । तद्यथा-'अत्यन्ताद्' एकान्तेनानुपलब्धि सामान्याद् विस्मृतेश्च । उपलब्धिरपि पञ्चप्रकारैवम्-सादृक्षतो विपक्षतः 'उभयतः' उभयधर्मदर्शनत औपम्यत आगमतश्च ।। तत्र प्रथमतोऽत्यन्तानुपलब्धिमाह-

[भा.४७] अत्थस्स दरिसणम्मि वि,लद्धी एगंततो न संभवइ ।
दट्ठुं पि न याणंते, बोहिय पंडा फणस सत्तू ।।

वृ-अर्थस्य दर्शनेऽपि कस्यचित्तदर्थविषया 'लब्धि' अक्षराणांलब्धिरेकान्ततो न सम्भवति। तथा च 'बोधिकाः' पश्चिमदिग्वर्तितनो म्लेच्छाः पनसं दृष्टाऽपि 'पनसः' इत्येवं न जानते तेषां पनसस्याऽत्यन्तपरोक्षत्वात्, न हि तद्देशे पनसः सम्भवति । तथा 'पाण्डाः' पाण्डुमथुरावासिनः सक्तून् दृष्ट्वाऽपि 'सक्तवोऽमी' इति न जानते, तेषां हि सक्तवोऽत्यन्तपरोक्षाः, ततो न तद्दर्शनेऽपि तदक्षरलाभः ।। सम्प्रति सामान्यादनुपलब्धिमाह-

[भा.४८] अत्थस्स उग्गहम्मि वि, लद्धी एगंततो न संभवति ।
सामन्ना बहुमज्झे, मासं पडियं जहा दट्ठुं ।।

वृ-अर्थस्यावग्रहेऽपि तदन्येनार्थेन 'सामान्यात्' सादृश्यादेकान्ततः 'लब्धि' अक्षरलब्धिर्न सम्भवति । यथा बहुमध्ये पतितं माषं दृष्टाऽपि तदन्येन सामान्यान्न तदक्षरं लभते ।।

विस्मृतेरनुपलब्धिमाह-

[भा.४९] अत्थस्स वि उवलंभे, अक्खरलद्धी न होइ सव्वस्स ।

पुव्वोवलद्धमत्थे, जस्स उ नामं न संभरति ॥

वृ- अर्थस्य पूर्वं पश्चाच्चोपलम्भेऽपि सर्वस्य 'अक्षरलब्धि' तद्विषयाऽक्षरलब्धिर्न सम्भवति। कस्य न भवति ? इत्यत आह-यस्याऽर्थे विवक्षितार्थविषयं पूर्वोपलब्धं नाम न संस्मरति ॥

तदेवमुक्ता त्रिविधाऽप्युपलब्धि । अधुना साध्क्षतो विपक्षतश्चोपलब्धिमाह-

[भा.५०] सारिक्ख-विवक्खेहि य, लभति परोक्खे वि अक्खरं कोइ ।

सबलेर-बाहुलेरा, जह अहि-नउला य अनुमाणे ॥

वृ- कश्चित् परोक्षेऽप्यर्थे दृश्यमानार्थसादृश्यादक्षरं लभते, यथा 'शाबलेय-बाहुलेयाः' शाबलेयबाहुलेयाक्षराणि । तथाहि-कश्चित् शाबलेयं दृष्ट्वा तत्सादृश्यात् परोक्षेऽपि बाहुलेये तदक्षराणि लभते 'ईदृशो बाहुलेयः' इति । तथा कश्चिद् वैपक्ष्येण परोक्षेऽर्थे तदक्षरं लभते, यथा- अहिदर्शनान्नकुलानुमाने नुकलदर्शनाद्वा सर्पानुमाने ॥

सम्प्रत्युबयधर्मदर्शनत उभयाक्षरलब्धिमाह-

[भा.५१] एगत्थे उवलद्धे, कम्मि उभयत्थ पच्चओ होइ ।

अस्सतरि खर-ऽस्साणं, गुल-दहियाणं सिहरिणीए ॥

वृ- 'कस्मिंश्चिद्' उभयधर्मयोगिनि उभयावयवयोगिनि वा एकस्मिन्नर्थे उपलब्धे उभयत्र परोक्षे 'प्रत्ययः' तदक्षरलाभो भवति । यथा 'अश्वतरे' वेगसरे दृष्टे खरस्याऽश्वस्य च प्रत्ययः- तदक्षरलाभः । यथा वा शिखरिण्यामुपलब्धायां गुड-दध्नोः प्रत्ययः-गुड-दध्यक्षरलाभः ॥

औपम्यत उपलब्धिमाह-

[भा.५२] पुव्वं पि अनुवलद्धो, घिप्पइ अत्थो उ कोइ ओवम्मा ।

जह गोरेवं गवयो, किंचिविसेसेण परिहीनो ॥

वृ- पूर्वमनुपलब्धोऽपि कोऽप्यर्थ औपम्याद् गृह्यते, यथा गौरेवं गवयः, नवरं किञ्चिद्विशेषेण परिहीनः, कम्बलकविरहित इत्यर्थः । अत्रेयं भावना-'यथा गौस्तथा गवयः' इति श्रुत्वा कालान्तरेणाटव्यां पर्यटन् गवयं दृष्ट्वा 'गवयोऽयम्' इति यदक्षरजातं लभते एषा औपम्योपलब्धिः ॥ इदानीमागमत उपलब्धिमाह-

[भा.५३] अत्तगमाप्पमानेन अक्खरं किंचि अविसयत्थे वि ।

भविया-ऽभविया कुरवो, नारग दियलोय मोक्खो य ॥

वृ- आप्ताः-सर्वज्ञाः तत्प्रणीत आगम आप्तागमः, स एव प्रमाणमाप्तागमप्रमाणम्, तेन अविषयेऽप्यर्थे किञ्चिदक्षरं लभते । यथा-भव्योऽभव्यो देवकुरव उत्तरकुरवो नारका देवलोको मोक्षः, चशब्दादन्ये च भावाः । इयमत्र भावना-आप्तागमप्रामाण्यवशात् तस्मिंस्तस्मिन् वस्तुनि योऽक्षरलाभः, यथा-भव्य इति अभव्य इति देवकुरव इत्यादि, सा आगमोपलब्धिः ॥ एषा सर्वाऽप्युपलब्धि संज्ञिनां भवति, असंज्ञिनां तु का वार्त्ता ? इत्यत आह-

[भा.५४] ओसन्नेण असन्नीण अत्थलंभे वि अक्खरं नत्थि ।

अत्थो च्चिय सन्नीणं, तु अक्खरं निच्छए भयणा ॥

वृ- असंज्ञिनाम् 'अर्थलाभेऽपि' अर्थदर्शनेऽपि 'उत्सन्नेन' एकान्तेन 'नास्त्यक्षरं' नैवाक्षरलाभः । तथाहि-शङ्खशब्दं श्रुत्वाऽपि न तेषामेषा लब्धिरुपजायते, यथा 'अयं शङ्खशब्दः'

इति। एवं शेषेन्द्रियेष्वपि भावनीयम्। संज्ञिनां पुनः 'अर्थ एवाक्षरं' अर्थोपलम्भकाले एवाक्षरलाभः, यथा शङ्खशब्दश्रवणकाल एव 'शङ्खशब्दः' इति। 'निश्चये पुनः भजना' 'शङ्खशब्द एवायम्, शार्ङ्गशब्द एवायम्' इति वा निश्चयगमनं स्याद्वा न वा। एवं शेषेन्द्रियेष्वपि भावनीयम्॥

गतं लब्ध्यक्षरम्, अधुना व्यञ्जनाक्षरमाह-

[भा.५५] अत्थाभिवंजगं वंजणक्खरं इच्छितेतरं वदतो।
रूवं व पगासेणं, वंजति अत्थो जओ तेणं॥

वृ- इह यद् विवक्षितं तदेव यदि वदति, यथा 'अश्वं भणिष्यामि' इति तदेव ब्रूते, तदा तद् ईप्सितम्। अन्यद् विवक्षित्वाऽन्यच्चेदुच्चरति तदा तद् 'इतरद्' अनीप्सितम्। ईप्सितमितरद्वा वदतो यद् अर्थाभिव्यञ्जकमभिधानं तद् व्यञ्जनाक्षरम्। अथ कस्मादम व्यञ्जनाक्षरमुच्यते? नाऽभिधानाक्षरम्? अत आह-'रूपमिव' घटादिकमिव 'प्रकाशेन' दीपादिना तमसि वर्त्तमानम् 'अर्थ' घटादि 'यतः' यस्माद् 'व्यज्यते' प्रकटीक्रियते 'तेन' कारणेन व्यञ्जनाक्षरमिव्युच्यते॥

[भा.५६] तं पुन जहत्थनियतं, अजहत्थं वा वि वंजणं दुविहं।
एगमनेगपरियियं, एमेव य अक्खरेसुं पि॥

वृ- 'तत् पुनः' व्यञ्जनं द्विविधम्-यथार्थनियमयथार्थं वा। यथार्थनियतं नाम अन्वर्थयुक्तम्, यथा-क्षपयतीति क्षपणः, तपतीति तपन इत्यादि। अयथार्थं यथा-नेन्द्रं गोपयति तथापीन्द्रगोपकः, न पलमश्नाति तथापि पलाश इत्यादि। अथवा तद् व्यञ्जनं द्विधा-एकपर्यायमनेकपर्यायं च। एकः पर्यायः-अभिधेयो यस्य तदेकपर्यायम्, यथा-अलोकः स्थण्डिलमित्यादि, अलोकशब्देन ह्यलोकत्वलक्ष एक एव पर्यायोऽभिधीयते, कण्डिलशब्देन स्थण्डिलत्वेमेकमित। अनेके पर्यायाः-अभिधेया यस्य तदनेकपर्यायम्, यथा-जीव इति, जीवशब्देम हि जीवोऽप्युच्यते सत्त्वोऽपि प्राण्यपि भूतोऽपि च, जीवादयश्च प्रतिनियतविशेषाः। तथा चोक्तम्-

प्राणा द्वि-त्रि-चतुः प्रोक्ताः, भूताश्च तरवः स्मृताः।
जीवाः पञ्चेन्द्रिया ज्ञेयाः, शेषाः सत्त्वा उदीरिताः॥

ततो भति सामान्येन जीवशब्दस्यानेकपर्यायाभिधायकत्वमिति। 'एवमेव' एका-ऽनेकभेदेनाक्षरेष्वपि द्रष्टव्यम्। तद्यथा-द्विविधं व्यञ्जनम्, एकाक्षरमनेकाक्षरं च। एकाक्षरं धीः श्रीरित्यादि, अनेकाक्षरं वीणा लता माला इत्यादि॥

[भा.५७] सक्कय-पाययभासाविनियुत्तं देसतो अनेगविहं।
अभिहाणं अभिधेयातो होइ भिन्नं अभिन्नं च॥

वृ- अथवा द्विप्रकाराम्-संस्कृतभाषाविनिर्युक्तम्, यथा-वक्ष इति, प्राकृतभाषाविनिर्युक्तं च यथा-रोक्खो इति। 'देशतः' नानादेशानाश्रित्यानेकविधम्, यथा-मगधानाम् ओदनः, लाटानां कूरः, द्रमिलानां चौरः, अन्ध्राणाम् दडाकुरिति। तथा तद् 'अभिधानं' व्यञ्जनाक्षरम् अभिधेयाद् भिन्नमभिन्नं च। तत्र भिन्नं प्रतीतम्, तादात्म्याभावात्॥ तमेव तादात्म्याभावमाह-

[भा.५८] खुर-अग्गि-मोयगोच्चारणम्मि जम्हा उ वयण-सवणाणं।
न वि छेदो न वि दाहो, न वि पूरण तेन भिन्नं तु॥

वृ- यस्मात् क्षुरशब्दोच्चारणेऽग्निशब्दोच्चारणे मोदकशब्दोच्चारणे च यथाक्रमं वदतो वदनस्य

शृ ण्वतः श्रवणस्य न छेदो नाऽपि दाहो नाऽपि पूरणम्, अतो ज्ञायतेऽभिधेयादभिधानं भिन्नम्, अन्यथा तादात्म्यसम्बन्धात् क्षुरादयोऽपि तत्र सन्तीति वदनस्य श्रवणस्य च छेदादिप्रसङ्गः ॥ अभिन्नत्वं नाम सम्बद्धत्वम्, तथा च लोकेऽप्यभिन्नशब्दः सम्बद्धवाची व्यवह्रियते, यथा-अयमस्माकं खादन-पानेनाऽभिन्नः, सम्बद्ध इत्यर्थः । ततस्तदेव सम्बद्धत्वं भावयति-

[भा.५९] जम्हा उ मोयगे अभिहियम्मि तत्थेव पच्चओ होइ ।
न य होइ सो अणत्ते, तेन अभिन्नं तदत्थातो ॥

वृ- यस्मान्मोदकेऽभिहिते 'तत्रैव' मोदके प्रत्ययो भवति नाऽन्यत्र । न च 'सः' नियमेन तत्र प्रत्ययः 'अन्यत्वे' असम्बद्धत्वे सति भवति, सम्बन्धाभावतो नियामकाभावेनाऽन्यत्रापि तत्प्रत्यय प्रसक्तेः । 'तेन' कारणेन ज्ञायते 'तद्' अभिधानम् 'अर्थादभिन्नम्' अर्थेन सह वाच्य-वाचकभावसम्बद्धम् ॥

[भा.६०] एक्केक्कमक्खरस्स उ, सप्पज्जाया हवंती इयरे य ।
संबद्धमसंबद्धा, एक्केक्का ते भवे दुविहा ॥

वृ- व्यञ्जनस्य यान्यक्षराणि तस्याक्षरस्यैकैकस्य द्विविधाः पर्यायाः, तद्यथा-स्वपर्यायाः 'इतरे च' परपर्यायाः । तत्र अवर्णस्त्रिधा-ह्रस्वो दीर्घ प्लुतश्च, पुनरेकैकस्त्रिधा-उदात्तोऽनुदात्तः स्वरितश्च, पुनरेकैको द्विधा-सानुनासिको निरनुनासिकश्च, एवमष्टादशप्रकारो अवर्ण । उक्तञ्च-

ह्रस्व-दीर्घ-प्लुतत्वाच्च, त्रैस्वर्योपनयेन च ।
अनुनासिकभेदाच्च, सङ्ख्यातोऽष्टादशात्मकः ॥

एते अवर्णस्य स्वपर्यायाः । तथा ये एकैकाक्षरसंयोगतो द्वयक्षरसंयोगत एवं यावन्तो घटन्ते संयोगास्तावत्संयोगवशतो येऽवस्थाविशेषा ये च तत्तदर्थाभिधायकत्वस्वभावस्तेऽपि तस्य स्वपर्यायाः । इतरे च तत्रासन्तः परपर्यायाः । एवमिवर्णादीनामपि स्वपर्यायाः परपर्यायाश्च वक्तव्याः । येऽपि परपर्यायास्तेऽपि तस्येति व्यपदिश्यन्ते, व्यवच्छेद्यतया तेषां तद्विशेषकत्वात्, यथा-अयं मे पर इति । 'ते च' स्वपर्यायाः परपर्यायायाश्च एकैके द्विविधा भवन्ति तद्यथा-सम्बद्धा असम्बद्धाश्च ॥ एतदेव भावयति-

[भा.६१] अत्थित्ते संबद्धा, होंति अकारस्स पज्जया जे उ ।
ते चेव असंबद्धा, नत्थित्तेणं तु सव्वे वि ॥

वृ- ये अकारस्य 'पर्यायाः' स्वपर्यायास्ते तत्रास्तित्वेन सम्बद्धा भवन्ति । नास्तित्वेन पुनस्त एव सर्वेऽप्यसम्बद्धाः, तत्र तेषां नास्तित्वाभावात् ॥

[भा.६२] एमेव असंता वि उ, नत्थित्तेणं तु होंति संबद्धा ।
ते चेव असंबद्धा, अत्थित्तेणं अभावत्ता ॥

वृ- 'एवमेव' अनेनैव प्रकारेण असन्तः परपर्याया अपि नास्तित्वेन भवन्ति सम्बद्धाः, ते चैव परपर्याया अस्तित्वेनासम्बद्धाः, तेषामस्तित्वस्य तत्राभावत्वात् ॥ अत्रैव निदर्शनमाह-

[भा.६३] घडसद्दे घ-ड-ऽकारा, हवंति संबद्धपज्जया एते ।
ते चेव असंबद्धा, हवंति रहसद्दमादीसु ॥

वृ-घटशब्दे ये घकार-टकारा-ऽकारास्तेषां ये पर्यायास्त एते भवन्ति तत्रास्तित्वेन सम्बद्धाः,

तेषां तत्र विद्यमानत्वात् । त एव घकार-टकारा-ऽकारपर्याया रथशब्दादिषु भवन्त्यस्तित्वेनाऽ-सम्बद्धाः, तेषां तत्राऽभावात् । तदेवमस्तित्वेन स्वपर्यायास्तत्र सम्बद्धाः अन्यत्र चाऽसम्बद्धा उपदर्शिताः । एतदुपदर्शने चैतदर्थादापन्नम्-ते स्वपर्यायास्तत्र नास्तित्वेनाऽसम्बद्धाः, अन्यत्र तु सम्बद्धा । तथा ते रथशब्दस्य स्वपर्यायास्ते तत्रास्तित्वेन सम्बद्धाः, तेषां तत्र विद्यमानत्वात्, घटशब्देनाऽसम्बद्धाः, तेषां तत्रासत्त्वात् । त एव च रथशब्दे नास्तित्वेनाऽसम्बद्धाः, घटशब्दे तु सम्बद्धा इति ॥ तदेवं स्वपर्यायाः परपर्यायाश्च प्रत्येकं सम्बद्धा असम्ब असम्बद्धाश्च निदर्शिताः।

अधुना स्वपर्यायान् दर्शयति-

[भा. ६४] संजुत्त-असंजुत्तं, इयं लभते जेसु जेसु अत्थेसु ।
विनिओगमक्खरं ते, सि होंति सब्भावपज्ञाया ॥

वृ- 'इति' एवं घटशब्द-रथशब्दादिगतेन प्रकारेण संयुक्तमसंयुक्तं वा 'अक्षरम्' अकारादिकं येषु येष्वर्थेषु विनियोगं लभते ते तेषां 'सद्भावपर्यायाः' स्वपर्याया भवन्ति । अर्थादिदमायातम्-अपरे परपर्याया इति ॥ तदेवमभिहितं व्यञ्जनाक्षरम्, तदभिधानाच्चाभिहितं त्रिविधमप्यक्षरम् । तत्र न केवलमप्यक्षरं संज्ञाक्षराद्युच्यते किन्तु ज्ञानमपि । तत्र शिष्यः प्रश्नयति-कियत्प्रमाणं तद-क्षरम् ? उच्यते, सर्वाकाशप्रदेशेभ्योऽनन्तगुणम् । कथमेतावत्प्रमाणम् ? उच्यते-इहैकैक आकाश-प्रदेशः खल्वनन्तैरगुरुलघुपर्यायैः संयुक्तः, ते च सर्वेऽप्यगुरुलघुपर्याया ज्ञानेन ज्ञायन्ते; न च येन स्वभावेनैको ज्ञायते तेनापरोऽपि, तयोरेकत्वप्रसङ्गात्, किन्त्वन्येन स्वभावेन, ततो यावन्तोऽगुरुलघुपर्यायास्तावन्तो ज्ञानस्वभावाः; उक्तञ्च- जावइय पज्जवा ते, तावइया तेसु नाणभेया वि । इति भवति सर्वाकाशप्रदेशेभ्योऽनन्तगुणम् । आह च बृहद्भाष्यम्-

अक्खरमुच्चइ नाणं, तं पुन होज्जाहि किंपमाणं तु ? ।
भण्णइ अनंतगुणियं, सव्वागासप्पएसेहिं ॥
किह होइ अनंतगुणं, सव्वागासप्पदेसरासीतो ? ।
भन्नइ जं एक्केक्को, आगासस्सा पदेसो उ ॥
संजुत्तोऽनंतेहिं, अगुरुलघुपज्ञवेहिं नियमेण ।
तेन उ अनंतगुणियं, सव्वागासप्पएसेहिं ॥

पुनरपि शिष्यः प्राह-कथमेतदवसीयते 'एकैक आकशप्रदेशोऽनन्तैरगुरुलघुपर्यायैरुपेतः'? उच्यते-इह द्विविधं वस्तु, रूपिद्रव्यमरूपिद्रव्यं च । तत्र रूपिद्रव्यं चतुर्द्धा, तद्यथा-गुरु लघु गुरुलघु अगुरुलघु च । एतदप्युच्यते व्यवहारतः, निश्चयतः पुनर्द्विविधमेव गुरुलघु अगुरुलघु च । तथा चाह-

[भा. ६५] निच्छयतो सव्वगुरुं, सव्वलहुं वा न विज्ञते दव्वं ।
ववहारतो तु जुज्ञति, बादरखंधेसु नऽन्नेसु ॥

वृ- 'निश्चयतः' निश्चयनयमतेन नि किञ्चिद्द्रव्यं 'सर्वगुरु' एकान्तगुरु, यदि स्यादेकान्तगुरु तत एकान्तेनैव पतनधर्मि स्यात्, न च पतति, तस्मान् नविद्यते सर्वगुरु; नाऽपि 'सर्वलघु' एकान्तलघु, यदि स्यादेकान्तलघु ततो न कदाचित् पतति, अथ कदाचित् पतति तस्मान्न सर्वलघ्वपि। 'व्यवहारतः' व्यवहारनयमतेन पुनर्युज्यते सर्वगुरु सर्वलघु च । केषु ? इत्याह- 'बादरस्कन्धेषु'

बादरत्वपरिणामपरिणतेष्वनन्तप्रादेशिकेषु स्कन्धेषु, 'नान्येषु' सूक्ष्मपरिणामपरिणतेषु। तत्र गुरु द्रव्यं यथा-अयस्पिण्डः, लघु यथा-अर्कतूलम्, गुरुलघु यथा-वायुः, अगुरुलघु परमाण्वादि। निश्चयतः पुनरेवं द्विविधद्रव्यभावना-परमाण्वादेरारभ्य सङ्ख्यातप्रदेशात्मकोऽसङ्ख्यातप्रदेशात्मको यश्चानन्तप्रदेशात्मकः सूक्ष्मस्कन्धः कार्मणप्रभृतिक एते अगुरुलघवः, बादराः स्कन्धा औदारिक-वैक्रिया-ऽऽहारक-तैजसरूपा गुरुलघवः। सम्प्रति गुरुलघुद्रव्याणामगुरुलघुद्रव्याणां चाऽल्पबहुत्वेन वर्गणाश्चिन्त्यन्ते-तत्र बादरस्कन्धेषु जघन्य-मध्यमोत्कृष्टभेदभिन्नेष्वेकोत्तरवृध्या प्रवर्धमाना वर्गणा अनन्ता भवन्ति, ताश्च तावद् द्रष्टव्या यावत् सर्वोत्कृष्टो बादरस्कन्धः॥

[भा.६६] तत्तो य वग्गणाओ, सुहुमाण भवंतऽनंतगुणियातो।
परमाणूण य एक्का, संखे संखेयरेऽसंखा॥

वृ- 'ताभ्यः' समस्तबादरस्कन्धगताभ्यो वर्गणाभ्यः 'सूक्ष्माणाम्' सूक्ष्मानन्तप्रदेशकस्कन्धानामनन्तगुणिता वर्गणाः। तथा परमाणूनां समस्तानामेका वर्गणा। 'संखे संखे' त्ति सङ्ख्येयप्रदेशेषु द्व्यादिप्रभृति उत्कृष्टं सङ्ख्यातं यावत्सङ्ख्यताः, सङ्ख्यातस्य सङ्ख्यातभेदभावात्। 'इतरस्मिन्' असङ्ख्येयप्रदेशेऽसङ्ख्येया वर्गणाः, असङ्ख्यातस्याऽसङ्ख्यातभेदभिन्नत्वात्॥

[भा.६७] इय पोग्गलकायम्मी, सव्वत्थोवा उ गुरुलहू दव्वा।
उभयपडेसेहिया पुण, अनंतकप्पा बहुवियप्पा॥

वृ- 'इति' एवमुपदर्शितन प्रकारेण 'पुद्गलकाये' पुद्गलास्तिकाये गुरुलघुद्रव्याणि सर्वस्तोकानि। 'उभयप्रतिषेधितानि' सकारगुरुलघुप्रतिषेधितानि अगुरुलघूनीत्यर्थः पुनर्द्रव्याणि 'अनन्तकल्पानि' अनन्तभेदानि। तत्रानन्तभेदत्वं गुरुलघुद्रव्येष्वप्यस्ति, तत आह-'बहुविकल्पानि' विकल्पातिशयेन बहुभेदानि॥ सम्प्रति पर्यायपरिमाणमल्पबहुत्वेन चिन्त्यते-इह पञ्च राशयः क्रमेण स्थाप्यन्ते, तद्यथा-परमाणुराशिः सङ्ख्यातप्रदेशकस्कन्धराशिः असङ्ख्यातप्रदेशकस्कन्धराशिः सूक्ष्मानन्तप्रदेशकस्कन्धराशिः बादरानन्तप्रदेशकस्कन्धराशिश्च। तत्र बादरानन्तप्रदेशस्कन्धराशौ योऽन्तिमः स र्वोत्कृष्टो बादरस्कन्धस्तत्र बहवो गुरुलघुपर्यायाः सर्वस्तोका अगुरुलघुपर्यायाः। इह बादरस्कन्धेष्वप्यगुरुलघवः पर्यायाः सन्ति, परमुत्कलिता गुरुलघुपर्याया इति त एव तत्र शेषकालं गण्यन्ते। सम्प्रति तु वस्तुस्थितिश्चिन्त्यते इत्यल्पबहुत्व चिन्तायां ते चिन्तिताः। तस्मात्सर्वोत्कृष्टाद्बादरस्कन्धाद् येऽधस्तना बादरस्कन्धास्तेषु गुरुलघुपर्यायाः क्रमेणानन्तगुणहान्या द्रष्टव्याः, अगुरुलघुपर्यायाः पुनरनन्तगुणवृध्या। एवं च तावज्ज्ञातव्यं यावत्सर्वजघन्यो बादरस्कन्धः। उक्तञ्च-

परमाणु संखऽसंखा, सुहुमानंताण बायराणं च।
एएसिं रासीतो, कमेण सव्वे ठवेऊणं॥
तेसिं जो अंतिमओ, सव्वुक्कोसो य बायरो खंधो।
तस्स बहू गुरुलहुया, अगुरुलहू पज्जवा थोवा॥
तत्तो हिट्ठाहुत्ता, अनंतहानीए गुरुलहू नेया।
अगुरुलहू वुड्ढीए, एवं ता जाव उ जहन्नो॥

[भा.६८] ते गुरुलहुपज्जाया, पन्नाछेदेण वोकसित्ताणं।

जा बायरो जहन्नो, अनंतहानीए हायंता ॥

वृ- ते गुरुलघुपर्यायाः प्रज्ञाच्छेदनकेनाऽगुरुलघुपर्यायेभ्यः 'व्युत्कृष्य' पृथक् कृत्वा सर्वोत्कृष्टाद् बादरस्कन्धादधस्तनेषु बादरस्कन्धेष्वनन्तगुणहान्या हीयमानास्तावद्रष्टव्या यावज्जघन्यो बादरस्कन्धः, अगुरुलघुपर्यायास्तु क्रमेणानन्तगुणवृध्या प्रवर्धमानाः । ततः परं सूक्ष्मानन्तप्रदेशादिषु स्कन्धेषु केवला अगुरुलघुपर्याया एव क्रमेणानन्तगुणवृध्या प्रवर्धमाना द्रष्टव्याः, ते च तावद् यावत् परमाणवः । उक्तञ्च-

तेन परं सुहुमाओ, अनंतवुड्ढीए नवर वड्ढंता ।
अगुरुलहो च्चिय केवल, जा परमाणू य ता नेया ॥

वृ- तदेवं पर्यायपरिमाणमप्यल्पबहुत्वेन चिन्तितम् । साम्प्रतमरूपिद्रव्यं चिन्त्यते । तच्चतुर्धा, तद्यथा-धर्मास्तिकायः अधर्मास्तिकायः आकाशास्तिकायः जीवास्तिकायश्च । एतेषां किमगुरुलघुपर्यायपरिमाणम् ? अत आह-

[भा.६९] केन हवेज्ज विरोहो, अगुरुलहूपज्जवाण उ अमुत्ते ।
अच्चंतमसंजोगो, जहियं पुन तव्विवक्खस्स ।

वृ- 'अमूर्ते' धर्मास्तिकायादौ 'तद्विपक्षस्य' गुरुलघुपर्यायजातस्य 'अत्यन्तम्' एकान्तेन 'असंयोगः' अघटना तत्रागुरुलघुपर्यायाणां केन 'विरोधः'-विनाशनं भवेत् ? नैव केनचित् । ततः केनापि विनाशाभावात् सदैव प्रतिप्रदेशमनन्ता अगुरुलघुपर्यायाः ॥ तथा चाऽऽह-

[भा.७०] एवं तु अनंतेहिं, अगुरुलहूपज्जवेहिं संजुत्तं ।
होइ अमुत्तं दव्वं, अरूविकायाण उ चउण्हं ॥

वृ- एवं तु सति चतुर्णामपि 'अरूपिकायानाम्' अरूपिणामस्तिकायानां धर्मास्तिकाय-प्रभृतीनामेकैकाख्यं यदमूर्तद्रव्यं तद् भवति प्रत्येकमनन्तैरगुरुलघुपर्यायैः संयुक्तम् ॥

तदेवं भावित एकैक आकाशप्रदेशोऽनन्तैरगुरुलघुपर्यवैरुपेतः । सम्प्रति यथा ज्ञानं सर्वाकाशप्रदेशेभ्योऽनन्तगुणं भवति तथा दर्शयति-

[भा.७१] उवलद्धी अगुरुलहू, संजोग-सरादिणो य पज्जाया ।
एतेण हुंतऽनंता, सव्वागसप्पएसेहिं ॥

वृ- चतुर्णामप्यस्तिकायानां पुद्गलास्तिकायस्य च ये अगुरुलघवः पर्यायाः, उपलक्षणमेतत्, बादरस्कन्धानां गुरुलघुपर्यायाश्च, यावन्तश्चाक्षरेषु स्वरूपतोऽभिलाप्यभेदतो वा संयोगाः, यैश्चोदात्तादिभि स्वैररभिलाप्यन्ते भावाः, आदिशब्दाद् ये चान्ये शकुनरुतादिगताः स्वरविशेषाः, ये च जीव-पुद्गलगताश्चेष्टाविशेषास्ते सर्वेऽपि गृह्यन्ते, एतेषां सर्वेषामप्युपलब्धिर्भवति । न च येन स्वभावेनैकस्य तेनैवान्यस्य किन्तु भिन्नेन । तत एतेन प्रकारेण ज्ञानस्य स्वभावाः सर्वाकाशप्रदेशेभ्योऽनन्तगुणाः ॥ तदेवमुक्तं सर्वाकाशप्रदेशेभ्योऽनन्तगुणं ज्ञानम् ।

इदानीं यथा तदक्षरमुच्यते तथा भावयति-

[भा.७२] नाणं तु अक्खरं जेन खरति न कयाइ तं तु जीवातो ।
तस्स उ अनंतभागो, न वरिज्जति सव्वजीवाणं ॥

वृ- 'येन' कारणेन न कदाचिदपि 'तद्' ज्ञानं जीवात् 'क्षरति' भ्रंशमुपयाति तेन कारणेन

ज्ञानक्षरमुच्यते। कथमेतदवसीयते 'न कदाचिदपि ज्ञानं जीवात् क्षरति' ? इति, अत आह- 'तस्य' अक्षरस्यानन्तभागोऽतिप्रबलेनापि ज्ञानावरणोदयेन संसारस्थानां सर्वजीवानां नाऽऽव्रियते। उक्तञ्च- सव्वजीवाणं पि य णं अक्खरस्स अनंतो भागो निच्चुग्घाडिओ इति। नित्योद्घाटो नाम नित्यापावृतः ॥ केन पुनराच्छाद्यते येन ज्ञानस्यानन्तभागो नित्यापावृतः ? इत्याह-

[भा.७३] एक्केक्को जियदेसो, नाणावरणस्स हुंतऽनंतेहिं ।
अविभागेहाऽऽवरितो, सव्वजियाणं जिने मोत्तुं ॥

वृ- 'जिनान्' केवलज्ञानिनो मुक्त्वा शेषाणां सर्वजीवानाम् एकैको जीवप्रदेशो ज्ञानावरणीयस्य कर्मणोऽनन्तैः 'अविभागैः' अविभागपरिच्छेदैः, येषां ततोऽप्यधो विभागः कर्तुं न शक्यते तेऽविभागपरिच्छेदाः, तैरावृतः ॥ यद्येवं कथमनन्तभागो ज्ञानस्य नित्यापावृतः ? इत्याह-

[भा.७४] जति पुन सो वि वरिज्जेज्ज तेन जीवो अजीवयं गच्छे ।
सुट्ठु वि मेहसमुदए, होति पभा चंद-सूराणं ॥

वृ-यथा 'सुष्ठ्वपि' अतिशयेनापि मेघसमुदये जाते तथास्वभावत्वात् चन्द्र-सूर्याणां प्रभा भवति, तथा प्रत्यक्षत उपलब्धेः; एवमेकैकस्य जीवप्रदेशस्यानन्तैर्ज्ञानावरणाविभागपरिच्छेदैरावृतेऽपि तथास्वभावत्वाद् ज्ञानस्यानन्तभागो नित्योद्घाटित एव। यदि पुनः सोऽप्याव्रियेत तत एकान्ततो निश्चेतनत्वाज्जीवः 'अजीवतां गच्छेत्' अजीवो भूयात्, घटवत् ॥ ननु कथमुच्यते 'अनन्तभागो नित्योद्घाटः' ? यावता समस्ति पृथिव्यादीनां सर्वथा ज्ञानमावृतम्, अत आह-

[भा.७५] अव्वत्तमक्खरं पुन, पंचण्ह वि थीणगिद्धिसहिएणं ।
नाणावरणुदएणं, बिंदियमाई कमविसोही ॥

वृ- 'पञ्चानामपि' पृथिवीकायिकादीनां वनस्पतिकायपर्यन्तानां स्त्यानगृद्धिनिद्रासहितेन ज्ञानावरणोदयेन 'अक्षरं' ज्ञानम् 'अव्यक्तं' सुप्त-मत्त-मूर्च्छितादेरिवास्फुटम्, अतो न तत्रापि सर्वथा ज्ञानमावृतम्, तथापि पृथिवीकायिकानामत्यस्फुटम्, ततोऽप्कायिक-तेजस्कायिक-वायुकायिकवनस्पतिकायिकानां क्रमेण विशुद्धतरम्। इदं चूर्णिकारवचनाल्लिखितम्। ततः क्रमेण द्वीन्द्रियादावक्षरस्य विशुद्धिस्तावद्द्रष्टव्या यावदनुत्तरोपपातिनाम्, ततोऽपि चतुर्दशपूर्विणाम्। उक्तञ्च-

तं चिय विसुज्झमाणं, बिंदियमादी कमेण विन्नेयं ।
जा होंतऽनुत्तरसुरा, सव्वविसुद्धं तु पुव्वधरे ॥

वृ- इह यद्यपि प्रागक्षरं सर्वाकाशप्रदेशेभ्योऽनन्तगुणं केवलमभिप्रेतम्, नित्यापावृतोऽप्यनन्तभागस्तस्यैव, तथापि केवलज्ञानस्येव श्रुतज्ञानस्याप्यनन्तभागो नित्यापावृत इति तेनान्ते योजना कृता ॥ उक्तमक्षरश्रुतम्। इदानीमनक्षरश्रुतमाह-

[भा.७६] ऊससियं नीससियं, निच्छूढं खासियं च छीयं च ।
निस्सिंघियमनुसारं, अनक्खरं छेलिआदीयं ॥

वृ-ऊर्ध्वं श्वसनमुच्छ्वसितम्, अधः श्वसनं निश्वसितम्, निष्ठ्यूतं कासितं क्षुतं निस्सिङ्घितं च प्रतीतम्, 'अनुस्वारम्' अनुस्वारवत्, 'अनक्षरम्' 'शेण्टितम्' गोपजनस्य प्रतीतम्। आदिशब्दाद् जृम्भितमणितादिपरिग्रहः । एतद् 'अनक्षरम्' अनक्षरश्रुतम्। उच्छ्वसितादिभ्योऽपि हि

विवक्षितार्थप्रतिपत्तिर्भवति, न च तदक्षरात्मकम्, अतोऽनक्षरश्रुतम् ॥ तत्र यथाऽनक्षरादप्यर्थप्रतिपत्तिरुपजायते तथा निदर्शनेन प्रतिपादयति-

[भा.७७]        टिट्टि त्ति नंदगोवस्सबालिया वच्छए निवारेइ ।
टिट्टि त्ति य मुद्धइए, सेसे लट्ठीनिवाएणं ॥

वृ- नन्दगोपस्य बालिका क्षेत्रादिकं रक्षन्ती 'वत्सकान्' बालगोरूपान् 'टिट्टि' इति अनुकरणानुरूपमनुकार्यमुच्चरन्ती निवारयति । तथा ये मुग्धाः-हरिणादयः तानपि 'टिट्टि' इत्येवं निवारयति । 'शेषांस्तु' षण्डप्रभृतीन् यष्टिनिपातेन निवारयति । अत्र 'टिट्टि' इत्येतदनक्षरमपि वत्सादीनां प्रतिषेधलक्षणार्थप्रतिपत्तिहेतुरुपजायत इत्यनक्षरश्रुतं निदर्शितम् । एवं शेषमपि भावनीयम् ॥ उक्तमनक्षरश्रुतम् ॥ अधुना संज्ञिश्रुतमाह-

[भा.७८]        सन्नाणेणं सण्णी, कालिय हेऊ य दिट्ठिवाए य ।
आदेसा तिन्नि भवे, तेसिं च परूवणा इणमो ॥

वृ- संज्ञानेन संज्ञी, 'संज्ञानं संज्ञा, सा यस्यास्ति स संज्ञी' इति व्युत्पत्तेः । तत्र तत्र आदेशा भवन्ति. तद्यथा-''कालिय''त्ति पदैकदेशेपदसमुदायोपचारात् कालिक्युपदेशेन हेतूपदेशेन दृष्टिवादोपदेशेन च ॥ तत्र कालिक्युपदेशेन संज्ञा यस्य ईहा-ऽपोह-मार्गण-गवेषणादयो मनोव्यापारास्ते कथं भवन्ति ? इत्यत आह-

[भा.७९]        खंधेऽणंतपसे, मणजोगे गिज्झ गणणतोऽणंते ।
तल्लद्धि मणेति तहा, भासादव्वे व भासंते ॥

वृ- यथा भाषालब्धिसमेतो भाषाद्रव्याण्युपादाय भाषते, तथा तस्मिन्-मनसि लब्धिर्यस्य सः 'तल्लब्धि' मनोलब्ध्युपेतो मनोयोग्यान् स्कन्धाननन्तप्रदेशान् 'गणनया' सङ्ख्यानेनानन्तान् गृहीत्वा मनुते । किमुक्तं भवति ? -तैर्मनोद्रव्यैरीहा-ऽपोह-मार्गणातस्तांस्तान् भावान् जानाति॥ कथम् ? इत्याह-

[भा.८०]        रूवे जहोवलद्धी, चक्खुमतो दंसिए पगासेण ।
इय छव्विहमुवओगो, मनदव्वपगासिए अत्थे ॥

वृ- यथा चक्षुष्मतः 'रूपे' घटादौ 'प्रकाशेन' प्रदीपादिना 'दर्शिते' प्रकाशिते चक्षुषा उपलब्धिः 'इति' एवम्-उक्तेन प्रकारेण मनोद्रव्यैः प्रकाशिते-मनितेऽर्थे 'षड्विधः' शब्द-रूप-रस-गन्धस्पर्शाऽतीताऽनागतभावविषयः स्पष्टतर उपयोगो भवति । यश्चईहा-ऽपोहादिकरणतः स्पष्टतर उपयोगः स दीर्घकालिक्युपदेशेन संज्ञिश्रुतम् । यस्य तु मनोद्रव्याभावतो नेहादि सोऽसंज्ञी॥ अथ मनोद्रव्याभावे कथमसंज्ञिनामर्थावगमः ? तत आह-

[भा.८१]        एसेव य दिट्ठंतो, नातिफुडे खलु जहा पगासेणं ।
होउवलद्धी रूवे, असण्णीणं तहा विसए ॥

वृ- 'एष एव' चक्षुर्लक्षणो दृष्टान्तोऽसंज्ञिनोऽर्थावगमे द्रष्टव्यः । यथा खलु चक्षुष्मतो रूपे 'प्रकाशेन' प्रदीपादिना मन्दतया नातिस्फुटे प्रकाशिते उपलब्धिर्मन्दा भवति तथा 'विषये' शब्दादौ असंज्ञिनां विशिष्टमनोद्रव्यलब्ध्यभवे उपयोगो मन्दो भवति ॥ अथवाऽन्यो दृष्टान्तः-

[भा.८२]        अहवा मुच्छित्त मत्ते, पासुत्ता वा वि होइ उवलंभो ।

इय होति असन्नीणं, उवलंभो इंदिया जेसिं ।।

वृ- 'अथवा' इति दृष्टान्तस्य प्रकारान्तरोपदर्शने । मूर्च्छिते मत्ते प्रसुप्ते वा यथा अव्यक्त उपलम्भो भवति 'इति' एवं यति येषामिन्द्रियाणि तेषामसंज्ञिनां ततिविध उपयोगः स्फुटो भवति।। अथ तुल्ये चेतनत्वे किमिति संज्ञिनां प्रागल्भ्येन प्रागलभ्येन चैतन्यम् ? अव्यक्तमसंज्ञिनाम् ? इति, अत आह-

[भा.८३] तुल्ले छेयणभावे, जं सामत्थं तु चक्करयणस्स ।
तं तु जहक्कमहीणं, न होइ सरपत्तमादीणं ।।

वृ- यथा तुल्ये 'छेदनभावे' छेदनत्वे यत् सामर्थ्य चक्ररत्नस्य तद् यथाक्रमहीनं, हेतौ प्रथमा, यथाक्रमहीनत्वात् शरपत्रादीनाम्, आदिशब्दाद्दर्भादिपरिग्रहः, न भवति ।।

[भा.८४] एवं मनविसईणं, जा पडुया होइ उग्गहाईसु ।
तुल्ले चेयणभावे, न होइ अस्सण्णिणं सा तु ।।

वृ. एवम् 'मनोविषयिणां' मनोग्राह्यो विषयो येषामस्ति ते मनोविषयिणस्तेषाम् अवग्रहादिषु या पटुता भवति सा तुल्येऽपि चेतनभावे न भवत्यसंज्ञिनाम्, मनोद्रव्यलब्ध्यभावात् ।। उक्तः कालिक्युपदेशेन संज्ञी असंज्ञी च । अधुना हेतूपदेशतस्तमाह-

[भा.८५] जेसिं पवित्ति-निवित्ती, इट्ठा-ऽनिट्ठेसु होइ विसएसु ।
ते हेउवाउ सन्नी, वेहम्मेणं घडो नायं ।।

वृ- 'येषां' द्वीन्द्रियादीनां इष्टेषु विषयेषु प्रवृत्ति अनिष्टेषु निवृत्ति ते हेतुवादतः संज्ञिनः । अत्र वैधर्म्येण 'ज्ञातं' दृष्टान्तो घटः, अनेन प्रयोगः सूचितः । स चायम्-द्वीन्द्रियादयः संज्ञिनः, इष्टा-ऽनिष्टविषयेषु यथाक्रमं प्रवृत्ति-निवृत्तिदर्शनात्, पुरुषवत्; ये तु न संज्ञिनस्तेषामिष्टा-ऽनिष्टविषयेषु प्रवृत्ति-निवृत्ती, तस्मादसंज्ञिनस्त इति ।। उक्तो हेतुवादतोऽपि संज्ञी असंज्ञी च । सम्प्रति दृष्टिवादोपदेशेनोच्यते-ये सम्यग्दृष्टयस्ते दृष्टिवादोपदेशेन संज्ञिनः, शेषाः सर्वेऽपि मिथ्यादृष्टयोऽसंज्ञिनः । उक्तञ्च-

सम्मद्दिट्ठी सन्नी, दिट्ठीवायस्स होंति उवएसा ।
सेसा होंति असन्नी, कालिय तह हेउसन्नी य ।।

ननु सम्यग्ज्ञानं मिथ्याज्ञानं च द्वे अपि क्षायोशमिके, ततः कस्मादेकः संज्ञी अपरोऽसंज्ञी इति, अत आह-

[भा.८६] होइ असीला नारी, जा खलु पतिणो न रक्खए सेज्जं ।
तं पि य हु होति सीलं, असोहणं तेन उ असीला ।।

वृ- या खलु लोके नारी पत्युः शय्यां न रक्षति सा भवत्यशीला, यतो यद्यपि 'तदपि' पत्युः शय्याया अरक्षणं शीलं तथापि तदशोभनमिति कृत्वा सा अशीला ।।

[भा.८७] एवं खओवसमिएष जे वट्टंते उ नाणविसयम्मि ।
ते खलु हवंति सण्णी, अण्णाणी होंति अस्सण्णी ।।

वृ- एवं तुल्येऽपि क्षायोपशमिके भावे ये 'ज्ञानविषये' सम्यग्ज्ञाने वर्तन्ते ते संज्ञिनः, 'सम्यग्ज्ञानं संज्ञा, सा येषामस्ति ते संज्ञिनः' इति व्युत्पत्तेः । ये त्वज्ञानिनस्तेऽसंज्ञिनः,

कुत्सितसंज्ञकत्वात् ॥ तदेवमुक्तं संज्ञिश्रुतमसंज्ञिश्रुतं च । सम्प्रति सम्यकश्रुत-मिथ्याश्रुते द्वे अपि युगपदाह-

[भा.८८] अंगा-ऽनंगपविट्ठं, सम्मसुयं लोइयं तु मिच्छसुयं ।
आसज्ज उ सामित्तं, लोइय लोउत्तरे भयणा ॥

वृ- स्वरूपेण लोकोत्तरिकम् अङ्ग-ऽनङ्गप्रविष्टं सम्यकश्रुतम्, लौकिकं मिथ्याश्रुतम् । स्वात्वमासाद्य पुनर्लौकिके लोकोत्तरे च 'भजना' लौकिकमपि कदाचित् सम्यकश्रुतं लोकोत्तरमपि मिथ्याश्रुतमित्यार्थः । तथाहि-लौकिकमपि सम्यग्दृष्टिपरिगृहीतं सम्यकश्रुतम्, मिथ्यादृष्टिपरिगृहीतं लोकोत्तरमपि मिथ्याश्रुतमिति ॥ अथ येन सम्यक्त्वेन परिगृहीतं सम्यकश्रुतं भवति तत् किंप्रत्ययम्? अत आह-

[भा.८९] आभिनिबोहमवायं, वयंति तप्पच्चयाउ सम्मत्तं ।
जा मनपज्जवनाणी, सम्मद्दिट्ठी उ केवलिणो ॥

वृ- 'आभिनिबोधिकः' आभिनिबोधिकभेदो योऽपायो यद्वशाद् यथावस्थितार्थविनिश्चयस्तं सम्यक्त्वस्य प्रत्ययं वदन्ति पूर्वसूरयः, सम्यग्ज्ञाने सम्यकश्रद्धानभावात् । 'तत्प्रत्ययाच्च' अपायप्रत्ययाच्च सम्यकत्वं तावदवसेयं यावन्मनः पर्यायज्ञानिनः, ततः परमपायस्याभावात् । केवलिनः केवलज्ञानप्रत्ययादेव सम्यग्दृष्टयः ॥ अथ तत् सम्यग्दर्शनं कतिविधम्? अत आह-

[भा.९०] उवसमियं सासायणं, खओवसमियं च वेदगं खइयं ।
सम्मत्तं पंचविहं, जह लब्भइ तं तहा वोच्छं ॥

वृ- सम्यक्त्वं पञ्चविधम् । तद्यथा-औपशामिकं सासादनं क्षायोपशमिकं वेदकं क्षायिकं च । एतत् पञ्चप्रकारमपि यथा लभ्यते तथा वक्ष्यामि ॥ तदेवाह-

[भा.९१] बंधट्ठितीपमाणं, सामित्तं चेव सव्वपगडीणं ।
को केवइयं बंधइ, खवेइ वा कित्तियं कोइ ॥

वृ- सम्यकत्वं कर्मणां क्षयत उपशमतः क्षयोपशमतश्चोपजायते । क्षयादयश्च त्रयः प्रकारा बद्धानां कर्मणां नाबद्धानामिति प्रथमतो बन्धतः स्थितिप्रमाणं जघन्यत उत्कर्षतश्च वक्तव्यम्, तच्चैवम्-ज्ञानावरण-दर्शनावरण-वेदनीया-ऽन्तरायाणां त्रिंशत्सागरोपमकोटीकोट्य उत्कृष्टं स्थितिपरिमाणम्, मोहनीयस्य सप्ततिसागरोपमकोटीकोट्यः, नाम-गोत्रयोर्विंशतिसागरोपम-कोटीकोटयः, आयुषस्त्रयस्त्रिंशत्सागरोपमाणि; तथा जघन्यं वेदनीयस्य द्वादश मुहूर्ताः, नाम-गोत्रयोरष्टौ, शेषाणामन्तर्मुहूर्त्तम् । तथा सर्वप्रकृतीनां सत्तामधिकृत्य स्वामित्वं वक्तव्यम्, तच्चैवम्-मिथ्यादृष्टि-सास्वादन-मिश्रा-ऽविरतसम्यग्दृष्टि-देशविरत-प्रमत्ता-ऽप्रमत्ता-ऽपूर्वकरणा-ऽनिवृत्तिबादर-सूक्ष्मसम्परायो-पशान्तमोहा अष्टानामपि प्रकृतीनां स्वामिनः, मोहनीयवर्जानां सप्तानां क्षीणमोहाः, वेद्या-ऽऽयु-र्नाम-गोत्राणां सयोग्य-ऽयोगिकेवलिनः । तथा कः कियद् बध्नाति? इति वक्तव्यम्, तत्र-मिथ्यादृष्टयोऽप्रमत्तान्ताः सप्तविधबन्धका वाऽष्टविधबन्धका वा, अपूर्वकरणाऽनिवृत्तिबादराः सप्तविधबन्धकाः, सूक्ष्मसम्परायाः षड्विधबन्धकाः, उपशान्तमोह-क्षीणमोहसयोगिकेवलिनः सातवेदनीयैकबन्धकाः, अबन्धका अयोगिकेवलिनः । तथा को वा कियत् क्षपयति? इति वक्तव्यम्, तत्र-मिथ्यादृष्टय उपशान्तमोहपर्यन्ता अक्षीणाष्टप्रकृतिकाः,

क्षीणमोहाः क्षीणं मोहनीयमित्यक्षीणसप्तप्रकृतिकाः, सयोग्य-ऽयोगिकेवलिनः क्षीणघातिकर्माणः॥ अथ कस्य कर्मण उत्कृष्टायां स्थितौ कस्य नियमत उत्कृष्टा स्थिति ? कस्य वा भजनया ? इति, अत आह-

[भा.९२] आउयवज्जा उ ठिई, मोहोक्कोसम्मि होइ उक्कोसा।
मोहविवज्जुकोसे, मोहो सेसा य भइयाउ॥

वृ- 'मोहोत्कर्षे' मोहनीयस्योत्कृष्टायां स्थितौ सत्यां नियमत आयुर्वर्जयित्वा शेषाणां कर्मणामुत्कृष्टा स्थितिर्भवति। मोहविवर्जस्य-ज्ञानावरणीयादेरुत्कर्षे-उत्कृष्टायां स्थितौ 'मोहः' मोहनीयं शेषाश्च प्रकृतयः 'भक्ताः' विकल्पिताः कदाचिदुत्कृष्टस्थितिका भवन्ति कदाचिन्नेति भावः॥ तत्र सर्वेषां कर्मणामुत्कृष्टस्थितौ वर्तमानः प्रबलमोहाच्छादितत्वान्न किमपि सम्यग्दर्शनं लभते, उक्तञ्च-

अट्ठण्ह वि पगडीणं, उक्कोसठिईए वट्टमाणो उ।
न लभति सम्मद्दंसण, मिच्छत्तेणं विमोहाओ॥

किन्तु सप्तानामायुर्वर्जानामभ्यन्तरकोटीकोट्यां वर्तमानाः। तथा चाह-

[भा.९३०] अंतिमकोडाकोडीए होइ सव्वासि कम्मपगडीणं।
पलियाअसंखभागे, खीणे सेसे हवइ गंठी॥

वृ- आयुर्वर्जानां सर्वासां कर्मप्रकृतीनामन्तिमायां कोटीकोट्यां स्थितायां तत्रापि पल्योपमस्यासङ्ख्येयतमे भागे क्षीणे शेषे स्थितिदलिके सति सम्यग्दर्शनलाभो भवति। केवलं तदानीं सम्यग्दर्शनलाभान्तरायभूतः कर्कश-घन-रूढ-गुपिलवल्कग्रन्थिरिव दुर्भेदो घनराग-द्वेषपरिणामरूपो ग्रन्थिर्भवति, ततस्तस्मिन् भिन्ने प्रतिपत्तव्यः॥ तस्य च भेदः करणवशात्, अतः करणवक्तव्यतामाह-

[भा.९४] तिविहं च होइ करणं, अहापवत्तं तु भव्व-ऽभव्वाणं।
भवियाण इमे अन्ने, अपुव्वकरणाऽनियट्टी य॥

वृ- 'करणं' नाम परिणामविशेषः। तत् 'त्रिविधम्' त्रिप्रकारं भवति। तद्यथा-प्रथमं यथाप्रवृत्ताख्यं भव्यानामभव्यानां च साधारणम्। भव्यानां पुनः इमे द्वे अन्ये करणे, अपूर्वकरणम् 'अनिवृत्तिश्च' अनिवृत्तिकरणं च॥ साम्प्रतमेतेषामेव त्रयाणां करणानां कालविभागमाह-

[भा.९५] जा गंठी ता पढमं, गंठिं समतिच्छतो अपुव्वं तु।
अनियट्टीकरणं पुण, सम्मत्तपुरक्खडे जीवे॥

वृ- यावद् ग्रन्थिस्तावत् 'प्रथमम्' यथाप्रवृत्ताख्यं करणम्। ग्रन्थिं 'समतिक्रामतः' भिन्दानस्येत्यर्थः पुनः 'अपूर्वम्' अपूर्वकरणम्। अनिवृत्तिकरणं तु सम्यक्त्वं पुरस्कृतं येन स सम्यक्त्वपुरस्कृतः तस्मिन् जीवे, सम्यक्त्वाभिमुखे इत्यर्थः॥ अथ यावद्ग्रन्थिस्तावन्निर्गुणस्य सतः कथं कर्मराशेः क्षपणम् ? उच्यते-गिरिसरिदुपलदृष्टान्तात्। ततस्तमेव दृष्टान्तं तत्प्रसङ्गतः शेषकरणयोरपि दृष्टान्तानभिधित्सुर्द्वारगाथामाह-

[भा.९६] नदि पह जर वत्थ जले, पिवीलिया पुरिस कोद्दवा चेव।
सम्मद्दंसणलंभे, एते अट्ठ उ उदाहरणा॥

वृ-करणवशात् सम्यग्दर्शनलाभे एतान्यष्टावुदाहरणानि। तद्यथा-''नदि''त्ति गिरिनदीप्रस्त-रोदाहरणम् १ पथदृष्टान्तः २ ज्वरोदाहरमम् ३ वस्त्रोदाहरणम् ४ जलोदाहरणम् ५ पिपीलिकोदाहरणम् ६ पुरुषोदाहरणम् ७ कोद्रवोदाहरणम् ८॥ तत्र प्रथमतो गिरिसरित्प्रस्तरोदाहरं भावयति-

[भा.९७] गिरिसरिसपत्थरेहिं, आहरणं होइ पढमए करणे।
एवमनाभोगियकरणसिद्धितो खवण जा गंठी॥

वृ-गिरिसरित्प्रस्तरैः 'आहरणं' दृष्टान्तः 'प्रथमे' यथाप्रवृत्ताख्ये करणे भवति। तच्चैवम्-यथा गिरिसरित्प्रस्तरा गिरिसरिज्जलावेगतो घर्षण-घोलनादिना केचिद्वर्तुला भवन्ति केचित्त्र्यस्राःकेचिच्चतुरस्राः, एवम् 'अनाभोगकरणसिद्धितः' यथाप्रवृत्तकरणप्रभावतः सुदीर्घाया अपि कर्मस्थितेस्तावत् क्षपणं यावद्ग्रन्थिरिति॥ अथ 'अनिवृत्तिकरणं सम्यक्त्वपुरस्कृते जीवे भवति' इत्युक्तं तत् सम्यक्त्वं कथं लभते? उच्यते-उपदेशतः स्वयं वा। तथा चात्र पथदृष्टान्तः-

[भा.९८/१] उवएसेण सयं वा, नट्ठपहो कोइ मग्गमोतरति।

वृ-नष्टपथः कोऽपि पुरुषः 'उपदेशेन' अन्यं पृष्ट्वा तस्योपदेशेन मार्गमवतरति, कश्चिन्मार्गानुसारिप्रज्ञतया स्वयमेवेहा-ऽपोहं कृत्वा। एवमिहापि कोऽपि सम्यग्दर्शनमाचार्यादीनामुपदेशतो लभते, कश्चित्स्वयमेव जातिस्मरणादिना॥ अत्रैव ज्वरदृष्टान्तमाह-

[भा.९८/२] जरितो य ओसहेहिं, पउणइ कोई विना तेहिं॥

वृ-ज्वरितोऽपि कश्चिदौषधैः 'प्रगुणति' प्रगुणीभवति, कश्चित्पुनः 'तैः' औषधैः 'विना' एवमेव। एवमत्रापि कस्यचिद्दर्शनमोह आचार्याद्युपदेशतोऽपगच्छति, कस्यचित्पुनरेवमेव मार्गानुसारितया तत्त्वपर्यालोचनतः। इह ज्वरस्थानीयो दर्शनमोहः, औषधस्थानीय आचार्याद्युपदेशः॥ इह यस्तत्प्रथमतया क्षायोपशमिकसम्यग्दृष्टिरुपजायते सोऽपूर्वकरणव-शान्मिथ्यात्वदलिकं त्रिधा करोति। तद्यथा-मिथ्यात्वं सम्यग्मिथ्यात्वं सम्यक्त्वं च। अत्र वस्त्रदृष्टान्तं जलदृष्टान्तं चाऽऽह-

[भा.९९] मइल दरसुद्ध सुद्धं, जह वत्थं होइ किंचि सलिलं वा।
एसेव य दिट्ठंतो, दंसणमोहम्मि तिविहम्मि॥

वृ-यथा किञ्चिद् वस्त्र सलिलं वा मलिनं भवति, किञ्चिद् 'दरशुद्धम्' ईषद्विशुद्धम्, किञ्चित् शुद्धम्। एष एव दृष्टान्तो दर्शनमोहे त्रिविधे भावनीयः-तदप्यपूर्वकरणवशात् किञ्चित् शुद्धं सम्यकत्वरूपम्, किञ्चिदीषद्विशुद्धं सम्यग्मिथ्यात्वरूपम्, किञ्चित्तथैव मलिनं मिथ्यात्वरूपं स्थितमिति भावः॥ अत्राह-कथमभव्यास्तस्मिन् ग्रन्थिदेशेऽवतिष्ठन्ते? कथं वा ततः प्रतिपतन्ति? भव्या वा कथं ग्रन्थिं विभिद्य ततः परतो गच्छन्ति? उच्यते-पिपीलिकादृष्टान्तात्। तमेवाह-

[भा.१००] अहभावेण पसरिया, अपुव्वकरणेण खाणुमारूढा।
चिट्ठंति तत्थ काई, पिपीलिया काइ उड्डंति॥

वृ-काश्चित्पिपीलिकाः 'यथाभावेन' अनाभोगतः 'प्रसरिताः' बिलान्निर्गत्य इतस्ततो गन्तुं प्रवृत्ताः। काश्चित्पुनरपूर्वकरणेन स्थाणुमारूढाः। तासामपि मध्ये काश्चित् 'तत्र' स्थाणावेव तिष्ठन्ति याः पक्षविहीनाः। काश्चित्सञ्जातपक्षास्ततः 'उड्डयन्ते' ऊर्ध्वमाकाशेन गच्छन्ति॥

[भा.१०१] पच्चोरुहणट्ठा खाणुआतो चिट्ठंति तत्थ एवावि।

पक्खविहूणातो पिवीलियातो उड्डेंति उ सपक्खा ।।

वृ- उत्तरार्द्धस्यैव व्याख्यानार्थमनन्तरगाथा "पद्मोरुहणट्ठा" इत्यादि । काश्चित् पक्षविहीनाः पिपीलिकाः स्थाणोःप्रत्यवरोहणार्थं 'तत्रैव' स्थाणावेव तिष्ठन्ति, अपिशब्दात् प्रत्यवरोहन्ति च । यास्तु सपक्षास्ता उड्डीयन्ते । इह पिपीलिकानामितस्ततः प्रसरणं यथाप्रवृत्तकरणतः, स्थाण्वारोहणमपूर्वकरणतः, उड्डयनमनिवृत्तिकरमेन; एवमत्रापि ग्रन्थिदेशगमनं यथाप्रवृत्तिकरणेन, ग्रन्थिभेदनमपूर्वकरणतः, स्थित्वा च ततः प्रत्यवतीर्णा, तथा कोऽपि मन्दाध्यवसायतया तीव्रविशोधिरहितोऽपूर्वकरणेन ग्रन्थिभिदामाधातुमुद्यतः समुच्छलितघनरागद्वेषपरिणामस्तत्रैव तिष्ठति, स्थित्वा च पुनः पश्चात्ततः प्रतिनिर्वर्त्तते ।। अत्रैवार्थे पुरुषदृष्टान्तमाह-

[भा.१०२]     जह वा तिन्न मनूसा, सभयं पंथं भएण वच्चंता ।
वेलाइक्कमतुरिया, वयंति पत्ता य दो चोरा ।।

वृ- वाशब्दो दृष्टान्तान्तरसमुच्चये । यथा त्रयो मनुष्याः सभयं पन्थानं भयेन पाठान्तरं क्रमेण व्रजन्तः 'वेलातिक्रमत्वरिताः' सन्ध्यासमापतनेन गमनवेलातिक्रमतस्त्वरमाणा व्रजन्ति । अत्रान्तरे चोभयपार्श्वतः प्राप्तौ पाणिकृपाणकरालौ द्वौ चौरौ । तौ च हक्कयन्तावेवमाक्षिपतः-क यास्यथ यूयम् ? मरणमेव युष्माकमिदानीं समापतितमिति ।।

[भा.१०३]     तत्थेगो उ नियत्तो, एगो थद्धो अतिच्छितो एक्को ।
कमगति अहापवत्तं, मिश्चेयर धावणं तइए ।।

वृ- तत्र 'एकः' पुरुषस्तौ समापतन्तौ दृष्ट्वा प्रथमएव निवृत्तः । 'एकः' पुनर्द्वितीयो हक्काश्रवणत उद्गीर्णकृपाणदर्शनतश्च भयेन 'स्तब्धः' तत्रैव स्थितः । 'एकः' तृतीयः पुनः परमसाहसिकः प्रत्युद्गीर्णखड्गस्तौ द्वावपि चौरौ पश्चात्कृत्य तत्स्थानमतिक्रान्तः । इह या त्रयाणामपि पुरुषाणां प्रथमतः क्रमेण गति सा यथाप्रवृत्तिकरणम्, यत् पुनस्तद्भयं मिश्रं तद् 'इतरद्' अपूर्वकरणम्, यत्तु ततः परतो धावनं तत् 'तृतीये' अनिवृत्ताख्ये करणे द्रष्टव्यम् ।। तदेवं दृष्टान्तद्वयमभिधाय साम्प्रतमुपनयन्नाह-

[भा.१०४]     एवं संसारीणं, जोए सव्वाइं तिन्नि करणाइं ।
भवसिद्धिसलद्धीण य, पंखालपिवीलिया उवमा ।।

वृ- 'एवम्' अमुना दृष्टान्तगतेन प्रकारेण यानि त्रीणि करणानि प्रागभिहितानि तानि सर्वाणि संसारिणां योजयेत् । तत्र पिपीलिका दृष्टान्तमधिकृत्य प्रागेव योजिताः । नवरं याः पक्षवत्यः पिपीलिका उक्तास्ताभिरुपमा भवसिद्धिसलब्धिकानां द्रष्टव्या । भवैः सिद्धिर्येषां ते भवसिद्धिकाः कतिपयभवमोक्षगामिन इत्यर्थः, तेऽपि कदाचित् प्रतिपतन्ति तत आह-सलब्धि-उत्तरोत्तरविशुद्धाध्यवसायप्राप्तिर्येषां ते सलब्धिकाः, ततो विशेषणसमासस्तेषाम् । किमुक्तं भवति ? -सपक्षपिपीलिका इव केचित् संसारिणो भवसिद्धिकाः सलब्धिकाः स्थाणोरिव ग्रन्थिदेशादपि परतो गच्छन्ति, केचित् पुनरभव्या भव्या वा केचन पक्षविहीनपिपीलिका इव स्थाणोरिव ग्रन्थिदेशात् प्रतिपतन्ति । पुरुषदृष्टान्तमधिकृत्यैवं योजना-पुरुषस्थानीयाः संसारिजीवाः, कर्मक्षपणस्थानीयः पन्थाः, भयस्थानीयो ग्रन्थि, द्वौ चौरौ रागद्वेषौ; यस्तु मन्दपराक्रमो न पुरतो न मार्गतः किन्तु भयेन तत्रैव स्थितस्तत्सदृशो ग्रन्थिदेशे वर्त्तमानो भव्योऽभव्यो वा, स च तत्र सङ्ख्येयमसङ्ख्येयं

वा कालं तिष्ठति ।। तत्र स्थितस्य को लाभः ? इति चेत्, उच्यते-श्रुतलाभः । तथा चाह-

[भा.१०५]　　दट्ठूण जिनवराणं, पूयं अन्ने वा वि कज्जेण ।
सुयलंभो उ अभव्वे, हविज्ज थंभेण उवनीए ।।

वृ- यः स्तम्भेन 'उपनीतः' उपनयं प्रापितस्तस्मिन् अभव्ये तुशब्दाद् भव्ये च भवति 'श्रुतलाभः' द्रव्यश्रुतलाभः । कथम् ? इति चेत्, अत आह-"दट्ठूणेत्यादि । स हि ग्रन्थिकसत्त्वो भव्योऽभव्यो वा भगवतां जिनवराणां पूजां दृष्ट्वा 'अहो ! कीदृशं तपसः फलम् ?' इति परिभाव्य तदर्थिकतया अन्येन वा कार्येण स्वर्गसुखार्थित्वादिना प्रव्रज्यामभ्युपगच्छति, ततः सामायिकादिद्रव्यश्रुतलाभः । ग्रन्थौ चैवं कियन्तं कालं स्थित्वा पुनः पश्चात् प्रतिनिवर्त्तते ।। येनाप्यनिवृत्तिकरणतः सम्यक्त्वमासादितं तस्यापि द्वौ प्रकारौ-केचित् परिणामतो वर्धन्ते, केचिद् हानिमुपगच्छन्ति । तत्र ये हानिं गच्छन्ति ते प्रतिपतन्ति, इतरे श्रावकत्वादीनि पदानि लभन्ते । तत्र जघन्यतः समकमेव, यत उक्तम्- 'सम्मत्त-चरित्ताइं, जुगवं पुव्वं व सम्मत्तं । उत्कर्षतः पुनरेवम्-

[भा.१०६]　　सम्मत्तम्मि उ लद्धे, पलियपुहुत्तेण सावगो होज्जा ।
चरणोवसमखयाणं, सागरसंखंतरा होंति ।।

वृ- सम्यक्त्वे लब्धे 'पल्यपृथक्त्वेन' पल्योपमपृथक्त्वे गते 'श्रावकः' देशविरतो भवति । ततश्चरणोपशम-क्षयाणामन्तराणि सङ्ख्यातानि सागरोपमानि भवन्ति । इयमत्र भावना-देशविरतिप्राप्त्यनन्तरं सङ्ख्यातेषु सागरोपमेषु गतेषु चरणलाभः, तदनन्तरं भूयः सङ्ख्यातेषु सागरोपमेषु गतेषूपशमश्रेणिलाभः, ततोऽपि परतः सङ्ख्येयेषु सागरोपमेष्वतिक्रान्तेषु क्षपकश्रेणि, ततस्तद्भवे मोक्षः ।।

[भा.१०७]　　एवं अप्परिवडिए सम्मत्ते देव-मनुयजम्मेसु ।
अन्नयरसेढिवज्जं, एगभवेणं च सव्वाइं ।।

वृ- 'एवं' अमुना प्रकारेणाप्रतिपतितसम्यक्त्वे देव-मनुजजन्मसु वर्त्तमानस्य प्रतिपत्तव्यम् । यदि वा 'अन्यतरश्रेणिवर्जं' उपशमश्रेणिवर्जं क्षपकश्रेणिवर्जं वा एकभवेन सर्वाणि देशविरत्यादीनि प्रतिपद्यते, श्रेणिद्वयप्रतिपत्तिस्त्वेकस्मिन् भवे न भवति । यत् उक्तम्-

मोहोपशम एकस्मिन्, भवे द्विः स्यादसन्ततः ।
यस्मिन् भवे तूपशमः, क्षयो मोहस्य तत्र न ।।

सम्प्रति यदुक्तं प्राग् "मिथ्यात्वमपूर्वकरणेन त्रिधा करोति" तत्र कोद्रवदृष्टान्तमाह-

[भा.१०८]　　अपुव्वेण तिपुंजं, मिच्छं काऊण कोद्दवोवमया ।
तिन्नि वि अवेययंतो, उवसामगसम्मदिट्ठीओ ।।

वृ- 'कोद्रोपमया' कोद्रवदृष्टान्तेन अपूर्वकरणेन मिथ्यात्वं त्रिपुञ्जं कृत्वाऽनिवृत्तिकरणेन तत्प्रथमतया क्षायोपशमिकं सम्यक्त्वमासादयति । ततः परिणामवशतः कालान्तरेण मिश्रं मिथ्यात्वं वा गच्छति । यस्त्वपूर्वकरणमारूढोऽपि । ततः परिणामवशतः कालान्तरेण मिश्रं मिथ्यात्वं वा गच्छति । यस्त्वपूर्वकरणमारूढोऽपि मन्दाध्यवसायतया मिथ्यात्वं त्रिपुञ्जीकर्तुमसमर्थः सोऽनिवृत्तिकरणमुपगतोऽन्तरकरणं कृत्वा तत्र प्रविष्टो न किञ्चिदपि वेदयते, स च 'त्रिण्यपि' त्रयाणामन्यतमदप्यवेदयमान उपशमकः सम्यग्दृष्टिरुच्यते ।। "कोद्रवोपमया" इत्युक्तम्,

अतस्तामेव कोद्रवोपमां भावयति-

[भा.१०९] जह मयणकोद्दवा ऊ, दरनिव्वलिया य निव्वलीया य।
एमेव मिच्छ मीसं, सम्मं वा होति जीवाणं ॥

वृ-यथा कोद्रवास्त्रिविधा भवन्ति, तद्यथा-मदनकोद्रवाः 'दरनिर्म्मलिताः' ईषदपगतमदन-भावाः 'निर्वलिताः' सर्वथाऽपगतमदनभावाः। एवं जीवानां मिथ्यात्वं त्रिधा भवति-मिथ्यात्वं 'मिश्रं' सम्यग्मिथ्यात्वं सम्यक्त्वं वा ॥

[भा.११०] कालेनुवक्कमेण य, जह नासति कोद्दवाण मदभावो।
अहिगमसम्मं नेसग्गियं च तह होइ जीवाणं ॥

वृ- यथा कोद्रवाणां मदनभावः केषाञ्चित् 'कालेन' एवमेवापगच्छति, केषाञ्चिद् गोवमादिभिरुपक्रमतः; एवं केषाञ्चिद् जीवानामुपक्रमसदृशमधिगमसम्यकत्वं भवति, केषाञ्चित् कालेन स्वत एवापगतमदनभावकोद्रवाणां सदृशं नैसर्गिकसम्यक्त्वम्। किमुक्तं भवति ?- केषाञ्चिदधिगमतो मिथ्यात्वपुद्गलाः सम्यक्त्वीभवन्ति, केषाञ्चित् स्वत एव तथापरिणाम-विशेषभावतः ॥ एतदेव स्पष्टयति-

[भा.१११] सोऊण अहिसमेच्चे व, करेइ सो वड्ढमाणपरिणामो।
मिच्छे सम्मामिच्छे, सम्मे वि य पोग्गले समयं ॥

वृ- श्रुत्वा केवलिप्रभृतीनां वचः 'अभिसमेत्य वा' जातिस्मरणादिना सम्यक्त्वमवगम्य 'सः' अपूर्वकरणे वर्त्तमानो वर्धमानपरिणामः 'समकं' एककालं मिथ्यात्वपुद्गलान् त्रिधाकरोति। तद्यथा-'मिच्छे' इति मिथ्यात्वपुद्गलान् सम्यग्मिथ्यात्वपुद्गलान् सम्यक्त्वपुद्गलानिति ॥ अथैषां पुद्गलानां परस्परं सङ्क्रमो भवति ? किं वा न ? इति, उच्यते-भवतीति ब्रूमः। तथा चाह-

[भा.११२] मिच्छत्ताओ मीसे, मीसस्स उ होज्ञ संकमो दोसुं।
सम्मे वा मिच्छे वा, सम्मा मिच्छं न पुन मीसं ॥

वृ- 'मिथ्यात्वात्' मिथ्यात्वदलिकात् सम्यग्दृष्टि प्रवर्धमानपरिणामः पुद्गलानाकृष्य मिश्रे उपलक्षणमेतत् मिथ्यात्वदलिकात् सम्यकत्वे च सङ्क्रमयति। मिश्रस्य पुद्गलानां सङ्क्रमो द्वयोर्भवति। तद्यथा-सम्यक्त्वे मिथ्यात्वे च। तत्र सम्यग्दृष्टि सम्यक्त्वे सङ्क्रमयति मिथ्यादृष्टि-र्मिथ्यात्वे। 'सम्यक्त्वात्' सम्यक्त्वदलिकात् पुनः पुद्गलान्मिथ्यात्वं
सङ्क्रमयति न पुनर्मिश्रमिति ॥ साम्प्रतममुमेवार्थं प्रकारान्तरेणाह-

[भा.११३] मिच्छत्ताओ अहवा, मीसं सम्मं च कोइ संकमइ।
मीसाओ वा सम्मं, गुणवुड्ढी हायतो मिच्छं ॥

वृ-'अथवा' इत्युक्तस्यैवार्थस्य भणनप्रकारान्तरद्योतने। 'मिथ्यात्वात्' मिथ्यात्वदलिकात् पुद्गलानाकृष्य कश्चिन्मिश्रं सम्यक्तवं च सङ्क्रमयति। यदि वा कश्चिद्गुणैर्वृद्धिर्यस्य स गुणवृद्धि-प्रवर्धमानपरिणामः सम्यग्दृष्टिरित्यर्थः 'मिश्रात्' मिश्रदलिकात् पुद्गलानादाय सम्यकत्वं सङ्क्रमप्रवर्धमानपरिणामः सम्यग्दृष्टिरित्यर्थः 'मिश्रात्' मिश्रदलिकात् पुद्गलानादाय सम्यक्त्वं सङ्क्रमयति। 'हायकः' हीनपरिणामो मिथ्यादृष्टिरित्यर्थः मिश्रात् पुद्गलानाकृष्य मिथ्यात्वं सङ्क्रमयति ॥

[भा.११४] मिच्छत्ता संकंती, अविरुद्धा होति सम्म-मीसेसु।
मीसातो वा दुन्नि वि, न उ सम्मा परिणमे मीसं॥

वृ- मिथ्यात्वात् पुद्गलसङ्क्रान्ति सम्यक्त्व-मिश्रयोरविरुद्धा । 'मिश्रतो वा' सम्यग्मिथ्यात्वतो वा पुद्गलानादाय द्वावपि सङ्क्रमयति । तद्यथा-मिथ्यात्वं सम्यक्त्वं च । च :क्तमनन्तरम् । 'सम्यक्त्वात्' सम्यक्त्वदलिकात् पुनः पुद्गलानादाय न 'मिश्रं' मिश्रभावं परिमयति॥

[भा.११५] हायंते परिणामे, न कुणति मीसे उ पोग्गले सम्मे।
न य सोहिया सि विज्जंति केइ जे दानि वेएज्जा॥

वृ- यस्य तु सम्यग्दर्शनलाभे हीयमानः परिणामः स तस्मिन् हीयमाने परिणामे न मिश्रान् पुद्गलान् तुशब्दात् मिथ्यात्वपुद्गलांश्च सम्यक्त्वपुद्गलान् करोति। न च 'से' तस्य 'शोधिताः' पूर्वशोधिताः केचिदन्ये पुद्गला विद्यन्ते यान् 'इदानीम्' अधिकृतसम्यक्त्वपुञ्जनिष्ठाकाले वेदयेत्॥

[भा.११६] सम्मत्तपोग्गलाणं, वेदेउं सो य अंतिमं गासं।
पच्छाकडसम्मत्तो, मिच्छत्तं चेव संकमति॥

वृ- ततः सम्यक्त्वपुद्गलानामन्तिमग्रासं वेदयित्वा पश्चात्कृतसम्यक्त्वोऽपि मिथ्यात्वमेव सङ्क्रामति॥

[भा.११७] मिच्छत्तम्मि अखीणे, तेपुंजी सम्मदिट्ठिणो नियमा।
खीणम्मि उ मिच्छत्ते, दु-एकपुंजी व खवगो वा॥

वृ- अक्षीणे मिथ्यात्वे ये सम्यग्दृष्टयस्ते नियमात् त्रिपुञ्जिनः। क्षीणे तु मिथ्यात्वे द्विपुञ्जी मिथ्यात्वपुञ्जस्य क्षीणत्वाद्, एकपुञ्जी वा मिश्रपुञ्जक्षये। यदिवा क्षपकः सम्यक्त्वपुञ्जस्यापि क्षये। तदेवं त्रयाणामपि पुञ्जानां दृष्टान्तेन निर्णयः कृतः स्वरूपं च व्यावर्णितम्, साम्प्रतं पुञ्जत्रयस्याप्यवेदनत औपशमिकसम्यग्दृष्टिमाह-

[भा.११८] उवसामगसेढिगयस्स होति उवसामियं तु सम्मत्तं।
जो वा अकयतिपुंजो, अखवियमिच्छओ लहइ सम्मं॥

वृ- उपशमकश्रेणिगतस्य भवति सम्यक्त्वमौपशमिकम्, यो वा 'अकृतत्रिपुञ्जः' अपूर्वकरणे पुञ्जत्रयाकरणतः। तत्र क्षपकोऽपि दर्शनसप्तकस्यापूर्वकरणमारूढः पुञ्जत्रयं न करोति ततस्तद्यवच्छेदार्थमाह-अक्षपितमिथ्यात्वो यल्लभते सम्यक्त्वं तदौपशमिकं सम्यक्त्वमिति॥ एतौ द्वावप्यौपशमिकसम्यग्दृष्टी सम्यक्त्वमौपशमिकमन्तर्मुहूर्तमनुभूय तदनन्तरमवश्यं प्रतिपततः, तत्र दृष्टान्तद्वयमाह-

[भा.११९] वाही असव्वछिन्नो, कालाविक्खंकुरु व्व दड्ढदुमो।
उवसामगाण दोण्हवि, एते खलु होंति दिट्ठंता॥

वृ- यथा व्याधिरसर्वच्छिन्नः 'कालापेक्षं' क्रियाविशेषणमेतत् कालमपेक्ष्येत्यर्थः पुनरुद्भवति, दग्धो वा द्रुमः कालापेक्षं यथाङ्कुरं मुञ्चति; एवमुपशमितमपि मिथ्यात्वं कालमपेक्ष्य पुनरुद्रिक्तीभवतीति द्वयोरपि प्रतिपातः। तथा चाह-द्वयोरप्युपशमकयोरेतौ भवतो दृष्टान्तौ॥

तत्रोपशमश्रेणिगत औपशमिकसम्यग्दर्शनी देशप्रतिपातेन वा प्रतिपतति सर्वप्रतिपातेन वा। इतरोऽवश्यमेव सर्वप्रतिपातेन प्रतिपतति, मिथ्यात्वं गच्छतीत्यर्थः। तत्र दृष्टान्तमाह-

[भा.१२०] आलंबणमलहंती, जह सट्ठाणं न मुंचए इलिया।
एवं अकयतिपुंजो, मिच्छं चिय उवसमी एति॥

वृ-इह या तृणादिषु मुखप्रदेशेन सर्वतोऽग्रेतनं स्थानं परिभाव्य ततोऽग्रेतनं स्थानं सङ्क्रामति अन्यथा पश्चाद्वलते सा इलिका यथा पुरत आलम्बनमलभमाना स्वस्थानं न मुञ्चति; एवमकृतत्रिपुञ्जो गत्यन्तराभावाद् मिथ्यात्वमेवोपशमी याति। इयमत्र भावना-द्विविधस्तत्प्रथमतया सम्यग्दर्शन-प्रतिपत्ता, अतिविशुद्धो मन्दविशुद्धश्च। तत्र योऽतिविशुद्धः क्षायोपशमिकं सम्यग्दर्शनमासादयति सम्यक्त्वपुञ्जोदयात्। यस्तु मन्दविशुद्धः सोऽपूर्वकरणमपूढस्तीव्राध्यवसायाभावात् न मिथ्यात्वं त्रिपुञ्जीकर्तुमलम्, ततोऽनिवृत्तिकरणमुपगतोऽन्तरकरणं कृत्वा तत्र प्रविष्टस्तत्प्रथमतया औपशमिकसम्यग्दर्शनमनुभवति, अन्तकरणं चान्तर्मुहूर्तप्रमाणम्, अतस्तदद्धाक्षयेऽन्येषां पुद्गलानामभावतो मिथ्यात्वमेति॥ एतदेवाह-

[भा.१२१] खीणम्मि उदिन्नम्मी, अनुइज्जंते य सेसमिच्छत्ते।
अंतोमुहुत्तकालं, उवसमसम्मं लहइ जीवो॥

वृ- अनिवृत्तिकरणे प्रविष्टस्य यद् मिथ्यात्वं उदीर्णम्-उदयावलिकाप्रविष्टं तस्मिन् क्षीणे शेषे च मिथ्यात्वेऽपान्तरालेऽन्तरकरणतोऽनुदीयमानेऽन्तर्मुहूर्तं कालमौपशमिकं सम्यक्त्वं जीवो लभते, मिथ्यात्वदर्शनवेदनाऽभावात्॥ सोऽपि कथम् इत्यत आह-

[भा.१२२] ऊसरदेसं दड्ढेल्लयं च विज्झाइ वणदवो पप्प।
इय मिच्छस्स अनुदए, उवसमसम्मं मुणेयव्वं॥

वृ- यथा वनदवः 'ऊसरदेशं' तृणादिरहितं प्रदेशं दग्धं वा प्राप्य विध्यायति, 'इति' एवमन्तरकरणेप्रविष्टस्य मिथ्यात्वपुद्गलाभावात् 'मिथ्यात्वस्य' मिथ्यादर्शनस्य अनुदयः-अवेदनम् ततस्तस्मिन् सत्यौपशमिकं सम्यक्त्वं ज्ञातव्यम्॥ किञ्च-

[भा.१२३] जिम्हीभवंति उदया, कम्माणं अत्थि सुत्त उवदेसो।
उववायादी सायं, जह नेरइया अनुभवंति॥

वृ- द्विविधेऽप्यौपशमिकसम्यग्दृष्टौ शेषाणामपि कर्मणामुदया जिह्मीभवन्ति। न चैतद्वचनमात्रम्, यतोऽस्त्येव 'सूत्रे' ग्रन्थान्तररूपे साक्षादुपदेशः, यथा-नैरयिका उपपातादौ सातमनुभवन्तीति॥ एनमेव दर्शयति-

[भा.१२४] उववाएण व सायं, नेरइओ देवकम्मुणा वा वि।
अज्झवसाणनिमित्तं अहवा कम्मानुभावेणं॥

वृ- नैरयिक उपपातेन सातमनुभवति। किमुक्तं भवति ?-उपपातकाले सातं वेदयते, तदानीं हि न तस्य क्षेत्रजा वेदना न परस्परोदीरिता नापि परमाधार्मिकोदीरितेति। अथवा 'देवकर्मणा' देवक्रियया सातमनुभवति, देवो हि कश्चिन्महर्द्धिकः पूर्वभवस्नेहतस्तत्र गत्वा कस्यापि कञ्चित्कालं वेदनामुपशमयति, ततः सातं वेदयते। अथवा 'अध्यवसाननिमित्तं' तथाविधशुभाध्यवसायप्रवृत्ति-निमित्तं सातमासादयति, यथा सम्यग्दर्शनं लभमानः, सम्यग्दर्शनलाभे हि जात्यन्धस्य चक्षुर्लाभ

इव जायते महान् प्रमोद इति । ''अहवा कम्मानुभावेणं''ति अथवा तीर्थकरजन्माद्यधिकृत्य यः कर्मणां-सातवेदनीयप्रभृतीनां शुभानाम् अनुभावः-अनुभवनम् उदयेन वेदनं तेन सातमनुभवति। तथाहि-भगवतां तीर्थकृतां जन्मनि दीक्षायां ज्ञाने च तत्प्रभावतो नरकेऽप्यालोको जायते, नैरयिकाणामपि च शुभकर्मोदयप्रसरतः सातमिति ।। अथ मिथ्यादृष्टिर्यदा सम्यक्त्वं सङ्क्रामति तदा स तत्समयं कति ज्ञानानि लभते ? उच्यते- द्वे त्रीणि वा । तथा चाह-

[भा.१२५] विब्भंगी उ परिणमं, सम्मत्तं लहति मति-सुतोहीणि ।
तइभावम्मि मति-सुते, सुतंभं केइ उ भयंति ।।

वृ- 'विभङ्गी' विभङ्गज्ञानी सम्यक्त्वं परिणमयन् तत्समयं मति-श्रुता ऽवधीन् लभते । 'तदभावे' तस्य-विभङ्गस्याभावे मिथ्यादृष्टिः सम्यक्त्वं परिणमयन् तत्कालं 'मति-श्रुते' मतिज्ञानश्रुतज्ञाने लभते । केचित् पुनः श्रुतलाभं 'भजन्ति' विकल्पयन्ति, 'यस्याधीतं श्रुतं स लभते श्रुतज्ञानम्, इतरो न लभते' इत्याचक्षत इति भावः । तथाहि-ये स्वयम्भूरमणसमुद्रे मत्स्यास्ते प्रतिमासंस्थितान् मत्स्यान् उत्पलानि वा दृष्ट्वेहा-ऽपोहादि कुर्वन्तो जातिस्मरणः सम्यक्त्वमासादयन्ति आभिनिबोधिकज्ञानं च, यत्तु श्रुतज्ञानं तन्नासादयन्ति, अनधीतश्रुतत्वात् । ते त्वधीतश्रुतास्ते त्रीण्यपि युगपदासादयन्ति ।। एतद् दूषयितुमाह-

[भा.१२६] अन्नाण मती मिच्छे, जढम्मि मतिनाणतं जहा एइ ।
एमेव य सुयलंभो, सुयअन्नाणे परिणयम्मि ।।

वृ- यथा मिथ्यात्वे त्यक्ते मति 'अज्ञानम्' अज्ञानस्वरूपा मतिज्ञानतामेति एवमेव श्रुताज्ञाने 'परिणते' अपगते श्रुतलाभो भवति । किञ्च ते प्रष्टव्याः-सम्यक्त्वलाभसमये श्रुताज्ञानमस्ति ? किं वा न ?, तत्र यद्याद्यः पक्षस्तर्हि तस्याज्ञानित्वान्मिथ्यादृष्टित्वप्रसङ्गः; अथ नास्ति तर्हि श्रुताज्ञानमपि केवलमाभिनिबोधिकज्ञानी स्यात; न चैतदुपपन्नम्, श्रुतज्ञानमन्तरेण केवलस्याऽऽभिनिबोधिकज्ञानस्याभावात् ''जत्थ मतिनाणं इत्थ सुयनाणं, जत्थ सुयनाणं तत्थ मतिनाणं, दो वि एयाइं अन्नोन्नमनुयगाइं'' इति वचनादिति ।।

तदेवमुक्तमौपशमिकं सम्यक्त्वम्, अधुना सासादनसम्यक्त्वमाह-

[भा.१२७] उवसमसम्मा पडमाणतो उ मिच्छत्तसंकमणकाले ।
सासायणो छावलितो, भूमिमपत्तो व पवडंतो ।।

वृ- 'मिथ्यात्वसङ्क्रमणकाले' मिथ्यात्वसङ्क्रमणाभिमुख उपशमसम्यक्त्वात् प्रतिपतन् जघन्यत एकसामयिक उत्कर्षतः षडावलिकः सासादनो भवति । किंरूपः सः ? इत्याह-भूमिमप्राप्त इव प्रपतन् । यथा मालात् प्रपतन् भूमिमप्राप्तोऽपान्तराले वर्त्तते तथोपशमसम्यक्त्वात् प्रपतन् मिथ्यात्वमद्याप्यप्राप्तोऽपान्तराले वर्त्तमानः सासादन इति ।। अथ कथं स सम्यग्दृष्टि उपशमसम्यक्त्वतः प्रच्यवमानत्वात् ? उच्यते-च्यवनेऽप्यव्यक्तमुपशमगुणवेदनात् । अत्रैव दृष्टान्तमाह-

[भा.१२८/१] आसादेउं व गुलं, ओहीरंतो न सुट्ठु जा सुयति ।

वृ- यथा कश्चित् पुरुषो गुडमास्वाद्य तदनन्तरं 'ओहीरति' निद्रायते, न पुनः सुट्ठु अद्यापि स्वपिति, स च निद्रायमाणोऽव्यक्तमास्वादितगुडमाधुर्यमनुभवति; एवमुपशमसम्यक्त्वात्

प्रच्यवमानो मिथ्यात्वमद्याप्यप्राप्तोऽव्यक्तमुपशमगुणं वेदयत इति सम्यग्दृष्टि ॥

सम्प्रति सासादनशब्दव्युत्पत्तिमाह-

[भा.१२८/२] सं सायं सायंतो, सस्सादो वा वि सासाणो ॥

वृ- 'स्वं' आत्मीयम् आयं सातयन् "सासादो वा वि सासाणो" 'सास्वादः' अव्यक्तोपशमगुणास्वादसहित इति कृत्वा 'सास्वादनः' सह आस्वादनं यस्य स तथेति व्युत्पत्तेः ॥

अधुना क्षायोपशमिकं सम्यक्त्वमाह-

[भा.१२९] जो उ उदिन्ने कीणे, मिच्छे अनुदिन्नगम्मि उवसंते।
सम्मीभावपरिणतो, वेयंतो पोग्गले मीसो ॥

वृ-यस्तु 'उदीर्णे' उदयावलिकाप्रविष्टे मिथ्यात्वे क्षीणे 'अनुदीर्णे' अनुदयप्राप्ते च 'उपशान्ते' उपशान्तं नाम किञ्चिन्मिथ्यात्वरूपतामपनीय सम्यक्त्वरूपतया परिणतं किञ्चिन्मिथ्यात्वरूपमेव सद् भस्मच्छन्नाग्निरिवानुद्रेकावस्थाप्राप्तम्, तस्मिन् तथारूपे सति 'पुद्गलान्' सम्यक्त्वरूपान् 'वेदयमानः' सम्यग्भावपरिणतः सः 'मिश्र(श्रः)' क्षायोपशमिकसम्यग्दृष्टिः । सम्यक्त्वरूपधर्मनिर्देशप्रक्रमेऽपि धर्मिणा निर्देशो धर्म-धर्मिणोः कथञ्चिदभेदख्यापनार्थः ॥ एवं पूर्वत्र परत्र च भावनीयम् ॥ इदानीं वेदनं सम्यक्त्वमाह-

[भा.१३०] जो चरमपोग्गले पुन, वेदेती वेयगं तयं बिंति ।
केसिंचि अणादेसो, वेयगदिट्ठी खओवसमो ॥

वृ- 'यः' दर्शनसप्तकक्षपको यतोऽनन्तरसमये क्षीणसम्यक्त्वो भविष्यति तस्मिन् समये वर्त्तमानः सम्यग्दर्शनस्य चरमान् पुद्गलान् वेदयते, तस्य 'तत्' चरणपुद्गलवेदनं वेदकसम्यक्त्वं पूर्वसूरयो ब्रुवते । 'केषाञ्चित् पुनः' बोटिकानामयमादेशः-'वेदकदृष्टिः' वेदकसम्यग्दर्शनं क्षायोपशमिकं सम्यग्दर्शनम्, सोऽनादेशः, सम्यक्त्वापरिज्ञानादिति ॥ सम्प्रति क्षायिकदर्शनमाह-

[भा.१३१] दंसणमोहे खीणे, खयदिट्ठी होइ निरवसेसम्मि ।
केण उ सम्मो मोहो, पडुच्च पुव्वं तु पन्नवणं ॥

वृ- दर्शनमोहे 'निरवशेषे' त्रिप्रकारेऽपि क्षीणे 'क्षयदृष्टिः' क्षायिकं सम्यग्दर्शनं भवति । आह यद् मिथ्यात्वदर्शनं तद् मोहः स्यात्, तस्य सम्यग्दर्शनमोहकत्वात्, यत् 'सम्यक्' सम्यग्दर्शनं तत् केन कारणेन मोहः ? सूरिराहपूर्वां प्रज्ञापनं प्रतीत्य । किमुक्तं भवति ? -यथा मदनकोद्रवाणां निर्मदनीकृतानामप्योदनः स एष मदनकोद्रवौदन इति व्यपदिश्यते, तेषां पूर्वं समदनत्वात्; एवं तेऽपि सम्यक्त्वपुद्गलाः पूर्वं मिथ्यात्वपुद्गला आसीरन्, ते च दर्शनमोहकाः, अतः पूर्वभावप्रज्ञापनामधिकृत्य तेऽपि दर्शनमोह इति व्यपदिश्यन्ते ॥ आह पूर्वमिदमुक्तम्-"आसज्ज उ सामित्तं, लोइय लोउत्तरे भयणा" तत्र किं सर्वमेव द्वादशाङ्गं गणिपिटकं मिथ्यादृष्टिपरिगृहीतं भवति ? किं वा किञ्चिद् ? इत्यत आह-

[भा.१३२] चोद्दस दस य अभिन्ने, नियमा सम्मं तु सेसए भयणा ॥
मति-ओहिविवच्चासो, वि होति मिच्छे न उण सेसे ॥

वृ- यस्य चतुर्दश पूर्वाणि यावद् दश च पूर्वाणि 'अभिन्नानि' परिपूर्णानि सन्ति तस्मिन् नियमात् सम्यक्त्वम् । 'शेषे' किञ्चिदूनदशपूर्वधरादौ 'भजना' सम्यक्त्वं वा स्यान्मिथ्यात्वं वेत्यर्थः ।

किञ्च मतेरवधेश्च मिथ्यात्वे विपर्यासो भवति । तद्यथा-मतेर्मत्यज्ञानम्, अवधेश्च विभङ्गज्ञान-मिति। श्रुतज्ञानस्य तु विपर्यासो दर्शित एव, "सेसए भयणा" इति वचनात्। 'शेषके' मनःपर्यवज्ञाने केवलज्ञाने च नास्ति विपर्यासः ॥ अथ 'यदेवेदं भगवद्भिरुपदिष्टं तदेव तत्त्वम् युक्तियुक्तत्वाद् नेतरम्' इति सम्यग्दर्शनम् ज्ञानमप्येवंरूपमेवेति कः सम्यग्दर्शन-ज्ञानयोः प्रतिविशेषः ? उच्यते-

[भा.१३३]　दंसणमोग्गह ईहा, नाणमवातो उ धारणा जह उ ।
तह तत्तरुई सम्मं, रोइज्जइ जेण तं नाणं ॥

वृ- यथा तुल्येऽववोधे दर्शन-ज्ञानयोर्भेदः-अवग्रह ईहा दर्शनम्, सामान्याववोधात्मकत्वात्; अपायो धारणा च ज्ञानम्, विशेषाववोधरूपत्वात्; तथा यस्तत्त्वानामवगमः स ज्ञानम्, या त्ववगतेषु तत्त्वेषु रुचि-परमा श्रद्धा आत्मनः परिमामविशेषरूपा सा सम्यग्दर्शनम्, येन तद् ज्ञानं 'रोच्यते' रुच्यात्मकं क्रियते ॥ एतदेव स्पष्टयति-

[भा.१३४]　सोच्चा व अभिसमेच्च व, तत्तरुई चेव होइ सम्मत्तं ।
तत्थेव य जा विरुई, इतरत्थ रुई व मिच्छत्तं ॥ सम्मत्तं गतं ॥

वृ- श्रुत्वा केवलिप्रभृतीनामुपदेशम् अभिसमेत्यवा जातिस्मरणादिना या तत्त्वेषु रुचिर्भवति सा सम्यक्त्वम् । या तु 'तत्रैव' तत्त्वेषु विरुचि 'इतरेषु' अतत्त्वेषु रुचि सा मिथ्यात्वमिति ॥

वृ- उक्तं सम्यकश्रुतं मिथ्यात्वश्रुतं च । सम्प्रति साद्यनादिश्रुते आह-

[भा.१३५]　अव्वोच्छित्तनयट्ठा, एयं तु अणाइयं जहा लोए ।
वोच्छेयनया सादी, पप्प गईतो जहा जीवो ॥

वृ- अव्यवच्छित्तिनयो नाम द्रव्यास्तिकनयः तस्य अर्थाद्-आदेशात् 'एतत्' श्रुतज्ञानमनादिकम् उपलक्षणमेतत् अनिधनं च, यथा लोकस्त्रिष्वपि कालेषु भावादनादिरनिधनश्च; तन्मतेन हि न सतः सर्वथा नाशः, नाऽप्येकान्तेनासत उत्पाद इत्यनाद्यनिधनता । 'व्यवच्छेदनयात्' पर्यायास्तिकमतेन पुनः सादि उपलक्षणमेतत् सपर्यवसितं च, यथा गतीः 'प्राप्य' अधिकृत्य जीवः; तथाहि-नैरयिको नैरयिकत्वेनोत्पद्यमानः सादि, तद्गतेस्तदानीमेव भावात्; नैरयिकत्वेन तु विनश्यन् सपर्यवसितः, तस्य हि पर्यायाः प्रधानम्, ते चोत्पद्यन्ते विनश्यन्ति चेति सादि-सपर्यवसितता ॥ अथवा अन्यथा साद्यनादित्वम्, तदेवाह-

[भा.१३६]　दव्वाचउक्कं वा, पडुच्च सादी व होज्जऽनादी वा ।
दव्वम्मि एगपुरिसं, पडुच्च सादी सनिहणं च ॥

वृ- वाशब्दः प्रकारान्तरद्योतने । 'द्रव्यादिचतुष्कं' द्रव्य-क्षेत्र-काल-भावान् प्रतीत्य श्रुतज्ञानं सादि वा स्यादनादि वा, उपलक्षणमेतत्, सपर्यवसितमपर्यवसितं च । तत्र द्रव्ये एकं पुरुषं प्रतीत्य सादि-निधनम् । कथम् ? इति चेत्, उच्यते-यदा तत्प्रथमतया तदधीते तदा पूर्वमभावात् सादि । सपर्यवसानं पुनरेभिर्वक्ष्यमाणैः पञ्चभि स्थानैः ॥ तान्येवाह-

[भा.१३७]　पणगं खलु पडिवाए, तत्थेगो देवभावमासज्ज ।
मनुये रोग-पमाया, केवल-मिच्छत्तगमने वा ॥

वृ- 'प्रतिपाते' प्रतिपातविषयं खलु पञ्चकम्, पञ्चभिः स्थानैः प्रतिपात इत्यर्थः । तत्रैकः प्रतिपातो देवभावमासाद्य वेदितव्यः । द्वितीयो मनुष्ये रोगात् । तृतीयो मनुष्यभवे एव प्रमा-

दात् । चतुर्थ केवलभावे ।। पञ्चमो मिथ्यात्वगमने ।। तत्र प्रथमं प्रतिपातं देवभावमासाद्य भावयति-

[भा.१३८] चउदसपुव्वी मनुओ, देवत्ते तं न संमरइ सव्वं ।
देसम्मि होइ भयणा, सट्ठाणभवे वि भयणा उ ।।

**वृ-** चतुर्दशपूर्वी मनुजो देवत्वे प्राप्ते सति 'तत्' श्रुतं सर्वं न संस्मरति, विषयप्रमादतस्तथाविधोपयोगाभावात्; देशे भवति 'भजना' विकल्पना, सा त्वेवम्-कश्चिद्देशं स्मरति, कश्चिद्देशस्यापि देशम्, कश्चित्पुनरेकादशाङ्गानि सर्वं स्मरति, कश्चिदेकमपि देशमिति । तदेवं भावितो देवभावमासाद्य प्रथमः प्रतिपातः । सम्प्रति शेषान् भावयति-"सट्ठाणभवे वि भयणा उ" स्वस्थानं-मनुष्यत्वं तस्मिन्नपि भवे रोगादिभि 'भजना' विकल्पना । तथाहि-रोगे समुत्पन्ने तथाविधपीडावशतः स्मृतेरुपहननान्न स्मरति, प्रमादतो वा गुणनाभावातोऽपगच्छति श्रुतमधीतम्, केवलज्ञानभावे वा श्रुतज्ञानस्य क्षयः, "नट्ठम्मि उ छाउमत्थिए नाणे" इति वचनात्, मिथ्यादर्शनगमने वा सर्वश्रुताभावः, अज्ञानीभवनादिति ।। आह श्रुतज्ञानं जीवादन्यत् ? अन्यत् ? उच्यते-अनन्यत् । यत आह-

[भा.१३९] नियमा सुयं तु जीवो, जीवे भयणा उ तीसु ठाणेसु ।
सुयनाणि सुयअनाणी, केवलनाणी व सो होज्जा ।।

**वृ-** श्रुतं नियमाज्जीवः, तत्परिणामत्वात् । जीवे पुनः 'त्रिषु स्थानेषु' त्रीणि स्थानान्यधिकृत्य 'भजना' विकल्पना । तथाहि-स जीवः कदाचित् श्रुतज्ञानी कदाचित्केवलज्ञानीति ।। सम्प्रति क्षेत्रतः कालतो भावतश्च सादि-सपर्यवसिततामाह-

[भा.१४०] खित्ते भरहेवए, काले उ समातो दोन्नि तत्थेव ।
भावे पुण पन्नवगं, पन्नवणिज्जे य आसज्जा ।।

**वृ-** क्षेत्रतः पञ्च भरतानि पञ्चैरावतान्यधिकृत्य, काले 'तत्रैव' पञ्चसु भरतेषु पञ्चस्वैरावतेषु 'द्वे समे' अवसर्पिणीमुत्सर्पिणीं चाधिकृत्य सादि-सपर्यवसितम्, यावत् तीर्थकृतां तीर्थानुवृत्तिस्तावद् भवति शेषकालं नेति कृत्वा । भावे पुनः प्रज्ञापकं प्रज्ञापनीयांश्च भावानासाद्य सादि पर्यवसितम्।। कथम् ? इत्याह-

[भा.१४१] उवयोग-सर-पयत्ता, ठाणविसेसा य हुंति पन्नवगे ।
गति-ठाण-भेय-संघाय-वन्नमादी य भावम्मि ।।

**वृ-** प्रज्ञापकस्यकदाचिदुपयोगः शुभो भवति कदाचिदुदात्तः कदाचिदनुदात्त कदाचिदनुदात्तः कदाचित्स्वरितः प्रयत्नो नाम-आदरः स क्षणे क्षणेऽन्यादृशः । 'स्थानविशेषाः' स्थानप्रकाराः वीरासनाद्याः । एवामुत्पादे प्रज्ञापकस्यापि तेन तेन भावेनोत्पादो विनाशे च विनाशः । प्रज्ञापकस्योत्पादे विनाशे च श्रुतज्ञानस्यापि तदात्मकत्वादुत्पादो विनाशश्च । तत एवं प्रज्ञापकमधिकृत्य सादि-सपर्यवसितम्, अधुना प्रज्ञापनीयान् भावानधिकृत्य तद् भावयति-'गति' इत्यादि । पदैकदेशे पदसमुदायोपचाराद् 'गति' इति गतिलक्षणो धर्मास्तिकायः परिगृह्यते । स जीवस्य पुद्गलस्य वा गतिपरिणामपरिणतस्योपग्रहे वर्तित्वात् तस्यैव स्थानपरिणामपरिणतस्योपग्रहेन वर्त्तते इत्यसौ सादि-पर्यवसितः । एवमधर्मास्तिकायोऽपि स्थानलक्षणो जीवस्य पुद्गलस्य वा स्थानपरिणतस्योपग्रहे वर्तित्वात् तस्यैव गतिपरिणामपरिणतस्योपग्रहे न वर्त्तते इति सादि-सपर्यवसितः ।

अथवा गतिपरिणतं द्रव्यं भूत्वा स्थानपरिणतं भवति, स्थानपरिणतं भूत्वा गतिपरिणतम्। यदि वा ''ठाण''त्ति एकप्रदेशावगाढं भूत्वा द्विप्रदेशावगाढं भवति, द्विप्रदेशावगाढं भूत्वा एकप्रदेशावगाढम्, एवं विस्तरेण सर्वाऽवगाहना द्रष्टव्या। तथा पुद्गलस्कन्धानां तेन तेन प्रकारेण भेदो भवति। तेषामेव च द्विप्रदेशादीनां सङ्घातः। तथा ''वण्ण''त्ति परमाणुः कालवर्णपरिणतो भूत्वा नीलवर्णपरिणतो भवति, नीलवर्णपरिणतो भूत्वा कालवर्णपरिणतः, एवं विस्तरेण वर्णपरिणामो वक्तव्यः। आदिशब्दाद् गन्ध-रस-स्पर्श-संस्थानानां परिग्रहः, तेऽप्येवं वक्तव्याः- सुरभिगन्धपरिणतो भूत्वा दुरभिगन्धपरिणतो भवति इत्यादि विस्तरेणोपयुज्य वक्तव्यम्। इत्थं च प्रज्ञापनीयभावानां प्रज्ञापने श्रुतज्ञानमपि तथा तथा परिणमत इति सादि-सपर्यवसितं द्रष्टव्यम्॥ चतुष्कमधिकृत्यानाद्यपर्यवसितत्वमाह-

[भा.१४२] दव्वे नानापुरिसे, खेत्ते विदेहाइँ कालो जो तेसु।
खयउवसम भावम्मि य, सुयनाणं वट्टए सययं॥

वृ- 'द्रव्ये' द्रव्यतो नानापुरुषान् प्रतीत्य, क्षेत्रतः पञ्च विदेहान्, 'तेष्वेव च' पञ्चसु विदेहेषु यः कालस्तं कालमधिकृत्य, भावे क्षयोपशमरूपे श्रुतज्ञानं 'सततं' सर्वकालं वर्त्तत इत्यनाद्यपर्यवसितता॥ सम्प्रति गमिकमगमिकं चाह-

[भा.१४३] भंग-गणियादि गमियं, जं सरिसगमं च कारणवसेणं।
गाहादि अगमियं खलु, कालिय तह दिट्ठिवाए य॥

वृ- 'दृष्टिवादो गमिकम्, कालिकश्रुतमगमिकम्' एतद् बाहुल्येनोच्यते अतोऽपवदति ''भंगगणिये''त्यादि पूर्वार्धम्। कालिकश्रुते दृष्टिवादे वा यत्र भङ्गाः-चतुर्भङ्गादयः गणितं सङ्कलनादि, आदिग्रहणेन क्रियाविशाले पूर्वे यत् छन्दः प्रकृतं तत् सदृशगममिति तस्य परिग्रहः; यच्च 'कारणवशेन' अर्थवशेन सदृशगमम्, यथा निशीथस्य विंसतितम उद्देशकः, एतद् गमिकम्। शेषं गाथादि आदिशब्दात् श्लोकादिपरिग्रहः अगमिकम्॥ सम्प्रत्यङ्गगतमनङ्गगतं च प्रतिपादयति-

[भा.१४४] गणहर-थेरकयं वा, आदेसा मुक्कवागरणतो वा।
धुव-चलविसेसतो वा, अंगा-ऽनंगेसु नाणत्तं॥

वृ- यद् गणधरैः कृतं तदङ्गप्रविष्टम्। यत्पुनर्गणधरकृतादेव स्थविरैर्निर्यूढम्; ये चादेशाः, यथा-आर्यमङ्गुराचार्यस्त्रिविधं शङ्खमिच्छति-एकभविकं बद्धायुष्कमभिमुखनामगोत्रं च, आर्यसमुद्रो द्विविधम्-बद्धायुष्कमभिमुनामगोत्रं च, आर्यसुहस्ती एकम्-अभिमुखनामगोत्र मिति; यानि च मुक्तकानि व्याकरणानि, यथा-''वर्ष देव! कुणालायाम्०'' इत्यादि, तथा ''मरुदेवा भगवती अनादिवनस्पतिकायिका तद्भवेन सिद्धा'' इत्यादि; एतत्स्थविरकृतम् आदेशा मुक्तकव्याकरणतश्च अनङ्गप्रविष्टम्। अथवा ध्रुव-चलविशेषतोऽङ्गा-ऽनङ्गेषु नानात्वम्। तद्यथा-ध्रुवं अङ्गप्रविष्टम्, तच्च द्वादशाङ्गम्, तस्य नियमतो निर्यूहणात् चलानि प्रकीर्णकानि, तानि हि कदाचिन्निर्यूह्यन्ते कदाचिन्न, तान्यनङ्गप्रविष्टमिति॥ आह दृष्टिवादे सर्वमेव वचगतमवतरति, ततः किमर्थमङ्गतानां निर्यूहणम्? इति, तत आह-

[भा.१४५] जइ वि य भूयावादे, सव्वस्स वयोगयस्स ओयारो।
निज्जूहणा तहा वि य, दुम्मेहे पप्प इत्थी य॥

**वृ-** यद्यपि च 'भूतवादे' दृष्टिवादे सर्वस्य वचोगतस्यावतारः तथापि शेषाणामज्ञानामनज्ञानां च निर्यूहणा दुर्मेधसः पुरुषान् प्रतीत्य स्त्रियश्च । नहि प्रज्ञावत्योऽपि स्त्रियो दृष्टिवादं पठन्ति ॥ किं कारणम् ? अत आह-

[भा.१४६] तुच्छा गारवबहुला, चलिंदिया दुब्बला य धीईए ।
इति अतिसेसज्झयणा, भूयावादो उ नो थीणं ॥

**वृ-** दृष्टिवादे हि बहवो विद्यातिशयाः सर्वकामप्रदा उपवर्ण्यन्ते, सा च स्त्र स्वभावात् 'तुच्छा' अल्पसत्त्वा, तथा 'गौरवबहुला' स्तोकायामप्यर्थवृद्धऔ मानातिरेकतो व्यर्थसम्भवात्, 'चलेन्द्रिया' स्वभावत एव तदिन्द्रियाणामतिलम्पटत्वात्, तथा 'धृत्या' मानसेनाऽवष्टम्भेन दुर्बला, 'इति' अस्मात् कारणात् अतिशेषाणि-अतिशायीनि अध्ययनानि-महापरिज्ञा-ऽरुणोपपातादीनि 'भूतवादश्च' दृष्टिवादो न स्त्रीणामनुज्ञातः ॥ तदेवमुक्तं चतुर्दशभेदं श्रुतज्ञानम्, अक्षरादि-अनक्षर-विशेषश्च । आह परः-केन पुनः कारणेनाक्षरा-ऽनक्षरश्रुते प्रथममुपात्ते ? तत आह-

[भा.१४७] सुणतीति सुयं तेणं, सवणं पुण अक्खरेयरं चेव ।
तेनऽक्खरेयरं वा, सुयनाणे होति पुव्वं तु ॥

**वृ-** इह यस्मात् प्रतिपत्ता तद् उच्यमानं शृणोति तेन कारणेन तत् श्रुतमित्युच्यते, 'श्रूयत इति श्रुतम्' इति व्युत्पत्तेः । श्रवणं पुनः 'अक्षरेतरं चैव' अक्षरस्य इतरस्य च-अनक्षरस्य, 'तेन' कारणेन श्रुतज्ञान प्ररूप्यमाणे पूर्वमक्षरमनक्षरं चोपात्तमिति ॥

सम्प्रति युदक्तं मूलद्वारगाथायां "प्रकृतम्" इति तत्प्ररूपणार्थमाह-

[भा.१४८] इत्थं पुन अहिगारो, सुयनाणेणं जतो हवति तेणं ।
सेसाणमप्पणो वि य, अनुयोग पईव दिट्ठंतो ॥

**वृ-** तदेवं मङ्गलनिमित्तं पञ्च ज्ञानानि प्ररूपितानि । एतेषु च पञ्चसु ज्ञानेषु मध्येऽत्राधिकारः श्रुतज्ञानेन । किं कारणम् ? अत आह-'यतः' यस्मात् कारणात् 'तेन' श्रुतज्ञानेन 'शेषाणाम्' आभिनिबोधिका-ऽवधि-मनःपर्याय-केवलानामात्मनश्च 'अनुयोगः' भाषणं भवति । अत्र दृष्टान्तः प्रदीपः-यथा प्रदीपो घटादीनामात्मनश्च प्रकाशकः एवं श्रुतज्ञानं शेषाणामात्मनश्चानुयोग कारकम् । उक्तं च-

सुयनाणं महिड्ढीयं, केवलं तदनंतरं ।
अप्पणो सेसगाणं च, जम्हा तं पविभावगं ॥

तेन कारणेन अत्र श्रुतज्ञानेनाऽधिकारः ॥ तस्य च श्रुतज्ञानस्योद्देशक-समुद्देशादि चतुष्टयं भवति, तत्राऽनुयोगेऽधिकारः, स चैतद्वारैरनुगन्तव्यः-

[भा.१४९] निक्खेवेगट्ठ निरुत्त विहि पवित्ती य केण वा कस्स ।
तद्दार भेय लक्खण, तदरिह परिसा य सुत्तत्थो ॥

**वृ-** अनुयोगस्य 'निक्षेपः' नामादिन्यासो वक्तव्यः । तदनन्तरं तस्यैकार्थिकानि । तदनु निरुक्तं वक्तव्यम् । ततः को विधिरनुयोगे कर्त्तव्ये इति विधिर्वक्तव्यः । तथा 'प्रवृत्तिः' प्रसवोऽनुयोगस्यवक्तव्यः । तदनन्तरं केनाऽनुयोगः कर्त्तव्य इति वक्तव्यम् । ततः परं कस्य शास्त्रस्य कर्त्तव्य इति । तदनन्तरं तस्य-अनुयोगस्य द्वाराणि-उपक्रमादीनि वक्तव्यानि, तत्र

तेषामेव भेदः । ततः परं सूत्रस्य लक्षणम् । तदनन्तरं तस्य-सूत्रस्य अर्हा-योग्याः । ततः परं परिषत् । ततः सूत्रार्थ । एष द्वारगाथासङ्क्षेपार्थः, व्यासार्थस्तु प्रतिद्वारं वक्ष्यते ।। तत्र प्रथमतो निक्षेपद्वारमाह-

[भा.१५०] निक्खेवो नासो त्ति य, एगट्ठं सो उ कस्स निक्खेवो ।
अनुओगस्स भगवओ, तस्स इमे वन्निया भेया ।।

वृ- निक्षेपः न्यास इत्येकार्थम् । पर आह-स निक्षेपः कस्य कर्त्तव्यः ? सूरिराह-अनुयोगस्य भगवतः । 'तस्य च' निक्षेपस्य 'इमे' वक्ष्यमाणा वर्णिता भेदाः ।। तानेवाह-

[भा.१५१] नामं ठवणा दविए, खेत्ते काले य वयण भावे य ।
एसो अनुओगस्स उ, निक्खेवो होइ सत्तविहो ।।

वृ- नामानुयोगः स्थापनानुयोगो द्रव्यानुयोगः क्षेत्रानुयोगः कालानुयोगो वचनानुयोगो भावानुयोगश्च । एषोऽनुयोगस्य सप्तविधो निक्षेपः ।। तत्र नाम-स्थापने प्रतीते इति ते अनाध्त्य शेषाणां द्रव्याद्यनुयोगानां भेदानाह-

[भा.१५२] सामित्त-करण-अहिगरणतो य एगत्त तह पुहत्ते य ।
नामं ठवणा मोत्तुं, इति दव्वादीण छब्भेया ।।

वृ- 'स्वामित्वं' सम्बन्धः 'करणं' साधकतमम् 'अधिकरणं' आधारः, एतैः प्रत्येकमेकत्वेन 'पृथक्त्वेन च' बहुत्वेन पञ्चानां द्रव्यादीनामनुयोगो वक्तव्यः । 'इति' एवं नाम स्थापनां च मुक्त्वा द्रव्यादीनामनुयोगस्य प्रत्येकं षड् भेदा भवन्ति । तद्यथा-द्रव्यस्य वा १ द्रव्याणां वा २ द्रव्येण वा ३ द्रव्यैर्वा ४ द्रव्ये वा ५ द्रव्येषु वा ६ अनुयोगो द्रव्यानुयोगः । एवं क्षेत्र-काल-वचनभावानुयोगानामपि प्रत्येकं षड्भेदताऽवसेया ।। तत्र प्रथमतो द्रव्यस्यानुयोगमाह-

[भा.१५३] दव्वस्स उ अनुओगो, जीवदव्वस्स वा अजीवस्स ।
एक्केक्कम्मि य भेया, हवंति दव्वाइया चउरो ।।

वृ- द्रव्यस्यानुयोगो द्विधा-जीवद्रव्यस्य वा अजीवद्रव्यस्य वा । एकैकस्मिन्ननुयोगे द्रव्यादिकाश्चत्वारो भेदाः । किमुक्तं भवति ? -जीवद्रव्यानुयोगोऽजीवद्रव्यानुयोगो वा प्रत्येकं द्रव्यतः क्षेत्रतः कालतो भावतश्च भवति ।। तत्र जीवद्रव्यानुयोगं द्रव्यादित आह-

भआ। (१५४] दव्वेनिक्कं दव्वं, संखातीतप्पदेसमोगाढं ।
काले अनादिनिहणं, भावे नाणाइयाऽनंता ।।

वृ- द्रव्यतो जीवद्रव्यमेकम्, क्षेत्रतोऽसङ्ख्येयप्रदेशावगाढम्, कालतोऽनाद्यनिधनम्, भावतो ज्ञानादिकाः पर्याया अनन्ताः, तद्यथा-अनन्ता ज्ञानपर्यायाः, अनन्ता दर्शनपर्यायाः, अनन्ताश्चारित्रपर्यवाः, अनन्ता अगुरुलघुपर्यवाः ।। अधुना द्रव्यादिभिरजीवद्रव्यस्यानुयोगमाह-

[भा.१५५] एमेव अजीवस्सवि, परमाणू दव्वमेगदव्वं तु ।
खेत्ते एगपएसे, ओगाढो सो भवे नियमा ।।

[भा.१५६] समयाइ ठिति असंखा, ओसप्पिणीओ हवंति कालम्मि ।
वण्णादि भावऽनंता, एवं दुपदेसमादी वि ।।

वृ- 'एवमेव' अनेनैव प्रकारेण 'अजीवस्यापि' अजीवद्रव्यस्याप्यनुयोगो वक्तव्यः ।

तद्यथापरमाणुर्द्रव्यत एकं द्रव्यम्, क्षेत्रत एकप्रदेशावगाढः, कालतो जघन्यतः स्थिति 'समयादि' एको द्वौ त्रयो वा समयाः, उत्कर्षतः 'असङ्खयाः' असङ्ख्येया अवसर्पिण्य उत्सर्पिण्यश्च भवन्ति, भावतोऽनन्ता वर्णादिपर्यायाः, तद्यथा-अनन्ता वर्णपर्यवाः, अनन्ता गन्धपर्यवाः, यावदनन्ताः स्पर्शपर्यवा इति। एवं 'द्विप्रदेशादेरपि' द्विप्रदेशिकस्य त्रिप्रदेशिकस्य यावदनन्तप्रदेशिकस्योपयुज्य वक्तव्यम्, तद्यथा-द्विप्रदेशिकः स्कन्धो द्रव्यत एकं द्रव्यम्, क्षेत्रत एकप्रदेशावगाढो द्विप्रदेशावगाढो वा, कालतो जघन्यतः स्थिति समयादि, उत्कर्षतोऽसङ्ख्येया उत्सर्पिण्यव सर्पिण्य इत्यादि ॥ सम्प्रति द्रव्याणामनुयोगमाह-

[भा.१५७] दव्वाणं अनुयोगो, जीवमजीवाण पज्जवा नेया।
तत्थवि य मग्गणाओ, णेगा सट्ठाण परठाणे ॥

वृ- द्रव्याणामनुयोगो द्विधा-जीवद्रव्याणामजीवद्रव्याणां च। किंरूपोऽसौ ? इत्याह- 'पर्यायाः' प्ररूप्यमाणा ज्ञेयाः, तथाहि-कतिविधा भदन्त ! पर्यायाः प्रज्ञप्ताः ? गौतम ! द्विविधाः, तद्यथा-जीवद्रव्याणामजीवद्रव्याणां च। तत्राप्यनेकाः स्वस्थाने परस्थाने च मार्गणाः, ताश्चैवम्- नैरयिकाणामसुरकुमाराणां च। कति पर्यायाः प्रज्ञप्ताः ? गौतम! अनन्ताः। अथ केनार्थेनेदमुच्यते? गौतम! नैरयिकोऽसुरकुमारस्य द्रव्यार्थतया तुल्यः प्रत्येकमेकद्रव्यत्वात्, प्रदेशार्थतयाऽपि तुल्यः प्रत्येकं लोकाकाशप्रदेशतुल्यप्रदेशत्वात्, स्थित्या चतुःस्थानपतितः, भावतः षट्स्थानपतितः, ततो भवन्ति नैरयिकाणामसुरकुमाराणां च प्रत्येकं पर्याया अनन्ताः।

अजीवद्रव्याणांपर्यायेष्वेवं स्वस्थाने परस्थाने च मार्गणा-परमाणुपोग्गलाणं भंते ! दुपएसियाण य खंधाणं केवइया पज्जवा पन्नत्ता ? गोयमा ! अनंता। से केणट्ठेणं भंते ! एवं वुच्चइ ? गोयमा ! परमाणुपोग्गले दुपएसियस्स खंधस्स दव्वट्ठयाए तुल्ल पएसट्ठयाए हीने, नो तुल्ले नो अहिए, जइ हीने पएसहीने ठिईए चउट्ठाणवडिए वण्णादिपज्जवेहिं छट्ठाणवडिए। ततो भवन्ति द्वयानामपि प्रत्येकमनन्ताः पर्यायाः। एवमनेकधा जीवद्रव्याणामजीवद्रव्याणां चाऽनुयोगः सूत्रे तत्र तत्र प्रदेशेऽभिहितो भावनीयः ॥ तदेवं द्रव्यस्य द्रव्याणां चेति स्वामित्वं गतम्, इदानीं करणे एकत्व-बहुत्वाभ्यामनुयोगमाह-

[भा.१५८] वत्तीए अक्खेण व, करंगुलादीण वा वि दव्वेण।
अक्खेहि उ दव्वेहिं, अहिगरणे कप्प कप्पेसु ॥

वृ- वर्तिः-नाम खटिका तया कृता शलाका तया, अक्षेण वा कराङ्गुल्यावास आदिशब्दात् प्रलेपकादिना वा यः क्रियतेऽनुयोगः स द्रव्येणाऽनुयोगः। द्रव्यैरनुयोगो यद्बहुभिरक्षैः क्रियतेऽनुयोगः। 'अधिकरणे' एकस्मिन् द्रव्येऽनुयोगः, यदा एकस्मिन् कल्पे स्थितोऽनुयोगं करोति। यदा तु बहुषु कल्पेषु स्थितस्तदा द्रव्येष्वनुयोगः ॥ उक्तोद्रव्यानुयोगः षड्भेदः, सम्प्रति क्षेत्रस्य क्षेत्राणां चानुयोगमाह-

[भा.१५९] पन्नत्ति जंबुदीवे, खित्तस्सेमादि होइ अनुयोगो।
खित्ताणं अनुयोगो, दीवसमुद्दाण पन्नत्ती ॥

वृ- क्षेत्रस्यानुयोगो भवति जम्बूद्वीपस्य प्रज्ञप्ति, आदिशब्दादन्यस्यापि द्विपस्य योऽनुयोगः स क्षेत्रस्यानुयोगः। क्षेत्राणामनुयोगो द्वीपसमुद्राणां प्रज्ञप्ति, द्वीपसागरप्रज्ञप्तिरित्यर्थः ॥

क्षेत्रेणानुयोगमाह-

[भा.१६०] जंबुद्दीवपमाणं, पुढविजियाणं तु पत्थयं काउं।
एवं मविज्जमाणा, हवंति लोगा असंखिज्जा ।।

वृ- जम्बूद्वीपप्रमाणं प्रस्थकं पृथिवीकायिकानां मापनाय कृत्वा जम्बूद्वीपप्रमाणेन प्रस्थकेन ते पृथिवीकायिका माप्यन्ते, मापयित्वा मापयित्वा चालोके प्रक्षिप्यन्ते, एवं माप्यमाना असङ्खयेया लोका भवन्ति, असङ्खयेयलोकाकाशप्रमाणलोकखण्डमापूरयन्तीत्यर्थः ।। क्षेत्रैरनुयोगमाह-

[भा.१६१] खित्तेहि बहू दीवे, पुढविजियाणं तु पत्थयं काउं।
एवं मविज्जमाणा, हवंति लो असंखिज्जा ।।

वृ- क्षेत्रैरनुयोगो यथा-'बहून्' त्रिप्रभृतीन् द्वीपान् पृथिवीकायिकानां मापकरणाय प्रस्थकं कृत्वा तेन पृथिवीकायिकान् मापयेत्, मापयित्वा मापयित्वा चालोके प्रक्षिपेत्, ते चैवं माप्यमाना असङ्खयेया लोका भवन्ति ।। सम्प्रति क्षेत्रे क्षेत्रेषु चानुयोगमाह-

[भा.१६२] खित्तम्मि उ अनुयोगो, तिरियंलोगम्मि जम्मि वा खेत्ते ।
अड्ढाइयदीवेसुं, अद्धछवीसाए खित्तेसु ।।

वृ- क्षेत्रेऽनुयोगो यथा-तिर्यग्लोकेऽनुयोगो यस्मिन् वा ग्रामे नगरे वाश्रये वा । क्षेत्रेष्वनुयोगो यथा-अर्द्धतृतीयेषु द्वीपेषु यदि वाऽर्द्धषड्विंशतिषु जनपदेषु ।। अधुना कालस्य कालानां कालेन कालैः चानुयोगमाह-

[भा.१६३] कालस्स समयरूवण, कालाण तदादि जाव सव्वद्धा ।
कालेनऽनिलवहारो, कालेहि उ सेसकायाणं ।।

वृ- कालस्यानुयोगो यत् समयस्य प्ररूपणा । कालानामनुयोगो यत् समयादीनां-समयाऽऽवलिकाप्रभृतीनां यावत् सर्वाद्धा तावत् प्ररूपणम् । कालेनानुयोगः अनिलानां-वायुकायिकानामपहारः, यथा-वायुकायिकवैक्रियशरीराणि बद्धानि पल्योपमस्यासङ्खयेयभागमात्रेण कालेनापह्रियन्ते । कालैरनुयोगः 'शेषकायानां' पृथिवीकायिकादीनाम्, यथा-औदारिकशरीराणि बद्धानि असङ्खयेयाभिरुत्सर्पिण्यवसर्पिणीभिरपह्रियन्त इति ।। अधुना काले कालेषु चानुयोगमाह-

[भा.१६४/१] कालम्मि बिइयपोरिसि, समासु तिसु दोसु वा वि कालेसु ।

वृ- कालेऽनुयोगः द्वितीयस्यां पौरुष्याम् । कालेष्वनुयोगः अवसर्पिण्यां तिसृषु समासु, तद्यथा-सुषमदुःषमायाः पश्चिमे भागे दुःषमसुषमायां दुःषमायामिति; उत्सर्पिण्यां द्वयोः समयोः-दुःषमासुषमायां सुषमादुःषमायां च ।। उक्तः षट्प्रकारोऽपि कालानुयोगः, सम्प्रति वचनस्य वचनानां चानुयोगमाह-

[भा.१६४/२] वयणस्सेगवयाई, वयणाणं सोलसण्हं तु ।।

वृ- "वयणस्से"त्यादि । वचनास्यानुयोगः 'एकवचनादेः' एकवचन-द्विवचन-बहुवचनानामन्यतमस्य, यथा-ईदृशमेकवचनमित्यादि । वचनानामनुयोगः त्रयाणामप्येकवचनादीनां स्वरूपकथनं षोडशानां वा वचनानाम् । तानि च षोडश वचनान्यमूनि-

लिंगतियं वयणतियं, कालतियं तह परुक्ख पच्चक्खं ।
उवनय-ऽवणयचउक्कं, अज्झत्थियं तु सोलसमं ।।

अस्या (अ) क्षरगमनिका-'लिङ्गत्रयम्' इयं स्त्र अयं पुमान् इदं कुलम् । 'वचनत्रिकम्' एकवचनं द्विवचनं बहुवचनमिति । 'कालत्रिकम्' अकरोत् करोति करिष्यति च । परोक्षवचनं यथा स इति । प्रत्यक्षवचनम् एष इति । उपनयः-स्तुति अपनयः-निन्दा तयोश्चतुष्कमुपनया-ऽपनयचतुष्कम्, यथा-रूपवती स्त्रीत्युपनयवचनम्, कुरूपा स्त्रीत्यपनयवचनम्, रूपवती स्त्री किन्तु दुःशीलेत्युपनया-ऽपनयवचनम्, कुरूपा स्त्री किन्तु सुशीलेत्यपनयोपनयवचनम् । तथा अन्यच्चेतसि निधाय विप्रतारकबुध्या अन्यद् विभणिषुरपि सहसा यच्चेतसि तदेव यद् वक्ति तत् षोडशमध्यात्मवचनम् ॥

[भा.१६५] वयणेणाऽऽयरियाई, इक्केणुत्तो बहूहि वयणेहिं ।
वयण खओवसमिएव वयणेसु उ नत्थि अनुओगो ॥

वृ- वचनेनानुयोगो यथा-कोऽप्याचार्य केनाऽप्याचार्येण भिक्षुणा श्रावकेण वा भणितः 'अनुयोगमिच्छाकारेण कुरु' ततःसोऽनुयोगं करोति । वचनैरनुयोगः बहुभिराचार्यादि-भिर्भणितोऽनुयोगं करोति । अथवा वचनेनानुयोगो नाम आचार्यादीनामन्यतम एकेन वचनेनानुयोगं करोति, यथा-समभावः सामायिकमिति । कश्चिदं बहुभिर्वचनैः सविस्तरमिति । वचने क्षायोपशमिके स्थितस्यानुपयोगो वचनेऽनुयोगः । वचनेष्वनुयोगो नास्ति, क्षयोपशमभावस्य सर्वत्राप्येकत्वेन बहुत्वासम्भवात् । यदि वा व्यक्तिविवक्षया बहुष्वाचारादिषु वचनेषु स्थितस्यानुयोगो बहुवचनेष्वनुयोगः ॥ सम्प्रति भावानुयोगं षट्प्रकारमाह-

[भा.१६६] भावस्सेगतरस्स उ, अनुयोगो जो जहट्ठिओ भावो ।
दोमाइसन्निकासे, अनुयोगो होति भावाणं ॥

वृ-भावस्यानुयोगः औदयिकादीनां भावानामन्यतमो यो यथास्थितो भावस्तस्य कथनम् । भावानामनुयोगो द्विकादीनां भावानां सन्निकारो-संयोगे यावन्तो भङ्गा भवन्ति तेषां कथनम् ॥

[भा.१६७] भावेन संगहाईअन्नयरेणं दुगाइभावेहिं ।
भावम्मि खओवसमे, भावेसु य नत्थि अनुयोगो ॥

वृ- भावेनानुयोगः सङ्ग्रहादीनां पञ्चानां भावानामन्यतमेन । ते च सङ्ग्रहादयः पञ्च भावा इमे-पंचहिं ठाणेहिं सुयं वाइज्जा, तं जहा-संगहट्ठयाए, उवग्गहट्ठयाए, निज्जरट्ठयाए, सुयपज्जवजाएणं, अव्वुच्छित्तीए य । तत्र-कथं ममैते शिष्याः सूत्रार्थसङ्ग्राहकाः सम्पत्स्यन्ते ? इति सङ्ग्रहार्थता, कथं नु नाम गीतार्था भूत्वा वस्त्राद्युत्पादनेन गच्छस्योपग्रहकरा भविष्यन्ति ? इत्युपग्रहार्थता, ममाप्येतान् वाचयतः कर्मनिर्जरा विपुला भविष्यतीति निर्जरार्थता, तथा श्रुतपर्यवजातं-श्रुतपर्यायराशिर्ममापि वृद्धिं यास्यतीति चतुर्थं श्रुतपर्यवजातं कारणम्, श्रुतस्य शिष्यपरम्पराक्रमतया अव्यवच्छित्तिर्भूयादिति पञ्चममव्यवच्छित्तिकारणम् ॥ भावैरनुयोगः एतेषां पञ्चानां भावानां द्वित्रादिभिर्भावैः । भावेऽनुयोगः क्षायोपशमिके । भावेषु त्वनुयोगो नास्ति, क्षायोपशमिकभावस्यैकत्वात् ॥

[भा.१६८] अहवा आयाराइसु, भावेसु उ एस होइ अनुओगो ।
सामित्तं आसज्ज व, परिणामेसुं बहुविहेसुं ॥

वृ- अथवा भावेष्वप्येषोऽनुयोगो भवति । केषु ? इत्याह-आचारादिषु द्वादशस्वङ्गेषु ये भावास्तेषु, अथवा स्वामित्वमासाद्य ये औदयिकादयो बहवः परिणामास्तेषु, यदि वा

क्षायोपशमिकोऽपि भावः प्रतिक्षणमन्यथाऽन्यथा परिणमते ततस्तेषु व्यवस्थितस्य व्याख्यां कुर्वती भावेष्वनुयोगः ॥ अथ द्रव्य-क्षेत्र-काल-भावानां परस्परं समवतारोऽस्ति ? न वा ? अस्तीति ब्रूमः । कथम् ? इत्याह-

[भा.१६९] दव्वे नियमा भावो, न विना ते यावि खित्त-कालेहिं ।
खित्ते तिण्ह वि भयणा, कालो भयणाय तीसुं पि ॥

वृ-द्रव्ये नियमाद्भावः, भावं विना द्रव्यस्याऽसम्भवात्, नहि तदस्ति दव्यं यद्भावशून्यमिति । "न विना ते यावि खित्त-कालेहिं" इति न च 'तावपि' द्रव्य-भावौ क्षेत्र-कालाभ्यां - विना । तथाहि-क्षेत्रं विना न द्रव्यम्, आधारमन्तरेमाऽऽधेयस्याऽसम्भवात्; ततस्तद्गतो भावोऽपि न क्षेत्रं विना; कालं विना द्रव्य-भावाभावः समयक्षेत्रापेक्षया, नहि समयक्षेत्रे तदस्ति द्रव्यं भावो वा यः कालं विना । अनयत्र तु नैष नियमः, तथा चाह-क्षेत्रे 'त्रयाणामपि' द्रव्य-कालभावानां भजना । तत्र कालः समयक्षेत्रे भवति अन्यत्र नेति कालभजना । द्रव्य-भावावपि लोकाकाशे स्तो नाऽलोके । यद्यप्यलोकेऽप्यगुरुलघवः पर्य्यायाः सन्ति तथापि द्रव्य स्य भावो नाद्रव्यस्य, अलोकाकाशं च क्षेत्रत्वे न विवक्षितमिति भावस्याप्यभाव इति । कालः पुनर्भजनया 'त्रिष्वपि' द्रव्य-क्षेत्र-भावेषु, समयक्षेत्रान्यत्र कालस्यासम्भवात् ॥ साम्प्रतमाधारा-ऽऽधेयभावयोजनामाह-

[भा.१७०] आधारो आधेयं, च होई दव्वं तहेव भावो य ।
खित्तं पुन आधारो, कालो नियमा उ आधेयो ॥

वृ-द्रव्यं भावश्चाधार आधेयश्च भवति । तत्र द्रव्यमाधारो भावस्य, आधेयं क्षेत्रस्य । भाव आधारः कालस्य, आधेयो द्रव्यस्य । क्षेत्रं पुनर्नियमादाधारः, तस्याऽन्यस्याऽऽधारस्याऽभावात्, "स्वप्रतिष्ठितमाकाशम्" इति वचनात् । कालो नियमादाधेयः, तस्य द्रव्ये क्षेत्रे भावे चावस्थानात् ॥ उक्तोऽनुयोगः, तद्विपरीतोऽननुयोगः । तत्र दृष्टान्तानभिधित्सुराह-

[भा.१७१] वत्सग गोणी खुज्जा, सज्झाए चेव बहिरउल्लावे ।
गामिल्लए य वयणे, सत्तेव य हुंति भावम्मि ॥

वृ-द्रव्यानुयोगे द्रव्याननुयोगे च वत्स-गावावुदाहरणम्-जइ गोदोहगो जो पाडलाए वत्सगो तं बाहुलाए मुयइ, बाहुलेयं वा वत्सगं पाडलाए मुयइ तो अननुयोगो भवइ, दुद्धकज्जस्स य अप्पसिद्धी । एवमिहावि जइ जीवलक्खणेणं दोहयत्थाणीओ साहू अजीवं परूवेइ, अजीवलक्खणेण वा जीवं तो अननुयोगो । तं भावं अन्नहा गिण्हइ, तेन अत्थो विसंवयइ, अत्थे विसंवइए चरणं विसंवयइ, चरणेणं विसंवइएणं मुक्खाभावो, मोक्खाभावे दिक्खा निरत्थिया । जइ पुन जो जाए वत्सगो तं ताए मुयइ तो अनुयोगो भवइ, तस्स य दुद्धकज्जस्स पसिद्धी । एवमिहावि जइ जीवलक्खणेणं जीवं परूवेइ, अजीवलक्खणेणमजीवं तो अनुयोगो भवइ । तस्स य मुक्खलक्खणस्स कज्जस्स पसिद्धी ॥

क्षेत्रस्याप्यननुयोगोऽनुयोगश्च भवति । तत्राननुयोगे कुब्जोदाहरणम्-पइट्ठाणं नयरं । सालवाहणो राया । सो वरिसे वरिसे भरुयच्छे नहवाहणं रोहेइ । जाहे य वरिसारत्तो भवति ताहे सयं नयरं पडियाइ, एवं कालो वच्चइ । अन्नया तेणं रन्ना रोहगेणं गइल्लएणं अत्थाणियमंडवियाए निच्छूढं । तस्स पडिग्गहधारी खुज्जा । सा चिंतेइ-अपरिभोगा एसाऽऽदिट्ठा, नूनमेस राया जाइउकामो ।

तीसे राउलगो जाणसालिओ परिजियओ । तीए तस्स कहियं । सो पए जाणाइ पमक्खिओ पयट्टियाणि । तं दट्ठुं सेसगो वि खंधावारो पयट्टिओ । राया रहसि एकल्लो धूलिभएण पयट्टो, जाव सव्वो खंधावारो पयट्टिओ दिट्ठो । राया चिंतेइ-न मए कस्सइ कहियं, कहमेएहिं नायं ? । गवेट्ठं परंपरगेणं जाव खुज्ज त्ति । सा पुच्छिया । तीए तहेव अक्खायं । अत्र यन्मण्डपिकायां निष्ठयूत-मेषोऽननुयोगः । एवं यदि क्षेत्रं जीवा-धनुःपृष्ठादिभिर्गणित विसंवादेन प्ररूपयति तदाऽननुयोगः, यदा त्वविसंवादि कथयति तदाऽनुयोगः, यथा कुब्जायाः 'अपरिभोगं क्षेत्रं जातम्' इति प्ररूपयन्त्याः ।। कालस्यानुयोगेऽननुयोगे च स्वाध्याय उदाहरणम्-एगो साहू पाओसियं परियट्टंतो रहसेण कालं न याणति । सम्मदिट्ठिया य देवया तं हियट्ठयाए संबोहइ मिच्छादिट्ठियाए भएणं । सा तक्कस्स घडं भरेउं महया सद्देणं उग्घोसेइ-मिहंय महियं ति । सो तीसे कन्नारोडयं असहमाणो भणइ-अहो ! तक्कस्स वेल त्ति । सा भणइ-जहा तुज्झं सज्झायस्स वेला । उवउत्तो 'मिच्छा दुक्कडं' भणइ । देवताए अनुसासिओ-मा एवं काहिसि, मा मिच्छादिट्ठिगाए छलिज्जि-हिसि । तस्स अकाले सज्झायंतस्स अननुयोगो । तम्हा काले पढियव्वं, तो अनुयोगो भवति ।।

वचनस्यानुयोगेऽननुयोगे च द्वे उदाहरणे-बधिरोल्लापो ग्रामेयकश्च ।

एगम्मि य गामे बहिरकुडुंबं परिवसइ, थेरो थेरी य । ताणं पुत्तो हलं वाहेइ । अन्नया सो हलं वाहेउं गओ खित्ते हलं वाहेइ । अण्णो य मणूसो तेन पासेणं जाइ । तेन सो पंथं पुच्छिओ । सो बहिरो चिंतेइ-एस बलद्दे सिंगेइ । तओ भणइ-अरे ! मम घरे जाइल्लगा बलद्दा, कहमेए सिंगेसि ? न हवसि-त्ति हलं उवत्तेउं तस्स पहाविओ । इयरो चिंतेइगहिल्लओ एस । संपट्ठिओ । तस्स य भज्जा भत्तं घित्तुमागया । सो भज्जाए कहेइ-बइल्ला सिंगिय त्ति । सा चिंतेइ-एस भणइ'अलोणयं भत्तं' ति। तओ भणइ-लोणियं भवउ मा वा, ते माऊए सिद्धं । सा घरं गया सासूए कहेइ-'अलोणयं' तव पुत्तो भणइ । सा य कत्तंतिया चिट्ठइ । तओ चिंतेइ-एसा भणइ 'अइथूलं कत्तेसि' । ताए पडिभणियं-थूलं वा भवउ वरडं वा, थेरस्स पुत्तं होहिइ । सा थेरं सद्दावेत्ता भणइ-सव्वं एयं अतिथूलं तो तव पुत्तं होहिइ । तत्थ तिला विसारिया । सो रक्खगो आसि । सो चिंतेइ-एसा भणइ 'तुमे तिला खाइया' । ततो सवहं करेइ-पीएमि ते जीवियं जइ एगं पि तिलं खाएमि । एवं जइ एगवयणेणं परूवेयव्वं दुवयणेण परूवेइ, दुवयणेनवा एगवयणेणं तो अननुयोगो । अह तह चेव परूवेइ तो अनुयोगो ।।

ग्रामेयकोदाहरणमेवम्-एक्का नागरमहिला भत्तारे मए 'कट्ठाईणि वि ता अकीयाणि घेच्छामु' त्ति अजीवमाणी खुड्डलयं पुत्तं घेत्तुं गामे पवुत्था । सो दारतो वड्ढंतो मायरं पुच्छइ-कहिं मम पिया ? । तीए भणियं-मओ सो । केण इ जीवियाइओ ? । भणइ-ओलग्गाए । तो खायं अहमवि ओलग्गामि । सा भणइ-न याणसि । तओ पुच्छइ-कहमोलग्गिज्जइ ? । भणिओ-विनयं करेज्जासि । केरिसो विनओ ? । जुक्कारो कायव्वो, नीयं चंकमियव्वं, छंदानुवत्तिणा भवियव्वं । सो भणइ-एवं काहामो । सो नगरं पहाविओ । अंतरा य तेन वाहा निलुक्का दिट्ठा,वड्डेणं सद्देणं जुक्कारो कओ । तेन सद्देणं मिगा पलाया । तेहिं घेत्तुं पहओ । तेन सब्भाओ कहिओ । मुक्को भणिओ य-जया एरिसं पिच्छिज्जासि तया निलुक्कंतेण सणियमागंतव्वं, न उल्लविज्जइ, सणियं वा । तओ इंतेन रयगा दिट्ठा । ताहे निलुक्कंतो सणियं एइ । तेसिं च रयगाणं दिने दिने पुत्ताइं

हीरंति । तओ ठाणयं बद्धं रक्खंति इंते चोरे । 'एस चोरो निलुक्कंतो एति'' तओ बंधिउं पिट्टिओ। सब्भावे कहिए मुक्को भणिओ य-भणिज्जासि 'सुद्धं भवउ, खारो पडउ' । सो नगरसम्मुहं एइ । एगत्थ बीयाणि वाविज्जंति । तेन भणियं-सुद्धाणि हवंतु, खारो पडउ । तओ तेहिं 'किमकारणं वेरिओ एवं भासइ ?'त्ति पिट्टिओ । सब्भावे कहिए मुक्को भणिओ य-एरिसे कज्जे एवं भन्नइ 'एरिसं बहुं हवतु, गड्डाओ भरह एयस्स' । तओ वच्चंतो एगत्थ मयगं निज्जंतं दट्ठूण भणइ-बहुं भवउ एरिसं ! तत्थ वि विट्टिओ । सब्भावे कहिए मुक्को भणिओ य-एरिसे कज्जे एवं मन्नइ 'अच्चंतवियोगो भवउ एरिसेणं कज्जेणं' ! तओ गच्छंतो एगत्थविवाहे भणइ-एरिसेणं कज्जेणं अच्चंतवियोगो भवउ । एत्थ वि पिट्टिओ । सब्भावे कहिए मुक्को भणिओ य-एरिसे कज्जे एवं भणियव्वं 'निच्चं एरिसगाणि पिच्छंतया होह, सासयं भवउ' । तओ वच्चंतो एगत्थ नियलबद्धं दंडियं दट्ठूण भणइ-निच्चं एरिसयाणि पिच्छता हह, सासयं च एवं हवउ । तत्थ वि हओ । सब्भावे कहिए मुक्को भणिओ य-एरिसे कज्जे एवं भणिज्जासि 'एयाओ मे लहुं मुक्खो भवउ' । तओ गच्छंतो एगत्थ केइ मित्तसंघाडयं करिंते पिच्छइ । तत्थ भणइ एयाओ मे लहुं मोक्खो भवउ । तत्थ वि पिट्टिओ । सब्भावे कहिए मुक्को गओ नगरे । तत्थ एगस्स दंडिकुलपुत्तगस्स अल्लीणो सेवंतो अच्छइ । अन्नया दुब्भिक्खे अंबिलजाऊ सिद्धिल्लिया । भज्जाए सो भणिओ-जाहि महायणमज्झाओ सद्दावेहि जेण भुंजइ, सीयला अजोग्गा अविरसइ । तेन गंतूण महायणमज्झे वड्डेणं सद्देणं भणिओ-एहि एहि सीयली किल होइ अंबिलजाऊ । सो लज्जिओ घरं गओ । तेणं अंबाडिओ भणिओ य-एरिसे कज्जे सणियं कन्ने कहिज्जइ । अन्नया गेहं पलित्तं । तस्स भज्जाए भणियं-लहुं सद्दावेह ठक्कुरं । सो गंतुं सणियं कहेइ । जाव सो तस्स अक्खाइ ताव सव्वं घरं ज्झामियं । तत्थ वि अंबाडिओ भणिओ य-एरिसे कज्जे न वि आगम्मइ, अक्खायगेण अप्पणा चेव पाणिएण वा विज्झइ । अन्नया तस्स दंडिकुलपुत्तगस्स ण्हाऊण धूविंतस्स धूमो निगच्छइ । तओ सो गोमत्तं घोमुत्ताइयं च छुभेइ । एवं जो अन्नम्मि कहेयव्वे अन्नं कहेइ तस्स अननुओगो । सम्मं कहिज्जमाणे अनुयोगो ॥ भावे भावस्य विषयेऽनुयोगेऽननुयोगे च ससोदाहरणानि भवन्ति ॥ तान्येवाह-

[भा.१७२] सावगभज्जा सत्तवइए य कुंकणगदारए नउले ।
कमलामेला संबस्स साहसं सेणिए कोवे ॥

वृ- प्रथममुदाहरणं श्रावकभार्या । द्वितीयं साप्तपदिकः पुरुषः । तृतीयं कौङ्कणकदारकः । चतुर्थं नकुलः । पञ्चमं कमलामेला । षष्ठं सम्बस्य साहसम् सप्तम 'श्रेणिके' श्रेणिकस्य कोपः ॥ तत्र श्रावकभार्योदाहरणमिदम्-एगो सावगो अन्नं महिलं दट्ठुं अज्झोववन्नो दुब्बलीभवइ । भज्जाए पुच्छिओ । निब्बंधे कहियं । ताए भणियं-आनेमि । ताहे सा संज्झासमए तीसे अविरयाए तणएहिं वत्थेहिं अप्पाणं नेवत्थित्ता अंधयारे अल्लीणा । सो तीए समं अच्छिओ । तओ बीयदिवसे अद्धिइं पकओ 'वयं खंडियं' । ताए भणियं-मा अद्धिइं पकरेहि । न खंडियं, अहं चेव आगया । साभिन्नाणं पत्तियाविओ । एवं जो ससमयवत्तव्वयं परसमयवत्तव्वयं भणइ, ओदइयभावलक्खणेणं उवसमियमालवक्खणं परूवेइ ताहे अननुयोगो भवति । सम्मं परूविज्जमाणे अनुयोगो ॥

साप्तपदिकोदाहरणमेवम्-एगम्मि पच्चंतगामे एगो । ओलग्गयमणूसो साहु-माहणाईणं न सुणेइ नेव अल्लियइ न वा वसहिं देइ 'मा मम धम्मं कहेहिइ, तो हं मा सदयो होहामि'त्ति । अन्नया

तं गामं साहुणो आगया पडिस्सयं मग्गंति । ताहे सो गोट्ठिल्लएहिं 'एएसिं वसहिं न देसि त्ति एएहिं य पवंचिओ होउ' त्ति तस्स घरं कहियं । 'इत्थ एरिसो तारिसो सावगो' त्ति ते पुच्छंता गया । दिट्ठा, जाव न चेव आढाइ । तत्थ एगेण साहुणा भणियं- जइ न चेव सो एसो, अहवा पवंचिया मो त्ति। तं सोऊण ते पुच्छिया । जहावत्तं कहियं । सो चिंतेइ-अहो ! अकज्जं, मं ताव पवंचंतु, साहुणो कहं पवंचिंति ? । ताहे 'मा तेरिसं । समो होउ' त्ति तेन भणियं-देमि वसहिं जइ मम धम्मं न कहेह । साहूहिं भणियं-एवं होउ त्ति । दिन्नं घरं । वासारत्ते वत्ते आपुच्छंति-विहरामो । ताहे पयट्टा साहुणोऽन्नत्थ विहरिउं । तेन अनुव्वइया । सीमापज्जंते धम्मो कहिओ । तत्थ न किंचि तरइ घेत्तुं मूलगुणं उत्तरगुणं वा मंसविरई वा । पच्छा सत्तवइयं वयं दिन्नं-मारेउकामेणं जावइएणं कालेणं सत्तपयाइं ओसक्किज्जंति एवइयं कालं पडिक्खित्ता मारेयव्वं 'संबुज्झिस्सइ' त्ति काउं । गया साहुणो । अन्नया चोरियाए गओ । अवसउणेण नियत्तो रत्तिं सणियं घरं एइ । तद्दिवसं तस्स भगिणी आगएल्लया पुरिसनेवत्थं काउं भाउज्जाइयाए समं नडपिच्छगा गया । चिरेण आगया निद्दक्कंता तह चेव एगंतस्सयणे सइया। इयरो य आगओ पिच्छइ 'परपुरिसो' त्ति असिं उक्करिसित्ता 'आहणामि' त्ति ववसिओ । वयं संभरियं। ठिओ 'सत्तपयंतरं अच्छामि' त्ति । एयम्मि अंतरे भगिणीए बाहा भाउज्जाइयाए अक्कंतिया । ताए दुक्खाविज्जंतीए भणियंअवणेहि मे बाहातो सीसं । तेन सरो सन्नाओ-भगिणी मे एसा पुरिसनेवत्थिय त्ति । दिट्ठा । लज्जिओ जाओ 'अहो ! मएणं अकज्जं जयं' ति । उवणओ जहा सावगभज्जाए । सो संबुद्धो पव्वइओ ।।

कोङ्कणकदारकोदाहरणमिदम्-कोंकणगविसए एगो दारगो । तस्स माया मया । पिया से अन्नमहिलं न लहइ 'सवत्तिपुत्तो अच्छइ' त्ति काउं । अन्नया सपुत्तो कट्ठाणं गओ, ताहे नेन चिंतियं-एयस्स भएणं महिलियं न लभामि-त्ति मारेमि । तओ पुत्तो भणिओ- वच्छ ! कंडं आनेहि । सो पहाविओ । अन्नेन कंडेण विद्धो । दारएण लवियं-किं कंडं खित्तं ? विद्धो मि । पुणो वि खित्तं। रडंतो मारिओ । पुव्वं 'अयाणंतेण विद्धो मि' त्ति अननुयोगो, 'मारिज्जामि' त्ति एवं नाए अनुयोगो । अहवा 'सारक्खणिज्जं मारेमि' त्ति अननुयोगो, सारक्खंतस्स अनुयोगो । एवं अन्नम्मि परूवियव्वे अन्नं परूवेमाणस्स विपरीतत्वादननुयोगः, यथाभूतं प्ररूपयतोऽनुयोगः ।।

नकुलोदाहरणमिदम्-एगा चारभडिया गब्भिणी । अन्ना वि नउलिणी गब्भिणी तत्थ य लिहए एइ य जाइ य । ताओ समगं पसूयाओ । चारभडाए चिंतियं-मम पुत्तस्स रमणओ नउलो भस्सइ-त्ति तस्स पीहयं देइ खरं च । अन्नया दुवारे तीसे अविरइयाए कंडंतीए तत्थ मंचुल्लियाए सो दारगो ओवारिओ । तत्थ सप्पेण चडित्ता खाइओ मओ । इओ य इयरेण नउलेण मंचुल्लियाए उयरंतो दिट्ठो खंडीकओ । ताहे सो रुहिरलित्तेणं तुंडेण तीसे अविरइयाए मूलं गंतुं चाडूणि करेइ। ताए नायं-एएन मम पुत्तो खतिओ । मुसलेण आहनित्ता मारिओ । ताहे धावंती गया पुत्तमूलं, जाव सप्पं खंडाखंडीकयल्लयं पासेइ, ताहे दुगुणतरमद्धिई पगया । तीसे अविरयाए पुव्वमननुयोगो, पच्छा अनुयोगो । एवं जो अन्नं परूवेयव्वं अन्नं परूवेइ तस्स अननुयोगो, जो तं चेव परूवेइ तस्स अनुयोगो ।।

कमलामेलोदाहरणम्-बारवईए बलदेवपुत्तस्स पुत्तो सागरचंदो नाम कुमारो, रूवेण य उक्किट्ठो सव्वेसिं संवाईणं इट्ठो । तत्थ य बारवईए वत्थव्वस्स चेव अन्नस्स रन्नो कमलामेलानाम

धूया उक्किट्ठसरीरा। सा य उग्गसेननत्तुस्स धनदेवस्स वरिल्लिया। इओ य नारओ सागरचंदस्स कुमारस्स सगासं आगओ। अब्भुट्ठिओ। उवविट्ठं समाणं पुच्छइ किंचि भयवं! अच्छेरयं दिट्ठं?। आमं दिट्ठं। कहिं? । इहेव बारवईए नयरीए कमलामेला नामं दारिया। खशअशइ दिन्निया?। आमं। कस्स? । उग्गसेन नत्तुस्स धणदेवस्स। तओ सो भणइ-कहं मम ताए समं संजोगो होज्ञा?। 'न याणामु' त्ति भणित्ता गओ। सो य सागरचंदो तं सोउं न वि आसणे न वि सयणे धिइं लहइ। तं दारियं फलए पासंतो नामं च गिण्हंतो अच्छइ। नारओ वि कमलामेलाए अंतियं गओ। ताए पुच्छिओ किंचि अच्छेरयं दिट्ठं?। नारओ भणइ-दुवे दिट्ठाणि, रूवेन सागरचंदो, विरूवत्तणेन घनदेवो। तओ सागरचंदे मुच्छिया धनदेवे विरत्ता। नारएण आसासिया। तेन गंतुं सागरचंदस्स आइक्खियं, जहा 'इच्छइ'त्ति। ततो य सागरचंदस्स माया अन्ने य कुमारा अद्दन्ना-मरति नूनं सागरचंदो। संबो आगओ जाव पिच्छइ सागरचंदं विलवमाणं। ताहे अनेन पच्छओ धाइऊण अच्छीणि दोहि वि हत्थेहिं च्छाइयाणि। सागरचंदेण भणियं-कमलामेले!। संबेण भणियं-नाहं कमालमेला, कमलामेलो हं। सागरचंदेण भणियं-आमं, तुमं चेव कमलामेलं दारियं मेलेहिसि। ताहे तेहिं कुमारेहिं संबो भणिओ-कमलामेलं मेलेहि सागरचंदस्स। न मन्नइ। तओ मज्ञं पाएऊण अब्भुवगच्छाविओ। तओ विगयमओ चिंतेइ-अहो! मए आलो अब्भुवगओ, किं सक्का इदानिं निव्वहिउं?-त्ति पज्जुन्नं पन्नत्तिं विज्ञं मग्गइ। तेन दिन्ना। तओ जम्मि दिवसे धनदेवस्स विवाहो तम्मि दिवसे विज्ञाए पडिरूवं विउव्विऊणं कमलामेला अवहरिया रेवए उज्ञाणे नीया। संबप्पमुहा कुमारा उज्ञाणं गंतुं नारयस्स रहस्सं भिंदित्ता कमलामेलं सागरचंदं परिणावित्ता तत्थ किड्डंता अच्छंति। विज्ञापडिरूवगं पि विवाहे वट्टमाणे अट्टट्टहासं काऊणं उप्पइयं। तओ जाओ खोभो। न नज्ञइ 'केन इ हारिय?'त्ति।

नारओ पुच्छिओ भणइ-दिट्ठा रेवइए उज्ञाणे केन वि विज्ञाहरेण अवहरिया। तओ सबल-वाहणो नारायणो निग्गओ। संबो विज्ञाहररूवं काऊण जुज्झिउं संपलग्गो। सव्वे दसाराइणो पराइया। तओ नारायणेण सद्धिं लग्गो। तओ जाहे नेनं नायं 'रुट्ठो ताउ' त्ति तओ से चलनेसु पडिओ। कण्हेण अंबाडिओ। तओ संबेण भणियं-एसा अम्हेहिं गवक्खेण अप्पाणं मुयंती दिट्ठा। तओ कण्हेण उग्गसेनो अनुगमिओ। पच्छा इमाणि भोगे भुंजमाणाणि विहरंति। अन्नया भयवं अरिट्ठनेमिसामी समोसरिओ। तओ सागरचंदो कमलामेला य सामिसगासे धम्मं सोऊण गहियानुव्वयाणि संवुत्ताणि। तओ सागरचंदो अट्ठमि-चउद्दसीसुं सुन्नघरे वा सुसाणे वा एगराइयं पडिमं ठाइ। धनदेवेणं एयं नाऊणं तंबियाओ सुईओ घडावियाओ। तओ सुन्नघरे पडिमं ठियस्स वीससु वि अंगुलीनहेसु अक्कोडियाओ। तओ सम्ममहियासमाणो। वेयणाभिभूओ कालगतो देवो जाओ। ततो बिइयदिवसे गवेसिंतेहिं दिट्ठो। अक्कंदो जाओ। दिट्ठाओ सूईओ। गवसिंतेहिं तंवकुट्टगसगासे उवलद्धं-धनदेवेन कारावियाओ। रूसिया कुमारा धनदेवं मग्गंति। दुण्ह वि बलाणं जुद्धं संपलग्गं। तओ सागरचंदो देवो अंतरे ठाऊण उवसामेइ। पच्छा कमलामेला भयवओ सगासे पव्वइया। इत्तियं पसंगेण भणियं। इत्थ सागरचंदस्स कमलामेलं संबं मन्नमाणस्स अननुयोगो, 'नाहं कमलामेल'त्ति भणिए अनुयोगो। एवं जो विवरीयं परूवेइ तस्स अननुयोगो, जहाभावं

परूवेमाणस्स अनुयोगो ॥

साम्बस्य साहसमुदाहरणम्-जंबवती नारायणं भणइ-एक्का वि मए पुत्तस्स अनाडिया न दिट्ठा। नारायणेण भणियं-अज्ज दाएमि। ताहे नारायणेणं जंबवईए आभीरीरूवं कयं, अप्पणो भणिया-महियं किणामि त्ति एहि। सा अनुगच्छइ। आभीरो से मग्गेण एइ। सो संबो एगं देउलियं पवेसइ। आभीरी भणइ-नाहं पविसामि, मोल्लं देहि। सो भणइ-दिज्जइ, पविसाहि। सा भणइ-एत्थ चेव ठिओ तक्कं गिण्हाहि। सो भणइ-अवस्स पविसियव्वं। नेच्छइ ताहे हत्थे लग्गो। आभीरो उद्धाइऊण समं लग्गो। संबो जुद्धमहिट्ठिओ। आभीरो वासुदेवो जाओ, इयरी वि जंबवई। तओ लज्जिओ अंगुट्ठिं काऊण पलाइओ। बिइयदिवसे मड्डाए आनिज्जंतो खीलगं घडेइ। वासुदेवेन पुच्छिओ-किं एयं घडिज्जइ? संबो भणइ-जो परिवासियं बोल्लं काहिइ तस्स मुहे कुट्टिज्जिहि त्ति। इत्थं पढमं अननुयोगो, नाए अनुयोगो। एवं जो विरूवं परूवेइ तस्स अननुयोगो, तहभावं परूवेमाणस्सअनुयोगो ॥

श्रेणिककोपोदाहरणम्-रायगिहे नयरे सेणिओ राया। चिल्लणा तस्स भारिया। सा वद्धमाणसामिं तित्थयरं वंदित्ता वेयालियवेलाए माहमासे नगरं पविसइ। अंतरा पहे साहू पडिमापडिवन्नतो दिट्ठो। तीए रत्तिं सुत्तियाए कह वि हत्थो विलंबिओ। जया सीएणं गहिओ तया चेइयं। पवेसिओ सउडिमज्झे हत्थो। तस्स हत्थस्स तणएणं सीएणं सव्वं सरीरं सीएण गहियं। पच्छा ताए भणियं-स तपस्वी किं करिष्यति साम्प्रतम्? । पच्छा रन्ना सेणिएण चिंतियं-संगारदिन्नओ को वि। रुट्ठेण पभाए अभओ भणिओ सिग्घ अंतउरं पलीवेहिं। सेणिओ गओ सामिणो मूलं। अभएण हत्थिसाला पलीविया। सामिं पुच्छइ-चिल्लणा एगपत्ती अनेगपत्ती वा?। सामिणा भणियं-एगपत्ती। तओ 'मा डज्झिहि' त्ति तुरियं नियत्तो। अभओ य निग्गच्छइ। तेन भणियं-पलीवियं ? । अभओ भणिइ-आमं। सेणिओ भणइ-तुमं किं तत्थेव न पडिओ ?। पडिभणइ-अहं पव्वइस्सामि, किं मे अग्गिपवेसेन ? । ताहे 'मा ज्झिज्झिहि' त्ति पच्छा अभएण भणियं-न डज्झइ। सेणियस्स चेल्लणाए पुव्वं अननुयोगो, पुच्छिए अनुयोगो। एवं विवरीए परूवेइ अननुयोगो, जहाभावं परूविए अनयोगो ॥ तदेवमुक्तं निक्षेपद्वारम्। इदानीमेकार्थिकद्वारं वक्तव्यम्, तत्र तिष्ठतु तावदेतत्, एकार्थिकाभिधाने को गुणः ? इत्यत आह- एकार्थिकद्वारम्

[भा.१७३] बंधानुलोमया खलु, सुत्तम्मि य लाघवं असम्मोहो।
सत्थगुणदीवणा वि य, एगट्ठगुणा हवंतेए ॥

वृ- एकार्थिकाभिधाने यान्यर्थपदानि गाथादिभिर्बद्धु (र्बन्द्धु] मिष्यन्ते तेषां बन्धेऽनुलोमता भवति, अननुकूलाभिधानपरिहारेणानुकूलाभिधाने बन्धो भवतीत्यर्थः ॥ अनुकूलेन चाभिधानेन बद्धे सूत्रे सूत्रस्य लाघवं भवति। तथा विवक्षितार्थस्य 'असम्मोहः' निस्सन्दिग्घा प्रतीति, यथा शक्र इति वा पुरन्दर इतिवा इन्द्र इति वा इत्याद्युक्ते शक्रशब्दार्थस्य। तथा शास्ता-तीर्थकरस्तस्य गुणास्तषां दीपना-प्रकाशना भवति, यथा-अहो! भगवान् एकैकस्यार्थस्य बहूनि पर्यायनामानि जानाति स्म। एते एकार्थनामभिधाने गुणा भवन्ति ॥ साम्प्रतमेकार्थिकानि वक्तव्यानि, तानि द्विधा-सूत्रस्याऽर्थस्य च। तत्र प्रथमतः सूत्रस्याऽऽह-

[भा.१७४] सुय सुत्त गंथ सिद्धंत सासणे आण वयण उवएसो ॥

पन्नवणमागमे इय, एगट्ठा पज्जवा सुत्ते ॥

वृ- श्रुतं सूत्रे ग्रन्थः सिद्धान्तः शासनम् आज्ञा वचनम् उपदेशः प्रज्ञापना आगमः 'इति' एते दश 'पर्यायाः' एकार्था सूत्रस्य ॥ एतेषां च सर्वेषामपि पदानां नामादिकश्चतुष्को निक्षेपः । तत्र सर्वत्रापि नाम-स्थापने द्रव्यत आगमतो नोआगमतो ज्ञशरीर-भव्यशरीरे प्रतीते । शेषं वक्तव्यम् । तत्र श्रुतमधिकृत्याह-

[भा.१७५] दव्वसुयं पत्तग-पुत्थएसु जं पढइ वा अनुवउत्तो ।
आगम-नोआगमओ, भावसुयं होइ दुविहं तु ॥

वृ- नोआगमतो द्रव्यश्रुतं ज्ञशरीर-भव्यशरीरव्यतिरिक्तं पत्रक-पुस्तकेषु न्यस्तम्, यच्च वाऽनुपयुक्तः पठति तद् नोआगमतो द्रव्यश्रुतम् । भावश्रुतं द्विविधम्-आगमतो नोआगमतश्च ॥

[भा.१७६] आगमओ सुयनाणी, सुओवउत्तो य होइ भावसुयं ।
सो सुयभावाऽणन्नो, सुयमवि उवओगओऽणन्नं ॥

वृ- तत्राऽऽगमतो भावश्रुतं श्रुतज्ञानी 'श्रुतोपयुक्तः' श्रुतज्ञानोपयोगवान्, "उपयोगो भावनिक्षेपः" इति वचनात् । अथ कथं श्रुतज्ञानी श्रुतोपयुक्तो भावश्रुतम् ? अत आह-यस्मात् 'सः' श्रुतज्ञानी श्रुतभावानन्यः, श्रुतमपि जीवस्वभावादुपयोगादनन्यत्, ततः स एव श्रुतज्ञानी भावश्रुतम् ॥ नोआगमतो भावश्रुतमाह-

[भा.१७७] जं तं दुसत्तगविहं, तमेव नोआगमो सुयं होइ ।
सामित्तासंबद्धं, समिईसहियस्स वा जं तु ॥

वृ- यत् 'तत्' प्रागभिहितं 'द्विसप्तविधं' चतुर्दशविधमक्षरश्रुतादि, यदि वा द्वादशप्रकारमङ्गप्रविष्टमाचारादि द्विविधमङ्गबाह्यं कालिकमुत्कालिकं चेति चतुर्दशविधं श्रुतज्ञानं तदेव 'स्वामित्वासम्बद्धं' पुरुषेषु स्वामित्वेनासम्बद्धम्, पुरुषेभ्यः पृथग्विवक्षितमित्यर्थः, नोआगमतो भावश्रुतम् । यदि वा समितिसहितस्य पुरुषस्योपयुक्तस्य 'यत्' श्रुतं तद् नोआगमतो भावश्रुतम् । अत्र नोशब्दो मिश्रवाची ॥ अधुना सूत्रद्वारमाह-

[भा.१७८/१] पंचविहं पुन दव्वे, भावम्मि तमेव होइ सुत्तं तु ।

वृ- द्रव्यतो नोआगमतो व्यतिरिक्तं सूत्रं पञ्चविधम्, तद्यथा-अण्डजं हंसगर्भादि, बोण्डजं कार्पासिकम्, कीटजं कृमिरागम्, वालजमूर्णामयम्, वल्कजं सनसूत्रादि । नोआगमतो भावसूत्रं 'तदेव' यदनन्तरं नोआगमतो भावश्रुतमुक्तम् ॥ ग्रन्थद्वारमाह-

[भा.१७८/२] सच्चित्ताई गंथो, दव्वे भावे इमं चेव ॥

वृ- द्रव्यतो नोआगमतो व्यतिरिक्तो ग्रन्थस्त्रिविधः 'सचित्तादि' सचित्तः अचित्तो मिश्रश्च । एष त्रिविधोऽप्युपरि प्रथमसूत्रे वक्ष्यते । भावे ग्रन्थः 'इदमेव' कल्पाध्ययनम् ॥

अधुना सिद्धान्तद्वारमाह-

[भा.१७९] जेण उ सिद्धं अत्थं, अंतं नयतीति तेन सिद्धंतो ।
सो सव्व-पडीतंतो, अहिगरणे अब्भुवगमे य ॥

वृ- येन कारणेन प्रमाणतः सिद्धमर्थम् 'अन्तं नयति' प्रमाणकोटिमारोहयतीति तेन कारणेन

सिद्धान्त उच्यते। स एष द्रव्यतो नोआगमतो व्यतिरिक्तः पुस्तक-पत्रन्यस्तः। भावतश्चतुर्विधः, तद्यथा-सर्वतन्त्रसिद्धान्तः प्रतितन्त्रसिद्धान्तः अधिकरणसिद्धान्तः अभ्युपगमसिद्धान्तश्च ॥

तत्र सर्वतन्त्रसिद्धान्तमाह-

[भा.१८०] संति पमाणाति पमेयसाहगाइं तु सव्वतंतो उ।
थेज्जवई य वसुमई, आपो य दवा चलो वाऊ ॥

वृ-सन्ति 'प्रमाणानि' प्रत्यक्षादीनि प्रमेयसाधकानि, तथा स्थैर्यवती पृथिवी, आपो द्रवाः, चलो वायुः, एष सर्वतन्त्रसिद्धान्तः, सर्वेषु तन्त्रेष्वस्यार्थस्य सिद्धत्वात्। प्रतितन्त्र सिद्धान्त माह-

[भा.१८१] जो खलु सतंतसिद्धो, न य परतंतेसु सो उ पडितंतो।
निच्चमनिच्चं सव्वं, निच्चानिच्चं च इच्चाई ॥

वृ-यः खल्वर्थ स्वतन्त्रसिद्धो न परतन्त्रेषु स प्रतितन्त्रसिद्धान्तः। यथा-सर्वं नित्यं साङ्ख्यानाम्, सर्वमनित्यं क्षणिकवादिनाम्, सर्वं नित्याऽनित्यमार्हतानामित्यादि ॥ अधिकरणसिद्धान्तमाह-

[भा.१८२] सो अहिगरणो जहियं सिद्धे सेसं अनुत्तमवि सिज्झे।
जह निच्चत्ते सिद्धे, अन्नत्ता-ऽमुत्तसंसिद्धी ॥

वृ-यस्मिन् सिद्धे शेषमनुक्तमपि सिध्यति, यथा आत्मनो नित्यत्वे सिद्धे शरीरादन्यत्व-संसिद्धिरमूर्त्तत्वसंसिद्धिश्च। एषोऽधिकरणसिद्धान्तः। अभ्युपगमसिद्धान्तमाह-

[भा.१८३] जं अब्भुविच्च कीरइ, सिच्छाए कहा स अब्भुवगमो उ।
सीतो वन्ही गयजूह तणग्गे मग्गु-खरसिंगा ॥

वृ-यत् 'अब्भुपेत्य' स्वेच्छया अभ्युपगम्य वादकथा क्रियते, यथा-शीतो वह्नि, गजयूथं तृणाग्रे, मद्गोः-जलकाकस्य खरस्य च शृ ङ्गमिति। स एषोऽभ्युपगमसिद्धान्तः ॥

सम्प्रति शासनमाज्ञां चाह-

[भा.१८४] कडकरणं दव्वे सासनं तु दव्वे व दव्वओ आणा ॥
दव्वनिमित्तं वुभयं, दुन्नि वि भावे इमं चेव ॥

वृ- नोआगमतो द्रव्यशासनं व्यतिरिक्तं 'कृतकरणं' मुद्रा इत्यर्थः। आज्ञाऽपि द्रव्यतो नोआगमतो व्यतिरिक्ता सैव मुद्रा। अथवा 'द्रव्यनिमित्तं' द्रव्योत्पादननिमित्तं यत् 'उभयं' शासनमाज्ञा तद् द्रव्यशासनं सा द्रव्याज्ञा। 'द्वे अपि च' शासना-ऽऽज्ञे भावत इदमेवाध्ययनम्। किमुक्तं भवति ? -नोआगमतो भावशासनं भावाज्ञा च इदमेव कल्पाख्यमध्ययनम्। तथाहि-य एतस्याज्ञां न करोति सोऽनेकानि मरणादीनि प्राप्नोति ॥

इदानीं वचनद्वारम्, वचनं वागित्येकार्थम्, ततो वाचमधिकृत्याह-

[भा.१८५] दव्ववती दव्वाइं, जाइं गहियाइँ मुंचइ न ताव।
आराधनि दव्वस्स वि, दोहि वि भावस्स पडिवक्खो ॥

वृ-यानि भाषायोग्यानि द्रव्याणि भाषात्वेन गृहीतानि, न तावदद्यापि मुञ्चति सा नोआगमतो व्यतिरिक्ता द्रव्यवाक्। अथवा द्रव्यस्य 'आराधनी' यथास्वरूपप्रतिपादिका सा द्रव्यवाक्। द्वाभ्यामपि प्रकाराभ्यां भावस्य प्रतिपक्षो वक्तव्यः। किमुक्तं भवति ? - यानि भाषायोग्यानि द्रव्याणि भाषात्वेन परिणमय्य मुञ्चति सा नोआगमतो भाववाक्, अथवा या जीवस्य भावं

ज्ञानादिकमाराधयति अजीवस्य घटादेर्वर्णादिकं सा नोआगमतो भाववाक् ॥

साम्प्रतमुपदेश-प्रज्ञापना-ऽऽगमानाह-

**[भा.१८६]** दव्वाण दव्वभूओ, दव्वट्ठाए व विज्ञमाईया ।

अह दव्वे उवएसो, पन्नवणा आगमे चेव ॥

**वृ-** द्रव्याणां द्रव्यभूतो द्रव्यार्थं वा वैद्यादय उपदेशादि कुर्वन्ति एष द्रव्यतो नोआगमतो व्यतिरिक्त उपदेशः प्रज्ञापना आगमश्च । इयमत्र भावना-यद्वैद्य आतुरस्यौषधद्रव्याणामुपदेशं करोति, यंवा साधुरनुपयुक्त उपदेशं कथयति, अथवा यद्वैद्य 'एष मम द्रव्यं दास्यति' इति द्रव्यनिमित्तमौषधद्रव्याणामुपदेशं करोति एष नोआगमतो व्यतिरिक्तो द्रव्योपदेशः । तथा यः कश्चिद्रव्याणि प्रज्ञापयति, भावं वा प्रज्ञापयन् अनुपयुक्तः, यदि वा 'एष मम किञ्चिद्दास्यति' इति द्रव्यनिमित्तं प्रज्ञापनां द्रव्यादीनां करोत एषा नोआगमतो व्यतिरिक्ता द्रव्यप्रज्ञापना । तथा यद्धिरण्यादीनामागमं सङ्गहं करोति, यो वा साधुरनुपयुक्त आगमं पठति, यं वाऽऽगमं वैद्यो वृत्तिनिमित्तं पठति स नोआगमतो व्यतिरिक्तो द्रव्यागमः । तथा य उपयुक्त उपदिशति प्रज्ञापयति पठति वाऽऽगमम् एते नोआगमतो भावत पदेश-प्रज्ञापनाऽऽगमाः ॥ साम्प्रतमर्थैकार्थिकान्याह-

**[भा.१८७]** अनुयोगो य नियोगो, भास विभासा य वत्तियं चेव ।

एए अनुओगस्स उ, नामा एगट्ठिया पंच ॥

**वृ-** अनुयोगो नियोगो भाषा विभाषा वार्तिकं च, एतानि पञ्चानुयोगस्यैकार्थिकानि । तत्रानुकूलः सूत्रस्यार्थेन योगोऽनुयोगः । निश्चितो योगो नियोगः । अर्थस्य भाषणं भाषा । विविध-प्रकारैर्भाषणं विभाषा । वृत्तौ भवं वार्त्तिकम्, यदेकस्मिन् पदे यदर्थापन्नं तस्य सर्वस्यापि भाषणम् ॥

उक्तान्यैकार्थिकानि, सम्प्रति निरुक्तद्वारमाह-

**[भा.१८८]** निच्छियमुत्त निरुत्तं, तं पुन सुत्ते य होइ अत्थे य ।

सुत्ते उवरिं वुच्छं, अत्थनिरुत्तं इमं तत्थ ॥

**वृ-** निश्चितमुक्तं निरुक्तम् । तच्च द्विधा-सूत्रस्यार्थस्य च । तत्र सूत्रस्योपरि "नेरुत्तियाणि तस्स इत्यादिना ग्रन्थेन वक्ष्ये अर्थनिरुक्तं पुनः 'इदं' वक्ष्यमाणम् ॥ तदेव विवक्षुप्रतमतस्तद्विषयान् दृष्टान्तान् वक्तव्यान् सूचयति-

**[भा.१८९]** अनु बायरे य उंडिय, पडिंसुया चेव अब्भपडले य ।

वत्तिय चउक्कभंगो, निरुत्तादी वत्तणी व जहा ॥

**वृ-** अनुयोगे अनुत्वे बादरत्वे च दृष्टान्तो वक्तव्यः । नियोगे 'उण्डिका' उण्डिकापत्रकदृष्टान्तः, उण्डिका-मुद्रा । भाषायां प्रतिश्रुतदृष्टान्तः । विभाषायामभ्रपटलः । वार्त्तिके चत्वारो भङ्गाः, तत्र मङ्गदृष्टान्तः । तथा निरुक्तादीनि यथा वर्द्धमानस्वाम्याख्यातवान् तथा किमृषभादयोऽपि ? उतान्यथा ? उच्यते-तथेति, केवलज्ञानस्य तुल्यत्वात्; यथा 'वर्त्तनी' मार्ग सा सर्वजनपदेषु प्रमाणत एकैव भवति ॥ तत्र प्रथममनुयोगद्वारमाह-

**[भा.१९०]** अनुना जोगो अनुजोगो, अनु पच्छाभावओ य थेवे य ।

जम्हा पच्छाऽभिहियं, सुत्तं थोवं च तेनानु ॥

**वृ-** इह अनुयोग इति वा शब्दसंस्कारः । तत्र 'अनुना' पश्चाद्भूतेन योगोऽनुयोगः, अथवा

'अनुना' स्तोकेन योगः अनुयोगः। तथा चाह-अनु इति पश्चाद्भावे स्तोके च। यस्मात् पश्चात् 'अभिहितं' कृतं सूत्रं स्तोकं च तेन अउ इति भण्यते। अर्थ पुनरननुः, पूर्वमुक्तत्वात्, बादरश्च, बहुत्वात्॥ एवमाचार्येणोक्ते शिष्यः प्राह-

[भा.१९१] पुव्वं सुत्तं पच्छा, य पगासो लोइया वि इच्छंति।
पेलासरिसे सुत्ते, अत्थपया हुंति बहुया वि॥

वृ- ननु पूर्वं सूत्रं पश्चात् 'प्रकाशः' अर्थ, 'तान् तान् भावान् प्रकाशयतीति प्रकाशः' इति व्युत्पत्तेः, सूत्राभावे तु स कस्य स्यात्?; अपि च लौकिका अप्येवमेवेच्छन्ति, तथा चोक्तं तैरेव-

पूर्वं सूत्रं ततो वृत्तिर्वृत्तेरपि च वार्त्तिकम्।
सूत्र-वार्त्तिकयोर्मध्ये, ततो भाष्यं प्रवर्त्तते॥

ततो यद्भवद्भिः यूयं 'पूर्वमर्थं पश्चात्सूत्रम्' इति तत्र घटां प्राञ्चति। यदपि च ब्रूथ 'सूत्रमनुः, अर्थो बादरः' इति तदपि न सम्यक्, यत एकस्यां पेडायां बहूनि वस्त्राणि मान्ति तत्र पेडाया एव बादरत्वं युज्यते, तद्वशाद् बहूनि वस्त्राणि मान्ति स्म; एवमत्रापि 'पडासदृशे' पेडास्थानीये सूत्रे बहून्यर्थपदानि वर्त्तन्ते, ततः सूत्रमेव बादरीभवितुमर्हति नार्थ इति॥

न च महत्त्वमेकान्तेनार्थस्य, कस्मात्? इत्याह-

[भा.१९२] इक्कं वा अत्थपयं, सुत्ता बहुगा वि संपयंसंति।
उक्खित्त नायमाइसु, अयमवि तम्हा अनेगंतो॥

वृ- एकमर्थपदं बहूनि सूत्राणि सम्प्रदर्शयन्ति, यथा उत्क्षिप्तज्ञाते 'अनुकम्पा कर्त्तव्या' इत्यर्थो बहुभिः सूत्रैर्वर्णितः। आदिशब्दात् सङ्घाटादिषु ज्ञातेषु 'न वर्णहितोराहारयितव्यम्' इत्यादिपरिग्रहः। तस्मादयमनेकान्तो यत् 'अर्थो महान्' इति॥ आचार्यप्राह-यत्त्वयोक्तं 'पूर्वं सूत्रं पश्चादर्थः' इति तन्न भवति, कथम्? इत्याह-

[भा.१९३] अत्थं भासइ अरिहा, तमेव सुत्तीकरेंति गणधारी।
अत्थं च विना सुत्तं, अनिस्सियं केरिसं होज्जा॥

वृ- अर्थं भाषतेऽर्हन्। 'तमेव' अर्हद्भाषितमर्थं सूत्रीकुर्वन्ति गणधारिणः। अर्थं च विना सूत्रम् 'अनिश्रितम्' अर्थनिश्रारहितं कीदृशं स्यात्? असम्बद्धं स्यात्, ''दशदाडिमे'' त्यादिवाक्यवदिति भावः। अपि च लौकिका अपि शास्तारः प्रथमतोऽर्थं दृष्ट्वा सूत्रं कुर्वन्ति, अर्थमन्तरेण सूत्रस्यानिष्पत्तेः। यदप्युक्तं 'पेडावद्बादरं सूत्रम्, अर्थोऽणुः' इति तदप्यश्लीलम्, यतस्तस्या एव पेडाया एकं वस्त्रमादाय तेनानेकाः पेडा बध्यन्ते, तथैकस्मादर्थाद्बहूनि सूत्राण्यर्वाक् तेनैव बध्यन्ते। एवं च वस्त्रस्थानीयस्यार्थस्य महत्त्वम्, पेडास्थानीयस्य तु सूत्रस्यानुत्वमेव। यदप्युक्तं 'न च महत्त्वमेकान्तेनार्थस्य' इत्यादि तदप्यपरिभावितपरिभाषितम्, यत उत्क्षिप्तज्ञातादिषु सत्त्वानुकम्पादिकोऽर्थस्तावन्मात्रस्य सूत्रस्य, अशेष्य तु शेषोऽर्थः॥

उक्तोऽनुयोगः, अधुना नियोगमाह-

[भा.१९४] अहिगो जोगो निजोगो, जहाऽइदाहो भवे निदाहो त्ति।
अत्थनिउत्तं सुत्तं, पसवइ चरणं जओ मुक्खो॥

वृ- 'नि' आधिक्ये, अधिको योगो नियोगः, यथाऽतिदाहो निदाहः। कस्य केन सहाधिक्यम्?

इति चेद् उच्यते-सत्रस्यार्थेन । आधिक्येन योगस्य किं फलम् ? इति चेद् अत आह-अर्थेन सममाधिक्येन नियुक्तं सूत्रं 'चरणं' चारित्रं प्रसूते, यतः संसारद् मोक्षः ।। अत्रैव प्रसवने दृष्टान्तमाह-

[भा.१९५] वच्छनियोगे खीरं, अत्थनियोगेण चरणमेवं तु ।
पत्तग दंडियमुभयं, दंडियसरिसो तहिं अत्थो ।।

वृ- यथा गौर्वत्सेन नियुक्ता सती क्षीरं प्रसूते, एवमर्थेन समं नियुक्तं सूत्रं चरणं प्रसूते । यदि पुनरेकं केवलं सूत्रं स्यात् नार्थस्तेन सङ्गृहीतो भवेत् ततश्चरणप्रसवस्याभावः, यथा वत्सनियोगाभावे गोः क्षीरप्रसवस्याभावः । अर्थोऽपि केवलः सूत्रविहीनो न कार्यसाधकः, यथा केवलो वत्सः । अत्रैव दृष्टान्तान्तरमाह-"पत्तग दंडिय उभयं" ति 'पत्रकं' लेखः 'दण्डिका' लेखस्योपरि मुद्रानियोगः 'उभयं' पत्रकं दण्डिका च । इयमत्र भावना-

तिन्नि पुरिसा रायाणमोलग्गंति । राया तुट्ठो । कम्मिइ नगरे पसाओ कओ । तत्थ एगेण पुरिसेन जे तम्मि नयरे रायपुरिसा तेसिं जोग्गं पत्तयमाणीयं परं मुद्दारहियं । बिइएण दंडिया चेव केवला । तइएणोभयं । तत्थ जेण मुद्दारहियं पत्तयमाणीयं सो रायपुरिसेहिं भणिओ-नत्थि पत्तगस्सोपरि मुद्दाविणिओग त्ति न मन्नेमो । बिइओ भणिओ-अत्थि इयं मुद्दा, परं को रन्ना पसाओ कओ ? को वा न कउ ? त्ति न जाणामो त्ति, तम्हा न देमो त्ति । तइएणोभयं दरिसियं । सव्वं जहत्थियं लद्धं । एव दृष्टान्तः ।। अयमर्थोपनयः-पत्रसदृशं सूत्रम्, दण्डिकासदृशोऽर्थः । यथा पत्रकं केवलं दण्डिका वा न कार्यस्य प्रसाधिका, उभयं तु प्रसाधकम्, एवं सूत्रमर्थश्च पृथग् न चरणप्रसाधकः, उभयं तु प्रसाधकम् ।। सम्प्रति प्रतिश्रुतदृष्टान्तोपेतं भाषाद्वारमाह-

[भा.१९६] पडिसद्दगस्स सरिसं, जो भासइ अत्थमेगु सुत्तस्स ।
सामइय बाल पंडिय, साहु जईमाइया भासा ।।

वृ-यथा गिरिकुहर-कन्दरादिषु यादृशः शब्दः क्रियते तादृशः प्रतिशब्द उत्तिष्ठति, एवं यो यादृशं सूत्रं तस्य तादृशमर्थमेकं भाषते तस्य तद् भाषणं भाषा । यथा समभावः सामायिकम्, द्वाभ्यां-बुभुक्षया तृषा वाऽऽगलितो बालः, साधयति मोक्षमार्गमिति साधुः, यतते सर्वात्मना संयमानुष्ठानेष्विति यति, आदिशब्दात् तपतीति तपन इत्यादिपरिग्रहः ।।

साम्प्रतमभ्रपटलदृष्टान्तसमन्वितं विभाषाद्वारमाह-

[भा.१९७] एक्केणं एक्कदलं, तहिं कयं बिईएण बहुतरगा ।
तइएण छाइयं तं, तिल्लं-ऽबिलमादुवाएहिं ।।

वृ- एकेन छत्रकारेण त्रयाणामात्मीयशिष्याणां छत्राच्छादनार्थमभ्रपटलानि दत्तानि 'छत्राण्याच्छादयत' । तत्रैकेन शिष्येण एकमभ्रपटलदलं तत्र छत्रे कृतम्, द्वितीयेनाऽऽत्मीयच्छत्रे बहुतराणि द्वि-त्रि-चतुःप्रभृतीनि अभ्रपटलानि लापितानि, तृतीयेन च बहून्यभ्रपटलानि दत्त्वा तैला-ऽम्लादिभिरुपायैस्तच्छत्रं सर्वात्मनाऽऽच्छादितम् । किमुक्तं भवति ?-तान्यभ्रपटलदलानि लापितानि तैला-ऽम्लादिभिस्तीमित्वा सर्वथा निर्भेदं कृतम् । एष दृष्टान्तः, अयमर्थोपनयः-प्रथमशिष्यसदृशो भाषकः, द्वितीयशिष्यसदृशो विभाषकः ।।

[भा.१९८] एगपए उ दुगाई, जो अत्थे भणइ सा विभासा उ ।
असइ य आसु य धावइ, न य सम्मइ तेन आसो उ ।।

वृ- तथा चाह-य एकस्मिन् द्वि-त्रादीनर्थान् वक्ति, यथाऽश्नातीत्यश्वः, यदि वाऽऽशु धावति न च श्राम्यतीत्यश्वः, एष विभाषकः, तस्य भाषणं विभाषा। तृतीयशिष्यसदृशो व्यक्तिकरः। उक्तञ्च- पढमसरिच्छो भासगो, बिइय विभासो य तइय वित्तिकरो। इति।

सम्प्रति मल्लदृष्टान्तोपेतं वार्त्तिकद्वारमाह- ॥

[भा.१९९] सामाइयस्स अत्थं, पुव्वधर समत्तमो विभासेइ।
चउरो खलु मंखसुया, वत्तीकरणम्मि आरणा ॥

वृ- यः सामायिकस्यार्थं 'पूर्वधरः' चतुर्दशपूर्वधारी सन् समस्तम् 'ओ' इति पादपूरणे विभाषते, यतः परं किमपि न वक्तव्यमस्ति स व्यक्तिकरो वार्त्तिककर इत्येकार्थौ। तस्मिंश्च व्यक्तिकरणे चत्वारः खलु मल्लसुता आहरणानि ॥ तान्येवाह-

[भा.२००] फलगिल्लो गाहाहिं, बिइओ तइओ य वाइयत्थेणं।
तिन्नि वि अकुडुंबभरा, ति[illegible] चउत्थओ भरइ ॥

वृ- चत्वारो मल्लाः। तेषामेकः फलकं गृहीत्वा हिण्डते, न गाथा उच्चरति, नापि वाचा कमप्यर्थं भाषते स न किञ्चिल्लभते। द्वितीयो न फलकं गृह्णाति, केवलं गाथाः पठन् हिण्डते सोऽपि न किञ्चिल्लभते। तृतीयो न फलकं गृह्णाति, नापि गाथा उच्चरति, परं वाचा कमप्यर्थं भाषते सोऽपि न किञ्चिल्लभते। चतुर्थस्तु फलकं गृहीत्वा गाथाः पठन् तासामर्थं च भाषमाणो हिण्डते, सर्वत्र लभते। आद्यास्त्रयोऽकुटुम्बभराः, चतुर्थ 'त्रिकयोगे' त्रिकयोगसम्प्रयुक्तः कुटुम्बभरः। एष दृष्टान्तः, अयमर्थोपनयः-व्यक्तावपि चत्वारो भङ्गाः-एकस्य सूत्रमायाति नार्थ, द्वितीयस्यार्थो न सूत्रम्, तृतीयस्य सूत्रमप्यायाति अर्थोऽपि, चतुर्थस्य न सूत्रं नाऽप्यर्थः। अत्र द्वावाद्यौ चतुर्थश्च आद्यत्रिमल्लपुरुषवन्न मोक्षलक्षणस्वकार्यप्रसाधकाः, तृतीयस्तु चतुर्थमल्लवदात्मनो मोक्षप्रसाधकः॥ आह सम्प्रति कीदृशो व्यक्तिकरः ? इत्यत आह-

[भा.२०१] जे जम्मि जुगे पवरा, तेसि सगासम्मि जेन उग्गहियं।
परिवाडीण पमाणं, वुच्छं वत्तीकरो स खलु ॥

वृ- ये यस्मिन् युगे 'प्रवराः' प्रधानाः तेषां 'सकाशे' समीपे 'येन' ग्रहण-धारणासमर्थेन अवगृहीतम्, कतिभि परिपाटीभिः ? इत्यत आह-परिपाटीनां परिमाणमग्रे वक्ष्ये, स खलु तदा व्यक्तिकरः ॥ अत्र शिष्यः प्राह-

[भा.२०२] निक्खेवा य निरुत्ताणि जा य कहणा भवे पगासस्स।
जह रिसभाईयाऽऽहंसु किमेवं वद्धमाणो वि ॥

वृ- ये निक्षेपाः चतुष्क-सप्तकादयः, यानि च निरुक्तानि सूत्रा-ऽर्थयोरनन्तरमुक्तानि, यो च चतुर्भिरनुयोगद्वारैः 'प्रकाशस्य' अर्थस्य कथना, चशब्दादेकार्थिकानामपि या च कथना, एतानि यथा 'ऋषभादयः' त्रयोविंशतिस्थीर्थकरा आख्यातवन्तः तथा किमेवं भगवान् वर्धमानस्वाम्यप्याख्याति ? किं वाऽन्यथा ? इति, उच्यते-तथैव ॥ ननु ते उच्चतराः, भगवान् वर्धमानस्वामी पुनः सप्तरत्निप्रमाणः, ततः कथं तस्य तथैवाख्यानम् ? अत आह-

[भा.२०३] धिय-संघयणे तुल्ला, केवलभावे य विसमदेहा वि।
केवलनाणं तं चिय, पत्रवणिज्ञा य चरमे वि ॥

वृ- यथा विषमदेहा अपि तीर्थकृतो धृति-संहनने केवलभावे च तुल्याः तथा प्ररूपमायामपि तुल्याः । यतः 'चरमेऽपि' भगवति वर्धमानस्वामिनि तदेव केवलज्ञानं त एव च प्रज्ञापनीया भावा ये ऋषभादीनाम्, ततः कथं न तुल्या प्ररूपणा? ॥ यस्तु विशेषस्तमुपदर्शयति-

[भा.२०४] नायज्झयणाहरणा, इसिभासियमो पइन्नगसुया य ।
एए हुंति अनियया, नियमं पुण सेसमुस्सन्नं ॥

वृ- ज्ञाताध्ययनेषु यानि आहरणानि-दृष्टान्ताः ते हि कदाचित्त एव भवेयुर्ये ऋषभादिभिरुपन्यस्ताः, केचिदन्यथा वा ये प्रत्युत्पन्ना इति । तथा यानि ऋषिभाषितानि प्रकीर्णकश्रुतानि च एतानि 'अनियतानि' कदाचिद् भवन्ति कदाचिन्न भवन्ति; यानि च भवन्ति तान्यपि कदाचित् तथार्थयुक्तानि कदाचिद् अन्यथार्थोपेतानि । शेषं पुन 'उत्सन्नं' प्रायेण नियतम् ॥ आह कः पुनरत्र दृष्टान्तो यथा वर्धमानस्वाम्यपि तथैवाख्याति ? इति दृष्टान्तमाह-

[भा.२०५] जह सव्वजनवएसुं, एक्कं चिय सगडवत्तिणिपमाणं ।
विसमाणि य वत्थूणी, सगडाईणं तह निरुत्ता ॥

वृ- यथा शकटादीनाम्, आदिशब्दाद्, गन्त्र्यादिपरिग्रहः, यद्यपि 'विषमाणि वस्तूनि' केषाञ्चिन्महान्ति केषाञ्चित् क्षुल्लकानि तथापि सर्वेष्वपि जनपदेषु एकमेव तदा तदा शकटवर्त्तिन्याः प्रमाणम्, सर्वत्राक्षाणां चतुर्हस्तप्रमाणत्वात्; तथा निरुक्तानि, उपलक्षणमेतत्, निक्षेपादीनि च प्ररूपणामधिकृत्य तुल्यानि ॥ आह नन्ववश्यं पूर्वरथानां सम्प्रतिरथनां च विस्तरस्यास्ति विशेषः, एवं महाप्रमाणानां पूर्वमनुष्याणामल्पप्रमाणानामधुनातनमनुष्याणां च विशेषो भवति, तत आह-

[भा.२०६] जइ वि य वत्थू हीना, पुव्विल्लरहेहिं संपयरहाणं ।
तह वि जुगम्मि जुगम्मी, सहत्थचउहत्थगा अक्खा ॥

वृ-यद्यपि पूर्वतनरथेभ्यः साम्प्रतरथानां वस्तूनि हीनानि तथापि युगे युगे सर्वत्राऽऽत्महस्तेन चतुर्हस्तका अक्षाः, ततः सर्वेष्वपि जनपदेष्वेकं शकटवर्तिन्याः प्रमाणम् । तथा यद्यपि पूर्वकाले महाप्रमाणा मनुष्याः सम्प्रतिकाले त्वल्पप्रमाणाः, तथापि सर्वेषां तदेव केवलज्ञानं तदेव संहननं त एव च प्रज्ञापनीया भावा इति तुल्या प्ररूपणा ॥ ननु पञ्चधनुःशतिकप्रभृतीनां महान्ति इन्द्रियाणि, तेन तेषां प्रभूततरक्षेत्रे विषयोपलम्भविशेषः तथा केवलोपलम्भविशेषोऽपि स्याद् ? अत आह-

[भा.२०७] पुरिमेहि जइ वि हीना, इंदियमाना उ संपयनराणं ।
तह वि य सिं उवलद्धी, खित्तविभागेण तुल्ला उ ॥

वृ- 'पूर्वेभ्यः' पूर्वकालभाविभ्यः पुरुषेभ्यो यद्यपि 'साम्प्रतनराणां' सम्प्रतिमनुष्याणामिन्द्रियमानानि हीनानि तथाप्यात्माङ्गुलमधिकृत्य क्षेत्रविभागेनैषां तुल्या उपलब्धि । तथाहि-श्रोत्रादीन्द्रियप्रमाणं श्रोत्रादीन्द्रियविषयप्रमाणं चाऽऽत्माङ्गुलतः, तच्च यथा पूर्वमनुष्याणां द्वादशयोजनादिकं क्षेत्रप्रमाणं तथाऽधुनातनमनुष्याणामपि । तथा चोक्तम्- सोइंदियस्स णं भंते! केवइए विसए पन्नत्ते ? गोयमा! जहन्नेणं अंगुलस्स असंखिज्जइभागाओ उक्कोसेणं बारसहिंतो जोयणेहिंतो अच्छिन्ने पोग्गले पुट्ठे पविट्ठातिं सद्दातिं सुणेति इत्यादि एवं हीना-ऽधिकशरीरप्रमाणत्वेऽपि केवलेनोपलम्भस्तुल्य एवेति न कश्चिद्दोषः । अन्यच्च शरीराश्रितानीन्द्रियाणि, ततः शरीरप्रमाणविषये तदाश्रितानामिन्द्रियाणामपि प्रमाणविशेषभावात् तद्विषयक्षेत्रोपलम्भविशेषः ॥

गतं निरुक्तद्वारम् । अधुना विधिद्वारावसरः, तत्र प्रथमतो विधेरेकार्थिकान्याह-

[भा.२०८] अनुपुव्वी परिवाडी, कमो य नाओ ठिई य मज्जाया ।
होइ विहाणं च तहा, विहीए एगट्ठिया हुंति ॥

वृ- आनुपूर्वी परिपाटी क्रमो न्यायः स्थिति मर्यादा विधानमित्येतानि विधेरेकार्थिकानि भवन्ति ॥ तत्र येन विधिनाऽनुयोगः कर्तव्यस्तमाह-

[भा.२०९] सुत्तत्थो खलु पढमो, बिइओ निज्जुत्तिमीसिओ भणिओ ।
तइओ य निरवसेसो, एस विही भणिय अनुयोगे ॥

वृ- प्रथमस्य श्रोतुः प्रथमं तावत् सूत्रार्थ कथनीयः । यथा-"नो कप्पइ निग्गंथाण वा निग्गंथीण वा आमे तालपलंबे अभिन्ने पडिगाहित्तए" इति सूत्रम् । अस्यार्थ-न इति प्रतिषेधे, 'न कल्पते' न वर्त्तते इत्यर्थः, नैषां ग्रन्थो विद्यत इति निर्ग्रन्थाः तेषाम्, वा विभाषायाम्, निर्ग्रन्थीनां वा, 'आमम्' अपक्वम्, तलो वृक्षः, तले भवं तालं फलमित्यर्थः, प्रलम्बं-मूलम्, तदपि तस्यैव तलवृक्षस्य प्रतिपत्तव्यम्, ततः समाहारः, 'अभिन्नम्' अव्यपगतजीवं प्रतिग्रहीतुमिति । एवं तावत् कथयितव्यं यावदध्ययनपरिसमाप्तिः । ततो द्वितीयस्या परिपाट्यां 'निर्युक्तिमिश्रितः' पीठिकया सूत्रस्पर्शिकनिर्युक्त्या च समन्वितः, सोऽपि यावदध्ययनपरिसमाप्तिस्तावत् कथनीयः। 'तृतीयः' तृतीयस्यां परिपाट्यामनुयोगो निरवशेषो वक्तव्यः, पद-पदार्थ-चालना-प्रत्यवस्थानादिभि सप्रपञ्चं समस्तं कथयितव्यमिति भावः । एष विधिरनुयोगे ग्रहण-धारणादिसमर्थान् शिष्यान् प्रति वेदितव्यः ॥ मन्दमतीन् प्रति प्रकारान्तरेणाऽनुयोगविधिमाह-

[भा.२१०] मूयं हुंकारं वा, बाढक्कार पडिपुच्छ वीमंसा ।
तत्तो पसंगपारायणं च परिनिट्ठ सत्तमए ॥

वृ- प्रथमतो मूकं शृणुयात्, किमुक्तं भवति ? प्रथमश्रवणे संयतगात्रस्तूष्णीमासीत । ततो द्वितीये श्रवणे हुङ्कारं दद्यात्, वन्दनं कुर्यादित्यर्थः । तृतीये 'बाढकारं कुर्यात्' 'बाढमेवमेतत्, नान्यथा' इति प्रशंसेदित्यर्थः । चतुर्थे गृहीतपूर्वा-ऽपरसूत्राभिप्रायो मनाक् प्रतिपृच्छां कुर्यात्, यथा 'कथमेतद् ?' इति । पञ्चमे गृहीतपूर्वा-ऽपरसूत्राभिप्रायो मनाक् तदुत्तरोत्तरगुणप्रसङ्गः पारगमनं चाऽस्य भवति । ततः सप्तमे परिनिष्ठा, गुरुवदनुभाषत इत्यर्थः । यत एवं मन्दमेधसां श्रवणपरिपाट्या विवक्षिताध्ययनार्थावगमः ततस्तान् प्रति सप्तवारान् अनुयोगो यथाप्रतिपत्ति कर्त्तव्यः ॥ अत्र परावकाशमाह-

[भा.२११] चोएइ राग-दोसा, समत्थ परिणामगे परूवणया ।
एएसिं नाणत्तं, वुच्छामि अहानुपुव्वीए ॥

वृ- शिष्यः 'नो (चो) दयति' प्रश्नयति-'समर्थे'-ग्रहण-धारणासमर्थे तथा परिणामके, उपलक्षणमेतत्, ग्रहण-धारणाऽसमर्थेऽतिपरिणामकेऽपरिणामके च या प्ररूपणा तया युष्माकं रागद्वेषौ प्रसजतः । तथाहि-तिसृभिः परिपाटीभिरेकान् ग्राहयतो रागः, अपरान् सप्तभिः परिपाटीभिर्ग्राहयतो द्वेषः; तथा परिणामकान् ग्राहयतो रागः, इतरानतिपरिणामका-ऽपरिणामकान् परिहरतश्च द्वेषः । 'एतेषां' ग्रहण-धारणासमर्था-ऽसमर्थानां परिणामकादीनां च 'यथाऽऽनुपूर्व्या' क्रमेण नानात्वं वक्ष्ये ॥ तत्र प्रतिज्ञातमेव निर्वाहयन् प्रथमतो ग्रहण-धारणासमर्था-ऽसमर्थान्

प्रति राग-द्वेषावाह-

[भा.२१२] मच्छरया अविमुत्ती, पूयासक्कार गच्छइ य खिन्नो ।
दोसो गहणसमत्थे, इयरे रागो उ वुच्छेयो ॥

वृ- ग्रहण-धारणासमर्थं शिष्यं तिसृभिः परिपाटीभिर्ग्राहयत एतावन्ति कारणानि स्युः- एष बहुशिक्षितो मम सपत्नो भविष्यति, ततो मत्सरतया तिसृभिः परिपाटीभिस्तस्य ग्रहणम्, अन्यथा एकया परिपाट्या तं ग्राहयेत् । 'अविमुक्ति' इति एष सूत्रा-ऽर्थेषु समाप्तेषु मां मोक्ष्यते, इतरथा तु शिष्यपरिवारत्वेन वर्त्तत इत्यविमुक्तिकारणम् । अथवा गृहीतसूत्राऽर्थस्यास्य पूजासत्कारो भविष्यति । 'खिन्नो वा' परिश्रान्तोऽन्यं गणं गमिष्यति । ''वोच्छेय(यो)''त्ति मद्धसतौ चानुयोगस्य व्यवच्छेदो भविष्यति, अन्यस्य तथाविधशिष्यस्याभावात् । एवं कारणानि चानुयोगस्य व्यवच्छेदो भविष्यति, अन्यस्य तथाविधशिष्यस्याभावात् । एवं कारणानि सम्भाव्य ग्रहण-धारणासमर्थे तिसृभिः परिपाटीभिरनुयोगं वदतो द्वेषः । 'इतरस्मिन्' जडे रागः, यथातदवबोधमनुयोगस्य प्रवर्त्तनात् ॥ अत्राऽऽचार्य प्राह-

[भा.२१३] निरवयवो न हु सक्को, सयं पगासो उ संपयंसेउं ।
कुंभजले वि हु तुरिउज्झियम्मि न हु तिम्मए लिट्टू ॥

वृ- 'न हु' नैव सूत्रस्य 'प्रकाशः' अर्थ 'सकृद्' एकया परिपाट्या 'निरवयवः' समस्तः सम्प्रदर्शयितुं शक्यः, तस्य ग्रहण-धारणासमर्थस्यापि तथाऽवधारयितुमशक्यत्वात् । एतदेव प्रतिवस्तूपमया द्रढयति-न हि कुम्भजलेऽपि त्वरितमुज्झिते लेष्टु सर्वात्मना तिम्यते, एवमेषोऽपि, ग्रहण-धारणासमर्थोऽपि नैकया परिपाट्याऽवधारयितुमीश इति तिसृभि परिपाटीभिरनुयोग-कथनमित्यदोषः ॥ साम्प्रतमतिपरिणामका-ऽपरिणामकान् परिहरतो द्वेषाभावमाह-

[भा.२१४] सुत्त-ऽत्थे कहयंतो, पारोक्खी सिस्सभावमुवलब्भ ।
अनुकंपाए अपत्ते, निज्जूहइ मा विणस्सिज्जा ॥

वृ- 'परोक्षी' परोक्षज्ञानोपेतः शिष्येभ्यः सूत्रा-ऽर्थौ कथयन् विनया-ऽविनयकरणादिना तेषां शिष्याणां भावम्-अभिप्रायमुपलभ्य 'अपात्राणि' अपात्रभूतान् शिष्यान् अनुकम्पया 'निर्यूहयति' अपवदति-न तेभ्यः सूत्राऽर्थौ कथयति, श्रुताशातनादिना मा विनश्येयुरिति कृत्वा ॥ अत्रैवार्थे दृष्टान्तमा(न्ताना)ह-

[भा.२१५] दारुं धाउं वाही, बीए कंकडुय लक्खणे सुमिणे ।
एगंतेण अजोग्ग, एवमाई उदाहरणा ॥

वृ- 'एकान्तेनायोग्ये' अपरिणामकेऽतिपरणामके च दारु धातुः व्याधि बीजानि काङ्कटको लक्षणं स्वप्न इत्येवमादीनि 'उदाहरणानि' दृष्टान्ताः ॥ तत्र दारुदृष्टान्तमाह-

[भा.२१६] को दोसो एरंडे, जं रहदारुं न कीरए तत्तो ।
को वा तिनिसे रागो, उवजुज्जइ जं रहंगेसु ॥

वृ- 'एरण्डे' एरण्डद्रुमे को द्वेषो यत् तस्मात् 'रथदारु' रथयोग्यं दारु न क्रियते ?, को वा तिनिशे रागो यदुपयुज्यते स रथाङ्गेषु ? ॥

[भा.२१७] जं पि य दारुं जोग्गं, जस्स उ वत्थुस्स तं पि हु न सक्का ।

जोएउमघिम्मविउं, तच्छण-दल-वेह-कुसेहिं ॥

वृ- 'यदपि' वस्तु 'यस्य वस्तुनः' अक्षादेर्योग्यं दारु तदपि तक्षण-दल-वेध-कुशैरनिर्माप्य योजयितुमशक्यं किन्तु निर्माप्य, एवमिहापी योग्योऽपि यावदर्वाक्तनैः सूत्रैर्न परिकर्मितस्तावन्न कल्पं व्यवहारं वाऽध्यापयितुं योग्यः । तत्र तक्षणं प्रतीतम्, दलानि द्विधा त्रिधा वा काष्ठस्य पाटनम्, वेधः प्रतीतः, कुशो यो वेधे प्रान्तः प्रवेश्यते ॥ सम्प्रति धातुदृष्टान्तमाह-

[भा.२१८] एमेव अधाउं उज्झिऊण धाऊण कुणइ आयाणं ।
न य अक्कमेण सक्का, धाउम्मि वि इच्छियं काउं ॥

वृ- 'एवमेव' राग-द्वेषौ विना अधातुं त्यक्त्वा धातूनामादानं करोति, न च धातावप्यक्रमेणेप्सितं कर्तुं शक्यं किन्तु क्रमेण; एवमिहाप्योग्यान् परिहरतो योग्यानपि क्रमेण ग्राहयतो न द्वेषः ॥ अधुना व्याधिदृष्टान्तामाह-

[भा.२१९] सुहसज्झो जत्तेणं, जत्तासज्झो असज्झवाही उ ।
जह रोगे पारिच्छा, सिस्ससभावाण वि तहेव ॥

वृ- यथा रोगे वैद्येन परीक्षा क्रियते, यथा-एष सुखसाध्यः, एष यत्नेन साध्यः, एष चासाध्यव्याधिः यत्नेनाप्यसाध्यः । परीक्षाऽनन्तरं च राग-द्वेषौ विना तदनुरूपा प्रवृत्तिः, एवं शिष्यस्वभावानामपि 'तथैव' राग-द्वेषाभावेन परीक्षा क्रियते, तदनुरूपा च प्रवृत्ति ॥

अधुना बीजदृष्टान्तमाह-

[भा.२२०] बीयमबीयं नाउं, मोत्तुमबीए उ करिसतो सालिं ।
ववइ विरोहण जोग्गे, न यावि से पक्खवाओ उ ॥

वृ- यथा कर्षको बीजमबीजं च ज्ञात्वा अबीजानि मुक्त्वा 'शालिं' शालिबीजानि वपति, न च तस्मिन् विरोहणयोग्ये बीजे "से" तस्य कर्षकस्य 'पक्षपातः' रागः, एवमत्रापि भावनीयम् ॥

सम्प्रति काङ्कटुकदृष्टान्तमाह-

[भा.२२१] कंकडुए को दोसो, जं अग्गी तं तु न पयई दित्तो ।
को वा इयरे रागो, एमेव य सूवकारस्स ॥

वृ- को द्वेषोऽग्नेः काङ्कटुके यदग्निर्दीप्तोऽपि तं न पचति ?, को वा इतरस्मिन् रागो यत् पाचयति ?, नैव कश्चित् । एवमत्रापि भावनीयम् ॥ अधुना लक्षणदृष्टान्तमाह-

[भा.२२२] जे उ अलक्खणजुत्ता, कुमारगा ते निसेहिउं इयरे ।
रज्जरिहे अनुमन्नइ, सामुद्दो नेय विसमो उ ॥

वृ- यथा 'सामुद्रः' सामुद्रलक्षणपरिज्ञाता राज्ञि व्यपगते तस्य ये कुमारा अलक्षणयुक्तास्तान् निषिध्य 'इतरान्' लक्षणोपेतान् राज्यार्हाननुमन्यते, न च स तथाऽनुमन्यमानः 'विषमः' राग-द्वेषवान्, एवमत्रापि द्रष्टव्यम् ॥ स्वप्नदृष्टान्तमा (न्ताना) ह-

[भा.२२३] जो जह कहेइ सुमिणं, तस्स तह फलं कहेइ तन्नाणी ।
रत्तो वा दुट्ठो वा, न यावि वत्तव्वयमुवेइ ॥

वृ- यो यथा स्वप्नं कथयति तस्य तथा 'तज्ज्ञानी' स्वप्नज्ञानी स्वप्नफलं कथयति, न च स तथा कथयन् रक्त इति वा द्विष्ट इति वा वक्तव्यतामुपैति, एवमत्रापि ॥ एवमेकान्तेनायोग्या ये

शिष्यास्तेषां परिहारे राग-द्वेषाभावे दृष्टान्ता अभिहिताः । सम्प्रति कालान्तरयोग्यानपरिणतान् क्रमेण परिणमयतो राग-द्वेषाभावे दृष्टान्तमाह-

[भा.२२४] अग्गी बाल गिलाणे, सीहे रुक्खे करीलमाईया ।
अपरिणयजने एए, सप्पडिवक्खा उदाहरणा ॥

वृ- 'अपरिणते जने' कालान्तरयोग्ये एतानि 'सप्रतिपक्षाणि' पूर्वमयोग्यतायां पश्चाद् योग्यतायामित्यर्थः उदाहरणानि । तद्यथा-अग्निर्बालो ग्लानः सिंहो वृक्षः 'करीलं' वंशकरीलम्, आदिसब्दाद्वक्ष्यमाणहस्त्यादिदृष्टान्तपरिग्रहः ॥ तत्र प्रथममग्निदृष्टान्तमाह-

[भा.२२५] जह अरणीनिम्मविओ, थोवो विउलिंधणं न चाएइ ।
दहिउं सो पज्जलिओ, सव्वस्स वि पच्चलो पच्छा ॥

वृ- यथा अरणिनिर्मापितः स्तोको वह्निर्विपुलमिन्धनं न दग्धुं शक्नोति, स एव पश्चात् प्रज्वलितः सर्वस्यापीन्धनजातस्य दहने 'प्रत्यलः' समर्थः ॥

[भा.२२६] एवं खु थूलबुद्धी, निउणं अत्थं अपच्चलो घेत्तुं ।
सो चेव जणियबुद्धी, सव्वस्स वि पच्चलो पच्छा ॥

वृ-एवमग्निदृष्टान्तेन प्रथमतः शिष्यः स्थूलबुद्धि सन् निपुणमर्थं ग्रहीतुमप्रत्यलः । पश्चात् स एव शास्त्रन्तरैः 'जनितबुद्धिः' उत्पादितबुद्धि सर्वस्यापि शास्त्रस्य ग्रहणप्रत्यलो भवति ॥ बालदृष्टान्तमाह-

[भा.२२७] देहे अभिवड्ढंते, बालस्स उ पीहगस्स अभिवुड्ढी ।
अइबहुएण विणस्सइ, एमेवऽहुणुट्ठिय गिलाणे ॥

वृ- 'बालस्य देहे' अभिवर्द्धमाने तदनुसारेम दातव्यस्य 'पीहकस्य' आहारस्यापि (स्यापि:) वृद्धिर्भवति, देहवृधनुसारतः पीधकमपि क्रमशो वर्द्धमानं दीयते इति भावः । यदि पुनरतिबहु दीयतेतदा स विनश्यति । ग्लानदृष्टान्तमाह-'एवमेव' बालगतेन प्रकारेणाधुनोत्थितेऽपि ग्लाने वक्तव्यम्-यथा ग्लानोऽप्यधुनोत्थितः क्रमेणाभिवर्द्धमानमाहारं गृह्णाति, एकवारमतिप्रभूत-ग्रहणे विनाशप्रसङ्गात् । एवं शिष्योऽपि क्रमेण योग्यतानुरूपं शास्त्रमादत्ते, प्रथमत एवाति-निपुणार्थशास्त्रग्रहणे बुद्धिभङ्गप्रसक्तेः ॥ सिंहादिदृष्टान्तानाह-

[भा.२२८] खीर-मिउपोग्गलेहिं, सीहो पुट्ठो उ खाइ अट्ठी वि ।
रुक्खो विवन्नओ खु, वंसकरिल्लो य नहछिज्जो ॥

[भा.२२९] ते चेव विवड्ढंता, हुंति अछेज्जा कुहाडमाईहिं ।
तह कोमला वि बुद्धी, भज्जइ गहणेसु अत्थेसु ॥

वृ-सिंहः प्रथमतः क्षीर-मृदुपुद्गलैः स्वमात्रा पोष्यते । तत पुष्टः सन् अस्थीन्यपि स खादति । तथा वृक्षो द्विपर्णो वंशकरीलम् एतौ द्वावपि प्रथमतो नखच्छेद्यौ, ततः पश्चादभिवर्द्धमानौ यतस्ततः कुठारादिभिरप्यच्छेद्यौ भवतः । एवं शिष्यस्यापि प्रथमतः कोमला बुद्धिर्भवति, ततः सा गहनेष्वर्थेषु 'भज्यते' भङ्गमुपयाति । क्रमेण तु शास्त्रान्तरदर्शनतोऽभिवर्द्धमाना कठोरा कठोरतरोपजायते इति न क्वचिदपि भङ्गमुपयाति ॥ एतदेवोपदिशन्नाह-

[भा.२३०] निउणे निउणं अत्थं, थूलत्थं थूलबुद्धिणो कहए ।

बुद्धीविवद्धणकरं, होहिइ कालेन सो निउणो ॥

वृ- निपुणे निपुणर्थं कथयेत्, स्थूले स्थूलमर्थं कथयेत् । कथम्भूतम् ? इत्याह-बुद्धिविवर्द्धनकरम् । एवं सति स कालेन निपुणओ भवति, अन्यथा बुद्धिभङ्गप्रसक्तो न स्यात् ॥ साम्प्रतमादिशब्दसूचितान् हस्त्यादीन् दृष्टान्तानाह-

[भा.२३१] सिद्धत्थए वि गिण्हइ, हत्थी थूलगहणे सुनिम्माओ ।

सरवेह-छिज्ज-पवए, घड-पड-चित्ते तहा धमए ॥

वृ- हस्ती स्थूलग्रहणे सुनिर्मातः सन् पश्चात् सिद्धार्थकानपि गृह्णाति । तथाहि-नवको हस्ती शिष्यमाणः प्रथमं काष्ठानि ग्राह्यते, तदनन्तरं क्षुल्लकान् पाषाणान्, ततो गोलिकाः, ततो बदराणि, तदनन्तरं सिद्धार्थकानपि । यदि पुनः प्रथमत एव सिद्धार्थकान् ग्राह्यते ततो न शक्नोति ग्रहीतुमिति । एवं स्वरवेध-पत्रच्छेद्य-प्लवक-घटकारक-पटकारक-चित्रकारक-धमकाश्च दृष्टान्ता भावनीयाः । ते चैवम्-प्रथमं धानुष्कः स्थूलद्रव्यं व्यद्धुं शिक्षति, पश्चात्स वालम्, पश्चादतिसुनिर्मातः स्वरेणापि विध्यति । तथा पत्रच्छेद्यकार्यपि प्रथममकिञ्चित्करैः पत्रैः शिक्ष्यते, ततो यदा निर्मातो भवति तदा ईप्सितं पत्रच्छेद्यं कार्यते । तथा प्लवकोऽपि प्रथमं वंशे लगयित्वा प्लाव्यते, ततः पश्चादभ्यस्यन् आकाशेऽपि तानि तानि करणानि करोति । घटकारोऽपि प्रथमतः शरावादीनि कार्यते, पश्चात् शिक्षितो घटानपि रोति । पटकारोऽपि प्रथमतः स्थूलानि चीवराणि शिक्ष्यते, ततः सुशिक्षितः शोभनानपि पटान् वयति । चित्रकारोऽपि प्रथममण्डकं चित्रयितुं शिक्ष्यते, ततः शेषानवयवान्, पश्चात् सुशिक्षितः सर्वं चित्रकर्म्म सम्यक् करोति । धमकोऽपि पूर्वं श्रृङ्गादीनि धमति, पश्चाच्छङ्खम् ॥ अत्रैवोपनयमाह-

[भा.२३२] जत्थ मई ओगाहइ, जोग्गं जं जस्स तस्स तं कहए ।

परिणामा-ऽऽगमसरिसं, संवेगकरं सनिव्वेयं ॥

वृ- यथैते हस्त्यादयः क्रमेण निर्माप्यन्ते एवं शिष्यस्यापि यत्र मतिरवगाहते यस्य च यद् योग्यं शास्त्रं तस्य तत् कथयति । कथम्भूतम् ? इत्याह-'परिणामा-ऽऽगमसदृशं' यस्य यादृशः परिणामो यस्य च यावानागमस्तत्सदृशम्, यथा-ईदृशपरिणामस्येदम् एतावदागमस्य पुनरिदमिति। पुनः किंविशिष्टं कथयितव्यम् ?, अत आह-'संवेगकरं' सिद्धिर्देवलोकः सुकुलोत्पत्तिरित्यादेरभिलाषः संवेगस्तत्करणशीलं संवेगकरम्, तथा नारकः तिर्यग्योनि कुमानुषत्वमित्यादेर्विरक्तता निर्वेदस्तत्करणशीलं निर्वेदकरम् ॥ तदेवं योग्येऽपि क्रमेण दाने राग-द्वेषाभाव उक्तः । 'सम्प्रति शिष्येष्वाचार्येण परिणाम कत्वं परीक्ष्यानुयोगः कर्त्तव्यः, शिष्यैरप्याचार्यं परीक्ष्य तस्य सकाशे श्रोतव्यम्' इति शिष्याचार्यपरसपरविधिमतिदेशत आह-

[भा.२३३] गिण्हंत-गाहगाणं, आइसुएसु उ विही समक्खाओ ।

सो चेव य होइ इहं, उज्जोगो वन्निओ नवरं ॥

वृ- गृह्णतां-शिष्याणां ग्राहकस्य-आचार्यस्य 'आदिसूत्रेषु' सामायिकादिषु यो विधिः समाख्यातः ''गोणी चंदण'' इत्यादिलक्षणः स एवेह निरवशेषो वक्तव्यः । यस्तु शिष्याणामनुयोग-कथने 'उद्योगः' उद्यमो यथा तिसृभि परिपाटीभिरथवा सप्तभि कर्त्तव्यः, स नवरं सप्रपञ्चमुपवर्णितः ॥ गतं विधिद्वारम् । अधुना प्रवृत्तिद्वारं वक्तव्यम् । प्रवृत्ति प्रवाहः प्रसूतिरित्येकार्था । कथमनुयोगः

प्रवर्त्तते ? इति । सा च प्रवृत्तिर्द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यतः प्रवृत्तिमाह-

[भा.२३४] अनिउत्तो अनिउत्ता, अनिउत्तो चेव होइ उ निउत्ता ।
नि(नि)उत्तो अनिउत्ता, उ निउत्तो चेव उ निउत्ता ॥

[भा.२३५] निउत्ता अनिउत्ताणं, पवत्तई अहव ते वि उ निउत्ता ।
दव्वम्मि होइ गोणी, भावम्मि जिनादयो हुंति ॥

वृ- द्रव्यतः प्रसवे गौर्दृष्टान्तो भवति, भावे जिनादयः । तत्र गवि दोहकेन सह चत्वारो भङ्गाः, तद्यथा-दोहकोऽनियुक्तो गौरप्यनियुक्ता १ दोहकोऽनियुक्तो गौर्नियुक्ता २ दोहको नियुक्तो गौरनियुक्ता ३ दोहको गौरपि नियुक्ता ४ । एवमाचार्य-शिष्येष्वपि भङ्गचतुष्टयं योजनीयम्, तच्चाग्रे योक्ष्यते । तत्र तृतीये भङ्गे नियुक्त आचार्यो बलादप्यनियुक्तानां शिष्याणामनुयोगं प्रवर्त्तयति । यदि वा द्वितीये भङ्गे तेऽपि शिष्या नियुक्ता अनियुक्तमाचार्यमनुयोगे प्रवर्त्तयन्ति । एवं तृतीये द्वितीये च भङ्गेऽनुयोगस्य प्रवृत्ति । प्रथमे तु सर्वथा न भवति । चतुर्थे प्रवृत्तिर्निः प्रतिपक्षा ॥ तत्र गोदृष्टान्तविषयं भङ्गचतुष्टयं व्याख्यानयति-

[भा.२३६] अप्पण्हुया य गोणी, नेव य दुद्धा समुज्जओ दुद्धुं ।
खीरस्स कओ पसवो, जइ वि य सा खीरदा धेनू ॥

वृ- गौरप्रस्नुता, नैव च दोग्धा तां दोग्धुं समुद्यतः, ततो यद्यपि सा क्षीरदा धेनुस्तथाप्यस्मिन् प्रथमभङ्गे कुतः क्षीरस्य प्रसवः ? नैव कुतश्चित् ॥

[भा.२३७] बीए वि नत्थि खीरं, थेवं च हविज्ज एव तइए वि ।
अत्थि चउत्थे खीरं, एसुवमा आयरिय-सीसे ॥

वृ- द्वितीयेऽपि भङ्गे 'दोहकोऽनियुक्तो गौर्नियुक्ता' इत्येवंरूपे नासित क्षीरम्, दोहकस्यानियुक्तत्वात् । अथवा गौः प्रस्नुतेति स्तनेषु गलत्सु स्तोकं क्षीरं भवेत् । एवं तृतीयेऽपि भङ्गे 'दोहको नियुक्तो गौरनियुक्ता' इत्येवंलक्षणे नास्ति क्षीरप्रसवः, स्तोकं वा स्याद् दोहकगुणेन। चतुर्थे पुनर्भङ्गे गौरपि प्रस्नुता दोहकोऽपि नियुक्त इत्यस्ति क्षीरप्रसवः । 'एषा उपमा' भङ्गचतुष्टयात्मिका आचार्य-शिष्ययोरप्यनुयोगस्य प्रसवे वेदितव्या । तथाहि-आचार्योऽप्यनियुक्तः शिष्या अपि अनियुक्ता इति प्रथमभङ्गे नास्त्यनुयोगस्य प्रवृत्ति । अनियुक्त आचार्य शिष्या नियुक्ता इति द्वितीयेऽपि भङ्गे नानुयोगः, आचार्यानियुक्तत्वात् ॥

[भा.२३८] अहवा अनिच्छमाणमवि किंचि उज्जोगिणो पवत्तंति ।
तइए सारिंते वा, होज्ज पवित्ती गुणिंते वा ॥

वृ- अथवा अनियुक्तमाचार्यमनिच्छन्तमपि उद्योगिनः शिष्याः किञ्चित्प्रतिपृच्छादिभिरनुयोगं कर्त्तुं प्रवर्त्तयन्ति, ततो भवति द्वितीयेऽपि भङ्गेऽनुयोगस्य प्रवृत्ति । 'तृतीये' 'आचार्यो नियुक्तः शिष्या अनियुक्ताः' इत्येवंरूपे नास्त्यनुयोगस्य सम्भवः, अथवा पुनः पुनः सारयत्याचार्ये अथवा श्रोतुमनिच्छन्तमपि शैलसमानं कश्चिच्छ्रोतारं पुरो विन्यस्य 'मा नश्यत्वनुयोगः' इति 'गुणयति' गुणननिमित्तमनुयोगं कुर्वति भवेदनुयोगः ॥ अत्र दृष्टान्तः कालकाचार्य । तमेवाह-

[भा.२३९] सागारियमप्पाहण, सुवन्न सुयसिस्स खंतलक्खेण ।
कहणा सिस्सागमणं, धूलीपुंजोवमाणं च ॥

**वृ-** उज्जेनीए नयरीए अज्जकालगा नामं आयरिया सुत्त-ऽत्थोववेया बहुपरिवारा विहरंति । तेसिं अज्जकालगाणं सीसस्स सीसो सुत्त-ऽत्थोववेओ सागरो नामं सुवन्नभूमीए विहरइ । ताहे अज्जकालया चिंतेंति-'एए मम सीसा अनुओगं न सुणंति तओ किमेएसिं मज्झे चिट्ठामि ?, तत्थ जामि जत्थ अनुयोगं पवत्तेमि, अवि य एए वि सिस्सा पच्छा लज्जिया सोच्छि-हिंति । एवं चिंतिऊण सेज्जायरमापुच्छंति-कहं अन्नत्थ जामि ? तओ मे सिस्सा सुणेहिंति, तुमं पुन मा तेसिं कहेज्जा, जइ पुन गाढतरं निब्बंधं करिज्जा तो खरंटेउं साहेज्जा, जहा-सुवन्नभूमीए सागराणं सगासं गया । एवं अप्पाहित्ता रत्तिं चेव पसुत्ताणं गया सुवण्णभूमिं । तत्थ गंतुं खंतलक्खेण पविट्ठा सागराणं गच्छं । तओ सागरायरिया 'खंत' त्ति काउं तं नाढाइया अब्भुट्ठाणाईणि (ईहिं)। तओ अत्थपोरिसीवेलाए सागारयरिएणं भणिया-खंता ! तुब्भं एयं गमइ ? । आयरिया भणंति-आमं । 'तो खाइं सुणेह' त्ति पकहिया, गव्वायंता य कहिंति । इयरे वि सीसा पभाए संते संभंता आयरियं अपासंता सव्वत्थ मग्गिउं सिज्जायरं पुच्छंति । न कहेइ, भणइ य-तुब्भं अप्पणो आयरिओ न कहेइ मम कहं कहेइ ? । ततो आउरीभूएहिं गाढनिब्बंधे ए कहियं, जहा-तुब्भच्चएण निव्वेएण सुवन्नभूमीए सागराणं सगासं गया । एवं कहित्ता ते खरंटिया ।

तओ ते तह चेव उच्चलिया सुवन्नभूमिं गंतुं । पंथे लोगो पुच्छइ-एस कयरो आयरिओ जाइ ? । ते किहिंति अज्जकालगा । तओ सुवन्नभूमीए सागराणं लोगेण कहियं, जहा-अज्जकालगा नाम आयरिया बहुस्सुया बहुपरिवारा इहागंतुकामा पंथे वट्टंति । ताहे सागरा सिस्साणं पुरओ भणंति-मम अज्जया इंति, तेसिं सगासे पयत्थे पुच्छीहामि त्ति । अचिरेणं ते सीसा आगया । तत्थ अग्गिल्लेहिं च्छिज्जंतिकिं इत्थ आयरिया आगया चिट्ठंति ? । नत्थि, नवरं अन्ने खंता आगया । केरिसा ? । वंदिए नायं 'एए आयरिया'। ताहे सो सागरो लज्जिओ 'बहुं मए इत्थ पलवियं, खमासमणा य वंदाविया' । ताहे अवरण्हवेलाए 'मिच्छा दुक्कडं' करेइ 'आसाइय' त्ति । भणियं च नेन-केरिसं खमासमणो ! अहं वागरेमि ? । आयरिया भणंति-सुंदरं, मा पुण गव्वं करिज्जासि । ताहे धूलीपुंजदिट्ठंतं करे(रे)ति-धूली हत्थेण घेत्तुं तिसु ठाणेसु ओयारेंति-जहा एस धूली ठविज्जमाणी उक्खिप्पमाणी य सव्वत्थ परिसडइ, एवं अत्थो वि तित्थगरेहिंतो गणहराणं गणहरेहिंतो जाव अम्हं आयरि-उवज्झायाणं परंपरएणं आगयं, को जाणइ कस्स केइ पज्जाया गलिया ?, ता मा गव्वं काहिसि । ताहे 'मिच्छा दुक्कडं' करित्ता आढत्ता अज्जकालिया सीस-पसीसाण अनुओगं कहेउं ॥

सम्प्रत्यक्षरगमनिका-सागारिकः-शय्यातरस्तस्य अप्पाहणं-सन्देशकथनम् । स्वयमाचार्याणां सुवर्णभूमौ सुतशिष्यस्य-शिष्यस्यापि शिष्यस्य सागराभिधानस्य "खंतलक्खेण" वृद्धव्याजेन गमनम् । पश्चाच्छिष्याणां सागारिकेण कथना, यथा-आचार्या सुवर्णभूमौ सागरस्यान्तिकं गताः। ततः शिष्याणां तत्रागमनम् । सागरं गर्वमुद्वहन्तं प्रति धूलीपुञ्जोपमानमिति ॥ चतुर्थभङ्गमधिकृत्याह-

[भा.२४०] निउत्तो उभओकालं, भयवं कहणाए वद्धमाणो उ ।
गोयममाई वि सया, सोयव्वे हुंति उ निउत्ता ॥

**वृ-** 'नियुक्तः' उभयकालमनुयोगं करोति । 'नियुक्ताः' उभयकालं शृण्वन्ति । अत्र कथनायां दृष्टान्तो भगवान् वर्द्धमानस्वामी । श्रोतव्ये सदा नियुक्ता दृष्टान्ता भवन्ति गौतमादयः ॥

गतं प्रवृत्तिद्वारम् । इदानीं केन वेति द्वारमाह-

[भा.२४१] देस-कुल-जाइ-रूवी, संघइणी धिइजुओ अनासंसी ।
अविकंथणो अमाई, थिरपरिवाडी गहियवक्को ॥

वृ- युतशब्दः प्रत्येकमभिसम्बध्यते-देशयुतः कुलयुत इत्यादि । तत्र यो मध्यदेशे जातो यो वाऽर्द्धषड्विंशतिषु जनपदेषु स देशयुतः, स ह्यार्यदेशभणितिं जानाति, ततः सुखेन तस्य समीपे शिष्या अधीयत इति तदुपादानम् । कुलं पैतृकम्, तथा च लोके व्यवहारः-इक्ष्वाकुकुलजोऽयम् नागकुलजोऽयमित्यादि, तेन युतः प्रतिपन्नार्थनिर्वाहको भवति । जातिर्मातृकी, तया युतो विनयादिगुणवान् भवति । रूपयुतो लोकानां सुप्रतिपन्नबहुमानभाग् जायते, "यत्राकृतिस्तत्र गुणा वसन्ति" इति प्रवादात् । संहननयुतो व्याख्यायां न श्राम्यति । धृतियुतो नातिगहनेष्वर्थेषु भ्रममुपयाति । 'नाशंशी' श्रोतृभ्यो वस्त्राद्यनाकाङ्क्षी । 'अविकत्थनः' नातिबहुभाषी । 'अमायी' न शाठ्येन शिष्यान् वाहयति । स्थिरा-अतिशयेन निरन्तराभ्यासतः स्थैर्यमापन्ना अनुयोगपरिपाट्यो यस्य स स्थिरपरिपाटिः, तस्य हि सूत्रमर्थो वा न मनागपि गलति । 'गृहीतवाक्यः' उपादेयवचनः, तस्य ह्यल्पमपि वचनं महार्थमिव प्रतिभाति ॥

[भा.२४२] जियपरिसो जियनिद्दो, मज्झत्थो देस-काल-भावन्नू ।
आसन्नलद्धपइभो, नाणाविहदेसभासन्नू ॥

वृ- 'जितपरिषत्' न महत्यामपि पर्षदि क्षोभमुपयाति । 'जितनिद्रः' रात्रौ सूत्रमर्थं वा परिभावयन् न निद्रया बाध्यते । 'मध्यस्थः' सर्वेषु शिष्येषु समचित्तः । देशं कालं भावं जानातीति देश-काल-भावज्ञः, स हि देशं कालं भावं च लोकानां ज्ञात्वा सुखेन विहरति, शिष्याणां चाभिप्रायान् ज्ञात्वा तान् सुखेनानुवर्त्तयति । 'आसन्नलब्धप्रतिभः' परवादिना समाक्षिप्तः शीघ्रमुत्तरदायी । नानाविधानां देशानां भाषा जानातीति नानाविधदेशभाषाज्ञः, स हि नाना देशीयान् शिष्यान् सुखेन शास्त्राणि ग्राहयति ॥

[भा.२४३] पंचविहे आयारे, जुत्तो सुत्तऽत्थतदुभयविहन्नू ।
आहरण-हेउ-उवनय-नयनिउणो गाहणाकुसलो ॥

वृ- पञ्चविध आचारः-ज्ञानाचारादिरूपस्तस्मिन् 'युक्तः' उद्युक्तः, स्वयमाचारेष्वस्थितस्यान्यानाचारेषु प्रवर्त्तयितुमशक्यत्वात् । सूत्रा-ऽर्थग्रहणेन चतुर्भङ्गी सूचिता-एकस्य सूत्रं नार्थः, द्वितीयस्यार्थो न सूत्रम्, तृतीयस्य सूत्रमप्यर्थोऽपि, चतुर्थस्य न सूत्रं नाप्यर्थः, तत्र तृतीयभङ्गग्रहणार्थं तदुभयग्रहणम्, सूत्राऽर्थतदुभयविधीन् जानातीति सूत्रार्थतदुभयविधिज्ञः । आहरणं-दृष्टान्तः, हेतुश्चतुर्विधो यापकादि यथा दशवैकालिकनिर्युक्तौ, यदि वा द्विविधो हेतुः कारको ज्ञापकश्च, तत्र कारको घटस्य कर्ता कुम्भकारः, ज्ञापको यथा-तमसि घटादीनामभिव्यञ्जकः प्रदीपः, उपनय-उपसंहारः, नयाः-नैगमादयः, एतेषु निपुण आहरण-हेतूपन्यासं करोति, उपसंहारनिपुणतया सम्यगधिकृतमर्थमुपसंहरति, नयनिपुणतया नयवक्तव्यतावसरे सम्यक्प्रपञ्चं वैविक्तयेन नयानभिधत्ते । 'ग्राहणाकुशलः' प्रतिपादनशक्त्युपेतः ॥

[भा.२४४] ससमय-परसमयविऊ, गंभीरो दित्तिमं सिवो सोमो ।

गुणसयकलिओ जुत्तो, पवयणसारं परिकहेउं ॥

वृ- स्वसमय परसमयं वेत्तीति स्वसमय-परसमयवित्, स च परेणाक्षिप्तः सुखेनस्वपक्षं परपक्षं च निर्वहति। 'गम्भीरः' अतुच्छस्वभावः। 'दीप्तिमान्' परवादिनामनुद्धर्षणीयः। 'शिवः' अकोपनः, यदि वा यत्र तत्र वा विहरन् कल्याणकरः। 'सोमः' शान्तदृष्टिः। गुणाः-मूलगुणा उत्तरगुणाश्च तेषां शतानि तैः कलितो गुणशतकलितः। 'युक्तः' समीचीनः प्रवचनस्य-द्वादशाङ्गस्य सारम्-अर्थं कथयितुम्॥ कस्माद्गुणशतकलित इष्यते? इति चेद् अत आह-

[भा.२४५] गुणसुट्ठियस्स वयणं, घयपरिसित्तु व्व पावओ भाइ।

गुणहीणस्स न सोहइ, नेहविहूणो जह पईवो॥

वृ- यो मूलगुणादिषु गुणेषु सुस्थितस्तस्य वचनं घृतपरिसिक्तपावक इव 'भाति' दीप्यते। गुणहीनस्य तु न शोभते वचनम्, यथा स्नेहविहीनः प्रदीपः। उक्तञ्च-

आयारे वट्टंतो, आयारपरूवणाअसंकंतो।

आयारपरिब्भट्ठो, सुद्धचरणदेसणे भइओ॥

गतं केन वेति द्वारम्। अधुना कस्येति द्वारमाह-

[भा.२४६] जइ पवयणस्स सारो, अत्थो सो तेन कस्स कायव्वो।

एवंगुणन्निएणं, सव्वसुयस्साऽऽउ देसस्सा॥

वृ-यदि प्रवचनस्य सारो अर्थस्तर्हि स तेन एवंगुणान्वितेन कस्य कर्त्तव्यः? किं सर्वश्रुतस्य? उत 'देशस्य' श्रुतस्कन्धादेः? इति॥ अत्र सूरिराह-

[भा.२४७] को कल्लाणं निच्छइ, सव्वस्स वि एरिसेण वत्तव्वो।

कप्प-व्ववहाराण उ, पगयं सिस्साण थिज्जत्थं॥

वृ-को नाम जगति कल्याणं नेच्छति? ततः सर्वस्यापि श्रुतस्यानुयोग ईदृशेन वक्तव्यः। केवलं कल्पो व्यवहारश्चापवादबहुलस्तेनैतयोरनुयोगे विशेषत एतादृशेन 'प्रकृतम्' अधिकृत-मधिकारः, एवंगुणयुक्तेनैव कल्प-व्यवहारयोरनुयोगः कर्त्तव्य इत्यर्थः। कस्मादेवमुच्यते? इति चेत्, उच्यते-शिष्याणां स्थिरीकरणार्थम्॥ तदेव स्थिरीकरणं भावयति-

[भा.२४८] एसुस्सग्गठियप्पा, जयणाणुन्नातो दरिसवंतो वि।

तासु न वट्टइ नूनं, निच्छयओ ता अकरणिज्जा॥

वृ- यदा नाम यथोक्तगुणशतकलितः कल्प-व्यवहारयोरनुयोगं करोति तदा शिष्या एवमवबुध्यन्ते-एष स्वयमुत्सर्गस्थितात्मा, अथ च कल्पे व्यवहारे च यतनया पञ्चकादि-परिहाणिरूपया प्रतिसेवना अनुज्ञाताः प्रदर्शयति, ततः प्रतिसेवना यतनयाऽनुज्ञाता अपि प्रदर्शयन् स्वयं तासु न वर्त्तते, किन्तु केवलमुत्सर्गमाचरति, तदेवं ज्ञायते नूनम्-निश्चयेनैता यतनानुज्ञाता अपि प्रतिसेवनाः 'अकरणीयाः' न समाचरितव्याः॥ किञ्च-

[भा.२४९] जो उत्तमेहि पहओ, मग्गो सो दुग्गमो न सेसाणं।

आयरियम्मि जयंते, तदणुचरा केण सीइज्जा॥

वृ-यः 'उत्तमैः' गुरुभिः 'प्रहतः' क्षुण्णः 'मार्ग' पन्थाः स शेषाणां दुर्गमो न भवति, किन्तु सुगमः। तत्र आचार्ये 'यतमाने' यथोक्तसूत्रनीत्या प्रयत्नवति 'तदनुचराः' तदाश्रिताः शिष्याः

केन हेतुना सीदेयुः ? नैव सीदेयुरिति भावः । तत एतेन कारणेन कल्प-व्यवहारयोरनुयोगे विशेषत एतादृशेन प्रकृतम् ॥

[भा.२५०] अनुओगम्मि य पुच्छा, अंगाई कप्प छक्कनिक्खेवो ।
सुय खंधे निक्खेवो, इक्केक्को चउव्विहो होइ ॥

वृ- अनुयोगेऽङ्गादेः पृच्छा वक्तव्या, तदनन्तरं कल्पस्य षट्को निक्षेपः, ततः श्रुते स्कन्धे च एकैकस्मिन् निक्षेपश्चतुर्विधो भवति वक्तव्यः । एष द्वारगाथासमासार्थः ॥

साम्प्रतमेनामेव विवरीषुः प्रथमतोऽनुयोगेऽङ्गादेः पृच्छामाह-

[भा.२५१] जइ कप्पादनुयोगो, किं सो अंगं उयाहु सुयखंधो ।
अज्झयणं उद्देसो, पडिवक्खंगादिणो बहवो ॥

वृ- यदि कल्पादेः आदिशब्दाद् व्यवहारस्य ग्रहणम् अनुयोगः ततः किं सोऽङ्गम् ? उताहो श्रुतस्कन्धः ? अध्ययनम् ? उद्देशो वा ? स। अमीषां चाङ्गानां प्रतिपक्षा बहवोऽङ्गादयो द्रष्टव्याः। इयमत्र भावना-यदि नामैतादृशेनाचार्येणानुयोगः कल्पस्य व्यवहारस्य च कर्त्तव्यः ततः स कल्पो व्यवहारो वा किमङ्गम् अङ्गानि ? श्रुतस्कन्धः श्रुतस्कन्धाः ? अध्ययनम् अध्ययनानि ? उद्देश उद्देशाः ? ॥ अत्र सूरिराह-

[भा.२५२] सुयखंधो अज्झयणा, उद्देसा चेव हुंति निक्खिप्पा ।
सेसाणं पडिसेहो, पंचण्ह वि अंगमाईणं ॥

वृ- श्रुतस्कन्धोऽध्ययनानि उद्देशा एते त्रयः पक्षा भवन्ति 'निक्षेप्याः' स्थाप्या आदरणीया इत्यर्थः । शेषाणां पञ्चानामप्यङ्गादीनां प्रतिषेधः । तद्यथा-कल्पो व्यवहारो वा नाङ्गं नाङ्गानि श्रुतस्कन्धो नो श्रुतस्कन्धाः अध्ययनं नाध्ययनानि नो उद्देशः उद्देशाः ॥

[भा.२५३] तम्हा उ निक्खिविस्सं, कप्प-व्यवहारमो सुयक्खंधं ।
अज्झयणं उद्देसं, निक्खिवियव्वं तु जं जत्थ ॥

वृ- यस्मादेवं तस्मात् कल्पं निक्षेप्स्यामि व्यवहारं निक्षेप्स्यामि श्रुतं निक्षेप्स्यामि स्कन्धं निक्षेप्स्यामि अध्ययनं निक्षेप्स्यामि उद्देशं निक्षेप्स्यामि । यच्च यत्र निक्षेप्तव्यं नामादि चतुष्प्रकारं षट्प्रकारं वा तत् वक्ष्यामि । तत्र कल्पस्य षड्विधो नामादिको निक्षेपः । यत उक्तं प्राग् द्वारगाथायाम्- ''कप्प छक्कनिक्खेवो'' व्यवहारस्य चतुर्विधो नामादिनिक्षेपः ॥ एतयोः स्वस्थानमाह-

[भा.२५४] आइल्लाणं दुण्ह वि, सट्ठाणं होइ नामनिप्फन्ने ।
अज्झयणस्स उ ओहे, उद्देसस्सऽनुगमे भणिओ ॥

वृ- 'आद्ययोर्द्वयोः' कल्प-व्यवहारयोर्यथाक्रमं षट्कस्य चतुष्कस्य च निक्षेपस्य स्वस्थानं भवति नामनिष्पन्ने निक्षेपे, ततः स तत्र वक्तव्यः; तत्र कल्पस्य पञ्चकल्पे व्यवहारस्य पीठिकायाम् । अध्ययनस्य चतुष्प्रकारो निक्षेपः ओघनिष्पन्ने निक्षेपेऽभिधास्यते । उद्देशस्य च 'अनुगमे' उपोद्धातनिर्युक्त्यनुगमे भणितः करिष्यते ॥ सम्प्रति ''सुय खंधे निक्खेवो'' इत्यादिव्याख्यानार्थमाह-

[भा.२५५] नामसुयं ठवणसुयं, दव्वसुयं चेव होइ भावसुयं ।
एमेव होइ खंधे, पन्नवणा तेसि पुव्वुत्ता ॥

वृ- श्रुतस्य चतुष्प्रकारो नामादिको निक्षेपः, तद्यथा-नामश्रुतं स्थापनाश्रुतं द्रव्यश्रुतं भावश्रुतं च। 'एवमेव' अनेनैव प्रकारेण स्कन्धेऽपि चतुःप्रकारो निक्षेपः, तद्यथा-नामस्कन्धः स्थापनास्कन्धो द्रव्यस्कन्धो भावस्कन्धश्च। एतेषां प्रज्ञापना पूर्वमावश्यके उक्ताऽवधारणीया॥ गतं कस्येति द्वारम्। अधुना तद्वारद्वारं वक्तव्यम्-

[भा.२५६] चत्तारि दुवाराइं उवक्कम निक्खेव अनुगम नया य।
काऊण परूवणयं, अनुगम-निज्जुत्ति सुत्तस्स॥

वृ- कल्पस्य चत्वार्यनुयोगद्वाराणि भवन्ति, तद्यथा-उपक्रमो निक्षेपोऽनुगमो नयाश्च। एतेषां च प्ररूपणा यथाऽनुयोगद्वारे तथा कर्त्तव्या। सा च तावद् यावत् सूत्रानुगमः सूत्रस्पर्शिक-निर्युक्त्यनुगमश्च। अनुयोगद्वाराणि नाम अनुयोगस्य-अर्थस्य मुखानि उपाया इत्यर्थः॥ आह किमर्थमनुयोगद्वाराणि कृतानि? किमर्थं वा चत्वारि? एकमेव द्वारमस्तु, अत आह-

[भा.२५७] अद्दारगं अनगरं, एगद्दारे य होइ पलिमंथो।
चउदारे तेन भवे, देस पएसे य छिंडीओ॥

वृ- यथा 'अद्वारकम्' अकृतद्वारमनगरम्, एकस्मिंश्च द्वारे कृते भवति 'परिमन्थः' निर्गच्छद्भिः प्रविशद्भिश्चाश्व-हस्त्यादिभि सङ्घट्टः, तेन कारणेन तन्नगरं चतुर्द्वारं भवति। तत्रापि 'देशे' द्वारकुड्यादिलक्षणे प्रदेशे च तत्र तत्रानेकाश्छिण्डिका भवन्ति। एवमकृतानुयोगद्वार-मेकान्तेनागम्यम्, अकृतद्वारनगरवत्; कृतैकानुयोगद्वारमपि दुरधिगमम्, कृतैकद्वारकनगरवत्; तेन चत्वार्यनुयोगद्वाराणि कृतानि। गतं तद्वारद्वारम्॥ इदानीं भेदद्वारम्-यथा नगरस्य देशेषु प्रदेशेषु च छिण्डिका भवन्ति तथाऽनुयोगस्यापि चतुर्णां द्वाराणामवान्तरभेदाः। तत्रोपक्रमो द्विभेदः, तद्यथा-लौकिकः शास्त्रयश्च। लौकिकः षडविधः-नामोपक्रमः स्थापनोपक्रमो द्रव्योपक्रमः क्षेत्रोपक्रमः क्षेत्रोपक्रमः कालोप्रमो भावोपक्रमश्च॥ तत्र नाम-स्थापने प्रतीते। द्रव्योपक्रममाह-

[भा.२५८] सच्चित्ताई तिविहो, उवक्कमो दव्वि सो भवे दुविहो।
परिकम्मणम्मि एक्को, बिइओ संवट्टणाए उ॥

वृ-नोआगमतो व्यतिरिक्तो द्रव्योपक्रमस्त्रिविधः-'सचित्तादि' सचित्तोऽचित्तो मिश्रश्च। एकैको द्विविधः-परिकर्मणि संवर्त्तनायां च॥ एतदेव व्याख्यानयति-

[भा.२५९] जेन विसिज्जइ रूवं, भासा व कलासु वा वि कोसल्लं।
परिकम्मणा उ एसा, संवट्टण वत्थुनासो उ॥

वृ-येन रूपं 'विशिष्यते' विशिष्टतरं क्रियते, यथा सुवर्णे कटकरूपतापादनं कृष्णवर्णे वा गौरवर्णताजननम्; तथा येन भाषा विशेष्यते-स्पष्टवर्णोच्चारणादिरूपा क्रियते, यथा शुकसारिकादीनाम्; यद्व वा 'कलासु' द्वासप्ततिसङ्ख्यासु कौशलमुपजन्यते एषा परिकर्मणा। संवर्त्तना वस्तुनाशः, यथा-सुवर्णे कटकत्वं भज्यते पुरुषो वा मार्यते। तत्र सचित्ते परिकर्मणा यथा-नटस्य नेपथ्यं क्रियते, शुको वा पाठ्यते, पुरुषो वा द्वासप्ततिकला अवगाह्यते, संवर्त्तना यथा-पुरुषो मार्यते। अचित्ते परिकर्मणा यथा-सुवर्णे कटकं क्रियते, संवर्त्तना-कटकं भज्यते। मिश्रे परिकर्मणा यथा-साभरणो नटो चारुवेषं कार्यते, पुरुषो वा साभरणो द्वासप्ततिकला ग्राह्यते, संवर्त्तना यथा-सायुधः पुरुषो मार्यते॥ गतो द्रव्योपक्रमः। सम्प्रति क्षेत्रोपक्रममाह-

[भा.२६०] नावाए उवक्कमणं, हल-कुलियाईहि वा वि खित्तस्स ।
सम्मज्ज-भूमिकम्मे, पंथ-तलागाइएसुं तु ॥

वृ- यन्नावा आदिशब्दादुडुपादिभिश्च नदीं तरति, अथवा हल-कुलिकादिभिर्यत् 'क्षेत्रस्य' इक्षुक्षेत्रादेरुपक्रमणम्, यदि वा यत् क्रियते गृहादीनां सम्मार्जनं भूमिकर्म वा देवकुलादीनाम्, यच्च वा पथः-मार्गस्य शोधनम् तडागं वा खन्यते, आदिग्रहणेनावटादिषु यत् परिकर्म्म खननादिलक्षणम् । एष समस्तोऽपि क्षेत्रोपक्रमः ॥ कालोपक्रममाह-

[भा.२६१] छआयआए नालियाइ व, कालस्स उवक्कमो विउपसत्थो ।
रिक्खाईचारेसु व, साव-विबोहेसु व दुमाणं ॥

वृ- 'छायया' शङ्कुच्छायया 'नालिकया' घटिकया यः कालो ज्ञायते, यथा एतावान् कालो गत इति । किंविशिष्टः ? इत्याह-''विउपसत्थो'' विदः-विद्वासस्तैः प्रशस्तः-प्रशंसितः, यथा सुष्ठु ज्ञात इति, एष कालोपक्रमः । यदि वा रि(ऋ)क्षं-नक्षत्रम् आदिशब्दाद्ग्रहपरिग्रहः तेषां चारेषु गतिविज्ञानम्, यथा-नक्षत्रमिदमेतावन्तं कालमशुभम्, ग्रहो वाऽमुकराशावेतावन्तं कालं स्थायी इत्यादि । यच्च वा 'द्रुमाणां' शमी-चिंञ्चिनिकाप्रभृतीनां स्वापे विबोधे च दृष्टे ज्ञायते, यथा-गतोऽस्तमादित्य उदितो वेति । एष कालोपक्रमः ॥

भावोपक्रमो द्विधा-प्रशस्तोऽप्रशस्तश्च । उभयमप्याह-

[भा.२६२] गणिगा मरुगीऽमच्चे, अपसत्थो भावुवक्कमो होइ ।
आयरियस्स उ भावं, उवक्कमिज्जा अह पसत्थो ॥

वृ- अप्रशस्तं संसारनिबन्धनत्वादशोभनं यद् भावस्योपक्रमणमेष भावोपक्रमोऽप्रशस्तः ॥ अत्रदृष्टान्तो गणिका चउसट्ठिकिलापंडिया । तीए चित्तसभाए सव्वमनूसजाईणं जाइकम्मं सिप्पाणि कुवियपसायणं च लिहावियं । ताहे जो कोइ मेहुणट्ठी एइ तं भणइ-चित्तसभं पिच्छ जेन नज्जइ किंजाईओ ? केरिसो वा एस ? । ताहे सो तत्थ जाइकम्मं सिप्पाणि कुवियपसायणं च दट्ठुमवस्समेव भणइ जं जत्थ सुकयं दुकयं वा । ताहे सा जाणइ-अमुगजाईओ, अमुगं सिप्पं जाणइ, कुवियपसायणे दारुणसभावो इत्थिनिज्जिओ वा । एवं नाउं तहा उवचरइ ।

मरुगीदिट्ठंतो इमो-एगा मरुगी । सा चिंतेइ-कहं मज्झ धीयाओ सुहियाओ हवेज्जा ? । तओ जा जाहे परिणिज्जइ ताहे तं सिक्खवेइ-भत्तारस्स दुक्कमित्ता चडंतं पण्हीए आहनिज्जासु । तत्थ पढमाए आहओ पायं मद्दिउमारद्धो, परिचुंबिया 'हा ! दुक्खाविय'त्ति । ताए माऊए सिट्ठं । मायाए भन्नइ-दासो भे जातो (दासभोज्जतो) एस तव । बिइयाए आहओ । सो रुंटित्ता उवसंतो । माऊए सिट्ठं । सा भणति-तुमं पि दासभोगेणं एयं भुंजाहि, परं मा अतिआयतं । तइयाए आहतो । रुट्ठो । पिट्टिया । उट्ठित्ता गतो । माऊए कहियं । तीए भणियं-एस उत्तमो, चक्खि चिट्ठिज्जा, देवयमिव उवचरेज्जा, मतृदेवताका हि नारी । पच्छा कहं कह वि गमित्ता पसाइओ । जहा-एस अम्हं कुलधम्मो, उवायकं वा इच्छियं, कोउगा वा कयं ॥

अमात्यदृष्टान्तो यथा-एगस्स रन्नो आहेडएणं निग्गयस्स आसेण मुत्तियं । पडिनियत्तो राया तेनेव मग्गेणाऽऽगओ पासइ मुत्तं तह चेव ट्ठियं । तओ सुचिरं निरिक्खित्ता चिंतियमनेन-जइ इत्थ तडागं होइ तो सुंदरं । अमच्चेण तस्स भावं नाऊण तडागं खणावियं । तडे पायववण

संडाणि आरोवियाणि। अन्नया रन्ना निग्गएणं दिट्ठं, पुच्छियं-कस्सेयं तडागं ? । अमच्चेण भणियं-तुब्भं। कहं ? । तओ अमच्चेण सव्वं सिट्ठं। राया तुट्ठो अमच्चस्स ।। उक्तोऽप्रशस्तो भावोपक्रमः। प्रशस्तमाह-आचार्यस्य यद् भावमुपक्रामति एष प्रशस्तो भावोपक्रमः ।। आचार्यस्य भावमुपक्रम्य किं कर्त्तव्यम् ? अत आह-

[भा.२६३]　जो जेन पगारेणं, तूसइ कार-विनयानुवत्तीहिं ।
आराहणाइ मग्गो, सु च्चिय अव्वाहओ तस्स ।।

वृ- 'यः' आचार्यो येन प्रकारेण 'कार-विनयानुवृत्तिभिः' कारेणवैयावृत्त्यादिकरणेन यथा-पादौ प्रक्षालनीयौ, विश्रामणा कर्त्तव्या, ग्लानादीनां नित्यं वैयावृत्त्यं कर्त्तव्यमित्यादिः तथा विनयस्य यावन्तो भेदास्तेषां मध्ये या येन विनयेनानुवृत्ति-सर्वेष्वर्थेष्वप्रतिकूलता तथा तुष्यति तस्य तमवश्यं कुर्यात्। किं कारणं येन येन कृतेन तुष्यति तत् कर्त्तव्यम् ? अत आह-'तस्य' आचार्यस्याराधनाया एषोऽव्याहतः 'मार्ग' पन्थाः ।। किञ्च-

[भा.२६४]　आगारिंगियकुसलं,जइ सेयंवायसं वए पुज्जा ।
तह वि य सिं न विकूडे, विरहम्मि य कारणं पुच्छे ।।

वृ- आकारः-दिगवलोकनादिस्तेन इङ्गितं-परिज्ञानं यदन्तर्गतस्य भावस्य तत्र कुशल आकारेङ्गितकुशलः, अथवाऽऽकारः-दिगवलोकनादिरिङ्गितं-सूक्ष्मचेष्टाविशेषस्ताभ्यामन्तर्गताभि-प्रायलक्षणे कुशल आकारेङ्गितकुशलस्तं शिष्यं 'पूज्याः' आचार्या वदेयुः। किं वदेयुः ? इत्याह-'श्वेतं वायसं' यथा परतः श्वेतो वायसस्तिष्ठतीति, तथापि "सिं" तेषां पूज्यानां तद् वचनं स शिष्यः 'न विकुट्टयेत्' न प्रतिषेधयेत्, यथा-न भवत्ययं श्वेतः, वायसः कृष्ण इति; केवलं 'विरहे' जनापगमे एकान्ते कारणं पृच्छेत्-कथं तदा गुरुपादैरुपदिष्टं 'श्वेतो वायसः' ? इति। तत्राऽऽचार्येण वक्तव्यम्-सत्यम्, न भवति श्वेतो वायसः किन्तु मया त्वत्परिज्ञानार्थमुक्तम्, यथा-किमेष मद्वचनं कोपयति न वा ? इति ।। उक्तो भावोपक्रमःष यथभिधानाद्य लौकिकः। सम्प्रति शास्त्रयो वक्तव्यः, स च भावेऽन्तर्भवतीति भावोपक्रमतया तमेवाह-

[भा.२६५]　भावे उवक्कमं वा, छव्विहमनुपुव्विमाइ वन्नेउं ।
जत्थ समोयरइ इमं, अज्झयणं तत्थ ओयारे ।।

वृ- वाशब्दः प्रकारान्तरसूचने। अथवा भावोपक्रमं 'षड्विधं' आनुपूर्वी-नाम-प्रमाण-वक्तव्यता-ऽर्थाधिकार-समवतारलक्षणं वर्णयित्वा यत्रेदमध्ययनं समवतरति तत्रावतारयि-तव्यम्। तद्यथा-आनुपूर्वी त्रिधा, पूर्वानुपूर्वी पश्चादानुपूर्वी अनानुपूर्वी च ।। तत्र-

[भा.२६६]　दुण्हं अनानुपुव्वी, न हवइ पुव्वानुपुव्विओ पढमं ।
पच्छानुपुव्वि बिइयं, जइ उ दसा तेन बारसमं ।।

वृ- द्वे एवाध्ययने कल्पो व्यवहारश्च, न च द्वयोरनानुपूर्वी भवति, ततोऽत्र पूर्वानुपूर्वी वा प्रतिपत्तव्या पश्चानुपूर्वी वा । तत्र पूर्वानुपूर्व्या प्रथमं पश्चादानुपूर्व्या द्वितीयम्। केचिदाचार्या प्राहुः-कल्प-व्यवहार-दशा एकश्रुतस्कन्धः, तन्मतेन यदि दशा अपि गण्यन्ते तदा पूर्वानुपूर्व्या प्रथमं पश्चानुपूर्व्या द्वादशमम् अनानुपूर्व्या एकादिकाया एकोत्तरिकाया द्वादशगच्छगतायाः श्रेणेरन्योऽन्याभ्यासे यावन्तो भङ्गकाः प्रथमान्तिमवर्जास्तावन्तो भेदा द्रष्टव्याः ।।

[भा.२६७] सव्वज्झयणा नामे, ओसन्नं मीसए अवतरंति ।
जीवगुण नाण आगम, उत्तरऽनंगे य काले य ॥

वृ- 'नाम्नि' षड्विधनाम्नि समवतरति । षड्विधे च नाम्नि भावाः प्ररूप्यन्ते । तत्र 'मिश्रके' क्षायोपशमिके भावे समवतरन्ति यतः सर्वाण्यप्यध्ययनानि उत्सन्नम् अत इदमपि क्षायोपशमिकनाम्न्यवतरति । प्रमाणद्वारमङ्गीकृत्य गुणप्रमाणे । तदपि द्विधाजीवगुणप्रमाणमजीवगुणप्रमाणं च, तत्र जीवगुणप्रमाणे समवतरति । तदपि ज्ञान-दर्शन-चारित्रभेदात् त्रिधा, तत्र ज्ञानगुणप्रमाणे समवतरति । तदपि चतुर्धा-प्रत्यक्षमनुमानमागम उपमानं च, तत्राऽऽगमे । सोऽपि द्विधा-लौकिको लोकोत्तरिकश्च, तत्र लोकोत्तरिके । सोऽपि द्विधा-अङ्गप्रविष्टोऽनङ्गप्रविष्टश्च, तत्रानङ्गप्रविष्टे । सोऽपि द्विधा-कालिक उत्कालिकश्च, तत्र कालिके । नयप्रमाणे तु न समवतरति, कालिकश्रुते नयानां समवताराभावात् । सङ्ख्याप्रमाणे तु कालिकश्रुतपरिमाणसङ्ख्यायां समवतरति ॥

[भा.२६८] पज्जव पुव्वुद्दिट्ठा, संघाया पज्जव-ऽक्खराणं च ।
मुत्तूण पज्जवा खलु, संघायाई उ संखिज्जा ॥

वृ- कल्पस्य व्यवस्थाने अनन्ताः पर्यवाः, ते च पूर्व-नन्द्याम्- "सव्वागासपएसग्गं सव्वागासपएसेहिं अनंतगुणियं पज्जवक्खरं निप्फज्जइ" इत्यनेनोद्दिष्टाः-कथिताः । सङ्घाता द्विधा-पर्यवाणामक्षराणां च । तत्र पर्यवसङ्घाता अनन्तास्तान् 'पर्यवान्' पर्यवसङ्घातान् मुक्त्वा शेषाः खलु 'संघातादयः' अक्षरसङ्घातादयः सङ्ख्येयाः, श्लोकाः, सङ्घाता वेष्टका इत्यादि ॥

[भा.२६९] उस्सन्नं सव्वसुयं, ससमयवत्तव्वया समोयरइ ।
अहिगारो कप्पणाए, समोयारो जो जहिं एस ॥

वृ- 'उत्सन्नं' सर्वकालं सर्वश्रुतं स्वसमयवक्तव्यतायां समवतरति । अर्थाधिकारे मूलगुणेषूत्तरगुणेषु चापराधमापन्नानां प्रायश्चित्तकल्पनायाम् ॥ सम्प्रति यदुक्तं 'स्वसमयवक्तव्यतायां समवतरति' तदिदानीं सिंहावलोकितेनापवदति-

[भा.२७०] परपक्खं दूसित्ता, जम्हा उ सपक्खसाहणं कुणइ ।
नो खलु अदूसियम्मी, परे सपक्खंजसा सिद्धी ॥

वृ- परसमयवक्तव्यतायामप्यवतरति, यस्मात् परपक्षं दूषयित्वा स्वपक्षसाधनं करोति, न खल्वदूषिते परपक्षे स्वपक्षस्याञ्जसा व्यक्ता प्रधाना वा सिद्धिर्भवति, ततः परसमयवक्तव्यतायामवतारः । तदेवमिदं कल्पाध्ययनमुपक्रमे आनुपूर्व्यादौ यत्र यत्र समवरतरति तत्र तत्रमवतारितारः । तदेवमिदं कल्पाध्ययनमुपक्रमे आनुपूर्व्यादौ यत्र तत्र समवरतरति तत्र तत्र समवतारितम् ॥ गत उपक्रमः । सम्प्रति निक्षेपमाह-

[भा.२७१] निक्खेवो होइ तिहा, ओहे नामे य सुत्तनिप्फन्ने ।
अज्झयणं अज्झीणं, आओ झवणा य तत्थोहे ॥

वृ- निक्षेपस्त्रिविधः-ओघनिष्पन्नो नामनिष्पन्नः सूत्रालापकनिष्पन्नश्च । तत्रौघनिष्पन्नश्चतुर्विधः, तद्यथा-अध्ययनमक्षीणमायः क्षपणा च ॥

[भा.२७२] इक्किक्कं तं चउहा, नामाईयं विभासिउं ताहे ।
भावे तत्थ उ चउसु वि, कप्पज्झयणं समोयरइ ॥

वृ- 'एकैकम्' अध्ययनादिकं यथा अनुयोगद्वारे तथा नामादीनां भेदतश्चतुर्धा विभाष्य चतुर्ष्वपि 'तत्र' तेष्वध्ययनादिषु 'भावे' भावविषये तु कल्पाध्ययनमिदं समवतरति ॥ गत ओघनिष्पन्नो निक्षेपः । सम्प्रति नामनिष्पन्नमाह-

[भा.२७३] नामे छव्विह कप्पो, दव्वे वासि-परसादिएहिं तु ।
खेत्ते काले जहुवक्कमम्मि भावे उ पंचविहो ॥

वृ- नामनिष्पन्ने निक्षेपे कल्प इति नाम । स च षोढा, तद्यथा-नामकल्पः स्थापनाकल्पो द्रव्यकल्पः क्षेत्रकल्पः कालकल्पो भावकल्पश्च । तत्र नाम-स्थापने प्रतीते । द्रव्यकल्पो येन वासी-परश्वादिना द्रव्येण कल्प्यते तद् द्रष्टव्यम् । क्षेत्रकल्पो यथाक्षेत्रोपक्रमः । कालकल्पो यथाकालोपक्रमः । भावकल्पः 'पञ्चविधः' पञ्चप्रकारः ॥ तमेवाह-

[भा.२७४] छव्विह सत्तविहे वा, दसविह वीसइविहे य बायाला ।
जस्स उ नत्थि विभागो, सुव्वत्त जलंधकारो से ॥

वृ- भावतः कल्पः षड्विधः सप्तविधो दशविधो विंशतिविधो द्वाचत्वारिंशद्विधश्च । एते पञ्चापि प्रकाराः पञ्चकल्पे व्याख्यातास्तथा ज्ञातव्याः । यस्य त्वेषः 'विभागः' पञ्चप्रकारभावकल्प-परिज्ञानं नास्ति 'से' तस्य सुव्यक्तं जडान्धकारः ॥ गतो नामनिष्पन्नो निक्षेपः ।

सम्प्रति सूत्रालापकनिष्पन्नं प्रत्याह-

[भा.२७५] पत्तो वि न निक्खिप्पइ, सुत्तालावस्स इत्थ निक्खेवो ।
सुत्तानुगमे वुच्छं, इति अत्थे लाघवं होइ ॥

वृ-यद्यपि सूत्रालापकस्य निक्षेपः 'प्राप्तः' प्राप्तावसरस्तथापि स प्राप्तोऽपि 'अत्र' निक्षेपप्रक्रमे न निक्षिप्यते, किन्त्वितोऽस्ति तृतीयमनुयोगद्वारमनुगम इति तत्र सूत्रानुगमे वक्ष्ये । यतः 'इति' एवं सति अर्थे लाघवं भवति । तथाहि-सूत्रालापकनिक्षेपः सूत्रगतानामालापकानां निक्षेपः, ते च सूत्रगता आलापाः सूत्रे सति सम्भवन्ति, ततः सूत्रानुगम एव तन्निक्षेपो ज्यायान्, इह तु तन्निक्षेपकरणे महत् प्रतिपत्तिकष्टम् ॥ अनुगमे च त्रीणि द्वाराणि, तद्यथा-लक्षणं तदर्हा पर्षत् सूत्रार्थश्च । प्रथमं लक्षणद्वारमाह-

[भा.२७६] लक्खणओ खलु सिद्धी, तदभावे तं न साहए अत्थं ।
सिद्धमिदं सव्वत्थ वि, लक्खणजुत्तं सुयं तेन ॥

वृ- इह लक्षणहीनं सूत्रं न भवति, यतो लक्षणयुक्तस्य सूत्रस्यार्थ लक्षणहीनस्य त्वर्थाभावः, ततो यन्निमित्तमुपनिबद्धं सूत्रं तस्याप्रसिद्धिरेव । तथा चाह-लक्षणतः खलु विवक्षितस्यार्थस्य सिद्धि, 'तदभावे' लक्षणाभावे 'तत्' सूत्रं न साधयति विवक्षितमर्थम् । इदं च 'सर्वत्रापि' लोके सिद्धम्-यत् किञ्चिन्मण्यादि द्रव्यं लाभार्थं क्रीतं तल्लक्षणहीनं लाभं न साधयति । तेन कारणेन लक्षणयुक्तं सूत्रमिष्यते ॥ अथ कीदृशं लक्षणयुक्तं सूत्रम् ? अत आह-

[भा.२७७] अप्पगंथ महत्थं, बत्तीसादोसविरहियं जं च ।
लक्खणजुत्तं सुत्तं, अट्ठहि य गुणेहि उववेयं ॥

वृ- 'अल्पग्रन्थम्' अल्पाक्षरम् महार्थम्, अत्र चत्वारो भङ्गाः-अल्पाक्षरमल्पार्थम् यथा-कार्पासादिकम्, अल्पाक्षरं महार्थम् यथा-सामायिक-कल्प-व्यवहारादि, महाक्षरमल्पार्थम् यथा-

"जीभूते इति वा अश्रणे इति वा" इत्यादिभिर्बहुभिरक्षरैर्वर्णव्यावर्णनम्, महाक्षरं महार्थम् यथा-दृष्टिवादः। तत्र यद् अल्पाक्षरं महार्थं तादृशं सूत्रमिष्यते। तथा यद् द्वात्रिंशद्दोषविरहितं तदिष्यते। ते च द्वात्रिंशद्दोषा वक्ष्यमाणाः। तथाऽष्टभिर्गुणैर्वक्ष्यमाणैर्युक्तं तदिष्यते। एवम्भूतं सूत्रं लक्षणयुक्तम् ॥ अधुना द्वात्रिंशद्दोषानाह-

[भा.२७८] अलियमुवघायजणयं, अवत्थग निरत्थयं छलं दुहिलं।
निस्सारमहियमूणं, पुनरुत्तं वाहयमजुत्तं ॥

वृ- अलीकं द्विविधम्-अभूतोद्भावनं भूतनिह्नवश्च। तत्राभूतोद्भावनं यथा-श्यामाकतन्दुलमात्रो जीव इत्यादि। भूतनिह्नवो यथा-नास्ति जीव इत्यादि १। 'उपघातजनकं' यत् परस्योपघाते वर्त्तते, यथा-"न मांसभक्षणे दोषः" इत्यादि २। 'अपार्थकं' यस्यावयवेष्वर्थो विद्यते न समुदाये, असम्बद्धमित्यर्थः, यथा-"शङ्खः कदल्यां कदली च भेर्याम्" अथवा-

॥ ३ ॥ वंजुलपुप्फुम्मीसा, उंबर-वडकुसुममालिया सुरभी।
वरतुरगस्स विरायइ, ओलइया अग्गसिंगेसु ॥

'निरर्थकं' यस्यावयवेष्वर्थो न विद्यते, यथा-डित्थः डवित्थः वाजनः ४। छलं यथा-अस्त्यात्मा यद्यस्ति आत्मा तर्हि यद् यदस्ति स स आत्मा प्राप्नोति, नवकम्बलो देवदत्त इत्यादि वा ५। द्रोहणशीलं दुहिलं यत् पुण्य-पापापलपनादि, यथा- एतावानेव लोकोऽयं, यावानिन्द्रियगोचरः। इत्यादि ६। 'निस्सारं' यत्र सारः-अर्थो न विद्यते, यथा-अस्थि-चर्मशिलापृष्ठं वृक्षाः ७। 'अधिकं' यत् पञ्चानामवयवानामन्यतरेण समधिकम् ८। 'ऊनम्' एषामन्यतमेन हीनम् ९। पुनरुक्तं त्रिविधम्-अर्थपुनरुक्तं यथा-सैन्धवमानय लवणं सैन्धवमानयेत्यादि, उभयपुनरुक्तं यथा-क्षीरं क्षीरम् १०। 'व्याहतं' यत्र पूर्वमपरेण बाध्यते, यथा- कर्म चास्ति फलं चास्ति, भोक्ता नास्ति च निश्चयः। ११। 'अयुक्तं' यद् बुध्द्या विचिन्त्यमानं न युक्तिं सहते, यथा-

तेषां कटतटभ्रष्टैर्गजानां मदबिन्दुभिः।
प्रावर्त्तत नदी घोरा, हस्त्यश्वरथवाहिनी ॥ १२ ॥

[भा.२७९] कमभिन्न वयणभिन्नं, विभत्तिभिन्नं च लिंगभिन्नं च।
अनभिहियमपयमेव य, सभावहीणं ववहियं च ॥

वृ-क्रमभिन्नं यथा-धरणीधरेन्द्र-चन्द्र-पद्म-सागरान् गम्भीर-नयन-मुख-बल-स्थैर्यगुणैर्जयति १३। 'वचनभिन्नं' यत्रैकवचनप्रसङ्गे द्विवचनं बहुवचनं वा क्रियते, द्विवचन-बहुवचनव्यत्यासो वा १४। 'विभक्तिभिन्नं' यत्र विभक्तेरन्यथा प्रयोगः १५। 'लिङ्गभिन्नं' यत्र स्त्रलिङ्गे पुल्लिङ्गं नपुंसकलिङ्गं वा क्रियते, एवं शेषयोरपि द्रष्टव्यम् १६। 'अनभिहितं' नाम यत् स्वसमयेऽनुक्तमात्मन इच्छया भण्यते १७। 'अपदं' नाम यत्र गाथापदे गीतिकापदं वानवासिकापदं वा क्रियते १८। 'स्वाभावहीनं' यस्य यो यत्रात्मीयः सवभावस्तेन तत् शून्यमभिधीयते, यथा-स्थिरो वायुः १९। 'व्यवहितं' नाम यत्र किञ्चिद् निर्दिश्याऽन्यद् विस्तरेण वर्णयित्वा पुनस्तत् प्रकृतमभिधीयते २०॥

[भा.२८०] काल-जइ-च्छविदोसो, समयविरुद्धं च वयणमित्तं च।
अत्थावत्तीदोसो, हवइ य असमासदोसो उ ॥

वृ- कालदोषो यत्रातीता-ऽनागत-वर्त्तमानकालव्यत्यासकरणम् २१। यति नाम

विश्रामस्तस्य दोषो यतिदोषः, यत्र श्लोके गाथायां वृत्ते वा स्वलक्षणप्राप्तः यच्छेदो न क्रियतेऽस्थाने वा क्रियते,

जयति जईणं पवरो, गुणनिगरो नाणकिरणउज्जोओ।
लोईसरो मुनिवरो, सिरिवच्छधरो महावीरो ॥ २२।

छविदोषो नाम यत्र परुषा छवि क्रियते २३। समयविरुद्धं यथा-वैशेषिको ब्रूते प्रधानं कारणम् जैनो वदति 'नास्ति जीवः' इत्यादि २४। वचन मात्रं यथा-कश्चित्कीलकं निहत्य ब्रूयात्-इदं लोकमध्यमित्यादि २५। अर्थापति दोषो यथा ब्राह्मणो न हन्तव्यः अर्थादापन्नं शेषजनो हन्तव्या इति २६। असमास दोषः यत्र समासे प्राप्ते समासरहितानि पदानि भण्यन्ते २७।

[भा.२८१] उवमा-रूवगदोसो, परप्पवत्ती य संधिदोसो य।
एए उ सुत्तदोसा, बत्तीसं हुंति नायव्वा ॥

वृ. उपमा दोषो यथा काञ्जिकमिव ब्राह्मणस्य सुरा पेया २८। रुपकदोषो यथा - पर्वतो रूप्यमान आत्मीयैरङ्गैः शून्यो वर्ण्यते २९। 'परप्रवृत्तिदोषः' यत्र सुबहुमप्यर्थं वर्णयित्वा निर्देशं न करोति ३०। 'पददोषः' स्याद्यन्ते तिवाद्यन्ते वा स्याद्यन्तं करोति ३१। 'सन्धिदोषः' यत्र भवन्नपि सन्धिर्न क्रियते विसर्गलोपं वा कृत्वा पुनः सन्धिं करोति ३२। एते द्वात्रिंशत्सुत्रदोषा भवन्ति ज्ञातव्याः ॥

अष्टभिर्गुणैरुपेतमित्युक्तम् अतस्तानेवाष्टौ गुणानाह-

[भा.२८२] निद्दोसं सारवंतं च, हेउजुत्तमलंकियं।
उवणीयं सोवयारं च, मियं महुरमेव य ॥

वृ- निर्दोषं १ सारवत् २ हेतुयुक्तम् ३ अलङ्कृतम् ४ उपनीतं ५ सोपचारं ६ मितं ७ मधुरम् ८ इति ॥ तत्र निर्दोषादिपदव्याख्यानार्थमाह-

[भा.२८३] दोसा खलु अलियाई, बहुपज्जावं च सारवं सुत्तं।
साहम्मेयरहेऊ, सकारणं वा वि हेउजुयं ॥

वृ- दोषाः खल्वलीकादयः प्रागभिहितास्तैर्वर्जितं निर्दोषम् १। सारवद् नाम 'बहुपर्यायम्' एकैकस्मिन्नभिधेये यत्रानेकान्यभिधानानीत्यर्थः २। हेतुयुक्तं साधर्म्येण वैधर्म्येण वा हेतुना युक्तम्, अथवा हेतुः कारणं निमित्तमप्यनर्थान्तरम्, ततो यत् सकारणं तद् हेतुयुक्तमिति, यथा-"सुत्तत्तं सेयं जागरियत्तं वा सेयं" इत्यादि ३ ॥

[भा.२८४] उवमाइ अलंकारो, सोवणयं खलु वयंति उवनीयं।
काहलमनोवयारं, दंडगममियं तिहा महुरं ॥

वृ- अलङ्कृतं यत्रोपमादिरलङ्कारः। तत्रोपमायुक्तम्, यथा-"सूरेव सेणाइ समत्तमाउहे"। आदिग्रहणेन-

नियमा अक्खरलंभो, माउक्कमनिद्धं छवीजमगं।
महुरत्तणमत्थघणत्तणं च सुत्ते अलंकारा ॥

इति परिग्रहः ४। उपनीतं खलु वदन्ति 'सोपनयं' सोपसंहारम् ५। अनुपचारं नाम यत् 'काहलं' फल्गुप्रायम्, तद् विपरीतं सोपचारम् ६। मितं पदैः श्लोकादिभिर्वा, अमितं दण्डकैः ७।

मधुरं त्रिधा-सूत्रमधुरमर्थमधुरमुभयमधुरम् ८ । एतैरष्टभिर्गुणैरुपेतम् ।। चशब्दात्-

[भा.२८५] अप्पक्खरमसंदिद्धं, सारवं विस्सओमुहं ।
अत्थोभमणवज्जं च, सुत्तं सव्वन्नुभासियं ।।

वृ- अल्पाक्षरमसन्दिग्धं सारवद् विश्वतोमुखं 'अस्तोभं' स्तोभकरितं अनवद्यम् इत्थम्भूतं सूत्रं सर्वज्ञभाषितम् ।। तत्राल्पाक्षरं प्रतीतम् । असन्दिग्धादिपदव्याख्यानार्थमाह-

[भा.२८६] अत्थेसु दोसु तीसु व, सामन्नभिहाणओ उ संदिद्धं ।
जह सिंधवं तु आणय, अत्थबहुत्तम्मि संदेहो ।।

वृ- यस्मिन्नर्थेऽभिधीयमाने द्वयोस्त्रिषु चार्थेषु सामान्याभिधानतः सन्देह उपपद्यते तत् सन्दिग्धम्, यथा-सैन्धवमानयेत्युक्ते किं वस्त्रस्य ग्रहणम्? आहोश्वित्पुरुषस्य? उताहो लवणस्य? इत्यर्थःबहुत्वे सन्देहः । सारवत् नवनीतभूतम् । विश्वतोमुखं यत् सर्वतोऽधिकृतमर्थं प्रयच्छति।।

[भा.२८७] उय-वइकारो ह त्ति य, हीकाराई य थोभगा हुंति ।
वज्जं होइ गरहियं, अगरहियं होइ अनवज्जं ।।

वृ. अस्तोभा-ऽनवद्ययोर्व्याख्यानार्थमाह-''उय इत्यादि'' उत-वै-हा-हिप्रभृतीनामकारण-प्रक्षेपाः स्तोभकाः तद्रहितमस्तोभकम् । अवद्यं भवति गर्हितं तत्प्रतिषेधादगर्हितमनवद्यम् ।। एवंगुणजातीयं सूत्रं कथमुच्चरितव्यं पठनीयं वा ? तत आह-

[भा.२८८] अहीनऽक्खरं अनहियमविच्चामेलियं अवाइद्धं ।
अक्खलियं च अमिलियं, पडिपुन्नं चेव घोसजुयं ।।

वृ- अहीनाक्षरम् । 'अनधिकम्' अधिकाक्षररहितम् । 'अव्यत्याम्रेडितं' नाम यदस्थानेन पदघटनम्, यथा- प्राप्तराज्यस्य रामस्य, राक्षसाः प्रलयं गताः । इत्यत्र ''प्राप्तराज्यस्य रामस्य राक्षसाः'' इत्यादि तद्रहितम् । यदि वाऽन्यान्यदर्शनानुगतशास्त्रान्तरपल्लवप्रक्षेपरहितमव्यत्याम्रेडितम् । 'अव्याविद्धं' यत् तस्य सूत्स्याधस्तनपदमुपरि उपरितनमधो न क्रियते । 'अस्खलितं' यद् उपलाकुलभूमौ हलमिव पदादिभिर्न स्खलितम् । 'अमिलितं' यद् ग्रन्थान्तरवर्त्तिभि पदैरमिश्रितम्, यथा-सामायिकसूत्रे दशवैकालिकोत्तराध्ययनादिपदानि न क्षिपतीति । प्रतिपूर्णं पदादिभि । 'घोषयुतं' यथावस्थितैरुदात्तादिभिर्घोषैर्युक्तम् ।। तत्र यदुक्तमहीनाक्षरमिति तत्र हीनं द्विधा-द्रव्यहीनं भावहीनं च । द्रव्यहीने उदाहरणमाह-

[भा.२८९] तित्त-कडुओसहाइं, मा णं पीलिज्जऊ न ते देइ ।
पउणइ न तेहि अहिएहि मरइ बालो तहाहारे ।।

वृ- एगाए अविरइयाए पुत्तो गिलाणो । तीए विज्जो पुच्छिओ । तेन ओसहाणि दिन्नाणि । सा चिंतेइ-इमाणि कडुय-तित्ताणी मा निपीडिज्जा । तओ नाए अद्धाणि अवनीयाणि । सो तेहिं न पगुणीकओ, मओ ।। तओ एगा ऊणगं पीहगं देइ, तीसे वि मओ ।।

अक्षरगमनिका-तिक्त-कटुकौषधानि माऽमुं बालं पीडयेयुरिति न तानि परिपूर्णानि ददाति किन्त्वर्द्धानि । न च तैरर्द्धितैर्बालः प्रगुणाति किन्तु म्रियते । तथा आहारे ऊने म्रियते । एष दृष्टान्तः, अयमर्थोपनयः-यथा तौ बालावेकभविकं दुःखं प्राप्तौ एवं यो भावहीनं सूत्रमुच्चारि पठति वाऽक्षरैर्हीनमित्यर्थः तस्य प्रायश्चित्तं मासलघु । आज्ञां तीर्थङ्कराणामतिचरतश्चतुर्गुरु । अनवस्थायां

चतुर्गुरु । मिथ्यात्वे चतुर्लघु । विराधना द्विविधा-आत्मविराधना संयमविराधना च । तत्रात्मविराधना प्रमत्तं देवता छलयेत्, अन्यो वा साधुर्ब्रूयात्-किं विद्रवि सूत्रम् ?, तत्र कलहप्रसङ्गेऽस्थिभङ्-मरणादिदोषप्रसङ्गः । सूत्रं हीनं कुर्वता संयमो विराधित एव ।। कथम् ? इत्याह-

[भा.२९०] अक्खर-पयाइएहिं, हीनऽइरेगं च तेसु चेव भवे ।
दोसु वि अत्थविवत्ती, चरणे य अयो य न य मुक्खो ।।

वृ- हीनं नाम अक्षर-पदादिभिरूनम् । 'तैरेव' अक्षर-पदादिभि 'अतिरेकं' साधिकम् । 'द्वयोरपि' हीनाक्षरेऽधिकाक्षरे चेत्यर्थः 'अर्थव्यापत्ति' अर्थस्य विसंवादः । 'अतश्च' अर्थस्य विसंवादे चरणस्य विसंवादः । चरणविसंवादात् 'न मोक्षः' मोक्षाभावः । मोक्षाभावे सर्वा दीक्षा निरर्थिका । एष भावहीने दोषः ।। तस्मिन्नेव भावहीने दृष्टान्तमाह-

[भा.२९१] विज्जाहर रायगिहे, उप्पय पडणं च हीनदोसेणं ।
सुणणा सरणा गमणं, पयानुसारिस्स दानं च ।।

वृ- रायगिहे सामी समोसढो । तत्थ एगो विज्जाहरो वंदिउं पडिनियत्तो विज्जं आवाहेइ । तस्स तए विज्जाए कइ वि अक्खराणि विस्सरियाणि । सो उप्पयणं पडणं च करेइ । अभओ तं दट्ठूण तस्स सगासं गओ पुच्छइ । तेन सिट्ठं । अभएण भणियं-जइ ममं पि देसि तो उज्जुयारेमि । इयरेण पडिवन्नं । तओ अभओ भणइ-तो खायं मण एगं पयं । तेन भणियं । अभएन सुयं । ताहे अभयेन पयानुसारिणा तानि अक्खराणि सरियाणि । विज्जाहरो उप्पइत्ता गओ अभयस्स विज्जं दाउं ।। अक्षरगमनिका-राजगृहे विद्याधरः कतिपयविद्याक्षरगलनाद् हीनदोषेणोत्पतनं पतनं च करोति । ततो विद्यापदानामभयस्य श्रवणाद्(णा) । तच्छ्रवणतोऽभयस्य पदानुसारिप्रज्ञया विस्मृतपदानां स्मरणात् । तदनन्तरं पदानुसारिणोऽभयस्य विद्यादानं कृत्वा विद्याधरस्य स्वस्थाने गमनम् ।। अधिकमपि द्विधा-द्रव्ये भावे च । तत्र द्रव्याधिके तथैव द्वे अविरतिके दृष्टान्त औषधैः पीहकेन च । एवं तावदक्षर-पदादिभिरधिके सूत्रे दोषा मासलघुप्रायश्चित्तादयः प्रागुक्ताः ।

सम्प्रतिभावाधिके एवोदाहरणमाह-

[भा.२९२] पाडलऽसोग कुणाले, उज्जेनी लेहलिहण सयमेव ।
अहिय सवत्ती मत्ताहिएण सयमेव वयणाया ।।

[भा.२९३] मुरियाण अप्पडिहया, आणा सयमंजणं निवे पाणं ।
गामग सुयस्स जम्मं, गंधव्वाऽऽउट्टणा कोइ ।।

[भा.२९४] चंदगुत्तपपुत्तो य, बिंदुसारस्स नत्तुओ ।
असोगसिरिणो पुत्तो, अंधो जायइ कागिणिं ।।

वृ- पाडलिपुत्ते नयरे चंदगुत्तपुत्तस्स बिंदुसारस्स पुत्तो असोगो नाम राया । तस्स असोगस्स पुत्तो कुणालो उज्जेनीए । सा से कुमारभुत्तीए दिन्ना । सो खुड्डलओ । अन्नया तस्स रन्नो निवेइयं, जहा-कुमारो सायरेगट्ठवासो जाओ । तओ रन्ना सयमेव लेहो लिहिओ, जहा-अधीयतां कुमारः । कुमारस्स मायसवत्तीए रन्नो पासे ठियाए भणियं-आनेह, पासामि लेहं । रन्ना पणामिओ । ताहे तीए रन्नो अन्नचित्ततणओ सलागाप्रान्तेन निष्ठ्यूतेन तीमित्वा अकारस्योपरि अनुस्वारः कृतः । 'अन्धीयताम्' इति जायं । पडिअप्पिओ रन्नो लेहो । रन्ना वि पमत्तेण न चेव पुनो अनुवाइओ ।

मुद्दित्ता उज्जेनिं पेसिओ । वाइओ । वाइगा पुच्छिया-किं लिहियं ? ति । पुच्छिया न कहिंति । ताहे कुमारेण सयमेव वाइओ । चिंतियं च णेणं-अम्हं मोरिवंसाणं अप्पडिहया आणा, तो कहं अप्पणो पिउणो आणं अइक्कमेमि ! तत्तसिलागाए अच्छीणि अंजियाणि ! ताहे रन्ना नायं । परितप्पिता उज्जेनी अन्नकुमारस्स दिन्ना । तस्स वि कुमारस्स अन्नो गामो दिन्नो । अन्नया तस्स कुणालस्स अंधयस्स पुत्तो जाओ । सो य अंधकुणालो गंधव्वे अईव कुसलो । अन्नया अन्नायचज्जाए गायंतो हिंडइ । तत्थ रन्नो निवेइयं, जहा-एरिसो तारिसो गंधव्विओ अंधलओ । रन्ना भणियं-आनेह । आनीओ । जवणीअंतरिओ गायइ । ताहे अईव राया अक्खोगो अक्खित्तो । ताहे भणइ-किं देमि ? । इत्थ कुणालेण गीयं-''चंदगुत्तपपुत्तो य'' इत्यादि गाथा । ताहे रन्ना पुच्छियं-को एस तुमं ? । तेन कहियं-तुब्भं पुत्तो । जवणियं अवसारेउं कंठे घेत्तुं अंसूपाओ कओ । भणियं च णेण-किं कागिणीए वि नारिहसि जं कागिणिं जायसि ? । अमच्चेहिं भणियं-रायपुत्ताणं रज्जं कागिणी। रन्ना भणियं-किं काहिसि अंधगो रज्जेणं ? । कुणालो भणइ-मम पुत्तो अत्थि । कया जाओ ? । संपइ भूओ । आनीओ । संपइ त्ति से नामं कयं । रज्जं दिन्नं ॥

अक्षरगमनिका-'पाटले' पाटलिपुत्रके नगरे अशोको राजा । कुणालस्तस्य पुत्रः । उज्जयिन्यां राज्ञः स्वयमेव तद्योग्यलेखलिखनम्-अधीयतामिति । मात्राधिके सति न वाचकैर्वाच्यते । ततः स्वयमेव वाचना । ततो 'मौर्याणामप्रतिहता आज्ञा' इति विचिन्त्य स्वयं तप्तशिलाकया नेत्रयोरञ्जनम्। ततो नृपे ज्ञानं । ततः परितप्य स राज्ञा ग्रामगतः कृतः । ततः सुतस्य जन्म । गन्धर्वेण समस्तस्यापि लोकस्य 'आवर्त्तना' आवर्जनं निवेदनम्-कोऽप्यन्धोऽतीव गन्धर्वे कुशल इति । ततस्तस्याऽऽनयनम् । परितोषे वाच्या गाथा-''चन्द्रगुप्तप्रपौत्र'' इत्यादि । अथाप्युपनयः स एव ॥

अथवा भावाधिके इदं लौकिकमाख्यानम्- कामियसरस्स तडे वंजुलरुक्खो महइमहालओ। तत्थ किर रुक्खे विलग्गिउं जो सरे पडइ सो जइ तिरिक्खजोणिओ तो मनूसो भवइ, अह मनूसो पडति तो देवो भवइ, अह बिइयं वारं पडइ तो प्रकृतिमेव गच्छइ । तत्थ वानरो सपत्तिओ पाणियं पाउं ओयरइ । अन्नया पाणीयपायणट्ठाए आगओ । सो संलावं प्रकृतिगमनविरहितं श्रुत्वा सपत्नीकश्चिन्तयति-रुक्खं विलग्गिउं सरे पडामो जा माणुसजुवलं होमो । इत्थी वारेइ-को जाणइ जइ न हुज्जा ? । पुरिसो भणइ-जइ न हुज्जामो किं माणुसत्तणं पि अम्हं नासिहिइ ? । वारिज्जमाणो वि पडिओ वानरो जाओ ! पच्छा रायपुरिसेहिं गहिया सा इत्थी रन्नो भज्जा जाया । इयरो वि मायारएहिं गहिओ खेडाओ सिक्खाविओ । अन्नया ते मायारगा रन्नो पुरओ पेच्छं दिंति । राया देवीए समं पिच्छइ । ताहे सो वानरो देविं निज्झायंतो अभिलसइ । ताहे ताए अनुकंपाए वानरो भणिओ-

[भा.२९५] जो जहा वट्टए कालो, तं तहा सेव वानरा ।
मा वंजुलपरिब्भट्ठो, वानरा पडणं सर ॥

वृ- यो यथा वर्त्तते कालः 'तं' कालं तथा सेवस्व वानर ! । वञ्जुलवृक्षादेकवारं परिग्रष्टः पतितः सन् मया तदा भणितः-'मा भूयो वञ्जुलवृक्षात् सरसि पतनं कुरु, प्रकृतिं यास्यसि' इति एतत् स्मर । एवं भावतोऽधिकेऽर्थे विसंवाद इत्यादिका विभाषा तथैव ॥

सम्प्रति 'अविच्चामेलियं अव्वाइद्धं' इत्येते द्वे पदे व्याख्यानयति-

[भा.२९६] विद्यामेलण अनुन्नसत्थपल्लवविमिस्स पयसो वा ।
तं चेव य हिट्ठवरिं, वायद्धे आवली नायं ॥

वृ- व्यत्याम्रेडितं नाम अन्यान्यशास्त्रपल्लवविमिश्रणम् । तत्र द्रव्यतो व्यत्याम्रेडिते पायसमुदाहरणम्- जहा कोलिया चइयं गया । तत्थ तेहिं 'परमन्नं रंधेमो' त्ति दुद्धं आद्रहित्तं । इत्थ जं जं छुब्भइ तं तं पायसो भवइ त्ति तंदुला चवला मुग्गा तिला कुकुसा छूढा । तं सव्वं विनट्ठं अकिंचिकरं जायं ॥ एवमेव भावे सूत्रं व्यत्याम्रेडयति-"सव्वभूयप्पभूयस्स, सम्मं भूयाई पासउ।" अत्रेदमपि घटत इति कृत्वा चैवावधार्यताम् ।

श्रूयतां धर्मसर्वस्वं, श्रुत्वा चौवावधार्यताम् ।
आत्मनः प्रतिकूलानि, परेषां न समाचरेत् ॥

भावतो व्यत्याम्रेडितं सूत्रं कुर्वतोऽर्थस्य विसंवाद इत्यादि विभाषा प्रागिव यावद् दीक्षा निरर्थिका । तदेव च सूत्रमध उपरि व्यत्यासेन क्रियमाणं व्याविद्धम् । तच्च द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यव्याविद्धे आवली 'ज्ञातम्' उदाहरणम्- एगा आभीरी नगरं गया । तीसे वयंसिया वाणिगिणी । सा हारं पोएइ इयरी भणइ-आनेहिं, अहं हारं पोएमि । ताए पणामिओ । इयरीए उप्परिवाडीए पोइओ । वाणिगिणी वक्खित्ता आसि । पच्छा ताए दट्ठुं भणिया-हा पावे ! विनासिओ हारो, महद्दुष्कर्म कृतम् ॥ भावव्याविद्धमेवम्, यथा-

अहिंसा संजमो तवो, धम्मो मंगलमुक्कट्ठं ।
जस्स धम्मे सया मणो, देवा वि तं नमंसंति ॥

वृ-एवं व्याविद्धे भावतोऽर्थस्य विसंवाद इत्यादि विभाषा पूर्ववद् यावद् दीक्षा निरर्थिका । तस्मादव्याविद्धमुच्चरितव्यम् ॥ अधुना स्खलित-मिलिता-ऽप्रतिपूर्णा-ऽघोषयुतानां व्याख्यानमाह-

[भा.२९७] खलिए पत्थरसीया, मिलिए मिस्साणि धन्नवावणया ।
मत्ताइ-बिंदु-वन्ने, घोसा इ उदत्तमाईया ॥

वृ-स्खलितं द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्ये 'प्रस्तरसीता' प्रस्तराकुलं क्षेत्रम्, तस्मिन् हि वाह्यमानानि हल-कुलिकादीनि उत्स्फिटय अन्यत्र निपतन्ति । एवं भावस्खलितं यदन्तराऽन्तरा आलापकान् मुञ्चति, यथा-धम्मो, अहिंसा, देवा वि तं नमंसंति, पुप्फेसु भमरा जहा । पच्छित्तं तं चेव, दोसा य । मिलितमपि द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यतो मिलितं, बहूनां व्रीहि-यवादीनां धान्यानामेकत्र मिश्रीकृतानां वापनता-वापनम् । भावतो मिलितं यद् अन्यस्यान्यस्योद्देशकस्याध्ययनस्य वा आलापकानेकत्र मीलयति सर्वं जिनवचनमिति कृत्वा । यथा-"सव्वे पाणा पियाउया" "सव्वजीवा वि इच्छंति, जीविउं न मरिज्जिउं" इत्थ न नज्जइ किं कालियं उक्कालियं छेयसुयं वा ? । अत्र प्रायश्चित्तं दोषाश्च प्राग्वत् । परिपूर्णं द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यतः परिपूर्णो घटः । भावे परिपूर्णं मात्रादिभि-मात्राभि आदिग्रहणात् पदैः बिन्दुभि वर्णै-अक्षरैश्चापरिपूर्णं तदेव प्रायश्चित्तं दोषाश्च । मात्राभिरपरिपूर्णं यथा-"धम्म मंगलमक्किट्ठं" । पदैरपरिपूर्णं यथा-"धम्मं उक्किट्ठं" इत्यादि । घोषा उदात्तादयः, तत्र उच्चैरुदात्तः, नीचैरनुदात्तः, समाहारः स्वरितः । उच्चैःशब्देन यथा-"उप्पन्ने इ वा" इत्यादि । नीचैःशब्देन यथा-"जे भिक्खू हत्थकम्मं करेइ" इत्यादि । घोषैरयुक्तं कुर्वतस्तदेव प्रायश्चित्तं त एव च दोषाः ॥ सम्प्रति व्यत्याम्रेडितादीनां पञ्चानां प्रकारान्तरेणार्थम-

भिधातुकाम आह-

[भा.२९८] मुत्तूण पढम-बीए, अक्खर-पय-पाय-बिंदु-मत्ताणं ।
सव्वेसि समोयारो, सट्ठाणे चेव चरिमस्स ॥

वृ- प्रथमं-हीनाक्षरं द्वितीयम्-अधिकाक्षरम् एते द्वे पदे मुक्त्वा शेषाणां पञ्चानां घोषयुतवर्जानाम् अक्षर-पद-पाद-बिन्दु-मात्राणां समवतारः कर्त्तव्यः । यथा-व्यत्याम्रेडितं अधस्तनान्युपरि उपरितनन्यधोऽक्षर-पदादीनि यत् करोति । स्खलितं पञ्चभिरेव पदादिभिः । मिलितं यथासामायिकपदे दशवैकालिकोत्तराध्ययनप्रभृतीनामनेकानि पदानि मीलयति । अपरिपूर्णं पञ्चभिरेवाक्षरादिभि स्वगतैः । "सट्ठाणे चेव चरिमस्स" अघोषयुतं घोषैरेवापरिपूर्णमक्षरादिभिः ॥ साम्प्रतमेतेषु हीनाक्षरादिषु प्रायश्चित्तमाह-

[भा.२९९] खलिय मिलिय वाइद्धं, हीनं अच्चक्खरं वयंतस्स ।
विद्धामेलिय अत्थाडिपुन्नं घोसे य मासलहुं ॥

वृ- स्खलितं मिलितं व्याविद्धं हीनाक्षरमत्यक्षरं व्यत्याम्रेडितमपरिपूर्णघोषं च वदतः प्रत्येकं प्रायश्चित्तं मासलघु । स्वामिन आज्ञाभङ्गे चतुर्गुरु, यथा स तथाऽन्येऽपि करिष्यन्तीति चतुर्गुरु । यथोक्तकारी न भवतीति मिथ्यात्वे चतुर्लघु । विराधना द्विविधा-आत्मविराधना संयमविराधना च । आत्मविराधना-देवतया छलनम् । संयमविराधना-कोऽपि साधुर्वारयेत् 'मा स्खलितादीनि कुरु' ततः कलहतोऽस्थिभङ्गाद्यात्मविराधनायां परिताप-महाग्लानाद्यारोपणा संयमविराधना । सूत्रस्यान्यथोच्चारणेऽर्थविसंवादः, अर्थविसंवादे चरणाभावः, चरणाभावे मोक्षाभाव इति दीक्षा निरर्थिका । लघुग्रहणाद् गुरुकमपि सूचितम्, ह्रस्वोक्त्या यथा दीर्घस्य सूचनम् । तत्र गुरुकमिति वा अनुद्धातीति वा कालकमिति वा गुरुकस्य नामानि । लघुकमिति वा उद्धातितमिति वा शुक्लमिति वा लघुकस्य नामानि ॥

अत्र गुरु-लघुविशेषविस्तरपरिज्ञानार्थमाचार्यस्त्रिविधं प्रायश्चित्तं दर्शयति, तद्यथा-दानप्रायश्चित्तं तपःप्रायश्चित्तं कालप्रायश्चित्तं च । तत्र दानप्रायश्चित्तं गुरुकं लघुकं च । एवं तपः-कालप्रायश्चित्ते अपि गुरु-लघुके प्रत्येकं वक्तव्ये । तत्र दानप्रायश्चित्तं गुरुकमाह-

[भा.३००] जं तु निरंतरदानं, जस्स व तस्स तवस्स तं गुरुगं ।
जं पुन संतरदानं, गुरु वि सो खलु भवे लहुओ ॥

वृ- यस्य वा तस्य वा तपसो गुरुकस्याष्टमादेरगुरुकसय निर्वृतिकादे [निर्विकृतिकादे] र्यन्निरन्तरदानं तद् भवति दानप्रायश्चित्तं गुरु । यत् पुनः सान्तरमष्टमादेर्गुरुकस्य तपसो दानं तद् गुर्वपि खलु भवति लघु, यथा-आपत्तिश्चतुर्लघुकस्य षड्लघुकस्य वा तत्राष्टम्-दशमानि सान्तराणि दीयन्ते । एष दानप्रायश्चित्ते गुरु-लघुकयोर्विशेषः ॥ सम्प्रति तपः-कालयोराह-

[भा.३०१] काल-तवे आसज्ज व, गुरू वि होइ लहुओ लहू गुरुगो ।
कालो गिम्हो उ गुरू, अट्ठाइ तवो लहू सेसो ॥

वृ- कालं तपश्चासाद्य गुर्वपि लघु भवति, लघ्वपि च गुरु । तत्र कालो ग्रीष्मो गुरु, तपोऽष्टमादि, शेषः कालस्तपश्च लघु । इयमत्र भावना-लघ्वपि य् अष्टमादिना तपसा उह्यते तत् तपोगुरु, यन्निर्विकृतिकादिना षष्ठपर्यन्तेनोह्यते तत् तपोलघु; तथा यद् ग्रीष्मे काले उह्यते तत् कालगुरु,

वर्षारात्रे हेमन्ते वोह्यमानं काललघु ।। तदेवं यतः स्खलिताद्युच्चारणे प्रायश्चित्तमाज्ञा-ऽनवस्था-मिथ्यात्व-विराधनाश्च दोषाः तस्मात् सूत्रं स्खलितादिदोषररहितमुच्चारणीयं पठनीयं च । एवं च पठितस्य सूत्रस्य व्याख्या कर्त्तव्या । तत्र व्याख्यालक्षणमाह-

[भा.३०२]        संहिया य पयं चेव, पयत्थो पयविग्गहो ।
चालणा य पसिद्धी य, छव्विहं विद्धि लक्खणं ।।

वृ- संहिता १ पदं २ पदार्थं ३ पदविग्रहः ४ चालना ५ प्रसिद्धिश्च ६ । एवं 'षड्विधं' षट्प्रकारं व्याख्यालक्षणं 'विद्धि' जानीहि ।। तत्र संहितेति कोऽर्थः ? इत्याह –

[भा.३०३]    सन्निकरिसो परो होइ संहिया संहिया व जं अत्था ।
लोगुत्तर लोगम्मि य, हवइ जहा धूमकेउ त्ति ।।

वृ- यो द्वयोर्बहूनां वा पदानां 'परः' अस्खलितादिगुणोपेतो विविक्ताक्षरो झटिति मेधाविनामर्थप्रदायी 'सन्निकर्ष' सम्पर्कः स संहिता । अथवा यद् अर्था संहिता एषा संहिता । सा द्विधा-लौकिकी लोकोत्तरा च । तत्र लौकिकी 'यथा धूमकेतुः' इति, यथा इति पदं धूम इति पदं केतुरिति पदम् ।।

[भा.३०४] तिपयं जह ओवम्मे, धूम अभिभवे केउउस्सए अत्थो ।
को सु त्ति अग्गि उत्ते, किंलक्खणो दहण-पयणाई ।।

वृ- 'यथा धूमकेतुः' इति संहितासूत्रं त्रिपदम् । सम्प्रति पदार्थ उच्यते-यथेत्यौपम्ये, धूम इत्यभिभवे, "धूवि धूनने" इति वचनात्, केतुरित्युच्छ्रये । एष पदार्थः धूमः केतुरस्येति धूमकेतुरिति पदविग्रहः । कोऽसौ ? इति चेत् अग्नि । एवमुक्ते पुनराह- किंलक्षणः ? । सूरिराह-'दहन-पचनादि' दहन-पचन-प्रकाशनसमर्थोऽर्चिष्मान् ।। अत्र चालनां प्रत्यवस्थानं चाह-

[भा.३०५]    जइ एव सुत्त-सोवीरगाई वि होंति अग्गिमक्खेवो ।
न वि ते अग्गि पइन्ना, कसिणग्गिगुणन्निओ हेऊ ।।

[भा.३०६]      दिट्ठंतो घडगारो, न वि जे उक्खेवणाइ तक्कारी ।
जम्हा जहुत्तहेऊसमन्निओ निगमणं अग्गी ।।

वृ- यदि नाम दहन-पचनादिस्तर्हि शुक्ल-सौवीरकादयोऽपि दहन्ति, करीषादयोऽपि पचन्ति, खद्योत मणिप्रभृतयोऽपि प्रकाशयन्ति ततस्तेऽप्यग्निर्भवितुमर्हन्ति, एषः 'आक्षेपः' चालना । अत्र प्रत्यवस्थानमाह-"नैव शुक्लादयोऽग्निर्भवन्ति' इति प्रतिज्ञा, 'कृत्स्नगुणसमन्वि-तत्वात्' इति हेतुः, दृष्टान्तो घटकारः, यथा हि घटकर्ता मृत्पिण्ड-दण्ड-चक्र-सूत्रोदक-प्रयत्नहेतुकस्य घटस्य कार्त्स्न्येभिनिर्वर्त्तकः, अभिनिर्वृत्तकः, अभिनिर्वर्त्तकः । एवमत्रापि यो दहति पचति प्रकाशयति च यथास्वगतेन लक्षणेनासाधारणः स एव यथोक्तहेतुसमन्वितः परिपूर्णोऽग्निर्न शुक्लादय इति निगमनम् ।। सम्प्रति लोकोत्तरे संहितादीनि दर्शयति-

[भा.३०७]      उत्तरिए जह दुमाई, तदत्थहेऊ अविग्गहो चेव ।
को पुन दुमु त्ति वुत्तो, भण्णइ पत्ताइउववेओ ।।

वृ- लोकोत्तरे "जहा दुमस्स पुप्फेसु, भमरो आवियइ रसं" इति संहिता । अत्र पदानि-यथा इति द्रुम इति पुष्पेष्विति भ्रमर इति आपिबतीति रसमिति । अधुना पदार्थ उच्यते-'यथा'

इत्यौपम्ये। द्रु गतौ, द्रवति-गच्छति अध उपरि चेति द्रुमः, औणादिको मक्प्रत्ययः, तस्य द्रुमस्य। पुष्प विकसने, पुष्यन्ति-विकसन्तीति पुष्पाणि, अच्, तेषु। भ्रम अनवस्थाने, भ्राम्यति निरन्तरमिति भ्रमरः, औणादिको अरः प्रत्ययः। पा पाने, आङ मर्यादायामभिविधौ वा, तस्य तिपि आपिबतीति [illegible]पम्। रस आस्वादने, रस्यते-आस्वाद्यत इति रसः, कर्मण्यौणादिकः अकारप्रत्ययः, तम्। अत्र व्यस्तपदत्वाद्विग्रहाभावः, तथा चाह- "तदत्थहेऊ अविग्गहो चेव" तेषां-पदानामर्थस्य हेतुः 'अविग्रह एव' न विग्रहद्वारेणात्र पदार्थ इत्यर्थः। अत्र चालना-नोदक आह- 'कः' कीदृग्लक्षणो द्रुम उक्तः ?। सूरिराह-भण्यते, 'पत्राद्युपेतः' पत्र-पुष्प-फलादिसमन्वितः। उक्तञ्च –

पत्र पुष्प-फलोपेतो, मूल-स्कन्धसमन्वितः।
एष वृक्ष इति ज्ञेयो, विपरीतमतोऽन्यथा ॥

**[भा.३०८]** तदभावे न दुमु त्ति य, तदभावे वि स दुमु त्ति य पइन्ना।
तग्गुणलद्धी हेऊ, दिट्ठंतो होइ रहकारो ॥

**वृ-** यदि पत्राद्युपेतो द्रुमस्तर्हि यदा परिशटितपाण्डुपत्रादिर्द्रुमो भवति तदा तस्याद्रुमत्वं प्राप्नोति, एषा चालना। अत्र प्रत्यवस्थानम्- 'तदभावेऽपि स द्रुमः' इति प्रतिज्ञा, 'तद्गुणलब्धित्वात्' इति हेतुः, दृष्टान्तो रथकारः; यथा हि रथकारस्य रथकरणे प्रयत्नमकुर्वाणस्यापि रथकर्तृत्वं तद्गुणलब्धित्वात्, एवं परिशटितपाण्डुपत्रस्यापि द्रुमस्य तद्गुणलब्धेरनिवृत्तत्वादव्याहतं द्रुमत्वमिति ॥ सम्प्रति मतान्तरेणान्यथा व्याख्यालक्षणमाह-

**[भा.३०९]** सुत्तं पयं पयत्थो, पयनिक्खेवो य निन्नयपसिद्धी।
पंच विगप्पा एए, दो सुत्ते तिन्नि अत्थम्मि ॥

**वृ-** प्रथमतोऽस्खलितादिगुणोपेतं सूत्रमुच्चारणीयम्। ततः 'पदं' पदच्छेदो विधेयः। तदनन्तरं पदार्थ कथनीयः। ततः 'पदनिक्षेपः' पदार्थनोदना। तदनन्तरं 'निर्णयप्रसिद्धिः' निर्णयविधानम्। पदविग्रहः पदार्थेऽन्तर्भूतः। एवमेते पञ्च 'विकल्पाः' प्रकारा व्याख्यायां भवन्ति। अत्र सूत्रं पदमिति द्वौ विकल्प सूत्रे प्रविष्टौ। 'त्रयः' पदार्थ-तदाक्षेप-निर्णयप्रसिध्यात्मका अर्थ इति ॥ यदुक्तमधस्तात् "सूत्रनिरुक्तमुपरि वक्ष्यामि" इति तद् वक्तुकाम आह-

**[भा.३१०]** सुत्तं तु सुत्तमेव उ, अहवा सुत्तं तु तं भवे लेसो।
अत्थस्स सूयणा वा, सुवुत्तमिइ वा भवे सुत्तं ॥

**वृ-** अर्थेन अबोधितं सुप्तमिव सुत्तं प्राकृतशैल्या सुत्तं। अथवा सूत्रं नाम तद् भवति 'श्लेषः' तन्तुरूपमित्यर्थः, तथा (यथा) तन्तुना द्वे त्रीणि बहूनि वा वस्तूनि एकत्र संहन्यन्ते एवमेकेनापि सूत्रेण बहवोऽर्था सङ्घात्यन्त इति सूत्रमिव सूत्रम्। अर्थस्य सूचनाद्वा सूत्रम्। सुष्ठु उक्तमिति वा सूक्तम्, प्राकृतशैल्या तु सुत्तमिति ॥ सम्प्रति सूत्रशब्दस्यैव निरुक्तान्याह-

**[भा.३११]** नेरुत्तियाइँ तस्स उ, सूयइ सिव्वइ तहेव सुवइ त्ति।
अनुसरति ति य भेया, तस्स उ नामा इमा हुंति ॥

**वृ-** 'तस्य' सूत्रस्य निरुक्तान्यमूनि-सूचयतीति सूत्रम्, अथवा सीव्यतीति सूत्रम्, यदि वा सुवतीति सूत्रम्, अथवाऽनुसरतीति सूत्रम् इति निरुक्तस्य भेदाः। नामानि पुनस्तस्य 'इमानि'

सुत्तादीनि वक्ष्यमाणार्थानि भवन्ति ॥ तान्येवार्थतो व्याख्यानयति-

[भा.३१२] पासुत्तसमं सुत्तं, अत्थेनाबोहियं न तं जाणे ।
लेससरिसेण तेनं, अत्था संघाइया बहवे ॥

वृ- यथा द्वासप्ततिकलापण्डितो मनुष्यः प्रसुप्तः सन् न किञ्चित्तासां कलानां जानाति, एवमर्थेनाबोधितं न किञ्चिदर्थविशेषं जानाति । यदा त्वर्थेन प्रबोधितं भवति तदा सर्वेषां तदन्तर्गतानां भावानां ज्ञायकमुपजायते, यथा स एव पुरुषः प्रबोधितस्तासां कलानाम्, अतः प्रसुप्तसमं सूत्रम् । अथवा श्लेषसदृशं तत् सूत्रं, तथाहि-तेन 'श्लेषसदृशेन' तन्तुसदृशेण बहवोऽर्था सङ्घातितास्ततः श्लेषसदृशम् ॥ सम्प्रति 'अर्थस्य सूचनात्' इति व्याख्यानयति-

[भा.३१३] सूइज्जइ सुत्तेणं, सूई नट्ठा वि तह सुएणऽत्थो ।
सिव्वइ अत्थपयाणि व, जह सुत्तं कंचुगाईणि ॥

वृ- यथा सूची नष्टा 'सूत्रेण सूच्यते' सूत्रेणैवोपलक्ष्यते तथा श्रुतेनार्थः सूच्यत इति अर्थस्य सूचनात् सूत्रम् । एतेन 'सूचयति' इति निरुक्तं व्याख्यातम् । अधुना 'सीव्यति' इति व्याख्यानयति-यथा सूत्रं कञ्चुकादीनि सीव्यति एवमर्थपदान्यनेकानि सीव्यतीत्यर्थःस्य सीवनात् सूत्रम् ॥ ''सुवति त्ति'' अस्य व्याख्यानमाह-

[भा.३१४] सूरमणी जलकंतो, व अत्थमेवं तु पसवई सुत्तं ।
वणियसुयंध कयवरे, तदनुसरंतो रयं एवं ॥

वृ- यथा सूर्यकान्तोऽग्नी जलकान्तो जले दीप्तिं श्रवति एवं सूत्रमर्थं प्रसवतीति सूत्रम् । अनुसरणं द्विधा-द्रव्यतो भावतश्च । तत्र द्रव्यतो वणिक्सुतोऽन्धः कचवरे दृष्टान्तः-

एकस्य वणिजः पुत्रोऽन्धः । वणिजा चिन्तितम्-मा एष वराकोऽनिर्विष्टं भक्तं भुङ्क्ताम्, 'परिभवस्थानमन्यथा गाढतरं भविष्यति' इति द्वौ स्तम्भौ निहत्य तत्ररज्जुर्बद्धा । ततः सोऽन्धपुत्रो रज्ज्वनुसारेण कचवरं बहिस्त्याज्यते ॥ एष दृष्टान्तोऽयमर्थोपनयः-वणिक्स्थानीय आचार्यः, अन्धस्थानीयाः साधवः, रज्जुस्थानीयं सूत्रम्, कचवरस्थानीयमष्टप्रकारं कर्म । तथा चाह-'एवं' वणिक्सुतान्धदृष्टान्तप्रकारेण 'तत्' सूत्रमनुसरन् 'रजः' अष्टप्रकारं कर्म कचवरस्थानीयमपनयति, ततः सरणात् सूत्रम् । सुष्ठूक्तं सूक्तमिति नाम तु सुप्रतीतमिति न व्याख्यातम् ॥

अथ तत् सूत्रं कतिविधम् ? इत्यत आह-

[भा.३१५] सन्ना य कारगे पकरणे यसुत्तं तु तं भवे तिविहं ।
उस्सग्गे अववाए, अप्पे सेए य बलवंते ॥

वृ- सूत्रं त्रिविधम्, तद्यथा-सञ्ज्ञासूत्रं कारकसूत्रं प्रकरणसूत्रं च । अथवा द्विविधं सूत्रम्-''उस्सग्गे''त्ति औत्सर्गिकं ''अववादि''त्ति आपवादिकम् । तत्र किं उत्सर्गा अल्पे ? उत अपवादाः? तया उत्सर्गोऽपवादो वा स्वस्थाने श्रेयान् बलवांश्च, अपरस्थानेऽबलवाँश्चाश्रेयाँश्च । एष द्वारगाथासमासार्थः ॥ साम्प्रतमेनामेव विवरीषुः प्रथमतः संज्ञासूत्रमाह-

[भा.३१६] उवयार अनिट्ठरया, कज्जित्थीदाणमाहु निग्गंथा ।
जे छेए आमगंधादि, आरं सन्ना सुयं तेनं ॥

वृ- यत् सामयिक्या संज्ञया सूत्रं भण्यते तत् संज्ञासूत्रम् । यथा-''जे छेए से सागारियं

एते सर्वेऽप्याचार्योपाध्यायनिश्रया विहरन्ति ॥ कथम् ? इत्याह-

[भा.६९३] आयारपकप्पधरा, चउदसपुव्वी अ जे अ तम्मज्झा ।
तन्नीसाए विहारो, सबाल-वुड्ढस्स गच्छस्स ॥

वृ- 'आचारप्रकल्पधराः' निशीथाध्ययनधारिणो जघन्या गीतार्था, चतुर्दशपूर्विणः पुनरुत्कृष्टाः, 'तन्मध्यवर्त्तिनः' कल्प-व्यवहार-दशाश्रुतस्कन्धधरादयो मध्यमाः । तेषां-जघन्य-मध्यमोत्कृष्टानां गीतार्थानां निश्रा सबाल-वृद्धस्यापि गच्छस्य विहारो भवति, न पुनरगीतार्थस्य स्वच्छन्दमेकाकिविहारः कर्त्तु युक्तः ॥ कुतः ? इति चेद् उच्यते-

[भा.६९४] एगविहारी अ अजायकप्पिओ जो भवे चवणकप्पे ।
उवसंपन्नो मंदो, होहिइ वोसट्ठतिट्ठाणो ।

वृ- एकः सन् विहरतीत्येवंशील एकविहारी, स च 'अजातकल्पिकः' अगीतार्थ, तथा च्यवनं-चारित्रात् प्रतिपतनं तस्य कल्पः-प्रकारश्च्यवनकल्पः, पार्श्वस्थादिविहार इत्यर्थः, तस्मिन् यो भवेत् स एकाकित्वम् 'उपसम्पन्नः' प्रतिपन्नः सन् 'मन्दः' सद्बुद्धिविकलो भविष्यति 'व्युत्सृष्ट-त्रिस्थानः' व्युत्सृष्टानि-परित्यक्तानि त्रीणि स्थानानि-ज्ञानादिरूपाणि येन स व्युत्सृष्टत्रिस्थानः । एषा निर्युक्तिगाथा ॥ अथैनामेव विवृणोति-

[भा.६९५] मोत्तूण गच्छनिग्गते, गीयस्स वि एक्कगस्स मासो उ ।
अविगीए चउगुरुगा, चवणे लहुगा य भंगट्ठ ॥

वृ- मुक्त्वा 'गच्छनिर्गतान्' जिनकल्पिकादीन् गीतार्थस्यापि 'एककस्य' एकाकिविहारं कुर्वतो मासलघु । 'अविगीते' अगीतार्थे एकाकिविहारिणि चत्वारो गुरुकाः । 'च्यवने' पार्श्वस्थादिविहारे यदि मनसाऽपि संकल्पं कुरुते तदा चत्वारो लघुकाः । "भंगट्ठ" त्ति अष्टौ भङ्गा अत्र कर्त्तव्याः, तद्यथ-एकाकी अजातकल्पिकश्च्यवनकल्पिकश्च १ एकाकी अजातकल्पिको न च्यवनकल्पिकः २ एकाकी जातकल्पिकश्च्यवनकल्पिकः ३ एकाकी जातकल्पिको न च्यवनकल्पिकः ४, एवमेकाकिपदेन चत्वारो भङ्गा लब्धाः; अनेकाकिपदेनापि चत्वारो लभ्यन्ते, सर्वसङ्ख्यया अष्टौ भङ्गाः । अत्राष्टमो भङ्गस्त्रिष्वपि पदेषु शुद्धत्वात् प्रायश्चित्तरहितः । शेषेषु तु यथायथमनन्तरोक्तं प्रायश्चित्तम् ॥ एतेषु सप्तस्वपि भङ्गेषु वर्त्तमानस्य दोषमुपदर्शयन्नुपसम्पन्न-मन्दपदे व्याचष्टे-

[भा.६९६] एगागित्तमणट्ठा, उवसंपज्जइ चुओ व जो कप्पा ।
सो खलु सोज्झो मंदो, मंदो पुण दव्व-भावेणं ॥

वृ- य एकाकित्वम् 'अनर्थाद्' ज्ञानादिप्रयोजनाभावाद् 'उपसम्पद्यते' अङ्गीकरोति, यो वा 'च्युतः' प्रतिपतितः 'कल्पात्' संविग्नविहारात् स खलु वराको द्रव्यजीवितेन जीवन्नपि 'शोच्यः' शोचनीयः संयमजीविताभावात्, मन्दश्चासौ । अथ मन्द इति कोऽर्थः ? इत्याह-मन्दः पुनः 'द्रव्य-भावेन' द्रव्यतो भावतश्च मन्दो भवतीत्यर्थः ॥

[भा.६९७] एक्केक्को पुन उवचय, अवचय भावे उ अवचए पगयं ।
तलिना बुद्धी सेट्ठा, उभयमओ केइ इच्छन्ति ॥

वृ- द्रव्यमन्दो भावमन्दश्चैकैकः पुनर्द्विधा-उपचयेऽपचये च । ततरोपचयद्रव्यमन्दो नाम

य परिस्थूरतरशरीरतया गमनादिव्यापारं कर्तुं न शक्नोति। अपचयद्रव्यमन्दस्तु यः कृशशरीरतया मपि प्रयासं न कर्तुमीष्टे। उपचयभावमन्दः पुनर्यो बुद्धेरुपचयेन यतस्ततः कार्यं कर्तुं नोत्सहते। अपचयभावमन्दस्तु यो निजसहजबुद्धेरभावेनान्यदीयाया बुद्धेरनुपजीवनेन हिताऽहितप्रवृत्ति-निवृत्ती न कर्तुमीशः स बुद्धेरपचयेन भावतो मन्दत्वादपचयभावमन्दः। अत्र चानेनैव भावतोऽपचयमन्देन प्रकृतम्, शेषास्तु शिष्यमतिविकाशनार्थं प्ररूपिताः। अथवा 'तलिना' सूक्ष्मा कुशाग्रीया बुद्धि श्रेष्ठा, ततः सा सूक्ष्मतन्तुव्यूतपटीवद् अन्तःसारत्वेन पचितेति कृत्वा यः कुशाग्रीयमति स उपचयभावमन्दः। यस्तु परिस्थूरमति स बुद्धेः स्थूलसूत्रतया स्थूलशाटिकाया इव अन्तर्निसारतालक्षणमपचयमधिकृत्यापचयभावमन्द इति। अतः केचिदाचार्या उभय-मप्यपचयमन्दमिच्छन्ति, प्रथमव्याख्यानापेक्षया निर्बुद्धिकं द्वितीयव्याख्यानपक्षे तु परिस्थूरबुद्धि-कमपचयभावमन्दमत्र प्रस्तावे गृह्णन्तीति भावः॥ अथ यदुक्तं निर्युक्तिगाथायाम् "होहिइ वोसट्ठतिट्ठाणो" त्ति तत्र कानि पुनस्तानि त्रीणि स्थानानि यानि तेन परित्यक्तानि? उच्यते-

[भा.६९८] नाणाई तिण्णि, अहवण चरणऽप्पओ पवयणं च।
सुत्त-ऽत्थ-तदुभयाणि व, उग्गम उप्पायणाओ वा॥

वृ- एकाकी 'ज्ञानादीनि' ज्ञान-दर्शन-चारित्राणि त्रीणि स्थानानि वक्ष्यमाणनीत्या परित्यजतीति। "अहवण"त्ति अखण्डमव्ययमथवार्थे, चरणमात्मा प्रवचनं चेति वा त्रीणि स्थानानि, तत्रागीतार्थतयाऽसौ षट्कायविराधनया चरणम्, अतिप्रचुराहारभक्षणादिना ग्लानत्वाद्यापत्तावात्मानम्, अयतनया संज्ञाव्युत्सर्गादिना प्रवचनं च परित्यजति। अथवा सूत्रा-ऽर्थ-तदुभयानि त्रीणि स्थानानि, तत्रासावेकाकितया कदाचित् सूत्रं विस्मारयति। कदाचिदर्थं कदाचित् तदुभयम्। यद्वा उद्गमो त्पादना वाशब्दादेषणा चेति त्रीणि स्थानानि, तानि च निरङ्कुशत्वादेकाकी परित्यजतीति प्रकटमेव॥

अथ यथाऽसौ ज्ञान-दर्शन-चारित्राणि परिहरति तथाऽभिधित्सुराह-

[भा.६९९] अपुव्वस्स अगहणं, न य संकिय पुच्छणा न सारणया।
गुणयंते अ अदट्ठुं, सीदइ एगस्स उच्छाहो॥

वृ- अपूर्वस्य श्रुतस्याग्रहणम्, एकाकितया पाठयितुरभावात्। न च शङ्किते सूत्रेऽर्थे वा कस्यापि पार्श्वे प्रच्छनम्। न वा सूत्रमर्थं वा विकुट्टयतः 'सारणा' शिक्षणा 'मैवं पाठीः' इत्यादिका भवति। तथाऽपरान् साधून् 'गुणयतः' परावर्त्तयतोऽदृष्ट्वा 'सीदति' परिहीयते 'एकस्य' एकाकिनः 'उत्साहः' सूत्रा-ऽर्थपरावर्त्तनायामभियोग इति॥

उक्तो ज्ञानपरिहारः। सम्प्रति दर्शन-चरणयोः परिहारमाह-

[भा.७००] चरगाई वुग्गाहण, न य वच्छल्लाइ दंसणे संका।
थी सोहि अणुन्नमया, निप्पग्गहया य चरणम्मि॥

वृ- 'चरकादिभिः' कणाद-सौगत-साङ्ख्यप्रभृतिभि पाषण्डिभिः कुयुक्तियुक्ताभिः रुक्ति-भिर्व्युद्ग्राहणमगीतार्थतया तस्य भवेत्, न चासावेकाकितया साधर्मिकाणां वात्सल्यम् आदिशब्दादुपबृंहणं स्थिरीकरणं तीर्थप्रभावनां वा कुर्यात्, शङ्कादयो वा दोषा देशतः सर्वतो वा तस्य भवेयुरिति, एवं दर्शनमसौ परिहरन्ति। तथा "थी" इति एकाकिनः स्त्रिया सम्भाषणा-

दिनाऽऽत्म-परोभयसमुत्था दोषा भवेयुः । ''सोहि'' त्ति 'शोधिं' प्रायश्चित्तम्, तद् अपराधमापन्नस्य तस्य को नाम ददातु ? । अनुद्यमता च तस्य सारणादीनामभावाद् भवति । ''निप्पग्गहया य'' त्ति इह प्रग्रहशब्दो यद्यपि-

''तुलासूत्रेऽश्वादिरश्मौ, सुवर्णे हलिपादपे ।
बन्धने किरणे बन्द्यां, भुजे च प्रग्रहं विदुः ॥''

इति वचनादनेकार्थ तथाप्यत्राश्वादिरश्मिवाचको द्रष्टव्यः, ततो यथा तया रश्म्या वलापरपर्याययोन्मार्गप्रस्थितस्तुरङ्गमो मार्गेऽवतार्यते तथा गुरूणामप्याज्ञावलगया साधुः प्रमादत उत्पथप्रतिपन्नोऽपि सन्मार्गेऽवतार्यते इति प्रग्रहशब्देन गुर्वाज्ञाऽभिधीयते, प्रग्रहो नियन्त्रणा गुर्वाज्ञेति यावत्, निर्गतः प्रग्रहादिति निष्प्रग्रहः, तस्य भावो निष्प्रग्रहता, गुर्वाज्ञाया अभावात् पाणि-पाद-मुखधावनादि निशङ्कं करोतीत्यर्थः । एवं चरणविषयः परित्याग इति ॥ किञ्च-

[भा.७०१] सामन्नजोगाणं, बज्झो गिहिसन्नसंथुओ होइ
दंसण-नाण-चरित्ताण मइलणं पावई एक्को ॥

वृ- स एकाकी ''सामन्न'' त्ति श्रामण्य-भाविनां विनय-वैयावृत्यप्रभृतीनां योगानां 'बाह्यः' अनाभागी भवति । गृहिणाम्-अगारिणां संज्ञा समाचारस्तस्यां संस्तुतः-परिचयवान् भवति । दर्शन-ज्ञान-चारित्राणां च मालिन्यमेकः सन् प्राप्नोति, तत्र बौद्धादिभिर्विपरिणामितमतेः 'अहो! अमीषामपि दर्शनं निपुणोपपत्ति-दृष्टान्तसंवर्मितं समीचीनमिव प्रतिभासते' इत्यादिना चित्तविप्लवेनोन्मार्गप्ररूपणया वा दर्शनमालिन्यम्, विशाखिल-वात्स्यायनादिपापश्रुतान्यभ्यस्य-तस्तेषु बहुमानबुद्धिं कुर्वतो ज्ञानमालिन्यम्, चारित्रमालिन्यं पुनरेकाकिनः सुप्रतीतमेव ॥ अथ गृहिसंज्ञासंस्तुतः कथं भवति ? इति उच्यते-

[भा.७०२] कयमकए गिहिकज्जे, संतप्पइ पुच्छई तहिं वसइ ।
संथव-सिनेहदोसा, भासा हिय नट्ठ सोगो अ ॥

वृ- 'गृहिकार्ये' क्रय-विक्रयादावनभिमते कृतेऽभिमते वा अकृते स एकाकी विवक्षिते गृहस्थे ममत्वातिरेकतः 'संतप्यते' सन्तापमनुभवति, यथा-आः ! शोभनं न समजनि यदेते-नागारिणाऽमुकं वस्तु व्यवहृतं अमुकं न व्यवहृतमित्यादि । तथा ''पुच्छइ'' त्ति सुख-दुःखलाभा-ऽलाभादिकां वार्त्तां तस्य पार्श्वे पृच्छति । ''तहिं वसइ'' त्ति 'तत्र' तेषां गृहस्थानां मध्य एवासौ वसति । तत्र चवसतो निरन्तरं यस्तैः सह संस्तवस्तेनात्यन्तिकः स्नेहस्तेषु समुल्लसति, तद्वशात् तदीयापत्यानां यत् क्रीडापनं यच्चाक्षर-गणितादिशिक्षापणं यच्च तदुपरोधतः कुण्टलविण्टलादिकरणं तदेवमादयो दोषा द्रष्टव्याः । तथा भाषां सावद्यामसावगीतार्थतया ब्रूयात्, यथा-हे श्रावक ! गम्यताम् आगम्यताम् उपविश्यतामित्यादि । गृहिसत्के च वस्तुजाते केनचित् चौरादिना हृते स्वयं वा नष्टे तस्य स्नेहातिरेकतः 'शोकः' परिदेवनादिरूपः स्यादिति । यत एवंविधदोषोपनिपातस्तत एकाकिविहारविरहेण गच्छवासमध्यासीनेन साधुना यावज्जीवं विहरणीयम् ॥ तस्य च गच्छस्याधिपतिराचार्यो भवति ततः शिष्यः प्रश्नयति-कीदृशस्य गच्छो दीयते ? अयोग्यस्य वा गच्छं प्रयच्छन् अयोग्यो वा गच्छं धारयन् कीदृशं प्रायश्चित्तं प्राप्नोति ? उच्यते-

[भा.७०३] अबहुस्सुए अगीयत्थे निसिरए वा वि धारए व गणं ।

तद्देवसियं तस्सा, मासा चत्तारि भारिया ॥

वृ- अबहुश्रुतो नाम येनाऽऽचारप्रकल्पाध्ययनं नाधीतं अधीतं वापरं विस्मारितम्, अगीतार्थः येन च्छेदश्रुतार्थो न गृहीतो गृहीतो वा परं विस्मारितः, तस्मिन् अबहुश्रुतेऽगीतार्थे यः 'गणं' गच्छं 'निसृजति' निक्षिपति तस्य चत्वारो भारिका मासाः । यो वा अमहुश्रुतो अगीतार्थो वा गणं निसृष्टं धारयति तस्यापि चत्वारो मासा गुरुकाः । एतच्च 'तद्दैवसिकं' तद्दिवसनिष्पन्नं प्रायश्चित्तम्, द्वितीयादिषु तु दिवसेषु यत् प्रायश्चित्तमापद्यते तदुपरिष्टाद् वक्ष्यते ॥ अथैनामेव निर्युक्तिगाथां भावयति-

[भा.७०४] अबहुस्सुअस्स देइ य, जो वा अबहुस्सुओ गणं धरए ।
भंगतिगम्मि वि गुरुना, चरिमे भंगे अणुन्नाओ ॥

इह चत्वारो भङ्गाः, तद्यथा-अबहुश्रुतोऽगीतार्थश्च १ अबहुश्रुतो गीतार्थः २ बहुश्रुतोऽगीतार्थः ३ बहुश्रुतो गीतार्थश्चेति ४ । तत्र अबहुश्रुतस्यागीतार्थस्य गणं ददाति चत्वारो गुरवः । अबहुश्रुतस्य गीतार्थस्य ददाति चतुर्गुरवः; अस्य च प्रमादादिना सूत्रं विस्मृतम् अर्थं पुनः स्मरतीत्यबहुश्रुतस्य गीतार्थत्वम्, यद्वा आज्ञा-धारणादिमात्रव्यवहारेणाबहुश्रुतस्यापि गीतार्थत्वमिति । बहुश्रुतस्यागीतार्थस्य ददाति चत्वारो गुरवः, अनेन चाऽऽचारप्रकल्पाध्ययनं सूत्रतोऽधीतं न पुनरर्थतः श्रुत्वा सम्यगधिगतमिति बहुश्रुतस्यागीतार्थत्वम् । बहुश्रुतस्य गीतार्थस्य ददातीत्यत्र चतुर्थे भङ्गे शुद्धः । यो वा अबहुश्रुतो गीतार्थो धारयति २ बहुश्रुतोऽगीतार्थो धारयति ३ त्रिष्वपि चतुर्गुरुकाः । बहुश्रुतो गीतार्थो धारयतीत्यत्र शुद्धः । अत एवाह-'भङ्गत्रिकेऽपि' त्रिष्वप्याद्यभङ्गेषु गणदायक-धारकयोरुभयोरपि 'गुरुकाः' चतुर्गुरवः । 'चरमे' चतुर्थे भङ्गे शुद्धत्वाद् दायको धारको वा अनुज्ञातः, न तत्र कश्चिद्दोषः ॥ अत्र परः प्राह-यदेतत् प्रायश्चित्तं भणितं किमेतावता पर्यवसितम् ? किं वा न ? इति उच्यते-नेति । तथा चाह निर्युक्तिकारः-

[भा.७०५] सत्तरत्तं तवो होइ, तओ छेओ पहावई ।
छेएणऽच्छिन्नपरियाए, तओ मूलं तओ दुगं ॥

वृ- सप्तरात्रमिति जातावेकवचनम्, ततोऽयमर्थ-त्रीणि सप्तरात्राणि यावत् चतुर्गुर्वादिकं तपो भवति । त्रिष्वपि सप्तरात्रेषु गतेषु यद्यनुपरती 'ततः' सप्तरात्रत्यानन्तरं छेदस्तयोराचार्ययोरभिमुखं प्रकर्षेण धावति प्रधावति । छेदेनापि यस्य प्रभूतत्वात् पर्यायो न च्छिद्यते तस्मिन्नाचार्ये छेदेनाच्छिन्नपर्याये एकेनैव दिवसेन मूलम् । ततो 'द्विकम्' अनवस्थाप्य-पाराञ्चिकयुगम् ॥

अथैनं श्लोकं विवरीषुराह-

[भा.७०६] एक्केक्कं सत्त दिने, दाऊण अइच्छियम्मि उ तवम्मि ।
पंचाइ होइ छेदो, केसिंचि जहा कडो तत्तो ॥

वृ- 'एकैकं' तपश्चतुर्गुरुकादि सप्त सप्त दिनानि दत्त्वा ततस्तपःप्रायश्चित्तेऽतिक्रान्ते पञ्चकादिकश्छेदो भवति । केषाञ्चिदाचार्याणामयादेशः-'यथा' ,यत एवं स्थानात् तपः 'कृतं' प्रारब्धं तत आरभ्य च्छेदोऽपि दीयते, चतुर्गुरुकादित्यर्थः । इयमत्र भावना-तयोराचार्ययोः प्रथमतः सप्तरात्रं यावद् दिवसे दिवसे चतुर्गुरुकम्; यद्येतावति गते केनाप्यपरेण गीतार्थेन 'आचार्या ! न कल्पते अबहुश्रुतस्यागीतार्थस्य वा गणं दातुं धारयितु वा, ततः प्रतिपद्यध्वं सम्प्रत्यपि प्रायश्चित्तम्'

इति प्रज्ञापितौ स्वयं वा यद्युपरतौ ततः प्रायश्चित्तमप्युपरतम्; अथ नोपरमेते ततो द्वितीयं सप्तरात्रं दिने दिने षड्लघवः; यदि द्वितीये सप्तरात्रेऽपि गते न प्रति निवृत्तौ तदा तृतीयं सप्तरात्रं प्रत्यहं षड्गुरवः । यद्येतावता स्थितौ ततः सुन्दरमेव, नो चेत् ततश्छेदः प्रथाचलि ! तत्रैके आचार्या पञ्चरात्रिन्दिवादरभ्य च्छेदं प्रस्थापयन्ति, अपरे पुनश्चतुर्गुरुकादिति । पञ्चरात्रिन्दिवप्रस्थापनायां भूयोऽप्यादेशयुगम्, तद्यथा-केचिदाचार्या लघुभ्यः केचित्तु गुरुभ्यः पञ्चरात्रिन्दिवेभ्यः छेदं प्रारभन्ते। तत्र लघुपञ्चरात्रिन्दिवप्रस्थापना प्रथमतो भाव्यते-सप्तरात्रत्रयानन्तरं तुरीयं सप्तरात्रं लघुपञ्चकच्छेदः, नवमं गुरुपञ्चदशकः, दशमं लघुर्विंशतिरात्रिन्दिवः, चतुर्दशं लघुमासिकः, पञ्चदशं गुरुमासिकः, षोडशं चतुर्लघुमासिकः, सप्तदशं चतुर्गुरुमासिकः, अष्टादशं लघुषाण्मासिकः, एकोनविंशं सप्तरात्रं गुरुषाण्मासिकच्छेद इति सर्वसङ्ख्यया त्रयस्त्रिंशं शतमहोरात्राणां भवति ।

गुरुपञ्चकप्रस्थापनायां तु सप्तरात्रत्रयानन्तरं सप्ताहोरात्राणि प्रथमत एव गुरुपञ्चकश्छेदः, ततः सप्ताहं लघुदशकः, एवं पूर्वोक्तविधिना गुरुदशकादयोऽपि षड्गुरुकान्ताश्छेदाः सप्ताहं सप्ताहं प्रत्येकं द्रष्टव्या इति; अत्र चाष्टादशभिः सप्तरात्रैः षड्विंशं शतं रात्रिन्दिवानां भवति । यदा तु यतः प्रभृति तपःप्रायश्चित्तमुपक्रान्तं तत आरभ्य च्छेदविवक्षा क्रियते तदा चतुर्थे सप्तरात्रे प्रथमत एव चतुर्गुरुकच्छेदः, पञ्चमे षड्लघुकः, षष्ठे षड्गुरु, एवं षड्भिः सप्तरात्रैर्द्वाचत्वारिंशद् दिनानि भवन्ति । इत्थं त्रयाणामादेशानामन्यतमेनादेशेन च्छिद्यमानोऽपि भूयस्त्वाद् यदा पर्यायो न च्छिद्यते ततो यद्यपि देशोनपूर्वकोटीप्रमाणः पर्यायोऽवशिष्यते तथापि स सर्वोऽपि युगपदेकदिनेनैव च्छिद्यते इति सर्वच्छेदलक्षणं ततो मूलम्, ततो द्वितीये दिवसेऽनवस्थाप्यम्, तृतीये पाराञ्चितम् ॥ अथ सामान्यतस्तपःस्थानानि च्छेदस्थानानि च परस्परं किं तुल्यानि ? किं वा हीना-ऽधिकानि ? उच्यते-तुल्यानि । यत आह-

[भा.७०७] तुल्ला चेव उ ठाणा, तव-छेयाणं हवंति दोण्हं पि ।
पणगाइ पणगवुड्ढी, दोण्ह वि छम्मास निट्ठवणा ॥

**वृ-** तपश्छेदयोर्द्वयोरपि स्थानानि तुल्यान्येव भवन्ति, न हीनानि नाप्यधिकानीति एव-शब्दार्थः । कुतः ? इत्याह-"पनगा" इत्यादि । यतः 'द्वयोरपि' तपश्छेदयोः पञ्चकं-पञ्च रात्रिन्दिवान्यादौ कृत्वा पञ्चकवृध्या वर्द्धमानानां स्थानानां षण्मासेषु 'निष्ठापना' समापनं भवति । इयमत्र भावना-लघुपञ्चकादीनि गुरुषाण्मासिकपर्यन्तानि यान्येव तपःस्थानानि तान्येव च्छेदस्यापीति तुल्यान्येवानयोः स्थानानि । एतेन च लघुपञ्चकादर्वाग् गुरुभ्यः षण्मासेभ्य ऊर्ध्वं छेदो न भवतीत्यावेदितं द्रष्टव्यम् ॥ अथ कीदृशस्य गणधरपदाध्यारोपणा विधीयते ? उच्यते-

[भा.७०८] पढिय सुय गुणिय धारिय, करणे उवउत्तो छहि वि ठाणेहिं ।
छट्ठाणसंपउत्तो, गणपरियट्टी अणुन्नाओ ॥

**वृ-** निशीथाध्ययने 'पठिते' सूत्रतः सम्पूर्णेऽप्यधीते, ततः 'श्रुते' अर्थतः सद्गुरु-मुखादाकर्णिते, 'गुणिते' परावर्त्तना-ऽनुप्रेक्षाभ्यामत्यन्तस्वभ्यस्तीकृते, 'धारिते' चेतसि सम्यग्व्यवस्थापिते, ततः 'करणे' तदुक्ताया विधि-प्रतिषेधरूपाया आज्ञाया विधाने, 'उपयुक्तः' प्रमादरहितः, केषु ? इत्याह-'षट्सु स्थानेषु' पञ्चसु महाव्रतेषु रात्रिभोजनविरमणषष्ठेष्वित्यर्थः, गाथायां प्राकृतत्वात् तृतीयार्थे सप्तमी । एभिः षड्भिः स्थानैः-पठित-श्रुत-गुणितधारित-यथोक्तकरण-

व्रतषट्कोपयोगलक्षणैः सम् इति-समुदितैः प्रकर्षेण युक्तः सम्प्रयुक्तः 'गणविहारी' गच्छ-वर्त्तापकोऽनुज्ञातस्तीर्थकर-गणधरैः ॥ अथवा-

[भा.७०९] सत्तऽट्ठ नवग दसगं, परिहरई जो विहारकप्पी सो ।
तिविहं तीहि विसुद्धं, परिहर नवएण भेएण ॥

वृ- य आचार्यादि सप्तविधमष्टविधं नवविधं दशविधं प्रायश्चित्तं परिहरति, कथम्भूतं तत्? इत्याह-'त्रिविधं' दान-तपः-कालप्रायश्चित्तभेदादेकैकमपि त्रिभेदं परिहारविषयेण नवकेन भेदेन परिहरति। तद्यथा-मनसा वचसा कायेन स्वयं परिहरति अन्यैः स्वपरिवारसाधुभि परिहारयति अन्यान् परिहरतोऽनुमन्यते। याभि प्रतिसेवनाभि प्रतिसेविताभि सप्तविधादिकं प्रायश्चित्तं भवति ताः करणत्रय-योगत्रयविशुद्धं परिहरतीति भावः ॥ अथ कथं सप्तविधं प्रायश्चित्तं भवति? इति उच्यते-आलोचनार्हं प्रतिक्रमणार्हं तदुभयार्हं विवेकार्हं व्युत्सर्गार्हं तपोऽर्हं छेदार्हमिति। अथ मूला-ऽनवस्थाप्य-पाराञ्चिकानि क्वान्तर्भवन्ति? उच्यते-

[भा.७१०] दुविहो अ होइ छेदो, देसच्छेदो अ सव्वछेदो अ।
मूला-ऽनवट्ठ-चरिमा, सव्वच्छेओ अतो सत्त ॥

वृ- इह छेदो द्विविधो भवति-देशच्छेदश्च सर्वच्छेदश्च। पञ्चकादिकः षण्मासपर्यन्तो देशच्छेदः। मूला-ऽनवस्थाप्य-पाराञ्चिकानि पुनर्देशोनपूर्वकोटिप्रमाणस्यापि पर्यायस्य युगपत् छेदकत्वात् सर्वच्छेदः। एष द्विविधोऽपि सामान्यतश्छेदशब्देन गृह्यत इति विवक्षया सप्तविधं प्रायश्चित्तम् ॥ अथाष्टविधं कथं भवति? इति उच्यते-

[भा.७११] छिज्जंते वि न पावेज्ज कोइ मूलं अओ भवे अट्ठ।
चिरघाई वा छेओ, मूलं पुण सज्जघाई उ ॥

वृ- छिद्यमानेऽपि पर्याये कश्चित् चिरप्रव्रजितत्वेन मूलं यदा न प्राप्नुयात् तदा तस्य षण्मासच्छेदादूर्द्ध्वं यद् मूलं दीयते तत् प्रागदत्तच्छेदविलक्षणत्वादष्टमं भवतीत्यष्टौ प्रायश्चित्तभेदा भवेयुः। यद्वा छेद-मूलयोस्तात्पर्यार्थोऽयमभिधीयते-चिरघाती छेदः, चिरेण पर्यायस्य छेदकत्वात्। सद्योघाति मूलम्, झगित्येव निशेषपर्यायत्रोटकत्वादित्यष्टविधं प्रायश्चित्तम् ॥

अथ नवविध-दशविधे प्रतिपादयति-

[भा.७१२] वूढे पायच्छित्ते, ठविज्जई जेन तेन नव होंति।
जं वसइ खित्तबाहिं, चरिमं तम्हा दस हवंति ॥

वृ- येन कारणेन द्वादशवार्षिकादिके परिहारतपःप्रायश्चित्ते व्यूढे सत्यनवस्थाप्यो व्रतेषु स्थाप्यते नान्यथा, तेन मूलादनवस्थाप्यं विलक्षणमिति कृत्वाऽनवस्थाप्यप्रक्षेपाद् नव भेदा भवन्ति। यत् पुनस्तदेव परिहारतपःप्रायश्चित्तं वहमानः सन्नेकाकी सक्रोशयोजनप्रमाणक्षेत्राद् बहिर्वसति तदेतावतांशेनानवस्थाप्यात् 'चरमं' पाराञ्चितं विभिन्नमिति तस्माद् दश प्रायश्चित्तभेदा भवन्तीति॥ उक्तो विहारकल्पिकः। तदुक्तौ च व्याख्याता "सुत्ते अत्थे तदुभय" इत्यादिका प्रतिद्वारगाथा। अथ कल्पिकद्वारमुपसंहरन्नाह-

[भा.७१३] एयं दुवालसविहं, जिनोवइट्ठं जहोवएसेणं।
जो जाणिऊण कप्पं, सद्दहणाऽऽयरणयं कुणइ ॥

वृ- 'एनम्' अनन्तरोदितं 'द्वादशविधं' सूत्रा-ऽर्थादिभिद्वरिर्द्वादशप्रकारं 'कल्पं' साधुसमाचारं 'जिनोपदिष्टं' सर्वज्ञैरुक्तमिति, अनेन स्वमनीषिकाव्युदासमाह, 'यथोपदेशेन' उपदेशाऽवैपरीत्येन 'ज्ञात्वा' अवबुध्य यः श्रद्धानमाचरणं च करोति । 'श्रद्धानं' नाम य एष कल्पः प्ररूपितः स निःशङ्कमेवमेव नान्यथा, जिनोपदिष्टत्वात्; न खलु जिनोपदेशः कदाचिदपि विसंवादपदवीमासादयति। यत उक्तम्-

रागाद्वा द्वेषाद्वा, मोहाद्वा वाक्यमुच्यते ह्यनृतम् ।
यस्य तु नैते दोषास्तस्यानृतकारणं किं स्यात् ? ॥

तथा 'आचरणं' नाम यथावसरं द्वादशविधस्यापि कल्पस्यानुपालनम् । एते श्रद्धाना-ऽऽचरणे यः करोति स सिद्धिं गच्छतीति सण्टङ्कः ॥ कथम्भूतः ? इत्याह-

[भा.७१४] सो भविय सुलभबोही, परित्तसंसारिओ पयनुकम्मो ।
अचिरेण उ कालेणं, गच्छइ सिद्धिं धुयाकिलेसो ॥

वृ- 'भव्यः' सिद्धिगमनयोग्यः, न खल्वभव्यस्यैवंविधकल्पविषयाणिसम्यग्ज्ञान-श्रद्धाना-ऽऽचरणानि समुपजायन्ते । भव्योऽपि कदाचिद् दुर्लभबोधिकः स्यादित्याह-सुलभा-सुप्रापा बोधि-अर्हद्धर्मप्राप्तिर्यस्यासौ सुलभबोधिकः। असावपि दीर्घसंसारी स्यादित्याह-परीत्तः-परिमितः संसारो यस्यासौ परीत्तसंसारिकः । अयमपि गुरुकर्मा भवेदित्याह-प्रकर्षेण तनु-प्रकृति-स्थिति-प्रदेशा-ऽनुभावैरल्पीयः कर्म यस्यासौ 'प्रतनुकर्मा' लघुकर्मेत्यर्थः । एवंविधोऽसौ 'इचिरेणैव कालेन' जघन्यतस्तेनैव भवग्रहणेनोत्कर्षतः सप्ताष्टभवग्रहणैः 'सिद्धिं' मोक्षं गच्छति धुतक्लेशः सन् । क्लिश्यन्ते-बाध्यन्ते शारीर-मानसैर्दुखैः संसारिणः सत्त्वा एभिरिति क्लेशाः-कर्माणि, धुताः-अपनीताः क्लेशा येनासौ 'धुतक्लेशः' क्षीणाष्टकर्मेति भावः ॥ तदेवं व्याख्यातं कल्पिकद्वारम् । अथाऽऽनुषङ्गिकमुत्सारकल्पिकद्वार-मभिधित्सुः प्रस्तावनामाह-

[भा.७१५] चोयग पुच्छा उस्सारकप्पिओ नत्थि तस्स किह नामं ।
उस्सारे चउगुरुगा, तत्थ वि आणाइणो दोसा ॥

वृ- कल्पिकद्वारे व्याख्याते सति लब्धावकाशो नोदकः पृच्छां करोति-भगवन् ! अमीषां कल्पिकानां मध्ये किमित्युत्सारकल्पिको नोपन्यस्तः ? । सूरिराह-नास्त्युत्सारकल्पिक इति । भूयोऽपि परः प्राह-यद्युत्सारकल्पिको नास्ति ततः कथं तस्य नाम श्रुयते ? । गुरुराह-यद्यप्युत्सारकल्पो नाम्ना व्यवह्रियते तथापि न कल्पते उत्सारयितुम्, यद्युत्सारयति तदा चत्वारो गुरुकाः । तत्राप्याज्ञादयो दोषा द्रष्टव्याः ॥ तानेवाह-

[भा.७१६] आणाऽणवत्थ मिच्छा, विराधना संजमे य जोगे य ।
अप्पा परो पवयणं, जीवनिकाया परिच्चत्ता ॥

वृ- आज्ञा भगवतां तीर्थकृतामुत्सारकल्पकृता न कृता भवति । तमाचार्यमुत्सारयन्तं दृष्ट्वा अन्येऽप्याचार्या उत्सारयिष्यन्ति, तदीया अन्यदीया वा शिष्या विवक्षितशिष्यस्पर्धानुबन्धा-दुत्सारापयिष्यन्ति चेत्यनवस्था । मिथ्यात्वं वाप्रतिपन्नाभिनवधर्माणः सत्त्वा व्रजेयुः । विराधना 'संयमे च' संयमविषया 'योगे च' योगविषया भवति । तथा तेनोत्सारकेण 'आत्मा' स्वजीवः 'परः' उत्सारकल्पविषयः शिष्यः 'प्रवचनं' तीर्थं 'जीवनिकायाः' पृथिव्यादय एतानि परित्यक्तानि

भवन्तीति द्वारगाथासमासार्थः ॥ साम्प्रतमेनामेव विवरीषुराज्ञा-ऽनवस्थे क्षुन्नत्वादनाहृत्य मिथ्यात्वं दर्शयितुं दृष्टान्तमाह-

[भा.७१७] पुव्विं मलिया उस्सारवायए आगए पडिमिलंति ।
पडिलेह पुग्गलिंदिय, बहुजण ओभावणा तित्थे ॥

वृ-तत्र तावत् प्रथमं कथानकमुच्यते-इह पुरा केचिदाचार्या पूर्वान्तर्गतसूत्रा-ऽर्थधारकतया लब्धवाचकनामेयाः सर्वज्ञशासनसरसीरुहविकाशनैकसहस्ररश्मयः प्रावृषेण्यपयोमुच इव सरसदेशनाधाराधोरणीनिपातेन महीमण्डलमेकार्णवधर्मकमादधाना गन्धहस्तिन इव कलभयूथेन सातिशयगुणवता निजशिष्यवर्गेण परिकरिता एकं कञ्चिद् ग्राममुपागमन् । तत्र चाधिगतजीवा-जीवादिविशेषणविशिष्टा बहवः श्रमणोपासकाः परिवसन्ति । ते च गुरूणामागमनमाकर्ण्य प्रमोद-मेदुरमानसाः स्वस्वपरिवारपरिवृताः सर्वेऽप्यागम्य तदीयं पादारविन्दमभिवन्द्य योजितकरकुड्मला यथावत् तत्पुरत आसाञ्चक्रिरे । ततः सूरिभिरपि रचिता यथोचिता धर्मदेशना । तदाकर्णनेन सञ्जातः संवेगसुधासिन्धुधौतान्तरमलः सकलोऽपि श्रावकलोको गतः परमपरितोषपरवशः सूरीणांगुणग्रामोपवर्णनं कुर्वन् स्वं स्वं स्थानम् । तैश्च वाचकनभोमणिभिस्तत्रायातैः प्रतिहतः खद्योतपोतकल्पानामन्ययूथिकानां प्रभाप्रसरः ।

ततः न शक्नुवन्ति तेऽन्ययूथिका आचार्याणां व्याख्यानादिभिर्गुणैर्जायमानं निरुपमानं महिमानं द्रष्टुम् इति सम्भूय सर्वेऽपि 'अमुमाचार्यं वादे पराजित्य तृणादपि लघु करिष्यामः' इत्येकवाक्यतया चेतसि व्यवस्थाप्य समाजग्मुः सूरूणामन्तिकम् । सूरिभिरपि निष्प्रतिम-प्रतिभाप्राग्भारप्रभववादलब्धिसम्पन्नैर्निपुणहेतु-दृष्टान्तोपन्यासपुरस्सरं मध्येविद्वज्जनसभं कृतास्ते निष्पृष्टप्रश्न-व्याकरणाः । ततः समुच्छलितः पारमेश्वरप्रवचनगोचरः कीर्त्तिकोलाहलः, प्रादुर्भूतः परतीर्थिकानामपि परमः पराभवः, निमग्नः प्रमोदपीयूषपयोनिधावस्तोकः श्रमणोपासकलोकः, सम्पादिता सपदि विशेषतस्तेन महती तीर्थस्य प्रभावना । ततस्ते वाचकाः कियन्तमपि कालमलङ्कृत्य तं ग्रामं प्रबोध्य मिथ्यात्वनिद्राविद्राणचैतन्यं भव्यजन्तुजातमन्यत्र कुत्रापि व्यहार्षुः । तेषु च दिनकरवदन्यत्र प्रतापलक्ष्मीमुद्वहमानेषु परतीर्थिका उलूका इवाऽऽत्मप्रसरतया घोरघूत्कारकल्पं प्रवचनावर्णवादं कर्त्तुमारब्धाः । वदन्ति च श्रावकान् प्रति-भोः श्वेताम्बरोपासकाः ! यद्यस्ति भवतां कोऽपि कण्डूलमुखो वादी स प्रयच्छतु साम्प्रतमस्माकं वादमिति । श्रावकैरुक्तम्-अये ! विस्मृतमधुनैव भवतां भवान्तरानुभूतमिव तत् तादृशमधश्वीनमपि लाघवम् यदेवमनात्मज्ञा असमञ्जसं प्रलपत ? भवत्वेवम्, तथाप्यायान्तु तावत् केचिद् वाचका वा गणिनो वा, पश्चाद् यद् भणिष्यन्ति भवन्तस्तत् करिष्याम इति । अथैकदा कदाचिद् निजपाण्डित्याभिमानेन त्रिभुवनमपि तृणवद् मन्यमानस्तुण्डताण्डवाडम्बरेण वाचस्पतिमपि मूकमाकलयन् समागतः कतिपयशिष्य-कलित उत्सारकल्पिकवाचकः । ततः प्रमुदिताः श्रावकाः गता अन्ययूथिकानामभ्यर्णे । निवेदितं तत्पुरतः-युष्माभिस्तदानीमस्माकं समीपे वादः प्रार्थित आसीत्, अस्माभिश्च भणितमभूत्-यदा वाचका अत्राऽऽगमिष्यन्ति तदा सर्वमपि युष्मदभिप्रेतं विधास्याम इति, तदिदानीमागताः सन्ति वाचकाः, कुरुत तैः सह वादगोष्ठीम्, पूरयत स्वप्रतिज्ञाम्-इत्यभिधाय गताः श्रावकाः स्वस्थानम् । तैश्चान्ययूथिकैः प्राचीनपराभवप्रभवभयभ्रान्तैरेकः प्रच्छन्नवेषधारी प्रत्युपेक्षकः 'किं सहृदयः

शास्त्रपरिकर्मितमतिर्वाग्मी वाचकः ? किं वा न ?' इति ज्ञापनाय प्रेषितः। स चाऽऽगम्योत्सारकल्पिकवाचकं प्रश्नयति-परमाणुपुद्गलस्य कतीन्द्रियाणि भवन्ति ? इति। ततः स एवंपृष्टः सन् किञ्चिन्मात्रपल्लव[illegible]ग्राहितया [illegible]बहिर्मुखः सन् चिन्तयति-यः परमाणुपुद्गल एकस्माल्लोकचरमान्तादपरं लोकचरमान्तमेकेनैव समयेन गच्छति स निश्चितं पञ्चेन्द्रियः, कुतोऽनीदृशस्यैवंविधा गमनवीर्यलब्धिः ? -इत्यभिसन्धाय प्रतिवचनमभिधत्ते-भद्र! परमाणुपुद्गलस्य पञ्चापीन्द्रियाणि भवन्तीति।

तत एवंविधं निर्वचनमवधार्य स पुरुषः प्रत्यावृत्य गतोऽन्ययूथिकानां सन्निधौ, कथितं सर्वमपि स्वरूपं तदग्रतः। ततश्चिन्तितं स्वचेतसि तैः-नूनमयं शारदवारिद इव बहिरेव केवलं गर्जति, अन्तस्तु तुच्छ एव-इति विमृश्य समागताः सम्भूय भूयांसं लोकमीलं कृत्वा वाचकान्तिकम्। क्षुभितोऽसौ स्वतुच्छतया तावन्तं समुदायमवलोक्य, सञ्जातस्वेदबिन्दुस्तबकितशरीर आक्षिप्तः साटोपमन्यतीर्थिकैः, ग्राहितो यथाऽभिमतं पक्षविशेषम्, न शक्नोति निर्वोढुं प्रश्नितो दुस्तराणि प्रश्नोत्तराणि, न जानीते लेशतोऽपि प्रतिवक्तुम्। ततः कृतो मिथ्यादृष्टिभि 'जितं जितमस्माभिः' इत्युत्कृष्टिकलकलः, प्रादुर्भूतं प्रवचनमालिन्यम्, मुकुलितानि श्रमणोपासकवदनकमलानि, विप्रतिपन्ना यथाभद्रकादय इति॥

अथ गाथाक्षरार्थ-पूर्वं कैश्चिद् वाचकैरन्ययूथिकाः "मलिय" त्ति मानमर्दनेन मर्दिताः। तत उत्सारवाचके आगते सति 'प्रतिमर्दयन्ति' प्रत्यावृत्या मानमर्दनं कुर्वन्ति। कथम् ? इत्याह- "पडिलेह" इत्यादि। तैरन्यतीर्थिकैः प्रत्युपेक्षकः पुरुषः प्रेषितः। ततः स आगत्य पृष्टवान्- 'पुद्गलस्य' परमाणोः कतीन्द्रियाणि ? । तेन च प्रत्युक्तम्-पञ्चेति। ततस्तैर्बहुजनमध्ये स वाचको वादे निरुत्तरीकृतः। एवम् 'अपभ्राजना' लाघवं तीर्थस्य भवति। तत्र चाभिनवधर्मणां चेतसि विकल्प उपजायते-यदि नाम वाचकोऽप्ययं न शक्नोति निर्वचनमर्पयितुं तद् नूनमेतेषां तीर्थकरेणैव न सम्यग् वस्तुतत्त्वं परिज्ञातम्, अन्यथा कथमेष एवंविधेऽर्थे व्यामुह्येत ?-इति विपरिणामतो मिथ्यात्वगमनं भवेत्॥ भावितं मिथ्यात्वद्वारम्। अथ संयमविराधनां भावयति-

[भा.७१८] जीवा-ऽजीवे न मुणइ, अलियभया साहए दग-मिताई।
करणे अ विवच्चासं, करेइ आगाढऽनागाढे॥

वृ- जीवाश्चाजीवाश्च जीवा-ऽजीवाः, तानसौ वाचनामात्ररूपेणोत्सारकल्पेनानुयोगमवगाह्यमानो वैविक्त्येन 'न मुणति' न जानीते, तदपरिज्ञानाच्च कुतः संयमसद्भावः ? तदुक्तं परमर्षिभिः-

जो जीवे वि न याणेइ, अजीवे वि न याणई।
जीवा-ऽजीवे अयाणंतो, कह सो नाहिइ संजमं ?॥

तथा अलीकम्-असत्यं तद्भयाद् दक-मृगादीन् कथयति। किमुक्तं भवति ?-स उत्सार कल्पिकः पल्लवमात्रग्राहितया 'सत्यमेव भाषितव्यम्, नासत्यम्' इति कृत्वा उदकार्थिनां 'नदी-तडागादौ पानीयमस्ति ? नास्ति वा ?' इति पृच्छताम् 'अलीकं मा भूत्' इति कृत्वा 'विद्यते नद्यादौ जलम्' इति कथयति, मृगयाप्रस्थितानां च व्याधानां 'दृष्टं मृगवृन्दम् ? न वा ?' इति पृच्छतामलीकभयादेव 'दृष्टम्' इति कथयति, आदिशब्दात् शूकरादिपरिग्रहः; न पुनर्जानीते

यथा-"सच्चा वि सा न वत्तव्वा, जओ पावस्स आगमो" त्ति; ततश्च जलगतसूक्ष्मजन्तुजातस्य मृगादीनां वा यद् व्यपरोपणं ते करिष्यन्ति तत् सर्वमुत्सारकल्पकारकः प्राप्नोति। तथा 'करणे' चारित्रे उत्सर्गा-ऽपवादविधिमजानन् यद् विपर्यासं करोति, तद्यथा-'आगाढे' ग्लानादिकार्ये 'अनागाढं' त्रिकृत्वः परिभ्रमणादिलक्षणम्, अनागाढे वा 'आगाढं' ग्लानादिकार्ये 'अनागाढं' त्रिकृत्वः परिभ्रमणादिलक्षणम्, अनागाढे वा 'आगाढं' सद्यःप्रतिसेवनात्मकं करोति। एषा सर्वाऽपि संयमविराधना ॥ अथ योगविराधनामाह-

[भा.७१९] तुरियं नाहिज्जंते, नेव चिरं जोगजंतिता होंति।
लद्धो महंतसद्दो, त्ति केइ पासाइँ गेण्हंति ॥

वृ- 'अनुज्ञातोऽस्माकं गुरुभि' सकलोऽपि श्रुतस्कन्धः, ततः किमनेन पठितेन कार्यम्?' इति कृत्वा ते शिष्याः 'त्वरितं' शीघ्रं नाधीयते, नैव च ते चिरं योगैः-श्रुताध्ययननिबन्धनतपोविशेषैः यन्त्रिताः-नियमिता भवन्ति, एकदिनेनापि प्रभूतसूत्रार्थवाचनानुज्ञाप्रदानात्। तथा 'लब्धोऽस्माभि 'गणिरयम्, वाचकोऽयम्' इति महान् शब्दः, ततः- कुतो हेतोर्वयमत्राऽऽचार्यसन्निधौ निष्फलं तिष्ठामः ?' इति परिभाव्य 'केचिद्' गुरुचरणपर्युपासनापरिभग्नाः पार्श्वानि गृह्णन्ति, पार्श्वतो ग्रामेषु यथास्वेच्छं विहरन्तीति भावः ॥

[भा.७२०] कमजोगं न वि जाणइ, विगईओ का य कत्थ जोगम्मि।
अन्नस्स वि दिंति तहा, परंपरा घंटदिट्ठंतो ॥

वृ- "कमजोगं" इति प्राकृतत्वाद् व्यत्यासेन पूर्वापरनिपातः, ततो योगक्रमं 'नापि' नैव जानाति, यथा-अस्मिन् योगे, एतावन्त्याचाम्लानि इयन्ति निर्विकृतिकानि इत्थं वा उद्देशादयः क्रियन्ते। तथा विकृतयः काः कुत्र योगे कल्पन्ते ? न वा ? इत्येवमपि न जानाति, यथा-कल्पिकाकल्पिक-निशीथादियोगेषु न विसृज्यन्ते काश्चनापि विकृतयः, व्याख्याप्रज्ञप्तियोगेषु पुनरवगाहिमविकृतिर्विसृज्यते, दृष्टिवादयोगेषु तु मोदकः। तथा चाऽऽहाऽस्यैव कल्पाध्ययनस्य चूर्णिकृत्- जहा कप्पियाकप्पिय-निसीहाईणं विगईओ न विसज्जिज्जंति, पन्नत्तीए ओगाहिमगविगई विसज्जिज्जइ, दिट्ठीवाए मोदगो त्ति। निशीथचूर्णिकृत् पुनराह- जोगो दुविहो-आगाढो अनागाढो वा। आगाढतरा जम्मि जोगे जयणा सो आगाढो, यथा-भगवतीत्यादि। इतरो अनागाढो, यथा-उत्तराध्ययनादि। आगाढे ओगाहिमगवज्जाओ नव विगईओ वज्जिज्जंति, दसमाए भयणा। महाकप्पसुए एक्का परं मोदगविगई कप्पइ। सेसा आगाढेसु सव्वविगईओ न कप्पंति। अनागाढे पुन दस वि विगईओ भइयाओ, जओ गुरुअणुन्नाए कप्पंति अननुन्नाए पुन न कप्पंति त्ति।

एवंविधां योग्यव्यवस्थामजानन् यदसौ विराधयति सा योगविराधना। तथा "अन्नस्स वि दिंति तह" त्ति ते उत्सारकल्पिकाः 'अन्यस्यापि' स्वशिष्यादेः 'तथैव' उत्सारकल्पेनैव वाचना प्रयच्छन्ति, सोऽप्यपरेषां तथैव इत्येवम् उत्सारकल्पे प्रवाहतः क्रियमाणे परम्परया सूत्रार्थव्यवच्छेदः प्राप्नोति। घण्टादृष्टान्तश्चात्र वक्तव्यः ॥ तमेवोपनययुक्तं गाथात्रयेणाह-

[भा.७२१] उच्छुकरणोव कोट्ठुगपडणं घंटा सियालनासणया।
विगमाई पुच्छ परंपराए नासंति जा सीहो ॥

[भा.७२२] पडियरिउं सीहेणं, स हओ आसासिया भिगगणा य।

इय कइवयाइँ जाणइ, पयाणि पढमिल्लुगुस्सारी ॥

[भा.७२३] किं पि त्ति अन्नपुट्ठो, पच्चंतुस्सारणे अवोच्छित्ती ।
गीताऽऽगमण खरंटण, पच्छित्तं कित्तिया चेव ॥

वृ-अत्र कथानकम्-एगस्स गाहावइस्स उच्छुवाडो बहुसइओ निप्फन्नो, तं सियाला पइसरित्ता खाइंति । ताहे सो उच्छुसामी सियालगहणनिमित्तं तस्स उच्छुवाडस्स परिपेरंतेसु चउद्दिसिं खाइयं खणावेइ । तत्थ एगो सियालो पडिओ । सो वराओ गिण्हित्ता कन्ने पुच्छं च छिंदित्ता दीवियचम्मेण वेढित्ता घंटं आबंधित्ता विसज्जिओ । सो नासंतो सियालेहिं दिट्ठो दूरओ । ते सियाला 'अन्नारिसो' त्ति काउं भएण पलाया । ते विरूएहिं दिट्ठा, पुच्छिया-किं नासह ? त्ति । तेहिं कहियं-अपुव्वं सरं करेमाणं किं पि अपुव्वं भूयं एति । ते वि भएण पलायंता वरक्खूहिं दिट्ठा, पुच्छिया । तेहिं कहियं-किं पि किर एति, तुरियं पलायह । ते वि पलायंता सीहेण पुच्छिया । कहियं तेहिं । सीहो चिंतेइ-मा पाणियसद्देण उवाहणाओ मुयामि, गवेसामि ताव । तेण सणियं पडियरियत्ता 'सियालो' त्ति हओ घंटासियालो 'कीस आउलीकया मो ?' त्ति रोसेणं । ते अ सियालादयो मिया आसासिया-मा भायह, हओ सो वराओ मए दीवियचम्मोणद्धो घंटासियालो । केण वि अवराहे घेत्तुं तहाकओ ।

एस दिट्ठंतो ॥ अयमत्थोवणओ-जस्स तं उस्सारिज्जति सो जावतिएहिं दिवसेहिं जोगो समप्पइ तावति दिवसे कतिवयाणं आलावगाणं किंचि सुत्तफासियं सिक्खित्ता पच्चंतं गंतूण गच्छपागड्डितमं करेति, अन्नेसिं च उस्सारेति । ते वि उस्सारावेत्ता पत्तेयं गच्छपागड्डित्तणेणं ठाएत्ता सिस्साणं पडिच्छयाण य उस्सारकप्पं करेंति-अम्हे किर सुत्तत्थाणं अव्वोच्छित्तिं करेमो । तत्थ जो सो पढमिल्लुगउस्सारी सो जहा ते सियाला तस्स घंटासियालस्स आकितिं घंटासद्दं च जाणंति, न उण 'को एस ? किं वा एयस्स गलए ? कस्स वा एस सद्दो ?' एवं सो पढमिल्लुगुस्सारी किंचि जाणइ न सव्वं सब्भावं । जो एयस्स पासे उस्सारकप्पं करेत्ति सो कइ वि आलावए जाणेति न पुन अत्थं । सो सिस्सेणं पुच्छिओ भणति-किं पि केरिसो वि अत्थि एयस्स अत्थो । सेसा कतिवए वि आलावए न कहंति, ते सिस्सेहिं पुच्छिज्जंता भणंति-न याणामो, अत्थि पुन किं पि एयं तस्स तुब्भे जोगं वहह । एवं ते अप्पाणं च परं च नासिंता विहरंति । अह अन्नया गीयत्था आयरिया आगया, तेहिं ते उवालद्धा, गच्छा य अच्छिन्ना, गच्छेसु य पवेसिया सव्वे । जम्हा एते दोसा तम्हा न उस्सारेयव्वं । केत्तिया ते भविस्संति जे एवं निहोडिहिंति ? ॥

गाथात्रयस्याप्यक्षरगमनिका-इक्षवः क्रियन्ते यत्र तत् 'इक्षुकरणम्' इक्षुवाटस्तस्य रक्षणार्थम् 'उवकः' गर्त्ता स्वातिकेत्यर्थः सा खानिता । तत्र च क्रोष्टु-शृगालस्य पतनम् । ततो गृहपतिना गलके घण्टां बद्ध्वा मुक्तस्य तस्य दर्शनम् । शृगालानां नाशनम् । ततो वृकादीनां पृच्छा । ततः सर्वेऽपि परम्परया नश्यन्ति, यावत् सिंहः समागतः । तेन सिंहेन 'प्रतिजागर्य' निरूप्य 'सः' घण्टाश्च गालो हतः । शेषाः 'मृगगणाः' श्रृगाल-वृकादयः आश्वासिताः ॥ अयं दृष्टान्तः, अथ दार्ष्टान्तिकयोजनामाह-''इय कइवयाइं'' इत्यादि । 'इति' अमुनैव प्रकारेण प्रथमिल्लुकोत्सारी शिष्यः 'कतिपयानि पदानि' सूत्रालापकरूपाणि किञ्चिन्मात्रसूत्रस्पर्शकनिर्युक्तिमिश्रितानि जानीते । अस्य च समीपे योऽन्योऽधीते स कतिपयान् सूत्रालापकान् जानीते न पुनरर्थम् । तस्यापि पार्श्वे यः पठति स सूत्रालापकानपि नाऽऽकर्षति, अन्येन पृष्टः प्रतिभणति-अस्ति किमप्येतदङ्गोपाङ्गादिकं

श्रुतम्, तद् यूयमेतस्य योगमुद्वहतेति। एते च दुरधीतविद्यत्वात् प्रायः प्रत्यन्तग्राम एवार्धं लभन्ते, यत उक्तम्-

पाएण खीणदव्वा, धणियऽपरद्धाकयाराहा य।
पर्यंतं सेवंती, पुरिसा दुरहीयवेज्जा या॥

अतः प्रत्यन्तं गत्वा सूत्रार्थयोरुत्सारणं कुर्वन्ति, वदन्ति च-वयं सूत्रार्थयोरव्यवच्छित्तिं कुर्म इति। अन्यदा च तत्र प्रत्यन्तग्रामे गीतार्थानामागमनम्। तैरुत्सारकल्पिकानां खरण्टनम्, यथा-आः! किमेवं सूत्रार्थयोः परिपाटिवाचनां परित्यज्य सकलश्रुतधर्मधूमकेतुकल्प-मुत्सारकल्पमाचरन्त आत्मानं च परं च नाशयत इत्यादि। ततश्च गच्छानाच्छिद्य तेषामपुनःकरणेन प्रतिक्रान्तानां प्रायश्चित्तं दत्तम्। "कित्तिय"त्ति कियन्त एतादृशा गीतार्था भविष्यन्ति य एवं शिक्षयिष्यन्ति? । तस्मात् प्रथमत एव नोत्सारणीयम्॥ भाविता सप्रपञ्चं योगविराधना। अथाऽऽत्मा परश्च परित्यक्त इति पदद्वयं भावयति-

[भा.७२४] अप्पत्ताण उ दिंतेण अप्पओ इह परत्थ वि य चत्तो।
सो वि अ हु तेन चत्तो, जं न पढइ तेन गव्वेणं॥

वृ- 'अपात्राणाम्' अयोग्यानां यद्वा 'अप्राप्तानां' विवक्षितानुयोगभूमिमनुपागतानां श्रुतं ददता उत्सारकल्पकृता आत्मा इह परत्रापि च त्यक्तः, तत्रेह तद्वाचनादानसमुद्भूतापयशः प्रवादादिना परत्र तु बोधिदुर्लभत्वादिना। तथा सोऽपि शिष्यः 'हु' निश्चितं 'तेन' आचार्येण परित्यक्तः, यत् तेन गणि-वाचकत्वादिगर्वेणाधिष्ठितः सन् न पठति, पठनाभावे हि कुतो यथावत् चरण-करणप्रतिपालनम्? इति भावः। प्रवचनमपि तेन परित्यक्तम्, कथम्? इति चेद् उच्यते-तस्य वाचकत्वप्रवादं श्रुत्वा केचित् सहृदया वाग्मिनो बहुविधग्रन्थदृश्वानस्तत्परीक्षां कर्तुकामा यदा कमपि सिद्धान्तार्थं प्रश्नयेयुरिति तदाऽसावप्रबुद्धत्वाद् न किमपि तान्प्रति निर्वचनमभिधआयउणईशः। ततस्ते चिन्तयन्ति-अहो! परिफल्गुप्रवचनममीषाम्, यत्रेदृशा अपि वाचकपदमध्यारोप्यन्ते। ततः केचिद् देशविरतिं केचित् सर्वविरतिं प्रतिपित्सवो यदि विपरिणमन्ते ततः प्रवचनं परित्यक्तमवसातव्यम्॥ किञ्च-

[भा.७२५] अज्जस्स हीलणा लज्जणा य गारविअकारणमणज्जे।
आयरिए परिवाओ, वोच्छेदो सुतस्स तित्थस्स॥

वृ-आर्य-सुजनः सुमानुषमित्येकोऽर्थः, तस्य यथावदागमार्थावबोधविकलस्य वाचकनाम्ना हीलना भवति-अहो! हीलेयं मम यदहं 'वाचक! वाचक!'इत्यभिधीये। तथा "लज्जण"त्ति 'वाचकमिश्राः! कथयत कथमयमालापकः सिद्धान्ते विद्यते? को वाऽस्याऽऽलापकस्यार्थः?' इति केनापि पृष्टस्य व्याकरणं दातुमशक्नुवतो भृशं लज्जा भवति; ततश्च श्यामवदनः कुब्जीकृतकन्धरश्चिन्तया विमनायमानोऽवतिष्ठते। 'अनार्ये' अनार्यस्य पुनस्तदेव 'गौरव्यकारणं' गर्वनिबन्धनं जायते-अहो! वयमेव निस्सीमप्रतिष्ठापात्रं जगति वर्तामिह यदेवं वाचक-पदवीमध्यारोहाम इति। इत्थं परः परित्यक्तो मन्तव्यः। आचार्ये च परिवादो भवति, तथाहि-स बहुश्रुताचार्यपार्श्वादुत्सारकल्पं कारयित्वा गतः क्वापि नगरादौ, पृष्टश्च कैश्चिन्निष्णातैः किमप्यर्थपदं यावन्न किञ्चिज्जानीते, ततस्ते ब्रुवते-यैरेष मूर्खमण्डलीमध्यलब्धरेख आचार्यपदभाजनमकारि

तेऽप्याचार्या एवंविधा एव भविष्यन्तीत्यात्मा परित्यक्तः । तथा प्रवचनमपि तेनाऽऽचार्येण परित्यक्तम्। कथम्? इत्याह-श्रुतस्योत्सारकल्पवशादनधीयमानस्य व्यवच्छेदः प्राप्नोति, श्रुते च व्यवच्छिद्यमाने ज्ञानाभेव च दर्शन-चारित्रयोरप्यभावात् तीर्थस्यापि व्यवच्छेदः प्राप्नोति ॥ यदि नाम तीर्थं व्यवच्छिद्यते ततः को दोषः? इत्याह-

[भा.७२६] पवयणवोच्छेए वट्टमाणो जिनवयणबाहिरमईओ ।
बंधइ कम्मरय-मलं, जर-मरणमणंतयं घोरं ॥

वृ- प्रवचनं-तीर्थं तस्य व्यवच्छेदे हेतुरूपतया वर्त्तमानः, कथम्भूतोऽसौ? इत्याह- 'जिनवचनबाह्यमतिकः' सर्वज्ञशासनबहिर्मुखशेमुषीकः, न खल्वनीदृशस्य प्रवचनव्यवच्छेदं कर्त्तुं मतिरुत्सहते, स एवम्भूतो भवति 'कर्मरजो-मलं' रजःशब्देन बद्धावस्थं मलशब्देन निकाचितावस्थं कर्म परिगृह्यते, रजश्च मलश्चेति रजो-मलम्, कर्मैव रजोमलं कर्मरजो-मलम्, निकाचिता-ऽनिकाचितावस्थं कर्म यथाध्यवसायस्थानमनुबध्नातीत्यर्थः। कथम्भूतम्? अनन्तानि जरा-मरणानि यस्मात् तद् अनन्तजरा-मरणम्, गाथायां प्राकृतत्वादनन्तशब्दस्य परनिपातः, 'घोरं' रौद्रं शारीर-मानसदुःखोपनिपातनिबन्धनत्वादिति। तथा षड्जीवनिकायानप्यगीतार्थतयाऽसौ विराधयतीति जीवनिकाया अपि तेनोत्सारकेण परित्यक्ता अवसातव्याः। यत एते दोषास्ततो नोत्सारणीयम् ॥ अथ क्रमेणैवाधीयमाने सूत्रे के गुणाः? उच्यते-

[भा.७२७] आणा विकोवणा बुज्झणा य उवओग निज्जरा गहणं ।
गुरुवास जोग सुस्सूसणा य कमसो अहिज्जंते ॥

वृ- 'क्रमशः' क्रमेणाधीयमानेऽध्याप्यमाने च सूत्रे एते गुणाः। तद्यथा-आज्ञा तीर्थकृतां शिष्येणाऽऽचार्येण चाऽऽराधिता भवति। "विकोवण"त्ति योगोद्वहनविधौ गच्छसामाचार्यां च 'विकोपना' व्युत्पादना शिष्यस्य कृता भवति; ततश्च स्वयं सामाचारीवैतथ्यं न करोति, अपरान् कुर्वतो निवारयति। तथा गच्छमध्ये द्वितीयपौरुष्यामनुयोगः प्रवर्त्तते तदाकर्णनाद् मन्दबुद्धेरपि 'बोधनं' जीवा-ऽजीवादितत्त्वेषु प्रबुद्धता सम्पद्यते। बुध्यमानस्य च श्रुते निरन्तरमुपयोगो जायते। निरन्तरोपयुक्तस्य च महती निर्जरा, प्रतिसमयसङ्ख्येयभवोपात्तकर्मपरमाणुपटलापगमात्। उक्तञ्च-

कम्ममसंखेज्जभवं, खवेइ अणुसमयमेव आउत्तो ।
अन्नयरम्मि वि जोगे, सज्झायम्मी विसेसेणं ॥

नित्योपयुक्तस्य च शीघ्रं सूत्रार्थयोर्ग्रहणं भवति। तथा गुरुवासेन-गुरुकुलवासेन सार्द्धं योगः-सम्बन्धो भवति, अन्यथा क्रमेण सूत्रार्थाध्ययनायोगात्। यद्वा पदद्वयमिदं पार्थक्येन व्याख्यायते- गुरूणामन्तिके वासो गुरुवासः स सेवितो भवति, योगाश्च विधिवदाराधिता भवन्ति। आचार्यादीनां शुश्रूषा विनय-वैयावृत्यादिना कृता भवति। यत एते गुणास्ततः क्रमेणैवाध्येतव्यम्॥ उपसंहरन्नाह-

[भा.७२८] इय दोस-गुणे नाउं, उक्कम-कमओ अहिज्जमाणाणं ।
उभयविसेसविहिन्नू, को वंचणमब्भुवेज्जाहि ॥

वृ- इतिशब्द एवमर्थे। एवमुत्क्रमतः क्रमतश्चाधीयानानाम् उपलक्षणत्वादध्यापयतां च

यथाक्रमं दोषान् गुणाँश्च ज्ञात्वा 'उभयविशेषविधिज्ञः' क्रमा-ऽक्रमाध्ययनगुण-दोषविभागवेदी आचार्य शिष्यो वा को नामोत्सारकल्पस्य करणेन कारापणेन वा आत्मनो वञ्चनम् 'अभ्युपेयाद्' अङ्गीकुर्यात् ? न कश्चिदित्यर्थः । यतश्चैवमतोऽनुपयोगित्वाद् नास्त्युत्सारकल्पिक इति ॥

अत्र पुनरपि परः प्राह-

[भा.७२९] जइ नत्थि कओ नामं, असइ हु अत्थे न होइ अभिहाणं ।
तम्हा तस्स पसिद्धी, अभिहाणपसिद्धिओ सिद्धा ॥

**वृ-** यदि नास्त्युत्सारकल्पिकः ततः कुतोऽस्य 'नाम' अभिधानमिदमायातम् ? (न कुतश्चिदित्यर्थः) । अनेन प्रतिज्ञार्थ सूचितः । कुतः ? इत्याह- 'असति' अविद्यमाने 'अर्थे' अभिधेये हु [illegible] हेत्वर्थे [illegible] नं किन्तु सत्येवेति । अनेन च हेत्वर्थ उपात्तः । यतश्चैवं तस्मात् 'तस्य' अर्थस्य प्रसिद्धिरत्राभिधानप्रसिद्धित एव 'सिद्धा' प्रतिष्ठितेति निगमनार्थ । दृष्टान्तोपनयौ स्वयमेवाभ्यूह्य वाच्यौ । अत्र प्रयोगः-अस्त्युत्सारकल्पिकः, अभिधानवत्त्वात्, घटादिवत्, यद् यद् अभिधानवत् तत् तद् अस्ति, यथा घटपटादि, अभिधानवच्चेदम्, तस्मादस्तीति ॥ इत्थं परेण स्वपक्षे समर्थिते सति प्रतिविधीयते-भो भद्र मुग्धप्रमाणिक ! अनैकान्तिकोऽयं भवता हेतुरुपन्यस्तः । तथा चाह-

[भा.७३०] जइ सव्वं वि य नामं, सअत्थगं होज्ज तो भवे दोसो ।
जम्हा सअत्थगत्ते, भजियं तम्हा अनेगंतो ॥

**वृ-** यदि सर्वमपि नाम सार्थकं भवेत् ततो भवेदस्माकं 'दोषः' उत्सारकल्पिकस्यास्तित्वा-पत्तिलक्षणः । यस्मात् पुनः सार्थकत्वे नाम 'भक्तं' विकल्पितम्, स्यात् सार्थकं स्यान्निरर्थकमिति भावः । तत्र सार्थकं जीवा-ऽजीवादिकम्, निरर्थं खरविषाणा-ऽऽकाशकुसुम-कूर्मरोमवन्ध्या-पुत्रादिकम् । यत एवं तस्मादनेकान्तोऽयम्-यदसद्भूतेऽर्थे न भवत्यभिधानम् । इदमत्र तात्पर्यम्-अभिधानस्य भावा-ऽभावयोरुभयोरपि सद्भावादभिधानवत्त्वलक्षणो हेतुर्यथा उत्सारकल्पिकस्या-स्तित्वं साधयति तथा नास्तित्वमपि साधयति, उभयत्रापि साधारणत्वात्; अतः साधारण-रूपानैकान्तिकदोषदुष्टोऽयं हेतुरिति ॥

इत्थं व्यभिचरितपक्षतया विलक्षीभूतः परः परित्यज्य यदृच्छाजल्पमाचार्यवचनेव प्रमाणीकुर्वन्नित्यमाह-भगवन् ! अभ्युपगतं मयाऽनन्तरोक्तयुक्तितोऽभिधानस्य सार्थकत्वमनर्थकं चेति, परमिदमुत्सारकल्पिकाभिधानं किं सार्थकम् ? आहोस्विद् निरर्थकम् ? इति विवर्तते संशयावर्त्तगर्त्तायामस्माकं चेतः, तदिदानीमुद्भियतां निजवाग्वरत्रयेति उच्यते-

[भा.७३१] निक्कारणम्मि नामं, पि निच्छिमो इच्छिमो अ कज्जम्मि ।
उस्सारकप्पियस्स उ, चोयग ! सुण कारणं तं तु ॥

**वृ-** वत्स ! 'निष्कारणे' कारणाभावे नामापि नेच्छामो वयम् किं पुनरर्थम् ? । 'कार्ये' प्रयोजने तु प्राप्ते इच्छाम उत्सारकल्पिकस्य नामाप्यर्थमपि । 'तत्तु' कारणं हे नोदक ! 'शृणु' निशमय ॥ तत्र तिष्ठतु तावत् कारणम्, कर्तुरधीनाः सर्वा अपिक्रिया इति ज्ञापनार्थं प्रथमत उत्सारकारकमाह-

[भा.७३२] आयार-दिट्ठिवायत्थजाणए पुरिस-कारणविहिन्नू ।

संविग्गमपरितंते, अरिहइ उस्सारणं काउं ॥

वृ- आचारः-प्रथममङ्गं दृष्टिवादः-चरं तयोरर्थं जानातीत्याचार-दृष्टिवादार्थज्ञः । इहाऽऽचारदृष्टिवादग्रहणं वक्ष्यमाणकारणैरनयोरेवोत्सारणीयत्वादित्येवमर्थम् । "पुरिस-कारणविहिन्नू" इति पुरुष-कारणविधिज्ञो नाम 'किमयं पुरुष उत्सारकल्पमर्हति ? न वा ? येन च कारणेनोत्सार्यते तदस्ति ? न वा ?' इत्येवंविधविधिवेदी तथा 'संविग्नः'' मोक्षाभिलाषी 'अपरितान्तः' सूत्रार्थग्रहणायामहोरात्रमप्यपरिश्रान्त एवंविध उत्सारणं कर्तुमर्हति, एवंगुणोपेत एवोत्सारकल्पं करोतीत्यर्थः ॥ अथ यस्योत्सारकल्पः क्रियते तस्य गुणानाह-

[भा.७३३] अभिगए पडिबद्धे, संविग्गे अ सलद्धिए ।
अवट्ठिए अ मेहावी, पिबुज्झी जोअकारए ॥

वृ-अभिगतः प्रतिबद्धः संविग्नश्च सलब्धिकः अवस्थितश्च मेधावी प्रतिबोधी योगकारकः, ईदृग्गुणोपेत उत्सारकल्पयोग्य इति निर्युक्तिश्लोकसमासार्थ ॥ अथैनमेव विवृणोति-

[भा.७३४]सम्मत्तम्मि अभिगओ, विजाणओ वा वि अब्भुवगओ वा ।
सज्झाए पडिबद्धो, गुरूसु नीएल्लएसुं वा ॥

वृ- सम्यक्त्वे य आभिमुख्येन गतः-प्रविष्टः सोऽभिगत उच्यते, यो वा जीवादिपदार्थानां 'विज्ञायकः' विशेषेण ज्ञाता सोऽभिगतः, यद्वा यः 'अभ्युपगतः' 'यावज्जीवं मया गुरुपादमूलं न मोक्तव्यम्' इति कृताभ्युपगमः सोऽभिगतः । यः पुनः 'स्वाध्याये' परावर्त्तना-ऽनुप्रेक्षादौ सततमायुक्तः, गुरुषु वा स्थिरममत्वानुबन्धः, 'निजकेषु' भ्रातृ-भ्रातृव्यादिषु वा सम्बन्धिषु प्रव्रज्याप्रतिपन्नेषु सञ्जातप्रेमस्थेमा, एष त्रिविधोऽपि प्रतिबद्ध उच्यते ॥

[भा.७३५] संविग्गो दव्व मिओ, भावे मूलुत्तरेसु उ जयंतो ।
लद्धी आहाराइसु, अनुओगे धम्मकहणे य ॥

वृ- संविग्नो द्विधा-द्रव्यतो भावतश्च । 'द्रव्ये' द्रव्यसंविग्नो मृगः, सदैव सर्वतोऽपि चकितत्वात् । 'भावे' भावसंविग्नः 'मूलोत्तरेषु तु' मूलगुणोत्तरगुणेषु पुनः 'यतमानः' उद्यमं विदधानः साधुर्मन्तव्यः, सदैव संसारापायचकितत्वात् । तथा लब्धिराहारादिषूत्पादयितव्येषु अनुयोगे धातव्ये धर्मकथने च विधेये यस्य स सलब्धिक इति ॥

[भा.७३६] लिंग विहारेऽवट्ठिओ, मेरामेहावि गहणओ मइओ ।
पडिबुज्झइ जं कत्थइ, कुणइ अ जोगं तदट्ठस्स ॥

वृ-अवस्थितो द्विधा-लिङ्गे विहारे च । लिङ्गावस्थितः स्वलिङ्गं न परित्यजति, विहारावस्थितः संविग्नविहारं विहाय न पार्श्वस्थादिविहारमाद्रियते । मेधावी द्विधा-ग्रहणमेधावी मर्यादामेधावी च । उभावपि वक्ष्यमाणस्वरूपौ । तत्र मर्यादामेधाविन उत्सारकल्पः क्रियते । स पुनर्ग्रहणे मेधावी वा स्यादमेधावी वा, द्विविधस्यापि कारणविशेषे उत्सार्यत इति ग्रहणतो मेधावी 'भक्तः' विकल्पितः । तथा यत् 'कथ्यते' अभिधीयते तत् सर्वं यः प्रतिबुध्यते स प्रतिबोद्धुं शीलमस्येति प्रतिबोधी । यस्तस्य सूत्रमुत्सार्यते तदर्थस्य ग्रहणे 'योगं' व्यापारं यः करोति न कदाचित् प्रमाद्यति स योगकारक इति ॥ तदेवं व्याख्याता "अभिगए" इत्यादि गाथा । अथोत्सारकल्पिकस्यैवापराचार्यपरिपाट्या गुणानाह-

[भा.७३७] अभिगय थिर संविग्गे, गुरुअमुई जोगकारए चेव ।
दुम्मेहसलद्धीए, पडिबुज्झी परिणय विणीए ।।

वृ- 'अभिगतः' प्रबुद्धः । 'स्थिरः' सम्यग्दर्शनादक्षोभ्यः । 'संविग्नः' प्रागुक्तः । 'गुर्वमोची' निष्ठुरं निर्भर्त्सितोऽपि गुरूणाममोचनशीलः । 'योगकारकः' पूर्ववत् । दुर्मेधा अपि यः सलब्धिकः। 'परिणतः' परिपक्ववयाः परिणामको वा । 'विनीतः' अभ्युत्थानादिविनयोद्यतः ।।

[भा.७३८] आयरियवन्नवाई, अनुकूले धम्मसहिए चेव ।
एतारिसे महाभागे, उस्सारं काउमरिहइ ।।

वृ- 'आचार्यवर्णवादी' गुरूणां गुणोत्कीर्त्तनकारी । 'अनुकूलः' आचार्याणामन्येषां वा पूज्यानां वैयावृत्यादिना हितकारी । धर्मे-तपः-संयमात्मके चारित्रधर्मे श्रद्धिकः-श्रद्धावान् अत्यन्ताभिलाषुकः । चः समुच्चये । एवः पादपूरणे । 'एतादृशः' एवंविधगुणोपेतः 'महाभागः' शिष्य उत्सारं कर्त्तुमर्हति, उत्सारकल्पस्य योग्यो भवतीत्यर्थः ।।

अनीदृशानुत्सारयितुः प्रायश्चित्तमाह-

[भा.७३९] अनभिगयमाइआणं, उस्सारिंतस्स चउगुरू होंति ।
उग्गहणम्मि वि गुरुगाऽकालमसज्झायऽवक्खेवे ।।

वृ-आदेशद्वयेनापि ये गुणाः पूर्वमुक्तास्तद्विपरीता येऽनभिगतादयः, तद्यथा-अनभिगतः अप्रतिबद्धः असंविग्नः अलब्धिकः अनवस्थितः अमर्यादामेधावी अप्रतिबोधी अयोगकारकः अपरिणतः अविनीतः आचार्यावर्णवादी अननुकूलः अधर्मश्रद्धालुः । एतेषाम् 'उत्सारयतः' उत्सारकल्पं कुर्वत आचार्यस्य प्रत्येकं चतुर्गुरवः प्रायश्चित्तम् । "उग्गहणम्मि वि गुरुग" त्ति सूत्रमर्थं वा झगित्येवावगृह्णातीत्यवग्रहणः, "नन्द्यादिभ्योऽनः" इति कर्त्तरि अनप्रत्ययः, ग्रहणमेधावीत्यर्थः, तस्य यदि निष्कारणमुत्सारयति तदाऽपि चत्वारो गुरुकाः । अथ किमर्थं मेधाविनो नोत्सार्यन्ते ? उच्यते-यतोऽसौ प्रज्ञालत्वादेवाऽऽनुपूर्व्यैव पाठ्यमानो झगित्येव विवक्षितमुत्सारणीयं श्रुतं प्राप्स्यति, ततः को नाम तस्योत्सारकल्पकरणेऽभ्यधिको गुणः,? । अथवा "उग्गहणम्मि वि" त्ति यस्य आचारान्तर्गतवस्त्रैषणाध्ययनस्योपक्रमणनिमित्तमुत्सार्यते तस्य यद्यप्युत्सारकल्पसमकालमेव सर्वमपि सूत्रमर्थं वाऽवगृह्णाति, अपिशब्दाद् मन्दमेघस्तया यद्यपि नावगृह्णाति, तथाऽप्यवग्रहणेऽ-नवग्रहणे वाऽकालोऽस्वाध्यायिकं व्याक्षेपश्च न कर्त्तव्यः । यदि करोति तदा चत्वारो गुरुकाः । एतद्याकालादिकमुपरिष्टाद् भावयिष्यते ।

अथवा "उग्गहणम्मि वि गुरुग" त्ति अन्यथा व्याख्यायते- योऽवग्रहणे समर्थ उत्तममेघावी, अपिशब्दः सम्भावनायाम्, किं सम्भावयति ? यावन्मात्रं सूत्रं तस्योद्दिश्यते तावदशेषमप्यर्थेन युक्तमवगृह्णाति, यो वा वैरस्वामिवत् पदानुसारिप्रतिभो भूयस्तरमप्यनुसरति तस्योत्सारणीयम्। अथ नोत्सारयति तदा चतुर्गुरुकाः । तत्रापि यावदुत्सारकल्पः क्रियते तावदकालोऽस्वाध्यायिकं व्याक्षेपश्च न कर्त्तव्यः । यदि करोति तदाऽपि चतुर्गुरुकाः ।। अथोत्सारकल्पकरणे यत् प्राक् कारणं सांन्यासिकीकृतं तद् दर्शयति-

[भा.७४०] गच्छो अ अलद्धीओ, ओमाणं चेव अनहियासा य ।
गिहिणो अ मंदधम्मा, सुद्धं च गवेसए उवहिं ।।

वृ- कस्याप्याचार्यस्य गच्छः सर्वोऽपि वस्त्र-पात्र-शय्योत्पादने अलब्धिकः, तत्र च क्षेत्रे स्वपक्षतः परपक्षतो वाऽवमानं विद्यते, ते च साधवः 'अनधिसहाः' शीतादिपरीषहान् सोढुमसमर्था, गृहस्थाश्च 'मन्दधर्माणः' तुच्छधर्मश्रद्धाका अप्रज्ञापिताः सन्तो न वस्त्रादि प्रयच्छन्ति, 'शुद्धं चोपधिं साधवो गवेषयेयुः' इति भगवतामुपदेशः, स च दुर्लभत्वाद् यादृशेन तादृशेन साधुना न लभ्यते, अत ईदृशे कार्ये लब्धिमान् दुर्मेधा अप्युत्सारकल्पं कृत्वा वस्त्रैषणाद्यध्ययनमुद्दिश्य कल्पिकः क्रियते ॥ ततश्च कल्पिकीकृतः सन् किं करोतु ? इत्याह-

भा. (७४१) हिंडउ गीयसहाओ, सलद्धि अह ते हणंति से लद्धिं ।
तो एक्कओ वि हिंडइ, आयारुस्सारियसुअत्थो ॥

वृ- असौ 'सलब्धिकः' लब्धिमान् 'गीतसहायः' गीतार्थसाधुसहितो वस्त्राद्युत्पादनार्थं हिण्डताम् । अथ 'ते' गीतार्थास्तस्य लब्धिमुपघ्नन्ति ततः 'एककोऽपि' असहायोऽपि 'आचारोत्सारितसूत्रार्थः' आचारान्तर्गतवस्त्रैषणादिसूत्रार्थमुत्सारकल्पकरणेन ग्राहितः सन् हिण्डते ॥ ननु च किं कोऽपि कस्यापि लाभान्तरायकर्मक्षयोपशमसमुत्थां लब्धिमुपहन्ति ? येनैवमुच्यते-ते गीतार्थास्तस्य लब्धिमुपघ्नन्ति इति, अत्रोच्यते- भोः भद्र ! किं न कर्णकोटरमुपागतं सुप्रतीतमपि भवतो ढण्ढणमहर्षेरलब्धिस्वरूपं येनैवमनभिज्ञ इव भवान् परिप्रश्नयति ? । यद्वाऽस्मिन्नेवार्थेऽपरो भवतः प्रत्यायनाय दृष्टान्तः प्रतिपाद्यते-

[भा.७४२] भिक्खु विह तण्ह वद्दल, अभागधेओ जहिं तहिं न पडे ।
दुग-तिगमाईभेदे, पडइ तहिं जत्थ सो नत्थि ॥

वृ- कोइ किर पंचसइओ सत्थो अडविं पवन्नो । तत्थ य एगो रत्तपडो निब्भग्गसिरसेहरो पंचण्ह वि सयाणं पुन्ने उवहणइ । सो अ सत्थो तण्हाए पारद्धो । दूरे अ अब्भवद्दलयं वासइ, तेसिं उवरिं न पडइ । ते दुहा भिन्ना । इयरो रत्तपडो पुव्विल्लाणं मज्झे मेलिओ । सव्वत्थ पडइ, जत्थ सो तत्थ न पडइ, जाव निव्वेडिओ एक्कओ जाओ । जत्थ सो तत्थ न पडइ । एवं एयारिसा परस्स पुन्ने उवहणंति ॥

अथ गाथाक्षरार्थः-भिक्षुरेकः सार्थेन सार्द्धं 'विहम्' अध्वानं प्रविष्ट इति शेषः । तत स्तृष्णया सार्थ प्रारब्धः । वार्द्दलं च वर्षितुमारब्धम् । यत्र तेषां मध्ये सोऽभागधेयो भिक्षुस्तत्र न वर्षं पतति। ततः 'द्विक-त्रिकादिना' द्विधा-त्रिधादिना प्रकारेण सार्थस्य भेदः कृतः । तस्मिंश्च कृते यत्र स भिक्षु पञ्चशतिकस्यापि सार्थस्य पुण्यान्युपहतवान् एवमन्येऽप्येवंविधा अपरेषां लब्धिमतामपि स्वस्वकर्मक्षयोपशमसमुत्थां लब्धिमुपघ्नन्तीति ॥अथासौ कथं वस्त्राण्युत्पादयति ? इत्युच्यते-

[भा.७४३] भिक्खं वा अडंतो, बिईय पढमाए अहव सव्वासु ।
सहिओ व असहिओ वा, उप्पाए वा पभावे वा ॥

वृ-भिक्षामटन् वस्त्राण्युत्पादयति । वाशब्दो वक्ष्यमाणपक्षापेक्षया विभाषायाम् । अपिशब्दः सम्भावनायाम्, सम्भाव्यते अयमपि प्रकार इति । अथ न शक्नोति युगपद् भिक्षामप्यटितुं वस्त्राण्यप्युत्पादयितुम्, व्यतिक्रामति वा वेला भैक्षस्य वस्त्राण्युत्पादयतः, भिक्षां वा अटद्भिर्न प्राप्यन्ते वस्त्राणीत्यादिना कारणेन द्वितीयायां पौरुष्यामनुयोगग्रहणं हापयित्वा वस्त्राण्युत्पादयेत्। अथ तदा न लभेत वही या हिण्डि कर्त्तव्यो सा च द्वितीयस्यां पौरुष्यां कर्तुं न पार्यते इत्यतः

प्रथमायामप्युत्पादयेत् । अथ वहवो गृहस्था द्रष्टव्या महता च कष्टेन ते श्रद्धां ग्राह्यन्ते ततो द्वयोरपि पौरुष्योः सर्वासु वा पौरुषीषु पर्यटति । यद्यपरे गीतार्थास्तस्य लब्धिं नोपघ्नन्ति तदा स तैः सहित एवोत्पादयेद् वा वस्त्राणि, प्रभावयेद् वा दानधर्मं गृहिणां पुरतः । यथा-ईदृशः साधूनां धर्म, न कल्पते अमीषां भगवतामुद्गमोत्पादनैषणादोषदुष्टं पिण्ड-शय्या-वस्त्र-पात्रचतुष्टयं ग्रहीतुम्, तदमीषां वस्त्रादावुपयोज्यमाने महती कर्मनिर्जरेत्यादि । अथ ते गीतार्थास्तस्य लब्धिमुपहन्युस्ततस्तैः 'असहितोऽपि' एकाकी उत्पादयतु वा प्रभावयतु वा, न कश्चिद्दोषः ॥ इत्थं तावद् वस्त्रादीनां कल्पिको भवत्विति कृत्वा यथा आचार उत्सार्यते तथा प्रतिपादितम् । अथ दृष्टिवादो येन कारणेनोत्सार्यते तत् प्रतिपादयति-

[भा.७४४] कालियसुआनुओगम्मि गंडियाणं समोयरणहेउं ।
उस्सारिंति सुविहिया, भूयावायं न अन्नेणं ॥

वृ- इह यो धर्मकथालब्धिसम्पन्नः परमद्यापि स्वल्पपर्यायित्वाद् दृष्टिवादं पठितुमप्राप्तस्तस्य कालिकश्रुतानुयोगेन धर्मकथां कुर्वाणस्य गण्डिकाः- कुलकर-तीर्थकरगण्डिकादयो दृष्टिवादान्तर्गता उपयुज्यन्त इति तासां गण्डिकानां कालिकश्रुतमनुयोगे समवतारणाहेतोरुद्देश-समुद्देशादिविधिं विना न कल्पते तासामध्ययनादिकमिति कृत्वा 'सुविहिताः' शोभनविहितानुष्ठाना आचार्या 'भूतवादं' दृष्टिवादमुत्सारयन्ति, न 'अन्येन' 'वाचको भूयात्' इत्यादिना कारणेन ॥ तदेवमाचारो दृष्टिवादश्च यथोत्सार्यते तथाऽभिहितम्, बाहुल्येनानयोरेवोत्सारणीयत्वात्; अत एवोक्तं पूर्वम्- ''आयारदिट्ठिवायत्थजाणए'' ति । अथ ''कालसज्झायऽसज्झाए'' त्ति यत् प्राक् पदत्रयमुक्तं तत्राऽऽद्यं पदद्वयं तावद् विवृणोति-

[भा.७४५] सज्झायमसज्झाए, सुद्धासुद्धे च उद्दिसे काले ।
दो दो अ अनोएसुं, ओएसु उ अंतिमं एक्कं ॥

वृ- तस्योत्सारकल्पे क्रियमाणे स्वाध्यायिके अस्वाध्यायिके वा शुद्धे वा काले विवक्षित-श्रुतमुद्दिशेत्, ''सर्वं वाक्यं सावधारणं भवति'' इति न्यायादुद्दिशेदेव, न व्याघातं कुर्यात् । केन विधिना ? इत्यत आह--''दो दो अ अनोएसुं'' त्ति ओजःशब्देन विषममुच्यते, तद्विपरीता अनोजसः-समा द्वि-चतुः-षडादय उद्देशका यत्राध्ययने तत्र अनोजस्सु उद्देशकेषु दिने दिने द्वौ द्वावुद्देशकावुद्दिशेत् । कथम् ? इति चेद् उच्यते-प्रथमायां पौरुष्यां प्रथममुद्देशकमुद्दिश्य समुद्दिश्य च द्वितीय उद्दिश्यते, द्वितीयस्यामुभयोरप्युद्देशकयोः तस्य अनुयोगो दीयते, ततश्चरमपौरुष्यां प्रथममुद्देशकमनुज्ञाय द्वितीयोद्देशकः समुद्दिश्यते अनुज्ञायते चेति चूर्णिलिखिता सामाचारी । तथा 'ओजस्सु' त्रि-पञ्च-सप्तादिसङ्ख्यकेषु विषमेषूद्देशकेषु अन्तिममुद्देशकमेवोद्दिशेत्, यथा शस्त्रपरिज्ञाध्ययने । तथाहि-तत्र सप्तोद्देशकाः, तेषु च त्रिभिर्दिवसैः षडुद्देशकानुद्दिश्य चतुर्थे दिवसे एक एव अवशिष्यमाणः सप्तम उद्देशक उद्दिश्यते । स च प्रथमपौरुष्यामुद्दिश्य समुद्दिश्य चरमायामनुज्ञायते ॥

[भा.७४६] एगंतरमायंबिल, विगईए मक्खियं पि वज्जेति ।
जावइअं च अहिज्जइ, तावइयं उद्दिसे केइ ॥

वृ- तथा 'एकान्तरम्' एकदिवसान्तरितमाचाम्लमसौ करोति, एकस्मिन् दिवसे

आचाम्लमपरस्मिंश्चनिर्विकृतिकं करोतीति भावः । तथा विकृत्या 'म्रक्षितमपि' खरण्टितमप्यसौ वर्जयति । केचित् पुनराचार्या ब्रुवते-'यावत्' यत्परिमाणं श्रुतमसावधीते तावदुद्दिशेत्, यदि मेधावितया द्वे त्रीणि चत्वारि भूरितराणि वा अध्ययनान्यागमयति ततस्तानि सर्वाण्युद्दिश्यन्ते, न कश्चिद्दोष इति भावः ॥ व्याख्यातं "कालमसज्झाय"त्ति पदद्वयम् ।

अथ "अवक्खेवे"त्ति पदं विवृण्वन्नाह-

[भा.७४७] आहारे उवकरणे, पडिलेहण लेव खित्तपडिलेहा ।

अप्पाहारो परिहार मोअ जह अप्पनिद्दा अ ॥

वृ- तस्योत्सारकल्पे कर्तुमारब्धे आहारग्रहणे उपकरणस्य प्रत्युपेक्षणे क्षेत्रप्रत्युपेक्षां च व्याक्षेपो न कर्त्तव्यः । अल्पाहारश्च यथा स भवति तथा कार्यम् । 'परिहारः' संज्ञा 'मोकः' कायिकी तयोः खल्पताऽल्पाहारतायां भवति । यथा चाऽसावल्पनिद्रो भवति तथा कर्त्तव्यमिति। एषा सङ्ग्रहगाथा ॥ अथैनामेव प्रतिपदं विवृणोति-

[भा.७४८] हिंडाविंति न वा णं, अहवा अन्नट्ठया न सो अडइ ।

पेहिंति व से उवहिं, पेदेइ व सो न अन्नेसिं ॥

वृ- "णं" इति तमुत्सारकल्पिकमाचार्या भिक्षां न हिण्डापयन्ति । वाशब्दस्यानुक्त-समुच्चयार्थत्वात् संस्तरणे सतीति द्रष्टव्यम् । यदि पुनरसंस्तरणं तदा, 'अथवा' इति संस्तरणा-पेक्षयाऽसंस्तरणस्य प्रकारान्तरताद्योतकः, 'अन्यार्थम्' अन्येषाम्-आचार्य-ग्लान-बाल-वृद्धादी-नामर्थाय नासावुत्सारकल्पिकः पर्यटति, यावन्मात्रमाहारमात्मना भुङ्क्ते तावन्मात्रमेवाऽऽ-नयतीत्यर्थः । तथा 'प्रेक्षन्ते वा' प्रत्युपेक्षन्ते "से" तस्य-उत्सारकल्पिकस्योपधिं शेषसाधवः । 'स वा' उत्सारकल्पिको न 'अन्येषाम्' आचार्य-क्षपकादीनामुपधिं प्रत्युपेक्षते । सर्वत्र 'मा भूदध्ययनव्याघातः' इति योज्यम् ॥

[भा.७४९] एमेव लेवगहणं, लिंपइ वा अप्पणो न अन्नस्स ।

खेत्तं च न पेहावे, न यावि तेसोवहिं पेहे ॥

वृ- एवमेव लेपग्रहणम् उपलक्षणत्वाद् लेपनमपि पात्रस्य तस्य निमित्तमन्यैः साधुभिः कर्त्तव्यम् । अथ शेषसाधवः कुतोऽपि हेतोः अक्षणिकास्ततः स आत्मन एव पात्राणि लिम्पति नान्यस्य साधोः । क्षेत्रं च तेन 'न प्रेक्षापयेत्' क्षेत्रप्रत्युपेक्षणार्थं तं न प्रहिणुयादित्यर्थः । न चाप्यसावुत्सारकल्पिकः 'तेषां' क्षेत्रप्रत्युपेक्षकाणामुपधिं प्रत्युपेक्षेत ॥

[भा.७५०] दिंति पनीयाहारं, न य बहुगं मा हु जग्गलोऽजिन्नं ।

मोआइनिसग्गेसु अ, बहुओ मा होज्ज पलिमंथो ॥

वृ- 'प्रणीतं' स्निग्ध-मधुरमाहारं परमान्न-शर्करादिकं तस्य गुरवः प्रयच्छन्ति, सुखेनैवाहर्निशमपि दृष्टिवादादिसूत्रार्थानुप्रेक्षानिमित्तमिति भावः । तमपि प्रणीतं 'न च' नैव बहुकं किन्तु स्वल्पम्, कुतः ? इत्याह-मा भूत् सूत्रार्थनिमित्तं रजन्यामपि जाग्रतोऽजीर्णमिति । रुक्षाहारभोजिनश्च 'बहुशः' बहून् वारान् 'मोकादिनिसर्गेषु च' प्रश्रवण-संज्ञादिव्युत्सर्गेषु विधीयमानेषु 'परिमन्थः' सूत्रार्थव्याघातो मा भूदिति कृत्वा प्रणीतं दीयते । अल्पा च निद्रा स्वल्पप्रणीताहारभोजिनः प्रायो भवतीत्यल्पनिद्राद्वारमपि व्याख्यातमवसातव्यम् । इत्थमुत्सारकल्पे

समापिते सति विवक्षितं वस्त्रोत्पादनादि कार्यं पूर्वोक्तविधिना कार्यते ।। तदेवं व्याख्यातमानुषङ्गिकमुत्सारकल्पिकद्वारम् । अथाचञ्चलद्वारम् । तत्राऽचञ्चलोऽनुयोगं श्रोतुमर्हति न चञ्चल इति चञ्चलस्वरुपं तावदाह-

[भा.७५१] गइ-ठाण-भास-भावे, लहुओ मसो उ होइ एक्केक्के ।
आणाइणो य दोसा, विराहणा संजमाऽऽयाए ॥

वृ- चञ्चलश्चतुर्द्धा । तद्यथा-गतिचञ्चलः स्थानचञ्चलो भाषाचञ्चलो भावचञ्चलश्च । एतेषामेकैकस्मिन् लघुको मासः प्रायश्चित्तम्, आज्ञादयश्च दोषाः, विराधना संयमे आत्मनि च । तत्र च संयमविराधना गतिचञ्चलस्य त्वरितं गच्छतः पृथिव्यादीनां कायानामुपमर्दनम् । आत्मविराधना प्रपतन-प्रस्खलन-देवताच्छलनादिका । यद्वा तं त्वरितगामिनं दृष्ट्वा द्वितीयः साधुः प्रतिनोदनां दद्यात्-'किमेवं त्वरितं गच्छसि ? न कल्पते साधूनामेवं गन्तुम्' इत्याद्युक्ते प्रकोपनतया असङ्खडकरणेऽस्थिभङ्गादयो दोषाः । एवं स्थानचञ्चलादिष्वप्युपयुज्य आत्म-संयमविराधने वक्तव्ये ।' अथ गति-स्थानचञ्चलौ तावदाह-

[भा.७५२] दावद्दविओ गइचंचलो उ ठाणचवलो इमो तिविहो ।
कुड्डादऽसइं फुसइ य, भमइ व पाए व विच्छुभइ ॥

वृ- इह द्रवशब्दो द्रुतार्थवाचकः, ततः 'द्रावद्रविकः' नाम द्रुतद्रुतगामी स गतिचञ्चलो भण्यते । स्थानचञ्चलः पुनरयं त्रिविधः, तद्यथा-यो निषन्नः सन् पृष्ठ-बाहु-कर-चरणादिभिः कुड्यम् आदिशब्दात् स्तम्भादिकम् 'असकृद्' अनेकशः स्पृशति १, वाशब्द उत्तरापेक्षया विकल्पार्थः, यो वा निषन्न एवेतस्ततो भ्राम्यति २, पादौ वा 'विक्षिपति' पुनः पुनः सङ्कोचयति प्रसारयति चेत्यर्थः ३ ।। भाषाचपलमाह-

[भा.७५३] भासाचपलो चउहा, अस त्ति अलियं असोहणं वा वि ।
असभाजोग्गमसब्भं, अणूहिउं तं तु असमिक्खं ॥

वृ-भाषाचपलश्चतुर्धा-असत्प्रलापी असभ्यप्रलापी असमीक्षितप्रलापी अदेशकालप्रलापी च । तत्रासत् प्रलपितुं शीलमस्येत्यसत्प्रलापी । अथासदिति कोऽर्थ ? इत्याह-असदिति शब्देनालीकमशोभनं वाऽभिधीयते । तत्रालीकं साधुमसाधुं ब्रवीति, असाधुं साधुमित्यादि । अशोभनं-गर्वादिदूषितं वचनम् । तथा असभायोग्यमसभ्यमभिधीयेते, इह सभा-एकत्रोपविष्टशिष्टरुपसमुदायः, तथा चोक्तम्-

धम्म-ऽत्थसत्थकुसला, सभासया जत्थसा सभा नाम ।
जा पुन अविहिपलुट्ठा, बुहेहिं सा भन्नए मेली ॥

तस्याः सभाया योग्यं यद् वचनं तत् सभ्यम्, तद्विपरीतमसभ्यम्, तच्च 'दास ! चण्डाल !' इत्यादिकं जकार-मकारादिवाक्यरूपं वा, तत् प्रलपितुं शीलमस्येत्यसभ्यप्रलापी । 'अनूहित्वा' अविचार्य 'किमिदं पूर्वापरविरुद्धम् ? किं वा इह-परलोकबाधकम् ?' इत्यादि अविमृश्य यद् वदति तत्तु वचनमसमीक्षितमुच्यते, तत्प्रलपनशीलोऽसमीक्षितप्रलापी ॥

अथादेशकालप्रलापिनमाह-

[भा.७५४] कज्जविवत्तिं दट्ठुं, भणाइ पुव्विं भए उ विन्नायं ।

एवमिदं तु भविस्सइ, अदेसकालप्पलावी उ ॥

वृ- 'कार्यविपत्तिं' कार्यस्य विनाशं दृष्ट्वा कश्चिद् भणति, यथा-मया पूर्वमेव विज्ञातम् 'इदं कार्यमेवं भविष्यति' । यथा-केनचित् साधुना पात्रं लेपितम्, ततो रूढं सत् कुतोऽपि प्रमादतो भग्नम्, ततः कश्चिदात्मनो दक्षत्वं ख्यापयन् ब्रवीति-यदैवेदं परिकर्मयितुमारब्धं तदैव मया ज्ञातम्, यथा-'इदं निष्पन्नमपि भङ्क्ष्यते' । एष एवंविधः अदेशकाले अनवसरे प्रलपनशीलोऽदेशकाल-प्रलापी ॥ व्याख्यातश्चतुर्विधोऽपि भाषाचपलः । अथ भावचपलमाह-

[भा.७५५] जं जं सुयमत्थो, उद्दिट्ठं तस्स पारमप्पत्तो ।
अन्नन्नसुयदुमाणं, पल्लवगाही उ भावचलो ॥

वृ- यद् यद् आवश्यक-दशवैकालिकादेर्ग्रन्थस्य 'श्रुतं' सूत्रमर्थो वा 'उद्दिष्टं' प्रारब्धं 'तस्य' इत्यत्रापि वीप्सा गम्यते तस्य तस्य पारमप्राप्तः सन् 'अन्यान्यश्रुतद्रुमाणाम्' आचारादिरूपापरापर-शास्त्रतरूणां पल्लवान्-तन्मध्यगतालापक-श्लोक-गाथारूपान् सूत्रार्थलवान् स्वरुच्या ग्रहीतुं शीलमस्येति पल्लवग्राही, 'तुः पुनरर्थे, य एवंविधः स पुनः "भावचलः" भावचपलो मन्तव्यः ॥ भवेत् कारणं येन चञ्चलत्वमपि कुर्यात् । किं पुनस्तत् ? इत्याह-

[भा.७५६] तेने सावय ओसह, खित्ताई वाइ सेहवोसिरणे ।
आयरिय-बालमाई, तदुभयछेए य बिइयपयं ॥

वृ- स्तेनभयेन श्वापदभयेन वा द्रुतमपि गच्छेद्, न दोषः । ग्लानो वा कश्चिदागाढस्त-स्यौषधानयननिमित्तं शीघ्रमपि गच्छेद् न च प्रायश्चित्तमाप्नुयात् । "खित्ताइ"त्ति क्षिप्तचित्त आदिशब्दाद् दृप्तचित्तो यक्षाविष्ट उन्मादप्राप्तश्च एते स्थानचञ्चलत्वमपि कुड्यादिस्पर्शन-हस्तभ्रामणादिकं कुर्युः न च प्रायश्चित्तमाप्नुयुः, अनात्मवशत्वाद् । "वाइ"त्ति वादिनो बुद्धिं परिभवितुमलीकमपि ब्रूयात्, यथा-रोहगुप्तेन पोट्टशालपरिव्राजकमतिव्यामोहनार्थं जीवा अजीवा नोजीवाश्चेति त्रयो राशयः स्थापिताः । तथा शैक्षस्य पण्डकादेर्व्युत्सर्जने विधेये तं निर्भर्त्सयन् असभ्यमपि भणेत्, येनोद्वेजितः स्वयमेव गणाद् निष्क्रम्य गच्छेत् । आचार्या वा कुतश्चित् प्रमादस्थानाद् नोपरमन्ते ततोऽदेशकालप्रलापित्वमपि कुर्यात्, यथा-क्षमाश्रमणाः ! अमुकः संयतोऽमुकश्च श्रावको मम पुरत इदं भणति, यथा-त्वदीया गुरवः इत्थम्भूतां प्रमादप्रतिसेवनामा-सेवमाना अचिरादेव पार्श्वस्थीभवन्तः सम्भाव्यन्ते; एतच्च मया पूर्वमपि विज्ञातमासीत्, यथा ।

क्षमाश्रमणानामेवमाचरतामपवादो भविष्यति, तत इदानीमप्युपरमध्वं भगवन्तः! एतस्मात् प्रमादस्थानात्; एवमुक्ते तेऽश्लोकभयेनैवोपरमन्ते । बालो वा केलि-कन्दर्पादिकं कुर्वाणो वार्यमाणोऽपि न निवर्त्तते ततोऽनुहितमपि यदपि तदपि भाषित्वा निवारणीयः, आदिग्रहणात् प्रत्यनीकादयो वा खर-परुषादिभाषणैरुपशमयितव्याः । तथा 'तदुभयच्छेदः' इति कस्याप्या-चार्यस्यापूर्वं सूत्रमर्थो वा विद्यते तस्योभयस्यापि तत्पार्श्वादनधीयमानस्य व्यवच्छेदो भवति अतः पूर्वारब्धं शास्त्रमर्धपठितमपि मुक्त्वा तत् तदुभयमध्येतव्यमिति यथाक्रमं गति-स्थान-भाषा-भावचपलेषु चतुर्ष्वपि द्वितीयपदमवसातव्यम् । एतद्गाथोक्तकारणाद् ये गतिचपलादयस्तद्विपरीता ये गति-स्थान-भाषा-भावैश्चतुर्भिरप्यचपलास्तेऽस्य कल्पाध्ययनस्यानुयोगमर्हन्तीति ॥ गतमचञ्चलद्वारम् । अथावस्थितद्वारम् । तत्रानवस्थितं तावदाह-

[भा.७५७] दुविहो लिंग विहारे, एक्केक्को चेव होइ दुविहो उ ।
चउरो य अनुग्घाया, तत्थ वि आणाइणो दोसा ॥

वृ- अनवस्थितो द्विविधः, तद्यथालिङ्गानवस्थितो विहारानवस्थितश्च । एकैकः पुनरपि द्विविदो भवति । तद् उभयमपि द्वैविध्यमनन्तरगाथायां वक्ष्यते । चत्वारश्च मासाः अनुद्धाताः' गुरवः, [illegible]त्वाद् [illegible]सार्धिकं [illegible] आचरितं भवति । तच्च यथास्थानमेव भावयिष्यते । तत्रापि लिङ्गानवस्थित-विहारानवस्थितयोरुभयोरप्याज्ञादयो दोषा द्रष्टव्याः ॥

अथैनामेव गाथां व्याख्यानयति-

[भा.७५८] गिहिलिंग अन्नलिंगं, जो उ करेई स लिंगओ दुविहो ।
चरणे गणे अ अथिरो, विहारअणवट्ठिओ एस ॥

वृ- 'गृहिलिङ्गं' गृहस्थानां वेषम् 'अन्यलिङ्गम्' अन्यतीर्थिकानां नेपथ्यं 'यः' साधुः, तुशब्दो विशेषणे, किं विशिनष्टि ? दर्पेण यो लिङ्गद्वयं करोति स एष लिङ्गतो द्विविधोऽनवस्थितः । अस्य च द्विविधस्यापि मूलम् । तथा चोलपट्टकं बध्नतः १ एकत उभयतो वा स्कन्धोपरि कल्पाञ्चलानामारोपणरूपं गरुडपाक्षिकं प्रावृण्वतः २ उत्तरासङ्गरूपमर्द्धासन्यासं कुर्वतः ३ प्रत्येकं चत्वारो गुरुमासाः । द्वावपि बाहू छादयित्वा संयतीप्रावरणमातन्वानस्य चत्वारो लघवः । कल्पेन शिरःस्थगनरूपां शीर्षद्वारिका कुर्वतो मासलघु । चतुष्फलं मुत्कलं वा कल्पं स्कन्धोपरि कृत्वा गोपुच्छवदधोलमबमानं कुर्वतो मासलघु । एतेऽपि लिङ्गानवस्थितेऽन्तर्भवन्ति । तथा 'चरणे' चारित्रे 'अस्थिरः' यः पुनः पुनश्चारित्रात् प्रतिपतति तस्य यदि सूत्रं ददाति तदा चतुर्लघु, अर्थं ददाति तदा चतुर्गुरु । 'गणे' गच्छे 'अस्थिरः' पुनः पुनर्गणाद् गणं सङ्क्रामति। एष द्विविधोऽपि विहारानवस्थितः । एतद्विपरीतस्य स्वलिङ्गावस्थितस्य संविग्नविहारावस्थितस्य च दातव्यम् । यदि न ददाति तदा तथैव सूत्रे चतुर्लघु, अर्थे चतुर्गुरु ॥ गतमवस्थितद्वारम् ।

अथ मेधाविद्वारमाह-

[भा.७५९] उग्गहण धारणाए मेराए चेव होइ मेधावी ।
तिविहम्मि अहीकारो, मेरासंजुत्तो मेहावी ॥

वृ-मेधावी त्रिविधः, तद्यथा-अवग्रहणमेधावी सूत्रार्थग्रहणपटुप्रज्ञावान् १, धारणामेधावी पूर्वाधीतयोः प्रभूतयोरपि सूत्रार्थयोश्चिरमवधारणाबुद्धिमान् २, मर्यादामेधावी चरण-करणप्रवणमतिमान् ३ । एभिस्त्रीभिः पदैरष्टौ भङ्गाः, तद्यथा-ग्रहणमेधावी धारणामेधावी मर्यादामेधावी १ ग्रहणमेदावी धारणामेधावी अमर्यादामेधावी २ इत्यादि । इह च यत्र यत्र भङ्गे मर्यादामेधावी न भवत तत्र तत्र न दातव्यम्, यदि ददाति तदा प्रायश्चित्तम् । तत्र यदि पार्श्वस्थादिभ्यः सूत्रमर्थं वा ददाति तदा चत्वारो लघवः, यथाच्छन्देभ्यः प्रददाति चत्वारो गुरुमासाः । "तिविहम्मि अहीगारो"त्ति मर्यादामेधाविनो ग्रहण-धारणामेधाविभ्यां सम्पन्नस्यासम्पन्नस्य वा दातव्यम्, मर्यादाविकलयोरितरयोर्न दातव्यमिति त्रिविधेनापि दाना-ऽदानरूपतया यथायोगमत्राधिकार इति । गाथायां तृतीयार्थे सप्तमी । अथ मर्यादामेधाविनो व्युत्पत्तिमाह-"मेरासंजुत्तो मेहावि"त्ति मेरा-मर्यादा तत्संयुक्तो मेधावी मर्यादामेधावी, शाकपार्थिवादिवद् मध्यपदलोपी समासः ॥

गतं मेधाविद्वारम् । अथापरिश्राविद्वारमाह-

[भा.७६०] परिसाइ अफरिसाई, दव्वे भावे य लोग उत्तरिए।
एक्केक्को [illegible] दुविहो, [illegible] ॥

वृ- परिश्रवितुं शीलमस्येति परिश्रावी, तद्विपरीतोऽपरिश्रावी। उभावपि द्विविधौ-द्रव्ये भावे च। तत्र द्रव्यतः परिश्रावी घटादि, अपरिश्रावी तुम्बकादि। भावतः परिश्रावी अपरिश्रावी च। एकैकोऽपि द्विविधः, तद्यथा-"लोग" त्ति लौकिकः "उत्तरिए" त्ति पदैकदेशे पदसमुदायोपचाराद् लोकोत्तरिकः। तत्र लौकिके भावतः परिश्राविणि अमात्यदृष्टान्तः। स चायम्- एगो राया। तस्स कन्ना गद्दभस्स जारिसा। सो निच्चं खोलाए अमुक्कियाए अच्छइ। सो अन्नया अमच्चेणं एगंते पुच्छिओ-किं तुब्भे भट्टारयपादा! खोलाए आविद्धियाए अच्छह? न कस्सइ सीसं कन्ना य दरिसेह?। रन्ना सब्भावो कहिओ, भणियं च-मा रहस्सभेयं काहिसि त्ति। तेन अगंभीरयाए तं रहस्स अणहियासमाणेण अडविं गंतुं रुक्खकोट्टरे मुहं छोढूणं भणियं-गद्दभकन्नो राया, गद्दभकन्नो राया। तं रुक्खं अन्नेण केणइ छेत्तुं वादित्रं कृतं। भवियव्ववायसेण य तं रन्नो पुरओ पढमं वाइयं। तं वज्जंतं भणइ-गद्दभकन्नो राया, गद्दभकन्नो राया। रन्ना अमच्च पुच्छिओ-तुमे परं एयं रहस्सं नायं, कस्स ते कहियं?। अमच्चेण जहावत्तं सिट्ठं। एस लोइओ परिस्सावी॥

लोउत्तरिओ जो अनहियासमाणो पुच्छिओ वा अपुच्छिओ वा अरिणयाणं अववायपयाणि सुणेत्ता उड्डिओ, तओ जइ कोइ अपरिणओ पुच्छइ-किं एयं कहिज्जइ?। भणइ-चरण-करणं साहूणं वज्जिज्जइ॥ ईदृशस्यापरिश्राविणो यदि सूत्रं न ददाति तदा चतुर्लघु, अर्थं न ददाति चतुर्गुरु॥ अथ "यश्च विद्वान्" इति द्वारमाह-

[भा.७६१] विदु जाणए विनीए, उववाए जो उ वट्टए गुरूणं।
तव्विवरीयऽविणीए, अदिंत दिंते अ लहु-गुरुगा॥

वृ- "विदंक् ज्ञाने" इत्यस्य धातोर्वेत्ति-जानातीति व्युत्पत्या विद्वान् ज्ञायक उच्यते, स चेहाभ्युत्थाना-ऽऽसनप्रदानादिरूपस्य विनयस्य विज्ञाता ग्राह्यः, न केवलं ज्ञायकः किन्तु 'विनीतः' यथावसरमभ्युत्थानादिविनयप्रयोक्ता, तथा 'उपपाते' आज्ञानिर्देशे गुरूणां 'यस्तु' यः पुनर्वर्त्तते तस्य सूत्रं न ददाति चतुर्लघु, अर्थं न ददाति चतुर्गुरु। तथा तस्य-विदुषो विपरीतस्तद्विपरीतस्तस्य विनयस्वरूपमजानत इत्यर्थः "विनीए" त्ति अकारप्रश्लेषाद् अविनीतस्य च सूत्रं ददाति चतुर्लघु, अर्थं ददाति चतुर्गुरु॥ गतं "यश्च विद्वान्" इति द्वारम्। अथ "पत्ते य" त्ति द्वारम्-अत्र च तिस्रं व्याख्याः, तद्यथा-पात्रमेवानुयोगं श्रोतुमर्हति नापात्रमिति प्रथमा, प्राप्त एवानुयोगश्रवणं कारयितव्यो नाप्राप्त इति द्वितीया, वयक्त एवानुयोगं श्रावणीयो नाव्यक्त इति तृतीया, अस्यां च तृतीयव्याख्यायां "वत्ते य" त्ति पाठो द्रष्टव्यः। अथामूनेव व्याचिख्यासुराह-

[भा.७६२] तिंतिनिए चलचित्ते, गाणंगणिए अ दुब्बलचरित्ते।
आयरियपारिभासी, वामावट्टे य पिसुणे य॥

[भा.७६३] आदीअदिट्ठभावे, अकडसमायारि तरुणधम्मे य।
गव्विय पइन्न निण्हइ, छेअसुए वज्जए अत्थं॥

वृ- तिन्तिणिकश्चलचित्तो गाणङ्गणिकश्च दुर्बलचारित्रः आचार्यपरिभाषी आचार्यपरिभावी वा वामावर्त्तश्च पिशुनश्च "आदीअदिट्ठभावे" त्ति आदौ-आवश्यकादिशास्त्रेषु वर्त्तमाना अदृष्टा

भावा येन स आघद्दष्टभावः, तथा-अकृतसामाचारीकः तरुणधर्मा च गर्वितः "पइन्न"त्ति प्रकीर्णप्रश्नः प्रकीर्णविद्यश्च "निण्हइ"त्ति गुरुनिह्नवी एतेषां छेदश्रुतविषयमर्थं वर्जयेत्, न दद्यादित्यर्थः इति द्वारगाथाद्वयसमासार्थः ॥

व्यासार्थं प्रतिद्वारमभिधित्सुः प्रथमतस्तिन्तिणिकद्वारं व्याचष्टे-

[भा.७६४] डज्झंतं तिंबुरुदारुयं व दिवसं पि जो तिडितिडेइ ।
अह दव्वतिंतिणो भावओ उ आहारुवहि-सेज्जा ॥

वृ- 'तिम्बुरुकदारुकं' तिम्बुरुकवृक्षकाष्ठमग्नौ प्रक्षिप्तं दह्यमानं सद् यथा त्रटत्रटिति कुर्वदास्ते, एवं यो गुर्वादिभिः खरण्टितः सम्पूर्णमपि दिवसं "तिडितिडेइ" त्ति अनुकरणशब्दत्वात् 'त्रटत्रटायते' मम सम्मुखमिदमिदं च जल्पितमेभिरिति ब्रुवन्नास्ते इति भावः । अथैष द्रव्यतिन्तिणिकः । भावतस्तु तिन्तिणिकः त्रिविधः, तद्यथा-आहारे उपधौ शय्यायां चेति । पुनरेकैको द्विविधः-अन्तःसंयोजनया बहिर्संयोजनया च ॥ तत्रोभयथाऽप्याहारतिन्तिणिकं तावदाह-

[भा.७६५] अंतो-बहिसंजोअण, आहारे बाहि खीर-दधिमाई ।
अंतो उ होइ तिविहा, भायण हत्थे मुहे चेव ॥

वृ- आहारविषया संयोजना द्विविधा-अन्तर्बहिश्च । तत्र बहिस्तावद् भाव्यते-कश्चित् साधुर्भिक्षामटन् क्षीरं वा दधि वा लब्ध्वा रसगृध्नुतया कलमशालिप्रभृतिकमोदनं चिरगोचर-चर्याकरणेनाप्युत्पाद्य यत् तेनैव क्षीरादिना सार्धमुपाश्रयाद् बहिः संयोजयति, आदिशब्दात् परमान्नादिकं वा लब्ध्वा घृत-खण्डादिना बहिरेव स्थितः सन् यद् योजयति एषा बहिर्संयोजना । अन्तस्तु प्रतिश्रयाभ्यन्तरे पुनः संयोजना त्रिविधा भवति, तद्यथा-भाजने हस्ते मुखे चैव । तत्र भाजनविषया यत्र भाजने कलमशाल्योदनस्तत्र दुग्ध-दध्यादि प्रक्षिपति । हस्तविषया मण्डक-पूपलिकादिना गुड-शर्करादि हस्तस्थितं वेष्टयित्वा मुखे प्रक्षिपति । मुखविषया पूर्वं मण्डकादि मुखे प्रक्षिप्य ततः शर्करा-खण्डादि प्रक्षिपति । एवंविधां द्विविधामप्याहारसंयोजनां लोभाभिभूततया कुर्वन् यदा यदा संयोजनीयवस्तुयोगं न लभते तदा तदा तिन्तिणिकत्वं करोतीत्याहारतिन्तिणिक उच्यते ॥ गत आहारतिन्तिणिकः । साम्प्रतमुपधि-शय्यातिन्तिणिकावतिदिशति-

[भा.७६६] एमेव उवहि सेज्जा, गुणोवमारी उ जस्स जं होइ ।
सो तेण जोययंतो, तदभावे तिंतिणो होइ ॥

वृ- एवमेवोपधि-शय्ययोरपि संयोजनाया भावना कार्या । सा चेयम्-उपधिसंयोजना द्विविधा-बहिरन्तश्च । तत्र बहिर्संयोजना उत्कृष्टं कल्पं लब्ध्वा चोलपट्टकमपि उत्कृष्टमुत्पादयति, और्णिकं वा कल्पं सुन्दरं लब्ध्वा तदनुरूपमेव सौत्रिकमुत्पादयति, उत्पाद्य च तदुभयपरिभोगेन संयोजयति । अन्तः संयोजना पुनर्विभूषार्थं श्वेतकम्बल्यां कृष्णदवरकसीवनिकां ददाति इत्यादि । शय्या-प्रतिश्रयस्तस्य संयोजनाऽपि द्विविधा-बहिरन्तश्च । तत्र बहि-संयोजना अकपाटमुपाश्रयं लब्ध्वा कपाटाभ्यां संयोजयति । अन्तः संयोजना शोभार्थं प्रतिश्रयं गोमय-मृदादिना लिम्पति सेटिकया वा धवलयति । अथवा शय्याशब्देन संस्तारक उच्यते, ततश्च सुन्दरतरं संस्तारकं लब्ध्वा यद् उत्तरपट्टमपि तदनुरूपमुत्पाद्य परिभुङ्क्ते सा बहिर्संयोजना । यत् पुनः सुकुमारस्पर्शार्थं विभूषार्थं वा सुन्दरया भङ्ग्या संस्तारकं प्रस्तृणाति सा अन्तःसंयोजना । तदेवं यद् उपध्यादिकं

'यस्य' साधोः 'गुणोपकारि' विभूषादिगुणोपयोगि भवति स 'तेन' विवक्षितेन वस्तुना सार्द्ध तदेव वस्तु 'योजयन्' मीलयन् 'तदभावे' विवक्षितवस्तुयोगाभावे 'तिन्तिणिको भवति' 'हा! नास्त्यमुकं वस्तु अत्र स्थण्डिलप्राये सन्निवेशे' इत्यादि जल्पतीत्यर्थः ॥

गतं तिन्तिणिकद्वारम्। अथ चलचित्तद्वारमतिदेशेनैवाह-

[भा.७६७] चलचित्तो भावचलो, उस्सग्गऽववायतो उ जो पुव्विं।
भणितो सो चेव इहं, गाणंगणियं अतो वोच्छं ॥

वृ-चलचित्त इह 'भावचलः' अपरापरशास्त्रपल्लवग्राही गृह्यते। स च उत्सर्गतोऽपवादतश्च यः पूर्वमचञ्चलद्वारे भणितः स एवेहापि भणितव्यः। गाणङ्गणिकमत ऊर्ध्वं वक्ष्ये ॥ तमेवाह-

[भा.७६८] छम्मास अपूरित्ता, गुरुगा बारससमासु चउलहुगा।
तेन परं मासलहू, गाणंगणि कारणे भइतो ॥

वृ-उपसम्पन्नः साधुः कारणाभावे षण्मासान् अपूरयित्वा यद्येकस्माद् गणाद् अपरं गणं सङ्क्रामति तदा तस्य चत्वारो गुरुकाः। षन्मास्याः परतो यावद् द्वादश समा-वर्षाणि ता अपूरयित्वा गच्छतश्चतुर्लघुकाः। ततः परं-द्वादशभ्यो वर्षेभ्य ऊर्द्ध्वं निष्कारणं गणाद् गणं सङ्क्रमतो मासलघु। "गाणंगणि"त्ति भावप्रधानो निर्देशः, ततो गाणङ्गणिकत्वं 'कारणे' ज्ञान-दर्शनचारित्राणामन्यतरस्मिन् पुष्टालम्बने समुत्पन्ने 'भाज्यं' सेवनीयम्। किमुक्तं भवति? -कारणे मध्येद्वादशवर्षमन्तः षण्मासं वा गणाद् गणं सङ्क्रामन्नपि न प्रायश्चित्तभाग् भवतीति ॥ गतं गाणङ्गणिकद्वारम्। सम्प्रति दुर्बलचारित्रद्वारमाह-

[भा.७६९] मूलगुण उत्तरगुणे, पडिसेवइ पनगमाइ जा चरिमं।
थिइ-वीरियपरिहीणो, दुब्बलचरणो अनट्ठाए ॥

वृ- मूलगुणोत्तरगुणविषयानपराधान् यः प्रतिसेवते। कथम्? इत्याह-'पञ्चकादि यावच्चरमम्' इह पञ्चकशब्देन यत्र प्रतिसेविते रात्रिन्दिवपञ्चकमापद्यते स सर्वजघन्यश्चरणापराधः परिगृह्यते, आदिशब्दाद् दशरात्रिन्दिवादिप्रायश्चित्तस्थानानि यावत् चरमं सर्वोत्कृष्टचरणापराधलक्षणं पाराञ्चिकप्रायश्चित्तस्थानमिति। कथम्भूतः सन् प्रतिसेवते? इत्याह-'धृति-वीर्यपरिहीणः' मानसिकावष्टम्भवबलरहितः असौ, न खल्वनीदृशश्चरण-करणविषयभूतान्यपराधपदान्यासेवितुमुत्सहते। सोऽपि यदि पुष्टालम्बनतः प्रतिसेवते ततो न दोषभाग् भवेदित्याह- "अनट्ठाए"त्ति अर्थ-दर्शन-ज्ञानादिकं प्रयोजनं तदभावोऽनर्थं तेन यः प्रतिसेवते स एष दुर्बलचरणः॥ एवंविधस्य च्छेदश्रुतार्थदाने दोषबाहुल्यख्यापनार्थमिदमाह-

[भा.७७०] पंचमहव्वयभेदो, छक्कायवहो अ तेनऽणुन्नाओ।
सुहसील-ऽवियत्ताणं, कहेइ जो पवयणरहस्सं ॥

वृ-'तेन' आचार्येण पञ्चमहाव्रतभेदः षट्कायवधश्चानुज्ञातः, यः 'सुखशीला-ऽव्यक्तानां' सुखं-शरीरशुश्रूषादिकं शीलयन्तीति सुखशीलाः-पार्श्वस्थादयः, अव्यक्ताः श्रुतेन वयसा च, सुखशीलाश्चाव्यक्ताश्चेति द्वन्द्वस्तेषामिति चूर्णिकृतोऽभिप्रायः। निशीथचूर्णिकृतः पुनरयम्- सुखे-शरीरसौख्ये शीलं-स्वभावो व्यक्तः-परिस्पष्टो येषां ते सुखशीलव्यक्तास्तेषाम्, यद्वा सुखं-मोक्षसौख्यं तद्विषयं यत् शीलं-मूलोत्तरगुणानुष्ठानं ततो विगतो यत्नः-उद्यम आत्मा वा येषां ते

सुखशीलविपतनाः सुखशीलव्यात्मानो वा तेषाम्, उभयत्रापि पार्श्वस्थादीनामित्यर्थः। 'प्रवचनरहस्यं' छेदग्रन्थार्थतत्त्वं कथयति ॥

कथं पुनस्तेन पञ्चमहाव्रतभेदः षट्कायवधश्चानुज्ञातो भवति ? इति उच्यते-

[भा.७७१] निस्साणपदं पीहइ, अनिस्साणविहारयं न रोएइ।
तं जाण मंदधम्मं, इहलोगगवेसगं समणं ॥

वृ- निश्रीयते-मन्दश्रद्धाकैरासेव्यत इति निश्राणं तच्च तत् पदं निश्राणपदम्-अपवादपदमित्यर्थः, तदेव यः 'स्पृहयति' रुचिपदमवतारयति, अनिश्राणविहारितां तु न रोचयति, तमेवंविधं श्रमणं जानीहि मन्दधर्माणं 'इहलोकगवेषकं' मनोज्ञभक्त-पानाद्युपभोगेन केवलस्यैवेहलोकस्य चिन्तकं परलोकपराङ्मुखम्। एवंविधस्य च प्रवचनरहस्यप्रदाने विशेषतः पञ्चमहाव्रतभेदः षट्कायवधश्च भवतीति युक्तमुक्तं "तेनानुज्ञातः" इति ॥

गतं दुर्बलचारित्रद्वारम्। अथाऽऽचार्यपरिभाविद्वारमाह-

[भा.७७२] डहरो अकुलीनो त्ति य, दुम्मेहो दमग मंदबुद्धि त्ति।
अविअप्पलाभलद्धी, सीसो परिभवइ आयरियं ॥

वृ- कश्चित् कुशिष्यः सूचया असूचया वा आचार्यं परिभवति। सूचा नाम स्वव्यपदेशेन परस्वरूपसूचनम्, यथा कोऽपि वयःपरिणतः साधुर्बालकमाचार्यं ब्रवीति-अद्यापि 'डहराः' बालका वयम्, किं नामास्माकमाचार्यपदस्य योग्यत्वम्? इति। असूचा स्फुटमेव परदोषोद्घट्टनम्, यथा-भो आचार्य! त्वं तावदद्यापि "डहरो" मुग्धः क्षीरकण्ठो वर्तसे, अतः कीदृशं भवत आचार्यत्वम्? इति। योऽकुलीन आचार्यस्तमुद्दिश्य भणति-अहो! उत्तमकुलसम्भूता अमी योग्या एवाऽऽचार्यपदस्य, वयं तु हीनकुलोत्पन्नाः, कुतोऽस्माकं सूरिपदयोग्यता? । यद्वा धिक् कष्टं यदकुलीनोऽप्ययमाचार्यपदे निवेशित इति। तथा 'दुर्मेधाः' मन्दप्रज्ञः 'द्रमकः' नाम दरिद्रो भूत्वा यः प्रव्रजितः 'मन्दबुद्धिः' स्वल्पमतिः। अपि सम्भावनायाम्, सम्भाव्यते कुतोऽपि कारणादेवंविधोऽप्याचार्य इति। अल्पा-तुच्छा वस्त्र-पात्रादिलाभे लब्धिर्यस्य सोऽल्पलाभलब्धिः। एतानप्येवमेव सूचया असूचया च परिभवति ॥ अथ शिष्यपदं व्याचष्टे-

[भा.७७३] सो वि य सीसो दुविहो, पव्वावियगो अ सिक्खओ चेव।
सो सिक्खओ अ तिविहो, सुत्ते अत्थे तदुभए य ॥

वृ- यः शिष्यो गुरून् परिभवति सोऽपि च द्विविधः-प्रव्राजितकश्च शिक्षकश्चैव। यस्तेनैव परिभूयमानगुरुणा दीक्षां ग्राहितः स प्रव्राजितकः। शिक्षकस्तु गच्छान्तरादध्ययनार्थमागतः। स च शिक्षकस्त्रिविधः-सूत्रेऽर्थे तदुभये च, सूत्रग्राहकोऽर्थग्राहकस्तदुभयग्राहकश्चेत्यर्थः ॥ गतमाचार्यपरिभाविद्वारम्। सम्प्रति वामावर्तद्वारमाह-

[भा.७७४] एहि भणिओ उ वच्चइ, वच्चसु भणिओ दुतं समल्लियइ।
जं जह भन्नति तं तह, अकरेंतो वामवट्टो उ ॥

वृ- यः शिष्यः 'एहि' आगच्छेति भणितः सन् व्रजति, व्रजेति भणितः सन् 'द्रुतं' शीघ्रं समालीयते। एवमन्यदपि कार्यं यद् यथा भण्यते तत् तथा अकुर्वाणो वामावर्त उच्यते ॥

अथ पिशुनद्वारमाह-

[भा.७७५] पीईसुन्नण पिसुनो, गुरुगाइ चउण्ह जाव लहुओ उ ।
अहव असंतासंते, लहुगा लहुगो गिही गुरुगा ॥

वृ- ''पीईसुन्नण''त्ति अलीकानीतराणि वा परदूषणानि भाषमाणः प्रीतिं शून्यां करोतीति पिशुनः, नैरुक्ती शब्दनिष्पत्ति । स च यद्याचार्यस्य पैशून्यं करोति तदा चतुर्गुरु, उपाध्यायस्य करोति चतुर्लघु, भिक्षोः करोति मासगुरु, क्षुल्लकस्य करोति मासलघु इति चूर्ण्यभिप्रायः । निशीथचूर्ण्यभिप्रायेण तु-यद्याचार्य पैशून्यं करोति तदा चत्वारो गुरवः, उपाध्यायः करोति चत्वारो लघवः, भिक्षु करोति मासगुरु, क्षुल्लकः करोति [illegible] । अमुमेवार्थं [illegible] ''गुरुगा'' इत्यादि । 'चतुर्णाम्' आचार्यो-पाध्याय-भिक्षु-क्षुल्लकरूपाणां पैशून्यकरणे विषयभूतानां कर्तृभूतानां वा यथाक्रमं गुरुकादयो यावद् लघुको मासः प्रायश्चित्तम् । 'अथवा' इति प्रकारान्तरोपन्यासे, सामान्यतः संयतः संयतेषु पैशून्यं करोति तत्रासद्दूषणविषये पैशून्ये चत्वारो लघवः, सद्दूषणविषये लघुको मासः । एते एव प्रायश्चित्ते गृहिषु गुरुके अवसातव्ये । तद्यथा-गृहस्थेषु असद्भिर्दोषैः पैशून्यं करोति चत्वारो गुरवः, सद्भिः करोति गुरुमासः ॥ अथादिमाऽदृष्टभावद्वारं विवृणोति-

[भा.७७६] आवासगमाईया, सूयगडा जाव आइमा भावा ।
ते उ न दिट्ठा जेणं, अदिट्ठभावो हवइ एसो ॥

वृ- आवश्यकादयः सूत्रकृताङ्गं यावद् ये आगमग्रन्थास्तेषु ये पदार्था अभिधेयास्ते आदिमा भावा उच्यन्ते । 'ते तु' ते पुनर्भावा येन न दृष्टाः-नावगताः स एषोऽदृष्टभाव इति, उपलक्षणत्वाद आदिमादृष्टभावो भवतीति ॥ अथाकृतसामाचारीकद्वारं बिभावयिषुः सामाचारीस्वरूपं तावदाह-

[भा.७७७] दुविहा सामायारी, उवसंपद मंडलीए बोधव्वा ।
अनालोइयम्मि गुरुगा, मंडलिमेरं अतो वोच्छं ॥

वृ-सामाचारी द्विविधा-उपसम्पदि मण्डल्यां च बोद्धव्या । तत्रोपसम्पत् त्रिविधा-ज्ञानोपसम्पद् दर्शनोपसम्पद् चारित्रोपसम्पत् । आसां च सामान्यत इयं सामाचारी-गच्छान्तरा दुपसम्पदः प्रतिपत्त्यर्थःमायातः साधुः पर्यनुयोक्तव्यः-'वत्स ! कस्त्वम् ? कुतो वा गच्छादागतोऽसि ? किंनिमित्तमिहायातः ?' इत्येवं यद्यपर्यनुयुज्य तस्योपसम्पदं प्रतीच्छति तदा 'अनालोचिते' अपर्यनुयुक्ते सति चत्वारो गुरुकाः । यद्वा 'अनालोचिते' आलोचनामदापयित्वा यदि तं परिभुङ्क्ते वाचयति वा तदा चत्वारो गुरुकाः । अत्र च ज्ञानोपसम्पदाऽधिकारः । ''मंडलिमेरं अतो वोच्छं'' ति मण्डली-सूत्रार्थमण्डलीरूपा तस्याः सम्बन्धिनीं मर्यादां-सामाचारीं अत ऊर्ध्वं वक्ष्ये ॥ प्रतिज्ञातमेवाह-

[भा.७७८] सुत्तम्मि होइ भयणा, पमाणतो यावि होइ भयणा उ ।
अत्थम्मि उ जावइया, सुणिंति थेवेसु अन्ने वि ॥

वृ- 'सूत्रे' सूत्रमण्डल्यां निषद्यायां भजना कार्या-यदि तरुणो निरुपहतशरीरश्चाऽऽचार्यो न च निषद्याप्रियस्ततो न क्रियते निषद्या, अथ स्थविर आमयावी वा तरुणो वा निषद्याप्रियः ततः क्रियते । प्रमाणतोऽपि सूत्रमण्डल्यां निषद्याविषये भजना । किमुक्तं भवति ? -कदाचिद् एकस्मिन कल्पे कदाचिद् द्वयोस्त्रिषु यावन्मात्रेषु वा कल्पेषूपविष्टः सुखेनैव वाचनां ददाति तावद्भि कल्पैर्निषद्या क्रियते । 'अर्थे' अर्थमण्डल्यां पुनर्यावन्तः साधवोऽर्थं शृण्वन्ति तावन्तः सर्वेऽप्यवश्यन्तया स्वं

स्वं कल्पं निषद्याकारकस्य प्रयच्छन्ति, स च तैः कल्पैर्निषद्यां रचयति। अथ स्तोका एवानुयोगं प्रगीतारस्ततः स्तोकेषु सत्सु 'अन्येऽपि' अनुयोगमश्रोतारोऽपि यावद्भिर्निषद्या भवति तावतः कल्पानर्पयन्ति ॥ अथार्थमण्डल्या एव विधिमाह-

[भा.७७९] मज्जण निसिज्ज अक्खा, किइकम्मुस्सग्ग वंदनग जेट्ठे।
परियाग जाइ सुअ सुणण समत्ते भासई जो उ ॥

वृ- 'मार्जनम्' अनुयोगमण्डल्याः प्रमार्जनं तत्प्रथमतः कर्त्तव्यम्। ततो निषद्याद्वयं रचनीयम्-एकं गुरूणामपरं पुनरक्षाणाम्, ततोऽक्षाः समवसर्णे निषद्याया उपरि स्थापनीयाः। ततः 'कृतिकर्म' वन्दनकं गुरूणां दातव्यम्। ततोऽनुयोगप्रस्थापनार्थम् 'उत्सर्गः' कायोत्सर्गः, तत्र चाष्टावुच्छ्वासाश्चिन्तनीयाः। ततः पञ्चमङ्गलमुच्चार्य च्छोभवन्दनकं दत्त्वा ''नाणंपंचविहं पन्नत्तं'' इत्यादिना नन्द्याकर्षणे कृते ज्येष्ठस्य वन्दनं-प्रणामः कर्त्तव्य इति। अत्र परः प्राह-किं यः पर्यायेण ज्यायान् स ज्येष्ठः ? किं वा यो जात्या उपलक्षणत्वात् कुलेन वा ? यद्वा येन श्रुतं बह्वधीतम् ? अथ येन बहुभि परिपाटीभिरर्थस्य श्रवणं कृतम् ? एतेषां मध्ये क इह ज्येष्ठोऽधिक्रियते ? । अत्राचार्य प्रत्युत्तरयति-एतेषां मध्यादेकोऽपिनात्राधिक्रियते किन्तु 'समाप्ते' समर्थिते व्याख्याने उत्थितानां यो व्याख्यानलब्धिमान् 'अनुभाषते' अग्रणीभूय चिन्तनिकां कारयति स इह ज्येष्ठो भण्यते, तस्य जिनवचनव्याख्यानलक्षणगुणाधिकतयाऽवमरात्निकस्यापि वन्दनं विधेयम्। तथा गुरूणां हेतोः खेल-कायिकीमात्रके प्रथममेव तत्र स्थापयितव्ये, मा भूदनुयोगं शृण्वतां तदानयने श्रवणव्याघातः। एतच्च गाथायामनुक्तमपि प्रक्रमादत्र ज्ञातव्यम्, अन्यत्राऽऽवश्यकादावुक्तत्वात् ॥ अथात्रैव वैपरीत्यकरणे प्रायश्चित्तमाह-

[भा.७८०] अवितहकरणे सुद्धो, वितह करेंतस्स मासियं लहुगं।
अक्ख निसिज्जा लहुगा, सेसेसु वि मासियं लहुगं ॥

वृ- प्रमार्जनादिषु पदेषु अवितथकरणे 'शुद्धः' न प्रायश्चित्तभाग्। एतेष्वेव सामाचारीं वितथां कुर्वाणस्य लघु मासिकम्, इदं च सामान्यत उक्तम्। अत इदमेव सविशेषं विषयविभागेनाह-''अक्ख'' इत्यादि। अक्षाणामप्रमार्जनेऽस्थापने वा निषद्यामन्तरेण वा स्थापनेऽनुयोगं ददतः शृण्वतां वा चत्वारो लघुकाः। गुरूणां निषद्याया अकरणे श्रोतॄणां चत्वारो लघवः। शेषेष्वपि सर्वेषु मासिकं लघुकं प्रायश्चित्तम्। तद्यथा-अनुयोगमण्डलीस्थानं न प्रमार्जयन्ति, वन्दनकं गुरूणां न ददति, अनुयोगप्रारम्भनिमित्तं कायोत्सर्गं न कुर्वन्ति, खेलमात्रकादिकं न ढौकयन्ति, ज्येष्ठस्य प्रणामं न कुर्वन्ति, सर्वत्रापि प्रत्येकं मासलघु। एवंविधामुपसम्पन्मण्डलीविषयां द्विविधामपि सामाचारीं यो न करोति स सोऽकृतसामाचारीक उच्यते ॥ गतमकृतसामाचारीकद्वारम्।

सम्प्रति तरुणधर्मद्वारमाह-

[भा.७८१] तिण्हाऽऽरेण समाणं, होइ पकप्पम्मि तरुणधम्मो उ।
पंचण्ह दसाकप्पे, जस्स व जो जत्तिओ कालो ॥

वृ- व्रतपर्यायमधिकृत्य तिसृणां 'समानां' वर्षाणां 'आरेण' अर्वाग् वर्त्तमानः 'प्रकल्पे' निशीथाध्ययने 'तरुणधर्मा' अविपक्वपर्यायो भवति। तुशब्दो विशेषणे। किं विशिनष्टि ? इह यः स्वल्वसञ्जातपक्षकुर्चीकः स त्रिवर्षपर्यायेऽपि वर्त्तमानो निशीथाध्ययनस्यायोग्यो मन्तव्य

इति। पञ्चानां वर्षाणामर्वाग् वर्त्तमानस्तु ''दसाकप्पे''त्ति उपलक्षणत्वाद् दशा-कल्प-व्यवहाराणां तरुणधर्मा ज्ञातव्यः। 'यस्य वा' सूत्रकृताङ्गादेः श्रुतस्य यो यावान् कालो व्यवहाराध्ययने दशमोद्देशके भणितः तस्य तावन्तं कालमसमापयन् तरुणधर्मा भवति। यथा- ''कप्पइ चउवासपरियायस्स समणस्स निग्गंथस्स सूअगडं नाम अंगं उद्दिसित्तए'' इत्यादि ॥

गतं तरुणधर्मद्वारम्। अथ गर्वितद्वारमाह-

[भा.७८२] पुरिसम्मि दुव्विनीए, विनयविहाणं न किंचि आइक्खे।
न वि दिज्जइ आभरणं, पलियत्तियकन्न-हत्थस्स ॥

इह यः श्रुतमधीयानः तदवलेपादेव दुर्विनीतो भवन्नुपलभ्यते, तादृशे पुरुषे 'विनयविधानं' कर्मविनयनोपायमाऽऽचारादि श्रुतजातम् 'किञ्चिदपि' स्तोकमात्रमपि 'नाऽऽचक्षीत' न प्रतिपादयेत्। यद्वा विनयः-द्वादशावर्त्तवन्दनकप्रदानादिप्रतिरूपोपचाररूपो विधीयते ऽस्मिन्नधीयमाने तद् 'विनयविधानम्' आचारादि श्रुतमेव तद् नाऽऽचक्षीत। कुतो हेतोः? इति चेद् अत आह- ''न वि दिज्जइ'' इत्यादि। 'नापि' नैव दीयते 'आभरणं' कुण्डलकङ्कणादिकं परिकर्त्तितकर्ण-हस्तस्य पुरुषस्य, आविध्यमानस्यापि तस्य तदङ्गे शोभाया अलभमानत्वात्; एवं श्रुताभरणमपि विनयविकलाङ्गस्य योज्यमानं न शोभां बिभर्त्ति इति जिनवचनवेदिना तस्य तद् न दातव्यम् ॥ अथाऽस्यैव सविशेषमपात्रताख्यापनार्थमाह-

[भा.७८३] मद्दवकरणं नाणं, तेनेव उ जे मदं समुवहंति।
ऊणगभायणसरिसा, अगदो वि विसायते तेसिं ॥

वृ-मार्दवं-माननिग्रहस्तत्करणं-तत्कारकं 'ज्ञानं' श्रुतरूपम्, 'तेनैव' ज्ञानेन 'ये' दुर्विदग्धाः 'मदम्' अहङ्कारं समुद्वहन्ति। कथम्भूताः? 'ऊनकभाजनसदृशाः' असम्पूर्णभृतघटादिभाजनतुल्याः, यथा किल तद् झलझलायते तथैतेऽपि दुरधीतविद्यालवतया निजपाण्डित्यगर्वाध्माता यदपि तदपि लपन्तस्तिष्ठन्ति। तेषाम् 'अगदोऽपि' विषापहारकमप्यौषधं 'विषायते' विषरूपतया परिणमते श्रुतरूपम्। तथा चैतदर्थसंवादकमेवेदं सूक्तम्-

ज्ञानं मद-दर्पहरं, माद्यति यस्तेन तस्य को वैद्यः।
अमृतं यस्य विषायति, तस्य चिकित्सा कथं क्रियते? ॥

गतं गर्वितद्वारम्। अथ प्रकीर्णकद्वारमाह-

[भा.७८४] सोउं अनभिगताणं, कहेइ अमुगं कहिज्जई इत्थं।
एस उ पइन्नपन्नो, पइन्नविज्जो उ सव्वं पि ॥

वृ-अर्थमण्डल्यां यो राहसिकग्रन्थार्थं श्रुत्वा उत्थितः सन् 'अनभिगतानाम्' अपरिणतानां लेशोद्देशतः कथयति-यथा 'अमुकं' प्रलम्बग्रहणादिकम् 'अत्र' सूत्रे कल्पनीयतया कथ्यते; एष प्रकीर्णप्रज्ञः। प्रज्ञाशब्देनेह प्रकर्षेण ज्ञायते उत्सर्गा-ऽपवादतत्त्वमनयेति व्युत्पत्त्या छेदसूत्रान्तर्गता रहस्यवचनपद्धतिरुच्यते, सा प्रकीर्णा-विक्षिप्ता येन स प्रकीर्णप्रज्ञः। ''प्रकीर्णप्रश्नः'' [''पइन्न-पण्हो''] इति वा पाठः, तत्र चापरिणतैः 'किमेतद् रहस्यभूतमत्राभिधीयते?' इत्युल्लेखेन पृच्छ्यत इति प्रश्नः-छेदश्रुतान्तःपाती रहस्यार्थ इत्यर्थः, स प्रकीर्णो येन स प्रकीर्णप्रश्न इति। तथा

प्रकीर्णविद्यस्तु सर्वमप्यादेरारभ्य पर्यन्तं यावत् छेदश्रुतमुत्सर्गाऽपवादसहितमपरिणतानां कथयति। विद्याशब्देन चात्राऽखण्डं छेदश्रुतमभिधीयते, प्रकीर्णा विद्या येन स प्रकीर्णविद्य इति ॥ अथ द्विविधस्यापि प्रकीर्णव्याकर्तुर्दोषानाह-

[भा.७८५] अप्पच्चओ अकित्ती, जिनाल ओहाव मइलणा चेव।
दुल्लहबोहीअत्तं, पावंति पइन्नवागरणा ॥

वृ- अपरिणतादीनां राहसिकेषु पदेषु ज्ञाप्यमानेषु 'अप्रत्ययः' अविश्वासो भवति; पूर्वापरविरुद्धमिदं शास्त्रम्, यत पूर्वं "न कल्पते तालप्रलम्बं प्रतिग्रहीतुम्" इति प्ररूप्य पश्चात् "कल्पते" इत्यनुज्ञायाः प्रतिपादनात्; यथा चैतदलीकं तथा सर्वमपि जिनवचनमीदृशमेवेति। ते चैवं विपरिणताः सन्तः 'जिनानां' तीर्थकृतामकीर्तिं कुर्युः, कुत एषां सर्वज्ञत्वम्? यैरीदृशं पूर्वापरव्याहतं भाषितमिति। ततश्च ते "ओहाव" त्ति 'अवधावनम्' उत्प्रव्रजनं कुर्वीरन्। अथ नोत्प्रव्रजेयुस्तथापि "मइलण" त्ति तेषामद्याप्यपरिणतत्वादपवादपदं श्रुत्वाऽपरिणामकत्वेनाति-परिणामकत्वेन वा शङ्कादिदोषतो ज्ञानादीनां 'मलिनता' मालिन्यं स्यादिति। ततश्चैवमप्रत्ययादिकं जनयन्तो दुर्लभबोधिकत्वं प्राप्नुवन्ति, क एते? इत्याह-'प्रकीर्णव्याकरणाः' प्रविस्तारितच्छेद-श्रुतरहस्यार्थनिर्वचनाः, प्रकीर्णप्रश्नाः प्रकीर्णविद्या इत्यर्थः ॥

व्याख्यातं प्रकीर्णद्वारम्। अथ निह्नवद्वारं विवृणोति-

[भा.७८६] सुत्त-ऽत्थ-तदुभयाइं, जो घेत्तुं निण्हवे तमायरियं।
लहुया गुरुया अत्थे, गेरुयनायं अबोही य ॥

वृ- यः सूत्रा-ऽर्थ-तदुभयानि कस्यचित् पार्श्वे गृहीत्वा तमाचार्यं 'निह्नुते' अपलपति, अपरं कमपि विख्यातगुणमाचार्यमुद्दिशति, अथवा ब्रूयात्-मया स्वयमेवाभ्यूह्याभ्यूह्य सकलमपि श्रुतं निर्णीतम्, केवलं तैर्वाचनाचार्यैर्मम दिङ्मात्रमेव दत्तमिति। अत्र च यदि सूत्राचार्यं निह्नुते तदा चत्वारो लघकाः, 'अर्थे' अर्थदायकमाचार्यं निह्नुवानस्य चत्वारो गुरुकाः, तदुभयाचार्यमपलपतः तदुभयं प्रायश्चित्तमिति। गेरुकः-परिव्राजकस्तस्य ज्ञातं-दृष्टान्तः। स चायम्-

एगस्स ण्हावियस्स छुरघरगं विज्जाए आगासे चिट्ठइ। तं च एगो परिव्वायगो बहूहिं उवासनाहिं आराहेऊण तस्स सगासे विज्जं गिण्हित्ता अन्नत्थ गंतुं तिदंडेणं आगासगएण अच्छइ, तओ सो लोगेणं पूइज्जइ। अन्नया रन्ना पुच्छिओ-भगवं! किं विज्जाइसओ? उआहु तवाइसओ?। भणइ-विज्जाइसओ। कओ आगमिउ? त्ति। भणइ-हिमवंते पव्वए फलाहारनामस्स महरिसिस्स सगासाउ-त्ति भणिए तं तिदंडं खड त्ति पडियं। एस दिट्ठंतो। अयमत्थोवणओ-जहा सो ण्हावियं विज्जायरियं निण्हवेंतो ओहावणं पत्तो, एवं अन्ने वि अप्पगासं पि वायणायरियं निण्हवेंता इहलोए चेव बहूणं समण-सावगाईणं हीलणिज्जा भवंति देवयाहि य छलिज्जंति त्ति। तथा "अबोही य" त्ति परलोके अबोधिफलं कर्म गुरुनिह्नावकोऽर्जयति। एवंविधस्य न दातव्यम् ॥ यत आह-

[भा.७८७] उवहयमइ-विन्नाणे, न कहेयव्वं सुयं व अत्थो वा।
न मणी सयसाहस्सो, आविज्झइ कोत्थु भासस्स ॥

वृ- मतिश्च स्वाभाविकी विज्ञानं च गुरूपदेशजं मति-विज्ञाने, ते उपहते-दूषिते यस्य सः 'उपहतमति-विज्ञानः' गुरुनिह्नोता। कथम्? इति चेद् उच्यते-इह तावद् गृहस्था अपि

मिथ्यादृष्टयस्तत्त्वा-ऽतत्त्वव्यतिकरविवेकविकला ऐहिकफलार्थमर्थशास्त्र-धनुर्वेदादि यस्य सकाशे शिक्षितवन्तस्तं यावज्जीवं गुरुं प्रतिपद्यमानाः सर्वस्यापि लोकस्य पुरतः श्लाघन्ते, न पुनः कदापि कस्यापि पुरतो निह्नुवते; स पुनः सर्वज्ञशासनप्रतिपन्नोऽप्यचिन्त्यचिन्तामणिकल्पश्रुतदायकानपि परमगुरून् निह्नुते इत्यतोऽसौ तेभ्योऽप्यधमत्वादुपहतमति-विज्ञानोऽभिधीयते। एवंविधे शिष्ये न कथयितव्यं 'श्रुतं वा' सूत्रम् 'अर्थो वा' तदभिधेयः। अमुमेवार्थं प्रतिवस्तूपमया द्रढयति- "न मणी" इत्यादि। "कोत्थु"त्ति आर्षत्वात् कौस्तुभो नाम मणि 'शतसहस्र' लक्षमूल्यः 'भासस्य' शकुन्ताख्यस्य पक्षिणो गलके नाऽऽविध्यते, अयोग्यत्वात्; एवमस्यापि गुरुनिह्नोतुरत्यन्तापात्र-भूतस्य श्रुतरत्नप्रदानमनुचितमिति न विधेयम्॥ गतं निह्नवद्वारम्। अत्र च तिन्तिणिक-चलचित्त-गाणङ्गणिक-दुर्बलचारित्रा-ऽऽचार्यपरिभाषि-वामावर्त्त-पिशुना-ऽकृतसामाचारीक-गर्वित-प्रकीर्ण-निह्नविनः एकादशाऽपात्रभूताः शिष्याः, आदिमादृष्टभावोऽप्राप्तः, तरुणधर्मा पुनरव्यक्तः। अथैषां सूत्रार्थप्रदाने प्रायश्चित्तमाह-

[भा.७८८] अव्वत्ते अ अपत्ते, लहुगा लहुगा य होंति अप्पत्ते।
लहुगा य दव्वतिंतिणि, रसतिंतिणि होंति चतुगुरुगा॥

वृ- अव्यक्तः-तरुणधर्मा तस्य तथा "अपत्ते"त्ति अपात्राणामेकादशसङ्ख्याकानां सूत्रार्थौ यदि ददाति तदा चत्वारो लघुकाः। "लहुगा य होंति अप्पत्ते" त्ति अप्राप्त-आद्यदृष्टभावस्तस्य ददाति चत्वारो लघवः। 'रसतिन्तिणिकस्य' आहारतिन्तिणिकस्य ददाति चत्वारो गुरवः। उपधि-शय्यातिन्तिणिकयोर्ददानस्य चत्वारो लघव इत्यनुक्तमप्यत्रावसातव्यम्, निशीथ चूर्णा वुक्तत्वात्॥

[भा.७८९] अंतो बहिं च गुरुगा, आयरिय-गिलाण-बाल बिइअपयं।
आयरियपारिभासिस्स होंति चउरो अणुग्घाया॥

वृ- आहारोपधि-शय्याविषयामन्तर्बहिर्वा संयोजनां कुर्वतश्चत्वारो गुरवः। आचार्य-ग्लान-बालादीनामर्थाय द्वितीयपदं भवति, एतदर्थं संयोजनामपि कुर्वन् शुद्ध इत्यर्थः। आचार्यपरिभाषिणः पुनश्चत्वारोऽनुद्घाताः प्रायश्चित्तम्॥ अथोपसंहरन्नाह-

[भा.७९०] तम्हा न कहेयव्वं, आयरिएणं तु पवयणरहस्सं।
खेत्तं कालं पुरिसं, नाऊण पगासए गुज्झं॥

वृ- यस्मादेवं प्रायश्चित्तमभिहितं तस्मात् तिन्तिणिकादीनामाचार्येण 'प्रवचनरहस्यम्' अपवादपदं 'न कथयितव्यम्' न प्ररूपणीयमिति। कथं पुनः कथयितव्यम्? इत्याह-'क्षेत्रम्' अध्वादिकं प्रवेष्टव्यं ज्ञात्वा प्रथमतोऽध्वकल्पादिकं प्रवचनरहस्यभूतमपरिणतानामपि कथयितव्यम्, अन्यथा तेषां मार्गे गच्छतां संयमा-ऽऽत्मविराधना स्यात्। एवं 'कालमपि' दुर्भिक्षादिकमागमिष्यन्तमागतं वा ज्ञात्वा यथायोगमपरिणतानामपि राहसिकश्रुतार्थं प्रकाशयेत्। 'पुरुषं वा' परिणामकलक्षणम् उपलक्षणत्वाद् भावं वा-ग्लान-बाल-वृद्धा-ऽसहिष्णुप्रभृतीना-मुपग्रहकरणादिलक्षणं ज्ञात्वा प्रकाशयेद् 'गुह्यं' छेदश्रुतरहस्यभूतमपवादपदमिति॥

व्याख्यातं "पत्ते अ"त्ति द्वारम्। अथानुज्ञातद्वारमाह-

[भा.७९१] चउभंगो अणुन्नाए, अननुन्नाए अ पढमतो सुद्धो।
सेसाणं मासलहू, अविनयमाई भवे दोसा॥

वृ- अत्रानुज्ञाता-ऽननुज्ञातशब्दाभ्यां चतुर्भङ्गी कार्या, तद्यथा-अनुज्ञातमनुज्ञातो वाचयतीति प्रथमः, अस्य भावना-कश्चित् प्रातीच्छिको गच्छान्तरादागम्य सूत्राध्ययनार्थमुपसम्पन्नः, स चाऽऽचार्यैरनुज्ञातः-आर्य ! उपाध्यायस्य सकाशेऽधीष्वेति; ततः स उपाध्यायस्य समीपे गत्वा ब्रूते-भगवन् ! गुरुभिरहमादिष्टो भवतां पादमूले पठनार्थमिति; तत उपाध्यायेनागत्याचार्या प्रच्छनीयाः, यथा-क्षमाश्रमणाः ! पाठयाम्यहममुकं साधुम् ? इति; ततो गुरुभि 'बाढम्' इत्युक्ते स उपाध्यायेन पाठनीयः; एवंकुर्वन् अनुज्ञातमनुज्ञातो वाचयतीति अभिधीयते, एष प्रथमो भङ्गः शुद्धः । अनुज्ञातमननुज्ञात इति द्वितीयः, तद्भावना-स साधुराचार्यैर्भणितः-पठोपाध्यायान्तिके, स चैवमादिष्टः पठितुमुपस्थित उपाध्यायसन्निधौ, स उपाध्यायो यद्याचार्यानपृष्ट्वा तं पाठयति तत उपाध्यायस्य मासलघु । अननुज्ञातमनुज्ञात इति तृतीयः, अत्राचार्यैरुपाध्यायस्तस्य साधोः शृण्वतः सन्दिष्टः-आर्य ! पाठयेरमुं साधुमिति, न पुनरितरः सन्दिष्टः, ततः स उपस्थितः सन्नुपाध्यायेन प्रश्ननीयः-सौम्य ! क्षमाश्रमणैः सन्दिष्टस्त्वम् ? न वा ? इति; स प्रतिब्रूयात्-'मया युष्माकमादेशो दीयमानः श्रुतो न पुनरहं सन्दिष्टः' इत्युक्ते यद्युपाध्यायः पाठयति तदा द्वयोरप्यध्यापका-ऽध्यायकयोर्मासलघु; अथ न पाठयति तत उपाध्यायः शुद्धः । अननुज्ञातमननुज्ञातो वाचयतीति चतुर्थो भङ्गः, अत्र चोपाध्यायोऽप्यननुज्ञातः शिष्योऽप्यननुज्ञात इति कृत्वा द्वयोरपि मासलघु । अत एवाह- 'शेषेषु' प्रथमभङ्गव्यतिरिक्तेषु भङ्गेषु मासलघु । गाथायां प्राकृतत्वात् सप्तम्यर्थे षष्ठी । अविनयादयश्च दोषा भवन्ति, आदिशब्दाद् अनवस्था-अन्येषामपि यदृच्छयाऽध्ययना-ऽध्यापनलक्षणा इत्यादयो दोषाः परिगृह्यन्ते ॥

गतमनुज्ञातद्वारम् । अथ भावतः परिणामक इति द्वारं व्याख्यायते-अत्र च भावग्रहणाद् द्रव्य-क्षेत्र-काला अपि गृहीता द्रष्टव्याः, परिणामकप्रक्रमाच्चाऽपरिणामका-ऽतिपरिणामकावपि व्याख्येयाविति चेतसि व्यवस्थाप्य सूरिरिमां निर्युक्तिगाथामाह-

[भा.७९२] परिणाम अपरिणामे, अइपरिणाम पडिसेह चरिमदुए ।
अंबाईदिट्ठंतो, कहणा य इमेहि ठाणेहिं ॥

वृ- परिणामका-ऽपरिणामका-ऽतिपरिणामकानां प्ररूपणा कर्त्तव्या । प्रतिषेधः 'चरमद्विकस्य' अपरिणामका-ऽतिपरिणामकयुगलस्य कर्त्तव्यः, अनयोश्छेदश्रुतं न दातव्यमिति भावः । एषां च त्रयाणामपि परीक्षार्थमाम्रादिदृष्टान्तो वक्तव्यः, आदिशब्दाद् वृक्षमार्गौ: 'स्थानैः' प्रकारैराचार्येण कर्त्तव्येति ॥ अथैनामेव गाथां विवृणोति-

[भा.७९३] जो दव्व-खेत्तकय-काल-भावओ जं जहा जिनक्खायं ।
तं तह सद्दहमाणं, जाणसु परिणामयं साधुं ॥

वृ- अत्र "तुलादण्डमध्यग्रहण" न्यायेन कृतशब्दो मध्येऽभिहितोऽपि सर्वत्रापि सम्बध्यते। यः कश्चिद् द्रव्यकृतं क्षेत्रकृतं कालकृतं भावकृतम्, द्रव्यादिभिर्भेदैः सूत्रे विहितमित्यर्थः, यद् वस्तु 'यथा' येनोत्सर्गा-ऽपवादरूपेण प्रकारेण जिनैराख्यातं तत् तथा श्रद्दधाति, तमेवं 'श्रद्दधानं' रोचयन्तं जानीहि परिणामकं साधुम् । इयमत्र भावना-द्रव्यतः सचित्ता-ऽचित्तमिश्राणि द्रव्याणि यादृशे कार्ये कल्पन्ते न वा, क्षेत्रतोऽध्वनि वा जनपदे वा यद् यथाऽध्वकल्पादिकमाचरणीयम्, यादृग् विधिः । तदेवं सर्वमपि श्रद्दधानो यथावसरं प्रयुञ्जानश्च परिणामको ज्ञातव्यः ॥

अपरिणामकमाह-

[भा.७९४] जो दव्व-खेत्तकय-काल-भावओ जं जहा जिणक्खायं ।

तं तह असद्दहंतं, जाण अपरिणामयं साहुं ।।

वृ- यो द्रव्य-क्षेत्र-काल-भावकृतं यद् यथा जिनैराख्यातं तत्र श्रद्दधाति, तं तथा अश्रद्दधन्तं जानीहि अपरिणामकं साधुम् ।। अतिपरिणामकमाह-

[भा.७९५] जो दव्व-खेत्तकय-काल-भावओ जं जहिं जया काले ।

तल्लेसुस्सुत्तमई, अइपरिणामं वियाणाहि ।।

वृ- यो द्रव्य-क्षेत्र-काल-भावकृतं 'यद्' वस्तु 'यस्मिन्' विकृष्टाध्वादौ 'यदा काले' आत्यन्तिकदुर्भिक्षादौ भणितम्, "तल्लेसु"त्ति तस्मिन्-द्रव्यादिकृते आपवादिकवस्तुनि लेश्या यस्य स तल्लेश्यः, 'पश्यामि तावदत्र किमपि निश्रापदं ततस्तदेवालम्बयिष्यामि' इत्यपवाद-पदैकमतिरित्यर्थः । तथा सूत्राद्-अपवादश्रुताद् उत्-प्राबल्येन मतिरस्येत्युत्सूत्रमति, श्रुतोक्ता-पवादादप्यधिकापवादबुद्धिरिति भावः । तमेवंविधं साधुमतिपरिणामकं विजानीहीति ।।

अथामीषामेव व्युत्पत्तिनिमित्तं लक्षणमाह-

[भा.७९६]　परिणमइ जहत्थेणं, मई उ परिणामगस्स कज्जेसु ।

बिइए न उ परिणमई, अहिगं मइ परिणमे तइओ ।।

वृ- परिणामकस्य मति कार्येषु 'यथार्थ्येन' यथार्थग्राहकतया परिणमते, अत एवासौ परिणामक उच्यते । 'द्वितीये' द्वितीयस्यापरिणामकस्य मति 'न तु' नैव परिणमते, अत एवासावपरिणामक उच्यते । तृतीयः पुनरधिकां मतिं परिणमयतीत्यतिपरिणामकोऽभिधीयते।। एतदेव स्पष्टयति-

[भा.७९७] दोसु वि परिणमइ मई, उस्सग्गऽववायओ उ पढमस्स ।

बिइतस्स उ उस्सग्गे, अइअववाए य तइयस्स ।।

वृ- 'प्रथमस्य' परिणामकस्य मतिरुत्सर्गा-ऽपवादयोर्द्वयोरपि परिणमति(ते] । किमुक्तं भवति ? - यः परिणामको भवति तस्योत्सर्गे प्राप्ते उत्सर्ग एव मति परिणमते, अपवादे प्राप्तेऽपवादे एव मति परिणमते; यत्रोत्सर्गो बलीयान् तत्रोत्सर्गं समाचरति, यत्रापवादो बलवान् तत्रापवादं गृह्णाति । 'द्वितीयस्य' अपरिणामकस्य पुनरुत्सर्ग एव मति परिणमते, न पुनरपवादे । तृतीयस्य तु अति-अत्यर्थम् अपवादे मति परिणमते; स च द्रव्यादिकारणेषु प्रतिसेवनामनुज्ञातां ज्ञात्वा न किञ्चित् परिहरति, कारणमन्तरेणापि प्रतिसेवते ।। अथ यदुक्तमासीत् "अंबाईदिट्ठंतो" त्ति तद् इदानीं भाव्यते-एतेषां परिणामकादीनां त्रयाणामपि जिज्ञासया केचिदाचार्या स्वशिष्यानित्थ-मभिदध्यु-'आर्या ! आम्रैरस्माकं प्रयोजनमस्ति' इत्युक्ते यः परिणामकः शिष्यः स ब्रूयात्-

[भा.७९८] चेयणचेयण भाविय, केद्दह छिन्ने अ कित्तिया वा वि ।

लद्धा पुणो व वोच्छं, वीमंसत्थं व वुत्तो सि ।।

वृ- भगवन् ! यैराम्रैः प्रयोजनं तानि किं चेतनानि ? उताचेतनानि ? किं 'भावितानि' लवणादिभिर्वासितानि ? उताभावितानि ? "केद्दह" त्त किंप्रमाणानि ? किम महान्ति ? किं वा लघूनि ? "छिन्न"त्ति किं पूर्वच्छिन्नानि ? वा इदानीं छित्वा ? अथवा "छिन्न" त्ति किं 'छिन्नानि'

खण्डीकृतानि ? किं वा सकलानि ? "कितिया वा वि" त्ति कियन्ति वा गणनया द्वित्र्यादिसङ्ख्याकान्यानयामि? अपिशब्दात् किं बद्धास्थिकानि ? अबद्धास्थिकानि वा ? तरुणानि ? जरठानि वा ? इत्याद्यपि द्रष्टव्यम् । इत्थं शिष्येणाभिहिते आचार्येण वक्तव्यम्- सौम्य ! लब्धानि सन्त्यग्रेऽपि मम पुनः पुरा विस्मृतान्यासन् इदानीं स्मृतिपथमवतीर्णानीति; यद्वा पर्याप्तं तावदिदानीम्, प्रयोजने समापतिते पुनर्मम भवन्तं 'वक्ष्यामि' भणिष्यामि; अथवा वत्स ! किं ममाऽऽम्रैः कार्यम् ? 'विमर्शार्थं' 'किमयं विनीतः ? न वा ?, परिणामको वा ? न वा ?' इति विन्यासनार्थमुक्तोऽसीति ॥

यः पुनरपरिणामकः स ब्रूयात्-

[भा.७९९] किं ते पित्तपलावो, मा बीयं एरिसाई जंपाहि ।
मा णं परो वि सोच्छिहि, कहं पि नेच्छामो एयस्स ॥

वृ- भो आचार्य ! किं ते पित्तप्लावः समजनि यदेवमुन्मत्तवदसम्बद्धं प्रलपसि ?, यद्येकवारं ममाग्रे जल्पितं तर्हि जल्पितं नाम, मा पुनर्द्वितीयं वारं ईदृशानि सावद्यानि वचनानि जल्पेति; यतः मा "णं" इति एतत् त्वदीयं वचनं 'परोऽपि' अन्योऽपि श्रोष्यति, वयं पुनः कथामपि नेच्छामः 'एतस्य' अर्थस्य आम्रानयनलक्षणस्य किं पुनः कर्त्तव्यतामित्यपिशब्दार्थः ॥

यः पुनरतिपरिणामकः स एवमभिदध्यात्-

[भा.८००] कालो सिं अइवत्तइ, अम्ह वि इच्छा न भाणिउं तरिमो ।
किं एच्चिरस्स वुत्तं, अन्नाणि वि किं च आणेमि ॥

वृ- क्षमाश्रमणाः ! यदि युष्माकमाम्रैः प्रयोजनं तत इदानीमप्यानयामि, यतः "सिं" इति एषामाम्राणां कालः 'अतिवर्त्तते' अतिक्रामति, अद्य तावत् तानि तरुणानि वर्त्तन्ते अत ऊर्ध्वं जरठभविष्यन्तीत्यर्थः । यद्वाऽस्माकमप्याम्राणां ग्रहणे महती इच्छा, परं किं कुर्म ? न वयं यौष्माकीणभयभीता भणितुं किमपि "तरामु" त्ति शक्नुमः । अथवा यद्याम्राण्यपि ग्रहीतुं कल्पन्ते ततः किमियतश्चिरात् कालादुक्तम् ?, वञ्चिताः स्मो वयमियन्तं कालमिति भावः । किं वा अन्यान्यपि मातुलिङ्गादीन्यानयामीति ॥ अनयोरपरिणामका-ऽतिपरिणामकयोरेवंजल्पतोराचार्येणेदमुत्तरं दातव्यम्-

[भा.८०१] नाभिप्पायं गिण्हसि, असमत्ते चेव भाससी वयणे ।
सुत्तंबिल-लोणकए, भिन्ने अहवा वि दोच्चंगे ॥

वृ- भो मुग्ध ! त्वं मदीयमभिप्रायं न गृह्णासि, किन्तूत्सुकतया मदीये वचनेऽसमाप्त एवेदृशं समयविरुद्धं निष्ठुरं वचनं भाषसे; मया पुनरनेनाभिप्रायेणाभिहितम्- "सुत्तंबिल" इत्यादि, शुक्तं- काञ्जिकं तदेवात्यम्लं शुक्लाम्लं तेन लवणेन वा कृतानि-भावितानि शुक्लाम्ल-लवणकृतानि भिन्नानि च । किमुक्तं भवति ?-न मया भवतः पार्श्वादपरिणतान्याम्राण्यानायितानि, किन्तु घतुर्थरसिकभावितानि वा लवणभावितानि वा; यद्वा द्रव्यतो भावतश्च भिन्नानि, परिणतानीति भावः । अथवा "दोच्चंगे" त्ति सामयिकी संज्ञा, ओदनादिमूलाङ्गापेक्षया भोजनस्य द्वितीयाङ्गानि-राद्धशाकरूपाणि तानि मया आनायितानीति प्रक्रमः ॥ "अंबाई" इत्यत्राऽऽदिशब्दसूचितौ वृक्ष -बीजदृष्टान्ताविमौ-आचार्या भणन्ति-अज्जो ! रुक्खेहिं बीएहिं वा पओअणं ति । अत्रापि परिणामकादिजल्पस्तथैवावसातव्यः । नवरमपरिणामका-ऽतिपरिणामकौ प्रति सूरिणा प्रतिवक्तव्यम्-

[भा.८०२] निप्फाव-कोद्दवाईणि बेमि रुक्खाणि न हरिए रुक्खे ।
अंबिल विद्धत्थाणि अ, भणामि न विरोहणसमत्थे ॥

वृ- निष्पावाः-वल्लाः कोद्रवाः-प्रतीतास्तदादीनि यानि "रुक्खाणि" त्ति रूक्षाणि द्रव्याणि तान्येवाहं ब्रवीमि, न तु 'हरितान्' सचित्तान् वृक्षान् । तथा बीजान्यपि यानि अम्लभावितानि 'विध्वस्तानि वा' व्यवच्छिन्नयोनिकानि तान्यह भणामि, 'न विरोहणसमर्थानि' न पुनरङ्कुरोद्-भवनशक्तिकानीति । एष आम्रादिदृष्टान्तः । कथना चाऽऽचार्येणामीभि स्थानैः "सुत्तंबिल" इत्यादिभिः प्रकारैः कृता । एवं परीक्ष्य यः परिणामकस्तस्य दातव्यम् ॥

कथं पुनस्तेन श्रोतव्यम् ? इत्याह-

[भा.८०३] निद्दा-विगहापरिवज्जिएण, गुत्तिंदिएण पंजलिणा ।
भत्ती बहुमाणेण य, उवउत्तेणं सुणेयव्वं ॥

वृ- निद्रायमाणः सन् न किञ्चिदप्यवधारयति विकथायां क्रियमाणायां व्याघातो भवतीत्यतो निद्रा-विकथापरिवर्जितेन श्रोतव्यम् । गुप्तानि-स्वस्वविषयप्रवृत्तिनिरोधेन संवृतानीन्द्रियाणि येनासौ गुप्तेन्द्रियस्तेन । तथा 'प्राञ्जलिना' योजितकरयुगलेन । भक्त्या बहुमानेन च श्रोतव्यम्, भक्तिर्नाम गुरूणामितिकर्त्तव्यतायां निषद्यारचनादिका या बाह्या प्रवृत्ति, बहुमानस्तु गुरूणामुपरि आन्तरः प्रतिबन्धः । अत्र चतुर्भङ्गी-भक्तिर्नामैकस्य न बहुमानः, बहुमानो नामैकस्य न भक्ति, एकस्य भक्तिरपि बहुमानोऽपि, एकस्य न भक्तिर्न वा बहुमान इति । अत्र च भक्ति-बहुमानयोर्विशेषज्ञापकं शिवाख्यव्यन्तरभक्तयोर्मरुक-पुलिन्दयोरुदाहरणम्, तच्च सुप्रसिद्धमिति कृत्वा न लिख्यते । यदि भक्तिं बहुमानं वा न करोति तदा चतुर्लघु तथा 'उपयुक्तेन' अनन्यमनसा श्रोतव्यम् ॥

[भा.८०४] अभिकंखंतेण सुभासियाइँ वयणाइँ अत्थमहुराइं ।
विम्हियमुहेण हरिसागएण हरिसं जणंतेण ॥

वृ- "अभिकंखंतेण" इत्यादि । 'वचनानि' श्रुतव्याख्यानरूपाणि 'सुभाषितानि' शोभन-भणितिभिर्भणितानि 'अर्थमधुराणि' भावार्थसुस्वादूनि 'अभिकाङ्क्षता' आभिमुख्येन वाञ्छता । तथा 'विस्मितमुखेन' अपूर्वापूर्वार्थश्रवणसमुद्भूतविस्मयस्मेरवदनेन । 'हर्षागतेन' 'अहो ! अमीभगवन्तः स्वगल-तालुशोषमवगणय्यास्मन्निमित्तमेवंविधं सूत्रार्थव्याख्यानं कुर्वन्ति, नानृणीभवेयममीषां परमोपकारिणामहम्' इत्येवंविधं हर्षमागतः-प्राप्तो हर्षागतस्तेन । तथा गुरूणामपि स्ववदनप्रसन्नतया उत्फुल्ललोचनतया च 'हर्षम्' 'अहो ! कथमयं संवेगरङ्गतरङ्गितमानसः परमागमव्याख्यानं शृणोति ?' इति लक्षणं प्रमोदं जनयता श्रोतव्यमिति ॥

अथ परिणामकद्वारमुपसंहरन्नाह-

[भा.८०५] आधारिय सुत्तत्थो, सविसेसो दिज्जए परिनयस्स ।
सुपरिच्छित्ता य सुनिच्छियस्स इच्छागए पच्छा ॥

वृ- यः कल्प-व्यवहारादेः सूत्रार्थ 'सविशेषः' सापवादः स्वगुरुसकाशाद् 'आधारितः' आगृहीतः स सर्वोऽपि दीयते 'परिणतस्य' परिणामकस्य शिष्यस्य 'सुपरीक्ष्य' पूर्वोक्ताम्रादिदृष्टान्तैः सुष्ठु-अविसंवादेन परीक्षां कृत्वा 'सुनिश्चितस्य' प्रारब्धसूत्रार्थे ग्रहीतव्ये कृतनिश्चयस्य, यद्वा 'ज्ञान-दर्शन-चारित्राणां यावज्जीवं मया विराधना न कर्त्तव्या' इत्येवं सुष्ठु निश्चितः-निश्चयवान्

यः स सुनिश्चितस्तस्य दीयते। "इच्छागए पच्छि"त्ति अपरिणामका-ऽतिपरिणामकयोः पुनर्यदा सा आत्मीया यथाक्रमं केवलोत्सर्ग-केवलापवादरुचिलक्षणा इच्छा गता-नष्टा भवति तदा पश्चात् तयोः छेदसूत्राणि दातव्यानीति ॥

उक्तं परिणमकद्वारम्। तदुक्तौ च व्याख्यातं सप्रपञ्चं "बहुस्सुए चिरपव्वइए" इत्यादिकं द्वारश्लोकयुगलम्। तद्याख्याने च समर्थितं "निक्खेवेगट्ठ निरुत्ति" इत्यादिमूलद्वारगाथा सूचितं पर्षदिति द्वारम्। अत्र च लक्षण-तदर्ह-पर्षद्द्वाराणि निक्षेपनामकस्यानुयोगद्वारद्वितीयभेदस्य प्रासङ्गिकतया तदन्तःपातीन्येवावसातव्यानीति। गतं निक्षेपद्वारमिति ॥

चारित्रभूपालनिवासहेतुप्रासादकल्पे किल कल्पशास्त्रे।
सुवर्णबद्धा सुरसावगाढा, समर्थिता सम्प्रति पीठिकेयम् ॥

**बृहतकल्पे पीठिका समाप्ताः**

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता बृहत्कल्पसूत्रे पीठिकायाः**
**संघदास गणि विरचितं भाष्यं एवं क्षेमकीर्तिआचार्येण विरचिता टीका परिसमाप्ता।**

---

## उद्देशकः-१

वृ- अथानुगमद्वारम्। स चानुगमो द्विधा-निर्युक्त्यनुगमः सूत्रानुगमश्च। निर्युक्त्यनुगमः। सूत्रानुगमश्च। निर्युक्त्यनुगमस्त्रिविधः-निक्षेपनिर्युक्त्यनुगम उपोद्घातनिर्युक्त्यनुगमः सूत्रस्पर्शिकनिर्युक्त्यनुगमश्च। तत्र निक्षेपनिर्युक्त्यनुगमोभिहितः, ओघनिष्पन्ने निक्षेपेऽध्ययनपदस्य नामनिष्पन्ने च कल्पपदस्य निक्षिप्तत्वाद् वक्ष्यते च सूत्रालापकनिष्पन्ने सूत्रपदानां निक्षेप्स्यमानत्वात् १। उपोद्घातनिर्युक्त्यनुगमः पुनराभ्यां द्वारगाथाभ्यामनुगन्तव्यः। तद्यथा-

उद्देसे निद्देसे, य निग्गमे खेत्त काल पुरिसे य।
कारण पच्चय लक्खण, नए समोयारणाऽनुमए ॥
किं कइविहं कस्स कहिं, केसुकहं केच्चिरं हवइ कालं।
कइ संतरमविरहियं, भवाऽऽगरिस फासणनिरुत्ती ॥

अनयोरर्थो मूलावश्यकादिटीकातोऽवसातव्यः २। सूत्रस्पर्शिकनिर्युक्त्यनुगमः सूत्रपदव्याख्यानरूपः, स चावसरप्राप्तोऽपि नाभिधीयते; कुतः ? इति चेत्, उच्यते-सूत्रमेव तावदद्यापि न प्राप्यते, अतः सूत्राभावात् कस्य स्पर्शनं करोत्वसौ ? इति, अतः क्रमप्राप्ते सूत्रानुगमे यदा सूत्रं वक्ष्यते ततः कस्मादत्रावसरे पठ्यते ? उच्यते- निर्युक्तिमात्रसाम्यादसावत्राभिधीयत इत्यदोषः ३। अथ सूत्रानुगमः, स चेदानीमवसरप्राप्त एवेत्यत्र सूत्रानुगमे सूत्रमुच्चारणीयम्, ततः सूत्रालापकनिक्षेपेण निक्षेपणीयम्, ततोऽपि सूत्रस्पर्शिकनिर्युक्त्या तदेव विस्तारणीयम्। अत्र च सूत्रानुगमादीनामित्थं विषयविभागव्यवस्था द्रष्टव्या-पदच्छेदसहितया संहितया सूत्रमुच्चार्य सूत्रानुगमः कृतार्थो भवति, नामादिनिक्षेपविनियोगं विधाय सूत्रालापकनिष्पन्ननिक्षेपः, पदार्थ-पदविग्रह-चालना-प्रत्यवस्थानलक्षणव्याख्याचतुष्टये कृते सूत्रस्पर्शिकनिर्युक्तिः। नैगमादयो नया

अपप्रायः सूत्रगतपदार्थादिगोचरा इति तत्त्वतो नयलक्षणं चतुर्थमनुयोगद्वारमपि सूत्रस्पर्शिकनिर्युक्त्यन्तः पाति प्रतिपत्तव्यम् । तथा चाह श्रीजिनभद्रगणिक्षमाश्रमणपूज्यः-

होइ कयत्थो वोत्तुं, सपयच्छेयं सुयं सुयानुगमो ।
सुत्तालावगनासो, नामाइन्नासविनिओगं ॥
सुत्तप्फासियनिज्जुत्तिनिओगो सेसओ पयत्थाई ।
पायं सो च्चिय नेगमनयादिमयगोअरो होइ ॥

एते च सूत्रानुगमादयः सूत्रेण समकमेव व्रजन्ति । यत उक्तम्-

सुत्तं सुत्तानुगम, सुत्तालावगगओ य निक्खेवो ।
सुत्तप्फासियनिज्जुत्ती, नया य वच्चंति समगं तु ॥

तत्र प्रथमं सूत्रानुगमे सूत्रमुच्चारणीयम्, तच्चाहीनाक्षरादि गुणोपेतम् । तद्यथा-अहीनाक्षरम् अनत्यक्षरम् अव्याविद्धाक्षरं अस्खलितम् अमिलितम् अव्यत्याम्रेडितं प्रतिपूर्णं प्रतिपूर्णघोषं कण्ठोष्ठविप्रमुक्तं गुरुवाचनोपगतम् । एवं च सूत्रे समुच्चारिते सति केषाञ्चिद् भगवतामुद्धटितज्ञानां केचिदर्थाधिकारा अधिगता भवन्ति, केचित् पुनरनधिगताः, ततोऽनधिगतार्थाधिगमनाय व्याख्या प्रवर्त्तते । अत्रान्तरे "निक्खेवे" इत्यादि सूत्रगाथोदितं सूत्रार्थद्वारं समापतितम् । तच्चेदं सूत्रम्-

मू. (१) *नो कप्पइ निग्गंथाण वा निग्गंथीण वा आमे तालपलंबे अभिन्ने पडिगाहित्तए ॥*

वृ- अस्य च व्याख्या षोढा । तद्यथा-

संहिता च पदं चैव, पदार्थः पदविग्रहः ।
चालना प्रत्यवस्थानं, व्याख्या तन्त्रस्य षड्विधा ॥

तत्र संहिता-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा आमं तालप्रलम्बमभिन्नं प्रतिग्रहीतुम् १ । अथ पदमिति पदविच्छेदः कर्त्तव्यः । स चायम्-नो इति पदं कल्पते इति पदं निर्ग्रन्थानामिति पदं वा इति पदं निर्ग्रन्थीनामिति पदं वा इदि पदम् आममिति पदं ताल इति पदं प्रलम्बमिति पदं अभिन्नमिति पदं प्रतिग्रहीतुमिति पदमिति गतः पदविच्छेदः २ ।

अथ पदार्थ उच्यते-स च चतुर्द्धा, तद्यथा-कारकविषयः समासविषयः तद्धितविषयो निरुक्तविषयश्च । तत्र कारकविषयः पचतीति पाचकः, पठतीति पाठकः, भुज्यत इति भोजनम्, स्नाति जनोऽनेनेति स्नानीयं चूर्णम्, दीयतेऽस्मै इति दानीयोऽतिथि, बिभेति जनोऽस्मादिति भीमः, शेरतेऽस्यामिति शय्या इत्यादि । समासविषयो यथा-आरूढो वानरो यं वृक्षं स आरूढवानरो वृक्ष इति बहुव्रीहिः १, गङ्गायाः समीपमुपगङ्गमित्यव्ययीभावः २, राज्ञः पुरुषो राजपुरुष इति तत्पुरुषः ३, नीलं च तदुत्पलं च नीलोत्पलमिति कर्मधारयः ४, चतुर्णां मासानां समाहारश्चतुर्मासी इति द्विगुः ५, धवश्च खदिरश्च पलाशश्च धव-खदिर-पलाशा इति द्वन्द्वः ६ इत्यादि । तद्धितविषयः-नाभेरपत्यं नाभेयः, जिनो देवताऽस्येति जैनः, भद्रबाहुणा प्रोक्तं शास्त्रं भाद्रबाहवमित्यादि । निरुक्तविषयः-भ्रमति च रौति चेति भ्रमरः, मह्यां शेते महिषः, जीवनस्य-जलस्य मूतः-पुटबन्धो जीमूत इत्यादि, कृतं विस्तरेण । एष चतुर्विधोऽपि पदार्थ समस्तो व्यस्तो वा यो यत्र सूत्रे सम्भवति स तत्र योजनीय इति । सम्प्रति प्रकृतसूत्रस्य पदार्थ उच्यते-नोशब्दः प्रतिषेधे, "कृपौङ् सामर्थ्ये" इत्यस्य धातोर्वर्त्तमानविभक्तेरात्मनेपदीयान्यदर्थैकवचनान्तस्य कल्पते इति रूपम्, ततश्च 'नो

कल्पते'नो समर्थीभवति, न युज्यते इत्यर्थः। एवं सर्वत्र प्रकृति-प्रत्ययविभागः शब्दशास्त्रानुसारेण स्वधिया योजनीयः। तथा ग्रन्थः-परिग्रहः, स च बाह्याऽऽभ्यन्तरभेदाद् द्विधा, बाह्यः क्षेत्र-वास्त्वादि, आभ्यन्तरः क्रोधादि, ततो निर्गता ग्रन्थादिति निर्ग्रन्थाः-साधवस्तेषाम्। एवं 'निर्ग्रन्थीनां' साध्वीनाम्। वाशब्दावुभयस्यापि वर्गस्य प्रलम्बकल्प्यताप्रतिषेधमधिकृत्य तुल्यकक्षतासूचकौ। 'आमम्' अपक्वम्। तलः-वृक्षविशेषस्तत्र भवं तालं-तालफलम्, प्रकर्षेण लम्बते इति प्रलम्बं-मूलम्, तालं च प्रलम्बं च तालप्रलम्बं समाहारद्वन्द्वः। 'अभिन्नं' द्रव्यतो अविदारितं भावतोऽव्यपगतजीवम्। किम्? इत्याह-'प्रतिग्रहीतुम्' आदातुमिति पदार्थ ३।

पदविग्रहस्तु यानि समासभाञ्जि पदानि तेषु पदार्थमध्य एव वर्णित इति ४। चालना-प्रत्यवस्थाने तु भाष्यगाथाभिरेव सविस्तरं भावयिष्येते इति सूत्रसमासार्थ॥ भाष्यकारः प्रतिपदमेव सूत्रं व्याचिख्यासुः प्रथमतो नोकारपदं निर्ग्रन्थपदं च व्याख्यानयति-

[भा.८०६] अकार-नकार-मकारा, पडिसेहा होंति एवमाईया।
सहिरन्नगो सगंथो, अहिरन्न-सुवन्नगा समणा॥

वृ- अकार-नकार-मकारा एवमादयः शब्दाः, अत्राऽऽदिग्रहणाद् नोकारो गृह्यते, एते प्रतिषेधवाचका द्रष्टव्याः, 'अकरणीयं न करोषि, मा कार्षीः, नो कुरुषे' इत्यादिष्वमीषां प्रतिषेधवाचिनां प्रयोगदर्शनात्। तथा सहिरण्यकः सग्रन्थ उच्यते, अत्र हिरण्यग्रहणं बाह्या-ऽऽभ्यन्तरपरिग्र-होपलक्षणम्, ततो यः सपरिग्रहः स सग्रन्थः। श्रमणाः पुनरहिरण्य-सुवर्णका अतो निर्ग्रन्थाः। हिरण्यं-रूप्यं सुवर्णं-कनकम्। अत्र च "कल्पते" इति पदं सुगमत्वाद् भाष्यकृता न व्याख्यातम्, निर्ग्रन्थीशब्दव्युत्पत्तिरपि निर्ग्रन्थशब्दवद् द्रष्टव्या, लिङ्गमात्रकृतभेदत्वादनयोरिति॥ अथ नोकारशब्दस्यैव भावनां करोति-

[भा.८०७] नोकारो खलु देसं, पडिसेहयई कयाइ कप्पिज्जा।
आमं च अणन्नत्ते, तलो य खलु उस्सए होइ॥

वृ-नोशब्दः प्रायो देशप्रतिषेधे वर्त्तते, यथा "नोघटः" इत्युक्ते घटैकदेशः कपालादिकः प्रतीयते, एवमत्रापि नोकारो देशं प्रतिषेधयति। ततश्चेदमुक्तं भवति-कदाचित् कल्पेत तालप्रलम्बम्, उत्सर्गपदरूपे देशे तावन्न कल्पते आत्यन्तिके पुनरपवादपदे कल्पतेऽपीति भावः। 'आमं च' आमशब्दश्च 'अनन्यत्वे' अनन्यभावे वर्त्तते। किमुक्तं भवति?-पूर्वकालभाविनीमपक्वावस्थामपेक्ष्य तदुत्तरकालभाविनी पक्वावस्था अन्या-अपराऽभिधीयते, तदभावरूपेऽनन्यत्वे अपक्वावस्थाया-मामशब्दो वर्त्तते। तलशब्दश्चोच्छ्रये भवति, द्राधीयःस्कन्धरूपेणोच्छ्रयेणोच्छ्रितो यो वृक्षविशेषः स तलः-तालवृक्ष इति भावः; तत्र भवं तालं-तालवृक्षफलम्॥ अथ प्रलम्बादिपदानि व्याचष्टे-

[भा.८०८] पडिलंबना पलंबं, अविदारिय मो वयंति उ अभिन्नं।
अहवा वि दव्व भावे, तंपइगहणं निवारेइ॥

वृ- 'प्रतिलम्बनात्' प्रति-प्रकर्षेण लम्बत इति 'प्रलम्बम्' तस्यैव तलवृक्षस्य मूलम्। तथा यद् अविदारितं 'मो' इति पादपूरणे तद् वदन्ति श्रुतवेदिनो अभिन्नम्। अथवा अभिन्नं द्विधा-द्रव्यतो भावतश्च। तत्र द्रव्यतो यद् अविदारितम्, भावतः पुनरव्यपगतजीवम्। 'तत्प्रतिग्रहणं' तस्य-आमतालप्रलम्बस्याभिन्नस्यादानं निवारयति नोकार इति एष सूत्रपदार्थः॥ अथ चालना-

प्रत्यवस्थाने अभिधीयेते। तत्र सूत्रगोचरमर्थगोचरं वा दूषणं चाल्यते-आक्षिप्यते यया वचनपद्धत्या सा चालना। तथा प्रति इति-परोक्तदूषणप्रातिकूल्येनावस्थीयते अन्तर्भूतण्यर्थत्वादवस्थाप्यते-युक्तिपुरस्सरं निर्दोषमेतदिति शिष्यबुद्धावारोप्यते येन तत् प्रत्यवस्थानं-प्रतिवचनम्। अत्र तावदियं चालना-ननु च सर्वाण्यपि शास्त्राणि माङ्गलिकाभिधानपुरस्सराणि प्रवर्तन्ते, इदं तु सूत्रं भवद्भिः प्रतिषेधकत्वात् प्रथमत एवामाङ्गलिकमारब्धम्। तथा चात्र प्रयोगः- अमाङ्गलिकमेतत् सूत्रम्, प्रतिषेधरूपत्वात्, इह यद् यत् प्रतिषेधरूपं तत् तद् अमाङ्गलिकम्, यथा गन्तुं प्रस्थितस्य कस्यापि पुरुषस्य 'मा यासीः' इत्यादि वचनम्, प्रतिषेधरूपं चेदं सूत्रम्, तस्मादमाङ्गलिकम्; एवं परेणोक्ते सति सूरि प्रत्यवस्थानमाह-

[भा.८०९] जं गालयते पावं, मं लाइ व कहममंगलं तं ते।
जा य अणुन्ना सव्वा, कहमिच्छसि मंगलं तं तु॥

वृ-इह मङ्गलशब्दस्य निरुक्तं पूर्वसूरिभिरित्थमभिधीयते-मां 'लाति' दुर्गतौ पतन्तं गृह्णाति पापं च गालयतीति मङ्गलम्। एतच्च निरुक्तमत्रापि घटते, यत आह-यदिदं "नो कप्पइ" इत्यादि सूत्रं तत् पापं सचित्तवनस्पतिग्रहणरूपं गालयति, तथा मामिति-आत्मद्रव्यं नरकादौ पतन्तं लाति-धारयति तद् एवंविधमपि कथं नाम 'ते' तवामङ्गलं भणितुमुचितम्? न कथञ्चिदित्यर्थः। किञ्च-यदि प्रतिषेधमात्रमेवामङ्गलं भवत इष्टम् ततो या काचिदनुज्ञा पापस्य धर्मस्य वा सा सर्वाऽपि भवतो मङ्गलं प्राप्नोति। यदि नामैवं ततः किम्? इत्याह-'कथं' केन प्रकारेण 'तां' सर्वमप्यनुज्ञां मङ्गलमिच्छसि?। किमुक्तं भवति-यदि पापानुज्ञाऽपि प्रतिषेधविषयविद्वेषमात्रादेव भवता मङ्गलमभ्युपगम्यते तर्हि धर्म-पापानुज्ञयोः सङ्करदोषः प्रसज्येत, उभयोरपि मङ्गलरूपत्वात्; ततश्चाधर्मस्यापि मङ्गलरूपतया करणीयतापत्ति स्यात्; न चैतद् दृष्टमिष्टं वा, ततो न सर्वाऽप्यनुज्ञा मङ्गलम् न वा प्रतिषेधः सर्वोऽप्यमङ्गलम्, किन्तु या धर्मस्यानुज्ञा यश्च पापस्य प्रतिषेध एतौ द्वावपि मङ्गलम्, तदितरावनुज्ञा-प्रतिषेधावमङ्गलमिति॥ अमुमेवार्थं द्रढयन्नाह-

[भा.८१०] पावाणं समणुन्ना, न चेव सव्वम्मि अत्थि समयम्मि।
तं जइ अमंगलं ते, कयरं नु हु मंगलं तुज्झं॥

वृ-'पापानां' प्राणिवधादीनां समनुज्ञा नैवास्ति सर्वस्मिन्नपि 'समये' सिद्धान्ते, न केवलमत्रैव सूत्रे इत्यपिशब्दार्थ, किन्तु सर्वत्रापि प्रतिषेध एव; ततो यदि ते 'तत्' तथाविधमपि पापप्रतिषेधकं सूत्रममङ्गलम् ततः कतरद् 'नुः' इति वितर्के 'हु' निश्चये तव मङ्गलं भविष्यति?, न किमपीत्यर्थः॥ किञ्च-

[भा.८११] पावं अमंगलं ति य, तप्पडिसेहो हु मंगलं नियमा।
निक्खेवे वा वुत्तं, जं वा नवमम्मि पुव्वम्मि॥

वृ-पापं नियमादमङ्गलम्, तत्प्रतिषेधः पुनर्नियमाद् मङ्गलम्, यत एवं ततो माङ्गलिकमेतत् सूत्रमिति। तथा चात्र प्रयोगः-माङ्गलिकं "नो कप्पइ निग्गंथाण वा निग्गंथीण वा" इत्यादि सूत्रम्, पापप्रतिषेधकत्वात्, इह यद् यत् पापप्रतिषेधकं तत् तद् माङ्गलिकम्, यथा "सव्वे जीवा न हंतव्वा" इत्यादि वचनम्, पापप्रतिषेधकं चेदं सूत्रम्, तस्माद् माङ्गलिकम्। अथवा 'निक्षेपे' नामनिष्पन्नलक्षणे "छव्विह १ सत्तविहे या २, दसविह ३ वीसइविहे य ४ बायाला ५।" इति

पञ्चविधभावकल्पसम्बन्धायातस्य पञ्चकल्पस्यादौ ।

वंदामि भद्दबाहुं, पाईणं चरिमसयलसुयनाणिं ।
सुत्तस्स कारगमिसिं, दसाण कप्पे य ववहारे ॥

इत्यधिकृतसूत्रकारनमस्काररूपं यद् मङ्गलमुक्तम्, यद्वा 'नवमे पूर्वे' प्रत्याख्याननामके प्रथमप्रारम्भे यद् मङ्गलाभिधानं कृतं तेनैवास्य सूत्रस्य माङ्गलिकत्वं मन्तव्यमिति ॥ अथेत्थमपि स्थापितं सूत्रस्य माङ्गलिकत्वं स्वाग्रहाभिनिवेशादप्रतिपद्यमानं परमुपलभ्य सूरिरिदमाह-

[भा.८१२] अद्दागसमो साहू, एवं सुत्तं पि जो जहा वयइ ।
तह होइ मंगलममंगलं च कल्लाणदेसिस्स ॥

वृ- ''अद्दाग''त्ति आदर्श-दर्पणस्तत्समः-तत्सदृशः साधुः । किमुक्तं भवति ? -यथा दर्पणे स्वरूपतो निर्मलेऽपि तत्तदुपाधिवशतः सुन्दरा-ऽसुन्दररूपाणि प्रतिरूपाणि विलोक्यन्ते तथा साधुमपि परममङ्गलभूतं दृष्ट्वा मङ्गलबुद्धिं कुर्वतः प्रशस्तचेतोवृत्तेर्भव्यस्य मङ्गलं भवति, तदितरस्य संक्लिष्टकर्मणो दूरभव्यादेरमङ्गलबुद्धिं कुर्वाणस्यामङ्गलं भवति । 'एवम्' आदर्श-साधुदृष्टान्तेन सूत्रमपि स्वरूपतः परममङ्गलभूतं यो यथा वदति तस्य तथैव 'मङ्गलममङ्गलं वा भवति' मङ्गलबुध्या परिगृह्यमाणं मङ्गलम् अमङ्गलबुध्या तु परिगृह्यमाणममङ्गलं भवतीत्यर्थः । एवं च माङ्गलिकेऽपि सूत्रे यदि त्वममङ्गलबुद्धिं करोषि भवतु तर्हि कल्याणद्वेषिणो भवतोऽमङ्गलम् ॥ किञ्चान्यत्-

[भा.८१३] जइ वा स्वनिसेहो, हवेज्ज तो कप्पणा भवे एसा ।
नंदी य भावमंगल, वुत्तं तत्तो अणन्नमिदं ॥

वृ- वाशब्दः प्रत्यवस्थानस्य प्रकारान्तरोपदर्शनार्थ । यद्यत्र सूत्रे 'सर्वनिषेधः' सर्वथैव प्रतिषेधः स्यात् ततो भवेत् तावकीना प्रतिषेधकत्वादमङ्गलमित्येषा कल्पना । यस्मात् पुनरत्र नोशब्दो देशप्रतिषेध एव वर्त्तते अतः परिफल्गुरियं भवदीया कल्पनेति । यद्वा 'नन्दी च' पञ्चप्रकारज्ञानरूपा भावमङ्गलमुच्यते, तच्च ''नंदी य मंगलट्ठा'' इत्यादिना ग्रन्थेन पीठिकायां प्रोक्तमेव । यदि नाम प्रोक्तं ततः किमायातम् ? इत्याह-'तस्माच्च'नन्दीरूपाद् भावमङ्गलात् 'अनन्यत्' अपृथग्भूतमिदं सूत्रम्, अस्यापि श्रुतत्वात् श्रुतस्य च ज्ञानपञ्चकान्तर्गतत्वादिति भाव इति; अतोऽपि माङ्गलिकमिदम् ॥ तदेवं स्थापितमनेकधा भाष्यकृता सूत्रस्य माङ्गलिकत्वम् । सम्प्रति निर्युक्तिकृद् नोशब्दाभिधेयस्य प्रतिषेधस्य निक्षेपमनन्तरोक्तमर्थं च सूचयन्नाह-

[भा.८१४] पडिसेहम्मि उ छक्कं, अमंगलं सो त्ति ते भवे बुद्धी ।
पावाणं जदकरणं, तदेव खलु मंगलं परमं ॥

वृ- 'प्रतिषेधे' प्रतिषेधविषयं 'षट्कं' नाम-स्थापना-द्रव्य-क्षेत्र-काल-भावलक्षणं निक्षेपणीयम् । तत्र नाम्नः प्रतिषेधः 'न वक्तव्युकं नाम' इतिलक्षणः, यथा-

अज्जए पज्जए वा वि, वप्पो चुल्लपिउ त्ति य ।
माउलो भायणिज्ज त्ति, पुत्ता नत्तुणिय त्ति य ॥
हे हो हले त्ति अन्ने त्ति, भट्टा सामिय गोमिय ।
होल गोल वसुल त्ति, पुरिसं नेवमालवे ॥ इत्यादि ।

स्थापना आकारो मूर्तिरिति पर्यायाः, तस्याः प्रतिषेधो यथा-

वितहं पि तहामुत्तिं, जो तहा भासए नरो।
सो वि [illegible] पावेणं, किं पुणं जो मुसं वए ॥

द्रव्यप्रतिषेधो ज्ञशरीरे-भव्यशरीरव्यतिरिक्तः पुनरयम्- नो कप्पइ निग्गंथाण वा निग्गंथीणवा आमे तालपलंबे अभिन्ने पडिगाहित्तए त्ति। क्षेत्रप्रतिषेधो यथा-नो कप्पइ निग्गंथाण वा निग्गंथीण वा रातो वा वियाले वा अद्धाणगमणं एत्तए कालप्रतिषेधो यथा-

अत्थंगयम्मि आइच्चे, पुरत्था य अनुग्गए।
आहारइयं सव्वं, मणसा वि न पत्थए ॥

– भावप्रतिषेध औदयिकभावनिवारणरूपो यथा –

कोहं मानं च मायं च, लोभं च पाववड्डणं।
वमे चत्तारि दोसे उ, इच्छंतो हियमप्पणो ॥ इत्यादि।

अत्र च सूत्रे द्रव्यप्रतिषेधेनाधिकारः। तथा 'स इति' प्रतिषेधोऽमङ्गलमिति 'ते' तव बुद्धिर्भवेत् सा चायुक्ता, यतः पापानां यदकरणं तदेव खलु परमं मङ्गलं ज्ञातव्यमिति पूर्वमेव भावितम् ॥ तदेवमुक्तः सङ्क्षेपतः सूत्रार्थः। सम्प्रति विस्तरार्थं सूत्रस्पर्शिकनिर्युक्त्या प्रतिपादयितुमाह-

[भा.८१५] आइनकारे गंथे, आमे ताले तहा पलंबे य।
भिन्नस्स वि निक्खेवो, चउक्कओ होइ एक्केक्के ॥

वृ- आदौ नकार आदिनकारः स विचारणीयः। तथा ग्रन्थपदस्य आमपदस्य तालपदस्य प्रलम्बपदस्य भिन्नपदस्यापि च निक्षेपः 'चतुष्कः' नाम-स्थापना-द्रव्य-भावरूपः कर्त्तव्यो भवति 'एकैकस्मिन् एकैकपदविषयः ॥ तत्राऽऽदिनकारपदं विव्रियते। शिष्यः प्रश्नयति-योऽयमादौ प्रतिषेधः स नकारेण भवतु मा नोकारेण, तद्यथा- "न कप्पइ निग्गंथाण वा आमे तालपलंबे अभिन्ने पडिगाहित्तए"। एवं च क्रियमाणे सूत्रं लघु भवति, "मात्रयाऽपि च सूत्रस्य लाघवं महानुत्सवः" इति विद्वत्प्रवादः, नोशब्देन पुनः प्रतिषेधे विधीयमाने सूत्रगौरवं भवति। अत्राचार्य प्रतिवक्ति-भद्र! कारणमत्रास्ति यतो नोकारेण प्रतिषेधः क्रियते। आह-किं पुनस्तत् कारणम्? उच्यते-

[भा.८१६] पडिसेहो उ अकारो, माकारो नो अ तह नकारो अ।
तब्भाव दुविहकाले, देसे संजोगमाईसु ॥

वृ-प्रतिषिध्यतेऽनेनेति 'प्रतिषेधः' प्रतिषेधको वर्ण, स चतुर्धा-अकारो माकारो नोकारस्तथा नकारश्च। तत्राऽकारस्तद्भावप्रतिषेधं करोति। माकारः पुनर्द्विविधकालविषयं प्रतिषेधम्, तद्यथा-प्रत्युत्पन्नविषयम् अनागतविषयं च। नोकारो देशप्रतिषेधम्। नकारः पुनः 'संयोगादिषु' संयोग-समवाय-सामान्य-विशेषचतुष्टयप्रतिषेधं करोति ॥ तत्राकार-माकार-नोकाराणामुदाहरणान्याह-

[भा.८१७] निदरिसणं अघडोऽयं, मा य घडं भिंद मा य भिंदिहिसि।
नो उ घडोघडदेसो, तव्विवरीयं च जं दव्वं ॥

वृ-निर्दर्शनमिति जातावेकवचनम्, ततोऽमीषां प्रतिषेधकवर्णानां यथाक्रमं निदर्शनानि। अकारस्य तद्भावप्रतिषेधे निदर्शनं यथा-अघटोऽयमिति, न घटो अघटः, घटव्यतिरिक्तः पटादिकः

पदार्थः इत्यर्थः । माकारो वर्त्तमाना-ऽनागतकालप्रतिषेधको यथा-मा घटं भिन्द्धि, मा घटं भेत्स्यसि, चकारौ समुच्चयार्थौ । नोकारो देशप्रतिषेधकस्तदन्यभावसूचको वा यथा-नोघट इत्युक्ते घटैकदेशः कपालदिकोऽवयवः, तद्विपरीतं वा अन्यद् द्रव्यं पटादिकम् ॥

अथ संयोगादिविषयं नकारप्रतिषेधं भावयति-

[भा.८१८] संजोगे समवाए, सामन्ने खलु तहा विसेसे अ ।
कालतिए पडिसेहो, जत्थुवओगो नकारस्स ॥

वृ- संयोगे भवाये सामान्ये विशेषे चेति चतुर्धा प्रतिषेधो नकारस्य भवति । स च प्रत्येकमतीता-ऽनागत-वर्त्तमानलक्षणकालत्रिकविषयत्वादेकैकस्त्रिविध इति सर्वसङ्ख्यया द्वादशविधो नकारप्रतिषेधः । यत्रच क्वापि नकारस्योपयोगो भवति तत्रामीषां द्वादशानां भेदानामन्यतमः प्रतिषेधः प्रतिपत्तव्य इति ॥ अथ संयोगादिषु यथाक्रमं प्रतिषेधमुदाहरति-

[भा.८१९] नत्थि घरे जिनदत्तो, पुव्वपसिद्धाण तेसि दोण्हं पि ।
संजोगो पडिसिज्झइ, न सव्वसो तेसि अत्थित्तं ॥

वृ- 'नास्ति गृहे जिनदत्तः' इत्यत्र प्रयोगे पूर्वप्रसिद्धयोस्तयोर्गृह-जिनदत्तयोर्द्वयोरपि 'संयोगः' सम्बन्धमात्रं प्रतिषिध्यते न पुनः सर्वथैव तयोरस्तित्वमिति संयोगप्रतिषेधः ॥

[भा.८२०] समवाए खरसिंगं, सामन्ने नत्थि चंदिमा अन्नो ।
नत्थि य घडप्पमाणा, विसेसओ होंति मुत्ताओ ॥

वृ- समवायप्रतिषेधे तु खरश्रृङ्गमुदाहरणम्-खरोऽप्यस्ति श्रृङ्गमप्यस्ति परं खरशिरसि श्रृङ्गं नास्तीति 'समवायः' एकत्र संश्लेष उभयोरपि प्रतिषिध्यते इति समवायप्रतिषेधः । सामान्यप्रतिषेधो यथा-नास्त्यस्मिन् स्थानेऽन्य ईद्दशश्चन्द्रमा इति । विशेषमाश्रित्य पुनरयं प्रतिषेधः-न सन्ति घटप्रमाणाः 'मुक्ताः' मुक्ताफलानीत्यर्थः, सन्ति मुक्ताफलानि परं न घटप्रमाणानीति घटप्रमाणत्वलक्षणस्य विशेषस्य प्रतिषिध्यमानत्वाद् विशेषप्रतिषेधः ॥ भावितः संयोगादिचतुष्टय-विषयः प्रतिषेधः । सम्प्रति कालत्रयविषयं तमेव भावयति-

[भा.८२१] नेवाऽऽसी न भविस्सइ, नेव घडो अत्थि इति तिहा काले ।
पडिसेहेइ नकारो, सज्जं तु अकार-नोकारा ॥

वृ- नैवासीत् न भविष्यति नैवास्ति घट इति यथाक्रममतीता-ऽनागत-वर्त्तमानभेदात् त्रिधा कालविषयं वस्तु नकारः प्रतिषेधयति । अकार-नोकारौ तु 'सद्यः' वर्त्तमानकालमेव प्रायः प्रतिषेधयतः, यथा-अकरोषि त्वम्, नो कल्पते तालप्रलम्बं प्रतिग्रहीतुमित्यादि । माकारस्य तु द्विविधकालप्रतिषेधकत्वं पूर्वमुक्तमेवेति न पुनरुच्यते ॥

इत्थं सप्रपञ्चं प्रतिषेधमुपवर्ण्य प्रस्तुतार्थयोजनामाह-

[भा.८२२] जम्हा खलु पडिसेहं, नोकारेणं करेंति णऽन्नेणं ।
तम्हा उ होज्ज गहणं, कयाइ अववायमासज्ज ॥

वृ- यस्मात् खलु प्रतिषेधं नोकारेणैव कुर्वन्ति भगवन्तः सूत्रकृतो नान्येन नकारादिना तत एव ज्ञायते-भवेद् ग्रहणं कदाचित् तलप्रलम्बस्यापवादपदमासाद्येति ॥ व्याख्यातमादिनकारपदम्। अथ ग्रन्थपदम्-तस्य च नामादिभेदाच्चतुर्धा नक्षेपः । तत्र नाम-स्थापने गतार्थे द्रव्यग्रन्थस्त्रिधा-

सचित्ता-ऽचित्त-मिश्रभेदात्। तत्र सचित्तश्चम्पकमालेत्यादि, अचित्त एकावलिहारादिकः, मिश्रः शुष्कपत्रमिश्रिता प्रसूनमाला। भावग्रन्थस्तु स उच्यते येन क्षेत्र-वास्त्वादिना क्रोधादिना वा अमी जन्तवः कर्मणा सहाऽऽत्मानं ग्रन्थयन्ति। तं च भाष्यकार एव सविस्तरं व्याख्यानयति-

**[भा.८२३]** सो वि य गंथो दुविहो, बज्झो अब्भिंतरो अ बोधव्वो।
अंतो अ चोद्दसविहो, दसहा पुण बाहिरो गंथो ॥

**वृ-** सोऽपि च भावग्रन्थो द्विविधः, तद्यथा-बाह्योऽभ्यन्तरश्च बोद्धव्यः। तत्राभ्यन्तरो ग्रन्थश्चतुर्दशविधो वक्ष्यमाणः। बाह्यः पुनर्ग्रन्थो 'दशधा' दशप्रकारो वक्ष्यमाण एव ॥

यदि नामैवं द्विविधो ग्रन्थस्ततो निर्ग्रन्थ इति किमुक्तं भवति? इत्याह-

**[भा.८२४]** सहिरन्नगो सगंथो, नत्थि से गंथो त्ति तेण निग्गंथो।
अहवा निराऽवकरिसे, अवचियगंथो व निग्गंथो ॥

**वृ-** सहिरण्यक इति "एकग्रहणे तज्जातीयग्रहणम्" इति न्यायाद् हिरण्य-सुवर्णादिबाह्य-ग्रन्थसहित उपलक्षणत्वाद् आन्तरग्रन्थयुक्तश्च सग्रन्थ उच्यते। 'नास्ति' न विद्यते "से" तस्य तथाविधो द्विविधोऽपि ग्रन्थः स निर्ग्रन्थः। अथवा निर्ग्रन्थ इत्यत्र यो निरशब्दः सः 'अपकर्षे' अपचये वर्त्तते, ततश्चापचितः-प्रतनूकृतो ग्रन्थो बाह्य आभ्यन्तरश्च येन स निर्ग्रन्थ उच्यते ॥

अथ यदुक्तं "बाह्यो ग्रन्थो दशधा" इति तद् विवरीषुराह-

**[भा.८२५]** खेत्तं १ वत्थुं २ धण ३ धन्न ४ संचओ ५ मित्त-णाइ-संजोगो ६।
जाण ७ सयणा-ऽऽसणाणि य ८, दासी-दासं च ९ कुवियं च १० ॥

**वृ-** 'क्षेत्रं' धान्यनिष्पत्तिस्थानम् १, 'वास्तु' भूमिगृहादि २, 'धनं' सुवर्णादि ३, 'धान्यं' बीजजाति ४, 'सञ्चयः' तृण-काष्ठादिसङ्ग्रहः ५, मित्राणि-सुहृदो ज्ञातयः-स्वजनाः संयोगः-श्वसुरकुलसम्बन्ध इति त्रिभिरप्येक एव ग्रन्थः ६, 'यानानि' वाहनानि ७, 'शयना-ऽऽसनानि च' पलयङ्क-पीठकादीनि ८, दास्यश्च दासाश्च दासी-दासम् ९, 'कुप्यं च' उपस्कररूपम् १० इति। एष दशविधो ग्रन्थः ॥ अथैनमेव प्रतिभेदं यथाक्रमं व्याचष्टे-

**[भा.८२६]** खेत्तं सेउं केउं, सेयऽरहट्टाइ केउ वरिसेणं।
भूमिघर वत्थु सेउं, केउं पासाय-गिहमाई ॥

**वृ-** क्षेत्रं द्विधा-सेतु केतु च। तत्र "सेयऽरहट्टाइ" त्ति अरहट्टादिना सिच्यमानं यद् निष्पद्यते तत् सेतु, अत्राऽऽदिशब्दात् तडागादिपरिग्रहः। यत् पुनः 'वर्षेण' मेघवृष्ट्या निष्पद्यते तत् केतु। वास्त्वपि सेतु-केतुभेदाद् द्विधा। भूमिगृहं सेतु, प्रासाद-गृहादिकं केतु। तत्र नरेन्द्राध्यासितः सप्तभूमादिरावासविशेषः प्रासादः, गृहं शेषजनाधिष्ठितमेकभूमादिकम्, आदिग्रहणात् कुटी-मण्डपा-ऽपवरकादिकं परिगृह्यते ॥

**[भा.८२७]** तिविहं च भवे वत्थुं, खायं तह ऊसियं च उभयं च।
भूमिघरं पासाओ, संबद्धघरं भवे उभयं ॥

**वृ-** अथवा वास्तु त्रिविधं भवेत्, तद्यथा-खातं तथा उच्छ्रितं च 'उभयं च" खातोच्छ्रित-मित्यर्थः। त्रिविधमपि क्रमेणोदाहरति-"भूमिघर"मित्यादि। खातं भूमिगृहम्। उच्छ्रितं प्रासादः, उपलक्षणत्वादन्यदप्येकभूम-द्विभूमादिकं गृहमुच्छ्रितम्। यत् पुनः प्रासाद-गृहादिकं भूमिगृहेण

सम्बद्धं तद् भवेत् 'उभयं' खातोच्छ्रितम् ॥

[भा.८२८] घडिएयरं खलु धणं, सणसत्तरसा बिया भवे धन्नं।
तण-कट्ठ-तेल्ल-घय-मधु-वत्थाई संचओ बहुहा ॥

वृ- यद् घटितम् 'इतरद् वा' अघटितं सुवर्णादिकं तद् धनमुच्यते। तथा शणं सप्तदशं येषां तानि शणसप्तदशानि बीजानि धान्यं भवेदिति। तानि चामूनि-

व्रीहिर्यवो मसूरो, गोधूमो मुद्ग-माष-तिल-चणकाः।
अणवः प्रियङ्गु-कोद्रवमकुष्ठकाः शालिराढक्यः ॥
किञ्चकलाय-कुलत्थौ, शणसप्तदशानि बीजानि। इति।

तथा तृण-काष्ठतैल-घृत-मधु-वस्त्रादीनाम् आदिशब्दाद् बुस-पलालादीनां सङ्ग्रहरूपः सञ्चयो बहुधा द्रष्टव्य इति ॥

[भा.८२९] सहजायगाइ मित्ता, नाई माया-पिईहि संबद्धा।
ससुरकुलं संजोगो, तिन्नि वि मित्तादयो छट्ठो ॥

वृ- सहजातकादयः सुहृदो मित्राणि, आदिग्रहणात् सहवर्द्धितकाः सहपांसुक्रीडितकाः सहदारदर्शिनश्चेति। ज्ञातयो मातृपितृसम्बद्धा-, मातृकुलसम्बद्धाः पितृकुलसम्बद्धाश्चेत्यर्थः। तत्र मातृकुलसम्बद्धाः मातुल-मातामहादयः, पितृकुलसम्बद्धाः पितृव्य-पितामहादयः। श्वसुरकुलं संयोगोऽभिधीयते, किमुक्तं भवति ?-श्वसुरकुलपाक्षिका ये केचित् श्वसुर-श्वसुर-श्वश्रू-शालकादयस्तेषां सम्बन्धः संयोग उच्यते। एते मित्रादयस्त्रयोऽपि पक्षाः षष्ठो ग्रन्थः ॥

[भा.८३०] जाणं तु आसमाई, पल्लंकग-पीढिगाइ अट्ठमओ।
दासाइ नवम दसमो, लोहाइउवक्खरो कुप्पं ॥

वृ- यानमिति जातावेकवचनम्, ततोऽयमर्थ-यानानि पुनरश्वादीनि, आदिशब्दाद् गजवृषभ-रथ-शिबिकादीनि। तथा पल्यङ्कादीनि शयनानि, पीठिकादीनि च आसनानि, एष शयना-ऽऽसनरूपोऽष्टमो ग्रन्थः। दासादिकः सर्वोऽप्यनुजीविवर्गो नवमो ग्रन्थः। तथा लोहादिक उपस्करः कुप्यमुच्यते। तत्र लोहोपस्करो लोहमयकवल्ली-कुद्दालिका-कुठारादिकः। आदिशब्दाद् मार्तिकोपस्करो घटादिकः, कांस्योपस्करः स्थाल-कच्चोलकादिक इत्यादिकः सर्वोऽपि परिगृह्यते। एष दशमो ग्रन्थः ॥ प्ररूपितो दशविधोऽपि बाह्यग्रन्थः, सम्प्रति चतुर्दशविधमभ्यन्तरं ग्रन्थमाह-

[भा.८३१] कोहो १ माणो २ माया ३, लोभो ४ पेज्जं ५ तहेव दोसो अ ६।
मिच्छत्त ७ वेद ८ अरइ ९, रइ १० हास ११ सोगो १२ भय १३ दुगुंछा १४ ॥

वृ- क्रोधो मानो माया लोभश्चेति चत्वारोऽपि प्रतीताः ४। प्रेमशब्देनाभिष्वङ्गलक्षणो रागोऽभिधीयते ५। दोषशब्देन त्वप्रीतिकलक्षणो द्वेषः ६। 'मिथ्यात्वम्' अर्हत्प्रणीततत्त्वविपरी-तावबोधरूपम्। तच्च द्विविधं वा त्रिषष्ट्यधिकशतत्रयभेदं वा अपरिमितभेदं वा। तत्रानाभिग्रहिक-माभिग्रहिकं चेति द्विविधम्। अनाभिग्रहिकं पृथिव्यादीनाम्। आभिग्रहिकं तु षड्विधम्-

नत्थि न निच्चो न कुणइ, कयं न वेएइ नत्थि निव्वाणं।
नत्थि य मोक्खोवाओ, छव्विह मिच्छत्तऽभिग्गहियं ॥

– त्रिषष्ट्यधिकशतत्रयविधं पुनरिदम् –

अस्सियसयं करियाणं, अकिरियवाईण होइ चुलसीई।
अन्नाणी सत्तट्ठी, वेणइयाणं च बत्तीसा ॥

— अपरिमितभेदं तु —

जावइया नयवाया, तावइया चेव होंति परसमया।
जावइया परसमया, तावइया चेव मिच्छत्ता ॥

एवमनेकविकल्पमपि सामान्यतो मिथ्यात्वशब्देन गृह्यते इति सप्तमो भेदः ७। वेदस्त्रिविधः स्त्री-पुं-नपुंसकभेदात्। तत्र यत् स्त्रियाः पित्तोदये मधुराभिलाष इव पुंस्यभिलाषो जायते स स्त्रिवेदः, यत् पुनः पुंसः श्लेष्मोदयादम्लाभिलाषवत् स्त्रियामभिलाषो भवति स पुंवेदः, यत्तु पण्डकस्य पित्त-श्लेष्मोदये मज्जिकाभिलाषवदुभयोरपि स्त्रि-पुंसयोरभिलाषः समुदेति स नपुंसकवेद इति त्रयोऽप्येक एव भेदः ८। तथा यदमनोज्ञेषु शब्दादिविषयेषु संयमे वा जीवस्यचित्तोद्वेगः सा अरति ९। यत् पुनस्तेष्वेव मनोज्ञेषु असंयमे वा रमणं सा रति १०। यत्तु सनिमित्तमनिमित्तं वा हसति तद् हास्यम् ११। प्रियविप्रयोदिविह्वलचेतोवृत्तिराक्रन्दनादिकं यत् करोति स शोकः १२। सनिमित्तमनिमित्तं वा यद् बिभेति तद् भयम् १३। यत् पुनरस्नाना-ऽदन्तपवन-मण्डलीभोजना-दिकमपरं वा मृतकलेवर-विष्ठादिकं जुगुप्सते सा जुगुप्सा १४। एष चतुर्दशविधोऽप्याभ्यन्तरग्रन्थ उच्यते ॥ प्रस्तुतयोजनामाह-

[भा.८३२] सावज्जेण विमुक्का, सब्भिंतर-बाहिरेण गंथेण।
निग्गहपरमा य विदू, तेनेव य होंति निग्गंथा ॥

वृ-सावद्यः-सपापः कर्मोपादाननिबन्धनत्वाद् यो ग्रन्थस्तेन साभ्यन्तर-बाह्येन ये मुक्तास्ते निर्ग्रन्था उच्यन्ते, येऽपि चाऽऽन्तरग्रन्थेन न सर्वथा मुक्तास्तेऽपि; येन विद्वांसः क्रोधादि-दोषवेदिनस्तथा 'निग्रहपरमाः' तन्निर्जयप्रधानाः, तेनैव कारणेन ते निर्ग्रन्था भवन्ति ॥

अथाऽऽन्तरग्रन्थमधिकृत्य ये मुक्ता ये चामुक्तास्तदेतदभिधित्सुराह-

[भा.८३३] केई सव्वविमुक्का, कोहाईएहि केइ भइयव्वा।
सेढिदुगं विरएत्ता, जाणसु जो निग्गओ जत्तो ॥

वृ- 'क्रोधादिभिः' आन्तरग्रन्थैः केचित् 'सर्वविमुक्ताः' सर्वैरपि विप्रमुक्ताः, केचित् पुनः 'भक्तव्याः' विकल्पनीयाः, कैश्चिद् मुक्ताः कैश्चिदपि न मुक्ता इत्यभिप्रायः। अत्र शिष्यः प्राह-कथं नु नामेदं ज्ञास्यते 'अमी सर्वथा मुक्ता अमी च न मुक्ताः' ? इति, उच्यते- 'श्रेणिद्विकम्' उपशमश्रेणि-क्षपकश्रेणिलक्षणं 'विरचय्य' यथोक्तपरिपाट्या स्थापयित्वा ततो जानीहि यः 'यतः' क्रोधादेर्निर्गतो अनिर्गतो वेति ॥ अथ केयमुपशमश्रेणि ? का वा क्षपकश्रेणि ? इत्याशङ्कप-नोदाय प्रथमत उपशमश्रेणिमाह-

[भा.८३४] अण दंस नपुंसि-त्थीवेय छक्कं च पुरिसवेयं च।
दो दो एगंतरिए, सरिसे सरिसं उवसमेइ ॥

वृ-इहोपशमश्रेणेः प्रारम्भकोऽप्रमत्तसंयतः, समाप्ती पुनः प्रमत्तसंयतोऽविरतसम्यग्दृष्टिर्वा भवेत्। यत उक्तम्-

उवसामगसेढीए, पट्ठवओ अप्पमत्तविरओ उ ।
पज्जवसाणे सो वा, होइ पमत्तो अविरओ वा ॥

अविरत-देशविरत-प्रमत्ता-ऽप्रमत्तसंयतानामन्यतमः प्रतिपद्यते इत्येके । प्रतिपत्ति-क्रमश्चायम्- "अण"त्ति प्रथमतो युगपदन्तर्मुहूर्त्तेनानन्तानुबन्धिनः क्रोध-मान-माया-लोभानुप-शमयति । ततः 'दर्शनं' मिथ्यात्व-सम्यग्मिथ्यात्व-सम्यग्दर्शनभेदात् त्रिविधमपि युगपदुपशमयति। सर्वत्र युगपदुपशमनकालोऽन्तर्मुहूर्त्तप्रमाणो द्रष्टव्यः । ततो यदि पुरुषः प्रारम्भकस्ततः प्रथमं नपुंसकवेदम्, पश्चात् स्त्रीवेदम्, ततो हास्य-रत्य-ऽरति-शोक-भय-जुगुप्साषट्कम्, ततः पुरुषवेदम्; अथ स्त्री प्रारम्भिका ततः प्रथमं नपुंसकवेदम्, पश्चात् पुरुषवेदम्, ततो हास्यादिषट्कम्, ततः स्त्रीवेदम्; अथ नपुंसक एव प्रारम्भकस्ततः प्रथमं स्त्रीवेदम्, पश्चात् पुरुषवेदम्, ततः षट्कम्, ततो नपुंसकवेदम् । तथा 'द्वौ द्वौ' अप्रत्याख्यान-प्रत्यख्यानरूपौ क्रोधादिकौ 'एकान्तरितौ' सञ्ज्वलनक्रोधाद्यन्तरितौ 'सदृशौ' तुल्यावुपशमय्य सदृशमेवोपशमयति । इयमत्र भावना-अप्रत्याख्यान-प्रत्याख्यानी क्रोधौ क्रोधत्वेन परस्परं सदृशौ युगपदुपशमयति, ततः सञ्ज्वलनक्रोध-मेकाकिनमेव; ततोऽप्रत्याख्यान-प्रत्याख्यानी मानौ, ततः सञ्ज्वलनमानम्; ततोऽप्रत्याख्यान-प्रत्याख्याने माये, ततः सञ्ज्वलनमायाम्; ततोऽप्यप्रत्याख्यान-प्रयाख्यानौ लोभौ, ततः सञ्ज्वलनलोभम् । तं चोपशमयँस्त्रिधा करोति, आद्यौ द्वौ भागौ युगपदुपशमयति, तृतीयं भागं सङ्ख्येयानि खण्डानि करोति, तान्यपि पृथक् पृथक् कालभेदेनोपशमयति, पुनः सङ्ख्येयखण्डानां चरमखण्डमसङ्ख्येयानि खण्डानि करोति, ततः समये समये एकैक मुपशमयति । इह च दर्शनसप्तके उपशान्ते सति निवृत्तिबादरः, तत ऊर्ध्वमनिवृत्तिबादरो यावद् लोभस्य द्विचरम सङ्ख्येयखण्डम्, चरमसङ्ख्येयखण्डस्य पुनरसङ्ख्येयखण्डान्युपशमयत् सूक्ष्मसम्पराय उच्यते ।

एवं समापितोपशमश्रेणीक उपशान्तमोहवीतरागगुणस्थानकमनुभवन् यथाख्यातचारित्री भवति । स च यदि बद्धायुः प्रतिपद्यते तदवस्थश्च म्रियेते ततो नियमादनुत्तरविमानवासिषूपपद्यते, श्रेणिप्रच्युतस्य पुनरनियमः अथाबद्धायुस्ततो जघन्येनैकसमयमुत्कर्षतोऽन्तर्मुहूर्त्तमुपशमकनिर्ग्रन्थो भूत्वा नियमतः क्वापि वस्तुनि लुब्धः पुनरभ्युदितकषायः श्रेणिप्रतिलोममावर्त्तय देशप्रतिपातेन सर्वप्रतिपातेन वा प्रतिपतति, यतो नासौ जघन्यतोऽपि तद्भव एव निश्रेयसपदमश्नुते, उत्कर्षतः पुनर्देशोनापार्द्धपुद्गलपरावर्त्तं संसारं संसरति । यत उक्तम्-

तम्मि भवे निव्वाणं, न लहइ उक्कोसओ वि संसारं ।
पोग्गलपरियट्टद्धं, देसूणं कोइ हिंडेज्जा ॥

अस्यां चोपशमश्रेण्यां प्रविष्टेन येन यद् अनन्तानुबन्ध्यादिकमुपशमितं स उपशमनां प्रतीत्य तेन विप्रमुक्त उच्यते ।। प्ररूपिता उपशमश्रेणि । क्षपकश्रेणिमाह-

[भा.८३५] अण ४ मिच्छ ५ मीस ६ सम्मं ७, अट्ठ १५ नपुंसि १६ त्थिवेय १७ छक्कं च २३ ।
पुमवेयं च २४ खवेई, कोहईए अ संजलणे २८ ॥

**वृ-** इह क्षपकश्रेणिमविरत-देशविरत-प्रमत्ता-ऽप्रमत्तसंयतानामन्यतम उत्तमसंहननः प्रशस्तध्यानोपगतमानसः प्रतिपद्यते । तदुक्तं क्षपकश्रेणिप्रक्रमे-

पडिवत्तीए अविरय-देस-पमत्ता-ऽपमत्तविरयाणं ।

अन्नयरो पडिवज्जइ, सुद्धज्झाणोवगयचित्तो ॥

तत्रपूर्वविदप्रमत्तः शुक्लध्यानोपगतोऽपि प्रतिपद्यते, शेषास्तु धर्मध्यानोपगता एवेति। प्रतिपत्तिक्रमश्चायम्-प्रथममन्तर्मुहूर्त्तेनानन्तानुबन्धिनः क्रोधादींश्चत्वारोऽपि युगपत् क्षपयति। तदनन्तभागं तु मिथ्यात्वेप्रक्षिप्य तेन सह मिथ्यात्वं क्षपयति। तस्याप्यनन्तभागं सम्यग्मिथ्यात्वे प्रक्षिप्य तदपि सावशेषं क्षपयति। आह किं पुनः कारणं सावशेषं क्षपयति ? इति, उच्यते- यथा खल्वतिसम्भृतो दावानलो दरदग्धेन्धन एवेन्धनान्तरमासाद्योभयमपि दहति एवमसावपि क्षपकस्तीव्रशुभपरिणामत्वात् प्राक्तने कर्मण्यनि-शेषित एवापरं क्षपयितुमारभते। एवं सम्यग्मिथ्यात्वस्यावशेषं सम्यकत्वे प्रक्षिप्य तेन सह सम्यक्त्वं निरवशेषमेव क्षपयति। यदाह चूर्णिकृत्- जं तं सेसं तं सम्मत्ते छुभित्ता निरवसेसं खवेइत्ति।" एतच्च बद्धायुष्कापेक्षं सम्भाव्यते, आवश्यकादौ तमेवाधिकृत्य सम्यक्त्वनिरवशेषक्षपणस्योक्तत्वात्। इह च यदि बद्धायुः प्रतिपद्यते अनन्तानुबन्धिक्षये च व्युपरमते ततो मिथ्यादर्शनोदयतस्तान् पुनरप्यनुचिनोति, मिथ्यात्वे तद्बीजसम्भवात्; क्षीणमिथ्यात्वस्तु नोपचिनोति, मूलाभावात्; तदवस्थश्च मृतोऽवश्यमेव त्रिदशेषूपपद्यते। क्षीणदर्शनसप्तकोऽप्यप्रतिपतितपरिणामो म्रियमाणः सुरगतावेवोपपद्यते। प्रतिपतितपरिणामस्तु नानामतित्वात् सर्वगतिभाग् भवति। तथा चोक्तम्-

बद्धाऊ पडिवन्नो, पढमकसायक्खए जइ मरिज्जा।
तो मिच्छत्तोदयओ, चिणिज्ज भुज्जो न खीणम्मि ॥
तम्मि मओ जाइ दिवं, तप्परिणामो य सत्तए खीणे।
उवरयपरिणामो पुण, पच्छा नाणामइ-गईओ ॥

स च यदि बद्धायुः प्रतिपद्यते ततो नियमाद् दर्शनसप्तके क्षीणे सत्युपरमते। अबद्धायुष्कः पुनरनुपरत एव समस्तां श्रेणिं समापयति। स च स्वल्पसम्यग्दर्शनावशेष एवाप्रत्याख्यान-प्रत्याख्यानावरणकषायाष्टकं क्षपयितुं युगपदारभते। एतेषां च सङ्ख्येयतमं भागं क्षपयन् एताः षोडश प्रकृतीः क्षपयति। तद्यथा-नैरयिकगतिनाम तिर्यग्गतिनाम एकेन्द्रियजातिनाम द्वीन्द्रिय-जातिनाम त्रीन्द्रियजातिनाम चतुरिन्द्रियजातिनाम नरकानुपूर्वीनाम तिर्यगानुपूर्वीनाम अप्रशस्तविहायोगतिनाम स्थावरनाम सूक्ष्मनाम अपर्याप्तनाम साधारणनाम निद्रानिद्रां प्रचलाप्रचलां स्त्यानगृद्धिमिति। ततोऽष्टानां कषायाणामवशेषं क्षपयति। ततो नपुंसकवेदम्। ततः स्त्रवेदम्। ततो हास्यादि षट्कम्। ततः पुरुषवेदं त्रिधा कृत्वा खण्डद्वयं युगपत् क्षपयति, तृतीयं तु खण्डं सञ्ज्वलनक्रोधे प्रक्षिपति, पुरुषे प्रतिपत्तर्ययं क्रमः। स्त्री-नपुंसकयोः सिपत्रोरुप-शमश्रेणिन्यायो वक्तव्यः। क्रोधादींश्च सञ्ज्वलनान् प्रत्येकमन्तर्मुहूर्त्तेनानेनैव खण्डत्रयरचनान्यायेन क्षपयति। श्रेणिपरिसमाप्तिकालोऽप्यन्तर्मुहूर्तप्रमाण एव द्रष्टव्यः। केवलं बृहत्तरमत्रान्तर्मुहूर्तम्, अन्तर्मुहूर्तानामसङ्ख्येयभेदत्वात्। लोभचरमखण्डं तु सङ्ख्येयानि खण्डानि कृत्वा पृथक् पृथक् क्षपयति। इह च क्षीणदर्शनसप्तको निवृत्तिबादरसम्पराय उच्यते, तत ऊर्ध्वं मनिवृत्तिबादरसम्परायो यावत् सञ्ज्वलनलोभस्य द्विचरमसङ्ख्येयखण्डम्, चरमसङ्ख्येयखण्डस्य पुनरसङ्ख्येयानि खण्डानि क्षपयन् सूक्ष्मसम्पराय उच्यते, तत ऊर्द्ध क्षीणमोहच्छद्मस्थवीतरागो यथाख्याचारित्री भवति। ततो यथा कश्चिद् महापुरुषो बाहुभ्यानपारगम्भीरां महानदीं तीर्त्वा स्ताधमासाद्य क्षणमेकं

विश्राममादत्ते एवमयमपि दुस्तरं मोहसागरं तीर्त्वा सञ्जातपरिश्रमो विश्राम्यतीति । ततश्छद्मस्थ-वीतरागत्वसम्बन्धिनि समयद्वयेऽवशिष्यमाणे प्रथमे समये निद्रां १ प्रचलां २ देवगतिं ३ देवानुपूर्वी ४ वैक्रियशरीरनामकर्म ५ वज्रर्षभनाराचसंहननं मुक्त्वा शेषाणि संहननानि १० षण्णां संस्थानानां मध्ये यस्मिन् व्यवस्थितस्तदेकं मुक्त्वा शेषाणि संस्थानानि १५ आहारकशरीरनाम १६ यद्यतीर्थकरः प्रतिपत्ता ततस्तीर्थकरनामकर्मापि १७ इत्येवं सप्तदश प्रकृतीः क्षपयति । ततो द्वितीये समये पञ्चप्रकारं ज्ञानावरणं चतुर्विधं दर्शनावरणं पञ्चविधमन्तरायं च क्षपयित्वा विमलकेवलश्रियमवाप्नोतीति ।

एनां च क्षपकश्रेणिमध्यासीनेन येन यदनन्तानुबन्ध्यादिकं क्षपितं स तेन मुक्त इत्यवसातव्यम् । येऽपि श्रेणिद्वयमद्यापि न प्रतिपद्यन्ते किन्तु सामायिक-च्छेदोपस्थापनीय-परिहारविशुद्धिकानामन्यतमस्मिन् संयमे वर्तन्ते तेऽपि सञ्ज्वलनचतुष्टयवर्जैर्द्वादशभि कषायैर्मुक्ता इत्यवगन्तव्यम् । यत उक्तम्-

बारसविहे कसाए, खविए उवसामिए व जोगेहिं ।
लब्भइ चरित्तलंभो, तस्स विसेसा इमे पंच ॥

ततश्च- जे वि अ न सव्वगंथेहि [illegible] होंति केइ [illegible] ।
ते वि य निग्गहपरमा, हवंति तेसिं खउज्जुत्ता ॥

वृ- येऽपि च सरागसंयमवर्तिनः सर्वेभ्य आन्तरग्रन्थेभ्यो न निर्गताः तेऽपि 'तेषां' सञ्ज्वलनकषायादीनां 'क्षयोद्युक्ताः' उदयनिरोधोदयप्राप्तविफलीकरणाभ्यां क्षयकरणायोद्यताः सन्तः 'निग्रहपरमाः' आन्तरग्रन्थनिग्रहप्रधाना भवन्ति इत्यतो निर्ग्रन्था उच्यन्ते ॥ अपि च-

[भा.८३७] कलुसफलेण न जुज्जइ, किं चित्तं तत्थ जं विगयरागो ।
संते वि जो कसाए, निगिण्हई सो वि तत्तुल्लो ॥

वृ- कलुषयन्ति-सहजनिर्मलं जीवं कर्मरजसा मलिनयन्तीति "अच्" इति अच्प्रत्यये कलुषा-कषायास्तेषां यत् फलं-परुषभाषण-नयनमुखविकार-रौद्रध्यानानुबन्धादिकं तेन सह यद् 'न युज्यते' न सम्बन्धमुपयाति 'विगतरागः' विशेषेण-अपुनर्भावेन गतो रागो यस्मात् स विगतरागः, क्षीणमोह इत्यर्थः । तत्र 'किं चित्रम् ?' किमाश्चर्यम् ? कषायलक्षणकारणाभावाद् न किञ्चिदित्यर्थः । यस्तु 'सतोऽपि' विद्यमानानपि कषायान् 'निगृह्णाति' उदीयमानानेव प्रथमतो निरुणद्धि कथञ्चिदुदयप्राप्तान् वा विफलीकरोति सोऽपि 'तत्तुल्यः' वीतराग इव निष्कषायो मन्तव्यः, सतामपि कषायाणामसत्कल्पताकरणात् । अतः सरागसंयतोऽपि निर्ग्रन्थोऽभिधीयते इति ॥ अथ परः प्रश्नयति

[भा.८३८] जइ अब्भिंतरमुक्का, बाहिरगंथेण मुक्कया किह नु ।
गिण्हंता उवगरणं, जम्हा अममत्तया तेसु ॥

वृ- यद्यनन्तरोक्तप्रकारेणाऽभ्यन्तरग्रन्थमुक्तास्ततो वस्त्र-पात्रादिकमुपकरणं गृह्णन्तः कथं 'नु' इति वितर्के बाह्यग्रन्थेन मुक्ता उच्येरन् ?, वस्त्रादेरपि ग्रन्थरूपत्वादित्यभिप्रायः । सूरिराह-यस्मात् 'तेषु' वस्त्र-पात्रादिषु न विद्यते ममत्वं-मूर्च्छा येषां ते 'अममत्वकाः' "शेषाद्वा" इति कच्प्रत्ययः मूर्च्छारहितास्तेन बाह्यग्रन्थमुक्ता अप्यभिधीयन्ते । इयमत्र भावना-मूर्च्छा परिग्रहो

गीयते न तूपकरमादिधारणमात्रम्, "मुच्छा परिग्गहो वुत्तो" इति ज्ञातव्यः । तदुक्तं परमगुरुभिः-

अज्झत्थविसोहीए, उवगरणं बाहिरं परिहरंतो ।
अपरिग्गहो त्ति भणिओ, जिणेहि तेलोक्कदंसीहिं ॥

गतं ग्रन्थपदम् । अथाऽऽमपदं विवरीषुराह-

[भा.८३९] नामं ठवणा आमं, दव्वामं चेव होइ भावामं ।
उस्सेइम संसेइम, उवक्खडं चेव पलियामं ॥

वृ- आमं चतुर्धा, तद्यथा-नामामं स्थापनामं द्रव्यामं भावामम् । तत्र नाम-स्थापने गतार्थे । द्रव्यामं पुनश्चतुर्धा, तदेव दर्शयति-"उस्सेइम" इत्यादि । उत्-ऊर्ध्वं निर्गच्छता बाष्पेण यः स्वेदः स उत्स्वेदः, उत्स्वेदेन निर्वृत्तमुत्स्वेदिमम्, "भावादिमः" इति सूत्रेण इमप्रत्ययः, उत्स्वेदिमं च तदामं च उत्स्वेदिमामम् १ । समम्-एकीभावेन स्वेदः संस्वेदः, तेन निर्वृत्तं संस्वेदिमम् तदेवामं संस्वेदिमामम् २ । तथोपस्कृता-राद्धा ये वल्ल-चणकादयः, तेषां मध्ये यदामं तदुपस्कृतामम् ३ । पर्यायः-स्वाभाविक औपाधिको वा फलानां पाकपरिणामः, तस्मिन्प्राप्तेऽपि यदामं तत् पर्यायामम् ४ ॥ अथोत्स्वेदिमादिचतुष्टयमेव व्याचष्टे-

[भा.८४०] उस्सेइम पिट्ठाई, तिलाइ संसेइमं तु णेगविहं ।
कंकडुयाइ उवक्खड, अविपक्करसं तु पलियामं ॥

वृ- उत्स्वेदिमं 'पिष्टादि' पिष्टं-सूक्ष्मतन्दुलादिचूर्णनिष्पन्नम्, तद्धि वस्त्रान्तरितमधःस्थितस्योष्णोदकस्य बाष्पेणोत्स्विद्यमानं पच्यते, तत्र यदामं तद् उत्स्वेदिमामम्, आदिग्रहणाद् भरोलादिपरिग्रहः । संस्वेदिमं पुनस्तिलादिकमनेकविधम्, इह क्वचित् पिठरादौ पानीयं तापयित्वा पिठरिकायां प्रक्षिप्तास्तिलास्तेनोष्णोदकेन सिच्यन्ते ततस्ते तिलाः संस्विद्यन्ते, तेषां संस्विन्नानां मध्ये ये आमास्तत् संस्वेदिमामम्, आदिग्रहणेन यदन्यदप्येतेन क्रमेण संस्विद्यते तत् संस्वेदिमामम् । तथा चणक-मुद्गादीनामुपस्कृतानां ये कङ्कटुकादय आमास्ते उपस्कृतामम् । पर्यायामं पुनरविपक्करसं फलादिकमुच्यते ॥ तच्चतुर्विधम्, तद्यथा-

[भा.८४१] इंधन धूमे गंधे, वच्छप्पलियामए अ आमविही ।
एसो खलु आमविही, नेयव्वो आनुपुव्वीए ॥

वृ-इन्धनपर्यायामं धूमपर्यायामं गन्धपर्यायामं वृक्षपर्यायाममित्येवं पर्यायामे आमविधिश्चतुःप्रकारः । एष खलु आमविधिर्ज्ञातव्यः 'आनुपूर्व्या' यथोक्तया परिपाट्या । यद्वा आनुपूर्वी नाम वक्ष्यमाणलक्षणा पलालवेष्टन-गर्त्ताखनन-करीषप्रक्षेपणादिका यथायोगमामफलपाचनाय रचना तया ज्ञातव्य आमविधिरिति ॥ अथेन्धन-धूमपर्यायामे विवृणोति-

[भा.८४२] कोद्दवपलालमाई, धूमेणं तिंदुगाइ पच्चंते ।
मज्झऽगडाऽगणि पेरंत तिंदुया छिड्डधूमेणं ॥

वृ- कोद्रवपलालादिकमिन्धनमुच्यते, आदिग्रहणेन शालिपलालपरिग्रहः, तेन चाऽऽम्रफलादीनि फलानि वेष्टयित्वा पाच्यन्ते, तत्र यान्यपक्वानि फलानि तद् इन्धनपर्यायामम् । तथा धूमेन तिन्दुकादीनि फलानि पाच्यन्ते, कथं पाच्यन्ते ? इत्याह-"मज्झऽगडाइ" त्ति प्रथमतो गर्त्ताया मध्ये करीषः प्रक्षिप्यते, तस्याश्च गर्त्तायाः पार्श्वेष्वपरा गर्त्ताः खन्यन्ते, तासु च गर्त्तासु

तिन्दुकादीनि फलानि प्रक्षिप्य मध्यमायां करीषगर्त्तायां "अगनि"त्ति अग्निर्दीयते, तासां च "पेरंत"ति पर्यन्तगर्त्तानां श्रोतांसि मध्यमगर्त्तया सह मीलितानि क्रियन्ते, ततस्तस्याः करीषगर्त्तायाः सकाशाद् धूमस्तैः श्रोतोभि पर्यन्तगर्त्तासु प्रविशति, ततस्तच्छिद्रसम्बन्धिना धूमेन प्रसरता तानि फलानि पाच्यन्त इति, तेषां मध्ये यदामं तद् धूमपर्यायामम् ॥ अथ गन्ध-वृक्षपर्यायामे भावयति-

**[भा.८४३]**　अंबग-चिब्भिडमाई, गंधेणं जं च उवरि रुक्खस्स ।
　　　　कालप्पत्त न पच्चइ, वत्थप्पलियामगं तं तु ॥

**वृ-** आम्रक-चिर्भटादीनि आदिशब्दाद् बीजपुरकादीनि यान्यपक्वानि फलानि तेषां मध्ये पक्वानि प्रक्षिप्यन्ते, तेषां गन्धेन प्राक्तनान्यामकानि पच्यन्ते, तत्र यद् अपक्वं फल तद् गन्ध-पर्यायामम् । तथा "जं च"त्ति चशब्दस्य पुनरर्थत्वाद् यत् पुनर्वृक्षस्योपरि शाखायां वर्त्तमानं काले-वसन्तादिलक्षणे पाकगसमये प्राप्तेऽपि परिपक्वेष्वप्यपरफलेषु न पच्यते तद् वृक्षपर्यायामम्॥ व्याख्यातं चतुर्विधमपि पर्यायामम् । तद्व्याख्याने च समर्थितं द्रव्यामम् । अथ भावामस्वरूपं निरूपयति-

**[भा.८४४]**　भावामं पि य दुविहं, वयणामं चेव नो य वयणामं ।
　　　　वयणाम अणुमयत्थे, आमं ति हि जो वदे वक्कं ॥

**वृ-** भावाममपि द्विविधम्-वचनामं चैव नोवचनामं च । वचनरूपमामं वचनामम्, अनुमतार्थे 'आमम्' इति यः 'वाक्यं' वचनं वदेत् तद् वचनामम् । यथा-कोऽपि साधुर्गुरूणां कार्येण गच्छन्नपरेण पृष्टः-आर्य ! किं गुरुकार्येण गम्यते ?, स प्रत्याह-आमम्, एवमेतदित्यर्थः ॥

**[भा.८४५]**　नोवयणामं दुविहं, आगमतो चेव नो अ आगमतो ।
　　　　आगमे माणुवउत्तो, नोआगमओ इमं होइ ॥

**वृ-** नोवचनामं द्विविधम्-आगमतश्चैव नोआगमतश्च । तत्रागमत आमपदार्थज्ञानयुक्तस्तत्र चोपयुक्तः, उपयोगस्य भावरूपत्वाद् ज्ञानस्य चागमरूपतवात् । नोआगमतो भावाममिदं भवति॥ तदेवाह-

**[भा.८४६]**　उग्गमदोसाईया, भावतो अस्संजमो अ आमविही ।
　　　　अन्नो वि य आएसो, जो वरिससयं न पूरेइ ॥

**वृ-** उद्गमदोषाः-आधाकर्मादयः, आदिग्रहणादुत्पादनादोषा एषणादोषाश्च, एतद् भावामं प्रतिपत्तव्यम् । तथा च आचाराङ्गसूत्रम्- सव्वामगंधं परिन्नाय निरामगंधो परिव्वए 'असंयमश्च' पृथिव्याद्युपमर्दलक्षणो भावतः आमविधिरेव ज्ञातव्यः, चारित्रापक्वताकरणात् । यद्वाऽन्योऽपि 'आदेशः' प्रकारो भण्यते-यो वर्षशतायुः पुरुष आयुष्कोपक्रमेण वर्षशतमपूरयित्वा म्रियते सोऽपि भावत आमः, आयुषः परिपाकमन्तरेण मरणात् । अत्र च द्रव्यामेणाधिकारः, तत्रापि वृक्षपर्यायामेण, शेषाणामुच्चारितसदृशतया विनेयव्युत्पादनार्थं प्रसङ्गतः प्ररूपितत्वात् ॥ व्याख्यातमामपदम् ।

अथ तालपदं विवृणोति-

**[भा.८४७]**　नामं ठवणा दविए, तालो भावे य होइ नायव्वो ।
　　　　जो भविओ सो तालो, दव्वे मूलुत्तरगुणेसु ॥

**वृ-** नामतालः स्थापनातालो द्रव्यतालो भावतालश्च भवति ज्ञातव्यः । तत्र नाम-स्थापने

क्षुण्णे । द्रव्यतालः पुनरयम्-"जो भविउ" त्ति यः खलु 'भव्यः' भावितालपर्यायः । स च त्रिधा-एकभविको बद्धायुष्कोऽभिमुखनाम-गोत्रश्च । तत्रैकभविको नाम यो विवक्षितभवानन्तरं तालत्वेनोत्पत्स्यते, बद्धायुष्को येन तालोत्पत्तिप्रायोग्यमायुः कर्म बद्धम्, अभिमुखनाम-गोत्रः पुनर्विपाकोदयाभिमुखतालसम्बन्धिनाम-गोत्रकर्मा तालत्वेनोत्पित्सया विक्षिप्तजीवप्रदेशः । यद्वा द्रव्यतालो द्विविधः-मूलगुणनिर्वर्त्तित उत्तरगुणनिर्वर्त्तितश्च । तत्र स्वायुषः परिक्षयादपगतजीवो यः स्कन्धादिरूपस्तालः स मूलगुणनिर्वर्त्तितः, यस्तु काष्ठ-चित्रकर्मादिष्वालिखितः स उत्तरगुणनिर्वर्त्तितः । एष द्रव्यातालः ॥ सम्प्रति भावतालमाह-

[भा.८४८] भावम्मि होंति जीवा, जे तस्स परिग्गहे समक्खाया ।
विइओ वि य आदेसो, जो तस्स विजाणओ पुरिसो ॥

वृ- 'भावे' भावविषयस्तालो ये जीवाः 'तस्य' तालस्य परिग्रहे मूल-कन्दादिगतास्ते सर्वेऽपि समुदिताः सन्तो भावताल इति समाख्याताः, नोआगमत इति भावः । द्वितीयोऽप्यादेशोऽस्ति-यः 'तस्य' तालस्य 'विज्ञायकः' उपयुक्तः पुरुषः सोऽपि भावताल उच्यते, आगमत इत्यर्थः । अत्र च नोआगमत भावतालेनाधिकारः, तस्य सम्बन्धि यत् फलं तदिह तालशब्देन प्रत्येतव्यम् ॥ गतं तालपदम् । अथ प्रलम्बपदं विवृणोति-

[भा.८४९] नामं ठवण पलंबं, दव्वे भावे अ होइ बोधव्वं ।
अट्ठविह कम्मगंठी, जीवो उ पलंबए जेणं ॥

वृ- नामप्रलम्बं स्थापनाप्रलम्बं द्रव्यप्रलम्बं भावप्रलम्बं च भवति बोद्धव्यम् । नाम-स्थापने सुगमे । द्रव्यप्रलम्बमेकभविक-बद्धायुष्का-ऽभिमुखनामगोत्रभेदभिन्नं मूलोत्तरगुणभेदभिन्नं च द्रव्यतालवद् भावप्रलम्बं च भावतालवद् वक्तव्यम् । यद्वा अष्टविधः कर्मग्रन्थिर्भावप्रलम्बमुच्यते। कुतः ? इत्याह-येन कर्मणा जीवः तुशब्दः संसारीति विशेषणार्थ 'प्रलम्बते' नैरयिकादिकां गतिं गतिं प्रति लम्बत इति तद् भावतः प्रलम्बम् ॥ अत्र परः प्राह-

[भा.८५०] तालं तलो पलंबं, तालं तु फलं तलो हवइ रुक्खो ।
पलंबं च होइ मूलं, झिञ्झिरिमाई मुनेयव्वं ॥

वृ- किमिदं तालम् ? को वा तलः ? किं वा प्रलम्बम् ? । अत्र सूरिराह-तालं तावत् फलं तलवृक्षसम्बन्धि, तच्चाग्रप्रलम्बमुच्यते । तलः पुनस्तदाधारभूतो वृक्षः । प्रलम्बं पुनर्मूलं भवति, प्रलम्बशब्देनेह मूलप्रलम्बं गृहीतमिति भावः । तच्च 'झिञ्झिर्यादिकं' झिञ्झिरिप्रभृतिवृक्षसम्बन्धि "मुनेयव्वं" ज्ञातव्यम् ॥ तदेव मूलप्रलम्बमाह-

[भा.८५१] झिञ्झिरि-सुरभिपलंबे, तालपलंबे अ सल्लइपलंबे ।
एतं मूलपलंबं, नेयव्वं आनुपुव्वीए ॥

वृ- झिञ्झिरी-वल्लीपलाशकः सुरभि-सिग्गुकः तयोः प्रलम्ब-मूलम् । एवं तालप्रलम्बं च सल्लकीप्रलम्बम्, चशब्दादन्यदपि मूलं यद् लोकस्योपभोगमायाति तदेतद् मूलप्रलम्बं ज्ञातव्यमानु-पूर्व्या ॥ अथाग्रप्रलम्बं विवृणोति-

[भा.८५२] तल नालिएर लउए, कविट्ठ अंबाड अंबए चेव ।
एअं अग्गपलंबं, नेयव्वं आनुपुव्वीए ॥

वृ- तलफलं नालिकेरफलं लकुचफलं कपित्थफलम् आम्रातकफलम् आम्रफलं चशब्दस्यानुक्तसमुच्चयार्थत्वाद् अन्यदपि कदलीफल-बीजपूरादिकम् एतदग्रप्रलम्बं ज्ञातव्यमानुपूर्व्या ॥ अथ परः प्राह-

[भा.८५३] जइ मूल-ऽग्गपलंबा, पडिसिद्धा न हु इदानिं कंदाई ।
कप्पंति न वा जीवा, को व विसेसो तदग्गहणे ॥

वृ- यदि मूलप्रलम्बा-ऽग्रप्रलम्बे प्रतिषिद्धे न पुनः 'इदानीम्' अस्मिन् सूत्रे 'कन्दादयः' कन्दस्कन्ध-त्वक्-शाखा-प्रवाल-प्र-पुष्प-बीजानि प्रतिषिद्धानि, यतश्चैतेषां प्रतिषेधं न करोति सूत्रं ततो मदीयायां मतौ प्रतिभासते-अवश्यमेते कन्दादयः कल्पन्ते प्रतिग्रहीतुं जीवा अपि सन्तः, अथवा तत्त्वतो नाऽमी जीवा भवन्ति, यदि हि जीवा भवेयुस्ततः प्रतिषेधोऽप्यमीषामस्मिन् सूत्रे कृतः स्यात्; अथेत्थं भणिष्यन्ति भवन्तः-जीवा एवामी न च कल्पन्ते ततः सूत्रं दुर्बद्धम्; अथ ब्रवीध्वम्-जीवा अमी न च कल्पन्ते सूत्रं च सुबद्धम्, ततः को वा विशेषहेतुस्तेषां-कन्दादीनामग्रहणे येन तेन गृहीताः ? इति ॥ अत्र सूरि प्रतिवचनमाह-

[भा.८५४] चोयग ! कन्नसुहेहिं, सद्देहि समुच्छितो विसह फासे ।
मज्झम्मि अठ्ठ विसया, गहिया एवऽठ्ठ कंदाई ॥

वृ- हे नोदक ! यथा दशवैकालिके-

कन्नसोक्खेहि सद्देहिं, पेमं नाभिनिवेसए ।
दारुणं कक्कसं फासं, काएण अहियासए ॥

इत्यस्मिन् श्लोके ''कर्णसुखैः' सुश्रवैः शब्दैरमूर्च्छितो भवेत्'' इति शब्दविषयो रागः प्रतिषिद्धः, ''विषहेत स्पर्शं दारुणम्'' इत्यनेन तु स्पर्शविषयो द्वेष इति शब्द-रूप-रस-गन्ध-स्पर्शाना-मिष्टानिष्टरूपतया दशविधानां मध्यादिष्टशब्दा-ऽनिष्टस्पर्शयोराद्यन्तयोरेव सूत्रलाघवार्थं ग्रहणं कृतम्, अन्यथा ह्येवमभिधातव्यं स्यात्-

कन्नसोक्खेहि सद्देहिं, पेमं नाभिनिवेसए ।
दारुणं कक्कसं सद्दं, सोएण अहियासए ।
चक्खुसोक्खेहि रूवेहिं, पेमं नाभिनिवेसए ।
दारुणं कक्कसं रूवं, चक्खुणा अहियासए ॥

परम् ''आद्यन्तग्रहणे मध्यस्यापि ग्रहणम्'' इति न्यायादष्टावपि मध्यवर्त्तिनोऽनिष्टशब्दाद्या इष्टस्पर्शान्ता विषया गृहीता भवन्ति; एवमत्रापि 'सूत्रं बृहत्तरं मा भूत्' इति हेतोराद्यान्त्ययोरग्रमूल-प्रलम्बयोर्ग्रहणे मध्यवर्त्तिनः कन्दादयोऽष्टावपि गृहीता द्रष्टव्याः । एतेषां मूल-कन्दादीनां दशानामपि भेदानां सुखप्रतिपत्त्यर्थमियं गाथा लिख्यते-

मूले कंदे खंधे, तया य साले पवाल पत्ते य ।
पुप्फे फले य बीए, पलंबसुत्तम्मि दस भेया ॥

— प्रकारान्तरेण प्रतिवचनमाह —

[भा.८५५] अहवा एगग्गहणे, गहणं तज्जातियाण सव्वेसिं ।
तेनऽग्गपलंबेणं, तु सूइया सेसगपलंबा ॥

वृ- अथवा "एकग्रहणे तज्जातीयानां सर्वेषा ग्रहणं भवति" इति न्यायो यतः समस्ति तेनाग्रप्रलम्बग्रहणेन तुशब्दाद् मूलप्रलम्बग्रहणेन च शेषाणि-कन्दादीनि प्रलम्बानि सूचितानि ॥

अथ पुनरपि परः प्राह-

[भा.८५६] तलगहणाउ तलस्सा, न कप्पे सेसाण कप्पई नामं ।
एगग्गहणा गहणं, दिट्ठंतो होइ सालीणं ॥

वृ- 'तलग्रहणात्' इति उपलक्षणत्वात् तालप्रलम्बग्रहणात् तालस्यैव सम्बन्धीनि मूल-कन्दादीनि प्रलम्बानि न कल्पन्ते 'शेषाणां पुनः' आम्रादीनां प्रलम्बानि कल्पन्त इत्यर्थादापन्नम् । 'नाम' इति सम्भावनायाम्, सम्भाव्यते अयमर्थ इति भावः । सूरिराह-एकग्रहणात् तज्जातीयानां सर्वेषां ग्रहणं भवति, दृष्टान्तः शालिसम्बन्धी अत्र भवति । यथा 'निष्पन्नः शालि' इत्युक्ते नैक एव शालिकणो निष्पन्नः प्रतीयते किन्तु शालिजाति, तथाऽत्रापि तलप्रलम्बग्रहणेन न केवलस्यैव तालस्य किन्तु सर्वेषां वृक्षजातीयानां प्रलम्बान्युपात्तानि प्रतिपत्तव्यानि ॥ अथ पुनरपि प्रश्नयति-

[भा.८५७] को नियमो उ तलेणं, गहणं अन्नेसि जेन न कयं तु ।
उभयमवि एइ भोगं, परित्त साउं च तो गहणं ॥

वृ- को नाम नियमस्तलेन येन तस्यैव ग्रहणं कृतं नान्येषां वृक्षाणाम् ? । सूरिराह-तालस्य सम्बन्धि मूला-ऽग्रप्रलम्बरूपमुभयमपि 'भोगम्' उपयोगमेति, तथा 'परीत्तं' प्रत्येकशरीरं 'स्वादु च' मधुरं तद् भवति, अतस्तस्य प्रतिषेधे सुतरामनन्तकायिकादीनां प्रतिषेधः कृतो भवति, ततस्तालस्य ग्रहणं कृतमिति ॥ गतं प्रलम्बपदम् । अथ भिन्नपदं व्याचिख्यासुराह-

[भा.८५८] नामं ठवणा भिन्नं, दव्वे भावे अ होइ नायव्वं ।
दव्वम्मि घड-पडाई, जीवजढं भावतो भिन्नं ॥

वृ- नामभिन्नं स्थापनाभिन्नं द्रव्यभिन्नं भावभिन्नं च भवति बोद्धव्यम् । नाम-स्थापने क्षुन्ने। द्रव्यभिन्नं घट-पटादिकं वस्तु यद् भिन्नं-विदारितम् । भावतो भिन्नं तु यद् जीवेन जढं-परित्यक्तं तद् मन्तव्यम् ॥ अत्र चतुर्भङ्गीमाह-

[भा.८५९] भावेण य दव्वेण य, भिन्ना-ऽभिन्ने चउक्कभयणा उ ।
पढमं दोहि अभिन्नं, बिइयं पुन दव्वतो भिन्नं ॥

वृ- भावेन च द्रव्येण च भिन्ना-ऽभिन्नयोः 'चतुष्कभजना' चतुर्भङ्गीरचना कर्त्तव्या । तत्र 'प्रथमं' प्रथमभङ्गवर्त्ति प्रलम्बं 'द्वाभ्यामपि' भावेन द्रव्ये च अभिन्नम् । द्वितीयं पुनर्द्रव्यतो भिन्नं भावतस्त्वभिन्नम् ॥

[भा.८६०] तइयं भावतो भिन्नं, दोहि वि भिन्नं चउत्थगं होइ ।
एएसिं पच्छित्तं, वोच्छामि अहानुपुव्वीए ॥

वृ- तृतीयं भावतो भिन्नं द्रव्यतः पुनरभिन्नम् । चतुर्थं 'द्वाभ्यामपि' भावतो द्रव्यतश्च भिन्नं भवति । 'एतेषां' चतुर्णामपि प्रायश्चित्तं 'यथाऽऽनुपूर्व्या' यथोक्तपरिपाट्या 'वक्ष्यामि' भणिष्यामि॥ प्रतिज्ञातमेव निर्वाहयति-

[भा.८६१] लहुगा य दोसु दोसु य, लहुओ पढमम्मि दोहि वी गुरुगा ।
तवगुरुअ कालगुरुओ, दोहि वि लहुओ चउत्थो उ ॥

वृ- प्रथम-द्वितीययोर्द्वयोर्भङ्गयोश्चत्वारो लघुकाः, भावतोऽभिन्नतया सचेतनत्वात् । 'द्वयोस्तु' तृतीय-चतुर्थयोर्मासलघु । तथा प्रथमे भङ्गे ये चत्वारो लघुकास्ते द्वाभ्यामपि गुरवः तपसा कालेन च । द्वितीये भङ्गे ये चत्वारो लघवस्ते तपसा गुरवः कालेन लघवः । तृतीयभङ्गे यद् मासलघु तत् कालेन गुरु तपसा लघु । चतुर्थस्तु भङ्गे द्वाभ्यामपि लघुकः तपसा कालेन च । लघुकं तत्र (त्वत्र) मासलघु द्रष्टव्यमित्यर्थः ॥

[भा.८६२] उग्घाइया परित्ते, होंति अनुग्घाइया अनंतम्मि ।
आणाऽणवत्थ मिच्छा, विराधना कस्स गीयत्थे ॥

वृ- एतानि प्रायश्चित्तानि 'उद्घातिकानि' लघुकानि 'परीत्ते' प्रत्येकप्रलम्बे भणितानि । 'अनन्ते' अनन्तकाये पुनरेतान्येव 'अनुद्घातिकानि' गुरुकाणि ज्ञातव्यानि, प्रथम-द्वितीययोश्चत्वारो गुरुकाः तृतीय-चतुर्थयोस्तु भङ्गयोर्मासगुरु प्रायश्चित्तं तपःकालविशेषितं पूर्ववद् वक्तव्यमिति भावः । तथा प्रलम्बं गृह्णता तीर्थकृतामाज्ञाभङ्गः कृतो भवति, अनवस्था मिथ्यात्वं विराधना च संयमाऽऽत्मविषया कृता भवति । शिष्यः पृच्छति-कस्यैतत् प्रायश्चित्तमाज्ञादयश्च दोषाः ? । गुरुराह-अगीतार्थस्य भिक्षोरिति । एतच्च सप्रपञ्चमुपरिष्टाद् भावयिष्यते ॥ अथ प्रलम्बग्रहणे विस्तरेण प्रायश्चित्तं वर्णयितुकाम इमां द्वारगाथामाह-

[भा.८६३] अन्नत्थ-तत्थगहणे, पडिते अच्चित्तमेव सच्चित्ते ।
छुभणाऽऽरुहणा पडणे, उवही तत्तो य उड्डाहो ॥

वृ- प्रलम्बग्रहणं द्विधा-अन्यत्रग्रहणं तत्रग्रहणं च । वृक्षादन्यत्र-अन्यस्मिन् प्रदेशे ग्रहणम् अन्यत्रग्रहणम्, तत्रैव-वृक्षप्रदेशे ग्रहणं तत्रग्रहणम् । तथा पतितं वृक्षस्याधस्ताद् यद् गृह्णाति तद् द्विधा-अचित्तं सचित्तं च । तस्य पतितस्याप्राप्तौ वृक्षोपरिस्थितप्रलम्बपातनाय "छुभण" त्ति काष्ठादेः प्रक्षेपणम् । तथाऽप्यप्राप्तौ "आरुहण" त्ति तस्मिन् वृक्षे आरोहणं करोति । आरूढस्य च कदाचित् पतनं भवेत् । प्रलम्बं गृह्णन्तं दृष्ट्वा च प्रान्तेन केनचिदुपधिरपह्रियेत । ततश्चोड्डाहः सञ्जायेतेति द्वारगाथासमासार्थः ॥ विस्तरार्थं प्रतिद्वारं बिभणिषुः प्रथमतोऽन्यत्रग्रहणं विवृणोति-

[भा.८६४] अन्नगहणं तु दुविहं, वसमाणेऽडवि वसंति अंतो बहिं ।
अंताऽऽवण तव्वज्जे, रच्छा गिह अंतो पासे वा ॥

वृ- अन्यत्रग्रहणं द्विविधम्, तद्यथा-वसति अटव्यां च । तत्र यद् वसति प्रदेशे तद् द्विधा-ग्रामादीनामन्तो बहिश्च । यद् ग्रामादीनामन्तस्तत् पुनर्द्विविधम्-आपणे तद्वर्जे च । आपणःहट्टः, तत्र स्थितस्य प्रलम्बस्य यद् ग्रहणं तद् आपणविषयम् । यत् पुनरापणवर्जे गृहे वा रथ्यायां वा गृह्णाति तत् तद्वर्जविषयम् । तत्र यद् आपणविषयं तद् आपणस्यान्तर्वा भवेत् पार्श्वतो वा । यत् तद्वर्जविषयं तदपि रथ्याया गृहस्य वा अन्तर्वा भवेत् पार्श्वतो वेति । एतच्च सर्वमपि द्विधा-अपरिग्रहं सपरिग्रहं च । तत्रापणे तद्वर्जे वा अपरिग्रहे गृह्णानस्य द्रव्य-क्षेत्र-काल-भावभेदात् चतुर्विधं प्रायश्चित्तम् ॥ तत्र द्रव्यतस्तावदाह-

[भा.८६५] कप्पट्ठदिट्ठे लहुओ, अट्ठप्पत्तीय लहुग ते चेव ।
परिवड्ढमाणदोसे, दिट्ठाई अन्नगहणम्मि ॥

वृ- कल्पस्थः समयपरिभाषया बालक उच्यते, तेन प्रलम्बमचित्तं गृह्णानो यदि दृष्टस्तदा

मासलघु। अथ संयतं प्रलम्बं गृह्णन्तं दृष्ट्वा कल्पस्कस्यार्थ-प्रयोजनं तस्योत्पत्ति-'अहमपि गृह्णामि' इत्येवंलक्षणा भवति ततश्चतुर्लघवः। अथ न कगल्पस्थेन किन्तु महता पुरुषेण प्रलम्बं गृह्णानो दृष्टस्तदा "ते चेव" त्ति त एव चत्वारो लघवः। अथ तस्याप्यर्थोत्पत्ति-'अहमपि गृह्णामि' इति लक्षणा जायते ततोऽपि चत्वारो लघवः। अत्र च ये दृष्टादयः परिवर्द्धमाना दोषा अन्यत्रग्रहणे भवन्ति ताननन्तरगाथया वक्ष्यमाणान् शृणुत॥ तानेवाह-

[भा.८६६] दिट्ठे संका भोइय-निआ-ऽऽरक्खि-सेट्ठि-राईणं।
चत्तारि छच्च लहु गुरु, छेदो मूलं तह दुगं च॥

वृ- युवादिना महता पुरुषेण प्रलम्बानि गृह्णन् दृष्टः चतुर्लघु। ततस्तस्य शङ्का जायते 'किं सुवर्णादिकं गृहीतम् ? उत प्रलम्बम् ?' तदाऽपि चतुर्लघु। निशङ्किते चत्वारो गुरवः। अथासौ "भोइय" त्ति भोजयति भर्त्तारमिति भोजिका-भार्या तस्याः कथयति-'प्रिये! मया संयतः फलानि गृह्णानो दृष्टः' इत्युक्ते यदि तया प्रतिहतः "मैवं वादीः, न सम्भवत्येवेदृशं महात्मनि साधौ' इति ततश्चतुर्गुरुकमेव। अथ तया न प्रतिहतस्ततः षड् लघवः। आसन्नतरः सम्बन्ध इति कृत्वा प्रथमं भोजिकाया अग्रे कथयतीति, एवं मित्रादिष्वपि मन्तव्यम्। ततः "घाडि" त्ति घाटः सङ्घाटः सौहृदमित्येकोऽर्थ, स विद्यतेऽस्येति 'घाटी' सहजातकादि वयस्य इत्यर्थः, तस्याग्रे तथैव कथयति, तेनापि यदि प्रतिहतस्तदा षड् लघव एव। अथ न प्रतिहतस्ततः षड् गुरवः। ततो निजाः-माता-पित्रादयस्तेषां कथयति, तैः प्रतिहतः षड् गुरव एव। अप्रतिहते पुनश्छेदः। तत आरक्षिकेण आरक्षिकपुरुषैर्वा तस्य सकाशादन्यतो वा प्रलम्बग्रहणवृत्तान्ते श्रुते ततः प्रतिहते छेद एव। अप्रतिहते पुनर्मूलम्। ततः श्रेष्ठिनः श्रीदेवताध्यासितसौवर्णपट्टविभूषितोत्तमाङ्गस्य ततोऽन्यतो वा वृत्तान्तश्रवणे तेन च प्रतिहतेऽनवस्थाप्यम्। अप्रतिहते पाराञ्चिकम्। पश्चार्द्धे यथाक्रममममीमेव प्रायश्चित्तान्यभिहितानि, तानि च भावितान्येव। नवरं "दुगं" ति अनवस्थाप्यपाराञ्चिकद्वयम्॥

[भा.८६७] एवं ता अदुगुंछिए, दुगुंछिए लसुणमाइ एमेव।
नवरिं पुण चउलहुगा, परिग्गहे गिण्हणादीया॥

वृ- एवं तावद् 'अजुगुप्सिते' आम्रादौ प्रलम्बे गृह्यमाणे प्रायश्चित्तं द्रष्टव्यम्। जुगुप्सिते पुनरिदं नानात्वम्। जुगुप्सितं द्विधा-जातिजुगुप्सितं स्थानजुगुप्सितं च। तत्र जातिजुगुप्सितं लशुनादि, आदिग्रहणेन पलाण्डुप्रभृतिपरिग्रहः। स्थानजुगुप्सितं पुनरशुचिस्थाने कर्दमादौ पतितम्। द्विविधेऽपि जुगुप्सिते 'एवमेव' अजुगुप्सितवत् प्रायश्चित्तं वक्तव्यम्। 'नवरं' केवलं पुनः कल्पस्थकदृष्टं जुगुप्सितं गृह्णानस्य चतुर्लघवोऽत्र ज्ञातव्याः। अजुगुप्सिते पुनः "कप्पट्ठदिट्ठे लहुओ" त्ति लघुमास एवोक्त इति विशेषः। एतच्च सर्वमप्यपरिग्रहमधिकृत्योक्तम्। "परिग्गहे गिण्हणादीय" त्ति यत् पुनः प्रलम्बं कस्यापि परिग्रहे वर्त्तते तस्मिन् जुगुप्सिते वा अजुगुप्सिते वा प्रायश्चित्तं तथैव वक्तव्यम्, परं यस्य श्रेष्ठ्यादेः परिग्रहे तानि प्रलम्बानि वर्त्तन्ते तत्कृता ग्रहणा-ऽऽकर्षण-व्यवहारादयो दोषा अत्राधिका भवन्तीति॥

गतं द्रव्यतः प्रायश्चित्तम्। अथ क्षेत्रतः कालतश्च प्ररूपयति-

[भा.८६८] खेत्ते निवेसणाई, जा सीमा लहुगमाइ जा चरिमं।
केसिंची विवरीयं, काले दिन अट्ठमे सपदं॥

वृ- क्षेत्रतो निवेशनमादौ कृत्वा यावद् ग्रामस्य सीमा एतेषु स्थानेषु गृह्णानस्य लघुकादिकं यावत् 'चरिमं' पाराञ्चिकम् । किमुक्तं भवति ? -निवेशने-महागृहपरिवारभूतगृहसमुदायरूपे गृह्णाति चत्वारो लघवः, पाटके गृह्णाति चत्वारो गुरवः, साहिकायां-गृहपङ्क्तिरूपायां गृह्णाति षड् लघवः, एवं ग्राममध्ये षड् गुरवः, ग्रामद्वारे छेदः, ग्रामस्य बहिर्मूलम्, उद्यानेऽनवस्थाप्यम्, ग्रामसीमायां पाराञ्चिकम् । केषाञ्चिदाचार्याणां मतेन 'विपरीतम्' उक्तविपर्यस्तं प्रायश्चित्तम् । तद्यथा-सीमायामन्यग्रामे वा गृह्णाति चतुर्लघु, उद्याने च चतुर्गुरु, ग्रामबहिः षड्लघु, ग्रामद्वारे षडगुरु, ग्राममध्ये च्छेदः, प्रायश्चित्तमष्टमे दिने 'स्वपदं' पाराञ्चिकम् । इयमत्र भावना-प्रलम्बानि गृह्णतः प्रथमे दिवसे चत्वारो लघवः, द्वितीये चत्वारो गुरवः, तृतीये षड् लघवः, चतुर्थे षड्गुरवः, पञ्चमे च्छेदः, षष्ठे मूलम्, द्वितीये चत्वारो गुरवः, तृतीये षड् लघवः, चतुर्थे षडगुरवः, पञ्चमे च्छेदः, षष्ठे मूलम्, सप्तमेऽनवस्थाप्यम्, अष्टमे पाराञ्चिकम् ॥

अथ प्रकारान्तरेण क्षेत्रत एव प्रायश्चित्तमाह-

[भा.८६९] निवेसण वाडग साही, ग्गममज्झे अ गामदारे अ ।
उज्जाणे सीमाए, अन्नग्गामे य खेत्तम्मि ॥

वृ- क्षेत्रे प्रकारान्तरेण प्रायश्चित्तमिदम्-निवेशने चतुर्लघु, पाटके चतुर्गुरु, साहिकायां षडलघु, ग्राममध्ये षड्गुरु, ग्रामद्वारे च्छेदः, उद्याने मूलम्, सीमायामनवस्थाप्यम्, अन्यग्रामे पाराञ्चिकम् ॥ अथ भावतः प्रायश्चित्तमाह-

[भा.८७०] भावऽट्ठवार सपदं, लहुगाई मीस दसहि चरिमं तु ।
एमेव य बहिया वी, सत्थे जत्ताइठाणेसु ॥

वृ- भावे अष्टभिर्वारैः 'स्वपदं' पाराञ्चिकम् । किमुक्तं भवति ? -एकं वारं प्रलम्बानि गृह्णाति चत्वारो लघवः, द्वितीयं वारं चत्वारो गुरवः, तृतीयं वारं षड् लघवः, चतुर्थं वारं षड् गुरवः, पञ्चमं वारं छेदः, षष्ठं वारं मूलम्, सप्तमं वारमनवस्थाप्यम्, अष्टमं वारं गृह्णतः पाराञ्चिकम् । एतच्च सर्वमपि सचित्तप्रलम्बविषयं भणितम् । मिश्रप्रलम्बे तु गृह्यमाणे लघुमासादिकं दशभिः स्थानैः 'चरमं' पाराञ्चिकम् । तद्यथा-मिश्रप्रलम्बं गृह्णाने कल्पस्थकेन दृष्टे मासलघु, महता पुरुषेण दृष्टे शङ्कायां मासलघु, निशङ्के मासगुरुं, भोजिकायाः कथने चतुर्लघु, घाटिनो निवेदने चतुर्गुरु, ज्ञातीनां ज्ञापने षड्लघु, आरक्षिकाणां निवेदने षड्गुरु, सार्थवाहज्ञाते च्छेदः, श्रेष्ठिकथने मूलम्, अमात्यनिवेदिते अनवस्थाप्यम्, राज्ञो ज्ञापिते पाराञ्चिकम् । एतद् द्रव्यतः प्रायश्चित्तम्, क्षेत्रतः पुनरिदम्-निवेशने मासलघु, पाटके मासगुरु, साहिकायां चतुर्लघु, ग्राममध्ये चतुर्गुरु, ग्रामद्वारे षड्लघु, ग्रामबहि षड्गुरु, उद्याने च्छेदः, उद्यानसीम्नोरन्तरे मूलम्, सीमायामनवस्थाप्यम्, सीमायाः परतोऽन्यग्रामादौ पाराञ्चिकम् । कालतः पुनः प्रथमे दिवसे मासलघु, द्वितीये मासगुरु, एवं यावद् दशभिर्दिवसैः पाराञ्चिकम् । भावतः प्रथमं वारं गृह्णतो मासलघु, द्वितीयं मासगुरु, एवं यावद् दशभिर्वारैः पाराञ्चिकम् । गतमापण-तद्वर्जभेदाद् द्विविधमपि ग्रामान्तर्विषयं ग्रहणम् । अथ ग्रामबहिर्भावग्रहणमाह-"एमेव य" इत्यादि पश्चार्द्धम् । एवमेव बहिरपि ग्रामस्य ग्रहणं भणितव्यम् । तत् पुनर्बहिर्ग्रहणं "सत्थे" त्ति सार्थावासस्थाने वा भवेद् यात्रादिस्थाने वा । यात्रास्थानं यत्र लोक उद्यानिकादियात्रया गच्छति, आदिशब्दादन्यस्याप्येवंविधस्थानस्यपरिग्रहः ॥

अथ बहिर्ग्रहणे प्रायश्चित्तमतिदिशन्नाह-

[भा.८७१] अंतो आवणमाईगहणे जा वन्निया सवित्थारा ।
बहिया उ अन्नगहणे, पडियम्मि उ होइ स च्चेव ॥

वृ- ग्रामादीनाम् 'अन्तः' मध्ये आपणादौ-आपणे आपणवर्जे वा जुगुप्सितेऽजुगुप्सिते वा सपरिग्रहेऽपरिग्रहे वा ग्रहणे या सविस्तरा ''दिट्ठे संका भोइय'' इत्यादिलक्षणप्रपञ्चसहिता वर्णिता शोधिरित्युपस्कारः सैव ग्रामादीनां बहि पतितप्रलम्बविषयेऽन्यत्रग्रहणे निरवशेषा द्रष्टव्या ॥ उक्तं बहिर्ग्रहणम्, तद्भणे च समर्थितं वसथदेशविषयं ग्रहणम् । अथाटवीविषयमाह-

[भा.८७२] कोट्टगमाई रन्ने, एमेव जणो उ जत्थ पुंजेइ ।
तहियं पुण वच्चंते, चउपयभयणा उ छद्दसिया ॥

वृ- 'जनः' लोकः प्रचुरफलायामटव्यां गत्वा फलानि यावत्पर्याप्तं गृहीत्वा यत्र गत्वा शोषयति, पश्चाद् गन्त्री-पोट्टलकादिभिरानीय नगरादौ विक्रीणाति तत् कोट्टकमुच्यते । ततश्चारण्ये कोट्टकादौ प्रदेशे यत्र जनः फलानि शोषणार्थं 'पुञ्जयति', पुञ्जीकरोति तत्र प्रलम्बग्रहणे 'एवमेव' यथा वसिमे ''दिट्ठे संका भोइय'' इत्यादिकमुक्तं तथैव प्रायश्चित्तमवसातव्यम् । विशेषः पुनरयम्- ''तहियं पुण'' इत्यादि । 'तत्र पुनः' कोट्टकादौ व्रजतः चतुर्भि पदैः 'भजना' भङ्गकरचना 'षड्दशिका' षोडशभङ्गप्रमाणा कर्त्तव्या ॥ कथम् ? इति चेद् उच्यते-

[भा.८७३] वच्चंतस्स य दोसा, दिया य रातो य पंथ उप्पंथे ।
उवउत्त अणुवउत्ते, सालंब तहा निरालंबे ॥

वृ- तत्र व्रजतो बहवो दोषा भवन्ति, ते चोपरिष्टाद् भणिष्यन्ते । दिवा च रात्रिश्च पन्था उत्पथश्च उपयुक्त अनुपयुक्तः सालम्बस्तथा निरालम्बश्चेति अक्षरयोजना । अथ भावार्थ उच्यते- दिवा गच्छति पथा उपयुक्तः सालम्बः १ दिवा गच्छति पथा उपयुक्तो निरालम्बः ४, एवमुत्पथपदेनापि चत्वारो भङ्गाः प्राप्यन्ते, जाता अष्टौ भङ्गाः ८, एते दिवापदममुञ्चता लब्धाः, एवं रात्रिपदममुञ्चताऽप्यष्टौ भङ्गा लभ्यन्ते, सर्वसङ्ख्यया षोडश भङ्गाः ॥ अमीषां रचनोपायमाह-

[भा.८७४] अट्ठग चउक्क दुग एक्कगं च लहुगा य होंति गुरुगा य ।
सुद्धा एगंतरिया, पढमरहिय सेसगा तिन्नि ॥

वृ-इहाक्षाणां चतस्रः पङ्क्तयः स्थाप्यन्ते । तत्र प्रथमपङ्क्तौ प्रथममष्टौ लघुकास्ततोऽप्यष्टौ गुरुका इत्येवं षोडशाक्षा निक्षेपणीयाः, द्वितीयपङ्क्तौ चत्वारः प्रथमं लघुकास्ततश्चत्वारो गुरुकाः पुनश्चत्वारो लघुकास्तदनु चत्वारो गुरुकाः, तृतीयपङ्क्तावपि षोडशाक्षा द्वौ लघुकौ द्वौ गुरुकावित्यनेन क्रमेण निक्षेप्याः, चतुर्थपङ्क्तावेको लघुक एको गुरुक इत्येकान्तरितलघु-गुरुरूपाः षोडशैवाक्षाः स्थापयितव्याः । एवमन्यत्रापि भङ्गकप्रस्तारे यत्र यावन्तो भङ्गकास्तत्र तावदायामः चरमपङ्क्तावेकान्तरितानाम् अर्वाक्तनपङ्क्तिषु पुनर्द्विगुणद्विगुणानां लघु-गुरूणामक्षाणां निक्षेपः कर्त्तव्यः । उक्तञ्च-

भंगपमाणायामो, लहुओ गुरुओ य अक्खनिक्खेवो ।
आरओ दुगुणा दुगुणो, पत्थारे होइ निक्खेवो ॥

एतेष्वेव शुद्धा-ऽशुद्धस्वरूपं दर्शयति-''सुद्धा एगंतरिया'' इत्यादि । प्रथमे भङ्गकाष्टके

प्रथमभङ्गरहिताः शेषास्त्रयो भङ्गका एकान्तरिताः शुद्धाः । इदमुक्तं भवति-प्रथमो भङ्गकश्चतुर्ष्वपि पदेषु निरवद्यत्वादेकान्तेन शुद्ध इति न काचित् तदीया विचारणा, तं मुक्त्वा ये प्रथमाष्टके शेषा भङ्गकास्ते एकान्तरितास्तृतीय-पञ्चम-सप्तमरूपास्त्रयः क्वचिदुत्पथादौ पदेऽशुद्धा अपि सालम्बनत्वाच्छुद्धाः प्रतिपत्तव्याः । अर्थादापन्नं द्वितीय-चतुर्थ-षष्ठा-ऽष्टमा भङ्गका दिवादौ पदे शुद्धा अपि निरालम्बनत्वादशुद्धाः । एवं द्वितीयाष्टकेऽपि प्रथमो भङ्गः शुद्धः शेषास्त्रयः एकान्तरिताः शुद्धाः, सालम्बनत्वात् ॥ अत एवाह-

[भा.८७५] पढमो एत्थ उ सुद्धो, चरिमो पुण सव्वहा असुद्धो उ ।
अवसेसा वि य चउदस, भंगा भइयव्वगा होंति ॥

वृ-प्रथमो भङ्गः 'अत्र' एषां षोडशानां मध्ये 'शुद्धः' सर्वथा निर्दोषः, चरमश्च भङ्गः सर्वथा अशुद्धः, अवशेषाश्चतुर्दश भङ्गाः 'भक्तव्याः' विकल्पयितव्या भवन्ति, केचित् शुद्धाः केचित् पुनरशुद्धा इति भावः ॥ कथम् ? इति चेद् उच्यते-

[भा.८७६] आगाढम्मि उ कज्जे, सेस-असुद्धो वि सुज्झए भंगो ।
न विसुज्झे अनागाढे, सेसपदेहिं जइ वि सुद्धो ॥

वृ-'आगाढे कार्ये' पुष्टे आलम्बने गच्छतः 'शेषैः' रात्र्युत्पथानुपयुक्तलक्षणैः पदैरशुद्धोऽपि भङ्गः शुध्यति । 'अनागाढे' आलम्बनाभावे शेषैः-दिवापथोपयुक्तलक्षणैः पदैर्यद्यपि शुद्धस्तथापि न विशुध्यति ॥ अथ किं कुत्र प्रायश्चित्तं भवति ? इत्युच्यते-

[भा.८७७] लहुगा य निरालंबे, दिवसतो रत्तिं हवंति चउगुरुगा ।
लहुगो य उप्पहेणं, रीयादी चेवऽनुवउत्ते ॥

वृ-यत्र यत्र निरालम्बस्तत्र तत्र दिवसतो गच्छतः चत्वारो लघुकाः, रात्रौ चत्वारो गुरुकाः । यत्र यत्र दिवसत उत्पथेन तत्र तत्र मासलघु । यत्र यत्र दिवसत ईर्याप्रभृतिसमितिष्वनुपयुक्तो गच्छति तत्र तत्र मासलघु । रात्रावुत्पथगमेऽनुपयुक्तगमने च मासगुरु ॥

अथ प्रकारान्तरेण प्रायश्चित्तमाह-

[भा.८७८]दिय-राओ लहु-गुरुगा, आणा चउ गुरुग लहुग लहुगा य ।
संजम-आयविराधन, संजमे आरोवणा इणमो ॥

वृ-अशुद्धेषु भङ्गेषु सर्वेष्वपि दिवसतो गच्छतश्चत्वारो लघुकाः, रात्रौ पुनश्चत्वारो गुरुकाः । तीर्थकराणामाज्ञाभङ्गे चतुर्गुरुकाः । अनवस्थायां चत्वारो लघुकाः । मिथ्यात्वेऽपि चत्वारो लघुकाः । अत्र चानवस्था-मिथ्यात्वे प्रक्रमाद् द्रष्टव्ये । विराधना द्विविधा-संयमे आत्मनि च । तत्र संयमविराधनायाम् 'इयं' वक्ष्यमाणा 'आरोपणा' प्रायश्चित्तम् ॥ तामेवाह-

[भा.८७९] छक्काय चउसु लहुगा, परित्त लहुगा य गुरुग साहारे ।
संघट्टण परितावण, लहु गुरुगऽतिवायणे मूलं ॥

वृ-'षट्कायाः' पृथिव्यप्तेजोवायुवनस्पतित्रसरूपाः । तेषां मध्ये 'चतुर्षु' पृथिव्यप्तेजोवायुषु सङ्घट्टनादौ लघुकपर्यन्तं प्रायश्चित्तम् । 'परीत्ते' प्रत्येकवनस्पतिकायेऽपि लघुकान्तम् । 'साधारणे' अनन्तवनस्पतौ गुरुकान्तम् । तथा द्वीन्द्रियादीनां सङ्घट्टने परितापने च यथायोगं लघुका गुरुकाश्च प्रायश्चित्तम्, 'अतिपातने' विनाशने मूलम् । इयमत्र भावना-पृथिवीकायं सङ्घट्टयति मासलघु,

परितापयति मासगुरु, अपद्रावयति चुतर्लघु; एवमप्काये तेजःकाये वायुकाये प्रत्येकवनस्पतिकाये च द्रष्टव्यम्; अनन्तवनस्पतिं यदि सङ्घट्टयति तदा मासगुरु, परितापयति चतुर्लघु अपद्रावयति चतुर्गुरु; द्वीन्द्रियं सङ्घट्टयति चतुर्लघु, परितापयति चतुर्गुरु, जीविताद् व्यपरोपयति षड्लघु; त्रीन्द्रियं सङ्घट्टयतश्चतुर्गुरु, परितापयतः षड्लघु, जीविताद् व्यपरोपयतः षड्गुरु; चतुरिन्द्रियं सङ्घट्टयतः षड्लघु, परितापयतः षड्गुरु, जीविताद् व्यपरोपयतः छेदः; पञ्चेन्द्रियं सङ्घट्टयतः षड्गुरु, परितापयतो लघुमासिकच्छेदः, अपद्रावयतो मूलम् ॥

अथैतदेव प्रायश्चित्तं रात्रौ विशेषयन्नाह-

[भा.८८०]जहिं लहुगा तहिं गुरुगा, जहि गुरुगा कालगुरुग तहि ठाणे।
छेदो य लहुय गुरुओ, काएसाऽऽरोवणा रत्तिं ॥

वृ- यत्र दिवसतः 'लघुकानि' मासलघु-चतुर्लघु-षड्लघुरूपाणि तत् रात्रावेतान्येव 'गुरुकाणि' मासगुरु-चतुर्गुरु-षड्गुरुरूपाणि कर्त्तव्यानि। यत्र पुनरग्रेऽपि गुरुकाणि मासादीनि तत्र स्थाने तान्येव कालगुरुकाणि दातव्यानि। यत्र च च्छेदो लघुकस्तत्र स एव गुरुकः कर्त्तव्यः। 'काये' कायविषया एषा आरोपणा रात्रौ ज्ञातव्या ॥ अथाऽऽत्मविराधनामाह-

[भा.८८१]कंट-ऽट्ठि खाणु विज्जल, विसम दरी निन्न मुच्छ-सूल-विसे।
वाल-ऽच्छभल्ल-कोले, सीह-विग-वराह-मेच्छित्थी ॥

वृ- स साधुः कोट्टकादौ व्रजन् कण्टकेन वा अस्था वा स्थाणुना वा पदयोः परिताप्येत। 'विज्जलं' पङ्किलम् 'विषमं' निम्नोन्नतम् 'दरी' कुसारादिका 'निम्नं' गम्भीरा गर्त्ता; एतेषु पतितस्य मूर्च्छा वा भवेत्, शूलं वा अनुधावेत्, "विसं"ति विषकण्टकेन वा विध्येत, विषफलं वा भक्षयेत्, तथा व्यालेन-सर्पादिना अच्छभल्लेन वा-ऋक्षेण कालेन वा-महाशूकरेण सिंहेन वा वृकेण वा वाहेण वा उपद्रूयेत, म्लेच्छः पुरुष- प्रान्ततया प्रहारादिकं दद्यात्, स्त्री वा तं साधुमुपसर्गयेत्, अथवा म्लेच्छस्त्री-पुलिन्दीप्रभृतिका तमुपसर्गयेत्, तन्निमित्तं म्लेच्छः कुपितो वध-बन्धादि कुर्यात् ॥

[भा.८८२] तेने देव-मनुस्से, पडिनीए एवमाइ आयाए।
मास चउ छच्च लहु गुरु, छेदो मूलं तह दुगं च ॥

वृ- स्तेनो द्विविधः-शरीरस्तेन उपधिस्तेनश्च, तेनोपद्रवः क्रियेत, देवता वा प्रान्ता तं साधुं प्रमत्तं दृष्ट्वा च्छलयेत्, अपरो वा कोऽपि प्रत्यनीको मनुष्यो विजनमरण्यं मत्वा मारणादि कुर्यात्, एवमादिका आत्मनि विराधना भवति। तत्रेदं प्रायश्चित्तम्-"मास चउ" इत्यादि पश्चार्द्धम्। कण्टकादिभिरनागाढं परिताप्यते चतुर्लघु, आगाढं परिताप्यते चतुर्गुरु, अथ महादुःखमुत्पद्यते ततः षड्लघु, मूर्च्छामूर्च्छे षड्गुरु, कृच्छ्रप्राणे छेदः, कृच्छ्रोच्छ्वासे मूलम्, मारणान्तिकसमुद्घातेऽनवस्थाप्यम्, कालगते पाराञ्चिकम् ॥ अथाऽऽत्मविराधनायामेव सामान्यतः प्रायश्चित्तमाह-

[भा.८८३] कंट-ऽट्ठिमाइएहिं, दिवसतो सव्वत्थ चउगुरू होंति।
रत्तिं पुण कालगुरू, जत्थव अन्नत्थ आयवहो ॥

वृ- कण्टका-ऽस्थिकादिभिः परितापनायां सर्वत्र दिवसतश्चतुर्गुरवो भवन्ति। रात्रौ पुनस्त एव चतुर्गुरवः कालगुरवो ज्ञातव्याः। अन्यत्रापि यत्र 'आत्मवधः' आत्मविराधना भवति तत्र सर्वत्रापि चतुर्गुरवः प्रायश्चित्तम् ॥ तथा-

[भा.८८४] पोरिसिनासण परिताव ठावणं तेण देह उवहिगतं।
पंतादेवयछलणं, मणुस्सपडिणीयवहणं च ॥

वृ- कण्टकादिना पीडितः सन् सूत्रपौरुषीं न करोति मासलघु, अर्थपौरुषीं न करोति मासगुरु, सूत्रं नाशयति चतुर्लघु, अर्थं नाशयति चतुर्गुरु। "परिताव"त्ति अनागाढपरितापे चतुर्लघु, आगाढपरितापे चतुर्गुरु। "ठावण"त्ति अनाहारं स्थापयति चतुर्लघु, आहारं स्थापयति चतुर्गुरु, परीत्तं स्थापयति चतुर्लघु, अनन्तं स्थापयति चतुर्गुरु, अस्नेहं स्थापयति चतुर्लघु, सस्नेहं स्थापयति चतुर्गुरु। तथा "तेण" त्ति उपधिस्तेनाः, तैः उपधौ ह्रियमाणे उपधिगतं जघन्यमध्यमोत्कृष्टोपधिनिष्पन्नं प्रायश्चित्तम्। "देह"त्ति देहस्तेनाः-शरीरापहारिणस्तैरेकः साधुः ह्रियते मूलम्, द्वयोर्ह्रियमाणयोरनवस्थाप्यम्, त्रिषु ह्रियमाणेषु पाराञ्चिकम्। प्रान्तया देवतया यदि च्छलनं क्रियते ततश्चतुर्गुरु। प्रत्यनीकमनुष्येण पुरुषेण स्त्रिया नपुंसकेन वा हन्येत चत्वारो गुरवः॥ अथ प्रकृतमर्थमुपसंहरन्नर्थान्तरमुपन्यस्यन्नाह-

[भा.८८५] एवं ता असहा, सहायसहिए इमे भवे भेदा।
जय अजय इत्थि पंडे, अस्संजइ संजईहिं च ॥

वृ-एवं तावत् 'असहायस्य' एकाकिनो व्रजतो दोषा उक्ताः। सहायसहिते व्रजति विचार्यमाणे एते सहायस्य भेदा भवन्ति। तद्यथा-'यताः' संयताः 'अयताः' असंयताः "इत्थि"त्ति पाषण्डिस्त्रियः 'पण्डकाः' नपुंसकाः 'असंयत्यः' गृहस्थस्त्रियः 'संयत्यः' साध्व्यः, एतैः सार्द्धं गच्छति॥ इदमेव व्याचष्टे-

[भा.८८६] संविग्गाऽसंविग्गा, गीया ते चेव होंति अग्गीया।
लहुगा दोहि विसिट्ठा, तेहि समं रत्ति गुरुगा उ ॥

वृ-संविग्ना गीतार्थाः, असंविग्ना गीतार्थाः, संविग्ना अगीतार्थाः, असंविग्ना अगीतार्थाः, एतैः समं गच्छतः 'द्वाभ्यां' तपः-कालाभ्यां विशिष्टा लघुकाः प्रायश्चित्तम्। तद्यथा-संविग्नैर्गीतार्थैः समं व्रजति चत्वारो लघवस्तपसा कालेन च लघुकाः, असंविग्नैर्गीतार्थैः समं गच्छति चतुर्लघवः तपसा लघुकाः कालेन गुरुकाः, संविग्नैरगीतार्थैः सार्द्धं याति चतुर्लघु कालेन लघु तपसा गुरु, असंविग्नैरगीतार्थैः समं व्रजति चतुर्लघु तपसा कालेन च गुरु। एतद् दिवसतो ज्ञातव्यम्। रात्रौ तैःसमं व्रजतः एवमेव तपः-कालविशेषिताश्चतुर्गुरुकाः॥

[भा.८८७] अस्संजय-लिंगीहिं उ, पुरिसागिइपंडएहि य दिवा उ।
अस्सोय सोय छल्लहु, ते चेव उ रत्ति गुरुगा उ ॥

वृ- असंयता द्विविधाः-गृहिणो लिङ्गिनश्च। लिङ्गमेषां विद्यत इति लिङ्गिनः-अन्यपाषण्डिन इत्यर्थः। तथा पुरुषाकृतयः-पुरुषनेपथ्यधारिणः पण्डकाः। एते त्रयोऽपि प्रत्येकं द्विविधाः-शौचवादिनोऽशौचवादिनश्च। तत्राशौचवादिभिर्गृहिभिः समं व्रजति षड्लघु उभयलघुकम्, शौचवादिभिः समं व्रजति षड्लघु कालगुरुकम्। अन्यलिङ्गिभिरशौचवादिभि सार्द्धं व्रजति षड्लघु कालगुरुकम्, शौचवादिभिः समं व्रजति षड्लघु तपोगुरुकम्। पुरुषाकृतिभिः पण्डकैरशौचवादिभिः समं व्रजति षड्लघु तपोगुरुकम्, शौचवादिभिः समं व्रजति षड्लघु तपसा कालेन च गुरुकम्। एतद् दिवसतः प्रायश्चित्तमुक्तम्। रात्रौ तु 'त एव' षण्मासाः गुरुकाः, षड् गुरवस्तपःकालविशेषिता

एवमेव दातव्या इति भावः ॥

[भा.८८८] पासंडिणित्थि पंडे, इत्थीवेसेसु दिवसतो छेदो ।
तेहिं चिय निसि मूलं, दिय-रत्ति दुगं तु समणीहिं ॥

वृ-तापसी-परिव्राजिकादिभिः पाषण्डिनीभिः "इत्थि"त्ति गृहस्थस्त्रीभिः स्त्रीवेषधारिभिश्च पण्डकैरशौचवादिभिः सह दिवसतो गच्छतो लघुकश्छेदः शौचवादिभि सह गुरुकश्छेदः । तैरेव सह 'निशि' रात्री गच्छतो गच्छतो लघुकश्छेदः शौचवादिभि सह गुरुकश्छेदः । तैरेव सह 'निशि' रात्री गच्छतो मूलम् । श्रमणीभिः समं दिवा गच्छतोऽनवस्थाप्यम् । रात्री श्रमणीभिः सह गच्छति पाराञ्चिकम् ॥ प्रकारान्तरेणात्रैव प्रायश्चित्तमाह-

[भा.८८९] अहवा समणा-ऽसंजय-अस्संजइ-संजईहि दियराओ ।
चत्तारि छच्च लहु गुरु, छेओ मूलं तह दुगं च ॥

वृ- 'अथवा' इति प्रकारान्तरद्योतने । 'श्रमणाः' संयतास्तैः सार्द्धं दिवा गच्छति चतुर्लघु, रात्री गच्छति चतुर्गुरु । असंयतैः । सार्द्धं दिवा गच्छति षड्लघु, रात्री गच्छति षड्गुरु । असंयतीभिः समं दिवा व्रजति छेदः, रात्री गच्छति मूलम् । संयतीभि सह दिवसतो गच्छति अनवस्थाप्यम्, रात्री गच्छति पाराञ्चिकम् ॥ तदेवमुक्तमटवीविषयं ग्रहणम् । तदुक्तौ चावसितमन्यत्रग्रहणम् । अथ तत्रग्रहणं विभावयिषुरुक्तार्थसदृशं विधिमतिदिशन्नाह-

[भा.८९०] जह चेव अन्नगहणेऽरन्नो गमणाइ वन्नियं एयं ।
तत्थगहणे वि एवं, पडियं जं होइ अच्चित्तं ॥

वृ- यथैवान्यत्रग्रहणेऽरण्यविषयं षोडशभङ्गरचनया गमनम् आदिशब्दात् संयमा-ऽऽत्मविराधनासमुत्थं दोषजालं प्रायश्चित्तं च 'एतद्' अनन्तरमेव वर्णितं 'तत्रग्रहणेऽपि' विवक्षितप्रलम्बाधारभूतवृक्षस्याधःपतितं यदचित्तं प्रलम्बं तद् गृह्णानस्याप्येवमेव निरवशेषं वर्णनीयं यावत् श्रमणीभिः सह गमनमिति ॥ यस्तु विशेषस्तमुपदिदर्शयिषुराह-

[भा.८९१] तत्थग्गहणं दुविहं, परिग्गहमपरिग्गहं दुविहभेयं ।
दिट्ठादपरिग्गहिए, परिगहिए अनुग्गहं कोइ ॥

वृ-तत्रग्रहणं द्विविधम्, तद्यथा-सपरिग्रहमपरिग्रहं च । यद् देवतादिभि परिगृहीतं वृक्षादि तद्विषयं सपरिग्रहम्, तद्विपरीतमपरिग्रहम् । तदुभयमपि 'द्विविधभेदं' द्विविधेन-सचित्ता-ऽचित्तभेदद्वयेन भेदः-पार्थक्यं यस्य तद् द्विविधभेदम्, सचित्ता-ऽचित्तभेदभिन्नमिति भावः । तत्र यदपरिगृहीतमचित्तं तद् गृह्णानस्य "दिट्ठाइ" त्ति "दिट्ठे संका भोइय" इत्यादिका आरोपणा सर्वाऽपि प्राग्वद् द्रष्टव्या । यत् पुनः परिगृहीतमचित्तं तद् गृह्णतः कश्चिद् भद्रकः परिग्रहीता अनुग्रहं मन्येत । एतदग्रतो भावयिष्यते ॥ अथ सपरिग्रहस्यैव स्वरूपं निरूपयति-

[भा.८९२] तिविह परिग्गह दिव्वे, चउलहु चउगुरुग छल्लहुक्कोसे ।
अहवा छल्लहुग च्चिय, अंत गुरू तिविह दिव्वम्मि ॥

वृ- सपरिग्रहं त्रिविधम्, तद्यथा-देवपरिगृहीतं मनुष्यपरिगृहीतं तिर्यक्परिगृहीतं च । तत्र यद् दिव्यं - देवपरिगृहहीतं तद् त्रिविधम्-जघन्यं मध्यममुत्कृष्टं च । व्यन्तर परिगृहीतं जघन्यम्,

भवनपति-ज्योतिष्कपरिगृहीतं मध्यमम्, वैमानिकपरिगृहीतमुत्कृष्टम् । तत्र जघन्यपरिगृहीतं प्रलम्बं गृह्णाति चत्वारो लघवः, मध्यमपरिगृहीतं गृह्णाति चत्वारो गुरवः, उत्कृष्टपरिगृहीतं गृह्णाति षड लघवः । अथवा त्रिष्वपि जघन्य-मध्यमोत्कृष्टेषु षड् लघव एव प्रायश्चित्तम्, केवलं तपः-काल-विशेषितम्-जघन्ये तपोलघु कालगुरुकम्, मध्यमे काललघु तपोगुरुकम्, 'अन्त्ये च' उत्कृष्टे द्वाभ्यामपि गुरुकं कर्त्तव्यमिति त्रिविधदिव्यविषयं प्रायश्चित्तम् ॥ गतं देवपरिगृहीतम् ।

अथ मनुष्यपरिगृहीतमाह-

[भा.८९३] सम्मेतर सम्म दुहा, सम्मे लिंगि लहु गुरुओ गिहिएसुं ।
मिच्छा लिंगि गिही वा, पागय लिंगिसु चउलहुगा ॥

वृ- मनुष्यपरिगृहीतं द्विधा-सम्यग्दष्टिपरिगृहीतं "इयर" त्ति ध्यादष्टिपरिगृहीतं च । तत्र यत् सम्यग्दष्टिपरिगृतं तद् द्विधा-पार्श्वस्थादिलिङ्गस्थपरिगृहीतं गृहस्थपरिगृहीतं च । लिङ्गस्थपरिगृहीते मासलघु, गृहिभिः सम्यग्दष्टिभिः परिगृहीते मासगुरु । यत्पुनर्मिथ्यादष्टिपरिगृहीतं तद् द्विविधम्-"लिंगि" त्ति अन्यपाषण्डिपरिगृहीतं गृहस्थपरिगृहीतं च । तत्र गृहस्थपरिगृहीतं त्रिधा-प्राकृतपरिगृहीतं कौटुम्बिकपरिगृहीतं दण्डिकपरिगृहीतं च । तत्र प्राकृतपरिगृहीते लिङ्गिपरिगृहीते च चतुर्लघुकाः ॥

[भा.८९४/१] गुरुगा पुन कोडुंबे, छल्लहुगा होंति दंडियारामे ।

वृ- कौटुम्बिकपरिगृहीते पुनश्चत्वारो गुरुकाः । 'दण्डिकारामे' दण्डिकपरिगृहीते उद्याने षड् लघुकाः । गतं मनुष्यपरिगृहीतम् । अथ तिर्यक्परिगृहीतं भाव्यते-

[भा.८९४/२]तिरिया य दुट्ठ-ऽदुट्ठा, दुट्ठे गुरुगाइरे (गेयरे) लहुगा ॥

वृ-तिर्यञ्चश्च द्विविधाः-दुष्टा अदुष्टाश्च । दुष्टाः हस्ति-शुनकादयः, अदुष्टा रोझ-हरिणादयः । दुष्टतिर्यक्परिगृहीते चतुर्गुरुकाः, 'इतरैः' अदुष्टैः परिगृहीते चतुर्लघुकाः ॥ गतं तिर्यक्परिगृहीतम् । अथ यदुक्त "परिगहिए अनुग्गहं कोइ" त्ति तदेतद् भावयति-

[भा.८९५] भद्देतर सुर-मनुया, भद्दो घिप्पंति दट्ठुणं भणइ ।
अन्ने वि साहु ! गिण्हसु, पंतो छण्हेगयर कुज्जा ॥

वृ- यस्य सुरस्य मनुजस्य वा परिग्रहे स आरामो वर्त्तते स भद्रो वा भवेत् 'इतरो वा' प्रान्तः । तत्र भद्रः प्रलम्बं गृह्यमाणं दृष्ट्वा तं साधुं भणति-साधुत्वया कृतम्, तारिता वयं संसारसागरात्, अन्यान्यपि हे साधो ! पर्याप्तानि गृहाण इत्यादि । प्रान्तः पुनः षन्नां प्रकाराणामेकतरं कुर्यात् ॥ अथ क एते षद् प्रकाराः ? उच्यते-

[भा.८९६] पडिसेहणा खरंटण, उवलभ पंतावणा य उवहिम्मि ।
गिण्हण-कड्ढण-ववहार-पच्छकड्डुड्डाह-निव्विसए ॥

वृ- प्रतिषेधनं प्रतिषेधना-निवारणेत्यर्थः १ 'खरण्टना' खर-परुषवचनैर्निर्भर्त्सना २ 'उपालम्भः' सपिपासवचनैः शिक्षा २ 'प्रान्तापना' यष्टि-मुष्ट्यादिभिस्ताडना ४ "उवहिम्मि" त्ति उपधिहरणम् ५ इति पञ्च भेदाः, ग्रहणाकर्षणव्यवहारपश्चात्कृतोड्डाहनिर्विषय इत्येक एव षष्ठो भेदः ६ इति सङ्ग्रहगाथासमासार्थ ॥ अथैनामेव विवरीषुराह-

[भा.८९७] जं गहियं तं गहि, बिइयं मा गिण्ह हरइ वा गहियं ।

जायसु ममं च कज्जे, मा गिण्ह सयं तु पडिसेहो ।।

वृ- 'यद् गृहीतं प्रलम्बं तद् गृहीतं नाम, द्वितीयं पुनर्वारं मा ग्रहीः' इति वचनं यद् वक्ति, यद्वा गृहीतं सत् प्रलम्बं तस्य प्रव्रजितस्य हस्ताद् 'हरति' उद्दालयति, भणति वा 'कार्ये समापतिते मामेव याचस्व, स्वयं पुनर्मा गृहाण' इत्येष सर्वोऽपि प्रतिषेध उच्यते ।। अथ खरण्टनामाह-

[भा.८९८] धी मुंडितो दुरप्पा, धिरत्थु ते एरिसस्स धम्मस्स ।
अन्नत्थ वा वि लब्भिसि, मुक्को सि खरंटणा एसा ।।

वृ- धिग् मुण्डितो दुरात्मा । धिगस्तु 'ते' तव सम्बन्धिन ईदृशस्य धर्मस्य, यत्र चौर्यं क्रियत इति भावः । यद्वा मया मुक्तोऽसि परमन्यत्रात्मनीदृशीश्चेष्टितैर्विडम्बनां लप्स्यसे । एषा निष्पिपासनिर्भर्त्सना खरण्टना भण्यते ।। अथोपालम्भनामाह-

[भा.८९९] आमफलाणि न कप्पंति तुम्ह मा सेसए वि दूसेहिं ।
मा य सकज्जे मुज्झसु, एमाई होउवालंभो ।।

वृ- आमफलानि युष्माकं ग्रहीतुं न कल्पन्ते, अतः शेषानपि साधून् 'मा दूषय' निजदुश्चरितेन मा कलङ्कितान् कुरु, मा च 'स्वकार्ये' निरवद्यप्रवृत्यात्मके चारित्रे मुहः, एवमादिकः सपिपासशिक्षारूप उपालम्भो भवति ।। प्रान्तापनोपधिहरणे भावयति-

[भा.९००] कर-पाय-दंडमाइसु, पंतावणगाढमाइ जा चरिमं ।
अप्पो अ अहाजाओ सव्वो दुविहो वि जं च विना ।।

वृ- कर-पाद-दण्डादिभिः आदिशब्दाद् लतादिभिश्च ताडनं प्रान्तापना । तस्यां चानागाढपरितापादिषु 'चरमं' पाराञ्चिकं यावत् प्रायश्चित्तम् । अल्पं वा बहुं वा स उपधिं हरेत् । अल्पो नाम यथाजातः, निषद्याद्वयोपेतं रजोहरणं मुखवस्त्रिका चोलपट्टकश्चेत्यर्थः । बहुः पुनः 'सर्व' चतुर्दशविध उपधिः । अथवा 'द्विविधः' औधिकौपग्रहिकरूपः । यच्च तृणग्रहणादिकमुपधिं विना भवेत् तन्निष्पन्नं प्रायश्चित्तम् ।। सम्प्रत्यनुग्रहादिपदेषु प्रायश्चित्तमाह-

[भा.९०१] लहुगा अनुग्गहम्मी, अप्पत्तिय गुरुग तीसु ठाणेसु ।
पंतावणे चउगुरुगा, अप्प बहुम्मी हिए मूलं ।।

वृ- यस्य सम्बन्धी स आरामः स यदि चिन्तयति 'अनुग्रहो मे यद् मदीयानि प्रलम्बानि साधवो गृह्णन्ति' इत्यनुग्रहे मन्यमा चतुर्लघवः । अथाप्रीतिकं करोति तूष्णीकश्च तिष्ठति ततश्चतुर्गुरुकाः । अथाप्रीतिकवशात् प्रतिषेधं खरण्टनामुपालम्भं वा कुर्यात् ततस्त्रिष्वपि स्थानेषु प्रत्येकं प्रत्येकं चुतुर्गुरवः । प्रान्तापनेऽपि चतुर्गुरुकाः । अल्पे वा बहौ वा उपधौ हृते मूलम् । यद्वोपधिनिष्पन्नम्, तद्यथा- उत्कृष्टे उपधौ चतुर्लघवः, मध्यमे मासलघु, जघन्ये रात्रिन्दिवपञ्चकम् । आह कथमेकत्रैव मूलम् ? उपधिनिष्पन्नं वा ? उच्यते-प्रमादतः प्रलम्बानि गृह्णत उपधिकरणे उपधिनिष्पन्नम्, दर्पतस्तु प्रलम्बानि गृह्णानस्योपकरणापहारे मूलम् ।।

अथ "पंतावणगाढमाइ चरिमं पि (जा चरिमं) पदं व्याचष्टे-

[भा.९०२] परितावणाइ पोरिसि, ठवमा महय मुच्छ किच्छ कालगए ।
मास चउ छच्च लहु गुरु, छेओ मूलं तह दुगं च ।।

वृ- प्रान्तापितस्य सतोऽनागाढा परितापना भवति चतुर्लघु, आगाढा भवति चतुर्गुरु,

परितापनाभिभूतः सन् सूत्रपौरुषीं न करोति मासलघु, अर्थपौरुषीं न करोति मासगुरु, सूत्रं नाशयति चतुर्लघु, अर्थं नाशयति चतुर्गुरु, प्राशुकं स्थापयति चतुर्लघु, अप्राशुकं स्थापयति चतुर्गुरु, प्रत्येकस्थापने चतुर्लघु, अनन्तस्थापने चतुर्गुरु इत्यादि प्राग्वद् वक्तव्यम्। "महय" त्ति महादुःखे षड्लघु, मूर्च्छायां षड्गुरु, कृच्छ्रप्राणे छेदः, कृच्छ्रोच्छ्वासे मूलम्, समवहतेऽनवस्थाप्यम्, कालगते पाराञ्चिकम् ॥ अथ "यच्च तृणग्रहणादिकमुपधिना विना भवेत्" इति पदं विवृणोति-

[भा.९०३] तणगहणे झुसिरेतर, अग्गी सट्ठाण अभिनवे जं च।

एसणपेल्लण गहणे, काया सुत मरण ओहाणे ॥

वृ- वर्षाकल्पादाद्युपकरणे हृते शीताभिभूतास्तृणानि गृह्णन्ति-सेवन्ते। तत्र शुषिरतृणसेवने चतुर्लघु, अशुषिरतृणसेवने मासलघु। अग्निं सेवन्ते तत्र स्वस्थानप्रायश्चित्तम्, चतुर्लघु इत्यर्थः। अथाभिनवमग्निं जनयनति मूलम्, यच्चाग्निसमारम्भेऽन्येषां जीवानां विराधनं तन्निष्पन्नमपि प्रायश्चित्तम्। अथोपकरणाभावे उद्गमादिदोषदुष्टं वस्त्रादि गृह्णन्त एषणां प्रेरयन्ति ततस्तन्निष्पन्नम्; "गहणे" त्ति शीतादिभिः परिताप्यमाना गृहस्थैरदत्तमपि वस्त्रादि गृह्णीयुस्तन्नियुस्तन्निष्पन्नम्। निशीथचूर्णिकृता तु "गमणे" त्ति पाठो गृहीतः, तत्र चोपधिं विना शीतादिपरीषहमविषहमाणो यद्यन्यतीर्थिकेष्वेकः साधुर्गच्छति मूलम्, द्वयोर्गच्छतोरनवस्थाप्यम्, त्रिषु पाराञ्चिकम्। "काय" त्ति अग्निं सेवमाना एषणां प्रेरयन्तो वा यत् पृथिव्यादिकायान् विराधयन्ति तन्निष्पन्नम्। "सुत" त्ति 'श्रुतं' सूत्रं तस्य पौरुषीं न कुर्वन्ति, उपलक्षणत्वाद् अर्थपौरुषीं न कुर्वन्ति सूत्रं नाशयन्ति अर्थं नाशयन्ति तन्निष्पन्नम्। "मरण" त्ति उपकरणं विना यद्येकोऽपि म्रियते तथापि पाराञ्चिकम्, "ओहाण" त्ति यद्येकः साधुरवधावति मूलम्, द्वयोरनवस्थाप्यम्, त्रिषु पाराञ्चिकम् ॥

अथ ग्रहणाकर्षणादिरूपं षष्ठं प्रकारं भावयति-

[भा.९०४] गेण्हण गुरुगा छम्मास कड्ढणे छेदो होइ ववहारे।

पच्छाकडम्मि मूलं, उड्डहण विरुंगणे नवमं ॥

वृ- प्रलम्बानि गृह्णानो यदि प्रलम्बस्वामिना दृष्ट्वा गृहीतस्ततो ग्रहणे चतुर्गुरुकाः। अथ तेनोपकणे हस्ते वा गृहीत्वा राजकुलाभिमुखमाकृष्टस्तत आकर्षणे षण्मासा गुरवः। अथ कारणिकानं समीपे व्यवहारे कारयितुमारब्ध ततश्छेदः। व्यवहारे विधीयमाने यदि पश्चात्कृतः पराजितस्ततो मूलम्। अथ चतुष्क-चत्वरादिषु 'एष प्रलम्बचौरः' इतिघोषणापुरस्करमुद्दग्धः हस्त-पादादौ वा अवयवे व्यङ्कितस्तत एवमुद्दहने "विरुंगणे" त्तिव्यङ्गने वा 'नवमम्' अनवस्थाप्यम् ॥

[भा.९०५] उद्दवणे निव्विसए, एगमनेगे पदोस पारंची।

अणवट्ठप्पो दोसु य, दोसु य पारंचिओ होइ ॥

वृ-अथान्यायोदीर्णकोपानलेन राजादिना अपद्रावितो निर्विषयो वा आज्ञप्तस्ततोऽपद्रावणे निर्विषये वा कृते पाराञ्चिकम्। अथवा एकस्यानेकेषां वा साधूनामुपरि प्रद्वेषं यदि व्रजति तदा पाराञ्चिकम्। अत्र च 'द्वयोः' उद्दहन-व्यङ्गनयोरनवस्थाप्यो भवति, 'द्वयोश्च' अपद्रावण-निर्विषययोः पाराञ्चिक इति ॥ अथ परिग्रहविशेषेण प्रायश्चित्तविशेषमाह-

[भा.९०६] आराम मोल्लकीए, परतित्थिय भोइएण गामेण।

वणि-घड-कुडुंबि-राउलपरिग्गहे चेव भद्दितरा ॥

वृ- इहाऽऽरामः कश्चिदादित एवाऽऽत्मीयो वा भवेद् मूल्येन क्रीतो वा । यो मूल्येन क्रीतः स केन क्रीतो भवेत् ? उच्यते-परतीर्थिकेन वा १ भोगिकेन वा २ ग्रामेण वा ३ वणिजा वा ४ घटया वा गोष्ठयेत्यर्थः ५ कौटुम्बिकेन वा ६ आरक्षिकेण वा ७ राज्ञा वा ८ एतद् द्वयमपि राजकुलशब्देनगृहीतम् । एतेषां परिग्रहे वर्त्तमानादारमात् प्रलम्बानि गृह्णतो यथाक्रमं प्रायश्चित्तं चतुर्लघु १ चतुर्गुरु २ षड्लघु ३ षड्गुरु ४ छेदः ५ मूलं ६ अनवस्थाप्यं ७ पाराञ्चिकम् ८ । अत्रापि त एव 'भद्रेतराः' भद्रक-प्रान्तकृता अनुग्रह-प्रतिषेधादयो दोषा वक्तव्याः । एतत् सर्वमयाचिते प्रलम्बे द्रष्टव्यम् । याचिते तु ग्रहणा-ऽऽकर्षणादिदोषान् विना शेषमिति ॥ एतावता वृक्षस्याधःप्रपतितमचित्तं व्याख्यातम् । अथ सचित्तादिद्वारचतुष्टयमभिधित्सुराह-

[भा.१०७] एमेव य सच्चित्ते, छुभणा आरोहणा य पडणा य ।
जं इत्थं नाणत्तं, तमहं वोच्छं समासेणं ॥

वृ- यथा अचित्ते "दिट्ठे संका भोइय" इत आरभ्य "आराम मोल्लकीए" इति पर्यन्तं भणितम् एवमेव सचित्तेऽपि द्रष्टव्यम् । प्रक्षेपणमारोहणं पतनमित्येतान्यपि द्वाराणि तथैव वक्तव्यानि । यत् पुनरत्र 'नानात्वं' विशेषस्तदहं वक्ष्ये समासेन ॥ तत्र सचित्ते तावद् विशेषमाह-

[भा.१०८] तं सच्चित्तं दुविहं, पडियाऽपडियं पुणो परित्तियरं ।
पडितऽसति अपावंते, छुभई कट्ठाइए उवरिं ॥

वृ- तत् पुनः सचित्तं द्विविधम्-पतितमपतितं च । पुनरेकैकं द्विधा-'परित्तं' प्रत्येकम् 'इतरद्' अनन्तं च । तत्र पतितस्य 'असति' अभावे वृक्षप्रतिष्ठितेऽपि हस्तादिना अप्राप्यमाणे ततः प्रलम्बपातनार्थं काष्ठादीन्युपरि क्षिपति ॥ तत्र यद् वृक्षोपरिस्थितं भूमिस्थितो हस्तेन गृह्णाति तत्र प्रायश्चित्तमाह-

[भा.१०९] सजियपयट्ठिए लहुगो, सजिए लहुगा य जत्तिया गाहा ।
गुरुगा होंति अनंते, हत्थप्पत्तं तु गेण्हंते ॥

वृ- सजीववृक्षप्रतिष्ठितमचित्तफलं गृह्णाति मासलघु । अत्र च यावतो ग्राहान् करोति तावन्ति मासलघुकानि । अथ सजीवं सचित्तवृक्षप्रतिष्ठितं गृह्णाति चतुर्लघु, सच्चित्तप्रतिष्ठितप्रत्ययं च मासलघु, तत्रापि यावतो ग्राहान् करोति तावन्ति चतुर्लघूनि मासलघूनि च । एतत् प्रत्येके भणितम् । अनन्ते पुनरेतान्येवप्रायश्चित्तानि 'गुरुकाणि' मासगुरु-चतुर्गुरुस्वरूपाणि भवन्ति । एवं भूमिस्थितस्य वृक्षस्थितं हस्तप्राप्तं प्रलम्बं गृह्णतः प्रायश्चित्तमुक्तम् ॥ अथ यदुक्तम् "छुभई कट्ठाइए उवरिं" ति तदेतद् विवरीषुराह-

[भा.११०] छुभमाण पंचकिरिए, पुढवीमाई तसेसु तिसु चरिमं ।
तं काय परिच्चयई, आवडणे अप्पगं चेव ॥

वृ- प्रलम्बपातनार्थं काष्ठ-लेष्टु-शुष्कगोमयादिकं गवेषयति चतुर्लघु । काष्ठादिकं लब्ध्वा वृक्षाभिमुखं क्षिपति चतुर्लघव एव । स च क्षिपन्नेव 'पञ्चक्रियः' पञ्चभि क्रियाभि स्पृष्टः, तद्यथा-कायिक्या १ आधिकरणिक्या २ प्राद्वेषिक्या ३ पारितापनिक्या ४ प्राणातिपातक्रियया ५ चेति । पृथिव्यादिषु च जीवेषु सङ्घट्टना-परितापना-ऽपद्रावणैर्लघुमासादिकंप्रायश्चित्तं यथास्थानं ज्ञातव्यम् । "तसेसु तिसु चरिमं" ति त्रिषु पञ्चेन्द्रियरूपेषु त्रसेषु व्यपरोपितेषु 'चरमं' पाराञ्चिकम् । तथा

काष्ठादिकं क्षिपन् 'तं कायं' वनस्पतिलक्षणं नियमादेव परित्यजति। स च लगुडादिरूर्द्ध्वं क्षिप्तः शाखादौ प्रतिस्खल्य निवृत्तस्तस्यैव सरीराभिमुखमापतति, तस्यापतने आत्मानं च परित्यजतीति॥ कथं पुनः पृथिव्यादिकायानां विराधको भवति ? इत्युच्यते-

[भा.९११] पावंते पत्तम्मि य, पुणोपडंते अ भूमिपत्ते अ।
रय-वास-विज्जुयाई, वाय-फले मच्छिगाइ तसे॥

वृ- तत् काष्ठादिकं हस्तात् च्युतं सद् यावद् वृक्षेनाऽऽस्फलति तावत् प्राप्नुवद् मण्यते तस्मिन् प्राप्नुवति, तथा वृक्षं प्राप्ते पुनः पतति च भूमिप्राप्ते च षट्कायविराधना ज्ञातव्या। कथम् ? इति चेद् इत्याह-"रय" इत्यादि। आदिशब्दः प्रत्येकं सम्बध्यते, ततश्च रजःप्रभृतिकं पृथिवीकायं वर्षोदकादिकमप्कायं विद्युदादिकं तेजःकायं 'वातं च' तत्रैव वातं फलानि तस्यैव वृक्षस्य सत्कानि उपलक्षणत्वात् पत्रादीन्यपि मक्षिकादींश्च त्रसान् विराधयति॥ इदमेव स्पष्टयन्नाह-

[भा.९१२] खोल्ल-तयाईसु रओ, महि-वासोस्साइ अग्गि दरदड्ढे।
तत्थेवऽनिल वणस्सइ, तसा उ किमि-कीड-सउणाई॥

वृ- "खोल्लं"ति देशीशब्दत्वात् कोटरम्, त्वक् प्रतीता, तदादिषु स्थानेषु वृक्षे रजः सम्भवेत् ततः पृथिवीकायविराधना। महिकायां निपतन्त्यां वर्षे अवश्याये वा निपतति आदिग्रहणेन हरतनुकादिसम्भवेऽप्कायविराधना। वनदवादिना दरदग्धे वृक्षे उपलक्षणत्वाद् विद्युति वाऽग्निकायविराधना। तत्रैवाग्नौ नियमाद् 'अनिलः' वायुः सम्भवतीति वायुकायविराधना। वनस्पति स एवप्रलम्बलक्षणः पत्र-पुष्पादिर्वा। त्रसास्तु कृमि-कीट-शकुनादिका विराध्यन्ते कृमयः-विष्ठादिसमुद्भवाः, कीटकाः-घुणादयः, शकुनाः-काक-कपोतादयः, आदिग्रहणेन सरटादिपरिग्रहः। एवं वृक्षमप्राप्ते काष्ठादौ षट्कायविराधना। एवमेव प्राप्ते पुनः पतति भूमिप्राप्तेऽपि ज्ञातव्यम्॥ यत आह-

[भा.९१३] अप्पत्ते जो उ गमो, सो चेव गमो पुणोपडंतम्मि।
सो चेव य पडियम्मि वि, निक्कंपे चेव भोमाई॥

वृ- य एवाप्राप्ते 'गमः' प्रकारः स एव गमः पुनःपतति उपलक्षणत्वात् प्राप्तेऽपि, भूयो गमशब्दोच्चारणं षट्कायविराधनां प्रतीत्याऽऽत्यन्तिकतुल्यताख्यापनार्थम्, स एव भूमौ पतितेऽपि काष्ठादौ प्रकारः प्रतिपत्तव्यः। केवलं "निक्कंपे चव भोमाइ" त्ति तत् काष्ठादिकं महता भारगौरवेण 'निष्कम्पं' निस्सहं पृथिव्यां यद् निपतति तेन 'भौमादीनां' पृथिव्यादीनां महती विराधनेति चूर्णिकृदभिप्रायः। निशीथचूर्णिकाराभिप्रायेण तु "निक्कंपे चेव भूमीए" इति पाठः। अस्य व्याख्या-यस्यां भूमौ स्थितः काष्ठादिक्षेपणाय विशिष्टं स्थानबन्धमध्यास्ते तत्रापि पादयोर्निष्कम्पत्वेन षण्णां कायानां विराधको भवति॥

[भा.९१४] एवं दव्वतो छण्हं, विराधओ भावओ उ इहरा वि।
चिज्जइ हु घणं कम्मं, किरियग्गहणं भयनिमित्तं॥

वृ- 'एवम्' एतेन प्रकारेण चतुर्ष्वप्यप्राप्तादिपदेषु द्रव्यतः षण्णां कायानां विराधकः प्रतिपत्तव्यः। भावतस्तु 'इतरथाऽपि' द्रव्यतो विराधनां विनाऽप्यसौ षट्कायविराधको लभ्यते, संयमं प्रति निरपेक्षतया तस्य भावतः प्राणातिपातसद्भावात्। भावप्राणातिपातेन च यथा 'घनं'

निबिडं कर्म चीयते न तथा द्रव्यप्राणातिपातेन। आह यदुक्तं "पञ्चभिः क्रियाभिः स्पृष्टः" तत् कथं संवादमश्नुते? यावता यदि न विराधयति तदा कायिकी आधिकरणिकी च क्रिये सम्भवतः पारितापनिक-प्राणातिपातिकक्रिययोस्तु कुतः सम्भवः?, अथ विराधयति तदेताश्चतस्रोऽपि भवेयुः प्राद्वेषिकी पुनः कथं भवेत्? । सूरिराह-क्रियाग्रहणं 'भयनिमित्तं' भयजननार्थं क्रियते, येन साधवः क्रियापञ्चकापत्तिदोषभीता मूलत एव प्रलम्बग्रहणे न प्रवर्त्तन्ते; यद्वा दृष्टिवादनयाभिप्रायनैपुण्याद् यत्रैका क्रिया तत्र पञ्चापि क्रियाः सम्भवन्तीति न दोषः ।

यदाह निशीथचूर्णिकृत्- अहवा जत्थ एगा किरिया तत्थ दिट्ठिवायनयसुहुमत्तणतो पञ्च किरियाओ भवंति, अतो पंचकिरियग्गहणे न दोसो ॥

एवं तावत् संयमविराधना भाविता । अथाऽऽत्मविराधनां भावयति-

[भा.९१५] कुवणय पत्थर लेट्ठु, पुव्वच्छूढे फले व पवडंते ।
पच्चुप्फिडणे आया, अच्चावामे य हत्थाई ॥

वृ- अन्येन केनचित् प्रलम्बार्थिना पूर्वं "कुवणउ" त्ति लगुडः क्षिप्तः, स तत्रैव वृक्षशाखायां विलग्नः सन् वायुप्रयोगेण विवक्षितसाधुक्षिप्तकाष्ठादिप्रयोगेण वा सञ्चालितस्तस्यैव साधोरुपरि निपतन् विराधनां कुर्यात् । एवं 'प्रस्तरः' पाषाणः 'लेष्टु' इष्टकाशकलं मृत्तिकापिण्डो वा पूर्वक्षिप्तः पतेत्, फलं वृन्तच्युतं वृक्षात् प्रपतेत् । तस्यैव काष्ठादेः प्रतिनिवृत्य स्वसम्मुखं प्रत्यास्फलने आत्मविराधना भवेत् । 'अत्यायामेन च' अतीहस्तसमुच्छ्रयणेन काष्ठादौ क्षिप्यमाणे हस्तादेः परितापना भवेदिति ॥ गतं क्षेपणाद्वारम् । अथाऽऽरोहणद्वारमाह-

[भा.९१६] खिवणे वि अपावंतो, दुरुहइ तहिं कंट-विच्छु-अहिमाई ।
पक्खि-तरच्छाइवहो, देवयखेत्ताइकरणं च ॥

वृ- काष्ठादेः क्षेपणे कृतेऽपि यदा प्रलम्बानि न पतन्ति तदाऽधःस्थितस्तानि 'अप्राप्नुवन्' अलभमानस्तं वृक्षं "दुरुहइ" त्ति आरोहति । स च यावद्भिर्बाहुक्षेपकैरारोहत तावन्ति चतुर्लघुकानि, अनन्ते पुनश्चतुर्गुरुकाणि । 'तत्र' वृक्षे आरोहन् यत् कण्टकैर्विध्यते, यच्च वृश्चिकेनाऽहिना वा आदिशब्दाद् नकुलादिना वा दश्यते, यच्च पक्षिभि-श्येनादिभिः तरक्षादिभिश्च-आटव्यजीवैर्वधो भवति, यया वा देवतया अधिष्ठितोऽसौ वृक्षस्तया यदसौ साधुः क्षिप्तचित्तः क्रियते, आदिग्रहणेनापरया कयाचिद् विडम्बनया विडम्ब्यते ॥

[भा.९१७] तत्थेव य निट्ठवणं, अंगेहि समोहएहि छक्काया ।
आरोवण स च्चेव य, गिलाणपरितावणाईया ॥

वृ- यद्वा सा देवता स्वाधिष्ठितवृक्षारोहणकुपिता तत्रैव 'निष्ठापनम्' आयुषः समापनं तस्य यत् कुर्यात्, अथवा तं साधुमारोहन्तमेव यत् पातयेद् एषा सर्वाऽप्यात्मविराधना । पातितस्य च तयाऽङ्गानि 'समवहन्यन्ते' भज्यन्त इत्यर्थः, तैरङ्गैर्हस्त-पादादिभि समवहतैर्यत्र भूमावसौ पतति तत्र षट् काया विराध्यन्ते । तेषां च सङ्घट्टनादिभिरारोपणा सैव द्रष्टव्या या "छक्काय चउसु लहुगा" इत्यादि गाथायामुक्ता । आत्मविराधनायां च ग्लानविषया परितापनादिनिष्पन्ना या आरोपणा साऽपि प्राग्वदवसातव्या ॥ गतमारोहणद्वारम् । अथ पतनद्वारमाह-

[भा.९१८] मरण-गिलाणाईया, जे दोसा होंति दूहमाणस्स ।

ते चेव य सारुवणा, पवडंते होंति दोसा उ ॥

वृ- कदाचिदसौ तं वृक्षमारोहन् पतेत्, ततश्च मरण-ग्लानत्वादिका ये दोषा आरोहतो भवन्ति प्रपततोऽपि त एव दोषाः 'सारोपणाः' सप्रायश्चित्ता निरवशेषा वक्तव्याः । "पवडंते होंति सविसेसा" इति निशीथचूर्णिलिखितः पाठः, तत्रायमर्थ-आरोहतो दोषाणां सम्भव एव भणितः, पततः पुनरवश्यमभाविनो गात्रभङ्गादयो दोषा इति सविशेषग्रहणम् ॥

गतं पतनद्वारम् । अथोपधिद्वारं विवृणोति-

[भा.९१९] तंमूल उवहिगहणं, पंतो साहूण कोइ सव्वेसिं ।
तण-अग्गिगहण परितावणा य गेलन्न पडिगमणं ॥

वृ- यस्य परिग्रहे तानि प्रलम्बानि सः 'तन्मूलं' प्रलम्बग्रहणनिमित्तं तस्यैव साधोरुपधिग्रहणं कुर्यात्, यद्वा कश्चित् प्रान्तः सर्वेषां साधूनामुपधिं गृह्णीयात् । तत्र यथाजाते रजोहरणादिके उपधौ हृते मूलम्, शेषे पुनरुत्कृष्टे चतुर्लघु, मध्यमे मासलघु, जघन्ये पञ्चकम् । उपधिं विना तृणानि गृह्णीयात, अग्निग्रहणं वा कुर्यात्, अग्निं सेवेतेति भावः, अथाग्निं न सेवते ततः शीतेन परितापना तस्य भवेत्, शीतेन वा भुक्ते अजीर्यमाणे ग्लानत्वं भवेत्, शीताभिभूता वा साधवः पार्श्वस्थादिषु प्रतिगमनं कुर्युः ॥ सम्प्रत्यत्रैव प्रायश्चित्तमाह-

[भा.९२०] तणगहण अग्गिसेवण, लहुगा गेलन्ने होइ तं चेव ।
मूलं अणवट्ठप्पो, दुग तिग पारंचिओ होइ ॥

वृ- अशुषिरतृणानि गृह्णाति मासलघु, शुषिरतृणानि गृह्णाति चतुर्लघु । परकृतमग्निं सेवते चतुर्लघु, अभिनवमग्निं जनयति मूलम्, अग्निशकटिकायां वा तापयन् यावतो वारान् हस्तं वा पादं वा सञ्चालयति तावन्ति चतुर्लघूनि । यस्तु धर्मश्रद्धालुरग्निं न सेवते स शीतेन ग्लानः सञ्जायते, ग्लानत्वे चानागाढपरितापनादौ तदेव प्रायश्चित्तम् । अथ शीतपरीषहमसहिष्णुः पार्श्वस्थादिषु व्रजति चतुर्लघु, यथाच्छन्देषु व्रजति चतुर्गुरु । यद्येकोऽवधावतो अन्यतीर्थिकेषु वा याति ततो मूलम्, द्वयोरनवस्थाप्यम्, त्रिषु पाराञ्चिकम् ॥

गतमुपधिद्वारम् । अथोड्डाहद्वारं विवृणोति-

[भा.९२१] अपरिग्गहिय पलंबे, अलभंतो समणजोगमुक्कधुरो ।
रसगेहीपिबद्धो, इतरे गिण्हंतो गहिओ य ॥

वृ- अपरिगृहीतानि प्रलम्बान्यलभमानः 'श्रमणयोगमुक्तधुरः' परित्यक्तश्रमणव्यापारभार इति भावः, रसगृद्धिप्रतिबद्धः 'इतराणि' परिगृहीतप्रलम्बानि गृह्णन् प्रलम्बस्वामिना दृष्ट्वा गृहीतः ॥ ततश्च-

[भा.९२२] महजनजाननया पुण, सिंघाडग-तिग-चउक्क-गामेसु ।
उड्डहिऊण विसज्जिते, महजननाए एतो मूलं ॥

वृ- तेन प्रलम्बस्वामिना गृहीत्वा शृङ्गाटक-त्रिक-चतुष्कस्थानेषु ग्रामेषु वा बहुषु नीत्वा महाजनस्य- पौर-जानपदरूपस्य ज्ञापना कृता, यथा 'एतेन मदीयानि प्रलम्बानि चोरितानि' इत्यादि महाजनस्य पुरत उद्दह्य "विसर्जितः मुक्तः तत एवं महाजनज्ञाते सति मूलं नाम प्रायश्चित्तम्॥ कथमुद्दहः ? इत्याह-

[भा.९२३] एस उ पलंबहारी, सहोढ गहिओ पलंबठाणेसु ।
सेसाण वि छाधाओ, सविहोढ विलंबिए होइ ॥

वृ- येनाऽऽरामाधिपतिना स प्रलम्बानि गृह्णानो गृहीतः स तं रासभारोपितं शृङ्गाटक-त्रिक-चतुष्कादिषु सर्वतः परिभ्रामयन्नेवमुद्घोषयति-'भो भोः पौराः ! श्रूयतामस्य प्रव्रजितकस्य दुश्चरितम्-एषः 'प्रलम्बहारी' मदीयारामसत्कलम्बचौरः 'सहोढः' सलोप्त्रो गृहीतो मया दुरात्मा 'प्रलम्बस्थानेषु' आरामप्रदेशेषु इत्यादिघोषणापुरस्सरमितश्चेतश्च नीयमानो महाजनेन सखेदमवलोक्यमानः स्वकृतेन कर्मणा विडम्ब्यते । ततश्च 'सविहोढं' सजुगुप्सनीयं यथा भवत्येवं विडम्बिते तस्मिन् शेषाणामपि साधूनां 'छायाघातः' 'सर्वेऽप्यमी एवंविधा एव' इति प्रभापरिभ्रंशो भवतीति ॥ व्याख्यातमुद्धारद्वारम् । तद्व्याख्याने च समर्थिता "अन्नत्थ-तत्थगहणे" इत्यादिद्वारगाथा । अथ यदुक्तमधस्तात् "आणाऽणवत्थ मिच्छा, विराधना कस्सऽगीयत्थे" तदिदानीं प्राप्तावसरं व्याख्यायते । तत्र आज्ञेति द्वारम्-भगवता प्रतिषिद्धं यत् "प्रलम्बं न कल्पते" तद्ग्रहणं कुर्वता भगवतामाज्ञाभङ्गः कृतो भवति, तस्मिंश्चाज्ञाभङ्गे चतुर्गुरुकाः । अत्र परः प्राह-

[भा.९२४] अवराहे लहुगतरो, आणाभंगम्मि गुरुतरो किह नु ।
आणाए च्चिय चरणं, तब्भंगे किं न भग्गं तु ॥

वृ- 'अपराधे' चारित्रातिचारे लघुतरो दण्डो भवद्भि पूर्वं भणितः; तथाहि-अचित्ते प्रलम्बे मासलघु, सचित्ते तु चतुर्लघु; इह पुनराज्ञाभङ्गे चतुर्गुरुकमिति गुरुतरो दण्डः 'कथं' कस्मात् ?, 'नु' इति वितर्के; अपि च अपराध जीवोपघातो इति लघुतर एवात्र भणितुमुचित इति । आचार्य प्राह-आज्ञायामेव भागवत्यां 'चरणं' चारित्रं व्यवस्थितम्, अतः 'तद्भङ्गे' तस्याः-आज्ञाया भङ्गे किम् ?' इति परिप्रश्ने आचार्य शिष्यं प्रश्नयति-किं तद् मूलोत्तरगुणादिकं वस्तु समस्ति यदाज्ञाभङ्गे न भग्नम् ? अपि तु सर्वमपि भग्नमिति, अत आज्ञायां गुरुतरो दण्ड उच्यते ॥

अस्यैवार्थस्य प्रसाधनार्थं दृष्टान्तमाह-

[भा.९२५] सोऊण य घोसणयं, अपरिहरंता विणास जह पत्ता ।
एवं अपरिहरंता, हियसव्वस्सा उ संसारे ॥

वृ- राज्ञा कारितां घोषणां श्रुत्वा घोषणया च निवारितमर्थमपरिहरन्तो यथा द्रव्यापहारलक्षणं विनाशं प्राप्ताः, एवं तीर्थकरनिषिद्धं प्रलम्बग्रहणमपरिहरन्तः 'हृतसर्वस्वाः' अपहृतसंयमरूप-सर्वसाराः संसारे दुःखमवाप्नुवन्ति । एषा श्रीभद्रबाहुस्वामिविरचिता गाथा ॥ अथास्या एव भाष्यकारो व्याख्यानं करोति-

[भा.९२६] छ प्पुरिसा मज्झ पुरे, जो आसादेज्ज ते अजाणंतो ।
तं दंडेमि अकंडे, सुणेंतु पउरा ! जनवया ! य ॥

[भा.९२७] आगमिय परिहरंता, निद्दोसा सेसगा न निद्दोसा ।
जिनआणागमचारि, अदोस इयरे भवे दंडो ॥

वृ- जइ कोइ नरवई, सो छहिं पुरिसेहिं अन्नतरे कज्जे तोसितो इमेणऽत्थेण घोसणं कारेइ-'इमे छ प्पुरिसा मज्झ पुरे अप्पणो इच्छाए विहरमाणा महाजनेनं अदिट्ठपुव्वा अनुवलद्धविभवनेवत्था अच्छंति, जो ते छिवइ वा पीडेइ वा मारेइ वा तस्स उग्गं दंडं करेमि, हंदि सुणंतु एअं पउरा ! य

जनवया ! य' त्ति । एयं घोसणयं सोऊण ते पउरा जनवया य दंडभीता ते पुरिसे पयत्तण वन्न-रूवाईहिं चिंधेहिं आगमिऊणं पीडापरिहारकयबुद्धी तेसिं छण्हं पुरिसाणं पीडं परिहरंति ते निद्दोसा। जे पुन अनायारमंता न परिहरंति ते रन्ना सव्वस्सावहारदंडेणं दंडिया । एस दिट्ठंतो । अयमत्थोवणओ-रायत्थानीया तित्थयरा । पुरत्थानीओ लोगो । छप्पुरिसत्थानीया छक्काया । घोसणत्थानीया छक्कायरक्खणपरूवणपरा छज्जीवणियादओ आगमा । छिवणाइत्थानीया संघट्टणादी । पउर-जणवयत्थाणीया साहू। दंडत्थाणीओ संसारो। तत्थ जे पयत्तेण छण्हं कायाणं सरूवं रक्खणोवायं च आगमेऊण जहुत्तविही पीडं परिहरंति ते कम्मबंधदंडेणं न दंडिज्जंति, इयरे पुन संसारे पुणो पुणो सारीर-माणसेहिं दुक्खसयसहस्सेहिं दंडिज्जंति त्ति ॥

अथाक्षरगमनिका-"षट् पुरुषा मम पुरे वर्त्तन्ते, यस्तानजानन्नपि 'आशातयेत्' स्पर्शादिनाऽपि पीडयेत् तमहं [illegible]मि 'अ[illegible]' अ[illegible]ले, [illegible] 'पौरा' [illegible] पुरवासिनः! 'जानपदाश्च' ग्रामवासिनो लोकाः !" इति राज्ञा कारितां घोषणां श्रुत्वा तान् पुरुषान् 'आगम्य' उपलक्ष्य परिहरन्तः सन्तो निर्दोषाः, 'शेषाः' पुनर्ये पीडां न परिहरन्ति ते न निर्दोषा इति दण्डिताः। एवमत्रापि जिनाज्ञया यः षट्कायानामागमः-परिज्ञानं तत्पूर्वकचारिणः-संयमाध्वगामिनः सन्तोऽदोषाः, इतरेषां 'भवे' संसारे शारीर-मानसिकदुःखलक्षणो दण्डः ॥ गतमाज्ञाद्वारम् । अथानवस्थाद्वारमाह-

[भा.९२८] एगेन कयमकज्जं, करेइ तप्पच्चया पुणो अन्नो ।
सायाबहुल परंपर, वोच्छेदो संजम-तवाणं ॥

वृ- इह प्रायः सर्वेऽपि प्राणिनः कर्मगुरुकतया दृष्टमात्रसुखाभिलाषिणः, न दीर्घसुखदर्शिनः, ततः सातलम्पटतया 'एकेन' केनचिदाचार्यादिना किमपि 'अकार्यं' प्रमादस्थानं 'कृतं' प्रतिसेवितं ततोऽन्योऽपि तत्प्रत्ययाद् 'एष आचार्यादि श्रुतधरोऽप्येवं करोति नूनं नास्त्यत्र दोषः' इति तदेवाकार्यं करोति, ततोऽपरोऽपि तथैव करोति, तदन्योऽपि तथैव इत्येवं 'सातबहुलानां' सातगौरवप्रतिबद्धानां प्राणिनां परम्परया प्रमादस्थानमासेवमानानां संयम-तपसोर्व्यवच्छेदः प्राप्नोति । यद्धि संयमस्थानं तपःस्थानं वा पूर्वाचार्येण सातगौरवगृध्नुतया वर्जितं तत् पाश्चात्यैरदृष्टमिति कृत्वा व्यवच्छिन्नमेवेति ॥ गतमनवस्थाद्वारम् । अथ मिथ्यात्वद्वारं विवृणोति-

[भा.९२९] मिच्छत्ते संकाई, जहेय मोसं तहेव सेसं पि ।
मिच्छत्तथिरीकरणं, अब्भुवगम वारणमसारं ॥

वृ- मिथ्यात्वे विचार्यमाणे शङ्कादयो दोषा वक्तव्याः । शङ्का नाम-किं मन्ये अमी यतावादिनस्तथाकारिणो न भवन्ति येन प्रलम्बानि गृह्णन्ति ?, आदिशब्दात् काङ्क्षादयो दोषाः । तथा यथैतद् मृषा तथैव 'शेषम्' अन्यदप्येतेषां मिथ्यारूपमेवेति चित्तविप्लुति स्यात् । मिथ्यात्वाद् वा चलितभावस्य सम्यक्त्वाभिमुखस्य प्रलम्बग्रहणदर्शनात् पुनरपि मिथ्यात्वे स्थिरीकरणं भवति। अभ्युपगमं वा प्रव्रज्याया अणुव्रतानां सम्यग्दर्शनस्य वा कर्तुकामस्यापरः कश्चिद् वारणं कुर्यात्-मा एतेषां समीपे प्रतिपद्यस्व, 'असारं' निस्सारममीषां प्रवचनम्, मयेदं चेदं दृष्टमिति ॥ गतं मिथ्यात्वद्वारम् । अथ विराधना, सा च द्विविधा-संयमे आत्मनि च । द्वे अपि प्रागेव सप्रपञ्चं भाविते, तथापि विशेषमुपदर्शयितुमाह-

[भा.९३०] तं काय परिच्चयई, नाणं तह दंसणं चरित्तं च ।
बीयाईपडिसेवग, लोगो जह तेहि सो पुट्ठो ॥

वृ- प्रलम्बं गृह्णन् 'तं कायं' वनस्पतिलक्षणं परित्यजति, तथा ज्ञानं दर्शनं चारित्रं चेति । बीजादिप्रतिसेवको लोको यथा असंयमेन स्पृष्टस्तथा सोऽपि साधुस्तैः प्रलम्बैरासेवितैरसंयमेन स्पृष्ट इति निर्युक्तिगाथाक्षरार्थः ॥ अथैनामेव विवरीषुराह-

[भा.९३१] कायं परिच्चयंतो, सेसे काए वए वि सो चयई ।
नाणे नाणुवदेसे, अवट्टमाणो उ अन्नाणी ॥

वृ- प्रलम्बानि गृह्णानो वनस्पतिकायं परित्यजति, तं च परित्यजन् शेषानपि कायानसौ भावतः परित्यजति, तत्परित्यागे च प्रथमव्रतपरित्यागः, प्रथमव्रतपरित्यागे च शेषव्रतपरित्यागोऽप्युपजायत-इति "व्रतान्यप्यसौ परित्यजति" इत्युक्तम् । तथा 'ज्ञाने' ज्ञानविषये परित्यागे चिन्त्यमाने ज्ञानोपदेशे क्रियाद्वारेणाऽवर्त्तमानोऽसौ ज्ञान्यपि अज्ञानी मन्तव्यः ॥

[भा.९३२] दंसण-चरणा मूढस्स नत्थि समया व नत्थि सम्मं तु ।
विरईलक्खण चरमं, तदभावे नत्थि वा तं तु ॥

वृ- ज्ञानाभावादसौ मूढो भवति, मूढस्य दर्शन-चारित्रे न स्तः । यद्वा प्रलम्बग्रहणादस्य जीवेषु समता न विद्यते । समताया अभावाच्च सम्यक्त्वमपि नास्ति, तस्यापि सामायिकभेदतया समतारूपत्वात् । विरतिलक्षणं चरणं भणितम्, तच्च लक्षण प्रलम्बानि गृह्णतो न विद्यते । 'तदभावे' लक्षणाभावे 'तत्तु' तत् पुनश्चारित्रं नास्ति । वाशब्दः प्रकारान्तरद्योतकः ॥ अथ "बीयाई" इत्यादि व्याख्यायते-फलाद् बीजं भवतीति कृत्वा बीजग्रहणम्, आदिशब्दात् फल-पुष्प-पत्र-प्रवाल-शाखा-त्वक्-स्कन्ध-कन्द-मूलानि गृह्यन्ते । शिष्यः प्राह-सर्वेऽपि वनस्पतयस्तावद् मूलादय एव भवन्ति अतः "मूलाईपडिसेवग" इति कर्तुमुचितम् किमिति "बीयाईपडिसेवग" त्ति कृतम्? सूरिराह-

[भा.९३३] पाएण बीयभोई, चोयग ! पच्छानुपुव्वि वा एवं ।
जोनिग्घाते व हतं, तदादि वा होइ वनकाओ ॥

वृ- लोकः प्रायेण बीजभोजी, तेन कारणेन बीजमादौ कृतम् । यद्वा हे नोदक ! स्वसमये त्रिविधाऽऽनुपूर्वी प्ररूप्यते, तद्यथा-पूर्वानुपूर्वी पश्चानुपूर्वी अनानुपूर्वी च । त्रिविधाऽपि च यथावसरं व्याख्याङ्गमित्यत्र पश्चानुपूर्वी गृहीता । अथवा बीजं वनस्पतीनां योनि-उत्पत्तिस्थानम् अतस्तस्य घाते-विनाशे सर्वमपि मूलादिकं निरपेक्षतया हतं भवति । यदि वा तदादिर्वनस्पतिकायो भवति । तद्-बीजमादिर्यस्य स तदादि, सर्वेषामपि वनस्पतीनां तत एव प्रसूतेः । अतो बीजादिग्रहणं कृतम् ॥ ततश्च-

[भा.९३४] विरइसभावं चरणं, बीयासेवी हु सेसघाती वि ।
अस्संजमेण लोगो, पुट्ठो जह सो वि हु तहेव ॥

वृ- यो बीजासेवी स नियमात् 'शेषाणां' मूलादीनामपि घाती विज्ञेयः । यश्च मूलादीनि घातयति तस्य विरतिस्वभावं यत् 'चरणं' चारित्रं तन्न भवति । यथा च बीजादिप्रतिसेवको लोकोऽसंयमेन स्पृष्टस्तथैवासावपि तैः प्रलम्बैरासेवितैरसंयमेन स्पृष्ट इति ॥

गता संयमविराधना। अथाऽऽत्मविराधनामाह-

[भा.९३५] तं चेव अभिहणेज्जा, आवडियं अहव जीहलोलुयता (यया)।
बहुगाइं भुंजित्ता, विसूचिकाईहि आववहो ॥

वृ- तद् लगुडादिकं क्षिप्तं पुनरापतितं सत् 'तमेव' साधुमभिहन्यात्। इदं च प्रागुक्तमपि स्थानाशून्यार्थमत्रोपात्तमिति न पुनरुक्तदोषः। अथवा जिह्वालोलुपतया बहुकानि प्रलम्बानि भुक्त्वा विसूचिकादिभिः आदिशब्दाद् ज्वरा-ऽतीसारादिभी रोगैरुत्पन्नैरात्मवधो भवति ॥ उक्ताऽऽत्मविराधना। तदुक्तौ च व्याख्याता आज्ञादयश्चत्वारोऽपि दोषाः। अथ ''कस्स अगीयत्थे'' ति पदं व्याचिख्यासुराह-

[भा.९३६] कस्सेयं पच्छित्तं, गणिणो गच्छं असारवेंतस्स।
अहवा वि अगीयत्थस्स भिक्खुणो विसयलोलस्स ॥

वृ- शिष्यः प्रश्नयति-यद् 'एतद्' अन्यत्रग्रहणादावनेकधा प्रायश्चित्तमुक्तं तत् कस्य भवति? सूरिराह-'गणिनः' आचार्यस्य गच्छम् असारयतः सतः। असारणा नाम अगवेषणा-कः कुत्र गतः? को वा मामापृच्छ्य गतः? को वा अनापृच्छया? यद्वा प्रलम्बं गृहीत्वा आगत्यालोचितेऽन्येन वा निवेदिते यत् प्रायश्चित्तं तन्न ददाति, दत्त्वा वा न कारयति, न वा नोदनादिना खरण्टयति; एषा सर्वाऽप्यसारणाऽभिधीयते। आह किं कारणमाचार्यस्य षट्कायानविराधयतोऽपि प्रायश्चित्तम्? उच्यते-स्वसाधूनुत्पथे प्रवर्त्तमानानसारयन्नसौ गच्छस्य विराधनायां वर्त्तते। तथा चोक्तमिदमेव सहेतुकं बृहद्भाष्ये-

किं कारणं तु गणिणो, असारवेंतस्स होइ पच्छित्तं?।
वट्टति जेम गणहरो, विराधनाए उ गच्छस्स ॥
किह पुन विराधनाए, गच्छस्स गणी उ वट्टती स खलु?।
भन्नइ सुणसु जह गणी, विराहओ होइ गच्छस्स ॥
जह सरणमुवगयाणं, जीवियववरोवणं नरो कुणइ।
एवं सारणियाणं, आयरिओ असारओ गच्छे ॥
किह सरणमुवगया पुन?, पक्खे पक्खम्मि जं उवट्ठंति।
इच्छामि खमासमणो!, कतकितिकम्मा उ जं अम्हे ॥

अत आचार्यस्य सर्वमेतत् प्रायश्चित्तम्। अथवा यो भिक्षुरगीतार्थ अपिशब्दाद् गीतार्थोऽपि विषयलोलः-सुखादुरसास्वादलम्पटो भूत्वा प्रलम्बानि गृह्णाति तस्यैतत् प्रायश्चित्तम्। अत्र चाऽऽचार्यविषया अष्टौ भङ्गाः-अगीतार्थ आचार्यो गच्छं न सारयति विषयलोलश्च १ अगीतार्थ आचार्यो गच्छं न सारयति विषयनिस्पृहश्च २ इत्यादि। अत्र चान्तिमो भङ्गः शुद्धः, शेषाः सप्त परित्यक्तव्याः ॥ यत आह-

[भा.९३७] देसो व सोवसग्गो, वसणी व जहा अजानगनरिंदो।
रज्जं विलुत्तसारं, जह तह गच्छो वि निस्सारो ॥

वृ- भङ्गसप्तकवर्त्ती आचार्यो देश इव सोपसर्गो व्यसनी वा यथा अज्ञायकनरेन्द्रः परित्यज्यते तथा परित्याज्यः। यथा च राज्ञा अचिन्त्यमानं राज्यं विलुप्तसारं भवति तथा गच्छोऽप्याचा-

र्येणाऽसार्यमाणो निस्सारो भवतीति परिहरणीय इति सङ्ग्रहगाथाक्षरार्थः ॥

अथैनामेव विवरीषुः प्रथमतो "देसो व सोवसग्गो" इति पदं व्याचष्टे-

[भा.९३८] ओमोदरिया य जहिं, असिवं च न तत्थ होइ गंतव्वं ।
उप्पन्ने न वसियव्वं, एमेव गणी असारणीओ ॥

वृ- यत्र देशेऽवमौदरिका अशिवं च उपलक्षमत्वाद् अपरोऽप्युपद्रवो भवति तत्र गन्तव्यं न भवति, अथ तत्र देशे वसतामेवाऽवमौदर्यादिकमुत्पन्नं तत उत्पन्ने सति तत्र न वस्तव्यम्, एवमेव 'गणी' आचार्य 'असारणिकः' गच्छसारणाविकलो नानुगन्तव्यः ॥ अथ "वसनी व जहा अजानगनरिंदो" त्ति व्याख्याति-

[भा.९३९] सत्तण्हं वसणाणं, अन्नयरजुतो न जाणई रज्जं ।
अंतेउरे व अच्छइ, कज्जाइँ सयं न सीलेइ ॥

वृ- यथा सप्तानां व्यसनानामन्यतरेण व्यसनेन युतो राजा राज्यं पालयितुं न जानाति, यो वा शेषव्यसनैरनभिभूतोऽपि विषयलोलुपतया नित्यमन्तः पुरे आस्ते सोऽपि 'कार्याणि' व्यवहारादीनि स्वयमात्मना 'न शीलयति' नावलोकत इत्युक्तं भवति, ततश्च यथेच्छमुच्छृङ्खलाः प्रजाः सञ्जायन्ते । एवमाचार्योऽप्यगीतार्थो गीतार्थो वा सातगौरवादिव्यसनोपहततया यदि स्वगच्छं न सारयति तदा गच्छः सर्वोऽपि निरङ्कुशः सञ्जायते । यतश्चैवमतोऽसारणिक आचार्यो दूरंदूरेण परिहर्त्तव्यः ॥ अथ व्यसनसप्तकमाह-

[भा.९४०] इत्थी जूयं मज्जं, मिगव्व वयणे तहा फरुसया य ।
दंडफरुसत्तमत्थस्स दूसणं सत्त वसणाइं ॥

वृ- यद् राजा अन्तःपुरस्त्रीषु नित्यमासक्तिस्तिष्ठति तत् स्त्रीव्यसनम् । यत्तु द्यूतविनोदेनानवरतं दीव्यति तद् द्यूतव्यसनम् । यत् पुनर्मद्यपानकेन नित्यं मूर्च्छित इवाऽऽस्ते तद् मद्यव्यसनम् । यत्तु मृगया-आखेटकस्तत्रानेकेषां मृगादिजन्तूनां वधं करोति तद् मृगयाव्यसनम् । एतेषु चतुर्ष्वप्यासक्तो राज्यकार्याणि न शीलयति । तथा यत् खर-परुषवचनैः सर्वानपि जनान् निर्विशेषमाक्रोशति तद् वचनपरुषताव्यसनम्, अत्र वचनदोषेण दुरधिगमनीयो भवति । यत् पुनरनपराधे स्वल्पे वाऽपराधे अत्युग्रं दण्डं निर्वर्त्तयति तद् दण्डपारुष्यव्यसनम्, अत्र च पौर-जानपदानामत्युग्र-दण्डभयेन नश्यतां क्रमेण च प्रजाया अभावे कीदृशं राज्यम् ? इति । अर्थोत्पत्तिहेतवो ये सामाद्युपायचतुष्टयप्रभृतयः प्रकारास्तेषां यद् दूषणं तद् अर्थदूषणव्यसनम्, अत्र चार्थोत्पत्तिहेतून् दूषयतो न तथाविधोऽर्थ उत्पद्यते, अर्थोत्पत्त्यभावे चाचिरादेव कोशः परिहीयते, परिहीणकोशस्य च विनष्टमेव राज्यम् । एतानि सप्त व्यसनानि ॥ अथ प्रकारान्तरेण भङ्गानाह-

[भा.९४१] अहवा वि अगीयत्थो, गच्छं न सारेइ इत्थ चउभंगो ।
बिइए अगीयदोसो, तइतो न सारेतरो सुद्धो ॥

वृ- अथवा अगीतार्थो गच्छं न सारयतीत्यत्र चतुर्भङ्गी । गाथायां पुंस्त्वं प्राकृतत्वात् । सा चेयम्-अगीतार्थो गच्छं न सारयति १ अगीतार्थो गच्छं सारयति २ गीतार्थो गच्छं न सारयति ३ गीतार्थो गच्छं सारयति ४ । अत्र प्रथमस्य द्वौ दोषौ अगीतार्थत्वोषः असारणादोषश्च । द्वितीयस्य पुनरेक एवागीतार्थत्वदोषः । तृतीयस्तु यन्न सारयति स एकस्तस्याऽसारणादोषः । 'इतरः'

चतुर्थो भङ्गः शुद्धः ॥ आद्यानां त्रयाणां भङ्गानां भावनामाह-

[भा.९४२] देसो व सोवसग्गो, पढमो तइओ तु होइ वसनी वा।
बिइओ अजाणतुल्लो, सारो दुविहो दुहेक्केक्को ॥

वृ- 'प्रथमः' प्रथमभङ्गवर्ती आचार्य सोपसर्गदेश इव परित्यक्तव्यः। 'तृतीयः' गीतार्थोऽप्यसारणिकत्वाद् व्यसनीव राजा परिहर्त्तव्यः। 'द्वितीयः' सारणिकोऽप्यगीतार्थत्वाद-ज्ञनरेन्द्रतुल्य इति कृत्वा परिहार्य इति चूर्ण्यभिप्रायः।

अथ निशीथचूर्ण्यभिप्रायेण व्याख्यायते-प्रथमः सोपसर्गदेश इव परिहार्य। द्वितीयः पुनरगीतार्थ परं सारणिकः स च व्यसनीव ज्ञातव्यः। किमुक्तं भवति ? -सोऽगीतार्थ सन् यत् किमपि स्वशिष्यान् नोदयति सा नोदना तस्य व्यसनमिव द्रष्टव्यम्, अतो व्यसनाभिभूतभूपतिवदसौ परिहार्यः। तृतीयः पुनरसारणिकत्वाद् गीतार्थोऽप्यज्ञनृपतुल्य इति कृत्वा परित्याज्यः। व्याख्याने "देसो व सोवसग्गो, पढमो बिइओ उ होइ वसणी वा। तइओ अजाण तुल्लो" त्ति पाठो द्रष्टव्यः। पुस्तकेष्वपि बहुष्वयमेव दृश्यत इति। यदुक्तं, "रज्जं विलुत्तसारं, जह तह गच्छो वि निस्सारो" त्ति तदेतद् भावयति-"सारो दुविहो दुहेक्केको" सारो द्विविधः-लौकिको लोकोत्तरिकश्च। पुनरेकैको द्विधा-बाह्य आभ्यन्तरश्च ॥ एतदेव व्याचष्टे-

[भा.९४३] गो-मंडल-धन्नाई बज्झो कनगाइ अंतो लोगम्मि।
लोगुत्तरिओ सारो, अंतो बहि नाण-वत्थाई ॥

वृ- गोशब्देन गावो बलीवर्दास्चोच्यन्ते, उपलक्षणत्वाद् हस्त्यश्वादीनामपि परिग्रहः मण्डलमिति देशखण्डम्, यथा-षन्नवतिमण्डलानि सुराष्ट्रादेशः; अथवा गोमण्डलं नाम गोवर्ग, उपलक्षणत्वाद् मघ्यादिवर्गोऽपि; धान्यानि शालिप्रभृतीनि, आदिशब्दाद् वास्तु-कुप्यादिपरिग्रहः; एष लौकिको बाह्यः सारः। कनकं-सुवर्णम्, आदिग्रहणेन रूप्य-रत्नादीनि; एषः 'अन्तः' इति आभ्यन्तरः सारः 'लोके' लोकविषयो मन्तव्यः। एतेन द्विप्रकारेणापि सारेण राज्यं पार्थिवेना-ऽचिन्त्यमानं निस्सारं भवति। लोकोत्तरिकः सारो द्विधा-अन्तर्बहिश्च। तत्रान्तःसारो ज्ञानम्, आदिशब्दाद् दर्शन-चारित्रे च। बहिसारो वस्त्रदिकः, आदिग्रहणेन शय्या-पात्रादीनि गृह्यन्ते। अनेन च द्विविधेनापि लोकोत्तरिकसारेणाऽऽचार्येणाऽसार्यमाणो गच्छो निस्सारो भवतीति प्रकृतम्। तस्माद् गणिनो गच्छमसारयत एतत् प्रायश्चित्तम्। गीतार्थोपदेशमन्तरेण वाऽगीतार्थस्य स्वयमेव कार्येषु प्रवर्त्तमानस्याऽयं दोषो भवति ॥

[भा.९४४] सुहसाहगं पि कज्जं, करणविहूणमणुवायसंजुत्तं।
अन्नायऽदेस-काले, विवत्तिमुवजाति सेहस्स ॥

वृ- सुखेन साधः-साधनं यस्य तत् सुखसधकम्, "शेषाद्वा" इति कच्प्रत्ययः, सुखसाध्यमित्यर्थः। तदपि कार्यं करणम्-आरम्भः प्रयत्न इत्येकोऽर्थस्तद्विहीनम्, तथा यस्य कार्यस्य यः साधनोपायस्तद्विपरीतेनानुपायेन संयुक्तम्, "अन्नाय" त्ति यद् यस्य कार्यमज्ञातं तत् तेनाऽऽरभ्यमाणम्, 'अदेश-काले च' अनवसरे विधीयमानं शैक्षस्याऽज्ञस्य विपत्तिमुपयाति। विपत्तिशब्देन कार्यस्याऽसिद्धिरत्राभिधीयते। तदुक्तम्-

सम्प्राप्तिश्च विपत्तिश्च, कार्याणां द्विविधा स्मृता।

सम्प्राप्ति सिद्धिरर्थेषु, विपत्तिश्च विपर्यये ॥

ततो न निष्पद्यत इत्युक्तं भवति ॥ अत्रैव निदर्शनमाह-

[भा.१४५] नक्खेणावि हु छिज्जइ, पासाए अभिनवुट्ठितो रुक्खो ।
दुच्छेज्जो वड्ढंतो, सो च्चिय वत्थुस्स भेदाय ॥

वृ- प्रासादे वट-पिप्पलादिर्वृक्षः 'अभिनवोत्थितः' अधुनोद्‌गतः सन् नखेनाऽपि 'हुः' निश्चितं 'छिद्यते' छेत्तुं शक्यते इति, अनेन कार्यस्य सुखसाध्यतोक्ता । स एव वृक्षः 'वर्धमानः' शाखाप्रशाखाभि प्रसरन् दुश्छेद्यो भवति, कुठारेणापि छेत्तुं न शक्यत इति भावः । अपरं च 'वास्तुनः' प्रासादस्य भेदाय जायते ॥

[भा.१४६] जो य अनुवायछिन्नो, तस्सइ मूलाइं वत्थुभेदाय ।
अहिनव उवायछिन्नो, वत्थुस्स न होइ भेदाय ॥

वृ- यश्चानुपायेन-मूलोद्धरणलक्षणोपायमन्तरेण च्छिन्नः तस्यापि मूलान्यनुद्ध तानि वास्तुभेदाय जायन्ते । एतेन चाऽनारम्भे अदेश-कालारम्भेऽनुपायारम्भे च सुखसाध्यस्यापि कार्यस्य विपत्ति क्लेशसाध्यता चोक्ता । अथ देश-काले उपायेन विधीयमानस्य यथा निष्पत्तिर्भवति तथा निदर्शयति-"अहिनव" इत्यादि उत्तरार्द्धम् । यस्तु वृक्षः 'अभिनवः' उद्‌गतमात्र उपायेन-प्रयत्नपूर्वकं छिन्नो मूलान्यपि तस्योद्ध त्य करीषाग्निना दग्धानि स वास्तुनो भेदाय न भवति ॥

एष दृष्टान्तः । अयमर्थोपनयः-

[भा.१४७] पडिसिद्ध त्ति तिगिच्छा, जो उ न कारेइ अभिनवे रोगे ।
किरियं सो उ न मुच्चइ, पच्छा जत्तेण वि करेंतो ॥

वृ- यस्य साधोर्ज्वरादिको रोग उत्पन्नः स यदि –

"तेगिच्छं नाभिनंदेज्जा, संचिक्खऽत्तगवेसए ।
एवं खु तस्स सामन्नं, जं न कुज्जा न कारवे ॥"

इति सूत्रमनुश्रित्य "प्रतिषिद्धा चिकित्सा" इति कृत्वा अभिनवे रोगे 'क्रियां' चिकित्सां न कारयति स पश्चात् तस्मिन् रोगे प्रवर्धिते सति 'यत्नेनापि' महताऽप्यादरेण क्रियां कुर्वाणो न मुच्यते रोगात् । यदि पुनरधुनोत्थित एव रोगे क्रियामकारयिष्यत् ततो नीरुगभविष्यत् ॥

[भा.१४८] सहसुप्पइअम्मि जॅरे, अट्ठम काऊण जो वि पारेइ ।
सीयल-अंबदवाणी, न हु पउणइ सोवि अनुवाया ॥

वृ-यो वा अनुपायेन क्रियां करोति सोऽपि न प्रगुणीभवति, यथा सहसोत्पन्ने ज्वरेऽन्यस्मिन् वा अजीर्णप्रभवे रोगे "सहसुप्पन्नं रोगं, अट्ठमेण निवारए" इति वचनादष्टमं कृत्वा योऽपि न केवलं क्रियाया अकारक इत्यपिशब्दार्थः "सीयलअंबदवाणि"त्ति शीतलकूरा-ऽम्लद्रवादीनि पारयति 'मा पेया कारणीया भवतु' इति कृत्वा सोऽपि न प्रगुणीभवति 'अनुपायात्' उपायाभावात्, प्रत्युत तेन शीतलकूरादिना स रोगस्तस्य गाढतरं प्रकुप्यति । यदि पुनस्तेन पेयादिनोपायेनाऽपारयिष्यत् ततः पटुरभविष्यत् इत्युपाया-ऽनुपायस्वरूपमगीतार्थो न जानाति । ततश्च "अज्ञात - मदेशकाले वा कार्यं कुर्वतस्तस्य शैक्षस्य विपत्तिमुपयाति" इति प्रकृतम् ॥ अत्रैव तात्पर्यमाह-

[भा.१४९] संपत्ती य विपत्ती, य होज्ज कज्जेसु कारगं पप्प ।

अनुवायतो विवत्ती, संपत्ती कालुवाएहिं ॥

वृ- सम्प्राप्तिश्च विपत्तिश्च कार्येषु 'कारकं' कर्त्तारं प्राप्य भवति । यदि अज्ञः कर्त्ता ततस्तेनाऽदेश-काले अनुपायत आरब्धस्य कार्यस्य विपत्तिर्भवति । अथासौ ज्ञस्ततस्तेन कालोपायाभ्यां देशकाले उपायेन चारब्धस्य कार्यस्य 'सम्प्राप्ति' सिद्धिर्भवति ॥ उपसंहरन्नाह-

[भा.९५०] इय दोसा उ अगीए, गीयम्मि उ कालहीणकारिम्मि ।

गीयत्थस्स गुणा पुण, हुंति इमे कालकारिस्स ॥

वृ- "इय" एवमगीतार्थे कार्यकर्त्तरि दोषा भवन्ति । गीतार्थेऽपि कालहीनकारिणि हीने वा अधिके वा काले कार्यकारिणि एत एव दोषाः । यः पुनर्गीतार्थ उपायेनाऽन्युनातिरिक्ते काले कार्यं करोति तस्य गीतार्थस्य कालकारिण इमे गुणा भवन्ति ॥ तानेवाह-

[भा.९५१] आयं कारण गाढं, वत्थुं जुत्तं ससत्ति जयणं च ।

सव्वं च सपडिवक्खं, फलं च विधिवं वियाणाइ ॥

वृ- 'आयं' लाभं 'कारणम्' आलम्बनं 'गाढम्' आगाढग्लानत्वं 'वस्तु' द्रव्यं दलिक-मित्यनर्थान्तरं 'युक्तं' योग्यं 'सशक्तिकं' समर्थं 'यतनां' त्रिपरिभ्रमणादिलक्षणाम्; एतदायादिकं सर्वमपि सप्रतिपक्षं गीतार्थो विजानाति । तत्राऽऽयस्य प्रतिपक्षोऽनायः, कारणस्याऽकारणम्, आगाढस्याऽनागाढम्, वस्तुनोऽवस्तु, युक्तस्याऽयुक्तम्, सशक्तिकस्याऽशक्तिकः, यतनाया अयतनेति यथाक्रमं प्रतिपक्षाः । तथा फलं चैहिकादिकं 'विधिवान्' गीतार्थो विजानातीति निर्युक्तिगाथासमासार्थः ॥ अथ प्रतिपदं विस्तरार्थमाह-

[भा.९५२] सुंकादीपरिसुद्धे, सइ लाभे कुणइ वाणिओ चिट्ठं ।

एमेव य गीयत्थो, आयं दट्ठुं समायरइ ॥

वृ- शुल्कं-राजदेयं द्रव्यम्, आदिशब्दाद् भाटक-कर्मकरवृत्यादिपरिग्रहः, यथा शुल्कादिभिर्द्रव्योपक्षयहेतुभिः परिशुद्धः-निर्वटितो यदि कोऽपि लाभ उत्तिष्ठते तत एवं शुल्का-दिपरिशुद्धे लाभे सति वाणिजो देशान्तरं गत्वावाणिज्यचेष्टां 'करोति' आरभते, अथ लाभमुत्तिष्ठमानं न पश्यति ततो नारभते । एवमेव च गीतार्थोऽपि ज्ञानादिकम् 'आयं' लाभं दृष्ट्वा प्रलम्बाद्य-कल्प्यप्रतिसेवां समाचरति नान्यथा ॥ इदमेव स्पष्टयन्नाह-

[भा.९५३] असिवाईसुंकत्थाणिएसु किंचिखलियस्स तो पच्छा ।

वायण वेयावच्चे, लाभो तव-संजम-ऽज्झयणे ॥

वृ- स हि गीतार्थ प्रलम्बादिकं प्रतिसेवमान एवं चिन्तयति-अशिवादिषु शुल्कस्थानीयेषु अकल्प्यप्रतिसेवया केभ्योऽपि संयमस्थानेभ्यः स्खलितस्यापि मम 'ततः पश्चात्' अशिवादिषु व्यतीतेषु वाचनां ददत आचार्यादीनां वैयावृत्ये तपः-संयमा-ऽध्ययनेषु वा उद्यमं कुर्वाणस्य भूयानन्यो लाभो भविष्यति, अकल्प्यप्रतिसेवाजनितं चातीचारं प्रायश्चित्तेन शोधयिष्यामि-इति बहुतरं लाभमल्पतरं व्ययं परिभाव्य गीतार्थ समाचरति । अगीतार्थ पुनरेतदाय-व्ययस्वरूपं न जानातीति ॥ गतमायद्वारम् । अथ कारणा-ऽऽगाढद्वारद्वयमाह –

[भा.९५४] नाणाइतिगस्सऽट्ठा, कारण निक्कारणं तु तव्वज्जं ।

अहिडक्क विस विसूइय, सज्जक्खयसूलमागाढं ॥

वृ- गीतार्थः कारण एव प्रतिसेवते नाकारणे। आह किमिदं कारणम्? किं वा अकारणम्? इत्याह- 'ज्ञानादित्रयस्य' ज्ञान-दर्शन-चारित्ररूपस्याऽर्थाय यत प्रतिसेवते तत् कारणम्, 'तद्वर्ज' ज्ञानादित्रयवर्जं सेवमानस्य निष्कारणमुच्यते। तथा गीतार्थो याद्दशमागाढे प्रतिसेव्यं ताद्दशमागाढ एव याद्दशं पुनरनागाढे ताद्दशमनागाढ एव प्रतिसेवते। अथ किमिमागाढम्? किं वा अनागाढम्? उच्यते-अहिना-सर्पेण दष्टः कश्चित् साधुः, विषं वा केनचिद् भक्तादिमिश्रितं दत्तम्, विसूचिका वा कस्यापि जाता, सद्य-क्षयकारि वा कस्यापि सूलमुत्पन्नम्, एवमादिकमाशुघाति सर्वमप्यागाढम्; एतद्विपरीतं तु चिरघाति कुष्ठादिरोगात्मकमनागाढम्॥ अथ वस्तु-युक्तद्वारे व्याचष्टे-

[भा.९५५] आयरियाई वत्थुं, तेसिं चिय जुत्त होइ जं जोग्गं।
गीय परिणामगा वा, वत्थुं इयरे पुन अवत्थुं॥

वृ- आचार्यादि प्रधानपुरुषो यद्वा गीतार्थ सामान्यतो वस्तु भण्यते, परिणामका वा साधवो वस्तु। एताद्दशमात्मानं परं वा वस्तुभूतं ज्ञात्वा प्रतिसेवते प्रतिसेवाप्यते वा। 'इतरे' प्रतिपक्षभूताः पुनरनाचार्यादिरगीतार्थो वा अपरिणामका-ऽतिपरिणामका वा सर्वेऽप्यवस्तु भण्यन्ते। एतेषामेवाचार्यादीनां यद् योग्यं भक्त-पानौषधादिकं तद् युक्तम्, तद्विपरीतं पुनरयुक्तम्। एतद् युक्ताऽयुक्तस्वरूपं गीतार्थ एव जानाति नेतर इति॥

अथ सशक्तिक-यतनाद्वारद्वयमाह-

[भा.९५६] धिइ सारीरा सत्ती, आय-परगता उ तं न हावेति।
जयणा खलु तिपरिरया, अलंभे पच्छा पनगहानी॥

वृ- शक्तिर्द्विधा, धृति-संहननभेदात्। तत्र धृतिरूपां शारीरां च-संहननरूपामात्मगतां परगतां च शक्तिं ज्ञात्वा आचार्योऽन्यो वा गीतार्थस्तां न हापयतीत्यत्र चतुर्भङ्गी सूचिता सा चेयम्- आत्मगता शक्तिर्विद्यते न परगता १ परगता नात्मगता २ आत्मगताऽपि परगताऽपि ३ नात्मगता न परगता ४। तत्रप्रथमभङ्गे आचार्य आत्मनः शक्तिं न हापयति, परस्य पुनरशक्तत्वाद् यथायोगं प्रतिसेवनामनुजानीते। द्वितीयभङ्गे अशक्तत्वादात्मना प्रतिसेवते, परस्य तु समर्थत्वाद् नानुजानाति। तृतीयभङ्गे उभयोरपि शक्तिसद्भावादात्मनाऽपि न प्रतिसेवते परस्यापि न वितरति। चतुर्थभङ्गे पुनरुभयोरप्यशक्तत्वादात्मनाऽपि प्रतिसेवते परेणापि प्रतिसेवापयति। तथा यतना खलु त्रिपरिरया द्रष्टव्या, "रींश् गतौ" परि-समन्ताद् रयणं परिरयः-परिभ्रमणमित्यर्थः, त्रयः परिरया यस्यां सा त्रिपरिरया। किमुक्तं भवति?-एषणीयाहारान्वेषणार्थं स्वग्रामादौ तिस्रो वाराः सर्वतः पर्यट्य यद्येषणीयं न लभते ततः पश्चाद् 'अलाभे' अप्राप्तौ पञ्चकपरिहाण्या यतते॥ अथ फलद्वारम्-गीतार्थ प्रथममेव कार्यं प्रारभमाणः परिभावयति-एवमनुतिष्ठतो ममान्यस्य वा फलं भविष्यति? न वा?। तच्च फलं द्विविधम्। तदेवाह-

[भा.९५७] इह-परलोगे य फलं, इह आहाराइ इक्कमेक्कस्स।
सिद्धी सग्ग सुकुलता, फलं तु परलोइयं एयं॥

वृ- इहलोकफलं परलोकफलं चेति फलं द्विधा। तत्रेहलोकफलमाहारादि; आदिशब्दाद् वस्त्रपात्रादि। तथा सिद्धिगमनं स्वर्गगमनं सुकुलोत्पत्तिश्च एतत् पारलौकिकं फलम्। 'एतद्'

द्वयमपि 'एकैकस्य' आत्मनः परस्य च परस्परोपकारेण यथा भवति तथा गीतार्थः समाचरति। यत्र गीतार्थोऽरक्त-द्विष्टः प्रतिसेवते तत्र नियमादप्रायश्चित्ती भवति ॥

आह केन पुनः कारणेनाप्रायश्चित्ती ? उच्यते-

[भा.९५८] खेत्तोयं कालोयं, करणमिणं साहओ उवाओऽयं।
कत्त त्ति य जोगि त्ति य, इय कडजोगी वियाणाहि ॥

वृ-यो न रागे न द्वेषे किन्तु तुला-दण्डवद् द्वयोरप मध्ये प्रवर्त्तते स ओजा भण्यते। क्षेत्रे-अध्वादौ ओजाः क्षेत्रौजाः, काले-अवमौदर्यादौ ओजाः कालौजाः, क्षेत्रे काले च प्रतिसेवमानो न राग-द्वेषाभ्यां दूष्यते इत्यर्थः। कथम् ? इत्याह-यतः स गीतार्थ 'करणमिदं' 'सम्यक्क्रियेयम्, एवं क्रियमाणे महती कर्मनिर्जरा भवति' इति विमृशति। तथा ज्ञान-दर्शन-चारित्राणि साधनीयानि, तेषां च साधकोऽयमुपायः, यद् असंस्तरणे यतनया प्रलम्बसेवनम्। तथा 'कृतयोगी' गीतार्थ स कर्त्तेति च योगीति च भण्यते, "इय" एवं विजानीहि इति निर्युक्तिगाथासमासार्थ ॥

अथैनामेव विवृणोति-

[भा.९५९] ओयब्भूतो खित्ते, काले भावे य जं समायरइ।
कत्ता उ सो अकोप्पो, जोगीव जहा महावेज्जो ॥

वृ-यः 'ओजोभूतः' राग-द्वेषविरहितो गीतार्थ 'क्षेत्रे' अध्वादौ 'काले' दुर्भिक्षादौ 'भावे च' ग्लानत्वादौ प्रलम्बादिप्रतिसेवारूपं यत् किमपि समाचरति सः 'सम्यक्क्रियेयम्, साधकोऽयमुपायः' इत्यालोच्यकारी कर्त्ता 'अकोप्यः' अकोपनीयः, अदूषणीय इत्युक्तं भवति। क इव ? इत्याह-'योगीव यथा महावैद्यः' इति, 'यथा' इति दृष्टान्तोपन्यासे, 'योगी' धन्वन्तरि, तेन च विभङ्गज्ञानबलेनाऽऽगामिनि काले प्राचुर्येण रोगसम्भवं दृष्ट्वा अष्टाङ्गायुर्वेदरूपं वैद्यकशास्त्र चक्रे, तत्र यथाम्नायं येनाधीतं स महावैद्य उच्यते। स च आयुर्वेदप्रामाण्येन क्रियां कुर्वाणो 'योगीव'वन्तन्तरिरिव न दूषणभाग् भवति, यथोक्तक्रियाकारिणश्च तस्य तत् चिकित्साकर्म सिध्यतिः एवमत्रापि योगी तीर्थकरः, तदुपदेशानुसारेणोत्सर्गा-ऽपवादाभ्यां यथोक्तां क्रियां कुर्वन् गीतार्थोऽपि न वाच्यतामर्हति ॥ अथ "कत्त त्ति य जोगि त्ति य" पदद्वयमेव प्रकारान्तरेण व्याख्याति-

[भा.९६०] अहवण कत्ता सत्था, न तेण कोविज्जती कयं किंचि।
कत्ता इव सो कत्ता, एवं जोगी वि नायव्वो ॥

वृ- "अहवण"त्ति अखण्डमव्ययं अथवार्थे वर्त्तते। कर्त्ता 'शास्ता' तीर्थकर उच्यते। यथा 'तेन' तीर्थकरेण कृतं कार्यं किञ्चिदपि नकोप्यते एवमसावपि गीतार्थो विधिना क्रियां कुर्वन् 'कर्त्ता इव' तीर्थकर इवाकोपनीयत्वात् कर्त्ता द्रष्टव्य। एवं योग्यपि ज्ञातव्यः। किमुक्तं भवति ? -यथा तीर्थकरः प्रशस्तमनोवाक्काययोगं प्रयुञ्जानो योगी भण्यते, एवं गीतार्थोऽप्युत्सर्गा-ऽपवादबलवेत्ता अपवादक्रियां कुर्वाणोऽपि प्रशस्तमनोवाक्कययोगं प्रयुञ्जानो योगीव ज्ञातव्यः॥

एवमाचार्येणोक्ते शिष्यः प्राह-

[भा.९६१] किं गीयत्थो केवलि, चउव्विहे जानने य गहणे य।
तुल्ले राग-दोसे, अनंतकायस्स वज्जणया ॥

वृ- किं गीतार्थ केवली येन तीर्थकृत इव तस्य वचनं करणं चाकोपनीयम् ? । सूरिराह-ओमिति ब्रूमः । तथाहि-द्रव्यादिभेदाद् यत् चतुर्विधं ज्ञानं तद् यथा केवलिनस्तथा गीतार्थस्यापि; तथा यत् प्रलम्बानामेकानेकग्रहणविषयं विषमप्रायश्चित्तप्रदानम्, यश्च तत्र तुल्येऽपि जीवत्वे राग-द्वेषाभावः, या चाऽनन्तकायस्य वर्जना एतानि यथा केवली प्ररूपयति तथा गीतार्थोऽपीति द्वारगाथासमासार्थः ।। विस्तरार्थं प्रतिपदं बिभणिषुराह-

[भा.९६२] सव्वं नेयं चउहा, तं वेइ जिणो जहा तहा गीतो ।
चित्तमचित्तं मीसं, परित्तऽनंतं च लक्खणतो ।।

वृ- 'सर्वमपि' जगत्रयगतं ज्ञेयं चतुर्धा । तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावतश्च । 'तत्' चतुर्विधमपि यथा 'जिनः' केवली ब्रूते तथा गीतार्थोऽपि । यद्वा "तं वेइ" त्ति 'तत्' चतुर्विधं ज्ञेयं यथा जिनः 'वेत्ति' जानाति तथा गीतार्थोऽपि श्रुतज्ञानी जानात्येव । तथाहि-यथा केवली सचित्त-मचित्तं मिश्रं परीत्तमनन्तं च लक्षणतो जानाति प्रज्ञापयति वा तथा श्रुतधरोऽपि श्रुतानुसारेणैव सचित्तलक्षणेन सचित्तं एवमचित्त-मिश्र-परीत्ता-ऽनन्तान्यपि स्वस्वलक्षणावैपरीत्येन जानाति प्ररूपयति चेति केवलीव द्रष्टव्यः ।। आह केवली समस्तवस्तुस्तोमवेदी, श्रुतकेवली पुनः केवलज्ञानानन्ततमभागमात्रज्ञानवान् ततः कथमिव केवलितुल्यो भवितुमर्हति ? इत्याह-

[भा.९६३] कामं खलु सव्वन्नू, नाणेणऽहिओ दुवालसंगीतो ।
पन्नत्तीइ उ तुल्लो, केवलनाणं जओ मूयं ।।

वृ- काममनुमतं खल्वस्माकं 'सर्वज्ञः' केवली 'द्वादशाङ्गिनः' श्रुतकेवलिनः सकाशाद् ज्ञानेनाऽधिकः परं 'प्रज्ञप्त्या' प्रज्ञापनया श्रुतकेवलिनः केवली 'तुल्यः' सदृशवाक्पर्यायः । कुतः ? इत्याह-यतः केवलज्ञानं 'मूकं' अमुखरम् । किमुक्तं भवति ? -यावतः पदार्थान् श्रुतकेवली भाषते तावत एव केवल्यपि, ये तु श्रुतज्ञानस्याऽविषयभूता भावाः केवलिनाऽवगम्यन्ते तेषामप्रज्ञापनीयतया केवलिनाऽपि वक्तुमशक्यत्वात् ।। आह कियन्तः प्रज्ञापनीयाः ? कियन्तो वा अप्रज्ञापनीया भावाः ? इति तावद् वयं जिज्ञासामहे अतो निरुच्यतामेतद् भगवद्भिरित्याशङ्क्याह-

[भा.९६४] पन्नवणिज्जा भावा, अनंतभागो उ अनभिलप्पाणं ।
पन्नवणिज्जाणं पुण, अनंतभागो सुअ निबद्धो ।।

वृ- ये प्रज्ञापयितुं-वक्तुं शक्यन्ते ते प्रज्ञापनीयाः अभिलाप्या इत्येकोऽर्थ, ते च भू-भूधरविमान-ग्रह-नक्षत्रादयः । एतद्विपरीता अप्रज्ञापनीयाः । द्वावपि च राशी अनन्तौ, परं महान् परस्परं विशेषः । तथाहि-प्रज्ञापनीयाभावाः सर्वेऽपि समुदिताः सन्तोऽनभिलाप्यानां भावानामनन्तभागो भवति, अनन्ततमे भागे वर्त्तन्त इति भावः । तेषामपि प्रज्ञापनीयानां भावानामनन्ततम एव भागः 'श्रुते' द्वादशाङ्गलक्षणे सूत्ररचनया निबद्धः, अनन्तकस्याऽनन्तभेदभिन्नत्वादित्यभिप्रायः।। आह कथमेतत् प्रतीयते यथा 'प्रज्ञापनीयानामनन्तभागः श्रुते निबद्धः' ? उच्यते-

[भा.९६५] जं चउदसपुव्वधरा, छट्ठाणगया परोप्परं होंति ।
तेन उ अनंतभागो, पन्नवणिज्जाण जं सुत्तं ।।

वृ- 'यद्' यस्मात् चतुर्दशपूर्वधराः 'षट्स्थानगताः' अनन्तभागादिषट्स्थानवर्तिनः परस्परं भवन्ति । कथम् ? इति चेद् उच्यते-इह चतुर्दशपूर्वी चतुर्दशपूर्विणः किं तुल्यः ? किंवा हीनः ?

किं वाऽभ्यधिकः ? इति चिन्तायां निर्वचनं तुल्यो वा हीनो वा अभ्यधिको वा। यदि तुल्यस्तदा तुल्यत्वादेव नास्ति विशेषः। अथ हीनस्ततो यदपेक्षया हीनस्तमुद्दिश्याऽनन्तभागहीनो वा असङ्ख्येयभागहीनो वा सङ्ख्येयभागहीनो वा सङ्ख्येयगुणहीनो वा असङ्ख्येयगुणहीनो वा अनन्तगुणहीनो वा। अथाभ्यधिकस्ततो यदपेक्षयाऽभ्यधिकस्तं प्रतीत्याऽनन्तभागाभ्यधिको वा असङ्ख्येयभागाभ्यधिको वा सङ्ख्येयभागाभ्यधिको वा सङ्ख्येयगुणाभ्यधिको वा असङ्ख्येय-गुणाभ्यधिको वा अनन्तगुणाभ्यधिको वा। आह समाने सर्वेषामप्यक्षरलाभे षट्स्थानपतितत्वमेव कथं जाघटीति ? उच्यते-एकस्मात् सूत्रादनन्ता-ऽसङ्ख्येय-सङ्ख्येयगम्यार्थगोचरा ये मतिविशेषाः श्रुतज्ञानाभ्यन्तरवर्तिनस्तैः परस्परं षट्स्थानपतितत्वं न विरुध्यते। तदुक्तम्-

अक्खरलंभेण समा, ऊणहिया हुंति मइविसेसेहिं।
ते पुन मईविसेसे, सुयनाणब्भंतरे जाण ॥

एवंविधं च षट्स्थानपतित्वं प्रज्ञापनीयानामनन्ततमभागमात्र एव श्रुतनिबद्धे घटमानकं भवति। यदि हि सर्व एव प्रज्ञापनीया भावाः श्रुते निबद्धा भवेयुस्तर्हि चतुर्दशपूर्विणोऽपि परस्परं तुल्या एव भवेयुर्न षट्स्थानपतिता इति। अत एवाह-'तेन' कारणेन यत् किमपि 'श्रुतं' चतुर्दशपूर्वरूपं तत् प्रज्ञापनीयानामनन्ततमो भागो वर्तते इति ॥

अथ यदुक्तं "प्रज्ञापनया द्वावपि तुल्यौ" तद्भावनामाह-

[भा.९६६]　　केवलविन्नेयत्थे, सुयनाणेणं जिनो पगासेइ।
सुयनाणकेवली वि हु, तेनेवऽत्थे पगासेइ ॥

वृ- केवलेन विज्ञेया येऽर्थास्तान् यावतः श्रुतज्ञानेन 'जिनः' केवली प्रकाशयति। इह च केवलिनः सम्बन्धी वाग्योग एव श्रोतॄणां भावश्रुतकारणत्वात् कारणे कार्योपचारात् श्रुतज्ञानमुच्यते, न पुनस्तस्य भगवतः किमप्यपरं केवलज्ञानव्यतिरिक्तं श्रुतज्ञानं विद्यते, "नट्ठम्मि उ छाउमत्थिए नाणे" इति वचनात्। श्रुतज्ञानकेवल्यपि तानेव तावतः 'तेनैव' श्रुतज्ञानेन 'अर्थान्' जीवादीन् प्रकाशयति। अतः "श्रुतकेवलि-केवलिनौ द्वावपि प्रज्ञापनया तुल्यौ" इति स्थितम्। तदेवं यथा केवली द्रव्य-क्षेत्र-काल-भावैर्वस्तु जानाति तथा गीतार्थोऽपि जानीते। अत्र पुनः प्रलम्बाधिकाराद् द्रव्यतः परीत्तमनन्तं वा येन लक्षणेन जानाति तदभिधित्सुराह-

[भा.९६७]　　गूढछिरागं पत्तं, सच्छीरं जं च होइ निच्छीरं।
जं पि य पणट्ठसंधिं, अनंतजीवं वियाणाहि ॥

वृ- यत् पत्रं सक्षीरं निक्षीरं वा 'गूढशिराकं भवति' गूढाः-गुप्ता अनुपलक्ष्याः शिराः-स्नायवो यस्य तद् गूढशिराकम्, तथा यदपि च 'प्रनष्टसन्धिकं' सर्वथाऽनुपलक्ष्यमाणपत्रार्द्धद्वयसन्धिः, तदेवंविधं पत्रम् 'अनन्तजीवम्' अनन्तकायिकं विजानीहीति ॥

अथ मूल-स्कन्धादीनां सर्वेषामप्यनन्तकायत्वे लक्षणमाह-

[भा.९६८]　　चक्कागं भज्जमाणस्स, गंठी चुण्णघंनो भवे।
पुढविसरिसेण भेएणं, अनंतजीवं वियाणाहि ॥

वृ- यस्य मूलादेर्भज्यमानस्य चक्राकारो भङ्गो भवति सम इत्यर्थः। तथा 'ग्रन्थिः' पर्व सामान्यतो भङ्गस्थानं वा स यस्य चूर्णघनो भवति। कोऽर्थः ? -यस्य भज्यमानस्य ग्रन्थेर्घनश्चूर्ण

उद्गीयमानो दृश्यते ' पृथिवी नाम केदाराद्युपरितर्लिनी शुष्ककोप्पटिका श्लक्ष्णखटिकानिर्मिता वा, यथा तस्या भिद्यमानायाः समो भेदो भवति एवं समभेदेन भिद्यमानं तदेवंविधं मूलादिकमनन्तजीवं विजानीहि ॥ इदमेव स्पष्टयन्नाह-

[भा.९६९] जस्स मूलस्स भग्गस्स, समो भंगो पदीसई ।
अनंतजीवे उ से मूले, जे याऽवऽन्ने तहाविहे ॥

वृ- यस्य मूलस्य भग्नस्य समो भङ्गः प्रदृश्यते अनन्तजीवं तु तद् मूलम् । यश्च 'अन्योऽपि' स्कन्धादिकस्तथाविधः समभङ्गेन भज्यते सोऽप्यनन्तजीवो ज्ञातव्य इति ॥

[भा.९७०] जस्स मूलस्स भग्गस्स, हीरो भंगे पदिस्सए ।
परित्तजीवे उ से मूले, जे याऽवऽन्ने तहाविहे ॥

वृ- यस्य मूलस्य भग्नस्य 'हीरः' तन्तुकविशेषो भङ्गे वंशस्येव प्रदृश्यते परीत्तजीवं तु तद् मूलम् । यश्च 'अन्योऽपि' स्कन्धादिकस्तथाविधो भङ्गे दृश्यमानहीरः सोऽपि प्रत्येकजीव इति ॥

[भा.९७१] जस्स मूलस्स कट्ठाओ, छल्ली बहलतरी भवे ।
अनंतजीवा उ सा छल्ली, जा याऽवऽन्ना तहाविहा ॥

वृ- यस्य मूलस्य सम्बन्धिनः 'काष्ठात्' सारात् 'छल्ली' बाह्या त्वक् 'बहलतरा' स्थूलतरा भवेत्, यथा शतावर्या, अनन्तजीवा तु सा छल्ली । या चान्याऽपि तथाविधा । काष्ठमपि तस्यानन्तजीवं द्रष्टव्यम् ॥

[भा.९७२] जस्स मूलस्स कट्ठातो, छल्ली तणुयतरी भवे ।
परित्तजीवा तु सा छल्ली, जा याऽवऽण्णा तहाविहा ॥

वृ- यस्य मूलस्य काष्ठात् छल्ली 'तनुकतरा' श्लक्ष्णतरा भवेत् परीत्तजीवा तु सा छल्ली, यथा सहकारादेः, या चान्याऽपि तथाविधा ॥ गतं द्रव्यतो लक्षणम् । अथ क्षेत्रत आह-

[भा.९७३] जोअनसयं तु गंता, अनहारेणं तु भंडसंकंती ।
वाया-ऽगनि-धूमेण य, विद्धत्थं होइ लोणाई ॥

वृ- लवणादिकं स्वस्थानाद् गच्छत् प्रतिदिवसं बहुबहुतरादिक्रमेण विध्वस्यमानं योजनशतात् परतो गत्वा सर्वथैव 'विध्वस्तम्' अचित्तं भवति । आह शस्त्राभावे योजनशतगमनमात्रेणैव कथमचित्तीभवति ? इत्याह-अनाहारेण, यस्य यद् उत्पत्तिदेशाधिकं साधारणं तत् ततो व्यवच्छिन्नं स्वोपष्टम्भकाहारव्यवच्छेदाद् विध्वस्यते । तथ लवणादिकं भाण्डसङ्क्रान्त्या पूर्वस्मात् पूर्वस्माद् भाजनादपरापरभाजनेषु, यद्वा पूर्वस्या भाण्डशालाया अपरस्यां भाण्डशालायां सङ्क्रम्यमाणं विध्वस्यते । तथा वातेन वा अग्निना वा महानसादौ धूमेन वा लवणादिकं विध्वस्तं भवति ॥

"लोणाई" इत्यत्र आदिशब्दादमी द्रष्टव्याः-

[भा.९७४] हरियाल मनोसिल पिप्पली य खज्जूर मुद्दिया अभया ।
आइन्नमणाइन्ना, ते वि हु एमेव नायव्वा ॥

वृ- हरितालं मनःशिला पिप्पली च खर्जूरः एते प्रतीताः, 'मुद्रिका' द्राक्षा 'अभया' हरीतकी। एतेऽपि 'एवमेव' लवणवद् योजनशतगमनादिभिः कारणैरचित्तीभवन्तो ज्ञातव्याः । परमेकेऽत्राचीर्णा अपरेऽनाचीर्णा । तत्र पिप्पली-हरीतकीप्रभृतय आचीर्णा इति कृत्वा गृह्यन्ते ।

खर्जूर-मुद्रिकादयः पुनरनाचीर्णा इति न गृह्यन्ते ॥ अथ सर्वेषां सामान्येन परिणमनकारणमाह-

[भा.९७५] आरुहणे ओरुहणे, निसियण गोणादिणं च गाउम्हा ।
भुम्माहारच्छेदे, उवक्कमेणं च परिणामो ॥

वृ- शकटे गवादिपृष्ठेषु च लवणादीनां यद् भूयो भूय आरोहणमवरोहणं च, तथा यत् तस्मिन् शकटादौ लवणादिभरोपरि मनुष्या निषीदन्ति, तेषां गवादीनां च यः कोऽपि पृष्ठादिगात्रोष्मा तेन च परिणामो भवति । तथा यो यस्य भौमादिकः-पृथिव्यादिक आहारस्तद्यवच्छेदे तस्य 'परिणामः' उपक्रमः शस्त्रम्, उपक्रम्यन्ते जीवानामायूंषि अनेनेति व्युत्पत्तेः । तच्च शस्त्रं त्रिधा-स्वकायशस्त्र वा पाण्डुभूमस्येति । परकायशस्त्र यथा-अग्निरुदकस्य, उदकं वा अग्नेरिति । तदुभयशस्त्र यथा-उदकमृत्तिका शुद्धोदकस्येत्यादि । एवमादीनि अचित्तवस्तूनां परिणमनकारणानि मन्तव्यानि॥

[भा.९७६] चोएई वनकाए, पगए लोणादियाण किं गहणं ।
आहारेणऽहिगारो, तस्सुवकारी अतो गहणं ॥

वृ- शिष्यो नोदयति-'वनस्पतिकाये' प्रलम्बलक्षणे प्रकृते लवणादीनां पृथिवीकायिकानां किमर्थमत्र ग्रहणं क्रियते ? इति । सूरिराह-आहारेण तावदत्र सूत्रेऽधिकारः, तस्य चाहारस्य लवणमतिशयेनोपकारि, तद्विरहितस्याऽऽहारस्य नीरसत्वात्, अतस्तद्ग्रहणमिति ॥ यद्येवं ततः-

[भा.९७७]छहि निप्फज्जइ सो ऊ, तम्हा खलु आनुपुव्वि किं न कया ।
पाहन्नं बहुयत्तं, निप्फत्ति सुहं च तो न कमो ॥

वृ- 'षड्भिः' पृथिवीकायादिभि 'सः' आहारो निष्पद्यते अतः षडपि कायाः किं नानुपूर्व्या सूत्रे 'कृताः' गृहीताः ?, यथा- "नो कप्पइ निग्गंथाण वा निग्गंथीण वा पुढविकाइए गिण्हित्तए" इत्यादि । आचार्य प्राह-तस्मिन्नाहारे वनस्पतेः प्राधान्यम्, मुख्यतया तस्यैवाऽऽहरणीयत्वात् । तथा 'बहुत्वम्' उपयोगबाहुल्यं वनस्पतिरागच्छति । वनस्पतिकायेन च यथा सुखमाहारस्य निष्पत्तिर्न तथा पृथिव्यादिभिः कायैः । तत एभि कारणैर्न 'क्रमः' पृथिव्यादीनामानुपूर्वीग्रहणलक्षणः कृतः, किन्तु केवलस्यैव वनस्पतेः सूत्रे ग्रहणं कृतमिति ॥ गतं क्षेत्रतो लक्षणम् । अथ कालत आह-

[भा.९७८] उप्पल-पउमाइं पुण, उण्हे दिन्नाइँ जाम न धरिंती ।
मोग्गरग-जूहियाओ, उण्हे छूढा चिरं होंति ॥

वृ-उत्पलानि पद्मानि च 'उष्णे' आतपे दत्तानि "यामं प्रहरमात्रं कालं 'न ध्रियन्ते' नावतिष्ठन्ते किन्तु प्रहरादर्वागेवाचित्तीभवन्ति । 'मुद्गरकाणि' मगदन्तिकापुष्पाणि यूथिकापुष्पाणि चोष्णयोनिकत्वाद् उष्णे क्षिप्तानि चिरमपि कालं भवन्ति, सचित्तान्येव तिष्ठन्तीति भावः ॥

[भा.९७९] मगदंतियपुप्फाइं, उदए छूढाइँ जाम न धरिंती ।
उप्पल-पउमाइं पुण, उदए छूढा चिरं होंति ॥

वृ-मगदन्तिकापुष्पाणि उदके क्षिप्तानि 'यामं' प्रहरमपि न ध्रियन्ते । उत्पल-पद्मानि पुनरुदके क्षिप्तानि चिरमपि भवन्ति, उदकयोनिकत्वात् ॥ गतं कालतो लक्षणम् । अथ भावत आह-

[भा.९८०] पत्ताणं पुप्फाणं, सरडुफलाणं तहेव हरियाणं ।
विंटम्मि मिलाणम्मी, नायव्वं जीवविप्पजढं ॥

वृ- पत्राणां पुष्पाणां 'सरडुफलानाम्' अबद्धास्थिकफलानां तथैव 'हरितानां' वास्तुलादीनां सामान्यतस्तरुणवनस्पतीनां वा 'वृन्ते' मूलनाले म्लाने सति ज्ञातव्यम्, यथा-जीवविप्रमुक्तमेतत् पत्रादिकम् ॥ उक्तं भावतोऽपि लक्षणम्। तदुक्तौ च समर्थितं चतुर्विधज्ञानद्वारम्।

अथ ग्रहणद्वारमाह-

[भा.९८१] चउभंगो गहण पक्खेवए अ एगम्मि मासियं लहुयं।
गहणे पक्खेवम्मि, होंति अनेगा अनेगेसु ॥

वृ- चतुर्भङ्गी ग्रहणे प्रक्षेपके च द्रष्टव्या। तद्यथा-एकं ग्रहणं एकः प्रक्षेपकः १ एकं ग्रहणमनेके प्रक्षेपकाः २ अनेकानि ग्रहणानि एकः प्रक्षेपकः ३ अनेकानि ग्रहणानि अनेके प्रक्षेपकाः ४। अत्र च हस्तेन यत् प्रलम्बानामादानं तद् ग्रहणम्, यत् पुनर्मुख प्रवेशनं स प्रक्षेपकः। तत्र प्रथमभङ्गे एकस्मिन् ग्रहणे प्रक्षेपके च प्रत्येकं मासलघु। द्वितीयभङ्गे एकस्मिन् ग्रहणे मासलघु, प्रक्षेपस्थाने यावतःप्रक्षेपकान् करोति तावन्ति मासलघूनि। तृतीयभङ्गे तु यावन्ति ग्रहणानि तावन्ति मासलघुकानि, प्रक्षेपविषयस्त्वेको लघुमासः। चतुर्थभङ्गेऽनेकेषु ग्रहणेष्वनेकेषु प्रक्षेपकेषु चानेकान्येव मासलघुकानि। एतच्चारात्माद्यरीनिष्पन्नं मन्तव्यम्। यत् पुनर्जीवघातनिष्पन्नं चतुर्लघुकादिकं तत् स्थितमेव। एतच्च ग्रहण-प्रक्षेपकनिष्पन्नं प्रायश्चित्तं यथा केवली जानाति तथा गीतार्थोऽपीति॥ गतं ग्रहणद्वारम्। अथ तुल्ये राग-द्वेषाभाव इति द्वारम्। तत्र शिष्यः प्राह-

[भा.९८२] पडिसिद्धा खलु लीला, बिइए चरिमे य तुल्लदव्वेसु।
निद्दयता वि हु एवं, बहुघाए एगपच्छित्तं ॥

वृ- अहो ! भगवन्तो राग-द्वेषाध्यासितमनसः। तथाहि-'तुल्यद्रव्येषु' समानेऽपि प्रलम्बद्रव्याणां जीवत्वे इत्यर्थः द्वितीयभङ्गे एकफलस्य चरमभङ्गे तु बहूनां फलानां बहून् वारान् प्रक्षेपं करोतीति बहूनि मासिकानि दत्थ, तृतीयभङ्गे तु बहूनि वनफलानि गृहीत्वा छित्वा वा एकः प्रक्षेपक इति कृत्वैकं मासिकं ददध्वे, तद् मम मनसि प्रतिभासते नूनं लीलयैव युष्माभि प्रतिषिद्धा न पुनर्जीवोपघातः। एवं च भगवतां द्वितीयभङ्गे प्रलम्बजीवानामुपरि रागो बहुमासिकदानात्, तृतीयभङ्गे तु द्वेषः एकस्यैव मासिकस्य दानात्; यद्वा द्वितीयभङ्गे गृह्णतां शिष्याणामुपरि द्वेषः, तृतीये तु रागः, कारणं प्राग्वदेव। किञ्च युष्माकमेवं 'बहुघाते' युगपद् बहूनां मुखे प्रक्षिप्य भक्षणे एकमेव मासिकं प्रायश्चित्तं ददता निर्दयता भवति॥

अथ राग-द्वेषाभावं समर्थयन् सूरि परिहारमाह-

[भा.९८३] चोयग ! निद्दयतं चिय, नेच्छंता विडसणं पि नेच्छामो।
निव मिच्छ छगल सुरकुड, मता-ऽमताऽऽलिंप भक्खणता ॥

वृ- हे नोदक ! निर्दयतामेवानिच्छन्तो वयं विदशनमपि नेच्छामः, विविधं दशनं-भक्षणं विदशनं लीला इत्यर्थः। अत्र चाचार्या म्लेच्छद्वयदृष्टान्तं वर्णयन्ति- जहा एगस्स रन्नो दो मिच्छा ओलग्गगा। तेन रन्ना तेसिं मिच्छाणं तुट्ठेण दो सुरकुडा दो य छगला दिन्ना। ते तेहिं गहिया। तत्थ एगेणं छगलो एगप्पहारेणं मारितूण खइओ दोहिं तिहिं वा दिनेहिं। बितिओ एक्केक्कं अंगं छेत्तुं खायति, तं पि सो छेदयामं लोणेणं आसुरीहिं वा छगणेण वा लिंपइ। एवं तस्स छगलस्स जीवंतस्सेव गाताणि छेत्तुं खइयाणि, मतो य। पढमस्स एगप्पहारेण एक्को वधो। बितियस्स जत्तिएहिं छेदेहिं

मरति तत्तिया वधा, लोगे य पावो गणिज्जति । एवं जेन पलंबस्स एक्को पक्खेवो कओ तस्स एक्कं मासियं, जो विडसंतो खायति तस्स तत्तिया पच्छित्ता, धनचिक्कणाए य पारितावणियाए किरियाए वट्टति । विडसना नाम आसादेंतो थोवं थोवं खायइ ।। अत एवाह-''निव मेच्छ'' इत्यादि । कस्यचिद् नृपस्य द्वौ म्लेच्छाववलगकौ । तेन तुष्टेन तयोः छगलकौ सुराकुटी च दत्तौ । तत्रैकेन च्छगलकस्य मृतस्य द्वितीयेन पुनरमृतस्यैवैकैकमङ्गं छित्वा लवणादिभिरालिप्य भक्षणं कृतमिति।। किञ्च-

[भा.९८४] अच्चित्ते वि विडसणा, पडिसिद्धा किमु सचेयणे दव्वे ।
कारणे पक्खेवम्मि उ, पढमो तइओ अ जयणाए ।।

वृ- अचित्तेऽपि द्रव्ये विदशना प्रतिषिद्धा किं पुनः सचेतने द्रव्ये ?, सचित्तं प्रलम्बं सुतरां विदशनया न भक्षणीयमिति भावः । यत्र पुनः कारणे सचित्तं मुखे प्रक्षिपति तत्रापि 'प्रथमभङ्गः' एकग्रहणैकप्रक्षेपरूपः 'तृतीयभङ्गश्च' अनेकग्रहणैकप्रक्षेपरूपो यतनया सेवितव्यः ।।

अथानन्तकायस्य वर्जनेति द्वारम् । तत्र प्रथमतो द्वारगाथामाह-

[भा.९८५]पायच्छित्ते पुच्छा, उच्छुकरण महिड्ढि दारु थली य दिट्ठंतो ।
चउत्थपदं च विकड्डुभं पलिमंथो चेवऽनाइन्नं ।।

वृ- प्रथमं प्रायश्चित्ते पृच्छा कर्तव्या । ततः 'इक्षुकरणेन' इक्षुवाटेन 'महर्द्धिकेन' राज्ञा ''दारु'' त्ति दारुभारेण 'स्थल्या च' देवद्रोण्या दृष्टान्तः कर्तव्यः । चतुर्थं च-द्रव्यतोऽपि भावतोऽपि भिन्नमिति यत् पदं तत्र त्रीणि द्वाराणि-विकड्डुभं परिमन्थः अनाचीर्णमिति समासार्थः ।।

अथ विस्तरार्थमाह-

[भा.९८६] चोएइ अजीवत्ते, तुल्ले कीस गुरुगो अनंतम्मि ।
कीस य अचेयणम्मी, पच्छित्तं दिज्जए दव्वे ।।

वृ- शिष्यो नोदयति-भावतो भिन्नं द्रव्यतोऽभिन्नं भावतो भिन्नं द्रव्यतोऽपि भिन्नमिति तृतीय-चतुर्थयोर्भङ्गयोः परीत्ते अनन्ते च अजीवत्वे तुल्येऽपि कस्माद् अनन्ते गुरुमासः परीत्ते लघुमासो दीयते ? कस्माच्चाचेतने द्रव्ये परीत्तेऽनन्ते वा जीवोपघातं विनाऽपि प्रायश्चित्तं दीयते? अपरं च राग-द्वेषवन्तो भवन्तः, यदचेतने परीत्ते मासलघु अनन्तेऽचेतनेऽपि मासगुरु प्रयच्छत।। तत्र यत् तावद् नोदितम् ''कस्मात् परीत्ते मासलघु अनन्ते मासगुरु ?'' तद्विषयं समाधानमाह-

[भा.९८७] साऊ जिनपडिकुट्ठो, अनंतजीवाण गायनिप्फन्नो ।
गेही पसंगदोसा, अनंतकाए अतो गुरुगो ।।

वृ-परीत्ताद् अनन्तकायः स्वादुः स्वादुतरः । तथा जिनैः-तीर्थकरैः प्रतिक्रुष्टः, 'कारणेऽपि परीत्तं ग्रहीतव्यं नानन्तम्' इति जिनोपदेशात् । अनन्तानां च जीवानां गात्रेण स निष्पन्नः । सुस्वादुत्वाच्चाधिकतरा तत्र गृद्धिर्भवति । तस्याश्च प्रसङ्गेनानेषणीयमपि गृह्णीयादित्यादयो बहवो दोषाः, अतोऽनन्तकायेऽचित्तेऽपि गुरुको मासः प्रायश्चित्तम् । एवं च द्रव्यानुरूपं प्रायश्चित्तं ददतामस्माकं राग-द्वेषावपि दूरापास्तप्रसराविति ।। यच्चोक्तम् ''कस्मादचित्ते प्रायश्चित्तं प्रयच्छत ?'' इत् तत्रापि समाधीयते-अनवस्थाप्रसङ्गनिवारणार्थं सजीवग्रहणपरिहारार्थं चाचित्तेऽपि प्रायश्चित्तप्रदानमुपपन्नमेव । तथा चात्राचार्या इक्षुकरणदृष्टान्तमुपदर्शयन्ति-

[भा.९८८] न वि खाइयं न वि वइं, न गोण-पहियाइए निवारेइ।
इति करणभई छिन्नो, विवरीय पसत्थुवणओ य ॥

**चू-** एगेन कुटुंबिणा उच्छुकरणं रोवियं। तस्स परिपेरंतेण तेण न वि खाइया कया, न वि वईए फलिहियं, न वि गोणाई निवारेइ, नावि पहिए खायंते वारेइ। ताहे तेहिं गोणाईहिं अवारिज्जमाणेहिं तं सव्वं उच्छाइयं। एवंकरिंतो सो कम्मकराण भईए छिन्नो। जं च परायय खेत्तं वाविंतेणं वुत्तं 'एत्तियं ते दाहं' ति तं पि दायव्वं। एवं सो उच्छुकरणे विणट्ठे मूलच्छिन्ने जं जस्स देयं तं अदेंतो बद्धो विनट्ठो य। एस अप्पसत्थो ॥ अन्नेण वि उच्छुकरणं कयं। सो विवरीओ भाणियव्वो। खाइयादि सव्वं कयं। जे च गोणाई पडंति ते तहा उत्तासयति जहा अन्ने वि न ढुक्कंति। एस पसत्थो ॥ अथाक्षरार्थः-कश्चित् कुटुम्बी इक्षुकरणं रोपयित्वा नापि खातिकां नापि वृतिं कृतवान्, न वा गो-पथिकादीन् खादतो निवारयति। 'इति' एवंकुर्वन् इक्षुकरणस्य सम्बन्धिनी या भृतिः-कर्मकरादिदेयं द्रव्यं तया 'छिन्नः' त्रुटितः सन् विनष्टः। एतद्विपरीतश्च प्रशस्तदृष्टान्तो वक्तव्यः। उपनयश्च द्वयोरपि दृष्टान्तयोर्भवति ॥ स चायम्-

[भा.९८९] को दोसो दोहि भिन्ने, पसंगदोसेण अणरुई भत्ते।
भिन्नाभिन्नग्गहणे, न तरइ सजिए वि परिहरिउं ॥

**चू-** कश्चिद् निर्धर्मा प्रलम्बानि ग्रहीतुकामः "को दोषः स्यात् 'द्वाभ्यां' द्रव्य-भावाभ्यां भिन्ने प्रलम्बे गृह्यमाणे?" इति परिभाष्य द्रव्य-भावभिन्नानि प्रलम्बान्यानीतवान्। यदि च तस्य प्रायश्चित्तं न दीयते तदा स निर्विशङ्कं भूयो भूयस्तानि गृह्णाति। ततश्च लब्धप्रलम्बरसास्वादस्य प्रसङ्गदोषेण तैः प्रलम्बैरलभ्यमानैस्तस्य भक्ते 'अरुचिः' अरोचको भवति। ततो यानि भावतो भिन्नानि द्रव्यतोऽभिन्नानि तेषां ग्रहणे प्रवर्त्तते। यदा तान्यपि न लभते तदाऽसौ प्रलम्बरसगृद्धः सजीवान्यपि प्रलम्बानि न शक्नोति परिहर्तुमिति। विशेषयोजना त्वेवम्-कुटुम्बिस्थानीयः साधुः, इक्षुकरणस्थानीयं चारित्रम्, परिखास्थानीया अचित्तप्रलम्बादिनिवृत्ति, वृतिस्थानीया गुर्वाज्ञा, गो-पथिकादिस्थानीया रसगौरवादयः, तैरुपद्रूयमाणं प्रलम्बग्राहिणश्चारित्रमचिरादेव विनश्यति, यथा चासौ कर्षक एकभविकं मरणं प्राप्तस्तथाऽयमप्यनेकानि जन्म-मरणानि प्राप्नोतीत्येष अप्रशस्त उपनयः। प्रशस्तः पुनरयम्-यथा तेन द्वितीयकर्षकेण कृतं सर्वमपि परिखादिकम्, उत्त्रासिता गवादयः, रक्षितं स्वक्षेत्रम्, सञ्जातोऽसावैहिकानां कामभोगानामाभागी; एवमत्रापि केनापि साधुना द्रव्यभावभिन्नं प्रलम्बमानीतमाचार्याणामालोचितम्, तैराचार्यैः स साधुरत्यर्थं खरण्टितः ॥ ततश्च-

[भा.९९०] छड्डाविय-कयदंडे, न कमेति मती पुणो वि तं घेत्तुं।
न य से वड्ढइ गेही, एमेव अनंतकाए वि ॥

**चू-** स साधुराचार्यैः प्रलम्बानि च्छर्दापितः-त्याजितः प्रायश्चित्तदण्डश्च तस्य कृतः, ततश्च च्छर्दापित-कृतदण्डस्य पुनरपि 'तत्' प्रलम्बजातं ग्रहीतुं मति 'न क्रमते' नोत्सहते, 'न च' नैव "से" तस्य प्रलम्बे गृद्धिर्वर्धते, ततश्चासौ विरतिरूपया परिखया गुर्वाज्ञारूपया वृत्त्या परिक्षिप्तभिक्षुकरणकल्पं चारित्रं रसगौरवादिगो-पथिकैरुपद्रूयमाणं सम्यक् परिपालयितुमीष्टे, जायते चैहिकाऽऽमुष्मिककल्याणपरम्पराया भाजनम्। एवं तावत् प्रत्येके भणितम्,

अनन्तकायेऽप्येवमेव द्रष्टव्यमिति ॥ अथ महर्द्धिक-दारुभरदृष्टान्तद्वयमाह-

[भा.९९१] कन्नंतेपुर ओलोयणेण अनिवारियं विनट्ठं तु ।
दारुभरो य विलुत्तो, नगरद्दारे अवारिंतो ॥

[भा.९९२] बितिएणोलोयंती, सव्वा पिंडित्तु तालिता पुरतो ।
भयजननं सेसाण वि, एमेव य दारुहारी वि ॥

वृ- महिड्डिओ राया भण्णइ । तस्स कन्नंतेपुरं वायायणेहिं ओलोएइ तं न को वि वारेइ । ताहे तेन पसंगेणं निग्गंतुमाढत्ताओ तह वि कोति वारेइ । पच्छा विडपुत्तेहिं समं आलावं काउमाढत्ताओ । एवं आवारिज्जंतीओ विनट्ठाओ ॥

दारुभरदिट्ठंतो- एगस्स सेट्ठिस्स दारुभरिया भंडी पविसति । नगरद्दारे एगं दारुअं सयं पडियं तं चेडरूवेण गहितं । तं पासित्ता 'न वारियं' ति काउं अन्नेन चेडरूवेण भंडीओ चेव गहियं । तं अवारिज्जमाणं पासित्ता सव्वो दारुभरो विलुत्तो लोगेणं । एते अपसत्था । इमे पसत्था- वितिएणं अंतेपुरपालगेण एगा ओलोयंती दिट्ठा, ताहे तेन सव्वाओ पिंडित्ता तासिं पुरओ सा तालिता । ताहे सेसियाओ वि भीयाओ पलोएंति । एवं अंतेउरं रक्खियं ॥ एवं पढमदारुहारी वि पिट्टित्ता दारुभरो वि रक्खितो ॥

अथाक्षरगमनिका-कन्यान्तः पुरम् 'अवलोकनेन' वातायनेनाऽवलोकमानमनिवारितं सत् क्रमेण विटपुत्रैः सार्द्धमालापकरणाद् विनष्टम् । एवं दारुभरोऽपि नगरद्वारे दारूणि गृह्णन्ति चेटरूपाण्यवारयति शाकटिके सर्वोऽपि 'विलुप्तः' मुषितः । द्वितीयेन पुनरन्तः पुरपालकेनैका कन्यका अवलोकमाना दृष्टा, ततः सर्वा अपि कन्यकाः पिण्डीकृत्य तासां पुरतः ताडिता, यथा शेषाणामपि भयजननं भवति । एवमेव च दारुहार्यपि प्रथमः कुट्टितो यथा शेषा बिभ्यतीति ॥ स्थलीदृष्टान्तमाह-

[भा.९९३] थलि गोणि सयं मुय भक्खणेण लद्धपसरा थलिं तु पुणो ।
घातेसुं बितिएहि उ, कोट्टग बंदिग्गह नियत्ती ॥

वृ- थली नाम देवद्रोणी । ततो गावीणं गोयरं गयाणं एक्का जरग्गवी मया । सा पुलिंदेहिं 'सयं मय' त्ति खइया । कहियं गोवालएहिं देवद्रोणीपरिचारगाणं । ते भणंति-जइ खइया खइया नाम । पच्छा ते पसंगेणं अवारिज्जंता अप्पणा चेव मारेउमारद्धा । पच्छा तेहिं लद्धपसरेहिं थली चेव घातिता । एस अपसत्थो ॥ इमो पसत्थो-तहवे गावीणं गोयरं गयाणं एक्का मया । सा पुलिंदेहिं खइया । गोवालेहिं सिट्ठं परिचारगाणं । तेहिं गंतूणं बिइयदिवसे तं कोट्टं भग्गं 'मा पसंगं काहिंति' त्ति काउं । तत्थ बंदिग्गहो कओ ॥ अथाक्षरार्थ-स्थलीसम्बन्धिनीनां गवां गोचरगतानामेका जरद्गवी स्वयं मृता । तस्या भक्षणेन लब्धप्रसराः पुलिन्दाः पुनः स्वयमेवागम्य स्थलीं घातितवन्तः। द्वितीयैः पुनर्देवद्रोणीपरिचारकैः 'कोट्टकं' पुलिन्दपल्ली तद् गत्वा भग्नं 'मा भूत् प्रसङ्गः' इति कृत्वा, तेषां पुलिन्दानां बन्दिगृहे निवृत्ति कृता । उपनययोजना "को दोसो दोहि भिन्ने, पसंगदोसेन अनरुई भत्ते" इत्यादि प्रागुक्तानुसारेण सर्वत्रापि द्रष्टव्या ॥

अथ विकडुभ-पलिमन्थद्वारे व्याख्यानयति-

[भा.९९४] विकडुभमग्गने दीहं, च गोयरं एसणं च पिल्लिज्जा ।

निप्पिसिय सोंड नायं, मुग्गछिवाडीए पलिमंथो ॥

**वृ-** इह प्रलम्बरसभिन्नदाढतया प्रलम्बैर्विना केवलः कूरो यदा न प्रतिभासते, ततोऽन्यस्मिन् भक्तपाने लब्धेऽपि विकटुभं-शालनकं तद् मार्गयन् अलभमानो दीर्घं गोचरं करोति, एषणीयं वा अलभमानोऽनेषणीयं विकटुभं गृह्णन्नेषणां प्रेरयेत्। अत्र च 'निष्पिशितः' पिशितवर्जी 'शौण्डः' मद्यपः 'ज्ञातम्' उदाहरणम्-

जहा एगो अमंसभक्खी पुरिसो। तस्स य मज्जपाएहिं सह संसग्गी। अन्नया तेहिं भणिओ-मज्जे निज्जीवे को दोसो ?। तेहिं य सो सवहं गाहितो। तओ लज्जमाणो एगंते परेण आनियं पिबइ। पच्छा लद्धपसरो बहुजणमज्झे वीहीए वि चत्तलज्जो पाउमाढत्तो। तेसिं पुन मंसं विलंको उपदंश इत्यर्थः। इयरस्स पुण चिब्भिड-चणय-पप्पडगाईणि। ताणि य सव्वकालं न भवंति। पुणो तेहिं भणियं-केरिसं मज्जपाणं विणा विलंकेणं ? परमारिए य मंसे को दोसो ? खायसु इमं। तत्थ वि सो सवहं गाहितो। 'परमारिए नत्थि दोसो' त्ति खायइ। पच्छा लद्धरसो कढिणचित्तीभूतो निद्धंधसपरिणामो अप्पणा वि मारउं खायइ। निस्सूगो जाओ। उक्तं च-

करोत्यादौ तावत् सघृणहृदयः किञ्चिदशुभं
द्वितीयं सापेक्षो विमृशति च कार्यं च कुरुते।
तृतीयं निशङ्को विगतघृणमन्यत् प्रकुरुते।
ततः पापाभ्यासात् सततमशुभेषु प्ररमते ॥

जहा सो सोंडओ विलंकेण विना न सक्केइ अच्छिउं, एवं तस्स वि पलंबेहिं विना कूरो न पडिहाइ। तस्स एरिसी गेही तेसु जायइ जीए एगदिणमवि तेहिं विना न सक्केइ अच्छिउं। पच्छा सणियं सयं चेव रुक्खेहिंतो गिण्हइ त्ति। तथा मुग्गछिवाडी-कोमला मुद्गफली, उपलक्षणत्वाद् इक्षुखण्ड-तिन्दुकादिकमन्यदपि यत् तुच्छौषधिरूपं तस्मिन् भक्ष्यमाणे 'परिमन्थः' सूत्रार्थव्याघातो भवति, न पुनः काचित् तृप्तिमात्रा सञ्जायते। अपि च कदाचिदात्मविराधनाऽपि भवेत्। तथा चात्र दृष्टान्तः- एक्का अविरइया मुग्गखेत्ते कोमलाओ मुग्गफलियाओ खायंती रन्ना आहेडएणं वच्चंतेण दिट्ठा, एंतेण वि दिट्ठा सा तहेव। तस्स कोउयं जायं 'केत्तियाओ पुण खतिया होज्ज ?' त्ति पोट्टं से फाडियं। जाव नवरं दिट्ठं फेणरसो। एवं विराहणा होज्जा ॥ गते विकटुभ-परिमन्थद्वारे।

अथानाचीर्णद्वारमाह-

**[भा.११५]** अवि य हु सव्व पलंबा, जिन-गणहरमाइएहऽनाइन्ना।
लोउत्तरिया धम्मा, अनुगुरुणो तेन ते वज्जा ॥

**वृ-** 'अपि च' इति दूषणाभ्युच्चये, पूर्वोक्ता दोषास्तावत् स्थिता एव दूषणान्तरमप्यस्तीति भावः। 'हुः' निश्चितं 'सर्वाणि' सचित्ता-ऽचित्तादिभेदभिन्नानि मूल-कन्दादिभेदाद् दशविधानि वा प्रलम्बानि जिनैः-तीर्थकरैः गणधरैश्च-गौतमादिभिः आदिग्रहणेन जम्बू-प्रभव-शय्यम्भवादिभिः स्थविरैरपि 'अनाचीर्णानि' अनासेवितानि। लोकोत्तरिकाश्च ये केचन 'धर्मा' समाचारास्ते सर्वेऽपि 'अनुगुरवः' यद् यथा पूर्वगुरुभिराचरितं तत् तथैव पाश्चात्यैरप्याचरणीयमिति, गुरुपारम्पर्यव्यवस्थया व्यवहरणीया इति भावः। येनैवं तेन 'तानि' प्रलम्बानि 'वर्ज्यानि' परिहर्त्तव्यानीति ॥ अत्र परः प्राह-यदि यद् यत् प्राचीनगुरुभिराचीर्णं तत् तत् पाश्चात्यैरप्याचरितव्यं तर्हि तीर्थकरैः प्राकारत्रय-

च्छत्रत्रयप्रभृतिका प्राभृतिका तेषामेवार्थाय सुरैर्विरचिता यथा समुपजीविता तथा वयमप्यस्मन्निमित्तकृतं किं नोपजीवामः ? । सूरिराह-

[भा.११६]कामं खलु अनुगुरुणो, धम्मा तह वि हु न सव्वसाहम्मा ।
गुरुणो जं तु अइसए, पाहुडियाई समुपजीवे ॥

वृ- 'कामम्' अनुमतं खल्वस्माकं यद् अनुगुरवो धर्मा, तथापि न सर्वसाधर्म्यात चिन्त्यते किन्तु देशसाधर्म्यादेव । तथाहि-'गुरवः' तीर्थकराः 'यत् तु' यत् पुनः 'अतिशयान्' प्राभृतिकादीन् प्राभृतिका-सुरेन्द्रादिकृता समवसरणरचना आदिशब्दादवस्थितनख-रोमा-ऽधोमुखकण्टका-दिसुरकृतातिशयपरिग्रहः तान् समुपजीवन्ति 'स तीर्थकरजीतकल्पः' इति कृत्वा न तत्रानुधर्मता चिन्तनीया । यत्र पुनस्तीर्थकृतामितरेषां च साधूनां सामान्यधर्मत्वं तत्रैवानुधर्मता चिन्त्यते ॥

सा चेयमनाचीर्णेति दर्श्यते-

[भा.११७] सगड-द्दह-समभोमे, अवि य विसेसण विरहियतरागं ।
तह वि खलु अणाइन्नं, एसऽनुधम्मो पवयणस्स ॥

वृ- यदा भगवान् श्रीमन्महावीरस्वामी राजगृहनगराद् उदायननृपप्रव्राजनार्थं सिन्धुसौवीरदेशवतंसं वीतभयं नगरं प्रस्थितस्तदा किलाऽपान्तराले बहवः साधवः क्षुधार्तास्तृषार्दिताः संज्ञाबाधिताश्च बभूवुः । यत्र च भगवानावासितस्तत्र तिलभृतानि शकटानि पानीयपूर्णश्च ह्रदः 'समभौमं च' गर्त्ता-बिलादिवर्जितं स्थण्डिलमभवत् । अपि च विशेषेण तत् तिलोदकस्थण्डिलजातं 'विरहिततरं' अतिशयेनाऽऽगन्तुकैस्तदुत्थैश्च जीवैर्वर्जितमित्यर्थः तथापि खलु भगवता 'अनाचीर्णं' नानुज्ञातम् । एषोऽनुधर्म 'प्रवचनस्य' तीर्थस्य, सर्वैरपि प्रवचन-मध्यमध्यासीनैरशस्त्रापहतपरिहारलक्षण एष एव धर्मोऽनुगन्तव्य इति भावः ॥ अथैतदेव विवृणोति-

[भा.११८] वक्कंतजोणि थंडिल, अतसा दिन्ना ठिई अवि छुहाए ।
तह वि न गेण्हिंसु जिनो, मा हु पसंगो असत्थहए ॥

वृ- यत्र भगवानावासितस्तत्र बहूनि तिलशकटान्यावासितान्यासन् । तेषु च तिलाः 'व्युत्क्रान्तयोनिकाः' अशस्त्रापहता अप्यायुःक्षयेणाचित्तीभूताः । ते च यद्यस्थण्डिले स्थिता भवेयुस्ततो न कल्पेरन्नित्यत आह-स्थण्डिले स्थिताः । एवंविधा अपि त्रसैः संसक्ता भविष्यन्तीत्याह-'अत्रसाः' तदुद्भवा-ऽऽगन्तुकत्रसविरहिताः । तिलशकटस्वामिभिश्च गृहस्थैर्दत्ता, एतेन चादत्ता-दानदोषोऽपि तेषु नास्तीत्युक्तं भवति । अपि च ते साधवः क्षुधा पीडिता आयुषः स्थितिक्षयमकार्षुः तथापि 'जिनः' वर्द्धमानस्वामी माऽग्रहीत्, 'मा भूदशस्त्रहते प्रसङ्गः, 'तीर्थकरेणापि गृहीत्तम्' इति मदीयमालम्बनं कृत्वा मत्सन्तानवर्तिनः शिष्या अशस्त्रापहतं मा ग्रहिषुः' इति भावात्, व्यवहारनयबलीयस्त्वख्यापनाय भगवता न गृहीता इति हृदयम्; युक्तियुक्तं चैतत् प्रमाण-स्थपुरुषाणाम् । यत उक्तम्-

प्रमाणानिप्रमाणस्थैः, रक्षणीयानि यत्नतः ।
विषीदन्ति प्रमाणानि, प्रमाणस्थैर्विसंस्थुलैः ॥

[भा.११९] एमेव य निज्जीवे, दहम्मि तसवज्जिए दए दिन्ने ।
समभोम्मे य अवि ठिती, जिमिता सन्ना न याऽणुन्ना ॥

वृ-एवमेव च ह्रदे 'निर्जीवे' यथायुष्कक्षयादचित्तीभूतेऽचित्तपृथिव्यां च स्थिते त्रसवर्जिते च 'दके' पानीयेह्रदस्वामिना च दत्ते तृषार्दितानां च साधूनां स्थितिक्षयकरणेऽपि भगवान्नानुजानीते स्म 'मा भूत् प्रसङ्गः' इति । तथा स्वामी तृतीयपौरुष्यां जिमितमात्रैः साधुभिः सार्धमेकामटवीं प्रपन्नः, "सन्न"त्ति संज्ञाया आबाधा, यद्वा "आसन्न"त्ति भावासन्नता साधूनां समजनि, तत्र च समभौमं गर्त्ता-गोष्पद-बिलादिवर्जितं यथास्थितिक्षयव्युत्क्रान्तयोनिकपृथिवीकं त्रसप्राणविरहितं स्थण्डिलं वर्त्तते, अपरं च शस्त्रापहतं स्थण्डिलं नास्ति न वा प्राप्यते, अपि च ते साधवः संज्ञाबाधिताः स्थितिक्षयं कुर्वन्ति तथापि भगवान् नानुज्ञां करोति यथा 'अ[illegible]' इति, 'मा भूदशस्त्रहते प्रसङ्गः' इति । एष अनुधर्म प्रवचनस्येति सर्वत्र योज्यम् ॥ एष सर्वोऽपि विधिर्निर्ग्रन्थानाश्रित्योक्तः । अथ निर्ग्रन्थीरधिकृत्यामुमेवातिदिशन्नाह-

[भा.१०००] एसेव गमो नियमा, निग्गंथीणं पि होइ नायव्वो ।
सविसेसतरा दोसा, तासिं पुन गिण्हमाणीणं ॥

वृ-एष एव सर्वोऽपि 'गमः' प्रकारो निर्ग्रन्थीनामपि भवति ज्ञातव्यः । तासां पुनर्गृह्णतीनां प्रलम्बेन हस्तकर्मकरणादिना सविशेषतरा दोषा वक्तव्या इति ॥ सूत्रम्-

मू. (२) *कप्पइ निग्गंथाण वा निग्गंथीण वा आमे तालपलंबे भिन्ने पडिगाहित्तए ॥*

वृ- अस्य व्याख्या प्राग्वत् । नवरं 'भिन्नं' भावतो व्यपगतजीवम् द्रव्यतो भिन्नमभिन्नं वा, तृतीय-चतुर्थभङ्गवर्तीत्यर्थः । एवं च सूत्रेणानुज्ञातम्, यथा-आमं भिन्नं कल्पते, अर्थतः पुनः प्रतिषेधयति-न कल्पते ॥ आह यदि न कल्पते ततः किं सूत्रे निबद्धं "कल्पते" इति ? उच्यते-

[भा.१००१] जइ वि निबंधो सुत्ते, तह वि जईणं न कप्पई आमं ।
जइ गिण्हइ लग्गति सो, पुरिमपदनिवारिए दोसे ॥

वृ- यद्यपि सूत्रे निबन्धः "कल्पते भिन्नम्" इतिलक्षणस्तथापि यतीनां न कल्पते आमं भिन्नमपि यदि गृह्णाति ततः स पूर्वपदे-पूर्वसूत्रे निवारिता ये दोषास्तान् 'लगति' प्राप्नोति ॥ आह यदि सूत्रेऽनुज्ञातमपि न कल्पते तर्हि सूत्रं निरर्थकम्, सूरिराह-

[भा.१००२] सुत्तं तु कारणियं, गेलन्न-ऽद्धाण-ओमगाईसु ।
जह नाम चउत्थपदे, इयरे गहणं कहं होज्जा ॥

वृ- सूत्रं कारणिकम् । तानि च कारणान्यमूनि-ग्लानत्वम् अध्वा अवमौदर्यम्, एवमादिषु कारणेषु कल्पते । तत्र प्रथमतश्चतुर्थभङ्गे तदलाभे तृतीय-द्वितीय-प्रथमभङ्गेष्वपि । आह यथा नाम 'चतुर्थपदे' चतुर्थभङ्गे ग्रहणं तथा 'इतरस्मिन्' भङ्गत्रये कथं ग्रहणं भवेत् ? उच्यते- तत्रापि कारणतो ग्रहणं भवत्येव । यथा च भवति तथोत्तरत्राभिधास्यते ॥ अथ पुनरप्याह-

पुव्वमभिन्ना भिन्ना, य वारिया कहमियाणि कप्पंति ।
सुण आहरणं चोयग !, न कमति सव्वत्थ दिट्ठंतो ॥

पूर्वसूत्रे भवद्भिरभिन्नानि भिन्नानि च 'वारितानि' प्रतिषिद्धानि, कथम् 'इदानीम्' अस्मिन् सूत्रे "कल्पन्ते" इति भणत ? न युक्तं पूर्वापरव्याहतमीदृशं वक्तुमिति भावः । अत्राचार्य प्राह- 'शृणु' निशमय 'आहरणं' दृष्टान्तं हे नोदक ! यथा कल्पन्ते । अत्र नोदको गुरुवचनमनाकर्ण्य दुर्विदग्धतादर्पाध्मातः प्रतिवक्ति-आचार्य ! न सर्वत्राप्यर्थे दृष्टान्तः क्रमते, दृष्टान्तमन्तरेणाप्यर्थ-

प्रतिपत्तेः ॥ तथाहि-

[भा.१००४] जइ दिट्ठंता सिद्धी, एवमसिद्धी उ आणगेज्झाणं ।
अह ते तेसि पसिद्धी, पसाहए किनु दिट्ठंतो ॥

वृ- यदि दृष्टान्तादर्थानां सिद्धिस्तर्हि 'आज्ञाग्राह्याणां' निगोद-भव्या-ऽभव्यादीनामर्थानामसिद्धि प्रसज्येत । अथ 'ते' तव आज्ञया तेषां प्रसिद्धिस्ततः 'किन्नु' इति वितर्के 'नु:' एवमर्थे किमेवं दृष्टान्ततोऽर्थसिद्धि क्रियते ? ॥ किञ्चान्यत्-

[भा.१००५]कप्पम्मि अकप्पम्मि य, दिट्ठंता जेन होंति अविरुद्धा ।
तम्हा न तेसि सिद्धी, विहि-अविहिविसोवभोग इव ॥

वृ- दृष्टान्तेन यद् यद् आत्मन इष्टं तत् तत् सर्वं यदृच्छया प्रसाध्यते, यथा-कल्पते हिंसा कर्तुं विधिनेति प्रतिज्ञा १, निष्प्रत्यपायत्वादिति हेतुः २, यथा विधिना विषोपभोग इति दृष्टान्तः, अस्य च भावना-यथा विधिना मन्त्रपरिगृहीतं विषं खाद्यमानमदोषाय भवति, अविधिना पुनः खाद्यमानं महान्तमनर्थमुपढौकयति ३, एवं हिंसाऽपि विधिना विधीयमाना न दुर्गतिगमनाय प्रभवति, अविधिना तु विधीयमाना दुर्गतिगमनायोपतिष्ठते ४, यतश्चैवमतो निष्प्रत्यपायत्वात् कल्पते कर्तुं हिंसेति निगमनम् ५ । एवं कल्प्येऽकल्प्ये च येन कारणेन दृष्टान्ता अविरुद्धा भवन्ति, कल्प्यमप्यकल्प्यम् अकल्प्यमपि कल्प्यं यदृच्छया दृष्टान्तबलेन क्रियत इति भावः, तस्माद् नैतेभ्यो दृष्टान्तेभ्योऽर्थानां सिद्धिर्भवति । गाथायां पञ्चम्यर्थे षष्ठी । विधिना अविधिना च विषोपभोग इवेति ॥ इत्थं नोदकेन स्वपक्षे स्थापिते सति सूरिराह-

[भा.१००६] असिद्धी जइ नाएणं, नायं किमिह उच्यते ।
अह ते नायतो सिद्धी, नायं किं पडिसिज्झती ॥

वृ- यदि 'ज्ञातेन' दृष्टान्तेनार्थानमसिद्धिस्ततस्त्वया 'ज्ञातं' विषदृष्टान्तः इह 'किमुच्यते' किमेवमभिधीयते ? । अथ 'ते' तव 'ज्ञाततः' दृष्टान्ततः सिद्धि ततोऽस्माभिरुच्यमानं ज्ञातं किं प्रतिषिध्यते ? ॥ किञ्च-

[भा.१००७] अंधकारो पदीवेण, वज्जए न उ अन्नहा ।
तहा दिट्ठंतिओ भावो, तेणेव उ विसुज्झई ॥

अन्धकारशब्दस्य पुंनपुंसकलिङ्गत्वाद् यथाऽन्धकारो रात्रौ प्रदीपेनैव 'वर्ज्यते' विशोध्यते 'न तु' नैवान्यथा, विशोधिते च तस्मिन् घटादिकं वस्तु परिस्फुटमुपलभ्यते; तथाऽत्रापि 'दार्ष्टान्तिकः' दृष्टान्तग्राह्यः 'भावः' पदार्थोऽन्धकारवदतिगहनोऽपि 'तेनैव' दृष्टान्तेन प्रदीपकल्पेन 'विशुध्यते' निर्मलीभवति, विशुद्धे च तस्मिन् परिस्फुटा विवक्षितार्थप्रतिपत्तिर्भवतीति दृष्टान्तोपदर्शनमत्र क्रियते । किञ्च सौम्य ! प्रीणिता वयं स्ववाक्येनैव भवता यद् दृष्टान्तेनार्थप्रसाधनमभ्युपगतम् । अस्माकमपि त्वदीय एव दृष्टान्तः सूत्रस्य सार्थकत्वं प्रसाधयिष्यति ॥ कथम् ? इति चेद् उच्यते-

[भा.१००८] एसेव य दिट्ठंतो, विहि-अविहीए जहा विसमदोसं ।
होइ सदोसं च तथा, कज्जितर जया-ऽजय फलाई ॥

वृ- 'एष एव' त्वदुक्तो दृष्टान्तोऽस्माभिः प्रस्तुतसूत्रार्थेऽवतार्यते-यथा विधिना विषमुपभुज्यमानमदोषम्, अविधिना भुज्यमानं तदेव सदोषम्; तथा कार्ये यतनया फलादीनि

आसेव्यमानानि न दोषायोपतिष्ठन्ते, ''इयरे''त्ति इतरस्मिन्-अकार्ये यतनया वा अयतनया वाऽऽसेव्यमानानि दोषायोपकल्पन्ते ॥ अपि च-

[भा.१००९] आउहे दुन्निसट्ठम्मि, तेणेव बलसा हिए ।
वेताल इव दुज्जुत्तो, होइ पच्चंगिराकरो ॥

वृ- यथा केनापि शारीरबलदर्पोद्धुतेन परवधायाऽऽयुधं निसृष्टं-मुक्तम्, तच्च दुर्निसृष्टं कृतं येन तदेव परेण 'हृतं' गृहीतम्, यद्वा अनिसृष्टमेवायुधं परेण ''बलस''त्ति छान्दसत्वाद् बलात्कारेण हृतम्, ततस्तस्मिन्नायुधे दुर्निसृष्टे परेण बलात्कारेण वा हृते सति तस्यैव तेन प्रतिघातः क्रियते । एवं त्वयाऽप्यस्मदभिप्रेतदृष्टान्तप्रतिघाताय विषदृष्टान्त उपन्यस्तः, अस्माभिस्तु तेनैव दृष्टान्तेन ''न सर्वत्र दृष्टान्तः क्रमते'' इति भवत्प्रतिज्ञायाः प्रतिघातः कृतः, स्वाभिप्रेतश्चार्थ प्रसाधित इति । तथा केनचिद् मन्त्रवादिना होम-जापादिभिर्वेताल आहूत आगतश्च, स च वेतालः, किञ्चित् तदीयस्खलितं दृष्ट्वा 'दुर्युक्तः' दुःसाधितो न केवलं तस्य साधकस्याभीष्टमर्थं न साधयति किन्तु कुपितः सन् 'प्रत्यङ्गिराकरः' प्रत्युत तस्यैव साधकस्योन्मत्ततादिलक्षणापकारकारी भवति; एवं भवताऽपि स्वपक्षसाधनार्थं विषदृष्टान्त उपात्तः स च दुःप्रयुक्तत्वात् प्रत्युत भवत एव प्रतिज्ञोपघातलक्षणमपकारमादधाति स्मेति ॥ किञ्च-

[भा.१०१०] निरुतस्स विकडुभोगो, अपत्थओ कारणे य अविहीए ।
इय दप्पेण पलंबा, अहिया कज्जे य अविहीए ॥

वृ- यथा नीरुजस्य विशेषेण कटुकं विकटुकम्-औषधमित्यर्थः तस्य यो भोगः-उपयोगः, तथा 'कारणे च' रोगादौ यस्तस्यैवाऽविधिना भोगः, स उभयोऽपि 'अपथ्यः' अहितः-विनाशकारणं जायते । 'इति' एवं 'दर्पेण' कारणाभावेनाऽऽसेव्यमानानि प्रलम्बानि 'अहितानि' संसारवर्द्धनानि भवन्ति, 'कार्ये च' अवमौदर्यादौ 'अविधिना' अयतनया गृहीतानीह परत्र चाहितानि जायन्ते ॥

अथ दृष्टान्तमेव समर्थयन्नाह-

[भा.१०११] जइ कुसलकप्पिताओ, उवमाओ न होज्ज जीवलोगम्मि ।
छिन्नब्भं पिव गगने, भमिज्ज लोगो निरुवमाओ ॥

वृ- कुशलैः-पण्डितैः कल्पिताः-तेषु तेषु ग्रन्थेषु विरचिताः 'उपमाः' दृष्टान्ता अस्मिन् जीवलोके यदि न भवेयुस्तर्हि 'छिन्नाभ्रमिव' छिन्नं-व्यवच्छिन्नमेकीभूतं यद् अभ्रं यद् यथा प्रचण्डपवनेन गगने इतस्ततो भ्राम्यते एवमयमपि लोकः 'निरुपमाकः' तत्तदर्थप्रसाधकदृष्टान्तविकलो दोलायमानमानसः संशयादिभिरितस्ततो भ्राम्येत, न कस्याप्यर्थस्य निर्णयं कुर्यादिति भावः । उक्तं च-

तावदेव चलत्यर्थो, मन्तुर्विषयमागतः ।
यावन्नोत्तम्भनेनेव, दृष्टान्तेनावलम्ब्यते ॥

एवं च बहुभिः प्रकारैर्व्यवस्थापितं दृष्टान्तं प्रमाणयन् शिष्यः प्राह-भगवन् ! यद्येवं ततः क्रियतां दृष्टान्तः । उच्यते, कुर्म, आकर्ण्यतां दत्तकर्णेन भवता-

[भा.१०१२] मरुएहि य दिट्ठंतो, कायव्वो चउहि आनुपुव्वीए ।
एवमिहं अद्धाणे, गेलन्ने तहेव ओमम्मि ॥

वृ- 'मरुकैः' ब्राह्मणैश्चतुर्भिर्दृष्टान्तः कर्त्तव्य आनुपूर्व्या । 'एवं' मरुकदृष्टान्तानुसारेण इह

अध्वनि ग्लानत्वे तथैवावमे द्वितीयपदं द्रष्टव्यमिति निर्युक्तिगाथासमासार्थः ॥

अथ पूर्वार्द्धं तावद् व्याख्याति-

[भा.१०१३] चउमरुग विदेसं साहपारए सुणग रन्न सत्थवहे ।
तितियदिन पूतिमुदगं, पारगो सुणयं हणिय खामो ॥

[भा.१०१४]परिणामओऽत्थ एगो, दो अपरिणया तु अंतिमो अतीव ।
परिणामो सद्दहती, कन्नऽपरिणमतो मतो बितितो ॥

[भा.१०१५] तइओ एयमकिच्चं, दुक्खं मरिउं ति तं समारद्धो ।
किं एच्चिरस्स सिद्धं, अइपरिणामोऽहियं कुणति ॥

[भा.१०१६]पच्छित्तं खु वहिज्जह, पढमो अहालहुस धाडितो तइतो ।
चउथो अ अतिपसंगा, जाओ सोवागचंडालो ॥

चू- जहा चत्तारि मरुआ 'अज्झाइस्सामो'त्ति काउं विदेसं पत्थिता । तेहि य एगो साहापारओ दिट्ठो, पुच्छिओ-कत्थ वच्चसि ? । सो भणइ-जत्थेव तुब्भे । ताहे ते एगम्मि पच्चंते अद्धाण सीसए सत्थं पडिच्छंति, सो य । सत्थो मिलइ । साहापारगो एगं सुणगं सारवेइ । तेहिं भणियं-किं तुब्भं एएणं । सो भणइ-अहमेयं जाणामि कारणं । तओ ते सत्थेण समं अडविं पविट्ठा । तेसिं तत्थ रन्ने पवन्नाणं सो सत्थो मुट्ठो दिसोदिसिं पलातो । इतरे वि मरुया पंच जना सुणगछट्ठा एक्कतो पट्ठिता अतीवतिसिय-भुक्खिया तइयदिणे पेच्छंति पूइमुदगं मयगकलेवराउलं । तत्थ ते साहापारगेण भणिता-एयं सुणगं मारेउं खामो, एयं च सरुहिरं पानियं पिबामो, अन्नहा विवज्जामो, एयं च वेदरहस्स आवतीए भणियं चेव, न दोसो । एवं तेन ते भणिता । तेसिं मरुयाणं एक्को परिणामतो, दो अपरिणामगा, चउत्थतो अतिपरिणामओ । तत्थ जो सो परिणामगो तेण ,तं साहापारगवयणं सद्दहियं अब्भुवगयं च । जे ते दो अपरिणामगा तेसिं एक्केण साहापारवयणं सोउं कन्ना ठइया 'अहो ! अकज्जं, कण्णा वि मे सुणंति' सो अपरिणामगो तिसिय-भुक्खिओ मओ । जो सो बितिओ अपरिणामगो सो भणइ-'एयं एयवत्थाए वि अकिच्चं, किं पुन दुक्खं मरिज्जति ?' त्ति काउं खइयं नेन । जो सो अतिपरिणामो सो भणति-किह चिरस्ससिद्धं ? वंचिया मो अतीते काले जं खातियं । सो अन्नाणि वि गावि-गद्दभमंसाणि खादिउमाढत्तो, मज्जं च पाउं । तत्थ जेहिं खतियं ते साहापारगेण भणिता-इतो नित्थिन्ना समाणा पच्छित्तं वहेज्जह । तत्थ जो सो परिणामगो तेण अप्पसागारियं एगस्स अज्झावगस्स आलोइयं । तेन 'सुद्धो' त्ति भाणियं, पंचगव्वं वा दिन्नं । तत्थ जो सो अपरिणामओ सो निव्विण्णो समाणो सुणगकत्तिं सिरे काउं माहणे मेलित्ता चाउव्वेज्जस्स पादेहिं पडिता साहइ, सो चाउव्वेज्जेण 'धिद्धि'कतो निच्छूढो । जो सो अइपरिणामगो 'नत्थि किंचि अभक्खं अपेयं वा' अतिपरिणामपसंगेण सो मायंगचंडालो जाओ ॥

अथाक्षरार्थः-चत्वारो मरुका विदेशं प्रस्थिताः । ततः 'शाखापारगः' वेदाध्ययनपारगतो मरुकस्तेषां मिलितः, तेन च शुनकः सार्द्ध गृहीतः । अरण्ये च गतानां सार्थस्य वधः-मोषणं । ततस्तैर्मरुकैरेकां दिशं गृहीत्वा पलायितैः तृतीयदिने 'पूति' कुथितं मृतकडेवराकीर्णमुदकं दृष्टम् । शाखापारगो वक्ति-एनं शुनकं हत्वा भक्षयामः । अत्र चैकः परिणामकः, द्वौ 'अपरिणतौ' अपरिणामकौ, 'अन्तिमः' चतुर्थोऽतीवपरिणामकः । तत्र परिणामकः शाखापारगवचनं श्रद्धत्ते । 'द्वितीयः

पुनः' अपरिणतः कर्णौ स्थगितवान् 'न श्र णुमः एनां वार्तामपि' इति कृत्वा मृतः। तृतीयोऽप्यपरिण-तत्वात् चिन्तयति- 'एतद् एतस्यामप्यवस्थायामकृत्यम्, परं किं क्रियते? दुःखं मर्तुम्' इति 'तत्' शुनकभक्षणं कर्तुं समारब्धः। चतुर्थस्त्वतिपरिणामकः किमियतः कालात् 'शिष्टं' कथितम्? इत्युक्त्वा 'अधिकं करोति' गो-गर्दभादिमांसान्यपि भक्षयतीति। शाखापारगेण च ते भाणिताः-अटव्या उत्तीर्णा प्रायश्चित्तं वहध्वम्। तत्र यः प्रथमः परिणामकः स यथालघुकप्रायश्चित्तेन शुद्धः। द्वितीयस्तु मृत एव। तृतीयो निर्घाटितश्चातुर्विधः, पङ्क्तेर्बहिष्कृत इत्यर्थः। चतुर्थश्चातिप्रसङ्गात् 'नास्ति किञ्चिदभक्ष्यमपेयं च' इति श्वपाकरूपश्चण्डालो जात इति॥ अथोपनययोजनामाह-

[भा.१०१७]जह पारगो तह गणी, जह मरुगा एव गच्छवासीओ।
सुणगसरिसा पलंबा, पलंबा, मडतोयसमं दगमफासुं॥

वृ-यथा शाखापारगस्तथा 'गणी' आचार्यः। यथा चत्वारो मरुकाः 'एवम्' अमुना प्रकारेण 'गच्छवासिनः' साधवः। शृकनसदृशानि अत्र प्रलम्बानि, विकृष्टाध्वादिकारणं विना साधूनामभक्षणीयत्वात्। 'मृतकडेवराकुलोदकतुल्यमप्राशुकोदकं ज्ञातव्यम्, अपेयत्वात्॥

अथ यदुक्तं "एवमिहं अद्धाणे, गेलन्ने तहेव ओमम्मि।" तत्राध्वद्वारं विवृणोति-

[भा.१०१८] उद्दद्दरे सुभिक्खे, अद्धाणपवज्जणं तु दप्पेण।
लहुगा पुन सुद्धपदे, जं वा आवज्जती तत्थ॥

वृ-ऊर्ध्वं दराः पूर्यन्ते यत्र काले तद् ऊर्ध्वदरम्, प्राकृतशैल्या उद्दद्दरम्। ते च दरा द्विविधाः-धान्यदरा उदरदराश्च। धान्यानामाधारभूता दरा धान्यदराः कट-पल्यादयः, उदराण्येव दरा उदरदराः; ते उभयेऽपि यत्र पूर्यन्ते तद् ऊर्द्धदरम्। तथा सुभिक्षं-भिक्षाचरैः सुलभभिक्षम्। अत्र चतुर्भङ्गी-ऊर्ध्वदरं सुभिक्षं च १ ऊर्ध्वदरं न सुभिक्षं २ सुभिक्षं नोर्ध्वदरं ३ नोर्ध्वदरं न सुभिक्षम् ४। तत्र प्रथमभङ्गे तृतीयभङ्गे वा यद्यध्वानं दर्पेण प्रतिपद्यते तदा यद्यपि न मूलोत्तरगुणविराधनादिकं किमप्यापद्यते तदाऽपि शुद्धपदे चत्वारो लघुकाः प्रायश्चित्तम्, कस्मात्? दर्पेणाध्वानं प्रतिपद्यते इति हेतोः। 'यद् वा' आत्मविराधनादिकं यत्रापद्यते तत्र तन्निष्पन्नं प्रायश्चित्तम्। अर्थादापन्नम्-शेषभङ्गद्वये दुर्भिक्षत्वादध्वगमनं प्रतिपत्तव्यमिति। प्रथम-तृतीययोरपि भङ्गयोः कारणतो भवेदध्वगमनम्॥ आह किं तत् कारणम्? उच्यते-

[भा.१०१९] असिवे ओमोयरिए, रायदुट्ठे भए व आगाढे।
गेलन्न उत्तिमट्ठे, नाणे तह दंसण चरित्ते॥

वृ- विवक्षितदेशे आगाढमशिवमवमौदर्यं राजद्विष्टं भयं वा प्रत्यनीकादिसमुत्थम्, आगाढशब्दः प्रत्येकमभिसम्बध्यते, तथा तत्र वसतां ग्लानत्वं भूयोभूय उत्पद्यते, यद्वा देशान्तरे ग्लानत्वं कस्यापि समुत्पन्नं तस्य प्रतिजागरणं कर्तव्यम्, उत्तमार्थं वा कोऽपि प्रतिपन्नस्तसय निर्यापनं कार्यम्। तथा विवक्षिते देशे ज्ञानं वा दर्शनं वा चारित्रं वा नोत्सर्पति॥

[भा.१०२०] एएहि कारणेहिं, आगाढेहिं तु गम्ममाणेहिं।
उवगरणपुव्वपडिलेहिएण सत्थेण गंतव्वं॥

वृ- 'एतैः' अनन्तरोक्तैः कारणैरागाढैरुत्पन्नैः सद्भिर्गम्यते। गच्छद्भिश्चाध्वप्रायोग्य-

मुपकरणं गुलिकादिकं गृहीत्वा सार्थ पूर्वमेव प्रत्युपेक्षणीयः, तेन पूर्वप्रत्युपेक्षितेन सार्थेन सार्द्धं गन्तव्यम् ।। अत्र विधिमाह-

[भा.१०२१] अद्धाणं पविसंतो, जानगनीसाए गाहए गच्छं ।
अह तत्थ न गाहेज्जा, चाउम्मासा भवे गुरुगा ।।

वृ- अध्वानं प्रविशन्नाचार्यो ज्ञायकः-गीतार्थस्तन्निश्रया गच्छं सकलमप्यध्वकल्पस्थितिं ग्राहयति । अथ 'तत्र' अध्वप्रवेशेऽध्वकल्पस्थितिमाचार्या न ग्राहयेयुस्ततश्चतुर्मासा गुरवः प्रायश्चित्तं भवेयुः ।। स्यान्मति-कः कथं वा गच्छमध्वकल्पं ग्राहयति ? इति, उच्यते-

[भा.१०२२] गीयत्थेण सयं वा, गाहइ छड्डिंतो पच्चयनिमित्तं ।
सारिंति तं सुयत्था, पसंग अप्पच्चओ इहरा ।।

वृ- यद्याचार्य आत्मना केनापि कार्येण व्यापृतस्ततोऽन्येनोपाध्यायादिना गीतार्थेन, अथ न व्यापृतस्ततः 'स्वयम्' आत्मनैवान्यगीतार्थान् पुरतः कृत्वा अध्वकल्पसामाचारीं गच्छं ग्राहयति। स च कथको ग्राहयन्नन्तराऽन्तरा अर्थपदजातं 'छर्दयन्' परित्यजन् कथयति । ततो ये ते 'श्रुतार्थाः' गीतार्थास्ते 'तद्' अर्थपदजातं त्यक्तं सत् स्मारयन्ति, यथा-विस्मृतं भवतामेतच्चैतच्चार्थपदमिति। किंनिमित्तमेवं क्रियते ? इत्याह-अगीतार्थानां प्रत्ययनिमित्तम्, यथा सर्वेऽप्येते यदेनां सामाचारीमित्थमेव जानन्ति तन्नूनं सत्यैवेयमिति । 'इतरथा' यद्येवं न क्रियते ततस्तेषामगीतार्थानां मध्ये येऽतिपरिणतास्ते अध्वन उत्तीर्णा अपि तत्रैव प्रसङ्गं कुर्युः, ये त्वपरिणामकास्तेषामप्रत्ययो भवेत्, यथा-एते इदानीमेव स्वबुद्धिकल्पनाशिल्पनिर्मितामेवंविधां स्थितिं कुर्वन्तीति ।। शिष्यः प्राह-या काचिदध्वनि प्रलम्बग्रहणे सामाचारी तामिदानीमेव भणत । गुरुराह-

[भा.१०२३] अद्धाणे जयणाए, परूवणं वक्खती उवरि सुत्ते ।
ओमेऽवुवरिं वोच्छिइ, रोगाऽऽयंकेसिमा जयणा ।।

वृ- अध्वनि गच्छतां याप्रलम्बग्रहणे यतना-सामाचारी तस्याः प्ररूपणमुपरि अध्वसूत्रे इहैवोद्देशके वक्ष्यति । अवमेऽपि यः कोऽपि विधि स सर्वोऽप्युपरि इहैव प्रलम्बप्रकृते वक्ष्यते । अत्र पुनर्यद् ग्लानत्वद्वारं तद् अभिधीयते । तच्च ग्लानत्वं द्विधा-रोग आतङ्कश्च । तयो रोगाऽऽतङ्कयोर्द्वयोरपि 'इयं' वक्ष्यमाणलक्षणा यतना ।। तत्र तिष्ठतु तावद् यतना, रोगाऽऽतङ्कयोरेव कः परस्परं विशेषः ? उच्यते-

[भा.१०२४] गंडी-कोढ-खयाई, रोगो कासाइगो उ आयंको ।
दीहरुया वा रोगो, आतंको आसुधाती उ ।।

वृ- गण्डी-गण्डमालादिकः, कुष्ठं-पाण्डुरोगो गलत्कोष्ठं वा, क्षयः-राजयक्ष्मा, आदिशब्दात् श्लीपद-श्वयथु-गुल्मादिकः सर्वोऽपि रोग इति व्यपदिश्यते । कासादिकस्तु आतङ्कः, आदिग्रहणेन श्वास-शूल-हिक्का-ज्वरा-ऽतीसारादिपरिग्रहः । अथवा दीर्घकालभाविनी सर्वाऽपि रुग् रोग उच्यते । यस्तु आशुघाती विसूचिकादिकः स आतङ्कः ।। अथ सामान्यतो ग्लानत्वे विधिमाह-

[भा.१०२५] गेलन्नं पि य दुविहं, आगाढं चेव नो य आगाढं ।
आगाढे कमकरणे, गुरुगा लहुगा अनागाढे ।।

वृ- ग्लानत्वमपि द्विविधम्-आगाढं चैव नोआगाढं च अनागाढमित्यर्थः । आगाढे यदि

क्रमेण-पञ्चकपरिहाण्या करोति ततश्चत्वारो गुरवः, अनागाढे तु यथागाढकरणीयं करोति करोति तदा चत्वारो लघवः ॥ एतदेव स्पष्टयन्नाह-

[भा.१०२६] आगाढमनागाढं, पुव्वुत्तं खिप्पगहणमागाढे ।
फासुगमफासुगं वा, चउपरियट्टं तऽनागाढे ॥

वृ-आगाढमनागाढं च 'पूर्वोक्तम्' "अहिडक्क विस विसूइय" इत्यादिना पूर्वमेव व्याख्यातम्। तत्रागाढे शूल-विसूचिकादौ ग्लानत्वे समुत्पन्ने प्राशुकमप्राशुकं वा एषणीयमनेषणीयं वा क्षिप्रमेव ग्रहीतव्यम् । अथागाढे त्रिपरिवर्त्तनरूपया पञ्चकपरिहाणिरूपया वा यतनया क्रमेण गृह्णाति ततश्चत्वारो गुरवः । अनागाढे पुनस्त्रिकृत्वः परिवर्तने कृतेऽपि यदि शुद्धं न प्राप्यते ततश्चतुर्थे परिवर्ते पञ्चकादियतनया अनेषणीयं गृह्णाति । अथानागाढे त्रि-परिवर्त्तनं पञ्चकपरिहाणिं वा न करोति ततश्चतुर्लघवः ॥ अथ ग्लानत्वविषयां यतनामाह-

[भा.१०२७] विज्जे पुच्छण जयणा, पुरिसे लिंगे य दव्वगहणे य ।
पिट्ठमपिट्ठे आलोयणा य पन्नवण जयणा य ॥

वृ- प्रथमतो वैद्यस्वरूपं वक्तव्यम् । ततस्तस्य पार्श्वे यथा प्रच्छने यतना क्रियते तथा वाच्यम् । 'पुरुषः' आचार्यादिकोऽभिधातव्यः । "लिंगे य" त्ति स्वलिङ्गेनाऽन्यलिङ्गेन वा यथा प्रलम्बग्रहणं भवति तथा वक्तव्यम् । 'द्रव्यग्रहणं वा' लेपादिद्रव्योपादानमभिधानीयम् । पिष्टस्यापिष्टस्य च प्रलम्बस्य ग्रहणे विधिर्वक्तव्यः । तत आलोचना प्रज्ञापना यतना चाभिधातव्येति निर्युक्तिगाथासमासार्थः ॥ अथास्या एव भाष्यकृद् व्याख्यानमाह-

[भा.१०२८] वेज्जट्ठग एगदुगादिपुच्छणे जा चउक्कउवएसो ।
इह पुन दव्वे पलंबा, तिन्नि य पुरिसाऽऽयपरियमाई ॥

वृ- 'वैद्याष्टकम्' अष्टौ वैद्याः

संविग्ग १ मसंविग्गा २, लिंगी ३ तह सावए ४ अहाभद्दे ५ ।
अनभिग्गहमिच्छे ६ तर ७, अट्ठमए अन्नतित्थी य ८ ॥

इति गाथोक्ताः प्रष्टव्याः । एते च मासकल्पप्रकृते ग्लानद्वारे व्याख्यास्यन्ते । एतेषां च प्रच्छने इयं यतना-वैद्यस्य समीपे एकः प्रच्छको न गच्छति, मा 'यमदण्ड आगतः' इति निमित्तं ग्रहीत्; द्वावपि न व्रजतः, 'यमदूतावेतौ' इति मननात्; आदिशब्दात् चत्वारोऽपि न व्रजन्ति, 'नीहरणकारिण एते' इति कृत्वा; यत एवं ततस्त्रयः पञ्च वा गच्छन्ति इत्यादिको विधिस्तावद् ज्ञेयो यावत् 'किमस्मिन् रोगे प्रतिकर्त्तव्यम् ?' इति पृष्टः सन् स वैद्यश्चतुष्कोपदेशं दद्यात् । तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावतश्च । एते च ग्लानद्वार एव व्याख्यास्यन्ते । इह पुनर्द्रव्यतः प्रलम्बानि, पुरुषाश्च त्रयः 'आचार्यादयः' आचार्योपाध्याय-भिक्षुरूपा द्रष्टव्या इति । तत्र वैद्यः पृष्टः कदाचिदेवमभिदध्यात्-यादृशं रोगं यूयं कथयत ईदृशस्योपशमनार्थमिदं वनस्पतिजातं ग्लानस्य दातव्यम् ॥ स च वनस्पतिर्यो यस्य रोगस्योपशमनाय प्रभवति तद्विषयं तमभिधित्सुराह-

[भा.१०२९] पउमुप्पले माउलिंगे, एरंडे चेव निंबपत्ते य ।
पित्तुदय सन्निवाए, वायक्कोवे य सिंभे य ॥

वृ-पित्तोदये पद्मोत्पलमौषधम्, सन्निपाते 'मातुलिङ्गं' बीजपूरकम्, वातप्रकोपे एरण्डपत्राणि

''सिंभे''त्ति श्लेष्मोदये निम्बपत्राणि ।। अथ यदुक्तं ''तिन्नि य पुरिसाऽऽयरियमाइ'' त्ति तदेतद् भावयति-

[भा.१०३०] गणि-वसभ-गीत-परिणामगा य जाणंति जं जहा दव्वं ।
इयरे सिं वाउलणा, नायम्मि य भंडि-पोउवमा ।।

वृ- योऽसौ ग्लानः स गणी-आचार्यो वृषभः-उपाध्यायो भिक्षुश्चेति त्रयः पुरुषाः । अत्र भिक्षुर्द्विधा-गीतार्थोऽगीतार्थश्च, परिणामकोऽपरिणामको वा । तत्र गणि-वृषभ-गीतार्थभिक्षूणां त्रयाणां पुरुषाणां प्राशुकैषणीयेन द्रव्येणाऽऽलेपनादि कर्त्तव्यम्; यदा प्राशुकमेषणीयं वा न प्राप्यते तदा तदितरेणापि कर्त्तव्यम् । एतेषां च यद् यथा गृहीतं तत् तथैव निवेद्यते, निवेदिते च ते तथैवागमप्रामाण्येन सचित्तमचित्तं वा शुद्धमशुद्धं वा द्रव्यं यद् यस्मिन्नवसरे कल्पते तद् यथावद् जानन्ति । यस्त्वगीतार्थ परं पारिणामिकः सोऽपि यद् यथा क्रियते तत् तथैव परिणामकत्वात् कथितं सद् जानीते । 'इतरे' अपरिणामकाः सन्तो येऽगीतार्थास्तेषां न कथ्यते, यथा 'अप्राशुकमनेषणीयं वा गृहीतम्' किन्तु तेषां व्याकुलना क्रियते, यथा 'अमुकगृहादात्मार्थं कृतमानीतमिदम्' । अथ कथमपि तैर्ज्ञातं यथा 'एतदप्राशुकमनेषणीयं वा' ततो ज्ञाते सति भण्डी-गन्त्री पोतः-प्रवहणं तदुपमा कर्त्तव्या । यथा-

जा एगदेसे अदढा उ भंडी, सीलप्पए सा उ करेति कज्जं ।
जा दुब्बला सीलविया वि संती, न तं तु सीलेंति विसिन्नदारुं ।।

'शीलाप्यते' समारच्यते इत्यर्थः । तथा-

जो एगदेसे अदढो उ पोतो, सीलप्पए सो उ करेइ कज्जं ।
जो दुब्बलो सीलविओ वि संतो, न तं तु सीलेंति विसिन्नदारुं ।।

एवं त्वमपि यदि जानीषे-'अहं प्रगुणीभविष्यामि, प्रगुणीभूतश्च प्रायश्चित्तं वोढास्मि, अपरं च स्वाध्याय-वैयावृत्य-तपःप्रभृतिभिरधिकं लाभमुपार्जयिष्यामि' इति तत इदं प्रतिसेवस्व अकल्पनीयम्; अथैतेषामसमर्थस्ततो मा प्रतिसेवस्वेति ।। गतं वैद्यप्रच्छन-यतनापुरुषलक्षणं द्वारत्रयम् । अथ लिङ्गादीनि सर्वाण्यपि द्वाराणि गाथाद्वयेन भावयति-

[भा.१०३१] सो पुन आलेवो वा, हवेज्ज आहारिमं व मिस्सियरं ।
पुव्वं तु पिट्ठगहणं, विगरण जं पुव्वछिन्नं वा ।।

वृ- यो वनस्पतिभेदो व्रणादौ पित्तोदयादौ वा उपयुज्यते स पुनरालेपो वा स्यात्, बहिःपिण्डीप्रदानादिक इत्यर्थः, 'आहारिमं वा' बीजपूरादिकम् । तच्चोभयमपि प्रथमतोऽचित्तम्, तदलाभे मिश्रम्, तस्याप्यभावे 'इतरत्' सचित्तम् । अथवा 'मिश्रं' नाम यद् आलेप आहारयितव्यं च भवति, 'इतरत्' नाम यन्नालेपो नाहारयितव्यम् । तच्च स्पर्शेन स्पर्शनीयं वा स्यात् पद्मोत्पलवद्, नासिकया आघ्रातव्यं वा भवेत् पुष्पादिवत् । एतावता द्रव्यग्रहणद्वारं व्याख्यातम् । अथ पिष्टापिष्टद्वारम्-तत्राऽऽलेपादिकं सर्वमपि यत् पूर्वपिष्टं लभ्यते तस्य ग्रहणं कर्त्तव्यम्, पूर्वपिष्टस्यालाभे तृतीयेनापि भङ्गेन, तस्याप्यलाभे द्वितीयेन, तस्याप्यसति प्रथमभङ्गेन यत् पूर्वच्छिन्नं तद् विकरणं कृत्वा ग्राह्यम्, विविधम्-अनेकप्रकारं करणं-खण्डनं यस्य तद् विकरणम्, तत् तादृशं चानीय पेषणीयम् । एतेन च यदधस्तादुक्तं ''इयरे गहणं कहं होज्जा'' इति तद् एवं भवेदिति प्रतिपत्तव्यम् ।।

[भा.१०३२]भावियकुलेसु गहणं, तेसऽसति सलिंगे गेण्हमाऽवन्नो ।
विकरणकरणालोयण, अमुगगिहे पच्चओ गीते ॥

वृ- अथ पूर्वच्छिन्नं न लभ्यते तत आत्मानऽपि च्छिन्दन्ति । तच्च पूर्वच्छिन्नं भावितकुलेषु ग्रहीतव्यम् । तत्र यानि श्राद्धकुलानि माता-पितृसमानानि साधूनामपवादपदेऽप्राशुकादिकं गृह्णतामनुग्राहकारीणि तानि भावितकुलान्युच्यन्ते । तेषामसति यद्यभावितकुलेषु स्वलिङ्गेन गृह्णाति ततो महानवर्णो भवति, अतस्तेषवन्यलिङ्गेन ग्रहीतव्यमिति लिङ्गद्वारमपि व्याख्यातम् । अथवा भावितकुलानामभावे यानि सुप्रज्ञापनीयानि कुलानि तानि प्रज्ञाप्य मार्गयति गृह्णाति च, एषा प्रज्ञापना मन्तव्या । एतानि पुनः प्रथम-द्वितीयभङ्गवर्तीनि प्रलम्बानि यत्र गृहीतानि तत्रैव विकरणानि कृत्वा आनीय गुरुसमीपे आलोचयति अगीतार्थप्रत्ययनिमित्तम्, यथा-अमुकस्य गृहे स्वार्थं कृतानि मया लब्धानीत्येषा आलोचना । यतना तु-सर्वथा पूर्वच्छिन्नानामलाभे स्वयमपि च्छेत्तव्यानि, तानि च प्रथमं परीत्तानि, ततोऽनन्तान्यपि, पूर्वं स्वलिङ्गेन, तत इतरेणापि ॥

एतच्च निर्ग्रन्थानाश्रित्य भणितम् । अथ निर्ग्रन्थीनां विधिमतिदिशन्नाह-

[भा.१०३३] एतेव अमी नियमा निग्गंथीण ।
आमे भिन्नाऽभिन्ने, जाव उ पउमुप्पलाईणि ॥

वृ- एष एव गमो नियमाद् निर्ग्रन्थीनामपि ज्ञातव्यो यावत् पद्मोत्पलादीनि "पउमुप्पल माउलिंगे" इत्यादिगाथां यावत् । एतच्च निर्युक्ति[illegible]कृत्योक्तम्, [illegible]भिन्न तु "अमुगगिहे पच्चओ गीए" त्ति पर्यन्तं द्रष्टव्यम् । नवरं तासामामे प्रलम्बे भिन्ना-ऽभिन्नपदाभ्यां विधिभिन्ना-ऽविधिभिन्नपदसहिताभ्यां षड् भङ्गाः कर्त्तव्याः, ते चानन्तरसूत्रे स्वस्थान एव भावयिष्यन्ते ॥ सूत्रम्-

मू. (३) *कप्पइ निग्गंथाणं पक्के तालपलंबे भिन्ने वा अभिन्ने वा पडिगाहित्तए ॥*

मू. (४) *नो कप्पइ निग्गंथीणं पक्के तालपलंबे अभिन्ने पडिगाहित्तए ॥*

मू. (५) *कप्पइ निग्गंथीणं पक्के तालपलंबे भिन्ने पडिगाहित्तए से वि य विहिभिन्ने नो चेव णं अविहिभिन्ने ॥*

वृ- एतानि त्रीणि सूत्राणि समकमेव व्याख्यायन्ते-कल्पते निर्ग्रन्थानां पक्वं तालप्रलम्बं द्रव्यतो भिन्नं वा अभिन्नं वा प्रतिग्रहीतुम् ३ । नो कल्पते निर्ग्रन्थीनां पक्वं तालप्रलम्बमभिन्नं प्रतिग्रहीतुम् ४ । कल्पते निर्ग्रन्थीनां पक्वं तालप्रलम्बं द्रव्यतो भिन्नं प्रतिग्रहीतुम्, तदपि च 'विधिभिन्नं' विधिना-वक्ष्यमाणलक्षणेन भिन्नं-विदारितम्, नैव 'णं' वाक्यालङ्कारे अविधिभिन्नमिति सूत्रार्थः ५ ॥ अथ निर्युक्तिविस्तरः-

[भा.१०३४] नामं ठवणा पक्कं, दव्वे भावे य होइ नायव्वं ।
उस्सेइमाइ तं चिय, पक्किंधणजोगतो पक्कं ॥

वृ- नामपक्वं स्थापनापक्वं द्रव्यपक्वं च भवति ज्ञातव्यम् । तत्र नाम-स्थापने गतार्थे । द्रव्यपक्वं तदेवोत्स्वेदिमादिकं यद् आमं भणितम् । किमुक्तं भवति ?-यद् द्रव्यामं उत्स्वेदिम-संस्वेदिमोपस्कृतपर्यायामभेदात् चतुर्द्धा भणितम् तदेव यदा इन्धनसंयोगात् पक्वमुपजायते तदा द्रव्यपक्वं मन्तव्यम् ॥ गतं द्रव्यपक्वम् । भावपक्वमाह-

[भा.१०३५] संजम-चरित्तजोगा, उग्गमसोही य भावपक्कं तु ।
अन्नो वि य आएसो, निरुवक्कमजीवमरणं तु ॥

वृ- संयमयोगाः-प्रत्युपेक्षणादयश्चारित्रं च मूलोत्तरगुणरूपं सुविशुद्धं भावपक्व मुच्यते। गाथायां बन्धानुलोम्येन चारित्रशब्दस्य व्यत्यासेन निर्देशः । यद्वा या उद्गमादीनां दोषाणां शुद्धिस्तद् भावपक्वम् । अन्योऽप्यादेशो वर्त्तते-येन यद् आयुष्कं निर्वर्तितं तत् सर्वमनुपाल्य म्रियमाणस्य निरुपक्रमायुर्जीवस्य यद् मरणं तद् भावपक्वम् । अत्र च द्रव्यपक्वेणाधिकारः, तत्रापि पर्यायपक्वेण, तत्रापि वृक्षपर्यायपक्वेणेति ॥ गतं पक्वपदम् । अथ भिन्ना-ऽभिन्नपदे व्याचष्टे-

[भा.१०३६] पक्के भिन्ना-ऽभिन्ने, समणाण वि दोसो किं तु समणीणं ।
समणे लहुओ मासो, विकडुभमाई य ते चेव ॥

वृ- 'पक्कं' यद् निर्जीवं तद् द्रव्यतो भिन्नं वा स्यादभिन्नं वा, तत्रोभयेऽपि श्रमणानामपि दोषो भवति 'किं तु' किं पुनः श्रमणीनाम् ? । श्रमणा यदि गृह्णन्ति ततो मासलघु द्वाभ्यामपि तपः-कालाभ्यां लघुकम्, विकटुभ-पलिमन्थादयश्च त एव दोषाः ॥ इदमेव स्फुटतरमाह-

[भा.१०३७] आणादि रसपसंगा, दोसा ते चेव जे पढमसुत्ते ।
इह पुनसुत्तनिवाओ, ततिय-चउत्थेसु भंगेसु ॥

वृ- आज्ञादयो रसप्रसङ्गादयश्च दोषास्त एव पक्वप्रलम्बग्रहणेऽपि भवन्ति ये प्रथमसूत्रे अभिहिताः । यद्येवं ततः सूत्रमपार्थकमित्याह-इह पुनः सूत्रनिपातस्तृतीय-चतुर्थयोर्भङ्गयोर्भवति, भावतो भिन्नमिति कृत्वा तृतीय-चतुर्थरूपं भङ्गद्वयमधिकृत्य सूत्रं प्रवृत्तमिति भावः ॥

[भा.१०३८] एमेव संजईण वि, विकडुभ-पलिमंथमाइया दोसा ।
कम्माईया य तहा, अविभिन्ने अविहिभिन्ने य ॥

वृ- एवमेव संयतीनामपि विकटुभ-पलिमन्थादयो दोषाः । तथा अविभिन्नेऽविधिभिन्ने च प्रलम्बे हस्तकर्मादयः सविशेषा दोषा मन्तव्याः, अतस्तासां विधिभिन्नमेव कल्पते नाविधिभिन्नम्॥ अत्र च षड्भङ्गीमाह-

[भा.१०३९] विहि-अविहीभिन्नम्मि य, समणीणं होंतिमे उ छ ब्भंगा ।
पढमं दोहि अभिन्नं, अविहि-विही दव्व बिइ-तइए ॥

वृ- ''से वि य विहिभिन्ने नो चेव णं अविहिभिन्ने'' इत्यत्र श्रमणीनां सूत्रे इमे षड् भङ्गा भवन्ति । ''पढमं'' इत्यादि, प्रथमं 'द्वाभ्यामपि' भावतोऽपि द्रव्यतोऽप्यभिनन्म्, द्वितीयं भावतोऽभिन्नं द्रव्यतोऽविधिभिन्नम्, तृतीयं भावतोऽभिन्नं द्रव्यतो विधिभिन्नम् ॥

[भा.१०४०] एमेव भावतो वि य, भिन्ने तत्थेक्क दव्वओ अभिन्नं ।
पंचम-छट्ठे दोहि वि, नवरं पुन पंचमे अविही ॥

वृ- एवमेव भावतो भिन्नेऽपि भङ्गत्रयम् । तत्रैकं चतुर्थं भावतो भिन्नं द्रव्यतोऽभिन्नम्, पञ्चमषष्ठौ भङ्गौ द्वाभ्यामपि भिन्नौ, 'नवरं' केवलं पञ्चमेऽविधिभिन्नम्, भावतो भिन्नं द्रव्यतोऽविधिभिन्नमिति भावः । अर्थादापन्नं षष्ठे भावतो भिन्नं द्रव्यतो विधिभिन्नमिति ॥

अथ षट्स्वपि भङ्गेषु यथाक्रमं प्रायश्चित्तमाह-

[भा.१०४१] लहुगा तीसु परित्ते, लहुओ मासो उ तीसु भंगेसु ।

गुरुगा होंति अनंते, पच्छित्ता संजईणं तु ॥

वृ- आद्येषु त्रिषु भङ्गेषु परीत्तवनस्पतौ चत्वारो लघुकाः प्राग्वत् तपः-कालविशेषिताः, भावतोऽभिन्नत्वात् । उत्तरेषु त्रिषु भङ्गेषु परीत्तवनस्पतावेव लघुको मासस्तपः-कालविशेषितः प्राग्वत्, भावतो भिन्नत्वात् । अनन्तवनस्पतौ तु त एव गुरुकाः कर्त्तव्याः, चत्वारो गुरवो गुरुमासाश्चेति भावः । इत्थं षट्स्वपि भङ्गेषु संयतीनां प्रायश्चित्तानि द्रष्टव्यानि ॥ अथ हस्तकर्मसम्भवा-ऽसम्भवौ चेतसि व्यवस्थाप्य प्रकारान्तरेणात्रैव प्रायश्चित्तमाह-

[भा.१०४२]अहवा गुरुगा गुरुगा, लहुगा गुरुगा य पंचमे गुरुगा ।
छट्ठम्मि हवति लहुतो, लहुगत्थाणे गुरूऽणंते ॥

वृ- अथवा प्रथमे भङ्गे गुरुकाः, अभिन्नत्वात् । द्वितीयेऽपि गुरुकाः, अविधिभिन्नत्वात् । तृतीये लघुकाः, विधिभिन्नत्वात् । चतुर्थे गुरुकाः, अभिन्नत्वात् । पञ्चमेऽपि गुरुकाः, अविधिभिन्नत्वात् । षष्ठे लघुको मासः, विधिभिन्नत्वात् । एतच्च परीत्ते भणितम् । अनन्ते तु लघुकस्थाने गुरुकम्, यत्र चतुर्लघवस्तत्र चतुर्गुरवो यत्र लघुमासस्तत्र गुरुमास इत्यर्थः ॥

[भा.१०४३]आयरिओ पवत्तिणीए, पवित्तिणी भिक्खुणी न कहेइ ।
गुरुगा लहुगा लहुओ, तत्थ वि आणाइणो दोसा ॥

वृ- एतत् प्रलम्बसूत्रमाचार्य प्रवर्त्तिन्या न कथयति चत्वारो गुरवः । प्रवर्त्तिनी भिक्षुणीनां न कथयति चत्वारो लघवः । यदि भिक्षुण्यो न शृण्वन्ति ततो लघुमासः । 'तत्रापि' अकथनेऽश्रवणे वा आज्ञादयो दोषाः ॥

[भा.१०४४] गेण्हंतीणं गुरुगा, पवत्तिणीए पवत्तिणी जइ वा ।
न सुणेती गुरुगाती, मासलहू भिक्खुणी जाव ॥

वृ- यदि भिक्षुणीनां प्रलम्बं गृह्णतीनां प्रवर्त्तिनी सारणादिकं न करोति तदा प्रवर्त्तिन्याश्चत्वारो गुरवः । प्रवर्त्तिनी यद्याचार्याणां कथयतां न शृणोति तदा चत्वारो गुरवः । प्रवर्त्तिन्याः पार्श्वे गणावच्छेदिनी न शृणोति चत्वारो लघवः । अभिषेका न शृणोति मासगुरु । भिक्षुणी न शृणोति मासलघु ॥ अथ निर्ग्रन्थीरधिकृत्य द्वारगाथामाह-

[भा.१०४५]अभिन्ने महव्वयपुच्छा, मिच्छत्त विराधना य देवीए ।
किं पुण ता दुविहाओ, भुत्तभोगी अभुत्ता य ॥

वृ- अभिन्ने महाव्रतपृच्छया कर्त्तव्या । तथा अङ्गादानसदृशमभिन्नं प्रलम्बं गृह्णतीं निर्ग्रन्थीं दृष्ट्वा कश्चिद् मिथ्यात्वं व्रजेत्-यदेषा अङ्गादानाकारमेवंविधं फलं गृह्णाति तद् नूनमेतेषां तीर्थकृता नैष दोषो दृष्टः, असर्वज्ञ एवामीषां गुरुरित्यादि । विराधना भवेत् । तत्र च देव्या दृष्टान्तो वक्तव्यः । यदि च तस्या अपि देव्याः प्रतिसेवनाकौतुकं समजनि किं पुनः श्रमणीनाम् ? इति वक्तव्यम् । ताश्च श्रमण्यो द्विविधाः-भुक्तभोगिन्योऽभुक्तभोगिन्यश्चेति समासार्थः ॥ अथ विस्तरार्थोऽभिधीयते-तत्र प्रथममभिन्ने महाव्रतपृच्छाद्वारम्, शिष्यः पृच्छति- निर्ग्रन्थानां भिन्नमभिन्नं वा पक्वं कल्पते, निर्ग्रन्थीनां पुनर्भिन्नमेव कल्पते नाभिन्नम् तदपि विधिभिन्नमित्यत्र यथा भेदस्तथा किमेवं महाव्रतेष्वपि तासां भेदः ?; यथा किल तच्चन्निकानां मते भिक्षूणामर्द्धतृतीयानि शिक्षापदशतानि भिक्षुणीनां पञ्च शिक्षापदशतानि, एवं किं निर्ग्रन्थीनामपि षण्महाव्रतानि दश

वा येनैवमभिधीयते ? उच्यते-

**[भा.१०४६]** न वि छम्महव्वया नेव दुगुणिया जह उ भिक्खुणीवग्गे ।
बंभवयरक्खणट्ठा, न कप्पती तं तु समणीणं ।।

**वृ**-नापि निर्ग्रन्थीनां षड् महाव्रतानि, नैव साधूनां सम्बन्धिभ्यः पञ्च महाव्रतेभ्यः 'द्विगुणितानि' दशेत्यर्थः, यथा सौगतानां मते भिक्षुणीवर्गे द्विगुणानि शिक्षापदानि भवन्ति न तथाऽत्रकिन्तु पञ्चेवेति भावः । यद्येवं तर्हि किमर्थमत्र निर्ग्रन्थीनामभिन्नं न कल्पते ? उच्यते-ब्रह्मव्रतरक्षणार्थं 'तत्तु' अभिन्नं श्रमणीनां न कल्पते, मा करकर्मादिकमनेन कार्षुरिति कृत्वा ।।

न केवलमत्रैव प्रलम्बे श्रमणीनां विशेषः किन्त्वन्यत्रापीति दर्शयति-

**[भा.१०४७]** अन्नत्थ वि जत्थ भवे, एगयरे मेहुणुब्भवो तं तु ।
तस्सेव उ पडिकुट्ठं, बिइयस्सऽन्नेण दोसेणं ।।

**वृ**- अन्यत्रापि यत्र भुक्ते स्पृष्टे वा ''एगयरे'' इति षष्ठी-सप्तम्योरर्थ प्रत्यभेदात् 'एकतरस्य' साधुपक्षस्य साध्वीपक्षस्य वा मैथुनौद्भवो भवति 'तत्तु' वस्तु 'तस्यैव' विवक्षितपक्षस्य, तुशब्दो मैथुनोद्भवदोषपरिहारार्थमित्यस्यार्थस्य सूचनार्थ, 'प्रतिक्रुष्टं' प्रतिषिद्धम् । द्वितीयस्य तु पक्षस्य तदेव 'अन्येन' असंयमलक्षणेन दोषेण प्रतिषिध्यते ।। निदर्शनमाह-

**[भा.१०४८]** निल्लोम-सलोमऽजिने, दारुगदंडे सवेंट पाए य ।
बंभवयरक्खणट्ठा, वीसुं वीसुं कया सुत्ता ।।

**वृ**- यथा निर्ग्रन्थानां निर्लोमाजिनं स्मृतिकरण-कौतुकादिदोषपरिहारार्थं प्रतिषिद्धम्, निर्ग्रन्थीनां पुनः प्राणिदयानिमित्तमतिरिक्तोपधिभारपरिहारार्थं च तदेव प्रतिषिध्यते; एवं सलोमाजिनं निर्ग्रन्थीनां स्मृतिकरणादिदोषनिवारणार्थम्, निर्ग्रन्थीनां पुनस्तदेव प्राणिदयानिमित्तं प्रतिषिद्धम् । दारुदण्डकं पादप्रोञ्छनं सवृन्तपात्रं च च निर्ग्रन्थीनां ब्रह्मव्रतानुपालनार्थं निर्ग्रन्थानां पुनरतिरिक्तोपधिदोषपरिहरणार्थं नानाज्ञातम् । एवं ब्रह्मव्रतरक्षणार्थं निर्ग्रन्थानां निर्ग्रन्थीनां च 'विष्वग् विष्वक्' पृथक् पृथक् सूत्राणि कृतानि ।। आह कर्मोदयादेव प्राणिनां मैथुनोद्भवो भवति, ततः किमेवं सलोमादिपरिहारः क्रियते ? उच्यते-

**[भा.१०४९]** नत्थि अनिदानओ होइ उब्भवो तेन परिहर निदानं ।
ते पुन तुल्ला-ऽतुल्ला, मोहनिदाणा दुपक्खे वि ।।

**वृ**- निदानं कारणमित्येकोऽर्थः, तच्चेहेष्टशब्द-रूप-रस-गन्ध-स्पर्शात्मकं यत् प्रतीत्य पुरुषवेदादिमोहनीयमुदयमासादयति । तदुक्तम्-

दव्वं खेत्तं कालं, भावं च भवं तहा समासज्ज ।
तस्स समासुद्दिट्ठो, उदओ कम्मस्स पंचविहो ।।

ततश्च 'नास्ति' न विद्यते एतद् यद् 'अनिदानकः' निदानमन्तरेण मोहनीयोद्भवो भवति, 'तेन' कारणेन परिहर 'निदानम्' इष्टशब्दादिरूपम् । 'ते पुनः' शब्दादयो मोहनिदानभूता द्वयोः पक्षयोः समाहारो द्विपक्षं-पुरुषवर्गद्वयं तस्मिन् द्विपक्षेऽपि मोहोद्भवं प्रति केचित् तुल्याः केचित् त्वतुल्याः ।। तानेवाह-

**[भा.१०५०]** रस-गंधा तहि तुल्ला, सद्दाई सेस भय दुपक्खे वि ।

सरिसे वि होइ दोसो, किं पुन ता विसम वत्थुम्मि ॥

वृ- स्त्रीणां पुरुषाणां च 'तत्र' मोहोद्भवे रस-गन्धास्तुल्याः । किमुक्तं भवति ? -यथा स्निग्ध-मधुरादिरसैः स्रक्-चन्दनादिगन्धैश्च पुरुषाणामिन्द्रियाणि मोहोद्रेकभाञ्जि भवन्ति तथा अङ्गनानामपि मोहोद्भवं प्रति रस-गन्धास्तुल्याः । 'शेषान्' शब्द-रूप-स्पर्शान् 'भज' विकल्पय 'द्विपक्षेऽपि' उभयपक्षयोरपि । यतः पुरुषस्य पुरुषसम्बन्धिनि शब्दे श्रुते रूपे दृष्टे स्पर्शे च स्पृष्टे मोहोदयो भवेद् वा न वा, यदि भवेन्न तादृशस्तीव्रः, स्त्रसम्बन्धिनि तु प्रायो भवत्येव तीव्रश्च जायते; स्त्रियास्तु स्त्रिसम्बन्धिषु शब्द-रूप-स्पर्शेषु गोचरमुपागतेषु मोहोद्रेको भवेद् वा न वा, यदि भवेन्न तादृशस्तीव्रः, पुरुषसम्बन्धिषु तु प्रायो भवत्येव तीव्रश्च भवति । तदेवं सदृशेऽपि स्पर्शादौ वस्तुनि दोषो भवति, किं पुनस्तावद् 'विषमे' विसदृशे वस्तुनि ? इति । यतश्चैवमतः सलोम-निर्लोमादीन्यतुल्यनिदानानि विशेषतः परिहियन्ते; अत एव चात्राभिन्नमविधिभिन्नं च न कल्पते ॥ गतमभिन्ने महाव्रतपृच्छेति द्वारम् । मिथ्यात्वद्वारं तु सुबोधत्वाद् भाष्यकृता न भावितम् । अथ विराधनाद्वारम्-अभिन्नं गृह्णतीनां निर्ग्रन्थीनामात्मनो ब्रह्मव्रतस्य वा विराधना भवेत् । अत्र च देव्या दृष्टान्तः । तमेवाह-

[भा.१०५१] चीयत्त कक्कडी कोउ कंटक विसप्प समिय सत्थे च ।
पुनरवि निवेस फाडण, किमु समणि निरोह भुत्तितरा ॥

वृ- एगस्स रन्नो महादेवी । तीसे कक्कडियाओ पियाओ । ताओ अ एगो निउत्तपुरिसो दिने दिने आनेति । अन्नया तेन पुरिसेन अहापवित्तीए अंगादानसंठिया कक्कडिया आनिता । तीसे देवीए तं कक्कडियं पासेत्ता कोतुयं जायं-पेच्छामि ताव केरिसो फासो त्ति एयाए पडिसेवियाए ? ताहे ताए सा कक्कडिया पादे बंधिउं सागारियट्ठाणं पडिसेविउमाढत्ता । तीसे कक्कडियाए कंटओ आसी, सो तम्मि सागारिए लग्गो । विसप्पियं च तं । ताहे वेज्जस्स सिट्ठं । ताहे वेज्जेणं समिया मद्दिया, तत्थ निवेसाविया, उड्डवेत्ता सुसियप्पदेसं चिंधियं । तम्मि पदेसे तीए अपेच्छमाणीए सत्थयं उप्परामुहधारं खोहियं । पुणो तेनेवागारेण निवेसाविया । फोडियं । पूएण समं निग्गओ कंटओ । पउणा जाया । जति ताव तीसे देवीए दंडिएण पडिसेविज्जमाणीए कोउयं जायं, किमंग पुन समणीणं निच्चणिरुद्धाण भुत्तभोगीणं अभुत्तभोगीण य ? ॥

अथ गाथाक्षरार्थ-राज्ञः कस्यचिद् देव्याः कर्कटिकाः "चीयत्ता" इति प्रीतिकराः, रुच्या इत्यर्थः । अङ्गादानाकारं च कर्कटिकां दृष्ट्वा कौतुकमुत्पन्नम् । ततः प्रतिसेवमानायास्तस्याः कण्टकः सागारिके लग्नः । विसर्पितं च तत् सागारिकम् । ततो वैद्येन 'समिता' कणिक्का तस्यां मर्दितायां निवेशिता । ततः शुष्कप्रदेशे शस्त्रकं प्रक्षिप्तम् । ततः पुनरपि तथैव निवेश्य तेन शस्त्रकेण सागारिकस्य पाटने कृते पूयेन समं कण्टके निर्गते प्रगुणीकृता । यदि तस्या अप्येवंविधं कौतुकमजनिष्ट, किं पुनः श्रमणीनां नित्यनिरोधानां भुक्तानाम् 'इतरासां वा' अभुक्तानाम् ॥

इदमेव स्पष्टयन्नाह-

[भा.१०५२] कसिणाऽविहिभिन्नम्मि य, गुरुगा भुत्ताण होइ सइकरणं ।
इयरासि कोउगाई, घिप्पंते जं चउ उड्डाहो ॥

वृ- कृत्स्नम्-अभिन्नं तत्र अविधिभिन्ने च श्रमणीनां चत्वारो गुरुकाः, भुक्तभोगिनीनां

स्मृतिकरणम् इतरासां कौतुकादयो दोषा भवन्ति । तस्मिंश्चाङ्गादानाकारे गृह्यमाणे यश्चोड्डाहो भवति यथा 'नूनमेतेनैषा पादकर्म करिष्यति' तन्निष्पन्नमपि प्रायश्चित्तम् ॥

तेन च प्रलम्बेन सा पादकर्म कृत्वा चिन्तयति-

[भा.१०५३] जइ ताव पलंबाणं, सहत्थणुन्नाण एरिसो फासो ।
किं पुन गाढालिंगन, इयरम्मि उ निद्दओच्छुद्धे ॥

वृ-यदि तावत् प्रलम्बानां स्वहस्तेन नुन्नानां-"नुदंत् प्रेरणे" प्रेरितानामित्यर्थः ईदृशः स्पर्श, किं पुनर्गाढालिङ्गनेन 'इतरस्मिन्' अङ्गादाने पुरिषेण "निद्दओच्छुद्धे" त्ति निर्दयं यथा भवत्येवम् उत्-प्राबल्येन क्षिप्ते सति स्पर्शो भविष्यति ? इति ॥

ततश्चेत्थं विचिन्त्योदीर्णप्रबलमोहनीयकर्मा सा इदं कुर्यात्-

[भा.१०५४]पडिगमणमन्नतित्थिग, सिद्धे संजय सलिंग हत्थे य ।
वेहानस ओहाने, एमेव अभुत्तभोगी वि ॥

वृ- काचित् पार्श्वस्थादिभ्यः समागता भवेत् साऽपि तत्रैव प्रतिगच्छेत्, अन्यतीर्थिकेन वा सिद्धपुत्रेण वाऽऽत्मानं प्रतिसेवयेत्, संयतं वा उपसर्गयेत, एतानि स्वलिङ्गे स्थिता कुर्यात् । हस्तकर्म वा भूयोभूयः कुर्यात्, यद्वा 'मया व्रतानि भग्नानि' इति कृत्वा 'कथङ्कार वा द्राघीयः कालपरिपालितं शीलरत्नमहं भङ्ग्यामि ?' इति निर्वेददूनमानसा वैहायसं मरणं विदध्यात्, अथवा प्रबलमोहपरवशा अवधावनं विदध्यात् । एतानि पदानि भुक्तभोगिनी कुर्यात् । अभुक्तभोगिन्यप्येवमेव कुर्यात् ॥ शिष्यः प्रश्नयति-न जानीमहे वयं कीदृशमविधिभिन्नम् ? कीदृशं वा विधिभिन्नम् ? इति । सूरिराह-

[भा.१०५५]भिन्नस्स परूवणया, उज्जुत तह चक्कली विसमकोट्टे ।
ते चेव अविहिभिन्ने, अभिन्ने जे वन्निया दोसा ॥

वृ- असंयमदोषनिवर्त्तनार्थमविधिना विधिना च भिन्नस्य प्ररूपणा क्रियते । तत्र यत् चिर्भटादिकं विदार्य ऊर्ध्वफालिरूपाः पेश्यः कृतं तद् ऋजुकभिन्नम्, यत् पुनस्तिर्यग् बृहत्यः कलिकाः कृतं तत् चक्कलिकाभिन्नम्, एते द्वे अप्यविधिभिन्ने मन्तव्ये । यत् तु पेश्यः कृत्वा पुनः श्लक्ष्णश्लक्ष्णतरादिभिः खण्डैरनेकशश्छित्वा तथा कृतं यथा भूयस्तदाकारं कर्तुं न पार्यते तदेवंविधं विषमकुट्टभिन्नमुच्यते, विषमैः-पुनस्तथाकर्तुमशक्यैः कुट्टैः-श्लक्ष्णखण्डैर्भिन्नमिति व्युत्पत्तेः । एतच्च विधिभिन्नम् । अत्र चाविधिभिन्ने त एव दोषा द्रष्टव्या येऽभिन्ने देवीदृष्टान्तेन वर्णिताः ॥ कथम् ? इति चेद् उच्यते-

[भा.१०५६] कट्ठेण व सुत्तेण व, संदानिते अविहिभिन्ने ते चेव ।
सविसेसतर व्व भवे, वेउव्वियभुत्तइत्थीणं ॥

वृ- 'काष्ठेन वा' शलाकादिना 'सूत्रेण वा' दवरकादिना 'सन्दानिते' सङ्घातिते पूर्वाकारं स्थापिते इत्यर्थः, अविधिभिन्ने त एव दोषा ज्ञातव्या येऽभिन्ने भणिताः । सविशेषतरा वा भवेयुः, कथम् ? इत्याह-'विकुर्वितं' वेण्टकाद्याभरणेनालङ्कृतं यदङ्गादानं तेन याः स्त्रियो भुक्तपूर्वास्तासां प्रव्रजितानां तत्र काष्ठादिसन्दानितप्रलम्बे विकुर्विताङ्गादानकल्पे दृष्टे समधिकतरा दोषा उपढौकन्ते ॥

अथार्थतः कारणिकं सूत्रमुपदर्शयन्नाह-

[भा.१०५७]विहिभिन्नं पि न कप्पइ, लहुओ मासो उ दोस आणाई ।
तं कप्पती नकप्पइ, निरत्थगं कारणं किं तं ॥

वृ- यदपि सूत्रे विधिभिन्नमनुज्ञातं तदपि न कल्पते । यदि गृह्णन्ति ततो मासलघु आज्ञादयश्च दोषाः । आह ननु सूत्रे भणितं 'तद्' विधिभिन्नं कल्पते ? गुरुराह-यद्यपि सूत्रे अनुज्ञातं तथापि न कल्पते । यद्येवं तर्हि निरर्थकं सूत्रम्, नैवम्, कारणिकं सूत्रम् । आह किं पुनः तत् कारणं यदद्यापि नाभिधीयते ? ॥ उच्यते, ब्रूमः-

[भा.१०५८]　गेलन्नऽद्धाणोमे, तिविहं पुन कारणं समासेणं ।
गेलन्ने पुव्वुत्तं, अद्धाणुवरिं इमं ओमे ॥

वृ- ग्लानत्वम् अध्वा अवमौदर्यम्, एतत् 'समासेन' सङ्क्षेपेण त्रिविधं कारणम् । तत्र ग्लानत्वे इहैव प्रलम्बप्रकृते "विज्जे पुच्छण जयणा" इत्यादि पूर्वोक्तं द्रष्टव्यम् । अध्वनि तु 'उपरि' अध्वसूत्रे इहैवोद्देशके भणिष्यते । 'इदम्' अनन्तरमेव वक्ष्यमाणम् अवमे द्रष्टव्यम् ॥

[भा.१०५९]　निग्गंथीणं भिन्नं, निग्गंथाणं च भिन्नऽभिन्नं तु ।
जह कप्पइ दोण्हं पी, तमहं वोच्छं समासेणं ॥

वृ- निर्ग्रन्थीनां नियमाद् विधिना षष्ठे भङ्गे भिन्नम्, निर्ग्रन्थानां च चतुर्थ-तृतीययोर्भङ्ग-योर्भिन्नमभिन्नं वा, यथा द्वयोरपि वर्गयोः कल्पते तदहं वक्ष्ये समासेन ॥ यथाप्रतिज्ञातमेव निर्वाहयति-

[भा.१०६०] ओमम्मि तोसलीए, दोण्ह वि वग्गाण दोसु खेत्तेसु ।
जयणट्ठियाण गहणं, भिन्नाऽभिन्नं व जयणाए ॥

वृ- अवमकाले साधवः साध्व्यश्च तोसलिविषयं गत्वा स्थिताः । तत्र द्वावपि वर्गौ द्वयोः क्षेत्रयोः स्थितौ, एकस्मिन् क्षेत्रे संयता द्वितीयस्मिन् संयत्य इत्यर्थः । तथा यदुत्सर्गत एकत्र क्षेत्रे मिलितौ नावतिष्ठेते एषैव यतना तया स्थितौ यतनास्थितौ, यद्वा साधु-साध्वीप्रायोग्यं विधिं ग्राहयित्वा यौ स्थितौ तौ यतनास्थितौ, तयोरेवंस्थितयोः 'यतनया' वक्ष्यमाणया भिन्नस्याभिन्नस्य वा ग्रहणं कल्पते ॥ आह कोऽयं नियमो येन तोसलेरेव ग्रहणं कृतम् ? उच्यते-

[भा.१०६१] आनुग जंगल देसे, वासेण विला वि तोसलिग्गहणं ।
पायं च तत्थ वासति, पउरपलंबो उ अन्नो वि ॥

वृ- देशो द्विधा-अनूपो जङ्गलश्च । नद्यादिपानीयबहुलोऽनूपः, तद्विपरीतो जङ्गलः निर्जल इत्यर्थः । यद्वा अनूपो अजङ्गल इति पर्यायौ । तत्रायं तोसलिदेशो यतोऽनूपो यतश्चास्मिन् देशे वर्षेण विनाऽपि सारणीपानीयैः सस्यनिष्पत्तिः; अपरं च 'तत्र' तोसलिदेशे 'प्रायः' बाहुल्येन वर्षति ततोऽतिपानीयेन विनष्टेषु सस्येषु प्रलम्बोपभोगो भवति; अन्यच्च तोसलि प्रचुरप्रलम्बः, तत एतैः ,कारणैस्तोसलिग्रहणं कृतम् । अन्योऽपि य ईदृशः प्रचुरप्रलम्बस्तत्राप्येष एव विधि ॥

[भा.१०६२] पुच्छ सहु-भीयपरिसे, चउभंगे पढमए अणुन्नाओ ।
सेस तिए नाणुन्ना, गुरुगा परियट्टणे जं च ॥

वृ- "पुच्छ" त्ति शिष्यः पृच्छति-यदुक्तंभवद्भि 'द्वयोर्वर्गयोः क्षेत्रद्वये स्थितयोः' इत्यादि तत्र संयतीनां पृथक्क्षेत्रे स्थितानां व्यापारो वोढुं दुःशको भवति, दोषदर्शिनश्च यूयं पृथक्क्षेत्रे

स्थापयथ, यतश्च दोषाः समुत्पद्यन्ते तत् प्रेक्षावतां नोपादातुमुचितम्, प्रवचने च तत्र तत्र प्रदेशे संयत्यः प्रव्राजनीया उक्ता एव, अतः पर्यनुयुज्यते किं परिवर्त्तयितव्याः संयत्यः ? उत न ? इति। गुरुराह-नास्त्यत्र कोऽपि नियमो यदवश्यमेव परिवर्त्तयितव्या न वेति, यदि पुनः प्रव्राज्य न्यायतः परिवर्त्तयति ततो महतीं कर्मनिर्जरामासादयति अथान्यायतः परिवर्त्तयति ततो महामोहमपचित्य दीर्घसंसारसम्पातभाग् भवति। तर्हि कीदृशेन परिवर्त्तयितव्या न वेति, यदि पुनः प्रव्राज्य न्यायतः परिवर्त्तयति ततो महतीं कर्मनिर्जरामासादयति, अथान्यायतः परिवर्त्तयति ततो महामोहमुपचित्य दीर्घसंसारसम्पातभाग् भवति। तर्हि कीदृशेन परिवर्त्तयितव्याः? उच्यते-''सहु-भीयपरिसे''त्ति सहिष्णुर्भीतपर्षदिति पदद्वयेन चतुर्भङ्गी, सा चेयम्-सहिष्णुरपि भीतपर्षदपि १, सहिष्णुर्न भीतपरिषत् २, असहिष्णुः परं भीतपरिषद् ३, असहिष्णुरभीतपरिषच्चेति ३। तत्रेन्द्रियनिग्रहसमर्थ संयतीप्रायोग्यक्षेत्र-वस्त्र-पात्रादीनामुत्पादनायां प्रभविष्णुः सहिष्णुरुच्यते। यस्य तु सर्वोऽपि साधु-साध्वीवर्गो भयात्र कामप्यक्रियां करोति स भीतपरिषत्। तत्र प्रथमभङ्गे वर्त्तमानः परिवर्तनायामनुज्ञातः, शेषेषु त्रिषु भङ्गेषु वर्त्तमानो नानुज्ञातः, यदि परिवर्त्तयति तदा चत्वारो गुरुकाः। ''जं च'' ति द्वितीये भङ्गे आत्मना सहिष्णुः परमभीतपरिषत्तया स्वच्छन्दप्रचाराः सत्यो यत् किमपि ताः करिष्यन्ति तत् सर्वमयमेव प्राप्नोति। तृतीयभङ्गे तु स्वयमसहिष्णुतया तासामङ्गप्रत्यङ्गादीनि दृष्ट्वा यदाचरति तन्निष्पन्नम्। चतुर्थे भङ्गे द्वितीयतृतीयभङ्गदोषानवाप्नोतीति॥ प्रथमभङ्गवर्त्तिनमुद्दिश्याह-

[भा.१०६३] जइ पुन पव्वावेती, जावज्जीवाए ताउ पालेइ।
अन्नसति कप्पे वि हु, गुरुगा जं निज्जरा विउला॥

वृ- यदीत्यभ्युपगमे, ततश्चायमर्थ-ताः प्रथमतोऽपि यतस्ततः प्रव्राजयितुं न कल्पन्ते। यदि पुनः प्रव्राजयति ततो यथोक्तविधिना यावज्जीवं ताः पालयति, योग-क्षेमविधानेन सम्यग् निर्वाहयतीत्यर्थः। स प्रथमभङ्गवर्ती यदि जिनकल्पं प्रतिपित्सुः अपरं चाऽऽर्यिकाः परिवर्त्तयितव्याः ततः किं करोतु? इति चिन्तायां यद्यस्ति तदीये गच्छे कोऽप्यार्यिकाणां विधिना वर्त्तापकस्ततस्तस्य समर्प्य जिनकल्पं प्रतिपद्यताम्, अथ नास्त्यन्यो वर्त्तापकस्तर्हि मा जिनकल्पप्रतिपत्तिं करोतु किन्त्वार्यिका एव परिवर्त्तयतु। कुतः? इत्याह-अन्यस्य वर्त्तापकस्य असति-अभावे जिनकल्पेऽपि प्रतिपद्यमाने 'हुः' निश्चये चत्वारो गुरुकाः। आह सकलकर्मक्षयाक्षूणकारणे जिनकल्पेऽपि प्रति-पद्यमाने किमेव प्रायश्चित्तम्? इत्याह-'यद्' यस्मात्कारणाद् जिनकल्पं प्रतिपन्नस्य या निर्जरा तस्याः सकाशाद् विपुला निर्जरा यथावत् संयतीः परिपालयतो भवतीति युक्तियुक्तमेव प्रायश्चित्तम्॥ अथ ''जयणड्डियाण गहणं''ति यदुक्तं तत्र यया यतनया स्थितास्तामाह-

[भा.१०६४] उभयगणी पेहेउं, जहि सुद्धं तत्थ संजती णेति।
असती व जहिं भिन्ना, अभिन्ने अविही इमा जयणा॥

वृ- उभयः-साधु-साध्वीवर्गद्वयरूपो गणोऽस्यास्तीत्युभयगणी, स आचार्योऽवमकाले तोसलिप्रभृतिके प्रचुरप्रलम्बे देशे गत्वा गीतार्थेनाऽऽत्मना वा क्षेत्रद्वयं प्रत्युपेक्ष्य ययोः शुद्धं भक्तं लभ्यते न प्रलम्बमिश्रितमित्यर्थः तयोः क्षेत्रयोः पृथग् द्वावपि वर्गौ स्थापयति। यदि द्वे क्षेत्रे ईदृशे न स्तस्ततो यत्र शुद्धं भक्तं प्राप्यते तत्र संयतीः 'नयति' स्थापयति, यत्र पुनः प्रलम्बमिश्रितं

भक्तं लभ्यते तत्र साध्वीः स्थापयन्ति, स्वयं तु निर्मिश्रप्रलम्बक्षेत्रे तिष्ठन्ति। अथ सर्वेष्वपि क्षेत्रेषु निर्मिश्रप्रलम्बानि प्राप्यन्ते ततः "असइ" त्ति प्रलम्बमिश्रस्याभावे यत्र विधिभिन्नानि प्राप्यन्ते तत्र संयत्यः स्थापनीयाः, स्वयं पुनरभिन्ना-ऽविधिभिन्नक्षेत्रे तिष्ठन्ति। अथ सर्वेष्वपि क्षेत्रेष्वभिन्नान्य-विधिभिन्नानि वा प्राप्यन्ते तत इयं यतना कर्त्तव्या ॥ तामेवाह-

[भा.१०६५]भिन्नाणि देह भित्तूण वा वि असति पुरतो सि भिंदंति।
ठाविंति ताहे समणी, ता चेव जयंति तेसऽसती ॥

वृ- यत्र क्षेत्रे संयतीः स्थापयितुकामास्तत् क्षेत्रं साधवः पूर्वमेवेत्थं भावयन्ति-यदा गृहस्थैः प्रलम्बान्यानीतानि भवन्ति तदा साधवो भणन्ति-यानि भिन्नानि तान्यस्मभ्यं दत्त। अथ न सन्ति भिन्नानि, सन्ति वा परं स्तोकानि, तैश्च संस्तरणं न भवतीति परिभाव्य साधवो भणन्ति- अस्मभ्यमेतानि भित्त्वा प्रयच्छत, न कल्पन्तेऽस्माकमीदृशानीति। अथ ते गृहस्थाः 'यदि रोचते तत ईदृशान्येव गृहीत' इत्युक्त्वा अभिन्नान्येव प्रयच्छन्ति ततः 'असति' अभावे "सिं" ति तेषां गृहस्थानां पुरतस्तानि प्रलम्बानि भिन्दन्ति भित्त्वा च गृह्णन्ति। एवंविधीयमाने गृहस्थानां चेतसि गाढतरं निश्चय उत्पद्यते, यथा-नूनं न कल्पन्ते अमीषामभिन्नानीति, ततस्ते भिन्नान्येव प्रयच्छन्तीति। एवं यदा तत् क्षेत्रं भावितं भवत तदा तत्र श्रमणीः स्थापयन्ति। 'तेषां' संयतानाम् 'असति' अभावे व्यापृतेषु वा तेषु कापि प्रयोजनान्तरे 'ता एव' संयत्यो यास्तत्रस्थविरास्ता एवमेव यतन्ते ॥

[भा.१०६६] भिन्नासति वेलातिक्कमे व गेण्हंति थेरिया भिन्ने।
दारे भित्तु अतिंति व, ठाणासति भिंदती गणिणी ॥

वृ- विधिना भिन्नानामसति, यावद् वा गृहस्थैर्भेदयन्ति आत्मना वा यावत् तत्र भिन्दन्ति तावद् वेलातिक्रमो भवति, ततो याः स्थविरास्ता अभिन्नानि अविधिभिन्नानि वा यास्तु तरुण्यस्ता विधिभिन्नानि गृह्णन्ति। ततः प्रतिनिवृत्ताः स्थविरा अभिन्ना-ऽविधिभिन्नान्युपाश्रयद्वारे भित्त्वा विधिभिन्नानि कृत्वा वसतिम् 'अतियान्ति' प्रविशन्तीत्यर्थः। अथ बहि स्थानं नास्ति ततः स्थानस्य 'असति' अभावे 'गणिनी' प्रवर्त्तिनी तस्यास्तानि समर्प्यन्ते, ततः सा गणिनी तानि 'भिनत्ति' विधिभिन्नानि करोतीत्यर्थः, कृत्वा च तरुणीनां समुद्देष्टुं ददाति ॥ आह किं कारणं तरुणीनां प्रतिग्रहीतुं समुद्देष्टुं वा अभिन्ना-ऽविधिभिन्नानि न दीयन्ते ? उच्यते-

[भा.१०६७] कक्खंतरुक्खवेगच्छियाइसू मा हु नूमए तरुणी।
त भिन्नं छुभति पडग्गहेसु न य दिज्जए सयलं ॥

वृ-कक्षाया अन्तरं कक्षान्तरम्, "उक्खो" त्ति परिधास्त्रैकदेशः, आह च निशीतचूर्णिकृत्-परिधाणवत्थस्स अब्भितरचूलाए उवरिकण्णो नाभिहेट्ठा उक्खो भण्णइ ॥ वैकक्षिकी-संयतीनामुपकरणविशेषः, एतेषु आदिशब्दादन्यस्मिन्नपि वस्त्रान्तरे तरुणी "मा नूमए" त्ति "छदेर्णेर्नुम-नूम०" इति प्राकृतलक्षणाद् मा च्छादयेत्। ततो भिक्षाग्रहणकाले तस्याः प्रतिग्रहेषु भिन्नं प्रक्षिप्यते, न च 'सकलम्' अभिन्नमविधिभिन्नं वा तस्या भोजनकाले दीयते ॥

[भा.१०६८] एवं एसा जयणा, अपरिग्गहिएसु होइ खेत्तेसु।
तिविहेहि परिग्गहिए, इमा उ जयणा तहिं होइ ॥

वृ- एवम् 'एषा' अनन्तरोक्ता यतना अपरिगृहीतेषु क्षेत्रेषु कर्त्तव्या भवति। 'त्रिविधैः'

संयत-संयती-तदुभयैः परिगृहीते "इमा" वक्ष्यमाणा यतना तत्र क्षेत्रे भवति ।। इदमेव स्फुटतरमाह-

[भा.१०६९]पुव्वोगहिए खेत्ते, तिविहेण गणेण जइ गणो तिविहो ।
एज्जाहि तयं खेत्तं, ओमे जयणा तहिं का नु ।।

वृ- 'त्रिविधेन' संयत-संयती-तदुभयरूपेण गणेन त्रिविधस्य वाऽन्यतरेण पूर्वमवगृहीते क्षेत्रे यदि त्रिविध एव गणो अवमकाले असंस्तरन् तकं क्षेत्रम् 'एयात्' आगच्छेत्, ततस्तेषामागतानां स्थातव्ये वास्तव्यानां वा अवग्रहे दातव्ये का 'नुः' इति वितर्के यतना ? ।। अत आह-

[भा.१०७०]आयरिय-वसभ-अभिसेग-भिक्खुणो पेल्ल लंभे न य देंति ।
गुरुगा दोहि विसिट्ठा, चउगुरुगाइ व्व जा लहुगो ।।

वृ- यत् संयतपरिगृहीतं क्षेत्रं तदेषामन्यतरेण परिगृहीतं भवेत् । तद्यथा-आचार्येण वा वृषभेण वा अभिषेकेण वा भिक्षुणा वा । ये आगन्तुकास्तेऽप्येवमेव चत्वारो द्रष्टव्याः । संयत्योऽपि वास्तव्याः आगन्तुकाश्चैवमेव चतुर्विधाः । नवरमाचार्यस्थाने प्रवर्त्तिनी वृषभस्थाने गणावच्छेदिनी वक्तव्या । अत्र चाऽऽचार्य प्रसिद्धः । उपाध्यायो वृषभानुग इति कृत्वा वृषभ उच्यते । यः पुनरित्वराभिषेकेणाऽऽचार्यपदेऽभिषिक्तः स इहाभिषेकः, अथवा गणावच्छेदक इहाभिषेकः । शेषाः सामान्यसाधवो भिक्षवः । एतेषां चेयं चारणिका-आचार्यपरिगृहीते क्षेत्रे यदन्य आचार्य आगतो यदि च स वास्तव्य आचार्य क्षेत्रे पूर्यमाणे भक्त-पाने वा लभ्यमाने आगन्तुकस्य स्थातुं न ददाति तदा चत्वारो गुरवः, अथ न पूर्यते क्षेत्रं स चागन्तुको बलात् प्रेर्य तिष्ठति तस्यापि चतुर्गुरुकाः, एतच्च प्रायश्चित्तं तपसा कालेन च द्वाभ्यामपि गुरुकम्; स एव वास्तव्यक आचार्यो वृषभस्यागन्तुकस्य न ददाति वृषभो वा बलात तिष्ठति उभयोरपि चत्वारो गुरुकाः तपसा गुरवः कालेन लघवः; स एव वास्तव्य आचार्योऽभिषेकस्यागतस्य स्थानं न ददाति स वा अभिषेको वास्तव्यमाचार्यमवगणय्य तिष्ठति उभयत्रापि चतुर्गुरु तपसा लघु कालेन गुरुकम्; स एव वास्तव्य आचार्य आगन्तुकस्य भिक्षोरवस्थातुं न प्रयच्छति स वा भिक्षुर्वास्तव्यमाचार्यं बलादवज्ञाय तिष्ठति द्वयोरपि च चत्वारो गुरवस्तपसा कालेन च लघवः । एवमाचार्ये पूर्वस्थिते भणितम् ।

एवं वृषभाऽभिषेक-भिक्षुभिरपि पूर्वस्थितैः प्रत्येकं चत्वारो गमाः कर्त्तव्याः, प्रायश्चित्तमप्येवमेव तपः-कालविशेषितम् । एवमेते सर्वसङ्ख्यया षोडश गमाः । अथवैतेष्वेव षोडशसु गमेषु प्रायश्चित्तप्ररूपणायामयमादेशः-"चउगुरुगादि व्व जा लहुगो" ति अस्य भावना-आचार्य आचार्यस्यागतस्य स्थातुं न ददाति आगन्तुको वा प्रेरयति द्वयोरपि चत्वारो गुरवः उभयगुरुकाः आचार्यो वृषभस्य न प्रयच्छति वृषभो वा बलात् तिष्ठति चतुर्लघवः तपसा गुरुकाः । आचार्य एवाभिषेकस्य न ददाति अभिषेको वा बलात् प्रेरयति मासगुरु कालेन गुरु । आचार्यः सामान्यभिक्षोरायातस्य स्थातुं नानुजानीते आगन्तुको वा भिक्षुर्बलादेवावतिष्ठते मासलघु उभयलघुकम् । एवं शेषेष्वपि द्वादशसु गमेषु चतुर्गुरुकादिकं लघुमासान्तं तपः-कालविशेषितमेवमेव प्रायश्चित्तम् ।। तदेवं संयतानां संयतैः सह चारणिकया षोडश विकल्पा उक्ताः । अथ शेषविकल्पप्रदर्शनायाह-

[भा.१०७१]एमेव य भयणा वी, सोलसिया एक्कमेक्क पक्खम्मि ।
उभयम्मि वि नायव्वा, पेल्लमदेंते व जं पावे ।।

वृ- एवमेवैकेकस्मिन् पक्षे षोडशिका 'भजना' भङ्गरचना कर्त्तव्या। यस्तदुभयरूपो गणो न भवति किन्तु केवल एव संयतपक्षः संयतीपक्षो वा स एकैकपक्षोऽभिधीयते। तत्र संयतानां संयतीः सह प्रथमा षोडशभङ्गी, सा च सप्रपञ्चं भाविता। अथ संयतीभिः परिगृहीते क्षेत्रे अपराः संयत्यः समागच्छन्ति तत्रापि प्रवर्त्तिनी-गणावच्छेदिन्यभिषेका-भिक्षुणीभिः पूर्वस्थिताभिः सह प्रत्येकमागन्तुकप्रवर्त्तिनी-गणावच्छेदिन्यभिषेका-भिक्षुणीरूपाणां चतुर्णां पदानां चारणिकां कुर्वाणैरेवमव षोडश भङ्गा रचयितव्याः, प्रायश्चित्तं चादेशद्वयेनापि तपः-कालविशेषितं तथैव वक्तव्यम्। एषा द्वितीया षोडशभङ्गी। एवं संयतानां चतुर्विधानां पूर्वस्थितानां संयतैश्चतुर्विधैरेवा-गच्छद्भिरेवमेव तुरीया षोडशभङ्गी। सर्वसङ्ख्यया जाता भङ्गानां चतुःषष्टिः। एते च केवलसंयत-संयतीपक्षचारणिकया लब्धाः। अथोभयपक्षमधिकृत्याह-''उभयम्मि वि नायव्वं'' ति उभयशब्देनो-भयगणाधिपति परिगृह्यते, तत्राप्येवमेव भङ्गरचना ज्ञातव्या। तथाहि-चतुर्विधोभयगणाधिपतिभिः परिगृहीते क्षेत्रे चतुर्विधैरेवागन्तुकसंयैरागच्छिभ पूर्वोक्तनीत्यैव षोडश भङ्गाः।

तथा तैरेव परिगृहीते प्रवर्त्तिन्यादिभेदात् चतुर्विधाः संयत्यो यद्यागच्छेयुस्तदाऽपि षोडश भङ्गाः, चतुर्विधेषु तदुभयगणाधिपतिषु पूर्वस्थितेषु चतुर्विधानामेवोभयगणाधिपतीनामा-गमनेऽप्येवमपिषोडश भङ्गाः, एवं चतुर्विधसंयतीषु चतुर्विधानामेवोभयगणाधिपतीनामागमने षोडश भङ्गाः। एवमेताः पञ्च षोडशभङ्ग्यः सञ्जाताः, पञ्चभिश्च षोडशभङ्गीभिर्लब्धा भङ्गानामशीतिः। एषा चोभयगणविषया भङ्गकानामशीति पूर्वोक्तयैकैकपक्षविषयया भङ्गकचतुःषष्ट्या सह मील्यते जातं चतुश्चत्वारिंशं शतं भङ्गानाम्। प्रायश्चित्तं च सर्वत्र प्राग्वद् द्रष्टव्यम्। ''पेल्लमदिंते य जं पावे'' त्ति एतत् पदं सर्वभङ्गानुपाति प्रतिपत्तव्यम्। अपूर्वमाणे क्षेत्रे आगन्तुका यदि बलात् प्रेर्य तिष्ठन्ति ततो वास्तव्या निर्गच्छन्तो अवमौदर्यसमुत्थामात्म-संयमविराधनां यत् प्राप्नुवन्ति तन्निष्पन्नं प्रायश्चित्तमागन्तुकानाम्। अथ वास्तव्याः पूर्यमाणे क्षेत्रे आगन्तुकानां स्थातुं न ददति ततो यद् आगन्तुका बहिःपर्यटन्तो भक्तादिकलमभाना विराधनां प्राप्नुवन्ति तन्निष्पन्नं वास्तव्यानामापद्यते॥ आह यद्येवंकुर्वतामेतावत् प्रायश्चित्तकदम्बकमुपढौकते तर्हि साम्प्रतं स्वपक्षस्य दूरं दूरेणैव स्थातुं युक्तम्, अत्रोच्यते-

[भा.१०७२] चउवग्गो वि हु अच्छउ, असंथराऽऽगंतुगा य वच्चंतु।
वत्थव्वा व असंथरे, मोत्तु गिलाणस्स संघाडं॥

वृ- 'चतुर्वर्ग' नाम वास्तव्याः संयताः सयत्यश्च आगन्तुकाः संयताः संयत्यश्च। एते चत्वारोऽपि वर्गा एकस्मिन् क्षेत्रे यदि संस्तरति तर्हि तिष्ठन्तु न कोऽपि परस्परं मत्सरः कर्त्तव्यः। यदि संस्तरणं न भवति तत आगन्तुका व्रजन्तु। अथागन्तुकभद्रकं तत् क्षेत्रमागन्तुका वा अदेशिका अखेदज्ञा वा ततो वास्तव्या आत्मनस्तेषां वा असंस्तरणे निर्गच्छन्ति। एवमागन्तुका वास्तव्या वा ये निर्गच्छन्ति तेषां यदि कश्चिद् ग्लानो भवेत् ततो ग्लानः ससङ्घाटकस्तिष्ठति, तं मुक्त्वा शेषाः सर्वेऽपि गच्छन्ति॥

[भा.१०७३] एमेव संजईणं, वुड्ढी-तरुणीण जुंगितकमाई।
पायादिविगल तरुणी, य अच्छए वुड्ढिओ पेसे॥

वृ- 'एवमेव' संयतवत् संयतीनां निर्गमनविधिरभिधातव्यः, परमत्र द्विकभेदः कर्त्तव्यः।

कथम्? इत्याह-वृद्धानां तरुणीनां च मध्ये यदि निरत्ययपायं ततस्तरुण्यो गच्छन्ति वृद्धा आसते। तथा जुङ्गितानामजुङ्गितानां च जुङ्गितास्तिष्ठन्ति अजुङ्गिता द्विविधाः-जातिजुङ्गिताः शरीरजुङ्गिताश्च। तत्र जातिजुङ्गिता गच्छन्ति शरीरजुङ्गिताः पादादिविकलास्तत्रैवाऽऽसते। तरुण्योऽपि यदि सप्रत्यपायं मार्गादौ ततस्तत्रैवाऽऽसते वृद्धास्तु प्रेषयेत् ॥

[भा.१०७४] एवं तेसि ठियाणं, पत्तेगं वा वि अहव मिस्साणं।
ओमम्मि असंथरणे, इमा उ जयणा जहिं पगयं ॥

वृ- 'एवम्' अनन्तरोक्तप्रकारेण 'तेषाम्' आचार्यादीनां तत्र क्षेत्रे 'प्रत्येकं वा' एकतरवर्गरूपेण 'मिश्राणां वा' द्विवर्ग-त्रिवर्ग-चतुर्वर्गरूपतया स्थितानां अवमकाले असंस्तरणे इयं यतना यस्यामिदं प्रलम्बसूत्रं प्रकृतम् ॥ तामेवाह-

[भा.१०७५] ओयण-मीसे-निम्मीसुवक्खडे पक्क-आम-पत्तेगे।
साधारण सग्गामे, परगामे भावओ वि भए ॥

वृ- ओदनं १ मिश्रोपस्कृतं २ निर्मिश्रोपस्कृतं ३ पक्कं ४ आमं ५ प्रत्येकं ६ साधारणं ७. एतानि सप्तापि यथाक्रमं प्रथमं स्वग्रामे ततः परग्रामे ग्रहीतव्यानि। भावतोऽपि यान्यभिन्नानि तान्यपि यतनापरिपाटिप्राप्तानि 'भजेत्' सेवेत गृह्णीयादित्यर्थः इति द्वारगाथासमासार्थः ॥

अथ प्रतिद्वारं विस्तरार्थमभिधित्सुरोदनद्वारमाह-

[भा.१०७६] बत्तीसाई जा एक्क घास खवणं च न वि य से हानी।
आवासएसु अच्छउ, जा छम्मासे न य पलंबे ॥

वृ- ओदनस्य द्वात्रिंशत् कवलाः पुरुषस्य प्रमाणप्राप्त आहारः। यदि ते एकेन कवलेन न्यूनाः प्राप्यन्ते ततस्तैरेव तिष्ठतु, यदि 'से' तस्य साधोः 'आवश्यकेषु' अवश्यकृत्ययोगेषु हानि 'नापि' नैव भवति न प्रलम्बानि गृह्णातु। एवं द्वाभ्यां कवलाभ्यां न्यूना द्वात्रिंशत् कवला लभ्यन्ते तैस्तिष्ठतु यदि तस्यावश्यकयोगा न परिहीयन्ते। एवमेकैकं कवलं परिहापयता तावद् वक्तव्यं यावद् यद्येकः 'ग्रासः' कवलः प्राप्यतेततस्तेनैवास्ताम्, यदि तस्यावश्यकयोगा न परिहीयन्ते मा च प्रलम्बानि गृह्णातु। अथैकोऽपि कवलो न प्राप्यते तत एकं दिवसं 'क्षपणम्' उपवासं कृत्वा आस्ताम्, द्वितीये दिवसे द्वात्रिंशत्कवलैः पारयतु। यदि तावन्तो न लभ्यन्ते तत एकैककवलपरिहाण्या तावद् वक्तव्यं यावद् यद्येकोऽपि कवलो न लब्धस्ततः षष्ठं कृत्वा समाधिसीदमध्यास्ताम्, षष्ठस्य च पारणके प्रमाणप्राप्तमाहारमुपाददताम्। अथ न लभ्यते ततः पूर्वोक्तयुक्त्या यावदेकोऽपि कवलो न लभ्यते ततोऽष्टमं कृत्वा तिष्ठतु मा च प्रलम्बान्याददीत। एवमनयैव दिशा दशमादिकमुत्तरोत्तरक्षपणं वर्द्धयता तावद् नेतव्यं यावत् षण्मासक्षपणम्। अथ षण्मासक्षपणे धर्मावश्यकयोगाः परिहीयन्ते तत एकदिनन्यूनं षण्मासक्षपणं करोतु। तदपि न शक्नोति निर्वोढुं तत एकैकं क्षपणं परिहापयता तावद् वक्तव्यं यावदेकमपि क्षपणं कर्त्तुं न शक्नोति ॥

ततः किं करोति? इत्याह-

[भा.१०७७] जावइयं वा लब्भइ, सग्गामे सुद्ध सेस परगामे।
मीसं च उवक्खडियं, सुद्धज्झवपूरगं गेण्हे ॥

वृ- वाशब्दः पातनायाम्, सा च कृतैवेति। यावत् शुद्धोदनं स्वग्रामे लभ्यते यदि तावता न

संस्तरति ततो यावता न्यूनं तावत् परग्रामात् 'शेषं' शुद्धोदनमानयति । गतमोदनद्वारम् । अथ मिश्रोपस्कृतद्वारमाह-''मीसं घ'' इत्यादि । यदा स्वग्राम-परग्रामयोः पर्याप्तं शुद्धोदनं न प्राप्यते तदा यद् ओदनं प्रलम्बैर्मिश्रमुपस्कृतं तत् शुद्धोदनस्याध्यवपूरकं गृह्णाति ।। इदमेव विशेषयन्नाह-

[भा.१०७८] तत्थ वि पढमं जं मीसुवक्खडं दव्व-भावतो भिन्नं ।
दव्वाभिन्नविमिस्सं, तस्सऽसति उवक्खडं ताहे ।।

वृ- 'तत्रापि' मिश्रोपस्कृते गृह्यमाणे प्रथमं यद् द्रव्यो भावतश्च भिन्नैः प्रलम्बैर्मिश्रमुपस्कृतं तत् स्वग्राम-परग्रामयोर्गृह्णाति । तस्यापि 'असति' अलाभे यद् ओदनं द्रव्यतोऽभिन्नैर्भावतो भिन्नैः प्रलम्बैर्विमिश्रमुपस्कृतं तत् तदा शुद्धोदनस्याध्यवपूरकं प्रथमं स्वग्रामे ततः परग्रामे गृह्णाति।। गतं मिश्रोपस्कृतम् । अथ निर्मिश्रोपस्कृतमाह-

[भा.१०७९] पनगाइ मासपत्तो, ताहे निम्मीसुवक्खडं भिन्नं ।
निम्मीस उवक्खडियं, गिण्हति ताहे ततियभंगे ।।

वृ-येषु सूक्ष्मप्राभृतिकादिदोषेषु पञ्चकप्रायश्चित्तं तेषु आदिशब्दाद् दशरात्रिन्दिवादिस्थानेषु च यतित्वा यदा भिन्नमासमतिक्रान्तो लघुमासं च प्राप्तो भवति तदा यद् द्रव्यतो भावतश्च भिन्नं निर्मिश्रं प्रलम्बजातमुपस्कृतं तत् शुद्धोदनस्य मिश्रोपस्कृतस्य चाध्यवपूरकं स्वग्रामपरग्रामयोर्गृह्णाति। यदा चरमभङ्गे न लभ्यते तदा निर्मिश्रोपस्कृतमेव तृतीयभङ्गे द्रव्यतोऽभिन्नं गृह्णाति ।। गतं निर्मिश्रोपस्कृतम् । अथ पक्वमामं च व्याख्यानयति-

[भा.१०८०]एमेव पउलियाऽपउलिए य चरिम-तइया भवे भंगा ।
ओसहि-फलमाईसुं, जं चाऽऽईन्नं तगं नेयं ।।

वृ-एवमेव पक्वा-ऽपक्वयोश्चरम-तृतीयौ भङ्गौ भवतः । पक्वं नाम यद् अग्निना संस्कृतम्, यथा इङ्गुदीबीज-बिल्वादि । अपक्वं यद् अग्निनाऽन्येन वा इन्धन-धूमादिना प्रकारेण न पक्वं परं निर्जीवावस्थम्, यथा परिपक्वकदलीफल-त्रपुषादि । तत्र निर्मिश्रोपस्कृतस्यालाभे प्रथमं पक्वं चतुर्थभङ्गे ततस्तृतीयभङ्गे, ततोऽपक्वमपि चतुर्थ-तृतीयभङ्गयोः । एवमेव अध्यवपूरकं गृह्णाति । अत्र चौषधिफलादिषु यच्च पूर्वसाधुभिरवमादिकारणं विनाऽप्याचीर्णं तद् 'नेयं' नयनीयं ग्रहीतव्यमित्यर्थः, यद्वा तद् 'ज्ञेयं' ज्ञातव्यम् । तत्रौषधयो धान्यानि, तेष्वाचीर्णं यथा चणका माषा वा, फलेषु आचीर्णं यथा त्रिफलादि, आदिशब्दाद् मूल-कन्दादिष्वपि यथायोगमाचीर्णा-ऽनाचीर्णव्यवस्थाऽनुसर्त्तव्या ।। अत्रौषधिषु यद् आचीर्णं तद् व्याचष्टे-

[भा.१०८१]सगला-ऽसगलाइन्ने, मीसोवक्खडिय नत्थि हानी उ ।
जइउं अमिस्सगहणं, चरिमदुए जं अणाइन्नं ।।

वृ-चणक-माषादिषु पूर्वाचार्यैराचीर्णेषु सकलेष्वसकलेषु वा मिश्रेषु निर्मिश्रेषु वा उपस्कृतेषु नास्तिपञ्चकपरिहाणि । यत्र पूर्वाचार्यैरनाचीर्णं तत्र पञ्चकपरिहाण्या यतित्वा लघुमासं प्राप्तः 'चरमद्वये' चतुर्थ-तृतीयभङ्गयोरमिश्रस्य निर्मिश्रोपस्कृतस्य ग्रहणं कार्यं नार्वागिति ।।

आह यद् निर्जीवं तत् कथमनाचीर्णम् ? उच्यते-

[भा.१०८२]जइ ताव पिहुगमाई, सत्थोवहया वि होंतऽनाइन्ना ।

किं पुन अस्थुवहया, पेसी पव्वायसरडू य ॥

वृ-इह ये व्रीहयः परिपक्वाः सन्तो भ्राष्ट्रादौ भृज्यन्ते, ततः स्फटिता अपनीतत्वचः पृथुका इत्युच्यन्ते, आदिग्रहणेनान्यदपि यदेवं निष्पद्यते तत्परिग्रहः। यदि तावत् पृथुकादयोऽग्निशस्त्रोपहता अप्यनाचीर्णा भवनति किं पुनरशस्त्रोपहताः 'पेश्यः' प्रलम्बानामूर्द्धायताः फालयः ? तथा प्रम्लाना-नि-म्लानवृन्तानि यानि 'सरडूनि' अबद्धास्थिकफलानि ?, तान्यशस्त्रोपहतानि कथमाचीर्णानि भविष्यन्तीत्यर्थः। एतत् सर्वमपि परीत्तविषयमुक्तम्॥ गतं परीत्तद्वारम्। अथ साधारणद्वारमाह-

[भा.१०८३] साधारणे वि एवं, मीसा-ऽमीसे वि होंति भंगाओ।

पनगादी गुरुपत्तो, सव्वविसोहीय जय ताहे ॥

वृ- साधारणम्-अनन्तं तत्रापि 'एवं' प्रत्येकवद् मिश्रोपस्कृते निर्मिश्रोपस्कृते च चतुर्थ-तृतीयौ भङ्गौ भवतः। नवरं यदा तृतीयभङ्गे प्रत्येकप्रलम्बं निर्मिश्रोपस्कृतं न लभ्यते तदा मासलघुकादुपरि यत्रोद्गमादौ लघुपञ्चरात्रिन्दिवान्यभ्यधिकान्यापद्यन्ते तत् स्वग्रामे वा परग्रामे वा गृह्णाति। एवं यदा पञ्चकादिहान्या गुरुमासं प्राप्तो भवति तदा साधारणं निर्मिश्रोपस्कृतं प्रथमं चतुर्थभङ्गे तदलाभे तृतीयभङ्गे स्वग्राम-परग्रामयोर्गृह्णाति। यदा तृतीयभङ्गेनापि न प्राप्यते तदा सर्वेषु विशोधिकोटिदोषेषु 'यतस्व' प्रयत्नं कुरु। तत्राऽऽधाकर्म-कर्मोद्देशिकत्रिक-आहारपूतिकर्म-मिश्रजातान्त्यद्विक-बादरप्राभृतिका-अध्यवपूरकचरमद्विकरूपान् अविशोधिकोटिदोषान् मुक्त्वा शेषाः सर्वेऽप्यौघोद्देशिकादय उद्गमदोषा विशोधिकोटयः। तेष्वपि गुरु-लाघवालोचनतो यद् यद् अल्पदोषतरं तत् तत् पूर्वं पूर्वं प्रतिसेवमानस्तावद् यतते यावत् चतुर्लघुस्थानानि ॥ तेष्वपि यदा न लभ्यते तदा चतुर्लघुकादुपरि पञ्चकपरिहाण्या यतित्वा यदा चतुर्गुरुप्राप्तो भवति तदा किमाधाकर्म गृह्णातु ? उत प्रथमद्वितीयभङ्गौ ? इति, अत्रोच्यते-

[भा.१०८४] कम्मे आदेसदुगं, मूलुत्तरे ताहे बि कलि पत्तेगे।

दावर कली अनंते, ताहे जयणाए जुत्तस्स ॥

वृ- अत्राधाकर्मणि प्राप्ते आदेशद्विकं वक्तव्यम्। तद्यथा-आधाकर्मणि चत्वारो गुरवः, प्रत्येकप्रथमद्वितीययोर्भङ्गयोश्चत्वारो लघवः। एवं चप्रायश्चित्तानुलोम्येनाधाकर्म गुरुकम्, व्रतानु-लोम्येन तु प्रथमद्वितीयभङ्गौ गुरुकौ, तयोः प्रतिसेव्यमानयोः प्राणातिपातव्रतस्य लोपसद्भावादिति। अथवा आधाकर्म उत्तरगुणोपघातित्वाद् लघुतरम्, प्रथम-द्वितीयभङ्गौ मूलगुणोपघातित्वाद् गुरुतरौ। एवमादेशद्वये कृतेऽप्याधाकर्मैव प्रथमतो ग्रहीतव्यं न प्रथम-द्वितीयभङ्गौ। कुतः ? इति चेद् उच्यते-धाकर्मणि जीवाः परेण व्यपरोपिता इति तत्र गृह्यमाणे न तादृशी निशूकतोपजायते यादृशी प्रथम-द्वितीययोर्भङ्गयोरध्यक्षवीक्ष्यमाणानां जीवानामात्मनैव मुखे प्रक्षिप्य भक्ष्यमाणानां व्यपरोपणे भवति, अत आधाकर्मैव प्रथमतो ग्राह्यं न प्रथम-द्वितीयभङ्गाविति स्थितम्। "ताहे बि कलि पत्तेगि" त्ति यदा आधाकर्मापि न लभ्यते तदा प्रत्येकद्वितीयभङ्गे ग्रहीतव्यम्, तदभावे 'कलि' प्रथमो भङ्गः तत्रापि ग्राह्यम्। "दाव कली अनंते"त्ति यदा प्रत्येकस्यापि प्रथमो भङ्गो न प्राप्यते तदा 'द्वापरः' इति समयपरिभाषया द्वितीयः, 'कलि' इति तु प्रथम उच्यते। ततश्च प्रथममन्तकायिके द्वितीयेन भङ्गेन, तदभावे प्रथमेनापि ग्रहीतव्यम्। यदा अनन्तस्यापि प्रथमो भङ्गो न प्राप्यते तदा यतनया युक्तस्य यत्र यत्राल्पतरः कर्मबन्धो भवति तत् तद् गृह्णानस्याशठपरिणामस्य संयम एव

भवतीति वाक्यशेषः ॥ एवं तावत् संयतानधिकृत्य यतनोक्ता । अथ संयतीरुद्दिश्याह-

**[भा.१०८५]** एमेव संजईण वि, विहि अविही नवरि तत्थ नाणत्तं ।
सव्वत्थ वि सग्गामे, परगामे भावओ वि भए ॥

**वृ-** यथा संयतानां स्वग्राम-परग्रामादिविभाषापुरस्सरं भिन्ना-ऽभिन्नयोर्यतना भणिता एवमेव संयतीनामपि वक्तव्या । नवरं तासां 'नानात्वं' विशेषो विधिभिन्नानि अविधिभिन्नानि च भवन्ति । विधिभिन्नानि मुख्यपदे सर्वत्रापि गृह्यन्ते स्वग्राम-परग्रामयोश्च । प्रथमं षष्ठो भङ्गः, तदभावे पञ्चमः, तस्याप्यलाभे चतुर्थ, तस्याप्यप्राप्तौ भावतोऽप्यभिन्नानि तृतीय-द्वितीय-प्रथमभङ्गवर्तीनि यथाक्रमं 'भजेत्' प्रतिसेवेत, न कश्चिद्दोषः ॥

दुर्गस्थानबहुत्वभीरुकतया मन्दाऽपि दातुं पदा-
न्येतच्चूर्णि-निशीथचूर्णिसुवचः श्रेणीसुयष्ट्या भृशम् ।
प्रेर्य प्रेर्य पदे पदे निजगवी क्षिप्रप्रचारं मया
कल्पे यत् प्रकृतं प्रलम्बविषयं तद्गोचरे चारिता ॥

**मू. (६)** *से गामंसि वा नगरंसि वा खेडंसि वा कब्बडंसि वा मडंबंसि वा पट्टणंसि वा आगरंसि वा दोणमुहंसि वा निगमंसि वा रायहाणिंसि वा आसमंसि वा सन्निवेसंसि वा संबाहंसि वा घोसंसि वा अंसियंसि वा पुडभेयणंसि वा सपरिक्खेवंसि अबाहिरियंसि कप्पइ निग्गंथाणं हेमंत-गिम्हासु एगं मासं वत्थए ॥*

**वृ-** एवमग्रेतनमपि सूत्रत्रयमुच्चारमीयम् । अथास्य सूत्रचतुष्टयस्य कः सम्बन्ध इत्याह-

**[भा.१०८६]** वुत्तो खलु आहारो, इयाणि वसहीविहिं तु वन्नेइ ।
सो वा कत्थुवभुज्जइ, आहारो एस संबंधो ॥

**वृ-** उक्तः खल्वनन्तरसूत्रे आहारः । 'इदानीं तु' अस्मिन् सूत्रेवसतेर्विधिं भगवान् भद्रबाहु-स्वामी वर्णयति । यद्वा स आहारो गृहीतः सन् क ग्रामादौ उपभुज्यते ? इति निरूपणार्थमिदमारभ्यते एष द्वितीयप्रकारेण सम्बन्धः ॥ भूयोऽपि सम्बन्धमाह-

**[भा.१०८७]** तेसु सपरिग्गेसुं, खेत्तेसुं साहुविरहिएसुं वा ।
किच्चिरकालं कप्पइ, वसिउं अहवा विकप्पो उ ॥

**वृ-** तेषु क्षेत्रेषु 'सपरिग्रहेषु' साधुपरिगृहीतेषु साधुविरहितेषु वा कियन्तं कालं निर्ग्रन्थानां वा निर्ग्रन्थीनां वा वस्तु कल्पते ? इत्यस्मिन् सूत्रे चिन्त्यते, अयं सम्बन्धस्यापरो विकल्प इति ॥ अमीभिः सम्बन्धैरायातस्यास्य व्याख्या-अत्र च संहितादिक्रमेण प्रतिसूत्रं व्याख्याने महद् ग्रन्थगौरवमिति कृत्वा पदार्थादिमात्रमेवाभिधास्यते, संहितादिचर्चस्तु पूर्ववद् वक्तव्य इति । सेशब्दो मागधदेशे प्रसिद्धः अथशब्दार्थे, अथशब्दश्च प्रक्रियादिष्वर्थेषु वर्त्तते । यत उक्तम्- "अथ प्रक्रिया-प्रश्ना-ऽऽनन्तर्य-मङ्गलोपन्यास-प्रतिवचन-समुच्चयेषु" इति । इहोपन्यासार्थे द्रष्टव्यः, ततश्च यथा साधूनामेकत्र क्षेत्रे वस्तुं कल्पते तथा उपन्यस्यते इत्यर्थः । ग्रामे वा नगरेवा खेटे वा कर्बटे वा मडम्बे वा पत्तने वा आकरे वा द्रोणमुखे वा निगमे वा राजधान्यां वा आश्रमे वा निवेशे वा सम्बाधे वा घोषे वा अंशिकायां वा पुटभेदने वा 'सपरिक्षेपे' वृत्यादिरूपपरिक्षेपयुक्ते 'अबाहिरिके' बहिर्भवा बाहिरिका "अध्यात्मादिभ्य इकण्" इति इकणप्रत्ययः, प्राकारबहिर्वर्त्तिनी

गृहपद्धतिरित्यर्थः, न विद्यते बाहिरिका यत्र तद् अबाहिरिकं तस्मिन् कल्पते निर्ग्रन्थानां 'हेमन्त-ग्रीष्मेषु' ऋतुबद्धकालसम्बन्धिषु अष्टसु मासेष्वित्यर्थः, एकं मासं 'वस्तुम्' अवस्थातुम्। वाशब्दाः सर्वेऽपि विकल्पार्था स्वगतानेकभेदसूचका वा द्रष्टव्या इति सूत्रसमासार्थ ॥ अथ विस्तरार्थं प्रतिपदं भाष्यकृदाह-

[भा.१०८८] आदिपदं निद्देसे, वा उ विभासा समुच्चये वा वि।
गम्मो गमणिज्जो वा, कराण गसए व बुद्धादी ॥

वृ- "से" इत्येतद् आदिपदं 'निर्देशे' उपन्यासे वर्त्तते। वाशब्दो। विभाषायां स्वगतानामनेकभेदानां समुच्चयार्थे वा। गम्यो गमनीयो वा अष्टादशानां कराणामिति व्युत्पत्त्या ग्रसेत वा बुध्यादीन् गुणानिति व्युत्पत्या वा पृषोदरादित्वाद् निरुक्तविधिना ग्राम उच्यते ॥

[भा.१०८९] नत्थेत्थ करो नगरं, खेडं पुन होइ धूलिपागारं।
कब्बडगं तु कुनगरं, मडंबगं सव्वतो छिन्नं ॥

वृ- 'नास्ति' न विद्यतेऽत्राष्टादशकराणामेकोऽपि कर इति नकरम्, नखादित्वाद् नञोऽकाराभावः। खेटं पुनर्धूलीप्राकारपरिक्षिप्तम्। कर्वटं तु कुनगरमुच्यते। मडम्बं नाम यत् 'सर्वतः' सर्वासु दिक्षु 'छिन्नम्' अर्द्धतृतीयगव्यूतमर्यादायामविद्यमानग्रामादिकमिति भावः। अन्ये तु व्याचक्षते-यस्यपार्श्वतोऽर्द्धतृतीययोजनान्तर्ग्रामादिकं न प्राप्यते तद् मडम्बम् ॥ १

[भा.१०९०] जलपट्टणं च थलपट्टणं च इति पट्टणं भवे दुविहं।
अयमाइ आगरा खलु, दोणमुहं जल-थलपहेणं ॥

वृ-पत्तनं द्विधा-जलपत्तनं च स्थलपत्तनं च। यत्र जलपथेन नावादिवाहनारूढं भाण्डमुपैति तद् जलपत्तनं, यथा द्वीपम्। यत्र तु स्थलपथेन शकटादौ स्थापितं भाण्डमायाति तत् स्थलपत्तनम्, यथा आनन्दपुरम्। अयः-लोहं तदादय आकरा उच्यन्ते। यत्र पाषाणधातुधमनादिना लोहमुत्पाद्यते स अयआकरः, आदिशब्दात् ताम्र-रूप्याद्याकरपरिग्रहः। यस्य तु जलपथेन स्थलपथेन च द्वाभ्यामपि प्रकाराभ्यां भाण्डमागच्छति तद् द्वयोः पथोर्मुखमिति निरुक्त्या द्रोणमुखमुच्यते, तच्च भृगुकच्छं ताम्रलिप्ती वा ॥

[भा.१०९१]निगमं नेगमवग्गो, वसइ जहिं रायहानि जहि राया।
तावसमाई आसम, निवेसो सत्थाइजत्ता वा ॥

वृ-निगमं नाम यत्र नैगमाः-वाणिजकविशेषास्तेषां वर्ग-समूहो वसति, अत एव निगमे भवा नैगमा इति व्यपदिश्यन्ते। यत्र नागरादौ राजा परिवसति सा राजधानी। आश्रमो यः प्रथमतस्तापसादिभिरावासितः, पश्चादपरोऽपि लोकस्तत्र गत्वा वसति। निवेशो नाम यत्र सार्थ आवासितः, आदिग्रहणेन ग्रामो वा अन्यत्र प्रस्थितः सन् यत्रान्तरवासमधिवसति; यात्रायां वा गतो लोको यत्र तिष्ठति एष सर्वोऽपि निवेश उच्यते ॥

[भा.१०९२] संवाहो संवोढुं, वसति जहिं पव्वयाइविसमेसु।
घोसो उ गोउलं अंसिया उ गामद्धमाईया ॥

वृ-सम्बाधो नाम यत्र कृषीवललोकोऽन्यत्र कर्षणं कृत्वा वणिग्वर्गो वा वाणिज्यं कृत्वाऽन्यत्र पर्वतादिषु विषमेषु स्थानेषु 'संवोढुम्' इति कणादिकं समुह्य कोष्ठागारादौ च प्रक्षिप्य वसति।

तथा 'घोषस्तु' गोकुलमभिधीयते । 'अंशिका तु' यत्र ग्रामस्यार्धम् आदिशब्दात् त्रिभागो वा चतुर्भागो वा गत्वा स्थितः सा ग्रामस्यांश एवांशिका ॥

[भा.१०९३] नाणादिसागयाणं, भिज्जंति पुडा उ जत्थ भंडाणं ।
पुडभेयणं तगं संकरो य केसिंचि कायव्वो ॥

वृ-नानाप्रकाराभ्यो दिग्भ्य आगतानां 'भाण्डानां' कुङ्कुमादीनां पुटा यत्र विक्रयार्थं भिद्यन्ते तत् पुटभेदनमुच्यते । केषाञ्चिदाचार्याणां मतेन सङ्करश्च कर्तव्यः, "संकरंसिवा" इत्यधिकं पदं पठितव्यमित्यर्थः । सङ्करो नाम-किञ्चिद् ग्रामोऽपि खेटमपि आश्रमोऽपीत्यादि ॥

एष सूत्रार्थ । अथ निर्युक्ति विस्तरः । तत्र ग्रामपदनिक्षेपमाह-

[भा.१०९४] नामं ठवणागामो, दव्वग्गामो य भूतगामो य ।
आउज्जिंदियगा, पिउ-माऊ-भावगामी च ॥

वृ-नामग्रामः स्थापनाग्रामो द्रव्यग्रामश्च भूतग्रामश्च आतोद्यग्राम इन्द्रियग्रामः पितृग्रामो मातृग्रामो भावग्रामश्चेति गाथासमुदयार्थः ॥ अथावयवार्थमभिधित्सुर्नाम-स्थापने क्षुण्णत्वादनादृत्य द्रव्यग्रामं व्याचष्टे-

[भा.१०९५]जीवा-ऽजीवसमुदओ, गामो को कं नओ कहं इच्छे ।
आदिनयोऽणेगविहो,तिविकप्पो अंतिमनओ उ ॥

वृ-जीवानां-गो-महिषी-मनुष्यादीनाम अजीवानां च-गृहादीनां यः समुदयः स द्रव्यग्राम उच्यते । इह च स्वज्ञोपज्ञप्रवचने प्रायः सर्वमपि सूत्रमर्थश्च नयैर्विचार्यते । यत उक्तम्-

नत्थि नएहि विहूणं, सुत्तं अत्थो य जिनमए किंचि ।
आसज्ज उ सोयारं, नए नयविसारओ बूया ॥

अत एषोऽपि द्रव्यग्रामो नयैर्विचार्यते-को नाम नयः कं द्रव्यग्रामं कथमिच्छति ? इति, तत्र नयाः सामान्यतः सप्त नैगम-सङ्ग्रह-व्यवहार-ऋजुसूत्र-शब्द-समभिरूढैवम्भूतभेदात्; इह तु समभिरूढैवम्भूतयोः शब्दप्राधान्यम्युपगमपरतया शब्दनय एवान्तर्भावो विवक्ष्यते । ततश्च 'आदिनयः' नैगमः सोऽविशुद्ध विशुद्ध-विशुद्धरादिभेदाद् अनेकविधः । 'अनन्तिमनयस्तु' शब्दः सः 'त्रिवकल्पः' त्रिविधः शब्द-समभिरूढैवम्भूतभेदात् ॥

तत्रानेकविधनैगमानामन्योऽन्यनिरपेक्षाणि यानि वक्तव्यानि तानि नामग्राहं सङ्ग्रहन्नाह-

[भा.१०९६] गावो तणाति सीमा, आरामुदपाण चेडरूवाणि ।
वाडी य वाणमंतर, उग्गह तत्तो य आहिपती ॥

वृ-गावः १ "तणाइ"त्ति उपलक्षणत्वात् तृणहारकादयः २ सीमा ३ आरामः ४ 'उदपानं' कूपः ५ चेडरूपाणि ६ 'वाटि' वृति ७ 'वानमन्तरं' देवकुलं ८ अवग्रहः ९ ततश्चाधिपति १० इति निर्युक्तिगाथाक्षरार्थः ॥ अथ भावार्थ उच्यते, प्रथमनैगमः प्राह-यावन्तं भूभागं गावश्चरितुं व्रजन्ति तावान् सर्वोऽपि ग्राम इति व्यपदेशं लभते १ ॥ ततो विशुद्धनैगमः प्रतिभणति-

[भा.१०९७] गावो वयंति दूरं, पि जं तु तण-कट्ठहारगादीया ।
सूरुट्ठिए गता एंति अत्थमंते ततो गामो ॥

परिस्थूरमते ! गावः 'दूरमपि' परग्राममपि चरितुं व्रजन्ति ततः किमेवं सोऽप्येक एव

ग्रामो भवतु ?, अपि च एवंब्रुवतो भवतो भूयसामि परस्परमतिदवीयसां ग्रामाणामेकग्रामतैव प्रसजति, न चैतदुपपन्नम्, तस्माद् नैतावान् ग्रामः किन्तु 'यत्तु' यावन्मात्रं क्षेत्रं तृणहारक-काष्ठहारकादयः सूर्ये उत्थिते तृणाद्यर्थं गताः सन्तः सूर्ये अस्तमयति तृणादिभारकं बद्धवा पुनरायान्ति एतावत् क्षेत्रं ग्रामः २ ॥

[भा.१०९८]परसीमं पि वयंति हु, सुद्धतरो भणति जा ससीमा तु ।
उज्जाण अवत्ता वा, उक्कीलंता उ सुद्धयरो ॥

वृ- शुद्धतरो नैगमो भणति-यद्यपि गवां गोचरक्षेत्रादासन्नतरं भूभागं तृण-काष्ठहारका व्रजन्ति तथापि ते कदाचित् परसीमानमपि व्रजन्ति तस्माद् नैतावान् ग्राम उपपद्यते, अहं ब्रवीमि-यावत् स्वा-आत्मीया सीमा एतावान् ग्रामः ३ । ततोऽपि विशुद्धतरः प्राह-मैवमतिप्रचुरं क्षेत्रं ग्राम इति वोचः, किन्तु यावत् तस्यैव ग्रामस्य 'उद्यानम्' आरामस्तावद् ग्राम इति भण्यते ४ । विशुद्धतमः प्रतिभणति-एतदपि भूयस्तरं क्षेत्रम्, न ग्रामसंज्ञां लब्धुमर्हति, अहं भणामि- यावद् 'उदपानं' तस्यैव ग्रामस्य सम्बन्धी कूपः तावद् ग्राम इति ५ । ततोऽपि विशुद्धतरो ब्रूते- इदमप्यतिप्रभूतं क्षेत्रम् अतो यावत् क्षेत्रं 'अव्यक्तानि' चेटरूपाणि रममाणानि गच्छन्ति तावद् ग्रामः ६ । ततोऽपि विशुद्धतरः प्रतिवक्ति-एतदप्यतिरिक्ततया न समीचीनमाभाति ततो यावन्तं भूभागमतिलघीयांसो बालकाः 'उत्क्रीडन्तः' रिङ्गन्तः प्रयान्ति तावान् ग्राम इति ७ ॥

[भा.१०९९] एवं विसुद्धनिगमस्स वइपरिक्खेवपरिवुडो गामो ।
ववहारस्स वि एवं, संगहो जहि गामसमवाओ ॥

वृ- 'एवं' विचित्राभिप्रायाणां पूर्वनैगमानां सर्वा अपि प्रतिपत्तीर्व्यपोह्य सर्वविशुद्धनैगमस्य यावान् वृतिपरिक्षेपपरिवृतो भूभागस्तावान् ग्राम उच्यते । अथ सङ्ग्रहं व्यतिक्रम्य लाघवार्थमत्रैव व्यवहारमतमतिदिशति-''ववहारस्सवि एवं'' ति यथा नैगमस्यानेके प्रतिपत्तिप्रकाराः प्ररूपितास्तथा व्यवहारस्याप्येवमेव प्ररूपणीयाः, तस्य व्यवहाराभ्युपगमपरायणत्वात् । सङ्ग्रहस्तु सामान्यग्राहित्वाद् यत्र ग्रामस्य-ग्रावास्तव्यलोकस्य समवायः-एकत्र मीलनं भवति तद् वानमन्तदेवकुलादिकं ग्राम इति ब्रूते ॥ इदमेव प्रकारान्तरेणाह-

[भा.११००] जं वा पढमं काउं, सेसग गामो निविस्सइ स गामो ।
तं देउलं सभा वा, मज्झिम गोट्ठो पवा वा वि ॥

वृ- यद् वा प्रथमं 'कृत्वा' निवेश्य शेषः सर्वोऽपि ग्रामो निविशते स सङ्ग्रहनयाभिप्रायेण ग्रामः । तच्च देवकुलं वा भवेत् सभा वा ग्राममध्यवर्ती वा गोष्ठः प्रपा वा ॥

अथावग्रहपदं विवृण्वन् ऋजुसूत्रनयमतमाह-

[भा.११०१] उज्जुसुयस्स निओओ, पत्तेयघरं तु होए एक्केक्कं ।
उड्डेति वसति व वसेण जस्स सद्दस्स सो गामो ॥

वृ- ऋजुसूत्रस्य स्वकीयार्थग्राहकत्वात् परकीयस्य च सतोऽप्यनभ्युपगमाद् यस्य यत् प्रत्येकमात्मीयावग्रहरूपेकैकं गृहं तद् नियोग इति प्रतिपत्तव्यम् । नियोग इति ग्राम इति चैकोऽर्थः । आह च विशेषचूर्णिकृत्-गामो त्ति वा निओउ त्ति वा एगट्ठं । ''तत्तो य आहिवई'' इति व्याख्यानयन् शब्दनयमतमाह-''उड्डेति'' इत्यादि । 'शब्दस्य' शब्दाख्यनयस्य यस्य कस्यापि वशेन ग्रामः

'उत्तिष्ठते' उद्वसीभवति 'वसति वा' भूयोऽप्यवस्थानं करोति स ग्रामस्याधिपतिर्ग्राम इति शब्दमुद्वोढुमर्हति, ये तु तत्र तदनुवर्त्तिनः शेषास्तेऽशेषा अप्युपसर्जनीभूतत्वान्न ग्रामसंज्ञां लभन्त इति भावः ।। चिन्तितं नयमार्गणया ग्रामस्वरूपम् ।

अथ ग्रामस्यैव नयैः संस्थानचिन्तां चिकीर्षुराह-

[भा.११०२] तस्सेव उ गामस्सा, को कं संठाणमिच्छति नओ उ ।
तत्थ इमे संठाणा, हवंति खलु मल्लगादीया ।।

वृ- तस्यैव ग्रामस्य संस्थानं को नयः किमिच्छति ? इति चिन्त्यते । तत्र तावद् इमानि मल्लकादीनि ग्रामस्य संस्थानं को नयः किमिच्छति ? इति चिन्त्यते । तत्र तावद् इमानि मल्लकादीनि ग्रामस्य संस्थानानि भवन्ति ।। तान्येवाह-

[भा.११०३] उत्तानग ओमंथिय, संपुडए खंडमल्लए तिविहे ।
भित्ती प-डालि वलभी, अक्खाडग रुयग कासवए ।।

वृ- अस्ति ग्राम उत्तानकमल्लकाकारः, अस्ति ग्रामोऽवाङ्मुखमल्लकाकारः, एवं सम्पुटकमल्लकाकारः । खण्डमल्लकमपि त्रिविधं वाच्यम् । तद्यथा-उत्तानकखण्डमल्लकसंस्थितः अवाङ्मुखखण्डमल्लकसंस्थितः सम्पुटकखण्डमल्लकसंस्थितश्च । तथा भित्तिसंस्थितः पडालिकासंस्थितः वलभीसंस्थितः अक्षपाटकसंस्थितः रुचकसंस्थितः काश्यपसंस्थितश्चेति ।। अथैषामेव संस्थानानां यथाक्रमं व्याख्यानमाह-

[भा.११०४] मज्झे गामस्सऽगडो, बुद्धिच्छेदा ततो उ रज्जूओ ।
निक्खम्म मूलपादे, गिण्हंतीओ वइ पत्ता ।।

वृ-इह यस्य ग्रामस्य मध्यभागे 'अगडः' कूपस्तस्य बुध्या पूर्वादिषु दिक्षु छेदः परिकल्प्यते, ततश्च कूपस्याधस्तनतलाद् बुद्धिच्छेदेन रज्जवो दिक्षु विदिक्षु च निष्काम्य गृहाणां मूलपादान् उपरि कृत्वा गृह्णत्यस्तिर्यक् तावद् विस्तार्यन्ते यावद् ग्रामपर्यन्तवर्तिनीं वृतिं प्राप्ता भवन्ति, तत उपर्यभिमुखीभूय तावद् गता यावद् उच्छ्रयेण हर्म्यतलानां समीभूताः तत्र च पटहच्छेदेनोपरताः, एष ईदृश उत्तानमल्लकसंस्थितो ग्राम उच्यते, ऊर्ध्वाभिमुखस्य शरावस्यैवमाकारत्वात् ।।

[भा.११०५] ओमंथिए वि एवं, देउल रुक्खो व जस्स मज्झम्मि ।
कूवस्सुवरिं रुक्खो, अह संपुडमल्लओ नाम ।।

वृ- अवाङ्मुखमल्लकाकारेऽप्येवमेव वाच्यम्, नवरं यस्य ग्रामस्य मध्ये देवकुलं वृक्षो वा उच्चैस्तरस्तस्य देवकुलादेः शिखराद् रज्जवोऽवतार्य तिर्यक् तावद् नीयन्ते यावद् वृतिं प्राप्ताः, ततोऽधोमुखीभूय गृहाणां मूलपादान् गृहीत्वा पटहच्छेदेनोपरताः, एषोऽवाङ्मुखमल्लकसंस्थितः । तथा यस्य ग्रामस्य मध्यभागे कूपः, तस्य चोपर्युच्चतरो वृक्षः, ततः कूपस्याधस्तलाद् रज्जवो निर्गत्य मूलपादानधोऽधस्तावद् गता यावद् वृतिं प्राप्ताः, तत ऊर्ध्वाभिमुखीभूय गत्वा हर्म्यतलानां समश्रेणीभूताः, वृक्षशिखरादप्यवतीर्य रज्जवस्तथैव तिर्यग् वृतिं प्राप्नुवन्ति, ततोऽधोमुखीभूय कूपसम्बन्धिनीनां रज्जूनामग्रभागैः समं सङ्घटन्ते, अयैष सम्पुटकमल्लकाकारो नाम ग्रामः ।।

[भा.११०६] जइ कूवाई पासम्मि होंति तो खंडमल्लओ होइ ।
पुव्वावररुक्खेहिं, समसेढीहिं भवे भित्ती ।।

वृ- यदि 'कूपादीनि' कूप-वृक्ष-तदुभयानि 'पार्श्वे' एकस्यां दिशि भवन्ति ततः खण्डमल्लकाकारस्त्रिविधोऽपि ग्रामो यथाक्रमं मन्तव्यः । तत्र यस्य ग्रामस्य बहिरेकस्यां दिशि कूपः तामेवैकां दिशं मुक्त्वा शेषासु दिक्षु रज्जवो निर्गत्य तिर्यग् वृतिं प्रष्ठोपरि हर्म्यतलान्यासाद्य पटहच्छेदेनोपरमन्ते, एष उत्तानकखण्डमल्लकाकारः । अवाङ्मुखखण्डमल्लकाकारोऽप्येवमेव, नवरं यस्यैकस्यां दिशि देवकुलमुच्चैस्तरो वा वृक्षः । सम्पुटकखण्डमल्लकाकारस्तु यस्यैकस्यां दिशि कूपस्तदुपरिष्टाच्च वृक्षः, शेषं प्राग्वत् । "पुव्वावर" इत्यादि, पूर्वस्यामपरस्यां च दिशि समश्रेणिव्यवस्थितैर्वृक्षैर्भित्तिसंस्थितो ग्रामो भवेत् ॥

[भा.११०७] पासद्विए पडाली, वलभी चउकोण ईसि दीहा उ ।
चउकोणेसु जइ दुमा, हवंति अक्खाडतो तम्हा ॥

वृ- पडालिकासंस्थितोऽप्येवमेव, नवरमेकस्मिन् पार्श्वे वृक्षयुगलं समश्रेण्या व्यवस्थितम्। तथा यस्य ग्रामस्य चतुर्ष्वपि कोणेषु ईषद्दीर्घा वृक्षा व्यवस्थिताः स वलभीसंस्थितः । 'अक्षवाटः' मल्लानां युद्धाभ्यासस्थानम्, तद् यथा समचतुरस्रं भवति एवं यदि ग्रामस्यापि चतुर्षु कोणेषु द्रुमा भवन्ति ततोऽसौ चतुर्विदिग्वर्त्तिभिर्वृक्षैः समचतुरस्रतया परिच्छिद्यमानत्वादक्षपाटकसंस्थितः॥

[भा.११०८] वट्टागारठिएहिं, रुयगो पुण वेढिओ तरुवरेहिं ।
तिक्कोणो कासवओ, छुरघरगं कासवं बिंती ॥

वृ- यद्यपि ग्रामः स्वयं न समस्तथापि यदि रुचकवलयशैलवद् वृत्ताकारव्यवस्थितैर्वृक्षैर्वेष्टितस्तदा रुचकसंस्थितः । यस्तु ग्राम एव त्रिकोणतया निविष्टो वृक्षा वा त्रयो यस्य बहिस्त्र्यस्रं स्थिताः, एकतो द्वावन्यतस्त्वेक इत्यर्थः, एष उभयथाऽपि काश्यपसंस्थितः । काश्यपं पुनर्नापितस्य सम्बन्धि क्षुरगृहं ब्रुवते, तद् यता त्र्यस्रं भवत्येवमयमपि ग्राम इति ॥ भावितानि सर्वाण्यपि संस्थानानि । अथ को नयः किं संस्थानमिच्छति ? इति भाव्यते-

[भा.११०९]पढमेत्थ पडहछेदं, आ कासव कडग-कोट्टिमं तइओ ।
नाणिं आहिपतिं वा, सद्दनया तिन्नि इच्छंति ॥

प्रथमोऽत्र नैगमनयः, स पटहच्छेदलक्षणं संस्थानं प्रतिपद्यते । सङ्ग्रहोऽप्येवमेव मन्यत इत्यत्रैवान्तर्भाव्यते । व्यवहारस्तु भित्तिसंस्थानादारभ्य आ काश्यपसंस्थानं मन्यते । 'तृतीयः' ऋजुसूत्रः, सः कटकानां-तृणादिमयानां कुट्टिमानां वा-पाषाणादिबद्धभूमिकानां यत् संस्थानं तद् मन्यते । 'त्रयस्तु' शब्दनया ज्ञानिनमधिपतिं वा ग्रामसंस्थानस्वामित्वेनेच्छन्ति ॥

एनामेव निर्युक्तिगाथां व्यक्तीकुर्वन्नाह-

[भा.१११०]संगहियमसंगहिओ, संगहिओ तिविह मल्लयं नियमा ।
भित्तादी जा कासवो, असंगहो वेति संठाणं ॥

वृ- नैगमो द्विधा-साङ्ग्रहिकोऽसाङ्ग्रहिकश्च । तद्विपरीतोऽसाङ्ग्रहिकः । तत्र यः साङ्ग्रहिकः स नियमात् 'त्रिविधम्' उत्तानका-ऽवाङ्मुख-सम्पुटकभेदभिन्नं सम्पूर्णं वा कण्डं वा मल्लकं तस्य यत् पटहच्छेदलक्षणं संस्थानं तद् मन्यते । असाङ्ग्रहिकस्तु भित्तिसंस्थानमादौ कृत्वा यावत् काश्यपसंस्थानम् एतानि सर्वाण्यपि 'ब्रूते' प्रतिपद्यत इत्यर्थः । सङ्ग्रह-व्यवहारौ तु साङ्ग्रहिकाऽसाङ्ग्रहिकयोरेव नैगमयोर्यथासङ्ख्यमन्तर्भावनीयाविति न पृथक् प्रपञ्चयेते इति ॥

[भा.११११]निम्मा घरवइ थूभिय, तइओ दुहणा वि जाव पावंति ।
नाणिस्साहिपइस्स व, जं संठाणं तु सद्दस्स ॥

वृ- 'तृतीयः' [illegible] ऋजुसूत्रः, सः ''निम्म''त्ति मूलादानां ''घर वइ''त्ति गृहाणां वृतेर्वा स्तूपिकानां या उपलक्षणत्वात् कटकानां कुट्टिमानां वा यत् संस्थानं माले वा भूमिकादार्ढ्यसम्पादनार्थमकुट्यमाने 'द्रघणाः' मुद्गरा ऊर्ध्वमुत्क्षिप्यमाणा यावद् आकाशतलं प्राप्नुवन्ति तावन्तर्यादीकृत्य यत् संस्थानमेतत् सर्वमपि प्रत्येकं ऋजुसूत्रो मन्यते। तथा 'ज्ञानिनः' ग्रामपदार्थज्ञस्य ग्रामाधिपतेर्वा यत् संस्थानं तदेव शब्दनयस्य ग्रामसंस्थानतयाऽभिप्रेतमिति ॥ गतं द्रव्यग्रामद्वारम्। अथ भूतादिग्रामभेदान् भावयति-

[भा.१११२]चउदसविहो पुन भवे, भूतग्गामो तिहा उ आतोज्जो।
सोतादिंदियगामो, तिविहा पुरिसा पिउग्गामो ॥

वृ- भूताः-प्राणिनस्तेषां ग्रामः-समूहो भूतग्रामः, स चतुर्दशविधः। तथा चाह-
एगिंदिय सुहुमियरा, सन्नियर पणिंदिया य सबि-ति-चऊ।
पज्जत्ताऽपज्जत्ता, भेएणं चउदस ग्गामा ॥

एकेन्द्रिया द्विविधाः-सूक्ष्मा बादराश्च ।सूक्ष्मनामकर्मोदयवर्त्तिनः सूक्ष्माः। बादरनाम-कर्मोदयवर्तिनो बादराः। द्वीन्द्रियाः-कृम्यादयः। त्रीन्द्रियाः-कुन्थु-पिपीलिकादयः। चतुरिन्द्रिया भ्रमरादयः। पञ्चेन्द्रिया द्विविधाः-संज्ञिनोऽसंज्ञिनश्च। संज्ञिनः-गर्भजतिर्यङ्-मनुष्या देव-नारकाश्च। असंज्ञिनः सम्मूर्च्छिमास्तिर्यङ्-मनुष्याः। एते च स्वयोग्यपर्याप्तिभिः पर्याप्ता वा स्युरपर्याप्ता। पर्याप्तिर्नाम शक्ति, सा चाहार-शरीरेन्द्रिय-प्राणापान-भाषा-मनःपर्याप्तिभेदात् षोढा। तत्र तया शक्त्या करणभूतया भुक्तमाहारं खल-रसरूपतया करोति सा आहारपर्याप्ति। यया तु रसीभूतमाहारं धातुरूपतया परिणमयति सा शरीरपर्याप्ति। यया धातुरूपतया परिणमितादाहारादिन्द्रिय-प्रायोग्यद्रव्याण्युपादायैकद्वित्र्यादीन्द्रियरूपतया परिणमय्य स्पर्शादिविषयपरिज्ञानसमर्थो भवति सा इन्द्रियपर्याप्तिः। यया पुनरुच्छ्वास-भाषा-मनःप्रायोग्याणि दलिकान्यादाय यथाक्रममुच्छ्-वासरूपतया भाषात्वेन मनस्त्वेन वा परिणमय्याऽऽलम्ब्य च मुञ्चति सा क्रमेण प्राणापान-पर्याप्तिर्भाषापर्याप्तिर्मनः पर्याप्ति। एताश्च यथाक्रममेकेन्द्रियाणां चतस्रो, द्वीन्द्रियादीनां सम्मूर्च्छि-मतिर्यङ्-मनुष्यान्तानां पञ्च, संज्ञिपञ्चेन्द्रियाणां च षड् भवन्ति। एवं च पूर्वोक्ताः सप्तापि भेदाः पर्याप्तापर्याप्तभेदाद् द्विधा भिद्यमानाश्चतुर्दश भवन्ति। एष चतुर्दशविधो भूतग्रामः ॥

आतोद्यग्रामस्तु त्रिधा-षड्जग्रामो मध्यमग्रामो गन्धारग्रामश्च। एतेषां च स्वरूपमनु-योगद्वारशास्त्राद् अवसेयम्। इन्द्रियग्रामः श्रोत्रादीनामिन्द्रियाणां समुदायः, स च पञ्चेन्द्रियाणां सम्पूर्ण, चतुस्त्रिद्व्येकेन्द्रियाणां यथाक्रममेकद्वित्रिचतुःसङ्ख्यैरिन्द्रियैर्न्यून इति। पितृग्रामस्तु त्रिविधाः पुरुषाः। तद्यथा-तिर्यग्योनिकपुरुषा मनुष्यपुरुषा देवपुरुषाश्चेति ॥

[भा.१११३]तिरिया-ऽमर-नरइत्थी, माउग्गामं पि तिविहमिच्छंति।
नाणाइतिगं भावे, जओ व तेसिं समुप्पत्ती ॥

वृ- तिर्यग्योनिकस्त्रियोऽमराः-देवास्तेषां स्त्रियो नराः-मनुष्यास्तेषां च स्त्रय इति मातृग्राममपि त्रिविधमिच्छन्ति पूर्वसूरयः। आह किमेवं स्त्रि-पुरुषाणां मातृपितृग्रामसंज्ञा विधीयते?

उच्यते- संज्ञासूत्रोपयोगार्थम् । तथा चाऽऽचारप्रकल्पाध्ययने षष्ठोद्देशके सूत्रम्- "जे भिक्खू माउग्गामं मेहुणवडियाए विन्नवेइ" इत्यदि । तथा- "जा भिक्खुणी पिउग्गामं विन्नवेइ" इत्यादि। भावग्रामस्तु नो आगमतः 'ज्ञानादित्रिकं' ज्ञान-दर्शन-चारित्रसमवायरूपम्; यतो वा 'तेषां' ज्ञानादीनामुत्पत्तिर्भवति ते भावग्रामतया ज्ञातव्याः ।। के पुनस्ते ? उच्यते-

[भा.१११४]तित्थगरा जिन चउदस, दस भिन्ने संविग्ग तह असंविग्गे ।
सारूविय वय दंसण, पडिमाओ भावगामो उ ।

वृ 'तीर्थकराः' अर्हन्तः, 'जिनाः' सामान्यकेवलिनः अवधि-मनःपर्यायजिना वा, चतुर्दश-पूर्विणो दशपूर्विणश्च प्रतीताः, "भिन्ने"त्ति असम्पूर्णदशपूर्वधारिणः, 'संविग्नाः' उद्यतविहारिणः, 'असंविग्नाः' तद्विपरीताः, 'सारूपिकाः नाम' श्वेतवाससः क्षुरमुण्डितशिरसो भिक्षाटनोपजीविनः पश्चात्कृतविशेषाः, "वय" त्ति प्रतिपन्नाणुव्रताः श्रावकाः, "दंसण"त्ति दर्शनश्रावकाःअविरत-सम्यग्दृष्टय इत्यर्थः, 'प्रतिमाः' अर्हद्बिम्बानि । एष सर्वोऽपि भावग्रामः, एतेषां दर्शनादिना ज्ञानादि-प्रसूतिसद्भावात् । अत्र परः प्राह-ननु युक्तं तीर्थकादीनां ज्ञानादिरत्नत्रयसम्पत्समन्वितानां भावग्रामत्वम्, ये पुनरसंविग्नादयस्तेषां कथमिव भावग्रामत्वमुपपद्यते ? नैष दोषः, तेषामपि यथावस्थितरूपणाकारिणां पार्श्वतो यथोक्तं धर्ममाकर्ण्य सम्यग्दर्शनादिलाभ उदयते, अतस्तेषामपि भावग्रामत्वमुपपद्यत एवेति कृतं प्रसङ्गेन ।। तीर्थकरा इति पदं विशेषतो भावयति-

[भा.१११५] चरण-करणसंपन्ना, परीसहपरायगा महाभागा ।
तित्थगरा भगवंतो, भावेण उ एस गामविही ।।

वृ- चरण-करणसम्पन्नाः परीषहपराजेतारो महाभागास्तीर्थकरा भगवन्तो दर्शनमात्रादेव भव्यानां सम्यग्दर्शनादिबोधिबीजप्रसूतिहेतवो भावग्रामतया प्रतिपत्तव्याः । एवं जिनादिष्वपि भावनीयम् । एष सर्वोऽपि भावग्रामविधिर्मन्तव्यः ।। प्रतिमा अधिकृत्य भावनामाह-

[भा.१११६]जा सम्मभावियाओष पडिमा इयरा न भावगामो उ ।
भावो जइ नत्थि तहिं, ननु कारण कज्जउवयारो ।।

वृ- याः 'सम्यग्भाविताः' सम्यग्दृष्टिपरिगृहीताः प्रतिमास्ता भावग्राम उच्यते, न 'इतराः' मिथ्यादृष्टिपरिगृहीताः । आह सम्यग्भाविता अपि प्रतिमास्तावद् ज्ञानादिभावशून्याः, ततो यदि ज्ञानादिरूपो भावस्तत्र नास्ति ततस्ताः कथं भावग्रामो भवितुमर्हन्ति ? उच्यते-ता अपि दृष्ट्वा भव्यजीवस्याऽऽर्द्रककुमारादेरिव सम्यग्दर्शनाद्युदीयमानमुपलभ्यते ततो ननु कारणे कार्योपचार इति कृत्वा ता अपि भावग्रामो भण्यन्ते ।। अत्र परः प्राह-

[भा.१११७] एवं खु भावगामो, निण्हगमाई वि जह मयं तुब्भं ।
एअमवत्थं को नु हु, अव्विवरीतो वदिज्जाहि ।।

वृ- यथा सम्यग्भावितप्रतिमानां कारणे कार्योपचाराद् भावग्रामत्वं युष्माकं 'मतम्' अभिप्रेतम्, एवमे निह्नवादयोऽपि भावग्राम एव भवतां प्राप्नुवन्ति, तेषामपि दर्शनेन कस्यचित् सम्यग्दर्शनोत्पादात् । सूरिराह-'एतत्' त्वदुक्तमवाच्यवचनं भवन्तमसमञ्जसप्रलापिनं विना को नु 'अविपरीतः' सम्यग्वस्तुतत्ववेदी वदेत् ? अपि तु नैवेत्यभिप्रायः ।। कुतः ? इत्याह-

[भा.१११८] जइ वि हु सम्मुप्पाओ, कासइ दट्ठूण निण्हए होज्जा ।

मिच्छत्तहयसईया, तहवि तेवज्जणिज्जा उ ॥

वृ-यद्यपि हि निह्नवानपि दृष्ट्वा कस्यचित् सम्यग्दर्शनोत्पादो भवेत् तथापि ते मिथ्यात्वम्-अतत्त्वे तत्त्वाभिनिवेशः तेन हता-दूषिता स्मृति-सर्वज्ञवचनसंस्कारलक्षणा दुर्वातेन सस्यवद् येषां ते मिथ्यात्वहतस्मृतिका एवंविधाश्च बह्वीभिरसद्भावोद्भावनाभिरस्तोकलोकचेतांसि विपरिणामयन्तः पूर्वलब्धमपि बोधिबीजमात्मनोऽपरेषां घ्नोपघ्नन्तो दूरंदूरेण वर्जनीया इति। यश्चैवमतो नैते भावग्रामतया भवितुमर्हन्तीति प्रकृतम् ॥ अथात्र कतरेण ग्रामेणाधिकारः ? उच्यते-

[भा.१११९] आहारउवहि-सयणा-ऽऽसणोवभोगेसु जो उ पाउग्गो

एवं वयंति गामं, जेनऽहिगारो इहं सुत्ते ॥

वृ-आहारोपधी प्रतीतौ, शयनं-संस्तारकः, आसनं-पीठादि, एतेषामुपभोगेषु यः प्रायोग्यः। किमुक्तं भवति ?-एतानि यत्र कल्प्यानि प्राप्यन्ते तमेनं ग्रामं 'वदन्ति' प्ररूपयन्ति सूरयः, येन 'अत्र' सूत्रे 'अधिकारः' प्रकृतमिति ॥ व्याख्यातं ग्रामपदम् । अथ नगरादिपदान्यतिदिशन्नाह-

[भा.११२०] एमेव य नगरादी, नेयव्वा होंति आणुपुव्वीए ।

जं जं जुज्जइ जत्थ उ, जोएअव्वं तगं तत्थ ॥

वृ- यथा ग्रामपदं प्ररूपितम् एवमेव नगरादीन्यपि पदान्यानुपूर्व्या नेतव्यानि । एतदेव व्याचष्टे- यत् यद् नाम-स्थापना-द्रव्य-भावादिकं यत्र नगरादौ युज्यते तत् तत्र योजयितव्यमिति॥ अथ परिक्षेपपदं निक्षिपन्नाह-

[भा.११२१] नामं ठवणा दविए, खित्ते काले तहेव भावे य ।

एसो उ परिक्खेवे, निक्खेवो छव्विहो होइ ॥

वृ-नामपरिक्षेपः स्थापनापरिक्षेपो द्रव्यपरिक्षेपः क्षेत्रपरिक्षेपः कालपरिक्षेपो भावपरिक्षेपः। एष परिक्षेपे निक्षेपः षड्विधो भवति ॥ तत्र नाम-स्थापने गतार्थे । द्रव्यपरिक्षेपं प्रतिपादयति-

[भा.११२२] सच्चित्तादी दव्वे, सच्चित्तो दुपयमाययगो तिविहो ।

मीसो देसचियादी, अच्चित्तो होइमो तत्थ ॥

वृ- द्रव्यपरिक्षेपस्त्रिविधः-'सच्चित्तादि' सचित्तोऽचित्तो मिश्रश्चेत्यर्थः । सचित्तस्त्रिविधो द्विपदचतुष्पदा-ऽपदभेदात् । तत्र ग्राम-नगरादेर्यद् मनुष्यैः परिवेष्टनं स द्विपदपरिक्षेपः, यत्तु तुरङ्गमहस्त्यादिभिः स चतुष्पदपरिक्षेपः, यत् पुनर्वृक्षैः सोऽपदपरिक्षेपः । मिश्रोऽप्येवमेव त्रिविधः, परं "देसचितादि" त्ति देशे-एकदेशे उपचितः-सचेतनः, आदिशब्दाद् देशे अपचितः-व्यपगत-चैतन्यः । किमुक्तं भवति ?-यत्रैके मनुष्या-ऽश्व-हस्त्यादयो जीवन्ति, अपरे तु मृताः परं ग्रामादिकं परिक्षिप्य व्यवस्थिताः, स मिश्रपरिक्षेपः । अचित्तपरिक्षेपस्त्वयं भवति ॥ तमेवाह-

[भा.११२३] पासाणिट्टग-मट्टिय-खोड-कडग-कंटिगा भवे दव्वे ।

खाइय-सर-नइ-गड्डा-पव्व-दुग्गाणि खेत्तम्मि ॥

वृ-पाषाणमयः प्राकारो यथा द्वारिकायाम्, इष्टकामयः प्राकारो यथा नन्दपुरे, मृत्तिकामयो यथा सुमनोमुखनगरे, "खोड" त्ति काष्ठमयः प्राकारः कस्यापि नगरादेर्भवति, कटकाः-वंश-दलादिमयाः कण्टिकाः-बुब्बूलादिसम्बन्धिन्यः तन्मयो वा परिक्षेपो ग्रामादेर्भवति, एष सर्वोऽपि द्रव्यपरिक्षेपः । क्षेत्रपरिक्षेपस्तु खातिका वा सरो वा नदी वा गर्त्ता वा पर्वतो वा दुर्गाणि वा-

जलदुर्गादीनि पर्वता एव दुर्गाणि वा, एतानि नगरादिकं परिक्षिप्य व्यवस्थितानि क्षेत्रपरिक्षेप उच्यते ॥ कालपरिक्षेपमाह-

[भा.११२४]　वासारत्ते अइपाणियं ति गिम्हे अपाणियं नच्चा ।
कालेन परिक्खित्तं, तेन तमन्ने परिहरंति ॥

वृ- वर्षारात्रेऽतिपानीयमिति कृत्वा 'ग्रीष्मे' उष्णकाले अपानीयमिति कृत्वा रोद्धुं न शक्यत इति ज्ञात्वा तेन कारणेन तद् नगरादिकम् 'अन्ये' परराष्ट्रराजानः परिहरन्ति तत् कालपरिक्षिप्तम्॥ भावपरिक्षेपमाह-

[भा.११२५]　नच्चा नरवइणो सत्त-सार-बुद्धी-परक्कमविसेसे ।
भावेन परिक्खित्तं, तेन तमन्ने परिहरंति ॥

वृ- सत्त्वं-धैर्यम्; सारो द्विधा-बाह्य आभ्यन्तरश्च, बाह्यो बल-वाहनादि, आभ्यन्तरो रत्न-सुवर्णादि; बुद्धिरौत्पत्तिक्यादिभेदाच्चतुर्विधा यथा अभयकुमारस्य; पराक्रमः-औरसबलात्मकः, एतान् सत्त्व-सार-बुद्धि-पराक्रमविशेषान् विवक्षितनरपतेः सम्बन्धिनो ज्ञात्वा 'यद्यनेन सार्द्धं विग्रहमारप्स्यामहे तत उत्खनिष्यते स्वकुलगोत्रागतमस्माकमनेन [illegible]' इति परिभाव्य तदीयं नगरं यद् 'अन्ये' राजानः परिहरन्ति तत् तदीयेन सत्त्व-सारादिना भावेन परिक्षिप्तं प्रतिपत्तव्यम्॥ व्याख्यातं परिक्षेपपदम् । अत्र द्रव्यपरिक्षेपेण प्रकृतम् । अथ मासपदनिक्षेपमाह-

[भा.११२६]　नामं ठवणा दविए, खित्ते काले तहेव भावे य ।
मासस्स परूवणया, पगयं पुण कालमासेणं ॥

वृ- नाममासः स्थापनामासोद्रव्यमासः क्षेत्रमासः कालमासो भावमासश्चेति षड्विधा मासस्य प्ररूपणा कर्त्तव्या । प्रकृतं पुनरत्र सूत्रे कालमासेन ॥

तत्र नाम-स्थापने क्षुण्णत्वाद् व्युदस्य द्रव्यमासमाह-

[भा.११२७]दव्वे भवितो निव्वत्तिओ उ खेत्तं तु जम्मि वण्णणया ।
कालो जहिं वण्णिज्जइ, नक्खत्तादी व पंचविहो ॥

वृ- द्रव्यमासः "भविउ"त्ति माषत्वेन य उत्पत्स्यते, स चैकभविको बद्धायुष्कोऽभिमुखनामगोत्रश्चेति त्रिधा, एष त्रिविधोऽपि प्राकृतशैल्या द्रव्यमासो भण्यते, एवमुत्तरत्रापि । अथवा द्रव्यमासो द्विविधा मूलोत्तरगुणनिर्वर्त्तितभेदात् । तत्र यो जीवविप्रमुक्तो माषः स मूलगुण-निर्वर्त्तितः, यस्तु चित्रकर्मादौ माषस्तम्ब आलिखितः स उत्तरगुणनिर्वर्त्तितः । क्षेत्रमासस्तु यस्मिन् क्षेत्रे मासकल्पस्य वर्णना क्रियते माषो वा वाप्यते । कालमासः पुनर्यस्मिन् काले माषो वाप्यते मासकल्पो वा वर्ण्यते । अथवा कालमासः श्रावणादि । यद्वा कालमासो नक्षत्रादिकः पञ्चविधः । तद्यथा- नक्षत्रमासश्चन्द्रमासः ऋतुमासः आदित्यमासः अभिवर्द्धितमासः ॥

अमीषामेव परिमाणमाह-

[भा.११२८]　नक्खत्तो खलु मासो, सत्तावीसं हवंतऽहोरत्ता ।
भागा य एक्कवीसं, सत्तट्ठिकिएण छेएणं ॥

वृ- नक्षत्रेषु भवो नाक्षत्रः, स खलु मासः सप्तविंशतिरहोरात्राणि सप्तषष्टीकृतेन च्छेदेन च्छिन्नस्याहोरात्रस्यैकविंशति सप्तषष्टिभागाः । तथाहि-चन्द्रस्य भरण्यार्द्रा-ऽश्लेषा-स्वाति-ज्येष्ठा-

शत-भिषगनामानि षड् नक्षत्राणि पञ्चदशमुहूर्त्तभोगीनि, तिस्रो उत्तराः पुनर्वसू रोहिणी विशाखा चेति षट् पञ्चचत्वारिंशन्मुहूर्त्तभोगीनि, शेषाणि तु पञ्चदश नक्षत्राणि त्रिंशन्मुहूर्त्तानीति जातानि सर्वसङ्ख्यया मुहूर्त्तानामष्ट शतानि दशोत्तराणि; एतेषां च त्रिंशन्मुहूर्त्तैरहोरात्रमिति कृत्वा त्रिंशता भागो ह्रियते लब्धानि सप्तविंशतिरहोरात्राणि, अभिजिद्भोगश्चैकविंशति सप्तषष्ठा भागा इति तैरभ्यधिकानि सप्तविंशतिरहोरात्राणि सकलनक्षत्रमण्डलोपभोगकालो नक्षत्रमास उच्यते १ ॥

[भा.११२९] अउनत्तीसं चंदो, विसट्ठि भागा य हुंति बत्तीसा ।
कम्मो तीसइदिवसो, तीसा अद्धं च आइच्चो ॥

वृ-चन्द्रे भवश्चान्द्रः कृष्णपक्षप्रतिपद आरम्य यावत् पौर्णमासीपरिसमाप्तिस्तावत्कालमानः; स च एकोनत्रिंशदहोरात्राणि द्वात्रिंशच्च द्वाषष्टिभागा अहोरात्रस्य २ । कर्ममासः ऋतुमास इत्येकोऽर्थः, स त्रिंशद्दिवसप्रमाणः ३ । आदित्यमासस्त्रिंशदहोरात्राणि रात्रिन्दिवस्य चार्द्धम्, दक्षिणायनस्योत्तरायणस्य वा षष्ठभागमान इत्यर्थः ४ ॥

[भा.११३०]अभिवड्ढि इक्कतीसा, चउवीसं भागसयं च तिगहीणं ।
भावे मूलाइजुओ, पगयं पुन कम्ममासेणं ॥

वृ-अभिवर्द्धितो नाम मुख्यतः त्रयोदशचन्द्रमासप्रमाणः संवत्सरः, परं तद्द्वादशभागप्रमाणो मासोऽप्यवयवे समुदायोपचाराद् अभिवर्द्धितः, स चैकत्रिंशदहोरात्राणि चतुर्विंशत्युत्तरशतभागीकृतस्य चाहोरात्रस्य त्रिकहीनं चतुर्विंशं शतं भागानां भवति, एकविंशशतमिति भावः ५ । एतेषां चानयनाय इयं करणगाथा-

जुगमासेहि उ भइए, जुगम्म लद्धं हविज्ज नायव्वं ।
मासाणं पंचण्ह वि, एयं राइंदियपमाणं ॥

इह सूर्यस्य दक्षिणमुत्तरं वा अयनं त्र्यशीत्यधिकदिनशतात्मकम् । द्वे अयने वर्षमिति कृत्वा वर्षे षट्षष्ट्यधिकानि त्रीणि शतानि भवन्ति । पञ्च संवत्सरा युगमिति कृत्वा तानि पञ्चभिर्गुण्यन्ते जातान्यष्टादश शतानि त्रिंशानि दिवसानाम् । एतेषां नक्षत्रमासदिवसानयनाय सप्तषष्टिर्युगे नक्षत्रमासाइति सप्तषष्ट्या भागो ह्रियते, लब्धाः सप्तविंशतिरहोरात्रा एकविंशतिरहोरात्रस्य सप्तषष्टिभागाः १ । तथा चन्द्रमासदिवसानयनाय द्वाषष्टिर्युगे चन्द्रमासा इति द्वाषष्ट्या तस्यैव युगदिनराशेर्भागो ह्रियते, लब्धान्येकोनत्रिंशदहोरात्राणि द्वात्रिंशच्च द्वाषष्टिभागाः २ । एवं युगदिवसानामेवैकषष्टिर्युगे कर्ममासा इत्येकषष्ट्या भागे हृते लब्धानि कर्ममासस्य त्रिंशद्दिनानि ३ । तथा युगे षष्टि सूर्यमासा इति षष्ट्या युगदिनानां भागे हृते लब्धाः सूर्यमासदिवसास्त्रिंशदहोरात्रस्यार्द्धं च ४ । तथा युगदिवसा एव अभिवर्द्धितमासदिवसानयनाय त्रयोदशगुणाः क्रियन्ते जतानि त्रयोविंशतिसहस्राणि सप्त शतानि नवत्यधिकानि, एषां चतुश्चत्वारिंशैः सप्तभि शतैर्भागो ह्रियते लब्धा एकत्रिंशद्दिवसाः, शेषाण्यवतिष्ठन्ते षड्विंशत्यधिकानि सप्तशतानि चतुश्चत्वारिंशसप्तशतभागानाम्, तत उभयेषामप्यङ्कानां षड्भिरपवर्त्तना क्रियते जातमेकविंशं शतं चतुर्विंशत्युत्तरशतभागानामिति ५ ॥

उक्ताः पञ्चापि कालमासाः । भावमासो नोआगमतः 'मूलादियुतः' मूल-कन्द-स्कन्धादिरूपतया माषप्रायोग्याणि कर्माणि वेदयन् माषजीवोऽवगन्तव्यः प्रकृतं पुनरत्र

'कर्ममासेन' ऋतमासेनेत्यर्थः । ततः "अबाहिरियंसि कप्पइ निग्गंथाणं एकं मासं वत्थए" ति किमुक्तं भवति ? -त्रिंशदहोरात्रमानमेकं ऋतुमासं कल्पते वस्तुमिति ।। प्ररूपितं मासपदम् । अथ येषां मासकल्पेन विहारो भवति तान् नामग्राहं गृहीत्वा तद्विधिमभिधित्सुराह-

[भा.११३१] जिन सुद्ध अहालंदे, गच्छे मासो तहेव अज्ञाणं ।
एएसिं नाणत्तं, वोच्छामि अहानुपुव्वीए ।।

वृ- जिनकल्पिकानां शुद्धपरिहारकाणां यथालन्दकल्पिकानां 'गच्छवासिनां' स्थविर-कल्पिकानामित्यर्थः । तथैव 'आर्याणां' साध्वीनां यथा येषां मासकल्पो भवति तथैतेषां सर्वेषामपि नानात्वं वक्ष्यामि 'यथानुपूर्व्या' यथोद्दिष्टपरिपाट्या ।। तत्रप्रथमं जिनकल्पिकानाश्रित्याह-

[भा.११३२] पव्वज्ञा सिक्खापयमत्थग्गहणं च अनियओ वासो ।
निप्फत्ती य विहारो, सामायारी ठिई चेव ।।

वृ- प्रथमं प्रव्रज्या वक्तव्या, कथमसौ जिनकल्पिकः प्रव्रजितः ? इति । ततः 'शिक्षापदं' ग्रहणा-ऽऽसेवनाविषयम् । ततो ग्रहणमित्यधीतसूत्रस्यार्थग्रहणम् । ततो नानादेशदर्शनं कुर्वतो यथा अनियतो वासो भवति । ततः शिष्याणां निष्पत्ति । तदनन्तरं विहारः । ततो जिनकल्पं प्रतिपन्नस्य सामाचारी । ततस्तस्यैव 'स्थिति' क्षेत्र-कालादिकाऽभिधातव्येति गाथासमुदायार्थः ।। अवयवार्थं प्रतिद्वारमभिधित्सुः प्रथमतः प्रव्रज्याद्वारमाह-

[भा.११३३] सोच्चाऽभिसमेच्चावा, पव्वज्ञा अभिसमागमो तत्थ ।
जाइस्सरणाईओ, सनिमित्तमनिमित्तओ वा वि ।।

वृ- 'श्रुत्वा' तीर्थकर-गणधरादीनां धर्मदेशनां निशम्य 'अभिसमेत्य वा' सह सन्मत्यादिना स्वयमेवावबुध्य प्रव्रज्या भवेत् । तत्राल्पवक्तव्यत्वात् परथममभिसमागम उच्यते-सो अभिसमागमो जातिस्मरणादिकः सनिमित्तकोऽनिमित्तको वा द्रष्टव्यः । तत्र यद् बाह्यं निमित्तमुद्दिश्य जातिस्मरण-मुपजायते तत् सनिमित्तकम्, यथा वल्कलचीरिप्रभृतीनाम् । यत् पुनरेवमेव तदावारककर्मणां क्षयोपशमेनोत्पद्यते तदनिमित्तकम्, यथा स्वयम्बुद्ध-कपिलादीनाम् । एतेन जातिस्मरणेन आदिग्रहणात् श्रावकस्य गुणप्रत्ययप्रभवेणावधिज्ञानेन अन्यतीर्थिकस्य वा विभङ्गज्ञानेन प्रव्रज्याप्रतिपत्ति सम्भवति ।। गतमभिसमेत्यद्वारम् । अथ श्रुत्वेति द्वारं विवरीषुराह-

[भा.११३४] सोच्चा उ होइ धम्मं, स केरिसो केन वा कहेयव्वो ।
के तस्स गुणा वुत्ता, दोसा अनुवायकहणाए ।।

वृ-धर्ममाचार्यादीनामन्तिके श्रुत्वा प्रव्रज्या भवति । अत्र शिष्यः पृच्छति-स धर्म कीदृशः ? केन वा कथयितव्यः ? के वा तस्योपायकथने गुणाः प्रोक्ताः ? के वा अनुपायकथने दोषाः ? इति ।। तत्र कीदृशः ? केन वा कथयितव्यः ? इति प्रश्नो निर्वचनमाह-

[भा.११३५] संसारदुक्खमहणो, विबोहओ भवियपुंडरीयाणं ।
धम्मो जिनपन्नत्तो, पगप्पजइणा कहेयव्वो ।।

वृ-संसार एव जन्म-जरा-मरणादिदुःखनिबन्धनत्वाद् दुःखं संसारस्य वा दुःखानि-शारीर-मानसिकलक्षणानि तस्य तेषां वा मथनः-विनाशकः, तथा भव्या एव विनयादिविमलगुणपरिमल-योगाद् ज्ञानादिलक्ष्मीनिवासयोग्यतया च पुण्डरीकाणि-श्वेतसरोरुहाणि तेषां विशेषेण

मिथ्यात्वादिनिद्राविद्रावणलक्षणेन बोधकः-सम्यग्दर्शनादिविकाशकारी, ईदृशो जिनप्रज्ञप्तो धर्म 'प्रकल्पयतिना' निशीथाध्ययनसूत्रार्थधारिणा साधुना कथयितव्यः। स हि संविग्नगीतार्थतयोत्सर्गा-ऽपवादपदानि स्वस्थाने स्वस्थाने विनियु[illegible] न विपरीत[illegible] परं [illegible] दीर्घभवभ्रमणभाजनमातनोतीति॥ परः प्राह-किमेवंविधोऽपि भागवतो धर्म उपदिश्यमानः केषाञ्चिद् बोधं न जनयति येनैवमभिधीयते "भव्यपुण्डरीकाणां विबोधकः" ? इति, अत्रोच्यते-

[भा.११३६] जह सूरस्स पभावं, दट्ठुं वरकमलपोंडरीयाइं।
बुज्झंति उदयकाले, तत्थ उ कुमुदा न बुज्झंति॥

वृ- यथा सूर्यस्य 'प्रभावं' प्रभापटलरूपं दृष्ट्वा सरसि स्थितानि वरकमलपुण्डरीकाणि 'उदयकाले' प्रभाते बुध्यन्ते। तत्रैव च सरसि कुमुदान्यपि सन्ति परं तानि न बुध्यन्ते॥

[भा.११३७] एवं भवसिद्धीया, जिणवरसूरस्सुतिप्पभावेणं।
बुज्झंति भवियकमला, अभवियकुमुदा न बुज्झंति॥

वृ- 'एवम्' अनेनैव दृष्टान्तेन जिनवरसूर्यस्य या श्रुति-आगमः प्रभापटलकल्पस्तत्प्रभावेन भव्यकमलानि 'बुध्यन्ते' सम्यक्त्वादिविकाशमासादयन्ति। तानि च- "भव्वा वि ते अनंता, जे मुत्तिसुहं न पावंति।" इति वचनादसम्भावनीयसिद्धिगमनान्यपि भवेयुरित्यत्तध्यवच्छेदार्थमाह-भवा-भाविनी सिद्धिर्येषां तानि भवसिद्धिकानि। यस्मिंश्च जीवलोकसरसि भगवतः प्रभावेन भव्यकमलानि बोधमश्नुवते तस्मिन् अभव्यकुमुदान्यपि कालसौकरिकप्रभृतीनि सन्ति परं तानि न प्रतिबुध्यन्ते, तथास्वाभाव्यात्। यदवादि वादिमुख्येन-

सद्धर्मबीजवपनानधकौशल्यस्य, यल्लोकबान्धव! तवापि खिलान्यभूवन्।
तन्नाद्भुतं खगकुलेष्विह तामसेषु सूर्यांशवो मधुकरीचरणावदाताः

– अत्र परः प्राह–

[भा.११३८] पुव्वंति होइ कहओ, पच्छा धम्मो उ उक्कमो किंतु।
तेन वि पुव्वं धम्मो, सुओ उ तम्हा कमो एसो॥

वृ- पूर्वं तावत् 'कथकः' धर्मोपदेष्टा भवति, पश्चात् तदुपदेशं श्रुत्वा धर्म उत्पद्यते, अतः किमेवं 'स कीदृशः' इति प्रथमं धर्मस्वरूपमुद्दिश्य 'केन वा कथयितव्यः' इति कथकस्वरूपं पश्चादुद्दिशद्भिरुत्क्रमः क्रियते?। गुरुराह-तेनापि कथकेन पूर्वं गुरूणां समीपे धर्म श्रुत एव तस्मात् क्रम एषः नोत्क्रम इति॥ अयं च धर्म उपायेनैव कथयितव्यो नानुपायेन। आह के दोषान अनुपायकथने? उच्यते-

[भा.११३९] जइधम्मं अकहेत्ता, अनुदिविदं सम्म मंसविरइं वा।
अनुवासए कहिंते, चउजमला कालगा चउरो।

वृ- यः खलु मिथ्यादृष्टिरनुपासकस्तत्प्रथमतया धर्मश्रवणार्थमुपतिष्ठते तस्य यतिधर्मः कथयितव्यः। यदि यतिधर्ममकथयित्वा श्रावकसम्बन्धिनमणुधर्म कथयति तदा चत्वारो गुरवः तपसा कालेन च द्वाभ्यामपि गुरुकाः। यदा यतिधर्मं प्रतिपत्तुं नोत्सहते तदा मूलोत्तरगुणभेदाद् द्विविधः श्राद्धधर्म कथनीयः, सम्यक्त्वमूलानि द्वादश व्रतानीत्यर्थः। यदि श्राद्धधर्मकथयित्वा सम्यग्दर्शनमात्रं कथयति तदाऽपि चत्वारो गुरवः तपसा गुरवः काले लघवः। यदा श्राद्धधर्मं

ग्रहीतुं न शक्नोति तदा यदि सम्यग्दर्शनमनुपदिश्य मद्य-मांसविरतिं कथयति तदा चत्वारो गुरवः तपसा लघवः कालेन गुरवः । यदा सम्यग्दर्शनमप्यङ्गीकर्तुं न शक्यते तदा यदि मद्य-मांसविरतिमप्ररूप्यैहिकमामुष्मिकं वा तद्विरतिफलं कथयति तदाऽपि चत्वारो गुरवः तपसा कालेन च लघवः । "चउजमला कालगा चउरो" त्ति चत्वारि यमलानि तपः-कालयुगललक्षणानि येषु ते चतुर्यमलाः, चत्वारः कालकाश्चत्वारश्चतुर्गुरुका इत्यर्थः, आज्ञाभङ्गादयश्च दोषाः ॥ अपि च-

[भा.११४०] जीवा अब्भुट्ठिता, अविहीकहणाइ रंजिया संता ।
अभिसंछूढा होंती, संसारमहण्णवं तेनं ॥

वृ- ते जीवाः प्रव्रज्यायामभ्युत्तिष्ठन्तोऽपि तदीयया अविधिकथनया रञ्जिताः सन्तश्चिन्तयन्ति- यदि श्रावकधर्मेणापि कामभोगान् भुञ्जानैः सुगतिरवाप्यते ततः किमनया सिकताकवलनिरास्वादया प्रव्रज्यया ? एवं यदि सम्यगदर्शनमात्रेणापि सुगतिरासाद्यते तर्हि को नामात्मानं वितिश्च ज्वलायां प्रक्षेप्स्यति ? इत्यादि; एवं ते विपरिणामिताः प्रव्रज्यामगृह्णन्तः षट् कायान् विराधयेयुः, अतः 'तेन' कथकेन संसारमहार्णवम् अभि-आभिमुख्येन प्रक्षिप्ता भवन्ति, चिरेण मुक्तिपदप्राप्तेः ॥

[भा.११४१] एसेव य नून कमो, वेरग्गगओ न रोयए तं च ।
दुहतो य निरनुकंपा, सुणि-पयस-तरच्छअद्दुवमा ॥

वृ- ते जीवा इत्थं चिन्तयेयुः-नूनमेष एवात्र 'क्रमः' परिपाटि यत् पूर्वं श्रावकधर्मं स्पृष्ट्वा पश्चाद् यतिधर्मप्रतिपद्यते, अथवा पूर्वं सम्यग्दर्शनमात्रमुररीकृत्य ततो देशविरतिरुपादीयते, यद्वा मद्य-मांसविरतिं स्पृष्ट्वा पश्चात् सम्यकत्वं गृह्यते इति । स चारम्भबहुलतया गृहवासस्योपरि वैराग्यमुपगतः प्रव्रज्यां प्रतिपत्तुमायातः, स च धर्मकथी श्राद्धधर्मं प्ररूपयितुं लग्नः, तं चासौ वैराग्याधिरूढमानसत्वाद् न रोचयति, ततो विपरिणम्य तच्चन्निकादिषु गच्छेत् । ते चैवमविधिना धर्मं कथयन्तः 'द्विधाऽपि निरनुकम्पाः' षण्णां कायानां तस्य चोपर्यनुकम्पारहिताः । "सुणि" त्ति वीरशुनिकादृष्टान्तः-यथा सा वीरशुनिका पूर्वमासमालैः परिखेदिता पश्चात् सद्भूतमपि नेच्छति, एवमत्रापि पूर्वं श्राद्धधर्मे कथिते पश्चाद् यत्नतोऽभिधीयमानमपि श्रमणधर्ममसौ न प्रतिपद्यते । तथा "पयस" त्ति यथा कस्यापि प्राघूर्णकस्य पूर्वं वासितभक्तं दत्तं ततः स उदरपूरं तद् भुक्तवान्, पश्चाद् घृत-मधुसंयुक्तं पायसमपि दीयमानं तस्य न रोचते । "तरच्छअद्दुवम" त्ति यथा तरक्षः-व्याघ्रविशेषः स पूर्वमस्थ्नां घ्राणः पश्चादामिषमपि न रोचयति, एवमस्यापि श्रावकधर्मघ्राणस्य यतिधर्मो न प्रतिभासते । यत एते दोषा अतो विधिनैव कथनीयम् ॥ के पुनर्विधिकथने गुणाः ? उच्यते-

[भा.११४२] तित्थानुसज्जणाए, आयहियाए परं समुद्धरति ।
मग्गप्पभावणाए, जइधम्मकहा अओ पढमं ॥

वृ- यतिधर्मकथा प्रथमतः क्रियमाणा तीर्थस्यानुसजनार्थं भवति, बहूनां जन्तूनां प्रव्रज्याप्रतिपत्तेः । तीर्थानुषजना च कृता आत्महिताय जायते । परं च प्रव्रज्याप्रदानेन संसार-सागरादसौ समुद्धरति । अत एव मार्गस्य-सम्यग्दर्शनादेः प्रभावनार्थं सा प्रभवति । यत एते गुणा अतो यतिधर्मकथा प्रथमं स्वरूपतो गुणतश्च कर्तव्या । तत्र स्वरूपतो यथा-"खंती य मद्दवऽज्जव,

मुत्ती०" इत्यादि। गुणतो यथा-

नो दुष्कर्मप्रयासो न कुयुवति-सुत-स्वामिदुर्वाक्यदुःखं,
राजादौ न प्रणामोऽशन-वसन-धन-स्थानचिन्ता न चैव।
ज्ञानाप्तिर्लोकपूजा प्रशमसुखरसः प्रेत्य मोक्षाद्यवाप्तिः,
श्रामण्येऽमी गुणाः स्युस्तदिह सुमतयः किं न यत्नं कुरुध्वम्? ॥ इत्यादि।

यदा यतिधर्मभङ्गीकर्तुं न शक्नोति तदा सम्यक्त्वमूलः श्राद्धधर्म कथयितव्यः, यदा तमपि न प्रतिपद्यते तदा सम्यग्दर्शनम्, तस्याप्यप्रतिपत्तौ मद्य-मांसविरति। एवं चानुपासकस्य पुरतो धर्मकथायां विधिः। उपासकस्य तु यथास्वरुचि धर्मकथां करोतु, न कश्चिद्दोषः॥

गतं प्रव्रज्याद्वारम्। अथ शिक्षापदद्वारमाह-

[भा.११४३]पव्वइयस्स य सिक्खा, गयण्हाय सिलीपती य दिट्ठंतो।
तइयं च आउरम्मी, चउत्थगं अंधले थेरे॥

वृ-प्रव्रजितस्य च सतोऽस्य शिक्षा दातव्या। सा च द्विधा-ग्रहणशिक्षा आसेवनशिक्षा च। तत्र ग्रहणशिक्षा सूत्राध्ययनरूपा, आसेवनाशिक्षा प्रत्युपेक्षणादिका। तत्र कोऽपि प्रव्रजितः सन् आसेवनाशिक्षां सम्यगभ्यस्यति न पुनर्ग्रहणशिक्षाम्। तत्रार्यार्थं स्नातेन गजेन श्लीपदिना च दृष्टान्तः क्रियते, तृतीयं चोदाहरणमातुरविषयं चतुर्थमन्धस्थविरविषयं कर्त्तव्यमिति गाथासमासार्थः॥ अथ विस्तरार्थोऽभिधीयते-तत्रासौ गुरुभिरादिष्टः-सौम्य! गृहाण त्वमेनां ग्रहणशिक्षाम्, अधीष्व विधिवद् यथाक्रममाऽऽचारादिश्रुतम्। स प्राह-

[भा.११४४]पव्वइओऽहं समणो, निक्खित्तपरिग्गहो निरारंभो।
इति दिक्खियमेकमणो, धम्मधुराए दढो होमि॥

वृ-भदन्त! परव्रजितोऽहं 'श्रमणः' तपस्वी निक्षिप्तपरिग्रहो निरारम्भश्च सञ्जात इत्यतः 'दीक्षिते' दीक्षायां मकारोऽलाक्षणिकः एकाग्रमना 'धर्मधुरायां' धर्मचिन्तायां 'दृढः' निष्कम्पो भवामि॥ किञ्च-

[भा.११४५]समितीसु भावनासु य, गुत्ती-पडिलेह-विनयमाईसु।
लोगविरुद्धेसु य बहुविहेसु लोगुत्तरेसुं च॥

[भा.११४६] जुत्त विरयस्स सययं, संजमजोगेसु उज्जयमइस्स।
किं मज्झं पढिएणं, भण्णइ सुण ता इमे नाए॥

वृ- 'समितिषु' ईर्यादिषु 'भावनासु' द्वादशसु पञ्चविंशतिसङ्ख्याकासु या 'गुप्तिषु' मनोगुप्त्यादिषु प्रत्युपेक्षणायां प्रतीतायां 'विनये' अभ्युत्थानादिरूपे आदिशब्दाद् वैयावृत्यादिषु व्यापारेषु 'युक्तस्य' प्रयत्नवतः, तथा 'लोकविरुद्धेषु' जुगुप्सितकुलभिक्षाग्रहणादिषु 'बहुविधेषु' नानाप्रकारेषु 'लोकोत्तरविरुद्धेषु' नवनीत-चलिताश्रग्रहणादिषु चशब्दाद् उभयविरुद्धेषुमद्यादिषु 'विरतस्य' प्रतिनिवृत्तस्य 'संयमयोगेषु च' आवश्यकव्यापारेषु उद्यतमतेः एवंविधस्य किं मम 'पठितेन' पाठेन कार्यम्? न किञ्चिदिति भावः। भण्यते गुरुभिरत्रोत्तरम्-वत्स! यदर्थं भवान् प्रव्रजितः स एवार्योन सेत्स्यतीति। तथा चात्र शृणु तावदम् 'ज्ञाते' द्वे निदर्शने॥ ते एव यथाक्रममाह-

[भा.११४७]जह ण्हाउत्तिण्ण गओ, बहुअतरं रेणुयं छुभइ अंगे ॥
सुट्ठु वि उज्जमाणो, तह अन्नाणी मलं चिणइ ॥

वृ- यथा गजः सरो-नद्यादौ मलापनयनार्थं स्नात्वोत्तीर्ण सन् बहुतरां रेणुं करेण गृहीत्वा स्वकीयेऽङ्गे क्षिपति, तथास्वाभाव्यात्; तथा 'सुष्ठुपि' अतिशयेनापि 'उद्यच्छमानः' उद्यमं कुर्वाणः अज्ञानीजीवः 'मलं' कर्मरजोलक्षणं चिनोति । एवं त्वमपि कर्मलनिर्घातनार्थं प्रव्रजितः परं श्रुताध्ययनमन्तरेण प्रवचनविरुद्धानि समाचरन् प्रत्युत भूयस्तरेण कर्मरजसाऽऽत्मानं गुण्डयिष्यसि ॥

[भा.११४८]जं सिलिपई निदायति, तं लाएति चलणहि भूमीए ।
एवमसंजमपंके, चरणसइं लाइ अमुणिंतो ॥

वृ- तथा श्लीपदनाम्ना रोगेण यस्य पादौ शूनौ-शिलावद् महाप्रमाणौ भवतः स एवंविधः श्लीपदी यथा क्षेत्रं 'निदायति' निद्दिणतीत्यर्थः, स च यदल्पमात्रं सस्यं निदायति तद् भूयस्तरं 'चलनाभ्यां' पादाभ्यामाक्रम्य भूमौ लगयति मर्दयति च ।एवं श्रुतपाठं ना ''अमुणंतो'' अजानन् नाभ्यां' पादाभ्यामाक्रम्य भूमौ लगयति मर्दयति च । एवं श्रुतपाठं विना ''अमुणंतो'' अजानन् ''चरणसयं''ति चरणसस्यम् 'असंयमपङ्के' पृथिव्याद्युपमर्दकर्दमे लगयति, लगयित्वा च सकलमपि मर्दयति ॥ एवमाचार्यैरुक्ते' शिष्य आतुरदृष्टान्तमाह-

[भा.११४९] भणइ जहा रोगत्तो, पुच्छति वेज्जं न संथियं पढइ ।
इय कम्मामयवेज्जे, पुच्छिय तुज्झे करिस्सामि ॥

वृ- स शिष्यो भणति-भगवन् ! यथा रोगार्त्तःपुरुषो वैद्यमेव पृच्छति न पुनर्वैद्यकसंहितां पठति, एवमहमपि युष्मान् 'कर्मामयवैद्यान्' कर्मरोगचिकित्सकान् पृष्ट्वा सर्वामपि क्रियां करिष्यामि, न पुनः श्रुतं पठिष्यामीति ॥ गुरुराह-

[भा.११५०]भण्णइ न सो सयं चिय, करेति किरियं अपुच्छिउं रोगी ।
नायव्वो अहिगारो, तुमं पि नाउं तहा कुणसु ॥

वृ- भण्यते अत्रोत्तरम्-यद्यपि नासौ रोगी वैद्यमपृष्ट्वा स्वयमेव क्रियां करोति तथाऽपि तस्य 'ज्ञातव्ये' क्रियायाः परिज्ञानेऽधिकारोऽस्ति यथा स वैद्यो भूयो भूयः प्रष्टव्यो न भवति । एवं यद्यपि त्वमस्मान् पृष्ट्वा सर्वामपि क्रियां करिष्यसि तथापि सूत्रमधीत्य षट्कायरक्षणविधिं जानीहि, ज्ञात्वा च तथा कुरु यथा बहुशः प्रष्टव्यं न भवति ॥ शिष्यः प्रतिभणति-

[भा.११५१] दूरे तस्स तिगिच्छी, आउरपुच्छा उ जुज्जए तेनं ।
सारेहिंति सहीणा, गुरुमादि जतो नऽहिज्जामि ॥

वृ- 'तस्य' आतुरस्य 'दूरे' दूरवर्ती सः 'चिकित्सी' वैद्यः अत आतुरस्य क्रियाया अपरिज्ञाने वैद्यान्तिके पृच्छा युज्यते, मम पुनर्गुरव आदिशब्दाद् उपाध्यायादयः स्वाधीना एव, अतो ज्ञास्यन्ति ते भगवन्तः स्वयमेव मदीयं स्खलितम्, ज्ञात्वा च सम्यग् मां सारयिष्यन्ति, यत एवमत एवाहं 'नाधीये' न पठामीति ॥ सूरिराह-

[भा.११५२] आगाढकारमेहिं, गुरुमादी ते जया न होहिंति ।
तइया कहं नु काहिसि, जहा व सो अंधलो थेरो ॥

वृ- आगाढैः कुलादिभिः कारणैर्यदा 'ते' गुर्वादयस्तव स्वाधीना न भविष्यन्ति तदा कथं नाम त्वं करिष्यसि ? यथा वाऽसावन्धः स्थविरः ।। तथाहि-

[भा.११५३] अट्ठ सुय थेर अंधल्लगत्तणं अत्थि मे बहू अच्छी ।
अप्पद्दण्ण पलित्ते, डहणं अपसत्थग पसत्थे ।।

वृ- उज्जेनी नाम नगरी । तत्थ सोमिलो नाम बंभणो परिवसइ, सो य अंधलीभूओ । तस्स य अट्ठ पुत्ता, तेसिं अट्ठ भज्जाओ । सो पुत्तेहिं भन्नति-अच्छीणं किरिया कीरउ । सो पडिभणइ-तुब्भ अट्ठण्हं पुत्ताणं सोलस अच्छीणि, सुण्हाण वि सोलस, बंभणीए दोन्नि, एते चउत्तीसं, अन्नस्स य परियणस्स जाणि अच्छीणि ताणि सव्वाणि मम, एते चेव पभूया । अन्नया घरं पलित्तं। तत्थ तेहिं अप्पदड्ढेहिं सो न चतिओ नीणिउं तत्थेव रडंतो दड्ढो । एस अपसत्थो दिट्ठंतो । मा एवं डज्झिहिसि संसारे असुभकम्मेहिं ।। इमो पसत्थो-तत्थेव अंधलयथेरो । नवरं तेन कारिया किरिया। सो मणुस्साणं भोगाणं आभागी जाओ । एवं तुमं पि पढित्ता कज्जाकज्जं वयाणित्ता संसारातो नित्थरिहिसि ।।

अथ गाथाक्षरार्थः-सोमिलस्थविरस्याष्टौ सुताः । परं तस्यान्धत्वं बभूव । गाथायामन्धशब्दाद् "विद्युत्पत्रपीतान्धाल्लः" प्राकृते स्वार्थिको लप्रत्ययः । स च पुत्रैश्चक्षुश्चिकित्साकारणार्थमुक्तः सन् वक्ति-सन्ति मे पुत्रादीनां बहून्यक्षीणि, तैरेव मदीयं कार्यं सेत्स्यति । अन्यदा च गृहे प्रदीपनकं लग्नं ततस्ते पुत्रादयः "अप्पदड्ढ" त्ति आत्मरक्षणपरास्त्वरितं प्रणष्टाः । स्थविरान्धस्य प्रदीप्ते गृहे दहनम् । एषोऽप्रशस्तो दृष्टान्तः । प्रशस्तस्तु विपरीतः, स चोपदर्शित एव । उपनययोजनाऽपि कृतैवेति ।। इत्थमप्युक्तोऽसौ न प्रतिपद्यते श्रुताध्ययनम्, अतो भूयोऽपि करुणापरीतचेतसः सूरयः प्राहुः-

[भा.११५४] मा एवमसग्गाहं, गिण्हसु गिण्हसु सुयं तइयचक्खुं ।
किं वा तुमेऽनिलसुतो, न स्सुयपुव्वो जवो राया ।।

वृ- सौम्य ! मैवमसद्ग्राहं गृहाण, गृहाण सूक्ष्म-व्यवहितादिष्वतीन्द्रियार्थेषु तृतीयचक्षुकल्पं श्रुतम् । किं वा त्वया न श्रुतपूर्वोऽनिलनरेन्द्रसुतो यवो राजा ? ।। कः पूनर्यवः ? इत्याह-

[भा.११५५] जव राय दीहपट्ठो, सचिवो पुत्तो य गद्दभो तस्स ।
धूता अडोलिया गद्दभेण छूढा य अगडम्मि ।।

वृ- यवो नाम राजा । तस्य दीर्घपृष्ठ सचिवः । गर्दभश्च पुत्रः । दुहिता अडोलिका । सा च गर्दभेण तीव्ररागाध्युपपन्नेन 'अगडे' भूमिगृहे विषयसेवार्थं क्षिप्ता ।। तच्च ज्ञात्वा वैराग्योत्तरङ्गितमनसो नरेन्द्रस्य प्रव्रजनम् । पुत्रस्नेहाच्च तस्योज्जयिन्यां पुनः पुनरागमनम् । अन्यदा च चेटरूपाणामडोलिकया क्रीडनं खरस्य च यवप्रार्थम् । ततश्चोपाश्रयः पुरुषः-कुम्भकारस्तस्य शालायामित्यक्षरार्थः ।। भावार्थ पुनरयम्-

[भा.११५६] पव्वयणं च नरिंदे, पुनरागमऽडोलिखेलणं चेडा ।।
जवपत्थणं खरस्सा, उवस्सओ फरुससालाए ।।

वृ- उज्जेनी नगरी । तत्थ अनिलसुओ जवो नाम राया । तस्स पुत्तो गद्दभो नाम जुवराया। तस्स धूया गद्दभस्स जुवरन्नो भइणी अडोलिया णाम, सा य अतीवरूववती । तस्स य जुवरन्नो

दीहपट्ठो अमच्चो। ताहे सो जुवराया तं अडोलियं भगिनिं पासित्ता अज्झोववन्नो दुब्बलीभवति। अमच्चेण पुच्छिओ। निब्बंधे सिट्ठं। अमच्चेण भन्नति-सागारियं भविस्सति तो एसा भूमिघरे छुब्भति, तत्थ भुंजाहि ताए समं भोए, लोगो जाणिस्सति 'सा कहिं पि विनट्ठा'। 'एवं होउ' त्ति कयं। अन्नया सो राया तं कज्जं नाउं निव्वेदेण पव्वतिओ। गद्दभो राया जातो। सो य जवो नेच्छति पढिउं, पुत्तनेहेण य पुणो पुणो उज्जेणिं एति। अन्नया सो उज्जेनीए अदूरसामंते जवखेत्तं, तस्स समीवे वीसमति। तं च जवखेत्तं एगो खेत्तपालओ रक्खति। इओ य एगो गद्दभो तं जवखेत्तं चरिउं इच्छति ताहे तेन खेत्तपालएण सो गद्दभो भन्नति-

[भा.११५७] आधावसी पधावसी, ममं वा वि निरिक्खसी।
लक्खिओ ते मया भावो, जवं पत्थेसि गद्दभा!॥

वृ- अयं भाष्यान्तर्गतः श्लोकः कथानकसमाप्त्यनन्तरं व्याख्यास्यते, एवमुत्तरावपि श्लोकौ। तेन साहुणा सो सिलोगो गहिओ। तत्थ य चेडरूवाणि रमंति अडोलियाए, उंदोइयाए त्ति भणियं होइ। सा य तेसिं रमंताणं अडोलिया नट्ठा बिले पडिया। पच्छा ताणि चेडरूवाणि इओ इओ य मग्गंति तं अडोलियं, न पासंति। पच्छा एगेण चेडरूवेण तं बिलं पासित्ता नायं-जा एत्थ न दीसति सा नूनं एयम्मि बिलम्मि पडिया! ताहे तेनं भन्नति-

[भा.११५८] इओ गया इओ गया, मग्गज्जंती न दीसति।
अहमेयं वियाणामि, अगडे छूढा अडोलिया॥

वृ- सो वि नेनं सिलोगो पढिओ। पच्छा तेन साहुणा उज्जेणिं पविसित्ता कुंभकारसालाए उवस्सओ गहिओ। सो य दीहपट्ठो अमच्चो तेणं जवसाहुणा रायत्ते विराहिओ। ताहे अमच्चो चिंतेति-'कहं एयस्स वेरं निज्जाएमि?' त्ति काउं गद्दभरायं भणति-एस परीसहपरातिओ आगओ रज्जं पेल्लेउकामो, जति न पत्तियसि पेच्छह से उवस्सए आउहाणि। तेन य अमच्चेण पुव्वं चेव तानि आउहाणि तम्मि उवस्सए नूमियाणि पत्तियावणनिमित्तं। रन्ना दिट्ठाणि। पत्तिज्जिओ। तीए अ कुंभकारसालाए उंदुरी ढुक्किउं ढुक्किउं ओसरति भएणं। ताहे तेनं कुंभकारेणं भन्नति-

[भा.११५९] सुकुमालग! भद्दलया!, रत्तिं हिंडनसीलया!।
भयं ते नत्थि मंमूला, दहपट्ठाओ ते भयं॥

वृ- सो वि नेन सिलोगो गहिओ। ताहे सो राया तं पियरं मारेउकामो रहं मग्गइ। 'पगासे उड्डाहो होहिं' त्ति काउं अमच्चेण समं रत्तिं फरुससालं अल्लीणो अच्छति। तत्थ तेन साहुणा पढिओ पढमो सिलोगो-

आधावसी पधावसी, ममं वा वि निरिक्खसी।
लक्खिओ ते मया भावो, जवं पत्थेसि गद्दभा!॥

– रन्ना नायं-वेतिया मो, धुवं अतिसेसी एस साधू। तओ बितिओ पढिओ–

इओ गता इओ गता, मग्गिज्जंती दीसई।
अहमेयं विजाणामि, अगडे छूढा अडोलिया॥

– तं पि नेनं परिगयं, जहा-नातयं एतेण। तओ ततिओ पढिओ –

सुकुमालग! भद्दलया!, रत्तिं हिंडनसीलगा!।

भयं ते नत्थि मंमूला, दीहपट्ठाओ ते भयं ॥

ताहे जाणति-एस अमच्चो ममं चेव मारेउकामो, कओ ममं पिता राता होउं संते भोए परिच्चइत्ता पुनो ते चेव पत्थेति ?, एस अमच्चो मं मारेउकामो एवं जत्तं करेइ ! ताहे राया अमच्चस्स सीसं छेत्तुं साहुस्स उवगंतुं सव्वं कहेइ खामेइ य ॥ अथ श्लोकत्रयस्याक्षरार्थ-आ-ईषद् आभिमुख्येन वा धावसि आधावसि, प्रकर्षेण पृष्ठतो वा धावसि प्रधावसि, मामपि न निरीक्षसे, लक्षितस्ते मया 'भावः' अभिप्रायो यथा 'यवं' यवधान्यं चरितुं प्रार्थयसि भो गर्दभ ! ! द्वितीयपक्षे यवनामानं राजानं मारयितुं भो गर्दभनृपते ! प्रार्थयसीति प्रथमश्लोकः ॥

इतो गता इतो गता, मृग्यमाणा न दृश्यते, अहमेतद् विजानामि 'अगडे' भूमिगृहे गर्त्तायां वा क्षिप्ता 'अडोलिका' उन्दोयिका नृपतिदुहिता वा । द्वितीयश्लोकः ॥

मूषकस्य राज्ञश्च शरीरसौकुमार्यभावात् सुकुमारक ! इत्यामन्त्रणम्, "भद्दलग" त्ति भद्रा-कृते !, रात्रौ हिण्डनशील ! मूषकस्य दिवा मानुषावलोकनचकिततया राज्ञस्तु वीरचर्यया रात्रौ पर्यटनशीलत्वात्, भयं 'ते' तव नास्ति 'मन्मूलात्' मन्निमित्तात् किन्तु 'दीर्घपृष्ठात्' एकत्र सर्पात् अपरत्र तु अमात्यात् 'ते' तव भयमिति तृतीयश्लोकः ॥ततः स राजर्षिश्चिन्तयति-

[भा.११६०] सिक्खियव्वं मनूसेणं, अवि जारिसतारिसं ।
पेच्छ मुद्धसिलोगेहिं, जीवियं परिरक्खियं ॥

वृ- शिक्षितव्यं मनुष्येण अपि यादृशतादृशम्, पश्य मुग्धैरपि श्लोकैर्जीवितं परिरक्षितम् ॥ तथा-

[भा.११६१]पुव्वविराहियसचिवे, सामच्छण रत्ति आगमो गुणणा ।
नाओ मि सचिवघायण, खामण गमणं गुरुसगासे ॥

वृ- पूर्वं विराधितो यः सचिवस्तस्य राज्ञा सह 'सामच्छणं' पर्यालोचनम् । ततस्तयो रात्रौ तत्रागमः । तस्य च राजर्षेस्तदानीं पूर्वपठितश्लोकत्रयस्य गुणना । ततः 'ज्ञातोऽस्म्यहम्, नूनमतिशयज्ञानी मदीयः पिता, कुतो वा एष महात्मा पटप्रान्तलग्नतृणवद् लीलयैव राज्यं परित्यज्य भूयस्तदङ्गीकारं कुरुते ? तदेष सर्वोऽप्यस्यैवाऽमात्यस्य कूटरचनाप्रपञ्चः' इति परिभाव्य सचिवघातनं कृत्वा स्वपितुः क्षामणं कृतवान् । ततस्तस्य राजर्षे 'अहो ! ते भगवन्तो मामनेकशो भणन्ति स्म-आर्य ! अधीष्वाधीष्व सूत्रम्, परमहमात्मवैरिकतया नापाठिषम्, यदि नाम ईदृशानामपि मुग्धश्लोकानां पठितानामीदृशं फलमाविरभूत् किं पुनः सर्वज्ञोपज्ञश्रुतस्य भविष्यति ?' इति विचिन्त्य गुरुसकाशे गमनम् । ततो मिथ्यादुष्कृतं दत्त्वा सम्यक् पठितुं लग्न इति ॥

किञ्च श्रुताध्ययनेऽमी अभ्यधिका गुणाः-

[भा.११६२] आयहिय परिण्णा भावसंवरो नवनवो अ संवेगो ।
निक्कंपया तवो निज्जरा य परदेसियत्तं च ॥

वृ- आत्महितं १ परिज्ञा २ भावसंवरः ३ नवनवश्च संवेगः ४ निष्कम्पता ५ तपः ६ निर्जरा च परदेशिकत्वं च ८ इति द्वारगाथासमासार्थ ॥ अथ विस्तरार्थमाह-

[भा.११६३]आयहियमजाणंतो, मुज्झति मूढो समादिअति कम्मं ।
कम्मेण तेन जंतू, परीति भवसागरमनंतं ॥

वृ-अनधीतश्रुतः सन् आत्मनोहितम्-इह-परलोकपथ्यमजानन् मुह्यति, हितेऽप्यहितबुद्धिम् अहितेऽपि हितबुद्धिं करोतीति भावः। मूढश्च 'कर्म' ज्ञानावरणीयादिकं निबिडतरं समादत्ते। तेन च कर्मणा जन्तुः 'पर्येति' परिभ्रमत भवसागरमनन्तम् ॥

अथात्महिते परिज्ञाते को गुणः? इत्याह-

[भा.११६४] आयहियं जाणंतो, अहियनिवित्तीए हियपवित्तीए।
हवइ जतो सो तम्हा, आयहियं आगमेयव्वं ॥

वृ- आत्महितं जानानः अहिताद्-आत्म-संयम-प्रवचनोपघातकाद् निवृत्तौ हिते-संयमाद्युपकारिणि प्रवृत्तौ यतः प्रयत्नवानसौ भवति, तस्माद् आत्महितम् 'आगमयितव्यम्' आगमनं आगमः-परिज्ञानं तद्गोचरमानेतव्यमिति ॥ गतमात्महितद्वारम्। अथ परिज्ञाद्वारमाह-

[भा.११६५] सज्झायं जाणंतो, पंचिंदियसंवुडो तिगुत्तो य।
होइ य एक्कग्गमणो, विनएण समाहिओ साहू ॥

वृ- 'स्वाध्यायं' श्रुतं जानानः साधुः पञ्चस्विन्द्रियेषु इष्टा-ऽनिष्टविषयराग-द्वेषपरिहारेण संवृतः पञ्चेन्द्रियसंवृतः, त्रिषु-मनोवाक्काययोगेषु गुप्तस्त्रिगुप्तः, भवति च 'एकाग्रमनाः' शुभध्यानैकमानसः 'विनयेन' गुर्वादिषु शिरोनमना-ऽञ्जलिबन्धादिलक्षणेन 'समाहितः' सम्यगुपयुक्त इति। अत्र च "सज्झायं जाणंतो" इत्यनेन ज्ञपरिज्ञा "पंचिंदियसंवुडो" इत्यादिना तु प्रत्याख्यानपरिज्ञाऽभिहितेति द्रष्टव्यम् ॥ गतं परिज्ञाद्वारम्। अथ भावसंवरमाह-

[भा.११६६] नाणेण सव्वभावा, नज्जंते जे जहिं जिनक्खाया।
नाणी चरित्तगुत्तो, भावेण उ संवरो होइ ॥

वृ-ज्ञाने सर्वेऽपि-अशेषा हिता-हितरूपा भावा ज्ञायन्ते ये यत्रोपयोगिनो जिनैराख्याताः। अत एव ज्ञानी चारित्रगुप्तः 'भावेन' तत्त्ववृत्त्या संवरो भवति। गुण-गुणिनोरभेदविवक्षणादेवं निर्देशः ॥ अ "नवनवो य संवेगो" इति व्याख्यानयन्नाह-

[भा.११६७] जह जह सुयमोगाहइ, अइसयरसपसरसंजुयमपुव्वं।
तह तह पल्हाइ मुणी, नवनवसंवेगसद्धाओ ॥

वृ- यथा यथा 'श्रुतम्' आगममपूर्वमवगाहते, कथम्भूतम्? 'अतिशयरसप्रसरसंयुतम्' अतिशयाः-अर्थविशेषास्तेषु यो रसः-श्रोतॄणाक्षेपकारी गुणविशेषस्तस्य यः प्रसरः अतिरेकस्तेन संयुतं-युक्तम्। यद्वा श्रवणं श्रुतम्, तत् कथम्भूतम्? अतिशयस्य-अर्थस्य रसः-आस्वादनं तत्र यः प्रसरः-गमनं तेन संयुतम्। अपूर्वं यथा यथाऽवगाहते तथा तथा मुनि 'प्रह्लादते' शुभभावसुखासिकया मोदते। कथम्भूतः? इत्याह-नवनवः-अपूर्वापूर्वो यः संवेगः-वैराग्यं तद्गर्भा श्रद्धा-मुक्तिमार्गाभिलाषलक्षणा यस्य स नवनसंवेगश्रद्धाक इति ॥

गतं नवनवसंवेगद्वारम्। अथ निष्कम्पताद्वारमाह-

[भा.११६८] नाणाणत्तीए पुणो, दंसणतवनियमसंजमे ठिच्चा।
विहरइ विसुज्झमाणो, जावज्जीवं पि निक्कंपो ॥

वृ-ज्ञानस्य या आज्ञप्ति-आदेशः "जाए सद्धाए निक्खंतो तमेवमणुपालए" इत्यादिकस्तया दर्शनप्रधाने तपोनियमरूपे संयमे स्थित्वा कर्ममलेन विशुध्यमानः सन् यावज्जीवमपि 'निष्कम्पः'

स्थिरचित्तवृत्ति 'विहरति' संयमाध्वनि गच्छतीति ॥ गतं निष्कम्पताद्वारम्। अथ तपोद्वारमाह-

[भा.११६९] बारसविहम्मि वि तवे, सब्भितरबाहिरे कुसलदिट्ठे।
न वि अत्थि न वि अ होही, सज्झायसमं तवोकम्मं ॥

वृ- द्वादशविधेऽपि तपसि 'साभ्यन्तरबाह्ये' सहाऽऽभ्यन्तरेण यद् बाह्यं तत् साभ्यन्तरबाह्यम्। तत्राभ्यन्तरं तपः षोढा-

प्रायश्चित्त-ध्याने, वैयावृत्य-विनयावथोत्सर्गः।
स्वाध्याय इति तपः षट्प्रकारमाभ्यन्तरं भवति ॥

बाह्यमपि षोढा-

अनशनमूनोदरता, वृत्ते सङ्क्षपणं रसत्यागः।
कायक्लेशः संलीनतेति बाह्यं तपः प्रोक्ताम् ॥

तथा कुशाः-द्रव्यतो दर्भादयो भावतः कर्माणि तान् कर्मरूपान् कुशान् लुनन्ति-समूलानुत्पाटयन्तीति कुशलाः, "पृषोदरादयः" इति रूपनिष्पत्ति, तीर्थकरा इत्यर्थः, तैर्दृष्टे-कर्मक्षपणकारणतया केवलदृष्ट्या वीक्षिते, परं [illegible] तपःकर्म नास्ति नापि भविष्यति चशब्दाद् न चाभूत्, प्रभूततरकर्मक्षपणहेतुत्वादिति ॥

गतं तपोद्वारम्। अथ निर्जराद्वारमाह-

[भा.११७०] जं अन्नाणी कम्मं, खवेइ बहुयाहि वासकोडीहिं।
तं नाणी तिहि गुत्तो, खवेइ ऊसासमेत्तेण ॥

वृ- यद् अज्ञानी जीवो नैरयिकादिभवेषु वर्त्तमानो बह्वीभिर्वर्षकोटीभि कर्म क्षपयति 'तत्' कर्म ज्ञानी 'त्रिषु' मनोवाक्कायेषु गुप्तः सन् उच्छ्वासमात्रेणापि कालेन क्षपयति ॥

गतं निर्जराद्वारम्। अथ परदेशकत्वद्वारमाह-

[भा.११७१] आय-परसमुत्तारो, आणा वच्छल्ल दीवणा भत्ती।
होति परदेसियत्ते, अव्वोच्छित्ती य तित्थस्स ॥

वृ- पठितः सन् परेषां देशकत्वं-मार्गदर्शित्वं करोति, तस्मिन् आत्मनः परस्य च समुत्तारो भवति। तथाहि-स साधुरधीतश्रुतः सन् अपरान् साधून् अध्यापयन् आत्मनो ज्ञानावरणीयं कर्म उपहन्ति, ते च साधवो ज्ञानोपदेशेनाऽचिरादेवापारसंसारमहोदधेरुत्तरन्ति। एवं च कुर्वता तीर्थकृतामाज्ञा अध्याप्यमानसाधूनां च वात्सल्यं तथा दीपना-प्रभावना भक्तिश्च पारमेश्वरप्रवचनस्य एतानि कृतानि भवन्ति, तीर्थस्य चाऽव्यवच्छित्तिरासूत्रिता भवति। एते गुणाः परदेशकत्वे भवन्तीति॥ गतं परदेशकत्वद्वारम्। ततश्चावसिता "आयहिय"इत्यादि द्वारगाथा।

अथ प्रकृतयोजनां कुर्वन्नाह-

[भा.११७२]जिनकप्पिएण पगयं, जिणकाले सो उ केवलीणं वा।
सो भणइ एव भणितो, कत्थ अहीयं भयंतेहिं ॥

वृ- अत्र जिनकल्पिकेन प्रकृतम्। 'स तु' जिनकल्पिको नियमाद् जिनस्य-तीर्थकरस्य काले वा स्याद् अपरेषां वा गणधरादीनां केवलिनां काले। ततः 'सः' शिष्यः 'एवं' हेतु-दृष्टान्तैः 'भणितः' प्रज्ञापितो भणति-भगवन्! यद्येवं ततः पठाम्यहम् परमाद्यक्षतां पूज्यां-कुत्र 'भदन्तैः'

भगवद्भिरधीतं यस्मादसौ शिष्यो जिनकल्पिको भविष्यति स च जिनकाले वा भवेत् केवलिकाले वा ? ।। अतः स आचार्य प्रतिब्रूयात्-

[भा.११७३] अंतरमनंतरे वा, इति उदिए धूलिनायमाहंसु ।
चिक्खल्लेण य नायं, तम्हा उ वयामि जिनमूलं ।।

वृ- अन्तरं-परम्परकेण मयाऽधीतम् अनन्तरं वा । तत्र यदि स आचार्यो गणधरशिष्यस्तस्याप्याराद्धा ततः 'परम्परकेणाधीतम्' इत्यभिदध्यात् । अथासौ गणधर एव ततः 'अनन्तरं जिनसकाश एव मयाऽधीतम्' इति ब्रूयात् । 'इति' एवम् 'उदिते' आचार्येणाऽभिहिते स शिष्यो धूलिज्ञातं चिक्खल्लज्ञातं वाऽऽख्यातवान्-यथा धूलेरेकत्र स्थापयित्वा तत उद्धृत्यान्यत्र यत्रास्तीर्यते तत्रावश्यं किञ्चित् परिशटति, ततोऽप्यन्यत्र प्रस्तीर्यमाणा भूयस्तरा परिशटति; यथा वा प्रासादे लिप्यमाने मनुष्यपरम्परया चिक्खल्लः प्रत्यर्प्यमाणो बहुपरिशटितः स्तोकमात्रावशेष एव सर्वान्तिममनुष्यस्य हस्तं प्राप्नोति; एवमेतावपि सूत्रार्थौ परम्परया गृह्यमाणौ परिशटत-, तस्मात्तु 'जिनमूलं' तीर्थकरोपकण्ठमेव व्रजामि, तत्राविनष्टमेव सूत्रं भविष्यतीति ।। कैः पुनस्तत् परिशटति? इत्याह-

[भा.११७४] पय-पाय-मक्खरेहिं, मत्ता-घोसेहिं वा वि परिहीनं ।
अवि य रवि-राय-हत्थी, पगास सेवा पया चेव ।।

वृ- पदैः पादैरक्षरैर्मात्रया घोषैर्वा अपिशब्दाद् बिन्दुना वा परिहीणं भवति परम्परया अधीयमानं श्रुतमिति प्रक्रमः । 'अपि च' इत्यभ्युच्चये, भगवतः समीपे अधीयमानानां कारणान्तरमप्यस्तीति भावः । किं यादृशो रवेः-आदित्यस्य प्रकाशः ईदृशः किं खद्योतादीनां सम्भवी ? यादृशं वा राज्ञः सेवा विधीयमाना फलमुपढौकयति ईदृशं किममात्यादीनां सेवा सम्पादयति ? यादृशानि वा महान्ति हस्तिनः पदानि ईदृशानि किं कुन्थूनां सम्भवन्ति ? एवं यादृशानि महार्थानि भगवतस्तीर्थकृतो वचनानि ईदृशान्यपरेषां किं कदाचिद् भवन्ति ? इत्यतस्तीर्थकरोपकण्ठमेव व्रजामि ।। इत्थं शिष्येणोक्ते सूरिराह-

[भा.११७५] कोट्ठाइबुद्धिणो अत्थि संपयं एरिसाणि मा जंप ।
अवि य तहिं वाउलणा, विरयाण वि कोगाईहिं ।।

वृ- यथा कोष्ठके धान्यं प्रक्षिप्तं तदवस्थमेव चिरमप्यवतिष्ठते न किमपि कालान्तरेऽपि गलति, एवं येषु सूत्रा-ऽर्थौ निक्षिप्तौ तदवस्थावेव चिरमप्यवतिष्ठेते ते कोष्ठबुद्धयः । आदिशब्दात् पदानुसारिबुद्धयो बीजबुद्धयश्च गृह्यन्ते । तत्र ये गुरुमुखादेकसूत्रपदमनुसृत्य शेषमश्रुतमपि भूयस्तरं पदनिकुरम्बमवगाहन्ते ते पदानुसारिबुद्धयः, ये त्वेकं बीजभूतमर्थपदमनुसृत्य शेषमवितथमेव प्रभूततरमर्थपदनिवहमवगाहन्ते ते बीजबुद्धयः, एवंविधाः कोष्ठादिबुद्धयः साम्प्रतमपि सन्ति येषु सूत्रार्थौ न परिशटत इति भावः । तद् ईदृशानि धूलिज्ञातादीनि 'मा जल्प' मा ब्रूहि । अपि च 'तत्र' भगवतः समीपे अधीयमानानां 'विरतानामपि' साधूनामपि कौतुकादिभिः 'व्याकुलना' व्याकुलीकरणं भवति, सकलस्यापि लोकस्य कौतुकहेतुत्वात् । कौतुकं-समवसरणम्, आदिग्रहणेन भगवतो धर्मदेशनाश्रवणादिपरिग्रहः ।। अथ किमिदं समवसरणम् ? इति तद्वक्तव्यतां प्रतिपिपादयिषुर्द्वारगाथामाह-

[भा.११७६]समोसरणे केवइया, रूव पुच्छ वागरण सोयपरिणामे।
दानं च देवमल्ले, मल्लाणयणे उवरि तित्थं ॥

वृ-समवसरणविषयो विधिर्वक्तव्यः। ''केवइय'' त्ति कियतो भूभागाद् अपूर्वसमसरणे अदृष्टरूपतया भगवतः प्रयोजनम्? इति पृच्छा प्रतिवचनं च वाच्यम्। ''वागरणं'' ति व्याकरणं भगवतो वक्तव्यम्, यथा युगपदेव सङ्ख्यातीतानामपि पृच्छतां व्याकरोति। तथा श्रोतृषु परिणामः श्रोतृपरिणामः स वक्तव्यः, तथा भागवती वाणी सर्वेषां स्वस्वभाषया परिणमते। वृत्तिदानं प्रीतिदानं वा कियत् प्रयच्छन्ति चक्रवर्त्यादयस्तीर्थकरप्रवृत्तिनिवेदकेभ्यः?। तथा 'देवमाल्यं' बलि, देवा अपि तत्र गन्धादि प्रक्षिपन्तीति कृत्वा तत् कः कथङ्कारं करोति? इति। ''मल्लाणयणे''त्ति तस्य च माल्यस्यानयने यो विधि। ''उवरि तित्थं''ति उपरि प्रथमपौरुष्यां व्यतीतायां 'तीर्थं' प्रथमगणधरो धर्मदेशनां करोति। तदेतत् सर्वमभिधातव्यमिति द्वारगाथासङ्क्षेपार्थः॥

अथैनामेव प्रतिद्वारं विवरीषुराह-

[भा.११७७] जत्थ अपुव्वोसरणं, जत्थ व देवो महिड्ढिओ एइ।
वाउदय पुप्फ वद्दल, पागारतियं च अभिओगा॥

वृ- 'यत्र' क्षेत्रे समवसरणम् 'अपूर्वम्'-अवृत्तपूर्वं यत्र वा भूतपूर्वसमवसरमेऽपि देवो महर्द्धिको वन्दितुम् 'एति' आगच्छति तत्र नियमतः समवसरणं भवतीति वाक्यशेषः, अर्थादापन्नम् अन्यत्र न नियम इति। तत्र कथं कुर्वन्ति? इत्याह-''वाउदय'' इत्यादि। शक्रादेः सम्बन्धिन आभियोग्या देवाः स्वस्वामिनो नियोगाद् भगता समवसरिष्यमाणां भुवमागम्य योजनपरिमण्डलं संवर्त्तकवातं विकुर्वन्ति, तेन च सर्वतः प्रसर्पता रेणु-तृण-काष्ठादिकः कचवरनिकरः सर्वोऽपि बहि क्षिप्यते, ततो भाविरेणुसन्तापोपशान्तये उदकवर्दलं विकुर्व्य तेन सुरभिगन्धोदकवर्षं कुर्वन्ति, ततः पुष्प-वर्दलं विकुर्व्य जानुदघ्नीमधोनिक्षिप्तवृन्तां पुष्पवृष्टिं निसृजन्ति, ततश्चामी प्राकारत्रयं कुर्वन्ति॥ कथम्? इत्याह-

[भा.११७८]अब्भिंतर-मज्झ-बहिं, विमाण-जोइ-भवणाहिवकयाओ।
पायारा तिन्नि भवे, रयणे कणगे रयए य॥

वृ-आभ्यन्तर-मध्यम-बाह्या यथाक्रमं विमान-ज्योति-र्भवनाधिपकृताः प्रकारास्त्रयो भवन्ति तत्राभ्यन्तरः प्राकारो रत्नैर्निर्वृत्तः 'रात्नः'-रत्नमयः, तं विमानाधिपतयः कुर्वन्ति। मध्यमः प्राकारः 'कानकः' कनकमयः, तं ज्योतिष्का देवाः कुर्वन्ति। बाह्यः प्राकारः 'राजतः' रूप्यमयः, तं भवनाधिपतयः कुर्वन्तीति॥

[भा.११७९]मणि-रयण-हेमया वि य, कविसीसा सव्वरयणिया दारा।
सव्वरयणामय च्चिय, पडाग-झय-तोरणा चित्ता॥

वृ-आभ्यन्तरप्राकारस्य मणिमयानि कपिशीर्षकाणि, मध्यमप्रकारस्य रत्नमयानि। अथ मणीनां रत्नानां च कः प्रतिविशेषः? उच्यते-चन्द्रकान्तादयो मणयः, इन्द्रनीलादीनि रत्नानि; अथवा स्थलसमुद्भवा मणयः, जलसमुद्भवानि रत्नान्युच्यन्ते। बाह्यप्राकारस्य हेममयानि-जात्यसुवर्णमयानि कपिशीर्षकाणि। एतानि च यथाक्रमं वैमानिक-ज्योतिष्क-भवनपतयः स्वस्वप्राकारेषु कुर्वन्ति। प्राकारत्रयेऽपि प्रत्येकं सर्वरत्नमयानि चत्वारि चत्वारि द्वाराणि, तथा

सर्वरत्नमयान्येव पताका-ध्वजप्रधानानि तोरणानि भवन्ति । कथम्भूतानि ? 'चित्राणि' चन्दनकलश-स्वस्तिक-मुक्तादामादिभिरनेकरूपाणि आश्चर्यकारीणि वा ।। व्यन्तरकृत्यमाह-

[भा.११८०] चेइदुम पेढ छंदग, आसण छत्तं च चामराओ य ।
जं चऽन्नं करणिज्जं, करिंति तं वाणमंतरिया ।।

वृ- 'चैत्यद्रुमम्' अशोकवृक्षमभ्यन्तरप्राकारस्य बहुमध्यदेशभागे भगवतः प्रमाणाद् द्वादशगुणसमुच्छ्रयम् । तस्याधस्तात् पीठं सर्वरत्नमयम् । तस्यापि पीठस्योपरि चैत्यवृक्षस्याधस्ताद् देवच्छन्दकम् । तस्य देवच्छन्दकस्याभ्यन्तरे सिंहासनम् । तस्योपरि छत्रातिच्छत्रम् । 'चः' समुच्चये । उभयापार्श्वतश्चामरे यक्षहस्तगते । चशब्दाद् भगवतः पुरतो धर्मचक्रं पद्मप्रतिष्ठितम् । यच्च 'अन्यद्' वातोदकादिकं 'करणीयं' कर्त्तव्यं कुर्वन्ति तद् वानमन्तरा देवा इति ।। आह किं यद् यत् समवसरणं भवति तत्र तत्रायमित्थं नियोगः ? उत न ? इति, अत्रोच्यते-

[भा.११८१] साहारण ओसरणे, एवं जत्थिड्ढिमं तु ओसरई ।
एक्को च्चिय तं सव्वं, करेइ भयणा उ इयरेसिं ।।

वृ- साधारणं-यत्र बहवो देवेन्द्रा आगच्छन्ति तत्र समवसरणे 'एवम्' अनन्तरोक्तो नियोगः । यत्र तु 'ऋद्धिमान्' कश्चिदिन्द्रसामानिकादि 'समवसरति' आगच्छति तत्रैक एवासौ 'तत्' प्रकारादिकं सर्वमपि करोति । "भयणा उ इयरेसिं" ति यदीन्द्रादयो महर्द्धिका नागच्छन्ति ततः 'इतरे' भवनवास्यादयः कुर्वन्ति वा न वा समवसरणमित्येवं भजना कार्येति ।। अत्रविशेषचूर्णावित्थं विशेषो दृश्यते-चाउक्कोणा तिन्नि पागारा रइज्जंति चउद्दारा । अब्भितरिल्लो लोहियक्खेहिं, मज्झिल्लो पीयएहिं, बाहिरिल्लो सेयएहिं । सव्वो समोसरणभागो जोयणं । अब्भिंतर-मज्झिमाणं पागाराणं अंतरं जोयणं । मज्झिम-बाहिराणं पागाराणं अतरं गाउअं ति ।। इत्थं देवैः समवसरणे विरचिते सति यथा भगवान् तत्र प्रविशति तथाऽभिधातुकाम आह-

[भा.११८२] सूरुदय पच्छिमाए, ओगाहिंतीए पुव्वओ एति ।
दोहि पउमेहि पाया, मग्गेण य होंति सत्तऽन्ने ।।

वृ- 'सूर्योदये' प्रथमायां पौरुष्याम् अपराह्ने तु पश्चिमायाम् 'अवगाहमानायाम्' आगच्छन्त्यामित्यर्थः 'पूर्वतः' पूर्वद्वारेण भगवान् 'एति' आगच्छति प्रविशतीत्यर्थः । कथम् ? इत्याह-द्वयोः 'पद्मयोः' सहस्रपत्रयोर्देवपरकल्पितयोः पादौ स्थापयन्नित्युपस्कारः । "मग्गेण य" त्ति प्राकृतत्वाद् विभक्तिव्यत्यये 'मार्गतः' पृष्ठतो भगवतः सप्ताऽन्यानि पद्मानि भवन्ति, तेषां च यद् यत् पाश्चात्यं तत् तत् पादन्यासं कुर्वतो भगवतः पुरतस्तिष्ठतीति ।।

ततः प्रविश्य किं करोति ? इत्याह-

[भा.११८३] आयाहिण पुव्वमुहो, तिदिसिं पडिरूवया य देवकया ।
जेट्ठगणी अन्नो वा, दाहिणपुव्वे अदूरम्मि ।।

वृ- "आयाहिण" त्ति भगवान् चैत्यद्रुमस्य प्रदक्षिणां विधाय पूर्वमुखः सिंहासनमध्यास्ते । यासु च दिक्षु भवतो मुखं न भवति तासु तिसृष्वपि तीर्थकराकारधारकाणि सिंहासन-चामर-छत्रधर्मचक्रालंकृतानि प्रतिरूपकाणि देवकृतानि भवन्ति, यथा सर्वोऽपि लोको जानीते 'भगवानस्माकं पुरतः कथयति' । भगवतश्च पादमूलं जघन्यत एकेन गणिना-गणधरेणाऽविरहितं

भवति, स च ज्येष्ठोऽन्यो वा भवेत्, प्रायो ज्येष्ठ एव । स च ज्येष्ठगणिरन्यो वा पूर्वद्वारेण प्रविश्य दक्षिणपूर्वे दिग्भागे 'अदूरे' प्रत्यासन्न एव भगवतो भगवन्तं प्रणिपत्य निषीदति । शेषा अपि गणधरा एवमेवाभिवन्द्य ज्येष्ठगणधरस्य मार्गतः पार्श्वतश्च निषीदन्तीति ॥

आह भुवनगुरुरूपस्य सकलत्रिभुवनातिशायित्वात् त्रिदशकृतानां प्रतिरूपकाणां तेन सह साम्यम् ? असाम्यं वा ? इत्याशङ्कानिरासार्थमाह-

[भा.११८४] जे ते देवेहि कया, तिदिसिं पडिरूवगा जिनवरस्स ।
तेसिं पि तप्पभावा, तयानुरूवं हवइ रूवं ॥

वृ-यानि तानि देवैः कृतानि तिसृषु दिक्षु जिनवरस्य प्रतिरूपकाणि तेषामपि 'तत्प्रभावात्' तीर्थकरणप्रभावात् 'तदनुरूपं' तीर्थकररूपानुरूपं रूपं भवति ॥ अथ ये यथा भगवतः समवसरणे निषीदन्ति तिष्ठन्ति तानभिधित्सुः सङ्ग्रहगाथामाह-

[भा.११८५] तित्थाऽइसेससंजय, देवी वेमाणियाण समणीओ ।
भवणवइ-वाणमंतर-जोइसियाणं च देवीओ ॥

वृ- 'तीर्थं' गणधरस्तस्मिन् उपविष्टे सति अतिशायिनः संयता उपविशन्ति, ततो देव्यो वैमानिकानाम्, ततः श्रमण्यः, तथा भवनपति-व्यन्तर-ज्योतिष्काणां च देव्य इति ॥

अथैतदेव विवृणोति-

[भा.११८६]केवलिणो तिउण जिनं, तित्थपणामं च मग्गओ तस्स ।
मणमाई वि नमंता, वयंति सट्ठाण सट्ठाणं ॥

वृ-केवलिनः पूर्वद्वारेण प्रविश्य जिनं 'त्रिगुणं' त्रिप्रदक्षिणीकृत्य 'नमस्तीर्थाय' इति वचसा तीर्थप्रमाणं च कृत्वा 'तस्य' तीर्थस्य-प्रथमगणधररूपस्य शेषगणधराणां च 'मार्गतः' पृष्ठतो दक्षिणपूर्वस्यां निषीदन्ति । तथा "मणमाई वि" त्ति मनःपर्यवज्ञानिन आदिशब्दाद् अवधिज्ञानिनः चतुर्दशपूर्विणो दशपूर्विणो नवपूर्विण आमर्षौषध्यादिविविधलब्धिमन्तश्च प्राच्यद्वारेण प्रविश्य भगवन्तं त्रिप्रदक्षिणीकृत्य नमस्कृत्य च 'नमस्तीर्थाय, नमो गणधरेभ्यः, नमः केवलिभ्यः' इत्यभिधाय केवलिनां पृष्ठत उपविशन्ति । शेषसंयता अपि प्राचीनद्वारेणैव प्रविश्य भुवनगुरुं प्रदक्षिणीकृत्य वन्दित्वा च 'नमस्तीर्थाय, नमो गणभृभ्द्यः, नमः केवलिभ्यः, नमोऽतिशयज्ञानिभ्यः' इति भणित्वा अतिशयिनां पृष्ठतो निषीदन्ति । एवं मनःपर्यायज्ञान्यादयोऽपि नमन्तः सन्तो व्रजन्ति स्वस्थानं स्वस्थानमिति । तथा वैमानिकानां देव्यः पूर्वद्वारेण प्रविश्य भुवनबान्धवं त्रिप्रदक्षिणीकृत्य नत्वा च 'नमस्तीर्थाय, नमः सर्वसाधुभ्यः' इत्यभिधाय निरतिशयसाधूनां पृष्ठतस्तिष्ठन्ति न निषीदन्ति। श्रमण्योऽपि पौरस्त्यद्वारेण प्रविश्य तीर्थकृतं प्रदक्षिणीकृत्य प्रणम्य च तीर्थस्य साधूनां च नमस्कारं विधाय वैमानिकदेवीनांपृष्ठतस्तिष्ठन्ति न निषीदन्ति । भवनपतिदेव्यो ज्योतिष्कदेव्यो व्यन्तरदेव्यश्च दाक्षिणात्यद्वारेण प्रविश्य तीर्थकरादीनभिवन्द्य दक्षिणपश्चिमदिग्भागे यथाक्रममेव तिष्ठन्ति ॥

[भा.११८७] भवणवई जोइसिया, बोधव्वा वानमंतरसुरा य ।
वेमाणिया य मनुया, पयाहिणं जं च निस्साए ॥

वृ-भवनपतयो ज्योतिष्का वानमन्तरसुराश्च एते भगवन्तमभिवन्द्य यथोपन्यासमेव पृष्ठतः पृष्ठत उत्तरपश्चिमे दिग्भागे तिष्ठन्तीति बोद्धव्याः । वैमानिका देवा मनुष्याः चशब्दाद्

मनुष्यस्त्रियश्चप्रदक्षिणां कृत्वा तीर्थकरादीनभिवन्द्योत्तरपूर्वे दिग्भागे यथाक्रममेव तिष्ठन्तीति । ''जं च निस्साए'' त्ति यः परिवारः 'यं' देवं मनुजं वा 'निश्राय' निश्रां कृत्वा आगतः स तस्यैव पार्श्वे तिष्ठति ।। अत्रान्तरे भाष्यादर्शेषु केषुचिदेता गाथा दृश्यन्ते-

अनगारा वेमाणियवरंगणा साहुणी य पुव्वेणं ।
पविसंति विविहमणि-रयणकिरणनिकरेण दारेणं ।।
जोइसिय-भवन-वणयरदयिता लायन्न-रूवकलियाओ ।
पविसंति दाक्खिणेणं, पडाय-झयपंतिकलिएणं ।
जोइसिय भवण वणयर, ससंभमा ललियकुंडलाहरणा ।
पविसंति पच्छिमेणं, वि तुंगदिप्पंतसिहरेणं ।।
समहिंदा कप्पोवगदेवा राया नरा य नारीओ ।
पविसंति उत्तरेणं, पवरमणिमऊहओहेणं ।।

एताश्च द्वयोरपि चूर्ण्योरगृहीतत्वात् प्रक्षेपगाथाः सम्भाव्यन्ते । उक्तार्थाः सुगमाश्चेति ।। अभिहितार्थोपसङ्ग्रहायाह-

[भा.११८८] एक्केक्कीए दिसाए, तिगं तिगं होइ सन्निविट्ठं तु ।
आइ-चरिमे विमिस्सा, थी-पुरिसा सेस पत्तेयं ।।

वृ- एकैकस्यां दिशि त्रिकं त्रिकं 'सन्निविष्टम्' उपविष्टमूर्ध्वस्थितं वा भवति । तथाहि-दक्षिण-पूर्वस्यां दिशि संयता वैमानिकाङ्गनाः संयत्यश्चेति त्रयम्, अपरदक्षिणस्यां भवनपति-ज्योतिष्कव्यन्तरदेवीनां त्रयम्, उत्तरापरस्यां भवनपति-ज्योतिष्क-व्यन्तरदेवानां त्रयम्, उत्तरपूर्वस्यां वैमानिकदेव-मनुष्य-मनुष्यीणां त्रयमिति । अत्र चाद्ये चरमे च त्रिके विमिश्राः स्त्री-पुरुषाः, स्त्रयः पुरुषाश्चोभयेऽपि भवन्तीति भावः । 'शेषयोस्तु' मध्यमयोर्द्वयोस्त्रिकयोः स्त्रयः पुरुषाश्च 'प्रत्येकमिति' निर्मिश्रा एव भवन्तीति ।। तेषां चेत्थं स्थितानां सुर-नराणां स्थितिमाह-

[भा.११८९] इंतं महिड्डियं पणिवयंति ठियमवि वयंति पणमंता ।
न वि जंतणा न विकहा, न परोप्परमच्छरो न भयं ।।

वृ- येऽल्पर्द्धयः पूर्वं भगवतः समवसरणे स्थितास्ते आगच्छन्तं महर्द्धिकं 'प्रणिपतन्ति' नमस्कुर्वन्ति । अथ महर्द्धिकः प्रथमं स्थितः ततो येऽल्पर्द्धयः पश्चादागच्छन्ति ते महर्द्धिकं पूर्वस्थितमपि प्रणमन्तो व्रजन्ति यथास्थानम् । तथा नापि तेषां तत्रस्थितानां 'यन्त्रणा' 'न गन्तव्यं भवता अतः स्थानात्' इति लक्षणा, न 'विकथा' स्त्रकथादिरूपा सामान्यतो वार्त्ता प्रबन्धात्मका वा, न परस्परं 'मत्सरः' प्रद्वेषः, न 'भयं' सन्त्रासः कुतोऽपि बलवतो वैरिणः सकाशात्, प्रत्युत भगवतः साम्यसुधासिन्धुपूरेण प्लावितमनसां यां विलीयन्ते विरोधानुबन्धविषोर्मय इति ।।

आह प्राकाराणां बाह्ययोर्द्वयोरन्तरयोः के तिष्ठन्ति ? इत्याह-

[भा.११९०] बिइयम्मि होंति तिरिया, तइए पागारमंतरे जाणा ।
पागारजढे तिरिया, वि होंति पत्तेय मिस्सा वा ।।

वृ-द्वितीये प्राकारान्तरे भवन्ति 'तिर्यञ्चः' सिंह-हस्त्यादयः । तृतीये तु प्राकारान्तरे 'यानानि' वाहनानि भवन्ति । 'प्राकारजढे' प्राकाररहिते बहिरित्यर्थः तिर्यञ्चः, अपिशब्दाद् मनुष्य-देवा

अपि प्रत्येकं मिश्रा वा भवन्ति ॥ एवं समवसरणे विरचिते सति किं भवति ? इत्याह-

[भा.११९१] सव्वं व देसविरइं, सम्मं घेच्छइ व होइ कहणा उ ।
इहरा अमूढलक्खो, न कहेइ भविस्सइ न तं च ॥

वृ- सर्वविरतिं वा देशविरतिं वा सम्यग्दर्शन वा कश्चिद् ग्रहीष्यतीति ज्ञात्वा भगवतः 'कथना' धर्मदेशना भवति । 'इतरथा' सम्यक्त्वग्रहणस्याप्यभावे मूढं-विपर्ययमुपगतं लक्ष्यं-ज्ञेयवस्तु यस्य स मूढलक्ष्यो न तथा अमूढलक्ष्यो यथावस्थितवस्तुवेदीति भावः, एवंविधो भगवान् 'न कथयति' न करोति धर्मदेशनाम् । आह यद्येवं तर्हि समवसरणकरणप्रयासो विबुधानामपार्थकः प्राप्नोतीत्याह-भविष्यति न तच्च तद् भगवत्यपि धर्मकथां कुर्वाणेऽन्यतमोऽप्यन्यमत् सामायिकं न प्रतिपद्यते, भगवतः सातिशयत्वात् । भविष्यत्कालनिर्देशस्त्रिकालोपलक्षणार्थ ॥

[भा.११९२] मनुए चउमन्नयरं, तिरिए तिन्नि व दुवे च पडिवज्जे ।
जइ नत्थि नियमसो च्चिय, सुरेसु सम्मत्तपडिवत्ती ॥

वृ- मनुष्यश्चतुर्णां सामायिकानां सम्यक्त्व-श्रुत-देशविरति-सर्वविरतिरूपाणामन्यतरत् प्रतिपद्यते । तिर्यञ्चः 'त्रीणि वा' सम्यक्त्व-श्रुत-देशविरतिरूपाणि, द्वे वा सम्यक्त्व-श्रुतसामायिके प्रतिपद्यन्ते । यदि मनुष्य-तिरश्चां मध्ये कश्चित् प्रतिपत्ता नास्ति ततो नियमत एव 'सुरेषु' देवेषु कस्यापि सम्यक्त्वप्रतिपत्तिर्भवति ॥ स च भगवानित्थं धर्ममाचष्टे-

[भा.११९३] तित्थपणमं काउं, कहेइ साहारणेण सद्देणं ।
सव्वेसिं सन्नीणं, जोयणनीहारिणा भगवं ॥

वृ- 'नमस्तीर्थाय' इत्यभिधाय प्रणामं च कृत्वा सर्वेषां सुर-नरादीनां संज्ञिनां जीवानां 'साधारणेन' स्वस्वभाषापरिणमनसमर्थेन 'योजनीहारिणा' योजनव्यापिना शब्देन भगवान् धर्मं कथयति । किमुक्तं भवति ? -भगवतो दिव्यध्वनिरशेषाणामपि समवसरणवर्तिनां संज्ञिजन्तूनां जिज्ञासितार्थप्रतिपत्तिनिबन्धनमुपजायते ॥ आह कृतकृत्योऽपि भगवान् किमिति तीर्थप्रमाणं करोति ? इति उच्यते-

[भा.११९४] तप्पुव्विया अरहया, पूइयपूया य विनयमूलं च ।
कयकिच्चो वि जह कहं, कहइ नमए तहा तित्थं ॥

वृ- 'तीर्थं' श्रुतज्ञानं तत्पूर्विका 'अर्हत्ता' तीर्थकरता, न खलु भवान्तरेषु श्रुताभ्यासमन्तरेण भगवत एवमेवाऽऽर्हन्त्यलक्ष्मीरुपढौकते । तथा पूजितस्य पूजा पूजितपूजा, सा च तीर्थस्य कृता भवति, पूजितपूजको हि लोकः, ततो यद्यहं तीर्थं पूजयामि ततस्तीर्थकरस्यापि पूज्यमिदमिति कृत्वा लोकोऽपि पूजयिष्यति । तथा विनयमूलं धर्मं प्ररूपयिष्यामि, अतः प्रथमतो विनयं प्रयुङ्क्ते, येन लोकः सर्वोऽपि मद्वचनं सुतरां श्रद्दधीत । अथवा कृतकृत्योऽपि भगवान् यथा कथां कथयति तथा तीर्थमपि नमति । आह नन्वेतदप्यसमीचीनं यत् कृतकृत्यः सन् धर्मदेशनां करोति, नैवम्, अभिप्रायापरिज्ञानाद्, भगवता हि तीर्थकरनामगोत्रं कर्मावश्यवेदयितव्यम्, तस्य च वेदनेऽयमेवोपायो यद् अग्लान्या धर्मदेशनादिकरणम्, "तं च कहं वेइज्जइ ? अगिलाए धम्मदेसणाईहिं" ति वचनात् ॥ गतं समवसरणद्वारम् । अथ "केवइय" त्ति द्वारम् । कियतो भूभागादवश्यं समवसरणे आगन्तव्यम् ? इत्याह-

[भा.११९५] जत्थ अपुव्वोसरणं, न दिट्ठपुव्वं व जेण समणेणं ।
बारसहि जोयणेहिं, सो एइ अनागमे लहुगा ॥

वृ- यत्र नगरादौ 'अपूर्वं समवसरणं' विवक्षिततीर्थकरापेक्षया अभूतपूर्वं येन वा श्रमणेन न दृष्टपूर्वं स द्वादशभ्यो योजनेभ्यो नियमतः 'एति' आगच्छति । यदि त्ववज्ञया नागच्छति तदा चत्वारो लघवः प्रायश्चित्तम् ॥ अथ रूपद्वारमाह-

[भा.११९६] सव्वसुरा जइ रूवं, अंगुट्ठपमाणयं विउव्विज्जा ।
जिनपायंगुट्ठं पइ, न सोहए तं जहिंगालो ॥

वृ- कीदृग् भगवतो रूपम् ? इत्याह-'सर्वसुराः' वैमानिकादयः सम्भूय यदि सार-सारतरसारतमान् पुद्गलान् गृहीत्वा अङ्गुष्ठप्रमाणकं रूपं विकुर्वेयुः तथापि जिनपादाङ्गुष्ठं प्रति उपमीयमानं तद् न शोभते, यथाऽङ्गार इति ॥ साम्प्रतं विनेयजनानुग्रहाय प्रसङ्गतो गणधरादीनामपि रूपसम्पदभिधित्सयाऽऽह-

[भा.११९७] गणहर आहार अनुत्तरा य जाव वन-चक्कि-वासु-बला ।
मंडलिया जा हीना, छट्ठाणगया भवे सेसा ॥

वृ- तीर्थकररूपसम्पदः सकाशाद् अनन्तगुणहीना गणधरा रूपतो भवन्ति । गणधररूपाद् अनन्तगुणहीनाः खल्वाहारकदेहाः । आहारकदेहरूपाद् अनन्तगुणहीना अनुत्तरोपपातिनां देहाः । ततोऽप्यनन्तगुणहीना उपरितनोपरितनग्रैवेयकदेवदेहाः । एवं यावदीशानकल्पदेवरूपाद् अनन्तगुणहीनाः सौधर्मकल्पदेवदेहाः । ततो भवनपति-ज्योतिष्क-वनचर-चक्रवर्ति-वासुदेव-बलदेव-महामण्डलिका अपि रूपतो यथाक्रममनन्तगुणहीना द्रष्टव्याः । ततः शेषराजानो जनपदलोकाश्च षट्स्थानगताः परस्परं भवन्ति । तद्यथा-अनन्तभागहीना वा १ असङ्ख्येयभागहीना वा २ सङ्ख्येयभागहीना वा ३ संख्येयगुणहीना वा ४ असङ्ख्येयगुणहीना वा ५ अनन्तगुणहीना वा ६ ॥ अथ भगवत एव रूपसौन्दर्यनिबन्धनं संहननादिकं वर्णयन्नाह-

[भा.११९८] संघयण-रूव-संठाण-वन्न-गइ-सत्त-सार-ऊसासा ।
एमादऽनुत्तराइं, हवंति नामोदया तस्स ॥

वृ- 'संहननं' वज्रऋषभनाराचम्, 'रूपम्' अनन्तरोक्तरूपम्, 'संस्थानं' समचतुरस्रम्, 'वर्ण' देहच्छाया, 'गति' भद्रगजेन्द्रानुकारिणी सुललिता, 'सत्त्वं' धैर्यम्, सारो द्विधा-बाह्य आभ्यन्तरश्च, बाह्यो गुरुत्वम्, आभ्यन्तरो ज्ञान-दर्शन-चारित्ररूपः, "ऊसास"त्ति उच्छ्वास-निश्वाससौरभ्यम्, एवमादीनि वस्तूनि तस्य भगवतः 'अनुत्तराणि' अनन्यसामान्यानि भवन्ति, आदिशब्दाद् गोक्षीरगौरं रुधिरा-ऽऽमिषं चर्मचक्षुषामगोचरावाहार-नीहारौ इत्यादि । एतानि च 'नामोदयाद्' नामनाम्नः कर्मणः शुभरूपस्योदयात् 'तस्य' भगवतोऽनुत्तराणि भवन्ति ॥ किञ्च-

[भा.११९९] पयडीणं अन्नासऽवि, पसत्थ उदया अनुत्तरा होंति ।
खयउवसमे वि य तहा, खयम्मि अविगप्पमाहंसु ॥

वृ- प्रकृतीनाम् 'अन्यासामपि' नामव्यतिरिक्तानां गोत्रादीनां प्रशस्ता उदया उच्चैर्गोत्रत्वादयो भवन्ति । अपिशब्दाद् नाम्नोऽपि ये उक्तव्यतिरिक्ताः सौभाग्य-सौन्दर्य-यशःकीर्त्तिप्रभृतयस्तेऽपि गृह्यन्ते । एते च किमितरजनस्येव प्रशस्ताः ? उत न ? इत्यत आह-'अनुत्तराः' अनन्यसदृशाः ।

"खयउवसमे वि य तह" त्ति कर्मणां क्षयोपशमेऽपि सति ये दान-लाभादयः कार्यविशेषास्तेऽपि तथैव भगवतोऽनुत्तराः। 'क्षये' क्षायिके पुनर्भावे वर्त्तमानस्य भगवतः केवलज्ञानादिकं गुणसमुदयम् 'अविकल्पं' वर्णनादिकल्पातीतं सर्वोत्तमम् "आहंसु" त्ति आख्यातवन्तः श्रुतधरा इति ॥

आह केवलिकालेऽप्यसाताद्याः प्रकृतयो नाम्नो वा या अशुभास्ताः कथं तस्य दुःखदा न भवन्ति ? इति अत्रोच्यते-

[भा.१२००]अस्सायमाइयाओ,जा वि य असुह हवंति पगडीओ ।
निंबरसलवु व्व पए, न होंति ता असुहया तस्स ॥

वृ- 'असाताद्याः' असातवेदनीयादयो या अपि चाशुभा भवन्ति प्रकृतयस्ता अपि निम्बरसलव इव 'पयसि' दुग्धे न भवन्ति अशुभदा असुखदा वा तस्य भगवत इति ॥

अथ पृच्छाद्वारम्। आह उत्कृष्टरूपतया भगवतः किं प्रायोजनम् ? इति अत्रोच्यते-

[भा.१२०१] धम्मोदएण रूवं करेंति रूवस्सिणो वि जइ धम्मं ।
गज्झवओ य सुरूवे, पसंसिमो रूवमेवं तु ॥

वृ- धर्मस्य-पुण्यप्रकृतिरूपस्योदयेन रूपं भवतीति परिभाव्य श्रोतारोऽपि धर्मे प्रवर्त्तन्ते। तथा कुर्वन्ति 'रूपस्विनोऽपि' रूपवन्तोऽपि यदि धर्मं ततः शेषैः सुतरां कर्तव्य इति श्रोतृबुद्धिः प्रवर्त्तते। 'ग्राह्यवाक् च' आदेयवाक्यः सुरूपः पुरुषो भवति, चशब्दस्यानुक्तसमुच्चयार्थत्वात् श्रोतॄणां रूपाद्यभिमानापहारी च। अतः प्रशंसामो वयं भगवतो रूपमेवमिति ॥ गते रूप-पृच्छाद्वारे। अथ व्याकरणद्वारम् । भगवान् देव-नर-तिरश्चां प्रभूतसंशयिनां व्याकरणं कुर्वन् कथं संशयव्यवच्छित्तिं करोति ? इत्युच्यते-युगपदेकेनैव निर्वचनेन। आह यद्येकैकस्यैकैकं संशयं परिपाट्या व्यवच्छिन्द्यात् ततः को दोषः स्यात् ? इत्याह-

[भा.१२०२] कालेन असंखेण वि, संखाईयाण संसईणं तु ।
मा संसयवोच्छित्ती, न होज्ज कमवागरणदोसा ॥

वृ- कालेन 'असङ्ख्येयेनापि' पल्योपमादिना सङ्ख्यातीतानां संशयिनां संशयव्यवच्छित्तः क्रमव्याकरणदोषाद् न भवेत्, अत एतद् मा भूदिति भगवान् युगपद् व्यागृणातीति ॥

अथ युगपद्याकरणे गुणानाह-

[भा.१२०३] सव्वत्थ अविसमत्त, रिद्धिविसेसो अकालहरणं च ।
सव्वन्नुपच्चओ वि य, अचिंतगुणभूइओ जुगवं ॥

वृ- 'सर्वत्र' सरवसत्त्वेषु 'अविषमत्वं' युगपन्निर्वचनेन तुल्यत्वं भगवतो भवति, राग-द्वेषरहितस्य तुल्यकालसंशयिनां युगपज्जिज्ञासतां कालभेदेन कथने राग-द्वेषगोचरचित्तवृत्ति-सम्भावनाप्रसङ्गात्। ऋद्धिविशेषश्चायं भगवतः, यद् युगपत् सर्वसंशयिनामशेषसंशयव्यवच्छित्तिं करोति। तथा परिपाट्या कथने कस्यापि संशयिनोऽनिवृत्तसंशयस्यैव कालेन-मृत्युना हरणं स्यात्, अतोऽकालहरणं युगपन्निर्वचने भवति। तथा सर्वज्ञप्रत्ययोऽपि च तेषामित्थमेव भवति, क्रमव्याकरणे तु कस्यचिदनपनीतसंशयस्य सर्वज्ञप्रतीतिरपि न स्यात्। तथा अचिन्त्या-अप्रमेया गुणभूति-गुणसम्पदियं भगवतः, यदेकहेलयैव सर्वेषामपि संशयव्यपनयनम्। एतैः कारणैर्भगवान् युगपत् कथयतीति ॥ गतं व्याकरणद्वारम्। अथ श्रोतृपरिणामद्वारम्। तत्र यथा सा पारमेश्वरी

वाग् अशेषसंशयोन्मूलनेन परिणमते तथा प्रतिपादयन्नाह-

[भा.१२०४] वासोदगस्स व जहा, वण्णादी होंति भायणविसेसा ।
　　　　सव्वेसिं पि सभासं, जिणभासा परणमे एवं ॥

वृ- 'वर्षोदकस्य' वृष्टिपानीयस्य वाशब्दाद् अन्यस्य यथैकरूपस्य सतः 'वर्णादयः' वर्ण-गन्धरस-स्पर्शाः 'भाजनविशेषाद्' भूमिकाद्याधारविशेषाद् विचित्रा भवन्ति । यथा कृष्ण-सुरभि-मृत्तिकायां वर्षोदकं पतितं स्वच्छं सुगन्धं सरसं च भवति, ऊषरभूमिकायां विपरीतम्; एवं सर्वेषामपि श्रोतॄणां स्वस्वभाषां प्रति 'जिनभाषा' जैनी वाणी परिणमते । उक्तञ्च परमर्षिभिः- सा विय णं भगवओ अद्धमागहा भासा भासिज्जमाणी तेसिं सव्वेसिं आयरियमणायरियाणं दुपय-चउप्पय-मिय-पसु-पक्खि-सिरीसिवाणं अप्पप्पणो भासत्ताए परिणमइ ॥

भगवद्वाच एव सौभाग्यगुणप्रतिपादनायाह-

[भा.१२०५] साहारणा-ऽसवत्ते, तओवओगो उ गाहगगिराए ।
　　　　न य निव्विज्जइ सोया, किढिवाणियदासिआहरणा ॥

वृ- 'साधारणा' सर्वसंज्ञिनां भाषासु सामान्या; यद्वा क्षीर-खण्डादीनि मधुरद्रव्याण्येकत्र मीलितानि यथा सुस्वादुतया साधारणानि भवन्ति एवमसावप्यतीवसुस्वादुतया साधारणा; नरकादौ पततो वा जन्तून् या सम्यग् धारयति साधारं-परित्राणं करोतीति साधारणा । 'असपत्ना' अनन्यसदृशी, यस्या वा अपरवाग्भिर्व्याघातो न क्रियते । ग्राहिका-अर्थपरिच्छेदकारिणी सा चासौ गीश्च ग्राहकगीः । एवंविधायां तस्यामुपयोगः-एकाग्रता तदुपयोगः, तुशब्दस्यावधारणार्थत्वात् तदुपयोग एव श्रोतुर्भवति, नानुपयोगो न चान्यत्रोपयोग इति । उपयोगे सत्यप्यन्यत्र निर्वेददर्शनात् तस्यामपि निर्वेदः स्यादित्याह-न च निर्विद्यते श्रोता भागवतीं वाचं शृण्वन् । कुतः खल्वमय-र्थोऽवगन्तव्यः ? इत्याह-किढिवामिजदास्युदाहरणात्- एगस्स वाणियगस्स किढी दासी किढी थेरी । सा गोसे कट्ठाणं गया । तण्हा-छुहाकिलंता मज्झण्हे आगता । 'अतिथेवा कट्ठा आणिय'त्ति पिट्टित्ता भुक्खिय-तिसिया पुणो पट्ठविया । सा य वड्डं कट्ठभारं गहाय ओगाहंतीए पच्छिमाए पोरिसीए आगच्छइ । को कालो ? जेट्ठामूलमासो । अह ताए य थेरीए कट्ठभाराओ एगं कट्ठं पडियं । ताए ओणमित्ता तं गहियं । तंसमयं च भगवं तित्थगरो धम्मं कहियाइओ जोयणनीहारिणा सरेणं । सा थेरी तं सद्दं सुणेंती तहेव ओणया सोउमाढत्ता । उण्हं खुहं पिवासं परिस्समं च न विंदइ । सूरत्थमणे तित्थयरो धम्मं कहेउमुट्ठितो । थेरी गता ॥

[भा.१२०६]सव्वाउअं पि सोया, झविज्ज जइ हु सययं जिनो कहए ।
　　　　सी-उण्ह-खु-प्पिवासा-परिस्सम-भए अविगणिंतो ॥

वृ- अनेनैव दृष्टान्तेन यदि 'हुः' निश्चितं सततं 'जिनः' तीर्थङ्करः कथयेत्, ततः श्रोता 'सीतोष्णक्षुत्पिपासापरिश्रमभयान्यविगणयन्' शीतं-हिमम् उष्णम्-आतपः क्षुत्पिपासे प्रतीते परिश्रमः-मार्गगमनादिसमुत्थः भयं-प्रतिपक्षादिजनितम् एतान्यविन्दमानो भगवतो धर्मदेशनां शृण्वन् सर्वायुष्कमपि क्षपयेदिति ॥ गतं श्रोतृपरिणामद्वारम् । अथ दानद्वारम् । भगवान् येषु नगरा-ऽऽकरादिषु विहरति तेभ्यो दिवसदैवसिकीं वार्तां ये खल्वानयन्ति यथा 'भगवान् अद्यामुत्र क्षेत्रे विहरति' इति तेषां यद् भगवत्किंवदन्तीनिवेदनवृत्तिकल्पं परिभाषितं संवत्सरनियतं दानं

दीयते तद् वृत्तिदानम्, यत् पुनः स्वनगरे भगवदागमननिवेदकाय नियुक्तायानियुक्ताय वा हर्षप्रकर्षाधिरूढमानसैर्दीयते तत् प्रीतिदानम्, एतद् द्वयमपि यथा चक्रवर्त्यादयः प्रयच्छन्ति तथा प्रतिपादयन्नाह-

[भा.१२०७] वित्ती उ सुवन्नस्सा, बारस अद्धं च सयसहस्साइं ।
तावइयं चिय कोडी, पीईदानं तु चक्कीणं ॥

वृ- वृत्तिदानं सुवर्णस्य 'द्वादश अर्द्धं च शतसहस्राणि' अर्द्धत्रयोदश सुवर्णलक्षा इत्यर्थः । 'तावत्य एव' अर्द्धत्रयोदशप्रमाणा एव सुवर्णस्य कोटयः प्रीतिदानम् । केषाम् ? इत्याह-चक्रवर्त्तिनाम् ॥

[भा.१२०८] एतं चेव पमाणं, नवरं रययं तु केसवा दिंति ।
मंलियाण सहस्सा, वित्ती पीई सयसहस्सा ॥

वृ- एतदेव प्रमाणं वृत्ति-प्रीतिदानयोः, 'नवरं' केवलं 'रजतं' रूप्यं 'केशवाः' वासुदेवा ददति । 'मण्डलिकानां' राज्ञां सहस्राण्यर्द्धत्रयोदशप्रमाणानि रूप्यस्य वृत्तिदानम्, प्रीतिदानं पुनरर्द्धत्रयोदशशतसहस्राणि इति ॥ किमेत एव महापुरुषाः प्रयच्छन्ति ? आहोश्चिदन्येऽपि ? इत्याह-

[भा.१२०९] भत्ति-विभवानुरूवं, अन्ने वि य दिंति इब्भमाईया ।
सोऊण जिनागमनं, निउत्तमनिओइएसुं वा ॥

वृ- 'भक्ति-विभवानुरूपं' यावती यस्य भगवद्विषया भक्ति यावती च यस्य विभूति स तदनुमानेनेत्यर्थः, अन्येऽपि च ददति 'इभ्यादयः' इभमर्हतीति इभ्यः, यस्य सत्कसुवर्णादिद्रव्य-पुञ्जेनान्तरितो हस्त्यपि न दृश्यते सः, अभ्यधिकद्रव्यो वेत्यर्थः, आदिशब्दाद् नगर-ग्रामभोगिकादयः। कदा ? इत्याह-श्रुत्वा 'जिनस्य' तीर्थकृत आगमनं नियुक्तेभ्योऽनियुक्तेभ्यो वा ॥ आह तेषामित्थं वृत्ति-प्रीतिदाने प्रयच्छतां के गुणाः ? इति उच्यते-

[भा.१२१०] देवानुवित्ति भत्ती, पूया थिरकरण सत्तअनुकंपा ।
साओदय दानगुणा, पभावणा चेव तित्थस्स ॥

वृ- चक्रवर्त्यादिभिरित्थं प्रयच्छद्भिर्देवानामनुवृत्ति कृता भवति, देवा अपि भगवतः पूजां कुर्वन्तीति कृत्वा भगवति पूज्यमाने तेषामपि महान् परितोषो भवतीत्यर्थः । तथा भक्तिर्भगवतः कृता भवति । तीर्थकरपूजायां च स्थिरीकरणमभिनवश्राद्धानां भवति । सत्त्वानां भगवत्प्रवृत्ति-निवेदकानामनुकम्पा विहिता भवति । 'सातोदयं' सातवेदनीयं कर्म विशिष्टदिव्य-मानुष्यसुखो-पभोगफलं बध्यते । एतेऽनन्तरोक्ता दानगुणाः । प्रभावना चैव तीर्थस्य कृता भवति-अहो ! अमीषां धर्म श्रेयान् यत्र स्वदेव-गुरुभक्तिसम्भारसुभगमीदृशमौदार्यमिति ॥ गतं दानद्वारम् । अथ देवमाल्यद्वारम् । भगवान् प्रथमां सम्पूर्णपौरुषीं धर्ममाचष्टे । अत्रान्तरे देवमाल्यं प्रविशति, बलिरित्यर्थः । आह कस्तं करोति ? इत्याह-

[भा.१२११] राया व रायमच्चो, तस्सासइ पउर जनवओ वा वि ।
दुब्बलिकंडिय बलिछडिय तंदुलानाढगं कलमा ॥

वृ- 'राजा वा' चक्रवर्त्ति-माण्डलिकादि, 'राजामात्यो वा' राज्ञो मन्त्री । 'तस्य' राज्ञो

राजामात्यस्य वा 'असति' अभावे 'पौरं' नगरनिवासिविशिष्टलोकसमुदायः 'जनपदो वा' ग्रामादिवास्तव्यजनसमुदायो दुर्बलिकया कण्डितानां खण्डीकर्तुमशक्तत्वाद् बलवत्या च्छटितानां निशेषतुषापनयनात् तन्दुलानाम् 'आढकम्' –

दो असईओ पसई, दो पसईओ य सेइआ होइ।
चउसेइओ उ कुडवो, चउकुडवो पत्थओ नेओ ॥

एवंविधैश्चतुर्भि प्रस्थैरेक आढको निष्पद्यते, एवंपरिमाणं ''कलम''त्ति आर्षत्वाद् विभक्तिव्यत्यये 'कलमानां' शालिविशेषाणां बलिं करोति ॥ किंविशिष्टनाम्? इत्याह-

[भा.१२१२] भाइयपुणानियाणं, अखंड-ऽफुडियाण फलगसरियाणं।
कीरइ बली सुरा वि य, तत्थेव छुहंति गंधाई ॥

वृ- भाजिताश्च ते पुनरानीताश्च बाजितपुनरानतास्तेषाम्। तत्र भाजनम्-ईश्वरादिगृहेषु वीननार्थमर्पणम्, तेभ्यः प्रत्यानयनं पुनरानयनम्। तथा 'अखण्डा-ऽस्फुटितानाम्' अखण्डाः-सम्पूर्णावयवाः अस्फुटिताः-राजीरहिताः, ''फलकसरिताणं'' फलकवीनितानाम्, एवम्भूतानां तन्दुलानां बलि क्रियते। सुरा अपि च 'तत्रैव' बलौ प्रक्षिपन्ति गन्धादीनिति ॥ गतं देवमाल्यद्वारम्। अथ माल्यानयनद्वारम्। तमित्थं तन्दुलाढकपरिमाणं सिद्धं बलिमुपादाय राजादिस्त्रिदशगणपरिवृतो महता पटुपटहादितूर्यनिनादेन सकलमपि दिङ्मण्डलमापूरयन्नागत्य पूर्वद्वारेण प्रवेशयति। आह च चूर्णिकृत्- तं आढगं तंदुलाणं सिद्धं देवमल्लं राया व रायमच्चो वा पउरं वा गामो वा जनवओ व गहाय महया तूरियरवेणं देवपरिवुडो पुरच्छिमिल्लेणं दारेणं पविसइ त्ति। तस्मिंश्च प्रवेश्यमाने भगवानपि धर्मदेशनामुपसंहरतीति। आह च-

[भा.१२१३] बलिपविसणसमकालं, पुव्वद्दारेण ठाइ परिकहणा।
तिगुणं पुरओ पाडण, तस्सद्धं अवडियं देवा ॥

वृ- पूर्वद्वारेण बलिप्रवेशनसमकालं 'तिष्ठति' उपरमते 'परिकथना' धर्मकथा। ततश्च स राजादि प्रविश्य बलिव्यग्रहस्तो भगवन्तं त्रि-प्रदक्षिणीकृत्य बलिं तत्पादान्तिके पुरतः पातयति। तस्य चार्द्धमपतितमेव देवा गृह्णन्ति ॥

[भा.१२१४] अद्धद्धं अहिवइणो, तदद्ध मो होइ पागयजणस्स।
सव्वामयप्पसमणी, कुप्पइ नऽन्नो य छम्मासे ॥

वृ- देवगृहीतोद्वरितस्यार्द्धस्यार्द्धमधिपतेर्भवति, राजादेर्बलिस्वामिन इत्यर्थः। 'तदर्द्धं' चतुर्भागलक्षणं 'मो' पादपूरणे यद् बलेरास्ते तद् भवति 'प्राकृतजनस्य' प्रकृतिषु भवः प्राकृतो जनस्तस्य, इतरलोकस्येत्यर्थः। तस्य चायं प्रभावः-यदि तत एकमपि सित्थं शिरसि प्रक्षिप्यते ततः पूर्वोत्पन्नो रोगः सपदि विलीयते, अपूर्वश्च षण्मासान् यावन्न प्रादुर्भवतीति। आह च- 'सर्वामयप्रशमनः' सर्वरोगोपशमनोऽयं बलि, गाथायां प्राकृतत्वात् स्त्रीत्वम्, कुप्यति न 'अन्यश्च' अपूर्वो रोगः षण्मासान् यावदिति ॥ गतं माल्यानयनद्वारम्। अपरे त्वनन्तरोक्तं द्वारद्वयमप्ये-कद्वारीकृत्य व्याचक्षते तथाप्यविरोधः। इत्थं बलौ प्रक्षिप्ते भगवानुत्थाय प्रथमप्राकारान्तरादुत्तरद्वारेण निर्गत्य पूर्वस्यां दिशि स्फटिकमये देवच्छन्दके यथासुखं समाधिना व्यवतिष्ठते। अथ 'उपरि तीर्थम्' इति द्वारम्-भगवत्युत्थिते उपरि-द्वितीयपौरुष्यां तीर्थं-प्रथमगणधरोऽपरो वा धर्ममाचष्टे।

आह भगवानेव किमिति नाचष्टे ? किं तत्कथने केऽपि गुणाः सन्ति ? उच्यते, सन्तीति ब्रूमः । के पुनस्ते ? इत्याह-

[भा.१२१५] खेयविणोओ सीसगुणदीवणा पच्चओ उभयओ वि ।
सीसा-ऽऽयरियकमो वि य, गणहरकहणे गुणा होंति ॥

वृ- भगवतः खेदविनोदो भवति, परिश्रमविश्राम इत्यर्थः । तथा 'अहो ! अस्य भगवतः शिष्या अप्येवंविधव्याख्यानलब्धिमन्तः' इति शिष्यगुणदीपना कृता भवति । प्रत्ययश्चोभयतोऽपि श्रोतृणामुपजायते, यथा भगवताऽभ्यधायि तथा गणधरोऽप्यभिधत्ते, न शिष्या-ऽऽचार्ययोः परस्परं वचनविरोध इति; गणधरे वा तदनन्तरं भगवदुक्तानुवादिनि प्रत्ययो भवति भगवद्विषयः श्रोतृणां यथा नान्यथावादीति । तथा शिष्या-ऽऽचार्यक्रमोऽपि च दर्शितो भवति, आचार्यादुपश्रुत्य योग्यशिष्येण तदुक्तार्थव्याख्यानं कर्त्तव्यम् । एते 'गणधरकथने' गणभृतो धर्मदेशनायां गुणा भवन्तीति ॥ आह स गणधरः क्व निषण्णः कथयति ? इत्युच्यते-

[भा.१२१६] राओवणीय सीहासणोवविट्ठो व पायवीढम्मि ।
जिट्ठो अन्नयरो वा, गणहारि कहेइ बीयाए ॥

वृ- राज्ञा उपनीते-ढौकिते सिंहासने वा तदभावे भगवतः पादपीठे वा उपविष्टः 'ज्येष्ठः' प्रथमो गौतमस्वाम्यादिस्तदभावेऽन्यतरो वा गणं-स्वाध्यादिसमुदायं गुणसमुदयं वा धारयितुं शीलमस्येति गणधारी कथयति द्वितीयायां पौरुष्यामिति ॥

आह स कथयन् कथं कथयति ? इत्युच्यते-

[भा.१२१७] संखाईए वि भवे, साहइ जं वा परो उ पुच्छिज्जा ।
न य णं अनाइसेसी, वियाणई एस छउमत्थो ॥

वृ- भगवान् गणधरः सङ्ख्यातीतानपि भवान् "साहइ"त्ति कथयति । इदमुक्तं भवति-असङ्ख्येयेषु भवेषु यद् बभूव भविष्यति वा तत् सर्वमपि कथयति । 'यद् वा' वस्तुजातं दुरवगममपि परः पृच्छेत् तदशेषमपि कथयतीति, अनेनाऽशेषाभिलाप्यपदार्थप्रतिपादनशक्तिमाह । किं बहुना ? 'न च' नैव "णं" इति तं गणधरम् 'अनतिशयी' अवधि-मनःपर्यायाद्यतिशयरहितो विजानाति यथा 'एषः' गणधरः छद्मस्थः, किन्तु निशेषप्रश्नोत्तरदानसमर्थतया सर्वज्ञोऽयमिति मन्यत इति भावः ॥ एवं तावत् समवसरणवक्तव्यता प्रसङ्गत उक्ता । अथ प्रकृतयोजनामाह-

[भा.१२१४] तित्थयरस्स समीवे, वक्खेवो तत्थ एवमाईहिं ।
सुत्तग्गहणं ताहे, करेइ सो बारस समाओ ॥

वृ- तीर्थकरस्य समीपे 'तत्र' समवसरणे एवमादिभिः प्रकारैरध्ययनस्य व्याक्षेपो भवतीत्युक्ते स शिष्यः प्राह-'भगवन् ! सत्यमेवैतद् यद् आदिशत यूयं अत इहैव पठामि' इत्युक्त्वा सूत्रग्रहणं द्वादश 'समाः' वर्षाणि करोति, द्वादशभिर्वर्षैः सकलस्यापि सूत्रस्याध्ययनं विदधातीत्यर्थः ॥

गतं शिक्षापदद्वारम् । अथार्थग्रहणद्वारं विवरीषुराह-

[भा.१२१९] सुत्तम्मि य गहियम्मी, दिट्ठंतो गोण-सालिकरणेणं ।
उवभोगफला साली, सुत्तं पुण अत्थकरणफलं ॥

वृ- सूत्रे गृहीते सति अवश्यं तस्यार्थ श्रोतव्यः । किं कारणम् ? इति चेद् उच्यते-दृष्टान्तोऽत्र

'गवा' बलीवर्देन 'शालिकरणेन च' शालिक्षेत्रेण। तत्र गोदृष्टान्तो यथा-कश्चिद् बलीर्द सकलमपि दिवसं वाहयित्वा हलाद् अरघट्टाद् वा मुक्तः सन् सुन्दरामसुन्दरां वा चारिं यां प्राप्नोति तां सर्वामनाऽस्वादयन् चरत्येव। पश्चाद् प्रातः समुपविश्य प्राक् चीर्णं रोमन्थायते, रोमन्थायमानश्च तदा स्वादमुपलभते, ततोऽसौ नीरसं कचवरं परित्यजति। एवमयमपि गृहवासारघट्टाद् मुक्तः प्रथमं यत् किमपि सूत्रं चारिकल्पं गुरुसकाशादधिगच्छति तत् सर्वमर्थास्वादनविरहितं गृह्णाति। ततः सूत्रे गृहीतेऽर्थग्रहणं करोति। यदि पुनरर्थं न गृह्णीयात् तदा तत् सूत्रं निरास्वादमेव सञ्जायते। अर्थे तु श्रुते सम्यक् तदर्थमवबुध्यमानः सन्नसौ यथावदाचरत्युपदेशम्, परिहरति बिन्दु-मात्राभेदादिदोषदुष्टान् कचवरकल्पानभिलापानिति ॥

शालिकरणदृष्टान्तः पुनरयम्-यथा कर्षकः शालीन् महता परिश्रमेण निष्पाद्य ततो लवन-मलन-पवनादिप्रक्रियापुरस्सरं कोष्ठागारे प्रक्षिप्य यदि तैः शालिभिः खाद्य-पेयादीनामुपभोगं न करोति तत शालिसङ्ग्रहस्तस्याफलः सम्पद्यते। अथासौ करोति तैः शालिभि यथायोगमुपभोगं ततः शालिसङ्ग्रहः सफलो जायते। एवं द्वादशवार्षिके सूत्राध्ययनपरिश्रमे कृतेऽपि यदि तदीयमर्थं न शृणुयात् तदा स सर्वोऽपि परिश्रमो निष्फल एव भवेत्। अर्थे तु श्रुते समयगवधारिते च सफलः स्यात् ॥ अत एवाह-उपभोगफलाः शालयः, सूत्रं पुनः 'अर्थकरणफलं' चरण-करमादिरूपसूत्रार्थाचरणफलम्, तच्च सूत्रोक्तार्थाचरणं श्रुत एवार्थे भवति नान्यथा ॥ अतः-

**[भा.१२२०]** जइ बारस वासाइं, सुत्तं गहियं सुणाहि से अहुणा।
बारस चेव समाओष अत्थं नो नाहिसि न वा णं ॥

**वृ-**यदि द्वादश वर्षाणि त्वया सूत्रं गृहीतम्, अतः 'तस्य' सूत्रस्यार्थमधुना द्वादशैव 'समाः' वर्षाणि शृणु। ततोऽर्थं श्रृण्वन् स्वज्ञानावारककर्मत्रयोपशमानुसारेण ज्ञास्यसि वा न वा "णं" इति 'तं' विवक्षितमर्तम् ॥ किञ्च-

**[भा.१२२१]**सन्नाइसुत्त-ससमय, परसमय उस्सग्गमेव अववाए।
हीना-ऽहिय-जिन-थेरे, अज्ञा काले य वयणाई ॥

**वृ-** इह मौनीन्द्रप्रवचनेऽनेकधा सूत्राणि भवन्ति। तत्र किञ्चि संज्ञासूत्रम्, यथा-"जे छेए से सागारियं न सेवे।" यः 'छेकः' पण्डितः सः 'सगारिकं' मैथुनं न सेवेत। अथवा-"सव्वामगंधं परिन्नायनिरामगंधो परिव्वए।" आमम्-अविशोधिकोटिः, गन्धं-विशोधिकोटि। तथा-"आरं दुगुणेणं पारं एगगुणेणं।" 'आरं' संसारस्तं 'द्विगुणेन' राग-द्वेषयुगलेन 'पारं' निर्वाणं तद् 'एकगुणेन' राग-द्वेषपरिहारलक्षणेन जीवः प्राप्नोतीति गम्यते। आदिग्रहणाद् देशीभाषानियतं सूत्रं गृह्यते, यथा-"दिगिंछापरीसहे"। 'दिगिंछा' इति बुभुक्षा ॥

स्वसमयसूत्रं यथा-"करेमि भंते! सामाइयं" इत्यादि ॥ परसमयसूत्रं यथा- पंच खंधे वयंतेगे, बाला उ खणजोइणो। उत्सर्गसूत्रं यता-"अभिक्खणं निव्विगइं गया य" इत्यादि। अपवादसूत्रं यथा-

तिण्हमन्नयरागस्स, निसिज्जा जस्स कप्पई।
जराए अभिभूयस्स, वाहियस्सा तवस्सिणो ॥

'हीनम्' इति हीनाक्षरं यैरक्षरैर्विना सूत्रस्यार्थो न पूर्यते, 'अधिकम्' इत्यधिकाक्षरम्,

एवंविधं यत् पूर्वमजानता सूत्रमधीतं तस्यार्थं सम्यगवगम्य हीनं प्रतिपूरयति अधिकं परित्यजति।। जिनकल्पिकसूत्रं यथा-

तेगिच्छं नाभिनंदिज्ञा, संचिक्खऽत्तगवेसए।
एवं खु तस्स सामन्नं, जं न कुज्ञा न कारवे ॥

स्थविरकल्पिकसूत्रं यथा-भिक्खू अ इच्छिज्ञा अन्नयरिं तेगिच्छिं आउंटित्तए। अथवा जिनकल्पिक-स्थविरकल्पिकयोः सामान्यसूत्रमिदम्- "संसट्ठकप्पे चरिज्ञ भिक्खू"

आर्यासूत्रं यथा-"कप्पइ निग्गंथीणं अंतोलित्तं घडिमत्तयं धारित्तए" "कालि" त्ति कालविषयं किमपि सूत्रं भवति, यथा अनागतं कालमङ्गीकृत्य "न या लभेज्ञा निउणं सहायं, गुणाहियंवा गुणओ समं वा। इत्यादि ॥

"वयणाई" ति 'वचनम्' एक-द्वि-बहुवचनादिकं षोडशधा यथा पीठिकायाम तत्प्रतिपादकं सूत्रं यथा आचाराङ्गे भाषाध्ययने- एगवयणं वयमाणे एगवयणं वएज्ञा, दुवयणं वयमाणे दुवयणं वएज्ञा, बहुवयणं वयमाणे बहुवयणं वएज्ञा, इत्थीवयणं वयमाणे इत्थीवयणं वएज्ञा। इत्यादि ॥ आदिशब्दाद् भयसूत्रादिपरिग्रहः। इत्थमनेकधा सूत्राणां सम्भवे तदर्थश्रवणमन्तरेण न शक्यते "कीदृशम्?" इति विवेकः कर्तुमिति कर्त्तव्यमर्थग्रहणम् ॥ अथ ते शिष्या ब्रूयुः-'यः कण्ठतः सूत्रे निबद्धोऽर्थस्तेनैव वयं तुष्टाः किमस्माकं दुरधिगमत्वाद् बहुपरिक्लेशेन "मज्ञण निसिज्ञ अक्खा" इत्यादिप्रक्रियापुरस्सरमर्थग्रहणप्रयासेन?' इति, ते इत्थंब्रुवाणाः प्रज्ञापयितव्याः। कथम्? इत्याह-

[भा.१२२२] जे सुत्तगुणा खलु लक्खणम्मि कहिया उ सुत्तमाईया।
अत्थग्गहणमराला, तेहिं चिय पन्नविज्ञंति ॥

वृ- पीठिकायां लक्षणद्वारे ये सूत्रस्य गुणाः "निद्दोसं सारवंतं च" इत्यादिना कथिताः, यद्वा "सुत्तमाईय" त्ति "सुत्तं तु सत्तमेव उ" इत्यादिना प्रतिपादिताः, 'तैरेव' हेतुभिरर्थग्रहणे मरालाः-अलसाः शिष्याः प्रज्ञाप्यन्ते। यथा-भो भद्राः! निर्दोष-सारवद्-विश्वतोमुखादयः सूत्रस्य गुणा भवन्ति, ते च यथाविधि गुरुमुखादर्थे श्रूयमाण एव प्रकटीभवन्ति। किञ्च यथा द्वासप्तति-कलापण्डितो मनुष्यः प्रसुप्तः सन्न किञ्चित् तासां कलानां जानीते एवं सूत्रमप्यर्थेनाऽबोधितं सुप्तमिव द्रष्टव्यम्। विचित्रार्थनिबद्धानि सोपस्काराणि च सूत्राणि भवन्ति, अतो गुरुसम्प्रदायादेव यथावदवसीयन्ते न यतस्ततः। इत्थं युक्तियुक्तैर्वचोभि प्रज्ञापितास्ते विनेयाः प्रतिपद्यन्ते गुरूणामुपदेशम्, गृह्णन्ति द्वादश वर्षाणि विधिवदर्थमिति ॥ गतमर्थग्रहणद्वारम्। अथानियत-वासद्वारम्-तत्रार्थग्रहणे समापिते सति यो विनेय आचार्यपदयोग्यः स नियमाद् द्वादश वर्षाणि देशदर्शनं कारयितव्यः। शिष्यः पृच्छति-तेन द्वादश वर्षाणि सूत्रग्रहणं कृतं द्वादशभिर्वर्षैरर्थ समग्रोऽपि गृहीतः, अतो देशदर्शनेन विना किमिवास्य न सिध्यति? इति उच्यते-

[भा.१२२३] जइ वि पगासोऽहिगओ, देसीभासाजुओ तहा वि खलु।
उंदुय सिया य वीसुं, एरगमाई य पच्चक्खं ॥

वृ- यद्यपि तेन 'प्रकाशः' अर्थसूत्रस्य 'अधिगतः' सम्यग् विज्ञातस्तथापि 'खलु' निश्चयेनासौ विनेयो देशदर्शनेन देशीभाषायुतः कर्त्तव्यः। कुतः? इत्याह-"उंदुय" इत्यादि। 'उन्दुकम्' इति

स्थानम् । ''सिय''त्ति स्याच्छब्दो भवत्यर्थे आशङ्कायां भजनायां वा । तत्र भवत्यर्थे सुप्रसिद्धः । आशङ्कायां यथा-''दव्वयओ भावयओ दव्वयओ बहुगुण त्ति बुद्धि सिया ।'' भजनायां यथा-''सिय तिभागे सिय तिभागतिभागे'' पत्र इत्यादि । ''वीसुं'' तिविष्वक् पृथगित्यर्थः । 'एरका' गुन्द्रा भद्रमुस्तक इत्यर्थः एते आदिग्रहणात् पयः पिच्चं नीरमित्यदयश्च शास्त्रप्रसिद्धाः शब्दास्तेषु तेषु देशेषु लोकेन तथातथा व्यवह्रियमाणा देशदर्शनं कुर्वता 'प्रत्यक्षम्' इति प्रत्यक्षत उपलभ्यन्ते॥ आह यद्यसौ तान् प्रत्यक्षतो नोपलभेत ततः का नाम न्यूनता भवेत् ? उच्यते-

[भा.१२२४]जो वि पगासो बहुसो, गुणिओ पच्चक्खओ न उवलद्धो ।
जच्चंधस्स व चंदो, फुडो वि संतो तहा स खलु ॥

वृ- योऽपि 'प्रकाशः' अर्थो बहुशः 'गुणितः' स्यभ्यस्तीकृतः परं न प्रत्यक्षत उपलब्धः स जात्यन्धस्येव चन्द्रः स्फुटोऽपि सन् 'खलुः' अवधारणे तथैवास्फट एव मन्तव्यः । इदमत्र हृदयम्-यथा चन्द्रः प्रकटोऽपि साक्षाद्दर्शनं विना जात्यन्धस्य न परिस्फुटाकारः प्रतिभासते एवमस्यापि शास्त्रानुसारतः प्रकटा अपि प्रत्यक्षदर्शनमन्तरेण न परिस्फुटा व्यवहारोपयोगिनोऽर्था प्रतिभासन्ते॥ यतश्चैवं ततः-

[भा.१२२५]आयरियत्तअभविए, भयणा भविओ परीइ नियमेणं ।
अप्पतइओ जहन्ने, उभयं किं चाऽऽरियं खेत्तं ॥

वृ- आचार्यत्वस्य-आचार्यपदस्य अभव्यः-अयोग्यस्तस्मिन् 'भजना' अर्थग्रहणानन्तरं देशदर्शनं कार्यते वा न वा, यस्तु 'भव्यः' आचार्यपदयोग्यः स नियमेन 'पर्येति' देसदर्शनाय पर्यटति । स चाऽऽत्मतृतीयो जघन्येनावश्यन्तया कृत्वा प्रेषणीयः । किञ्च 'उभयम्' इति किं ऋतुबद्धकालप्रायोग्यमिदं क्षेत्रम् ? उत वर्षावासयोग्यम् ? तथा किमेतद् 'आर्यं' सार्द्धपञ्चविंशति-जनपदमध्यवर्त्ति ? आहोश्चिदनार्यम् ? एतत् सर्वमपि देशदर्शनं विदधानो जानाति ॥

अथ देशदर्शनस्यैव गुणान्तरामधित्सया द्वारगाथामाह-

[भा.१२२६]दंसणसोही थिरकरण देस अइसेस जनवयपरिच्छा ।
काउ सुयं दायव्वं, अविनीयाणं विवेगो य ॥

वृ-देशदर्शनं कुर्वतो दर्शनशुद्धिरात्मनः स्थिरीकरणं चान्येषां भवति, ''देस''त्ति नानादेश-भाषासु कौशलम् 'अतिशेषाः' अतिशयाः जनपदपरीक्षा च जायन्ते । तत एतानि दर्शनशुध्यादीनि कृत्वा विनीतेभ्यः श्रुतं दातव्यम्, अविनीतानां 'विवेकः' परित्यागः कर्त्तव्य इति द्वारगाथासमासार्थः॥

अथ विस्तरार्थं बिभणिषुराह-

[भा.१२२७]जम्मण-निक्खमणेसु य, तित्थयराणं महानुभावाणं ।
इत्थ किर जिनवराणं, आगाढं दंसणं होइ ॥

वृ- जन्म-निष्क्रमणशब्दाभ्यां तदाधारभूता भूमयो गृह्यन्ते । जन्मभूमिषु अयोध्यादिषु, निष्क्रमणभूमिषु उज्जयन्तादिषु, चशब्दाद् ज्ञानोत्पत्तिभूमिषु पुरिमतालादिषु, निर्वाणभूमिषु सम्मेतशैल-चम्पादिषु तीर्थकराणां 'महानुभावानां' सातिशया-ऽचिन्त्यप्रभावाणां सम्बन्धिनीषु विहरतः 'अत्र किल भगवतां जिनवराणां जन्म जज्ञे, अत्र तु भगवन्तो दीक्षां प्रतिपन्नाः, इह केवलज्ञानमासादितवन्तः, इह पुनः परिनिर्वृताः' एवं बहुजनमुखेन श्रुत्वा स्वयं च दृष्ट्वा

निशङ्कितत्वभावाद् 'आगाढम्' अतीवविशुद्धं 'दर्शनं' सम्यक्त्वं भवतीति ॥

गतं दर्शनशुद्धिद्वारम्। अथ स्थिरीकरणद्वारमाह-

[भा.१२२८] संवेगं संविग्गाण जनयए सुविहिओ सुविहियाणं।
आउत्तो जुत्ताणं, विसुद्धलेसो सुलेस्साणं ॥

वृ- 'संविग्नानां' साधूनां संवेगं जनयति, 'अहो! अयं भव्याचार्योऽवगाहितसमस्तसिद्धान्त-सिन्धुरभ्यस्तचरणकरणसामाचारीक इत्थं देशदर्शनं करोति' इति भावनया स्थिरीकरणं करोतीत्यर्थः। स्वय 'सुविहितः' शोभनविहितानुष्ठानस्तेषामपि सुविहितानाम्, स्वयम् 'आयुक्तः' विकथा-निद्रादिप्रमादैरप्रमत्तस्तेषामपि 'युक्तानाम्' अप्रमादिनाम्, स्वयं विशुद्धलेश्यः तेषामपि सुलेश्यानामिति ॥ गतं स्थिरीकरणद्वारम्। अथ देशद्वारम्। अत्र चविशेषचूर्णिकृता दर्शनशुद्धिद्वारमेव विवृण्वतेयं गाथा गृहीता, संवेगस्य सम्यग्दर्शनलक्षणत्वात् संवेगजनने दर्शनशुद्धिः कृता भवतीति कृत्वा; स्थिरीकरणद्वारं तु मूलतः एव नोपात्तम्। द्वारगाथायामपि "दंसणसोही देसप्पवेस अइसेस जणवयपरिच्छा" इत्येष एव पाठो गृहीतः, अतस्तदभिप्रायेण गतं दर्शनशुद्धिद्वारम्, अथ देशप्रवेशद्वारं व्याचष्टे-

[भा.१२२९] नाणादेसीकुसलो, नाणादेसीकयस्स सुत्तस्स।
अभिलावअत्थकुसलो, होइ तओ नेन गंतव्वं ॥

वृ- नानाप्रकारा-मगध-मालव-महाराष्ट्र-लाट-कर्णाट-द्रविड-गौड-विदर्भादिदेशभवा या देशीभाषा तस्यां कुशलः सन् 'नानादेशीकृतस्य' नानादेशभाषानिबद्धस्य सूत्रस्य अभिलापे-उच्चारणे अर्थकथने च कुशलो भवति, यत एवं ततोऽनेन देशदर्शनार्थं गन्तव्यम् ॥ तथा-

[भा.१२३०]कहयति अभासियाण वि, अभासिए आवि पव्वयावेइ।
सव्वेवि तत्थ पीइं, बंधंति सभासिओ ने त्ति ॥

वृ-नञः कुत्सार्थत्वात् कुत्सिता-अव्यक्तवर्णविभागा भाषा येषां तेऽभाषिकास्तेषामप्यसौ धर्मं कथयति, निशेषदेशभाषानिष्णातत्वात्। अभाषिकाँश्चापि तद्देशभाषया प्रतिबोध्य प्रव्राजयति। सर्वेऽपि च शिष्याः 'तत्र' आचार्ये प्रीतिं बध्नन्ति, स्वभाषिकः 'मे' अस्माकम् अयमिति कृत्वा ॥ तथा-

[भा.१२३१]पियधम्मऽवज्जभीरू, साहम्मियवच्छलो असढभावो।
संविग्गावेइ परं, परदेसपवेसणे साहू ॥

वृ- 'प्रियधर्मा' धर्मश्रद्धालुः, अवद्यं-पापकर्म तस्माद् भीरुरवद्यभीरु, साधर्मिकाः-साधवस्तेषां वत्सलो द्रव्यतो भक्त-पानादिना भावतस्तु स्खलितादिषु सारणादिना, 'अशठभावः' मातृस्थानरहितः, एवंविधोऽसौ साधुः परदेशप्रवेशने वर्त्तमानः 'परम्' अन्यं संयमयोगेषु सीदन्तमपि 'संविग्नयति' सदुपदेशदानादिना संविग्नं करोतीति ॥

गतं देशद्वारं देशप्रवेशद्वारं वा। अथातिशयद्वारमाह-

[भा.१२३२] सुत्त-ऽत्थथिरीकरणं, अइसेसाणं च होइ उवलद्धी।
आयरियदंसणेणं, तम्हा सेविज्ज आयरिए ॥

वृ- आचार्याणां दर्शनेन-सेवनेनेति यावत् सूत्रार्थस्थिरीकरणमतिशयानां च अपूर्वाणाम्

'उपलब्धिः' प्राप्तिर्भवति। यत एवं तस्मात् 'सेवेत' पर्युपासीताऽऽचार्यान्॥

एतदेव व्याख्यानयति-

[भा.१२३३] उभए वि संकियाइं, पुव्विं जाइं सि पुच्छमाणस्स।
होइ जओ सुत्तत्थे, बहुस्सुए सेवमाणस्स॥

वृ- 'उभये' सूत्रेऽर्थे च यानि पूर्वं 'से' तस्य शङ्कितानि पदानि तानि आचार्याणां समीपे पृच्छतो निशङ्कितानि जायन्ते। एवं च बहुश्रुतान् सेवमानस्य 'जयः' सूत्रार्थविषयोऽभ्यासातिशयो भवति, अतो बहुश्रुतपर्युपानं विधेयम्॥ अपि च-

[भा.१२३४] भवियाइरिओ देसाण दंसणं कुणइ एस इय सोउं।
अन्ने वि उज्जमंते, विणिक्खमंते य से पासे॥

वृ- 'भव्याचार्य एष देशानां दर्शनं करोति' इति श्रुत्वा 'अन्येऽपि' पर्युपास्यमानाचार्य-सम्बन्धिनः शिष्याः 'उद्यच्छन्ते' सूत्रार्थग्रहणादौ उद्यमं कुर्वन्ति। गृहिणोऽपि च तद्गुणग्रामरञ्जि-तमनसः 'विनिष्क्रामन्ति' दीक्षां प्रतिपद्यन्ते 'से' तस्य भविष्यदाचार्यस्य पार्श्वे इति॥ अति-शयानामुपलब्धि कथं भवति? इत्याह-

[भा.१२३५] सुत्तत्थे अइसेसा, सामायारी य विज्ज-जोगाई।
विज्जा जोगा य सुए, विसंति दुविहा अओ होंति॥

वृ-इहातिशयास्त्रिविधाः, तद्यथा-सूत्रार्थातिशयाः १ सामाचार्यतिशयाः २ विद्या-योगाः आदिशब्दाद् मन्त्राश्च ३ इति त्रयोऽतिशयाः। तत्र विद्या स्त्रीदेवताधिष्ठिता पूर्वसेवादिप्रक्रियासाध्या वा, योगाः पादलेपप्रभृतयो गगनगमनादिफलाः, मन्त्राः पुरुषदेवताधिष्ठिताः पठितसिद्धा वा। यद्वा विद्या योगाः चशब्दाद् मन्त्राश्च श्रुते एव 'विशन्ति' अन्तर्भवन्ति, अतो द्विविधा अतिशया भवन्ति-सूत्रार्थातिशयाः सामाचार्यतिशयाश्चेति। एषामतिशयानामुपलब्धिरपूर्वाचार्यपर्युपासनायां भवति॥ अथ सामाचार्या अतिशयं विभावयिषुराह-

[भा.१२३६] निक्खमणे य पवेसे, आयरियाणं महानुभावाणं।
सामायारीकुसलो, अ होइ गणसंपवेसेणं॥

वृ- स देशदर्शनं कुर्वाणस्तेषु तेषु नगरादिषु बहुश्रुतानामाचार्याणां महानुभावानां सम्बन्धी यो गणः-गच्छस्तन्मध्ये यः सम्यग्-एकीभावेन एकत्रावस्थानलक्षणेन प्रवेशस्तेन बहुशो गणान्तरेषु निष्क्रमणे प्रवेशे च सामाचारीकुशलो भवति॥ कथम्? इत्याह-

[भा.१२३७] आगंतुसाहुभावम्मि अविदिए धन्नसालमाइठिया।
उप्पत्तियाउ थेरा, सामायारीउ ठार्विति॥

वृ- आगन्तुकाः-प्राघुणका उपसम्पन्ना वा तेषां साधूनां भावे 'अविदिते' 'कीदृशेनाभि-प्रायेणाऽऽगताः ? के चाऽमी ?' इत्यपरिज्ञाते केचित् 'स्थविराः' आचार्या धान्यशालायाम् आदिशब्दाद् घृतशालादिषु च स्थिताः 'औत्पत्तिकीः' अनुत्पन्नपूर्वा सामाचारीः स्थापयन्ति॥ कथम्? इत्याह-

[भा.१२३८] सव्वे वि पडिग्गहए, दंसेउं नीह पिंडवायट्ठा।
अहिमरमायासंका, पडिलेहेउं व पविसंति॥

वृ-ते च आचार्या 'पिण्डमार्थं' भिक्षानिमित्तं साधून् निर्गच्छतो भणन्ति-आर्या ! सर्वेऽपि प्रतिग्रहान् दर्शयित्वा निर्गच्छत, अदर्शितप्रतिग्रहैर्न गन्तव्यम् । कुत इत्थं कुर्वन्ति ? इत्याह- 'अभिमराद्याशङ्कया' मा कश्चिदभिमर उदायिनृपमारकवत् श्रमणवेषेणाऽऽगतो भवेत्, आदि-ग्रहणेन चौरो वा मा धान्यादिमोषणायाऽऽगतो भवेदित्याद्याशङ्कयाऽपूर्वां सामाचारीं स्थापन्ति। भिक्षाप्रतिनिवृत्ता अपि च गुरूणां पुरतः सर्वं प्रत्युपेक्ष्य ततः प्रविशन्ति, तैरेवाभिमरादिभि कारणै-रिति ।। गतमतिशयद्वारम् । अथ जनपदपरीक्षाद्वारमाह-

[भा.१२३९] अब्भे नदी तलाएष कूवे अइपूरए य नाव वणी ।
मंस-फल-पुप्फभोगी, विच्छिन्ने खेत्त कप्प विही ॥

वृ- स देशदर्शनं कुर्वन् जनपदानां परीक्षां करोति-कस्मिन् देशे कथं धान्यनिष्पत्ति ? । तत्र कचिद् देशेऽभ्रैः सस्यं निष्पद्यते वृष्टिपानीयैरित्यर्थः, यथा लाटविषये । कापि नदीपानीयैः, यथा सिन्धुदेशे । कचित्तु तडागजलैः, यथा द्रविडविषये । कापि कूपपानीयैः, यथा उत्तरापथे । कचिदतिपूरकेण, यथा बन्नासायां पूरादवरिच्यमानायां तत्पूरपानीयभावितायां क्षेत्रभूमौ धान्यानि प्रकीर्यन्ते; यथा वा डिम्भरेलके महिरावणपूरेण धान्यानि वपन्ति । "नाव" इति यत्र नावमारोप्य धान्यमानीतमुपभुज्यते, यथा काननद्वीपे । "वणि"त्ति यत्र वाणिज्येनैव वृत्तिरुपजायते न कर्षणेन, यथा मथुरायाम् । "मंस"त्ति यत्र दुर्भिक्षे समापतिते मांसेन कालोऽतिवाह्यते । तथा यत्र पुष्प-फलभोगी प्राचुर्येण लोकः, यथा कोङ्कणादिषु । तथा कानि विस्तीर्णानि क्षेत्राणि ? कानि वा सङ्क्षिप्तानि ? । "कप्पे"त्ति कस्मिन् क्षेत्रे कः कल्पः ? , यथा सिन्धुविषयेऽनिमिषाद्याहारोऽगर्हितः। "विहि"त्ति कस्मिन् देशे कीदृशः समाचारः ? यथा सिन्धुषु रजकाः सम्भोज्याः, महाराष्ट्रविषये कल्पपाला अपि सम्भोज्या इति ।। अपि च-

[भा.१२४०] सज्झाय-संजमहिए, दानाइसमाउले सुलभवित्ती ।
कालुभयहिए खेत्ते, जाणइ पडनीयरहिए य ।।

वृ-स्वाध्यायहितं-यत्राखण्डे सूत्राऽर्थपौरुष्यौ भवतः । संयमहितं-स्त्रीदोषरहितमल्पबीज-हरितादि वा । "दानाइ"त्ति दानश्राद्धैः आदिग्रहणादभिगमश्राद्धैर्वा समाकुलम् । अत एव सुलभा-सुप्रापा वृत्तिः-प्राणवर्त्तनहेतुराहारसम्पत्तिर्यत्र तत् सुलभवृत्तिकम्, तथा किमिदमागन्तुकभद्रकम्? उत वास्तव्यभद्रकम् ? इत्याद्युपलक्षणाद् द्रष्टव्यम् । "कालुभयहिए खेत्ते"त्ति अमूनि वर्षावास-प्रायोग्याणि अमूनि ऋतुबद्धकालयोग्यानीत्युभयकालहितानि क्षेत्राणि जानाति । तथा प्रत्यनीकः-साध्वादीनामुपद्रवकारी तद्रहितानि च क्षेत्राणि सम्यग् जानातीति ।। गतं जनपदपरीक्षाद्वारम् । यस्मादे, गुणास्तस्मादवश्यं देशदर्शनं कर्त्तव्यम् । गतं "पव्वज्जा सिक्खावय" इत्यादिमूलद्वारगाथा-प्रतिबद्धमनियतवासद्वारम् । अथ निष्पत्तिद्वारम् । तद्यानन्तरोक्तेऽनियतवासद्वारे वक्ष्यमाणे विहारद्वारे च सम्भवति । तत्रानियतवासद्वारे तावद् दर्श्यते-इत्थं तेन देशदर्शनं कुर्वता शिष्याः प्रतीच्छकाश्च सामाचार्यां सूत्राऽर्थग्राहणायां च निष्पादयितव्या इत्यत्रान्तरे यदुक्तं प्रतिद्वारगाथायां "काउ सुयं दायव्वं, अविणीयाणं विवेगो य ।" तदिदानीमभिधित्सुर्द्वारगाथामाह-

[भा.१२४१] उवसंपज्ज थिरत्तं, पडिच्छणा वायणोज्झगणे य ।
घट्टण-रुंचण-पत्ते, दुट्ठासे तहिं गए राया ।।

वृ- प्रथमं प्रतीच्छका यथा समुपसम्पद्यन्ते तथा वक्तव्यम् । तत आत्मनः प्रतीच्छकानां च यथा स्थिरत्वं तुलनया करोति । ततस्तेषां प्रतीच्छना वाचना च यथा भवति । ततः प्रमाद्यतां आर्द्रच्छगणदृष्टान्तो घट्टना रुञ्चना पत्रदृष्टान्ताश्च यथाऽभिधीयन्ते । दुष्टाश्वविषयं दृष्टान्तं यथा साधव आचार्यानुद्दिश्य दर्शयन्ति । "तहिं गए" त्ति यत्राऽऽचार्यास्तिष्ठन्ति तत्र गतानां यथा राजदृष्टान्तः सूरिभिरुदाह्रियते । तदेतत् सर्वं वक्तव्यमिति द्वारगाथासमासार्थः ॥

अथ विस्तरार्थं बिभणिषुः प्रथमद्वारमधिकृत्याह-

[भा.१२४२] काहिइ अव्वोच्छित्तिं, सुत्त-ऽत्थाणं ति सो तदट्ठाए ।
अभिगम्मइ नेगेहिं, पडिच्छएहिं विहरमाणो ॥

वृ- एष महाभागः सूत्रार्थयोरव्यवच्छित्तिं करिष्यतीतिबुध्या 'सः' भव्याचार्य 'तदर्थं' सूत्रार्थग्रहणनिमित्तमभिगम्यतेऽनेकैः प्रतिच्छकैः 'विहरमाणः' देशदर्शं कुर्वन्निति ॥ आह किमसौ डिण्डिमाडम्बेण घोषयति यथा 'अहं बहुश्रुतोऽहं बहुश्रुतः' इति यदेवमनेकैः प्रतीच्छकैरभिगम्यते?, नैवम्, न खलु सद्विवेकसुधाधाराधौतचेतसः सन्तः सन्तः कदाचनापि स्वगुणविकत्थने प्रवृत्तिमातन्वते, मिथ्याभिमानाध्मातबहलतमःसंभारितस्फुरत्सज्ज्ञानलोचनप्रसराणामितरजन्तूनामेव तत्र प्रवृत्तिसम्भवात् । उक्तञ्च-

मोहस्य तदपि विलसितमभिमानो यः परप्रीणितायाः ।
तत् तमसोऽपि तमिस्रं, याऽऽत्मस्तुतिरात्मना क्रियते ॥

यद्येवं ततः कथमिवासावेवमेव प्रसिद्धिमारोहति ? इति इत्युच्यते—

[भा.१२४३] वासावज्जविहारी, जइ वि य न विकंथए गुणे नियए ।
अभणंतो वि मुणिज्जइ, पगइ च्चिय सा गुणगणाणं ॥

वृ- वर्षावर्जविहारी, वर्षासु चतुरो मासानेकत्रस्थायी अन्यदा पुनरनियतविहारीत्युक्तं भवति । स एवंविधो यद्यपि न विकत्थते 'निजकान्' आत्मीयान् गुणान् तथापि 'अभणन्नपि' स्वगुणान् अकीर्त्तयन्नपि ज्ञायते । कुतः ? इत्याह-प्रकृतिरेव सा 'गुणगणानां' ज्ञानादिगुणसमूहानाम् । तदुक्तम्-

अभणंता वि हु नज्जंति सुपुरिसा गुणगणेहि नियएहिं ।
किं बोल्लंति मणीओ, जाओ लक्खेहि थिप्पंति ॥

एतदेवान्योक्तिदृष्टान्तेन द्रढयति-

[भा.१२४४] भमरेहि महुयरीहि य, सूइज्जइ अप्पणो य गंधेणं ।
पाउसकालकलंबो, जइ वि निगूढो वणनिगुंजे ॥

वृ- इह किल कदम्बकवृक्षाः प्रावृषि जलधरधाराभिहताः पुष्यन्ति । ततः प्रावृट्काले यः कदम्बः स यद्यपि वननिकुञ्जे 'निगूढः' गुप्तस्तिष्ठति तथापि भ्रमरैर्मधुकरीभिश्चात्मनः सम्बन्धिना गन्धेन च प्रसरता 'सूच्यते' ज्ञाप्यते यथा 'अत्र कदम्बवृक्षस्तिष्ठति' । एवमयमपि भ्रमर-मधुकरीकल्पाभि साधु-साध्वीभिः परिमलकल्पेन च निजगुणनिकुरम्बेन प्रसर्पता कदम्बवद् उद्यानादावत्यन्तनिगूढोऽपि तिष्ठन् सूच्यते ॥ यदि वा-

[भा.१२४५] कत्थ व न जलइ अग्गी, कत्थ व चंदो न पायडो होइ ।
कत्थ वरलक्खणधरा, न पायडा होंति सप्पुरिसा ॥

वृ- कुत्र मी वान ज्वलति' न दीप्यतेऽग्नि ? कुत्र वा चन्द्र उदयप्राप्तः प्रकटो न भवति ? कुत्र वा वराणि-उत्तमानि लक्षणानि-अभ्यन्तरतो ज्ञानादीनि बाह्यतः शरीरसौन्दर्यादीनि शङ्ख-चक्रादीनि वा धारयन्तीति वरलक्षणधराः सत्पुरुषाः प्रकटा न भवन्ति ? ॥

अत्रपरोऽनुपपत्तिमुद्भावयन्नाह-

[भा.१२४६] उदए न जलइ अग्गी, अब्भच्छन्नो न दीसई चंदो ।
मुक्खेसु महाभागा, विज्ञापुरिसा न भायंति ॥

वृ-उदके न ज्वलत्यग्नि किन्तु विध्यायति, अभ्रच्छन्नश्चन्द्रो न दृश्यते, 'मूर्खेषु' मूर्खाणां पुरतो महाभागा विद्याप्रधानाः पुरुषा विद्यापुरुषास्तेऽपि 'न भान्ति' न शोभन्ते; ततः "कत्थ व न जलइ अग्गी" इत्यादि नोपपद्यते, तदयुक्तम्, अभिप्रायापरिज्ञानात्, इह हि स्वविषय एवाग्नि-चन्द्र-सत्पुरुषाणां ज्वलनादि सामर्थ्यं चिन्त्यते न त्वविषये ॥ कः पुनरमीषां स्वविषयः ? इत्याह-

[भा.१२४७] सुक्किं धनम्मि दिप्पइ, अग्गी मेहरहिओ ससी भाइ ।
तव्विहजने व निउणे, विज्ञापुरिसा वि भायंति ॥

वृ- 'शुष्केन्धने' शुष्ककाष्ठादौ दीप्यतेऽग्नि, 'मेघरहितः' शरदादिकालेऽभ्रैरच्छन्नः शशी 'भाति' प्रकाशते, 'तद्विधजने च' तादृशी सहृदयलोके 'निपुणे' व्याकरण-प्रमाणादिशास्त्रकुशले विद्यापुरुषा अपि 'भान्ति' शोभां लभन्ते । एष त्रयाणामप्यमीषां स्वविषयः, अत्र च सर्वत्राप्यमी दीप्यन्ते, अतो न किञ्चिदनुपपन्नम् ॥ अत्रैवापरं दृष्टान्तमाह-

[भा.१२४८] कुमुओयररसमुद्धा, किं न विबोहिंति पुंडरीयाइं ।
सूरकिरणा ससिस्स व, कुमुयाणि अपंकयरसन्ना ॥

[भा.१२४९] न य अप्पगासगत्तं, चंदा-ऽऽइच्चाण सविसए होइ ।
इय दिप्पंति गुणड्ढा, मुक्खेसु हसिज्जमाणा वि ॥

वृ- कुमुदानामुदराणि कुमुदोदराणि तेषु रसः-मकरन्दः तस्मिन् मुग्धाः-अनभिज्ञाः, तदानीं तेषामप्रबुद्धत्वाद् ईदृशोऽमीषां मकरन्द इति न विदन्तीत्यर्थः; एवंविधाः सूर्यकिरणा यद्यविषयत्वात् कुमुदानि न विबोधयन्ति ततः किं स्वविषयभूतानि पुण्डरीकाणि न विबोधयन्ति ? बोधयन्त्येव। शशिनो वा किरणा यदि 'अपङ्कजरसज्ञाः' पङ्कजरसास्वादमुग्धास्ततः किं स्वविषयभूतानि कुमुदानि न बोधयन्ति ? । ततश्च 'न च' नैवाऽप्रकाशकत्वं चन्द्रा-ऽऽदित्ययोः स्वविषये भवति किन्तु प्रकाशकत्वमेव, 'इति' अमुनैव प्रकारेण गुणैः-ज्ञानादिभिराढ्याः-समृद्धाः 'मूर्खेषु' पशुप्रायेषु हस्यमाना अपि 'दीप्यन्ते' सहृदयहृदयेषु प्रकाशन्ते ॥ उक्तमानुषङ्गिकम् । प्रकृतमनुसन्धीयते-

[भा.१२५०] सो चरणसुट्ठियप्पा, नाणपरो सूइओ अ साहूहिं ।
उवसंपया य तेसिं, पडिच्छणा चेव साहूणं ॥

वृ- 'सः' इति भविष्यदाचार्य चरणसुस्थितात्मा तथा 'ज्ञानपरः' सूत्रा-ऽर्थपौरुषीकरणं प्रति उद्युक्तः परां निष्ठां प्राप्तो वा दर्शनाविनाभावित्वाद् ज्ञानस्य दर्शनपर इत्यपि द्रष्टव्यम्, स च साधुभि स्वपरिवारवर्तिभिरपरेषां साधूनां पुरतः 'सूचितः' श्लाधितः ततस्तेषां साधूनां तस्यान्तिके उपसम्पद् भवति, तेन च तेषां यथाविधि प्रतीच्छना कर्त्तव्या इति । एष एक उपसम्पदः प्रकार उक्तः ॥ अथ द्वितीयं प्रकारमाह-

[भा.१२५१] ण्हाणाइ समोसरणे, परियट्टिंतं सुणित्तु सो साहुं।
अट्टित्ति पडिच्चोयण, उवसंप दीवणा अत्थे ॥

वृ- स्नानादौ आदिशब्दाद् रथयात्रादौ 'समवसरणे' साधुमीलके "अट्टे लोए" इति व्यञ्जनभेददूषितं सूत्रं परिवर्त्तयन्तं साधुं कमपि श्रुत्वा स प्रतिनोदनां करोति-"अट्टे लोए" इति पठ। स प्राह-किम्? इति। गीतार्थो ब्रूते-"अट्टे" इति अर्थो न मिलति। इतरः प्राह-किम् अस्यार्थोऽप्यस्ति?। (गीतार्थ प्राह-) बाढम् नमस्कारमादिं कृत्वा सर्वस्यापि श्रुतस्यार्थो विद्यते। स आह-यद्येवं तर्हि "अट्टि" त्ति पदस्य कोऽर्थ? उच्यते-'आर्ततश्चतुर्द्धा नाम-स्थापना-द्रव्य-भावभेदात्, नाम-स्थापने सुगमे, द्रव्यतः सचित्तादिद्रव्यैरप्राप्तैः प्राप्तवियुक्तैर्वा य आर्त्तः स द्रव्यार्त्तः, क्रोधादिभिरभिभूतो भावार्त्तः, एवं प्रकारश्चायं लोक आर्त्तो वर्त्तते।' इत्याकर्ण्य प्रमुदितः स साधुश्चिन्तयति-'अहो! अस्य सूत्रलवस्यापीदृग् हृदयङ्गमोऽर्थस्ततो यदि सर्वस्याधीतस्यार्थमवबुध्ये ततः सुन्दरं भवति' इत्यभिसन्धायाऽर्थग्रहणार्थं तस्यैव पार्श्वे उपसम्पदं प्रतिपद्यते। ततोऽसौ विधिना तस्यार्थे दीपनं करोति, अर्थं कथयतीत्यर्थः। एष द्वितीयः प्रकारः ॥ अथ तृतीयमपि प्रकारमाह-

[भा.१२५२] अहवा वि गुरुसमीवं, उवागए देसदंसणम्मि कए।
उवसंपय साहूणं, होइ कयम्मी दिसाबंधे ॥

वृ- अथवा देशदर्शने कृते सति यदाऽसौ गुरूणां समीपमुपागतो भवति तदा गुरुभिराचार्यपदे प्रतिष्ठाप्य दिग्बन्धे 'कृते' अनुज्ञाते सति विहारं कुर्वतोऽस्य पार्श्वे प्रतीच्छकसाधूनामुपसम्पद् भवतीति ॥ व्याख्यातं त्रिभि प्रकारैरुपसम्पद्द्वारम्। अथ स्थिरत्वद्वारमभिधातुकाम आह-

[भा.१२५३] आयपरोभयतुलणा, चउव्विहा सुत्तसारणित्तरिया।
तिण्हऽट्ठा संविग्गे, इयरे चरणेहरा नेच्छे ॥

वृ- तत्रासावात्मपरोभयविषयां तुलनां करोति। सा च प्रत्येकं चतुर्विधा वक्तव्या। तथा ये केचित् तद्गुणावर्जिता अगारिणः प्रव्रजन्ति तेषामुपसम्पन्नानां चासौ सूत्रसारणां करोति, सूत्रं पाठयतीत्यर्थः; उपलक्षणं चैतत्, तेनाऽऽसेवनाशिक्षामपि ग्राहयति। तथा तेषामुभयेषामप्यसौ इत्वरां दिशं बध्नाति, यथा-यावदाचार्याणां सकाशं व्रजामस्तावदहमेवाचार्योऽहमेवोपाध्यायः, तत्रगतानामाचार्या ज्ञायका इति। "तिण्हट्ठा संविग्गि" त्ति ये संविग्नाः साधवस्ते 'त्रयाणां' ज्ञानदर्शनचारित्राणामर्थाय उपसम्पद्यमानाः प्रत्येष्टव्याः। "इयरे चरणि" त्ति 'इतरे' पार्श्वस्थादयो यदि चरणार्थमुपसम्पद्यन्ते ततस्तेऽपि सङ्ग्राह्याः, "इहरा नेच्छे" त्ति इतरथा ज्ञान-दर्शननिमित्तम्, सूत्रार्थग्रहण-दर्शनप्रभावकशास्त्राध्ययनार्थमिति भावः, यद्युपसम्पद्यन्ते ततः 'नेच्छेत्' नोपसम्पदं ग्राहयेदित्यर्थः ॥ अथ यदुक्तम् "आत्मपरोभयतुलना चतुर्विधा" इत तत्रात्मतुलनां तावद् भावयति-

[भा.१२५४] आहाराई दव्वे, उप्पाएउं सयं जइ समत्थो।
खेत्तओ विहारजोग्गा, खेत्ताविहतारणाईया ॥

वृ-इहाऽऽत्मतुलना चतुर्विधा-द्रव्यतः क्षेत्रतः कालतो भावतश्च। तत्र द्रव्यत एषामुपसम्पन्नानां यथैषणीयान्याहारादीनि स्वयमुत्पादयितुं समर्थ, आदिग्रहणात् उपधिशय्यापरिग्रहः। क्षेत्रत ऋतुबद्धविहारयोग्यानि वर्षावासयोग्यानि वा क्षेत्राण्युत्पादयितुं शक्नोमि न वा, "विहं" इत्यध्वा

तस्मात् तारणं-पारनयनम्, आदिशब्दाद् राजद्विष्टादितारणानि कर्तुमहं समर्थो न वेति ॥

[भा.१२५५] कालम्मि ओममाई, भावे अतरंतमाइपालग्गं ।
कोहाइनिग्गहं वा, जं कारण सारणा वा वि ॥

वृ- काले अवमं-दुर्भिक्षं तत्र आदिग्रहणाद् अशिव-भयादौ निर्वाहयितुं शक्नोऽस्मि न वेति । भावे "अतरंत"त्ति ग्लानीभूतानाम् आदिशब्दाद् बाल-वृद्धादीनां वा एषां प्रायोग्यमुत्पादयितुं समर्थोऽहं न वेति, अथवा शक्नोमि क्रोधनिग्रहं कर्तुं न वेति आदिग्रहणाद् मान-माया-लोभनिग्रहपरिग्रहः, यद्वा यत् 'कारणं' ज्ञानादिकं निमित्तमुद्दिश्यैते उपसम्पद्यन्ते तस्याहं सारणां कर्तुमीशो न वेति ॥ गतमात्मतुलनाद्वारम् । अथ परतुलनाद्वारमाह-

[भा.१२५६] आहाराइ अनियओ, लंभो सो विरसमाइ निज्जूढो ।
उब्भामग खुलखेत्ता, अरिउहियाओ अ वसहीओ ॥

वृ- ते प्रतीच्छकाः प्रथममेवोच्यन्ते-द्रव्यत आहारादीनां लाभः 'अनियतः' कदाचिद् भवति कदाचिन्नेति, योऽपि भवति सोऽपि विरसः-पुराणौदनादि, आदिशब्दाद् अरसस्य हिङ्ग्वाद्य-संस्कृतस्य रूक्षस्य च वल्ल-चणकादेर्ग्रहणम्, सोऽपि 'निर्व्यूढः' उज्झितप्रायः । क्षेत्रत उद्भ्रामक-भिक्षाचर्यया गन्तव्यम्, बहिर्ग्रामेषु भिक्षार्थं यत् पर्यटनं सा उद्भ्रामकभिक्षाचर्या; तथा 'खुलक्षेत्राणि' नाम यत्राल्पो लोको भिक्षाप्रदाता, सोऽपि च स्तोकमेव ददाति तत्र विहर्त्तव्यम्; अऋतुहिताश्च प्रायो वसतयः प्राप्यन्ते, यो यदा ऋतुर्वर्त्तते तस्य तदाऽननुकूला इत्यर्थः ॥

[भा.१२५७] ऊणाइरित्त वासो, अकाल भिक्खपुरिमड्ढ ओमाई ।
भावे कसायनिग्गह, चोयण न य पोरुसी नियया ॥

वृ- कालतः कदाचिद् मासकल्पस्थाने वर्षावासस्थाने वा ऊनमतिरिक्तं वा कालं कारणे वासः-अवस्थानं भवेत्, क्वापि क्षेत्रे 'अकाले' सूत्रपौरुष्या अर्थपौरुष्या वा वेलायां भिक्षा प्राप्येत, ततः सूत्रार्थहानिरपि भाविनी, कुत्रापि पूर्वार्द्धेऽपि पूर्णे अवमं-स्वोदरपूरकाहारमात्राया न्यूनं लभ्येत, आदिग्रहणात् पानमपि सम्पद्येत । 'भावे' भावतः कषायनिग्रहः खरपरुषनोदनायामपि कर्त्तव्यः । न च 'नियता' अवश्यम्भाविनी सूत्रार्थयोः पौरुषी, कदाचिदस्माकं धर्मकथादिव्यग्रतया सूत्रार्थयोर्व्याघातोऽपि भवतां भवेदित्यर्थः । तदेतत् सर्वमपि यद्यङ्गीकर्त्तुमुत्सहध्व ततः प्रतिपद्यध्वमुपसम्पदमिति ॥

[भा.१२५८] अत्तनि य परे चेवं, तुलणा उभय थिरकारणे वुत्ता ।
पडिवज्जंते सव्वं, करिंति सुण्हाए दिट्ठंतं ॥

वृ- आत्मविषया परविषया च तुलना उभयोरपि 'स्थिरताकारणे' स्थिरीकरणार्थमेवमुक्ता । गतं स्थिरत्वद्वारम्, अथ प्रतीच्छनाद्वारमाह-"पडिवज्जंते" इत्याद्युत्तरार्द्धम् । 'सर्वम्' अनन्तरोक्तमर्थं यदि प्रतीच्छकाः प्रतिपद्यन्ते तदा 'स्नुषया' वध्वा दृष्टान्तमाचार्या कुर्वन्ति ॥ तमेवाह-

[भा.१२५९] आस-रहाई ओलोयणाइ भीया-ऽऽउले अ पेहंती ।
सकुलघरपरिचएणं, वारिज्जइ ससुरमाईहिं ॥

वृ- यथा काचिद् वधूः स्वकुलगृहस्य-स्वकीयपितृगृहस्य सम्बन्धी यः परिचयः-रमणीयवस्तुदर्शनहेवाकस्तेन अश्व-रथान् आदिग्रहणेन हस्त्यादीन्, अवलोकनं-गवाक्षस्तेन

आदिशब्दाद् अपरेण वा जालकादिना भीतान् आकुलाँश्च जनान् प्रेक्षमाणा सती 'वार्यते' 'पुत्रि! माऽवलोकिष्ठाः' इति प्रतिनिषिध्यते श्वसुरादिभि, मा भूद् अस्याः प्रसङ्गतः परपुरुषविषयोऽप्यवलोकनहेवाक इति ॥

[भा.१२६०] खिंसिज्जइ हम्मइ वा, नीणिज्जइ वा घरा अठाइंती ।
नीया पुन से दोसे, छायंति न निच्छुभंते य ॥

वृ- यदि वारिता सती नोपरमते ततः "खिंसिज्जइ"त्ति निन्द्यते 'आः कुलपांसने ! किमेवं करोषि ?' इत्यादि । तथापि यदि न निवर्त्तते ततः 'हन्यते' कशादिभिस्ताड्यते । एवमपि यदि न तिष्ठति ततोऽतिष्ठन्ती गृहान्निष्काश्यते, मा भूदपरासामपि गृहमहेलानामस्याः प्रसङ्गजनित एवंविध एव कुहेवाक इति कृत्वा । ये तु तस्याः 'निजकाः' पितृगृहसम्बद्धाः स्वजनास्ते 'से' तस्या दोषाँश्छादयन्ति, कथञ्चिदुपालम्भप्रदानादिनाऽनाच्छादयन्तोऽपि न गृहाद् निष्काशयन्ति, गौरवार्हत्वात् तत्र तस्याः ॥ एष स्नुषादृष्टान्तः । अथार्थोपनयमाह-

[भा.१२६१] मरिसिज्जइ अप्पो वा, सगणे दंडो न यावि निच्छुभणं ।
अम्हे पुन न सहामो, ससुरकुलं चेव सुण्हाए ॥

वृ- ते आचार्या भणन्ति-आर्या ! पितृगृहस्थानीयो युष्माकं स्वगच्छः, श्वसुरकुलस्थानीया वयम्, अश्व-रथाद्यवलोकनस्थानीयं प्रमादासेवनम्, गवाक्षादिस्थानीयान्यपुष्टालम्बनानि; ततो युष्माकं 'स्वगणे' स्वगच्छे प्रमादासेवनं कृतमपि 'मृष्यते' क्षम्यते, अल्पो वा 'दण्डः' प्रायश्चित्तलक्षणः प्रमादप्रत्ययो भवतां तत्र दीयते, न च महत्यप्यपराधे गच्छान्निष्कासनं गौरवार्हतया भवतां भवति; वयं पुनः स्वल्पमप्यपराधं भवतां न सहामः श्वसुरकुलमिव 'स्नुषायाः' वध्वाः सम्बन्धिनमपराधम् इत्युक्ते यदि ते प्रतीच्छका भणेयुः संविग्ना वा । तत्र ये पार्श्वस्थादयस्ते पार्श्वस्थादिमुण्डिता वा संविग्नमुण्डिता वा । येऽपि संविग्नास्तेऽपि समनोज्ञा वा अमनोज्ञा वा ॥

सर्वेषामपि एषां विधिमाह-

[भा.१२६२] पासत्थाईमुंडिए, आलोयण होइ दिक्खपभिईओ ।
संविग्गपुराणे पुन, जप्पभिइं चेव ओसन्नो ॥

वृ- यः पार्श्वस्थादि पार्श्वस्थादिभिरेव मुण्डितस्तस्य 'दीक्षाप्रभृति' दीक्षादिनादारभ्य आलोचना भवति । यस्तु संविग्नमुण्डितत्वात् पूर्वं संविग्नः पश्चाद् अवसन्नीभूतः स पुराणसंविग्न उच्यते, गाथायां प्राकृतत्वाद् व्यत्यासेन पूर्वापरनिपातः, सः 'यत्प्रभृति' यद्दिनादारभ्याऽवसन्नः सञ्जातस्तत्प्रभृत्येवालोचनां दाप्यते ॥

[भा.१२६३] समणुन्नमसमणुन्ने, जप्पभिइं चेव निग्गओ गच्छा ।
सोहिं पडिच्छिऊणं, सामायारिं पयंसंति ॥

वृ- यस्तु संविग्नः स द्विधा-'समनोज्ञः' सम्भोगिकः 'असमनोज्ञः' असाम्भोगिकः । स द्विविधोऽपि यत्प्रभृति स्वगच्छान्निर्गतस्तत एव दिनादारभ्यालोचनां दापयितव्य । ततः 'शोधिम्' आलोचनां प्रतीच्छ्य यो यत् तपः छेदं मूलं वा प्रायश्चित्तमापन्नस्तस्य तद् दत्त्वा स्वकीयां सामाचारीमाचार्या प्रदर्शयन्ति ॥ किं कारणम् ? इति चेदित्याह-

[भा.१२६४] अवि गीय-सुयहराणं, चोइज्जंताण मा हु अचियत्तं ।

मेरासु य पत्तेयं, माऽसंखड पुव्वकरणेणं ॥

**वृ-** ये गीतार्थाः श्रुतधराः, बहुश्रुता गणि-वाचकादिशब्दाभिधेया इत्यर्थः, तेषामपि, किं पुनरितरेषाम्? इत्यपिशब्दार्थ, विततसामाचारीकरणे नोद्यमानानां 'मैवं सामाचारीमन्यथाकारं कार्षी' इत्यादिवचनैर्मा भूद् "अचियत्तं" अप्रीतिकम्, यतोऽन्योऽन्यं गच्छानां काश्चिदनीदृश्यः सामाचार्यस्ततः 'प्रत्येकं' पृथक् पृथग् 'मर्यादासु' सामाचारीषु वर्त्तमानासु प्रवाहतः पूर्वाभ्यस्ताया एव सामाचार्या करणेन प्रतिनोदितानां मा 'असंखडं' कलहो भवेदित्यात्मीया चक्रवालसामाचारी कथयितव्या ॥ आह कथं पुनरभिधीयमानेऽप्रीतिकं भवेद्? उच्यते-

**[भा.१२६५]** गच्छि वियारभूमाइ वायओ देह कप्पियारं से ।
तम्हा उ चक्कवालं, कहिंति अनहिंडिय निसिं वा ॥

**वृ-** अयं वाचको विचारभूम्याम् आदिशब्दाद् भक्त-पान ग्रहणार्थं गच्छति अतो ददत 'कल्पितारं' कमपि कल्पिकं साधुं 'से' तस्य वाचकस्य येन स समाचारीं दर्शयति । तत एवमभिधीयमाने तस्य वाचकस्य महदप्रीतिकं भवति, यथा-अहो! स्वगणं विमुच्य परगणमुपसम्पन्ना वयमप्येवं परिभूयामहे इति । यत एवं तस्मात् चक्रवालसामाचारीं-प्रतिदिनक्रियाकलापरूपां तेषां पुरत आचार्या कथयन्ति यथा ते कल्पिका भवन्ति । यावच्च सा तेषां प्ररूप्यते तावत् "अनहिंडय" त्ति ते भिक्षार्थं न हिण्डाप्यन्ते, मा भूत् तेषां सामाचारीशिक्षणव्याघातः । अथ न संस्तरति ततः 'निशि' रात्रौ ते सामाचारीं ग्राहयितव्या इति ॥ गतं प्रतीच्छनाद्वारम् । अथ वाचनाद्वारम् । तेषां गृहीतसामाचारीकाणां सूत्रार्थवाचना दातव्या । वाच्यमानानां च तेषां सामाचारीकरण प्रमाद्यतां यो विधिस्तमभिधित्सुर्द्वारश्लोकमाह-

**[भा.१२६६]** उवएसो सारणा चेव, तइया पडिसारणा ।
छंदे अवट्टमाणं, अप्पछंदेण वज्जेज्जा ॥

**वृ-** उपदेशः स्मारणा चैव तृतीया प्रतिस्मारणा, ततः 'छन्दे' उपदेशेऽवर्त्तमानं विनेयं गुरुरपि 'आत्मच्छन्देन' आत्माभिप्रायेण 'वर्जयेत्' परित्यजेदिति निर्युक्तिश्लोकसमासार्थः ॥ अथ विस्तरार्थः, तत्र गुरुभिस्तान्प्रति वक्तव्यम्-अस्माकमेषा सामाचारी यद् निद्राविकथादयः प्रमादाः परिहर्त्तव्याः, एष उपदेशः । अथ स्मारणामाह-

**[भा.१२६७]** निद्दापमायमाइसु, सइं तु खलियस्स सारणा होइ ।
ननु कहिय ते पमाया, मा सीयसु तेसु जाणंतो ॥

**वृ-** निद्रैव प्रमादो निद्राप्रमादः, आदिशब्दाद् अप्रत्युपेक्षित-दुष्प्रत्युपेक्षितादिपरिग्रहः, तेषु 'सकृद्' एकवारं स्खलितस्य स्मारणा कर्त्तव्या भवति । तथा-भो महाभाग! नन्वेते पूर्वमेवास्माभिस्तव प्रमादाः कथिताः ततो जानन्नपि 'तेषु' प्रमादेषु मा सीदेत्येषा स्मारणा ॥ अथ प्रतिस्मारणामाह-

**[भा.१२६८]** फुड-रुक्खे अचियत्तं, गोणो तुदिओ व मा हु पेल्लेज्जा ।
सज्जं अओ न भन्नइ, धुव सारण तं वयं भणिमो ॥

**वृ-** स्फुटं नाम-यस्तेन प्रमादः कृतः स परिस्फुटं नाभिधीयते किन्त्वन्यव्यपदेशेन भणितव्यम्, रूक्षं नाम-निष्पिपासम्, यथा-'निर्धर्म! निरक्षर! निशुक!' इत्यादि तदपि न वक्तव्यम्, यतः स्फुट-रूक्षेऽभिधीयमानेऽप्रीतिकं भवति । अत्र च गोदृष्टान्तः-यथा 'गौः' बलीवर्दो महता भारेण

लदितो हलं वा वहमानः प्रतोदेनाऽतितोदितः सन् कूर्दयित्वा भारं पातयति हलं वा भनक्ति; एवमयमपि स्फुटाक्षरं रूक्षभणित्या वा भणितः कषायितत्वाद् असङ्खडं कृत्वा गच्छान्निर्गच्छेत्। अत एवाह-गौरिव, वाशब्दस्योपमानार्थस्याऽत्र सम्बन्धाद्, असावपि 'तुदितः' स्वर-परुषभणन-प्रतोदे व्यथितः सन् मा 'द्रुः' निश्चितं 'प्रेरयेत्' संयमभारं बलादपहस्त्य पातयेत्, अत एव च 'सद्यः' तत्कालं यदा प्रमादः कृतस्तदैव न भण्यते। "धुव सारण" त्ति स वक्तव्यः-वत्स ! ध्रुवा-अवश्यं कर्त्तव्या संयमयोगेषु सीदतां सारणा, तथा च मौनीन्द्रवचनम्-

रूसउ वा परो मा वा, विसं वा परियत्तउ।
भासियव्व हिया भासा, सपक्खगुणकारिया॥

'तत्' तस्माद् जिनाज्ञाराधनायवयं भवन्तमेवं भणामः, न पुनर्मत्सर-प्रद्वेषादिना॥

अथ "सज्जं अतो न भन्नइ" त्ति पदव्याख्यानार्थमाह-

[भा.१२६९] तद्दिवसं बिइए वा, सीयंतो वुच्चए पुणो तइयं।
एगोऽवराहो ते सोढो, बीयं पुण ते न विसहामो॥

वृ- 'सीदन्' सामाचार्यां प्रमाद्यान् तस्मिन्नेव दिवसेऽन्यस्यां वेलायां द्वितीये वा दिवसे पुनर्भूयोऽप्युच्यते 'तृतीया' प्रतिस्मारणा, एक उपदेशो द्वितीया स्मारणा तृतीया प्रतिस्मारणेति कृत्वा। कथम् ? इत्याह-एकस्ते महानपराधः 'सोढः' तितिक्षितोऽस्माभि, यदि पुनर्द्वितीयं स्वल्पमप्यपराधं करिष्यसि ततो वयं ते "न विसहामो" न सहिष्यामः॥

तथा चात्रार्द्रच्छगणकदृष्टान्तः क्रियते-

[भा.१२७०] गोणाइहरणगहिओष मुक्को य पुणो सहोढ गहिओ उ।
उल्लोल्लछगणहारी, न मुच्चए जायमाणो वि॥

वृ- यथा कश्चित् चौरो गवादिहरणं कुर्वन्नारक्षकैर्गृहीतः ततः, 'मुञ्चत मामेकवारम्, नाहं भूयः स्वल्पमपि चौर्यं करिष्यामि' इत्युक्ते दयालुत्वाद् अपरोपरोधाद्वा तैर्मुक्तः पुनर्द्वितीयवेलायां पूर्वाभ्यासवशाद् यद्यार्द्रार्द्रच्छगणहारी भवति, स्वल्पचौर्यकारीति भावः, तथापि 'सहोढः' सलोप्त्रो गृहीतः सन् याचमानोऽपि मोक्षणं न मुच्यते। एवं भवतोऽप्येकवारं महदपि प्रमादपदं तितिक्षितमस्माभि, इत ऊर्ध्वं तु स्तोकमपि न तितिक्षामहे। इत्थमुक्तोऽपि यदि प्रमाद्यति तदा मासलघु दण्डं दत्त्वा द्वितीयं घट्टनादृष्टान्तं कुर्वन्ति॥ तमेवाह-

[भा.१२७१] घट्टिज्जंतं वुच्छं, इति उदिए दंडना पुनो बिइयं।
पासाणो संवुत्तो, अइरुंचिय कुंकुमं तइए॥

वृ- यथा दुग्धमाग्रहितं सद् घट्यमानं चाल्यमानमपि "वुच्छं" ति देशीपदत्वाद् अवदग्धं विनष्टमिति यावद्, एवं भवानप्यस्माभिरित्थं स्मारणादिना घट्यमानोऽपि प्रमादमेवाऽऽसेवितवान्, 'इति' एवम् 'उदिते' कथिते सति यदि भूयः प्रमाद्यति तदा पुनरपि 'दण्डना' मासलघुप्रायश्चित्तरूपा कर्त्तव्या। "बीयं" ति एतद् द्वितीयमुदाहरणम्। इत्थं दण्डितोऽपि यदि प्रमादाद् नोपरमते तदा रुञ्चनादृष्टान्तो वक्तव्यः-"पासाणो" इत्यादि। अति-अतीव रुञ्चितं-पिष्टं कुङ्कुमं किं पाषाणः संवृत्तः ?। एवं भवानपि मता प्रयासेन प्रतिनोद्यमानः किमप्रमत्तः संवृत्तः ? इति। एतत् तृतीयमुदाहरणं कृत्वा तथैव मासलघु दीयते॥ अत यदुक्तं प्राक् "अविनीयाणं विवेगो य" त्ति

तदिदानीं भाव्यते- अविनीता नाम ये बहुशोऽपि प्रतिनोद्यमानाः प्रमाद्यन्ति, ते च छन्देवर्त्तमाना भण्यन्ते, तांश्च सूरय आत्मच्छन्देन वर्जयेयुः । कः पुनरात्मीयच्छन्दो येन ते परिह्रियन्ते ? इति उच्यते-

[भा.१२७२] तेन परं निच्छुभणा, आउट्टो पुन सयं परेहिं वा ।
तंबोलपत्तनायं, नासेहिसि मज्झ अन्ने वि ॥

वृ- 'ततः परं' वारत्रयादूर्द्ध्वं यदि न निवर्त्तते तदा निष्काशना कर्त्तव्या, निर्गच्छ मदीयगच्छादिति। अथासौ स्वयं परेण वा प्रज्ञापितः सन् 'आवृत्तः' प्रमादात् प्रतिनिवृततः प्रतिभणति 'भगवन् ! क्षमध्वं मदीयमपराधनिकुरम्बम्, न पुनरेवं करिष्यामि' इति, ततो यद् द्वारगाथायां पत्रज्ञातं सचितं तदुपवर्ण्यते-''तंबोलपत्तनायं''ति, यथा तम्बोलपत्रं कुथितं सद् यदि न परित्यज्यते ततः शेषाण्यपि पत्राणि कोथयति । एवं त्वमपि स्वयं विनष्टो ममाऽन्यानपि साधून् विनाशयिष्यसीति कृत्वा निष्काशितोऽस्माभिः । सम्प्रत्यप्रमत्तेन भवितव्यं मासगुरु च ते प्रायश्चित्तम् ॥

अथ निष्काशनस्यैव विधिमाह-

[भा.१२७३] सुहमेगो निच्छुब्भइ, नेगा भणिया उ जइ न वच्चंते ।
अन्नावएस उवहिं, जग्गावण सारिकह गमनं ॥

वृ- ते पुनः प्रमाद्यन्त एको वाऽनेके वा । यद्येकस्ततः सुखेनैव 'निर्गच्छ मद्गच्छात्' इत्यभिधाय निष्काश्यते । अथानेके-बहवस्ततस्ते यदि 'निर्गच्छत' इति भणिता अपि 'वयं बहवस्तिष्ठामः' इत्यवष्टम्भं कृत्वा न व्रजन्ति ततः शेषसाधून् रहस्यं ज्ञापयित्वाऽन्येन केनापि अपदेशेन-मिषेण यथा न तेषां शङ्का भवति तथोपधिं विहारयोग्यं कारयित्वा अन्यव्यपदेशेनैव ते रात्रौ चिरं जागरणं कारापणीया यथा न प्रातः शीघ्रमुत्तिष्ठन्ति । ''सारिकह''त्ति सागारिकः-शय्यातरस्तस्याग्रतो रहसि कथनीयम्, यथा-वयं प्रभात एवामुकं ग्रामं व्रजिष्यामः, यदि कोऽपि महता निर्बन्धेन युष्मान् प्रश्नयेत्, यथा-आचार्याः क्व गताः ? इति ततो भवद्भिस्तस्य यथावद् निवेदनीयम् । ''गमनं'' ति ततो गमनं कर्त्तव्यम् ॥ गतेषु चाचार्येषु यदि ते ब्रूयुः-

[भा.१२७४] मुक्का मो दंडरुइणो, भणंति इइ जे न तेसु अहिगारो ।
सेज्जायरनिब्बंधे, कहियाऽऽगय न विनए हानी ॥

वृ- 'अहो ! सुन्दरं समजनि यद् 'दण्डरुचेः' उग्रदण्डव्यसनिन आचार्याद् मुक्ता वयम्' इति ये भणन्ति न तेष्वधिकारः । ये पुनः परित्यक्ताः सन्तो गाढं परितप्यन्ते 'आः ! कष्टम्, उज्झिता वयं वराका निरसम्बन्धबन्धुभिस्तैर्भगवद्भिः, अतः कथमिव भविष्यामः ?' इति ते शय्यातरं महता निर्बन्धेन पृच्छन्ति-कथय कुत्रास्मान् विमुच्य गताः क्षमाश्रमणाः ? । स प्राह-अमुकं ग्रामम् । ततस्तेन कथिते त्वरितमागतानां तेषां न विनयहानिः कर्त्तव्या, किन्तु प्राग्वदेवाऽभ्युत्थानं दण्डकादिग्रहणं च कर्त्तव्यम् । ततस्ते बद्धाञ्जलपुटाः पादपतिताश्छिन्नमुक्तावलिप्रकाशान्यश्रूणि विमुञ्चन्तो विज्ञपयन्ति-भगवन् ! क्षमध्वमस्मदीयमपराधम्, विलोकयताऽस्मान् प्रसादमन्थरया दृशा, प्रतिपद्यध्वं भूयः स्वप्रतीच्छकतया, कुरुतानुग्रहं स्मारणादिना, प्रणिपातपर्यवसितप्रकोपा हि भवन्ति महात्मानः, इत ऊर्ध्वं वयं प्रमादं प्रयत्नतः परिहरिष्याम इति । ततो गच्छसत्काः

साधवः सूरीन् कृताञ्जलयः प्रसादयन्ति ॥ गुरवो ब्रुवते-आर्या ! अलं मम दुष्टाश्वसारथित्वकल्पेनामून् प्रति आचार्यककरणेन, एवमुक्ते साधवो भणन्ति-

[भा.१२७५] को नाम सारहीणं, स होइ जो भद्दवाइणो दमए।
दुट्ठे वि उ जो आसे, दमेइ तं आसियं बिंति ॥

वृ- को नाम सारथीनां मध्ये स भवति यः 'भद्रवाजिनः विनीताश्वान् दमयेत् ? न कश्चिदसौ, असारथिरेवेत्यर्थः। 'दुष्टान्' अविनीतानपि योऽश्वान् 'दमयति' शिक्षां ग्राहयति तम् 'आश्विकम्' अश्वदमं ब्रुवते लौकिकाः ॥ अपि च-

[भा.१२७६] होंति हु पमाव-खलिया, पुव्वब्भासा य दुच्चया भंते !।
न चिरं च जंतणेयं, हिया य अच्चंतियं अंते ॥

वृ- 'भदन्त !' परमकल्याणयोगिन् ! 'पूर्वाभ्यासाद्' अनादिभवाभ्यस्ततया दुस्त्यजानि प्रमाद-स्खलितानि भवन्ति प्रायो जन्तूनाम्। प्रमादाः-निद्रा-विकथादयः, स्खलितानि-अनुपयुक्तगमन-भाषणादीनि। न चेयं स्मारणादिरूपा यन्त्रणा 'चिरं' चिरकालं भाविनी, सात्मीभावमुपगते ह्यमीषामप्रमादे को नाम स्मारणादिरूपा यन्त्रणा 'चिरं' चिरकालं भाविनी, सात्मीभावमुपगते ह्यमीषामप्रमादे को नाम स्मारणादिकं करिष्यति ? इति भावः। न चेयमापातवत् परिणामेऽपि दुस्सहा किन्तु 'हिता च' पथ्या 'आत्यन्तिकम्' अतिशयेन 'अन्ते' अवसाने परिणामे इत्यर्थः। यच्च परिणामसुन्दरं तदापातकटुकमप्युपादेयम् ॥ अत्रान्तरे सूरयस्तेषां प्रमादिसाधूनां तीव्रतरं संवेगमवगम्य तानेव स्थिरीकर्तुं राजदृष्टान्तं कुर्वन्ति-

[भा.१२७७] अच्छिरुयालु नरिंदो, आगंतुअविज्जगुलियसंसणया।
विसहामि त्ति य भणिए, अंजन वियणा सुहं पच्छा ॥

वृ- एगो राया। तस्स अच्छिरुया जाया। वत्थव्वविज्जेहिं न सक्किओ तिगिच्छिउं। अन्नो अ आगंतुओ विज्जो आगंतुं भणइ-मम अत्थि गुलियाओ अच्छिसूलपसमणीओ, ताहिं अंजिएसु अच्छीसु तिव्वतरा दुरहियासा वेदना भवइ मुहुत्तं, जइ न वि मे मारणाए संदिसाहि तो अंजेमि ते अच्छीणि। 'न मारेमि' त्ति अब्भुवगए अंजिएसु अच्छीसु तिव्वतरा वेयणा जाया। ताहे रन्ना भणियं-अच्छीणि मे पडियाणि, मारेह तं वेज्जं। तेहिं अब्भुवगंतुं न मारिओ। मुहुत्तंतरेण उवसंता वेयणा। पोराणाणि अच्छीणि जायाणि। विज्जो पूइओ ॥ अथ गाथाक्षरार्थ-अक्ष्णः-चक्षुषो या रुग्-रोगस्तद्वान् कश्चिन्नरेन्द्रः। तस्य चागन्तुकवैद्येन गुटिकानां शंसना-स्वरूपकथना। ततो राज्ञा 'विषहाम्यहं वेदनाम्' इति भणिते वैद्येन चक्षुषोर्गुटिकाभिरञ्जनम्। ततो वेदना। पश्चात् क्रमेण सुखं सञ्जातम्, प्रगुणीभूते अक्षिणी इति। एष दृष्टान्तोऽयमर्थोपनयः-यथा तस्य राज्ञस्तत्काल-दुस्सहमपि गुटिकाञ्जनं क्रमेण चक्षुषोः प्रगुणीकरणात् परिणामसुन्दरं समजनि, एवं भवतामपि स्मारणादिकं खर-पुरुषत्वाद् यद्यप्यापातकटुकं तथापि परिणामसुन्दरमेव द्रष्टव्यम्, इह परत्र च सकलकल्याणपरम्पराकारणत्वादिति ॥ उक्तानुक्तविधिसङ्ग्रहमाह-

[भा.१२७८] इय अविनीयविवेगो, विगिंचियाणं च संगहो भूओ।
जे उ निसग्गविनीया, सारणया केवलं तेसिं ॥

वृ- "इय" एवमविनीतानां विवेकः-परित्यागः। "विगिंचियाणं च" त्ति परित्यक्तानां

पुनरावृत्तानां भूयः सङ्ग्रहो विधेयः । ये तु निसर्गेण-स्वभावेन विनीतास्तेषां स्मारणैव केवलं कर्त्तव्या, यथा 'इदमित्थं कर्त्तव्यम्' इति ।। उपसंहरन्नाह-

[भा.१२७९] एवं पडिच्छिऊणं, निप्फत्तिं कुणइ बारस समाओ ।
एसो चेव विहारो, सीसे निप्फाययंतस्स ।।

वृ- 'एवं' देशदर्शनं कुर्वन् शिष्य-प्रतीच्छयकान् प्रतीच्छ्य निष्पत्तिं सूत्रार्थग्रहणादिना द्वादश 'समाः' संवत्सराणि करोति । गतं निष्पत्तिद्वारम् । अथ विहारद्वारं व्याख्यायते-"एसो चेव" इत्यादि । एष एव विहारः शिष्यान् निष्पादयतो वेदितव्यः । इयमत्र भावना-तस्य देशदर्शनं कृत्वा गुरुपादमूलमागतस्य गुरुभिराचार्यपदमध्यारोप्य दिग्बन्धानुज्ञायां विहितायां नवकल्पविधिना विहरतो यः शिष्यनिष्पादनविधिः स एवमेव द्वादश वर्षाणि यावद् विज्ञेयः, तुल्यवक्तव्यत्वादिति।।
अथैतदेव विहारद्वारमावृत्या जिनकल्पिकमाश्रित्य व्याचिख्यासुर्द्वारगाथामाह-

[भा.१२८०] अव्वोच्छित्ती मन पंचतुलण उवगरणमेव परिकम्मे ।
तवसुत्तसुएगत्ते उवसग्गसहे य वडरुक्खे ।।

वृ- अव्यवच्छित्तिविषयं मनः प्रयुङ्क्ते । पञ्चानाम्-आचार्यादीनां तुलना-स्वयोग्यताविषया भवति, उपकरणं जिनकल्पोचितमेव गृह्णाति 'परिकर्म' इन्द्रियादिजयरूपं करोति । तपः-सत्त्व-श्रुतैकत्वानि उपसर्गसहश्चेति पञ्चभावना भवन्ति । 'वटवृक्षे' इति जिनकल्पं तीर्थकरादी-नामभावे वटवृक्षस्याधस्तात् प्रतिपद्यते इति द्वारगाथासमासार्थः ।। अथैनामेव विवरीषुराह-

[भा.१२८१] अनुपालिओ य दीहो, परियाओ वायणा वि मे दिन्ना ।
निप्फाइया य सीसा, सेयं खु महऽप्पणो काउं ।।

वृ- तेनाचार्येण सूत्रार्थयोरव्यवच्छित्तिं कृत्वा पर्यन्ते-पूर्वापररात्रकालसमये धर्मजागरिकां जाग्रतेत्थं चिन्तनीयम्, यथा-अनुपालितो मया दीर्घ 'पर्यायः' प्रव्रज्यारूपः, वाचनाऽपि मया दत्ता उचितेभ्यः प्रतीच्छकादिभ्यः, निष्पादिताश्च भूयांसः शिष्याः, तदेवं कृता तीर्थस्याव्यवच्छित्ति, तत्करणेन विहितमात्मनः ऋणमोक्षणम्, अत ऊर्द्ध्वं 'श्रेयः' प्रशस्यतरं ममात्मनो हितं कर्तुम् ।।
किं नाम हितम् ? इति चेद् उच्यते-

[भा.१२८२] किन्नु विहारेणऽब्भुज्जएण विहरामऽनुत्तरगुणेणं ।
आओ अब्भुजजयसासणेण विहिना अनुमरामि ।।

वृ- 'किन्नु' इति वितर्के, 'अभ्युद्यतविहारेण' जिनकल्पादिना 'अनुत्तरगुणेन' अनुत्तराः-अनन्यसामान्या गुणाः-निरममत्वादयो यस्मिन् स तथा तेन अहं विहरामि ? "आउ" त्ति उताहो "अब्भुज्जसासणेणं" ति सूचकत्वात् सूत्रस्याऽभ्युद्यतमरणविषयेण शासनोक्तेन विधिना 'अनुम्रिये" अनु-पश्चात् संलेखनाद्युत्तरकालं मरणं प्रतिपद्येऽहम् ? इति ।।
अभ्युद्यतविहार-मरणयोः स्वरूपमाह-

[भा.१२८३] जिन सुद्ध अहालंदे, तिविहो अब्भुज्जओ अह विहारो ।
अब्भुज्जयमरणं पुन, पाओवग-इंगिणि-परिन्ना ।।

वृ- जिनकल्पः शुद्धपरिहारकल्पो यथालन्दकल्पश्चेति त्रिविधोऽभ्युद्यतोऽयमेष विहारो मन्तव्यः। अभ्युद्यतमरणं पुनस्त्रिविधम्-पादपोपगमनम् इङ्गिनीमरणं 'परिज्ञा' इति भक्तप्रत्याख्यानम् ।।

स्याद् बुद्धि-द्वे अप्येते अभ्युद्यतरूपतया श्रेयसी, अतः कतरदनयोः प्रतिपत्तव्यम् ? उच्यते-

[भा.१२८४]　　सयमेव आउकालं, नाउं पोच्छित्तु वा बहुं सेसं ।
सुबहुगुणलाभकंखी, विहारमब्भुज्जयं भजइ ॥

वृ- स्वयमेवायुःकालं सातिशयश्रुतोपयोगाद् 'बहु' दीर्घं 'शेषम्' अवशिष्यमाणं ज्ञात्वा पृष्ट्वा वाऽन्यं श्रुताद्यतिशययुक्तमाचार्यं बहुशेषमवबुध्य ततः सुबहुगुणलाभकाङ्क्षी सन् विहारमभ्युद्यतं 'भजति' प्रतिपद्यत इत्यर्थः । इह च यदि स्तोकमायुरवशिष्यते ततः पादपोपगमादीनामेकतरमभ्युद्यतमरणं प्रतिपद्यते, अथ प्रचुरमायुः परं जङ्घाबलपरिक्षीणस्ततो वृद्धावासमध्यास्ते, अथाऽऽयुर्दीर्घं न च जङ्घाबलपरिक्षीणस्तदाऽभ्युद्यतविहारं प्रतिपद्यत इति ॥ गतमव्यवच्छित्तिमनोद्वारम् । अथ पञ्चतुलनेति द्वारम्-पञ्चानाम्-आचार्योपाध्याय-प्रवर्तकस्थविर-गणावच्छेदकानां तुलना भति, यथा-त्रयाणामभ्युद्यत (मरण-वृद्धावासा-ऽभ्युद्यत) विहाराणां कतरं प्रतिपद्यामहे ? । इह चैत एव प्रायोऽभ्युद्यतविहारस्याधिकारिण इत्थं विधिं करोति-

[भा.१२८५] गणनिक्खेवित्तरिओ, गणिस्स जो व ठविओ जहिं ठाणे ।
उवहिं च अहागडयं, गिण्हइ जावऽन्न नुप्पाए ॥

वृ- 'गणिनः' आचार्यस्य गणनिक्षेपः 'इत्वरः' परिमितकालीनो भवति, यो वा उपाध्यायादिर्यत्र 'स्थाने' पदे स्थापितः स तत्पदमात्मतुल्यगुणे साधावित्वरनिक्षेपेण निक्षिपति । आह किमर्थमसावित्वरं गणादिनिक्षेपं विदधाति ? न यावज्जीविकम् ? उच्यते-इह चक्राष्टकविवरगामिना शिलीमुखेन वामलोचने पुत्रिकाया वेधनमिव दुष्करं गणाद्यनुपालनम्, अतः पश्यामस्तावत्- 'एतेऽभिनवाचार्यप्रभृतयः किमस्य गणादेरनुपालनं कर्तुं यथावदीशते वा ? न वा ?, यदि नेशते ततो मया न प्रतिपत्तव्यो जिनकल्पः, यतो जिनकल्पानुपालनादपि श्रेष्ठतरमितरस्य तथाविधस्याभावे सूत्रोक्तनीत्या गणाद्यनुपालनम्, बहुतरनिर्जरालाभकारणत्वात्, न च बहुगुणपरित्यागेन स्वल्पगुणोपादानं विदुषां कर्तुमुचितम्, सुप्रतिष्ठितकार्यारम्भकत्वात् तेषाम्' इत्यभिसन्धाय स भगवानित्वरं गणादिनिक्षेपं विदधातीति । उक्तञ्च पञ्चवस्तुकशास्त्रे इहैव प्रक्रमे श्रीहरिभद्रसूरिपूज्यैः-

पिच्छामु ताव एए, केरिसगा होंति अस्स ठाणस्स ? ।
जोगाण वि पाएणं, निव्वहणं दुक्करं होइ ॥
न य बुहगुणचाएणं, थेवगुणपसाहणं बुहजणाणं ।
इट्ठं कयाइ कज्जं, कुसला सुपइट्ठियारंभा ॥

अथोपकरणद्वारमाह-"उवहिं च" इत्यादि । यावद् 'अन्यं' जिनकल्पप्रायोग्यं शुद्धैषणायुक्तं प्रमाणोपेतं च 'उपधिं' वस्त्रादि नोत्पादयति तावद् यथाकृतमेव गृह्णाति । ततः स्वकल्पप्रायोग्ये उपकरणे लब्धे सति प्राक्तनमुपकरणं व्युत्सृजतीति ॥ गतमुपकरणद्वारम् । अथ परिकर्मद्वारम्-परिकर्मेति वा भावनेति वा एकार्थम् । ततोऽयमात्मानं भावनाभि सम्यग् भावयति । आह सर्वेऽपि साधवस्तावद् भावितान्तरात्मानो भवन्ति अतः किं पुनर्भावयितव्यम् ? उच्यते-

[भा.१२८६] इंदिय-कसाय-जोगा, विनियमिया जइ वि सव्वसाहूहिं ।
तह वि जओ कायव्वो, तज्जयसिद्धिं गणिंतेनं ॥

वृ- यद्यपि सर्वसाधुभिरिन्द्रिय-कषाय-योगा विविधैः प्रकारैर्नियमिताः-जितास्तथापि जिनकल्पं

प्रतिपत्तुकामेन पुनरेतेषां जयः कर्त्तव्यः। तत्रैहिका-ऽऽमुष्मिकापायपरिभावनादिना इन्द्रियाणां जयस्तथा कर्त्तव्यो यथेष्टा-ऽनिष्टविषयेषु गोचरमुपागतेषु राग-द्वेषयोरुत्पत्तिरेव न भवति। कषायाणामपि जये तथा यत्न आस्थेयो यथा दुर्वचनश्रवणादि बाह्यं कारणमवाप्यापि तेषामुदय एव नाविर्भवति। योगानामपि मनःप्रभृतीनां जये तथा यतितव्यं यथा तेषामार्त्तध्यानादिकं दुष्प्रणिधानमेवनोदयमासादयति। अथ किमर्थमित्थमिन्द्रिय-कषाय-योगानां जयः कर्त्तव्यः? इत्याह-तेषाम्-इन्द्रियादीनां जयस्तज्जयः तज्जयेन सिद्धि-जिनकल्पपारप्राप्तिस्तां 'गणयता' मन्यमानेनेन्द्रियादीनां जयः करणीयः॥ अत्रैव विशेषमाह-

**[भा.१२८७]** जोगिंदिएहिं न तहा, अहिगारो निज्जिएहिं न हु ताइं।
कलुसेहि विरहियाइं, दुक्खसईबीयभूयाइं॥

**वृ-** योगैरिन्द्रियैश्च निर्जितैर्न तथा 'अधिकारः' प्रयोजनम्, यतो नैव 'तानि' योगेन्द्रियाणि 'कलुषैः' कषायैर्विरहितानि दुःखसस्यबीजभूतानि भवन्ति किन्तु कषाया एव दुःखपरम्पराया मूलबीजमिति भावः॥ आह यद्येवं योगा इन्द्रियाणि च न जेतव्यानि, तेषां कषायविरहितानां दुःखहेतुत्वायोगात्, उच्यते-

**[भा.१२८८]** जेन उ आयाणेहिं, न विना कलुसाण होइ उप्पत्ती।
तो तज्जयं ववसिमो, कलुसजयं चेव इच्छंता॥

**वृ-** आदीयन्ते-गृह्यन्ते शब्दादयोऽर्था एभिरित्यादानानि-इन्द्रियाण्युच्यन्ते तैः, उपलक्षणत्वाद् योगैश्च विना देहिना 'कलुषाणां' कषायाणामुत्पत्तिर्न भवति। कथम्? इति चेद् उच्यते-इह माया-लोभौ रागः क्रोध-मानौ तु द्वेष इत्यभिधीयते, तौ च राग-द्वेषाविष्टा-ऽनिष्टविषयान् प्राप्य सञ्जायेते, ते च विषया इन्द्रियगोचरा इति कृत्वा इन्द्रियैर्विना न कषायाणामुत्पत्तिराविरस्ति। योगानपि मनोवाक्कायरूपानन्तरेण न क्वापि कषाया उदीयमाना दृश्यन्त इति तैरपि सह कषायाणामविनाभावो द्रष्टव्यः। यतश्चैवमतः 'तज्जयम्' इन्द्रिय-योगजयं 'व्यव्यामः' इच्छामः 'कलुषजयं' कषायजयमेव इच्छन्त इति॥

आह के पुनर्गुणा भावनाभावितान्तरात्मनो भवन्ति? इति उच्यते-

**[भा.१२८९]** खेयविणोओ साहसजओ य लहुया तवो असंगो अ।
सद्धाजननं च परे, कालन्नाणं च नऽन्नत्तो॥

**वृ-** तपोभावनाभावितस्य 'खेदविनोदः' परिश्रमजयो भवति, चतुर्थादिपसा न परिश्राम्यतीत्यर्थः। सत्त्वभावनाभावितस्य साध्वसं-भयं तस्य जयोभवति। एकत्वभावनाभावितस्य 'लघुता' 'एक एवाहम्' इतिबुध्या लघुभावो भवति। श्रुतभावनाभावितस्य तपो भवति, ''न वि अत्थि न वि य होही, सज्झायसमं तवोकम्मं।'' इति वचनात्। धृतिभावनाभावितस्य स्वजनादिषु 'असङ्गः' निर्ममत्वं भवति। अन्यच्च श्रुतभावनां भावयन् अन्येषामपि श्रद्धाजननं करोति, यथा-वयमप्येवं कदा विधास्यामः? इति। कालज्ञानं च पौरुष्यादिषु नान्यतः सकाशादवगन्तव्यं भवति किन्तु श्रुतपरावर्त्तनानुसारेण स्वयमेवोच्छ्वासादिकालकलाकलनतः पौरुष्यादिमानं जानाति। यत एते गुणास्ततो भावनीय आत्मा भावनया॥ सा च द्विधा-द्रव्यतो भावतश्च। तत्र द्रव्यतस्तावदाह-

**[भा.१२९०]** सरवेह-आस-हत्थी-पवगाईया उ भावना दव्वे।

अब्भास भावन त्ति य, एगट्ठं तत्थिमा भावे ॥

वृ-इह धानुष्को यद् अभ्यासविशेषात् प्रथमं स्थूलद्रव्यं ततो वालवद्धां कपर्दिकां ततः सुनिर्मातः स्वरेणापि लक्ष्यस्य वेधं करोति, यद्वाऽश्वः शीघ्रं शीघ्रतरं धावमानः शिक्षाविशेषाद् महदपि गर्त्तादिकं लङ्घयति, हस्ती वा शिष्यमाणः प्रथमं काष्ठानि ततः क्षुल्लकान् पाषाणान् ततो गोलिका तदनु बदराणि तदनन्तरं सिद्धार्थानप्यभ्यासातिशयाद् गृह्णाति, प्लवको वा प्रथमं वंशे विलग्नः सन् प्लवते ततः पश्चादभ्यस्यन् आकाशेऽपि तानि तानि करणानि करोति, आदिशब्दाच्चित्र-करादिपरिग्रहः । एताः सर्वा अपि द्रव्यभावनाः । अभ्यास इति वा भावनेति वा एकार्थम् । तत्रैता वक्ष्यमाणलक्षणाः 'भावे' भावतो भावना मन्तव्याः ॥ ता एवाह-

[भा.१२९१] दुविहाओ भावनाओ, असंकिलिट्ठा य संकिलिट्ठा य ।
मुत्तूण संकिलिट्ठा, असंकिलिट्ठाहि भावंति ॥

वृ- द्विविधाश्च भावतो भावनाः । 'असंक्लिष्टाः' शुभाः 'संक्लिष्टाश्च' अशुभाः । तत्र मुक्त्वा संक्लिष्टभावना असंक्लिष्टाभिर्भावनाभिर्भावयन्ति जिनकल्पं प्रतिपित्सव इति ॥

अथ कास्ताः संक्लिष्टभावनाः ? इत्याशङ्कापनोदाय तत्स्वरूपमभिधित्सुराह-

[भा.१२९२] संखा य परूवणया, होइ विवेगो य अप्पसत्थासु ।
एमेव पसत्थासु वि, जत्थ विवेगो गुणा तत्थ ॥

वृ- अप्रशस्तभावनानां सङ्ख्या पञ्चेति लक्षणा निरूपणीया । प्ररूपणा च तासां कर्त्तव्या । तासां चाप्रशस्तानां 'विवेकः' परिहारो भवति । एवमेव 'प्रशस्तास्वपि' तपःप्रभृतिभावनासु सङ्ख्या प्ररूपणा च वक्तव्या । नवरं "जत्थ विवेगो"त्ति यत्र विवेक इति पदं तत्राप्रशस्ता एव भावना द्रष्टव्याः; ता विवेक्तव्याः- परित्याज्या इति भावः । "गुणा तत्थ" त्ति यास्तु प्रशस्ता भावनाः तासु भाव्यमानासु गुणाः-खेद-विनोदादयः प्रागुक्ता भवन्तीति चूर्ण्यभिप्रायेण व्याख्यानम्। विशेषचूर्ण्यभिप्रायः पुनरयम्-यत्र च प्रशस्तेऽपि वस्तुनि विवेकः-परित्यागोऽस्य घटते तत्र गुणा एव भवन्ति । यथा-आचार्यादीनामवर्णभाषण-श्रवणे औदासीन्यमवलम्बमानस्याप्यस्य गुण एव भवति, न पुनः स्थविरकल्पिकस्येव यथाशक्ति तन्निवारणमकुर्वतो दोष इति ॥

अथाप्रशस्तभावनानां नामग्राहं गृहीत्वा सङ्ख्यामाह-

[भा.१२९३] कंदप्प देवकिव्विस, अभिओगा आसुरा य सम्मोहा ।
एसा य संकिलिट्ठा, पंचविहा भावना भणिया ॥

वृ- कन्दर्पः-कामस्तत्प्रधानाः षिङ्गप्राया देवविशेषाः कन्दर्पा उच्यन्ते तेषामियं कान्दर्पी । एवं देवानां मध्ये किल्बिषाः-पापा अत एवास्पृश्यादिधर्माणश्चण्डालप्रायास्तेषामियं दैवकिल्बिषी । आ-समन्ताद् आभिमुख्येन (वा) युज्यन्ते-प्रेष्यकर्मणि व्यापार्यन्त इत्याभियोग्याः-किङ्करस्थानीया देवविशेषास्तेषामियमाभियोगी । असुराः-भवनपतिदेवविशेषास्तेषामियमासुरी । सम्मुह्यन्तीति सम्मोहाः-मूढात्मानो देवविशेषास्तेषामियं साम्मोही । गाथायां प्राकृतत्वाद् आपप्रत्ययः । एषा अप्रशस्ता पञ्चविधा भावना तत्तत्स्वभावाभ्यासरूपा भणिता ॥ अथासामेव फलमाह-

[भा.१२९४] जो संजओ वि एआसु अप्पसत्थासु भावनं कुणइ ।
सो तव्विहेसु गच्छइ, सुरेसु भइओ चरणहीनो ॥

**वृ-** यः 'संयतोऽपि' व्यवहारतः साधुरप्येताभिरप्रशस्ताभिर्भावनाभिः, गाथायां तृतीयार्थे सप्तमी, 'भावनम्' आत्मनो वासनं करोति सः 'तद्विधेषु' तादृशेषु कान्दर्पिकादिषु सुरेषु गच्छति। यस्तु 'चरणरहितः' सर्वथा चारित्रसत्ताविकलो द्रव्यचरणहीनो वा सः 'भाज्यः' तद्विधेषु वा देवेषूत्पद्यते नरक-तिर्यङ्-मनुष्येषु वा ॥ अथासामेव प्ररूपणां चिकीर्षु प्रथमतः कन्दर्पभावनां प्ररूपयति-

**[भा.१२९५]** कंदप्पे कुक्कुइए, दवसीले यावि हासणकरे य।
विम्हावितो य परं, कंदप्पं भावनं कुणइ ॥

**वृ-** इह कन्दर्पशब्देन कन्दर्पवानुच्यते, एवं कौत्कुच्यवान् द्रवशीलश्चापि हासनकरश्च विस्मापयँश्च परं कान्दर्पी भावनां करोतीति सङ्ग्रहगाथासमासार्थः ॥ अथ विस्तरार्थमाह-

**[भा.१२९६]** कहकहकहस्स हसणं, कंदप्पो अनिहुया य संलावा।
कंदप्पकहाकहणं, कंदप्पुवएस संसा य ॥

**वृ-** "कहकहकहस्स"त्ति तृतीयार्थे षष्ठी, 'कहकहकहेन' उच्चैःस्वरेण विवृतवदनस्य यद् हसनम्-अट्टहास इत्यर्थः, यश्च 'कन्दर्प' स्वानुरूपेण सह परिहासः, ये च 'अनिभृताः' निष्ठुरवक्रोक्त्यादिरूपा गुर्वादिनाऽपि समं संलापाः, यच्च कन्दर्पकथायाः-कामसम्बद्धायाः कथायाः कथनम्, यश्च कन्दर्पस्योपदेशः-'इत्थमित्थं कुरु' इति विधानद्वारेण कामोपदेशः, या च 'शंसा' प्रशंसा कामविषया, एष सर्वोऽपि कन्दर्प उच्यते ॥ गतं कन्दर्पद्वारम्। अथ कौत्कुच्यद्वारमाह-

**[भा.१२९७]** भुम-नयण-वयण-दसणच्छदेहि कर-पाद-कन्नमाईहिं।
तं तं करेइ जह हस्सए परो अत्तणा अहसं ॥

**वृ-** कुत्कुचः-भण्डचेष्टः तस्य भावः कौत्कुच्यं तद् विद्यते यस्य स कौत्कुच्यवान्। स च द्वेधा-कायेन वाचा च। तत्र भ्रू-नयन-वदन-दशनच्छदैः कर-चरण-कर्णादिभिश्च देहावयवैस्तां तां चेष्टामात्मना अहसन्नेव करोति यथा परो हसति एष कायकौत्कुच्यवानुच्यते ॥

**[भा.१२९८]** वायाकोक्कुइओ पुण, तं जंपइ जेण हस्सए अन्नो।
नाणाविहजीवरुए, कुव्वइ मुहतूरए चेव ॥

**वृ-** वाचा कौत्कुच्यवान् पुनस्तत् किमपि परिहासप्रधानं वचनं जल्पति येनाऽन्यो हसति, नानाविधानां वा मयूर-मार्जार-कोकिलादीनां जीवानां रुतानि-कूजितानि 'मुखतूर्याणि वा' मुखेनातोद्यवादनलक्षणानि तथा करोति यथा परस्य हास्यमायाति ॥ अथ द्रवशीलमाह-

**[भा.१२९९]** भासइ दुयं दुयं गच्छए अ दरिउ व्व गोविसो सरए।
सव्वदुयदुयकारी, फुट्टइ व ठिओ वि दप्पेणं ॥

**वृ-** 'द्रुतं द्रुतम्' असमीक्ष्य सम्भ्रमावेशवशाद् यो भाषते। यश्च द्रुतं गच्छति, क इव ? इत्याह-शरदि 'दर्पित इव' दर्पोद्धुर इव 'गोवृषः' बलीवर्दविशेषः। शरदि हि प्रचुरचारिध्राणतया मक्षिकाद्युपद्रवरहिततया च गोवृषो मदोद्रेकादुच्छृङ्खलः पर्यटतीति, एवमसावपि निरङ्कुशस्त्वरितं त्वरितं गच्छति। यश्च 'सर्वद्रुतद्रुतकारी' प्रत्युपेक्षणादीनां सर्वासामपि क्रियाणामतित्वरितकारी। यश्च दर्पेण तीव्रोद्रेकवशात् स्फुटतीव 'स्थितोऽपि' स्वभावस्थोऽपि सन्, गमनादिक्रियामकुर्वन्नपीत्यर्थः। एष द्रवशील उच्यते ॥ अथ हासकरमाह-

[भा.१३००] वेस-वयणेहि हासं, जणयंतो अप्पणो परेसिं च ।
अह हासणो त्ति भन्नइ, घयणो व्व छले नियच्छंतो ॥

वृ- ''घयणो व्व'' भाण्ड इव परेषां 'छिद्राणि' विरूपवेष-भाषाविपर्ययाणि ''नियच्छंतो''त्ति निरन्तरमन्वेषयन् तादृशैरेव वेष-वचनैर्विचित्रैरात्मनः 'परेषां च' प्रेक्षकाणां हास्यं 'जनयन्' उत्पादयन् अथैषः 'हासनः' हास्यकर इति भण्यते ॥ अथ परविस्मापकमाह-

[भा.१३०१] सुरजालमाइएहिं, तु विम्हयं कुणइ तव्विहजणस्स ।
तेसु न विम्हयइ सयं, आहट्ट-कुहेडएहिं च ॥

वृ- सुरजालम्-इन्द्रजालम् आदिशब्दाद् अपरकौतुकपरिग्रहः तैः, तथा आहर्त्तः-प्रहेलिकाः कुहेटकाः-वक्रोक्तिविशेषरूपास्तैश्च तथाविधग्राम्यलोकप्रसिद्धैर्यत् 'तद्विधजनस्य' तादृशस्य बालिशप्रायलोकस्य 'विस्मयं' चित्तभ्रमं करोति स्वयं पुनस्तेषु न विस्मयते एष परविस्मापकः ॥ उक्ता कान्दर्पी भावना । अथ दैवकिल्बिषिकीं बिभावयिषुराह-

[भा.१३०२] नाणस्स केवलीणं, धम्मायरियाण सव्वसाहूणं ।
माई अवन्नवाई, किब्बिसियं भावणं कुणइ ॥

वृ- ज्ञानस्य केवलिनां धर्माचार्याणां सर्वसाधूनाम् एतेषामवर्णवादी, तथा 'मायी' स्वभावनिगूहनादिना मायावान् एष किल्बिषिकीं भावनां करोतीति निर्युक्तिगाथासमासार्थः ॥

अथ व्यासार्थमाह-

[भा.१३०३] काया वया य ते च्चिय, ते चेवपमाय अप्पमाया य ।
मोक्खाहिगारिगाणं, जोइसजोणीहि किं च पुणो ॥

वृ- इह केचिद् दुर्विदग्धाः प्रवचनाशातनापातकमगणयन्त इत्थं श्रुतस्यावर्णं ब्रुवते, यथा-षड्जीवनिकयामपि षट्कायाः प्ररूप्यन्ते, शस्त्रपरिज्ञायामपि त एव, अन्येष्वप्यध्ययनेषु बहुशस्त एवोपवर्ण्यन्ते; एवं व्रतान्यपि पुनः पुनस्तान्येव प्रतिपाद्यन्ते; तथा त एव प्रमादा-ऽप्रमादाः पुनः पुनर्वर्ण्यन्ते, यथा-उत्तराध्ययनेषु आचाराङ्गे वा; एवं च पुनरुक्तदोषः । किञ्च यदि केवलस्यैव मोक्षस्य साधनार्थमयं प्रयासस्तर्हि 'मोक्षाधिकारिणां' साधूनां सूर्यप्रज्ञप्त्यादिना ज्योतिषशास्त्रेण योनिप्राभृतेन वा किं पुनः कार्यम् ? न किञ्चिदित्यर्थः । तेषामित्थं ब्रुवाणानामिदमुत्तरम्-इह प्रवचने यत एव कायादयो भूयो भूयः प्ररूप्यन्ते तद् महता यत्नेनाऽमी परिपालनीयाः, इदमेव धर्मरहस्यमित्यादरातिशयख्यापनार्थत्वाद् न पुनरुक्तम् । यत उक्तम्-

अनुवादा-ऽऽदर-वीप्सा-भृशार्थ-विनियोग-हेत्वसूयासु ।
ईषत्सम्भ्रम-विस्म-गणा-स्मरणेष्वपुनरुक्तम् ॥

ज्योतिशास्त्रादि च शिष्यप्रव्राजनादिशुभकार्योपयोगफलत्वात् परम्परया मुक्तिफलमेवेति न कश्चिद् दोषः ॥ गतो ज्ञानावर्णवादः । अथ केवल्यवर्णवादमाह-

[भा.१३०४] एगतरमुप्पाए, अन्नोन्नावरणया दुवेण्हं पि ।
केवलदंसण-नाणाणमेगकाले व एगत्तं ॥

वृ-इह केवलिनामवर्णवादो यथा-किमेषां ज्ञान-दर्शनोपयोगौ क्रमेण भवतः ? उत युगपत्? यद्याद्यः पक्षस्ततो यं समयं जानाति तं समयं न पश्यति यं समयं पश्यति तं समयं न जानातीत्येव-

मेकान्तरिते उत्पादे 'द्वयोरपि' केवलज्ञान-दर्शनयोरन्योन्यावरणता भवेत्, ज्ञानावरण-दर्शनावरणयोः समूलकाषं कषितत्वाद् अपरस्य चाऽऽवारकस्याऽभावात् परस्परावारकतैवानयोः प्राप्नोतीति भावः। अथ युगपदिति द्वितीयः पक्षः कक्षीक्रियते सोऽपि न क्षोदक्षमः, कुतः ? इत्याह-'एककाल' युगपद् उपयोगद्वयेऽङ्गीक्रियमाणे वाशब्दः पक्षान्तरद्योतनार्थ 'द्वयोरपि' साकारा-ऽनाकारोपयोगयोरेकत्वं प्राप्नोति, तुल्यकालभावित्वादिति। अत्रोत्तरम्-इह तथाजीवस्वाभाव्यादेव सर्वस्यापि केवलिन एकस्मिन् समये एकतर एवोपयोगो भवति न द्वौ, "सव्वस्स केवलिस्सा, जुगवं दो नत्थि उवओगा" इति वचनात्। यथा चायमेक एवैकसमये उपयोग उपपद्यते तथा विशेषावश्यकादिषु श्रीजिनभद्रक्षमाश्रमणादिभि पूर्वसूरिभिः सप्रपञ्चमुपदर्शित इति नेहोपदर्श्यते, ग्रन्थगौरवभयात्। द्वितीयपक्षानुपपत्तिनोदना त्वनभ्युपगतोपालम्भत्वादाकाशरोमन्तनमिव केवलं भवतः प्रयासकारिणीति ॥ अथ धर्माचार्यावर्णवादमाह-

[भा.१३०५] जच्चाईहि अवन्नं, भासइ वट्टइ न यावि उववाए।
अहितो छिद्दप्पेही, पगासवादी अननुकूलो ॥

वृ- जात्या आदिशब्दात् कुलादिभिश्च सद्भिरसद्भिर्वा दोषैरवर्णं भाषते, यथा-नैते विशुद्धजाति-कुलोत्पन्नाः, न वा लोकव्यवहारकुशलाः, नाप्येते औचित्यं विदन्तीत्यादि। न चापि वर्त्तते 'उपपाते' गुरूणां सेवावृत्तौ, 'अहितः' अनुचितविधायी, 'छिद्रप्रेक्षी' मत्सरितया गुरोर्दोषस्थाननिरीक्षणशीलः, 'प्रकाशवादी' सर्वसमं गुरुदोषभाषी, 'अननुकूलः' गुरूणामेव प्रत्यनीकः कूलवालकवत्, एष धर्माचार्यावर्णवादः ॥ अथ सर्वसाधूनामवर्णवादमाह-

[भा.१३०६] अविसहणाऽतुरियगई, अनानुवत्ती य अवि गुरूणं पि।
खणमित्तपीइ-रोसा, गिहिवच्छलकाऽइसंचइआ ॥

वृ- अहो! अमी साधवः 'अविषहणाः' न कस्यापि पराभवं सहन्ते, अपि तु स्वपक्ष-परपक्षापमाने सञ्जाते सति देशान्तरं गच्छन्ति, "तुरियगइ"त्ति अकारप्रश्लेषाद् 'अत्वरितगतयः' मायया लोकावर्जनाय मन्दगामिनः 'अननुवर्त्तिनः' प्रकृत्यैव निष्ठुराः 'गरूणामपि' महतामपि, आस्तां सामान्यलोकस्येत्यपिशब्दार्थः, द्वितीयोऽपिशब्दः सम्भावनायाम्, सम्भाव्यन्त एवंविधा अपि साधव इति, 'क्षणमात्रप्रीति-रोषाः' तदैव रुष्टास्तदैव च तुष्टा अनवस्थितचित्ता इत्यर्थः, 'गृहिवत्सलाः' तैस्तैश्चाटुवचनैरात्मानं गृहस्थस्य रोचयन्ति, 'अतिसञ्चयिनः' सुबहुवस्त्र-कम्बल्यादिसङ्ग्रहशीलाः लोभबहुला इति भावः। अत्र निर्वचनानि-इह साधवः स्वपक्षाद्यपमाने यद् देशान्तरं गच्छन्ति तद् अप्रीतिक-परोपतापादिभीरुतया न पराभवासहिष्णुतया, अत्वरितगतयोऽपि स्थावरत्रसजन्तुपीडापरिहारार्थं न तु लोकरञ्जनार्थम्, अननुवर्त्तिनोऽपि संयमबाधाविधायिन्या अनुवर्त्तनाया अकरणात् न प्रकृतिनिष्ठुरतया, क्षणमात्रप्रीति-रोषा अपि प्रतनुकषायतया नानवस्थितचित्ततया, गृहिवत्सला अपि 'कथं नु नामामी धर्मदेशनादिना यथाऽनुरूपोपायेन धर्मं प्रतिपद्येरन् ?' इति बुध्या न पुनश्चाटुकारितया, सञ्चयवन्तोऽपि 'मा भूद् उपकरणाभावे संयम-प्रवचना-ऽऽत्मविराधना' इति बुध्या न तु लोभबहुलतयेति ॥

अथ मायिद्वारमाह-

[भा.१३०७] गूहइ आयसभावं, घाएइ गुणे परस्स संते वि।
चोरो व्व सव्वसंकी, गूढायारो वितहभासी ॥

वृ- 'गूहति' संवृणोति 'आत्मस्वभावम्' आत्मनः सम्बन्धिनं दुष्टपरिणामं बहिर्बकवृत्या, तथा परस्य सम्बन्धिनः 'गुणान्' ज्ञानादीन् सतोऽप्यभिनिवेशादिना घातयति, चौर इव 'सर्वशङ्की' प्रच्छन्नपापकारितया 'अमुकोऽमुकश्च मत्समक्षमित्थं भणिष्यति' इति सर्वस्यापि शङ्कां करोति, गूढः-मायाग्रन्थिगुपिल आचारः-प्रवृत्तिर्यस्य स गूढाचारः, 'वितथभाषी' मृषाभाषणशीलः, एष मायी द्रष्टव्य इति ॥ उक्ता कैल्बिषी भावना । अथाभियोगीमाह-

[भा.१३०८] कोउअ भूई पसिणे, पसिणापसिणे निमित्तमाजीवी ।
इड्ढि-रस-सायगुरुतो, अभिओगं भावनं कुणइ ॥

वृ- ऋद्धि-रस-सातगुरुकः सन् यः कौतुकाजीवी भूतिकर्माजीवी प्रश्नाजीवी प्रश्नप्रश्नाजीवी निमित्ताजीवी च भवति स एवंविध आभियोगीं भावनां करोतीति ॥

कौतुकादिपदव्याख्यानार्थमाह-

[भा.१३०९] विण्हवण-होम-सिरपरिरयाइ खारदहणाइँ धूवे य ।
असरिसवेसग्गहणं, अवयासण-उत्थुभण-बंधा ॥

वृ- बालादीनां रक्षादिनिमित्तं स्त्रिया वा सौभाग्यादिसम्पादनाय विशेषेण स्नपनं तद् विस्नपनम्, होमः-शान्तिकादिहेतोरग्निहवनम्, सिरःपरिरयः-करभ्रमणाभिमन्त्रणम्, आदिशब्दः स्वगतानेकभेदसूचकः, 'क्षारदहनानि' तथाविधव्याधिशमनायाग्नौ लवणप्रक्षेपरूपाणि, ''धूवे अ''त्ति तथाविधद्रव्ययोगगर्भस्य धूपस्य सत्सर्पणम्, 'असदृशवेषग्रहणं' नाम स्वयमार्य सन्नार्यवेषं करोति पुरुषो वा स्वं रूपमन्तर्हित्य स्त्रीवेषं विदधातीत्यादि, ''अवयासणं'' वृक्षादीनामालिङ्गापनम्, अवस्तोभनम्-अनिष्टोपशान्तये निष्ठीवनेन थुथुकरणम्, बन्धः-कण्डकादिबन्धनम्, एतत् सर्वमपि कौतुकमुच्यते ॥ अथ भूतिकर्म व्याचष्टे-

[भा.१३१०] भूईए मट्टियाए व, सुत्तेण व होइ भूइकम्मं तु ।
वसही-सरीर-भंडगरक्खाअभियोगमाईया ॥

वृ- 'भूत्या' भस्मरूपया विद्याभिमन्त्रितया 'मृदा वा' ,आर्द्रपांशुलक्षणया 'सूत्रेण वा' तन्तुना यत् परिरयवेष्टनं तद् भूतिकर्मोच्यते । किमर्थमेवं करोति ? इत्याह-वसति-शरीर-भाण्डकानां या स्तेनाद्युपद्रवेभ्यो रक्षा तन्निमित्तमभियोगः-वशीकरणम्, आदिशब्दाद् ज्वरादिस्तम्भनपरिग्रहः॥

अथ प्रश्नमाह-

[भा.१३११] पण्हो उ होइ पसिणं, जं पासइ वा सयं तु तं पसिणं ।
अंगुट्ठुच्चिट्ठ-पडे, दप्पण-असि-तोय-कुड्डाई ॥

वृ- 'प्रश्नस्तु' देवतादिपृच्छारूपः पसिणं भण्यते; यद्वा यत् 'स्वयम्' आत्मना तुशब्दादन्येऽपि तत्रस्थाः पश्यन्ति तत् पसिणं प्राकृतशैल्याऽभिधीयते । किं तत् ? इत्याह-अङ्गुष्ठे ''उच्चिट्ठ'' त्ति कंसारादिभक्षणेनोच्छिष्टे पटे-प्रतीते दर्पणे-आदर्शे असौ-खड्गे तोये-उदके कुड्ये-भित्तौ आदिशब्दाद् बाह्वादौ वा यद् देवतादिकमवतीर्णं पृच्छति पश्यति वा स प्रश्नः । यदि वा ''कुड्डाइ''त्ति पाठः, तत्र च क्रुद्धः प्रशान्तो वा यत् तथाविधकल्पविशेषात् पश्यति स प्रश्न इति ॥ प्रश्नप्रश्नमाह-

[भा.१३१२] पसिणापसिणं सुमिणे, विज्जासिट्ठं कहेइ अन्नस्स ।
अहवा आइंखिणिया, घंटियसिट्ठं परिकहेइ ॥

वृ- यत् स्वप्नेऽवतीर्णया विद्यया-विद्याधिष्ठात्र्या देवतया शिष्टं-कथितं सद् 'अन्यस्मै' पृच्छकाय कथयति; अथवा "आइंखिणिया" डोम्बी तस्याः कुलदैवतं घण्टिकयक्षो नाम स पृष्टः सन् कर्णे कथयति, सा च तेन शिष्टं-कथितं सदन्यस्मै पृच्छकाय शुभा-ऽशुभादि यत् परिकथयति एष प्रश्नप्रश्नः ।। निमित्तमाह-

[भा.१३१३] तिविहं होइ निमित्तं,तीय-पडुप्पन्न-ऽनागयं चेव ।
तेन न विना उ नेयं, नज्जइ तेनं निमित्तं तु ।।

वृ- त्रिविधं भवति निमित्तम् । तद्यथा-अतीतं प्रत्युत्पन्नमनागतं च । कालत्रयवर्त्तिलाभाऽलाभादि-परिज्ञानहेतुश्चूडामणिप्रभृतिकः शास्त्रविशेष इत्यर्थः । कुतः ? इत्याह-'तेन' विवक्षितशास्त्रविशेषेण विना 'ज्ञेयं' लाभा-ऽलाभादिकं न ज्ञायत इति लाभा-ऽलाभादिज्ञाननिमित्तत्वाद् निमित्तमुच्यते। एता[illegible] कौतुकादी[illegible] [illegible] इति ।। अथ 'ऋद्धि-रस-सातगुरुकः' इतिपदव्याख्यानार्थमाह-

[भा.१३१४] एयाणि गारवट्ठा, कुणमाणो आभिओगियं बंधे ।
बीयं गारवरहिओ, कुव्वं आराहगुच्चं च ।।

'एतानि' कौतुकादीनि ऋद्धि-रससातगौरवार्थं 'कुर्वाणः' प्रयुञ्जानः सन् 'आभियोगिकं' देवादिप्रेष्यकर्मव्यापारफलं कर्म बध्नाति । 'द्वितीयम्' अपवादपदमत्र भवति-गौरवरहितः सन्नतिशयज्ञाने सति निस्पृहवृत्त्या प्रवचनप्रभावनार्थमेतानि कौतुकादीनि कुर्वन्नाराधको भवति उच्चैर्गोत्रं च कर्म बध्नाति, तीर्थोन्नतिकरणादिति ।। गता आभियोगिकी भावना । अथाऽऽसुरीमाह-

[भा.१३१५] अनुबद्धविग्गहो चिय, संसत्ततवो निमित्तमाएसी ।
निक्किव निरानुकंपो, आसुरियं भावनं कुणइ ।।

वृ- अनुबद्धविग्रहः संसक्ततपा निमित्तादेशी निष्कृपो निरनुकम्पः सन् आसुरीं भावनां करोतीति निर्युक्तिगाथासमासार्थः ।। विस्तरार्थमाह-

[भा.१३१६] निच्चं वुग्गहसीलो, काऊण य नाणुतप्पए पच्छा ।
न य खामिओ पसीयइ, सपक्ख-परपक्खओ आवि ।।

वृ- 'नित्यं' सततं 'विग्रहशीलः' कलहकरणस्वभावः । कृत्वा च कलहं नानुतप्यते पश्चात्, यथा-हा ! किं कृतं मया पापेन ? इति । तथा 'क्षामितोऽपि' 'क्षम्यता ममायमपराधः' इति भणितोऽपि स्वपक्ष-परपक्षयोरपि 'न च' नैव 'प्रसीदति' प्रसन्नतां भजते तीव्रकषायोदयत्वात् । अत्र च स्वपक्षः साधु-साध्वीवर्ग, परपक्षो गृहस्थवर्गः । एषोऽनुबद्धविग्रह उच्यते ।। अथ संसक्त-तपसमाह-

[भा.१३१७] आहार-उवहि-पूयासु जस्स भावो उ निच्चसंसत्तो ।
भावोवहतो कुणइ अ, तवोवहाणं तदट्ठाए ।।

वृ- आहारोपधि-पूजासु यस्य 'भावः' परिणामः 'नित्यसंसक्तः' सदाप्रतिबद्धः स एवं रसगौरवादिना भावेनोपहतः करोति 'तपउपधानम्' अनशनादिकं 'तदर्थम्' आहाराद्यर्थं यः संसक्ततपा इति ।। निमित्तादेशिनमाह-

[भा.१३१८] तिविह निमित्तं एक्केक्क छव्विहं जं तु वन्नियं पुव्विं

अभिमानाभिनिवेसा, वागरियं आसुरं कुणइ ॥

वृ- 'त्रिविधम्' अतीतादिकालत्रयविषयं यत् पूर्वमिहैवाभियोगिकभावनायां वर्णितं तद् एकैकं 'षड्विधं' लाभा-ऽलाभ-सुख-दुःख-जीवित-मरणविषयभेदात् षट्प्रकारम् । आह आभियोगिक-भवनानिबन्धनतया पूर्वमिदमुक्तम् अतः कथमिदमिहाभिधीयते ? इत्याह-'अभिमानाभिनिवेशाद्' अहङ्कारतीव्रतया 'व्याकृतं' प्रकटितमेतद् निमित्तमासुरीं भावनां करोति, अन्यथा त्वाभियोगिकी-मिति ॥ निष्कृपमाह-

[भा.१३१९] चंकमणाई सत्तो सुनिक्किवो थावराईसु ।
काउं च नाणुतप्पइ, एरिसओ निक्किवो होइ ॥

वृ- स्थावरादिसत्त्वेषु चङ्क्रमणं-गमनं आदिशब्दात् स्थान-शयना-ऽऽसनादिकं 'सक्तः' क्वचित् कार्यान्तरे व्यासक्तः सन् 'सुनिष्कृपः' सुष्ठुगतघृणो निशूकः करोतिति शेषः । कृत्वा च तेषु चङ्क्रमणादिकं नानुतप्यते, केनचिद् नोदितः सन् पश्चात्तपपुरस्सरं मिथ्यादुष्कृतं न ददातीत्यर्थः। ईदृशो निष्कृपो भवति, इदं निष्कृपस्य लक्षणमिति भावः ॥

निरनुकम्पमाह-

[भा.१३२०] जो उ परं कंपंतं, दट्ठूण न कंपए कढिनभावो ।
एसो उ निरनुकंपो, अणु पच्छाभावजोएणं ॥

वृ- यस्तु 'परं' कृपास्पदं कुतश्चिद् भयात् कम्पमानमपि दृष्ट्वा कठिनभावः सन् न कम्पते एष निरनुकम्पः । कुतः ? इत्याह-अनुशब्देन पश्चाद्भाववाचकेन यो योगः-समबन्धस्तेन, किमुक्तं भवति ?-अनु-पश्चाद् दुःखितसत्त्वकम्पनादनन्तरं यत् कम्पनं सा अनुकम्पा, निर्गता अनुकम्पा अस्मादिति निरनुकम्प उच्यते ॥ उक्ता आसुरी भावना । सम्प्रति साम्मोहीमाह-

[भा.१३२१] उम्मग्गदेसणा १ मग्गदूसणा २ मग्गविप्पडीवत्ती ३ ।
मोहेण य ४ मोहित्ता ५, सम्मोहं भावनं कुणइ ॥

वृ-उन्मार्गदेशना १ मार्गदूषणा २ मार्गविप्रतिपत्तिश्च ३ यस्य भवतीति वाक्यशेषः, मोहेन च यः स्वयं मुह्यति ४, एवं कृत्वा परं च मोहयित्वा ५ साम्मोहीं भावनां करोतीति निर्युक्तिगाथासमा-सार्थः ॥

अथैनामेव विवरीषुराह-

[भा.१३२२] नाणाइ अदूसिंतो, तव्विवरीयं तु उवदिसइ मग्गं ।
उम्मग्गदेसओ एस आय अहिओ परेसिं च ॥

वृ- 'ज्ञानादीनि' पारमार्थिकमार्गरूपाण्यदूषयन् 'तद्विपरीतं' ज्ञानादिविपरीतमेवोपदिशति 'मार्गं' धर्मसम्बन्धिनम्, एष उन्मार्गदेशकः । अयं चात्मनः परेषां च बोधिबीजोपघातादिना 'अहितः' प्रतिकूल इत्येषा उन्मार्गदेशना ॥ अथ मार्गदूषणामाह-

[भा.१३२३] नाणादि तिहा मग्गं, दूसयए जे य मग्गपडिवन्ना ।
अबुहो पंडियमाणी, समुट्ठितो तस्स घायाए ॥

वृ- ज्ञानादिकं 'त्रिधा' त्रिविधं पारमार्थिकं मार्गं स्वमनीषिकाकल्पितैर्जातिदूषणैर्दूषयति, ये च तस्मिन् मार्गप्रतिपन्नाः साध्वादयस्तानपि दूषयति, 'अबुधः' तत्त्वपरिज्ञानविकलः, 'पण्डितमानी'

दुर्विदग्धः, 'समुत्थितः' उद्यतः 'तस्य' पारमार्थिकमार्गस्य 'घाताय' निर्लोठनायेति, एषा मार्गदूषणा॥ मार्गविप्रतिपत्तिमाह-

[भा.१३२४] जो पुन तमेव मग्गं, दूसेउमपंडिओ सतक्काए।
उम्मग्गं पडिवज्जइ, अकोविअप्पा जमालीव ॥

वृ-यः पुनः 'तमेव' पारमार्थिकं मार्गमसद्भिर्दूषयित्वा 'अपण्डितः' [illegible] सन् 'स्वतर्कया' स्वकीयमिथ्याविकल्पेन देशत उन्मार्गं प्रतिपद्यते 'अकोविदात्मा' सम्यक् शास्त्रार्थपरिज्ञानविकलो जमालिवत्, यथाऽसौ भगवद्वचनं "क्रियमाणं कृतम्" इति दूषयित्वा "कृतमेव कृतम्" इति प्रतिपन्नवान्। एषा मार्गविप्रतिपत्तिः ॥ अथ मोहद्वारमाह-

[भा.१३२५] भावोवहयमईओ, मुज्झइ नाण-चरणंतराईसु।
इड्ढीओ अ बहुविहा, दट्ठुं परतित्थियाणं तु ॥

वृ-भावेन-शङ्कादिपरिणामेनोपहता-दूषिता मतिर्यस्य स भावोपहतमतिकः एवंविधः 'मुह्यति' वैचित्यमुपयाति ज्ञान-चरणान्तरादिषु। ज्ञानान्तराणि नाम ज्ञानविशेषाः, तद्विषयो व्यामोहो यथा-यदि नाम परमाण्वादिसकलरूपिद्रव्यावसानविषयग्राहकत्वेन सङ्ख्यातीतरूपाण्यवधिज्ञानानि सन्ति तत् किमपरेण मनःपर्यवज्ञानेन ? इति । चरणान्तरव्यामोहो यथा-यदि सामायिकं सर्वसावद्यविरतिरूपं छेदोपस्थापनीयमप्येवंविधमेव तत् क नामानयोर्विशेषः ? आदिशब्दाद् दर्शनान्तर-मतान्तर-वाचनान्तरादिपरिग्रहः । 'ऋद्धीश्च बहुविधाः' अनेकप्रकाराः समृद्धीः परतीर्थिकानां दृष्ट्वा यद् मुह्यति स मोह उच्यते ॥ अथ परं मोहयित्वेति व्याचष्टे-

भ. (१३२६] जो पुन मोहेइ परं, सब्भावेणं व कइअवेणं वा।
सम्मोहभावणं सो, पकरेइ अबोहिलाभाय ॥

वृ-पुनःशब्दो विशेषणे, यः पुः सन्मार्गात् 'परम्' अन्यं प्राणिन 'मोहयति' चित्तविभ्रमं नयति 'सद्भावेन वा' सत्येनैव 'कैतवेन वा' परिकल्पनया स सम्मोहभावनां प्रकरोति, 'अबोधिलाभाय' अबोधिफलादायिनीमित्यर्थः ॥ उक्ता साम्मोही भावन । अताऽऽसां भावनानां सामान्यतः फलमाह-

[भा.१३२७] एआओ भावनाओ, भावित्ता देवदुग्गइं जंति।
तत्तो वि चुया संता, परिंति भवसागरमनंतं ॥

वृ-एता भावनाः 'भावयित्वा' अभ्यस्य 'देवदुर्गतिं' कान्दर्पिकादिदेवगतिरूपां यान्ति संयता अपि। 'ततोऽपि' देवदुर्गतिश्च्युताः सन्तः पर्यटन्ति 'भसागरं' संसारसमुद्रमनन्तमिति ॥

उक्ता अप्रशस्ता भावनाः। सम्प्रति प्रशस्तभावना अभिधित्सुराह-

[भा.१३२८] तवेण सत्तेण सुत्तेण, एगत्तेण बलेण य।
तुलना पंचहा वुत्ता, जिनकप्पं पडिवज्जओ ॥

तपसा सत्त्वेन सूत्रेण एकत्वेन बलेन च एवं 'तुलना' भावना पञ्चधा प्रोक्ता जिनकल्पं प्रतिपद्यमानस्येति निर्युक्तिगाथासमासार्थः ॥ अथ विस्तरार्थमभिधित्सुराह-

[भा.१३२९] जो जे अणब्भत्थो, पोरिसिमाई तवो उ तं तिगुणं।
कुणइ छुहाविजयट्ठा, गिरिनइसीहेण दिट्ठंतो ॥

वृ- यद् येन पौरुष्यादिकं तपः 'अनभ्यस्तं' सात्मीभावमनानीतं सत् 'त्रिगुणं' त्रीन् वारान् करोति । यथा-प्रथमं पौरुषीं वारत्रयासेवनेन सात्मीभावमानीय ततः पूर्वार्द्ध तथैवासेव्य सात्मीभावमानयति; एवं निर्विकृतिकादिष्वपि द्रष्टव्यम् । किमर्थम् ? इत्याह-क्षुद्विजयार्थम्, यथा क्षुत्परीषहसहने सात्म्यं भवतीत्यर्थः । अत्र च गिरिनदीसिंहेन दृष्टान्तः-यथाऽसौ पूर्णां गिरिनदीं तरन् परतटे चिह्नं करोति, यथा-अमुकप्रदेशे वृक्षाद्युपलक्षिते मया गन्तव्यमिति, स च तरन् तीक्ष्णेनोदकवेगेनापह्रियते ततो व्यावृत्य भूयः प्रगुणमेवोत्तरति, यदि ह्रियते ततो भूयस्तथैवोत्तरति, एवं यावत् सकलामपि गिरिनदीं प्रगुणमेवोत्तरीतुं न शक्नोति तावत् तदुत्तरणाभ्यासं न मुञ्चति। एवमयमपि यावद् विवक्षितं तपः सात्मीभावं न याति तावत् तदभ्यासं न मुञ्चति ।। एतदेवाह-

[भा.१३३०] एक्केक्कं ताव तवं, करेइ जह तेन कीरमाणेणं ।
हानी न होइ जइआ, वि होज्ज छम्मासुवस्सग्गो ।।

वृ- एकैकं तपस्तावत् करोति यथा 'तेन' तपसा क्रियमाणेनापि विहितानुष्ठानस्य हानिर्न भवति । यदाऽपि कथञ्चिद् भवेत् षण्मासान् यावद् 'उपसर्गः' देवादिकृतोऽनेषणीय-करणादिरूपस्तदाऽपि षण्मासान् यावदुषित आस्ते न पुनरनेषणीयमाहारं गृह्णाति ।। तपस एव गुणान्तरमाह-

[भा.१३३१] अप्पाहारस्स न इंदियाइँ विसएसु संपवत्तंति ।
नेव किलम्मइ तवसा, रसिएसु न सज्जए यावि ।।

वृ- तपसा क्रियमाणेनाल्पाहारस्य सतो नेन्द्रियाणि 'विषयेषु' स्पर्शादिषु सम्प्रवर्त्तन्ते, न च 'क्लाम्यति' बाधामनुभवति तपसा, नैव च 'रसिकेषु' स्निग्ध-मधरेष्वशनादिषु 'सजति' सङ्गंकरोति, तेषु परिभोगाभावेनादराभावात् ।। अपि च-

[भा.१३३२] तवभावणाइ पंचिंदियाणि दंताणि जस्स वसमिंति ।
इंदियजोग्गा(गा)यरिओ, समाहिकरणाइँ कारयए ।।

वृ-तपोभावनया हेतुभूतया 'पञ्च' इति पञ्चसङ्ख्याकानीन्द्रियाणि दान्तानि सन्ति यस्य 'वशम्' आयत्ततामागच्छन्ति सः 'इन्द्रिययोग्या(गा)चार्य' इन्द्रियप्रगुणनक्रियागुरु 'समाधिकरणानि' समाधिव्यापारान् कारयति इन्द्रियाणि, यथा यथा ज्ञानादिषु समाधिरुत्पद्यते तथा तथा तानि कारयतीत्यर्थः ।। उक्ता तपोभावना । अथ सत्त्वभावनामाह-

[भा.१३३३]जे वि य पुव्विं निसि निग्गमेसु विसहिंसु विसहिंसु साहस-भयाइं ।
अहि-तक्कर-गोवाई, विसिंसु घोरे य संगामे ।।

वृ- येऽपि च राजप्रव्रजितादयः पूर्वं गृहवासे 'निशि' रात्रौ वीरचर्यादिना निर्गमेषु साध्वसम्-अहतुकभयरूपं भयं-सहेतुकं ते अहि-तस्कर-गोपादिसम्बन्धिनी 'व्यषहन्' विषोढवन्तः, घोरे च सङ्ग्रामे सात्त्विकतया ''विसिंसु' 'त्ति प्राविशन् तेऽपि जिनकल्पं प्रतिपित्सवः सत्त्वभावनामवश्यं भावयन्ति ।। कथम् ? इति चेद् उच्यते-

[भा.१३३४] पासुत्ताण तुयट्टं, सोयव्वं जं च तीसु जामेसु ।
थोवं थोवं जिणइ उ, भयं च जं संभवइ जत्थ ।।

वृ- यत् स्थविरकल्पिकानां पार्श्वत उत्तानकं वा तुवग्वर्तनम्, यच्च कारणे त्रिषु 'यामेषु'

प्रहरेषु 'सुसव्वं' शयनम्, कारणाभावे तु यत् तृतीयप्रहरे सुसव्वं तत् सर्वमपि स्तोकं स्तोकं जयति शनैः शनैरित्यर्थः, 'भयं च' मूषिकादिजनितं यद् 'यत्र' उपाश्रयादिषु सम्भवति तत् तत्र जयति ॥ अत्र च सत्त्वभावनायां पञ्च प्रतिमा भवन्ति । ता एवाह-

[भा.१३३५] पढमा उवस्सयम्मी, बिइया बाहिं तइया चउक्कम्मि ।
सुन्नघरम्मि चउत्थी, तह पंचमिया सुसाणम्मि ॥

वृ- प्रथमा प्रतिमा उपाश्रये १ द्वितीया उपाश्रयाद् बहिः २ तृतीया 'चतुष्के' चत्वरे ३ चतुर्थी शून्यगृहे ४ पञ्चमी श्मशाने ५ ॥ तत्र प्रथमां तावदाह-

[भा.१३३६] भोगजढे गंभीरे, उव्वरए कोट्ठए अलिंद वा ।
तनुसाइ जागरो वा, झाणट्ठाए भयं जिणइ ॥

वृ- "भोगजढे" अपरिभोग्ये 'गम्भीरे' सान्धकारे उपाश्रयसत्केऽपवरके वा कोष्ठके वा अलिन्दके वा 'तनुशायी' स्तोकनिद्रावान् 'जाग्रद् वा' निद्रामकुर्वन् 'ध्यानार्थं' शुभाध्यवसायस्थैर्यहितोः प्रसुप्तेषु शेषसाधुषु कायोत्सर्गस्थितो भयं जयति ॥ कथम् ? इत्याह-

[भा.१३३७] छिक्कस्स व खइयस्स व, मूसिगमाईहिं वा निसिचरेहिं ।
जइ सहसा न वि जायइ, रोमंचुब्भेय चाडो वा ॥

वृ- स्पृष्टस्य वा खादितस्य वा मूषकैः आदिग्रहणाद् मार्जारादिभिः 'निशाचरैः' रात्रिपरिभ्रमणशीलैः यथा सहसा नापि जायते 'रोमाञ्चोद्भेदः' भयोद्रेकजनितो रोमोद्धर्ष 'चाडो' वा पलायनं तथा सत्त्वभावनयाऽऽत्मा भावयितव्यः ॥

उक्ता प्रथमा प्रतिमा । अथ द्वितीयादिकाश्चतोऽप्यतिदिशन्नाह-

[भा.१३३८] सविसेसतरा बाहिं, तक्कर-आरक्खि-सावयाईया ।
सुन्नघर-सुसाणेसु य, सविसेसतरा भवे तिविहा ॥

वृ- यान्युपाश्रयप्रतिमायां भयान्युक्तानि तान्युपाश्रयाद् बहिः प्रतिमायां सविशेषतराणि तस्कराऽऽरक्षिक-श्वापदादिभयसहितानि मन्तव्यानि । शून्यगृह-श्मशानयोः चशब्दात् चतुष्के च सविशेषतराणि 'त्रिविधानि' दिव्य-मानुष्य-तैरश्चोपसर्गरूपाणि भयानि भवन्ति, तान्यपि सम्यग् जयतीति प्रक्रमः ॥ अस्या एव भावनायाः फलमाह-

[भा.१३३९] देवेहि भेसिओ वि य, दिया व रातो व भीमरूवेहिं ।
तो सत्तभावना, वहइ भरं निब्भओ सयलं ॥

वृ- तत एवं सत्त्वभावनया स्वभ्यस्तया दिवा वा रात्रौ वा भीमरूपैर्देवैर्भेषितोऽपि 'भरं' जिनकल्पभारं सकलमपि निर्भयः सन् वहतीति ॥ गता सत्त्वभावना । अथ सूत्रभावनामाह-

[भा.१३४०]जइ वि य सनाममिव परिचियं सुअं अणहिय-अहीणवन्नाई ।
कालपरिमाणहेउं, तहा वि खलु तज्जयं कुणइ ॥

वृ- यद्यपि स्वनामेव तस्य श्रुतं परिचितम् 'अनधिका-ऽहीनवर्णादि' अनत्यक्षरं अहीनाक्षरम् आदिशब्दाद् अव्याविद्धाक्षरादिगुणोपेतं च तथापि कालपरिमाणहेतोः 'तज्जयं' श्रुताभ्यासं करोति॥ कथम् ? इति चेद् उच्यते-

[भा.१३४१] उस्सासाओ पाणू, तओ य थोवो तओ वि य मुहुत्तो ।

मुहुत्तेहि पोरिसीओ, जाणेइ निसा य दिवसा य ॥

वृ- श्रुतपरावर्त्तनानुसारेणैव सम्यगुच्छ्वासमानं कलयति, तत उच्छ्वासात् 'प्राणः' उच्छ्वासनिश्वासात्मकः, ततश्च प्राणात् 'स्तोकः' सप्तप्राणमानः, ततोऽपि च स्तोकाद् 'मुहूर्त्तः' घटिकाद्वयमानः, मुहूर्त्तैश्च पौरुष्यस्तेन भगवता ज्ञायन्ते, ताभिश्च पौरुषीभिर्निशाश्च दिवसांश्च जानाति ॥ तथा-

[भा.१३४२] मेहाईछन्नेसुवि, उभओकालमहवा उवसग्गे ।
पेहाइ भिक्ख पंथे, नाहिइ कालं विना छायं ॥

वृ- मेघादिना च्छन्नेष्वपि-अनुपलक्ष्येषु विभागेषु 'उभयकालं' क्रियाणां प्रारम्भ-परिसमाप्तिरूपम्, अथवा 'उपसर्गे' दिव्यादौ दिवस-रजन्यादिव्यत्ययकरणलक्षणे प्रेक्षादेः-उपकरणप्रत्युपेक्षाया आदिशब्दादावश्यकरणादेः "भिक्ख" त्ति भिक्षायाः "पंथि" त्ति मार्गस्य विहारस्येत्यर्थः, एतेषां सर्वेषामपि यः कालस्तं छायां विना स्वयमेव ज्ञास्यति ॥ अथ सूत्रभावनाया एव गुणानाह-

[भा.१३४३] एगग्गया सुमह निज्जरा य नेव भिननम्मि पलिमंथो ।
न पराहीणं नाणं, काले जह मंसचक्खूणं ॥

वृ- श्रुतपरावर्त्तनया चित्तस्यैकाग्रता भवति, सुमहती च निर्जरा भवति स्वाध्यायविधानप्रत्यया, नैवच्छायामापने 'पलिमन्थः' सूत्रार्थव्याघातलक्षणः, न च 'काले' पौरुष्यादिकालविषयं 'पराधीनं' सूर्यच्छायायत्तं ज्ञानम् यथा अन्येषां 'मांसचक्षुषां' छद्मस्थानां साधूनाम् ॥ उपसंहरन्नाह-

[भा.१३४४] सुयभावनाए नाणं, दंसण तवसंजमं च परिणमइ ।
तो उवओगपरिन्नो, सुयमव्वहितो समाणेइ ॥

वृ- श्रुतभावनया आत्मानं भावयन् ज्ञानं दर्शनं तपःप्रधानं च संयमं सम्यक् परिणमयति । ततः 'उपयोगपरिज्ञः' श्रुतोपयोगमात्रेणैव कालपरिज्ञाता "सुतं" ति श्रुतभावनामव्यथितः सन् समापयतीति ॥ गता सूत्रभावना । अथैकत्वभावनामाह-

[भा.१३४५] जइ वि य पुव्वममत्तं, छिन्नं साहूहि दारमाईसु ।
आयरियाइममत्तं, तहा वि संजायए पच्छा ॥

वृ- यद्यपि च पूर्वं-गृहवासकालभावि ममत्वं साधुभि दाराः-कलत्रं तेषु आदिग्रहणात् पुत्रादिषु च्छिन्नमेव तथाप्याचार्यादिविषयं ममत्वं 'पश्चात्' प्रव्रज्यापर्यायकाले सञ्जायते ॥

तच्च कथं परिहापयितव्यम् ? उच्यते-

[भा.१३४६] दिट्ठिनिवायाऽऽलावे, अवरोप्परकारियं सपडिपुच्छं ॥
परिहास मिहो य कहा, पुव्वपवत्ता परिहवेइ ॥

वृ- गुर्वादिषु ये पूर्वं दृष्टिनिपाताः-सन्निग्धावलोकनानि ये च तैः सहाऽऽलापास्तान्, तथा 'परस्परोपकारितां' मिथो भक्त-पानदान-ग्रहणाद्युपकारम्, 'सप्रतिपृच्छं' सूत्रार्थादिप्रतिपृच्छया सहितं 'परिहासं' हास्यं 'मिथः कथाश्च' परस्परवार्त्ताः पूर्वप्रवृत्ताः सर्वा अपि परिहापयति ॥ ततश्च-

[भा.१३४७] तनुईकयम्मि पुव्वं, बाहिरपेम्मे सहायमाईसु ।
आहारे उवहिम्मि य, देहे य न सज्जए पच्छा ॥

वृ-सायः-सङ्घाटिकसाधुस्तद्विषये आदिशब्दादाचार्यादिविषये च बाह्यप्रेमणि पूर्वं 'तनुकीकृते' परिहापिते सति ततः पश्चादाहारे उपधौ देहे च 'न सजति' न ममत्वं करोति ॥

ततः किं भवति ? इत्याह-

[भा.१३४८] पुव्विं छिन्नममत्तो, उत्तरकालं वविज्जमाणे वि ।
साभाविय इअरे वा, खुब्भइ दट्ठुं न संगइए ॥

वृ-पूर्वं 'छिन्नममत्वः' 'सर्वेऽप जीवा असकृद् अनन्तशो वा सर्वजन्तूनां स्वजनभावेन शत्रुभावेन च सञ्जाताः, अतः कोऽत्र स्वजनः ? को वा परः ?' इतिभावनया त्रुटितप्रेमबन्धः सन् 'उत्तरकालं' जिनकल्पप्रतिपत्त्यनन्तरं व्यापाद्यमानानपि 'सङ्गतिकान्' स्वजनान् स्वाभाविकान् 'इतरान् वा' वैक्रियशक्त्या देवादिनिर्मितान् दृष्ट्वा 'न क्षुभ्यति' ध्यानान्न चलति ॥ अत्र दृष्टान्तमाह-

[भा.१३४९] पुप्फपुर पुप्फकेऊ, पुप्फवई देवि जुयलयं पसवे ।
पुत्तं च पुप्फचूलं, धूअं च सनामिअं तस्स ॥

[भा.१३५०] सहवड्ढियाऽनुरागो, रायत्तं चेव पुप्फचूलस्स ।
घरजामाउगदाणं, मिलइ निसि केवलं तेन ॥

[भा.१३५१] पव्वज्जा य नरिंदे, अनुपव्वयणं च भावनेगत्ते ।
वीमंसा उवसग्गे, विडेहि समुहिं च कंदनया ॥

वृ-पुप्फपुरं नयरं । तत्थ पुप्फकेऊ राया, पुप्फवई देवी । सा अन्नया जुगलयं पसूया- पुप्फचूलो दारओ पुप्फचूला दारिया । तानि दो वि सहवड्ढियाणि परोप्परं अईव अनुरत्ताणि । अन्नया पुप्फचूलो राया जाओ । पुप्फचूला राइणा घर जामाउगस्स दिन्ना । सा य दिवसं सव्वं भाउणा समं अच्छइ । अन्नया पुप्फचूलो राया पव्वइओ । अणुरागेणं पुप्फचूला वि भगिनी पव्विया । सो य पुप्फचूलो अन्नया जिनकप्पं पडिवज्जिउकामो एगत्तभावमाए अप्पाणं भावेइ । इओ य एगेणं देवेणं वीमंसणानिमित्तं पुप्फचूलाए अज्जाए रूवं विउव्विऊणंतं धुत्ता धरिसिउं पवत्ता । पुप्फचूलो य अनगारो तेनं ओगासेणं वोलेइ । ताहे सा पुप्फचूला अज्जा 'जेट्ठज्ज ! सरणं भवाहि' त्ति वाहरइ । सो य भगवं वुच्छिन्नपेमबंधणो "एगो हं नत्थि मे को वि, नाहमन्नस्स कस्सइ ।" इच्चाइ एगत्तभावनं भाविंतो गओ सट्ठाणं । एवं एगत्तभावनाए अप्पा भावेयव्वो त्ति ॥

गाथाक्षरयोजना त्वेवम्-पुष्पपुरे पुष्पकेतू राजा । पुष्पवती देवी युगलं प्रसूते । वर्त्तमान-निर्देशस्तत्कालविवक्षया । पुत्रं च पुष्पचूलं दुहितां च तस्य 'सनामिकां' समानाभिधानाम् । तयोश्च सहवर्द्धितयोरनुरागः । राजत्वं चैव पुष्पचूलस्य । पुष्पचूलायाश्च गृहजामात्रे दानम् । सा च 'तेन' भत्री समं केवलं 'निशि' रात्रौ मिलति ॥ प्रव्रज्या च 'नरेन्द्रे' पुष्पचूलाख्ये । तदनुप्रव्रजनं च पुष्पचूलायाः । ततो जिनकल्पं प्रतिपित्सुरेकत्वभावनां भावयितुं लग्नः । 'विमर्श' परीक्षा । तदर्थं देवेनोपसर्गे क्रियमाणे विटैः सम्मुखीं पुष्पचूलां कृत्वा घर्षणं कर्त्तुमारब्धम् । ततः 'क्रन्दना' आर्य ! शरमं शरणमिति ॥अथोपसंहारमाह-

[भा.१३५२] एगत्तभावनाए, न कामभोगे गणे सरीरे वा ।
सज्जइ वेरग्गगओ, फासेइ अनुत्तरं करणं ॥

**वृ-** एकत्वभावनया भाव्यमानया 'कामभोगेषु' शब्दादिषु 'गणे' गच्छे शरीरे वा 'न सजति' न सङ्गं करोति, किन्तु वैराग्यगतः सन् 'स्पृशति' आराधयति 'अनुत्तरं कार्यं' प्रशस्तयोगसाधनं जिनकल्पपरिकर्मेति ॥ गता एकत्वभावना । अथ बलभावना । तत्र बलं द्विधा-शारीरबलं भावबलं च । तत्र भावबलमाह-

**[भा.१३५३]** भावो उ अभिस्संगो, सो उ पसत्थो व अप्पसत्थो वा ।
नेह-गुणओ उ रागो, अपसत्थ पसत्थओ चेव ॥

**वृ-** भावो नाम अभिष्वङ्गः । 'स तु' स पुनरभिष्वङ्गो द्विधा-प्रशस्तोऽप्रशस्तश्च । तत्रापत्य-कलत्रादिषु स्नेहजनितो यो रागः सोऽप्रशस्तः, यः पुनराचार्योपाध्यायादिषु गुणबहुमानप्रत्ययो रागः स प्रशस्तः । तस्य द्विविधस्यापि भावस्य येन मानसावष्टम्भेनासौ व्युत्सर्गं करोति तद् भावबलं मन्तव्यम् । शारीरमपि बलं शेषजनापेक्षया जिनकल्पार्हस्यातिशायिकमिष्यते ॥

आह तपो-ज्ञानप्रभृतिभिर्भावनाभिर्भावयतः कृशतरं शरीरं भवति ततः कुतोऽस्य शारीरबलं भवति ? इति, उच्यते-

**[भा.१३५४]** कामं तु सरीरबलं, हायइ तव-नाणभावनजुअस्स ।
देहावचए वि सती, जह होइ धिई तहा जयइ ॥

**वृ-** 'कामम्' अनुमतं 'तुः' अवधारणे अनुमतमेवास्माकं यत् तपो-ज्ञानभानायुक्तस्य शरीरबलं हीयते, परं देहापचयेऽपि सति यथा 'धृतिः' मानसावष्टम्भलक्षणा निश्चला भवति तथाऽसौ यतते, धृतिबलेन सम्यगात्मानं भावयतीत्यर्थः ॥ आह इत्थं धृतिबलेन भावयतः को नाम गुणः स्यात् ? उच्यते-

**[भा.१३५५]** कसिणा परीसहचमू, जइ उट्ठिज्जाहि सोवसग्गा वि ।
दुद्धरपहकरवेगा, भयजणणी अप्पसत्ताणं ॥

**वृ-** 'कृत्स्ना' सम्पूर्णा 'परीषहचमूः' मार्गाच्यवन-निर्जरार्थं परिषोढव्याः परीषहाः-क्षुधादयस्त एव तेषां वा चमूः-सेना सा यदि 'उत्तिष्ठेत' सम्मुखीभूय परिभवनाय प्रगुणीभवेत् 'सोपसर्गाऽपि' दिव्याद्युपसर्गैकृतसहायकाऽपि, तथा "दुद्धरपहकरवेग" त्ति दुर्द्धरं-दुर्वहं पन्थानं-सम्यग्दर्शनादिरूपं मोक्षमार्गं करोतीति दुर्द्धरपथकरस्तथाविधो वेगः-प्रसरो यस्याः सा दुर्द्धरपथकरवेगा, 'भयजननी' संत्रासकरी 'अल्पसत्त्वानां' कापुरुषाणाम् ॥

**[भा.१३५६]** धिइधणियबद्धकच्छो, जोहेइ अनाउलो तमव्वहिओ ।
बलभावणाए धीरो, संपुन्नमणोरहो होइ ॥

**वृ-** तामेवंविधामपि स जिनकल्पं प्रतिपत्तुकामो योधयति । कथम्भूतः ? धृतिरेव धणियम्-अत्यर्थं बद्धा कक्षा येन स तथा 'अनुकुलः' औत्सुक्यरहितः 'अव्यथितः' निष्प्रकम्पमनाः स बलभावनया तां योधयित्वा 'धीरः' सत्त्वसम्पन्नः सन् सम्पूर्णमनोरथो भवति, परीषहोपसर्गान् पराजित्य स्वप्रतिज्ञां पूरयतीत्यर्थः ॥ अपि च-

**[भा.१३५७]** धिइ-बलपुरस्सराओ, हवंति सव्वा वि भावना एता ।
तं तु न विज्जइ सज्झं, जं धिइमंतो न साहेइ ॥

**वृ-** सर्वा अप्येतास्तपःप्रभृतयो भावना धृति-बलपुरस्सरा भवन्ति, नहि धृति-बलमन्तरेण

षाण्मासिकतपःकरणाद्यनुगुणास्ताः तथा भावयितुं शक्यन्ते। किञ्च 'तत् तु' तत् पुनः 'साध्यं' कार्यं जगति न विद्यते यद् 'धृतिमान् सात्त्विकः पुरुषो न साधयति ''सर्वं सत्त्वे प्रतिष्ठितम्'' इति वचनात्। एतेन ''अव्वोच्छित्ती मण'' इत्यादिद्वारगाथायाः ''उवसग्गसहे'' इति यत् पदं तद् भावितं मन्तव्यम्, बलभावनया उपसर्गसहत्वभावादिति॥ गता बलभावना। अथ ''उवसग्गसहे य''त्ति इत्यत्र यः चशब्दः सोऽनुक्तसमुच्चये वर्त्तते, अतस्तदर्थलब्धं विधिशेषमाह-

[भा.१३५८] जिनकप्पियपडिरूवी, गच्छे वसमाण दुविह परिकम्मं।
तत्तियं भिक्खायरिया, पंतं लूहं अभिग्गहीया॥

वृ-एवमसौ पञ्चभिर्भावनाभिर्भावितान्तरात्मा जिनकल्पिकस्य प्रतिरूपी-तदनुरूपो भूत्वा गच्छ एव वसन् द्विविधं परिकर्म वक्ष्यमाणनीत्या करोति। तथा तृतीयस्यां पौरुष्यां भिक्षाचर्या, तत्रापि प्रान्तं रूक्षमाहारं गृह्णाति, एषणा च 'अभिगृहीता' अभिग्रहयुक्ता॥ तथा-

[भा.१३५९] परिणाम-जोगसोही, उवहिविवेगो य गणविवेगो य।
सिज्ञा-संथारविसोहणं च विगईविवेगो य॥

वृ- परिणामस्य गुर्वादिममत्वविच्छेदेन योगानां चावश्यकव्यापाराणां यथाकालमेव करणेन शुद्धि तथा प्राक्तनस्योपधेर्विवेको गणविवेकश्च शय्या-संस्तारकस्य विशोधनं च विकृतिविवेकश्च तदा तेन कर्त्तव्यः॥

[भा.१३६०] तो पच्छिमम्मि काले, सप्पुरिसनिसेवियं परमघोरं।
पच्छा निच्छयपत्थं, उवेइ जिनकप्पियविहारं॥

वृ- ततः 'पश्चिमे काले' तीर्थाव्यवच्छित्तिकरणानन्तरं 'सत्पुरुनिषेवितं' धीरपुरुषाराधितं 'परमघोरं' अत्यन्तदुरनुचरं 'पश्चाद्' आयतौ 'निश्चयपथ्यम्' एकान्तहितं जिनकल्पिकविहारमुपैति॥ अथ द्विविधं परिकर्म व्याख्यानयति-

[भा.१३६१] पाणी पडिग्गहेण व, सचेल निचेलओ जहा भविया।
सो तेन पगारेणं, भावेइ अनागयं चेव॥

वृ- द्विविधं परिकर्म, तद्यथा-पाणिपरिकर्म प्रतिग्रहपरिकर्म च; अथवा सचेलपरिकर्म अचेलपरिकर्म च। तत्र यो यथा पाणिपात्रधारकः प्रतिग्रहधारको वा सचेलको अचेलको वा भविता स तेनैव प्रकारेण पाणिपात्रभोजित्वादिना अनागतमेवाऽऽत्मानं भावयति॥

प्रकारान्तरमाह-

[भा.१३६२] आहारे उवहिम्मि य, अहवा दुविहं तु होइ परिकम्मं।
पंचसु अ दोसु अग्गह, अभिग्गहो अन्नयरियाए॥

वृ- अथवा द्विविधं परिकर्म आहारे उपधौ च। तत्राहारं तावदसौ तृतीयपौरुष्यामवगाढायां गृह्णाति, तं चालेपकृतमेव। तत्राप्यसंसृष्टादीनां सप्तानां पिण्डैषणानां मध्याद् 'द्वयोः' आद्ययोरेषणयोः 'अग्रहः' सर्वथैवास्वीकारः, उपरितनीषु 'पञ्चसु' उद्धृता-ऽल्पलेपा-ऽवगृहीता-प्रगृहीतोज्झितधर्मिकासु ग्रहणम्। तत्राप्यभिग्रहोऽन्यतरस्यामेषणायाम्, एकया भक्तमपरया पानकमिति नियन्त्र्य शेषाभिस्तिसृभिस्तिसृभिस्तद्दिवसमग्रहणमित्यर्थः। उपधौ तु वस्त्र-पात्रयोः प्रतिमाचतुष्टयं यत् पीठिकायामुक्तं तत्राद्यद्वयवर्जमुत्तरयोरेव ग्रहणम्। तत्राप्यपरस्यामभिग्रहः॥

अथ "पंतं लूहं"ति व्याचष्टे-

[भा.१३६३] निष्फाव-चणकमाई, अंतं पंतं तु होइ वावन्नं ।
नेहरहियं तु लूहं, जं वा अवलं सभावेणं ॥

वृ-निष्पावाः-वल्लाश्चणकाःप्रतीता आदिशब्दात् कुल्माषादिकं च आन्तमित्युच्यते। प्रान्तं पुनस्तदेव 'व्यापन्नं' विनष्टं कुथितमित्यर्थः । यत् पुनः स्नेहरहितं तद् रूक्षम्, यद्वा स्वभावेन 'अवलं' रब्बादिकं तदपि रूक्षं मन्तव्यम् ॥ अत्रैव विधिविशेषमाह-

[भा.१३६४] उक्कुडयासनसमुइं, करेइ पुढवीसिलाइसुववेसे ।
पडिवन्नो पुन नियमा, उक्कुडुओ केइ उ भयंति ॥

[भा.१३६५] तं तु न जुज्जइ जम्हा, अनंतरो नत्ति बूमिपरिभोगो ।
तम्मि य हु तस्स काले, ओवग्गहितोवही नत्थि ॥

वृ- उत्कुटुकासनस्य "समुइं" ति देशीवचनत्वाद् अभ्यासं करोति, 'पृथिवीशिलादिषु वा' पृथ्वीशिलापट्टके आदिशब्दाद् अपरेष्वपि तथाविधयथासंस्तृतेषु उपविशेद्वा । जिनकल्प प्रतिपन्नः पुनर्नियमादुत्कुटुक एव । केचिद् 'भजन्ति' विकल्पं कुर्वन्ति-उत्कुटको वा तिष्ठेदुपविशेद्वा, तत्तु न युज्यते, यस्माद् 'अनन्तरः' अव्यवहितो नास्ति साधूनां तावद् भूमिपरिभोगः, "सुद्धपुढवीए न निसिए" ति वचनात्; तस्मिंश्च जिनकल्पकाले औपग्रहिकोपधिर्नास्ति, तदभावाच्च निषद्याऽपि नास्तीति गम्यते, ततश्चार्थादापन्नं उत्कुटक एव तिष्ठति ॥

उक्तश्चशब्दसूचितो विधिशेषः । अथ वटवृक्षद्वारमाह-

[भा.१३६६] दव्वाई अनुकूले, संघं असती गणं समाहूय ।
जिन गणहरे य चउदस, अभिन्न असती य वडमाई ॥

वृ-इत्थमात्मानं परिकर्म्य द्रव्ये आदिशब्दात् क्षेत्रे काले भावे च 'अनुकूले' प्रशस्ते सङ्घं मीलयित्वा सङ्घस्य 'असति' अभावे गणं स्वकीयमवश्यमेव समाहूय ततः प्रथमं जिनः-तीर्थकरस्तस्यान्तिके तदभावे गणधरसन्निधाने तदलाभे चतुर्दशपूर्वधरान्तिके तदसम्भवेऽभिन्नदशपूर्वधरपार्श्वे तस्याप्यसति वटवृक्षस्याध आदिग्रहणात् तदप्राप्तावशोका-ऽश्वत्थवृक्षादीनामधस्ताद् जिनकल्पं प्रतिपद्यते ॥ केन विधिना ? इत्याह-

[भा.१३६७] गणि गणहरं ठवित्ता, खामे अगनी उ केवलं खामे ।
सव्वं च बाल-वुड्ढं, पुव्वविरुद्धे विसेसेणं ॥

वृ- 'गणी' गच्छाधिपाचार्य स पूर्वमित्वरानिक्षिप्तगणं स्वशिष्यं गणधरं स्थापयित्वा श्रमणसङ्घं क्षमयति । "अगनि" त्ति यस्तु गणी न भवति किन्तु सामान्यसाधुः स केवलं क्षमयति न तु कमपि स्थापयति । किं पुनः क्षमयति ? इत्याह-'सर्वं' सकलमपि सङ्घं चशब्दात् तदभावे स्वगच्छं बाल वृद्धाकुलम् । ये च 'पूर्वविरुद्धाः' प्राग्विराधितास्तान् विशेषेण क्षमयति ॥ कथं पुनः ? इत्याह-

[भा.१३६८] जइ किंचि पमाएणं, न सुट्ठु भे वट्टियं मए पुव्विं ।
तं भे खामेमि अहं, निस्सल्लो निक्कसाओ अ ॥

वृ- यदि किञ्चत् 'प्रमादेन' अनाभोगादिना न सुष्ठु 'भे' भवतां मया वर्त्तितं पूर्वं तद् "भे" युष्मान् क्षमयाम्यहं निशल्यो निष्कषायश्च ॥ इत्थं तेन क्षमिते सति शेषसाधवः किं कुर्वन्ति ?

इत्याह-

[भा.१३६९] आनंदअंसुपायं, कुणमाणा ते वि भूमिगयसीसा ।
खामिंति जहरिहं खलु, जहारिं खामिता तेनं ॥

वृ- 'तेऽपि' साधव आनन्दाश्रुपातं कुर्वाणाः 'भूमिगतशीर्षा' क्षितिनिहितशिरसः सन्तः क्षमयन्ति 'यथार्हं' यो यो रत्नाधिकः स स प्रथममित्यर्थः. तेनाचार्येण 'यथार्हं' यथापर्यायज्येष्ठं क्षामिताः सन्त इति ॥ अथेत्थं क्षामणायां के गुणाः ? इत्याह-

[भा.१३७०] खामिंतस्स गुणा खलु, निस्सल्लय विनय दीवणा मग्गे ।
लाघवियं एगत्तं, अप्पडिबंधो अ जिनकप्पे ॥

वृ- जिनकल्पे प्रतिपद्यमाने साधून् क्षमयतः खल्वेते गुणाः । तद्यथा-'निशल्यता' मायादिशल्याभावो भवति । विनयश्च प्रयुक्तो भवति । मार्गस्य दीपना कृता भवति, इत्थमन्यैरपि क्षामणकपुरस्सरं सर्वं कर्त्तव्यमिति । 'लाघवम्' अपराधभारापगमतो लघुभाव उपजायते । 'एकत्वं' 'क्षामिता मयाऽमी साधवः, इत ऊर्द्धमेक एवास्मि' इत्यनुध्यानं भवति । 'अप्रतिबन्धश्च' ममत्वस्य छिन्नत्वाद् भूयः शिष्येषु प्रतिबन्धो न भवति ॥ अथ निजपदस्थापितस्य सूरेरनुशिष्टिमाह-

[भा.१३७१] अह ते सबाल-वुड्ढो, गच्छो साइज्ज नं अपरितंतो ।
एसो हु परंपरतो, तुमं पि अंते कुणसु एवं ॥

वृ- अएषः 'ते' तव सबाल-वृद्धो गच्छो निसृष्ट इति शेषः, अतः 'अपरितान्तः' अनिर्विन्नः ''णं'' एनं गच्छं 'सातयेः' सङ्गोपायेः, स्मारणा-वारणादिना सम्यक् पालयेरित्यर्थः । न च 'परित्यक्तोऽहममीभि' इत्यादि परिभाव्यम्, यत एष एव 'परम्परकः' शिष्या-ऽऽचार्यक्रमो यद् अव्यवच्छित्तिकारकं शिष्यं निष्पाद्य शक्तौ सत्यामभ्युद्यतविहारः प्रतिपत्तव्यः । त्वमपि 'अन्ते' शिष्यनिष्पादनादिकार्यपर्यवसाने एवमेव कुर्याः ॥

[भा.१३७२] पुव्वपवित्तं विनयं, मा हु पमाएहि विनयजोगेसु ।
जो जेन पगारेणं, उववज्जइ तं च जाणाहि ॥

वृ- ये च तव बहुश्रुत-पर्यायज्येष्ठादयो विनययोग्याः-गौरवार्हास्तेषु 'पूर्वप्रवृत्तं' यथोचितं विनयं 'मा प्रमादयेः' मा प्रमादेन परिहापयेः । यश्च साधुर्येन तपःस्वाध्याय-वैयावृत्त्यादिना प्रकारेण 'उपयुज्यते' निर्जराप्रत्युपयोगमुपयाति 'तं च जानीहि' तं तथैव प्रवर्त्तयेत्यर्थः, ॥

अथ साधूनामनुशिष्टिं प्रयच्छति-

[भा.१३७३] ओमो समराइणिओ, अप्पतरसुओ अ मा य नं तुब्भे ।
परिभवह तुम्ह एसो, विसेसओ संपयं पुज्जो ॥

वृ- 'अवमोऽयं समरात्निकोऽयं अल्पतरश्रुतो वाऽयमस्मदपेक्षया, अतः किमर्थमस्य आज्ञानिर्देशं वयं कुर्महे ?' इति मा यूयममुं परिभवत । यत एष युष्माकं साम्प्रतमस्मत्स्थानीयत्वाद् गुरुतरगुणाधिकत्वाच्च विशेषतः पूज्यः, न पुनरवज्ञातुमुचित इति भावः ॥

इत्थमुभयेषामप्यनुशिष्टिं प्रदाय किं करोति ? इत्याह-

[भा.१३७४] पक्खीव पत्तसहिओ, सभंडगो वच्चए निरवयक्खो ।
एगंतं जा तइया, तीए विहारो से नऽन्नासु ॥

वृ- यथा पक्षी पत्राभ्यां-पक्षाभ्यां सहितः प्राक्तनस्थाननिरपेक्षः स्थानान्तरं व्रजति, एवमयमपि भगवान् 'सभाण्डकः' पात्रसहितः 'निरपेक्षः' गच्छसत्कापेक्षया रहितः 'एकान्तं' मासकल्पप्रायोग्यं क्षेत्रं व्रजति । अयं च यावत् तृतीयपौरुषी तावद् गच्छति, यतस्तस्यामेव ''से'' तस्य विहारो नान्यासु पौरुषीषु, यत्र तु चतुर्थी पौरुषी भवति तत्र नियमात् तिष्ठतीति ।।

तस्मिन् निर्गते सति शेषसाधवः किं कुर्वन्ति ? इत्याह-

[भा.१३७५] सीहम्मि व मंदरकंदराओ नीहम्मिए तओ तम्मि ।
चक्खुविसयं अइगए, अइंति आनंदिया साहू ।।

वृ- सिंहे इव मन्दरकन्दरायास्तस्मिन्नगारसिंहे गच्छाद् ''नीहम्मिए'' निर्गते सति कियन्तमपि भूभागमनुगमनं विधाय ततश्चक्षुर्विषयम् 'अतिक्रान्ते' अदर्शनीभूते आयान्ति स्ववसतिम् 'आनन्दिताः' 'अहो ! अयं भगवान् सुखसेवनीयं स्थविरकल्पविहारं विहायातिदुष्करमभ्युद्यत-विहारमभ्युपैति' इति परिभावनया हृष्टाः सन्तः साधव इति ।। इदमेव सविशेषमाह-

[भा.१३७६] निच्चेल सचेले वा, गच्छारामा विनिग्गए तम्मि ।
चक्खुविसयं अईए, अर्यंति आनंदिया साहू ।।

वृ- निश्चेले वा सचेले वा गच्छारामात् [illegible] विनिर्गते तस्मिंश्चक्षुर्विषयमतीते आयान्त्यानन्दिताः साधव इति ।। अथासौ विवक्षितं क्षेत्रं गत्वा किं करोति ? इत्याह-

[भा.१३७७] आभोएउं खेत्तं, निव्वाघाएण मासनिव्वाहिं ।
गंतूण तत्थ विहरइ, एस विहारो समासेणं ।।

वृ- 'आभोग्य' विज्ञाय क्षेत्रं 'निर्व्याघातेन' विघ्नाभावेन 'मासनिर्वाहि' मासनिर्वहणसमर्थं गत्वा 'तत्र' क्षेत्रे 'विहरति' स्वनीतिं परिपालयति । एष विहारो विशेषानुष्ठानरूपोऽस्य भगवतः समासेन प्रतिपादित इति ।। उक्तं विहारद्वारम् । अथ सामाचारीद्वारमाह-

[भा.१३७८]इच्छा-मिच्छा-तहक्कारो, आवस्सि निसीहिया य आपुच्छा ।
पडिपुच्छ छंदण निमंतणा य उवसंपया चेव ।।

वृ- 'इदं मदीयं कार्यमिच्छया कुरुत, न बलाभियोगेन' इत्येवमिच्छायाः करणमिच्छाकारः । कथञ्चित् स्खलितस्य 'मिथ्या मदीयं दुष्कृतम्' इति भणनं मिथ्याकारः । गुर्वादिषु ब्रुवाणेषु 'यथाऽऽदिशत यूयं तथैव'' इति भणनं तथाकारः । कचिद् बहिर्गमनकार्ये समुत्पन्ने 'अवश्यं गन्तव्यम्' इति भणनं आवश्यिकी । वसतिप्रवेशे 'निषिद्धोऽहं गमनक्रियायाः' इति भणनं नैषेधिकी । स्वकार्यप्रवृत्तावाप्रच्छनमापृच्छा । आदिष्टस्य कार्यस्य करणकाले पुनः प्रच्छनं प्रतिपृच्छा। पूर्वगृहीतेनाशनादिना साधूनामभ्यर्थना च्छन्दना । तेनैवागृहीतेन 'यथालाभं युष्मद्योग्यममुकमानेष्ये' इति प्रार्थना निमन्त्रणा । उपसम्पद् द्विधा-साधुविषया गृहस्थविषया च । ज्ञानादिहेतोर्यदपरं गणं गत्वोपसम्पद्यते सा साधुविषया । यत् पुनरवस्थाननिमित्तं गृहिणामनुज्ञापनं सा गृहस्थविषया ।। अथैतासां मध्याद् जिनकल्पिकस्य काः सामाचार्यो भवन्ति ? इत्युच्यते-

[भा.१३७९] आवस्सि निसीहि मिच्छा, आपुच्छुवसंपदं च गिहिएसु ।
अन्ना सामायारी, न होंति से सेसिया पंच ।।

वृ- आवश्यिकीं नैषेधिकीं मिथायाकारमापृच्छां उपसम्पदं च 'गृहिषु' गृहस्थविषया एताः

पञ्च सामाचारीर्जिनकल्पिकः प्रयुङ्क्ते। अन्याः सामाचार्यो न भवन्ति 'से' तस्य 'शेषाः पञ्च' इच्छा काराद्याः, प्रयोजनाभावात् ॥ आदेशान्तरमाह-

[भा.१३८०] आवासियं निसीहियं, मोत्तुं उवसंपयं च गिहिएसु।
सेसा सामायारी, न होंति जिणकप्पिए सत्त ॥

आवश्यिकीं नैषेधिकीं मुक्त्वा उपसम्पदं च 'गृहिषु' गृहस्थविषया जिनकल्पिकस्य 'शेषाः सामाचार्य' मिथ्याकारद्याः सप्त न भवन्ति, तद्विषयस्य स्खलितादेरभावात् ॥

[भा.१३८१] अहवा वि चक्कवाले, सामायारी उ जस्स जा जोग्गा।
सा सव्वा वत्तव्वा, सुयमाई वा इमा मेरा ॥

अथवाऽपि 'चक्रवाले' प्रत्युपेक्षणादौ नित्यकर्मणि यस्य जिनकल्पिकादेर्या सामाचारी योग्या सा सर्वा अत्र सामाचारीद्वारे वक्तव्या। श्रुतादिका वा 'इयं' वक्ष्यमाणा 'मेरा' मर्यादा सामाचारी॥

तामेवाभिधित्सुर्द्वारगाथात्रयमाह-

[भा.१३८२] सुय संघयनुवसग्गे, आतंके वेदना कइ जना य।
थंडिल्ल वसहि केच्चिरं, उच्चारे चेव पासवणे ॥

[भा.१३८३] ओवासे तणफलए, सारक्खणया य संठवणया य।
पाहुडि अग्गी दीवे, ओहाण वसे कइ जना य ॥

[भा.१३८४] भिक्खायरिया पानग, लेवालेवे तहा अलेवे य।
आयंबिल पडिमाओ, जिणकप्पे मासकप्पो य ॥

वृ-श्रुतं १ संहननं २ उपसर्गा ३ आतङ्कः ४ वेदनाः ५ कतिजनाश्च ६ स्थण्डिलं ७ वसति ८ कियच्चिरं ९ उच्चारश्चैव १० प्रश्रवणं ११ अवकाशः १२ तृणफलकं १३ संरक्षणता च १४ संस्थापनता च १५ प्राभृतिका १६ अग्नि १७ दीपः १८ अवधानं १९ वत्स्यथ कति जनाश्च २० भिक्षाचर्या २१ पानकं २२ लेपालेपः २३ तथा अलेपश्चच २४ आचाम्लं २५ प्रतिमाः २६ मासकल्पश्च २७ "जिनकप्पे" त्ति एतानि सप्तविंशतिद्वाराणि जिनकल्पविषयाणि वक्तव्यानीति द्वारगाथात्रयसमुदायार्थः ॥ अथावयवार्थं प्रतिद्वारं प्रतिपिपादयिषुः "यथोद्देशं निर्देशः" इति न्यायत् प्रथमतः श्रुतद्वारमाह-

[भा.१३८५] आयारवत्थुतइयं, जहन्नयं होइ नवमपुव्वस्स।
तहियं कालन्नाणं, दस उक्कोसेण भिन्नाइं ॥

वृ- जिनकल्पिकस्य जघन्यकं श्रुतं 'नवमपूर्वस्य' प्रत्याख्याननामकस्याचाराख्यं तृतीयं वस्तु तस्मिन्नधीते सति कालज्ञानं भवतीत्यतस्तदर्वाक्श्रुतपर्याये वर्त्तमानस्य न जिनकल्पप्रतिपत्ति। उत्कर्षतो दश पूर्वाणि भिन्नानि श्रुतपर्यायः। सम्पूर्णदशपूर्वधरः पुनरमोघवचनतया प्रवचन-प्रभावनापरोपकारादिद्वारेणैव बहुतरं निर्जरालाभमासादयति अतो नासौ जिनकल्पं प्रतिपद्यते॥ उक्तं श्रुतद्वारम् १। अथ संहननद्वारमाह-

[भा.१३८६] पढमिल्लुगसंघयणा, धिईए पुन वज्जकुड्डसामाणा।
उप्पज्जंति न वा सिं, उवसग्गा एस पुच्छा उ ॥

वृ- जिनकल्पिकाः 'प्रथमिल्लुकसंहननाः' वज्रर्षभनाराचसंहननोपेताः 'धृत्या' अङ्गीकृत-

निर्वाहक्षममनःप्रणिधानरूपया वज्रकुड्यसमानाः २। अथोपसर्गद्वारम्-उत्पद्यन्ते न वा अमीषामुपसर्गा दिव्यादयः ? इत्येषा पृच्छा ॥ अत्रोत्तरमाह-

[भा.१३८७]　जइ वि य उप्पज्जंते, सम्मं विसहंति ते उ उवसग्गे।
रोगातंका चेवं, भइआ जइ होंति विसहंति॥

वृ-नायमेकान्तो यदवश्यमेतेषामुपसर्गा उत्पद्यन्ते, परं यद्युत्पद्यन्त तथापि सम्यगदीनमनसो विषहन्ते तानुपसर्गान् ३। आतङ्कद्वारमतिदिशति-रोगाश्च-कालसहाः आतङ्काश्च-सद्योघातिनः एवमेव 'भाज्याः' उत्पद्यन्ते वा न वा। यदि 'भवन्ति उत्पद्यन्ते ततो नियमाद् विषहन्ते ४॥

वेदनाद्वारमाह-

[भा.१३८८]　अब्भोवगमा ओवक्कमा य तेसिं वियणा भवे दुविहा।
धुवलोआई पढमा, जरा-विवागाइ बिइएक्को॥

वृ- आभ्युपगमिकी औपक्रमिकी च 'तेषां' जिनकल्पिकानां द्विविधा वेदना भवति। तत्र प्रथमा 'ध्रुवलोचादि' ध्रुवः-प्रतिदिनभावी लोचः, आदिशब्दादातापना-तपःप्रभृतिपरिग्रहः। 'द्वितीया तु' औपक्रमिकी 'जरा-विपाकादि' जरा-प्रतीता विपाकः- कर्मणामुदयस्तत्समुत्था ५। अथ कियन्तो जनाः ? इति द्वारम् - "एक्को" त्ति एक एवायं भगवान् भवति ६। यदि वा इदं द्वारमुपरिष्टाद् व्याख्यास्यते॥ अथ स्थण्डिलद्वारमाह-

[भा.१३८९]　उच्चारे पासवणे, उस्सग्गं कुणइ थंडिले पढमे।
तत्थेव य परिजुन्ने, कयकिच्चो उज्झई वत्थे॥

वृ-उच्चारस्य प्रश्रवणस्य च 'उत्सर्गं' परित्यागं 'प्रथमे' अनापाते असंलोके स्थण्डिले करोति। 'तत्रैव' प्रथमस्थण्डिले 'कृतकार्य' विहितशीतत्राणादिवस्त्रकार्य उज्झति वस्त्राणि॥

अयं च संज्ञां व्युत्सृज्य न निर्लेपयति, कुतः ? इति चेद् उच्यते-

[भा.१३९०]　अप्पमभिन्नं वच्चं, अप्पं लूहं च भोयणं भणियं।
दीहे वि उ उवसग्गे, उभयमवि अथंडिले न करे॥

वृ- अल्पमभिन्नं च 'वर्चः' पुरीषमस्य भवति, कुतः ? इत्याह-यतोऽल्पं रूक्षं च भोजनमस्य भणितं भगवद्भिः। अल्पा-ऽभिन्नवर्चस्कतया तथाकल्पत्वाच्चासौ न निर्लेपयति। न चासौ 'दीर्घेऽपि' बहुदैवसिके उपसर्गे 'उभयमपि' संज्ञां कायिकीं च 'अस्थण्डिले' आपातादिदोषयुक्ते भूभागे करोति ७॥ वसतिद्वारमाह-

[भा.१३९१] अममत्त अपरिकम्मा, नियमा जिनकप्पियाण वसहीओ।
एमेव य थेराणं, मुत्तुण पमज्जणं एक्कं॥

वृ- 'अममत्वा' ममेयमित्यभिष्वङ्गरहिता 'अपरिकर्मा' साध्वर्थमुपलेपनादिपरिकर्मवर्जिता नियमाद् जिनकल्पिकानां वसतिः। स्थविरकल्पिकानामप्येवमेव वसतिरममत्वा अपरिकर्मा च द्रष्टव्या, मुक्त्वा प्रमार्जनामेकामन्यत् परिकर्म तेऽपि न कुर्वन्तीत्यर्थः॥ एतदेव स्पष्टयति-

[भा.१३९२] बिले न ढक्कंति न खज्जमाणिं, गोणाई वारिंति न भज्जमाणिं।
दारे न ढक्कंति न वऽग्गलिंति, दप्पेण थेरा भइआ उ कज्जे॥

वृ- एते भगवन्तो बिलानि धूल्यादिना न स्थगयन्ति, न वा गवादिभिः खाद्यमानां भज्यमानां

वा वसतिं निवारयन्ति, द्वारे ''न ढक्कंति'' कपाटाभ्यां न संयोजयन्ति, न वा 'अर्गलयन्ति' नार्गलया नियन्त्रयन्ति। स्थविरकल्पिका अपि 'दर्पेण' कार्याभावे एवमेव न वसतेः परिकर्म कुर्वन्ति, 'कार्ये तु' पुष्टालम्बने 'भाज्याः' परिकर्म कुर्वन्त्यपीति भावः ८ ॥ कियच्चिरोच्चारप्रश्रवणा-ऽवकाश-तृणफलक-संरक्षण-संस्थापनाद्वाराणि गाथाद्वयेन भावयति-

[भा.१३९३] किच्चिरकालं वसिहिह, इत्थ य उच्चारमाइए कुणसु।
इह अच्छसु मा य इहं, तण-फलए गिण्हिमे मा य ॥

[भा.१३९४] सारक्खह गोणाई, मा य पडिंति उविक्खहउ भंते!।
अन्नं वा अभिओगं, नेच्छंतऽचियत्तपरिहारी ॥

वृ- यस्यां वसतौ याच्यमानायां तदीयस्वामिन इत्थं भणन्ति-कियच्चिरं कालं वत्स्यथ यूयम्? ९, यद्वा 'अत्र' प्रदेशे 'उच्चारादीनि' पुरीष-प्रश्रवणादीनि कुरु, अत्र तु मा कुरु १०-११, 'इह' अस्मिन्नवकाशे आसीथाः, इह, मेति १२, 'एतानि वा' हस्तसंज्ञया निर्दिश्यमानानि तृण-फलकानि गृहीथाः मा एतानीति १३, संरक्षत वा गवादीन् बहिर्निर्गच्छतो यूयमस्माकं क्षेत्रादौ गतानां व्याकुलानां वा १४, मा च पतन्तीं वसतिमुपेक्षध्वं किन्तु 'संस्थापना' पुनःसंस्काररूपा विधेया १५। ''संठवणाया य'' त्ति द्वारगाथायां यश्चचशब्दस्तेन सूचितमन्यं वा स्वाध्यायनिषेधादिरूपं यत्र वसतिस्वामी 'अभियोग' नियन्त्रणां करोति तं मनसाऽपि नेच्छन्ति, सूक्ष्मस्याप्यप्रीतिकस्य परिहारिणोऽमी भगवन्त इति ॥ प्राभृतिका-ऽग्नि-दीपा-ऽवधानद्वाराणि व्याचष्टे-

[भा.१३९५] पाहुडिय दीवओ वा, अग्गि पगासो व जत्थ न वसन्ति।
जत्थ य भणंति ठंते, ओहाणं देह गेहे वि ॥

वृ- यस्यां वसतौ 'प्राभृतिका' बलि क्षिप्यते १६ दीपको वा यस्यां विधीयते १८ 'अग्नि' अङ्गार-ज्वालादिकस्तस्य प्रकाशो वा यत्र भवति तत्र न वसन्ति १७। यत्र च तिष्ठति सत्यगारिणा भणन्ति अस्माकपि गेहे 'अवधानम्' उपयोगं तत्रापि नावतिष्ठन्ते १९ ॥

वत्स्यथ कति जनाः इति द्वारमाह-

[भा.१३९६] वसहिं अणुन्नविंतो, जइ भन्नइ कइ जण त्थ तो न वसे।
सुहुमं पि न सो इच्छइ, परस्स अप्पत्तियं भगवं ॥

वृ- वसतिमनुज्ञापयन् यद्यसौ भण्यते 'कति जना यूयं वत्स्यथ?' इति तत्रापि न वसति, कुतः? इत्याह-सूक्ष्ममपि नासाविच्छति परस्याप्रीतिकं भगवान्। ''कइ जना उ'' त्ति अत्र यस्तुशब्दस्तेनान्यामपीदृशप्रीतिकजननी वसतिमसौ परिहरतीति गम्यते २०। उक्तपञ्चवस्तुके-

सुहुमं पि हु अचियत्तं, परिहरए सो परस्स नियमेणं।
जं तेन तुसद्दाओ, वज्जइ अन्नं पि तज्जणगिं ॥

--भिक्षाचर्या-पानक-लेपालेप-अलेप द्वाराणि विवृणोति-

[भा.१३९७] तइयाइ भिक्खचरिया, पग्गहिया एसणा य पुव्वुत्ता।
एमेव पानगस्स वि, गिण्हइ अ अलेवडे दो वि ॥

वृ- तृतीयस्यां पौरुष्यां भिक्षाचर्या, एषणा च 'प्रगृहीता' अभिग्रहयुक्ता, सा च ''पंचसु गह दोसऽग्गहु'' इत्यादिना पूर्वमेवोक्ता २१। एवमेव पानकस्यापि तृतीयपौरुष्यां प्रगृहीतया चैषणया

ग्रहणं करोति २२। अत्र शिष्यः पृच्छति- "लेवालेवे" त्ति किमसौ जिनकल्पिको लेपकृतं गृहणं गृह्णाति ? उतालेपकृतम् ? २३। अत्र सूरि-"अलेवे" त्ति पदं विवृण्वन्नुत्तरमाह- 'द्वे अपि' भक्त-पाने 'अलेपकृते' वल्ल-चणक-सौवीरादिरूपे गृह्णाति न लेपकृते २४॥

आयामाम्ल-प्रतिमाद्वारद्वयमाह -

[भा.१३९८] आयंबिलं न गिण्हइ, जं च अणायंबिलं पि लेवाडं।
न य पडिमा पडिवज्जइ, मासाई जा य सेसाओ॥

वृ- आयामाम्लमसौ न गृह्णाति, पुरीषभेदादिदोषसम्भवात्; अनायामाम्लमपि यद् लेपकृतं तत्र गृह्णाति २५। न च प्रतिमा मासिक्यादिका असौ प्रतिपद्यते। याश्च 'शेषाः' भद्र-महाभद्रा-दिकाः प्रतिमास्ता अपि न प्रतिपद्यते, स्वकल्पस्थितिप्रतिपालनमेव तस्य विशेषाभिग्रह इति भावः २६॥ अथ मासकल्प इति द्वारमभिधित्सुराह-

[भा.१३९९] कप्पे सुत्त-ऽत्थविसारयस्स संघयण-विरियजुत्तस्स।
जिनकप्पियस्स कप्पइ, अभिगहिया एसणा निच्चं॥

वृ- कल्पे जिनकल्पविषयौ यौ सूत्रार्थौ तत्र विशारदस्य-निपुणस्य संहननं-शारीरबलं वीर्यधृतिस्ताभ्यां युक्तस्य जिनकल्पिकस्य कल्पते 'अभिगृहीता' साभिग्रहा एषणा॥

सा च मासकल्पस्थितिमनुपालयतो भवतीत्यतस्तस्यैव विधिमाह-

[भा.१४००] छव्वीहीओ गामं, काउं एक्किक्कियं तु सो अडइ।
वज्जेउं होइ सुहं, अनिययवित्तिस्स कम्माई॥

वृ-यत्रासौ मासकल्पं करोति तं ग्रामं 'षड् वीथीः' गृहपङ्क्तिरूपाः कृत्वा ततः प्रतिदिनमेकैकां वीथीमटति यावत् षष्ठे दिवसे षष्ठीम्। कुतः ? इत्याह-अनियतवृत्तेरपरापरवीथीषु पर्यटतः 'कर्मादि' आधाकर्म-पूतिकर्मादिकं 'सुखं वर्जयितुं भवति' सुखेनैव परिहर्तुं शक्यत इति भावः॥ कथं पुनराधाकर्मादिसम्भवो भवति ? इत्याशङ्क्य तत्सम्भवं दिदर्शयिषुराह-

[भा.१४०१] अभिग्गहे दट्ठुं करणं, भत्तोगाहिमग तिन्नि पूईयं।
चोदग ! एगमनेगे, कप्पो त्ति य सत्तमे सत्तमे सत्त॥

वृ- तस्य भगवतः प्रथमवीथीमटतः कयाचिदगार्या श्रद्धातिरेकाद् धृत-मधुसंयुक्तं भैक्षमुपनीतम्, तेन च 'न कल्पते मे लेपकृता भिक्षा' इति न गृहीतम्, तत एवमादीनभिग्रहान् दृष्ट्वा आधाकर्मणः करणं भवति। तच्च भक्तमवगाहिमं वा भवेत्। त्रीणि च दिवसानि तत् पूतिकम्। नोदकः प्रश्नयति-एकं ग्रामं किमनेकान् भागान् षड्वीथीरूपान् करोति ?। सूरिराह-कल्प एषोऽमीषां यत् षड् वीथीः कृत्वा सप्तमे दिवसे पर्यटन्ति, सप्त च जना एकस्यां वसतौ सम्भवन्तीति समासार्थः॥ अथ विस्तरार्थमाह-

[भा.१४०२] दट्ठूण य अनगारं, सड्ढी संवेगमागया काइ।
नत्थि महं तारिसयं, अन्नं जमलज्जिया दाहं॥

वृ- तमनगारं तपःशोषितमलपटलजटिलवपुषं दृष्ट्वा काचित् श्राद्धिका परमसंवेगमागता सती चिन्तयति-किं मे जीवितेन यद् ईदृशस्य महात्मनो भिक्षा न दीयते ?, नास्ति मम तादृशं शोभनमन्नं यद् अहमलज्जिता सती दास्यामि॥ ततः-

[भा.१४०३] सव्वपयत्तेण अहं, कल्लं काऊण भोअणं विउलं ।
दाहामि तुट्ठमनसा, होहिइ मे पुन्नलाभो त्ति ।।

वृ- सर्वप्रयत्नेनाहं 'कल्ये' द्वितीयेऽहनि भोजनं विपुलं कृत्वा दास्यामि 'तुष्टमनसा' प्रहृष्टेन चेतसा, ततो भविष्यति मे महान् पुण्यलाभः । इत्थं विचिन्त्य द्वितीये दिवसे विपुलमशनादि भक्तमवगाहिमं वा उपस्कृत्य तं भगवन्तं प्रतीक्षमाणा तिष्ठति ।। ततः किं भूतं ? इत्याह-

[भा.१४०४] फेडित वीही तेहिं, अनंतवरनाण-दंसणधरेहिं ।
अद्दीन अपरितंता, बिइयं च पहिंडिया तहियं ।।

वृ- स्फेटिता-परिहृता वीथी 'तैः' जिनकल्पिकैः, कथम्भूतैः ? 'अनन्तवरज्ञान-दर्शनधरैः' इहानन्तज्ञानमयत्वादनन्ताः-तीर्थकरास्तैरुपदिष्टे वरे-उत्तमे जिनकल्पिकानां ये ज्ञान-दर्शने उपलक्षणत्वात् चारित्रं च तानि धारयन्तीत्यनन्तवरज्ञान-दर्शनधरास्तैः । आह च चूर्णिकृत- अनंतं नाणं जेसिं ते अनंता-तित्थकरा, तेहिं जिनकप्पियाणं वरं नाणं दंसणं चरितं च जं भणियं तद्धरेहिं ति ।। ततस्ते 'अदीनाः' मनसा अविषण्णाः 'अपरितान्ताः' कायेनानिर्विन्ना द्वितीयां वीथीं क्रमागतां पर्यटितास्तत्र क्षेत्रे । एकवचनप्रक्रमेऽपि बहुवचनाभिधानमन्येषामपि जिनकल्पिकानामेवं-विधवृत्तान्तसम्भवख्यापनार्थम् ।। अत्र चेयं व्यवस्था-

[भा.१४०५] पढमदिवसम्मि कम्मं, तिन्नि उ दिवसाइँ पूइयं होइ ।
पूतीसु तिसु न कप्पइ, कप्पइ तइओ जया कप्पो ।।

वृ- प्रथमे दिवसे तद् भक्तमुपस्कृतमाधाकर्म । त्रीणि दिवसानि यावद् तद् गृहं पूतिर्भवति, तेषु च त्रिषु पूतिदिनेषु तस्मिन् गृहेऽन्यदपि किञ्चिन्न कल्पते । यदा तु तृतीयः कल्पो गतो भवति तदा कल्पते । कल्पशब्देनेह दिवस उच्यते । उक्तञ्च पञ्चवस्तुकटीकायाम्- कल्पते तृतीये 'कल्पे' दिवसे गतेऽपरस्मिन्नहनीति इदमेव स्पष्टयन्नाह-

[भा.१४०६] बिइयदिवसम्मि कम्मं, तिन्नि उ दिवसाइँ पूइयं होइ ।
तिसु कप्पेसु न कप्पइ, कप्पइ तं छट्ठदिवसम्मि ।।

वृ- यस्मिन् दिवसे स जिनकल्पिकः प्रथमवीथ्यामटन् तया दृष्टस्तदपेक्षया द्वितीये दिवसे तद् भक्तमाधाकर्म, तदनन्तरं त्रीणि दिवसानि पूतिकं भवति, तेषु त्रिषु 'कल्पेषु' दिवसेषु न कल्पते, किन्तु कल्पते तत् षष्ठे दिवसे ।। अथवगाहिमविषयं विधिमाह-

[भा.१४०७] कल्लं से दाहामी, ओगाहिमगं न आगतो अज्ज ।
तइयदिवसाइतं होइ पूइयं कप्पए छट्ठे ।।

वृ-अवगाहिमं दिनद्वयमपि क्षमत इति कृत्वा सा श्राद्धा चिन्तयति-यदर्थमयमवगाहिमपाको मया कृतः स मुनिरद्य मम गृहाङ्गणं नागतः, अतः कल्ये "से" तस्याहं दास्यामीदमवगाहिममिति विचिन्त्य तद्दानार्थं यदि स्थापयति तदा तत् तृतीयेऽपि दिवसे कर्मैव भवति । य पुनस्तस्मिन्नेव पाकदिवसे व्यवच्छिन्नभावा सा आत्मार्थितं करोति तदवगाहिममपि भक्तवद् मौलदिवसापेक्षया द्वितीये दिवसे कर्म, तृतीयादिषु तद् गृहं पूतिकम्, षष्ठे तु दिवसे कल्पते ।। एतदेव स्पष्टयति-

[भा.१४०८] एमेवोगाहिमगं, नवरं तइयदिवसे वि तं कम्मं ।
तिसु पूइयं न कप्पइ, कप्पइ तं सत्तमे दिवसे ।।

वृ- 'एवमेव' भक्तवद् अवगाहिममपि यत् तद्दिवस एवात्मार्थीकृतं द् द्वितीये दिवसे कर्म, तृतीयादिषु त्रिषु पूति, षष्ठे तु कल्पते। नवरं यत् तद्दिवसे नाऽऽत्मार्थयति तत् तृतीयेऽपि दिवसे कर्म, ततस्त्रिषु दिवसेषु तत् पूतिकं गृहमिति कृत्वा न कल्पते, किन्तु कल्पते तद् गृहं सप्तमे दिवसे, अत एव चासौ भूयः सप्तमे दिने तस्यां वीथ्यां पर्यटति ॥ आह यद्येवं तर्हि यदि तस्मिन्नेव दिवसे तं प्रथमवीथीमटन्तं दृष्ट्वा कश्चिदाधाकर्मादि कुर्याद् मोदकादिकं वा तदर्थं कृत्वा सप्तमदिवसं यावदव्यवच्छिन्नभावः स्थापयेत् तदानीमसौ कथं जानाति ? कथं वा परिहरति ? इति, उच्यते-

[भा.१४०९] चोयग ! तं चेव दिनं, जइ वि करिज्जाहि कोइ कम्माई।
न हु सो तं न वियाणइ, एसो पुन सिं अहाकप्पो ॥

वृ- हे नोदक ! तस्मिन्नेव दिने यद्यपि कुर्यात् कश्चित् किञ्चिदाधाकर्मादि 'न हि' नैव स तन्न विजानाति, "द्वौ नञौ प्रकृत्यर्थं गमयतः" इति वचनाद् जानात्येवासौ श्रुतोपयोगबलेन। आह यद्यसौ श्रुतोपयोगप्रामाण्यादेव जानीते ततः कमर्थमेकं ग्राममनेकभागान् परिकल्प्य पर्यटति ?, उच्यते-कल्प एषः "सिं" अमीषां भगवतां यत् सप्तमे दिवसे भूयः प्रथमवीथीं पर्यटन्ति ॥ ततश्च तं सप्तमे दिवसे प्रथमवीथीमटन्तं दृष्ट्वा सा श्राद्धिका ब्रूयात्-

भा.(१४१०] किं नागय त्थ तइया, असव्वओ मे कओ तुह निमित्तं।
इइ पुट्ठो सो भगवं, बिइयाएसे इमं भणइ ॥

वृ- 'तदानीं यूयं किं नागताः ?, "थ" इति निपातः पूरणार्थ, मया हि त्वन्निमित्तं विपुलं भक्तादिकमुपस्कुर्वन्त्या युष्मदनुपयोगादसद्ययः कृतः' इति पृष्टोऽसौ भगवाँस्तूष्णीक आस्ते इति शेषः। 'द्वितीयादेशे' आदेशान्तरे पुनरिदं भणति ॥ किं तत् ? इत्याह-

[भा.१४११] अनियताओ वसहीओ, भमरकुलाणं च गोकुलाणं च।
समणाणं सउणाणं, सारइआणं च मेहाणं ॥

वृ- अनियताः 'वसतयः' अवस्थानानि उपलक्षणत्वात् परिभ्रमणानि च। केषाम् ? इत्याह- भ्रमरकुलानां च गोकुलानां च श्रमणानां शकुनानां शारदानां च मेघानाम्। इत्थमनियतचर्यया भिक्षाटने श्रद्धावतामपि प्राणिनां नाधाकर्मादिकरणे भूयः प्रवृत्तिरुपजायत इति ॥ अथ "सत्त" त्ति पदं विवृणोति-

[भा.१४१२] एक्काए वसहीए, उक्कोसेणं वसंति सत्त जणा।
अवरोप्परसंभासं, चयंति अन्नोन्नवीहिं च ॥

वृ- एकस्यां वसतावुत्कर्षतः सप्त 'जनाः' जिनकल्पिका वसन्ति। ते चैकत्र वसन्तोऽपि परस्परसम्भाषणं 'त्यजन्ति' न कुर्वन्तीत्यर्थः; अन्योन्यवीथीं च त्यजन्ति, यस्मिन् दिने यस्यां वीथ्यामेकः पर्यटति न तस्मिन्नेव तस्यामपर इत्यर्थः ॥

गतं सामाचारीद्वारम्। अथ स्थितिद्वारमभिधित्सुराह-

[भा.१४१३] खेत्ते काल चरित्ते, तित्थे परियाय आगमे वेए।
कप्पे लिंगे लेसा, झाणे गणना अभिगहा य ॥

[भा.१४१४] पव्वावण मुंडावण, मणसाऽऽवन्ने वि से अनुग्घाया।
कारण निप्पडिकम्मे भत्तं पंथो य तइयाए ॥

वृ- कस्मिन् क्षेत्रेऽमी भगवन्तो भवन्ति ? १ एवं काले २ चारित्रे ३ तीर्थे ४ पर्याये ५ आगमे ६ वेदे ७ कल्पे ८ लिङ्गे ९ लेश्यायां १० ध्याने ११ गणनायां १२ अभिग्रहाश्चामीषां भवन्ति न वा ? १३ प्रव्राजनायां १४ मुण्डापनायां च कीध्शी स्थिति १५ मनसा आपन्ने अपराधे "से" तस्य 'अनुद्घाताः' चतुर्गुरवः प्रायश्चित्तं १६ कारणं १७ निष्प्रतिकर्म १८ भक्तं पन्थाश्च तृतीयस्यां पौरुष्याम् १९ इति चतुर्गुरवः प्रायश्चित्तं १६ कारणं १७ निष्प्रतिकर्म १८ भक्तं पन्याश्च तृतीयस्यां पौरुष्याम् १९ इति द्वारगाथाद्वयसमासार्थः ॥

व्यासार्थं प्रतिद्वारमभिधित्सुः प्रथमतः क्षेत्रद्वारमङ्गीकृत्याह-

[भा.१४१५] जम्मण-संतीभावेसु होज्ज सव्वासु कम्मभूमीसु ।
साहरणे पुन भइयं, कम्मे व अकम्मभूमे वा ॥

वृ- क्षेत्रविषया द्विधा मार्गणा-जन्मतः सद्भावतश्च । जन्मतो यत्र क्षेत्रेऽयं प्रथमत उत्पद्यते, सद्भावतस्तु यत्र जिनकल्पं प्रतिपद्यते प्रतिपन्नो वाऽस्ति, तत्र जन्म-सद्भावयोरुभयोरप्ययं 'सर्वासु कर्मभूमीषु' भरतपञ्चकैरावतपञ्चक-बिदेहपञ्चकलक्षणासु भवेत् । 'संहरणे' देवादिना अन्यत्र नयने पुनः 'भाज्यं' भजनीयम्, कर्मभूमौ वा भवेद् अकर्मभूमौ वा । एतच्च सद्भावमाश्रित्योक्तम् । जन्मतस्तु कर्मभूमावेवायं भवतीति १ ॥

उक्तं क्षेत्रद्वारम् । अथ कालद्वारमाह-

[भा.१४१६] ओसप्पिणीइ दोसुं, जम्मणतो तीसु संतिभावेणं ।
उस्सप्पिणि विवरीया, जम्मणतो संतिभावे य ॥

वृ- अवसर्पिण्यां जन्मतः 'द्वयोः' सुषमदुःषमा-दुःषमसुषमयोस्तृतीयचतुर्थारकयोर्भवेत्; सद्भावस्तु 'त्रिषु' तृतीय-चतुर्थ-पञ्चमारकेषु, दुःषमसुषमाया अन्ते जातो दुःषमायां जिनकल्पं प्रतिपद्यते इति कृत्वा । उत्सर्पिणी विरीता जन्मतः सद्भावतश्च । इदमुक्तं भवति-उत्सर्पिण्यां दुःषमा-दुःषमसुषमा-सुषमदुःषमासु तिसृषु समासु जन्माऽश्नुते, दुःषमसुषमा-सुषमदुःषमयोस्तु द्वयोरमुं कल्पं प्रतिपद्यते, दुःषमायां तीर्थं नास्तीति कृत्वा तस्यां जातस्यापि दुःषसुषमायामेव कल्पप्रतिपत्तिरिति ॥

[भा.१४१७] नोसप्पिणिउस्सप्पे, भवंति पलिभागतो चउत्थम्मि ।
काले पलिभागेसु य, साहरणे होंति सव्वेसु ॥

वृ-नोअवसर्पिण्युत्सर्पिणीरूपे अवस्थितकाले चत्वारः प्रतिभागाः, तद्यथा-सुषमसुषमाप्रतिभागः सुषमाप्रतिभागः सुषमदुःषमाप्रतिभागः दुषमसुषमाप्रतिभागश्चेति । तत्राद्यो देवकुरूत्तरकुरुषु, द्वितीयो हरिवर्ष-रम्यकवर्षो, तृतीयो हैमवतैरण्यवतयोः, चतुर्थस्तु महाविदेहेषु । तत्र चतुर्थे प्रतिभागे जन्मत सद्भावतश्चामी भवन्ति, नाद्येषु त्रिषु प्रतिभागेषु । "काले" त्ति यो महाविदेहजो जिनकल्पिकः स सुषमसुषमादिषु षट्स्वपि कालेषु संहरणतो भवेत् । "पलिभागेसु अ" त्ति भरतैरावत-महाविदेहेषु सम्भूताः संहरणतः सर्वेष्वपि प्रतिभागेषु देवकुर्वादिसम्बन्धिषु सम्भवन्तीति २ ॥ चारित्रद्वारमाह-

[भा.१४१८] पढम वा बीये वा, पडिवज्जइ संजमम्मि जिनकप्पं ।
पुव्वपडिवन्नओ पुन, अन्नयरे संजमे होज्जा ॥

वृ- 'प्रथमे वा' सामायिकाख्ये 'द्वितीये वा' छेदोपस्थापनीयनाम्नि संयमे वर्त्तमानो जिनकल्पं प्रतिपद्यते। तत्र मध्यमतीर्थकर-विदेहतीर्थकृत्तीर्थवर्त्ती प्रथमे संयमे, पूर्व-पश्चिमतीर्थकरतीर्थवर्ती तु द्वितीयेऽपीति मन्तव्यम्। पूर्वप्रतिपन्नः पुनरसौ जिनकल्पिकः 'अन्यतरस्मिन्' सूक्ष्मसम्परायादावपि संयमे उपशमश्रेण्यां वर्त्तमानो भवेत् ३ ॥ तीर्थ-पर्यायद्वारद्वयमाह-

[भा.१४१९] नियमा होइ सतित्थे, गिहिपरियाए जहन्न गुणतीसा।
जइपरियाए वीसा, दोसु वि उक्कोस देसूना ॥

वृ- स जिनकल्पिको नियमात् तीर्थे भवति, न पुनर्व्यवच्छिन्नेऽनुत्पन्ने वा तीर्थे ४। पर्यायो द्विधा-गृहिपर्यायो यतिपर्यायश्च। तत्र गृहिपर्यायो जन्मपर्याय इत्येकोऽर्थः, तत्र जघन्यत एकोनत्रिंशद् वर्षाणि। यतिपर्याये तु जघन्यतो विंशतिवर्षाणि। उत्कर्षतस्तु 'द्वयोरपि' गृहिपर्याययतिपर्याययो-र्देशोनां पूर्वकोटीं यदा प्राप्तो भवति तदा जिनकल्पं प्रतिपद्यते ५ ॥

अथाऽऽगम-वेदद्वारे आह-

[भा.१४२०] न करिंति आगमं ते, इत्थीवज्जो उ वेदो इक्कतरो।
पुव्वपडिवन्नओ पुण, होज्ज सवेओ अवेओ वा ॥

वृ- न कुर्वन्ति 'ते' जिनकल्पिकाः 'आगमम्' अपूर्वश्रुताध्ययनम्, पूर्वाधीतं तु श्रुतं विस्रोतसिकाक्षयहेतोरेकाग्रमनाः सम्यगनुस्मरति ६। वेदमङ्गीकृत्य-प्रतिपत्तिकाले 'स्त्रीवर्ज एकतरः' पुरुषवेदो नपुंसकवेदो वा असंक्लिष्टस्तस्य भवेत। पूर्वप्रतिपन्नः पुनः सवेदोऽवेदो वा भवेत्। तत्र जिनकल्पिकल्पिकस्य तद्भवे केवलोत्पत्तिप्रतिषेधादुपशमश्रेण्यां वेदे उपशमिते सत्यवेदत्वम्। तदुक्तम्-

उवसमसेढीए खलु, वेदे उवसामियम्मि उ अवेदो।
न उ खविए तज्जम्मे, केवलपडिसेहभावाओ ॥

शेषकालं तु सवेद इति ७ ॥ अथ कल्प-लिङ्ग-लेश्याद्वाराण्याह-

[भा.१४२१] ठियमट्ठियम्मि कप्पे, लिंगे भयणा उ दव्वलिंगेणं।
तिहि सुद्धाहि पढमया, अपढमया होज्ज सव्वासु ॥

वृ- स्थितकल्पे-प्रथमा-ऽन्तिमजिनसत्के अस्थितकल्पे च-मध्यमजिन-महाविदेहजिनसत्के अमी भवेयुः ८। लिङ्गे चिन्त्यमाने भजना तु द्रव्यलिङ्गेन कार्या। तुशब्दो विशेषणे। किं विशिनष्टि? प्रथमतः प्रतिपद्यमानो द्रव्य-भावलिङ्गयुक्त एव भवति। ऊर्द्ध्वमपि भावलिङ्गं नियमाद् भवति, द्रव्यलिङ्गं तु जीर्णत्वात् चौरादिभिरपहृतत्वाद्वा कदाचिन्न भवत्यपि। उक्तञ्च-

इयरं तु जिन्नभावाइएहि सययं न होइ वि कयाइ।
न य तेन विना वि तहा, जायइ से भावपरिहाणी ॥

'इतरद्' इति द्रव्यलिङ्गम् ९। लेश्या अङ्गीकृत्य 'तिसृषु प्रशस्तलेश्यासु' तैजस्यादिकासु 'प्रथमकाः' प्रतिपद्यमानका भवन्ति। 'अप्रथमकास्तु' पूर्वप्रतिपन्नाः 'सर्वास्वपि' शुद्धा-ऽशुद्धासु लेश्यासु भवेयुः, केवलमशुद्धासु वर्त्तमानो नात्यन्तसंक्लिष्टासु वर्त्तते न च भूयांसं कालमिति १० ॥ ध्यान-गणनाद्वारद्वयमाह-

[भा.१४२२] धम्मेण उ पडिवज्जइ, इअरेसु वि होज्ज इत्थ झाणेसु।

पडिवत्ति सयपुहुत्तं, सहसपुहुत्तं च पडिवन्ने ॥

वृ- धर्म्येण ध्यानेन तुशब्दस्य विशेषणार्थत्वात् प्रवर्द्धमानेन सता कल्पं प्रतिपद्यते। पूर्वप्रतिपन्नस्तु 'इतरेष्वपि' आर्त्तादिषु ध्यानेषु कर्मवैचित्र्यबलाद् भवेदपि, केवलं कुशलपरिणामस्योद्दामत्वात् तीव्रकर्मपरिणतिजनितः सोऽपि रौद्रा-ऽऽर्त्तभावोऽस्य प्रायो निरनुबन्धो भवति। तदुक्तम्-

एवं च कुसलजोगे, उद्दामे तिव्वकम्मपरिणामा।
रुद्द-ऽट्टेसु वि भावो, इमस्स पायं निरनुबंधो ॥

गणनाद्वारे-'प्रतिपत्तिं' प्रतिपद्यमानतामङ्गीकृत्योत्कर्षतः शतपृथक्त्वमेकस्मिन् समयेऽमीषां भगवतां प्राप्यते। पूर्वप्रतिपन्नकानां पुनरुत्कर्षतः सहपृथक्त्वम्, कर्मभूमिपञ्चदशकेऽप्येतावता-मेवोत्कर्षतः प्राप्यमाणत्वात्। जघन्यतस्तु प्रतिपद्यमानका एको द्वौ त्रयो वेत्यादि। पूर्वप्रतिपन्नास्तु जघन्यतोऽपि सहपृथक्त्वमेव, महाविदेहेष्वपि सदैवैतावतामवाप्यमानत्वात्। नवरमुत्कृष्ट-पदाज्जघन्यपदं लघुतरमिति १२ ॥ अभिग्रह-प्रव्राजना-मुण्डापनाद्वाराणि व्याचष्टे-

[भा.१४२३] भिक्खायरियाईया, अभिग्गहा नेव सो उ पव्वावे।
उवदेसं पुण कुणती, धुवपव्वाविं वियाणित्ता ॥

वृ- भिक्षाचर्या-ऋज्वी-गत्वाप्रत्यागतिकादयो गोचरचर्याविशेषास्तदादयोऽभिग्रहा इत्वरत्वादस्य न भवन्ति, जिनकल्प एव हि यावत्कथिकस्तस्याभिग्रहः, तत्र च प्रतिनियता निरपवादाश्च गोचरादयः, अतस्तत्पालनमेवास्य परमं विशुद्धिस्थानम्। यदाह-

एयम्मि गोयराई, नियया नियमेन निरववादा य।
तप्पालनं चिय परं, एयस्स विसुद्धिठाणं तु ॥

तथा नैवासावन्यं प्रव्राजयति, उपलक्षणत्वाद् न च मुण्डापयति, कल्पस्थितिरियमिति कृत्वा उपदेशं पुनः 'करोति' प्रयच्छति 'ध्रुवप्रव्राजिनम्' अवश्यप्रव्रजनशीलं विज्ञाय कञ्चन सत्त्वम्। तं च संविग्नगीतार्थसाधूनां समीपे प्रहिणोति १४-१५ ॥ अथ "मनसाऽऽवन्ने वि से अनुग्घाय" त्ति द्वारम्-मनसाऽपि सूक्ष्ममतीचारमापन्नस्यास्य सर्वजघन्यं चतुर्गुरुकं प्रायश्चित्तम् १६। अथ कारण-निष्प्रतिकर्मद्वारे आह-

[भा.१४२४] निप्पडिकम्मसरीरा, न कारणं अत्थि किंचि नाणाई।
जंघाबलम्मि खीणे, अविहरमाणो वि नाऽऽवन्ने ॥

वृ- निष्प्रतिकर्मशरीरा अमी भगवन्तो नाक्षिमलादिकमप्यपनयन्ति, न वा चिकित्सादिकं कारयन्ति १७। न च तेषां 'कारणम्' आलम्बनं ज्ञानादिकं किञ्चिद् विद्यते यद्बलात् ते द्वितीयपदासेवनं विदध्यु १८। 'भक्तं पन्थाश्च तृतीयस्याम्' इति द्वारम्-तृतीयस्यां पौरुष्यां भिक्षकालो विहारकालश्चास्य भवति, शेषासु तु पौरुषीषु प्रायः कायोत्सर्गेणाऽऽस्ते। जङ्घाबले परिक्षीणे पुनः 'अविहरन्नपि' विहारमकुर्वन्नपि नापद्यते कमपि दोषम्, किन्त्वेकत्रैव क्षेत्रे स्वकल्पस्थिति-मनुपालयतीति १९ ॥ व्याख्यातं स्थितिद्वारम्। तद्व्याख्याने चाभिहितो जिनकल्पविहारः। अथ शुद्धपरिहारिक-यथाकलन्दिकविहारविषयंविधिमतिदिशन् विशेषं च बिभणिषुराह-

[भा.१४२५] एसेव कमो नियमा, सुद्धे परिहारिए अहालंदे।
नाणत्ती य जिनेहिं, पडिवज्जइ गच्छ गच्छो य ॥

वृ- स एव "पव्वज्जा सिक्खावय" इत्यादिकः क्रमः शुद्धपरिहारिके यथालन्दिके च मन्तव्यः। नवरं परिहारकल्पविषयं नानात्वं 'जिनेभ्यः' जिनकल्पिकेभ्यः सकाशात्, किम्? इत्याह-प्रतिपद्यते "गच्छ गच्छो य" त्ति गच्छद्वयं चशब्दात् तृतीयश्च गच्छः, त्रयो गच्छा जघन्यतोऽप्यमुं कल्पं प्रतिपद्यन्त इत्यर्थः ॥

[भा.१४२६] तवभावननाणत्तं, करंति आयंबिलेण परिकम्मं।
इत्तिरिय थेरकप्पे, जिनकप्पे आवकहियाओ ॥

वृ- तपोभावनायां नानात्वं-विशेषः, किम्? इत्याह-कुर्वन्त्यायामाम्लेन ते भगवन्तः 'परिकर्म' अभ्यासम्। ते च द्विविधाः-इत्वरा यावत्कथिकाश्च। प्रस्तुतकल्पपरिसमाप्तौ ये भूयः स्थविरकल्पं प्रतिपद्यन्ते ते इत्वराः, ये तु जिनकल्पं ते यावत्कथिकाः ॥

[भा.१४२७] पुन्ने जिनकप्पं वा, अइंति तं चेव वा पुनो कप्पं।
गच्छं वा इंति पुनो. तिन्नि विहाणा सिं अविरुद्धा ॥

वृ- 'पूर्णे' शुद्धपरिहारकल्पे जिनकल्पं वा आयान्ति, तमेव वा परिहारविशुद्धिकं कल्पं पालयन्ति, गच्छं वा आगच्छन्ति पुनः। एवं त्रीण्यपि 'विधानानि' प्रकाराः "सिं" तेषां परिहारविशुद्धिकानामविरुद्धानि ॥

[भा.१४२८] इत्तरियानुवसग्गा, आतंका वेदना य न भवंति।
आवकहियाण भइया, तहेव य ग्गामभागा उ ॥

वृ- इत्वराणां शुद्धपरिहारकाणामुपसर्गा आतङ्का वेदनाश्च न भवन्ति, तत्कल्पप्रभावादेव जीतमेतत्। यावत्कथिकानां तु भाज्या उपसर्गादयः, जिनकल्पस्थितानां तेषां तत्सम्भवात्। यथा च जिनकल्पिकानां षड् ग्रामभागा भिक्षाटनविषया उक्तास्तथैवामीषामपि। एवं सर्वाऽपि सामाचारी तथैव द्रष्टव्या। विशेषः पुनरयम्-नवपुरुषप्रमाणो गणस्तावदमुं कल्पं प्रतिपद्यते, तत्र चत्वारः परिहारिकाः, चत्वारः पुनरनुपरिहारिकाः, एकस्तु तेषां कल्पस्थितः, अनुपरिहारिकाणां कल्पस्थितस्य चैकः सम्भोगः, परिहारिकाणां पृथक् पृथगित्यादिका प्रक्रिया तावन्नेया यावत् षण्मासाः। ततः परिहारिका अनुपरिहारिकीभवन्ति, अनुपरिहारिकाः परिहारिकत्वं प्रतिपद्यन्ते, कल्पस्थितस्तु प्राक्तन एवेत्येवमपि षण्मासाः। ततः कल्पस्थितोऽपि षण्मासान् यावत् परिहारिकत्वं प्रतिपद्यते, शेषास्तु यथायोगमनुपारिहारिकत्वं कल्पस्थितत्वं चेत्यष्टादशभिर्मासैरयं कल्पः समाप्यत इत्यलं प्रसङ्गेन। एतेषां हि स्वरूपमिहैव षष्ठोद्देशके भाष्यकृतैव न्यक्षेण वक्ष्यते ॥ अमीषामेव स्थितिनानात्वमभिधित्सुः प्राक्तनमेव द्वारगाथाद्वयमाह-

[भा.१४२९] खेत्ते काल चरित्ते, तित्थे परियाय आगमे वेए।
कप्पे लिंगे लेसा, झाणे गणना अभिगहा य ॥

[भा.१४३०] पव्वावण मुंडावण, मनसाऽऽवन्ने वि से अनुग्घाया।
कारण निप्पडिकम्मा, भत्तं पंथो य तइयाए ॥

वृ- अस्य समासार्थो व्यासार्थश्च जिनकल्पिकद्वार इवावगन्तव्यः ॥

– यस्तु यत्र विशेषस्तत्र तमुपदर्शयति-

[भा.१४३१] खेत्ते भरहेरवएसु होंति साहरणवज्जिया नियमा।

ठियकप्पम्मि उ नियमा, एमेव य दुविह लिंगे वि ॥

वृ- क्षेत्रद्वारे पारिहारिका भरतैरावतयोरेव भवन्ति, न विदेहेषु । तत्रापि 'संहरणवर्जिताः' अमी न केनापि देवादिनाऽन्यत्र संह्रियन्ते । एतेन कालद्वारनानात्वमप्युक्तं मन्तव्यम् । तच्चेदम्-काले उत्सर्पिण्यामवसर्पिण्या वा भवेयुः, न नोअवसर्पिण्युत्सर्पिण्यां सुषमसुषमादिषु वा प्रतिभागेषु। कल्पद्वारे-नियमादमी स्थितकल्पे भवन्ति, प्रथम-चरमतीर्थकरतीर्थव्यतिरेकेणामीषामभावात्। लिङ्गद्वारे-एवमेव 'द्विविधेऽपि' द्रव्य-भावरूपे लिङ्गे नियमादमी भवन्ति ॥

चारित्रद्वारनानात्वमाह-

[भा.१४३२] तुल्ल जहन्ना ठाणा संजमठाणाण पढम-बितियाणं ।
तत्तो असंख लोए, गंतुं परिहारियट्ठाणा ॥

[भा.१४३३] ते असंखा लोगा, अविरुद्धा ते वि पढम-बिइयाणं ।
उवरिं पि ततो असंखा, संजमठाणा उ दोण्हं पि ॥

वृ- 'प्रथम-द्वितीययोः' सामायिक-च्छेदोपस्थापनीयरूपयोः संयमस्थानयोः सम्बन्धीनि यानि जघन्यस्थानानि तानि परस्परं तुल्यानि, विशुद्धिसाम्यात् । 'ततः' जघन्यसंयमस्थानेभ्यः परतः 'असङ्ख्येयान् लोकान् गत्वा' असङ्ख्येयलोकाकाशप्रदेशप्रमाणेषु संयमस्थानेषु व्यतीतेष्वित्यर्थः परिहारिकस्य-परिहारविशुद्धिकस्य संयमस्थानानि भवन्ति, तान्यपि 'असङ्ख्येया लोकाः' असङ्ख्येयलोकाकाशप्रदेशप्रमाणानि । एतानि च 'प्रथम-द्वितीययोरपि' सामायिक-च्छेदोपस्थापनीययोर्विशुद्धिविशेषसाम्यादविरुद्धानि, तयोरपि सम्बन्धीनि भवन्तीत्यर्थः । 'ततः' परिहारिकसंयमस्थानेभ्य उपर्यपि असङ्ख्येयानि संयमस्थानानि 'द्वयोरपि' सामायिक-च्छेदोपस्तापनीययोर्भवन्ति, ततः सामायिक-च्छेदोपस्थापनीये व्यवच्छिद्येते । ततः परं सूक्ष्म-सम्परायस्यान्तर्मुहूर्त्तसमयप्रमाणान्यसङ्ख्येयानि संयमस्थानानि भवन्ति । तत ऊर्ध्वमनन्तगुणमेकं यथाख्यातचारित्रस्य संयमस्थानमिति ॥

अथ प्रकृतयोजनामाह-

[भा.१४३४] सट्ठाणे पडिवत्ती, अन्नेसु वि होज्ज पुव्वपडिवन्नो ।
अन्नेसु वि वट्टंतो, तीयनयं बुच्चई पप्प ॥

वृ- 'स्वस्थाने' स्वेषु-परिहारविशुद्धिकचारित्रसत्केषु संयमस्थानेषु वर्त्तमानः परिहारकल्पस्य प्रतिपत्तिं करोति । पूर्वप्रतिपन्नः 'अन्येष्वपि' सामायिकादिसंयमस्थानेषु स्वसंयमस्थानापेक्षया विशुद्धतरेष्वध्यवसायविशेषाद् भवेत् । तेषु चान्येष्वपि संयमस्थानेषु वर्त्तमानोऽसावनुभूतपूर्वपरि-हारविशुद्धिकसंयमस्थानत्वाद् 'अतीतनयम्' अतीतार्थाभ्युपगमपरं व्यवहारनयं 'प्राप्य' अङ्गीकृत्य परिहारविशुद्धिक इति प्रोच्यते, निश्चयन्यमङ्गीकृत्य पुनर्नोच्यते, संयमस्थानान्तराध्यासनादिति॥

गणनाद्वारे नानात्वमाह-

[भा.१४३५] गणओ तिन्नेव गणा, जहन्न पडिवत्ति सयसो उक्कोसा ।
उक्कोस-जहन्नेणं, सतसो च्चिय पुव्वपडिवन्ना ॥

वृ- इह गणना द्विधा-गणप्रमाणतः पुरुषप्रमाणतश्च । तत्र यदा किलप्रस्तुतकल्पस्य प्रतिपत्तिः

प्राप्यते तदा 'गणतः' गणप्रमाणमाश्रित्य त्रय एव गणा जघन्यतः प्रतिपत्तिमङ्गीकृत्य ज्ञातव्याः। उत्कर्षतः 'शतशः' शतपृथक्त्वसङ्ख्याका गणा अमुं कल्पं युगपत् प्रतिपद्यन्ते। ये तु पूर्वप्रतिपन्नास्ते उत्कर्षतो जघन्यतश्च 'शतश एव' शतपृथक्त्वसङ्ख्याका एव। नवरं जघन्यपदादुत्कृष्टपदमधिकतरम्॥

[भा.१४३६]　　सत्तावीस जहन्ना, सहस्स उक्कोसतो उ पडिवत्ती।
　　　　　　सयसो सहस्ससो वा, पडिवन्ना जहन्न उक्कोसा॥

वृ-विंशति पुरुषा जघन्यतोऽस्य कल्पस्य प्रतिपत्तिं कुर्वन्ति, त्रिषु नवकगणेषु, सप्तविंशतेर्जनानां भावात्। उत्कर्षतः सहपृथक्त्वम्। पूर्वप्रतिपन्नास्तु जघन्यतः 'शतशः' शतपृथक्त्वम्, उत्कर्षतः 'सहशः' सहपृथक्त्वम्॥ पुरुषप्रमाणत एव विशेषमाह-

[भा.१४३७]　　पडिवज्जमाण भइया, इक्को वि उ होज्ज ऊनपक्खेवे।
　　　　　　पुव्वपडिवन्नया वि उ, भइया इक्को पुहुत्तं वा॥

वृ-प्रतिपद्यमानकाः पुरुषाः 'भक्ताः' विकल्पिताः। कथम्? इत्याह-एकोऽपि भवेदूनप्रक्षेपे, अपिशब्दाद् व्यादयोऽपि। इदमुक्तं भवति-पूर्णायामष्टादशमास्यां यदि केचित् परिहारिकाः कालगता जिनकल्पं वा प्रतिपन्ना गच्छं वा प्रत्यागताः, ये शेषास्ते तमेव परिहारकल्पमनुपालयितुकामाः, ततो यावद्भिः प्रविष्टैर्नवको गणः पूर्यते तावन्तोऽपरे प्रवेशनीया इति कृत्वा प्रतिपद्यमानका एक-व्यादिसङ्ख्याका अपि भवेयुः। पूर्वप्रतिपन्नका अपि भाज्याः। कथम्? इत्याह-एको वा भवेत् पृथक्त्वं वा। इयमत्र भावना-यदि पूर्णेष्वष्टादशसु मासेष्वष्टौ परिहारविशुद्धिकाः कल्पान्तरं प्रतिपद्यन्ते तत एकः पूर्वप्रतिपन्नः; यदा तु केचित् कल्पान्तरं प्रतिपद्यन्ते केचित्तु द्व्यादिसङ्ख्याकास्तमेव कल्पमनुपालन्येित तदा पृथक्त्वं पूर्वप्रतिपन्नकानां भवतीति॥ गतं गणनाद्वारम्। शेषद्वाराणि तु सर्वाण्यपि जिनकल्पतुल्यवक्तव्यान्येवेत्युक्तं शुद्धपरिहारनानात्वम्। सम्प्रति यथालन्दकल्पनानात्वमाह-

[भा.१४३८]　　लंदो उ होइ कालो, उक्कोसगलंदचारिणो जम्हा।
　　　　　　तं चिय मज्झ पमाणं, गणाण उक्कोस पुरिसाणं॥

वृ- लन्दस्तु भवति कालः, लन्दशब्देन काल उच्यते इत्यर्थः। स पुनस्त्रिधा-जघन्य उत्कृष्टो मध्यमश्च। यावता कालेनोदकार्द्रः करः शुष्यति तावान् जघन्यः, उत्कृष्टः पञ्च रात्रिन्दिवानि, जघन्यादूर्ध्वमुत्कृष्टादर्वाक् सर्वोऽपि मध्यमः। इह चोत्कृष्टलन्देनाधिकारः। तथा चाह-'उत्कृष्टलन्दचारिणः' उत्कृष्ट लन्दं-पञ्चरात्ररूपमेकस्यां वीथ्यां चरणशीला यस्मात्, ततोऽमी 'उत्कृष्टलन्दानतिक्रमो यथालन्दम्, तदस्त्येषाम्' इति व्युत्पत्त्या यथालन्दिका उच्यन्ते। 'तदेव च' लन्दमानं 'मध्यमं' त्रिकलक्षणममीषां गणप्रमाणम्, त्रयो गणा अमुं कल्पं प्रतिपद्यन्त इत्यर्थः। 'तदेव च' लन्दमानमुत्कृष्टं पञ्चकात्मकमेकैकस्य गणस्य पुरुषाणां प्रमाणं द्रष्टव्यम्, एकैकस्मिन् गणे पञ्च पञ्च पुरुषा भवन्तीति भावः॥

[भा.१४३९]　　ज च्चेव य जिनकप्पे, मेरा सा चेव लंदियाणं पि।
　　　　　　नाणत्तं पुण सुत्ते, भिक्खायरि मासकप्पे य॥

वृ-यैव च जिनकल्पे 'मर्यादा' सामाचारी भणिता तुलनादिका सैव यथालन्दिकानामपि मन्तव्या।

नानात्वं पुनः सूत्रे भिक्षाचर्यायां मासकल्पे चशब्दात् प्रमाणे चेति ॥

तत्र सूत्रे तावद् नानात्वमभिधातुमाह-

[भा.१४४०] पडिबद्धा इयरे वि य, एक्केक्का ते जिणा य थेरा य ।
अत्थस्स उ देसम्मी, असमत्ते तेसि पडिबंधो ॥

वृ- यथालन्दिका द्विधा-गच्छप्रतिबद्धा इतरे च । पुनरेकैके द्विविधाः-जिनाश्च स्थविराश्च । तत्र ये प्रस्तुतकल्पपरिसमाप्तौ जिनकल्पं प्रतिपत्स्यन्ते ते जिनाः, ये तु स्थविरकल्पं भूयः समाश्रयिष्यन्ते ते स्थविराः । अथ कुतोऽमीषां गच्छविषयः प्रतिबन्धः ? इत्याह-'अर्थस्य तु' तुशब्दस्यावधारणार्थत्वादर्थस्यैव न सूत्रस्य देशः-एकदेशोऽद्याप्यसमाप्तः-न गुरुसमीपे गृहीत इति तस्मिन् ग्रहीतव्ये सति तेषां गच्छे प्रतिबन्धः । आह तमर्थदेशं समाप्यामी विवक्षितकल्पं किं न प्रतिपद्यन्ते ? उच्यते-तदानीं हि लग्न-योग-चन्द्रबलादीनि प्रशस्तानि वर्त्तन्ते, अन्यानि च प्रशस्तलग्नादीनि दूरकालवर्तीनि, न वा तथाभव्यानि, ततोऽमी अगृहीतेऽप्यर्थदेशे तं कल्पं प्रतिपद्य गुर्वधिष्ठितक्षेत्राद् बहिर्व्यवस्थिता विशिष्टतरानुष्ठाननिरता अगृहीतमर्थशेषं गृह्णन्ति । अथ भिक्षाचर्यायां नानात्वम्-ग्रामं षड्वीथीः परिकल्प्यैकैस्यां वीथ्यां पञ्चरात्रिन्दिवानि पर्यटन्ति, एवं षड्भिर्वीथीभिः पर्यटिताभिर्मासकल्पः समाप्यते । मासकल्पविषयं तु नानात्वमेषामुत्तरत्र भणिष्यते ॥ अत स्थविराणां जिनानां च यथालन्दिकानां परस्परं कः प्रतिविशेषः ? उच्यते-

[भा.१४४१] थेराणं नाणत्तं, अतरंतं अप्पिणंति गच्छस्स ।
ते वि य से फासुएणं, करिंतिसव्वं तु पडिकम्मं ॥

[भा.१४४२] एक्केक्कपडिग्गहगा, सप्पाउरणा हवंति थेराओ ।
जे पुन सिं जिनकप्पे, भय तेसिं वत्थ-पायाणि ॥

वृ- स्थविरकलपयथालन्दिकानां 'नानात्वं' विशेषोऽयम्-'अतरन्तं' ग्लान्या अशक्नुवन्तं निजं साधुं गच्छस्यार्पयन्ति । 'तेऽपि च' गच्छवासिनः ''से'' तस्य यथालन्दिकग्लानस्य प्राशुकेनान्नादिना सर्वमेव प्रतिकर्म कुर्वन्ति । जिनकल्पयथालन्दिकास्तु निष्प्रतिकर्माणः, ततो ग्लानीभूता अपि न चिकित्सादि कारयन्ति । तथा ये स्थविरा यथालन्दिकास्ते 'एकैकप्रतिग्रहकाः' प्रत्येकमेकप्रति-ग्रहोपेताः 'सप्रावरणाः' सवाश्च भवन्ति । ये पुनरमीषां मध्ये जिनकल्पे भविष्यन्ति तेषां 'भाज्ये' विकल्पनीये वस्त्र-पात्रे, यदि पाणिपात्रभोजिनः प्रावरणरहिताश्च जिनकल्पिका भविष्यन्ति तदा वस्त्र-पात्रे न गृह्णन्ति, शेषास्तु यथोचितं गृह्णन्ति ॥

अथ प्रमाणनानात्वं भावयति-

[भा.१४४३] गणमाणओ जहन्ना, तिन्नि गण सयग्गसो य उक्कोसा ।
पुरिसपमाणे पनरस, सहस्ससो चेव उक्कोसा ॥

वृ- 'गणमानतः' गणमानमाश्रित्य जघन्यतस्त्रयो गणाः, उत्कर्षतस्तु 'शताग्रशः' शतपृथक्त्वं। गणा अमुं कलपं प्रतिपद्यन्ते । पुरुषप्रमाणे तु जघन्यतः पञ्चदश पुरुषा अस्य कल्पस्य प्रतिपद्यमानकाः, त्रिषु पञ्चकगणेषु जघन्यतः प्रतिपद्यमानेषु पञ्चदशजनानां भावात् । उत्कर्षतः पुरुषप्रमाणं 'सहशः' सहपृथक्त्वम् ॥ अत्रैव विशेषमाह-

[भा.१४४४] पडिवज्जमाणगा वा, एक्कादि हवेज्ज ऊनपक्खेवे ।

होंति जहन्ना एए, सयग्गसो चेव उक्कोसा ॥

वृ- प्रतिपद्यमानका एते जघन्या एकादयो वा भवेयुर्न्यूनप्रक्षेपे सति, यदा ग्लानत्वादिवशतो गच्छस्य स्वसाधुसमर्पणादिना तेषां न्यूनता भवति तदैकादयः साधवस्तत्र प्रवेश्यन्ते येन पञ्चको गच्छः पूर्यत इत्यर्थः । तथा 'शताग्रशः' शतसङ्ख्याः पुरुषा न्यूनप्रक्षेपे उत्कर्षतः प्रतिपद्यमानका भवन्ति ॥ पूर्वप्रतिपन्नानां मानमाह-

[भा.१४४५] पुव्वपडिवन्नगाण वि, उक्कोस-जहन्नसो परीमाणं ।

कोडिपुहुत्तं भणियं, होइ अहालंदियाणं तु ॥

वृ- पूर्वप्रतिपन्नानामप्युत्कर्षतो जघन्यतश्च परिमाणं कोटिपृथक्त्वं यथालन्दिकानां भवति, महाविदेहपञ्चके जघन्यपदवर्त्तिनः कर्मभूमिपञ्चदशके चोत्कर्षपदवर्त्तिनः कोटिपृथक्त्वस्यामीषां प्राप्यमाणत्वात् । भणितमेतद् भगवद्भिरिति ॥ गतो यथालन्दकल्पविहारः । अथ गच्छवासिनां मासकल्पविधिमभिधित्सुः प्रस्तावनार्थं प्राक्तनीमेव मूलद्वारगाथामाह-

[भा.१४४६] पव्वज्जा सिक्खापय, अत्थग्गहणं च अनियओ वासो ।

निप्फत्ती य विहारो, सामायारी ठिई चेव ॥

वृ- अत्र प्रव्रज्यादीनि पञ्च द्वाराणि यथा जिनकल्पद्वारे तथाऽत्रापि मन्तव्यानि ॥

अथ विहारद्वारविषयं विधिमभिधित्सुराह-

[भा.१४४७] निप्फत्तिं कुणमाणा, थेरा विहरंति तेसिमा मेरा ।

आयरिय उवज्झाया, भिक्खू थेरा य खुड्डा य ॥

वृ-शिष्याणां निष्पत्तिं कुर्वन्तः 'स्थविराः' गच्छवासिनः साधवः 'विहरन्ति' अप्रतिबद्धं विहारं विदधति । तेषां चेत्थं विहरतामियं 'मर्यादा' सामाचारी । तत्र गच्छवासिनस्तावत् पञ्चविधाः, तद्यथा-आचार्या उपाध्याया भिक्षवः स्थविराः क्षुल्लकाश्चेति ॥

[भा.१४४८] धीरपुरिसपन्नत्तो, सप्पुरिसनिसेविओ अ मासविही ।

तस्स पडिलेहगा पुण, सुत्तत्थविसारगा भणिया ॥

वृ- धीरपुरुषैः-तीर्थकर-गणधरैः प्रज्ञप्तः, सत्पुरुषैश्च-जम्बू-प्रभवादिभिर्निषेवितः-अनुष्ठितो मासकल्पविधिः । 'तस्य पुनः' मासकल्पविधेः प्रत्युपेक्षकाः सूत्रार्तविशारदाः साधवो भणिता भगवद्भिः । स पुनर्विहारः शरदादिर्भवति ॥ कथम् ? इति चेद् उच्यते-

[भा.१४४९] वासावासातीए, अट्ठसु चारो अतो उ सरदाई ।

पडिलेह-संकमविही, ठिए अ मेरं परिकहेहं ॥

वृ-वर्षावासेऽतीते-अतिक्रान्ते 'अष्टसु' ऋतुबद्धमासेषु 'चारः' मासे मासे क्षेत्रान्तरगमनलक्षणो विहारो भवति, अतः शरदादिरयं मन्तव्यः । तत्र च क्षेत्रप्रत्युपेक्षणविधिं क्षेत्रान्तरसङ्क्रमणविधिं प्रत्युपेक्षिते च क्षेत्रे ''ठिए''त्ति स्थितानां सतां या काचिद् मर्यादा तामहं परिकथयिष्यामि ॥ प्रतिज्ञातमेव यथाक्रमं व्याचिख्यासुराह-

[भा.१४५०] निग्गमणम्मि उ पुच्छा, पत्तमपत्ते अइच्छिए वा वि ।

वाघायम्मि अपत्ते, अइच्छिए तस्स असतीए ॥

वृ- यत्र वर्षावासः कृतस्ततः क्षेत्राद् निर्गमने 'पृच्छा' किं कार्त्तिकचतुर्मासे प्राप्ते निर्गन्तव्यम्?

उतप्राप्ते ? आहोश्विदतिक्रान्ते ? उच्यते-यदि कोऽपि व्याघातस्तदा अप्राप्ते वा अतिक्रान्ते वा निर्गच्छन्ति। 'तस्य' व्याघातस्य 'असति' अभावे प्राप्ते चातुर्मासिकदिने मार्गशीर्षप्रतिपदि निर्गत्य बहिर्गत्वा पारयन्ति ॥ कः पुनर्व्याघातः ? इत्याह-

[भा.१४५१] पत्तमपत्ते रिक्खं, असाहगं पुन्नमासिणिमहो वा ।
पडिकूल त्ति य लोगो, मा वोच्छिइ तो अईयम्मि ॥

**वृ-** प्राप्ते चातुर्मासिकदिवसे अप्राप्ते वा यद्याचार्याणाम् 'ऋक्षं' नक्षत्रम् 'असाधकम् अननुकूलं पौर्णमासीमहो वा तदा भवेत् कार्त्तिकीमहोत्सव इत्यर्थः, तत्र च लोको निर्गच्छतः साधून् दृष्ट्वा अमङ्गलं मन्यमानः 'प्रतिकूलाः' अस्मन्महोत्सवप्रतिपन्थिनोऽमी मुण्डा येऽस्मिन्नेवंविधे महोत्सवे स्वमुखमस्माकं दर्शयन्ति' इत्येवं 'या वक्ष्यति' मा भणिष्यति, ततोऽतीते निर्गन्तव्यम् ॥

[भा.१४५२] पत्ते अइच्छिए वा, असाहगं तेन निंति अप्पत्ते ।
नाउं निग्गमकालं, पडिचरए पेसविंति तहा ॥

**वृ-** अथ प्राप्ते अतिक्रान्ते वा निर्गमनकाले नक्षत्रमसाधकम्, उपलक्षणत्वाद् मेघो वा वर्षणाद् नोपरंस्यते पन्थानः कर्दमदुर्गमाश्च भविष्यन्तीत्यतिशयज्ञानवशेन परिज्ञाय 'तेन' कारणेन 'अप्राप्ते' चातुर्मासिके निर्गच्छन्ति । निर्गमनकालं च ज्ञात्वा 'प्रतिचरकान्' क्षेत्रप्रत्युपेक्षकान् तथा प्रेषयन्ति यथा तेष्वायातेषु सत्सु निर्गमनकाल उपढौकते ॥ तच्च क्षेत्रं द्विधा- दृष्टपूर्वमदृष्टपूर्वं च, उभयमपि नियमात् प्रत्युपेक्षणीयम्, कुतः ? इति चेद् उच्यते-

[भा.१४५३] अप्पडिलेहियदोसा, वसही भिक्खं व दुल्लहं होज्जा ।
बालाइ-गिलाणाण व, पाउग्गं अहव सज्झाओ ॥

**वृ-** अप्रत्युपेक्षिते क्षेत्रे गच्छतामेते दोषाः-सा पूर्वदृष्टा वसति स्फेटिता तिता वा भवेत्, अन्ये वा साधवस्तस्यां स्थिता भवेयुः, भैक्षं वा दुर्लभं भवेत्, दुर्भिक्षादिभावाद् बालादीनां ग्लानानां वा प्रयोग्यं दुर्लभं भवेत्, स्वाध्यायो वा दुर्लभः स्यात्, मांस-शोणितादिभिरस्वाध्यायिकैराकीर्णत्वात्॥ यतश्चैवमतः किं विधेयम् ? इत्याह-

[भा.१४५४] तम्हा पुव्विं पडिलेहिऊण पच्छा विहीए संकमणं ।
पेसेइ जइ अनापुच्छिउं गणं तत्थिमे दोसा ॥

**वृ-** तस्मात् पूर्वं प्रत्युपेक्ष्य क्षेत्रं पश्चाद् विधिना सङ्क्रमणं तत्र कर्त्तव्यम् । अथाप्रत्युपेक्षिते व्रजन्ति ततश्चतुर्लघु, आज्ञाभङ्गे चतुर्गुरु, अनवस्थायां चतुर्लघु, मिथ्यात्वे चतुर्लघु, यद् वा संयमविराधनादिकं प्राप्नुवन्ति तन्निष्पन्नं प्रायश्चित्तम् । यदि पुनराचार्य 'गणं' गच्छमनापृच्छय क्षेत्रप्रत्युपेक्षकान् प्रेषयति तदा मासलघु । 'तत्र' गणमनापृच्छय प्रेषणे इमे दोषाः ॥

[भा.१४५५] तेना सावय मसगा, ओमऽसिवे सेहइत्थि पडिनीए ।
थंडिल्ल वसहि उट्ठाण एवमाई भवे दोसा ॥

**वृ-** स्तेना द्विविधाः-शरीरस्तेना उपधिस्तेनाश्च, 'श्वापदाः' सिंह-व्याघ्रादयः 'मशकाः' प्रतीताः 'अवमं' दुर्भिक्षं 'अशिवं' व्यन्तरकृत उपद्रवः, शैक्षस्य वा तत्र सागारिकः स्त्रियो वा महोद्रेकबहुलाः साधूनुपसर्गयन्ति, प्रत्यनीको वा कोऽप्युपद्रवति, स्थण्डिलानि वा तत्र न विद्यन्ते, वसतिर्वा नास्ति, ''उट्ठाणे''त्ति उत्थितः-उद्वसितः स देशः, एवमादयस्तत्रापान्तराले पथि गच्छतां दोषा

भवन्ति ॥ तत्र स्थाने प्राप्तानां पुनरिमे दोषाः-

[भा.१४५६] पच्चंत तावसीओ, सावय दुब्भिक्ख तेनपउराइं ।
नियग पउट्ठुट्ठाणे, फेणया हरियपत्ती य ॥

वृ- स ग्रामः 'प्रत्यन्तः' म्लेच्छाद्युपद्रवोपेतः, तापस्यो वा तत्रप्रचुरमोहाः संयमात् परिभ्रंशयन्ति, श्वापदभयं दुर्भिक्षभयं स्तेनप्रचुराणि, च तानि क्षेत्राणि, शैक्षस्यान्यस्य वा कस्यापि साधोस्तत्र 'निजकाः' स्वजनास्ते तमुत्प्रव्राजयन्ति, 'प्रद्विष्टो वा' प्रत्यनीकस्तत्र साधूनुपद्रवति, उत्थितो वा स ग्रामः, स्फेटिता वा सा वसति, 'स्फेटितानि वा' विपरिणामितानि तानि कुलानि येषां निश्रया तत्र गम्यते । आह च चूर्णिकृत्- फेडियाणि वा ताणि कुलाणि जेसिं निस्साए गम्मइ त्ति । "हरियपत्ती य" त्ति हरितपत्रशाकं बाहुल्येन तत्र भक्ष्यते । अथवा तत्र देशे केषुचिद् गृहेषु राज्ञो दण्डं दत्त्वा देवतोपहारार्थमागन्तुकः पुरुषो मार्यते, गृहस्य चोपरिष्टादार्द्रा वृक्षशाखा चिह्नं क्रियते,

एतेन चिह्नेनास्माभिराख्यातमेव भवति, अतो मारणेऽप्यस्माकं न दोष इति । यत एते दोषा अतः सर्वमपि गणमामन्त्रय क्षेत्रप्रत्युपेक्षकाः प्रेषणीयाः ॥ यदि पुनर्न सर्वमपि गणमामन्त्रयते तत एते दोषाः-

[भा.१४५७] सीसे जइ आमंते, पडिच्छगा तेन बाहिरं भावं ।
जइ इअरे तो सीसा, ते वि समत्तम्मि गच्छंति ॥

वृ- यद्याचार्य शिष्यान् केवलानामन्त्रयति 'कस्यां दिशि क्षेत्रप्रत्युपेक्षकाः प्रेषयितुमुचिताः ?' इति ततो मासलघु, आज्ञादयश्च दोषाः । प्रतीच्छकाश्च 'तेन' कारणेन बाह्यं भावं गच्छेयुः- अहो! स्वशिष्या एवामीषां सर्वकार्येषु प्रमाणं न वयमिति, अतो राग-द्वेषदूषितत्वात् को नामामीषामुपकण्ठे स्थास्यति ? इति । यदि 'इतरान्' प्रतीच्छकानामन्त्रयते ततः शिष्या बहिर्भावं गच्छेयुः-प्रतीच्छका एव तावदमीषां प्रसादपात्रम्, अतः किमर्थं वयमेव वैयावृत्त्यादिप्रयासं कुर्मः ? इति । 'तेऽपि' प्रतीच्छकाः समाप्ते सूत्रार्थग्रहणे स्वगच्छं गच्छन्ति । ततश्चाचार्य उभयैरपि प्रतीच्छक-शिष्यैः परित्यक्तः सन्नेकाकी सञ्जायेत ॥

[भा.१४५८] तरुणा बाहिरभावं, न य पडिलेहोवहिं न किइकम्मं ।
मूलगपत्तसरिसगा, परिभूया वच्चिमो थेरा ॥

वृ- अथ वृद्धानामन्त्रयते ततस्तरुणा बहिर्भावं मन्यन्ते, 'न च' नैव गुरूणां क्षेत्रप्रत्युपेक्षकाणां वा उपकरणं प्रत्युपेक्षन्ते, न वा स्थविरादीनामुपधिं वहन्ति, न च कृतिकर्म-भक्तपानानयनविश्रामणादिकं कुर्वते, 'वृद्धा एव सर्वमपि विधास्यन्ति, केऽत्र वयमस्थापितमहत्तराः ?' इति । अथैतद्दोषभयात् तरुणानेव पृच्छति ततः स्थविराश्चिन्तयेयुः-'मौलकपत्रसदृशाः' मौलम्-आद्यं यत् पर्णं परिपक्वप्रायं यदि वा मूलकः-कन्दविशेषस्तस्य तु पत्रं निस्सारं तत्सदृशा वयम् अत एव च 'परिभूताः' परिभवपदमायाता इत्यतो व्रजामो वयं गणान्तरमिति ॥ अथाकिञ्चित्करत्वात् स्थविराणामनामन्त्रणेऽपि का नाम हानि सम्पद्यते ? उच्यते-

[भा.१४५९] जुन्नमएहि विहूणं, जं जूहं होइ सुट्ठु वि महल्लं ।
तं तरुणरहसपोइअ, मयगुम्मइअं सुहं हंतुं ॥

वृ- जीर्णा-परिणतवयसो ये मृगास्तैर्विहीनं यद् यूथं भवति 'सुष्ठ्वपि' अतिशयेन 'महत्'

महासमूहात्मकं तद् यूथं "तरुण" त्ति भावप्रधानत्वाद् निर्देशस्य तारुण्येन-यौवनवशेन यो रभसः-चापलं गौरिगीतश्रवणादिविषयं तेन "पोतितं" ति देशीवचनत्वादितस्ततः स्पन्दितं 'मदगुल्मितं मदेन घूर्णितचेतनं सत् सुखं 'हन्तुं' विनाशयितुम्, सुखेन तद् व्यापाद्यत इति भावः। उक्तञ्च-

अतिरागप्रणीतान्यतिरभसकृतानि च।
तापयन्ति नरं पश्चात्, क्रोधाध्यवसितानि च॥

यतश्चैवमतः सर्व एव मिलिताः सन्तः प्रष्टव्याः॥ अत्रैव प्रायश्चित्तमाह-

**[भा.१४६०]** आयरियअवाहरणे, मासो वाहित्तऽनागमे लहुओ।
वाहित्ताण य पुच्छा, जाणगसिट्ठे तओ गमनं॥

**वृ-** आचार्या गणं न व्याहरन्ति-नामन्त्रयन्ते मासलघु। शिष्य-प्रतीच्छक-तरुण-स्थविराणामन्यतमान् विशेष्यामन्त्रयन्ते तदाऽपि मासलघु। तेऽपि च व्याहृताः सन्तो यदि नागच्छन्ति तदाऽपि मासलघु। व्याहृत्य च सर्वमपि गणं पृच्छा कर्त्तव्या, यथा-तरत् क्षेत्रं प्रत्युपेक्षणीयम्?। ततो ज्ञायकेन-क्षेत्रस्वरूपेज्ञेन शिष्टे-कथिते सति गमनं क्षेत्रप्रत्युपेक्षक कर्त्तव्यम्॥

आमन्त्रणस्यैव विधिमाह-

**[भा.१४६१]** थुइमंगलमामंतण, नागच्छइ जो व पुच्छिओ न कहे।
तस्सुवरिं ते दोसा, तम्हा मिलिएसु पुच्छिज्जा॥

**वृ-** आवश्यके समापिते 'स्तुतिमङ्गलं कृत्वा' तिः स्तुतीर्दत्त्वेति भावः। सर्वेषामपि साधूनामामन्त्रणं कर्त्तव्यम्। कृते चामन्त्रणे यः कश्चिद् नाऽऽगच्छति आगतो वा क्षेत्रस्वरूपं पृष्टः सन् न कथयति तदा मासलघु, तथा तस्योपरि 'ते दोषाः' स्तेन-श्वापदादयो भवन्ति ये तत्र गतानां भविष्यन्ति। तस्माद् मिलितेषु सर्वेष्वपि पृच्छेत्, उपलक्षणत्वात् सर्वेऽपि च कथयेयुः॥

अत्रैव मतान्तरमुपन्यस्य दूषयन्नाह-

**[भा.१४६२]** केई भणंति पुव्विं, पडिलेहिय एवमेव गंतव्वं।
तं तु न जुज्जइ वसहीफेडण आगंतु पडिनीए॥

**वृ-** केचिद् भणन्ति-'पूर्वं' प्राक् प्रत्युपेक्षिते क्षेत्रे एवमेव गन्तव्यम् न पुनस्तत्र क्षेत्रप्रत्युपेक्षकाः प्रेषणीया इति, तत तु 'न युज्यते' न घटते। कुतः? इत्याह-वसतेः कदाचित् स्फेटनं कृतं भवेत्, आगन्तुको वा प्रत्यनीकस्तत्र सम्भवेत्, अः पूर्वदृष्टमपि क्षेत्रं प्रत्युपेक्षणीयम्॥

अथ कथं प्रष्टव्यम्? इत्याह-

**[भा.१४६३]** कयरी दिसा पसत्था, अमुगी सव्वेसि अनुमए गमनं।
चउदिसि ति दु एक्कं वा, सत्तग पनगे तिग जहन्ने॥

**वृ-** यदा सर्वेऽपि साधवो मिलिता भवन्ति तदा गुरवो ब्रुवते-आर्या! पूर्णोऽयमस्माकं मासकल्पः, क्षेत्रान्तरं सम्प्रति प्रत्युपेक्षणीयम्, अतः कतरा दिक् साम्प्रतं प्रशस्ता?। ते ब्रुवते- 'अमुका' पूर्वादीनामन्यतमा। एवं सर्वेषां यद्यसौ 'अनुमता' अभिरुचिता तदा गमनं कर्त्तव्यम्। प्रथमं चतसृष्वपि दिक्षु, अथ चतुर्थ्यां कोऽप्यशिवाद्युपद्रवस्ततस्तिसृषु दिक्षु, तदभावे द्वयोर्दिशोः, तदसत्येकस्यां दिशि गच्छन्ति। ते चैकैकस्यां दिश्युत्कर्षतः सप्त व्रजन्ति, सप्तानामभावे पञ्च, जघन्येन तु त्रयः साधवो नियमाद् गच्छन्ति॥ तत्र च ये आभिग्रहिकाः-क्षेत्रप्रत्युपेक्षणार्थं प्रतिपन्ना-

भिग्रहास्ते स्वयमेव गुरूनापृच्छ्य गच्छन्ति । अथ न सन्त्याभिग्रहिकास्ततः को विधिः ? इत्याह-

[भा.१४६४] वेयावच्चगरं बाल वुड्ढ खमयं वहंतऽगीयत्थं ।
गणवच्छेइअगमनं, तस्स व असती य पडिलोमं ॥

वृ- वैयावृत्यकरं १ बालं २ वृद्धं ३ क्षपकं ४ 'वहन्तं' योगवाहिनं ५ अगीतार्थं ६ एतान् न क्षेत्रप्रत्युपेक्षणाय व्यापारयेत्, किन्तु गणावच्छेदकस्य गमनं भवति । तस्य वाशब्दादपरस्य वा गीतार्थस्य 'असति' अभावे 'प्रतिलोमं' प्रतीपक्रमेण पश्चानुपूर्व्येत्यर्थः, एतानेवागीतार्थमादिं कृत्वा व्यापारयेदिति सङ्ग्रहगाथासमासार्थ ॥ अथैनामेव विवरीषुः प्रथमतः प्रायश्चित्तमाह-

[भा.१४६५] आइतिए चउगुरुगा, लहुओ मासो उ होइ चरिमतिए ।
आणाइणो विराधन, आयरियाई मुनेयव्वा ॥

वृ- 'आदित्रिके' वैयावृत्यकर-बाल-वृद्धलक्षणे व्यापार्यमाणे चत्वारो गुरुकाः । 'चरमत्रिके तु' क्षपक-योगवाहि-अगीतार्लक्षणे लघुको मासः । आज्ञादयश्च दोषाः, विराधना चाऽऽचार्यादीनां ज्ञातव्या ॥ तामेव भावयति-

[भा.१४६६] ठवणकुले व न साहइ, सिट्ठा व न दिंति जा विरादानया ।
परितावनमनुकंपन, तिण्हऽसमत्थो भवे खमओ ॥

वृ- वैयावृत्यकरः प्रेष्यमाणो रुष्यति । रुषितश्च यान्याचार्यादिप्रायोग्यदायकानि स्थापनाकुलानि तानि न कथयति । 'शिष्टानि वा' कथितानि परं तानि तस्यैव ददति नान्यस्य, तेन भावितत्वात् तेषाम् । ततोऽलभ्यमाने प्रायोग्ये या काचिदात्मनो ग्लानादीनां वा विराधना तन्निष्पन्नमाचार्यस्य प्रायश्चित्तम् । अथ क्षपकं प्रेषयति ततो यदसौ शीता-ऽऽतपादिना परिताप्यते तन्निष्पन्नम्, देवता वा काचित् क्षपकमनुकम्पमाना खलु क्षेत्रेऽपि भक्त-पानमुत्पादयति, लोको वा क्षपक इति कृत्वा तस्यानुकम्पया सर्वमपि ददाति नान्यस्य, तपःक्षामकुक्षिश्वासौ तिसृणां गोचरचर्याणामसमर्थः इति ॥ बालद्वारमाह-

[भा.१४६७] हीरेज्ज व खेलेज्ज व, कज्जा-ऽकज्जं न याणई बालो ।
सो व अनुकंपणिज्जो, न दिंति वा किंचि बालस्स ॥

वृ- ह्रियेत वा म्लेच्छादिना, खेलयेद् वा चेटरूपैः सार्द्धम्, 'कार्या-ऽकार्यं च' कर्त्तव्या-ऽकर्त्तव्यं न जानाति बालः । 'स वा' बालः स्वभावत एवानुकम्पनीयो भवति ततः सर्वोऽपि लोकस्तस्य भक्त-पानं प्रयच्छति । स चागत्याचार्याय कथयति-यथा सर्वमपि प्रायोग्यं तत्र प्राप्यते । ततस्तद्वचनादागतस्तत्र गच्छः, यावन्न किञ्चिद् लभ्यते । न ददति वा किञ्चिद् बालाय लोकाः, पराभवनीयतया दर्शनात् ॥ वृद्धद्वारमाह-

[भा.१४६८] वुड्ढोऽनुकंपणिज्जो, चिरेण न य मग्ग थंडिले पेहे ।
अहवा वि बाल-वुड्ढा, ,असमत्था गोयरतियस्स ॥

वृ- 'वृद्धः' परिनतवया अनुकम्पनीयो लोकस्य भवति, ततश्चायं सर्वत्रापि लभते नापरः । तथा स मन्दं मन्दं गच्छन् चिरकालेनोपैति, न च 'मार्गं' पन्थानं स्थण्डिलानि च प्रत्युपेक्षते । अथवा बाल-वृद्धावसमर्थौ 'गोचरत्रिकस्य' त्रिकालभिक्षाटनस्येति ॥ योगवाहिद्वारमाह-

[भा.१४६९] तूरंतो व न पेहे, गुणणालोभन न य चिरं हिंडे ।

विगइं पडिसेहेई, तम्हा जोगिं न पेसिज्जा ॥

वृ- योगवाही 'श्रुतं मम पठितव्यं वर्त्तते' इति त्वरमाणः सन्नपान्तराले पन्थानं न प्रत्युपेक्षते । गुणना-परावर्त्तना तस्या लोभेन चिरमसौ भिक्षां न हिण्डते । लभ्यमानामपि 'विकृतिं' घृतादिकामसौ प्रतिषेधयति । तस्माद् योगिनं न प्रेषयेत् ॥ अगीतार्थद्वारमाह-

[भा.१४७०] पंथं च मास वासं उवस्सयं एच्चिरेण कालेण ।
एहामो त्ति न याणइ, अगीतो पडिलोम असतीए ॥

वृ- अगीतार्थ 'पन्थानं' मार्गं 'मासं' मासकल्पविधिं 'वासं' वर्षावासविधिं 'उपाश्रयं' वसतिमेतानि परीक्षितुं न जानाति । तथा शय्यातरेण पृष्टः 'कदा यूयमागमिष्यथ ?' ततोऽसौ ब्रवीति- 'इयता कालेन' अर्द्धमासादिना वयमेष्याम इत्येवं वदतो यः स्वल्पविधिभाषणजनितो दोषस्तमगीतार्थो न जानाति । यत एवमतः प्रथमतो गणावच्छेदकेन गन्तव्यम् । तस्याभावेऽपरोऽपि योगीतार्थः स व्यापरणीयः । तस्यापि 'असति' अभावे 'प्रतिलोमं' पश्चानुपूर्व्या एतानेवागीतार्थमादिं कृत्वा प्रेषयेत् ॥ केन विधिना ? इति चेद् उच्यते-

[भा.१४७१] सामायारिमगीए, जोगिमनागाढ खमग पारावे ।
वेयावच्चे दायण, जुयल समत्थं व सहियं वा ॥

वृ- अगीतार्थः ओधनिर्युक्तिसामाचारीं कथयित्वा प्रेषणीयः । तदभावे 'अनागाढयोगी' बाह्ययोगवाही योगं निक्षिप्य प्रेष्यते । तस्याप्यभावे क्षपकः, तं च प्रथमं 'पारयेत्' पारणं कारयेत्, ततो 'मा क्षपणं कार्षीः' इति शिक्षां दत्वा प्रतिपुरयेत् । तस्याप्यभावे वैयावृत्यकरः प्रेष्यते । "दायण"त्ति स वैयावृत्यकरो वास्तव्यसाधूनां स्थापनाकुलानि दर्शयति । ततो बालवृद्धयुगलम्, कथम्भूतम् ? 'समर्थं' दृढशरीरम्, वा शब्दो विकल्पार्थः, 'सहितं वा' वृषभसाधुसमन्वितम् । इत्थमादिष्टैस्तैः शेषसाधूनां स्वमुपधिं समर्प्य परस्परं क्षामणां कृत्वा गमनकाले भूयोऽपि गुरूनापृच्छ्य गन्तव्यम् । यदि नापृच्छन्ति तदा मासलघु । ते चावश्यिकीं कृत्वा निर्गच्छन्ति ॥ कियन्तः ? कथं च ? इत्याह-

[भा.१४७२] तिन्नेव गच्छवासी, हवंतऽहालंदियाण दोन्नि जना ।
गमने चोदगपुच्छा, थंडिलपडिलेहऽहालंदे ॥

वृ- जघन्यतस्त्रयो गच्छवासिनो जना एकैकस्यां दिशि व्रजन्ति । यथालन्दिकानां तु गच्छप्रतिबद्धानां द्वौ जनावेकस्यां दिशि क्षेत्रप्रत्युपेक्षकौ गच्छतः । शेषासु तिसृषु दिक्षु गच्छवासिनामाचार्या आदिशन्ति, यथा-यथालन्दिकानामपि योग्यं क्षेत्रं प्रत्युपेक्षणीयम् । तेषां च गमने प्ररूपिते नोदकपृच्छा वक्तव्या । स्थण्डिलप्रत्युपेक्षणं यथालन्दिकानां वाच्यम् ॥

तत्र गमनद्वारं विवृणोति-

[भा.१४७३] पंथुच्चारे उदए, ठाणे भिक्खंतरा य वसहीओ ।
तेना सावय वाला, पच्चावाया य जाणविही ॥

वृ- 'पन्थानं' मार्गं "उच्चारे"त्ति उच्चार-प्रश्रवणभूमिके, "उदए"त्ति पानकस्थानानि येषु बालादियोग्यं प्राशुकैषणीयं पानकं लभ्यते, "ठाणे"त्ति विश्रामस्थानानि, "भिक्ख"त्ति येषु येषु प्रदेशेषु भिक्षा प्राप्यते न वा, अन्तरा-अन्तराले वसतयः-प्रतिश्रयाः सुलभा दुर्लभा वा, स्तेनाः

श्वापदा व्यालाश्च यत्र सन्ति न वा, प्रत्यपायाश्च यत्र दिवा रात्रौ वा भवन्ति, तदेतत् सर्व सम्यग् निरूपयद्भिर्गन्तव्यम् । यानं-गमनं तस्य विधिरयं द्रष्टव्य इति ॥ इदमेव व्याचिख्यासुराह-

[भा.१४७४] वावारिय सच्छंदाण वा वि तेसिं इमो विही गमणे ।
दव्वे खेत्ते काले, भावे पंथं तु पडिलेहे ॥

वृ- 'व्यापारिताः' आचार्येण नियुक्ताः 'स्वच्छन्दाः' नाम ये आभिग्रहिकाः, तेषामुभयेषामप्ययं गमने विधिः । तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावतश्च पन्थानं प्रत्युपेक्षन्ते ॥ कथम् ? इत्याह-

[भा.१४७५] कंटग तेना वाला, पडिनीया सावया य दव्वम्मि ।
सम विसम उदय थंडिल, भिक्खायरियंतरा खेत्ते ॥

वृ- द्रव्यतः कण्टकाः स्तेना व्यालाः प्रत्यनीका श्वापदाश्च पथि प्रत्युपेक्षणीयाः । क्षेत्रतः 'समः' गिरिकन्दरा-प्रपात-निम्नोन्नतरहितः पन्थाः, 'विषमः' तद्विपरीतः, ''उदग'' त्ति पानीयबहुलो मार्गः, स्थण्डिलानि भिक्षाचर्या तथा 'अन्तरा' अपान्तराले वसतयः ॥

[भा.१४७६] दिय राओ पच्चवाए, य जाणई सुगम-दुग्गमे काले ।
भावे सपक्ख-परपक्खपेल्लणा निण्हगाईया ॥

वृ- कालतो दिवा रात्रौ वा प्रत्यपायान् जानाति, यथा-अत्र दिवा प्रत्यापाया न रात्री, अत्र तु रात्रौ न दिवेति; यद्वा दिवा रात्री वाऽयं पन्थाः सुगमो दुर्गमो वा । भावतः स्वपक्षेण परपक्षेण वा प्रेरितः-आक्रान्तोऽयं ग्रामः पन्था वा न वेति । अथ कः पुनः स्वपक्षः को वा परपक्षः ? इत्याह- ''निण्हगाईय'' त्ति निह्नव-पार्श्वस्थादयः साधुलिङ्गधारिणः स्वपक्षः, आदिग्रहणात् चरक-परिव्राजकादयः परपक्षः । एवं प्रत्युपेक्षमाणास्तावद् व्रजन्ति यावद् विवक्षितक्षेत्रं प्राप्ताः ॥

उक्तं गमनद्वारम् । अथ नोदकपृच्छाद्वारमाह-

[भा.१४७७] सुत्तत्थाणि करिंते, न व त्ति वत्तंतगाउ चोएइ ।
न करिंति मा हु चोयग !, गुरूण निइआइआ दोसा ॥

वृ- परो नोदयति-क्षेत्रप्रत्युपेक्षका व्रजन्तः किं सूत्रार्थौ कुर्वते न वा ? । गुरुराह-न कुर्वन्ति, मा भूवन् गुरूणां नित्यवासादयो दोषाः । अतो यदि सूत्रपौरुषीं कुर्वन्ति तदा मासलघु, अर्थपौरुष्यां मासगुरु ॥ ''थंडिलपडिलेहऽहालंदे'' त्ति पदं व्याख्यानयति-

[भा.१४७८] सुत्तत्थपोरिसीओ, अपरिहवंता वयंतऽहालंदी ।
थंडिल्ले उवओगं, करिंति रत्तिं वसंति जहिं ॥

वृ- यथालन्दिकाः सूत्रार्थपौरुष्यावपरिपयन्तो विहारं भिक्षाचर्यां च तृतीयस्यां पौरुष्यां कुर्वाणा व्रजन्ति । यत्र च रात्रौ वसन्ति तत्र 'स्थण्डिले' कालग्रहणादियोग्ये उपयोगं कुर्वन्ति ॥

केन विधिना गच्छवासिनस्तत्र क्षेत्रे प्रविशन्ति ? इत्याह-

[भा.१४७९] सुत्तत्थे अकरिंता, भिक्खं काउं अइंति अवरण्हे ।
बीयदिणे सज्झाओ, पोरिसि अद्धाए संघाडो ॥

वृ- सूत्रार्थावकुर्वन्तः प्रस्तुतक्षेत्रासन्ने ग्रामे भिक्षां कृत्वा समुद्दिश्य अपराह्ने विचारभूमिस्थण्डिलानि प्रत्युपेक्षमाणा विवक्षितं क्षेत्रं ''अइंति'' त्ति प्रविशन्ति । ततो वसतिं गृहीत्वा तत्रावश्यकं कृत्वा कालं प्रत्युपेक्ष्य प्रादोषिकं स्वाध्यायं कृत्वा प्रहरद्वयं शेरते । ये तु न शेरते तेऽर्द्धरात्रिक-

वैरात्रिककालद्वयमपि गृह्णन्ति । ततः प्राभातिकं कालं गृहीत्वा द्वितीयदिने स्वाध्यायः कर्त्तव्यः । ततोऽर्द्धायां पौरुष्यामतिक्रान्तायां सङ्घाटको भिक्षामटति ॥ एतदेवाह-

[भा.१४८०] वीयार भिक्खचरिया, वुच्छाणऽचिरुग्गयम्मि पडिलेहा ।
चोयग भिक्खायरिया, कुलाइँ तहुवस्सयं चेव ॥

वृ- विचारभूमी प्रथममेवाऽपराह्णे प्रत्युपेक्षणीया । ततो रात्रावुषितानामचिरोद्गते सूर्ये अर्द्धपौरुष्यां भिक्षाचरयायाः प्रत्युपक्षणा भवति । अत्र नोदकः प्रश्नयति-किमिति प्रातरारभ्य भिक्षाचर्या विधीयते ? । सूरिरभिदधाति-एवं भिक्षाचर्यां कुर्वाणाः 'कुलानि' दानकुलादीनि तथोपाश्रयं च ज्ञास्यन्तीति समासार्थः ॥ अथैतदेव व्याचष्टे-

[भा.१४८१] बाले वुड्ढे सेहे, आयरिय गिलाण खमग पाहुणए ।
तिन्नि य काले जहियं, भिक्खायरिया उ पाउग्गा ॥

वृ- षष्ठी-सप्तम्योरर्थं प्रति अभेदाद् बालस्य वृद्धस्य शैक्षस्य आचार्यस्य ग्लानस्य क्षपकस्य प्राधूर्णकस्य च 'प्रायोग्या' तदनुकूलप्राप्यमाणभक्त-पाना 'त्रीनपि' पूर्वाह्ण-मध्याह्न-सायाह्नलक्षणान् कालान् यत्र भिक्षाचर्या भवति तत् क्षेत्रं गच्छस्य योग्यमिति गम्यते ॥

कथं पुनस्तत् प्रत्युपेक्ष्यते ? इत्याह-

[भा.१४८२] खेत्तं तिहा करित्ता, दोसीणे नीणितम्मि उ वयंति ।
अन्नेत्ते बहुलद्धे, थोवं दल मा य रूसिज्जा ॥

वृ- क्षेत्रं 'त्रिधा' त्रीन् भागान् कृत्वा एकं विभागं प्रत्युषसि पर्यटन्ति, द्वितीयं मध्याह्ने, तृतीयं सायाह्ने । तत्र यत्र प्रातरेव भोजनस्य देशकालस्तत्र प्रथमं पर्यटन्ति । अथ नास्ति प्रातःक्वापि देशकालस्ततः ''दोसीणे'' पर्युषिते आहारे निस्सारिते वदन्ति, यथा-अन्यान्येषु गृहेषु पर्यटद्भिः बहुः-प्रचुर आहारो लब्धस्तेन च भृतमिदं भाजनम् अतः स्तोकं देहि, 'मा च रुषः' मा रोषं कार्षीः 'यदेते न गृह्णन्ति' इति । एतद्यामी परीक्षार्थं कुर्वन्ति 'किमयं दानशीलो न वा ?' इति ॥

[भा.१४८३] अहव न दोसीणं चिय, जायामो देहि ने दहिं खीरं ।
खीरे घय गुल गोरस, थोवं थोवं च सव्वत्थ ॥

वृ- अथवा न वयं दोसीणमेव याचामः किन्तु देहि ''ने'' अस्मभ्यं दधि क्षीरं च । क्षीरे लब्धे सति घृतं गुडं गोरसं च याचित्वा सर्वत्र स्तोकं स्तोकमेव गृह्णन्ति । एवं तावत् प्रत्युषसि येषु भिक्षाया देशकालो यानि च भद्रककुलानि तानि सम्यगवधारयन्ति यथा बाल-वृद्ध-क्षपकादीनां प्रथम-द्वितीयपरिषहार्दितानां समाधिसन्धारणार्थं प्रातरेव तेषु पेयादीनि याचित्वोपनीयन्ते । एवमेकस्य पर्याप्तं गृहीत्वा वसतिमागम्यालोचनादिविधिपुरस्सरं समुद्दिश्य मध्याह्ने द्वितीये विभागे भिक्षां पर्यटन्ति ॥ कथम् ? इत्याह-

[भा.१४८४] मज्झण्हे पउर भिक्खं, परिताविय पेज्ज जूस पय कढियं ।
ओभट्ठमनोभट्ठं, लब्भइ जं जत्थ पाउग्गं ॥

वृ- मध्याह्ने प्रचुरं भैक्षं तथा 'परितापितं' परितलितं सुकुमारिकादि पक्वान्नं यद्वा 'परितापितं' क्वथितं कट्टरादिकमित्यर्थः 'पेया' यवागूः 'यूषः' मुद्गरसः तथा 'पयः' दुग्धं 'क्वथितं' तापितम् । एवमेव भाषितमनवभाषितं वा यद् यत्र प्रायोग्यमन्विष्यते तत् तत्र यदि लभ्यते तदा प्रशस्तं तत्

क्षेत्रम् । अत्राप्येकस्य पर्याप्तं गृहीत्वा प्रतिनिवृत्त्य समुद्दिश्य संज्ञाभूमीं गत्वा वैकालिकीं पात्रादिप्रत्युपेक्षणां कृत्वा सायाह्ने तृतीये विभागे भिक्षामटन्ति ॥ कथम् ? इत्याह-

[भा.१४८५]　चरिमे परितावियं पेज्ञ खीर आएस-अतरणट्ठाए ।
एक्केक्कगसंजुत्तं, भत्तट्ठं एक्कमेक्कस्स ॥

वृ- चरिमे भइक्षाकाले परितापितं पेया क्षीरं च येषु प्राप्यते तानि कुलानि सम्यगवधारयन्ति । किमर्थम् ? इत्याह-आदेशाः-प्राघूर्णकास्तदा समागच्छेयुः, अतरणः-ग्लानस्तदानीं पथ्यमुपयुञ्जीत तदर्थम्, उपलक्षणत्वाद् बालाद्यर्थं च । अत्राप्येकस्य पर्याप्तं गृहीत्वा प्रतिनिवर्त्तन्ते । यत आह- ''एक्केक्कग'' इत्यादि । एकैकः साधुरन्यसाधुना संयुक्तो यस्मिन्नानयने तदेकैकसंयुक्तं 'भक्तार्थम्' उदरपूरमाहारमेकैकस्य साधोरर्थायानयन्ति । इदमुक्तं भवति-प्रातर्द्वौ साधू सङ्घाटकेन पर्यटतः, तृतीयो रक्षपाल आस्ते; द्वितीयस्यां वेलायां तयोर्मध्यादेक आस्ते, अपरः प्रथमव्यवस्थितं गृहीत्वा प्रयाति; तृतीयस्यां तु द्वितीयवेलारक्षपालः प्रथमव्यवस्थितरक्षपालेन सह पर्यटति, यस्तु वारद्वयं पर्यटितः स तिष्ठति; एवं त्रयाणां जनानां द्वौ द्वौ वारौ पर्यटनं योजनीयम् ॥ किञ्च-

[भा.१४८६]　ओसह भेसज्जाणि य, काले य कुले अ दानसड्ढाई ।
सग्गामे पेहित्ता, पेहंति तओ परग्गामे ॥

'औषधानि' हरीतक्यादीनि 'भैषजानि' पेयादीनि तरिफलादीनि वा चशब्दात् पिप्पल-कसूच्यादीनि च ''काले य'' त्ति येषु कुलेषु यत्र काले वेला यानि वा दानश्राद्धादीनि कुलानि एतानि स्वग्रामे प्रत्युपेक्ष्य ततः परग्रामे प्रत्युपेक्षन्ते ॥ अत्र च चालनां कारयति-

[भा.१४८७]　चोयगवयणं दीहं, पनीयगहणे य ननु भवे दोसा ।
जुज्जइ तं गुरु-पाहुण-गिलाणगट्ठा न दप्पट्ठा ॥

वृ- नोदकः-प्रेरकस्तस्य वचनं-चालनारूपम्-ननु तेषामित्थं दीर्घां भिक्षाचर्यां कुर्वतां प्रणीतस्य च-दधि-दुग्धादेर्ग्रहणे 'दोषाः' सूत्रार्थपरिमन्थ-मोहोद्भवादयो भवेयुः । सूरिराह-भद्र ! युज्यते 'तत्' प्रणीतग्रहणंदीर्घभिक्षाटनं च गुरु-प्राघूर्णक-ग्लानार्थम्, न 'दर्पार्थं' नात्मनो बलवर्णादिहेतोः ॥

[भा.१४८८]　जइ पुण खद्ध-पणीए, अकारणे एक्कसिं पि गिण्हिज्जा ।
तहियं दोसा तेन उ, अकारमे खद्ध-निद्धाइं ॥

वृ- यदि पुनः खद्धं-प्रचुरं प्रणीतं-स्निग्ध-मधुरं ते 'अकारणे' गुर्वादिकारणाभावे एकशोऽपि गृह्णीयुः ततः 'तस्मिन्' खद्ध-प्रणीतग्रहणे भवेयुर्दोषाः । कुतः ? इत्याह-अकारणे आत्मार्थं यस्मात् तेन ''खद्ध-निद्धाइं'' ति प्रचुर-स्निग्धानि भक्ष्यन्त इति वाक्यशेषः । अतो गुरु-ग्लानादिहेतोः क्षेत्रप्रत्युपेक्षणाकाले प्रणीतं गृह्णतां चिरं च पर्यटतां न कश्चिद् दोष इति ॥ अथ ''कुलाइँ तहुवस्सयं चेव'' त्ति पदं व्याख्यायते-भिक्षामटन्तः कुलानि जानन्ति । कथम् ? इत्याह-

[भा.१४८९]　दाने अभिगम सड्ढे, सम्मत्ते खलु तहेव मिच्छत्ते ।
मामाए अचियत्ते, कुलाइँ जाणंति गीयत्था ॥

वृ- 'दानश्राद्धानि' प्रकृत्यैव दानरुचीनि, 'अभिगमश्राद्धानि' प्रतिपन्नाणुव्रतानि श्रावककुलानि, 'सम्यक्त्वश्राद्धानि' अविरतसम्यग्दृष्टीनि, तथैव 'मिथ्यात्वे' मिथ्यादृष्टिकुलानि, 'मामाकानि' 'मा मदीयं गृहं श्रमणाः प्रविशन्तु' इति प्रतिषेधकारीणि, ''अचियत्ते'' त्ति नास्ति प्रीति साधुषु

गृहमुपागतेषु येषां तान्यप्रीतिकानि, एतानि कुलानि गीतार्था पर्यटन्तः सम्यग् जानन्ति ॥

उपाश्रयाँश्च जानन्ति । कथम् ? इत्याह-

[भा.१४९०] जेहि कया उ उवस्सय, समणाणं कारणा वसहिहेउं ।
परिपुच्छिया सदोसा, परिहरियव्वा पयत्तेणं ॥

वृ- इह मनाः पञ्चधा-तापसाः शाक्याः परिव्राजका आजीवका निर्ग्रन्थाश्च । तेषां पञ्चानां निर्ग्रन्थामेव वा 'कारणात्' कारणमुद्दिस्येत्यर्थः, कारणमेव व्यनक्ति-वसति-अवस्थानं तद्धेतोः-तन्निमित्तम्, यैर्गृहिभिः कृता उपाश्रयास्तेषां समीपे भिक्षामटद्भिः 'परिपृच्छ्य' उपाश्रयमूलोत्पत्तिं पर्यनुयुज्य 'सदोषाः' सावद्यदोषदुष्टास्ते उपाश्रयाः प्रयत्नेन परिहर्त्तव्याः ॥ तथा-

[भा.१४९१] जेहि कया उ उवस्सय, समणाणं कारणा वसहिहेउं ।
परिपुच्छिय निद्दोसा, परिभोत्तुं जे सुहं होइ (होंति) ॥

वृ- यैः कृता उपाश्रयाः 'श्रमणानां' निर्ग्रन्थवर्जानां शाक्यादीनां कारणाद् वसतिहेतोस्तान् परिपृच्छ्य 'निर्दोषाः' निरवद्यास्ते उपाश्रयाः परिभोक्तुं ''जे'' इति निपातः पादपूरणे 'सुखं भवन्ति' सुखेनैव संयमबाधामन्तरेण ते परिभुज्यन्त इत्यर्थः ॥

[भा.१४९८] जेहि कया पाहुडिया, समणाणं कारणा वसहिहेउं ।
परिपुच्छिया सदोसा, परिहरियव्वा पयत्तेणं ॥

वृ- यैः कृता 'प्राभृतिका' उपाश्रयेषु उपलेपन-धवलनादिका 'श्रमणानां' पञ्चानामपि साधूनामेव वा कारणाद् वसतिहेतोः तान् परिपृच्छ्य 'सदोषाः' उत्तरगुणैरशुद्धत्वात् सावद्यास्ते उपाश्रयाः प्रयत्नेन परिहर्त्तव्याः ॥

[भा.१४९३] जेहि कया पाहुडिया, समणाणं कारणा वसहिहेउं ।
परिपुच्छिय निद्दोसा, परिभोत्तुं जे सुहं होइ (होंति) ॥

वृ- यैः कृता प्राभृतिका 'श्रमणानां' साधुवर्जितानां तापसादीनां कारणाद् वसतिहेतोस्तान् परिपृच्छ्य निर्दोषा इति मत्वा परिभोक्तुं ''जे'' इति प्राग्वत् 'सुखं भवन्ति' सुखेनैव परिभुज्यन्त इत्यर्थः ॥ अथ कीदशे स्थाने वसतिरन्वेषणीया ? उच्यते-यावन्मात्रं क्षेत्रं वसिमाक्रान्तं भवति तावन्मात्रं पूर्वाभिमुखवामपार्श्वोपविष्टवृषभाकारं बुध्या परिकल्प्य प्रशस्तेषु स्थानेषु वसतिर्गृह्यते। अथ कुत्रावयवस्थाने गृह्यमाणा वसति किंफला भवति ? इत्युच्यते –

[भा.१४९४] सिंगक्खोडे कलहो, ठाणं पुण नत्थि होइ चलणेसु ।
अहिठाणे पुट्टरोगो, पुच्छम्मि य फेडणं जाणे ॥

वृ- 'शृङ्गखोडे' शृङ्गप्रदेशे यदि वसतिं करोति तदा निरन्तरं साधूनां कलहो भवति । 'स्थानम्' अवस्थिति पुनर्नास्ति 'चरणेषु' पादप्रदेशेषु । 'अधिष्ठाने' अपानप्रदेशेषु ''पुट्ट'' ति उदरं तस्य रोगो भवति । 'पुच्छे' पुच्छप्रदेशे 'स्फेटनम्' अपनयनं वसतेर्जानीहि ॥

[भा.१४९५] मुहमूलम्मि उ चारी, सिरे अ कउहे अ पूअ सक्कारो ।
खंधे पट्टीइ भरो, पुट्टम्मि उ धायओ वसहो ॥

वृ- मुखमूले यदि वसति तदा 'चारी' भोजनसम्पत्ति प्रशस्ता । 'शिरसि' शृङ्गयोर्मध्ये ककुदि च वसतिकरणे पूजा च वस्त्र-पात्रादिभि सत्कारश्चाभ्युत्थानादिना साधूनां भवति । स्कन्धप्रदेशे

पृष्ठप्रदेशे च वसत सत्यां साधुभिरितस्तत आगच्छद्भिर्भरो भवति। 'पोट्टे' उदरप्रदेशे वसती गृह्यमाणायां 'ध्रातः' नित्यतृप्तः 'वृषभः' वृषभपरिकल्पनागृहीतवसतिनिवासी साधुजनो भवतीति। एवं परीक्ष्याऽप्रशस्तस्थानव्युदासेन प्रशस्तेषु स्थानेषु स्त्री-पशु-पण्डकवर्जिता वसतिरन्वेषणीया।। तदन्वेषणे चायं विधिः-

[भा.१४९६] देउलियअणुन्नवणा, अणुन्नविए तम्मि जं च पाउग्गं।
भोयण काले किच्चिर, सागरसरिसा उ आयरिया ।।

वृ- देवकुलिका-यक्षादीनामायतनं तत्पार्श्ववर्तिनो वा मठाः। आह किमर्थं देवकुलिकाया निबन्धः? उच्यते-सा प्रायेण ग्रामादीनां बहिर्भवति, साधुभिश्चोत्सर्गतो बहिः स्थातव्यम्, देवकुलिका च विविक्तावकाशा भवति, अतः प्रथमतस्तस्या अनुज्ञापना कर्त्तव्या। अथ नास्ति देवकुलिका बहिर्वा सप्रत्यपायं ततो ग्रामादेरन्तः प्रतिश्रयोऽन्विष्यते। यस्तत्र प्रभुः प्रभुसन्दिष्टो वा सः 'प्रायोग्यं' वक्ष्यमाणमनुज्ञाप्यते। अनुज्ञापिते सति तस्मिन् यच्च तेन प्रायोग्यमनुज्ञातं तस्य परिभोगः कार्यः। अथासौ नानुजानीते प्रायोग्य ततो भोजनदृष्टान्तः कर्त्तव्यः। तथा कियच्चिरं कालं भवन्तः स्थास्यन्ति? इति पृष्टे अभिधातव्यम्-यावद् भवतां गुरूणां च प्रतिभासते। कियन्तो भवन्ति इहावस्थास्यन्ते? इति पृष्टे वक्तव्यम्-सागरः-समुद्रस्तत्सदृशा आचार्या भवन्तीति सङ्ग्रहगाथा-समासार्थ।। अथैनामेव व्याचिख्यासुः "अणुन्नविए तम्मि" इति पदं विवृणोति-

[भा.१४९७] जं जं तु अणुन्नायं, परिभोगं तस्स तस्स काहिंति।
अविदिन्ने परिभोगं, जइ काहिइ तत्थिमा सोही ।।

वृ- 'यद् यत्' तृण-डगलादिकं शय्यातरेणानुज्ञातं तस्य तस्य परिभोगमभिरुचिते क्षेत्रे समायाताः सन्तः करिष्यन्ति तत्र 'इयं' वक्ष्यमाणा शोधि।। तामेवाह-

[भा.१४९८] इक्कड-कढिमे मासो, चाउम्मासो अ पीढ-फलएसु।
कट्ठ-कलिंचे पनगं, छारे तह मल्लगाईसु ।।

वृ- इक्कडमये कठिनमये च संस्तारकेऽदत्ते गृह्यमाणे लघुमासः। चत्वारो मासा लघवः पीठफलकेषु। तथा काष्ठा-कलिञ्चियोः क्षारे मल्लक-तृण-डगलादिषु च पञ्चकम्। अतः प्रायोग्यमनुज्ञापनीयम्।। अथास ब्रूयात् 'किं तत् प्रायोग्यम्?' ततो वक्तव्यम्-

[भा.१४९९] दव्वे तण-डगलाई, अच्छण-भाणाइधोवणा खित्ते।
काले उच्चाराई, भावि गिलाणाइ कूरुवमा ।।

वृ- प्रायोग्यं चतुर्द्धा-द्रव्यतः क्षेत्रतः कालतो भावतश्च। तत्र 'द्रव्ये' द्रव्यतस्तृण-डगलानि, आदिशब्दात् क्षार-मल्लकादीनि च। क्षेत्रतः "अच्छणं"ति स्वाध्यायादिहेतोः प्राङ्गणादिप्रदेशेऽवस्थानम्, तथा भाजनानाम् आदिग्रहणादाचार्यादिसत्कमलिनवस्त्राणां धावनं-प्रक्षालनं च प्रतिश्रयाद् बहिर्विधीयते। कालतो रात्रौ दिवा वा अवेलायामुच्चारस्य प्रश्रवणस्य वा व्युत्सर्जनम्। भावतो ग्लानस्यापरस्य वा प्रधूर्णकादेर्निवात-प्रवाताद्यवकाशस्थापनेन समाधिसम्पादनम् इत्युक्ते यद्यनुजानाति ततः सुन्दरम्। अथ ब्रूयात्-'मया युष्मभ्यं वसतिरेव दत्ता, अहमन्यद् युष्मदीयं प्रायोग्यं न जानामि' ततो यः प्राग् भोजनदृष्टान्त उद्दिष्टः स उपदर्श्यते-"कूरुवमे"ति कूरः-भक्तं तस्योपमा। यथा केनचित् कस्यापि पार्श्वे कूरः प्रार्थितः, तेन च दत्तः, ततस्तस्य स्नाना-ऽऽसन-

भाजनोपदीकना-ऽवगाहिम-सूप-नानाविधव्यञ्जनादीन्यपि दीयन्ते; एवं भवताऽपि वसतिं प्रयच्छता सर्वमपि प्रायोग्यं दत्तमेव भवति, परं तथापि वयं भवन्तं भूयोऽपि तृतीयव्रतभावनामनुवर्त्तयन्तोऽनुज्ञापयामः । एवमुक्ते स सर्वमपि प्रायोग्यमनुजानीयात् ततो यत्र यद् उच्चारादिव्युत्सर्जनमनुज्ञातं तत् तत्र विधेयम् ॥ यत आह-

**[भा.१५००]** उच्चारे पासवणे, लाउअनिल्लेवणे य अच्छणेए ।
करणं तु अणुन्नाए, अणनुन्नाए भवे लहुओ ॥

**वृ-** उच्चारस्य प्रश्रवणस्य 'अलाबुनिर्लेपनस्य' पात्रप्रक्षालनस्य "अच्छणए" त्ति स्वाध्यायाद्यर्थमवस्थानस्य गाथायां षष्ठ्यर्थे सप्तमी 'करणं' समाचरणं शय्यातरेणानुज्ञाते प्रदेशे कर्त्तव्यम् । अथाननुज्ञाते अवकाशे उच्चारादिकं करोति तदा लघुको मास इति ॥ गतं भोजनद्वारम् । अथ कियच्चिरं कालमिति द्वारम्-यदि शय्यातरः प्रश्नयति 'कियन्तं कालं यूयं स्थास्यथ ?' ततो वक्तव्यम्-

**[भा.१५०१]** जाव गुरूण य तुब्भ य, केवइया तत्थ सागरेनुवमा ।
केवइ कालेनेहिह, सागार ठवंति अन्ने वि ॥

**वृ-** यावद् गुरूणां युष्माकं च [illegible], [illegible] मासमेकं व्याघाते तु हीनमधिकं वा वयमेकत्र तिष्ठामः । अथ 'मासमेव स्थास्यामः' इति निर्द्धारितं भणति ततो मासलघु । अथासौ प्रश्नयेत् 'कियन्तो यूयं तिष्ठथ ?' ततो वक्तव्यम्-"सागरेनुवम" त्ति सागरः समुद्रस्तेनोपमा-यथा समुद्रः कदाचित प्रसरति कदाचिच्चापसरति, एवमाचार्या अपि कदाचिद् दीक्षामुपसम्पदं वा प्रतिपद्यमानैः साधुभिः परिवारतः प्रसर्पन्ति कदाचित् तेष्वेवान्यत्र गतेष्वपसर्पन्ति, अत इयन्तो इति सङ्ख्यानं कर्त्तुं न शक्यते । यस्तु 'एतावन्तो वयम्' इति निश्चितं ब्रूते तस्य मासलघु । अथासौ पृच्छति कियता कालेन 'एष्यथ' आगमिष्यथ ? ततः 'साकारं' सविकल्पं वचनं 'स्थापयन्ति' ब्रुवते इत्यर्थः । यथा-अन्येऽपि क्षेत्रप्रत्युपेक्षका अपरासु दिक्षु गताः सन्ति ततस्तैर्विवेदिते यदा गुरूणां विचारे समेष्यति तदा व्याघातभावे इयत्सु दिवसेषु गतेषु व्याघाते तु हीने अधिके वा काले वयमेष्याम इति । यः पुनः 'इयता कालेनागमिष्यामः' इति ब्रवीति तस्य मासलघु ॥

**[भा.१५०२]** पुव्वद्दिट्ठे इच्छइ, अहव भणिज्जा हवंतु एवइआ ।
तत्थ न कप्पइ वासो, असई खेत्तस्सऽणुन्नाओ ॥

**वृ-** अथासौ 'पूर्वदृष्टान्' यैः प्राग् मासकल्पो वर्षावासो वा कृत आसीत् तानेवेच्छति नान्यान्, भणति च-ये साधवो मया दृष्टपूर्वास्तेषामहं शीलसमाचारं सर्वमपि जानामि अतस्त एवेह समानेतव्या न शेषाः; अथवा भणेत्-ये वा ते वा साधवो भवन्तु परमेतावन्त एवात्र तिष्ठन्तु तत्र किं कर्त्तव्यम्? इत्याह-'तत्र' एवं शय्यातरेण निर्द्धारिते सति 'न कल्पते वासः' न युज्यते तस्यां वसतावस्थातुमिति भावः । अथ नास्त्यपरं मासकल्पप्रायोग्यं क्षेत्रं तत इतरस्या वसतेरलाभे तस्यामेव वसतौ वासोऽनुज्ञातः ॥

तत्र च वसतां यदि प्राघूर्णकः समागच्छति ततः को विधि ? इत्याह-

**[भा.१५०३]** सक्कारो सम्माणो, भिक्खग्गहणं च होइ पाहुणए ।

जइ वसइ जाणओ तहिं, आवज्जइ मासियं लहुगं ॥

वृ- 'सत्कारः' वन्दना-ऽभ्युत्थानादि 'सम्मानः' विश्रामणादि 'भिक्षाग्रहणम्' उपविष्टस्य भिक्षाया आनयनम्, एतत् सर्वमपि प्राघूर्णके आगते सति कर्त्तव्यम्। यदि वसतिर्येषां तेषां वा परिमितानां साधूनां दत्ता तदा यावन्तः प्राघुणकाः समायातास्तावतो वास्तव्यानन्यत्र विसर्ज्यप्राघुणकाः स्थाप्यन्ते। अथ नामग्राहं गृहीत्वा नियमितानामेव साधूनां सा दत्ता ततः प्राघुणकस्य वसतिस्वरूपं निवेद्यते। निवेदिते च यदि 'ज्ञोऽपि वसतिस्वरूपं जानानोऽपि तत्र वसति तदा आपद्यते मासिकं लघुकम् ॥ ततः-

[भा.१५०४] किइकम्म भिक्खगहणे, कयम्मि जाणाविओ बहिं वसइ।
हिय-नट्ठेसुं संका, सुण्हा उब्भाम वोच्छेदो ॥

वृ- 'कृतिकर्मणि' विश्रामणादौ भिक्षाग्रहणे च कृते सति वसतिस्वरूपं ज्ञापितः सन् रात्रौ बहिर्वसति। यदि ज्ञापितोऽपि सन् बहिर्न व्रजति तदा सागारिकस्य केनचिच्चौरादिना हृते नष्टे न एवमेवाऽदृश्यमाने कस्मिंश्चिद् वस्तुनि शङ्का भवेत्-नूनं यदद्यामुकं वस्तु न दृश्यते तदेतेषां यः प्राघुणको रात्रावुषित्वा प्रतिगतः तेन हृतं भविष्यति। 'स्नुषा वा' वधू रात्रावुद्भ्रामकेण सह गता भवेत् तत्रापि यदि प्राघुणकस्य शङ्का सागारिकः करोति तदा तद्रव्या-ऽन्यद्रव्याणां व्यवच्छेदो भवेत् ॥ एवं वसतौ लब्धायां किं विधियम्? इत्याह-

[भा.१५०५] पडिलेहियं च खेत्तं, थंडिलपडिलेहऽमंगले पुच्छा।
गामस्स व नगरस्स व, सियाणकरणं पढम वत्थुं ॥

वृ- यदा क्षेत्रं सम्यक् प्रत्युपेक्षितं भवति तदा 'महास्थण्डिलं' शबपरिष्ठापनभूमिलक्षणं प्रत्युपेक्षणीयम्। "अमंगले च्छ"त्ति नोदकः पृच्छति-भगवन्! यूयं तिष्ठन्त एव किमेवममङ्गलं कुरुथ? । सूरिराह-ग्रामस्य वा नगरस्य वा "सियाणकरणं" स्मशानस्थापनायोग्यं 'प्रथमम्' आद्यं वास्तु प्रत्युपेक्ष्यत इति वाक्यशेषः। इयमत्र भावना-ग्राम-नगरादीनां तत्प्रथमतया निवेश्यमानानां वास्तुविद्यानुसारेण प्रथमं स्मशानवास्तु निरूप्य ततः शेषाणि देवकुल-सभासौधादिवास्तूनि निरूप्यन्ते, लोके तथादृष्टत्वात्, न च तदमाङ्गलिकम्, एवमत्रापि महास्थण्डिलं प्रथमं प्रत्युपेक्ष्यमाणमस्माकं नामाङ्गलिकं भवतीति ॥ तत्र कस्यां दिशि प्रत्युपेक्षणीयम्? उच्यते-

[भा.१५०६] दिस अवरदक्खिणा दक्खिणा य अवरा य दक्खिणापुव्वा।
अवरुत्तरा य पुव्वा, उत्तर पुव्वुत्तरा चेव ॥

वृ- प्रथमतो महास्थण्डिलप्रत्युपेक्षणविषया अपरदक्षिणा दिक्। अथ तस्यां नदी-क्षेत्रा-ऽऽरामादिव्याघातः ततो दक्षिणा। तस्या अभावे अपरा। तदलाभे दक्षिणपूर्वा। तदसत्त्वे अपरोत्तरा। तस्या अप्यप्राप्तौ पूर्वा। तस्या असम्भवे उत्तरा। उत्तरस्या अभावे पूर्वोत्तरा दिग् मन्तव्या ॥ अथासामेव गुण-दोषविचारणामाह-

[भा.१५०७] पउरन्न-पान पढमा, बीयाए भत्त-पान न लहंति।
तइयाइ उवहिमाई, चउत्थी सज्झाय न करिंति ॥

वृ- 'प्रथमा' अपरदक्षिणा दिक् प्रचुरान्न-पाना भवति, तस्यां प्रत्युपेक्ष्यमाणायां प्रचुरमन्न-पानं प्राप्यत इत्यर्थः। यदि तस्यां सत्यां 'द्वितीयां' दक्षिणां प्रत्युपेक्षन्ते ततो भक्त-पानं न लभन्ते। अथ

प्रथमायां कोऽपि व्याघातस्ततो द्वितीयामपि प्रत्युपेक्षमाणाः शुद्धाः । एवमुत्तरास्वपि दिक्षु भावनीयम्। तथा तृतीयस्यां "उवहिमाइ" ति उपधि-वस्त्र-पात्रादिकः स्तेनैरपह्रियते, तस्मिंश्चापहृते तृणग्रहणाऽग्निसेवनादयो दोषाः । चतुर्थ्यां 'स्वाध्यायं न कुर्वन्ति' कर्तव्यो न भवतीत्यर्थः ॥

[भा.१५०८] पंचमियाए असंखड, छट्ठीए गणस्स भेयणं जाण ।
सत्तमिया गेलन्नं, मरणं पुण अट्ठमीए उ ॥

वृ- पञ्चम्याम् 'असङ्खडं' कलहः साधूनां भवति । षष्ठ्यां 'गणस्य' गच्छस्य 'भेदनं' द्वैधीभवनं जानीहि । सप्तमी 'ग्लान्यं' ग्लानत्वं साधूनां जनयति । अष्टम्यां पुनर्मरणमपरस्य साधोरुपजायते॥ अमुमेव गाथाद्वयोक्तमर्थमेकगाथया प्रतिपादयति-

[भा.१५०९] समाही य भत्त-पाने, उवगरणे तुमंतुमा य कलहो उ ।
भेदो गेलन्नं वा, चरिमा पुन कड्डए अन्नं ॥

वृ- प्रतमायां भक्त-पानलाभेन साधूनां समाधिराविर्भवति । द्वितीयायां भक्त-पानं न लभन्ते। तृतीयायामुपकरणमपह्रियते । चतुर्थ्यामेकः साधुरपरं भणति-त्वमेवमपराधं कृतवान्, अपरो ब्रूते-न मया अपराद्धं त्वमेवेदं विनाशितवानित्येवं तुमंतुमा भवति, तस्याः करणेन स्वाध्यायो न भवतीति भावः । पञ्चम्यां 'कलहः' गच्छस्य ; षष्ठ्यां 'भेदः' गच्छस्य द्वैधीभावः । सप्तम्यां ग्लानत्वम् । 'चरमा' अष्टमी पुनरन्यं साधुं 'कर्षति' पञ्चत्वं प्रापयतीत्यर्थः ॥

[भा.१५१०] एक्केक्कम्मि उ ठाणे, चउरो मासा हवंतऽनुग्घाया ।
आणाइणो अ दोसा, विराधना जा जहिं भणिया ॥

वृ- एकैकस्मिन् स्थाने यथोक्तक्रममन्तरेण दक्षिणादीनां दिशां प्रत्युपेक्षणे चत्वारो मासा अनुद्घाताः प्रायश्चित्तं भवन्ति, आज्ञादयश्च दोषाः, 'विराधना' भक्त-पानालाभोपधिहरणादिका या यत्र भणिता सा तत्र द्रष्टव्या ॥ एतेन विधिना यदा क्षेत्रं प्रत्युपेक्षितं भवति तदा किमपरं भवति ? इत्याह-

[भा.१५११] पडिलेहियं च खेत्तं, अह य अहालंदियाण आगमनं ।
नत्थि उवस्सयवालो, सव्वेहि वि होइ गंतव्वं ॥

वृ- एकतो गच्छवासिभि क्षेत्रं प्रत्युपेक्षितं भवति, अथात्रान्तरे यथालन्दिकानामागमनं भवति, तेहि सूत्रार्थपौरुष्यावहापयन्तस्तृतीयपौरुष्यां विहारं कुर्वन्तो गच्छवासिभि क्षेत्रे प्रत्युपेक्षिते समायान्ति, तेषां च नास्ति तत्र क्षेत्रे स्थापनयोग्य उपाश्रयपालः, जनद्वयस्यैवागमनादिति कृत्वा सर्वैरपि भवति गन्तव्यम् ॥ अथ ते यथालन्दिकाः कथं क्षेत्रं प्रत्युपेक्षन्ते ? उच्यते-

[भा.१५१२] पुच्छिय रुइयं खेत्तं, गच्छे पडिबद्ध बाहिं पेहिंति ।
जं तेसिं पाउग्गं, खेत्तविभागे य पूरिंति ॥

वृ- ये गच्छप्रतिबद्धा यथालन्दिकास्तैर्गच्छवासिनः पृष्टाः-आर्या ! अभिरुचितं क्षेत्रं न वा ? इति । ततो गच्छवासिनः प्राहुः-अभिरुचितम् । ततो यथालन्दिका गच्छवासिप्रत्युपेक्षितस्य क्षेत्रस्य "बाहिं" ति सक्रोशयोजनाद् बहिः क्षेत्रं प्रत्युपेक्षन्ते । कथम् ? इत्याह-यत् 'तेषां' यथालन्दिकानां 'प्रायोग्यं' कल्पनीयमलेपकृतं भक्त-पानं परिकर्मरहिता च वसतिस्तदेव गृह्णन्ति, 'क्षेत्रविभागाश्च'

षड्वीथीरूपास्तानपि पूरयन्ति ॥

[भा.१५१३] जं पि न वच्चंति दिसिं, तत्थ वि गच्छेल्लगा सिं पेहंति ।
पग्गहियएसणाए, विगई-लेवाडवज्जाइं ॥

वृ- यामपि दिशं यथालन्दिकान व्रजन्ति 'तत्रापि' तस्यामपि दिशि गच्छवासिनः क्षेत्रप्रत्युपेक्षकाः 'तेषां' यथालन्दिकानां योग्यं स्वप्रत्युपेक्षितक्षेत्रस्य सक्रोशयोजनाद् बहि क्षेत्रं प्रत्युपेक्षन्ते कथम्? इत्याह-प्रगृहीतया-साभिग्रहया तृतीयपौरुष्यामुपरितनैषणापञ्चकस्यान्यतरयैषणया विकृति-लेपकृतवर्जे भक्त-पाने गृह्णन्ति, घृतादिका विकृतीस्तक्र-तीमनादिकं द्राक्षापानादिकं च लेपकृतं वर्जयन्तीत्यर्थः ॥

[भा.१५१४] जइ तिन्नि सव्वगमणं, एहामु त्ति लहुओ य आणाई ।
परिकम्म कुड्डकरणं, नीहरणं कट्ठमाईणं ॥

वृ- यदि ते गच्छवासिनस्त्रयो जनास्ततः सर्वेषामपि गुरुसकाशे गमनम् । ते च गच्छन्तो यदि सागारिकेण पृच्छयन्ते 'किं यूयमागमिष्यथ न वा ?' ततो यदि 'एष्यामः' आगमिष्याम इति निर्वचनमर्पयन्ति ततो लघुको मासः आज्ञादयश्च दोषाः । शय्यातरश्चिन्तयति-'यदेते एष्याम इत्युक्त्वा प्रतिगतास्तद् नूनमागमिष्यन्ति' इति परिभाव्य 'परिकर्म' उपलेपनादिकं वसतेः कुर्यात्, कुड्यस्य वा जीर्णस्योपलक्षणत्वात् कपाटस्यवा करणं-संस्थापनं विदध्यात्, काष्ठानाम् आदिग्रहणात् तृणानां धान्यस्य वा 'नीहरणं' निष्काशनं कुर्यात् ॥ यद्वा तेषामाचार्याणामपरं किमपि क्षेत्रमभिरुचितं ततस्तत्र गताः, तत्र च क्षेत्रेऽपरे साधवः सामायाताः ततः किम् ? इत्याह-

[भा.१५१५] अद्धाणनिग्गयाई, असिवाइ गिलाणओ अ जो जत्थ ।
नेहामो त्ति य लहुओ, तत्थ वि आणाइणो दोसा ॥

वृ- अध्वा-विप्रकृष्टो मार्गस्ततो निर्गताः-निष्क्रान्ता अशिवादिभिर्वा कारणैः प्रेरिताः परिश्रान्तास्ते साधवस्तत्रायाताः । तत्र चान्या वसतिर्नास्ति, सैव प्राचीनसाधुप्रत्युपेक्षिता वसतिस्तैर्याचिता । सागारिको ब्रूते-मयेयमन्येषां साधूनां दत्ताऽस्ति, तेऽप्येष्याम इति भणित्वा गताः सन्ति, अतो नाहं दातुमुत्सहे । एवं ते वसतिमलभमानाः श्वापद-स्तेन-कण्टकैः शीतेन वा प्रारभ्यमाणाः प्रतिगमनादीनि कुर्युः, ग्लानो वा यस्तेषां सह विहारं कार्यमाणो यत्र यत् परितापनादिकं प्राप्नोति तन्निष्पन्नं प्रायश्चित्तम् । यतश्चैवमतः 'एष्यामः' इति न वक्तव्यम् । 'न एष्यामः इत्यपि वदतां मासलघु, तत्राप्याज्ञादयो दोषाः ॥ अपरे चेमे-

[भा.१५१६] वक्कइअ विक्कएण व, फेडण धन्नाइछुभणमावासे ।
नीणिंते अहिकरणं, विराधना हाणि हिंडंते ॥

वृ- 'नागमिष्यन्ति साधवः' इति कृत्वा 'वक्रयिता' वक्रयेण-भाटकेन दत्ता सा वसति, विक्रयेण वा दत्ता विक्रीतेत्यर्थः; स्फेटनं वा वसतेः कृतम्, धान्यस्य आदिशब्दाद् भाण्डस्यान्यस्य वा उपकरणजातस्य क्षेपणं तस्यां कृतम्, बटुक-चारणादयो वा तत्र शय्यातरेणावासिताः, तेषां चाचार्याणां तदेव क्षेत्रमभिरुचितं ततस्तत्रैव समागताः । स प्राह-युष्माकं साधुभिरिति कथितं 'वयं नेष्यामः' ततो मयेयमन्येषां दत्ता धान्यादीनां वा भृता । ततो यथाभद्रकोऽसौ सागारिकस्तान् बटुकादीन् निष्काशयति, ततस्तेषु निष्काश्यमानेषु 'अधिकरणं' पृथिव्याद्युपमर्दशनम् । यद्वा ते

प्रद्विष्टः पर्यटतां या संयमादिविराधना या च सूत्रार्थयोः परिहाणिस्तन्निष्पन्नमपि प्रायश्चित्तम् । तस्मान्न वक्तव्यं 'नेष्यामः' इति ॥ किं पुनस्तर्हि वक्तव्यम् ? उच्यते-

[भा.१५१७] जह अम्हे तह अन्ने, गुरु-जेट्ठमहाजनस्स अम्हे मो ।
पुव्वभणिया उ दोसा, परिहरिया कुड्डमाईया ॥

वृ- यथा वयमत्रागतास्तथा अन्येऽपि साधवस्तिसृषु दिक्षु गताः सन्ति ततो न जानीमः कीदृशं क्षेत्रं तैः प्रत्युपेक्षितमस्ति ? । अस्माकं तावदिदं क्षेत्रमभिरुचितम्, परं गुरवश्च-आचार्या ज्येष्ठमहाजनश्च-ज्येष्ठसाधुसमुदायो गुरु-ज्येष्ठमहाजनं तस्य वयम् 'मो' इति पादपूरणे परतन्त्रावर्त्तामहे इतिवाक्यशेषः । ततस्तत्रगतानां गुरूणां ज्येष्ठार्याणां वा यद् विचारे समेष्यति तद् विधास्यामः । एवंब्रुवाणैः 'पूर्वभणिताः' कुड्यकरणादयो दोषाः परिहृताः ॥ इत्थमुक्त्वा सागारिकमापृच्छ्य ते किं कुर्वन्ति ? इत्याह-

[भा.१५१८] जइ पंच तिन्नि चत्तारि छसु सत्तसु य पंच अच्छंति ।
दोय गुरुस्स [illegible] अच्छंते ॥

वृ- यदि ते पञ्च जनास्ततस्त्रयस्तत्रैवासते द्वौ गुरुसकासं गच्छतः । अथ षड् जनास्ततश्चत्वारस्तिष्ठन्ति द्वौ गुरूणामभ्यर्णे व्रजतः । अथ सप्त जनाः ततः पञ्च तत्रैवासते द्वौ गुरूणामुपकण्ठे गच्छतः । यदि च ऋजुः पन्थाः सव्याघातस्ततोऽपरं पन्थानं प्रत्युपेक्षन्ते । नोदकः पृच्छति- ये ते गुरुसकाशं व्रजन्ति ये च ते उपाश्रये आसते ते उभयेऽपि किं स्वाध्यायं कुर्वते वा न वा ? ॥ उच्यते-

[भा.१५१९] वच्चंतकरण अच्छंतअकरणे लहुओ मासो गुरुओ उ ।
जावइकालं गुरुणो, न इंति सव्वं अकरणाए ॥

वृ- ये ताव् व्रजन्ति ते यदि सूत्रपौरुषीं कुर्वन्ति ततो मासलघु, अर्थपौरुषीं कुर्वन्ति मासगुरु । ये तूपाश्रये तिष्ठन्ति तेषां सूत्रपौरुष्या अकरणे लघुको मासः, अर्थपौरुष्या अकरणे गरुको मासः । यावत्कालं गुरूणां समीपे 'नायान्ति' न प्राप्नुवन्ति तावत् "सव्वं अकरणाए" त्ति सर्व मपि-सूत्रमर्थं च न कुर्वन्ति ॥ इदमेव सविशेषमाह-

[भा.१५२०] जइ वि अनंतर खेत्तं, गयाओ तह वि अगुनंतगा एंति ।
निययाई मा गच्छे, इतरत्थ य सिज्जवाघाओ ॥

वृ- यद्यपि 'अनन्तरम्' अव्यवहितमेव क्षेत्रं गतास्तथापि 'अगुणयन्तः' सूत्रार्थावकुर्वन्त आयान्ति । कुतः ? इत्याह-नित्यवासादयो दोषा गच्छस्य मा भूवन्, 'इतरत्र च' प्रत्युपेक्षिते क्षेत्रे चिरकालं विलम्ब्यागच्छतां शय्यायाः-उपाश्रयस्य व्याघातो मा भूत् ॥

यत एवमतोऽगुणयन्तः समागम्य ते इदं कुर्वन्ति-

[भा.१५२१] ते पत्त गुरुसगासं, आलोएंती जहक्कमं सव्वे ।
चिंता वीमंसा या, आयरियाणं समुप्पन्ना ॥

वृ- 'ते' क्षेत्रप्रत्युपेक्षकाः प्राप्ताः सन्तो गुरुसकाशमालोचयन्ति यथाक्रमं सर्वेऽपि क्षेत्रस्वरूपम् । ततस्तेषामालोचनां श्रुत्वा 'चिन्ता' 'कस्यां दिशि व्रजामः ?' इत्येवंलक्षणा 'मीमांसा च' शिष्याभिप्रायविचारणा आचार्याणां समुत्पन्ना ॥ अथैनामेव गाथां भावयति-

[भा.१५२२] गंतूण गुरुसगासं, आलोएत्ता कहिंति खेत्तगुणे।
न य सेसकहण मा होज्ज ऽसंखडं रत्ति साहंति ॥

वृ- गत्वा गुरूणां सकाशमालोच्य गमनागमनातिचारं कथयन्ति क्षेत्रगुणान्। ते चाचार्यान् विमुच्य 'न च' नैव शेषाणां साधूनां कथयन्ति। कुतः ? इत्याह-मा भूद् असङ्खडं स्वस्वक्षेत्र-पक्षपातसमुत्थम्। यद्यन्येषां कथयन्ति तदा मासलघु। तस्माद् रात्रौ "साहंति" त्ति कथयन्ति॥ कथम् ? इति चेद् उच्यते-आचार्या आवश्यकं समाप्य मिलितेषु सर्वेष्वपि साधुषु पृच्छन्ति-आर्या! आलोचयत कीदृशानि क्षेत्राणि ?। तत उत्थाय गुरूनभिवन्द्य बद्धाञ्जलयो यथाज्येष्ठ-मालोचयन्ति-

[भा.१५२३] पढमाए नत्थि पढमा, तत्थ य घय-खीर-कूर-दधिमाई।
बिइयाए बीय तइयाए दो वि तेसिं च धुवं लंभो ॥

वृ- 'प्रथमायां' पूर्वस्यां दिशि यद् अस्माभि क्षेत्रं प्रत्युपेक्षितं त्र 'प्रथमा' सूत्रपौरुषी नास्ति, तस्यामेव भिक्षाटनवेलासम्भवात्, परं तत्र क्षेत्रे घृत-क्षीर-कूर-दध्यादीन प्रकामं प्राप्यन्ते। द्वितीयाः क्षेत्रप्रत्युपेक्षका ब्रुवते-द्वितीयस्यां दिशि 'द्वितीया' अर्थपौरुषी नास्ति, तस्यामेव भिक्षाटनवेलाभावात्, घृत-दुग्ध-दध्यादीनि तु तथैव लभ्यन्ते। तृतीया ब्रुवते-तृतीयस्यां दिशि 'द्वे अपि' सूत्रार्थपौरुष्यौ विद्येते, मध्याह्ने भिक्षालाभसद्भावात्, तेषां च घृत-दुग्धादीनां 'ध्रुवः' निश्चितो लाभ इति॥ तथा-

[भा.१५२४] ओभासिय धुव लंभो, पाउग्गाणं चउत्थिए नियमा।
इहरा वि जहिच्छाए, तिकाल जोगं च सव्वेसिं ॥

वृ-चतुर्था पुनरित्थमाहुः-अस्मत्प्रत्युपेक्षितायां चतुर्थ्यां दिशि प्रायोग्याणामवभाषितानां 'ध्रुवः' अवश्यम्भावी लाभः। 'इतरथाऽपि' अवभाषणमन्तरेणापि 'यदृच्छया' प्रकामं 'त्रिकालं' पूर्वाह्न-मध्याह्न-ऽपराह्नलक्षणे कालत्रये 'सर्वेषामपि' बाल-वृद्धादीनां 'योग्यं' सामान्यं भक्त-पानं प्राप्यते॥ इत्थं सर्वैरपि स्वस्वक्षेत्रस्वरूपे निवेदिते सत्याचार्याश्चिन्त्यन्ति-कस्यां दिशि गन्तुं युज्यते ?। ततः स्वयमेवाद्यानां तिसृणां दिशां सूत्रार्थहान्यादिदोषजालं परिभाव्य चतुर्थीं दिशमनन्तरोक्त-दोषरहितत्वेन गन्तव्यतया विनिश्चित्य किं कुर्वन्ति ? इत्याह-

[भा.१५२५] इच्छागहणं गुरुणो, कत्थवयामो त्ति तत्थ ओअरिया।
खुहिया भणंति पढमं, तं चिय अनुओगतत्तिल्ला ॥

वृ- 'गुरोः' आचार्यस्य 'इच्छाग्रहणं' शिष्याणामभिप्रायपरीक्षणं भवति-आर्या! कथयत 'कुत्र' कस्यां दिशि व्रजामः ? इति। ततो ये 'औदरिकाः' स्वोदरभरणैकचित्तास्ते 'क्षुभिताः' सम्भ्रान्ताः सन्तो भणन्ति-प्रथमां दिशं व्रजामो यत्र प्रथमपौरुष्यामेव प्रकामं भोजनमवाप्यते। तामेव दिशं "अनुओगतत्तिल्ल" त्ति अनुयोगग्रहणैकनिष्ठाः शिष्या गन्तुमिच्छन्ति, येन द्वितीयपरुष्यां निव्याघातमर्थग्रहणं भवति॥

[भा.१५२६] बिइयं सुत्तग्गाही, उभयग्गाही य तइयगं खेत्तं।
आयरिओ उ चउत्थं, सो उ पमाणं हवइ तत्थ ॥

वृ- ये तु सूत्रग्राहिणस्ते भणन्ति-द्वितीयां दिशं गच्छामः यत्र न सूत्रपौरुषीव्याघात इति। ये

तूभयग्राहिणस्ते 'तृतीयं' तृतीयदिग्वर्ति क्षेत्रमिच्छन्ति, तत्र हि द्वयोरप्याद्यपौरुष्यर्निर्व्याघातं सूत्रार्थग्रहणे भवतः । आचार्यास्तु चतुर्थं क्षेत्र गन्तुमिच्छन्ति, यतस्तत्र त्रिष्वपि कालेषु बालवृद्धाद्यर्थं सामान्यक्तं प्राघूर्णकाद्यर्थं पुनरवभाषितं दुग्धादिकं प्रायोग्यं प्राप्यते, न च कोऽपि सूत्रार्थयोर्व्याघात इति । 'स एव च' आचार्य 'तत्र' तेषां मध्ये प्रमाणं भवति ॥ आह किं पुनः कारणं येनाचार्याश्चतुर्थक्षेत्रमिच्छन्ति ? इति अत आह-

[भा.१५२७] मोहुब्भवो उ बलिए, दुब्बलदेहो न साहए अत्थं ।
तो मज्झबला साहू, दुद्धस्से होइ दिट्ठंतो ॥

वृ- प्रथम-द्वितीय-तृतीयेषु क्षेत्रेषु प्रचुरस्निग्ध-मधुराहारप्राप्तेः शरीरेण बलवान् भवति, बलवतश्चावश्यम्भावी मोहोद्भवः । एवं तर्हि यत्र भिक्षा न लभ्यते तत्रगत्वा बुभुक्षाक्षामकुक्षयस्तिष्ठन्तु, नैवम्, दुर्बलदेहः साधुर्न साधयति 'अर्थं' ज्ञान-दर्शन-चारित्ररूपम् । यत एवं ततः 'मध्यबलाः' नातिबवन्तो न चाऽतिदुर्बलाः साधव इष्यन्ते । दुष्टाश्वश्च भवत्यत्र दृष्टान्तः- 'दुष्टाश्वः' गर्दभः, स यथा प्रचुरभक्षणादुद्दर्पितः सन् उत्प्लुत्य कुम्भकारारोपितानि भाण्डानि भिनत्ति, भूयस्तेनैव कुम्भकारेण निरुद्धाहारः सन् भाण्डानि वोढुं न शक्नोति; स एव च गर्दभो विमध्यमाहारक्रियया प्रतिचर्यमाणः सम्यग् भाण्डानि वहति । एवं साधवोऽपि यदि स्निग्धःमधुराभ्यवहारतः शरीरोपचयभाजो भवन्ति, तत उत्पन्नदुर्निवारमोहोद्रेकतया संयमयोगान् बलादुपमृद्नु(द्नी)युः, आहाराभावे त्वतिक्षामवपुषः सन्तः संयमयोगान् वोढुं न शक्नुयुः मध्यमबलोपेतास्तु व्यपगतौत्सुक्या अनुद्विग्नपरिणामाः सुखेनैव संयमयोगान् वहन्तीति मत्वा क्षेत्रत्रयं परिहृत्याचार्याश्चतुर्थं क्षेत्रं व्रजन्ति ॥ किञ्च-

[भा.१५२८] पनपन्नगस्स हानी, आरेणं जेन तेन वा धरइ ।
जइ तरुणा नीरोगा, वच्चंति चउत्थगं ताहे ॥

वृ- पञ्चपञ्चाशद्वार्षिकस्य विशिष्टाहारमन्तरेण 'हानि' बलपरिहाणिर्भवति । ''आरेणं''ति पञ्चपञ्चाशतो वर्षेभ्य आराद् वर्तमानो येन वा तेन वा आहारेण 'ध्रियते' निर्वहति । ततो यदि तेसाधवस्तरुणास्तथा नीरोगास्ततश्चतुर्थमेव क्षेत्रं व्रजन्ति न शेषाणि ॥

[भा.१५२९] जइ पुन जुन्ना थेरा, रोगविमुक्का च असहुणो तरुणा ॥
ते अनुकूलं खेत्तं, पेसिंति न यावि खग्गूडे ॥

वृ- यदि पुनः 'जीर्णाः' पञ्चपञ्चाशद्वार्षिकादय इति भावः, के ते ? 'स्थविराः' वृद्धाः, तथा तरुणा अपि ये रोगेण-ज्वरादिना मुक्तमात्रा अत एव च 'असहिष्णवः' न यदपि तदप्याहारजातं परिणमयितुं समर्था 'तान्' एवंविधान् स्थविर-तरुणान् 'अनुकूलं' प्रायोग्यलाभसम्भवेन हितं 'क्षेत्रं' प्रथमक्षेत्रादिकं गीतार्थमेकं सहायं समर्प्य प्रेषयन्ति सूरयः, 'न चापि' नैव स्वग्गूडान् । इहालसाः स्निग्धःमधुराद्याहारलम्पटाः खग्गूडा उच्यन्ते ॥ आह कियता पुनः कालेन ते वृद्धादयः पुष्टिं गृह्णन्ति ? उच्यते-पञ्चभिर्दिवसैः । तथा च वैद्यकशास्त्रार्थसूचिकामेतदर्थविषयामेव गाथामाह-

[भा.१५३०] एग पनगऽद्धमासं, सट्ठी सुण-मनुय-गोण-हत्थीणं ।
राइंदिएहि उ बलं, पनगं तो एक्क दो तिन्नि ॥

वृ- क्षीणशरीरस्य शुनः पोष्यमाणस्यैकेन रात्रिन्दिवेन बलमुपजायते । एवं मनुष्यस्य

रात्रिन्दिवपञ्चकेन, गो-बलीवरदस्यार्द्धमासेन, हस्तिनस्तु क्षीणवपुषः पुष्टिमारोप्यमाणस्य षष्ट्या दिवसैर्बलमुद्भवति । तत एते वृद्धादयः प्रथमक्षेत्रे पोष्यमाणाः पञ्चकमेकं रात्रिन्दिवानां व्यवस्थाप्यन्ते, ततश्चतुर्थक्षेत्रे नीयन्ते । अथ पञ्चकेनामी न बलं गृहीतवन्तः ततो द्वे पञ्चके, तथापि बलमगृह्णानास्त्रीणि पञ्चकानि व्यवस्थाप्य चतुर्थक्षेत्रे नेतव्याः ।। एवं ते चतुर्थक्षेत्रगमनं निर्णीय शय्यातरमापृच्छ्य क्षेत्रान्तरं सङ्क्रामन्ति तद्विषयं विधिमभिधित्सुराह-

[भा.१५३१]　सागारिय आपुच्छण, पाहुडिया जह य वज्जिया होइ ।
के वच्चंते पुरओ, उ भिक्खुणो उदाहु आयरिया ।।

वृ- क्षेत्रान्तरं सङ्क्रामद्भिः सागारिकस्याऽऽप्रच्छनं कर्त्तव्यम् । यथा च 'प्राभृतिका' हरितच्छेदनाद्यधिकरणरूपा वर्जिता भवति तथा विधिना आप्रच्छनीयम् । तथा गच्छतां के पुरतो व्रजन्ति ? किं भिक्षवः ? उताहो आचार्या ? इति निर्वचनीयम् । एष द्वारगाथासमासार्थः ।। अथैनामेव विवरीषुराह-

[भा.१५३२]　सागारिअनापुच्छण, लहुओ मासो उ होइ नायव्वो ।
आणाइणो य दोसा, विराधन इमेहि ठाणेहिं ।।

वृ- सागारिकमनापृच्छ्य यदि गच्छन्ति तदा लघुको मासः प्रायश्चित्तं भवति ज्ञातव्यः, आज्ञादयश्च दोषाः । विराधना चामीभिः स्थानैः प्रवचनादेर्भवति ।। तान्येवाह-

[भा.१५३३]　सागारिअपुच्छगमणम्मि बाहिरा मिच्छगमन कयनासी ।
अन्नस्स वि हिय-नट्ठे, तेनगसंका य जं चऽन्नं ।।

वृ- सागारिकमनापृच्छ्य यदि गच्छन्ति ततः सागारिकश्चिन्तयेत्-"बाहिरि"त्ति बाह्या लोकधर्मस्यामी भिक्षवः, यतः-

आपुच्छिऊण गम्मइ, कुलं च सीलं च माणिअं होइ ।
अभिजाओ त्ति अ भन्नइ, सो वि जणो माणिओ होइ ।।

एष लोकधर्म । तथा "मिच्छगमन"त्ति 'ये लोकधर्ममपि प्रत्यक्षदृष्टं नावबुध्यन्ते ते कथमतीन्द्रियमदृष्टं धर्ममवभोत्स्यन्ते ?' इति सागारिको मिथ्यात्वं गच्छेत् । तथा 'कृतनाशिनः' कृतघ्ना एते, एकरात्रमपि हि यस्य गेहे स्थीयते तमनापृच्छ्य गच्छतां भवत्यौचित्यपरिहाणि, किं पुनरमीषामियन्ति दिनानि मम गृहे स्थित्वा युक्तं मामनापृच्छ्य गन्तुम् ? इति । तथा 'अन्यस्य' प्रातिवेश्मिकस्य अपिशब्दात् सागारिकस्य वा हृते नष्टे वा कस्मिंश्चिद् वस्तुनि स्तेनकशङ्का भवेत्-यदमी साधवोऽनापृच्छ्य गतास्तद् नूनमेभिरेव स्तेनितं तद् द्रव्यमिति । "जं चऽन्नं"ति यच्च 'अन्यद्' वसतिव्यवच्छेदादि भवति तदपि द्रष्टव्यम् ।। तदेवाह

[भा.१५३४]　वसहीए वोच्छेदो, अभिधारिंताण वा वि साहूणं ।
पव्वज्जाभिमुहाणं, तेनेहि व संकणा होज्जा ।।

वृ- 'विप्रलम्भितास्तावदमीभिरेकवारम्, अत ऊर्द्धं ये केचन संयता इति नाम उद्वहन्ते तेभ्यो वसतिं न प्रदास्यामि' इत्येवं वसतेर्व्यवच्छेदो भवेत् । तथा 'अभिधारयन्तो नाम' ये साधवस्तमाचार्यं मनसिकृत्योपसम्पदः प्रतिपत्त्यर्थं समायातास्ते सागारिकं प्रश्नयन्ति-आचार्याः कस्मिन् क्षेत्रे विहृतवन्तः ?; सागारिकः प्राह-यः कथयित्वा व्रजति स ज्ञायते यथा अमुकत्र गत इति, ये तु

प्रथमत एव नापृच्छन्ति ते कथं ज्ञायन्ते ?; ततस्तेषामभिधारयतां साधूनाम् 'अहो ! लोकव्यवहारबहिर्मुखा अमी आचार्या, ततः को नामामीषामुपकण्ठे उपसम्पत्स्यते ?' इति विचिन्त्य स्वगच्छे गणान्तरे वा गमनं भवेदिति वाक्याध्याहारः । स चाचार्यस्तेषां श्रुतवाचनाप्रदानादिजन्याया निर्जराया अनाभागी भवति । प्रव्रज्याभिमुखानां वा "तेनेहि" त्ति स्तेनविषया शङ्का भवेत् । किमुक्तं भवति ?-केचिदगारिणः संसारप्रपञ्चविरक्तचेतसस्तदन्तिके प्रव्रज्यां तिपित्सवः सामायाताः सागारिकं पृच्छन्ति-क्व गता आचार्या स प्राह-वयं न जानीमः तत्स्वरूपमिति, ततस्तेषामगारिणां शङ्का समुपजायते, यथा-नूनं किमप्यस्यसागारिकस्य चोरयित्वा गतास्ते, अन्यथा किमर्थमेष परिस्फुटमाचार्याणां गमनवृत्तान्तं न निवेदयति ? इति । ततश्च ते प्रव्रज्यामप्रतिपद्यमाना यत् षन्नं जीवनिकायानां विराधनां कुर्वन्ति यच्च बोटिक-निह्नवादिषु व्रजन्ति अपरान् वा प्रव्रजतो विपरिणामयन्ति तन्निष्पन्नमाचार्याणां प्रायश्चित्तम् । यत एवमतः सागारिकमापृच्छय गन्तव्यम् ॥ सा च पृच्छा द्विविधा-विधिपृच्छा अविधिपृच्छा च । तत्रिविधिपृच्छमभिधित्सुः प्रायश्चित्तं तावदाह-

[भा.१५३५] अविहीपुच्छणे लहु,तेसिं मासो उ दोस आणाई ।
मिच्छत्त पुव्वभणियं, विराधन इमेहि ठाणेहिं ॥

वृ- अविधिप्रच्छने 'तेषाम्' आचार्याणां लघुको मासः, दोषाश्चाज्ञादयः, तता मिथ्यात्वं 'पूर्वभणितं' प्रागुक्तमेव मन्तव्यम् । विराधना एभिः स्थानैर्भवति ॥ तान्येवाह-

[भा.१५३६] सहसा दट्ठुं उग्गाहिएण सिज्ञायरी उ रोविज्ञा ।
सागारियस्स संका, कलहे य सएज्झिखिंसणया ॥

वृ- अविधिपृच्छा नाम वस्त्र-पात्राद्युपकरणं विहारार्थमुद्ग्राह्य पृच्छन्ति 'वयमिदानीं विहारं कुर्महे' ततः 'सहसा' अकस्माद् उद्ग्राहितेन उपकरणेन प्रस्थितान् दृष्टवा शय्यातरी रुदियात् । तद् दृष्ट्वा सागारिकस्य शङ्का भवेत्-मयि प्रवसति कदाचिदप्यस्या अक्षिणी अश्रुपातं न कुरुतः, अमीषु तु प्रस्थितेष्वित्थमश्रूणि मुञ्चतः, ततो भवितव्यं कारणेनेति । मिथ्यात्वं गच्छेत्, तद्व्या ऽन्यद्रव्यव्यवच्छेदादयश्च दोषाः । तथा "सइज्झिय"त्तिप्रातिवेश्मिकी रुदन्तीं शय्यातरीं दृष्ट्वा पश्चात् कलहे समुत्पन्ने खिंसनां कुर्यात्-किमन्यद् भवदीयं दुश्चरीतमुद्गीर्यते येन तदानीमाचार्येषु विहारं कर्तुमुद्यतेषु भवत्यारुदितम्, किं वा स आचार्यस्ते पिता भवति येन रोदिषि ? इति ॥ अतानागतमेव पृच्छन्ति 'वयममुकदिवसे गमिष्यामः' तत्राप्यमी दोषाः-

[भा.१५३७] हरियच्छेअण छप्पईअथिच्चणं किच्चणं च पुत्ताणं ।
गमनं च अमुगदिवसे, संखडिकरणं विरूवं वा ॥

वृ- तानि शय्यातरमानुषाणि 'अद्य साधवो गमिष्यन्ति' इति कृत्वा क्षेत्रादौ न गच्छन्ति । ततो यानि तत्र महान्ति तानि धर्मं शृणुयुः । चेटरूपाणि स्नुषाश्च पुरोहडादिषु हरितच्छेदनं यद्वा परस्परं षटपदिकानां "थेच्चणं" उपमर्दनं "किच्चणं" ति कर्त्तनं वा विदध्यु,पोतानि-वस्त्राणि तेषां प्रक्षालनं कुर्वीरन् । यद्वा 'अमुकदिवसे गमनं करिष्यामः' इत्युक्ते संयतार्थं सङ्खड्याः करणं भवेत् । तत्र यदि गृह्णन्ति तदाऽऽधाकर्मादयो दोषाः, अगृह्णतां तु प्रद्वेषगमनादयः । "विरूवं" ति 'विरूपम्' अनेकप्रकारं कुड्यधवलनादिकमपरमप्यधिकरणं कुर्यु । यत एते दोषा अतोऽविधिपृच्छा

न विधेया ॥ कः पुनः पृच्छायां विधि ? इत्याह-

[भा.१५३८] जत्तो पाए खेत्तं, गया उ पडिलेहगा ततो पाए ।
सागारियस्स भावं, तनुइंति गुरू इमेहिं तु ॥

वृ- ‘यतः प्रगे’ यतो दिनादारभ्य क्षेत्रप्रत्युपेक्षका गताः ‘ततः प्रग’ ततः प्रभृति सागारिकस्य ‘भावं’ प्रतिबन्धं ‘तनूकुर्वन्ति’ हानिं प्रापयन्ति ‘गुरवः’ आचार्या एभिर्वचनैः ॥ तान्येवाह-

[भा.१५३९] उच्छू वोलिंति वइं, तुंबीओ जायपुत्तभंडाओ ।
वसहा जायत्थामा, गामा पव्वायचिक्खल्ला ॥

[भा.१५४०] अप्पोदगा य मग्गा, वसुहा वि य पक्कमट्टिया जाया ।
अन्नोक्कंता पंथा, विहरणकालो सुविहियाणं ॥

वृ- इह पूर्वं शरदादिर्विहारो भवतीत्युक्तम्, अत- शरत्कालमेवाङ्गीकृत्याभिधीयते-इक्षवः ‘वोलयन्ति’ व्यतिक्रामन्ति ‘वृतिं’ [illegible], तुम्बक्यश्च ‘जातपुत्रभाण्डाः’ समुत्पन्नतुम्बकाः, तथा वृषभा जातस्थामानः, ग्रामाः प्रम्लानचिक्खल्लाः, अल्पोदकाश्च मार्गा, वसुधाऽपि च पक्वमृत्तिका जाता, अन्यैः-पथिकादिभिरुत्क्रान्ताः-क्षुन्नाः पन्थानः सम्प्रति वर्त्तन्ते, अतो विहरण-कालः सुविहितानाम् । एतद् गाथाद्वयं शय्यातरस्य शृण्वतोगुरवश्चङ्क्रमणं कुर्वन्तः पठन्ति । ततः शय्यातरो ब्रूयात्-भगवन्! किमिदानीं यूयं गमनोत्सुकाः ? । गुरवः प्राहुः-बाढम्, गन्तुकामा वयम्, प्रेषिताश्चास्माभि क्षेत्रान्तरं प्रत्युपेक्षितुं साधवः । इत्थमन्तराऽन्तरा प्रज्ञाप्यमानानां शय्यातरमानुषाणां व्यवच्छिद्यते स्नेहानुबन्धः ॥ ततः-

[भा.१५४१] आवासगकयनियमा, कल्लं गच्छामु तो उ आयरिया ।
सपरजनं सागरियं, वाहेउं दिंति अनुसट्ठिं ॥

वृ- आवश्यकं-प्रतिक्रमणं तदेवावश्यमनुष्ठेयत्वाद् नियमः स कृतो यैस्ते कृतावश्यकनियमाः । गाथायां प्राकृतत्वादावश्यकशब्दस्य पूर्वनिपातः । ‘‘कल्लं गच्छामु’’त्ति ‘‘वर्तमानासन्ने वर्त्तमाना’’ इतिवचनात् ‘कल्ये’ प्रभाते गमिष्याम इति मत्वा तत आचार्या ‘सपरिजनं’ सकुटुम्बं सागारिकं व्याहृत्य ददति ‘अनुशिष्टिं’ धर्मकथां कुर्वन्तीत्यर्थः ॥ ततः-

[भा.१५४२] पव्वज्ज सावओ वा, दंसणसड्ढो जहन्नओ वसहिं ।
जोगम्मि वट्टमाणे, अमुगं वेलं गमिस्सामो ॥

वृ- स शय्यातरो धर्मकथां श्रुत्वा कदाचित् प्रव्रज्यां प्रतिपद्यते । अथ प्रव्रज्यां प्रतिपत्तुमशक्तस्ततः ‘श्रावको भवति’ देशविरतिं प्रतिपद्यते । अथ तामप्यङ्गीकर्तुमक्षमस्ततः ‘दर्शनश्राद्धः’ अविरतसम्यग्दृष्टिर्भवति । अथ दर्शनमप्युररीकर्त्तुं नोत्सहते ततो जघन्यतोऽवश्यन्तया वसतिं साधूनां यथा ददाति तथा प्रज्ञाप्यते । भूयोऽपि धर्मकथां समाप्याचार्या ब्रुवते-योऽसौ योगोगमनायास्मान् प्रेरयति तस्मिन् वर्त्तमाने सति ‘‘अमुगं वेलं’’ति सप्तम्यर्थे द्वितीया अमुकस्यां वेलायां गमिष्यामः । इत्थं विकालवेलायां कथयित्वा प्रत्युषसि व्रजन्ति ॥ कथम् ? इत्याह-

[भा.१५४३] तदुभय सुत्तं पडिलेहणा य उग्गयमणुग्गए वा वि ।
पडिच्छशहिगरण तेने, नट्ठे खग्गूड संगारो ॥

वृ- ‘तदुभयं’ सूत्रपौरुषीमर्थपौरुषीं च कृत्वा व्रजन्ति । अथ दूरं क्षेत्रं गन्तव्यं ततः सूत्रपौरुषीं

कृत्वा। अथ दूरतरं ततः पादोनप्रहरे पात्रप्रत्युपेक्षणां कृत्वा। अथ दूरतमं तत उद्गतमात्रे सूर्ये। अथातिदवीयान् मार्गो गन्तव्यः गच्छंश्च तृषादिभिराक्रान्त उत्सूरे न शक्नोति गन्तुं ततोऽनुद्गते सूर्ये प्रचलन्ति। ''पडिच्छ''त्ति निशि निर्गता उपाश्रयाद् बहिः परस्परं प्रतीक्षन्ते। अन्यथा ये पश्चान्निर्गच्छन्ति ते न जानन्ति 'केनापि मार्गेण गताः साधवः ?' ततो महता शब्देनाग्रेतनान् साधून् व्याहरेयुः, ततश्च 'अधिकरणम्' अप्काययन्त्रवाहन-वणिग्ग्रामान्तरगमनादि भवति। ''तेने नट्ठे''त्ति ते पाश्चात्यसाधवोऽग्रेतनानां 'नष्टाः' स्फिटिताः सन्तः स्तेनकैरुपद्रूयेरन् अतः प्रतीक्षणीयम्। ''खग्गूड''त्ति कश्चित् खग्गूडः-निद्रालुः उपलक्षणत्वात् कश्चिद्वा धर्मश्रद्धालुरिदं ब्रूते-'न कल्पते साधूनां रात्रौ विहर्तुम्' इति तस्य ''संगारो''त्ति सङ्केतः क्रियते-त्वयाऽमुकत्रागन्तव्यमिति॥ अथास्या एव गाथायाः कानिचित् पदानि विवृणोति-

[भा.१५४४] पडिलेहंत च्चिय वेंटियाउ काउं कुणंति सज्झायं।
चरिमा उग्गाहेउं, सोच्चा मज्झण्हि वच्चंति॥

वृ- ते साधवः प्रभाते प्रत्युपेक्षमाणा एव वस्त्राणि विण्टिकाः कुर्वन्ति। ततो विण्टिकाः कृत्वा स्वाध्यायं कुर्वन्ति तावद् यावत् 'चरमा' पादोनपौरुषी। ततः पात्रकाणि प्रत्युपेक्षणापूर्वं 'उद्ग्राह्य' ग्रन्थिदानादिना सज्जीकृत्य ततोऽर्थं श्रुत्वा 'मध्याह्ने' प्रहरद्वयसमये व्रजन्ति॥ कथम् ? इत्याह-

[भा.१५४५] तिहि-करणम्मि पसत्थे, नक्खत्ते अहिवईण अनुकूले।
घेत्तूण निंति वसभा, अक्खे सउणे परिक्खंता॥

वृ- तिथिश्च-नन्दा-भद्रादिका करणं च-बव-बालवादिकं तिथि-करणं तस्मिन् उपलक्षणत्वाद् वार-योग-मुहूर्त्तादिषु प्रशस्तेषु नक्षत्रे च 'अधिपतीनाम्' आचार्याणामनुकूले वहमाने सति, किम्? इत्याह-'अक्षान्' गुरूणामुत्कृष्टोपधिरूपान् गृहीत्वा 'वृषभाः' गीतार्थसाधवः शकुनान् परीक्षमाणाः ''निंति'' निर्गच्छन्ति॥ आह किमर्थं प्रथममाचार्या न निर्गच्छन्ति ? उच्यते-

[भा.१५४६] वासस्स य आगमनं, अवसउणे पट्ठिया नियत्ता य।
ओभावणा उ एवं, आयरिया मग्गओ तम्हा॥

वृ- वर्षणं वर्ष-वृष्टिस्तस्यागमनं दृष्ट्वा अपशकुने वा दृष्टे वृषभाः प्रस्थिताः सन्तो निवृत्ता अपि न लोकापवादमासादयन्ति, सामान्यसाधुत्वात्। यदि पुनराचार्या वृष्टिमपशकुनान् वा विज्ञाय निवर्त्तन्ते तत एवमपभ्राजना भवति, यथा-यदेव ज्योतिषिकाणां विज्ञानं तदप्यमी आचार्याः न बुध्यन्ते अपरं किमवबोत्स्यन्ते ?। तस्मादाचार्या 'मार्गतः' पृष्ठतो निर्गच्छन्ति न पुनरग्रतः। अथपुरतो गच्छन्ति ततो मासलघु। एतेन ''के वच्चंते पुरओ उ भिक्खुणो उदाहु आयरिय'' त्ति पदं भावितम्॥ आह 'अपशकुने दृष्टे सति निवर्त्तन्ते' इत्युक्तं तत्र के शकुनाः ? के वा अपशकुनाः? इति अत्रोच्यते-

[भा.१५४७] मइल कुचेले अब्भंगियल्लए साण खुज्ज वडभे या।
एए तु अप्पसत्था, हवंति खित्ताउ निंतस्स॥

वृ- 'मलिनः' शरीरेण वस्त्रैर्वा मलीमसः 'कुचेलः' जीर्णवस्त्रपरिधानः 'अभ्यङ्गितः' स्नेहाभ्यक्तशरीरः श्वा वामपार्श्वाद् दक्षिणपार्श्वगामी 'कुब्जः' वक्रशरीरः 'वडभः' वामनः। 'एते' मलिनादयोऽप्रशस्ता भवन्ति क्षेत्रान्निर्गच्छतः॥ तथा-

[भा.१५४८] रत्तपड चरग तावस, रोगिय विगला य आउरा वेज्जा।
कासायवत्थ उद्धूलिया य जत्तं न साहंति ॥

वृ- 'रक्तपटाः' सौगताः, 'चरकाः' क(का)णादा धाटीवाहका वा, 'तापसाः' सरजस्काः, 'रोगिणः' कुष्ठादिरोगाक्रान्ताः, 'विकलाः' पाणि-पादाद्यवयवव्यङ्किताः, 'आतुराः' विविधदुःखोपद्रुताः, 'वैद्याः' प्रसिद्धाः, 'काषायवस्त्राः' कष्यायवस्त्रपरिधानाः, 'उद्धूलिताः' भस्मोद्धूलितगात्रा धूलीधूसरा वा। एते क्षेत्रान्निर्गच्छद्भिर्दृष्टाः सन्तो यात्रा-गमनं तत्प्रवर्त्तकं कार्यमप्युपचाराद् यात्रा तां न साधयन्ति ॥ उक्ता अपशकुनाः। अथ शकुनानाह-

[भा.१५४९] नंदीतूरं पुन्नस्स दंसनं संख-पडहसद्दो य।
भिंगार-छत्त-चामर-वाहण-जाणा पसत्थाइं ॥

वृ- 'नन्दीतूर्यं' द्वादशविधतूर्यसमुदायो युगपद् वाद्यमानः, 'पूर्णस्य' पूर्णकलशस्य दर्शनम्, शङ्ख-पटहयोः शब्दश्च श्रूयमाणः, भृङ्गार-छत्र-चामराणि प्रतीतानि, 'वाहन-यानानि' वाहनानि- हस्ति-तुरङ्गमादीनि यानानि-शिबिकादीनि, एतानि 'प्रशस्तानि' शुभावहानि ॥

[भा.१५५०] समणं संजयं दंतं, सुमनं मोयगा दधिं।
मीणं घंटं पडागं च, सिद्धमत्थं वियागरे ॥

वृ- 'श्रमणं' लिङ्गमात्रधारिणम्, 'संयतं'षट्कायरक्षणे सम्यग्यतम्, 'दान्तम्' इन्द्रिय-नोइन्द्रियदमनेन, 'सुमनसः' पुष्पाणि, मोदका दधि च प्रतीतम्, 'मीनं' मत्स्यम्, घण्टां पताकां च दृष्ट्वा श्रुत्वा वा 'सिद्धं' निष्पन्नम् 'अर्थं' प्रयोजनं व्यागृणीयादिति ॥

अथ प्रशस्तेषु शकुनेषु सञ्जातेषु गुरवः किं कुर्वन्ति ? इत्याह-

[भा.१५५१] सिज्जायरेऽनुसासइ, आयरिओ सेसगा चिलिमिलिं तु।
काउं गिण्हंतुवहिं, सारवियपडिस्सया पुव्विं ॥

वृ-शय्यातरानुशास्ते आचार्य, यथा-व्रजामो वयम्, भवद्भिर्धर्मकर्मण्यप्रमत्तैर्भवितव्यमिति। शेषास्तु साधवः चिलिमिलीं 'कृत्वा' बद्ध्वा तदन्तरिताः सन्त उपधिं 'गृह्णन्ति' संयन्त्रयन्तीत्यर्थः, कथम्भूताः ? सारविताः-सम्मार्जितः प्रतिश्रयो यैस्ते सारवितप्रतिश्रयाः 'पूर्वं' प्रथमम् ॥

अथ कः कियदुपकरणं गृह्णाति ? इत्युच्यते-

[भा.१५५२] बालाईया उवहिं, जं वोढु तरंति तत्तियं गिण्हे।
जहन्नेण अहाजायं, सेसं तरुणा विरिंचंति ॥

वृ- बाल-वृद्ध-राजप्रव्रजितादयो यावन्मात्रमुपधिं वोढुं शक्नुवन्ति तावन्मात्रमेव गृह्णन्ति। यदि च सर्वथैव न शक्नुवन्ति तदा 'जघन्येन' सर्वस्तोकतया यथाजातमुपधिं गृह्णन्ति। 'शेषं' बालादिसत्कमुपकरणं तरुणाः साधवः 'विरिञ्चन्ति' विभज्य गृह्णन्ति ॥ तत्र च यदि 'आभिग्रहिकाः' 'बाल-वृद्धादीनामुपधिरस्माभिर्वोढव्यः' इत्येवं प्रतिपन्नाभिग्रहाः सन्ति ततस्ते परस्परं विभज्य गृह्णन्ति। अथ न सन्त्याभिग्रहिकास्ततः को विधि ? इत्याह-

[भा.१५५३] आयरिओवहि बालाइयाण गिण्हंति संघयणजुत्ता।
दो सोत्ति उन्नि संथारए य गहणेक्कपासेणं ॥

वृ- आचार्योपधिं बालादीनां चोपधिं गृह्णन्ति 'संहननयुक्ताः' अनाभिग्रहिका अपि सन्तो ये

समर्थसाधवः । कथम् ? इत्याह-द्वौ सौत्रिकौ कल्पौ एक और्णिकः कल्पः संस्तारकः चश्वादुत्तरवट्टकश्च । एतेषामाचार्यादिसम्बन्धिनां "गहणेक्कपासेणं" ति सप्तम्यर्थे तृतीया 'एकस्मिन् पार्श्वे' एकत्र स्कन्धे ग्रहणं कुर्वन्ति । द्वितीये तु पार्श्वे आत्मीयमुपधिं स्थापयन्ति ॥ अथ "खग्गूड" त्ति पदं विवृणोति-

[भा.१५५४] रत्तिं न चे कप्पइ, नीयदुवारे विराहणा दुविहा ।
पन्नवण बहुतर गुणा, अणिच्छ बीओ व उवही वा ॥

वृ- कश्चिद् धर्मश्रद्धालुतया खग्गूडतया वा प्राह-रात्रौ न चैव कल्पते विहर्तुम्, यतः "नीयदुवारं तमसं, कोट्ठगं परिवज्जए ।" त्ति वचनाद् दिवाऽपि तावद् नीचद्वारे कोष्ठके प्राणिनां कण्टकादीनां चानुपलभ्यमानतया 'द्विविधा' संयमा-ऽऽत्मविराधना भवति इति कृत्वा प्रवेष्टुं न कल्पते, किं पुना रात्रौ विहर्तुं कल्पिष्यते ? । इत्थं ब्रुवाणस्य तस्य प्रज्ञापना कर्त्तव्या, यथा-वत्स ! दूरतमक्षेत्रस्य गन्तव्यतया बहुतरा गुणाः सबाल-वृद्धस्य गच्छस्य साम्प्रतं रात्रौ गमने भवन्ति । इत्थमपि प्रज्ञापितोयदि नेच्छति ततोऽस्य 'द्वितीयः' सहायो दीयते उपधिर्वा तस्य जीर्ण उपहलश्च समर्प्यते, मा सारतरस्तदीयोपधिं स्तेनैर्गृह्येत मा वा रात्रौ सुप्तस्योपहन्येतेति ॥ तदेवमुक्तविधिना ततः क्षेत्राद् निर्गत्य सूत्रोक्तनीत्या गच्छन्ति । ग्रामं च प्राप्तानां क्षेत्रप्रत्युपेक्षका यत्र पूर्वं वसतिं प्रत्युपेक्षिता आसीत् तत्र प्रथमं स्वयं गत्वा वसतिं निरूप्य ततो गच्छं तत्र प्रवेशयन्ति । तत्र रात्रावुषित्वा प्रभाते ग्रामान्तरं गच्छन्ति । एवं च-

[भा.१५५५] वच्चंतेहि य दिट्ठो, गामो रमणिज्जभिक्ख-सज्झाओ ।
जं कालमणुन्नाओ, अननुन्नाए भवे लहुओ ॥

वृ- व्रजद्भिस्तैः साधुभिः कश्चिद् ग्रामो दृष्टः, कथम्भूतः ? रमणीयं-सुखप्राप्यत्वेन मनोज्ञभक्तपानलाभेन च भैक्षं अत एव रमणीयः स्वाध्यायश्च यत्र स रमणीयभैक्ष-स्वाध्यायः । एवंविधो ग्रामः 'यं' यावन्तं 'कालम्' एकदिवसलक्षणं स्थातव्यत्वेनानुज्ञातः तावन्तं कालं वसन्तो न प्रायश्चित्तभाजो भवन्ति । 'अननुज्ञाते' द्वितीयादिषु दिवसेषु वसतां लघुको मासो भवेत् ॥ अथवा-

[भा.१५५६] तवसोसिय उव्वाया, खुल लुक्खाहारदुब्बला वा वि ।
एग दुग तिन्नि दिवसे, वयंति अप्पाइया वसिउं ॥

वृ- तपसा-षष्ठा-ऽष्टमादिना ये शोषिता ये वा उद्वाताः-अतीवपरिश्रान्ताः ये च "खुल" त्ति कर्कशक्षेत्रादायाताः ये वा रूक्षाहारभोजित्वाद् दुर्बलाः, एते एकं वा द्वौ वा त्रीन् वा दिवसान् तस्मिन् ग्रामे 'उषित्वा' स्थित्वा 'आप्यायिताः' मनोज्ञाहारैः स्वस्थीभूताः अपरं ग्रामं व्रजति ॥ इदमेव भावयति-

[भा.१५५७] पढमदिने समणुन्ना, सोहीवुड्ढी अकारणे परतो ।
तिन्नि य (वि) समणुन्नाया, तओ परेमं भवे सोही ॥

वृ- प्रथमदिने तत्र ग्रामे वसतां समनुज्ञा, प्रथमो दिवसस्तत्रानुज्ञात इति भावः । ततः 'परतः' द्वितीयादिदिवसेष्वकारणे वसतां शोधि-प्रायश्चित्तं तस्या वृद्धिर्भवति । सा चानन्तरगाथायां वक्ष्यते । अथ तपःशोषितत्वादिकमनन्तरगाथोक्तं कारणं वर्त्तते तत्र त्रीण्यपि दिनानि समनुज्ञातानि ।

'ततः' दिवसत्रयात् परतः 'शोधि' प्रायश्चित्तं भवेत् ॥ तामेवाह-

[भा.१५५८] सत्तरत्तं तवो होइ, तओ छेओ पहावई ।
छेएणऽच्छिन्नपरियाए, तओ मूलं तओ दुगं ॥

वृ- सप्तरात्रं यावत् तपो भवति । 'ततः' सप्तरात्रानन्तरं छेदः प्रधावति । छेदेनाप्यच्छिन्नपर्याये साधौ ततो मूलम् । ततः 'द्विकम्' अनवस्थाप्य-पाराञ्चिकद्वयम् ॥ इदमेव व्याख्यानयति-

[भा.१५५९] मासो लहुओ गुरुओ, चउरो लहुया य होंति गुरुगा य ।
छम्मासा लहु गुरुगा, छेओ मूलं तह दुगं च ॥

वृ- इह प्रथमदिवसे वसन्तोऽनुज्ञाता एव, "पढमदिने समणुन्न" त्ति वचनात् । द्वितीये दिवसे यदि मनोज्ञाहारलम्पटतया तत्र ग्रामे वसन्ति तदा लघुको मासः, तृतीये गुरुकाः चतुर्थे चत्वारो लघवः, पञ्चमे चतुर्गुरवः, षष्ठे षण्मासा लघवः, सप्तमे षण्मासा गुरवः, ततः सप्तरात्रानन्तरमष्टमे दिवसे च्छेदः, नवमे मूलम्, दशमेऽनवस्थाप्यम्, एकादशे पाराञ्चिकमिति । अथ तपःशोषित-शरीरादयस्ते ततस्त्रीणि दिवसानि वसन्तः प्रायश्चित्तं नापद्यन्ते, "तिन्नि व (वि) समणुन्नाय" त्ति वचनात् । चतुर्थे दिवसे वसतां लघुमासः, पञ्चमे गुरुमासः, षष्ठे चतुर्लघवः, सप्तमे चतुर्गुरवः, अष्टमे षड्लघवः, नवमे षड्गुरवः, दशमे च्छेदः, एकादशे मूलम्, द्वादशेऽनवस्थाप्यम्, त्रयोदशे पाराञ्चिकमिति विशेषचूर्ण्यभिप्रायः । बृहद्भाष्ये पुनरित्यमुक्तम्-

एक्केक्क सत्तवारा, मासाईयं तवं तु दाऊण ।
छेओ वि सत्तसत्तओ, तिन्नि गमा तस्स पुव्वुत्ता ॥

'पूर्वं' पीठिकायां 'तस्य' च्छेदस्य ये त्रयो गमा उक्तास्तेऽत्रापि द्रष्टव्याः । तत्र यतः स्थानात् तपः प्रारब्धं तत आरभ्य च्छेदोऽपि दीयते, लघुमासादारभ्येत्यर्थः इत्येको गमः । लघुपञ्चकादारभ्येति द्वितीयः । गुरुपञ्चकादारभ्येति तृतीयः ॥ इदं सामान्यतः प्रायश्चित्तम् । अथ विशेषत आह-

[भा.१५६०] अणणुन्नाए निक्कारणे व गुरुमाइणं चउण्हं पि ।
गुरुगा लहुगा गुरुगो, लहुओ मासो य अच्छंते ॥

वृ- अननुज्ञाते दिवसत्रयादूर्ध्वं 'निष्कारणे वा' कारणं विना प्रथमदिवसादूर्द्ध गुर्वादीनां चतुर्णामपि तिष्ठतां यथाक्रमं गुरुका लघुका गुरुको लघुकश्च मासः । इयमत्र भावना-आचार्यस्यान-नुज्ञाते निष्कारणे वा तिष्ठतश्चत्वारो गुरवः, वृषभस्य चत्वारो लघवः, अभिषेकस्य गुरुमासः, भिक्षोर्लघुमासः ॥ आह किंनिमित्तमित्थं प्रायश्चितमापद्यते ? उच्यते-

[भा.१५६१] नेहामु त्ति य दोसा, जे पुव्वं वन्निया कइयमादी ।
ते चेव अणट्ठाए, अच्छंते कारणे जयणा ॥

वृ- 'नैष्यामः' नागमिष्याम इत्युक्ते ये पूर्वं 'क्रयितादयः' वसतेर्भाटकसमर्पण-विक्रयणादयो दोषा वर्णितास्ते चैव अर्थ-प्रयोजनं तदभावोऽनर्थं तेन प्रयोजनमन्तरेणेत्यर्थः, तत्र ग्रामे तिष्ठतां दोषाः । किमुक्तं भवति ?- तत्र ग्रामे रसगौरवबहुलतया तेषां तिष्ठतां कालविलम्बलगनात् चिकीर्षितमासकल्पे क्षेत्रे वसतिं शय्यातरो भाटकेन समर्पयेत् विक्रीणीत वा धान्यादिना वा म्रियेत बटुकादीनां वा दद्यात् ततस्त एवात्मविराधनादयो दोषाः । कारणे तु तिष्ठतां यतना, एकं द्वौ त्रीन् वा दिवसान् स्थित्वा तथा गन्तव्यं यथा विलम्बमन्तरेण तत् क्षेत्रं प्राप्यत इति भावः ।

एवमेतेन विधिना व्रजन्तस्तावद् गता यावद् मूलक्षेत्रम् ।। ततः किम् ? इत्याह-

[भा.१५६२] भत्तट्ठिया व खमगा, पुव्विं पविसंतु ताव गीयत्था ।
परिपुच्छिय निद्दोसे, पविसंति गुरू गुणसमिद्धा ।।

वृ- ते हि भक्तार्थिनः क्षपका वा सन्तस्तत्र क्षेत्रे प्रविशन्ति । 'भक्तार्थिनः' भोक्तुकामाः, 'क्षपकाः' उपोषिताः । तत्र च पूर्वं तावद् गीतार्था प्रविशन्ति । ततस्तैः गीतार्थै 'परिपृच्छ्य' शय्यातरं पृष्ट्वा निर्दोषे उपाश्रये सुनिश्चिते सति प्रविशन्ति गुरवो गुणसमृद्धाः । साभिप्रायकमिदं विशेषणम् । ते हि भगवन्तो गुरवो गुणैः समृद्धाः, अतो यदि प्रथमं प्रविश्य सव्याघातां वसतिं मत्वा प्रतिनिवर्त्तन्ते ततो भवति महानवर्णवादः, यथा-एतेषामेतदपि ज्ञानं नास्तीति, ततः पश्चात् प्रविशन्ति ।। अथैनामेव गाथां विवरीषुराह-

[भा.१५६३] बाहिरगामे वुच्छा, उज्जाने ठाण वसहिपडिलेहा ।
इहरा उ गहियभंडा, वसहीवाघाय उड्डाहो ।।

वृ- प्रत्यासन्ने बाह्यग्रामे उषिताः प्रत्युषसि विवक्षितक्षेत्रस्योद्यानमागम्य तत्र स्थानं कुर्वन्ति । यैः क्षेत्रं प्रत्युपेक्षितं ते वसतिप्रत्युपेक्षणार्थं प्रेष्यन्ते । 'इतरथा' यदि वसतिमप्रत्युपेक्ष्य प्रविशन्ति ततो मासलघु । सा वसतिरन्येषां प्रदत्ता भवेत् ततः 'गृहीतभाण्डाः' गृहीतोपकरणा वसतिव्याघाते सत्यपरां वसतिमन्वेषयन्त इतस्ततः पर्यटन्ति, तथाभूतांश्च दृष्ट्वा उड्डाहो भवेत्, यथा-अहो ! निष्परिग्रहा निर्ग्रन्था इति ।। ततः किं विधेयम् ? इत्याह-

[भा.१५६४] तम्हा पडिलेहिय साहियम्मि पुव्वगत असति सारविए ।
फड्डगफड्ड पवेसो, कहणा न य उट्ठऽनायरिए ।।

वृ- तस्मात् चिलिमिली-दण्डकप्रोञ्छने गृहीत्वा वसतिं प्रत्युपेक्ष्य यदि सा नान्येषां प्रदत्ता तदा "साहियम्मि"त्ति शय्यातरस्य 'आचार्या आगताः सन्ति' इति कथिते सति यदि 'पूर्वगताः' पूर्वस्थिताः क्षेत्रप्रत्युपेक्षकास्तत्र सन्ति तदा तैः प्रागेव वसतिं प्रमार्जितैव । अथ न सन्ति ततः स्वयमेव "सारविए"त्ति सम्मार्जिते प्रतिश्रये द्वारे च चिलिमिलीं बद्ध्वा धर्मकथिनमेकं मुक्त्वा व्यावृत्य गुरूणां निवेदयन्ति । ततो वृषभास्तथैवाक्षान् गृहीत्वा शकुनान् परीक्षमाणाः प्रविशन्ति । तैश्च प्रविष्टैः शेषाः साधवः स्पर्द्धकस्पर्द्धकैः प्रविशन्ति, न पुनः सर्वे एकत्र पिण्डीभूयेति भावः । यश्च तत्र धर्मकथिकः स्थित आस्ते स सागारिकस्य धर्मकथां करोति । स च "अनायरिय" त्ति आचार्यं मुक्त्वा शेषसाधूनां ज्येष्ठार्याणामप्यभ्युत्थानं न करोति 'मा भूद् धर्मकथाया व्याघातः' इति ।। अथ वृषभाणां प्रविशतां शकुना-ऽपशकुनविभागनिरूपणायाह-

[भा.१५६५] मइल कुचेले अब्भंगियल्लए साण खुज्ज वडभे या ।
एयाइँ अप्पसत्थाइँ होंति गामं अइंताणं ।।

[भा.१५६६] रत्तपड चरग तावस, रोगिय विगला य आउरा वेज्जा ।
कासायवत्थ उद्धूलिया य कज्जं न साहिंति ।।

[भा.१५६७] नंदीतूरं पुन्नस्स दंसणं संख-पडहसद्दो य ।
भिंगार-छत्त-चामर-वाहण-जाणा पसत्थाइं ।।

[भा.१५६८] समणं संजयं दंतं, सुमनं मोयगा दधिं ।

मीणं घंटं पडागं च, सिद्धमत्थं वियागरे ॥

वृ- चतस्रोऽपि गाथाः प्राग्वत् (गाथा) । नवरं श्वा दक्षिणपार्श्वाद् वामपार्श्वगामी गृह्यते ॥ इत्थं वृषभेषु प्रशस्तैः शकुनैः प्रविष्टेषु सूरयः क्षेत्रं प्रविश्य किं कुर्वन्ति ? इत्याह-

[भा.१५६९] पविसंते आयरिए, सागरिओ होइ पुव्व दट्ठव्वो ।
अदट्ठूण पविट्ठो, आवज्जइ मासियं लहुयं ॥

वृ- "पविसंते आयरिए" त्ति तृतीयार्थे सप्तमी, वसतिं प्रविशता आचार्येण सागारिकः पूर्वमेव द्रष्टव्यो भवति । अथ सागारिकमदृष्टैव प्रविष्ट आचार्य तत आपाद्यते मासिकं लघुकम् ॥

अथाचार्यमायान्तं दृष्ट्वा धर्मकथी किं करोति ? इत्याह-

[भा.१५७०] आयरियअनुट्ठाणे, ओभावण बाहिरा अदक्खिन्ना ।
कहणं तु वंदणिज्जा, अनालवंते वि आलावो ॥

वृ- धर्मकथिना आचार्यस्याभ्युत्थानं कर्तव्यम् । यदि न करोति तदा 'अपभावना' लाघवमाचार्याणां भवति-नूनं नामधारक एवायमाचार्य, नास्य किमप्याज्ञैश्वर्यं विद्यते । यद्वा लोकव्यवहारस्य बाह्या अमी, यतः पञ्चानामप्यङ्गुलीनां तावदेका ज्येष्ठा भवति । तथा 'अदाक्षिण्याः' 'गुरूनपि प्रति एतेषां दाक्षिण्यं नास्ति' इति शय्यातरश्चिन्तयति । "कहणं तु" त्ति शय्यातरस्य धर्मकथिना कथनीयम्, यथा-वन्दनीया एते भगवन्त इति । ततो गुरुभिरनालपतोऽपि शय्यातरस्यालापः कर्त्तव्यः ॥ अथ न कुर्वन्त्यालपनमाचार्यास्तत एते दोषाः-

[भा.१५७१] थद्धा निरोवयारा, अग्गहणं लोकजत्त वोच्छेदो ।
तम्हा खलु आलवणं, सयमेव य तत्थ धम्मकहा ॥

वृ- शय्यातरश्चिन्तयेत्-अहो ! 'स्तब्धाः' आत्माभिमानिन एते, वचसाऽपि नान्यस्य गौरवं प्रयच्छन्ति । 'निरुपकाराः' कृतमप्युपकारं न बहुमन्यन्ते, कृतघ्ना इत्यर्थः । 'अग्रहणम्' अनादरो मां प्रत्यमीषाम् । लोयात्रामप्येते न जानन्ति, लोके हि यो यस्याश्रयदानादिनोपकारी स ततः स्निग्धदृष्ट्यवलोकन-मधुरसम्भाषमादिकां महतीं प्रतिपत्तिमर्हतीति । इत्थं कषायितस्तद्द्रव्यस्यान्यद्रव्याणां वा व्यवच्छेदं कुर्यात् । यत् एवं तस्मात् स्वल्वालपनमाचार्येण कर्त्तव्यम्, स्वयमेव च तत्राचार्येण धर्मकथा कार्या ॥ कथम् ? इत्याह-

[भा.१५७२] वसहिफलं धम्मकहा, कहणमलद्धीओ सीस वावारे ।
पच्छा अइंति वसहिं, तत्थ य भुज्जो इमा मेरा ॥

वृ- धर्मकथां कुर्वन्तः सूरयो वसतिफलं कथयन्ति । यथा-

रयणगिरिसिहरसरिसे, जंबूणयपवरवेइआकलिए ।
मुत्ताजालगपयरग-खिंखिणिवरसोभितविडंगे ॥
वेरुलिय-वयर-विद्दुमखंभसहस्सोवसोभिअमुदारे ।
साहूण वसहिदाणा, लभती एयारिसे भवणे ॥

अथाचार्याणां धर्मकथने लब्धिर्न भवति तदा शिष्यं धर्मकथालब्धिसम्पन्नं व्यापारयेयुः । ततः पश्चादाचार्या प्रविशन्ति वसतिम् । तत्र च प्रविष्टानां 'भूयः' पुनरियं 'मर्यादा' सामाचारी ॥

तामेवाभिधित्सुराह-

[भा.१५७३] मज्जाया-ठवणाणं, पवत्तगा तत्थ होंति आयरिया।
जो उ अमज्जाइल्लो, आवज्जइ मासियं लहुयं ॥

वृ- मर्यादा च-सामाचारी स्थापना च दानादिकुलानां तयोः प्रवर्त्तकास्तत्र क्षेत्रे आचार्या भवन्ति। यश्च साधुः 'अमर्यादावान्' मर्यादामाचार्यै स्थापितां न पालयति स आपद्यते मासिकं लघुकम् ॥ मर्यादामेवाह-

[भा.१५७४] पडिलेहण संथारग, आयरिए तिन्नि सेस एक्केक्कं।
विंटियउक्खेवणया, पविसइ ताहे य धम्मकही ॥

[भा.१५७५] उच्चारे पासवणे, लाउअनिल्लेवणे अ अच्छणए।
करणं तु अणुन्नाए, अननुन्नाए भवे लहुओ ॥

वृ- संस्तारकभूमीनां 'प्रत्युपेक्षणाम्' अवलोकनां कुर्वते। तत्राचार्यस्य तिः संस्तारकभूमयो निरूपणीयाः, तद्यथा-एका निवाता अपरा प्रवाता तृतीया निवातप्रवाता। शेषाणां साधूनामेकैकां संस्तारकभूमिं यथारत्नाधिकतया अर्पयन्ति न यथाकथञ्चिदिति। तैश्च तदानीमात्मीयात्मीय विण्टिकानामुत्क्षेपणं कर्त्तव्यम्, येन तासूत्क्षिप्तासु भूमिभागः प्रतिनियतपरिमाणच्छेदेनावगम्यते। तदा च धर्मकथी संस्तारकग्रहणार्थं धर्मकथामुपसंहृत्य प्रतिश्रयाभ्यन्तरे प्रविशति। तथा क्षेत्रप्रत्युपेक्षकाः शय्यातरानुज्ञातां भुवं ग्लानाद्यर्थं दर्शयन्ति। तथा-इयति प्रदेश् उच्चारपरिष्ठापनमनुज्ञातम् नेत ऊर्ध्वम्, एवं "पासवणे" त्तिप्रश्रवणभूमिं "लाउए" त्ति अलाबूनि-तुम्बकानि तेषां कल्पकरणप्रायोग्यं प्रदेशं 'निर्लेपनं' पुतप्रक्षालनं तस्य स्थानं "अच्छणए" त्ति यत्र स्वाध्यायं कुर्वद्भिरास्यते, एतानि तथैव दर्शयन्ति। ततो य एव शय्यातरेणानुज्ञातोऽवकाशस्तत्रैवोच्चारादीनां करणं भगवद्भिरादिष्टम्। अननुज्ञाते त्ववकाशे कुर्वतो मासलघु, तद्व्याऽन्यद्रव्यव्यवच्छेदादयश्च दोषाः ॥उक्ता मर्यादा। अथ स्थापनामभिधित्सुः प्रस्तावनामाह-

[भा.१५७६] भत्तट्ठिया व खमगा, अमंगलं चोयणा जिनाहरणं।
जइ खमगा वंदंता, दाईंतियरे विहिं वोच्छं ॥

वृ- ते हि साधवः क्षेत्रं प्रविशन्तो भक्तार्थिनो वा भवेयुः क्षपका वा। यदि क्षपकाः ततो नोदकस्य 'नोदना' प्रेरा, यथा-प्रथममेव तावदमङ्गलमिदं यदुपवासं प्रत्याख्याय प्रविश्यते। सूरिराह-'जिनाहरणं' जिनानामुदाहरणमत्र मन्तव्यम्। ते हि भगवन्तो निष्क्रमणसमये प्रायश्चतुर्थादि तपः कृत्वा निष्क्रामन्ति, न च तत् तेषाममङ्गलम्, एवमत्रापि भावनीयम्। ततश्च यदि ते क्षपकास्तदा चैत्यानि वन्दमाना एव दर्शयन्ति स्थापनाकुलानि क्षेत्रप्रत्युपेक्षकाः। अथ भक्तार्थिनस्ते ततः "इयरे" त्ति इतरेषु भक्तार्थिषु यो विधिस्तं वक्ष्ये ॥ तमेवाह-

[भा.१५७७] सव्वे दट्टुं उग्गाहिएण ओयरिय भय समुप्पज्जे।
तम्हेक्क दोहि तिहि वा, उग्गाहिय चेइए वंदे ॥

वृ- चैत्यवन्दनार्थं गन्तुकामा यदि सर्वेऽपि पात्रकमुद्ग्राहयेयुः ततः सर्वान् साधून् उद्ग्राहितेन पात्रकेण दृष्ट्वा 'अहो! औदरिका एते' इति श्रावकश्चिन्तयति। भयं च तस्य समुत्पद्यते, यथा-कथमेतावतां मयैकेन दास्यते? इति। तस्मादेकेन द्वाभ्यां त्रिभिर्वा साधुभिरुद्ग्राहितपात्रकैः शेषैः पुनरनुद्ग्राहितपात्रैः सहाः सूरयश्चैत्यानि वन्दन्ति ॥ अथ यद्येकोऽपि साधुः पात्रकं नोद्ग्राहयति

ततः को दोषः ? इत्याह-

[भा.१५७८]　　सङ्काभंगोऽनुग्गाहियम्मि ठवणाइया भवे दोसा ।
　　　　घरचेइय आयरिए, कयवयगमणं च गहणं च ॥

वृ- अथानुद्ग्राहिते पात्रके प्रयान्ति ततश्चैत्यानि वन्दमानान् दृष्ट्वा कोऽपि धर्मश्रद्धावान् भक्तपानेन निमन्त्रयेत् तदा यदि भाजनं नास्तीति कृत्वा न गृह्यते ततः श्रद्धाभङ्गस्तस्योपजायते । अथ ब्रुवते 'पात्रकं गृहीत्वा यावद् वयमागच्छामस्तावदेवमेव तिष्ठतु' ततः स्थापनादयो दोषा भवेयुः । तस्मादुद्ग्राहणीयं पात्रकम् । जिनगृहेषु च वृन्देन सर्वेऽपि चैत्यादिन वन्दित्वा गृहचैत्यवन्दनार्थमाचार्येण कतिपयैः साधुभिरुद्ग्राहितपात्रकैः समं गमनं कर्त्तव्यम् । तत्र यदि श्रावकः प्राशुकेन भक्त-पानेन निमन्त्रयेत् ततो ग्रहणमपि तस्य कर्त्तव्यम् ॥ आह कानि पुनः कुलानि चैत्यवन्दनं विदधानास्ते दर्शयन्ति ? उच्यते-

[भा.१५७९]　　दाने अभिगम सड्ढे, सम्मत्ते खलु तहेव मिच्छत्ते ।
　　　　मामाए अचियत्ते, कुलाइँ दाइंति गीयत्था ॥

वृ- यथाभद्रको दानरुचि दानश्राद्धः । सम्यग्दृष्टिर्गृहीताणुव्रतोऽभिगमश्राद्धः । "सम्मत्ते" त्ति अविरतसम्यग्दृष्टिः । "मिच्छत्ते"त्ति आभिग्रहिकमिथ्यादृष्टिः । 'मामाको नाम' ईर्ष्यालुतया 'हे श्रमण! मा मदीयं गृहमायासीः' इति ब्रवीति। यस्त्वीर्ष्यालुतयैव साधुषु गृहं प्रविशत्सु महदप्रीतिकं स्वचेतसि करोति वाचा न किमपि ब्रूते एष देशीभाषया च किं कुर्वन्ति ? इत्याह-

[भा.१५८०]　　दाने अभिगम सड्ढे, सम्मत्ते खलु तहेव मिच्छत्ते ।
　　　　मामाए अचियत्ते, कुलाइँ ठविंति गीयत्था ॥

वृ- एतानि कुलानि स्थापयन्ति गीतार्थाः, 'अमीषु प्रवेष्टव्यम्, अमीषु तु न' इति व्यवस्थापयन्तीत्यर्थः ॥ अथ न स्थापयन्ति तदा किम् ? इत्याह-

[भा.१५८१]　　दाने अभिगम सड्ढे, सम्मत्ते खलु तहेव मिच्छत्ते ।
　　　　मामाए अचियत्ते, कुलाइं अठवंति चउगुरुगा ॥

वृ- एतानि कुलान्यस्थापयतश्चत्वारो गुरुकाः प्रायश्चित्तम् ॥ यत एवमतः-

[भा.१५८२]　कयउस्सग्गाऽऽमंतण, अपुच्छणे अकहिएगयर दोसा ।
　　　　ठवणकुलाण य ठवणं, पविसइ गीयत्थसंघाडो ॥

वृ- 'उत्सर्गे' चैत्यवन्दनं विधायागतानामैर्यापथिकीकायोत्सर्गे कृते यद्वा "उस्सग्ग"त्ति आवश्यके कृते सर्वेऽपि साधवो गीतार्थैरामन्त्रणीयाः-आर्या! आगच्छत, क्षमाश्रमणाः स्थापनां प्रवर्त्तयिष्यन्ति। इत्युक्ते सर्वेऽप्यागम्य गुरुपदकमलमभिवन्द्य रचिताञ्जलयस्तिष्ठन्ति । तत आचार्यैः क्षेत्रप्रत्युपेक्षकाः प्रष्टव्याः-कथयत कानि कुलानि प्रवेष्टव्यानि ? कानि वा न ? इति । ततस्तैरपि क्षेत्रप्रत्युपेक्षकैर्विधिवत् कथनीयम् । यद्याचार्या क्षेत्रप्रत्युपेक्षकान् न पृच्छन्ति, ते वा पृष्टाः सन्तो न कथयन्ति, ततस्तेषु प्रविशतां ये संयमा-ऽऽत्मविराधनादयो दोषास्तान् 'एकतरे' सूरयः क्षेत्रप्रत्युपेक्षका वा प्राप्नुवन्ति। ततः कथिते सति यान्यभिगृहीतमिथ्यात्व-मामाका-ऽचियत्तानि तानि सर्वथैव स्थाप्यानि, यथा-नैतेषु केनापि प्रवेष्टव्यम् । यानि तु दानश्राद्धादीनि स्थापनाकुलानि तेषामपि स्थापनं कर्त्तव्यम् । कथम् ? इत्याह-प्रविशति एक एव गीतार्थसङ्घाटको गुर्वादिवैयावृत्त्यकरस्तेषु ॥ इदमेव भावयति-

[भा.१५८३] गच्छम्मि एस कप्पो, वासावासे तहेव उडुबद्धे ।
गाम-नगर-निगमेसुं, अइसेसी ठावए सड्ढी ।।

वृ- वर्षावासे तथैव ऋतुबद्धे ग्राम-नकर-निगमेषु स्थितानां गच्छे एष कल्पः । कः ? इत्याह-अतिशेषाणि-अतिशायीनि स्निग्ध-मधुरद्रव्याणि प्राप्यन्ते येषु तानि कुलान्यतिशेषीणि "सड्ढि" त्ति दानश्रद्धावन्ति एवंविधानि कुलानि स्थापयेत् । एकं गीतार्थसङ्घाटकं मुक्त्वा शेषसङ्घाटकान् न तत्र प्रवेशं कारयेत् ।। आह-

[भा.१५८४] किं कारणं चमढणा, दव्वखओ उग्गमो वि य न सुज्झे ।
गच्छम्मि नयम कज्जं, आयरिय-गिलाण-पाहुणए ।।

वृ- 'किं कारणं' को हेतुः येन स्थापनाकुलेष्वेक एव सङ्घाटकः प्रविशति ? । सूरिराह-"चमढण"त्ति अन्यैरन्यैश्च सङ्घाटकैः प्रविशद्भिस्तानि कुलान्युद्वेगं प्राप्यन्ते । ततश्च द्रव्याणां-स्निग्धमधुराणां क्षयो भवति, उद्गमोऽपि च न शुध्यति । गच्छे च 'नियतं' निश्चितं प्रायोग्यद्रव्यैः कार्यं भवति । किमर्थम् ? इत्याह-आचार्य-ग्लान-प्राघूर्णकानां हेतोरिति निर्युक्तिगाथासमासार्थः ।।

अथ भाष्यकार एनामेव विवृणोति-

[भा.१५८५] पुव्विं पि वीरसुणिया, भणिया भणिया पहावए तुरियं ।
सा चमढणाए सिग्गा, निच्छइ दट्ठुं पि गंतुं जे ।।

वृ- जहा कोइ वी[illegible]सुणियाके[illegible] पारद्धिएण [illegible]राईणं गहणे छिछिक्कारिया समाणी तित्तिराईणि गिण्हइ । पच्छा सो तेहिं सावएण विना वि काउं हंतूण छिछिक्कारेइ ।सा वीरसुणिया इतो तओ पहावइ जाव न किंचि पेच्छइ । ताहे सा वेयारिया समाणी जइ सो सावयं दट्ठुं पच्छा छिछिक्कारेइ तहा वि पयं पि न इच्छए गंतुं ।। अथ गाथाक्षरयोजना-यः शुनकद्वितीयः शस्त्राद्यपेक्षारहितो मृगयां करोति स वीर उच्यते, तस्य शुनिका यथा पूर्वमदृष्टेऽपि श्वापदे 'भणिता भणिता' छीत्कृता छीत्कृता सती त्वरितमितस्ततः प्रधावति । ततः सा 'चमढणया' निरर्थकमुद्वेजनया "सिग्गा" श्रान्ता सती सन्तमपि श्वापदं दृष्ट्वा पदमपि गन्तुं "जे" इति पादपूरणे नेच्छति ।।

एष दृष्टान्तः । अर्थोपनयस्त्वेवम्-

[भा.१५८६] एवं सड्ढकुलाइं, चमढिज्जंताइं अन्नमन्नेहिं ।
नेच्छंति किंचि दाउं, संतं पि तहिं गिलाणस्स ।।

वृ- 'एवम्' अमुनैव प्रकारेण श्राद्धकुलानि "चमढिज्जंताइं" ति उद्वेज्यमानानि 'अन्यान्यैः' क्षुल्लक-स्थविर-क्षपकादिभिः । यद्वा "अन्नमन्नेहिं" ति अन्यान्यैः-परिफल्गुप्रायैः कारणैः । यथा एकः प्राह-ग्लानस्य शीर्षं दुष्यति शर्करां प्रयच्छ; अपरः प्राह-ममोदरं दुष्यति दध्नः करम्बेण प्रयोजनम्; तदपरः प्राह-प्राघूर्णक आयातोऽस्ति घृतादिकं देहि; अन्यः प्राह-अहमाचार्यस्य हेतोरायातोऽस्मि दुग्धं सशर्करं प्रतिलाभयेत्यादि । ततस्तानि ब्रुवीरन्-यूयं सर्व एव ग्लाना अतो वयं कियतां प्रयच्छामः ? को वा जानाति यूयमाचार्यादीनां हेतोर्गृह्णीथ ? आहोश्विदात्मार्थम् ? इति । एवमुद्वेज्यमानानि नेच्छन्ति 'सदपि' विद्यमानमपि घृतादिकं 'किञ्चित्' स्तोकमात्रमपि ग्लानस्य उपलक्षणत्वादाचार्य-प्राघूर्णकादेरप्यर्थाय दातुम् । ततश्च यत् ते ग्लानादयः परिताप्यन्ते

तन्निष्पन्नं प्रायश्चित्तम् ॥ गतं चमढणाद्वारम् । अथ द्रव्यक्षयोद्गमाशुद्धिद्वारद्वयमाह-

[भा.१५८७] अन्नो चमढण दोसो, दव्वखओ उग्गमो वि य न सुज्झे ।
खीणे दुल्लभदव्वे, नत्थि गिलाणस्स पाउग्गं ॥

वृ- 'अन्यः' अपरश्चमढनायां दोषः, कः ? इत्याह-द्रव्यस्य-अवगाहिम-घृतादेः कारणमन्तरेणापि दिने दिने गृह्यमाणस्य क्षयो भवति । ततश्च यदाभिनवमवगाहिमादि द्रव्यं साधूनामर्थाय करोति क्रीणाति वा तत उद्गमोऽपि च न शुध्यति, सदोषत्वात् तद् उत्पादितमपि न कल्पत इति भावः । ततः 'क्षीणे' व्यवच्छिन्ने दुर्लभद्रव् प्रयोजने उत्पन्नेऽपि नास्ति ग्लानस्य प्रायोग्यम् । ततः परिताप-महादुःखादिका ग्लानारोपणा द्रष्टव्या, भद्रक-प्रान्तकृताश्च दोषा भवन्ति ॥ तानेवाह-

[भा.१५८८] दव्वक्खएण पंतो, इत्थि घाइज्ज कीस ते दिन्नं ।
भद्दो हट्ठपहट्ठो, करेज्ज अन्नं पि साहूणं ॥

वृ-इह कस्यापि प्रान्तस्य भार्या श्राद्धिका, ततस्तयाऽन्यान्यसाधूनां याचमानानां प्रायोग्यद्रव्यं सर्वमपि प्रदत्तम् । ततस्तस्याः पतिर्भोजनार्थमुपविष्टः सन् ब्रूते-कूरं मे परिवेषय । सा प्राह-साधूनां प्रदत्तः । स प्रतिब्रूयात्-पूपलिकास्तर्हि परिवेषय । सा प्राह-ता अपि प्रदत्ताः । एवं सूप-दुग्ध-दधिप्रभृतीन्यपि साधूनां वितीर्णानीति । इत्थं द्रव्यक्षयेण स प्रान्तः कुपितः सन् 'अरे रे कुलपांसने! किं ते मुण्डास्तवोपपतयो भवन्ति येनैवं मदीयं गृहसर्वस्वं दत्त्वा तान् पोषयसि ?' इत्यभिधाय स्वां स्त्रियं 'घातयेत्' कुट्टयेत्, 'कस्मात्' किमर्थं त्वया तेभ्यः सर्वमपि दत्तम् ? इति कृत्वा । अत्र पाठान्तरम्-"दव्वक्खएण लुद्धो" त्ति 'लुब्धः' लोभाभिभूतः, सेषं प्राग्वत् । यस्तु भद्रको गृहपति स श्राद्धिकया सर्वस्मिन्नपि दत्ते तथैव च कथिते हृष्टप्रहृष्टो भवति । हृष्टो नाम-मनसि परितोषवान्, प्रहृष्टस्तु-प्रहसितवदनः समुद्भूतरोमहर्षो हर्षाश्रूणि विमुञ्चमान इति । ततश्च कुर्याद् 'अन्यदपि' अवगाहिमादिकं साधूनामर्थाय, कारयेदित्यर्थः । एतद्दोषपरिहरणार्थमेकं गीतार्थसङ्घाटकं मुक्त्वा शेषाः स्थापनाकुलानि न निर्विशेयुः । प्राघूर्णके चागते सति प्राघुण्यं विधेयम्, तच्च स्वभावानुमतैरेव भक्त-पानैः ॥ तथा चात्र दृष्टान्तमाह-

[भा.१५८९] जड्डे महिसे चारी, आसे गोणे य जे य जावसिया ।
एएसिं पडिवक्खे, चत्तारि उ संजया होंति ॥

वृ- 'जड्डः' हस्ती, महिषाश्वौ प्रतीतौ, 'गोणः' बलीवर्द, एतेषां ये 'यावसिकाः' यवसः-तत्प्रायोग्यमुद्ग-माषादिरूप आहारस्तेन तद्वहनेन चरन्तीति यासिकास्ते अनुकूलां चारीमानयन्ति । एतेषां जड्डादीनां 'प्रतिपक्षे' प्रतिरूपः पक्षः प्रतिपक्षः-सदृशपक्ष इत्यर्थः, तत्र चत्वारः प्राघूर्णकसंयता भवन्ति । तद्यथा-जड्डसमानो महिषसमानोऽश्वसमानो गोसमानश्चेति ॥

अथामीषामेव व्याख्यानमाह-

भा.(१५९०] जड्डो जं वा तं वा, सुकुमालं महिसओ महुरमासो ।
गोणो सुगंधिदव्वं, इच्छइ एमेव साहू वि ॥

वृ- 'जड्डः' हस्ती, सः 'यद्वा तद्वा' कर्कश-कटुकादिकमप्याहारयति । यस्तु महिषः 'सुकुमारं' वंशकरीलादिकमभिलषति । अश्वः 'मधुरं' मुद्ग-माषादिकमभिकाङ्क्षति । 'गौः' बलीवर्द सः 'सुगन्धिद्रव्यम्' अर्जुनक-ग्रन्थिपर्णादिकमिच्छति । एवमेव साधवश्चत्वारः चतुर्विधं भक्तमिच्छन्ति-

तत्थपढमो जड्डसमाणो पाहुणगसाहू भणइ-मम जं दोसीणं वा उण्हगं वा कंजियं वा लब्भइ तं चेव आनेहि, नवरं उदरपूरं। एवं भणिए किं दोसीणं चेव आनेयव्वं ? न, विसेसेण सोहणं तस्स आनेयव्वं। बिइओ पाहुणयसाहू भणइ-परं मे नेहरहिया वि पूवलिया सुकुमाला होउ। तइओ भणइ-महुरं नवरिं मे होउ। चउत्थो भणइ-अन्नं वा पाणं वा निप्पडिगंधं मे आनेह। एवं ताणं भणंताणं जं जोग्गं तं सड्ढयकुलेहिंतो विसेसेव आनिज्जइ। तं च ठविएसु चेव सड्ढयकुलेसु लब्भइ नाठविएसु । पाहुन्ने य कीरमाणे महंतो निज्जरालाभो साहुक्कारो य पाविज्जइ। अतो कायव्वं तं जहाविसहं साहूहिं ति ॥ आह यद्येवं तर्हि श्राद्धकुलेषु मा कोऽपि प्रवेशं कार्षीत् ? यदा प्राघूर्णकादिकार्यं समुत्पन्नं भविष्यति तदा प्रवेशं करिष्यामः, ततश्च बहुतरमुत्कृष्टं च लप्स्यमहे। सूरिराह-

[भा.१५९१] एवं च पुनो ठविए, अप्पविसंते इमे भवे दोसा।
वीसरण संजयाणं, विसुक्कगोणीइ आरामे ॥

वृ-एवं च तावत् चमढनायां दोषा अभिहिताः। पुनःशब्दो विशेषणार्थः। यदि पुनः स्थापनाकुलानि सर्वथैव स्थाप्यन्ते ततः "ठविए"त्ति सर्वथैव स्थापितेषु तेष्वप्रविशतां साधूनामेते दोषा भवेयुः। तद्यथा-विस्मरणं संयतानां भवति, भिक्षा दातव्येति नियमाभावात्।

अत्र च विशुष्कया गवा आरामेण च दृष्टान्तः- जहा-एगस्स वोद्दधिज्जाइयस्स गोणी धेनू। सा य पओस-पच्चूसे सुकुलवं सुकुलवं दुद्धस्स पयच्छइ। तस्स य दसहिं दिवसेहिं संखडी भविस्सइ। ताहे सो चिंतेइ-एसा गावी ताव बहुयं खीरं देइ, तया य दुल्लहं खीरं भविस्सइ, मम य तया अवस्सं कज्जं, तो इदानिं न दुहामि, तया चेव एक्कसराए दुहिस्सामि, वरं मे दस कुलया होंतया। पत्ते य संखडिदिवसे महंतं कुंडयं गहाय गोणीदुहणट्ठयाए दुक्को जाव विसुक्का, चुलुओ वि नत्थि दुद्धस्स। एवं संजया वि अणल्लियंता तेसिं सड्ढाणं पम्हुट्ठा न चेव जाणंति-किं संजया अत्थि ? नवा ? । ते वि संजया जम्मि दिवसे कज्जं तम्मि गया जाव न संति तानि दव्वानि। तम्हा दोण्ह वा तिण्ह वा दिवसाणं अवस्सं गंतव्वं ॥

अहवा आरामदिट्ठंतो, जहा-एगो आरामिओ। सो चिंतेइ-मम आरामे पुप्फाणं आढयं दिने दिने उट्ठेइ, इंदमहदिवसे अ बहू जनो पुप्फाण कायओ भविस्सइ तो मा दिने दिने पुप्फाइं उच्चेमि, तद्दिवसं वरं बहूणि पुप्फानि होंताणि त्ति। पत्ते य इंदमहदिवसे सो पच्छियाओ घेत्तुं गओ जाव सो आरामो उप्फुल्लो, एगमवि पुप्फं नत्थि। एवं ते जद्दिवसं कज्जमुप्पन्नं तद्दिवसं पविट्ठा ठवणाकुलेसु। ताहे सड्ढा भणंति-तुब्भे इहं चिय अच्छंता न मुणह वेलं, अम्हं पए वत्ता वेला। अप्पविसंतेसु य न कोइ दंसणं पडिवज्जइ, नवा अनुव्वए, गिलाणपाउग्गं वा नत्थि ॥ यतश्चैवमतः प्रवेष्टव्यं स्थापनाकुलेषु गीतार्थसङ्घाटकेन ॥ स च कीदृग्दोषैर्विरहितः ? इत्यत आह-

[भा.१५९२] अलसं घसिरं सुविरं, खमगं कोह-मान-मा-लोहिल्लं।
कोऊहल पडिबद्धं, वेयावच्चं न कारिज्जा ॥

वृ- 'अलसं' निरुद्यमम्, 'ग्रसितारं' बहुभक्षिणम्, 'स्वप्तारं' स्वप्नशीलम्, "सीलाद्यर्थस्येरः" इति प्राकतलक्षणबलादुभयत्रापि तृनप्रत्ययस्येरादेशः, क्षपकं प्रतीतम्, "कोह-माण-माय-लोहिल्लं" ति क्रोधवन्तं मानवन्तं मायावन्तं लोभवन्तम्, सर्वत्रापि भूम्नि मतुप्रत्ययः, यथा गोमानिति, "कोऊहल"त्ति मत्वर्थीयप्रत्ययलोपात् कुतूहलिनम्, 'प्रतिबद्धं' सूत्रार्थग्रहणसक्तम। एतान्

वैयावृत्यमाचार्यो न कारयेदिति समासार्थः ।। अथैनामेव गाथां विवरीषुः प्रथमतः प्रायश्चित्तमाह-

[भा.१५९३]तिसु लहुओ तिसु लहुया, गुरुओ गुरुया य लहुग लहुगो य ।
पेसग-करिंतगाणं, आणाइ विराधना चेव ।।

वृ- अलसादीन् य आचार्य स्ववैयावृत्यार्थं प्रेषयति-व्यापारयतीत्यर्थः, यश्चैभिर्दोषैर्दुष्टः स्वयं वैयावृत्यं करोति, तयोः प्रेषक-कुर्वतोः प्रायश्चित्तम् । तद्यथा-'त्रिषु' अलस-बह्वाशि-निद्रालुषु लघुको मासः । 'त्रिषु' क्षपक-कोपना-ऽभिमानिषु चत्वारो लघवः । मायावति गुरुको मासः । लोभवति चत्वारो गुरुकाः । कौतूहलवति चत्वारो लघुकाः । सूत्रार्थप्रतिबद्धे लघुमासः । आज्ञादयश्च दोषा विराधना चात्म-संयमविषया ।। तत्रालस-स्वपनशीलयोर्नियोजने दोषानाह-

[भा.१५९४] ना अच्छि वा सिढिओ, सइकालो अ घोसिरे दोसा ।
गुरुमाई तेन विना, विराधनुस्सक्क-ठवणादी ।।

वृ- अलसः स्वपनशीलश्च तावदुपविष्टः शयानो वा आस्ते यावत् सन्-विद्यमानः कालः सत्कालो भिक्षायाः 'स्फिटितः' अतिक्रान्तो भवति । यद्वा तावलस-निद्रालू चिन्तयेताम्- 'समापतितं तावदिदमस्माकमवश्यकरणीयं कर्म, अत एतदपि निर्वाहितं भवतु' इति कृत्वा अप्राप्ते एव भिक्षाकाले पर्यटेताम्, ततो यद्वा तद्वा भक्त-पानं लभेते, न प्रायोग्यम्, 'तेन' प्रायोग्येण विना या 'गुर्वादीनाम्' आचार्य-बाल-वृद्ध-ग्लानादीनां विराधना तन्निष्पन्नं प्रायश्चित्तम् । यद्वाऽतिक्रान्तायां वेलायामायान्तं वैयावृत्यकरं मत्वा प्रायोग्यस्योत्ष्वष्कणं श्राद्धकानि कुर्युः, उत्सूरे तद् विदध्युरिति भावः । यद्वा तानि तदुपस्कृतं प्रायोग्यभक्तं स्थापयेयुः ततः स्थापनादोषः । आदिशब्दात् 'साधूना-मसंविभक्तं भक्तं कथं स्वमुखे प्रक्षिप्यते ?' इति बुद्ध्या तेषामभुञ्जानानामन्तरायमित्यादयो दोषाः ।।

[भा.१५९५] अप्पत्तेवि अलंभो, हानी ओसक्कणा य अइभद्दे ।
अनहिंडंतो य चिरं, न लहइ जं किंचि वाऽऽनेइ ।।

वृ- अथ 'यदेतत् कर्मास्माकं मध्ये समापतितं तद् निर्वाहितं भवतु' इति कृत्वा अप्राप्ते काले भिक्षामटति तदा 'अलाभः' न किमपि प्राप्यते इति भावः । ततश्चाचार्यादीनां 'हानिं' असंस्तरणं भवति । यस्तु 'अतिभद्रकः' अतीवधर्मश्रद्धावान् गृहपति सः 'अवष्वष्कणं' विवक्षितकालादर्वाग् भक्तनिष्पादनं कुर्यात् । यद्वा असावलसत्वाद् निद्रालत्वाद्वा चिरमहिण्डमानः सन् न किमपि लभते, 'यत्किंचिद्वा' पर्युषितं वल्ल-चनकादिकं वा आनयति, तेन भुक्तेनाऽपथ्यतया गुर्वादीनां ग्लानत्वं भवति, ततः परिताप-महदुःखादिका ग्लानारोपणा ।। अथ ''घसिर''त्ति पदं भावयति-

[भा.१५९६] गिण्हामि अप्पणो ता, पज्जत्तं तो गुरूण घिच्छामि ।
घेत्तुं च तेसि विच्छं, सीयल-ओसक्क-ओमाई ।।

वृ- यो महोदरः स वैयावृत्ये नियुक्तो भिक्षामटन् चिन्तयति-गृह्णामि तावदात्मनो योग्यं पर्याप्तं ततो गुरूणां हेतोर्ग्रहीष्यामि । यद्वा तेषां गुरूणां योग्यं गृहीत्वा तत आत्मनोऽर्थाय ग्रहीष्ये । इत्थं विचिन्त्य यदि प्रथमं गुरूणां योगयं गृहीत्वा पश्चादात्मार्थं गृह्णाति ततो यावता कालेनात्मनः पर्याप्तं पूर्यते तावता तत् पूर्वं गृहीतं शीतलं स्यात्, तच्च गुरूणामकारकम्, ततः सैव ग्लानारोपणा। अथवा स्थापनाकुलेषु प्रथमतः प्रवेशे तत्राद्यापि वेलाया अप्राप्तत्वादवष्वष्कणादयो दोषाः । अथ प्रथममात्महेतोर्गृह्णाति ततो यावता तत् पर्याप्तं भवति तावता स्थापनाकुलेषु वेलातिक्रमो

भवेत्। अथ वेलातिक्रमभयाद् देशकाल एव तेषु प्रविशति तत आत्मनोऽवमं भवेत्, उदरपूरणं न भवेदिति भावः। ततश्चावमाहारतया तथैवानागाढा-ऽऽगाढपरितापादयो दोषा ॥

अथ क्षपक-क्रोधवतोर्दोषानाह-

[भा.१५९७] परिताविज्जइ [illegible], अह गिण्हइ अप्पणो [illegible]।
अविदिन्ने कोहिल्लो, रूसि किं वा तुमं देसि ॥

वृ- यदि क्षपको गुरूणां हेतोः प्रायोग्यं गृह्णाति नात्मनस्ततः स एव परिताप्यते, अथात्मनो गृह्णाति तत इतरेषां-आचार्याणां हानि-परितापना। यस्तु क्रोधवान् सः 'अवितीर्णे' अदत्ते सति रुष्यति। रुष्टश्चागारिणं भणति-यदि भवान् न ददाति तर्हि मा दात् किं भवदीयं गृहं दृष्ट्वाऽस्माभिः प्रव्रज्या प्रतिपन्ना ? इति, किं वा त्वं ददासि येन 'एवमहं ददामि' इति गर्वितो भवसि ? इत्यादिभिर्दुर्वचनैः श्राद्धं विपरिणमयति ॥ मानि-मायिनोर्दोषानाह-

[भा.१५९८] ऊणाणुट्ठमदिन्ने, थद्धो न य गच्छए पुनो जं च।
माई भद्दगभोई, पंतेन व अप्पणो छाए ॥

वृ- यः स्तब्धः सः 'ऊने' तुच्छे दत्ते "अनुट्ठ"त्ति अभ्युत्थाने वा अकृते "अदिन्न"त्ति सर्वथैव वा अदत्ते सति 'पुनः' भूयस्तदीयं गृहं न गच्छति, भणति च-श्रावकाणामितरेषां च को विशेषः? यदि द्वितयेऽपि साधूनामभ्युत्थानादिविनयप्रक्रियामन्तरेण भिक्षां प्रयच्छन्ति ततो नाहममुष्य गृहं भूयः प्रविशामीति। ततः "जंच"त्ति तद्गृहे प्रवेशं विना प्रायोग्यस्यालाभे यत् किञ्चिदाचार्यादीनां परितापनादिकं भवति तन्निष्पन्नं प्रायश्चित्तम्। यस्तु मायी सः 'भद्रकभोजी' प्रायोग्यमुपाश्रयाद् बहिर्भुक्त्वा प्रान्तमानयतीति भावः, यद्वा 'प्रान्तेन' वल्ल-चणकादिना आत्मनो योग्यं स्निग्ध-मधुरद्रव्यं छादयति, छादयित्वा च गुरूणां दर्शयति ॥ लुब्धस्य दोषानाह-

[भा.१५९९] ओभासइ खीराई, दिज्जंते वा न वारई लुद्धो।
जेऽनेगविसणदोसा, एगस्स वि ते उ लुद्धस्स ॥

वृ- यो लुब्धः स स्थापनाकुलेषु क्षीरादीन्यवभाषते। यद्वा श्रद्धातिरेकतस्तैर्दीयमानानि स्निग्धमधुराणि न वारयति। ततश्च येऽनेकेषु सङ्घाटकेषु स्थापनाकुलं प्रविशत्सु चमढणादयो दोषा वर्णितास्ते सर्वेऽप्येकस्यापि लुब्धस्य प्रविशतो द्रष्टव्याः ॥ कुतूहलिनः प्रतिबद्धस्य च दोषानाह-

[भा.१६००] नडमाई पिच्छंतो, ता अच्छइ जाव फिट्टई वेला।
सुत्तत्थे पडिबद्धो, ओसक्क-ऽहिसक्क माईया ॥

वृ- यः कुतूहली स नटादीन् प्रेक्षमाणस्तावदास्ते यावद् वेला स्फिटति। यस्तु सूत्रेऽर्थे वा 'प्रतिबद्धः' आसक्तः स गुरूणां धर्मकथादिव्यग्रतया यदैवान्तरं लभते तदैवाप्राप्तकालेऽपि भिक्षार्थमवतरति, वेलातिक्रमं वा कृत्वा कालवेलादावतरति, ततोऽवष्वष्कणा-ऽभिष्वष्कणादयो दोषाः ॥ यतश्चैवमतः किं कर्त्तव्यम् ? इत्याह-

[भा.१६०१] एयद्दोसविमुक्कं, कडजोगिं नायसील मायारं।
गुरुभत्तिमं विनीयं, वेयावच्चं तु कारिज्जा ॥

वृ- एभिः-अनन्तरोक्तैर्दोषैर्विमुक्तं-वर्जितम्, किंविशिष्टम् ? इत्याह-'कृतयोगिनं' गीतार्थं 'ज्ञातशीला-ऽऽचारं' ज्ञातं-सम्यगवगतं शीलं-प्रियधर्मतादिरूपमाचारश्च-चक्रवालसामाचारीरूपो

यस्य स तथा तम्, तथा गुरवः-आचार्यास्तेषु भक्तिमन्तम्-आन्तरप्रतिबन्धोपेतम्, 'विनीतम्' अभ्युत्थनादिबाह्यविनयवन्तम्, एवंविधं शिष्यं वैयावृत्यमाचार्य कारयेत् ।। आह किमर्थं वैयावृत्यकरस्येयन्तो गुणा मृग्यन्ते ? उच्यते-

[भा.१६०२] साहंति य पियधम्मा, एसणदोसे अभिग्गहविसेसे ।
एवं तु विहिगहणे, दव्वं वड्ढंति गीयत्था ।।

वृ-प्रियधर्माण उपलक्षणत्वादपरैरप्यनन्तरोक्तगुणैर्युक्ता वैयावृत्यकराः ''साहंति''त्ति कथयन्ति 'एषणादोषान्' म्रक्षित-निक्षिप्तादीन् । यथा-इत्थं म्रक्षितदोषो भवति, इत्थं तु निक्षिप्त इत्यादि । एतैश्च दोषैर्दुष्टं साधूनां न दीयते । 'अभिग्रहविशेषाँश्च' जिनकल्पिक-स्थविरकल्पिकसम्बन्धिनः कथयन्ति । 'एवम्' उक्तेन विधि[illegible]स्थापनाकुलेषु ग्रहणे श्रद्धां वर्धयन्तो गीतार्था 'द्रव्यमपि' घृतादिकं वर्धयन्ति ।। इदमेव भावयति-

[भा.१६०३] एसणदोसे य कए, अकए वा जइगुणे विकत्थिंता ।
कहयंति असढभावा, एसणदोसे गुणे चेव ।।

वृ- 'एषणादोषे' म्रक्षितादौ कृते वा अकृते वा 'यतिगुणान्' क्षान्ति-मार्दवादीन् 'विकत्थमानाः' विविधं श्लाघमानाः 'अशठभावाः' कैतववर्जिताः न भक्षणोपायनिमित्तमिति भावः एषणा दोषान् कथयन्ति । तथा गुणाः-साधूनां प्राशुकैषणीयभक्त-पानप्रदानप्रभवाः पापकर्मनिर्जरादयस्ताँश्च गीतार्थाः कथयन्ति । यथा- समणोवासगस्स नं भंते ! तहारूवं समणं वा माहणं वा फासुएणं एसणिज्जेणं असन-पान-खाइम-साइमेणं पडिलाभेमाणस्स किं कज्जइ ? गोयमा ! एगंतसो निज्जरा कज्जइ, नत्थि य से केइ पावकम्मे कज्जइ त्ति । अथेत्थं न कथयेयुः ततः के दोषाः ? इत्याह-

[भा.१६०४] बालाई परिचत्ता, अकहिंतेऽनेसणाइगहणं वा ।
न य कहपबंधदोसा, अह य गुणा साहिया होंति ।।

वृ- तेषु श्राद्धकुलेषु जिनकल्पिका भिक्षार्थमायाताः, तेषां परमान्नादिकं लेपकृतमुपनीतम्, तैश्च भगवद्भिः प्रतिषिदधम्, ततस्तानि श्राद्धकानि चिन्तयेयुः-एत एव प्रधानाः साधवः, इतरे तु स्निग्ध-मधुरद्रव्यग्राहिणः सर्वेऽपि नामधारकमात्राः साध्वाभासा एवेति । ततः श्रद्धाभङ्गभाञ्जि तानि भूयः प्रायोग्यद्रव्यं नोपढौकयेयुः । एवमभिग्रहविशेषान् अकथयद्भिर्गीतार्थैर्बालादयः परित्यक्ता भवन्ति । अथैषणादोषान् शुद्धभक्त-पानानस्य च गुणान् न कथयेयुः ततस्तानि श्राद्धकान्येषणां कुर्यु । तत्र यदि प्रतिषिध्यते तदाऽपि बालादयः परित्यक्ताः, तेषां प्रायोग्याभावे संस्तरणाभावात् । अथ न प्रतिषिध्यते ततोऽनेषणादिग्रहणं भवेत्, आदिशब्द एषणादोषाणामेव स्वगतानेकभेदसूचकः । आह गोचरप्रविष्टानां साधूनां कथाप्रबन्धः कर्तुं न कल्पते, अमी च साधव इत्थमेषणादोषादीनां कथां प्रबध्नन्तः कथं न दोषभाजो भवन्ति ? इत्युच्यते-'न च' नैवात्र कथाप्रबन्धदोषा भवन्ति, यदि हि भक्त-पानलोलुपतया कथां प्रबध्नीयुस्ततो भवेयुर्दोषाः, तच्च नास्ति, एषणाशुद्धिहेतोरेव तेषामित्थं कथनात् । अथ च प्रत्युतेत्थं कथयद्भिस्तैर्गीतार्थैः 'गुणाः' बाल-वृद्धाद्युपष्टम्भ-गुरुभक्तिप्रभृतयः साधिता भवन्ति ।। कतं पुनस्ते कथयन्ति ? इत्याह-

[भा.१६०५] ठाणं गमनाऽऽगमनं, वावारं पिंडसोहिमुज्झोगं ।

जाणंताण वि तुज्झं, बहुवक्खेवाण कहयामो ॥

वृ- 'स्थानं' नाम आत्म-प्रवचन-संयमोपघातवर्जितो भूभागः । यत्र स्थितस्य गवा-ऽश्व-महिषादेराहननादि न भवति स आत्मोपघातवर्जितः । यत्र तु निर्द्धमनाद्यशुचिस्थानव्यतिरिक्ते प्रदेशे स्थितस्य लोकः प्रवचनस्यावर्णं न ब्रूयात् स प्रवचनोपघातवर्जितः । यत्र पुनः पृथिव्यादिकायानां विराधना न भवति स संयमोपघातवर्जितः । ईदृशे स्थाने साधुना दायकेन वा स्थित्वा भिक्षा ग्राह्या देया वेति ज्ञापयन्ति । 'गमनं' नाम दायकेन भिक्षादानार्थं गृहमध्ये प्रविशता षट्कायानामुपमर्दशमकुर्वता गन्तव्यम् । एवम् 'आगमनमपि' भिक्षां गृहीत्वा साधुसम्मुखमागच्छता दायकेनोपयुक्तेनागन्तव्यम् । व्यापारः-कर्त्तन-कण्डन-पेषणादिकः, तं च सम्यग् ज्ञापयन्ति-ईदृशे व्यापारे भिक्षा ग्रहीतुं कल्पते, ईदृशे तु नेति । "पिंडसोहिमुल्लोगं" ति पिण्डशुद्धेः 'उल्लोकं' लेशोद्देशं कथयन्ति, 'इत्थमाधाकर्मादयो दोषा उपजायन्ते, [illegible]मेभिर्दोषैरदुष्टः पिण्डः साधूनां दीयमानः शुद्धो बहुफलश्च भवति' इथ्येवं पिण्डनिर्युक्तिं लेशतो ज्ञापयन्तीति भावः । तथा यद्यपि यूयमिदं साधुधर्मस्वरूपमग्रेऽपि जानीथ तथापि युष्माकं बहुव्याक्षेपाणामविस्मरणार्थं कथयाम इति ॥ अपि च-

[भा.१६०६] केसिंचि अभिग्गहिया, अनभिग्गहिएसणा उ केसिंचि ।
मा हु अवन्नं काहिह, सव्वे वि हु ते जिणाणाए ॥

वृ-केषाञ्चित् साधूनामभिगृहीता एषणा, यथा जिनकल्पिकानाम् । केषाञ्चित् त्वनभिगृहीता, यथा गच्छवासिनाम्, सप्तस्वपि पिण्डैषणासु तेषां भक्त-पानस्य ग्रहणात् । एवं चापरापरां भक्त-पानग्रहणसामाचारीं दृष्ट्वा यूयं मा अवज्ञां करिष्यथ । कुतः ? इत्याह-'सर्वेऽपि ते' भगवन्तो जिनकल्पिकाः स्थविरकल्पिकाश्च जिनाज्ञायां वर्त्तन्ते, स्वस्वकल्पस्थितिपरिपालनात् अतो न केऽप्यवज्ञातुमर्हन्तीति भावः ॥ किञ्च-

[भा.१६०७] संविग्गभावियाणं, लुद्धगदिट्ठंतभावियाणं च ।
मुत्तूण खेत्त-काले, भावं च कहिंति सुद्धुंछं ॥

वृ-येषां श्राद्धानां पुरत एषणादोषाः कथ्यन्ते ते द्विधा-संविग्नभाविता लुब्धकदृष्टान्तभाविताश्च । संविग्नैः-उद्यतविहारिभिर्भाविताः संविग्नभाविताः । ये तु पार्श्वस्थादिभिर्लुब्धकदृष्टान्तेन भावितास्ते लुब्धकदृष्टान्तभाविताः कथम् ? इति चेद् उच्यते-ते पार्श्वस्थाः श्राद्धानित्थं प्रज्ञापयन्ति-यथा कस्यापि हरिणस्य पृष्ठतो लुब्धको धावति, तस्य च हरिणस्य पलायनं श्रेयः, लुब्धकस्यापि तत्पृष्ठतोऽनुधावनं श्रेयः; एवं साधोरप्यनेषणीयग्रहणतः पलायितुमेव युज्यते, श्रावकस्यापि तेन तेनोपायेन साधोरेषणीयमनेषणीयं वा दातुमेव युज्यते इति । इत्थं द्विविधानामपि श्राद्धानां पुरतः शुद्धं-द्वाचत्वारिंशद्दोषरहितं यदुञ्छमिवोञ्छं स्तोकस्तोकग्रहणात् 'शुद्धोञ्छम्' उत्सर्गपदमित्यर्थः तत् कथयन्ति । किं सर्वदैव ? न इत्याह-'मुक्त्वा क्षेत्र-कालौ भावं च' इति क्षेत्रं-कर्कशक्षेत्रमध्वानं वा कालं-दुर्भिक्षादिकं 'भावं' ग्लानत्वादिकं प्रतीत्य ते श्राद्धाः किञ्चिदपवादमपि ग्राह्यन्ते ॥ अपि च इदमपि ते श्राद्धा आपनीयाः-

[भा.१६०८] संथरणम्मि असुद्धं, दोण्हवि गिण्हंत-दिंतयानऽहियं ।
आउरदिट्ठंतेनं, तं चेव हियं असंथरणे ॥

वृ- संस्तरणं नाम-प्राशुकमेषणीयमं चाशनादि पर्याप्तं प्राप्यते न च किमपि ग्लानत्वं विद्यते

तत्र 'अशुद्धम्' अप्राशुकमनेषणीयं च गृह्णतो ददतश्च द्वयोरपि 'अहितम्' अपथ्यम्, गृह्णतः संयमबाधाविधायित्वाद् ददतस्तु भवान्तरे स्वल्पायुर्निबन्धनकर्मोपार्जनात् । 'तदेव' अशुद्धम् 'असंस्तरणे' अनिर्वाहे दीयमानं गृह्यमाणं च 'हितं' पथ्यं भवति । आह कथं तदेव कल्प्यं तदेव चाकल्प्यं भवितुमर्हति ? इति उच्यते-आतुरः-रोगी तस्य दृष्टान्तेनेदं मन्तव्यम् । यथा हि रोगिणः कामप्यवस्थामाश्रित्यान्नौषधादिकमपथ्यं भवति, काञ्चित् पुनः समाश्रित्य तदेव पथ्यम्, एवमिहापि भावनीयम् ॥ तदेवं भावितं "साहंति य पियधम्मा, एसमदोसे अभिग्गहविसेसे" इति । अथ युक्तम् "एवं तु विहिग्गहणे" त्ति तत्र विधिग्रहणं भावयति-

[भा.१६०९] संचइयमसंचइयं, नाऊण असंचयं तु गिण्हंति ।
संचइयं पुन कज्जे, निब्बंधे चेव संतरियं ॥

वृ-प्रायोग्यद्रव्यं द्विधा-सञ्चयिकमसञ्चयिकं च । 'सञ्चयिकं' घृत-गुड-मोदकादि, 'असञ्चयिकं' तु दुग्ध-दधि-शालि-सूपादि । तत्र यदसञ्चयिकं तत् स्थापनाकुलेषु प्रभूतं ज्ञातवा गृह्णन्ति । सञ्चयिकं पुनर्ग्लान-प्राघूर्णकादौ महति कार्ये उत्पन्ने गृह्णन्ति । अथ श्राद्धानां महान् निर्बन्धो भवति ततोऽग्लाना अपि गृह्णन्ति, परं 'सान्तरितं' न दिने दिने इति [illegible]ः । एष सञ्चयिकग्रहणस्यापवाद उक्तः ॥ अथापवादपसदस्याप्यपवादमाह-

[भा.१६१०] अहवण सड्ढा-विभवे, कालं भावं च बाल-वुड्ढाई ।
नाउ निरंतरगहणं, अछिन्नभावे य ठायंति ॥

वृ-"अहवण" त्ति अखण्डमव्ययं प्रकारान्तरद्योतनार्थम् । श्रावकाणां श्रद्धां च-दानरुचिं तीव्रां परिज्ञाय विभवं च विपुलं तदीयगृहेष्ववगम्य 'कालं' दुर्भिक्षादिकं 'भावं च' ग्लानत्वादिकं ज्ञात्वा बाल-वृद्धादयो वा आप्यायि भवन्त्विति ज्ञात्वा निरन्तरग्रहणमपि कुर्वन्ति, सञ्चयिकमपि दिने दिने गृह्णन्तीति भावः । यावच्च दायकस्य दानभावो न व्यवच्छिद्यते तावदच्छिन्ने भावे 'तिष्ठन्ति' दीयमानं प्रतिषेधयन्तीत्यर्थः, यथा तेषां भूयोऽपि श्रद्धा जायते ॥ अथ स्थापनाकुलेषु भक्त-पानग्रहणे सामाचारीमभिधित्सुराह-

[भा.१६११] दव्वप्पमाण गणणा, खारिय फोडिय तहेव अद्धा य ।
संविग्ग एगठाणे, अनेगसाहूसु पन्नरस ॥

वृ-द्रव्यं-शाल्यादि तस्य प्रमाणं ज्ञातव्यम्, कियदत्र गृहे खल्वां शालि-मुद्गादिकं दिने दिने प्रविशति ? । 'गणना' नाम कियन्ति घृतपलान्यत्र प्रविशन्ति ? यद्वा कियन्ति मानषाण्यत्र जेमयन्ति ? । "खारिय" त्ति क्षारः-लवणं तेन संस्कृतानि 'क्षारितानि' लवणकरीरादीनि व्यञ्जनानि तानि कियन्त्यत्र पच्यन्ते ? इति । "फोडिय" त्ति 'स्फोटितानि' मरिच-जीरकादिकटुभाण्डधूपितानि शालनकानि एतेषामपि तथैव प्रमाणं ज्ञातव्यम् । 'अद्धा' कालः स ज्ञातव्यः, किमत्र प्रहरे वेला? उत सार्द्धप्रहरे ? आहोश्वित् प्रहरद्वये ? इति । एतद् द्रव्यप्रमाणादिकं विज्ञाय 'संविग्नः' मोक्षाभिलाषी "एगठाणे" त्ति एकः सङ्घाटकस्तत्र प्रविशति । यदि पुनरनेके साधवः स्थापनाकुलेषु प्रविशन्ति ततः 'पञ्चदश' आधाकर्मादीय अनिसृष्टान्ता उद्गमदोषा भवन्ति, अध्यवपूरकस्य मिश्रजात एवान्तर्भावात् । एष सङ्ग्रहगाथासमासार्थः ॥

अस्या एव भाष्यकृद् व्याख्यानमाह-

[भा.१६१२] असनाइदव्वमाणे, दसपरिमिय एगभत्तमुव्वरइ ।
सो एगदिनं कप्पइ, निच्चं तु अज्झोयरो इहरा ॥

वृ-अशनम्-ओदनमुद्गादिष आदिग्रहणात् पानक-खादिम-स्वादिमपरिग्रहः, एतेषां द्रव्याणां परिमितानामपरिमितानां वा मानं-प्रमाणं ज्ञातव्यम् । यत्र परिमितमशनादि द्रव्यं प्रविशति तत्र दशानां मानुषाणां हेतोरुपस्क्रियमाणे एकस्य-अपरस्य योग्यं भक्तं-भक्तार्थमुद्धरति, स च भक्तार्थ एकस्य साधोः परिपूर्णाहारमात्रारूपं एकं दिनं ग्रहीतुं कल्पते । 'इतरथा' यदि द्वितीयादिषु दिवसेषु गृह्णन्ति तदा ''निच्चं तु'' त्ति स साधुभि प्रति[illegible] गृह्यमाणो भक्तार्थो निर[illegible] श्राद्धेनां [illegible], ततश्च तदर्थमध्यवपूरकः प्रक्षिप्येत ॥ एवं तात् परिमितमाश्रित्योक्तम् ।

अथापरिमितमधिकृत्याह-

[भा.१६१३] अपरिमिए आरेण वि, दसण्हमुव्वरइ एगभत्तट्ठो ।
वंजण-समिइम-पिट्ठे-वेसणमाईसु य तहेव ॥

वृ- यत्र पुनरपरिमितं राध्यते तत्र दशानां मानुषाणाम् 'अर्वागपि' नवाष्टादिसङ्ख्याकानामपि हेतो राद्धे एकस्य योग्यो भक्तार्थ उद्धरति, स-च दिने दिने कल्पत इति । आह च चूर्णिकृत् अपरिमिए पुन भत्ते दसण्ह आरेण वि एगस्स भत्तट्ठो दिणे दिणे कप्पइ चेव । तथा व्यञ्जनानि-तीमन-वटिका-मर्जिकादीनि, ''समितिम'' त्ति समिता-कणिक्का तया निष्पन्नाः समितिमाः-मण्डकाः पूपलिका वा, पिष्टम्-उण्डेरकादि सक्तुप्रभृति वा, वेसणं-मरिच-जीरक-हिङ्गुप्रभृतिकं कटुभाण्डम्, आदिग्रहणाद् लवण-शुण्ठ्यादिपरिग्रहः । एतेषामपि परिमाणं तथैव द्रष्टव्यं यथाऽशनादीनाम् ॥ एतावता ''द्रव्यप्रमाणं गणना-क्षारित-स्फोटितानि'' इति गाथादलं भावितम् । अथ ''अद्धा य'' त्ति पदं व्याचष्टे-

[भा.१६१४] सतिकालद्धं नाउं, कुले कुले ताहि तत्थ पविसंति ।
ओसक्कणाइदोसा, अलंभे बालाइहानी वा ॥

वृ- सत्कालाद्धा-भिक्षायाः सम्बन्धी यो यत्र देशकालरूपोऽद्धा तं ज्ञात्वा कुले कुले तस्मिन् देशकाले तत्र प्रविशन्ति । अथ देशकालेऽतिक्रान्तेऽप्राप्ते वा प्रविशन्ति ततोऽवष्वष्कणादयो दोषाः । अथावष्वष्कमादिकं तानि श्राद्धकान्यशुद्धदानदोषश्रवणव्युत्पन्नमतीनि न कुर्युः ततः प्रायोग्यद्रव्यस्यालाभे बालादीनां हानिर्भवेदिति ॥ एवं यत्र क्षेत्रे एक एव गच्छो भवेत् तत्र स्थापनाकुलप्रवेशे सामाचारी भणिता । अथानेकगच्छविषयां तामेवाभिधित्सुराह-

[भा.१६१५] एगो व होज्ज गच्छो, दोन्नि व तिन्नि व ठवणा असंविग्गे ।
सोही गिलाणमाई, असई य दवाई एमेव ॥

वृ- विवक्षितक्षेत्रे एको वा गच्छो भवेद् द्वौ वा त्रयो वा, तत्रैकं गच्छमाश्रित्य विधिरुक्तः । अथ व्याद्यादीन् गच्छानधिकृत्य विधिरभिधीयते-''ठवणा असंविग्गे'' त्ति येषु असंविग्नाः प्रविशन्ति तेषां श्राद्धकुलानां स्थापना कर्त्तव्या, न तेषु प्रवेष्टव्यम् । अथ प्रविशन्ति ततः पञ्चदशोद्गमदोषा-नापद्यन्ते, ''सोहि'' त्ति तद्दोषनिष्पन्न 'शोधि' प्रायश्चित्तम् । यद्वा ''सोहि'' त्ति पदं ''गिलाणमाई'' इत्युत्तरपदेन सह योज्यते, ततोऽयमर्थ-ग्लान-प्राघूर्णकादीनामर्थायासंविग्नभावितेष्वपि कुलेषु 'शोधि' एषणाशुद्धि तया शुद्धं भक्तं गृह्यते न कश्चिद् दोषः । ''असई इ दवाइ एमेव'' त्ति अन्यत्र

'असति' अविद्यमाने द्रवादिकमपि 'एवमेव' असिग्नभावितकुलेषु ग्रहीतव्यमिति द्वारगाथा-समासार्थः ।। अथैनामेव विवरीषुराह-

[भा.१६१६] संविग्गमणुन्नाए, अइंति अहवा कुले विरिंचंति ।
अन्नाउंछं व सहू, एमेव य संजईवग्गे ।।

वृ- इह यैस्तत् क्षेत्रं प्रत्युपेक्षितं तेषु पूर्वस्थितेषु येऽन्ये साधवः समायान्ति ते साम्भोगिका असाम्भोगिका वा स्युः । तत्रासाम्भोगिकेषु संविग्नेषुविधिरुच्यते-संविग्नैर्वास्तव्यसाधुभिः 'अनुज्ञाते' 'यूयं स्थापनाकुलेषु प्रिशत, वयमज्ञातोञ्छं गवेषयिष्यामः' इत्येमनुज्ञायां प्रदत्तायां ये आगन्तुकाः संविग्नास्ते स्थापनाकुलेषु "अइंति" त्ति प्रविशन्ति । वास्तव्यास्तु स्थापनाकुलवर्जेषु गुरु-बाल-वृद्धादीनामात्मनश्च हेतोर्भक्त-पानमुत्पादयन्ति । अथ वास्तव्या असहिष्णवस्ततो यावन्तो गच्छास्तावद्भिर्भागैः स्थापनाकुलानि विरिञ्चन्ति-आर्या ! एतावत्सु कुलेषु भवद्भिः प्रवेष्टव्यम्, एतावत्सु पुनरस्माभिरिति । अथवा यद्यागन्तुकाः "सहू" इति 'सहिष्णवः' समर्थशरीरास्ततोऽज्ञा-तोञ्छंपुनरस्माभिरिति । अथवा यद्यागन्तुकाः "सहू" इति 'सहिष्णवः' समर्थशरीरास्ततोऽज्ञातोञ्छं गेषयन्तः पर्यटन्ति । एवमेव च संयतीवर्गेऽपि द्रष्टव्यम्, ता अपि दूव्यादिगच्छसद्भावे एवंविधमेव विधिं कुर्वन्तीत्यर्थः ।।

[भा.१६१७] एवं तु अन्नसंभोइआण संभोइआम ते चेव ।
जाणित्ता निब्बंधं, वत्थव्वेणं स उ पमाणं ।।

वृ- एवं 'तुः' पुनरर्थे एष पुनर्विधिरन्यसाम्भोगिकानामुक्तः, ये तु साम्भोगिकाः-परस्पर-मेकसामाचारीकास्तेषामागन्तुकानामर्थाय त एव वास्तव्याः स्थापनाकुलेभ्यो भक्त-पानमानीय प्रयच्छन्ति । अथ श्राद्धाः प्राघूर्णकभद्रका अतीव निर्बन्धं कुर्यु, यथा-प्राघूर्णकसङ्घाटकोऽप्यस्मद्गृहे स्थापनीयः, ततो निर्बन्धं ज्ञात्वा वास्तव्यसङ्घाटिकेन आगन्तुकसङ्घाटिकं गृहीत्वा तत्र गन्तव्यम् यदि च तत्र प्रचुरं प्रायोग्यं प्राप्यते तत आगन्तुकसङ्घाटिकेन गवेषणा न कर्त्तव्या-किमित्येतावत् प्रचुरं दीयते ? किन्तु 'स तु' स एव वास्तव्यसङ्घाटिकस्तत्र प्रमाणम्, यावन्मात्रं ग्रहीतव्यं यद्वा कल्पनीयं तदेतत् सर्वमपि स एव जानातीति भावः ।। एष एकस्यां वसतौ स्थितानां विधिरुक्तः। अथ पृथग्वसतिव्यवस्थितानामाह-

[भा.१६१८] असइ वसहीए वीसुं, रायनिए वसहि भोयणाऽऽगम्म ।
असहू अपरिनया वा, ताहेवीसुंऽ सहू वियरे ।।

वृ- विस्तीर्णाया वसतेः 'असति' अभावे 'विष्वक्' पृथग् अन्यस्यां सतौ स्थितानामागन्तुक वास्तव्यो वा यः 'रत्नाधिकः' आचार्यास्तस्य वसतावागम्यावमरत्नाधिकेन भोजनं कर्त्तव्यम् । अथैकस्मिन् गच्छे द्वयोर्वा गच्छयोः 'असहिष्णवः' ग्लाना भवेयुः अपरिणता वा शैक्षाः परस्परं मिलिताः सन्तोऽसङ्खडं कुर्युः तदा "वीसुं" ति अपरिणतान् 'विष्वक्' पृथग् भोजयन्ति । "सहूवियरे" त्ति अकारप्रश्लेषाद् असहिष्णूनां प्रथमालकां 'वितरन्ति' प्रयच्छन्ति । ततोऽपरिणतान् वसतौ स्थापयित्वा कृतप्रथमालिकान् असहिष्णून् गृहीत्वा सर्वेऽपि रत्नाधिकवसतौ गत्वा मण्डल्यां भुञ्जते । अथवोत्तरार्द्धमन्यथा व्याख्यायते-"असहू" इति यद्यवमरत्नाधिक आचार्य स्वयमसहिष्णुर्न शक्नोति रत्नाधिकाचार्यसन्निधौ गन्तुं न वा तावतीं वेलां प्रतिपालयितुं शक्तः 'अपरिणता वा'

अगीतार्थास्तस्य शिष्यास्तेषां नास्ति कोऽपि सामाचार्या उपदेष्टा आलोचनाया वा प्रतीच्छकः ततो विष्वग्वसतौ द्वावप्याचार्यौ समुद्दिशतः । "सहू विआरे" त्ति "यः" अप्रधानादि रत्नाधिकः सहिष्णुस्ततः 'इतरस्य' अवरत्नाधिकस्योपाश्रयं गत्वा समुद्दिशति ॥ एवं तावद् द्वयोर्गच्छयोर्विधिरुक्तः । अथ त्रयो गच्छा भवेयुस्ततः को विधिः ? इत्याह-

[भा.१६१९] तण्हं एक्केण समं, भत्तट्ठं अप्पणो अवड्ढं तु ।
पच्छा इयरेण समं, आगमन विरेगु सो चेव ॥

वृ- यद्येक आचार्यो वास्तव्यो भवति द्वौ चागन्तुकौ तत इत्थं त्रयाणामाचार्याणां सम्भवे द्वयोरागन्तुकयोर्मध्याद् यो रत्नाधिकस्तस्य सम्बन्धी यो वैयावृत्यकरस्तेनैकेन समं वास्तव्याचार्यवैयावृत्यकरः पर्यटन् प्राघूर्णकाचार्यस्य हेतोः 'भक्तार्थं' परिपूर्णाहारमात्रारूपम् 'आत्मनश्च' आत्मीयाचार्यार्थम् 'अपार्द्धम्' अर्द्धध्रुवमात्रं श्राद्धकुलेभ्यो गृह्णाति । पश्चाद् 'इतरेण' आगन्तुकावमरत्नाधिकाचार्यसम्बन्धिना वैयावृत्यकृता समं पर्यटन् तथैव तद्योग्यं भक्तार्थमात्मनश्चार्द्धध्रुवमात्रं गृह्णाति । "आगमन विरेगो सो चेव" त्ति यदि त्रि-चतुःप्रभृतीनामाचार्याणामागमनं भवति ततः स एव 'विरेकः' विभजनम् । किमुक्तं भवत ? -तदीयैरपि वैयावृत्यकरैः समं यथाक्रमं पर्यटता वास्तव्यसाधुनाऽऽत्मीयाचार्यार्थं तथा त्र्यादिभिर्भागैर्भक्तार्थं विभज्य भक्तं ग्रहीतव्यं यथा सर्वान्तिमवैयावृत्यकरेण समं पर्यटन्नात्मगुरूणां भक्तार्थं परिपूरयतीति ॥ अथ "गिलाणमाई असति" त्ति पदं विवृणोति-

[भा.१६२०] अतरंतस्स उ जोगासईए इयरेहि भाविए विसिउं ।
अन्नमहानसुवक्खड, जं वा सन्नी सयं भुंजे ॥

वृ- "अतरंतो" ग्लानः तस्य उपलक्षणत्वादाचारयस्यापि यद् योग्यं-प्रायोग्यं तस्य असति-अलाभे इतरे नाम-असंविग्नास्तैर्भावितेषु श्राद्धकुलेषु प्रविश्य यस्मिन् महानसे ते असंविग्ना अध्यवपूरकादिदोषदुष्टां भिक्षां गृह्णते तद् वर्जयित्वा यदन्यस्मिन् महानसे केवलं गृहार्थमेवोपस्कृतं ततो ग्लानाद्यर्थं गृह्यते, यद् वा भक्तं पृथगुपस्कृतं "सन्नी" स गृहस्वामी श्रावकः स्वयं भुङ्क्ते ततो वा गृह्यते, अन्यदीयाद्वा कुतोऽपि गृहाद् यत् प्रहेणकादिकमायातं तद् गृह्यते ॥

अथ "दवाइ एमेव" त्ति पदं व्याख्यानयति-

[भा.१६२१] असतीए व दवस्स य, परिसित्तिय-कंजि-गुलदवाईणि ।
अत्तट्ठियाइँ गिण्हइ, सव्वालंभे विमिस्साइं ॥

वृ- यदि ग्लानस्य गच्छस्य वा योग्यं द्रव्यं-पानकं संविग्नभावितेषु कुलेषु न लभ्यते तदा द्रव्यस्य 'असति' अभावेऽसंविग्नभावितेष्वपि कुलेषु "परिसित्तिय" त्ति येनोषणोदकेन दधिभाजनानि निर्लेप्यन्ते तत् परिषिक्तपानकम्, काञ्जिकम्-आरनालम्, गुलद्रवं नाम-यस्यां कवल्लिकायां गुड उत्काल्यते तस्यां यत् सप्तमतप्तं वा पानीयं तद् गुडोपलिप्तं द्रवं गुडद्रवम्, आदिग्रहणात् चिञ्चापानकादिपरिग्रहः । एतानि पानकानि यदि तैः श्राद्धकैः 'आत्मार्थितानि' प्रथममेवात्मार्थं कृतानि तदा ग्लानाद्यर्थं गृह्णाति । "सव्वालंभे" त्ति यदि सर्वथैव ग्लानस्य वा गच्छस्य वा योग्यमेषणीयं पानकं न लभ्यते तदा "विमीसाइं" त्ति 'विमिश्राणि' असंविग्नानां श्रावकाणां चार्थायाचित्तीकृतानि तान्यपि द्वितीयपदे गृह्यन्ते ॥ अथ "असई इ दवादि" इत्यत्र

योऽयमादिशब्दस्तस्य सफलतामुपदर्शयन्नाह-

[भा.१६२२] पानट्ठा व पविट्ठो, विसुद्धमाहार छंदिओ गिण्हे ।
अद्धाणाइ असंथरि, जइउं एमेव जदसुद्धं ॥

वृ- पानकार्थं वा प्रविष्टो यदि 'विशुद्धेन' एषणीयेनाहारेण गृहपतिना छन्द्यते-निमन्त्रयते ततश्छन्दितः सन् तमपि गृह्णाति । तथा 'अद्धामाइ'त्ति अध्वनिर्गतानां साधूनां हेतोः आदिशब्दादमौदर्या-ऽशिवादिषु वा असंस्तरणेऽसंविग्नभावितकुलेषु 'एवमेव' ग्लानोक्तविधिना शुद्धान्वेषणे 'यतित्वा' यत्नं कृत्वा ततो यद् 'अशुद्धम्' अनेषणीयं तदप्यागमोक्तनीत्या गृह्णन्ति॥ उक्तं स्थविरकल्पिकानधिकृत्य विहारद्वारम् । अथामूनेवाङ्गीकृत्य सामाचारीद्वारमभिधित्सुः प्रागुक्तमेव द्वारगाथाचतुष्टयमाह-

[भा.१६२३] इच्छा मिच्छा तहक्कारे, आवस्सि निसीहिया य आपुच्छा ।
पडिपुच्छ छंदण निमंतणा य उवसंपया चेव ॥

[भा.१६२४] सुय संघयणुवसग्गे, आतंके वेयणा कति जना य ।
थंडिल्ल वसहि किच्चिर, उच्चारे चेव पासवणे ॥

[भा.१६२५] ओवासे तणफलए, सारक्खणया य संठवणया य ।
पाहुडि अग्गी दीवे, ओहाण वसे कइ जना य ।

[भा.१६२६] भिक्खायरिया पानग, लेवालेवे तहा अलेवे य ।
आयंबिल पडिमाओ, गच्छम्मि उ मासकप्पो उ ॥

वृ- आसामर्थ प्राग्वद् द्रष्टव्यः ॥ यस्तु विशेषस्तमुपदिदर्शयिषुराह-

[भा.१६२७] ओहेन दसविहं पि य, सामायरिं न ते परिहवंति ।
पवयणमाय जहन्ने, सव्वसुयं चेव उक्कोसे ॥

वृ- 'ओधेन' सामान्यतो दशविधामपि सामाचारीं न 'ते' स्थविरकल्पिकाः परिहापयन्ति । आचार्यादिपुरुषविशेषापेक्षया तु या यस्येच्छाकारादिका युज्यते या च तथाकारादिका न युज्यते सा तथा वक्तव्या । श्रुतद्वारमङ्गीकृत्य जधन्यतो गच्छवासिनामष्टौ प्रवचनमातरः श्रुतम् । उत्कर्षतः सर्वमेव श्रुतम्, चतुर्दशपूर्वाणीति हृदयम् ॥

[भा.१६२८] सव्वेसु वि संघयणेसु होंति धइदुब्बला व बलिया वा ।
आतंका उवसग्गा, भईया विसहंति व न व त्ति ॥

वृ-स्थविरकल्पिकाः 'सर्वेष्वपि' षट्स्वपि संहननेषु भवन्ति, धृत्याऽपि-मानसावष्टम्भलक्षणया दुर्बला वा भवेयुर्बलिनो वा । 'आतङ्काः' रोगाः 'उपसर्गा' दिव्यादयो यदि समुदीर्यन्ते तदा तान् विषहन्ते वा न वेति 'भक्ताः' विकल्पिताः, यदि ज्ञानादिपुष्टालम्बनं भवति तदा चिकित्सादिविधानान्न सहन्ते, इतरथा तु सम्यगदीनमनसः सहन्त इति भावः ॥

[भा.१६२९] दुविहं पि वेयणं ते, निक्कारणओ सहंति भइया वा ।
अममत्त अपरिकम्मा, वसही वि पमज्जणं मोत्तुं ॥

वृ- 'द्विविधामपि' आभ्युपगमिकीमौपक्रमिकीं च वेदनां 'निष्कारणतः' कारणमन्तरेण सहन्ते 'भाज्या वा' असहिष्णुत्व-तीर्थाव्यवच्छेदादिकारणवशान्न सहन्तेऽपीति भावः । तथा वसतिरपि

तेषाम् 'अममत्वा' ममेयमित्यभिष्वङ्गरहिता, 'अपरिकर्मा' उपलेपनादिपरिकर्मवर्जिता, किं सर्वथैव? न इत्याह-प्रमार्जनामेकां मुक्त्वा। कारणे तु सममत्वा सपरिकर्माऽपि भवति। तत्रापरिणतचारित्राणां शैक्षादीनां ममेयमित्यभिष्वङ्गविधानात् सममत्वा, सपरिकर्मा त्वपरिकर्माया वसतेरलाभे द्रष्टव्या ॥ अथ कति जनः स्थण्डिलं चेति द्वारद्वयस्य विशेषमाह-

**[भा.१६३०]** तिगमाईया गच्छा, सहस्स बत्तीसई उसभसेने।
थंडिल्लं पि य पढमं, वयंति सेसे वि आगाढे ॥

**वृ-** 'त्रिकादयः' त्रि-चतुःप्रभृतिपुरुषपरिमाणा गच्छा भवेयुः। किमुक्तं भवति ?-एकस्मिन् गच्छे जघन्यतस्त्रयो जना भवन्ति, गच्छस्य साधुसमुदायरूपत्वात्, तस्य च त्रयाणामधस्तादभावादिति। तत ऊर्ध्वं ये चतुः-पञ्चप्रभृतिपुरुषसङ्ख्याका गच्छास्ते मध्यमपरिमाणतः प्रतिपत्तव्यास्तावद् यावदुत्कृष्टं परिमाणं न प्राप्नोति। किं पुनस्तत् ? इति चेद् अत आह-"सहस्स बत्तीसई उसभसेने" त्ति द्वात्रिंशत् सहस्राण्येकस्मिन् गच्छे उत्कृष्टं साधूनां परिमाणम्, यथा [illegible] गणधरस्य भगवत ऋषभसेनस्येति। तथा स्थण्डिलमपि 'प्रथमम्' अनापातमसंलोकमेते गच्छवासिनो व्रजन्ति। 'आगाढे तु' भावासन्नतादौ कारणे 'शेषाण्यपि' अनापातमसंलोकप्रभृतीनि स्थण्डिलानि गच्छन्ति॥ 'कियच्चिरम् ?' इति द्वारं विशेषयन्नाह-

**[भा.१६३१]** किच्चिर कालं वसिहिह, न ठंति निक्कारणम्मि इइ पुट्ठा।
अन्नं वा म[illegible]ती, ठविंति साहारणमलंभे ॥

**वृ-** कियच्चिरं कालं यूयमस्यां वसतौ वत्स्यथ ? इति पृष्टाः सन्तो निष्कारणे न तिष्ठन्ति, किन्तु क्षेत्रान्तरं गच्छन्ति। अथ बहिरशिवादीनि कारणानि ततस्तत्रैव क्षेत्रेऽन्यां वसतिं मार्गयन्ति। अथ मृग्यमाणाऽप्यन्या न लभ्यते ततः साधारणं वचनं स्थापयन्ति, यथा-निर्व्याघाते तावद् वयं मासं यावदवतिष्ठामहे व्याघाते तु हीनाधिकम् ॥

अथ लाघवार्थं शेषद्वाराणि तुल्यवक्तव्यत्वादतिदिशन्नाह-

**[भा.१६३२]** एमेव सेसएसु वि, केवइया वसिहिह त्ति जा नेयं।
निक्कारण पडिसेहो, कारण जयणं तु कुव्वंति ॥

**वृ-** 'एवमेव' कियच्चिरद्वारवत् 'शेषेष्वपि' उच्चार-प्रश्रवणादिषु द्वारेषु कियन्तो वत्स्यथेति द्वारं यावन्नेयम्। किम् ? इत्याह-एतेष्वपि निष्कारणे प्रतिषेधः, न वसन्तीति भावः, कारणे तु यतनां कुर्वन्ति। किमुक्तं भवति ?-यदि तिष्ठतामुच्चार-प्रश्रवणयोः परिष्ठापनमकाले फलिहकाभ्यन्तरतो वा नानुजानन्ति ततस्तत्र न तिष्ठन्ति। अथाशिवादिभिः कारणैस्तिष्ठन्ति तत उच्चारं प्रश्रवणं वा मात्रकेषु व्युत्सृज्य बहि परिष्ठापयन्ति। एवमवकाशादिष्वपि द्रष्टव्यम्। नवरमवकाशे यत्र प्रदेशे उपवेशन-भाजनधावनादि नानुज्ञातं तत्र नोपविशन्ति, कमढकादिषु च भाजनानि धावन्ति। तृणफलकान्यपि यानि नानुज्ञातानि तानि न परिभुञ्जते। संरक्षणता नाम यत्र तिष्ठतामगारिणो भणन्ति-यदि वयं तदानीं द्रक्ष्यामस्ततो रक्षिष्याम इति। संस्थापनता नाम वसतेः संस्कारकरणं तस्यामपि नियुक्ता भणन्ति-वयमकुशलाः संस्थापनाकर्ममि कर्त्तव्ये। सप्राभृतिकायापि वसतौ कारणतः स्थिता देशतः सर्वतो वा क्रियमाणायां प्राभृतिकायां स्वकीयमुपकरणं प्रयत्नेन संरक्षन्ति, यावत् प्राभृतिका क्रियते तावदेकस्मिन् पार्श्वे तिष्ठन्ति। सदीपायां साग्निकायां वा

वसतौ कारणे स्थिता आवश्यकं बहि कुर्वन्ति । अवथानं नाम यदि गृहस्थाः क्षेत्रादिषु गच्छन्तो भणन्ति-'अस्माकमपि गृहेषूपयोगो दातव्यः, अनुपस्थापितशैक्षैर्वा दापयन्ति । यत्र च 'कति जना वत्स्यथ ?' इति पृष्टे सति कारणतस्तिष्ठद्भिः परिमाणनियमः कृतो यथा 'एतावद्भिः स्थातव्यं नाधिकैः' ततो यद्यन्ये प्राघूर्णकाः समाच्छन्ति तदा तेषामवस्थापनाय भूयोऽप्यनुज्ञापनीयः सागारिकः, यद्यनुजानाति ततः सुन्दरमेव, अथ नानुजानाति ततोऽन्यस्यां वसतौ स्थापनीयास्ते प्राघूर्णका इति ।। भिक्षाचर्यादीनामवशिष्यमाणद्वाराणां विशेषमाह-

[भा.१६३३] नियताऽनियता भिक्खायरिया पानऽन्न लेवऽलेवाडं ।
अंबिलमनंबिलं वा, पडिमा सव्वा वि अविरुद्धा ।।

वृ- भिक्षाचर्या 'नियता' कदाचिदाभिग्रहिकी 'अनियता' कदाचिदनाभिग्रहिकी, असंसृष्टा-संसृष्टाद्यन्यतमैषणाभिग्रहवती तद्वर्जिता वेति भावः । पानमन्नं च लेपकृतं वा भवेद् अलेपकृतं वा । द्राक्षा-चिञ्चापानकादि तक्र-तीमनादिकं च लेपकृतम्, सौवीरादिकं वल्ल-चणकादिकं चालेपृतम्। आचाम्लमनाचाम्लं वा द्वयमपि कुर्वन्ति । 'प्रतिमाश्च' मासिक्यादिका भद्रादिका वा सर्वा अप्यमीषामविरुद्धा इति ।। उक्तं सामाचारीद्वारम् । अथ स्थितिद्वारमभिधित्सुर्द्वारगाथाद्वयमाह-

[भा.१६३४] खित्ते काल चरित्ते, तित्थे परियाय आगमे वेए ।
कप्पे लिंगे ले[illegible] झाणे गणना अभिगहा य ।।

[भा.१६३५] पव्वावण मुंडावण, मनसाऽऽवन्ने उ नत्थि पच्छित्तं ।
कारण पडिकम्मम्मि उ, भत्तं पंथो य भयणाए ।।

वृ- क्षेत्रे १ काले २ चारित्रे ३ तीर्थे ४ प्याये ५ आगमे ६ वेदे ७ कल्पे ८ लिङ्गे ९ लेश्यायां १० ध्याने ११ गणनायां १२ एतेषु स्थितिर्वक्तव्या, अभिग्रहाश्चामीषामभिधातव्याः १३ । एवं प्रव्राजना १४ मुण्डापना १५ मनसाऽऽपन्ने त्वपराधे नास्ति प्रायश्चित्तं १६ कारणं १७ प्रतिकर्मणि च स्थिति १८ भक्तं पन्थाश्च भजनया १९ इति गाथाद्वयसमुदायार्थः ।।

अवयवार्थं तु प्रतिद्वारं बिभणिषुराह-

[भा.१६३६] पन्नरसकम्मभूमिसु, खेत्तऽद्धोसप्पिणीइ तिसु होज्जा ।
तिसु दोसु य उस्सप्पे, चउरो पलिभाग साहरणे ।।

वृ- क्षेत्रद्वारे जन्मतः सद्भावतश्च स्थविरकल्पिकाः 'पञ्चदशस्वपि कर्मभूमिषु' भरतैरावत-विदेहपञ्चकलक्षणासु भवन्ति । संहरणतः पञ्चदशानां कर्मभूमीनां त्रिंशतामकर्मभूमीनामन्यतरस्यां भूमौ भवेयुः । 'अद्धा' कालस्तमङ्गीकृत्यावसर्पिण्यां जन्मतः सद्भावतश्च 'त्रिषु' तृतीय-चतुर्थ-पञ्चमारकेषु भवेयुः । "तिसु दोसु य उस्सप्पे"त्ति उत्सर्पिण्यां जन्मतः 'त्रिषु' द्वितीय-तृतीय-चतुर्थेष्वरकेषु सद्भावतस्तु 'द्वयोः' तृतीय-चतुर्थारकयोर्भवन्ति । नोअवसर्पिण्युत्सर्पिणीकाले जन्मतः सद्भावतश्च दुःषमसुषमाप्रतिभागे भवन्ति, संहरणतस्तु चत्वारोऽपि प्रतिभागा अमीषां विषयतया प्रतिपत्तव्याः, तद्यथा-सुषमसुषमाप्रतिभागः सुषमाप्रतिभागः सुषमदुःषमाप्रतिभागः दुषमसुषमाप्रतिभागश्चेति ।।

[भा.१६३७] पढम-बिइएसु पडिवज्जमाण इयरे उ सव्वचरणेसु ।
नियमा तित्थे जम्मऽट्ठ जहन्ने कोडि उक्कोसे ।।

[भा.१६३८] पव्वज्जाए मुहुत्तो, जहन्नमुक्कोसिया उ देसूना ॥
आगमकरणे भइया, ठियकप्पे अट्ठिए वा वि ॥

वृ- प्रतिपद्यमानका अमी प्रथमे वा-सामायिकाख्ये द्वितीये वा-छेदोपस्थापनीयाख्ये चारित्रे भवेयुः । 'इतरे नाम' पूर्वप्रतिपन्नास्ते सर्वेष्वपि चरणेषु भवन्ति, सामायिकादिषु यथाख्यातपर्यन्तेष्विति भावः । तथा नियमादमी तीर्थे भवन्ति नातीर्थे । पर्यायो द्विधा-गृहिपर्यायः प्रव्रज्यापर्यायश्च । तत्र गृहिपर्यायो जघन्यतो जन्मत आरभ्याष्टौ वर्षाणि, उत्कर्षतः पूर्वकोटी । प्रव्रज्यापर्यायो जघन्यतोऽन्तर्मुहूर्त्तम्, तदनन्तरं मरणात् प्रतिपाताद्वा, उत्कर्षतस्तु देशोना पूर्वकोटी। आगमः-अपूर्वश्रुताध्ययनं तस्य करणे 'भाज्याः' अमी कुर्वन्ति वा न वा तमिति भावः । कल्पद्वारेस्थितकल्पे वा अस्थितकल्पे वा भवेयुः । वेदद्वारं सुज्ञानत्वाद् भाष्यकृता न भावितम् । इत्थं तु द्रष्टव्यम्-वेदः स्त्री-पुं-नपुंसकभेदात् त्रिविधोऽप्यमीषां प्रतिपत्तिकाले भवेत्, पूर्वप्रतिपन्नकानां त्ववेदकत्वमपि भवतीति ॥

[भा.१६३९] भइया उ दव्वलिंग, पडिवत्ती सुद्धलेस-धम्मेहिं ।
पुव्वपडिवन्नगा पुन, लेसा झाणे अ अन्नयरे ॥

वृ- प्रतिपद्यमानकाः पूर्वप्रतिपन्नकाश्च द्रव्यलिङ्गे 'भक्ताः' विकल्पिताः, कदाचित् तद् न भवत्यपीति भावः । भावलिङ्गं तु [illegible]मात् सर्वदैव भवति । तथा प्रतिपत्ति शुद्धलेश्याधर्मध्यानयोर्भवेत् । किमुक्तं भवति ?-प्रथमतः प्रतिपद्यमानकाः शुद्धास्वेव तिसृषु लेश्यासु आज्ञाविचयादौ च धर्मध्याने वर्त्तमानाः प्रतिपत्तव्याः । पूर्वप्रतिपन्नकाः पुनः षन्नां लेश्यानामन्यतरस्यां लेश्यायामार्त्तादीनां च चतुर्णां ध्यानानामन्यतरस्मिन् ध्याने भवेयुः ॥ अथ लेश्या-ध्यानयोः कः प्रतिविशेषः ? उच्यते-लिश्यते-श्लिष्यते कर्मणा सह या जीवः सा लेश्या-कृष्णादिद्रव्यसाचिव्यजनितो जीवस्य शुभाशुभरूपः परिणामविशेषः । उक्तञ्च-

कृष्णादिद्रव्यसाचिव्यात्, परिणामो य आत्मनः ।
स्फटिकस्येव तत्रायं, लेश्याशब्दः प्रवर्त्तते ॥

स च चलो वा स्यादचल वा । ध्यानं पुनर्निश्चल एवाशुभः शुभो वा आत्मनः परिणामः ।
तथा चाह-

[भा.१६४०] झाणेण होइ लेसा, झाणंतरओ व होइ अन्नयरी ।
अज्झवसाओ उ दढो, झाणं असुभो सुभो वा वि ॥

वृ-लेश्या द्विविधा-द्रव्यतो भावतश्च । तत्र द्रव्यलेश्यामुपरिष्टाद् वक्ष्यति । भावलेश्या त्वनन्तरोक्त एव शुभाशुभरूपो जीवपरिणामः । सा चैवंविधा शुभाशुभपरिणामरूपा कृष्णादीनामन्यतमा "लेस" त्ति भावलेश्या ध्यानेन वा भवति ध्यानान्तरत वा । ध्यानान्तरं नाम-अदृढाध्यवसायरूपा चिन्ता, यद्वा ध्यानस्य चान्तरिका ध्यानान्तरमुच्यते । ध्यानं पुनः 'दृढः' निश्चलोऽध्यवसायोऽशुभो वा शुभो वा मन्तव्यम् । स च निश्चलोऽध्यवसायो मानसो वाचिकः कायिकश्चेति त्रिधा द्रष्टव्यः । दृढश्चाध्यवसायोऽन्तर्मुहूर्त्तमात्रमेव कालं यावद् द्रष्टव्यः, परतो निरन्तरं दृढाध्यवसायस्य कर्त्तुमशक्यत्वात् । यश्चादृढोऽध्यवसायः स सर्वोऽपि चिन्तेत्यभिधीयते ॥ आह यद्येवं तर्हि चिन्ताध्यानयोरन्यत्वमापन्नम् ? उच्यते-नायमेकान्तः किन्तु स्यादेकत्वं स्यादन्यत्वम् । कथं पुनः ? इति

उच्यते-

[भा.१६४१] 　　झाणं नियमा चिंता, चिंता भइया उ तीसु ठाणेसु ।
झाणे तदंतरम्मि उ, तव्विवरीया व जा काइ ।।

वृ- यद् मनःस्थैर्यरूपं ध्यानं तद् नियमात् चिन्ता । चिन्ता तु 'भक्ता' विकल्पिता त्रिषु स्थानेषु। तथाहि-कदाचिद् 'ध्याने' ध्यानविषया चिन्ता भवति यदा दृढाध्यवसायेन चिन्तयति । "तदंतरम्मि उ" त्ति तस्य-ध्यानस्यान्तरं तदन्तरं तस्मिन् वा चिन्ता भवेत्, ध्यानान्तरिकायामित्यर्थः । 'तद्विपरीता वा' या काचिद् ध्याने ध्यानान्तरिकायां वा नावतरति किन्तु विप्रकीर्णा चित्तचेष्टा साऽपि चिन्ता प्रतिपत्तव्या । अतो यदा दृढाध्यवसायेन चिन्तयति तदा चिन्ताध्यानयोरेकत्वम्, अन्यदा पुनरन्यत्वम्। अथ ध्यानस्यैव भेदानाह-

[भा.१६४२] 　　कायादि तिहिक्किं, चित्तं तिव्व मउयं च मज्झं च ।
जह सीहस्स गतीओ, मंदा य पुता दुया चेव ।।

तत् पुनर्दृढाध्यवसायात्मकं चित्तं त्रिधा-कायिकं वाचिकं मानसिकं च । कायिकं नाम यत् कायव्यापारेण व्याक्षेपान्तरं परिहरन्नुपयुक्तो भङ्गकचारणिकां करोति, कूर्मवद्वा संलीनाङ्गोपाङ्गस्तिष्ठति । वाचिकं तु 'मयेदृसी निरवद्या भाषा भाषितव्या, नेदृसी सावद्या' इति विमर्शपुरस्सरं यद् भाषते, यद्वा विकथादिव्युदासेन श्रुतपरावर्त्तनादिकमुपयुक्तः करोति तद् वाचिकम् । मानसं त्वेकस्मिन् वस्तुनि चित्तस्यैकाग्रता । पुनरेकैकं त्रिविधम्-तीव्रं मृदुकं च मध्यं च । तत्र तीव्रम्-उत्कटम्, मृदुकं च-मन्दम्, मध्यं च-नातितीव्रं नातिमृदुकमित्यर्थः । यथा सिंहस्य गतयस्तिस्रो भवन्ति । तद्यथा-मन्दा च प्लुता च द्रुता चैव । तत्र मन्दा-विलम्बिता, प्लुता-नातिमन्दा नातित्वरिता, द्रुता च-अतिशीघ्रवेगा ।। स्याद् बुद्धि : केयं पुनर्ध्यानान्तरिका ? इति उच्यते-

[भा.१६४३] 　　अन्नतरझाणऽतीतो, बिइयं झाणं तु सो असंपत्तो ।
झाणंतरम्मि वट्टइ, विपहे व विकुंचियमईओ ।।

वृ- अन्यतरस्माद्-द्रव्याद्यन्यतरवस्तुविषयाद् ध्यानादतीतः-अतिक्रान्तो यः कश्चिदद्यापि द्वितीयं ध्यानं न सम्प्राप्नोति स द्वितीयं ध्यानमसम्प्राप्तः सन् यद् ध्यानान्तरे वर्त्तते सा ध्यानान्तरिका भवतीति शेषः । इयमत्र भावना-द्रव्यादीनामन्यतमं ध्यातवतो यदा चित्तमुत्पद्यते 'सम्प्रति शेषाणां ध्यातव्यानां कतरद् ध्यायामि ?' इत्येवंविधो विमर्शो ध्यानान्तरिकेत्युच्यते । दृष्टान्तोऽत्र "विपहे व विकुंचियमतीउ" त्ति द्विपथं-मार्गद्वयस्थानम्, ततो यथा कश्चिदेकेन पथा गच्छन् पुरस्ताद् 'द्विपथे' मार्गद्वये दृष्टे सति 'विकुञ्चितमतिकः' 'अनयोर्मार्गयोः कतरेण व्रजामि ?' इति विमर्शाकुलबुद्धि सन्नपान्तराले वर्त्तते, एवमेषोऽपि ध्यानान्तरे इति ।।

अथ शुभाशुभध्यानज्ञापनार्थमिदमाह-

[भा.१६४४] 　　वण्ण-रस-गंध-फासा, इट्ठाऽनिट्ठा विभासिया सुत्ते ।
अहिकिच्च दव्वलेसा, ताहि उ साहिज्जई भावो ।।

वृ- 'सूत्रे' प्रज्ञापनादौ कृष्णादीनां लेश्यानां यद् वर्ण-गन्ध-रस-स्पर्शा इष्टा अनिष्टाश्च 'विभाषिताः' विविधम्-अनेकैरुपमानैर्वर्णिताः । तत्र वर्णवर्णना यथा-

कण्हलेसा णं भंते ! केरिसिया वन्नेणं पन्नत्ता ? से जहानामए जीमूते इ वा अंजणे इ वा कज्जले

इ वा गवले इ वा गवलवलए इ वा जंबूफले इ वा अद्दारिट्ठए इ वा परपुट्ठे इ वा भमरे इ वा भमरावली इ वा गयकलभे इ वा किण्हकेसरे इ वा आगासथिग्गले इ वा किण्हासोए इ वा किण्हकणवीरे इ वा किण्हबंधुजीवए इ वा भवे एयारूवे ? गोयमा ! नो इणट्ठे समट्ठे, कण्हलेसा णं इत्तो अनिट्ठतरिया चेव वन्नेणं पन्नत्ता समणाउसो ! रसवर्णना यथा- कण्हलेसा णं भंते ! केरिस्या आसाएणं पन्नत्ता ? से जहानामए निंबे इ वा निंबरए इ वा निंबछल्ली इ वा निंबफाणिए इ वा कुडए इ वा कुडगफलए इ वा इत्यादि । गन्धवर्णना यथा-

जह गोमडस्स गंधो, सुणगमडस्स व जहा अहिमडस्स ।
इत्तो वि अनंतगुणो, लेसाणं अप्पसत्थाणं ॥
जह सुरहिकुसुमगंधो, सुगंधवासाण पिस्समाणाणं ।
इत्तो वि अनंतगुणो, पसत्थलेसाण तिण्हं पि ॥

—स्पर्शवर्णना यथा—

जह करगयस्स फासो, गोजिब्भाए व सागपत्ताणं ।
एत्तो वि अनंतगुणो, लेसाणं अप्पसत्थाणं ॥
जह बूरस्स व फासो, नवनीयस्स व सिरीसकुसुमाणं ।
इत्तो वि अनंतगुणो, पसत्थलेसाण तिण्हं पि ॥

तदेतत् सर्वमपि द्रव्यलेश्या अधिकृत्य प्रतिपत्तव्यम् । द्रव्यलेश्या नाम-जीवस्य शुभाशुभ-परिणामरूपायां भावलेश्यायां परिणममानस्योपष्टम्भजनकानि कृष्णादीनि पुद्‌गलद्रव्याणि । 'ताभिश्च' द्रव्यलेश्याभि 'भावः' शुभाशुभाध्यवसायरूपः साध्यते ॥ इदमेव भावयति-

[भा.१६४५] पत्तेयं पत्तेयं, वन्नाइगुणा जहोदिया सुत्ते ।
तारिसओ च्चिय भावो, लेस्साकाले वि लेस्सीणं ॥

वृ- 'प्रत्येकं प्रत्येकं' कृष्णादीनां मध्यादेकैकस्या द्रव्यलेश्याया वर्णादयो गुणाः 'यथा' यादृशाः शुभा अशुभाश्च 'उदिताः' अभिहिताः 'सूत्रे' प्रज्ञापनादौ तादृश एव शुभोऽशुभो वा 'भावः' परिणामो लेश्यिनामपि लेश्याकाले भवति । लेश्या विद्यते येषां ते लेश्यिनः, शिखादेराकृतिगणत्वाद् इनप्रत्ययः, लेश्यावन्त इत्यर्थः, तेषामिति ॥ अथैताभिर्भावलेश्याभिरुपचितस्य कर्मणः कथमुदयो भवति ? इत्याह-

[भा.१६४६] जं चिज्जए उ कम्मं, जं लेसं परिणयस्स तस्सुदओ ।
असुभो सुभो व गीतो, अपत्थ-पत्थऽन्न उदओ वा ॥

वृ- "जं लेसं"ति सप्तम्यर्थे द्वितीया, ततोऽयमर्थ-'यस्यां' कृष्णादीनामन्यतमस्यां लेश्यायां परिणतस्य जीवस्य यद् अशुभं शुभं वा 'कर्म' ज्ञानावरणादि चीयते, कर्मकर्त्तर्ययं प्रयोगः, चयं-बन्धमुपगच्छतीत्यर्थः, 'तस्य' एवमशुभरूपतया शुभरूपतया वा बद्धस्य कर्मण उदयावलिकां प्राप्तस्याशुभः शुभो वा यथानुरूप एवोदयः 'गीतः' संशब्दितस्तीर्थकरैः । दृष्टान्तमाह- 'अपथ्य-पथ्यान्न उदय इव' यथा अपथ्यान्नं भुक्तवतो ज्वरादिरोगद्वारेणापथ्य एवोदयो भवति, पथ्यान्नं तु भुक्तवतः सुखासिकादिद्वारेण पथ्यः । एवं कर्मणोऽपि प्रशस्ता-ऽप्रशस्तलेश्या परिणामबद्धस्य

विपाकः शुभाशुभो भवतीति ।। उक्तं सप्रपञ्चं ध्यान-लेश्याद्वारद्वयम् । अथ गणद्वारमाह-

[भा.१६४७] पडिवज्जमाण भइया, एगो व सहस्ससो व उक्कोसा ।
कोडिसहस्सपुहत्तं, जहन्न-उक्कोसपडिवन्ना ।।

वृ-स्थविरकल्पस्य प्रतिपद्यमानकाः 'भाज्याः' विवक्षितकाले भवेयुर्वा न वा । यदि भवेयुस्तत एको द्वौ वा त्रयो वा उत्कर्षतो यावत् सहपृथक्त्वम् । पूर्वप्रतिपन्ना जघन्यतोऽपि कोटिसहपृथक्त्वम्, उत्कर्षतोऽपि कोटिसहपृथक्त्वम् । नवरं जघन्यपदादुत्कृष्टपदे विशेषाधिकत्वम् ।।

गतं गणनाद्वारम् । अथाभिग्रहद्वारं व्याख्यायते-ते च चतुर्द्धा, तद्यथा- द्रव्यतः क्षेत्रतः कालतो भावतश्च । तत्रद्रव्यतस्तावदाह-

[भा.१६४८] लेवडमलेवडं वा, अमुगं दव्वं च अज्ज घिच्छामि ।
अमुगेन व दव्वेणं, अह दव्वाभिग्गहो नाम ।।

वृ- 'लेपकृतं' जगारिप्रभृतिकम् 'अलेपकृतं वा' तद्विपरीतं वल्ल-चणकादि 'अमुकं वा' निर्दिष्टनामकं मण्डकादिद्रव्यमहं ग्रहीष्यामि, 'अमुकेन वा' दर्वी-कुन्तादिना दीयमानमहं ग्रहीष्ये, 'अथ' अयं 'द्रव्याभिग्रहो नाम' भिक्षाग्रहणादिविषयः प्रतिज्ञाविशेष इति ।। क्षेत्राभिग्रहमाह-

[भा.१६४९] अट्ठ उ गोयरभूमी, एलुगविक्खंभमित्तगहणं च ।
सग्गाम परग्गामे, एवइए घरा य खित्तम्मि ।।

वृ- अष्टौ गोचरभूमयो भवन्ति । ताश्चैताः-ऋज्वी १ गत्वाप्रत्यागतिका २ गोमूत्रिका ३ पतङ्गवीथिका ४ पेडा ५ अर्द्धपेडा ६ अभ्यन्तरशम्बूका ७ बहिशम्बूका ८ च । तत्र यस्यामेकां दिशमभिगृह्योपाश्रयाद् निर्गतः प्राञ्जलेनैव पथा समश्रेणिव्यवस्थितगृहपङ्क्तौ भिक्षां परिभ्रमन् तावद् याति यावत् पङ्क्तौ चरमगृहम्, ततो भिक्षामगृह्णन्नपयमिऽपि प्राञ्जलयैव गत्वा प्रतिनिवर्त्तते सा ऋज्वी १ । यत्र पुनरेकस्यां गृहपङ्क्तौ परिपाट्या भिक्षमाणः क्षेत्रपर्यन्तं गत्वा प्रत्यागच्छन् पुनर्द्वितीयस्या गृहपङ्क्तौ भिक्षामटति सा गत्वाप्रत्यागतिका, 'गत्वा प्रत्यागतिर्यस्यां सा गत्वाप्रत्यागतिका' इति व्युत्पत्तेः २ । यस्यां तु वामगृहाद् दक्षिणगृहे दक्षिणगृहाच्च वामगृहे भिक्षां पर्यटति सा गोः-बलीवर्दस्य मूत्रणं गोमूत्रिका, उपचारात् तदाकारा गोचरभूमिरपि गोमूत्रिका ३ । यस्यां तु त्रिचतुरादीनि गृहाणि विमुच्याग्रतः पर्यटति सा पतङ्गवीथिका, पतङ्गः शलभस्तस्येव या वीथिका-पर्यटनमार्ग सा पतङ्गवीथिका, पतङ्गो हि गच्छन्नुत्लुत्योत्लुत्यानियतया गत्या गच्छति एवं गोचरभूमिरपि या पतङ्गोड्डयनाकारा सा पतङ्गवीथिकेति भावः ४ । यस्यां तु साधुः क्षेत्रं पेटावत् चतुरं विभज्य मध्यवर्त्तीनि च गृहाणि मुक्त्वा चतसृष्वपि दिक्षु समश्रेण्या भिक्षामटति सा पेटा ५ । अर्द्धपेटाऽप्येवमेव, नवरमर्द्धपेटासदृशसंस्थानयोर्दिग्द्वयसम्बद्धयोर्गृहश्रेण्योरत्र पर्यटति ६ । तथा शम्बूकः-शङ्खः तद्वद् या वीथि सा शम्बूका । सा द्वेधा-अभ्यन्तरशम्बूका बहिशम्बूका च । यस्यां क्षेत्रमध्यभागात् शङ्खवद् वृत्तया परिभ्रमणभङ्गया भिक्षां गृह्णन् क्षेत्रबहिर्भागमागच्छति सा अभ्यन्तरशम्बूका ७ । यस्यां तु क्षेत्रबहिर्भागात् तथैव भिक्षामटन् मध्यभागमायाति सा बहिशम्बूका ८ । आह च स्वोपज्ञपञ्चवस्तुकटीकायां श्रीहरिभद्रसूरि- अब्भितरसंबुक्का बाहिसंबुक्का य संखनाहिखेत्तोवमा । एगीए अंतो आढवइ बाहिरतो संनियट्टइ, इयरीए विवज्जओ त्ति । तथा "एलुगविक्खंभमित्तगहणं च" त्ति एलुक-उदुम्बरस्तस्य विष्कम्भः-आक्रमणं तन्मात्रेण मया ग्रहणं

आर्यव्यमिति कस्याप्यभिग्रहो भवति, यथा भगवतः श्रीमन्महावीरस्वामिनः। तथा स्वग्रामे वा परग्रामे वा एतावन्ति गृहाणि मया प्रवेष्टव्यानीत्येषः 'क्षेत्रे' क्षेत्रविषयोऽभिग्रहः ॥ कालाभिग्रहमाह-

[भा.१६५०] काले अभिग्गहो पुन, आई मज्झे तहेव अवसाने।
अप्पत्ते सइ काले, आई बिइओ अ चरिमम्मि ॥

वृ- 'काले' कालविषयोऽभिग्रहः पुनरयम्-आदौ मध्ये तथैवावसाने भिक्षावेलायाः। एतदेव व्याचष्टे-अप्राप्ते भिक्षाकाले यत् पर्यटति सः 'आदौ' मध्ये तथैवावसाने भिक्षावेलायाः। एतदेव व्याचष्टे-अप्राप्ते भिक्षाकाले चरति स द्वितीयो मध्यभिक्षाकालविषयोऽभिग्रहः। यत् पुनः 'चरिमे' अतिक्रान्ते भिक्षाकाले पर्यटति सोऽवसानविषयोऽभिग्रहः ॥ कालत्रयेऽपि गुण-दोषानाह-

[भा.१६५१] दिंतग-पडिच्छगाणं, हविज्ज सुहुमं पि मा हु अचियत्तं।
इअअप्पत्ते अइए, पवत्तणं मा ततो मज्झे ॥

वृ- 'ददत्-प्रतीच्छकयोः' इति भिक्षादातुरगारिणो भिक्षाप्रतीच्छकस्य च वनीपकादेर्मा भूत् सूक्ष्ममपि 'अचियत्तम्' अप्रीतिकं 'इति' अस्माद्धेतोरप्राप्तेऽतीते च भिक्षाकालेऽटनं न श्रेय इति गम्यते। "पवत्तणं मा ततो मज्झे" त्ति अप्राप्तेऽतीते वा पर्यटतः प्रवर्त्तनं पुरःकर्म-पश्चात्कर्मादिर्मा भूत् 'ततः' एतेन हेतुना 'मध्ये' प्राप्ते भिक्षाकाले पर्यटति ॥ अथ भावाभिग्रहमाह-

[भा.१६५२] उक्खित्तमाइचरगा, भावजुया खलु अभिग्गहा होंति।
गायंतो व रुदंतो, जं देइ निसन्नमादी वा ॥

वृ- उत्क्षिप्तं-पाकपिठरात् पूर्वमेव दायकेनोद्धृतं तद् ये चरन्ति-गवेषयन्ति ते उत्क्षिप्तचरकाः, आदिशब्दाद् निक्षिप्तचरकाः सङ्ख्यादत्तिका दृष्टलाभिकाः पृष्टलाभिका इत्यादयो गृह्यन्ते। त एते गुण-गुणिनोः कथञ्चिदभेदाद् भावयुताः सङ्ख्यादत्तिका दृष्टलाभिकाः पृष्टलाभिका इत्यादयो गृह्यन्ते। त एते गुण-गुणिनोः कथञ्चिदभेदाद् भावयुताः खल्वभिग्रहा भवन्ति, भावाभिग्रहा इति भावः। यद्वा गायन् यदि दास्यति तदा मया ग्रहीतव्यम्, एवं रुदन् वा निषण्णादिर्वा, आदिग्रहणादुत्थितः सम्प्रस्थितश्च यद् ददाति तद्विषयो योऽभिग्रहः स सर्वोऽपि भावाभिग्रह उच्यते ॥ तथा-

[भा.१६५३] ओसक्कण अहिसक्कण, परम्मुहाऽलंकिएयरो वा वि।
भावन्नयरेण जुओ, अह भावाभिग्गहो नाम ॥

वृ- 'अवष्वष्कन्' अपसरणं कुर्वन् 'अभिष्वष्कन्' सम्मुखमागच्छन् 'पराङ्मुखः' प्रतीतः, अलङ्कृतः कटक-केयूरादिभिः, 'इतरो वा' अनलङ्कृतः पुरुषो यदि दास्यति तदा मया ग्राह्यमिति। एतेषां भावानामन्यतरेण भावेन युतः 'अथ' अयं भावाभिग्रहो नामेति। एते च द्रव्यादयश्चतुर्विधा अप्यभिग्रहास्तीर्थकरैरपि यथायोगमाचीर्णत्वाद् मोह-मदापनयनप्रत्यलत्वाच्च गच्छवासिनां तथाविधसहिष्णुपुरुषविशेषापेक्षया महत्याः कर्मनिर्जरायाः निबन्धनं प्रतिपत्तव्या इति ॥

अथ प्रव्राजना-मुण्डापनाद्वारे भावयति-

[भा.१६५४] सच्चित्तदवियकप्पं, छव्विहमवि आयरंति थेरा उ।
कारणओ असहू वा, उवएसं दिंति अन्नत्थ ॥

वृ- प्रव्राजना-मुण्डापनाभ्यामुपलक्षणत्वात् षड्विधोऽपि सचित्तद्रव्यकल्पो गृहीतः। तद्यथा-प्रव्राजना १ मुण्डापना २ शिक्षापना ३ उपस्थापना ४ सम्भुञ्जना ५ संवासना ६ चेति। तमेवंविधं

षड्विधमपि सचित्तद्रव्यकल्पमाचरन्ति 'स्थविराः' गच्छवासिनः। "कारणओ" त्ति तथाविधै-रनाभाव्यतादिभि कारणैः 'असहिष्णवो वा' स्वयं वस्त्र-पात्रादिभिर्ज्ञानादिभिश्च शिष्याणां सङ्ग्रहोपग्रहौ कर्त्तुमसमर्था उपदेशम् 'अन्यत्र' गच्छान्तरे 'ददति' प्रयच्छन्ति, अमुकत्र गच्छे संविग्नगीतार्था आचार्या सन्ति तेषां समीपे भवता दीक्षा प्रतिपत्तव्येति ॥

अथ "मनसाऽऽपन्ने नास्ति प्रायश्चित्तम्" इति पदं व्याख्यानयति-

[भा.१६५५] जीवो पमायबहुलो पडिवक्खे दुक्करं ठवेउं जे।
केत्तियमित्तं वोज्झिति, पच्छित्तं दुग्गयरिणी वा ॥

वृ- अयं 'जीवः' प्राणी 'प्रमादबहुलः' अनादिभवाभ्यस्तप्रमादभावनाभावितः, ततः 'प्रतिपक्षे' अप्रमादे स्थापयितुं दुष्करं भवति, दुःखेन अप्रमादभावनायां स्थाप्यत इत्यर्थः। "जे" इति निपातः पादपूरणे। अतो 'दुर्गतऋणिक इव' दरिद्राधमर्ण इव अतिप्रभूतं ऋणं अतिचपलचित्त-सम्भवापराधवशादयं प्रमादबहुलो जीवः पदे पदे समापद्यमानं कियन्मात्रं प्रायश्चित्तं 'वक्ष्यति' वोढुंशक्ष्यति? इति मनसाऽऽपन्नेऽप्यपराधे नास्ति तपःप्रायश्चित्तं स्थविरकल्पिकानाम्, आलोचना-प्रतिक्रमणप्रायश्चित्ते तु तत्रापि भवत इति मन्तव्यम् ॥

अथ "कारणे पडिकम्मम्मि य" त्ति पदं व्याख्यायते-कारणम्-अशिवाऽवमौदर्यादिकं तत्रोत्पन्ने द्वितीयपदमभ्यासेवन्ते। तथा निष्कारणे निष्प्रतिकर्मशरीराः। कारणे तु ग्लानमाचार्य वादिनं धर्मकथिकं च पतीत्य पादधावन-मुखमार्जन-शरीरसम्बाधनादिकरणात् सप्रतिकर्माण इति। "भत्तं पंथो य भयणाए" त्ति भक्तं पन्थाश्च भजनया। किमुक्तं भवति? -उत्सर्गस्तावत् तृतीयपौरुष्यां भिक्षाटनं विहारं च कुर्वन्ति, अपवादतस्तु तदानीं भिक्षाया अलाभे काले वाऽपूर्यमाणे शेषास्वपि पौरुषीष्विति। गतं स्थितिद्वारम्। अथोपसंहरन्नाह-

[भा.१६५६] गच्छम्मि उ एस विही, नायव्वो होइ आनुपुव्वीए।
जं एत्थं नाणत्तं, तमहं वोच्छं समासेणं ॥

वृ- 'गच्छे' गच्छवासिनां 'एषः' अनन्तरोक्तो विधिर्ज्ञातव्यः 'आनुपूर्व्या' परिपाट्या। यत् पुनरत्र 'नानात्वं' विशेषस्तदहं वक्ष्ये समासेन ॥ एतदेव सविशेषमाह-

[भा.१६५७] सामायारी पुनरवि, तेसि इमा होइ गच्छवासीणं।
पडिसेहो व जिणाणं, जं जुज्जइ वा तगं वोच्छं ॥

वृ- सामाचारी पुनरपि तेषां गच्छवासिनां मासकल्पेन विहरताम् 'एषा' वक्ष्यमाणा भवति। 'जिनानां' जिनकल्पिकानामस्या एव सामाचार्या प्रतिषेधो वा वक्तव्यः। 'यद् वा' प्रत्युपेक्षणादिकं तेषामपि युज्यते तकमपि वक्ष्ये ॥ प्रतिज्ञातमेव निर्वाहयन् द्वारगाथाद्वयमाह-

[भा.१६५८] पडिलेहण निक्खमणे, पाहुडिया भिक्ख कप्पकरणे य।
गच्छ सतिए अ कप्पे, अंबिल भरिए य ऊसित्ते ॥

वृ- प्रथमतः प्रत्युपेक्षणा वक्तव्या। ततो 'निष्क्रमणं' कति वारा उपाश्रयाद् निर्गन्तव्यमिति, प्राभृतिका सूक्ष्म-बादरभेदाद् द्विविधा, 'भिक्षा' गोचरचर्या, 'कल्पकरणं च' भाजनस्य धावनविधिलक्षममित्येतानि वक्तव्यानि। "गच्छ सइए" त्ति शतिकाः-शतसङ्ख्यपुरुषपरिमाणा ये गच्छास्तेषु प्रभूतेन पानकेन प्रयोजनं भवेत्, तच्च "कप्पे अंबिल" त्ति 'कल्प्यं' कल्पनीयम्

'अम्लं च' सौवीरं ग्रहीतव्यम्, अनेन सम्बन्धेन सौवीरिणीसप्तकमभिधानीयम्। "भरिए य" त्ति तस्याः सौवीरिण्याः सप्तविधं भरणं वाच्यम्। "ऊसित्ति" त्ति उत्सेचनमुत्सिक्तं-सौवीरस्योल्लिश्चनमित्यर्थः तत्स्वरूपं च निरूपणीयम्॥

[भा.१६५९] परिहरणा अणुजाणे, पुरकम्मे खलु तहेव गेलन्ने।
गच्छपडिबद्धऽहालंदि उवरि दोसा य अववादे॥

वृ- "परिहरण" त्ति नोदकः प्रश्नयिष्यति-यदि साम्प्रतं शतिकेष्वपि गच्छेष्वित्थमाधाकर्मादयो दोषा उद्भवन्ति ततः पूर्वं साहेसु गच्छेसु साधवः कथमाधाकर्मादीनां परिहरणं कृतवन्तः? इति। अत्राऽऽचार्य प्रतिवक्ष्यति-'अनुयानं' रथयात्रा उपलक्षणत्वात् स्नात्रादेरपि परिग्रहः, ततो यथा सम्प्रति रथयात्रादौ समवसरणे सहस्रसङ्ख्याका अपि साधवो मिलिताः सन्तः आधाकर्मादिकं परिहरन्ति तथा पूर्वमपि परिहृतवन्त इत्यनेन सम्बन्धेनानुयानविषयो विधिर्वक्तव्यः। ततः पुरःकर्म्मस्वरूपं निरूपयितव्यम्। 'खलुः' वाक्यालङ्कारे। तथैव ग्लान्यविषयो विधि प्रतिपादनीयः। गच्छप्रतिबद्धानां यथालन्दिकानां सामाचारी दर्शनीया। ततः 'उपरि' मासकल्पादूर्द्धं तिष्ठतां स्थविरकल्पिकानां दोषा अभिधातव्याः। ततः 'अपवादः' द्वितीयपदमुपदर्शनीयमिति द्वारगाथाद्वयसमासार्थः॥

अथ विस्तरार्थं प्रतिपदं प्रचिकटयिषुः "यथोद्देशं निर्देशः" इति वचनप्रामाण्यात् प्रथमतः प्रत्युपेक्षणाद्वारमभिधातुकाम इमां प्रतिद्वारगाथामाह-

[भा.१६६०] पडिलेहणा उ काले, अपडिलेह दोस छसु वि काएसु।
पडिगहनिक्खेवणया, पडिलेहणिया सपडिवक्खा॥

वृ- प्रतिलेखना 'तुः' एवकारार्थो भिन्नक्रमश्च काल एव कर्त्तव्या नाकाले। "अपडिलेह" त्ति अप्रतिलेखने प्रायश्चित्तम्। "दोस" त्ति दोषाः-आरभडाद्यास्तैर्दुष्टां प्रत्युपेक्षणां कुर्वतः प्रायश्चित्तम्। "छसु वि काएसु" त्ति षट्सु जीवनिकायेषु स्वयं प्रतिष्ठित उपधिर्वा प्रतिष्ठित इति। प्रतिग्रहस्य निक्षेपणं वर्षासु विधेयम्। प्रतिलेखना 'सप्रतिपक्षा' सापवादा भवतीति। एतानि द्वाराणि वक्तव्यानीति समासार्थः॥ व्यासार्थं तु प्रतिद्वारमभिधित्सुराह-

[भा.१६६१] सूरुग्गए जिनानं पडिलेहणियाए आढवणकालो।
थेराणऽनुग्गयम्मी, ओवहिणा सो तुलेयव्वो॥

वृ- सूर्ये उद्गते सति 'जिनानां' जिनकल्पिकानाम् "एकग्रहणे तज्जातीयग्रहणम्" इति वचनादपरेषामपि गच्छनिर्गतानां प्रतिलेखनाया आरम्भणकालो मन्तव्यः। 'स्थविराणां' स्थविरकल्पिकानामनुद्गते सूर्ये प्रत्युपेक्षणायाः प्रारम्भकालः। स चोपधिना तोलयितव्यः॥ कथम्? इति चेद् उच्यते-इह प्राभातिकप्रतिलेखनायां भूयांस आदेशाः सन्ति, अतस्तत्प्रतिपादकः पञ्चवस्तुकवृत्त्युक्तो वृद्धसम्प्रदायो लिख्यते- को पडिलेहणाकालो? एगो भणइ-जया वायसा वासंति तया पडिलेहिज्जउ, तो पट्ठवित्ता अज्झाइज्जउ। अन्नो भणइ-अरुणे उट्ठिए। अवरो भणइ-जाहे पगासं जायं। अन्नो पुन-जाहे पडिस्सए परोप्परं पव्वइयगा दीसंति। अन्ने भणंति-जाहे हत्थरेहाओ दीसंति। आयरिया भणंति-एए सव्वे वि अनाएसा, अपसिद्धान्तत्वात्, जओ अंधयारे पडिस्सए हत्थरेहाओ उट्ठिए वि सूरे न दीसंति, वायसाइआएसेसु य अंधकारं ति पडिलेहणा न

सुज्झइ, तम्हा इमो पडिलेहणाकालो-आवस्सए कए तिहिं थुईहिं दिन्नियाहिं जहा पडिलेहणाकालो भवइ तहा आवस्सयं कायव्वं, इमेहि य दसहि पडिलेहिएहिं जहा सूरो उट्ठेइ-

मुहपुत्ती रयहरणं, दुन्नि निसिज्जा य चोलपट्टो य।
संथारुत्तरपट्टो, तिन्नि य कप्पा मनणेयव्वा ॥
जीवदयट्ठं पेह, एसो कालो इमीइ ता नेओ।
आवस्सगथुइअंते, दसपेहा उट्ठए सूरो ॥

चूर्णिकृत् पुनराह-यथाऽऽवश्यके कृते एकद्वित्रिश्लोकस्तुतित्रये गृहीते एकादशभिः प्रतिलेखितैरादित्य उत्तिष्ठते स प्रारम्भकालः प्रतिलेखनिकायाः। कतरे पुनरेकादश ? पंच अहाजातानि, तिन्नि कप्पा, तेसिं एगो उन्निओ दो सुत्तिया, संथारपट्टओ त्तरपट्टओ दंडओ एगारसमो त्ति ॥ गतं "प्रतिलेखना तु काले" इति द्वारम्। अथ प्रत्युपेक्षणादोषद्वारं विवृणोति-

[भा.१६६२] लहुगा लहुगो पनगं, उककोसादुवहिअपडिलेहाए।
दोसेहि उ पेहंते, लहुओ भिन्नो य पनगं च ॥

वृ- उत्कृष्टाद्युपधीनामप्रत्युपेक्षणे प्रायश्चित्तं लघुका लघुकः पञ्चकं चेति। उत्कृष्टमुपधिं न प्रत्युपेक्षते चत्वारो लघुकाः, मध्यमं न प्रत्युपेक्षते तत उत्कृष्टे मासलघु, मध्यमे भिन्नमासः, जघन्ये रात्रिन्दिवपञ्चकम् ॥ अथ "षट्सु कायेषु" इति पदं व्याचष्टे-

[भा.१६६३] काएसु अप्पणा वा, उवही व पइट्ठिओऽत्थ चउभंगो।
मीस सचित्त अनंतर-परंपरपइट्ठिए चेव ॥

वृ- प्रत्युपेक्षमाणः षट्सु कायेष्वात्मना प्रतिष्ठित उपधिर्वा तेषु प्रतिष्ठित इत्यत्र चतुर्भङ्गी। तद्यथा-स्वयं कायेषु प्रतिष्ठितो नोपधि १ उपधि प्रतिष्ठितो न स्वयं २ स्वयमपि प्रतिष्ठित उपधिरपि प्रतिष्ठितः ३ स्वयमप्यप्रतिष्ठित उपधिरप्यप्रतिष्ठितः ४ इति। एते च षट् काया मिश्रा वा भवेयुः सचित्ता वा। एतेषु साधुरुपधिर्वा अनन्तरं वा परम्परं वा प्रतिष्ठितो भवेत्। अत्र च प्रायश्चित्तं "छक्काय चउसु लहुगा" इत्यादिगाथानुसारेणावगन्तव्यम्। यस्तु द्वाभ्यामप्यप्रतिष्ठितः स शुद्ध इति ॥ अथ दोषद्वारस्य वक्तव्यताशेषं प्रतिग्रहनिक्षेपणपदं च व्याख्यानयति-

[भा.१६६४] आयरिए य परिन्ना, गिलाण सरिसखमए य चउगुरुगा।
उडु अधरऽबंध लहुओ, बंधण धरणे य वासासु ॥

वृ- "आयरिए" त्ति षष्ठी-सप्तम्योरर्थं प्रत्यभेदादाचार्यस्य "परिन्न" त्ति मत्वर्थीयप्रत्ययलोपात् 'परिज्ञावतः' कृतभक्तप्रत्याख्यानस्य "गिलाण सरिसखमए य" त्ति ग्लानस्य ग्लानसदृशश्च यः क्षपकः-विकृष्टतपस्वी तस्य, एतेषां चतुर्णामुपधिं यदि न प्रत्युपेक्षते तदा चत्वारो गुरवः। चशब्दात् प्राघूर्णक-स्थविर-शैक्षाणामग्लानोपमस्य च क्षपकस्योपधिमप्रत्युपेक्षमाणानां चतुर्लघवः। "उडु" इत्यादि पश्चार्द्धम्। यदा सर्वाण्यपि वस्त्राणि प्रत्युपेक्षितानि भवन्ति तदा यान्यतिरिक्तानि भाजनानि तानि प्रत्युपेक्ष्यन्ते। प्रतिग्रहं मात्रकं च यदि तदानीमेव प्रत्युपेक्षते तदा मासलघु, असामाचारीनिष्पन्नमिति भावः। अतः सूत्रपौरुषीं कृत्वा चतुर्भागावशेषायां पौरुष्यां प्रत्युपेक्ष्य द्वे अपि ऋतुबद्धे काले धारणीये न निक्षेप्तव्ये। अथ ऋतुबद्धे प्रतिग्रहं मात्रकं वा न धारयत्युपकरणं वा दवरकेण न बध्नाति तदा मासलघु, अग्नि-स्तेन-दण्डिकक्षोभादयश्च ओघनिर्युक्तिप्रतिपादिता

दोषाः। वर्षासु पुनरुपधिं न बधनाति प्रतिग्रहं मात्रकं च प्रत्युपेक्ष्य निक्षिपति। अथोपधिं बध्नाति भाजने वा धारयति तदा मासलघु। विशेषचूर्णिकृता त्वस्या एकगाथायाः स्थाने गाथाद्वयं लिखितम्। यथा-

गुरु पच्चक्खाणाऽसहु, गिलाण सरिसखमए य चउगुरुगा।
पाहुणग सेह बाले, वुड्ढे खमए अ चउलहुगा॥
चउभागवसेसाए, पडिग्गहं पच्चुवेक्ख न धरेइ।
कहुकहे मासलहुं, वासासु धरिंति मासलहुं॥

वृ- इदं च भावितार्थमेव॥ अथ "प्रतिलेखनिका सप्रतिपक्षा"

इति पदं भावयति-

[भा.१६६५] असिवे ओमोयरिएष सागार भए व राय गेलन्ने।
जो जम्मि जया जुज्जइ, पडिवक्खो तं तहा जोए॥

वृ- 'प्रतिपक्षो नाम' द्वितीयपदम्, तच्चेदम्-'अशिवे' अशिवगृहीतः सन्न शक्नोति प्रत्युपेक्षितुम्, अवमौदर्ये तु प्रत्यूष एव भिक्षां हिण्डितुं प्रारब्धवन्तः अतो नासित प्रत्युपेक्षणायाः कालः, सागारिको वा प्रेक्षमाणो मा तं सारमुपधिं द्राक्षीदिति कृत्वा, 'भये वा' बोधिक-स्तेनादिसम्बन्धिनि सारोपकरणहरणभयान्न प्रत्युपेक्षन्ते, राजा वा प्रत्यनीकस्तद्भयादहर्निशमध्वनि वहन्तो न तयुपेक्षेरन्, ग्लानत्वे वा वर्त्तमान एकाकी तिष्ठन् न प्रत्युपेक्षते। एतैः कारणैर्न वा प्रत्युपेक्षेत, अनागतेऽतीते वा काले प्रत्युपेक्षेत, त्वरमाणो वा आरभडादिभिर्दोषैर्दुष्टां प्रत्युपेक्षणां कुर्वीत,

असमर्थो वा गुर्वादीनामप्युपधिं न प्रत्युपेक्षेत; एवं यः 'यत्र' अशिवादौ 'यदा' यस्मिन्नवसरे 'प्रतिपक्षः' अप्रत्युपेक्षणा-ऽकालप्रत्युपेक्षणादिको युज्यते तं तथा तत्र योजयेदिति॥ अथ षट्सु कायेषु प्रत्युपेक्षमाणस्य प्रायश्चित्तं भवतीत्यर्थात् तन्न प्रत्युपेक्षणा न कर्त्तव्येति यदुक्तं तदपवदति-

[भा.१६६६] तस-बीयरक्खणट्ठा, काएसु वि होज्ज कारणे पेहा।
नदिहरणपुत्तनायं, तनू य थूरे य पुत्तम्मि॥

[भा.१६६७] जइ से हवेज्ज सत्ती, उत्तारिज्जा तओ दुवग्गे वि।
थूरो पुन तणुअतरं, अवलंबंतो वि बोलेइ॥

वृ- त्रसाश्च-द्वीन्द्रियादयः बीजानि च-शाल्यादीनि तेषामस्थिरसंहननिनां रक्षार्थं 'कायेष्वपि' पृथिव्यादिषु दृढसंहननिषु कारणतः प्रत्युपेक्षणा भवति, न च प्रायश्चित्तम्। आह तेषु प्रतिष्ठितः प्रत्युपेक्षणं कुर्वन् सङ्घट्टनादिबाधाविधानात् कथं न दोषभाग् भवति? इति उच्यते- नदीहरणोपलक्षितं पुत्रज्ञातमत्र भवति। कथम्? इत्याह-"तनू य थूरे य पुत्तम्मि" त्ति यथा कश्चित् पुरुषः, तस्य द्वौ पुत्रौ, तयोरेकः तनुकः-कृशशरीरः, द्वितीयस्तु स्थूलः-अतीवपीवरगात्रः। स चान्यदा ताभ्यां सहितः कश्चिद् ग्रामं गच्छन्नपान्तराले एकामपार-गम्भीरां नदीमवतीर्णवान्। स च नदीष्णतया सुखेनैव स्वयं तां तरीतुं शक्तः, परं पुत्रावद्यापि तरण कलायामकोविदाविति कृत्वा तनुके स्थूले च पुत्रे उभयेऽपि तारयितुं प्राप्ते सति स किं करोति? इत्याह-

यदि "से" तस्य पितुः 'शक्ति' सामर्थ्यं भवेत् ततः "दुवग्गे वि" त्ति देशीवचनत्वाद् द्वावपि पुत्रावुत्तारयेत्, नैकमप्युपेक्षेत। अथ नास्ति तस्य तथाविधं सामर्थ्यं ततो यस्तयोः कृशशरीरस्तं

तारयति, लघुभूतशरीरतया तस्य सुखेनैव तारणीयत्वात्। यस्तु 'स्थूरः' शरीरजडः सः 'तनुकतरं' स्तोकमात्रमप्यवलम्बमानो निजशरीरभारिकतयैवात्मानं तं च नद्यां बोलयति, अतस्तमुपेक्षेत। एष दृष्टान्तोऽमर्थोपनयः-पितृस्थानीयः साधुः, पुत्रद्वयस्थानीयाः स्थिरा-ऽस्थिरसंहनिनः पृथिवीकायादयः, ततः साधुना प्रथमतो निर्विशेषं षडपि कायाः स्थिरसंहनिनोऽस्थिरसंहनिनश्च रक्षणीयाः अथान्यतरेषां विराधनामन्तरेणाध्वगमनादिषु प्रत्युपेक्षणादीनां प्रवृत्तिरेव न घटामञ्चति ततः स्थिरसहनिनां पृथिव्यादीनां विराधनामभ्युपेत्याप्यस्थिरसंहननिनस्त्रसादयो रक्षणीया इति।

अस्यैवार्थस्य समर्थनाय द्वितीयं दृष्टान्तमाह-

**[भा.१६६८]** अंगारखड्डपडियं, दट्ठूण सुयं सुयं विइयमन्नं।
पवलित्ते नीणिंतो, किं पुत्ते नो कुणइ पायं॥

**वृ-** यथा नाम कश्चित् पुरुषस्तस्य पुत्रद्वयम्, अन्यदा च रात्रौ तद्गृहे प्रदीपनकं लग्नम्, तद्भयादेकः पुत्रः पलायमानः सहसैवाङ्गारभृतायां गर्तायां निपतितः, स च गृहपतिर्द्वितीयं पुत्रमादाय गृहाद् निर्गतो यावत् पश्यति पुरतः स्वपुत्रमङ्गारगर्त्तायां पतितम्, ततश्च तं सुतं तथाभूतं दृष्ट्वा द्वितीयमन्यं सुतं "पवलित्ते नीणिंतो"त्ति पञ्चम्यर्थे सप्तमी प्रदीप्ताद् गृहान्निष्काशयन् निजसहजपारिणामिकमत्या विचार्य परिच्छेदकुशलः सन् किमङ्गारगर्त्तायां निपतितपूर्वे पुत्रे पादं न करोति ? अपि तु करोत्येव, कृत्वा च तदुपरि पादं सुखेनैव तां लङ्घयतीति भावः॥अ तदुपरि पादं न दद्यात् 'स्वपुत्रं कथं पादेनाक्रमामि ?' इति कृत्वा ततः को दोषः स्याद् ? इत्याह-

**[भा.१६६९]** तं वा अणक्कमं, चयइ सुयं तं च अप्पगं चेव।
निच्छिन्नो हु कदाई, तं पि हु तारिज्ज जो पडिओ॥

**वृ-** वाशब्दः पातायाम्, सा च कृतैव। 'तं' गर्त्तानिपतितं पुत्रं पादेनानाक्रामन् स पिता त्यजति सुतं 'तं च' स्वहस्तगृहीतमात्मानं च, उभयोरप्यङ्गारगर्त्तापातेन विनाशसद्भावात्। अपि च स स्वयं निस्तीर्ण सन् कदाचित् तमपि पुत्रं तारयेद् यः पूर्वं गर्त्तायां निपतित इति। एष द्वितीयो दृष्टान्तः। उपनययोजना तु प्रागुक्तोपनयानुसारेण कर्त्तव्येति॥ गतं प्रत्युपेक्षणाद्वारम्। अथ निष्क्रमणद्वारमाह-

**[भा.१६७०]** निरवेक्खो तइयाए, गच्छे निक्कारणम्मि तह चेव।
बहुवक्खेवदसविहे, सावेक्खे निग्गमो भइओ॥

**वृ-** 'निरपेक्षः' जिनकल्पिक-प्रतिमाप्रतिपन्नकादिर्गच्छसत्कापेक्षारहितः स तृतीयस्यामेव पौरुष्यामुपाश्रयाद् निर्गच्छति। 'गच्छे' गच्छवासिनोऽपि साधवो निष्कारणे तथैव निर्गच्छन्ति, तृतीयस्यां पौरुष्यामित्यर्थः। परं गच्छे यद् आचार्योपाध्यायादिविषयभेदाद् दशविधं वैयावृत्त्यं तेन यो बहुविधो व्याक्षेपस्तेन सापेक्षे गच्छवासिनि निर्गमो भजनीयः, कदाचित् तृतीयस्यां कदाचित् प्रथम-द्वितीय-चतुर्थीषु वा पौरुषीष्विति॥ अथैनामेव निर्युक्तिगाथां व्याख्याति-

**[भा.१६७१]** गहिए भिक्खे भोत्तुं, सोहिय आवास आलयमुवेइ।
जहि निग्गओ तहिं चिय, एमेव य खेत्तसंकमणे॥

**वृ-** निरपेक्षो भगवान् तृतीयपौरुष्यामुपाश्रयान्निर्गत्य भिक्षामटित्वा गृहीते सति भैक्षे अनापाते असंलोके च स्थाने भुक्त्वा 'आवश्यकं च' संज्ञा-कायिकीलक्षणं शोधयित्वा यस्यामेव पौरुष्यां

निर्गतस्तस्यामेव भूयः 'आलयम्' उपाश्रयमुपैति, तृतीयस्यामित्यर्थः । एवमेव च क्षेत्रसङ्क्रमणेऽपि द्रष्टव्यम्, क्षेत्रात् क्षेत्रान्तरगमनमपि तृतीयस्यां करोतीति भावः । स्थविरकल्पिका अपि निष्कारणे तृतीयस्यामेव निर्गत्य भिक्षामटित्वा प्रतिश्रये समुद्दिश्य संज्ञाभूमिं गत्वा तस्यामेव गत्वाऽऽगच्छन्ति। क्षेत्रसङ्क्रमणेऽप्येवमेव । कारणतस्तु न कोऽपि प्रतिनियमः ।। तथा च-

[भा.१६७२] अतरंत-बाल-वुड्ढे, तवस्सि-आएस[illegible]ज्जेसु ।
बहुसो वि होज्ज विसणं, कुलाइकज्जेसु य विभासा

वृ- अतरन्तः-ग्लानस्तस्य तथा बाल-वृद्धयोः तपस्विनः [illegible]पकस्य आदेशस्य-प्राघूर्णकस्य आदिशब्दादाचार्योपाध्याय-शैक्षका-ऽलब्धिमत्प्रभृतीनां यानि कार्याणि-तत्प्रायोग्यभक्त-पानौषधादिग्रहणरूपाणि तेषु 'बहुशोऽपि' बहूनपि वारान् गृपतिगृहेषु प्रवेशनं गच्छसाधूनां भवति । तथा कुलादिकार्येषु, आदिग्रहणाद् गण-सङ्घपरिग्रहः । कुलं-नागेन्द्र-चन्द्रादि, गणः-कुलसमुदायः, गणसमुदायः सङ्घः चतुर्वर्णरूपो वा, तत्कार्येषु च विभाषा कर्त्तव्या । सा चेयम्-कुले गणे सङ्घे वा आभाव्या-ऽनाभाव्यविषयः कोऽपि व्यवहारः समुपस्थितः तस्य यथावत् परिच्छेदनं कर्त्तव्यम्, प्रत्यनीको वा कोऽपि साधूनामुपस्थितः तस्य शिक्षणं विधेयम्, चैत्यद्रव्यं वा कश्चिद् निशङ्कं मुष्णाति स शासितव्यो वर्त्तत इत्यादि ।। तथा-

[भा.१६७३] उच्चार-विहारादी, संभम-भय-चेइवंदणाईया ।
आयपरोभयहेउं, विनिग्गमा वन्निया गच्छे ।।

वृ- उच्चाचारः-पुरीषं तस्य उपलक्षणत्वात् प्रश्रवण-खेलादेश् व्युत्सर्जनार्थं बहिर्गन्तव्यम् । विहारो नाम-वसतावस्वाध्यायिके समुत्पन्ने सति स्वाध्यायनिमित्तमन्यत्र गमनम्, आदिग्रहणात् पूर्वगृहीतपीठफलक-शय्या-संस्तारकप्रत्यर्पणप्रभृतिपरिग्रहः । सम्भ्रमो नाम-उदका-ऽग्नि-हस्त्याद्यागमनसमुत्थ आकस्मिकः संत्रासः, भयं तु-सामान्येन दुष्टस्तेनाद्युपद्रवप्रभवम्, चैत्यानिजिनबिम्बानि तेषां वन्दनम्, आदिशब्दादपूर्वबहुश्रुताचार्यवन्दनादिपरिग्रहः एवमादीनि यान्यात्मनः परेषामुभयस्य वा हेतोः कार्याणि तन्निमित्तं गच्छे बहुशोऽपि प्रतिश्रयाद् विनिर्गमाः 'वर्णिताः' प्रतिपादिता इति ।। गतं निष्क्रमणद्वारम् । अथ प्राभृतिकाद्वारं विभावयिषुराह-

[भा.१६७४] पाहुडिया वि य दुविहा, बायर सुहुमा य होइ नायव्वा ।
एक्केक्का वि य एत्ते, पंचविहा होइ नायव्वा ।।

वृ- 'प्राभृतिका' वसतेश्छादन-लेपनादिरूपा, सा द्विविधा-बादरा सूक्ष्मा च भवति ज्ञातव्या । एकैकाऽपि चेत उर्द्धं पञ्चविधा भवति ज्ञातव्या ।। तत्र बादरां पञ्चविधामपि तावदाह-

[भा.१६७५] विद्धंसण छायण लेवणे य, भूमीकम्मे पडुच्च पाहुडिया ।
ओसक्कण अहिसक्कण, देसे सव्वे य नायव्वा ।।

वृ- 'विध्वंसनं' सतेर्भञ्जनम् । 'छादनं' दर्भादिभिराच्छादनम् । 'लेपनं' कुड्यानांकर्दमेन गोमयेन च लेपप्रदानम् । 'भूमिकर्म' सम-विषमाया भूमेः परिकर्मणम् । ''पडुच्च''त्ति 'प्रतीत्यकरणं' त्रिशालं गृहं कर्तुकामः साधून् प्रतीत्य चतुःशालं करोति, आत्मीयं वा गृहं साधूनां दत्त्वा आत्मार्थमपरं कारयतीत्यादि । एषा पञ्चविधाऽपि बादरप्राभृतिका प्रत्येकं द्विधा-अवष्वष्कणतोऽभिष्वष्कण-तश्च । अवष्वष्कणं नाम-वर्षाक्षितविध्वंसनादिकालस्य ह्रासकरणम्, अर्वाक्करणमित्यर्थः ।

अभिष्वष्कणं-तस्यैव विवक्षितकालस्य संवर्द्धनम्, परतः करणमित्यर्थः। पुनरेकैके विध्वंसनादयो द्विधा देशतः सर्वतश्च ज्ञातव्याः ॥ तत्र देशतः सर्वतो वा विध्वंसनमभिष्वष्कणतो भाव्यते-केनचिद् गृहपतिना चिन्तितम्-यथेदं गृहं ज्येष्ठमासे भंक्त्वा ततोऽभिनवं करिष्याम इति। इतश्च ज्येष्ठमासे तत्र गृहे साधवो मासकल्पेन स्थिताः, ततोऽसौ चिन्तयति-

[भा.१६७६] अच्छंतु ताव समणा, गएसु भंतूण पच्छ काहामो।
ओभासिए व संते, न एंति जा भंतुणं कुणिमो ॥

वृ-इदानीं तावद् 'आसतां' तिष्ठन्तु श्रमणाः, गतेषु तेषु 'पश्चाद्' आषाढमासे भंक्त्वा करिष्याम इति, एतदभिष्वष्कणम्। अथावष्वष्कणमाह-"ओभासिए व" इत्यादि। क्षेत्रप्रत्युपेक्षकैरवभाषिते प्रदत्ते चोपाश्रये सति स गृहपतिश्चिन्तयति-ज्येष्ठमासे तावदत्र साधवः स्थास्यन्ति, अतो यावत् ते नागच्छन्ति तावद् वैशाखे मासे भंक्त्वा कुर्म इति, एतदवष्वष्कणम् ॥ भावितं विध्वंसनपदम्।

अथ च्छादनादीन्यतिदिशन्नाह-

[भा.१६७७] एसेव कमो नियमा, छन्ने लेवे य भूमिकम्मे य।
तेसाल चाउसालं, पडुच्चकरणं जईनिस्सा ॥

वृ- एष एवाभिष्वष्कणतोऽवष्वष्कणतश्च क्रमो नियमाद् मन्तव्यः। क्व ? इत्याह-'छन्ने' छादने 'लेपे' लिम्पने भूमिकर्मणि च। तिष्ठन्तु तावदिदानीं श्रमणाः, पश्चाद् गतेषु सत्सु गृहं छादयिष्यामो लेप्स्यामो भूमिं वा परिकर्मयिष्याम इति, एतदभिष्वष्कणम्। एतान्येव च्छादनादीनि यद्यनागतमेव करोति तदाऽवष्कष्कणम्। अथ प्रतीत्यकरणं भाव्यते-"तेसाल" इत्यादि। त्रिशालं गृहं कर्तुकामो यतीनां निश्रया तान् प्रतीत्येति भावः चतुःशालं यत् करोति तत् प्रतीत्यकरणमुच्यते अथवा-

[भा.१६७८] पुव्वघरं दाऊण व, जईण अन्नं करिंति सड्ढाए।
काउमणा वा अन्नं, ण्हाणाइसु कालमोसक्के ॥

वृ- 'पूर्वगृहं' स्वार्थं पूर्वं कृतं यद् गृहं तद् यतीनां दत्त्वा स्वार्थम् 'अन्यद्' अभिनवं यदगारिणः कुर्वन्ति तद् वा प्रतीत्यकरणम्। अथवा केऽपि श्राद्धाः स्वार्थमन्यद् गृहं ज्येष्ठमासे कर्तुमनसः परं तत्र वैशाखमासि स्नानादिकं जैनचैत्येषु भविता ततस्ते चिन्तयन्ति-अनागतमेव गृहं कुर्मो येन तत्र साधवो वैशाखमासि स्नानादिषु समायातास्तिष्ठन्ति। एवं साधून् प्रतीत्य कालमवष्वष्कयेयुः एतदवष्वष्कणतः प्रतीत्यकरणमुक्तम् ॥ अथाभिष्वष्कणतस्तदेवाह-

[भा.१६७९] एमेव य ण्हाणाइसु, सीयलकज्जट्ठ कोइ उस्सक्के।
मंगलबुद्धी सो पुन, गएसु तहियं वसिउकामो ॥

वृ- 'एवमेव' अवष्वष्कणवत् कोऽपि श्राद्धः शीतकाले गृहं कर्तुकामश्चिन्तयति-'वैशाखमासि स्नानं रथयात्रा वेह भविष्यति, तत्र च साधवः समागमिष्यन्ति तच्च तदानीमेव कृतं नवगृहं शीतलं भवति, शीतले च तस्मिन् साधवः सुखमासिष्यन्ते, अथः स्नानादिप्रत्यासन्न एव समये करिष्यामि' इति साधून् प्रतीत्य स्नानादिषु शीतलकार्यार्थं यत् कोऽप्युत्ष्वष्कते एतदभिष्वष्कणतः प्रतीत्यकरणम्। स पुनरवष्वष्कणमभिष्वष्कणं वा मङ्गलबुध्या करोति, यथा-पूर्वं साधवो मदीयं नवगृहं यदि परिभुञ्जते ततः पवित्रं भवतीति। गतेषु च तेष तत्र नवगृहे स्वयमेव स्वयमेव वस्तुकाम

इति ॥ अथात्रैव प्रायश्चित्तमाह-

[भा.१६८०] सव्वम्मि उ चउलहुया, देसम्मी बायराए लहुओ उ ।
सव्वम्मि मासियं खलु, देसे भिन्नो य सुहुमाए ॥

वृ- बादरायां प्राभृतिकायामनन्तरोक्तायामेव सर्वतः करिष्यमाणायां कृतायां वा तिष्ठति चत्वारो लघवः । देशतः करिष्यमाणायां कृतायां वा तिष्ठतो मासलघु । सूक्ष्मायां प्राभृतिकायां वक्ष्यमाणायां सर्वतो विधास्यमानायां विहितायां वा तिष्ठति मासलघु । देशतस्तस्यामेव भिन्नमासः ॥ सा पुनः सूक्ष्मप्राभृतिका पञ्चविधा । तामेवाह-

[भा.१६८१] संमज्जण आवरिसण, उवलेवण सुहुम दीवए चेव ।
ओसक्कण अहिसक्कण, देसे सव्वे य नायव्वा ॥

वृ- 'सम्मार्जनं' बहुकरिकया प्रमार्जनम्, 'आवर्षणम्' उदकेन च्छटकप्रदानम्, 'उपलेपनं' छगणमृत्तिकया भूमिकाया लेपनम्, ''सुहुमे''त्ति 'सूक्ष्माणि' समयभाषया पुष्पाण्युच्यन्ते, तथा च दशवैकालिकनिर्युक्तौ पुष्पाणामेकार्थिकानि-

पुप्फा य कुसुमा चेव, फुल्ला य कुसुमा वि य ।
सुमणा चेव सुहुमा य, सुहुमकाइया वि य ॥

ततश्च पुष्पाणां प्रकरचनेत्यर्थः । 'दीवए चेव'' त्ति दीपकप्रज्वालनम् । एतानि पूर्वमात्मार्थं क्रियमाणान्येव विद्यन्ते । नवरं साधून् प्रतीत्य देशतः सर्वतो वा यदवष्वष्कणमभिष्वष्कणं वा क्रियते सा सूक्ष्मप्राभृतिका ज्ञातव्या ॥ अथास्या एवावष्वष्कणाऽभिष्वष्कणे भावयति-

[भा.१६८२] जाव न मंडलिवेला, ताव पमज्जामो होइ ओसक्का ।
उट्ठेंतु ताव पढिउं, उस्सक्कण एव सव्वत्थ ॥

वृ- यावत् 'मण्डलीवेला' स्वाध्यायमण्डलीकालो नोपढौकते तावत् प्रमार्जयाम इत्येवं विचिन्त्यानागतमेव यदि प्रमार्जयन्ति तदाऽवष्वष्कणं भवति । अथ साधवः स्वाध्यायं कुर्वाणास्तदानीं मण्डल्यामुपविष्टाः सन्ति ततश्चिन्तयन्ति-उत्तिष्ठन्तु तावदमी पठित्वा ततः पश्चात् प्रमार्जयिष्याम इति विचिन्त्य तथैव यदि कुर्वते तदा उत्ष्वष्कणं भवति । एवमवष्वष्कणमभिष्वष्कणं च 'सर्वत्र' आवर्षणोपलेपनादावपि भावनीयम् ॥ सा पुनः सूक्ष्मप्राभृतिका द्विविधा-

[भा.१६८३] छिन्नमछिन्ना काले, पुनो य नियया य अनियया चेव ।
निद्दिट्ठाऽनिद्दिट्ठा, पाहुडिया अट्ठ भंगा उ ॥

वृ- 'काले' कालतश्छिन्ना अच्छिन्ना वा, छिन्नकालिका अच्छिन्नकालिका चेत्यर्थः । यस्यामुपलेपनादिकं छिन्ने-प्रतिनियते मासादौ काले क्रियते सा छिन्नकालिका । या तु यदा तदा वा क्रियते सा अच्छिन्नकालिका । पुनरेकैका द्विधा-नियता अनियता चैव । नियता नाम-यापूर्वाह्णादावेव वेलायामवश्यमेव वा क्रियते । तद्विपरीता अनियता । पुनरेकैका द्विविधा-निर्दिष्टा अनिर्दिष्टा च । तत्र यः प्राभृतिकाकारकः सन निर्दिष्टः-इन्द्रदत्तादिनाम्नोपलक्षितः तेन क्रियमाणा प्राभृतिका अपि निर्दिष्टा । तद्विपरीता अनिर्दिष्टा । अत्र च त्रिभि पदैरष्टौ भङ्गा भवन्ति, तद्यथा-छिन्नकालिका नियता निर्दिष्टा १ छिन्नकालिका नियता अनिर्दिष्टा २ इत्यादि ॥ अथ च्छिन्नकालिकां व्याख्यानयति-

[भा.१६८४] मासे पक्खे दसरायए य पणए अ एगदिवसे य ।
वाघाइमपाहुडिया, होइ पवाया निवाया य ॥

वृ- या प्राभृतिका 'मासे' मासस्यान्ते 'पक्षे' पक्षस्यान्ते 'दशरात्रे' दशानामहोरात्राणां पर्यन्ते 'पञ्चके' पञ्चरात्रिन्दिवान्ते 'एकदिवसे' एकान्तरिते दिने चशब्दाद् निरन्तरं दिने दिने इत्यर्थः, एवं प्रतिनियते काले या क्रियते सा छिन्नकालिका । या तु न ज्ञायते कस्मिन् दिवसे विधीयते सा अच्छिन्नकालिकेति । व्याघातिप्राभृतिका नाम-या सूत्रार्थपौरुषीवेलायां क्रियते । भवति प्रवाता निवाता चेति । प्रवाता नाम-या ग्रीष्मकाले अपराह्णे उपलेपनादिकरणेन धर्मं नाशयति । या तु शीतकाले पूर्वाह्णे उपलेपनकरणेन रात्रौ व्यपगतस्नेहा जायते सा निवाता भण्यते ॥

अथ कस्यां प्राभृतिकायां वस्तुं कल्पते ? कस्यां वा न ? इति अत आह-

[भा.१६८५] पुव्वण्हे अवरण्हे, सूरम्मि अनुग्गए व अत्थमिए ।
मज्झंतिए व वसही, सेसं कालं पडिक्कुट्ठा ॥

वृ-पूर्वाह्णे अनुद्गते सूर्ये, अपराह्णे तु अस्तमिते, 'मध्यान्ते वा' मध्याह्नवेलायाम् अर्थपौरुष्या उत्थितेषु इत्यर्थः, एतेषु कालेषु यस्यां प्राभृतिका क्रियते सा वसतिरनुज्ञाता, सूत्रार्थव्याघाताभावात् । "सेसं कालं" ति सप्तम्यर्थे द्वितीया, 'शेषे' उद्गतसूर्यादौ काले यस्यां प्राभृतिका विधीयते सा प्रतिक्रुष्टा, न कल्पते तस्यां वस्तुम्, सूत्रार्थव्याघातसम्भवात् ॥ अथ निर्दिष्टा-ऽनिर्दिष्टप्राभृतिके भावयति-

[भा.१६८६] पुरिसज्जाओ अमुगो, पाहुडियाकारओ उ निद्दिट्ठो ।
सेसा उ अनिद्दिट्ठा, पाहुडिया होइ नायव्वा ॥

वृ-अमुकः 'पुरुषजातः' पुरुषप्रकारः प्राभृतिकाकारक इन्द्रदत्तादिनाम्ना यस्यां निर्दिष्टः सा निर्दिष्टा । शेषा तु सर्वाऽप्यनिर्दिष्टा प्राभृतिका भवति ज्ञातव्या ॥

अथ पूर्वोक्तभङ्गाष्टकविषयं विधिमाह-

[भा.१६८७] काऊण मासकप्पं, वयंति जा कीरई उ मासस्स ।
सा खलु निव्वाघाया, तंवेलारेण निंताणं ॥

वृ- इह प्रथमे भङ्गे या मासस्यान्ते क्रियत इति कृत्वा च्छिन्नकालिका, तत्राप्यपराह्ण एव विधीयमानत्वाद् नियता, अमुकपुरुषकर्तृकत्वेन च निर्दिष्टा । तस्यां कृतायां प्रथमतः प्रविष्टास्ततो मासकल्पं कृत्वा यदि व्रजन्ति । कथम् ? इत्याह-"तंवेलारेण निंताणं" ति तस्याः-प्राभृतिकाकरणवेलाया अर्वाग् निर्गच्छतां सा प्राभृतिका निर्व्याघाता मन्तव्या, सूत्रार्थव्याघाताभावात्, कल्पते तस्यां वस्तुमिति भावः । शेषा द्वितीयादयो भङ्गाः क्वापि कथञ्चित् सव्याघाता इति कृत्वा तेषु न कल्पते ॥ अथ प्रवाता निवातेति च पदद्वयं भावयति-

[भा.१६८८] अवरण्हे गिम्ह करणे, पवाय सा जेण नासयइ धम्मं ।
पुव्वण्हे जा सिसिरे, निव्वाय निवाय सा रत्तिं ॥

वृ- ग्रीष्मे अपराह्णे यदुपलेपनस्य करणं सा प्रवाता । कुतः ? इत्याह-येना सा रात्रौ 'नाशयति' व्यपनयति 'धर्मं' ग्रीष्मर्तुसम्भवं तापम् । या तु 'शिशिरे' शीतकाले पूर्वाह्णे उपलेपनकरणेन दिवसस्य चतुर्भिः प्रहरैः 'निवाता' शुष्का इत्यर्थः सा रात्रौ निवाता भवति । एतयोः कारणतोऽवस्थातुं

कल्पत इति ॥ अथ निव्याघातिमां भङ्ग्यन्तरेणाह-

[भा.१६८९] पुव्वण्हे अपट्ठविए, अवरण्हे उट्ठिएसु य पसत्था ।
मज्झण्ह निग्गएसु य, मंडलिसुत-पेहऽवाघाया ॥

वृ-या पूर्वाह्ने अप्रस्थापिते सति स्वाध्याये अपराह्ने पुनः समुद्दिश्योत्थितेषु सत्सु साधुषु मध्याह्ने तु भिक्षापर्यटनार्थं निर्गतेषु या प्राभृतिका क्रियते सा प्रशस्ता । कुतः ? इत्याह-''मंडलिसुय-पेह''त्ति येन श्रुतमण्डल्या उपकरणप्रेक्षणायाश्च ''वाघाय''त्ति अकारप्रश्लेषाद् 'अव्याघाता' न व्याघातविधायिनी, अत एषा प्रशस्ता ॥ प्ररूपिता बादरा सूक्ष्मा च पञ्चविधा प्राभृतिका, एवंविधना सहितायां वसतौ न स्थाव्यम् । अथ नास्ति तथाविधा अप्राभृतिका वसति ततः कारणतः सप्राभृतिकायामपि तिष्ठतां यतनामाह-

[भा.१६९०] तं वेल सारविंती, पाहुडियाकारगं च पुच्छंति ।
मोत्तूण चरिम भंगं, जयंति एमेव सेसेसु ॥

वृ-यस्यां वेलायां प्राभृतिका क्रियते तां वेलामुपकरणं 'सारयन्ति' सङ्गोपयन्ति, अभिव्याप्तौ चात्र द्वितीया, तां वेलामभिव्याप्येत्यर्थः । प्राभृतिकाकारकं च पुरुषं पृच्छन्ति-कस्यां वेलायां भवान् सम्मार्जनादि करिष्यति ? इति । एवं 'चरमम्' अष्टमं भङ्गं मुक्त्वा 'शेषेषु' सप्तस्वपि भङ्गेषु 'यतन्ते' यतनां कुर्वन्ति ॥

[भा.१६९१] चरमे वि होइ जयणा, वसंति आउत्तउवहिणो निच्चं ।
दक्खे य वसहिपाले, ठविंति थेरा पुणित्थीसु ॥

वृ-'चरमेऽपि' अष्टमे भङ्गे 'अच्छिन्नकालिका अनियता अनिरदिष्टा च' इत्येवंलक्षणे आगाढे कारणे तिष्ठतां भवति यतना । कथम् ? इत्याह-नित्यमायुक्तोपधयो वसन्ति, उपधावायुक्ताः-सावधाना आयुक्तोपधयः, राजदन्तादेराकृतिगणत्वाद् व्यत्यासेन पूर्वापरनिपातः, मा गोमयादिना कोऽप्युपधिं गुण्डयेत् प्राभृतिकाकरणव्याजेनापहरेद्वेति सम्यगुपधिविषयमवधानं ददती-त्यर्थः । दक्षाँश्च वसतिपालान् स्थापयन्ति । यदि च ते प्राभृतिकाकारिणः पुरुषा न स्त्रियस्ततस्तरुणा वसतिपालाः स्थापयितव्याः । ''थेरा पुणित्थीसु''त्ति यदि स्त्रियस्ततो ये स्थविराः परिपाक-प्राप्तब्रह्मचर्यास्ते वसतौ स्थापनीया इति ॥ गतं प्राभृतिकाद्वारम् । अथ भिक्षाद्वारमभिधित्सुराह-

[भा.१६९२] जिनकप्पिअभिग्गहिएसणाए पंचण्हमन्नतरियाए ।
गच्छे पुन सव्वाहिं, सावेक्खो जेन गच्छो उ ॥

वृ-जिनकल्पिका अभिगृहीतया 'पञ्चानाम्' उद्धृतादीनामन्यतरया एकया एषणया भक्तम् एकया पानकं गृह्णन्ति । 'गच्छे' गच्छवासिनः पुनः 'सर्वाभिरपि' असंसृष्टादिभिरेषणाभिर्भक्त-पानं गृह्णन्ति । कुतः ? इत्याह-'सापेक्षः' बाल-वृद्धाद्यपेक्षायुक्तः 'येन' कारणेन 'गच्छः' गच्छवासिसाधुसमूह इति ॥ आह किमिति गच्छवासिनः सर्वाभिरप्येषणाभिर्गृह्णन्ति ? किं तेषां निर्जरया न कार्यम् ? उच्यते-

[भा.१६९३] बाले वुड्ढे सेहे, अगीयत्थे नाण-दंसणप्पेही ।
दुब्बलसंघयणम्मि य, गच्छि पइन्नेसणा भणिया ॥

वृ-षष्ठी-सप्तम्योरर्थं प्रत्यभेदाद् बालस्य वृद्धस्य शैक्षस्यगीतार्थस्य 'ज्ञान दर्शनप्रेक्षिणः' ज्ञानार्थिनो

दर्शनप्रभावकशास्त्रार्थिनश्चेत्यर्थः 'दुर्बलसंहननस्य च' असमर्थशरीरस्यानुग्रहार्थं गच्छे 'प्रकीर्णा' अप्रतिनियता एषणा भणिता भगवद्भिरिति ॥ अथैतान्येव पदानि गाथाद्वयेन भावयति-

[भा.१६९४] तिक्खछुहाए पीडा, उड्डाह निवारणम्मि निक्किवया ।
इय जुवल-सिक्खगेसुं, पओस भेओ य एक्कतरे ॥

वृ-अभिगृहीतयैवैषणया भक्त-पानग्रहणे प्रतिज्ञाते तया चालब्धे स्तोके वा लब्धे सति बाल-वृद्धशैक्षकाणां तीक्ष्णया-दुरधिसहया क्षुधा उपलक्षणत्वात् तृषा घम हती पीडा भवति । उड्डाहो वा भवेत्, स हिबालादिरित्थं लोकपुरतो ब्रूयात्-एते साधवो मां क्षुधा तृषा वा मारयन्तीति । तथा 'निवारणे' विवक्षितामेकामेषणां विमुच्य अन्यासां प्रतिषेधे विधीयमाने सति बालादयश्चिन्तयेयुः-अहो ! निष्कृपताऽमीषाम्; ततः प्रद्वेषं गच्छेयुः । 'भेदो वा एकतरे' जीवितस्य चारित्रस्य वा विनाशोऽमीषां भवेदित बाल-वृद्धयुगले शैक्षके वा नियन्त्रयमाणे दोषा मन्तव्याः ॥

[भा.१६९५] सुचिरेण वि गीयत्थो, न होहिई न वि सुयस्स आभागी ।
पग्गहिएसणचारी, किमहीउ धरेउं वा अबलो ॥

वृ-तथा अगीतार्थ सुचिरेणापि कालेन गीतार्थो न भविष्यति, नापि 'श्रुतस्य' आचारादेः उपलक्षणत्वाद् दर्शनप्रभावकशास्त्राणां वा आभागी । कीदृशः ? इत्याह-'प्रगृहीतैषणाचारी' प्रगृहीता-अभिग्रहवती या एषणा तच्चारी-तदभिग्रहशीलः, तथाविधभक्त-पानोपष्टम्भाभावादिति भावः । यो वा 'अबलः' दुर्बलसंहननः स प्रणीताहाराद्युपष्टम्भाभावे किं सूत्रमर्थं वा अधीतां धारयतां वा ? । अत एतेषामनुग्रहार्थं गच्छे प्रकीर्णैषणा दृष्टा ॥

अथास्या एव विधिमभिधित्सुर्द्वारगाथामाह-

[भा.१६९६] पमाणे काले आवस्सए य संघाडगे य उवगरणे ।
मत्तग काउस्सग्गो, जस्स य जोगो सपडिवक्खो ॥

वृ-प्रमाणं नाम-कति वारान् पिण्डपातार्थं गृहपतिकुलेषु प्रवेषटव्यम् ? इति । ''कालि''त्ति कस्यां वेलायां भिक्षार्थं निर्गन्तव्यम् ? । ''आवस्सग''त्ति 'आवश्यकं' संज्ञा-कायिकीलक्षणं तस्य सोधनं कृत्वा निर्गन्तव्यम् । ''संघाडगे''त्ति सङ्घाटकेन-साधुयुग्मेन निर्गन्तव्यं नैकाकिना । ''उवगरणि''त्ति सर्वोपकरणमादाय भिक्षायामवतरणीयम् । ''मत्तगि''त्ति मात्रकं ग्रहीतव्यम् । ''काउस्सग्गो''त्ति उपयोगनिमित्तं कायोत्सर्ग कर्त्तव्यः । ''जस्स य जोगो''त्ति 'यस्य च' सचित्तस्याचित्तस्य वा 'योगः' सम्बन्धो भविष्यति लाभ इत्यर्थः तदप्यहं ग्रहीष्यामीति भणित्वा निर्गन्तव्यम् । ''सपडिवक्खो''त्ति एष प्रमाणादिको द्वारकलापः 'सप्रतिपक्षः' सापवादो वक्तव्य इति द्वारगाथासमासार्थ ॥ अथ विस्तरार्थमभिधित्सुः प्रमाणद्वारं भावयति-

[भा.१६९७] दोन्नि अणुन्नायाओ, धइय आवज्ञ मासियं लहुयं ।
गुरुगो उ चउत्थीए, चाउम्मासो पुरेकम्मे ॥

वृ-चतुर्थभक्तिकस्य द्वौ वारौ गोचरचर्यामटितुमनुज्ञातौ । अथ तृतीयं वारमटति तत आपद्यते मासिकं लघुकम् । अथ चतुर्थं वारं पर्यटति तदा गुरुको मासः । स्त्रीत्वं सर्वत्र प्राकृतत्वात् । अथ तृतीयादीन् रान् भिक्षार्थं प्रविशति ततो गृहिणः पुरः कर्म कुर्वन्ति तत्र चत्वारो मासा लघव इति । एषा निर्युक्तिगाथा ॥ अथैनामेव भाष्यकृद् विवृणोति-

[भा.१६९८] सइमेव उ निग्गमणं, चउत्थभत्तिस्स दोन्नि वि अलद्धे।
सव्वे गोयरकाला, विगिट्ठ छट्ठऽट्ठमे बि-तिहिं ॥

वृ- 'सकृदेव' एकवारमेव नित्यभक्तिकस्य भक्ताय वा पानाय वा निर्गमनं कल्पते । चतुर्थभक्तिकस्याप्युत्सर्गतः सकृदेव भिक्षामटितुं कल्पते । अथ तदानीं पर्यटताऽपि तेन परिपूर्णो भक्तार्थो न लब्धः ततोऽलब्धे सति तस्य द्वावपि गोचरकालावनुज्ञातौ । उक्तञ्च दशाश्रुतस्कन्धे- कप्पइ चउत्थभत्तियस्स एगं गोयरकालं गाहावइकुलं भत्ताए वा पाणाए वा निक्खमित्तए वा पविसित्तए वा । से य नो संथरिज्जा एवं से कप्पइ दुच्चं पि गाहावइकुलं इत्यादि । यस्तु 'विकृष्टभक्तिकः' दशम-द्वादशमादिक्षपकस्तस्य सर्वेऽपि गोचरकालाः कल्पन्ते । "छट्ठऽट्ठमे ब-तिहिं"ति षष्ठ-भक्तिकस्य द्वयोर्गोचरकालयोरष्टमभक्तिकस्य तु त्रिषु गोचरकालेषु भिक्षामटितुं कल्पत इति ॥ स्यान्मति किमर्थं षष्ठादेर्भक्तिकानां व्यादिगोचरकालानामनुज्ञा ? उच्यते-

[भा.१६९९] संखुन्ना जेणंता, दुगाइ छट्ठादिनं तु तो कालो ।
भुत्तनुभुत्ते अ बलं, जायइ न य सीयलं होइ ॥

वृ- 'संक्षुन्नानि' सङ्कुचितानि 'येन' कारणेन षष्ठादितपसा 'अन्त्राणि' प्रतीतानि, ततः षष्ठादिभक्तिकानां 'द्विकादिकः' गोचरद्वयादिकः कालोऽनुज्ञातः । अपि च प्रथममेकवारं भुक्तस्ततो द्वितीयादिं वारमनुभुक्तो भुक्तानुभुक्तस्तस्य व्यादीन् वारान् भुक्तवत् इत्यर्थः 'बलं' भूयोऽपि षष्ठादिकरणे सामर्थ्यमुपजायते । न चेत्थं तद् भक्तं शीतलं भवति, सद्यो गृहीतत्वात् । यदि ह्येकमेव वारं पर्यटता यद् गृहीतं तन्मध्यात् किञ्चित् समुद्दिश्य द्वितीयादिवारसमुद्देशनार्थं शेषं स्थापयेत् तदा तद् भवत्येव शीतलम् । तच्च तस्य तपःक्षामदेहस्याकारकमिति कृत्वा द्व्यादयो गोचरकाला अनुज्ञाता इति ॥ अत्र परः प्राह-यद्यसौ षष्ठादिभक्तिको यावन्ति भक्तानि च्छिनत्ति तावन्त्येकेनैव दिवसेन पूरयति ततः को नाम गुणस्तस्य भक्तच्छेदनेन ? उच्यते-

[भा.१७००] बहुदेवसिया बत्ता, एगदिनेनं तु जइ वि भुंजेज्जा ।
तह वि य चाग-तितिक्खा-एग्ग-पभावणाईया ॥

वृ- बहुदैवसिकानि भक्तानि यद्यप्यसावेकदिनेनैव तुशब्दस्यैवकारार्थत्वात् षष्ठादिभक्तिको भुञ्जीत तथापि भक्तच्छेदने त्याग-तितिक्षैकाग्र्य-प्रभावनादयो गुणा भवन्ति । त्यागो नाम-द्व्यादीन् दिवसान् यावत् सर्वथैव भक्तार्थपरिहारः, तितिक्षा-क्षुधापरीषहस्याधिसहनम्, एकाग्र्यं तु सूत्रार्थपरावर्त्तनादौ चित्तस्यानन्योपयुक्तता, प्रभावना नाम-अहो ! अमीषां शासनं विजयते यत्रेद्दशास्तपस्विन इति, आदिशब्दादन्येषामपि तपःकर्मणि श्रद्धाजननम्, गृहिणां वा तद्दर्शनात् प्रव्रज्याप्रतिपत्तिरिति । अतः षष्ठादिभक्तिकस्य द्व्यादिगोचरकालानुज्ञानम् । नित्यभक्तिकस्तु यदि द्वितीयं वारं भिक्षार्थमवतति मासलघु, तृतीयवारं मासगुरु, चतुर्थं चतुर्लघु, पञ्चमं चतुर्गुरु, षष्ठं षड्लघु, सप्तमं षड्गुरु, अष्टमं छेदः, नवमं मूलम्, दशममनवस्थाप्यम्, एकादशं वारं पाराञ्चिकम्।

चतुर्थभक्तिकादीनामतिदेशमाह-

[भा.१७०१] जह एस एत्थ वुड्ढी, ओअरमाणस्स दसहि सपदं च ।
सेसेसु वि जं जुज्जइ, तत्थ वियड्ढी उ सोहीए ॥

वृ- यथा द्वितीयादिवारं भिक्षामवतरतः 'एषा' लघुमासादारभ्य प्रायश्चित्तस्य वृद्धिर्भणिता

'दशभिश्च' दशसङ्ख्याकैः स्थानैः 'स्वपदं' पाराञ्चिकं नित्यभक्तिकस्योक्तम्, तथा 'शेषेष्वपि' चतुर्थभक्तिकादिषु 'यत्' तृतीयवारादिकं प्रायश्चित्तस्थानं युज्यते 'तत्र' तदारभ्य 'शोधेः' प्रायश्चित्तस्य विवृद्धिः कर्त्तव्या। तद्यथा-चतुर्थभक्तिकस्तृतीयं वारं भिक्षामवतरति मासलघु, चतुर्थं मासगुरु, पञ्चमं चतुर्लघु, षष्ठं चतुर्गुरु, सप्तमं षड्लघु, अष्टमं षड्गुरु, नवमं छेदः, दशमं मूलम्, एकादशमनवस्थाप्यम्, द्वादशं वारं पर्यटतः पाराञ्चिकम्। एवं षष्ठभक्तिकस्यापि द्वादशं वारमवतरतः पाराञ्चिकम्। यदाह चूर्णिकृत्- छट्ठभत्तियस्स वि बारसहिं पावइ सपयं ति। अष्टमभक्तिकस्य तु चतुर्थवारादारभ्य त्रयोदशं वारं यावत् पर्यटतो लघुमासादिकं पाराञ्चिकान्तमिति।

गतं प्रमाणद्वारम्। अथ कालद्वारम्-कस्मिन् काले भिक्षार्थं निर्गन्तव्यम्? उच्यते-यः क्षपको बालो वृद्धो वा पर्युषितेन प्रथमालिकां कर्त्तुकामः स सूत्रपौरुषीं कृत्वा निर्गच्छति। अथ तावतीं वेलां न प्रतिपालयितुं क्षमः ततोऽर्द्धपौरुष्यां निर्गच्छति। यद्यतिप्रभाते पर्यटति तदा मासलघु, भद्रक-प्रान्तकृताश्च दोषा भवन्ति। तत्र साधुरतिप्रभात एव कस्यापि गृहं गत्वा भिक्षां याचितवान्, स च गृहपतिर्भद्रकः सुप्तामविरतिकामुत्थापयेत् ततस्तस्यामुत्थितायामधिकरणं प्रवर्त्तितं भवेत्। यस्तु प्रान्तो भवति स ब्रूयात्-किमुन्मत्तो वर्तसे यदेवमतिप्रभाते पर्यटसि? सुखरात्रिकं वा प्रष्टुं समायासीः? इति। यद्वा कोऽपि ग्रामान्तरं प्रस्थितः प्रथममेव तं साधुं दृष्ट्वा अपशकुनं मन्यमानः प्रद्वेषं यायात्, प्रद्विष्टश्चाहननादि कुर्यात्। अथैतद्दोषभयादतिक्रान्तायां वेलायामटति तदाऽपि मासलघु, "अकाले चरसी भिक्खू" इत्यादिगाथोक्ताश्च दोषाः। एवमुष्णस्यापि भक्तस्याप्राप्ते अतिक्रान्ते वा एत एव दोषा मन्तव्याः॥

गतं कालद्वारम्। अथावश्यकद्वारम्-यद्यावश्यकमविशोध्य निर्गच्छति तदा मासलघु आज्ञादयश्च दोषा विराधना च प्रवचनादीनाम्। तद्यथा-भिक्षामटतः संज्ञा समागच्छेत् ततो यद्युद्ग्राहितपात्रकः पानकं वा विना व्युत्सृजति तदा प्रवचनविराधना-अहो! अशुचयोऽमी। अथैतद्दोषभयान्न व्युत्सृजति तत आत्मविराधना। अथ प्रतिश्रयमागत्य पानकं गृहीत्वा संज्ञाभूमौ व्रजति ततो देश-काले स्फिटिते सति भिक्षामलभमान एषणां प्रेरयेत्, ततः संयमविराधना। यत एवमत आवश्यकं शोधयित्वा निर्गन्तव्यम्॥ गतमावश्यकद्वारम्।

अथ सङ्घाटकद्वारं भाष्यकृदेव व्याख्यानयति-

[भा.१७०२] एगानियस्स दोसा, साणे इत्थी तहेव पडिनीए।
भिक्खविसोहि महव्वय, तम्हा सबिइज्जए गमणं॥

वृ- यद्येकाकी पर्यटति तदा मासलघु। एते च दोषाः-स एकाकी यदि भिक्षां शोधयति तदा पृष्ठतः श्वानः समागत्य तं दशेत्। अथ श्वानमवलोकते तत एषणां न रक्षति। तमेकाकिनं दृष्ट्वा काचित् प्रोषितभर्तृका विधवा वा स्त्री बहिः प्रचारमलभमाना द्वारं पिधाय तं गृह्णीयात्। प्रत्यनीको वा तमेकाकिनं दृष्ट्वा प्रान्तापनादि कुर्यात्। 'भिक्षाविशोधि' इति एकाकी यदि त्रिषु गृहेषु भिक्षां दीयमानां गृह्णाति तत एषणायामशुद्धिर्भवति। अथैकत्रैव गृहे गृह्णाति तत इतरयोर्दायिकयोः प्रद्वेषो भवेत्। द्वयोस्तु निर्गतयोरेक एकत्र भिक्षामाददान एवोपयोगं ददाति, द्वितीयस्तु शेषगृहद्वयादानीयमानं भिक्षाद्वयमपि सम्यगुपयुङ्क्ते। महाव्रतानि वा एकाकी विराधयेत्। तथाहि-

एकाकी निःशङ्कतयाऽप्कायमप्यासेवेत् १ कुण्टल-विण्टलादि वा प्रयुञ्जीत २ हिरण्यादिकं वा विक्षिप्तं गुरुकर्मतया स्तेनयेत् ३ अविरतिकां वा रूपवतीं दृष्ट्वा समुदीर्णमोहतया प्रतिसेवेत ४ भैक्षेण वा समं पतितं सुवर्णादि गृह्णीयाद् ५ इति । यत एते दोषास्तस्मात् सद्वितीयेन गमनं कर्त्तव्यम्, सङ्घाटकेनेत्यर्थः ।। स पुनरेकाकी कैः कारणैः सङ्घाटिकं न गृह्णाति ? इति उच्यते-

[भा.१७०३] गारविए काहीए, माइल्ले अलस लुद्ध निद्धम्मे ।
दुल्लह अत्ताहिट्ठिय, अमणुन्ने या असंघाडो ।।

वृ- 'गौरविको नाम' 'लब्धिसम्पन्नोऽहम्' इत्येवं गर्वोपेतः । अत्र चेयं भावना-सङ्घाटके यो रत्नाधिकः सोऽलब्धिमान् अवमरत्नाधिकस्तु लब्धिसम्पन्नः ततोऽसावग्रणीभूय भिक्षामुत्पादयति, प्रतिश्रयमागतयोश्च तयो रत्नाधिको मण्डलीस्थविरेण भण्यते-'ज्येष्ठार्य ! मुञ्च प्रतिग्रहम्' ततोऽवमरत्नाधिकः स्वलब्धिर्वितश्चिन्तयेत्-'मया स्वलब्धिसामर्थ्येनेदं भक्त-पानमुत्पादितम्, इदानीमस्य रत्नाधिकः प्रभुरभूद् येनास्य पार्श्वे प्रतिग्रहो याच्यते' इति कषायितः सन्नेकाकित्वं प्रतिपद्यते । "काहीए"त्ति कथाभिश्चरतीति 'काथिकः' कथाकथनैकनिष्ठः, स गोचरं प्रविष्टः कथाः कथयन् द्वितीयेन साधुना गुर्वादिभिर्वा वार्यमाणोऽपि नोपरमते तत एकाकी भवति । 'मायावान्' भद्रकं भद्रकं भुक्त्वा शेषमानयन्नेकाकी जायते । 'अलसः' चिरगोचरचर्याभ्रमणभग्नः सन्नेकाकी पर्यटति । 'लुब्धस्तु' दधि-दुग्धादिका विकृतीरवभाष्यमाणः पृथगेवाटति । 'निर्द्धर्मा पुनः' अनेषणीयं जिघृक्षुरेकत्वं प्रतिपद्यते । "दुल्लह"त्ति दुर्लभभैक्षे काले एकत्वमुपसम्पद्यते । 'अत्ताहिट्ठिय' त्ति आत्मार्थिकः-आत्मलब्धिकः सः 'स्वलब्धिसामर्थ्येनैवोत्पादितमहं गृह्णामि' इत्येकाकी भवति । 'अमनोज्ञो नाम' सर्वेषामप्यनिष्टः कलहकारकत्वाद् असावप्येकाकी पर्यटतीति । एतैः कारणैः 'असङ्घाटः' सङ्घाटको न भवति ।।

अथैतेषामेकाकित्वप्रत्ययं प्रायश्चित्तमाह-

[भा.१७०४] लहुया यदोसु गुरुओ, अ तइअए चउगुरू य पंचमए ।
सेसाण मासलहुओ, जं वा आवज्जई जत्थ ।।

वृ- 'द्वयोः' गौरविक-काथिकयोश्चत्वारो लघवः । 'तृतीयकस्य' मायावतो गुरुको मासः । 'पञ्चमस्य' लुब्धस्य चत्वारो चत्वारो गुरवः । 'शेषाणाम्' अलस-निर्धर्मादीनां मासलघु । 'यद् वा' संयमविराधनादिकं यत्रापद्यते तन्निष्पन्नं तत्र प्रायश्चित्तम् ।। गतं सङ्घाटकद्वारम् । अथोपकरणद्वारम्-सर्वमप्युपकरणमादाय भिक्षायामटितव्यम् । यदि सर्वोपकरणं न गृह्णाति तदा मासलघु, उपधिनिष्पन्नं वा । तथा तेषां भिक्षामटितुं गतानां स प्रतिश्रयस्थापित उपधिरग्निकायेन दह्येत, दण्डिकक्षोभो मालवस्तेनक्षोभो वा तेषां भिक्षामटतां सहसा समापतित इति कृत्वा तत एव ते पलायिताः, तेत यदुपधिं विना तृणग्रहणादि कुर्यु तन्निष्पन्नं प्रायश्चित्तमिति ।।

गतमुपकरणद्वारम् । अथ मात्रकद्वारं व्याख्यायते-मात्रकमगृहीत्वा निर्गच्छति मासलघु । आर्यादीनां प्रायोग्यं मात्रकं विना कुत्र गृह्णातु ? । यदि न गृह्णाति तदा यत् ते अनागाढमागाढं वा परिताप्यन्ते तन्निष्पन्नम् । अथ ते अन्त-प्रान्तं समुद्दिशेयुः ततो ग्लान्यादयो दोषाः । दुर्लभद्रव्यस्य वा घृतादेस्तद्दिवसं लाभो जातः, यदि मात्रकं नास्तीति कृत्वा तन्न गृह्णाति तदा मासलघु । संसक्तभक्त-

पानं वा मात्रकं विना क्व शोधयतु ? । यदि मात्रकमभविष्यत् ततस्तत्र शोधयित्वा परिष्ठापयेत् प्रतिग्रहे प्रक्षिपेद्वा । यत् एवमतः कर्त्तव्यं मात्रकग्रहणम् ॥ गतं मात्रकद्वारम् । अथ कायोत्सर्गद्वारम्-कायोत्सर्गमकृत्वा व्रजति मासलघु । दोषाश्चात्र-कश्चिद् योगप्रतिपन्नस्तस्य तद्दिवसमाचाम्लम्, स चोपयोगकायोत्सर्गमकृत्वा गतो दध्नः करम्बं गृहीत्वा समायातः, पश्चादपरैः साधुभिस्तस्याचम्लं स्मारितम् ततः कायोत्सर्गं कृत्वा निर्गच्छेत् । तत्र च कायोत्सर्गे चिन्तयेत्-यथा अद्य किं मे आचाम्लम् ? उत निर्विकृतिकम् ? उताहो अभक्तार्थम् ? आहोश्चिदेकाशनकम् ? इति । इत्थमुपयोगं दत्त्वा प्रत्याख्यानानुगणमेवाहारं गृह्णाति ॥

गतं कायोत्सर्गद्वारम् । अथ यस्य च योग इति द्वारम्-यस्य-वस्त्र-पात्र-शैक्षादेर्योगः-सम्बन्धो भविष्यति तदपि ग्रहीष्यामीति यदि न भणति तदाऽपि मासलघु । वस्त्र-पात्रादिकं च ग्रहीतुं न कल्पते ॥ अथ सप्रतिपक्ष इति द्वारम्-एष द्वारकलापः सप्रतिपक्षः-सापवादो मन्तव्यः । तद्यथा-आचार्याद्यर्थं बहूनपि वारान् प्रविशेत् । प्रथम-द्वितीयपरीषहपीडितो यद्यप्यतप्रभातं तदाऽपि निर्गच्छेत्, यत्र च मानुषाणि निद्राणि तत्र गत्वा धर्मलाभयेत्, ग्लान-प्राघूर्णकादीनां हेतोरतिक्रान्तेऽपि निर्गच्छेत् । अनाभोगतो ग्लानादिषु वा कार्येषु व्यापृतः सत्रावश्यकमप्यविशोध्य निर्गच्छेत् । निर्गतश्च संज्ञया बाध्यमानो यदि प्रतिश्रयः प्रत्यासन्नस्ततो निवर्त्तते । अथ दूरे ततो यदि कालो न पूर्यते तदा तयोरेकः पात्रकाणि धारयति इतरः संज्ञां व्युत्सृजति । अथ सागारिकास्तत्र पश्यन्ति ततः समनोज्ञानां प्रतिश्रयं गत्वा व्युत्सृजति । तदभावे अमनोज्ञानां संविग्नानाम् । तेषामलाभे पार्श्वस्थादीनाम् । तेषामप्यभावे सारूपिकाणाम् । तदसत्त्वे सिद्धपुत्रकाणाम् । तेषामप्राप्तौ श्रावकाणां वैद्यस्य वा गृहे । एतेषामभावे राजमार्गे गृहद्वयमध्यभागे वा गृहस्थसत्के वा अवग्रहे कायिकीवर्जं व्युत्सृजति । ततो यद्यसौ गृहपतिस्तां संज्ञां त्याजयति तदा राजकुले व्यवहारो लभ्यते । यथा-

त्रयः शल्या महाराज !, अस्मिन् देहे प्रतिष्ठिताः ।
वायु-मूत्र-पुरीषाणां, प्राप्तं वेगं न धारयेत् ॥

तथा सङ्घाटकं विनाऽपि निर्गच्छेत् । कथम् ? इति चेद् उच्यतेयदि दुर्भिक्षे चिरमप्यटित्वा पर्याप्तं लभ्यते ततो द्वावेव पर्यटतां न पुनरेकाकी । अथ द्वयोरप्येकैव भिक्षा लभ्यते न च कालः पूर्यते तत एकोऽपि पर्यटेत् । यदि सर्वेऽपि खग्गूडत्वादात्मलब्धिका भवन्ति तदा प्रतिषेद्धव्याः । अथ कोऽपि प्रियधर्मा मातृस्थानविरहित आत्मलब्धिकत्वं प्रतिपद्यते ततः सोऽनुज्ञातव्यः । यः पुनरमनोज्ञः स अन्यान्यैः साधुभि समं संयोज्य प्रेष्यते । यदि सर्वेऽपि नेच्छन्ति ततः परित्यजनीयोऽसौ । अथ स एवैकः कलहकरणलक्षणस्तस्य दोषः अपरे निर्लोभत्वादयो बहवो गुणा एषणाशुद्धौ चातीव दृढता ततो न परित्यक्तव्य इति । यत्र श्वान-गवादयो दुष्टा भवन्ति तद्गृहं यद्यमानभोगतः प्रविष्टस्ततः कुड्य-कटनिश्रया तिष्ठति, दण्डकेन वा तान् वारयति । यदि काचिदविरतिका तमुपसर्गयेत् ततो धर्मकथा कर्त्तव्या । तथा यद्युपशाम्यति ततः सुन्दरम्, नो चेदभिधातव्यम्-एतानि व्रतानि गुरुसमीपे स्थापयित्वा समागच्छामीति । यदि प्रत्यनीकगृहमनाभोगतः प्रविष्टस्ततो महता शब्देन तथा बोलं करोति यथा भूयाँल्लोको मिलति । त्रयाणां गृहाणां मध्ये स्थितः सदुपयोगं कृत्वा भिक्षां गृह्णीयात् । पञ्चानामपि महाव्रतानामतिक्रमं

महता प्रयत्नेन परिहरेत् ।

सर्वोपकरणमपि स्तेन-प्रत्यनीकाद्युपद्रवभयाद् वृद्धत्वादधृत्यास्थिग्लानत्वाद्वा न गृह्णीयात् । इयत् पुनरवश्यमेव ग्रहीतव्यम्-पात्रभाण्डकं चोलपट्टको रजोहरणं मुखवस्त्रिका चेति । मात्रकमप्यलाभोगादिना न गृह्णीयात् । कायोत्सर्गादीन्यपि ग्लानादिकार्येषु त्वरमाणो न कुर्यादिति । उक्तं सप्रतिपक्षद्वारम् । तदुक्तौ च गतं भिक्षाद्वारम् । अथ कल्पकरणद्वारमभिधित्सुराह-

[भा.१७०५] भाणस्स कप्पकरणे, अलेवडे नत्थि किंचि कायव्वं ।
तम्हा लेवकडस्स उ, कायव्वा मग्गणा होइ ॥

वृ- भाजनस्य कल्पकरणे चिन्त्यमाने यदलपकृतं द्रव्यं तद् यत्र प्रक्षिप्तं तस्य भाजनस्य न किञ्चित् कर्त्तव्यम्, कल्पो न विधेय इत्यर्थः । लेपकृतभाजनस्य त्ववश्यं कल्पो दातव्य इत्यतो लेपकृतस्य मार्गणा कर्त्तव्या, कीदृशं लेपकृतम् ? अलेपकृतं वा ? इति चिन्तनीयमित्यर्थः ॥

तत्रालेपकृतानि तावदाह-

[भा.१७०६] कुंजसिण-चाउलोदे, संसट्ठ-ऽऽयाम-कट्ठमूलरसे ।
कंजियकढिए लोणे, कुट्टा पिज्जा य नित्तुप्पा ॥

वृ- काञ्जिकम्-आरनालम्, उष्णोदकम्-उद्वृत्तत्रिदण्डम्, "चाउलोदगं" तन्दुलधावनम्, संसृष्टं नाम-गोरससंसृष्टे भाजने प्रक्षिप्तं सद् यदुदकं गोरसरसेन परिणामितम्, 'आयामम्' अवश्रावणम्, "कट्ठमूलरसे" त्ति काष्ठमूलं-चणक-चवलादिकं द्विदलं तदीयेन रसेन यत् परिणामितं तत् काष्ठमूलरसं नाम पानकम्, तथा यत् काञ्जिकक्वथितम्, "लोणि"त्ति सलवणम्, या च "कुट्टा" चिञ्चिनिका, 'पेया च' प्रतीता 'निस्तुप्पा' अचोप्पडा अवघारिता वा ॥ तथा

[भा.१७०७] कंजिय-उदगविलेवी, ओदण कुम्मास सत्तुए पिट्ठे ।
मंडग समिउस्सिन्ने, कंजियपत्ते अलेवकडे ॥

वृ- विलेपिका द्विविधा-एका काञ्जिकविलेपिका, द्वितीया उदकविलेपिका । 'ओदनः' तन्दुलादि भक्तम्, 'कुल्माषाः' उडदा राजमाषा वा, 'सक्तवः' भ्रष्टयवक्षोदरूपाः, 'पिष्टं' मुद्गादिचूर्णम्, 'मण्डकाः' कणिक्कामयाः, 'समितं' अट्टकः, 'उत्स्विन्नम्' उण्डेरकादि, 'काञ्जिकपत्रं' काञ्जिकेन बाष्पितं अरणिकादिशाकम् । एतानि काञ्जिकादीन्यलेपकृतानि मन्तव्यानि ॥

अथ लेपकृतानि निरूपयति-

[भा.१७०८] विगई विगइअवयवा, अविगइपिंडरसएहि जं मीसं ।
गुल-दहि-तेल्लावयवे, विगडम्मि य सेसएसु च ॥

वृ- दधि-दुग्ध-घृतादिका या विकृतयो ये च विकृतीनामवयवाः-मन्थुप्रभृतयस्तैर्यद् मिश्रं यच्चाविकृतिरूपैः पिण्डरसैः-खर्जूरादिभिर्मिश्रं एतत् सर्वमपि लेपकृतमिति प्रक्रमः । अत्र च गुडदधि-तैलानां येऽवयवाः यश्च 'विकटे' मद्येऽवयवः 'शेषेषु च' घृतादिषु येऽवयवास्ते केचिद् विकृतयः केचिच्चाविकृतयः प्रतिपत्तव्याः ॥ अथैनामेव निर्युक्तिगाथां विवृणोति-

[भा.१७०९] दहिअवयवो उ मंथू, विगई तक्कं न होइ विगई उ ।
खीरं तु निरवयवं, नवनीओगाहिमा चेव ॥

वृ- दध्नः सम्बन्धी यो मन्थु इति नाम्ना प्रसिद्धोऽवयवः स विकृति । यत्तु तक्रं तद् दध्यवयवरू-

पमपि विकृतिर्न भवति । 'क्षीरं तु' दुग्धं पुनः 'निरवयवम्' अवयवरहितम्, नवनीतं-म्रक्षणम् अवगाहिमं-पक्वान्नम् एते अपि निरवयवे, एतद्विषयाणामवयवानां पृथगव्यवह्रियमाणत्वादिति॥

[भा.१७१०] घयघट्टो पुन विगई, वीसंदण मो य केइ इच्छंति ।
तेल्ल-गुलाण अविगई, सूमालिय-खंडमाईणि ॥

वृ- 'घृतघट्टः पुनः' घृतस्य सम्बन्धी यः किट्टो महियाडुकमित्यर्थः स विकृतिर्व्यवह्रियते । विस्पन्दनं नाम-अर्द्धनिर्दग्धघृतमध्यक्षिप्ततन्दुलनिष्पन्नम् । उक्तञ्च पञ्चवस्तुकटीकायाम्- वीसंदणं अद्धनिदड्ढघयमज्झछूढतंदुलनिप्फन्नं ति । ''मो'' इति पादपूरणे । चशब्दोऽपिशब्दार्थे । विस्पन्दनमपि केचिद् विकृतिमिच्छन्ति न पुनर्वयम् । यदाह चूर्णिकृत्- अम्हाणं पुम वीसंदणं अविगइ त्ति । तैल-गुलयोर्यथाक्रमं यानि सुकुमारिका-खण्डादीनि तानि 'अविकृति' विकृतिर्न भवतीत्यर्थः । सुकुमारिका-तैलकिट्टविशेषः, खण्डः-प्रतीतः, आदिशब्दात् शर्करा-मत्स्यण्डिकदिपरिग्रहः ॥

[भा.१७११] महुणो मयणमविगई, खोलो मज्जस्स पोग्गले पिउडं ।
रसओ पुन तदवयवो, सो पुन नियमा भवे विगई ॥

वृ- 'मधुनः माक्षिकादिभेदभिन्नस्यावयवो यद् मदनं तदविकृति । मद्यस्य यः 'खोलः'' किट्टविशेषः सोऽपि न विकृति । पुद्गलस्य यत् 'पिटकम्' उज्झम् अस्थि वा तदप्यविकृति । 'रसकः पुनः' वसा मेदश्च यस्तस्य-पुद्गस्यावयवः स पुनर्नियमाद् भवेद् विकृतिः ॥

अथ पिण्डरसपदं व्याख्यानयति-

[भा.१७१२] अंबंबाड-कविट्ठे, मुद्दीया माउलिंग कयले य ।
खज्जूर-नालिएरे, कोले चिंचा य बोधव्वा ॥

वृ- आम्रं आम्रातकं कपित्थं 'मुद्रिका' द्राक्षा 'मातुलिङ्गं' बीजपूरकं ''कयलं'' कदलीफलं 'खर्जूरं नालिकेरम्' उभयमपि सुप्रसिद्धं 'कोलः' बदरचूर्णं 'चिञ्चा' अम्लिका चशब्दादन्यान्यप्येवंविधानि पिण्डरसद्रव्याणि बोद्धव्यानि । एतानि च विकृतयो न भवन्ति ॥ यत आह-

[भा.१७१३] खज्जूर-मुद्दिया-दाडिमाण पीलुच्छु-चिंचमाईणं ।
पिंडरस न विगईओ, नियमा पुन होंति लेवाडा ॥

वृ- खर्जूर-मुद्रिका-दाडिमानां पीलु-इक्षु-चिञ्चादीनां च सम्बन्धिनौ यौ पिण्डरसौ तौ 'अविकृती' विकृती न भवतः, नियमात् पुनर्लेपकृतौ भवत इति ॥ उक्तानि लेपकृतानि । लेपकृतैः संसृष्टस्य भाजनस्य कल्पः करणीयः । यदि पुनस्य भाजनस्य लेपः स्फटितो भवति ततः कल्पत्रये कृतेऽपि लेपकृतमेव तद् मन्तव्यम् । अतस्तद्दोषपरिहारार्थमाह-

[भा.१७१४] कुट्टिमतलसंकासो, भिसिणीपुक्खलपलाससरिसो वा ।
सामास धुवण सुक्खावणा य सुहमेरिसे होंति ॥

वृ- यथा कुट्टिमतलंनिम्नोन्नमतप्रदेशरहितं सर्वतः सममेव भवते एवं पात्रकस्य लेपोऽपि कुट्टिमतलसङ्काशः सर्वतः सम एव कर्त्तव्यः । तथा बिसिनी-पद्मिनी स्या यत् पुष्कलं-विस्तीर्णं पलाशं-पत्रं तत्र पतितं जलं यथा नावतिष्ठते एवं यत्र सूक्ष्मसिक्थाद्यवयवा लग्ना अपि न स्थितिं कुर्वन्ति स बिसिनीपुष्कलपलाशसदृशः । ईदृशे लेपे पात्रसय् समास-धावन-शोषणाः सुखमेव कर्त्तुं शक्यन्ते । सम् इति-सम्यक् प्रवचनोक्तेन विधिना आङ् इति-मर्यादया पात्रकलेपमवधीकृत्य

यद् असनं-सिक्थाद्यवयवानामपनयनं स समासः, संलेखनकल्प इत्यर्थः। धावनं-कल्पत्रयप्रदा-नम्। शोषणं-सिक्थाद्यवयवानामपनयनं स समासः, संलेखनकल्प इत्यर्थः। धावनं-कल्पत्रयप्रदा-नम्। शोषणं-उद्वापनम्। अपरश्चायं गुण ईदृशे पात्रे भवति-

एगो साहू रुक्खमूले समुद्दिसइ। तेण साहुणा दिसालोगो कओ, न पुन उवरिमारूढो धिज्जाइओ दिट्ठो। तेण सो साहू दरजिमिओ दिट्ठो। ताहे सो ओअरित्ता गाममइगओ। तच्छणेण सिट्ठं गामिल्लयाणं। तेण पुन साहुणा सो ओअरंतो दिट्ठो। ताहे सो भगवं दवदवस्स आउत्तो समुद्दिसिउं तहा संलिहइ जहा नज्जइ धोयं पिव पत्तं। पच्छा सो भगवं मुहपोत्तियाए मुहं पिहेऊण पढंतो अच्छइ। ते आगया पिच्छंति साहुं उवसंतं। कओ एह ? ,कत्तो भिक्खं गहियं ?। तओ भणइ-न ताव हिण्डामि, किं वेला जाया ?। ते अन्नमन्नस्स मुहं पलोइंति। ताहे धिज्जाइओ भणइ-मए दिट्ठो, पलोएह से भायणं ति। पिच्छामो भायणं। तेनं दाइयं। ताहे ते दट्ठण भणंति-तुमं सि पावो मरुगो त्ति॥ अमुमेवार्थं भाष्यकृदाह-॥

[भा.१७१५] आउत्तो सो भगवं, चोक्खं सुइयं च तं कयं पत्तं।
निस्सील-निव्वयाणं, पत्तस्स य दायणा भणिया॥

वृ- स भगवान् तं धिग्जातीयं वृक्षादवतरन्तं दृष्ट्वा 'आयुक्तः' प्रवनचमालिन्यरक्षणाय प्रयत्नपरो बभूव। तस्तेन संलेखनाकल्पकरमेन चोक्खं शुचिकं च कृतं तत् पात्रकम्। ततश्च निशीलनिर्व्रतानां च तेषां ग्रामेयकाणां पात्रकस्य 'दर्शना' 'निरीक्षध्वमिदं यदि भवतामेतद्दर्शने कौतुकमस्ति' इत्येवंलक्षणा भणिता॥

[भा.१७१६] ओभामिओ उ मरुओ, पत्तो साहू जसं च कित्तिं च।
पच्छाइआ य दोसा, वन्नो य पभाविओ तहियं॥

वृ- पात्रे च दर्शिते तैः 'मरुकः' दिग्जातीयोऽपभ्राजितः। यथा-धिग् भवन्तमसद्दोषोद्धोषणकारिणं गुणिषु मत्सरिणमिति। साधुश्च प्राप्तः 'यशश्च' मिथ्यादृष्टिमानमर्दनपराक्रमसमुत्थं 'कीर्त्तिं च' शुचिसमाचाररूपसुकृतप्रभवाम्। प्रच्छादिताश्च दोषाः पानकेन विना तुम्बकेषु वा भोजनकरणसमुत्थाः। वर्णश्च प्रभावितः प्रवचनस्य तत्रावसरे तेन भगवता। एष गुणः शोभनलेपलिप्तस्य पात्रस्येति॥ अथ येषु द्रव्येषु कल्पकरणमवश्यं कर्त्तव्यं तानि दर्शयति-

[भा.१७१७] लेवाड विगइ गोरस, कढिए पिंडरस जहन्न उब्भज्जी।
एएसिं कायव्वं, अकरणे गुरुगा य आणाई॥

वृ- एतानि द्रव्याणि लेपकृतानि। तद्यथा-'विकृतयः' दधि-दुग्धादिकाः, 'गोरसं' तक्रादि, 'कथितं' तीमनादि, 'पिण्डरसाः' खर्जूरादयो यावज्जघन्यतः "उब्भज्जि" त्ति कोद्रवजाउलकम्। 'एतेषां' लेपकृतानां कल्पकरणं कर्त्तव्यम्। यदि न करोति तदा चत्वारो गुरुकाः, आज्ञादयश्च दोषाः, विराधना च संयमादिविषया॥ तामेव भावयति-

[भा.१७१८] संचयपसंगदोसा, निसिभत्तं लेवकुच्छणमगंधं।
दव्वविणासुड्डादी, अवन्न संसज्जणाऽऽहारे॥

वृ- लेपकृतपात्रकस्य कल्पेऽक्रियमाणे यः सञ्चयः-सूक्ष्मसिक्थाद्यवयवपरिवासनरूपस्तस्य प्रसङ्गेन दोषा एते भवेयुः-निशिभक्तं प्रतिसेवितं भवति। लेपस्य च कोथनं-पूतिभवनम्। ततश्च

'अगन्धं' नञः कुत्सार्थत्वादतीवदुर्गन्धि भाजनं भवति । तादृशे च भाजने गृहीतस्य द्रव्यस्य-ओदनादेर्विनाशो भवति । तस्मिन् भुञ्जानस्य च विरसगन्धाघ्राणात ऊर्द्ध्वादीनि भवन्ति। ऊर्द्ध-वमनम्, आदिशब्दादरोचक-मान्द्यादिपरिग्रहः । 'अवर्णश्च' प्रवचनस्योड्डाहो भवति । तथाहि-लोको भिक्षां ददानो दुर्गन्धि भाजनं दृष्ट्वा गर्हते-ईदृशा एवैते अशुचयः पापोपहता इति । ''संसज्जणाऽऽहारे''त्ति दुर्गन्धिनाऽऽहारे पनक-कुन्थुप्रभृतयः प्राणिनः संसजेयुः ।। यत एवमतः-

[भा.१७१९] लेवकडे कायव्वं, परवयणे तिन्नि वार गंतव्वं ।
एवं अप्पा य परो, य पवयणं होंति चत्ताइं ।।

वृ-लेपकृतभाजे कर्त्तव्य कल्पकरणम् । अत्र परः-प्रेरकस्तस्य वचने त्रीन् वारान् कल्पप्रा-योग्यपानकग्रहणार्थं गृहपतिगृहे गन्तव्यमिति । सूरिराह-एवंक्रियमाणे आत्मा च परश्च प्रवचनं च भवन्ति परित्यक्तानीति निर्युक्तिगाथासमासार्थ ।। अथैनामेव विवरीषुराह-

[भा.१७२०] गोउल विरूवसंखडि, अलंभे साधारणं च सव्वेसिं ।
गहियं संती य तहिं, तुक्कुच्छुरसादि लग्गट्ठा ।।

वृ- गच्छे साधवः सुबहवो भवेयुः, तैश्च भिक्षां हिण्डमानैर्गोकुले दुग्ध-दध्यादीनि प्राचुर्येण लब्धानि, 'विरूपायां वा' अनेकभक्ष्य-भोज्यप्रकारायां सङ्खड्यामुत्कृष्टमशनादिद्रव्यं लभ्येत, तैश्च साधुभिः 'अलाभे' अन्यत्र तथाविधस्य दुर्लभद्रव्यस्यासम्प्राप्तौ सर्वेषां साधारणमुपष्टम्भकारक-मिदमिति मत्वा सर्वाण्यपि भक्तभाजनानि भृत्वा पानकप्रतिग्रहेष्वपि गृहीतम् । ततः प्रतिश्रयमागता यावत् पानकेन विना न शक्यते समुद्देष्टुम्, आहारस्य गलके विलगनात्, ततः किं कर्त्तव्यम् ? इत्याह-सन्ति च तत्र तक्रेक्षुरसादीनि, आदिशब्दाद् दुग्धादीनि च, तान्यपान्तराले आपिबेत् । किमर्थम् ? इत्याह-''लग्गट्ठ''त्ति लगनं लग्नम्, भावे क्तप्रत्ययः, आहारस्य गलके विलगनमुत्तूहणं कथं भाजनानि कल्पयितव्यानि ? इत्युच्यते-

[भा.१७२१] मंडलितक्की खमए, गुरुभाणेणं व आनयंति दवं ।
अपरीभोगऽतिरित्ते, लहुओऽनाजीविभाणे य ।।

वृ- यः क्षपकः ''मण्डलितक्की'' मण्डल्युपजीवकस्तस्य भाजनेन गुरूणां भाजनेन वा 'द्रवं' पानकमानयन्ति । अथापरिभोग्येषु भाजनेषु भाजनेषु 'अतिरिक्ते वा' नन्दीभाजने मण्डल्यनुप-जीविक्षपकभाजने वाद्रवमानयन्ति तदा लघुको मासः ।। अथ ''परवचने त्रीन् वारान् गन्तव्यम्'' इति पदं व्याख्यानयति-

[भा.१७२२] भणइ जइ एस दोसो, तो आइमकप्पमाण संलिहिउं ।
अन्नेसिं तदं दाउं, तो गच्छइ बिइय-तइयाणं ।।

वृ- 'भणति' परः प्रेरयति-यद्येषः 'दोष-' प्रायश्चित्तापत्तिलक्षणस्ततोऽहं विधिं भणामि-प्रतिग्रहं संलिख्य तत एकाकी गृहपतिगृहे प्रविश्य 'आदिमकल्पमानं' यावता सर्वसाधुभिरादिमः कल्पः क्रियते तावन्मात्रं द्रवं गृहीत्वाऽन्येषां साधूनां 'तद्' पानकं दत्त्वा ततः स्वयं प्रथमकल्पं करोतु । कृत्वा च ततो गच्छति द्वितीय-तृतीययोः कल्पयोः । इदमुक्तं भवति-द्वितीयकल्पकरणार्थं द्वितीयं वारं तत्र गृहे प्रविश्य तावन्मात्रं द्रवं गृहीत्वा प्राग्वदन्यसाधूनां दत्त्वा द्वितीयकल्पं करोतु, ततः तृतीयं वारं भूयः प्रविश्य तावन्मात्रं गृहीत्वा तथैव तृतीयं कल्पं कृत्वा यावन्मात्रेण शेषभाजनानि

धाव्यन्ते संज्ञाभूमीपानकं च भवति तावन्मात्रं गृहीत्वा समायातु ॥

आचार्य प्राह-एवंकुर्वता आत्मा च परश्चप्रवचनं च परित्यक्तानि भवन्ति । तत्रात्मा कथं त्यक्तो भवति ? इत्युच्यते-

[भा.१७२३] संदंसणेन बहुसो, संलाव-ऽनुराग-केलि आउभया।
देंती नु कंजियं णुं, जइस्स इट्ठो त्ति य भणंति ॥

वृ- तस्यैकाकिनो भूयो भूयस्तद्गृहं प्रविशतो याऽसौ काञ्जिकदात्री अविरतिका तस्याः सम्बन्धिना बहुशः सन्दर्शनेन संलापा-ऽनुराग-केलिप्रभृतय आत्मोभयसमुत्था दोषा भवेयुः । संलापः-सङ्कथा, अनुरागः-सन्दर्शनेन संलापा-ऽनुराग-केलिप्रभृतय आत्मोभयसमुत्था दोषा भवेयुः। संलापः-सङ्कथा, अनुरागः-परस्परमात्यन्तिकी प्रीति, केलि-परिहासः । तथा यद्येष प्रव्रजितकः पुनः पुनरेति याति च तत् किमस्य 'ददती' पानकदायिका इष्टा ? उत काञ्जिकम् ? इत्येवमगारिणस्तमुद्दिश्य भणन्ति । नुशब्द उभयत्रापि वितर्के ॥ प्रवचनं यथा परित्यक्तं भवति तथा दर्शयति-

[भा.१७२४] आयपरोभयदोसा, चउत्थ-तेणट्ठसंकणा णीए।
दोच्चं णु चारिओ णुं, करेइ आयट्ठ गहणाई ॥

वृ- 'आत्मपरोभयदोषाः' आत्मनः-स्वस्मात्रस्याः-काञ्चिकदायिकायास्तदुभयस्माच्च एते दोषा भवेयुः । तद्यथा-चतुर्थे-चतुर्थाश्रवद्वारविषया स्तैनार्थविषया च शङ्का तस्या स्वैर्निजकैः क्रियते। यथा-'नुः' इति वितर्के, किमेष प्रव्रजितकः, कस्याप्युद्भामकस्य मैथुनदौत्यं करोति यदेवमायाति याति च ? यद्वा चारिको भूत्वा चौराणां हेरिकतां कर्तुमित्थमायाति ? यद्वा आत्मार्थमेवायमित्थं करोति ? स्वयमेव मैथुनार्थी हर्तुकामो वेत्यर्थः । इत्थं शङ्कमानास्ते तस्य साधोर्ग्रहणा-ऽऽकर्षणादीनि कुर्यु। ततः प्रवचनं परित्यक्तं भवति ॥ परः कथं परित्यक्तो भवति ? इत्युच्यते-

[भा.१७२५] गिण्हंति सिज्झियाओ, छिद्दं जाउग सवत्तिणीओ अ।
सुत्तत्थेपरिहाणी, निग्गमणे सोहिवुड्ढी य ॥

वृ- गृह्णन्ति 'छिद्रं' दूषणं काञ्जिकदायिकायाः, काः ? इत्याह-'सिज्झिकाः' सहवासिन्यः, प्रातिवेश्मिकस्त्रिय इत्यर्थः, "जाउग" त्ति 'यातरः' ज्येष्ठ-देवरजायाः 'सपत्न्यः' प्रतीताः, यथा-यदेष संयतो भूयो भूयः समायाति तद् नूनमस्या अयमुद्भामक इति । ततो यदा तया सहासङ्खडमुपजायते तदा तत् प्राग्विकल्पितं दूषणं साक्षात् तत्पतेः पुरत उद्गिरन्ति । तथा सूत्रार्थविषया परिहाणि पुनः पुनर्गच्छतो भवि । "निग्गमणे सोहिवुड्ढी य" त्ति त्रीन् चतुरो वा वारान् निर्गमने शोधिवृद्धिश्च तथैव द्रष्टव्या यथा भिक्षाद्वारे प्रागुक्तम् । यत एते दोषा अतो नैकाकिना भूयो भूयो गन्तव्यम् ॥ कथं पुनस्तर्हि गन्तव्यम् ? इत्याह-

[भा.१७२६] संघाडएण एगो, खमए विइयपय वुड्ढमाइन्ने।
पुव्वुद्धि (द्दि) एन करणं, तस्स व असई य उस्सित्ते ॥

वृ- सङ्घाटकेन भावितकुलेषु प्रविश्य पानकं ग्रहीतव्यम् । द्वितीयपदे एकोऽपि यः क्षपको वृद्धो वा अशङ्कनीयः स आकीर्णेषु भावितकुलेषु पानकं गृह्णाति । तच्च पानकं यत् पूर्वमेव

सौवीरिण्याउद्ध तं-पृथक् स्थापितं तेन कल्पकरणं कर्त्तव्यम्। 'तस्य वा' पूर्वोद्ध तस्य 'असति' अभावे उत्सेचनमुत्सिक्तं तदपि कारापणीयम्। एषा पुरातनगाथा ॥

अथैनामेव भाष्यकृद् विवृणोति-

[भा.१७२७]　　भावितकुलेसु धोवितु भायणे आनयंति सेसट्ठा।
　　　　　　तव्विहकुलाण असई, अपरिभोग्गादिसु जयंति ॥

वृ- भावितकुलानि नाम-येषु पूर्वोक्ताः शङ्कादयो दोषा न स्युस्तेषु गत्वा गृहस्थभाजने मण्डल्युपजीविक्षपकभाजने गुरुभाजने वा द्रवं गृहीत्वा स्वकीयभाजनानि धौत्वा शेषाणां भाजनानां धावनार्थं संज्ञाभूमिगतानामाचमनार्थं चापरमपि पानकमानयन्ति। तद्विधानां भावितकुलानाम् 'असति' अभावे अपरिभोग्यादिषु यतन्ते, अपरिभोग्यानि नाम अव्यापार्यमाणभाजनानि तेषु, आदिग्रहणाद् मण्डल्यनुपजीविनः क्षपकस्य भाजनेषु नन्दीभाजने वा, द्रवं गृहीत्वा संसृष्टभाजमानां कल्पं कुर्वन्ति। तत्र पानकं पूर्वोत्सिक्तमेव गृह्णन्ति ॥ ननु यदि सौवीरिणीमुद्वृत्य दीयमानं गृह्णन्ति ततः को दोषः स्यात्? उच्यते-

[भा.१७२८]　　ओअत्तंतम्मि वहो, पानानं तेण पुव्वउस्सित्तं।
　　　　　　असती वुस्सिचणिए, जं पेक्खइ वा असंसत्तं ॥

वृ- "ओयत्तंतम्मि"त्ति प्राकृतत्वात् पुंस्त्वनिर्देशः, सौवीरिण्याम् 'उद्वर्त्यमानायाम्' उत्पट्यमानायां ये तत्र सौवीरगन्धेन कंसारिकादयः प्राणजातीया आयाताः सन्ति तेषां बाधा भवति, तेना कारणेन पूर्वोत्सिक्तं ग्रहीतव्यम्। अथ नास्ति पूर्वोत्सिक्तं ततस्तस्यासति उत्सिञ्चनिकया उत्सिञ्चाप्य यतनया गृह्णन्ति। अथ नास्त्युत्सिञ्चनिका ततो यत् पार्श्वं प्राणिभिरसंसक्तं प्रेक्षन्ते तेनोद्वर्त्य गृहिभाजनं प्रातिहारिकं याचित्वा तत्र द्रवं गृहीत्वा भाजनानि कल्पयन्ति ॥ आह च-

[भा.१७२९]　　गिहिसंति भाण पेहिय, कयकप्पा सेसगं दवं घेत्तुं।
　　　　　　धोअण-पियणस्सट्ठा, अह थोवं गिण्हए अन्नं ॥

वृ- गृहिसत्कं भाजनं प्रत्युपेक्ष्य यदि निर्जीवं भवति तदा तत्र द्रवं गृहीत्वा 'कृतकल्पाः' स्वकीयभाजनानि कल्पयित्वा शेषं द्रवमन्येषां भाजनानां धावनार्थं भुक्तोत्तरकालं च पानार्थम् उपलक्षणत्वात् संज्ञाभूमिगमनार्थं च गृहीत्वा समायान्ति। अथ तत्र स्तोकमेव द्रवं लब्धं ततो यावता पर्याप्तं भवति तावदन्यदपरेषु गृहेषु गृह्णन्ति ॥ अथ "एगो खमए विइयपय वुड्ढमाइन्ने" त्ति पदं व्याख्यानयति-

[भा.१७३०]　जा भुंजि ता वेला, फिट्टइ तो खमग थेरओ वाऽऽणे।
　　　　　　तरुणो वन नायसीलो, नीयल्लग-भावियादीसु ॥

वृ- "जा भुंजइ" तिप्राकृतत्वादेकवचनेन निर्देशः, यावद् वा साधवो भुञ्जते तावत् पानकस्य वेला "फिट्टति" व्यतिक्रामति ततः 'क्षपकः" उपवासिकाः 'स्थविरो वा' वृद्धोऽशङ्कनीय इति कृत्वा कल्पकरणार्थमेकाक्यपि "आने" ति पानकमानयेत्। तरुणो वा यः 'ज्ञातशीलः' दृढधर्मा निर्विकारश्च स एकाक्यपि निजकानां-मातृ-पितृपक्षीयस्वजनानां कुलेषु भावितकुलेषु वा आदिशब्दादन्येष्वपि तथाविधकुलेषु प्रविश्य पानकं गृह्णीयात् ॥ अथात्रैव कल्पकरणद्वारे विध्यन्तरं विभणिषुर्द्वारगाथामाह-

[भा.१७३१] बिइयपय मोय गुरुगा, ठाण निसीयण तुयट्ट धरणं वा ।
गोब्बरपुंछण ठवणा, धोवण छट्ठे य दव्वाइं ॥

वृ- 'द्वितीयपदे' अपवादाख्ये साधवो व्रजिकां गता भवेयुः, तत्र च पानकं न लब्धमिति कृत्वा यदि पात्रं 'मोकेन' प्रश्रवणेनाऽऽचमन्ति ततश्चत्वारो गुरवः । शिष्यः प्राह-यदि मोकेनाऽऽचमने दोषास्ततो रात्रौ स्थानं निषदनं त्वग्वर्त्तनं वा कुर्वन् संसृष्टपात्रकस्य धारणं करोतु । सूरिराह-एवंकुर्वतः संयमा-ऽऽत्मविराधना भवति, ततो गोबरेण-गोमयेन पात्रकस्य प्रोञ्छनं-घर्षणं कृत्वा स्थापनं कर्त्तव्यम् । ततो द्वितीयदिवसे यदि द्रवं ग्रहीतव्यं तदा 'धावनं' कल्पत्रयप्रदानं कर्त्तव्यम् । अथ भक्तं ग्रहीतव्यं ततो न कल्पत्रयं तावव्यम् । "छट्ठे य दव्वाइं" ति शिष्यः प्राह-यद्यधौते पात्रे भक्तं गृह्यते ततो ननु तत्र यान्यवयवद्रव्याणि पर्युषितानि सन्ति तैः षष्ठव्रतमतिचरितं स्यादिति निर्युक्तिगाथासङ्क्षेपार्थः ॥ विस्तरार्थं तु बिभणिषुरह-

[भा.१७३२] वइगा अद्धाणे वा, दव असईए विलंबि सूरे वा ।
जइ मोएणं धोवइ, सेहऽन्नह भिक्ख गंधाई ॥

वृ- व्रजिका-गोकुलं तस्यां कारणे गतानामध्वनि वा वहमानानां 'द्रवस्य' पानकस्य 'असति' अप्राप्तौ 'विलम्बिनि वा' अस्तङ्गतप्राये सूर्ये यदि पानकं नास्ति ततः कथं कल्पः करणीयः ? । अत्र नोदकः स्वच्छन्दमत्या प्रतिवचनमाह-मोकेन तदानीं पात्रमाचमनीयम् । आचार्य प्राह-एवं ते स्वच्छन्दप्ररूपणां कुर्वतो यथाच्छन्दत्वात् चत्वारो गुरवः प्रायश्चित्तम् । यश्च मोकेन पात्रकमाचामति तस्यापि चतुर्गुरवः । कुतः ? इत्याह-यदि मोकेन धावति तदा शैक्षाणाम् अन्यथाभावः-विपरिणमनं भवेत्, विपरिणताश्च प्रतिगमनादीनि कुर्युः । द्वितीये च दिवसे भिक्षार्थं पात्रकेप्रसारिते सति कायिक्याः कुथितो गन्धः समायाति ततो लोकः प्रवचनावर्णवादं कुर्यात्-अहो ! अमीभिरस्थिकापालिका अपि निर्जिता यदेवं पात्रकं परश्रवणेनाचमन्तीति । आदिग्रहणेन श्रावकाणां विपरिणामो भवतीत्यादिपरिग्रहः ॥ अथ भूयः परः प्राह-

[भा.१७३३] भणइ जइ एस दोसो, तो ठाण निसियण तुअट्ट धरणं वा ।
भन्नइ तं तु न जुज्जइ, दु दोस पादे अ हानी य ॥

वृ- भणति परः-यदि 'एषः' शैक्षविपरिणामादिको दोष उपजायते ततो मा मोकेनाऽऽचामतु परं गृहीतेनैव पात्रकेण सकलामपि रात्रिं "ठाण" त्ति ऊर्ध्वस्थितस्तिष्ठतु, तथा यदि न शक्नोति स्थातुं ततः "निसियण" त्ति निषण्णः पात्रकं धारयतु, तथापि यदि न शक्नोति ततस्त्वग्वर्त्तनं कुर्वाणः-तिर्यगनिपन्नः सन् धारयतु । सूरिराह-भण्यते अत्रोत्तरम्-हे नोदक ! तत् तु न युज्यते यद् भवता प्रोक्तम् । कुतः ? इत्याह-"दु दोस" त्ति द्वौ दोषावत्र भवतः, तद्यथा-आत्मविराधना संयमविराधना च । तत्रोर्द्धवस्थितस्योपविष्टस्य वा निद्रया प्रेरितस्य भूमौ निपततः शिरो-हस्त-पादाद्युपघाते आत्मविराधना; पतितः सन् षण्णां कायानामन्यतमं विराधयेदिति संयमविराधना । "पादे अ हानि" त्ति तद् वा पात्रं पतितं सद् भज्येत ततो या पात्रकेण विना परिहाणिस्तन्निष्पन्नं प्रायश्चित्तम् ॥ यत एते दोषा अतोऽयं विधि-

[भा.१७३४] निद्धमनिद्धं निद्धं, गोब्बरपुट्ठं ठविंति पेहित्ता ।
जइ य दवं घेत्तव्वं, बिइयदिणे धोइउं गिण्हे ॥

वृ- लेपकृतं स्निग्धं वा भवेदस्निग्धं वा भवेत् । यदि स्निग्धं ततो गोबरेण-गोमयेन "पुङ्घं" प्रोञ्छितं सुघृष्टं पात्रकं कृत्वा निरवयवीभूतं सत् प्रत्युपेक्ष्य रात्रौ स्थापयन्ति, न धारयन्तीति -भावः । अथास्निग्धं ततः संलेखनकल्पेन सुसंलीढं कृत्वा स्थाप्यते पुनः करीषेण घृष्यते । यदि च द्वितीये दिवसे द्रवं ग्रहीतव्यं ततः 'धावित्वा' त्रि कल्पयित्वा गृह्यते, अथ भक्तं ततोऽधौतेऽपि गृह्यते न कश्चिद् दोषः ।। अत्र परः प्राह-

[भा.१७३५] जइ ओदनो अधोए, घिप्पइ तो अवयवेहि निसिभत्तं ।
तिन्नि य न होंति कप्पा, ता धोवसु जाव निग्गंधं ।

[भा.१७३६] तम्हा गुब्बरपुङ्घं, संलीढं चेव धोविउं हिंडे ।
इहरा मे निसिभत्तं, ओअविअं चेव गुरुमादी ।।

वृ- यद्यधौते पात्रे द्वितीयेऽहनि ओदनो गृह्यते ततो ननु तत्र सूक्ष्मा अवयवाः सन्ति येषां गन्धस्तृतीयेऽप्यहनि लक्ष्यते, तैश्चावयवैस्तथास्थितैः सद्भिर्यदपरं भक्तं तत्र गृह्यते तद् भुञ्जानानां निशिभक्तं भवति । यच्च युष्माभिर्लेपकृतस्य त्रयः कल्पाः शुद्धिकारणतया निर्दिष्टास्तदप्यस्माकं मनसि न रुचिपथियर्त्ति, कल्पत्रये दत्तेऽपि तदीयगन्धस्याघ्रायमाणत्वात् । ततोऽहमित्थं प्ररूपयामि- "ता धोवसु जाव निग्गंधं"ति 'तावद् धाव' तावत् प्रक्षालय यावद् निर्गन्धीभवति; न च बहुभिरपि कल्पैर्निर्गन्धमवति तस्माद् यद् लेपकृतं स्निग्धं तद् गोबरेण-छगणेन प्रोञ्छितं कृत्वा अस्निग्धं तु सुसंलीढं कृत्वा द्वितीये दिवसे 'धावित्वा' कल्पयित्वा भिक्षां हिण्डेत; 'इतरथा' कल्पकरणमन्तरेण "मे" भवतां निसिभक्तमापद्यते, अकृतकल्पे च भाजने गृहीतमपरमपि भक्तम् "ओअवियं" उच्छिष्टं भवति, तच्च 'गुर्वादीनाम्' आचार्योपाध्यायप्रभृतीनां दीयमानं महतीमाशातनामुप-जनयति इत्थं परेणोक्ते सति सति सूरिराह-

[भा.१७३७] भन्नइ न अन्नगंधा, हणंति छट्ठं जहेव उग्गारा ।
तिन्नि य कप्पा नियमा, जइ वि य गंधो जहा लोए ।।

वृ- भण्यतेऽत्र प्रतिवचनम्-अन्नस्य-भक्तस्य गन्धाः 'षष्ठं' रात्रिविरमणव्रतं न घ्नन्ति, यथैवोद्गारा रात्रौ समागच्छन्तोऽपि न षष्ठव्रतमुपघ्नन्ति । तथा पात्रके यद्यपि गन्धः समागच्छति तथापि नियमात् त्रय एव कल्पा दातव्या नाधिका न वा हीनाः, तथा भगवद्भिरुक्तत्वात् । यथा लोकेऽपि प्रतिनियता भाजनशोधनाय मृत्तिकालेपा भवन्ति ।। तथाहि-

[भा.१७३८] वारिखलाणं बारस, मट्टिया छ च्च वाणपत्थाणं ।
मा एत्तिए भणाही, पडिमा भणिया पवयणम्मि ।।

वृ- वारिखलाः-परिव्राजकास्तेषां द्वादश मृत्तिकालेपा भाजनशोधनका भवन्ति । षट् च मृत्तिकालेपाः 'वानप्रस्थानां' तापसानां शौचसाधकाः सञ्जायन्ते । एवं लोकेऽपि स्वस्वसम-यप्रतिपादितानि प्रतिनियतान्येव शौचानि दृष्टानि, अतो हे नोदक ! एतावतः कल्पान् 'मा भण' मा ब्रूहि, तावद् धौतव्यं यावद् निर्गन्धीभवतीत्यप्रतिनियतानित्यर्थः ।तथा 'प्रतिमा' इति मोकप्रतिमा साऽपि प्रवचने भणिता, तस्यां हि मोकमपि पीत्वा साधुः शुचिरेव भवति ।। एतदेव भावयति-

[भा.१७३८] पिह सोयाइ लोए, अम्हं पि अलेवगं अगंधं च ।
मा एत्तिए भणाही, पडिमा भणिया पवयणम्मि ।।

वृ- चारिखलाः-परिव्राजकास्तेषां द्वादश मृत्तिकालेपा भाजनशोधनका भवन्ति । षट् च मृत्तिकालेपाः 'वानप्रस्थानां' तापसानां शौचसाधकाः सञ्जायन्ते । एवं लोकेऽपि स्वस्व-समय-प्रतिपादितानि प्रतिनियतान्येव शौचानि दृष्टानि, अतो हे नोदक ! एतावतः कल्पान् 'मा भण' मा ब्रूहि, तावद् धौतव्यं यावद् निर्गन्धीभवतीत्यप्रतिनियतानित्यर्थः । तथा 'प्रतिमा' इति मोकप्रतिमा साऽपि प्रवचने भणिता, तस्यां हि मोकमपि पीत्वा साधुः शुचिरेव भवति ॥ एतदेव भावयति-

[भा.१७३९] पिह सोयाइ लोए, अम्हं पि अलेवगं अगंधं च ।
मोएण वि आयमनं,दिट्ठं तह मोयपडिमाए ॥

वृ- यथा लोके 'पृथग्' विभिन्नानि शौचानि दृष्टानि तथाऽस्माकमपि त्रिभि कल्पैः प्रदत्तैरलेपकमगन्धं च पात्रकं भवतीति । एवं शौचविधिर्भगवद्भिर्दृष्ट इति । तथा मोकेनाप्याचमनं मोकप्रतिमायां दृष्टमेव ॥ परः प्राह-

[भा.१७४०] जइ निल्लेवमगंधं, पडिकुट्ठं तं कहं नु जिनकप्पे ।
तेसिं चेव अवयवा, रुक्खासि जिना न कुव्वंति ॥

वृ- यदि निर्लेपमगन्धं च सौचं दृष्टं ततः कथं 'नुः' इति वितर्के 'तद्' निर्लेपनं जिनकल्पे प्रतिपन्ने सति 'प्रतिक्रुष्टं' प्रतिषिद्धम् ? , "तेसिं चेव अवयव" त्ति अनिर्लेपिते 'तेषां' जिनकल्पिकानां सनत्वेन सूक्ष्माः पुरीषदेशावयवाः तैरमीषां शुचित्वं न भवति ! सूरिराह-रुक्षाशिनः 'जिनाः' जिनकल्पिका भगवन्तस्ततोऽभिन्नवर्चस्कतया न सन्ति सूक्ष्मा अप्यवयवा अमीषाम्, तदभावाच्च दूरापास्तप्रसरस्तेषां पुरीषगन्ध इति हेतोर्न कुर्वन्ति निर्लेपनम् ॥ आह यद्यभिन्नवर्चस्कताय जिनकल्पिकाः शौचं न कुर्वन्ति तर्हि ये स्थविरकल्पिका अप्यभिन्नोच्चारास्तेषामपि संज्ञामुत्सृज्य किंकारणमवश्यं शौचकरणमुक्तम् ? उच्यते-

[भा.१७४१] थंडिल्लाण अनियमा, अभाविए इड्ढि जुयलमुड्डयरे ।
सज्झाए पडिणीए, न ते जिने जं अणुप्पेहे ॥

वृ- स्थविरकल्पिकाः प्रथमस्थण्डिलाभावे द्वितीयतृतीयचतुर्थान्यपि स्थण्डिलानि गच्छन्ति । तत्र च यदि न निर्लेपयन्ति तत आपातसंलोकसमुत्था अवर्णवादादयो दोषा भवेयुरिति स्थण्डिलानाममनियमादवश्यन्तया शौचं कुर्वन्ति । अभावितो नाम-अपरिणतजिनवचनस्तस्य निर्लेपनाभावे मा भूद् विपरिणाम इति । "इड्ढि" त्ति 'ऋद्धिमान्' राजादीनामन्यतमः प्रव्रजितः स प्रायेण शौचकरणभावित इति तदर्थम् । तथा 'युगलं' बाल-वृद्धद्वयं तत् प्रायेण भिन्वर्चस्कं भवति । 'उड्डयरो नाम' यः समुद्दिशन् संज्ञां वा व्युत्सृजन् चपलतया हस्तादीन्यपि लेपयति । "सज्झाये" त्ति अनिर्लेपिते स्थविरकल्पिकानां स्वाध्यायो न वर्त्तते वाचा कर्त्तुम् । "पडिनीए" त्ति प्रथमस्थण्डिलाभावे द्वितीयादिस्थम्डिलगतस्य शौचकरणमदृष्ट्वा प्रत्यनीक उड्डाहं कुर्यात् । "न ते जिणे" त्ति जिकल्पिके न 'एते' स्थण्डिलानियमादयो दोषा भवन्ति, "जं अणुप्पेहे" त्ति यच्चासौ स्वाध्यायं मनसैवानुप्रेक्षते न वाचा परिवर्त्तयति तेन न निर्लेपयति । स्थविरकल्पिकानां तु मनसा स्वाध्यायकरणेप्रभूतेनापि कालेन न सूत्रार्थौ परिजितौ भवत इति ॥

[भा.१७४२] एमेव अप्पलेवं, सामासेउं जिना न धोवंति ।
तं पि य न निरावयवं, अहाठिईए उ भुञ्जंति ॥

वृ- एवमेव 'अल्पलेपम्' अल्पशब्दस्याभाववाचकत्वादलेपकृतं भाजनं 'समस्य' सम्यक् संलिख्य जिनकल्पिकाः 'न धावन्ति' न कल्पं प्रयच्छन्ति। तच्च भानं यद्यपि न निरवयवं सञ्जायते तथापि 'यथास्थित्यैव' यथास्वकल्पानुपालनादेव शुध्यन्ति, स्थितिरियं तेषां यदेवमेव शुचयो भवन्तीति। यदप्युक्तं भवता प्राक् "अकृतकल्पे भाजने गृहीतं भक्तमुच्छिष्टं भवति" तदपि परिफल्गि-भवति दर्शयति-

[भा. १७४३] मन्नंतो संसट्ठं जं इच्छसि धोवणं बिणे बिइए।
इत्थ वि सुणसु अपंडिय!, जहा तयं निच्छए तुच्छं॥

वृ- संसृष्टं मन्यमानो यद् द्वितीये दिने 'धावनं' कल्पकरणमिच्छसि अत्राप्यर्थे 'शृणु' निशमय हे अपण्डित! यथा 'तकत्' त्वदीयं वचनं 'निश्चये' परमार्थतः 'तुच्छं' असारम्॥ तदेवाह-

[भा. १७४४] सव्वं पि य संसट्ठं, नत्थि असंसट्ठिएल्लयं किंचि।
सव्वं पि य लेवकडं, पाणगजाए कहं सोही॥

वृ- यदि गन्धमात्रेणैव त्वदुक्त्या नीत्या भक्तमुच्छिष्टं भवति ततः सर्वमप्यत्र जगति 'संसृष्टम्' उच्छिष्टमेव विद्यते नास्ति किञ्चिदप्यसंसृष्टम्। एवं 'सर्वमपि' भक्तं पानकं च लेपकृतमुच्छिष्टं भवति अतः पानकजातेन कथं शुद्धिर्भविष्यति?॥ एतदेव भावयति-

[भा. १७४५] खीरं वच्छुच्छिट्ठं, उदगं पि य मच्छ-कच्छभुच्छिट्ठं।
चंदो राहुच्छिट्ठो, पुप्फाणि य महुअरगणेहिं॥

वृ- क्षीरं 'वत्सोच्छिष्टं' वत्सेन स्वमातुः स्तन्यमापिबता संसृष्टम्। तथा उदकमपि मत्स्य-कच्छपोच्छिष्टम्। चन्द्रो राहूच्छिष्टः। पुष्पाणि च मधुकरगणैरुच्छिष्टानि॥

[भा. १७४६] रंधंतीओ बोर्ट्टिति वंजणे खल-गुले य तक्कारी।
संसट्ठमुहा य दवं, पियंति जइणो कहं सुज्झे॥

वृ- तथा अविरतिका राध्नुवन्त्यः 'व्यञ्जनानि' शालनकानि बोटयन्ति 'किं निष्पन्नानि? न वा?' इति परिज्ञानार्थम्। खल-गुलावपि 'तत्कारिणः' तस्य-खलादेः कारिणश्चाक्रिकादयो वोट्टयन्ति। 'संसृष्टमुखाश्च' उच्छिष्टेन मुखेन यतयो यद् द्रवमापिबन्ति तदपि संसृष्टम्। तेन च संसृष्टेन यस्य भाजनस्य कल्पः क्रियते तत् कथं शुध्यति? इति। यत एवमतो न गन्धमात्रेणैव भक्तमुच्छिष्टं भवतीति स्थितम्॥

अथ कल्पकरणे वितथसामाचारीनिष्पन्नं प्रायश्चित्तमाह-

[भा. १७४७] एक्किक्कम्मि उ ठाणे, वितह करिंतस्स मासियं लहुअं।
तिगमासिय तिगपणगा, य होंति कप्पं कुणइ जत्थ॥

वृ- एकैकस्मिन् स्थाने वितथां सामाचारीं कुर्वाणस्य मासिकं लघुकम्। तद्यथा-असंलीढे पात्रके प्रथमं कल्पं करोति १ संलिख्य वा प्रथमं कल्पं कृत्वा तं नापिबति २ द्वितीयं कल्पं पात्रकेऽप्रक्षिप्य बहिर्निर्गच्छति ३ एतेषु त्रिष्वपि स्थानेषु मासलघु। तथा त्रीणि मासिकानि त्रीणि पञ्चकानि च भवन्ति यत्र कल्पं करोति। तद्यथा-न प्रत्युपेक्षते न प्रमार्जयति १ न प्रत्युपेक्षते प्रमार्जयति २ प्रत्युपेक्षते प्रमार्जयति च, नवरं दुःप्रत्युपेक्षितं दुःप्रमार्जितं करोति १ दुष्प्रत्युपेक्षितं सुप्रमार्जितं २ सुप्रत्युपेक्षितं दुष्प्रमार्जितं करोति ३ एतेषु त्रिषु तपःकालविशेषितानि पञ्च

रात्रिन्दिवानि । सुप्रत्युपेक्षितं सुप्रमार्जितमिति चतुर्थो भङ्गः शुद्ध इति ॥ गतं कल्पकरण-द्वारम् । अथ "गच्छसइए अ कप्पे अंबिलमभरिए अ ऊसित्ते" त्ति द्वारमभिधित्सुः प्रथमतः सम्बन्धमाह-

[भा. १७४८] भुत्ते भुंजंतम्मि य, जम्हा नियमा दवस्स उवओगो ।
समहियतरो पयत्तो, कायव्वो पानए तम्हा ॥

वृ- 'भुक्ते' भोजनानन्तरं पानार्थं संज्ञाभूमिगमनार्थं च भुञ्जानानां च उत्सूढलग्नरक्षणार्थं यस्माद् नियमाद् 'द्रवस्य' पानकस्योपयोगो भवति 'तस्माद्' भक्तग्रहणप्रयत्नात् समधिकतरः प्रयत्नः पानकग्रहणे कर्त्तव्य इति, अतस्तद्ग्रहणविधिरुच्यते ॥ इह शतिकेषु सहेषु वा गच्छेषु प्रभूतेन पानकेन कार्यं भवति, तच्च कल्पनीयमेव ग्रहीतव्यम्, अतस्तद्विधिप्रतिबद्धद्वारसङ्ग्रहामिमां गाथामाह-

[भा. १७४९] पानगजाइणियाए, आहाकम्मस्स होइ उप्पत्ती ।
पूती य मीसजाए, कडे य भरिए य ऊसित्ते ॥

वृ- पानकस्य याच्ञायामाधाकर्मण उत्पत्तिर्भवति सा वक्तव्या । ततः "पूइ" त्ति पूतिका "मीस" त्ति स्वगृहयतिमिश्रा स्वगृहपाषण्डिमिश्रा स्वगृहयावदर्थिकमिश्रा च "कडे य" त्ति आधाकृता क्रीतकृता आत्मार्थकृता च अम्लिनी वक्तव्या । "भरिए य" त्ति भरणं भरितमम्लिनी-नामभिधातव्यम् । "ऊसित्ति" त्ति उत्सेचनमुत्सिक्तं तद् वक्तव्यमिति द्वारगाथा-सार्थ ॥

अथ विस्तरार्थमाह-

[भा. १७५०] अन्नन्न दवोभासण, संदेसा पुन्न बेइ घरसामी ।
कल्लं ठवेहि अन्नं, महल्लसोवीरिणिं गेहे ॥

वृ- कोऽपि भद्रको गृहपतिरन्यान्यान् सङ्घाटकान् द्रवस्यावभाषणं कुर्वाणान् दृष्ट्वा तेषां च मध्ये केषाञ्चित् सङ्घाटकानां 'सन्देशं' मुत्कलनं-'गृहीतमग्रेतनैः सङ्घाटकैः पानकम्, नास्तीदानीं भवद्योग्यम्' इति क्रियमाणं निरीक्ष्य "पुन्ने" त्ति पुण्यार्थं गृहस्वामिनीं ब्रवीति-धर्मप्रिये! मा कथनापि साधुं जङ्गमं निधिमिव गृहाङ्गणमायातं प्रतिषेधयेः, किं भवत्या दानधर्मकथावामयं श्लोको नाकर्णितः ?, यथा-

दातुरुन्नतचित्तस्य, गुणयुक्तस्य चार्थिनः ।
दुर्लभः खलु संयोगः, सुबीज-क्षेत्रयोरिव ॥

ततः सा ब्रूयात्-नास्त्येतावतां साधूनां योग्यं काञ्जिकम् । ततोऽसौ गृहपतिर्ब्रूयात्- कल्ये स्थापयान्यां महतीं 'सौवीरिणीम्' अम्लिनीं गेहे येन सर्वेषामपि योग्यंपानकं पूर्यते ॥

एतच्चाकर्ण्य वक्तव्यम्-

[भा. १७५१] मा काहिसि पडिसिद्धो, जइ यूया कुणसु दानमन्नेसिं ।
ते उद्दिट्ठविवज्जी, न यावि निच्चं अहिवडंति ॥

वृ- न कल्पते एवं विधीयमानं ग्रहीतुमतो मा कार्षी । यद्येवं प्रतिषिद्धः स गृहस्वामी ब्रूयात्-'प्रिये ! कुर्यास्त्वं तावदपरां सौवीरिणीम्, यद्येष न ग्रहीष्यति ततोऽन्येषां साधूनां पानकदानं करिष्यते' ततो वक्तव्यम्-तेऽपि साधवः 'उद्दिष्टविवर्जिनः' साधर्मिकमुद्दिश्य कृतं वर्जयितुं

शीलं येषां ते तथा, नापि च नित्यं पानकार्यमभिपतन्ति, अनियतभिक्षाटनशीलत्वादेषाम् ॥ इत्थमुक्ते यद्यसौ गृहस्वामी ब्रूयात्-

[भा.१७५२] अम्ह वि होहिइ कज्जं, घिच्छंति बहू य अन्नपासंडा !
पत्तेयं पडिसेहो, साहारे होइ जयणा उ ॥

वृ-अस्माकमपि भविष्यति कार्यं काञ्जिकेन, ग्रहीष्यन्ति च बहवोऽन्येऽपि युष्मद्व्यतिरिक्ताः पाषण्डिन इति। तत्र साधारणे यतना कर्त्तव्या, यथा-अस्माकं तावन्न कल्पते। "पत्तेयं पडिसेहो" त्ति अथ गृहपतिर्भणति-अन्येऽपि निर्ग्रन्थाः पानकार्यमायास्यन्ति तेभ्यो दास्यते। इत्थं प्रत्येकं निर्ग्रन्थानेवाश्रित्याभिधीयमाने प्रतिषेधः कार्य 'न कल्पते साधूनामित्थं विधीयमानम्' ॥ एवंप्रतिषिद्धेऽपि कोऽपि सप्त सौवीरिणीः स्थापयेत्, ताश्चैताः-

[भा.१७५३]आहाकम्मिय१ सघर२पासंडमीसए३ जाव४ कीय५ पूई६ अत्तकडे७।
एक्केक्कम्मि य सत्त उ, कए य काराविए चेव ॥

वृ- 'आधाकर्मिका' साधूनामेवार्थाय कारिता १ 'स्वगृहयतिमिश्रा' गृहस्य साधूनां चर्थाय निर्मापिता २ 'स्वगृहपाषण्डमिश्रा' गृहस्य पाषण्डिनां चार्थाय कारिता ३ 'यावदर्थिकमिश्रा तु' साध्वर्थं मूल्येन गृहीता 'पूतिकर्मिका' आधाकर्मिकसुधादिना पूरितच्छिद्रा ६ 'आत्मार्थकृता' स्वगृहार्थमेव स्थापिता ७। एतासां सप्तानां सौवीरिणीनामेकैकस्यां सप्त सप्त भरणानि भवन्ति। सप्त च सप्तभिस्ताडिता एकोनपञ्चाशद् भवति। एषा च प्रत्येकं कृते करापिते च सम्भवति। ततो द्वाभ्यां गुण्यते जाता भेदानामष्टानवतिरिति ॥ अथ सप्त भरणानि दर्शयति-

[भा.१७५४] कम्मघरे पासंडे, जावंतिय कीय-पूइ-अत्तकडे।
भरणं सत्तविकप्पं, एक्केक्कीए उ रसिणीए ॥

वृ-आधाकर्मिकं १ स्वगृहयतिमिश्रं २ स्वगृहपाषण्डिमिश्रं ३ यावदर्थिकमिश्रं ४ क्रीतकृतं ५ पूतिकर्मिकम् ६ आत्मार्थकृतं चेति ७ 'सप्तविकल्पं' सप्तप्रकारं भरणमेकैकस्यां 'रसिन्यां' सौवीरिण्यां भवति। अथ किं सप्तैवाम्लिन्यो भवन्ति नाधिकाः ? इत्युच्यते-

[भा.१७५५] सत्त त्ति नवरि नेम्मं, उग्गमदोसा हवंति अन्ने वि।
संजोगा कायव्वा, सत्तहि भरणेहि रसिणीणं ॥

वृ-सप्तेति यदुक्तं तद् 'नवरं' केवलं "नेम्मं" चिह्नम्-उपलक्षणं द्रष्टव्यम्, तेन 'उद्गमदोषाः' औद्देशिकादयः 'अन्येऽपि' यथासम्भवमत्र मन्तव्याः यैः प्रक्षिप्तैरभ्यधिका अप्यम्लिन्यो भवन्ति। अत्र च 'संयोगाः' भङ्गकाः कर्त्तव्याः सप्तभिर्भरणैः सप्तानामेव रसिनीनाम्। तद्यथा-आधाकर्मिका सौवीरिणी भरणमपि तस्यामाधाकर्मिकम् १ आधाकर्मिका सौवीरिणी भरणं स्वगृहयतिमिश्रम् २ एवं सौवीरिणी सैव भरणं तु पाषण्डिमिश्रं ३ यावदर्थिकमिश्रं ४ क्रीतकृतं ५ पूतिकर्मिकम् ६ आत्मार्थकृतम् ७। एवं स्वगृहयतिमिश्रादिष्वपि सौवीरिणीषु प्रत्येकं सप्त सप्त भरणानि योजनीयानि ततश्च कियन्तो भङ्गका उत्तिष्ठन्ते ? इत्याह-

[भा.१७५६] जावइया रसिणीओ, तावइया चेव होंति भरणा वि।
अउणापन्नं भेया, सयग्गसो यावि णेयव्वा ॥

वृ- 'यावत्यः' यावत्सङ्ख्याका रसिन्यः 'तावन्त्येव' तावत्सङ्ख्याकान्येव भवन्ति भरणानि।

ततश्च यदा सप्ताम्लिन्यः सप्त च भरणानि गृह्यन्ते तदा एकनोपञ्चाशद् 'भेदाः' भङ्गका भवन्ति। अथान्यानप्युद्गमदोषान् प्रक्षिप्य बहुतराः सौवीरिण्यो बहुतराणि च भरणानि विवक्ष्यन्ते ततः 'शताग्रशः' शतसङ्ख्यापरिच्छिन्ना अपि भेदा मन्तव्याः ॥अथाधाकर्मिकभरणं भावयति-

मूलभरणं तु बीया, तहि छम्मासा न कप्पए जाव।
तिन्नि दिणा कड्डिए, चाउलउदए तहाऽऽयामे ॥

'मूलभरणं नाम' प्राशुकायामम्लिन्यां राजिकादीनि बीजानि संयतार्थं यत् प्रक्षिप्यन्ते तद्याधाकर्म्मिकम्। अतस्तत्र यदन्यत् प्राशुकमपि क्षिप्यते तत् षन्मासान् यावन्न कल्पते परतस्तु कल्पते। अथ तस्या रसिन्याः सकाशात् तदाधाकर्मिकमाकर्षितं ततस्तस्मिन्नाकर्षिते 'चाउलोदगं' तन्दुलधावनं तथा 'आयामम्' अवावणं यत् तत्र क्षिप्यते तत् त्रीन् दिनान् न कल्पते पूतिकर्मत्वात्, तत ऊर्ध्वं कल्पते ॥ अथ स्वगृहमिश्रादिभरणान्यतिदिशन्नाह-

एमेव सघर-पासंडमीस जाव कीय-पूइ-अत्तकडे।
कय कीयकडे ठविए, तहेव वत्थाइणं गहणं ॥

'एवमेव' आधाकर्मिकभरणवत् स्वगृहमिश्रं पाषण्डमिश्रं यावदर्थिकमिश्रं क्रीतकृतं पूतिकर्म आत्मार्थकृतं च भरणं मन्तव्यम्। वस्त्रादिविषयमप्यतिदेशमाह-''कय'' इत्यादि पश्चार्द्धम्। 'कृते' संयतार्थं निष्पादिते 'क्रीतकृते' मूल्येन गृहीते 'स्थापिते' साध्वर्थं निक्षिप्ते 'तथैव' पानकवद् वस्त्रादीनां ग्रहणं भावनीयम्। एतच्च पश्चार्द्धमुत्तरत्र भावयिष्यते ॥

अथानन्तरोक्तभङ्गकेषु प्रायश्चित्तमाह-

[भा. १७५९] जेन असुद्धा रसिणी, भरणं तुभयं व तत्थ जाऽऽरुवणा।
सुद्धुभय लहूसित्ते, कम्ममजीवे वि मुनिभरणे ॥

वृ- पूर्वोक्तभङ्गकेषु यत्र 'येन' आधाकर्मादिना दोषेणाशुद्धा रसिनी भरणं वा 'उभयं वा' सौवीरिणी-भरणयुगं यत्र येन दोषेण दूषितं तत्र तद्दोषनिष्पन्ना या काचित् प्रत्येकं संयोगतो वा आरोपणा सा वक्ष्यमाणनीत्या वक्तव्या। तथा यत्र रसिनी भरणं चोभयमपि शुद्धं परं संयतार्थं पानकमुत्सिक्तं तत्र लघुमासः। ''कम्ममजीवे वि मुणिभरणे'' त्ति यदजीवमपि-प्राशुकमपि मुनीनां हेतोर्भरणं क्रियते तदप्याधाकर्म मन्तव्यं परं विशोधिकोटिः ॥

अथाधाकर्मादिभेदेष्वारोपणामाह-

[भा. १७६०] तिन्नेव य चउगुरुगा, दो लहुगा गुरुग अंतिमो सुद्धो।
एमेव य भरणे वी, एक्केक्कीए उ रसिणीए ॥

वृ- आधाकर्मणि स्वगृहमिश्रे पाषण्डमि च प्रत्येकं चतुर्गुरुकमिति त्रयश्चतुर्गुरवो भवन्ति। 'द्वयोः' यावदर्थिक-क्रीतकृतयोश्चतुर्लघवः। भक्तपानपूतिके गुरुमासः। उपकरणपूतिके लघुमास इत्यनुक्तमपि दृश्यम्। 'अन्तिमः' आत्मार्थकृतलक्षणो भेदः शुद्धः। एवमेकैकस्यां रसिन्यामुक्तम्। भरणेऽप्येकैकस्मिन्नेवमेव मन्तव्यम् ॥ अथासामेवाम्लिनीनां मध्ये का विशोधिकोटिः ? का वा अविशोधिकोटिः ? इत्यादिचिन्ताचिकीर्षुराह-

[भा. १७६१] संजयकडे य देसे, अप्फासुग फासुगे य भरिए अ।
अत्तकडे वि य ठविएय लहुगो आणाइणो चेव ॥

वृ-संयतानेव केवलानाश्रित्य कृतं 'संयतकृतम्' आधाकर्म। "देसि" त्ति 'देशतः' त्ति 'देशतः' एकदेशेन संयतादीनाश्रित्य कृतं देशकृतम्, स्वगृहमिश्रादिकमित्यर्थः। अप्राशुकेन प्राशुकेन वा संयतार्थं यद् भरणं तदप्याधाकर्म। "अत्तकडे वि य ठविए" त्ति आत्मार्थकृतायामञ्जिन्यां यदात्मार्थं भरणं तदपि यदि श्रमणार्थमुत्सिच्य बहि स्थापयति तदा स्थापनादोष इति कृत्वा न ग्रहीतव्यम्। यदि गृह्णाति तदा लघुको मास आज्ञादयश्च दोषाः। एषा निर्युक्तिगाथा॥

अथैनामेव व्याख्यानयति-

[भा.१७६२] देसकडा मज्झपदा, आदिपदं अंतिमं च पत्तेयं।
उग्गमकोडी व भवे, विसोहिकोडी व जो देसो॥

वृ-यानि 'मध्यपदानि' स्वगृहमिश्र-पाषण्डमिश्र-यावदर्थिकमिश्र-क्रीतकृत-पूतिकर्मलक्षणानि तानि देशकृतान्युच्यन्ते, देशतः स्वगृहार्थं देशतस्तु साध्वाद्यर्थममीषां क्रियमाणत्वात्। यत् पुनः 'आदिपदम्' आधाकर्म 'अन्तिमपदं च' आत्मार्थकृतं तद् द्वितयमपि 'प्रत्येकं' एकपक्षविषयम्, केवलमेव साधुपक्षं स्वगृहपक्षं चोद्दिश्य प्रवृत्तत्वात्। अत्र च यः 'देशः' देशकृतः स्वगृहमिश्रादिको दोषः स उद्गमकोटिर्वा भवेत्, अविशोधिकोटिरित्यर्थः, विशोधिकोटिर्वा। तत्र स्वगृहमिश्रं पाषण्डमिश्रं च नियमादविशोधिकोटी, पूतिकर्म यावदर्थिकमिश्रं क्रीतकृतं चेति त्रीणि विशोधिकोटयः आधाकर्मिकं पुनरेकान्तेनाविशोधिकोटि, आत्मार्थकृतं तु निरवद्यमेवेति॥

[भा.१७६३] जं जीवजुयं भरणं, तदफासुं फासुयं तु तदभावा।
तं पि य हु होइ कम्मं, न केवलं जीवघाएण॥

वृ- यद् 'जीवयुतं' राजिकादिबीजसहितं भरणं तदप्राशुकम्। 'तदभावात्' राजिकादिबीजाभावाद् यद् भरणं तत् प्राशुकम्। तदपि च निर्जीवं भरणं 'हु' निश्चितं संयतार्थं क्रियमाणमाधाकर्म भवति, न केवलं 'जीवघातेन' राजिकादिबीजजन्तूपघातेन निष्पन्नमिति॥

अथोत्सिक्तपदं भावयति-

[भा.१७६४] समणे घर पासंडे, जावंतिय अत्तणो य मुत्तूणं।
छट्ठो नत्थि विकप्पो, उस्सिचणमो जयट्ठाए॥

वृ- काञ्जिकस्य सौवीरिणीतो यद् निष्काशनं तद् उत्सिक्तम्। तच्च पञ्चधा-श्रमणार्थं साधूनामर्थायेत्यर्थः १ स्वगृहयतिमिश्रं २ पाषण्डिमिश्रं ३ यावदर्थिकमिश्रं ४ आत्मार्थकृतम् ५। एतान् पञ्च भेदान् मुक्त्वा अपरः षष्ठो विकल्पो नास्ति यदर्थमुत्सेचनं भवेत्। अत्र चात्मार्थं यद् गृहिभिरुत्सिक्तं तदेव ग्रहीतुं कल्पते न शेषाणीति॥ उक्त आहारविषयो विधिः।

अथोपधिविषयं तमेवाह-

[भा.१७६५] तत पाइयं विंयं पि य, वत्थं एक्केक्कगस्स अट्ठाए।
पाउब्भिन्नं निक्कोरियं च जं जत्थ वा कमइ॥

वृ- वस्त्रमेकैकस्यार्थाय ततं पायितं वितत्तं च वक्तव्यम्। तद्यथा-संयतार्थं ततं संयतार्थं पायितं संयतार्थमेव च विततं १ संयतार्थं ततमात्मार्थं पायितं आत्मार्थमेव विततम् ४, एवमात्मार्थततेनापि चत्वारो भङ्गा लभ्यन्ते, जाता अष्टौ भङ्गाः। अत्र चाष्टमो भङ्ग- शुद्धः, त्रयाणामप्यात्मार्थं कृतत्वात्। एवं स्वगृहमिश्र-पाषण्डमिश्र-यावदर्थिकमिश्रेष्वपि द्रष्टव्यम्, सर्वत्रापि

चाष्टमो भङ्गः शुद्धः, शेषास्तु सर्वेऽप्यशुद्धा इति । पात्रमप्युद्भिन्नं निष्कीर्णं चैवमेव वक्तव्यम् ।
तद्यथा-संयतार्थमुद्भिन्नं संयतार्थं चोत्कीर्णं १ संयतार्थमुद्भिन्नमात्मार्थमुत्कीर्णं २ आत्मार्थमुद्भिन्नं संयतार्थमुत्कीर्णं ३ आत्मार्थमुद्भिन्नम् आत्मार्थमेव चोत्कीर्णम् ४ । अत्र चतुर्थो भङ्गः शुद्धः, शेषास्त्रयोऽप्यशुद्धाः । 'यद् वा' क्रीतकृत-स्थापितादिकं यत्र वस्त्रे पात्रे वा 'क्रमते' अवतरति तत् तत्र सम्यगुपयुज्य योजनीयम् । अत्र च तननं वितननं चाविशोधिकोटि पायनं विशोधिकोटिरित्याचार्यस्य मतम् । परस्तु ब्रवीति-पायनमविशोधिकोटि, कन्दादिजीवोपघात-निष्पन्नत्वात्; तननं वितननं च विशोधिकोटि, जीवोपघातस्यादृश्यमानत्वादिति । अत्र सूरिराह-नास्माकं जीवोपघातेनैवाधाकर्म किन्तु श्रमणार्थं वस्त्रादेर्यत् पर्यायान्तरनयनं तदप्याधाकर्म म -न्तव्यम् ॥

अपि च-

[भा.१७६६] अत्तट्ठियतंतूहिं, समणट्ठ ततो अ पाइय वुतो अ ।
किं सो न होइ कम्मं, फासूण विपज्झिओ जो उ ॥

वृ- आत्मार्थिताः-स्वार्थं निष्पादिता ये तन्तवस्तैः श्रमणार्थं यः पटः तत- पायितो व्यूतश्च सः 'प्राशुकेनापि' स्वार्थमचित्तीकृतेन खलिकाद्रव्यसम्भारेण पायितः सन् किमाधाकर्म न भवति ? त्वदुक्तनीत्या भवतीति भावः ॥

[भा.१७६७] जइ पज्जणं तु कम्मं, इतरमकम्मं स कप्पऊ धोओ ।
अह धोओ वि न कप्पइ, तणणं विणणं च तो कम्मं ॥

वृ- ततो यदि जीवोपघातनिष्पन्नत्वात् पायनमाधाकर्म 'इतरत्' तननं वितननं च 'अकर्म' न आधाकर्मेति तर्हि स पटो धौतः सन् कल्पतां भवतः, अपनीतपायनिकालेपत्वात् । अथ ब्रवीथाः 'धौतोऽप्यसौ न कल्पते' ततस्तननं वितननं चार्थादाधाकर्म संवृत्तमिति सिद्धं नः समीहितम् ॥

गतं ''गच्छसइए अ कप्पे अंबिलभरिए अ ऊसित्ते'' इति द्वारम् । अथ ''परिहरणा अनुजाणे'' त्ति द्वारं व्याख्यानयति-

[भा.१७६८] चोअग जिनकालम्मि, किह परिहरणा जहेव अनुजाणे ।
अइगमणम्मि य पुच्छा, निक्कारण कारणे लहुगा ॥

वृ- नोदकः प्रश्नयति-यदि शतिकेष्वपि गच्छेषु साम्प्रतमित्थमाधाकर्मादयो दोषा जायन्ते तर्हि जिनः-तीर्थकरस्तस्य काले साहेषु गच्छेषु साधवः कथमाधाकर्मादीनां परिहरणं कृतवन्तः ? इति । सूरिराह-यथैव 'अनुयाने' रथयात्रायां साम्प्रतमपि परिहरन्ति तथा पूर्वमपि परिहृत-वन्तः । ''अतिगमणम्मि य पुच्छ'' त्ति शिष्यः पृच्छति-किमनुयाने 'अतिगमनं' प्रवेशनं कर्त्त-व्यम् ? उत न ? इति । आचार्य प्राह-''निक्कारण कारणे लहुग'' त्ति निष्कारणे यदि गच्छति तदा चत्वारो लघवः, कारणे यदि न गच्छति तदाऽपि चत्वारो लघवः ॥

अथैतदेव भावयति-

[भा.१७६९] ण्हाणा-ऽनुजाणमाइसु, जतंति जह संपयं समोसरिया ।
सतसो सहस्ससो वा, तह जिनकले विसोहिंसु ॥

**वृ-** 'स्नानं' इह वर्षान्तः प्रतिनियतदिवसभावी भगवत्प्रतिमयाः स्नात्रपर्वविशेषः, अनुयानं-रथयात्रा, आदिशब्दात् कुल-गण-सङ्घकार्यपरिग्रहः, तेषु स्नाना-ऽनुयानादिषु सङ्घमीलकेषु साम्प्रतमपि 'शतशः' शतसङ्ख्याः 'सहस्रः' सहस्रसङ्ख्याः साधवः समवसृताः सन्तो यथा 'यतन्ते' आधाकर्मादिदोषशोधनायां प्रयत्नं कुर्वते तथा जिनकालेऽपि ते भगवन्तः 'शोधितवन्तः' एषणाशुद्धिं कृतवन्त इत्यर्थः ॥

भूयोऽपि परः प्राह-ननु च 'सर इव सागरः, खद्योत इव प्रद्योतनः, मृग इव मृगेन्द्रः' इत्यादिव-दैदंयुगीनसमवसरणसत्कमेषणाशुद्ध्युपमानं तीर्थकरकालभाविनीमेषणा-शुद्धिमुपमातुम-भिधीयमानं हीनत्वान्न समीचीनम्, अत आह-

[भा.१७७०]　पच्चक्खेण परोक्खं, साहिज्जइ नेव एस हीनुवमा ।
　　जं पुरिसजुगे तइए, वोच्छिन्नो सिद्धिमग्गो उ ॥

**वृ-** इह 'प्रत्यक्षेण' उपमानवस्तुना 'परोक्षम्' उपमेयं वस्तु साक्षादनुपलभ्यमानमपि साध्यते इति शास्त्रे लोके च स्थिति । तथाहि-खुर-ककुद-लाङ्गूल-सास्नाद्यवयवोपलक्षितमध्यक्षवीक्षितं गवादि वस्तु दृष्टान्ततयोपदर्श्य गवयादिकं परोक्षमपि प्रतीतिपथमारोप्यते । एवमत्रापि प्रत्यक्षवीक्ष्यमाणेन साम्प्रतकालीनसमवसरणसत्केनैषणाशोधनेन परोक्षमपि तीर्थकरकाल-भाविसमवसरणसाधूनामेषणाशोधनं साध्यते इति "नेव एस हीनुवम" त्ति न चेयं सर इव सागर इत्यादिवद् हीनोपमा, तीर्थकरकालेऽपि हि सहस्रसङ्ख्या एव साधव एकत्र क्षेत्रे समवसरन्ति स्म, एतावन्तश्च ते साम्प्रतमपि स्नाना-ऽनुयानादौ पर्वणि समवसरन्त उपलभ्यन्ते शोधयन्तश्चैषणाम्, ततोऽनुमीयते तीर्थकरकालेऽप्येवमेव दोषान् शोधितवन्त इति । अपि च श्रीमन्महावीरस्वामी १ श्रीसुधर्मस्वामी २ जम्बूस्वामी ३ चेति त्रीणि पुरुषयुगानि यावदनगाराणां निर्वाण-पदवीगमनमभवत् । तृतीये च पुरुषयुगे निरवृते सति 'सिद्धिमार्गः' क्षपकश्रेणि-केवलोत्पत्त्यादिरूपो व्यवच्छिन्नः, न पुनर्ज्ञान-दर्शन-चारित्ररूपः शास्त्रपरिभाषितः, तस्येदानीमप्यनुवर्त्तमानत्वात् । ततश्च यदि तेषां साधूनामुद्गमादिदोषशोधनं नाभविष्यत ततस्ते सिद्धिमार्गमपि नासादयिष्यन् । अतो निश्चीयते-तेऽपि भगवन्त इत्थमेवैषणाशुद्धिं कृतवन्त इति ॥

अथानुयानविषयो विधिरुच्यते-

[भा.१७७१]　आणाइणो य दोसा, विराहणा होइ संजमा-ऽऽयाए ।
　　एवं ता वच्चंते, दोसा ते अनेगविहा ॥

**वृ-** निष्कारणे अनुयानं गच्छत आज्ञादयश्च दोषाः, विराधना च संयमा-ऽऽत्मनोर्भवति । एवं तावद् व्रजतो मार्गे दोषाः । तत्र प्राप्तानां पुनरनेकविधा दोषाः ॥

तत्र संयमा-ऽऽत्मविराधनां भावयति-

[भा.१७७२]　महिमाउस्सुयभूए, रीयादी न विसोहए ।
　　तत्थ आया य काया य, न सुत्तं नेव पेहणा ॥

**वृ-** महिमा नाम-भगवत्प्रतिमायाः पुष्पारोपणादिपूजात्मकः सातिशय उत्सवस्तस्या दर्शनार्थमुत्सुकभूत ईर्यादिसमितीर्न विशोधयति, आदिशब्दादेषणादिपरिग्रहः । 'तत्र च' ईर्यादीनामशोधने आत्मा च कायाश्च विराध्यन्ते । आत्मविराधना कण्टक-स्थाण्वाद्युपघातेन,

संयमविराधा षन्नां कायानामुपमर्दादिना । तथा त्वरमाणत्वादेव न सूत्रं गुणयति, उपलक्षणत्वादर्थं च नानुप्रेक्षते, नैव प्रतिलेखनां वस्त्र-पात्रादेः करोति, अकालेऽविधिना वा करोति ॥

एवमेते मार्गे गच्छतां दोषा अभिहिताः । अथ तत्र प्राप्तानां ये दोषास्तानभिधित्सुर्द्वारगाथामाह-

[भा. १७७३] चेइय आहाकम्मं, उग्गमदोसा य सेह इत्थीओ ।
नाडग संफासए तंतु खुड्ड निद्धम्मकज्जा य ।

वृ- चैत्यानां स्वरूपं प्रथमतोवक्तव्यम्, तत आधाकर्म, तत उद्गमदोषाः, ततः शैक्षाणां पार्श्वस्थेषु गमनम्, ततः स्त्रीदर्शनसमुत्था दोषाः, ततो नाटकावलोकनप्रभवाः, ततः संस्पर्शनसमुत्थाः, तदनन्तरं तन्तवः-कोलिकजालं तद्विषयाः, तदनु "खुड्ड" त्ति पार्श्वस्थादिक्षुल्लकदर्शनसमुत्थाः, ततो निर्धर्मणां-लिङ्गिनां यानि कार्याणि तदुत्थिताश्च दोषावक्तव्या इति द्वारगाथासमासार्थः ॥

अथैनामेव विवरीषुः प्रथमतश्चैत्यस्वरूपं व्याख्याति-

[भा. १७७४] साहम्मियाण अट्ठा, चउव्विहे लिंगओ जह कुटुंबी ।
मंगल-सासय-भत्तीइ जं कयं तत्थ आदेसो ॥

वृ- चैत्यानि चतुर्विधानि, तद्यथा-साधर्मिकचैत्यानि मङ्गलचैत्यानि शाश्वतचैत्यानि भक्तिचैत्यानि चेति । तत्र साधर्मिकाणामर्थाय यत् कृतं तत् साधर्मिकचैत्यम् । साधर्मिकश्चात्र द्विधा-लिङ्गतः प्रवचनतश्च । तत्रेह लिङ्गतो गृह्यते, स च यथा कुटुम्बी, कुटुम्बी नाम-प्रभूतपरिचारकलोकपरिवृतो रजोहरण-मुखपोतिकादिलिङ्गधारी वारत्तकप्रतिच्छन्दः । तथा मथुरापुर्यां गृहेषु कृतेषु मङ्गलनिमित्तं यद् निवेश्यते तद् मङ्गलचैत्यम् । सुरलोकादौ नित्यस्थायि शाश्वतचैत्यम् । यत्तु भक्त्या मनुष्यैः पूजा-वन्दनाद्यर्थं कृतं कारितमित्यर्थः तद् भक्तिचैत्यम् । 'तेन च' भक्तिचैत्येन 'आदेशः' अधिकारः, अनुयानादिमहोत्सवस्य तत्रैव सम्भवादिति । एषा निर्युक्तिगाथा ॥

अथैनामेव विभावयिषुः साधर्मिकचैत्यं तावदाह-

[भा. १७७५] वारत्तगस्स पुत्तो, पडिमं कासी य चेइयहरम्मि ।
तत्थ य थली अहेसी, साहम्मियचेइयं तं तु ॥

वृ- इहाऽऽवश्यके योगसङ्ग्रहेषु "वारत्तपुरे अभयसेण वारत्ते" इत्यत्र प्रदेशे प्रतिपादितचरितो यो वारत्तक इति नाम्ना महर्षि, तस्य पुत्रः स्वपितरि भक्तिभरापूरिततया चैत्यगृहं कारयित्वा तत्र रजोहरण-मुखवस्त्रिका-प्रतिग्रहधारिणीं पितुः प्रतिमामस्थापयत्, तत्र च 'स्थली' सत्रशाला तेन प्रवर्त्तिता आसीत्, तदेतत् साधर्मिकचैत्यम् । अस्य च साधर्मिकचैत्यस्यार्थाय कृतमस्माकं कल्पते

अथ मङ्गलचैत्यमाह-

[भा. १७७६] अरहंतपइट्ठाए, महुरानयरीए मंगलाइं तु ।
गेहेसु चच्चरेसु य, छन्नउईगामअद्धेसु ॥

वृ- मथुरानगर्यां गृहे कृते मङ्गलनिमित्तमुत्तरङ्गेषु प्रथममर्हत्प्रतिमाः प्रतिष्ठाप्यन्ते, अन्यथा तद् गृहं पतति, तानि मङ्गलचैत्यानि । तानि च तस्यां नगर्यां गेहेषु चत्वरेषु च भवन्ति । न केवलं तस्यामेव किन्तु तत्पुरीप्रतिबद्धा ये षन्नवतिसङ्ख्याका ग्रामार्द्धास्तेष्वपि भवन्ति । इहोत्तरापथानां ग्रामस्य ग्रामार्द्ध इति संज्ञा । आह च चूर्णिकृत्- गामद्धेसु त्ति देसभणिती, छन्नउईगामेसु त्ति भणियं होइ, उत्तरावहाणं एसा भणिइ त्ति ॥

शाश्वतचैत्य-भक्तिचैत्यानि दर्शयति-

[भा.१७७७] निइयाइ सुरलोए, भत्तिकयाइं तु भरहमाईहिं ।
निस्सा-ऽनिस्सकयाइं, जहि आएसो चयसु निस्सं ॥

वृ- 'नित्यानि' शाश्वतचैत्यानि 'सुरलोके' भवनपति-व्यन्तर-ज्योतिष्क-वैमानिकदेवानां भवननगर-विमानेषु, उपलक्षणत्वाद् मेरुशिखर-वैताढ्यादिकूट-नन्दीश्वर-रुचकवरादिष्वपि भवन्तीति । तथा भक्त्या भरतादिभिर्यानि कारितानि अभूतप्यर्थत्वाद् भक्तिकृतानि । अत्र च "जहि आएसो" त्ति येन भक्तिचैत्येन 'आदेशः' प्रकृतम् तद् द्विधा-निश्राकृतमनिश्राकृतं च । निश्राकृतं नाम-गच्छप्रतिबद्धम्, अनिश्राकृतं-तद्विपरीतम् सङ्घसाधारणमित्यर्थः । "चयसु निस्सं"ति यद् निश्राकृतं तत् 'त्यज' परिहर । अनिश्राकृतं तु कल्पते ॥

गतं चैत्यद्वारम् । अथाधाकर्मद्वारमाह-

[भा.१७७८] जीवं उद्दिस्स कडं, कम्मं सो वि य जया उ साहम्मी ।
सो विय तइए भंगे, लिंगादीणं न ससेसु ॥

वृ-जीवमुदिश्य यत् षट्कायविराधनया कृतं सोऽपि च यदि जीवः 'साधर्मिकः' समानधर्मा भवति 'सोऽपि च' साधर्मिकः 'लिङ्गादीनां' 'लिङ्गतः साधर्मिको न प्रवचनतः' इत्यादीनां चतुर्णां भङ्गानां 'तृतीये भङ्गे' 'लिङ्गतः प्रवचनतोऽपि' इत्येवंलक्षणे यदि वर्त्तते न शेषेषु तदेतदाधाकर्म मन्तव्यम् ॥

अथ तीर्थंकरप्रतिमार्थं यन्निर्वर्त्तितं तत् किं साधूना कल्पते न वा ? इत्याशङ्कानिरासार्थमाह-

[भा.१७७९] संवट्टमेह-पुप्फा, सत्थनिमित्तं कया जइ जईणं ।
न हु लब्भा पडिसिद्धुं, किं पुन पडिमट्ठमारद्धं ॥

वृ- शास्ता-तीर्थकरस्तस्य निमित्तं यानि देवैः संवर्त्तकमेघ-पुष्पाणि समवसरणभूमौ कृतानि तानि यीनां यदिप्रतिषेद्धुं न लभ्यानि, तेषां तत्रावस्थातुं यदि कल्पते इति भावः, तर्हि किं पुनः 'प्रतिमार्थम्' अजीवानां प्रतिमानां हेतोरारब्धम् ?, तत् सुतरां न प्रतिषेधमर्हतीत्यभिप्रायः ॥

आह यदि तीर्थकरार्थं संवर्त्तकमेघ-पुष्पाणि कृतानि तर्हि तस्य भगवतस्तानि प्रतिसेवमानस्य कथं न दोषो भवति ? इति उच्यते-

[भा.१७८०] तित्थयरनाम-गोयस्स खयट्ठा अवि य दाणि साभव्वा ।
धम्मं कहेइ सत्था, पूयं वा सेवई तं तु ॥

वृ- तीर्थकरनाम-गोत्रस्य कर्मणः क्षयार्थं 'शास्ता' भगवान् धर्मं कथयति, 'पूजां च' महिमां तामनन्तरोक्तं संवर्त्तकवातप्रभृतिकामासेवते । भगवता हि तीर्थकरनाम-गोत्रं कर्मावश्यवेदनीयम्, विपाकोदयावलिकायामवतीर्णत्वात् । तस्य च वेदनेऽयमेवोपायः-यदग्लान्या धर्मदेशनाकरणं सदेव-मनुजा-ऽसुरलोकविरचितायाश्च पूजाया उपजीवनम् । तं च कहं वेइज्जइ, अगिलाए धम्मदेसणाईहिं । तथा-

उदए जस्स सुरा-ऽसुर-नरवइनिवहेहि पूइओ लोए ।
तं तित्थयरं नामं, तस्स विवागो उ केवलिणो ॥

इति वचनप्रामाण्यात् । 'अपि च' इत्यभ्युच्चये । "दाणि" त्ति निपातो वाक्यालङ्कारे । "साभव्व"

तिस्थो भावः स्वभावः, यथा-''आपो द्रव्याश्चलो वायुः'' इत्यादि, तस्य भावः स्वाभाव्यं तस्मात्। तस्य हि भगवतः स्वभावोऽयं यत् तथाधर्मकथाविधानं पूजायाश्चासेवनम् ॥

इदमेव स्पष्टतरमाह-

[भा.१७८१] खीणकसाओ अरिहा, कयकिच्चो अवि य जीयमनुयत्ती।
पडिसेवंतो वि अओ, अदोसवं होइ तं पूयं ॥

वृ- क्षीणाः-प्रलयमुपगताः कषायाः-क्रोधादयो यस्य स क्षीणकषायः, एवंविधोऽर्हन् तां पूजां प्रतिसेवमानोऽपि न दोषवान्। इयमत्र भावना-यो हि रागादिमान् पूजामुपजीवन् स्वात्मन्युत्कर्षं मन्यते स दोषभाग् भवति, भगवतस्तु क्षीणकषायस्य पूजामुपजीवतोऽपि नास्ति स्वात्मन्युत्कर्षगन्धोऽपि अतो दूरापास्तप्रसरा तस्य सदोषतेति। तथा कृतानि-समापितानि कृत्यानि येन सः 'कृतकृत्यः' कवेलज्ञानलाभाशिष्ठितार्थ। ततः कृतकृत्यत्वादेवासौ पूजामासेवते न च दोषमापद्यते। अपि च जीतम्-'उपजीवनीया सुरा-ऽसुरविरचिता पूजा' इत्येवंलक्षणं कल्पमनुवर्त्तयितुं शीलमस्यासौ जीतानुवर्ती, गाथायां मकारोऽलाक्षणिकः ॥ आह भवत्वेवं परं तीर्थकरस्य तत्प्रतिमाया वा निमित्तं यत् कृतं तत् केन कारणेन यतीनां कल्पते ? उच्यते-

[भा.१७८२] साहम्मिओ न सत्था, तस्स कयं तेण कप्पइ जईणं।
जं पुन पडिमाण कयं, तस्स कहा का अजीवत्ता ॥

वृ- 'शास्ता' तीर्थकरः स साधर्मिको लिङ्गतः प्रवचनतोऽपि न भवति। तथाहि-लिङ्गतः साधर्मिकः स उच्यते यो रजोहरणादिलिङ्गधारी भवति, तच्च लिङ्गमस्य भगवतो नास्ति तथाकल्पत्वात्, अतो न लिङ्गतः साधर्मिकः। प्रवचनतोऽपि साधर्मिकः सोऽभिधीयते यश्चतुर्वर्णसङ्घाभ्यन्तरवर्ती भवति, ''पवयणसंघेगयरे'' इति वचनात्; भगवाँश्च तत्प्रवर्त्तकतया न तदभ्यन्तरवर्ती किन्तु चतुर्वर्णस्यापि सङ्घस्याधिपति, ततो न प्रवचनतोऽपि साधर्मिक इति। अतः 'तस्य' तीर्थकरस्यार्थाय कृतं यतीनां कल्पते। यत् पुनः प्रतिमानामर्थाय कृतं तस्य 'का कथा ?' का वार्त्ता ? सुतरां तत् कल्पते। कुतः ? इत्याह-अजीवत्वात्, जीवमुद्दिश्य हि यत् कृतं तदाधाकर्म भवति, ''जीवं उद्दिस्स कडं'' इति प्रागेवोक्तत्वात्, तच्च जीवत्वमेव प्रतिमानां नास्तीति॥

अथ वसतिविषयमाधाकर्म दर्शयति-

[भा.१७८३] ठाइमठाई ओसरण मंडवा संजयट्ठ देसे वा।
पेढी भूमीकम्मे, निसेवतो अनुमई दोसा ॥

वृ- ''ओसरणे'' समवसरणे बहवः संयताः समागमिष्यन्तीति बुध्या श्रावका धर्मश्रद्धया बहून् मण्डपान् कुर्युः। ते च द्विधा-स्थायिनोऽस्थायिनश्च। ये समवसरणपर्वणि व्यतीते सति नोत्कील्यन्ते ते स्थायिनः, ये पुनरुत्कील्यन्ते तेऽस्थायिनः। पुनरेकैके द्विविधाः-संयतार्थकृता देशकृता वा। ये आधाकर्मिकास्ते संयतार्थकृताः, ये तु साधूनामात्मनश्चार्थाय कृतास्ते देश-कृताः। एतेषु तिष्ठतां तन्निष्पन्नं प्रायश्चित्तम्। तथा 'पीठिका नाम' उपवेशनादिस्थानविशेषाः, ''भूमिकम्मे''त्ति 'भूमिकर्म' विषमाया भूमेः समीकरणम्, उपलक्षणं चेदम्, तेन सम्मार्जनो पलेपनादिपरिग्रहः। एतान्यपि पीठिकादीनि संयतार्थकृतानि देशकृतानि वा भवेयुः। एतानि मण्डपादीनि सदोषानि निषेवमाणस्यानुमतिदोषा भवन्ति, एतेषु क्रियमाणेषु या षण्णां जीवनिकायानां

विराधना सा अनुमोदिता भवतीति भावः ॥

गतमाधाकर्मद्वारम् । अथोद्गमदोष-शैक्षद्वारद्वयमाह-

[भा.१७८४] ठवियग-संछोभादी, दुसोहया होंति उग्गमे दोसा ।
वंदिज्जंते दट्ठुं, इयरे सेहा तहिं गच्छे ॥

वृ- 'बहवः संयताः समायाताः' इति कृत्वा धर्मश्रद्धावान् लोकः संयतार्थं स्थापितं-भक्त-पानादेः स्थापनां कुर्यात् 'गृहमागतानामक्षेपेणैव दास्यामः' इति कृत्वा, "संछोभ"त्ति यानि गृहाणि साधुभिरनेषणीयदानेऽशङ्कनीयानि तेषु शाल्योदन-तन्दुलधावनादिकं भक्त-पानं मोदका-ऽशोकवर्तिप्रभृतीनि वा खाद्यकविधानानि निक्षिपेयुः 'साधूनामागतानां दातव्यानि' इति, आदिशब्दात् क्रीतकृत-प्राभृतिकादिपरिग्रहः । एते उद्गमदोषास्तत्र 'दुःशोध्याः' दुष्परिहार्या भवन्ति । तथा 'इतरान्' पार्श्वस्थादीन् बहुजनेन बन्धमानान् पूज्यमानाँश्च दृष्ट्वा शैक्षाः 'तत्र' पार्श्वस्थादिषु गच्छेयुः ॥

स्त्री-नाटकद्वारद्वयमाह-

[भा.१७८५] इत्थी विउव्वियाओ, भुत्ता-ऽभुत्ताण दट्ठु दोसा उ ।
एमेव नाडइज्जा, सविब्भमा नच्चिय-पगीया ॥

वृ-स्त्रीः 'विकुर्विताः' वस्त्र-विलेपनादिभिरलङ्कृता दृष्ट्वा भुक्ता-ऽभुक्तानां 'दोषाः' स्मृति-कौतुकप्रभवा भवन्ति । एवमेव 'नाटकीयाः' नाट्ययोषितः 'सविभ्रमाः' सविलासा नर्तित-गीतयोः प्रवृत्ता विलोक्य श्रुत्वा च भुक्ता-ऽभुक्तसमुत्था दोषा विज्ञेयाः ॥

संस्पर्शनद्वारमाह-

[भा.१७८६] थी-पुरिसाण उ फासे, गुरुगा लहुगा सई य संघट्टे ।
आया-संजमदोसा, ओभावण-पच्छकम्मादी ॥

वृ-समवसरणे पुष्पारोपणादिकौतुकेन भूयांसः स्त्री-पुरुषाः समायान्ति तेषां सम्मर्देन स्पर्शो भवति । ततः स्त्रीणां स्पर्शे चत्वारो गुरवः, पुरुषाणां स्पर्शे चत्वारो लघवः । स्मृतिश्च सङ्घट्टे भुक्तभोगिनां भवति, चशब्दादभुक्तभोगिनां कौतुकम् । आत्म-संयमविराधनादोषाश्च भवन्ति-आत्मविराधना सम्मर्दे सति हस्त-पादाद्युपघातः, संयमविराधना सम्मर्दे पृथिव्यां प्रतिष्ठिताः षट् काया नावलोक्यन्ते न च परिहर्तुं शक्यन्ते । "ओभावण-पच्छकम्माइ"त्ति साधुना कोऽपि शौचवादी पुरुषः स्पृष्ट स स्नायात्, तं स्नान्तं निरीक्ष्यापरः पृच्छति-किमर्थं स्नासि ? इति, स प्राह-संयतेन स्पृष्ट इति, एवं परम्परया साधूनां जुगुप्सोपजायते, यथा-अहो ! मलिना एते, एवमपभ्राजना पश्चात्कर्म च भवति, आदिशब्दाद् असङ्खडादयो दोषाः ॥

अथ तन्तुद्वारमाह-

[भा.१७८७] लूया कोलिगजालग, कोत्थलकारीय उवरि गेहे य ।
साडिंतमसाडिंते, लहुगा गुरुगा अभत्तीए ॥

वृ-असम्मार्ज्यमाणे चैत्ये भगवत्प्रतिमाया उपरिष्टादेतानि भवेयुः-'लूता नाम' कोलिकपुटकानि, 'कोलिकजालकानि तु' जालकाकाराः कोलिकानां लालातन्तुसन्तानाः, कोत्थलकारी-भ्रमरी तस्याः सम्बन्धि गृहमुपरि भवेत् । यद्येतानि लूतादीनि शाटयति तदा चत्वारो लघवः । अथ न शाटयति

ततो भगवतां भक्ति कृता न भवति, तस्यां चाभक्त्यां चत्वारो गुरुकाः ॥

अथ क्षुल्लकद्वारं निर्द्धर्मकार्यद्वारं च व्याख्यानयति-

[भा.१७८८] घट्टाइ इयरखुड्डे, दट्ठुं ओगुंडिया तहिं गच्छे ।
उक्कुट्ठघर-धणाईववहारा चेव लिंगीणं ॥

[भा.१७८९] छिंदंतस्स अनुमई, अमिलंत अछिंदओ य उक्खिवणा ।
छिद्दाणि य पेहंती, नेव य कज्जेसु साहिज्जं ॥

वृ- इतरे-पार्श्वस्थास्तेषां ये क्षुल्लका घृष्टाः, आदिग्रहणात् "मट्ठा तुप्पोट्ठा पंडुरपडपाउरणा" इत्यादि, तानित्थम्भूतान् दृष्ट्वा संविग्नक्षुल्लकाः 'अवगुण्डिताः' मलदिग्धदेहाः परिभग्नाः सन्तः 'तत्र' तेषां लिङ्गिनामन्तिके गच्छेयुः । तेषां च तत्र मिलितानां परस्परमुत्कृष्टगृहधनादिविषयाः 'व्यवहाराः' विवादा उपढौकन्ते, ते च व्यवहारच्छेदनाय तत्र संविग्नानाकारयन्ति, ततो यदि तेषां व्यवहारश्छिद्यते तदा भवति परिस्फुटस्तेषां गृह-धनादिकं ददतः साधोरनुमतिदोषः । उपलक्षणमिदम्, तेन येषां तद् गृह-धनादिकं न दीयते तेषामप्रीतिक-प्रद्वेषगमनादयो दोषाः । अथ लिङ्गिनामेतद्दोषभयात् प्रथमत एव न मिलन्ति न वा व्यवहारपरिच्छेदं कुर्वन्ति ततः 'उत्क्षेपणा' [illegible] साधूनां [illegible], [illegible]मित्यर्थः । 'छिद्राणि च' दूषणानि ते कषायिताः सन्तः साधूनां प्रेक्षन्ते । नैव च ते 'कार्येषु' राजद्विष्ट-ग्लानत्वादिषु 'साहाय्यं' तन्निर्णक्षममुपष्टम्भं कुर्वते । यत एते दोषा अतो निष्कारणे न प्रवेष्टव्यमनुयानमिति स्थितम् । कारणेषु तु समुत्पन्नेषु प्रवेष्टव्यम् । यदि न प्रविशति तदा चत्वारो लघवः ॥

कानि पुनस्तानि ? इत्युच्यते-

[भा.१७९०] चेइयपूया रायानिमंतणं सन्निवाइ खमग कही ।
संकिय पत्त पभावण, पवित्ति कज्जाइँ उड्डाहो ॥

वृ- अनुयानं गच्छता चैत्यपूजा स्थिरीकृता भवति । राजा वा कश्चिदनुयानमहोत्सवकारकः सम्प्रतिनरेन्द्रादिवत् तस्य निमन्त्रणं भवति । 'संज्ञी' श्रावकः स जिनप्रतिमायाः प्रतिष्ठापनां चिकीर्षति । तथा वादी क्षपको धर्मकथी च तत्र भावनार्थं गच्छति । शङ्कितयोश्च सूत्रार्थयोस्तत्र निर्णयं करोति । पात्रं वा तत्राव्यवच्छित्तिकारकं प्राप्नोति । प्रभावना वा राजप्रव्रजितादिभिस्तत्रगतैर्भवति । प्रवृत्तिश्चाचार्यादीनां कुशलवार्त्तारूपा तत्र प्राप्यते । कार्याणि च कुलादिविषयाणि साधयिष्यन्ते । उड्डाहश्च तत्रगतैर्निवारयिष्यत इति । एतैः कारणैर्गन्तव्यमिति द्वारगाथासमासार्थः ॥

अथ विस्तरार्थं विभणिषुश्चैत्यपूजा-राजनिमन्त्रणद्वारे विवृणोति-

भा.(१७९१] सड्ढावुड्ढी रन्नो, पूयाए थिरत्तणं पभावणया ।
पडिघातो य अणत्थे, अत्था य कया हवइ तित्थे ॥

वृ- कोऽपि राजा रथयात्रामहोत्सवं कारयितुमनास्तन्निमन्त्रणे गच्छद्भिस्तस्य राज्ञः श्रद्धावृद्धि कृता भवति । चैत्यपूजायां स्थिरत्वं प्रभावना च तीर्थस्य सम्पादिता भवति । यच्च जैनप्रवचनप्रत्यनीकाः शासनावर्णवाद-महिमोपघातादिकमनर्थं कुर्वन्ति तस्य प्रतिघातः कृतो भवति । तीर्थे च 'आस्था' स्वपक्ष-परपक्षयोरादरबुद्धिरुत्पादिता भवतीति ॥

अथ संज्ञिद्वारं वादिद्वारं चाह-

[भा.१७९२] एमेव य सन्नीण वि, जिणाण पडिमासु पढमपट्ठवणे।
मा प.वाई विग्घं, करिज्ज वाई अओ विसइ ॥

वृ- संज्ञिनः-श्रावकाः केचिद् जिनानां प्रतिमासु प्रथमतः ''पट्ठवणे''त्ति प्रतिष्ठापनं कर्तुकामास्तेषामपि 'एवमेव' राज्ञ इव श्रद्धावृध्यादिकं कृतं भवति। तथा मा परवादी प्रस्तुतोत्सवस्य विघ्नं कार्षाद् अतो वादी प्रविशति ॥

परवादिनिग्रहे च क्रियमाणे गुणानुपदर्शयति-

[भा.१७९३] नवधम्माण थिरत्तं, पभावणा सासणे य बहुमानो।
अभिगच्छंति य विदुसा, अविग्घ पूया च सेयाए ॥

वृ- 'नवधर्मणाम्' अभिनवश्रावकाणां 'स्थिरत्वं' स्थिरीकरणम्। शासनस्य च प्रभावना भवति, यथा-अहो! प्रतपति पारमेश्वरं प्रवचनं यत्रेदृशा वादलब्धिसम्पन्ना इति। बहुमानश्चान्येषामपि शासने भवति। तथा तं वादिनं 'अभिगच्छन्ति' अभ्यायान्ति 'विद्वांसः' सहृदयास्तद्वाग्मिताकौतुकाकृष्टचिताः, तेषां च सर्वविरत्यादिप्रतिपत्त्या महाँल्लाभो भवति। परवादिना च निगृहीतेन 'अविघ्नं' निप्रत्यूहं पूजा कृता सती स्वपक्ष-परपक्षयोरिह परत्र च श्रेयसे भवति ॥

अथ क्षपकद्वारमाह-

[भा.१७९४] आयाविंति तवस्सी, ओभावणया परप्पवाईणं।
जइ एरिसा वि महिमं, उविंति कारिंति सड्ढा य ॥

वृ-तत्र 'तपस्विनः' षष्ठा-ऽष्टमादिक्षपका आतापयन्ति। ततश्च 'अपभावना' लाघवं 'परप्रवादिनां' परतीर्थिकानां भवति,तेषां मध्ये ईदृशानां तपस्विनामभावात्। श्राद्धाश्च चिन्तयन्ति- यदि तावदीदृशा अपि भगवन्तोऽस्माभि क्रियमाणां 'महिमां' चैत्यपूजां द्रष्टुमायान्ति, तत इत ऊर्ध्वं विशेषत एव तस्यां यत्नं विधास्याम इति प्रवर्द्धमानश्रद्धाका महिमां कुर्वन्ति कारयन्ति च।

अथ कथिकद्वारमाह-

[भा.१७९५] आय-परसमुत्तारो, तित्थविवड्ढी य होइ कहयंते।
अन्नोन्नाभिगमेण य, पूया थिरया य बहुमाणो ॥

वृ- क्षीराश्रवादिलब्धिसम्पन्न आक्षेपणी-संवेजनी-निर्वेदनीभेदात् चतुर्विधां धर्मकथां कथयन् धर्मकथीत्युच्यते। तस्मिन् धर्मं कथयति आत्मनः परस्य च संसारसागरात् समुत्तारः-निस्तरणं भवति। तीर्थविवृद्धिश्च भवति, प्रभूतलोकस्य प्रव्रज्याप्रतिपत्तेः। तथा देशनाद्वारेण पूजाफलमुपवर्ण्य 'अन्यान्याभिगमेन' अन्यान्यश्रावकबोधनेन पूजायां स्थिरता बहुमानश्च कृतो भवति ॥

अथ शङ्कितःपात्रद्वारे व्याख्याति-

[भा.१७९६] निस्संकियं च काहिइ, उभए जं संकियं सुयहरेहिं।
अव्वोच्छित्तिकरं वा, लब्भिहि पत्तं दुपक्खाओ ॥

वृ- 'उभये' सूत्रे अर्थे च यत् तस्य शङ्कितं तत् तत्र श्रुतधरेभ्यः पार्श्वान्निःशङ्कितं करिष्यति। अव्यवच्छित्तिकारकं वा पात्रं द्विपक्षाद् लप्स्यते। द्वौ पक्षौ समाहृतौ द्विपक्षम्, गृहस्थपक्षः संयतपक्षश्चेत्यर्थः ॥

अथ प्रभावनाद्वारमाह-

[भा.१७९७] जाइ-कुल-रूव-धण-बलसंपन्ना इड्ढिमंतनिक्खंता ।
जयणाजुत्ता य जई, समेच्च तित्थंपभाविंति ॥

वृ- जाति-मातृकः पक्षः, कुलं-पैतृकः पक्षः, रूपम-आकृति, धनं-गणिम-धरिम-मेय-परिच्छेद्यभेदाच्चतुर्द्धा तदतिप्रभूतं गृहस्थावस्थायामासीत्, बलं-सहयोधिप्रभृतीनामिव सातिशयं शारीरं वीर्यम्, एतैर्जात्यादिभिर्गुणैः सम्पन्ना ये च 'ऋद्धिमन्निष्क्रान्ताः' राजप्रव्रजितादयो ये च 'यतनायुक्ताः' यथोक्तसंयमयोगकलिता यतयस्ते 'समेत्य' तत्रागत्य तीर्थं प्रभावयन्ति ॥

अपि च-

[भा.१७९८] जो जेन गुणेनऽहिओ, जेन विमा वा न सिज्झए जं तु ।
सो तेण तम्मि कज्जे, सव्वत्थामं न हावेइ ॥

वृ- 'यः' आचार्यादि 'येन' प्रावचनिकत्वादिना गुणेन 'अधिकः' सातिशयः 'येन वा' विद्यासिद्धादिना विना यत् प्रवचनप्रत्यनीकशिक्षणादिकं कार्यं न सिध्यति सः 'तेन' गुणेन तस्मिन् कार्ये 'सर्वस्थाम' सकलमपि वीर्यं न हापयति किन्तु सर्वया शक्त्या तत्र लगित्वा प्रवचनं प्रभावयतीति भावः । उक्तञ्च-

प्रावचनी धर्मकथी, वादी नैमित्तिकस्तपस्वी च ।
जिनवचनज्ञश्च कवि, प्रवचनमुद्भावयन्त्येते ॥

-प्रवृत्तिद्वारमाह-

[भा.१७९९] साहम्मि-वायगाणं, खेम-सिवाणं च लब्भिइ पवित्तिं ।
गच्छिहिति जहिं ताइं, होहिंति न वा वि पुच्छइ वा ॥

वृ-तत्रान्येषां साधर्मिकाणां चिरदेशान्तरगतानां वाचकानां वा-आचार्याणां तत्र प्राप्तः प्रवृत्तिं लप्स्यते । तथा क्षेमं-परचक्राद्युपप्लवाभावः शिवं-व्यन्तरकृतोपद्रवाभावः तयोः, उपलक्षणत्वात् सुभिक्ष-दुर्भिक्षादीनां चागामिसंवत्सरभाविनां प्रवृत्तिं तत्र नैमित्तिकसाधूनां सकाशाद् लप्स्यते । यदि वा यत्र देशे स्वयं गमिष्यति तत्र तानि क्षेमादीनि भविष्यन्ति न वा ? इति साधर्मिकादीन् पृच्छति ॥

कार्योद्गाहद्वारद्वयमाह-

[भा.१८००] कुलमादीकज्जाइं, साहिस्सं लिंगिणो य सासिस्सं ।
जे लोगविरुद्धाइं, करेंति लोगुत्तराइं च ॥

वृ-कालुदीनि-कुल-गण-सङ्घसत्कानि कार्याणि तत्र गतः साधयिष्यामि । लिङ्गिनश्च तत्र गतः 'शासिष्यामि' हितोपदेशदानादिना शिथिष्यामि, ये लिङ्गिनो लोकविरुद्धानि लोकोत्तरविरुद्धानि च प्रवचोड्डाहकारीणि कार्याणि कुर्वन्तीति ॥

आह यद्येतानि कारणानि भवन्ति ततः किं कर्त्त-व्यम् ? इत्याह-

[भा.१८०१] एएहि कारणेहिं, पुव्वं पडिलेहिऊण अइगमणं ।
अद्धाणनिग्गयादी, लग्गा सुद्धा जहा खमओ ॥

वृ- 'एतैः' चैत्यपूजादिभिः कारणैरनुयानं प्रवेष्टव्यमिति निश्चित्य पूर्वं प्रत्युपेक्ष्य ततोऽतिगमनं

कार्यम्। अथाध्वनिर्गताः-ते अध्वानमतिलङ्घ्य सहसैव तत्र प्राप्ताः, आदिशब्दादपूर्वोत्सवादिवक्ष्यमाणकारणपरिग्रहः, एवंविधैः कारणैरप्रत्युपेक्षितेऽपि क्षेत्रे गताः सन्तो यथोक्तां यतनां कुर्वाणा अपि यदि 'लग्नाः' अशुद्धभक्तादिग्रहणदोषमापन्नास्तथापि शुद्धाः। यथा 'क्षपकः' पिण्डनिर्युक्तौ प्रतिपादितचरितः शुद्धं गवेषयन्नपि निगूढबाह्याकारया तथाविधश्राद्धिकया छलितः सन्नाधाकर्मण्यपि गृहीते शुद्धः, अशठपरिणामत्वादिति निर्युक्तिगाथासमासार्थः ॥

अथैनामेव विवृणोति-

[भा.१८०२] नाऊण य अइगमणं, गीए पेसिंति पेहिउं कज्जे।
उवसय भिक्खायरिया, बाहिं उब्भामगादीया ॥

[भा.१८०३] सब्भाविक इयरे वि य, जाणंती मंडवाइणो गीया।
सेहादीण य थेरा, वंदनजुत्तिं बहिं कहए ॥

वृ- चैत्यपूजादिके कार्ये समुत्पन्नेऽनुयानक्षेत्रं प्रत्युपेक्षितुं गीतार्थान् प्रेषयन्ति। ततो ज्ञात्वा सम्यक् क्षेत्रस्वरूपमतगमनं कर्त्तव्यम्। किं पुनस्तत्र प्रत्युपेक्ष्यम्? इत्याह-मौलग्रामे उपाश्रयः, 'बहिः' बाह्यग्रामेषु च उद्भामकाख्या भिक्षाचर्या, आदिशब्दात् तस्यां गच्छतामपान्तराले विश्रामस्थानं मौलग्रामे च भिक्षा-विचारभूमिप्रभृतिकं प्रत्युपेक्ष्यम्। तथा सद्भाविकानितरांश्च मण्डपादीन् गीतार्था जानन्ति, यथा-अमी सद्भावतः स्वार्थं मण्डपाः कृताः, अमी तु संयतार्थं परं कैतवप्रयोगेणास्मानित्थं प्रत्याययन्ति, आदिग्रहणात् पीठिकादिपरिग्रहः। इत्थं तैः प्रत्युपेक्षिते सूरयः सबाल-वृद्धगच्छसहिता अनुयानक्षेत्रं प्रविशन्ति। स्थविराश्च बहिरेव वर्त्तमानाः शैक्षादीनां 'वन्दनयुक्तिं' पार्श्वस्थादिवन्दनविधिं कथयन्ति, मा भूदन्यथा तद्वन्दने तेषां विपरिणाम इति ॥

अथ चैत्यवन्दनविधिमाह-

[भा.१८०४] निस्सकडमनिस्से वा, वि चेइए सव्वहिं थुई तिन्नि।
वेलं च चेइयाणि य, नाउं एक्किक्किया वा वि ॥

वृ- 'निश्राकृते' गच्छप्रतिबद्धे 'अनिश्राकृते वा' तद्विपरीते चैत्ये सर्वत्र तिः स्तुतयो दीयन्ते। अथ प्रतिचैत्यं स्तुतित्रये दीयमाने वेलाया अतिक्रमो भवति, भूयांसि वा तत्र चैत्यानि, ततो वेलां चैत्यानि वा ज्ञात्वा प्रतिचैत्यमेकैका स्तुतिर्दातव्येति ॥

अथ समवसरणविषयं विधिमाह-

[भा.१८०५] निस्सकडे ठाइ गुरू, कइवयसहिएयरा वए वसहिं।
जत्थ पुन अनिस्सकडं, पूरिंति तहिं समोसरणं ॥

वृ- निश्राकृते चैत्ये 'गुरु' आचार्य कतिपयैः परिणतसाधुभिः सहितश्चैत्यमहिमावलोकनार्थं तिष्ठति, 'इतरे' शैक्षादयस्ते 'मा पार्श्वस्थादीन् भूयसा लोकेन पूज्यमानान् दृष्ट्वा तत्र गमनं कार्षुः' इति कृत्वा गुरुभिरनुज्ञाता वसतिं व्रजेयुः। यत्र पुनः क्षेत्रे अनिश्राकृतं चैत्यं तत्राचार्या समवसरणं पूरयन्ति, सभामापूर्य धर्मकथां कुर्वन्तीत्यर्थः ॥

आह किं संविग्नैस्तत्र धर्मकथा कार्या? आहोश्विदसंविग्नैरपि? उच्यते-

[भा.१८०६] संविग्गेहि य कहणा, इयरेहि अपच्चओ न ओवसमो।
पव्वज्जाभिमुहा वि य, तेसु वए सेहमादी वा ॥

वृ- 'संविग्नैः' उद्यतविहारिभि कथना धर्मस्य कर्त्तव्या। कुतः ? इत्याह-इतरे-असंविग्ना-सैर्धर्मकथायां क्रियमाणायां श्रोतृणामप्रत्ययो भवति, नैते यथा वादिनस्तथा कारिण इति। न च तेषाम् 'उपशमः' सम्यग्दर्शनादिप्रतिपत्तिर्भवति। येऽपि च प्रव्रज्याभिमुखाः शैक्षादयो वा अद्याप्य-परिणतजिनवचनास्तेऽपि तेषु व्रजेयुः-शोभनं खल्वेतेऽपि धर्मं कथयन्तीति ॥

आह निश्राकृते चैत्ये यदि तदानीमसंविग्ना न भवन्ति ततः को विधिः ? इत्याह-

**[भा.१८०७]** पूरिंति समोसरणं, अन्नासइ निस्सचेइएसुं पि।
इहरा लोगविरुद्धं, सद्धाभंगो य सड्ढाणं ॥

वृ- 'अन्येषाम्' असंविग्नामसति निश्राकृतेष्वपि चैत्येषु समवसरणं पूरयन्ति। इतरथा 'लोकविरुद्धं' लोकापवादो भवति-अहो ! अमी मत्सरिणो यदेवमन्यदीयं चैत्यम् इति कृत्वा नात्रोपविश्य धर्मकथां कुर्वन्ति। श्रद्धाभङ्गश्च श्राद्धानां भवति, तेषामत्यर्थःमभ्यर्थयमानानामपि तत्र धर्मकथाया अकरणात् ॥

अथ भिक्षाचर्यायां यतनामाह-

**[भा.१८०८]** पुव्वपविट्ठेहि समं, हिंडंती तत्थ ते पमाणं तु।
साभाविअभिक्खाओ, विदंतऽपुव्वा य ठवियादी ॥

वृ-पूर्वप्रविष्ठा नाम-पूर्वं ये क्षेत्रप्रत्युपेक्षणार्थं प्रहितास्तैः समं भिक्षां हिण्डन्ते। तत्र च भिक्षामटतां त एव प्रमाणम्, नागन्तुकैस्तत्र शुद्धा-शुद्धगवेषणा कर्त्तव्या। ते च पूर्वप्रविष्ठा इदं विदन्ति-यदेताः 'स्वाभाविकभिक्षाः' स्वार्थनिष्पादिताः, एतास्तु 'अपूर्वा' संयतार्थं स्थापितनिक्षिप्तादयः॥

स्त्रीसङ्कुलनाटकदर्शनयोर्यतनामाह-

**[भा.१८०९]** वंदेन इंति निंति य, जुव मज्झे थेर इत्थिओ तेनं।
ठंति न य नाडएसुं, अह ठंति न पेह रागादी ॥

वृ-स्त्रीसङ्कुले वृन्देनायान्ति निर्गच्छन्ति च। ये च युवानस्ते मध्ये क्रियन्ते। यतः स्त्रियस्तेन पार्श्वेन 'स्थविराः' वृद्धा भवन्ति, मा भूवन् भुक्ता-भुक्तसमुत्था दोषा इति। यत्र नाटकानि निरीक्ष्यन्ते तत्र न तिष्ठन्ति। अथ कारणतस्तिष्ठन्ति ततः ''न पेह''त्ति नर्त्तक्यादिरूपाणि न प्रेक्षन्ते। सहसा दृष्टिगोचरागतेषु च तेषु रागादीन्न कुर्वन्ति, तेभ्यश्च द्राग् दृष्टिं निवर्त्तयन्ति ॥

तन्तुजालादिषु विधिमाह-

**[भा.१८१०]** सीलेह मंखफलए, इयरे चोयंति तंतुमादीसु।
अभिजोयंति सवित्तिसु, अनिच्छि फेडंतऽदीसंता ॥

वृ- 'इतरे' असंविग्ना देवकुलिका इत्यर्थः तान् तन्तुजाल-लूतापुटकादिषु सत्सु ते साधवो नोदयन्ति। यथा-'शीलयत' परिकर्मयत मङ्खफलकानीव मङ्खफलकानि देवकुलानि। मङ्खो नाम-चित्रफलकव्यग्रहस्तः, तस्य च यदि फलकमुज्ज्वलं भवति ततो लोकः सर्वोऽपि तं पूजयति, एवं यदि यूयमपि देवकुलानि भूयो भूयः सम्मार्जनादिना सम्यगुज्ज्वालयत ततो भूयान् लोको भवतां पूजा-सत्कारं कुर्यात्। अथ ते देवकुलिकाः सवृत्तिकाः-चैत्यप्रतिबद्धगृह-क्षेत्रादिवृत्ति-भोगिनस्ततस्तान् 'अभोयोजयन्ति' गाढं निर्भर्त्सयन्ति, यथा-एक तावद् देवकुलानां वृत्तिमुपजीवथ द्वितीयमेतेषां सम्मार्जनादिसारामपि न कुरुथ। इत्थमुक्ता अपि यदि तन्तुजालादीन्यपनेतुं नेच्छन्ति

ततोऽदृश्यमानाः स्वयमेव 'स्फेटयन्ति' अपनयन्तीत्यर्थः ॥

क्षुल्लकविपरिणामसम्भवे यतनामाह-

[भा.१८११]　　उज्जलवेसे खुड्डे, करिंति उव्वट्टणाइचोक्खे अ।
न य मुच्चंतऽसहाए, दिंति मणुन्ने य आहारे ॥

वृ- क्षुल्लकान् 'उज्ज्वलवेषान्' पाण्डुरपट-चोलपट्टधारिणः उद्वर्तन-प्रक्षालनादिना च चोक्षान्-शुचिशरीरान् कुर्वन्ति। न च ते क्षुल्लकाः 'असहायाः' एकाकिनो मुच्यन्ते। वृषभाश्च तेषां 'मनोज्ञान्' स्निग्ध-मधुरानाहारानानीय ददति, उरभ्रदृष्टान्तेन च प्रज्ञापयन्ति ॥

तमेवाह-

[भा.१८१२]　　आतुरचिन्नाइं एयाइं, जाइं चरइ नंदिओ।
सुक्कत्तणेहि जावेहि, एयं दीहाउलक्खणं ॥

वृ- जहा एगो ऊरणगो पाहुणयनिमित्तं पोसिज्जइ। सो य पीणियसरीरो हलिद्दाइकयंगराओ कयकन्नचूलओ सुहंसुहेणं अभिरमइ। कुमरगा वि य तं नाणाविहेहिं कीडाविसेसेहिं कीला-विंति। तं च एवं लालिज्जमाणं दट्ठूण वच्छगो माऊए नेहेण गोवियं दोहएण य तयनुकंपाए मुक्कमवि खीरं न पिबइ रोसेणं। ताए पुच्छिओ-वच्छ! किं न धावसि ?। तेण भणियं-अम्मो! एस नंदियगो इट्ठेहिं जवसजोगासणेहिं अलंकारविसेसेहि य अलंकारिओ पुत्त इव परिपालिज्जइ, अहं तु मंदभग्गो सुक्काणि तणाणि कयाइ लभामि, ताणि वि न पज्जत्तगाणि, एवं पाणियं पि, न य मं कोइ लालइ। ताए भन्नइ-पुत्त! आउरचिन्नाइं एयाइं, जहा आउरो मरिउकामो जं मग्गइ पत्थं वा अपत्थं वा तं दिज्जइ एवमेसो वि नंदियओ पोसिज्जइ, जया मारिज्जिहिइ तया पच्छिहिसि। अन्नया सो वच्छगो तं नंदियगं पाहुणएसु आगएसु पहिज्जमाणं दट्ठुं तिसिओ वि माऊए थन्नं नाभिलसइ भएणं। ताए भन्नइ-किं पुत्त! भयभीओ सि नेहेण पण्हुयं पि मं न पियसि ?। तेण भन्नइ-कतो मे थन्नाभिलासो ? ननु सो वराओ नंदियओ अज्ज पाहुणएहिं आगएहिं मम अग्गओ विच्छिंग्गियजीहो लोलनयणो विस्सरं रसंतो मारिओ, तब्भया कओ मे पाउमिच्छा ?। ताए भन्नइ-नणु पुत्तय! तया चेव ते कहियं "आउरचिन्नाइं एयाइं" ति, एसतेसिंविवागो अनुपत्तो त्ति ॥

अथाक्षरार्थः-आतुरः-चिकित्साया अविषयभूतो रोगी, तस्य था मर्तुकामस्य पथ्यमपथ्यं वा दीयते एवमयमपि नन्दिको यानि मनोज्ञाहार जातानि चरति तानि आतुरचीर्णानि, अतो वत्स! शुष्कतृणैः 'यापय स्वशरीरं निर्वाहय, यत एतद् दीर्घायुषो लक्षणम्। एवमेतेऽप्यसंविग्नक्षुल्लका यद् मनोज्ञाहारादिभिरुपलाल्यन्ते तद् नन्दिकपोषणवद् द्रष्टव्यम् ॥

अथ निर्द्धर्मकार्येषु यतनामाह-

[भा.१८१३]　न मिलंति लिंगिकज्जे, अच्छंति व मेलिया उदासीना।
बिंति य निब्बंधम्मिं, करेमु तिव्वं खु भे दंडं ॥

वृ- यत्र लिङ्गिनामाक्रुष्टगृह-धनादिकार्याण्युपढौकन्ते तत्र प्रथमत एव न मिलन्ति। अथ तैर्बलामोटिकया मील्यन्ते ततो मेलिता अप्युदासीना आसते। अथ ते ब्रवीरन्-कुरुतास्मदीयस्य व्यवहारस्य परिच्छेदम्। तत एवं निर्बन्धे तैः क्रियमाणे साधवो ब्रुवते-यद्यस्माकं पाश्र्वाद् व्यवहारपरिच्छेदं कारयिष्यथ तत उभयेषामपि भवतां 'तीव्रं दण्डम्' आगमोक्तप्रायश्चित्तलक्षणं

'कुर्म' करिष्याम इति ॥

"अद्धाणनिग्गयादी' इति पदं व्याख्यानयति-

[भा.१८१४] अद्धाणनिग्गयादी, थाणुप्पाइयमहं व सोऊण।
गेलन्न-सत्थवसगा, महाणदी तरिया वा वि ॥

वृ- अध्वनिर्गताः-अध्वानमतिलङ्घ्य सहसैव तत्र प्राप्ताः, आदिशब्दादन्यदप्येवंविधं कारणं गृह्यते। स्थानौत्पातिकमहो नाम-तत्रापूर्व कोऽप्युत्सवविशेषः सहसैव श्राद्धैः कर्तुमारब्धः तं वा श्रुत्वा। यदि वा ये क्षेत्रं प्रत्युपेक्षितुं प्रेष्यनते ते तदानीं ग्लाना-ऽग्लानप्रतिचरणव्यापृता वा। अथवा सार्थवशगाः-ते तत्र सार्थमन्तरेण गंतुं न शक्यते। महानदी वा काचिदपान्तराले तामभीक्ष्णमुत्तरतां बहवो दोषाः। तावन्मात्रा एव वा ते साधवो यावतां मध्यादेकस्याप्यन्यत्र प्रेषणं न संगच्छते। अत एतैः कारणैरप्रत्युपेक्षितेऽपि प्रविशतां न कश्चिद् दोषः ॥

अत्र यतनामाह-

[भा.१८१५] समणुन्नाऽसइ अन्ने, वि पुच्छिउं दानमाइ वज्जिंति।
दव्वाई पेहंता, जइ लग्गंती तह वि सुद्धा ॥

वृ- यदि 'समनोज्ञाः' साम्भोगिकाः पूर्वप्रविष्टाः सन्ति ततस्तैः सह भिक्षामटन्ति। अथ न सन्ति समनोज्ञास्ततः 'अन्यानपि' अन्यसाम्भोगिकानपि पृष्ट्वा दानश्राद्धकुलानि वर्जयन्ति, तेष्वाधाकर्मादिदोषसम्भवात्। शेषेषु कुलेषु पर्यटन्तः "दव्वादी पेहंत" त्ति द्रव्यतः क्षेत्रतः कालतो भावतश्च शुद्धमन्वेषयन्तो यद्यपि कमपि स्थापनादिकं दोषं 'लगन्ति' प्राप्नुवन्ति तथापि शुद्धाः, क्षपकवदशठपरिणामतया श्रुतज्ञानोपयोगप्रवृत्तत्वादिति ॥

गतं 'परिहरणा अनुयाने' इति द्वारम्। अथ पुरःकर्मद्वारमाह-

[भा.१८१६] पुरकम्मम्मि य पुच्छा, किं कस्साऽऽरोवणा य परिहरणा।
एएसिं तु पयाणं, पत्तेयपरूवणं वोच्छं ॥

वृ- पुरःकर्मणि पृच्छा कर्त्तव्या। तद्यथा-किं पुरःकर्म ? कस्य वा पुरःकर्म ? का वा पुरःकर्मण्यारोपणा ? कथं पुरःकर्मणः परिहरणं क्रियते ? एतेषां चतुर्णामपि पदानां प्रत्येकमहं प्ररूपणां वक्ष्ये ॥

तत्र किमिति द्वारस्य प्ररूपणां चिकीर्षु प्रेर्यमुत्थापयन्नाह-

[भा.१८१७] जइ जं पुरतो कीरइ, एवं उट्ठाण-गमनमादीनि।
होंति पुरेकम्मं ते, एमेव य पुव्वकम्मे वि ॥

वृ- परः प्राह-यदि साधोर्भिक्षार्थिनो गृहाङ्गणमागतस्य यत् 'पुरतः' अग्रतः क्रियते तत् पुरःकर्मेति व्यवह्रियते, एवं 'ते' तव यानि दायकस्योत्थान-गमनादीनि कर्माणि साधोरग्रतः क्रियमाणानि तानि सर्वाण्यपि पुरःकर्म भवति। अथ पूर्वार्थवाचकः पुरःशब्द इहाधिक्रियते तत आह-एवमेव च पूर्वकर्मण्यपि द्रष्टव्यम्। किमुक्तं भवति ?-'पुरः-साधोरागमनात् पूर्वं कर्म पुरःकर्म' इत्यस्यामपि व्युत्पत्तौ यान्युत्थानादीनि पूर्वं कृतानि तानि पुरःकर्म प्राप्नुवन्ति ॥

यदि नामेवं ततः का नो हानि ? इति चेद् उच्यते-

[भा.१८१८] एवं फासुमफासुं, न विज्जए न वि य काइ सोही ते।

हंदि हु बहूणि पुरतो, कीरंति कयाणि पुव्वं च ॥

वृ- 'एवं' द्विधाऽपि समासे क्रियमाणे प्राशुकमप्राशुकं वा 'न विद्यते' न ज्ञायते, सर्वस्या अप्युत्थान-गमनादिचेष्टायाः पुर-कर्मत्वप्राप्तेः। अज्ञायमाने च प्राशुका-ऽप्राशुकविभागे शोधिरपि काचिन्नास्ति 'ते' तवाभिप्रायेण, तस्याश्चाभावे चारित्रस्याप्यभाव इति भावः। 'हन्दि' इत्युपप्रदर्शने। 'हुः' इत्यामन्त्रणे। ततश्चैवम्-हे आचार्या! बहूनि पुरतः क्रियन्ते बहूनि च दायकेन पूर्वं कृतानि तानि सर्वाण्यपि पुरः कर्म प्राप्नुवन्ति ॥

अत्र सूरि प्रतिवचनमाह-

[भा.१८१९] कामं खलु पुरसद्दो, पच्चक्ख-परोक्खतो दुहा होइ।
तह वि य न पुरेकम्मं, पुरकम्मं चोदग! इमं तु ॥

वृ- 'कामम्' अनुमतं खलुशब्दोऽवधारणे अनुमतमेवास्माकं यत् पुरःशब्दः प्रत्यक्ष-परोक्षयोर्द्विधा भवति-यदा 'पुरः-अग्रतः कर्म पुरःकर्म' इति व्युत्पत्तिराश्रीयते तदा प्रत्यक्षार्थवाचकः पुरःशब्दः, यदा तु 'पुरः-पूर्वं कर्म पुरःकर्म' तदा परोक्षार्थवाचकः। एवं पुरःशब्दस्यप्रत्यक्ष-परोक्षार्थवाचकतया यद्यप्युत्थानादीनि पुरःकर्म प्राप्नुवन्ति तथापि तानि पुरःकर्म न भवति, किन्तु पुरःकर्म हे नोदक! 'इदं' वक्ष्यमाणं भवति ॥

तदेवाह-

[भा.१८२०] हत्थं वा मत्तं वा, पुव्विं सीतोदएण जं धोवे।
समणट्ठाए दाया, पुरकम्मं तं विजाणाहि ॥

वृ-हस्तंवा मात्रकं वा 'पूर्वं' भिक्षादानात् प्रथमं 'शीतोदकेन' सच्चित्तजलेन यद् दाता श्रमणार्थं 'धावति' प्रक्षालयति तत् पुरःकर्म विजानीहि न शेषमुत्थान-गमनादिकम्, तथासमयपरिभाषया रूढत्वात् ॥

गतं किमिति द्वारम्। अथ कस्येति द्वारस्य प्ररूपणामाह-

[भा.१८२१] कस्स त्ति पुरेकम्मं, जइणो तं पुन पभू सयं कुज्जा।
अहवा पभुसंदिट्ठो, सो पुन सुहि पेस बंधू वा ॥

वृ-कस्य पुनः पुरःकर्म भवति? इति पृच्छायां निर्वचनं 'यतेः' तत्परिहारिणः साधोः पुरःकर्म मन्तव्यम्, तदितरेषां दोषत्वेनानभ्युपगमात्। 'तत् पुनः' पुरःकर्म 'प्रभुः' गृहस्वामी स्वयमेव कुर्यात्, अथवा 'प्रभुसन्दिष्टः' प्रभुणा आदिष्टः। 'स पुनः' प्रभुसन्दिष्टस्त्रिधा, तद्यथा- 'सुहृद्' मित्रम्, 'प्रेष्यः' दासी-दासादि, 'बन्धुः' माता-भगिन्यादि ॥

अथ पुरःकर्मणः सम्भवमाह-

[भा.१८२२] दमए पमाणपुरिसे, जाए पंतीए तान मोत्तूणं।
सो पुरिसो तं वऽन्नं, तं दव्वं अन्नो अन्नं वा ॥

वृ-सङ्खड्यां पङ्क्तिपरिवेषणे नियुक्तः कोऽपि 'द्रमकः' कर्मकरः, एतेन प्रभुसन्दिष्टग्रहणम्; 'प्रमाणपुरुषो वा' देयद्रव्यस्वामी, अनेन च प्रभुग्रहणम्; ततश्च दाता प्रभुर्वा प्रभुसन्दिष्टो वा यस्यां पङ्क्तौ पुरःकर्म कृतवान् तां मुक्त्वा यद्यन्यां पङ्क्तिं सङ्क्रामति तदा यदि परिणतहस्तस्ततः कल्पते। अत्र चाष्टौ भङ्गा भवन्ति-स पुरुषस्तां पङ्क्तिमन्यां वा पङ्क्तिं तद् द्रव्यमन्यद् द्रव्यं वा

इत्यनेन चत्वारो भङ्गाः सूचिताः, एवमन्यः पुरुष इत्यनेनापि चत्वारो भङ्गाः सूच्यन्ते, एवमेते अष्टौ भङ्गाः ॥

एनामेवाष्टभङ्गीं स्पष्टयति-

[भा.१८२३] सो तं ताए १ अन्नाए बिइओ २ अन्न तीए ३ दो वऽन्ने ४।
एमेव य अन्नेन वि, भंगा खलु होंति चत्तारि ॥

वृ-स पुरुषस्तद् द्रव्यं तस्यां पङ्क्ताविति प्रथमः १। स पुरुषस्तद् द्रव्यमन्यस्यां पङ्क्ताविति द्वितीयः २। स पुरुषोऽन्यद् द्रव्यं तस्यां पङ्क्ताविति तृतीयः ३। स पुरुषोऽन्यद् द्रव्यमन्यस्यां पङ्क्ताविति चतुर्थ ४, अत्र च 'द्वे अपि' द्रव्य-पङ्क्ती अन्ये इति। एवमेव चान्यपुरुषपदेनापि चत्वारो भङ्गा भवन्ति। तद्यथ-अन्यः पुरुषस्तद् द्रव्यं तस्यां पङ्क्ती ५ अन्यः पुरुषस्तद् द्रव्यमन्यस्यां पङ्क्तौ ६ अन्यः पुरुषोऽन्यद् द्रव्यं तस्यां पङ्क्तौ ७ अन्यः पुरुषोऽन्यद् द्रव्यमन्यस्यां पङ्क्तौ ८॥ एतेषां मध्याद् येषु यथा कल्पते तदेतद् दर्शयति-

[भा.१८२४] कप्पइ समेसु तह सत्तमम्मि तइयम्मि छिन्नवावारे।
अत्तट्ठियम्मि दोसुं, सव्वत्थ य भयसु कर-मत्ते ॥

वृ- 'समेषु' द्वितीय-चतुर्थ-षष्ठा-ऽष्टमेषु भङ्गेषु ग्रहीतुं कल्पते। तथाहि-द्वितीये तावदन्यस्यां पङ्क्तौ सङ्क्रान्तत्वेन तद् द्रव्यमपि वक्ष्यमाणनीत्या चतुर्थे तु द्रव्यान्तरत्वेनान्यस्यां पङ्क्तौ दीयमानत्वेन च षष्ठे तुपुरुषान्तरेणापरस्यां पङ्क्तौ तद् दरव्यं दीयत इति हेतोः अष्टमे तु तिसृणामपि पुरुष-द्रव्य-पङ्क्तीनामन्यत्वेन परिस्फुटमेव कल्पत इति। तथा सप्तमेऽपि भङ्गे कल्पत एव, पुरुषान्तरेणान्यद्रव्यस्य दीयमानत्वात्। तृतीये तु च्छिन्नव्यापारे सति कल्पते, यः साधुदानार्थं हस्तमात्रकप्रक्षालनव्यापारः कृतः स यदा व्यापारान्तरेण च्छिन्नो भवति तदा तेनैव पुरुषेणान्यद् द्रव्यं तस्यां पङ्क्तौ दीयमानं कल्पत इति भावः। 'द्वयोः' प्रथम-पञ्चमयोर्यदि तद् द्रव्यं तेनात्मार्थितं भवति ततः कल्पते नान्यथा। 'सर्वत्र च' अष्टस्वपि भङ्गेषु कर-मात्रके 'भज' विकल्पय, यदि हस्तो वा मात्रकं वा सस्निग्धमुदकार्द्रं वा न भवति ततः कल्पते अन्यथा तु नेत्येवं भजना कर्तव्ये-त्यर्थः ॥ अथ किमर्थं पुरःकर्म करोति ? इत्याह-

[भा.१८२५] असुसिण चिक्कणे वा, कूरे धुविउं पुनो पुनो देइ।
आयमिऊणं पुव्वं, दइज्ज जइणं पढमयाए ॥

वृ-परिवेषणं कुर्वतो यद्यत्युष्णश्चिक्कणो वा कूरस्तत एकत्र हस्तदाहभयादपरत्र हस्ते विलगनात् कुण्डकादिस्थितेनोदकेन स दाता पुनः पुनः 'धौत्वा' हस्तमार्द्रीकृत्य 'ददाति' परिवेषयतीत्यर्थः, साधोरप्यागतस्य तथैव यदि भिक्षां ददाति तदा पुरःकर्म भवति। यदि वा पूर्वम् 'चम्य' हस्तं मात्रकंवा प्रक्षाल्य प्रथमत एव यतीनां दद्यात् ततोऽन्येभ्यः परिवेषयेत् तदाऽपि पुरःकर्म - भवति ॥ एवं पुरःकर्मणि कृते यद् यत्र कल्पते तदेतद् निर्युक्तिगाथया दर्शयति-

[भा.१८२६] दाऊण अन्नदव्वं, कोई दिज्जा पुनो वि तं चेव।
अत्तट्ठिय-संकामियगहणं गीयत्थसंविग्गे ॥

वृ-तद् अनेषणाकृतं द्रव्यं मुक्त्वा अन्यस्यान्यद् द्रव्यं 'दत्त्वा' परिवेष्य कश्चित् 'तदेव' अनेषणाकृतं द्रव्यं पुनरपि तस्यामन्यस्यां वा पङ्क्तौ साधूनां दद्यात्, एवं छिन्नव्यापारे आत्मार्थितं सत् कल्पते।

अथवा "संकामिय" त्ति तदनेषणाकृतं द्रव्यं स दाता अन्यस्मै परिवेषयेत् स यदि दद्यात् तत एवं सङ्क्रामितं सत् कल्पते। एतच्च ग्रहणं गीतार्थस्यानुज्ञातम्, यतो गीतार्थस्तद् द्रव्यमित्थं गृह्णानोऽपि संविग्नो भवति ॥

एतदेवान्त्यपदं भाष्यकारो भावयति-

[भा.१८२७] गीयत्थग्गहणेणं, अत्तट्ठियमाइ गिण्हई गीतो।
संविग्गग्गहणेणं, तं गिण्हंतो वि संविग्गो ॥

वृ-गीतार्थग्रहणेन कृतेनैतद् ज्ञापितं यद् आत्मार्थितम्, आदिशब्दात् सङ्क्रामितं च तद् आगमप्रमाणतो गीतार्थ एव गृह्णाति नागीतार्थः। संविग्नग्रहणेन तु 'तद्' आत्मार्थितादि गृह्णानोऽपि गीतार्थ संविग्नो भवति नासंविग्न इत्युक्तं भवति ॥ इत्थं पुनः पुरतः कृतमपि न पुरःकर्म भवतीति दर्शयति-

[भा.१८२८] पुरतो वि हु जं धोयं, अत्तट्ठाए न तं पुरेकम्मं।
तं उदउल्लं ससिणिद्धगं व-सुक्खे तहिं गहणं ॥

वृ-यत् 'पुरतोऽपि' साधोरग्रतोऽप्यात्मार्थं धौतं तत् पुरःकर्म न भवति, किन्तु तद् उदकार्द्रं सस्निग्धं वा मन्तव्यम्। 'उदकार्द्रं' बिन्दुसहितम्, 'सस्निग्धं' बिन्दुरहितम्। तस्मिन्नुभयेऽपि 'शुष्के' परिणते ग्रहणं कर्त्तव्यम् ॥

पुरःकर्मोदकार्द्रयोर्विशेषमाह-

[भा.१८२९] तुल्ले वि समारंभे, सुक्के गहणेक्क एक्क पडिसेहो।
अन्नत्थ छूढ ताविय, अत्तट्ठे होइ खिप्पं तु।

वृ-उदकार्द्र-पुरःकर्मणोस्तुल्येऽप्यप्कायसमारम्भे 'एकस्मिन्' उदकार्द्रे शुष्के सति ग्रहणं भवति 'एकस्मिन्' पुरःकर्मणि पुनः शुष्केऽप्यनात्मार्थिते ग्रहणस्य प्रतिषेधः। तथाहि-संयतार्थं द्वाभ्यां पृथक्पृथक्पङ्क्ती पुरःकर्म कृतम्, तच्च परिणतम् उदकार्द्र-सस्निग्धौ न स्तः, परं येनात्मार्थितं तस्य हस्तात् कल्पते, येन तु नात्मार्थितं तस्य हस्ताद् न कल्पते। एवं चिरकालिके पुरःकर्मण्युक्तम्। यत्र तु हस्तो मात्रकं वा तत्क्षणमेव 'अन्यत्र' तक्रादौ प्राशुकद्रव्ये प्रक्षिप्तमग्निना वा तापितं तत्रात्मार्थिते क्षिप्रमपि ग्रहणं कर्त्तव्यम् ॥

गतं कस्येति द्वारम्। अथारोपणाद्वारमाह-

[भा.१८३०] चाउम्मासुक्कोसे, मासिय मज्झे य पंचग जहन्ने।
पुरकम्मे उदउल्ले, ससिणिद्धाऽऽरोवणा भणिया ॥

उदकसमारम्भे पुर-कर्मोत्कृष्टमपराधपदम्, उदकार्द्रं मध्यमम्, सस्निग्धं जघन्यम्। उत्कृष्टे चत्वारो मासा लघवः, मध्यमे लघुमासिकम्, जघन्ये पञ्चरात्रिन्दिवानि। एवं पुरःकर्मोदकार्द्रसस्निग्धेषु यथाक्रममारोपणा भणिता ॥

अथ परिहरणाद्वारमाह-

[भा.१८३१] परिहरणा वि य दुविहा, विहि-अविहीए अ होइ नायव्वा।
पढमिल्लुगस्स सव्वं, बिइयस्स य तम्मि गच्छम्मि ॥

[भा.१८३२] तइयस्स जावजीवं, चउत्थस्स य तं न कप्पए दव्वं।

तद्दिवस एगगहणे, नियट्टगहणे य सत्तमए ।।

वृ- परिहरणाऽपि च द्विविधा-विधिपरिहरणा अविधिपरिहरणा च भवति ज्ञातव्या । अविधिपरिहरणा सप्तविधा-तत्र प्रथमस्य नोदकस्य सर्वमपि द्रव्यजातं स्वगच्छे परगच्छे च यावज्जीवमकल्पनीयम् १, द्वितीयस्य तु तस्मिन्नेव गच्छे यावज्जीवम् २, तृतीयस्य यावज्जीवं तस्यैवैकस्य साधोः सर्वमपि द्रव्यजातम् ३, चतुर्थस्य तु तद् द्रव्यमेकं यावज्जीवम् ४, पञ्चमस्य तु तद्दिवसं सर्वद्रव्याणि ५, षष्ठस्य तु तस्यैवैकद्रव्यस्य ग्रहणं न कल्पते ६, सप्तमस्य निवृत्तः सन् स एव साधुः परिणतेन हस्तेन ग्रहणं करोतीत्यभिप्रायः ७ ।।

अथैतेषामेव पराभिप्रायेण व्याख्यानमाह-

[भा.१८३३] पढमो जावज्जीवं, सव्वेसिं संजयाण सव्वाणि ।
दव्वाणि निवारेई, बीओ पुन तम्मि गच्छम्मि ।।

वृ-प्रथमो नोदको यस्मिन् पुरःकर्म कृतं तत्र यावदसौ पुरःकर्मकारो दाता यदर्थं च तत् पुरःकर्म कृतं तौ यावद् जीवतस्तावत् स्वगच्छ-परगच्छसत्कानां सर्वेषां संयतानां सर्वाणि द्रव्याणि निवारयति। द्वितीयः पुनस्तस्मिन् गच्छे सर्वेषामपि साधूनां यावज्जीवं सर्वद्रव्याणि निवारयति ।।

[भा.१८३४] तइओ जावज्जीवं, तस्सेवेगस्स सव्वदव्वाइं ।
वारेइ चउत्थो पुन, तस्सेवेगस्स तं दव्वं ।।

वृ-तृतीयो ब्रवीति-यदर्थं पुरःकर्म कृतं तस्यैवैकस्य यावज्जीवं सर्वद्रव्याणि न कल्पन्ते । चतुर्थस्तु तदेवैकं द्रव्यं तस्यैवैकस्य यावज्जीवं वारयति ।।

[भा.१८३५] सव्वाणि पंचमो तद्दिणं तु तस्सेव छट्ठो तं दव्वं ।
सत्तमओ नियट्टंतो, गिण्हइ तं परिणयकरम्मि ।।

वृ- पञ्चमो ब्रवीति-तदेवैकं दिनं सर्वाणि द्रव्याणि तदीयगृहे न कल्पन्ते । षष्ठो ब्रूते-तदेवैकं द्रव्यं तस्य गृहे तद्दिनं मा गृह्यताम् । सप्तमः प्राह-'परिणतकरे' परिणताप्काये सति हस्ते भिक्षामटित्वा निवर्त्तमानस्तत्रैव गृहे स एव साधु सर्वद्रव्याणि गृह्णातु न कश्चिद् दोषः ।।

इत्थं परैरुक्ते सति सूरिराह-

[भा.१८३६] एगस्स पुरेकम्मं, वत्तं सव्वे वि तत्थ वारिंति ।
दव्वस्स य दुल्लभता, परिचत्तो गिलाणओ तेहिं ।।

वृ- 'एकस्य' साधोरर्थाय पुरःकर्म यत्र 'वृत्तं' सञ्जातं तत्र ये सर्वेषामेकस्य वा सर्वद्रव्याणि उपलक्षणत्वादेकमपि द्रव्यं यावज्जीवं तद्दिनं वा वारयन्ति तैर्द्रव्यस्य ग्लानप्रायोग्यस्यान्यत्र दुर्लभतया ग्लानः परित्यक्तो मन्तव्यः ।।

एतदेव सविशेषमाह-

[भा.१८३७] जेसिं एसुवएसो, आयरिया तेहि ऊ परिच्चत्ता ।
खमगा पाहुणगा वि य, सुव्वत्तमजाणगा ते उ ।।

वृ- 'येषां' यथाच्छन्दवादिनां 'एषः' सर्वद्रव्यग्रहणादिप्रतिषेधरूप उपदेशस्तैराचार्याः क्षपकाः प्राघूर्णकाश्चपरित्यक्ता द्रष्टव्याः, तत्प्रायोग्यस्य घृतादिद्रव्यस्यान्यत्र दुर्लभत्वात् । ते च 'सुव्यक्तं'

परिस्फुटम् 'अज्ञाः' मूर्खा, अतत्त्ववेदित्वात्। स्वच्छन्दप्ररूपणानिष्पन्नं चामीषां चतुर्गुरु प्रायश्चित्तम्॥ तत्र ये सर्वानपि साधून् परिहारं कारयन्ति ते स्वपक्षसाधनसमर्थं विधिमाहुः-

[भा.१८३८] अद्धाणनिग्गयाई, उब्भामग खमग अक्खरे रिक्खा।
मग्गण कहण परंपर, सुव्वत्तमजाणगा ते वि॥

वृ-यत्र गृहे पुःकर्म कृतं तत्राध्वनिर्गतादयः 'उद्भ्रामका वा' बहिर्ग्रामे भिक्षाटनशीलाः 'अजानन्तो मा प्रविक्षन्' इति कृत्वा क्षपकस्तत्र स्थाप्यते। अथ नास्ति क्षपकस्ततः कुड्यादावक्षराणि लिख्यन्ते, यथा-अत्र पुरःकर्म कृतम्, न केनापि भिक्षा ग्राह्येति। अथ तावक्षराणि लिखितुं न जानीतस्ततो रेखा कर्त्तव्या। अथ कृताऽपि सा केनापि भज्येत ततोऽपरेषां साधूना मार्गणं कृत्वा मिलितानां कथनीयम्-अमुष्मिन् गृहे पुरःकर्म कृतम्। तेऽपि परम्परया सर्वसाधून् ज्ञापयन्ति। इत्थं ये ब्रुवते सुव्यक्तं तेऽप्यज्ञा मन्तव्याः॥

अथैतदेव भावयति-

[भा.१८३९] उब्भामग-ऽणुब्भामग-सगच्छ-परगच्छजाणणट्ठाए।
अच्छइ तहयं खमओ, तस्सऽसइ स एव संघाडो॥

वृ-उद्भ्रामकाणां-बाह्यग्रामे भिक्षाटनं विधायापर्याप्ते भिक्षामटताम् अनुद्भ्रामकाणां-मौलग्रामे भिक्षापरिभ्रमणशीलानां स्वगच्छीयानां परगच्छीयानां च सर्वेषां ज्ञापनार्थं क्षपकस्तत्र गृहे निषन्नस्तिष्ठति। स च यो यः सङ्घाटकस्तत्रागच्छति तस्य तस्य कथयति-अत्र पुरःकर्म कृतं वर्तते। अथ नास्ति क्षपकः पारणकं वा तस्य तद्दिने ततो यदर्थं पुरःकर्म कृतं स एव सङ्घाटकस्तत्र तिष्ठति॥

[भा.१८४०] जइ एगस्स वि दोसा, अक्खर न उ ताइँ सव्वतो रिक्खा।
जइ फुसण संकदोसा, हिंडंता चेव साहंति॥

वृ-अथ तयोरेकः प्रथम-द्वितीयपरीषहपीडितो न शक्नोति स्थातुम् ततः स प्रतिश्रयं व्रजति द्वितीयस्तु तत्रास्ते। अथैकस्य तस्य तिष्ठतः स्त्रीसमुत्थादयो दोषाः ततः कुड्यादिषु पुरःकर्मकरणसूचकान्यक्षराणि लिख्यन्ते। अथ 'न तु' नैव 'तानि' अक्षराणि सर्वेऽपि लिखितुं जानते ततः साधुजनसाङ्केतिकी रेखा करणीया। यदि तस्याः 'स्पर्शना' पादोघातेन मर्दना तद्विषया आशङ्कादोषा भवेयुः, बहुवचननिर्देशादन्योऽपि रेखां करोतीत्याद्याशङ्कापरिग्रहः, ततस्तावेव साधू भिक्षामटन्तावपरेषां साधूनां कथयतः, तेऽपि हिण्डमाना एव परम्परया सर्वसाधूनां कथयन्ति। इत्थं येषां परिहरणविधिस्ते सुव्यक्तमज्ञा मन्तव्याः॥

उपसंहरन्नाह-

[भा.१८४१] एसा अविही भणिया, सतिहा खलु इमा विही होइ।
तत्थाई चरिमदुए, अत्तट्ठियमाइ गीयस्स॥

वृ-एषा अविधिपरिहरणा सप्तविधा भणिता। 'इयं तु' वक्ष्यमाणा विधिपरिहरणा भवति। सा चाष्टविधा। 'तत्र' अष्टानां भङ्गानां मध्याद् यदाद्यं पदं यच्च चरमम्-अन्तिमं प्रकारद्वयं तेषु त्रिषु भेदेषु आत्मार्थिते आदिशब्दात् सङ्क्रामिते च सति गीतार्थस्य ग्रहणं भवति। एतच्च यथास्थानं भावयिष्यते॥

के पुनस्तेऽष्टौ भेदाः ? उच्यन्ते-

[भा.१८४२] एगस्स बीयगहणे १, पसज्जणा तत्थ होइ २ कप्पट्ठी ३ ।
वारण ललियासणिओ ४, गंतूणं ५ कम्म ६ हत्थ ७ उप्फोसे ८ ॥

वृ- "एगस्से"ति विभक्तिव्यत्ययादेकेन पुरःकर्मणि कृते यदि द्वितीयो ददाति तदा तस्य द्वितीयस्य हस्ताद् ग्रहणे विधिर्वक्तव्यः १ । तथा "पसज्जण"त्ति अगीतार्थभिप्रायेण "तत्थ" त्ति 'तत्र' द्वितीयेऽपि दायके 'प्रसजना' प्रसङ्गदोषो भवतीति वक्तव्यम् २ । "कप्पट्ठि"त्ति 'कल्पस्थिकाः' तरुणस्त्रियः केलिप्रियतया अभीक्ष्णं पुरःकर्म यथा कुर्वन्ति तथा निरूपणीयम् ३ । "वारण ललियासणिओ"ति यदि साधुः 'त्वं मा देहि एषा दास्यति' इत्यविधिना पुरःकर्मकारिणीं वारयति तदा ललिताशनिक इति तया यथा गण्यते तथा वक्तव्यम् ४ । "गंतूणं" ति 'गत्वा प्रतिनिवृत्तायास्मै दास्यामि' इति बुध्या यदि दाता हस्तगृहीतया भिक्षया तिष्ठति तदा न कल्पते इति वाच्यम् ५ । "कम्मे"त्ति द्रव्यभावभेदभिन्नं पुरःकर्म यथा भवति तथा दर्शनीयम् ६ । "हत्थ"त्ति तत्र पुरःकर्मणि किं हस्ते उपघातः ? उत मात्रके ? इत्यादि चिन्तनीयम् ७ । "उप्फोसे"त्ति उत्पर्शनं-छन्दनं तद् वस्त्रविषयं वक्तव्यम् इति द्वारगाथासमासार्थः ॥ अथ विस्तरार्थमभिधित्सुराह-

[भा.१८४३] एगेन समारद्धे, अन्नो पुन जो तहिं सयं देइ ।
जयऽजाणगा भवंतो, परिहरियव्वं पयत्तेण ॥

वृ- 'एकेन' दायकेन पुरःकर्मणि समारब्धे साधुना प्रतिषिद्धे तद् द्रव्यं यद्यन्यः स्वयमेव कश्चिद् ददाति तदा ते साधवो यदि 'अज्ञाः' अगीतार्था अगीतार्थमिश्रावा भवन्ति ततः परिहर्त्तव्यं प्रयत्नेन ॥ इदमेव व्यतिरेकेणाह-

[भा.१८४४] समणेहिं अभणंतो, गिहिभणिओ अप्पणो व छंदेणं ।
मोत्तु अजाणग मीसे, गिण्हंति उ जाणगा साहू ॥

वृ- पुरःकर्मकारिणि प्रतिषिद्धे 'श्रमणैः' साधुभिरभण्यमानो यद्यन्यो दाता गृहिणा केनापि भणित आत्मनो वा 'छन्देन' अभिप्रायेण ददाति तदा मुक्त्वा 'अज्ञान्' अगीतार्थान् 'मिश्राँश्च' अगीतार्थमिश्रान् 'ज्ञायकाः' गीतार्थास्तद् द्रव्यमात्मार्थितं गृह्णन्ति ॥

अथ किमर्थमगीतार्थेषु न गृह्यते ? इति सम्बन्धायातं प्रसजनाद्वारं विवृण्वन् तावदगीतार्थाभिप्रायमाह-

[भा.१८४५] अम्हट्ठसमारद्धे, तद्दव्वऽन्नेन किह नु निद्दोसं ।
सविसन्नाहरणेणं, मुज्झइ एवं अजाणंतो ॥

वृ- अस्माकमर्थायाप्कायें समारब्धे सति दायकेन यद् द्रव्यं गृहीतं तद् अन्येन दीयमानं कथं नु निर्दोषम् ? सदोषमेवेति भावः । कुतः ? इत्याह-'सविषान्नाहरणेन' सविषं यद् अन्नं तदुद्दृष्टान्तेन । यथा हि वैरिणोऽर्थाय केनचिद् विषयुक्तं भक्तं कृतं तद् अन्येन दीयमानं किं सदोषं न भवति ? एवमस्मदर्थमुदकस्यारम्भं कृत्वा या भिक्षा गृहीता तां यद्यन्यो ददाति तदा किं दोषो न प्रसजति ? इति । एवमजानन्नगीतार्थो मुह्यति, न पुनर्भावयति, यथा-तद् अन्येन दीयमानं पुरःकर्मैव न भवति । यत एवमतोऽगीतार्थेषु मिश्रेषु वा परिहर्त्तव्यम् ॥ गीतार्थेषु विधिमाह-

[भा.१८४६] एगेन समारद्धे, अन्नो पुन जो तहिं सयं देइ ।

जइ जाणगा य साहू, परिभोत्तुं जे सुहं होइ ॥

वृ-एकेन पुर-कर्मणि समारब्धे यद्यन्यः स्वयं ददाति यदि च 'ज्ञायकाः' गीतार्था साधवस्ततः परिभोक्तुं "जे" इतिपादपूरणे सुखं भवति, परिभोक्तव्यं तदिति भावः ॥ अथवा-

[भा.१८४७] गीयत्थेसु वि भयणा, अन्नो अन्नं व तेण मत्तेणं ।
विप्परिणयम्मि कप्पइ, ससिणिद्धुदउल्ल पडिकुट्ठा ॥

वृ-गीतार्थेष्वपि भजना कार्या । कथम् ? इत्याह-'अन्यः' पुरुषोऽन्यद् वा तद् वा द्रव्यं 'तेन' पुरःकर्मकृतेन मात्रकेण यदि ददाति तदा विपरिणतेऽप्काये आत्मार्थिते च सति कल्पते । यदि तु सस्निग्धमुदकार्द्रं वा दायकस्य पाणितलं भवति ततः प्रतिकुष्टा सा भिक्षा, न कल्पत इत्यर्थः ॥

अथ कल्पस्थिकाद्वारं व्याख्याति-

[भा.१८४८] तरुणीउ पिंडियाओ, कंदप्पा जइ करे पुरेकम्मं ।
पढम-बिइयासु मोत्तुं, सेसे आवज्ज चउलहुगा ॥

वृ- काश्चित् 'तरुण्यः' युवतयः 'पिण्डिताः' एकत्र मिलिताः साधुं समायान्तं दृष्ट्वा परस्परं जल्पन्ति-'एतेषां तावदेतदर्थं धौतेन हस्तेन मात्रकेण वा दीयमानं न कल्पते, अतः पश्यामस्तावदेनम्, अस्माभि स्वलीकृतः किमेष करोति ?' इत्येकया तासं मध्यादुत्थाय पुरःकर्म कृतम्, ततः साधुः प्रतिनिवर्त्तितुं लग्नः; द्वितीया ब्रवीति-प्रतीक्षस्व भगवन् ! अहं ते दास्यामि; ततो भूयोऽप्यागतस्य तस्य तयाऽपि पुरःकर्म कृतम्; ततः प्रतिनिवर्त्तमानं यदि तृतीया काचिदाकारयति तदा ज्ञातव्यम्, यथा-एता मां खलीकुर्वन्ति; अतो न प्रतिनिवर्त्तितव्यम् । अत एवाह-यदि ताः कन्दर्पात् पुरःकर्म कुर्वीरन् ततः प्रथम-द्वितीये तरुण्यौ मुक्त्वा शेषाभिराकारितः प्रतिनिवर्त्तमान आपद्यते चतुर्लघुकम् ॥ अथवारणललिताशनिकद्वारं व्याचष्टे-

[भा.१८४९] पुरकम्मम्मि कयम्मी, जइ भन्नि मा तुमं इमा देउ ।
संकापदं व होज्जा, ललितासणिओ व सुव्वत्तं ॥

वृ- पुरःकर्मणि कृते यदि साधुना दात्री भण्यते 'मा दास्त्वम् इयं ददातु' ततः सा चिन्तयति-अहं विरूपा वृद्धा वा अतो नास्मै प्रतिभामि, इयं तु सुरूपा यौवनमधिरूढा प्रतिभासते । शङ्कापदं वा तस्याश्चेतसि भवेत्-किमेष एतया सह घटितो यदेवमस्याः पार्श्वाद् भिक्षां ग्रहीतुमिच्छति ? यदि वा ब्रूयात्-भवान् सुव्यक्तं ललिताशनिको लक्ष्यते यदेवं यथाभिलषितां परिवेषिकामभिकाङ्क्षसि ॥ अथ गत्वेतिद्वारं व्याख्यानयति

[भा.१८५०] गंतूणपडिनियत्तो, सो वा अन्नो व से तयं देइ ।
अन्नस्स व दिज्जिहिई, परिहरियव्वं पयत्तेणं ॥

वृ-कृतपुरःकर्मा दायको भिक्षां ददानः साधुना प्रतिषिद्धश्चिन्तयति-'यदेष साधुरस्यां गृहपङ्क्तौ गत्वा प्रतिनिवृत्तः समायास्यति तदा दास्यामि' इति तद् द्रव्यं स वा अन्यो वा दायकः "से" तस्मा साधोर्ददाति तदा न कल्पते । अथ यद्येष न गृह्णाति ततः 'अन्यस्य' साधोर्दास्यते इति सङ्कल्पयति ततस्तेनापि परिहर्त्तव्यं तद् भक्तं प्रयत्नेन । एषा निर्युक्तिगाथा ॥

अस्या एव भाष्यकारो व्याख्यानमाह-

[भा.१८५१] पुरकम्मम्मि कयम्मी, पडिसिद्धो जइ भणिज्ज अन्नस्स ।

दाहं ति पडिनियत्ते, तस्स व अन्नस्स व न कप्पे ॥

वृ- पुरःकर्मणि कृते प्रतिषिद्धो दायको यदि भणेत्-अन्यस्मै साधवे दास्यामीति । ततः प्रतिनिवृत्तस्य तस्य वा अन्यस्य वा न कल्पते ॥ तथा-

[भा.१८५२] भिक्खयरस्सऽन्नस्स व, पुव्वं दाऊण जइ दए तस्स ।
सो दाया तं वेलं, परिहरियव्वो पयत्तेणं ॥

वृ-पुरःकर्मणि कृते पूर्वमन्यस्य भिक्षाचरस्य भिक्षां दत्त्वा पश्चादच्छिन्नव्यापारः 'तस्य' साधोर्भिक्षां दद्यात्, स दाता तस्यां वेलायां प्रयत्नेन परिहर्त्तव्य इति ॥

अमुमेवार्थं किञ्चिद्विशेषयुक्तमाह-

[भा.१८५३] अन्नस्स व दाहामी, अन्नस्स व संजमस्स न वि कप्पे ।
अत्तट्ठिए व चरगाइणं च दाहं ति तो कप्पे ॥

वृ-अन्यस्मै वा साधवे दास्यामीति यदि सङ्कल्पयति तदा अन्यस्यापि संयतस्य नैव कल्पते। अथ आत्मार्थयति 'चरकादीनां वा दास्यामि' इति सङ्कल्पयति ततः परिणते हस्ते मात्रके वा कल्पते ॥ अथ कर्मेति द्वारं विवृणोति-

[भा.१८५४] दव्वेण य भावेण य, चउक्क[illegible] पुरेकम्मे ।
सागरिय भावपरिणय, तइओ भावे य कम्मे य ॥

वृ- द्रव्येण च भावेन च 'चतुष्कभजना' चतुर्भङ्गीरचना पुरःकर्मणि भवति । तद्यथा-द्रव्यतः पुरःकर्म न भावतः १ भावतः पुरःकर्म न द्रव्यतः २ द्रव्यतोऽपि भावतोऽपि पुरःकर्म ३ न द्रव्यतो न भावतः पुरःकर्म ४ । अथामीषां भावना-"सागरिय"त्ति ये शौचवादिनोऽभावितास्च गृहस्थास्ते पुरःकर्मणि कृते यदि न गृह्यते ततः 'अशुचयोऽमी' इति मन्येरन्; इत्थं सागारिकभयात् पुर-कर्मकृतेन हस्तादिना भक्तादिकं गृहीत्वाऽपि परिष्ठापयत द्रव्यतः पुरःकर्म भवति न भावत इति । "भावपरिणय"त्ति भिक्षामवतरन् 'पुरःकर्मकृतमपि भक्तादिकं ग्रहीष्ये' इति भावेन परिणतस्तथापि पुरःकर्मकृतं ग्रहीष्यामि' इति भावपरिणतो भिक्षामवतीर्ण प्राप्तं च तेन पुरःकर्मकृतमिति तृतीयभङ्गो द्रष्टव्यः ॥

[भा.१८५५] सुन्नो चउत्थ भंगो, मज्झिल्ला दोन्नि वी पडिक्कुट्ठा ।
सपत्तीइ वि असती, गहणपरिणते पुरेकम्मं ॥

वृ- चतुर्थस्तु (भङ्गः) पुरःकर्म प्रतीत्योभयथाऽपि शून्यः, अयं चात्र निरवद्यः प्रतिपत्तव्यः । 'मध्यमौ' द्वितीय-तृतीयभङ्गौ द्वावपि 'प्रतिक्रुष्टौ' प्रतिषिद्धौ, भावस्याविशुद्धत्वात् । प्रथमभङ्गस्तु शुद्ध इव मन्तव्यः,प्रयोजनापेक्षत्वात् । द्वितीयभङ्गे तु "संपत्तीइ वि असई गहणपरिणए पुरेकम्मं"ति द्रव्यतः सम्प्राप्तावसत्यामपि भावतो ग्रहणपरिणतस्य पुरःकर्म भवति ॥

अस्यैव निर्युक्तिगाथाद्वयस्य भावार्थमाक्षेप-परिहाराभ्यां स्पष्टयितुमाह-

[भा.१८५६] पुरकम्मम्मि कयम्मी, जइ गिण्हइ जइ य तस्स तं होइ ।
एवं खु कम्मबंधो, चिट्ठइ लोए व बंभवहो ॥

वृ-पुरःकर्मणि कृते यदि गृह्णाति, यदि च 'तस्य' यतेः 'तत्' पुरःकर्मग्रहणं प्रतिभावो भवति तदा तृतीयभङ्गो भवतीति वाक्यशेषः । आह पुरःकर्मदोषस्तावद् दायकस्य न भवति, कृतोऽपि

चासौ प्रथमभङ्गे साधोर्गृह्णतोऽपि यदि न भवति, एवं 'खुः' अवधारणे पुरःकर्मकृतः कर्मबन्धो दायकग्राहकयोरस्थितस्तटस्थ एव तिष्ठति, यथा लोके ब्रह्मवध इति । इमं लोइयं उदाहरणं- इंदेण उडंकरिसिपत्ती रूववती दिट्ठा । तओ अज्झोववन्नो तीए समं अहिगमं गतो सो तओ निग्गच्छंतो रिसिणा दिट्ठो । रुट्ठेण रिसिणा तस्स सावो दिन्नो । जम्हा तुमे अगम्मा रिसिपत्ती अभिगया तम्हा ते बंभवज्झा उवट्ठिया । सो तीए भीओ कुरुखेत्तं पविट्ठो । सा बंभवज्झा कुरुखेत्तस्स पासओ भमइ । सो वि तओ तब्भया न नीति । इंदेन विना सुन्नं इंदट्ठाणं । ततो सव्वे देवा इंदं मग्गमाणा जाणिऊण कुरुखेत्ते उवट्ठिया भणंति-एहि, सणाहं कुरु देवलोगं । सो भणइ-मम इओ निग्गच्छंतस्स बंभवज्झा लग्गइ । तओ सा देवेहिं बंभवज्झा चउहा विहत्ता-एको विभागो इत्थीणं रिउकाले ठिओ, बिइओ उदगे काइयं निसिरंतस्स, तइओ बंभणस्स सुरापाणे, चउत्थो गुरुपत्तीए अभिगमे । सा बंभवज्झा एएसु ठिया । दंडो वि देवलोगं गओ । एवं तुब्भं पि पुरेकम्मकओ कम्मबंधदोसो ब्रह्महत्यावद् वेगलो भवति ॥ पर एवाह-

[भा.१८५७]　संपत्तीइ वि असती, कम्मं संपत्तिओ वि य अकम्मं ।
एवं खु पुरेकम्मं, ठवणामित्तं तु चोएइ ॥

वृ- यदि सम्प्राप्तावसत्यामपि द्वितीयभङ्गे साधोः पुरःकर्म भवति, सम्प्राप्तावपि च प्रथमभङ्गे यदि 'अकर्म' पुरःकर्म न भवति, ततः एवं 'खुः' अवधारणे इत्थमेव मदीयमनसि प्रतिष्ठितं यदेतत् पुरःकर्म तत् स्थापनामात्रमेव, तुशब्दस्यैवकारार्थत्वात् प्ररूपणामात्रमेवेदमिति 'नोदयति' प्रेरयति ॥ अत्रोच्यते-यत् तावदुक्तम्-"एवं पुरःकर्मकृतः कर्मबन्धस्तटस्थ एव तिष्ठति" इस तिष्ठतु नाम, न काचिदस्माकं क्षतिरुपजायते, तथा चात्र त्वदुक्तमेव दृष्टान्तमनूद्यास्माभि स्वाभिमतमर्थं साधयितुमिदमुच्यते-

[भा.१८५८]　इंदेन बंभवज्झा, कया उ भीओ अ तीए नासंतो ।
तो कुरुखेत्तपविट्ठो, सा वि बहि पडिच्छए तं तु ॥

[भा.१८५९]　निग्गय पुनो वि गिण्हे, कुरुखेत्तं एव संजमो अम्हं ।
जाहे ततो नीइ जीवो, घेप्पइ तो कम्मबंधेणं ॥

वृ- इन्द्रेण ब्रह्महत्या कृता, ततो भीतः सन् तस्या नश्यन् कुरुक्षेत्रं प्रविष्टः । साऽपि ब्रह्महत्या 'तम्' इन्द्रं बहि प्रतीक्षते । यद्यसौ कुरुक्षेत्रान्निर्गच्छति ततो निर्गतं तमिन्द्रं पुनरपि ब्रह्महत्या गृह्णाति । एवमस्माकमपि संयमः कुरुक्षेत्रम्, कर्मबन्धस्तु ब्रह्महत्यासदृशः, ततो यदा संयमकुरुक्षेत्राद् द्वितीय-तृतीयभङ्गयोरशुभाध्यवसायपरिणतो जीवो निर्गच्छति ततो गृह्यतेऽसौ कर्मबन्धेन ब्रह्महत्याकल्पेन, अनिर्गतस्तु प्रथम-चतुर्थभङ्गयोर्न गृह्यते ॥ यच्चोक्तम्- "स्थापनामात्रं पुरःकर्म" तदपि न सङ्गच्छते, कुतः ? इति चेद् उच्यते-

[भा.१८६०]　जे जे दोसाययणा, ते ते सुत्ते जिनेहि पडिकुट्ठा ।
ते खलु अमायरंतो, सुद्धो इहरा उ भइयव्वो ॥

वृ- यानि यानि दोषाणां-प्राणातिपातादीनामापतनानि-स्थानानि पुरःकर्मप्रभृतीनि तानि तानि सूत्रे 'जिनैः' भगवद्भिः 'प्रतिक्रुष्टानि' निषिद्धानि । अतः 'तानि खलु' दोषायतनानि अनाचरन् साधुः शुद्धो मन्तव्यः । 'इतरथा तु' समाचरन् 'भक्तव्यः' विकल्पयितव्यः ॥

[भा.१८६१] का भयणा जइ कारणि, जयणाए अकप्प किंचि पडिसेवे।
तो सुद्धो इहरा पुन, न सुज्झए दप्पओ सेवं ॥

वृ- का पुनः 'भजना ?' विकल्पना ? । सूरिराह-कारणे यतनया पुरःकर्मादि किञ्चिदकल्प्यं यदि प्रतिसेवेत ततः शुद्धः । 'इतरथा पुनः' अयतनया दर्पतो वा सेवमानो न शुध्यति ॥

अथ पुरःकर्मवर्जने कारणमुपदर्शयति-

[भा.१८६२] समणुन्नापरिसंकी, अवि य पसंगं गिहीण वारिंता।
गिण्हंति असढभावा, सुविसुद्धं एसियं समणा ॥

वृ- समनुज्ञा नाम-पुरःकर्मकृतं गृह्णतामप्कायविराधनानुमतिस्तत्परिशङ्किनः-तद्दोषभीताः पुरःकर्म परिहरन्ति । अपि च यदि पुरःकर्मकृतां भिक्षां ग्रहीष्यामस्ततो गृहिणां भूयः पुरःकर्मकरणे प्रसङ्गो भवति अतस्तं 'वारयन्तः' तद्ग्रहणेनार्थात् प्रतिषेधयन्तोऽशठभावाः सन्तः श्रमणाः सुविशुद्धमेषणीयं गृह्णन्ति ॥

अथ हस्तद्वारं विवृणोति-

[भा.१८६३] किं उवघातो हत्थे, मत्ते दव्वे उदाहु उदगम्मि।
तिन्नि वि ठाणा सुद्धा, उदगम्मि अनेसणा भणिया ॥

वृ- शिष्यः प्रश्नयति-पुरःकर्मणि कृते किं हस्ते 'उपघातः' अनेषणीयता ? उत मात्रके ? आहोश्विद् द्रव्ये ? उताहो उदके ? । सूरिराह-हस्त-मात्रक-द्रव्याणि त्रीण्यपि स्थानानि 'शुद्धानि' नैतान्यनेष-णीयानि, किन्तूदकेऽनेषणीयता भणिता ॥ अत्रोपपत्तिमाह-

[भा.१८६४] जम्हा तु हत्थ-मत्तेहि कप्पती तेहि चेव तं दव्वं।
अत्तट्ठिय परिभुत्तं, परिणत तम्हा दगमनेसिं ॥

वृ- यस्मात् ताभ्यामेव हस्त-मात्रकाभ्यां तदेव द्रव्यमात्मार्थितं सत् परिभुक्तशेषं वा परिणतेऽप्काये कल्पते, तस्मादुदकमेवानेषणीयं न हस्त-मात्रक-द्रव्याणीति ॥

एवमशनादिविषयो विधिरुक्तः । सम्प्रति । निर्युक्तिगाथया वस्त्रविषयं तमेवाह-

[भा.१८६५] किं वा उवघातो धोए, रत्ते चोक्खे सुइम्मि व कयम्मि।
अत्तट्ठिय संकामिय गहणं, गीयत्थ संविग्गे ॥

वृ- 'धौतं' मलिनं सत् प्रक्षालितम्, 'रक्तं' धातुप्रभृतिभिर्द्रव्यै रक्तीकृतम्, 'चोक्खं' रजकपार्श्वादतीवोज्वलं कारितम्, 'सुचिकम्' अशुच्यादिनोपलिप्तं सत् पवित्रीकृतम्, एतानि साध्वर्थं वस्त्रे कृतानि भवेयुः । ततश्च शिष्यः पृच्छति-किं धौते उपघातः ? उत रक्ते ? उताहो चोक्खे ? आहोश्वित् शुचीकृते ? । अत्रापि तदेव निर्वचनम्, नैतेषां चतुर्णामेकतरस्मिन्नप्युपघातः, किन्तूदक एव । यत एतदपि साधुना प्रतिषिद्धं सद् यद्यात्मार्थितं सङ्क्रामितं वा अन्यस्मै दत्तं ततो गीतार्थसंविग्नस्य ग्रहणं भवति नान्यस्य ॥ किमर्थमेतद् ग्रहणम् ? इति चेद् उच्यते-

[भा.१८६६] गीयत्थग्गहणेणं, अत्तट्ठियमाइ गिण्हई गीतो।
संविग्गग्गहणेणं, तं गिण्हंतो वि संविग्गो ॥

वृ- गीतार्थग्रहणेनैतद् ज्ञाप्यते-आत्मार्थितं सङ्क्रामितं वा गीतार्थो गृह्णाति नागीतार्थः । संविग्नग्रहणेन तु-'तद्' आत्मार्थितादिकं गृह्णन्नपि 'संविग्नः' मोक्षाभिलाष्येव असौ नासंविग्न

इति सूच्यते ॥ उत्स्पर्शनद्वारं व्याचष्टे-

[भा.१८६७] एमेव य परिभुत्ते, नवे य तंतुग्गए अधोयम्मि ।
उप्फुसिऊणं देंते, अत्तट्ठिय सेविए गहणं ॥

वृ-यद् वस्त्रं गृहिणा परिधानादिना परिमलितं तत् परिभुक्तं भण्यते, तद्विपरीतं नवं-तन्तुभ्य उद्गतमात्रम् । ततः परिभुक्तं वा नवं वा तन्तूद्गतमधौतं सद् यद् 'उत्स्पृश्य' उदकेनाभ्युक्षणं दत्त्वा ददाति तत्राप्येवमेव द्रष्टव्यम्, न कल्पत इत्यर्थः । अथात्मार्थितमात्मना वा सेवितं-परिभुक्तं ततो ग्रहणं कर्त्तव्यम् ॥

अथ विनेयानुग्रहार्थं प्रसक्ततः पश्चात्कर्मण्यपि विधिमाह-

[भा.१८६८] संसट्ठमसंसट्ठे, य सावसेसे य निरवसेसे य ।
हत्थे मत्ते दव्वे, सुद्धमसुद्धे तिगट्ठाणा ॥

वृ-इह भिक्षादातुः सम्बन्धी हस्तः संसृष्टो वा भवेदसंसृष्टो वा, येन च कांस्यिकादिना मात्रकेण भिक्षां ददाति तदपि संसृष्टमसंसृष्टं वा, द्रव्यमपि सावशेषं वा स्यान्निरवशेषं वा; अतः संसृष्टाऽसंसृष्ट-सावशेष-निरवशेषपदैर्हस्त-मात्रक-द्रव्यविषयैरष्टौ भङ्गा भवन्ति । तद्यथा-संसृष्टो हस्तः संसृष्टं मात्रकं सावशेषं द्रव्यं १ संसृष्टो हस्तः संसष्टं मात्रकं निरवशेषं द्रव्यं २ संसृष्टो हस्तोऽसंसृष्टं मात्रकं सावशेषं द्रव्यं ३ संसृष्टो हस्तोऽसंसृष्टं मात्रकं निरवशेषं द्रव्यं ४, एवमसंसृष्टेनापि हस्तेन चत्वारो भङ्गाः प्राप्यन्ते ८ । एतस्यामष्टभङ्गयां यानि 'त्रीणि स्थानानि' हस्तमात्रक-द्रव्यरूपाणि तैर्यत्र पश्चात्कर्मदोषो न भवति ते भङ्गाः शुद्धा इतरे अशुद्धाः ॥

अमुमेवार्थं स्पष्टयति-

[भा.१८६९] पढमे भंगे गहणं, सेसेसु य जत्थ सावसेसं तु ।
अन्नेसु उ अग्गहणं, अलेव-सुक्खेसु ऊ गहणं ॥

वृ-अस्यामष्टभङ्गयां यः प्रथमो भङ्गस्त्रिभिरपि पदैः शुद्धस्तत्र ग्रहणं भवति । शेषेष्वपि भङ्गकेषु यत्र सावशेषं द्रव्यं भवति तत्र ग्रहीतुं कल्पते, पश्चात्कर्मासम्भवात् । 'अन्येषु' निरवशेषपदयुक्तेषु भङ्गकेष्वग्रहणम्, न कल्पते ग्रहीतुमिति भावः । इयमत्र भावना-इहहस्तो मात्रकं वा द्वे वा स्वयोगेन संसृष्टे वा भवतामसंसृष्टे वान तद्वशेन पश्चात्कर्म सम्भवति, किं तर्हि ? द्रव्यवशे । तथाहि-यत्र द्रव्यं सावशेषं तत्रैते साध्वर्थं खरण्टिते अपि न दात्री प्रक्षालयति, भूयोऽपि परिवेषणसम्भवात्; यत्र तु निरवशेषं द्रव्यं तत्र साधुदानानन्तरं नियमतो हस्तं मात्रकं वा प्रक्षालयति । ततो द्वितीयादिषु समेषु भङ्गेषुपश्चात्कर्मसम्भवान्न कल्पते, प्रथमादिषु तु भङ्गेषु तदसम्भवात् कल्पते ग्रहीतुमिति । यदि चैतेष्वपि यद् 'अलेपकृतं' सक्तु-मण्डकादि यच्च 'शुष्कं' सप्रसङ्गं पुरःकर्मद्वारम् ।

अथ ग्लान्यद्वारं बिभावयिषुराह-

[भा.१८७०] सग्गामे सउवस्सए, सग्गामे परउवस्सए चेव ।
खेत्तंतो अन्नगामे, खेत्तबहि सगच्छ परगच्छे ॥

[भा.१८७१] सोऊण ऊ गिलाणं, उम्मग्गं गच्छ पडिवहं वा वि ।
मग्गाओ वा मग्गं, संकमई आणमाईणि ॥

वृ-स्वग्रामे स्वोपाश्रये तिष्ठता श्रुतम्, यथा-अमुकत्र ग्लान इति, स्वग्रामे वा परेषां-साधूनामुपाश्रये

कुतोऽपि प्रयोजनादायातेन, यद्वा 'क्षेत्रान्तः' क्षेत्राभ्यन्तरे अन्यग्रामे भिक्षाचर्यां गतेन, यदि वा क्षेत्रबहिरन्यग्रामे पथि वा वर्त्तमनेन एतेषु स्थानेषु स्वगच्छे वा परच्छे वा ग्लानः श्रुतो भवेत्, श्रुत्वा च ग्लानं यः 'उन्मार्गम्' अटवीगामिनं पन्थानं 'प्रतिपथं वा' येन पथा आयातस्तमेव पन्थानं गच्छति 'मार्गाद्वा' विवक्षितपथादन्यमार्गं सङ्क्रामति स प्राप्नोति आज्ञादीनि दोषपदानि, आदिशब्दादनवस्था-मिथ्यात्व-विराधनापरिग्रहः। एवंकुर्वाणस्य चास्य यद् ग्लानोऽप्रतिजागरितः परितापनादिकं प्राप्नोति तन्निष्पन्नं प्रायश्चित्तम् ॥ अत एवाह-

[भा.१८७२] सोऊण ऊ गिलाणं, पंथे गामे य भिक्खवेलाए।
जइ तुरियं नागच्छइ, लग्गइ गरुए य चउमासे ॥

वृ- श्रुत्वा ग्लानं पथि वा गच्छन् ग्रामे वा प्रविष्टो भिक्षायां वा पर्यटन् यदि 'त्वरितं' तत्क्षणादेव नागच्छति ततः 'लगति' प्राप्नोति स चतुरो मासान् गुरुकान् ॥ यत एवमतः-

[भा.१८७३] जह भमर-महुयरिगणा, निवतंती कुसुमियम्मि चूयवणे।
इय होइ निवइअव्वं, गेलन्ने कइयवजढेणं ॥

वृ- यथा भ्रम-मधुकरीगणाः 'कुसुमिते' मुकुरिते 'चूतवने' सहकारवनखण्डे मकरन्दपानलोलुपतया निपतन्ति 'इति' अमुनैव प्रकारेण भगवदाज्ञामनुवर्त्तमानेन कर्मनिर्जरालाभलिप्सया ग्लान्ये समुत्पन्ने 'कैतवजढेन' मायाविप्रमुक्तेन त्वरितं 'निपतितव्यम्' आगन्तव्यं भवति। एवंकुर्वता साधर्मिकवात्सल्यं कृतं भवति, आत्मा च निर्जराद्वारे नियोजितो भवति ॥

तस्य च ग्लानत्वस्य प्रतिबद्धामिमां द्वारगाथामाह-

[भा.१८७४] सुद्धे सड्ढी इच्छकारे, असत्त सुहिय ओमाण लुद्धे य।
अनुअत्तणा गिलाणे, चालन संकामणा तत्तो ॥

वृ- प्रथमतः शुद्ध इति द्वारं वक्तव्यम्। ततः 'श्रद्धी' श्रद्धावानिति द्वारम्, तत इच्छाकारद्वारम्, तदनन्तरमशक्तद्वारम्, ततः सुखितद्वारम्, तदनु अपमानद्वारम्, ततोऽपि लुब्धद्वारम्, ततोऽनुवर्त्तना ग्लानस्य उपलक्षणत्वाद् वैद्यस्य च वक्तव्या, ततश्चालना सङ्क्रामणा च ग्लानस्याभिधातव्येति द्वारगाथासमुदायार्थः ॥

अथावयवार्थं प्रतिद्वारं प्रचिकटयिषुः "यथोद्देशं निर्देशः" इति वचनात् प्रथमतः शुद्धद्वारं भावयति-

[भा.१८७५] सोऊण ऊ गिलाणं, जो उवयारेण आगओ सुद्धो।
जो उ उवेहं कुज्जा, लग्गइ गुरुए सवित्थारे ॥

वृ- श्रुत्वा ग्लानं 'यः' साधुः 'उपचारेण' वक्ष्यमाणलक्षणेन ग्लानसमीपमागतः सः 'शुद्धः' न प्रायश्चित्तभाक्। यस्तूपेक्षां कुर्यात् सः 'लगति' प्राप्नोति चतुरो गुरुकान् 'सविस्तरान्' ग्लानारोपणासंयुक्तान् ॥ उपचारपदं व्याचष्टे-

[भा.१८७६] उवचरइ को णऽतिन्नो, अहवा उवचारमित्तगं एइ।
उवचरइ व कज्जत्थी, पच्छित्तं वा विसोहेइ ॥

वृ- यत्र ग्लानो वर्त्तते तत्र गत्वा पृच्छति-"को णऽतिन्नो" त्ति द्वितीयार्थे प्रथमा, 'नुः' इति प्रश्ने, युष्माकं मध्ये 'अतिन्नं' ग्लानं 'क उपचरति?' कः प्रतिजागर्त्ति?; यद्वा धातूनामनेकार्थत्वाद्

'उपचरति' पृच्छति-को नु युष्माकं मध्ये "अतिन्नो ?" ग्लानो येनाहं तं प्रतिजागर्मि ? । अथवा 'उपचारमात्रं' लोकोपचारमेव केवलमनुवर्तयितुं ग्लानसमीपम् 'एति' आगच्छति । यदि वा कार्यार्थी सन्नुपचरति । किमुक्तं भवति ?-कार्यं किमपि ज्ञान-दर्शनादिकं तत्समीपादीहमानः प्रतिजागर्ति । 'प्रायश्चित्तं वा मे भविष्यति यदि न गमिष्यामि' इति विचिन्त्यागत्य च प्रायश्चित्तं विशोधयति । एष सर्वोऽप्युपचारो द्रष्टव्यः ॥

अथ श्रद्धावानिति द्वारमाह-

[भा.१८७७] सोऊण ऊ गिलाणं, तूरंतो आगओ दवदवस्स ।
संदिसह किं करेमी, कम्मि व अट्ठे निउंजामि ॥

[भा.१८७८] पडिचरिहामि गिलाणं, गेलन्ने वावडाण वा काहं ।
तित्थानुसज्जणा खलु, भत्ती य कया हवइ एवं ॥

वृ- 'ग्लानं प्रतिजाग्रदहं महतीं निर्जरामासादयिष्यामि' इत्येवंविधया धर्मश्रद्धया युक्तः श्रद्धावानुच्यते । स च श्रुत्वा ग्लानं 'त्वरमाणः' श्रवणानन्तरं शेषकार्याणि विहाय पन्थानं प्रतिपन्नः सन् "दवदवस्स" त्ति द्रुतं द्रुतं गच्छन् झगिति ग्लानसमीपमागतस्ततो ग्लानप्रतिचारकानाचार्यान् वा गत्वा भणति-सन्दिशत भगवन्तः ! किं करोम्यहं ? कस्मिन् वा 'अर्थे' ग्लानसम्बन्धिनि प्रयोजने युष्माभिरहं नियोज्ये ?, अहं तावदनेनाभिप्रायेणायातः, यथा-प्रतिजागरिष्यामि ग्लानं ग्लानवैयावृत्त्ये वा व्यापृता ये साधवस्तेषां भक्त-पानप्रदान-विश्रामणादिना वैयावृत्त्यं करिष्यामि। एवंकुर्वता तीर्थस्यानुसजना-अनुवर्त्तना कृता भवति, भक्तिश्च भगवतां तीर्थकृतां कृता भवति, "जे गिलाणं पडियरइ से ममं णाणेणं दंसणेणं चरित्तेणं पडिवज्जइ" इत्यादिभगवदाज्ञाऽऽराधनात्। इत्थं तेनोक्ते यदि ते स्वयमेव ग्लानवैयावृत्त्यं कर्तुं प्रभवन्ति ततो ब्रुवते-आर्य ! व्रजतु यथास्थानं भवान्, वयं ग्लानस्य सकलमपि वैयावृत्त्यं कुर्वाणाः स्म इति ॥

अथ ते न प्रभवन्ति यदि वाऽसावेवंविधगुणोपेतो वर्त्तते-

[भा.१८७९] संजोगदिट्ठपाढी, तेनुवलद्धा व दव्वसंजोगा ।
सत्थं व तेणऽधीयं, वेज्जो वा सो पुरा आसि ॥

वृ-संयोगाः-औषधद्रव्यमीलनप्रयोगास्तद्विषयो दृष्टः पाठः-चिकित्साशास्त्रावयवविशेषो येन स संयोगदृष्टपाठः, आर्षत्वाद् गाथायामिनप्रत्ययः, यदि वा तेन द्रव्यसंयोगाः कुतोऽपि सातिशयज्ञानविशेषादुपलब्धाः, 'शास्त्रं वा' चरक-सुश्रुतादिकं सकलमपि तेनाधीतम्, वैद्यो वा सः 'पुरा' पूर्वं गृहाश्रम आसीत्, ततो न विसर्जनीयः ॥

[भा.१८८०] अत्थि य से योगवाही, गेलन्नतिगिच्छणाए सो कुसलो ।
सीसे वावारेत्ता, तेगिच्छं तेण कायव्वं ॥

वृ-यदि 'तस्य' आगन्तुकस्य गच्छे योगवाहिनः सन्ति, स च स्वयं ग्लान्यचिकित्सायां कुशलः, ततः शिष्यान् सूत्रार्थपौरुषीप्रदानादौ व्यापार्य स्वयं तेन ग्लानस्य 'चैकित्स्यं' चिकित्साकर्म कर्त्तव्यम् । उपलक्षणमिदम्, तेन कुल-गण-सङ्घप्रयोजनेषु गुरुकार्यप्रेषणे वस्त्र-पात्राद्युत्पादने वा यो यत्र योग्यस्तं तत्र व्यापार्य सर्वप्रयत्नेन स्वयं ग्लानस्य चिकित्साकर्म कर्त्तव्यम् ॥

सूत्रार्थपौरुषीव्यापारणे विधिमाह-

[भा.१८८१] दारुणं वा गच्छइ, सीसेण व वायएहि वा वाए ।
तत्थऽन्नत्थ व काले, सोहिए सव्वुद्दिसइ हट्ठे ॥

वृ- सूत्रार्थपौरुष्यौ दत्त्वा ग्लानस्य समीपं गच्छति, गत्वा च चिकित्सां करोति । अथ दूरे ग्लानस्य प्रतिश्रयस्ततः सूत्रपौरुषीं दत्त्वा अर्थपौरुषीं शिष्येण दापयति । अथ दवीयान् स प्रतिश्रयस्ततो द्वे अपि पौरुष्यौ शिष्येण दापयति । अथात्मीयः शिष्यो वाचनां दातुमशक्तस्ततो येषां वाचकानाम्-आचार्याणां स ग्लानस्तैः सूत्रमर्थं वा स्वशिष्यान् वाचयति । अथ तेषामपि नास्ति वाचनाप्रदाने शक्तिस्ततो यदि तेऽनागाढयोगवाहिनस्तदा तेषां योगो निक्षिप्यते । अथागाढयोगवाहिनस्ततोऽयं विधि- "तत्थऽन्नत्थ व" इत्यादि । यत्र क्षेत्रे स ग्लानस्तत्रान्यत्र वा क्षेत्रे स्थितास्ते आगाढयोगवाहिन आचार्येण वक्तव्याः, यथा-आर्या ! कालं शोधयत । ततस्तैर्यावत् कालग्रहणं कृत्वा यावतो दिवसान् कालः शोधितस्तावतां दिवसानामुद्देशनकालान् सर्वानप्याचार्यो ग्लाने 'हृष्टे' प्रगुणीभूते सति एकदिवसेनैवोद्दिशति, यावन्ति पुनर्दिनानि कालग्रहणे प्रमादः कृतो गृह्यमाणे वा कालो न शुद्धः तेषामुद्देशनकाला न उद्दिश्यन्ते ॥

तत्र क्षेत्रे संस्तरणाभावेऽन्यत्र गच्छतां विधिमाह-

[भा.१८८२] निग्गमणे चउभंगो, अद्धा सव्वे वि निंति दोण्हं पि ।
भिक्ख-वसहीइ असती, तस्साणुमए ठविज्जा उ ॥

वृ- ततः क्षेत्राद् निर्गमने चतुर्भङ्गी भवति । गाथायां पुंस्त्वनिर्देशः प्राकृतत्वात् । वास्तव्याः संस्तरन्ति नागन्तुकाः १ आगन्तुकाः संस्तरन्ति न वास्तव्याः २ न वास्तव्या न चागन्तुकाः संस्तरन्ति ३ वास्तव्या अप्यागन्तुका अपि संस्तरन्ति ४ । तत्र यत्र द्वयेऽपि संस्तरन्ति तत्र विधि प्रागेवोक्तः । यत्र तु न संस्तरन्ति तत्रायं विधि-प्रथमभङ्गे आगन्तुकानां द्वितीयभङ्गे वास्तव्यानामर्द्धं वा यावन्तोवा न संस्तरन्ति तावन्तो निर्गच्छन्ति, तृतीयभङ्गे द्वयोरपि वर्गयोरर्द्धाः सर्वे वा ग्लानं सप्रतिचरं मुक्त्वा निर्गच्छन्ति । एवं भिक्षाया वसतेश्च 'असति' अभावे निर्गमनं द्रष्टव्यम । के पुनस्तत्र ग्लानसन्निधौ स्थापनीयाः ? इत्याह-'तस्य' ग्लानस्य ये 'अनुमताः' अभिप्रेतास्तान् प्रतिचरकान् ग्लानस्य समीपे स्थापयेत् ॥

गतं श्रद्धावानिति द्वारम् । अथेच्छाकारद्वारमाह-

[भा.१८८३] अभणितो कोइ न इच्छइ, पत्ते थेरेहि होउवालंभो ।
दिट्ठंतो महिड्ढीए, सवित्थरारोवणं कुज्जा ॥

[भा.१८८४] बहुसो पुच्छिज्जंता, इच्छाकारं न ते मम करिंति ।
पडिमुंडणा य दुक्खं, दुक्खं च सलाहिउं अप्पा ॥

वृ- कोऽपि साधुर्वैयावृत्त्यकुशलः, परमन्येन 'अभणितः' 'आर्य ! एहि इच्छाकारेण ग्लानस्य वैयावृत्त्यं कुरु' इत्यनुक्तः सन् नेच्छति वैयावृत्त्यं कर्तुम्, स च श्रुत्वाऽपि ग्लानं न तस्य समीपं गतः । कुल-गण-सङ्घस्थविराश्च ये कारणभूताः पुरुषाः 'कुत्र सामाचार्य सीदन्ति ? कुत्र चोत्सर्पन्ति?' इति प्रतिचरणाय गच्छान्तरेषु पर्यटन्ति ते तत्र प्राप्ताः, तैश्च स पृष्टः-आर्य ! उत्सर्पन्ति ते ज्ञान-दर्शन-चारित्राणि ? सन्ति वा केचित् प्रत्यासन्नपरिसरे साधवो ग्लानो वा कुत्रापि भवता श्रुतः ? इति । स प्राह-इतः प्रत्यासन्न एक ग्रामे सन्ति साधवः, तेषां चास्त्येको ग्लान इति । ततस्तैस्तस्योपालम्भः

प्रदत्त:-यदि तेषां ग्लानो वर्त्तते ततस्त्वं त्य प्रतिचरणाय किं न गतः ? । स प्राह-'बहुशः' भूयो भूयः पृच्छयमाना अपि ते साधवः कदापि ममेच्छाकारं न कुर्वन्ति, अन्यच्च अहमनभ्यर्थितस्तत्र गतः, तैश्च प्रतिमुण्डितः-निषिद्धः, यथा-पूर्णं भवता वैयावृत्त्यकरणेति, एवं प्रतिमुण्डनया महद् मानसंदुःखमुत्पद्यते, 'यादृशं चाहं ग्लानस्य वैयावृत्त्यं करोमि ईदृशमन्यः कोऽपि न वेत्ति' एवमात्मानं श्लाघितुं 'दुःखं' दुष्करं भवति, अतः कथमनभ्यर्थितस्तत्र गच्छामि ? इति ।

ततः स्थविरैस्तस्य पुरतो महर्द्धिको राजा तस्य दृष्टान्तः कृतः । यथा- एगो राया कत्तियपुन्निमाए मरुयाणं दाणं देइ । एगो मरुगो चोद्दसविज्जाठाणपारगो भोइयाए भणिओ-तुमं सव्वमरुगाहिवो, वच्च रायसमीवं, उत्तमं ते दानं दाहिइ त्ति । सो मरुओ भणाइ-एगं ताव रायकिव्विसं गिण्हामि, बिइयं अमिमंतिओ गच्छामि, जइ से पिति-पितामहस्स अनुग्गहेण पओअणं तो मं आगंतुं तत्थ नेहिइ, इह ठियस्स वा मे दाहिइ । भोइयाए भणिओ-तस्स अत्थि बहू मरुगा तुज्झ सरिच्छा अनुग्गहकारिणो, जइ अप्पणो तद्दविणेण कज्जं तो गच्छ । जहा सो मरुओ अब्भत्थणं मग्गंतो इहलोइयाणं कामभोगाणं अनाभागी जाओ, एवं तुमं पि अब्भत्थणं मग्गंतो निज्जरालाहस्स अनाभागी भविस्ससि ।। इत्थमुपलभ्य चतुर्गुरुकारोपणां 'सविस्तरां' परितापनादिप्रायश्चित्तविस्तरयुक्तां तस्य प्रयच्छन्ति ।।

गतमिच्छाकारद्वारम् । अथाशक्तद्वारमाह-

**[भा.१८८५]** किं काहामि वराओ, अहं खु ओमाणकारओ होहं ।
एवं तत्थ भणंते, चाउम्मासा भवे गुरुगा ।।

**वृ-** कोऽपि साधुः कुल-गण-सङ्घस्थविरैस्तथैव पृष्टः प्राह-क्षमाश्रमणाः ! लोके यः सर्वथा अशक्तः-पङ्गुप्रायः स वराक उच्यते, सोऽहं वराकस्तादृशस्तत्र गतः किं करिष्यामि ? नवरमहं तत्र प्राप्तोऽवमानकारको भविष्यामि । एवं तत्र स्थविराणां पुरतो भणतस्तस्य चतुर्मासा गुरवो भवन्ति ।। स च स्थविरैरित्थमभिधातव्यः-

**[भा.१८८६]** उव्वत्त-खेल-संथार-जग्गणे पीस-भाणधरणे य ।
तस्स पडिजग्गयाण व, पडिलेहेउं पि सि असत्तो ।।

**वृ-**आर्य ! किं ग्लानस्योद्वर्त्तनमपि कर्त्तुं न शक्नोषि ? एवं खेलमल्लकस्य भस्मना भरणं भस्मपरिष्ठापनं वा संस्तारकस्य रचनं जागरणं-रात्रौ प्रहरकप्रदानं पेषणम्-औषधीनां चूर्णनं भाणधरणं-सपान-भोजनभाजनानां धारणं 'तस्य' ग्लानस्यप्रतिजागरकाणां वा साधूनामुपधिमपि प्रत्युपेक्षितुमशक्तः ? येनेदं ब्रवीषि-किं करिष्यामि वराकोऽहम् ? इति ।।

अथ सुखितद्वारमाह-

**[भा.१८८७]** सहिया मो त्ति य भणती, अच्छह वीसत्थया सुहं सव्वे ।
एवं तत्थ भणंते, पायच्छित्तं भवे तिविहं ।।

**वृ-** एकत्र क्षेत्रे मासकल्पस्थितैः साधुभिः, श्रुतम्-अमुकत्र ग्लान इति । तत्र केऽपि साधवो भणन्ति-ग्लानं प्रतिजागरका व्रजामो वयम् । इतरः कोऽपि भणति-सुखितानास्मान् दुःखितान् कुरुत, यूयमपि सर्वे 'विश्वस्ताः' निरुद्विग्नाः 'सुखं' सुखेन तिष्ठत किं तत्र गत्वा मुधैव दुःखस्यात्मानं प्रयच्छामः ? किं युष्माकमयं श्लोको न कर्णकोटरमुपागमत् ? । यथा-

सर्वस्य सर्वकार, स्वार्थविघाती परस्य हितकारी ।
सर्वस्य च विश्वासी, मूर्खो यो नाम विज्ञेयः ॥

एवं तत्रतस्य भणतस्त्रिविधं प्रायश्चित्तं भवति । तद्यथा-यद्याचार्य एवं ब्रवीति ततश्चतुर्गुरु, उपाध्यायो ब्रवीति चतुर्लघु, भिक्षुर्ब्रवीति मासगुरु ॥ अथापमानद्वारमाह-

[भा.१८८८] भत्तादिसंकिलेसो, अवस्स अम्हे वि तत्थ न तरामो ।
काहिंति केत्तियाणं, तेणं चिय तेसु अद्दन्ना ॥

वृ- तथैव ग्लानं श्रुत्वा केचिद् भणन्ति-व्रजामो ग्लानप्रतिजागरणार्थम्। अपरे ब्रुवते-तत्राऽन्येऽपि ग्लानं श्रुत्वा बहवः प्रतिचारकाः समाया भविष्यन्ति ततो महान् भक्त-पानादिसंक्लेशो भविता, 'अवश्यम्' असन्दिग्धं वयमपि तत्र गताः "न तरामः' न निर्वहामः, ग्लान प्रतिचारणार्थमागतानां कियतां वा ते वास्तव्या विश्रामणादि प्राघूर्णककर्म करिष्यन्ति ? यतः ते 'तेनैव' ग्लानेन 'तेषु' कार्येषु 'अद्दन्नाः' आकुलीभूताः ॥

[भा.१८८९] अम्हेहि तहिं गएहिं, ओमाणं उग्गमाइणो दोसा ।
एवं तत्थ भणंते, चाउम्मासा भवे गुरुगा ॥

वृ- तथा- अस्माभिरपि तत्र गतैर्नियमाद् 'अवमानम्' अवमम् 'उद्गमदोषाश्च' आधाकर्म-मिश्रजातप्रभृतयः आदिशब्दादेषणादोषाश्च भविष्यन्ति । एवं तत्र तेषां भणतां चत्वारो मासा गुरुका भवेयुः ॥

अथ लुब्धद्वारमाह-

[भा.१८९०] अम्हे मो निज्जरट्ठी, अच्छह तुब्भे वयं से काहामो ।
अत्थि य अभाविया णे, ते वि य नाहिंति काऊण ॥

वृ- मासकल्पस्थितैः साधुभिः श्रुतं, यथा-अमुकत्र ग्रामे ग्लानः सञ्जातोऽस्ति । तच्च क्षेत्रं वसति-पानक-गोरसादिभिः सर्वैरपि गुणैरुपेतम्, ततस्ते लोभाभिभूतचेतसश्चिन्तयन्ति- 'ग्लानमिषमन्तरेण न शक्यते क्षेत्रमिदं प्रेरयितुम्, अतो गच्छामो वयम्' इति चिन्तयित्वा तत्र गत्वा भणन्ति-वयं 'निर्जरार्थिनः' ग्लानवैयावृतत्यकरणेन कर्मक्षयमभिलषमाणा इहायाताः स्मः, अतो यूयं तिष्ठथ वयं "से" तस्य ग्लानस्य वैयावृत्यं करिष्यामः, सन्ति चास्माकमभाविताः शैक्षास्तेऽपि चास्मान् वैयावृत्यं कुर्वतो दृष्ट्वा ज्ञास्यन्ति ॥

[भा.१८९१] एवं गिलाणलक्खेण संठिया पाहुण त्ति उक्कोसं ।
मग्गंता चमढिंती, तेसिं चारोवणा चउहा ॥

वृ- एवं ग्लानसम्बन्धि यद् लक्ष्यं-मिषं तेन तत्र संस्थिताः सन्तः प्राघूर्णका इति कृत्वा लोकाद् 'उत्कृष्टं' स्निग्ध-मधुरद्रव्यं लभन्ते, अथ न स्वयं लोकः प्रयच्छति ततः 'मार्गयन्तः' 'प्राघूर्णका वयम्' इति मिषेमावभाषमाणास्तत् क्षेत्रं चमढयन्ति, चमढिते च क्षेत्रे ग्लानप्रायोग्यं न लभ्यते ततस्तेषामियं चतुर्विधाऽऽरोपणा कर्त्तव्या । तद्यथा-द्रव्यतः क्षेत्रतः कालतो भावतश्च ॥

तत्र द्रव्यतस्तावदाह-

[भा.१८९२] फासुगमफासुगेवा, अचित्त चित्ते परित्तऽनंते य ।
असिनेह-सिनेहकए, अनहारा-ऽऽहार लहु-गुरुगा ॥

वृ- क्षेत्रोद्वेजनादोषेण ग्लानप्रायोग्यमलभामाना यदि प्राशुकमवभाषन्ते परिवासयन्ति वा ततश्चत्वारो लघुकाः । अथाप्राशुकमवभाषन्ते परिवासयन्ति वा ततश्चत्वारो गुरुकाः । इह च प्राशुकमेषणीयम् अप्राशुकमनेषणीयम् । आह च निशीथचूर्णिकृत्- इह फासुगं एसणिज्जं ति । अचित्ते अवभाष्यमाणे परिवास्यमाने वा चतुर्लघु । सचित्ते चतुर्गुरु । एवं परीत्ते चतुर्लघु । अनन्ते चतुर्गुरु । अस्नेहे चतुर्लघु । सस्नेहे चतुर्गुरु । अनाहारे चतुर्लघु । आहारे चतुर्गुरु ॥

उक्तं द्रव्यनिष्पन्नं प्रायश्चित्तम् । अथ क्षेत्रनिष्पन्नमाह-

[भा.१८९३] लुद्धस्सऽब्भंतरतो, चाउम्मासा हवंति उग्घाता ।
बहिया य अनुग्घाया, दव्वालंभे पसज्जणया ॥

वृ- उत्कृष्टद्रव्यलोभेन क्षेत्रमुद्वेजयतो लुब्धस्य क्षेत्राभ्यन्तरतो ग्लानप्रायोग्येऽलभ्यमाने चत्वारो मासा उद्धाताः । क्षेत्रस्य बहिरलभ्यमाने त एव चत्वारो मासाः 'अनुद्धाताः' गुरवः । अत्र च ग्लानप्रायोग्यस्य द्रव्यस्यालाभे 'प्रसजना' प्रायश्चित्तस्य वृद्धि प्राप्नोति ॥ कथम् ? इत्याह-

[भा.१८९४] खेत्तबहि अद्धजोअण, वुड्डी दुगुणेण जाव बत्तीसा ।
चउगुरुगादी चरिमं, खेत्ते काले इमं होइ ॥

वृ- क्षेत्राद् बहिरर्द्धयोजनं गत्वा ततो यदि ग्लानप्रायोग्यं द्रव्यमानयति तदा चतुर्गुरव एव । योजनादानयति षड् लघवः । योजनद्वयादानयति षड् गुरवः । योजनचतुष्टयादानयति छेदः । योजनाष्टकादानयति मूलम् । योजनषोडशकादानयति अनवस्थाप्यम् । द्वात्रिंशद् योजनानि गत्वा ग्लानप्रायोग्यमानयति पाराञ्चिकम् । अत एवाह-क्षेत्रबहिरर्द्धयोजनादारभ्य द्विगुणेन परिमाणेन क्षेत्रस्य वृद्धिस्तावत् कर्त्तव्या यावद् द्वात्रिंशद् योजनानि । एषु च चतुर्गुरुकादिकं 'चरमं' पाराञ्चिकं यावत् प्रायश्चित्तम् । इत्थं क्षेत्रविषयं प्रायश्चित्तमुक्तम् । 'काले' कालविषयम् 'इदं' वक्ष्यमाणं भवति ॥

तत्र तावत् प्रकारान्तरेण क्षेत्रनिष्पन्नमेवाह-

[भा.१८९५] अंतो बहिं न लब्भइ, ठवणा फासुग महय मुच्छ किच्छ कालगए ।
चत्तारि छ च्च लहु-गुरु, छेदो मूलं तह दुगं च ॥

वृ- क्षेत्रस्यान्तर्वा बहिर्वा ग्लानप्रायोग्यं न लभ्यत इति कृत्वा प्राशुकस्य 'स्थापनां' परिवासनां करोति चतुर्लघु । तेन परिवासितेन भक्तेन ग्लानो यद्यनागाढं परिताप्यते ततश्चतुर्गुरुकम् । महतीं दुःखासिकामाप्नोति षड्लघु । मूर्च्छामूर्च्छे षड्गुरु । कृच्छ्रप्राणे छेदः । कृच्छ्रोच्छ्वासे मूलम् । समवहते-मारणान्तिकसमुद्धातं कुर्वाणे ग्लानेऽनवस्थाप्यम् । कालगते पाराञ्चिकम् ॥

अथ कालनिष्पन्नमाह-

[भा.१८९६] पढमं राइ ठविंते, गुरुगा बिइयादिसत्तिहिं चरिमं ।
परितावणाइ भावे, अप्पत्तिय-कूवणाईया ॥

वृ- प्रथमां रात्रिं परिवासयतश्चतुर्गुरुकाः । द्वितीयां रात्रिमादौ कृत्वा सप्तमी रात्रिभिश्चरमम् । तद्यथा-द्वितीयां रजनीं परिवासयति षड् लघवः, तृतीयस्यां षड् गुरवः, चतुर्थ्यां छेदः, पञ्चम्यां मूलम्, षष्ठ्यामनवस्थाप्यम्, सप्तम्यां पाराञ्चिकम् । अथ भावनिष्पन्नमाह-"परितावणाइ" इत्यादि पश्चार्द्धम् । परितापनादि भावनिष्पन्नं मन्तव्यम् । तथा स परितापितः सन्नप्रीतिकं करोति चतुर्लघु,

कूजनं-सशब्दाक्रन्दनम्, आदिग्रहणाद् 'अनाथोऽहम्, न किमप्यमी मह्यं प्रयच्छन्ति' इत्येवमुल्लापं कुर्यात् ततश्चतुर्गुरुकम् ॥

अथपरितापनादिपदं व्याख्यानयति-

[भा.१८९७]अंतो बहिं न लब्भइ, परितावण महय मुच्छ किच्छ कालगए।
चत्तारि छ च्च लहु-गुरु, छेदो मूलं तह दुगं च ॥

वृ- क्षेत्रस्यान्तर्बहिर्वा न लभ्यते इति कृत्वा ग्लानस्यानागाढा परितापना भवति चतुर्लघु । आगाढपरितापनायां चतुर्गुरु । दुःखादुःखे षड्लघु । मूर्च्छामूर्च्छे षड्गुरु । कृच्छ्रप्राणे च्छेदः । कृच्छ्रोच्छ्वासे मूलम् । समवहते अनवस्थाप्यम् । कालगते पाराञ्चिकम् ॥ एवंतावदाहारविषयमुक्तम् । अथोपधिविषयमभिधीयते-

[भा.१८९८]अंतो बहिं न लब्भइ, संथारग महय मुच्छ किच्छ कालगए।
चत्तारि छ च्च लहु-गुरु, छेदो मूलं तह दुगं च ॥

वृ-अतिचमढिते क्षेत्रेऽन्तर्वा बहिर्वा संस्तारको न लभ्यते ततो ग्लानस्यानागाढपरितापनादिषु चतुर्लघुकादिकं तथैव प्रायश्चित्तं द्रष्टव्यम् ॥ अथ परितापनादिपदं समुद्घातपदं च गाथायां साक्षान्नोक्तम्, अतो मा भूद् मुग्धमतिविनेयवर्गस्य व्यामोह इति कृत्वा साक्षात् तदभिधानार्थमिमां गाथामाह-

[भा.१८९९] परिताव महादुक्खे,मुच्छामुच्छे य किच्छपानगते।
किच्छुस्सासे य तहा, समुघाए चेव कालगते ॥

वृ- गतार्था ॥ उक्तं लुब्धद्वारम् । अथानुवर्त्तनाद्वारमाह-

[भा.१९००] अनुयत्तमा गिलाणे, दव्वट्ठा खलु तहेव विज्जट्ठा।
असतीइ अन्नओ वा, आनेउं दोहि वी कुज्जा ॥

वृ- ग्लानप्रायोग्यं यद् भक्त-पानादिकं द्रव्यं स एवार्थ-प्रयोजनं द्रव्यार्थस्तमुत्पादयद्भिर्ग्लानस्यानुवर्त्तना कर्त्तव्या । "तहेव विज्जट्ठे"ति तथैव वैद्यस्यार्थमुत्पादयद्भिर्ग्लानस्यानुवर्त्तना विधेया । यदि स्वग्रामे द्रव्य-वैद्ययोरभावस्ततोऽन्यग्रामादपि द्रव्य-वैद्यावानीय द्वाभ्यामप्यनुवर्त्तनां कुर्यात् ॥

अथैनामेव गाथां व्याचिख्यासुराह-

[भा.१९०१] जायंते उ अपत्थं, भणंति जायामो तं न लब्भइ णे।
विनियट्टणा अकाले, जा वेल न बेंति उ न देमो ॥

वृ- ग्लानो यद्यपथ्यं द्रव्यंयाचते ततः साधवो भणन्ति-यद्वं याचामः परं किं कुर्महे ? तद् भवतामभिप्रेतं भूयोभूयः पर्यटद्भिरपि न लभ्यते "ने" अस्माभिः इत्थं भणद्भिर्ग्लानोऽनुवर्त्तितो भवति । यद्वा ग्लानस्याग्रतः पात्रकाण्युद्ग्राह्य प्रतिश्रयान्निर्गत्यापान्तरालपथाद् 'विनिवर्त्तनां' प्रत्यागमनं कुर्वन्ति, तस्य पुरतश्चेत्थं ब्रुवते-वयं गता अभूम परं न लब्धम्; अकाले वा गत्वा याचन्ते येन न लभ्यते । अकाले च याचमानं ग्लानं ब्रुवते-यावद् वेला भवति तावत् प्रतीक्षस्व, ततो वयमानीय् दास्याम इति, न पुनर्ब्रुवते-दद्मो वयमिति ॥

अथ क्षेत्रतो ग्लानस्यानुवर्त्तनामाह-

[भा.१९०२] तत्थेव अन्नगामे, वुत्थंतरऽसंथरंत जयणाए।

असंथरनेसणमादी, छन्नं कडजोगि गीयत्थे ॥

वृ- प्रथमतस्तत्रैव ग्रामे ग्लानप्रायोग्यमन्वेषणीयम् । तत्र यदि न लभ्यते तदाऽन्यग्रामेऽपि । अथासावन्यग्रामो दूरतरस्ततः ''वुत्थंतर''त्ति 'अन्तरा' अपान्तरालग्रामे उषित्वा द्वितीये दिने आनयन्ति । अथैवमप्यसंस्तरणं भवति ततः ''संथरंत जयणाए''त्ति अकारप्रश्लेषादसंस्तरतो-ग्लानस्यार्थाय 'यतनया' पञ्चकपरिहाण्या गृह्णन्ति । अथ ग्लानार्थंव्यापृतानां प्रतिचरकाणामसंस्तरणं ततः ''एसमाइ''त्ति एषणादोषेषु आदिशब्दाद् उद्गमादिदोषेषु च पञ्चकपरिहाण्या यतितव्यम् । अथ प्रतिदिवसं ग्लानप्रायोग्यं न लभ्यते ततः 'छन्नं' आच्छन्नं कृतयोगी गीतार्थो वा तत्प्रायोग्यं द्रव्यं परिवासयति । इह आकर्णितच्छेदश्रुतार्थ प्रत्युच्चारणाऽसमर्थ कृतयोगी । यस्तु च्छेदश्रुतार्थं श्रुत्वा प्रत्युच्चरयितुमीशः स गीतार्थ उच्यते । एष द्वारगाथासमासार्थः ॥

अथैनामेव विवरीषुराह-

[भा.१९०३] पडिलेह पोरुसीओ, वि अकाउं मग्गणा उ सग्गामे ।
खित्तंतो तद्दिवसं, असइ विणासे व तत्थ वसे ॥

वृ- अपिशब्दः सम्भावनायाम् । यदि सुलभं द्रव्यं ततः प्रत्युपेक्षणां सूत्रार्थपौरुष्यौ च कृत्वा स्वग्रामेऽनवभाषितस्य मार्गणा कर्त्तव्या । अथैवं न लभ्यते ततोऽर्थपौरुषीं हापयित्वा, यद्येवमपि न लभ्यते ततः सूत्रपौरुषीं परिहाप्योत्पादनीयम् । अथ तथापि न लभ्यते दुर्लभं वा तद् द्रव्यं ततः प्रत्युपेक्षणां द्वे अपि च पौरुष्यौ अकृत्वा स्वग्रामेऽनवभाषितं मार्गयन्ति । अथ स्वग्रामेऽनवभाषितं न लभ्यते ततः 'क्षेत्रान्तः' सक्रोशयोजनक्षेत्राभ्यन्तरे परग्रामे पौरुषीद्वयमपि कृत्वा अनवभाषित-मुत्पादयन्ति, अत्राप्यर्थपौरुष्यादिहापना तथैव द्रष्टव्या । अथ तत्राप्यनवभाषितं न लभ्यते ततः स्वक्षेत्रे स्वग्राम-परग्रामयोरवभाषितमुत्पाद्य तद्दिवसमानयन्ति । अथ स्वक्षेत्रे तद्दिवसं न प्राप्यते ततः परक्षेत्रादपि तद्दिवसमानेतव्यम् । अथ क्षेत्रबहिर्वर्तिनो यतो ग्रामादेरानीयते तद् न प्रत्यासन्नं किन्तु दूरतरं न तद्दिवसं गत्वा ततः प्रत्यायातुं शक्यते, विनाशि वा तद् द्रव्यं दुग्धादिकम्; ततः प्रत्यासन्नग्रामस्यासति विनाशिनिवा द्रव्ये ग्रहीतव्ये अपराह्ने गत्वा तत्र रात्रौ वसेत्, उषित्वा च सूर्योदयवेलायां गृहीत्वा द्वितीये दिने तत्रानयन्ति । अथ दवीयस्तरं तत् क्षेत्रमविनाशि द्रव्यं च ग्रहीतव्यम् ततोऽपान्तरालग्रामे रजन्यामुषिताः सूर्योदये तत्रगत्वा तद्द्रव्यं गृहीत्वा भूयः समागच्छन्ति ।

एतदेवाह-

[भा.१९०४] खित्तबहिया व आने, विसोहिकोडिं वतिच्छितो काढे ।
पइदिवसमलब्भंते, कम्मं समइच्छिओ ठवए ॥

वृ- क्षेत्रबहिर्वा गत्वा प्रथममनवभाषितं ततोऽवभाषितं पूर्वं तद्दिवसे ततो द्वितीयेऽपि दिवसेऽनन्तरोक्तया नीत्या यथायोगमानयेत् । एष विधिरेषणीयविषयो भणितः । अथैषणीयेन नासौ ग्लानः संस्तरति ततः सक्रोशयोजनक्षेत्रस्यान्तः स्वग्राम-परग्रामयोः पञ्चकपरिहाण्या तदप्राप्तौ क्षेत्रबहिरपि पञ्चकपरिहाण्या तद्दिवसं ग्लानप्रायोग्यमुत्पादयन्ति । एवं यदा प्रायश्चित्तानुलोम्येन क्रीतकृताऽभ्याहृतादिका विशोधिकोटीं व्यतिक्रान्तो भवति तदा ''काढि''त्ति ग्लानयोग्य-मौषधादिकमन्येन स्वयं वा यतनया क्वाथयेत् । एवं प्रतिदिवसमसमलभ्यमाने यदा आधाकर्मापि समतिक्रान्तो भवति, तदपि प्रतिदिवसं न प्राप्यत इत्यर्थः, ततो विशुद्धमविशुद्धं वा ग्लानप्रायोग्यं

द्रव्यमुत्पाद्यस्थापयेत् । ये तु ग्लानस्य प्रतिचरकास्ते यदि ग्लानकार्यव्यापृताः परक्षेत्रं वा व्रजन्तः स्वार्थमहिण्डमाना न संस्तरन्ति ततः एषणादिदोषेषु पञ्चकपरिहाणियतनया गृह्णन्ति ॥

यत् तद् ग्लानार्थं रिवास्यते तत् कीदृशे स्थाने स्थाप्यते ? इत्याह-

[भा.१९०५]उव्वरगस्स उ असती, चिलिमिणि उभयं च तं जह न पासे ।
तस्सऽसइ पुराणादिसु, ठविंति तद्दिवस पडिलेहा ॥

वृ- कृतयोगिना गीतार्थेन वा तद् अन्यस्मिन् गृहापवरके स्थापनीयम् । अथ नास्ति पृथगपवरकस्ततो वसतावेव योऽपरिभोग्यः कोणकस्तत्र चिलिमिलिकया आवृत्य 'उभयं' ग्लाना-ऽगीतार्थलक्षणं यथा न पश्यति तथा स्थाप्यम् । यदि ग्लानस्तत् पश्यति तदा स यदा तदा तस्याभ्यवहारं कुर्यात् । अगीतार्थस्य तु तद् दृष्ट्वा विपरिणामा-ऽप्रत्ययादयो दोषा भवेयुः । "तस्सऽसइ"त्ति 'तस्य' अपरिभोग्यस्थानस्याभावे पुराणः-पश्चात्कृतस्तस्य गृहे दिशब्दाद् मातापितृसमानेषु गृहेषु स्थापयन्ति । तस्य च तत्र स्थापितस्य तद्दिवसं प्रत्युपेक्षणा कर्त्तव्या । तद्दिवसं नाम प्रतिदनम् । यदुक्तं देश्याम्-तद्दिवसं अनुदिअहे इति ॥

अथ "आनेउं दोहि वी कुज्जा" इत्यस्यव्याख्यानमाह-

[भा.१९०६]        फासुगमफासुगेण व अच्चित्तेतर परित्तऽनंतेनं ।
आहार-तद्दिनेतर, सिहेण इअरेण वा करणं ॥

वृ- प्राशुकेन अप्राशुकेन वा अचित्तेन 'इतरेण वा' सचित्तन परीत्तेन अनन्तेन वा आहारेण अनाहारेण वा तद्दैवसिकेन 'इतरेण वा' परिवासितेन सस्नेहेन 'इतरेण वा' अस्नेहेन ग्लानस्य चिकित्सायाः करणमनुज्ञातम ॥

गता ग्लानानुवर्त्तना । अथ वैद्यानुवर्त्तनामभिधित्सुः प्रस्तावनां रचयन्नाह-

[भा.१९०७]        विज्जं न चेव पुच्छह, जाणंता बिंति तस्स उवदेसो ।
दट्ठ-पिलगाइएसु व, अजानगा पुच्छए विज्जं ॥

वृ- ग्लानो ब्रूयात्-यूयं वैद्यं नैव पृच्छथ, आत्मच्छन्देनैव प्रतिचरणं कुरुथ । ततो यदि साधवो जानन्तः चिकित्सायां कुशलास्ततो ब्रुवते-अस्माभिर्वैद्यः प्रागेव पृष्टस्तस्यैवायमुपदेश इति । यद्वा प्रतिश्रयान्निर्गत्य कियन्तमपि भूभागं गत्वा मुहूर्तमात्रं तत्र स्थित्वा समागत्य ब्रुवते- अयं वैद्येनोपदेशो दत्त इति । तथा दष्ट-सर्पडङ्कः पिलगं-गण्डः आदिग्रहणेन शीतलिका दुष्टवातो वेत्यादिपरिग्रहः, एतेष्वपि यदि ज्ञास्ततः स्वमेव कुर्वन्ति । अथाज्ञास्ततो वैद्यं पृच्छन्ति ॥

अत्र शिष्यः पृच्छति-

[भा.१९०८]        किह उप्पन्नो गिलाणो, अट्ठम उण्होदगाइया वुड्ढी ।
किंचि बहु भागमद्धे, ओमे जुत्तं परिहरंतो ॥

वृ- 'कथं ?' केन हेतुना ग्लान उत्पन्नः ? इति । सूरिराह-भूयांसः खलु रोगातङ्का यद्वशाद् ग्लानत्वमुपजायते । तत्र "शुष्यतस्त्रीणि शुष्यन्ति, चक्षूरोगो ज्वरो व्रणः ।" इति वचनाद् यदि ज्वरादिको विशोषणसाध्यो रोगः ततो जघन्येनाप्यष्टमं कारयितव्यः । यच्च यस्य रोगस्य पथ्यं तत् तस्य कार्यम्, यथा-वातरोगिणो घृतादिपानं पित्तरोगिणः शर्कराद्युपयोजनं श्लेष्मरोगिणो

नागरादिग्रहणमिति। "उण्होदगाइया वुड्ढि" त्ति उपवासं कर्तुमसहिष्णुर्यदि रोगेणामुक्तः पारयति तत एष क्रम-उष्णोदके प्रक्षिप्य कूरसिक्थानि अमलितानि ईषन्मलितानि वा सप्त दिनानि एकं वा दिनं दीयन्ते। ततः "किंचि" त्ति उष्णोदके मधुरोल्लणं स्तोकं प्रक्षिप्य तेन सह ओदनं द्वितीये सप्तके दिने वा दीयते। एवं तृतीये "बहु" त्ति बहुतरं मधुरोल्लणं उष्णोदके प्रक्षिप्य दीयते। "भागि" त्ति चतुर्थे सप्तके दिने वा त्रिभागो मधुरोल्लणस्य द्वौ भागावुष्णोदकस्य, "अद्धे" त्ति पञ्चमे सप्तके दिने वा अर्द्धं मधुरोल्लणस्यार्द्धमुष्णोदकस्य, षष्ठे "ओमि" त्ति त्रिभाग उष्णोदकस्य द्वौ भागौ मधुरोल्लणस्य, सप्तमे सप्तके दिने वा "जुत्तं" ति 'युक्तं' किञ्चिन्मात्रमुष्णोदकं शेषं तु सर्वमपि मधुरोल्लणमित्येवं दीयते। तदनन्तरं द्वितीयाद्यैरपि सप्ताहपथ्यान्यवगाहिमादीनि परिहरन् समुद्दिशति यावत् पुरातनमाहारं परिणमयतुं समर्थ सम्पन्न इति। एषा उष्णोदकादिका वृद्धिर्द्रष्टव्या। इह च सर्वत्राप्येक दिनं विशेषचूर्णि बृहद्भाष्याभिप्रायेण दिनसप्तकं तु चूर्ण्यभिप्रायणेति मन्तव्यम्॥

अथ "अट्ठम" त्ति पदं व्याख्यानयन्नाह-

[भा.१९०९] जाव न मुक्को ता अनसनं तु मुक्के वि ऊ अभत्तट्ठो।
असहुस्स अट्ठ छट्ठं, नाऊण रुयं व जं जोगं॥

वृ- यावदसौ ज्वर-चक्षूरोगादिना रोगेण न मुक्तस्तावद् 'अनशनम्' अभक्तार्थलक्षणं कर्त्तव्यम्। मुक्तेनापि चैकं दिवसमभक्तार्थो विधेयः। अथासावसहिष्णुस्ततोऽष्टमं वा षष्ठं वा करोति। ज्ञात्वा वा 'रुजं' रोगविशेषं यद् यत्र योग्यं शोषणमशोषणं वा तत् तत्र कार्यम्॥

यद्येवंकुर्वाणानामसौ रोग उपशाम्यति ततः सुन्दरम्, अथ नोपशाम्यति ततः को विधिः? इत्याह-

[भा.१९१०] एवं पि कीरमाणे, विज्जं पुच्छे अठायमाणम्मि।
विज्जाण अट्ठगं दो, अनिड्ढि इड्ढी अनिड्ढियरे॥

वृ- एवमपि क्रियमाणे यदि रोगो न तिष्ठति-नोपशाम्यति ततस्तस्मिन्नतिष्ठति वैद्यं पृच्छति। अथ कियन्तो वैद्या भवन्ति? इत्याह-वैद्यानां खल्वष्टकं मन्तव्यम्। तत्र द्वौ वैद्यौ नियमाद् 'अनृद्धिकौ' ऋद्धिरहितौ, 'इतरे' षड् वैद्या ऋद्धिमन्तो अनृद्धिमन्तो वा॥

तदेव वैद्याष्टकं दर्शयति-

[भा.१९११] संविग्गमसंविग्गे, दिट्ठत्थे लिंगि सावए सन्नी।
अस्सन्नि इड्ढि गइरागई य कुसलेण तेगिच्छं॥

वृ- 'संविग्नः' उद्यतविहारी १ 'असंविग्नः' तद्विपरीतः २ 'लिङ्गी' लिङ्गावशेषमात्रः ३ 'श्रावकः' प्रतिपन्नाणुव्रतः ४ 'संज्ञी' अविरतसम्यग्दृष्टि ५ 'असंज्ञी' मिथ्यादृष्टि, स च त्रिधा-अनभिगृहीतमिथ्यादृष्टि ६ अभिगृहीतमिथ्यादृष्टि ७ परतीर्थिकश्चेति ८। "इड्ढी गइरागई कुसले" त्ति व्याख्यातार्थम्॥

अनन्तरोक्तक्रमविपर्यासे प्रायश्चित्तमाह-

[भा.१९१२] वोच्चत्थे चउलहुगा, अगीयत्थे चउरो मासऽनुग्घाया।
चउरो य अनुग्घाया, अकुसले कुलसेण करणं तु॥

वृ- संविग्नगीतार्थं मुक्त्वा असंविग्नगीतार्थेन कारयति एवमादिविपर्यस्तकरणे चत्वारो लघवः।

गीतार्थं मुक्त्वा अगीतार्थेन कारयति चत्वारो मासा अनुद्धाताः। कुशलं विहायाकुशलेन कारयति चत्वारोऽनुद्धा मासाः। यत एवमतः कुशलेन चिकित्साकरणमनुज्ञातम्॥

अथ वैद्यसमीपं गच्छतां विधिमभिधित्सुराह-

[भा.१९१४] चोयगपुच्छा गमने, पमाण उवगरण सउण वावारे।
संगारे य गिहीणं, उवएसो चेव तुलना य॥

वृ-प्रथमतो नोदकपृच्छा वक्तव्या, ततो गमनं वैद्यसकाशे साधूनाम्, ततस्तेषामेव प्रमाणम्, तत उपकरणम्, ततः शकुनाः, तदनन्तरं वैद्यस्य 'व्यापारः' प्रशस्ता-ऽप्रशस्तरूपः, ततः 'सङ्गारः' सङ्केतो गृहिणां पश्चात्कृतादीनां यथा कर्त्तव्यः, ततो वैद्येनौषधादिविषय उपदेशो यथा दीयते, ततस्तमुपदेशं श्रुत्वा यथा स्वयं तुलना कर्त्तव्या, तदेतत् सर्वमपि वक्तव्यमिति द्वारगाथासमासार्थः।

अथ विस्तरार्थः प्रतिपाद्यते-तत्र प्रथमं नोदकपृच्छाद्वारम्, शिष्यः पृच्छति-किं ग्लानो वैद्यसमीपं नीयताम्? अथ वैद्य एव ग्लानसकाशमानीयताम्? अत्र कश्चिदाचार्यदेशीयः प्रतिवचनमाह-

[भा.१९१५] पाहुडिय त्ति य एगो, नेयव्वो गिलाणओ उ विज्जघरं।
एवं तत्थ भणंते, चाउम्मासा भवे गुरुगा॥

वृ- 'एकः' कश्चित् प्राह-वैद्ये ग्लानान्तिकमानीयमाने 'प्राभृतिका' वक्ष्यमाणलक्षणा भवति, अतो ग्लान एव वैद्यगृहं नेतव्यः। इत्थमाचार्यदेशीयेनोक्ते सूरिराह-एवं 'तत्र' ग्लाननयनविषये भणतो भवतश्चत्वारो मासा गुरुका भवन्ति॥

केयं पुनः प्राभृतिका? इत्यत आह-

[भा.१९१६] रह-हत्थि-जान-तुरए अनुरंगाईहि इंति कायवहो।
आसन मट्टिय उदए, कुरुकुय सघरे उ परजोगो॥

वृ-रथ-हस्तिनौ प्रतीतौ यानं-शिबिकादिकं तुरगः-प्रसिद्धः अनुरङ्गा-गन्त्री एतैः आदिशब्दादपरेण वा विच्छर्दन 'आयाति' आगच्छति वैद्ये कायानां-पृथिव्यादीनां वधो भवति। तथा समायातस्यासनं दातव्यम्। ग्लानस्य च शरीरे परामृष्टे व्रणादिपाटने वा कृते कुरुकुचाकारापणे मृत्तिकाया उदकस्य च वधो भवति। तथा समायातस्यासनं दातव्यम्। ग्लानस्य च शरीरे परामृष्टे व्रणादिपाटने वा कृते कुरुकुचाकारापणे मृत्तिकाया उदकस्य च वधो भवति। स्वगृहे तु परयोगो भवति, परप्रयोगेण सर्वमपि भवति न साधूनां किमप्यधिकरणं भवतीत्यर्थः। एषा प्राभृतिका वैद्ये ग्लानसमीपमानीयमाने यतो भवति॥

अतः किम्? इत्याह-

[भा.१९१७] लिंगत्थमाइयाणं, छण्हं वेज्जाण गम्मऊ मूलं।
संविग्गमसंविग्गे, उवस्सगं चेव आनेज्जा॥

वृ- लिङ्गस्थादीनां षण्णामपि वैद्यानां गृहं ग्लानं गृहीत्वा गम्यताम् नैते उपाश्रयमानेतव्याः, अधिकरणदोषभयात्। संविग्नोऽसंविग्नश्च एतौ द्वावप्युपाश्रयमेवानयेत्, दोषाभावात्॥

एवं परेणोक्ते सूरिराह-

[भा.१९१८] वाता-ऽऽतवपरितावण, मयपुच्छा सुत्र किं सुसानकुडी।

स च्चेव य पाहुडिया, उवस्सए फासु सा उ ॥

वृ- ग्लानो वैद्यगृहं नीयमानो वातेन आतपेन च महतीं परितापनामनुभवति। ''मयपुच्छ''त्ति लोकस्तं तथानीयमानं दृष्ट्वा पृच्छति-किमेष मृतो यदेवं नीयते ? । ''सुन्ने''ति स ग्लानो नीयमानोऽपान्तरालेऽपद्राणस्ततो वैद्येन यावद् मुखमुद्घाटितं तावत् 'शून्यं' जीवरहितं शवं तिष्ठतीति विज्ञाय ब्रूयात्-किं मदीयं गृहं श्मशानकुटी यदेवं मृतमानयत ? ।ततः स वैद्यः 'शवस्य स्पृष्टोऽहम्' इति कृत्वा सचेलः स्नायात्, फलहकाभ्यन्तरे वा छगणपानीयं दापयेत्, ततो ननु सैव प्राभृतिका समधिकतरा भवेत्।उपाश्रयं पुनः प्राशुकपानकादिना सा क्रियेत ततो न काचिद् विराधना भवतीति ॥

गतं नोदकपृच्छाद्वारम्। अथ गमनद्वारमाह-

[भा.१९१९] उग्गह-धारणकुसले, दक्खे परिणामए य पियधम्मे।
कालन्नू देसन्नू, तस्सानुमए अ पेसिज्जा ॥

वृ- वैद्येन दीयमानमुपदेशं ये झगित्येवावबुध्यन्ते न च चिरादपि विस्मारयन्ति तेऽवग्रह-धारणाकुशलास्तान् तथा 'दक्षान्' शीघ्रकारिणः 'परिणामकान्' यतास्थानमपवादपदपरिण-मनशीलान् 'प्रियधर्मिणः' धर्मश्रद्धालून् 'कालज्ञान्' वैद्यान्तिके प्रविशतां यः कालः-प्रस्तावस्तद्वेदिनः 'देशज्ञान्' यत्र प्रदेशे वैद्य उपविष्टस्तं प्रशस्तमप्रशस्तं वा ये जानते तान् तथा 'तस्य' ग्लानस्य वैद्यस्य वा येऽनुमताः-अभिप्रेतास्तान् वैद्यसकाशं प्रेषयेत् ॥

अत्रैव व्यतिरेके प्रायश्चित्तमाह-

[भा.१९२०] एअगुणविप्पमुक्के, पेसिंतस्स चउरो अनुग्घाया।
गीयत्थेहि य गमनं, गुरुगा य इमेहि ठाणेहिं ॥

वृ- एते-अवग्रह-धारणाकुशलत्वादयो ये गुणास्तैर्विप्रमुक्तान् प्रेषयत आचार्यस्य चत्वारोऽनुद्घाताः प्रायश्चित्तम्। गीतार्थैश्च तत्र गमनं कर्त्तव्यम्। चतुर्गुरुकाश्च प्रायश्चित्तम् 'एभिः' वक्ष्यमाणैः स्थानैः क्रियमाणैर्मन्तव्यम् ॥

तान्येवाभिधित्सुः प्रमाणोपकरणद्वारद्वयमाह-

[भा.१९२१] एक्कग दुगं चउक्कं, दंडो दूया तहेव नीहारी।
किण्हे नीले मइले, चोल रय निसिज्ज मुहपत्ती ॥

वृ-यद्येकः साधुर्वैद्यसमीपे प्रेष्यते ततः स वैद्यः 'यमदण्डोऽमागतः' इति दुर्निमित्तं गृह्णीयात्, अथ द्वौ प्रेष्येते ततः 'यमदूतावेतौ' इति मन्येत, अथ चत्वारः प्रेष्यन्ते ततः 'नीहारिणः' शवस्य स्कन्धदायिनोऽमी इति मिनुयात्, एतावतां च प्रेषणे चतुर्गुरुकम्। उपकरणद्वारे- यदि कृष्णं नीलं मलिनं वा उपकरणं प्रावृण्वन्ति तदा चतुर्गुरु। उपकरणं चेह चोलपट्टको रजोहरणं निषद्याद्वयोपेतं मुखवस्त्रिका उपलक्षणत्वादौर्णिक-सौत्रिकौ च कल्पाविति मन्तव्यम् । ततः शुद्धं श्वेतं चोपकरणं ग्रहीतव्यम् ॥

अथ शकुनद्वारमाह-

[भा.१९२२] मइल कुचेले अब्भंगियल्लए साण खुज्ज वडभे य।
कासायवत्थ उद्धूलिया य कज्जं न साहंति ॥

[भा.१९२३] नंदीतूरं पुन्नस्स, दंसणं संख-पडहसद्दो य।
भिंगार छत्त चामर, एवमादी पसत्थाइं ॥

वृ- अनयोर्व्याख्या प्राग्वत्।

[भा.१९२४] आवडणमाइएसुं, चउरो मासा हवंतऽनुग्घाया।
एवं ता वच्चंते, पत्ते य इमे भवे दोसा ॥

वृ- 'आपतनं' द्वारादौ शिरसो घट्टनम्, आदिशब्दात् प्रपतनं प्रस्खलनं वा सञ्जातम्, अपरेण वा वस्त्रादौ गृहीत्वा पश्चान्मुख आकृष्टः, 'कुत्र वा व्रजसि ?' इत्यादि भणितः, गच्छतामेव वा केनापि क्षुतम्, एवमादिष्वपशकुनेषु जातेषु यदि गच्छति तदा चत्वारो मासा अनुद्घाता भवन्ति। एवं तावद् व्रजतो मन्तव्यम्। अथ वैद्यगृहं प्राप्तस्तत इमे दोषाः परिहर्त्तव्या भवन्ति ॥

तानेव प्रतिपादयन् व्यापारद्वारमाह-

[भा.१९२५] साड-ऽब्भंगण-उव्वलण-लोय-छारु-क्कुरुडे य छिंद-भिंदंतो।
सुहआसण रोगविहिं, उवएसो वा वि आगमणं ॥

वृ- एकशाटकपरिधानो यदा वैद्यो भवति तदा न प्रष्टव्यः। एवं तैलादिना अभ्यङ्गनं कल्कलोध्रादिना वा उद्वर्त्तनं लोचकर्म वा-कूर्चमुण्डनादिलक्षणं कारयन्, क्षारस्य-भस्मन उत्कुरुटकस्य कचवरपुञ्जकस्य उपलक्षणत्वाद् बुसादीनां वा समीपे स्थितः, कोष्ठादिकं वा रफकादिना वा दूषितं कस्याप्यङ्गं छिन्दानः, घटम् अलाबुकं वा भिन्दानः, शिराया वा भेदं कुर्वाणो न प्रच्छनीयः, अथ ग्लानस्यापि किञ्चित् छेत्तव्यं ततश्छेदन-भेदनयोरपि प्रष्टव्यः। अथासौ शुभासने उपविष्टः 'रोगविधिं' वैद्यशास्त्रपुस्तकं प्रसन्नमुखः प्रलोकयति, अथवा रोगविधि-चिकित्सा तां कस्यापि प्रयुञ्जान आस्ते ततो धर्मलाभयित्वा प्रष्टव्यः। स च वैद्यः पृष्टः सन्नुपदेशं वा दद्याद् ग्लानसमीपे वा आगमनं कुर्यात् ॥

अथ सङ्कारश्च गृहिणामिति द्वारं व्याख्यानयति-

[भा.१९२६] पच्छाकडे य सन्नी, दंसणऽहाभद्द दानसड्ढे य।
मिच्छद्दिट्ठि संबंधिए अ परतित्थिए चेव ॥

वृ- 'पश्चात्कृतः' चारित्रं परित्यज्य गृहवासं प्रतिपन्नः, 'संज्ञी' गृहीताणुव्रतः, "दंसण"त्ति दर्शनसम्पन्नोऽविरतसम्यग्दृष्टिः, 'यथाभद्रकः' सम्यक्त्वरहितः परं सर्वज्ञशासने साधुषु च बहुमानवान्, 'दानश्राद्धः' दानरुचि, 'मिथ्यादृष्टिः' शाक्यादिशासनस्थः, 'सम्बन्धी' ग्लानस्यैव स्वजनः, 'परतीर्थिकः' सरजस्क-परिव्राजकादि परं भद्रकः। एतेषां सङ्केतः क्रियते, यथा-वैद्यस्य पार्श्वे वयं गच्छामः, भवद्भिस्तत्र सन्निहितैर्भवितव्यम्, यदसौ ब्रूयात् तद् युष्माभि सर्वमपि प्रतिपत्तव्यम् ॥

ये वैद्यसमीपे प्रस्थापितास्ते वैद्यस्येदं कथयन्ति-

[भा.१९२७] वाहि नियाण विकारं, देसं कालं वयं च धातुं च।
आहार अग्गि-धिबल, समुइं च कहिंति जा जस्स ॥

वृ- 'व्याधिं' ज्वरादिकं रोगं 'निदानं' रोगोत्थानकारणं 'विकारं' प्रवर्द्धमानरोगविशेषं 'देशं' ग्लानत्वोत्पत्तिनिबन्धनप्रवात-निवातादिप्रदेशरूपं 'कालं' रोगोत्थानसमयं पूर्वाह्णादिकं 'वयः'

शैशव-तारुण्यादिकं 'धातुं च' वातादीनां धातूनामन्यतमो यस्तस्योत्कटो वर्त्तते तं 'चः' समुच्चये 'आहारम्' अल्पभोजित्वादिलक्षणम् अग्निबलं-जाठरो वह्निरस्य मन्दः प्रबलो वा इत्येवं धृतिबलं-सात्त्विकः कातरो वाऽयमित्येवं तथा "समुइं"ति प्रकृति सा च या यस्य जन्मतः प्रभृति तां च कथयन्ति ॥

अथोपदेशद्वारमाह-

[भा.१९२८] कलमोदनो य खीरं, ससक्करं तूलियाइयं दव्वे ।
भूमिघरेट्टग खेत्ते, काले असुगीइ वेलाए ॥

[भा.१९२९] इच्छानुलोम भावे, न य तस्सऽहिया जहिं भवे विसया ।
अहवन दित्तादीसुं, पडिलेमा जा जहिं किरिया ॥

वृ-अनन्तरोक्तंव्याधि-निदानादिकं श्रुत्वा वैद्यः स्वगृहस्थित एव द्रव्यादिभेदात् चतुर्विधमुपदेशं दद्यात् । तद्यथा-द्रव्यतः कलमशालिरोदनस्तथा क्षीरं च सशर्करमस्य दातव्यम्, तथा तूलिकायां शाययितव्यः, आदिशब्दाद् गोशीर्षचन्दनादिना विलेपनीय इत्यादि । क्षेत्रतो भूमिगृहे पक्वेष्टकागृहे वाऽयं स्थापनीयः । कालतोऽमुकस्यां वेलायां प्रथमप्रहरादौ भोजनमयं कारणीयः ।

भावतो यदस्य स्वकीयाया इच्छाया अनुलोमम्-अनुकूलं तदेव कर्त्तव्यम्, नास्यज्ञा कोपनीयेति भावः, तथा यत्र 'तस्य' ग्लानस्य विषयाः 'अहिताः' अनिष्टाः क्रन्दित-विलपितादिरूपा गीतवादित्र-गोचरा वा शब्दादयो न भवन्ति तत्र स्थापनीय इति शेषः । 'अहवण'त्ति अथवा 'दृप्तादिषु' दृप्तचित्तप्रभृतिषु प्रतिलोमा क्रिया कर्त्तव्या । तत्र दृप्तचित्तस्यापमानना, यथा अपमानादिनाऽपहृत-चित्तस्य दर्पातिरेकज उन्मादः शाम्यति, क्षिप्तचित्तस्यापमानादिपोहृतचित्तस्य सम्मानना; यक्षाविष्टस्य तु यथायोगमपमानना सम्मानना वा विधेया; ज्वरादौ वा रोगे विशोषणादिका क्रिया या यत्र युज्यते सा तत्र विधेयेति ॥

अथ तुलनाद्वारमाह-

[भा.१९३०] अपडिहणंता सोउं, कयजोगाऽलंभि तस्स किं देमो ।
जहविभवा तेगिच्छा, जा लंभो ताव जूहंति ॥

वृ-वैद्येन दीयमानमुपदेशम् 'अप्रतिघ्नन्तः' तद्वचनमविकुट्टयन्तः श्रुत्वाऽऽत्मानं तोलयन्ति-किमेतत् कलमशाल्यादिकं लप्स्यामहे न वा ? इति । यदि विज्ञायते 'ध्रुवं लप्स्यामहे' ततो न किमपि भणन्ति । अथ न तस्य ध्रुवो लाभः ततो भणन्ति-यथा युष्माभिरुपदेशो दत्तस्तथा वयं योगं करिष्यामः, परं यदि कृतेऽपि योगे न लभामहे ततस्तस्य किं दद्मः ? ; अपि च वैद्यकशास्त्रे 'यथाविभवा' विभवानुरूपा चिकित्सा भणिता, यस्य यादृशी विभूतिस्तस्य तदनुरूपैरौषधैः पथ्यैश्च चिकित्सा क्रियते इत्यर्थः; अतो यूयमपि जानीथ, यथा-अस्माकं सर्वमपि याचितं लभ्यते नायाचितम्, अतो यदा कलमशाल्यादिकं याच्यमानमपि न प्राप्यते तदा किं तादद्यम् ? इति । एवं वैद्योपदेशमपसर्पयन्तस्तावद् "जूहंति"त्ति देशीशब्दत्वाद् आनयन्ति यावद् यस्य द्रव्यस्य कोद्रव-कूरादेर्ध्रुवः प्रतिदिनभावी लाभो भवतीति ॥

अथ तुलनामेव प्रकारान्तरेणाह-

[भा.१९३१] नियएहि ओसहेहिं, कोइ भणेज्जा करेमऽहं किरियं ।

तस्सऽप्पणो य थामं, नाउं भावं च अनुमन्ना ॥

**वृ**- तस्य ग्लानस्य 'कोऽपि' सज्ञातको वैद्यो भणेत्-निजकैरौषधैरहं ग्लानस्य रोमि क्रियाम्, प्रेषयत मदीये गृहे ग्लानमिति। ततो गुरुभि पृष्टेन ग्लानेन तस्यात्मनश्च 'स्थाम' वीर्यं तोलनीयम्-किमेष वैद्य औषधानि पूरयितुं समर्थो न वा ?, अहमपि किं धृत्या बलवान् ? आहोश्चिदबल-वान् ?, भावो नाम-किमेष धर्महितोश्चिकित्सां चिकीर्षु स्वगृहे मामाकारयति ? उताहो उन्निष्क्रामणाभिप्रायेण ? इति। यद्यसौ गृहस्य औषधपूरेण समर्थो यदि च स्वयं धृत्या बलवान् यदि च धर्महितोः सज्ञातकस्तमाकारयति तत एवं तस्यात्मनश्च वीर्यं भावं च ज्ञात्वा गुरूणामनुज्ञां गृहीत्वा तत्र गन्तव्यं नान्यथेति ॥

अथासौ वैद्यो ब्रूयात्-

[भा.१९३२]        जारिसयं गेलन्नं, जा य अवत्था उ वट्टए तस्स ।
                        अद्दट्ठूण न सक्का, वोत्तुं तंवच्चिमो तत्थ ॥

**वृ**- यादृशं युष्माभिह 'ग्लान्यं' ग्लानत्वमुत्पन्नं 'या च' यादृशी तस्यावस्था वर्तते तदेतददृष्ट्वा न शक्यते किमप्यौषधादि 'वक्तुम्' उपदेष्टुम्, ततः 'तत्रैव' ग्लानसमीपे व्रजाम इति ॥

एवं भणित्वा प्रतिश्रयमागतस्य तस्य यो विधि कर्तव्यस्तमभिधित्सुर्द्वारगाथामाह-

[भा.१९३३]        अब्भुट्ठाणे आसन, दायन भद्दे भती य आहारो ।
                        गिलाणस्स य आहारे, नेयव्वो आनुपुव्वीए ॥

**वृ**- प्रथममभ्युत्थानविषयो विधिर्वक्तव्यः, तत आसनविषयः, ततो ग्लानस्य दर्शना यथा क्रियते, ततः "भद्दे" त्ति भद्रको वैद्यो यथा चिकित्सामेवमेव करोति, इतरस्य तु 'भृतिः' मज्जनादिकं चिकित्सावेतनम् आहारश्च यथा दातव्यः, ग्लानस्य च यथा आहारे यतना कर्तव्या तथा सर्वोऽपि विधिरानुपूर्व्या प्ररूप्यमाणो ज्ञातव्य इति समुदायार्थः ॥

अवयवार्थं तुप्रतिद्वारमभिधित्सुराह-

[भा.१९३४]        अब्भुट्ठाणे गुरुगा, तत्थ वि आणाइणो भवे दोसा ।
                        मिच्छत्त रायमादी, विराधना कुल गणे संघे ॥

**वृ**- आचार्यो यदि वैद्यस्यागतस्याभ्युत्थानं करोति तदा चत्वारोगुरुकाः। तत्राप्याज्ञादयो दोषा भवेयुः । तथा मिथ्यात्वं राजादयो व्रजेयुः, आदिग्रहणेन राजामात्यादिपरिग्रहः । ते हि चारपुरुषादिमुखादाचार्यं वैद्यस्याभ्युत्थितं श्रुत्वा स्वयं वा दृष्ट्वा चिन्तयेयुः-अमी श्रमणा अस्माकमभ्युत्थानं न कुर्वन्ति, अस्मद्भृत्यस्य तुनीचतरस्येत्थमभ्युत्तिष्ठन्ते, अहो! दुर्दृष्टधर्माणोऽमी इति। प्रद्विष्टा वा यत् तस्यैवाचार्यस्य यदि वा कुलस्य गणस्य सङ्घस्य वा विराधनां कुर्युः तन्निष्पन्नं प्रायश्चित्तम् ॥

[भा.१९३५]        अनब्भुट्ठाणे गुरुगा, तत्थ वि आणाइणो भवे दोसा ।
                        मिच्छत्त सो व अन्नो, गिलाणमादीविराधनया ॥

**वृ**- अथैतद्दोषभयादाचार्यो नोत्तिष्ठति तत्रापि चतुर्गुरुकाः । तत्राप्याज्ञादयो दोषा भवन्ति । 'स वा' वैद्योऽन्यो वा तं दृष्ट्वा मिथ्यात्वं गच्छेत्, यथा-अहो ! तपस्विनोऽप्यमी गर्वमुद्वहन्ति । प्रद्विष्टो वा वैद्यो ग्लानस्य क्रियां न कुर्याद् अपप्रयोगं वा कुर्यात्, एवं ग्लानविराधना । आदि

शब्दादाचार्यादिर्वा राजवल्लभतया विराधनां कुर्यात्, यद्वा 'युष्माकं देहेऽमुको व्याधिर्वर्तते तच्चिकित्सार्थममुकमौषधं भवतां दास्यते' इति भणित्वा विरुद्धौषधप्रदानेनाचार्यं विराधयेत् ॥

यत एते दोषा अतोऽयं विधि कर्त्तव्यः-

[भा.१९३६] गीयत्थे आनयणं, पुव्विं उट्ठित्तु होइ अभिलावो ।
गिलाणस्स दावणं धोवणं च चुन्नाइगंधे य ॥

वृ- गीतार्थैर्वैद्यस्य प्रतिश्रये आनयनं कर्त्तव्यम् । यदि ते पञ्च जनास्ततः सङ्घाटकः प्रथमत एवागच्छति । अथ त्रयस्तत एकस्तन्मध्यात् प्रथममागच्छति, आगत्य च गुरूणां कथयति-वैद्य आगच्छतीति । ततो गुरवो द्वे आसने तत्र साधुभि स्थापयन्ति । स्वयं तु चङ्क्रमणलक्ष्येण 'पूर्वं' वैद्यागमनात् प्रागेवोत्थायोर्द्धव स्थिता आसते । गीतार्थैश्च निवेदयितव्यम् 'एष वैद्यः' इति । आचार्यैश्च पूर्वमनालपतोऽपि वैद्यस्याभिलापः कर्त्तव्यः, पूर्वन्यस्तेन चासनेपोभिमन्त्रणीयः । तत आचार्यो वैद्यश्च द्वावप्यासने उपविशतः । ततो ग्लानस्य दर्शना कार्या । थम् ? इत्याह-ग्लानस्य यद् उपकरणे शरीरे वा अशुचिनोपलिप्तं तस्य 'धावनं' प्रक्षालनं कर्त्तव्यम्, चशब्दात् खेल-कायिकी-संज्ञामात्रकाण्येकान्ते स्थापनीयानि, भूमिकाया उपलेपनं सम्मार्जनं च विधेयम्, तथापि यदि दुर्गन्धो भवति ततः पटवासादिचूर्णानि तत्र विकीर्यन्ते, आदिशब्दात् कर्पूरादिभि सुगन्धिद्रव्यैरशुभो गन्धोऽपनीयते, ततः प्रावृतशुक्लवासाः शुचीभूतो ग्लानो वैद्यस्य दर्श्यते । यदि तस्य किञ्चिद् व्रणादिकं पाटयितव्यं तदा तस्मिन् पाटिते सति उष्णोदकादि प्राशुकं हस्तधावनं दातव्यम् । अथोष्णोदकमसौ नेच्छथइ थथः पश्चात्कृतादयो मृत्तिकामुदकं या प्रयच्छन्ति ॥ गतमभ्युत्थाना-ऽऽसन-दर्शनाद्वारत्रयम् ।

अथ भद्रकद्वारमाह-

[भा.१९३७] चउपादा तेगिच्छा, को भेसज्जाइँ दाहिई तुब्भं ।
तहियं च पुव्वपत्ता, भणंति पच्छाकडादऽम्हे ॥

वृ- वैद्यो ब्रूयात्-चिकित्सा चतुष्पादा भवति, चत्वारः पादाः-चतुर्थांशरूपा यस्यां सा चतुष्पादा, तद्यथा-आतुरः प्रतिचरका वैद्यो भेषजानि । एतैश्चतुर्भिर्वैद्यशास्त्रोक्तगुणोपेतैश्चिकित्सा निष्पद्यते, अतः को नाम ग्लानस्य योग्यानि भेषजानि युष्माकं प्रदास्यति ? । ततस्तत्र दत्तसङ्केततया पूर्वप्राप्ताः पश्चात्कृतादयो भणन्ति-वयं दास्याम इति । एवं तावद् भद्रको वैद्यः क्रियां करोति न चान्यत् किमपि स्पृहयति ॥

यस्तु प्रान्तस्तमुद्दिश्य भृतिद्वारमाहरद्वारं चाह-

[भा.१९३८] कोई मज्जनगविहिं, सयणं आहार उवहि केवडिए ।
गीयत्थेहि य जयणा, अजयण गुरुगा य आणाई ॥

वृ- कश्चिद् वैद्यो ब्रूयात्-मज्जनं-स्नानं तस्यविधि-प्रकारः 'मज्जनविधि' तैलाभ्यङ्गनादि-प्रक्रियापुरस्सरं स्नानमित्यर्थः, एतत् सर्वं मम को नाम दास्यति ? इति । ततः पश्चात्कृतादिभिरभ्यु-पगन्तव्यम्-वयं दास्यामः । तेषामभावे गीतार्थैर्यतनया सर्वमप्यभ्युपगन्त-व्यम् । यद्ययतनया अभ्युपगच्छन्ति प्रतिषेधयन्ति वा ततश्चत्वारो गुरुकाः आज्ञादयश्च दोषाः । एषा निर्युक्तिगाथा ॥

अथैनामेव विभावयिषुराह-

[भा.१९३९] एयस्स नाम दाहिह, को मज्झणगाइ दाहिई मज्झं ।
ते चेव णं भणंती, जं इच्छसि अम्हे तं सव्वं ॥

वृ- 'एतस्य' ग्लानस्य 'नाम' इति सम्भावनयां यद् यत् प्रायोग्यं भेषजादि तत् तत् सर्वं दास्यथ, मम पुनर्मज्ञनकादिकं को दास्यति ? इत्युक्ते 'त एव' पश्चात्कृतादयः "णं" इति तं वैद्यं भणन्ति- यद् इच्छसि तत् सर्वं वयं दास्यम इत ॥

[भा.१९४०] जं एत्थ अम्हे सव्वं, पडिसेहे गुरुग दोस आणादी ।
एएसिं असईए, पडिसेहे गुरुग आणादी ॥

वृ- ये ते पूर्वं पश्चात्कृतादयः प्रज्ञापितास्तैः 'यदत्र ग्लानस्य युष्माकं चोपयुज्यते तत् सर्वं वयं दास्यमः' इत्युक्ते सति यः साधुस्तानधिकरणभयात् प्रतिषेधयति तस्य चत्वारो गुरुका आज्ञादयश्च दोषाः । अथ न सन्ति पश्चात्कृतादयस्तत एतेषाम् 'असति' अभावे यो वैद्यं 'प्रतिषेधयति' 'न वयं भवतो मज्ञनादि दास्यामः' इति तस्यापि चतुर्गुरुका आज्ञादयश्च दोषाः ॥

पश्चात्कृतादिषु प्रतिषिध्यमानेषु यद् वैद्यश्चिन्तयति तदाह-

[भा.१९४१] जुत्तं सयं न दाउं, अन्ने दिंते वि ऊ निवारिंति ।
न करिज्ज तस्स किरियं, अवप्पओगं व से दिज्जा ॥

वृ- युक्तममीषां स्वयमदातुम् अपरिग्रहत्वात्, यत् पुनरन्यान् ददतो निवारयन्ति तन्न युज्यते। एवं प्रद्विष्टः सन् 'तस्य' ग्लानस्य क्रियां न कुर्यात्, 'अपप्रयोगं वा' विरुद्धौषधयोगं "से" तस्य 'दद्यात्' प्रयुञ्जीत, तस्मादन्यान् न निवारयेदिति ॥

[भा.१९४२] दाहामो त्ति य गुरुगा, तत्थ वि आणाइणो भवे दोसा ।
संका व सूयएहिं, हिय नट्ठे तेणए वा वि ॥

वृ- पश्चात्कृतादीनामभावे यदि साधवो भणन्ति 'वयमवश्यं ते सर्वमपि दास्यामः' इति तदा चत्वारो गुरुकाः, तत्राप्याज्ञादयो दोषा भवेयुः । तथा तस्यापि हिरण्यादौ केनचिद् हृतेऽन्यथा वा नष्टे सति शङ्का भवति-अहिरण्य-सुवर्णा अप्यमी यद् दास्याम इति भणन्ति तद् नूनमेतैरेव गृहीतामिति । यद्वा 'सूचकैः' आरक्षिकादिभिस्तच्छ्रुत्वा राजकुले गत्वा सूच्यते, यथा- स्तेनका एत श्रमणाः, येन वैद्यस्य हिरण्यादिकं दातव्यतया प्रतिपद्यन्ते । ततो ग्रहणा-ऽऽकर्षणादयो दोषाः ॥

[भा.१९४३] पडिसेह अजयणाए, दोसा जयणा इमेहि ठाणेहिं ।
भिक्खण इड्ढी बिइयपद रहिय जं भाणिहिसि जुत्तं ॥

वृ- पश्चात्कृतादीनामभावे ययतनया 'प्रतिषेधयन्ति' 'प्रतिषेधयन्ति' 'न तव भृतिं वा भक्तं वा दास्यामः' इति ततश्चतुर्गुरुका आज्ञादयश्च दोषाः । तस्माद यतना एभि स्थानैः कर्त्तव्या- "भिक्खण"त्ति भिक्षां कृत्वा वयं दास्यामः, "इड्ढि"त्ति ऋद्धिमता वा निष्कामता यत् क्वापि निक्षिप्तं तद् गृहीत्वा दास्यामः, "बिइयपदे"त्ति 'द्वितीयपदे वा' क्वचित् कारणजाते सञाते सति यदर्थजातं गृहीतं तद् उद्धरितं दास्यामहे । "रहिए"त्ति पश्चात्कृतादिरहिते एवं भणन्ति- "जं भाणिहिसि जुत्तं" यत् त्वं भणिष्यसि तद् यथाशक्ति करिष्यामः, यद् वा अस्माकं 'युक्तम्' उचितं तद् विधास्याम इति ॥

अथासौ वैद्यो ब्रूयात्-

[भा.१९४४] अहिरन्नग त्थ भगवं !, सक्खी ठावेह जे ममं देंति ।
धंतं पि दुद्धकंखी, न लभइ दुद्धं अधेणूतो ॥

वृ- भगवन् ! अहिरण्यकाः स्थ यूयम् अतः साक्षिणः स्थापयत ये मम पश्चात् प्रयच्छन्ति । अमुमेवार्थं प्रतिवस्तूपमया द्रढयति-''धंतं पि''त्ति देशीवचन्वाद् अतिशयेनापि दुग्धकाङ्क्ष न लभते दुग्धमधेनोः सकाशात् ॥

एवं वैद्येनोक्ते किं कर्तव्यम् ? इत्याह-

[भा.१९४५] पच्छाकडाइ जयणा, दावणकज्जेण जा भणिय पुव्विं ।
सद्धा-विभवविहूणा, ति च्चि इच्छंतगा सक्खी ॥

वृ- पश्चात्कृतादिविषया मज्जनकादिदापनकार्येण या पूर्वं यतना भणिता सैव इह मन्तव्या । नवरं ये पश्चात्कृतादयः श्रद्धया विभवेन च विहीनास्त एव इच्छन्तः सन्त इह साक्षिणःस्थाप्यन्ते, यथा-वयं साक्षीभवितुं नेच्छन्ति ततो य ऋद्धिमत्प्रव्रजितः स इदं ब्रूयात्-

[भा.१९४६] पंचसयदान-गहणे, पलाल-खेलाण छड्डणं व जहा ।
सहस्सं व सयसहस्सं, कोडी रज्जं व अमुगं वा ॥

[भा.१९४७] एवं ता गिहवासे, आसीय य दानि किं भणीहामो ।
जं तुब्भऽम्ह य जुत्तं, तं उग्गाढम्मि काहामो ॥

वृ-यथा पलाल-खेलयोश्छर्दनं विधीयते तथा दीना-ऽनाथादिभ्योवयं रूपकाणां पञ्च शतानि हेलयैव दानं दत्तवन्तः, उपार्जनामपि कुर्वाणाः पञ्चशतानां ग्रहणमेवमेव कृतवन्तः, एवं सहं शतसहं कोटिं राज्यम् 'अमुकं वा' अनिर्दिष्टं सङ्ख्यास्थानं लीलयैव वयं दत्तवन्तः स्वीकृतवन्तो वा, एवं तावदस्माकं गृहवासे विभूतिरासीत्, इदानीं पुनरकिञ्चनाः श्रमणाः सन्तः किं भणिष्यामः? किं करिष्यामः ? इति भावः, परं तथापि ग्लाने 'उद्गाढे' प्रगुणीभूते सति यत् तवास्माकं च 'युक्तम्' अनुरूपं तत् करिष्याम इति ॥

एवंतावत् स्वग्रामे वैद्यविषया यतना भणिता । अथ स्वग्रामे वैद्यो न प्राप्यते ततः परग्राम-दप्यानेतव्यः तत्र विधिमाह-

[भा.१९४८] पाहिज्जे नाणत्तं, बाहिं तु भईए एस चेव गमो ।
पच्छाकडाइएसुं, असहिय रहिए उ जो भणिओ ॥

वृ-पाथेयंनाम-कण्हकमर्दनवेतनं यत् तष्य भक्तादि दीयते तत्र नानात्वं विशेशः वास्तव्यवेद्यस्य तत्र सम्भवत्ति अस्यतु भवतीति भावः तत्र च बहिर्ग्रामादागतस्य 'भृतौ' मज्जनादी वेतने एष एव गमोद्रष्टव्यः, पश्चात्कृतादिभिररहिते वा योऽन्तरमेव भणितः ॥

अथात्रैव यतना विशेष माह–

[भा.१९४९] मज्जनगा दिच्छंते बाहिं अब्भिमंतरे व अनुसट्ठि ।
धम्मकह-विज्जमंते, निमित्त तस्सऽट्ठ अन्नो वा ॥

वृ- मज्जनं-स्नानम् आदिशब्दाद् अभ्यङ्गनोर्द्वर्त्तनादिकं 'बहि' मार्गे आगच्छन् 'अभ्यन्तरे वा ग्लानसकाशे प्राप्तो यदीच्छति ततः सर्वं तस्य पश्चात्कृतादयः कुर्वते । तेषामभावेऽनुशिष्टिः

क्रियते, यथा-यतीनां नोपरमते ततो धर्मकथा कर्त्तव्या। तथाप्यप्रतिपद्यमाने विद्या-मन्त्र-निमित्तानि 'तस्य' वैद्यस्यावर्जनार्थं प्रयुज्यन्ते, अन्यो वा तानि प्रयुज्य वशीक्रियते, ततस्तस्य वैद्यस्यासौ मज्जनादिकं कारायते ॥

अथ धर्मकथापदं भावयति-

[भा.१९५०] तह से कहिंति जह होइ संजओ सन्नि दानसड्ढो वा।
बहिया उ अण्हायंते, करिंति खुड्डा इमं अंतो ॥

वृ- आक्षेपणीप्रभृतिभिर्धर्मकथाभिस्तस्य तथा धर्मं कथयन्ति यथाऽसौ संयतो भवति 'संज्ञी वा' गृहीतानुव्रतोऽविरतसम्यग्दृष्टिर्वा 'दानश्राद्धो वा' मुधैव साधूनामारोग्यदाशीलो भवति। अथ धर्मकथालब्धिर्नास्ति ततो विद्या-मन्त्रादयः प्रयुज्यन्ते। तेषाममावे तस्य आमलकादीनि दीयन्ते, भण्यते चासौ-बहिर्गत्वा तडागादिषु स्नानं कुरुत। अथ बहि स्नातुं नेच्छति ततो बहिरस्नाति तस्मिन् क्षुल्लकाः 'इदं' वक्ष्यमाणम् 'अन्तः' प्रतिश्रयस्याभ्यन्तरे कुर्वन्ति ॥

किं तत्? इत्याह-

[भा.१९५१] उसिणे संसट्ठे वा, भूमी-फलगाइ भिक्ख घट्ठाई।
अनुसट्ठी धम्मकहा, विज्ज-निमित्ते य अंतो बहिं ॥

वृ- 'उष्णोदकेन' प्रतीतेन 'संसृष्टेन' गोरसरसभावितेन अपरेण वा प्राशुकेन पानकेन क्षुल्लकास्तं स्नपयन्ति। शयनमाश्रित्य भूमौ फलके आदि[illegible] पल्यङ्कादिषु [illegible] शाय्यते। भोजनं यतीनां 'भैक्षं' भिक्षापर्यटनेन लब्धमानीय तस्य दातव्यम्। "घट्ठाइ" त्ति 'घट्टं' कमढकमयं भाजनम् आदिग्रहणात् कांस्यपात्र्यादिपरिग्रहः, एतेषु भोजनमसौ कारयितव्यः। हिरण्यादिकं द्रविणजातं याचमानस्य 'अन्तः' इति वास्तव्यवैद्यस्य 'बहिं' इत्यागन्तुकवैद्यस्योभयस्याप्य-नुशिष्टिधर्मकथा-विद्या-निमित्तानि प्रयोक्तव्यानीति निर्युक्तिगाथासमासार्थः ॥

अथैनामेव भावयन्नाह-

[भा.१९५२] तेल्लुव्वट्टण ण्हावण, खुड्डाऽसति वसभ अन्नलिंगेणं।
पट्टदुगादी भूमी, अणिच्छि जा तूलि-पल्लंके ॥

वृ- क्षुल्लकास्तं वैद्यं तैलेनाभ्यङ्ग्य कल्केनोद्वर्त्योष्णोदकादिना प्राशुकेनैकान्ते स्नपयन्ति। अथ क्षुल्लका न सन्ति स्नपयितुं वा न जानते ततो ये 'वृषभाः' गच्छस्य शुभा-ऽशुभकारणेषु भारोद्वहनसमर्थास्ते 'अन्यलिङ्गेन' गृहस्थादिसम्बन्धिना स्नानादिकं वैद्यस्य कुर्वन्ति। "पट्टदुगाई" इत्यादि, स वैद्यः शयितुकामः प्रथमतो भूमौ संस्तारपट्टमुत्तरपट्टकं च प्रस्तीर्य शाय्यते। अथ नासौ पट्टद्वये स्वप्तुमिच्छति तत और्णिक-सौत्रिकौ कल्पौ प्रस्तीर्येते। तथापि यदि नेच्छति ततः काष्ठफलके संस्तारोत्तरपट्टकावास्तीर्य शयनं कार्यते। तथाप्यनिच्छति उत्तरोत्तरं तावन्नेतव्यं यावत् तूली-पल्यङ्कावप्यानीय शाययितव्य इति ॥

अथ भैक्षपदं भावयति-

[भा.१९५३] समुदानिओदनो मत्तओ वऽनिच्छंति वीसु तवणा वा।
एवं पऽनिच्छमाणे, होइ अलंभे इमा जयणा ॥

वृ- समुदानं नाम-उच्चावचकुलेषु भिक्षाग्रहणम् तत्र लब्धः सामुदानिकः, "अध्यात्मादिभ्य

इकण्'' इति इकणप्रत्ययः, स चासावोदनश्च सामुदानिकौदनः, स प्रथमतो वैद्यस्य दातव्यः । अथासौ तं भोक्तुं नेच्छति ततो मात्रकं वर्त्तापनीयम्, तत्र प्रायोग्यं तदर्थं ग्रहीतव्यमिति भावः । अथ तथापि नेच्छति ततः ''वीसु''त्ति पृथग् ओदनं व्यञ्जनमपि पृथक् तदर्थं ग्राह्यम् । अथ शीतलमिति कृत्वाऽसौ तद् नेच्छति तदा ''तवण''त्ति तदेव गृहीत्वा यतनया तापयितव्यम् । एवमप्यनिच्छति अलभ्यमाने वा 'इयं' वक्ष्यमाणलक्षणा यतना भवति ॥

तामेवाह-

**[भा.११५४]** तिगसंवच्छर तिग दुग, एगमनेगे य जोणिघाए अ ।
संसट्ठमसंसट्ठे, फासुयमप्फासुए जयणा ॥

**वृ**-येषां शालि-व्रीहिप्रभृतीनां धान्यानां संवत्सरत्रयादूर्द्धमागमे विध्वस्तयोनिकत्वमुक्तं तेषां सम्बन्धिनो ये त्रिवार्षिकास्तन्दुलास्ते ''तिग दुग एग''न्ति प्रथमतस्त्रिच्छटिता ग्रहीतव्याः, तदभावे द्विच्छटिताः, तेषामलाभे एकच्छटिता अपि । अथ त्रिवार्षिका न प्राप्यन्ते ततो द्विवार्षिकाः, तेषामलाभे एकवार्षिका अपि व्युत्क्रान्तयोनिकाः सन्तस्त्रिव्द्येकच्छटिताः क्रमेण ग्राह्याः । ''अनेगे य'' त्ति येषां धान्यानाम् 'अनेकानि' वर्षत्रयाद् बहुतराणि वर्षाणि स्थिति प्रतिपादिता, यथा-तिल-मुद्ग-माषादीनां पञ्च वर्षाणि अतसी-कङ्गु-कोद्रवप्रभृतीनां तु सप्त वर्षाणीत्यादि, तेषामपि तन्दुलाः पञ्चवार्षिकाः सप्तवार्षिका वा त्रिव्द्येकच्छटिताः क्रमेण ग्राह्याः । अत्रापि वर्षपरिहाणिर्व्युत्क्रान्त-योनिकत्वं च तथैव द्रष्टव्यम् । इह च येषां यावती स्थितिरुक्ता ते तावतीं स्थितिं प्राप्ताः सन्तो नियमाद् व्युत्क्रान्योनिकाः, ये त्वद्यापि न परिपूर्णां स्थितिं प्राप्नुवन्ति ते व्युत्क्रान्तयोनिका अव्युत्क्रान्तयोनिका वा भवेयुरिति । ''जोनिघाए अ''त्ति व्युत्क्रान्तयोनिकानामभावेऽव्युत्क्रान्तयोनिका अपि ये 'योनिघातेन' जीवोत्पत्तिस्थानविध्वंसनेन गृहिभि साध्वर्थमचित्तीकृतास्तेऽप्येवमेव वैद्यार्थं ग्रहीतव्याः । तथा पानकं पुनरिदं तस्य दातव्यम्-''संसट्ठ'' इत्यादि, दध्यादिभाजनधावनं संसृष्टपानकम्, उष्णोदकं तन्दुलधावनादि वा असंसृष्टपानकम्, उभयमपि प्रथमतः प्राशुकं तदभावेऽप्राशुकमपि यतनया यत् त्रसविरहितं तत् तदर्थं ग्रहीतव्यम् ॥

अथैनामेव निर्युक्तिगाथां भावयति-

**[भा.११५५]** वक्कंतजणितिच्छडदुएक्कछडणे वि होइ एस गमो ।
एमेव जोनिघाए, तिगाइ इतरेण रहिए वा ॥

**वृ**-त्रिवार्षिकादयो ये व्युत्क्रान्तयोनिकास्ते त्रिच्छटिता ग्राह्याः । तेषामभावे द्व्येकच्छटितानामपि 'एष एव गमः' यत्तेऽपि व्युत्क्रानतयोनिका गृह्यन्ते । एवमेव च योनिघातेऽपि साध्वर्थं कृते ''तिगाइ''त्ति त्रिव्द्येकच्छटिताः क्रमेण ग्रहीतवयाः । तेषामभावे त्रिवार्षिकादयो यथाक्रमं कण्डापनीयाः । अथ नास्ति कोऽपि कण्डयिता ततः 'इतरेण' अव्यक्तलिङ्गेन 'रहिते वा' सागारिकवर्जिते प्रदेशे स्वयमेव कण्डयति । यद्वा ''रहिए''त्ति पश्चात्कृतादिभिर्गृहस्थै रहिते एषा प्रागुक्ता वक्ष्यमाणा च यतना कर्त्तव्या, यत्र तु पश्चात्कृतादय भावितगृहस्थाः प्राप्यन्ते तत्र सर्वमपि वैद्यस्य समाधानं त एवोत्पादयन्तीति भावः ॥

ते च तन्दुलाः कथमुपस्कर्त्तव्याः ? इत्याह-

**[भा.११५६]** पुव्वाउत्ते अवचुल्लि चुल्लि सुक्खं-घन-मज्झुसिर-मविद्धे ।

पुव्वकय असइ दाने, ठवणा लिंगे य कल्लाणे ॥

वृ-पूर्वं-प्रथमं गृहिभि काष्ठप्रक्षेपणादायुक्तः पूर्वायुक्तस्तस्मिन् 'पूर्वायुक्ते' पूर्वतप्तेऽवचुल्लके प्रथमं तन्दुलानुपस्करोति । तदभावे पूर्वतप्तायां चुल्ल्याम् । अथ चुल्ल्यपि पूर्वतप्ता न प्राप्यते तत ईदृशानि दारूणि प्रक्षिप्योपस्करोति, तद्यथा-''सुक्खघणमज्झुसिरमविद्धि''त्ति शुष्काणिवार्द्राणि घनानि-वंशवद् न रन्ध्रयुक्तानि अशुषिराणि-अस्फुटितानि त्वचारहितानि वा अविद्धान-घुणैरकृतच्छिद्राणि । ईदृशानि दारूणि वक्ष्यमाणप्रमाणोपेतानि पूर्वकृतानि च ग्रहीतव्यानि । अथ पूर्वकृतानि न सन्ति ततः स्वयमपि तेषां प्रमाणोपेतत्वं कर्तव्यम् । तथा याचमानस्य वैद्यस्य ''दाने''त्ति अर्थजातदानं कर्त्तव्यम् । कथम् ? इति अत आह-''ठवण''त्ति शैक्षेण प्रव्रजता यद् निकुञ्जादिषु द्रविणजातं स्थापितं तस्य दानं कर्त्तव्यम् । ''लिङ्गि''त्ति स्वलिङ्गेन परलिङ्गेन गृहिलिङ्गेन वा अर्थजातमुत्पादनीयम् । ''कल्लाणे''त्ति प्रगुणीभूतस्य ग्लानस्यतत्प्रतिचरकाणां च पञ्चकल्याणकं दातव्यम् ॥

अथ प्रक्षिप्यमाणदारूणां प्रमाणादिकमाह-

[भा.१९५७] हत्थद्धमत्त दारुग, निच्छल्लिय अघुनिया अज्झाकडगा ।
असईइ सयंकरणं, अघट्टणोसक्कडमहाउं ॥

वृ-हस्तार्द्ध-द्वादशाङ्गुलानि तन्मात्राणि-तावत्प्रमाणदैर्ध्योपेतानि 'निच्छल्लिकानि' छल्लीरहितानि 'अघुणितानि' घुणैरविद्धानि दारूणि भवन्ति । ईदृशानि च यथाकृतानि ग्रहीतव्यानि । यथाकृतानाम् 'असति' अभावे 'स्वयंकरणम्' आत्मनैव हस्तार्द्धप्रमाणानि क्रियन्ते छल्लिश्चापनीयते इत्यर्थः । उपस्कृते च भक्ते उल्मुकानां घट्टना न कर्त्तव्या किन्तु तेऽग्निजीवा यथायुष्कमनुपाल्य स्वयमेव विध्यायन्ति ॥

अथ पानकयतनामाह-

भा (१९५८] कंजिय-चाउलउदए, उसिणे संसट्ठमेतरे चेव ।
ण्हाण-पियणाइपाणग, पादासइ वार दद्दरए ॥

वृ-पानीयं याचतो वैद्यस्य काञ्जिकं दातव्यम् । यदि तद् नेच्छति ततः 'चाउलोदकं' तन्दुलधावनम् । तदप्यनिच्छत्युष्णोकं वा संसृष्टपानकं वा । 'इतरं' ति प्राशुकमनिच्छति अप्राशुकमपि, यावत् कर्पूरवासितम् । एवं स्नान-पानादिषु कार्येषु पानकं तस्य दातव्यम् । तच्च प्रथमतः पात्रके स्थाप्यते । अथ नास्त्यतिरिक्तं पात्रकं न वाऽसौ तत्र स्थापयितुं ददाति ततो वारके स्थापयित्वा 'दर्दरयति' मुखे घनेन चीवरेण बध्नाति येन कीटिकादयः सत्त्वा नाभिपतन्ति ॥

भावितं भैक्षप-दम् । अथ ''चङ्गादि'' त्ति पदं भावयति-

[भा.१९५९] चङ्गग सराव कंसिय, तंबक रयए सुवन्न मणिसेले ।
भोत्तुं स एव धोवइ, अनिच्छि किढि खुड्ड वसभा वा ॥

वृ- 'चङ्गकं' कमढकं तत्रासौ भोजनं कार्यते । अथ तत्र नेच्छति भोक्तुं ततः शरावे । तत्रानिच्छति कांस्यभाजने ताम्रभाजने वा । तत्राप्यनिच्छति रजतस्थाले सुवर्णस्थाले मणिशैलमये वा भाजने भोजयितव्यः । भुक्त्वा चासौ स्वयमेव तद् भाजनं धावति । अथ नेच्छति धावितुं ततः 'किढी' स्थविरश्राविका सा प्रक्षालयति । तस्या अभावे क्षुल्लकाः । क्षुल्लकाणामभावे वृषभाः ॥

शिष्यः पृच्छति-कथमसंयतस्य संसृष्टभाजनं संयतः प्रक्षालयति ? किं निमित्तं वा वैद्यस्य मज्जनादिकमियत् परिकर्म क्रियते ? उच्यते-

[भा.१९६०] पूयाईणि वि मग्गइ, जह विज्जो आउरस्स भोगट्ठी।
तह विज्जे पडिकम्मं, करिंति वसभा वि मुक्खट्ठा ॥

वृ-यथा वैद्यः 'भोगार्थी' भोगाङ्गद्रव्याभिलाषी 'आतुरस्य' रोगिणः 'पूयादीन्यपि' पूयं-पक्वरक्तं तदादीनि आदिशब्दात् शोणितप्रभृतीन्यप्यशुचिस्थानानि 'मार्गयति' शोधयति तथा वृषभा अपि मोक्षार्थं वैद्यस्य सर्वमपि 'प्रतिकर्म' मज्जनादिकं कुर्वन्ति ॥

यस्तु न कुर्यात् तस्य प्रायश्चित्तमाह-

[भा.१९६१] तेइच्छियस्स इच्छनुलोमगं जो न कुज्ज सइ लाभे।
असंजमस्स भीतो, अलस पमादी व गुरुगा से ॥

वृ-चिकित्सया चरति जीवति वा चैकित्सिकः-वैद्यस्तस्य या मज्जनादाविच्छा तस्याः अनुलोमम्-अनुकूलं प्रतिकर्म 'सति लाभे' लाभसम्भवे ''असंजमस्स भीतो'' इति पश्चार्द्धे यदुक्तं 'असंयमाद्' असंयतवैयावृत्त्यकरणलक्षणाद् भीतोऽलसः प्रमादी वा यो न कुर्यात् तस्य चत्वारो गुरुकाः ॥

अथ ग्लान-वैद्ययोर्वैयावृत्त्यकारणान्युपदर्शयति-

[भा.१९६२] लोगविरुद्धं दुप्परिचओ उ कयपडिकिई जिनाणा य।
अतरंतकारणेते, तदट्ठ ते चेव विज्जम्मि ॥

वृ-ग्लानस्य यदि वैयावृत्त्यं न क्रियते ततो लोकविरुद्धं भवति, लोको ब्रूयात्-धिगमीषां धर्मं यत्रैवं मान्द्यसम्भवेऽपीदृशमनाथत्वमिति। तथा परस्परमेकप्रवचनप्रतिपत्त्यादिना यः कोऽपि लोकोत्तरिकः सम्बन्धः सः 'दुष्परित्यजः' दुष्परिहर इति ग्लानस्य वैयावृत्त्यं कार्यम्। कृतप्रतिकृतिश्चैवं कृता भवति, यत् तेन ग्लानेन पूर्वं हृष्टेन सता यदात्मन उपकृतं तस्य प्रत्युपकारः कृतो भवतीति भावः। 'जिनानां' तीर्थकृतां या 'आज्ञा' अग्लान्या ग्लानस्य वैयावृत्त्यं कुर्यात्' इत्यादिलक्षणा सा कृता भवति। एतानि अतरन्तः-ग्लानस्तस्य वैयावृत्त्ये कारणानि। 'तदर्थं' ग्लानार्थं यद् वैद्स्य वैयावृत्त्यकरणं तत्रापि 'तान्येव' लोकविरुद्धपरिहारादीनि कारणानि द्रष्टव्यानि ॥

अथ ग्लानस्य मज्जनादिविधिमतिदिशन्नाह-

[भा.१९६३] एसेव गिलाणम्मि वि, गमो उ खलु होइ मज्जणाईओ।
सविसेसो कायव्वो, लिंगविवेगेण परिहीणो ॥

वृ-एष एव ग्लानेऽपि मज्जनादिकः 'गमः' प्रकारो भवति, यथा वैद्यविषय उक्तः। नवरं 'सविशेषः' भक्ति-बहुमानादिविशेषसहितो लिङ्गविवेकेन परिहीनः सर्वोऽपि कर्त्तव्यः ॥

अथ ग्लान-वैद्ययोरनुवर्त्तनाया महार्थत्वं दर्शयन्नाह-

[भा.१९६४] को वोच्छिइ गेलन्ने, दुविहं अनुअत्तणं निरवसेसं।
जह जायइ सो निरुओ, तह कुज्जा एस संखेवो ॥

वृ-ग्लान्ये सति या द्विविधा अनुवर्त्तना-ग्लानविषया वैद्यविषया च तां 'निरवशेषां' सम्पूर्णां को नाम वक्ष्यति ? बहुवक्तव्यत्वाद् न कोऽपीत्यभिप्रायः। अतो यथाऽसौ ग्लानो नीरुग् जायते तथा कुर्यात्। एषः 'सङ्क्षेपः' सङ्ग्रहः, उपदेशसर्वस्वमिति यावत् ॥

अथ वैद्यस्य दानं दातव्यं तत्र विधिमाह-

[भा.१९६५] आगंतु पउण जायण, धम्मावण तत्थ कइयदिट्ठंता ।
पासादे कूवादी, वत्थुकुरुडे तहा ओही ॥

वृ- ग्लाने प्रगुणे जाते सति आगन्तुकवैद्यो यदा दक्षिणां याचते तदा तस्यानुशिष्टिर्दातव्या-यथा न वर्त्तते यतीनां हस्ताद् वेतनकं ग्रहीतुम्, मुधाकृतममीषां बहुफलं भवति, अपि च 'धर्मापणः' धर्मव्यवहरणहट्टोऽयमस्माकम्, अतो यदत् सम्भवति तदेव ग्रहीतव्यम् । क्रयिकदृष्टान्तश्च तत्रोच्यते। यथा- केनचित् क्रयिकेण गान्धिकापणे रूपकान् निक्षिप्य भणितम्-ममैतैः किञ्चिद् भाण्डजातं दद्याः । ततः सोऽन्यदा तत्रापणे मद्यं मार्गयितुं लग्नः । वणिजा प्रोक्तः-ममापणे गन्धपण्यमेव व्यवह्रियते, नास्ति मम मद्यम्, अतस्त्वं गन्धपण्यं गृहाणेति । एवमस्माकमपि धर्मापणाद् धर्मं गृह्णातु भवान्, नास्ति द्रविणजातम् ॥ इत्युक्ते यदि नोपरमते ततः शैक्षेण प्रव्रजता यद् निकुञ्जादिषु परिष्ठापितं तदानीय दीयते । तस्याभावे यद् उत्सन्नस्वामिकं क्वापि प्रासादे कूपे वा आदिशब्दाद् निर्धमनादिषु वा निधानं तथा शटितपतितं यद् वास्तु-गृहं तद् उत्कुरुटमिवेति कृत्वा वास्तूत्कुरुटमुच्यते तत्र वा यद् निधानं तद् अवधिज्ञानिन उपलक्षणत्वाद् दशपूर्विप्रभृतीनां वा पार्श्वे पृष्ट्वा ततः प्रासादादिस्थानादानीय वैद्यस्य दातव्यम् ॥

वास्तव्यवैद्यस्य दानविधिमाह-

[भा.१९६६] वत्थव्व पउण जायण, धम्मादानं पुनो अनिच्छंते ।
स च्चैव होइ जयणा, रहिए पासायमाईया ॥

वृ- प्रगुणीभूते ग्लाने वास्तव्यवैद्योऽपि यदि याचनं कुरुते ततस्तस्यापि धर्म एवादानं-द्रव्यं तद् दातव्यम् । "पुनो अनिच्छंते" त्ति 'पुनः' भूयो भूयः प्रज्ञाप्यमानोऽपि यदि धर्मादानं नेच्छति तदा पश्चात्कृतादिभिर्गृहस्थै रहिते सैव प्रासादादिका यतना कर्त्तव्या या अनन्तरगाथायामभि-हिता ॥

द्वयोरप्यागन्तुक-वास्तव्यवैद्ययोरुपधिं याचतोर्विधिमाह-

[भा.१९६७] उवहिम्मि पडगसाडग, संवरणं वा वि अत्थुरणगं वा ।
दुगभेदादाहिंडणऽनुसट्ठि परलिंग हंसाई ॥

वृ- 'उपधौ' उपकरणे 'पटशाटकः' परिधानं 'संवरणं' प्रच्छदपटः 'आस्तरणं' प्रस्तरणकं तूली वा यद्येतानि मार्गयति ततस्तथैव धर्मापणदृष्टान्तः क्रियते । अथ नोपरमते ततो द्विकं-साधुयुग तल्लक्षणो यो भेदः-प्रकारस्तेन आदिशब्दाद् वृन्देन वा हिण्डित्वा पटशाटकादिकमुत्पाद्य वैद्यस्य प्रयच्छन्ति । अथ सर्वथैव न प्राप्यते ततोऽनुशिष्टिः-धर्मकथादीनि प्रयोक्तव्यानि । तथाऽप्यनुपरतस्य परलिङ्गं कृत्वा हंसादिप्रयोगेणोत्पाद्य प्रयच्छन्ति ॥

द्वितीयपदे न दद्यादपि, यत आह-

[भा.१९६८] बिइयपदे कालगए, देसुट्ठाणे व बोहिगाईसु ।
असिवाई असईइ व, ववहारऽपमाण अदसाई ॥

वृ- द्वितीयपदे वैद्ये ग्लाने वा कालगते सति वस्त्रादिकं न दद्यादपि । यद्वा बोधिकाः-म्लेच्छास्तेषाम् आदिशब्दात् परचक्रस्य वा भयेन 'देशस्योत्थाने' उद्वसीभवने । अशिवे वा आदिग्रहणाद् दुर्भिक्षे

राजद्विष्टे वा सञ्जाते सति। 'असति वा' सर्वथैव स्त्राणामलाभे व्यवहारः क्रियते, व्यवहारेण च निर्जितस्य न प्रयच्छन्ति, व्यवहारेण वा कारणिकैर्दाप्यमानाः प्रमाणहीनानि 'अदशाकानि' वस्त्राणि दर्शयन्ति-अस्माकमीदृशान्येव स्वाधीनानि न सन्ति ॥

अथ द्रविणजातं मार्गयति वैद्ये विधिमाह-

[भा.१९६९] कव्वड्डगमादी तंबे, रुप्पे पीते तहेव केवडिए।
हिंडण अनुसट्ठादी, पूइयलिंगे तिविह भेदो ॥

वृ- कपर्दकादयो मार्गयित्वा तस्य दीयन्ते। ताम्रमयं वा नाणकं यद् व्यवह्रियते, यथा-दक्षिणापथे काकिणी। रूपमयं वा नाणकं भवति, यथा-भिल्लमालेद्रम्मः। पीतं नामसुवर्णं तन्मयं वा नाणकं भवति, यथा-पूर्वदेशे दीनारः। 'केवडिको नाम' यथा तत्रैव पूर्वदेशे केतराभिधानो नाणक-विशेषः। एतेषामप्युत्पादनं कुर्वता सङ्घाटकेन वृन्देन वा हिण्डनं तथैव कर्त्तव्यम्। अलब्धेऽनुशिष्ट्यादीनि प्रयोक्तव्यानि। लिङ्गेति पदं [illegible]-पूजितम् [illegible] तत्र त्रिविधो भेदः कर्त्तव्यः। किमुक्तं भवति? -तस्मिन् देशे यत् त्रयाणां स्वलिङ्ग-गृहिलिङ्ग-कुलिङ्गानां मध्यात् पूजितं तेन लिङ्गेन द्रविणजातमुत्पादयन्ति वैद्यं वा प्रज्ञापयन्ति ॥

द्वितीयपदे द्रविणजातमपि न दद्यात्, कथम्? इत्याह-

[भा.१९७०] बिइयपदे कालगए, देसुट्ठाणे व बोहियादीसु
असिवादी असईइ व, ववहारऽहिरन्नगा समणा ॥

वृ- द्वितीयपदे वैद्ये ग्लाने वा कालगते सति, देशस्य वा बोधिकादिभयेनोत्थाने-उद्वसने, अशिवादौ वा सञ्जाते, 'असत्तायां वा' सर्वथैवालाभेऽर्थजातं वैद्यस्य न दद्यात्। व्यवहारे च समुपस्थिते ब्रुवते-अहिरण्यकाः श्रमणा भवन्तीति तावत् सर्वत्रापि सुप्रतीतम्, परं तथाप्येतेनारब्धैरस्माभिस्तदपि द्रविणजातं गवेषयितुमारब्धम्, ततो लोको ब्रवीति-न वर्त्तते शिष्टानां यतिभ्यो हिरण्यादि दातुम्।

यत उक्तम्-

गृहस्थस्यान्नदानेन, वानप्रस्थस्य गोरसात्।
यतीनां च हिरण्येन, दाता स्वर्गं न गच्छति ॥ इति।

एवं व्यवहारो लभ्यते ॥

अथ कल्याणकपदं व्याख्यानयति-

[भा.१९७१] पउणम्मि य पच्छित्तं, दिज्जइ कल्लाणगं दुवेण्हं पि।
वूढे पायच्छित्ते, पविसंती मंडलिं दो वि ॥

वृ- ग्लाने प्रगुणीभूते सति 'द्वयोरपि' ग्लान-प्रतिचरवर्गयोः 'कल्याणकं' प्रायश्चित्तं दीयते। इहैवमविशेषेणोक्तेऽपि ग्लानस्य पञ्चकल्याणकं प्रतिचरकाणां त्वेककल्याणकं दातव्यम्, आदेशान्तरेण वा द्वयोरपि पञ्चकल्याणकं मन्तव्यम्। आह च निशीथचूर्णिकृत्- आदेसन्तरेण वा दुण्ह वि पंचकल्लाणं ति। ततो व्यूढे प्रायश्चित्ते 'द्वावपि' ग्लान-प्रतिचरकवर्गौ भोजनादिमण्डलीं प्रविशतः ॥

अथोपसंहरन्नाह-

[भा.१९७२] अनुयत्तणा उ एसा, दव्वे विज्जे य यन्निया दुविहा।
इत्तो चालणदारं, वुच्छं संकामणं चुभओ ॥

वृ- ग्लानप्रायोग्यद्रव्यविषया वैद्यविषया चैषा द्विविधाऽवर्तना वर्णिता। इत ऊर्ध्वं चालनाद्वारं सङ्क्रामणद्वारं च 'उभयतः' ग्लानद्वयविषयं वक्ष्ये ॥

[भा.१९७३] विज्जस्स व दव्वस्स व, अट्ठा इच्छंते होइ उक्खेवो।
पंथो य पुव्वदिट्ठो, आरक्खिओ पुव्वभणिओ उ ॥

वृ- वैद्यस्य वा 'द्रव्यस्य' औषधादिलक्षणस्य वा अर्थाय यदि ग्लान इच्छति ग्रामान्तरं गन्तुं तदा तस्य 'उत्क्षेपः' चालना कर्त्तव्या। यदि रात्रौ गन्तव्यं भवति तदा पन्थाः पूर्वमेव दृष्टः कर्त्तव्यः। आरक्षिकश्च पूर्वमेव 'वयं रात्रौ ग्लानं गृहीत्वा गमिष्यामः, भवता चौरादिशङ्कया न ग्रहीतव्याः' इति भणितः कर्त्तव्य इति ॥

अथास्या एव निर्युक्तिगाथायाः पूर्वार्द्धं भावयति-

[भा.१९७४] चउपाया तेगिच्छा, इह भिज्जा नत्थि न वि य दव्वाइं।
अमुगत्थ अत्थि दोन्नि वि, जइ इच्छसि तत्थ वच्चामो ॥

वृ- क्वापि क्षेत्रे वैद्या औषधानि वा न सन्ति ततो ग्लानं प्रति इदं ब्रुवते- चिकित्सा चतुष्पादा पूर्वोक्तनीत्या भवति, तत्रेह क्षेत्रे वैद्या न सन्ति नापि च 'द्रव्याणि' औषधादीनि अत्र सन्ति, अमुकत्र ग्रामे नगरे वा द्वे अपि विद्येते, अतो यदि त्वमिच्छसि ततस्तत्र व्रजाम इति ॥

ग्लानः प्रतिभणति-

[भा.१९७५] किं काहिइ मेविज्जो, भत्ताइ अकारयं इहं मज्झं।
तुब्भे वि किलेसेमि य, अमुगत्थ महं हरह खिप्पं ॥

वृ- आर्या ! यदि नाम अत्र वैद्यो भवति ततः किं ममासौ करिष्यति ? उपलक्षणमिदम्, तेन यद्यौषधान्यपि भवेयुस्तान्यपि मे किं करिष्यन्ति ? यतो भक्तादिकमकारकं ममेह विद्यते, तस्मिंश्चाकारके युष्मानपि मुधैव परिक्लेशयामि।

यत उक्तम्-

भेषजेन विना व्याधिं, पथ्यादेव निवर्त्तते।
न तु पथ्यविहीनस्य, भेषजानां शतैरपि ॥

ततो माममुकत्र ग्रामे नगरे वा क्षिप्रं 'हरत' नयत, येन मे तत्र भक्तादि कारकं स्यात्। एवंब्रुवाणोऽसौ ग्रामान्तरं प्रति चालयितव्यः ॥

चालनायामेव कारणान्तरमाह-

[भा.१९७६] सानुप्पगभिक्खट्ठा, खीणे दुद्धाइयाण वा अट्ठा।
अब्भितरेतरा पुन, गोरससिंभुदय-पित्तट्ठा ॥

वृ- नागरं ग्लानं सानुप्रगे-प्रत्यूषवेलायां लभ्यते या भिक्षा सा सानुप्रगभिक्षा तदर्थं ग्रामं नयन्ति। नगरे हि प्राय उत्सूरे भिक्षा लभ्यते, तावतीं च वेलां प्रतीक्षमाणस्य ग्लानस्य कालातिक्रान्तभोजित्वेन जाठराग्निमान्द्यमुपजायते, अतः सानुप्रगे-सवारमेव भिक्षा यद्ग्रामे लभ्यते

तदर्थं ग्लानो ग्रामं नीयते। नगरे वा दुग्धादीनि दुर्लभद्रव्याणि क्षीणानि अतस्तेषामर्थाय आभ्यन्तराः-नगरवास्तव्यसाधवो ग्लानमन्यत्र नयन्ति। 'इतरे पुनः' ग्रामीणग्लानप्रतिचरका ग्लानस्य गोरसेन उपलक्षणत्वादन्येन तादृशेन श्लेष्मजनकद्रव्येण सिम्भः-श्लेष्मा तस्योदयो जातः पित्तं वा क्षुभितमिति परिभाव्य तदुपशामकद्रव्याणामुत्पादनार्थं ग्लानं नगरं नयन्ति ॥

अथवा नागरग्लानचालनायामिदं कारणम्-

[भा.१९७७] परिहीनं तं दव्वं, चमढिज्जंतं तु अन्नमन्नेहिं ।
कालाइक्कंतेण य, वाही परिवड्ढिओ तस्स ॥

वृ-अन्यान्यग्लानसङ्घाटकैः स्थापनाकुलेषु चमढ्यमानं सत् परिक्षीणं 'तद् द्रव्यं' ग्लानप्रायोग्यम्, अथवा वैद्येन ग्लानस्योपदिष्टम्-सवारमेव भवता भोक्तव्यम्; तदानीं च नगरे न लभ्यते ततस्तेन कालातिक्रान्तेन तस्य व्याधि सुष्ठुतरं परिवर्द्धितः ॥

एवमादीनि कारणानि विज्ञाय ते परस्परं भणन्ति-

[भा.१९७८] उक्खिप्पऊ गिलाणो, अन्नं गामं वयं तु नेहामो ।
नेऊण अ[illegible],सव्वपयत्ते[illegible] ॥

वृ- उत्क्षिप्यतां ग्लानः, यतस्तमन्यं ग्रामं वयं नेष्याम इत्येकवाक्यतया निश्चित्य सवारमेव तैर्निर्गन्तव्यम्। यतः प्रत्युषसि शीतलायां वेलायां नीयमानो ग्लानो न परिताप्यते।

किञ्च-

प्रत्युषसि हता मार्गाः, परिहासहताः स्त्रियः
मन्दबीजं हतं क्षेत्रं, हतं सैन्यमनायकम् ॥

ततो नीत्वा ग्लानमन्यं ग्रामंसर्वपरयत्नेन प्रतिचरणं कर्त्तव्यमिति ॥

गतं चालनाद्वारम्।

अथ सङ्क्रामणाद्वारमाह-

[भा.१९७९] सो निज्जई गिलाणो, अंतर सम्मेलणा य संछोभो ।
नेऊण अन्नगामं, सव्वपयत्तेण कायव्वं ॥

वृ-एमुत्क्षिप्य यं ग्रामं 'सः' नागरग्लानो नीयते ततो ग्रामादन्यो ग्लानो नगरमानीयमानोऽस्ति तेषामुभयेषामपि साधूनाम् 'अन्तरा' अपान्तराले सम्मिलना भवति ततः परस्परं वन्दनं कृत्वा निराबाधं पृष्ट्वा ग्लानयोः 'संछोभं' सङ्क्रामणं कुर्वन्ति, नागरा ग्रामीणग्लानं गृह्णन्ति ग्रामीणास्तु नागरग्लानमित्युक्तं भवति। नीत्वा चान्यं ग्रामं सर्वप्रयत्नेन प्रतिचरणमुभयैरपि कर्त्तव्यम् ॥

किं पुनरभिधाय ते ग्लानसङ्क्रामणां कुर्वन्ति ?

इति उच्यते-

[भा.१९८०] जारिस दव्वे इच्छह, अम्हे मुत्तूण ते न लब्भिहिह ।
इयरे वि भणंतेवं, नियत्तिमो नेह अतरंते ॥

वृ-नागरा ग्रामेयकान् ब्रुवते-'यादृशानि' तिक्त-कटुकादीनि द्रव्याणि ग्लानार्थमिच्छत 'तानि' तादृशानि अस्मान् 'मुक्त्वा' विना न लप्स्यध्वे। 'इतरेऽपि' ग्रामेयका नागरान् एवं भणन्ति-यूयमस्माभिर्विना दुग्धादीनि न लप्स्यध्वे। ततस्ते द्वयेऽपि परस्परमभिदधति-यद्येवं ततो निवर्त्तामहे,

यूयममुम् 'अतरन्तं' ग्लानं नयत, वयं युष्मदीयं नयाम इति ॥

एवं सङ्क्रामणां कृत्वा तत्रच ग्रामे नगरे वा नीत्वा सर्वप्रयत्नेन प्रतिचरणा विधेया । न पुनर्निर्धर्मतयेत्थं चिन्तनीयं भणनीयं वा-

[भा.१९८१] देवा हुने पसन्ना, जं मुक्का तस्स ने कयंतस्स ।
सो हु अइतिक्खरोसो, अहिगं वावारणासीलो ॥

[भा.१९८२] तेनेव साइया मो, एयस्स वि जीवियम्मि संदेहो ।
पउणो वि न एसऽम्हं, ते वि करिज्ञा न व करिज्ञा ॥

वृ- 'हुः' अवधारणे, नूनं "ने" अस्माकं देवाः प्रसन्नाः यद् मुक्ता वयं तस्मात् कृतान्तात्, गाथायां पञ्चम्यर्थे षष्ठी। इह कृतान्तशब्देन कृतं-निष्पादितं बह्वपि कार्यमन्तं नयतीति व्युत्पत्त्या कृतघ्न उच्यते, यद्वा कृतान्तः-यमस्तत्तुल्यत्वादसावपि कृतान्तः । अत एवाह- स हि 'अतितीक्ष्णरोषः' पुनः पुना रोषणशीलो दीर्घरोषी वेत्यर्थः । 'अधिकम्' अत्यर्थं 'व्यापारमाशीलः' कृताकृतेषु कार्येषु भूयो भूयो नियुङ्क्ते । यद्वा तेनैव ग्लानेन 'सादिताः' खेदं प्रपिता वयमतोऽस्य कर्त्तुं न शक्नुमः । अथवा एतस्यापि जीविते सन्देहस्ततः किं निरर्थकमात्मानं परिक्लेशयामः ?, प्रगुणीभूतोऽपि चैष नास्माकं भविष्यि, तेऽप्यस्मदीयस्य कुर्युर्वा न वा, अतो वयमपि न कुर्महि । एवमादीनि ब्रुवाणानां तेषां निर्धर्माणामाचार्येण शिक्षा दातव्या न तूपेक्षा विधेया ॥

यत आह-

[भा.१९८३] जो उ उवेहं कुज्ञा, आयरिओ केणई पमादेणं ।
आरोवणा उ तस्सा, कायव्वा पुव्वनिद्दिट्ठा ॥

वृ- 'यस्तु' यः पुनराचार्य केनापि प्रमादेन प्रमत्तः सन्नुपेक्षां कुर्यात् तस्यारोपणा पूर्वनिर्दिष्टा कर्त्तव्या, चत्वारो गुरव इत्यर्थः ॥

अथवेयमारोपणा-

[भा.१९८४] उवेहऽपत्तिय परितावण महय मुच्छ किच्छ कालगए ।
चत्तारि छ च्च लहु-गुरु, छेओ मूलं तह दुगं च ॥

वृ- यो ग्लानस्योपेक्षां करोति तस्य चत्वारो गुरुकाः । उपेक्षायां कृतायां यद्यप्रीतिकं ग्लानस्य जायते ततोऽपि चत्वारो गुरवः । अनागाढपरितापे चतुर्लघु । आगाढपरितापे चतुर्गुरु । महादुःखे षड्लघु । मूर्च्छायां षड्गुरु । कृच्छ्रप्राणे च्छेदः । कृच्छ्रोच्छ्वासे मूलम् । समवहतेऽनवस्थाप्यम् । कालगते पाराञ्चिकम् ॥

[भा.१९८५] उवेहोभासण परितावण महय मुच्छ किच्छ कालगए ।
चत्तारि छ च्च लहु-गुरु, छेओ मूलं तह दुगं च ॥

वृ- उपेक्षायां स ग्लानः स्वयमेव गत्वा गृहस्थानवभाषते चत्वारो लघवः । तस्य तत्र गच्छतः शीत-वाता-ऽऽतपैः परिश्रमेण वाऽनागाढपरितापनादीनि जायन्ते ततः प्रायश्चित्तमनन्तर-गाथोक्तनीत्या द्रष्टव्यम् ॥

[भा.१९८६] उवेहोभासण ठवणे, परितावण महय मुच्छ किच्छ कालगए ।
चत्तारि छ च्च लहु-गुरु, छेदो मूलं तह दुगं च ॥

वृ- उपेक्षायां ग्लानो भक्त-पानमौषधं वा अवभाषणेनोत्पाद्य स्थापयति न शक्नोम्यहं दिने दिने पर्यटितुं ततश्चत्वारो गुरवः। तेन परिवासितेन शीतलत्वाद् अनागाढपरितापनादीन्युपजायन्ते प्रायश्चित्तयोजना प्राग्वत् ॥

[भा.१९८७]उवेहोभासण करणे, परितावण महय मुच्छ किच्छ कालगए।
चत्तारि छ च्च लहु-गुरु, छेदो मूलं तह दुगं च ॥

वृ- उपेक्षायां कृतायां यदि ग्लानोऽवभाष्य स्वयमेवौषधादिकं करोति गृहस्थैर्वा कारयति तदा चत्वारो गुरवः। स्वयंकुर्वतश्चिकित्साद्यनभिज्ञैर्गृहस्थैर्वा चिकित्सां कारयतोऽनागाढपरितापादीनि भवन्ति। शेषं प्राग्वत् ॥

[भा.१९८८]	वेहानस ओहाणे, सलिंगपडिसेवणं निवारिंते।
गुरुगा अनिवारिंते, चरिमं मूलं च जं जत्थ ॥

वृ-अप्रतिजागरितो ग्लानो यदि निर्वेदेन वैहायसं मरणमभ्युपगच्छति ततस्तेषामप्रतिजागरकाणां 'चरमं' पाराञ्चिकम्। अथ 'अवधावनम्' उत्प्रव्रजनं करोति ततो मूलम्। स्वलिङ्गस्थितो यद्यकल्प्यप्रतिसेवनां करोति ततश्चतुर्गुरुकाः। यदि तं तथा प्रतिसेवमानं निवारयति तदापि चतुर्गुरुकाः। अथ न निवारयति ततो यद् यत्र अप्राशुकेऽनेषणीये वा गृह्यमाणे प्रायश्चित्तं तत् तत्र प्राप्नोति ॥

अथ निर्द्धर्मा येषु स्थानेषु ग्लानं त्यजेत् तान्याह-

[भा.१९८९]	संविग्गा गीयत्थाऽसंविग्गा खलु तहेव गीयत्था।
संविग्गमसंविग्गा, नवरं पुन ते अगीयत्था ॥

[भा.१९९०]	संविग्ग संजईओ, गीयत्था खलु तहेवऽगीयत्था।
गीयत्थ अगीयत्था, नवरं पुन ता असंविग्गा ॥

वृ- संयताश्चतुर्द्धा, तद्यथा-संविग्ना गीतार्थाः १ असंविग्ना गीतार्था २ संविग्ना अगीतार्थाः ३ असंविग्ना अगीतार्थाश्च ४ इति।

संयत्योऽपि चतुर्विधाः, तद्यथा-संविग्ना गीतार्था १ संविग्ना अगीतार्थाः २ असंविग्ना अगीतार्थाः ३ असंविग्ना अगीतार्थाश्च ४ इति।

एतेष्वष्टसु स्थानेषु ग्लानं परित्यजतः प्रायश्चित्तमाह-

[भा.१९९१]	चउरो लहुगा गुरुगा, छम्मासा होंति लहुग गुरुगा य।
छेदो मूलं च तहा, अनवट्ठप्पो य पारंची ॥

वृ-प्रथमे स्थाने ग्लानं परित्यजति चत्वारो लघुकाः। द्वितीये चत्वारो गुरुकाः। तृतीये षण्मासा लघवः। चतुर्थे षण्मासा गुरवः। पञ्चमे छेदः। षष्ठे मूलम्। सप्तमेऽनवस्थाप्यः। अष्टमे पाराञ्चिको भवति ॥

यदि वा-

[भा.१९९२]	संविग्ग नीयवासी, कुसील ओसन्न तह य पासत्था।
संसत्ता विंठाया, अहछंदा चेव अट्ठमगा ॥

वृ-संविग्नाः १ नित्यवासिनः २ कुशीलाः ३ अवसन्नाः ४ पार्श्वस्थाः ५ संसक्ताः ६ वेण्ठकाः

७ यथाच्छन्दाश्चैवाष्टमाः ८ ॥

एतेषु परित्यजतो यथासङ्ख्यमिदं प्रायश्चित्तम्-

[भा.१९९३] चउरो लहुगा गुरुगा, छम्मासा होंति लहुग गुरुगा य ।
छेदो मूलं च तहा, अणवठ्ठप्पो य पारंची ॥

वृ- चत्वारो लघुकाः १ चत्वारो गुरुकाः २ षण्मासा लघुकाः ३ षण्मासा गुरुकाः ४ छेदः ५ मूलं च तथा ६ अनवस्थाप्यश्च ७ पाराञ्चिकः ८ ॥

अथवा-

[भा.१९९४] संविग्गा सिज्ञातर, सावग तह दंसणे अहाभद्दे ।
दाने सड्ढी परतित्थिगे य परतित्थिगी चेव ॥

वृ- 'संविग्नाः' प्रतीताः १ 'शय्यातरः' प्रतिश्रयदाता २ 'श्रावकः' गृहीतानुव्रतः ३ दर्शनसम्पन्नः- अविरतसम्यग्दृष्टिः ४ 'यथाभद्रकः' शासनबहुमानवान् ५ 'दानश्राद्धिकः' दानरुचि ६ 'परतीर्थिकः' शाक्यादिपुरुषः ७ 'परतीर्थिकी' शाक्यादिपाषण्डिनी ८ ॥

एतेषु परित्यजतो यथाक्रममिदं प्रायश्चित्तम्-

[भा.१९९५] चउरो लहुगा गुरुगा, छम्मासा होंति लहुग गुरुगा य ।
छेदो मूलं च तहा, अणवठ्ठप्पो य पारंची ॥

वृ- उक्तार्थाः ॥

अथ क्षेत्रतःप्रायश्चित्तमाह-

[भा.१९९६] उवस्सय निवेसण साही, गाममज्झे य गामदारे य ।
उज्जाने सीमाए, सीममइक्कामइत्ताणं ॥

[भा.१९९७] चउरो लहुगा गुरुगा, छम्मासा होंति लहुग गुरुगा य ।
छेदो मूलं च तहा, अणवठ्ठप्पो य पारंची ॥

वृ- क्षेत्रान्तरं सङ्क्रामन्नुपाश्रये ग्लानं परित्यज्य यदि गच्छति तदा चत्वारो लगुकाः । उपाश्रयान्निष्काश्य निवेशनं यावदानीय परिहरति चत्वारो गुरुकाः । साहिकायां षण्मासा - लघवः । ग्राममध्ये षण्मासा गुरवः । ग्रामद्वारे च्छेदः । उद्याने मूलम् । ग्रामसीमनि परिष्ठापयति अनवस्थाप्यम् । स्वग्रामसीमानमतिक्राम्य परित्यजन् पाराञ्चिक इति । यत एवमतो न परित्यज- नीयः ॥

कियन्तं पुनः कालमवश्यं प्रतिचरणीयः ? उच्यते-

[भा.१९९८] छम्मासे आयरिओ, गिलाण परियट्टई पयत्तेणं ।
जाहे न संथरेज्जा, कुलस्स उ निवेदणं कुज्ञा ॥

वृ- येन स ग्लानः प्रव्राजितो यस्य वा उपसम्पदं प्रतिपन्नः स आचार्य सूत्रार्थपौरुषीप्रदानमपि परिहृत्य प्रयत्नेन षण्मासान् ग्लानं 'परिवर्त्तयति' प्रतिचरति । यदा षट्स्वपि मासेषु पूर्णेषु स ग्लानः 'न संस्तरेत्' न प्रगुणीभवेत्, यद्वा आचार्य एव स्वयमन्याभिर्गणचिन्ताभिर्न संस्तरेत् ततः 'कुलस्य निवेदनं कुर्यात्' कुलसमवायं कृत्वा तस्य समर्पयेदित्यर्थः ॥

ततः-

[भा.१९९९] संवच्छराणि तिन्नि य, कुलं पि परियट्टई पयत्तेणं।
जाहे न संथरिज्ञा, गणस्स उ निवेदणं कुज्ञा ॥

वृ- त्रीन् संवत्सरान् कुलमपि प्रायोग्यभक्त-पानौषधादिभि प्रयत्नेन परिवर्त्तयति। ततस्त्रिषु वर्षेषु पूर्णेषु यदा न संस्तरेत् तदा गणस्य निवेदनं कुर्यात् ॥

ततः-

[भा.२०००] संवच्छरं गणो वी, गिलाण परियट्टई पयत्तेणं।
जाहे न संथरिज्ञा, संघस्स निवेयणं कुज्ञा ॥

वृ- एकं संवत्सरं यावद् गणोऽपि ग्लानं महता प्रयत्नेन परिवर्त्तयति। ततो यदा न संस्तरेत् ततः सङ्घस्य निवेदनं कुर्यात्। ततः सङ्घो यावज्जीवं तं सर्वप्रयत्नेन परिवर्त्तयति ॥

गाथात्रयोक्तमर्थमेकगाथया संगृह्य प्रतिपादयति-

[भा.२००१] छम्मासे आयरिओ, कुलं तु संवच्छराइँ तिन्नि भवे।
संवच्छरं गणो वी, जावज्जीवाय संघो उ ॥

वृ- व्याख्यातार्था ॥

एतच्च यो भक्तविवेकं कर्तुं न शक्नोति तमुद्दिश्य द्रष्टव्यम्। यस्तु भक्तविवेकं कर्तुं शक्नोति तेनाष्टादश मासान् यावत् प्रथमतश्चिकित्सा कारयितव्या, चिरातेसहितस्य जीवितस्य पुनः संसारे दुरापत्वात्। ततः परं यदि न प्रगुणीभवति ततो भक्तविवेकः कर्त्तव्य इति। आगाढे कारणजाते सञ्जाते सति ग्लानस्य वैयावृत्त्यं न कुर्यादपि परित्यजेद् वा ग्लानम्।

किं पुनस्तत् कारणजातम्? इति उच्यते-

[भा.२००२] असिवे ओमोयरिए, रायदुट्ठे भये व गेलन्ने।
एएहि कारणेहिं, अहवा वि कुले गणे संघे ॥

वृ-अशिवे समुत्पन्ने सति ग्लानं परित्यजेद् न च प्रायश्चित्तमाप्नुयात्। एवम् अवमौदर्ये राजद्विष्टे 'भये वा' शरीरस्तेनसमुत्थे "गेलन्ने"त्ति सर्वो वा गच्छो ग्लानीभूत इत्यतः कस्य कः प्रतिचरणं करोतु? एतैः कारणैः, अथवा कुलस्य गणस्य सङ्घस्य वा समर्पिते ग्लाने स्वयमकुर्वन्नपि शुद्धः। परित्यजने त्वियं यतना-अशिवे समुत्पन्ने देशान्तरं सङ्क्रामन् ग्लानमन्येषां प्रतिबन्धस्थितानां साधूनामर्पयति, तेषामभावे शय्यातरादीनां समीपे साधर्मिकस्थलीषु वा देवकुलिकेषु वा निक्षिपन्ति। एवमवमौदर्ये भये च द्रष्टव्यम्। राजद्विष्टे यद्येकस्य गच्छस्य प्रद्वेषमापन्नो राजा ततोऽन्येषां साधूनां समर्पयन्ति, अथ सर्वेषामपि प्रद्विष्टस्ततः श्रावकादिषु निक्षिप्य व्रजन्ति। उत्सर्गतः पुनरेतैरपि कारणैर्न नक्षिपन्ति किन्तु स्कन्धे न्यस्य वहन्तीति ॥

आह च-

[भा.२००३] एएहि कारणेहिं, तह वि वहंती न चेव छड्डिंति।
असहू वा उवगरणं, छड्डिंति न चेव उ गिलाणं ॥

वृ-एतैः कारणैर्यद्यपि ग्लानो निक्षेप्तुं कल्पते तथापि वहन्ति नैव परित्यज्यित। अथ 'असहिष्णवः' वोढुमसमर्था तत उपकरणं परित्यजन्ति नैव ग्लानम् ॥

[भा.२००४] अहवा वि सो भणेज्ञा, छड्डेउ ममं तु गच्छहा तुब्भे।

होउ त्ति भणिय गुरुगा, इणमन्ना आवई बिइया ॥

**वृ-** अथवा स ग्लानो भणेत्-मां 'छर्दयित्वा' परित्यज्य यूयं गच्छत । एवमुक्ते यदि कोऽपि साधुः 'भवत्वेवम्' इति भणति तदा तस्य चत्वारो गुरुकाः । 'इयं' वक्ष्यमाणलक्षणा प्रकारान्तरेण 'अन्या' द्वितीया आपदुच्यते ॥

तामेवाह-

[भा.२००५] पच्चंतमिलक्खेसुं, बोहियतेणेसु वा वि पडिएसु ।
जनवय-देसविनासे, नगरविनासे य घोरम्मि ॥

[भा.२००६] बंधुजनविप्पओगे, अमायपुत्ते वि वट्टमाणम्मि ।
तह वि गिलाण सुविहिया, वच्चंति वहंतगा साहू ॥

**वृ-** प्रत्यन्ताः-प्रत्यन्तदेशवासिनो ये म्लेच्छास्तेषु तथा बोधिकस्तेना नाम-ये मानुषाणि हरन्ति तेषु वा पतितेषु सत्सु यो जनपदस्य-मगधादेः देशस्य वा-तदेकदेशभूतस्य विनाशः-विध्वंसस्तस्मिन्, तथा नगरविनाशे च 'घोरे' रौद्रे उपस्थिते, बन्धुजनानां-स्वज्ञातिलोकोनां मरणभयातिरेकात् पलायमानानां यः परस्परं विप्रयोगस्तस्मिन्, कथम्भूते ?

'अमातापुत्रे' स्वस्वजीवितरक्षणा-क्षणिकतया यत्र माता पुत्रं न स्मरति पुत्रोऽपि मातरं न स्मरति तदमातापुत्रम् ''मयूरव्यंसकेत्यादयः'' इति समासः तस्मिन्नपि वर्त्तमाने ये 'सुविहिताः' शोभनविहितानुष्ठानास्ते तथापि ग्लानं वहन्तो व्रजन्ति न पुनः परित्यजन्ति ॥

ततोऽसौ ग्लानः प्राह-

[भा.२००७] तारेह ताव भंते !, अप्पाणं किं मएल्लयं वहह ।
एगालंबनदोसेण मा हु सव्वे विनस्सिहिह ॥

**वृ-** तारयत तावद् भदन्त ! यूयमात्मानमस्मादपारादापत्पारावारात्, किं मां मृतमिव मृतम्-अद्यश्वीनमृत्युसम्भवतया शवप्रायं वहत ? । अपि च 'एकालम्बनदोषेण' मदीयमेव यदेकमालम्बनं तदेव बहूनां विनाशकारणतया दोषस्तेन मा यूयं सर्वे विनश्यथ ॥

[भा.२००८] एवं च भणियमेत्ते, आयरिया नाण-चरणसंपन्ना ।
अचवलमणलिय हितयं, संताणकरिं वइमुदासी ॥

**वृ-** एवं च ग्लानेन भणितमात्रे सति आचार्या 'ज्ञान-चरणसम्पन्नाः' संविग्नगीतार्था इति भावः 'अचपलाम्' अत्वरितां त्वराकारमस्य मरणभयस्याभावात् 'अनलीकां' सत्यां सद्भावसारत्वात् 'हिताम्' अनुकूलां परिणामसुन्दरत्वात् 'सन्त्राणकरीं' आर्त्तजनपरित्राणकारिणीं वाचमुदाहृत-वन्तः ॥

कथम् ? इत्याह-

[भा.२००९] सव्वजगज्जीवहियं, साहुं न जहामो एस धम्मो णे ।
जति य जहामो साहुं, जीवियमित्तेण किं अम्हं ॥

**वृ-** सर्वस्मिन् जगति ये जीवाः-त्रस-स्थावरभेदभिन्नास्तेषामभयदायकतया हितं सर्वजगज्जीवहितं साधुं 'न प्रजहिमः' न परित्यजामः, एषोऽस्माकं 'धर्म' समाचारः । यदि च साधुं प्रजहीमस्ततः किमस्माकं 'जीवितमात्रेण' सदाचारजीवितविकलेन बहिःप्राणधारणमात्रेण प्रयोजनम् ? न

किञ्चिदित्यर्थः ॥

**[भा.२०१०]** तं वयणं हिय मधुरं, आसासंकुरसमुब्भवं सयणो ।
समणवरगंधहत्थी, बेइ गिलाणं परियहंतो ॥

**वृ-** 'तद्' एवंविधं वचनं 'हितं' परिणामपथ्यं 'मधुरं' श्रोत्र-मनसां प्रल्हादकं तथाऽऽश्वास एवाङ्कुरः-प्ररोहस्तस्य समुद्भवः-उत्पत्तिर्यस्मात् तद् आश्वासाङ्कुरसमुद्भवम्, ग्लानस्याश्वासप्ररोहबीजमिति भावः, स्वजन इव स्वजनः स आचार्य 'श्रमणवरगन्धहस्ती' यथा हि गन्धहस्ती गजकलभानां यूथाधिपत्यपदमुद्वहमानो गिरिकन्दरादिविषमदुर्गेष्वपि पतितो न तत्परित्यागं करोति, एवमयमपि गणधरपदमनुपालयन् विषमदशायामपि श्रमणवरान्न परित्यजतीति श्रमणवरगन्धहस्तीत्युच्यते, स ग्लानं 'परिवहन्' परिवर्तय न्नेवमनन्तरोक्तं ब्रविति ॥

ततहत्थं तदीय वचनं श्रुत्वा समीपवर्तिनामगारिणामित्थं स्थिरीकरणमुपजायते-

**[भा.२०११]** जइ संजमो जइ तवो, दढमित्तित्तं जहुत्तकारित्तं ।
जइ बंभं जइ सोयं, एएसु परं न अन्नेसुं ॥

**वृ-** यदि 'संयमः' पञ्चाश्रवविरमणादिरूपो यदि 'तपः' अनशनादिरूपं 'दृढमैत्रीकत्वं' निश्चलसौहृदं 'यथोक्तकारित्वं' भगवदाज्ञाराधकत्वं यदि 'ब्रह्म' अष्टादशभेदभिन्नं सब्रह्मचर्यं यदि 'शौचं' निरुपलेपता सद्भावसारता वा, एतानि यदि परमेतेष्वेव साधुषु प्राप्यन्ते 'नान्येषु' शाक्यादिपरतीर्थिकेषु, तेष्वेवंविधस्य ग्लानप्रतिचरणविधेरभावात् ॥

इत्थं तावद् विषमायामपि दशायां ग्लानो न परित्यक्तव्य इत्युक्तम् ।

अथात्यन्तिके भये तमपरित्यजतां यदि सर्वेषामपि विनाश उपढौकते ततः को विधि ? इत्याह-

**[भा.२०१२]** अच्चागाढे व सिया, निक्खित्तो जइ वि होज्ज जयणाए ।
तह वि उ दोण्ह वि धम्मो, रिजुभावविचारिणो जेणं ॥

**वृ-** 'अत्यागाढे' प्रत्यन्तम्लेच्छादिभये, वाशब्दः पातनायाम्, सा च प्रागेव कृता, 'स्यात्' कदाचिद् यतनया निष्प्रत्यपाये प्रदेशे यद्यप्यसौ ग्लानो निक्षिप्तो भवेत् तथापि 'द्वयोरपि' ग्लान-प्रतिचरकवर्गयोः 'धर्म' "सर्वं वाक्यं सावधारणं भवति" इति न्यायाद् धर्म एव मन्तव्यः । कुतः? इत्याह-'येन' कारणेन द्वावपि तौ ऋजुः-अकुटिलो मोक्षं प्रति प्रगुणो यो भावः-परिणामस्तत्र विचरितुं शीलमनयोरिति ऋजुभावविचारिणौ, अशठपरिणामयुक्ताविति भावः ॥

ततश्च-

**[भा.२०१३]** पत्तो जसो य विउलो, मिच्छत्त विराधना य परिहरिया ।
साहम्मियवच्छल्लं, उवसंते तं विमग्गंति ॥

**वृ-** तैराचार्यै साधुभिश्च तादृशेऽपि भये सहसैव ग्लानमपरित्यजद्भि 'विपुलं' दिग्विदिक्प्रचारि यशः प्राप्तम् । गाथायां पुंस्त्वनिर्देशः प्राकृतत्वात्, एवमन्यत्रापि यथायोगं लिङ्गव्यत्ययो मन्तव्यः । तथा 'मिथ्यात्वं' तत्परित्यागसमुत्थमन्येषां गृहस्थानां ग्लानस्य वा मिथ्यादर्शनगमनं तत् परिहृतं भवति । विराधना च ग्लानस्यसहायविरहितस्य संयमा-ऽऽत्मविषया सा च परिहृता ।

साधर्मिकवात्सल्यं चानुपालितं भवति। यदा च तदत्यागाढं भयमुपशान्तं भवि तदा 'तं' ग्लानं 'विमार्गयन्ति' शोधयन्तीत्यर्थः॥

गतं ग्लानद्वारम्। अथ गच्छप्रतिबद्धयथालन्दिकद्वारमाह-

[भा.२०१४] पडिबद्धे को दोसो, आगमनेगाणियस्स वासासु।
सुय-संघयणादीओ, सो चेव गमो निरवसेसो॥

वृ- प्रतिबन्धनं प्रतिबद्धं गच्छप्रतिबन्ध इत्यर्थः तत्रकारणं यथालन्दिकानां वक्तव्यम्। "को दोसो" त्ति को नाम दोषो भवति यत् ते यथालन्दिका आचार्याधिष्ठिते क्षेत्रे न तिष्ठन्ति?। "आगमनेगाणियस्स" त्ति यद्याचार्या स्वयं क्षेत्रबहिर्गन्तुं न शक्नुवन्ति तत एकाकिनो यथालन्दिकस्यागमनं गुरूणां समीपे भवति। "वासासु" त्ति वर्षासु उपयोगं दत्त्वा यदि जानाति वर्षं न पतिष्यति तत आगच्छति यथालन्दिको गुरुसमीपे, अन्यथा तु नेति। श्रुत-संहननादिकस्तु गमः स एव निरवशेषो वक्तव्यः यो जिनकल्पिकानाम्, यस्तु विशेषः स प्रागेवोक्तः॥

अथ प्रतिबद्धपदं व्याख्याति-

[भा.२०१५] सुत्तत्थ सावसेसे, पडिबंधो तेसिमो भवे कप्पो।
आयरिए किइकम्मं, अंतर बहिया व वसहीए॥

वृ- सूत्रस्यार्थस्तैर्गृहीतः परमद्यापि 'सावशेषः' न सम्पूर्ण एष तेषां गच्छविषयः प्रतिबन्धो द्रष्टव्यः। तेषां च 'अयं' वक्ष्यमाणः कल्पः, यथा-आचार्यस्यैव 'कृतिकर्म' वन्दनकं तैर्दातव्यं नान्येषां साधूनाम्। तथा यद्याचार्यो न शक्नोति गन्तुं ततोऽन्तरा वा ग्रामस्य बहिर्वा वसतौ यथालन्दिकस्य वाचनां ददाति। एदुत्तरत्र भावयिष्यते॥

अथ कोदोष इति द्वारम्। शिष्यः पृच्छति-यद्याचार्याधिष्ठिते क्षेत्रे ते तिष्ठेयुस्ततः को दोषः स्यात्? उच्यते-

[भा.२०१६] नमनं पुव्वब्भासा, अणमे दुस्सील थप्पगासंका।
आयट्ठ कुक्कुड त्ति य, वातो लोगे ठिई चेव॥

वृ- यथालन्दिकानां न वर्त्तते आचार्यं मुक्त्वा अन्यस्य साधोः प्रणामं कर्त्तुम्, तथाकल्पत्वात्। ततस्ते क्षेत्रान्तस्तिष्ठन्तः पूर्वाभ्यासाद् 'नमनं' प्रणामं साधूनां कुर्युः। गच्छवासिनश्च यथालन्दिकान् वन्दन्ते, ते पुनर्यथालन्दिकास्तान् भूयो न प्रतिवन्दन्ते, ततस्तेषामनमने लोको ब्रूयात्-'दुःशीलाः' शैलस्तम्भकल्पा अमी, येनान्येषामित्थं वन्दमानानामपि न प्रतिवन्दनं प्रयच्छन्ति, न वा कमप्यालापं कुर्वन्ति। गच्छवासिषु वा लोकस्य स्थाप्यकाशङ्का भवति, अवश्यं स्थाप्याः-दुःशीलत्वादवन्दनीयाः कृता अमी, अन्यथा कथं न प्रतिवन्द्यन्ते?, आत्मार्थिका वा अमी येनाप्रतिवन्दमानानपि वन्दन्ते, 'कौत्कुटिका वा' मातृस्थानकारिणोऽमी लोकपङ्क्तिनिमित्तमित्थं वन्दन्ते। एवं लोके वाद उपाजायते। एतैः कारणैः क्षेत्रबहिस्ते यथालन्दिकास्तिष्ठन्ति। अपि च 'स्थितिरेव' कल्प एवायममीषाम्, यत् क्षेत्राभ्यन्तरे न तिष्ठन्ति॥

अथामीषामेव कल्पमाह-

[भा.२०१७] दोन्नि वि दाउं गमनं, धारणकुसलस्स खेत्तबहि देइ।
किइकम्म चोलपट्टे, ओवग्गहिया निसिज्जा य॥

वृ-आचार्य सूत्रार्थपौरुष्यौ द्वे अपि गच्छवासिनां दत्त्वा यथालन्दिकानां समीपे गमनं करोति। गत्वा च तत्र तेषामर्थं कथयति । अथाचार्यो न शक्नोति तत्र गन्तुं ततो यस्तेषां यथालन्दिकानां मध्ये धारणाकुशलः-अवधारणाशक्तिमान् स क्षेत्रबहिरन्तरा पल्लिकायाः प्रत्यासन्ने भूभागे समायाति, तत्र च गत्वा आचार्यस्तस्यार्थं ददाति । स च श्रुतभक्तिहेतोराचार्याणां 'कृतिकर्म' वन्दनकं दत्त्वा चोलपट्टकद्वितीय औपग्रहिक्यां निषद्यायामुपविष्टश्चार्थं शृणोति ॥

अथ "दोन्नि वि दाउं गमनं" इत्यपवदन्नाह-

[भा.२०१८] अत्थं दो व अदाउं, वच्चइ वायावए य अन्नेणं ।
एवं ता उडुबद्धे, वासासु य काउमुवओगं ॥

वृ-यद्याचार्यो द्वे अपि पौरुष्यौ दत्त्वा गन्तुं न शक्नोति ततोऽर्थमदत्त्वा, तथाप्यशक्तौ 'द्वावपि' सूत्रार्थावदत्त्वा व्रजति, अन्येन वा शिष्येण स्वशिष्यान् 'वाचयति' वाचनां दापयति । अथाचार्यस्तत्र गन्तुमशक्तस्ततो यथालन्दिक एकः सूरिसमीपमायाति । एवं तावद् ऋतुबद्धे द्रष्टव्यम् ।

वर्षासु चशब्दः पुनरर्थे वर्षासु पुनरयं विशेषः-'उपयोगं कृत्वा' 'किं वर्षं पतिष्यति न वा ?' इति विमृश्य यदि जानाति पतिष्यति ततो नाचार्याणां समीपमायाति, अथ जानाति न पतिष्यति ततः समायाति ॥

अथ गुरवस्तत्र गताः कथं समुद्दिशन्ति ? इत्याह-

[भा.२०१९] संघाडो मग्गेणं, भत्तं पानं च नेइ उ गुरूणं ।
अच्चुण्हं थेरा वा, तो अंतरपल्लिए एइ ॥

वृ- 'गुरूणां' यथालन्दिकसमीपमुपगतानां योग्यं भक्तं पानं च गृहीत्वा सङ्घाटकः 'मार्गेण' पृष्ठतो गत्वा तत्र नयति । अथ यावता कालेन यथालन्दिकानामुपाश्रयं गुरवो व्रजन्ति तावता 'अत्युष्णम्' अतीवातपश्चटति 'स्थविरा वा' वार्द्धकवयःप्राप्तास्ते आचार्यास्ततोऽन्तरपल्लिकायामेको यथालन्दिको धारणासम्पन्नः समायाति । तत्र गुरवोऽपि गत्वा तस्य वाचनां दत्वा सङ्घाटकेनानीतं भक्त-पानं समुद्दिश्य सन्ध्यासमये मूलक्षेत्रमायान्ति ॥

अथान्तरपल्लिमपि गन्तुमसमर्थाः गुरवस्ततः किम् ?

इत्याह-

[भा.२०२०] अंतर पडिवसभे वा, बिइयंतर बाहि वसभगामस्स ।
अन्नवसहीए तीए, अपरीभोगम्मि वाएइ ॥

वृ-अन्तपल्लिका-प्रतिवृषभग्रामयोः 'अन्तरा' अपान्तराले गत्वा यथालन्दिकं वाचयति । तत्र गन्तुमशक्तौ प्रतिवृषभग्रामे । अथ तत्रापि गन्तुं न शक्नोति ततः "बिइयंतर" त्ति द्वितीयं-प्रतिवृषभ-मूलक्षेत्रयोरपान्तराललक्षणं यदन्तरं यत्र गत्वा वाचनां प्रयच्छति । तत्रापि गमनाशक्तौ 'वृषभग्रामस्य' मूलक्षेत्रस्य बहिर्विजने प्रदेशे गत्वा वाचयति । यदि तत्रापि गन्तुं न प्रभविष्णुस्ततो मूलक्षेत्र एवान्यस्यां वसतौ । तत्रापि गन्तुमशक्तौ तस्यामेव मूलवसतावपरिभोग्येऽवकाशे वाचयति ॥

तत्र चेयं सामाचारी-

[भा.२०२१] तस्स जई किइकम्मं, करिंति सो पुन न तेसि पकरेइ ।

जा पढइ ताव गुरुणो, करेइ न करेइ उ परेणं ॥

वृ- 'तस्य' यथालन्दिकस्य 'यतयः' गच्छवासिनः साधवः कृतिकर्म कुर्वन्ति, 'स पुनः' यथालन्दिकः 'तेषां' गच्छवासिनां पर्यायज्येष्ठानामपि कृतिकर्म न करोति । यावच्च 'पठति' अर्थशेषमधीते गुरोरपि तावदेव करोति, परतस्तु न करोति, तथाकल्पत्वात् ॥

अमीषामेव मासकल्पविधिमाह-

[भा.२०२२] एक्को वा सवियारो, हवंतऽहालंदियाण छ ग्गामा ।
मासो विभज्जमाणो, पनगेण उ निट्ठिओ होइ ॥

वृ-यदि गुर्वधिष्ठितमूलक्षेत्रस्य बहिरेको ग्रामः 'सविचारः' सविस्तरो वर्त्तते । इह विचारशब्देन विस्तार उच्यते, ततः सह विचारेण वर्तते यः स सविचारो विस्तीर्ण इत्यर्थः । आह च चूर्णिकृत्- सवियारो त्ति विच्छिन्नो । ततस्तस्मिन् ग्रामे षड् वीथीः परिकल्प्य यथालन्दिका एकैकस्यां वीथ्यां पञ्च पञ्च दिवसान् भिक्षामटन्ति, तस्यामेव च वीथ्यां वसतिमपि गृह्णन्ति । एवं प्रतिवीथ्यां "पनगेण" रात्रिन्दिवपञ्चकेन मासो विभज्यमानः सन् षड्भिरहोरात्रपञ्चकैः 'निष्ठितः' सम्पूर्णो भवति । अथ नास्ति विस्तीर्णो ग्रामस्ततः "हवंतऽहालंदियाण छ ग्गामा" इति मूलक्षेत्रपार्श्वर्वर्तो ये लघुतराः षड् ग्रामा भवन्ति तेषु प्रत्येकं पञ्च पञ्च दिवसान् पर्यटतां यथालन्दिकानां तथैव षड्भिरहोरात्रपञ्चकैर्मासः परिपूर्णो भवतीति ॥ गतं गच्छप्रतिबद्धयथालन्दिकद्वारम् ।

अथोपरि दोषा अपवादश्चेति द्वारद्वयमाह-

[भा.२०२३] मासस्सुवरिं वसती, पायच्छित्तं च होंति दोसा य ।
बिइयपदं च गिलाणे, वसही भिक्खं च जयणाए ॥

वृ- मासस्य उपलक्षणत्वात् चतुर्णां वा मासानामुपरि यदि वसति तदा प्रायश्चित्तं दोषाश्च भवन्ति । द्वितीयपदं च 'ग्लाने' ग्लनार्थम् उपलक्षणत्वादशिवादिभिश्च कारणैर्मासस्योर्द्ध्व-मप्यवस्थानलक्षणं भवति । तत्र च वसतिर्भैक्षं च यतनया ग्रहीतव्यम् ॥

अथैनामेव निर्युक्तिगाथां विवरीषुः प्रायश्चित्तापत्तिस्थानानि तावदाह-

[भा.२०२४] परिसाडिमपरिसाडी, संथाराऽऽहार दुविह उवहिम्मि ।
डगलग-सरक्ख-मल्लग-मत्तगमादीण पच्छित्तं ॥

वृ-संस्तारको द्विधा-परिशाटी अपरिशाटी च । परिशाटी-तृणमयः परिशटति-उत्पाट्यमानः सन्नवश्यंविशीर्यते इतिव्युत्पत्तेः, तद्विपरीतो अपरिशाटी फलकादिरूपः । एवं द्विविधमपि संस्तारकं यत्रम मासकल्पं वर्षावासं वा कृतवन् तत्रैव ग्रामादौ गृह्णतः । एवमाहारमपि तेष्वेव कुलेषु गृह्णतः । औधिकौपग्रहिकभेदाद् द्विविधोच उपधिस्तस्मिंश्च तत्रैव गृह्यमाणे । तथा डगलकानि-पुतप्रोञ्छनलेष्टुकाः सरजस्कः-क्षारः मल्लक-मात्रके प्रतीते तेषामादिशब्दात् काष्ठकिलिञ्चादीनां च तत्रैव ग्रहणे प्रायश्चित्तं वक्ष्यमाणलक्षणं भवति ॥

[भा.२०२५] ओवासे संथारे, वीयारुच्चार वसहि गामे य ।
मास-चउम्मासाधिगवसमाणे होइमा सोही ॥

वृ- तथा 'अवकाशः' प्रतिश्रयैकदेशः 'संस्तारः' संस्तारकभूमि, एतौ पूर्वपरिभुक्तावेव परि-भुङ्क्ते । 'विचारः' प्रश्रवणम् 'उच्चारः' संज्ञा, एतौ तत्रैव स्थण्डिले समाचरति । वसतिं प्राक्परिभुक्तां

परिभुङ्क्ते। ग्रामस्योपरि ममत्वं करोति, यद्वाऽवकाशादिषु सर्वेष्वपि ममत्वं करोति। तथा ऋतुबद्धे मासाधिकं वर्षावासे चतुर्मासाधिकं वसति। एतेषु स्थानेषु 'इयम्' अनन्तरमेव वक्ष्यमाणा शोधिः॥

तामेवाह-

[भा.२०२६] उक्कोसोवहि-फलए, वासातीए अ होंति चउलहुगा।
डगलग सरक्ख मल्लग, पनगं सेसेसु लहुओ उ॥

वृ- उत्कृष्टे उपधौ-वर्षाकल्पादिके फलके च तत्रैव गृह्यमाणे वर्षातीते चत्वारो लघवः। डगलक-सरजस्क-मल्लकेषु उपलक्षणत्वात् काष्ठ-किलिञ्चादौ च रात्रिन्दिवपञ्चकम्। 'शेषेषु' परिशाटिसंस्तारकादिषु सर्वेष्वपि अनन्तरगाथाद्वयोक्तेषु स्थानेषु लघुको मासः॥

अथ मासाद्युपरि तिष्ठतो दोषानाह-

[भा.२०२७] संवासे इत्थिदोसा, उग्गमदोसा व नेहतो कुज्जा।
चमढण गिलाणदुल्लभ, वारत्तिसिभासियाहरणं॥

वृ- ऋतुबद्धे वर्षावासे वा यथोक्तकालावधेरुपरि 'संवासे' एकत्रावस्थाने क्रियमाणे सन्दर्शनसम्भाषणादिना स्त्रीविषया आत्मपरोभयसमुत्थादोषा भवेयुः। प्रभूतकालावस्थानतश्च साधूनामुपरि भद्रकगृहिणां गाढतरः स्नेह उपजायते, ततश्च ते स्नेहतः 'उद्गमदोषान्' आधाकर्मादीन् कुर्युः। ये तु प्रान्ता गृहपतयस्ते ब्रूयुः-कियच्चिरमस्माभिरमीषामद्यापि दातव्यं तिष्ठति? इति। अतिचमढणया च क्षेत्रं नीरसं भवति, ततो ग्लानस्य उपलक्षणत्वादाचार्यादीनां च प्रायोग्यं दुर्लभं भवेत्। अत्र च वारत्तकमहर्षे कृतस्वल्पमात्रगृहिसङ्गस्य प्रद्योतनृपेणोपहसितस्याहरणम्। अत एव तेन भगवता ऋषिभाषितेषु यत् सप्तविंशमध्ययनं विरचितं तत्रादावेवेदमुपदेशसूत्रमभाणि-

न चिरं जनि संवसे मुनी, संवासेण सिनेहि वड्ढई।
भिक्खुस्स अनिच्चचारिणो, आयट्ठे जम्हा उहायई॥ इति।

गतमुपरि दोषा इति द्वारम्। अथ द्वितीयपदं भावयति-

[भा.२०२८] बहुदोसे वऽतिरित्तं, जइ लब्भे वेज्ज-ओसहानि बहिं।
चउभाग तिभागऽद्धे, जयंतऽनिच्छे अलंभे वा॥

वृ- ग्लाननिमित्तमतिरिक्तमपि कालं वसेत्। अथोद्गमादिभिर्दोषैर्बहुदोषं तत् क्षेत्रं तत उत्पाट्य ग्लानं बहिर्गन्तव्यं यदि वैद्यौषधानि तत्र लभ्यन्ते। अथ ग्लानो बहिर्गन्तुं नेच्छति वैद्यौषधानि वा बहिर्न लभ्यन्ते ततोऽनिच्छति अलाभे वा तत्रैव ग्रामे चतुर्भागीकृते ग्राममष्टौ भागान् कृत्वा यतन्ते, तथा चेन्न संस्तरति ततः सप्त भागान्, एवं यावदेकभागमपि कृत्वा यतन्ते इति पुरस्ताद् वक्ष्यते, तथापि चतुर्भाग-त्रिभागा-ऽर्द्धग्रहणं "तुलादण्डमध्यग्रहण"न्यायेनाष्टभागादीनामपि ग्रहणार्थम्॥ प्रकारान्तरेण द्वितीयपदमाह-

[भा.२०२९] ओमा-ऽसिव-दुट्ठेसुं, चउभागादि न करिंति अच्छंता।
पोरुसिमाईवुड्ढी, करिंति तवसो असंथरणे॥

वृ- अवमा-ऽशिव-राजद्विष्टेषु बहि सञ्जातेषु तत्रैव क्षेत्रेऽतिरिक्तमपि कालं तिष्ठन्ति यावद् बहि सुभिक्षादीनि जायन्ते। तच्च क्षेत्रं यदि लघुतरं ततस्तत्र तिष्ठन्तोऽसंस्तरणे सति चतुर्भागादिरचनां न कुर्वन्ति, किन्तु तत्र पौरुष्यादितपसो वक्ष्यमाणनीत्या वृद्धिं कुर्वन्ति। अथ बृहत्तरं तत् क्षेत्रं

पूर्यते चतुर्भागादिरचनयाऽपि क्रियमाणं परं तत्राप्यवमादीनि समुत्पन्नानि, तत्रावमं तादृशमुत्पन्नं यादृशे चतुर्भागादिपरिपाट्या पर्यटन्तो न संस्तरन्ति, अशिवे भागाद् भागान्तरेषु सङ्क्रामतामशिवं सञ्चरति, राजद्विष्टेऽपरापरभागेषु सञ्चरन्तः प्रकटीभवन्ति, अतस्त्रिष्वप्यवमा-ऽशिव-राजद्विष्टेषु पूर्वार्द्धंप्रत्याचक्षते, ये पूर्वार्द्धप्रत्याख्यातारस्ते एकाशनं प्रत्याख्यान्तीत्यादि ॥ अथ यतनामेव स्पष्टयति-

[भा.२०३०] मासे मासे वसही, तण-डगलादी य अन्न गिण्हंति ।
भिक्खायरिय-वियारा, जहिं ठिया तत्थ नऽन्नासु ॥

वृ- मासे मासे वसतिरन्या तृण-डगलादीनि च पूर्वपरिभुक्तानि परित्यज्य अन्यानि गृह्णन्ति । यस्मिंश्च भागे मासकल्पं स्थितास्तत्रैव भागे तस्मिन् मासे भिक्षाचर्यां विचारभूमिं च गच्छन्ति 'नान्यासु' भिक्षा-विचारभूमिषु ॥ अथ भागकरणस्यैव विधिमाह-

[भा.२०३१] अट्ठाइ जाव एक्कं, करिंति भागं असंथरे गामं ।
अट्ठाइ च्चिय वसही, जयंति जा मूलवसही उ ॥

वृ- कदाचिदष्टौ ऋतुबद्धमासान् ग्लानकार्येण स्थातव्यं भवेद् अतो ग्राममष्टौ भागान् कुर्वन्ति । ततः प्रथमेऽष्टभागे वसतिं तृण-डगलादीनि च गृह्णन्ति, मासं च यावत् प्रथम एवाष्टभागे भिक्षाचर्यां विचारभूमिगमनं च कुर्वन्ति । ततो यदि मध्येमासं पूर्णे वा मासे ग्लानः प्रगुणीभतस्ततस्तदैव निर्गन्तव्यम् । अथ न प्रगुणीभूतस्ततः पूर्णे मासे द्वितीयेऽष्टभागे तिष्ठन्ति, तत्राप्येष एव विधिर्मन्तव्यः । एवं तृतीयादिभागमादौ कृत्वा अष्टमभागं यावद् द्रष्टव्यम् । अथाष्टभिर्भागैर्विभक्ते ग्रामे न संस्तरति ततः सप्तभागीकृत्य तथैव यतन्ते । एवमप्यसंस्तरणे षड् भागानादौ कृत्वा यावदेकमपि भागं कुर्वन्ति । एवं वसतीरपि प्रथमतः पृथक् पृथग् मासकल्पप्रायोग्या अष्टौ गृह्णन्ति । तदभावे सप्त-षट्-पञ्चादिक्रमेण यतन्ते, यावत् तस्यामेव मूलवसतौ तिष्ठन्ति ॥

अथात्रैव भङ्गकानाह-

[भा.२०३२] इत्थं पुन संजोगा, इक्किकस्स उ अलंभे लंभे य ।
नेगा विहाणगुणिया, तुल्ला-तुल्लेसु ठाणेसु ॥

वृ- अत्र पुनः क्रमे 'एकैकस्य' वसतिभागस्य भिक्षाचर्याभगस्य वा अलाभे लाभे च यानि तुल्यानि-समानसङ्ख्याकानि स्थानानि अतुल्यानि-विसदृशसङ्ख्याकानि तेषु विधानेन-चारणिकाविधिना गुणिताः सन्तः 'अनेके' बहवः 'संयोगाः' भङ्गका भवन्ति । चारणिकाक्रमश्चायम्-अष्टौ वसतयोऽष्टौ भिक्षाचर्या १ अष्टौ वसतयः सप्त भिक्षाचर्या २ एवं षड् भिक्षाचर्या ३ पञ्च भिक्षाचर्या ४ चतस्रो भिक्षाचर्या ५ तिस्रो भिक्षाचर्या ६ द्वे भिक्षाचर्ये ७ एका भिक्षाचर्या ८,

एवं सप्त वसतयोऽष्टौ भिक्षाचर्या १ सप्त वसतयः सप्त भिक्षाचर्या २ इत्यादिचारणिकया सप्तादिसङ्ख्यास्वपि वसतिविषयासु प्रत्येकमष्टावष्टौ भङ्गकाः प्राप्यन्ते, सर्वसङ्ख्यया लब्धा भङ्गकानां चतुःषष्टिरिति ॥ अथैतेष्वेव भङ्गकेषु विधिमाह-

[भा.२०३३] एक्काइ वि वसहीए, ठिया उ भिक्खयरियाए पयतंति ।
वसहीसु वि जयणेवं, अवि एक्काए वि चरियाए ॥

वृ- येषु भङ्गकेष्वेकैव वसति प्राप्यते तेष्वेकस्यामपि वसतौ स्थिता भिक्षाचर्यायां प्रयतन्ते, प्रथममष्टौ भागान् ग्रामं विभज्य भिक्षां पर्यटन्ति, असंस्तरणे यावदेकमपि भागं कृत्वेति भावः ।

अपिशब्दो द्व्यादिसङ्ख्याकासु वसतिषु तिष्ठन्तः सुतरां भिक्षाचर्यायां पर्यतन्ते इति सूचनार्थ । यत्र त्वेकैव भिक्षाचर्या प्राप्यते तत्रैकस्यामपि भिक्षाचर्यायां पर्यटद्भिः एवमेव वसतिष्वपि यतना कर्त्तव्या ॥ उक्तमपवादद्वारम् । तदुक्तौ च समर्थितं ''पडिलेहण निक्खमणे'' इति द्वारगाथा-द्वयम् ॥

सूत्रम्-

मू. (७) *से गामंसि वा जाव रायहाणिंसि वा सपरिक्खेवंसि सबाहिरियंसि कप्पइ निग्गंथाणं हेमंत-गिम्हासु दो मासे वत्थए । अंतो इक्कं मासं, बाहिं इक्कं मासं । अंतो वसमाणाणं अंतो भिक्खायरिया, बाहिं वसमाणाणं बाहिं भिक्खायरिया ॥*

**वृ-** अस्य सम्बन्धो व्याख्या च प्राग्वत् । नवरं 'सबाहिरिके' प्राकारबहिर्वर्तिगृहपद्धतिरूपया बाहिरिकया सहिते कल्पते निर्ग्रन्थानां हेमन्त-ग्रीष्मेषु द्वौ मासौ वस्तुम् । कथम् ? इत्याह- 'अन्तः' प्राकाराभ्यन्तरे एकं मासम्, 'बहिः' बाहिरिकायामप्येकं मासम् । अन्तर्वसतामन्तर्भिक्षाचर्या, बहिर्वसतां बहिर्भिक्षाचर्येति ॥ अथ भाष्यविस्तरः-

**[भा.२०३४]**　एसेव कमो नियमा, सपरिक्खेवे सबाहिरीयम्मि ।
　　नवरं पुन नाणत्तं, अंतो मासो बहिं मासो ॥

**वृ-** 'एष एव' प्रथमसूत्रोक्तः क्रमः सपरिक्षेपे सबाहिरिकेऽपि ग्रामादौ नियमाद् वक्तव्यः । नवरं पुनः 'नानात्वं' विशेषोऽयम्- 'अन्तः' प्राकाराभ्यन्तरे मासो बहिरपि मास इत्येवं मासद्वयं ऋतुबद्धे स्थातव्यम् ॥

**[भा.२०३५]**　पुन्नम्मि मासकप्पे, बहिया संकमण तं पि तह चेव ।
　　नवरं पुन नाणत्तं, तणेसु तह चेव फलएसु ॥

**वृ-** आभ्यन्तरे मासकल्पे पूर्णे 'बहिः' बाहिरिकायां सङ्क्रमणं कर्त्तव्यम् । तदपि सङ्क्रमणं 'तथैव' पूर्वसूत्रवद् द्रष्टव्यम् । नवरं पुनरत्र नानात्वं तृणेषु तथा फलकेषु । तत्र यदि बाहिरिकायामेव तृण-फलकानि प्राप्यन्ते ततस्तत्रैव ग्रहीतव्यानि । अथ तत्र तानि न लभ्यन्ते ततोऽन्यं ग्रामं व्रजन्तु, अथ तत्राशिवादीनि कारणानि तत आभ्यन्तराण्येव तृण-फलकानि बाहिरिकायां नेतव्यानि ॥ तत्र विधिमाह-

**[भा.२०३६]**　अन्नउवस्सयगमणे, अनपुच्छा नत्थि कंचि नेयव्वं ।
　　जइ नेइ अनापुच्छा, तत्थ उ दोसा इमे होंति ॥

**वृ-** द्वितीये मासकल्पे बाहिरिकायामन्यमुपाश्रयं गच्छद्भिरनापृच्छया नास्त किञ्चित् तृण-फलकादि नेतव्यम् । बाहिरिकायामन्यमुपाश्रयं गच्छद्भिरनापृच्छया नास्ति किञ्चित् तृण-फलकादि नेतव्यम् । यद्यनापृच्छया नयति ततस्तत्रेमे दोषा भवन्ति ॥

**[भा.२०३७]**　ताइं तण-फलगाइं, तेनाहडगाइं अप्पणो वा वि ।
　　निज्जंतय-गहियाइं, सिट्ठाइँ तहा असिट्ठाइं ॥

**वृ-** तानि तृण-फलकानि येन साधूनां दत्तानि तस्य स्तेनाहृतानि वा भवेयुः आत्मसम्बन्धीनि वा । तानि च प्रतिश्रयान्तरं नीयमानानि-प्राप्यमाणानि गृहीतानि वा-नीतानि सन्ति शिष्टानि अशिष्टानि वा भवेयुः ॥ शिष्टा-ऽशिष्टपदद्वयं व्याख्यानयति-

**[भा.२०३८]**　कस्सेते तण-फलगा, सिट्ठे अमुकस्स तस्स गहणादी ।
　　निण्हवइ व सो भीओ, पच्चंगिर लोगमुड्डाहो ॥

**वृ-** स्तेनाहृतानि तृण-फलकान्यनापृच्छया नीयमानानि पूर्वस्वामिना राजपुरुषैर्वा दृष्टानि ततः साधुः पृष्टः-कस्यैतानि ? साधुः प्राह-अमुकस्य गृहपतेः इति 'शिष्टे' कथिते सति तस्य ग्रहणाऽऽकर्षणादयो दोषा भवन्ति। अथासौ साधुः भीतः सन् 'निह्नुते' अपलपति न कथयतीत्यर्थः ततोऽशिष्टे साधोः अत्यङ्किरदोषं भवति, तृण-फलकदायकस्य गृहपतेः सम्बन्धी यश्चौर्यकरणलक्षणो दोषः स परकीयोऽप्यात्मनि लगतीत्यर्थः ।

लोके **चोड्डाहो** भवति-अहो ! साधवोऽपि परद्रव्यमपहरन्ति ॥ अथात्रैव प्रायश्चित्तमाह-

**[भा.२०३९]** नयने दिट्ठे सिट्ठे, गिण्हण कड्ढण ववहारमेव ववहरिए ।
लहुओ लहुगा गुरुगा, छम्मासा छेय मूल दुगं ॥

**वृ-** स्तेनाहृततृणानामपृच्छया बाहिरिकायां नयनं करोति लघुको मासः । अथ तानि नीयमानानि राजपुरुषैर्दृष्टानि ततश्चत्वारो लघुकाः । तैः पृष्टे साधुना 'शिष्टं' कथितं यथा अमुकस्येति ततश्चत्वारो गुरुकाः । अथ स गृही राजपुरुषैर्गृहीतस्ततो ग्रहणेऽपि चत्वारो गुरुकाः । अथासौ तै राजपुरुषै राजकुलाभिमुखमाकर्षितस्ततः षण्मासा लघवः । अथ राजकुलाभिमुखमाकर्षतस्तान् स गृहस्थः प्रतिलोममाकर्षति ततः षड् गुरुकाः । अथ राजकुलं नीत्वा व्यवहारं कारितस्ततः छेदः । व्यवहृते सति यदि स गृहस्थः पश्चात्कृतस्ततो मूलम् । ततो बहुलोकसमक्षमुद्दहे हस्त-पाद्यवयवव्यङ्किते वा कृतेऽनवस्थाप्यम् । अपद्राविते निर्विषये वाकृते पाराञ्चिकम् । सर्वत्र संयतस्यैतत् प्रायश्चि-त्तम् ॥ अथ निह्नवनपदं व्याख्याति-

**[भा.२०४०]** अहवा वि असिट्ठम्मी, एसेव उ तेण संकणे लहुगा ।
नीसंकियम्मि गुरुगा, एगमनेगे य गहणादी ॥

**वृ-** अथवा मया कथिते सत्येष तृणफलकदाता ग्रहणा-ऽऽकर्षणादिकं प्राप्स्यते इति मत्वा यदि न कथयति ततः 'अशिष्टे' अकथिते एष एव स्तेनः सम्भाव्यत इत्येवं 'शङ्कने' शङ्कायां राजपुरुषैः क्रियमाणायां चतुर्लघुकाः । निशङ्किते चत्वारो गुरवः । ततश्च तस्यैवैकस्यानेकेषां वा साधूनां ग्रहणादयो दोषा भवन्ति ॥ तद्यथा-

**[भा.२०४१]** नयने दिट्ठे गहिए, कड्ढण ववहारमेव ववहरिए ।
उड्डहणे य विरुंगण, उद्दवणे चेव निव्विसए ॥

**[भा.२०४२]** लहुओ लहुया गुरुगा, छल्लहु छग्गुरुग छेय मूलं च ।
अनवट्ठप्पो दोसु अ, दोसु अ पारंचिओ होइ ॥

**वृ-** तृणानि प्रतिश्रयान्तरमनापृच्छया नयति लघुको मासः । राजपुरुषैर्दृष्टेषु चत्वारो लघवः । ततः पृष्टे साधुना च निह्नुते नृपपुमांसस्तस्य साधोर्ग्रहणं कुर्वन्ति चत्वारो गुरवः । राजपुरुषैः 'त्वं चौरः' इत्युक्त्वा राजकुलाभिमुखमाकर्षणे कृते सति षण्मासा लघवः । अथ ते राजकुला-भिमुखमाकर्षन्ति साधुश्च तान् प्रतीपमाकर्षति एवं कर्षणाकर्षणे षण्मासा गुरवः । व्यवहारे प्रारब्धे छेदः । व्यवहृते यदि संयतः पश्चात्कृतस्ततो मूलम् । उड्डहन-व्यङ्गनयोर्द्वयोरनवस्थाप्यः । अपद्रावण-निर्विषयाज्ञापनयोर्द्वयोः पाराञ्चिक इति ॥

आह कथं पुनस्तृणानि स्तेनाहृतानि सम्भ-वन्ति ? इत्युच्यते-

**[भा.२०४३]** दंतपुरे आहरणं, तेनाहड वव्वगादिसु तनेसु ।

छायण मीराकरणे, अत्थिरफलगं च चंपादी ॥

वृ- स्तेनाहृतेषुतृणेषु दन्तपुरविषयमुदाहरणं वक्तव्यम्, यथा आवश्यके योगसङ्ग्रहेषु "दंतपुर दतचक्के०" इत्यस्यां गाथायां यन्निदर्शनमुक्तम्, तत्र यथा 'दन्ताः केनापि न ग्रहीतव्याः' इति राजाज्ञया प्रतिषिद्धत्वाद् धनमित्रसार्थवाहमित्रेण दृढमित्रेण दन्ता दर्भपूलकैराच्छाद्य प्रच्छन्नमानीताः स्तेनाहृताः संवृत्ताः, एवं राज्ञा प्रतिषिद्धानि सम्भवन्ति तृणान्यपि स्तेनाहृतानीति । तैश्च चव्वकादिभिस्तृणैर्ग्लानादीनां छादनं प्रतिश्रयस्य वा मीराकरणं विधीयते । मीराकरणं नाम-कटैर्द्वारादेराच्छादनम्, उपलक्षणमेतत्, तेन प्रस्तरणार्थमपि तृणानि गृह्यन्ते । फलकं तु प्रस्तरणार्थं मीराकरणार्थं वा । तच्चास्थिरफलकं चम्पकपट्टादि मन्तव्यम् । अस्थिरफलकं नाम-उपविशतां यदधो यातीव, तच्चैवंविधं चम्पकपट्टादि ॥ अस्तेनाहृततृणानां नयने दोषानाह-

[भा.२०४४] अतेनाहडाण नयने, लहुओ लहुया य होंति सिट्ठम्मि ।

अप्पत्तियम्मि गुरुगा, वोच्छेद पसज्जणा सेसे ॥

वृ- अस्तेनाहृतानां तृणानामनापृच्छ्य बहिर्नयने लघुको मासः । अपरेण केनापि तस्य 'शिष्टं' कथितं 'त्वदीयानि तृणानि संयतैर्बाहिरिकायां नीतानि' तदा चतुर्लघु । कथिते यद्यसावनुग्रहं मन्यते ततोऽपि चतुर्लघु । अथाप्रीतिकं करोति तदा चतुर्गुरु । व्यवच्छेदं वा तद्द्रव्यस्य तस्य साधोर्भूयः प्रदाने कुर्यात् । "पसज्जणा सेस" त्ति 'शेषाणाम्' अन्येषामप्यशन-पानकादिद्रव्याणामपरेषां वा साधूनां प्रसङ्गतो दानव्यवच्छेदं कुर्यात् ॥

[भा.२०४५] एसेव गमो नियमा, फलएसु वि होइ आनुपुव्वीए ।

नवरं पुन नाणत्तं, चउरो मासा जहन्नपदे ॥

वृ- एष एव 'गमः' प्रकारः फलकेष्वपि भवत्यानुपूर्व्या यस्तृणेषु "नयणे दिट्ठे सिट्ठे" इत्यादिनां भणितः । नवरं पुनरत्र नानात्वं चत्वारो मासा जघन्यपदे भवन्ति । जघन्यपदं नाम-यत्र तृणेषु लघुमासिकमापद्यते तच्चानापृच्छया बहिर्नयनमिति द्रष्टव्यम् तत्र फलकेषु चतुर्लघु ॥

अथमासद्वयादूर्ध्वमवस्थाने दोषान् द्वितीयपदं चाह-

[भा.२०४६] दोण्हं उवरिं वसती, पायच्छित्तं च होंति दोसा य ।

बिइयपदं च गिलाणे, वसही भिक्खं च जयणाए ॥

वृ- सबाहिरिके क्षेत्रे द्वयोर्मासयोरुपरि यदि वसति ततः प्रायश्चित्तं प्रागुक्तमेव मासलघुकाख्यम्, दोषाश्च त एवावसातव्याः ये अबाहिरिके क्षेत्रे "संवासे इत्थिदोसा" इत्यादिना उक्ताः । द्वितीयपदं च ग्लानविषयं तदेव वक्तव्यम् । तत्र च तिष्ठता वसतिर्भैक्षं च यतनया ग्रहीतव्यम् ॥

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता बृहत्कल्पसूत्रे प्रथमोद्देशकस्य [सप्तसूत्रपर्यन्तः] संघदासगणि विरचितं भाष्यं एवं मलयकीर्ति- क्षेमकीर्ति आचार्याभ्यां विरचिता टीका परि समाप्त ॥**

**३५/१ द्वितीयं छेदसूत्रं बृहत्कल्प-१-समाप्तम्**

**भाग : १८ - बृहत्कल्पस्य पीठिका एवं उद्देशकः -१ (सू. १...७)**

नमो नमो निम्मल दंसणस्स

पंचम गणधर श्री सुधर्मास्वामिने नमः

# ३५/२ बृहत्कल्प -छेदसूत्रम्

## सटीकं

## [द्वितीयं छेद सूत्रम्]

उद्देशकः -१- मू. ८ - - -५० पर्यान्ताः + उद्देशकः २, + उद्देशकः - ३- मू. ९६ पर्यन्तः

[भद्रबाहुस्वामि रचितं मूलं + (स्वोपज्ञनिर्युक्तियुक्तं) संघदासगणि विरचितं भाष्यं एवं मलयगिरि-क्षेमकीर्ति आचार्याभ्याम् विरचिता वृत्तिः]

**मू. (८)** *से गामंसि वा जाव रायहाणिंसि वा सपरिक्खेवंसि अबाहिरियंसि कप्पइ निग्गंथीणं हेमंत-गेम्हासु दो मासा वत्थए ॥*

**वृ-** अस्यापि व्याख्या प्राग्वत् । नवरमबाहिरिके क्षेत्रे कल्पते निर्ग्रन्थीनां हेमन्त-ग्रीष्मेषु द्वौ मासौ वस्तुमिति ॥ अथ भाष्यविस्तरः-

[भा.२०४७] एसेव कमो नियमा, निग्गंथीणं पि होइ नायव्वो ।
जं एत्थं नाणत्तं, तमहं वोच्छं समासेणं ॥

**वृ-** 'एष एव' निर्ग्रन्थसूत्रोक्तः "पव्वज्ञा सिक्खापय" इत्यादिकः क्रमो नियमाद् निर्ग्रन्थीनामपि ज्ञातव्यो भवति । यत् पुनः अत्र विहारद्वारे नानात्वं तदहं वक्ष्ये समासेन ॥

प्रतिज्ञातमेव निर्वाहयति-

[भा.२०४८] निग्गंथीणं गणहरपरूवणा खेत्तमग्गणा चेव ।
वसही वियार गच्छस्स आणणा वारए चेव ॥

[भा.२०४९] भत्तट्ठणाए य विही, पडिनीए भिक्खनिग्गमे चेव ।
निग्गंथाणं मासो, कम्हा तासिं दुवे मासा ॥

**वृ-**निर्ग्रन्थीनां यो गणधरः-गच्छवर्त्तापकस्तस्य प्ररूपणा कर्त्तव्या । ततः क्षेत्रस्य संयतीप्रायोग्यस्य मार्गणा-प्रत्युपेक्षणा वक्तव्या । ततस्तासां योग्या वसतिर्विचारभूमिश्च । ततः 'गच्छस्य' संयतीगणस्य आनयना । ततः 'वारकः' घटस्तत्स्वरूपम् । तदनन्तरं भक्तार्थना-समुद्देशनं तस्याः 'विधिः' व्यवस्था । ततः प्रत्यनीककृतोपद्रवतो यथा निवारणम् । ततो भिक्षायां निर्गमः । ततो निर्ग्रन्थानां कस्मादेको मासः ? तासां च कस्माद् द्वौ मासौ ? । एतानि द्वाराणि वक्तव्यानीति द्वारगाथाद्वयसमुदायार्थः ॥ अथावयवार्थं प्रतिद्वारमाह-

[भा.२०५०] पियधम्मे दढधम्मे, संविग्गोऽवज्ज ओय-तेयस्सी ।
संगहुवग्गकुसले, सुत्तत्थविऊ गणाहिवई ॥

**वृ-** प्रियः-इष्टो धर्म-श्रुत-चारित्ररूपो यस्य स प्रियधर्मा । यस्तु तस्मिन्नेव धर्मे दृढो

द्रव्यक्षेत्राद्यापदुदयेऽपि निश्चलः स दृढधर्मा, राजदन्तादित्वाद् दृढशब्दस्य पूर्वनिपातः। संविग्नो द्विधा-द्रव्यो भावतश्च। तत्र द्रव्यतो मृगः, सदैव त्रस्तमानसत्वात्। भावतो यः संसारभयोद्विग्नः सन् नित्यं पूर्वरात्रा-ऽपररात्रकाले सम्प्रेक्षते-किं मया कृतम्? किं वा मे कर्तव्यशेषम्? किं वा शक्यमपि तपः कर्मादिकमहं न करोमि? इत्यादि। "वज्ज"त्ति अकारप्रश्लेषाद् अवद्यं-पापं "सूचनात् सूत्रम्" इति कृत्वा तद्भीरु-अवद्यभीरु। ओजः तेजश्च उभयमपि वक्ष्यमाणलक्षणं तद् विद्यते यस्य स ओजस्वी तेजस्वी चेति। सङ्ग्रहः-द्रव्यतोवस्त्रादिभिर्भावतः सूत्रार्थाभ्याम्, उपग्रहः-द्रव्यत औषधादिभिर्भावतो ज्ञानादिभिः, एतयोः संयतीविषययोः सङ्ग्रहोपग्रहयोः कुशलः-दक्षः। तथा 'सूत्रार्थविद्' गीतार्थः। एवंविधः 'गणाधिपति' आर्यिकाणां गणधरः स्थापनीयः॥ अथौजस्तेजसी व्याचष्टे-

[भा.२०५१] आरोह-परीणाहा, चियमंसो इंदिया य पडिपुन्ना।
अह ओओ तेओ पुन, होइ अनोतप्पया देहे॥

वृ-आरोहो नाम-शरीरेण नातिदैर्घ्य नातिह्रस्वता, परिणाहो नाम-नातिस्थौल्यं नातिदुर्बलता; अथवा आरोहः-शरीरोच्छ्रायः परिणाहः-बाहुविष्कम्भः, एतौ द्वावपि तुल्यौ न हीनाधिकप्रमाणौ। "चियमंसो"त्ति भावप्रधानत्वाद् निर्देशस्य 'चितमांसत्वं नाम' वपुषि पांसुलिका नावलोक्यन्ते। तथा इन्द्रियाणि च प्रतिपूर्णानि, न चक्षु-श्रोत्राद्यवयवविकलतेति भावः। 'अथ' एतद् आरोहादिकमोज उच्यते, तद् यस्यास्ति स ओजस्वी। तेजः पुनः 'देहे' शरीरे 'अनपत्रप्यता' अलज्जनीयता दीप्तियुक्तत्वेनापरिभूतत्वम्, तद् विद्यते यस्य स तेजस्वी॥ गतं गणधरप्ररूपणाद्वारम्। अथ क्षेत्रमार्गणाद्वारमाह-

[भा.२०५२] खित्तस्स उ पडिलेहा, कायव्वा होइ आनुपुव्वीए।
किं वच्चई गणहरो, जो चरई सो तणं वहइ॥

वृ- 'क्षेत्रस्य' संयतीप्रायोग्यस्य 'आनुपूर्व्या' "थुइमंगलमामंतण" इत्यादिना पूर्वोक्तक्रमेण प्रत्युपेक्षणा गणधरेण कर्तव्या। आह 'किं' केन हेतुना गणधरः स्वयमेव क्षेत्रप्रत्युपेक्षणाय व्रजति? उच्यते-यो बलीवर्दादिश्चारिं चरति स एव तृणभारं वहति, एवं यो निर्ग्रन्थीगणस्याधिपत्यमनुभवति स एव सर्वमपि तच्चिन्ताभारमुद्वहति॥ आह संयत्यः किमर्थं न गच्छन्ति? इत्युच्यते-

[भा.२०५३] संजइगमणे गुरुगा, आणादी सउणि पेसि पिल्लणया।
उवलोभे तुच्छा आसियावणाइणो भवे दोसा॥

वृ- यदि संयत्यः क्षेत्रं प्रत्युपेक्षितं गच्छन्ति तत आचार्यस्य चतुर्गुरव आज्ञादयश्च दोषाः। यथा 'शकुनिका' पक्षिणी श्येनस्य गम्या भवति यथा वा "पेसि"त्ति मांसपेशिका आम्रपेशिका वा सर्वस्याप्यभिलषणीया भवति तथा एता अपि; अत एव "पेल्लणय"त्ति विषयार्थिना प्रेर्यन्ते। तथा तुच्छास्ताः, ततो येन तेनाप्याहारादिलोभेनोपप्रलोभ्य आसियावणम्-अपहरणं तासां क्रियते। एवमादयो दोषा भवन्ति॥ इदमेव भावयति-

[भा.२०५४] तुच्छेण वि लोभिज्जइ, भरुयच्छाहरण नियडिसड्ढेणं।
पंतनिमंतण वहणे, चेइय रुदाण अक्खिवणं॥

वृ- तुच्छेनापि आहार-वस्त्रादिना स्त्री लोभ्यते। अत्र च भृगुकच्छग्रामेन निकृतिश्राद्धेनोदाहरणम्।

कथम् ? इत्याह-"पंत"'त्ति वस्त्राणि तैर्निमन्त्रणं कृत्वा 'वहने' प्रवहणे चैत्यवन्दनार्थमारूढानां संयतीनां तेन 'आक्षेपणम्' अपहरणं कृतमिति ।। जहा-भरूअच्छे आगंतुगवाणियओ तच्चन्नियसड्ढो संजईओ रूववईओ दट्ठूण कवडसड्ढत्तणं पडिवन्नो । ताओ तस्स वीसंभियाओ । गमनकाले पवत्तिणिं विन्नवेइ-वहणट्ठाणे मंगलट्ठा पडिलाहणं करेमि तो संजईओ पट्ठवेह, अम्हे वि अनुग्गहिया होज्जामो । तओ पट्ठविया । तत्थ गया कवडसड्ढेणं भन्नंति-पढमं वहणे चेइयाइं वंदह, तो पडिलाहणं करेमि त्ति । ताओ जाणंति-अहो ! विवेको । तओ चेइयवंदनत्थमारूढाणं पयट्टियं वहणं, जाव आसियावियाओ ।।

[भा.२०५५] एएहि कारणेहिं, न कप्पई संजईण पडिलेहा ।
गंतव्व गणहरेणं, विहिना जो वन्निओ पुव्विं ।।

वृ-एतैः कारणैः संयतीनां क्षेत्रप्रत्युपेक्षा कर्तुं न कल्पते । केन पुनस्तर्हि प्रत्युपेक्षणाय गन्तव्यम्? इत्याह-गन्तव्यं गणधरेण विधिना । कः पुनर्विधि ? इत्याह-यः पूर्वमत्रैव मासकल्पप्रकृते स्थविरकल्पिकविहारद्वारे वर्णितः ।। आह कीदृशं क्षेत्रं तासां योग्यं गणधरेण प्रत्युपेक्षणीयम् ? उच्यते-

[भा.२०५६] जत्थाहिवई सूरो, समणाणं सो य जाणइ विसेसं ।
एतारिसम्मि खेत्ते, समणाणं होइ पडिलेहा ।।

[भा.२०५७] जहियं दुस्सीलजणो, तक्कर-सावयभयं व जहि नत्थि ।
निप्पच्चवाय खेत्ते, अज्जाणं होइ पडिलेहा ।।

वृ- 'यत्र' ग्रामादौ 'अधिपति' भोगिकादिकः 'शूरः' चौर-चरटादिभिरनभिभवनीय इत्यर्थः, स च 'श्रमणानां' साधूनां विशेषं जाना, यथा-ईदृशममीषां दर्शनं व्रतम्, ईदृशश्च समाचारः । एतादृशे क्षेत्रे साध्वीयोग्ये श्रमणानां प्रत्युपेक्षणा भवति, एवंविधं क्षेत्रं तासां हेतोः प्रत्युपेक्षणीयमिति भावः ।। तथा यत्र दुःशीलजनः तस्कर-श्वापदभयं वा यत्र नास्ति ईदृशे निष्प्रत्यपाये क्षेत्रे आर्यिकाणां प्रायोग्ये प्रत्युपेक्षणा कर्त्तव्या भवति ।। अथ वसतिद्वारमाह-

[भा.२०५८] गुत्ता गुत्तदुवारा, कुलपुत्ते सत्तमंत गंभीरे ।
भीयपरिस मद्दविए, ओभासण चिंतना दाने ।।

वृ- 'गुप्ता' वृत्या कुड्येन वा परिक्षिप्ता । 'गुप्तद्वारा' कपाटद्वयोपेतद्वारा । यस्यां च शय्यातरः कुलपुत्रकः, कथम्भूतः ? 'सत्त्ववान्' न केनापि क्षोभ्यते, महदपि च प्रयोजनं कर्तुमध्यवस्यति। 'गम्भीरो नाम' संयतीनां पुरीषाद्याचरणं दृष्ट्वाऽपि विपरिणामं न याति । तथा भीता-चकिता पर्षद् यस्य स भीतपर्षद्, आज्ञैकसारतया यस्य भ्रुकुटिमात्रमपि दृष्ट्वा परिवारः सर्वोऽपि भयेन कम्पमानस्तिष्ठति न च कश्चिदन्याये प्रवृत्तिं करोति । मार्दवम्-अस्तब्धता तद् विद्यते यस्य स मार्दविकः । एवंविधो यदि कुलपुत्रको भवति ततः "ओभासण"'त्ति संयतीनामुपाश्रयस्यावभाषणं कर्त्तव्यम् । अवभाषिते च यद्यसावुपाश्रयमनुजानीते- अनुग्रहो मे, तिष्ठन्तु भगवत्यो यथाऽभिप्रेतं कालमत्र' इति ततो भण्यते-"चिंतन"'त्ति यथा स्वकीयाया दुहितुः स्नुषाया वा चिन्तां करोषि तथा यद्येतासामपि प्रत्यनीकादुपसर्गरक्षणे चिन्तां कर्तुमुत्सहसे ततोऽत्र स्थापयामः । स प्राह-बाढं करोमि चिन्तां परं कथं पुनरमू रक्षणीयाः ? । ततोऽभिधातव्यम्-यथा किलाक्षिणी स्वहस्तेन परहस्तेन वा दूयमाने रक्ष्येते तथैता अपि यद्यात्ममानुषैरपरमानुषैर्वा उपद्रूयमाणा रक्षसि तत

एता रक्षिता भवन्तीति। यद्येवं प्रतिपद्योपाश्रयस्य दानं करोति ततः स्थापनीयाः। अथाप्रतिपद्यमाने स्थापयन्ति ततश्चत्वारो गुरुकाः॥ अन्याचार्याभिप्रायेणामुमेवार्थमाह-

[भा.२०५९] घनकुड्डा सकवाडा, सागारियमाउ-भगिनिपेरंता।
निप्पच्चवाय जोग्गा, विच्छिन्नपुरोहडा वसही॥

वृ- 'घनकुड्या' पक्वेष्टकादिमयभित्तिका, 'सकपाटा' कपाटोपेतद्वारा, सागारिकसत्कानां मातृभगिनीनां गृहाणि पर्यन्ते-पार्श्वतो यस्याः सा सागारिकमात-भगिनीगृहपर्यन्ता, गाथाया-मनुक्तोऽपि गृहशब्दोऽत्र द्रष्टव्यः, 'निष्प्रत्यपाया' दुर्जनप्रवेशादिप्रत्यपायरहिता, विस्तीर्णं पुरोह-डंगृहपश्चाद्भागो यस्यां सा विस्तीर्णपुरोहडा, एवंविधा वसति संयतीनां योग्या॥

[भा.२०६०] नासन्ने नातिदूरे, विहवापरिणयवयाण पडिवेसे।
मज्झत्थ-ऽवियाराणं, अकुऊहल-भावियाणं च॥

वृ- विधवाश्च ताः परिणतवयसश्च-स्थविरस्त्रियस्तासाम् तथा मध्यस्थाना-कन्दर्पादि-भावविकलानाम् अविकाराणां-गीतादिविकाररहितानाम् अकुतूहलानां-'संयत्यो भोजनादिक्रियाः कथं कुर्वन्ति?' इति कौतुकवर्जितानाम् भावितानां-साधु-साध्वीसामाचारीवासितानां सम्बन्धि यत् प्रतिवेश्म-प्रत्यासन्नगृहं तत्र नासन्ने नातिदूरे संयतीप्रतिश्रयो ग्राह्यः॥

अथान्याचार्यपरिपाट्या शय्यातरस्वरूपमाह-

[भा.२०६१] भोइय-महतरगादी, बहुसयणो पिल्लओ कुलीनो य।
परिनतवओ अभीरू, अनभिग्गहिओ अकुतूहली॥

वृ- यो भोगिक-महत्तरादि 'बहुस्वजनः' बहुपाक्षिकः, तथा 'प्रेरकः' षिड्गादीनां स्वगृहे प्रविशतां निवारकः, कुलीनः परिणतवयाश्च प्रतीतः, 'अभीरु' उत्पन्ने महत्यपि कार्ये न बिभेति 'कथमेतत् कर्त्तव्यम्?' इति, 'अनभिगृहीतः' आभिग्रहिकमिथ्यात्वरहितः, 'अकुतूहली' संयतीनां भोजनादिदर्शने कौतुकवर्जितः॥

[भा.२०६२] कुलपुत्त सत्तमंतो, भीयपरिस भद्दओ परिणओ अ।
धम्मट्ठी य विनीओ, अज्जासेज्जायरो भणिओ॥

वृ- यस्तु कुपुत्रकः 'सत्त्ववान्' न केनाप्यभिभवनीयः, 'भीतपर्षत्' प्राग्वत्, 'भद्रकः' शासने बहुमानवान्, परिणतो वयसा मत्या वा, तथा 'धर्मार्थी' धर्मश्रद्धालुः, 'विनीतः' विनयवान्, एष आर्यिकाणां शय्यातरो भणितस्तीर्थकरैः॥ गतं वसतिद्वारम्। अथ विचारद्वारमाह-

[भा.२०६३] अनावायमसंलोगा, अणावाया चेव होइ संलोगा।
आवायमसंलोगा, आवाया चेव संलोगा॥

वृ- अनापाता असंलोका १ अनापाता संलोका २ आपाता असंलोका ३ आपाता संलोका चेति चतो विचारभूमयः॥ एतासु संयतीनां विधिमाह-

[भा.२०६४] वीयारे बहि गुरुगा, अंतो वि य तइयवज्जि ते चेव।
तइए वि जत्थ पुरिसा, उवेंति वेसित्थियाओ अ॥

वृ- यदि पुरोहडे विद्यमाने संयत्यो ग्रामाद् बहिर्विचारभुवं गच्छन्ति ततश्चतुर्ष्वपि स्थण्डिलेषु प्रत्येकं चतुर्गुरुकाः प्रायश्चित्तम्। 'अन्तरपि च' ग्रामाभ्यन्तरे पुरोहडादौ आपातासंलोकलक्षणं

तृतीयं स्थण्डिलं वर्जयित्वा यत्र पुरुषा वेश्यास्त्रियश्च 'उपयन्ति' आपतन्ति तत्र चत्वारो गुरुकाः। यत्र तु कुलजानां स्त्रीणामापातो भवति तत्र गन्तव्यम् ॥ आह किं पुनः कारणं प्रथमादीनि स्थण्डिलानि तासां नानुज्ञायन्ते ? उच्यन्ते-

[भा.२०६५] जत्तो दुस्सीला खलु, वेसित्थि नपुंस हेट्ठ तेरिच्छा ।
सा उ दिसा पडिकुट्ठा, पढमा बिइया चउत्थी य ॥

वृ- "जत्तो"त्ति यस्यां दिशि 'दुःशीलाः' परदाराभिगामिनः पुरुषा आपतन्ति तथा वेश्यास्त्रियोनपुंसकाश्च "हेट्ठ"त्ति अधोनापिताः 'तिर्यञ्चश्च' वानरादय आपतन्ति 'सा तु' सा पुनः दिक् प्रथमा द्वितीया चतुर्थी च 'प्रतिक्रुष्टा' निषिद्धा, प्रथमादीनि स्थण्डिलानीत्यर्थः ॥

अथैनामेव निर्युक्तिगाथां व्याचष्टे-

[भा.२०६६] चारभड घोड मिंठा, सोलग तरुणा य जे य दुस्सीला ।
उब्भामित्थी वेसिय, अपुमेसु उ इंति उ तदट्ठा ॥

वृ- 'चारभटाः' राजपुरुषाः 'घोटाः' चट्टाः 'मिण्ठाः' गजपरिवर्त्तकाः 'सोलाः' तुरगचिन्तानियुक्ताः, एवमादयो ये तरुणाः सन्तो दुःशीलास्ते प्रथम-द्वितीययोः स्थण्डिलयोरनापातत्वादेकान्तमिति कृत्वा उद्भ्रामकस्त्रीषु वा वेश्यासु वा "अपुमेसु उ"त्ति नपुंसकेषु वा पूर्वप्राप्तेषु 'तदर्थं' तेषाम्-उद्भ्रामकस्त्रीप्रभृतीनां प्रतिसेवनार्थमायान्तीति । चतुर्थे स्थण्डिले संलोकत्वादेते दुःशीलादयः संयतीवर्गं पश्येयुः संयतीवर्गेण वा ते दृश्येरन्नित्यतस्तदपि निषिध्यते ॥

[भा.२०६७] हेट्ठउवासणहेउं, णेगागमनम्मि गहण उड्डाहो ।
वानर-मयूर-हंसा, छाला सुनगादि तेरिच्छा ॥

वृ- अधस्तादुपासनम्-अधोलोचकर्म तद्धेतोरधोनापितेषु पूर्वप्राप्तेषु 'अनेकेषां' मनुष्याणामधोलोचकर्मकारापकाणामागमने सति यद्युदीर्णमोहास्ते संयतीर्गृह्णन्तीति ततो ग्रहणे उड्डाहो भवति । तथा वानर-मयूर-हंसाश्छगलाः शुनकादयश्च तिर्यञ्चस्तत्रायाताः संयतीमुपसर्गयेयुः॥

यत एवं ततः किम् ? इत्यत आह-

[भा.२०६८] जइ अंतो वाघाओ, बहिया तासि तइया अनुन्नाया ।
सेसा नाणुन्नाया, अन्नाण वियारभूमीतो ॥

वृ-यदि 'अन्तः' ग्रामाभ्यन्तरे 'व्याघातः' पुरोहडादेरभावस्ततो बहिस्तासां 'तृतीया विचारभूमि' आपाताऽसंलोकरूपाऽनुज्ञाता, तत्रापि स्त्रीणामेवापातो ग्राह्यो न पुरुषाणाम् । शेषा विचारभूमयोऽनापाताऽसंलोकाद्या आर्यिकाणां नानुज्ञाताः ॥ गतं विचारद्वारम् ।

अथ संयतीगच्छस्यानयनमिति द्वारमाह-

[भा.२०६९] पडिलेहियं च खेत्तं, संजइवग्गस्स आणणा होइ ।
निक्कारणम्मि मग्गतो, कारणे समगं व पुरतो वा ॥

वृ- एवं वसति-विचारभूम्यादिविधिना प्रत्युपेक्षितं च संयतीप्रायोग्यं क्षेत्रम् । ततः संयतीवर्गस्यानयनं तत्र क्षेत्रे भवति । कथम् ? इत्याह-'निष्कारणे' निर्भये निराबाधे वा सति साधवः पुरतः स्थिताः संयत्यस्तु 'मार्गतः' पृष्ठतः स्थिता गच्छन्ति । कारणे तु 'समकं वा' साधूनां पार्श्वतः 'पुरतो वा' साधूनामग्रतः स्थिताः संयत्यो गच्छन्ति ॥

[भा.२०७०] निप्पच्चवाय संबंधि भाविए गणहरऽप्पबिइ-तइओ।
नेइ भए पुन सत्थेण सद्धिं कयकरणसहितो वा॥

वृ- 'निष्प्रत्यपाये', उपद्रवाभावे संयतीनां ये 'सम्बन्धिनः' स्वज्ञातीयः 'भावितश्च' सम्यक्परिणतजिनवचना निर्विकाराः संयतास्तैः सह गणधर आत्मद्वितीय आत्मतृतीयो वा संयतीर्विवक्षितं क्षेत्रं नयति। अथ स्तेनादिभयं वर्त्तते ततः सार्थेन सार्द्धं नयति, यो वा संयतः कृतकरणः-इषुशास्त्रे कृताभ्यासस्तेन सहितोऽसौ संयतीस्तत्र नयति। स च गणधरः स्वयं पुरतः स्थितो गच्छति, संयत्यस्तु मार्गतः स्थिताः॥ अत्रैव मतान्तरमुपन्यस्य दूषयन्नाह-

[भा.२०७१] उभयट्ठाइनिविट्ठं, मा पेल्ले वइणि तेण पुर एगे।
तं तु न जुज्जइ अविनय विरुद्ध उभयं च जयणाए॥

वृ-एके सूरयो ब्रुवते-उभयं-कायिकी-संज्ञे तदर्थम् आदिशब्दात् परस्मिन् वा क्वचित् प्रयोजने निविष्टम्-उपविष्टं सन्तं संयतं व्रतिनी मा प्रेरयतु इत्यनेन हेतुना संयत्यः पुरतो गच्छन्ति। अत्राचार्य प्राह-'तत् तु' तदुक्तं न युज्यते। कुतः? इत्याह-पुरतो गच्छन्तीनां तासामविनयः साधुषु सञ्जायते, लोकविरुद्धं चैवं परिस्फुटं भवति-अहो! मतेज्ज्प्रधानसमीपं दर्शनम्! यत एवमतो मार्गतः स्थिता एव ता गच्छन्ति। 'उभयं च' कायिकी-संज्ञारूपं यतनया कुर्यात्। का पुनर्यतना? इति चेद् उच्यते-यत्रैकः कायिकीं संज्ञां वा व्युत्सृजति तत्र सर्वेऽपि तिष्ठन्ति। तथास्थितांश्च तान् दृष्ट्वा संयत्योऽपि नाग्रतः समागच्छेयुः, ता अपि पृष्ठत एव शरीरचिन्तां कुर्वन्तीति॥

गतं गच्छस्यानननमिति द्वारम्। अथ वारकद्वारमाह-

[भा.२०७२] जहियं च अगारिजणो, चोक्खब्भूतो सुईसमायारो।
कुडमुहदद्दरएणं, वारगनिक्खेवणा भणिया॥

वृ- 'यस्मिंश्च' ग्रामादौ 'अगारीजनः' अविरतिकालोकश्चोक्षभूतः शुचिसमाचारश्च वर्तते तत्र वारकग्रहणं निर्ग्रन्थीभिः कर्त्तव्यम्। अथ न कुर्वन्ति ततश्चत्वारो गुरवः, यच्च प्रवचनोड्डाहादिकमुपजायते तन्निष्पन्नं प्रायश्चित्तम्। यत एवमतः कुटमुखे-घटकण्ठके श्लक्ष्णचीवरदर्दरकेण पिहितस्य वारकस्य स्वच्छद्रवभृतस्य निक्षेपणा भणिता भगवद्भिः॥

एनामेव निर्युक्तिगाथां भावयति-

[भा.२०७३] थीपडिबद्धे उवस्सए, उस्सग्गपदेण संवसंतीओ।
वच्चंति काइभूमिं, मत्तगहत्था न याऽऽयमणं॥

वृ- उत्सर्गपदेन संयतीभि स्त्रीप्रतिबद्ध उपाश्रये वस्तव्यमिति कृत्वा तत्र संवसन्त्यो यदा कायिकीभूमिं व्रजन्ति तदा 'मात्रकहस्ता' वारकं हस्ते गृहीत्वा व्रजन्ति, यथा तासामगारीणां प्रत्ययो जायते-एताः कायिकीं कृत्वा पश्चादाचमनं करिष्यन्ति, अहो! शुचिसमाचारा इति। तत्र च गतास्तासामदर्शनीभूता आचमनं न कुर्वन्ति, स च वारकोऽन्तर्लिप्तः कर्त्तव्यः॥

कुतः? इत्यत आह-

[भा.२०७४] दुक्खं विसुयावेउं, पनगस्स य संभवो अलित्तम्मि।
संदंते तसपाणा, आवज्जण तक्कणादीया॥

वृ-वारकोऽलिप्तः सन् "विसुयावेउं" विशोषयितुं "दुक्खं" दुष्करो भवति। अलिप्ते च तत्र

पानकभावितत्वात् पनकस्य 'सम्भवः' सम्मूर्च्छनं भवति । अलिप्तश्च वारकः पानके प्रक्षिप्ते सति स्यन्दत-परिगलति । यन्दमाने च 'त्रसप्राणिनः' कीटिका-मक्षिकादयः समागच्छेयुः । ततः किम्? इत्यत आह- ''आवज्जण''त्ति यदनन्तकायिक-विकलेन्द्रियेषु सङ्घट्टनादिकमापद्यते तन्निष्पन्नं प्रायश्चित्तम् । ''तक्कणाईय''त्ति ततो वारकात् पानके परिगलति मक्षिकाः पतन्ति, तासां ग्रसनार्थं गृहकोकिला धावति तस्या अपि भक्षणार्थं मार्जारीत्येवं तर्कणम्-अन्योन्यं प्रार्थनं तदादयो दोषा भवेयुः ।। यत्र पुनः कायिकीभूमौ सागारिकं भवति तत्रेयं यतना-

[भा.२०७५] सागारिए परम्मुह, दगसद्दमसंफुसंतिओ नित्तं ।
पुलएज्ज मा य तरुणी, ता अच्छ दवं तु जा दिवसो ।।

वृ- सागारिके सति पराङ्मुखीभूय कायिकीं कृत्वा 'नेत्रं' भगमसंस्पृशन्त्यः 'दकशब्दं' पानकप्रक्षालनानुमापकं कुर्वन्ति । तथा 'तरुण्यः' स्त्रियः 'किमत्रास्ति पानकं न वा ?' इति जिज्ञासया मा प्रलोकन्तामिति हेतोस्तस्मिन् वारके तावद् 'अच्छम्' अकलुषं 'द्रवं' पानकं प्रक्षिप्तं तिष्ठति यावद् दिवसः, ततः सन्ध्यासमये तत् पानकं परिष्ठापयन्ति ।।

गतं वारकद्वारम् । अथ भक्तार्थनाविधिद्वारमाह-

[भा.२०७६] मंडलिठाणस्सऽसती, बला व तरुणीसु अहिवडंतीसु ।
पत्तेय कमढभुंजण, मंडलिथेरी उ परिवेसे ।।

वृ- यद्यसागारिकं ततो मण्डल्यां समुद्दिशन्ति । अथ मण्डलीभूमि सागारिकबहुला ततो मण्डलिस्थानस्यासति बलाद् वा प्रणयेन तरुणीष्वभिपतन्तीषु तत्रौर्णिकं कल्पमधः प्रस्तीर्य तस्योपरि सौत्रिकं तत्राप्यलाबुपात्रकाणि स्थापयित्वा प्रत्येकं कमढकेषु भुञ्जते । प्रवर्त्तिनी च पूर्वाभिमुखा धुरि निविशते । तत एका मण्डलिस्थविरा यमलजननीसहोदरा सर्वासामपि परिवेषयेत्, आत्मनोऽपि योग्यमात्मीये कमढके प्रक्षिपेत् ।।

[भा.२०७७] ओगाहिमाइविगई, समभाग करेइ जत्तिया समणी ।
तासिं पच्चयहेउं, अणहिक्खद्धा अकलहो अ ।।

वृ- अवगाहिमं-पक्वान्नम् आदिशब्दाद् घृतादिकाश्च विकृतीः यावत्यः श्रमण्यस्तावतः समभागान् मण्डलिस्थविरा करोति । किमर्थम् ? इत्याह-'तासां' श्रमणीनां प्रत्ययार्थम्, था. ''अणहिक्खद्ध''त्ति 'अनधिकखादनार्थं' सर्वासामप्यविषमसमुद्देशनार्थम्, अकलहश्चैवं भवति, असङ्खडं न भवतीत्यर्थः ।। ताश्च समुद्देष्टुमुपविशन्त्य इत्थं ब्रुवते-

[भा.२०७८] निव्वीइय एवइया, व विगइओ लंबणा व एवइया ।
अन्नगिलायंबिलिया, अज्ज अहं देह अन्नासिं ।।

वृ-एका ब्रूते-अद्याहं निर्विकृतिका । द्वितीया प्राह-अद्य मम 'एतावत्यः' एक-द्व्यादिसङ्ख्याका विकृतयो मुत्कलाः शेषाणां प्रत्याख्यानम् । अपरा भणति-अद्य ममैतावन्तः 'लम्बनाः' कवलाः तत ऊर्ध्वं नियमः । अन्याऽभिधत्ते-अद्याहम् 'अन्नग्लाना' ग्लानं-पर्युषितमन्नं मया भोक्तव्यमित्येवं प्रतिपन्नाभिग्रहा । तदपरा ब्रूते-अद्याहम् 'आचाम्लिका' कृताचाम्लप्रत्याख्याना अत इदं विकृत्यादिकमन्यासां प्रयच्छत । एवं समुद्दिश्य स्वच्छपानकेनाचमनं कुर्वन्ति । प्रवर्त्तिन्याः कमढकं क्षुल्लिका निर्लेपयति, शेषास्तु स्वं स्वं कमढकम् । ततः सर्वास्वपि समुद्दिष्टासु मण्डलीस्थविरा

समुद्दिशति ।। एवंविधं विधिं दृष्ट्वा किं भवति ? इत्याह-

[भा.२०७९] दट्ठूण निहुयवासं, सोयपयत्तं अलुद्धयत्तं च ।
इंदियदमं च वासिं, विनयं च जणो इमं भणइ ।।

वृ- 'तासां' संयतीनां 'निभृतवासं' विकथादिविरहेण निर्व्यापारतयैवावस्थानम्, 'शौचप्रयत्नं' वारकग्रहणादिरूपम्, अलुब्धत्वं च विकृत्यादिष्वभ्युत्थानाभिग्रहश्रवणेन, 'इन्द्रियदमं च' श्रोत्रादीन्द्रियनिग्रहम्, 'विनयं च' प्रवर्तिन्यादिष्वभ्युत्थानादिरूपं दृष्ट्वा 'जनः' लोक इदं ब्रवीति।

[भा.२०८०] सच्चं तवो य सीलं, अनहिक्खाओ अ एगमेगस्स ।
जइ बंभं जइ सोयं, एयासु परं न अन्नासु ।।

[भा.२०८१] बाहिरमलपरिछुद्धा, सीलसुगंधा तवोगुणविसुद्धा ।
धन्नाण कुलुप्पन्ना, एआ अवि होज्ज अम्हं पि ।।

वृ- 'सत्यं' वाक्कार्मणोरविसंवादिता, 'तपः' अनशनादि, 'शीलं' सुस्वभावता, 'अनधिकखादश्च' विषमभोजनम् 'एकैकस्याः' परस्परममूषाम्, तथा यदि 'ब्रह्म' ब्रह्मचर्यं यदि 'शौचं' शुचिसमाचारता, एतानि सत्यादीनि यदि परम् 'एतासु' संयतीषु दृश्यन्ते 'नान्यासु' शाक्यादिपाषण्डिनीषु । ततो यद्यप्येता बाह्यमलेन परिक्षिप्तास्तथापि शीलेन सुगन्धाः तपोगुणैः-अनशनादिभिः यद्वा तपसा-प्रतीतेन गुणैश्च-उपशमादिभिर्विशुद्धाः 'धन्यानां कुलोत्पन्नाः' एता येषां कुले उत्पन्नास्तेऽपि धन्या इति भावः । 'अपि' सम्भवनायातम्, सम्भाव्यते किमयमर्थ यदस्माकमपि भगिनी-दुहित्रादय एतादृश्यः-स्वकुलोज्ज्वालनकारिण्यो भवेयुः ? ।।

[भा.२०८२] एवं एत्थ वसंतीणुवसंतो सो य सिं अगारिजणो ।
गिण्हेति य सम्मत्तं, मिच्छत्तपरम्मुहो जाओ ।।

वृ- एवं तत्र वसन्तीनां तासां स अगारीजनः 'उपशान्तः' प्रतिबुद्धस्ततो मिथ्यात्वपराङ्मुखो जातः सन् सम्यक्त्वं गृह्णाति, चशब्दाद् देशविरतिं गृहवासभग्नो वा कश्चित् तद्गुणग्रामरञ्जितमनाः सर्वविरतिमपि प्रतिपद्यते ।। गतं भिक्षार्थनाविधिद्वारम् । अथ प्रत्यनीकद्वारमाह-

[भा.२०८३] तरुणीण अभिद्दवणे, संवरितो संजतो निवारेइ ।
तह वि य अठायमाणे, सागारिओ तत्थुवालभइ ।।

वृ- तरुणीनां संयतीनामभिद्रवणे प्रत्यनीकेन विधीयमाने सति 'संवृतः' संयतीवेषाच्छादितः संयतो निवारयति । तथापि चातिष्ठति तस्मिन् 'सागारिकः' शय्यातरः 'तत्र' उपसर्गे तमुपालभते।

एनामेव निर्युक्तिगाथां भावयति-

[भा.२०८४] गणिणिअकहणे गुरुगा, सा वि य न कहेइ जइ गुरूणं पि ।
सिट्ठम्मि य ते गंतुं, अनुसट्ठी मित्तमाईहिं ।।

वृ- कश्चित्तरुणो विषयलोलुपतया संयतीनामुपद्रवं कुर्यात् ततस्तत्क्षणादेव ताभि प्रवर्त्तिन्याः कथनीयम् । यदि न कथयन्ति ततश्चत्वारो गुरवः । साऽपि च प्रवर्त्तिनी यदि गुरूणां न कथयति तदापि चतुर्गुरवः आज्ञादयश्च दोषाः, तस्मात् कथयितव्यम् । ततः 'शिष्टे' कथिते 'ते' आचार्यास्त-स्याविरतकस्य पार्श्वं गत्वा साध्वीशीलभञ्जकस्य दारुणविपाकतासूचिकामनुशिष्टिं ददति । यद्युपरमते ततः सुन्दरम्, अथ नोपरमते ततो यानि तस्य मित्राणि आदिशब्दाद् ये वा भ्रात्रादयः स्वजनास्तेषां

निवेद्य तैः प्रज्ञाप्यते । यदि स्थितस्ततो लष्टम् ॥

[भा.२०८५] तह वि य अठायमाणे, वसभा भेसिंति तहवि य अठंते ।
अमुगत्थ घरे एज्जह, तत्थ य वसभा वतिणिवेसा ॥

वृ- तथाप्यतिष्ठति तस्मिन् प्रत्यनीके 'वृषभाः' गच्छस्य शुभा-ऽशुभकार्यचिन्तानियुक्तास्तं प्रत्यनीकं भापयन्ति । तथाप्यतिष्ठति यस्तत्र[illegible] कृत्यकरणः [illegible] स संयतीवेषं कृत्वा तस्य सङ्केतं प्रयच्छति, यथा-अमुकत्र गृहे यूयमागच्छत । ततो वृषभा व्रतिनीनां वेषं परिधाय तेन साधुना सह तत्र गत्वा प्रत्यनीकस्य शिक्षां कुर्वन्ति । तथाप्यनुपशान्ते तस्मिन् सागारिकस्य निवेद्यते। तेनोपलब्धो यदि स्थितस्ततः सुन्दरम् ॥

अथ नास्ति तदानीं सन्निहितः सागारिकस्ततः किं कर्त्तव्यम् ? इत्याह-

[भा.२०८६] सागारिए असंते, किच्चकरे भोइयस्स व कहिंति ।
अन्नत्थ ठाण निंती, खेत्तस्सऽसती णिवे चेव ॥

वृ- सागारिके 'असति' असन्निहिते 'कृत्यकरस्य' ग्रामचिन्तानियुक्तस्य 'भोगिकस्य वा' ग्रामस्वामिनः कथयन्ति । तेन शासितोऽपि यदि नोपरमते ततः संयतीरन्यत्र 'स्थाने' क्षेत्रे नयन्ति। अथ नास्ति संयतीप्रायोग्यपरं क्षेत्रंस्वयं वा संयत्यो ग्लानादिकार्यव्यापृता न शक्नुवन्ति क्षेत्रान्तरं गन्तुं ततः 'नृपस्य' दण्डिकस्य निवेद्यते, स प्रत्यनीकमुपद्रवन्तं निवारयति ॥

गतं प्रत्यनीकद्वारम् । अथ भिक्षानिर्गमद्वारमभिधित्सुराह-

[भा.२०८७] दो थेरि तरुणि थेरी, दोन्नि य तरुणीउ एक्किया तरुणी ।
चउरो अ अनुग्घाया, तत्थ वि आणाइयो दोसा ॥

वृ-अत्र गुरुनियोगतश्चूर्णिरिव लिख्यते-जति दोन्नि थेरीओ निग्गच्छंति भिक्खस्स ण्का, तरुणी थेरी यजति ण्का, दो तरुणीओ जति निग्गच्छंति ण्का, एगा थेरी जति निग्गच्छइ ण्का, एक्किया तरुणी जति निग्गच्छइ ण्का, तत्राप्याज्ञादयो दोषाः ॥ कुतः ? इत्याह-

[भा.२०८८] चउकन्नं होज्ज रहं, संका दोसा य थेरीयाणं पि ।
कुट्टिणिसहिता बितिए, तइय-चउत्थीसु धुत्ति त्ति ॥

वृ-दोण्हं थेरीणं दोसे-दुवे अभिन्नरहसीओ होज्जा, संका य-किं मन्ने केणइ दूतिकिच्चेणं निउत्ति-याओ ? असंकणिज्जाओ त्ति काउं । तरुणी थेरी य लोगो भणेज्जा-कुट्टिणिसहिया हिंडइ, "बितिए" त्ति पगारे निग्गमस्स । दो तरुणीओ धुत्तीओ संभाविज्जंति । एगा वि थेरी धुत्ती संभाविज्जइ । एगा तरुणी तक्कणिज्जा ॥ यस्मादेते दोषाः तस्मादयं विधिः-

[भा.२०८९] पुरतो य मग्गतो या, थेरीओ मज्झ होंति तरुणीओ ।
अइगमने निग्गमने, एस विही होइ कायव्वो ॥

वृ- 'पुरतः' अग्रतः 'मार्गतश्च' पृष्ठतः स्थविरा भवन्ति, मध्यभागे पुनस्तरुण्यः, एवं बह्वीनां सम्भूय पर्यटन्तीनामुक्तम् । जघन्येन तु तिः सहैव पर्यटन्ति, तत्रैका स्थविरा पुरतः द्वितीया स्थविरैव पृष्ठतः तृतीया तुरुणी तयोर्द्वयोरपि मध्यभागे स्थिता सती पर्यटन्ति । एवम् 'अतिगमने' गृपतिगृहप्रवेशे 'निर्गमने च' तत एव निर्गमे एषविधि कर्त्तव्यो भवति ॥

कुतः ? इति चेद् उच्यते-

[भा.२०९०] तिगमादसंकमिज्ञा, अतक्कणिज्ञा य साण-तरुणाणं ।
अन्नोन्नरक्खणेसण, वीसत्थपवेसकिरिया य ॥

वृ-त्रिकादयः पर्यटन्त्योदशङ्कनीया भवेयुः, श्वान-तरुणानां च 'अतर्कणीयाः' अनभिलषणीया भवन्ति, उपद्रवत्स्वपि च श्वान-गवादिषु त्रिप्रभृतोऽन्योन्यं परस्परं सुखेनैव रक्षणं कुर्वन्ति, एषणां च सम्यक् शोधयन्ति, विश्वस्ताश्च सत्यो गृहस्थकुलेषु प्रवेश-निर्गमादिकाः क्रियाः कुर्वन्ति ॥ यत्र कोष्ठको भवेत् तत्रायं विधिः-

[भा.२०९१] थेरी कोट्ठगदारे, तरुणी पुन होइ तीए नादूरे ।
बिइय किढी ठाइ बहिं, पच्चत्थियरक्खणट्ठाए ॥

वृ-एका स्थविरा 'कोष्ठकस्य' अपवरकस्य द्वारे, तरुणी पुनः 'तस्याः' स्थविराया नातिदूरे प्रदेशे, या तु द्वितीया 'किढी' स्थविरा सा द्वारस्य बहिस्तिष्ठति । किमर्थम् ? इत्याह-प्रत्यर्थी-प्रत्यनीकस्तस्य रक्षणार्थम्, यदि कोऽप्युपसर्गं कुर्यात् तदा सुखेनैव बोलं कृत्वा स निवार्यते ॥

[भा.२०९२] जाणंति तव्विह कुले, संबुद्धीए चरिज्ञ अन्नोन्नं ।
ओराल निच्च लोयं, खुज्ञ तवो आउल सहाया ॥

वृ- तद्विधानि-तादृशानि सम्भावनीयोपद्रवाणि कुलानि सम्यग् जानन्ति, ज्ञात्वा च प्रथमत एव परिहरन्ति । 'अन्योऽन्यं' परस्परं 'सम्बुध्या' सम्मत्या 'चरेयुः' भिक्षाचर्यां पर्यटेयुः, मा भूदन्नसम्मत्या पर्यटने परस्परमसङ्खडादयो दोषाः । या च 'उदारा' रूपातिशयसंयुक्ता संयती सा नित्यमेव लोचमात्मनः करोति, "खुज्ञ"त्ति तस्याः पृष्ठदेशे कुब्जकरणी स्थापयितव्या, 'तपः' चतुर्थादिकं सा कारापणीया, 'आकुले' जनाकीर्णे बह्वीभिश्च सहायाभि सहिता सा भिक्षादौ हिण्डापनीया ॥ अथ तासां वृन्देन भिक्षाटने कारणान्तरमाह-

[भा.२०९३] तिप्पभिइ अडंतीओ, गिण्हंतऽन्नन्नहिं चिमे तिन्नि ।
संजम-दव्वविरुद्धं, देहविरुद्धं च जं दव्वं ॥

वृ- त्रिप्रभृतिवृन्देन भिक्षामटन्त्यः 'अन्योऽन्यस्मिन्' पृथक्पृथग्भाजने चशब्दः प्रागुक्त-कारणापेक्षया कारणान्तरद्योतनार्थः, अमूनि त्रीणि द्रव्याणि सुखेनैव गृह्णन्ति, तद्यथा-संयमविरुद्धं द्रव्यविरुद्धं देहविरुद्धं च यद् द्रव्यम् ॥ एतान्येव यथाक्रमं प्रतिपादयति-

[भा.२०९४] पालंक-लट्टसागा, मुग्गकयं चाऽऽमगोरसुम्मीसं ।
संसज्जती उ अचिरा, तं पिय नियमा दुदुसाय ॥

वृ-पालङ्कशाकं-महाराष्ट्रादौ प्रसिद्धम्, लट्टाशाकं-कौसुम्भशालनकम्, एते अन्योऽन्यं मिलिते सूक्ष्मजन्तुभि संसज्येते । यच्च मुद्गकृतम्, उपलक्षणत्वादन्यदपि द्विदलं तदप्यामगोरसोन्मिश्रं सद् अचिरादेव सूक्ष्मजन्तुभि संसज्यते, संसक्तं च नियमाद् द्वौ दोषौ समाहृतौ द्विदोषं तस्मै द्विदोषाय भवति, संयमोपघाता-ऽऽत्मोपघातरूपं दोषद्वयं करोतीत्यर्थः ॥

[भा.२०९५] दहि-तेल्लाई उभयं, पय-सोवीराउ होंति उ विरुद्धा ।
देहस्स विरुद्धं पुन, सी-उण्हाणं समाओगो ॥

वृ-दधि-तैले आदिशब्दादन्यदपि 'उभयं' मिलितं सद् यत् परस्परविरुद्धम्, ये च 'पयःसौवीरे' दुग्ध-काञ्जिके परस्परं विरुद्धे एतद् द्रव्यविरुद्धं मन्तव्यम् । देहस्य पुनर्विरुद्धं यः शीतोष्णयोर्द्रव्ययोः

परस्परं समायोगः । एतानि पृथक्पृथग्भाजनेषु गृह्यमाणानि न संयमात्मोपघाताय जायन्ते ।। अपि च-

[भा.२०९६] नत्थि य मामागाइं, मागउग्गामो य तासिमब्भासे ।
सी-उण्हगिण्हणाए, सारक्खण एक्कमेक्कस्स ।।

वृ- न च सन्ति तासां मामाकानि कुलानि, नहि कोऽपि स्त्रीजनं गृहे प्रविशन्तीमीर्ष्यया निषेधयतीति भावः । मातृग्रामो नाम समयपरिभाषया स्त्रीवर्ग, चशब्द एवकारार्थः, तत इदमुक्तं भवति-स्त्रीवर्ग एव प्रायेण भिक्षादायकः, स च तासां संयतीनामभ्यासे स्त्रीत्वसम्बन्धमधिकृत्य प्रत्यासत्तौ वर्त्तते, अतस्तिसृप्रभृतीनामपि पर्यटन्तीनां सुखेनैव भक्त-पानं पर्याप्तं भवति । शीतोष्णग्रहणेन च संरक्षणमेकैकस्याः परस्परं कृतं भवति ।। कथं पुनः ? इत्यत आह-

[भा.२०९७] एगत्थ सीयपुसिणं, च एगहिं पाणगं च एगत्था ।
दोसीणस्स अगहणे, चिराडणे होज्जिमे दोसा ।।

वृ- 'एकत्र' प्रतिग्रहे 'शीतं' पर्युषितं भक्तं गृह्णन्ति, एकस्मिन्नुष्णम्, एकत्र च पानकम्, एतच्च तिसृणामटन्तीनां घटामाटीकते । अथ द्वे पर्यटतस्तत एकत्र प्रतिग्रहे उष्णं द्वितीयत्र तुपानकं परं दोषान्नं कुत्र गृह्णन्ति ? मात्रकं तु स्वार्थं परिभोक्तुं न कल्पते, अथोष्णमध्ये दोषान्नं गृह्णन्ति तदा देहविरुद्धं भवति, अथ दोषान्नं न गृह्णन्ति ततो दोषान्नस्याग्रहणे 'चिराटने' चिरं पर्यटन्तीनां तरुणादिकृतोपसर्गे स्त्रीवेद उध्दीप्येत ।। तथा चामुमेवार्थं दर्शयितुं वेदत्रयस्वरूपमाह–

[भा.२०९८] थी पुरिसो अ नपुंसो, वेदो तस्स उ इमे पगारा उ ।
फुंफुम-दवग्गिसरिसो, पुरदाहसमो, भवे तइओ ।।

वृ- वेदस्त्रिधा-स्त्रीवेदः पुरुषवेदो नपुंसकवेदश्च । तस्य तु त्रिविधस्यापि यथाक्रममभी प्रकाराः- स्त्रीवेदः फुम्फुकाग्निसदृशः-करीषाग्नितुल्यः, यथा करीषाग्निर्नतर्धगधगायते न परिस्फुटं प्रज्वलति न वा विध्यायति चालितस्तु तत्क्षणादेवोद्दीप्यते एवं स्त्रीवेदोऽपि । पुरुषवेदस्तु दवाग्निसदृशः, यथा दवाग्निरिन्धनयोगतः सहसैव प्रज्वल्य विध्यायति एवं पुरुषवेदोऽपि । तृतीयो नपुंसकवेदः स पुरदाहसमः, यथा हि महानगरदाहे वह्नि प्रज्वलितः सन्नार्द्रे वा शुष्के वा सर्वत्र दीप्यते एवं नपुंसकवेदोऽपि स्त्रियां पुरुषे वा सर्वत्र दीप्यते न चोपशाम्यति ।।

इत्थ वेदत्रयस्वरूपमुपदर्श्य प्रस्तुतयोजनामाह-

[भा.२०९९] जह फुंफुमा हसहसेइ घट्टिया एवमेव थीवेदो ।
दिप्पइ अवि किढियाण वि, आलिंगण-छे(छं)दणाईहिं ।।

वृ- यथा फुम्फुकाग्निर्घट्टितः सन् ''हसहसेइ''त्ति देदीप्यते एवमेव स्त्रीवेदोऽप्यालिङ्गन-च्छेदनादिभिरुदीरितः सन् ''किढियाण वि'' त्ति स्थविराणामपि दीप्यते, किं पुनस्तरुणीनाम् ? इत्यपिशब्दार्थः ।। आह स्थविराणां कथं वेदोद्दीपनं भवति ? इति उच्यते-

[भा.२१००] न वओ इत्थ पमाणं, न तवस्सित्तं सुयं न परियाओ ।
अवि खीणम्मि वि वेदे, थीलिंगं सव्वहा रक्खं ।।

वृ- न 'वयः' वार्द्धकादिकम् 'अत्र' विचारे प्रमाणम्, न वा 'तपस्वित्वम्' अनशनादि- तपः- कर्मकारिता, न वा 'श्रुतम्' आचारादिकं सुबह्वप्यवगाहितम्, न वा 'पर्यायः' द्राघीयःप्रव्रज्याकाल-लक्षणः, एतेषु सत्स्वपि वेदोदयो भवेदित्यर्थः । अपि च 'क्षीणेऽपि' निदग्धेन्धनकल्पे कृतेऽपि

वेदे स्त्रीलिङ्गं सर्वथा रक्ष्यम्, अत एव स्त्रीकेवली यथोक्तामार्यिकोपकरणप्रावरमादियतनां करोतीति भावः ।। आह यदि ताः स्नानादिपरिकर्मरहिताः ततः किं कोऽपि तासु रागं व्रजति येनेत्थं यतना क्रियते ? उच्यते-

[भा.२१०१] कामं तवस्सिणीओ, ण्हाणुव्वट्टणविकारविरयाओ ।
तह वि य सुपाउआणं, अपेसणाणं चिमं होइ ।।

वृ- 'कामम्' अनुमतं यथा तपस्विन्यः स्नानोद्वर्तनविकारविरतास्तथापि 'सुप्रावृतानां' नित्यमेव बहुभिरुपकरणैराच्छादितानाम् 'अप्रेषणानां च' अव्यापाराणाम् 'इदम्' अनन्तरमेव वक्ष्यमाणं शरीरसौन्दर्यं भवति ।। तदेवाह-

[भा.२१०२] रूवं वन्नो सुकुमारया य निद्धच्छवी य अंगाणं ।
होंति किर सन्निरोहे, अन्नाण तवं चरंतीणं ।।

वृ- 'रूपम्' आकृति 'वर्ण' गौरत्वादि 'सुकुमारता' कोमलस्पर्शता स्निग्धा च-कान्तिमती छवि-त्वग् 'अङ्गानां' शरीरावयवानाम् । एतानि रूपादिनी आर्यिकाणां 'सन्निरोध' बहूपकरण-प्रावरणादौ ध्रियमाणानां तपः चरन्तीनामपि भवन्ति, ततो युक्तियुक्ता पूर्वोक्ता तासां यतनेति।। गतं भिक्षानिर्गमद्वारम् । अथ निर्ग्रन्थानां मासः कस्मात् तासां द्वौ मासाविति द्वारम् । शिष्यः पृच्छति-कतिं निर्ग्रन्थीनामभ्यधिकानि महाव्रतानि येन तासां द्वौ मासौ निर्ग्रन्थानामेकं मासमेकत्र वस्तुमनुज्ञायते ? सूरिराह-

[भा.२१०३] जइ वि य महव्वयाइं, निग्गंथीणं न होंति अहियाइं ।
तह वि य निच्चविहारे, हवंति दोसा इमे तासिं ।।

वृ- यद्यपि च निर्ग्रन्थीनां महाव्रतानि नाधिकानि भवन्ति तथापि 'नित्यविहारे' मासे मासे क्षेत्रान्तरसङ्क्रमणे इमे दोषास्तासां भवन्ति ।।

[भा.२१०४] मंसाइपेससरिसी, वसही खेत्तं च दुल्लभं जोग्गं ।
एएण कारणेणं, दो दो मासा अवरिसासु ।।

वृ-मांसादिपेशीसदृशी संयती, सर्वस्याप्यभिलषणीयत्वात् । तथा तासां योग्या वसतिर्दुर्लभा, क्षेत्रं च तत्प्रायोग्यं दुर्लभम् । ततो यथोक्तगुणविकलायां वसतौ दोषदुष्टे वा क्षेत्रे स्थाप्यमानानां बहवः प्रवचनविराधनादयो दोषा उपढौकन्ते । एतेन कारणेन तासाम् 'अवर्षासु' वर्षावासं विमुच्य द्वौ द्वौ मासावेकत्र वस्तुमनुज्ञायते ।। अथ द्वयोरुपरि वसन्तीनां दोषान् द्वितीयपदं चोपदर्शयति-

[भा.२१०५] दोण्हं उवरि वसंती, पायच्छित्तं च होंति दोसा य ।
बिइयपयं च गिलाणे, वसही भिक्खं च जयणाए ।।

वृ- द्वयोर्मासयोरुपरि वसन्ति ततः प्रायश्चित्तं दोषाश्च भवन्ति । द्वितीयपदं च ग्लाने वसतिर्भैक्षं च यतनया ग्रहीतव्यम् । भावार्थो निर्ग्रन्थानामिव द्रष्टव्यः ।। सूत्रम्-

*मू. (९) से गामंसि वा जाव रायहाणिंसि वा सपरिक्खेवंसि सबाहिरियंसि कप्पइ निग्गंथीणं हेमंत-गिम्हासु चत्तारि मासा वत्थए-अंतो दो मासे, बाहिं दो मासे । अंतो वसमाणीणं अंतो भिक्खायरिया, बाहिं वसमाणीणं बाहिं भिक्खायरिया ।।*

वृ- अस्य व्याख्या प्राग्वत् । नवरं सबाहिरिके क्षेत्रेऽन्तर्द्वौ मासौ बहिर्द्वौ मासावित्येवं चतुरो मासान् निर्ग्रन्थीनां वस्तुं कल्पत इति ।। अथ भाष्यम्-

[भा.२१०६] एसेव कमो नियमा, सपरिक्खेवे सबाहिरियम्मि ।
नवर पुन नाणत्तं, अंतो बाहिं चउम्मासा ॥

वृ- 'एष एव' पूर्वसूत्रोक्तः क्रमः सर्वोऽपि नियमात् सपरिक्षेपे सबाहिरिके क्षेत्रे वसन्तीनां संयतीनां द्रष्टव्यः । नवरं पुनः 'नानात्वं' विशेषोऽयम्-'अन्तः' अभ्यन्तरे 'बहिः' बाहिरिकायाम् एवमुभयोश्चत्वारो मासाः पूरणीयाः ॥

[भा.२१०७] चउण्हं उवरि वसंती, पायच्छित्तं च होंति दोसा य ।
नाणत्तं असईए उ, अंतो वसही बहिं चरइ ॥

वृ- चतुर्णां मासानामुपरि यदि सबाहिरिके क्षेत्रे संयती वसति तदा तदेव प्रायश्चित्तं त एव च दोषाः द्वितीयपदमपि तदेव मन्तव्यम् । 'नानात्वं' विशेषः पुनरयम्-बाहिरिकायां वसतेः, शय्यातरस्य वा यथोक्तगुणस्य 'असति' अभावे 'अन्तः' प्राकाराभ्यन्तरे "वसहि"त्ति वसती पूर्वस्यामेव स्थिता 'बहिः' बाहिरिकायां 'चरति' भिक्षाचर्यामटति ॥ इदमेव स्पष्टयति-

[भा.२१०८] जोग्गवसहीइ असई, तत्थेव ठिया चरिंति बाहिं तु ।
पुव्वगहिए विगिंचिय, तत्तो च्चिय मत्तगादी वि ॥

वृ- बहिः संयतीयोग्याया वसतेरभावे 'तत्रैव' अभ्यन्तरोपाश्रये स्थिताः सन्त्यो बहिश्चरन्ति, पूर्वगृहीतानि मात्रक-तृण-डगलादीनि 'विविच्य' परित्यज्य अपराणि 'तत एव' बाहिरिकाया मात्रकादीन्यप्यानेतव्यानि, न केवलं भिक्षेत्यपिशब्दार्थः, श्रुत-संहननादिविषया सामाचारी क्षेत्र-कालादिविषया च स्थिति स्थविरकल्पिकानामिव द्रष्टव्या ॥

तदेवमुक्त आर्यिकाणामपि मासकल्पविधि । अथ शिष्यः प्रश्नयति-

[भा.२१०९] गच्छे जिनकप्पम्मि य, दोण्ह वि कयरो भवे महिड्डीओ ।
निष्फायग-निप्फन्ना, दोन्नि वि होंति महिड्डीया ॥

गच्छ-जिनकल्पयोर्द्वयोर्मध्ये कतरः 'महर्द्धिकः' प्रधानतरो भवेत् ? । गुरुराह-निष्पादक-निष्पन्नाविति कृत्वा द्वावपि महर्द्धिकौ भवतः । तत्र गच्छः सूत्रार्थग्राहणादिना जनिकल्पिक-स्य निष्पादकः अतोऽसौ महर्द्धिकः, जिनकल्पिकस्तु निष्पन्नः-ज्ञानदर्शन-चारित्रेषु परिनिष्ठित इत्यसौ महर्द्धिकः ॥ एनामेव निर्युक्तिगाथां भावयति-

[भा.२११०] दंसण-नाण-चरित्ते, जम्हा गच्छम्मि होइ परिवुड्डी ।
एएण कारणेणं, गच्छो उ भवे महिड्डीओ ॥

वृ- दर्शन-ज्ञान-चारित्राणां यस्माद् गच्छे परिवृद्धिर्भवति एतेन कारणेन गच्छो महर्द्धिको भवति ॥

[भा.२१११] पुरतो य मग्गतो वा, जम्हा कत्तो वि नत्थि पडिबंधो ।
एएण कारणेणं, जिनकप्पीओ महिड्डीओ ॥

वृ- 'पुरतो वा' विहरिष्यमाणक्षेत्रे 'मार्गतो वा' पृष्ठतः पूर्वविहृतक्षेत्रे यस्मात् 'कुतोऽपि' द्रव्यतः क्षेत्रतः कालतो भावतो वा प्रतिबन्धस्तस्य भगवतो न विद्यते तेन कारणेन जिनकल्पिको मह-

र्द्धिकः ॥ अथ द्वयोरपि महर्द्धिकत्वं दृष्टान्तेन दर्शयति-

[भा.२११२] दीवा अन्नो दीवो, पइप्पई सो य दिप्पइ तहेव ।
सीसो च्चिय सिक्खंतो, आयरिओ होइ नऽन्नत्तो ॥

वृ- दीपाद् 'अन्यः' द्वितीयो दीपः प्रदीप्यते, स च मौलो दीपस्तथैव दीप्यते, एवं जिनकल्पिकदीपोऽपि गच्छदीपादेव प्रादुर्भवति, स च गच्छदीपस्तथैव ज्ञान-दर्शन-चारित्रैः स्वयं प्रदीप्यते। यद्वा यथा शिष्य एव शिक्षमाणः सन् क्रमेणाचार्यो भवति 'नान्यतः' नान्येन प्रकारेण एवं स्थविरकल्पिक एव तपःप्रभृतिभिर्भावनाभिरात्मानं भावयन् क्रमेण जिनकल्पिको भवति नान्यथा। अतो द्वावपि महर्द्धिकौ ॥ अस्यैवार्थस्य समर्थनायापरं दृष्टान्तत्रयं दर्शयितुं निर्युक्तिगाथामाह

[भा.२११३] दिट्ठंतो गुहासीहे, दोन्नि य महिला पया य अपया य ।
गावीण दोन्नि वग्गा, सावेक्खो चेव निरवेक्खो ॥

वृ- दृष्टान्तोऽत्र गुहासिंहविषयः प्रथमः । द्वितीयो द्वे महिले-एका 'प्रजा' अपत्यवती द्वितीया 'अप्रजा' अपत्यविकला । तृतीय गवां द्वौ वर्गौ-एकः सापेक्षः, अपरो निरपेक्ष इति ॥ तत्र गुहा-सिंहदृष्टान्तं भावयति-

[भा.२११४] सीहं पालेइ गुहा, अविहाडं तेण सा महिड्ढीया ।
तस्स पुन जोव्वणम्मि, पओअणं किं गिरिगुहाए ॥

वृ- "अविहाडं"ति देशीभाषया बालकं सिंहं गुहा 'पालयति' वनमहिष-व्याघ्रादिभ्यो रक्षति, तन्निर्गतस्य तस्य तेभ्यः प्रत्यपायसम्भवात्; तेन कारणेन गुहा महर्द्धिका । यदा तु सिंहो यौवनं प्राप्तो भवति तदा किं तस्य प्रयोजनं गिरिगुहया ? न किञ्चिदित्यर्थः, स्वयमेव वनमहिषाद्युपद्र-वादात्मानं पालयितुं प्रत्यलीभूतत्वात्, इत्थं सिंहो महर्द्धिकः ॥ अथार्थोपनयमाह-

[भा.२११५] दव्वावइमाईसुं, कुसीलसंसग्गि-अन्नउत्थीहिं ।
रक्खइ गणीपुरोगो, गच्छो अविकोवियं धम्मे ॥

वृ- गणी-आचार्य स पुरोगः-पुरस्सरो नायको यसय स तथाविधो गच्छो गुहास्थानीयः सिंहशावकस्तानीयं साधुं 'धर्मे' श्रुत-चारित्रात्मके 'अविकोविदम्' अद्याप्यप्रबुद्धं द्रव्यापदि आदिशब्दात् क्षेत्र-काल-भावापत्सु तथा कुशीलाः-पार्श्वस्थादयस्तैरन्यतीर्थिकैर्वा सार्द्धयः संसर्गस्तत्र च 'रक्षति' विश्रोतसिका-प्रमाद-मिथ्यात्वाद्युपद्रवात् पालयति अतो गच्छो महर्द्धिकः । यदा त्वसौ द्विविधेऽपि धर्मे व्युत्पन्नमति कृतपरिकर्मा जिनकल्पं प्रतिपन्नस्तदा स्वयमेवात्मानं द्रव्यापदादिष्वपि विश्रोतसिकादिविरहितः सम्यक् परिपालयति अतो जिकल्पिको महर्द्धिकः ॥ अथ महेलाद्वयदृष्टान्तमाह-

[भा.२११६] आणा-इस्सरियसुहं, एगा अनुभवइ जइ वि बहुतत्ती ।
देहस्स य संठप्पं, भोहसुहं चेव कालम्मि ॥

वृ- द्वयोर्महिलयोर्मध्ये 'एका' सप्रसवा यद्यपि 'बहुतप्तिः' अपत्यस्नपनादि बहुव्यापार व्यापृता तथापि सा गृहस्वामिनीत्वादाज्ञैश्वर्य सुखमनुभवन्ति 'काले च' प्रस्तावे देहस्य 'संस्थाप्य' संस्थापना भोग सुखमपि च प्राप्नोति ।

[भा.२११७] परवावारविमुक्का, सरीरसक्कारतप्परा निच्चं ।

मंडणए वक्खित्ता, भत्तं पि न चेयई अपया ॥

वृ- या तु 'अप्रजा अप्रसवा सा 'परव्यापारविमुक्ता' अपत्यादिचिन्तावर्जिता 'नित्यं' सदा शरीरसंस्कारे-मुखधावनादौ तत्परा-परायणा 'मण्डनके' विलेपना-ऽऽभरणादौ व्याक्षिप्ता सती 'भक्तमपि' भोजनमपि 'न चेतयति' न संस्मरति ॥ अर्थोपनयमाह–

[भा.२११८] वेयावच्चे चोयण-वारण-वावारणासु य बहूसु ।
एमादीवक्खेवा, सयं झाणं न गच्छम्मि ॥

वृ- यथा सप्रसायाः स्त्रियो बहुव्यापारव्यग्रता भवति तथा गच्छेऽपि यद् आचार्योपाध्यायादि-वैयावृत्यम्, या च चक्रवालसामाचारीं हापयतो नोदना, या चाकृत्यप्रतिसेवनां कुर्वतो वारणा, याश्च बहवो वस्त्र-पात्राद्युत्पादनविषया व्यापारणाः तदेवमादिषु यो व्याक्षेपः-व्याकुलत्वं तस्माद्धेतोः 'गच्छे' गच्छवासिनां 'सततं' निरतरं 'ध्यानम्' एकाग्रशु-भाध्यवसायात्मकमात्मनो मण्डनकल्पं न भवति । नकल्पिकस्य तु वैयावृत्यादिव्याक्षेपरहितस्य निरपत्यस्त्रिया आत्मनो मण्डनमिव निरन्तमेव तथा तद् उपजायते यथा भोक्तुमपि स्पृहा न भवति ॥ अथ गोवर्गद्वयदृष्टान्तमाह-

[भा.२११९] सद्दूलपोइयाओ, नस्संतीओ वि नेव धेनूओ ।
मोत्तूण तण्णगाइं, दवंति सपरक्कमाओ वि ॥

वृ- 'धेनवः' अभिनवप्रसूता गावस्ताः 'शार्दूलेन' व्याघ्रेण 'पोतिताः' त्रासिताः सत्यो नश्यन्त्योऽपि 'तर्णकानि' वत्सरूपाणि मुक्त्वा 'सपराक्रमा अपि' समर्था अपि 'नैव द्रवन्ति' न शीघ्रं पलायन्ते, अपत्यसापेक्षत्वात् ॥

[भा.२१२०] न वि वच्छएसु सज्जंति वाहिओ नेय वच्छमाऊसु ।
सबलमगूहंतीओ, नस्संति भएण वग्घस्स ॥

वृ- यास्तु ''वाहिओ'' बष्कयिण्यस्ता नापि वत्सकेषु 'सजन्ति' ममत्वं कुर्वन्ति, नापि 'वत्समातृषु' धेनुषु, किन्तु स्वबलमगूहमाना व्याघ्रस्य भयेन नश्यन्ति निरपेक्षत्वात् ॥ एष दृष्टान्तः ।
अथार्थोपनयमाह-

[भा.२१२१] आयसरीरे आयरिय-बाल-वुड्ढेसु आवि सावेक्खा ।
कुल-गण-संघेसु तहा, चेइयकज्जाइएसुं च ॥

वृ- यथा धेनवस्तथा गच्छवासिनोऽप्यात्मशरीरे आचार्य-बाल-वृद्धेषु अपि च कुल-गण-सङ्घकार्येषु चैत्यादिकार्येषु च सापेक्षाः, अतः संसारव्याघ्रभयेन नश्यन्तोऽपि संहननादिबलोपेता अपि न शीघ्रं पलायन्ते । जिनकल्पिकास्तु भगवन्त आत्मशरीरादिनिरपेक्षा अधेनुगाव इव स्ववीर्यमगूहमानाः संसारव्याघ्राद् निप्रत्यूहं पलायन्ते । यद्येवं तर्हि जिनकल्पो महर्द्धिकतर इत्यापन्नम्, मैवं वादीः, जिननिजनिरुपमगुणैरुभयोरपि तुल्यकक्षत्वात् । तथाहि-अत्यन्ताप्रमादनिष्प्रतिकर्म-तादिभिर्गुणैर्जिनकल्पो महर्द्धिकः, परोपकार-प्रवचनप्रभावनादिभिश्च गुणैः स्थविरल्पिको महर्द्धिक इति ॥ अपि च–

[भा.२१२२] रयणायरो उ गच्छो, निप्फादओ नाण-दंसण-चरित्ते ।
एएण कारणेणं, गच्छो उ भवे महिड्ढीओ ॥

वृ- रत्नाकर इव रत्नाकरः-जिनकल्पिकादिरत्नानामुत्पत्तिस्थानं यतो गच्छो वर्त्तते, निष्पादकश्च ज्ञान-दर्शन-चारित्रेषु एतेन कारणेन गच्छो महर्द्धिकः ॥ इदमेव भावयति-

[भा.२१२३] रयणेसु बहुविहेसुं, नीणिज्जंतेस नेव नीरयणो ।
अतरो तीरइ काउं, उप्पत्ती सो य रयणाणं ॥

[भा.२१२४] इय रयणसरिच्छेसुं, विभिग्गएसुं पि नेव नीरयणो ।
जायइ गच्छो कुणइ य, रयणभूते बहू अन्ने ॥

वृ- न तरीतुं शक्यत इति 'अतरः' रत्नाकरः, स यथा बहुविधेषु रत्नेषु निष्काश्यमानेष्वपि नैव 'नीरत्नः' रत्नविरहितः कर्त्तुं शक्यते, कुतः ? इत्याह-यतः 'उत्पत्ति' आकरोऽसौ रत्नानाम्। "इय" अनेनैव प्रकारेण गच्छरत्नाकरोऽपि रत्नसदृक्षेषु जिनकल्पिकादिषु विनिर्गतेष्वपि नैव नीरत्नो जायते, आचार्यादिरत्नानां सर्वदैव तत्र सद्भावात्, करोति च पश्चादपि बहूनन्यान् साधून् रत्नभूतानिति गच्छो जिनकल्पिकश्च उभावपि महर्द्धिकौ इति ॥

चूर्णिः-श्रीवद्धभाष्यप्रभृतिबहुतिथग्रन्थसार्थाभिरामाऽऽरामा-
दर्थप्रसूनैरुचितमवचितैः सूक्तिसौरभ्यसारैः ।
चेतःपट्टे निधाय स्वगुरुशुचिवचस्तन्तुसन्तानदृब्धैः,
श्रीकल्पे मासकल्पप्रकृतविवरणम् मया निर्मितेयम् ॥

मू. (१०) *से गामंसि वा जाव रायहाणिंसि वा एगवगडाए एगदुवाराए एगनिक्खमण-पवेसाए नो कप्पइ निग्गंथाण य निग्गंथीण य एगतओ वत्थए ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.२१२५] गाम-नगराइएसुं, तेसु उ खेत्तेसु कत्थ वसियव्वं ।
जत्थ न वसंति समणीमब्भासे निग्गमपहे वा ॥

वृ- ग्राम-नगरादिषु 'तेषु' पूर्वसूत्रोक्तेषु क्षेत्रेषु कुत्रवस्तव्यम् ? इति चिन्तायामनेन सूत्रेण प्रतिपाद्यते-यत्र 'अभ्यासे' स्वप्रतिश्रयासन्ने 'निर्गमपथे वा' निर्गमद्वारे श्रमण्यो न वसन्ति तत्र वस्तव्यमिति ॥ अथ प्रकारान्तरेण सम्बन्धमाह-

[भा.२१२६] अहवा निग्गंथीओ, दट्ठु ठिया तेसु गाममाईसु ।
मा पिल्लेही कोई, तेणिम सुत्तं समुदियं तु ॥

वृ- अथवा निर्ग्रन्थीस्तेषु ग्रामादिषु स्थिता दृष्ट्वा मा 'कश्चिद्' आचार्यादिस्तत्रागत्य 'प्रेरयेत्' निष्काशयेदिति एतेन कारणेनेदं सूत्रं 'समुदितं' समायातम् ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या-अथ ग्रामे वा यावद् राजधान्यां वा यावत्करणाद् नगरे वा खेटे वा इत्यादिपदपरिग्रहः । एकवगडाके एकद्वारके एकनिष्क्रमण-प्रवेशके च क्षेत्रे नो कल्पते निर्ग्रन्थानां च निर्ग्रन्थीनां च एकतो मिलितानां 'वस्तुम्' अवस्थातुमिति सूत्रसङ्क्षेपार्थः ॥ विस्तरार्थं तु भाष्यकृदाह-

[भा.२१२७] वगडा उ परिक्खेवो, पुव्वुत्तो सो उ दव्वमाईओ ।
दारं गामस्स मुहं, सो चेव य निग्गम-पवेसो ॥

वृ- 'वगडा नाम' ग्रामादेः सम्बन्धी परिक्षेपः । 'स तु' स पुनः परिक्षेपः 'द्रव्यादिकः' द्रव्य-

क्षेत्र-काल-भावभेदभिन्नः, यथा पूर्वम्- "पासाणिट्ठग-मट्टिय-खोड-कडग-कंटिगा भवे दव्वे ।" इत्यादिना मासकल्पप्रकृते उक्तास्तथैवात्रापि द्रष्टव्यः । 'द्वारं नाम' ग्रामस्य मुखम्, ग्रामप्रवेश इत्यर्थः । स एव च निर्गमेनोपलक्षितः प्रवेशो निर्गम-प्रवेशोऽभिधीयते ॥

इत्थं सूत्रे व्याख्याते सति शिष्यः प्राह-

[भा.२१२८] दारस्स वा वि गहणं, कायव्वं अहव निग्गमपहस्स ।
जइ एगट्ठा दुन्नि वि, एगयरं बूहि मा दो वि ।

वृ- यदि तदेव द्वारं स एव च निर्गम-प्रवेशस्ततो हे आचार्य ! द्वारपदस्य वा ग्रहणं कर्तव्यम् अथवा निर्गम-प्रवेशपथपदस्य, यदि नाम द्वे अपि पदे अमू एकार्थे ततः 'एकतरम्' एकद्वारपदम् एकनिष्क्रमण-प्रवेशपदं वा सूत्रे 'ब्रूहि' भणेत्यर्थः, मा द्वे अपि ॥ एवं शिष्येणोक्ते सूरिराह-

[भा.२१२९] एगवगडेगदारा, एगमनेगा अनेग एगा य ।
चरिमो अनेगवगडा, अनेगदारा य भंगो उ ॥

वृ- इह वगडा-द्वारयोश्चत्वारो भङ्गाः, तद्यथा-एका वगडा एकं द्वारम्, यथा पर्वतादिपरिक्षिप्ते क्वचिद् ग्रामादौ १ । एका वगडा अनेकानि द्वाराणि, यथा प्राकारादिपरिक्षिप्ते चतुर्द्वारनगरादौ २ । अनेका वगडा एकं द्वारम्, यथा पद्मसरःप्रभृतिपरिक्षिप्ते बहुपाटके ग्रामादौ ३ । अनेकावगडा अनेकानि द्वाराणि, यथा पुष्पावकीर्णगृहे ग्रामादौ ४, एषः 'चरमः' चतुर्थो भङ्गः ॥

यदि नामैवं चत्वारो भङ्गास्ततः प्रस्तुते किमायातम् ? इत्याह-

[भा.२१३०] तइं पडुच्च भंगं, पउमसराईहिं संपरिक्खित्ते ।
अन्नोन्नदुवाराण वि, हवेज्ज एगं तु निक्खमणं ॥

वृ- अत्र भङ्गचतुष्टये तृतीयं भङ्गं प्रतीत्य एकद्वारग्रहणमेकनिष्क्रमण-प्रवेशग्रहणं च सूत्रे कृतम् । कुतः ? इत्याह-पद्मसरसा आदिशब्दाद् गर्तया पर्वतेन वा सम्परिक्षिप्ते ग्रामादौ अन्यान्यद्वारकाणामपि पाटकानामेकमेव निष्क्रमणं भवेत्, तिसृषु दिक्षु पद्मसरःप्रभृति-व्याघातसम्भवादेकस्यामेव दिशि निष्क्रमण-प्रवेशौ भवत इति भावः ॥ ततः किम् ? इत्याह-

[भा.२१३१] तत्थ वि य होंति दोसा, वीयारगयाण अहव पंथम्मि ।
संकादीए दोसे, एगवियाराण वोच्छिहिई ॥

वृ- 'तत्रापि च' तृतीयभङ्गे पृथक्पाटकेषु स्थितानामपि, किं पुनः प्रथमभङ्गे द्वितीयभङ्गे वा स्थितानामित्यपिशब्दार्थः, 'विचारगतानां' संज्ञाभूमौ सम्प्राप्तानाम् अथवा तस्या एव 'पथि' मार्गेगच्छतां 'दोषाः' शङ्कादयो भवन्ति । तांश्च शङ्कादीन्दोषान् 'एकविचाराणाम्' एकसंज्ञाभूमीकानां निर्ग्रन्थानां निर्ग्रन्थीनां च सूरि स्वयमेव निर्युक्तिगाथाभिर्यथावसरमुत्तरत्र 'वक्षति' भणिष्यति ॥ तत्र प्रथमभङ्गे तावद् दोषानुपदिदर्शयिषुराह-

[भा.२१३२] एगवगडं पडुच्चा, दोण्ह वि वग्गाण गरहितो वासो ।
जइ वसइ जाणओ ऊ, तत्थ उ दोसा इमे होंति ॥

वृ- एकवगडम् उपलक्षणत्वादेकद्वारं च क्षेत्रं प्रतीत्य 'द्वयोरपि वर्गयोः' साधु-साध्वीलक्षणयोरेकत्र वासः 'गर्हितः' निन्दितः, न कल्पत इत्यर्थः । यदि सः 'ज्ञायकः' 'संयत्योऽत्र सन्ति' इति जानान-स्तत्रागत्य वसति ततः 'इमे' वक्ष्यमाणा दोषा भवन्ति ॥ इदमेव सविशेषमाह-

[भा.२१३३] एगवगडेगदारे, एगयर ठियम्मि जो तहिं ठाइ ।
गुरुगा जइ वि य दोसा, न होज्ज पुट्ठो तह वि सो उ ।।

वृ- एकवगडे एकद्वारे च क्षेत्रे यत्र पूर्वमेकतरः-संयतवर्ग संयतीवर्गो वा स्थितो वर्तते तत्र 'यः' आचार्यादि प्रवर्त्तिन्यादिर्वा पश्चादागत्य तिष्ठति तस्य चत्वारो गुरुकाः । यद्यपि च तत्र 'दोषाः' वक्ष्यमाणा न भवेयुः तथाप्यसौ भावतस्तैः स्पृष्टो मन्तव्यः ।।

तत्र पूर्वस्थितसंयतीवर्गं क्षेत्रमङ्गीकृत्य तावदाह-

[भा.२१३४] सोऊण य समुदानं, गच्छ आनित्तुं देउले ठाइ ।
ठायंतगाण गुरुगा, तत्थ वि आणाइणो दोसा ।।

वृ- श्रुत्वा चशब्दादवधार्य च 'समुदानं' भैक्षं सुलभप्रायोग्यद्रव्यम्, ततो गच्छमानीय देवकुले उपलक्षणत्वादपरस्मिन् वा सभा-शून्यगृहादौ तिष्ठति । तत्र च तिष्ठतामाचार्यादीनां चत्वारो गुरुकाः। तत्राप्याज्ञादयो दोषा द्रष्टव्याः ।। एनामेव निर्युक्तिगाथां व्याख्यानयति-

[भा.२१३५] फड्डगपइपेसविया, वुग्गिहोवहि-कज्जनिग्गया वा वि ।
उवसंपज्जिउकामा, अतिच्छमाणा व ते साहू ।।

[भा.२१३६] संजइभावियखेत्ते, समुदाणेऊण बहुगुणं नच्चा ।
संपुन्नमासकप्पं, बिंति गणिं पुट्ठऽपुट्ठा वा ।।

वृ- केनापि स्पर्द्धकपतिना स्वसाधवः क्षेत्रप्रत्युपेक्षणार्थं प्रेषिताः, यद्वा द्विविधः-औधिकौपग्रहिकभेदभिन्नो यउपधिस्तस्योत्पादनार्थं कार्येषु वा-कुल-गण-सङ्घसम्बन्धिषु निर्गताः 'उपसम्पत्तुकामा वा' उपसम्पदं जिघृक्षवः अध्वानं वा अतिक्रामन्तस्तत्र ते साधवः प्राप्ताः ।। एते स्पर्द्धकपतिप्रेषितादयः संयतीभाविते क्षेत्रे 'समुदानयित्वा' भैक्षं पर्यटय प्रचुरप्रायोग्यलाभेन बहुगुणं तत् क्षेत्रं ज्ञात्वा गुरूणां समीपमायाताः सम्पूर्णमासकल्पं 'गणिनम्' आचार्यं पृष्टा अपृष्टा वा ब्रुवते ।। किं तत् ? इत्याह-

[भा.२१३७] तुब्भ वि पुन्नो कप्पो, न य खेत्तं पेहियं भे जं जोग्गं ।
जं पि य रुइयं तुब्भं, न तं बहुगुणं जइ इमं तु ।।

वृ- 'क्षमाश्रमणाः !' युष्माकमपि मासकल्पः पूर्णो वर्तते, न च तत् क्षेत्रं प्रत्युपेक्षितं यद् भवतां 'योग्यम्' अनुकूलम्, यदपि च क्षेत्रं युष्माकं 'रुचितम्' अभिप्रेतं न तद् बहुगुणं यथेदमस्मत्प्रत्युपेक्षितं क्षेत्रम् ।। परम्-

[भा.२१३८] एगोऽत्थ नवरि दोसो, मं पइ सो वि य न बाहए किंचि ।
न य सो भावो विज्जइ, अदोसं जो अनिययस्स ।।

वृ- नवरमेक एवात्र दोषो विद्यते परं सोऽपि 'मां प्रति' मदीयेनाभिप्रायेण न किञ्चिद् बाधते। न चासौ 'भावः' पदार्थो जगति विद्यते यः 'अनियतस्य' अनिश्चितस्यानुद्यमवतो वा पुरुषस्यादोषवान् भवति, किन्तु सर्वोऽपि सदोष इति भावः ।।

[भा.२१३९] अहवण किं सिट्ठेणं, सिट्ठे काहिह न वा वि एयं ति ।
खुड्डमुहा संति इहं, जे कोविज्जा जिणवइं पि ।।

वृ- अथवा किमस्माकमनेनार्थेन 'शिष्टेन' कथितेन कार्यम् ? न किञ्चिदित्यर्थः, यतो यूयं

शिष्टे सति करिष्यथ वा न वा 'एनम्' अस्मदभिप्रेतमर्थमिति वयं न विद्मः । कुतः ? इत्याह- 'क्षौद्रमुखाः' मधुमुखा मधुरभाषिण इत्यर्थः 'सन्ति' विद्यन्ते 'इह' अस्मिन् गच्छे भवतां वल्लभेश्वराः ये जिनवाचमपि 'कोपयेयुः' अन्यथा कुर्यु, आस्तां तावदस्मदादिवचनमित्यपिशब्दार्थः ॥

[भा.२१४०] इइ सपरिहास निब्बंधपुच्छिओ बेइ तत्थ समणीओ ।
बलियपरिग्गहियाओ, होह दढा तत्थ वच्चामो ॥

वृ- 'इति' एवं सपरिहासं तेनोक्ते आचार्यैः स महता निर्बन्धेन पृष्टः-कथम भद्र ! कीदृशस्तत्र दोषो विद्यते ? ततः स ब्रवीति-तत्र श्रमण्यो बलिना-बलवता आचार्यादिना परिगृहीता विद्यन्ते, परं तथापि यूयं 'दृढा भवत' मा कामपि शङ्कां कुरुध्वम्, अत्र ये सर्वमप्यहं भलिष्यामि, अतस्तत्र व्रजामो वयम् ॥ एवं भणतः प्रायश्चित्तमाह-

[भा.२१४१] भिक्खू साहइ सोउं, भणइ जइ वच्चिमो तहिं मासो ।
लहुगा गुरुगा वसभे, गणिस्स एमेवुवेहाए ॥

वृ- यदि भिक्षुरनन्तरोक्तं वचनं कथयति श्रुत्वा वा यदि भिक्षुरेव भणति 'बाढम्, व्रजामस्तत्र वयम्' ततो मासलघु प्रायश्चित्तम् । अथ 'वृषभः' उपाध्याय एवं ब्रवीति प्रतिशृणोति वा ततस्तस्य चत्वारो लघवः । 'गणिनः' आचार्यस्येत्थं भणतः प्रतिश्रृण्वतो वा चत्वारो गुरवः । एवमेवोपेक्षायामपि द्रष्टव्यम् । किमुक्तं भवति ?-इत्थं तेनोक्ते 'व्रजामो वयम्' इतिवा प्रतिश्रुते यदि भिक्षुरुपेक्षां करोति तदा तस्य लघुमासिकम्, वृषभस्योपेक्षमाणस्य चतुर्लघु, आचार्यस्योपेक्षां कुर्वाणस्य चतुर्गुरु ॥

अथवा-

[भा.२१४२] सामत्थण परिवच्छ, गहणे पयभेद पंथ सीमाए ।
गामे वसहिपवेसे, मासादी भिक्खुणो मूलं ॥

वृ- भिक्षु 'तत्र गन्तव्यम् ? न वा ?' इति "सामत्थणं" देशीशब्दत्वात् पर्यालचनं करोति मासलघु । "परिवच्छि"त्ति देशीशब्दोऽयं निर्णयार्थे वर्त्तते, ततो 'गन्तव्यमेव तत्र' इति निर्णयं करोति मासगुरु । "गहणे"त्ति निर्णीय यद्युपधिं गृह्णाति ततश्चतुर्लघु । पदभेदं कुर्वतश्चतुर्गुरुकम् । पथि व्रजतः षड्लघुकम् । ग्रामसीमायां प्राप्तस्य षड्गुरुकम् । ग्रामं प्राप्तस्य च्छेदः । वसतौ प्रवेशं कुर्वतो मूलम् । एवं भिक्षोर्लघुमासादारभ्य मूलं यावत् प्रायश्चित्तमुक्तम् ॥

[भा.२१४३] गणि आयरिए सपदं, अहवा वि विसेसिया भवे गुरुगा ।
भिक्खूमाइचउण्हं, जइ पुच्छसि तो सुणसु दोसे ॥

वृ- 'गणिनः' उपाध्यायस्य मासगुरुकादारभ्य स्वपदमनवस्थाप्यं यावत्, आचार्यस्य तु चतुर्लघुकादारभ्य स्वपदं पाराञ्चिकं यावत् प्रायश्चित्त ज्ञेयम् । अथवा भिक्षु-वृषभो-पाध्याया-ऽऽचार्याणां चतुर्णामपि तपः-कालविशेषिताश्चतुर्गुरुकाः । तद्यथा-भिक्षोर्द्वाभ्यामपि लघवः तपसा कालेन च, वृषभस्य कालेन गुरवस्तपसा लघवः, उपाध्यायस्य तपसा गुरवः कालेन लघवः, आचार्यस्य तपसा कालेन च द्वाभ्यामपि गुरवः । अथ के पुनस्तत्र तिष्ठतां दोषाः ? इति यदि पृच्छसि ततः 'शृणु' निशमय दोषान् मयाऽभिधीयमानान् ॥ तानेवाभिधित्सुराह-

[भा.२१४४] अन्नतरस्स निओगा, सव्वेसि अनुप्पिएण वा ते तु ।
देउल सभ सुन्ने वा, निओयपमुहे ठिया गंतुं ॥

वृ- 'अन्यतरस्य' भिक्षु-वृषभादेर्नियोगात् 'सर्वेषां वा' साधूनाम् 'अनुप्रियेण' अनुमत्या 'ते' आचार्यास्तत्र गत्वा देवकुले वा सभायां वा शून्यगृहे वा नियोगस्य-ग्रामस्य मुखे-प्रवेश एव स्थिताः ततो निर्ग्रन्थानां निर्ग्रन्थीनां चोभयेषामपि परस्परदर्शनेन बहवो दोषा भवन्ति ॥

अत्र चाग्निदृष्टान्तं सूरयो वर्णयन्ति-

[भा.२१४५] दुविहो य होइ अग्गी, दव्वग्गी चेव तह य भावग्गी ।
दव्वग्गिम्मि अगारी, पुरिसो व घरं पलीवेंतो ॥

वृ- द्विविधश्च भवत्यग्नि, तद्यथा-द्रव्याग्निश्चैव तथा च भावाग्नि । द्रव्याग्नौ चिन्त्यमाने 'अगारी' अविरतिका पुरुषो वा गृहं प्रदीपयन् यथा सर्वस्वं दहति, एवं साध्वी वा साधुर्वा स्वजीवगृहं मदनभावाग्निना प्रदीपयन् चारित्रसर्वस्वं दहतीति निर्युक्तिगाथासङ्क्षेपार्थः ॥

अथविस्तरार्थमभिधित्सुर्द्रव्याग्निमाह-

[भा.२१४६] तत्थ पुन होइ दव्वे, डहणादीनेगलक्खणो अग्गी ।
नामोदयपच्चइयं, दिप्पइ देहं समासज्ज ॥

वृ- 'तत्र' तयोर्द्रव्याग्नि-भावाग्न्योर्मध्ये द्रव्याग्नि पुनरयं भवति-यः खलु 'दहनाद्यनेक-लक्षणोऽग्नि दहनं-भस्मीकरणं तल्लक्षणः, आदिशब्दाद् पचन-प्रकाशनपरिग्रहः, 'देहम्' इन्धनं काष्ठादिकं 'समासाद्य' प्राप्य 'नामोदयप्रत्ययम्' उष्णस्पर्शादिनामकर्मोदयाद् दीप्यते स द्रव्याग्नि-रुच्यते ॥ किमर्थं पुनरयं द्रव्याग्नि ? इति चेद् अत आह-

[भा.२१४७] दव्वाइसन्निकरिसा, उप्पन्नो ताणि चेव डहमाणो ।
दव्वग्गि त्ति पवुच्चइ, आदिमभावाइजुत्तो वि ॥

वृ- द्रव्यम्-ऊर्ध्वाधोव्यवस्थिते अरणिकाष्ठे तस्य आदिशब्दात् पुरुषप्रयत्नादेश्च यः सन्निकर्ष-समायोगस्तस्माद् उत्पन्नः 'तान्येव' काष्ठादीनि द्रव्याणि दहन् यद्यपि आदिमेन-औदयिकलक्षणेन भावेन अग्निनामकर्मोदयेनेत्यर्थः, आदिशब्दात् पारिणामिकादिभावेन च युक्तो वर्त्तते तथापि द्रव्याग्नि प्रोच्यते, 'द्रव्यादुत्पन्नो द्रव्याणां वा दाहकोऽग्निर्द्रव्याग्नि' इति व्युत्पत्तिसमाश्रयणात्॥

स पुनः कथं दीप्यते ? इत्याह-

[भा.२१४८] सो पुन इंधनमासज्ज दिप्पती सीदती य तदभावा ।
नाणत्तं पि य लभए, इंधन-परिमाणतो चेव ॥

वृ- 'स पुनः' द्रव्याग्नि 'इन्धनं' तृण-काष्ठादिकमासाद्य दीप्यते 'सीदति च' विनश्यति 'तदभावाद्' इन्धनाभावात् । 'नानात्वं' विशेषस्तदपि च लभते इन्धनतः परिमाणतश्च । तत्रेन्धनतो यथा-तृणाग्नि तुषाग्नि काष्ठाग्निरित्यादि । परिमाणतो यथा-महति तृणादाविन्धने महान् भवति, अल्पे चेन्धने स्वल्प इति ॥ उक्तो द्रव्याग्नि । अथ भावाग्निं व्याचष्टे-

[भा.२१४९] भावम्मि होइ वेदो, सत्तो तिविहो नपुंसगादीओ ।
जइ तासिं तयं अत्थी, किं पुन तासिं तयं नत्थी ॥

वृ- 'भावे' भावाग्निर्वेदाख्य इत ऊर्ध्वं वक्तव्यो भवति । स च वेदस्त्रिविधो नपुंसकादिको ज्ञातव्यः । अत्र परः प्राह-यदि 'तासां' संयतीनां 'तकत्' स्त्रीवेदादिरूपं मोहनीयं स्यात् तर्हि युष्मदुक्तोऽग्निदृष्टान्तोऽपि सफलः स्यात् 'किं पुनः' परं तासां 'तकत्' मोहनीयं नास्ति, अतः

कुतस्तासां भावाग्नेः सम्भवो भवेत् ? इति भावः । एतदुत्तरत्र भावयिष्यते ।। अथानन्तरोक्तमेव भवाग्निस्वरूपं स्पष्टयति-

[भा.२१५०] उदयं पत्तो वेदो, भावग्गी होइ तदुवओगेणं ।
भावो चरित्तमादी, तं डहई तेन भावग्गी ।।

वृ- 'वेदः' स्त्रीवेदादिरुदयं प्राप्तः सन् तस्य-स्त्रीवेदादेः सम्बन्धी य उपयोगः-पुरुषाभिलाषादिलक्षणस्तेन हेतुभूतेन भावाग्निर्भवति । कुतः ? इत्याह-भावश्चारित्रादिकः परिणामः 'तं' भावं येन कारणेन दहति तेन भावाग्निरुच्यते, 'भावस्य दाहकोऽग्निर्भावाग्नि' इत व्युत्पत्तेः ।।

कथं पुनर्दहति ? इति चेद् उच्यते-

[भा.२१५१] जह वा सहीनरयणे, भवने कासइ पमाय-दप्पेणं ।
डज्झंति समादित्ते, अनिच्छमाणस्स वि वसूनि ।।

[भा.२१५२] इय संदंसण-संभासणेहि संदीविओ मयमवण्ही ।
बंभादीगुणरयणे, डहइ अनिच्छस्स वि पमाया ।।

वृ-यथा वा 'स्वानरत्ने' पद्मरागादिबहुरत्नकलिते भवने प्रमादेन दर्पेण वा 'समादीप्ते' प्रज्वालिते सति 'कस्यचिद्' इभ्यादेरनिच्छतोऽपि 'वसूनि' रत्नानि दह्यन्ते, ''इय'' एवं सन्दर्शनम्-अवलोकनं सम्भाषणं-मिथः कथा ताभ्यां 'सन्दीपितः' प्रज्वालितो मदनवह्निरनिच्छतोऽपि साधुसाध्वीजनस्य 'ब्रह्मादिगुणरतनानि' ब्रह्मचर्य-तपः-संयमप्रभृतयो ये गुणास्त एव दौर्गत्यदुःखापहारितया रत्नानि तानि प्रमादाद् 'दहति' भस्मसात् करोति ।। अमुमेवार्थं द्रढयति-

[भा.२१५३] सुक्किंधन-वाउबलाऽभिदीवितो दिप्पतेऽहियं वण्ही ।
दिट्ठिंधन-रागानिलसमीरितो ईय भावग्गी ।।

वृ-शुष्केन्धनेन वायुबलेन वाऽभिदीपितो यथा वह्निरधिकं दीप्यते ''ईय'' एवं दृष्टिरूपं यदिन्धनं यश्च रागरूपोऽनिलः-वायुस्ताभ्यां समीरितः-उद्दीपितो भृशं भावाग्निरपि दीप्यते ।। अथ ''किं पुन तासिं तयं नत्थि'' त्ति पदं भावयन् शिष्येण प्रश्नं कारयति-

[भा.२१५४] लुक्खमरसुण्हमनिकामभोइणं देहभूसविरयाणं ।
सज्झाय-पेहमादिसु, वावारेसुं कओ मोहो ।।

वृ- रूक्षं-निस्नेहम् ''अरसोण्हं'' इति नञ् प्रत्येकमभिसम्बध्यते अरसं-हिंग्वादिभिरसंस्कृतम् अनुष्णं-शीतलम् अनिकामं-परिमितं भक्तं भोक्तुं शीलमेषां ते रूक्षा-ऽरसा-ऽनुष्णा-ऽनिकामभोजिनस्तेषाम्, मकारावलाक्षणिकौ, तथा देहभूषायाः-स्नानादिरूपाया विरतानां-प्रतिनिवृत्तानाम्, स्वाध्यायः-वाचनादिरूपः प्रेक्षा-प्रत्युपेक्षणा तयोः आदिशब्दाद् वैयावृत्त्यादिषु च व्यापारेषु व्यापृतानां साधु-साध्वीजनानां कुतः 'मोहः' पुरुषवेदाद्युदयरूपः सम्भवति ? ।।

अत्र प्रतिवचनमाह-

[भा.२१५५] नियणाइलुननमद्दण, वावारे बहुविहे दिया काउं ।
सुक्खा छुढियावि रत्तिं, किसीवला किं न मोहंति ।।

वृ-''नियणं'त्ति निदानं निङ्गिणणमित्यर्थः, आदिशब्द उत्तरत्र योक्ष्यते, लवनं मर्दनं च प्रतीतम्, एवमादीन् बहुविधान् व्यापारान् दिवा कृत्वा 'शुष्काः' स्नानाद्यभावेन शीतोष्णादिभिश्च परिम्लानाः

''सुढिआ'' श्रान्ता एवंविधा अपि कृषीबलाः 'किम्' इति परिप्रश्ने भवानेवात्र पृच्छयते कथय किं ते रात्रौ 'न मुह्यन्ति' न मोहमुपगच्छन्ति ? मुह्यन्त्येवेति भावः ॥

[भा.२१५६] जइ ताव तेसि मोहो, उप्पज्जइ पेसणेहि सहियाणं ।
अव्वावारसुहीणं, न भविस्सइ किह नु विरयाणं ॥

वृ- यदि तावत् 'तेषां' कृषीबलानां 'प्रेषणैः' व्यापारैः सहितानां मोह उत्पद्यते ततः 'विरतानां' संयतानाम् 'अव्यापारसुखिनां' तथाविधव्यापाररहिततया सुखिनां सतां कथं नु नाम न मोहोदयो भविष्यति ? ॥ अथात्रैव पराभिप्रायमाशङ्कय परिहरति-

[भा.२१५७] कोई तत्थ भणिज्जा, उप्पन्ने रुंभिउं समत्थो त्ति ।
सो उ पभू न वि होई, पुरिसो व घरं पलीवंतो ॥

वृ- कश्चित् 'तत्र' अनन्तरोक्तेऽर्थे ब्रूयात्-यद्यपि मोह उत्पत्स्यते तथाप्यहमुत्पन्नेऽपि मोहे आत्मानं निरोद्धुं समर्थ इति । गुरुराह-स पुनरेवं वक्ता तादृशेऽवसरे निरोद्धुं 'प्रभुः' समर्थो न भवति, पुरुष इव गृहं प्रदीपयन् ॥ अथैनामेव निर्युक्तिगाथां व्याख्यानयति-

[भा.२१५८] कामं अखीणवेदान होइ उदओ जहा वदह तुब्भे ।
तं पुन जिनामु उदयं, भावन-तव-नाणवावारा ॥

[भा.२१५९] उप्पत्तिकारणाणं, सब्भावम्मि वि जहा कसायाणं ।
न हु निग्गहो न सेओ, एमेव इमं पि पासामो ॥

वृ-शिष्यः प्राह-'कामम्' अवधारितमस्माभिर्यथा यूयं वदथ अक्षीणवेदानां मोहस्योदयो भवति, परं 'तं पुनः' मोहोदयं जयामो वयं 'भावना-तपो-ज्ञानव्यापारात्', भावना-स्त्रीकडेवरस-तत्त्वचिन्तनादिका तपः-चतुर्थादिकम् ज्ञानव्यापारः-सूत्रार्थचिन्तनात्मकः, अपि च-''चउहिं ठाणेहिं कोहुप्पत्ती सिया, तंजहा-खेत्तं पडुच्च वत्थुं पडुच्च सरीरं पडुच्च उवहिं पडुच्च'' इत्यादिना स्थानाङ्गादौ प्रज्ञप्तानां कषायोत्पत्तिकारणानां क्षेत्र-वास्त्वादीनां सद्भावेऽपि यथा कषायाणां निग्रहो न न श्रेयान् अपि तु श्रेयानेव, एवमेव 'इदमपि' प्रस्तुतं पश्यामः, मोहोदयकारणानां सद्भावेऽपि तन्निग्रहं करिष्याम इति भावः ॥ अत्र सूरि परिहारमाह-

[भा.२१६०] पहरण-जाणसमग्गो, सावरणो वि हु छलिज्जई जोहो ।
वालेण य न छलिज्जइ, ओसहहत्थो वि किं गाहो ॥

वृ- प्रहरणं-खड्गादि यानं-हस्त्यादि ताभ्यां समग्रः-सम्पूर्ण तथा 'सावरणः' सन्नाहसहितः अपिशब्दाद् युद्धकौशलादिगुणयुक्तोऽपि यथा योधः समरशिरसि प्रविष्टः प्रयत्नं कुर्वाणोऽपि योधान्तरेण 'छल्यते' छलं लब्ध्वा हन्यते इत्यर्थः, यद्वा 'ग्राहः' सर्पग्राहको गारुडिकादि औषध-हस्तोऽपि किं 'व्यालेन' दुष्टसर्पेण न च्छल्यते ? छल्यत एव, एवं यद्यपि भवान् भावना-तपो-ज्ञानव्यापारयुक्तस्तथापि स्त्रीणां सन्दर्शनादि कुर्वन् मोहोदयेन च्छल्यत एवेति ॥ अपि च-

[भा.२१६१] उदगघडे वि गरगए, किमोगमादीवितं न उज्जलइ ।
अइइद्धो वि न सक्कइ, विनिव्ववेउं कुडजलेणं ॥

वृ- उदकघटे 'करगतेऽपि' हस्तस्थितेऽपि किम् 'ओकः' गृहम् 'आदीपितं' प्रज्वालितं सद् 'नोज्ज्वलति' न दीप्यते ?, अथासौ 'अतीद्धः' अतिदीप्तोऽग्निस्ततः कुटजलेन प्रक्षिप्तेनापि नासौ

निर्वापयितुं शक्यते, एवं यद्यपि ज्ञानव्यापारादिकं जलघटकल्पं स्वाधीनं तथापि मोहोदयाग्निना प्रज्वलितं चारित्रगृहं किं न प्रदीप्यते ?, अतिप्रबलो वा मोहो यद्युदीर्येत ततो घटजलकल्पेन बहुनाऽपि ज्ञानव्यापारादिना नाऽसौ विध्यापयितुं शक्य इति ॥ किञ्च-

[भा.२१६२] रीढासंपत्ती वि हु, न खमा संदेहियम्मि अत्थम्मि ।
नायकए पुन अत्थे, जा वि विवत्ती स निद्दोसा ॥

**वृ-** संयतीक्षेत्रे गतानां मोहोदयनिरोधादिको यः सन्देहितः-संशयास्पदीभूतोऽर्थस्तस्मिन् रीढया-यदृच्छया घुणाक्षरन्यायेन सम्पत्तिरपि 'न क्षमा' न श्रेयसी । यः पुनः साध्वीरहितक्षेत्रगमनादिकोऽर्थः पूर्वं ज्ञातः-निर्दोषत्वेन निर्णीतस्ततः कृतः-कर्तुमारब्धः ज्ञातकृतस्तस्मिन् याऽपि कुतोऽपि वैगुण्यतो विपत्तिर्भवति सा अपि निर्दोषा मन्तव्या ॥ अथ परः प्राह-

[भा.२१६३] दूरेण संजईओ, अस्संजइआहि उवहिमाहारो ।
जइ मेलणाए दोसो, तम्हा रन्नम्मि वसियव्वं ॥

**वृ-** संयत्यः 'दूरेण' पृथग्वसत्यादौ वसन्त्यः परिहर्तुं शक्यन्ते, यास्तु 'असंयत्यः' इविरतिकास्ताः परिहर्तुमशक्याः, अतस्ताभ्य उपधिराहारश्च लभ्यते, अतो यदि 'मीलनायाः' संसर्गस्य दोषः संयतीक्षेत्रे तिष्ठतां भवति ततः साधुभिररण्ये गत्वा वस्तव्यम् ॥ सूरिराह-

[भा.२१६४] रन्ने वि तिरिक्खीतो, परिन्न दोसा असंतती यावि ।
लब्भीय कूलवालो, गुणमगुणं किं व सगडाली ॥

**वृ-** अरण्येऽपि वसतां तैरश्चस्त्रियो हरिणीप्रभृतयो दोषानुपजनयन्ति । तथा 'परिज्ञा' भक्तप्रत्याख्यानं तद्दोषाश्च भवन्ति । तथाहि-तत्राहाराद्यभावाद् भक्तप्रत्याख्यानं कर्तव्यम्, तच्च प्रथमत एव कर्तुं न युज्यते, विरतिसहितस्य जीवितस्य दुष्प्रापत्वात्; न च तदानीं तत् कर्तुं शक्यते, कुर्वतामप्यार्त्तध्यानसम्भवात् कुदेवत्वगमन-प्रेत्यबोधिदुर्लभत्वादयो दोषाः । 'असन्ततिश्च' प्रव्राजनाद्यभावात्र शिष्य-प्रशिष्यादिसन्तान उपजायते, यद्वा-"असंतईए"त्ति सर्वथैव स्त्रीणामसत्तायां वनवासमङ्गीकृत्य यत् किल ब्रह्मचर्यं धार्यते तन्न बहुफलं भवति, "थंभा कोहा अनाभोगा, अनापुच्छा असंतई ।" इतिवचनात् । न चात्रारण्यं जनाकुलं वा प्रमाणम्, यतः कूलवालकोऽटव्यामपि वसन् कं गुणं लब्धवान् ? 'शाकटालि' स्थूलभद्रस्वामी स जनमध्ये गणिकाया गृहेऽपि तिष्ठन् कमगुणं लब्धवान् ? न कमपीति भावः ॥ किञ्च-

[भा.२१६५] कस्सइ विवित्तवासे, विराधना दुन्नए अभेदो वा ।
जह सगडालि मणो वा, तह बिइओ किं न रुंभिंसु ॥

**वृ-** कस्यचिद् 'विविक्ते' स्त्री पशु पण्डकविरहितेऽपि वासे वसतः प्रबलवेदोदयाद् विराधना ब्रह्मचर्यस्य वति, कस्यापि पुनः 'दुर्नये' स्त्र्यादिसंसक्तप्रतिश्रयवासेऽपि वेदमोहनीयक्षयोपशमप्रबलत्वेन 'अभेदः' न ब्रह्मचर्यविलोपो भवति । वाशब्दः प्रकारान्तरद्योतनार्थः । आह यद्येवं तर्हि कर्मोदय-क्षय-क्षयोपशमादिरेव प्रमाणं न स्त्रीसंसर्गादि, नैवम्, कर्मणामुदय-क्षय-क्षयोपशमादयोऽपि प्रायस्तथाविधद्रव्य-क्षेत्रादिसहकारिकारणसाचिव्यादेव तथा तथा समुपजायन्ते नान्यथा । यथा वा 'शाकटालि' स्थूलभद्रस्वामी स्वकीयं मनः स्त्रीसंसर्गेऽपि निरुद्धवान् तथा 'द्वितीयः' सिंहगुहावासी किं न निरुद्धवान् ? येन स्त्रीसंसर्गादिकमप्रमाणं गीयते ॥

यतश्चैवमतः-

[भा.२१६६] होज्ज न वा वि पभुत्तं, दोसाययणेसु वट्टमाणस्स ।
चूयफलदोसदरिसी, चूयच्छायं पि वज्जेइ ॥

वृ- भवेद् वा न वा 'दोषायतनेषु' ब्रह्मविराधनादिदोषस्थानेषु वर्तमानस्य मनो निरोद्धुं 'प्रभुत्वं' सामर्थ्यं तथापि दोषायतनानि दूरतः परिहरणीयानि । दृष्टान्तश्चात्र चूतफलदोषदर्शी चूतच्छायामपि वर्जयति- जहा एगो रायपुत्तो अंबगपिओ । तस्स अंबगेहिं अइखइएहिं वाही उट्ठिओ । सो वेज्जेहि याप्याकृतः अंबगा य पडिसिद्धा । सो अन्नया पारद्धिं गओ अंबच्छायाए वीसमइ । अमच्चेण पुन पडिसिद्धो तह वि न ठाइ । ताहे तेण वारिज्जंतेण वि तं फलं गहियं । भणेइ अ-मए न खाइयव्वं, को दोसो गहिए ? त्ति । तेन पसंगदोसेण खइयं विनट्ठो य । एस दिट्ठंतो ।

अयमत्थोवणओ-जहा तस्स रायपुत्तस्स वेज्जेहिं अंबगा अपत्थ त्ति काउं पडिसिद्धा तहा भगवया वि साहूणं अब्बंभपडिसेवा इह सपरत्थ य अपत्थ त्ति काउं पडिसिद्धा, तप्परिहरणोवाओ अ 'इत्थी-पसु-पंडगसंसत्ताए वसहीए संजईखेत्ते य न ठायव्वं" इच्चाई उवइट्ठो । जो तेसु ठाइ सो नियमा पसंगदोसेण विनस्सइ चरित्तरज्जस्स य अणाभागी भवइ, जहा सो रायपुत्तो । अन्नो पसत्थो रायपुत्तो सो चूतफलदोसदरिसी चूयच्छायं पि परिहरंतो इहलोइयाण कामभोगाणं आभागी जातो, एवं जो साहू तित्थयरपडिसिद्धइत्थिपडिसेवादोसदरिसी इत्थिसंसत्ताओ वसहीओ संजईखेत्तं च परिहरइ सो नियमा इह परत्थ य सव्वसुक्खाणं आभागी भवइ त्ति ॥

अथ "दूरेण संजईओ" इत्यादि यत् परणाक्षिप्तं तदेतत् परिजिहीर्षुराह-

[भा.२१६७] इत्थीणं परिवाडी, कायव्वा होइ आनुपुव्वीए ।
परिवाडीए गमणं, दोसा य सपक्खमुप्पन्ना ॥

वृ- 'स्त्रीणाम्' एकखुरादीनां 'परिपाटि' पद्धतिरानुपूर्व्या कर्त्तव्या भवति, प्ररूपणीयेत्यर्थः । ततः 'परिपाट्यां' यथा तासु गमनं भवति तथा वाच्यम् । दोषाश्च स्वपक्षत उत्पन्ना भवन्तीति वक्तव्यमिति निर्युक्तिगाथा सङ्क्षेपार्थः ॥ अथैनामेव गाथां व्याख्यानयति-

[भा.२१६८] एगखुर-दुखुर-गंडी-सण्फइत्थीसु चेव परिवाडी ।
बद्धाण चरंतीणं, जत्थ भवे वग्गवग्गेसु ॥

[भा.२१६९] तत्थऽन्नतमो मुक्को, सजाइमेव परिधावई पुरिसो ।
पासगए वि विवक्खे, चरइ सपक्खं अवेक्खंतो ॥

वृ- एकखुरा वडवादयः, द्विखुरा गो-महिष्यादयः, गण्डीपदा हस्तिन्यादयः, सनखपदाः शुनीप्रभृतयः, एतासु षष्ठी-सप्तम्योरर्थं प्रत्यभेदात् एतासां स्त्रीणां 'वर्गवर्गेषु' पृथक्पृथक्स-जातीयसमूहरूपेषु बद्धानां वा चरन्तीनां वा यत्र क्वापि कुटी-वाटकादौ परिपाटीर्भवेत् तत्राऽश्व-गो-हस्तिशुनकादीनामन्यतमः पुरुषो मुक्तः सन् दूरस्थितामपि 'स्वजातिमेव' वडवादिकां परिधावति, 'विपक्षे तु' विजातीये गवादिपक्षे 'पार्श्वगतेऽपि' प्रत्यासन्नस्थितेऽपि स्वपक्षमपेक्षमाणश्चरति, न पुनर्विपक्षमुधावतीति भावः, एवं श्रमणोऽपि स्वपक्ष इति कृत्वा विश्वस्तः सन् संयतीभि सह संसर्गं करोति, न पुनरविरतिकासु ॥ यतः-

[भा.२१७०] आगंतुयदव्वविभूसियं च ओरालियं सरीरं तु ।

असमंजसो उ तम्हाऽगारित्थिसमागमो जइणो ॥

**वृ-** आगन्तुकद्रव्यैः-वस्त्रा-ऽऽभरणादिभिर्विभूषितम्-अलङ्कृतं चशब्दादुद्वर्त्तन-स्नानादिपरिकर्मयुक्तं च यस्मादगारस्त्रीणामौदारिकं शरीरं तस्माद् 'असमञ्जसः' विसदृशस्ताभिः सह 'यतेः' साधोर्मलीमसशरीरस्य समागमन (समागमः-) मीलकः ॥ अपि च-

**[भा.२१७१]** अविभूसिओ तवस्सी, निक्कामोऽकिंचणो मयसमाणो ।

इयऽगारीसुं समणं, लज्जा भय संथवो न रहो ॥

**वृ-** 'अविभूषितः' विभूषारहित एषः, तथा 'तपस्वी' तपःक्षीणदेहः, 'निष्कामः' शुभर-सगन्धाद्युपभोगरहितः, 'अकिञ्चनः' निष्परिग्रहः, ततः 'मृतसमानः' शवकल्प एषः, 'इति' एवमगारीणां श्रमणेऽवज्ञा भवति । श्रमणस्य पुनरगारीभिः सह विपक्षतया या लज्जा यच्चागारिभ्यो भयं तेन ताभि सह न 'संस्तवः' परिचयः न वा 'रहः' एकान्त इति ॥ स्वपक्षे तु कथम् ? इत्याह-

**[भा.२१७२]** निब्भयया य सिनेहो, वीसत्थत्तं परोप्पर निरोहो ।

दानकरणं पि जुज्जइ, लग्गइ तत्तं च तत्तं च ॥

**वृ-** संयतस्य संयत्यां 'निर्भयता' न भयमुत्पद्यते, स्नेहश्चोभयोरपि भवति स्वपक्षत्वात्, 'विश्वस्तत्वं' च विश्वासः परस्परगुह्यगोपनविषयः प्रत्यय इत्यर्थः, 'परस्परम्' उभयोरपि 'निरोधः' बस्तिनिग्रहात्मकः, तथा 'दानकरणमपि' वस्त्र-पात्रादिदानलक्षणं संयतीं प्रति तस्य 'युज्यते' सम्भवतीत्यर्थः, ततो यथा तप्तं च तप्तं च लोहं 'लगति' सम्बध्यते तथा संयती-संयतौ द्वावपि निरोधसन्तप्तौ रहो लब्ध्वा लगत इति ॥ आह दृष्टास्तावत् स्वपक्षसमुत्था दोषाः, परमेते कुत्र सम्भवन्ति ? इति निरूप्यताम्, उच्यते-

**[भा.२१७३]** वीयार-भिक्खचरिया-विहार-जइ-चेइवंदनादीसुं ।

कज्जेसुं संपडिताण होंति दोसा इमे दिस्स ॥

**वृ-** एकवगडे एकद्वारे च ग्रामादौ विचारभूमि-भिक्षाचर्या-विहारभूमि-यतिचैत्यवन्दनादिषु कार्येषु प्रतिश्रयान्निर्गतानां रथ्यादौ 'सम्पतितानां' मिलितानामन्योऽन्यं दृष्ट्वा एते दोषा भवन्ति॥

**[भा.२१७४]** दूरम्मि दिट्ठि लहुओ, अमुगो अमुगि त्ति चउलहू होंति ।

किइकम्मम्मि य गुरुगा, मिच्छत्त पसज्जणा सेसे ॥

**वृ-** यदि दूरेऽपि संयतः संयत्या दृष्टः संयती वा संयतेन तदा लघुको मासः । प्रत्यासन्नप्रदेशे समायातं संयतं सम्यगुपलक्ष्य संयती यद्यमुकोऽयं ज्येष्ठार्य इति ब्रूते, संयतो वा संयतीमुपलक्ष्य अमुका संयतीति ब्रवीति तदा चत्वारो लघवः । अथ सा 'कृतिकर्म' वन्दनंकरोति तदा चत्वारो गुरुकाः । ये चाभिनवधर्माणस्ते तथा वन्दमानानुपलभ्य वक्ष्यमाणनीत्या मिथ्यात्वं गच्छेयुः । 'शेषे' भोजिका-घाटिकादौ शङ्कां कुर्वाणे सति 'प्रसजना' प्रायश्चित्तस्य वृद्धिर्द्रष्टव्या ॥ तामेवाह-

**[भा.२१७५]** दिट्ठे संका भोइय, घाडिय नाई य गाम बहिया य ।

चत्तारि छ च्च लहु गुरु, छेदो मूलं तह दुगं च ॥

**वृ-** संयतस्य संयत्या कृतिकर्म क्रियमाणं केनचिद् दृष्टम्, दृष्टे सति तस्य 'शङ्का' वक्ष्यमाणा सञ्जायते ततश्चत्वारो गुरवः । अथ 'भोजिकायाः' भार्यायाः कथयति ततश्चतुर्लघुकाः । घाटिकः-मित्रं तस्याग्रतः कथने चतुर्गुरवः । 'ज्ञातीना' स्वजनानां कथने षड् लघवः । अज्ञातीनां कथयति

षड् गुरवः । ग्रामस्थं कथयति छेदः । ग्रामबहिर्निर्गत्य कथयति मूलम् । ग्रामसीमायां कथनेऽनवस्थाप्यम् । सीमानमतिक्रम्य कथयति पाराञ्चिकम् ॥

कीदृशी पुनः शङ्का भवति ? इत्याह-

[भा.२१७६] कुवियं नु पसादेती, आओ सीसेण जायए विरहं ।
आओ तलपन्नविया, पडिच्छई उत्तिमंगेणं ॥

वृ- 'नु' इति वितर्के, किमेषा संयती कुपितं सन्तमेनं संयतं प्रसादयति ? आहोश्वित् 'शीर्षेण' मस्तकेन 'विरहः' एकान्तं याचते ? उताहो अनेन साधुना तलेन-चप्पुटिकादिकरणेन प्रज्ञापिता सती प्रार्थनामुत्तमाङ्गेन प्रतीच्छति ? ॥

[भा.२१७७] इइ संकाए गुरुगा, मूलं पुन होइ निव्विसंके तु ।
सोही वाऽऽसन्नतरे, लहुगतरी गुरुतरी इयरे ॥

वृ- 'इति' एवं शङ्कायां चत्वारो गुरुकाः । अथ निर्विशङ्कं-कुपित-प्रसादनाद्यर्थमेव करोतीति मन्यते ततो द्वयोरपि मूलम् । भोजिकादिश्च यो यस्तस्य सम्बन्धेनासन्नतरस्तत्र तत्र शोधिर्लघुकतरा। 'इतरस्मिन्' घाटिक-ज्ञात्यादौ दूरतरे गुरुकतरा ॥ अथ किमिति ज्ञातीनां प्रथमं न कथयति ? इत्याह-

[भा.२१७८] विस्ससइ भोइ-मित्ताइएसु तो नायओ भवे पच्छा ।
जह जह बहू जननायं, करेइ तह वड्ढए सोही ॥

वृ- भोजिका-मित्रादिषु शरीरमात्राभिन्नेषु न किमपि गोपनीयमस्तीति कृत्वा यतोऽसौ विश्वसिति ततः 'ज्ञातीन्' स्वजनान् पश्चाद् ज्ञापयति । यथा यथा चासौ बहुजनज्ञातं करोति तथा तथा 'शोधि' प्रायश्चित्तं वर्द्धते ॥ अथासौ ज्ञाप्यमानो जनः प्रतिषेधयति ततः प्रायश्चित्तमप्युपरमते । तथा चाह-

[भा.२१७९] पडिसेहो जम्मि पदे, पायच्छित्तं तु ठाइ पुरिमपए ।
निस्संकियम्मि मूलं, मिच्छत्त पन्नणा सेसे ॥

वृ- तेन पुरुषेण भोजिकाया आख्यातम्-मया संयती संयतं शीर्षप्रणामेनावभाषमाणा दृष्टा, ततः सा प्रतिषेधयति-न भवत्येवम्, मैवमसमञ्जसं वोच इति; ततः प्रायश्चित्तमप्युपरतम् । अथासौ तया न प्रतिषिद्धस्ततः प्रायश्चित्तं वर्द्धते । एवं घाटिकादिष्वपि वक्तव्यम् । ततो यस्मिन् भोजिकादौ पदे प्रतिषेधस्ततः 'पूर्वपदे' शङ्कादौ प्रायश्चित्तं तिष्ठति, नोर्ध्वं वर्द्धते । तथा 'कुपित-प्रसादनाद्यर्थमेव करोति' इति निशङ्किते मूलम् । एवं मिथ्यात्वं 'शेषस्य च' भोजिकादिविषयप्रायश्चित्तस्य प्रसजना भवतीति ॥ कथं पुनर्भोजिकादयः प्रतिषेधयन्ति ? इत्याह-

[भा.२१८०] किइकम्मं तीए कयं, मा संक असंकणिज्जचित्ताइं ।
न वि भूयं न भविस्सइ, एरिसगं संजमधरेसुं ॥

वृ- 'कृतिकर्म' वन्दनकं 'तया' संयत्या कृतम्, मा अशङ्कनीयचित्ते अमू शंङ्किष्ठाः, नापि भूतम् अपिशब्दाद् न भवति न च भविष्यति ईदृशं भवत्परिकल्पितं कुपित-प्रसादनादिकमसमञ्जसचेष्टितं 'संयमधरेषु' साधु-साध्वीजनेषु ॥

एवं विचारभूमौ गच्छतां दोषा उक्ताः । अथ भिक्षाचर्यायां तानेवाह-

[भा.२१८१] पढम-बिइयातुरो वा, सइकाल तवस्सि मुच्छ संतो वा।
रच्छामुहाइ पविसं, निंतो व जनेन दीसिज्जा ॥

वृ- ''रच्छामुहाइ'' त्ति तस्मिन् ग्रामे रथ्यामुखे आदिशब्दादन्यत्र वा तथाविधे स्थाने देवकुलं वा शून्यगृहं वा भवेत् तत्र प्रथमपरीषहातुरः प्रथमालिकार्थं द्वितीयपरीषहातुरश्च द्रवपानार्थं प्रविशेत्, यद्वा यावद्य 'सत्कालः' भिक्षाया देशकालो भवति तावदत्रैवोपविष्टस्तिष्ठामि, अथवा 'तपस्वी' क्षपकः स विश्रामग्रहणार्थम्, यद्वाऽत्युष्णेन कस्यापि मूर्च्छा समुत्पन्ना तस्या अपनयनार्थम्, यदि वा भिक्षाटनेन श्रान्तोऽहमतोऽत्र विश्रामं गृह्णामि एवमेभि कारणैस्तत्र प्रविशेत्, स च प्रविशन् ततो निर्गच्छन् वा जनेन दृश्येत; संयत्यपि तत्रैतैरेव कारणैः प्रविशेत् साऽपि प्रविशन्ती जनेन दृष्टा स्यात् ॥ अत्र चतुर्भङ्गीमाह-

[भा.२१८२] संजओ दिट्ठो तह संजई य दोन्नि वि तहेव संपत्ती।
रच्छामुहे व होज्जा, सुन्नघरे देउले वा वि ॥

वृ- सयतस्तत्र प्रविशन् दृष्टो न संयती संयती दृष्टा न संयतः २ संयतः संयती च द्वावपि दृष्टौ न दृष्टौ वा ३-४। ''तहेव संपत्ति'' त्ति यैः कारणैः संयतः प्रविष्टस्तैरेव संयत्या अपि तत्र सम्प्राप्तिरभूत्, एवमनन्तरोक्तचतुर्भङ्ग्या रथ्यामुखेवा शून्यगृहे वा देवकुलेवा दर्शनं स्यात् ॥ ततः किम् ? इत्याह-

[भा.२१८३] वइणी पुव्वपविट्ठा, जेणायं पविसते जई इत्थ।
एमेव भवति संका, वइणिं दट्ठूण पविसंतिं ॥

वृ- संयतं तत्र प्रविशन्तं दृष्ट्वा शङ्का भवेत्-नूनं व्रतिनी पूर्वप्रविष्टा वर्त्तते येनायं यतिरत्र प्रविशति। एवमेव व्रतिनीं प्रविशन्तीं दृष्ट्वा शङ्का भवति-नूनं संयतः प्रविष्टोऽस्ति येनेयं प्रविशति ॥

[भा.२१८४] उभयं वा दुदुवारे, दट्ठुं संगारउ त्ति मन्नंति।
ते पुन जइ अन्नोन्नं, पासंता तत्थ न विसंता ॥

वृ- द्विद्वारे वा देवकुले 'उभयं' संयतः संयती च प्रविशेत्, तत्रैकेन द्वारेण संयतः प्रविष्टो द्वितीयेन तु संयती, तौ च दृष्ट्वा 'सङ्गारः' संकेतोऽनयोरिति गृहस्था मन्यन्ते । ''तौ च'' संयतीसंयतौ यद्यन्योन्यमद्रक्ष्यतां ततस्तत्र 'नावेक्ष्यतां' प्रवेशं नाकरिष्यताम् ॥

इत्थं प्रवेशे चतुर्भङ्गी दर्शिता। अथ निर्गमनेऽपि तामतिदिशन्नाह-

[भा.२१८५] एमेव ततो निंते, भंगा चत्तारि होंति नायव्वा।
चरिमो तुल्लो दोसु वि, अदिट्ठभावेण तो सत्त ॥

वृ- 'एवमेव' प्रवेशवत् 'ततः' शून्यगृहादेर्निर्गच्छतरपि तयोश्चत्वारो भङ्गा भवन्ति ज्ञातव्याः। तद्यथा-संयतो निर्गच्छन् दृष्टो न संयती १ संयती निर्गच्छन्ती दृष्टा न संयतः २ संयतः संयती द्वावपि दृष्टौ ३ द्वावपि न दृष्टौ ४। अत्र च 'द्वयोरपि' प्रवेश-निर्गमयोः 'चरमः' चतुर्थो भङ्गस्तुल्यः। कुतः ? इत्याह-'अदृष्टभावेन' द्वयोरपि संयत-संयत्योरदृष्टत्वेन, ततश्च द्वाभ्यामप्येक एव गण्यते, एवं सप्त भङ्गा भवन्ति ॥ एतेषु दोषानाह-

[भा.२१८६] एक्किक्कम्मि य भंगे, दिट्ठाईया य गहणमादीया।
सत्तमभंगे मासो, आउभयाई अ सविसेसा ॥

एकैकस्मिन् भङ्गे 'दृष्टादयः' दृष्टे सति शङ्का-भोजिकादयो दोषा भवन्ति। तत्र शङ्का नाम किं विश्रामणार्थमत् प्रविशति? उत प्रतिसेवनार्थम्? इति तत्र चतुर्गुरु। प्रतिसेवनार्थमेवेति निशङ्किते मूलम्। शेषं भोजिकानिवेदनादि सप्रायश्चित्तं प्राग्वद् द्रष्टव्यम्। तथा उभयोरपि राजपुरुषैस्तत्र प्रवेशे दृष्टे सति ग्रहणा-ऽऽकर्षणादयो दोषाः। सप्तमे भङ्गे मासलघु, तत्र चात्मोभयादिसमुत्थाः सविशेषा दोषाः। तथाहि-तत्रोभयोरप्यदृष्टत्वादन्योन्यदर्शने द्वयोरेकतरस्य वा चित्तभेदः सम्भवेत्-केनाप्यावां प्रविशन्तौ न दृष्टाविति कृत्वा तत्रैकान्ते घटनं भवेत्। आदिशब्दाच्चतुर्थव्रतं विराधितमावाभ्यामिति मत्वा वैहायसमरणा-ऽवधावनादीनि कुर्याताम्॥ अथ प्रवेशविषयेषु भङ्गकेषु पञ्चभिरादेशैः प्रायश्चित्तमभिधित्सुः प्रथमादेशतस्तावदाह-

[भा.२१८७] चरमे पढमे बिइए, तइए भंगे य होइमा सोही।

मासो लहुओ गुरुओ, चउलहु-गुरुगा य भिक्खुस्स॥

वृ- चरमो नाम-यत्र द्वे अपि न दृष्टे १ प्रथमः-यत्र संयत एव दृष्टः २ द्वितीयः-यत्र संयती दृष्टा ३ तृतीयः-यत्र द्वे अपि दृष्टे ४, एतेषु भङ्गेषु यथाक्रमं भिक्षोरियं शोधिर्मन्तव्या। तद्यथा-मासो लघुकः, मासो गुरुकः, चतुर्लघुकाः, चतुर्गुरुकाः॥

[भा.२१८८] वसभे य उवज्झाए, आयरिए एगठाणपरिवुड्ढी।

मासगुरुं आरब्भा, नायव्वा जाव छेदो उ॥

वृ- वृषभस्योपाध्यायस्याचार्यस्य च यथाक्रममेकैकस्थानपरिवृद्धि कर्त्तव्या, ततश्च मासगुरुकादारभ्य छेदं यावत् प्रायश्चित्तस्थानानि ज्ञातव्यानि। तद्यथा-वृषभस्य चतुर्थे भङ्गे मासगुरु, प्रथमे चतुर्लघु, द्वितीये चतुर्गुरु, तृतीये षड्लघुः एवमुपाध्यायस्य चतुर्लघुकादारब्धं षड्गुरुके तिष्ठति, आचार्यस्य चतुर्गुरुकादारब्धं छेदान्तं द्रष्टव्यम्॥ एष एक आदेशः।

अथ द्वितीय उच्यते-

[भा.२१८९] अहवा चरिमे लहुओ, चउगुरुगं सेसएसु भंगेसु।

भिक्खुस्स दोहि वि लहू, काल तवे दोहि वी गुरुगा॥

वृ- अथवा चरमे भङ्गे लघुको मासः, 'शेषेषु' त्रिष्वपि भङ्गेषु प्रत्येकं चतुर्गुरुकम्। एतानि प्रायश्चित्तानि भिक्षोः 'द्वाभ्यामपि' तपसा कालेन च लघुकानि, वृषभस्य कालगुरुकाणि, उपाध्यायस्य तपोगुरूणि, आचार्यस्योभयगुरूणि॥ एष द्वितीय आदेशः। अथ तृतीय उच्यते-

[भा.२१९०] मासो विसेसिओ वा, तइयादेसम्मि होइ भिक्खुस्स।

गुरुगो लहुगा गुरुगा, विसेसिया सेसगाणं तु॥

वृ- 'वा' इति अथवा तृतीयादेशे चतर्ष्वपि भङ्गेषु लघुमासस्तपः-कालविशेषितो भिक्षोर्भवति। तद्यथा-चतुर्थे भङ्गे द्वाभ्यामपि तपः-कालाभ्यां लघुकं लघुमासिकम्, प्रथमे तदेव तपसा लघुकं कालेन गुरुकम्, द्वितीये काले लघुकं तपसा गुरुकम्, तृतीये द्वाभ्यामपि तपःकालाभ्यां गुरुकम्। 'शेषाणां तु' वृषभोपाध्यायाचार्याणां यथाक्रमं गुरुको मासः चत्वारो लघुकाश्चत्वारो गुरुकाः चतुर्ष्वपि भङ्गेष्वेवमेव तपः-कालविशेषिताः प्रायश्चित्तम्॥ एष तृतीय आदेशः। अथ चतुर्थमाह-

[भा.२१९१] अहवा चउगुरुग च्चिय, विसेसिया हुंति भिक्खुमाईणं।

मासाई जाव गुरुगा, अविसेसा हुंति सव्वेसिं॥

वृ- अथवा चतुर्गुरुका एव भिक्षुप्रभृतीनां चतुर्णामपि तपः-कालविशेषिता भवन्ति । तद्यथा-भिक्षोर्द्वाभ्यामपि तपः-कालाभ्यां लघवः, वृषभस्य तपोलघवः कालगुरवः, उपाध्यायस्य तपोगुरुकाः काललघुकाः, आचार्यस्य द्वाभ्यामपि तपः-कालाभ्यां गुरवः । एष चतुर्थ आदेशः । यद्वा मासादारभ्य चतुर्गुरुकं यावद् भिक्षु-वृषभादीनां प्रायश्चित्तानि । तद्यथा-भिक्षोर्मासलघु, वृषभस्य मासगुरु, उपाध्यायस्य चतुर्लघुकम्, आचार्यस्य चतुर्गुरुकम् । एतानि च प्रायश्चित्तानि सर्वेषां भङ्गचतुष्टयेऽपि तपः-कालाभ्यामविशेषितानीति पञ्चम आदेशः ।। एवं तावत् प्रवेशप्रत्ययं शुद्धपदे प्रायश्चित्तमुक्तम्। अथ तत्र प्रविष्टानां ये दोषाः सम्भवन्ति तत्प्रत्ययं प्रायश्चित्तमाह-

[भा.२११२] दिट्ठोभास पडिस्सुय, संथार तुअट्ट चलणउक्खेवे ।
फंसण पडिसेवणया, चउलहुगाई उ जा चरिमं ।।

वृ-एवं प्रविष्टयोः संयत-संयत्योः परस्परं 'दृष्टे' दर्शने सञ्जाते सति चतुर्लघवः । संयतः संयती वा यद्यवभाषते ततश्चत्वारो गुरवः । अवभाषिते सति यदि प्रतिशृणोति तदा षड् लघवः । संस्तारके कृते षड् गुरवः । त्वग्वर्त्तने कृते च्छेदः । चलनः-पादस्तस्योत्क्षेपे मूलम् । स्पर्शनेऽनवस्थाप्यम्। प्रतिसेवने पाराञ्चिकम् ।। एवं प्रविष्टानां प्रायश्चित्तमुक्तम् । अथ निर्गमनविषयमाह-

[भा.२११३] पविसंते जा सोही, चउसु वि भंगेसु वन्निया एसा ।
निक्खममाणे स च्चिय, सविसेसा होइ भंगेसु ।।

वृ- संयती-संयतयोः प्रविशतोर्या शोधिश्चतुर्ष्वपि भङ्गेषु 'एषा' अनन्तरमेव वर्णिता सैव शून्यगृहादेर्निष्क्रामतोरपि सविशेषा चतुर्ष्वपि भङ्गेषु भवति ।। एवं तावद् ग्रामादेरन्तर्विचारभूमौ गच्छन्तीनां भिक्षाचर्यायां च दोषाः प्रतिपादिताः । अधुनाग्रामादेर्बहिर्विचारभुवं गच्छन्तीनां दोषोनुपदर्शयितुमाह-

[भा.२११४] अंतो वियार असई, अचियत्त सगार दुज्जनयते वा ।
बाहिं तु वयंतीणं, अपत्त-पत्ताणिमे दोसा ।।

वृ- 'अन्तः' ग्रामादेरभ्यन्तरे विचारभूमेरभावे, अप्रीतिकं वा 'सागारिकः' शय्यातरस्तत्र व्युत्सर्जने कुर्यात्, 'दुर्जनवृतं वा' दुःशीलजनपरिवृतं तत् पुरोहडं ततो ग्रामादेर्बहिर्व्रजन्तीनां स्थण्डिलमप्राप्तानां प्राप्तानां वा इमे दोषाः ।।

[भा.२११५] वीयाराभिमुहीओ, साहुं दद्धूण सन्नियत्ताओ ।
लहुओ लहुया गुरुगा, छम्मासा छेद मूलदुगं ।।

वृ- विचारभूमेरभिमुखं गच्छन्त्यः साधुं तत्र यान्तं दृष्ट्वा यदि सन्निवर्त्तन्ते तदा लघुको मासः । सन्निवृत्ताः सत्यः संज्ञां धारयन्त्यो यद्यनागाढं परिताप्यन्ते तदा चतुर्लघवः । आगाढपरितापनायां चतुर्गुरवः । महादुःखे षड् लघवः । मूर्च्छायां षड् गुरवः । कृच्छ्रप्राणे छेदः । कृच्छ्रोच्छ्वासे मूलम् । समुद्घातेऽनवस्थाप्यम् । कालगमने पाराञ्चिकम् ।। एतामेव निर्युक्तिगाथां व्याख्यानयति-

[भा.२११६] एसो वि तत्थ वच्चइ, नियत्तिमो आगयम्मि गच्छामो ।
लहुओ य होइ मासो, परितावणमाइ जा चरिमं ।।

वृ-'एषोऽपि' संयतः 'तत्र' स्थण्डिले व्रजति अतो निवर्त्तामहे वयम् 'आगते' प्रतिनिवृत्ते सति गमिष्याम इति कृत्वा यदि संयत्यो निवर्त्तन्ते तदा लघुमासः । अथ संज्ञानिरोधना-

नागाळपरितापनादिकं भवति ततश्चचतुर्लघुकादिकमनन्तरगाथोक्तं 'चरमं' पाराञ्चिकं यावत् प्रायश्चित्तम् ॥

[भा.२१९७] गड्डा कुडंग गहणे, गिरिदरि उज्जाण अपरिभोगे वा ।
पविसंते य पविट्ठे, निंते य इमा भवे सोही ॥

वृ- अथ तान् साधून् दृष्ट्वा यदि 'गर्तायां' प्रतीतायां 'कुडङ्गे' वंशजालिकायां 'गहने' बहुवृक्षनिकुञ्जे 'गिरिदर्यां' पर्वतकन्दरायां 'उद्याने वा' अपरिभोग्ये संयत्यः प्रविशेषु ततः प्रविशन्तीषु प्रविष्टासु निर्गच्छन्तीषु चेयं शोधिः साधूनां भवति ॥

[भा.२१९८] दूरम्मि दिट्ठे लहुओ, अमुई अमुओ त्ति चउगुरु होंति ।
ते चेव सत्त भंगा, वीयारगए कुडंगम्मि ॥

वृ- यदि दूरे संयत्या संयतः संयतेन वा संयती दृष्टा ततो लघुको मासः । अथामुका संयती अमुको वा अयं ज्येष्ठार्य इति ब्रूते तदा चतुर्गुरवः । तत्र च कुडङ्गे यदि कोऽपि संयतः विचारार्थं गतः-पूर्वप्रविष्टो वर्त्तते तदा त एव सप्त भङ्गाः, तद्यथा-संयतः प्रविशन् दृष्टो न संयती १ संयती प्रविशन्ती दृष्टा न संयतः २ द्वावपि दृष्टौ ३ द्वावपि न दृष्टौ ४, एवं निर्गमनेऽपि चतुर्भङ्गी, नवरं चतुर्थो भङ्गः प्रवेश-निर्गमयोरुभयोरपि तुल्य इति कृत्वा द्वाभ्यामप्येक एव गण्यते इति सप्त भङ्गा भवन्ति । एतेषु च प्रायश्चित्तं प्रागिव द्रष्टव्यम् ॥ अथ तत्र ग्रामे द्वारे स्थितेषु तेषु यस्तासां संयतीनां निरोधो भवति तदुत्थदोषदर्शनाय दृष्टान्तमाह-

[भा.२१९९] आभीराणं गामो, गामद्दारे य देउलं रम्मं ।
आगमन भोइयस्स य, ठाइ, पुनो भोइओ तहियं ॥

वृ- आभीराणां कश्चिद् ग्रामः, तस्य च ग्रामस्य द्वारे देवकुलं रम्यम्, अन्यदा च 'भोगिकस्य' ग्रामस्वामिनस्तत्रागमनम्, ततः 'तत्र' देवकुले भोगिकस्तिष्ठति ॥

[भा.२२००] महिलाजनो य दुहितो, निक्खमण पवेसणं च सिं दुक्खं ।
सामत्थणा य तेसिं, गो-माहिससन्निरोधो य ॥

वृ- ततः 'तेषाम्' आभीराणां महिलाजनो दुःखितोऽभूत्, निष्क्रमणं प्रवेशनं च "सिं" तासां विचारादौ गच्छन्तीनां 'दुःख' दुष्करमभवत्, ततस्तेषां "सामत्थण" त्ति पर्यालोचनमभूत्, यथा-महिलाजनस्यातीवाबाधा वर्त्तते, अत एनं भोगिकमुपायेनान्यत्र स्थापयाम इति । ततस्तैर्गो-माहिषस्य-गो-महिषीसमूहस्यास्वस्ववत्सविजोयनस्य ग्रामाद् बहिर्नीत्वा ग्रामद्वारबन्धनेन रात्रौ सन्निरोधः कृत इति ॥ इदमेव स्फुटतरमाह-

[भा.२२०१] विगुरुव्वियबोंदीणं, खरकम्मीणं तु लज्जमाणीओ ।
भंजंति अनिंतीओ, गोवाड-पुरोहडे महिला ॥

वृ- विकुर्विता-वस्त्रादिभिरलङ्कृता बोन्दि- शरीरं येषां ते विकुर्वितबोन्दयस्तेषामेवंविधानां भोगिकसम्बन्धिनां खरकर्मिकाणां लज्जमानाः सत्यो महेला बहिरनिर्गच्छन्त्यो गोवाटक-पुरोहडानि 'भञ्जन्ति' पुरीषव्युत्सर्गादिना विनाशयन्तीत्यर्थः ॥

[भा.२२०२] इति ते गोणीहिं समं, धिइमलभंता उ बंधिउं दारं ।
गामस्य विवच्छाओ, बाहिं ठाविंसु गावीओ ॥

वृ- 'इति' एवं विचार्य 'ते' आभीरा धृतिमलभमाना गोभिरात्मना सार्द्धं सञ्ज्ञारिताभिः सह बहिर्निर्गत्य ग्रामस्य द्वारं बद्ध्वा 'विवत्साः' वत्सरहिताः केवला एव गाः उपलक्षणत्वाद् महिषीश्च ग्रामस्य बहिः स्थापितवन्तः, ताश्च तत्र स्थिताः स्ववत्सवियोजिता महता शब्देन सकलामपि रात्रिं विस्वरमारटितवत्यः, वत्सका अपि ग्रामान्तः स्थितास्तथैव शब्दायितवन्तः ।। ततः किमभूत्? इत्याह-

[भा.२२०३] वच्छग-गोणीसद्देण असुवणं भोइए अहनि पुच्छा ।
सब्भावे परिकहिए, अन्नम्मि ठिओ निरुवरोहे ।।

वृ- तेषां वत्सकानां गवां च यः शब्दः-विस्वरारटनलक्षणस्तेन भोगिकस्य 'अस्वपनं' निद्रा न समायातेत्यर्थः । ततः 'अहनि' दिवसे उद्गते सति तेन पृच्छा कृता, यथा-किमेवं रात्रौ गो-माहिषं विस्वरमारटत् ? । तैराभीरैस्ततः सर्वोऽपि सद्भावः परिकथितः । ततोऽसौ भोगिकोऽन्यस्मिन् देवकुले 'निव्याघाते गत्वा स्थित इति ।। अत्रोपनयमाह-

[भा.२२०४] एवं चिय निरविक्खा, वइणीण ठिया निओगपमुहम्मि ।
जा तासि विराधनया, निरोधमादी तमावज्जे ।।

वृ- 'एवमेव' भोगिकवत् केचिद् निरपेक्षाः संयता व्रतिनीनां सम्बन्धी यो नियोगः-ग्रामः क्षेत्रमित्यर्थः तस्य प्रमुखे-निर्गम-प्रवेशद्वारे स्थिताः तैर्या तासां निरोधादिका विराधना आदिशब्दादनागाढपरितापनादिका तामापद्यन्ते, तन्निष्पन्नं तेषां प्रायश्चित्तं भवतीति भावः ।।

[भा.२२०५] अहवण थेरा पत्ता, दट्ठुं निक्कारणट्ठियं तं तु ।
भोइयनायं काउं, आउट्टि विसोहि निच्छुभणा ।।

वृ-''अहवण'' त्ति अखण्डमव्ययपदमथवेत्यस्यार्थे । अथवा 'स्थविराः' कुलस्थविरादयस्तत्र क्षेत्रे प्राप्तास्तमाचार्यादिकं ग्रामद्वार एव स्थितं दृष्ट्वा पृच्छन्ति-आर्य ! किमत्र संयतीक्षेत्रे भवानीदृशे प्रदेशे स्थितः ? इति । यदि निष्कारणिकस्ततो भोगिकज्ञातमनन्तरोक्तं कुर्वन्ति, यथा तेन महिलाजनेन महान् क्लेशराशिरनुबभूवे, एवमेताभिरपि संयतीभिर्भवता अत्र स्थितेन महद् दुःखमनुभवनीयम् । एवमुक्ते यदि 'आवृत्तः' प्रतिनिवृत्तस्ततो 'विशोधिं' प्रायश्चित्तं दत्त्वा ततः क्षेत्रान्निष्काशना कर्त्तव्या ।।

[भा.२२०६] एवं ता दप्पेणं, पुट्ठो व भणिज्ज कारण ठिओ मि ।
तहियं तु इमा जयणा, किं कज्जं का य जयणाओ ।।

वृ- एवं तावद् 'दर्पेण' आकुट्टिकया स्थितानां दोषा उक्ताः । अथ कुलादिस्थविरैः पृष्टो भणेत्-कारणे स्थितोऽस्म्यहम् । ततः पुष्टकारणसद्भावे न प्रायश्चित्तं न वा निष्काशना । तत्र तु कारणे स्थितानाम् 'इयं' वक्ष्यमाणा यतना । शिष्यः प्राह-किं पुनः 'कार्यं' कारणम् ? का वा यतनाः ? ।। उच्यते-

[भा.२२०७] अद्धाणनिग्गयाई, अग्गुज्जाणे भवे पवेसो य ।
पुत्रो ऊनो व भवे, गमनं खमणं च सव्वासिं ।।

वृ-अध्वनो ये निर्गता वसिमं प्राप्तास्तेऽध्वनिर्गताः, आदिशब्दादशिवादिकारणेषु वर्त्तमानाः

संयतीक्षेत्रे प्राप्ताः । तत्र चाग्रोद्याने स्थित्वा गीतार्था संयतीप्रतिश्रये प्रहेयाः । तैश्च विधिना तत्र प्रवेशः कर्त्तव्यः । संयतीनां च मासकल्पः पूर्ण ऊनो वा भवेत् । यदि पूर्णस्ततो गमनं कर्त्तव्यम् । अथ न्यूनस्ततः सर्वासामपि क्षपणं भवतीति निर्युक्तिगाथासमासार्थः ॥ अथ विस्तरार्थमाह-

[भा.२२०८] उव्वाया वेला वा, दूरुट्ठियमाइणो परगामे ।
इय थेरऽऽसिज्जं, विसंतऽणआवाहपुच्छा य ॥

वृ- अध्वनिर्गतादयः साधवः संयतीक्षेत्रे प्राप्ताः सन्तो यदि न तावद् भिक्षाया देशकालस्ततो यः पुरोवर्ती ग्रामस्तत्र गत्वा भैक्षं गृह्णन्तु । अथ ते 'उद्वाताः' अतीव परिश्रान्ताः, वेला वा तदानीमतिक्रामति, परग्रामे वा दुरोत्थितादयो दोषाः-तत्र दुरे स ग्रामो न तदानीं गन्तुं शक्यते, उत्थितो वा-उद्वसीभूतोऽसौ, आदिशब्दात् क्षुल्लको वा अभिनवावासितो वा भटाक्रान्तो वा इत्यादिपरिग्रहः । 'इति' एवं विचिन्त्याग्रोद्याने स्थित्वा यः स्थविरो गीतार्थः स आत्मद्वितीयः संयतीप्रतिश्रये प्रेष्यते। स च तत्र गत्वा बहिरेकपार्श्वे स्थित्वा नैषेधिकीं करोति । यदि ताभिः सुन्दरम्, अथ न श्रुतं ततः शय्यातरीणां निवेद्यते, ताभिरार्यिकाणां निवेदिते यदि सर्वा अप्यार्यिका वृन्देन निर्गच्छन्ति ततश्चत्वारो गुरवः । ततः प्रवर्त्तिनी प्रौढाभ्यां वयः परिणताभ्यामार्यिकाभ्यां सहिता निर्गत्य 'अनुजानीत' इति भणति । ततस्तौ साधू 'आर्याशय्यां' साध्वीप्रतिश्रयं प्रविशतः । ततश्च ताभिः कृतिकर्मणि विहिते स गीतार्थसाधुरधोमुखमवलोकमान आचार्यवचनेन तासामनाबाधपृच्छां करोति-कच्चिदुत्सर्पन्ति संयमयोगा निराबाधं भवतीनाम् ? ग्लाना वा न काचिद् वर्त्तते ? ॥

एवं पृष्ट्वा किं कुर्वन्ति ? इत्याह-

[भा.२२०९] अमुगत्थ गमिस्सामो, पुट्ठाऽपुट्ठा व ईय वोत्तूणं ।
इह भिक्खं काहामो, ठवणाइघरे परिकहेह ॥

वृ-स्थविरा गीतार्था पृष्टा अपृष्टा वा 'अमुकत्र वयं गमिष्यामः' इत्युक्त्वा इदं भणन्ति-वयमिह ग्रामे भिक्षां करिष्यामः, ततः स्थापनादिगृहाणि परिकथत, आदिशब्दो मामाकादिकुलसूचकः॥ ततस्तेषु कथितेषु यो विधि कर्त्तव्यस्तमाह–

[भा.२२१०] सामायारिकडा खलु, होइ अवद्ध य एगसाहीय ।
सीउण्हं पढमादी, पुरतो समगं व जयणाए ॥

वृ- हे आर्या ! कृतसामाचारीका यूयम् ? उत न ? इति तासां समीपे प्रष्टव्यम् । "अवद्ध" त्ति एकस्मिन् ग्रामार्द्धे संयताः पर्यटन्ति द्वितीयस्मिन् संयत्यः । "एगसाहीय" त्ति एकस्यां साहिकायां-गृहपङ्क्त्यां साधवः पर्यटन्ति द्वितीयस्यां साध्व्य इति । यद्वा शीतमुष्णं वा यथायोगं गृह्णन्ति । तथा "पढमाइ" त्ति प्रथमालिकम् आदिशब्दात् पानकस्य वा पानं शून्यगृहादिस्थानानि वर्जयित्वा कुर्वन्ति । संयतीनां 'पुरतः' प्रथमं समकं वा यतनया पर्यटन्ति । एव निर्युक्तिगाथासमासार्थः ॥

अथ विस्तरार्थं प्रतिपदमाह-

[भा.२२११] कडमकड त्ति य मेरा, कडमेरा भिंति बिंति जइ पुट्ठा ।
ताहे भणंति थेरा, साहह कह गिण्हिमो भिक्खं ॥

वृ-स्थविरैस्ताः प्रष्टव्याः-आर्या ! युष्माभिः 'मर्यादा' सामाचारी 'कृता' शिक्षिता ? उत अकृता? इति पृष्टा यदि ब्रुवते- 'कृतमर्यादा वयं' कृतसामाचारीकाः, विधिं जानीम इत्यर्थः । ततः स्थविरा

भणन्ति- कथयत कथं भिक्षां गृह्णीमो वयम् ? ।।

[भा.२२१२] ता बेंति अम्ह पुण्णो, मासो वच्चामु अहव खमणं णे ।
संपत्थियाउ अम्हे, पविसह या जा वयं नीमो ।।

वृ- ता आर्यिका ब्रुवते-पूर्णोऽस्माकं मासकल्पः, अतः सूत्रार्थपौरुष्यौ कृत्वा व्रजामो वयम्, साधवो यथासुखं पर्यटन्तु । अथ न क्षपणं ततस्ता ब्रूयुः- सम्प्रस्थिता वयं भिक्षाटनार्थम्, यूयं पश्चात् पर्यटत । अथवा-'प्रविशत' भिक्षामवतरत यूयं यावद् वयं निर्गच्छाम इति ।।

यदा च तासां क्षपणं भवति तदा ब्रूयुः-

[भा.२२१३] विच्छिन्नो य पुरहडो, अंतो भूमी य ने वियारस्स ।
सागारिओ य सन्नी, कुणइ अ सारक्खणं अम्हं ।।

वृ- विस्तीर्णं पुरोहडं वर्त्तते, गाथायां प्राकृतत्वात् पुंस्त्वनिर्देशः, ''ने'' अस्माकम् 'अन्तः' ग्राममध्ये विचारभूमिरस्ति, यश्चास्माकं सागारिकः सः 'संज्ञी' श्रावकस्ततः संरक्षणमस्माकं करोति, बहिर्विचारभुवं गन्तुं न ददातीत्यर्थः । एवं संयतीभिरुक्ते साधवस्तत्र यथासुखं पर्यटन्ति। अथ ताभिः पूर्वं क्षपणं न कृतं ततो यदि सुभिक्षं वर्त्तते प्रचुरं च प्राप्यते ततः संयत्यः क्षपणं कुर्वन्तु । अपि च यद्यपि तासां साधुभ्यो भक्त-पानं प्रदातुं न कल्पते तथापयेवं कुर्वन्तीभिस्ताभि प्राघुण्यं कृतं भवति । अथ न शक्नुवन्ति क्षपणं कर्तुं ततः संयत्यः प्रागेव पर्यटन्त्यो दोषान्नं गृह्णन्ति संयता भिक्षाया देशकाले उष्णं गृह्णन्ति । अथ संयतीनां दोषान्नमकारं ततः संयता दोषान्नमितराः पुनरुष्णं गृह्णन्ति ।।

[भा.२२१४] उभयस्सऽकारगम्मी, दोसीणे अहव तस्स असईए ।
संथरे भणंति तुम्हे, अडिएसु वयं अडीहामो ।।

वृ- 'उभयस्य' संयती-संयतवर्गस्य दोषान्ने दोषान्ने अकारके अथवा 'तस्य' दोषान्नस्य 'असति' अभावे संस्तरणे सति संयत्यो भणन्ति-यूयं तावदटत ततो युष्मासु अटितेषु वयमटिष्यामः ।।

अथैक एव तत्रदेश-कालस्ततः क्रमेण पर्यटने वेलाया अतिक्रमो भवति ततः किं कर्त्तव्यम्? इत्याह-

[भा.२२१५] तुब्भे भिक्खं, इमम्मि पउरन्न-पाण गामद्धे ।
वाडग साहीए वा, अम्हे सेसेसु घेच्छामो ।।

वृ-संयत्यो ब्रुवते-यूयं गृह्णीत भिक्षामस्मिन् प्रचुरान्नपानस्य ग्रामस्यार्धे, अस्मिंस्तु ग्रामार्द्धे वयं ग्रहीष्यामः; यद्वा-अस्मिन् पाटकेऽस्यां वा साहिकायां यूयं गृह्णीत वयं शेषेषु ग्रहीष्याम इति ।।

[भा.२२१६] ओली निवेसने वा, वज्जेत्तु अडंति जत्थ य पविट्ठा ।
न य वंदनं न नमनं, न य संभासो न वि य दिट्ठी ।।

वृ- ''ओलि''त्ति ग्रामगृहाणामेका पङ्क्ति, निवेशनं-एकनिष्क्रमण-प्रवेशानि द्व्यादीनि गृहाणि, ततो यस्यां पङ्क्तौ निवेशने वा संयत्यः पर्यटन्ति तां वर्जयित्वा अन्यस्यां पङ्क्तावन्यस्मिन् वा निवेशने संयताभिक्षामटन्ति । अथ लघुतरोऽसौ ग्रामस्ततः पङ्क्त्यादिविभागो न शक्यते कर्तुं ततो यत्र गृहादौ प्रविष्टा रथ्यायां वा गच्छन्त एकत्र मिलन्ति तत्र 'न च' नैव 'वन्दनं' कृतिकर्म न वा 'नमनं' शिर-प्रणाममात्रं न च 'सम्भाषः' परस्परालापो नापि च 'दृष्टिः' सम्मुखमवलोकनम्,

मा प्रापत् पूर्वोक्तशङ्कादिदोषप्रसङ्ग इति ॥

[भा.२२१७] पुव्वभणिए य ठाणे, सुन्नोगादी चरंति वज्जेंता ।
पढम-बिइयातुरा वा, जयणा आइन्न धुवकम्मी ॥

वृ- 'पूर्वभणितानि च' शङ्काविषयभूतानि शून्यौकः-शून्यगृहं तदादीनि स्थानानि दूरेण वर्जयन्तश्चरन्ति, प्रथम-द्वितीयपरीषहातुरा वा यतनया जनाकीर्णे 'ध्रुवकर्मिका वा' [illegible]धारादयो यत्र पश्यन्ति तत्र प्रथमालिकां द्रवपानं वा कुर्वन्ति ॥ एवं संयतीक्षेत्रे साधूनामागतानां विधिरुक्तः । अथोभयेषु पूर्वस्थितेषूभयेषामेवागमने विधिमाह-

[भा.२२१८] दोन्नि वि ससंजईया, एगग्गामम्मि कारणेण ठिया ।
तासिं च तुच्छयाए, असंखडं तत्थिमा जयणा ॥

वृ- 'द्वयेऽपि' वस्तव्या आगन्तुकाश्च साधवो यदि ससंयतीका एकस्मिन् ग्रामे कारणेन स्थिताः, 'तासां च' संयतीनां तुच्छतया यद्यसङ्खडमुपजायते तत्र 'इयं' वक्ष्यमाणा यतना ॥ आह तिष्ठतु तावद् यतना, कथं पुनस्तासामसङ्खडमुत्पन्नम् ? इति तावद् वयं जिज्ञासामहे, उच्यते-ताभिर्वास्तव्यसंयतीभिरागन्तुकसंयत्यः पृष्टाः-आर्या ! किं यूयं यदृच्छया भक्त-पानं लभध्वे न वा ? इति, ताः प्राहुः-

[भा.२२१९] चुण्णाइ-विंटलकए, गरहियसंथवकए य तुब्भाहिं ।
ताईं अजाणंतीओ, फव्वीहामो कहं अम्हे ॥

वृ- चूर्ण-वशीकरणादिफलं द्रव्यसंयोगरूपं तेन आदिशब्दाद् ज्योतिष-निमित्तादिना च विण्टलेन कृते-भाविते, तथा गर्हितः-पूर्व-पश्चात्सम्बन्धरूपो यः संस्तवः-परिचयस्तेन वा कृते-भाविते युष्माभिः क्षेत्रे 'तानि' चूर्णादीनि कर्तुमजानानाः कथं वयमत्र "फव्वीहामो"त्ति यदृच्छया भक्त-पानं लभामहे ? ॥ वास्तव्यसंयत्यः प्रतिब्रुवते-

[भा.२२२०] सेसामुमानेन परं जणोऽयं, ठावेइ दोसेसु गुणेसु चेव ।
पावस्स लोगो पडिहाइ पावो, कल्लाणकारिस्स य साहुकारी ॥

वृ- 'स्वेन' स्वकीयेनानुमानेन 'परम्' अन्यम् आत्मव्यतिरिक्तम् 'अयं' प्रत्यक्षोपलभ्यमानो जनो दोषेषु गुणेषु च स्थापयति, अविद्यमानानामपि तेषां तत्राध्यारोपं करोतीति भावः । एतदेव व्यक्तीकरोति- 'पापस्य' पापकर्मकारिणो जनस्य लोकः सर्वोऽपि पापः प्रतिभाति, कल्याणकारिणः पुनः सर्वोऽपि साधुकारी ॥ ततश्च-

[भा.२२२१] नूनं न तं वट्टइ जं पुरा भे, इमम्मि खेत्ते जइभावियम्मि ।
अवेयवच्चाण जतो करेहा, अम्हाववायं अइपंडियाओ ॥

वृ- 'नूनं' निश्चितं यत् कुण्टल-विण्टलं पुरा "भे" भवत्यः कृतवत्यस्तदत्र क्षेत्रे यतिभाविते न वर्त्तते कर्त्तुम् । कुत एतद् ज्ञायते यद् वयं कुण्टल-वेण्टलं कृतवत्यः ? इति चेद् अत आह- 'अपेतवाच्यानां' वचनीयतारहितानां यत एवं यूयम् 'अतिपण्डिताः' अतीवा दुर्विदग्धा अस्माकम् 'अपवादम्' असद्दोषोद्घोषणं कुरुथ ॥ इत्थमसङ्खडे उत्पन्ने किं कर्त्तव्यम् ? इत्याह-

[भा.२२२२] तत्थेव अनुवसंते, गणिणीइ कहिंति तह वि हु अठंते ।
गमहारीण कहेंती, सगाण गंतूण गणिणीओ ॥

वृ- यदि तत्रैव परस्परमुपशान्तं तदसङ्खडं ततः सुन्दरमेव । अथ नोपशान्तं ततः 'गणिन्याः' स्वस्याः स्वस्याः प्रवर्त्तिन्याः कथयन्ति । यदि न कथयन्ति ततश्चतुर्गुरवः । ततस्ते प्रवर्त्तिन्यौ मधुरया गिरा प्रज्ञाप्योपशमयतः । तथापि 'अतिष्ठति' अनुपरते 'द्वे अपि' गणिन्यौ गत्वा स्वेषां स्वेषां गणधारिणां कथयतः । यदि न कथयतस्ततश्चत्वारो गुरुकाः ॥ ततः प्रवर्त्तिन्या कथिते गणधरेण किं विधेयम् ? इत्यत आह-

[भा.२२२३] उप्पन्ने अहिगरणे, गणाहारिनिवेदनं तु कायव्वं ।
जइ अप्पणा भणेज्जा, चाउम्मासा भवे गुरुगा ॥

वृ- 'अधिकरणे' असङ्खडे उत्पन्ने सति प्रवर्त्तिनीमुखादाकर्ण्य तेन गणधरेण द्वितीयस्य गणधारिणो निवेदनं कर्त्तव्यम् । यदि स गणधर आत्मनैव गत्वा द्वितीयगणधरसत्कां व्रतिनीं 'भणेत्' उपालम्भेत ततश्चतुर्मासा गुरुका भवेयुः ॥

[भा.२२२४] वतिणी वतिणिं वतिणी, व परगुरुं परगुरू व जइ वइणिं ।
जंपइ तीसु वि गुरुगा, तम्हा सगुरूण साहेज्जा ॥

वृ- यदि व्रतिनी व्रतिनीं 'जल्पति' उपालभते, व्रतिनी वा यदि 'परगुरुम्' अन्यसंयतीगणधरं जल्पति, परगुरुर्वा यदि व्रतिनीं जल्पति तत एतेषु त्रिष्वपि चतुर्गुरुकाः, तस्मात् ,स्वगुरूणां कथयेत्, उपलक्षणत्वात् स्वव्रतिनीं चोपालम्भेत ॥

अथ परव्रतिनीमुपालम्भमानस्य को दोषः स्यात् ? इत्यत्रोच्यते-

[भा.२२२५] जाणामि दूमियं भे, अगं अरुयम्मि जत्थ अक्कंता ।
को वा एअं न मुणइ, वारेहिह कित्तिया वा वि ॥

वृ- सा परव्रतिनी भण्यमाना ब्रूयात्-जानाम्यहं यद् दूनं भवतामङ्गम्, 'यत्र' यस्मिन् 'अरुषि' व्रणे युष्मदीयसंयतीं प्रतिब्रुवाणया मया यूयमाक्रान्ता, को वा एनमर्थं न जानाति ? कियतो वा ब्रुवतो निवारयिष्यथ ? यद्यहंवारिता सती न जल्पिष्यामि तर्ह्यन्येऽपि जल्पिष्यन्तीति ॥ अपि च-

[भा.२२२६] निग्गंधं न वि वायइ, अलाहि किं वा वि तेण भणिएणं ।
छाएउं च पभायं, न वि सक्का पडसएणावि ॥

वृ- नहि निर्गन्धं वायुर्वाति,' किन्तु यादृशस्य वनखण्डादेर्मध्येन समायाति तादृग्गन्धसहित एव, एवं भवतामप्यस्या उपरि य ईदृशः पक्षपातः स न निसम्बन्ध इति भावः । अथवा "अलाहि"त्ति अलमनेन वचनेनाभिहितेन, मर्मानुवेधित्वात् । किं वा तेन भणितेन कार्यम् ? यतः प्रभातं सञ्जातं सद् न पटशतेनापि च्छादयितुं शक्यम् । इत्थं तन्मुखाद् निर्गते असद्भूतार्थेऽपि दूषणे जले पतिते इव तैलबिन्दौ सर्वतः प्रसर्पत सूरीणां महान् छायाघातो जायते, स च तत्त्वत आत्मकृत एवेति ॥ अत्र दृष्टान्तमाह-

[भा.२२२७] मज्झत्थं अच्छंतं, सीहं गंतूण जो विबोहेइ ।
अप्पवहाए होई, वेयालो चेव दुज्जुत्तो ॥

वृ- 'मध्यस्थम्' उदासीनं तिष्ठन्तं सिंहं गत्वा उपेत्य यः कश्चिद् 'विबोधयति' विशेषेण-पार्ष्णिप्रहारादिना बोधयति स विबोधितः सन् तस्यात्मवधाय भवति । वेताल इव वा दुष्प्रयुक्तो यथा साधकमेवोपहन्ति, एवमियमप्याचार्येण प्रबोधिता सती तस्यैव च्छायाघातमुपजनयति ॥

यतश्चैवमतः-

[भा.२२२८] उप्पन्ने अहिगरणे, गणहारि पवत्तिणिं निवारेइ ।
अह तत्थ न वारेई, चाउम्मासा भवे गुरुगा ॥

वृ- उत्पन्नेऽधिकरणे गणधारी प्रवर्त्तिनीं निवारयति । अथ तत्र गणधारी न वारयति ततश्चतुर्मासा गुरुका भवेयुः । अतो गणधरौ द्वावपि मिलित्वा संयतीअतिथ्यं मत्वा प्रवर्त्तिनी तुला कृत्वा स्वस्वसंयतीरुपशमतः ॥ तत्र वास्तव्यसंयत्य इत्थमुपशाम्यन्ते-

[भा.२२२९] पाहुन्नं ताण कयं, असंखडं देह तो अलज्जाओ ।
पुव्वट्ठिय इय अज्जा, उवालभंताऽनुसासेंति ॥

वृ- 'प्राघुण्यम्' आतिथेयं 'तासाम्' आगन्तुकसंयतीनां शोभनं कृतम् यदेवमलज्जाः सत्योऽसङ्खडं 'दत्थ' कुरुथ । पूर्वस्थिता आचार्या स्वकीया आर्या उपालभमानाः 'इति' एवमनुशासते ॥

आगन्तुकसंयतीनामुपशमनोपायः पुनरयम्-

[भा.२२३०] एगं तासि खेत्तं, मलेह बिइयं असंखडं देह ।
आगंतु इय दोसं, झवंति तिक्खाइ-महुरेहिं ॥

वृ- एकं तावत् 'तासां' वास्तव्यसंयतीनां सत्कं क्षेत्रं 'मलयथ' विनाशयथ, द्वितीयं पुनरसङ्खडं 'दत्थ' गुरुथ । आगन्तुका आचार्या 'इति' एवं 'दोषम्' अधिकरणलक्षणं तीक्ष्ण-मधुरादिभिर्वचनैः "झवंति"त्ति विध्यापयन्ति, उपशमयन्तीति यावत् ॥ ततश्च-

[भा.२२३१] अवराह तुलेऊणं, पुव्ववरद्धं च गणधरा मिलिया ।
बोहित्तुमसागारिए, दिंति विसोहिं खमावेउं ॥

वृ- द्वावपि गणधरौ मिलितावपराधं 'तोलयित्वा' यस्या यावानपराधस्तं परस्परसंवादेन सम्यग् निश्चित्यया पूर्वापराद्धा-पूर्वमपराद्धं यया सा तथा ताम् 'असागारिके' एकान्ते बोधयित्वा ततो द्वितीयां तस्याः पाश्वात् क्षमापयतः । क्षमापयित्वा चोभयोरपि यथोचितां 'विशोधिं' प्रायश्चित्तं प्रयच्छत इति ॥ गतः प्रथमो भङ्गः । अथ द्वितीयं भङ्गं बिभावयिषुराह-

[भा.२२३२] अभिनिदुवाराऽभिनिक्खमणपवेसे एगवगडि ते चेव।
जं इत्थं नाणत्तं, तमहं वोच्छं समासेणं ॥

वृ- द्वितीयभङ्गो नाम यद् ग्रामादिकम् अभिनिद्वरम्-अनेकद्वारम् अत एवाभिनिष्क्रम-प्रवेशं परमेकवगडं तत्र त एव दोषा भवन्ति ये प्रथमभङ्गे प्रोक्ताः । यत् पुनः 'अत्र' द्वितीयभङ्गे नानात्वं तदहं वक्ष्ये समासेन ॥ प्रतिज्ञातमेव निर्वाहयति-

[भा.२२३३] तह चेव अन्नहा या, वि आगया ठंति संजईखेत्ते ।
भोइयनाए भयणा, सेसं तं चेविमं चऽन्नं ॥

वृ- 'तथैव' "सोऊण य समुदाणं गच्छं आनितु देउले ठाइ ।" इत्यादिना प्रथमभङ्गोक्तप्रकारेणव अन्यथा वा संयतीक्षेत्रे आगताः सन्तस्तिष्ठन्ति । तत्र च स्थितानां तेषां भोगिकज्ञाते भजना कार्या, यदि संयतीनां विचारभूम्यादिमार्गे स्थितास्ततो भवति भोगिकज्ञातम् अन्यथा तु न भवतीति भावः । 'शेषं' सर्वमपि प्रायश्चित्तादि 'तदेव' प्रथमभङ्गोक्तं ज्ञातव्यम् ।

इदं च 'अन्यद्' अभ्यधिक-द्वारकदम्बकमभिधीयते ॥

[भा.२२३४] एगा व होज्ज साही, दाराणि व होज्ज सपडिहुत्ताणि ।
पासे व मग्गओ वा, उच्चे नीए व धम्मकहा ॥

वृ-तत्रानेकद्वारे एकवगडे ग्रामादौ साधु-साध्वीप्रतिश्रययोरेका वा 'साहिका' गृहपङ्क्तिर्भवेत्। द्वाराणि वा परस्परं 'सप्रतिमुखानि' अभिमुखानि भवेयुः । अथवा साध्वीप्रतिश्रयस्य पार्श्वतो वा मार्गतो वा उच्चे वा नीचे वा स्थाने स्थिता भवेयुः । तत्र च स्थितानां धर्मकथां कोऽप्यशुभेन भावेन कुर्यादिति निर्युक्तिगाथासङ्क्षेपार्थः ।। अथ विस्तरार्थमाह-

[भा.२२३५] वइअंतरियाणं खलु, दोण्ह वि वग्गाण गरहिओ वासो ।
आलावे संलावे, चरित्तसंभेइणी विकहा ।।

वृ- एकस्यां साहिकायां वृत्या अन्तरितयोः संयत-संयतीरूपयोर्द्वयोरपि वर्गयोरेकत्र वासः 'गर्हितः' निन्दितः, तीर्थकरैः प्रतिक्रुष्ट इत्यर्थः । यतस्तत्र संयत-संयत्योः कायिक्यादिव्युत्सर्जनार्थं निर्गतयोः परस्परम् 'आलापे' सकृज्जल्पे 'संलापे' पुनः पुनः सम्भाषणे सञ्जाते सति चारित्रसम्भेदिनी विकथा वक्ष्यमाणरीत्या भवेत् ।। अथैकसाहिकायामेव दोषानाह-

[भा.२२३६] उभयेगयरट्ठाए, व निग्गया दट्ठु एक्कमेक्कं तु ।
संका निरोहमादी, पबंध आतोभया वाऽऽसु ।।

वृ-उभयं-संज्ञा-कायिकीरूपं तस्य एकतरस्य वा व्युत्सर्जनार्थं निर्गतयोः संयती-संयतयोरेकैकं दृष्ट्वा शङ्का भवति । तथाहि-संयतः कायिक्यादिव्युत्सर्जनार्थं निर्गतः संयतीं दृष्ट्वा प्रतिनिवृत्तः, पुनरपि कायिकी-संज्ञाभ्यामुद्बाध्यमानो निर्गतः, ततः संयती तं दृष्ट्वा शङ्का करोति-नूनमेष मां कामयते; एवं संयतस्यापि संयतीं प्रविशन्तीं पौनःपुन्येन प्रविशति निर्गच्छति च तन्नूनमेनामेनं वा अभिलषतीति । निरोधो वा कायिकी-संज्ञयोर्भवेत् । आदिशब्दादनागाढपरितापनादिपरिग्रहः। कथाप्रबन्धो वा वक्ष्यमाणलक्षणो भवेत् । ततश्चात्मसमुत्थेन उभयसमुत्थेन वा वाशब्दात् परसमुत्थेन वा दोषेण 'आशु' क्षिप्रं संयमविराधना भवेत् ।। कुमारप्रव्रजितस्य वा इत्थं कौतुकमुपजायते-

[भा.२२३७] पस्सामि ताव छिड्डं, वन्न पमाणं व ताव से दच्छं ।
इति छिड्डेहि कुमारा, झायंती कोउहल्लेणं ।।

वृ-पश्यामि तावत् किमपि च्छिद्रम् येन 'वर्णं' गौरत्वादिकं 'प्रमाणं वा' शरीरोच्छ्रयरूपं "से" तस्याः-विवक्षितसंयत्याः सत्कं तावदहं द्रक्ष्यामि इति कृत्वा च्छिद्रैः 'कुमाराः' अभुक्तभोगिनः कुतूहलेन 'ध्यायन्ति' अवलोकन्ते, ततस्तेषां प्रतिगमनादयो दोषाः ।। कथाप्रबन्धं व्याख्यानयति-

[भा.२२३८] दुब्बलपुच्छेगयरे, खमणं कं तं ति मोहभेसज्जं ।
तह वि य वारियवामो, बलियतरं बाहए मोहो ।।

वृ- 'एकतरः' संयतः संयती वा दुर्बलो भवेत् । तत्र संयतं संयती पृच्छति-किमेवं दुर्बलोऽसि? स ब्रूते-क्षपणं करोमि । तत्र संयती प्राह-'किं' किमर्थं 'तत्' क्षपणं ज्येष्ठार्येण क्रियते । संयतः प्राह-'मोहभैषज्यं' मोहचिकित्सनार्थमौषधमिदमासेव्यते तथाप्यसौ मोहो वारितः सन् वामः-प्रतिकूलो वारितवामः 'बलिकतरम्' अतिशयेन मां बाधते ।। संयती प्रतिवक्ति-

[भा.२२३९] मूलतिगिच्छं न कुणह, न हु तण्हा छिज्जए विना तोयं ।
अम्हे वि वेयणाओ, खइया एआ न वि पसंतो ।।

वृ- मूलचिकित्सां यूयं न कुरुथ, नहि तृष्णा 'तोयम्' उदकं विना छिद्यते, अस्माभिरपि 'एताः' एवंविधाः क्षपणप्रभृतिका वेदनाः 'खादिताः' असकृदासेविताः परं तथाप्यसौ मोहो न प्रशान्तः ॥

[भा.२२४०]　　मोहग्गिआहुइनिभाहि ईय वायाहि अहियवायाहिं ।
धंतं पि धइसमत्था, चलंति किमु दुब्बलधिईया ॥

वृ- मोहाग्नेः 'आहुतिनिभाभि' घृतादिप्रक्षेपकल्पाभि 'इति' एताध्भिर्वाग्भिः अधिकम्-अत्यर्थम् अहिते वा-नरकादौ पातयन्तीति अधिकपाता अहितपाता वा ताभि एवंविधाभि ''धंतं पि''त्ति अतिशयेनापि ये धृतिसमर्थास्तेऽपि 'चलन्ति' क्षुभ्यन्ति, किं पुनः 'धृतिदुर्बलाः' तथाविधमान-सावष्टम्भविकलाः ? । एवं संयतीमपि दुर्बलां प्रतीत्येदमेव वक्तव्यम् ॥

गतमेका साहिकेति द्वारम् । अथ सप्रतिमुखानि द्वाराणीति द्वारमाह-

[भा.२२४१]　　सपडिदुवारे उवस्सए, निग्गंथीणं न कप्पई वासो ।
दट्ठूण एक्कमेक्कं, चरित्तभासुंडणा सज्जो ॥

वृ- 'सप्रतिद्वारे' अभिमुखद्वारयुक्ते निर्ग्रन्थीनामुपाश्रये विद्यमाने साधूना न कल्पते वासः । यदि वसन्ति ततस्तत्राभिमुखद्वारयोरुपाश्रययोः 'एकैकम्' अन्योऽन्यं दृष्ट्वा चारित्रभ्रंशना संयतीसंयतयोः 'सद्यः' तत्क्षणादेवोपजायते ॥ किञ्च-

[भा.२२४२]　　घम्मम्मि पवायट्ठा, नितां दट्ठुं परोप्परं दो वि ।
लज्जा विसंति निंति य, संका य निरिक्खणे अहियं ॥

वृ- ग्रीष्मकाले ''धम्मम्मि''त्ति विभक्तिव्यत्ययद् घर्मेणोद्बाध्यमानः संयतः प्रवातार्थं बहिर्निर्गच्छति, संयत्येवं निर्गच्छति । ततो द्वावपि परस्परं दृष्ट्वा लज्जया भूयः प्रविशतः, ततः संयतः प्रविष्ट इति कृत्वा संयती भूयोऽपि निर्गच्छति, एवं संयतोऽपि । तत एवं द्वितीयं तृतीयं वा वारं निर्गच्छतोः प्रविशतोश्च शङ्का भवति-नूनमेष एषा वा मामभिधारयति । एकाग्रया च दृष्ट्या निरीक्षणेऽधिकं शङ्का भवेत् ॥

[भा.२२४३]　　वीसत्थऽवाउडऽन्नोन्नदंसणे होइ लज्जवोच्छेदो ।
ते चेव तत्थ दोसा, आलावुल्लावमादीया ॥

वृ- अभिमुखद्वारप्रयुक्तयोरुपाश्रययोः विश्वस्तौ सन्तौ संयती-संयतौ कदाचिदपावृतौ भवतः । तत एवमन्योन्यदर्शने लज्जाया व्यवच्छेदो भवति । ततश्च तत्रालापोल्लापादयो दोषास्त एव मन्तव्याः ॥

गतं द्वाराणि वा सप्रतिमुखानीति द्वारम् । अथ पार्श्वतो वा मार्गतो वेति द्वारं भावयति-

[भा.२२४४]　　एमेव य एक्कतरे, ठियाण पासम्मि मग्गओ वा वि ।
वइअंतर एगनिवेसणे य दोसा उ पुव्वुत्ता ॥

वृ- एवमेव संयतीप्रतिश्रयस्यैकतरस्मिन् पार्श्वे 'मार्गतो वा' पृष्ठतो वृत्यन्तरे एकस्मिन् निवेशने वा स्थितानां दोषाः 'पूर्वोक्ताः एव' आलाप-संलापादयो मन्तव्याः ॥

अथोच्च-नीचद्वारं भावयति-

[भा.२२४५]　　उच्चे नीए व ठिआ, दट्ठूण परोप्परं दुवग्गा वि ।
संका व सईकरणं, चरित्तभासुंडणा चयई ॥

वृ- उच्चे नीचे वा स्थाने स्थितौ 'द्वावपि वर्गौ' साधु-साध्वीलक्षणौ भवेताम्, तत्र साधुः साध्वी

वा परस्परं दृष्ट्वा 'किमेष मामभिधारयति ?' इति शङ्का वा कुर्यात्, स्मृतिकरणं वा भुक्तभोगिनाम्, चारित्रस्य वा भ्रंशना ब्रह्मव्रतविराधनया भवेत्, ''चयइ''त्ति सर्वथैव वा संयमं त्यजति, अवधावनं कुर्यादित्यर्थः ॥ इदमेवोच्च-नीचपदद्वयं व्याचष्टे-

[भा.२२४६] माले सभावओ वा, उच्चम्मि ठिओ निरिक्खई हेट्ठं ।
बेट्ठो व निवन्नो वा, तत्थ इमं होइ पच्छित्तं ॥

वृ- कदाचित् ते संयताः 'माले' द्वितीयभूमिकादौ स्वभावतो वा उच्चे देवकुलादौ स्थिता भवेयुः, संयत्यस्तु तद्विपरीते नीचे, ततोऽसौ तत्रोर्द्धवस्थित उपविष्टो वा 'निपन्नो वा' त्वग्वर्त्तित इत्यर्थः यदि संयतीमधस्ताद् निरीक्षते, तत्रेदं प्रायश्चित्तं भवति ॥

[भा.२२४७] संतर निरंतरं वा, निरिक्खमाणे सई पकामं वा ।
काल-तवेहि विसिट्ठो, भिन्नो मासो तुयट्टम्मि ॥

वृ- 'सान्तरं नाम' यद् विण्टिकया हस्तादिना वा उच्चो भूत्वा शिरः शरीरं वा उच्चैस्तरं कृत्वा पश्यति । 'निरन्तरं नाम' विण्टिकादिकं विना स्वभावस्थ एव प्रेक्षते । तत्र त्वग्वर्त्तितः सन् निरन्तरं 'सकृद्' एकवारं संयतीं पश्यति भिन्नमासो द्वाभ्यामपि तपः-कालाभ्यां लघुः । त्वग्वर्त्तित एव निरन्तरं 'प्रकामम्' असकृत् प्रेक्षते भिन्नो मासः कालगुरुस्तपोलघुः । अथ स्वभावस्थः प्रेक्षमाणस्तां न पश्यति ततः 'सान्तरं' विण्टिकामन्यद्वा किञ्चिदुच्छीर्षकं कृत्वा सकृत् पश्यति भिन्नो मासस्तपोगुरु काललघुः । सान्तरमेव प्रकामं प्रेक्षते भिन्नो मासो द्वाभ्यामपि तपःकालाभ्यां गुरुकः । एवं त्वग्वर्त्तनं कुर्वाणस्य भणितम् ॥

[भा.२२४८] एसेव गुरु निविट्ठे, ठियम्मि मासो लहू उ भिक्खुस्स ।
एक्केक्क ठाण वुड्ढी, चउगुरुअंतं च आयरिए ॥

वृ- निविष्टो नाम-निषण्णस्तस्यापि प्रेक्षमाणस्य एष एव निरन्तर-सान्तरादिकोऽभिलापो वक्तव्यः, नवरं प्रायश्चित्तं स एव भिन्नमासो गुरुकश्चतुर्ष्वपि स्थानेषु तपः-कालविशेषितस्तथैव कार्य । स्थितो नाम-ऊर्द्धस्थस्तस्याप्येवमेवाभिलापः, नवरं प्रायश्चित्तं लघुमासस्तपः-कालविशेषितः । एवं भिक्षोः प्रायश्चित्तमुक्तम्, वृषभोपाध्यायाचार्याणां यथाक्रममेकैकस्थानवृद्धिः कर्त्तव्या यावदाचार्यस्य चतुर्गुरुकम् । तद्यथा-वृषभस्य गुरुभिन्नमासादारब्धं गुरुमासे, उपाध्यायस्य मासलघुकादारब्धं चतुर्लघुके, आचार्यस्य गुरुमासिकादारब्धं चतुर्गुरुके निष्ठामुपयातीति ॥

एष प्रथम आदेशः । अथ द्वितीयमाह-

[भा.२२४९] दोहि वि रिय सकामं, पकाम दोहिं पि पेक्खई जो उ ।
चउरो य अनुग्धाया, दोहि वि चरिमस्स दोहि गुरु ॥

वृ- ''दोहि वि''त्ति द्वाभ्यामपि नयनाभ्यां यन्निरीक्षते तदरहितम्, रहितं तु यदेकेन लोचनेन निरीक्षते । एतदुभयमपि प्रत्येकं द्विधा-सकामं प्रकामं च । तत्र सकाममेकशः प्रकाममनेकशः । ''दोहिं पि पेक्खई जो उ''त्ति द्वाभ्यामपि रहिता-ऽरहिताभ्यां सकाम-प्रकामाभ्यां वा यः प्रेक्षते तस्य चत्वारो मासा अनुद्घाताः 'द्वाभ्यामपि' तपः-कालाभ्यां विशेषिताः प्रायश्चित्तम् । 'चरमस्य' चतुर्थभङ्गवर्तिनः 'द्वाभ्यामपि' तपः-कालाभ्यां गुरुकाः कर्त्तव्याः । एष निर्युक्तिगाथासमासार्थः ॥ अथास्या एव भाष्यकृद् व्याख्यानमाह-

[भा.२२५०] पायठिओ दोहि नयणेहि पिच्छईरहिय मोत्तु एक्केणं ।
तं पुन सइं सकामं, निरंतरं होइ उ पकामं ॥

वृ- पादाभ्यां भुवि स्थितो द्वाभ्यां नयनाभ्यां यत् प्रेक्षते तदरहितम्, यत् पुनरेकेन नयनेन 'मुक्त्वा' परित्यज्य निरीक्षते तद् रहितम् । 'तत् पुनः' उभयमपि 'सकृद्' एकवारं निरीक्षणं सकामम्, 'निरन्तरम्' अनेकशस्तदेव प्रकामं भवति ॥

[भा.२२५१] अहवण समतलपादो, दोहि वि रहिअं तु अग्गपाएहिं ।
इट्ठालादी विरहं, एक्केक्क सकामग पकामं ॥

वृ- ''अहवण''त्ति अथवा समतलपादो यद् निरीक्षते तद् अरहितम्, यत् पुनरग्रपादाभ्यां द्वाभ्यामपि स्थितो निरीक्षते तद् रहितम् । अथवा यदिष्टाल-लेष्टुकाद्यारूढः पश्यति तद् अरहितम्, तदपरं रहितम् । एतदरहितं रहितं च एकैकं सकामं प्रकामं च मन्तव्यम् ॥

[भा.२२५२] अहवा उच्चावेउं, कर-विंटय-पीढगाइसुं काउं ।
ताइं वा वि पमोत्तुं, रहियं विट्ठो पुन निसिज्जं ॥

वृ- अथवा यदि संयता नीचैःप्रदेशे स्थिताः संयत्यस्तूच्चे ततः शिरः शरीरं वा 'उच्चयित्वा' उच्चैःकृत्य यन्निरीक्षते, यद्वा करे-हस्ते विण्टिकायां पीठकादिषु वा शीर्षं कृत्वा यन्निरीक्षते तद् रहितम्; अथवा यतयः उच्चे स्थिता यतिन्यस्तु नीचे ततः करादिषु पूर्वन्यस्ते शिरसि अत्युच्चत्वा-दनवलोकमानो यत् 'तानि' कर-विण्टिकादीनि 'प्रमुच्य' उत्सार्य पश्यति तद् रहितम् । एतत् त्वग्वर्त्तनं कुर्वतो रहितमुक्तम् । ''विट्ठो पुन निसिज्जं'' ति उपविष्टः पुनर्निषद्यां मुक्त्वा यत् पश्यति तद् रहितम् । तद्विपरीतं त्रिष्वपि स्थानेष्वरहितं द्रष्टव्यम् ॥

[भा.२२५३] दिट्ठीसंबंधो वा, दोण्ह वि रहियं तु अन्नतरगत्ते ।
अप्पो दोसो रहिएण गुरुकतरो उभयसंबंधे ॥

वृ-अथवा 'द्वयोरपि' संयत-संयत्योर्यो दृष्टेः दृष्टेश्च सम्बन्धस्तदरहितम् । रहितं पुनरन्यतरगात्रे निरीक्षणम् । अत्र चाल्पतरो दोषः 'रहिते' एकतरदृष्टिसम्बन्धे, अरहिते तूभयदृष्टिसम्बन्धे गुरुकतरो दोषः ॥ अत्र प्रायश्चित्तमाह-

[भा.२२५४] दोहि वि अरहिय रहिए, एक्केक्क सकामए पकामे य ।
गुरुगा दोहि वि लहुगा, लहु गुरुग तवेण दोहिं पि ॥

वृ-द्वाभ्यामपि नयनाभ्यां निरीक्षणमित्यादिकं यदनेकविधमरहितं भणितं तत्र सकामे चत्वारो गुरवः 'द्वाभ्यामपि' तपः-कालाभ्यां लघवः, तत्रैव प्रकामे चत्वारो गुरवः तपोलघुकाः । रहिते तु सकामे चतुर्गुरुकाः तपसा गुरवः, तत्रैव प्रकामे चतुर्गुरवो द्वाभ्यामपि गुरवः । यत्तु दृष्टिसम्बन्ध-रूपमरहितम् अन्यतरगात्रनिरीक्षणरूपं तु रहितं व्याख्यातं तत्रैवं प्रायश्चित्तयोजना-रहिते सकामे चतुर्गुरु उभयलघुकम्, प्रकामे चतुर्गुरु कालगुरुकम्, अरहिते सकामे चतुर्गुरु तपोगुरुकम्, अरहिते प्रकामे चतुर्गुरु उभयगुरुकम् ॥

[भा.२२५५] एक्केक्काउ पयाओ, साहीमाईसु ठायमाणाणं ।
निक्कारणट्ठियाणं, सव्वत्थ वि अविहिए दोसा ॥

वृ- अरहित-रहित-सकाम-प्रकामनिरीक्षणानामेकैकस्मात् पदात् साहिकायाम् आदिशब्दात्

सप्रतिमुखद्वारेषु पुरतो वा मार्गतो वा उच्चे वा नीचे वा सर्वत्रापि निष्कारणे तिष्ठतां कारणे वा 'अविधिना' अयतनया स्थितानाममी दोषा भवेयुः ॥

[भा.२२५६] दिट्ठा अवाउडा हं, भयलज्जा थद्ध होज्ज खित्ता वा ।
पडिगमणादी व करे, निच्छक्काओ व आउभया ॥

वृ- काचित् संयती विचारभूमी प्राप्ता संयतमागच्छन्तं दृष्ट्वा चिन्तयेत्-अहो ! अहं ज्येष्ठ-र्येणापावृता दृष्टा, ततः सा भयेन लज्जया वा स्तब्धा क्षिप्तचित्ता वा भवेत् । यद्वा काश्चिदपावृता दृष्टाः सत्यः 'कथममीषां पुरतः स्थास्यामः ?' इति कृत्वा प्रतिगमनादीनि कुर्युः । अथवा 'दृष्टं यद् द्रष्टव्यम्' इत्यभिसन्धाय 'निच्छक्काः' निर्लज्जाः काश्चिद् भवेयुः । ततश्चात्मसमुत्थास्तदुभयसमुत्थाश्च दोषा भवन्ति ॥ यदि वा-

[भा.२२५७] तासिं कक्खंतर-गुज्झदेस-कुच-उदर-ऊरुमादीए ।
निग्गहियइंदियस्स वि, दट्ठुं मोहो समुज्जलति ॥

वृ- 'तासां' संयतीनां कक्षान्तर-गुह्यदेश-कुचोदरोरुप्रभृतीन् अवयवान् दृष्ट्वा निगृहीतेन्द्रियस्यापि मोहः समुज्ज्वलति किं पुनरितरस्य ? इति ॥ ततश्चामी दश कामवेगा उत्पद्यन्ते-

[भा.२२५८]चिंता य १ दट्ठुमिच्छइ २, दीहं ३, ससइ ३ तह जरो ४ दाहो ५ ।
भत्तअरोयग ६ मुच्छा ७, उम्मत्तो ८ न याणई ९ मरणं १० ॥

वृ- 'चिन्ता नाम' शोचन्नास्ते १ द्रष्टुमिच्छति २ दीर्घं निश्वासिति ३ तथा ज्वरो ४ दाहः ५ भक्तस्यारोचकः-अरुचि ६ मूर्च्छा ७ उन्मत्तः सञ्जायते ८ न जानाति किञ्चदपि ९ मरणमुपजायते १० ॥ एनामेव निर्युक्तिगाथां विवृणोति-

[भा.२२५९] पढमे सोयइ वेगे, दट्ठु तं इच्छई बिइयवेगे ।
नीससइ तइयवेगे, आरुहइ जरो चउत्थम्मि ।

[भा.२२६०] डज्झइ पंचमवेगे, छट्ठे भत्तं न रोयए वेगे ।
सत्तमगम्मि य मुच्छा, अट्ठमए होउ उम्मत्तो ॥

[भा.२२६१] नवमे न याणइ किंची, दसमे पाणेहि मुच्चई मनूसो ।
एएसिं पच्छित्तं, वोच्छामि अहानुपुव्वीए ॥

वृ- प्रथमे शोचति वेगे-हा ! कथं तया सह सम्पत्तिर्भविष्यति ? इति विचिन्तयतीत्यर्थः १ । द्रष्टुं तां पूर्वदृष्टां पुनरपीच्छति द्वितीयवेगे २ । निश्वसिति तृतीयवेगे दीर्घान्निश्वासान् मुञ्चति ३ । आरोहति ज्वरश्चतुर्थे ४ । दह्यतेऽङ्गं पञ्चमवेगे ५ । षष्ठे भक्तं न रोचते वेगे ६ । सप्तमे वेगे मूर्च्छा ७ । अष्टमे उन्मत्तो भवति ८ । नवमे न जानाति किञ्चिदपि, निश्चेष्टो भवतीत्यर्थः ९ । दशमे वेगे प्राणैर्मुच्यते मनुष्यः १० । एतेषां दशानामपि वेगानां प्रायश्चित्तं यथाऽऽनुपूर्व्या 'वक्ष्ये' अभिधास्ये॥ तदेवाह-

[भा.२२६२] मासो लहुओ गुरुओ, चउरो मासा हवंति लहु-गुरुगा ।
छम्मासा लहु-गुरुगा, छेदो मूलं तह दुगं च ॥

प्रथमे वेगे लघुको मासः । द्वितीये गुरुको मासः । तृतीये चत्वारो मासा लघुकाः । चतुर्थे चत्वारो मासा गुरुकाः । पञ्चमे षण्मासा लघवः । षष्ठे षण्मासा गुरवः । सप्तमे छेदः । अष्टमे

मूलम् । नवमेऽनवस्थाप्यम् । दशमे षण्मासा लघवः । षष्ठे षण्मासा गुरवः । सप्तमे च्छेदः । अष्टमे मूलम् । नवमेऽनवस्थाप्यम् । दशमे पाराञ्चिकम् ॥

[भा.२२६३] एक्कम्मि दोसु तीसु व, ओहाविंतेसु तत्थ आयरिओ ।
मूलं अणवट्ठप्पो, पावइ पारंचियं ठाणं ॥

वृ- अथ मोहोदयेनैकः 'अवधावति' उत्प्रव्रजति तत आचार्यो मूलं प्राप्नोति, द्वयोरवधावतो-रनवस्थाप्यो भवति, त्रिष्ववधावमानेषु पाराञ्चिकं स्थानं प्राप्नोति ॥

गतमुच्चनीचद्वारम् । अथ धर्मकथाद्वारमाह-

[भा.२२६४] धम्मकहासुणणाए, अनुरागो भिक्खसंपयाणे य ।
संगारे पडिसुणणा, मोक्ख रहे चेव खंडीए ॥

वृ- धर्मकथायाः श्रवणेन संयत्या अनुरागः सञ्जायते । ततः स्निग्ध-मधुरभैक्षस्य सम्प्रदानं संयताय कारयति । ततः 'सङ्गारस्य' सङ्केतस्य प्रतिश्रवणं करोति । कः पुनः सङ्केतः ? इत्याह- "मोक्ख रहे चेव" त्ति अमुष्मिन् दिवसे रथो हिण्डिष्यते तत्रास्माकं रक्ष्यमाणानां मोक्षो भविष्यति। "खंडीए" त्ति खण्डी-छिण्डिका तस्या वा द्वारमुद्घाटं रात्रौ भविता, यद्वा दीर्घस्यालाक्षणिकत्वात् खण्डितं-श्रामण्यस्य खण्डना तयोः प्रतिसेवमानयोर्जायते । एष निर्युक्तिगाथासमासार्थः ॥

अथैनामेव विवरीषुराह-

[भा.२२६५] असुभेन अहाभावेन वा वि रत्तिं निसंतपडिसंते ।
वत्तेइ किन्नरो इव, कोई पुच्छा पभायम्मि ॥

वृ- कोऽपि साधुरशुभेन वा भावेन यथाभावेन वा रात्रौ 'निशान्तप्रतिश्रान्ते' अत्यन्तभ्रमणादुपरते यद्वा निशान्तेषु-स्वेषु स्वेषु गृहेषु विश्रान्ते जने किन्नर इव मधुरया गिरा धर्मकथां काञ्चित् परिवर्त्तयति तद् आकर्ण्य संयत्यः प्रभाते पृच्छन्ति ॥ यथा-

[भा.२२६६] कतरो सो जेन निसिं, कन्ना ने पूरिया व अमयस्स ।
सो मि अहं अज्जाओ !, आसि पुरा सुस्सरो किं वा ॥

वृ- कतरोऽसौ साधुर्येन 'निशि' रात्रौ कर्णा "ने" अस्माकममृतस्य पूरिता इव कृताः ? । स प्राह-सोऽहमस्मि आर्या ! 'पुरा' पूर्वमहं सुस्वर आसं तदपेक्षया किं वा सौस्वर्यमिदानीं मम विद्यते ? ॥ यतः-

[भा.२२६७] रुक्खासणेण भग्गो, कंठो मे उच्चसद्दपढओ य ।
संथुय कुलम्मि नेहं, दावेमि कए पुनो पुच्छा ॥

वृ- रूक्षाशनेनोच्चशब्देन पठतश्च मे कण्ठो भग्नस्ततो नेदानीं तथा सुस्वर इति । ततस्तदीयसौस्वर्येणातीवानुरञ्जिता काऽपि संयती प्राह-'संस्तुते' भाविते कुले 'स्नेहं' घृतादिकमहं दापयिष्यामि येन भवतां स्वरपाटवमुपजायते । ततस्तथाकृते सति 'पुनः' भूयोऽपि तं दुर्बलं दृष्ट्वा पृच्छा कृता, यथा-ज्येष्ठार्य ! किमेवं दुर्बलो दृश्यसे ? ॥

एवं च कुर्वतोस्तयोः किं भवति ? इत्याह-

[भा.२२६८] संदंसनेन पीई, पीईउ रई रईउ वीसंभो ।
वीसंभाओ पणओ, पंचविहं वड्ढए पिम्मं ॥

वृ- सन्दर्शनेनोभयोरपि प्रथमतः प्रीतिरुपजायते। ततः प्रीत्या 'रतिं' चित्तविश्रान्ति। रतेश्च 'विश्रम्भः' विश्वासः। विश्वासाच्च मिथः कथादि कुर्वतोः 'प्रणयः' अशुभो रागो जायते। एवं 'पञ्चविधं' पञ्चभि प्रकारैः प्रेम वर्द्धते॥ ततश्च स तया दुर्बल इति पृष्टो ब्रूयात्-

[भा.२२६९] जह जह करेस नेहं, तह तह नेहो मे वड्ढइ तुमम्मि।
तेन नडिओ मि बलियं, जं पच्छसि दुब्बलतरो त्ति॥

वृ- यथा यथा 'करोषि' सम्पादयसि 'स्नेहं' घृतं तथा तथा मम त्वयि स्नेहो वर्द्धते। 'तेन च' स्नेहेन 'नटितः' विडम्बितोऽस्म्यहम्। यत् त्वं पृच्छसि दुर्बलतर इति तदेतेन हेतुना दुर्बलोऽहम्॥ एवमुक्ते सा ब्रूयात्-

[भा.२२७०] अमुगदिने मुक्ख रहो, होहिइ दारं व वोज्झिहिइ रत्तिं।
तइया ने पूरिस्सइ, उभयस्स वि इच्छियं एयं॥

वृ-अमुष्मिन् दिने 'रथः' रथयात्रा भविता तस्यां साधु-साध्वीजनेषु गतेष्वस्माकं रक्ष्यमाणानां मोक्षो भविष्यति, द्वारं वा छिण्डिकाया अमुकस्यां रात्री 'वक्ष्यते' वहमानकं भविष्यति तदा 'ने' आवयोरुभयस्यापि यथेप्सितमेतत् पूरिष्यते॥ एवं सङ्केतं प्रतिश्रुत्य प्रतिसेवनां कुर्वतोस्तयोः श्रामण्यस्य खण्डनं भवति, ततश्च 'भग्नव्रतोऽहम्' इति कृत्वा यद्यवधावति ततः-

[भा.२२७१] एगम्मि दोसु तीसु व, ओहावंतेसु तत्थ आयरिओ।
मूलं अणवट्ठप्पो, पावइ पारंचियं ठाणं॥

वृ-एकस्मिन्नवधावति मूलम्, द्वयोरनवस्थाप्यम्, त्रिष्ववधावमानेषु पारञ्चिकमाचार्य प्राप्नोति, कस्मात् तादृशे क्षेत्रे स्थितः? इति कृत्वा। द्वितीयपदे एतेष्वपि स्थानेषु तिष्ठेत्॥

कथम्? इत्याह-

[भा.२२७२] अद्धाणनिग्गयाई, तिक्खुत्तो मग्गिऊण पडिलोमं।
गीयत्था जयणाए, वसंति तो अभिदुवाराए॥

वृ-अध्वनो निर्गताः आदिशब्दादशिवादिषु वर्त्तमानाः सहसैवैकवगडाकमनेकद्वारं संयतीक्षेत्रं प्राप्ताः। ततस्तत्र 'त्रिकृत्वः' त्रीन् वारान् निरुपहतां वसतिं मार्गयित्वा यदि न प्राप्नुवन्ति ततः 'प्रतिलोमं' प्रतीपक्रमेण गीतार्था यतनया 'अभिद्वारे' अनेकद्वारे संयतीक्षेत्रे वसन्ति। कः पुनः प्रतीपक्रमः? इति चेद् उच्यते-यानि पूर्वमेकसाहिकादीनि धर्मकथापर्यन्तानि द्वाराण्युक्तानि तेषु प्रथमतो यस्यां धर्मकथाशब्दः साध्वीभि श्रूयते तस्यां वसतौ वस्तव्यम्॥ तत्र चेयं यतना-

[भा.२२७३] सिंगारवज्ज बोले, अह एगो विज्जपाढऽनुच्चं च।
सड्ढादीनिब्बंधे, कहिए वि न ते परिकहिंति॥

वृ- धर्मकथां परिवर्तयन्तः शृङ्गाररसवर्जं 'बोलेन च' वृन्देन परिवर्त्तयन्ति यथैकस्य कस्यापि व्यक्तः स्वरो नोपलक्ष्यते। अथान्येन सह गुणयतस्तस्य न सञ्चरति तत एकोऽपि वैद्यपाठेन गुणयति, स्वरवर्जितमिति भावः, तदपि 'अनुच्चं' नोच्चैस्तरेण शब्देन। अथ 'सुस्वरोऽयम्' इति ज्ञात्वा श्राद्धा आदिशब्दाद् यथाभद्रकादयो वा निर्बन्धं कुर्यु ततो यथास्वरेण धर्मं कथयति। ततः कथितेऽपि मधुरस्वरेण धर्मे प्रभाते संयतीनां पृच्छन्तीनां न 'ते' साधवः परिकथयन्ति, यथा-अमुकेनेत्थं धर्म कथित इति। ईदृश्या वसतेरलाभे उच्चे वा नीचे वा स्थातव्यम्॥

तत्रेयं यतना-

[भा.२२७४] खडओ व चिलिमिली वा, तत्तो थेरा य उच्चनीए वा ।
पासे ततो न उभयं, मत्तग जयणाऽऽउल ससद्दा ॥

वृ- प्रविशन्तो निर्गच्छन्तो वा यस्मिन् पार्श्वे परस्परं पश्यन्ति ततः कटकः वंशादिमयो घनो दीयते । अथ कटकोन प्राप्यते तदा चिलिमिली वस्त्रमयी दातव्या, स्थविराश्च ततस्तस्मिन् पार्श्वे तिष्ठन्ति, संयतीनां तु क्षुल्लिकाः । एवमुच्च-नीचे यतना । अथोच्च-नीचमपि न लभ्यते ततो यत्र पार्श्वतो वा मार्गतो वा प्रतिश्रयस्तत्र तिष्ठतां यतना-कायिक्यादिव्युत्सर्जनार्थं निर्गच्छन्तो यत्र परस्परं पश्येयुः 'ततः' तस्यां दिशि 'नोभयं' न संज्ञां न वा कायिकीं व्युत्सृजन्ति । तादृशस्य स्थण्डिलस्याप्राप्तौ मात्रकेषु यतन्ते, अथवा आकुलाः सशब्दा वा तत्र व्रजन्ति, तदभावे सप्रतिमुखद्वारे तिष्ठन्ति ॥ तत्र चेयं यतना-

[भा.२२७५]पिहदारकरण अभिमुह, चिलिमिलि वेला ससद्द बहु निंति ।
साहीए अन्नदिसिं, निंती न य काइयं तत्तो ॥

वृ- यत्र द्वाराणि परस्परमभिमुखानि तत्रान्यस्यां दिशि पृथग् द्वारं कुर्वन्ति । अथ न लभ्यतेऽन्यस्यां दिशि द्वारं कर्तुं ततो द्वारे चिलिमिली नित्यबद्धा स्थापनीया कटको वा अपान्तराले दातव्यः, कायिक्याः संज्ञायाश्च वेलां परस्परं स्थापयित्वा असदृशवेलायां निर्गच्छन्ति, 'सशब्दाश्च' काशितादिशब्दं स्वागमनसूचकं कुर्वन्तो बहवः 'निर्यन्ति' निर्गच्छन्ति । यत्रैका साहिका तत्रान्यस्यां दिशि यस्य द्वारं तत्र प्रतिश्रये तिष्ठन्ति । यतश्च संयतीनां प्रतिश्रयस्ततः कायिक्या न निर्गच्छन्ति, तासां वा कायिकीभूमिं न व्रजन्ति । एवं संज्ञाभूम्यामपि द्रष्टव्यम् ॥ कियद्वाऽत्र भणिष्यते ? -

[भा.२२७६] जत्थऽप्पतरा दोसा, जत्थ य जयणं तरंति काउं जे ।
तत्थ वसंति जयंता, अनुलोमं किं पि पडिलोमं ॥

वृ- यत्रोपाश्रयेऽल्पतराः पूर्वोक्ता दोषा भवन्ति, यत्र च 'यतनां' यथोक्तां कर्तुं 'तरन्ति' शक्नुवन्ति, "जे" इति पादपूरणे, तत्रानुलोमं वा प्रतिलोमं वा किमप्येकसाहिकादिकं स्थानं प्रतीत्य यथोक्तनीत्या यतमाना वसन्ति, नात्र कोऽपि प्रतिनियमः किन्तु गीतार्थेनाल्पबहुत्ववेदिना भवितव्यमिति भावः ॥ कथं पुनरल्पतरा दोषा भवन्ति ? इति उच्यते-

[भा.२२७७] आय-समणीण नाउं, किढि कप्पट्ठी समाणयं वज्जे ।
बहुपाडिवेसियजनं, च खमयरं एरिसे होइ ॥

वृ- आत्मनः श्रमणीनां च स्वभावं दृढधर्मत्वादिकं ज्ञात्वा तथा यतितव्यम् । "किढि कप्पट्ठि" त्ति स्थविरश्रमण्यः क्षुल्लकाश्चोभयपार्श्वतः कर्त्तव्याः, वयसा समानां च संयतीं सन्दर्शनादौ दूरतोवर्जयेत् । यच्च गृहं बहुप्रातिवेशिकजनमीदृशे प्रतिश्रयेऽवस्थानं 'क्षमतरम्' अतिशयेन युक्तं भवति, विजने तु विश्वस्ततया बहवो दोषा भवेयुरिति ॥ गतो द्वितीयभङ्गः ।

अथ तृतीयभङ्गमाह-

[भा.२२७८] पउमसर वियरगो वा, वाघातो तम्मि अभिनिवगडाए ।
तम्मि वि सो चेव गमो, नवरं पुन देउले मेलो ॥

वृ- तृतीयभङ्गो नाम अनेकवगडाकमेकनिष्क्रमणप्रवेशं च ग्रामादि, तत्र च 'अभिनिवगडाके'

अनेकवगडे एकद्वारे च क्षेत्रे पद्मसरो वा 'विदरको वा' गर्त्ता 'व्याघातः' व्याघातकारणं भवेद् येनानेके निष्क्रमण-प्रवेशा न भवन्ति तस्मिन्नपि स एव 'गमः' प्रकारः सर्वोऽपि ज्ञातव्यः । 'नवरं' केवलं पुनर्देवकुले 'मीलकः' दृष्ट्यादिभिः कारणैः साधु-साध्वीनां सङ्गमो भवेत् ॥

कथम् ? इत्यत आह-

[भा.२२७९] अंतो वियार असई, अन्नाण हविज्ज तइयभंगम्मि ।
संकिट्ठगवीयारे, व होज्ज दोसा इमं नायं ॥

वृ- अनेकवगडाके एकनिष्क्रमण-प्रवेशे च ग्रामादौ स्थितेषु साधु-साध्वीजनेषु आर्यिकाकाणामन्तः 'तृतीयभङ्गे' आपातासंलोकाख्ये विचारभूमेरसत्ता भवेत् ततो बहिर्निर्गच्छन्तीनां संक्लिष्टविचारभूमेर्दोषा भवेयुः । संक्लिष्टविचारभूमी नाम एकद्वारतया अन्या संज्ञाभूमिर्न विद्यते अतः संयता अपि तत्रैवायान्ति, आसन्ने वा परस्परं संज्ञाभूमी, ततश्च निर्गमने प्रवेशे वा देवकुले मेलको भवेत् । इदं चात्र 'ज्ञातं' दृष्टान्त उच्यते ॥

[भा.२२८०] वासस्स य आगमनं, महिला कुड नंतगे व रत्तट्ठी ।
देउलकोणे य तहासंपत्ती मेलणं होज्जा ॥

वृ- कस्याश्चिद् महेलायाः कुसुम्भरक्तवस्त्रयुगलनिवसनायाः प्रथमप्रावृषि घटं गृहीत्वा जलाहरणार्थं निर्गतायाः 'वर्षस्य' वृष्टेरागमनम् । ततोऽसौ महेला 'रक्तार्थिनी' रञ्जनं रक्तं कुसुम्भराग इत्यर्थः तदर्थिनी 'मा वर्षोदकेन पतता कुसुम्भरागो विलीयताम्' इति कृत्वा 'कुटे' घटे 'नंतके' वस्त्रे द्वे अपि प्रक्षिप्य स्वयमपावृतीभूय क्वापि देवकुले प्रविष्टा । तस्य च कोणके यावदसौ प्रविशति तावत् तत्र कश्चिदगारः पूर्वप्रविष्ट आसीत् तेन सा अपावृता दृष्टा, जातश्च तस्य मोहोदयः, ततस्तेन सा युक्ता, दृष्टं च तदन्यैः पुरुषैः । एवं तथासम्पत्त्या तथाविधवर्षपतनादिसमायोगेनैकस्या एव विचारभूमेः प्रतिनिवृत्तयोः संयती-संयतयोरेकत्र देवकुलादौ वर्षार्द्रवस्त्राणि परित्यक्तवतोर्मीलनं भवेदिति ॥ अथ तस्यागारस्य किं संवृत्तम् ? इत्याह-

[भा.२२८१] गहिओ अ सो वराओ, बद्धो अवओडओ दवदवस्स ।
संपाविओ रायकुलं, उप्पत्ती चेव कज्जस्स ॥

वृ- गृहीतश्च स वराको राजपुरुषैः, बद्धश्च 'अवकोटकः' अधोनीतकृकाटिकः पश्चान्मुखीकृत-बाहुयुगलः, "दवदवस्स"त्ति शीघ्रं सम्प्रापितश्च राजकुलमयम्, तत्र च प्रस्तुतकार्यस्योत्पत्ति कारणिकैः पृष्टा, तेन चागारेण यथावस्थितं सर्वमपि तत्पुरतो विज्ञप्तम् ॥ ततश्च-

[भा.२२८२] जाणंता वि य इत्थिं, दोसवई तीए नाइवग्गस्स ।
पच्चयहेउं सचिवा, करेंति आसेन दिट्ठंतं ॥

वृ- 'नहि महत्यपि वृष्ट्याद्युपद्रवे स्त्रिया निरावरणत्वं शिष्टानामनुमतम्' इति कृत्वा स्त्रियं दोषवतीं जानन्तोऽपि तस्याः सम्बन्धी यो ज्ञातिवर्ग-स्वजनसमुदायस्तस्य प्रत्ययहेतोः 'सचिवाः' कारणिका अश्वेन दृष्टान्तं कुर्वन्ति ॥ तमेवाह-

[भा.२२८३] वम्मिय कवइय वलवा, अंगनमज्झे तहेव आसो य ।
वलवाए, अयंगुननं, कज्जस्स य छेदनं भणियं ॥

वृ- वर्म-लघुस्तनुत्राणविशेषः, तदस्याः सञ्जातमिति वर्मिता, एवं कवचिताऽपि, नवरं

कवचंमहाँस्तनुत्राणविशेषः, एवंविधा यथा काचिद् वडवा कस्यचिद् नृपत्यादेरङ्गणमध्ये तिष्ठति, अश्वश्च तथैव, ततस्तां दृष्ट्वा प्रधावितोऽपि वर्मित-कवचितां तां न प्रतिसेवितुं शक्नोति । यदा तु तस्या वडवाया अपावरणं-वर्मादिरपनयनं क्रियते तदा सुखेनैव प्रतिसेविष्यत इति । अत इयमेवापराधिनीति तैः कारणिकैः 'कार्यस्य' व्यवहारस्य 'छेदनं' परिच्छेदकारि वचो भणितमिति ॥

[भा.२२८४] एवं खु लोइयाणं, महिला अवराहि न पुन सो पुरिसो ।
इह पुन दोण्ह वि दोसो, सविसेसो संजए होइ ॥

वृ- 'एवम्' अमुना प्रकारेण 'खुः' अवधारणे लौकिकानां महिला अपराधिनी संवृत्ता न पुनरसौ पुरुषः । 'इह पुनः' अस्माकं लोकोत्तरे व्यवस्थितानां 'द्वयोरपि' संयती-संयतयोर्दोषः, अपि च 'सविशेषः' समधिको दोषः संयते भवति ॥ कुतः ? इति चेद् उच्यते-

[भा.२२८५] पुरिसुत्तरिओ धम्मो, पुरिसे य थिई ससत्तया चेव ।
पेलव परज्झ इत्थी, फुंफुग-पेसीए दिट्ठंतो ॥

वृ- "पुरुषोत्तरः पुरुषप्रधानो यतः पारमेश्वरो धर्म, पुरुषे च 'धृति' मानसस्वास्थ्यलक्षणा 'ससत्त्वता च' सत्त्वसम्पन्नता भवति, अतस्तस्य प्रतिसेवमानस्य सविशेषो दोषः । स्त्री तु 'पेलवा' निसत्त्वा ''परज्झ''त्ति परवशा च । अत्र च फुम्फुकेन पेश्या च दृष्टान्तः-यथा फुम्फुकः-करीषाग्नि-श्चालितः सन्नुद्दीप्यते एवं स्त्रीवेदोऽपि, यथा च पेशी सर्वस्याप्यभिलषणीया एवमियमपि। अतो न तस्याः समधिको दोष इति ॥ आह यदि संयतीनामन्तस्तृतीयभङ्गे विचारभूमिर्भवेत् ततः किं न वर्त्तते स्थातुम् ? उच्यते-

[भा.२२८६] जइ वि य होज्ज वियारो, अंतो अज्जाण तइयभंगम्मि ।
तत्थ वि विकिंचणादीविग्गनाणं तु ते दोसा ॥

वृ- यद्यप्यार्याणामन्तः 'तृतीयभङ्गे' आपातासंलोकलक्षणे विचारो भवेत तथापि विवेचनाउद्धरितभक्त-पानादिपरिष्ठापनिका तत्प्रभृतिषु कार्येषु विनिर्गतानां साधु-साध्वीनां परस्परमिलितानामेकद्वारे क्षेत्रे 'त एव' पूर्वोक्ता दोषा भवेयुः, अतस्तत्रापि न वर्त्तते स्थातुम् ॥

उपसंहरन्नाह-

[भा.२२८७] एते तिन्नि वि भंगा, पढमे सुत्तम्मि जे समक्खाया ।
जो पुन चरिमो भंगो, सो बिइए होइ सुत्तम्मि ॥

वृ- एका वगडा एकं द्वारम् १ एका वगडा अनेकानि द्वाराणि २ अनेका वगडा एकं द्वारम् ३ एते त्रयोऽपि भङ्गा ये समाख्यातास्ते प्रथमे वगडासूत्रे प्रत्येतव्याः । तच्च प्रागेव व्याख्यातम् । यः पुनः 'चरमो भङ्गः' सअनेकावगडा अनेकानि द्वाराणीति लक्षणः स द्वितीये वगडासूत्रे द्रष्टव्यः ॥ तच्चेदम्-

मू. (११) *से गामंसि वा जावरायहाणिंसि वा अभिनिव्वगडाए अभिनिदुवाराए अभिनिक्खमण-प्पवेसाए कप्पइ निग्गंथाण य निग्गंथीण य एगयओ वत्थए ॥*

वृ- अथ ग्रामे वा यावद् राजधान्यां वा 'अभिनिवगडाके' निपातानामनेकार्थत्वाद् अभि इति-अनेका नि इति-नियता वगडाः-परिक्षेपाः यत्र, यद्वा 'अभि-नि' शब्दौ पृथगर्थद्योतकौ द्रष्टव्य, ततश्च पृथग्-अनेका वगडा यत्र तदभिनिवगडाकं तत्र । एवमभिनिद्वारकेऽभिनिष्क्रमण-प्रवेशके

च कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां च एकतो वस्तुमिति सूत्रार्थः ॥

[भा.२२८८] एयद्दोसविमुक्के, विच्छिन्न वियारथंडिलविसुद्धे।
अभिनिव्वगड-दुवारे, वसंति जयणाए गीयत्था ॥

वृ- एतैः प्रथमसूत्रोक्तैर्दोषैर्विमुक्ते विस्तीर्णे महाक्षेत्रे 'विचार-स्तण्डिलविशुद्धे' यत्र भिक्षाचर्या संज्ञाभूमिश्च परस्परमपश्यतां भवति तत्रैवंविधेऽभिनिवगडाकेऽभिनिद्वारे च संयतीक्षेत्रे यतनया गीतार्था वसन्ति ॥ कथम् ? इत्याह-

[भा.२२८९] पिहगोअर-उच्चारा, जे अब्भासे वि होंति उ निओया।
वीसुं वीसुं वुत्तो, वासो तत्थोभयस्सावि ॥

वृ- ये 'अभ्यासे' मूलक्षेत्रप्रत्यासत्तौ 'नियोगाः' ग्रामा भवन्ति तेऽपि साधु-साध्वीनां पृथग्गोचरचर्याकाः पृथगुच्चारभूमिकाश्च परस्परं भवन्ति, आस्तां मूलग्राम इत्यपिशब्दार्थः । 'उभयस्यापि च' संयतानां संयतीनां च तत्र 'विष्वग् विष्वग्' पृथक्पृथगुपाश्रये वासः प्रोक्त इति ॥ अत्र नोदकः प्रेरयन्नाह-

[भा.२२९०] तं नत्थि गाम-नगरं, जत्थियरीओ न संति इयरे वा।
पुनरवि मणामु रन्ने, वस्सउ जइ मेलणे दोसा ॥

वृ- ग्रामाश्च नगराणि चेति ग्राम-नगरम्, तद् नास्ति ग्राम-नगरं यत्र 'इतराः' पार्श्वस्थादिसंयत्यः 'इतरेवा' पार्श्वस्थादयो न सन्ति, ततः पुनरपि वयं भणामः, यथा-अरण्ये 'उष्यतां' वासः क्रियतां यदि मीलनायामेवंविधा दोषाः ॥ सूरिराह-

[भा.२२९१] दिट्ठंतो पुरिसपुरे, मुरुंडदूतेन होइ कायव्वो।
जह तस्स ते असउणा, तह तस्सितरा मुनेयव्वा ॥

वृ- दृष्टान्तोऽत्र पुरुषपुरे रक्तपटदर्शनाकीर्णे मुरुण्डदूतेन भवति कर्त्तव्यः । यथा 'तस्य' मुरुण्डदूतस्य 'ते' रक्तपटा अशकुना न भवन्ति, तथा 'तस्य' साधोः 'इतराः' पार्श्वस्थ्यादयो मुणितव्याः, ता दोषकारिण्यो न भवन्तीत्यर्थः ॥ इदमेव भावयति-

[भा.२२९२] पाडलि मुरुंडदूते, पुरिसपुरे सचिवमेलणाऽऽवासो।
भिक्खू असउण तइए, दिनम्मि रन्नो सचिवपुच्छा ॥

वृ- पाटलिपुत्रे नगरे मुरुण्डो नाम राजा । तदीयदूतस्य पुरुषपुरे नगरे गमनम् । तत्र सचिवेन सह मीलनम् । तेन च तस्य आवासो दापितः । ततो राजानं द्रष्टुमागच्छतः 'भिक्षवः' रक्तपटा अशकुना भवन्ति इति कृत्वा स दूतो न राजभवनं प्रविशति । ततस्तृतीये दिने राज्ञः सचिवपार्श्वे पृच्छा-किमिति दूतो नाद्यापि प्रविशति ? ॥ ततश्च-

[भा.२२९३] निग्गमनं च अमच्चे, सब्भावाऽऽइक्खिए भणइ दूयं।
अंतो बहिं च रच्छा, नऽरहिंति इहं पवेसणया ॥

वृ- अमात्यस्य राजभवनान्निर्गमनम् । ततो दूतस्यावासे गत्वा सचिवो मिलितः । पृष्टश्च तेन दूतः-किं न प्रविशसि राजभवनम् ? । स प्राह-अहं प्रथमे दिवसे प्रस्थितः परं तच्चन्निकान् दृष्ट्वा प्रतिनिवृत्तः 'अपशकुना एते' इति कृत्वा, ततो द्वितीये तृतीयेऽपि दिवसे प्रस्थितः तत्रापि तथैव

प्रतिनिवृत्तः । एवं सद्भावे 'आख्याते' कथिते सति दूतममात्यो भणति-एते इह रथ्याया अन्तर्बहिर्वा नापशकुनत्वमर्हन्ति । ततः प्रवेशना दूतस्य राजभवने कृता । एवमस्माकमपि पार्श्वस्थादयस्तदीय-संयत्यश्च रथ्यादौ दृश्यमाना न दोषकारिण्यो भवन्ति ॥ अपि च-

[भा.२२९४] जह चेव अगारीणं, विपक्खबुद्धी जईसु पुव्वुत्ता ।
तह चेव य इयरीणं, विवक्खबुद्धी सुविहिएसु ॥

वृ- यथैव 'अगारीणाम्' अविरतिकानां पूर्वम् "आगंतुगदव्वविभूसियं" इत्यादिना यतिषु विपक्षबुद्धिरुक्ता तथैव 'इतरासां' पार्श्वस्थादिसंयतीनां हस्त-पादधावनादिना विभूषितविग्रहाणां सुविहितेषु स्नानादिविभूषारहितेषु विपक्षबुद्धिर्भवतीति द्रष्टव्यम् ॥

मू. (१२) *नो कप्पइ निग्गंथीणं आवणगिहंसि वा रच्छामुहंसि वा सिंघाडगंसि वा चउक्कंसि वा चच्चरंसि वा अंतरावणंसि वा वत्थए ॥*

वृ- अथास्य सूत्रस्य सम्बन्धमाह-

[भा.२२९५] एयारिसखेत्तेसुं, निग्गंथीणं तु संवसंतीणं ।
केरिसयम्मि न कप्पइ, वसिऊण उवस्सए जोगो ॥

वृ- एतादृशेषु-पृथग्वगडाकेषु पृथग्द्वारेषु च क्षेत्रेषु निर्ग्रन्थीनां संवसन्तीनां कीदृशे उपाश्रये वस्तुं न कल्पते ? इति अनेन सूत्रेण चिन्त्यते, एषः 'योगः' सम्बन्धः ॥ प्रकारान्तरेण सम्बन्धमाह-

[भा.२२९६] दिट्ठमुवस्सयगहणं, तत्थऽज्जाणं न कप्पइ इमेहिं ।
वुत्ता सपक्खओ खलु, दोसा परपक्खिया इणमो ॥

वृ- दृष्टमनन्तरसूत्रे उपाश्रयग्रहणम्, तत्राऽऽर्याणाममीषु प्रतिश्रयेषु वस्तुं न कल्पते इत्यनेन सूत्रेण प्रतिपाद्यते । उक्ता वा 'स्वपक्षतः' स्वपक्षमाश्रित्य संयतानां संयतीनां च परस्परं दोषाः, इदानीं तु 'परपाक्षिकाः' गृहस्थाख्यपरपक्षप्रभवा दोषा व्यावर्ण्यन्ते इति ॥ एवम् अनेकैः सम्बन्धैरायातस्यास्य सूत्रस्य व्याख्या-नो कल्पते 'निर्ग्रन्थीनां' साध्वीनामापणगृहे वा रथ्यामुखे वा शृङ्गाटके वा चतुष्के वा चत्वरे वा अन्तरापणे वा वस्तुमिति सूत्रसङ्क्षेपार्थः ॥

अथ विस्तरार्थं प्रतिपदमभिधित्सुः प्रायश्चित्तमाह-

[भा.२२९७] आवणगिह रच्छाए, तिए चउक्कंतरावणे तिविहे ।
ठायंतिगाण गुरुगा, तत्थ वि आणाइणो दोसा ॥

वृ- आपणगृहे रथ्यामुखे त्रिके चतुष्केऽन्तरापणे वा 'त्रिविधे' त्रिप्रकारे वक्ष्यमाणस्वरूपे उपलक्षणत्वात् चत्वरे च तिष्ठन्तीनां संयतीनां प्रत्येकं चत्वारो गुरुकाः प्रायश्चित्तम् । तत्राप्याज्ञादयो दोषा द्रष्टव्याः ॥ आपणगृहादीनां व्याख्यानमाह-

[भा.२२९८] जं आवणमज्झम्मी, जं च गिहं आवणा य दुहओ वि ।
तं होइ आवणगिहं, रच्छामुह रच्छपासम्मि ॥

वृ- यद् गृहम् 'आपणमध्ये' समन्तादापणैः परिक्षिप्तम् अथवा मध्यभागे यद् गृहं द्वाभ्यामपि च पार्श्वाभ्यां यस्यापणा भवन्ति तद् आपणगृहं भवति । रथ्यामुखं रथ्यायाः पार्श्वे भवति ॥

तच्च त्रिविधम्-

[भा.२२९९] तं पुन रच्छमुहं वा, बाहिमुहं वा वि उभयतोमुहं वा ।

अहवा जत्तो पवहइ, रच्छा रच्छामुहं तं तु ॥

वृ- 'तत् पुनः' गृहं रथ्यायाः पार्श्वे वर्त्तमानं रथ्याया अभिमुखं वा भवेद् 'बहिर्मुखं वा' रथ्या तस्य पृष्ठतो वर्त्तते इत्यर्थः, 'उभयतोमुखं वा' यस्यैकं द्वारं रथ्यायाः पराङ्मुखमेकं तु रथ्याया अभिमुखमित्यर्थः, अथवा यतो गृहाद् रथ्या प्रवहति तद् रथ्यामुखमुच्यते ॥

[भा.२३००] सिंघाडगं तियं खलु, चउरच्छसमागमो चउक्कं तु ।
छण्हं रच्छाण जहिं, पवहो तं चच्चरं बिंती ॥

वृ- शृङ्गाटकं नाम यत् 'त्रिकं' रथ्यात्रयमीलनस्थानम् । क्वचित् तु सूत्रादर्शे ''तियंसि वा'' इत्यपि पदं दृश्यते, तत्रैवं व्याख्या-'शृङ्गाटकं' सिङ्घाटकाकारं त्रिकोणं स्थानम्, 'त्रिकं' रथ्यात्रयमीलकः । चतुष्कं तु चतसृणां रथ्यानां समागमः । तथा यत्र षण्णां रथ्यानां 'प्रवहः' निर्गमस्तत् चत्वरं ब्रुवते तीर्थकर-गणधराः ॥

[भा.२३०१] अह अंतरावणो पुन, वीही सा एगओ व दुहओ वा ।
तत्थ गिह अंतरावण, गिहं तु सयमावणो चेव ॥

वृ- 'अथ' इत्यानन्तर्ये । अन्तरापणो नाम 'वीथी' हट्टमार्ग इत्यर्थः, सा 'एकतो वा' एकपार्श्वेन ''दुहओ व''त्ति द्वाभ्यां वा पार्श्वाभ्यां भवेत् तत्र यद् गृहं तद् अन्तरापणगृहम् । यद् वा गृहं स्वयमेवापणस्तदन्तरापणः । किमुक्तं भवति ? -यत्रैकेन द्वारेण द्वारेण व्यवह्रियते द्वितीयेन तु गृहं तदन्तरापणगृहम् । एतेषु प्रतिश्रयेषु संयतीनां न कल्पते स्थातुम् ॥

अथैतेष्वेव तिष्ठन्तीनां प्रायश्चित्तमाह-

[भा.२३०२] आवण रच्छगिहे वा, तिगाइ सुन्नंतरावणुज्जाणे ।
चउगुरुगा छल्लहुगा, छग्गुरुगा छेय मूलं च ॥

वृ- आपणगृहे तिष्ठन्ति चतुर्गुरुकाः । रथ्यागृहे तिष्ठन्ति षड्लघवः । ''तिगाइ''त्ति त्रिक-चतुष्क-चत्वरेषु तिष्ठन्तीनां षड्गुरवः । ''सुन्न''त्ति अपरिगृहीते शून्यगृहे अन्तरापणे वा च्छेदः । उद्यान तिष्ठन्तीनां मूलम् । एवं भिक्षुणीविषयमुक्तम् । गणावच्छेदिन्याः षड्लघुकादारब्धं नवमे तिष्ठति । प्रवर्त्तिन्याः षड्गुरुकादारब्धं प्रायश्चित्तं दशमे पर्यवस्यति । एतच्चापत्तिमङ्गीकृत्योक्तम्, अन्यथा सर्वासामपि मूलमेव भवति, परतः संयतीनां प्रायश्चित्तस्यैवाभावात् ॥

[भा.२३०३] सव्वेसु वि चउगुरुगा, भिक्खुणिमाईण वा इमा सोही ।
चउगुरुविसेसिया खलु, गुरुगादि व छेदनिट्ठवणा ॥

वृ- अथवा 'सर्वेष्वपि' आपणगृहादिषु स्थानेषु चतुर्गुरुका अविशेषितं प्रायश्चित्तम् । अयं च प्रकारः प्रागुक्तोऽपि सङ्ग्रहार्थमिह भूयोऽप्युक्त इति न पुनरुक्तता । यदि वा भिक्षुणीप्रभृतीनामियं शोधिर्द्रष्टव्या, तद्यथा-चतुर्गुरुकास्तपः-कालाभ्यां विशेषिताः । तत्र भिक्षुण्याश्चतुर्गुरुकमुभयलघु, अभिषेकायास्तदेव तपसा लघु कालेन गुरुकम्, गणावच्छेदिन्याः कालेन लघु तपसा गुरु, प्रवर्त्तिन्यास्तपसा कालेन च गुरुकम् । यदि वा चतुर्गुरुकादारभ्य च्छेदे निष्ठापना कर्त्तव्या, तद्यथा-भिक्षुण्याः सर्वेष्वपि स्थानेषु चतुर्गुरुकम्, अभिषेकायाः षड्लघुकम्, गणावच्छेदिन्याः षड्गुरुकम्, प्रवर्त्तिन्याश्छेदः ॥ अथात्रैव दोषानुपदर्शयितुं द्वारगाथामाह-

[भा.२३०४] तरुणे वेसित्थि विवाह रायमादीसु होइ सइकरणं ।

इच्छमणिच्छे तरुणा, तेना उवहिं व ताओ वा ॥

वृ- आपणगृहादिषु स्थितानां साध्वीनां तरुणान् वेश्यास्त्रीः विवाहं च दृष्ट्वा राजादीनां च दर्शने मुक्तभोगानां स्मृतिकरणं भवति, इतरासां कौतुकम् । तरुणांश्च प्रार्थयमानान् यदीच्छन्ति ततः संयमविराधना, अथ नेच्छन्ति तत उड्डाहदिकं कुर्युः । स्तेनाश्च तत्रोपधिं वा 'ता वा' आर्यिका अपहरेयुरिति द्वारगाथासमासार्थः ॥ अथ विस्तरार्थं प्रतिपदमाह-

[भा.२३०५] चउहालंकारविउव्विए तहिं दिस्स सललिए तरुणे ।
लडहपयंपिय-पहसिय विलासगइ णेगविहकिड्डे ॥

वृ- चतुर्द्धा-वस्त्र-पुष्प-गन्धा-ऽऽभरणभेदात् चतुर्विधो योऽलङ्कारस्तेन विकुर्वितान्-अलङ्कृतान् तरुणान् 'तत्र' आपणगृहादिषु दृष्ट्वा मोहोदयो भवतीति वाक्यशेषः । कथम्भूतान्? 'सललितान्' ललितं नाम-हस्त-पादाङ्गविन्यासविशेषः, उक्तञ्च-

हस्त-पादाङ्गविन्यासो, भ्रू-नेत्रौष्ठप्रयोजितः ।
सुकुमारो विधानेन, ललितं तत् प्रकीर्तितम् ॥

तेन सहितान् । तथा लडभं-मनोज्ञं प्रजल्पितं-प्रकृष्टवचनं प्रहसितं-हास्यं विलासश्च-

स्थाना-ऽऽसन-गमनानां, हस्त-भ्रू-नेत्रकर्मणां चैव ।
उत्पद्यते विशेषो, यः श्लिष्टः स तु विलासः स्यात् ॥

इत्येवंलक्षणः गतिश्च-सुललितपदन्यासरूपा अनेकविधाश्च-द्यूता-ऽऽन्दोलनादिकाः क्रीडा येषां ते तथाविधास्तान् ॥ अथ वेश्यास्त्रीद्वारमाह-

[भा.२३०६] दट्ठुं विउव्वियाओ, कुलडा धुत्तेहि संपरिवुडाओ ।
बिब्बोय-पहसियाओ, आलिंगणमाइया मोहो ॥

वृ- 'विकुर्विताः' अलङ्कृताः 'कुलटाः' स्वैरिण्यः वेश्यास्त्रिय इत्यर्थः 'धूर्तैः' विङ्गैः 'सम्परिवृताः' समन्ततो वेष्टिताः 'बिब्बोक-प्रहसिताः' बिब्बोको नाम-

इष्टानामर्थानां, प्राप्तावभिमानगर्वसम्भूतः ।
स्त्रीणामनादरकृतो, बिब्बोको नाम विज्ञेयः ॥

– प्रहसितं नाम-हास्याभिधानो रसविशेषः, अस्य च लक्षणमिदम्-

हास्यो हासप्रकृति, हासो विकृताङ्ग-वेष-चेष्टाभ्यः ।
भवति परस्थाभ्यः स च, भूम्ना स्त्री-नीच-बालगतः ॥

एते बिब्बोक-प्रहसिते विद्येते यासां ता बिब्बोक-प्रहसितवत्यः । गाथायां प्राकृतत्वाद् मतुप्रत्ययलोपः । एवंविधाः पणाङ्गना दृष्ट्वा तासां चालिङ्गनादिकाश्चेष्टाः क्रियमाणा निरीक्ष्य मोहः समुदीप्यते ॥ अथ विवाहद्वारमाह-

[भा.२३०७] तत्थ चउरंतमादी, इब्भविवाहेसु वित्थरा रइया ।
भूसियसयणसमागम, रह-आसादीय निव्वहणा ॥

वृ- 'तत्र' आपणगृहादौ स्थितानां संयतीनामिभ्यविवाहेषु ये चतुरन्तादयो विस्तरा रचिताः, चतुरन्तं नाम चतुरिका, आदिशब्दाद् वन्दन-कलश-तोरणादिविवाहविस्तरपरिग्रहः, तथा यस्तत्र भूषितानां-वस्त्रादिभिरलङ्कृतानां स्वजनानां समागमः, यच्च रथेन वाऽश्वेन वा आदिशब्दात्

शिबिकया वा 'निर्वहणं' वध्वाः सर्वर्द्धया श्वशुरगृहे नयनं तद्दर्शने भुक्तभोगिनीनां स्मृतिकरणमभुक्तभोगिनीनां तु कौतुकमुपजायते, ततः प्रतिगमनादयो दोषाः ।। अथ राजद्वारमाह-

[भा.२३०८] बलसमुदयेण महया, छत्तसिया वियणि-मंगलपुरोगा ।
दीसंति रायमादी, तत्थ अतिंता य निंता य ।।

वृ- महता बलसमुदयेन 'अतियन्तः' प्रविशन्तः 'निर्यन्तो वा' निर्गच्छन्तः 'राजादयः' राजेश्वरतलवरप्रमृतयस्तत्र दृश्यन्ते । कथम्भूताः ? "छत्तसिय"त्ति प्राकृते पूर्वापरनिपातस्यातन्त्रत्वात् सितं-श्वेतं छत्रं येषां ते सितच्छत्राः, तथा "वियणि" त्ति वालवीजनिका मङ्गलानि-दर्पणपताकादीनि एतानि पुरोगाणि-पुरतोगामीनि येषां राजादीनां ते तथा ।। द्वारगाथायां "रायमादीसु" त्ति यद् आदिग्रहणं कृतं तल्लब्ध्यमर्थमाह-

[भा.२३०९] ते नक्खि-वालि-मुहवासि-जंघिणो दिस्स अड्डियाऽणड्डी ।
होसुं ने एरिसगा, न य पत्ता एरिसा इतरी ।।

वृ- तान् पुरुषान् नखि-वालि-मुखवासि-जङ्घिनो दृष्ट्वा भुक्तभोगिन्योऽभूवन् "ने" अस्माकमपीदृशाः पतय इति स्मृतिम् 'इतरास्तु' अभुक्तभोगिन्यो नास्माभिरीदृशाः पूर्वं प्राप्ता इत्येवं कौतुकं कुर्युः । तत्र नखाः-करजाः स्निग्धा-ऽऽताम्रोत्तुङ्गतादिगुणोपेता येषां ते नखिनः, प्रशंसायामत्र मत्वर्थीयः, यथा रूपवती कन्येत्यादिषु । एवं वालाः-केशास्ते श्यामल-निचित-कुञ्चितादिगुणोपेता येषां ते वालिनः । मुखवासः-कर्पूरादिभिर्मुखस्य सौरभ्यापादनं तदस्ति येषां ते मुखवासिनः । जङ्घिनः-वर्तुल-स्थूलजङ्घायुगलकलिताः । एते 'अर्थिनः' मैथुनाभिलाषिणः 'अनर्थिनो वा' यथाभावेन समागच्छेयुः, तांश्च दृष्ट्वा भुक्ता-ऽभुक्तसमुत्था दोषा भवन्ति ।।

तानेव दर्शयति-

[भा.२३१०] एयारिसए मोत्तुं, एरिसयविवाहिता य सइ भुत्ते ।
इयरीण कोउहल्लं, निदाण-गमणादयो सज्जं ।।

वृ- एतादृशान् मुक्त्वाऽस्माभिर्दीक्षा गृहीता ईदृशैर्वा सह विवाहिता वयमपि पूर्वमिति स्मृतिकरणं भुक्तभोगिनीनाम्, 'इतरासाम्' अभुक्तभोगिनीनां पुनः 'कौतूहलं' कौतुकं भवेत्, ततश्चोभयीषामपि सद्यो निदान-गमनादयो दोषाः । निदानम्-'अस्य तपो-नियमादेः प्रभावाद् भवान्तरे ईदृशमेव पुरुषं लभेय' इति लक्षणम्, गमनं-स्वगृहं प्रति भूयः प्रत्यावर्त्तनम् ।। अपि च-

[भा.२३११] आयाणनिरुद्धाओ, अकम्मसुकुमालविग्गहधरीओ ।
तेसिं पि होइ दट्ठुं, वइणीओ समुब्भवो मोहे ।।

वृ- आदानानि-इन्द्रियाणि निरुद्धानि यासां ता निरुद्धादानाः, गाथायां व्यत्यासेन पूर्वापरनिपातः प्राकृतत्वात् । अकर्मणा-कर्मकरणाभावेन सुकुमारं-कोमलं विग्रहं-शरीरं धारयन्तीत्यकर्मसुकुमारविग्रहधराः । एवम्भूता व्रतिनीर्दृष्ट्वा 'तेषामपि' नखि-वालिप्रभृतीनां मोहस्य समुद्भवो भवति ।। अथ "इच्छमनिच्छे तरुण" त्ति पदं विवृणोति-

[भा.२३१२] संजमविराधना खलु, इच्छाए अनिच्छयं व वहि गिण्हे ।
तेनोवहिनिप्फन्ना, सोही मूलाइ जा चरिमं ।।

वृ- यदि तत्रापणगृहादौ तरुणान् अवभाषमाणान् इच्छति ततः संयमविराधना । अथ नेच्छति

ततोऽनिच्छतीं बलादपि संयतीं बहिर्गृह्णीयुः । ''तेना उवहिं व ताओ वा'' इति पदं व्याख्यायते-''तेनोवहिनिप्फन्ना'' इत्यादि । शून्यगृहादिषु स्थितानां साध्वीनां स्तेना यद्युपधिमपहरेयुः तत उपधिनिष्पन्ना शोधिः । तद्यथा-जघन्यमुपिमपहरन्ति पञ्चकम्, मध्यमपहरन्ति मासिकम्, उत्कृष्टमपहरन्ति चतुर्लघु । संयतीहरणे मूलादिकं चरमं यावत् प्रायश्चित्तमाचार्यस्य मन्तव्यम्, तद्यथा-एकां संयतीमपहरन्ति मूलम्, द्वे अपहरन्त्यनवस्थाप्यम्, तिस्रोऽपहरन्ति पाराञ्चिकम् ॥

अथातरैव प्रकारान्तरेण दोषान् दिदर्शयिषुराह निर्युक्तिकारः-

[भा.२३१३] ओभावना कुलरे, ठाणं वेसित्थि-खंडरक्खाणं ।
उद्धंसणा पवयणे, चरित्तभासुंडणा सज्ञो ॥

वृ- तत्र स्थितानामप्रभाजना 'कुलगृहे' कुलगृहस्य भवति । वेश्यास्त्रीणां खण्डरक्षाणां च-आरक्षिकाणां स्थानं तदापणगृहादि भवेत् । उद्धर्षणा च प्रवचने । तथा सद्यश्चारित्रात् परिभ्रंशना चोपजायते ॥ तत्र कुलगृहस्यापभ्राजना भाव्यते-आपणगृहादौ स्थितास्ता दृष्ट्वा कश्चित् तदीयज्ञातीनामन्तिके गत्वा ब्रूयात्-

[भा.२३१४] ससिपाया वि ससंका, जासिं गायाणि सन्निसेविंसु ।
कुलफुंसणीउ ता भे, दोन्नि वि पक्खे विधंसिंति ॥

वृ- यासां युष्मदीयसुता-स्नुषादीनां प्रयत्नेन संरक्ष्यमाणानां गात्राणि 'शशिपादा अपि' चन्द्रमरीचयोऽपि 'सशङ्काः' चकिता इव सन्निषेवितवन्तः, ताश्चेदानीमेवमापणगृहादौ वसन्त्यः ''भे'' भवतां 'कुलस्पृशिन्यः' कुलमालिन्यकारिण्यः 'द्वावपि पक्षौ' पैतृक-श्वशुरपक्षलक्षणौ 'विधर्षयन्ति' विनाशयन्तीत्यर्थः । एवं कुलगृहस्यापभ्राजना भवति ॥

अथ ''स्थानं वेश्यास्त्री-खण्डरक्षाणाम्'' इति पदं विवृणोति-

[भा.२३१५] छिन्नाइबाहिराणं, तं ठाणं जत्थ वा परिवसंति ।
इय सोउं दट्ठूण व, सयं तु ता गेहमाणिंति ॥

वृ-यत्र 'ताः' श्रमण्यः परिवसन्ति तत् छिन्नादिबाह्यानां स्थानम्, छिन्नाः-छिन्नालाः, आदिशब्दाद् वेश्या-खण्डरक्ष-विट-द्यूतकारादयो ये बाह्याः-विशिष्टजनबहिर्वर्तिनः, तेषां स्थाने यदि तिष्ठन्ति ततस्तदीयाः संज्ञातकाः 'इति' एवं वृत्तान्तं श्रुत्वा दृष्ट्वा वा 'ताः' सम्बन्धिसंयतीः स्वकं गृहमानयन्ति, अलमनया प्रव्रज्यया यत्रैवंविधे स्थाने वासो विधीयते ॥ अथ ''उद्धर्षणा प्रवचने'' इति पदं व्याख्याति-

[भा.२३१६] पेच्छह गरहियवासा, वइणीउ तवोवणं किर सियाओ ।
किं मन्ने एरिसओ, धम्मोऽयं सत्थगरिहा य ॥

वृ- तास्तत्रापणगृहे दृष्ट्वा कश्चिद् ब्रूयात्-पश्यत भो लोकाः ! यदेवं 'गर्हितवासाः' शिष्टजनजुगुप्सिते स्थाने स्थिता व्रतिन्यस्तपोवनं किल 'श्रिताः' आश्रितवत्यः, किं मन्ये एतत्तीर्थकृता ईदृशोऽयं धर्मो दृष्टः ? इत्येवं शास्तुः-तीर्थकरस्य गर्हा भवति ॥

[भा.२३१७] साहूणं पि य गरिहा, तप्पक्खीणं च दुज्जणो हसइ ।
अभिमुहपुनरावत्ती, वच्चंति कुलप्पसूयाओ ॥

वृ- साधूनामपि च गर्हा जायते-अहो ! सदाचारबहिर्मुखा अमी ये स्वकीयाः संयतीरित्थमस्थाने

स्थापयन्ति । तथा [illegible]-साधुगवरदुम[illegible] [illegible] पुरतः 'दुर्जनः' मिथ्यादृष्टिलोकः 'हसति' उपहासं करोति । याश्च प्रव्रज्यायामभिमुखास्तासां तादृशस्थानावस्थानेना-भाविताः सत्यो भूयः स्वगृहाणि व्रजन्ति ॥ अथ चारित्रभ्रंशनापदं विवृणोति-

[भा.२३१८] तरुणादीए दट्ठुं, सइकरणसमुब्भवेहि दोसेहिं ।
पडिगमनादी य सिया, चरित्तभासुंडणा वा वि ॥

वृ- आपणे तरुणादीन् दृष्ट्वा स्मृतिकरणसमुद्भवैः उपलक्षणत्वात् कौतुकसमुद्भवैश्च दोषैः 'प्रतिगमनं' गृहवासगमनं तदादीनि वा पदानि 'स्युः' भवेयुः, आदिशब्दादन्यतीर्थिकगमनादिपरिग्रहः, स्वलिङ्गे वा स्थितानां तरुणादिभिः प्रतिसेवनायां चारित्रभ्रंशना भवेत् ॥

एते आपणगृहे तिष्ठन्तीनां दोषा द्रष्टव्याः । अथ रथ्यामुखादिषु तानतिदिशन्नाह-

[भा.२३१९] एए चेव य दोसा, सविसेसतरा हवंति सेसेसु ।
रच्छामुहमादीसुं, थिरा-थिरेहिं थिरे अहिया ॥

वृ- 'एत एव' अनन्तरोक्ता दोषाः 'शेषेषु' रथ्यामुख-शृङ्गाटक-त्रिकादिष्वपि भवन्ति । नवरं सविशेषतरा उत्तरोत्तरेषु द्रष्टव्याः यावदुद्यानम् । ते च तरुणादयो द्विधा-स्थिरा अस्थिराश्च । स्थिरा नाम-येषां तत्रैव गृहाणि, अस्थिराः-येषामन्यत्र गृहाणि । अत्र च स्थिरेष्वधिकतरा दोषाः प्रतिपत्तव्याः । द्वितीयपदे तिष्ठेयुरपि ॥ कथम् ? इत्याह-

[भा.२३२०] अद्धाणनिग्गयादी, तिक्खुत्तो मग्गिऊण असईए ।
रच्छमुहे चउक्के, आवण अंतो दुहिं बाहिं ॥

वृ- अध्वनिर्गतादयः 'त्रिकृत्वः' त्रीन् वारान् निर्दोषां वसतिं मार्गयित्वा 'असत्याम्' अलभ्यमानायां विविक्तवसतौ वृषभाः प्रथमतो रथ्यामुखे संयतीः स्थापयन्ति, तत्रापि प्रथमम् 'अन्तर्मुखे' यस्य पृष्ठतो रथ्या वर्त्तते इत्यर्थः, तस्याप्राप्तौ "दुहिं" ति 'द्विधामुखे' उभयद्वारे इत्यर्थः, तस्याप्यभावे "बाहिं" ति 'बहिर्मुखे' रथ्याभिमुखद्वारे इत्यर्थः । "चउक्के आवण" त्ति उपलक्षणत्वात् शृङ्गाटकादीनामपि ग्रहणम्, ततोऽयमर्थ-रथ्यामुखस्याभावे आपणगृहेऽपि संयतीभिः स्थातव्यम्, तदप्राप्तौ शृङ्गाटके त्रिके वा, तस्याप्यसत्त्वे चतुष्के, तस्यालाभे चत्वरे, तदप्राप्तौ अन्तरापणेऽपि स्थातव्यमिति ॥ अथ "अंतो दुहिं बाहिं" ति पदत्रयं व्याचष्टे-

[भा.२३२१] अंतोमुहस्स असई, उभयमुहे तस्स बाहिरं पिहए ।
तस्सऽसइ बाहिरमुहे, सइ ठइए थेरिया बाहिं ॥

वृ- पूर्वम् 'अन्तर्मुखे' रथ्यामुखगृहे स्थातव्यम् । अन्तर्मुखस्यासत्युभयमुखे । तस्य च यद् बहिर्द्वारं रथ्याभिमुखं तत् 'पिदधति' कटादिना स्थगयन्ति द्वितीयेन द्वारेण निर्गम-प्रवेशौ कुर्वन्ति । 'तस्य' उभयमुखस्याभावे 'बहिर्मुखे' रथ्याभिमुखद्वारे तिष्ठन्ति, तत्र च द्वारं सदा स्थगितमेव कुर्वन्ति, स्थविरसाध्व्यश्च तत्र "बाहिं" ति 'बहिः' द्वारप्रत्यासत्तौ तिष्ठन्ति ॥ अथात्रैव विधिमाह-

[भा.२३२२] जत्थऽप्पयरा दोसा, जत्थ य जयणं तरंति काउं जे ।
निच्चमवि जंतियाणं, जंतियवासो तहिं वुत्तो ॥

वृ- यत्राल्पतराः पूर्वोक्ता दोषाः, तेषां च दोषाणां परिहरणे यत्र यतनां कर्तुं शक्नुवन्ति 'तत्र' आपणगृहादौ नित्यं यन्त्रितानामपि यन्त्रितवासः प्रोक्त इति । किमुक्तं भवति ?-यद्यपि

संयतीप्रायोग्योपकरण-प्रावरणादिना ताः सर्वदैव सुयन्त्रितास्तथापि तत्रापणगृहादौ विशेषतो यथोक्तयतनया यन्त्रणा कर्त्तव्या ॥ का पुनर्यतना ? इति चेद् उच्यते-

[भा.२३२३] बोलेण झायकरणं, ठाणं वत्थुं व पप्प भइयं तु ।
वंदेन इंति निंति य, अविनीयनिहोडणा चेव ॥

वृ- 'बोलेन' समुदायशब्देन स्वाध्यायकरणं येन पूर्वोक्ताः दोषा न भवन्ति । स्थानं वा वस्तु वा प्राप्य 'भाज्यं' स्वाध्यायकरणं न कर्त्तव्यमपीत्यर्थः । वृन्देन च कायिकीसंज्ञाव्युत्सर्जनार्थमतियन्ति निर्यान्ति वा । अविनीतानां च-दुःशीलानां तरुणादीनां निहोठना कर्त्तव्या, न तत्र प्रवेष्टुं दातव्यमिति भावः ॥

[भा.२३२४] एएसिं असईए, सुन्ने वहि रक्खियाउ वसहेहिं ।
तेसऽसती गिहिनीसा, वइमाइसु भोइए नायं ॥

वृ- 'एतेषाम्' आपणगृहादीनामसति अध्वप्रतिपन्नादयो व्रतिन्यः 'वृषभैः' समर्थसाधुभि- 'बहिः' समन्ततो रक्षिताः सत्यः शून्येऽप्युपाश्रये वसेयुः । अथ वृषभा न भवन्ति ततस्तेषामभावे गृहिणाम्-अगारिणां निश्रया वृत्यादिभिः सुगुप्ते शून्येऽपि प्रतिश्रये वसन्ति । कथम् ? इत्याह- 'भोजिकस्य' ग्रामस्वामिनः 'ज्ञातं' विदितं कृत्वा, यथा-वयमत्र भवदीयबाहुच्छायापरिगृहीताः स्थिताः स्मः, अतो भवता अस्माकं सारा करणीयेति ॥ सूत्रम्-

मू. (१३) *कप्पइ निग्गंथाणं आवणगिहंसि वा जाव अंतरावणंसि वा वत्थए ॥*

वृ- अस्य व्याख्या प्राग्वत् ॥ अथ भाष्यम्-

[भा.२३२५] एसेव कमो नियमा, निग्गंथाणं पि नवरि चउलहुगा ।
सुत्तनिवातो अंतोमुहम्मि तह चेव जयणाए ॥

वृ- एष एव क्रमो नियमाद् निर्ग्रन्थानामपि भवति, तेषामप्यापणगृहादिषु वसतां पूर्वोक्ता दोषा भवन्तीति भावः । नवरं चतुर्लघुकाः प्रायश्चित्तम् । आह यद्येवं तर्हि सूत्रं निरर्थकम्, तत्र साधूनामापणगृहादिषु वस्तुमनुज्ञातत्व, नैवम्, कारणिकं सूत्रम्, यद्यन्य उपाश्रयो न प्राप्यते ततोऽन्तर्मुखे रथ्यागृहे स्थातव्यम्, अत्र 'सूत्रनिपातः' प्रकृतसूत्रमवतरतीति भावः । तस्याभावे शेषेष्वपि तिषठतां तथैव यतना द्रष्टव्या ॥ सूत्रम्-

मू. (१४) *नो कप्पइ निग्गंथीणं अवंगुयदुवारिए उवस्सए वत्थए । एगं पत्थारं अंतो किच्चा एगं पत्थारं बाहिं किच्चा ओहाडियचिलिमिलियागंसि एवं णं कप्पइ वत्थए ॥*

वृ- अस्य सूत्रस्य सम्बन्धमाह-

[भा.२३२६] पडिसिद्धविवक्खेसुं, उवस्सएहि उ संवसंतीणं ।
बंभवयगुत्ति पगए, वारिंतऽन्नेसु वि अगुत्तिं ॥

वृ- पूर्वसूत्रे प्रतिषिद्धानाम्-आपणगृहादीनां विपक्षा ये उपाश्रयाः कल्पनीया इत्यर्थः, तेषु संवसन्तीनां व्रतिनीनां ब्रह्मचर्यगुप्ति प्रकृता, तदर्थं तेषु ताभिर्वस्तव्यमिति भावः । अतस्तस्या प्रकृते प्रक्रमे 'अन्येष्वपि' अप्रतिषिद्धेषु प्रतिश्रयेष्वपावृतद्वारतारूपामगुप्तिं वारयन्ति भगवन्तो *भद्रबाहुस्वामिन इति ॥ अनेन सम्बन्धेनायातस्यास्य* व्याख्या- नो कल्पते 'निर्ग्रन्थीनां' व्रतिनीनाम् 'अपावृतद्वारके' उद्घाटद्वारे उपाश्रये वस्तुम् । सकपाटोपाश्रयालाभे तु तत्रापि वसन्तीभिरित्थं विधिर्विधेयः-एकं 'प्रस्तारं' कटम् 'अन्तः' प्रतिश्रयाभ्यन्तरे कृत्वाएकं प्रस्तारं बहि कृत्वा ततः

'अवघाटितचिलिमिलिकाके' अवघाटिता-बद्धा चिलिमिलिका यत्र स तथा ईदृशे उपाश्रये 'एवम्' अनन्तरोक्तेन विधिना ''णं'' इति वाक्यालङ्कारे कल्पते वस्तुमिति सूत्रसङ्क्षेपार्थः ॥ विस्तरार्थं तु भाष्यकृदाह-

[भा.२३२७] दारे अवंगुयम्मी, निग्गंथीणं न कप्पए वासो ।
चउगुरु आयरियाई, तत्थ वि आणाइणो दोसा ॥

वृ- 'अपावृते' उद्घाटिते द्वारे, उद्घाटद्वारे उपाश्रये इत्यर्थः निर्ग्रन्थीनां न कल्पते वासः । अत्र चैतत् सूत्रमाचार्य प्रवर्त्तिन्या न कथयति चतुर्गुरु, प्रवर्त्तिनी संयतीनां न कथयति चतुर्गुरु, आर्यिका यदि न प्रतिशृण्वति तदा तासां मासलघु । 'तत्रापि' अकथनेऽश्रवणे चाज्ञादयो दोषा द्रष्टव्याः ॥

[भा.२३२८] दारे अवंगुयम्मी, भिक्खुणिमादीण संवसंतीणं ।
गुरुगा दोहि विसिट्ठा, चउगुरुगादी व छेदंता ॥

वृ- उपाश्रयसम्बन्धिनि द्वारेऽपावृते सति भिक्षुण्यादीनां संवसन्तीनां 'द्वाभ्यां' तपः-कालाभ्यां विशिष्टाश्चतुर्गुरुकाः प्रायश्चित्तम् । तद्यथा-भिक्षुण्याश्चतुर्गुरुकं तपसा कालेन च लघु, अभिषे-कायास्तदेव कालगुरु तपोलघु, गणावच्छेदिन्यास्तपोगुरु काललघु, प्रवर्त्तिन्या द्वाभ्यामपि गुरुकम्। चतुर्गुरुकादयो वा छेदान्ताः प्रायश्चित्तविशेषा भवन्ति, तद्यथा-भिक्षुण्या अपावृतद्वारे वसन्त्याश्चतुर्गुरुकम्, अभिषेकायाः षड्लघुकम्, गणावच्छेदिन्याः षड्गुरुकम्, प्रवर्तिन्याश्छेद इति ॥ अत्र दोषानाह-

[भा.२३२९] तरुणे वेसित्थीओ, विवाहमादीसु होइ सइकरणं ।
इच्छमनिच्छे तरुणा, तेना ताओ व उवहिं वा ॥

वृ- अस्या व्याख्या अनन्तरसूत्रवद् द्रष्टव्या ॥

[भा.२३३०] अन्ने वि होंति दोसा, सावय तेणे य मेहुणट्ठी य ।
वइणीसु अगारीसु य, दोच्चं संछोभणादीया ॥

वृ- अन्येऽप्यभ्यधिका अत्रदोषा भवन्ति । तत्रापावृतद्वारे उपाश्रये श्वापदो वा स्तेनो वा चशब्दात् श्वानो वा प्रविशेयुः, तैश्च यद्विराधनां प्राप्नुवन्ति तन्निष्पन्नं प्रायश्चित्तम् । 'मैथुनार्थी वा' उद्भामकः प्रविशेत् स बलादप्युदारशरीरां संयतीं गृह्णीयात् । व्रतिनीषु वा मध्ये काचिद् व्रतिनी मोहोद्भवेन कस्यापि गृहिणो गृही वा तस्याः संयत्याः प्रसुप्तासु शेषसाध्वीषु रात्रौ काश्चिदगारीं प्रेष्य दौत्यं कारापयेत् । अगारीषु वा मध्ये काचित् संछोभणं-परावर्त्तं कुर्यात्, संयतीसंस्तारके सा अगारी संयतीसत्कानि वस्त्राणि प्रावृत्य सयीत संयती तु तदीयानि वस्त्राणि प्रावृत्यागारस्य सकाशं गच्छेदित्यर्थः । यस्मादेवमादयो दोषास्तस्मादपावृतद्वारे प्रतिश्रये साध्वीभिर्न स्थातव्यम्॥ द्वितीयपदे तिष्ठतां (तिष्ठन्तीनां) विधिमाह-

[भा.२३३१] पत्थारो अंतो बहि, अंतो बंधाहिं चिलिमिलिं उवरिं ।
पडिहारि दारमूले, मत्तग सुवणं च जयणाए ॥

वृ- प्रस्तीर्यत इति प्रस्तारः, स च द्विधा-अन्तर्बहिश्च । 'अन्तः' अभ्यन्तरप्रस्तारे ''बंधाहि'' त्ति 'बधान' नियन्त्रय चिलिमिलीमुपरिष्टात् । ततः प्रतिहारी द्वारमूले तिष्ठति । 'मात्रकं' मोकव्युत्सर्जनं स्वपनं च यतनया कर्त्तव्यमिति निर्युक्तिगाथासमासार्थः ॥ अथ विस्तरार्थमाह-

[भा.२३३२] असई य कवाडस्सा, विदलकडादी अ दो कडा उभओ ।
फरमुट्ठियस्स सरिसो, बाहिरकडयम्मि बंधो उ ॥

वृ- यदि द्वारं कपाटसहितं भवति ततः सुन्दरमेव । अथ कपाटं नास्ति ततः कपाटस्यासति प्रस्तारः क्रियते । प्रस्तारः-कटः, स च 'द्विदलकटादि' द्विदलं-वंशदलं तन्मयः कटो द्विदलकटः, आदिशब्दात् शरकटः परिगृह्यते । ईदृशौ द्वौ कटौ द्वारस्योभयतः क्रियेते, एकोऽभ्यन्तरे द्वितीयो बहिरित्यर्थः । ततः स्फरकस्य या मुष्टि-ग्रहणस्थानं तस्य सदृशो बन्धो बाह्यकटेऽभ्यन्तरतो दातव्यः ॥ स च बन्धः किम्मयः कर्त्तव्यः ? इत्याह-

[भा.२३३३] सुत्ताइरज्जुबंधो, दुच्छिड्ड अब्भितरिल्लकडयम्मि ।
हेट्ठा मज्झे उवरिं, तिन्नि व दो वा भवे बंधा ॥

वृ- सूत्रस्य आदिशब्दाद् वल्कस्य वा ऊर्णाया वा या रज्जु-दवरकः परिस्थूरो दृढश्च तस्य बन्धो बाह्यकटे स्फरमुष्टिकसदृशो दातव्यः, अभ्यन्तरकटे च द्वे छिद्रे कर्तव्ये । कथम् ? इति अत आह- "हेट्ठा मज्झे उवरिं"ति 'मध्ये' स्फरकमुष्टेरनुश्रेण्यामेवाधस्तादुपरि च च्छिद्रद्वयं कर्तव्यम्, ततो बाह्यकटस्य स्फरकमुष्टे दवरकं एकं स्तोकं [illegible]कटस्य द्वयोरपि च्छिद्रयोः प्रक्षिप्य ततोऽभ्यन्तरेण निष्काश्य निबिडं बन्धनीयः, ईदृशा द्वौ वा त्रयो वा बन्धा बध्यन्ते । अभ्यन्तरप्रस्तारस्य चोपरि चिलिमिली बध्यते, सा च तान् बन्धान् गोपयति । तथा च ते बन्धा बध्यन्ते यथा प्रतिहारीं मुक्त्वा अन्या काचिन्न जानाति ॥ आह सा प्रतिहारी कीदृग्गुणान्विता स्थापनीया ? इति उच्यते-

[भा.२३३४] काएण उवचिया खलु, पडिहारी संजईण गीयत्था ।
परिनय भुत्त कुलीणा, अभीरु वायामियसरीरा ॥

वृ- कायेनोपचिता न कृशशरीरा, 'गीतार्थाः' सम्यगधिगतसूत्रार्था, परिणता वयसा बुध्या च, "भुत्त"त्ति भुक्तभोगिनी, 'कुलीना' विशुद्धकुलोत्पन्ना, 'अभीरु' न कुतश्चिदपि स्तेनोद्रामकादेर्विविधां बिभीषिकां दर्शयतोऽपि बिभेति, "वायामियसरीर"त्ति व्यायामः-खेदस्तत्सहशरीरा समर्थदेहा इत्यर्थः, ईदृशी खलु संयतीनां प्रतिहारी स्थापयितव्या ॥

सा च किं करोति ? इत्याह-

[भा.२३३५] आवासगं करित्ता, पडिहारी दंडहत्थ दारम्मि ।
तिन्नि उ अप्पडिचरिउं, कालं घेत्तूण य पवेए ॥

वृ- 'आवश्यकं' प्रतिक्रमणं कृत्वा प्रतिहारी दण्डकहस्ता अग्रद्वारे तिष्ठति । ततश्च "तिन्नि उ"त्ति तिः संयत्यः कालप्रत्युपेक्षणार्थं निर्गच्छन्ति । "अप्पडिचरियं"ति प्रादोषिकं कालं यथा साधवः प्रतिजागरितं गृह्णन्ति तास्तथा न इति गृहीत्वा च कालं ततः प्रवर्त्तिन्या निवेदयन्ति । निवेद्य च स्वाध्याये प्रस्थापिते सर्वा अपि स्वाध्यायं कुर्वन्ति ॥ कथम् ? इत्याह-

[भा.२३३६] ओहाडियदाराओ, पोरिसि काऊण पढमए जामे ।
पडिहारि अग्गदारे, गणिणी उ उवस्सयमुहम्मि ॥

वृ- अवघाटितं-चिलिमिलिकया पिहितं द्वारम्-अग्रद्वारं यासां ता अवघाटितद्वाराः सर्वा अपि प्रथमे यामे सूत्रपौरुषीं कृत्वा ततो मध्ये प्रविशन्तीति वाक्यशेषः । पौरुषीं कुर्वाणानां च प्रतिहारी अग्रद्वारे तिष्ठति, 'गणिनी तु' प्रवर्त्तिनी उपाश्रयस्य मुखे-मूलद्वारे स्थिता स्वाध्यायं करोति ॥

[भा.२३३७] उभयविसुद्धा इयरी, पविसंतीओ पवत्तिणी छिवइ।
सीसे गंडे वच्छे, पुच्छइ नामं च का सि त्ति ॥

वृ- उभयं-संज्ञा कायिकी च तद् विशुद्धं व्युत्सृष्टं याभिस्ता उभयविशुद्धाः, आहिताग्न्यादेशकृतिगणत्वात् पूर्वापरनिपातव्यत्ययः, 'इतराः' संयत्यो यदा प्रविशन्ति तदा प्रविशन्तीरेव ताः प्रवर्त्तिनी 'किमेषा संयती ? उत न ?' इति परिज्ञानार्थं 'शीर्षे' शिरसि 'गण्डे' कपोले 'वक्षसि' हृदये एवं त्रिषु स्थानेषु परिस्पृशति नाम च पृच्छति-'का ?' किं नामासि त्वम् ? इति ॥

या च तत्र प्रवेशसमये विलम्बते या वा सुप्तानामप्रस्तावे निर्गच्छति सा वक्तव्या-

[भा.२३३८] किं तुज्झ इक्कियाए, धम्मो दारं न होइ इत्तो उ।
न य निट्ठुरं पि बन्नइ, मा जियगद्दत्तणं हुज्जा ॥

वृ- किं तवैकस्या एव धर्मो येनैवं निर्गच्छसि विलम्बसे वा ? द्वारमितो न भवति, एवमन्यव्यपदेशेन मधुरवचनैः सा वक्तव्या। न च "निट्ठुरं" कठोरं स्फुटमेव भण्यते, "मा जियगद्दत्तणं"ति 'जितलज्जत्वं' निर्लज्जता मा भूदिति हेतोः ॥ ततश्च-

[भा.२३३९] सव्वासु पविट्ठासुं, पडिहारि पविस्स बंधए दारं।
मज्झे य ठाइ गणिणी, सेसाओ चक्कवालेणं ॥

वृ- सर्वासु संयतीषु प्रविष्टासु प्रतिहारी प्रविश्य द्वारं पूर्वोक्तविधिना बध्नाति। 'मध्ये च' मध्यभागे 'गणिनी' प्रवर्त्तिनी 'तिष्ठति' संस्तारकं प्रस्तृणातीत्यर्थः, शेषास्तु संयत्यः 'चक्रवालेन' मण्डलिकया प्रवर्त्तिनीं परिवार्य संस्तृणन्ति यथा परस्परं सुप्तानां न सङ्घट्टो भवति ॥

आह किमर्थं न सङ्घट्टः क्रियते ? उच्यते-

[भा.२३४०] सइकरण कोउहल्ला, फासे कलहो य तेन तं मुत्तुं।
किढि तरुणी किढि तरुणी, अभिक्ख छिवणा य जयणाए ॥

वृ- 'स्पर्शे' अन्योऽन्यं सङ्घट्टने भुक्ता-ऽभुक्तानां स्मृतिकरण-कौतूहले भवतः। 'कलहश्च' असङ्खडं च परस्परं भवति, यथा-अहं त्वया हस्तेन वा पादेन वा सङ्घट्टिता। तेन हेतुना 'तं' स्पर्शं मुक्त्वा 'किढी' स्थविरा सा प्रथमतः संस्तारकं करोति, ततस्तदन्तरिता तरुणी, पुनः स्थविरा, पुनस्तरुणी इत्येवं संस्तारकप्रस्तरणविधिः। 'यतनया च' यथा तासां स्मृतिकरणादिनोपजायते तथा 'अभीक्ष्णं' पुनः पुनः स्पर्शना प्रवर्त्तिन्या कर्त्तव्या। प्रतिहारी च द्वारमूले संस्तारयति ॥ कथम् ? इति अत आह-

[भा.२३४१] तनुनिद्दा पडिहारी, गोविय घेत्तुं च सुवइ तं दारं।
जग्गंति वारएण व, नाउं आमोस-दुस्सीले ॥

वृ- तन्वी-स्तोका निद्रा यस्याः सा तथा एवंविधा प्रतिहारी तद् द्वारं बद्ध्वा तथा ग्रन्थिं गोपयित्वा स्वपिति यथा अन्याः संयत्यो न जानन्त्युद्घाटयितुम्। हस्तेन वा तद् दवरकप्रान्तं गृहीत्वा स्वपिति। अथ तत्र आमोषाः-स्तेना दुःशीला वा अभितन्ति ततस्तान् ज्ञात्वा वारकेण रात्रौ जाग्रति ॥

अथ मात्रकयतनामाह-

[भा.२३४२] कुडमुह डगलेसु व काउ मत्तगं इट्टगाइदुरुढाओ।
लाल सराव पलालं, व छोढु मोयं तु मा सद्दो ॥

वृ- 'कुटमुखे' घटकण्ठके डगलेषु वा मात्रकं 'कृत्वा' स्थापयित्वा तस्य मात्रकस्योपरि 'शरावं' मल्लकं स्थाप्यते, तस्य च बुध्ने च्छिद्रं क्रियते, तत्र च्छिद्रे वस्त्रमयी 'लाला' लम्बमाना चीरिका पलालं वा प्रक्षिप्यते, 'मा मोकं व्युत्सृजन्तीनां शब्दो भवतु' इति कृत्वा । तत उभयपार्श्वत इष्टकाः क्रियन्ते, आदिशब्दात् पीठकादिपरिग्रहः, तत्रारूढाः सत्यो रात्री मात्रके मोकं व्युत्सृजन्ति॥

अथ स्वपनयतनामाह-

[भा.२३४३]　　सोऊण दोन्नि जामे, चरिमे उज्झेत्तु मोयमत्तं तु ।
कालपडिलेह झातो, ओहाडियचिलिमिली तम्मि ॥

वृ- सुप्त्वा द्वौ 'यामौ' प्रहरौ चरमे यामे उत्थाय मोकमात्रकम् 'उज्झित्वा' परिष्ठाप्य ततः कालं-वैरात्रिकं प्राभातिकं च प्रत्युपेक्ष्य स्वाध्यायो यतनया क्रियते । 'तस्मिश्च' चरमे यामे 'अवघाटितचिलमिलीकं' चिलिमिलिकापिहितं द्वारं भवति, शेषं तु कटद्वयमपनीयत इति भावः॥

ताश्च कालं गृहीत्वा न प्रतिजाग्रति, कुतः ? इत्याह-

[भा.२३४४]　　संकापदं तह भयं, दुविहा तेणा य मेहुणट्ठी य ।
देह-धिइदुब्बलाओ, कालमओ ता न जग्गंति ॥

वृ- यदि ताः प्रतिश्रयद्वारे स्थित्वा कालं प्रतिजागृयुः ततः सागारिकस्य स्तेनस्य वा शङ्कापदं भवति-किं मन्ये एषा कश्चिदुद्भ्रमकं प्रतीक्षते यदेवमत्रोपविष्टा जागर्ति ? इति । 'तथा' इति कारणान्तरसमुच्चये, भयं च तासामल्पसत्त्वतयोपजायते । 'द्विविधाश्च स्तेनाः' शरीरस्तेनो-पधिस्तेनभेदास्तत्रागच्छेयुः, ते संयतीमुपधिं वा अपहरेयुः, मैथुनार्थिनो वा संयतीमुपसर्गयेयुः देहेन-शरीरेण धृत्या च-मानसावष्टम्भेन दुर्बलास्ता अतः संयत्यः कालं 'न जाग्रति' न प्रतिचरन्तीति॥

[भा.२३४५]　　कम्मेहि मोहियाणं, अभिद्दवंताण को त्ति जा भणइ ।
संकापदं व होज्जा, सागारिअ तेनए वा वि ॥

वृ-यदि रात्री 'कर्मभिर्मोहिताः' घनकर्मकर्कशतया समुदीर्णमोहाः केचन पापीयांसः संयतीः शीलात् च्यावयितुमभिद्रवेयुस्ततः को विधि ? इति अत आह-तेषामभिद्रवतां या संयती 'कोऽयम्?' इति ब्रूते तस्याश्चतुर्गुरुकाः प्रायश्चित्तम्, आज्ञादयश्च दोषाः, शङ्कापदं वा सागारिकस्य स्तेनकस्य वा, अपिशब्दाद् मैथुनार्थिनो वा भवेत् ॥ इदमेव भावयति-

[भा.२३४६]　　अन्नो वि नूनमभिपडइ इत्थवीसत्थया तदट्ठीणं ।
सागारि सेज्झगा वा, सइत्थिगाओ व संकेज्जा ॥

वृ- तदर्थिनो नाम तद्-विवक्षितं स्तैन्यं मैथुनं वा सेवितुं ये समायातास्तेषां संयतीमुखात् 'कः ?' इति वचनं श्रुत्वा शङ्कापदमुपजायते-नूनमन्योऽपि कश्चिदत्रोद्भ्रामकः स्तेनो वाऽभिपतति येनैवमेषा 'कः ?' इतिप्रश्नयति । ततश्च तेषां तत्र प्रविशतां विश्वस्तता भवति-न भयमुत्पद्यते। यस्तु 'सागारिकः' शय्यातरः "सेज्झगा वा" प्रातिवेश्मिकास्ते एकका वा सस्त्रीका वा शङ्कां कुर्यु-किं मन्ये एतासां संयतीनां दत्तसङ्केतः कोऽप्युद्भ्रामकोऽत्रायाति ? ॥

[भा.२३४७]　　तेनियरं व सगारो, गिण्हे मारेज्ज सो व सागरियं ।
पडिसेह छोभ झामण, काहिंति पदोसतो जं च ॥

वृ- अथवा 'कः ?' इति वचनं श्रुत्वा सागारिक उत्थाय स्तेनम् 'इतरं वा' मैथुनार्थिनं गृह्णीयाद्

मारयेद्वा, 'स वा' स्तेनो मैथुनार्थी वा सागारिकं मारयेत । सागारिके च मारिते सति तदीयाः ज्ञातकाः 'सरिरेर्ग' [illegible] कुर्युः । स्तेनादयः शय्यातरेण गृहीताः सन्तः संयतीनां "छोभं"ति अभ्याख्यानं दद्यु-अस्माकं भाटिरेताभिर्गृहीता आसीत् । "झामण" त्ति प्रद्विष्टा वा सन्तः शय्यातरगृहं संयतीनां वा प्रतिश्रयं प्रदीपयेयुः । प्रद्वेषतो वा यदन्यदपि ते करिष्यन्ति तन्निष्पन्नमापद्यते । तस्मात् 'कः ?' इति न वक्तव्यम् ॥

कथं पुनस्तर्हि वक्तव्यम् ? इत्याह-

[भा.२३४८] संकियमसंकियं वा, उभयट्ठि नच्चा बेंति अहिलिंतं ।
छु त्ति हडि त्ति अनाहा !, नत्थि ते माया पिया वा वि ॥

वृ- उभयं-स्तैन्यं मैथुनं च तदर्थिनं शङ्कितमशङ्कितं वा 'ज्ञात्वा' अवगम्य 'अभिलीयमानम्' आयान्तमेवं ब्रुवते-'छु त्ति हडि त्ति' अनुकरणशब्दावेतौ, छुछुरिति वा हडिरिति वा वक्तव्यमित्यर्थः। यद्वा 'हे अनाथ !' निस्वामिक ! किं ते नास्ति माता वा पिता वा यदेवमस्यां वेलायां पर्यटसि ? इति ॥

[भा.२३४९] भंजंतुवस्सयं णे, छिन्नाल जरग्गगा सगोरहगा ।
नत्थि इहं तुह चारी, नस्ससु किं खाहिसि अहन्ना ! ॥

वृ- 'भजन्ति' विध्वंसन्ते "ने" 'अस्माकमुपाश्रयं 'छिन्नालाः' तथाविधा दुष्टजातीयाः 'जरद्गवा-' जीर्णबलीवर्दा 'सगोरथकाः' कल्होडकयुक्ताः, अतो नास्त्यत्र त्वद्योग्या चारि, 'नश्य' पलायस्व, किमत्र खादिष्यसि 'अधन्य !' हे निर्भाग्य ! त्वम् ? । प्राकृतत्वाद् गाथायां दीर्घत्वम् । एतेनान्यव्यपदेशभङ्ग्या तस्य प्रविशतः प्रतिषेधः कृतो भवति ॥ द्वितीयपदमाह-

[भा.२३५०] अद्धाणनिग्गयादी, तिक्खुत्तो मग्गिऊण असईए ।
दव्वस्स व असईए, ताओ व अपच्छिमा पिंडी ॥

वृ- अध्वनिर्गतादयः संयत्यः 'त्रिकृत्वः' त्रीन् वारान् वसतिं मार्गयित्वा 'असति' अलभ्यमाने गुप्तद्वारे उपाश्रयेऽपावृतद्वारेऽपि वसन्ति । तत्र यदि कपाटमवाप्यते ततः सुन्दरमेव, अथ न प्राप्यते ततः 'द्रव्यस्य' कपाटस्यासति कण्टिकादिकमप्यानीय द्वारं पिधातव्यम् । यावद् 'अपश्चिमा' सर्वान्तिमा यतना "ताओ व पिंडि"त्ति ताः सर्वा अपि पिण्डीभूय परस्परं करबन्धं कृत्वा दण्डकव्यग्रहस्तास्तिष्ठन्तीति ॥ एनामेव निर्युक्तिगाथां व्याचष्टे-

[भा.२३५१] अन्नत्त व कवाडं, कंटिय दंड चिलिमिलि बहिं किढिया ।
पिंडीभवंति सभए, काऊणऽन्नोन्नकरबंधं ॥

वृ- कपाटयुक्तस्य द्वारस्याभावेऽन्यतोऽपि कपाटं याचित्वा द्वारं पिधातव्यम् । अथ याच्यमानमपि तन्न लब्धं ततो वंशकटो याचितव्यः । तस्यालाभे 'कण्टिकाः' कण्टकशाखाः । तासामप्राप्तौ दण्डकैस्तिरश्चीनैश्चिलिमिलिका क्रियते । तावतां दण्डकानामभावे वस्त्रचिलिमिलिका बध्यते । बहिर्द्वारमूले 'किढिकाः' स्थविराः क्रियन्ते । अथ कोऽपि तत्र तासामभिद्रवणं करोति ततस्ताः 'सभये' सोपसर्गे सत्यन्योन्यं करबन्धं कृत्वा पिण्डीभवन्ति ॥ कथं पुनः ? इत्यत आह-

[भा.२३५२] अंतो हवंति तरुणी, सद्दं दंडेहि ते पतालिंति ।
अह तत्थ होंति वसभा, वारिंति गिही व ते होउं ॥

वृ- 'अन्तः' मध्ये तरुण्यो गृहीतदण्डकहस्तास्तिष्ठन्ति, बहिस्तु स्थविराः, ताश्चोभय्योऽपि 'शब्दं' बृहद्ध्वनिना बोलं कुर्वन्ति येन भूयाँल्लोको मिलति, तांश्च स्तेन-मैथुनार्थिन उपद्रवतो दण्डकैः प्रताडयन्ति । अथ तत्र वृषभाः सन्निहिता भवन्ति ततस्ते गृहिणो भूत्वा तान् निवारयन्ति ॥

*सू. (१५) कप्पइ निग्गंथाणं अवंगुयदुवारिए उवस्सए वत्थए ।*

वृ- कल्पते निर्ग्रन्थानामपावृतद्वारे उपाश्रये वस्तुमिति सूत्रार्थः ॥ अथ भाष्यविस्तरः-

**[भा.२३५३]** निग्गंथदारपिहणे, लहुओ मासो उ दोस आणादी ।
अइगमणे निग्गमणे, संघट्टणमाइ पलिमंथो ॥

वृ- निर्ग्रन्था यदि द्वारपिधानं कुर्वन्ति ततो लघुको मासः प्रायश्चित्तम्, आज्ञादयश्च दोषाः । विराधना त्वियम्-कोऽपि साधुः 'अतिगमनं' प्रवेशं करोति, अन्येन च साधुना द्वारपिधानाय कपाटं प्रेरितम्, तेन च तस्य शिरसोऽभिघाते परितापादिका ग्लानारोपणा । एवं निर्गमनेऽपि केनचिद् बहि स्थितेन पश्चान्मुखं कपाटे प्रेरिते शीर्षं भिद्येत । तथा त्रसजन्तूनां सङ्घट्टनम्, आदिशब्दात् परितापनमपद्रावणं वा द्वारे पिधीयमानेऽपाव्रियमाणे वा भवेत् । 'परिमन्थश्च' सूत्रार्थव्याघातो भूयोभूयः पिदधतामपावृण्वतां च भवति ॥ एनामेव निर्युक्तिगाथां व्याख्यानयति-

**[भा.२३५४]** घरकोइलिया सप्पे, संचाराई य होंति हिट्ठुवरिं ।
ढक्किंत वंगुरिंते, अभिघातो निंत-इंताणं ॥

वृ- द्वारस्याधस्तादुपरि वा गृहकोकिला वा सर्पो वा 'सञ्चारिमा वा' कीटिका-कुन्थु-कंसारिकादयो जीवा भवेयुः, आदिशब्दात् कोकिलादयो वा सम्पातमसत्त्वाः, ततो द्वारं ढकयताम् 'अपावृण्वतां च' उद्घाटयतां ''निंत-इंताणं''ति निर्गच्छतां प्रविशतां वा गृहकोकिलादिप्राण्यभिघातो भवेत्, सर्प-वृश्चिकादिभिर्वा साधूनामेवाभिघातो भवेत् । द्वितीयपदे द्वारं पिदध्यादपि ॥

कथम् ? इत्याह-

**[भा.२३५५]** सिय कारणे पिहिज्जा, जिण जानग गच्छि इच्छिमो नाउं ।
आगाढकारणम्मि उ, कप्पइ जयणाइ उ ठएउं ॥

वृ- 'स्यात्' कदाचित् 'कारणे' पुष्टालम्बने पिदध्यादपि द्वारम् । किं पुनस्तत् कारणम् ? इत्याह- 'जिनाः' जिनकल्पिकाः 'ज्ञायकाः' तस्य कारणस्य सम्यग् वेत्तारः परं द्वारं न पिदधति । शिष्यः प्राह-'गच्छे' गच्छवासिनामिच्छामो वयं विधिं ज्ञातुम् । सूरिराह आगाढं-प्रत्यनीक-स्तेनादिरूपं यत् कारणं तत्र 'यतनया' वक्ष्यमाणलक्षणया गच्छवासिनां द्वारं स्थगयितुं कल्पते । एष निर्युक्तिगाथासमासार्थः ॥ अथैनामेव विवृणोति-

**[भा.२३५६]** जाणंति जिना कज्जं, पत्ते वि उ तं न ते निसेवंति ।
थेरा वि उ जाणंति, अनागयं केइ पत्तं तु ॥

वृ- 'जिनाः' जिनकल्पिकास्तत् कार्यमनागतमेव जानन्ति येन द्वारं पिधीयते, तच्च प्रत्यनीकस्तेनादिकं वक्ष्यमाणलक्षणम्, तस्मिश्च प्राप्तेऽपि 'तद्' द्वारपिधानं ते भगवन्तो न निषेवन्ते, निरपवादानुष्ठानपरत्वात् । 'स्थविरा अपि च' स्थविरकल्पिकाः सातिशयश्रुतज्ञा-नाद्युपयोगबलेन केचिदनागतमेव जानन्ति, 'केचित् तु' निरतिशयाः प्राप्तमेव तत् कार्यं जानते, ज्ञात्वा च यतनया तत् परिहरन्ति ॥

[भा.२३५७] अहवा जिनप्पमाणा, कारणसेवो अदोसवं होई ।
थेरा वि जाणग च्चिय, कारण जयणाए सेवंता ॥

वृ- अथवा "जिण जाणग" त्ति निर्युक्तगाथापदमन्यथा व्याख्यायते-जिनः-तीर्थकरस्तस्य प्रामाण्यात् कारणे द्वारपिधानसेवी अदोषवान् भवति । जिनानां हि भगवतामियमाज्ञा-कारणे यतनया द्वारपिधानं सेवमानाः स्थविरकल्पिका अपि 'ज्ञायका एव' सम्यग्विधिज्ञा एव ॥

आह किं तत् कारणं येन द्वारं पिधीयते ? उच्यते-

[भा.२३५८] पडिनीय तेन सावय, उब्भामग गोण साणऽणप्पज्झे ।
सीयं च दुरधियासं, दीहा पक्खी व सागरिए ॥

वृ- उद्घाटिते द्वारे प्रत्यनीकः प्रविश्याहननमपद्रावणं वा कुर्यात् । 'स्तेनाः' शरीरस्तेना उपधिस्तेना वा प्रविशेयुः । एवं 'श्वापदाः' सिंह-व्याघ्रादयः 'उद्भामकाः' पारदारिकाः 'गौः' बलीवर्द 'श्वानः' प्रतीताः, एते वा प्रविशेयुः । "अणप्पज्झे" त्ति 'अनात्मवशः' क्षिप्तचित्तादि स द्वारेऽपिहिते सति निर्गच्छेत् । शीतं वा दुरधिसहं हिमकणानुषक्तं निपतेत् । 'दीर्घा वा' सर्पा 'पक्षिणो वा' काक-कपोतप्रमृतयः प्रविशेयुः । सागारिको वा कश्चिचत् प्रतिश्रयमुद्घाटद्वारं दृष्ट्वा तत्र प्रविश्य शयीत वा विश्रामं वा गृह्णीयात् ॥

[भा.२३५९] एक्केक्कम्मि उ ठाणे, चउरो मासा हवंति उग्घाया ।
आणाइणो य दोसा, विराधना संजमा-ऽऽयाए ॥

वृ- द्वारमस्थगयतामनन्तरोक्ते 'एकैकस्मिन्' प्रत्यनीकप्रवेशादौ स्थाने चत्वारो मासाः 'उद्घाताः' लघवः प्रायश्चित्तं भवति, आज्ञादयश्चात्र दोषाः विराधना च संयमा-ऽऽत्मविषया भावनीया यदुक्तम् "चत्वारो मासा उद्घाताः" इति तदैवद् बाहुल्यमङ्गीकृत्य द्रष्टव्यम्, अतोऽपवदन्नाह-

[भा.२३६०] अहि-सावय-पच्चत्थिसु, गुरुगा सेसेसु होंति चउलहुगा ।
तेणे गुरुगा लहुगा, आणाइ विराधना दुविहा ॥

वृ-अहिषु श्वापदेषु प्रत्यर्थिषु च-प्रत्यनीकेषु द्वारेऽपिहिते सत्युपाश्रयं प्रविशत्सु प्रत्येकं चत्वारो गुरुकाः । 'शेषेषु' उद्भामकादिषु सागारिकान्तेषु चतुर्लघुकाः । स्तेनेषु गुरुका लघुकाश्च भवन्ति। तत्र शरीरस्तेनेषु चतुर्गुरुकाः, उपधिस्तेनेषु चतुर्लघुकाः । आज्ञादयश्च दोषाः । विराधना च द्विविधा-संयमविराधना आत्मविराधना च । तत्र संयमविराधना स्तेनैरुपधावपहृते तृणग्रहण-मग्निसेवनं वा कुर्वन्ति, सागारिकादयो वा तप्तायोगोलकल्पाः प्रविष्टाः सन्तो निषदन-शयनादि कुर्वाणा बहूनां प्राणजातीयानामुपमर्दं कुर्युः । आत्मविराधना तु प्रत्यनीकादिषु परिस्फुटैवेति आह ज्ञातमस्माभिर्द्वारपिधानकारणं परं काऽत्र यतना ? इति वाद्यापि वयं जानीमः उच्यते-

[भा.२३६१] उवओगं हेट्ठुवरिं, काऊण ठवंतिऽवंगुरंते अ ।
पेहा जत्थ न सुज्झइ, पमज्जिउं तत्थ सारिंति ॥

वृ- श्रोत्रादिभिरिन्द्रियैरधस्तादुपरि चोपयोगं कृत्वा द्वारं स्थगयन्ति वा अपावृण्वन्ति वा । यत्र चान्धकारे 'प्रेक्षा' चक्षुषा निरीक्षणं न शुध्यति तत्र रजोहरणेन दारुदण्डकेन वा रजन्यां प्रमृज्य 'सारयन्ति' द्वारं स्थगयन्तीत्यर्थः, उपलक्षणत्वादुद्घाटयन्तीत्यपि द्रष्टव्यम् ॥

मू. *(१६) कप्पइ निग्गंथीणं अंतो लित्तं घडिमत्तयं धारित्तए वा परिहरित्तए वा ॥*

वृ-अस्य सूत्रस्य सम्बन्धमाह-

[भा.२३६२] ओहाडियचिलिमिलिए, दुक्खं बहुसो अईंति निंति वि य।
आरंभो घडिमत्ते, निसिं व वुत्तं इमं तु दिवा ॥

वृ- चिलिमिलिक्या उपलक्षणत्वात् कटद्वयेन च 'अवघाटिते' पिनद्धे सति द्वारे रजन्यां मात्रकमन्तरेण बहि कायिक्यादिव्युत्सर्जनार्थं बहुशो निर्गम-प्रवेशेषु दुःखमार्यिका निर्गच्छन्ति प्रविशन्ति च, अतोऽयं घटीमात्रकसूत्रस्यारम्भः। यद्वा 'निशायां' रात्रौ मात्रके यथा कायिकी व्युत्सृज्यते तथा अनन्तरसूत्रेऽर्थतः प्रोक्तम्, इदं तु सुत्रं दिवा मात्रकविधिमधिकृत्योच्यत इति॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या-कल्पते 'निर्ग्रन्थानां' व्रतिनीनामन्तर्लिप्तं 'घटीमात्रकं' घटीसंस्थानं मृन्मयभाजनविशेषं धारयितुं वा परिहर्तुं वा। 'धारयितुं नाम' स्वसत्तायां स्थापयितुम्। 'परिहर्तुं' परिभोक्तुम्। एव सूत्रार्थः ॥ अथ निर्युक्ति-

[भा.२३६३] घडिमत्तंतो लित्तं, निग्गंथीणं अगिण्हमाणीयं।
चउगुरुगाऽऽयरियादि, तत्थ वि आणआइणो दोसा ॥

वृ- 'अन्तः' मध्ये 'लिप्तं' लेपेनोपदिग्धं घटीमात्रकं निर्ग्रन्थीनामगृह्णतीनां चतुर्गुरुकाः। "आयरियाइ" त्ति आचार्य एतत् सूत्रं प्रवर्त्तिन्या न कथयति चतुर्गुरु, प्रवर्त्तिनी आर्यिकाणां न कथयति चतुर्गुरु, आर्यिका न प्रतिशृण्वन्ति मासलघु। 'तत्रापि' घटीमात्रकस्याग्रहणे तद्विधिप्रतिपादकस्य च प्रस्तुतसूत्रस्य अकथनेऽप्रतिश्रवणे चाज्ञादयो दोषाः आह स घटीमात्रकः कीदृशो भवति ? इत्याह-

[भा.२३६४] अपरिस्साई मसिणो, पगासवदणो स मिम्मओ लहुओ।
सुइ-सिय-दद्दरपिहणो, चिट्ठइ अरहम्मि वसहीए ॥

वृ- 'सः' इति घटीमात्रकः पानकेनात्यन्तभावितत्वादवश्यं न परिश्रवतीत्यपरिश्रावी, 'मसृणः' सुकुमारः, प्रकाशं-प्रकटं वदनं-मुखमस्येति प्रकासवदनः, 'मृन्मयः' मृत्तिकानिष्पन्नः, 'लघुकः' स्वल्पभारः, शुचि-पवित्रं चोक्षमित्यर्थः सितं-श्वेतं न कृष्णवर्णाद्युपेतं दर्दरपिधानं-वस्त्रमयं बन्धनं यस्य स शुचि-सित-दर्दरपिधानः। एवंविधः 'अरहसि' प्रकाशप्रदेशे वसत्यां तिष्ठति

मू. *(१७) नो कप्पई निग्गंथाणं अंतो लित्तं घडिमत्तयं धारित्तए वा परिहरित्तए वा ॥*

[भा.२३६५] साहू गिण्हइ लहुगा, आणाइ विराधना अनुवहि त्ति।
बिइयं गिलाणकारण, साहूण वि सोअवादीसु ॥

वृ- यदि साधुर्घटीमात्रकं गृह्णाति तदा चत्वारो लघुकाः, आज्ञादयश्च दोषाः, विराधना च संया-ऽऽत्मविषया। तत्र "अनुवहि" त्ति साधूनामयमुपधिर्न भवति। किमुक्तं भवति ? यत् किल साधूनामुपकारे न व्याप्रियते तद् नोपकरणं किन्त्वधिकरणम्,

जं जुज्जइ उवयारे, उवगरणं तं सि होइ उवगरणं।
अइरेगं अहिगरणं, (ओधनिर्युक्ति गा०]

इति वचनाद्, यच्चाधिकरणं तत्र परिस्फुटैव संयमविराधना। आत्मविराधना त्वतिरिक्तोपधिभारवहनादनागाढपरितापनादिका। "बिइयं" ति द्वितीयपदमत्र भवति। किं पुनः तत् ? इत्याह-ग्लानकारणे समुत्पन्ने साधूनामपि घटीमात्रकग्रहणं भवेत्, अथवा शौचवादिषु

शिष्येषु देशविशेषेषु वा। एतदुत्तरत्र भावयिष्यते अथ किमर्थमत्र चतुर्लघु प्रायश्चित्तमुक्तम्? अत्रोच्यते-

[भा.२३६६] दुविहपमाणतिरेगे, सुत्तादेसेन तेन लहुगा उ।
मज्झिमगं पुन उवहिं, पडुच्च मासो भवे लहुओ॥

वृ-द्विविधं-द्विप्रकारं गणना-प्रमाणभेदाद् यत् प्रमाणं ततोऽतिरिक्ते उपधौ सूत्रादेशेन चतुर्लघुका भवन्ति। यतं उक्तं निशीथसूत्रे-जे भिक्खू गणनाइरित्तं वा पमाणाइरित्तं वा उवहिं धरेइ से आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं इति। अतः सूत्रादेशेन चतुर्लघुकम्। यदा तूपधिनिष्पन्नं चिन्त्यते तदा अयं घटीमात्रको मध्यमोपधिभेदेष्ववतरतीति कृत्वा मध्यमं पुनरुपधिं प्रतीत्य लघुको मासो भवति। अथ "धारयितुं वा परिहर्तुं वा" इति पदद्वयव्याख्यानमाह-

[भा.२३६७] धारणया उ अभोगो, परिहरणा तस्स होई परिभोगो।
दुविहेन वि सो कप्पई, परिहारेणं तु परिभोत्तुं॥

वृ-इह द्विधा परिहारः, तद्यथा-धारणा परिहरणा च। तत्र धारणा 'अभोगः' अव्यापारणम्, संयमोपबृंहणार्थं स्वसत्तायां स्थापमित्यर्थः। परिहरणा नाम 'तस्य' घटीमात्रकादेरुपकरणस्य 'परिभोगः' व्यापारणम्। एतेन द्विविधेनापि परिहारेण स घटीमात्रको निर्ग्रन्थीनां परिभोक्तुं कल्पते। स च दिवसं यावत् पानकपूर्णस्तिष्ठति। अथ किमर्थमयं गृह्यते? इत्याह-

[भा.२३६८] उड्डाहो वोसिरणे, गिलाणआरोपणा य धरणम्मि।
बिइयपयं असईए, भिन्नोऽवह अद्धलित्तो वा॥

वृ-संयतीभिरुत्सर्गतो द्रव्यप्रतिबद्धायां वसतौ स्थातव्यम्। तत्र घटीमात्रकाग्रहणे सागारिकाणां पश्यतां बहिः कायिकीव्युत्सर्जने 'उड्डाहः' प्रवचनलाघवमुपजायते। अथ कायिक्या वेगं धारयन्ति ततो धरणे 'ग्लानारोपणा' परिताप-महादुःखादिका भवति। यत एवमतो ग्रहीतव्यो घटीमात्रकः संयतीभिः। द्वितीयपदमत्र-'असति' अविद्यमाने घटीमात्रके यदि वा विद्यते घटीमात्रकः परं 'भिन्नः' भग्न अर्द्धलिप्तो वा अत एव 'अवहः' अव्याप्रियमाणः ततो बहिर्गत्वा कायिकी यतनया व्युत्सर्जनीया। निर्ग्रन्थाः पुनरप्रतिबद्धोपाश्रये तिष्ठन्ति अतस्ते घटीमात्रकं न गृह्णन्ति, कारणे तु गृह्णन्त्यपि। यत आह-

[भा.२३६९] लाउय असइ सिनेहो, ठाइ तहिं पुव्वभाविय कडाहो।
सेहे व सोयवायी, धरेंति देसिं व ते पप्प॥

वृ- अलाबुपात्रकस्याभावे ग्लानार्थं च स्नेहे ग्रहीतव्ये पूर्वभावितं कटाहकं घटीमात्रकं वा ग्रहीतव्यम्। यतस्तत्र गृहीतः 'स्नेहः' घृतं 'तिष्ठति' न परिश्रवति। शैक्षो वा कश्चित् साधूनां मध्येऽत्यन्तं शौचवादी स शौचार्थं घटीमात्रकं गृह्णीयात्। 'देशीं वा' देशविशेषं शौचवादिबहुलं प्राप्य घटीमात्रकं धारयन्ति, यथा गोल्लविषये। अथास्यैव ग्रहणे विधिमाह-

[भा.२३७०] गहणं तु अहागडए, तस्सऽसई होइ अप्पपरिकम्मे।
तस्सऽसइ कुंडिगादी, घेत्तुं नाला विउज्जंति॥

वृ-प्रथमतो यथाकृतस्य घटीमात्रकस्य ग्रहणं कर्त्तव्यम्। तस्यासत्यल्पपरिकर्मणि ग्रहणं भवति

अथाल्पपरिकर्मापि न प्राप्यते ततः 'कुण्डिकां' कमण्डलुम् आदिशब्दादपरमपि तथाविधं बहुपरिकर्मयोग्यं गृहीत्वा नालानि वियोज्यन्ते ॥

**मू. (१८)** *कप्पइ निग्गंथाण वा निग्गंथीण वा चेलचिलिमिलियं धारित्तए वा परिहरित्तए वा ॥*

**वृ-** अस्य सम्बन्धमाह–

**[भा.२३७१]** सागारिपच्चयट्ठा, जह घडिमत्तो तहा चिलिमिली वि ।
रत्तिं व हेट्ठऽनंतर, इमा उ जयणा उभयकाले ॥

**वृ-** सागारिकः-गृहस्तस्तस्य प्रत्ययार्थं यथा घटीमात्रकस्तथा चिलिमिलिकाऽपि धारयितव्या। यद्वा यदधस्तात् सूत्रं ततः 'अनन्तरस्मिन्' अपावृतद्वारोपाश्रयसूत्रे रात्रौ चिलिमिलिकादि-प्रदानलक्षणा यतना भणिता, 'इयं तु' प्रस्तुतसूत्रोपात्ता यतना अस्मिन् 'उभयकाले' रात्रौ दिवा च कर्त्तव्या इति । अनेन सम्बन्धेनायातस्यास्य व्याख्या-कल्पते निर्ग्रन्थानां निर्ग्रन्थीनां वा चेलचिलिमिलिकां धारयितुं वा परिहर्तुं वा । एष सूत्राक्षरार्थः । अथ भाष्यविस्तरः-

**[भा.२३७२]** धारणया उ अभोगो, परिहरणा तस्स होइ परिभोगो ।
चेलं तु पहाणयरं, तो गहणं तस्स नऽन्नासिं ॥

**वृ-** धारणतानाम 'अभोगः' अव्यापारणम्, परिहरणा तु 'तस्य' चिलिमिलिकाख्यस्योपकरणस्य 'परिभोगः' व्यापारणमुच्यते । आह वस्त्र-रज्जु-कट-वल्क-दण्डभेदात् पञ्चविधा चिलिमिलिका वक्ष्यते तत् कथं सूत्रे चेलचिलिमिलिकाया एव ग्रहणम् ? इत्याह-'चेलं तु' वस्त्रं रज्ज्वादीनां मध्ये बहुतरोपयोगित्वात् प्रधानतरं ततस्तस्यैव सूत्रे ग्रहणं कृतम्, न 'अन्यासां' रज्जुचिलिमिलिकादीनाम्। अथ चिलिमिलिकाया एव भेदादिस्वरुपनिरुपणाय द्वारगाथामाह-

**[भा.२३७४]** सुत्तमई रज्जुमई, वागमई दंड-कडगमयईय ।
पंचविह चिलिमिली पुन, उवग्गहकरी भवे गच्छे ॥

**वृ-** सूत्रमयी रज्जुमयी वल्कमयी दण्डकमयी कटकमयी चेति पञ्चविधा चिलिमिलि । एषा पुनः 'गच्छे' गच्छवासिनामुपग्रहकरी भवति । उक्तो भेदः । अथ प्ररुपणा क्रियते-सूत्रस्य विकारः सूत्रमयी, सा च वस्त्रमयी वा कम्ब- लमयी वा प्रतिपत्तव्या । रज्जोर्विकारो रज्जुमयी, ऊर्णादिमयो दवरक इत्यर्थः । वल्कं नामशणादिवृक्षत्वग्रूपम्, तेन निर्वृत्ता वल्कमयी । दण्डकः-वंश-वेत्रादिमयी यष्टिस्तैर्निर्वृत्ता दण्डकमयी । कटः-वंशकटादि, तन्निष्पन्ना कटकमयी ॥ गता प्ररुपणा । अथास्याः पञ्चविधाया अपि चिलिमिलिकाया यथाक्रमं गाथात्रयेण द्विविधप्रमाणमाह–

**[भा.२३७५]** हत्थपनगं तु दीहा, तिहत्थ रुंदोन्निया असइ खोमा ।
एत पमाण गणणेक्कमेक्क गच्छं व जा वेढे ॥

**वृ-** इह प्रमाण-गणनाभेदाद् द्विविधं प्रमाणम् । तत्र प्रमाणप्रमाणमाश्रित्य सूत्रमयी चिलिमिलिका हस्तपञ्चकं दीर्घा त्रीन् हस्तान् 'रुन्दा' विस्तीर्णा भवति । एषा चोत्सर्गतस्तावदौर्णिकी । और्णिक्याः 'असति' अलाभे क्षौमिकी ग्रहीतव्या । वल्कचिलिमिलिकाया अप्येतदेव प्रमाणम् । गणनाप्रमाणं पुनरधिकृत्यैकैकस्य साधोरेकैका, यावत्यो वा गच्छं वेष्टयन्ति तावत्यो भवन्ति । यद्वा या प्रातिहारिकी

च्छं सकलमपि वेष्टयति सा गणनयैका, प्रमाणेन त्वनियता ॥

[भा.२३७६] असतोण्णि खोमिरज्जू, एक्कपमाणेण जा उ वेढेइ।
कडहूवागादीहिं, पोत्तऽसइ भए व वागमई ॥

वृ- रज्जुचिलिमिलिका पूर्वमौर्णिकदवरकरूपा। तस्या अभावे क्षौमिकदवरकात्मकाऽपि कर्त्तव्या। सा च सर्वेषामपि साधूनां प्रत्येक गणनयैकैका, प्रमाणेन तु हस्तपञ्चकदीर्घा भवति; गणावच्छेदिकहस्ते वा एक एव दवरको भवति यः सकलमपि गच्छ शीतादिरक्षार्थं वेष्टयति। कडहूर्नाम-वृक्षविशेषः, तस्य यद् वल्कम् आदिशब्दात् पलाश-शणादिसम्बन्धीनि वल्कानि, तैर्निर्वृत्ता वल्कमयी, सा च "पोत्तऽसई" त्ति वस्त्रचिलिमिलिकाया अभावे 'भये वा' स्तेनादिसमुत्थे गृह्यते ॥

[भा.२३७७] देहऽहिओ गणणेक्को, दुवारगुत्ती भये व दंडमई।
संचारिमा य चउरो, भय माणे कडमसंचारी ॥

वृ- देह-शरीरं तस्य प्रमाणादधिको यो दण्डकः स देहाधिकः, स च समयपरिभाषया देहात् चतुरङ्गुलाधिकप्रमाणा नालिका भण्यते, एतावता प्रमाणप्रमाणमुक्तं द्रष्टव्यम्। स च देहाधिको दण्डको गणनयैकैकस्य साधोरकैको भवति। तैश्च दण्डकैः श्वापदादिभये 'द्वारगुप्ति' द्वारस्य स्थगनं क्रियते। एषा दडमयी दृष्टवा। एताश्चादिमाश्चतस्त्रश्चिलिमिलिका वसतेर्वसतिं क्षेत्रात् क्षेत्रं सञ्चरन्तीति सञ्चारिमा उच्यन्ते। कटकमयी तु असञ्चारिमा। 'माने च' प्रमाणे द्विविधेऽपि तां कटकमरयीं चिलिमिलीं 'भज' विकल्पय, अनियतप्रमाणेत्यर्थः। तत्र प्रमाणमङ्गीकृत्य यावता वक्ष्यामाणं कार्यं पूर्यते तावत्प्रमाणा कटकचिलिमिली, गणना तु यद्येकः कटः कार्यं न प्रतिपूरयित ततो द्व्यादयोऽपि तावत्सङ्ख्याकाः कटा ग्रहीतव्या यावद्भिस्तत् कार्यं पूर्यते तावत्प्रमाणा कटकचिलिमिली, गणनया तु यद्येकः कटः कार्यं न प्रतिपूरयति ततो द्व्यादयोऽपि तावत्सङ्ख्याकाः कटा ग्रहीतव्या यावद्भिस्तत् कार्यं पूर्यते ॥

गतं द्विविधप्रमाणम्। अथ 'उपभोगो द्विपक्षे' इति पदं विवृणोति-

[भा.२३७८] सागारिय सज्झाए, पानदय गिलाण सावयभए वा।
अद्धाण-मरण-वासासु चेव सा कप्पए गच्छे ॥

वृ- सागारिके पश्यति स्वाध्याये विधातव्ये प्राणदयायां विधेयायां ग्लानार्थं श्वापदभये वा उत्पन्नेऽध्वनि मरणे वर्षासु चैव 'सा' चिलिमिलिका कलपते 'गच्छे' गच्छवासिनां साधूनां परिभोक्तुम्। एष निर्युक्तिगाथासमासार्थः ॥ अथैनामेव प्रतिपदं विवृणोति-

[भा.२३७९] पडिलेहोभयमंडलि, इत्थी-सागारियट्ठ सागारिए।
घाणा-ऽऽलोग ज्झाए, मच्छिय-डोलाइपानेसु ॥

वृ- प्रतिलेखनां कुर्वन्तो द्वारे चिलिमिलिकां कुर्वते, मा सागारिका उत्कृष्टोपधिं द्राक्षु मा वा उड्डाहकान् कार्षुरिति कृत्वा, "उभयमंडलि" त्ति समुद्देशनमण्डल्यां स्वाध्यायमण्डल्यां चोड्डाहरक्षणार्थम्, 'इत्थीसागारियट्ठ" त्ति स्त्रीरूपप्रतिबद्धायां च वसतौ 'स्त्रीसागारिकानामालोको मा भूत्' इत्येतदर्थं चिलिमिली दीयते, "सागारिए" त्ति सागारिकद्वारे चिन्त्यमाने एतत् कारणजातं चिलिमिलिकाग्रहणे द्रष्टव्यम्। "घाणाऽऽलोग ज्झाए" त्ति स्वाध्यायद्वारे यत्र मूत्रपुरीषादेरशुभा घ्राणिरागच्छति, शोणित-चर्बिकाणां वा यत्रालोकः, चेटरूपाणि वा यत्र कुतूहलेनालोकन्ते तत्र

चिलिमिलीं दत्त्वा स्वाध्यायः क्रियते । मक्षिका-डोलादयो वा प्राणिनो यत्र बहवः प्रविशन्ति, डोलाः-तिड्डका उच्यन्ते, तत्र प्राणदयार्थमेतासामेव चिलिमिलिकानामुपभोगः कर्त्तव्य इति ॥

[भा.२३८०] उभओसहकज्जे वा, देसी वीसत्थमाइ गेलन्ने ।
अद्धाणे छन्नासइ, भओवही सावए तेने ॥

वृ-उभयं-संज्ञा-कायिकीलक्षणं [illegible], 'औषधकार्ये वा' औषधं वा तस्य प्रच्छन्ने दातव्यम्, 'मा मृगा अवलोकन्ताम्' इति कृत्वा, अतश्चिलिमिलिका दातव्या । एवं ''देसि''त्ति यत्र देशे शाकिन्या उपद्रवः सम्भवति तत्र ग्लानः प्रच्छन्ने धारयितव्यः । विश्वस्तो वा ग्लानः प्रच्छन्ने सुखमपावृतस्तिष्ठति । आदिशब्दाद् दुग्धादिकं ग्लानार्थमेव गीतार्थेन स्थापितम्, तच्च दृष्ट्वा ग्लानो यदा तदा वा अभ्यवहरेदिति कृत्वा तत्रान्तरे चिलिमिलिका दीयते यथाऽसौ तन्न पश्यति । एवमादिको ग्लानत्वे चिलिमिलिकानामुपभोगः । अध्वनि प्रच्छन्नस्थानस्याभावे चिलिमिलिकां दत्त्वा समुद्दिशन्ति वा सारोपधिं वा प्रत्युपेक्षन्ते । श्वापदेभ्यो वा यत्र भयं स्तेनेभ्यो वा यत्रोपधेरपहरणशङ्का तत्र दण्डकचिलिमिलिकया कटकचिलिमिलिकया वा दृढं द्वारं पिधाय स्थीयते ॥

[भा.२३८१] छन्न-वहणट्ठ मरणे, वासे उज्झक्खणी य कडओ य ।
उल्लुवहि विरल्लिंति व, अंतो बहि कसिण इतरं वा ॥

वृ- 'मरणे' मरणद्वारे यावद् मृतकं न परिष्ठाप्यते तावत् प्रच्छन्ने चिलिमिलिकया आवृतं ध्रियते । तथा दण्डकचिलिमिलिकया मृतकमुत्क्षिप्य वहनं कर्त्तव्यम् । तथा वर्षासु जीमूते वर्षति यस्या दिशः सकाशात् ''उज्झक्खणीय''त्ति पवनप्रेरिता उदककणिकाः समागच्छेयुः तस्यां कटकचिलिमिली कर्त्तव्या, वर्षासु वा भिक्षाचर्यादौ गतानां वृष्टिकायेनार्द्रीकृतमुपधिं रज्जुचिलिमिलिकायां 'विरल्लयन्ति' विस्तारयन्तीत्यर्थः । तत्र यः कृत्स्नः-सारोपधिस्तम् 'अन्तः' मध्ये विस्तारयन्ति, इतरः-अकृत्स्नः स्वल्पमूल्य उपधिस्तं बहिर्विस्तारयन्ति । एनां पञ्चविधां चिलिमिलिकामगृह्णतोऽधारयतश्चतुर्लघुकाः, या च ताभिर्विना संयमा-ऽऽत्मविराधना तन्निष्पन्नमपि प्रायश्चित्तम् ॥ तथा-

[भा.२३८२] बंभव्वयस्स गुत्ती, दुहत्थसंघाडिए सुहं भोगो ।
वीसत्थचिट्ठणादी, दुरहिगमा दुविह रक्खा य ॥

वृ-उपाश्रये वर्त्तमाना आर्यिकाश्चिलिमिलिकया नित्यकृतया तिष्ठन्ति, यतो ब्रह्मव्रतस्य गुप्तिरेवं कृता भवति । द्विहस्तविस्तराया अपि सङ्घाटिकायाः सुखं भोगो भवति । किमुक्तं भवति ? - प्रतिश्रये हि तिष्ठन्त्यस्ता द्विहस्तविस्तरामेव सङ्घाटिकां प्रावृण्वते न त्रिहस्तां न वा चतुर्हस्ताम् । ततश्चिलिमिलिकायां बहिर्बद्धायां तयाऽपि प्रावृतया विश्वस्ताः-निशङ्काः सत्यः सुखं स्थाननिषदनत्वग्वर्त्तनादिकाः क्रियाः कुर्वन्ति । 'दुरधिगमाश्च' दुःशीलानामगम्या भवन्ति । द्विविधा च रक्षा कृता भवति, संयम आत्मा च रक्षितो भवतीति भावः ॥

मू. (१९) *नो कप्पइ निग्गंथाण वा निग्गंथीण वा दगतीरंसि चिट्ठित्तए वा निसीइत्तए वा तुयट्टित्तए वा निद्दाइत्तए वा पयलाइत्तए वा, असणं वा पाणं वा खाइमं वा साइमं वा आहारित्तए, उच्चारं वा पासवणं वा खेलं वा सिंघाणं वा परिट्ठवित्तए, सज्झायं वा करित्तए, धम्मजागरियं वा जागरित्तए, काउस्सग्गं वा ठाणं ठाइत्तए ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.२३८३] मा मं को इच्छिइ, दच्छं व अहं ति चिलिमिली तेनं ।
दगतीरे वि न चिट्ठइ, तदालया मा हु संकेज्जा ।।

वृ- मा मां 'कोऽपि' सागारिको द्रक्ष्यति, अहं वा तं सागारिकं मा द्राक्षमिति कृत्वा चिलिमिली क्रियते । अत्रापि दकतीरेऽनेनैव कारणेन न तिष्ठति यत् 'तदालयाः' दकतीराश्रिता जन्तवो मा शङ्कन्तामिति ।। अनेन सम्बन्धेनायातस्यास् व्याख्या- नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'दकतीरे' उदकोपकण्ठे 'स्थातुं वा' ऊर्ध्वस्थितस्यासितुं 'निषत्तुं वा' उपविष्टस्य स्थातुं 'त्वग्वर्त्तयितुं वा' दीर्घं कायं प्रसारयितुं 'निद्रायितुं वा' सुखप्रतिबोधावस्थया निद्रया शयितुं 'प्रचलायितुं वा' स्थितस्य स्वप्तुम्, अशनं वा पानं वा खादिमं वा स्वादिमं वाऽऽहारयितुम्, उच्चारं वा प्रश्रवणं वा खेलं वा सिङ्घानं वा परिष्ठापयितुम्, 'स्वाध्यायं वा' वाचनादिकं कर्तुम्, 'धर्मजागरिकां वा' धर्मध्यानलक्षणां 'जागरितुं' कर्तुम् धातूनामनेकार्थत्वात्. अत्र पाठान्तरम्- ''झाणं वा झाइत्तए'' धर्मध्यानमनुस्मर्त्त मिति, 'कायोत्सर्गं वा' चेष्टा-ऽभिभवभेदाद् द्विविधकायोत्सर्गलक्षणं स्थानं 'स्थातुं' कर्तुमित्यर्थः । एष सूत्रार्थः ।। अथ निर्युक्तिविस्तरः-

[भा.२३८४] दगतीर चिट्ठणादी, जूयग आयावणा य बोधव्वा ।
लहुओ लहुया लहुया, तत्थ वि आणाइणो दोसा ।।

वृ-दकतीरे स्थानादीनि कुर्वतः प्रत्येकं लघुको मासः । 'यूपके' वक्ष्यमाणलक्षणे वसतिं गृह्णाति चतुर्लघुकाः । 'आतापनां' प्रतीतामपि दकतीरे कुर्वतश्चतुर्लघुकाः प्रायश्चित्तं बोद्धव्याः । तत्रापि प्रत्येकमाज्ञादयो दोषाः ।। अत्र दकतीरस्य प्रमाणे बहव आदेशाः सन्ति तानेव दर्शयति-

[भा.२३८५] नयने पूरे दिट्ठे, तडि सिंचण वीइमेव पुट्ठे य ।
अच्छंते आरण्णा, गाम पसु-मणुस्स-इत्थीओ ।।

वृ- नोदकः प्राह- ''नयनि'' ति उदकाकराद् यत्रोदकं नीयते तद् दकतीरम्, यदि व यावन्मात्रं नदीपूरेणाक्रम्यते तद् दकतीरम्, यद्वा यत्र स्थितैर्जलं दृश्यते तद् दकतीरम्, अथवा यावत्तद्यास्तटी भवति, यदि वा यत्र स्थितो जलस्थितेन शृङ्गकादिना सिच्यते, अथवा यावन्तं भूभागं वीचयः स्पृशन्ति, यदि वा यावान् प्रदेशो जलेन स्पृष्ट एतद् दकतीरम् । सूरिराह-यानि त्वया दकतीरलक्षणानि प्रतिपादितानि तानि न भवन्ति, किन्त्वारण्यका ग्रामेयका वा पशवो मनुष्याः स्त्रियो वा जलार्थिन आगच्छन्तः साधुं यत्र स्थितं दृष्ट्वा तिष्ठन्ति निवर्तन्ते वा तद् दकतीरमुच्यते ।। एतदेव सविशेषमाह-

[भा.२३८६] सिंचण-वीई-पुट्ठा, दगतीरं होइ न पुन तम्मत्तं ।
ओतरितरिउमणा, जहिं दट्ठुं तसंति तं तीरं ।।

वृ- नयन-पूरप्रभृतीनां सप्तानामादेशानां मध्याच्चरमाणि त्रीणि सिञ्चन-वीचि-स्पृष्टलक्षणानि दकतीरं भवन्ति, न पुनस्तावन्मात्रमेव, किन्त्वारण्यका ग्रामेयका वा तिर्यङ्-मनुष्या जलपानाद्यर्थमवतरीतुमनसः पीत्वा वा उत्तरीतुमनसो जलचरा वा यत्र स्थितं साधुं दृष्ट्वा 'त्रस्यन्ति' बिभ्यति चलन्ति वा तदव्यभिचारि दकतीरमुच्यते ।। तत्र च स्थान-निषदनादिकरणे दोषान् दर्शयति-

[भा.२३८७] अहिगरणमंतराए, छेदन ऊसास अनहियासे अ ।
आहमन सिंच जलचर-खह-थलपाणाण वित्तासो ।।

**वृ-** दकतीरे तिष्ठतः साधोः 'अधिकरणं' वक्ष्यमाणलक्षणं बहूनां च प्राणिनामन्तरायं भवति। तथा साधोः सम्बन्धिनीनां पादरेणूनां 'छेदनकाः' सूक्ष्मावयवरूपा उड्डीय पानीये निपतेयुः, यद्वा 'छेदनं नाम' ते प्राणिनः साधुं दृष्ट्वा प्रतिनिवृत्ताः सन्तो हरितादिच्छेदनं कुर्वन्तो व्रजन्ति। "उस्सासे" ति उच्छ्वासविमुक्ताः पुद्गला जले निपतन्ति ततो अप्कायविराधना, यदि वा तेषां प्राणिनां तृषार्त्तानाम् 'उच्छ्वासः' च्यवनं भवेत् मरणमित्यर्थः। "अनहियासे य" त्ति 'अनधिसहाः' तृषामसहिष्णवस्ते ऽतीर्थेन जलमवतरेयुः, साधुर्वा कश्चिद् 'अनधिसहः' तृषार्त्तः पानीयं पिबेत्। दुष्टगवा-ऽश्वादिना वा तस्याहननं भवेत्। दकतीरस्थितं वा अनुकम्पया प्रत्यनीकतया वा कश्चिद् दृष्ट्वा सिञ्चनं कुर्यात्। जलचर-खचर-स्थलचरप्राणिनां च विनाशो भवेत्॥

तत्राधिकरणं व्याचिख्यासुराह-

[भा.२३८८] दट्टूण वा नियत्तण, अभिहननं वा वि अन्नतूहेणं।
गामा-ऽऽरन्नपसूणं, जा जहिं आरोवणा भणिया॥

**वृ-** साधुं दृष्ट्वाऽऽरण्यकादिप्राणिनां निवर्त्तनं भवति, अभिहननं वा परस्परं तेषां भवेत्, "अन्नतूहेणं" ति अन्यतीर्थेन वा ते जलमवतरेयुः, तेषां च ग्रामा-ऽऽरण्यपशूनां निवर्त्तनादौ षट्कायोपमर्दसम्भवात् "छक्काय चउसु लहुगा" इत्यादिना या यत्रारोपणा भणिता सा तत्र द्रष्टव्या। एष निर्युक्तिगाथासमासार्थः॥ अथैनामेव विवृणोति-

[भा.२३८९] पडिपहनियत्तमाणम्मि अंतरायं च तिमरणे चरिमं।
सिग्घगइतन्निमित्तं, अभिघातो काय-आयाए॥

**वृ-** आरण्यकाः तिर्यञ्चः तिर्यक्स्त्रियो वा 'पानीयं पिबामः' इत्याशया तीर्थाभिमुखमायान्तः साधुं दकतीरस्थितं दृष्ट्वा प्रतिपथेन निवर्त्तन्ते, निवर्त्तमाने च तत्रारण्यकप्राणिगणे साधोरधिकरणं भवति। तेषां च तृषार्त्तानामन्तरायं चशब्दात् परितापना च कृता भवति। तत्रैकस्मिन् परितापिते च्छेदः, द्वयोस्तु मूलम्, त्रिष्वनवस्थाप्यम्, चतुर्षु परितापितेषु पाराञ्चिकम्, एतेनान्तरायपदं व्याख्यातम्। "तिमरणे चरिमं" ति यद्येकस्तृषार्त्तो म्रियते ततो मूलम्, द्वयोर्म्रियमाणयोरनवस्थाप्यम्, त्रिषु म्रियमाणेषु साधोः पाराञ्चिकम्, एतेनोच्छ्वासपदं विवृतम्। तथा तं साधुं दृष्ट्वा ते तिर्यञ्चो भीताः शीघ्रगत्या पलायमाना अन्योऽन्यं वा अभिघातयेयुः, षट्कायानां वा तन्निमित्तं शीघ्रं धावमाना अभिघातं विदध्युः, तत्र "छक्काय चउसु लहुगा" इत्यादिकं कायविराधनानिष्पन्नं प्रायश्चित्तम्। दृप्ता वा तिर्यञ्चस्तस्यैव साधोराहननादिनाऽऽत्मविराधनां कुर्युः। अनेनाहननपदं व्याख्यातम्॥ "अनहियासे अन्नतूहेणं" ति पदद्वयं भावयति-

[भा.२३९०] अतड-पवातो सो चेव य मग्गो अपरिभुत्त हरियादी।
ओवग कूडे मगरा, जइ घुंटे तसे य दुहतो वि॥

**वृ-** अथ तृषामसहिष्णवस्ते गवादयो अतटेन वा-अतीर्थेन अन्यतीर्थेन वाऽवतरेयुः छिन्नटङ्के वा प्रपातं दद्यु ततः परितापनाद्युत्था सैवारोपणा। अथवा 'स एव' अभिनवो मार्ग प्रवर्त्तते तत्र चापरिभुक्तेनावकाशेन गच्छन्तो हरितादीनां छेदनं कुर्यु तत्र तन्निष्पन्नं प्रायश्चित्तम्। एतेन च्छेदनपदं व्याख्यातम्। "ओवग" त्ति गर्त्ता तस्यां वा अतीर्थेनावतीर्णा सन्तः ते प्रपतेयुः, अतीर्थे वा केनचिल्लुब्धकेन कूटं स्थापितं भवेत् तेन कूटेन बद्धा विनाशमश्नुवते, अतीर्थेन वा जलमवतीर्णा

मकरादिभिः कवलीक्रियन्ते, तथा "जइ घुंटे" त्ति अन्यतीर्थेनातीर्थेन वा साधुनिमित्तमवतीर्णासिरहितेऽप्काये यावतो घुण्टान् कुर्वन्ति तावन्ति चतुर्लघूनि । "तसे य" त्ति अचित्तेऽप्काये यदि द्वीन्द्रियमश्नाति ततः षड्लघुकम्, त्रीन्द्रिये षड्गुरुकम्, चतुरिन्द्रिये च्छेदः, पञ्चेन्द्रिये एकस्मिन् मूलं द्वयोरनवस्थाप्यं त्रिषु पञ्चेन्द्रियेषु पाराञ्चिकम् । "दुहओ वि" त्ति यत्राप्कायोऽपि सचित्तः द्वीन्द्रियादयश्च तत्र त्रसास्तत्र द्वाभ्याम्-अप्काय-त्रसविराधनाभ्यां निष्पन्नं प्रायश्चित्तम् । सर्वत्रापि च द्वीन्द्रियेषु षट्सु त्रीन्द्रियेषु पञ्चसु चतुरिन्द्रियेषु चतुर्षु पञ्चेन्द्रियेषु त्रिषु पाराञ्चिकम् ॥ एते तावदारण्यकतिर्यक्समुत्था दोषा उक्ताः । अथ ग्रामेयकतिर्यक्समुत्थान् दोषानुपदर्शयति-

[भा.२३९१] गामेय कुच्छियाऽकुच्छिया य एक्केक्क दुट्ठऽदुट्ठा य ।
दुट्ठा जह आरण्णा, दुगुंछियऽदुगुंछिया नेया ॥

वृ- ते ग्रामेयकास्तिर्यञ्चो द्विविधाः-'कुत्सिताः' जुगुप्सिताः 'अकुत्सिताः' अजुगुप्सिताः । जुगुप्सिता गर्दभादयः, अजुगुप्सिता गवादयः । पुनरेकैके द्विविधाः-दुष्टा अदुष्टाश्च । तत्र ये जुगुप्सिता वा दुष्टास्ते द्वयेऽपि यथा आरण्यकास्तथैव दोषानाश्रित्य ज्ञेयाः । ये अजुगुप्सिता अदुष्टास्तेष्वपि यथासम्भवं दोषा उपयुज्य वक्तव्याः ॥ ये पुनर्जुगुप्सिता अदुष्टास्तेषु दोषानाह-

[भा.२३९२] भुत्तियरदोस कुच्छिय, पडिनीय च्छोभ गिण्हणादीया ।
आरण्णमनुय-थीसु वि, ते चेव नियत्तणाईया ॥

वृ- येन साधुना महाशब्दिकाद्या जुगुप्सिता तिरश्ची गृहस्थकाले भुक्ता तस्य तां तत्र दृष्ट्वा स्मृति, इतरस्य कौतुकम्, एवं भुक्ता-ऽभुक्तसमुत्था दोषा भवन्ति । अथवा तासु जुगुप्सितासु तिरश्चीषु पार्श्ववर्तिनीषु प्रत्यनीकः कोऽपि "छोभ" त्ति अभ्याख्यानं दद्यात्-मयैष श्रमणको महाशब्दिकां प्रतिसेवमानो दृष्ट इति, तत्र ग्रहणा-ऽऽकर्षणप्रभृतयो दोषाः । एवं ग्रामेयकाऽऽरण्यकेषु तिर्यक्षु दोषा उपदर्शिताः । अथ मनुष्येष्वभिधीयन्ते-"आरण्ण" इत्यादि, मनुष्या द्विविधाः-आरण्यका ग्रामेयकाश्च । तत्रारण्यकेषु पुरुषेषु त एव दोषाः, स्त्रीष्वप्यारण्यकासु त एव निवर्त्तना-ऽन्तरायादयो दोषा ये तिर्यक्षु भणिताः ॥ एते चान्येऽभ्यधिकाः-

[भा.२३९३] पायं अवाउडाओ, सबराईओ तहेव निल्लज्जा ।
आरियपुरिस कुतूहल, आउभयपुलिंद आसुवहो ॥

वृ- 'प्रायः' बाहुल्येन शबरीप्रभृतय आरण्यका अनार्यस्त्रियः 'अपावृताः' वस्त्रविरहिताः "निल्लज्जा" इति निर्लज्जाश्च भवन्ति, ततः साधुं दृष्ट्वा आर्योऽयं पुरुष इति कृत्वा कौतूहलेन तत्रागच्छेयुः, ताश्च दृष्ट्वा साधोरात्मोभयसमुत्था दोषा भवेयुः, तदीयपुलिन्दश्च तां साधुसमीपायातां विलोक्य ईर्ष्याभरेण प्रेरितः साधोः पुलिन्द्या उभयस्य वा आशु-शीघ्रं वधं कुर्यात् ॥

[भा.२३९४] थी-पुरिसअनायारे, खोभो सागारियं ति वा पहणे ।
गामित्थी-पुरिसेहि वि, ते च्चिय दोसा इमे अन्ने ॥

वृ- अथवा स पुलिन्दः पुलिन्द्या सहानाचारमाचरेत् ततः स्त्रीपुरुषानाचारे दृष्टे चित्तक्षोभो भवेत्, क्षुभिते च चित्ते प्रतिगमनादयो दोषाः । यद्वा स पुलिन्द्रस्तां प्रतिसेवितुकामः 'सागारिकं' वक्ष्यमाणलक्षणमिति कृत्वा तं साधुं प्रहण्यात् । एते आरण्यकेषु स्त्री-पुरुषेषु दोषा उक्ताः । ग्रामेयकस्त्री-पुरुषेष्वपि त एव दोषाः । एते चान्येऽधिका भवन्ति ॥

[भा.२३९५] चंकमणं निल्लेवण, चिट्ठित्ता तम्मि चेव तूहम्मि।
अच्छंते संकापद, मज्जण दट्ठुं सतीकरणं ॥

वृ- चङ्क्रमणं निर्लेपनं वा तत्र गृहस्थः कर्तुकामोऽपि साधुं दृष्ट्वा कश्चिदन्यत्र गत्वा करोति, कश्चिच्च तत्रैव तीर्थे साधुसमीपे गत्वा करोति। तथा "चिट्ठित्त"त्ति कश्चिद् गृहस्थः साधुना सह गोष्ठीनिमित्तं स्थित्वा पश्चादन्यत्र गच्छति। एवमधिकरणं भवेत्। तथा दकतीरे तिष्ठति साधौ 'शङ्कापदं' वक्ष्यमाणलक्षणमगारिणां जायते। मज्जनं च विधीयमानं दृष्ट्वा स्मृतिकरणं भुक्तभोगिनाम्, उपलक्षणत्वादभुक्तभोगिनां च कौतुकमुपजायते ॥

अथैनामेव निर्युक्तिगाथां विवृणोति-

[भा.२३९६] अन्नत्थ व चंकमती, आयमणऽन्नत्थ वा वि वोसिरइ।
कोनाली चंकमणे, परकूलाओ वि तत्थेइ ॥

वृ-कश्चिद् 'दकतीरे चङ्क्रमणं करिष्यामि' इत्यभिप्रायेणायातः साधुं दृष्ट्वा ततः स्थानादन्यत्र चङ्क्रम्यते, वाशब्दात् कश्चिदन्यत्र चङ्क्रम्यमाणः साधुं विलोक्य तत्रागत्य चङ्क्रम्येत। एवम् 'आचमनं' निर्लेपनं तत् कर्तुकामः संज्ञां वा व्युत्स्रष्टुकामः साधुं दृष्ट्वा अन्यत्र गत्वा अन्यतो वा तत्रागत्य निर्लेपयति व्युत्सृजति वा। तथा कश्चिदगारी गन्तुकामः परकूले चङ्क्रम्यमाणं साधुं निरीक्ष्य "कोनालि"त्ति गोष्ठीं तां साधुना सह करिष्यामीति मत्वा तदर्थं चङ्क्रमणं कर्तुं परकूलादपि तत्रागच्छति। सर्वत्र साधुनिमित्तमागच्छन्नागतस्तिष्ठंश्च षट् कायान् विराधयेत् ॥

"अच्छंते संकापय"त्ति पदं व्याख्यानयति-

[भा.२३९७] दग-मेहुणसंकाए, लहुगा गुरुगा उ मूल निस्संके।
दगतूर कोंचवीरग, पघंस केसादलंकारे ॥

वृ- साधुं दकतीरे तिष्ठन्तं दृष्ट्वा कश्चिदगारः शङ्कां कुर्यात्-किमेष उदकपानार्थं तिष्ठति? उत मैथुने दत्तसङ्केतां काञ्चिदागच्छन्तीं प्रतीक्षते?। तत्रोदकपानशङ्कायां चतुर्लघु, निशङ्किते चतुर्गुरुः मैथुनशङ्कायां चतुर्गुरु, निशङ्किते मूलम्। "मज्जण दट्ठुं सईकरणं" ति पदं व्याख्यायते-कोऽपि मज्जनं कुर्वन् तथा कथञ्चिद् जलमास्फालयति यथा 'दकतूर्यम्' उदके मुखादितूर्याणां शब्दो भवति। यद्वा कोऽपि क्रोञ्चवीरकेण जलमाहिण्डते। क्रोञ्चवीरको नाम पेटासदृशो जलयानविशेषः। "पघंस"त्ति स्नात्वा पटवासादिभि स्वशरीरं कोऽपि प्रघर्षयति। यद्वा "केसादलंकारे"त्ति केश-वस्त्र-माल्या-ऽऽभरणा-ऽलङ्कारैरात्मानमलङ्करोति। एतद् मज्जनादिकं दृष्ट्वा भुक्ता-ऽभुक्तसमुत्थाः स्मृत्यादयो दोषाः ॥ एवं पुरुषेषु भणितम्। अथ स्त्रीषु दोषान् दर्शयति-

[भा.२३९८] मज्जणवहणट्ठाणेसु अच्छंते इत्थिमं ति गहणादी।
एमेव कुच्छितेतर, इत्थि सविसेस मिहुनेसु ॥

वृ- सपरिग्रहस्त्रीणां वसन्तादिपर्वण्यन्यत्र वा या जलक्रीडा यद्वा सामान्यतो मल-दाहोपशमनार्थं स्नानं तद् मज्जनमुच्यते, तस्य जलवहनस्थानेषु स्त्रीणां सम्बन्धिषु तिष्ठन्तं साधुं दृष्ट्वा तदीयो ज्ञातिवर्गश्चिन्तयति-अस्मदीयस्त्रीणां मज्जनादिस्थाने एष श्रमणः परिभवेन कामयमानो वा तिष्ठति, ततो दुष्टशील इति कृत्वा ग्रहणा-ऽऽकर्षणादीनि कुर्यात्। याः पुनरपरिग्रहस्त्रियस्ताः 'कुत्सिताः' रजक्यादयः 'इतराः' अकुत्सिता ब्राह्मण्यादयः तास्वप्येवमेवात्मपरोभयसमुत्थादयो दोषाः।

'मिथुनेषु' स्त्री-पुरुषयुग्मेषु मैथुनक्रीडया रममाणेषु सविशेषतरा दोषा भवन्ति, ये च चङ्क्रमणादयो दोषाः पूर्वमुक्तास्तेऽप्यत्र सविशेषतरा द्रष्टव्याः । यत एते दोषा अतो दकतीरेऽमूनि सूत्रोक्तानि पदानि न कुर्यात् ॥

[भा.२३९९] चिट्ठण निसीयणे या, तुयट्ट निद्दा य पयल सज्झाए।
झाणाऽऽहार वियारे, काउस्सग्गे य मासलहू ॥

वृ- स्थाने १ निषदने २ त्वग्वर्त्तने ३ निद्रायां ४ प्रचलायां ५ स्वाध्याये ६ ध्याने ७ आहारे ८ विचारे ९ कायोत्सर्गे १० चेति दशसु पदेषु दकतीरे विधीयमानेषु प्रत्येकं मासलघु, असामाचारीनिष्पन्नमिति भावः ॥ अथ निद्रा-प्रचलयोः स्वरूपमाह–

[भा.२४००] सुहपडिबोहो निद्दा, दुहपडिबोहो उ निद्दनिद्दा य।
पयला होइ ठियस्सा, पयलापयला य चंकमओ ॥

वृ- सुखेन-नखच्छोटिकामात्रेणापि प्रतिबोधो यस्मिन् स सुखप्रतिबोधः, एवंविधः स्वापविशेषो निद्रेत्युच्यते । यत्र तु दुःखेन-महता प्रयत्नेन प्रतिबोधः स निद्रानिद्रा । तथा स्थितो नाम-उपविष्ट ऊर्ध्वस्थितो वा तस्य या स्वापावस्था सा प्रचला । या तु 'चङ्क्रमतः' गतिपरिणतस्य निद्रा सा प्रचलाप्रचला । अत्र च निद्रा-प्रचलयोरधिकारे यन्निद्रानिद्रा-प्रचलाप्रचलयोर्व्याख्यानं तदनयोरप्यत्रैवान्तर्भावो द्रष्टव्य इति ज्ञापनार्थम् ॥ अथ विस्तरतः प्रायश्चित्तं वर्णयितुकाम आह-

[भा.२४०१] संपाइमे असंपाइमे व दिट्ठे तहेव अद्दिट्ठे।
पनगं लहु गुरु लहुगा, गुरुग अहालंद पोरुसी अहिया ॥

वृ- दकतीरे 'सम्पातिमेऽसम्पातिमे वा' उभयस्मिन्नपि वक्ष्यमाणलक्षणे दृष्टोऽदृष्टो वा तिष्ठति। कियन्तं पुनः कालम् ? इत्याह-यथालन्दं पौरुषीमधिकं वा पौरुषीम् । तत्र यथालन्दं त्रिधा-जघन्यं मध्यममुत्कृष्टं च । तत्र स्त्रिया आर्द्रः करो यावता कालेन शुष्यति तद् जघन्यम्, उत्कृष्टं पूर्वकोटिप्रमाणम्, तयोरपान्ताले सर्वमपि मध्यमम् । अत्र जघन्येन यथालन्देनाधिकारः । एवं यथालन्दादिभेदात् त्रिविधं कालं दकतीरे तिष्ठतः पञ्चकं लघुको गुरुको मासः लघुका गुरुकाश्चत्वारो मासा प्रायश्चित्तम् । एतदुपरिष्टाद् व्यक्तीकरिष्यते ॥

अथ सम्पातिमा-ऽसम्पातिमपदे व्याख्याति-

[भा.२४०२] जलजा उ असंपाती, संपातिम सेसगा उ पंचिंदी।
अहवा मुत्तु विहंगे, होंति असंपातिमा सेसा ॥

वृ- ये 'जलजाः' मत्स्य-मण्डूकादयस्तेऽसम्पातिमाः, तैर्युक्तं दकतीरमप्यसम्पातिमम् । शेषाः 'पञ्चेन्द्रियाः' स्थलचराः खेचरा वा ये स्थानान्तरादागत्य सम्पतन्ति ते सम्पातिमास्तैर्यद् युक्तं तत् सम्पातिमम् । अथवा 'विहङ्गाः' पक्षिणस्ते यत्रागत्य सम्पतन्ति तत् सम्पातिमम् । तान् मुक्त्वा 'शेषाः' स्थलचरा जलचरा वा सर्वेऽप्यसम्पातिमाः, तद्युक्तं दकतीरमसम्पातिमम् ॥

अथ पूर्वोक्तं प्रायश्चित्तं व्यक्तीकुर्वन्नाह–

[भा.२४०३] असंपाइ अहालंदे, अद्दिट्ठे पंच दिट्ठि मासो उ।
पोरिसि अदिट्ठि दिट्ठे, लहु गुरु अहि गुरुओ लहुआ उ ॥

वृ- असम्पातिमे दकतीरे जघन्यं यथालन्दमदृष्टस्तिष्ठति पञ्च रात्रिन्दिवानि, दृष्टस्तिष्ठति मासलघु,

असम्पातिमे पौरुषीमध्यस्तिष्ठति मासलघु, द्वयस्तिष्ठति मासगुरु, अधिकां पौरुषीमध्यस्तिष्ठति मासगुरु, द्वयस्तिष्ठति चतुर्लघु। एवमसम्पातिमे दकतीरे भणितम् ॥

[भा.२४०४] संपाइमे वि एवं, मासादी नवरि ठाइ चउगुरुए।
भिक्खू-वसभा-ऽऽयरिए, तव-कालविसेसिया अहवा ॥

वृ- सम्पातिमेऽप्येवमेवार्द्धापक्रान्त्या प्रायश्चित्तं द्रष्टव्यम्। नवरं लघुमासादारब्धं चतुर्गुरुके तिष्ठति, एतदोघतः प्रायश्चित्तम्। अथवैतान्येव भिक्षु-वृषभा-ऽभिषेका-ऽऽचार्याणां तपः-कालविशेषितानि भवन्ति। तथाहि-पूर्वोक्तं सर्वमपि प्रायश्चित्तं भिक्षोस्तपसा कालेन च लघुकम्, वृषभस्य कालगुरु तपोलघु, अभिषेकस्य तपोगुरु काललघु, आचार्यस्य तपसा कालेन च गुरुकम्। अत्र चाभिषेकपदं गाथायामनुक्तमपि "तन्मध्यपतितस्तद्ग्रहणेन गृह्यते" इति न्यायात् प्रतिपत्तव्यम्। एष द्वितीय आदेशः ॥

[भा.२४०५] अहवा भिक्खुस्सेयं, वसभे लहुगाइ ठाइ छल्लहुए।
अभिसेगे गुरुगादी, छग्गुरु लहु छेदो आयरिए ॥

वृ-अथवा यदेतत् प्राश्चित्तमुक्तं तद् भिक्षोर्द्रष्टव्यम्। वृषभस्य तु मासलघुकादारब्धं षड्लघुके तिष्ठति, तत्रासम्पातिमे यथालन्द-पौरुषी-समधिकपौरुषीषु द्वा-द्वयोर्मासलघुकादारब्धं चतुर्गुरुके तिष्ठति। सम्पातिमे एतेष्वेव स्थानेषु मासगुरुकादारब्धं षड्लघुके पर्यवस्यति। 'अभिषेकस्य' उपाध्यायस्यासम्पातिमे मासगुरुकादारब्धं षड्लघुके तिष्ठति, सम्पातिमे चतुर्लघुकादारब्धं षड्गुरुके तिष्ठति। आचार्यस्य चतुर्लघुकादारब्धमसम्पातिमे षड्गुरुके सम्पातिमे चतुर्गुरुकादारब्धं छेदे निष्ठामुपगच्छति। एष तृतीय आदेशः ॥ अथ चतुर्थमादेशमाह-

[भा.२४०६] अहवा पंचण्हं संजईण समणाण चेव पंचण्हं।
पनगादी आरद्धं, नेयव्वं जाव चरिमपदं ॥

वृ-अथवा क्षुल्लिकादिभेदात् पञ्चानां संयतीनां श्रमणानां चैव पञ्चानां पञ्चकादेरारब्धं प्रायश्चित्तं तावद् नेतव्यं यावत् 'चरमपदं' पाराञ्चिकम् ॥ एतदेव सविशेषमाह-

[भा.२४०७] संजइ संजय तह संपऽसंप अहलंद पोरिसी अहिया।
चिट्ठाई अदिट्ठे, दिट्ठे पनगाइ जा चरिमं ॥

वृ- संयत्यः क्षुल्लिका स्थविरा भिक्षुणी अभिषेका प्रवर्त्तिनी चेति पञ्चविधाः, संयता अपि क्षुल्लक-स्थविर-भिक्षुको-पाध्याया-ऽऽचार्यभेदात् पञ्चधा, "संपऽसंप"त्ति सूचकत्वात् सूत्रस्य सम्पातिममसम्पातिमं वा दकतीरम्, यथालन्द-पौरुषी-अधिकपौरुषीलक्षणं कालत्रयम्, स्थान-निषदनादीनि च दश पदानि, अदृष्टे दृष्टे चेति पदद्वयम्। एतेषु पदेषु पञ्चकादिकं चरमं प्रायश्चित्तं यावद् नेतव्यम् ॥ कियन्ति पुनः प्रायश्चित्तस्थानानि भवन्ति? इति दर्शयति-

[भा.२४०८] पण दस पनरस वीसा, पनवीसा मास चउर छ चेव।
लहु गुरुगा सव्वेते, छेदो मूलं दुगं चेव ॥

वृ- पञ्चरात्रिन्दिवानि दशरात्रिन्दिवानि पञ्चदशरात्रिन्दिवानि विंशतिरात्रिन्दिवानि पञ्चविंशतिरात्रिन्दिवानि मासिकं चत्वारो मासाः षण्मासाश्च, एतानि सर्वाणि लघुकानि गुरुकाणि च, तद्यथा-लघुपञ्चरात्रिन्दिवानि गुरुपञ्चरात्रिन्दिवानि इत्यादि, एतानि षोडश सञ्जातानि, छेदो

मूलं 'द्विकं चैव' अनवस्थाप्य-पाराञ्चिकयुगम्, एवं विंशति प्रायश्चित्तस्थानानि भवन्ति ॥

अथामीषामेव पदानां चारणिकां कुर्वन्नाह-

[भा.२४०९] पलगाइ असंपाइम, संपाइमऽदिट्ठमेव दिट्ठे य।
चउगुरुए ठाइ खुड्डी, सेसाणं वुड्ढि एक्केक्कं ॥

वृ- असम्पातिमे यथालन्दमदृष्टा क्षुल्लिका तिष्ठति लघुपञ्चकम्, दृष्टा तिष्ठति गुरुपञ्चकम्, पौरुषीमदृष्टा तिष्ठति गुरुपञ्चकम्, दृष्टा तिष्ठति लघुदशकम्, अधिकं पौरुषीमदृष्टा तिष्ठति लघुदशकम्, दृष्टायां गुरुदशकम्। सम्पातिमे यथालन्दमदृष्टा तिष्ठति गुरुपञ्चकम्, दृष्टा तिष्ठति लघुदकम्, पौरुषीमदृष्टा तिष्ठति लघुदशकम्, दृष्टायां गुरुदशकम्, समधिकां पौरुषीमदृष्टायां तिष्ठन्त्यां गुरुदशकम्, दृष्टायां लघुपञ्चदशकम्। एवमूर्द्धवस्थानमाश्रित्योक्तम्। निषीदन्त्यास्तु गुरुपञ्चरात्रिन्दिवेभ्यः प्रारब्धं गुरुपञ्चदशरात्रिन्दिवेषु, त्वग्वर्त्तनं कुर्वत्या लघुदशरात्रिन्दिवादारब्धं लघुविंशतिरात्रिन्दिवेषु, एवं निद्रायमाणाया गुरुविंशतिरात्रिन्दिवेषु, प्रचलायमानाया लघुपञ्चविंशतिरात्रिन्दिवेषु, अशनाद्याहारमाहरन्त्या गुरुपञ्चविंशतिरात्रिन्दिवेषु, उच्चारप्रश्रवणे आचरन्त्या लघुमासे, स्वाध्यायं विदधानाया मासगुरुके, धर्मजागरिकया जाग्रत्याश्चतुर्लघुके, कायोत्सर्गं कुर्वत्याश्चतुर्गुरुके तिष्ठति। एवं क्षुल्लिकायाः प्रायश्चित्तमुक्तम्। शेषाणां तु स्थविरादीनामेकैकं स्थानमुपरि वर्द्धते अधस्ताच्चैकैकं स्थानं हीयते। तद्यथा-स्थविराया गुरुपञ्चकादारब्धं षड्लघुकं यावद्, भिक्षुण्या लघुदशकादारब्धं षड्गुरुकान्तम्, अभिषेकाया गुरुदशकादारब्धं छेदपर्यन्तम्, प्रवर्त्तिन्या लघुपञ्चदशकादारब्धं मूलान्तमवसातव्यम्॥ एतदेवाह-

[भा.२४१०] छल्लहुए ठाइ थेरी, भिक्खुणि छग्गुरुए छेद गणिणी उ।
मूले पवत्तिनी पुन, जह भिक्खुणि खुड्डए एवं ॥

वृ- स्थविरा षड्लघुके, भिषुणी षड्गुरुके, 'गणिनी' अभिषेका सा छेदे, प्रवर्त्तिनी पुनर्मूले तिष्ठतीति। यथा च भिक्षुण्यां एवं क्षुल्लकेऽपि द्रष्टव्यम्, दशभ्यो लघुरात्रिन्दिवेभ्यः षड्गुरुकान्तमसम्पातिम-सम्पातिमादिषु प्रायश्चित्त भवतीत्यर्थः ॥

[भा.२४११] गणिणिसरिसो उ थेरो, पवत्तिणिविभागसरिसओ भिक्खू।
अड्ढोक्कंती एवं, सपदं सपदं गणि-गुरूणं ॥

वृ- गणिनी-अभिषेका तस्याः सदृशः स्थविरः, यथा अभिषेकाया गुरुदशकमादौ कृत्वा च्छेदान्तं भणितं तथा स्थविरस्यापि भणनीयमिति भावः। प्रवर्त्तिन्याः प्रायश्चित्तविभागेन सदृशो भिक्षुर्भवति, लघुपञ्चदशकात् प्रभृति मूलान्तं प्रायश्चित्तं तस्यापि ज्ञेयमिति हृदयम्। एवम् 'अर्द्धापक्रान्त्या' अधस्तनैकपदह्रासोपरितनपदैकवृध्यात्मिकया गणी उपाध्यायो गुरु-आचार्यस्तयोरपि स्वपदं स्वपदं यावत् प्रायश्चित्तं नेतव्यम्, तत्रोपाध्यायस्य गुरुपञ्चदशकमादौ कृत्वा स्वपदमनवस्थाप्यम्, आचार्यस्य लघुविंशतिरात्रिन्दिवादारभ्य स्वपदं पाराञ्चिकं यावद् द्रष्टव्यम्॥

[भा.२४१२] एवं तु चिट्ठणादिसु, सव्वेसु पदेसु जाव उस्सग्गो।
पच्छित्ते आदेसा, इक्किक्कपयम्मि चत्तारि ॥

वृ- 'एवम्' अमुना प्रकारेण स्थान-निषदनादिषु सर्वेष्वपि पदेषु कायोत्सर्गं यावदेकैकस्मिन् पदे प्रायश्चित्तविषयाश्चत्वार आदेशा भवन्ति। तद्यथा-एकं तावदौघिकं प्रायश्चित्तम्, द्वितीयं

तदेव तपः-कालविशेषितम्, तृतीयं छेदान्तम्, चतुर्थं चारणिकाप्रायश्चित्तम् ।। गतं दकतीरद्वारम्। अथ यूपकस्यावसरः, तमेवाभिधित्सुराह-

[भा.२४१३] संकम जूवे अचले, चले य लहुगो य हुंति लहुगा य ।
तम्मि वि सो चेव गमो, नवरि गिलाणे इमं होइ ।।

वृ- यूपकं नाम-बेटकाख्यं जलमध्यवर्त्ति तटम्, तत्र देवकुलिका वा गृहं वा भवेत् तत्र वसतिं गृह्णतश्चतुर्लघुकाः । तच्च यूपकं सङ्क्रमेण वा गम्येत जलेन वा । सङ्क्रमो द्विविधः- चलोऽचलश्च। अचलेन गच्छतो मासलघु । चलो द्विविधः-सप्रत्यपायो निष्प्रत्यपायश्च । सप्रत्यपायेन गच्छतश्चतुर्गुरुकम्, निष्प्रत्यपायेन व्रजतश्चत्वारो लघुकाः । तस्मिन्नपि यूपके 'स एव गमः' सैव वक्तव्यता या दकतीरे भणिता "अधिकरणमन्तरायः" इत्यारभ्य यावद् "एकैकस्मिन् पदे चत्वार आदेशाः" इति । नवरं ग्लानं प्रतीत्य इदमभ्यधिकं दोषजालं भवति ।।

[भा.२४१४] दट्ठूण व सइकरणं, ओभासण विरहिए य आइयणं ।
परितावण चउगुरुगा, अकप्प पडिसेव मूल दुगं ।।

वृ- ग्लानस्य तदुदकं दृष्ट्वा 'स्मृतिकरणम्' ईदृशी स्मृतिरुत्पद्यते-पिबाम्यहमुदकम् । ततोऽवभाषणं करोति, यदि दीयते तत-संयमविराधना, अथ न दीयते ततो ग्लानः परित्यक्तः। विरहिते च कारणतः साधुभि प्रतिश्रये उदकस्य "आइयणं"ति पानं कुर्यात्, यदि स्वलिङ्गेनापिबति ततश्चतुर्लघुकम् । अथ "दुगं"ति गृहिलिङ्गमन्यतीर्थिकलिङ्गं च तेन 'अकल्पम्' अप्कायं प्रतिसेवते ततो मूलम्, तेन चापथ्येनानागाढपरितापनादयो दोषाः, तन्निष्पन्नमाचार्यस्य प्रायश्चित्तम् । अथवा "अकप्प पडिसेव मूल दुगं"ति अकल्पं प्रतिसेव्य भग्नव्रतोऽहमिति कृत्वा यद्येको ग्लानोऽवधावते तत आचार्यस्य मूलम्, द्वयोरनवस्थाप्यम्, त्रिषु पाराञ्चिकम् ।।

[भा.२४१५] आउक्काए लहुगा, पूयरगादीतसेसु जा चरिमं ।
जे गेलन्ने दोसा, धिइदुब्बले सेहे ते चेव ।।

वृ- अप्काये प्रतिसेविते चतुर्लघुकाः । पूतरकादित्रसेषु 'चरमं' पाराञ्चिकं यावन्नेतव्यम् । तत्र पूतरकादिषु द्वीन्द्रियेषु षड्लघुकम्, त्रीन्द्रियेषु षड्गुरुकम्, चतुरिन्द्रियेषु च्छेदः पञ्चेन्द्रिये मत्स्यादौ उदकेन सह गिलिते एकस्मिन् मूलम्, द्वयोरनवस्थाप्यम्, त्रिषु पाराञ्चिकम् । ये च ग्लान्ये ग्लानस्य स्मृतिकरणा-प्कायपानादयो दोषा उक्ताः 'धृतिदुर्बले' मन्दश्रद्धे शैक्षे त एव द्रष्टव्याः ।। गतं यूपकद्वारम् । अथातापनाद्वारमाह निर्युक्तिकारः-

[भा.२४१६] आयावण तह चेव उ, नवरि इमं तत्थ होइ नाणत्तं ।
मज्जन सिंचन परिणाम वित्ति तह देवया पंता ।।

वृ- ये दकतीरेऽधिकरणा-ऽन्तरायादयो दोषा उक्तास्ते यथासम्भवं दकतीरे यूपके वा आतापनां कुर्वतस्तथैव भणितव्याः, नवरमिदं 'नानात्वं' विशेषो भवति-तत्रातापयतो मज्जनं वा सिञ्चनं वा कश्चित् कुर्यात्, परिणामो वा तस्य स्नानादिविषयो भवेत्, 'वृत्तिर्वा' आजीविका मरुकाणां व्यवच्छिद्येत, प्रान्ता वा देवता लोकेनापूज्यमाना साधोरुपसर्गं कुर्यात् ।।

तत्र मज्जन-सिञ्चन-परिणामद्वाराणि व्याख्यानयति-

[भा.२४१७] मज्जंति व सिंचंति व, पडिनीयऽनुकंपया व णं केई ।

तण्हुण्हपरिगयस्स व, परिणामो ण्हाण-पियणेसु ॥

वृ- "णं" इति तमातापकं प्रत्यनीकतया अनुकम्पया वा केचिद् 'मज्जयन्ति वा' स्नपयन्ति 'सिञ्चन्ति वा' श्‌ कच्छटादिभिरञ्जलीभिर्वा निर्वापयन्ति । यद्वा तस्यातापकस्य 'तृषितोऽहम्' इत्येवं तृष्णापरिगतस्य 'घर्माभिभूतगात्रोऽहम्' इत्येवमुष्णपरिगतस्यवा स्नान-पानयोः परिणामः सञ्जायते ॥ वृत्तिद्वारं प्रान्तदेवताद्वारं चाह-

[भा.२४१८] आउट्ट जणे मरुगाण अदाने खरि-तिरिक्खिछोभादी ।

पच्चक्खदेवपूयण, खरियाऽऽवरणं व खित्ताई ॥

वृ- तस्यातापनया आवृत्तः-आवर्जितो जनो मरुकाणां दानं न ददाति, ततस्तेषामदाने खरीद्व्यक्षरिका तिरश्ची-महाशब्दिकाप्रभृतिका तद्विषयं छोभम्-अभ्याख्यानं तदादयो दोषा भवेयुः । तथा 'प्रत्यक्षदेवताऽयम्' इति कृत्वा तस्य साधोः पूजनं देवतायाश्चापूजनम्, ततः "खरियाऽऽवरणं" ति संयतवेषमावृत्य तत्प्रतिरूपं कृत्वा व्यक्षरिकां प्रतिसेवमानं देवता दर्शयेत्, क्षिप्तचित्तादिकं वा तं श्रमणं सा देवता कुर्यादिति ॥ अथैनामेव निर्युक्तिगाथां स्पष्टयति-

[भा.२४१९] आयावण साहुस्सा, अनुकंपं तस्स कुणइ गामो उ ।

मरुयाणं च पओसो, पडिनीयाणं च संका य ॥

वृ-तस्य साधोर्दकतीरे आतापनां कुर्वतो ग्रामजनः सर्वोऽप्यावृत्तः, ततश्चानुकम्पां तस्य करोति, पारणकदिवसे भक्तादिकं सविशेषं ददातीत्यर्थः, 'अयं प्रत्यक्षदेवः, किम्माकमन्येषां मरुकादीनां दत्तेन ? एतस्य दत्तं बहुफलं भवति' इति कृत्वा । ततो मरुकाणामदीयमाने प्रद्वेषः सञ्जातः, ततस्ते द्व्यक्षरिका-महाशब्दिकादिविषयमयशः प्रदद्युः, यथा-एष संयतोऽस्माभिर्द्व्यक्षरिकां महाशब्दिकां वा प्रतिसेवमानो दृष्ट इति । तत्र ये प्रत्यनीकास्तेषां शङ्का भवति तत्र चतुर्गुरु, निःशङ्किते मूलम्; अथवा ये प्रत्यनीकास्ते शङ्कन्ते-कस्मादेष तीर्थस्थाने आतापयति ? किं स्तैन्यार्थी? उत मैथुनार्थी ? इति ॥ गतं वृत्तिद्वारम् । अथ "पच्चक्खदेव" इत्यादि पश्चार्द्धं भाव्यते-यत्रासावातपयति तत्रप्रत्यासन्ना देवता वर्त्तते तस्या लोकः सर्वोऽपि पूर्वं पूजापर आसीत् । तं च साधुं तत्रातापयन्तं दृष्ट्वा अयं प्रत्यक्षदैवतमिति कृत्वा लोकस्तं पूजयितुं लग्नः । ततः सा देवता अपूज्यमाना प्रद्विष्टा सती द्व्यक्षरिकाद्यभ्याख्यानं दद्यात् । अथवा साधुरूपमावृत्य तत्प्रतिरूपं द्व्यक्षरिकां तिरश्चीं वा प्रतिसेवमानं दर्शयेत्, क्षिप्तचित्तं वा कुर्यात्, अपरां वा अकल्पप्रति-सेवनादिकामक्रियां दर्शयेत् । यस्मादियन्तो दोषास्तस्माद् दकतीरे यूपके वा न स्थानादीनि पदानि कुर्यात्, द्वितीयपदे कुर्यादपि । कथम् ? इत्याह-

[भा.२४२०] पढमे गिलाणकारण, बीए वसहीए असइए वसइ ।

रायणियकज्जकारण, तइए बिइयपय जयणाए ॥

वृ- प्रथमं-दकतीरं तत्र ग्लानकारणात् तिष्ठेत् । द्वितीयं-यूपकं तत्र निर्दोषाया वसतेः 'असति' अभावे 'वसति' तिष्ठति । 'तृतीयम्' आतापनापदं तत्र रात्निकः-राजा तदायत्तं यत् कुल-गण-सङ्घकार्यं तत्कारणे तिष्ठेत् । एवं त्रिष्वपि दकतीरादिषु 'यतनया' वक्ष्यमाणलक्षणया 'द्वितीयपदं' तत्रावस्थानलक्षणं सेवेत ॥ अथैनामेव निर्युक्तिगाथां भावयति-

[भा.२४२१] विज्ज-दवियट्ठयाए, निज्जंतो गिलाणो असति वसहीए ।

जोग्गाए वा असती, चिट्ठे दगतीरऽनोयारे ॥

वृ- ग्लानो वैद्यस्य समीपं नीयमानो द्रव्यम्-औषधं तदर्थं वाऽन्यत्र नीयमानोऽन्यत्र वसतेरभावे दकतीरेऽपि तिष्ठेत् । अथवा विद्यते वसति परं न ग्लानयोग्या ततो योग्याया वसतेरसति तत्र वसेत् । अथवा विश्रामणार्थं दकतीरे मुहूर्त्तमात्रं ग्लानस्तिष्ठेत् । तमपि मनुष्य-तिरश्चाम् 'अनवतारे' अप्रवेशमार्गेऽवतारयेत् ॥ तत्र च स्थितानामियं यतना-

[भा.२४२२] उदगंतेण चिलिमिणी, पडियरए मोत्तु सेस अन्नत्थ ।
पडियर पडिसंलीना, करिज्ज सव्वाणि वि पयाणि ॥

वृ- उदकं येनान्तेन-पार्श्वेन भवति ततश्चिलिमिली कटको वा दीयते, ये च ग्लानस्य प्रतिचरकास्तान् मुक्त्वा शेषाः सर्वेऽप्यन्यत्र तिष्ठन्ति । प्रतिचरका अपि प्रतिसंलीनास्तथा तिष्ठन्ति यथा सम्पातिमा-ऽसम्पातिमसत्त्वानां सन्त्रासो न भवति । एवं सर्वाण्यपि स्थान-निषदनादीनि पदानि कुर्यात् ॥ गता दकतीरयतना । अथ यूपकयतनामाह-

[भा.२४२३] अद्धाणनिग्गयाई, संकम अप्पबहुं असुभं च।
गेलन्न-सेहभावो, संसट्ठुसिणं व निव्वविउं ॥

वृ- अध्वनिर्गतादयः साधवोऽन्यस्या वसतेरभावे यूपके तिष्ठन्ति । तत्राल्पबहुत्वं ज्ञात्वा य एकाङ्गिकोऽचलो अरिशाटी निष्प्रत्यपायश्च सङ्क्रमस्तेन गन्तव्यम् । दिवा च रात्रौ च वसतिमशून्यां कुर्वन्ति । तत्र स्थितानां ग्लानस्य वा शैक्षस्य वा यदि 'पानीयं पिबामः' इत्यशुभो भाव उत्पद्यते ततस्तौ प्रज्ञाप्येते । तथाप्यस्थिते भावे तयोः संसृष्टपानकमुष्णोदकं वा 'निर्वाप्य' सुशीतलं कृत्वा दातव्यम् ॥ अथातापनायतनामाह-

[भा.२४२४] ओलोयण निग्गमणे, ससहाओ दगसमीवे आयावे ।
उभददो भोगजढे, कज्जे आउट्ट पुच्छणया ॥

वृ- चैत्यविनाश-तद्रव्यविनाशादिविषयं किमपि कार्यं राजाधीनं ततो राज्ञ आवर्जनार्थं दकसमीपे आतापयेत् । तच्च दकतीरं राज्ञोऽवलोकनपथे निर्गमनपथे वा भवेत् । तत्र चातापयन् 'ससहायः' नैकाकी 'उभयदढः' धृत्या संहननेन च बलवान् "भोगजढे" त्ति ग्रामेयका-ऽऽरण्यकानां तिर्यङ्-मनुष्याणामवतरणमार्गं मनुजानां च स्नानादिभोगस्थानं वर्जयित्वा अपरिभोग्ये प्रदेशे आतापयति। ततः स राजा तं महातपोयुक्तमातापयन्तं दृष्ट्वा आवृत्तः सन् कार्यं पृच्छेत्-भगवन् ! किमेवमातापयसि ? आज्ञापय, करोम्यहं युष्मदभिप्रेतं कार्यम्, भोगान् वा भगवतां प्रयच्छामि । मुनिराह-महाराज ! न मे कार्यं भोगादिभिर्वैः, इदं सङ्घकार्यं चैत्यविनाशनिवर्तनादिकं विदधातु महाराज इति ॥ अथ तस्य कीदृशः सहायो दीयते ? इत्याह-

[भा.२४२५] भाविय करणो तरुणो, उत्तर-सिंचणपहे य मुत्तूणं ।
मज्जणमाइनिवारण, न य हिंडइ पुप्फ वारेइ ॥

वृ- 'भावितो नाम' परिणतजिनवचनः तस्य अप्कायपाने परिणामो न भवति, "करणु" त्ति इषुशास्त्रे संयमे वा कृतकरणः, 'तरुणः' समर्थ, ईदृशः सहायस्तस्य नातिदूरे वृक्षच्छायाया-मुपविष्टस्तिष्ठति । स चातापकस्तिर्यङ्-मनुष्याणामुत्तरणपथं सिञ्चनपथं च मुक्त्वा आतापयति । तथाप्यातापयन्तं यदि कोऽपि मज्जयति वा सिञ्चयति वा ततस्तं सहायो निवारयति । स

चातापकस्तस्मिन् ग्रामे नगरे वा भिक्षां न हिण्डते, 'मा मरुकादयः प्रद्विष्टा अभ्याख्यानं विष-गरादि वा दद्यु' इति कृत्वा । यश्चातापकस्य पुष्पादीन्यालगयति तमप्यसौ सहायो वारयति ॥

*मू. (२०) नो कप्पइ निग्गंथाण वा निग्गंथीण वा सचित्तकम्मे उवस्सए वत्थए ॥*

*मू. (२१) कप्पइ निग्गंथाण वा निग्गंथीण वा अचित्तकम्मे उवस्सए वत्थए ॥*

वृ- अस्य सूत्रस्य सम्बन्धमाह–

[भा.२४२६] पढम-चउत्थवयाणं, अतिचारो होज्ज दगसमीवम्मि ।
इह वि य हुज्ज चउत्थे, सचित्तकम्मेस संबंधो ॥

वृ- प्रथम-चतुर्थव्रतयोरप्कायपान-स्त्रीपशुसंसर्गादिभिरतिचारो दकसमीपे तिष्ठतां भवेदिति कृत्वा तत्र न तिष्ठतीत्युक्तम् । इहापि च सचित्रकर्मणि प्रतिश्रये तिष्ठतां चतुर्थव्रतस्यातिचारो भवेदिति कृत्वा तत्र न तिष्ठतीत्यनेन प्रतिपाद्यते । एष सम्बन्धः ॥ प्रकारान्तरेण तमेवाह-

[भा.२४२७] नो कप्पइ जागरिया, ठिइपमाई [illegible] दगतीरे ।
चित्तगयमानसाणं, जागरि-ज्झाया कुतो अहवा ॥

वृ-अनन्तरसूत्रे नो कल्पते 'जागरिका' धर्मध्यानं स्थानादीनि च पदानि दकतीरे कर्तुमित्युक्तम्। इह तु चित्रगतमानसानां कुतो जागरिका-स्वाध्यायौ सम्भवतः ? इत्ययम् 'अथवा' द्वितीयः सम्बन्धः ॥ अनेन सम्बन्धद्वयेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'सचित्रकर्मणि' चित्रकर्मणा संयुक्त उपाश्रये वस्तुम् ॥ कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा अचित्रकर्मणि उपाश्रये वस्तुमिति सूत्रार्थः ॥ अथ भाष्यविस्तरः-

[भा.२४२८] निद्दोस सदोसे वा, सचित्तकम्मे उ दोस आणादी ।
सइकरणं विकहा वा, बिइयं असतीए वसहीए ॥

वृ- निर्दोषे वा सदोषे वा सचित्रकर्मणि प्रतिश्रये तिष्ठतामाज्ञादयो दोषाः । ये च तादृशे चित्रकर्मखचिते वेश्मनि पूर्वं भोगान् बुभुजिरे तेषां स्मृतिकरणम्, उपलक्षणत्वादितरेषां कौतुकमुपजायते, विकथा वा तत्र वक्ष्यमाणलक्षणा भवेत् । द्वितीयपदं चात्र-वसतावसत्यां तत्रापि वसेत् ॥ अथैनामेव निर्युक्तिगाथां व्याख्याति-

[भा.२४२९] तरु गिरि नदी समुद्दो, भवणा वल्ली लयावियाणा य ।
निद्दोस चित्तकम्मं, पुन्नकलस-सोत्थियाई य ॥

वृ- तरवः-सहकारादयः, गिरयः-हिमवदादयः, नद्यः-गङ्गा-सिन्धुप्रभृतयः, समुद्रः-लवणोदादिकः, भवनानि-चतुःशालादीनि गृहाणि, वल्लयः-नागवल्ल्यादयः, लताः-माधवी-चम्पकलतादयः तासां वितानं-निकुरुम्बम्, तथा पूर्णकलश-स्वस्तिकादयश्च ये माङ्गलिकाः पदार्था, एतेषां रूपाणि यत्रालिखितानि तच्चित्रकर्म निर्दोषं ज्ञातव्यम् ॥ अथ सदोषमाह–

[भा.२४३०] तिरिय-मनुय-देवीणं, जत्थ उ देहा भवंति भित्तिकया ।
सविकार निव्विकारा, सदोस चित्तं हवइ एयं ॥

वृ- 'तिर्यङ्-मनुज-देवीनाम्' इति तिरश्चीनां मानुषीणां देवीनां चेत्यर्थः, एतासां देहाः सविकारा निर्विकारा वा यत्र भित्तौ कृताः-आलिखिता भवन्ति एतत् चित्रकर्म सदोषं भवति ॥

अथात्रैव तिष्ठतां प्रायश्चित्तमाह-

[भा.२४३१] लहु गुरु चउण्ह मासो, विसेसितो गुरुगो आदि छल्लहुगा ।
चउलहुगादी छग्गुरु, उभयस्स वि दुविहचित्तम्मि ॥

वृ- निर्दोषे चित्रकर्मणि तिष्ठतां चतुर्णामपि तपः-कालविशेषितो लघुमासः । तद्यथा-आचार्यस्य द्वाभ्यामपि तपः-कालाभ्यां गुरुकः, उपाध्यायस्य तपोगुरुकः काललघुकः, वृषभस्य कालगुरुकस्तपोलघुकः, भिक्षोर्द्वाभ्यामपि लघुकः । निर्ग्रन्थीनामपि निर्दोषचित्रकर्मणि तिष्ठन्तीनां प्रवर्तिनी-गणावच्छेदिनी-अभिषेका-भिक्षुणीनामेवमेव तपः-कालविशेषितो गुरुको मासः । निर्ग्रन्थाः सदोषचित्रकर्मणि यदि तिष्ठन्ति तदा गुरुको मास आदौ क्रियते, षड्लघुकाश्च पर्यन्ते । तद्यथा-भिक्षोर्मासगुरुकम्, वृषभस्य चतुर्लघुकम्, उपाध्यायस्य चतुर्गुरुकम्, आचार्यस्य षड्लघुकम् । निर्ग्रन्थीनां तु सदोषे चित्रकर्मणि तिष्ठन्तीनां चतुर्लघुकमादौ कृत्वा षड्गुरुकान्तं प्रायश्चित्तम् । तद्यथा-भिक्षुण्याश्चतुर्लघुकम्, अभिषेकायाश्चतुर्गुरुकम्, गणावच्छेदिन्याः षड्लघुकम्, प्रवर्तिन्याः षड्गुरुकम् । एवम् 'उभयस्यापि' निर्ग्रन्थ-निर्ग्रन्थीवर्गस्य द्विविधे चित्रकर्मणि प्रायश्चित्तं ज्ञातव्यम्॥ अथ विकथापदं व्याख्यानयति-

[भा.२४३२] दिट्ठं अन्नत्थ मए, चित्तं तं सोभणं न एअं ति ।
इति विकहा पलिमंथो, सज्झायादीण कलहो य ॥

वृ- तत्र चित्रकर्म दृष्ट्वा कश्चित् साधुर्ब्रूयात्-मया पूर्वमन्यत्र चित्रकर्म दृष्टं तच्च 'शोभनं' वर्णक-रेखादिशुध्या रमणीयं न पुनः 'एतत्' प्रत्यक्षोपलभ्यमानम् । तदाकर्ण्य द्वितीयः साधुर्ब्रूयात्-मुग्धबुद्धे! किं जानीषे त्वम्? इदमेव रमणीयमिति । एवं विकथा सञ्जायते । ततश्च स्वाध्यायादीनां परिमन्थः कलहश्चोभयोरप्युत्तरप्रत्युत्तरिकां कुर्वतोरुत्पद्यते । यत एते दोषास्तस्मान्न स्थातव्यम्॥ द्वितीयपदं वसतावसत्यामिति द्वारं भावयति-

[भा.२४३३] अद्धाणनिग्गयाई, तिपरिरया असइ अन्नवसहीए ।
तरुणा करिंति दूरे, निच्चावरिए य ते रूवे ॥

वृ- अध्वनिर्गतादयस्त्रीन् परिरयान्-परिभ्रमणानि कृत्वा यद्यन्या निरुपहता वसतिर्न प्राप्यते ततः सचित्रकर्मकेऽप्युपाश्रये तिष्ठन्ति । तत्र च प्रथमं निर्दोषे पश्चात् सदोषेऽपि । ये च तरुणास्तान् चित्रकर्मणो दूरतः कुर्वन्ति । तानि च रूपाणि 'नित्यावृतानि' सदैव चिलिमिलिकया प्रच्छादितानि कुर्वन्ति, नापावृतानि स्थापयन्तीत्यर्थः ॥

मू. *(२२) नो कप्पइ निग्गंथीणं सागारियअनिस्साए वत्थए ॥*

मू. *(२३) कप्पइ निग्गंथीणं सागारियनिस्साए वत्थए ॥*

वृ- अस्य सूत्रस्य सम्बन्धमाह-

[भा.२४३४] एरिसदोसविमुक्कम्मि आलए संजईण नीसाए ।
कप्पइ जईण भइओ, वासो अह सुत्तसंबंधो ॥

वृ- ईदृशैः-अनन्तरोक्तैर्दोषैर्विमुक्तो य आलयः-उपाश्रयस्तस्मिन् संयतीनां सागारिकनिश्रया परिगृहीतानां वासः कल्पते । यतीनां तु 'भक्तः' विकल्पितः, निश्रया वा अनिश्रया वा तेषां वासः कल्पत इत्यर्थः । एतेन द्वितीयसूत्रस्यापि वक्ष्यमाणस्य सम्बन्धः प्रतिपादितः । 'अथ' एष सूत्रसम्बन्ध इति ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थीनां 'सागारिकानिश्रया'

शय्यातरेणापरिगृहीतानां वस्तुम् ॥ कल्पते निर्ग्रन्थीनां 'सागारिकनिश्रया' शय्यातरेण परिगृहीतानां वस्तुम् । एष सूत्रसङ्क्षेपार्थः ॥ अथ भाष्यकारो विस्तरार्थं बिभणिषुराह-

[भा.२४३५] सागारियं अनीसा, निग्गंथीण न कप्पए वासो ।
चउगुरु आयरियादी, दोसा ते चेव तरुणादी ॥

वृ- सागारिकः-शय्यातरस्तम् 'अनिश्राय' निश्रामकृत्वा । किमुक्तं भवति ? -शय्यातरस्य या निश्रा-'मया युष्माकं चिन्ता करणीया, न भवतीभि कुतोऽपि भेतव्यम्' इत्यभ्युपगमः, तामन्तरेण निर्ग्रन्थीनां न कल्पते वासः । अत एवैतत् सूत्रमाचार्यो यदि प्रवर्त्तिन्या न कथयति ततश्चत्वारो गुरुकाः । सा न प्रतिश्र णोति चत्वारो गुरुकाः । आचार्यमुखादाकर्ण्य सा संयतीनां न कथयति तदापि चतुर्गुरुकाः । यदि ता न प्रतिश्र ण्वन्ति तदा तासां लघुको मासः । तत्र चापरिगृहीते उपाश्रये वसन्तीनां त एव 'तरुणादयः' "तरुणा वेसित्थि विवाह" इत्यादयो दोषाः ये आपणगृहादौ तिष्ठन्तीनामुक्ताः ॥

[भा.२४३६] सागारियं अनिस्सा, भिक्खुणिमादीण संवसंतीणं ।
गुरुगा दोहि विसिट्ठा, चउगुरुगाई व छेदंता ॥

वृ- सागारिकम् 'अनिश्राय' निश्रामकृत्वा भिक्षुण्यादीनां संवसन्तीनां 'द्वाभ्यां' तपः-कालाभ्यां विशिष्टाश्चतुर्गुरुकाः । तत्र भिक्षुण्यास्तपसा कालेन च लघुकाः, अभिषेकायाः कालेन गुरुकाः, गणावच्छेदिन्यास्तपसा गुरुकाः, प्रवर्त्तिन्यास्तपसा कालेन च गुरुकाः । अथवा चतुर्गुरुकादीनि च्छेदान्तानि प्रायश्चित्तानि । तद्यथा-भिक्षुण्याश्चतुर्गुरुकम्, अभिषेकायाः षड्लघुकम्, गणावच्छेदिन्याः षड्गुरुकम्, प्रवर्त्तिन्याश्छेद इति । आज्ञादयश्च दोषाः ॥ अपि च-

[भा.२४३७] कंपइ वाएण लया, अनिस्सिया निस्सिया उ अक्खोभा ।
इय समणी अक्खोभा, सगारिनिस्सेयरा भइया ॥

वृ- 'लता' वल्ली 'अनिश्रिता' वृक्षाद्यालम्बनरहिता वातेन प्रेर्यमाणा सती कम्पते, 'निश्रिता तु' सालम्बना 'अक्षोभ्या' वातेन चालयितुमशक्या । "इय" एवं श्रमणी सागारिकनिश्रिता सती अक्षोभ्या, 'इतरा' अनिश्रिता 'भक्ता' विकल्पिता, यदि सा स्वयं धृति-बलयुक्ता तदा तरुणादीनामक्षोभ्या धृतिदुर्बला तु क्षोभणीयेति भावः ॥ आह श्रमणी न खल्वाचार्य-प्रवर्त्तिनीनिश्राविरहिता कदापि भवति, अतः किं कार्यं तस्याः सागारिकनिश्रया ? इत्युच्यते-

[भा.२४३८] दोहि वि पक्खेहि सुसंवुयाण तह वि गिहिनीसमिच्छंति ।
बहुसंगहिया अज्जा, होइ थिरा इंदलट्ठी वा ॥

वृ- 'द्वाभ्यामपि' आचार्य-प्रवर्त्तिनीलक्षणाभ्यां पक्षाभ्यां यद्यप्यार्या सुसंवृता वर्त्तन्ते तथापि तासां गृहिणः-सागारिकस्य निश्रामिच्छन्ति भगवन्तः । कुतः ? इत्याह-'बहुसङ्गहीताः' बहुभि-आचार्यादिभिश्चिन्तकैः परिगृहीता आर्या स्थिरा भवति इन्द्रयष्टिरिव । यथा खल्विन्द्रयष्टिर्बह्वीभिः इन्द्रकुमारिकाभिर्बद्धा सती निष्कम्पा भवति एवमियमपि ॥ किञ्च-

[भा.२४३९] पत्थितो वि य संकइ, पत्थिज्जंतो वि संकती बलिणो ।
सेणा वहू य सोभइ, बलवइगुत्ता तहऽज्जा वि ॥

वृ- प्रार्थयन्नप्यार्यां समर्थसागारिकनिश्रितां तरुणादिजनः 'शङ्कते' बिभेतीत्यर्थः । तथा प्रार्थ्यमानोऽपि संयतीजनः 'बलिनः' समर्थस्य शय्यातरस्य शङ्कते । अपि च यथा सेना बलपतिनासेनानायकेन यथा वा वधूर्बलवता श्वशुरपक्षेण पितृपक्षेण च गुप्ता-रक्षिता शोभते तथा आर्याऽपि बलवता शय्यातरेण परिगृहीता सती विराजते ।। अमुमेवार्थं व्यतिरेकमङ्ग्या दृष्टान्तेन द्रढयति-

[भा.२४४०] सुन्ना पसुसंघाया, दुब्बलगोवा य कस्स न वितक्का ।
इय दुब्बलनिस्साऽनिस्सिया व अज्ञा वितक्काओ ।।

वृ- 'शून्याः' रक्षापालविरहिताः 'दुर्बलगोपा वा' असमर्थरक्षपालपरिगृहीताः 'पशुसङ्घाताः' गवादिपशुवर्गा कस्य न 'वितक्याः' अभिलषणीया भवन्ति ? । 'इति' अमुना प्रकारेण दुर्बलशय्यातरनिश्रिताः सर्वथैवानिश्रिता वा आर्या सर्वस्यापि 'वितक्याः' प्रार्थनीया भवन्ति । अत्रैवार्थे दृष्टान्तान्तराणि दर्शयति-

[भा.२४४१] अइया कुलपुत्तगभोइया उ पक्कन्नमेव सुन्नम्मि ।
इच्छमनिच्छे तरुणा, तेणा उवहिं व ताओ वा ।।

वृ- 'अजिका' छगलिका, कुलपुत्रकाणां च भोजिका-महिला, 'पक्वान्न' मोदका-ऽशोकवर्त्यादि, यथैतानि शून्ये वर्त्तमानानि सर्वस्यापि स्पृहणीयानि भवन्ति एवं श्रमण्योऽपपि । तथा "इच्छमनिच्छे तरुण" त्ति तरुणान् प्रार्थयमानान् यदि ता इच्छन्ति ततो ब्रह्मव्रतभङ्गः, अथ नेच्छन्ति ततस्ते बलादपि तासां ग्रहणं कुर्यु । स्तेना उपधिं वा 'ता वा' संयतीरपहरेयुः ।।

[भा.२४४२] उच्छुय-घय-गुल-गोरस-एलाकुग-माउलिंगफलमादी ।
पुप्फविही गंधविही, आभरणविही य वत्थविही ।।

वृ- इक्षु-घृत-गुड-गोरसाः प्रतीताः, 'एलालुकानि' चिर्भटानि, 'मातुलिङ्गफलानि' बीजपूराणि, आदिशब्दादाम्रादिपरिग्रहः, तथा 'पुष्पविधिः' चम्पकादिका पुष्पजाति, गन्धाः-कोष्ठपुटपाकाद-यस्तेषां विधि- प्रकारो गन्धविधि, एवमाभरणविधिर्वस्त्रविधिश्च । एते इक्षुप्रभृतयः शून्या दुर्बलपरिगृहीता वा यथा सर्वस्यापि स्पृहणीयास्तथा संयत्योऽप्यनिश्रिता दुर्बलसागारिकनिश्रिता वा तरुणादीनां स्पृहणीयाः । अतोऽनिश्रया दुर्बलनिश्रया वा न स्थातव्यम् । भवेत् कारणं येनानिश्रयाऽपि तिष्ठेयुः । कथम् ? इति चेद् उच्यते-

[भा.२४४३] अद्धाणनिग्गयादी, तिक्खुत्तो मग्गिऊण असईए ।
संवरणं वसभा वा, ताओ व अपच्छिमा पिंडी ।।

वृ- अध्वनो निर्गता आदिशब्दादध्वनि वहमनका अध्वशीर्षे प्राप्ता वा त्रिकृत्वः परिगृहीतां वसतिं मार्गयित्वा यदि न प्राप्यते ततः सागारिकस्यानिश्रयाऽपि तिष्ठेयुः । तत्र च 'संवरणं' कपाटं तदन्यतोऽपि मार्गयित्वा दातव्यम् । अथ कपाटं न प्राप्यते ततो वृषभा गृहीभूय यः कश्चित् तरुणादि संयतीरुपद्रवति तं प्रहरणादिभिर्निवारयन्ति । अथ वृषभा न सन्ति ततस्ता एव संयत्यो दण्डकव्यग्रहस्ताः पिण्डीभूय तिष्ठन्ति, यस्तत्रोपद्रवं चिकिर्षति तं दण्डकमुद्यम्य निवारयन्ति, बोलं च महता शब्देन कुर्वन्ति । एषा अपश्चिमा यतनेति अथवा-

[भा.२४४४] भोइय-महतरगाई, समग्गयं वा भणंति गामं तु ।

निवगुत्ताणं वसही, दिज्जउ दोसा उ मे उवरिं ॥

वृ-तत्र ग्रामादौ यो भोगिको महत्तरो वा आदिशब्दादन्यो वा प्रमाणभूतस्तम् अथवा ग्राममेकत्र सभादौ 'समागतं' मिलितं दृष्ट्वा साधवो भणन्ति-नृपः-राजा तेन गुप्ताः-रक्षिताः सन्तो वयं स्वव्रताचारं परिपालयामः, अतो नृपगुप्तानामस्माकं वसतिर्दीयताम्, अन्यथा ये शून्ये प्रतिश्रये तिष्ठन्तीनां संयतीनां तरुण-स्तेनाद्युपद्रवदोषा भवेयुः ते सर्वेऽपि "मे" युष्माकमुपरि भविष्यन्ति । एवमुक्ते ते भोगिकादयः संयतीप्रायोग्यं परिगृहीतां वसतिं दापयन्ति स्वयं वा प्रयच्छन्ति । अथ ये वृषभा बहि प्रहरणादिव्यग्रहस्तास्तिष्ठन्ति ते ईदृशाः कर्त्तव्या इति दर्शयति-

[भा.२४४५] कयकरणा थिरसत्ता, गीया संबंधिणो थिरसरा ।
जियनिद्दिंदिय दक्खा, तब्भूमा परिनयवया य ॥

वृ-'कृतकरणाः' धनुर्वेदे कृताभ्यासाः, 'स्थिरसत्त्वाः' निश्चलमानसावष्टम्भाः, 'गीताः' सूत्रार्थवेदिनः, 'सम्बन्धिनः' तासामेव संयतीनां नालबद्धा भ्रात्रादिसम्बन्धयुक्ता इत्यर्थः, 'स्थिरशरीराः' शारीरबलोपेताः, जिताः- वशीकृता निद्रा इन्द्रियाणि च यैस्ते जितनिद्रेन्द्रियाः, 'दक्षाः' कुशलाः, 'तद्भौमाः' तस्यामेव भूमौ भवास्तद्भूमिवास्तव्यलोकपरिचिता इत्यर्थः, 'परिणतवयसश्च' अतिक्रान्तयौवना मध्यमवयःप्राप्ताः, एवंविधा वृषभास्तत्र स्थापयितव्या ॥

मू. (२४) *कप्पइ निग्गंथाणं सागरियनिस्साए वा अनिस्साए वा वत्थए ॥*

वृ- कल्पते निर्ग्रन्थानां सागारिकं निश्राय वा अनिश्राय वा वस्तुमिति ॥ अत्र भाष्यम्-

[भा.२४४६] साहू निस्समनिस्सा, कारणि निस्सा अकारणि अनिस्सा ।
निक्कारणम्मि लहुगा, कारणे गुरुगा अनिस्साए ॥

वृ-साधवः सागारिकस्य निश्रया अनिश्रया वा वसन्ति । तत्र कारणे निश्रया अकारणे त्वनिश्रया वस्तव्यम् । यदि निष्कारणे सागारिकनिश्रया वसन्ति ततश्चत्वारो लघुकाः । अथ कारणेऽनिश्रया वसन्ति ततश्चत्वारो गुरुकाः । अथ निष्कारणे सागारिकनिश्रया तिष्ठतां दोषानाह-

[भा.२४४७] उट्ठेंत निवेसिंते, भोजन-पेहासु सारि मोए अ ।
सुज्झाय बंभगुत्ती, असंगता तित्थऽवण्णो य ॥

वृ- कोऽपि साधुरुत्तिष्ठन् वा निविशमानो वा अपावृतीभवेत् तं दृष्ट्वा पुरुषाः स्त्रियो वा हसन्ति उड्डुकान् वा कुर्वन्ति । भोजनं-समुद्देशनं तत्र मण्डल्यां तुम्बकेषु वा समुद्दिशतो दृष्ट्वा ब्रवीरन्-अहो ! अमी अशुचय इति । प्रेक्षा-प्रत्युपेक्षणा तस्यां विधीयमानायां "सारि" त्ति ते सागारिका उड्डुकान् कुर्युः । "मोए" त्ति निशि मोकेनाचमने कायिकीव्युत्सर्जने वोड्डाहं कुर्युः । 'स्वाध्यायम्' अधीयमानं परावर्त्यमानं वा श्रुत्वा कर्णाहतेनागमयन्ति । स्त्रीणां चाङ्गप्रत्यङ्गादौ विलोक्यमाने ब्रह्मचर्यस्यागुप्ति । तथा लोकोऽपि ब्रूयात्-"असंगय" त्ति यैः किलासङ्गता प्रतिपन्ना तैः स्त्रीरहिते प्रतिश्रये स्थातव्यमित्येतदप्येते न जानन्ति । तीर्थस्य चावर्णो भवति, सर्वेऽप्येते एतादृशा इति । यत एते दोषा अत उत्सर्गतः सागारिकस्यानिश्रया वस्तव्यम् । कारणे तु निश्रयाऽपि कल्पते वस्तुम् । तच्चेदम्-

[भा.२४४८] तेना सावय मसगा, कारण निक्कारणे य अहिगरणं ।
एएहिं कारणेहिं, वसंति नीसा अनीसा वा ॥

वृ- स्तेनाः श्वापदा वा यत्रोपद्रवन्ति तत्र ये गृहस्थाः परित्राणं कुर्वते तत्र तन्निश्रया वस्तव्यम्। मशका वाऽन्यत्राभिद्रवन्ति ततो निश्रयाऽपि वस्तव्यम् । निष्कारणे तु निश्रया वसतामप्काय-यन्त्रवाहनादिकमधिकरणं भवेत् । एतैः कारणैर्निश्रया वा अनिश्रया वा यथायोगं वसन्तीति ॥

*मू. (२५) नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारिए उवस्सए वत्थए ॥*

वृ- अस्य सम्बन्धमाह-

[भा.२४४९] निस्स त्ति अइपसंगेण मा हु सागारियम्मि उ वसिज्जा ।
ते चेव निस्सदोसा, सागारिए निवसतो मा हु ॥

वृ- 'निर्ग्रन्थीनां सागारिकनिश्रयैव निर्ग्रन्थानामपि कारणे निश्रया वस्तुं कल्पते' इत्युक्तेऽतिप्रसङ्गदोषेण मा सागारिकेऽपि प्रतिश्रये वसेयुः । कुतः ? इत्याह-सागारिकोपाश्रये निवसतो मा 'त एव' उत्थान-निवेशनादिविषया निश्रादोषा भवेयुः, अगः सागारिकसूत्रं प्रारभ्यत इति । अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'सागारिके' सागारिकं-द्रव्यतो भावतश्च वक्ष्यमाणलक्षणं तदत्रास्ति इति व्युत्पत्तेः अभ्रादित्वाद् अप्रत्यये सागारिकः ईदृशे उपाश्रये वस्तुमिति सूत्रसङ्क्षेपार्थः ॥ अथ निर्युक्तिविस्तरः-

[भा.२४५०] सागारियनिक्खेवो, चउव्विहो होइ आनुपुव्वीए ।
नामं ठवणा दविए, भावे य चउव्विहो भेदो ॥

वृ- सागारिकपदस्य निक्षेपश्चतुर्विध आनुपूर्व्या भवति, तद्यथा-नाम्नि स्थापनायां द्रव्ये भावे चेति । एष चतुर्विधो भेदः ॥ तत्र नाम-स्थापने गतार्थे, द्रव्यता नोआगमतो ज्ञशरीर-भव्यशरीरव्यतिरिक्तं द्रव्यसागारिकमाह-

[भा.२४५१] रुवं आभरणविही, वत्थालंकार भोयणे गंधे ।
आउज्ज नट्ट नाडग, गीए सयणे य दव्वम्मि ॥

वृ- रुपमाभरणविधिर्वस्त्रालङ्कारो भोजनं गन्धा आतोद्यं नृत्तं नाटकं गीतं शयनीयं च, एतद् द्रवयसागारिकम् ॥ तत्र रुपपदं व्याख्याति-

[भा.२४५२] जं कट्ठकम्ममाइसु, रुवं सट्ठाणे तं भवे दव्वं ।
जं वा जीवविमुक्कं, विसरिसरुवं तु भावम्मि ॥

वृ-यत् 'काष्ठकर्मादिषु' काष्ठकर्मणि वा चित्रकर्मणि वा लेप्यकर्मणि वा लेप्यकर्मणि वा पुरुषरुपं स्त्रीरुपं वा निर्मितं तत् स्वस्थाने द्रव्यसागारिकं भवेत् । स्वस्थानं नाम-निर्ग्रन्थानां पुरुषरुपं निर्ग्रन्थीनां तु स्त्रीपुरुष । यत्तु विसदृशरुपं तद् भावसागारिकम्, निर्ग्रन्थानां स्त्रीरुपं निर्ग्रन्थीनां तु पुरुषरुपं भावसागारिकमित्यर्थः । यद् वा जीवविप्रमुक्तं पुरुषशरीरं स्त्रीशरीरं वा तदपि स्वस्थाने द्रव्यसागारिकं परस्थाने तु भावसागारिकमिति ॥ अथ "आभरणविही" इत्यादि व्याख्यायते-आभरणं-कटकादि तस्य विधि भेदा आभरणविधिः । वस्त्रभेवाकङ्कारो वस्त्रालङ्कारः, यद्वा वस्त्राणि चानांशुकादीनी, अलङ्कारो द्विधा केशालङ्कार-माल्यालङ्कारभेदात् । भोजनमशन-पान-खाद्य-स्वाद्यभेदाच्चतुर्विधम् । गन्धः-कोष्ठपुटपाकादि । आतोद्यं चतुर्विधम्-ततं विततं घनं शुषिरं च । तत्र-

ततं वीणाप्रभृतिकं, विततं मुरजादिकम् ।

घनं तु कांस्यतालादि, वंशादि शुषिरं मतम् ॥

नृत्तमपि चतुर्विधम्, तद्यथा-अञ्चितं रिभितम् आरभडं भसोलम्, एते चत्वारोऽपि भेदा नाट्यशास्त्रप्रसिद्धाः । नाटकम्-अभिनयविशेषः । अथवा-

[भा.२४५३] नट्टं होइ अगीयं, गीयजुयं नाडयं तु नायव्वं ।
आभरणादी पुरिसोवभोग दव्वं तु सट्ठाणे ॥

वृ- इह 'अगीतं' गीतविरहितं नृत्तं भवति । यत् पुनर्गीतयुक्तं तद् नाटकं ज्ञातव्यम् । गीतं पुनश्चतुर्द्धा-तन्त्रीसमं १ तालसमं २ ग्रहसमं ३ लयसमं ४ चेति । 'शयनं' पल्यङ्कादि । एतदाभरणादिकं यत् पुरुषोपभोगयोग्यं तत् स्वस्थाने 'द्रव्यं' द्रव्यसागारिकं साधारणत्वाद् द्रव्यसागारिकमेव, शेषाणि तु साधु-साध्वीनां स्वस्थानयोग्यानि द्रव्यसागारिकं परस्थानयोग्यानि तु भावसागारिकम्॥ एतेषु प्रायश्चित्तमाह-

[भा.२४५४] एक्किक्कम्मि य ठाणे, भोअणवज्जे य चउलहू हुंति ।
चउगुरु भोअणम्मिं, तत्थ वि आणाइणो दोसा ॥

वृ- 'एकैकस्मिन्' रुपा-ऽऽभरणादौ 'स्थाने' द्रव्यसागारिके भोजनवर्जे तिष्ठतां चतुर्लघवः, भोजनसागारिके चतुर्गुरवः । केषाञ्चिन्मतेनाभरण-वस्त्रयोरपि चतुर्गुरवः । तत्राप्याज्ञादयो दोषाः, तन्निष्पन्नं पृथक् प्रायश्चित्तमिति भावः ॥ तथा-

[भा.२४५५] को जाणइ को किरिसो, कस्स व माहप्पया समत्थत्ते ।
धिइदुब्बला उ केई, डेविंति तओ अगारिजनं ॥

वृ- को जानाति नानादेशीयानां साधूनां मध्ये कः 'कीदृशः' कीदृक्परिणामः ?, कस्य वा कीदृशी 'महात्मता' महाप्रभावता 'समर्थत्वे' सामर्थ्ये लोभनिग्रहं ब्रह्मव्रतपरिपालनं वा प्रतीत्य विद्यते ?, परचेतोवृत्तीनां निरतिशयैरनुपलक्ष्यत्वात् । ततो ये केचिद् धृतिदुर्बलास्ते तत्र रुपाऽऽभरणादिभिराक्षिप्तचित्ताः परित्यक्तसंयमधुरा अगारीजनं 'डेविंति' गच्छन्ति, परिभुञ्जते इत्यर्थः ॥ तथा-

[भा.२४५६] केइत्थ भुत्तभोगी, अभुत्तभोगी य केइ निक्खंता ।
रमणिज्ज लोइयं ति य, अम्हं पेतारिसा आसी ॥

वृ- केचिद् 'अत्र' गच्छमध्ये भुक्तभोगिनो निष्क्रान्ताः केचित्त्वभुक्तभोगिनः, तेषां चोभयेषामप्येवं भाव समुत्पद्यते-रमणीयमिदं लौकिकं चरितं यत्रैवं वस्त्रा-ऽऽभरणानि परिधीयन्ते, विविधखाद्यकादीनि यथेच्छं भुज्यन्ते, अस्माकमपि गृहाश्रमे स्थितानामेतादृशा भोगा आसीरन्॥ इदमेव व्यनक्ति-

[भा.२४५७] एरिसओ उवभोगो, अम्ह वि आसि ण्ह इण्हि उज्जला ।
दुक्कर करेमु भुत्ते, कोउगमियरस्स दट्ठूणं ॥

वृ- ईदृगेव गन्ध-माल्य-ताम्बूलाद्युपभोगः पूर्वमस्माकमप्यासीत्, "ण्ह" इति निपातः पादपूरणे, इदानीं तु वयं 'उज्जलाः' उत्-प्राबल्येन मलिनशरीरा अलब्धसुखास्वादाश्च 'दुष्करं' केशश्मश्रुलुञ्चन-भूमिशयनादि कुर्महे । इत्थं भुक्तभोगी चिन्तयति । इतरः-अभुक्तभोगी तस्य रुपा-ऽऽभरणादिकं दृष्ट्वा कौतुकं भवेत् ॥ ततः को दोषः ? इत्यत आह-

[भा.२४५८] सति-कोउगेण दुन्नि वि, परिहिज्ञ लइज्ञ वा वि आभरणं।
अन्नेसिं उवभोगं, करिज्ञ वाएज्ञ वुड्डाहो ॥

वृ- स्मृतिश्च कौतुकं चेति द्वन्द्वैकवद्भावः, तेन स्मृति-कौतुकेन द्वावपि भुक्ता-ऽभुक्तभोगिनौ वस्त्राणि वा परिदधीयाताम्, आभरणं वा स्वशरीरे लगयेताम्, 'अन्येषां वा' गन्ध-शयनीया-ऽऽसनादीनामुपभोगं कुर्याताम्, आतोद्यं वा वादयेताम्। असंयतो वा संयतमलङ्कृतविभूषितं दृष्ट्वा लोकमध्ये उड्डाहं कुर्यात् ॥

[भा.२४५९] तच्चित्ता तल्लेसा, भिक्खा-सज्झायमुक्कतत्तीया।
विकहा-विसुत्तियमणा, गमनुस्सुय उस्सुयब्भूया ॥

वृ- तदेव-स्त्रीरुपादिचिन्तनात्मकं चित्तं येषां ते तच्चित्ताः। लेश्या नाम-तदङ्गपरिभोगाध्यवसायः, सैव लेश्या येषां ते तल्लेश्याः। भिक्षाः-स्वाध्याययोर्मुक्ता तप्ति-व्यापारो यैस्ते भिक्षा-स्वाध्यायमुक्ततप्तिकाः। तथा संयमाराधनीया वाग्योगप्रवृत्ति सा कथा, तद्विपक्षभूता विकथा, विश्रोतसिका नाम-स्त्रीरूपादिस्मरणजनिता चित्तविप्लुति, तयोर्मनो येषां ते विकथा-विश्रोतसिकामनसः। एवंविधास्ते केचिद् गमने-अवधावने उत्सुकीभवन्ति, केचिच्च 'उत्सुकीभूताः' उत्प्रव्रजिता इत्यर्थः ॥ तत्र विकथा कथं भवति? इत्याह-

[भा.२४६०] सुट्ठु कयं आभरणं, विनासियं न वि य जाणसि तुमं पि।
सुड्डाहो गंधे, विसुत्तिया गीयसद्देसु ॥

वृ- एकः साधुर्ब्रवीति-'सुष्ठु' शोभनं कृतमिदमाभरणम्; द्वितीयः प्राह-विनाशितमेतत्, त्वमप्यविशेषज्ञो न जानासि। एवमुत्तरप्रत्युत्तरिकां कुर्वतोस्तयोरसङ्खडमुपजायते, मूर्च्छा वा तत्र रूपादौ कोऽपि कुर्यात्, तया चासौ सपरिग्रहो भवति। "उड्डाहो गंधे" त्ति चन्दनादिना गन्धेनात्मानं यदि कोऽपि विलिम्पति पटवासादिभिर्वा वासयति तत उड्डाहो भवति, नूनं कामिनोऽमी अन्यथा कथमित्थमात्मानं मण्डयन्ति? इति। आतोद्य-गीतशब्देषु च श्रूयमाणेषु विश्रोतसिका जायते। अनेन विश्रोतसिकापदमपि व्याख्यातम् ॥ अपि च-

[भा.२४६१] निच्चं पि दव्वकरणं, अवहियहिययस्स गीयसद्देहिं
पडिलेहण सज्झाए, आवासग भुंज वेरत्ती ॥

वृ- 'नित्यमपि' सर्वकालं गीतादिशब्दैरपहृतहृदयस्य प्रत्युपेक्षणायां स्वाध्याये आवश्यके भोजने वैरात्रिके उपलक्षणत्वात् प्राभातिकादिकालेषु च द्रव्यकरणमेव भवति न भावकरणम्,

मनसहिएण उ काएण कुणइ वायाए भासई जं च।
एअं तु भावकरणं, मणरहितं दव्वकरणं तु ॥ इति वचनात् ॥

[भा.२४६२] ते सीदितुमारद्धा, संजमजोगेसु वसहिदोसेणं।
गलइ जतुं तप्पंतं, एव चरित्तं मुनेयव्वं ॥

वृ- 'ते' साधव एवंविधेन वसतिदोषेण 'संयमयोगेषु' आवश्यकव्यापारेषु सीदितुमारब्धाः। ततश्च 'जतु' लाक्षा यथा तदग्निना तप्यमानं गलति एवं रागाग्निना तप्यमानं चारित्रमपि परिगलतीति ज्ञातव्यम् ॥

[भा.२४६३] उब्भिक्खंता केई, पुनो वि सम्मेलणाए दोसेणं।

वसंति संरता, भंतूण चरित्तपागारं ॥

वृ- तस्यां वसतौ स्त्रीरूपादिसम्मेलनाया दोषेण 'केचिद् मन्दभाग्याः 'उन्निष्क्रान्ताः' उत्प्रव्रजिताः, ततश्चारित्रमेव प्राकारः-जीवनगररक्षाक्षमत्वाच्चारित्रप्राकारस्तं भङ्क्त्वा तान्येवस्त्रीरूपादीनि संस्मरन्तः पुनरपि गृहवासं व्रजन्ति ॥ ततः किमभूत् ? इत्याह-

[भा.२४६४] एगम्मि दोसु तीसु च, ओहाविंतेसु तत्थ आयरिओ।
मूलं अणवट्ठप्पो, पावइ पारंचियं ठाणं॥

वृ- यद्येक उन्निष्क्रामति ततो मूलम्, द्वयोरवधावतोरनवस्थाप्यम्, त्रिष्ववधावमानेषु तत्राचार्य पाराञ्चिकं स्थानं प्राप्नोति, यस्य वा वशेन तत्र स्थितास्तस्येदं प्रायश्चित्तमिति ॥ गतं द्रव्यसागारिकम्। अथ भावसागारिकमाह-

[भा.२४६५] अट्ठारसविहऽबंभं, भावउ ओरालियं च दिव्वं च।
मन-वयस-कायगच्छण, भावम्मि य रूव संजुत्तं ॥

वृ- अष्टादशविधमब्रह्म भवति। तस्य चौदारिक-दिव्यलक्षणौ द्वौ मूलभेदौ तत्रौदारिकं नवविधम्-औदारिकान् कामभोगान् मनसा गच्छति मनसा गमयति गच्छन्तमन्यं मनसैवानुजानीते एवं वाचाऽपि त्रयो भेदाः प्राप्यन्ते, कयेनापि त्रयः, एतैस्त्रिभिस्त्रिकैर्नव भेदा भवन्ति। एवं दिव्येऽप्यब्रह्मणि नव भेदा लभ्यन्ते। एवमेदष्टादशविधमब्रह्म भावसागारिकं भवति। अथवा रूपं वा 'संयुक्तं वा' रूपसहगतं यदब्रह्मभावोत्पत्तिकारणं तदपि भावसागारिकम् ॥

एतदेव स्पष्टयति-

[भा.२४६६] अहव अबंभं जत्तो, भावो रूवाउ सहगयाओ वा।
भूसण-जीवजुयं वा, सहगय तव्वज्जियं रूवं ॥

वृ- अथवा यतो रूपाद्वा रूपसहगताद्वा अब्रह्मरूपो भाव उत्पद्यते तदपि कारणे कार्योपचाराद् भावसागारिकम्, यथा "नड्वलोदकं पादरोगः" इति। तत्र यत् स्त्रीशरीरं भूषणसंयुक्तमभूषितं वा यद् जीवयुक्तं तद् रूपसहगतं मन्तव्यम्। यत् पुनः स्त्रीशरीरमेव 'तद्वर्जितं' भूषणविरहितं जीववियुक्तं वा तद् रूपमुच्यते ॥

[भा.२४६७] तं पुन रूवं तिविहं, दिव्वं माणुस्सयं तिरिक्खं च।
पायावच्च-कुडुंबिय-दंडियपारिग्गहं चेव ॥

वृ- 'तत् पुनः' अनन्तरोक्तं रूपं त्रिविधम्-दिव्यं मानुष्यं तैरश्चं च। पुनरेकैकं त्रिधा-प्राजापत्यपरिगृहीतं कौटुम्बिकपरिगृहीतं दण्डिकपरिगृहीतं चेति। प्राजापत्याः प्राकृतलोका उच्यन्ते। एतत् त्रिविधमपि प्रत्येकं त्रिधा जघन्यमध्यमोत्कृष्टभेदात् ॥ तत्र दिव्यस्य जघन्यादिभेदत्रयमाह-

[भा.२४६८] वाणंतरिय जहन्नं, भवणवई जोइसं च मज्झिमगं।
वेमाणिय उक्कोसं, पगयं पुन तान पडिमासु ॥

वृ- दिव्येषु यद् वानमन्तरिकं रूपं तद् जघन्यम्, भवनपति-ज्योतिष्कयोर्मध्यमम्, वैमानिकरूपमुत्कृष्टम्। अत्र च 'तेषां' वानमन्तरादीनां याः प्रतिमास्ताभि 'प्रकृतम्' अधिकारः, सागारिकोपाश्रयस्य प्रस्तुतत्वात्, तत्र च प्रतिमानामेव सद्भावात् ॥

प्रकारान्तरेण दिव्यप्रतिमानां जघन्यादिभेदानाह-

[भा.२४६९] कट्ठे पुत्थे चित्ते, जहन्नयं मज्झिमं च दंतम्मि ।
सेलम्मि य उक्कोसं, जं वा रूवाउ निप्फन्नं ॥

वृ-या दिव्यप्रतिमा काष्ठकर्मणि वा पुस्तकर्मणि वा चित्रकर्मणि वा क्रियते तद् जघन्यं दिव्यरूपम्। या तु हस्तिदन्ते क्रियते तद् मध्यमम् । या पुनः शैले चशब्दाद् मणिप्रभृतिषु च क्रियते तदुत्कृष्टम्। यद्वा रूपाद् निष्पन्नं जघन्यादिकं द्रष्टव्यम्-या दिव्यप्रतिमा विरूपा तद् जघन्यं दिव्यरूपम्, या तु मध्यमरूपा तन्मध्यमम्, या पुनः सुरूपा तदुत्कृष्टम् । अत्र चौघतः प्रतिमायुते उपाश्रये तिष्ठतश्चत्वारो लघुकाः प्रायश्चित्तम् ॥ अथौघविभागतः प्रायश्चित्तमाह-

[भा.२४७०] ठाण-पडिसेवणाए, तिविहे वी दुविहमेव पच्छित्तं ।
लहुगा तिन्नि विसिट्ठा, अपरिग्गहे ठायमाणस्स ॥

वृ- 'त्रिविधेऽपि' जघन्यमध्यमोत्कृष्टभेदभिन्ने दिव्ये प्रतिमायुते तिष्ठतो द्विविधं प्रायश्चित्तम्-स्थाननिष्पन्नं प्रतिसेवनानिष्पन्नं च । तत्र स्थाननिष्पन्नमिदम्-दिव्ये प्रतिमायुतेऽपरिगृहीते तिष्ठतस्त्रयश्चतुर्लघुकास्तपः-कालविशिष्टाः, तद्यथा-जघन्ये चत्वारो लघुकास्तपसा कालेन च लघुकाः, मध्यमे त एव कालगुरुकाः, उत्कृष्टे त एव तपोगुरुकाः ॥ अथ परिगृहीते प्रायश्चित्तमाह-

[भा.२४७१] चत्तारि य उग्घाया, पढमे बिइयम्मि ते अनुग्घाया ।
छम्मासा उग्घाया, उक्कोसे ठायमाणस्स ॥

वृ- प्रथमं-जघन्यं तत्र तिष्ठतश्चत्वारः 'उद्घातिमाः' लघवो मासाः । द्वितीयं-मध्यमं तत्र 'त एव' चत्वारो मासाः 'अनुद्घाताः' गुरुका इत्यर्थः । उत्कृष्टे तु तिष्ठतः षण्मासा उद्घाताः, षड्लघव इत्यर्थः ॥

[भा.२४७२] पायावच्चपरिग्गहे, दोहि वि लहु होंति एते पच्छित्ता ।
कालगुरु कोडुंबे, दंडियपारिग्गहे तवसा ॥

वृ- एतानि च प्रायश्चित्तानि प्राजापत्यपरिगृहीते 'द्वाभ्यामपि' तपः-कालाभ्यां लघुकानि द्रष्टव्यानि । कौटुम्बिकपरिगृहीते एतान्येव कालगुरुकाणि । दण्डिकपरिगृहीते एतान्येव तपसा गुरुकाणि ॥ इदं च यस्माज्जघन्यादिविभागेन निर्दिष्टं सन्निहिता-ऽसन्निहितभेदेन न विशेषितं तस्मादेतदोघविभागप्रायश्चित्तमभिधीयते । अथ विभागप्रायश्चित्तं निरूपयितव्यम्, तत्र चैतान्येव जघन्यमध्यमोत्कृष्टानि सन्निहिता-सन्निहितभेदाभ्यां विशेष्यमाणानि षट् स्थानानि भवन्ति, एतेषु प्रायश्चित्तमाह-

[भा.२४७३] चत्तारि य उग्घाता, पढमे बिइयम्मि ते अनुग्घाया ।
तइयम्मि अनुग्घाया, चउत्थ छम्मास उग्घाता ॥

[भा.२४७४] पंचमगम्मि वि एवं, छट्ठे छम्मास होंतऽनुग्घाया ।
असन्निहिए सन्निहिए, एस विही ठायमाणस्स ॥

वृ- प्रथमं नाम-जघन्यमसन्निहितं द्वितीयं-जघन्यं सन्निहितं तृतीयं-मध्यममसन्निहितं चतुर्थं-मध्यमं सन्निहितं पञ्चमम्-उत्कृष्टमसन्निहितं षष्ठम्-उत्कृष्टं सन्निहितम् । अत्रायमुच्चारणविधि-जघन्यकेऽसन्निहिते प्राजापत्यपरिगृहीते तिष्ठति चत्वार उद्घाता मासाः, सन्निहिते तिष्ठति 'त एव' चत्वारो मासा अनुद्घाताः, मध्यमकेऽसन्निहिते चत्वारो मासा अनुद्घाताः, सन्निहिते षण्मासा

उद्धाताः, उत्कृष्टेऽसन्निहिते षण्मासा उद्धाताः, सन्निहिते षण्मासा अनुद्धाताः ॥ एषोऽसन्निहिते सन्निहिते च तिष्ठतः प्रायश्चित्तविधिरुक्तः । अथ प्राजापत्यादिविशेषत एनमेव विशेषयति-

[भा.२४७५] पढमिल्लगम्मि ठाणे, दोहि वि लहुगा तवेण कालेणं ।
बिइयम्मि अ कालगुरू, तवगुरुगा होंति तइयम्मि ॥

वृ- 'प्रथमे स्थाने' प्राजापत्यपरिगृहीते एतानि प्रायश्चित्तानि द्वाभ्यामपि लघुकानि, तद्यथा-तपसा कालेन च । 'द्वितीये' कौटुम्बिकपरिगृहीते तान्येव कालगुरुकाणि । 'तृतीये' दण्डिकपरिगृहीते एतान्येव तपोगुरुकाणि ॥ स्थानप्रायश्चित्तमेव प्रकारान्तरेणाह-

[भा.२४७६] अहवा भिक्खुस्सेयं, जहन्नगाइम्मि ठाणपच्छित्तं ।
गणिणो उवरिं छेदो, मूलायरिए पदं हसति ॥

वृ- अथवा यदेतद् जघन्यादौ चतुर्लघुकादारभ्य षड्गुरुकावसानं स्थानप्रायश्चित्तमुक्तं तद् भिक्षोरेव द्रष्टव्यम् । गणी-उपाध्यायस्तस्य षड्गुरुकादुपरि च्छेदाख्यं प्रायश्चित्तपदं वर्द्धते, एकं पदं चतुर्लघुकाख्यमधो ह्रसति, चतुर्गुरुकादारभ्य च्छेदे तिष्ठतीत्यर्थः । आचार्यस्य षड्लघुकादारब्धं मूलं यावत् प्रायश्चित्तम्, अत्राप्येकं पदमुपरि वर्द्धते अधस्तादेकं पदं ह्रसतीति ॥

गतं स्थानप्रायश्चित्तम् । अथप्रतिसेवनाप्रायश्चित्तमाह-

[भा.२४७७] चत्तारि छ च्च लहु गुरु, छम्मासितो छेदो लहुग गुरुगो य ।
मूलं जहन्नगम्मि, सेवंति पसज्जणं मोत्तुं ॥

वृ- प्राजापत्यपरिगृहीते जघन्येऽसन्निहितेऽदृष्टे प्रतिसेवमाने चत्वारो लघवः, दृष्टे चत्वारो गुरवः, सन्निहितेऽदृष्टे चतुर्गुरवः, दृष्टे षड्लघवः । कौटुम्बिकपरिगृहीते जघन्येऽसन्निहितेऽदृष्टे प्रतिसेविते षड्लघवः, दृष्टे षड्गुरवः, सन्निहितेऽदृष्टे षड्गुरवः, दृष्टे लघुषाण्मासिकच्छेदः । दण्डिकपरिगृहीतं जघन्यकमसन्निहितमदृष्टंप्रतिसेवितं लघुषाण्मासिकच्छेदः, दृष्टे गुरुषाण्मासिकच्छेदः, सन्निहितेऽदृष्टे गुरुषाण्मासिकच्छेदः, दृष्टे मूलम् । एतद् जघन्यं दिव्यप्रतिमारूपं सेवमानस्य प्रायश्चित्तं भणितम् । प्रसजना नाम-दृष्टे सति शङ्का-भोजिका-घाटिकादीनां ग्रहणा-ऽऽकर्षणप्रभृतीनां वा दोषाणां परम्परया प्रसङ्गः, तां मुक्त्वा एतद् प्रायश्चित्तं द्रष्टव्यम्, तन्निष्पन्नं तु पृथगापद्यत इत्यर्थः ॥ अथ मध्यमे प्रायश्चित्तमाह-

[भा.२४७८] चउगुरुग छ च्च लहु गुरु, छम्मासिओ छेदो लहुओ गुरुगो य ।
मूलं अणवट्ठप्पो, मज्झिमए पसज्जणं मोत्तुं ॥

वृ- मध्यमे प्राजापत्यपरिगृहीतेऽसन्निहितेऽदृष्टे प्रतिसेविते चतुर्गुरवः, दृष्टे षड्लघवः, सन्निहितेऽदृष्टे षड्लघवः, दृष्टे षड्गुरवः । कौटुम्बिकपरिगृहीतेऽसन्निहितेऽदृष्टे षड्गुरवः, दृष्टे लघुषाण्मासिकच्छेदः, सन्निहितेऽदृष्टे लघुषाण्मासिकच्छेदः, दृष्टे गुरुषाण्मासिकच्छेदः । दण्डिकपरिगृहीतेऽसन्निहितेऽदृष्टे गुरुषाण्मासिकच्छेदः, दृष्टे मूलम्, सन्निहितेऽदृष्टे मूलम्, दृष्टेऽनवस्थाप्यम् । एतद् मध्यमके प्रसजनां मुक्त्वा प्रायश्चित्तं द्रष्टव्यम् ॥ उत्कृष्टविषयमाह-

[भा.२४७९] तव छेदो लहु गुरुगो, छम्मासितो मूल सेवमाणस्स ।
अणवट्ठप्पो पारंचि, उक्कोसे पसज्जणं मोत्तुं ॥

वृ- उत्कृष्टे प्राकृतपरिगृहीतेऽसन्निहितेऽदृष्टे प्रतिसेविते लघुषाण्मासिकं तपः, दृष्टे गुरुषाण्मा-

सिकं तपः, सन्निहितेऽदृष्टे गुरुषाण्मासिकं तपः, दृष्टे लघुषाण्मासिकच्छेदः । कौटुम्बिकपरिगृहीतेऽसन्निहितेऽदृष्टे लघुषाण्मासिकच्छेदः, दृष्टे गुरुषाण्मासिकच्छेदः, सन्निहितेऽदृष्टे गुरुषाण्मासिकच्छेदः, दृष्टे मूलम् । दण्डिकपरिगृहीतेऽसन्निहितेऽदृष्टे मूलम्, दृष्टेऽनवस्थाप्यम्, सन्निहितेऽदृष्टेऽनवस्थाप्यम्, दृष्टे पाराञ्चिकम् । एवमुत्कृष्टे दिव्यप्रतिमारूपे प्रसजनां मुक्त्वा प्रायश्चित्तमवसातव्यम् ।। अथ यथा चारणिकाया अभिलापः कर्त्तव्यस्तथा भाष्यकृदुपदर्शयति-

[भा.२४८०]　　पायावच्चपरिग्गहे, जहन्न सन्निहिए असन्निहिए ।
दिट्ठाऽदिट्ठे सेवइ, एसाऽऽलावो उ सव्वत्थ ।।

वृ-प्राजापत्यपरिगृहीते जघन्येऽसन्निहिते सन्निहितेऽदृष्टे दृष्टे च सेवते, गाथायामसन्निहिताऽदृष्टपदयोर्बन्धानुलोम्यात् पश्चान्निर्देशः, 'एषः' ईदृशः 'आलापः' उच्चारणविधि 'सर्वत्र' कौटुम्बिकपरिगृहीतादौ मध्यमादौ च कर्त्तव्यः ।। अत्र नोदकः प्राह-

[भा.२४८१]　　जम्हा पढमे मूलं, बिइए अणवट्ठो तइए पारंची ।
तम्हा ठायंतस्सा, मूलं अणवट्ठ पारंची ।।

वृ-यस्मात् 'प्रथमे' जघन्ये प्रतिसेवमानस्य चतुर्लघुकादारब्धं मूलं यावत् प्रायश्चित्तं भवति, 'द्वितीये' मध्यमे चतर्गुरुकमादौ कृत्वा अनवस्थाप्यम्, 'तृतीये' उत्कृष्टे षड्लघुकादारब्धं पाराञ्चिकं यावद् भवति, तस्मात् तिष्ठत एव स्थाननिष्पन्नानि जघन्यमध्यमोत्कृष्टेषु यथाक्रमं मूला-ऽनवस्थाप्य-पाराञ्चिकानि भवन्तु ।। सूरिराह-

[भा.२४८२]　　पडिसेवणाए एवं, पसज्जणा तत्थ होइ एक्केक्के ।
चरिमपदे चरिमपदं, तं पि य आणाइनिप्फन्नं ।।

वृ-जघन्यादिप्रतिसेवनायाम् 'एवं' मूला-ऽनवस्थाप्य-पाराञ्चिकानि दीयन्ते । यदि पुनः स्थितः सन् नैव प्रतिसेवते ततः कथं तानि भवन्तु ? । अथ प्रसङ्गमिच्छति तत एकैकस्मिन् प्रायश्चित्तस्थाने 'तत्र' अनन्तरोक्ते प्रसजना भवति । तथाहि-तं साधुं तत्र स्थितं दृष्ट्वा कश्चिदविरतिकः शङ्कां कुर्यात्, नूनं प्रतिसेवनानिमित्तमत्रैष स्थित इति, ततो भोजिका-घाटिकादिदोषप्रसङ्ग इति । तथा चरमपदं नाम-अदृष्टपदाद् दृष्टपदं तत्र 'चरमपदं' पाराञ्चिकं यावद् भवति । यच्चाज्ञादिदोषनिष्पन्नं चतुर्गुरुकादि तदपि द्रष्टव्यमिति सङ्ग्रहगाथा समासार्थ ।। अथेनामेव विवरीषुराह-

[भा.२४८३]　जइ पुन सव्वो वि ठितो, सेविज्जा होज्ज चरिमपच्छित्तं ।
तम्हा पसंगरहियं, जं सेवइ तं न सेसाइं ।।

वृ-पुनःशब्दो विशेषणे । किं विशिनष्टि ? यद्येष नियमो भवेद् यस्तिष्ठति स सर्वोऽपि स्थितः सन् प्रतिसेवते ततो नोदक ! भवेत् तिष्ठत एव त्वदुक्तं चरमप्रायश्चित्तम्, तच्च नास्ति, सर्वस्यापि स्थितस्य प्रतिसेवत्वाभावात् । तस्मात् प्रसङ्गरहितं यत् स्थानं सेवते तन्निष्पन्नमेव प्रायश्चित्तं भवति, न 'शेषाणि' मूलादीनि ।। अथ ''चरमपदे चरमपद''मिति पं भावयति-

[भा.२४८४]　　अदिट्ठाओ दिट्ठं, चरिमं तहि संकमाइ जा चरिमं ।
अहवण चरिमाऽऽरोवण, ततो वि पुन पावए चरिमं ।।

वृ-अदृष्टपदाद् दृष्टपदं चरमम्, तत्र चरमपदे शङ्का-भोजिका-घाटिकादिक्रमेण चरमपदं पाराञ्चिकं यावत् प्राप्नोति । आह यदि दृष्टं ततः कथं शङ्का भवति । अथवा या यत्र 'चरमाऽऽरोपणा' यथा

जघन्ये चरमंमूलं मध्यमे चरममनवस्थाप्यं उत्कृष्टे चरमं पाराश्चिकं तत् तत्र चरमपदम्। 'ततोऽपि' चरमपदात् शङ्कादिभिः पदैः 'चरमं' पाराश्चिकं पुनः प्राप्नोति ॥

[भा.२४८५] अहवा आणाइविराधनाउ एक्किक्किाउ चरिमपदं।
पावइ तेन उ नियमो, पच्छित्तिहरा अइपसंगो ॥

वृ- अथवा आज्ञा-ऽनवस्था-मिथ्यात्व-विराधनापदानां मध्ये यद् विराधनापदं तच्चरमम्। सा च विराधना द्विधा-आत्मनि संयमे च; तस्या एकैकस्याः सकाशात् 'चरमपदं' पाराश्चिकं प्राप्नोति। तत्र प्रतिमाया यः स्वामी तेन दृष्ट्वा प्रतापितस्यात्मविराधनायां परितापनादिक्रमेण पाराश्चिकम्। संयमविराधनायां तु तस्याः प्रतिमाया हस्ताद्यवयवे भग्ने भूयः संस्थाप्यमाने सति "छक्काय चउसु लहुगा" इत्यादिक्रमेण पाराश्चिकम्। यत एवं प्रसक्तो बहुविधं प्रायश्चित्तं तेनायं नियमः-तिष्ठतः स्थानप्रायश्चित्तमेव न प्रतिसेवनाप्रायश्चित्तम्, इतरथा अतिप्रसङ्गो भवति ॥

कथम्? इति चेद् उच्यते-

[भा.२४८६] नत्थि खलु अपच्छित्ती, एवं न य दाणि कोइ मुच्चिज्जा।
कारि-अकारीसमया, एवं सइ राग-दोसा य ॥

वृ- यद्यप्रतिसेवमानस्यापि मूलादीनि भवन्ति तत एवं नास्ति कोऽप्यप्रायश्चित्ती, न चेदानीं कश्चित् कर्मबन्धान्मुच्येत, यः प्रतिसेवते तस्य कारिणोऽकारिणश्च समता भवति, एवं च प्रायश्चित्तदाने सति राग-द्वेषौ प्राप्नुत इति ॥ तदपि चाज्ञादिनिष्पन्नमिति।

[भा.२४८७] मुरियादी आणाए, अणवत्थ परंपराए थिरिकरणं।
मिच्छत्ते संकादी, पसज्जणा जाव चरिमपदं ॥

वृ- अपराधपदे वर्त्तमानस्तीर्थकृतामाज्ञाभङ्गं करोति तत्र चतुर्गुरु। अत्र च मौर्यैर्मयूरपोषकवंशोद्भवैः आदिशब्दादपरैश्चाज्ञासारै राजभिर्दृष्टान्तः। तस्मिंश्च कालेऽसावनवस्थायां वर्त्तते तत्र चतुर्लघु। अनवस्थातश्च परम्परया 'स्थिरीकरणं' तदेवापराधपदमन्योऽपि करोतीत्यर्थः, तदा चासौ देशतो मिथ्यात्वमासेवते तत्र चतुर्लघु। अपराधपदे वर्त्तमानो विराधनायां साक्षादेव वर्त्तते, परस्य च शङ्कादिकं जनयति-यथैतद् मृषा तथाऽन्यदपि सर्वममीषां मृषैव। प्रसजना चात्र भोजिका-घाटिकादिरूपा। तत्र चरमं-पाराश्चिकं यावत् प्रायश्चित्तं भवति ॥

अथ नोदकः प्राह-

[भा.२४८८] अवराहे लहुगयरो, किं नु हु आणाए गुरुतरो दंडो।
आणाए च्चिय चरणं, तब्भंगे किं न भग्गं तु ॥

वृ- परः प्राह-जघन्यकेऽपरिगृहीते परिगृहीते वा तिष्ठति प्राजापत्यपरिगृहीतं वा जघन्यमसन्निहितमदृष्टं प्रतिसेवते उभयत्रापि चतुर्लघु, एवं स्थानतः प्रतिसेवनतश्चापराधे लघुतरोदण्ड उक्तः, आज्ञाभङ्गे चतुर्गुरुकमिति, अतः 'किम्' इति परिप्रश्ने, 'नुः' इति वितर्के, 'हुः' इति गुर्वामन्त्रणे, किमेवं भगवन्! आज्ञायां भग्नायां गुरुतरो दण्डो दीयत?। सूरिराह-आज्ञयैव चरणं व्यवस्थितम्, तस्या भङ्गे कृते सति किं न भग्नं चरणस्य? सर्वमपि भग्नमेवेति भावः, अपि च लौकिका अप्याज्ञाया भङ्गे गुरुतरं दण्डं प्रवर्त्तयन्ति ॥

तथा चात्र पूर्वोद्दिष्टं मौर्यदृष्टान्तमाह-

[भा.२४८९] भत्तमदानमडंते, आणट्ठवणंब छेत्तु वंसवती ।
गविसण पत्त दरिसए, पुरिसवइ सबालडहणं च ॥

वृ- पाडलिपुत्ते नयरे चंदगुत्तो राया । सो य मोरपोसगपुत्तो त्ति जे खत्तिया अभिजाणंति ते तस्स आणं परिभवंति । चाणक्कस्स चिंता जाया-आणाहीनो केरिसो राया ? तम्हा जहा एयस्स आणा तिक्खा भवइ तहा करेमि त्ति । तस्स य चाणक्कस्स कप्पडियत्ते विक्खं अडंतस्स एगम्मि गामे भत्तं न लद्धं । तत्थ य गामे बहू अंबा वंसा य अत्थि । तओ तस्स गामस्स पडिनिविट्ठेणं आणाठवणनिमित्तं इमेरिसो लेहो पेसिओ-आम्रान् छित्त्वा वंशानां वृति शीघ्रं कार्येति । तेहि अ गामेअगेहिं 'दुल्लिहियं' ति काउं वंसे मूत्तुं अंबाण वई कया । गवेसावियं चाणक्केन-किं कयं ति ? । तओ तत्थागंतूण उवालद्धा ते गामेयगा-एते वंसगा रोहगादिसु उवउज्जंति, कीस मे छिन्न ? त्ति । दंसियं लेहचीरियं-अन्नं संदिट्ठं अन्नं चेव [illegible] । तओ पुरिसेहिं [illegible] सो गामो सव्वो दड्ढो ॥

अथ गाथाक्षरगमनिका-चाणक्यस्य भिक्षामटतः क्वापि ग्रामे भक्तस्य 'अदानं' भिक्षा न लब्धेत्यर्थः । तत आज्ञास्थापनानिमित्तमयं लेखः प्रेषितः-''अंब छेत्तुं वंसवइ''त्ति आम्रान् छित्त्वा वंशानां वृति कर्त्तव्या । ततो गवेषणे कृते ग्रामेण च पत्रे दर्शिते 'अन्यदादिष्टं मया अन्यदेव च भवद्भि कृतम्' इत्युपालभ्य ते पुरुषैर्वृतिं कारयित्वा सबाल-वृद्धस्य ग्रामस्य दहनं कृतम् ॥

एष दृष्टान्तः । अर्थोपनयस्त्वेवम्-

[भा.२४९०] एगमरणं तु लोए, आणऽइआरुत्तरे अनंताइं ।
अवराहरक्खणट्ठा, तेनाणा उत्तरे बलिया ॥

वृ- लोके आज्ञाया अतिचारे-अतिक्रमे एकमेव मरणमवाप्यते, लोकोत्तरे पुनराज्ञाया अतिचारेऽनन्तानि जन्म-मरणानि प्राप्यन्ते । तेन कारणेनापराधरक्षणार्थं लोकोत्तरे आज्ञा बलीयसी ॥

अथानवस्था-मिथ्यात्व-विराधनापदानि व्याचष्टे-

[भा.२४९१] अणवत्थाए पसंगो, मिच्छत्ते संकमाइया दोसा ।
दुविहा विराधना पुन, तहियं पुन संजमे इणमो ॥

वृ- 'यद्येष बहुश्रुतोऽप्येवं सागारिके प्रतिश्रये स्थितस्ततः किमहमपि न तिष्ठामि ?' इत्येवमनवस्थायामन्यस्यापि प्रसङ्गो भवति । मिथ्यात्वे शङ्कादयो दोषाः, शङ्का नाम-किं मन्ये यथा वादिनस्तथा कारिणोऽमी न भवन्ति ?, आदिशब्दाद् विरत्यादिधर्मं प्रतिपद्यमानानां विपरिणाम इत्यादिदोषपरिग्रहः । विराधना पुनर्द्विविधा-संयमे आत्मनि च । तत्र संयमविषया तावदियम् ॥

[भा.२४९२] अनट्ठादंडो विकहा, वक्खेवो विसोत्तियाए सइकरणं ।
आलिंगनाइदोसा, असन्निहिए ठायमाणस्स ॥

वृ- अर्थ-प्रयोजनं तदभावोऽनर्थ तेन दण्डोऽनर्थदण्डः, स च द्रव्यतो यदकारणे राजकुले दण्ड्यते, भावतस्तु निष्कारणं ज्ञानादीनां हानि सागारिक प्रतिश्रये स्थितानां भवति । 'विकथा' वक्ष्यमाणरूपा । 'व्याक्षेपो नाम' तां प्रतिमां प्रेक्षमाणस्य द्वितीयसाधुना सहोल्लापं कुर्वतः सूत्रार्थपरिमन्थः । विश्रोतसिका द्रव्य-भावभेदाद् द्विधा । द्रव्यतः सारणीपानीयं वहमानं तृणादिकचवरेण पुरःस्थितेन निरुद्धं यदन्यतः कुशारादिषु गच्छति ततश्च सस्यहानिरुपजायते ।

भावतस्तु ज्ञानादिमये जीवकुड्यानां महानदीपूरादिकल्पयरस्थलोत्पन्न विरहविप्लुत्या निरुद्धे सति चारित्रसस्यविनाशो जायते सा विश्रोतसिकेत्युच्यते । तया स्मृतिकरणं भुक्तभोगिनाम्, अभुक्तभोगिनां तु कौतुकमालिङ्गनादयश्च दोषा भवन्ति । एतेऽसन्निहिते प्रतिमारूपे तिष्ठतो दोषाः ।। अथ विकथापदमालिङ्गनादिपदं च विवृणोति-

[भा.२४९३]सुट्ठु कया अह पडिमा, विनासिया न वि य जाणसि तुमं पि ।
इय विकहा अहिगरणं, आलिंगणे भंगे भद्दितरा ।।

वृ-एकः साधुर्ब्रवीति-सुष्ठु कृतेयं प्रतिमा, द्वितीयः प्राह-विनाशितेयं नापि च जानासि त्वमपि इत्येवं विकथा । ततश्चोत्तरप्रत्युत्तरिकां कुर्वतस्तयोरधिकरणं भवति । अथ कोऽप्युदीर्णमोहस्तां प्रतिमामालिङ्गेत् तत आलिङ्गने प्रतिमाया हस्त-पादादिभङ्गो भवेत् । सपरिग्रहायां च प्रतिमायां भद्रकेतरदोषाः-भद्रको हस्त-पादादिभङ्गे सञ्जाते सति पुनः संस्थापनं विदध्यात्, प्रान्तस्तु ग्रहणा-ऽऽकर्षणादीनि कुर्यात् ।। एतेऽसन्निहिते दोषा उक्ताः । सन्निहितेऽपि त एव वक्तव्याः, एते चाभ्यधिकाः-

[भा.२४९४] वीमंसा पडिनीयट्ठया व भोगत्थिणी व सन्निहिया ।
काणच्छी उक्कंपण, आलाव निमंतण पलोभे ।।

वृ- या तत्र सन्निहिता देवता सा त्रिभि कारणैः साधुं प्रलोभयेत्-विमर्शाद्वा प्रत्यनीकार्थतया वा भोगार्थितया वा । विमर्शो नाम-'किमेष साधुः शक्यः क्षोभयितुं न वा ?' इति जिज्ञासा तया प्रतिमायामनुप्रविश्य काणाक्षिकं वा उत्कम्पनं वा स्तनादीनां विदधीत, आलापं वा कुर्यात्-अमुकनामधेय ! कुशलं तव ? इत्यादि, निमन्त्रणं वा विदध्यात्-मया सह स्वामिन् ! भोगानुपभुंक्ष्व, प्रलोभनं वा कक्षान्तरोरुदर्शनेन कुर्वीत ।।

[भा.२४९५] काणच्छिमाइएहिं, खोभिय उद्धाइयस्स भद्दा उ ।
नासइ इयरो मोहं, सुवण्णकारेण दिट्ठंतो ।।

वृ-यदा काणाक्षिप्रभृतिभिराकारैः क्षोभितस्तदा 'गृह्णाम्येनाम्' इत्यभिप्रायेणोद्धा-वितस्ततस्तस्य सा देवता यदि भद्रा ततो नश्यति । 'इतरः' साधुस्तस्यामदर्शनीभूतायां मोहं गच्छति, सम्मूढश्च तां द्रष्टुमिच्छति, 'हा कुत्र गताऽसि ? देहि सकृदात्मीयं दर्शनम्' इत्यादिप्रलापाँश्च करोति । अत्र च 'सुवर्णकारेण' चम्पानगरीवास्तव्येन अनङ्गसेनाख्येन दृष्टान्तः, स च आवश्य-कादिग्रन्थेषु सुप्रसिद्धः ।। अथ प्रत्यनीकार्थतयेति व्याचष्टे-

[भा.२४९६] वीमंसा पडिनीया, विद्दरिसण-ऽक्खित्तमादिणो दोसा ।
असंपत्ती संपत्ती, लग्गस्स य कड्ढणादीणि ।।

वृ-प्रत्यनीकाऽपि 'विमर्शात्' काणाक्षिप्रभृतिभिराकारैः क्षोभयित्वा यदाऽसौ उद्धावितस्तदा "असंपत्ति"त्ति यावदसौ हस्तादिना नैव गृह्णाति तावद् 'विदर्शनं' विकृतं रूपं दर्शयति, अथवा 'विदर्शनं नाम' अलग्नमेव लोको लग्नं पश्यति । यद्वा सा तस्य साधोः क्षिप्तचित्तादिदोषान् कुर्यात् । अथवा परिभोगसम्पत्तिं कृत्वा तत्रैव तस्य सागारिकं लापयेत् श्वानादिवत् । लग्नस्य च तस्य लेप्यकस्वामी अन्यो वा दृष्ट्वा ग्रहणा-ऽऽकर्षणादीनि कुर्यात् ।। एतदेव व्याचष्टे-

[भा.२४९७] पंता उ असंपत्तीइ चेव मारिज्ज खेत्तमादी वा ।

संपत्तीइ वि लाएतु कड्ढणादीणि कारेज्जा ॥

वृ- प्रान्ता पुनः '[illegible]' [illegible] 'वा' अथवा क्षिप्तचित्तम् आदिशब्दाद् यक्षाविष्टं वा कुर्यात् । सम्पत्त्यामपि सागारिकं लापयित्वा ग्रहणाऽऽकर्षणादीनि कारयेत् ॥ अथ भोगार्थिनीपदं विवृणोति-

[भा.२४९८] भोगत्थी विगए कोउगम्मि खित्ताइ दित्तचित्तं वा ।
दट्ठूण व सेवंतं, देउलसामी करेज्ज इमं ॥

वृ- भोगार्थिनी देवता काणाक्षिकादिभिराकारैरुपप्रलोभ्य क्षुभितेन सह भोगान् भुक्त्वा विगते भोगविषये कौतुके 'मा अपरया सह भोगान् भुङ्क्ताम्' इति कृत्वा तं 'क्षिप्तचित्तं वा' यक्षाविष्टं वा दप्तचित्तं वा कुर्यात् । अथवा तां देवतां सेवमानं तं साधुं दृष्ट्वा देवकुलस्वामी यथाभावेनेदं कुर्यात् ॥

[भा.२४९९] तं चेव निट्ठवेई, बंधन निच्छुभण कडगमद्दे अ ।
आयरिए गच्छम्मि य, कुल गण संघे य पत्थारो ॥

वृ- तमेव साधुं क्रुद्धः सन् देवकुलस्वामी 'निष्ठापयति' मारयतीत्यर्थः । यदि वा प्रभुरसौ ततः स्वयमेव तं साधुं बध्नीयात्, अप्रभुरपि प्रभुणा बन्धापयेत् । अथवा वसतेर्ग्रामाद् नगराद् देशाद् राज्याद्वा निष्काशयेत् । कटकं-स्कन्धावारः स यथा परविषयमवतीर्णं कस्याप्येकस्य राज्ञः प्रद्वेषेण निरपराधान्यपि ग्राम-नगरादीनि सर्वाणि मृद्नाति, एवमेकेन साधुनाऽकार्यं कृतं दृष्ट्वा यो यत्र दृश्यते स तत्र बाल-वृद्धादिरपि सर्वो मार्यते एवंविधं कटकमर्दं कुर्यात् । यद्वा यस्तस्याचार्यो गच्छः कुलं गणः सङ्घो वा तस्य 'प्रस्तारः' विनाशः क्रियेत ॥ तथा-

[भा.२५००] गिण्हणे गुरुगा छम्मास कड्ढणे छेदो होइ ववहारे ।
पच्छाकडम्मि मूलं, उड्डहण-विरुंगणे नवमं ॥

[भा.२५०१] उद्दावण निव्विसए, एगमणेगे पदोस पारंची ।
अणवट्ठप्पो दोसु उ, दोसु उ पारंचिओ होइ ॥

वृ- स साधुः प्रतिसेवमानो यदि देवकुलस्वामिना गृहीतः ततो ग्रहणे चत्वारो गुरुकाः । अथ हस्ते वा वस्त्रे वा गृहीत्वा राजकुलाभिमुखमाकृष्टस्ततः आकर्षणे षड्लघवः । तेन साधुना स प्रत्याकर्षितस्ततः षण्मासा गुरवः । व्यवहारे प्रारब्धे छेदः । 'पश्चात्कृते' पराजिते मूलम् । 'उड्डहने' रासभारोपणादिके 'विरूपणे वा' नासिकादिकर्त्तनेन विरूपणाकरणे 'नवमम्' अनवस्थाप्यम् । एकस्मिन्ननेकेषु वा साधुषु प्रद्वेषतोऽपद्रावणे कृते निर्विषये वाऽऽज्ञप्ते प्रतिसेवक आचार्यो वा पाराञ्चिकः । एवं च 'द्वयोः' उड्डहन-विरूपणयोरनवस्थाप्यः, 'द्वयोस्तु' अपद्रावणनिर्विषयाज्ञपनयोः पाराञ्चिको भवतीति ॥ अथवा प्रद्विष्टः सन्निदं कुर्यात्-

[भा.२५०२] एयस्स नत्थि दोसो, अपरिक्खियदिक्खगस्स अह दोसो ।
इति पंतो निव्विसए, उद्दवण विरुंचणं च करे ॥

वृ- 'एतस्य' प्रतिसेवकसाधोर्नास्ति दोषः किन्त्वेनमपरीक्षितं यो दीक्षितवान् तस्यैवापरीक्षितदीक्षकस्याचार्यस्य 'अथ' अयं दोष इति विचिन्त्य प्रान्त आचार्यं निर्विषयं कुर्यात् अपद्रावयेद्वा, कर्ण-नासा-नयनाद्युत्पाटेन विरूपणं वा कुर्यात् ॥ अथासन्निहिते एते दोषाः-

[भा.२५०३] तत्थेव य पडिबंधो, अदिट्ठगमणाइ वा अनिंतीए।
एए अन्ने य तहिं, दोसा पुन होंति सन्निहिए ॥

वृ- 'तत्रैव' तस्यामेव देवतायां संयतस्य प्रतिबन्धो भवेत्, अथवा सा व्यन्तरी विगतकौतुका सती नागच्छति ततस्तस्यामनायान्त्यां स प्रतगमनादीनि कुर्यात्। एतेऽन्ये चैवमादयो दोषा लेप्यकस्वामिनाऽदृष्टेऽपि सन्निहिते प्रतिमारूपे भवन्ति ॥ ताश्च सन्निहितप्रतिमा ईदृश्यो भवेयुः-

[भा.२५०४] कट्ठे पुत्थे चित्ते, दंतकम्मे य सेलकम्मे य।
दिट्ठिप्पत्ते रूवे, वि खित्तचित्तस्स भंसणया ॥

वृ- काष्ठमयी पुस्तमयी चित्रमयी दन्तकर्ममयी शैलकर्ममयी प्रतिमा भवेत्। एतासां रूपेऽपि दृष्ट्या प्राप्ते आक्षिप्तचित्तस्य प्रमत्ततया संयमजीविताद् भवजीविताद्वा परिभ्रंशना भवेत्, किं पुनस्तासामाश्रयस्थाने प्रतिसेवने वा ? ॥ तासां पुनः सन्निहितदेवतानामिमे प्रकाराः-

[भा.२५०५]सुहविन्नवणा सुहमोयगा य सुहविन्नवणा य होंति दुहमोया।
दुहविन्नप्पा य सुहा, दुहविन्नप्पा य दुहमोया ॥

वृ- विज्ञपना नाम-प्रार्थना प्रतिसेवना वा सा सुखेन यासां ताः सुखविज्ञपनाः सुखविज्ञप्या वा, तथा सुखेन मोच्यन्त इति सुखमोचाः सुपरित्यजा इत्यर्थः, एष प्रथमो भङ्गः। सुखविज्ञपना दुःखमोचा इति द्वितीयः। दुःखविज्ञप्या सुखमोचा इति तृतीयः। दुःखविज्ञप्या दुःखमोचा इति चतुर्थः ॥ तत्र प्रथमभङ्गे दृष्टान्तमाह-

[भा.२५०६] सोपारयम्मि नगरे, रन्ना किर मग्गितो उ निगमकरो।
अकरो त्ति मरणधम्मा, बालतवे धुत्तसंजोगो ॥

[भा.२५०७] पंच सय भोइ अगनी, अपरिग्गहि सालिभंजि सिंदूरे।
तुह मज्झ धुत्त पुत्तादि अवन्ने विअखीलणया ॥

वृ- सोपारयं नगरं। तत्थ नेगमा अकरा परिवसन्ति। ताण य पंच कुडुंबसयाणि। तत्थ य राया मंतिणा वुग्गाहितो। तेण ते नेगमा करं मग्गिता। ते 'पुत्ताणुपुत्तिओ करो एस भविस्सइ' त्ति काउं न दिंति। रन्ना भणिया-जइ न देह तो इमम्मि गेहे अग्गिपवेसं करेह। ततो ते सव्वे अग्गिं पविट्ठा। तेसिं नेगमाणं पंच महिलासयाइं तानि वि अग्गिं पविट्ठाणि। ताओ अ तीए अकामनिज्जराए पंच वि सया अपरिग्गहियाओ वाणमंतरियाओ जायाओ। तेहि य निगमेहिं तम्मि चेव नगरे देवउलं कारियं। अत्थि तत्थ पंच सालिभंजियासया। ते ताहिं देवताहिं परिग्गहिया। ताओ अ देवताओ न कोइ अप्पिड्ढिओ वि देवो इच्छइ ताहे धुत्तेहिं समं संपलग्गाओ। ते धुत्ता तस्संबंधेण भंडणं काउमाढत्ता-एसा मज्झं न तुज्झं। इतरो वि भणइ-मज्झं न तुज्झं। जा य जेन धुत्तेन सह अच्छिइ सा तस्स सव्वं पुव्वभवं साहइ। ततो ते भणंति-हरे अमुकनामधेया! एसा तुज्झं माया भगिनी वा इदानिं अमुगेण समं संपलग्गा। ता य एगम्मि पीढं न बंधंति, जो जो पडिहाइ तेन सह अच्छंति। तं च सोउं तासिं पुव्वभविएहिं पुत्ताईहिं 'अम्हं एस अयसो' त्ति काउं वेआवाइएण खीलावियाउ त्ति ॥

अथ गाथाद्वयस्याक्षरयोजना-सोपारके नगरे राज्ञा किल मार्गितः 'निगमानां' वणिग्विशेषाणां समीपे करः। तैश्च 'अकर इति' अपूर्व करो मा भूदिति कृत्वा मरणधर्मो व्यवसितः। तासां [तेषां] च 'भोजिकाः' महेलाः पञ्चापि शतान्यग्निप्रवेशलक्षणेन बालतपसा देवता अपरिगृहीताः

सञ्जाताः। धूर्तैश्च सह संयोगः। कथम्? इत्याह-'सिन्दूरं' सिन्दूरारुणं यद् देवकुलं तत्र शालभञ्जिकानां पञ्च शतानि ताभिर्देवताभिः परिगृहीतानि। तत्र स्थिताश्च धूर्तैः समं सम्प्रलग्नाः। "तुह मज्झे" ति 'नेयं तव, ममेयम्' इत्येवं ते धूर्ता कलहायितवन्तः। ततस्तासां पूर्वभववृत्तान्तं श्रुत्वा 'अवर्णोऽ-यमस्माकम्' इति कृत्वा पुत्रादिभिर्विद्याप्रयोगेण तासां कीलना कारितेति ॥ उक्तः प्रथमो भङ्गः। अथ शेषभङ्गत्रयं भावयति-

[भा.२५०८] बिइयम्मि रयणदेवय, तइए भंगम्मि सुइगविज्जाओ।
गोरी-गंधाराइ, दुहविण्णप्पा य दुहमोया ॥

वृ- द्वितीयभङ्गे रत्नदेवता निदर्शनम्, सा ह्यल्पर्द्धिकत्वात् कामातुरत्वाच्च सुखविज्ञपना सर्वसुखसम्पादकतया च दुःखमोचा। तृतीये भङ्गे शुचयो विद्यादेव्यो निदर्शनम्, ता हि शुचितया महर्द्धिकतया च दुःखविज्ञपना उग्रतया नित्यमत्यन्ताप्रमत्तैराराधनीयत्वात् पर्यन्ते सापायत्वाच्च सुखमोचाः। चतुर्थे भङ्गे गौरी-गान्धारीप्रभृतयो मातङ्गविद्यादेवता द्रष्टव्याः, तथाहि- ताः साधनकाले लोकगर्हिततया दुःखविज्ञाप्या यथेष्टकामसम्प्रापकतया च दुःखमोचा इति ॥

भाविताश्चत्वारो भङ्गाः। अथ प्राजापत्यादित्रिविधपरिगृहीते गुरुलाघवमाह-

[भा.२५०९] तिण्ह वि कतरो गुरुतो, पागइ कोडुंबि दंडिए चेव।
साहस अपरिक्ख भए, इयरे पडिपक्ख पभु राया ॥

वृ- शिष्यः पृच्छति-'त्रयाणां' प्राजापत्य-कौटुम्बिक-दण्डिकपरिगृहीतानां मध्यात् कतरद् गुरुतरम्?। गाथायां प्राकृतत्वात् पुंस्त्वनिर्देशः। शिष्य एवाह-अहं तावद् भणामि- प्राजापत्यपरिगृहीतं गुरुकम्, कौटुम्बिक-दण्डिकपरिगृहीतं लघुतरम्, यतः "साहस" ति प्राकृतजनो मूर्खतया साहसिकोऽपरीक्षितकारी च भवति, अनीश्वरतया च तस्य तथाविधं भयं न भवति, अतोऽसौ मरणमप्यध्यवस्य तं साधुं मारयेत्, तेनास्य गुरुतरो दोषः। 'इतरौ नाम' कौटुम्बिक-दण्डिकौ तौ प्राकृतिकस्य प्रतिपक्षभूतौ। किमुक्तं भवति? -तौ न साहसिकौ, नाप्यपरीक्षितकारिणौ, भयं च तयोर्भवति। अत्राचार्य प्राह-दण्डिक-कौटुम्बिकौ गुरुतरौ, प्राकृतो लघुतरः, यतो राजा उपलक्षणत्वात् कौटुम्बिकश्च प्रभुः, प्रभुत्वाच्च स एकस्य रुष्टः सङ्घस्य प्रस्तारं कुर्यादिति ॥ अथ कौटुम्बिक-दण्डिकानां यद् भयमुत्पद्यते तद् दर्शयन् परः स्वपक्षं द्रढयन्नाह-

[भा.२५१०] ईसरियत्ता रज्जा व भंसए मन्नुपहरणा रिसओ।
ते य समिक्खियकारी, अन्ना वि य सिं बहू अत्थि ॥

वृ- एत ऋषयः 'मन्युप्रहरणाः' शापायुधा अतः कोपिताः सन्तो मामैश्वर्याद् भ्रंशयेयुरिति कौटुम्बिकश्चिन्तयेत्, राजा तु आममी राज्याद् भ्रंशयेयुरिति चिन्तयति। 'ते च' राजादयः 'समीक्षितकारिणः' नाविमृश्य कार्यं कुर्वन्ति। अन्यच्च तेषामन्या अपि बहवः प्रतिमाः सन्ति अतस्तस्यामेकस्यामेव तेषां नादरः ॥ एवं परेण स्वपक्षे भाविते सति सूरिराह-

[भा.२५११] पत्थारदोसकारी, निवावराहो य बहुजने फुसइ।
पागइओ पुन तस्स व, निवस्स व भया न पडिकुज्जा ॥

वृ- प्रस्तारः-कटकमर्दः, एकस्य रुष्टः सर्वमपि यत्र व्यापादयतीत्यर्थः, तद्दोषकारी राजा, नृपापराधश्च 'बहुजनान् स्पृशति' बहुजनमध्ये प्रकटीभवतीति भावः। एवं कौटुम्बिकस्यापि

द्रष्टव्यम् । अत एतौ द्वावपि गुरुतरौ । प्राकृतकापराधस्तु बहुजनं न स्पृशति । अपि च प्राकृतकः 'तस्य वा' संयतस्य नृपस्यवा भयाद् 'न प्रतिकुर्याद्' न प्रत्यपकारं करोति ॥

[भा.२५१२] अवि य हु कम्मद्दन्नो, न य गुत्ती ओ सि नेव दारट्ठा ।
तेन कयं पि न नज्ज, इतरत्थ पुनो धुवा दोसा ॥

वृ- 'अपि च' इत्यभ्युच्चये, प्राकृतकः क्षेत्र-खलादिकर्मभि अदन्नः-अक्षणिकः ततस्तासां प्रतिमानामुदन्तं न वहति, न च तत्सम्बन्धिनीषु देवद्रोणीषु 'गुप्ति' आत्यन्तिकी रक्षा, न वा 'द्वारस्थाः' द्वारपालाः ततः कृतमपि प्रतिमाप्रतिसेवनं न ज्ञायते । 'इतरत्र तु' दण्डिक-कौटुम्बिकेषु पुनः 'ध्रुवाः' अवश्यम्भाविनः प्रस्तारादयो दोषाः, द्वारपालादिरक्षासद्भावात् ॥

अत एव तेषां प्रतिमासु पूर्वं प्रभूततरं प्रायश्चित्तमुक्तम्, न केवलं प्रतिमासु किन्तु स्त्रीष्वपि तदीयासु गुरुतरं प्रायश्चित्तं भवतीति प्रसङ्गतो दर्शयितुमाह-

[भा.२५१३] रन्नो य इत्थियाए, संपत्तीकारणम्मि पारंची ।
अमच्ची अणवठप्पो, मूलं पुन पागयजणम्मि ॥

वृ- 'राज्ञः स्त्रियाम्' अग्रमहिष्यां यद् मैथुनसंपत्तिलक्षणं कारणं तत्र पाराञ्चिको भवति । अमात्यायामनवस्थाप्यः । प्राकृतजनस्त्रियां पुनर्मूलम् ॥ शिष्यः प्राह-

[भा.२५१४] तुल्ले मेहुणभावे, नाणत्तारोवणा [illegible] कीस कया ।
जेन निवे पत्थारो, रागो वि य वत्थुमासज्ज ॥

वृ- दण्डिकादिपरिगृहीतासु प्रतिमासु स्त्रीषु वा तुल्ये मैथुनभावे कस्माद् 'आरोपणायाः' प्रायश्चित्तस्य 'नानाता' विसदृशता कृता? । सूरिराह-येन कारणेन 'नृपे' राज्ञि 'प्रस्तारः' कटकमर्दो भवति, अतस्तत्राधिकतरं प्रायश्चित्तम् । तदपेक्षया कौटुम्बिके प्राकृते च यथाक्रमं स्वल्पाः स्वल्पतरा दोषास्ततस्तयोः प्रायश्चित्तमपि हीनं हीनतरम् । रागोऽपि च वस्तु आसाद्य भवति, यादृशं जघन्यं मध्यममुत्कृष्टं वा वस्तु रागोऽपि तत्र तादृशो भवतीति भावः ॥ इदमेव भावयति-

[भा.२५१५] जइभागगया मत्ता, रागादीनं तहा चओ कम्मे ।
रागाइविहुरया वि हु, पायं वत्थूण विहुरत्ता ॥

वृ- रागादीनां 'मात्रा' जघन्यादिरूपा यतिषु-यावत्सङ्ख्याकेषु भागेषु गता-स्थिता 'कर्मण्यपि' ज्ञानावरणादौ 'चयः' बन्धस्तथैव द्रष्टव्यः । अथ रागादीनां मात्रानानात्वं कथं भवति ? इत्याह- रागादीनां 'विधुरताऽपि' मात्रावैषम्यमपि प्रायः 'वस्तूनां' स्त्रीप्रभृतीनां 'विधुरत्वात्' सुन्दर-सुन्दरतर-सुन्दरतमविभागाद् भवति । प्रायोग्रहणं कस्यापि कदाचिद् वस्तुवैसदृश्यमन्तरेणापि रागादिवैसदृश्यं भवतीति ज्ञापनार्थम् । यतश्चैवमतो युक्तियुक्तं दण्डिकादिपरिगृहीतासु स्त्रीषु प्रतिमासु वा प्रायश्चित्तनानात्वम् ॥ तदेवमुक्तं दिव्यं प्रतिमायुतम् । अथ दिव्यस्यैव देहयुतस्यावसरः- तच्चाचिततं न सम्भवति, जीवच्युतस्य दिव्यशरीरस्य तत्क्षणादेव विध्वंसनात् । यत्तु सचित्तदेवीशरीररूपं देहयुतं तत्र स्थानप्रायश्चित्तं यथा प्रतिमायुते, प्रतिसेवनाप्रायश्चित्तं तु यथा मनुष्यस्त्रीषु भणिष्यते । गतं दिव्यरूपम् । अथ मानुष्यरूपमाह-

[भा.२५१६] मानुस्सं पि य तिविहं, जहन्नगं मज्झिमं च उक्कोसं ।

पायावच्च-कुडुंबिय-दंडियपारिग्गहं चेव ॥

वृ-मानुष्यमपि रूपं त्रिविधम्-जघन्यं मध्यममुत्कृष्टं च। पुनरेकैकं त्रिविधम्-प्राजापत्यपरिगृहीतं कौटुम्बिकपरिगृहीतं दण्डिकपरिगृहीतं चेति ॥ तत्रोत्कृष्टादिविभागमाह-

[भा.२५१७] उक्कोस माउ-भज्जा, मज्झं पुन भगिनि-धूतमादीयं।
खरियादी य जहन्नं, पगयं सजितेतरे देहे ॥

वृ- इह गृहिणो मातरं भार्या वा नान्यस्य कस्यापि प्रयच्छन्ति, अतो माता भार्या चोत्कृष्टं मानुष्यरूपम्। यास्तु भगिनीदुहितृ-पौत्र्यादयोऽन्यस्मै स्वामिकृधिताय दीयन्ते ताः पुनर्मध्यमम्। खरिका-दासी तदादय इतराः स्त्रियो जघन्यम्। एतत् त्रयमपि प्रत्येकं द्विधा-प्रतिमायुतं देहयुतं च। प्रतिमायुतं दिव्यवद् वक्तव्यम्। देहयुतेन तु सजीवेन इतरेण वा-अजीवेन 'प्रकृतम्' अधिकारः, तद्विषयं प्रायश्चित्तमभिधास्यत इत्यर्थः ॥ तत्र स्थानप्रायश्चित्तं तावदाह-

[भा.२५१८] पढमिल्लुगम्मि ठाणे, चउरो मासा हवंतऽनुग्घाया।
छम्मासाऽनुग्घाया, बिइए तइए भवे छेदो ॥

वृ- प्रथमं नाम-जघन्यं मानुष्यरूपं तत्र प्राजापत्यपरिगृहीतादौ भेदत्रयेऽपि तिष्ठतश्चत्वारोऽनुद्धाता मासाः, गुरव इत्यर्थः। द्वितीयं-मध्यं तत्रापि त्रिष्वपि भेदेषु षण्मासा अनुद्धाताः। तृतीयम्-उत्कृष्टं तत्र भेदत्रयेऽपि तिष्ठतश्छेदो भवेत् ॥ अथ कीदृशश्छेदः ? इति ज्ञापनार्थमाह-

[भा.२५१९] पढमस्स तइयठाणे, छम्मासुग्घाइओ भवे छेदो।
चउमासो छम्मासो, बिइए तइए अनुग्घाओ ॥

वृ- प्रथमं-प्राजापत्यपरिगृहीतं तस्य यत् तृतीयं स्थानम्-उत्कृष्टमित्यर्थः तत्र षाण्मासिक उद्घातिकश्छेदः। द्वितीयं-कौटुम्बिकपरिगृहीतं तस्य तृतीयस्थाने चतुर्गुरुकश्छेदः। तृतीयं-दण्डिकपरिगृहीतं तत्रापि यत् तृतीयं स्थानं तत्र षाण्मासिकोऽनुद्धातश्छेदः ॥ तथा-

[भा.२५२०] पढमिल्लुगम्मि तवऽरिह, दोहि वि लहु होंति एते पच्छित्ता।
बिइयम्मि य कालगुरू, तवगुरुगा होंति तइयम्मि ॥

वृ- प्रथमिल्लुकं-प्राजापत्यपरिगृहीतं तत्र जघन्य-मध्यमयोर्यत् तपोऽर्हं प्रायश्चित्ते चतुर्गुरु-षड्गुरुरूपे एते 'द्वाभ्यामपि' तपः-कलाभ्यां लघुके कर्तव्ये। 'द्वितीये' कौटुम्बिकपरिगृहीते ते एव कालगुरुके। 'तृतीये' दण्डिकपरिगृहीते ते एव तपसा गुरुके कालेन लघुके ॥

उक्तं स्थानप्रायश्चित्तं अथ प्रतिसेवनाप्रायश्चित्तमाह-

[भा.२५२१] चउगुरुका छग्गुरुका, छेदो मूलं जहन्नए होइ।
छग्गुरुक छेअ मूलं, अणवठ्ठप्पो अ मज्झिमए ॥

[भा.२५२२] छेदो मूलं च तहा, अणवठ्ठप्पो य होइ पारंची।
एवं दिठ्ठमदिठ्ठे, सेवंते पसज्जणं मोत्तुं ॥

वृ- प्राजापत्यपरिगृहीतं जघन्यमदृष्टं प्रतिसेवते चत्वारो गुरवः, दृष्टे षण्मासा गुरवः। कौटुम्बिकपरिगृहीतं जघन्यमदृष्टं प्रतिसेवते षण्मासा गुरवः, दृष्टे छेदः। दण्डिकपरिगृहीतं जघन्यमदृष्टं प्रतिसेवते छेदः, दृष्टे मूलम्। प्राजापत्यपरिगृहीते मध्यमेऽदृष्टे षण्मासा गुरवः, दृष्टे छेदः। कौटुम्बिकपरिगृहीते मध्यमेऽदृष्टे छेदः, दृष्टे मूलम्। दण्डिकपरिगृहीते मध्यमेऽदृष्टे मूलम्, दृष्टेऽनवस्थाप्यम्।

प्राजापत्यपरिगृहीते उत्कृष्टेऽष्टे छेदः, ष्टे मूलम् । कौटुम्बिकपरिगृहीते उत्कृष्टेऽष्टे मूलम्, ष्टेऽनवस्थाप्यम् । दण्डिकपरिगृहीते उत्कृष्टेऽष्टेऽनवस्थाप्यम्, ष्टेपाराञ्चिकम् । एवं ष्टाष्टे प्रतिसेवमानस्य 'प्रसजनां' शङ्का-भोजिकादिलक्षणां मुक्त्वा प्रायश्चित्तं मन्तव्यम् ॥ अत्र नोदकः प्राह-

[भा.२५२३] जम्हा पढमे मूलं, बिइए अणवट्ठओ थइए पारंची ।
तम्हा ठायंतस्सा, मूलं अणवट्ठ पारंची ॥

वृ- अत्राचार्य परिहारमाह-

[भा.२५२४] पडिसेवणाए एवं, पसज्जणा तत्थ होइ इक्किक्के ।
चरिमपदे चरिमपदं, तं पि य आणाइनिप्फन्नं ॥

वृ- अनयोर्व्याख्या प्राग्वत्

[भा.२५२५] ते चेव तत्थ दोसा, मोरियआणाए जे भणिय पुव्विं ।
आलिंगणाइ मोत्तुं, मानुस्से सेवमाणस्स ॥

वृ- 'त एव' अनवस्था-मिथ्यात्वादयः 'तत्र' मानुष्यकस्त्रीरूपे दोषा ये पूर्वं "मुरियाई आणाए" इत्यादिगाथायां भणिताः । नवरं दिव्यप्रतिमाया आलिङ्गने ये प्रतिमाभङ्गदोषा भङ्गक-प्रान्तकृता उक्तास्तान् मुक्त्वा शेषाः सर्वेऽपि मानुष्यकं देहयुतं सेवमानस्य भणितव्याः ॥

इदमेव स्फुटतरमाह-

[भा.२५२६] आलिंगंते हत्थाइभंजणे जे उ पच्छकम्मादी ।
ते इह नत्थि इमे पुन, नक्खादिविछेअणे सूया ॥

वृ- लेप्यप्रतिमामालिङ्गमानस्य तस्याः प्रतिमाया हस्त-पादाद्यवयवभङ्गे सति ये पश्चात्कर्मादयो दोषा उक्तास्ते 'इह' मानुष्यके देहयुते न भवन्ति । इमे पुनर्दोषा अत्र भवन्ति-सा स्त्री कामातुरतया तं साधुं नखैर्विच्छिन्द्यात्, आदिशब्दाद् दन्तक्षतानि वा कुर्वीत । तैश्च तस्य श्रमणकस्य स्वपक्षेण वा परपक्षेण वा सूचा क्रियेत-यदेवमस्य वपुषि नख-दन्तक्षतानि ष्यन्ते तदेष निश्चितं प्रतिसेवक इति ॥ अथ मानुषीषु चतुरो विकल्पान् दर्शयति-

[भा.२५२७] सुहविन्नप्पा सुहमोइगा य सुहविन्नप्पा य होंति दुहमोया ।
दुहविन्नप्पाय सुहा, दुहविन्नप्पा य दुहमोया ॥

वृ- मनुष्यस्त्रियश्चतुर्विधाः, तद्यथा- सुखविज्ञप्याः सुखमोच्याः १ सुखविज्ञप्या दुःखमोच्याः २ दुःखविज्ञप्याः सुखमोच्याः ३ दुःखविज्ञप्या दुःखमोच्याः ४ चेति ॥ चतुर्ष्वपि भङ्गेषु यथाक्रममभूनि निदर्शनानि-

[भा.२५२८] खरिया महिड्ढिगणिया, अंतेपुरिया य रायमाया य ।
उभयं सुहविन्नवणा, सुमोय दोहिं पि य दुमोया ॥

वृ- 'खरिका' द्व्यक्षरिका सा सर्वजनसाम्यतया सुखविज्ञप्या, परिफल्गुसुखलवास्वादनहेतुत्वाच्च सुखमोच्या १ । या तु महर्द्धिका गणिका साऽपि साधारणस्त्रीत्वेनैव सुखविज्ञप्या, यौवन-रूपविभ्रमादिभावयुक्तत्वेन तु दुःखमोच्या २ । या पुरन्तःपुरिका सा वर्षधरादिरक्षपालकैर्दुप्रापतया दुःखविज्ञप्या, प्रत्यपायबहुलतया च सुखमोच्या ३ । या तु राज्ञः सम्बन्धिनी माता सा सुरक्षिततया सर्वस्यापि च गुरुस्थाने पूजनीयतया च दुःखविज्ञप्या, प्राप्ता च सती सर्वसौख्यसम्पत्तिकारिणी

प्रमाणभूतत्वाच्च राज्ञा विधीयमानान् प्रत्यपायान् रक्षितुं शक्नोतीति दुःखमोच्या ४। "उभय"मिति प्रथमा सुखविज्ञाप्या सुखमोच्या १ "सुहविन्नवण"त्ति द्वितीया सुखविज्ञपना परं दुःखमोच्या २ "सुमोय"त्ति तृतीया सुमोचा परं दुःखविज्ञपना ३ चतुर्थी द्वाभ्यामपि 'दुःखा' दुःखविज्ञपना दुःखमोच्या चेति ॥ अथाक्षेप-परिहारौ प्राह-

[भा.२५२९] तिण्ह वि कयरो गुरुओ, पागय कोडुंबि दंडिए चेव ।
साहस असमिक्ख भए, इयरे पडिपक्ख पभु राया ॥

[भा.२५३०] ईसरियत्ता रज्जा, व भंसए मन्नुपहरणा रिसओ ।
ते य समिक्खियकारी, अन्ना वि य सिं बहू अत्थि ॥

[भा.२५३१] पत्थारदोसकारी, निवावराहो य बहुजने फुसइ ।
पागइओ पुन तस्स व, निवस्स व भया न पडिकुज्जा ॥

[भा.२५३२] अवि य हु कम्मद्दण्णा, न य गुत्तीओ सि नेव दारट्ठा ।
तेन कयं पि न नज्जइ, इतरत्थ पुनो धुवो दोसो ॥

[भा.२५३३] तुल्ले मेहुणभावे, नाणत्ताऽऽरोवणा उ कीस कया ।
जेन निवे पत्थारो, रागो वि य वत्थुमासज्ज ॥

वृ- इदं गाथापञ्चकमपि दिव्यद्वारवद् द्रष्टव्यम् ॥ गतं मानुष्यकम् । अथ तैरश्चमाह-

[भा.२५३४] तेरिच्छं पिय तिविहं, जहन्नयं मज्झिमं य उक्कोसं ।
पायावच्च-कुडुंबिय-दंडियपारिग्गहं चेव ॥

वृ- तैरश्चमपि रूपं त्रिविधम्-जघन्यं मध्यममुत्कृष्टं च । पुनरेकैकं त्रिधा-प्राजापत्यपरिगृहीतं कौटुम्बिकपरिगृहीतं दण्डिकपरिगृहीतं चेति ॥ तत्र-

[भा.२५३५] अइय अमिला जहन्ना, खरि महिसी मज्झिमा वलवमादी ।
गोणि करेनुक्कोसा, पगयं सजितेतरे देहे ॥

वृ- 'अजिकाः' छगलिकाः 'अमिलाः' एडकाः एताः 'जघन्याः' जघन्यं तैरश्चरूपमित्यर्थः । एवं खरी-महिषी-वडवादयो मध्यमम् । गावः-प्रतीताः करेणवः-हस्तिन्यस्ताः 'उत्कृष्टाः' उत्कृष्टं तिर्यग्रूपम् । एतत् त्रयमपि द्विधा-प्रतिमायुतं देहयुतं च । इह सजीवेन 'इतरेण' अजीवेन देहयुतेन प्रकृतम्, तद्विषयं प्रायश्चित्तमभिधास्यत इत्यर्थः ॥ तत्र स्थानप्रायश्चित्तमाह-

[भा.२५३६] चत्तारि य उग्घाया, जहन्नए मज्झिमे अनुग्घाया ।
छम्मासा उग्घाया, उक्कोसे ठायमाणस्स ॥

वृ-प्राजापत्यपरिगृहीतादौ जघन्यके तिरश्चीदेहयुते तिष्ठति । चत्वार उद्घाताः, मध्यमे तिष्ठति चत्वारोऽनुद्घाताः, उत्कृष्टे तिष्ठतः षण्मासा उद्घाताः ॥

अथैतदेव प्रायश्चित्तं तपः-कालाभ्यां विशेषयति-

[भा.२५३७] पढमिल्लुगम्मि ठाणे, दोहि वि लहुगा तवेण कालेणं ।
बिइयम्मि उ कालगुरू, तवगुरुगा होंति तइयम्मि ॥

वृ- 'प्रथमिल्लुके स्थाने' प्राजापत्यपरिगृहीते यानि प्रायश्चित्तानि तानि 'द्वाभ्यामपि' तपसा कालेन च लघुकानि । 'द्वितीये' कौटुम्बिकपरिगृहीते तान्येव कालगुरुकाणि । 'तृतीये'

दण्डिकपरिगृहीते तपोगुरुकाणि ॥ गतं स्थानप्रायश्चित्तम् । अथप्रतिसेवनाप्रायश्चित्तमाह-

[भा.२५३८] चउरो लहुगा गुरुगा, छेदो मूलं जहन्नए होइ ।
चउगुरुग छेद मूलं, अणवट्ठप्पो य मज्झिमए ॥

[भा.२५३९] छेदो मूलं च तहा, अणवट्ठप्पो य होइ पारंची ।
एवं दिट्ठमदिट्ठे, सेवंते पसज्जणं मोत्तुं ॥

वृ- प्राजापत्यपरिगृहीतं जन्यमदृष्टं प्रतिसेवते चत्वारो लघवः, दृष्टे चत्वारो गुरवः । कौटुम्बिकपरिगृहीते जघन्येऽदृष्टे चत्वारो गुरवः, दृष्टे च्छेदः । दण्डिकपरिगृहीते जघन्येऽदृष्टे च्छेदः, दृष्टे मूलम् । प्राजापत्यपरिगृहीते मध्यमेऽदृष्टे चत्वारो गुरवः, दृष्टे च्छेदः । कौटुम्बिकपरिगृहीते मध्यमेऽदृष्टे च्छेदः, दृष्टे मूलम् । दण्डिकपरिगृहीते मध्यमेऽदृष्टे मूलम्, दृष्टेऽनवस्थाप्यम् । प्राजापत्यपरिगृहीते उत्कृष्टेऽदृष्टे च्छेदः, दृष्टे मूलम् । कौटुम्बिकपरिगृहीते उत्कृष्टेऽदृष्टे मूलम्, दृष्टेऽनवस्थाप्यम् । दण्डिकपरिगृहीते उत्कृष्टेऽदृष्टेऽनवस्थाप्यम्, दृष्टे पाराञ्चिकम् । एवं दृष्टा-ऽदृष्टयोः 'प्रसजनां' शङ्का-भोजिकादिरूपां मुक्त्वा प्रायश्चित्तं ज्ञातव्यम् ॥

अथ प्रागुक्तमेवाक्षेप-परिहारबद्धं गाथाद्वयमाह-

[भा.२५४०] जम्हा पढमे मूलं, बिइए अणवट्ठो तइए पारंची ।
तम्हा ठायंतस्सा, मूलं अणवट्ठ पारंची ॥

[भा.२५४१] पडिसेवणाए एवं, पसज्जणा तत्थ होइ इक्केक्के ।
चरिमपदे चरिमपदं, तं पि य आणाइनिप्फन्नं ॥

वृ- गतार्थम् ॥

[भा.२५४२] ते चेव तत्थ दोसा, मोरियआणाए जे भणिय पुव्विं ।
आलावणाइ मोत्तुं, तेरिच्छे सेवमाणस्स ॥

वृ-मौर्यदृष्टान्तद्वारेण या भगवतामाज्ञा बलीयसी प्रसाधिता तस्या भङ्गे य दोषाः 'पूर्वं' दिव्यद्वारे मनुष्यद्वारे च भणिताः तेऽपि तथैवात्र द्रष्टव्याः । परमालापनादीन् मुक्त्वा शेषा अत्र तैरश्चे देहयुते सेवमानस्य भवन्ति ॥ एतदेवालापनादिपदं व्याचष्टे-

[भा.२५४३] जह हास-खेड्ड-आगार-विब्भमा होंति मणुयइत्थीसु ।
आलावा य बहुविधा, तह नत्थि तिरिक्खइत्थीसु ॥

वृ- यथा मनुष्यस्त्रीषु हास्य-क्रीडा-आकार-विभ्रमा आलापाश्च बहुविधा भवन्ति न तथा तिर्यक्स्त्रीषु । एतावान् मनुष्यस्त्रीभ्यस्तिर्यक्स्त्रीणां विशेषः ॥ अथ चतुर्भङ्गीमाह-

[भा.२५४४] सुहविण्णप्पा सुहमोइगा य, सुहविण्णप्पा य होंति दुहमोया ।
दुहविण्णप्पा य सुहा, दुहविण्णप्पा य दुहमोया ॥

वृ- गतार्था अत्रोदाहरणानि-

[भा.२५४५] अमिलाई उभयसुहा, अरहण्णगमाइमक्कडि दुमोया ।
गोणाइ तइयभंगे, उभयदुहा सीहि-वग्घीओ ॥

वृ- अमिलाः-एडकाः ता आदिशब्दाद् अजा-खरिकादयश्च तिर्यक्स्त्रिय उभयसुखाः, तत्र निष्प्रत्यपायतया सुखविज्ञाप्याः, लोकगर्हिततया तुच्छसुखास्वादमात्रहेतुत्वाच्च सुखमोच्याः १ ।

"अरहन्नगमाइमक्कडि"त्ति अरहन्नकस्य भ्रातृजाया तदनुरागाद् मृत्वा या मर्कटी जाता तदा दयस्तिरश्च्यो दुःखमोच्याः परं सुखविज्ञप्याः, अरहन्नकदृष्टान्तश्चावश्यकादवसातव्यः तृतीयभङ्गे तु गो-महिष्यादयः, ताः स्वपक्षेऽपि दुःखेन सङ्गमं कार्यन्ते किं पुनः परपक्षे मनुजेषु ? अतो दुःख-विज्ञपनाः, लोकजुगुप्सितश्च तासु सङ्गम इति कृत्वा सुखमोच्याः ३ । यास्तु सिंही-व्याघ्रीप्रभृतयस्ता उभयदुःखाः, तत्र जीवितान्तकारिणीत्वाद् दुःखविज्ञपनाः, अनुरक्ताश्च सत्यः प्रतिबन्धबन्धुरतया दुःखमोच्याः ॥ अत्र चोदकः प्रश्नयति को नाम आकुलोऽप्येताः तिर्यक्स्त्रियो लोकजुगुप्सिताः प्रतिसेवेत ? विशेषतो जिनवचनपरिमलितमति ? इति, अत्रोच्यते-

[भा.२५४६] जइ ता सणप्फईसुं, मेहुणभावं तु पावए पुरिसो ।
जीवियदोसा जहियं, किं पुन सेसासु जाईसु ॥

वृ- यदि तावत् 'सनखपदीषु' सिंहीषु पुरुषो मैथुनभावं प्राप्नोति यत्र "जीवितदोष"त्ति जीवितभयं प्राणसन्देहो यासु भवतीत्यर्थः, किं पुनः शेषासु खरिकादिजातिषु ? । तथा चात्र दृष्टान्तः-एक्का सीही रिउकाले मेहुणत्थी सजाइपुरिसं अलभमाणी सत्थे वहंते इक्कं पुरिसं घित्तुं गुहं पविट्ठा चाटुं काउमाढत्ता । सा य तेन पडिसेविता । तत्थ तेसिं दोण्ह वि संसारानुभावतो अनुरागो जातो । गुहापडियस्स तस्स सा दिने दिने पोग्गलं आनेउं देइ । सो वि तं पडिसेवइ । जइ एवं जीवितंतकरीसु वि सणप्फईसु पुरिसो मेहुणधम्मं पडिसेवइ किमंग पुन जासु जीवियभयं नत्थि तासु न पडिसेविस्सइ ? त्ति ॥ यच्चोक्तम् "विशेषतो जिनवचनपरिमलितबुद्धि" इति तदप्ययुक्तम्, यतः किमेषोऽपि श्लोको भवतो न कर्णकोटरमध्यमध्यासिष्ट ? -

मात्रास्वस्रा दुहित्रा वा, न विविक्तासनो भवेत् ।
बलवानिन्द्रियग्रामः, पण्डितोऽप्यत्र मुह्यति ॥

उक्तं तैरश्चं रूपम्, तदुक्तौ च समर्थितं भावसागारिकम् । एवं निर्ग्रन्थानामुक्तम् । अथ निर्ग्रन्थीनामेतदेवातिदिशन्नाह-

[भा.२५४७] एसेव कमो नियमा, निग्गंथीणं पि होइ नायव्वो ।
पुरिसपडिमाउ तासिं, साणम्मि य जं च अनुरागो ॥

वृ- 'एष एव' द्रव्य-भावसागारिकविषयः क्रमो नियमाद् निर्ग्रन्थीनामपि भवति ज्ञातव्यः । नवरं दिव्यद्वारे तासां पुरुषप्रतिमा द्रष्टव्याः, मानुष्यद्वारे मनुजपुरुषाः, तैरश्चद्वारे तिर्यक्पुरुषा इति । तैरश्चे च श्वानविषयो यदनुरागो बभूव तद् दृष्टान्तो भवति । जहा-एगा अविरइया अवाउडा काइयं वोसिरंती विरहे साणेण दिट्ठा । सो य साणो पुच्छं लोलिंतो चाडूणि करेंतो अल्लीणो । सा अगारी चिंतेइ-पेच्छामि ताव एस किं करेइ ? त्ति । तस्स पुरतो सागारियं अभिमुहं काउं जानुएहिं हत्थेहि य अहोमुही ठिया । तेन सा पडिसेविया । तीए अगारीए तत्थेव साणे अनुरागो जातो । एवं मिग-छगल-वानरादी वि अगारिं अभिलसंति ॥ यत एते दोषास्ततः सागारिके प्रतिश्रये न वस्तव्यम् ॥ अथ द्वितीयपदमाह-

[भा.२५४८] अद्धाणनिग्गयादी, तिक्खुत्तो मग्गिऊण असईए ।
गीयत्था जयणाए, वसंति तो दव्वसागरिए ॥

वृ- अध्वनिर्गतादयः 'त्रिकृत्वः' त्रीन् वारानन्यां निर्दोषां वसतिं मार्गयित्वा यदि न लभन्ते

ततोऽन्यस्यां वसतावसत्यां गीतार्था यतनया द्रव्यसागारिकेऽप्युपाश्रये वसन्ति ।। यतनामेवाह-

[भा.२५४९] जहि अप्पतरा दोसा, आभरणादीण दूरतो य मिगा ।
चिलिमिलि निसि जागरणं, गीए सज्झाय-झाणादी ।।

वृ- 'यत्र' रूपा-ऽऽभरणादावल्पतरा दोषाः तत्र तिष्ठन्ति । मृगा इव मृगाः-अज्ञत्वादगीतार्थास्तानाभरणादीनां दूरतः कुर्वन्ति । चिलिमिलिकां च रूपादीनामपान्तराले बध्नन्ति । 'निशि' रात्रौ तत्र जागरणं कर्त्तव्यम्, मा स्तेनादिराभरणादिकमपहरेदिति कृत्वा । गीतशब्दे च श्रूयमाणे महता शब्देन स्वाध्यायं कुर्वन्ति, ध्यानलब्धिसम्पन्नो वा ध्यानं ध्यायति, आदिशब्दाद् नृत्ते नाटके वा विधीयमाने तदभिमुखं नावलोकन्ते ।। भावसागारिके द्वितीयपदमाह-

[भा.२५५०] अद्धाणनिग्गयादी, वासे सावयभए व तेनभए ।
आवरिया तिविहे वी, वसंति जयणाए गीयत्था ।।

वृ- अध्वनिर्गतादयो ग्रामादीनामन्तः शुद्धां वसतिमलभमाना बहिरप्युद्यानादौ वसन्ति । अथ बहिर्वसतामिमे दोषाः-"वास"त्ति वर्षं निपतति, सिंह-व्याघ्रादीनां वा श्वापदानां भयम्, स्तेनानां वा शरीरोपधिहराणां भयम् । ततो ग्रामादेरन्तर्भावसागारिके जघन्यमध्यमोत्कृष्टभेदाद् प्राजापत्यादिपरिगृहीतभेदाद्वा त्रिविधेऽपि वसन्ति । तत्र च प्रतिमा वस्त्रादिभिरावृताः क्रियन्ते । मनुष्य-तिर्यक्स्त्रियश्च कटकचिलिमिलिकामपान्तराले दत्त्वा यथा न विलोक्यन्त तथाऽऽवृताः सन्तो गीतार्था यतनया वसन्ति ।। सूत्रम्-

मू. (२६) *नो कप्पइ निग्गंथाणं इत्थिसागारिए उवस्सए वत्थए ।।*

मू. (२७) *कप्पइ निग्गंथाणं पुरिससागारिए उवस्सए वत्थए ।।*

मू. (२८) *नो कप्पइ निग्गंथीणं पुरिससागारिए उवस्सए वत्थए ।।*

मू. (२९) *कप्पइ निग्गंथीणं इत्थिसागारिए उवस्सए वत्थए ।।*

वृ- अस्य सूत्रचतुष्टयस्य सम्बन्धमाह-

[भा.२५५१] अविसिट्ठं सागरियं, वुत्तं तं पुन विभागतो इणमो ।
मज्झे पुरिससगारं, आदी अंते य इत्थीसु ।।

वृ- पूर्वसूत्रे 'अविशिष्टं' स्त्री-पुरुषविशेषरहितं सागारिकमुक्तम् । अधुना पुनः तदेव सागारिकं 'विभागतः' स्त्री-पुरुषविशेषादस्मिन् सूत्रचतुष्टयेऽभिधीयते । अत्र च मध्यवर्त्तिसूत्रद्वये पुरुषसागारिकमादिसूत्रे अन्त्यसूत्रे च स्त्रीसागारिकमाश्रित्य विधिरभिधीयत इति ।। अनेन सम्बन्धेनायातस्यास्य सूत्रचतुष्टयस्य व्याख्या-नो कल्पते निर्ग्रन्थानां स्त्रीसागारिके उपाश्रये वस्तुम् कल्पते निर्ग्रन्थानां पुरुषसागारिके उपाश्रये वस्तुम् । नो कल्पते निर्ग्रन्थीनां पुरुषसागारिके उपाश्रये वस्तुम् । नो कल्पते निर्ग्रन्थीनां पुरुषसागारिके उपाश्रये वस्तुम् । कल्पते निर्ग्रन्थीनां स्त्रीसागारिके उपाश्रये वस्तुमिति सूत्रचतुष्टयाक्षरार्थः ।। अथ भाष्यकारो विस्तरार्थं बिभणिषुराह-

[भा.२५५२] इत्थीसागरिए उवस्सयम्मि स च्चेव इत्थिया होइ ।
देवी मनुय तिरिच्छी, स च्चेव पसज्जणा तत्थ ।।

वृ- स्त्रीसागारिके उपाश्रये वस्तुं न कल्पते, सा चानन्तरसूत्रे या देवी मानुषी तिरश्ची च प्रतिपादिता सैवात्रापि द्रष्टव्या । सैव च 'प्रसजना' मिथ्यात्व-शङ्का-भोजिकादिरूपा । तत्र च प्रायश्चित्तमपि

तदेव मन्तव्यम् । अत्र परः प्राह-

[भा.२५५३] जइ स च्चेव य इत्थी, सोही य पसजणा य स च्चेव ।
सुत्तं तु किमारद्धं, चोदग ! सुण कारणं इत्थं ॥

वृ- यदि सैव स्त्री सैव 'शोधिः' प्रायश्चित्तं सैव च प्रसजना तर्हि किमर्थमिदं स्त्रीसागारिक-सूत्रमारब्धम् ? पुनरुक्तदोषदुष्टत्वान्नेदमारब्धुं युज्यत इति भावः । सूरिराह-नोदक ! कारणमत्रास्ति येनेदं सूत्रमारब्धम्, तच्चावहितः 'शृणु' निशमय ॥

[भा.२५५४] पुव्वभणियं तु पुनरवि, जं भण्णइ तत्थ कारणं अत्थि ।
पडिसेहोऽणुन्ना कारणं विसेसोवलंभो वा ॥

वृ- तुशब्दोऽपिशब्दार्थे । पूर्वभणितमपि पुनरपि यद् भण्यते तत्र कारणमस्ति । किम् ? इत्याह-"पडिसेहो"त्ति ये पूर्वमनुज्ञां कुर्वता अर्था उक्तास्त एव भूयः प्रतिषेधद्वारेण भण्यन्ते । "अणुन्न"त्ति येऽर्था पूर्वं प्रतिषेधं कुर्वता भणितास्तानेवानुज्ञां कुर्वन् भूयोऽपि दर्शयति । तथा 'कारणं' निमित्तं तद्दर्शनार्थं भूयोऽपि स एवार्थो भणनीयः । अथवा पूर्वं सामान्येन यः प्रतिपादितोऽर्थस्तस्यैव विशेषोपलम्भार्थं प्राग् भणितमपि भूयः प्रतिपादनीयम् । एवं प्रागुक्तभणने चत्वारि कारणानि सन्तीति ॥ आह यद्येवं ततः प्रस्तुते किमायातम् ? इत्याह-

[भा.२५५५] ओहे सव्वनिसेहो, सरिसाणुन्ना विभागसुत्तेसु ।
जयणाहेउं भेदो, तह मज्झत्थादओ वा वि ॥

वृ- "नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारिए उवस्सए वत्थए" इत्यस्मिन् ओघसूत्रे सर्वस्यापि सागारिकस्य निषेधः कृतः, इह तु विभागसूत्रेषु सदृशानुज्ञा क्रियते, यथा-पुरुषाणां पुरुषसागारिके स्त्रीणां स्त्रीसागारिके वस्तुं कल्पते । तथा यतना यथा पुरुषेषु स्त्रीषु वा कर्त्तव्या तद्दर्शनहेतोर्विभागसूत्राणां भेदः । मध्यस्थादयो वा स्त्री-पुरुषाणां भेदा अर्थतो दर्शयिष्यन्ते इति विभागसूत्राणां पृथगारम्भः क्रियते ॥ अथ द्वितीयसूत्रे विशेषोपलम्भं दर्शयन्नाह-

[भा.२५५६] पुरिससागारिए उवस्सयम्मि, चउरो लहुगा य दोस आणादी ।
ते वि य पुरिसा दुविहा, सविकारा निव्विकारा य ॥

वृ- "कल्पते निर्ग्रन्थानां पुरुषसागारिके उपाश्रये वस्तुम्" इत्येवं यद्यपि सूत्रेऽनुज्ञातं तथाप्युत्सर्गतो न कल्पते । यदि वसन्ति ततश्चत्वारो लघुकाः प्रायश्चित्तम् आज्ञादयश्च दोषाः । तेऽपि च पुरुषा द्विविधाः-सविकारा निर्विकाराश्च ॥ तत्र सविकारान् व्याख्यानयति-

[भा.२५५७] रूवं आभरणविहिं, वत्था-ऽलंकार-भोयणं गंधे ।
आउज्ज नट्ट नाडग, गीए अ मनोहरे सुणिया ॥

वृ- इह ये पुरुषाः रूपं उद्वर्तन-स्नान-नखदन्तकेशसंस्थापनादिना स्वशरीरे जनयन्ति, 'आभरणविधिं' मणि-कनकादिमयानाभरणभेदान् 'वस्त्राणि वा' चीनांशुकादीनि परिदधते, 'अलङ्कारेण वा' केश-माल्यादिनाऽऽत्मानमलङ्कुर्वन्ति, भोजनं वा महता विस्तरेणभुञ्जते, चन्दन-कर्पूरादिभिः कोष्ठपुटपाकादिभिर्वा गन्धैरात्मानमालिम्पन्ति वासयन्ति वा, तत-विततादिकं वा चतुर्विधमातोद्यं वादयन्ति, नृत्तं वा कुर्वन्ति, नाटकं वा नाटयन्ति, मधुरध्वनिना वा गीतमुच्चरन्ति, एते सविकारा उच्यन्ते । एतेषां रूपादीनि मनोहराणि दृष्ट्वा गीतादिशब्दांश्च 'श्रुत्वा' निशम्य

भुक्ता-ऽभुक्तसमुत्था दोषाः ।। एतेषु तिष्ठतः प्रायश्चित्तमाह-

[भा.२५५८] एक्केक्कम्मि उ ठाणे, चउरो मासा हवंति उग्घाया ।
आणाइणो यदोसा, विराधना संजमाऽऽयाए ।।

वृ- एतेषु रुपा-ऽऽभरणादिषु एकैकस्मिन् स्थाने तिष्ठतश्चत्वारो मासा उद्धाता भवन्ति, लघव इत्यर्थः । आज्ञादयश्च दोषाः, विराधना च संयमे आत्मनि च द्रष्टव्या ।।

[भा.२५५९] एवं ता सविकारे, निव्वीकारे इमे भवे दोसा ।
संसद्देण विबुद्धे, अहिगरणं सुत्तपरिहाणी ।।

वृ- एवं तावत् सविकारपुरुषेषु दोषा उक्ताः । निर्विकारपुरुषेषु त्वमी दोषा भवेयुः-साधूनां स्वाध्यायसत्केनावश्यिकी-नैषेधिकीसम्बन्धिना वा संशब्देन विबुद्धास्ते पुरुषाः साधुभि सह 'अधिकारणम्' असङ्खडं कुर्युः । तत्रात्मविराधना सूत्रपरिहाणिश्च भवति ।। संयमविराधना त्वियम्-

[भा.२४६०] आउ जोवण वणिए, अगणि कुडुंबी कुकम्म कुम्मरिए ।
तेने मालागारे, उब्भामग पंथिए जंते ।।

वृ- साधूनां गृहस्थानां च सम्बन्धिना असङ्खडशब्देन विबुद्धाः स्त्रियः "आउ" त्ति अप्कायाहरणार्थं व्रजन्ति । "जोवणं" ति रथकारादयः शकटे गवादीन् योजयित्वा काष्ठादिहेतोरटवीं गच्छेयुः । वणिजो घृतकुतुपादिकं गृहीत्वा ग्रामान्तरं व्रजन्ति । "अगनि" त्ति लोहकारादय उत्थायाग्नि-प्रज्वालनादिकर्मणि लगन्ति । कुटुम्बिनो हलादीनि गृहीत्वा क्षेत्राणि गच्छन्ति । 'कुकर्माणः' मत्स्यबन्ध-वागुरिकादयो मत्स्याद्यर्थं गच्छन्ति । कुत्सितः-मारणीयसत्त्वस्यातीववेदनोत्पाद-कत्वान्निन्द्यो यो मारः-मारणं स विद्यते येषां ते कुमारिकाः-सौकरिका इत्यर्थः तेऽपि स्वकर्मणि लगन्ति । स्तेनः प्रभातमिति कृत्वा पन्थानं बन्द्धुं गच्छेत् । मालाकारः करण्डं गृहीत्वाऽऽरामं गच्छति । 'उद्भ्रामकः' पारदारिकः स दत्तसङ्केत उद्भ्रामिकां गृहीत्वा पलायेत । पथिको विबुद्धः पथि प्रवर्त्तते । यन्त्रिका विबुद्धाः सन्तो यन्त्राणि वाहयन्ति । यस्मादेते दोषास्तस्मात् पुरुषेष्वपि न स्थातव्यम् ।। नोदकः प्राह-

[भा.२५६१] एवं सुत्तं अफलं, सुत्तनिवाओ उ असइ वसहीए ।
गीयत्था जयणाए, वसंति तो दव्वसागरिए ।।

वृ- यदि 'एवं' पुरुषेष्वपि निर्ग्रन्थ्यानां वस्तुं न कल्पते तर्हि सूत्रं "कल्पते पुरुषसागारिके वस्तुम्" इत्येवंलक्षणमफलं प्राप्नोति । गुरुराह- 'सूत्रनिपातः' सूत्रस्यावसरो विशुद्धायां वसतावसत्यां मन्तव्यः, तथा च यद्यसागारिक वसतिर्न प्राप्यते ततो गीतार्था यतनया द्रव्यसागारिके वसन्ति, पुरुषसागारिके इत्यर्थः ।।

[भा.२५६२] ते वि य पुरिसा दुविहा, सन्नी अस्सन्निणो य बोधव्वा ।
मज्झत्थाऽऽभरणपिया, कंदप्पा काहिया चेव ।।

वृ- तेऽपि च पुरुषा द्विविधाः-संज्ञिनोऽसंज्ञिनश्च । संज्ञा नाम-देव-गुरु-धर्मतत्त्वानां यथावत् परिज्ञानं सा विद्यते येषां ते संज्ञिनः, श्रावका इत्यर्थ । तद्विपरीता असंज्ञिनः । एते प्रत्येकं चतुर्विधाः-मध्यस्था आभरणप्रिया कान्दर्पिकाः काथिकाश्च ।। एतानेव व्याचष्टे-

[भा.२५६३] आभरणपिए जाणसु, अलंकरिंते उ केसमादीणि ।

सइरहसिय-प्पललिया, सरीरकुइणो य कंदप्पा ॥

वृ- केशादीनि माल्यादिभिरलङ्कारैरलङ्कुर्वतः पुरुषानाभरणप्रियान् जानीहि । ये तु स्वैरहसितप्रललिताः स्वेच्छया परस्परमट्टहासादिना हसन्ति, द्यूतान्दोलनादिना च क्रीडन्ति, ये च 'शरीरकुचयः' विविधषिङ्गचेष्टाकारिणः ते कादन्दर्पिकाः ॥

[भा.२५६४] अक्खाइयाउ अक्खाणगाई गीयाई छलियकव्वाइं ।
कहयंता य कहाओ, तिसमुत्था काहिया होंति ॥

वृ-तथा 'आख्यायिकाः' तरङ्गवती-मलयवतीप्रभृतयः, 'आख्यानकानि' धूर्ताख्यानकादीनि, 'गीतानि ध्रुवकादिच्छन्दोनिबद्धानि गीतपदानि, तथा 'छलितकाव्यानि' शृङ्गारकाव्यानि, 'कथाः' वसुदेवचरित-चेटककथादयः, 'त्रिसमुत्थाः' धर्म-कामा-ऽर्थलक्षणपुरुषार्थत्रयवक्तव्यताप्रभवाः सङ्कीर्णकथा इत्यर्थः । एतान्याख्यायिकादीनि कथयन्तः उच्यन्ते, कथया चरन्तीति व्युत्पत्तेः ॥

[भा.२५६५] एएसिं तिण्हं पी, जे उ विगाराण बाहिरा पुरिसा ।
वेरग्गरुई निहुया, निसग्गहिरिमं तु मज्झत्था ॥

वृ- 'एतेषाम्' आभरणप्रियादीनां त्रयाणामपि सम्बन्धिनो ये विकारास्तेभ्यः 'बाह्याः' बहिर्वर्त्तिनो ये पुरुषाः 'वैराग्यरुचयः' केवलवैराग्यश्रद्धालवो न शृङ्गारादिरसप्रियाः 'निभृताः' करचरणेन्द्रियेषु संलीनाः निसर्गेण-स्वभावेनैव ह्रीमन्तः-सलज्जाः ईदृशा मध्यस्था ज्ञातव्याः ॥

पुनरप्यमीषां प्रत्येकं भेदानाह-

[भा.२५६६] एक्केक्का ते तिविहा, थेरा तह मज्झिमा य तरुणा य ।
एवं सन्नी बारस, बारस अस्सन्निणो होंति ॥

वृ-एकैके मध्यस्थादयस्त्रिविधाः-स्थविरास्तथा मध्यमाश्च तरुणाश्च । ततो मध्यस्थादयश्चत्वारः स्थविरादिभेदत्रयेण गुण्यन्ते जाता द्वादश भेदाः । एवं 'संज्ञिनः' श्रावकास्ते द्वादशविधाः । असंज्ञिनोऽपि द्वादशविधा भवन्ति ॥ एतेष्वेव प्रायश्चित्तमाह-

[भा.२५६७] काहीयातरुणेसुं, चउसु वि चउगुरुग ठायमाणस्स ।
सेसेसु चउलहुगा, समणाणं पुरिसवग्गम्मि ॥

वृ- संज्ञिनामसंज्ञिनां च यः काथिकस्तरुणः एतौ द्वौ भेदौ, ये च वक्ष्यमाणा नपुंसकाः पुरुषनेपथ्यास्तेषामपि संज्ञिनामसंज्ञिनां चैकैकः काथिकस्तरुणः, एते चत्वारो भेदाः, एतेषु चतुर्षु तिष्ठतः प्रत्येकं चत्वारो गुरुकाः । शेषेषु भेदेषु तिष्ठतः प्रत्येकं चतुर्लघु । एतत् प्रायश्चित्तं श्रमणानां पुरुषवर्गे भणितम् ॥ कारणे पुनस्तिष्ठतां विधिमाह-

[भा.२५६८] सन्नीसु पढमवग्गे, असती अस्सन्निपढमवग्गम्मि ।
तेन परं सन्नीसुं, कमेण अस्सन्निसुं चेव ॥

वृ- वसतौ निर्दोषायामसत्यां संज्ञिषु यः प्रथमवर्ग-मध्यस्थाः पुरुषास्तत्र तिष्ठन्ति । तत्रापि प्रथमं स्थविरेषु, तेषामभावे मध्यमेषु, तदलाभे तरुणेषु यथाक्रमं तिष्ठन्ति । 'ततः परं' तेषामभावे द्वितीयादिवर्गेषु क्रमेण तिष्ठन्ति । द्वितीयवर्गो नाम आभरणप्रियाः । तेषु प्रथमं संज्ञिषु स्थविरमध्यम-तरुणेषु, तत एतेष्वेवासंज्ञिषु । तदभावे संज्ञिनां तृतीयवर्गे कान्दर्पिकपुरुषेषु, तेषामलाभेऽसंज्ञिनां तृतीयवर्गे स्थविरादिषु यथाक्रमं स्थातव्यम् ॥

[भा.२५६९] एवं एक्केक्क तिगं, वोच्चत्थकमेण होइ नायव्वं ।
मोत्तूण चरिम सन्नी, एमेव नपुंसएहिं पि ॥

वृ- एवं मध्यस्थादिषु एकैकस्मिन् पदे त्रिकं 'विपर्यस्तक्रमेण' प्रथमं स्थविरेषु ततो मध्यमेषु ततस्तरुणेषु इत्येवंलक्षणेन वैपरीत्यविधिना भवति ज्ञातव्यम्, परं मुक्त्वा चरमं संज्ञिनम् । किमुक्तं भवति ? -चरमो भेदः काथिकः, तत्र संज्ञिनि प्रथमतस्त्रिकं न चारयितव्यं किन्तु द्विकम्, तद्यथा-यदा तृतीयावर्गो न प्राप्यते तदा चतुर्थवर्गे प्रथमं संज्ञिषु काथिकस्थविरेषु, तदलाभे काथिकमध्यमेषु, तदप्राप्तावसंज्ञिषु काथिकस्थविरेषु, तदभावे काथिकमध्यमेषु तिष्ठन्ति, अथ तेऽपि न प्राप्यते ततः संज्ञिषु काथिकतरुणेषु, तदभावेऽसंज्ञिष्वपि काथिकतरुणेषु तिष्ठन्ति, ते चोभयेऽपि प्रज्ञापनीया यथा कथां न कथयन्ति । एवं पुरुषेषु स्थातव्ये विधिरुक्तः । एवमेव च नपुंसकेष्वपि भवतव्यः ।। इममेव भावयति-

[भा.२५७०] एमेव होंति दुविहा, पुरिसनपुंसा वि सन्नि अस्सन्नी ।
मज्झत्थाऽऽभरणपिया, कंदप्पा काहिया चेव ॥

वृ- पुरुषसागारिकालाभे कदाचिन्नपुंसकसागारिकः प्रतिश्रयो लभ्यते तत्रोप्येवमेव भेदाः कर्त्तव्याः। तत्र नपुंसका द्वि-स्त्रीनेपथ्यिकाः पुरुषनेपथ्यिकाश्च । ये पुरुषनेपथ्यिकास्ते द्विधा-प्रतिसेविनोऽप्रतिसेविनश्च । ये तु स्त्रीनेपथ्यिकास्ते नियमात् प्रतिसेविनः । तत्र पुरुषनपुंसका अपि न केवलं पुरुषा इत्यपिशब्दार्थः संज्ञिनोऽसंज्ञिनश्चेति द्विविधा भवन्ति । उभयेऽपि प्रत्येकं चतुर्विधाः-मध्यस्था आभरणप्रियाः कान्दर्पिकाः काथिकाश्चेति ॥

[भा.२५७१] एक्केका ते तिविहा, थेरा तह मज्झिमा य तरुणा य ।
एवं सन्नी बारस, बारस अस्सन्निणो होंति ॥

वृ- एकैकाः 'ते' मध्यस्थादयस्त्रिविधाः-स्थविरा मध्यमास्तरुणाश्च । एवं संज्ञिनो द्वादश असंज्ञिनोऽपि द्वादश भवन्ति ॥ एतेषु प्रायश्चित्तमाह-

[भा.२५७२] जह चेव पर पुरिसेसुं, सोही तह चेव पुरिसवेसेसु ।
तेरासिएसु सुविहिय !, पडिसेवग-अपडिसेवीसु ॥

वृ-यथैव पुरुषेषु शोधिरुपवर्णिता तथैव पुरुषवेषेष्वपि 'त्रैराशिकेषु' नपुंसकेषु हे सुविहित! प्रतिसेवकेषु अप्रतिसेवकेषु वा शोधिं जानीहीत्युपस्कारः । सा चेयम्-पुरुषनपुंसकानां ये काथिकास्तरुणास्तेषु चत्वारो गुरवः, शेषेषु भेदेषु चतुर्लघुकाः । कारणे पुनरध्वनिर्गतादीनां वसतेरलाभे तिष्ठतां तथैव पुरुषनपुंसकेष्वपि यतनाक्रमो यथा पुरुषेषु प्रतिपादितः ॥

[भा.२५७३] जह कारणे पुरिसेसुं, तह कारणे इत्थियासु वि वसेज्जा ।
अद्धाण-वास-सावय-तेनेसु य कारणे वसती ॥

वृ-यथा कारणे पुरुषेषु पुरुषवेषनपुंसकेषु वा वसन्ति तथा स्त्रीषु स्त्रीवेषधारिषु वा नपुंसकेषु कारणे वसेयुः । किं पुनस्तत् कारणम् ? इत्याह-अध्वानं प्रतिपन्नास्ततो निर्गता वा शुद्धा-मल्पतरदोषदुष्टां वा वसतिं न लभन्ते तत उद्यानादौ तिष्ठन्ति । अथ वर्षं पतति बहिर्वा श्वापदभयं शरीरोपधिस्तेनभयं वा तत ईदृशे कारणे स्त्रीसागारिके तदभावे स्त्रीवेषधारिषु वा नपुंसकेषु पूर्वोक्तक्रमेण वसन्ति ॥ निष्कारणे तु तत्र तिष्ठतामिदं प्रायश्चित्तम्-

[भा.२५७४] काहीयातरुणीसुं, चउसु वि मूलं तु ठायमाणाणं ।
सेसासु वि चउगुरुगा, समणाणं इत्थिवग्गम्मि ॥

वृ- स्त्रीषु स्त्रीवेषधारिषु वा नपुंसकेषु याश्चतस्त्रः काथिकतरुण्यस्तासु तिष्ठतां निर्ग्रन्थानां मूलम् । शेषासु संज्ञिनीषु असंज्ञिनीषु वा स्त्रीषु चतुर्गुरुकाः । एवं श्रमणानां स्त्रीवर्गे तिष्ठतां प्रायश्चित्तमुक्तम् ॥

[भा.२५७५] जह चेव य इत्थीसुं सोही तह चेव इत्थिवेसेसु ।
तेरासिएसु सुविहिय !, ते पुन नियमा उ पडिसेवी ॥

वृ- यथैव श्रमणानां स्त्रीषु तिष्ठतां शोधिरभिहिता तथैव स्त्रीवेषेषु त्रैराशिकेषु हे सुविहित ! शोधिमवबुध्यस्वेत्युपस्कारः । 'ते पुनः' स्त्रीनपुंसका नियमात् 'प्रतिसेविनः' प्रतिसेवनाकारापणशीला इति ॥ अथ कारणे तिष्ठतां यतनामाह-

[भा.२५७६] एमेव होंति इत्थी, बारस सन्नी तहेव असन्नी ।
सन्नीण पढमवग्गे, असइ असन्नीण पढमम्मि ॥

वृ- 'एवमेव' पुरुषवत् स्त्रियः स्त्रीवेषधारिणश्च नपुंसका मध्यस्थादिभि स्थविरादिभिश्च भेदैर्द्वादश संज्ञिन्यो द्वादश चाऽसंज्ञिन्यः प्रत्येकं भवन्ति । तत्र प्रथमं संज्ञिनीनां 'प्रथमवर्गे' मध्यस्थस्त्रीलक्षणे तदभावे असंज्ञिनीनां प्रथमवर्गे स्थविरादिक्रमेण स्थातव्यम् ॥

[भा.२५७७] एवं एक्केक्क तिगं, वोच्चत्थकमेण होइ नेयव्वं ।
मोत्तूण चरिम सन्नि, एमेव नपुंसएहिं पि ॥

वृ- एवम् 'एकैकस्मिन्' आभरणप्रियादौ वर्गे 'त्रिकं' तरुण्यादिभेदत्रयं विपर्यस्तक्रमेण नेतव्यम्-प्रथमं स्थविरासु, ततो मध्यमासु, ततस्तरुणीषु, परं मुक्त्वा 'चरमां' काथिकाख्यां संज्ञिनीम् । तत्र हि प्रथमं संज्ञिनीषु स्थविरासु, ततो मध्यमासु, तदलाभेऽसंज्ञिनीषु स्थविरामध्यमासु, ततः संज्ञिनीषु तरुणीषु, तदप्राप्तावसंज्ञिनीषु तिष्ठन्ति । एवमेव स्त्रीवेषधारीषु, नपुंसकेष्वपि द्रष्टव्यम् ॥ भावितं निर्ग्रन्थसूत्रद्वयम् । सम्प्रति निर्ग्रन्थीसूत्रद्वयं भावयति-

[भा.२५७८] एसेव कमो नियमा, निग्गंथीणं पि होइ नायव्वो ।
जह तेसिं इत्थियाओ, तह तासि पुमा मुणेयव्वा ॥

वृ- एष एव क्रमो नियमान्निर्ग्रन्थीनामपि भवति ज्ञातव्यः । परं यथा 'तेषां' निर्ग्रन्थानां स्त्रियो गुरुकतरास्तथा निर्ग्रन्थीनामपि पुमांसो गुरुकतरा ज्ञातव्याः ॥

[भा.२५७९] काहीयातरुणीसुं, चउसु वि चउगुरुग ठायमाणीणं ।
सेसासु वि चउलहुगा, समणीणं इत्थिवग्गम्मि ॥

वृ- स्त्रीणां स्त्रीवेषनपुंसकानां च मध्ये काथिकतरुणीषु चतसृष्वपि तिष्ठन्तीनां चतुर्गुरुकाः । 'शेषास्वपि' मध्यस्थादिषु द्वाविंशतिसङ्ख्याकासु स्त्रीषु द्वाविंशतौ च स्त्रीनपुंसकेषु चतुर्लघुकाः । एवं श्रमणीनां स्त्रीवर्गे प्रायश्चित्तं ज्ञातव्यम् ॥

[भा.२५८०] काहीयातरुणेसु वि, चउसु वि मूलं तु ठायमाणीणं ।
सेसेसु उ चउगुरुगा, समणीणं पुरिसवग्गम्मि ॥

वृ- पुरुषाणां पुरुषनपुंसकानां च संज्ञ्यसंज्ञिनां ये प्रत्येकं चत्वारः काथिकास्तरुणास्तेषु तिष्ठन्तीनां

निर्ग्रन्थीनां मूलम्। 'शेषेषु' पुरुषेषु पुरुषनपुंसकेषु च प्रत्येकं चत्वारो गुरुकाः। एवं श्रमणीनां पुरुषवर्गे प्रायश्चित्तं मन्तव्यम्॥ अथापरं प्रायश्चित्तादेशमाह-

[भा.२५८१] थेराइएसु अहवा, पंचग पन्नरस मासलहुओ य।
छेदो मज्झत्थादिसु, काहियतरुणेसु चउलहुओ॥

[भा.२५८२] सन्नी-असन्नीणं, पुरिस-नपुंसेसु एस स हूणं।
एएसुं चिय थीसुं, गुरुओ समणीण विवरीओ॥

वृ- अथवा स्थविरादिषु त्रिषु पदेषु पञ्चकः पञ्चदशको मासलघुकश्च छेदो दातव्यः। तद्यथा-मध्यस्थेषु स्थविरेषु तिष्ठन्ति लघुपञ्चकश्छेदः, मध्यस्थेषु मध्यमेषु लघुपञ्चदशकः, मध्यस्थेषु तरुणेषु लघुमासिकच्छेदः। एवमाभरणप्रियेषु कान्दर्पिकेषु च त्रिविधेष्वपि मन्तव्यम्। काथिका अपि येस्थविरा मध्यमाश्च तेष्वप्येवमेवावसातव्यम्। विशेषचूर्णिकृत् पुनराह- काहीए सण्णिथेरे पन्नरस राइंदिवाणि लहुओ छेदो, मज्झिमे मासलहुओ छेदो त्ति। ये तु काथिकास्तरुणास्तेषु चतुर्लघुमासिकच्छेदः॥ एवं पुरुषाः पुरुषनपुंसका वा ये संज्ञिनो ये चासंज्ञिनस्तेषां समुदितानां येऽष्टचत्वारिंशत्सङ्ख्याका भेदास्तेषु यथोक्तक्रमेण 'एषः' पञ्चकादिकच्छेदः साधूनां भवति। स्त्रीषु स्त्रीनपुंसकेषु च 'एतेष्वेव' मध्यस्थस्थविरादिभेदेषु साधूनामेष एव च्छेदो गुरुकः कर्त्तव्यः, तद्यथा-गुरुपञ्चको गुरुपञ्चदशको गुरुमासिको गुरुचतुर्मासिकश्चेति। श्रमणीनां पुनरेष एव च्छेदो विपरीतो दातव्यः, किमुक्तं भवति? -श्रमणीनां स्त्रीवर्गे तिष्ठन्तीनां लघुपञ्चकादिकच्छेदः, पुरुषवर्गे तु गुरुपञ्चकादिकः। शेषं सर्वमपि प्राग्वद् द्रष्टव्यम्॥

मू. (३०) *नो कप्पइ निग्गंथाणं पडिबद्धसेज्जाए वत्थए॥*

[भा.२५८३] इति ओह-विभागेनं, सेज्जा सागारिका समक्खाया।
तं चेव य सागरियं जस्स अदूरे स पडिबद्धो॥

वृ- 'इति' एवमोधेन विभागेन च 'सागारिका' सागारिकयुक्ता 'शय्या' प्रतिश्रयापरपर्याया समाख्याता। तदेव च सागारिकं यस्योपाश्रयस्य 'अदूरे' आसन्ने स प्रतिबद्ध उच्यते। तत्र निर्ग्रन्थानामवस्थानमनेन प्रतिषिध्यते॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां 'प्रतिबद्धशय्यायां' द्रव्यो भावतश्च प्रतिबद्धे उपाश्रये वस्तुमिति सूत्रार्थः॥ अथ निर्युक्तिविस्तरः-

[भा.२५८४] नामं ठवणा दविए, भावम्मि चउव्विहो उ पडिबद्धो।
दव्वम्मि पट्ठिवंसो, भावम्मि चउव्विहो भेदो॥

वृ- नाम-स्थापना-द्रव्य-भावभेदाच्चतुर्विधः प्रतिबद्धः। तत्र नाम-स्थापने गतार्थे। द्रव्यतः पुनरयम्-'पृष्ठवंशः' बलहरणं स यत्रोपाश्रये गृहस्थगृहेण सह सम्बद्धः स द्रव्यप्रतिबद्ध उच्यते। 'भावे तु' भावप्रतिबद्धे चिन्त्यमाने चतुर्विधो भेदो भवति॥ तद्यथा-

[भा.२५८५] पासवण ठाण रूवे, सद्दे चेव य हवंति चत्तारि।
दव्वेण य भावेण य, संजोगो होइ चउभंगो॥

वृ- प्रश्रवणे स्थाने रूपे शब्दे चेति चत्वारो भेदा भावप्रतिबद्धे भवन्ति। तत्र यस्मिन् साधूनां स्त्रीणां च कायिकीभूमिरेका स प्रश्रवणप्रतिबद्धः। यत्र स्थितैर्भाषा-भूषण-रहस्यशब्दाः श्रूयन्ते स शब्दप्रतिबद्धः। अत्र च द्रव्येण च भावेन च संयोगे चतुर्भङ्गी भवति। तद्यथा-द्रव्यो नामैकः

प्रतिबद्धो न भावतः, भावतो नामैकः प्रतिबद्धो न द्रव्यतः, एकोद्रव्यतोऽपि भावतोऽपि, एको न द्रव्यतो न भावतः ॥ एवं चतुर्भङ्गयां विरचितायां विधिमाह-

[भा.२५८६] चउत्थपदं तु विदिन्नं, दव्वे हुगा य दोस आणादी ।
संसद्देण विबुद्धे, अहिकरण सुत्तपरिहाणी ॥

वृ- चतुर्थपदमत्र 'वितीर्णम्' अनुज्ञातम्, चतुर्थभङ्गवर्तिनि प्रतिश्रये स्थातव्यमित्यर्थः । द्रव्यप्रतिबद्धे तिष्ठतां चत्वारो लघुकाः, आज्ञादयश्च दोषाः । साधूनां सम्बन्धिना आवश्यिकी-नैषेधिकीप्रभृतिना संशब्देन विबुद्धेषु विबुद्धेषु गृहस्थेष्वधिकरणं भवति । अथाधिकरण-भयान्निस्सश्चारास्तूष्णीकाश्चासते ततः सूत्रार्थपरिहाणि ॥ अथाधिकरणपदं व्याख्यानयति-

[भा.२५८७] आउ झोवण वणिए, अगनि कुडुंबी कुकम्म कुम्मरिए ।
तेने मालागारे, उब्भामग पंथिए जंते ॥

वृ- अस्या व्याख्या प्राग्वत् ॥ अथाधिकरणभ्यात् तृष्णीकास्तिष्ठन्ति तत एते दोषाः-

[भा.२५८८] आसज्ज निसीही वा, सज्झाय न करिंति मा हु बुज्झिज्जा ।
तेनासंका लग्गण, संजम आयाए भाणादी ॥

वृ- मा गृहस्था विबुध्यन्तामिति कृत्वा "आसज्ज" इति शब्दं नोच्चरन्ति मासलघु । नैषेधिकीमावश्यिकीं वा न कुर्वन्ति पञ्च रात्रिन्दिवानि । स्वाध्याये सूत्रपौरुषीं न कुर्वन्ति मासलघु। अर्थपौरुषीं न कुर्वन्ति पञ्च रात्रिन्दिवानि । स्वाध्याये सूत्रपौरुषीं न कुर्वन्ति मासलघु । अर्थपौरुषीं न कुर्वन्ति मासगुरु । सूत्रं नाशयन्ति चतुर्लघु । अर्थं नाशयन्ति चतुर्गुरु । एतेन सूत्रपरिहाणिरिति पदं व्याख्यातम् । तथा साधूनामावश्यिकीशब्दं पदनिपातशब्दं वा श्रुत्वा ते गृहस्थाः स्तेनोऽयमित्याशङ्कया साधुना समं युद्धाय लगेयुः । ततश्च युध्यमानयोः संयमात्मभाजनानां विराधनादयो दोषाः । यत एवमतो द्रव्यप्रतिबद्धायां वसतौ न स्थातव्यं । द्वितीयपदे तिष्ठेयुरपि॥

कथम् ? इत्यत आह-

[भा.२५८९] अद्धाणनिग्गयादी, तिक्खुत्तो मग्गिऊण असईए ।
गीयत्था जयणाए, वसंति तो दव्वपडिबद्धे ॥

वृ-अध्वनिर्गतादयः 'त्रिकृत्वः' त्रीन् वारा द्रव्यतो भावतोऽपि चाप्रतिबद्धमुपाश्रयं मार्गयित्वा यदि न लभन्ते ततो गीतार्था यतनया द्रव्यप्रतिबद्ध उपाश्रये वसन्ति ॥ यतनामेवाह-

[भा.२५९०] आपुच्छण आवासिय, आसज्ज निसीहिया य जयणाए ।
वेरत्ती आवासग, जो जाहे चिंधन दुगम्मि ॥

वृ- यदा कोऽपि साधुः कायिकीभूमौ गन्तुमिच्छति तदा द्वितीयं साधुमापृच्छय निर्गच्छति, स च द्वितीयः पृष्टमात्र एवोत्थाय दण्डकहस्तो द्वारे तिष्ठति यावदसौ प्रत्यागच्छति, एषा आप्रच्छनयतना। आवश्यिकीमासाद्यशब्दं नैषेधिकीं च यतनया यथा गृहस्था न शृण्वन्ति तथा कुर्वन्ति । वैरात्रिकवेलायामपि यः पूर्वमुत्थितस्तेन द्वितीयः साधुर्यतनया हस्तेन स्पृष्ट्वा प्रतिबोधयितव्यः, स च स्पृष्टमात्र एव तूष्णीम्भावेनोत्तिष्ठति, ततो द्वावपि कालभूमौ गत्वा वैरात्रिकं कालं यतनया गृह्णीतः यथा पार्श्वस्थितोऽपि न शृणोति । आवश्यकं यो यदा यत्र स्थितो विबुध्यते स तदा तत्र स्थित एव करोति, वन्दनकं स्तुतीश्च हृदयेनैव प्रयच्छन्ति, यद्वा यदा ते गृहस्थाः प्रभाते स्वयमेवोत्थिता

तदाऽऽवश्यकं कुर्वन्ति । "चिंधन दुगम्मि" त्त पारवर्त्तयतां यत्र सूत्रेऽर्थे वा रात्रौ शङ्कितं भवति तस्य चिह्नम्-अभिज्ञानकरणम्, यथा अमुकस्मिन्नङ्गे श्रुतस्कन्धेऽध्ययने उद्देशके वा इदं शङ्कितमस्तीति, तत् सर्वदिवा प्रश्नयित्वा निशङ्कितं कुर्वन्ति ॥ तथा-

[भा.२५९१] जनरहिए वुज्जाणे, जयणा भासाए किमुय पडिबद्धे।
ढङ्करसरऽनुपेहा, न य संघाडेण वेरत्ती ॥

वृ- यदि तावज्जनरहितेऽप्युद्याने वसतां रात्रौ भाषायां यतना 'मा चतुष्पद-पक्षि-सरीसृपादयो जन्तवो विबुध्यन्ताम्' इति कृत्वा, ततः किं पुनः द्रव्यप्रतिबद्धे प्रतिश्रये ?, तत्र सुतरां यतना कर्त्तव्येति भावः । यस्तु 'ढङ्करस्वरः' महता शब्देन भाषणशीलः स वैरात्रिकं स्वाध्यायमनुप्रेक्षया करोति, मनसैवेत्यर्थः । येऽपि च साधवो न ढङ्करस्वरास्तेऽपि सङ्घाटकेन न परिवर्त्तयन्ति किन्तु पृथक् पृथगिति ॥ गतः प्रथमो भङ्गः । अथ द्वितीयभङ्गं भावतः प्रतिबद्धो न द्रव्यत इत्येवंलक्षणं निरूपयति-

[भा.२५९२] भावम्मि उ पडिबद्धे, चउरो गुरुगा य दोस आणादी।
ते वि य पुरिसा दुविहा, भुत्तभोगी अभुत्ता य ॥

वृ- 'भावे' भावतः प्रतिबद्धे प्रतिश्रये तिष्ठतां चतुर्गुरुकाः आज्ञादयश्च दोषाः । ये पुनस्ते भावप्रतिबद्धे वसन्ति 'ते पुरुषाः' साधवो द्विविधाः-केचिद् 'भुक्तभोगिनः' ये स्त्रीभोगान् भुक्त्वा प्रव्रजिताः, केचित्तु 'अभुक्तभोगिनः' कुमारप्रव्रजिताः । एषा पुरातना गाथा ॥

अथास्या एव व्याख्यानमाह-

[भा.२५९३] भावम्मि उ पडिबद्धे, पनरससु पदेसु चउगुरू होंति।
एक्केक्काउ पयाओ, हवंति आणाइणो दोसा ॥

वृ- भावप्रतिबद्धे चतुर्भिः प्रश्रवणादिभिः पदैः षोडश भङ्गाः कर्त्तव्याः । तद्यथा-प्रश्रवणप्रतिबद्धः स्थानप्रतिबद्धो रूपप्रतिबद्धः शब्दप्रतिबद्धश्च १ प्रश्रवणप्रतिबद्धः स्थानप्रतिबद्धो रूपप्रतिबद्धो न शब्दप्रतिबद्धः २ इत्यादि । अत्र प्रथमभङ्गादारभ्य पञ्चदशसु 'पदेषु' भङ्गेषु चतुर्गुरवः प्रायश्चित्तम्। आदेशान्तरेण वा प्रथमे भङ्गे चत्वारश्चतुर्गुरवः, चतुर्णामपि पदानां तत्राशुद्धत्वात् । द्वितीये भङ्गे त्रयश्चतुर्गुरवः, त्रयाणां पदानां तत्राशुद्धत्वात् । एवमनया दिशा यत्र भङ्गे यावन्ति पदान्यविशुद्धानि तत्र तावन्तश्चतुर्गुरवः । एकैकस्माच्च 'पदाद्' भङ्गकादाज्ञादयो दोषा भवन्ति, यस्तु षोडशो भङ्गः स चतुर्ष्वपि पदेषु शुद्ध इति न तत्र प्रायश्चित्तम् ॥ प्रश्रवणादीनामेवान्योऽन्यं सम्भवमाह-

[भा.२५९४] ठाणे नियमा रूवं, भासासद्दो य भूसणे भइओ।
काइय ठाणं नत्थी, सद्दे रूवे य भय सेसे ॥

वृ- यत्र साधूनां स्त्रीणां चैकमेवोपवेशनस्थानं तत्र नियमात् परस्परं रूपमवलोक्यते भाषाशब्दश्च श्रूयते भूषणशब्दस्तु भाज्यः, साभरणानां स्त्रीणां भवति इतरासां न भवतीत्यर्थः । 'कायिकी' प्रश्रवणं तत्र स्थानं नास्ति, लोकजुगुप्सिततया कायिकीभूमावुपवेशनाभावात्; भाषा-भूषणशब्दरूपाणि तु भवन्त्यपीति भावः । शब्दे रूपे च 'शेषाणि' प्रश्रवणादीनि 'भज' विकल्पय। किमुक्तं भवति ? -शब्दे प्रश्रवण-स्थान-रूपाणि भवन्ति वा न वा, रूपेऽपि प्रश्रवण-स्थान-शब्दा भवन्ति वा न वेति ॥ एतेष्वेव दोषानुपदर्शयति-

[भा.२५९५] आयपरोभयदोसा, काइयभूमी य इच्छऽनिच्छंते।
संका एगमनेगे, वोच्छेद पदोसतो जं च ॥

वृ-यत्र संयतानामविरतिकानां चैका कायिकीभूमिस्तत्रात्मपरोभयसमुत्था दोषाः। तत्र संयत एवाविरतिकां रहसि दृष्ट्वा यदात्मना क्षुभ्यति एष आत्मसमुत्थो दोषः, यस्तु सा स्त्री तस्मिन् संयते क्षुभ्यति स परसमुत्थः, यस्तु साधुरविरतिकायामविरतिकाऽपि साधौ क्षोभमुपगच्छति स उभयसमुत्थो दोषः। "इच्छऽनिच्छंते"त्ति यदि स्त्रिया प्रार्थितः साधुस्तां प्रतिसेवितुमिच्छति ततो व्रतभङ्गः, अथ नेच्छति ततः सा उड्डाहं कुर्यात्। "संक"त्ति अविरतिका कायिकीभूमीं प्रविष्टा पश्चात् संयतमपि तत्र गच्छन्तं दृष्ट्वा कोऽपि शङ्कां कुर्यात्-यदेवममू द्वे अप्यत्र त्वरितं प्रविष्टे तन्नूनं मैथुनार्थमिति। तत एकस्यानेकेषां वा साधूनां व्यवच्छेदं कुर्यात्। "पदोसतो जं च"त्ति तदीयाः पि-देवरादयः प्रद्वेषतो यद् ग्रहणा-ऽऽकर्षणादिकं करिष्यन्ति तन्निष्पन्नं प्रायश्चित्तम्॥

यत्राविरतिकानां साधूनां चैकमेवोपवेशनस्थानं तत्र दोषानाह-

[भा.२५९६] दुग्गूढाणं छन्नंगदंसणे भुत्तभोगि सइकरणं।
वेउव्वियमाईसु य, पडिबंधुड्डुंचयाऽऽसंका ॥

वृ-'दुर्गूढानां' दुष्प्रावृतानां स्त्रीणां यानि च्छन्नाङ्गानि ऊरुकुचोरःप्रभृतीनि तेषां दर्शने भुक्तभोगिनां स्मृतिकरणं अभुक्तभोगिनां तु कौतुकमुत्पद्यते। तथा वैक्रियं-वातादिविक्रियाविशेषाद् महाप्रमाणं सागारिकम्, अथवा विकुर्वितं नाम-महाराष्ट्रविषये सागारिकं विद्ध्वा तत्र विण्टकः प्रक्षिप्यते, सा चाविरतिका तादृशेनाङ्गादानेन प्रतिसेवितपूर्वा, ततः वैक्रियं विकुर्वितं वा आदिग्रहणात् पैत्तिकं वा सागारिकं दृष्ट्वा सा स्त्री तत्र साधौ प्रतिबन्धं कुर्यात्, उड्डंचकं वा कश्चिदगारः कुर्यात्, आशङ्का वा लोकस्य भवति-एते श्रमणका न सुन्दरा येनैवं महेलाभि सममासते ॥

सर्वेष्वपि प्रश्रवणादिस्थानेषु सामान्यत इमे दोषाः-

[भा.२५९७] बंभवयस्स अगुत्ती, लज्जानासो य पीइपरिवुड्ढी।
साहु तवोवनवासो, निवारणं तित्थपरिहानी ॥

वृ-स्त्रीभिः सहैकत्र तिष्ठतां साधूनां ब्रह्मचर्यस्य 'अगुप्ति' भङ्गो जायते, लज्जानाशश्च परस्परं भवति, अभीक्ष्णं सन्दर्शनादिना प्रीतिपरिवृद्धिरुपजायते, लोकश्चोपहासोक्तिभङ्गया ब्रवीति-अहो! अमी साधवस्तपोवने वसन्ति, निवारणं च राजादयः कुर्वन्ति-मा एतेषां मध्ये कोऽपि प्रव्रज्यां गृह्णातु, ततश्च 'तीर्थपरिहानि' तीर्थस्य व्यवच्छेदो भवति ॥ रूपप्रतिबद्धे दोषानाह-

[भा.२५९८] चंकम्मियं ठियं मोडियं च विप्पेक्खियं च सविलासं।
आगारे य बहुविहे, दट्ठुं भुत्तेयरे दोसा ॥

वृ-'चङ्क्रमितं' राजहंसीवत् सलीलं पदन्यासः, 'स्थितं' कटीस्ताम्भेनोर्द्धवस्थानम्, 'मोटितं' गात्रमोटनम्, विविधम्-अर्द्धाक्षि-कटाक्षादिभिर्भेदैः प्रेक्षितं विप्रेक्षितम्, तच्च 'सविलासं' भ्रूविक्षेप सहितं विस्मितमुखं वा, एवमादीनाकारान् बहुविधान् दृष्ट्वा भुक्तानाम् 'इतरेषां च' अभुक्तानां स्मृतिकरण-कौतुकादयो दोषाः ॥ अविरतिकानां पुनर्नानादेशीयान् साधून् दृष्ट्वेत्थमध्युपपातो भवेत्-

[भा.२५९९] जल्ल-मलपंकियाण वि, लायन्नसिरी जहेसि देहाणं।
सामन्नम्मि सुरूवा, सयगुणिया आसि गिहवासे ॥

वृ- जल्लः-कठिनीभूतः, मलः-पुनरुद्वर्तितः सन्नपगच्छति, जल्लेन मलेन च पङ्किलानामप्येषां साधूनां देहेषु अभ्यङ्गोद्वर्त्तन-स्नानविरहितेष्वपि यथा 'लावण्यश्रीः' कमनीयतालक्ष्मीः श्रामण्येऽपि सुरूपा उपलभ्यते तथा ज्ञायते नूनममीषां गृहवासे शतगुणिता लावण्यलक्ष्मीरासीत् ॥ शब्दप्रतिबद्धे दोषानाह-

[भा.२६००] गीयाणि य पढियाणि य, हसियाणि य मंजुला य उल्लावा ।
भूसणसद्दे राहस्सिए अ सोऊण जे दोसा ॥

वृ- स्त्रीणां सम्बन्धीनि भाषा-शब्द-रूपाणि, यानि गीतानि च पठितानि च हसितानि च, 'मञ्जुलाश्च' माधुर्यादिगुणोपेता उल्लापाः, ये च वलय-नूपुरादीनां भूषणानां शब्दाः, ये च रहसि भवा राहसिकाः-पुरुषेण परिभुज्यमानायाः स्त्रियाः स्तनितादयः शब्दा इत्यर्थः, तान् श्रुत्वा ये भुक्ता-ऽभुक्तसमुत्था दोषास्तन्निष्पन्नं प्रायश्चित्तमाचार्यस्तत्र भावप्रतिबद्धे तिष्ठन् प्राप्नोति ॥

अथ स्त्रियः साधूनां स्वाध्यायशब्दं श्रुत्वा यच्चिन्तयेयुस्तद् दर्शयति-

[भा.२६०१] गंभीर-महुर-फुड-विसयगाहओ सुस्सरो सरो जह सिं ।
सज्झायस्स मनहरो, गीयस्स नु केरिसो आसी ॥

वृ-गम्भीरो नाम-यतः प्रतिशब्द उत्तिष्ठते, मधुर-कोमलः, स्फुटः-व्यक्ताक्षरः, विषयग्राहकः-अर्थपरिच्छेदपटुः, सुस्वरः-मालव कौशिक्यादिरागानुरक्तः, एवंविधः स्वरो यथा 'एषां' साधूनां सम्बन्धी स्वाध्यायस्यापि मनोहरः श्रूयते तथा ज्ञायते यदा गृहवासे विश्वस्ताः सन्तो गीतमेते विहितवन्तस्तदा गीतस्य कीदृशो नाम शब्द आसीत् ? किन्नरध्वनयस्तदानीमभूवन्निति भावः ॥ उक्ताश्चतुर्ष्वपि प्रश्रवणादिप्रतिबद्धेषु दोषाः । अथ "ते पुन पुरिसा दुविहा" इत्यादि पश्चार्द्धं व्याख्यानयति-

[भा.२६०२] पुरिसा य भुत्तभोगी, अभुत्तभोगी य केइ निक्खंता ।
कोऊहल-सइकरनुब्भवेहि दोसेहिमं कुज्जा ॥

वृ- ते पुनः संयतपुरुषा द्विविधाः-केचिद् भुक्तभोगिनः केचित्त्वभुक्तभोगिनो निष्क्रान्ताः । ते च तत्रोपाश्रये स्मृतिकरण-कौतूहलोद्भवा दोषा ये उत्पद्यन्ते तैरिदं कुर्युः ॥

[भा.२६०३] पडिगमनमन्नतित्थिग, सिद्धी संजइ सलिंग हत्थे य ।
अद्धाण-वास-सवय-त्तेनेसु व भावपडिबद्धे ॥

वृ-प्रतिगमनं नाम-ते साधवो भूयोऽपि गृहवासं गच्छेयुः, यद्वा कश्चित् पार्श्वस्थादिभ्यः समागतः स तेष्वेव व्रजेत्, अन्यतीर्थिकेषु वा गच्छेत्, सिद्धपुत्रिकां वा संयतीं वा स्वलिङ्गस्थितः प्रतिसेवेत, हस्तकर्म वा कुर्यात् । यत एते दोषा अतो न भावप्रतिबद्धे स्थातव्यम् । भवेद्वा कारणं येन तत्रापि स्थातव्य भवति । किं पुनस्तत् ? इत्याह-"अद्धाण" इत्यादि । अध्वप्रतिपन्नास्ते साधवः, न चान्यां वसतिं लभन्ते, वर्षं वा निरन्तरं पतति, श्वापदाः स्तेना वा ग्रामादेर्बहिरुपद्रवन्ति । एतैः कारणैर्भावप्रतिबद्धेऽप्युपाश्रये तिष्ठन्ति ॥ एतदेव व्याचष्टे-

[भा.२६०४] विहनिग्गया उ जइउं, रुक्खे जोइ पडिबद्ध उस्सा वा ।
ठायंति अह उ वासं, सावय-तेनादओ भावे ॥

वृ- विहम्-अध्वा, ततो निर्गतास्तं प्रतिपन्ना वा त्रिकृत्वः शुद्धाया वसतेरन्वेषणे यतित्वा यदि न लभन्ते ततो वृक्षस्याधस्ताद्वा ज्योतिर्गृहार्थं वा [illegible] तिष्ठन्ति । "अह उ"त्ति अथ पुनर्वृक्षस्याधस्तादवश्यायो वा वर्षं वा निपतति श्वापद-स्तेनादयो वा तत्रोपद्रवन्ति ततो भावप्रतिबद्धायां वसतौ वसन्ति ॥ तत्र चेयं यतना-

[भा.२६०५] भावम्मि ठायमाणा, पढमं ठायंति रूवपडिबद्धे ।
तहियं कडग चिलिमिली, तस्सऽसती ठंति पासवणे ॥

वृ- भावप्रतिबद्धे उपाश्रये तिष्ठन्तः प्रथमं रूपप्रतिबद्धे तिष्ठन्ति । तत्र चापान्तराले कटकं चिलिमिलिकां वा प्रयच्छन्ति । 'तस्य' रूपप्रतिबद्धस्याभावे प्रश्रवणप्रतिबद्धेऽपि तिष्ठन्ति । तत्रापि कायिकीं मात्रके व्युत्सृज्यान्यत्र परिष्ठापयन्ति ॥

[भा.२६०६] असई य मत्तगस्सा, निसिरणभूमीइ वा वि असईए ।
वंदेन बोलकरणं, तासिं वेलं च वज्जिंति ॥

वृ- मात्रकस्य 'असति' अभावेऽन्यस्या वा कायिकीनिसर्जनभूमेरभावे 'वृन्देन' त्रिचतुःप्रभृतिसाधुसमूहेन महता शब्देन बोलं कुर्वन्तस्तस्यामेवायिकीभूमौ प्रविशन्ति । 'तासां च' अगारीणां कायिकीव्युत्सर्जनवेलां वर्जयन्ति ॥

प्रश्रवणप्रतिबद्धस्याभावे शब्दप्रतिबद्धेऽपि तिष्ठन्ति, तत्र-

[भा.२६०७] भूसण-भासासद्दे, सज्झाय ज्झाण निच्चमुवओगो ।
उवगरणेण सयं वा, पेल्लण अन्नत्थ वा ठाणे ॥

वृ- प्रथमं भूषणशब्दप्रतिबद्धे तदभावे भाषाशब्दप्रतिबद्धेऽपि तिष्ठन्ति । तत्र चोभयत्रापि महता शब्देन समुदिताः सन्तः स्वाध्यायं कुर्वन्ति, ध्यानलब्धिमन्तो वा 'ध्यानं' धर्म-शुक्लभेदभिन्नं ध्यायन्ति, एतयोरेव स्वाध्याय-ध्यानयोर्नित्यमुपयोगः कर्त्तव्यः । भूषण-भाषाशब्दप्रतिबद्धाभावे स्थानप्रतिबद्धे तिष्ठन्ति । तत्रोपकरणेन स्वयं वा विप्रकीर्णा सन्तस्तथा मालयन्ति यथा तासां प्रेरणं भवति, अवकाशो न भवतीति भावः । अन्यत्र वा स्थाने गत्वा दिवसे, तिष्ठन्ति ॥ स्थानप्रतिबद्धस्याभावे रहस्यशब्दप्रतिबद्धे तिष्ठन्ति । तत्र तिष्ठतां यतनां क्रमं च दर्शयति-

[भा.२६०८] परियारसद्दजयणा, सद्द वए चेव तिविह तिविहा य ।
उद्दाण-पउत्थ-सहीणभोइया जा जस्स वा गुरुगी ॥

वृ- पुरुषेण स्त्री परिभुज्यमाना यं शब्दं करोति स परिचारशब्द उच्यते, तत्र 'यतना' स्वाध्यायगुणनादिका कर्त्तव्या । 'सद्द वए चेव तिविह'त्ति शब्दतो वयसा च सा स्त्री त्रिविधा, तद्यथा- मन्दशब्दा मध्यमशब्दा तीव्रशब्दा च, वयसा तु स्थविरा मध्यमा तरुणी चेति त्रिविधा । "तिविहा य"त्ति पुनरेकैका त्रिविधा-अपद्राणभर्तृका प्रोषितभर्तृका स्वाधीनभोक्तृका चेति । एवं भेदेषु विरचितेषु यतनाक्रम उच्यते-तत्र पूर्वमपद्राणभर्तृकायां स्थविरायां मन्दशब्दायां स्थातव्यम्, ततः प्रोषितभर्तृकायां स्थविरायां मन्दशब्दायाम्, तदभावेऽपद्राणभर्तृकायां स्थविरायां मध्यशब्दायाम्, तदसम्भवे प्रोषितभर्तृकायां स्थविरायां मन्दशब्दायाम्, तदभावेऽपद्राणभर्तृकायां स्थविरायां मन्दशब्दायां स्थातव्यम्, ततः प्रोषितभर्तृकायां स्थविरायां मन्दशब्दायाम्, तदभावेऽपद्राणभर्तृकायां स्थविरायां मध्यशब्दायाम्, तदसम्भवे प्रोषितभर्तृकायां स्थविरायां

मध्यमशब्दायाम्, तदलाभेऽपद्राणभर्तृकायां स्थविरायां तीव्रशब्दायाम्, तदप्राप्तौ प्रोषितभर्तृकायां स्थविरायां तीव्रशब्दायां स्थातव्यम्। एवमेव मध्यमासु तरुणीषु च अपद्राण-प्रोषितभर्तृकासु क्रमो द्रष्टव्यः। ततः स्वाधीनभर्तृकायामपि प्रथमं स्थविरायां ततो मध्यमायां ततस्तरुण्यां यथाक्रमं मन्द-मध्यम-तीव्रशब्दायां स्थाव्यम्। अथवा "जा जस्स गुरुगि"त्ति यस्य साधोर्यो मन्दादिकः शब्दो रोचते तेन या युक्ता सा तस्य गुरुरागहेतुत्वाद् गुरुका, तेन च सर्वप्रयत्नेन तया गुरुकस्त्रिया प्रतिबद्धः प्रतिश्रयः परिहर्त्तव्यः ॥ अथवाऽयमपरः क्रम उच्यते-

[भा.२६०९] उद्दाण परिट्ठविया, पउत्थ कन्ना सभोइया चेव।
थेरी मज्झिम तरुणी. तिव्वकरी मंदसद्दा य ॥

वृ- कन्याशब्दो बन्धानुलोम्याद् मध्येऽभिहितोऽप्यादौ कर्त्तव्यः, ततः पूर्वं 'कन्यायाम्' अपरिणीतस्त्रियाम्, तदभावेऽपद्राणभर्तृकायाम्, ततः 'भर्तृपरिष्ठापितायां दौर्भाग्यात् पतिना परित्यक्तायाम्, तदलाभे प्रोषितभर्तृकायां स्थविरायां स्थातव्यम्। तदप्राप्तावेतास्वेव प्रथमं मध्यमासु, ततस्तरुणीषु, ततः सभोक्तृका-स्वाधीनभर्तृका तस्यामपि स्थविरादिक्रमेण स्थेयम्। स्वरं सा तीव्रशब्दकरी मन्दशब्दा चशब्दाद् मध्यमशब्दा चेति त्रिविधा। तत्र पूर्वं मन्दशब्दायां ततो मध्यमशब्दायां ततस्तीव्रशब्दायामपि स्थातव्यम् ॥ "सद्द वए चेव तिविह" त्ति व्याख्यानयति-

[भा.२६१०] थेरी मज्झिम तरुणी, वएण तिविहित्थि तत्थ एक्केक्का।
तिव्वकरी मज्झकरी, मंदकरी चेव सद्देणं ॥

वृ- स्थविरा मध्यमा तरुणी चेति वयसा त्रिविधा स्त्री। तत्रैकैका त्रिविधा-तीव्रशब्दकरी मध्यमशब्दकरी मन्दशब्दकरी चेति शब्देन त्रिविधा ॥ अथ प्रश्रवणप्रतिबद्धादिषु चतुर्ष्वपि या भाष्यकृता सविस्तरं यतना प्रोक्ता तामेव निर्युक्तिकृदेकगाथया सङ्ग्रहाह-

[भा.२६११] पासवण मत्तएणं, ठाणे अन्नत्थ चिलिमिली रूवे।
सज्झाए झाणे वा, आवरणे सद्दकरणे वा ॥

वृ- कायिकीप्रतिबद्धे प्रतिश्रये प्रश्रवणं मात्रकेण परिष्ठापयितव्यम्। स्थानप्रतिबद्धेऽन्यत्र गत्वा स्थातव्यम्। रूपप्रतिबद्धे चिलिमिली दातव्या। शब्दप्रतिबद्धे स्वाध्यायो ध्यानं वा 'आवरणं वा' कर्णयोः स्थगनं विधेयम्। तथापि शब्दे श्रूयमाणे 'शब्दकरणं' तथा शब्दः कर्त्तव्यो यथा तयोर्लज्जितयोर्मोह उपशाम्यति ॥ अथास्या एव पश्चार्द्धं व्याचष्टे-

[भा.२६१२] वेरग्गकरं जं वा, वि परिजियं बाहिरं व इअरं वा।
सो तं गुणेइ साहू, झाणसलद्धी उ झाएज्जा ॥

वृ- 'वैराग्यकरम्' उत्तराध्ययनादि, यद् वाऽपि 'परिजितं' स्वभ्यस्तं परावर्त्तयमानमस्खलितमागच्छतीति भावः, तच्च 'अङ्गबाह्यं वा' प्रज्ञापनादि 'इतरद्वा' अङ्गप्रविष्टमाचारादि यद् यस्य साधोरागच्छति स तत् सूत्रं तथा गुणयति यथा परिचारणाशब्दो न श्रूयते। यस्तु 'ध्यानसलब्धिः' ध्यानलब्धिसम्पन्नः स ध्यानं ध्यायति ॥

[भा.२६१३] दोसु वि अलद्धि कण्णे, ठएइ तह वि सवणे करे सद्दं।
जह लज्जियाण मोहो, नासइ उणनायकरणं वा ॥

वृ- 'द्वयोरपि' स्वाध्याय-ध्यानयोर्य साधुरल[illegible] स कर्णौ स्थगयति। तथापि [illegible]

शब्दं तथा कुर्यात् यथा तयोर्लज्जितयोर्मोहो नश्यति, यथा-किमेवं भोः ! न पश्यसि त्वमस्मानत्र स्थितान् यदेवं लज्जनीयानि चेष्टितानि कुरुषे । यद्येवमप्युक्तो न तिष्ठति ततो जनज्ञातं कुर्वन्ति, यथा-पश्यत पश्यत भो इन्द्रदत्त ! यज्ञदत्त ! सोमशर्मन् ! अयं विगुप्त इत्थमस्माकं पुरतोऽनाचारं सेवते ।। गतो द्वितीयभङ्गः । अथ तृतीयभङ्गमाह-

[भा.२६१४] उभओ पडिबद्धाए, भयणा पन्नरसिया उ कायव्वा ।
दव्वे पासवणम्मि य, ठाणे रूवे य सद्दे य ।।

वृ- 'उभयतः' द्रव्यतो भावतश्च या प्रतिबद्धा वसति तस्यां पञ्चदशका 'भजना' भङ्गकरचना कर्त्तव्या । तद्यथा-द्रव्यतः प्रतिबद्धा भावे चप्रश्रवण-स्थान-रूप शब्दैः प्रतिबद्धा १ द्रव्यतः प्रतिबद्धा भावतश्च प्रश्रवण स्थान-रूपैः प्रतिबद्धा न शब्देन २ द्रव्यतः प्रतिबद्धा भावतः प्रश्रवण-स्थान-शब्दैः प्रतिबद्धा न रूपेण ३ द्रव्यतः प्रतिबद्धा भावे सच प्रश्रवण-स्थानाभ्यां प्रतिबद्धा न रूप-शब्दाभ्याम् ४ एते चत्वारो भङ्गाः स्थानप्रतिबद्धपदेन लब्धाः । एवं स्थानाप्रतिबद्धपदेनापि चत्वारो लभ्यन्ते जाता अष्टौ भङ्गाः । एते प्रश्रवणप्रतिबद्धपदेन लब्धाः, एवं प्रश्रवणाप्रतिबद्धपदेनाप्यष्टौ लभ्यन्ते, जाताः षोडश भङ्गाः । अत्र च षोडशो भङ्गः 'द्रव्यतः प्रतिबद्धा न पुनः प्रश्रवणादिभि' इत्येवंलक्षणो नाधिक्रियते, उभयतः प्रतिबद्धाया अधिकारात्, अत्र च भङ्गे भावतः प्रतिबद्धाया अभावात् । ततो ये आद्याः पञ्चदश भङ्गकास्तेषु तिष्ठतो दोषानाह-

[भा.२६१५] उभओ पडिबद्धाएय ठायंते आणमाइणो दोसा ।
ते चेव पुव्वभणिया, तं चेव य होइ बिइयपयं ।।

वृ- उभयतः प्रतिबद्धायां वसतौ तिष्ठत आज्ञादयो दोषाः । ये च प्रथमद्वितीयभङ्गयोः पूर्वमधिकरणादय आत्मपरोभयसमुत्थादयश्च दोषा भणितास्त एवात्रापि समुदिता वक्तव्याः । यच्च प्रथमद्वितीयभङ्गयोर्द्वितीयपदमुक्तं तदेवात्रापि ज्ञातव्यम् । गतस्तृतीयो भङ्गः । चतुर्थस्तु भङ्गो न द्रव्यतः प्रतिबद्धा नापि भावत इत्येवंलक्षणः स चोभयथाऽपि निर्दोष इति न काचित् तदीया विचारणा ।। सूत्रम्-

मू. (३१) *कप्पइ निग्गंथीणं पडिबद्धसिज्जाए वत्थए ।।*

[भा.२६१६] एसेव कमो नियमा, निग्गंथीणं पि नवरि चउलहुगा ।
सुत्तनिवाओ निद्दोसे, पडिबद्धे असइ उ सदोसे ।।

वृ- 'एष एव क्रमः' द्रव्यभावोभयतःप्रतिबद्धव्याख्यापरिपाटिरूपो नियमाद् निर्ग्रन्थीनामपि वक्तव्यः । नवरं प्रतिबद्धे तिष्ठन्तीनां तासां चतुर्लघुकाः । नोदकः प्राह-यद्येवं तर्हि सूत्रं निरर्थकम्, तत्र निर्ग्रन्थीनामवस्थानस्यानुज्ञातत्वात् । आचार्य प्राह-सूत्रनिपातो निर्दोषप्रतिबद्धे प्रतिश्रये भवति, प्रायश्चित्तं तु सदोषप्रतिबद्धे द्रष्टव्यम् । अथ निर्दोषप्रतिबद्धो न प्राप्यते ततस्तस्य 'असति' अभावे सदोषप्रतिबद्धे स्थातव्यम् ।।

[भा.२६१७] आउज्जोवणमादी, दव्वम्मि तहेव संजईणं पि ।
नाणत्तं पुन इत्थी, नऽच्चासन्ने न दूरे य ।।

वृ- द्रव्यप्रतिबद्धे संयतीनामप्यप्काय-शकटयोजनादयो दोषास्तथैव भवन्ति, परं तासां सागारिकनिश्रया तिष्ठन्तीनां न दोषः । "नाणत्तं पुन इत्थि" त्ति स पुनः प्रतिबद्धः स्त्रीभिरेव

वसन्तीभिर्ज्ञातव्यो न पुरुषैः । एतद् निर्ग्रन्थेभ्यो निर्ग्रन्थीनां नानात्वम् । स च संयतीनां प्रतिश्रयः सागारिकगृहस्य नात्यासन्ने न चातिदूरे भवति ।। तद्यथा-

[भा.२६१८] अज्जियमादी भगिनी, जा यऽन्न सगारअब्भरहियाओ ।
विहवा वसंत सागारियस्स पासे अदूरम्मि ।।

वृ- आर्यिका-पितामही मातामही वा, आदिशब्दाद् जनन्यादिपरिग्रहः भगिनी प्रतीता, याश्चान्या अपि भ्रातृजायाप्रभृतयः सागारिकस्य-शय्यातरस्याभ्यर्हिताः-पूज्या विधवाः सागारिकगृहस्य पार्श्वेऽदूरे वसन्ति, ताभिर्द्रव्यतः प्रतिबद्धे प्रतिश्रये वस्तव्यमिति ।। आह च-

[भा.२६१९] एयारिस गेहम्मी, वसंति वइणीउ दव्वपडिबद्धे ।
पासवणादी य पया, ताहि समं होंति जयणाए ।।

वृ- एतादृशे गेहे स्त्रीभिर्द्रव्यतः प्रतिबद्धे व्रतिन्यो वसन्ति । तत्र च स्थिताः प्रश्रवणादीनि पदानि 'यतनया' वारकग्रहणादिरूपया ताभि समं कुर्वन्ति । एतद् निर्दोषं द्रव्यप्रतिबद्धमुच्यते ।। नोदकः प्राह-यद्यत्ताप्यप्काय-शकटयोजनादीन्यधिकरणानि भवन्ति ततः कथं निर्दोषं भवति ? इत्युच्यते-

[भा.२६२०] कामं अहिगरणादी, दोसा वइणीण इत्थियासुं पि ।
ते पुन हवंति सज्झा, अणिस्सियाणं असज्झा उ ।।

वृ- 'कामम्' अनुमतमस्माकं यदधिकरणादयो दोषा व्रतिनीनां 'स्त्रीष्वपि' स्त्रीप्रतिबद्धे भवन्ति परं ते पुनर्दोषाः साध्याः, "आपुच्छण आवासिय, आसज्ज निसीहिया य जयणाए" इत्यादि-गाथोक्तया यतनया तेषां परिहर्तुं शक्यत्वात् । ये तु तासामनिश्रितानां तरुणादिसमुत्था दोषा भवन्ति तेऽसाध्याः, असाध्यदोषपरिहारेण च साध्यदोषानाद्रियमाणानां यतनया च तत्परिहारं कुर्वन्तीनां न कश्चिद्दोष इति ।। उक्तो द्रव्यप्रतिबद्धे विधिः । अथ भावप्रतिबद्धे विधिमाह-

[भा.२६२१] पासवण-ठाण-रूवा, सद्दो य पमुंसमस्सिया जे उ ।
भावनिबंधो तासिं, दोसा ते तं च बिइयपदं ।।

वृ- ये च प्रश्रवण-स्थान-रूप-शब्दाः 'पुमांसं' पुरुषमाश्रितास्तैः प्रतिबद्धा या शय्या तस्यां 'तासां' साध्वीनां 'भावनिबन्धः' सा भावप्रतिबद्धेति भावः । अत्र च दोषास्त एव पूर्वोक्ताः, द्वितीयपदमपि तदेव मन्तव्यम् ।। यस्तु विशेषस्तमुपदर्शयति-

[भा.२६२२] बिइयपय कारणम्मी, भावे सद्दम्मि पूवलियखाओ ।
तत्तो ठाणे रूवे, काइय सविकारसद्दे य ।।

वृ-द्वितीयपदे 'कारणे' अध्वनिर्गमनादौ निर्दोषोपाश्रयस्याप्राप्तौ भावप्रतिबद्धे तिष्ठन्त्यः प्रथमं पूपलिकाखादस्य-वक्ष्यमाणलक्षणस्य शब्दप्रतिबद्धे तिष्ठन्ति, ततस्तस्यैव स्थानप्रतिबद्धे, ततो रूपप्रतिबद्धे, ततः कायिक्या वायुकायस्य वा यो व्युत्सृजतः शब्दो भवति तेन 'सविकारे' सदोषे तस्यैव प्रश्रवणप्रतिबद्धे तिष्ठन्ति ।। पूपलिकाखादकस्य स्वरूपमाह-

[भा.२६२३] नउई-सयाउगो वा, खट्टामल्लो अजंगमोथेरो ।
अन्नेण उट्ठविज्जइ, भोइज्जइ सो य अन्नेणं ।।

वृ- यः स्थविरो नवतिवार्षिको वा शतायुष्को वा-सम्पन्नशतवर्ष इत्यर्थः, 'खट्वामल्लो

नाम'प्रबलजराजर्जरितदेहतया यः खट्वाया उत्थातुं न शक्नोति, अत एवासौ 'अजङ्गमः' गमनक्रियासामर्थ्यविकलः, खट्वाया अपि चान्येन परिचारकादिनोत्थाप्यते अन्येन चासौ 'भोज्यते' भोजनं कार्यते एष पूपलिकाखादकः ।। अस्यैव व्युत्पत्तिमाह-

[भा.२६२४] पूवलियं खायंतो, चव्वचवसद्द सो परं कुणइ ।
एरिसओ वा सद्दो, जारिसओ पूवभक्खिस्स ।।

वृ-पूपलिकां 'खादन्' भक्षयन् दन्तानामभावाद् यस्मादसौ 'परं' केवलं चव्वचवाशब्दं करोति तेन पूपलिकाखादकः । यादृशो वा पूपभक्षिणः शब्दो भवति ईदृशो यस्य भाषमाणस्य शब्दः स पूपलिकाखादकः ।।

[भा.२६२५] सो वि य कुड्डंतरितो, खाहुत्थूभाउ कुणइ जत्तेणं ।
परिदेवइ किच्छाहि य, अवितक्कंतो विगयभावो ।।

वृ- 'सोऽपि च' पूपलिकाखादकः स्थविरः संयतीप्रतिश्रयस्य कुड्यान्तरितो वर्त्तमानः "खाहुत्थूभाउ"त्ति काशित-निष्ठीवने ते द्वे अपि 'यत्नेन' कष्टेन करोति, कृच्छ्राच्चासौ 'परिदेवते' करुणतीति भावः, 'अवितर्कमानः' वितर्कमकुर्वन् 'विगतभावः' निरभिसन्धिहृदयः सुप्त-मत्त-मूर्च्छितादिरिवाव्यक्तचेतनाक इत्यर्थः, ईदृशेन पूपलिकाखादकशब्देन प्रतिबद्धे निर्ग्रन्थीभिः प्रथमं स्थातव्यम् । तदभावे तस्यैव स्थानप्रतिबद्धे, ततो रूपप्रतिबद्धे ततः प्रश्रवणप्रतिबद्धेऽपि।। आह किमत्र पूपलिकाखादकप्रतिबद्धे रागोद्भवो न भवति ? उच्यते-

[भा.२६२६] अवि होज्ज विरागकरो, सद्दो रूवं च तस्स तदवत्थं ।
ठाणं च कुच्छणिज्जं, किं पुन रागोब्भवो तम्मि ।।

वृ- 'अपि' इत्यभ्युच्चये, 'तस्य' पूपलिकाखादकस्य स्थविरस्य सम्बन्धी यः काशित-परिदेवनादिकः शब्दः, यच्च 'तदवस्थं' तस्यामवस्थायां वर्त्तमानं वली-पलित-खलत्यादिकं रूपम्, यच्च तस्य विण्मूत्र-श्लेष्माद्यशुचिपङ्किलं 'कुत्सनीयं' जुगुप्सास्पदं स्थानं तानि प्रत्युत स्त्रीणां विरागकराण्येव, कुतः पुनस्तत्र रागोद्भवो भविष्यति ? । अथ पूपलिकाखादकप्रतिबद्धं नावाप्यते ततो यथा निर्ग्रन्थानां कटकचिलिमिलिकादिका यतना भणिता तथा निर्ग्रन्थीनामपि द्रष्टव्या ।।

अत्र परः प्राह-

भ. (२६२७] एयारिसम्मि रूवे, सद्दे वा संजईण जइऽणुन्ना ।
समणाण किंनिमित्तं, पडिसेहो एरिसे भणिओ ।।

वृ- यदि 'एतादृशे' पूपलिकाखादकसम्बन्धिनि रूपे शब्दे वा संयतीनामनुज्ञा क्रियते तर्हि श्रमणानां किंनिमित्तम् 'ईदृशे' स्थविरसत्रीसंश्रिते रूपादिप्रतिबद्धे प्रतिषेधो भणितः ? तेषामपि तत्र वस्तुं युक्तमिति भावः ।। सूरिराह-

[भा.२६२८] मोहोदएणइ ता, जीवविउत्ते वि इत्थिदेहम्मि ।
दिट्ठा दोसपवित्ती, किं पुन सजिए भवे देहे ।।

वृ- यदि तावद् मोहोदयेन जीववियुक्तेऽपि स्त्रीदेहे पुरुषाणां प्रतिसेवनादोषप्रवृत्तिर्दृष्टा तर्हि किं पुनः सजीवे देहे स्थविरायाः सम्बन्धिनि ? तत्र सुतरां भविष्यतीति भावः, अतस्तेषां तत्रापि प्रतिषेधः कृतः । निर्ग्रन्थीनां तु पूपलिकाखादकप्रतिबद्धे स्वल्प एव दोषः अनिश्रितानां तु महानिति

तासां तत्र वस्तुमनुज्ञायते ॥

**मू. (३२)** *नो कप्पइ निग्गंथाणं गाहावइकुलस्स मज्झंमज्झेणं गंतुं वत्थए ॥*

**[भा.२६२९]** जइ चेव य पडिबंधो, निवारिओ सुविहियाण गिहिएसु ।
तेसिं चिय मज्झेणं, गंतूण न कप्पए जोगो ॥

**वृ-** यथैव पूर्वसूत्रे 'गृहिषु' गृहस्थविषयो द्रव्यतो भावतश्च प्रतिबन्धः 'सुविहितानां' साधूनां निवारितस्तथैवात्रापि 'तेषामेव' गृहिणां मध्येन गत्वा यत्र निर्गम-प्रवेशौ क्रियेते तत्र वस्तुं न कल्पत इति निवार्यते । एषः 'योगः' सम्बन्धः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां गृहपतिकुलस्य मध्यम्मध्येन गत्वा यत्र निर्गम-प्रवेशौ क्रियेते तत्रोपाश्रये वस्तुम् । उपलक्षणमिदम् तेन गृहस्था यत्र संयतोपाश्रयस्य मध्यम्मध्येन निर्गच्छन्ति वा प्रविशन्ति वा तत्रापि न कल्पते वस्तुमिति सूत्रार्थः ॥ अथ विस्तरार्थं भाष्यकृत् प्रतिपादयति-

**[भा.२६३०]** मज्झेण तेसि गंतुं, गिही व गच्छंति तेसि मज्झेणं ।
पविसंत निंत दोसा, तहियं वसहीए भयणा उ ॥

**वृ-** 'तेषाम्' अगारिणां मध्येन गत्वा यत्र प्रविश्यते निर्गम्यते वा, गृहिणोवा 'तेषां' संयतानां मध्येन यत्र गच्छन्ति तत्र न कल्पतेवस्तुम् । कुतः ? इत्याह-'तत्र' तादृशे उपाश्रये संयतानां गृहिणां वा प्रविशतां निर्गच्छतां च दोषा भवन्ति, ते चोपरिष्टादभिधास्यन्ते । तथा वसतिं प्रविष्टानां संयतानां वसतिविषयाः पूर्वोक्ता दोषास्तत्र भवेयुर्वा न वेत्येवं भजना कार्या-यदि प्रतिबद्धा वसतिस्तदा प्रतिबद्धशय्यासूत्रोक्ता दोषा भवन्ति, अथ न प्रतिबद्धा ततस्ते न भवन्ति ॥

अथ मध्यपदं व्याख्याति-

**[भा.२६३१]** सब्भावमसब्भावं, मज्झमसब्भावतो उ पासेणं ।
निव्वाहिमनिव्वाहिं, ओकमईतेसु सब्भावं ॥

**वृ-** मध्यं द्विधा-सद्भावमध्यमसद्भावमध्यं च । तत्र सद्भावमध्यं नाम-यत्र गृहपतिगृहस्य पार्श्वेन गम्यते आगम्यते वा छिण्डिकयेत्यर्थः, "ओकमईतेसु"त्ति गृहस्थानाम् ओकः-गृहं संयताः संयतानां च गृहस्था मध्येन यत्र 'अतियन्त' प्रविशन्ति उपलक्षणत्वाद् निर्गच्छन्ति वा तदेतदुभयमपि सद्भावतः-परमार्थतो मध्यं सद्भावमध्यम् । तच्च प्रत्येकं द्विधा-निर्वाहि । यत्र पुनस्तयोरेकमेव फलिहकं तदनिर्वाहि ॥ अस्य चतुर्विधस्यापि त्रयःप्रकारा भवन्ति, तद्यथा-

**[भा.२६३२]** साला य मज्झ छिंडी, निग्गंथाणं न कप्पए वासो ।
चउरो य अनुग्घाया, तत्थ वि आणाइणो दोसा ॥

**वृ-** शाला १ मध्यं २ छिण्डिका ३ चेति त्रयो भेदाः । एतेषु त्रिष्वपि निर्ग्रन्थानां न कल्पते वासः । अथ वसन्ति ततश्चत्वारोऽनुद्धाता मासा भवन्ति । तत्राप्याज्ञादयो दोषाः ॥ तत्र शालापदं व्याचिख्यासुः प्रथमतो द्वारगाथामाह-

**[भा.२६३३]** सालाए पच्चवाया, वेउव्वियऽवाउडे य अद्दाए ।
कप्पट्ठ भत्त पुढवी, उदगऽगनी बीय अवहन्ने ॥

**वृ-** शालायां तिष्ठतां 'प्रत्यपायाः' दोषा वक्तव्याः । तथा वैक्रियेऽपावृते चाञ्चादाने उड्डाहकादयो दोषाः । "अद्दाए"त्ति साधुमपावृतं दृष्ट्वा गृहस्था आदर्शो दृष्ट इत्यमङ्गलं मन्यन्ते । कल्पस्थानि

वा तत्र निर्गम-प्रवेशपथे भवेयुः तेषां हस्त-पादाद्युपघातो भवेत् । तथा भक्तं-भोजनं तत्रावष्वष्कणादयो दोषाः । तथा पृथिव्युदकाग्निबीजानां विराधना । "अवहन्ने"त्ति उदूखलं तत्र बीजकायं कण्डयन्त्यः स्त्रियः श्रृङ्गारगीतानि गायेयुः तदाकर्णने विस्रोतसिका समुत्पद्यते इति द्वारगाथसमासार्थः ।। अथ विस्तरार्थं प्रतिद्वारमभिधित्सुराह-

[भा.२६३४]　　सालाए कम्मकरा, घोडा पेसा य दास गोवाला ।
　　　　　　　पेह पवंचुड्डंचय, असहण कलहो य निच्छुभणं ।।

वृ- गृहपतेः शालायां ये 'कर्मकराः' भृतकाः, ये च 'घोटाः' घट्टाः, 'प्रेष्याः' प्रेषणयोग्या आज्ञप्तिकरा इत्यर्थः, 'दासाः' गृहजातकाः क्रीता वा, 'गोपालाः' प्रतीताः । एते शालायां तिष्ठन्तः शयाना वा 'प्रेक्षां' प्रत्युपेक्षणां कुर्वाणानां साधूनां प्रपञ्चं कुर्वन्ति, तथैव प्रत्युपेक्षन्ते इत्यर्थः । यद्वा प्रपञ्चो नाम-उपहासवचनम्-अहो ! बहवः प्राणजातीया एतेषु चीवरेषु पतिता इत्यादि । सूत्रार्थपरावर्त्तनादौ वा 'उड्डञ्चकाः' उद्धेटकास्तान् कुर्वन्ति, आलापकान् कर्णाघाटकेन पठित्वा तथैवोच्चरन्तीत्यर्थः । तत्र कश्चिदसहनः साधुस्तैः कर्मकरादिभि सह कलहं करोति तत्रास्थिभङ्गादयो दोषाः । स च गृहपतिस्तैः कर्मकरादिभिरुत्तेजितः साधून् निष्काशयेत् । निष्काशितानां च वसत्यर्थं पर्यटतां लोको ब्रूयात्-यादृशममीषां चेष्टितं तादृगेवामीषां फलमुपनतमित्यादि ।। किञ्च-

[भा.२६३५]　　आवासग सज्झाए, पडिलेहण भुंजणे य भासा य ।
　　　　　　　उच्चारे पासवणे, गेलन्ने जे भवे दोसा ।।

वृ-आवश्यकं स्वाध्यायं प्रतिलेखनां च यदि सागारिकाः पश्यन्तीति कृत्वा न कुर्वन्ति अविधिना वा कुर्वन्ति तदा तन्निष्पन्नं प्रायश्चित्तम् । भोजनं-समुद्देशनं तच्च मण्डल्यां तुम्बकेषु वा क्रियमाणं दृष्ट्वा सागारिका जुगुप्सां कुर्युः । "भास"त्ति संयतभाषाः श्रुत्वा सागारिका गृह्णीयुः । उच्चारं प्रश्रवणं वा क्रियमाणं दृष्ट्वा प्रपञ्चादिकं कुर्वन्ति । अथतयोर्निरोधः क्रियते तत आत्मविराधना। ग्लानो वा कश्चिद् भवेत् स सागारिकेषु पश्यत्सु महत्या दुःखासिकया तिष्ठति, ततस्तस्य या परितापना तन्निष्पन्नं प्रायश्चित्तम् । एवमावश्यकादिषु ये यत्र दोषाः सम्भवन्ति ते तत्र वक्तव्या इति शेषः ।। तथा-

[भा.२६३६]　　आहारे नीहारे, भासादोसे य चोदनमचोदे ।
　　　　　　　किड्डासु य विकहासु य, वाउलियाणं कओ झाओ ।।

वृ- आहारे नीहारे च दोषविभाषा यथाऽनन्तरगाथायाम् । "भासादोसे य"त्ति ढड्डरभाषाभिर्भाष्यमाणाभिरप्काय-योजन-वणिजादयो दोषाः । "चोदणं"ति यदि साधूनां सामाचारीषु सीदतां नोदना क्रियते तदा सागारिकास्तथैव प्रपञ्चं कुर्युः । "अचोए"त्ति अनोदयतां तु सामाचारीभङ्गो भवेत्, आज्ञा-ऽनवस्थादयश्च दोषाः । तथा ते कर्मकरादयस्तत्र नानाविधाभि क्रीडाभिः क्रीडन्ति, स्त्रीकाप्रभृतिकाश्च विविधाः कथाः कथयन्ति, तासु च यथाक्रमं विलोक्यमानासु श्रूयमाणासु च व्याकुलितानां साधूनां कुतः स्वाध्यायो भविष्यति ? ।। गतं प्रत्यपायद्वारम् । अथ वैक्रियद्वारमपावृतद्वारं चाह-

[भा.२६३७]　　वंदामि उप्पलज्जे, अकालपरिसडियपेहुणकलावं ।
　　　　　　　धम्मं किह णु न काहिइ, कन्ना जस्सेत्तिया विद्धा ।।

वृ- कस्यापि साधोः स्वभावतो विक्रियातो वा सागारिकं त्वचाविरहितं भवेत्, ततस्तदपावृतं दृष्ट्वा कर्मकरादयः प्रपञ्चेन ब्रुवते-वन्देऽहममुमुत्पलार्यं साधुम्, अकाले-अनवसरे परिशटितः पेहुणं-पिच्छं तदेव कलापो यस्य स तथा तम्। यद्वा कस्यापि महाराष्ट्रादिविषयोत्पन्नस्य साधोरङ्गादानं वेण्टकविद्धम्, ततस्तद् दृष्ट्वा ब्रुवते-कथं नु नामासौ साधुर्धर्मं न करिष्यति यस्येयन्तः कर्णा विद्धाः ? ॥ एवं च तैः प्रपञ्चेनोक्ते सति किं भवति ? -

[भा.२६३८] अहिगरणं तेहि समं, अज्झोवायो य होइ महिलाणं।
तक्कम्मभावितानं, कुतूहलं चेव इतरीणं ॥

वृ- यः कोपनः साधुः स तः सममधिकरणं करोति, ततश्चास्थिभङ्गादयो दोषाः। तथा या महेलास्तादृशेन विकुर्विताङ्गादानेन यत् कर्म-प्रतिसेवनं तेन भावितास्तासां तस्मिन् साधावध्युपपातो भवति। इतरासां कुतूहलमुपजायते ॥ अथादर्शद्वारं व्याख्यायते। तान् साधूनपावृतान् प्रतिमास्थितान् दृष्ट्वा कर्मकरादयः प्रपञ्चेन ब्रवीरन्-

[भा.२६३९] अद्दाइय ने वयणं, वच्चामो राउलं सभं वा वि।
गोसे च्चिय अद्दाए, पेच्छंताणं सुहं कत्तो ॥

वृ- 'आदर्शितम्' आदर्शदर्शनेन पवित्रीभूतं तावदस्माकं वदनम्, अतो व्रजामो राजकुलं वा सभां वा। यद्वा ते प्रभात एव साधूनां पुतावपावृतौ दृष्ट्वा प्रकुपिताः सन्तो ब्रुवते-अहो ! "गोसे" प्रभात एवादर्शौ पश्यतामस्माकमद्य कुतः सुखं भविष्यति ? । एवं तैरुक्ते त एवाधिकरणादयो दोषाः ॥ अथ कल्पस्थद्वारं व्याचष्टे-

[भा.२६४०] हत्थाईअक्कमणं, उप्फुसणादी व ओहुए कुज्जा।
गेलन्न मरण आसिय, विनास गरिहं दिय निसिं वा ॥

वृ- तत्रागमन-निर्गमनपथे चेटरूपाणि भवेयुः तेषां साधुभिरागच्छद्भिर्निर्गच्छद्भिश्च हस्त-पादाद्याक्रमणं भवेत्। अथासौ कल्पस्थः साधुना केनापि 'अवधुतः' उल्लङ्घित इत्यर्थः, ततस्तदीया माता तस्याप्कायेनोत्स्पर्शनम् आदिग्रहणाद् लवणोत्तारणं वा कुर्यात्। यदि वा स कल्पस्थो ग्लानीभवेद्वा म्रियेत वा तदा तदीया माता-पित्रादयः स्वजना ब्रवीरन् मन्येरन् वा-तेन श्रमणकेनास्मदीय एष दारकस्तदानीमुल्लङ्घितः तत इत्थं ग्लानत्वं पञ्चत्वं वा प्राप्तवान्। ततः प्रद्विष्टास्ते "आसिय" त्ति शालायाः साधूनां निर्घाटनं कुर्युः। "विनास"त्ति येन साधुना स कल्पस्थ उल्लङ्घितस्तस्य 'विनाशं' मारणं कुर्युः, यद्वा ते साधवस्तेन शय्यातरेण निष्काशिताः स्तेनश्वापदादिभिर्विनाशमाप्नुयुः। "गरिहं"ति लोकतो गर्हामासादयेयुः-किमेते(ऽ)शोभनैः कर्मभिर्निष्काशिताः ? इति। सर्वमप्येतद् निर्घाटनादिकं दिवा वा निशायां वा कुर्युः। यदि दिवा निष्काशयन्ति तदा चतुर्लघु, रात्रौ निष्काशयन्ति चतुर्गुरु ॥ अथ भक्तद्वारमाह-

[भा.२६४१] भोत्तव्वदेसकाले, ओसक्कऽहिसक्कणं व ते कुज्जा।
दरभुत्ते वऽचियत्तं, आगय निंते य वाघाओ ॥

वृ- भोक्तव्यं-भोजनम्, अविवक्षितकर्मकत्वेन भावे तव्यप्रत्ययस्य समानीतत्वात्, तस्य देशकाले 'ते' गृहस्था अवष्वष्कणमभिष्वष्कणं वा कुर्युः। तत्रावष्वष्कणं नाम-यावन्निर्गच्छन्ति साधवस्तावद् वयं भोजनं कुर्महे, अभिष्वष्कणं-निर्गच्छन्तु तावद् भिक्षार्थं साधवस्ततो भोक्ष्यामहे। अथ ते

'दग्भक्ताः' अर्द्धसमुद्दिष्टास्ततः साधुषु गमनाऽऽगमनं कुर्वाणेषु महदप्रीतिकं कुर्वन्ति । अथाप्रीतिकभयाद् भिक्षाया आगता भिक्षां निर्गच्छन्तो वा गृहस्थान् समुद्दिशतः प्रतीक्षन्ते ततः समुद्देश-स्वाध्यायादीनां भिक्षायाश्च व्याघातो भवति ।। अथ पृथिव्युदका-ऽग्नि-बीजा-ऽवहन्नद्वाराणि व्याख्याति-

[भा.२६४२] कुड्डाइलिंपणट्ठा, पुढवी दगबारगो य उद्दित्ता ।
कयविक्कयसंवहणे, धन्नं तह उक्खल तडे य ।।

वृ- कुड्यस्य भूम्या वा लिम्पनार्थं तत्र 'पृथ्वी' मृत्तिका 'दकवारकश्च' पानीयघटः स्थापितो भवेत् तत्र गच्छतामागच्छतां वा पृथिव्यप्कायविराधना । "उद्दित्त"त्ति अग्निकायः शीतकाले उद्दीपितो भवेत् तत्रापरिणतादयः प्रतापयेयुः । "धन्नं"ति विभक्तिव्यत्ययाद् धान्यस्य वा क्रयविक्रयार्थं तत्र संवहनं भवेत् तस्य सङ्घट्टनादिनिष्पन्नं प्रायश्चित्तम् । तथा तत्रोदूखलं 'तटे' प्रत्यासन्नप्रदेशे स्थापितं भवेत्, तत्र चाविरतिका बीजकायं कण्डयन्त्यः शृङ्गारगीतानि गायन्ति, तेषु च श्रूयमाणेषु विश्रोतसिका समुपजायते ।।

[भा.२६४३] एवं ता पमुहम्मी, जा साला कोट्ठतो अलिंदो वा ।
भूमीइ वा मालम्मि व, ठियाण मालम्मि सविसेसा ।।

वृ- एवं तावत् 'प्रमुखे' गृहद्वारे या शाला वा कोष्ठको वा अलिन्दको वा तत्र दोषा उक्ताः । एते च शाला-कोष्ठका-ऽलिन्दका भूमौ वा मालेवा भवेयुः । तत्र भूमौ तिष्ठतां दोषा भणिताः । अथ मालोपरवर्त्तिषु शालादिषु तिष्ठन्ति तत एत एव दोषाः सविशेषा द्रष्टव्याः ।।

तथा च तमेव विशेषं दर्शयति-

[भा.२६४४] दुरुहंत ओरुभंते, हिट्ठठियाण अचियत्त रेनू य ।
संकाय संकुडंते, पडणा भत्ते य पाने य ।।

वृ- तस्मिन् माले यदा साधुरारोहति वा अवरोहति वा तदा तस्य ये पादरेणवस्तैरधःस्थितानां गृहस्थानामुपरि प्रपतद्भिस्तेषां महदप्रीतिकमुत्पद्यते । तथा स साधुरारोहन्नवरोहन् वा अधःस्थितानां गृहस्थानाम् 'अपावृतो दर्शनपथं मा गमम्' इति शङ्कया द्वावप्यूरू सङ्कुचयन् वस्त्रं च संयमयन् प्रपतेत् । पतितस्य च पादादिविराधना, भक्तस्य च पानस्य च भूमौ परिगलना भवति ।।

गतं शालाद्वारम् । अथ मध्यद्वारमाह-

[भा.२६४५] उच्चरए वलभीइ व, अंतो अन्नत्थ वा वसंताणं ।
ते चेव तत्थ दोसा, सविसेसतरा इमे अन्ने ।।

वृ- चतुःशालादिगृहस्य यद् 'अन्तः' मध्यं तत्रापवरके वा वलभिकायां वा 'अन्यत्र वा' अविशेषिते गृहमध्ये वसतां ये शालायां प्रत्यपायादयो दोषा उक्ताः त एवात्रापि द्रष्टव्याः, परं सविशेषतराः । ते च विशेषदोषाः 'इमे' अनन्तरमेव वक्ष्यमाणाः ।। तानेवाह-

[भा.२६४६] अइगमनमनाभोगे, ओभासण मज्जणे हिरन्ने य ।
ते चेव तत्थ दोसा, सालाए छिंडिमज्झे य ।।

वृ- गृहमध्ये तिष्ठतामनाभोगेनान्यस्मिन्नपवरके 'अतिगमनं' प्रवेश भवेत् । तत्र प्रविष्टस्य चाविरतिका अवभाषणं कुर्यात् । मज्जनं च शय्यातरादिना क्रियमाणं दृष्ट्वा स्मृति-कौतुके जायेते ।

हिरण्यं-रुप्यं चशब्दाद् भोजनादि च तत्र मन्दधर्मणः कस्याप्याकाङ्क्ष भवति । एते विशेषदोषाः । शेषास्तु प्रस्तुते मध्यद्वारे वक्ष्यमाणे च छिण्डिकाद्वारे त एव मन्तव्या ये शालाद्वारे पूर्वमुक्ताः ॥

अथातिगमनमनाभोगे इति द्वारं व्याचष्टे-

[भा.२६४७] उभयट्ठाय विनिग्गए, अईंति सं पइं ति मन्नएऽगारी ।
अनुचियघरप्पवेसे, पडणा-ऽऽवडणे य कुड्डयादी ॥

वृ- कोऽपि संयत उभयं-कायिका-संज्ञे तद्युत्सर्जनार्थं रात्रौ निर्गतः, स च प्रत्यागच्छन् 'आत्मीयोऽयमपवरकः' इति मन्यमानोऽपरमपवरकम् 'अतियात्' प्रविशेत्, तत्र चागारी कायिकाद्यर्थनिर्गतभर्तृका तं संयतमन्धकारनिकरनिरुद्धलोचना स्वं पतिं मन्येत, ततश्च परिष्वजेत्, स च भर्त्ता प्रविष्टस्तं संयतं तत्र स्थितं मत्वा ग्रहणा-ऽऽकर्षणादीनि कारयेत्, यद्वा तत्क्षणादेव तं तत्रैवापद्रावयेत्, सर्वेषां वा साधूनां निष्काशनं कुर्यात् । 'अनुचिते वा' अज्ञाते गृहे प्रवेशं कुर्वतो रात्रौ स्तम्भादिष्वापतन-प्रपतनादयोदोषाः । यद्वा तस्या अगार्या पतिस्तत्र न स्वाधीनः, स च संयतः प्रविष्टस्तस्याः शयनीयं स्पृष्टवान्, तया च 'कूजित' महता शब्देन पूत्कृतमित्यर्थः, ततस्तत्र भूयान् लोको मिलितः, तया च वृत्तान्ते निवेदिते भवति महानुड्डाहः प्रवचनस्य, आदिशब्दाद् ग्रहणा-ऽऽकर्षणादयो दोषाः ॥ अथावभाषणद्वारमाह-

[भा.२६४८] अट्ठिगिमनट्ठिगी वा, उड्डाहं कुणइ सव्वनिच्छुभणं ।
तेनुब्भामे मन्नइ, गिहिआवडिओ व छिक्को वा ॥

वृ- यस्या अविरतिकायाः पतिर्न स्वाधीनः सा यदि स्वयम् 'अर्थिका' मैथुनार्थिनी ततस्तं साधुमवभाषेत-मया सममुपभुङ्क्ष्व भोगानिति । यदीच्छति ततः संयमविराधना, अथ नेच्छति ततः सा उड्डाहं कुर्यात् । अथासौ स्वयं नार्थिका परं संयतः क्षुभितचित्तस्तामवभाषते ततोऽप्येषा प्रवचनोड्डाहं करोति, सर्वेषा वा साधूनां निष्काशनं कुर्यात् । यद्वा अविरतिकस्तदानीमविरतिकया सह तिष्ठति, संयतश्च प्रविश्य तस्य गृहिण उपरिष्टादापतितो वा हस्तादिना वा तं "छिक्को" त्ति स्पृष्टवान् ततोऽसौ 'स्तेनोऽयम्, उब्भामको वाऽयम्' इति मन्यते, ततश्च तं साधुं परितापयेद्वा विनाशयेद्वा । अथासौ ज्ञातो यथा 'संयतोऽयम्' ततः शङ्कां कुर्यात्-'किं मन्ये प्रतिसेवनार्थमायातः ? उत स्वोपाश्रयद्वारमजानानाः ?' इत्येवं शङ्कायां चतुर्गुरु, प्रतिसेवनार्थमेवेति निशङ्किते मूलम् ॥

अथ मज्जनद्वारमाह-

[भा.२६४९] मज्जनविहिमज्जंतं, दट्ठु सगारं सईकरणमादी ।
सिज्जायरीउ अम्ह वि, एरिसया आसि गेहेसु ॥

[भा.२६५०] तासिं कुचोरु-जघनाइदंसणे खिप्पऽइक्कमो कीवे ।
इत्थीनाइ-सुहीण य, अचियत्तं छेदमाईया ॥

वृ- मज्जनविधिर्नम-स्नानयोग्या महती प्रक्रिया तया मज्जन्तं सागारिकं तत्र चतुःशालादिगृहमध्ये दृष्ट्वा भुक्तभोगिनां स्मृतिकरणमभुक्तभोगिनां तु कौतुकमुपजायते । शय्यातरीरपि तथैव मज्जन्तीर्दृष्ट्वा भुक्तभोगिनामीदृश्योऽपि गेहेषु गृहवासे वसतामासन्निति स्मृतिरुत्पद्यते ॥ तथा 'तासां' शय्यातरस्त्रीणां मज्जन्तीनां कुचोरुजघनादिदर्शने 'क्लीबस्य' दृष्टिक्लीबाख्यस्य 'क्षिप्रं' शीघ्रम् 'अतिक्रमः' ब्रह्मव्रतविराधना भवति । ततश्च ये स्त्रीणां ज्ञातयः-मातापितृप्रभृतयः स्वजना

ये च सुहृदः-मित्राणि ते महदप्रीतिकं तद्रव्यान्यद्रव्यव्यवच्छेदं वा कुर्युः आदिशब्दाद् ग्रहणा-ऽऽकर्षणादिप्रत्यपायनिकुरम्बं राजपुरुषैः कारयेयुः ॥ अपि च-

[भा.२६५१] आसंकितो व वासो, दुक्खं तरुणा य सन्नियत्तेउं।
धंतं पि दुब्बलासो, खुब्भइ वलवाण मज्झम्मि ॥

वृ-तत्र स्त्रीप्रभृतिप्रत्यपायाशङ्कया सदैवाशङ्कितो वासो भवति । ये च तरुणास्ते शय्यातरीणां मज्जन्तीनामङ्ग-प्रत्यङ्गनिरीक्षणादेर्दुःखेन 'सन्निवर्त्तयितुम्' उपरमयितुं शक्यन्ते । तथा "धंतं पि" त्ति अत्यन्तमपि दुर्बलः-क्षीणवपुरश्वो वडवानां मध्ये वर्त्तमानः क्षुभ्यति, एवं तरुणा अत्यन्ततपोनिष्टप्तवपुषोऽपि स्त्रीणां मध्ये तिष्ठन्तः क्षोभमुगच्छन्तीति ॥

गतं मज्जनद्वारम् । अथ हिरण्यद्वारमाह-

[भा.२६५२] तत्थ उ हिरण्णमाई, समंतओ दुट्ठु विप्पकिन्नाई।
लोभा हरेज्ज कोई, अन्नेण हिए व संकेज्जा ॥

वृ- 'तत्र' चतुःशालादिगृहमध्ये 'हिरण्यं' रूप्यम् आदिशब्दात् सुवर्ण-मणि-मौक्तिकादि समन्ततो विप्रकीर्णम्-इतस्ततो विक्षिप्तम् आदिशब्दादन्यथा वा मुत्कलं शून्यं च दृष्ट्वा कश्चिद् निर्धर्मा लोभादपहरेत्, अपहृत्य चोत्प्रव्रजेदिति भावः । अन्येन वा केनचिपदहृते स शय्यातरः संयतान् शङ्केत ॥ गतं मध्यद्वारम् । अथ छिण्डिकाद्वारमाह-

[भा.२६५३] छिंडीइ पच्चवाती, तणपुंज-पलाल-गुम्म-उक्कुरुडे।
मिच्छत्ते संकादी, पसज्जणा जाव चरिमपदं ॥

वृ- इह यस्याश्छिण्डिकाया मध्येन गत्वा पुरोहडे प्रविश्यते तस्या द्वारमूले यः प्रतिश्रयः, यद्वा छिण्डिका-पुरोहडं तत्र यस्या वसतेर्द्वारं तत्र तिष्ठतां प्रत्यपाय 'उत्कुरुटा वा' इष्टका-काष्ठादिराशिरूपा भवेयुः तत्र वक्ष्यमाणा दोषाः । तत्र चोपाश्रये स्थितान् साधून् दृष्ट्वा केचिदभिनवधर्माणो मिथ्यात्वमुपगच्छेयुः । अथवा 'किं मन्ये मैथुनार्थमेतेऽत्र स्थिताः ?' एवं शङ्कायाम् आदिशब्दाद् भोजिका-घाटिकादिपरम्परया निवेदने च 'चरमपदं' पाराञ्चिकं यावत् प्रायश्चित्तस्य प्रसजना प्राग्वद् द्रष्टव्या ॥ तृणपुञ्जादिषु दोषानाह-

[भा.२६५४] एक्कतरे पुव्वगते, आउभए गभीर गुम्ममादीसु।
अह तत्थेव उवस्सओ, निरोहऽसज्झाय उड्डाहो ॥

वृ- "गुम्ममाईसु" त्ति विभक्तिव्यत्ययाद् गुल्म-तृणपुञ्जादिभिः 'गुपिलेट' त पुरोहडे संयता-ऽविरतिकयोरेकतरस्मिन् 'पूर्वगते' पूर्वमेव प्रविष्टे पश्चादितरत् प्रविशेत्, तत्रात्मोभयसमुत्था उपलक्षणत्वात् परसमुत्था वा दोषा भवेयुः । अथ 'तत्रैव' पुरोहडे उपाश्रयस्ततोऽविरतिकानां निरोधो भवति, साधूनां लज्जया तत्र ताः कायिक्यादिकं कर्तुं न शक्नुवन्तीति भावः । तस्यां च छिण्डिकायामागच्छन्तीषु निर्गच्छन्तीषु वा अविरतिकासु तरुणा दृष्टीः पातयन्ति, ततश्च तेषां ताभिरपहृतहृदयानां स्वाध्यायहानिर्भवति । यदि 'कर्णाघाटकेन ग्रहीष्यन्त्यमी' इति कृत्वा न पठन्ति ततस्तन्निष्पन्नं प्रायश्चित्तम् । अथ पठन्ति ततो लोकस्तेषां स्वाध्यायशब्दं श्रुत्वा ब्रूयात्-अहो ! स्त्री-पशु-पण्डकविवर्जितं विविक्तवासमासेवन्ते साधवः । एवमसूयया ब्रुवाणेषु तेषु प्रवचनस्योड्डाहो भवति ॥ अथवा तत्रेमे दोषा भवेयुः-

[भा.२६५५] छिंडीए अवंगुयाए, उब्भामग-तेनगाण अइगमणं।
वसहीए वोच्छेदो, उवगरणं राउले दोसा ॥

**वृ-** संयतैः रात्री कायिकीव्युत्सर्जनार्थं 'अपावृतायाम्' उद्घाटितायां छिण्डिकायां कस्याप्युद्भामकस्य स्तेनस्य वा 'अतिगमनं' प्रवेशो भवेत्। स च प्रविश्य किञ्चिदपहरेत् अगारीं वा प्रतिसेवेत तन्निष्पन्नं साधूनां प्रायश्चित्तम्। शय्यातरश्चिन्तयेत्-कुतो घननिश्छिद्रे स्तेनकः प्रविष्टः ? नूनं संयतैश्छिण्डिका रात्रावुद्धाटिता। ततोऽसौ प्रद्विष्टो वसतेर्व्यवच्छेदं कुर्यात्। यद्वा स स्तेनकः संयतानां गृहस्थानां वा 'उपकरणं' वस्त्रादिकमपहरेत् ततः सागारिको राजकुले निवेदयेत्, यथा-संयतैरुद्धाटितायां छिण्डिकायां स्तेनकः प्रविष्टः। ततश्च ग्रहणाऽऽकर्षणादयस्त एव दोषाः ॥ अथवा शय्यातरभूणिका केनचिदुद्भ्रामकेण सह सम्प्रलग्ना, तया च 'रात्रौ भवता समागन्तव्यम्' इति तस्य सङ्केतः कृतः, स चोद्भामक आयातः, संयतैश्च छिण्डिका स्थगिता, ततः सा द्वितीयदिने तं प्रश्नयति-

[भा.२६५६] किं नागओ सि समणेहिं ढक्कियं दोस कूयरा जं तु।
एतेहऽवंगुएण व, अज्ज पइट्ठो सइरचारी ॥

**वृ-** कल्ये किं नागतोऽसि ? । स प्राह-आगतोऽहं परं किं करोमि ? श्रमणैः स्थगितं छिण्डिकाद्वारम्। ततः "दोस कूयरा जं तु" त्ति कुत्सितं शिष्टजनजुगुप्सितं चरन्तीति कुचराः- उद्भ्रामका उद्भ्रामिका वा, ते यद् 'द्वेषात्' प्रद्वेषतः साधूनां प्रान्तापना-ऽभ्याख्यानदानादि करिष्यन्ति तन्निष्पन्नं प्रायश्चित्तम्। अथवा 'एतैः' श्रमणैः 'अपावृतेन' उद्घाटितेन छिण्डिकाद्वारेण 'स्वैरचारी' स्तेन उद्भ्रामकोवा अद्यास्माकं गृहे प्रविष्ट इति सागारिको यद् वसत्यादिव्यवच्छेदं कुर्यात् तन्निष्पम् ॥

अथवा स्तेनः प्रविष्टः सन्निदं कुर्यात्-

[भा.२६५७] अवहारे चउभंगो, पसंग एएहिं संपदिन्नं तु।
संजयलक्खेण परे, हरिज्ज तेना दिय निसिं वा ॥

**वृ-** अपहारे चतुर्भङ्गी। तद्यथा-एके स्तेनाः प्रविष्टाः सन्तः संयतानां हरन्ति न गृहस्थानाम् १ अपरे गृहस्थानां न संयतानाम् २ केचिद् गृहस्थानामपि संयतानामपि ३ केचिन्न गृहस्थानां न संयतानामित्येष चतुर्थो भङ्गः शून्यः। तत्र यत्र संयतानामपहरन्ति तत्रोत्कृष्ट-मध्यम-जघन्योपधिनिष्पन्नम्। यत्र तु गृहस्थानामपहरन्ति तत्र 'एतैरेव साधुभिश्छिण्डिकामुद्धाटयद्भिरस्मदीयं सुवर्णादि स्तेनेभ्यः सम्प्रदत्तम्' इति विचिन्त्य ते गृहस्था राजकुले ग्रहणा-ऽऽकर्षणादिप्रसङ्ग कारापयेयुः। तथा 'अपरे' केचिद् मायाविनः स्तेनाः 'संयतलक्ष्येण' साधुवेषव्याजेन दिवा वा निशायां वा तत्र प्रविश्य कथञ्चित् प्रमत्तानामगारिणां सुवर्णादिकमपहरेयुः। तृतीयभङ्गे तु प्रथमद्वितीयभङ्गोक्ता दोषा द्रष्टव्याः। यत एते दोषा अतः शालायां वा मध्ये वा छिण्डिकायां वा न स्थातव्यम्। भवेत् कारणं येन तत्रापि तिष्ठेयुः ॥ किं पुनस्तत् ? इत्याह-

[भा.२६५८] अद्धाणनिग्गयाई, तिक्खुत्तो मग्गिऊण असईए।
सालाए मज्झे छिंडी, वसंति जयणाए गीयत्था ॥

**वृ-** अध्वनिर्गतादयः 'त्रिकृत्वः' त्रीन् वारान् शुद्धां वसतिं मार्गयित्वा यदि न लभन्ते ततः प्रथमं शालायां तस्या अलाभे चतुःशालादिगृहमध्ये तस्याप्यभावे छिण्डिकायां यतनया गीतार्था

वसन्ति ॥ तत्र शालाविषयां यतनां तावदाह-

[भा.२६५९] बोलेण झायकरणं, तह वि गहिएऽनुसट्ठिमाईणि ।
वेउव्वि खद्धऽवाउडि, छिड्डा चोले य पडले य ॥

वृ-यत्र स्वाध्यायं कुर्वतामालापकान् कर्णाघाटयन्ति तत्र 'बोलेन' सर्वेऽपि समुदिताः स्वाध्यायं कुर्वन्ति येन ते व्यक्तं किमप्यालापकपदं न शृणुयुः । अथ तथापि ते तदेकाग्रचित्ततया शृण्वन्तो दक्षत्वादालापकपदानि गृह्णीयुः ततस्तेषामनुशिष्टः कर्त्तव्या-भो भद्राः ! न वर्त्तते युष्माकमित्थं कर्णाघाटकेनालापन् ग्रहीतुम्, इत्थं गृह्णतामिहैवोन्मादादयो बहवोऽनर्था भवन्तीति । आदिग्रहणाद् विद्याया मन्त्रेण वा ते तथा वशीक्रियन्ते यथा कर्णाघाटकेन ग्रहणादुपरमन्ते । तथा 'विकुर्विते' विण्टकविद्धे 'खद्धे' महाप्रमाणे 'अपावृते' व्यपगतत्वचि सागारिके सति इयं यतना-पटलकानां चोकपट्टकस्य वा चतुरस्त्रीकृतस्यैकस्मिन् पुटे छिद्रं कृत्वा सागारिकं गोपायितव्यम् ॥

यत्रादर्शदोषा भवन्ति तत्रेयं यतना-

[भा.२६६०] अद्दागदोससंकी, जा पढमा ताव पाउया निंति ।
उट्ठण-निवेसनेसु य, तत्तो पिट्ठं न कुव्वंति ॥

वृ- आदर्शदोषशङ्किनः सन्तो यावत् प्रथमा पौरुषी तावत् प्रावृता एव निर्गच्छन्ति । उत्थानोपवेशनयोश्च 'ततः' गृहस्थाभिमुखं पृष्ठं न कुर्वन्ति, मा पुतौ दृष्ट्वा तेऽमङ्गलं मन्यन्तामिति कृत्वा ॥ यत्र कल्पस्थकदोषाः समुद्देशदोषाश्च भवन्ति तत्रेयं यतना-

[भा.२६६१] अवणाविंतिऽवनिंति व, कप्पट्ठे परिरयस्स असईए ।
अप्पत्ते सइकाले, बाहिं वियट्टंति निग्गंतुं ॥

वृ-परिरयो नाम-मार्गान्तरेण गमनम्, ततश्च यद्यन्यस्य मार्गस्य सम्भवस्ततः कल्पस्थाधिष्ठितं मार्गं विहाय तेन गन्तव्यम् । अथ नास्त्यपरो मार्गस्ततः कल्पस्थानि शय्यातरादिभिस्ततो मार्गादपनाययन्ति, 'वयं भिक्षादौ गमिष्यास्तत एतदपत्यभाण्डं निर्व्याबाधमन्यत्र नयत' इत्येवं भणन्तीति भावः । अथ न तत्र कोऽपि सन्निहितः ततः स्वयमेव यतनया ततो मार्गात् तान्यपनयन्ति। तेषां च गृहस्थानां यदा समुद्देशनवेला तदा साधवोऽप्राप्ते एव भिक्षासत्काले पात्रकाण्युद्ग्राह्य निर्गत्य च बहिर्गत्वा 'व्यावर्त्तयन्ति' भिक्षावेलां प्रतीक्षन्ते, येनावष्वष्कणादयो दोषाः परिहृता भवन्ति ॥ यत्र संयतानां भुञ्जानानां सागारिकं तत्रेयं यतना–

[भा.२६६२] नीउच्चा उच्चतरी, चिलिमिलि भुंजंत सेसए भयणा ।
पुढवी-दगाइएसुं, सारण जयणाए कायव्वा ॥

वृ-यदि सर्वेऽपि साधवः 'भुञ्जानाः' भक्तार्थिनस्तदा तिस्त्रश्चिलिमिलिका दातव्याः, तद्यथा-प्रथमा नीचा, द्वितीया तस्याः सकाशादुच्चा, तृतीया तु ततोऽप्युच्चतरा । शेषा नाम्-यदि केचिदभक्तार्थिनस्तदा तिसृणां चिलिमिलिकानां भजना, कदाचिदेका कदाचिद् द्वे कदाचित् तिस्रोऽपि दातव्या इति भावः । यत्र च पृथिवी-दका-ऽग्नि-बीजानां सम्भवस्तत्र गृहस्थानां यतनया 'सारणा' अनुशिष्टिः कर्त्तव्या, यथा साधूनां पृथिव्युदकाग्निबीजानां विराधना न भवति तथा यतितव्यमिति ॥ यत्र बीजकार्यं कण्डयन्त्यो गायन्ति तत्रेयं यतना-

[भा.२६६३] जइ कुट्टणीउ गायंति विस्सरं साइयाउ मुसलेहिं ।

विलवंतीसु सकलुणं, ह्यहियय ! किमाकुलीभवसि ॥

वृ-बीजकायं कुट्टयन्तीति कुट्टन्यः-कण्डनकारिण्य इत्यर्थः, तासु गायन्तीषु साधुभि स्वचेतसि चिन्तनीयम्-यदि नामैताः कुट्टन्यो मुशलैरनवरतमुक्षिप्यमाण-निक्षिप्यमाणैः 'सादिताः' खेदिताः सत्यस्तद्दुखापनोदार्थमित्थं विस्वरं रुदन्त्य इव गायन्ति तर्हि परमार्थतो विलपितमेवैताः कुर्वन्ति, "सर्वं गीतं विलपितम्" इति वचनात्; ततः सकरुणं विलपन्तीष्वेतासु हे हतहृदय ! किमेवम् 'आकुलीभवसि' विश्रोतसिकामुपगच्छसि ? नैवं भवतो युज्यत इति भावः ॥

गता शालाविषया यता । अथ मध्यविषयां यतनामाह-

[भा.२६६४] मज्झे जग्गंति, सया, निंति ससद्दा य आउला रत्तिं ।

फिडिए य जयण सारण, एहेहि इओ इमं दारं ॥

वृ-यत्र चतुःशालादिगृहमध्ये वसन्ति तत्र वृषभा रात्रौ 'सदैव' चतुर्ष्वपि यामेष्वित्यर्थः वारकेण जाग्रति । कायिक्यादिव्युत्सर्जनार्थं च रात्रौ 'सशब्दाः' काशितादिशब्दं कुर्वन्तः 'आकुलाश्च' त्वरमाणाः 'निर्यन्ति' निर्गच्छन्ति यथा पूर्वोक्ताः शङ्कादयो दोषा न स्युः । यश्च रात्रौ 'स्फिटितः' मार्गात् परिभ्रष्टो भवति तस्य यतनया यथा गृहस्था न विबुध्यन्ते तथा सारणा कर्त्तव्या, यथा-इहि इत इदं द्वारं वर्त्तते ॥

[भा.२६६५] अविजाणंतो पविट्ठो, भणइ पविट्ठो अजाणमाणो मि ।

एहामि वए ठविउं, न पवत्तइ अत्थि मे इच्छा ॥

वृ-यस्तत्रान्यमपवरमविजानन् प्रविष्टः स पृष्टोऽपृष्टो वा शङ्कापनोदार्थं भणति-'अजानानः' मार्गमनवबुध्यमानोऽहमत्र प्रविष्टः । यदि अविरतिका तमवभाषते-मया सममुपभुङ्क्ष्व भोगान् अन्यथोड्डाहं करिष्यामीति, ततो वक्तव्यम्-येषा गुरूणां समीपे मया व्रतानि गृहीतानि सन्ति तेषामेव सन्निधौ स्थापयित्वा एष्यामि, ममापि त्वद्विषया इच्छाऽस्ति परं किं करोमि ? 'न प्रवर्त्तते' न बुध्यते (युज्यते) गुरूणां समीपे व्रतान्यस्थापयित्वा एवं कर्त्तुम् इत्यभिधाय ततो निर्गन्तव्यम्॥

यत्र मज्जन-हिरण्ये भवतस्तत्रेयं यतना-

[भा.२६६६] कडओ व चिलिमिली वा, मज्जंतिसु थेरगा य तत्तो उ ।

आइन्नहिरन्नेसु य, थेर च्चिय सिक्खगा दूरे ॥

वृ- शय्यातरस्त्रीषु मज्जन्तीषु उपलक्षणत्वात् शय्यातरे वा मज्जति अपान्तराले कटको वा चिलिमिलिका वा दातव्या, ततश्च तेन पार्श्वेन स्थविराः स्थापयितव्याः । येन च पार्श्वेन हिरण्यादीन्याकीर्णानि भवन्ति ततः स्थविरा एव कर्त्तव्याः । शिक्षकास्तु ततो दूरे स्थापनीयाः ॥

गता मध्यविषया यतना । अथ छिण्डिकाविषयामाह-

[भा.२६६७] दारमसुन्नं काउं, निंति अइंती ठिया उ छिंडीए ।

काइयजयणा स च्चिय, वगडासुत्तम्मि जा भणिया ॥

वृ-छिण्डिकायां स्थिताः सन्तो द्वारमशून्यं कृत्वा निर्गच्छन्ति वा प्रविशन्तिवा येन स्तेनादयो दोषा न भवन्ति । 'कायिकीयतना तु' मात्रकव्युत्सर्जनादिका सैव द्रष्टव्या या पूर्वं वगडासूत्रे भणिता ॥

मू. (३३) *कप्पइ निग्गंथीणं गाहावइकुलस्स मज्झंमज्झेण गंतु वत्थए ॥*

वृ- अस्य व्याख्या प्राग्वत् ॥ अथ भाष्यम्-

[भा.२६६८] एसेव कमो नियमा, निग्गंथीणं पि नवरि चउलहुगा ।
नवरं पुन नाणत्तं, सालाए छिंडि मज्झे य ॥

वृ- 'एष एव' निर्ग्रन्थसूत्रोक्तः क्रमो निर्ग्रन्थीनामपि ज्ञातव्यः । नवरं तासां तत्र तिष्ठन्तीनां चतुर्लघुकाः प्रायश्चित्तम्, वैक्रिया-ऽप्रावृता-ऽऽदर्शविषयाश्च दोषा न भवन्ति । शेषं सर्वमपि प्राग्वद् द्रष्टव्यम् । नवरं पुनः 'नानात्वं' विशेषः शालायां छिण्डिकायां मध्ये च त्रिष्वपि स्थानेषु वक्तव्यम् ॥ तत्र शालायां तावदाह-

[भा.२६६९] सालाए कम्मकरा, उड्डंचय गीयए य ओहसणा ।
घर खामणं च दानं, बहुसो गमनं च संबंधो ॥

वृ- शालायां स्थितानामार्यिकाणां कर्मकरा उड्डुञ्चकान् कुर्युः, यथा-यादृशी इयमार्यिका तादृशी मम श्यालिका वा मातुलदुहिता वा विद्यते । गीतेन वा ते कर्मकरादयः प्रपञ्चन्ते, यथा- वंदामु खंति ! पडपंडुरसुद्धदंति !, रच्छाए जंति ! तरुणाण मणं हरंति ! । इत्यादि । उपहसनं वा कश्चित् करोति । ततश्च भिक्षार्थं गृहं गतायास्तस्याः क्षामणम्, दानं च वस्त्र-पात्रादेः, गमनं च बहुशस्तस्याः समीपे करोति । ततश्चैवं 'सम्बन्धः' तयोः परस्परं घटनं भवति ॥ अथामून्येवोपहसनादीनि पदानि गाथात्रयेण भावयति-

[भा.२६७०] पानसमा तुज्झ मया, इमा य सरिसी सरिव्वया तीसे ।
संखे खीरनिसेओ, जुज्जइ तत्ते तत्तं च ॥

[भा.२६७१] सो तत्थ तीए अन्नाहि वा वि निब्भत्थिओ गओ गेहं ।
खामिंतो किल सुढिओ, अक्खुन्नइ अग्गहत्थेहिं ॥

[भा.२६७२] पाएसु चेडरूवे, पाडेत्तू भणइ एस भे माता ।
जं इच्छइ तं दिज्जह, तुमं पि साइज्ज जायाइं ॥

वृ- तत्र शालादौ काञ्चिदुदाररूपां संयतीं दृष्ट्वा कश्चित् पुरुषः स्वसुहृदं विपन्नपत्नीकं सोपहासमित्थं ब्रवीति-वयस्य ! या किल तव प्राणसमा पत्नी सा तावन्मृता, अपरा च तथाविधा न विलोक्यते, 'इयं तु' संयती 'तस्याः' त्वत्पत्न्याः 'सदृशी' सदृग्रूपा सदृग्वयाश्च, अतस्तवानया सह सम्बन्धो विधीयमानः शङ्खे क्षीरनिषेक इव, तप्तं च लोहमपरेणापि तप्तेन सह संयोज्यमानमिव 'युज्यते' सुश्लिष्टीभवति । एवं ब्रुवाणोऽसौ तया संयत्या अन्याभिर्वा संयतीभिर्गाढं निर्भर्त्सितः सन् सवयस्योऽपि स्वगेहं गतः । अन्यदा च स तदीयवयस्यः संयतीं भिक्षार्थं स्वगृहमागतां शठतया "सुढितो" त्ति सुष्ठु-अतीवाहतः-प्रयत्नपरः किल क्षामयन्निव अग्रहस्तैः 'आक्षुणति' तस्याः पादौ विलिखतीत्यर्थः, चेटरूपाणि च प्राक्तनपत्न्याः सम्बन्धीनि तस्याः संयत्याः पादयोः पातयित्वा भणति-एषा "भे" भवतां माता, यत्किमपीयमिच्छति तत् सर्वमाहारादिजातमस्यै दातव्यम् । संयतीमपि भणति-एतत् त्वदीयं गृहम्, अमूनि च भवत्याः सम्बन्धीनि 'जातानि अपत्यानि, अतस्त्वमेतानि 'सातयेः" सङ्गोपायेः । एवमुक्त्वा वस्त्रा-ऽन्न-पानादीनि बहुशस्तस्याः प्रयच्छति । सा च स्त्रीस्वभावतया तुच्छेनाप्याहारादिना वशीक्रियत इत्यतो भूयो भूयस्तदीयगृहे गमानगमनं कुर्वत्यास्तस्यास्तेन सह सम्बन्धो भवति । यत एते दोषा अतो न तत्र स्थातव्यम् ॥

आह यद्येवं ततः सूत्रमपार्थकम् ?, तत्र साध्वीनां वस्तुमनुज्ञातत्वात् । सूरिराह- नैवम्-

[भा.२६७३] सुत्तनिवाओ पासेन गंतु बिइयपय कारणजाए ।
साला‍ए मज्झे छिंडी, सागारिय निग्गहसमत्थो ॥

वृ- यत्र पार्श्वेन गत्वा निर्गमन-प्रवेशौ क्रियेते तत्र निर्ग्रन्थीभिर्द्वितीपदेऽध्वनिर्गमनादौ कारणजाते वस्तव्यमित्येवमत्र सूत्रनिपातः । तत्र च शालायां वा मध्ये वा छिण्डिकायां वा यदि सागारिकः 'निग्रहसमर्थ' जितेन्द्रियस्तरुणादीनां वा संयतीरुपसर्गयतां खरण्टनादिना शिक्षाकरणदक्षो भवति ततस्तत्र स्थातव्यम् ॥ एतदेव व्याख्यातुमाह-

[भा.२६७४] पासेन गंतु पासे, व जं तु तहियं न होइ पच्छित्तं ।
मज्झेण व जं गंतुं, पिह उच्चारं घरं गुत्तं ॥

[भा.२६७५] दुज्जणवज्जा साला, सागारअवत्तभूणगजुया वा ।
एमेव मज्झ छिंडी, निय-सावग-सज्जणगिहे वा ॥

वृ- यत्र पार्श्वेन गत्वा निर्गम्यते वा, यद् वा गृहं गृहपतिकुलस्य पार्श्वे भवति तत्र तिष्ठतां प्रायश्चित्तं न भवति । यद् वा गृहं गृहपतिकुलस्य मध्येन गत्वा प्रविश्यते तद् यदि पृथगुच्चार-कायिकीभूमिकं 'गुप्तं च' कुड्य-कपाटादिभिः सुसंवृतं ततस्तत्रापि प्रायश्चित्तं न भवति । तत्र यदि शालायां स्थातव्यं स्यात् तदा सा 'दुर्जनवर्जा' दुःशीलरहिता यद्वा सागारिकस्य सम्बन्धिनो ये अव्यक्ताः-अद्याप्यपरिणतवयसो भ्रूणकाः-बालकास्तैर्युता या शाला तस्यां स्थातव्यम् । एवमेव चतुःशालकादिगृहमध्ये छिण्डिकायां वा यत्र निजकाः-तासामेव संयतीनां नालबद्धाः पितृ-भ्रात्रादयः श्रावका वा-माता-पितृसमाना जिनवचनभाविता भवन्ति यानि वा सज्जनानां-स्वभावत एव सुशीलानां यथाभद्रकाणां गृहाणि तत्र स्थातव्यम् ॥

मू. *(३४) भिक्खू य अहिगरणं कट्टु तं अहिगरणं विओसवित्ता विओसवियपाहुडे, इच्छाए परो आढाइज्जा इच्छाए परो नो आढाइज्जा, इच्छाए परो अब्भुट्ठेज्जा इच्छाए परो नो अब्भुट्ठेज्जा, इच्छाए परो वंदिज्जा इच्छाए परो नो वंदिज्जा, इच्छाए परो संभुजेज्जा इच्छाए परो नो संभुंजेज्जा, इच्छाए परो संवसिज्जा इच्छाए परो नो संवसिज्जा, इच्छाए परो उवसमिज्जा इच्छाए परो नो उवसमिज्जा । जो उवसमइ तस्स अत्थि आराधना, जो न उवसमइ तस्स नत्थि आराधना, तम्हा अप्पणा चेव उवसमियव्वं । से किमाहु भंते ! ? उवसमसारं सामन्नं ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याशङ्काव्युदासायाह–

[भा.२६७६] एगत्थ कहमकप्पं, कप्पं एगत्थ इअऽसद्दहतो ।
पडिसिद्धे व वसंते, निवारण वइक्कमे कलहो ॥

वृ- 'एकत्र' गृहपतिकुलस्य मध्ये कथं निर्ग्रन्थानामकल्प्यम् ? निर्ग्रन्थीनां तु कथम् 'एकत्र' तत्रैव कल्प्यम् ? 'इति' एवमश्रद्दधतः कलह उपजायते । यद्वा प्रतिषिद्धे प्रतिश्रये वसतः केनचिन्निवारणं कृतम्, ततः प्रतिषिद्धोपाश्रयस्थाता तदीयवचनस्य व्यतिक्रमं-विकुट्टनं करोति एवं कलहो भवेत् । उत्पन्ने च कलहे झगित्येव व्यवशमनं कर्त्तव्यमित्यत्र सूत्रे प्रतिपाद्यत इति ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या-'भिक्षु' सामान्यः साधुः, चशब्दस्यानुक्तसमुच्चयार्थत्वा-

दाचार्योपाध्यायावपि गृह्येते, अधिक्रियते-नरकगतिगमनयोग्यतां प्राप्यते आत्मा अनेनेत्यधिकरणं कलहः प्राभृतमित्येकोऽर्थः, तत् 'कृत्वा' तथाविधद्रव्य-क्षेत्रादिसाचिव्योपबृंहितात् कषायमोहनीयोदयाद् द्वितीयसाधुना सह विधाय ततः स्वयमन्योपदेशेन वा परिभाव्य तस्यैहिकामुष्मिकापायबहुलतां तद् अधिकरणं विविधम्-अनेकैः प्रकारैः स्वापराधप्रतिपत्तिपुरःसरं मिथ्यादुष्कृतप्रदानेन 'अवशमय्य' उपशमं नीत्वा ततो विशेषेणावसायितम्-अवसानं नीतं प्राभृतं-कलहो येन स व्यवसायितप्राभृतः-व्युत्सृष्टकलहो भवेत् । किमुक्तं भवति ?-गुरुसकाशे स्वदुश्चरितमालोच्य तत्प्रदत्तप्रायश्चित्तं च यथावत् प्रतिपद्य भूयस्तदकरणायाभ्युत्तिष्ठेत् । आह येन सह तदधिकरणमुत्पन्नं स यद्युपशम्यमानोऽपि नोपशाम्यति ततः को विधिः ? इत्याह- "इच्छाए परो आढाएज्जा" इत्यादि सूत्रम् । 'इच्छया' यथास्वरुच्या 'परः' अन्यो द्वितीयः साधुराद्रियेत् इच्छया परो नाद्रियेत, प्रागिव सम्भाषणादिभिरादरं कुर्याद्वा न वेति भावः । एवमिच्छया परस्तमभ्युत्तिष्ठेत्, इच्छया परो नाऽभ्युत्तिष्ठेत् । इच्छया परस्तं साधुं वन्देत, इच्छया परो न वन्देत । इच्छया परस्तेन साधुना सह 'सम्भुञ्जीत' एकमण्डल्यां भोजनं दानग्रहणसम्भोगं वा कुर्यात्, इच्छया परो न सम्भुञ्जीत । इच्छया परस्तेन साधुना सह 'संवसेत्' सम्-एकीभूयैकत्रोपाश्रये वसेत्, इच्छया परो न संवसेत् । इच्छया पर उपशाम्येत, इच्छया परो नोपशाम्येत । परं यः 'उपशाम्यति' कषायतापापगमेन निर्वृतो भवति तस्यास्ति सम्यग्दर्शनादीनामाराधना, यस्तु नोपशाम्यति तस्य नास्ति तेषामाराधना । 'तस्मात्' एवं विचिन्त्य आत्मनैव 'उपशान्तव्यम्' उपशमः कर्त्तव्यः । शिष्यः प्राह-"से किमाहु भंते !" अथ किमत्र कारणमहुः 'भदन्त !' परमकल्याणयोगिन् ! तीर्थकरादयः ? । सूरिराह-उपशमसारं श्रामण्यम्, तद्विहीनस्य तस्य निष्फलतयाऽभिधानात् । उक्तञ्च दशवैकालिकनिर्युक्तौ-

सामन्नमनुचरंतस्स कसाया जस्स उक्कडा होंति ।
मन्नामि उच्छुपुप्फं, व निप्फलं तस्स सामन्नं ॥

-- इति सूत्रार्थः । अथ विषमपदानि भाष्यकृद् विवृणोति-

[भा.२६७७] घेप्पंति चसद्देणं, गणि आयरिया य भिक्खुणीओ य ।
अहवा भिक्खुग्गहणा, गहणं खलु होइ सव्वेसिं ॥

वृ- इह सूत्रे भिक्षुश्चेति यश्चशब्दस्तेन 'गणी' उपाध्यायस्तथा आचार्यो भिक्षुण्यश्च गृह्यन्ते । अथवा 'भिक्षुग्रहणात्' भिक्षुपदोपादानात् सर्वेषामप्याचार्यादीनां ग्रहणं द्रष्टव्यम्, "एकग्रहणे तज्जातीयानां सर्वेषां ग्रहणम्" इति वचनात् ॥

[भा.२६७८] खामिय वितोसिय विनासियं च झवियं च होंति एगट्ठा ।
पाहुड पहेण पणयण, एगट्ठा ते उ निरयस्स ॥

वृ- क्षामितं व्यवशमितं विनाशितं क्षपितमिति चैकार्थानि पदानि भवन्ति । तथा प्राभृतं प्रहेणकं प्रणयनमिति वा त्रीण्यप्येकार्थानि । तानि तु प्राभृतादीनि 'निरयस्य' नरकस्य मन्तव्यानि, यत एतदधिकरणं नरकस्य-सीमन्तकादेः प्राभृतमिव प्राभृतमुच्यते, एवं प्रहेणक-प्रणयनपदे अपि भावनीये ॥

[भा.२६७९] इच्छा न जिनादेसो, आढा उन आदरो जहा पुव्विं ।
भुंजण वास मणुन्ने, सेस मणुन्ने व इतरे वा ॥

वृ- इच्छा नाम न 'जिनादेशः' तीर्थकृतामुपदेशोऽयमिति कृत्वा नादरादीनि पदानि करोति किन्तु स्वच्छन्देन । तथा आढा नाम-आदरस्तं यथा पूर्वमुचितालापादिभि कृतवाँस्तथा कुर्याद्वा न वा । शेषाणि त्व[illegible]नादीनि सुगमानीति कृत्वा [illegible] ; अत्र च सम्भोजन-संवासलपदे 'मनोज्ञेषु' सम्भागिकेषु 'इतरेषु वा' असाम्भोगिकेषु भवेयुः ।। कृता भाष्यकृता विषमपदव्याख्या । अथ निर्युक्तिविस्तरः-

[भा.२६८०] नामं ठवणा दविए, भावे य चउव्विहं तु अहिगरणं ।
दव्वम्मि जंतमादी, भावे उदओ कसायाणं ।।

वृ- नामाधिकरणं स्थापनाधिकरणं द्रव्याधिकरणं भावाधिकरणं चेति चतुर्विधमधिकरणम् । तत्र नाम-स्थापने गतार्थे । द्रव्याधिकरणमागमतोऽधिकरणशब्दार्थं प्ररूपयन्ननुपयुक्तो वक्ता । नोआगमतो ज्ञशरीर-भव्यशरीरव्यतिरिक्तं द्रव्याधिकरणं यन्त्रादिकं द्रष्टव्यम् । यन्त्रं नाम दलनयन्त्रादि । 'भावे' भावाधिकरणं 'कषायाणां' क्रोधादीनामुदयो विज्ञेयः ।।

तत्र द्रव्याधिकरणं व्याख्यानयति-

[भा.२६८१] दव्वम्मि उ अहिगरणं, चउव्विहं होइ आनुपुव्वीए ।
निव्वत्तण निक्खिवणे, संजोयण निसिरणे य तहा ।।

वृ- 'द्रव्ये' द्रव्यविषयमधिकरणं चतुर्विधं भवति 'आनुपूर्व्या' परिपाट्या, तद्यथा-निर्वर्त्तनाधिकरणं निक्षेपणाधिकरणं संयोजनाधिकरणं निसर्जनाधिकरणं चेति । तत्र योनिप्राभृतादिना यदेकेन्द्रियादिशरीराणि निर्वर्त्तयति, यथा सिद्धसेनाचार्येणाश्वा उत्पादिताः । जहा वा एगेनायरिएण सीसस्स जोगो उवदिट्ठो जहा महिसो भवति । तं च सुतं आयरियाणं भाइणिज्जेन । सो निद्धम्मो उन्निक्खंतो महिसं उप्पाएउं सोयरियाण हत्थे विक्किणइ । आयरिएण सुतं । तत्थ गतो भणेइ-किं एतेनं ? अहं ते रयणजोगं पयच्छामि, दव्वे आहराहि । ते अ आहरिया । आयरिएण संजोइया एगंते निक्खित्ता भणितो-एत्तिएण कालेण उक्खनिज्जासि, अहं गच्छामि । तेन उक्खत्तो । दिट्ठीविसो सप्पो जातो । सो तेण मारितो । एवं अहिगरणच्छेदो । सो वि सप्पो अंतोमुहुत्तेण मओ त्ति ।।

यद्वा वैक्रिया-ऽऽहारकशरीरे अपि यन्निष्कारणे निर्वर्त्तयति, परशु-कुन्तादीनि वा करोति तन्निर्वर्त्तनाधिकरणमुच्यते । निक्षेपणाधिकरणं द्विधा-लौकिकं लोकोत्तरिकं च । तत्र यद् मत्स्यग्रहणार्थं गलनामा लोहकण्टकः कूटं वा मृगादीनां ग्रहणाय जालं वा लावकादीनामर्थाय निक्षिप्यते, शतघ्न्यादीनि घरट्टा-ऽरघट्टादीनि वा यन्त्राणि स्थाप्यन्ते तदेतद् लौकिकं निक्षेपणाधिकरणम् । यत्तु लोकोत्तरिकं तत् षड्विधम्-यत्र पात्राद्युपकरणं निक्षिपति त्र न प्रत्युपेक्षते न प्रमार्जयति १ न प्रत्युपेक्षते प्रमार्जयति २ प्रत्युपेक्षते न प्रमार्जयति ३; यत्तुप्रत्युपेक्षते प्रमार्जयति ३; यत्तु प्रत्युपेक्षते प्रमार्जयति च तद् दुष्प्रत्युपेक्षितं दुःप्रमार्जितं ४ दुःप्रत्युपेक्षितं सुप्रमार्जितं ५ सुप्रत्युपेक्षितं दुष्प्रमार्जितं ६ करोति; एवमेते षड्भङ्गा निक्षेपणाधिकरणम् । यस्तु सप्तमो भङ्गः सुप्रत्युपेक्षितं सुप्रमार्जितं करोतीति लक्षणः स नाधिकरणम्, शुद्धत्वात् । यद्वा यद् भक्तं पानकं वाऽपावृतं स्थापयति तन्निक्षेपणाधिकरणम् । संयोजनाधिकरणमपि द्विधा लौकिक-लोकोत्तरिकभेदात् । तत्र लौकिकं रोगाद्युत्पत्तिकारणं विष-गरादिनिष्पत्तिनिबन्धनं वा द्रव्यसंयोजनम् । लोकोत्तरिकं तु

भक्तोपधिशय्याविषयसंयोजनम्। निसर्जनाधिकरणमपि लौकिकं शर-शक्ति-चक्र-पाषाणादीनां निसर्जनम्। लोकोत्तरिकं तु सहसाकारादिना यत् कण्टक-कर्करादीनां भक्तपानान्तःपतितानां निसर्जनम्॥ गतं द्रव्याधिकरणम्। अथ भावाधिकरणमाह-

[भा.२६८२] अह-तिरिय-उड्ढकरणे, बंधण निव्वत्तणा य निक्खिवणं।
उवसम-खएण उड्ढं, उदएण भवे अहेगरणं॥

वृ-इह क्रोधादीनां कषायाणामुदयो भावाधिकरणमित्युक्तम् अतस्तेषामेव 'अधस्तिर्यगूर्ध्व-करणे' अधोगतिनयने तिर्यग्गतिनयने ऊर्ध्वगतिनयने च स्वरूपं वक्तव्यम्। तथा 'बन्धनं नाम' संयोजनं १ निर्वर्त्तना २ निक्षेपणं ३ चसब्दस्य व्यवहितसम्बन्धस्यात्र योजनाद् निसर्जना ४ चेति चतुर्विधं द्रव्याधिकरणम्। आह अनन्तरप्रतिपादितमिदं किमर्थमिदानीमभिधीयते? उच्यते-यत् प्राग् गाथायां चतुर्विधं द्रव्याधिकरणमुक्तं तद् "दव्वम्मि जंतमादी" इति पदं व्याख्यानयता भाष्यकृता दर्शितम्, इदं तु निर्युक्तिकारः सङ्ग्रहगाथया द्वयोरपि द्रव्यभवाधिकरणयोः स्वरूपं सूचयतीति। अथास्या एव प्रथमापादं पश्चार्द्धेन व्याचष्टे-"उवसम" इत्यादि। कषायाणामुपशमेन क्षयेन चोर्ध्वगति-स्वर्गा-ऽपवर्गलक्षणाऽवाप्यते। तेषामेव च तीव्रपरिणामानामुदयेन 'अधःकरणं भवति' नरकगतिगमनं भवतीत भावः। उपलक्षणमिदम्, तेन नातितीव्रैः कषायैस्तिर्यग्गतिर्मध्यमैस्तु मनुष्यगतिरवाप्यत इति पुरातनगाथासमासार्थः॥ अथास्या एव भाष्यकारो व्याख्यानं करोति-

[भा.२६८३] तिव्वकसायसमुदया, गुरुकम्मुदया गती भवे हिट्ठा।
नाइकिलिट्ठ-मिऊहि य, उववज्जइ तिरिय-मनुएसु॥

वृ-तीव्राः-सङ्क्लिष्टपरिणामा ये कषायाः-क्रोधादयस्तेषां सम्बन्धी यः सम्-एकीभावेनोदयस्तेन जीवा गुरूणां-ज्ञानावरणीयादिकर्मणामुपचयं कुर्वन्ति। गुरुकर्मोदयाच्च तेषाम् 'अधः' सप्तमनर-कपृथिव्यादिनरकेषु गतिर्भवति। ये तु कषाया नातिक्लिष्टाः-नातीवाशुभपरिणामास्तैर्नातिक्लिष्टः कर्मोपचयो भवति ततश्च तिर्यक्षूत्पद्यन्ते। ये तु मृदवः-प्रतनुपरिणामास्तैर्मृदुः कर्मोपचयो भवति ततो मनुष्येषूत्पद्यन्ते॥

[भा.२६८४] खीणेहि उ निव्वाणं, उवसंतेहि उ अनुत्तरसुरेसु।
जह निग्गहो तह लहू, समुवचओ तेन सेसेसु॥

वृ-'क्षीणैः' अभावतां गतैः कषायैर्निर्वाणमासादयति। 'उपशान्तैः' विष्कम्भितोदयैः तुशब्दात् क्षीणोपशान्तैश्चानुत्तरविमानवासिषु सुरेषूत्पद्यते। एवं यथा प्रकृष्टः प्रकृष्टतरः कषायाणां निग्रहः तथाऽयं जीवः 'लघुः' लघुभूतो भवति। अथ न तथाविध- कषायाणां निग्रहः कृतस्ततः कर्मणां समुपचयो भवति, तेन 'शेषेषु' अनुत्तरविमानवासिवर्जेषु देवेषूत्पद्यते। आह गुरुलघुकमगुरुलघुकं वा द्रव्यं भवति नैकान्तगुरुकं न वा एकान्तलघुकमित्यागमेऽभिधीयते ततः कर्मणां गुरुतया जीवा अधो गच्छन्ति लघुतया तूर्ध्वमिति कथं न विरुध्यते? उच्यते-इह हि यद् आगमे गुरुलघुकमगुरुलघुकं वा द्रव्यमुक्तं तन्निश्चयनयमता श्रयणेन, इदं तु कर्मणां गुरुत्वं लघुत्वं च व्यवहारनयमता श्रयणाद् उच्यते॥ तथा चामुमेवार्थं ज्ञापयितुमिदमाह-

[भा.२६८५] गुरुयं लहुयं मीसं, पडिसेहो चेव उभयपक्खे वि।
तत्थ पुन पढमबिइया, पया उ सव्वत्थ पडिसिद्धा॥

वृ- गुरुकं १ लघुकं २ 'मिश्रं' गुरुलघुकमिति ३ 'प्रतिषेधश्चैवोभयपक्षेऽपि' न गुरुकं नापि लघुकमित्यर्थः ४, एवं व्यवहारतश्चतुर्द्धा द्रव्यम्। 'तत्र पुनः' एतेषां मध्ये ये प्रथमद्वितीये पदे ते 'सर्वत्रापि' निश्चयनयमताश्रितेषु सूत्रेषु प्रतिषिद्धे। तथाहि स निश्चयनयो ब्रवीति-नास्त्येकान्तेन गुरुस्वभावं किमपि वस्तु, पराभिप्रायेण गुरुत्वेनाभ्युपगतस्यापि लेष्ट्वादेः परप्रयोगादूर्ध्वादि-गमनदर्शनात्; एवमेकान्तेन लघुस्वभावमपि नास्ति, अतिलघोरपि बाष्पादेः करताडनादिना अधोगमनादिदर्शनात्; तस्मादिदं [illegible] बादरं वस्तु तद् सर्वं गुरुलघु, शेषं तु सर्वमप्यगुरुलघुकमिति ॥ इदमेव व्यक्तीकुर्वन्नाह-

[भा.२६८६] जा तेयगं सरीरं, गुरुलहु दव्वाणि कायजोगो य।
मन-भासा अगुरुलहू, अरूविदव्वा य सव्वे वि ॥

वृ- औदारिकशरीरादारभ्य तैजसशरीरं यावद् यानि द्रव्याणि, यश्च तेषामेव सम्बन्धी 'काययोगः' शरीरव्यापारः एतत् सर्वं गुरुलघुकमिति निर्देश्यम्। यानि तु मनो-भाषाप्रायोग्याणि, उपलक्षणत्वाद् आनपान-कार्मणप्रायोग्याणि तदपान्तरालवर्तीनि च द्रव्याणि, यानि च सर्वाण्यपि धर्मा-ऽधर्मा-ऽऽकाश-जीवास्तिकायलक्षणान्यरूपिद्रव्याणि तदेतत् सर्वमगुरुलघुकमिति परिभाष्यम् ॥

[भा.२६८७] अहवा बायरबोंदी, कलेवरा गुरुलहू भवे सव्वे।
सुहुमानंतपदेसा, अगुरुलहू जाव परमाणू ॥

वृ- 'अथवा' इति प्रकारान्तरद्योतने। बादरा बोन्दि-शरीरं येषां ते 'बादरबोन्दयः' बादरनामकर्मोदयवर्त्तिनो जीवा इत्यर्थः, तेषां सम्बन्धीनि यानि कडेवराणि, यानि चापराण्यपि बादरपरिणामपरिणतानि भू-भूधरादीनि शक्रचाप-गन्धर्वपुरप्रभृतीनि वा वस्तूनि तानि सर्वाण्यपि गुरुलघून्युच्यन्ते। यानि तु सूक्ष्मनामकर्मोदयवर्त्तिनां जन्तूनां शरीराणि, यानि च सूक्ष्मपरि-णामपरिणतानि अनन्तप्रादेशिकादीनि परमाणुपुद्गलं यावद् द्रव्याणि तानि सर्वाण्यप्यगुरुलघूनि॥ दर्शितं निश्चयनयमतम् अथ व्यवहारनयमतमाह-

[भा.२६८८] ववहारनयं पप्प उ, गुरुया लहुया य मीसगा चेव।
लेट्ठुग पदीव मारुय, एवं जीवाण कम्माइं ॥

वृ- व्यवहारनयं पुनः 'प्राप्य' अङ्गीकृत्य त्रिविधानि द्रव्याणि भवन्ति, तद्यथा-गुरुकाणि लघुकानि 'मिश्रकाणि च' गुरुलघूनीत्यर्थः। तत्र यानि तिर्यगूर्ध्वं वा प्रक्षिप्तान्यपि स्वभावादेवाधो निपतन्ति तानि गुरुकाणि, यथा-लेष्टुप्रभृतीनि। यानि तूर्ध्वगतिस्वभावानि तानि लघुकानि, यथा-प्रदीपकलिकादीनि। यानि तु नाधोगतिस्वभावानि न वा ऊर्ध्वगतिस्वभावानि, किं तर्हि ? स्वभावादेव तिर्यग्गतिधर्मकाणि तानि गुरुलघूनि, यथा-'मारुतः' वायुस्तत्प्रभृतीनि। एवं जीवानां कर्माण्यपि त्रिधा भवन्ति-गुरूणि लघूनि गुरुलघूनि च। तत्र यैरमी जीवा अधोगतिं नीयन्ते तानि गुरुकाणि, यैस्तु त एवोर्ध्वगतिं प्राप्यन्ते तानि लघुकानि, यैः पुनस्तिर्यग्योनिकेषु वा मनुष्येषु वा गतिं कार्यन्ते तानि गुरुलघुकानीति ॥ तदेवं व्यवहारनयाभिप्रायेण समर्थितः कर्मणां गुरुत्व-लघुत्वपरिणामः। अथ परःप्राह- ननु जीवास्तावत् स्ववशा एव ज्ञानावरणादिकं कर्मोपचिन्वन्ति ततो गतिरपि तेषां स्ववशतया किं न प्रवर्त्तते ? यदेवं कर्मोदयबलादूर्ध्वमधस्तिर्यग् वा नीयन्ते ? उच्यते-

[भा.२६८९] कम्मं चिणंति सवसा, तस्सुदयम्मि उ परव्वसा होंति ।
रुक्खं दुरुहइ सवसो, विगलइ स परव्वसो तत्तो ॥

वृ-जीवाः 'स्ववशाः' स्वतन्त्रा एव मिथ्यात्वा-ऽविरत्यादिभिः कर्म 'चिन्वन्ति' बध्नन्तीत्यर्थः, परं 'तस्य' कर्मण उदये ते जीवाः परवशा भवन्ति । दृष्टान्तमाह-यथा कश्चित् पुरुषो वृक्ष मारोहन् 'स्ववशः' स्वाभिप्रायानुकूल्येनारोहति, स च कुतश्चिद् दुःप्रमादात् ततो विगलन् 'परवशः' स्वकाममन्तरेणैव विगलति ॥ आह यद्येवं ततः किं संसारिणो जीवाः सर्वथैव कर्मपरवशा एव ? उच्यते-नायमेकान्तः, यत आह-

[भा.२६९०] कम्मवसा खलु जीवा, जीववसाइं कहिंचि कम्माइं ।
कत्थइ धणिओ बलवं, धारणिओ कत्थई बलवं ।

वृ- कर्मवशाः खलु प्रायेणामी संसारिणो जीवाः, परं 'कुत्रचित्' प्रबलधृति-बलादिसद्भावे कर्माण्यपि जीववशानि । अमुमेवार्थं दृष्टान्तेन द्रढयति-यथा 'कुत्रचित्' जनपदादौ 'धनिकः' व्यवहारिको बलवान्, 'कुत्रचित् पुनः' प्रत्यन्तग्रामादौ 'धारणिकः' ऋणधारकोऽपि बलवान् । इयमत्र भावना-यदि जनपदमध्यवर्ती विद्यमानविभवो वा धारणिकस्तदा धनिको बलीयान्, अथ धारणिकः प्रत्यन्तग्रामे वा पल्लयां वा गत्वा स्थितः न वा तस्य तथाविधं किमपि द्रव्यमस्ति ततो धारणिको बलवान् भवति ॥ एष दृष्टान्तः । अथार्थोपनयमाह-

[भा.२६९१] धनियसरिसं तु कम्मं, धारणिगसमा उ कम्मिणो हिंति ।
संताऽसंतधना जह, धारणग धिई तनू एवं ॥

वृ- इह धनिकसदृशं कर्म, धारणिकसमानाः 'कर्मिणः' सकर्मका जीवा भवन्ति, सुख-दुःखो पभोगादिऋणधारकत्वात् तेषामिति भावः । यथा च 'सद्धनाः' विद्यमानविभवाः 'असद्धनाश्च' अविद्यमानविभवा धारणिका भवन्ति । तत्र च विद्यमानविभवे धारणिके धनिको यदि कार्यं भवति तदा राजकुलबलेन तं धारणिकं धृत्वा स्वल्पं द्रव्यं बलादपि गृह्णाति, स च धारणिकस्तस्मिन् द्रव्ये दत्ते सति अनृणीभवति अथासावविद्यमानविभवस्ततस्तेन धनिकेन स वशीक्रियते, वशीकृतश्च तत्पारतन्त्र्येण वर्त्तमानो दुस्सहं दासत्वादिमहादुःखोपनिपातमनुभवति । एवमत्रापि "धिइ"त्ति धृतिबलं "तनु"त्ति शारीरं च बलं विद्यमानविभवताकल्पमवसेयम् । इदमुक्तं भवति-यस्य जीवस्य वज्रकुड्यसमानं विशिष्टं मनःप्रणिधानबलं वर्जर्षभनाराचसंहननलक्षणं च शारीरंबलं भवति स धनिकसदृशं कर्म क्षपयित्वा सुखेनैवानृणीभवति; यस्य तु धृतिबलं शारीरबलं वा न भवति स तेन कर्मणा वशीक्रियते, वशीकृतश्च तत्परतन्त्रतया वर्त्तमानो विविधशारीर-मानसदुःखोपनिपातमनुभवति ॥ आह धृति-संहननबलोपेतो यत् कर्म क्षपयति तत् किमुदीर्णमनुदीर्णं वा क्षपयति ? इति उच्यते-

[भा.२६९२] सहणोऽसहणो कालं, जह धनिओ एवमेव कम्मं तु ।
उदिया-ऽनुदिए खवणा, होज्ज सिया आउवज्जेसु ॥

वृ- धनिको द्विधा-सहिष्णुसहिष्णुश्च । यः सहिष्णुः स विवक्षितं कालं प्रतीक्षते, इतरस्तु न प्रतीक्षते । एवमेव कर्मापि किञ्चित् स्वकालपूर्णं किञ्चित् पुनस्तामन्तरेणापि स्वविपाकं दर्शयतीति। एवमुदीर्णस्यानुदीर्णस्य वाकर्मणः क्षपणा धृति-संहननबलोपेतस्य भवेत्, "सिय" त्ति 'स्यात्'

कदाचित् कस्याप्येवं भवति न सर्वस्य । यस्तु संहनन-बलविहीनः स नवरमनुदीर्णं कर्म देशतः क्षपयेत् न सर्वतः "आउवज्जेसु" त्ति आयुःकर्मवर्जानां शेषकर्मणामनुदीर्णानामपि क्षपणं भवति, आयुषः पुनरुदीर्णस्यैव क्षपणमिति भावः । तदेवं धनिक-धारणिकदृष्टान्ते जीव-कर्मणोरुभयोरपि तुल्यमेव यथायोगं बलीयस्त्वं द्रष्टव्यम् । उक्तञ्च-

दृग्नाशो ब्रह्मदत्ते भरतनृपजयः सर्वनाशश्च कृष्णे
नीचैर्गोत्रावतारश्चरमजिनपतेर्मल्लिनाथेऽबलात्वम् ।
निर्वाणं नारदेऽपि पशमपरिणति सा चिलातीसुतेऽपि
इत्थं कर्मा-ऽऽत्मवीर्ये स्फुटमिह जयतां स्पर्द्धया तुल्यरूपे ॥

उक्तं सप्रपञ्चं भावाधिकरणम् । अथ कथं तदुत्पद्यते ? इत्याशङ्कावकाशमवलोक्य तदुत्थानकारणानि दर्शयति-

**[भा.२६९३]** सच्चित्ते अच्चित्ते, मीस वओगय परिहार देसकहा ।
सम्ममणाउट्टंते, अहिगरणमओ समुप्पज्जे ॥

**वृ-** 'सचित्ते' शैक्षादौ 'अचित्ते' वस्त्र-पात्रादौ 'मिश्रके' सभाण्ड-मात्रकोपकरणे शैक्षादावनाभाव्येऽपरेण गृह्यमाणे, तथा 'वचोगतं' व्यत्याम्रेडितादि तत्र वा विधीयमाने, परिहारः-स्थापना तदुपलक्षितानि यानि कुलानि तेषा वा प्रवेशे क्रियमाणे, देशकथायां वा विधीयमानायाम्, एतेषु स्थानेषु प्रतिनोदितो यदि सम्यग् नावर्त्तते-न प्रतिपद्यते अतोऽधिकरणमुत्पद्यते इति निर्युक्तिगाथासमासार्थः ॥ अथैनामेव विवृणोति-

**[भा.२६९४]** आभव्वमदेमाणे, गिण्हंत तहेव मग्गमाणे य ।
सच्चित्तेतरमीसे, वितहापडिवत्तिओ कलहो ॥

**वृ-** 'आभाव्यं नाम' शैक्षः शैक्षिका वा कस्याप्याचार्यस्योपतस्थे 'युष्मदन्तिके प्रव्रज्यां गृह्णामि' इति । तमुपस्थितं मत्वा विपरिणमय्य परः कश्चिदाचार्यो गृह्णाति ततो मौलाचार्यो ब्रवीति-किमेवं मदीयमाभाव्यं गृह्णासि ?, पूर्वगृहीतं वा शैक्षादिकं याचितः-मदीयमाभाव्यं किं न प्रयच्छसि ? इति । एवमाभाव्यं सचित्तम् 'इतरद्' अचित्तं मिश्रं वा तत्कालं गृह्यमाणं पूर्वगृहीतं वा मार्ग्यमाणमपि यदा वितथप्रतिपत्तितो न ददाति तदा कलहो भवति । वितथप्रतिपत्तिर्नाम-परस्याभाव्यमपि शैक्षादिकमनाभाव्यतया प्रतिपद्यते ॥ वचोगतद्वारमाह-

**[भा.२६९५]** विच्चामेलण सुत्ते, देसीभासा पवंचने चेव ।
अन्नम्मि य वत्तव्वे, हीनाहिय अक्खरे चेव ॥

**वृ-** 'सूत्रे' सूत्रविषया या 'व्यत्याम्रेडना' अपरापरोद्देशका-ऽध्ययन-श्रुतस्कन्धेषु घटमान-कानामालापक-श्लोकादीनां योजना, यथा-"सव्वजीवा वि इच्छंति, जीविउं न मरिज्जिउं" इत्यत्र इदमप्यालापकपदं घटते "सव्वे पाणा पियाउया" इत्यादि । तथाभूतं सूत्रं परावर्त्तयन् 'किमेवं सूत्रं व्यत्याम्रेडयसि ?' इति प्रतिनोदितो यदि न प्रतिपद्यते तदाऽधिकरणं भवति । देशीभाषा नाम-मरु-मालव-महाराष्ट्रादिदेशानां भाषा तामन्त्रयत्र देशान्तरे भषमाण उपहस्यते, उपहस्यमानश्चासङ्खडं करोति । यद्वा प्रपञ्चनं वचनानुकारेण वा चेष्टानुकारेण वा कोऽपि करोति ततः प्रपञ्चयमानसाधुना सहाधिकरणमुत्पद्यते । अन्यस्मिन् वा वक्तव्ये कोऽप्यन्यद् वक्ति।

यद्वा हीनाक्षरमधिकाक्षरं वा पदं वक्ति। तत्र हीनाक्षरम्-भास्कर इति वक्तव्ये भाकर इति वक्ति, अधिकाक्षरम्-सुवर्णमिति वक्तव्ये सुसुवर्णमिति ब्रवीति ॥ परिहारिकद्वारमाह-

[भा.२६९६] परिहारियमठवेंते, ठवियमणट्ठाए निव्विसंते वा।
कुच्छियकुले व पविसइ, चोइयऽनाउट्टणे कलहो ॥

वृ- गुरु-ग्लान-बालादीनां यत्र प्रायोग्यं लभ्यते तानि कुलानि परिहारिकाण्युच्यन्ते, एकं गीतार्थसङ्घाटकं मुक्त्वा शेषसङ्घाटकानां परिहारमर्हन्तीति व्युत्पत्तेः। तानि यदि न स्थापयति, स्थापितानि वा 'अनर्थं' निष्कारणं 'निर्विशति' प्रविशतीत्यर्थः, यद्वा 'परिहारिकाणि नाम' कुत्सितानि जात्यादिजुगुप्सितानीति भावः, तेषु कुलेषु प्रविशति। एतेषु स्थानेषु नोदितो यदि नावर्त्तते न वा तेषु प्रवेशादुपरमते ततः कलहो भवति ॥ देशकथाद्वारमाह-

[भा.२६९७] देसकहापरिकहणे, एक्के एक्के व देसरागम्मि।
मा कर देसकहं ति य, चोइय अठियम्मि अहिगरणं ॥

वृ-देशकथाया उपलक्षणत्वाद् भक्त-स्त्री-राजकथानां च परिकथनं कुर्वाणो द्वितीयेन साधुना नोदितः-मा देशादिकथां कार्षी, न वर्त्तते साधूनामीदृशीं कथां कथयितुम्। स प्राह-कोऽसि त्वं येनैवं मां वारयसि ?। तथापि 'अस्थिते' अनुपरते सत्यधिकरणं भवति। यद्वा "एक्के एक्के व देसरागम्मि"त्ति एकः साधुः सुराष्ट्रं वर्णयति, यथा-रमणीयः सुराष्ट्रविषयः; द्वितीयः प्राह-कूपमण्डूकस्त्वम्, किं जानासि ? दक्षिणापथ एव प्रधानो देशः; एवमेकैकदेशरागेणोत्तरप्रत्युत्तरिकां कुर्वाणयोस्तयोरधिकरणं भवति ॥ एवमुत्पन्नेऽधिकरणे किं कर्त्तव्यम् ? इत्याह-

[भा.२६९८] जो जस्स उ उवसमई, विज्झवणं तस्स तेन कायव्वं।
जो उ उवेहं कुज्जा, आवज्जइ मासियं लहुगं ॥

वृ-यः साधुर्यस्य साधोः प्रज्ञापनयोपशाम्यति तस्य तेन साधुना 'विध्यापनं' क्रोधाग्निनिर्वापणं कर्त्तव्यम्। यः पुनः साधुरुपेक्षां कुर्यात् स आपद्यते मासिक लघुकम् ॥

[भा.२६९९] लहुओ उ उवेहाए, गुरुओ सो चेव उवहसंतस्स।
उत्तुयमाणे लहुगा, सहायगत्ते सरिसदोसो ॥

वृ- उपेक्षां कुर्वाणस्य लघुको मासः प्रायश्चित्तम्। उपहसतः स एव मासो गुरुकः। अथ उत्प्राबल्येन तुदति उत्तुदति-अधिकरणं कुर्वन्तं विशेषत उत्तेजयतीत्यर्थः ततश्चत्वारो लघुकाः। अथ कलहं कुर्वतः 'सहायकत्वं' साहाय्यं करोति ततोऽसावधिकरणकृता सह सदृशदोष इति कृत्वा सदृशं प्रायश्चित्तमापद्यते, चतुर्गुरुकमित्यर्थः ॥ तथा चाह-

[भा.२७००] चउरो चउगुरु अहवा, विसेसिया होंति भिक्खुमाईणं।
अहवा चउगुरुगादी, हवंति ऊ छेद निट्ठवणा ॥

वृ-भिक्षु-वृषभोपाध्याया-ऽऽचार्णामधिकरणं कुर्वतां प्रत्येकं चतुर्गुरुकम्, ततश्चत्वारश्चतुर्गुरुका भवन्ति। अथवा त एव चतुर्गुरुकास्तपः-कालविशेषिता भवन्ति, तद्यथा-भिक्षोश्चतुर्गुरुकं तपसा कालेन च लघुकम्, वृषभस्य तदेव कालगुरुकम्, उपाध्यायस्य तपोगुरुकम्, आचार्यस्य तपसा कालेन च गुरुकम्। अथवा चतुर्गुरुकादारभ्य छेदे निष्ठापना कर्त्तव्या, तद्यथा- भिक्षुरधिकरणं करोति चतुर्गुरुकम्, वृषभस्य षड्लघुकम्, उपाध्यायस्य षड्गुरुकम्, आचार्यस्याधिकरणं कुर्वाणस्य

च्छेद इति। यथा चाधिकरणकरणे आदेशत्रयेण प्रायश्चित्तमुक्तं तथा साहाय्यकरणेऽपि द्रष्टव्यम्, समानदोषत्वात् ॥ अथोपेक्षाव्याख्यानमाह-

[भा.२७०१] परपत्तिया न किरिया, मोत्तु परट्ठं च जयसु आयट्ठे।
अवि य उवेहा वुत्ता, गुणो वि दोसो हवइ एवं ॥

वृ- इहाधिकरणं कुर्वतो दृष्ट्वा माध्यस्थ्यभावेन तिष्ठन् अन्येषामप्युपदेशं प्रयच्छति-परप्रत्यया या 'क्रिया' कर्मबन्धः सा अस्माकं न भवति, परकृतस्य कर्मण आत्मनि सङ्क्रमाभावात्। तथा यद्येतावधिकरणकरणादुपशाम्येते ततः परार्थ कृतो भवति। तं च परार्थं मुक्त्वा यदि मोक्षार्थिनस्तदा 'आत्मार्थ एव' स्वाध्याय-ध्यानादिके 'यतध्वं' प्रयत्नं कुरुत । अपि चेत्यभ्युच्चये। ओधनिर्युक्तिशास्त्रेऽप्युपेक्षा संयमाङ्गतया प्रोक्ता, "उवेहित्ता संजमो वुत्तो" (पेहेत्ता संजमो वुत्तो, उवेहित्ता वि संजमो) । इति वचनात्। यद्वा "मैत्री-प्रमोद-कारुण्य-माध्यस्थ्यानि सत्त्व-गुणाधिक-क्लिश्यमाना-ऽविनेयेषु" इति वचनाद् अविनेयेषु माध्यस्थ्यापरपर्याया उपेक्षैव प्रोक्ता, ततः सैव साधूनां कर्त्तुमुचितेति भावः। अत्र सूरिराह-"गुणो वि दोसो हवइ एवं" ति यदिदमविनेयेषु माध्यस्थ्यमुपदिष्टं तदसंयतापेक्षया न पुनः संयतानङ्गीकृत्य; यस्मादसंयतेष्वियमुपेक्षा क्रियमाणा गुणः, संयतेषु तु क्रियमाणा महान् दोषो भवति। उक्तञ्चौघनिर्युक्तावपि- संजयगिहिचोयणऽचोयणे य वावारओवेहा। अथ "परपत्तिया न किरिय"त्ति पदं भावयति-

[भा.२७०२] जइ परोपडिसेविज्जा, पावियं पडिसेवणं।
मज्झ मोनं चरंतस्स, के अट्ठे परिहायई ॥

वृ- यदि 'परः' आत्मव्यतिरिक्तः 'पापिकाम्' अकुशलकर्मरूपामधिकरणादिकां प्रतिसेवनां प्रतिसेवेत ततो मम मौनमाचरतः को नाम ज्ञानादीनां मध्यादर्थः परिहीयत? न कोऽपीत्यर्थः ॥ अथ "मोत्तु परट्ठं च जयसु आयट्ठे" इति पदं व्याचष्टे-

[भा.२७०३] आयट्ठे उवउत्ता, मा य परट्ठम्मि वावडा होह।
हंदि परट्ठाउत्ता, आयट्ठविणासगा होंति ॥

वृ- आत्मार्थो नाम-ज्ञान-दर्शन-चारित्ररूपं पारमार्थिकं स्वकार्यं तत्रोपयुक्ता भवत, मा च 'परार्थे' परकार्येऽधिकरमोपशमनादौ व्यापृता भवत। हन्दीति हेतूपदर्शने। यस्मात् परार्थायुक्ता 'आत्मार्थविनाशकाः' स्वाध्याय-धानाद्यात्मकार्यपरिमन्थकारिणो भवन्ति ॥ गतमुपेक्षाद्वारम्। अथोपहसनोत्तेजनाद्वारे युगपद् व्याचष्टे-

[भा.२७०४] एसो वि ताव दम्मउ, हसइ व तस्सोमयाए ओहसना।
उत्तरदानं मा ओसराहि अह होइ उत्तुअणा ॥

वृ- द्वयोरधिकरणं कुर्वतोरेकस्मिन् सीदति आचार्योऽन्यो वा ब्रवीति-एषोऽपि तावददान्तपूर्वोदम्यतामिदानीमनेन; यदि वा-तस्य 'अवमतायां' पश्चात्करणे इत्यर्थः स्वयमट्टट्टहासैरुपहसति, एतदुपहसनमुच्यते। तथा तयोर्मध्याद् यः सीदति तस्य 'उत्तरदानं' अमुकममुकं च ब्रूहि इत्येवं शिक्षापणम्; यद्वा-माऽमुष्मादपसरस्त्वम्, दृढीभूय तथा लग यथा नैतेन पराजीयसे, अथैषोत्तेजनाऽभिधीयते ॥ अथ सहायकत्वं व्याख्यानयति-

[भा.२७०५] वायाए हत्थेहि व, पाएहि व दंत-लउडमादीहिं।

जो कुणइ सहायत्तं, समानदोसं तयं बेंति ॥

वृ- द्वयोः कलहायमानयोर्मध्यादेकस्य पक्ष भूत्वा यः कोऽपि वाचा हस्ताभ्यां वा पद्भ्यां वा दन्तैर्वा लगुडादिभिर्वा 'सहायत्वं' साहाय्यं करोति तं तेनाधिकरणकारिणा सह समानदोषं तीर्थकरादयो ब्रुवते ॥ अथाचार्याणामुपेक्षां कुर्वाणानां सामान्येन वाऽधिकरणेऽमुपशाम्यमाने दोषदर्शनार्थमिदमुदाहरणमुच्यते- अरन्नमज्झे एगं अगाहजलं सव्वतो वणसंडमंडियं महंतं सरं अत्थि । तत्थ य बहूणि जलचर-थलचर-खहचरसत्ताणि अच्छंति । तत्थ एगं महल्लं हत्थिजूहं परिवसइ । अन्नया य गिम्हकाले तं हत्थिजूहं पानियं पाउं ण्हाउत्तिन्नं मज्झण्ह देसकाले सीयलरुक्खच्छायाए सुहंसुहेणं चिट्ठइ । तत्थ य अदूरदेसे दो सरडा भंडिउमारद्धा । वणदेवयाए अ ते दट्ठुं सव्वेसिं सभासाए आघोसियं । किं तत् ? इत्याह-

[भा.२७०६] नागा ! जलवासीया !, सुणेह तस-थावरा ! ।
सरडा जत्थ भंडंति, अभावो परियत्तई ॥

वृ- 'भो नागाः !' हस्तिनः ! तथा 'जलवासिनः !' मत्स्य-कच्छपादयः ! अपर च ये त्रसाः ! मृग-पशु-पक्षिप्रभृतयः ! स्थावराश्च-सहकारादयो वृक्षाः ! एते सर्वेऽपि यूयं श्रृणुत मदीयं वचनम्-यत्र सरसि सरटौ 'भण्डतः' कलहं कुरुतः तस्य 'अभावः परिवर्त्तते' विनाशः सम्भाव्यत इति भावः ॥ ता मा एते सरडे भंडंते उवेक्खह, वारेह तुब्भे । एवं भणिया वि ते जलचराइणो चिंतंति- किं अम्हं एते सरडा भंडंता काहिंति ? । तत्थ य एगो सरडो भंडंतो पिल्लितो । सो धाडिज्जंतो सुहपसुत्तस्स एगस्स जूहहिवस्स हत्थिस्स 'विलं' ति काउं नासापुडं पविट्ठो । बिइओ वि तस्स पिट्ठओ चे पविट्ठो । ते सिरकवाले जुद्धं संपलग्गा । तस्स हत्थिस्स महंती अरई जाया । तओ वेयणट्टो महईए असमाहीए वट्टमाणो उट्ठेत्ता तं वणसंडं चूरेइ, बहवे तत्थ विस्संता सत्ता घाइया, जलं च आडोहिंतेण जलचरा घाइया, तलागपाली य भेइया, तलागं विणट्ठं, ताहे जलचरा वि सव्वे बिनट्ठा ॥ अमुमेवार्थमाह–

[भा.२७०७] वनसंड सरे जल-थल-खहचर वीसमण देवया कहणं ।
वारेह सरडुवेक्खण, धाडण गयनास चूरणया ॥

वृ- वनखण्डमण्डिते सरसि जलचर-स्थलचर-खचराणां विश्रमणम् । तत्र च सरडभण्डनं दृष्ट्वा वनदेवतया "नागा ! जलवासीया !" इत्यादि श्लोककथनं कृत्वा "वारयत सरटौ कलहायमानौ" इत्युपदिष्टम् । ततश्च तैर्नागादिभि सरटयोरुपेक्षणं कृतम् । एकस्य च सरटस्य द्वितीयेन घाटनम् । ततोऽसौ घाट्यमानो गजनासापुटं प्रविष्टवान् । तत्पृष्ठतो द्वितीयेऽपि प्रविष्टे तयोश्च युद्धे लग्ने महावेदनार्त्तेन हस्तिना वनखण्डस्य चूर्णं कृतमिति । एष दृष्टान्तः, अयमर्थोपनयः- यथा तेषामुपेक्षमाणानां तत् पद्मसरः सर्वेषामप्याश्रयभूतं विनष्टम्, तस्मिंश्च विनश्यमाने तेऽपि विनष्टाः, एवमत्राप्याचार्यादीनामुपेक्षमाणानां महान् दोष उपजायते । कथम् ? इति चेद् उच्यते- इह तावधिकरणकारिणावुपेक्षितौ परस्परं मुष्टामुष्टि वा दण्डादण्डि वा युध्येताम्, ततश्च परम्परया राजकुलज्ञाते सञ्जाते सति स राजादिस्तेषां साधूनां बन्धनं वा ग्राम-नगरादेर्निष्काशनं वा कटकमर्द वा कुर्यात् ॥ किञ्चान्यत्–

[भा.२७०८] तावो भेदो अयसो, हानी दंसण-चरित्त-नाणाणं ।

साहुपदोसो संसारवड्ढणो साहिकरणस्स ॥

वृ- तापो भेदोऽयशो हानिर्दर्शन-ज्ञान-चारित्राणां तथा साधुप्रद्वेषः संसारवर्द्धनो भवति । एते साधिकरणस्य दोषा भवन्तीति निर्युक्तिगाथा समासार्थः ॥ अथैनामेव गाथां विवृणोति-

[भा.२७०९] अइभणिय अभणिए वा, तावो भेदो उ जीव चरणे वा ।
रूवसरिसं न सीलं, जिम्हं व मने अयस एवं ॥

वृ- तापो द्विधा-प्रशस्तोऽप्रशस्तश्च । तत्रातिभणिते सति चिन्तयति-धिग् मां येन तदानीं स साधुर्बहुविधैरसभ्याख्यानैरभ्याख्यातः इत्थमित्थं चाक्रुष्टः, एष प्रशस्तस्ताप उच्यते । अथ अभणितं-न तथाविधं किमपि तस्य सम्मुखं भणितं ततश्चिन्तयति-हा ! मन्दभाग्यो विस्मरणशीलोऽहं यद् मया तदीयं जात्यादिमर्मनिकुरुम्बं न प्रकाशितम्, एष अप्रशस्तस्तापो मन्तव्यः । तथा 'भेदो नाम' कलहं कृत्वा जीवितभेदं चरणभेदं वा कुर्यु, पश्चात्तापतप्तचेतसो वैहायसादिमरणमभ्युपगच्छेयुः उन्निष्क्रमणं वा कुर्युरिति भावः । तथा लोको ब्रूयात्-अहो ! अमीषां श्रमणानां 'रूपसदृशं' यादृशं बहिः प्रशान्ताकारं रूपमवलोक्यते तादृशं 'शीलं' मनःप्रणिधानं नास्ति । यद्वा-किं मन्ये 'जिह्मं' लज्जनीयं किमप्यनेन कृतं येनैवं प्रम्लानवदनो दृश्यते ? । एवमादिकमयशः समुच्छलति ॥

[भा.२७१०] अक्कुट्ठ तालिए वा, पक्खापक्खि कलहम्मि गणभेदो ।
एगयर सूयएहि य, रायादीसिट्ठे गहणादी ॥

वृ- जकार-मकारादिभिर्वचनैराक्रुष्टे 'ताडिते वा' चपेटा-दण्डादिभिराहते सति 'पक्षापक्षि' परस्परपक्षपरिग्रहेण साधूनां कलहे जाते सति गणभेदो भवति । तथा तयोः पक्षयोर्मध्यादेकतरपक्षेण राजकुलं गत्वा 'शिष्टे' कथिते सति 'सूचकैर्वा' राजपुरुषविशेषै राजादीनां ज्ञापिते ग्रहणा-ऽऽकर्षणादयो दोषा भवन्ति ॥

[भा.२७११] वत्तकलहो वि न पढइ, अवच्छलत्ते य दंसणे हानी ।
जह कोहाइविवड्ढी, तह हानी होइ चरणे वि ॥

वृ- 'वृत्तकलहोऽपि' कलहकरणोत्तरकालमपि कषायकलुषितः पश्चात्तापतप्तमानसो वा यन्न पठति एषा ज्ञानपरिहाणिः । साधुप्रद्वेषतः साधर्मिकवात्सल्यं विराधितं भवति, अवात्सल्ये च दर्शनपरिहानिः । यथा च क्रोधादीनां कषायाणां वृद्धिस्तथा 'चरणेऽपि' चारित्रस्य परिहानिर्भवति, विशुद्धसंयमस्थानप्रतिपातेनाविशुद्धसंयमस्थानेषु गमनं भवतीत्यर्थः ॥ एतच्च व्यवहारमा-श्रित्योक्तम् । निश्चयतस्तु-

[भा.२७१२] अकसायं खु चरित्तं, कसायसहितो न संजओ होइ ।
साहूण पदोसेन य, संसारं सो विवड्ढेइ ॥

वृ- खुशब्दस्यैवकारार्थत्वाद् 'अकषायमेव' कषायविरहितमेव चारित्रं भगवद्भिः प्रज्ञप्तम् । अतो निश्चयनयाभिप्रायेण कषायसहितः संयत एव न भवति, चारित्रशून्यत्वात् । तथा साधूनामुपरि यः प्रद्वेषस्तेनासौ साधिकरणः सन् संसारं वर्द्धयति, दीर्घतरं करोतीति भावः । यत एते दोषास्तत उपेक्षा न विधेया ॥ किं पुनस्तर्हि कर्त्तव्यम् ? इत्याह-

[भा.२७१३] आगाढे अहिगरणे, उवसम अवकड्ढणा य गुरुवयणं ।
उवसमह कुणह ज्झायं, छड्डणया सागपत्तेहिं ॥

वृ- 'आगाढे' कर्कशेऽधिकरणे उत्पन्ने सति द्वयोरप्युपशमः कर्त्तव्यः । कथम् ? इत्याह- कलहायमानयोस्तयोः पार्श्वस्थितैः साधुभिः 'अपकर्षणम्' अपसारणं कर्त्तव्यम् । गुरुभिश्चोप- शमनार्थमिदं वचनमभिधातव्यम्-आर्या ! उपशाम्यतोपशाम्यत, गाथायामनुक्तमपि द्विर्वचनं प्रक्रमाद् दृश्यम्, अनुपशान्तानां कुतः संयमः ? कुतो वा स्वाध्यायः ?, तस्मादुपशमं कृत्वा स्वाध्यायं कुरुत, किमेवं द्रमकवत् कनकरसस्य शाकपत्रैः 'छर्दनां' परित्यागं कुरुथ ? ॥

कः पुनरयं द्रमकः ? उच्यते- जहा एगो परिव्वायगो दमगपुरिसं चिन्तासोगसागरावगाढं पासत्ति, पुच्छति य-किमेवं चिंतापरो ? । तेन से सब्भावो कहितो 'दारिद्दाभिभूतो मि'त्ति । तेन भणितं-इस्सरं तुमं करेमि, जतो नेमि ततो गच्छाहि, जं च भणामि तं सव्वं कायव्वं । ताहे ते संबलं घेत्तुं पव्वयनिगुंजं पविट्ठा । परिव्वायगेण य भणितो-एस कणगरसो सीत-वाता-ऽऽतव-परिस्समं अगणिन्तेहिं तिसा-खुधावेयणं सहंतेहिं बंभचारीहिं अचित्तकंद-मूल-पत्त-पुप्फ-फलाहारीहिं समीपत्तपुडएहिं भावतो अरुस्समाणेहिं घेत्तव्वो, एस से उवचारो । तेन दमगेन सो कनगरसो उवचारेण गहितो, तुंबयं भरितं । ततो निग्गता । तेन परिव्वायगेण भणितं-सुरुट्ठेण वि तुमे एस सागपत्तेन न छड्डियव्वो । ततो सो परिव्वायगो गच्छंतो तं दमगपुरिसं पुनो पुनो भणइ-मम पभावेण ईसरो भविस्ससि । सो य पुनो पुनो भन्नमाणो रुट्ठो भणति-जं तुज्झ पसाएण ईसरत्तणं तेन मे न कज्जं । तं कनगरसं सागपत्तेन छड्डेति । ताहे परिव्वायगेण भन्नति-हा हा दुरात्मन् ! किमेयं तुमे कयं ? ।

[भा.२७१४]     जं अज्जियं समीखल्लएहिं तव-नियम-बंभमइएहिं ।
तं दानि पच्छ नाहिसि, छड्डिंतो सागपत्तेहिं ॥

वृ- यदर्जितं शमीसम्बन्धिभिः खल्लकैः-पत्रपुटैस्तपो-नियम-ब्रह्मयुक्तैः तदिदानीं शाकपत्रैः परित्यजन् 'पश्चात्' परित्यागकालादूर्ध्वं परितप्यमानो ज्ञास्यसि, यथा-दुष्टु मया कृतं यच्चिरसञ्चितः कनकरसः शाकपत्रैरुत्सिच्य परित्यक्तः । एवं परिव्राजकेण द्रमक उपालब्धः । अथाचार्यस्ता- वधिकरणकारिणावुपालभते-आर्या ! यच्चारित्रं कनकरसस्थानीयं तपो-नियम-ब्रह्मचर्यमयैः शमीखल्लकैरर्जितं परीषहोपसर्गादिश्रममगणयद्भिश्चिरात् कथं कथमपि मीलितं तदिदानीं शाकपत्रसदृशैः कषायैः परित्यजन्तः पश्चात् परितप्यमानाः स्वयमेव ज्ञास्यथ । यथा-हा ! बहु- कालोपार्जितेन संयमकनकरसेन तुम्बकस्थानीयं स्वजीवं बहुपूर्णं कृत्वा पश्चात् कलहायमानैः शाकवृक्षपत्रस्थानीयैः कषायैरुत्सिच्योत्सिच्यायमात्मा रिक्तीकृतः, शिरस्तुण्डमुण्डनादिश्च प्रव्रज्याप्रयासो मुधैव विहित इति ॥ आह कथमेकमुहूर्त्तभाविनाऽपि क्रोधादिना चिरसञ्चितं चारित्रं क्षयमुपनीयते ? उच्यते-

[भा.२७१५]     जं अज्जियं चरित्तं, देसूनाए वि पुव्वकोडीए ।
तं पि कसाइयमेत्तो, नासेइ नरो मुहुत्तेण ॥

वृ- यदर्जितं चारित्रं 'देशोनयाऽपि' अष्टवर्षन्यूनयाऽपि पूर्वकोट्या तदपि, आस्तामल्पतर- कालोपार्जितमित्यपिशब्दार्थ, 'कषायितमात्रः' उदीर्णमात्रक्रोधादिकषाय इत्यर्थः 'नाशयति' हारयति 'नरः' पुरुषः 'मुहूर्त्तेन' अन्तर्मुहूर्त्तेनेति भावः । यथा प्रभूतकालसञ्चितोऽपि महान् तृणराशि सकृत्प्रज्वालितेनाप्यग्निना सकलोऽपि भस्मसाद् भवति, एवं क्रोधानलेनापि सकृदुदीरितेन चिरसञ्चितं चारित्रमपि भस्मीभवतीति हृदयम् ॥ एवमाचार्येण सामान्यतस्त-

योरनुशिष्टिर्दातव्या, न त्वेकमेव कश्चन विशेष्य भणनीयम् ! यत आह-

[भा.२७१६] आयरिय एगु न भणे, अह एगु निवारि मासियं लहुगं ।
राग-द्दोसविमुक्को, सीयघरसमो उ आयरिओ ॥

वृ- आचार्यो नैकमधिकरणकारिणं 'भणति' अनुशास्ति । अथाचार्य एकमेव 'निवारयति' अनुशास्ति न द्वितीयं ततो मासिकं लघुकमापद्यते, असामाचारीनिष्पन्नमिति भावः । तस्मादाचार्यो राग-द्वेषविमुक्तः शीतगृहसमो भवेत् । शीतगृहं नाम-वर्द्धकिरत्ननिर्मितं चक्रवर्तिगृहम्, तच्च वर्षासु निवातप्रवातं शकाले सोष्मं ग्रीष्मकाले शीतलम् । यथा च तच्चक्रवर्तिनः सर्वर्त्तुक्षमं तथा द्रमकादेरपि प्राकृतपुरुषस्य तत् सर्वर्त्तुक्षममेव भवति, एवमाचार्यैरपि निर्विशेषैर्भवितव्यम् ॥

अथ विशेषं करोति तत इमे दोषाः-

[भा.२७१७] वारेइ एस एवं, ममं न वारेइ पक्खरागेणं ।
बाहिरभावं गाढतरगं च मं पेक्खसी एक्कं ॥

वृ- एष आचार्यः 'आलीयोऽयम्' इति बुध्या अमुं वारयति, मां तु परबुध्या पश्यन्न वारयति, एवं पक्षरागेण क्रियमाणेन अननुशिष्यमाणः साधुर्बाह्यभावं गच्छति । यद्वा सोऽननुशिष्यमाणो गाढतरमधिकरणं कुर्यात् । अथवा तमाचार्यं परिस्फुटमेव ब्रूयात्-त्वं मामेवैकं बाह्यतया प्रेक्षसे । ततश्चात्मानमुद्बध्य यदि मारयति तत आचार्यस्य पाराञ्चिकम् । अथोन्निष्क्रामति ततो मूलम् । तस्माद् द्वावप्यनुशासनीयौ ॥ अनुशिष्टौ च यद्युपशान्तौ ततः सुन्दरम् । अथैक उपशान्तो न द्वितीयः, तेन चोपशान्तेन गत्वा स स्वापराधप्रतिपत्तिपुरस्सरं क्षामितः परमसौ नोपशाम्यति । आह कथमेतदसौ जानाति यथाऽयं नोपशान्तः ? उच्यते-यदा वन्द्यमानोऽपि न वन्दनकं प्रतीच्छति, यदि वाऽवमरत्नाधिकोऽसौ ततस्तं रत्नाधिकं न वन्दते, आद्रियमाणोऽपि वा नाद्रियते । एवं तमनुपशान्तमुपलक्ष्य ततोऽसौ किं करोति ? इत्याह-

[भा.२७१८] उवसंतोऽनुवसंतं, तुपासिया विन्नवेइ आयरियं ।
तस्स उ पन्नवणट्ठा, निक्खेवो परे इमो होइ ॥

वृ- उपशान्तः साधुरनुपशान्तमपरं दृष्ट्वाऽऽचार्यं विज्ञपयति-क्षमाश्रमणाः ! उपशान्तोऽहम् परमेष ज्येष्ठार्योऽमुको वा नोपशाम्यति । तत आचार्यास्तस्य प्रज्ञापनार्थं परनिक्षेपं कुर्वन्ति । स च परनिक्षेपः 'अयं' वक्ष्यमाणो भवति ॥ तमेवाह-

[भा.२७१९] नामं ठवणा दविए, खेत्ते काले तदन्नमन्ने अ ।
आएस कम बहु पहाण भावओ उ परो होइ ॥

वृ- नामपरः स्थापनापरो द्रव्यपरः क्षेत्रपरः कालपरः । एते च द्रव्यपरादयः प्रत्येकं द्विधा, तद्यथा-''तदन्नमन्ने य''त्ति तद्द्रव्यान्योऽन्यद्रव्यान्यश्च, तद्द्रव्यपरोऽन्यद्रव्यपरश्चेत्यर्थः । एवं तत्क्षेत्रपरोऽन्यक्षेत्रपरश्च, तत्कालपरोऽन्यकालपरश्च । तथाऽऽदेशपरः क्रमपरो बहुपरः प्रधानपरो भावपरश्चेति दशधा मूलभेदापेक्षया परनिक्षेपो भवतीति निर्युक्तिगाथासमासार्थः ॥ अथास्या एव भाष्यकारो व्याख्यां कर्तुकामो नाम-स्थापने क्षुण्णत्वादनादृत्य ज्ञशरीर-भव्यशरीरव्यतिरिक्तं द्रव्यपरं तावदाह-

[भा.२७२०] परमाणुपुग्गलो खलु, तद्दव्वपरो भवे अनुस्सेव ।

अन्नदव्वपरो खलु, दुपएसियमाइणो तस्स ॥

वृ- द्रव्यपरो द्विधा, तद्यथा-तद्द्रव्यपरोऽन्यद्रव्यपरश्च । तत्र 'अणोः' परमाणु पुद्गलस्यापरः परमाणुपुद्गलः परतया चिन्त्यमानस्तद्द्रव्यपरो भवति । 'तस्यैव' परमाणुपुद्गलस्य द्विप्रदेशिकादयः स्कन्धाः परतया चिन्त्यमाना अन्यद्रव्यपरा भवन्ति ॥

[भा.२७२१] एमेव य खंधाण वि, तद्दव्वपरा उ तुल्लसंघाया ।
जे उ अतुल्लपएसा, अणू य तस्सऽन्नदव्वपरा ॥

वृ- 'एवमेव च' परमाणुपुद्गलवद् द्व्यणुकप्रभृतीनां स्कन्धानामपि ये 'तुल्यसङ्घाताः' परस्परं समानप्रदेशसङ्ख्याकाः स्कन्धास्ते तद्द्रव्यपराः, ये पुनः 'अतुल्यप्रदेशाः' विसदृशप्रदेशसङ्ख्याकाः स्कन्धाः 'अणवश्च' एकाणुकास्ते सर्वेऽप्यन्यद्रव्यपरा भवन्ति । तद्यथा-द्व्यणुकस्कन्धो द्व्यणुकस्कन्धस्य तद्द्रव्यपरः, त्र्यणुकादयस्तु स्कन्धाः परमाणवश्च तस्यान्यद्रव्यपराः; एवं त्र्यणुकादयोऽप्यनन्ताणुकपर्यन्ताः स्कन्धाः परस्परं तुल्यप्रदेशसङ्ख्याकास्तद्द्रव्यपराः, विसदृशप्रदेशसङ्ख्याकास्त्वन्यद्रव्यपरा मन्तव्याः, यावत् सर्वोत्कृष्टाणुको महास्कन्धः ॥

अथ क्षेत्र-कालपरौ प्रतिपादयति-

[भा.२७२२] एगपएसोगाढादि खेत्ते एमेव जा असंखेज्जा ।
एगसमयाइठिइणो, कालम्मि वि जा असंखेज्जा ॥

वृ- 'क्षेत्रे' क्षेत्रविषयेऽपि परद्वारे चिन्त्यमाने 'एवमेव' तत्क्षेत्रपरा-ऽन्यक्षेत्रपरभेदेन पुद्गला एकप्रदेशावगाढादयोऽसङ्ख्येयप्रदेशावगाढं यावद् द्रष्टव्याः । तद्यथा-एकप्रदेशावगाढः परमाणुः स्कन्धो वा एकप्रदेशावगाढस्य तत्क्षेत्रपरः, द्वित्रिप्रदेशावगाढादयः पुनस्तस्यान्यक्षेत्रपराः; तथा द्विप्रदेशावगाढः स्कन्धो द्विप्रदेशावगाढस्य स्कन्धस्य तत्क्षेत्रपरः, एकत्र्यादिप्रदेशावगाढास्तु तस्यान्यक्षेत्रपराः; एवं विस्तरेण सर्वाऽवगाहना द्रष्टव्या । कालेऽप्येकसमयादिस्थितयः पुद्गला यावदसङ्ख्येयसमयस्थितयस्तावत् तत्कालपरा-ऽन्यकालपरभेदाद्वक्तव्याः-तत्रैकसमयस्थितिकानां पुद्गलानामेकसमयस्थितिकास्तत्कालपराः, द्वित्र्यादिसमयस्थितिकाः पुनरन्यकालपराः; एवं यावदसङ्ख्येयोत्सर्पिण्यवसर्पिणीगतासङ्ख्येयसमयस्थितिकानां पुद्गलानां तावत्सङ्ख्याकसमयस्थितिका एव तत्कालपराः, शेषास्त्वेकसमयस्थितिकादयः सर्वेऽप्यन्यकालपरा अवसातव्याः ॥

अथादेशपरं व्याचष्टे-

[भा.२७२३] भोअण-पेसणमादीसु एगखित्तट्ठियं तु जं पच्छा ।
आदिसइ भुंज कुणसु व, आएसपरो हवइ एस ॥

वृ- भोजनं-प्रतीतं प्रेषणं-व्यापारणं तदादिषु कार्येषु कश्चन पुरुषमेकस्मिन् क्षेत्रे स्थितमपि 'पश्चात्' पर्यन्ते आदिशति-यथा 'भुङ्क्ष्व' भोजनं विदेहि, 'कुरु वा' कृष्यादिकर्म विधेहि, एष आदेशपरो भवति, आदेशः-आज्ञापनं तदाश्रित्य परः-पाश्चात्य आदेशपर इति व्युत्पत्तेः ॥

अथ क्रमपरमाह-

[भा.२७२४] दव्वाइ कमो चउहा, दव्वे परमाणुमाइ जाऽनंतं ।
एगुत्तरवुड्ढीए, विवड्ढियाणं परो होइ ॥

वृ-क्रमः परिपाटीरित्येकोऽर्थः, तमाश्रित्य परः क्रमपरः । स चतुर्द्धा-द्रव्य-क्षेत्र-काल-भावभेदात्।

तत्र 'द्रव्ये' द्रव्यतः परमाणुमादी कृत्वा अनन्तप्रदेशिकस्कन्धं यावदेकोत्तरप्रदेशवृध्या वर्धितानां पुद्गलद्रव्याणां यो यदपेक्षया परः स तस्माद् द्रव्यक्रमपरो भवति, तद्यथा-परमाणुपुद्गलाद् द्विप्रदेशिकस्कन्धः, द्विप्रदेशिकस्कन्धात् त्रिप्रदेशिकस्कन्धः, एवं यावदसङ्ख्येयप्रदेशिकस्कन्धादनन्तप्रदेशिकस्कन्धो द्रव्यक्रमपरः । क्षेत्रक्रमपरोऽप्येवमेव; नवरमेकप्रदेशावगाढाद् द्विप्रदेशावगाढः, द्विप्रदेशावगाढात् त्रिप्रदेशावगाढः, एवं यावत् सङ्ख्येयप्रदेशावगाढादसङ्ख्येयप्रदेशावगाढः क्षेत्रक्रमपरः । कालक्रमपरस्त्वेवम्-एकसमयस्थितिकाद् द्विसमयस्थितिकः, द्विसमयस्थितिकात् त्रिसमयस्थितिकः, एवं यावत् सङ्ख्येयसमयस्थितिकादसङ्ख्येयसमयस्थितिकः कालक्रमपरः । भावक्रमपरः पुनरेवम्-एकगुणकालकाद् द्विगुणकालकः, द्विगुणकालकात् त्रिगुणकालकः, वं यावदसङ्ख्येयगुणकालकादनन्तगुणकालको भावक्रमपरः । एवं नील-लोहितहारिद्र-शुक्लरूपेषु शेषेष्वपि चतुर्षु वर्णेषु, सुरभि-दुरभिलक्षणे च गन्धद्वये, तिक्त-कटु-कषायाऽम्ल-मधुरात्मके च रसपञ्चके, गुरु-लघु-मृदु-कठिन-स्निग्ध-रूक्ष-शीतोष्णलक्षणे च स्पर्शाष्टके यथाक्रमं भावक्रमपरता भावनीया ।। अथ बहुपरं भावयति-

[भा.२७२५] जीवा १ पुग्गल २ समया ३, दव्व ४ पएसा य ५ पज्जवा ६ चेव ।
थोवा १ नंता २ नंता ३, विसेसमहिया ४ दुवेऽनंता ५-६ ।।

वृ-इह पूर्वार्द्ध-पश्चार्द्धपदानां यथाक्रमं योजना कार्या । तद्यथा-'जीवाः' संसारि-मुक्तभेदभिन्नास्ते सर्वस्तोकाः, जीवेभ्यः पुद्गला अनन्तगुणाः, पुद्गलेभ्यः समया अनन्तगुणाः, समयेभ्यो द्रव्याणि विशेषाधिकानि, द्रव्येभ्यः प्रदेशा अनन्तगुणाः, प्रदेशेभ्यः पर्याया अनन्तगुणाः । उक्तञ्च व्याख्याप्रज्ञप्ती- एएसि णं भंते ! जीवाणं पोग्गलाणं अद्धासमयाणं अद्धासमयाणं सव्वदव्वाणं सव्वपएसाणं सव्वपज्जवाण य कयरे कतरेहिंतो अप्पा वा बहुया वा तुल्ला वा विसेसाहिया वा ? गोयमा ! सव्वत्थोवा जीवा, पोग्गला अनंतगुणा, अद्धासमया अनंतगुणा, सव्वदव्वा विसेसाहिया, सव्वपएसा अनंतगुणा, सव्वपज्जवा अनंतगुणा । अत्रामीषामित्यमल्पबहुत्वे हेतुभावना भगवती-टीकायां वृद्धैरुपदर्शिताऽऽस्ते, अतस्तदर्थिना सैवावलोकनीया ।। अथ प्रधानपरमाह-

[भा.२७२६] दव्वे सचित्तमादी, सचित्तदुपएसु होइ तित्थयरो ।
सीहो चउप्पएसुं, अपयपहाणा बहुविहा उ ।।

वृ-प्रधान एव परः प्रधानपरः स च द्विधा-द्रव्यतो भावतश्च । तत्र 'द्रव्ये' द्रव्यतस्त्रिधा सचित्तादि, आदिशब्दाद् मिश्रोऽचित्तश्च । तत्र सचित्तप्रधानस्त्रिधा: द्विपद-चतुष्पदा-ऽपदभेदात् । तत्र द्विपदेषु तीर्थकरः प्रधानो भवति, चतुष्पदेषु सिंहः प्रधानो भवति, अपदेषु बहुविधाः सुदर्शनाभिधान-जम्बूवृक्षप्रभृतयः पनसादयो वा प्रधानाः । अचित्तः प्रधानपरोऽनेकधा, तद्यथा-धातुषु सुवर्णम्, वस्त्रेषु चीनांशुकम्, गन्धद्रव्येषु गोशीर्षचन्दनमित्यादि । मिश्रप्रधानपराणि तु सुवर्णकटकाद्य-लङ्कृतविग्रहाणि तीर्थकरादिद्रव्याण्येव द्रष्टव्यानि ।। भावप्रधानपरमाह-

[भा.२७२७] वण्ण-रस-गंध-फासेसु उत्तमा जे उ भू-दग-वनेसु ।
मणि-खीरोदगमादी, पुप्फ-फलादी य रुक्खेसु ।।

वृ- ''वण्ण-रस-गंध-फासेसु''त्ति तृतीयार्थे सप्तमी, ततो वर्णेन रसेन गन्धेन स्पर्शेन वा वर्णादिलक्षणैर्भावैरित्यर्थः ये 'भू-दक-वनेषु' पृथिवीकाया-ऽप्काय-वनस्पतिकायेषु उत्तमास्ते

भावप्रधानपरः । एतेन पश्चार्द्धेनोक्तमिति-"मणि-खीरोदग" इत्यादि । पृथिवीकायेषु पद्मराग-वज्र-वैडूर्यादिमणयः प्रधानाः, अप्कायेषु क्षीरोदकादिपानीयानि 'वृक्षेषु' वनस्पतिषु पुष्प-फलादीनि प्रधानानि ॥ गतः प्रधानपरः । अथ भावपरो व्याख्यायते-भावः-क्षायोपशमिकादिस्तदपेक्षया परः-भावान्तरवर्ती भावपरः । स च इहौदयिकभाववर्ती गृह्यते । तथा चाह-

[भा.२७२८] आढणमब्भुट्ठाणं, वंदन संभुंजणा य संवासो ।
एयाइं जो कुणई, आराधन अकुणओ नत्थि ॥

[भा.२७२९] अकसायं निव्वाणं, सव्वेहि वि जिनवरेहि पन्नत्तं ।
सो लब्भइ भावपरो, जो उवसंते अनुवसंतो ॥

वृ-आदरो अभ्युत्थानं वन्दनं सम्भोजनं संवासश्चेत्येतानि पदानि य उपशान्तो भूत्वा करोति तस्याराधना अस्ति, यस्त्वेतानि न करोति तस्याराधना नास्ति । एतेन "जो उवसमइ तस्स अत्थि आराहणा" इत्यादिकः सूत्रावयवो व्याख्यातः । अथ किमर्थमादरादिपदानामकरणे आराधना नास्ति ? इत्याह-'अकषायं' कषायाभावसम्भवि 'निर्वाणं' सकलकर्मक्षयलक्षणं सर्वैरपि जिनवरैः प्रज्ञप्तम् । अतो यः कश्चिदुपशान्तेऽपि साधावनुपशान्त आदरादिपदानामकरणेन सकषायः स भावपरो लभ्यते, औदयिकभाववर्त्तित्वात् ॥

अथाचार्यस्तमुपशान्तसाधुं प्रज्ञापयन् प्रस्तुतयोजनां कुर्वन्नाह-

[भा.२७३०] सो वट्टइ ओदइए, भावे तं पुन खओवसमियम्मि ।
जह सो तुह भावपरो, एमेव य संजम-तवाणं ॥

वृ- भो भद्र ! 'सः' द्वितीयः साधुरद्याप्यौदयिके भावे वर्त्तते, त्वं पुनः क्षायोपशमिके भावे वर्त्तसे । अतो यथाऽसौ 'तव' त्वदपेक्षया भावपरस्तथा संयम-तपोभ्यामप्ययं परः-पृथग्भूत इति । अतस्त्वया न काचित् तदीया चिन्ता विधेया ॥ द्वितीयपदे कुर्यादप्यधिकरणम्, यत आह-

[भा.२७३१] खेत्तादऽकोविओ वा, अनलविगिंचइया व जाणं पि ।
अहिगरणं तु करेत्ता, करेज्ज सव्वाणि वि पयाणि ॥

वृ- क्षिप्तचित्तः आदिशब्दाद् दृप्तचित्तो यक्षाविष्टो वा अनात्मवशत्वादधिकरणं कुर्यात् । 'अकोविदो वा' अद्याप्यपरिणतजिनवचनः शैक्षः सोऽप्यज्ञत्वादधिकरणं विदध्यात् । यद्वा 'जानन्नपि' गीतार्थोऽपीत्यर्थः अनलस्य-प्रव्रज्याया अयोग्यस्य नपुंसकादेः कारणे दीक्षितस्य तत्कारणपरिसमाप्तौ विवेचनार्थं-परिष्ठापनाय तेन सहाधिकरणं करोति, कृत्वा चाधिकरणं सर्वाण्यप्यनादरादीनि पदानि कुर्यात् ॥

मू. (३५) *नो कप्पइ निग्गंथाणवा निग्गंथीण वा वासावासासु चारए ॥*

[भा.२७३२] अहिगरणं काऊण व, गच्छइ तं वा वि उवसमेउं जे ।
पुव्वं च अनुवसंते, खामेस्सं वयइ संबंधो ॥

वृ- अधिकरणं कृत्वा वाशब्दः पक्षान्तरद्योतकः कषायानुबद्धमना अन्यत्र ग्रामादौ गच्छति । यद्वा 'तत्' अधिकरणमुत्पन्नं श्रुत्वा कश्चिद् धर्मश्रद्धावान् तदुपशमयितुमागच्छति । "जे" शब्दः पादपूरणे । यदि वा पूर्वमनुपशान्तः सन्नन्यत्र ग्रामादौ गतः, तत्र च स्वयमन्योपदेशेन वा 'क्षमयिष्याम्यहं तं साधुम्' इतिपरिणाममुपगतो भूयस्तत्रैव ग्रामे व्रजति । तच्च गमनमनेन सूत्रेण

वर्षासु प्रतिषिध्यत इत्ययं पूर्वसूत्रेण सहास्य सूत्रस्य सम्बन्धः ॥ अमुमेव तृतीयसम्बन्धप्रकारं व्याख्याति-

[भा.२७३३] अहवा अखामियम्मि त्ति कोइ गच्छेज्ज ओसवणकाले।
सुभमवि तम्मि उ गमणं, वासावासासु वारेइ ॥

वृ- अथवाऽनुपशान्त एवान्यत्र गतः, तत्र च वर्षासु पर्युषणाकाले समायाते सति 'अधिकरणं मया न क्षमितम्, अतः कथं मे सांवत्सरिकप्रतिक्रमणं विधीयमानं शुद्धिमेष्यति ?' इति परिभाव्य यत्र द्वितीयः साधुश्चतुर्मास्यां स्थितोऽस्ति तत्राधिकरणं क्षमयितुं कश्चिद् गच्छति, तच्च तदीयं तत्र गमनं शुभमपि वर्षवर्षासु अनेन सूत्रेण वारयतीति ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या- नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा वर्षोपलक्षिता वर्षा वर्षवर्षास्तासु 'चरितुं' "चर गति-भक्षणयोः" इति धातुरत्र गत्यर्थो गृह्यते, ग्रामानुग्रामं पर्यटितुमित्यर्थः। यद्वा भक्षणार्थोऽप्यत्र गृह्यते, तथाहि-भक्षणं-समुद्देशनं तच्च यथा ऋतुबद्धे साधूनां तथा वर्षासु कर्तुं न कल्पते, तदानीं हि चतुर्थभक्तादिप्रत्याख्यानपरायणैर्भवितव्यम्, विकृतीनां चाभीक्ष्णं ग्रहणं न कर्तव्यमिति सूत्रार्थः॥

अथ निर्युक्तिविस्तरः-

[भा.२७३४] वासावासो दुविहो, पाउस वासा य पाउसे गुरुगा।
वासासु होंति लहुगा, ते च्चिय पुण्णे अनिंतस्स ॥

वृ- वसन्ति-एकत्र ग्रामादौ तिष्ठन्ति लोकाः प्रायोऽस्मिन्निति वासः, वर्षा एव वासो वर्षावासः। स द्विधा-प्रावृड् वर्षारात्रश्च। तत्र श्रावण-भाद्रपदमासौ प्रावृडुच्यते, अश्विन-कार्तिकौ तु वर्षारात्रः। आह च चूर्णिकृत्- पाउसो सावणो भद्दवओ अ, वासारत्तो अस्सोओ कत्तियओ अ त्ति। विशेषचूर्णिकृत् पुनराह- पाउसो आसाढो सावणो अ, वासारत्तो भद्दवओ अस्सोओ अ त्ति। तत्र यदि प्रावृषि ग्रामानुग्रामं चरन्ति तदा चतुर्गुरुकाः, वर्षासु विचरतश्चतुर्लघुकाः, 'त एव' चत्वारो लघुकाः पूर्णे वर्षारात्रे 'अनिर्यतः' अनिर्गच्छतः प्रायश्चित्तम् ॥ तत्र प्रावृषि विहरतस्तावद् दोषानाह-

[भा.२७३५] वासावासविहारे, चउरो मासा हवंतऽनुग्घाया।
आणाइणो य दोसा, विराधना संजमाऽऽयाए ॥

वृ- इह वर्षावासः श्रावणो भाद्रपदश्चाभिधीयते, तत्र विहारं कुर्वतश्चत्वारो मासाः 'अनुद्घाताः' गुरवः प्रायश्चित्तं भवति, आज्ञादयश्च दोषाः, विराधना च संयमात्मविषया ॥ तामेव भावयति-

[भा.२७३६] छक्कायाण विराधन, आवडणं विसम-खाणु-कंटेसु।
वुब्भण अभिहण रुक्खोल्ल, सावय तेने गिलाणे य ॥

वृ- वर्षासु विहरतः षट्कायानां विराधना। तथा 'आपतनं' वर्षे निपतति वर्षाकल्पा-दितीमनभयाद् वृक्षादेरधस्तिष्ठतस्तदीयशाखादिना शिरस्यभिघातो भवेत्; यद्वा 'आपतनं' कर्दमपिच्छिले पथि स्खलनम्। विषमे वा भूप्रदेशे नपतेत्। 'स्थाणुः' कीलकः सः कर्दमे जले वाऽदृश्यमानः पादयोरास्फलेत्। कण्टकैर्वा पादतले विध्येत्। उदकवाहेन वा गिरिनद्या वा 'वाहनम्' उत्क्षिप्यान्यत्र नयनं भवेत्। तथा गिरिनदीतटिकया मार्गे गच्छतोऽभिघातो भवेत्। "रुक्खोल्ल" त्ति यद्वार्द्रीकरणभयाद् वृक्षमालीयते, स च वृक्षः प्रबलवातप्रेरिततया पतेत् तत्रात्म-

संयमविराधना। तथा यस्य वृक्षस्याधस्तिष्ठति तस्योपरि चित्रकादिकः श्वापद आरूढो भवेत् तेनानागाढमागाढं वा परिताप्येत। ''तेने'' त्ति अवहमानेषु मार्गेषु द्विविधाः स्तेना विश्वस्ताः सञ्चरेयुः, तैरुपधेर्वा तस्य वा साधोरपहारः क्रियेत; अकाले वा वा परिभ्रमन् स्तेनक इति शङ्क्येत। ''गिलाणे'' त्ति तीमितेनोपधिना प्राब्रियमाणेन भक्तेऽजीर्यमाणे ग्लानो भवेत्। एवमापत-नादिष्वात्मविराधना संयमविराधना वा या यत्र सम्भवति सा तत्र योजनीया॥

अथ षट्कायविराधनां व्याख्यानयति-

[भा.२७३७] अक्खुन्नेसु पहेसुं, पुढवी उदगं च होइ दुहओ वि।
उल्लपयावण अगनी, इहरा पनगो हरियं कुंथू॥

वृ- अक्षुण्णाः-अमर्दिताः पन्थानः प्रावृषि भवन्ति, तेषु विहरन् पृथ्वीकायं विराधयति। तथा 'द्विविधमपि' भौमा-ऽन्तरिक्षभेदाद् द्विप्रकारमप्युदकं तदा सम्भवति ततोऽप्कायविराधना। वर्षेण आर्द्रीभूतमुपधिं यद्यग्निना प्रतापयति तदाऽग्निविराधना। यत्राग्निस्तत्र वायुरवश्यं भवतीति वायुविराधनाऽपि। 'इतरथा' यद्युपधिं न प्रतापयति तदा पनकः सम्मूर्च्छति, तत्संसक्तं चोपधिं प्रावृण्यतः परिदधतः प्रत्युपेक्षमाणस्य वाऽनन्तकायसङ्घट्टनादिनिष्पन्नं प्रायश्चित्तम्; 'हरितानि वा' दूर्वादीनि तदानीमचिरोद्गतानि निरन्तराणि च भवेयुः ततो वनस्पतिविराधना। अप्रत्युपेक्षमाणो उपधौ कुन्थुप्रभृतयो ज[illegible] सम्मूर्च्छन्ति, [illegible] बहुविधत्र्यसप्राणिनो बहवो भवन्ति ततस्त्रसकायविराधना। एवं षण्णामपि कायानां विराधना यतःप्रावृषि विहरतां भवति अतो न विहर्त्तव्यम्। द्वितीयपदे विहरेदपि कथम्? इत्याह-

[भा.२७३८] असिवे ओमोयरिए, रायदुट्ठे भए व गेलन्ने।
आबाहाईएसु व, पंचसु ठाणेसु रीइज्जा॥

वृ- 'अशिवे' अशिवगृहीतेषु प्रभूतेषु कुलेषु असंस्तरन्नन्यत्र गच्छेत्। परपक्षतो वा अवमोदर्ये सञ्जाते सति असंस्तरन् गच्छेत्। राजद्विष्टे विराधनाभयाद् गच्छति। 'भये वा' बोधिक-स्तेनसमुत्थे 'यद्यमी मां द्रक्ष्यन्ति ततोऽपहरिष्यन्ति' इति मत्वा गच्छति। ग्लानो वा कश्चिदन्यत्र सञ्जातस्तस्यप्रतचरणार्थं गच्छति। आबाधादिषु वा पञ्चसु स्थानेषूत्पन्नेषु प्रावृष्यपि 'रीयेत' ग्रामान्तर गच्छेत्॥ तान्येवाबाधादीनि स्थानानि दर्शयति-

[भा.२७३९] आबाहे व भये वा, दुब्भिक्खे वाह वा दओहंसि।
पव्वहणे व परेहिं, पंचहि ठाणेहि रीइज्जा॥

वृ- आबाधं नाम-मानसी पीडा, भयं-स्तेनादिसमुत्थम्, दुर्भिक्षं-प्रतीतम्, एतेषु समुत्पन्नेषु, अथवा 'दकौघे' पानीयप्रवाहेण प्रतिश्रये ग्रामेवा व्यूढे सति, 'परैर्वा' प्रत्यनीकैर्दण्डिकादिभिः 'प्रव्यथने' परिभवे ताडने वा विधीयमाने, एतेषु पञ्चसु स्थानेषुप्रावृष्यपि रीयेत॥

[भा.२७४०] एतं तु पाउसम्मी, भणियं वासासु नवरि चउलहुगा।
ते चेव तत्थ दोसा, बिइयपदं तं चिमं वऽन्नं॥

वृ- 'एतद्' अनन्तरोक्तं प्रायश्चित्तं दोषजालं द्वितीयपदं च प्रावृषि भणितम्। अथ 'वर्षासु' वर्षारात्रेऽश्विन-कार्तिकरूपे चरति ततश्चतुर्लघुकाः प्रायश्चित्तम्। 'त एव च' तत्र विहरतः षट्कायविराधनादयो दोषाः, तदेव च द्वितीयपदम्। इदं वा 'अन्यद्' अपरं द्वितीयपदमभिधीयते॥

[भा.२७४१] असिवे ओमोयरिएथ रायदुट्ठे भए व गेलन्ने ।
नाणादितिगस्सऽट्ठा, वीसुंभण पेसणेणं वा ॥

वृ- अशिवेऽवमौदर्ये राजद्विष्टे भये वा ग्लानकारणे वा समुत्पन्ने वर्षासु ग्रामान्तरं गच्छेत्, एतावत् प्रागुक्तमेव द्वितीयपदम् । अथेदमपरमुच्यते-ज्ञानादित्रयस्यार्थायान्यत्र वर्षासु गच्छेत् । तत्रापूर्व कोऽपि श्रुतस्कन्धोऽन्यस्याचार्यस्य विद्यते, स च भक्तं प्रत्याख्यातुकामो वर्त्तते, स च श्रुतस्कन्धस्तत आचार्यादगृह्यमाणो व्यवच्छिद्यते, अतस्तदध्ययनार्थं वर्षास्वपि गच्छेत् । एवं दर्शनप्रभावकशास्त्राणाप्यध्ययनाथं गच्छेत् । चारित्रार्थं नाम-तत्र क्षेत्रे स्त्रीसमुत्थदोषैरेषणादोषैर्वा चारित्रं न शुध्यतीति तन्निमित्तमन्यत्र वर्षासु गच्छेत् । "वीसुंभण" त्ति 'विष्कम्भनं नाम' कश्चिदुत्तमार्थंप्रतिपत्तुकामस्तस्य विशोधिकरणार्थं गच्छेत् । "पेसणेणं व" त्ति कश्चिदाचार्येणान्यतरस्मिन् औत्पत्तिके कारणे वर्षास्वपि प्रेषितो भवेत्, स च तस्मिन् कारणे समापिते भूयोऽपि गुरूणां समीपे समागच्छेत् ॥ अथवेदं द्वितीयपदम्-

[भा.२७४२] आऊ तेऊ वाऊ, दुब्बल संकामिए अ ओमाणे ।
पाणाइ सप्प कुंथू, उट्ठण तह थंडिलस्सऽसती ॥

वृ- अप्कायेन वसति प्लाविता भवेत् स्थण्डिलानि वा व्यूढानि, अग्निकायेन वा प्रतिश्रयो ग्रामो वा दग्धः, "वाऊ" इति वातेन वा तत्र वसतिर्भग्ना, "दुब्बल"त्ति वर्षेण तीम्यमाना वसतिः 'दुर्बला' पतितुकामा सञ्जाता, "संकामिए य"त्ति स ग्रामो धिग्जातीयादेः कस्यापि प्रत्यनीकस्य सङ्क्रामितः-दत्त इत्यर्थः, अथवा "संकामिए य"त्ति तानि श्राद्धकुलान्यन्यत्र ग्रामे सङ्क्रामितानि, "ओमाणे"त्ति इन्द्रमहादिषु बहवः पाण्डुराङ्गप्रभृतय आगतास्तैरवमानं सञ्जातम्, 'प्राणादिभिर्वा' मर्कोटकोद्देहिकादिभिर्वसति संसक्ता भवेत्, सर्पो वा वसतौ समागत्य स्थितः, अनुद्धरिनामकैर्वा कुन्थुजीवैर्वसति संसक्ता समजायत, ग्रामो वा सकलोऽपि 'उत्थितः' उद्वसीभूतः, 'स्थण्डिलस्य वा' विचारभूमिलक्षणस्य हरितकायादिभिरभावः समजनि, एवमादिकस्तत्र व्याघातो भवेत् ॥ अत एव ते साधवः प्रागेवामुं विधिं विदधति-

[भा.२७४३] मूलग्गामे तिन्नि उ, पडिवसभेसुं पि तिन्नि वसहीओ ।
ठायंता पेहिंति उ, वियार-वाघायमइट्ठा ॥

वृ-मूलग्रामो नाम-यत्र साधवः स्थिताः सन्ति तस्मिन् तिस्रो वसतीः प्रत्युपेक्षन्ते । प्रतिवृषभग्रामा नाम-येषु भिक्षाचर्यया गम्यते तेष्वपि प्रत्येकं तिो वसतीस्तिष्ठन्त एव प्रत्युपेक्षन्ते । किमर्थम् ? इत्याह-मूलग्रामे यदि विचारभूमेर्वसतेर्वा व्याघातो भवति ततस्तेषु प्रतिवृषभग्रामेषु तिष्ठन्ति ॥ तत्राप्कायादिव्याघाते समुत्पन्ने यतनामाह-

[भा.२७४४] उदगा-ऽगनि-वायाइसु, अन्नस्सऽसतीइ थंभनुद्दवने ।
संकामियम्मि भयणा, उट्ठण थंडिल्ल अन्नत्थ ॥

वृ- उदकेन वा अग्निना वा वातेन वा आदिशब्दात् त्रसप्राणादिजन्तुसंसक्त्या वा व्याघाते समुत्पन्नेऽन्यस्यां वसतौ तिष्ठन्ति । अथ नास्त्यन्या वसतिस्तत उदका-ऽग्नि-वातान् स्तम्भनीविद्यया स्तम्भन्ति । यत्र च सर्प समागत्य तिष्ठति तत्र तस्य सर्पस्य 'अपद्रावणं' विद्ययाऽन्यत्र नयनं कुर्वन्ति । यत्र च ग्रामस्वामी कुलानि वा अन्यानि सङ्क्रान्तानि तत्र भजना कर्त्तव्या- यदि स

ग्रामस्वामी कुलानि वा भद्रकाणि ततस्तत्रैव तिष्ठन्ति, अथ प्रान्तान ततोऽन्यत्र गच्छन्ति। अथासौ ग्राम उत्थितः स्थण्डिलानां वा व्याघातः समजायत ततोऽन्यत्र ग्रामे गच्छन्ति ॥ अवमान-दुर्बलशय्ययोर्यतनामाह-

[भा.२७४५] इंदमहादी व समागतेसु परउत्थिएसु य जयंति।
पडिवसभेसु सखित्ते, दुब्बलसेज्जाए देसूनं ॥

वृ- इन्द्रमहोत्सवादी वा बहुषु परतीर्थिकेषु समागतेषु स्वक्षेत्रे ये प्रतिवृषभग्रामास्तेषु अन्तरपल्लिकासु च भिक्षाग्रहणाय यतन्ते। अथ तेष्वपि न संस्तरन्ति ततोऽन्यत्र गच्छन्ति। 'दुर्बलशय्यायां' वर्षेण तीम्यमानतया वसतौ दुर्बलायां सञ्जातायां स्थूणां दद्यात् ॥

अथ वसतिप्रमार्जने विधिमाह-

[भा.२७४६] दोन्नि उ पमज्जणाओ, उडुम्मि वासासु तइय मज्झण्हे।
वसहिं बहुसो पमज्जण, अइसंघट्टऽन्नहिं गच्छे ॥

वृ-वसतेरष्टसु ऋतुबद्धमासेषु द्वे प्रमार्जने कर्त्तव्ये, तद्यथा-पूर्वाह्णेऽपराह्णे च। वर्षासु पुनस्तृतीया प्रमार्जना मध्याह्ने विधेया। अथ कुन्थुप्रभृतिभिस्त्रसप्राणैः संसक्ता वसतिस्तत ऋतुबद्धे वर्षावासे च यथोक्तप्रमाणादतिरिक्तमपि बहुशः प्रमार्जनं कुर्यात्। अथ बहुशः प्रमार्जने त्रसप्राणानामतीव सङ्घट्टो भवति अतिबहवो वा त्रसास्ततोऽन्यत्र ग्रामे गच्छेयुः ॥ गच्छतां च मार्गे यतनामाह-

[भा.२७४७] उत्तण ससावयाणि य, गंभीराणिय जलानि वज्जेंता।
तलियरहिया दिवसओ, अब्भासतरे वए खेत्ते ॥

वृ- 'उत्त णानि नाम' उर्ध्वीभूतानि तृणानि दीर्घाणीति यावत् तानि यत्र मार्गे भवन्ति, 'सश्वापदानि च' सिंह-व्याघ्रादिश्वापदोपेतानि यत्र तृणानि भवन्ति, 'गम्भीराणि च' अस्ताधानि जलानि यत्र भवन्ति, तान् मार्गान् वर्जयन्तः 'तलिकारहिताः' अनुपानत्का दिवसतो गच्छन्ति न रात्रौ। यच्चाभ्यासतरम्-अतिप्रत्यासन्नं क्षेत्रं तत्र व्रजन्ति ॥

मू. (३६) *कप्पइ निग्गंथाण वा निग्गंथीण वा हेमंत-गिम्हासु चारए ॥*

[भा.२७४८] दुस्संचर बहुपाणादि काउ वासासु जं न विहरिंसु।
तस्स उ विवज्जयम्मी, चरंति अह सुत्तसंबंधो ॥

वृ- वर्षासु कर्दमाकुलतया दुःसञ्चरं बहुप्राण-हरितादिसङ्कुलं वा मेदिनीतलं भवतीति कृत्वा यत् तदानीं न विहृतवन्तः, तत एव 'तस्य' वर्षावासस्य 'विपर्यये' ऋतुबद्धे काले सुसञ्चरमल्पप्राणजातीयं वा मत्वा 'चरन्ति' ग्रामानुग्रामं विहरन्ति। 'अथ' एष पूर्वसूत्रेण सहास्य सूत्रस्य सम्बन्ध इति ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा हेमन्त-ग्रीष्मयोरष्टसु ऋतुबद्धमासेषु 'चरितुं' ग्रामानुग्रामं पर्यटितुमिति सूत्रार्थः ॥

अथ निर्युक्तिविस्तरः-

[भा.२७४९] पुन्ने अनिग्गमे लहुगा, दोसा ते चेव उग्गमादीया।
दुब्बल-खमग-गिलाणा, गोरस उवहिं पडिच्छंति ॥

वृ- यदि पूर्णे वर्षावासे ततः क्षेत्रान्न निर्गच्छन्ति ततश्चत्वारो लघुकाः त एव चोद्गमा-शुद्धिस्त्रीसमुत्थादयो दोषा ये मासकल्पप्रकृते दर्शिताः। अपरे चामी दोषाः- 'दुब्बल' इत्यादि।

ये साधव आचाम्लेन 'दुर्बलाः' कृशीभूतशरीरास्ते 'कदा वर्षावासः पूरिष्यते ?' इत्येव निर्गमनं प्रतीक्षमाणा यत् परितापनादिकमवाप्नुवन्ति तन्निष्पन्नं प्रायश्चित्तम् । क्षपका वा विकृष्टतपोनिष्टप्तवपुषो निर्गमनं प्रतीक्षन्ते; ग्लानो वा अधुनोत्थितो दुःखं तत्र तिष्ठति, चतुर्मासादूर्ध्वमप्यवस्तानेन क्षेत्रस्य चमढिततया तथाविधपथ्याद्यभावात्; गोरसधातुको वा कश्चित् सिन्धुदेशीयः प्रव्रजितः सोऽपि गोरसाभावान्न तत्र स्थातुं शक्नोति; ततस्तेन विना यत् परिताप्यन्ते तन्निष्पन्नमनिर्गच्छतां प्रायश्चित्तम् ।। अथ निर्गच्छन्ति ततः किं भवति ? इत्याह-

[भा.२७५०] एए न होंति दोसा, बहिया सुलभं च भिक्ख उवही य ।
भवसिद्धिया उ पाणा, विइयपय गिलाणमादीसु ।।

वृ- वर्षावासे पूर्णे निर्गच्छताम् 'एते' अनन्तरोक्ता दोषा न भवन्ति । 'बहिश्च' बहिर्ग्रामेषु विहरतां भैक्षं सुलभं भवति, तेन च दुर्बल-क्षपकादीनामाप्यायना स्यात् । उपधिश्च बहि प्राप्यते । भवसिद्धिकाश्च सत्त्वा बोधमासादयन्ति । केचिद्धः [illegible] सर्वविरत्यादिप्रतिपत्ति । आज्ञा च भगवतां तीर्थकृत्वां कृत्वा भवति । यत एवमतो वर्षावासानन्तरं निर्गन्तव्यम् । द्वितीयपदे ग्लानादिषु कारणेषु न निर्गच्छन्ति, आदिशब्दादवमौदर्यादिपरिग्रहः । अत्र च यतना मासकल्पप्रकृते "चउभाग तिभागऽद्धे, जयंतऽनिच्छे अलंभे वा ।" इत्यादिना दर्शिता तथैव द्रष्टव्या ।।

[भा.२७५१] तम्हा उ विहरियव्वं, विहिना जे मासकप्पिया गामा ।
छड्डेइ वंदणादी, तइ लहुगा मग्गणा पत्था ।।

वृ- यदि ग्लानादिकारणं न स्यात् ततोऽवश्यं विधिना मासकल्पप्रकृतोक्तेन ये मासकल्पप्रायोग्या ग्रामास्तेषु विहर्त्तव्यम् । अथ मासकल्पप्रायोग्याणि क्षेत्राणि "चैत्यवन्दनादिभि" वक्ष्यमाणैः कारणैः छर्दयति तदा यावन्ति क्षेत्राणि परित्यज्य गच्छति तावन्ति चतर्लघुकानि । "मग्गणा पत्थ" त्ति द्वितीयपदे मासकल्पप्रायोग्यक्षेत्राणामपि परित्यागे ये गुणास्तेषां 'मार्गणा' अन्वेषणा 'पथ्या' हिता ।। अथ वन्दनादीन्येव कारणानि प्रतिपादयति-

[भा.२७५२] आयरिय साहु वंदन, चेइय नीयल्लए तहा सन्नी ।
गमनं च देसदंसण, वइगासु य एवमाईणि ।।

वृ- आचार्याणां साधूनां चैत्यानां वा वन्दनार्थं गच्छति । 'निजकाः' संज्ञातकाः 'संज्ञिनः' श्रावकास्तेषामुभयेषामपि दर्शनार्थं देशदर्शनार्थं वा गमनं करोति । व्रजिकासु वा 'क्षीरादिकं लप्स्येऽहम्' इति कृत्वा गच्छति । एवमादीनि कारणानि मासकल्पयोग्यक्षेत्रं परित्यजन्नवलम्बते।। अथामून्येव व्याख्यानयति-

[भा.२७५३] अप्पुव्व विवित्त बहुस्सुया य परियारवं च आयरिया ।
परियारवज्ज साहू, चेइय पुव्वा अभिनवा वा ।।

वृ- 'अपूर्वा' अदृष्टपूर्वा 'विविक्ताः' निरतिचारचारित्राः 'बहुश्रुता नाम' युगप्रधानागमा विचित्रश्रुता वा 'परिवारवन्तश्च' बहुसाधुसमूहपरिवृताः, एवंविधा आचार्या अमुकत्र नगरादौ तिष्ठन्ति तानहं वन्दिष्ये । साधवोऽप्येवंविधगुणोपेता एव, नवरं परिवारवर्जास्ते भवन्ति । चैत्यानि 'पूर्वाणि वा' चिरन्तनानि जीवन्तस्वामिप्रतिमादीनि 'अभिनवानि वा' तत्कालकृतानि, 'एतानि

ममाऽदृष्टपूर्वाणि' इति बुद्ध्या तेषां वन्दनाय गच्छति ॥

[भा.२७५४] गाहिस्सामि व नीए, सण्णी वा भिक्खुमाइ वुग्गाहे ।
बहुगुण अपुव्व देसी, वइगाइसु खीरमादीणि ॥

वृ-तथा 'निजकान् वा' संज्ञातकान् 'ग्राहयिष्यामि' बोधयिष्यामीत्यर्थः, 'संज्ञिनो वा' श्रावकान् 'भिक्षुकादि' तच्चन्निक-परिव्राजकादिपरपाषण्डी व्युद्ग्राहयति तेषां स्थिरीकरणार्थम्, देशो वा 'बहुगुणः' सुलभभैक्षतादिगुणोपेतोऽपूर्वश्च वर्त्तते, व्रजिकायां-गोकुले आदिशब्दात् प्रचुर-द्रव्यपतिग्रामादिषु वा क्षीर-दधि-घृता-ऽवगाहिमादीनि लभ्यन्ते, एवमादिभिः कारणैर्मास-कल्पप्रायोग्याणि क्षेत्राणि परित्यजति ॥ अत्र दोषान् दर्शयति-

[भा.२७५५] अद्धाणे उव्वाता, भिक्खोवहि साण तेन पडिनीए ।
ओमाण अभोज्ज घरे, थंडिल असतीइ जे जत्थ ॥

वृ-ते साधवोऽध्वनि व्रजन्तः 'उद्वाताः' परिश्रान्ताः सन्तश्चिन्तयन्ति-अत्र ग्रामे गुरवः स्थास्यन्ति। आचार्याश्च तं ग्रामं व्यतीत्याग्रतो गताः, ततस्ते छिन्नायामाशायां व्रजन्तो यदनागाढमागाढं वा परिताप्यन्ते तन्निष्पन्नं सूरीणां प्रायश्चित्तम् । भैक्षं वा तत्र स्फिटितायां वेलायां न प्राप्येत, अत्यन्तपरिश्रान्ता तानेव वाऽपहरेयुः, प्रत्यनीको वा तदानीं विजनं मत्वा हन्याद्वा मारयेद्वा, अवमानं वा स्वपक्षतः परपक्षतो वा भवेत्, 'अभोज्यगृहेषु वा' रजकादिसम्बन्धिषु भिक्षां गृह्णीयुः तत्रैव वा तिष्ठेयुः, ततश्च प्रवचनविराधना । स्थण्डिलानि वा तत्र न भवेयुः, तेषामभावे संयमात्मविराधना । एवं ये यत्र दोषाः सम्भवन्ति ते तत्र योजयितव्याः ॥ अथ द्वितीयपदमाह-

[भा.२७५६] बिइयपए असिवाई, उवहिस्स उ कारणा व लेवो वा ।
बहुगुणतरं व गच्छे, आयरियाई व आगाढे ॥

वृ- द्वितीयपदेऽशिवादीनि कारणानि विज्ञाय व्यतिव्रजेयुरपि । तत्र यदपान्तराले क्षेत्रं तदशिवगृहीतम्, आदिशब्दादवमौदर्य-राजद्विष्टादिदोषयुक्तं स्वाध्यायो वा तत्र न शुद्ध्यतीत्या-दिपरिग्रहः । उपधि-वस्त्र-पात्रादिरुपस्तत्र न लभ्यते, पुरोवर्तिनि तु ग्रामादौ लभ्यते, अतस्तस्य कारणात् । लेपो वा अग्रतोवर्तिनि ग्रामे लभ्यते न तत्र । गच्छस्य वा बहुगुणतरं तत् क्षेत्रम्, श्वान-प्रत्यनीकाद्यभावाद् भिक्षात्रयवेलासद्भावाच्च । आचार्यादीनां वा प्रायोग्यं तत्र विद्यते, यद्वा "आयरियाई व" त्ति सम्यक्त्वं ग्रहीतुकामाः केचिदाचार्याणां दर्शनं काङ्क्षन्ति; आदिशब्दात् परप्रवादी वा कश्चिदुद्घोषणां कारयेत्, यथा-शून्याः परप्रवादा इत्यादि; ते चाचार्या वादलब्धिसम्पन्नाः अतस्तन्निग्रहार्थं गच्छेयुः । "आगाढे" त्ति आगाढयोगवाहिनां वा प्रायोग्यमर्वाग् न प्राप्यते, परस्मिन् ग्रामे तु प्राप्यते । यद्वा आगाढं सप्तधा, तद्यथा-द्रव्यगाढं क्षेत्रागाढं कालागाढं भावागाढं पुरुषागाढं चिकित्सागाढं सहायागाढम् । तत्र द्रव्यागाढेषणीयं द्रव्यं तत्र न लभ्यते । क्षेत्रागाढं नाम तदतीव खलु (खुल) क्षेत्रम्, स्वल्पभैक्षदायकमित्यर्थः । कालागाढं तत् क्षेत्रं न ऋतुक्षमम् । भावागाढं ग्लानादिप्रायोग्यं तत्र न लभ्यते । पुरुषागाढमाचार्यादिपुरुषाणां तदकारकम् । चिकित्सागाढं वैद्यास्तत्र न प्राप्यन्ते । सहायागाढं सहायास्तत्र न सन्तीति ॥

[भा.२७५७] एएहिं कारणेहिं, एक्क-दुगंतर तिगंतरं वा वि ।
संकममाणो खेत्तं, पुट्ठो वि जओ नऽइक्कमइ ॥

वृ- 'एतैः' अशिवादिभिः कारणैरेकं वा द्वे त्रीणि वा अपान्तरालक्षेत्राण्यतिक्रम्यापरं क्षेत्रं सङ्क्रामन् पूर्वोक्तैर्दोषैः स्पृष्टोऽपि न दोषवान् भवति। 'यतः' यस्मात् तीर्थकराज्ञामसौ नातिक्रामति, यद्वा 'यतो नाम' यतनायुक्तः ॥

[भा.२७५८] निक्कारणगमणम्मिं, जे च्चिय आलंबणा उ पडिकुट्ठा।
कज्जम्मि संकमंतो, तेहिं चिय सुज्झई जयणा ॥

वृ- 'निष्कारणे' अशिवाद्यभावे यद् गमनम्-अपान्तरालक्षेत्रपरित्यागेन क्षेत्रान्तरसङ्क्रमणं तत्र 'यान्येव' आचार्य-साधु-चैत्यवन्दनादीन्यालम्बनानि 'प्रतिकुष्टानि', 'कार्ये' द्वितीयपदे ज्ञान-दर्शनादिविशुद्धिनिमित्तं सङ्क्रामन् 'तैरेव' आचार्यादिभिरालम्बनैः यतनायुक्तः 'शुध्यति' अदोषभाग् भवति ॥

*मू. (३७) नो कप्पइ निग्गंथाण वा निग्गंथीण वा वेरज्ज-वि-रुद्धरज्जंसि सज्जं गमणं सज्जं आगमणं सज्जं गमनागमनं करित्तए। जो खलु निग्गंथो वा निग्गंथी वा वेरज्ज-विरुद्धरज्जंसि सज्जं गमणं सज्जं आगमनं सज्जं गमनागमनं करेइ, करिंतं वा साइज्जइ, से दुहओ विइक्कममाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अनुग्घाइयं ॥*

[भा.२७५९] चारो त्ति अइपसंगा, विरुद्धरज्जे वि मा चरिज्जाहि।
इय एसो उवधाओ, वेरज्जविरुद्धसुत्तस्स ॥

वृ- अनन्तरसूत्रे हेमन्त-ग्रीष्मयोर्ग्रामानुग्रामं 'चारः' गमनं कर्त्तुं कल्पते इत्युक्तेऽतिप्रसङ्गतो विरुद्धराज्येऽपि वर्त्तमान मा चारीदित्यभिप्रायेणेदं सूत्रमारभ्यते। एष वैराज्यविरुद्धराज्यसूत्रस्य 'उपोद्घातः' सम्बन्धः ॥ अनेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थीनां वा वैराज्य-विरुद्धराज्ये 'सद्यः' तत्कालं गमनं सद्य आगमनं सद्यो गमनागमनं कर्तुम्। यः खलु निर्ग्रन्थो वा निर्ग्रन्थी वा वैराज्य-विरुद्धराज्ये सद्यो गमनं सद्य आगमनं सद्यो गमनागमनं करोति, कुर्वन्तं वा 'स्वादयति' अनुमोदयति, सः 'द्विधाऽपि' तीर्थकृतां राज्ञश्च सम्बन्धिनीमाज्ञामतिकामन् 'आपद्यते प्राप्नोति चातुर्मासिकं परिहारस्थानमनुद्घातिकम्, चतुर्गुरुकमित्यर्थः। इति सूत्रसङ्क्षेपार्थः ॥

अथ विस्तरार्थं भाष्यकृदाह-

[भा.२७६०] वेरं जत्थ उ रज्जे, वेरं जायं व वेररज्जं वा।
जं च विरज्जइ रज्जं, रज्जेणं विगयरायं वा ॥

वृ- यत्र राज्ये पूर्वपुरुषपरम्परागतं वैरं तद् वैराज्यमुच्यते, नैरुक्ती शब्दनिष्पत्ति। यद्वा न पूर्वपुरुषपरम्परागतं परं सम्प्रति ययो राज्ययोर्वैरं 'जातम्' उत्पन्नं तद् वैराज्यम्। अथवा परकीयग्राम-नगरदाहादीनि कुर्वन् यत्र राजादि वैरे-विरोधे रज्यते तादृशं डमरं वैराज्यमुच्यते। यदि वा यद् राज्यममात्यादिप्रधानपुरुषसमूहरुपं "रज्जेणं" ति विवक्षितेन राज्ञा सह 'विरज्यते' विरक्तीभवति तद् वैराज्यम्। इत्थरुपनिष्पत्ति सर्वत्रापि निरुक्तिवशात्। यद्वा विगतः-मृतः प्रोषितो वा राजा यत्र तद् विगतराजकम्-अराजकमित्यर्थः, तदेव वैराज्यम्। यत्र तु द्वयोरपि राज्ञो राज्ये परस्परं गमनागमनं विरुद्धं तद् विरुद्धराज्यमुच्यते ॥ अथ सद्यःप्रभृतीनि शेषपदानि व्याचष्टे-

[भा.२७६१] सज्जग्गहणा तीयं, अनागयं चेव वारियं वेरं।
पन्नवग पडुच्च गयं, होज्जाऽऽगमनं व उभयं वा ॥

वृ-सद्यः-वर्त्तमानकालभावि यद् वैरं तत्र गमनादिकं न कल्पते, एवं सद्योग्रहणादतीतमनागतं च वैरं निवारितं भवति, यत्र वैरं पूर्वोत्पन्नमस्ति यत्र वा भविष्यत्तया सम्भाव्यमानं तत्रापि क्षेत्रे गमनादीनि न कर्त्तव्यानीति भावः। तथा प्रज्ञापकं प्रतीत्य 'गतं' गमनमागमनम् 'उभयं वा' गमनागमनमत्र भवति। तत्र यत्र प्रज्ञापकस्तिष्ठति ततो यदन्यत्र गम्यते तद् गमनम्, अन्यतः स्थानात् प्रज्ञापकसम्मुखं यदागम्यते तदागमनम्, गत्वा प्रत्यागमने विधीयमाने गमनागमनम् ॥ अथ वैरशब्दस्य निक्षेपमाह-

[भा.२७६२] नामं ठवणा दविए, खेत्ते काले य भाववेरे य।
तं महिस-वसभ-वग्घा-सीहा नरएसु सिज्झणया ॥

वृ- नामवैरं स्थापनावैरं द्रव्यवैरं क्षेत्रवैरं कालवैरं भाववैरं चेति षड्विधं वैरम्। तत्र नाम-स्थापनावैरे सुगमे। द्रव्यवैरं तु यद् द्रव्यनिमित्तं गोत्रजादीनां वैरमुत्पद्यते। क्षेत्रवैरं यस्मिन् क्षेत्रे यस्य वा क्षेत्रस्य हेतोर्वैरमुत्पद्यते। कालवैरं तु यस्मिन् काले वैरमुत्पद्यते, यावन्तं वा कालं वैरं वर्त्तते। भाववैरं तु पश्चार्द्धेनाह-"तं महिस" इत्यादि। 'तद्' इति भाववैरं "महिष-वृषभ" इत्यादिना तु दृष्टान्तसूचा। स चायम्- एगत्थ गामे गावीओ चोरेहिं गहियाओ। तओ जो गामस्स महयरगो सो कुढेण निग्गओ। अम्मियाओ गावीओ। जुद्धं संपलग्गं। चोराहिवो सेनावई महत्तरेण सह संपलग्गो। ते रुद्दज्झाणोवगया एक्कमेक्कं वहेउं मया पढमपुढवीए नारगा उववन्ना। तओ उव्वट्टा ते दो वि महिसा जाया। अन्नमन्नं घासित्ता आसुरत्ता ज्झुज्झिउं मया दुच्चं पुढविं गया। तओ उव्वट्टित्ता वसभा जाया। तेनेव वेरेणं अन्नमन्नं मारित्ता पुनो दुच्चं पुढविं गया। तओ उव्वट्टित्ता दो वि वग्घा जाया। तत्थ वि अन्नोन्नं वहित्ता मया तच्चं पुढविं गया। ततो उव्वट्टित्ता दो वि सीहा उववन्ना। तत्थ वि एक्कमेक्कं वहित्ता मया चउत्थपुढवीए नारगा उववन्ना। ततो उव्वट्टा दो वि मनुएसु उववन्ना। तत्थ जिनसासणं पवन्ना, सिद्धा य ॥ एतद् भाववैरं मन्तव्यम्। अत्र चानेनैवाधिकार इति ॥ वैराज्यग्रहणादेतेऽप्यर्था सूचिता भवन्तीति दर्शयति-

[भा.२७६३] अनराए जुवराए, तत्तो वेरज्जए अ वेरज्जे।
एत्तो एक्किक्कम्मि उ, चाउम्मासा भवे गुरुगा ॥

वृ- अराजके यौवराज्ये तथा वैराज्ये द्वैराज्ये चेति चतुर्णां भेदानामेकैकस्मिन् भेदे गच्छतस्तपः-कालविशेषिताश्चतुर्मासा गुरुका भवेयुः। तत्र प्रथमे द्वाभ्यामपि तपः-कालाभ्यां लघवः द्वितीये कालगुरवः, तृतीये तपोगुरवः, चतुर्थे द्वाभ्यामपि गुरवः ॥ अराजकादीनामेव चतुर्णां व्याख्यानमाह-

[भा.२७६४] अनरायं निवमरणे, जुवराया जाव दोच्च नऽभिसित्तो।
वेरज्जं तु परबलं, दाइयकलहो उ वेरज्जं ॥

वृ-नृपस्य-प्राक्तनस्य राज्ञो मरणे सञ्जाते सति यावदद्यापि राजा युवराजश्चैतौ द्वावपि नाभिषिक्तौ तावदराजकं भण्यते प्राचीननृपतिना यो यौवराज्येऽभिषिक्त आसीत् तेनाधिष्ठितं राज्यम् परमनेन यावन्नाद्यापि द्वितीयो युवराजोऽभिषिक्तः तावद् यौवराज्यमुच्यते। यत्र तु 'परबलं' परचक्रमागत्य विड्वरं करोति तद् वैराज्यम्। यत्र तु द्वयोर्दायकयोः-सगोत्रयोरेकराज्याभिलाषिणोः स्वस्वकटकसन्निविष्टयोः परस्परं कलहः-विग्रहस्तद् द्वैराज्यमुच्यते ॥

व्याख्यातं वैराज्यम्। अथ विरुद्धराज्यंव्याख्यानयति-

[भा.२७६५] अविरुद्धा वाणियगा, गमना-ऽऽगमनं च होइ अविरुद्धं ।
निस्संचार विरुद्धे, न कप्पए बंधणाईया ॥

वृ- यत्र वैराज्ये वाणिजकाः परस्परं गच्छन्तोऽविरुद्धास्तत्र साधूनामपि गमानगमनं विरुद्धं न भवति, कल्पते तत्र गन्तुमिति भावः । यत्र तु वणिजां शेषजनपदस्य च निस्सञ्चारं कृतं-गमनागमननिषेधो विहितस्तद् वैराज्यं नृपतिविहिताः बन्धनादयो दोषास्तत्र भवन्तीति ॥

तत पुनर्गमनागमनं कथं भवति ? इत्याह-

[भा.२७६६] अत्ताण चोर मेया, वग्गु सोणिय पलाइणो पहिया ।
पडिचरगा य सहाया, गमनागमनम्मि नायव्वा ॥

वृ- इह विरुद्धराज्ये गच्छतामनेके प्रकाराः-तत्र "अत्ताण"त्ति संयता आत्मनैव चौरादिसहायविरहिता गच्छन्ति, एष चूर्ण्यभिप्रायः; निशीथचूर्ण्यभिप्रायस्तु-"अत्ताण"त्ति अत्राणा नाम-स्कन्धन्यस्ततलगुडद्वितीया ये देशान्तरं गच्छन्ति कार्पटिका वा तैः सह साधवोऽपि गच्छन्तीति प्रथमः प्रकारः, एवमुत्तरत्रापि भावना कार्या १ । तथा 'चौराः' गवादिहारिणः २, 'मेदा नाम' गृहीतचापा दिवा रात्रौ च जीववहिंसापरा म्लेच्छविशेषाः ३, 'वागुरिकाः' पाशप्रयोगेण मृगघातकाः ४, 'शौनिकाः' शुनिकाद्वितीया लुब्धकाः ५, 'पलायिनो नाम' ये भटादयो राज्ञः पृच्छां विना सकुटुम्बाः प्रणश्य राज्यान्तरं गच्छन्ति ६, 'पथिकाः' नानाविधनगर-ग्राम-देशपरिभ्रमणकारिणः७, 'प्रचिचरका नाम' ये परराष्ट्रस्वरूपं प्रच्छन्नचारितया गवेषयन्ति, हेरिका इत्यर्थः ८ । एते आत्मादयोऽत्राणादयो वाऽष्टौ भेदा भवन्ति । केषाञ्चिदाचार्याणां वागुरिकाः शौनिकाश्च द्वयेऽप्येक एव भेदस्तन्मतेनाष्टमा अहिमरका भवन्ति । अहि-सर्पस्तद्वदकृतेऽप्यपकारे परं मारयन्तीत्यहि-मरकाः। एते सहायाः साधूनां वैराज्यगमनागमने ज्ञातव्याः ॥ एतेष्वेव भङ्गोपदर्शनायाह-

[भा.२७६७] अतताणमाइएसु, दिय पह दिट्ठे य अट्ठिया भयणा ।
एत्तो एगयरेणं, गमनागमनम्मि आणाई ॥

वृ-आत्मादिभेदेषु अत्राणादिषु वा सहायेष्वेकैकस्मिन् दिवा-पथ-दृष्टपदैः सपरतिपक्षैरष्टिका भजना भवति, अष्टावष्टौ भङ्गा भवन्तीत्यर्थः । तथाहि-आत्मना सहायविरहिता दिवा मार्गेण राजपुरुषैर्दृष्टा गच्छन्ति १ आत्मना दिवा उन्मार्गेण राजपुरुषैरदृष्टाः ४ आत्मना रात्रौ मार्गेण दृष्टाः ५ आत्मना रात्रौ मार्गेणादृष्टाः ६ आत्मना रात्रौ उन्मार्गेण दृष्टाः ७ आत्मना रात्रावुन्मार्गेणादृष्टा गच्छन्ति ८ । एवं चौरादिभि द्वितीयव्याख्यानापेक्षया त्वत्राणादिभि प्रतिचरकान्तैः सहायैरपि सार्द्धं गच्छतां प्रत्येकमष्टौ भङ्गाः कर्त्तव्याः । "एत्तो एग" इत्यादि पश्चार्द्धम्-एतेषामष्टानां भेदानां प्रत्येकमष्टविधानां मध्यादेकतरेणापि प्रकारेण यो गमनागमनं करोति तस्याऽऽज्ञा-ऽनवस्थादयो दोषा भवन्ति ॥ प्रायश्चित्तं चेदम्-

[भा.२७६८] अत्ताणमाइएसुं दिय-पह-दिट्ठेसु चउलहू होंति ।
राओ अपह अदिट्ठे, चउगुरगाऽइक्कमे मूलं ॥

वृ-आत्मादिष्वत्राणादिषु वा पदेषु ये दिवाविषयाः प्रथमे चत्वारो भङ्गकास्तेषु पथ-दृष्टपदाभ्यां सप्रतिपक्षाभ्यामुपलक्षितेषु तपः-कालविशेषिताश्चत्वारो लघुकाः । ये तु रात्रिविषयाः पाश्चात्याश्चत्वारो भङ्गकास्तेषु अपथा-ऽदृष्टपदाभ्यां सप्रतिपक्षाभ्यामुपलक्षितेषु तपः-कालविशेषिताश्चत्वारो गुरुकाः।

यतो राज्यात् प्रधावितस्तस्य 'अतिक्रमे' अतिलङ्घने कृते सति मूलम् ॥

अथ सर्वभङ्गपरिमाण-ज्ञापनार्थमाह-

[भा.२७६९] अत्ताणमाइयाणं, अट्ठण्हऽट्ठहि पएहि भइयाणं।
चउसट्ठिए पयाणं, विराधना होइमा दुविहा ॥

वृ-आत्मादीनामत्राणादीनां वा अष्टानां पदानामष्टभिः 'पदैः' भङ्गैः प्रत्येकं 'भक्तानां' गुणितानां चतुःषष्टिसङ्ख्यानि भङ्गकपदानि भवन्ति। चतुःषष्टेश्च पदानामन्यतरेण गच्छत इयं 'द्विविधा' संयमाऽऽत्मलक्षणा विराधना भवति ॥ तामेवाह-

[भा.२७७०] छक्काय गहणकड्ढण, पंथं भित्तूण चेव अइगमनं।
सुन्नम्मि य अइगमणे, विराधना दुण्ह वग्गाणं ॥

वृ- अपथे-अशस्त्रोपहतपृथिव्यां गच्छन् पृथिवीकायम्, नद्यादिसन्तरणेऽवश्यायसम्भवे वाऽप्कायम्, दवानलसम्भवे सार्थिकप्रज्वालिताग्निप्रतापने वा तेजःकायम्, "यत्राग्निस्तत्र नियमाद् वायुर्भवति" इति कृत्वा वायुकायम्, हरितादिमर्दने प्रलम्बासेवने वा वनस्पतिम्, पृथिव्युदकवनस्पतिसमाश्रितत्रसानां परितापनादौ त्रसकायम्, एवं षट्कायान् विराधयति इति संयमविराधना। तथा राजपुरुषा ग्रहणाकर्षणादिकं विदध्युरित्यात्मविराधना। अथ ते साधवः 'पन्थानं' मार्गं भित्त्वोत्पथेन परजनपदे 'अतिगमनं' प्रवेशं कुर्वन्ति ततो गाढतरेऽपराधे लगन्ति। 'शून्ये वा' स्थानपालविरहिते मार्गेऽतिगमने विधीयमाने 'द्वयोरपि वर्गयोः' संयतानां सहायानां च विराधना भवतीति ॥ अथ षट्कायविराधनायां तावत् प्रायश्चित्तमाह-

[भा.२७७१] छक्काय चउसु लहुगा, परित्त लहुगा य गुरुग साहारे।
संघट्टण रितावण, लगु गुरुगऽइवायणे मूलं ॥

वृ- अस्या व्याख्या प्राग्वत् ॥ अथ ग्रहणाकर्षणापदं व्याचष्टे-

[भा.२७७२] संजय-गिहि-तदुभयभद्दया य तह तदुभयस्स वि य पंता।
चउभंग गोम्मिएहिं, संजयभद्दा विसज्जेंति ॥

वृ-गौल्मिका नाम-ये राज्ञः पुरुषाः स्थानकं बद्ध्वा पथानं रक्षयन्ति तेषु चतुर्भङ्गी-संयतभद्रका गृहस्थप्रान्ताः १, गृहिणां भद्रकाः संयतप्रान्ताः २, संयतभद्रका अपि गृहस्थभद्रका अपि ३, न संयतभद्रका न गृहस्थभद्रकाः किन्तु तदुभयस्यापि प्रान्ताः ४। अत्र ये संयतभद्रका गौल्मिकाः प्रथमतृतीयभङ्गवर्त्तिन इत्यर्थः ते साधून् गच्छतो विसर्जयन्ति न निरुन्धते ॥

[भा.२७७३] संजयभद्दगमुक्के, बीया घेत्तुं गिही वि गिण्हंति।
जे पुन संजयपंता, गिण्हंति जई गिही मुत्तुं ॥

वृ- संयतभद्रकैर्मुक्तानपि साधून् 'द्वितीयाः' द्वितीयभङ्गवर्त्तिनः स्थानपालकास्ते संयतप्रान्तत्वाद् गृह्णन्ति, गृहीत्वा च ते 'गृहिणोऽपि' प्रथमस्थानपालकान् गृह्णन्ति, यस्माद् 'अमीभि समं यूयं गच्छतेत्यतो यूयमप्यपराधिनः' इति कृत्वा। ये पुनः संयतप्रान्ताः, पुनःशब्दो विशेषणे, किं विशिनष्टि ? ये गौल्मिकाः संयतानामेवातीव प्रद्विष्टास्ते गृहिणो मुक्त्वा यतीन् गृह्णन्ति, गृहीत्वा च बन्धनादिकं कुर्युः ॥

[भा.२७७४] पढम-तइयमुक्काणं, रज्जे दिट्ठाण दोण्ह वि विनासो।

पररज्जपवेसेवं, जओ वि णिंती तहिं पेवं ॥

वृ-प्रथमतृतीयभङ्गयोः संयतभद्रकैर्मुक्ताः सन्तः साधवः परराज्ये प्रविष्टा दृष्टाश्च राजपुरुषैः, ततः पृष्टाः-किमुत्पथेनायाताः ? उत पथा ? । यदि साधवो भणन्ति 'उत्पथेन' तत उन्मार्गगामित्वात् 'चारिका एते' इति कृत्वा ग्रहणाकर्षणादिकं प्राप्नुवन्ति । अथ ब्रुवते 'पथा वयमागताः' ततो द्वयोरपि वर्गयोर्विनाशो भवति,संयतानां स्थानपालकानां चेति भावः । एवं परराज्यप्रवेशे दोषा अभिहिताः । यतोऽपि राज्याद् निर्गच्छन्ति तत्राप्येत एव दोषा भवन्ति ॥ अथ "पंथं भित्तूण" इत्यादिपदं व्याख्यानयति-

[भा.२७७५] रक्खिज्जइ वा पंथो, जइ तं भित्तूण जनवयमइंति ।
गाढतरं अवराहो, सुत्ते सुन्ने य दोण्हं पि ॥

वृ- अथ चौर-हेरिकादिभयात् पन्था रक्ष्यते, न वा कस्यापि गमनागमनं कर्तुं स्थानपालकाः प्रयच्छन्ति, ततस्तं पन्थानं भित्त्वा यद्युत्पथेन परनृपतेर्जनपदम् 'अतियन्ति' प्रविशन्ति ततो गाढतरमपराधो भवति, महान् दोषस्तेषां लगतीति भावः । अत्र साधूनामेव दोषो नस्थानपालकानाम्। अथ स्थानपालकाः सुप्ता भवन्ति शून्यं वा तत स्थानकं वर्तते, स्थानपालकानामन्यत्र कुत्रापि गमनात्, तत्र यदि साधवो गच्छन्ति तदा 'द्वयोरपि वर्गयोः' स्थानपालकानां संयतानां चेत्यर्थःग्रहणाकर्षणादयो दोषा भवन्ति ॥ तानेव सप्रायश्चित्तान् दर्शयति-

[भा.२७७६] गेण्हणे गुरुगा छम्मास कड्ढणे छेओ होइ ववहारे ।
पच्छाकडे य मूलं, उड्डहण विरुंगणे नवमं ॥

[भा.२७७७] उद्दावण निव्विसए, एगमनेगे पओस पारंची ।
अणवट्ठप्पो दोसु य, दोसु य पारंचिओ होइ ॥

वृ- गाथाद्वयस्यापि व्याख्या प्राग्वत् ॥ एवमात्मनैवासहायानामत्राणसहायानां वा गच्छतां दोषा अभिहिताः । अथ चौरादिसहाययुक्तानां दोषानतिदिशन्नाह-

[भा.२७७८] एमेव सेसएहि वि, चोराईहि समगं तु वच्चंते ।
सविसेसयरा दोसा, पत्थारो जाव भंसणया ॥

वृ-एवमेव चौर-प्रतिचरकादिसहायैः शेषैरपि व्रजतां दोषास्त एव ग्रहणाकर्षणादयो वक्तव्याः, परं सविशेषतराः । तथाहि-तेषां साधूनां दोषेण यदन्येषामपि तद्गच्छीयानां परगच्छीयानां वा कुलस्य वा गणस्य वा सङ्घस्य वा ग्रहणाकर्षणादिकम् एष प्रस्तार उच्यते । स वा भवेद् जीवितस्य वा चरणस्य वा भ्रंशनं स्यात् । यावच्छब्दोपादानात् शरीरविकर्तनभेदा द्रष्टव्याः ।

सविशेषदोषदर्शनार्थमाह-

[भा.२७७९] तेणट्ठम्मि पसज्जण, निस्संकिए मूल अहिमरे चरिमं ।
जइ ताव होंति भद्दय, दोसा ते तं चिमं चऽन्नं ॥

वृ- स्तेनादिभिः सह गच्छन् स्तैन्यार्थे प्रसजनं करोति, स्तैन्यादिकं करोति कारयति अनुमन्यते वा इत्यर्थः ।तथा यदि 'स्तेनोऽयम्' इति शङ्क्यते तदा चत्वारो गुरुकाः । निशङ्किते मूलम् । 'अभिमरोऽयम्' इति निशङ्किते 'चरमं' पाराञ्चिकम् । अपि च यदि तावत् ते स्थानपालका भद्रका भवन्ति तथापि वैराज्यं सङ्क्रामतः साधून् दृष्ट्वा चिन्तयन्ति-एतेऽपि यदीदृशानि कुर्वन्ति

तर्हि न किमप्यमीषां मध्ये शोभनम्, तीर्थकरेण वा किं न प्रतिषिद्धं वैराज्यसङ्क्रमणम् ? इत्यादि। एवं च तेऽपि प्रान्तीभवन्ति । अथवा यदि त स्थानपाला भद्रका भवन्ति तदा तैर्विसर्जितानां परराष्ट्रं प्रविष्टानां त एव दोषाः, तदेव च चतुर्गुरुकादिकं प्रायश्चित्तम्, इदं चान्यत् प्रायश्चित्तावहं दोषजालम् ।। तदेव दर्शयति-

[भा.२७८०] आयरिय उवज्झाया, कुल गण संघो य चेइयाइं च ।
सव्वे वि परिच्चत्ता, वेरज्जं संकमंतेणं ।।

वृ- 'आचार्या' अर्थदातारः 'उपाध्यायाः' सूत्रप्रदाः 'कुलं' नागेन्द्रादि 'गणः' परस्परसापेक्षानेककुलसमुदायः 'सङ्घः' गणसमुदायः 'चैत्यानि' भगवद्बिम्बानि जिनभवनानि वा । एते आचार्यादयः सर्वेऽपि वैराज्यं सङ्क्रमता परित्यक्ताः ।। एतदेव भावयति-

[भा.२७८१] किं आगय त्थ ते बिंति संति ने इत्थ आयरियमादी ।
उग्घाएमो रुक्खे, मा एंतु फलत्थिणो सउणा ।।

वृ- 'ते' साधवो राजपुरुषैः पृच्छ्यन्ते-किमर्थं यूयमिहागताः स्थ ? । साधवो ब्रुवते-'सन्ति' विद्यन्ते "ने" अस्माकमिहाचार्यादयः अतो वयमागताः । ततो राजपुरुषा दृष्टान्तं वदन्ति-यस्मात् फलार्थिनः 'शकुनाः' पक्षिणो वृक्षानागच्छन्ति तस्मात् तानेव वृक्षानुद्धातयामः, मा फलार्थिनः शकुना आगच्छन्तु । एतेन दृष्टान्तसामर्थ्येन तानेवाचार्यादीनुद्धास्यामो येन युष्मदर्थमिह कोऽपि नागच्छति ।। यत एते दोषा अतः-

[भा.२७८२] एयारिसे विहारो, न कप्पई समणसुविहियाणं तु ।
दो सीमेऽइक्कमई, जिनसीमं रायसीमं च ।।

वृ- एतादृशे वैराज्ये विरुद्धराज्ये विहारः श्रमणानां सुविहितानां न कल्पते । यस्तु करोति स द्वे सीमानावतिक्रामति, तद्यथा-'जिनसीमानं' 'न कल्पते वैराज्यसङ्क्रमणं कर्तुम्' इति लक्षणां 'राजसीमानं च' 'न कर्त्तव्यो मदीयराज्यात् परराज्ये गमागमः' इति रूपाम् ।। किञ्च-

[भा.२७८३] बंधं वहं च घोरं, आवज्जइ एरिसे विहरमाणो ।
तम्हा उ विवज्जेज्जा, वेरज्ज-विरुद्धसंकमणं ।।

वृ- 'बन्धं' निगडादिनियन्त्रणं 'वधं च' कशाघातादिकं 'घोरं' भयानकमीदृशे विहरमाणो यत आपद्यते तस्माद् वैराज्य-विरुद्धराज्यसङ्क्रमणं विवर्जयेत् ।। अथ द्वितीयपदमाह-

[भा.२७८४] दंसण नाणे माता, भत्तविसोही गिलाणमायरिए ।
अधिकरण वाद राय कुलसंगते कप्पई गंतुं ।।

वृ- दर्शनार्थं ज्ञानार्थं वैराज्यसङ्क्रमणमपि कुर्यात् । "माय"त्ति मातापितरौ कस्यापि प्रव्रजितुकामौ शोकेन म्रियेते तयोः समाधानार्थं गच्छेत् । "भत्तविसोहि"त्ति कश्चित् साधुर्भक्तं प्रत्याख्यातुकामः स विशोधिम्-आलोचनां दातुकामो गीतार्थस्यपार्श्वे पार्श्वे गच्छेत्, अजङ्गमस्य वा तस्य पार्श्वे गीतार्था गच्छन्ति । "गिलाण"त्ति ग्लानस्य वा प्रतिचरणार्थं प्रायोग्यौषधहेतवे वा गच्छेत् । "आयरिय"त्ति आचार्यसमीपे आचार्याणामादेशेन वा गच्छति । "अधिकरण" त्ति कस्यापि साधोः केनापि गृहिणा सहाधिकरणमुत्पन्नम्, स च गृही नोपशाम्यति, ततः प्रज्ञापनालब्धिमान् तस्योपशमनाय गच्छति । "वाद" ति अन्यराज्ये परप्रवादी कश्चिदुत्थितः तस्य

निर्ग्रहार्थं वादलब्धिसम्पन्नेन गन्तव्यम्। ''राय''त्ति राजा वा कश्चित् परराष्ट्रीयः साधूनामुपरि प्रद्विष्टस्तस्योपशमनार्थं सलब्धिकेन गन्तव्यम्। ''कुलसंगय''त्ति उपलक्षणत्वात् कुल-गणसङ्घसङ्गतं किमपि कार्यमुत्पन्नं कुलादिविषयमित्यर्थः। अथवा ''रायकुलसंगत''त्ति एकमेव पम्, राजकुलेन सह सङ्गतं-सम्बद्धं केनापि साधुना अधिकरणं कृतं तदुपशमनाय गच्छति। एवमादिषु कार्येषु वैराज्येऽपि गन्तुं कल्पते॥ अथ दर्शन-ज्ञानपदद्वयं भाष्यकृद् व्याख्यानयति-

[भा.२७८५] सुत्त-ऽत्थ-तदुभयविसारयम्मि पडिवन्न उत्तिमट्ठम्मि।
एतारिसम्मि कप्पइ, वेरज्ज-विरुद्धसंकमणं॥

वृ- दर्शनप्रभावकशास्त्राणामाचारादिश्रुतज्ञानस्य वा सम्बन्धि यदन्यत्राविद्यमानं सूत्रार्थतदुभयं तत्र विशारदः कश्चिदाचार्य स चोत्तमार्थमनशनं प्रतिपन्नः। यस्मिंश्च क्षेत्रेऽसौ स्थितस्तत्र अपान्तराले वा वैराज्यं वर्त्तते, 'तौ च सूत्रार्थौ मा व्यवच्छेदं प्रापताम्' इति कृत्वा एतादृशे कारणे वैराज्य-विरुद्धे सङ्क्रमणं कर्त्तुं कल्पते॥ अथ येन विधिना तत्र गन्तव्यं तमभिधित्सुराह-

[भा.२७८६] आपुच्छिय आरक्खिय-सट्ठि-सेनावई-अमच्च-राईणं।
अइगमने निग्गमने, एस विही होइ नायव्वो॥

वृ-आपृच्छ्यारक्षिकं ततः श्रेष्ठिनं ततः सेनापतिं ततोऽमात्यं ततो राजानमप्यापृच्छ्य निर्गन्तव्यं प्रवेष्टव्यं वा। एष विधि 'अतिगमने' परराज्यप्रवेशे 'निर्गमने च' पूर्वस्माद् राज्याद् निर्गमने च ज्ञातव्यो भवति॥ अमुमेवार्थं प्रकटयन्नाह-

[भा.२७८७] आरक्खितो विसज्जइ, अहव भणिज्जा स पुच्छह तु सेट्ठिं।
जाव निवो ता नेयं, मुद्दा पुरिसो व दूतेणं॥

वृ- वैराज्य-विरुद्धं गच्छता प्रथमत एवारक्षिकः प्रष्टव्यः। यद्यसौ विसर्जयति ततो लष्टम्। अथासौ भणेत्-नाहं जानामि, 'श्रेष्ठिनं' श्रीदेवताऽध्यासितशिरोवेष्टनविभूषितोत्तमाङ्गं पृच्छत। ततः श्रेष्ठी प्रष्टव्यः, एवं यावद् 'नृपः' राजा तावद् 'नेयं' नेतव्यं वक्तव्यमित्यर्थः। तच्चैवम्-श्रेष्ठी पृष्टो यदि विसर्जयति ततः सुन्दरम्, अथासौ ब्रूयात्-अहं न जानामि, सेनापतिं प्रश्नयत। ततः सेनापति प्रश्नितो यद्यनुजानीते ततः शोभनम्, अथासौ ब्रूयात्-अमात्यं पृच्छत। ततोऽसावमात्यः पृष्टो यदि विसर्जयति ततो लष्टम्, अथ ब्रूयात्-राजानं पृच्छत। ततो राजाऽपि प्रष्टव्यः। एते च राजादयो यदिविसर्जयन्ति तदा मुद्रापट्टकं दूतपुरुषं वा मार्गयितव्याः, येन 'राजादिना विसर्जिता एते' इति स्थानपालकाः प्रत्ययतः प्रथमवतारयन्ति; यो वा दूतस्तत्र राज्ये व्रजति तेन सार्द्धं गच्छन्ति॥ एवं तावद् यतो राज्यान्निर्गच्छन्ति तत्र विधिरुक्तः। अथ यत्र राज्ये गन्तुकामास्तत्र प्रविशतां विधिमाह-

[भा.२७८८] जत्थ वि य गंतुकामा, तत्थवि कारिंति तेसि नायं तु।
आरक्खियाइ ते वि य, तेनेव कमेण पुच्छंति॥

वृ- यत्रापि राज्ये गन्तुकामास्तत्रापि ये साधवो वर्त्तन्ते तेषां लेखप्रेषणेन सन्देशकप्रेषणेन वा प्रागेव ज्ञातं कुर्वन्ति, यथा-वयमितो राज्यात् तत्रागन्तुकामाः, अतो भवद्भिस्तत्रारक्षिकादयः प्रष्टव्याः। ततस्तेऽपि 'तेनैव' पूर्वोक्तेन क्रमेण आरक्षिकादीन् पृच्छन्ति। यदा तैरनुज्ञातं भवति तदा तान् साधून् ज्ञापयन्ति-आरक्षिकादिभिरत्रानुज्ञातमस्ति, भवद्भिरत्रागन्तव्यम्॥ निर्गमने

प्रवेशे च विधिरुक्तः । अथ "आयरिय" त्ति पदं विशेषतो भावयन्नाह-

[भा.२७८९] राईण दोण्ह भंडण, आयरिए आसियावणं होइ ।
कयकरणे करणं वा, निवेद जयणाए संकमणं ॥

वृ- द्वयो राज्ञोः परस्परं 'मण्डनं' कलहो वर्त्तते, तत्रैकस्य राज्ञः कोऽप्याचार्योऽतीव पूजा-सत्कारस्थानम्, ततश्च द्वितीयो नृपतिस्तत् परिज्ञायाऽऽत्मीयदक्षपुरुषैः "आसिआवणं" ति तस्याचार्यस्यापहरणं कारयति 'अस्मिन् हि गृहीते स प्रतिपन्थिपार्थिवो गृहीत एव भवति' इति। अत्र च य- 'कृतकरणः' धनुर्वेदादौ गृहवासे कृतपरिश्रमस्तस्य तत्र करणं भवति, तेनाचार्यापहारिणा सह युद्धं कर्त्तुमुपतिष्ठत इत्यर्थः । अथ नास्ति कोऽपि कृतकरणस्ततो यस्य राज्ञः सकाशादपहृतस्तस्य निवेदनं कृत्वा यतनया शेषसाधवः सङ्क्रमणं कुर्वन्ति ॥ इदमेव स्फुटतरमाह-

[भा.२७९०] अब्भरहियस्स हरणे, उज्जाणाईठियस्स गुरुणो उ ।
उव्वट्टणासमत्थे, दूरगए वा वि सवि बोलं ॥

[भा.२७९१] पेसवियम्मि अदेंते, रन्ना जइ वि उ विसज्जिया जिस्सा ।
गुरुणो निवेइयम्मि, हारिंतगराइणो पुव्विं ॥

वृ- 'अभ्यर्हितस्य' राजमान्यस्य 'गुरोः' आचार्यस्योद्यान-सभा-प्रपादिषु स्थितस्य हरणं भवति। यदि च कोऽपि युद्धकरणेन विद्याप्रयोगेण वा तस्योद्वर्त्तनायाः-वालनायाः समर्थो भवति ततः स तं निजमाचार्यं प्रत्याहरति ! अथ नास्त्युद्वर्त्तनासमर्थ ततः क्षणमात्रं साधवस्तूष्णीका आसते । यदा आचार्यापहारी दूरंगतो भवति तदा "सवि" त्ति सर्वेऽपि साधवो बोलं कुर्वन्ति-अस्माकमाचार्यो हृतो हृतः, धावत धावत लोकाः ! इति । आसन्नस्थिते तु बोलं न कुर्वन्ति 'मा भूत् परस्परं बहुजनक्षयकारी युद्धविप्लवः' इति । ततश्च राजा साधुभिरभिधातव्यः-अनाथा वयमाचार्यैर्विना, अत आचार्या यथाऽत्रागच्छन्ति तथा कुरुत । एवमुक्तोऽसौ द्वितीयस्य राज्ञो दूतं विसर्जयति-शीघ्रमाचार्य प्रेषणीय इति । यदि तेन प्रस्थापितस्ततो लष्टम् । अथासौ दूते प्रेषितेऽप्याचार्यं न ददाति-न विसर्जयतीत्यर्थः ततः साधवो द्वे त्रीणि वा दिनानि राजानं दृष्ट्वा ब्रुवते-अस्मान् विसर्जयत येन गुरूणामुपकण्ठं गच्छामः, कीदृशा वयं गुरुविरहिता अत्र तिष्ठन्तः ? स्वाध्यायादिकं वाऽत्र न किमपि निर्वहतीत्यादि । एवमुक्ते यद्यपि ते शिष्या राज्ञा विसर्जितास्तथापि गुरूणां सन्देशकप्रेषणेन निवेदयन्ति-वयमागच्छन्तः स्मः । ततो गुरवः "हारिंतगराइणो पुव्विं" ति अपहर्त्तृराज्ञः पूर्वमेव निवेदयन्ति-अहं शिष्यानप्यानयामि, अतः स्थानपालानामादेशं प्रयच्छत येन ते तान्न गृह्णन्ति । एवं निवेदिते सति यतनया सङ्क्रमणं कुर्वन्ति ॥

मू. (३८) *निग्गंथं च णं गाहावइकुलं पिंडवायपडियाए अणुपविट्ठं केइ वत्थेण वा पडिग्गहेण वा कंबलेण वा पाय-पुंछणेण वा उवनिमंतिज्जा, कप्पइ से सागारकडं गहाय आयरियपायमूले ठवित्ता दोच्चं पि उग्गहं अणुन्नवित्ता परिहारं परिहरित्तए ॥*

[भा.२७९२] अविरुद्धए भिक्खगतं, कोइ निमंतेज्ज वत्थमाईहिं ।
कारण विरुद्धचारी, विगिंचितो वा वि गेण्हेज्जा ॥

वृ- 'अविरुद्धे' विरुद्धराज्यविरहिते ग्रामादौ 'भिक्षागतं' भिक्षायां प्रविष्टं साधुं कश्चि-दुपासकादिर्वस्त्रादिभिर्निमन्त्रयेत्, यद्वा 'कारणे' दर्शन-ज्ञानादौ विरुद्धराज्यचारी स्तेनादिभिः

'विविक्तः' मुषितः सन् वस्त्राणि गृह्णीयात्, अतो वस्त्रग्रहणविधि प्रतिपाद्यते ॥

**[भा.२७९३]** अहवा लोइयतेण्णं, निवसीम अइच्छिए इमं भणितं ।
दोग्गमणणुन्नेवउं, उत्तरियं वत्थभोगादी ॥

**वृ-** अतवा नृपसीमानमतिक्रम्य विरुद्धराज्यसङ्क्रमणे लौकिकस्तैन्यम्, इदमनन्तरसूत्रे भणितम्। अत्र तु सूत्रे द्वितीयं वारमवग्रहमाचार्यसमीपेऽननुज्ञाप्य यदा वस्त्रपरिभोगम् आदिशब्दाद् धारणं वा करोति तदा लोकोत्तरिकस्तैन्यं भवतीति प्रतिपाद्यते ॥ एभिः सम्बन्धैरायातस्यास्य व्याख्या- 'निर्ग्रन्थं' पूर्वोक्तशब्दार्थं चशब्दोऽर्थान्तरोपन्यासार्थः "ण" मिति वाक्यालङ्कारे गृहस्य पति-स्वामी गृहपतिस्तस्य कुलं-गृहं 'पिण्डपातप्रतिज्ञया पिण्डः-ओदनादिस्तस्य पातः-पात्रे प्रवेशस्तत्प्रतिज्ञया- तत्प्रत्ययमनुप्रविष्टं 'कश्चिद्' उपासकादिर्वस्त्रेण वा प्रतिग्रहेण वा कम्बलेन वा पात्र-प्रोञ्छनेन वा उपनिमन्त्रयेत् । वस्त्रं सौत्रिकमिह गृह्यते, प्रतिग्रहः-पात्रकम्, कम्लम्-ओर्णिकः कल्पः, पात्रशब्देन तु पात्रबन्ध-पात्रकेसरिकाप्रभृतिकः पात्रनिर्योगः, प्रोञ्छनशब्देन तु रजोहरणमुच्यते, आह च चूर्णिकृत्- पायग्गहणेणं पायभंडयं गहियं, पुंछणं रयहरणं ति ।

ततश्च पात्रं च प्रोञ्छनं चेति पात्र-प्रोञ्छनम्, समाहारद्वन्द्वः, एतैः उप-सामीप्ये आगत्य निमन्त्रयेत्। उपनिमन्त्रितस्य च "से" तस्य निर्ग्रन्थस्य 'साकारकृतं' 'आचार्यसत्कमेतद् वस्त्रं न मम, अतो यस्मै ते दास्यन्ति अन्यस्मै वा मह्यं वा आत्मना वा परिभोक्ष्यन्ते तस्यैतद् भविष्यति' इत्येवं सविकल्पवचनव्यवस्थापितं सद् गृहीत्वा तत आचार्यपादमूले तद् वस्त्रं स्थापयित्वा यदि ते तस्यैव साधोः प्रयच्छन्ति तदा 'द्वितीयमप्यवग्रहम्' एकस्तावद् गृहस्थादवग्रहोऽनुज्ञापितो द्वितीयं पुनराचार्यपादमूलादवग्रहमनुज्ञाप्य धारणा-परिभोगरूपं द्विविधमपि परिहारं तस्य वस्त्रस्य 'परिहर्तुं' धातूनामनेकार्थत्वाद् आचरितुं कल्पते इति सूत्रसङ्क्षेपार्थः । अथ विस्तरार्थं बिभणिषुराह-

**[भा.२७९४]** दुविहं च होइ वत्थं, जायणवत्थं निमंतणाए य ।
निमंतणवत्थं ठप्पं, जायणवत्थं तु वोच्छामि ॥

**वृ-** द्विविधं च भवति वस्त्रम्-याच्ञावस्त्रं निमन्त्रणावस्त्रं च । तत्र निमन्त्रणावस्त्रं 'स्थाप्यं' पश्चादभिधास्यते इत्यर्थः । याच्ञावस्त्रं पुनः साम्प्रतमेव वक्ष्यामि ॥ यथाप्रतिज्ञातमेव निर्वाहयति-

नामं ठवणावत्थं, दव्वव्वत्थं च भाववत्थं च ।
एसो खलु वत्थस्सा, निक्खेवो चउव्विहो होइ ॥ इत्यादिकाः ।
एवं तु गविट्ठेसु, आयरिया देंति जस्स जं नत्थि ।
समभागेस कप्पेसु व, जहराइणिया भवे बीओ ॥

इति पर्यन्ताः षट्चत्वारिंशद्गाथा यथा पीठिकायां वस्त्रकल्पिकद्वारे तथैवात्र द्रष्टव्याः ॥ उपसंहरन्नाह-

**[भा.२७९५]** एयं जायणवत्थं, भणियं एत्तो निमंतणं वोच्छं ।
पुच्छादुगपरिसुद्धं, पुनरवि पुच्छेज्जिमा मेरा ॥

**वृ-** एतद् याच्ञावस्त्रं भणितम् । इत ऊर्ध्वं निमन्त्रणावस्त्रं वक्ष्यामि । तत्र यदा 'कस्यैतद् वस्त्रम्? किंवा नित्यनिसनीयादिकमिदमासीत्?' इति पृच्छाद्वयेन परिशुद्धं भवति तदा 'पुनरपि' तृतीयया पृच्छया पृच्छेत् । तत्र च 'इयं' वक्ष्यमाणा 'मर्यादा' सामाचारी ॥ तामेवाह-

[भा.२७९६]　विउसग्ग जोग संघाडएण भोइयकुले तिविह पुच्छा।
कस्स इमं किं व इमं, कस्स व कज्जे लहुग आणा ॥

वृ- 'व्युत्सर्गो नाम' उपयोगसम्बन्धी कायोत्सर्गस्तं कृत्वा, 'यस्य च योगः' इति भणित्वा, सङ्घाटकेन भिक्षार्थं निर्गतः। ततो भोगिककुले उपलक्षणत्वादन्यत्रापि यथाप्रधाने कुले प्रविष्टः कयाचिदीश्वरया महता सम्भ्रमेण भक्त-पानेन प्रतिलाभ्य वस्त्रेण निमन्त्रितः, तत्र त्रिविधा पृच्छा प्रयोक्तव्या। तद्यथा-'कस्य सत्कमिदं वस्त्रम् ? किं वा इदमासीत् ?' अनेन पृच्छाद्वयेन परिशुद्धं यदा भवति तदा प्रष्टव्यम्-कस्यवा कार्यस्य हेतोः प्रयच्छसि ? इति। यद्येवं न पृच्छति ततश्चत्वारो लघवः आज्ञादयश्च दोषाः ॥ अथ विशेषदोषानभिधित्सुराह-

[भा.२७९७]　मिच्छत्त सोच्च संका, विराधना भोइए तहि गए वा।
चउत्थं व विंटलं वा, वेंटल दाणं च ववहारो ॥

वृ- भोगिन्या दीयमानं वस्त्रं यदि 'केन कार्येण प्रयच्छसि ?' इति न पृच्छयते तदा भोगिको मिथ्यात्वं गच्छेत्। अथासौ देशान्तरं गतस्तत आगतस्य महत्तरादिमुखाच्छ्रुत्वा शङ्का भवति। भोगिके तत्र स्थिते 'गते वा' देसान्तरप्रापेत पश्चादयाते सति 'विराधना' वक्ष्यमाणा भवति सा चाविरतिका 'चतुर्थं वा' मैथुनमवभाषेत 'वेण्टलं वा' वशीकरणादिप्रयोगं पृच्छेत् ततश्च वक्तव्यम्-वेण्टलमहं न जानामि, उपलक्षणत्वात् चतुर्थं च प्रतिसेवितुं न कल्पते। ततो यदि सा वस्त्रं याचते तदा दानं कर्त्तव्यम्, भूयोऽपि तद् वस्त्रं तस्या एव समर्पणीयमिति भावः। अथ तद् वस्त्रं छिन्नं वा प्राघुर्णकादीनां दत्तं वा भवेत् सा च तदेव वस्त्रं मार्गयेत् तदा राजकुलं गत्वा व्यवहारः कर्त्तव्य इति द्वारगाथासमासार्थः ॥ अथैनामेव विवरीषुराह-

[भा.२७९८]　वत्थम्मि नीणियम्मि, किं दलसि अपुच्छिऊण जइ गेण्हे।
अन्नस्स भोयगस्स व, संका घडिया नु किं पुव्विं ॥

वृ- वस्त्रे भोगिन्या निष्काशिते सति यदि 'किं' किमर्थं ददासि ? इत्यपृष्ट्वैव गृह्णाति तदा 'भोक्तुः' तदीयस्यैव भर्तुः 'अन्यस्य वा' श्वशुर-देवरादेः शङ्का भवेत्। नुरिति वितर्के, किं मन्ये एतौ परस्परं पूर्वमेव घटितौ यदेवंतूष्णीकौ दान-ग्रहणे कुरुतः ? अथवा किमेषा मैथुनार्थिनी भूत्वा वस्त्रमस्मै प्रयच्छति ? उत वेण्टलार्थिनी ? इति ॥

[भा.२७९९]　मिच्छत्तं गच्छेज्जा, दिज्जंतं दट्ठु मोयओ तीसे।
वोच्छेद पओसं वा, एगमनेगाण सो कुज्जा ॥

वृ- तद् वस्त्रं दीयमानं दृष्ट्वा तस्याः सम्बन्धी 'भोजकः' भर्त्ता मिथ्यात्वं गच्छेत्, यथा-निस्सारं प्रवचनममीषामित्यादि। प्रतिपन्नमिथ्यात्वश्च तस्य वैकस्य साधोरनेकेषां वा साधूनां तद्द्रव्यान्यद्रव्यव्यवच्छेदं कुर्यात् प्रद्वेषं वा गच्छेत् ॥

गतं मिथ्यात्वद्वारम्। अथ 'श्रुत्वा शङ्का' द्वारं विराधनाद्वारं चाह-

[भा.२८००]　एमेव पउत्थे भोइयम्मि तुसिनीयदान-गहणे तु।
महतरगादीकहिए, एगतर पतोस वोच्छेदो ॥

[भा.२८०१]　मेहुणसंकमसंके, गुरुगा मूलं च वेंटले लहुगा।
संकमसंके गुरुगा, सविसेसतरा पउत्थम्मि ॥

वृ- एवमेव 'प्रोषिते' देशान्तरगतेऽपि भोगिके दोषा वक्तव्याः। तथाहि-तेन भोगिकेन देशान्तरं गच्छता ये महत्तरकाः स्थापितास्तैः आदिशब्दाद् महत्तरिकया द्व्यक्षरिकया कर्मकरेण वा तयोरविरतिका-संयतयोस्तूष्णीकदान-ग्रहणं दृष्ट्वा भोगिकस्य भूयः समागतस्य कथितम्। ततश्च सः 'एकतरस्य' संयतस्याविरतिकाया वा उपरि प्रद्वेषं गच्छेत्, प्रद्विष्टश्चाविरतिकां संयतं वा हन्याद् निष्काशयेद्वा बध्नीयाद्वा निरुन्ध्याद्वा विमानयेद्वा, व्यवच्छेदं वैकस्यानेकेषां वा कुर्यात्। अत्र च मैथुनशङ्कायां चत्वारो गुरुकाः, निशङ्किते मूलम्। वेण्टलशङ्कायां चत्वारो लघुकाः, निशङ्किते चत्वारो गुरवः। सविशेषतराश्च दोषाः प्रोषिते भोगिके भवन्ति, ते च यथास्थानं प्रागेवोक्ताः॥

[भा.२८०२]	एवं ता गेण्हंते, गहिए दोसा पुनो इमे होंति।
घरगयमुवस्सए वा, ओभासइ पुच्छए वा वि॥

वृ- एवं तावद् वस्त्रं गृह्णतो दोषा उक्ताः, गृहीते पुनर्वस्त्रे 'एते' वक्ष्यमाणा दोषा भवन्ति- तस्मिन् गृहे यदा स एव साधुरन्यस्मिन् दिवसे गतो भवति सा वा अविरतिका तस्य साधोरुपाश्रये आगता भवति तदा मैथुमवभाषते-त्वं ममोद्भ्रामको भव। वेण्टलं वा सा पृच्छति- कथय किमपि तादृशं वशीकरणं येन भोगिको मे वशीभवति॥ इदमेव स्पष्टयति-

[भा.२८०३]	पुच्छाहीणं गहियं, आगमनं पुच्छणा निमित्तस्स।
छिन्नं पि हु दायव्वं, ववहारो लब्भए तत्थ॥

वृ- ग्रहणकाले 'केन कार्येण मे प्रयच्छसि?' इत्येवं पृच्छया हीनं वस्त्रं गृहीतम्। गृहीते च तस्याः संयतप्रतिश्रये आगमनम्, आगता च सा 'पुत्रो मे भविता? न वा?' इत्यादिकं निमित्तं पृच्छति, येन वाऽहं भोगिकस्याभिरुचिता भवामि तत् किमप्युपदिश। ततः साधुना वक्तव्यम्- न कल्पते मैथुनं प्रतिसेवितुं साधूनाम्, वेण्टलं निमित्तं वा नाहं जानामि। एवमुक्ते यदि सा वस्त्रं भूयोऽपि मार्गयेत् ततः प्रतिदातव्यम्। अथ तेन वस्त्रेण छित्त्वा पात्रबन्धादिकं किमप्यपरं कृतं ततश्छिन्नमपि तदेव दातव्यम्। अथ व्यवहारद्वारं व्याख्यायते- तत्र यदि सा छिन्नं न गृह्णाति, ब्रवीति च-मम सकलमेव प्रयच्छ। ततो राजकुलं गत्वा व्यवहारे प्रारब्धे कारणिका अभिधातव्याः, यथा-केनचिद् वृक्षस्वामिना वृक्षो विक्रीतः, क्रयिकेण च मूल्यं दत्त्वा छित्त्वा च स्वगृहं नीतः, ततः स विक्रयिकः पश्चात्तापितो भणति-प्रतिगृहाण मूल्यम्, प्रत्यर्पय मदीयं वृक्षम्; क्रयिकः प्राह-मया सवृक्षश्छित्त्वा पृथक्काष्ठानि कृतः, अतः कथं तमेववृक्षमखण्डमहं ते समर्पयामि?; एवं विवदमानौ तौ राजकुलमुपस्थितौ, ततः कथयत कारणिकाः। किं स क्रयिको युष्माभिर्वृक्षं दाप्यते? अथ दाप्यते ततः काष्ठान्येव, न पूर्वावस्थं वृक्षमिति व्यवहारो लभ्यते॥

भा.(२८०४]	पाहुणएणऽन्नेण व, नीयं व हिय व होइ दड्ढं वा।
तहियं अनुसट्ठाई, अन्नं वा दड्ढ मोत्तूणं॥

वृ- अथ वस्त्रं प्राघुणकेनान्येन वा साधुनाऽन्यत्र नीतं भवेत् स्तेनेन वा हृतं प्रदीपनेन वा दग्धं तत्र चानुशिष्यादिकं कर्त्तव्यम्। अनुशिष्टिर्नाम-सद्भावकथनपुरःसरं प्रज्ञापना। तथाऽप्यनुपरतायां धर्मकथा कर्त्तव्या, विधया मन्त्रेण वा निराकरणीया। तदभावेऽन्यद् वस्त्रं तस्या दातव्यम्, परं दग्धं वस्त्रं मुक्त्वा, दग्धे हृते वा न किञ्चिद् दीयत इति भावः। यदि सा राजकुलमुपतिष्ठते

ततस्तत्रापि व्यवहारो लभ्यते, ''दत्त्वा दानमनीश्वरः'' इति ।। अथ दानकाले साधुना पृष्टम्-किं निमित्तं ददासि ? तत्र सा तूष्णिका, स्थिता, बहिश्चेष्टया न तथाविधः कोऽपि भाव उपदर्शितः, परं ग्रहणानन्तरं काचिदुपाश्रयमागत्य वेण्टलं पृच्छति चतुर्थमवभाषते वा तत्राभिधातव्यम्-

[भा.२८०५] न वि जाणामो निमित्तं, न य ने कप्पइ पउंजिउं गिहिणो ।
परदारदोसकहणं, तं मम माया य भगिनी य ।।

वृ- वयं निमित्तं न जानीमः, न च ''नै'' अस्माकं [illegible] गृहिणः पुरतो निमित्तं प्रयोक्तुं कल्पते, तपः-संयमादिक्षतिप्रसङ्गात् । या च चतुर्थमवभाषते तस्याःपरदारदोधकअनं क्रियते, यथा-परपुरुष-परदारप्रसक्तयोः स्त्री-पुंसयोरिहैव भवे दण्डन-मुण्डन-तर्जन-ताडनादयः, परभवे तु नरकगतौ गतानां तप्तायःपुत्तलिकालिङ्गनादयः, तत उद्वृत्तानां तिर्यग्मनुष्यभवग्रहणेषु भूयो भूयो नपुंसकत्व-दौर्भाग्यप्रभृतोय बहवः प्रत्यपायाः । अपि च त्वं मम माता वा भगिनी वा वर्त्तसे अतः कृतमनया वार्त्तयेति ।। वस्त्रदानस्यैव कारणान्तरमाह-

[भा.२८०६] एक्कस्स व एक्कस्स व, कज्जे दिज्जंत गिण्हई जो उ ।
ते चेव तस्स दोसा, बालम्मि य भावसंबंधो ।।

वृ- 'एकस्य वा' पूर्वसम्बन्धस्य 'एकस्य वा' पश्चात्सम्बन्धस्य कार्ये दीयमान वस्त्रं यः साधुर्गृह्णाति तस्य 'त एव' प्रागुक्ताः शङ्कादयो दोषाः । 'बाले च' बालविषयो भावसम्बन्धो वक्ष्यमाणो भवतीति समासार्थः ।। अथैनामेव गाथां विवृणोति-

[भा.२८०७] अहवण पुट्ठा पुव्वेण पच्छबंधेण या सरिसमाह ।
संकाइया उ तत्थ वि, कडगा य बहू महिलियाणं ।।

वृ- अथवा सा दात्री पृष्टा सती 'पूर्वसम्बन्धेन' यादृशो मम भ्राता तादृश एव त्वं वर्त्तसे, 'पश्चात्सम्बन्धेन तु' श्वशुरस्य देवरस्य भर्त्तुर्वा सदृशस्त्वं विलोक्यसे अतोऽहं भवते वस्त्रं प्रयच्छामीत्याह, एवमन्यतरेण सम्बन्धकार्येण दीयमान यदि गृह्णाति तदा त एव शङ्कादयो दोषाः। यदि च तस्या अविरतिकाया बालमपत्यं किमपि विद्यते तदा स साधुस्तया भ्रातृभावेन प्रतिपन्नः सन् चिन्तयति-इदं मे भागिनेयम्; अथ भर्तृतया प्रतिपन्नस्ततश्चिन्तयति-इदं मे पुत्रभाण्डम्; एवमादिको भावसम्बन्धो भवति, ततश्च प्रतिगमनादयोदोषाः । किञ्च महेलिकानां बहूनि 'कृतकानि' कैतवानि भवन्ति, तेन देवरादिग्रहणोपायेन सम्बन्धमानीय चारित्रात् परिभ्रंशयन्तीति भावः ।।

यत एवमतः-

[भा.२८०८] एयद्दोसविमुक्कं, वत्थग्गहणं तु होइ कायव्वं ।
खमउ त्ति दुब्बलो त्तिय, धम्मो त्ति यहोति निद्दोसं ।।

वृ- एतैः-अनन्तरोक्तैर्दोषैर्विमुक्तं वस्त्रग्रहणं साधुना कर्त्तव्यं भवति । कथम् ? इत्याह-''खमउ त्ति'' इत्यादि । यदि सा दात्री पृष्टा सती ब्रूयात्-'क्षपकः' तपस्वी त्वम्, अथवा दुर्बलोऽसि क्षपकतया स्वभावेन वा ततस्ते प्रयच्छामि, यद्वा 'तपस्विने दीयमाने धर्मो भवति' इति कृत्वा ददामीति, एवं ब्रुवति दायके तद् वस्त्रं लभ्यमानं निर्दोषं भवति ।। किञ्च-

[भा.२८०९] आरंभनियत्ताणं, अकिणंताणं अकारविंताणं ।
धम्मट्ठा दायव्वं, गिहीहि धम्मे कयमणाणं ।।

वृ- आरम्भः-षट्कायोपमर्द तस्मान्निवृत्तानां तथा 'अक्रीणतां' वस्त्रादिकं क्रयमकुर्वाणानाम् 'अकारयतां' आरम्भ-क्रयकरणे परमव्यापारयतामेवंविधानां 'धर्मे' श्रुत-चारित्रभेदभिन्ने कृतमनसां साधूनां गृहिभिः सर्वारम्भप्रवृत्तैः 'धर्मार्थं' कुशलानुबन्धिपुण्योपार्जनार्थं वस्त्र-पात्रादिकं यथायोग्यं दातव्यम् इति बुध्या य उपासकादिर्वस्त्रेणोपनिमन्त्रयति तस्य ग्रहीतव्यमिति प्रक्रमः ॥ तदेवं वस्त्रमुत्पन्नं यावद् गुरूणां समीपे न गम्यते तावत् कस्यावग्रहे भवति ? इति उच्यते-

[भा.२८१०] संघाडए पविट्ठे, रायणिए तह य ओमरायणिए।
जं लब्भइ पाओग्गं, रायणिए उग्गहो होइ ॥

वृ-उपयोगकायोत्सर्गं कृत्वा भिक्षार्थं सङ्घाटकः प्रविष्टः, तत्रैको रात्निको द्वितीयोऽवमरात्निकः। तत्र च यत् प्रायोग्यं सङ्घाटकेन लभ्यते तद् यावदाचार्यपादमूलं न गम्यते तावत् सर्वं 'रात्निकस्य' ज्येष्ठार्यस्यावग्रहो भवति, ज्येष्ठार्यस्तस्य स्वामीति भावः ॥ अथ यदुक्तम्- "कप्पइ से सागारकडं गहाय दोच्चं पि उग्गहं अणुन्नवित्ता परिहारं परिहरित्तए" तदेतद् यथा केचिदाचार्यदेशीयाः स्वच्छन्दबुध्या व्याचक्षते तथा प्रतिपादयति-

[भा.२८११] दोच्चं पिउग्गहो त्ति य, केइ गिहत्थेसु दोच्चमिच्छंति।
साग ! गुरुणो नयामो, अनिच्छे पच्चाहरिस्सामो ॥

वृ- 'द्वितीयमपि वारामवग्रहोऽनुज्ञापयितव्यः' इति सूत्रे यदुक्तं तत् केचिदाचार्या गृहस्थविषयं द्वितीयमवग्रहमिच्छन्ति। कथम् ? इत्याह-"साग" इत्यादि। यः श्रावको वस्त्रं ददाति स वक्तव्यः- हे श्रावक ! वयमेतद् वस्त्रं गृहीत्वा गुरूणां समीपे तावन्नयामः, यद्याचार्या एतद् ग्रहीष्यन्ति ततो भूयोऽप्यागम्य भवतः समीपे द्वितीयं वारमवग्रमनुज्ञापयिष्याम इति, अथाचार्या वस्त्रं न ग्रहीष्यन्ति ततस्तेषां वस्त्रस्यानिच्छायां भवत एवेदं प्रत्याहरिष्यामः ॥ अमुमेव पक्षं परः समर्थयन्नाह-

[भा.२८१२] इहरा परिट्ठवणिया, तस्स व पच्चप्पिणंति अहिगरणं।
गिहिगहणे अहिगरणं, सो वा दट्ठूण वोच्छेदं ॥

वृ- 'इतरथा' यद्येवं न विधीयते ततो दर्शितमपि वस्त्रं यदाऽऽचार्या न गृह्णीयुस्तदा पारिष्ठापनिकादोषः । अथ न परिष्ठापयन्ति ततोऽप्रातिहारिकं गृहीत्वा भूयस्तस्यैव गृहस्थस्यप्रत्यर्पयतां परिभोग-धावनादिकमधिकरणमुपजायते। अथ तत् परिष्ठापितं वस्त्रं कोऽपि गृही गृह्णाति ततोऽप्यधिकरणमेव। 'स वा' दाता तद् वस्त्रं परिष्ठापितं श्रुत्वा अन्यगृहस्थगृहीतं वा दृष्ट्वा तद्रव्यान्यद्रव्यव्यवच्छेदमेकस्यानेकेषां वा साधूनां कुर्यात् ॥ अथ सूरि परोक्तं दूषयन्नाह-

[भा.२८१३] चोयग ! गुरुपडिसिद्धे, तहिं पउत्थे धरिंत दिन्नं तु।
धरणुज्झणे अहिगरणं, गेण्हेज्ज सयं व पडिणीयं ॥

वृ- हे नोदक ! एवं क्रियमाणे त एव त्वदुक्ता दोषा भवन्ति । तथाहि-तद् वस्त्रमानीय गुरूणामर्पितम्, तेन चाचार्याणां न प्रयोजनं ततस्तैः प्रतिषिद्धम्, तच्च वस्त्रं यावत् तस्य दायकस्यप्रत्यर्प्यते तावदसौ ग्रामान्तरं प्रोषितः, प्रोषिते च तस्मिन् यदि तद् वस्त्रं धारयति- परिभुङ्क्तेइत्यर्थः तदा अदत्तादानम् । अथ तस्य सत्कं भणित्वा धारयति तदाऽधिकरणम् । अथात्मार्थितं कृत्वा धारयति तथाप्यधिकरणम्, अतिरिक्तोपकरणस्यापरिभोग्यतया अधिकरणत्वात् । अथ तद् वस्त्रमुज्झति-परिष्ठापयतीत्यर्थः तथापि गृहिगृहीतेऽधिकरणं

परिष्ठापनादोषाश्च। अथवा प्रतिनीतं तद् वस्त्रं 'स्वमेव' आत्मना गृह्णीयाद्, नप्रतिदद्यादिति भावः। तस्मादेष त्वदुक्तो द्वितीयावग्रहो न भवति, किन्तु गृहस्थहस्ताद् वस्त्रं गृहीत्वा गुरुमूलमागम्य तेषां समर्प्य यदि ते तस्यैव प्रयच्छन्ति तदा यत् ते भूयोऽप्यवग्रहमनुज्ञाप्यन्ते एष द्वितीयावग्रहः॥

**मू. (३९)** *निग्गंथं च णं बहिया वियारभूमिं वा विहारभूमिं वा निक्खंतं समाणं केइ वत्थेण वा पडिग्गहेण वा कंबलेण वा पायपुंछणेण वा उवनिमंतेज्जा, कप्पइ से सागारकडं गहाय आयरियपायमूले ठवित्ता दोच्चं पि उग्गहमणुन्नवेत्ता परिहारं परिहरित्तए॥*

**वृ.**-अस्य व्याख्याप्राग्वत्॥ अथ भाष्यम्-

**[भा.२८१४]** बहिया व निग्गयाणं, जायणवत्थं तहेव जयणाए।
निमंतणवत्थे तहेव, सुद्धमसुद्धं च खमगादी॥

**वृ.**-'बहिः' विचारभूमौ वा विहारभूमौ वा निर्गतानां याच्ञावस्त्रं तथैव यतनया ग्रहीतुं कल्पते यथा भिक्षाचर्यायामुक्तम्। निमन्त्रणावस्त्रमपि तथैव शुद्धमशुद्धं च वक्तव्यम्। शुद्धं नाम-यत् क्षपक इति वा धर्म इति वा कृत्वा दीयते। अशुद्धं-यत् चतुर्थवेण्टलादिकार्येण दीयते॥

**मू. (४०)** *निग्गंथिं च णं गाहावइकुलं पिंडवायपडियाए अणुप्पविट्ठं केइ वत्थेण वा पडिग्गहेण वा कंबलेण वा पयपुंछणेण वा उवनिमंतेज्जा, कप्पइ से सागारकडं गहाय पवत्तिणिपायमूले ठवित्ता दोच्चं पि उग्गहमणुन्नवित्ता परिहारं परिहरित्तए॥*

**मू. (४१)** *निग्गंथिं च णं बहिया वियारभूमिं वा विहारभूमिं वा निक्खंतिं समाणिं केइ वत्थेण वा पडिग्गहेण वा कंबलेण वा पायपुंछणेण वा उवनिमंतेज्जा, कप्पइ से सागारकडं गहाय पवित्तिणिपायमूले ठवेत्ता दोच्चं पि उग्गहमणुण्णविता परिहारं परिहरित्तए॥*

**वृ.**-अस्य सूत्रद्वयस्यापि व्याख्या प्राग्वत्॥ अथ भाष्यविस्तरः-

**[भा.२८१५]** निग्गंथिवत्थगहणे, चउरो मासा हवंतऽणुग्घाया।
मिच्छत्ते संकाई, पसज्जणा जाव चरिमपदं॥

**वृ.**-निर्ग्रन्थीनां गृहस्थेभ्यो वस्त्रग्रहणं कुर्वन्तीनां चत्वारो मासा अनुद्घाताः प्रायश्चित्तम्। ताश्च वस्त्रं गृह्णन्तीर्दृष्ट्वा कश्चिदभिनवश्राद्धो मिथ्यात्वं गच्छेत्-अहो! निर्ग्रन्थ्योऽपि भाटिं गृह्णन्तीति। अथवा शङ्कां कुर्यात्-किं मन्ये धर्मार्थं दत्तमियं गृह्णाति ? उत भाटिनिमित्तम् ?। एवं शङ्कायां चतुर्गुरु। निशङ्किते मूलम्। प्रसजना नाम-भोजिका-घाटिकादिप्रसङ्गपरम्परा, तत्र 'चरमपदं' पाराञ्चिकं यावत् प्रायश्चित्तम्॥ इदमेव भावयति-

**[भा.२८१६]** पुरिसेहिंतो वत्थं, गिण्हंतिं दिस्स संकमादीया।
ओभासणा चउत्थे, पडिसिद्धे करेज्ज उड्डाहं॥

**वृ.**-पुरुषेभ्यः सकाशाद् वस्त्रं गृह्णन्तीं निर्ग्रन्थीं दृष्ट्वा शङ्कादयो दोषाः। शङ्का नाम-किमेषा भाटिं गृह्णाति ?। एवं शङ्कायां चतुर्गुरु, भोजिकायाः कथिते षड्लघु, घाटिकस्य कथने षड्गुरु, ज्ञातीनां कथने च्छेदः, आरक्षिकेण श्रुते मूलम्, श्रेष्ठि-सार्थवाह-पुरोहितैः श्रुतेऽनवस्थाप्यम्, अमात्य-नृपतिभ्यां श्रुते पाराञ्चिकम्। स वा गृहस्थो वस्त्राणि दत्त्वा चतुर्थविषयामवभाषणां कुर्यात्, तया च प्रतिषिद्धे उड्डाहं कुर्यात्-एषा मदीयां भाटं गृहीत्वा सम्प्रति मदुक्तं न करोतीति॥

किञ्चान्यत्-

[भा.२८१७] लोभेअ आभिओगे, विराधना पट्टएण दिट्ठंतो ।
दावव्व गणहरेण, तं पि परिच्छित्तु जयणाए ॥

वृ- "लोभेय"त्ति येन वा तेन वा वस्त्रादिना स्त्री सुखेनैव प्रलोभ्यते । "अभिओगे"त्ति कोऽप्युदारशरीरां संयतीं दृष्ट्वा तस्या वशीकरणार्थमभियोगं कुर्यात् । ततश्चारित्रविराधना । अत्र च पट्टकेन दृष्टान्तः । यत एवमतः संयतीनां गणधरेण वस्त्राणि दातव्यानि । 'तदपि' वस्त्रदानं सप्त दिवसानि 'परीक्ष्य' परीक्षां कृत्वा 'यतनया' वक्ष्यमाणलक्षणया कर्त्तव्यमिति सङ्ग्रहगाथा-समासार्थः ॥ अथ विस्तरार्थमाह-

[भा.२८१८] पगई पेलवसत्ता, लोभिज्जइ जेन तेन वा इत्थी ।
अवि य हु मोहो दिप्पइ, सइरं तासिं सरीरेसु ॥

वृ- 'प्रकृत्या' स्वभावेनैव स्त्री प्रायः 'पेलवसत्त्वा' तुच्छधृतिबला ततो येन वा तेन वा वस्त्रादिना लोभ्यते । अपि च ताः स्वभावेनैव बहुमोहा भवन्ति अतस्तासां पुरुषैः सह संलापं कुर्वतीनां दानं च गृह्णतीनां 'स्वैरं' स्वेच्छया शरीरेषु मोहो दीप्यते । अभियोगं वा तस्या विद्याभिमन्त्रितवस्त्र-प्रदानव्याजेन कुर्यात्, अभियोगिता च सती चारित्रं विराधयेत् ॥ तथा चात्र पट्टकदृष्टान्तमाह-

[भा.२८१९] वियरग समीवारामे, ससरक्खे पुप्फदान पट्ट कया ।
निसि वेल दारपिट्टण, पुच्छा गामेन निच्छुभणं ॥

वृ- एगत्थ गामे कूविया, सा य आरामसमीवे । ततो य इत्थिजणो पाणियं वहइ । तम्मि आरामे एगो ससरक्खो । सो कूवियातडे उरालं अविरइयं दट्ठुं तीए विज्जाभिमंतियाणि पुप्फाणि देइ । तीए घरं गंतुं नीसापट्टए तानि ठवियाणि । ततो ते पुप्फा पट्टगं आविसिउं अड्ढरत्तवेलाए घरदारं - पिट्टेंति । ततो अगारो निग्गओ पेच्छइ पट्टगं सपुप्फगं । तेन अगारी पुच्छिता । तीए सब्भावो कहिओ । तेन वि गामस्स कहियं । गामेन सो ससरक्खो निच्छूढो ॥ अथाक्षरगमनिका-'विदरकः' कूपिका, सा चारामस्य समीपे । ततः सरजस्कः कूपिकातटे काञ्चिदविरतिकां दृष्ट्वा विद्याभि-मन्त्रितपुष्पदानं करोति । तया च गृहे गत्वा तानि पट्टके कृतानि । ततो 'निशि' रात्रौ 'वेलायाम्' अर्द्धरात्रे गृहद्वारस्य पिट्टनं तैः कृतम् । ततस्तेन तस्याः पृच्छा कृता । सद्भावे च कथिते ग्रामस्य कथयित्वा तेन निष्काशनं सरजस्कस्य कृतम् । यत एते दोषा अतो निर्ग्रन्थीभिरात्मना गृहस्थेभ्यो वस्त्राणि न ग्रहीतव्यानि, किन्तु गणधरेण तासां दातव्यानि ॥ कः पुनरत्र विधिः ? इति अत आह-

[भा.२८२०] सत्त दियसे ठवेत्ता, थेरपरिच्छाऽपरिच्छणे गुरुगा ।
देइ गणी गणिणीए, गुरुगा सय दान अट्ठाणे ॥

वृ- संयतीप्रायोग्यमुपधिमुत्पाद्य सप्त दिवसान् स्थापयति-परिवासयति । ततः स्थापयित्वा कल्पं च कृत्वा स्थविरो धर्मश्रद्धावान् प्रावार्यते । यदि नास्ति कोऽपि विकारः सुन्दरम् । एवं परीक्षा कर्त्तव्या । यद्यपरीक्ष्य प्रयच्छति ततश्चत्वारो गुरवः । एवं परीक्षिते 'गणी' गणधरः 'गणिन्याः' प्रवर्त्तिन्याः वस्त्राणि प्रयच्छति । साऽपि गणिनी संयतीनां यथाक्रमं ददाति । अथाचार्य आत्मना प्रयच्छति ततश्चतुर्गुरुकम् । काचिद् मन्दधर्मा ब्रूयात्-एतस्याः सुन्दरतरं दत्तं न मम, तन्नूनमियमस्याभीष्टा । एवं स्वयं दाने विधीयमाने आचार्यस्यास्थाने स्थापनं भवति । यत एवमतो नात्मना दातव्यं किन्तु प्रवर्त्तिन्या तासां दापयितव्यम् ॥ नोदकः प्राह-यद्येवं तर्हि सूत्रं निरर्थकम्,

तत्र निर्ग्रन्थ्या वस्त्रगरहणस्यानुज्ञातत्वात् । आचार्य प्राह-

[भा.२८२१] असइ समणाण चोयग ! जाइय-निमंतणवत्थ तह चेव ।
जायंति थेरि असई, विमिस्सिया मोत्तिमे ठाणे ॥

वृ- हे नोदक ! सूत्रं निरर्थकं न भवति, किन्तु श्रमणानामसति यदा स्थविरा निर्ग्रन्थ्यो वस्त्राणि गृह्णन्ति तद्विषयमेतत् सूत्रम् । तत्र याच्ञासूत्रे निमन्त्रणसूत्रे च तथैव सर्वोऽपि विधिर्द्रष्टव्यः । ताश्च प्रथमतः स्थविरा एव केवला याचन्ते । तासामसति तरुणीविमिश्रिताः स्थविराः, परमेतानि स्थानानि मुक्त्वा ॥ तान्येव दर्शयति-

[भा.२८२२] कावालिए य भिक्खू, सुइवादी कुव्विए अ वेसित्थी ।
वाणियग तरुण संसट्ठ मेहुणे भोइए चेव ॥

[भा.२८२३] माता पिया य भगिनी, भाउग संबंधिए य तह सन्नी ।
भावितकुलेसु गहणं, असई पडिलोम जयणाए ॥

वृ- 'कापालिकः' अस्थिसरजस्कः, 'भिक्षुकः' सौगतः, 'शुचिवादी' दकसौकरिकः, 'कूर्चिकः' कूर्चन्धरः, वेश्यास्त्री वाणिजकाश्च प्रतीताः, 'तरुणः' युवा, 'संसृष्टः' पूर्वपरिचित उद्भामकः, 'मैथुनः' मातुलपुत्रः, 'भोक्ता' भर्ता, माता पिता भगिनी भ्राता एते चत्वारोऽपि प्रसिद्धाः, 'सम्बन्धी' सामान्यतः सज्ञातिकः, 'संज्ञी' श्रावकः । एतान् कापालिकादीन् मुक्त्वा यानि भावितानि-यथाप्रधानानि मध्यस्थानि कुलानि तेषु संयतीभिर्वस्त्रग्रहणं कर्त्तव्यम् । अथ भावितकुलानि न प्राप्यन्ते ततस्तेषामभावे 'प्रतिलोमं' प्रतीपक्रमेण प्रतिषिद्धस्थानेष्वेव यतनया यथा वक्ष्यमाणा दोषा न भवन्ति तथा गृह्णीयुरिति सङ्ग्रहगाथाद्वयसमासार्थः ॥ अथैतदेव प्रतिपदं भावयति-

[भा.२८२४] अट्ठी विज्जा कुच्छित, भिक्खु निरुद्धा उ लज्जए ऽन्नत्थ ।
एव दगसोय कुच्चिग, सुइग त्ति य बंभचारित्ता ॥

वृ- ''अट्ठि''त्ति अस्थिरसरजस्काः, ते विद्यया मन्त्रेण वा संयतीनां वस्त्रदानव्याजेनाभियोगं कुर्युः, अपि च ते 'कुत्सिताः' जुगुप्सिता भवन्ति । ये तु 'भिक्षुकाः' सौगतास्ते प्रायो निरुद्धवस्तयः 'अन्यत्र च' द्व्यक्षरिकादिषु गच्छन्तो लज्जन्ते, गाथायां प्राकृतत्वादेकवचननिर्देशः । एवं 'दकसौकरिकाः' परिव्राजकाः 'कूर्चिकाश्च' कूर्चन्धरा वक्तव्याः, ते चोभयेऽप्येवं मन्यन्ते- एताः श्रमण्यो ब्रह्मचारित्वादप्रसवाः, अप्रसवत्वाच्च 'शुचयः' पवित्रा एता इति ॥

[भा.२८२५] अन्नठवणट्ठ जुन्ना, अभिओगे जा व रूविणी गणिया ।
भोइग चोरिय दिन्नं, दट्ठुं समणीसु उड्डाहो ॥

वृ- या जीर्णा गणिका सा स्वयं विषयपियितुमसमर्था रूपवतीं संयतीं दृष्ट्वा 'अन्यस्थापनार्थम्' अपरगणिकास्थापनार्थमभियोगयेत् । या वा रूपवती गणिका साऽप्येवमेवाभियोगं कुर्यात् । तथा यो मातुलपुत्रस्तेन स्वभोजिकाया वस्त्रं चौरिकया संयत्याः दत्तम्, तच्च तया प्रावृतं दृष्ट्वा सा भोगिनी बहुजनमध्ये उड्डाहं कुर्यात्-एषा मे गृहभङ्गं करोति ॥

[भा.२८२६] देसिय वाणिय लोभा, सइं दिन्ने न उ चिरं पि होहित्ति ।
तरुणुब्भामग भोयग, संका आतोभयसमुत्था ॥

वृ- 'देशिकः' देशान्तरायातो वाणिजश्चिन्तयति- 'सकृद्' एकवारं 'दत्तेन' दानेन ममेयं चिरमपि

भविष्यति इति विचिन्त्य लोभाद् भूयांसि वस्त्राणि दत्त्वा प्रलोभयेत्। यस्तु तरुणः स विकारबहुल उत्कटमोहश्च भवति, संसृष्टः पूर्वोक्तामकः, 'भोक्ता' प्राक्तनो भर्त्ता, एतेषां हस्तादादीयमाने वस्त्रे शङ्कादय आत्मोभयसमुत्थाश्च दोषा भवन्ति ॥

[भा.२८२७] दाहामो णं कस्सइ, नियया सो होहिई सहाओ ने।
सन्नी वि संजयाणं, दाहिइ इति विप्परीणामे ॥

वृ- मातृ-पितृप्रभृतयः 'निजकाः' स्वजनाश्चिन्तयन्ति-यस्य क स्याप्येनां वयं दास्यामः सः अस्माकं सहायो भविष्यति; यस्तु 'संज्ञी' श्रावकः सोऽपि-एषा मे धर्मसहाया भविष्यति, अन्यच्च संयतानामेषा विपुलं भक्तपानं मदीये गृहे वर्त्तमाना दास्यति; 'इति' एवं चिन्तयित्वा विपरिणामयेत्, विपरिणाम्य चोन्निष्क्रमणं कारयेत्। यत एवमत एतानि स्थानानि वर्जयित्वा यानि भावितकुलानि तेषु ग्रहीतव्यम्। भावितकुलानाममावे प्रतिषिद्धस्यानेष्वेव पश्चानुपूर्व्या गृह्णीयात्-प्रथमं यः सभोगिमीकः श्रावकस्य सकाशाद् ग्रहीतव्यम्, तस्याभावेऽभोगिनीकश्रावकहस्तादपि, एवं प्रतीपक्रमेण तावद् वक्तव्यं यावद् भिक्षुकाणामभावे कापालिकानां सकाशादपि यतनया वस्त्रग्रहणं कर्त्तव्यम् ॥ यतनामेवाह-

[भा.२८२८] मग्गंति थेरियाओ, लद्धं पि य थेरियाउ गेण्हंति।
आगार दट्ठु तरुणीण व देंते तं न गिण्हंति ॥

वृ- याः स्थविरा धर्मश्रद्धालवो गीतार्थाश्च ता वस्त्राणि मार्गयन्ति। लब्धमपि च वस्त्रं दायक-सकाशात् स्थविरा एव गृह्णन्ति। अथासौ दाता काणाक्षिप्रभृतीनाकारान् करोति, स्थविरयावा हस्ते प्रसारिते भणति-तव न ददामि, एतस्यास्तरुण्याः प्रयच्छामीति। एवमाकारान् दृष्ट्वा तरुणीनां वा ददतं दायकं विहाय तद वस्त्रं न गृह्णन्ति ॥

एवमादिदोषविप्रमुक्तं वस्त्रमुत्पाद्य वसति प्राप्तानामयं विधिः-

[भा.२८२९] सत्त दिवसे ठवित्ता, कप्पे कते थेरिया परिच्छंति।
सुद्धस्स होइ धरणा, असुद्ध छेत्तुं परिट्ठवणा ॥

वृ- सप्त दिवसान् वस्त्रं स्थापयन्ति। यद्यस्थापयित्वा परिभुञ्जते तदा चत्वारो गुरव आज्ञादयश्च दोषाः। यत एवं ततः स्थापयित्व कल्पं-प्रक्षालनं कुर्वन्ति। कृते च कल्पे स्थविरास्तद् वस्त्रं प्रावृत्य परीक्षन्ते। यदि शुद्धं ततस्तस्य धारणम्, अथ 'अशुद्धम्' अशुद्धभावोत्पादकं तद् वस्त्रं ततस्तत् छित्त्वा परिष्ठापनं कर्त्तव्यम् ॥ अथ वस्त्रोत्पादनविनिर्गतानां निर्ग्रन्थानां निर्ग्रन्थीनां च सामान्यतो लाभा-ऽलाभादिनिमित्तपरिज्ञानोपायमाह-

[भा.२८३०] जं पुन पढमं वत्थं, चउकोणा तस्स होंति लाभाए।
वितिरिच्छंऽता मज्झे, य गरहिया चउगुरू आणा ॥

वृ- यत् पुनः प्रथमं वस्त्रं लभ्यते तस्य ये चत्वारो कोणकास्ते वक्ष्यमाणाञ्जन-खञ्जनलेपादि-चिह्नोपलक्षिता लाभाय भवन्ति, उपलक्षणमिदम्, तेन यौ अञ्चलमध्यभागौ तावपि लाभाय भवतः। यौ तु वितिरश्चीनौ कर्णपट्टिकाया अन्त्यौ विभागौ यश्च तयोर्मध्यवर्ती विभागः एते त्रयोऽप्यञ्जनलेपादिचिह्नोपलक्षिताः 'गर्हिताः' अप्रशस्ताः। एतेषु चात्मविराधनासद्भावाच्च-तुर्गुरुकमाज्ञा च भगवता विराधिता भवति ॥ अयमेवार्थोऽन्याचार्यपरिपाट्याऽभिधीयते-

[भा.२८३१] नवभागकए वत्थे, चउसु वि कोणेसु होइ वत्थस्स ।
लाभो विनासमन्ने, अंते मज्झे य जाणाहि ॥

वृ- इह यतो वस्त्रमायतं ततः प्रथमतस्त्रयो भागाः कल्प्यन्ते, भूयोऽप्येकैको भागस्त्रिधा विभज्यते, एवं नवभागीकृते वस्त्रे ये चत्वारः कोणका अपिसब्दात् कोणकमध्यवर्तिनौ च द्वौ भागौ तेषु वस्त्रस्याञ्जनलेपादिसम्भवे लाभो भवति । ये पुनः 'अन्ये' अपरे वस्त्रमध्यवर्तिनस्त्रयो भागाः, तद्यथा-द्वावञ्चलविभागौ एकः सर्वमध्यवर्ती विभागः, तेषु 'विनाशं' ग्लानत्वादिकं जानीहि ॥

अथ यैश्चिह्नैस्तेषु विभागेषु लाभो विनाशो वाऽनुमीयते तान्येवाह-

[भा.२८३२] अंजन-खंजन-कद्दमलित्ते, मूसगभक्खिय अग्गिविदड्ढे ।
तुन्निय कुट्टिय पज्जवलीढे, होइ विवाग सुहो असुहो वा ॥

वृ- अञ्जनं-सौवीराञ्जनादि खञ्जनं-दीपमलः कर्दमः-पङ्कस्तैर्लिप्तेःखरण्टिते, तथा मूषकैः उपलक्षणत्वात् कंसारिकादिभिश्च भक्षिते, अग्निना वा विशेषेण दग्धे, तथा तुन्नकारेण 'तुन्निते' स्वकलाकौशलतः पूरितच्छिद्रे, 'कुट्टिते च' रजककुट्टनेन पतितच्छिद्रे, पर्यवैः-पुराणादिभि पर्यायैर्लीढे-युक्ते, अतिजीर्णतया कुत्सितवर्णान्तरादिसंयुक्ते स्फटिते वा इत्यर्थः । एवंविधे वस्त्रे गृहीते सति शुभोऽशुभो वा विपाकः परिणामो भवति । तत्र ये शुभा विभागास्तेषु शुभो विपाको ये त्वशुभास्तेष्वशुम इति ॥ अथ नवानामपि विभागानां स्वामिनः प्रतिपादयति-

[भा.२८३३] चउरो य दिव्विया भागा, दुवे भागा य मानुसा ।
आसुरा य दुवे भागा, मज्झे वत्थस्स रक्खसो ॥

वृ- चत्वारः कोणकाः 'दैव्याः' देवसम्बन्धिनो भागाः 'द्वौ' अञ्चलमध्यभागौ 'मानुषौ' मनुष्यस्वामिकौ । 'द्वौ च भागौ' कर्णपट्टिकामध्यलक्षणौ 'आसुरौ' असुरसम्बन्धिनौ । सर्वमध्यगतः पुनरेको भागः 'राक्षसः' राक्षसस्वमिक इति ॥ अथैतेषु विभागेषु शुभा-ऽशुभफलमाह-

[भा.२८३४] दिव्वेसु उत्तमो लाभो, मानुसेसु य मज्झिमो ।
आसुरेसु य गेलन्नं, मज्झे मरणमाइसे ॥

वृ- दैव्येषु भागेषु यद्यञ्जनादिभिर्दूषितं वस्त्रं भवति तदा तस्मिन् गृहीते साधूनामुत्तमो वस्त्र-पात्रादीनां लाभो भवेत् । मानुषभागयोरञ्जनाद्युपदूषिते च वस्त्रे मध्यमो लाभो भवति । आसुरभागयोरञ्जनादिदूषितयोर्ग्लानत्वं भवति । राक्षसभागे पुनरञ्जनादियुक्ते यतीनां मरणादिशेदिति ॥ अथाखण्डस्यैव वस्त्रस्य लक्षणमाह-

[भा.२८३५] जं किंचि होइवत्थं, पमाणवं सम रुइं थिरं निद्धं ।
परदोसे निरुवहतं, तारिसगं खु भवे धन्नं ॥

वृ- यत्किञ्चिद् वस्त्रं 'प्रमाणवत्' सूत्रोक्तप्रमाणोपेतं 'समं नाम' नान्यत्रस्थूलमन्यत्र श्लक्ष्णं 'रुचि नाम' रुचिकारकं 'स्थिरं' दृढं 'स्निग्धं' सतेजः, एभि पञ्चभि पदैर्द्वात्रिंशद् भङ्गा भवन्ति, एष प्रथमो भङ्गो गृहीतः । तथा परदोषाः-आसुर-राक्षसभागेष्वञ्जन-खञ्जनप्रभृतयस्तैः 'निरुपहतं' वर्जितम्, यद्वा परः-दायकस्तस्य ये दोषाः क्रीत-कृतादयस्तैर्विवर्जितं तादृशं वस्त्रम्, खुरवधारणे, तादृशमेव 'धन्यं' ज्ञानादिधनप्रपकलक्षणोपेतमित्यर्थः ॥

मू. (४२) *नो कप्पइ निग्गंथाण वा निग्गंथीण वा राओ वा वियाले वा असनं वा पानं वा*

*खाइमं वा साइमं वा पडिगाहित्तए ॥*

**वृ-** अस्य सम्बन्धं वदयन्नाह-

**[भा.२८३६]** वयअहिगारे पगए, राईभत्तवयपालणा इणमो ।
सुत्तं उदाहु थेरा, मा पीला होज्ज सव्वेसिं ॥

**वृ-** पूर्वसूत्रे द्वितीयावग्रहानुज्ञामन्तरेण वस्त्रं न परिभोक्तव्यमिति तृतीयव्रतस्याधिकारः प्रकृतः। तस्मिंश्च प्रकृते रात्रिभक्तव्रतपालनार्थमिदं सूत्रं 'स्थविराः' श्रीभद्रबाहुस्वामिन उदाहृतवन्तः। कुतः ? इत्याह-मा तस्मिन् षष्ठव्रते भग्ने 'सर्वेषामपि' महाव्रतानां 'पीडा' विराधना भवेदिति कृत्वा ॥ प्रकारान्तरेण सम्बन्धमाह-

**[भा.२८३७]** अहवा पिंडो भणिओ, न यावि तस्स भणिओ गहणकालो ।
तस्स गहणं खपाए, वारेइ अनंतरे सुत्ते ॥

**वृ-** अथवा "निग्गंथं च णं गाहावइकुलं पिंडवायपडियाए" इत्यादिषु सूत्रेषु पिण्डो भणितः। न च तस्य पिण्डस्य अपिशब्दाद् वस्त्रादेर्वा ग्रहणकालो भणितः 'कदा गृह्यते ? कदा च न ?' इति, अतः पूर्वसूत्रेभ्यो यदनन्तरमिदमेव सूत्रं तत्र 'तस्य' पिण्डस्य ग्रहणं 'क्षपायां' रात्रौ निवारयतीति ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा रात्रौ वा विकाले वा 'अशनं वा' ओदनादि 'पानं वा' आयामादि 'खादिमं वा' फलादि 'स्वादिमं वा' शुण्ठ्यादि प्रतिग्रहीतुमिति सूत्राक्षरार्थः ॥ अथ भाष्यविस्तरः-

**[भा.२८३८]** रत्तो व वियाले वा, संज्झा राई उ केसिइ विकालो ।
चउरो य अनुग्घाया, चोदगपडिघाय आणादी ॥

**वृ-** "रात्री वा विकाले वा" इति यदुक्तं सूत्रे तत्र सन्ध्या रात्रिरुच्यते, राजते-शोभते इति निरुक्तिवशात् । शेषा सर्वाऽपि रजनी विगतः सन्ध्याकालोऽत्रेति कृत्वा विकाल उच्यते । केषाञ्चिदाचार्याणां दिवसलक्षणकालविगमात् सन्ध्या विकालः, शेषा तु रात्रि, रज्जंति (रज्जन्ति) स्तेन-पारदारिकादयोऽत्रेति कृत्वा । एतयो रात्रि-विकालयोः सूत्रोक्तं चतुर्विधमाहारं गृह्णतो भुञ्जानस्य च चत्वारोऽनुद्धाता मासाःप्रायश्चित्तम् । नोदकः प्रेरयति-किमिति रात्रिभोजनं परिह्रियते? उच्यते-बहुदोषदर्शनात् । पुनरपि परः प्राह-युष्माकं द्वाचत्वारिंशद्दोषपरिशुद्धः पिण्डः परिभुज्यते इति समयस्थिति, तेषु च द्वाचत्वारिंशद्दोषेषु रात्रिभोजनं न क्वापि प्रतिषिद्धम्, अप्रतिषिद्धत्वाच्चावश्यमेव निर्दोषमिति मे मति । अस्य नोदकवचनस्य प्रतिघातंप्रतिषेधमाचार्य करोति-नोदक ! भवत एवं ब्रुवाणस्याज्ञाभङ्गादयो दोषाः, तथाहि-यत् त्वया प्रतिपादितं 'रात्रिभोजनप्रतिषेधः क्वाप्यस्माभिर्न दृष्टः' इत्यादि तदेतदज्ञानप्रलपितमिव लक्ष्यते ॥ यतः-

**[भा.२८३९]** जइ वि य न प्पडिसिद्धं, बायालीसाए राइभत्तं तु ।
छट्ठे महव्वयम्मी, पडिसेहो तस्स ननु वुत्तो ॥

**वृ-** यद्यपि च द्वाचत्वारिंशति दोषेषु रात्रिभक्तं न प्रतिषिद्धं तथापि षष्ठे महाव्रते षड्जीवनिकायां ननु तस्या प्रतिषेध उक्त एव । तथा च सूत्रम्- अहावरे छट्ठे भंते ! वए राइभोयणाओ वेरमणं । इत्यादि । अपि च-

**[भा.२८४०]** ज ता दिया न कप्पइ, तमं ति काऊण कोट्ठयाईसु ।

किं पुन तमस्सईए, कप्पिस्सइ सव्वरीए उ ॥

**वृ-** यदि तावत् 'तमः' अन्धकारमिति कृत्वा नीचद्वारकोष्ठकादिषु दिवाऽपि भक्तपानं ग्रहीतुं न कल्पते, "नीयदुवारं तमसं, कोट्ठगं परिवज्जए ।" इति वचनात्; ततः किं पुनः 'तमस्वत्यां' बहलतमःपटलकलितायां 'शर्वर्यां' रात्रौ कल्पिष्यते ? नैवेति भावः ॥ यच्चोक्तम्-'रात्रिभक्ते दोषा न सन्ति' इति तदप्यपरिभावितभाषितम्, यत आज्ञादयो दोषास्तत्रोपलभ्यन्ते-

**[भा.२८४१]** मिच्छत्तम्मी भिक्खू, विराधना होइ संजमायाए ।
पक्खलण खाणु कंटग, विसम दरी वाल साणे य ॥

**वृ-** भगवता प्रतिषिद्धं रात्रिभोजनं कुर्वता आज्ञाभङ्गः कृतो भवति । तं दृष्ट्वाऽन्येऽपि रात्रिभक्ते प्रवर्त्तन्ते इत्यनवस्थाऽपि स्यात् । मिथ्यात्वे तु भिक्षुदृष्टान्तो वक्तव्यः-जहा-कालोदाई नाम भिक्खुगो रयणीए एगस्स माहणस्स गिहं भिक्खट्ठा पविट्ठो । तओ माहणी तस्स भिक्खानिमित्तं जाव मज्झे पविसइ ताव अंधयारबहलयाए अग्गओ खीलओ न दिट्ठो । तत्थावडियाए तीसे खीलएण कुच्छी फाडिओ । सा य गुव्विणी आसि । गब्भो फुरफुरंतो पडिओ मओ य । सा वि य मया । तं दट्ठुं लोगेण भणियं-अदिट्ठधम्माणो एए त्ति । एवं साधुरपि रात्रौ भिक्षामटन् भगवत्यसर्वज्ञत्व-शङ्कामुत्पादयति । तथा विराधना द्विविधा-संयमे आत्मनि च । तत्रात्मविराधना भाव्यते-रात्रौ मार्गमपश्यतः प्रस्खलनं भवति, स्थाणु-कण्टकाभ्यां वा पादयोः परिताप्येत, विषमं-निम्नोन्नतं दरी-गर्त्ता तयोर्वा प्रपतेत्, व्यालः-सर्पस्तेन वा दश्येत, श्वानो वा रात्रावुपद्रवं कुर्यात् ॥

**[भा.२८४२]** गोणे य तेणमादी, उब्भामग एवमाइ आयाए ।
संजमविराधनाए, छक्काया पानवहमादी ॥

**वृ-** 'गौः' बलीवर्दस्तेन अभिहन्येत, स्तेना आदिशब्दादारक्षिकादयो वा तमकाले पर्यटन्तं गृह्णीयुः । यद्वा स एव साधुरकाले पर्यटन् स्तेन आदिशब्दाच्चारिको वा अभिमरो वा उद्भ्रामको वा आरक्षिकपुरुषैः शङ्क्येत, ततश्च प्रान्तापनादयो दोषाः । एवमादयो दोषा आत्मविराधनाविषया भवन्ति । संयमविराधनायां तु षट् काया निशि तमस्यदृश्यमानाः स्फुटमेव विराध्यन्ते, अथवा प्राणवधादयो दोषा रात्रौ पिण्डं गवेषयतो भवन्ति ॥ तानेव भावयति-

**[भा.२८४३]** पाणवह पाणगहणे, कप्पट्ठोड्डाणए अ संका उ ।
भणिओ न ठाइ ठाणे, मोसम्मि उ संकणा साणे ॥

**वृ-** दिवा बीजसंसक्तोदकार्द्रादीनि सुप्रत्युपेक्षतया सुखेनैव साधुः परिहर्त्तुमीष्टे, रात्रौ तु दुःप्रत्युपेक्षतया तेषां परिहारः कर्त्तुं न शक्यते, अतः प्राणिग्रहणे प्राणवधो भवति । कल्पस्थके चापद्राणेऽगारिणो वक्ष्यमाणनीत्या शङ्का भवेत्-नूनमेतेनापद्रावित इति । तथा कोऽपि साधुरगारिणा भणितः-रात्रौ मा मदीयं गृहमायासीरिति । ततः 'श्वानस्ते गृहमायास्यन्ति' इति प्रतिज्ञां कृत्वा गतः, परमसौ 'स्थाने' स्ववचने न तिष्ठति ततश्च मृषावादमसौ ब्रूत इति शङ्का गृहस्थस्य स्यात् । एतदुत्तरत्र भावयिष्यते ॥ अथ कल्पस्थकेऽपद्राणे यथा शङ्का भवति तदेतदुपदर्शयति-

**[भा.२८४०]** हंतुं सवितिनिसुयं, पडियरई काउमऽग्गदारम्मि ।
समणेण नोल्लियम्मी, पवेदण जणस्स आसंका ॥

काचिदविरतिका रजन्यां सपत्नीसुतं हत्वा ततस्तमग्रद्वारे कृत्वा कपाटस्य पृष्ठतस्तमवष्टभ्य

'प्रतिचरति' प्रतिजाग्रती तिष्ठति । श्रमणश्च तदानीं भिक्षार्थमायातः तेन कपाटं प्रेरितम्, स च दारकः सहसैव भूमौ पतितः । ततस्तया प्रवेदनं कृतं पूत्कृतमित्यर्थः, यथा-आः ! कथं संयतेन दारको व्यापादित इति । ततश्च जनस्याशङ्का भवति-किं मन्ये सत्यमेवेदम् ? इति । तत्र ग्रहणाकर्षणादयो दोषाः ॥ अथ मृषावादे विराधनामाशङ्कां चाह-

[भा.२८४५] मा निसि मोकं एज्जसु, भणाइ एहिंति ते गिहं सुणगा ।
पुनरिंतं सङ्घिपई, भणाइ सुणओ सि किं जातो ॥

[भा.२८४६] एवं चिय मे रत्तिं, कुसणं दिज्जाहि तं च सुणएण ।
खइयं ति य भणमाणे, भणाइ जाणामि ते सुणए ॥

वृ- काचिदविरतिका कस्यापि साधोरुपशान्ता, सा तस्य रात्रावप्यागतस्य भक्त-पानं प्रयच्छति, तद् दृष्ट्वा तदीयेन भर्त्रा स साधुरभिहितः-मा 'निशि' रात्रौ मदीयम् 'ओकः' गृहमायासीः । ततः साधुर्भणति-एष्यन्ति त्वदीयं गृहं शुनका इति । ततः स साधुर्जिह्वादण्डदोषेणाकृष्यमाणः पुनस्तदीयं गृहमागतवान् । तं पुनरायान्तं स श्राद्धिकापतिर्भणति-किमेवं त्वं श्वा नो जातः ? । एवं मृषावाददोषमापद्यते । अथवा एवमेव केनचिदगारिणा साधुर्निशि समागच्छन् प्रतिषिद्धः 'श्वानस्ते गृहमागमिष्यन्ति' इति प्रतिज्ञां कृतवान् । अन्यदा च तेनाविरतिकेन दिवा भुञ्जानेन महिला भणिता-मन्निमित्तमद्य कुसणं स्थापयेः, पश्चाच्च मम रात्रौ भुञ्जानस्य 'दद्याः' परिवेषयेः । ततस्तया स्थापितम् । तच्च शुनकेन भक्षितम् । एवं भणन्त्यां तस्यां गाथायां पुंस्त्वनिर्देशःप्राकृतत्वात् स प्राह-जानाम्यहं 'ते' त्वदीयान् शुनकान् । एवं मृषावादविषया शङ्का भवेत् ॥ अथ तृतीय-चतुर्थव्रतयोर्विराधनामाशङ्कां च प्रतिपादयति-

[भा.२८४७] सयमेव कोइ लुद्धो, अवहरती तं पडुच्च कम्मकरी ।
वाणिगिणी मेहुन्नं, बहुसो व चिरं व संका या ॥

वृ- कश्चिल्लुब्धो भिक्षार्थं प्रविष्टो रजन्यामाकीर्णविप्रकीर्णं वस्त्र-हिरण्यादि दृष्ट्वा स्वयमेवापहरेत्। अथवा तं संयतं प्रतीत्य कर्मकरी काचिदपहरेत्, 'संयतेन हृतं भविष्यतीति गृहपतिप्रभृतयश्चिन्त-यिष्यन्ति' इति बुध्या सा सुवर्णादिकं चोरयेदिति भावः । तथा काचिद् वाणिजिका प्रोषितभर्तृका मैथुनमवभाषेत, तद्वचनाभ्युपगमे चतुर्थव्रतविराधना । तथा आहारनिमित्तं बहुशः प्रवेश-निर्गमौ कुर्वाणश्चिरं चालाप-संलापादिभिस्तिष्ठन् मैथुनप्रतिसेवायां जनैःशङ्क्येत ॥

अथ पञ्चमव्रतविषये विराधना-शङ्के दर्शयति-

[भा.२८४८] अनभोगेन भए व, पडिनीओम्मीस भत्तपानं तु ।
दिज्जा हिरन्नमादी, आवज्जण संकणा दिट्ठे ॥

वृ- कश्चिदनाभोगेन भक्त-पानोन्मिश्रितं हिरण्यादि दद्याद् भयेन वा । यथा-कयाचिद् दुर्व्यक्षरिकया हिरण्यादिकमपहृतम्, सा च तं न शक्नोति सङ्गोपयितुं वा प्रत्यर्पयितुं वा, ततः संयतस्य भैक्षे समं दद्यात् । प्रत्यनीकतया वा दद्यात्, यथा काष्ठश्रेष्ठिसाधोर्वज्रनामिकया प्राक्तनभार्यया इति । एवं च हिरण्यादिके गृहीते सति कश्चित् तत्रैव मूर्च्छां कुर्यात्, मूर्च्छया चैकान्ते सङ्गोप्य धारयतः परिग्रहदोषस्यापत्तिर्भवति । तथा तत् सुवर्णादिकं भक्तपानसम्मिश्रं दीयमानं दत्तं वा प्रतिग्रहे जाज्वल्यमानं कश्चित् पश्येत्, दृष्टे च तस्य शङ्का जायेत-किं मन्येऽयं

जानानो लुब्धतया गृह्णाति ? उताजानानः प्रमादात् ? इत्यादि । यत एते दोषा अतो रात्रौ न पर्यटितव्यम् ॥ अथ रात्रिभक्तमेव भेदतः प्ररूपयन्नाह-

[भा.२८४९] तं पि य चउव्विहं राइभोयणं चोलपट्टमइरेगे ।
परियावन्न विगिंचण, दरगुलिया रुक्ख सुन्नघरे ॥

वृ- तदपि च रात्रिभोजनं चतुर्विधम्, तद्यथा-दिवा गृहीतं दिवा भुक्तं १ दिवा गृहीतं रात्रौ भुक्तं २ रात्रौ गृहीतं दिवा भुक्तं ३ रात्रौ गृहीतं रात्रौ भुक्तं च ४ इति । एतेषु चतुर्ष्वपि भङ्गेषु यथाक्रमं तपःकाललघु १ कालगुरु २ तपोगुरुको ३ भयगुरुकरूपाश्चत्वारो गुरवः । तत्र प्रथमभङ्गो भाव्यते-''चोलपट्ट''त्ति कस्यापि संयतस्य संज्ञातकानां सङ्खडिरुपस्थिता, स च तस्मिन् दिवसे प्रातरेवाभक्तार्थं प्रत्याख्यातवान्, ततः 'मा मामेतेऽभक्तार्थिनं न ज्ञास्यन्ति' इति कृत्वा पात्रकैरनुद्ग्राहितैश्चोपलट्टकसहितो गतः संज्ञातकगृहं पृष्ठश्च-किं भवद्भिर्भाजनानि नानीतानि? ; ततस्तेनान्येन वा साधुना भणितम्-अद्याभक्तार्थिक इति; ततस्ते संज्ञातकाः 'कल्ये वयं दास्यामः' इति कृत्वा यत् तदर्थं स्थापयन्ति द्वितीयदिने च यद्यसौ तद् गृहीत्वा भुङ्क्ते तदा प्रथमभङ्गो भवति । ''अइरेगे''त्ति सङ्खड्यामन्यत्र वा क्वचिदतिरिक्तमवगाहमादि लब्धम्, तच्च 'पर्यापन्नं' परिष्ठापनायोग्यता प्राप्तम्, ततस्तस्य 'विगिञ्चणं' परिष्ठापनं तदर्थं निर्गतः, तच्चोत्कृष्टविनाशि द्रव्यं मत्वा द्वितीयदिने समुद्देशनार्थं दर-गुलिका-वृक्ष-शून्यगृहे सथापयति । दरः-बिलम्, गुलिका नाम-पिटकं बुसपुञ्जो वा, वृक्षकोटरमुच्यते, यद्वा ''गुलिया रुक्ख''त्ति गुलिकाः पिण्डकास्तान् कृत्वा वृक्षकोटरे स्थापयति, शून्यगृहं-प्रतीतम् । एतेषु स्थापयित्वा द्वितीयदिवसे भुञ्जानस्य प्रथमभङ्गो भवतीति निर्युक्तिगाथा समासार्थः ॥ अथ भाष्यकार एवैनां व्याख्यानयति-

[भा.२८५०] खमणं मोहतिगिच्छा, पच्छित्तमजीरमाण खमओ वा ।
गच्छइ सचोलपट्टो, पुच्छ ठवणं पढमभंगो ॥

वृ- एकेन साधुना क्षपणं कृतं उपवास इत्यर्थः, तच्च मोहचिकित्सार्थं वा प्रायश्चित्तविशुद्धिहेतोर्वा अजीर्यमाणभक्तपरिणतिनिमित्तं वा, 'क्षपको वा' एकान्तरितादिक्षपणकर्त्ताऽसौ; तद्दिने च तस्य संज्ञातकानां सङ्खडिरुपस्थिता, तैश्च साधवो भिक्षाग्रहणार्थमामन्त्रिताः, क्षपकसाधुश्चानुद्ग्राहितपात्रकः 'सचोलपट्टः' चोलपट्टकद्वितीयो 'मामेतेऽत्र स्थितमभक्तार्थिनं न ज्ञास्यन्ति, अजानानाश्च न मदर्थं संविभागं स्थापयिष्यन्ति' इति बुध्या प्रस्थितः, आचार्यान् प्रतिब्रवीति च-ते स्वभावत एवातिप्रान्ता मां विना न पर्याप्तं प्रदास्यन्ति, न वा अवगाहिमादीन्युत्कृष्टद्रव्याणि ढौकयिष्यन्ति, ततोऽहं गच्छामीति । स च तत्र गतः सन्ननुद्ग्राहितपात्रको दृष्ट्वा तैः पृष्टः-किमद्योपवासी ज्येष्ठार्य? इति । स प्राह-आमम् । ततस्तदर्थमवगाहिमादिसंविभागमभणिता अपि ते स्थापयन्ति 'कल्ये पारणकदिवसे दास्यामः' इति कृत्वा । यद्यपि ते न स्थापयन्ति तथापि क्षपकस्य चत्वारो गुरुकाः, भावतस्तेन सन्निधिस्थापनायाः कारितत्वात् । द्वितीयदिवसे च तद् गृहीत्वा भुञ्जानस्य प्रथमभङ्गो भवति ॥ अथातिरिक्तादिपदानि व्याचष्टे-

[भा.२८५१] कारणगहिउव्वरियं, आवलियविहीए पुच्छिऊण गओ ।
भक्खं सुए दराइसु, ठवेइ साभिग्गहऽन्नो वा ॥

वृ- इह साधूनां भिक्षामटतां क्वचिदतर्कितः प्रभूतभक्तस्य लाभोऽभवत्, सङ्खड्यां वा

प्रचुरमवगाहिमादि लब्धम्, अनुपचितक्षेत्रे वा गुरु-ग्लानादीनां प्रायोग्यग्रहणाय सर्वैरपि सङ्घाटकैर्मात्रकाणि व्यापारितानि, एवमादिभि कारणैः प्रायोग्यद्रव्यमतिरिक्तंगृहीतं तच्चोद्धरितम्। तत आवलिका-आचाम्लिका-ऽभक्तार्थिकादिपरिपाटिरूपां विधिना-प्रत्याख्याननिर्युक्त्या-दिशास्त्रप्रसिद्धेन प्रकारेण 'पृष्ट्वा' निमन्त्र्य तथाप्यतिरिक्तं परिष्ठापनाय गत एकान्तमनापातं बहुप्राशुकं स्थण्डिलम्। तत्र चप्राप्त उत्कृष्टाविनाशिद्रव्यलोभेन "सुए"त्ति 'श्वः' कल्ये भोक्ष्येऽहमिति चिन्तयित्वा दरे आदिशब्दाद् गुलिका-वृक्षकोटर-शून्यगृहेषु स्थापयति । स च साभिग्रहो वा स्याद् 'अन्यो वा' अनभिग्रहः। साभिग्रहो नाम-'यत् किञ्चिदाहारोपकारणादिकं परिष्ठापनायोग्यं भवति तत् सर्वं मया परिष्ठापयितव्यम्' इत्येवं प्रतिपन्नाभिग्रहः, तद्विपरीतोऽनभिग्रह इति ॥

अथैतेषु स्थापयतः प्रायश्चित्तमाह-

[भा.२८५२] बिले मूलं गुरुगा वा, अणंते गुरु लहुग सेस जं चऽन्नं ।
थेरीय उ निक्खित्ते, पाहुण-साणाइखइए वा ॥

[भा.२८५३] आरोवणा उ तस्सा, बंधस्स परूवणा य कायव्वा ।
कुल नामऽट्ठिगमाउं, मंसाऽजिन्नं न जाऽऽउट्टो ॥

वृ- बिले स्थापयतो मूलं गुरुका वा-यदि चरिमे बिले स्थापयति तदा मूलम्, उद्रसे चत्वारो गुरवः । अनन्तवनस्पतिकोटरे स्थापयतश्चतुर्गुरवः । 'शेषेषु' प्रत्येकवनस्पतिकोटर-गुलिका-शून्यगृहेषु स्थापयतश्चतुर्लघवः, यच्च 'अन्यद्' आत्म-संयमविराधनादिकमापद्यते तन्निष्पन्नं प्रायश्चित्तम् । अथ स्थविरागृहे स्थापयति ततस्तत्र निक्षिप्ते चत्वारो लघवः । अथ तया तत् प्राघुणकाय दत्तं स्वयमेववा प्राघुणकेन भुक्तं श्वान-गवादिभिर्वा भक्षितं तदा 'तस्य' स्थापकस्यारोपणा कर्त्तव्या, चतुर्लघुकादिकं यथायोग्यं प्रायश्चित्तं दातव्यमिति भावः । तत्र चप्राघुणकादिना भुक्ते कियन्तं कालं यावत् कर्मबन्धो भवति ? इत्याशङ्कायां बन्धस्य प्ररूपणा कर्त्तव्या । सा चेयम्-"कुल" इत्यादि । केचिदाचार्यदेशीयाः ब्रुवते-यावत् तस्य प्राघुणकस्य सप्तमः कुलवंशः तावदनुसमयं तस्य स्थापकस्य साधोः कर्मबन्धो मन्तव्यः । अपरे प्राहुः-यावत् तस्य नाम-गोत्रं नाद्यापि प्रक्षीणम् । अन्ये भणन्ति-यावत् तस्यास्थीनि ध्रियन्ते । इतरे ब्रुवते-यावदसावायुर्धारयति । तदपरे कथयन्ति-यावत् तस्य तत्प्रत्ययो मांसोपचयो ध्रियते । अन्ये प्रतिपादयन्ति-यावत् तस्य तद् भक्तमद्यापि न जीर्णम् । आचार्य प्राह-एते सर्वेऽप्यनादेशाः, सिद्धान्तसद्भावः पुनरयम्-यावदसौ स्थापकसाधुरद्यापि तस्मात् स्थानाद् 'नावृत्तः' नालोचनाप्रदानादिना प्रतिक्रान्तः तावत् तस्य कर्मबन्धो न व्यवच्छिद्यते ॥

गतः प्रथमो भङ्गः । अथ शेषभङ्गत्रयीं भावयति-

[भा.२८५४] संखडिगमने बीओ, बीयारगयस्स तइयओ होइ ।
सन्नायगमण चरिमो, तस्स इमे वन्निया भेदा ॥

वृ- अपराह्णे या सङ्खडी तस्यां गमने 'दिवा गृहीतं रात्रौ भुक्तम्' इति द्वितीयभङ्गो भवति । अनुद्गते सूर्ये बहिर्विचारभूमौ गतस्य बलिना निमन्त्रितस्य 'रात्रौ गृहीतं दिवा भुक्तम्' इति तृतीयो भङ्गः । संज्ञातककुलगमने संज्ञातकानामेव वचनेनात्मीयलौल्येन वा रात्रौ गृहीत्वा रात्रावेव भुञ्जानस्य 'चरमः' चतुर्थो भङ्गः । तस्य च चतुर्थभङ्गस्य 'इम' वक्ष्यमाणाः प्रायश्चित्तभेदा वर्णिता

इति निर्युक्तिगाथासमासार्थः ॥ अथैनामेव गाथां व्याख्यानयति-

[भा.२८५५] गिरिजन्नगमाईसु व, संखडि उक्कोसलंभे बिइओ उ।
अग्गिट्ठि मंगलट्ठी, पंथिग-वइगाइसु तइओ ॥

वृ- गिरयज्ञो नाम-कोङ्कणादिदेशेषु सायाह्नकालभावी प्रकरणविशेषः। आह च चूर्णिकृत्-गिरियज्ञः कोङ्कणादिषु भवति उस्सूरे त्ति। विशेषचूर्णिकारः पुनराह- गिरिजन्नो मत्तवालसंखडी भन्नइ, सा लाडविसए वरिसारत्ते भवइ त्ति। गिरिकंजन्नत्ति भूमिदाहो त्ति भणितं होइ। तदादिषु सङ्खडिषु वा शब्दादन्यत्रवा क्वापि सूर्ये ध्रियमाणे उत्कृष्टम्-अवगाहिमादि द्रव्यं लब्ध्वा यावत् प्रतिश्रयमागच्छति तावदस्तमुपगतो रवि ततो रात्री भुङ्क्त इति द्वितीयो भङ्गः। तथा दक्षिणापथे कुडवार्द्धमात्रया समितया महाप्रमाणो मण्डकः क्रियते, स हेमन्तकालेऽरुणोदयवेलायां अग्निष्टिकायां पक्त्वा धूलीजङ्घाय दीयते, तं गृहीत्वा भुञ्जानस्य तृतीयो भङ्गः। श्राद्धो वा प्रातर्गन्तुकामः साधुं विचारभूमी गच्छन्तं दृष्ट्वा मङ्गलार्थी अनुद्गते सूर्ये निमन्त्रयेत्, पथिका वा पन्थानं व्यतिव्रजन्तो निमन्त्रयेयुः, व्रजिकायां वाऽनुद्गते सूर्ये उच्चलितुकामाः साधुं प्रतिलाभयेयुः, एवमादिषु गृहीत्वा भुञ्जानस्य तृतीयो भङ्गो भवति ॥ अथ चतुर्थभङ्गं व्याख्यानयति-

[भा.२८५६] छन्दिय-सयंगयाण व, सन्नायगसंखडीइ वीसरणं।
दिवसे गते संभरणं, खामण कल्लं न इण्हिं ति ॥

वृ- केषाञ्चित् साधूनां संज्ञातकगृहे सङ्खडिरुपस्थिता, तत्र ते छन्दिताः-निमन्त्रिताः स्वयं वा-अनिमन्त्रिता गताः। ततः संज्ञातकैस्ते संयता अभिहिताः-अद्य यूयं मा भिक्षां पर्यटत, वयमेव पर्याप्तं प्रदास्याम इति। ते च संयता भोजनकाले परिवेषणादिकृत्यव्यग्राणां तेषां विस्मरणपथमुपागमन्। ततो यदा लोकस्य यद् दातव्यं तद् दत्तम्, यच्च कर्त्तव्यं तत् कृतम्, ततः क्षणिकीभूतैस्तैर्दिवसे 'गते' व्यतीते सति संयतानां संस्मरणं कृतम्। ततस्ते रात्री प्राञ्जलिपुटाः पादयोः पतित्वा क्षामणां कुर्वन्ति-परिवेषणव्यग्रैरस्माभिर्यूयं न संस्मृताः, क्षमध्वमस्मदपराधम्, गृह्णीध्वमस्मदनुग्रहाय भक्तपानमिति। संयता ब्रुवते-कल्ये ग्रहीष्यामः, नेदानीं रात्राविति ॥

गृहस्थाः प्रश्नयन्ति-किं कारणम्?। संयताः प्रतिब्रुवते-

[भा.२८५७] संसत्ताइ न सुज्झइ, ननु जोण्हा वि य दो वि उसिणाइ।
काले अब्भ रए वा, मणिदीवुद्दित्तए बेंति ॥

वृ- रात्री भक्तपानं कीटिकादिभि संसक्तमसंसक्तं वेति न शुध्यति, आदिशब्दाद् यूयमस्मदर्थं भिक्षामानयन्तो मार्गे कीटिकादिजन्तूनामाक्रमणं कुरुथ तच्च यूयं वयं च न पश्यामः। तदा च चन्द्रज्योत्स्ना वर्त्तते ततस्ते गृहस्था ब्रुवते-निन्वियमीदृशी ज्योत्स्ना या दिवसमपि विशेषयति, अपि च 'द्वे अपि' कूर-कुसणे भक्त-पानके वा उष्णे, नास्ति संसक्तिदोष इति। अथ 'कालः' कृष्णोऽसौ पक्षो वर्त्तते, शुक्लपक्षे वा प्रच्छन्नो रजश्छन्नो वा चन्द्रो भवेत्, ततस्ते गृहस्थाः "बिंति" त्ति ब्रुवते-अस्माकं मणिरत्नमस्ति तेन दिवसोऽपि विशिष्यते, प्रदीपो वा उद्दीप्तं वा-ज्योति पूर्वकृतं विद्यते तेन परिस्फुटः प्रकाशो भवति। एवमुक्ते यदि गृह्णन्ति भुञ्जते वा तत इदं नैसंस्थितं प्रायश्चित्तम्॥

तदेव दर्शयति-

[भा.२८५८] जोण्हा-मणी-पदीवा, उद्दित्त जहन्नागाईं ठाणाइं।

चउगुरुगा छग्गुरुगा, छेओ मूलं जहन्नम्मि ॥

वृ- ज्योत्स्नोद्योते भुञ्जानस्य चत्वारो गुरवः, मणिप्रकाशे षड्गुरवः, प्रदीपप्रकाशे च्छेदः, उद्दीप्तोद्योते मूलम् । अमूनि प्रायश्चित्तानि ज्योत्स्नादिपदोपलक्षितानि यथाक्रममधोऽधः स्थापनीयानि । एतानि जघन्यानि स्थानानि । किमुक्तं भवति ? -प्रसङ्गमन्तरेण जघन्यतोऽप्येतानि प्रायश्चित्तानि द्रष्टव्यानि ॥ अथ प्रसङ्गतो यत् प्रायश्चित्तं भवति तद् बिभणिषुराह-

[भा.२८५९] भोत्तूण य आगमनं, गुरुहिं वसभेहि कुल गणे संघे ।
आरोवण कायव्वा, बिइया य अभिक्खगहणेणं ॥

वृ- रात्री ज्योत्स्नाप्रकाशादिषु भुक्त्वा गुरूणां समीपे तेषामागमनम् । आगतैश्चालोचना-परिणतैरन्यथा वा गुरुणां कथितम् । ततो गुरुभिरुक्तम्-दुष्ठु कृतं भवद्भिर्यन्निशाभक्तमासे-वितम् । इत्युक्ते यदि सम्यगावृत्ताः 'मिथ्यादुष्कृतम्, न भूय एवं करिष्यामः' इति ततश्चतुर्गुरवः । अथ नावृत्ताः किन्तु गुरुवचनातिक्रमं कुर्वन्ति-'को नाम दोषो यदि ज्योत्स्नाप्रकाशे दिवससङ्काशे भुक्तम् ?' इति ततः षड्गुरुकाः । वृषभैरभिहिताः-'आर्या ! किमेवं गुरूणां वचनमतिक्रामथ ?' यदि (इति) वृषभवचने सम्यगावृत्तास्ततः षड्गुरुका एव, अथ वृषभवचनातिक्रमं कुर्वन्ति ततश्छेदः । एवं कुलेन कुलस्थविरैर्वा नोदिता यद्यावृत्तास्ततो मूलमेव, अथ नावृत्तास्ततोऽनवस्थाप्यम् । सङ्घेन सङ्घस्थविरैर्वा नोदिताः 'किमिति गणं गणस्थविरान् वा अतिक्रामथ ?' इत्युक्ते यद्यावर्त्तन्ते ततोऽनवस्थाप्यमेव, अनावर्त्तमानानां पाराञ्चिकम् । एषा च 'आरोपणा' प्रायश्चित्तवृद्धिर्गुरु-वृषभादिवचनातिक्रमनिष्पन्ना प्रागुक्तजघन्यप्रायश्चित्तस्थानेभ्यो दक्षिणतः कर्त्तव्या । द्वितीया तु रात्रिभक्तस्यैव यद् अभीक्ष्णग्रहणं-पुनःपुनरासेवा तन्निष्पन्ना वामपार्श्वतः कर्त्तव्या । तद्यथा-एकं वारं ज्योत्स्नाप्रकाशे भुञ्जतश्चत्वारो गुरवः, द्वितीयं वारं षड्गुरवः, तृतीयं वारं छेदः, चतुर्थं वारं मूलम्, पञ्चमं वारमनवस्थाप्यम्, षष्ठं वारं भुञ्जानस्य पाराञ्चिकम्, एषा ज्योत्स्नाप्रकाशे प्रायश्चित्तवृद्धिरुक्ता । एवं मणिप्रकाशेऽपि, नवरं गुरुभि प्रतिनोदिता यद्यावृत्तास्ततः षड्गुरुकम्, अथ गुरुवचनमतिक्रामन्ति ततश्छेदः; एवं वृषभवचनातिक्रमे मूलम्, कुलस्थविरातिक्रमेऽ-नवस्थाप्यम्, गणस्थविर-सङ्घस्थविरातिक्रमे पाराञ्चिकम्, अभीक्ष्णसेवायां तु पञ्चभिर्वारैः पाराञ्चिकम् । एवं प्रदीपेऽपि दक्षिणतो वामतश्चारोपणा, नवरमाचार्यातिक्रमे मूलम्, वृषभाति-क्रमेऽनवस्थाप्यम्, कुल-गण-सङ्घस्थविरातिक्रमे पाराञ्चिकम्, अभीक्ष्णसेवायां तु चतुर्भिर्वारैः पाराञ्चिकम् । एवमुद्दीप्तप्रकाशेऽपि, नवरमाचार्यातिक्रमेऽनवस्थाप्यम्, वृषभ-कुल-गण-सङ्घस्थ-विराणां चतुर्णामप्यतिक्रमे पाराञ्चिकम्, अभीक्ष्णसेवायां तु त्रिभिर्वारैः पाराञ्चिकम्, एषा प्रथमा नीरवसातव्या । द्वितीयादयोऽपि वक्ष्यमाणा एवमेव स्थाप्याः ॥

शिष्यः, प्राह-कुल-गण-सङ्घस्थविर-वचनमतिक्रामतां यद् गुरुतरं प्रायश्चित्तमुक्तं तदत्र किं कारणम् ? अत्रोच्यते-एते त्रयोऽपि स्थविरा आचार्यादपि गरीयांसो मन्तव्याः, प्रमाणपुरुष-तया स्थापितत्वात् । कथं पुनरेते प्रमाणपुरुषाः? उच्यते-

[भा.२८६०] तिहिं थेरेहिं कयं जं, सट्ठाणे तं तिगं न वोलेइ ।
हेट्ठिल्ला वि उवरिमे, उवरिमथेरा उ भइयव्वा ॥

वृ- 'त्रिभिः' कुल-गण-सङ्घस्थविरैः यद् आभवद्व्यवहारादिविषयं कार्यं कृतं तत् कार्यं स्वस्थाने

'त्रिकं' कुल-गण-सङ्घलक्षणं 'न वोलयति' न व्यतिक्रामतीत्यर्थः। किमुक्तं भवति ? -कुलस्थविरेण कृतं कुलं नातिक्रामति, गणस्थविरेण कृतं गणो नातिक्रामति, सङ्घस्थविरेण कृतं सङ्घो नातिक्रामति'। ''हेट्ठिल्ला वि उवरिमे'' त्ति 'अधस्तनाः' कुलस्थविरास्तेऽप्युपरितनैः-गणस्थ-विरैः सङ्घस्थविरैश्च कृतं नातिक्रामन्ति, तथा गणस्थविराः सङ्घस्थविरेभ्योऽधस्तनास्ततो यत् सङ्घस्थविरैः कृतं तद् गणस्थविरा नातिक्रामन्ति। उपरितनास्तु स्थविराः 'भक्तव्याः' विकल्पयितव्याः कथम् ? इति चेद् उच्यते-कुलस्थविरैररक्तद्विष्टैर्यत् कृतं तद् गणस्थविराः सङ्घस्थविराश्च नान्यथा कुर्वन्ति, अथागमोक्तविधिमन्तरेण रक्तद्विष्टैः कृतं ततस्तन्न प्रमाणयन्ति। एवं गणस्थविरैरपि यदरक्तद्विष्टैः कृतं तत् सङ्घस्थविरा नातिक्रामन्ति, अथ रक्तद्विष्टैः कृतं ततो न प्रमाणयन्ति। अत एतेषु गुरुतरं प्रायश्चित्तम्॥ अथ द्वितीयतृतीयचतुर्थनीदर्शनार्थमाह-

[भा.२८६१] चंदुज्जोवे को दोसो, अप्पप्पाणे य फासुए दव्वे।
भिक्खू वसभाऽऽयरिए, गच्छम्मि य अट्ठ संघाडा॥

वृ- ज्योत्स्नाप्रकाशे भुक्त्वा समागत्य गुरुणामालोचयन्ति ततो भिक्षुभि प्रतिनोदिता यदि सम्यगावर्त्तन्ते ततश्चतुर्गुरुकमेव। अथ ब्रुवते-'चन्द्रोद्योते को नाम दोषः ? को वा अल्पप्राणेऽवगाहिमादौ प्राशुके द्रव्ये ?' एवं भणतां षड्लघवः। ततो वृषभैरभिधीयन्ते-'आर्या! भिक्षूणामतिक्रमं कुरुत' यद्यावर्त्तन्ते ततः षड्गुरुका एव, अथ वृषभानतिक्रामन्ति ततः षड्गुरुकाः। तत आचार्यैरभिहिता यद्यावृत्तास्ततः षड्गुरुका एव, अनावृत्तानां छेदः। ''गच्छम्मिय'' त्ति कुल-गुण-सङ्घा इह गच्छशब्देनोच्यते, ततः कुलेन भणिता यदि सम्यगुपरतास्ततश्छेद एव, अथ नोपरमन्ते ततो मूलम्। गणेनाप्यभिहिता यद्यावृत्तास्ततो मूलम्, अथ नावृत्तास्ततोऽनवस्थाप्यम्। ततः सङ्घेनाभिहिता यद्युपरमन्ते ततोऽनवस्थाप्यम्, अथ नोपरमन्ते ततः पाराञ्चिकम्। एषा प्रायश्चित्तवृद्धिर्दक्षिणतः कर्त्तव्या। अभीक्ष्णसेवायाम्-द्वितीयं वारं ज्योत्यसनाप्रकाशे भुञ्जानस्य षड्लघुकम्, तृतीयं वारं षड्गुरुकम्, चतुर्थं छेदः, पञ्चमं मूलम्, षष्ठमनवस्थाप्यम्, सप्तमं वारं पाराञ्चिकम्, एषा प्रायश्चित्तवृद्धिर्वामतः स्थापयितव्या।

एवं मणि-प्रदीपोद्दीप्तप्रकाशेष्वपि भिक्षु-वृषभाद्यतिक्रमनिष्पन्ना दक्षिणतोऽभीक्ष्णसेवानिष्पन्ना तु वामतो यथाक्रमं प्रायश्चित्तवृद्धि स्थापनीया। एषा द्वितीया नीरभिधीयते। तृतीयाऽपि नीरेवमेव कर्त्तव्या, नवरं तस्यां ज्योत्स्नादिप्रकाशेषु भुक्त्वा न कस्याप्याचार्यादिः कथयन्ति किन्तु भिक्षुप्रभृतयस्तेषां परस्परं संलापं श्रुत्वाऽन्यस्य वा श्रावकादेर्मुखादाकर्ण्य तान् प्रतिनोदयन्ति, शेषं सर्वमपि द्वितीयनीवद् द्रष्टव्यम्। चतुर्थी पुनरियम्-भिक्षूणामतिक्रमे चतुर्गुरु, वृषभाणामतिक्रमे षड्लघु, आचार्याणामतिक्रमे षड्गुरु, गच्छस्य साधुसमूहरुपस्यातिक्रमे छेदः, कुलस्यातिक्रमे मूलम्, गणस्यातिक्रमेऽनवस्थाप्यम्, सङ्घस्यातिक्रमे पाराञ्चिकम्, एषा दक्षिणतः प्रायश्चित्तवृद्धिः। द्वितीया त्वभीक्ष्णसेवानिष्पन्ना चतुर्गुरुकादारभ्य सप्तभिर्वारैः पाराञ्चिकं यावद् वामतः स्थापनीया, एवं ज्योत्स्नायामुक्तम्। मणि-प्रदीपोद्दीप्तेष्वपि यथाक्रमं षड्लघुक-षड्गुरुकच्छेदानादौ कृत्वा पाराञ्चिकान्ता दक्षिणतो वामतश्चैवमेव प्रायश्चित्तलते भवतः, तद्यथा-दक्षिणपार्श्ववर्त्तिनी वामपार्श्ववर्त्तिनी च; ततश्चतसृषु नीषु सर्वसङ्ख्ययाऽष्टौ लता लभ्यन्ते, ताश्चाष्टौ सङ्घाटका मन्तव्याः। यत आह चूर्णिकृत् ''अट्ठ संघाड'' त्ति जो जोण्हा-मणि-पदीवुद्दित्तेसु मूलपच्छित्तपत्थारो तस्स

इतो वि चत्तारि पच्छित्तलयाओ इतो वि चत्तारि, सव्वेते अट्ठ संवाडगा। संघाड त्ति वा लय त्ति वा पगारो त्ति वा एगट्ठं ति। अथ ज्योत्स्नादिविवक्षारहितं सामान्यतः प्रायश्चित्तमाह-

[भा.२८६२] सन्नायग आगमने, संखडि राओ अ भोयणे मूलं।
बिइए अणवट्ठप्पो, तइयम्मि य होइ पारंची ॥

वृ- संज्ञातककुले आगमनं कृत्वा सङ्खड्यां वा गत्वा रात्रौ यदि भुङ्क्ते तदा मूलव्रतविराधनानिष्पन्नं मूलं नाम प्रायश्चित्तम्, द्वितीयं वारं रात्रौ भुञ्जानस्यानवस्थाप्यम्, तृतीयं वारं पाराञ्चिकम्। अथवा भिक्षो रात्रौ भुञ्जानस्य मूलम्, द्वितीयः-उपाध्यायस्तस्यानवस्थाप्यम्, तृतीयः-आचार्यस्तस्य रात्रौ भुञ्जानस्य पाराञ्चिकम् ॥

अथ यदुक्तम् 'अल्पप्राणे प्राशुकद्रव्ये को दोषः ?' इति तदेतत् परिहरन्नाह-

[भा.२८६३] जइ वि य फासुगदव्वं, कुंथू-पनगाइ तह वि दुप्पस्सा।
पच्चक्खनाणिणो वि हु, राईभत्तं परिहरंति ॥

वृ- यद्यपि तत् प्राशुकद्रव्यमवगाहिमादि तथापि 'कुन्थु-पनकादयः' आगन्तुक-तदुद्भवा जन्तवो रात्रौ दुर्दर्शा भवन्ति। किञ्च येऽपि तावत् 'प्रत्यक्षज्ञानिनः' केवलिप्रभृतयस्ते यद्यपि ज्ञानालोकेन तदुद्भवाऽऽगन्तुकसत्त्वविरहितं भक्तपानं पश्यन्ति तथापि 'हु' निश्चितं रात्रिभक्तं परिहरन्ति, मूलगुणविराधना मा भूदिति कृत्वा अथ यदुक्तम् 'चन्द्र-प्रदीपादिप्रकाशे को दोषः?' इति तत्र परिहारमाह-

[भा.२८६४] जइ वि य पिपीलियाई, दीसंति पईव-जोइउज्जोए।
तह वि खलु अणाइन्नं, मूलवयविराधना जेणं ॥

वृ- यद्यपि प्रदीप-ज्योतिषोः उपलक्षणत्वात् चन्द्रस्य चोद्योते पिपीलिकादयो जन्तवो दृश्यन्ते तथापि 'खलु' निश्चयेन अनाचीर्णमिदं रात्रिभक्तम्। कुतः ? इत्याह-'मूलव्रतानां' प्राणातिपातविरमणादीना महाव्रतानां प्रागुक्तनीत्या विराधना येन रात्रिभक्ते भवति अतो रात्रौ न भोक्तव्यम् ॥ अथ "गच्छम्मि य" त्ति पदं व्याचष्टे-

[भा.२८६५] गच्छगहणेण गच्छो, भणाइ अहवा कुलाइओ गच्छो।
गच्छग्गहणे य कए, गहणं पुन गच्छवासीणं ॥

वृ-गच्छग्रहणेन 'गच्छः' साधुसमूहरूपो रात्रिभक्तप्रतिसेवकान् 'भणति' नोदयतीति मन्तव्यम्, यथा चतुर्थ्यां नावि चतुर्थे पदे। अथवा गच्छग्रहणेन 'कुलादिकः' कुल-गण-सङ्घरूपो ग्रहणं विज्ञेयम्, तथामेवेदं प्रायश्चित्तनिकुरम्बं न जिनकल्पिकादीनाम् ॥ इह पूर्वं भाष्यकारेण प्रथमा नौः परिस्पष्टमुपदर्शिता न द्वितीयादयः, अतो यथाक्रमं तासां व्याख्यानमाह-

[भा.२८६६] बिइयादेसे भिक्खू, भणंति दुट्ठु भे कयं ति वोलेंति।
छल्लहु वसभे छग्गुरु, छेदो मूलाइ जा चरिमं ॥

वृ- 'द्वितीयादेशो नाम' द्वितीयनौसंस्थितः प्रायश्चित्तप्रकारः, तत्र तथैव रात्रौ भुक्त्वा गुरूणां निवेदिते भिक्षवो भणन्ति-दुष्ठु "भे" भवद्भिः कृतमिति। तच्च वचनं यदि ते 'वोलयन्ति' न प्रतिपद्यन्ते तदा षड्लघुकम्, वृषभवचनातिक्रमे षड्गुरुकम्, आचार्याणामतिक्रमे छेदः,

कुलस्थविरस्याप्रमाणीकरणे मूलम्, गणस्थविरस्याप्रमाणनेऽनवस्थाप्यम्, सङ्घस्थविरस्यातिक्रमणे पाराञ्चिकम्। एवं मणिप्रकाशादिष्वपि मन्तव्यम्, नवरं मणिप्रकाशे षड्गुरुकात् प्रदीपप्रकाशे छेदाद् उद्दीप्ते मूलादारब्धव्यम्। अभीक्ष्णसेवायां तु सप्तभिर्वारैः पाराञ्चिकम्। भावना तु प्रागेव कृतेति ॥ तृतीया भाव्यते-

[भा.२८६७] तइयादेसे भोत्तूण आगया नेव कस्सइ कहिंति।
तेसऽन्नतो व सोचा, खिंसंतऽह भिक्खुणो ते उ ॥

वृ- 'तृतीयदेशे' तृतीयायां नावि तथैव भुक्त्वा समागताः सन्तो नैव कस्यापि कथयन्ति। नवरं भिक्षवस्तेषां परस्परं संलापं श्रुत्वा, तैर्वाऽन्यस्य कस्यापि श्रावकादेः कथितं ततो वा श्रुत्वा भिक्षवस्तान् 'अथ' श्रवणानन्तरं 'खिंसंति' खरण्टयन्तीत्यर्थः ॥ खरण्टिताश्च यद्यतिक्रामन्ति तत इयं प्रायश्चित्तवृद्धि-

[भा.२८६८] भिक्खुणो अतिक्कमंते, छल्लहुगा वसभे होंति छग्गुरुगा।
गुरु-कुल-गण-संघाइक्कमे य छेदाइ जा चरिमं ॥

वृ- भिक्षूनतिक्रामति षड्लघुकाः, वृषभाणामतिक्रमे षड्गुरुकाः, गुरुणामतिक्रमे छेदः कुलस्यातिक्रमे मूलम्, गणस्यातिक्रमेऽनवस्थाप्यम्, सङ्घस्यातिक्रमे पाराञ्चिकम् ॥ अथ चतुर्थी नावमुपदर्शयति-

[भा.२८६९] भिक्खु वसभाऽऽयरिए, वयणं गच्छस्स कुल गणे संघे।
गुरुगादऽइक्कमंते, जा सपद चउत्थ आदेसो ॥

वृ- ज्योत्स्नाप्रकाशादिषु भुक्त्वा गुरुणामालोचिते भिक्षुभिर्नोदिता यद्यावृत्तास्ततश्चतुर्गुरुकाः। अथ भिक्षूणां वचनमतिक्रामन्ति ततोऽपि चतुर्गुरु, वृषभाणां वचनमतिक्रामतः षड्लघुकाः, आचार्यानतिक्रामतः षड्गुरुकाः, गच्छममन्यमानस्य च्छेदः, कुलमप्रमाणीकुर्वतो मूलम्, गणमप्रमाणयतोऽनवस्थाप्यम्, सङ्घं व्यतिक्रामतः 'स्वपदं' पाराञ्चिकम्। अभीक्ष्णसेवायामपि प्रथमे द्वितीये च वारे चतुर्गुरुकम्, तृतीयादिष्वष्टमान्तेषु वारेषु षड्लघुकादि पाराञ्चिकान्तम्। एषः 'चतुर्थ आदेशः' चतुर्थी नौः इत्यर्थः ॥ अथ पूर्वोक्तानेव प्रायश्चित्तवृद्धिहेतून् सन्दर्शयति-

[भा.२८७०] पेच्छह उ अनायारं, रत्तिं भुत्तुं न कस्सइ कहेंति।
एवं एक्केक्कनिवेयनेन वुड्ढी उ पच्छित्ते ॥

वृ- 'पश्यताममीषामनाचारं यदेवं रात्रौ भुक्त्वा न कस्यापि कथयन्ति' एवं भिक्षुभि खरण्टिता यदि नावर्त्तन्ते ततो भिक्षवो वृषभाणां कथयन्ति, वृषभा गुरूणाम्, गुरवोऽपि कुलस्येत्यादि। एवमेकैकस्य-वृषभादेर्निवेदनेन प्रायश्चित्तस्य वृद्धिर्भवति ॥

[भा.२८७१] को दोसो को दोसो, त्ति भणंते लग्गई बिइयठाणे।
अहवा अभिक्खगहणे, अहवा वत्थुस्स अइयारो ॥

वृ- चन्द्रोद्योतादिषको दोषः ? को दोषः ? इत्युत्तरप्रदानेन द्वितीयं प्रायश्चित्तस्थानं 'लगति' प्राप्नोति। अथवा 'अभीक्ष्णग्रहणे' पुनःपुनरासेवायाम्, अथवा 'वस्तुनः' आचार्योपाध्यायादिरूपस्य यः 'अतिचारः' रात्रिभक्तलक्षणस्तस्मात् प्रायश्चित्तवृद्धिर्भवति। यत एवं प्रायश्चित्तजालम् अतो न कल्पते चतुर्विधमपि रात्रिभक्तम्। कारणसद्भावे पुनः कल्पते ॥ तान्येव कारणानि दर्शयति-

[भा.२८७२] बिइयपयं गेलन्ने, पढमे बिइए य अणहियासम्मि ।
फिट्टइ चंदगवेज्झं, समाहिमरणं य अद्धाणे ॥

वृ- 'द्वितीयपदं नाम' 'दिवा गृहीतं दिवा भुक्तम्' इत्यादिचतुर्भङ्गीप्रतिसेवनात्मकं तदागाढे ग्लानत्वे आसेवितव्यम् । प्रथमद्वितीयपरीषहातुरतायां वा, "अणहियासम्मि" त्ति असहिष्णुतायां वा, चन्द्रकवेधं नामानशनं तदसमाधिमुपगतस्य 'स्फिटति' न निर्वहतीति भावः, अतस्तस्य यथा समाधिमरणं तथा चतुर्भङ्गयाऽपि यतितव्यम् । अध्वनि वा चतुर्ष्वपि भङ्गेषु ग्रहणं कर्त्तव्यमिति द्वारगाथासमासार्थ ॥ अथैनामेव विवरीषुर्ग्लानत्वद्वारं व्याख्यानयति-

[भा.२८७३] पइदिनमलब्भमाणे, विसोहि समइच्छिउं पढम भंगो ।
दुल्लभ दिवसंते वा, अहि-सूलरुयाइसुं बिइओ ॥

[भा.२८७४] एमेव तइयभंगो, आइ तमो अंतए पगासो उ ।
दुहओ वि अप्पगासो, एमेव य अंतिमो भंगो ॥

वृ- यदा ग्लानस्य प्रतिदिनं विशुद्धं भक्तपानं न लभ्यते तदा पञ्चकपरिहाण्या ये विशोधिकोट्यादयो दोषास्तेषु प्रतिदिवसं ग्रहीतव्यम् यावच्चतुर्लघुकाः प्रायश्चित्तम्; यदा तदपि समतिक्रान्तस्तदा प्रथमभङ्गो भवति, रात्रौ परिवास्य दिवा दातव्यमित्यर्थः । तथा 'दुर्लभं' ग्लानप्रायोग्यमशनादि द्रव्यं तच्च गृहीत्वा यावत् प्रतिश्रयमागच्छति तावदस्तमुपगतः सविता अतो दिवा गृहीत्वा रात्रौ ग्लानस्य दातव्यम्; अथवा कश्चिद् दिवसान्ते 'अहिना' सर्पेण खाद्येत, शूलरुग् वा कस्यापि तदानीमुद्धावेत, आदिग्रहणाद् विष-विसूचिकादिष्वागाढेषु समुत्पन्नेषु सर्पदंशाद्युपशमनलब्धप्रत्ययमगदाद्यौषधमानीय यावद् दीयते तावदस्तं गतो रवि अतो रात्रावपि दातव्यम्, एष द्वितीयो भङ्गः । एवमेव तृतीयो भङ्गो वक्तव्यः, यानि प्रथम-द्वितीयभङ्गयोः कारणानि तानि तृतीयभङ्गेऽपि भवन्तीति भावः । अत्र च भङ्गे आदौ 'तमः' अन्धकारं रात्रिपदमित्यर्थः, अन्ते च 'प्रकाशः' दिवापदम् । 'अन्तिमः' चतुर्थो भङ्गः सोऽपि 'एवमेव' अहिदष्टादावागाढकारणे प्रतिसेवितव्यः, नवरमसौ द्विधाऽप्यप्रकाशो मन्तव्य इति ॥

गतं ग्लानद्वारम् । अथ प्रथम-द्वितीया-ऽसिष्णुपदानि व्याचष्टे-

[भा.२८७५] पढमबिइयाउरस्सा, असहुस्स हवेज्ज अहव जुअलस्स ।
कालम्मि दुरहियासे, भंगचउक्केण गहणं तु ॥

वृ- प्रथमः-क्षुधापरीषहो द्वितीयः-पिपासापरीषहस्ताभ्यामातुरस्य, 'असहिष्णोर्वा' स्थूलभद्रस्वामिलघुभ्रातृश्रीयककल्पस्य, युगलं-बाल-वृद्धरूपं तस्य वा असहिष्णोः, काले वा 'दुरधिसहे' अवमौदर्यलक्षणे भङ्गचतुष्केणापिग्रहणं कर्त्तव्यम् ॥

[भा.२८७६] एमेव उत्तिमट्ठे, चंदगवेज्झसरिसे भवे भंगा ।
उभयपगासो पढमो, धई अंते य सव्वतमो ॥

वृ-चन्द्रो नाम-चक्राष्टकोपरिवर्त्तिन्याः पुत्तलिकाया वामाक्षिगोलकः तस्य वेधः-ताडनं तत्सदृशे-तद्वद् दुराराधे 'उत्तमार्थे' अनशने प्रतिपन्ने सति यदि कदाचिदसमाधिरुत्पद्यते तदा 'मा नमस्कारं नाराधयिष्यति, असमाधिमृत्युना वा मा म्रियताम्' इति कृत्वा चत्वारोऽपि भङ्गाः प्रयोक्तव्या भवेयुः । तत्र च प्रथमो भङ्ग उभयप्रकाशः, द्वितीयो भङ्ग आदौ प्रकाशवान् अन्ते तमस्वान्,

तृतीयो अन्ते प्रकाशवान् आदौ तमस्वान्, चतुर्थो भङ्गः 'सर्वतमः' उभयथाऽपि तमोयुक्तः, रात्रौ गृहीत्वा रात्रावेव भोगभावादिति ॥ अथाध्वद्वारं सविस्तरं व्याचिख्यासुराह-

[भा.२८७७]　अद्धाणम्मि व होज्जा, भंगा चउरो उ तं न कप्पइ उ।
दुविहा उ होंति उ दरा, पोट्टे तह धन्नभाणे य ॥

वृ- अध्वनि वा वर्त्तमानानां चत्वारोऽपि भङ्गा भवेयुः, परं 'तद्' अध्वगमनं कर्त्तुमूर्ध्वदरे साधूनां न कल्पते। ते च दरा द्विविधाः, तद्यथा-पोट्टदरा धान्यभाजनदराश्च। तत्र पोट्टम्- उदरं तद्रूपा दराः पोट्टदराः, धान्यभाजनानि-कटपल्यादयस्तान्येव दरा धान्यभाजदराः। ते दरा ऊर्ध्वं यत्र पूर्यन्ते तदूर्ध्वदरमुच्यते ॥ अमुमेवार्थं सविशेषं भणन् प्रायश्चित्तं दर्शयन्नाह-

[भा.२८७८]　उड्ढदरे सुभिक्खे, अद्धाणपवज्जणं तु दप्पेण।
लहुगा पुण सुद्धपए, जं वा आवज्जई जत्थ ॥

वृ-ऊर्ध्वदरम्-अनन्तरोक्तं सुभिक्षं-सुलभभैक्षम्। अत्र चत्वारो भङ्गाः-ऊर्ध्वदरमपि सुभिक्षमपि १ ध्र्वदरमसुभिक्षं २ सुभिक्षं नोर्ध्वदरं ३ नोर्ध्वदरं न सुभिक्षम् ४। अत्र द्वितीय चतुर्थभङ्गयोरध्वगमनं कर्त्तव्यम्। अथ प्रथमतृतीयभङ्गयोरध्वप्रतिपत्तिं दर्पतः करोति तदा शुद्धपदेऽपि चत्वारो लघुकाः। यद् वा यत्र संयमविराधनादिकमापद्यते तन्निष्पन्नं तत्र प्रायश्चित्तं द्रष्टव्यम् ॥

प्रथमतृतीयभङ्गयोरप्येतैः कल्पत इति दर्शयति-

[भा.२८७९]　नाणट्ठ दंसणट्ठा, चरितट्ठा एवमाइ गंतव्वं।
उवगरणपुव्वपडिलेहिएण सत्थेण गंतव्वं ॥

वृ-ज्ञानार्थं दर्शनार्थं चारित्रार्थमेवमादिभि कारणैर्गनतव्यम्। गच्छद्भिश्च तलिकादिकमुपकरणं ग्रहीतव्यम्। पूर्वप्रत्युपेक्षितेन च सार्थेन सह गन्तव्यमिति निर्युक्तिगाथासमासार्थः ॥

अथैनामेव व्याख्यानयति-

[भा.२८८०]　सगुरु कुल सदेसे वा, नाणे गहिए सई य सामत्थे।
वच्चइ उ अन्नदेसे, दंसणजुत्ताइअत्थो वा ॥

वृ-ज्ञानम्-आचारादिश्रुतं तद् यावत् स्वगुरूणां समीपे सूत्रतोऽर्थतश्च विद्यते तावति सम्पूर्णेऽपि गृहीते, यद्यपरस्यापि श्रुतस्य ग्रहणे सामर्थ्यमस्ति ततः स्वदेशे तथाविधः कोऽपि बहुश्रुत आचार्यस्ततोऽन्यदेशं गच्छति। तत्रापि ये आसन्नतरा एकवाचनाकाश्चाचार्यास्तेषां समीपेऽवशिष्यमाणं श्रुतं गृह्णाति। यदा च परिपूर्णमपि विवक्षितयुगसम्भवि श्रुतं गृहीतं तदा यद्यात्मनः प्रतिभादिकं सामर्थ्यमस्ति ततः "दंसणजुत्ताइअत्थो व" त्ति दर्शनविशुद्धिकारणीया गोविन्दनिर्युक्ति आदिशब्दात् सम्मत्ति-तत्त्वार्थप्रभृतीनि च शास्त्राणि तदर्थ-तत्प्रयोजनः प्रमाणशास्त्रकुशलानीमाचार्याणां समीपे गच्छेत् ॥ अथ चारित्रार्थमिति द्वारमाह-

[भा.२८८१]　पडिकुट्ठ देस कारण गया उ तदुवरमि निंति चरणट्ठा।
असिवाई च भविस्सइ, भूए व वयंति परदेसं ॥

वृ- सिन्धुदेशप्रभृतिको योऽसंयमविषयः स भगवता 'प्रतिक्रुष्टः' न तत्र विहर्ततव्यम्। परं तं प्रतिषिद्धदेशमशिवादिभिः कारणैर्गताः ततो यदा तेषां कारणानाम् 'उपरमः' परिसमाप्तिर्भवति तदा चारित्रार्थं ततोऽसंयविषयाद् निर्गच्छन्ति, निर्गत्य च संयमविषयं गच्छन्ति। यद्वा तत्र

क्षेत्रेवसतां निमित्तबलेन ज्ञातम्, यथा-अशिवादिकमत्र भविष्यति, अथवा 'भूत
उत्पन्नमत्राशिवादि, अतः परदेशं व्रजन्ति । एवमादिभि कारणैरध्वानं गन्तव्यतया निश्चि
गच्छोपग्रहकरमिदमुपकरणं गृह्णन्ति ॥ किं पुनस्तत् ? इति अत आह-

[भा.२८८२] चम्माइलोहगहणं, नंदीभाणे य धम्मकरए य ।
परउत्थियउवकरणे, गुलि[illegible]आओ खोलमाईणि ॥

वृ- चर्मशब्देन चर्ममयं तलिकाद्युपकरणं गृह्यते, आदिशब्दात् सिक्ककादिपरिग्रहः । लोहग्रहणे
पिप्पलकादिलोहमयोपकरणानां च ग्रहणमध्वानं गच्छता कर्त्तव्यम्, । नन्दीभाजनं धर्मकरक
तथा 'परतीर्थिकोपकरणं' वक्ष्यमाणरूपं तथा 'गुलिका नाम' तुवरवृक्षचूर्णगुटिकाः खोला
गोरसभावितानि पोतानि । एवमादीन्युपकरणानि ग्रहीतव्यानीति द्वारगाथासमासार्थः ॥

अथास्या एवाद्यपदं व्याचिख्यासुः प्रतिद्वारगाथामाह-

[भा.२८८३] तलिय पग वज्झे या, कोसग कत्ती य सिक्काए काए ।
पिप्पलग सूइ आरिय, नक्खच्चणि सत्थकोसे य ॥

वृ- तलिकाः-उपानहः, पुटकाः-खल्लकानि, वर्ध्राः-प्रतीतः, कोशकः-नखभङ्गरक्षार्थं यत्राङ्गुल्यः
प्रक्षिप्यन्ते, कृत्ति-चर्म, सिक्कक-प्रतीतम्, कायो नाम-कापोतिका, पिप्लकः सूची आरिका च
प्रतीताः, नखार्चनी-नखहरणिका, 'शस्त्रकोशः' शिरावेधादिशस्त्रसमुदाय इति प्रतिद्वारगाथा-
सङ्क्षेपार्थः ॥ अथैनामेव गाथां प्रतिपदं विवृणोति-

[भा.२८८४] तलियाउ रत्तिगमणे, कंटुप्पहतेण सावए असहू ।
पुडगा विवच्चि सीए, वज्झो पुन छिन्नसंधट्ठा ॥

वृ- तलिकाः-क्रमणिकास्ताश्च रात्रौ गमने कण्टकरक्षणार्थं पादेषु बध्यन्ते । सार्थवशाद्वा पन्थानं
मुक्त्वोत्पथेन गच्छतां स्तेन-श्वापदभयेन वा त्वरितं गम्यमाने दिवाऽपि बध्यन्ते । 'असहिष्णुः'
सुकुमारपादः स कण्टकसंरक्षणार्थं क्रमणिकाः पादयोर्बध्नाति । ताश्च प्रथममेकतलिकाः, तदप्राप्तौ
यावच्चतुस्तलिका अपि गृह्यन्ते । 'पुटकानि' खल्लकानि तानि शीतेन पादयोः 'विवर्चिकासु'
विपादिकासु स्फुटन्तीषु बध्यन्ते । 'वर्ध्राः' पुनस्तलिकादीनां छिन्नानां-त्रुटितानां सन्धानं-सङ्घट्टनं
तदर्थं गृह्यते ॥

[भा.२८८५] कोसग नहरक्खट्ठा, हिमा-ऽहि-कंटाइसु उ खपुसादी ।
कत्ती वि विकरणट्ठा, विवित्त पुढवाइरक्खट्ठा ॥

वृ- "कोसग" त्ति अङ्गुलीकोशको नखभङ्गरक्षार्थं गृह्यते, तत्र पादयोरङ्गुल्योऽङ्गुष्ठकश्च प्रक्षिप्यन्ते ।
तथा हिमं-शीतम् अहि-कण्टकौ-प्रतीतौ तदादिप्रत्यपायरक्षणार्थं खपुसा आदिशब्दादर्द्धजङ्घिका-
जङ्घिकादयश्च गृह्यन्ते । 'कृत्ति' चर्म तत् प्रलम्बादिविकरणार्थं गृह्यते, मा धूल्या लोलीभावमनुभूय
मलिनानि भूवन्निति कृत्वा । तथा "विवित्त" त्ति ते साधवः कदापि स्तेनैः 'विविक्ताः' मुषिता
भवेयुस्ततो वस्त्राभावे कृत्तिं प्रावृण्वन्ति । यत्र वा पृथिवीकायो भवति तत्र कृत्तिं प्रस्तीर्य समुद्दिशन्ति,
एवं पृथिवीकायरक्षा । आदिशब्दात् प्रतिलोमे वनदवे तृणरहितप्रदेशाभावे कृत्तिं प्रस्तीर्य तिष्ठन्तीति
कृत्वा तेजःकायरक्षाऽपि कृता स्यात् ॥

गतं चर्मद्वारम् । अथादिग्रहणलब्धे सिक्कक-कापोतिके व्याख्यानयति-

[भा.२८८६] तहि सिक्कएहि हिंडति, जत्थ विवित्ता व पल्लिगमनं वा ।
परलिंगग्गहणम्मि वि, निक्खिवणट्ठा व अन्नत्थ ।।

वृ- यत्र 'विविक्ताः' मुषितास्तत्र पात्रबन्धाभावे चौरपल्ल्यां वा भिक्षार्थं गमनं विदधाना अलाबुकानि सिक्ककेषु कृत्वा हिण्डन्ते । चक्रचरादिसम्बन्धिपरलिङ्गेन वा भक्त-पानग्रहणे प्राप्ते सिक्ककेन पर्यटितव्यम् । अध्वकल्पादेर्वा सिक्कके निक्षेपणं कार्यम् । प्रलम्बादिकं वा सिक्ककेष्वानीय 'अन्यत्र' स्थविरागृहादौ निक्षिप्यते । तदर्थं सिक्ककं ग्रहीतव्यम् ।।

[भा.२८८७] जे चेव कारणा सिक्कगस्स ते चेव होंति काए वि ।
कप्पुवही बालाइ व, वहंति तेहिं पलंबे वा ।।

वृ- यान्येव कारणानि सिक्ककस्योक्तानि तान्येव 'कायेऽपि' कापोतिकायामपि भवन्ति । यद्वा सिक्कक-कापोतिकयोरयमुपयोगः-'कल्पम्' अध्वकल्पम् उपधिमाचार्या-ऽसहिष्णुप्रभृतीनां बालादीन् वा प्रलम्बानि वा उपलक्षणत्वादाकस्मिकशूलविद्धं वा 'ताभ्यां' सिक्कक-कापोतिकाभ्यां वहन्ति ।। अथ लोहग्रहणद्वारं भावयति-

[भा.२८८८] पिप्पलओ विकरणट्ठा, विवित्त जुन्ने व संघणं सूई ।
आरि तलिसंघणट्ठा, नक्खग्घण नक्ख-कंटाई ।।

वृ- 'पिप्पलकः' प्रलम्बविकरणार्थं गृह्यते । तथा 'विविक्तानां' मुषितानां यदवशिष्यमाणं वस्त्रं यद् वा स्वभावजीर्णं तस्य सन्धानार्थं सीवनार्थं वा सूची ग्रहीतव्या । त्रुटिततलिकानां सन्धानार्थमारा गृह्यते । 'नखार्घनं' नखहरणिका सा नखच्छेदनार्थं कण्टकादिशल्योद्धरणार्थं वा गृह्यते ।। शस्त्रकोशः पुनरयम्-शिरावेधशस्त्रकं पच्छणशस्त्रकं कल्पनशस्त्रकं लोहकण्टिका सन्दंशकः । एवमादिकस्य शस्त्रकोशस्योपयोगं दर्शयति-

[भा.२८८९] कोसाऽहि-सल्ल-कंटग, अगदोसहमाइयं तु चग्गहणा ।
अहवा खेत्ते काले, गच्छे पुरिसे य जं जोग्गं ।।

वृ- "कोस" ति शस्त्रकोशेनेदं प्रयोजनम्-अहि-सर्पस्तेन यावन्मात्रमङ्गं दष्टं तावच्छिद्यते, शल्यं वा कण्टको वा नखहरणिकया हर्तुमशक्यस्तेनोद्ध्रियते । इह प्रतिद्वारगाथायां "सत्थकोसे य" ति यश्च शब्दस्तद्ग्रहणादगदौषधादिकं ग्रहीतव्यम् । तत्र यदनेकद्रव्यैर्निष्पन्नं तदगदम्, यत् पुनरेकाङ्गिकं तत् सर्वमप्यौषधम् । अथवा चशब्दोपादानात् 'क्षेत्रे' दक्षिणापथादौ यद् यत्र दुर्लभम्, 'काले' ग्रीष्मादौ यत् सक्तुप्रभृतिकं शीतलद्रव्यमुपयोगि, महति गच्छे वा यत् केवड्यादिकं साधारणम्, 'पुरुषस्य वा' आचार्यादेर्यस्य यद् योग्यं तद् यथायोगं ग्रहीतव्यम् ।।

नन्दीभाजन-धर्मकरकयोरुपयोगमाह-

[भा.२८९०] एक्कं भरेमि भाणं, अनुकंपा नंदिभाण दरिसंति ।
निंति व तं वइगाइसु, गालिंति दवं तु करएणं ।।

वृ- "अनुकंप" त्ति अध्वप्रतिपन्नानं कोऽप्यनुकम्पया ब्रूयात्- अहं युष्मभ्यं दिने दिने एकं भाजनं 'बिभर्मि' पूरयामि, ततस्तत्र नन्दीभाजनं दर्शयन्ति । अथवा 'तद्' नन्दीभाजनं भिक्षाचर्यया व्रजिकादिषु नयन्ति । तथा प्रासुकमप्रासुकं वा 'द्रवं' पानकं 'करकेण' धर्मकरकेण गालयन्ति ।। परतीर्थिकोपकरणमाह-

[भा.२८९१] परउत्थियउवगरणं, खेत्ते काले य जं तु अविरुद्धं ।
तं रयणि-पलंबट्ठा, पडिनीए दिया व कोट्टादी ॥

वृ- परयूथिकाः-तच्चन्निकादयस्तेषां सम्बन्धि यद् उपकरणं यत्र क्षेत्रे काले वा 'अविरुद्धम्' अर्चितं तद् रजन्यां भक्त-पानग्रहणार्थं प्रलम्बानयनार्थं वा कर्त्तव्यम् । यत्र वा प्रत्यनीका भवन्ति तत्र परतीर्थिकवेषच्छन्ना गच्छन्ति भक्तपानं वोत्पादयन्ति । म्लेच्छकोट्टं वा गताः परतीर्थिकवेषेण दिवा पुद्गलादिकं गृह्णन्ति । आदिशब्दात् प्रत्यन्तकोट्टादिपरिग्रहः ॥

अथ गुलिका-खोलद्वारे व्याख्यानयति-

[भा.२८९२] गोरसभाविय पोत्ते, पुव्वकय दवस्सऽसंभवे धोवे ।
असईय उ गुलिय मिए, सुन्ने नवरंगदइयादी ॥

वृ- गोरसभावितानि पोतानि' वस्त्राणि खोलानि भण्यन्ते । तेषु पूर्वकृतेष्वध्वानं प्रविष्टानां यदा प्राशुकद्रवस्यासम्भवस्तदा तानि पोतानि 'धावेयुः' प्रक्षालयेयुः । अगीतार्थप्रत्ययोत्पादनार्थं च आलोच्यते-गोकुलादिदं संसृष्टपानकमानीतम् । अथ न सन्ति खेलानि ततो गुलिकाः-तुवरवृक्षचूर्णगुटिकास्तद्भावितं पानकं प्रासुकीकृत्य 'मृगाः' अगीतार्थास्तेषां चित्तरक्षणार्थं 'शून्ये ग्रामे प्रतिसार्थिकादीनां नवरङ्गदतिकादेरिदं गृहीतम्' इत्यालोचयन्ति । विशेषचूर्णौ तु गुलिका-खोलपदे इत्थं व्याख्याते-जत्थ पव्वयकोट्टाइसु पंडरंगादी पुज्जंति संजयाण ते पडिनीया होज्ज तत्थ 'गुलिय' त्ति वक्कलाणि घेप्पंति । 'खोल' त्ति सीसखोला, तीए सिरं वेढियव्वं जहा न नज्जइ लोयहयं सीसं, सीससंरक्खणट्ठाए वा ॥ अथैषामुपकरणानां ग्रहणं न करोति ततः-

[भा.२८९३] एक्केक्कम्मि य ठाणे, चउरो मासा हवंतऽणुग्घाया ।
आणाइणो य दोसा, विराधना संजमाऽऽयाए ॥

वृ- 'एकैकस्मिन् स्थाने' एकैकस्योपकरणस्याग्रहणे इत्यर्थः चत्वारो मासाः 'अनुद्घाताः' गुरवो भवन्ति, आज्ञादयश्च दोषाः, विराधना च संयमा-ऽऽत्मविषया ॥ अमुमेवार्थं स्पष्टतरमाह-

[भा.२८९४] एमाइ अनागयदोसरक्खणट्ठा अगेण्हणे गुरुगा ।
अनुकूले निग्गमओ, पत्ता सत्थस्स सउणेणं ॥

वृ- एयमादीनामुपकरणानामनागतमेव संयमात्मविराधनादिदोषरक्षणार्थं ग्रहणं कर्त्तव्यम् । अथ न गृह्णाति ततः प्रत्येकं चत्वारो गुरवः । गतमुपकरणद्वारम् । अथ पूर्वप्रत्युपेक्षितेन सार्थेन गन्तव्यमिति व्याख्याति-''अनुकूले'' इत्यादि । अनुकूलं चन्द्रबलं ताराबलं वा यदा सूरीणां भवति तदा 'निर्गमकः' प्रस्थानं क्रियते । निर्गताश्चोपाश्रयाद् यावत् सार्थं न प्राप्नुवन्ति तावदात्मनैव शकुनं गृह्णन्ति । सार्थं प्राप्तास्तु सार्थसत्केन शकुनेन गच्छन्ति ॥ इदमेव सविशेषमाह-

[भा.२८९५] अप्पत्ताण निमित्तं, पत्ता सत्थम्मि तिन्नि परिसाओ ।
सुद्धे त्ति पत्थियाणं, अद्धाणे भिक्खपडिसेहो ॥

वृ- सार्थेऽप्राप्तानां 'निमित्तं' शकुनग्रहणं भवति । प्राप्तानां तु यः सार्थस्य शकुनः स संयतानामपि भवति । सार्थं च प्राप्ताः । सन्तस्तिः परिषदः कुर्वन्ति, तद्यथा-सिंहपर्षदं वृषभपर्षदं मृगपर्षदम् । तथा सार्थ 'शुद्धः' निर्दोष इति कृत्वा प्रस्थिताः परं यदा 'अध्वनि' अटवीं प्राप्ता भवन्ति तदा कोऽपि प्रत्यनीको भिक्षायाः प्रतिषेधं कुर्यादिति निर्युक्तिगाथासमासार्थ ॥ अथ एनामेव विवरीषुः

प्रथमपदव्याख्यानं सुगमत्वादनादृत्य सिंहादीनांपर्षदां व्याख्यानमाह-

[भा.२८९६] कडजोगि सीहपरिसा, गीयत्थ थिरा य वसभपरिसा उ।
सुत्तकडमगीयत्था, मिगपरिसा होइ नायव्वा ॥

वृ- कृतयोगिनो नाम-गीतार्था परं न तथा समर्थास्ते सिंहपर्षदुच्यन्ते, ये तु गीतार्था अपरं च 'स्थिराः' बलवन्तस्ते वृषभपर्षद्, ये तु 'कृतसूत्राः' सूत्रेऽधीतिनः परमगीतार्थास्ते मृगपर्षदिति ज्ञातव्या भवति ॥ अथ "सुद्धि त्ति पत्थियाणं"ति पदं व्याख्यायते-साधुभि प्रथमत एव सार्थाधिपतिरभिधातव्यः-वयं युष्माभिः समं व्रजामो यद्यस्माकमुदन्तमुद्वहथ । एवमुक्ते यद्यसावभ्युपगच्छति ततः शुद्धः सार्थ इति मत्वा प्रस्थिताः, परमटवीप्राप्तानां कोऽप्येवं कुर्यात्-

[भा.२८९७] सिद्धत्थग पुप्फे वा, एवं तुज्झे वि निच्छुभइ पंतो ।
भत्तं वा पडिसेहइ, तिण्हऽणुसट्ठाइ तत्थ इमा ॥

वृ-यथा 'सिद्धार्था' सर्षपाश्चम्पकपुष्पाणि वा शिरसि स्थापितानि काञ्चिदपि पीडां न कुर्वन्ति, एवं यूयमपि मम कमपि भारं न कुरुथ। एवमुक्त्वाऽपि कश्चित् 'प्रान्तः' भिक्षूपासकादिरटवीमध्ये सार्थाद् निष्काशयति-मा यूयमस्माभि सार्द्धमागच्छतेति; भक्तपानं वा प्रतिषेधयति- माऽमीषां कोऽपि किञ्चिदपि दद्यात्; ततः 'त्रयाणां' सार्थ-सार्थवाहा-ऽऽयत्तिकानामनुशिष्ट्यादिका इदं यतना कर्त्तव्या ॥ तामेवाह-

[भा.२८९८] अनुसट्ठी धम्मकहा, विज्ज निमित्ते पभुत्तकरणं वा ।
परउत्थिगा व वसभा, सयं व थेरी व चउभंगो ॥

वृ- यद् इहलोकापायप्रदर्शनं क्रियते साऽनुशिष्टिरुच्यते, यत् पुनरिह परत्र च सपरपक्षं कर्मविपाकोपदर्शनं सा धर्मकथा, तयाऽनुशिष्ट्या धर्मकथया वा सार्थ सार्थवाह आवत्तिका वा उपशमयितव्याः, विद्यया मन्त्रेण वा ते वशीकर्त्तव्याः, निमित्तेन वा आवर्त्तनीयाः। यो वा साधुः प्रभुः-सहयोधी बलवान् स सार्थवाहं बद्धवा स्वयमेव सार्थमधिष्ठाय प्रभुत्वं करोति। एषा निष्काशने यतना । भिक्षाप्रतिषेधे पुनरियम्-सर्वथा भिक्षाया अलाभे वृषभाः परयूथिका भूत्वा भक्तपानमुत्पादयन्ति, सार्तवाहं वा प्रज्ञापयन्ति । यदि च सर्वेऽपि गीतार्थास्ततः 'स्वयं वा' स्वलिङ्गेनैव रात्रिभक्तविषयया चतुर्भङ्ग्या यतन्ते। अथागीतार्थमिश्रास्ततः स्थविराया गृहे निक्षिपन्ति ॥ अमुमेवान्त्यपादं व्याख्यानयति-

[भा.२८९९] पडिसेह अलंभे वा, गीयत्थेसु सयमेव चउभंगो ।
थेरिसगासं तु मिए, पेसे तत्तो व आनीयं ॥

वृ- सार्थाधिपतिना भक्तपानस्य प्रतिषेधः कृतः, यद्वा न कृतः प्रतिषेधः परं स्तेनैः सार्थ सर्वोऽपि विलुलितः अतो भक्तपानं न लभ्यते, ततो यदि सर्वेऽपि गीतार्थास्तदा 'स्वयमेव' परलिङ्गमन्तरेण रात्रिभक्तचतुर्भङ्गी यतनया प्रतिसेवितव्या । गाथायां पुंस्त्वं प्राकृतत्वात् । अथागीतार्थमिश्रास्ततो यदि तत्र सार्थे भद्रिका स्थविरा विद्यते तदा तस्याः समीपे निक्षिपन्ति । ततः स्थविरायाः सकाशं मृगान् प्रेष्य तेषां पाश्र्वादानाययेत्, 'ततो वा' स्थविरासमीपादानीतमित्यगीतार्थानां पुरतो भणन्ति ॥ अथवा-

[भा.२९००] कुओ एयं पल्लीओ, सड्डा थेरि पडिसत्थिगाओ वा ।

नायम्मि य पन्नवणा, न हु असरीरो भवइ धम्मो ॥

**वृ-** वृषभैः स्थविरासमीपादानीते सति यदि ते मृगाः प्रश्नयेयुः-कुत एतदानीतम् ?, ततो वक्तव्यम्-पल्लयाः सकाशादिदमानीतम्, दानादेश्राद्धैर्वा दत्तम्, स्थविरया वा वितीर्णम्, प्रतिसार्थिकाद् वा लब्धम् । एवमपि यदि तैर्मृगैर्ज्ञातं भवति ततस्तेषां प्रज्ञापना कर्तव्या- भो भद्राः ! नास्ति 'अशरीरः' शरीरविरहितो धर्म अत इदं शरीरं सर्वप्रयत्नेन रक्षणीयम्, उक्तञ्च-

शरीरं धर्मसंयुक्तं, रक्षणीयं प्रयत्नतः ।
शरीराच्छ्रवते धर्म, पर्वतात् सलिलं यथा ॥

अतः प्रतिसेवध्वमिदम्, पश्चादिदं चान्यच्च प्रायश्चित्तेन विशोधयिष्याम इति ॥

अथ पूर्वोक्तानां तिसृणामपि पर्षदां गमनविधिमाह-

[भा.२९०१] पुरतो वच्चंति मिगा, मज्झे वसभा उ मग्गओ सीहा ।
पिट्ठओ वसभऽन्नेसिं, पडियाऽसहुरक्खगा दोण्हं ॥

अध्वनि गच्छतां पुरतः 'मृगाः' अगीतार्था मध्ये 'वृषभाः' समर्थ-गीतार्था 'मार्गतः' पृष्ठतः 'सिंहाः' गीतार्था व्रजन्ति । अन्येषामाचार्याणां मतेन-पृष्ठतो वृषभा व्रजन्ति । किं कारणम् ? इति अत आह-'द्वयानां' मृग-सिंहानां बाल-वृद्धानां वा ये 'पतिताः' परिश्रान्ता ये च 'असहिष्णवः' क्षुधा-पिपासापरीषहाभ्यां पीडितास्तेषां रक्षका वृषभाः पृष्ठतः स्थिता व्रजन्ति ॥ अथवा-

[भा.२९०२] पुरतो यपासतो पिट्ठतो य वसभा हवंति अद्धाणे ।
गणवआसे वसभा, मिगमज्झे नियम वसभेगो ॥

**वृ-** अध्वनि व्रजतां वृषभाः पुरतः पार्श्वतः पृष्ठतश्च व्रजन्ति । तथा गणपति-आचार्यस्तस्य पार्श्वे नियमादेव वृषभा भवन्ति । मृगाणां च मध्ये नियमादेको वृषभो भवति ॥

ते च वृषभाः किं कुर्वन्ति ? इत्याह-

[भा.२९०३] वसभा सीहेसु मिगेसु चेव थामावहारविजढा उ ।
जो जत्थ होइ असहू, तस्स तह उवग्गह कुणंति ॥

**वृ-** वृषभाः 'स्थामापहारविमुक्ताः' अनिगूहितबल-वीर्या सन्तो मृगेषु सिंहेषु वा यो यत्र येषां मध्ये असहिष्णुर्भवति तस्य तथोपग्रहं कुर्वन्ति ॥ कथम् ? इत्याह-

[भा.२९०४] भत्ते पाने विस्सामणे य उवगरण-देहवहणे य ।
थामावहारविजढा, तिन्नि वि उवगिण्हए वसभा ॥

**वृ-** मृगाणां सिंहानां वृषभाणां च मध्ये यः क्षुधार्त्तो भवति तस्य भक्तं प्रयच्छन्ति, पिपासितस्य पानकं ददति, परिश्रान्तस्य विश्राममणं कुर्वन्ति । य उपकरणं देहं वा वोढुं न शक्नोति तस्य तयोर्वहनं कुर्वन्ति । एवं स्थामापहारविमुक्ता वृषभाः 'त्रीनपि' मृग-सिंह-वृषभानुपगृह्णन्ति ॥

[भा.२९०५] जो सो उवगरणगणो, पविसंताणं अनागयं भणिओ ।
सट्ठाणे सट्ठाणे, तस्सुवओगो इहं कमसो ॥

**वृ-** अध्वनि प्रविशतां योऽसौ तलिकादिरुपकरणगणोऽनागतं ग्रहीतव्यो भणितः तस्येह स्वस्थाने स्वस्थाने अचक्षुर्विषय स्वादावुपस्थिते 'क्रमशः' क्रमेणोपयोगः कर्त्तव्यः, येन यदा प्रयोजनं भवति तत् तदा तत्र प्रयोक्तव्यमिति भावः ॥

अथाध्वनि गच्छतामेव भक्तपानालाभे विधिमाह—

[भा.२९०६] असई य गम्ममाणे, पडिसत्थे तेण-सुन्नगामे वा ।
रुक्खाईण पलोयण, असई नंदी दुविह दव्वे ॥

वृ- तत्राध्वनि गम्यमाने भक्तपानस्य 'असति' अलाभे प्रतिसार्थे वा स्तेनपल्ल्यां वा शून्यग्रामे वा भक्तपानादि गवेषयन्ति, वृक्षादीनां वा प्रलम्बादिनिमित्तं प्रलोकनं कर्तव्यम् । सर्वथा वा संस्तरणस्यासति द्विविधं-परीत्तानन्तादिभेदाद् द्विप्रकारं यद्द्रव्यं तेन यथा 'नन्दि' तपःसंयमयोगानां स्फातिर्भवति तथा विधेयमिति निर्युक्तिगाथासमासार्थः ॥ अथैनामेव विवरीषुराह-

[भा.२९०७] भत्तेन व पानेन व, निमंतएऽनुग्गए व अत्थमिए ।
आइच्चो उदि त्ति य गहणं गीयत्थसंविग्गे ॥

वृ- अध्वानं गच्छतां यदि कोऽपि प्रतिसार्थो मिलितः, तत्र च केचिद् दानरुचयो भक्तेन वा पानेन वा रात्रावनुद्गते वाऽस्तमिते वा सूर्ये निमन्त्रयेयुः ततो यदि सर्वेऽपि गीतार्थास्तदा गृह्णन्ति; अथागीतार्थमिश्रास्ततो गीतार्था ब्रुवते-गच्छत यूयम्, वयमुदित एवादित्ये भक्तपानं गृहीत्वा पश्चादागमिष्याम इति । ततः प्रस्थितेषु मृगेषु गीतार्थास्तत्क्षणमेव गृहीत्वा सार्थमनुगच्छन्ति । स्थिते सार्थे मृगाणां शृण्वतामालोचयन्ति-आदित्य उदित इति मत्वा वयं ग्रहणं कृत्वा समागताः । एवंविधां यतनां गीतार्थ संविग्नः करोति ॥ अथ किमर्थं गीतार्थसंविग्नग्रहणम् ? इत्याह-

[भा.२९०८] गीयत्थग्गहणेणं, सामाए गिण्हए भवे गीओ ।
संविग्गग्गहणेणं, तं गेण्हंतो वि संविग्गो ॥

वृ- गीतार्थग्रहणेनेदमावेदितम्-यो गीतार्थो भवति स एव 'श्यामायां' रात्रौ गृह्णाति नागीतार्थः । संविग्नग्रहणेन तु तद् रात्रिभक्तं गृह्णन्नप्यसौ संविग्न एव, यथोक्तयतनाकारित्वेन मोक्षाभिलाष्येव मन्तव्य इत्युक्तं भवति ॥ गतं प्रतिसार्थद्वारम् । अथ स्तेनपल्लीद्वारम्-तस्यां चपिशितं सम्भवति तत्रायं विधिः-

[भा.२९०९] बेइंदियमाईणं, संथरणे चउलहू उ सविसेसा ।
ते चेव असंथरणे, विवरीय सभाव साहारे ॥

वृ- यदि 'संस्तरणे' इतरभक्तपाननिर्वाहे सति द्वीन्द्रियादीनां पुद्गलं गृह्णन्ति तदा चतुर्लघवः 'सविशेषाः' तपः-कालविशेषिताः । तद्यथा-द्वीन्द्रियपुद्गलं गृह्णाति चत्वारो लघवस्तपसा कालेन च लघुकाः, त्रीन्द्रियपुद्गले त एव कालेन गुरुकाः तपसा लघुकाः, चतुरिन्द्रियपुद्गले तपोगुरुकाः काललघुकाः, पञ्चेन्द्रियपुद्गले द्वाभ्यामपि तपः-कालाभ्यां गुरुकाः । अथासंस्तरणं भवति ततो यदि द्वीन्द्रियादिक्रममुल्लङ्घ्य 'विपरीतम्' उत्क्रमेण गृह्णाति ततस्त एव चत्वारो लघवः । अथापवादस्याप्यपवाद उच्यते-द्वीन्द्रियादीनां पुद्गलमधिकतरेन्द्रियपुद्गलादल्पतरबलं ततो यत् स्वभावेनैव साधारणं तद् गृह्णन्ति ॥

[भा.२९१०] जत्थ विसेसं जाणंति तत्थ लिंगेण चउलहू पिसिए ।
अन्नाएण उ गहणं, सत्थम्मि वि होइ एसेव ॥

वृ- यत्र ग्रामे विशेषं जानन्ति यथा 'साधवः पिशितं न भुञ्जते' तत्र यदि स्वलिङ्गेन पिशितं गृह्णन्ति तदा चतुर्लघवः । अतोऽज्ञातेनैव तत्र ग्रहणं कार्यम्, परलिङ्गेनेत्यर्थः । स्तेनपल्ल्यादीनामभावे

सार्थेऽपि पुद्गलग्रहणे एष एव क्रमो विज्ञेयः ॥ अथ शून्यग्रामद्वारमाह-

[भा.२९११] अद्धाणासंथरणे, सुन्ने दव्वम्मि कप्पई गहणं।
लहुओ लहुया गुरुगा, जहन्नए मज्झिमुक्कोसे ॥

वृ-अध्वप्रतिपन्नानामसंस्तरणे जाते 'शून्यग्रामे' तं सार्थमायान्तं दृष्ट्वा 'चौरसेना समागच्छति' इति शङ्कयोद्वसिते ग्रामे जघन्यमध्यमोत्कृष्टभेदभिन्नस्य 'द्रव्यस्य' आहारादेर्ग्रहणं कर्त्तुं कल्पते। अत्र ''दव्वम्मि''त्ति षष्ठ्यर्थे सप्तमी। अथ संस्तरणे गृह्णाति तत इदमोघतः प्रायश्चित्तम्-जघन्ये मासलघु, मध्यमे चत्वारो लघवः, उत्कृष्टे चत्वारो गुरवः ॥ आह जघन्यमध्यमोत्कृष्टान्येव वयं न जानीमः अतो निरूप्यतामेतत्स्वरूपम्, उच्यते-

[भा.२९१२] उक्कोसं विगईओ, मज्झिमगं होइ कूरमाईणि।
दोसीणाइ जहन्नं, गिण्हंते आयरियमाई ॥

वृ-उत्कृष्टं द्रव्यं 'विकृतयः' दधि-दुग्ध-घृतादयः, मध्यमं द्रव्यं कूर-कुसणादीनि, जघन्यं द्रव्यं दोषान्नादि। एतानि गृह्णतामाचार्यादीनामाज्ञादयो दोषाः ॥ अथ पुरुषविभागेन प्रायश्चित्तमाह-

[भा.२९१३] अद्धाणे संथरणे, सुन्ने गामम्मि जो उ गिण्हेज्जा।
छेदादी आरोवण, नायव्वा जाव मासलहू ॥

वृ-अध्वनि संस्तरणे शून्यग्रामे विकृत्यादि द्रव्यं यो गृह्णीयात् तस्य च्छेदमादौ कृत्वा मासलघुकं यावदारोपणा ज्ञातव्या ॥ इदमेव स्फुटतरमाह-

[भा.२९१४] छेदो चगुरु छल्लहु, चउगुरु चउलहु य गुरु लहू मासो।
आयरिय वसभ भिक्खू, उक्कोसे मज्झिम जहन्ने ॥

वृ- आचार्यस्य विकृत्यादिकमुत्कृष्टद्रव्यं शून्यग्रामेऽन्तर्दृष्टं गृह्णतश्छेदः, अन्तरेवादृष्टं गृह्णतः षड्गुरुकाः, बहिर्दृष्टे षड्गुरुकाः, बहिरदृष्टे षड्लघुकाः; 'मध्यमम्' ओदनादिद्रव्यमन्तर्दृष्टं गृह्णतः षड्गुरुकाः, अदृष्टे षड्लघुकाः, बहिर्दृष्टे षड्लघुकाः, अदृष्टे चतुर्गुरवः; जघन्यं दोषान्नादिकमन्तर्दृष्टं गृह्णतः षड्लघुकाः, अदृष्टे चतुर्गुरवः, बहिर्दृष्टे चतुर्गुरवः, अदृष्टे चतुर्लघुकाः; एवमाचार्यस्योक्तम्। वृषभस्याप्यनयैव चारणिकया षड्गुरुकादारब्धं मासगुरुके, भिक्षोस्तु षड्लघुकादारब्धं मासलघुके तिष्ठति। यत एवमतः संस्तरणे न ग्रहीतव्यम् ॥ असंस्तरणे गृह्णतां यतनामाह-

[भा.२९१५] विलओलए व जायइ, अहवा कडवालए अणुन्नवए।
इयरेण व सत्थभया, अन्नभया वुट्ठिते कोट्टे ॥

वृ- ''विलओलग''त्ति देशीपदत्वाद् लुण्टाकाः, यैः स ग्रामो मुषित इत्यर्थः, तान् वा तत्र शून्यग्रामे विकृत्यादिद्रव्यं याचते। अथवा कटपालकाः-ये तत्र वृद्धादयोऽजङ्गमा गृहपालकाः स्थिता न नष्टास्ताननुज्ञापयेत्। ''इयरेण व''त्ति स्वलिङ्गेनालभ्यमाने 'इतरेण' परलिङ्गेनापि गृह्णन्ति। तथा कोट्टं नाम-यदटव्यां चतुर्वर्णजनपदमिश्रं भिल्लदुर्गं वसति तस्मिन्नपि सार्थभयाद्वा 'अन्यभयाद्वा' परचक्रागमादिलक्षणाद् 'उत्थिते' उद्वसीभूते सति जघन्यादिद्रव्यस्य ग्रहणं कल्पते॥ तत्रेयं यतना-

[भा.२९१६] उद्दद्दसेस बाहिं, अंतोवी पंत गिण्हमदिट्ठं।
बहि अंत तओ दिट्ठं, एवं मज्झे तदुक्कोसे ॥

**वृ-** ''उद्दूढं''ति देशीवचनत्वाद् मुषितं तस्य यत् शेषं-लुण्टाकैर्मुक्त्वा ग्रामादेर्बहि परित्यक्तं तद् जघन्यमदष्टं प्रथमतो गृह्णन्ति, तस्यासति ग्रामादेरन्तः प्रान्तमेवादृष्टम्, तदभावे ग्रामादेर्बहि प्रान्तं दृष्टम्, ततो ग्रामादेरन्तरपि प्रान्तं दृष्टं गृह्णन्ति। तदभावे मध्यममप्येवमेव चारणीयम्। तदप्राप्तावुत्कृष्टमप्यनयैव चारणिकया ग्रहीतव्यम्॥ अथवा किमनेन जघन्यादिविकल्पप्रदर्शनेन? -

**[भा.२९१७]** तुल्लम्मि अदत्तम्मी, तं गिण्हसु जेण आवइं तरसि।
तुल्लो तत्थ अवाओ, तुच्छबलं वज्जए तेणं॥

**वृ-** जघन्यमध्यमोत्कृष्टेषु 'तुल्ये' समानेऽदत्तदोषे सति 'तद्' विकृत्यादिकं द्रव्यं गृहाण येन 'आपदम्' असंस्तरणलक्षणां 'तरसि' पारं प्रापयसि, यतस्तुल्य एव तत्र संयमात्मविराधना-रूपोऽपायः तेन हेतुना 'तुच्छबलं' दोषान्नादिद्रव्यं वर्जयेत्॥

गतं शून्यग्रामद्वारम्। अथ ''रुक्खाईण पलोयण''त्ति पदं व्याख्यानयति-

**[भा.२९१८]** फासुग जोनिपरित्ते, एगट्ठि अबद्ध भिन्नऽभिन्ने य।
बद्धट्ठिए वि एवं, एमेव य होइ बहुबीए॥

**वृ-** 'प्राशुकम्' अचित्तीभूतम्, परीत्ता योनिरस्येति परीत्तयोनिकम्, गाथायां प्राकृतत्वाद् व्यत्यासेन पूर्वापरनिपातः, 'एकास्थिकम्' एकबीजम्, 'अबद्धास्थिकं नाम' अद्याप्यबद्धबीजम् अनिष्पन्नमित्यर्थः, 'भिन्नं' विदारितम्, एतेन प्रथमो भङ्गः सूचितः, ''अभिन्ने य''त्ति 'अभिन्नम्' अविदारितम्, अनेन द्वितीयो भङ्ग उपात्तः। उच्चारणविधि पुनरेवम्-प्राशुकं परीत्तयोनिकमेका-स्थिकमबद्धास्थिकं भिन्नम् १, प्राशुकं परीत्तयोनिकमेकास्थिकमबद्धास्थिकमभिन्नम् २, एवं बद्धास्थिकेऽपि द्वौ भङ्गौ वक्तव्यौ ४। एते एकास्थिके चत्वारो भङ्गा लब्धाः, बहुबीजेऽप्येवमेव चत्वारो लभ्यन्ते, जाता अष्टौ भङ्गाः। एते परीत्तयोनिपदममुञ्चता लब्धाः, एवमेवानन्तयोनिपदेनाप्यष्टौ भङ्गाः प्राप्यन्ते, जाताः षोडश भङ्गाः। एते प्राशुकपदेन लब्धाः, एवमेवाप्राशुकपदेनापि षोडशावा-प्यन्ते, सर्वसङ्ख्यया जाता द्वात्रिंशद् भङ्गाः। एते च वृक्षस्याधस्तात् पतितं प्रलम्बमधिकृत्य मन्तव्याः॥

**[भा.२९१९]** एमेव होइ उवरिं, एगट्ठिय तह य होइ बहुबीए।
साहारणं सभावा, आदीए बहुगुणं जं च॥

**वृ-** एवमेव वृक्षस्योपर्यपि एकास्थिकपदे तथैव बहुबीजपदे उपलक्षणत्वात् प्राशुकादिशेषपदेषु च द्वात्रिंशद् भङ्गाः कर्त्तव्याः। अत्र च यो यः पूर्वो भङ्गकः स स प्रथममासेवितव्यः। सर्वथा वाऽधस्तात् पतितानां प्रलम्बानामप्राप्तौ वृक्षोपरिवर्त्तिप्रलम्बविषया अपि द्वात्रिंशद् भङ्गका यथाक्रममेवासेवितव्याः। अथापवादस्याप्यपवाद उच्यते-'स्वभावात्' प्रकृत्यैव 'साधारणं' शरीरोपष्टम्भकारकं द्रव्यमेकास्थिकमनेकास्थिकं वा बद्धास्थिकमबद्धास्थिकं वा परीत्तमनन्तं वा तद् उत्क्रमेणापि 'आदत्ते' गृह्णाति, 'यद्' यस्मात् तस्यामवस्थायां तदेव 'बहुगुणं' संयमादीनां बहूपकारकमिति॥ अथ द्वारगाथाऽन्तर्गतं नन्दिपदं व्याख्यानयति-

**[भा.२९२०]** नंदंति जेन तव-संजमेसु नेव य दर त्ति खिज्जंति।
जायंति न दीना वा, नंदि अतो समयतो सन्ना॥

**वृ-** अध्वनि वर्त्तमानाः साधवो येन द्रव्येणाभ्यवहृतेन तपः-संयमयोः 'नन्दन्ति' समाधिसमृद्धिमनुभवन्ति तद् नन्दि। यद्वा येन द्रव्येणोपभुक्तेन नैव ''दर''त्ति द्रुतं 'क्षीयन्ते' न

कृशीभवन्तीत्यर्थः तद् नन्दि । अथवा येनोपयुक्तेन न दीना जायन्ते तदपि निरुक्तिवशाद् नन्दि । अत्र पाठान्तरम्-''जायंति नंदिया य''त्ति नन्द्या-ज्ञान-दर्शन-चारित्रात्मिकया समृध्या युक्ताः साधवो यतस्तेन द्रव्येण जायन्ते अतस्तस्य नन्दीति 'अन्वर्थतः संज्ञा' आगमतः परिभाषा॥ तच्च द्रव्यं द्विविधम्, तद्यथा-

[भा.२९२१] परिनिट्ठिय जीवजढं, जलयं थलयं अचित्तमियरं च ।
परित्तेतरं च दुविहं, पानगजयणं अतो वोच्छं ॥

वृ- द्विधा द्रव्यम्-परिनिष्ठितं जीवविप्रमुक्तं च । परिनिष्ठितं नाम-यत् परार्थमचित्तीकृतम् । जीवविप्रमुक्तं तु-साध्वर्थमचित्तीकृतम्, आधाकर्मेति हृदयम् । आह च चूर्णिकृत्- परिनिट्ठियं ति जं परकडमचित्तं, जीवजढं ति आहाकम्मं । यद्वा द्विविधं द्रव्यम्-जलजं स्थलजं चेति । अथवा अचित्तेतरभेदाद् द्विधा । तत्राचित्तं नाम-यद् न परार्थमचित्तीकृतं नापि संयतार्थं केवलमायुःक्षयेणाचित्तीभूतम् । तथा चाह चूर्णिकृत्-अचित्तं ति जं नावि परट्ठाए अचित्तीभूयं, नावि संजयट्ठाए, केवलं आउक्खएण अचित्तं ति । यत् पुनरायुर्धारयति तत् सचित्तम् । अथवा 'परीत्तं' प्रत्येकम् 'इतरद्' अनन्तमिति वा द्विविधम् । एवमादिकं द्विविधं द्रव्यमसंस्तरणे ग्रहीतव्यम् । तदेवमुक्ता तावदाहारयतना । अथ पानकयतनामत ऊर्द्धवं वक्ष्ये ॥ यथाप्रतिज्ञातमेव निर्वाहयति-

[भा.२९२२] तुवरे फले अ पत्ते, रुक्ख-सिला-तुप्प-मद्दनाईसु ।
पासंदणे पवाए, आयवतत्ते वहे अवहे ॥

वृ-अध्वनि वर्त्तमानैः काञ्जिकादिप्राशुकपानकाप्राप्तावीदृशानि पानकानि ग्रहीतव्यानि । तद्यथा-तुवरफलानि-हरितकीप्रभृतीनि तुवरपत्राणि-पलाशपत्रादीनि तैः परिणामितं पानकं प्रथमतो ग्राह्यम् । तथा 'रुक्खे''त्ति वृक्षकोटरे कटुकफल-पत्रादिपरिणामितम्, एवंविधस्याभावे ''सिल''त्ति सिलाजतुभावितम्, तदभावे ''तुप्प''त्ति मृतक-केयर-वशा-घृतादिभि परिणामितम्, तदप्राप्तौ ''मद्दणाईसु''त्ति हस्त्यादिमर्दनेनाक्रान्तम्, ततः प्रपातोदकम्, प्रपातो नाम-यत्र पर्वतात् पानीयं निपतति, यथा उज्जयन्तादिगिरौ, तदभावे आतपेन यत् तप्तं तत् प्रथमम् 'अवहं' अवहमानकं पश्चात् तदेव 'वहं' वहमानकं ग्राह्यम् । गाथायां बन्धानुलोम्याद् वहपदस्यपूर्वं पाठ इति ॥ अथ ''मद्दणाईसु''त्ति पदं व्याचष्टे-

[भा.२९२३] जड्डे खग्गे महिसे, गोणे गवए य सूयर मिगे य ।
उप्परिवाडी गहणे, चाउम्मासा भवे लहुगा ॥

वृ- 'जड्डः' हस्ती, खड्गो नाम-एकशृङ्ग आटव्यतिर्यग्विशेषः, 'गो-महिषी' प्रसिद्धौ, 'गवयः' गवाकृतिराटव्यजीवविशेषः, 'सूकर-मृगौ' प्रसिद्धौ । एतैर्जड्डादिभिर्मर्दनेन परिणामितं पानकं यथाक्रममध्वनि ग्रहीतव्यम् । अथ 'उत्परिपाट्या' यथोक्तक्रममुल्लङ्घ्य ग्रहणं करोति ततश्चत्वारो मासा लघुका भवेयुः ॥

मू. *(४३) नऽन्नत्थ एगेणं पुव्वपडिलेहिएणं सेज्जा-संथारएणं ॥*

वृ- ''न कल्पते रात्रौ वा विकाले वा'' इति योऽयं प्रतिषेधः स एकस्मात् पूर्वप्रत्युपेक्षितात् शय्या-संस्तारकादन्यत्र । इहान्यत्रशब्दः परिवर्जनार्थ, यथा-अन्यत्र द्रोण-भीष्माभ्यां, सर्वे योधाः पराङ्मुखाः । द्रोण-भीष्मौ वर्जयित्वेत्यर्थः । ततश्चैकं शय्या-संस्तारकं विहायापरं किमपि रात्रौ

ग्रहीतुं न कल्पत इति सूत्रसङ्क्षेपार्थः ॥ अथ निर्युक्तिविस्तरः-

[भा.२९२४] रातो सिज्जा-संथारग्गहणे, चउरो मासा हवंति उग्घाया।
आणाइणो य दोसा, विराधना संजमाऽऽयाए ॥

वृ-शेरतेऽस्यामिति शय्या-वसति, सैव संस्तारकः शय्यासंस्तारकः; यद्वा शय्या-वसतिरेव, संस्तारको द्विधा-परिशाटी अपरिशाटी चेति, ततः शय्योपलक्षितः संस्तारकः शय्यासंस्तारकः, शय्या च संस्तारकश्चेत्यर्थः। तस्य च यद्यपि सूत्रे रात्रौ ग्रहणमनुज्ञातं तथाप्युत्सर्गतो न कल्पते। यदि गृह्णाति ततश्चत्वारो मासा उद्घाताः प्रायश्चित्तम्, आज्ञादयश्च दोषाः, विराधना च संयमात्मविषया ॥ तामेव भावयति-

[भा.२९२५] छक्कायाण विराधन, पासवनुच्चारमेव संथारे।
पक्खलण खाणु कंटग, विसम दरी वाल गोणे य ॥

वृ-रात्रावप्रत्युपेक्षितायां भूमावुच्चारं प्रश्रवणं वा व्युत्सृजतः 'षट्कायानां' पृथिव्यादीनां विराधना। अथैतद्दोषभयान्न व्युत्सृजति तत आत्मविराधना। यत्र वा व्युत्सृजति तत्र बिलान्निर्गत्य दीर्घजातीयेन भक्ष्येत, एवमप्यात्मविराधना। "संथारे"त्ति अप्रत्युप्रेक्षितायां भूमौ संस्तारकं प्रक्षिपतः 'एवमेव' षट्कायविराधना, बिलादावात्मविराधनाऽपि। तथा 'स्थाणुः' कीलकस्तत् प्रस्खलनं भवेत्, कण्टकैर्वा विध्येत, 'विषमे' निम्नोन्नते 'दरीषु' वा बिलेषु प्रस्खलेत् प्रपतेद्वा, 'व्यालाः' सर्पास्तैर्दश्येत, 'गौः' बलीवर्दस्तेनाभिघातो भवेत् ॥ किञ्च-

[भा.२९२६] एरंडइए साणे, गोम्मिय आरक्खि तेनगा दुविहा।
एए हवंति दोसा, वेसित्थि-नपुंसएसुं वा ॥

वृ- "एरंडइए साणे"त्ति हडक्कयितः श्वा तेन खाद्येत। 'गौल्मिकैः' बद्धस्थानकै रक्षपालैः 'आरक्षकैर्वा' चौरग्राहैर्गृह्येत। स्तेनका द्विविधाः-शरीरस्तेना उपधिस्तेनाश्च, तैरुपधिपह्रियेत साधवो वा ह्रियेरन्। एते दोषा रात्रौ शय्या-संस्तारकग्रहणे भवन्ति। तथा 'वेश्यास्त्री-नपुंसकेषु वा' वेश्यापाटके नपुंसकपाटके वा स्थितानां रात्रौ परिवर्त्तयतां स्वाध्यायशब्दं श्रुत्वा लोकः प्रवचनावर्णवादं कुर्यात्-अहो! साधवस्तपोवनमासेवन्ते। यत एते दोषा अतो न रात्रौ शय्या-संस्तारको ग्रहीतव्य इति ॥ आह यद्येवं ततः-

[भा.२९२७] सुत्तं निरत्थगं कारणियं, इणमो अद्धाणनिग्गया साहू।
मरुगाण कोट्ठगम्मी, पुव्वद्दिट्ठम्मि संज्झाए ॥

वृ- सूत्रं निरर्थकं प्राप्नोति। सूरिराह-न भवति सूत्रं निरर्थकं किन्तु कारणिकम्। किं पुनस्तत् कारणम्? इत्याह-'इदम्' अनन्तरमेवोच्यमानम्-अध्वनिर्गताः केचन साधवोऽस्तमनवेलायां ग्रामं प्राप्ताः, तत्र तैर्मरुकाणां 'कोष्ठकः' अध्ययनापवरको दृष्टः परं तदीयः स्वामी तत्र सन्निहितो न विद्यते, ततस्ते साधवस्तं मरुककोष्ठकमुच्चार-प्रश्रवणभूमिकाश्च प्रत्युपेक्ष्य स्वामिनम्-अध्यापकं समागतं याचन्ते; याचयित्वा च तत्र कोष्ठके पूर्वदृष्टे सन्ध्यायां गृह्यमाणे सूत्रनिपातो द्रष्टव्यः ॥ एवं सन्ध्यालक्षणां रात्रिमङ्गीकृत्योक्तम्, न केवलं सन्ध्यायां किन्तु विकालेऽपि शय्या-संस्तारकस्यामीभि कारणैर्ग्रहणं कल्पते-

[भा.२९२८] दूरेव अन्नगामो, उव्वाया तेन सावय नदी वा।

दुल्लम वसहि ग्गामे, रुक्खाइठियाण समुदानं ॥

वृ- यतो ग्रामात् प्रस्थिताः ततो यत्र गन्तुमीप्सितं सोऽन्यग्रामो दूरे, अथवा 'उद्वाताः' परिश्रान्तास्ततो विश्राम्यन्तः समायाताः, स्तेन-श्वापदभयाद्वा सार्थमन्तरेणागन्तुं न शक्यते स च सार्थश्चिरेण लब्धः, नदी वा प्रव्यूढा; एतैः कारणैर्यस्मिन् ग्रामे प्रस्थितास्तमसम्प्राप्ता अपान्तरालग्रामे भिक्षावेलायां प्राप्ताः, तत्र च वसति दुर्लभा, अतो मार्गयद्भिरपि तत्क्षणं न लब्धा, ततो वृक्षादिमूले बहिः स्थित्वा सर्वेऽपि 'समुदानं' भैक्षं हिण्डितवन्तः ॥

तैश्च हिण्डमानैरमूषां वसतीनामेकतरा दृष्टा भवति-

[भा.२९२९] कम्मार-नंत-दारग-कलाय-सभ भुञमाणि दिय दिट्ठा ।

तेसु गएसु विसंते, जहि दिट्ठा उभयभोमाई ॥

वृ- कर्माराः-लहकारास्तेषां शाला कर्मारशाला, नन्तकानि-वस्त्राणि तानि यत्र व्यूयन्ते सा नन्तकशाला, दारकाः-बालकास्ते यत्र दिवसतः पठन्ति सा दारकशाला लेखशालेत्यर्थः, कलादाः-सुवर्णकारास्तेषां शाला कलादशाला, सभा-बहुजनोपवेशनस्थानम् । यद्वा सभाशब्दः शालापर्यायोऽतः प्रत्येकमभिसम्बध्यते-कर्मारसभा नन्तकसभा इत्यादि । एतासामेकतरा दिवा भुज्यमाना दृष्टा, ततो व्यतीतायां सन्ध्यायां 'तेषु' लोहकारादिषु गतेषु ताननुज्ञाप्य तत्र कर्मारशालादौ प्रविशन्ति । तत्रापि यत्र दिवसत एव 'उभयभूमिके' उच्चार-प्रश्रवणभूमिकालक्षणे आदिशब्दात् कालभूमिश्च यत्र 'दृष्टाः' प्रत्युपेक्षिता भवन्ति तत्र रजन्यामपि गन्तुं कल्पते, अत्र च सूत्रनिपातः ॥

एवमापवादिके सूत्रे भूयोऽप्यर्थतो द्वितीयपदमुच्यते-पूर्वमप्रत्युपेक्षितास्वपि संस्तार-कोच्चारप्रश्रवणभूमिषु तिष्ठन्ति । कथम् ? इत्याह-

[भा.२९३०] मज्झे व देउलाई, बाहिं व ठियाण होइ अइगमनं ।

सावय मक्कोडग तेन वाल मसयाऽयगर साणे ॥

वृ- 'मध्ये वा' ग्रामादेर्मध्यभागे यद् देवकुलम् आदिग्रहणात् कोष्ठकशाला वा तत्र दिवसतो विधिना स्थिताः, अथवा ग्रामादेः 'बहिः' देवकुलादौ सकलमपि दिवसं स्थिताः, ततो लोकस्तत्र स्थितान् दृष्ट्वा ब्रूयात्-''सावय'' इत्यादि, अत्र देवकुलादौ रात्रौ श्वापदः-सिंह-व्याघ्रादिस्तद्भयं भवति अतो नात्र भवतां वस्तुं युज्यते; अथवा-मर्कोटका अत्र रात्रावुत्तिष्ठन्ते, स्तेना वा द्विविधा अत्र रजन्यामभिपतन्ति, व्यालो वा सर्प स खादति, मशका वा निशायामत्राभिद्रवन्ति, अजगरो वाऽत्र रात्रौ गिलति, श्वानो वा समागत्य दशति; एतैर्व्याघातकरणै रात्रावन्यस्यां वसतौ 'अतिगमनं' प्रवेशो भवति ॥ इदमेव स्फुटतरमाह-

[भा.२९३१] दिवसट्ठिया वि रत्तिं, दोसे मक्कोडगाइए नाउं ।

अंतो वयंति अन्नं, वसहिं बहिया व अंतो उ ॥

वृ-देवकुलादौ दिवसतः स्थिता अपि रात्रौ मर्कोटकादीन् दोषान् ज्ञात्वा यदि 'अन्तः' ग्रामाभ्यन्तरे स्थितास्ततो ग्रामान्तर्वर्तिनीमेवान्यां वसतिं व्रजन्ति, तदप्राप्तौ बाहिरिकायां गच्छन्ति । अथ दिवसतो बहिर्देवकुलादिषु स्थिताः ततस्तत्रापि रात्रौ पूर्वोक्तान् दोषान् मत्वा 'बहिः' बाहिरिकाया अन्तः समागच्छन्ति ॥ अथोक्तमेवार्थमन्याचार्यपरिपाट्या प्रतिपादयति-

[भा.२९३२] पुव्वट्ठिए य रत्तिं, दट्ठूण जनो भणाइ मा एत्थं ।

निवसह इत्थंसावय-तक्कर माइ उ अहिलिंति ॥

वृ- देवकुलादौ पूर्वस्थितान् साधून् रात्रौ दृष्ट्वा जनो भणति, यथा-माऽत्र निवसत, यतोऽत्र रात्रौ श्वापद-तस्करादयः 'अभिलीयन्ते' समागच्छन्ति ॥

[भा.२९३३] इत्थी नपुंसओ वा, खंधारो आगतो त्ति अइगमनं ।
गामानुगामि एहि वि, होज्ज विगालो इमेहिं तु ॥

वृ- लोको ब्रूयात्-अत्र देवकुलादौ रात्रौ स्त्रीवा नपुंसको वा समागत्योपसर्गं करोति, स्कन्धावारो वा आगतः, एवमादिभि कारणैर्बाहिरिकायाः सकाशादन्तः 'अतिगमनं' प्रवेशं कुर्युर्ग्रामाभ्यन्तराद्वा बहिर्गच्छेयुः । एवं तावदध्वनिर्गतानां यतनोक्ता । अथ विहरतां प्रतिपाद्यते- "गामानुगामि" इत्यादि, ये मासकल्पविधिना ग्रामानुग्रामं विहरन्ति तेषामपि 'एभि' वक्ष्यमाणैः कारणैर्विकालो भवेत् ॥ तान्येवाह-

[भा.२९३४] वितिगिट्ठ तेन सावय, फिडिय गिलाणे व दुब्बल नई वा ।
पडिनीय सेह सत्थे, न उ पत्ता पढमबिइयाई ॥

वृ- यत्र क्षेत्रे मासकल्पः कृतस्तस्माद् यमन्यं ग्रामं प्रस्थिताः सः 'व्यतिकृष्टः' दूरदेशवर्ती, स्तेना वा द्विविधाः श्वापदा वा पथि वर्त्तन्ते तद्भयात् चिरलब्धसार्थेन सह आगताः, 'स्फिटिता वा' सार्थात् परिभ्रष्टास्ततो यावन्मार्गमवतीर्णास्तावदुत्सूरं समजनि, यद्वा साधुः कोऽपि स्फिटितः स यावदन्वेषितस्तावच्चिरीभूतम्, ग्लानो वा साधुरधुनोत्थितः शनैः शनैः समागच्छति, दुर्बलो वा स्वभावेनैव कश्चित् सोऽपि न शीघ्रं गन्तुं शक्नोति, नदी वा पूर्णा यावदवरिच्यते तावत् प्रतीक्षमाणाः स्थिताः, यद्वा नदी यावत् परिरयगमनेन परिह्रियते तावद् विलम्बो लग्नः, प्रत्यनीकैर्वा पन्थाः समन्ततो रुद्धः ततो यावदपरेण मार्गेणागम्यते तावदुत्सूरं जातम्, शैक्षो वा कश्चिदुत्पन्नः स पथि प्रतीक्षितः, अथवा तस्य दिवा व्रजतः सागारिकं सार्थो वा शनैः शनैरागच्छति, यद्वा तं सार्थं प्रतीक्षमाणानां विकालः सञ्जातः । एतैः कारणैःप्रथमद्वितीयपौरुष्योः आदिग्रहणात् तृतीयचतुर्थ्योरपि पौरुष्योः 'न तु' नैव प्राप्ता भवेयुः, अर्थादापन्नं विकाले रात्रौ प्राप्ताः, ततश्च तदानीं प्राप्तैस्तैर्विधिना ग्रामे प्रवेष्टव्यं नाविधिना ॥ यत आह-

[भा.२९३५] अइगमने अविहीए, चउगुरुगा पुव्ववन्निया दोसा ।
आणाइणो विराधन, नायव्वा संजमाऽऽयाए ॥

वृ- यद्यविधिना 'अतिगमनं' प्रवेशं कुर्वन्ति ततश्चत्वारो गुरुकाः 'पूर्ववर्णिताश्च' षट्कायविराधना-प्रस्खलन-प्रपतना दयो दोषा अत्रावसातव्याः, आज्ञादयश्च दोषाः, विराधना च संयमात्मविषया ज्ञातव्या, यत एवमतो विधिना प्रवेष्टव्यम् ॥ कः पुनर्विधिः? इति अत आह-

[भा.२९३६] सव्वे वा गीयत्था, मीसा वा अजयणाए चउगुरुगा ।
आणाइणो विराधन, पुव्विं पविसंति गीयत्था ॥

वृ- ते साधवः यदि सर्वेऽपि गीतार्थास्ततः सर्व एव प्रविशन्ति । अथ मिश्रास्ततो यदि 'अयतनया' वक्ष्यमाणयतनामकृत्वा प्रविशन्ति तदा चतुर्गुरुकाः; आज्ञादयो दोषाः, विराधना च संयमाऽऽत्मविषया । का पुनर्यतना? इति अत आह-'पूर्वं' प्रथमं तावद् गीतार्था प्रविशन्ति, पश्चादगीतार्था इति सङ्ग्रहगाथासङ्क्षेपार्थः ॥ अथैनामेव विवृणोति-

[भा.२९३७] जइ सव्वे गीयत्था, सव्वे पविसंति ते वसहिमेव ।
विहि अविहीए पवेसो, मिस्से अविहीइ गुरुगा उ ॥

वृ- यदि ते साधवः सर्वे गीतार्थास्ततः सर्वेऽपि ते समकमेव वसतिं प्रविशन्ति । अथागीतार्थमिश्रास्ते ततो द्विधा प्रवेशः-विधिना अविधिना च । यद्यविधिना प्रविशन्ति ततश्चतुर्गुरुकाः । अविधिर्नाम-यद्यगतार्थमिश्राः सर्वेऽपि प्रविशन्ति ॥

कः पुनस्तत्र दोषो भवति? इति उच्यते-

[भा.२९३८] विप्परिणामो अप्पच्चओ य दुक्खं च चोदणा होइ ।
मुत्तो जयणाकरणे, अकरणे [illegible] पि खलु [illegible] ॥

वृ- यदि मृगाणां पुरतो ज्योतिरानयनादिकां वक्ष्यमाणां यतनां कुर्वन्ति ततस्तेषां विपरिणामो भवेत्-न वर्त्तते अग्निकायसमारम्भः कर्त्तुमित्युपदिश्य सम्प्रति तमेव स्वयं समारभन्ते इति । अप्रत्ययोऽपि तेषामुपजायेत-यथैतदलीकं तथा सर्वमप्यमीषामेवंविधमिति; ततश्च प्रतिगमनादयो दोषाः । तथा तेषां मृगाणां पश्चादग्निकायसङ्घट्टादि कुर्वतामपरां वा समाचारीं वितथामाचरतां दुःखं नोदना भवति, 'तदा स्वयमन्येन वा अग्निकायसमारम्भं कृत्वा सम्प्रत्यस्मान् वारयत' इत्यादि सम्मुखवलनतः सम्यक् शिक्षां न प्रतिपद्यन्त इत्यर्थः । अथैतद्दोषभयादेनां ज्योतिर्यतनां न कुर्वन्ति ततः 'सर्वेऽपि' आचार्यादयः परित्यक्ता भवन्ति, तेषां सर्प-श्वानादिभिरात्मविराधनासद्भावात् । तस्माद् विधिना प्रवेष्टव्यम् ॥ तमेव विधिमाह-

[भा.२९३९] बाहिं काऊण मिए, गीया पविसंति पुंछणे घेत्तुं ।
देउल सभ परिभुत्ते, मग्गंति सजोइए चेव ॥

वृ- मृगान् बहि 'कृत्वा' स्थापयित्वा 'प्रोञ्छनानि' दारुदण्डकानि गृहीत्वा गीतार्था प्रथमतो ग्रामं प्रविशन्ति । प्रविश्य च देवकुल-सभादीनि 'परभुक्तानि' परिभुज्यमानानि 'सज्योतींषि च' स्वयोगेनैव ज्योतिसहितानि मार्गयन्ति । अथ पूर्वकृतं ज्योतिस्तत्र न प्राप्यते ततः स्वयमेव तदानयन्ति आनाययन्ति वा । एवमुच्चारादिभूमिकाः प्रत्युपेक्ष्य मृगानानयन्ति ॥

[भा.२९४०] परिभुज्जमाण असई, सुन्नागारे वसंति सारविए ।
अहुणुव्वासिय सकवाड निब्बिले निच्चले चेव ॥

वृ- परिभुज्यमाना वसतिर्यदि न लभ्यते तदा 'शून्यागारं शून्यगृहं गवेषयन्ति । तच्च 'अधुनोद्वासितं' साम्प्रतमेवोद्वसीभूतं 'सकपाटं' कपाटयुक्तं 'निर्बिलं' सर्पादिबिलरहितं 'निश्चलं' दृढं न पतितुकामम् एवंविधं वेषणीयम् । अत्र चतुर्भि पदैः षोडश भङ्गा भवन्ति । एषां च मध्ये यः प्रथमो भङ्गस्तदुपेते शून्यगृहे 'सारविते' प्रमार्जिते वसन्ति ॥ अत्र सर्वेषु गीतार्थेषु तावद् विधिमाह-

[भा.२९४१] जइ नाणयंति जोइं, गिहिणो तो गंतु अप्पणा आणे ।
कालोभयसंथाराण भूमिओ पेहए तेणं ॥

वृ- यदि गृहिणः प्रेरिता अपि ज्योतिर्नानयन्ति तत आत्मनाऽपि गत्वा गीतार्था आनयन्ति । ततस्तेन ज्योतिषा कालोभयसंस्तारणां भूमीः प्रत्युपेक्षेत, कालभूमीं संज्ञाभूमीं कायिकीभूमीं संस्तारकभूमीं चेत्यर्थः ॥

[भा.२९४२] असई य पईवस्सा, गोवालगकंचु दारुदंडेणं।
विल पुंछणेण ढक्कण, मंतेण व जा पभायं तु॥

वृ- अथ प्रदीपो न प्राप्यते ततः प्रदीपस्यासति गोपालकञ्चुकंपरिधाय तेन स्वशरीरं सुस्थगितं कृत्वा दारुदण्डकेन वसतिं प्रमार्जयन्ति। यानि च तत्र बिलानि तेषां पादप्रोञ्छनेन "ढक्कणं"ति स्थगनं कुर्वन्ति, मन्त्रेण वा तान्यभिमन्त्रयन्ति यावत् प्रभातं सञ्जातम्। प्रभाते तु पादप्रोञ्छनादिकमपनयन्ति॥ एवं सर्वेषां गीतार्थानां विधिरुक्तः। अथ गीतार्थमिश्राणां तमेवातिदिशति-

[भा.२९४३] एमेव य भूमितिए, हरियाई खाणु-कंट-बिलमाई।
दोसदुगवज्जणट्ठा, पेहिय इयरे पवेसंति॥

वृ- यथा सर्वेषां गीतार्थानां विधिरुक्तस्तथा अगीतार्थमिश्राणामप्येवमेव ज्ञातव्यः। नवरं तानगीतार्थान् बहि स्थापयित्वा गीतार्था प्रविश्य वसतिं गृहीत्वा तत्र 'भूमित्रिके' संज्ञाकायिकी-कालभूमिलक्षणे हरित-बीजादीन् जन्तून् स्थाणु-कण्टक-बिलादींश्च प्रत्यपायान् 'दोषद्वयवर्जनार्थं' संयमा-ऽऽत्मविराधनालक्षणदोषद्वयपरिहारार्थं प्रत्युपेक्ष्य ततः 'इतरान्' मृगान् वसतिं प्रवेशयन्ति॥

[भा.२९४४] ठाणासई य बाहिं, तेनगदोसा व सव्वे पविसंति।
गुरुगा उ अजयणाए, विप्परिणामाइ ते चेव॥

वृ- यदि बहि स्थानं नास्ति यत्र मृगाः स्थाप्यन्ते "तेनगदोसा व"त्ति स्तेनकभयं वा बहिर्वर्तते ततः सर्व एव प्रविशन्ति। प्रविष्टाश्च यद्ययतनां कुर्वन्ति ततश्चतुर्गुरुकाः, त एव च विपरिणामा-ऽप्रत्ययादयो दोषाः॥ अथ यतनामेव वयं न जानीम इति प्रश्नावकाशमाशङ्क्य तत्स्वरूपमाह-

[भा.२९४५] अविगीयविमिस्साणं, जयण इमा तत्थ अंधकारम्मि।
आननऽनाभोगेणं, अणागयं कोइ वारेइ॥

वृ- अगीतार्थमिश्राणां 'तत्र' वसतावन्धकारे इयं यतना-"आणणऽणाभोगेणं"ति यथा ते मृगा नाभोगयन्ति-न जानते तथाप्रदीपस्यान्यव्यपदेशेनानयनं विधेयम्। अथ गृहस्थोऽन्यव्य-पदेशेनोक्तोऽपि दीपं गृहीत्वा नागच्छन्ति ततस्तमनागतं गृहमपि गत्वा प्रज्ञापयन्ति यथा दीपमान-यति। तथा तं चानीयमानं यदि कश्चिद् वारयति ततस्तस्य शिक्षा प्रदातव्या। विशेषचूर्णौ तु-"अन्नाणणे कोइ वारेइ"त्तिपाठः, अन्येन-गृहस्थेनाग्नेरानयने विधीयमाने यदि कोऽप्यगीतार्थो वारयति ततस्तस्य नोदना कर्तव्या॥ इदमेव भावयति-

[भा.२९४६] अम्हेहि अभणिओ अप्पणो नु आओ नु अम्ह अट्ठाए।
आनेइ इहं जोइं, अयगोलं मा निवारेह॥

वृ- यदा गृही दक्षतया स्वयमेव ज्योतिरानयति तं च कोऽप्यगीतार्थो वारयति तदा स वक्तव्यः-अस्माभिरभणितः स्वयोगेन यद्येष गृहस्थ आत्मनोऽर्थं 'नुः' इति संशये उताहो नु अस्मदर्थं 'इह' अस्मिन् स्थाने ज्योतिरानयति ततः किमस्माकमेतदीयया चिन्तया? । अत एनमयोगोलकल्पं मा निवारयतेति॥

[भा.२९४७] गिहिणं भणंति पुरओ, अइतमसमिणं न पस्सिमो किंचि।
आणंति जइ अवुत्ता, तहेव जयणा निवारंते॥

वृ- अथ ते गृहस्थाः स्वयं नानयन्ति ततो गीतार्था अन्यव्यपदेशेन तेषां गृहिणां पुरतो भणन्ति-

'अतितमः' अतीवान्धकारमिदम्, न पश्यामो वयं किञ्चिदपीति । यद्येवम् 'अनुक्ताः' साक्षादभणिताः सन्तो ज्योतिरानयन्ति ततः सुन्दरमेव । यश्च तत्र निवारयति तस्य 'यतना' तथैव नोदना कार्या ।। अथ ते गृहस्था अन्यव्यपदेशेनोक्तं नावबुध्यन्ते ततः किं कर्त्तव्यम् ? इत्याह-

[भा.२९४८] गंतूण य पन्नवणा, आनन तह चेव पुव्वभणियं तु ।
भणण अदायण असई, पच्छायण मल्लगाईसु ।।

वृ- गीतार्थैर्गत्वा चशब्दादगत्वाऽपि तत्र स्थितैर्गृहिणां प्रज्ञापना विधेया, यथा-न पश्यामो वयमत्र बिलादिकं स्थाणु-कण्टकादिकं वा, अत उद्योतो यथा भवति तथा कुरुत । एवं परिस्फुटमभिहिताः सन्तस्ते प्रदीपस्यानयनं कुर्वन्ति । यश्चागीतार्थो निवारयति तस्य 'तथैव' नोदनायाम् "अयगोलं मा निवारेह" इत्यादिकं पूर्वभणितमेव द्रष्टव्यम् । "भणण" त्ति गृहिषु 'प्रदीपमानय' इति प्रज्ञाप्यमानेषु यो ब्रवीति 'किमेव सावद्यप्रवृत्तिं कारयसि ?' इति तस्याग्रे मिथ्यादुष्कृतभणनं कर्त्तव्यम् । "असई"त्ति अथ गृहस्थः प्रदीपमानेतुं नेच्छति ततः "अदायण पच्छायण मल्लगाईसु"त्ति मृगाणामदर्शनाय मल्लकादिभि प्रच्छाद्य प्रदीपः स्वयमानेतव्यः ।।

अथेदमेवोत्तरार्द्धं विवरीषुराह-

[भा.२९४९] गिहि जोइं मग्गंतो, मिगपुरओ भणइ चोइओ इणमो ।
नाभोगेण मउत्तं, मिच्छाकारं भणामि अहं ।।

वृ- गृहिणां समीपे 'ज्योति' प्रदीपं 'मृगपुरतः' मृगाणां श्रृण्वतां मार्गयन् यदि केनचिन्नोदितः- किमेवं सावद्यं कारयसि ? इति; ततोऽसौ गीतार्थ इत्थं भणति-अनाभोगेन मयेदमुक्तम्, अतोऽहं मिथ्याकारं भणामि, मिथ्यादुष्कृतं प्रयच्छामीत्यर्थः ।।

[भा.२९५०] एमेव जइ परोक्खं, जाणंति मिगा जहेइमा भणिओ ।
तत्थ वि चोइज्जंतो, सहसाऽनाभोगओ भणइ ।।

वृ- एवमेव यदि मृगाणां परोक्षं गृहे गत्वा गृहस्थो भणितः तदाऽपि यदि ते मृगाः कथमपि जानन्ति, यथा-एतेन साधुना गृहस्थः 'भणितः' प्रदीपानयनाय प्रेरितः; तत्राप्यपरेण नोद्यमानः सन् भणति-सहसाकारेणानाभोगतो वा मयेदमुक्तम्, मिथ्या मे दुष्कृतमिति ।।

[भा.२९५१] गिहिगम्मि अणिच्छंते, सयमेवाणेइ आवरित्ताणं ।
जत्थ दुगाई दीवा, तत्तो मा पच्छकम्मं तु ।।

वृ- अथ गृही प्रदीपमानेतुं नेच्छति ततः स्वयमेव मल्लकसम्पुटेन वा कर्परेण वा कल्पेन वा प्रदीपमावृत्यानयति । तत्रापि यत्र गृहे 'द्विकादयः' द्वित्रिप्रभृतयः दीपाः ततो गृहादानयति । कुतः ? इत्याह-"मा पच्छकम्मं तु"त्ति यत्रैक एव दीपो भवति तत्रापरप्रदीपकरणलक्षणं पश्चात्कर्म मा भूदिति कृत्वा ततः प्रदीपो नानेतव्यः ।। ततश्च-

[भा.२९५२] उज्जोविय आयरिओ, किमिदं अहगं मि जीवियट्ठीओ ।
आयरिए पन्नवणा, मट्ठो य मओ य पव्वइओ ।।

उद्योतिते प्रतिश्रये सति आचार्यो भणति-हन्त ! किमिदं भवता कृतम् ? ।स प्राह-क्षमाश्रमणाः! अहमद्यापि जीवितार्थी अतो बिलादिपरिज्ञानार्थं मयेत्थं कृतम् । तत आचार्यो मातृस्थानेन तस्य प्रज्ञापनां करोति-हन्त ! मृत एव त्वम्, कुतो भवतो जीवितम् ? यत एवं कुर्वन् प्रव्रजितः 'नष्टश्च'

सन्मार्गपरिभ्रष्टो 'मृतश्च' संयमजीवितविरहितो भवतीति ॥ अथ पूर्वोक्तमेवार्थं विशेषयन्नाह-

[भा.२९५३] तस्सेव य मग्गेणं, वारणलक्खेण निंति वसभा उ ।
भूमितियम्मि उ दिट्ठे, पच्चप्पिय मो इमा मेरा ॥

वृ- 'तस्यैव' ज्योतिरानेतुः साधोः 'मार्गेण' पृष्ठतः 'वारणालक्ष्येण' निवारणव्याजेन वृषभा निर्गच्छन्ति । ततः 'भूमित्रिके' उच्चार-प्रश्रवण कालभूमिलक्षणे दृष्टे सति प्रदीपे प्रत्यर्पिते "मो" इति निपातः पादपूरणे इयं 'मर्यादा' सामाचारी ॥ तामेवाह-

[भा.२९५४] खरंटण वेंटिय भायण, गहिए निक्खिवण बाहि पडिलेहा ।
वसभेहि गहियचित्ता, इयरे पसाइंति कल्लाणं ॥

वृ- येन प्रदीपानयनायाविरतकः प्रेरितो येन वा प्रदीप आनीतः तस्य गुरुभि खरण्टना कर्त्तव्या। ततोऽसौ वेण्टिकां भाजनानि च गृहीत्वा "निक्खिवण"त्ति बहि स्थाप्यते, निर्गच्छास्माकं गच्छाद् न त्वया कार्यमिति । ततोऽसौ कैतवनिष्काशितो बहि स्थितः प्रतिलेखयति प्रतिक्रमणं च विदधाति। ततो वृषभैर्गृहीतचित्ताः 'इतरे' मृगा गुरुं 'प्रसादयन्ति' प्रसन्नं कुर्वन्ति । ततो गुरवस्तं भूयोऽप्यानाय्य पञ्चकल्याणकं प्रायश्चित्तं प्रयच्छन्ति ॥ अथ कथं वृषभा मृगाणां चित्तग्रहणं कुर्वन्ति ? इत्याह-

[भा.२९५५] तुम्ह य अम्ह य अट्ठा, एसमकासी न केवलं सभया ।
खामेमु गुरुं पविसउ, बहुसुंदरकारओ अम्हं ॥

वृ- आर्या ! युष्माकमस्माकं च सर्पादिप्रत्यपायरक्षणार्थमेष एवमकार्षीत्, न केवलं स्वभयादेव, अत आगच्छत येन सर्वेऽपि 'गुरुं' क्षमाश्रमणं क्षमयामः, प्रविशतु 'बहुसुन्दरकारकः' प्रत्यपायरक्षकतया बहुकल्याणकरोऽस्माकं भूयः प्रतिश्रयम् । एवमुक्ता मृगा वृषभैः सह समागत्य गुरुं प्रसादयन्ति ततो गुरवः क्षाम्यमामा ब्रुवते-आर्या ! यूयमपि निर्द्धर्माणः सञ्जाताः ? ॥

[भा.२९५६] अन्ने वि विद्दवेहिइ, अलमज्जो ! अहव तुब्भ मरिसेमि ।
तेसिं पि होइ बलियं, अकज्जमेयं न य तुदंति ॥

वृ- एष एवं कुर्वन्नन्यानपि साधून् 'विद्रावयिष्यति' विनाशयिष्यति अत आर्या ! 'अलं' पर्याप्तमस्माकमेतेन । साधवो ब्रुवते-क्षमाश्रमणाः ! न भूय एवं करिष्यति, एकवारमपराधं क्षमयन्तु भगवन्तः । गुरवो भणन्ति-यद्येवं ततोऽहं युष्माकं मर्षयामि, परमेतस्य पञ्चकल्याणकं प्रायश्चित्तं प्रदीयते । एवमुक्ते 'तेषामपि' अगीतार्थानां 'बलिकम्' अत्यर्थं हृदये भवति, यथा-ननूमकार्यमेत-दिति । न च पश्चाद् ज्योतिस्पर्शनादौ नोद्यमानास्तुदन्ति, प्रतिनोदनया न व्यथामुत्पादयन्तीत्यर्थः॥

[भा.२९५७] एसो विही उ अंतं, बाहि निरुद्धे इमो विही होइ ।
सावय तेनय पडिनीय देवयाए विही ठाणं ॥

वृ- एष विधि 'अन्तः' ग्रामाभ्यन्तरे प्रविष्टानामुक्तः । अथ बहिस्तिष्ठतां विधिरुच्यते-तत्राध्वप्रतिपन्नास्ते साधवो विकाले तं ग्रामं प्राप्ताः, परं द्वाराणि तत्र स्थगितानि, ततो 'निरुद्धे' स्थगितद्वारे ग्रामादौ विकाले वा तत्रापूर्व प्रवेशं न लभते इत्यादिकारणसम्भवे बहिस्थितानां यदि श्वापदभयं स्तेनकभयं प्रतनीकभयं वा भवति तदा वक्ष्यमाणो विधि कर्त्तव्यो भवति, यावद् देवताया आकम्पनार्थं विधिना 'स्थानं' कायोत्सर्गलक्षणं क्षपेण कर्त्तव्यमिति ॥ यतनामेवाह-

[भा.२९५८] भूमिघर देउले वा, सहियावरणे व रहियआवरणे ।

रहिए विज्ञा अचित्त मीस सचित्त गुरु आणा ॥

**वृ-** बहिस्तिष्ठतां यदि श्वापदादिभयं तदा भूमिगृहे देवकुले वा आवरणं-कपाटं तेन सहिते तिष्ठन्ति । गाथायां प्राकृत्वाद् व्यत्यासेन पूर्वापरनिपातः । अथ सकपाटं न प्राप्यते तत आवरणरहितेऽपि तिष्ठन्ति, तत्र विघया द्वारं स्थगयन्ति, दिशां वा विद्याप्रयोगेण बन्धं विदधति यथा श्वापदादयो न प्रविशन्ति । विद्याया अभावे अचित्तकण्टिकाभि, तदप्राप्तौ मिश्रकण्टिकाभि, तदलाभे सचित्तकण्टिकाभिरपि स्थगयन्ति । तदभावे "गुरु आण"त्ति गुरवो भागवतीमाज्ञां प्ररूपयन्ति, यथा-आचार्यादीनां मारणान्तिके उपसर्गे उपस्थिते सति यः समर्थो भवति तेन यथासामर्थ्य तन्निवारणे पराक्रमणीयमिति निर्युक्तिगाथासमासार्थः ॥ अथैनामेव विवरीषुराह-

[भा. २९५९] सकवाडम्मि उ पुव्विं, तस्सऽसई आणइंति उ कवाडं ।
विज्ञाए कंटियाहि य, अचित्त-चित्ताहि वि ठयंति ॥

**वृ-** पूर्वं सकपाटे भूमिगृहे देवकुले वा स्थातव्यम् । तस्यासति अकपाटे तिष्ठन्तः कपाटमन्यत आनयन्ति । अथ नास्ति कपाटं ततो विघया द्वारं स्थगयन्ति । तदभावे कण्टिकाभि प्रथममचित्ताभिः ततो मिश्राभिः ततः सचित्ताभिरपि स्थगयन्ति ॥

[भा. २९६०] एएसिं असईए, पागार वई व रुक्ख नीसाए ।
परिखेव विज्ज अचित्त मीस सचित्त गुरु आणा ॥

**वृ-** 'एतेषां' भूमिगृहादीनामसति प्राकरं वा वृतिं वा वृक्षं वा 'निश्राय' निश्रां कृत्वा तिष्ठन्ति । तत्रापि विघया परिक्षेपं कुर्वन्ति । तदभावे कण्टिकाभिर्यथाक्रममचित्त-मिश्र-सचित्ताभिः परिक्षिपन्ति । गुरवश्चाज्ञाप्ररूपणां वक्ष्यमाणां कुर्वन्ति ॥

[भा. २९६१] गिरि-नइ-तलागमाई, एमेवागम ठएंति विज्ञाई ।
एग दुगे तिदिसिं वा, ठएंति असईए सव्वत्तो ॥

**वृ-** गिरिं वा नदीं वा तडागं वा आदिग्रहणाद् गर्त्तादिकं वा निश्रां कृत्वा तिष्ठन्ति । तेषां च यत्रैक एव प्रवेशस्तत्र प्रथमतस्तिष्ठन्ति, तदभावे यत्र द्वयोर्दिशोः प्रवेशः, तदप्राप्तौ यत्र तिसृषु दिक्षु प्रवेशस्तत्रापि तिष्ठन्ति । तेषां च आगमं प्रवेशमुखम् 'एवमेव' विघादिभि स्थगयन्ति । "असईय सव्वत्तो"त्ति प्राकारादिनिश्रया एकप्रवेशादीनां वा गिरिप्रभृतीनामप्राप्तावाकाशे वसन्तः सर्वतोविद्याप्रयोगेण स्थगयन्ति दिशां वा बन्धं कुर्वन्ति । विद्याया अभावे कण्टिकाभिः सर्वतो वृतिं कुर्वन्ति । तदभावे गुरव आज्ञाप्ररूपणां कुर्वन्ति ॥ केन विधिना ? इति चेद् उच्यते-

[भा. २९६२] नाउमगीयं बलिणं, अविजाणंता व तेसि बलसारं ।
घोरे भयम्मि थेरा, भणंति अविगीयथेज्जत्थं ॥

**वृ-** ज्ञात्वा कमप्यगीतार्थं 'बलिनं' समर्थम्, यद्वा अविजानन्तः 'तेषां' स्वसाधूनां 'बलसारं' पराक्रममाहात्म्यम्, कस्य कीदृशः पराक्रमो विद्यते इत्येवमजानन्त इत्यर्थः, 'घोरे' रौद्रे श्वापदादिभये 'स्थविराः' आचार्या 'अविगीतस्थैर्यार्थम्' अगीतार्थस्थिरीकरणार्थं भणन्ति ॥ कथम् ? इत्याह-

[भा. २९६३] आयरिए गच्छम्मि य, कुल गण संघे य चेइय विनासे ।
आलोइयपडिकंतो, सुद्धो जं निज्जरा विउला ॥

**वृ-** षष्ठीसप्तम्योरर्थं प्रत्यभेदाद् आचार्यस्य वा गच्छस्य वा कुलस्य वा गणस्य वा सङ्घस्य वा

चैत्यस्य वा विनाशे उपस्थिते सति सहयोधिप्रभृतिना स्ववीर्यमहापयता तथा पराक्रमणीयं यथा तेषामाचार्यादीनां विनाशो नोपजायते। स च तथा पराक्रमणामो यद्यपराधमापन्नस्तताप्यालोचित-प्रतिक्रान्तः शुद्धः, गुरुसमक्षमालोच्य मिथ्यादुष्कृतप्रदानमात्रेणैवासौ शुद्ध इति भावः। कुतः ? इत्याह-'यद्' यस्मात् कारणाद् 'विपुला' महती 'निर्जरा' कर्मक्षयलक्षणा तस्य भवति, पुष्टा-लम्बनमवलम्ब्य भगवदाज्ञया प्रवर्त्तमानत्वादिति ॥

[भा.२९६४] सोऊण य पन्नवणं, कयकरणस्सा गयाणो गहणं।
सीहाई चेव तिगं, तवबलिए देवयट्ठाणं ॥

वृ- एवंविधां प्रज्ञापनां श्रुत्वा यः कृतकरणः-सहयोधिप्रभृतिकस्तस्य गदाया आदिशब्दाद् लगुडस्य वा ग्रहणं भवति। गहीत्वा च गदादिकमसौ गुरून् ब्रवीति-भगवन्! शेरतां विश्वस्ताः सर्वेऽपि साधवः, अहं सिंहादीनां निवारणां करिष्यामि। ततः सुप्ताः साधवः। स पुनरेकाकी गदाहस्तः प्रतिजाग्रदवतिष्ठते। तस्य च प्रतिजाग्रतः सिंहत्रिकं समागच्छेत्, आदिशब्दाद् व्याघ्रादिपरिग्रहः। तत्र च वृद्धसम्प्रदायः- सो साहू गयाहत्थो पडियरमाणो चिट्ठइ। नवरं सीहो आगतो। तेन ईसिं त्ति आहतो नाइदूरं गंतुं मओ। अन्नो सीहो आगओ। सो चिंतेइ-सो चेव पुणो आगओ। तओ गाढतरं आहओ। सो नस्संतो पढमस्स आरओ मओ। अन्नो वि सीहो आगओ। सो चिंतेइ- तइयं पि वारं सो चेव पुणो आगओ। ताहे बिइयाओ बलिययरं आहओ। नस्संतो बीयस्स आरओ मओ। तओ कोडि[illegible] त्ति ॥ ईदृशस्य कृतकरणस्याभावे यः 'तपो-बलिकः' विकृष्टतपसा बलीयान् क्षपकः स देवताया आकम्पननिमित्तं 'स्थानं' कायोत्सर्गं करोति। एतदग्रतो भावयिष्यते ॥ अथ तेन कृतकरणसाधुना प्राभातिकप्रतिक्रमणवेलायां यथा गुरुसमक्षमालोचितं तथा प्रतिपादयति-

[भा.२९६५] हंत म्मि पुरा सीहं, खुड्डयाइ इदानि मंदथामो मि।
तिन्नाऽऽवाए सीहो, रत्तिं पहओ मया न मओ ॥

वृ- क्षमाश्रमणाः! 'पुरा' पूर्वमहं प्रबलशरीरतया खुड्डकमात्रेणैव सिंहं हन्ताऽस्मि, इदानीं तु मन्दस्थामाऽस्मि ततः "तिन्नाऽऽवाए"त्ति विभक्तिव्यत्ययात् 'त्रिष्वापातेषु' आगमनेषु गदाघातेन सिंहो रात्रौ मयाप्रहतः परं 'न मृतः' नापद्राणः। एवमालोच्य मिथ्यादुष्कृतं दत्तवान्। एतावतैव चासौ शुद्धः, अदुष्टपरिणामत्वात् ॥

[भा.२९६६] निंतेहि तिन्नि सीहा, आसन्ने नाइदूर दूरे य।
निग्गयजीहा दिट्ठा, स चावि पुट्ठो इमं भणइ ॥

वृ-प्रभाते निर्गत्य पन्थानं गच्छद्भिस्ते त्रयः सिंहा निर्गतजिह्वा दृष्टाः। तत्रैक आसन्ने, द्वितीयो नातिदूरे, तृतीयस्तु दूरे। स च आचार्यैं पृष्टः-आर्य! किमेवं सिंहत्रयं विपन्नमवलोक्यते ? । ततः स इदं भणति ॥

[भा.२९६७] मा मरिहिइ त्ति गाढं, न आहओ तेन पढमओ दूरे।
गाढतर बिइय तइओ, न य मे नायं जहऽन्नो ॥

वृ- भगवन्! यदा प्रथमः सिंह आयातस्तदा मया 'मा मरिष्यति' इति कृत्वा गाढं नाहतस्तेनासौ दूरे गत्वा विपन्नः । द्वितीयस्तु 'स एवायं भूयोऽप्यायातः' इति बुध्या गाढतरमाहतः तेनासौ

नासन्ने नातिदूरे। तृतीयस्तु द्वितीयादपि गाडतरमाहतस्तेनासौ प्रत्यासन्न एव भूभागे गत्वा मृतः। न च मया ज्ञातम्, यथा-अयमन्यान्यः सिंहः समागतो न स एवेति ॥ ईदृशस्य कृतकरणस्याभावे देवतायाः कायोत्सर्गं कर्त्तव्यः, स च केन कियन्तं वा कालं यावत्? इति अत्रोच्यते-

[भा.२९६८] खमओ व देवयाए, उस्सग्ग करेइ जाव आउट्टा।
रक्खामि जा पभायं, सुवंतु जइणो सुवीसत्था ॥

वृ-क्षपको वा देवताया आकम्पननिमित्तं कायोत्सर्गं करोति यावदसौ 'आवृत्ता' आराधिता सती ब्रूते-भगवन्! पारय कायोत्सर्गम्, यावत् प्रभातं तावदहं श्वापदाद्युपसर्गं रक्षामि, स्वपन्तु यतयः सुविश्वस्ता इति ॥

*मू. (४४) नो कप्पइ निग्गंथाण वा निग्गंथीण वा रातो वा वियाले वा वत्थं वा पडिग्गहं वा कंबलं वा पायपुंछणं वा पडिगाहित्तए ॥*

वृ-अथास्य सूत्रस्य कः सम्बन्धः? इत्याह-

[भा.२९६९] जह सेज्जाऽनाहारो, वत्थादेमेव मा अइपसंगा।
दियदिट्ठवत्थगहणं, कुज्जा उ निसिं अतो सुत्तं ॥

वृ-यथा शय्या-वसतिअनाहार इति कृत्वा रात्रौ ग्रहीतुं कल्पते, एवमेव वस्त्रादिकमपि कल्पिष्यते इत्यतिप्रसङ्गाद् दिवाऽदृष्टस्य वस्त्रस्य 'निशि' रात्रौ ग्रहणं मा कुर्यादित्यत इदं सूत्रमारभ्यत इति ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा रात्रौ वा विकाले वा वस्त्रं वा प्रतिग्रहं वा कम्बलं वा पादप्रोञ्छनं वा प्रतिग्रहीतुमिति सूत्राक्षरगमनिका ॥

अथ भाष्यविस्तरः-

[भा.२९७०] रातो वत्थग्गहणे, चउरो मासा हवंति उग्घाया।
आणाइणो य दोसा, आवज्जण संकणा जाव ॥

वृ-रात्रौ वस्त्रग्रहणे चत्वारो मासा उद्धाताः प्रायश्चित्त आज्ञादयश्च दोषाः। तथा यथा रात्रौ भक्तग्रहणे मिथ्यात्व-षट्कायविराधनादयो दोषा उक्ताः यावत् पञ्चस्वपि प्राणातिपातादिष्वापत्तिस्तद्विषया च शङ्का एतत् सर्वमपि दोषजालं रात्रौ वस्त्रग्रहणेऽपि तथैव वक्तव्यम् ॥

यतश्चैवमतो न ग्रहीतव्यं रात्रौ वस्त्रम्, कारणे तु गृह्णीयादपीति दर्शयति-

[भा.२९७१] बिइयं विहे विवित्ता, पडिसत्थाई समिच्च रयणीए।
ते य पए च्चिय सत्था, चलिहिंतुभए व इक्को वा ॥

वृ-द्वितीयपदमत्रोच्यते-'विहे' अध्वनि 'विविक्ताः' मुषिताः सन्तः प्रतिसार्थादिकं 'समेत्य' प्राप्य रजन्यामपि वस्त्र-प्रतिग्रहादिकं गृह्णन्ति। तत्रापि कथम्? इत्याह-तावुभावपि सार्थौ 'प्रगे' प्रातरेवानुद्गते सूर्ये चलिष्यतः, 'एको वा' अन्यतरः सार्थप्रतिसार्थयोर्मध्ये चलिष्यतीति मत्वा रात्रावपि ग्रहणं कुर्वन्ति। अत एव चोत्सर्गपदेऽध्वा गन्तुमेव न कल्पते यत्रैते दोषा उत्पद्यन्ते ॥

तथा चाह-

[भा.२९७२] उद्दद्दरे सुभिक्खे, अद्धाणपवज्जणं तु दप्पेण।
लहुगा पुन सुद्धपदे, जं वा आवज्जई जत्थ ॥

वृ-इयं रात्रिभक्तसूत्रे व्याख्यातार्था ॥ द्वितीयपदमाह-

[भा.२९७३] नाणट्ठ दंसणट्ठा, चरित्तट्ठा एवमाइ गंतव्वं।
उवगरण पुव्वपडिलेहिएण सत्थेण गंतव्वं ॥

वृ-इयमपि गतार्था ॥

[भा.२९७४] सत्थे विविच्चमाणे, असंजए संजए तदुभए य।
मग्गंते जयण दानं, छिन्नं पि हु कप्पई घेत्तुं ॥

वृ- ज्ञानाद्यर्थमध्वानं प्रतिपन्नानामपान्तराले चतुर्विधाः स्तेना भवेयुः-एके असंयतप्रान्ताः १ अन्ये संयतप्रान्ताः २ अपरे तदुभयप्रान्ताः ३ अन्ये तदुभयभद्रकाः ४। तत्रासंयतप्रान्तैः स्तेनैः सार्धं 'विविच्यमाने' मुष्यमाणेऽत एव साधूनां पार्श्वाद् वस्त्राणि मार्गयति यतनया दानं कर्त्तव्यम्। प्रत्यर्प्यमाणं च च्छिन्नमपि तदेव वस्त्रं ग्रहीतुं कल्पते नान्यदिति सङ्ग्रहगाथासमासार्थः ॥

अथैनामेव विवरीषुराह-

[भा.२९७५] संजयभद्दा गिहिभद्दगा य पंतोभए उभयभद्दा।
तेना होंति चउद्धा, विगिंचणा दोसु तू जइणं ॥

वृ- एके स्तेनाः संयतभद्रकाः गृहस्थप्रान्ताः, अपरे गृहस्थभद्रकाः परं संयतप्रान्ताः, अन्ये उभयेषामपि प्रान्ताः, अपरे उभयेषामपि भद्रकाः, एवं स्तेनाश्चतुर्विधा भवन्ति। अत्र च द्वितीयतृतीययोर्द्वयोर्भङ्गयोर्यतीनां 'विवेचनं' वस्त्रेभ्यः पृथक्करणं भवति ॥

अथ यत्र संयता न विविक्ताः गृहस्थास्तु विविक्ताः तत्र विधिमाह-

[भा.२९७६] जइ देंतऽजाइया जाइया व न वि देंति लहुग गुरुगा य।
सागार दान गमणं, गहणं तस्सेव नऽन्नस्स ॥

वृ- साधवो यद्ययाचिताः सन्तो वस्त्राणि गृहिणां प्रयच्छन्ति तदा चतुर्लघु। अथ याचिताः सन्तो न प्रयच्छन्ति तदा चत्वारो गुरवः। अतः 'साकारं' प्रातिहारकं भणित्वा प्रयच्छन्ति, यथा-भवद्भिः प्रत्यर्पणीयमिदमस्माकं यद्यर्वाग्वर्त्तमाना गृहं वा गता अन्यद् वस्त्रं लभध्वे। 'गमनं नाम' येषां गृहस्थानां तद् वस्त्रं प्रदत्तं ते यद्यन्येन पथा गच्छन्ति ततः साधुभिरपि तेनैव पथा गन्तव्यम्; यद्यन्येन व्रजन्ति ततश्चतुर्लघु। यदा तेऽध्वनो निर्गता भवन्ति तदा छिन्नस्यापि तस्यैव वस्त्रस्य ग्रहणं कर्त्तव्यं नान्यस्य ॥ ततः पुनर्वस्त्रं कीदृशं दातव्यम् ? इत्याह-

[भा.२९७७] दंडपडिहारवज्जं, चोल-पडल-पत्तबंधवज्जं च।
परिजुण्णाणं दानं, उड्डाह-पओसपरिहरणा ॥

वृ- महती जीर्णकम्बलिका दण्डपरिहार उच्यते, तद्वर्जम्, चोलपट्ट-पडलक-पात्रबन्धवर्जं च यानि शेषाणि परिजीर्ण वस्त्राणि तेषामुड्डाह-प्रद्वेषपरिहरणार्थं दानं कर्त्तव्यम्। उड्डाहो नाम-अहो! अमीषामनुकम्पा ये विविक्तानामप्यस्माकं चीवराणि न प्रयच्छन्ति, प्रद्वेषो नाम-अप्रीतिकम्; तद्वशाच्च प्रान्तापनादयो दोषास्तत्परिहरणार्थं दातव्यम् ॥

अथ "छिन्नं पि"त्ति योऽयम-पिसब्दस्तत्सूचितमिदमपरमाह-

[भा.२९७८] धोयस्स व रत्तस्स व, अन्नस्स वऽगिण्हणम्मि चउलहुगा।
तं चेव घत्तुं धोउं, परिभुंजे जुण्णमुज्झेज्जा ॥

वृ- यदि तैर्गृहस्थैस्तद् वस्त्रं धौतं वा रक्तं वा तथापि तस्यैव ग्रहणं कर्त्तव्यम्। अथासाधुप्रायोग्यं

कृतमिति मत्वा न गृह्णन्ति अन्यस्य वा ग्रहणं कुर्वन्ति तदा चतुर्लघवः । अतस्तदेव वस्त्रं गृहीत्वा क्षारादिना धौत्वा च साधुप्रायोग्यं कृत्वा परिभुञ्जते । अथातीव जीर्णं ततः 'उज्झेयुः' परिष्ठापयेयुरित्यर्थः ॥ गतः प्रथमो भङ्गः । अथ 'गृहस्थभद्रकाः संयतप्रान्ताः' इति द्वितीयो भङ्गो भाव्यते तत्र भूयश्चतुर्भङ्गी-संयत्यो विविक्ता न संयताः १ संयता विविक्ता न संयत्यः २ संयत्योऽपि विविक्ताः संयता अपि विविक्ताः ३ न संयत्यो नापि संयता विविक्ताः ४। अत्र विधिमभिधित्सुराह-

[भा.२९७९] सट्ठाणे अनुकंपा, संजय पडिहारिए निसिट्ठे य ।
असईअ तदुभए वा, जयणा पडिसत्थमाईसु ॥

वृ- यत्र संयता गृहिणश्च विविक्ता न संयत्यः तत्र संयतीनां स्वस्थानं साधवः तत्रानुकम्पा कर्त्तव्या, साधूनांवस्त्रं दातव्यमित्यर्थः, साधुभिरपि तत् प्रातिहारिकं ग्राह्यम् । यत्र संयत्यो गृहस्थाश्च मुषिता न संयताः तत्र साधूनां संत्यः स्वस्थानं तासां वस्त्रदानेनानुकम्पा कर्त्तव्या, तच्च 'निसृष्टं' निर्देजं दातव्यं न प्रातिहारिकम् । "असईय"त्ति अथात्मनोऽप्यधिकमुपकरणं नास्ति ततः प्रातिहारिकमपि तासां दातव्यम् । तथा तदुभयं-साधुसाध्वीवर्गं तस्य विविक्तस्य वस्त्राभावे प्रतिसार्थादिषु 'यतना' वस्त्रान्वेषणविषया कर्त्तव्येति सङ्ग्रहगाथासमासार्थ ॥ अथैनामेव विवृणोति-

[भा.२९८०] न विवित्ता जत्थ मुनी, समणी य गिही य जत्थ उद्दूढा ।
सट्ठाणऽनुकंप तहिं, समणुन्नियरासु वि तहेव ॥

वृ- यत्र मुनयो न विविक्ताः श्रमण्यश्च गृहिणश्च यत्र "उद्दूढ"त्ति मुषिताः तत्र 'स्वस्थाने' संयतीवर्गेऽनुकम्पा कर्त्तव्या । ताश्च संयत्यो द्विविधाः-संविग्ना असंविग्नाश्च । यदि सन्ति ततः सर्वासामपि दातव्यानि । अथ न सन्ति तावन्ति वस्त्राणि ततः संविग्नसंयतीनां देयानि । ता अपि द्विविधाः-समनोज्ञाः-साम्भोगिन्य इतराश्च-असाम्भोगिन्यः । यदि पूर्यन्ते ततो द्वयोरपि वर्गयोस्तथैव दातव्यानि । अथ न पूर्यन्ते ततः स्वस्थाने दातव्यानि, समनोज्ञानामित्यर्थः । अपिशब्दाद् या धृतिदुर्बलास्ताः संविग्ना असंविग्ना वा स्थविरास्तरुण्यो वा भवन्तु नियमात् तासां दातव्यम् ॥

यत्र साधवो विविक्तास्तत्रेयं यतना-

[भा.२९८१] लिंगट्ठ भिक्ख सीए, गिण्हंती पाडिहारियमिमेसु ।
अमणुन्नियरगिहीसुं, जं लद्धं तन्निभं दिंति ॥

वृ- लिङ्गार्थं तावदवश्यं रजोहरण-मुखवस्त्रिके ग्रहीतव्ये, भिक्षार्थं तु पात्रबन्ध-पटलकादि, शीतत्राणार्थं तु प्रावरणादि, एतत् सर्वमपि प्रातिहारिकमेतेषु गृह्णन्ति । तद्यथा-अमनोज्ञाः-असाम्भोगिकाः इतरे-पार्श्वस्थादयः गृहिणः-प्रतीताः, एतेषु यदि प्राप्यते ततः सुन्दरमेव, अथैतेषु न प्राप्यते ततः संयतीनामपि हस्तात् प्रातिहारिकं ग्राह्यम् । ततो अध्वोत्तीर्णै यत् चोलपट्टादिकं यदा लब्धं भवतितदा 'तन्निभं' तत्सदृशं प्रातिहारिकम् असाम्भोगिकादीनां 'ददति' प्रत्यर्पयन्ति। इह द्वितीयभङ्गे व्याख्यायमाने प्रथम-तृतीय-चतुर्थभङ्गा अपि लेशतः स्पृष्टा अवगन्तव्याः ॥

गतो द्वितीयभङ्गः । अथ तृतीयभङ्गं व्याख्यानयति-

[भा.२९८२] उद्दूढे व तदुभए, सपक्खपरपक्ख तदुभयं होइ ।
अहवा वि समण समन, समणुन्नियरेसु एमेव ॥

वृ- तदुभये वा 'अद्दुढे' मुषिते सत्येवमेव यतना ज्ञातव्या । अथ तदुभयमिति किमुच्यते ?

इत्याह- स्वपक्षः परपक्षश्चेति तदुभयं भवति, स्वपक्षः-संयताः परपक्षः-गृहस्थाः अथवा तदुभयं नाम श्रमणाः श्रमण्यश्च । यद्वा तदुभयं समनोज्ञाः 'इतरे' अमनोज्ञाश्च । अपिशब्दाद् व्यवहित-सम्बन्धादत्र योजिताद् यदि वा संविग्ना असंविग्नाश्चेति तदुभयम् ।। तत्र मुषिते सति विधिमाह-

[भा.२९८३] अमणुन्नेतर गिहि-संजईसु असइ पडिसत्थ-पल्लीसु ।
तिण्हऽट्ठाए गहणं, परिहारिय एतरे चेव ।।

वृ- अमनोज्ञाः-असाम्भोगिकाः इतरे-पार्श्वस्थादयः, गृहिणः संयत्यश्च प्रतीताः, एतेषु विविक्ततया वस्त्राभावे प्रतिसार्थे वा पल्ल्यां वा पञ्चकपरिहाण्या वस्त्रं मार्गयितव्यम् । संयतीनां तु नास्ति पञ्चकपरिहाणि, यदैव लभ्यते तदैव गृहीत्वा गात्राच्छादनं ताभि कर्त्तव्यम् । तच्च वस्त्रं 'त्रयाणां' लिङ्ग-भिक्षा-शीतत्राणानामर्थाय प्रातिहारिकं वा 'इतरद् वा' निसृष्टं ग्राह्यम् ।।

[भा.२९८४] एवं तु दिया गहणं, अहवा रत्तिं मिलेज्ज पडिसत्थो ।
गीएसु रत्ति गहणं, मीसेसु इमा तहिं जयणा ।।

वृ एवं दिवा ग्रहणमभिहितम् । अथ रात्रौ प्रतिसार्थो मिलेत् तत्र च यदि सर्वेऽपि गीतार्थास्ततो रात्रावेव गृह्णन्ति । अथागीतार्थमिश्रास्ततस्तेषु मिश्रेष्वियं यतना ।। तामेवाह-

[भा.२९८५] वत्थेण व पाएण व, निमंतएऽनुग्गए व अत्थमिए ।
आइच्चो उदिउ त्ति य, गहणं गीयत्थसंविग्गे ।।

वृ- प्रतिसार्थे कश्चिद् दानश्राद्धादिरनुद्गते वाऽस्तमिते वा सूर्ये वस्त्रेण वा पात्रेण वा निमन्त्रयेत्, तत्र च यदि सार्थो रात्रावेव चलितुकामस्तदा गीतार्था गुरून् भणन्ति-यूयं व्रजत, वयमुदिते आदित्ये गृहीत्वा समागमिष्यामः । ततो रजन्यामेव गृहीत्वा सार्थस्य पृष्ठतो नातिदूरासन्ने समागच्छन्ति। स्थिते च सार्थे गुरूणामालोचयन्ति-उदिते सूर्ये वस्त्रग्रहणं कृत्वा समायाताः । एवं गीतार्था संविग्ना गृह्णन्ति ।।

अथ प्रतिसार्थे पल्ल्यां वा न लभ्येत न वा प्रतिसार्थादिकं दृश्येत ततः किम् ? इत्याह–

[भा.२९८६] खंडे पत्ते तह दब्भचीवरे तह य हत्थपिहणं तु ।
अद्धाणविवित्ताणं, आगाढं सेसऽनागाढं ।।

वृ- चर्मखण्डानि संयतीनां विविक्तानां परिधानाय दातव्यानि । तदभावे शाकादिपत्राणि । तदप्राप्तौ दर्भैश्चीवरं घनं ग्रथित्वसमर्पयन्ति । सर्वथा परिधानाभावे हस्तेनापि गुह्यदेशस्य पिधानं ताभिः कर्त्तव्यम् । एवमध्वनि विविक्तानामागाढं कारणं मन्तव्यम् । शेषं तु सर्वमप्युप-करणाभावेऽनागाढम् ।।

[भा.२९८७] असईय निग्गया खुड्डगाइ पेसंति चउसु वग्गेसु ।
अप्पाहिंति वऽगारं, साहुं व वियारमाइगयं ।।

वृ- प्रतिसार्थपल्ल्यादौ वस्त्राणाम् 'असति' अप्राप्तौ अध्वनो निर्गता उद्यानं प्राप्ताः सन्तः 'क्षुल्लकादि' क्षुल्लकं क्षुल्लिकां वा विवक्षितं ग्रामं नगरं वा चत्वारः-संयत-संयती-श्रावक-श्राविकालक्षणा ये वर्गास्तेषु-तेषां समीपे प्रेषयन्ति; यद्वा साम्भोगिकाः संयता एको वर्ग, अन्यसाम्भोगिका इति द्वितीयः, साम्भोगिकाः संयत्य इति तृतीयः, अन्यसाम्भोगिकाइति चतुर्थ, एतेषां वा समीपे प्रेषयन्ति । अथ नास्ति क्षुल्लकः क्षुल्लिका वा ततो यस्ततो ग्रामाद् नगराद्वा 'अगारः' गृहस्थः

समायातः यो वा सा[illegible] ततः 'अभ्य[illegible]' प्रविशति, [illegible] साधु-साध्वीप्रभृतीनां साम्भोगिकसंयतादीनां वा भवता कथयितव्यम्-साधवः साध्व्यश्च बहिरग्रोद्याने स्थिताः सन्ति, ते चाध्वनि स्तेनैर्विविक्ताः, अतस्तेषां योग्यानि चीवराणि प्रेषणीयानि। अत्र चायं विधि-संयतैः संयतानां वस्त्राणि दातव्यानि, संयतीनां तु संयतीभि। अथ तत्र संयताः संयत्यो वा न सन्ति तदा श्रावकाः श्राविका वा प्रयच्छन्ति ॥

यत्र तु संयत्यः संयतानां संयता वा संयतीनां प्रयच्छन्ति तत्र विधिमाह-

[भा.२९८८] खुड्डी थेराणऽप्पे, आलोगितरी ठवित्तु पविसंति।
ते वि य घेत्तुमइगया, समणुन्नजढे जयंतेवं ॥

वृ- क्षुल्लिका उद्यानं गत्वा स्थविरसाधूनां वस्त्राण्यर्पयन्ति; अथ न सन्ति क्षुल्लिकाः ततः 'इतराः' मध्यमास्तरुण्यो वा गत्वा स्थविराणामालोके स्थापयित्वा भूयोऽपि ग्रामं प्रविशन्ति। यत्र संयतैः संयतीनां दातव्यं तत्र क्षुल्लकाः स्थविरसाध्वीनामर्पयन्ति; क्षुल्लकाभावे शेषा अपि साधवः स्थविराया आलोके स्थापयन्ति। 'तेऽपि च' संयताः संयतीदत्तानि वस्त्राणि गृहीत्वा प्रावृत्य नगरम् 'अतिगताः' प्रविष्टाः सन्त आत्मयोग्यमुपकरणमुत्पाद्य संयतीसत्कवस्त्राणि प्रत्यर्पयन्त। एवं समनोज्ञेषु विधिरुक्तः। ''समणुन्नजढे जयंतेवं''ति यत्र समनोज्ञाः-साम्भोगिका न भवन्ति तत्र 'एवं' वक्ष्यमाणनीत्या यतन्ते ॥

[भा.२९८९] अद्धाणनिग्गयाई, संविग्गा सन्नि दुविह अस्सण्णी।
संजई एसणमाई, असंविग्गा दोन्नि वी वग्गा ॥

वृ- अध्वनो निर्गता यत्र ग्रामादौ प्राप्तास्तत्रेमे भवेयुः-'संविग्नाः' उद्यतविहारिणः, ते चेहान्यसाम्भोगिका गृह्यन्ते। 'संज्ञिनः' श्रावकास्ते द्विविधाः-संविग्नभाविता असंविग्नभाविताश्च। असंज्ञिनोऽपि द्विविधाः-आभिग्रहिका-ऽनाभिग्रहिकमिथ्यादृष्टिभेदात्। ''संजइ''त्ति अमनोज्ञसंयत्यः। असंविग्ना अपि द्वौ वर्गौ, तद्यथा-साधुवर्ग साध्वीवर्गश्च। अत्र विधिरुच्यते- ''एसणमाइ''त्ति संज्ञिप्रभृतिषु शुद्धं वस्त्रमप्राप्नुवन्तः पञ्चकपरिहाणिक्रमेणैषणादोषेषु यतन्त इति ॥ अथैतदेव सविस्तरं व्याख्यानयति-

[भा.२९९०] संविग्गेतरभाविय, सन्नी मिच्छा उ गाढऽनागाढे।
असंविग्ग मिगाहरणं, अभिग्गहमिच्छेसु विस हीला ॥

वृ- संज्ञिनो द्विविधाः-संविग्नभाविता इतरभाविताश्च। मिथ्यादृष्टयोऽपि द्विविधाः-आगाढा अनागाढाश्च। तत्र प्रथमं संविग्नभावितेषु संज्ञिषु, तदप्राप्तावनागाढमिथ्यादृष्टिषु शुद्धं वस्त्रमन्वेषणीयम्। असंविग्नभावितेष्वागाढमिथ्यादृष्टिषु च न गृह्णन्ति, कुतः ? इत्याह- असंविग्नभाविताः 'मृगाहरणं' लुब्धकदृष्टान्तं चेतसि प्रणिधाय साधुनामकल्प्यं प्रयच्छन्ति। ये त्वाभिग्रहिकमिथ्यादृष्टयस्ते साधुदर्शनप्रद्वेषतो विषं प्रयुञ्जीरन् हीलां वा कुर्यु- अहो! अदत्तदाना अमी वराका इत्थं क्लिश्यन्तीत्यादि ॥

अथानागाढमिथ्यादृष्टिषु शुद्धं न प्राप्यते ततः किं विधेयम्? इत्याह-

[भा.२९९१] असंविग्गभाविएसुं, आगाढेसुं जयंति पनगादी।
उवएसो संघाडग, पुव्वग्गहियं व अन्नेसु ॥

वृ- असंविग्नभावितेषु यद् उद्गमादिदोषविशुद्धं वस्त्रं तद् ग्रहीतव्यम् । तदभावे आगाढमिथ्याद्दष्टिष्वपि यथात्म-प्रवचनोपघातो न स्यात् । अथ तेष्वपि शुद्धं न प्राप्यते ततः संविग्नभावितादिष्वेव पञ्चकादिपरिहाण्या तावद् यतन्ते यावद् भिन्नमासं प्राप्ता भवन्ति । ततो अन्यसाम्भोगिकैर्येषु कुलेषूपदेशो दत्तः तेषु याचितव्यम् । तथाप्यप्राप्तौ तेषां सङ्घाटकेन । एवमप्यलाभे तेषामेव यत् पूर्वगृहीतं वस्त्रादि तद् ग्रहीतव्यम् ॥ अमुमेवार्थं सविशेषज्ञापनाय पुनरप्याह-

[भा.२९९२] उवएसो संघाडग, तेसिं अट्ठाए पुव्वगहियं तु ।
अभिनव पुराण सुद्धं, उत्तर मूले सयं वा वि ॥

वृ- अन्यसाम्भोगिकोपदेशेन प्रथमतः प्रयटन्ति । ततस्तदीयसङ्घाटकेन । तथाप्यप्राप्तौ तेषामर्थायान्यसाम्भोगिकाः पर्यटन्ति । तथापि यदि न लभ्यते ततस्तेषामेव यत् पूर्वगृहीतं वस्त्रं तद् ग्रहीतव्यम् । तच्चाभिनवं वा स्यात् पुराणं वा, पूर्वमभिनवं पश्चात् पुराणमपि गृह्यते । तदपि यद्युत्तरगुण-मूलगुणशुद्धं तत उपादेयं नान्यथा । अथ सर्वथाऽपि न प्राप्यते ततो यः कृतकरणो भवति तेन स्वयमेव व्यूत्यम् । एतच्च यथावसरमुत्तरत्र भावयिष्यते ॥ तदेमन्यसाम्भोगिकानामपि पूर्वगृहीतं यदा न प्राप्यते तदा मासलघुकादारभ्य तावद् यतन्ते यावत् चतुर्लघुकं प्राप्ताः । ततः किं कर्त्तव्यम् ? इत्याह-

[भा.२९९३] उवएसो संघाडग, पुव्वगहियं व निइयमाईणं ।
अभिनव पुराण सुद्धं, पुव्वमभुत्तं ततो भुत्तं ॥

वृ-चतुर्लघुप्राप्ताः सन्तो नित्यवासि-पार्श्वस्थादीनामुपदेशेन वस्त्रमुत्पादयन्ति । तदभावे तेषामेव सङ्घाटकेन । तथाऽप्यलाभे यत् तेषां पूर्वगृहीतं मूलोत्तरगुणशुद्धमभिनवमपरिभुक्तं तत् प्रथमतो ग्रहीतव्यम्, ततः परिभुक्तमपि । तदप्राप्तौ पुराणमपि मूलोत्तरगुणशुद्धमपरिभुक्तम्, ततः परिभुक्तमपि ग्राह्यम् । इह निशीथचूर्ण्यभिप्रायेणास्यैव कल्पस्य विशेषचूर्ण्यभिप्रायेण चान्यसाम्भोगिकान् यावन्नास्ति पञ्चकपरिहाणि किन्तु तत ऊर्ध्वं पञ्चकपरिहाण्या यतित्वा यदा मासलघुप्राप्ताः तदा पार्श्वस्थादीनामुपदेशादिना गृह्णन्तीति द्वयोरपि चूर्ण्योरभिप्रायः; परमेतच्चूर्णिकृता भिन्नमासप्राप्ता अन्यसाम्भोगिकानां चतुर्लघुप्राप्ताश्च पार्श्वस्थादीनामुपदेशादिना वस्त्रग्रहणे यतन्त इति प्रतिपादितम्; अतस्तदनुरोधेनास्माभिरपि तथैव व्याख्यातमित्यवगन्तव्यम् ॥

अथोक्तमप्यर्थं विशेषज्ञापनार्थं भूयोऽप्याह-

[भा.२९९४] उत्तर मूले सुद्धे, नवे पुराणे चउक्क भयणेवं ।
परिकम्मण परिभोगे, न होंति दोसा अभिनवम्मि ॥

वृ-इह मूलोत्तरगुणशुद्धयोश्चतुर्भङ्गी, तद्यथा-मूलगुणशुद्धमप्युत्तरगुणशुद्धमपि १ मूलगुणशुद्धं नोत्तरगुणशुद्धम् २ न मूलगुणशुद्धमुत्तरगुणशुद्धम् ३ न मूलगुणशुद्धं नोत्तरगुणशुद्धम् ४ । एतेषु चतुर्षु भङ्गेषु प्रत्येकं नव-पुराणपदविषयं यद् भङ्गचतुष्कं तस्य भजना-सेवा यथाक्रममेवं कर्त्तव्या। तथाहि-यत् तावद् मूलोत्तरगुणविशुद्धं तत् प्रथमतो नवमपरिभुक्तं ग्रहीतव्यम्, तदभावे नवं परिभुक्तम् । तदप्राप्तौ पुराणमपरिभुक्तम्, तदलाभए पुराणं परिभुक्तम् । एवं द्वितीयतृतीय-चतुर्थेष्वपि भङ्गेषु चत्वारश्चत्वारो विकल्पा भवन्ति, यथाक्रमं चैते आसेवितव्याः । कुतः ? इत्याह-परिकर्मणादोषाः-अविधिसीवनादयः परिभोगदोषाश्च-मलिनीभूत-म्रक्षित सुगन्धिगन्धभावित्वा-

दयोऽभिनवेऽपरिभुक्ते च वस्त्रे न भवन्ति । अथ पार्श्वस्थादिष्वपि न प्राप्यते ततोऽमनोज्ञ-संयतीनामप्युपदेशेन गृह्णाति, तेषां वा अर्थाय ताः पर्यटन्ति, पूर्वगृहीतं वा तासां ग्रहीतव्यम् । तदभावेऽसंविग्नसंयतीनामप्युपदेशादिना गृह्णन्ति ॥

अथैवमपि न प्राप्यते ततः किं कर्त्तव्यम् ? इत्याह-

**[भा.२९९५]** असईय लिंगकरणं, पन्नवणट्ठा सयं व गहणट्ठा ।
आगाढे कारणम्मी, जहेव हंसाइणो गहणं ॥

**वृ-** एवमपि 'असति' अलभ्यमाने शाक्यादिवेषेण तदीयोपासकानां यतिभ्यो वस्त्रदापनाय प्रज्ञापनार्थं स्वयं वा ग्रहणं-वस्त्रस्योत्पादनं तदर्थं परलिङ्गं कर्त्तव्यम् । किं बहुना ? ईदृशे आगाढे कारणे यथैव हंसतैलादरनुज्ञापितस्यापि ग्रहणं दृष्टं तथैव वस्त्रस्यापि द्रष्टव्यम् । तथाप्यलाभे सूत्रं मार्गयित्वाऽन्यैर्वाययति । तदभावे स्वयमेवाल्पसागारिके वयति ॥

अथ सूत्रं न लभ्यते ततः को विधिः ? इत्याह-

**[भा.२९९६]** सेडय रूए पिंजिय, पेलु ग्गहणे य लहुग दप्पेणं ।
तव-कालेहि विसिट्ठा, कारणे अकमेण ते चेव ॥

**वृ-** 'सेडुगो नाम' कर्पासः, स एव लोढितः सन् बीजरहितो रूतम्, तदेव रूतं पिञ्जनिकया ताडितं पिञ्जितम्, तदेव पूणिकया वलितं पेलुरिति भण्यते । एतेषां यदि दर्पेण ग्रहणं करोति तदा चत्वारो लघुकास्तपः-कालाभ्यां विशिष्टाः । तत्र सेडुके उभयगुरुकाः, रूते तपोगुरुकाः, पिञ्जिते कालगुरुकाः, पेलुके द्वाभ्यां लघुकाः । कारणे पुनः प्रथमं पेलुकं पश्चात् पिञ्जितं ततो रूतं ततः सेडुकमपि गृह्णाति । अथाक्रमेण गृह्णाति ततस्त एव चत्वारो लघुकाः । सेडुकं च त्रिवर्षातीतं विध्वस्तयोनिकमेव ग्रहीतुं कल्पते न सचित्तम् ॥ ततश्च सेडुकादीनि गृहीत्वा किं करोति ? इत्याह-

**[भा.२९९७]** कडजोगि एक्कओ वा, वसईए नालबद्धसहिओ वा ।
निप्फाए उवगरणं, उभओपक्खस्स पाओग्गं ॥

**वृ-** कृतयोगी नाम-यो गृहवासे कर्त्तनं वयनं वा कृतवान् । स गच्छस्य वस्त्राभावे एकको वा नालबद्धसंयतीसहितो वा विजने भूभागे कर्त्तनं वयनं च कृत्वा 'उभयपक्षस्य' संयत-संयतीलक्षणस्य प्रायोग्यमुपकरणं निष्पादयति । ततः संयताः संयत्यश्च यथायोगमुपकरणं परिभुञ्जते ॥

ततः किम् ? इत्याह-

**[भा.२९९८]** अगीयत्थेसु विगिंचे, जहलाभं सुलभउवहिखेत्तेसु ।
पच्छित्तं च वहंति, अलंभे तं चेव धारेंति ॥

**वृ-** यद्यगीतार्थमिश्रास्ततः सुलभोपधिक्षेत्रेषु गताः सन्तः 'यथालाभं' यद् यद् वस्त्रं लभन्ते तत्तत्सदृशमपरं व्यूतवस्त्रं 'विविचन्ति' परिष्ठापयन्तीत्यर्थः, अगीतार्थप्रत्ययनिमित्तं च यथालघु प्रायश्चित्तं वहन्ति । अथापरं न लभ्यते ततः 'तदेव' स्वयंव्यूतं वस्त्रं वस्त्रं धारयन्ति । अथ सर्वेऽपि गीतार्थास्ततोऽपरस्य लाभे प्राक्तनं परित्यजन्ति वा न वा, न कोऽपि नियमः ॥

अथ "अद्धाणनिग्गयाई" इत्यत्र योऽयमादिशब्दस्तस्य फलमुपदर्शयन्नाह-

**[भा.२९९९]** एमेव य वसिमम्मि वि, झामिय ओम हिय वूढ परिजुन्ने ।
पुव्वुट्ठिए व सत्थे, समइच्छंता व ते वा वि ॥

वृ- न केवलमध्वनि विविक्तानामेष विधि, किन्तु ग्रामादौ वसिमेऽपि वसतां यत्रोपधिरग्निकायेन 'ध्यामितः' दग्धः, अवमौदर्ये वा विक्रीतः, चौरैर्वा हृतः, वर्षासु वा पानीयपूरेण व्यूढः, 'परिजीर्णो वा' पुराणतया दुर्बलीभूतो विवक्षितं कार्यं कर्त्तुमसमर्थ, तत्रापि 'एवमेव' अनन्तरोक्तो विधिर्मन्तव्यः। अत्र चापरो विशेष उपदर्श्यते-यत्र ग्रामे साधवः स्थिता सन्ति तत्र सार्थ कश्चित् प्राप्तः, स चादित्योदयात् पूर्वमेवोत्थितः-उच्चलितुमारब्धो वर्त्तते, यत्र च गतस्य तस्य रविरुदेष्यति तत्र गच्छतामपान्तराले स्तेनभयम्, "समइच्छंता व ते वा वि" त्ति 'ते वा' साधवो दग्ध-हृताद्युपधयः समतिक्रामन्तः-गच्छन्तः तं सार्थं रात्रौ प्राप्तः, अतो रात्रावेव तत्र वस्त्रादिकं यतनया गृह्णन्ति ॥

अथेदमेवोत्तरार्द्ध व्याचष्टे-

[भा.३०००] सो वि य नत्तं पत्तो, नत्तं चिय चलिउमिच्छइ भयं च।

ते वा नत्तं पत्ता, गिण्हिज्ज पए चलिउकामा ॥

वृ- 'सोऽपि च' सार्थ 'नक्तं' रात्रौ तत्र ग्रामे प्राप्तः, नक्तमेव च ततश्चलितुमिच्छति, अपान्तराले च स्तेनादिभयम्; 'ते वा' साधवो दग्धाद्युपधयः तं सार्थं 'नक्तं' रात्रौ प्राप्तः, 'प्रगे' प्रभातेऽनुद्गत एव सूर्येऽग्रतश्चलितुकामाः, अतो रात्रावेव यथोक्तनीत्या वस्त्रादि गृह्णीयुः ॥

*मू. (४५) नऽन्नत्थ एगाए हरियाहडियाए। सा वि य परिभुत्ता वा धोया वा रत्ता वा घट्ठा वा मट्ठा वा संपधूमिया वा ॥*

[भा.३००१] सुत्तेणेवय जोगो, हरियाहडि कप्पए निसिं घेत्तुं।

हरिऊण य आहडिया, छूढा हरिएसु वाऽऽहट्टु ॥

वृ- 'सूत्रेणैव' सूत्रस्य 'योगः' सम्बन्धोऽत्रास्ति। अनन्तरसूत्रे रात्रौ वस्त्रादिकं ग्रहीतुं न कल्पते इत्युक्तम्। अत्र तु या हृताहृतिका 'निशि' रात्रौ ग्रहीतुं कल्पते इति प्रतिपाद्यते। अनेन सम्बन्धेनाया-तस्यास्य व्याख्या-"न कल्पते रात्रौ वस्त्रं ग्रहीतुम्" इति प्रतिषेधः अन्यत्रैकस्या हृताहृतिकाया हरिताहृतिकाया वा। तत्र पूर्वं हृतं पश्चादाहृतम्-आनीतं वस्त्रं हृताहृतम्, तदेव हृताहृतिका, स्वार्थे कप्रत्ययः, "अतिवर्त्तन्ते स्वार्थिकप्रत्ययाः प्रकृति-लिङ्ग-वचनानि" इति वचनाद् अत्र रुढितः स्त्रीलिङ्गनिर्देशः। एवं हरितेषु-वनस्पतिष्वाहृतं हरिताहृतं वस्त्रम्, तदेव हरिताहृतिका। 'साऽपि च' हृताहृतिका 'परिभुक्ता' परिधानादौ व्यापारिता, 'धौता' अप्कायेन प्रक्षालिता, 'रक्ता' विचित्रवर्णकैरुपरञ्जिता, 'घृष्टा' घट्टकादिना घट्टिता, 'मृष्टा' सुकुमारीकृता, 'सम्प्रधूमिता' धूपद्रव्येण समन्ततः प्रकर्षेण धूपिता। वाशब्दाः सर्वेऽपि विकल्पार्था। एवंविधाऽपि सा स्वीकर्त्तव्या, न पुनरसाधुप्रायोग्या कृतेति कृत्वा परिहर्त्तव्येति सूत्रार्थः ॥ अथ भाष्यम्-"हरिऊण य" इत्यादि पश्चार्द्धम्। स्तेनैः पुर्वं हृत्वा पश्चाद् यद् वस्त्रमाहृतम्-आनीतं तदेव हृताहृतिकेत्युच्यते। यद्वा हृत्वा हरितेषु प्रक्षिप्ता या सा हरिताहृतिका ॥ सा पुनः कथं भवति ? इत्याह-

[भा.३००२] अद्धाणमनद्धाने, व विवित्ताणं तु होज्ज आहडिया।

अविहे वसंति खेमे, विहं न गच्छे सइ गुणेसु ॥

वृ- अध्वनि अनध्वनि वा 'विविक्तानां' मुषितानां हृताहृतिका सम्भवति। तत्र 'अविहे' अनध्वनि मासकल्पेन विहरन्तः 'क्षेमे' निरुपद्रवे ग्रामादौ वसन्ति। अतः 'सत्सु' विद्यमानेषु ज्ञानादिगुणेषु 'विहम्' अध्वानं 'न गच्छेत्' नानुप्रविशेत् ॥ तथा चाह-

[भा.३००३] उद्दद्दरे सुभिक्खे, अद्धाणपवज्जणं तु दप्पेणं ।
लहुगा पुन सुद्धपए, जं वा आवज्जई जत्थ ॥

[भा.३००४] नाणट्ठ दंसणट्ठा, चरित्तट्ठा एवमाइ गंतव्वं ।
उवगरण पुव्वपडिलेहिएण सत्थेण गंतव्वं ॥

वृ-गाथाद्वयमपि प्राग् व्याख्यातम् ॥ तत्राध्वनि प्रविशतां विधिमाह-

[भा.३००५] अद्धाण पविसमाणा, गुरुं पवादिंति ते गता पुरतो ।
अह तत्थ न वादेंती, चाउम्मासा भवे गुरुगा ॥

वृ-अध्वानं प्रविशन्तः प्रथममेव 'गुरुम्' आचार्यं प्रवादयन्ति, गुरोः प्रवादमुत्थापयन्तीत्यर्थः। यथा-'ते' अस्माकमाचार्या 'पुरतः' पूर्वमेवान्येन सार्थेन सह गताः अत एव वयं त्वरामहे, कथं नाम तेषां समीपं क्षिप्रमेव प्राप्नुयाम ? । अथ तत्राध्वनि प्रविशन्त एवं न प्रवादयन्ति ततश्चतुर्मासा गुरुकाः प्रायश्चित्तम् ॥

[भा.३००६] गुरसारक्खहेउं, तम्हा थेरो उ गणधरो होइ ।
विहरइ य गणाहिवई, अद्धाणे भिक्खुभावेणं ॥

वृ-तस्माद् गुरुणां संरक्षणहेतोर्य 'स्थविरः' वयोवृद्धः स गणधरो भवति, गणधराकारधारकः क्रियत इत्यर्थः । यस्तु गणाधिपति सः 'अध्वनि' मार्गे स्वयं 'भिक्षुभावेन' सामान्यसाधुवेषेण विहरति ॥ कुतः ? इति चेद् उच्यते-कदाचिदध्वनि साधवः स्तेनकैर्विविक्ताः क्रियेरन् ततस्ते स्तेनकाश्चिन्तयेयुः-

[भा.३००७] हयनायगा न काहिंति उत्तरं राउले गणे वा वि ।
अम्हं आहिपइस्स व, नायग-मित्ताइएहिं वा ॥

वृ-हतो नायकः-आचार्यो येषां ते हतनायकास्तथाभूताः सन्त एते व्रतिनो राजकुले वा गणे वा गत्वा न किमपि 'उत्तरम्' उपकरणापहाररावात्मकं करिष्यन्ति, अस्वामिकतया निराशीभूतत्वात्। तथाऽस्माकं योऽधिपति तस्य वा तदीया वा ये ज्ञातकाः-स्वजना यानि च तदीयानि मित्राणि तदादीनां-तत्प्रभृतीनामन्तिके गतास्तैः पृष्टाः सन्तो न किमप्युत्तरं प्रदास्यन्ति, आचार्यस्यैव तत्प्रदानप्रगल्भत्वादिति भावः । तस्मादाचार्यमेवापद्रावयाम इति विचिन्त्य तथैव कुर्युः । ततो यथोक्तनीत्या गुरवः प्रवादयितव्याः ॥ ते च स्तेनाश्चतुर्विधाः-

[भा.३००८] संजयपंता य तहा, गिहिभद्दा चेव साहुभद्दा य ।
तदुभयभद्दा पंता, संजयभद्देसु आहडिया ॥

वृ-एके संयतप्रान्ता गृहस्थभद्रकाः १ अन्ये साधूनां भद्रका गृहस्थप्रान्ताः २ अपरे तदुभयभद्रकाः ३ अपरे तदुभयप्रान्ताः ४ । अत्र ये संयतभद्रकास्तेषु हृताहृतिका भवेत्, हृत्वाऽपि ते भूयो वस्त्रमर्पयेयुरित्यर्थः ॥ इदमेव स्पष्टति-

[भा.३००९] सत्थे विविच्चमाणे, आहिपई भद्दओ व पंतो वा ।
भद्दो दट्ठूण नियारणं व गहियं व पेसेइ ॥

वृ-सार्थे स्तेनैः 'विविच्यमाने' मुष्यमाणे साधवोऽपि विविच्येरन् । तत्र च यः 'अधिपति' चौरसेनाधिपति स साधूनां भद्रको वा स्यात् प्रान्तो वा । यदि भद्रकस्तदा साधून् विविच्यमानान्

दृष्ट्वा निवारणं करोति, 'मैतेषां वस्त्राण्यपहरत' इति । अथ नासौ तत्र सन्निहितस्ततः स्तेनैर्गृहितं सदुपकरणं भूयोऽपि प्रेषयति ॥ अमुमेव गाथाऽवयवं व्याचष्टे-

[भा.३०१०] नीयं दट्ठण बहिं, छिन्नदसं सिव्वणीहि वा नाउं ।
पेसे उवालभित्ताण तक्करे भद्दओ अहिवो ॥

वृ- स चौरसेनाधिपति साधूनामुपधिं 'नीतम्' उपढौकितं दृष्ट्वा छिन्नदशाकत्वेन साधुसम्बन्धिनीभिः सीवनीभिः सीवितत्वेन वा 'साधूनां सत्कमेतद् वस्त्रम्' इति ज्ञात्वा तान् तस्करानुपालभते-आः पापाः ! विनष्टाः स्थ यूयं यदेवं महात्मनां साधूनां वस्त्राण्यपहृतानीत्यादि। एवमुपालभ्य भूयोऽपि तस्योपधेः साधूनामर्पणार्थं तानेव तस्करान् साधूनामन्तिके प्रेषयति ॥

[भा.३०११] वीसत्थमप्पिणंते, भएण छड्डित्तु केइ वच्चंति ।
बहिया पासवण उवस्सए व दिट्ठम्मि जा जयणा ॥

वृ- स्तेना द्विविधाः-आक्रान्तिका अनाक्रान्तिकाश्च । तत्र ये आक्रान्तिकास्ते कुतोऽपि न बिभ्यति, अत एव ते चौरसेनापतिना वस्त्रप्रत्यर्पणार्थं प्रेषिताः सन्तः 'विश्वस्ताः' निर्भया दिवसत एव आनीय वस्त्रं संयतानामर्पयन्ति । अनाक्रान्तिकास्तु भयेन 'मा केनाप्यारक्षकादिना ग्रहीष्यामहे' इति परिभाव्य रात्रावानीयोपाश्रयाद् बहि प्रश्रवणभूमावुपाश्रयमध्ये वा वस्त्रं छर्दयित्वा 'व्रजन्ति' पलायन्ते । तस्मिन् वस्त्रे दृष्टे सति या वक्ष्यमाणा यतना सा करणीया ॥ तामेवाह-

[भा.३०१२] गीयमगीया अविगीयपच्चयट्ठा करिंति वीसुं तु ।
जइ संजई वि तहियं, विगिंचिया तासि वि तहेव ॥

वृ- यदि सर्वेऽपि गीतार्थास्ततस्तदुपकरणं मौलोपकरणेन सह मीलयित्वा यथास्वरुचि तं परिभुञ्जते । अथ ते केचिद् गीतार्था केचिच्चागीतार्था ततो गीतार्था अविगीतप्रत्ययार्थं हृताहृतिकोपकरणं 'विष्वक्' पृथक् स्थापयन्ति । ते ह्यगीतार्था एवं चिन्तयेयुः-एष स्तेनप्रत्यर्पित उपधिस्तावदुपहतः, उपहतेन च सह मिश्रित इतरोऽप्युपहत एव, अतस्तेषां प्रत्ययार्थं हृताहृतिकोपकरणं पृथक् स्थापयन्ति । अथ संयत्योऽपि विविक्ताः ततस्तासामप्युकरणं तथैव पृथक् कुर्वन्ति ॥

[भा.३०१३] जो वि य तेसिं उवही, अहागडऽप्पो य सपरिकम्मो य ।
तं पि य करिंति वीसुं, मा अविगीयाइ भंडेज्जा ॥

वृ-योऽपि च 'तेषां' साधूनां यथाकृतोऽल्पपरिकर्मा सपरिकर्मा चोपधिस्तमपि विष्वक् परस्परं कुर्वन्ति । कुतः ? इत्याह-मा 'अविगीतादयः' अगीतार्थादयः परस्परं 'भण्डेयुः' कलहं कुर्युः, यथा-किमिति त्वया मदीयो यथाकृतोपधि सपरिकर्मणा सह मीलितः ? इत्यादि ॥ एवं तावद् भद्रकसेनापतौ विधिरभिहितः । अथ प्रान्तविषयं विधिमाह-

[भा.३०१४] पंतोवहिम्मि लुद्धो, आयरिए इच्छए विवादेउं ।
कयकरणे करणं वा, आगाढे किसो सयं भणइ ॥

वृ- प्रान्तश्चौरसेनापति 'उपधौ' उपकरणे लुब्धः सन् आचार्यान् व्यापादयितुमिच्छति । ततो यस्तत्र 'कृतकरण' धर्मकथालब्धिमान् धनुर्वेदादिकृताभ्यासो वा स तत्र करणंकरोति, धर्मकथादिना स्वभुजबलप्रकटनेन वा तमुपशमयतीत्यर्थः । अथवा ईदृशे आगाढे कार्ये यः 'कृशः' दुर्बलदेहः

सः 'स्वयम्' आत्मनैवात्मानमाचार्यं भणति ॥ एनामेव गाथां भावयति-

[भा.३०१५] को तुब्भं आयरितो, एवं परिपुच्छियम्मि अद्धाणे ।
जो कहयइ आयरियं, लग्गइ गुरुए चउम्मासे ॥

वृ-प्रान्तः सेनापतिं पृच्छति -को युष्माकं मध्ये आचार्यो ? । एवमध्वनि गच्छतां परिपृष्टे सति यः कश्चिदाचार्यं निर्द्धार्य कथयति सः 'लगति' प्राप्नोति चतुरो मासान् गुरुकानिति ॥

किं तर्हि वक्तव्यम् ? इत्याह-

[भा.३०१६] सत्थेणऽन्नेण गया, एहिंति व मग्गतो गुरु अम्हं ।
सत्थिल्लए व पुच्छह, हयं पलायं व साहिंति ॥

वृ- येऽस्माकं गुरवस्तेऽन्येन सार्थेन सह प्रागेव गताः, 'मार्गतो वा' पृष्ठतस्ते एष्यन्ति, यदि वा न प्रतीतिर्भवतां ततः सार्थिकान् पृच्छत, यद्वा 'हतोऽसावस्माकमाचार्य पलायितो वा, वयं साम्प्रतमनाथा वर्त्तामहे' एवं कथयन्ति ॥ अत्रैव प्रकारान्तरमाह-

[भा.३०१७] जो वा दुब्बलदेहो, जुंगियदेहो असब्भवक्को वा ।
गुरु किल एएसि अहं, न य मि पगब्भो गुरुगुणेहिं ॥

वृ- अथवा योदुर्बलदेहो यो वा 'जुङ्गितदेहः' विकलाङ्गः यो वा 'असभ्यवाक्यः' असमञ्जसप्रलापी स सेनापतिं प्रति वक्ति-अहं किलैतेषां सर्वेषामपि गुरु परं 'न च' नैवास्यहं 'प्रगल्भः' सम्पूर्णः 'गुरुगुणैः' शरीरसम्पदादिभिः ॥

[भा.३०१८] वाहीण व अभिभूतो, खंज कुणी कानओ व हं जातो ।
मा मे बाहह सीसे, जं इच्छह तं कुणह मज्झं ॥

वृ- 'व्याधिना वा' रोगेणाहमतीवाभिभूतः तथा 'खञ्जः' पादविकलः 'कुणिः' पाणिविकलः 'काणः' चक्षुर्विकलः ईदृशो वाऽहं जातोऽस्मि, अतो मा मदीयान् शिष्यान् बाधध्वम्, यद् मारणादिकं कर्त्तुमिच्छथ तद् ममैव कुरुध्वम् ॥

[भा.३०१९] इहरा वि मरिउमिच्छं, संतिं सिस्साण देह मं हणह ।
मयमारगत्तणमिणं, जं कीरइ मुंचह सुते मे ॥

वृ-इतरथाऽपि तावदहं मर्त्तुमिच्छामि अतो मदीयशिष्याणां शान्तिं प्रयच्छत, मां पुनः यथास्वरुचि 'हत' विनाशयत; यतो यदिदं मम मारणं भवद्भिः क्रियते तद् मृतस्यैव मारकत्वं भवति, अतो मुञ्चत मदीयान् 'सुतान्' शिष्यान् ॥ अपि च-

[भा.३९२०] एयं पि ताव जाणह, रिसिवज्झा जह न सुंदरी होइ ।
इह य परत्थ य लोए, मुंचंतऽनुलोमिया एवं ॥

वृ- भो भद्राः ! एतदपि तावद् यूयं जानीथ, यथा-ऋषिहत्या विधीयमाना इह च परत्र च लोके सुन्दरा न भवति । एवम् 'अनुलोमिताः' प्रज्ञापिताः सन्तस्ते तस्कराः साधून् मुञ्चन्ति ॥ अथैवमपि न मुञ्चेरन् ततः किं कर्त्तव्यम् ? इत्याह-

[भा.३०२१] धम्मकहा चुण्णेहि व, मंत निमित्तेण वा वि विज्जाए ।
नित्थारेइ बलेण व, अप्पाणं चेव गच्छं च ॥

**वृ**-यो धर्मकथालब्धिमान् स धर्मकथया तं सेनापतिमुपशमयति, चर्णैर्वा मन्त्रेण वा निमित्तेन वा विद्यया वा तमावर्त्तयेत् । यो वा धनुर्वेदादौ कृतपरिश्रमः स भुजबलेन तं सेनापतिं निर्जित्यात्मानं गच्छं च निस्तारयति ॥ अथैषामेकमपि न विद्यते ततः-

[भा.३०२२] वीसज्जिया व तेणं, पंथं फिडिया व हिंडमाणा वा ।
गंतूण तेनपल्लिं, धम्मकहाईहिं पन्नवणा ॥

**वृ**- 'तेन' प्रान्तेन सेनापतिनोपधिमपहृत्य साधवः 'विसर्जिताः' मुक्ता इत्यर्थः, मुक्ताश्च यद्युपधिं न गवेषयन्ति ततश्चतुर्लघुकाः । ततः स्तेनपल्लीं गत्वा गवेषयितव्य उपधिः । गच्छतां चापान्तराले यदि कोऽपि प्रश्नयेत्-कुतो भवन्त इहागताः ? ततो वक्तव्यम्-'पथः' मार्गात् परिभ्रष्टाः 'हिण्डमाना वा' विहारक्रमेण विहरन्त एव वयमिह सम्प्राप्ताः । ततश्च स्तेनपल्लीं गत्वा धर्मकथादिभिः सेनापतेः प्रज्ञापना कर्त्तव्या ॥ अथेदमेव भावयति-

[भा.३०२३] भद्दमभद्दं अहिवं, नाउं भद्दे विसंति तं पल्लिं ।
फिडिया मु त्ति य पंथं, भणंति पुट्ठा कहिं पल्लिं ॥

**वृ**- स्तेनपल्लीं गच्छद्भिः प्रथमत एवैतद् ज्ञातव्यम्-किमत्र सेनापतिर्भद्रकोऽभद्रको वा ? । यदि भद्रकस्ततस्तां पल्लीं प्रविशन्ति । अथाभद्रकस्ततः 'मा प्रान्तो नः-ऽस्मदादीनां [illegible]' इति कृत्वा न तत्र गन्तव्यम् । अथ गच्छन्ति ततश्चत्वारो गुरवः । अथ कोऽप्युपशमनायोत्सहते ततस्तं गृहीत्वा गन्तव्यम् । गच्छन्तश्च 'कुतः किमर्थं भवन्त इहायाताः ? कुत्र वा व्रजिष्यथ ?' इति पृष्टा भणन्ति-पथः 'स्फिटिताः' परिभ्रष्टा वयमिह पल्लयामाहारान्वेषणं कुर्महे ॥

[भा.३०२४] मुसिय त्ति पुच्छमाणं, को पुच्छइ किं व अम्ह मुसियव्वं ।
अहिवं भणंति पुव्विं, अनिच्छे सन्नायगादीहिं ॥

**वृ**- 'किं मुषिता यूयम् ?' पृच्छन्तं ब्रुवते-को नामास्मान् पृच्छति ? किं वा निर्ग्रन्थानामस्माकं मुषितव्यम् ? इति । ततश्च स्तेनपल्लीं गत्वा यस्तत्र सेनाया अधिपस्तं 'पूर्वं' प्रथमतः 'भणन्ति' धर्मकथादिना प्रज्ञापयन्ति । प्रज्ञापितश्च यथावृत्तस्ततो वक्तव्यम-अस्माकमुपधिं प्रयच्छेति । यदि प्रयच्छति ततः सुन्दरम् । अथ नेच्छति प्रदातुं ततो ये तस्य संज्ञातकाः- स्वजनाः आदिशब्दाद् मित्रादयश्च ते तथैव धर्मकथादिना प्रज्ञापयितव्याः । ततस्तद्द्वारेण स सेनापतिरुपशमयितव्यः ॥

[भा.३०२५] उवसंतो सेनावइ, उवगरणं देइ वा दवावेइ ।
गीयत्थेहि य गहणं, वीसुं च से करणं ॥

**वृ**- उपशान्तः सन् सेनापति स्वयमेवोपकरणं ददाति, स्वमानुषैर्वा दापयति, ततो यदि ते सर्वेऽपि गीतार्थास्तत उपकरणं मिश्रयन्ति वा न वा । अथागीतार्थमिश्रास्ततो गीतार्थैस्तस्योपकरणस्य ग्रहणं कर्त्तव्यम् । यच्च संयत-संयतीनामुपकरणं तद् 'विष्वग् विष्वक्' पृथक् पृथग् विधेयम् ॥

अथ सेनापतिर्ब्रूयात्-

[भा.३०२६] सत्थो बहू विवित्तो, गिण्हह जं जत्थ पेच्छह अडंता ।
इहइं पडिपल्लीसु य, रुसेह बिइज्जओ हं भे ॥

**वृ**- सार्थोऽस्मन्मानुषैः 'बहुः' प्रभूतो विविक्तः अतो न ज्ञायते कस्य कुत्र वस्त्रादिकमस्ति ? इति, ततो गृह्णीत यूयं स्वकीयमुपकरणं यद् यत्र पर्यटन्तः पश्यथ । ततः साधुभिर्वक्तव्यम्-

यद्येवं ततः स्वमानुषमस्माभि सह विसर्जयत । ततस्तदीयमानुषेण सह गच्छन्ति । तच्च ब्रूते-'इह' अस्यामेव पल्ल्यां प्रतिपल्लीषु वा यद् यद् भवताभुपकरणं तत् तद् "रुसेह" त्ति देशीवचनत्वाद् गवेषयत, अहं भवतां द्वितीयोऽस्मीति । ततो यद् यत्र पश्यन्ति तत् तत्र सेनानुशिष्यादिभि प्रज्ञाप्य गृह्णन्ति ॥

[भा.३०२७] अम्हं ताव न जातो, जह एएसिं पि पावइ न हत्थं ।
तह कुणिमो मोसमिणं, छुभंति पावा अह इमेसु ॥

वृ- अस्माकं तावदयं 'मोषः' मुषितवस्त्रादिलक्षणो न जातः, अतो यथैतेषामपि हस्तं न प्राप्नोति तथा वयमेनं मोषं कुर्महे इति विचिन्त्य केचित् 'पापाः' स्तेनकाः 'अथ' इति चिन्तानन्तरमेतेषु प्रक्षिपन्ति ॥ तद्यथा-

[भा.३०२८] पुढवी आउक्काए, अगड-वणस्सइ-तसेसु साहरई ।
सुत्तत्थजाणएणं, अप्पाबहुयं तु नायव्वं ॥

वृ- पृथिवीकाये वा अप्काये वा अगडे वा-गर्त्तायामित्यर्थः वनस्पतिषु वा त्रसेषु वा 'संहरन्ति' निक्षिपन्तीति यावत्, गाथायामेकवचननिर्देशः प्राकृतत्वात्, एतेषु निक्षिप्तममीषां ग्रहीतुं न कल्पत इति बुद्धा । अत्र च 'सूत्रार्थज्ञेन' गीतार्थेन 'पृथिव्यादिनिक्षिप्ते तत्रोपकरणे गृह्यमाणे स्वल्पतरमेवाधिकरणम्, अगृह्यमाणे तु बहुतरमसंतपरिभोगा-ऽप्कायप्रक्षालनादिकम्' इति एवमल्पबहुत्वं ज्ञातव्यम्, ज्ञात्वा च ग्रहीतव्यं तद् वस्त्रम् । अथ न गृह्णाति ततश्चतुर्लघुकाः, अनवस्था चैवं भवति, भूयोऽपि हृत्वा ते वा अन्ये वा एवमेम पृथिव्यादिषु निक्षिपन्तीति भावः ॥

अथ "सा वि य परिभुत्ता वा" इत्यादि सूत्रावयवं विवृणोति-

[भा.३०२९] हरियाहडिया सुविहिय !, पंचवन्ना वि कप्पई घेत्तुं ।
परिभुत्तमपरिभुत्ता, अप्पाबहुगं वियाणित्ता ॥

वृ- हे सुविहित ! हृताहृतिका यद्यपि तैः स्तेनकैः पञ्चवर्णा कृता तथापि ग्रहीतुं कल्पते । तथा परिभुक्ता अपरिभुक्ता वा, उपलक्षणत्वाद् धौता घृष्टा मृष्टा सम्प्रधूमिता वा भवतु परं तथाप्यल्पबहुत्वं विज्ञाय स्वीकर्त्तव्यैव, न परिहर्त्तव्या ॥ अत्रैव विशेषमाह-

[भा.३०३०] आधत्ते विक्कीए, परिभुत्ते तस्स चेव गहणं तु ।
अन्नस्स गिण्हणं तस्स चेव जयणाए हिंडंति ॥

वृ- स्तेनकैस्तद् वस्त्रं 'आधत्तं' ग्रहणके मुक्तं भवेद् विक्रीतं वा परिभुक्तं वा ततस्ते ब्रूयुः-वयमन्यद् वस्त्रं प्रयच्छाम इति । ततो वक्तव्यम्-तदेवास्माकं प्रयच्छत नान्येन केनापि प्रयोजनमिति भणित्वा तदेव ग्रहीतव्यम् । यदि न लभ्यते ततोऽनवस्थाप्रसङ्गनिवारणार्थमन्यस्यापि ग्रहणं कुर्वन्ति । तच्च यदि संस्तरति ततः परिष्ठापयितव्यम्, असंस्तरणे तु परिभोक्तव्यम् । तथा 'तस्यैव' सेनापतेर्मानुषैः सह वस्त्रान्वेषणाय यतनया 'हिण्डन्ते' पर्यटन्ति ॥ इदमेव भावयति-

[भा.३०३१] अन्नं च देइ उवहिं, सो वियनातो तहेव अन्नातो ।
सुद्धस्स होइ गहणं, असुद्धि घेत्तुं परिट्ठवणा ॥

वृ- अथासी सेनापतिः 'अन्यम्' अन्य साधु सम्बन्धिनमुपधिं ददाति ततः 'सोऽपि च' उपधिः 'ज्ञातो वास्यात्' संविग्नाऽसंविग्न सम्बन्धितयोपलक्षितः 'अज्ञातोवा' तद्विपरीतः' तत्रयः शुद्धिः-

[illegible]कर्मितो यथोक्त प्रमाणोपेतश्च स संविग्न सम्बन्धी ते गृहीत्वा तेषामेव संविग्नानामर्पयन्ति । अथ ते देशान्दरं गतास्ततो यदि संस्तरति ततः परिष्ठापयन्ति । अथ न संस्तरति ततः परिभुञ्जतो यः पुनः 'अशुद्धः' एतद् विपरीतः सोऽसंविग्नानां सम्चन्धी तमप्यन वस्थाऽधिकरण परिहरणार्थं गृहीत्वा पश्चात् परिष्ठापयन्ति ॥ इदमेव व्याचष्टे –

[भा.३०३२] तं सिव्वणीहि नाउं, पमाण हीनाहियं विरंगं वा ।
इत्तरोवहिं पि गिण्हइ, मा अहिगरणं पसंगो वा ॥

'तद्' उपकरणमविधिसीवनिकाभिः सीवितं प्रमाणतश्च हीनाधिकं तथा 'विरङ्ग' विचित्रवर्णकरक्तम् एवंविधं दृष्ट्वा ज्ञातव्यम्, यथा-एष इतरेषाम्-असंविग्नानामुपधि, तमपि ज्ञात्वा गृह्णात्येव । कुतः ? इत्याह-मा तस्मिन्नगृह्यमाणेऽधिकरणमसंयतपरिभोगादिना 'प्रसङ्गो वा' भूयोऽप्युपकरणहरणलक्षणो भवत्विति कृत्वा ॥

[भा.३०३३] अन्नस्स व पल्लीए, जयणा गमनं तु गहण तह चेव ।
गामानुगामियम्मि य, गहिए गहणे य जं भणियं ॥

वृ- अथान्यस्य सेनापतेः पल्ल्यां हृतोपकरणस्यार्द्ध नीतं भवेत ततस्तत्रापि यतनया गमनं ग्रहणं च 'तथैव' अनुशिष्टि-धर्मकथादिना विधेयम् । एवमध्वनि विविक्तानां विधिरुक्तः । अथानध्वनि तमेवातिदिशति-''गामानुगामि'' इत्यादि, ग्रामानुग्रामिकेऽपि विहारे मासकल्पविधिं कुर्वन्तो यदा विविक्ता भवन्ति तदा 'गृहीते' स्वहस्त चटिते ''गहणे'' त्ति गृह्यमाणे चोपकरणे उपधिपृथक्करणादिकं धर्मकथादिकं च यत् पूर्वं भणितं तदेवात्रापि द्रष्टव्यम् ॥

इदमेव व्याचिख्यासुराह-

[भा.३०३४] तत्थेव आणवावेइ तं तु पेसेइ वा जहिं मद्दो ।
सत्थेण कप्पियारं, व देइ जो णं तहिं नेइ ॥

वृ-यद्युपकरणमन्यस्यां पल्ल्यां नीतं तदा यदि मूलपल्लीपतिर्भद्रकस्तत उपकरणं 'तत्रैव' आत्मनो मूले तत्पल्लीवास्तव्यमानुषैरानाययति । अथवा 'तम्' इत्यात्मीयमनुष्यं तत्र प्रेषयति यत्रासावन्यस्य सेनापतेः पल्ल्यामुपधिर्वर्त्तते । अथासौ न समर्थ- स्वसमीपे आनाययितुं ततः सार्थेन सह तस्यां पल्ल्यां गन्तव्यम् । अथ सार्थो न प्राप्यते ततो मूलपल्लीपतिर्मानुषं मार्गयितव्यः । स च 'कल्पितारं' मार्गदर्शयितारं स्वमनुष्यं ददाति यः 'तत्र' पल्ल्यां ''ण'' मिति तान् साधून् नयति ॥

[भा.३०३५] अनुसट्ठाई तत्थ वि, काउ सपल्लि इतरीसु वा घेत्तुं ।
सत्थेणेव जनवयं, उर्विति अह भद्दए जयणा ॥

वृ- 'तत्रापि' पल्ल्यामनुशिष्टि-धर्मकथादिप्रयोगं कृत्वा गृहीत्वा च स्वकीयमुपकरणजातम्, यदि ततः सार्थो न लभ्यते ततस्तेनैव मनुष्येण सह स्वपल्ल्यामागच्छन्ति, मूलपल्ल्यामित्यर्थः । तत्र चागत्य सार्थेन सह जनपदमुपयान्ति । अथ तस्याः पल्ल्याः सकाशादितरासां जनपदप्रत्यन्तपल्लीनां सार्थो लभ्यते तासु चोपकरणं नीतं भवेत् ततस्तदर्थं तत्र गत्वा तच्च गृहीत्वा तत एव सार्थेन सार्द्धं जनपदमुपयान्ति । 'अथ' एषा भद्रकेऽन्यपल्लीपतौ यतना भणिता ॥

अथ प्रान्तविषयां तामेवाह-

[भा.३०३६] फड्डगपइए पंते, नेंति सेनावइं तहिं पंते ।

अथाध्यानमेव भेदतः परूमयन्नाह-

[भा.३०४१] अद्धाणं पि य दुविह, पंथो मग्गो य होइ नायव्वो ।
पंथम्मि नत्थि किंची, मग्गो सग्गामो गुरु आणा ॥

वृ- "अद्धाणं"ति नपुंसकनिर्देशः प्राकृतत्वात्, ततो अध्वा द्विविधः, तद्यथा-पन्था मार्गश्च । पन्था नाम-यत्र ग्राम-नगर-पल्ली-व्रजिकानां 'किञ्चिद्' एकतरमपि नास्ति । यत्र पुनर्ग्रामानुग्राम-परम्परया वसिमं भवति स सग्रामो मार्ग उच्यते । द्वयोरपि रात्रौ गच्छतश्चत्वारो गुरुकाः; दिवा तु पथि चतुर्गुरवः, मार्गे चतुर्लघवः, आज्ञादयश्च दोषाः ॥

[भा.३०४२] तं पुन गम्मिज्ज दिवा, रत्तिं वा पंथ गमन मग्गे वा ।
रत्तिं आएसदुगं, दोसु वि गुरुगा य आणादी ॥

वृ- स पुनरध्वा दिवा गम्येत रात्रौ वा, तत्रोभयमपि गमनं पथि वा मार्गे वा स्यात् । तत्र रात्रिशब्दे आदेशद्वयम् । केचिदाचार्या ब्रुवते-सन्ध्या यतो राजते-शोभते तेन निरुक्तिशैल्या रात्रिरुच्यते, यस्तु सन्ध्याया अपगमः स विकालः । अन्ये तु ब्रुवते-यतः सन्ध्याया अपगमे चौर-पारदारिकादयो रमन्ते ततोऽसौ रात्रिरिति परिभाष्यते, सन्ध्यायां तु यत एते विरमन्त ततः सा विकालः । पन्थानं वा मार्गं वा यदि रात्रौ विकाले वा गच्छति तदा द्वयोरपि चत्वारो गुरवः आज्ञादयश्च दोषाः । इयमन्याचार्यपरिपाट्या गाथा ततो न पौरुक्त्यम् ॥ तत्र मार्गे तावद् दोषानुपदिदर्शयिषुराह-

[भा.३०४३] मिच्छत्ते उड्डाहो, विराधना होइ संजमा-ऽऽयाए ।
रीयाइ संजमम्मी, छक्काय अचक्खुविसयम्मि ॥

वृ- रात्रौ मार्गे गच्छतः साधून् दृष्ट्वा कश्चिदभिनवधर्मा मिथ्यात्वं गच्छेत् । उड्डाहो वा प्रवचनस्य भवति । विराधना वा संयमा-ऽऽत्मविषया भवेत् । तत्र संयमविराधनायामीर्यासमितिप्रभृतिकाः समितीर्न शोधयति, रात्रौ वाऽचक्षुर्विषये षट्काया विराध्यन्ते । एष द्वारगाथासङ्क्षेपार्थः ॥

साम्प्रतमेनामेव सविस्तरं विवृणोति-

[भा.३०४४] किं मन्ने निसि गमनं, जतीण सोहिंति वा कहं इरियं ।
जइवेसेन व तेना, अडंति गहणाइ उड्डाहो ॥

वृ- अमीषां परलोककार्योद्यतानां यतीनां किमर्थं 'निशि' रात्रौ गमनम् ? किं मन्ये दुष्टचित्ता अमी ? कथं वा रात्रावटन्तोऽमी ईर्यां शोधयन्ति ? यथा चैतदसत्यं तथा सर्वमप्यमीषामसत्यमिति मिथ्यात्वं स्थिरीकृतमुत्पादितं वा भवति । तथा 'यतिवेषेण नूनममी स्तेनाः पर्यटन्ति' इति कृत्वा ग्रहणा-ऽऽकर्षणादिषु पदेषु विधीयमानेषु महान् प्रवचनस्योड्डाहो भवेत् ॥

[भा.३०४५] संजमविराधनाए, महव्वया तत्थ पढम छक्काया ।
बिइए अतेण तेनं, तइए अदिन्नं तु कंदाई ॥

वृ- संयमविराधना द्विविधा-मूलगुणविषया उत्तरगुणविषया च । 'तत्र' मूलगुणविषयायां महाव्रतानि विराध्यन्ते । तत्र प्रथमे महाव्रते रात्रावचक्षुर्विषयतया 'षट्कायाः' पृथिव्यादयो विनाशमश्नुवते, द्वितीये रजन्यामस्तेनमपि स्तेनमिति भाषेत, तृतीये कन्दमूलादिकम् 'अदत्तं' स्वामिना अवितीर्णं गृह्णीयात् ॥ अथवा-

[भा.३०४६] दियदिन्ने वि सचित्ते, जिनतेन्नं किमुय सव्वरीविसए ।

जेसिं वते सरीरा, अविदिन्ना तेहि जीवेहिं ॥

वृ- यद्यपि कन्दादिकं स्वामिना दत्तं गृह्णाति तथापि सचित्तमिति कृत्वा 'जिनैः' तीर्थकरैर्नानुज्ञातमिति दिवाऽपि स्तैन्यं भवति किं पुनः शर्वरी-रात्रिस्तद्विषये-तद्गोचरे गृह्णतः? येषां वा जीवानां तानि कन्दादीनि शरीराणि तैरवितीर्णानि गृह्णतस्तृतीयव्रतभङ्गो भवति ॥

[भा.३०४७] पंचमे अनेसणादी, छट्ठे कप्पो व पढम बिइया वा ।
भग्गवउ त्ति य जातो, अपरिणतो मेहुणं पि वए ॥

वृ- पञ्चमे महाव्रते अनेषणीयम्, आदिशब्दादाकीर्णविकीर्णं हिरण्यादिकं च गृह्णतः परिग्रहो भवति । 'षष्ठे' रात्रिभक्तव्रते "कप्पो व" त्ति विभक्तिव्यत्ययाद् अध्वकल्पं भुञ्जीत, "पढम बीया व" त्ति प्रथम-द्वितीयपरीषहातुरो वा रजन्यां भुञ्जीत वा पिबेद्वा, एवं षष्ठव्रतविराधना । ततश्च 'भग्नव्रतोऽहम्' इति बुध्या मैथुनमपि 'व्रजेत्' सेवेत, यद्वा योऽद्याप्यपरिणतः स सार्थे व्रजति सति कायिक्यदिनिमित्तमपसृतः सन् काञ्चिदविरतिकामप्यपसृतां विलक्याल्पसागारिके प्रतिसेवेत ॥ भाविता मूलगुणविराधना । अथोत्तरगुणविराधनां भावयति-

[भा.३०४८] रीयादऽसोहि रत्तिं, भासाए उच्चसद्दवाहरणं ।
न य आदाणुस्सग्गे, सोहए कायाइ ठाणाई ॥

वृ- रात्रावीर्यादीनां समितीनाम् 'अशोधि' शोधनं भवति । तत्राचक्षुर्विषयत्वे नेर्यासमितिम्, पथो विप्रणष्टानां साधूनामुच्चशब्देन व्याहरणं कुर्वन् भाषासमितिम्, उपलक्षणत्वादुदकार्द्रादिकमपश्यन्नेषणासमितिम्, तथाऽप्रत्युपेक्षिते भूभगे "ठाणाइ" त्ति स्थान-निषदनादीनि कुर्वन्नादाननिक्षेपसमितिम्, अस्थण्डिले "कायाइ" त्ति कायिक्यादि व्युत्सृजन् उत्सर्गसमितिं च न शोधयति ॥ एषा सर्वा संयमविराधना । अथात्मविराधनामुपदर्शयति-

[भा.३०४९] वाले तेने तह सावए य विसमे य खाणु कंटे य ।
अकम्हामयं आयसमुत्थं, रत्तिं मग्गे भवे दोसा ॥

वृ- रात्रौ मार्गे गच्छत एते दोषाः-'व्यालेन' सर्पादिना दश्येत, स्तेनैरुपकरणं संयतो वा ह्रियेत, सिंहादिभिर्वा श्वापदैरुपद्रूयेत, 'विषमे वा' निम्नोन्नते प्रपतेत्, स्थाणुना वा कण्टकैर्वा विध्येत, अथवा 'आत्मसमुत्थं' स्तेनादिबाह्यहेतुविरहेण स्वचित्तकल्पनोत्प्रेक्षितमकस्माद्भयं रात्रौ मार्गे गच्छतो भवेत् ॥ अथात्रैव द्वितीयपदमाह-

[भा.३०५०] कप्पइ गिलाणगट्ठा, रत्तिं मग्गो तहेव संझाए ।
पंथो य पुव्वदिट्ठो, आरक्खिओ पुव्वभणिओ य ॥

वृ- अथ ग्लाः-रोगार्त्तः स एकस्माद् ग्रामाद् ग्रामान्तरं नेतव्यः, यद्वा ग्लानः कश्चिदपरत्र ग्रामादौ सञ्जातः तदर्थं तत्र गन्तव्यम्, एवं ग्लानार्थं रात्रौ वा सन्ध्यायां वा मार्गो गन्तुं कल्पते । येन च पथा गन्तव्यं स पूर्वमेव-अर्वाग्दिने दृष्टः-प्रत्युपेक्षितो यथा भवति तथा कर्त्तव्यम् । आरक्षिकश्च पूर्वमेव भणितो विधेयः, यथा-वयं ग्लानकारणेन रात्रौ गमिष्यामः, भवद्भिर्न किमपि च्छलं ग्रहीतव्यम् । एवमुक्ते तेनानुज्ञाते सति गच्छन्ति ॥ गतं मार्गद्वारम् । अथ पथिद्वारमाह-

[भा.३०५१] दुविहो य होइ पंथो, छिन्नद्धानंतरं अछिन्नं च ।
छिन्नम्मि नत्थि किंची, अछिन्न पल्लीहि वइगाहिं ॥

वृ- द्विविधश्च भवति पन्थाः, तद्यथा-छिन्नाध्वान्तरमच्छिन्नाध्वान्तरं च । छिन्नं-ग्रामादिरहितमध्वलक्षणं यदन्तरम्-अपान्तरालं यत् छिन्नाध्वान्तरम्, तद्विपरीतमच्छिन्नाध्वान्तरम् । तत्र च्छिन्ने पथि ग्राम-नगर-पल्ली-व्रजिकानां किञ्चिदेकतरमपि नास्ति, सर्वथैव शून्यत्वात् । यः पुनरच्छिन्नः पन्थाः स पल्लीभिर्व्रजिकाभिर्वा युक्तो भवति ॥

[भा.३०५२] छिन्नेण अछिन्नेण व, रत्तिं गुरुगा य दिवसतो लहुगा ।
उद्दद्दरे पवज्जण, सुद्धपदे सेवती जं च ॥

वृ-अनन्तरोक्तेन च्छिन्नेनाच्छिन्नेन वा पथा व्रजतो रात्रौ चतुर्गुरुकाः, दिवा गच्छतश्चतुर्लघुकाः । अत एव यत्रोर्ध्वदराः पूर्यन्ते तत्र यद्यध्वानं प्रतिपद्यन्ते तदा शुद्धपदेऽप्येतत् प्रायश्चित्तम्, यच्चाकल्पनीयादिकं किमपि सेवते तन्निष्पन्नं पृथक् प्रायश्चित्तमापद्यते ॥ इदमेव स्फुटतरमाह-

[भा.३०५३] उद्दद्दरे सुभिक्खे, खेमे निरुवद्दवे सुहविहारे ।
जइ पडिवज्जति पंथं, दप्पेण परं न अन्नेणं ॥

वृ- 'ऊर्ध्वदरे' अनन्तरोक्ते 'सुभिक्षे' सुलभभैक्षे 'क्षेमे' स्तेन-परचक्रादिभयरहिते 'निरुपद्रवे' आशिवाद्युपद्रववर्जिते 'सुखविहारे' सुखेनैव मासकल्पविधिना विहर्तुं शक्ये, एवंविधे जनपदे सति यदि पन्थानं छिन्नमच्छिन्नं वा प्रतिपद्यते । कथम् ? इत्याह-'परं' केवलं 'दर्पेण' देशदर्शनादिनिमित्तं न 'अन्येन' ज्ञानादिना पुष्टालम्बनेन ॥ ततः किं भवति ? इत्याह-

[भा.३०५४] आणा न कप्पइ त्ति य, अणवत्थ पसंगताए गणणासो ।
वसणादिसभावम्मी, मिच्छत्ताराधना भणिया ॥

वृ- 'आज्ञा' 'न कल्पतेऽध्वानं गन्तुम्' इति लङ्घ्णा भगवतां विराधिता भवति । 'अनवस्था' 'यद्येष बहुश्रोतऽप्येवमध्वानं प्रतिपद्यते ततः किमहं न प्रतिपद्ये ?' एवमनवस्था । अतः 'प्रसङ्गेन' परम्परया सर्वस्यापि गणस्य 'नाशः' चारित्रव्यवच्छेदः प्राप्नोति । तथाऽध्वानं प्रतिपन्नः सन् यदा 'व्यसनं' द्रव्याद्यापदम् आदिशब्दादपरं वा कमपि प्रत्यपायं समापन्नः-प्राप्त भवति तदा मिथ्यात्वस्याराधना-अनुव्रजना भणिता । तथाहि-साधूनध्वनि व्यसनादिसमापन्नान् दृष्ट्वा लोको ब्रूयात्-अहो ! अमीषां तीर्थकरेणैतदपि न दृष्टम्, यदेवंविधो बहुप्रत्यपायः पन्था न प्रतिपत्तव्यः ॥ अथ विराधना भाव्यते, सा च द्विधा-आत्मनि संयमे च । तत्रात्मविराधनामाह-

[भा.३०५५] वाय खलु वाय कंडग, आवडणं विसम-खाणु-कंटेसु ।
वाले सावय तेणे, एमाइ हवंति आयाए ॥

वृ-अध्वानं गच्छतः 'खलुकाः' जानुकादिसन्धयो वातेन गृह्यन्ते, "वाय कंडय" त्ति जङ्घायां वातेन कण्डकान्युत्तिष्ठन्ते, विषमे वा स्थाणौ वा 'आपतनं' प्रस्खलनं बवति, कण्टका वा पादयोर्लगेयुः, व्याला वा श्वापदा वा स्तेना वा उपद्रवेयुः । एवमादिका आत्मविराधना मन्तव्या ॥ संयमविराधनामाह-

[भा.३०५६] छक्काया विराधन, उवगरणं बाल-वुड्ढ-सेहा य ।
पढमेण व बिइ्ण व, सावय तेने य मिच्छा य ॥

वृ- अस्थण्डिले स्थान-निषदनादि कुर्वन् पृथिव्यादीनां षण्णां कायानां विराधनां करोति । 'उपकरणम्' अध्वप्रायोग्यं नन्दीप्रतिग्रहादि यदि गृह्णन्ति ततो भारेण वेदनादयो दोषाः । अथ न

गृह्णन्ति तत उपकरणेन विना यत् प्राप्नुवन्ति तन्निष्पन्नं प्रायश्चित्तम् । बाल-वृद्ध-शैक्षाश्च प्रथमेन वा द्वितीयेन वा परीषहेण परिताप्यन्ते । साधवो वा श्वापदैर्भक्ष्यन्ते । स्तेनैरुपकरणमपह्रियते । म्लेच्छा वा क्षुल्लकादीन् हरेयुः जीविताद्वा व्यपरोपयेयुः ॥ अथोपकरणपदं विशेषतो व्याख्यानयति-

[भा.३०५७] उवगरणगेण्हणे भारवेदणा तेन गुम्मि अहिगरणं ।
रीयादि अनुवओगो, गोम्मिय भारवाह उड्डाहो ॥

वृ- उपकरणं-नन्दीप्रतिग्रहा-ऽध्वकल्प-गुलिकादि यदि गृह्णन्ति ततो भारेण महती वेदना जायते। बहूपकरणाश्च स्तेनानां गौल्मिकानां वा गम्या भवन्ति । हृतेषु चोपकरणेष्वसंयतेन परिभुज्यमानेष्वधिकरणम् । भाराक्रान्तानां चेर्यादावनुपयोगो भवति । बहूपकरणान् वा दृष्ट्वा 'गौल्मिकाः' स्थानपाला उपद्रवेयुः । लोको वा ब्रूयात्-अहो ! बहुलोभा भारवाहाश्चैते एवमुड्डाहो भवति । अथैतद्दोषभयादुपकरणमुज्झन्ति ततो यत् तेन विना प्राप्नुवन्ति तन्निष्पन्नम् ॥

[भा.३०५८] चम्मकरग सत्थादी, दुलिंग कप्पे अ चिलिमिणिअगहणे ।
तस विपरिणमुड्डाहो, कंदाइवधो य कुच्छा य ॥

वृ- इह पूर्वार्द्ध-पश्चार्द्धपदानां यथासङ्ख्येन योजना कार्या । तद्यथा-चर्मकरकं यदि न गृह्णन्ति ततः 'त्रसानां' पूतरकादीनां विराधना भवति । शस्त्रकोशस्य आदिशब्दाद् गुलिकाखोलादीनामग्रहणे कण्टकादिशल्यविद्धानां शैक्षादीनां च विपरिणामो भवति । "दुलिंग" त्ति लिङ्गद्वयं-गृहिलिङ्गं अन्यपाषण्डिकलिङ्गं च, तयोरुपकरणेऽगृह्यमाणे स्वलिङ्गेनैव रात्रौ भक्तग्रहणे पिशितादिग्रहणे वा उड्डाहः स्यात् । अध्वकल्पं विना कन्दमूलादीनां वधो भवति । चिलिमिलिकाया अग्रहणे मण्डल्या भुञ्जानान् विलोक्य जनः 'कुत्सां' जुगुप्सां कुर्यात् ॥

[भा.३०५९] अप्परिणामगमरणं, अइपरिणामा य होंति नित्थक्का ।
निग्गय गहणे चोइय, भणंति तइया कहं कप्पे ॥

वृ- तत्राध्वनि गच्छतामेषणीयालाभे पञ्चकादियतनयाऽनेषणीयमपि गृह्यते, तच्चापरिणामको न गृह्णाति, अगृह्णतस्य च तस्य भरणं भवेत् । ये पुनरतिपिणामकास्तेऽकल्पनीयग्रहणं दृष्ट्वा 'नित्थक्काः' निर्लज्जा भवन्ति, ततश्चाध्वनो निर्गताः सन्तोऽकल्प्यग्रहणं कुर्वाणा गीतार्थैः प्रतिनोदिताः-'आर्या ! मा गृह्णीध्वमकल्प्यम्' ततस्ते ब्रुवते-तदाऽध्वनि वर्त्तमानानां 'कथमकल्प्यत?' कथं कल्पनीयमासीत् ? ॥

[भा.३०६०] तेनभयोदककज्जे, रत्तिं सिग्घगति दूरगमने य ।
वहणावहणे दोसा, बालादी सल्लविद्धे य ॥

वृ- स्तेनभये दण्डकचिलिमितिकां विना, उदककार्ये चर्मकरकं गुलिकां खोलकानि वा विना यत् प्राप्नुवन्ति तन्निष्पन्नं प्रायश्चित्तम् । रात्रौ सार्थवशेन शीघ्रगतौ दूरगमने चोपस्थिते तलिकाभिर्विना बल-वृद्धादयः प्रपतन्ति तान् यदि कापोतिकया वहन्ति तदा स्वयं परिताप्यन्ते अथ कापोतिकाया अभावान्न वहन्ति ततस्ते परिताप्यन्ते । शल्यविद्धाः शस्त्रकोशकेन विना शल्येऽनुद्ध्रियमाणे यत् परितापनादिकं प्राप्नुवन्ति तन्निष्पन्नम् ॥

यत एवमतो निष्कारणेऽध्वा न प्रतिपत्तव्यः । कारणे तु प्रतिपद्यमानानामयं क्रमः-

[भा.३०६१] विइयपव गम्ममाणं, मग्गे असतीय पंथे जतणाए ।

परिपुच्छिऊण गमनं, अछिन्ने पल्लीहि वइगाहिं ॥

वृ- द्वितीयपदे अध्वनि गम्यमाने प्रथमं मार्गेण, मार्गस्यासति पथाऽपि यतनया गन्तव्यम्। तत्र च जनं परिपृच्छ्य यः पल्लीभिर्व्रजिकाभिर्वा अच्छिन्नः पन्थास्तेन गमनं विधेयम्। तदभावे छिन्नेनापि॥ अथ यैः कारणैर्गन्तुं कल्पते तानि दर्शयति-

[भा.३०६२] असिवे ओमोदरिए, रायदुट्ठे भये व आगाढे।
गेलन्न उत्तिमट्ठे, नाणे तह दंसण चरित्ते ॥

वृ-आगाढशब्दः प्रयेकमभिसम्बध्यते-आगाढेऽशिवेऽवमौदर्ये राजद्विष्टे बोधिक-स्तेनादिभये वा; यद्वा आगाढं नाम-शैक्ष-सागारिकादिकमन्यतरकारणम्, तथा ग्लान उत्तमार्थप्रतिपन्नो वा क्वचिद् देशान्तरे श्रुतोऽपान्तराले च तत्र च्छिन्नः पन्था अतस्तत्प्रतिचरणार्थं गन्तव्यम्, उत्तमार्थं वा प्रतिपित्सुः संविग्नगीतार्थसमीपे च्छिन्नेनापि पथा गच्छति। 'ज्ञानम्' आचारादि 'दर्शनं' दर्शनविशुद्धिकारकाणि शास्त्राणि तदर्थमध्वानं गच्छेत्। चारित्रार्थं नाम-यत्र देशे स्त्रीदोषा एषणादोषा वा भवन्ति तं परित्यज्य देशान्तरं गन्तव्यम्॥

[भा.३०५३] एएहि कारणेहिं, आगाढेहिं तु गम्ममाणेहिं।
उवगरण पुव्वपडिलेहिएण सत्थेण गंतव्वं ॥

वृ- 'एतैः' अशिवादिभिः कारणैरागाढैरेव 'गम्यमानैः' प्राप्यमाणैरुपकरणमध्वप्रायोग्यं गृहीत्वा पूर्वं-गमनात् प्राक् प्रत्युपेक्षितः-सम्यक् शुद्धाशुद्धतया निरूपितो यः सार्थस्तेन सह गन्तव्यम्॥ अथेदमेव स्पष्टयति-

[भा.३०६४] असिवे अगम्ममाणे, गुरुगा नियमा विराधना दुविहा।
तम्हा खलु गंतव्वं, विहिणा जो वन्निओ हिट्ठा ॥

वृ- अशिवे समुत्पन्ने सति यदि न गम्यते ततश्चत्वारो गुरवः। तत्र च तिष्ठतां नियमाद् 'द्विविधा' संयमा-ऽऽत्मनोः अथवाऽऽत्मनः परस्य चेति विराधना। यत एवं तस्मात् 'खलु' निश्चितं विधिना गन्तव्यम्। कः पुनर्विधिः ? इत्याह-यः 'अधस्ताद्' ओघनिर्युक्तौ- "संवच्छरबारसएण, होही असिवं ति ते तओ निंति।" इत्यादिगाथाभिर्वर्णितः। शेषाण्यप्यवमौदर्यादीनि पदानि यथैवौ-घनिर्युक्तौ तथैव वक्तव्यानीति॥

[भा.३०६५] उवगरण पुव्वभणियं, अप्पडिलेहिंते चउगुरु आणा।
ओमाण पंत सत्थिय, अतियत्तिय अप्पपत्थयणो ॥

वृ- उपकरणं 'पूर्वभणितं' रात्रिभक्तसूत्रोक्तं नन्दीभाजन- चर्मकरकादिकं तदगृह्णानस्य चतुर्गुरुकाः। सार्थं वा यदि न प्रत्युपेक्षन्ते तदापि चतुर्गुरवः आज्ञादयश्च दोषाः। तथा सार्थं कदाचिदवमानेन स्वपक्ष-परपक्षकृतेनातीवोद्वेजितो भवेत्, यद्वा सार्थिकाः 'आतियात्रिका वा' सार्थचिन्तकाः प्रान्ता भवेयुः, 'अल्पपथ्यदनो वा' स्वल्पशम्बलः स सार्थ॥ अत एतद्दोषपरिहारार्थं सार्थ प्रत्युपेक्षितव्यः। कथं पुनः ? इति अत्रोच्यते-

[भा.३०६६] राग-द्दोसविमुक्को, सत्थं पडिलेहे सो उ पंचविहो।
भंडी बहिलग भरवह, ओदरिया कप्पडिय सत्थो ॥

वृ- 'राग-द्वेषविमुक्तो नाम' यस्य गन्तव्ये न रागो न वा द्वेषः स सार्थं प्रत्युपेक्षते। स च सार्थः

पञ्चविधः, तद्यथा-भण्डी-गन्त्री तदुपलक्षितः प्रथमः सार्थ । बहिलकाः-करभी-वेसर-बलीवर्दप्रभृतयः तदुपलक्षितो द्वितीयः । भारवहाः-पोट्टलिकावाहकास्तेषां सार्थ तृतीयः । औदरिका नाम-यत्र गताः तत्र रूपकादिकं प्रक्षिप्य समुद्दिशन्ति, समुद्देशनानन्तरं भूयोऽप्यग्रतो गच्छन्ति, एष चतुर्थः। कार्पटिकाः-भिक्षाचरास्ते भिक्षां भ्रमन्तो व्रजन्ति तेषां सार्थ पञ्चमः ।। अथैनामेव गाथां विवृणोति-

[भा.३०६७] गंतव्वदेसरागी, असत्थ सत्थं पि कुणति जे दोसा ।
इअरो सत्थमसत्थं, करेइ अच्छंति जे दोसा ।।

वृ- यो गन्तव्ये देशे रागी स सार्थप्रत्युपेक्षकः कृतोऽसार्थमपि सार्थं करोति, ततः कुसार्थेन गच्छतां ये दोषास्तानापद्यन्ते, तन्निष्पन्नं प्रायश्चित्तं सूरयः प्राप्नुवन्तीति भावः । 'इतरो नाम' गन्तव्यदेशद्वेषवान् स सार्थमप्यसार्थं करोति, ततस्तत्राशिवादिषु सन्तिष्ठमानानां ये दोषास्तान् प्राप्नुवन्ति । तस्माद् राग-द्वेषविमुक्तः सार्थप्रत्युपेक्षकः सूरिभि प्रस्थापनीयः ।।

अथ सार्थपञ्चकेऽपि गमनक्रमं गुणागुणविभागं च दर्शयति-

[भा.३०६८] उप्परिवाडी गुरुगा, तिसु कंजियमादिसंभवो होज्जा ।
परिवहणं दोसु भवे, बालादी सल्ल गेलन्ने ।।

वृ- 'उत्परिपाट्या' यथोक्तक्रममुल्लङ्घ्य यदि सार्थेन सह गच्छन्ति तदा चतुर्गुरुकाः । किमुक्तं भवति ? -भण्डीसार्थे विद्यमाने यदि बहिलकसार्थेन गच्छन्ति तदा चतुर्गुरुकाः, अथ भण्डीसार्थो न प्राप्यते ततो बहिलकसार्थेनापि गन्तव्यम्, तत्र विद्यमाने भारवहसार्थेन गच्छन्ति तदापि चतुर्गुरवः, एवं भारवहादिसार्थेष्वपि भावनीयम् । अत्र चाद्येषु 'त्रिषु' भण्डी-बहिलकभारवहसार्थेषु काञ्चिकादिपानकानां सम्भवो भवेत्, 'द्वयोस्तु' भण्डी-बहिलकसार्थयोर्बालानाम् आदिशब्दाद् वृद्धानं दुर्बलानां शल्यविद्धानां ग्लानानां च परिवहनं भवेत् ।। किं पुनः सार्थे प्रत्युपेक्षणीयम् ? इत्याह-

[भा.३०६९] सत्थं च सत्थवाहं, सत्थविहाणं च आदियत्तं च ।
दव्वं खेत्तं कालं, भावोमानं च पडिलेहे ।।

वृ-सार्थं सार्थवाहं सार्थविधानम् आतियात्रिकं द्रव्यं क्षेत्रं कालं भावम् अवमानं च प्रत्युपेक्षेत इति द्वारगाथासङ्क्षेपार्थं ।। साम्प्रतमेनामेव विवृणोति-

[भा.३०७०] सत्थि त्ति पंच भेया, सत्थाहा अट्ठ आइयत्तीया ।
सत्थस्स विहाणं पुन, गणिमाई चउव्विहं होइ ।।

वृ- सार्थ इति पदेन भण्डीसार्थादयः पूर्वोक्ताः पञ्च भेदा गृहीताः । सार्थवाहाः पुनरष्टौ, आतियात्रिका अप्यष्टौ, उभयेऽप्युत्तरत्र वक्ष्यन्ते । सार्थविधानं पुनर्गणिमादिभेदाच्चतुर्विधं भवति। तत्र गणिमं-यदेकद्व्यादिसङ्ख्यया गणयित्वा दीयते, यथा-हरीतकी-पूगफलादि । धरिमं-यत् तुलायां धृत्वा दीयते, यथा-खण्ड-शर्करादि । मेयं-यत् पलादिना सेतिकादिना वा मीयते, यथा-घृतादिकं तन्दुलादिकं वा । परिच्छेद्यं नाम-यच्चक्षुषा परीक्ष्यते, यथा-वस्त्र-रत्न-मौक्तिकादि । एतच्चतुर्विधमपि द्रव्यं भण्डीसार्थादिषु प्रत्युपेक्षणीयम् । तथा द्रव्य-क्षेत्रकाल-भावैरपि सार्थः प्रत्युपेक्षणीयः ।। तत्र द्रव्यतः प्रत्युपेक्षणां तावदाह-

[भा.३०७१] अनुरंगाई जाणे, गुंठाई वाहणे अणुन्नवणा ।
धम्मु त्ति वा भईय व, बालादि अनिच्छे पडिकुट्ठा ।।

वृ- अनुरङ्गा नाम-घंसिकास्तदादीनि यानानि गवेषणीयानि, आदिशब्दात् शकटादिपरिग्रहः। वाहनानि 'गुण्ठादीनि' गुण्ठो नाम-घोटको महिषो वा, आदिशब्दात् करभ-वृषभादिपरिग्रहः। एतेषां यानानां वाहनानां चानुज्ञापना कर्त्तव्या, यथा-अस्माकं कोऽपि बालो वृद्धो दुर्बलो ग्लानः शल्यविद्धो वा गन्तुं न शक्नुयात् स युष्माभिरनुरङ्गादौ वा तुरङ्गादौ वा आरोहयितव्यः। यदि 'एवम्, धर्म' इति कृत्वाऽनुजानन्ति ततः सुन्दरम्। अथ नानुजानन्ति ततः 'भृत्या' मूल्येनापि यथाऽऽरोहयन्ति तथा प्रज्ञापयितव्याः। अथ मूल्येनापि बालादीनामारोहणं नेच्छन्ति ततः 'प्रतिक्रुष्टाः' प्रतिषिद्धाः, तैः सह न गन्तव्यमित्यर्थः ॥ अपि च-

[भा.३०७२] दंतिक्क-गोर-तिल्ल-गुल-सप्पिएमादिभंडभरिएसु।
अंतरवाघातम्मि व, तं दिंतिहरा उ किं देंति ॥

वृ- मोदक-मण्डका-ऽशोकवर्त्त्यादिकं यद् बहुविधं दन्तखाद्यकं तद् दन्तिकम्, "गोर"त्ति गोधूमाः, 'तैल-गुडौ' प्रतीतौ, 'सर्पि' घृतम्, एवमादीनां भक्ष्यभाण्डानां यत्र शकटानि भृतानि प्राप्यन्ते स सार्थो द्रव्यतः शुद्धः। यत एवमादिभाण्डभृतेषु शकटादिषु सत्सु यद्यपि अन्तरा-अपान्तराले व्याघातः-वर्षा-नदीपूरादिक उत्पद्यते तथापि 'तद्'दन्तिकादिकं ते सार्थिकाः स्वयमपि भक्षयन्ति साधूनामपि च प्रयच्छन्ति। 'इतरथा' तेषामभावे किं ददति ?, किमपीत्यर्थः ॥

व्याघातकारणान्येव दर्शयति-

[भा.३०७३] वासेण नदीपूरेण वा वि तेनभय हत्थि रोधे य।
खोभे व जत्थ गम्मति, असिवं वेमादि वाघाता ॥

वृ- सार्थस्य गच्छतोऽपान्तराले आगाढवर्षेण वा नदीपूरेण वा बहुतरदिवसान् व्याघात उपस्थितः, अग्रतो वा स्तेनानां भयमुत्पन्नम्, दुष्टहस्तिना वा मार्गो निरुद्धः, 'यत्र वा' नगरादौ 'गम्यते' गन्तुमिष्यते तत्र रोधको वा राज्यक्षोभो वा अशिवं वा उत्पन्नम्, एवमादयो गमनस्य व्याघाता भवन्ति। तेषूपस्थितेषु यद्यपान्तराले सार्थः सन्निवेशं कृत्वा तिष्ठति तथापि दन्तिक्कादिबहुविधखाद्य-द्रव्यभृतासु गन्त्रीषु सुखेनैव साधवः संस्तरन्ति। अतस्तेन सह गन्तव्यम् ॥ न पुनरीदृशेन-

[भा.३०७४] कुंकुम अगुरुं पत्तं, चोयं कत्थूरिया य हिंगुं च।
संखग-लोणभरितेण, न तेन सत्थेण गंतव्वं ॥

वृ- कुङ्कुमं अगुरु तगरपत्रं "चोयं"ति त्वक् कस्तूरिका हिङ्गुरेवमादिकमखाद्यद्रव्यं यत्र भवति, यश्च शङ्खेन लवणेन वा भृतः-पूर्ण, तत्रान्तरा व्याघाते समुत्पन्ने निष्ठितशम्बलाः सार्थिकाः किं प्रयच्छन्तु ? यत एवमतः 'तेन' तादृशेन सार्थेन सह न गन्तव्यम् ॥

गता द्रव्यतः प्रत्युपेक्षणा। अथ क्षेत्र-काल-भावैस्तामाह-

[भा.३०७५] खेत्ते जं बालादी, अपरिस्संता वयंति अद्धाणं।
काले जो पुव्वण्हे, भावे सपक्खादणोमाणं ॥

वृ- यावन्मात्रमध्वानं बाल-वृद्धादयऽपरिश्रान्ताः 'व्रजन्ति' गन्तुं शक्नुवन्ति तावन्मात्रं यदि सार्थो व्रजति तदा स सार्थ 'क्षेत्रे' क्षेत्रतः शुद्धः। तथा यः सूर्योदयवेलायां प्रस्थितः पूर्वाह्णे तिष्ठति स कालतः शुद्धः। यत्र तु स्वपक्ष-परपक्षिभिक्षाचरैरनवमानं स भावतः शुद्धः ॥

[भा.३०७६] एक्किको सो दुविहो, सुद्धो ओमानपेल्लितो चेव।

मिच्छत्तपरिग्गहितो, गमनाऽऽदियणे य ठाणे अ ॥

वृ- भण्डीसार्थ-बहिलकसार्थयोर्मध्यादेकैको द्विविधः-शुद्धोऽशुद्धश्च । शुद्धो नाम-यो नावमानप्रेरितः, अवमानप्रेरितोऽशुद्धः । तथा सार्थवाह आदियात्रिको वा योवा तत्र प्रधानः स यदि मिथ्यादृष्टिस्तदा स सार्थो मिथ्यात्वपरिगृहीत इति कृत्वा नानुगन्तव्यः । "गमनाऽऽइयणे य ठाणे य" त्ति गमने यः सार्थ मृदुगति अच्छिन्नेन वा पथा व्रजति, आदनं-भोजनं तद्वेलायां यस्तिष्ठति, 'स्थाने च' स्थण्डिले यो निवेशं करोति ईदृशः शुद्धः ॥ अथ स्वपक्ष-परपक्षावमानं व्याख्यानयति-

[भा.३०७७] समणा समणि सपक्खो, परपक्खो लिंगिणो गिहत्था य ।

आया-संजमदोसा, असईय सपक्खवज्जेण ॥

वृ- स्वपक्षः श्रमणाः श्रमण्यश्च द्रष्टव्याः । परपक्षो लिङ्गिनो गृहस्थाश्च । इह लिङ्गिनोऽन्यतीर्थिका द्रष्टव्याः ईदृशेन भिक्षाचरवर्गेणाकीर्णे पर्याप्तमलभमानानामात्म-संयदोषा भवन्ति । तत्रात्मदोषाः परितापनादिना, संयमदोषास्तु कन्दादिग्रहणेनेति । अथानवमानं सर्वथैव न प्राप्यते ततोऽनवमानस्यासति 'स्वपक्षवर्जेन' स्वपक्षावमानं वर्जयित्वा य परपक्षावमानं भवति तेन गन्तव्यम् । तत्र जनो भिक्षाग्रहणे विशेषं जानाति-इमे श्रमणाः, एते तु तच्चनिकादय इति ॥

"गमनाऽऽदियणे य ठाणे य" त्ति पदत्रय व्याचष्टे-

[भा.३०७८] गमनं जो जुत्तगती, वइगा-पल्लीहिं वा अछिन्नेनं ।

थंडिल्लं तत्थ भवे, भिक्खग्गहणे य वसही य ।

[भा.३०७९] आदियणे भोत्तूणं, न चलति अवरण्हे तेन गंतव्वं ।

तेन परं भयणा ऊ, ठाणे थंडिल्लठाई उ ॥

वृ- गमनशुद्धो नाम यः सार्थ 'युक्तगति' मन्दगमनः, न शीघ्रं गच्छतीत्यर्थः; यो वा व्रजिका-पल्लीभिरच्छिन्नः पन्थास्तेन गच्छति, यतस्तत्राच्छिन्ने पथि स्थण्डिलं भवति, व्रजिकादौ च सुखेनैव भिक्षाग्रहणं वसतिश्च प्राप्यते ॥ आदनं-भोजनं तद्वेलायां यस्तिष्ठति, भुक्त्वा चापराह्णे न चलति तेन सह गन्तव्यम् । "तेन परं भयणा उ" त्ति प्राकृतत्वात् पञ्चम्यर्थे तृतीया, 'ततः परं' भोजनाद-नन्तरमपराह्णे यश्चलति तत्र भजना कर्त्तव्या-यदि सर्वेऽपि साधवः समर्थास्तदानीं गन्तुं ततः शुद्धः, अथ न शक्नुवन्ति ततोऽशुद्ध इति । स्थानं नाम-गमनादुपरम्य निवेशं कृत्वा कचित् प्रदेशेऽवस्थानम्, तत्र यः स्थण्डिलस्थायी स शुद्धः, अस्थण्डिले तिष्ठन्नशुद्ध इति ॥ अथ यदुक्तम् 'अर्थी सार्थवाहा आदियात्रिकाश्च' इति तदेतद् व्याख्यानयति-

[भा.३०८०] पुराण सावग सम्मद्दिट्ठि अहाभद्द दानसड्ढे य ।

अनभिग्गहिए मिच्छे, अभिग्गहे अन्नतित्थी य ॥

वृ- 'पुराणः' पश्चात्कृतः १ 'श्रावकः' प्रतिपन्नाणुव्रतः २ 'सम्यग्दृष्टिः' अविरतसम्यग्दर्शनी ३ 'यथाभद्रकः' सामान्यतः साधुदर्शनपक्षपाती ४ 'दानश्राद्धः' प्रकृत्यैव दानरुचिमान् ५ अनभिगृहीतमिथ्यादृष्टिः ६ अभिगृहीतमिथ्यादृष्टिः ७ अन्यतीर्थिकः ८ एते त्रयोऽपि प्रतीताः । एवमर्थी सार्थाधिपतयः । आदियात्रिका अप्येवमेवार्थी भवन्ति ॥

साम्प्रतमध्वानं प्रतीत्य भङ्गानुपदर्शयति-

[भा.३०८१] सत्थपणए य सुद्धे, य पेल्लिओ कालऽकालगम-भोगी ।

कालमकालट्ठा, सत्थाहऽट्ठाऽऽदियत्तीया ॥

वृ- सार्थपञ्चके भण्डीमार्गो बहिलकसार्थश्चामार्गे शुद्धो वा स्यादशुद्धो वा, यः शुद्धस्तेन गन्तव्यम् । तथा कालगामिनोऽकालगामिनो वा कालभोजिनोऽकालभोजिनो वा कालनिवेशिनोऽकालनिवेशिनो वा स्थण्डिलस्थायिनोऽस्थण्डिलस्थायिनो वा ते पञ्चापि सार्था भवेयुः । तथा अर्थी सार्थवाहा अर्थी चाऽऽदियात्रिकाः ॥ एभि पदैः कियन्तो भङ्गा उत्तिष्ठन्ते ? इत्याह-

[भा.३०८२] एतेसिं तु पयाणं, भयणाए सयाइं एक्कपन्नं तु ।
वीसं च गमा नेया, एत्तो य सयग्गसो जयणा ॥

वृ- एतेषां पदानां संयोगेन 'भजनयां' भङ्गरचनायां विधीयमानायामेकपञ्चाशत्सङ्ख्यानि शतानि विंशतिश्च 'गमाः' भङ्गका ज्ञेयाः । "एत्तो य सयग्गसो जयण" त्ति आर्षत्वाद् 'एषु' सार्थेषु शुद्धाऽशुद्धेषु सार्थवाहा-ऽऽदियात्रिकेषु च भद्रक-प्रान्तेषु अल्पबहुत्वचिन्तायां 'शताग्रशः' शतसङ्ख्यभेदा यतना भवति ॥ अमुमेवार्थं भाष्यकारः प्रकटयन्नाह-

[भा.३०८३] कालुट्ठाई कालनिवेसी, ठाणट्ठाती य कालभोगी य ।
उग्गतऽनत्थमि थंडिल, मज्झण्ह धरंत सूरे य ॥

वृ- इह पूर्वार्द्ध-पश्चार्द्धपदानां यथासङ्ख्यं योजना, तद्यथा-कालोत्थायी नाम सा सार्थो य उद्गते सूर्ये उत्तिष्ठते, चलतीत्यर्थः । कालनिवेशी योऽनस्तमिते रवौ प्रथमायां वा पौरुष्यां निवेशं कृत्व तिष्ठति । स्थानस्थायी यः स्थण्डिले व्रजिकादौ तिष्ठति । कालभोजी यो मध्याह्ने सूर्ये वा ध्रियमाणे भुङ्क्ते ॥

[भा.३०८४] एतेसिं तु पयाणं, भयणा सोलसविहा उ कायव्वा ।
सत्थपणएण गुणिया, असिती भंगा तु नायव्वा ॥

वृ- 'एतेषां' चतुर्णां पदानां षोडशविधा भजना कर्त्तव्या, तद्यथा-कालोत्थायी कालनिवेशी स्थानस्थायी कालभोजी १ कालोत्थायी कालनिवेशी स्थानस्थायी अकालभोजी २ कालोत्थायी कालनिवेशी अस्थानस्थायी कालभोजी ३ कालोत्थायी कालनिवेशी अस्थानस्थायी अकालभोजी ४ । एवमकालनिवेशिपदेनापि चत्वारो भङ्गा अवाप्यन्ते, लब्धा अष्टौ भङ्गाः । एतेऽकालोत्थायिपदेनाप्यष्टौ प्राप्यन्ते, जाताः षोडश भङ्गाः । एते च सार्थपञ्चकेऽपि प्राप्यन्त इति पञ्चभिर्गुण्यन्ते, गुणिताश्चाशीतिर्भङ्गका भवन्ति ॥

[भा.३०८५] सत्थाह अट्ठगुणिया, असीति चत्ताल छस्सता होंति ।
ते आइयत्तिगुणिया, सत एक्कावन्न वीसहिया ॥

वृ- पूर्वलब्धा अशीतिर्भङ्गकाः प्रतिसार्थवाहं प्राप्यन्ते इति कृत्वा अशीतिरष्टभि सार्थवाहैर्गुणिताः षट् शतानि चत्वारिंशानि भवन्ति । एतानि चाष्टभिरादियात्रिकैर्गुण्यन्ते जातानि भङ्गकानामेकपञ्चाशच्छतानि विंशत्यधिकानि । एषामन्यतरस्मिन् सार्थे यथायोगमल्पबहुत्वं परिभाव्य यत्र बहुतरा गुणा भवन्ति तमभिरोच्य गुरुपादमूलमागत्य सार्थप्रत्युपेक्षका आलोचयन्ति ॥

अथ सार्थवाहस्यानुज्ञापनायां विधिमाह-

[भा.३०८६] दोण्ह वि चियत्त गमणं, एगस्सऽचियत्त होति भयणा उ ।
अप्पत्ताण निमित्तं, पत्ते सत्थम्मि परिसाओ ॥

वृ- यत्रैकः सार्थवाहस्तत्र तमनुज्ञापयन्ति, येवा प्रधानपुरुषास्तेऽनुज्ञापयितव्याः । अथ द्वौ सार्थाधिपती ततोद्वावप्यनुज्ञापयितव्यौ, यदि प्रीतिकं ततो गमनं कर्त्तव्यम् । अथैकस्याप्रीतिकम् अपरस्य प्रीतिकं ततो भजना भवति, यस्तयोः प्रेरकः प्रमाणभूतस्तस्य प्रीतिके गन्तव्यम् अप्रीतिके न गन्तव्यम् । सार्थं चाप्राप्तानां 'निमित्तं' शकुनग्रहणं भवति । सार्थं प्राप्ताः पुनः सार्थस्यैव शकुनेन गच्छन्ति । सार्थप्राप्ताश्च तिः परिषदः कुर्वन्ति, तद्यथा-पुरतो मृगपरिषदं मध्ये सिंहपरिषदं पृष्ठतो वृषभपरिषदम् ॥ अथ "दोण्ह वि"त्ति पदं विवृणोति-

[भा.३०८७] दोन्नि वि समागया सत्थिगो य जस्स व वसेण वच्चति तु ।
अणनुन्नविते गुरुगा, एमेव य एगतरपंते ॥

वृ- सार्थवाह आदियात्रिकश्च द्वावपि मिलितौ समागतौ समकमनुज्ञापयन्ति । अथवा 'सार्थिकः' सार्थो विद्यते यस्येति व्युत्पत्त्या सार्थवाह एक एवानुज्ञाप्यते । यस्य वा वशेन सार्थो व्रजति सोऽनुज्ञाप्यः । अथाननुज्ञापिते सार्थवाहादौ व्रजन्ति तदा चत्वारो गुरुकाः । अथ द्वौ सार्थविकत्र मिलितौ स्याताम्, तत्र च द्वौ सार्थाधिपती, द्वावप्यनुज्ञापयितव्यौ । अथैकमनुज्ञापयन्ति तत्र 'एवमेव' चतुर्गुरुकाः । अथैकतरः प्रान्तः ततश्चिन्तनीयम्-स प्रेरको वा स्याद् अप्रेरको वा । यदि प्रेरकस्ततो न गन्तव्यम् । अथ गच्छन्ति ततः 'एवमेव' चतुर्गुरुकाः ॥

कथं तर्हि गन्तव्यम् ? इत्याह-

[भा.३०८८] जो होइ पेल्लतो तं, भणंति तुह बाहुछायसंगहिया ।
वच्चामऽनुग्गहो त्ति य, गमनं इहरा उ गुरु आणा ॥

वृ- यस्तत्र 'प्रेरकः' प्रमाणभूतो भवति तं धर्मलाभयित्वा भणन्ति-यद्यनुजानीत ततो वयं युष्माभिः समं युष्मद्बाहुच्छायासङ्गृहीता व्रजामः । एवमुक्ते यद्यसौ ब्रूयात्-भगवन् ! अनुग्रहोऽयं मे, अहं सर्वमपि भगवतामुदन्तमुद्वहामीति; एवमनुज्ञाते गमनं विधेयम् । 'इतरथा' यद्यसौ तूष्णीकस्तिष्ठति ब्रवीति वा 'मा समागच्छत' इति ततो यदि गच्छन्ति ततश्चत्वारो गुरव आज्ञादयश्च दोषाः ॥ यदि सार्थवाहस्यापरस्यवा प्रेरकस्याप्रीतिके गम्यते तत एते दोषाः-

[भा.३०८९] पडिसेहण निच्छुभणं, उवकरणं बालमादि वा हारे ।
अतियत्त गुम्मिएहि व, उड्डुभंते न वारेति ॥

वृ-स सार्थवाहादिः प्रान्तः सन्नटवीमध्यप्राप्तानां साधूनां भक्त-पानप्रतिषेधं सार्थाद्वा निष्काशनं विदध्यात्, उपकरणं वा बालादीन् वा अन्येन स्तेनादिना 'हारयेत्' अपहरणं कारयेदित्यर्थः, 'आदियात्रिकैर्वा' सार्थारक्षकैः 'गौल्मिकैर्वा' स्थानरक्षपालैः 'उड्डह्यमानान्' मुच्यमाणान् साधून् 'न वारयति' उदासीन आस्ते इत्यर्थः ॥ यत एवं ततः किं कर्त्तव्यम् ? इत्याह-

[भा.३०९०] भद्दगवयणे गमनं, भिक्खे भत्तट्ठणाए वसधीए ।
थंडिल्ल असति मत्तग, वसभा य पदेस वोसिरणं ॥

वृ-सार्थवाहादिर्भद्रको ब्रूयात्-यद् यूयमादिशत तदहं सर्वमपि सम्पादयिष्यामि, सिद्धार्थकवत् चम्पकपुष्पवद्वा शिरसि स्थिता अपि मे भारं न कुरुथ । एवं वचने भणिते सति गमनं कर्त्तव्यम् । गच्छद्भिश्चाध्वनि भैक्षविषया भक्तार्थना-समुद्देशनं तद्विषया वसतिविषया च यतना कर्त्तव्य । संज्ञां कायिकीं वा स्थण्डिले व्युत्सृजेयुः । स्थण्डिलस्यासति मात्रके व्युत्सृज्य तावद् वहन्ति यावत्

स्थण्डिकं प्राप्नुवन्ति, एवं वृषभा यतन्ते, यद्वा वृषभाः पुरतो गत्वा यत्र स्थण्डिलं तत्र प्रथमत एव तिष्ठन्ति। अथ सर्वथैव स्थण्डिलं न प्राप्यते ततो धर्मा-ऽधर्माऽऽकाशास्तिकायप्रदेशेष्वपि व्युत्सृजन्ति ॥ अमुमेवार्थमतिदेशद्वारेणाह-

[भा.३०९१] पुव्वं भणिया जयणा, भिक्खे भत्तट्ठ वसहि थंडिल्ले।
सा चेव य होति इहं, नाणत्तं नवरि कप्पम्मि ॥

वृ- भिक्षा-भक्तार्थ-वसति-स्तण्डिलविषया यतना या 'पूर्वम्' अधस्तनसूत्रेषु ओघनिर्युक्तौ वा भणिता सैवेहाध्वनि वर्त्तमानानां मन्तव्या, स्थानाशून्यार्थं तु किञ्चिदत्रापि वक्ष्यते। तत्र भैक्षद्वारे 'नवरं' केवलमिह 'कल्पे' अध्वकल्पविषयं नानात्वम् ॥ तदेवाह-

[भा.३०९२] अग्गहणे कप्पस्स उ, गुरुगा दुविधा विराधना नियमा।
पुरिसऽद्धाणं सत्थं, नाउं वा वी न गिण्हिज्जा ॥

वृ- छिन्नेऽच्छिन्ने वा पथि यद्यध्वकल्पं न गृह्णन्ति तदा चतुर्गुरवः, 'द्विविधा च' आत्म-संयमभेदाद् विराधना नियमाद् मन्तव्या। तत्रात्मविराधना भक्ताद्यलाभे क्षुधार्त्तस्य परितापनादिना, संयमविराधना तु क्षुधार्त्तः सन्नध्वकल्पं विना कन्दादिग्रहणं कुर्यात्। अतो ग्रहीतव्योऽध्वकल्पः। एभिः कारणैर्न गृह्णीयादपि-यदि पुरुषाः सर्वेऽपि संहनन-धृतिबलवन्तः, अध्वाऽप्येकदैवसिको द्विदैवसिको वा, सार्थेऽपि प्रभूतभैक्षमवाप्यते तदपि ध्रुवलाभम्, सार्थश्च भद्रकः कालभोजी कालस्थायी च। एवमादीनि कारणानि ज्ञात्वा च्छिन्नपथेऽप्यध्वकल्पं न गृह्णीयात् ॥

स पुनरध्वकल्पः कीदृशो ग्रहीतव्यः ? इत्युच्यते-

[भा.३०९३] सक्कर-घत-गुलमीसा, अगंठिमा खज्जूरा व तम्मीसा।
सत्तू पिन्नागो वा, घत-गुलमिस्सो खरेणं वा ॥

वृ- शर्करया धृतेन च मिश्राणि 'अग्रन्थिमानि' कदलीफलानि खण्डीकृतानि गृह्यन्ते। अथ शर्करा न प्राप्यते ततो गुडेन धृतेन च मिश्रितानि। तेषामभावे खर्जूराणि धृतगुडमिश्राणि। तदप्राप्तौ सक्तुकान् धृत-गुडमिश्रान्। तदलाभे पिण्याकोऽपि धृत-गुडमिश्रो ग्रहीतव्य। अथ धृतं न प्राप्यते ततः खरसंज्ञकेन तैलेन मिश्रितः पिण्याकः ॥ एतेषां ग्रहणे गुणमुपदर्शयति-

[भा.३०९४] थोवा वि हणंति खुहं, न य तण्हं करेंति एते खज्जंता।
सुक्खोदणं वऽलंभे, समितिम दंतिक्क चुण्णं वा ॥

वृ- 'एतानि' अग्रन्थिमादीनि खाद्यमानानि स्तोकान्यपि क्षुधं घ्नन्ति, न चैतानि भुक्तानि सन्ति तृष्णां कुर्वन्ति, अत ईदृशोऽध्वकल्पो गृह्यते। ईदृशस्यालाभे 'शुष्कौदनः' शुष्ककूरः, तदलाभे 'समितिमाः' शुष्कमण्डकाः, तदप्राप्तौ 'दन्तिक्कचूर्णं' तन्दुललोट्टः, यद्वा दन्तिक्क-तन्दुलचूर्णः, चूर्णं तु-मोदकादिखाद्यकचूरिः; एतत् सर्वमपि धृत-गुडेन मिश्रयित्वा स्थापनीयम्। यदि शुद्धं भक्तं लभन्ते ततो नाध्वकल्पं भुञ्जते, यावन्मात्रेण वा न्यूनं शुद्धं लभन्ते तावन्मात्रमध्वकल्पात् परिभुञ्जते, अनुपस्थापितेभ्यो वा प्रयच्छन्ति ॥

अध्वानं प्रविशद्भिरपरमपि यद् ग्रहीतव्यं तद् दर्शयति-

[भा.३०९५] तिविहाऽऽमयभेसज्जे, वणभेसज्जे य सप्पि-मुह-पट्टे।
सुद्धाऽसति तिपरिरए, जा कम्मं नाउबद्धाणं ॥

वृ-त्रिविधाः-त्रिप्रकाश वातज पित्तज-श्लेष्मजभेदाद् ये आमयाः-रोगास्तेषां यानि भैषज्यानि, यानि च व्रणस्य भैषज्यानि सर्पिर्मिश्राणि मधुमिश्राणि वा व्रणेषु दत्त्वा पट्टैर्बध्यन्ते तानि गृह्णन्ति। सर्वमप्येतदध्वकल्पादिकं प्रथमतः पुनरध्वानं स्तोकं वा बहुं वा ज्ञात्वा तदनुसारेणाध्वकल्पोऽपि ग्रहीतव्यः ॥ एवं यदा सर्वमप्युत्पादितं भवति तदा किं विधेयम् ? इत्याह-

[भा.३०९६] अद्धाण पविसमाणो, जाणगनीसाए गाहए गच्छं।
अह तत्थ न गाहिंता, चाउम्मासा भवे गुरुगा ॥

वृ- अध्वानं प्रविशन् सूरि प्रथमत एव ज्ञस्य-गीतार्थस्य निश्रया-तं पुरस्कृत्य गच्छमध्वकल्पं ग्राहयति । अथ 'तत्र' अध्वप्रवेशे गच्छं न ग्राहयति ततश्चतुर्मासा गुरुका भवेयुः । अतो गीतार्थं पुरस्कृत्यागीतार्थप्रत्ययनिमित्तमन्तराऽन्तरा कानिचिद्दर्थपदानि परित्यजन् सूरिर्गच्छमध्वकल्पं ग्राहयेत् ॥ एवंविधेन विधिना निर्गतानामयं विधिः-

[भा.३०९७] सभए सरभेदादी, लिंगविओगं च काउ गीयत्था।
खरकम्मिया व होउं, करेंति गुत्तिं उभयवग्गे ॥

वृ-यत्र सभयं तत्र वृषभाः स्वरभेद-वर्णभेदकारिणीभिर्गुलीकाभिरन्यादृशं स्वरं वर्णं च कृत्वा गच्छन्ति । अथवा यथा 'एते संयताः' इति न ज्ञायते तथा लिङ्गवियोगं कृत्वा गीतार्था गच्छन्ति । खरकर्म्मिका वा सन्नद्धपरिकरा यथासम्भवं गृहीतायुधा भूत्वा वृषभाः 'उभयवर्गे' साधु-साध्वीलक्षणे 'गुप्तिं' रक्षां कुर्वन्ति ॥ किञ्च-

[भा.३०९८] जे पुव्विं उवकरणा, गहिया अद्धाण पविसमाणेहिं।
जं जं जोग्गं जत्थ उ, अद्धाणे तस्स परिभोगो ॥

वृ-यानि पूर्वं धर्मकरकादीन्युपकरणानि अध्वानं प्रविशद्भिर्गृहीतानि तेषां मध्ये यद् यस्मिन् काले योग्यं तस्य तदा अध्वनि परिभोगः कर्त्तव्यः ॥ अथाध्वकल्पभोगे विधिमाह-

[भा.३०९९] सुक्खोदणो समितिमा, कंजुसिणोदेहि उण्हविय भुंजे।
मूलुत्तरे विभासा, जतिऊणं निग्गते विवेगो ॥

वृ- "कंजुसिणोदेहि" त्ति इह च लाटदेशेऽश्रावणं काञ्जिकं भण्यते । यदाह चूर्णिकृत्अवसावणं लाडाणं कंजियं भण्णइ त्ति । ततोऽवश्रावणेनोष्णोदकेन वा शुष्कौदनं शुष्कसमितिमांश्च 'उण्हयित्वा' मृदुभवनार्थमुष्णीकृत्य भुञ्जीत । "जइऊणं निग्गए विवेगो" त्ति एवमादिकया यतनया यतित्वा यदा अध्वनो निर्गतास्तदा तमध्वकल्पमभुक्तं भुक्तोद्धरितं वा विविचन्ति, परिष्ठापयन्तीत्यर्थः । "मूलुत्तरे विभास" त्ति मूलोत्तरगुणविषया विभाषा कर्त्तव्या । तद्यथा-शिष्यः पृच्छति-यो अध्वकल्प आधाकर्म्मिकः परिवासितश्च स तावदाधाकर्म्मिकत्वेनोत्तरगुणोपघाती परिवासितत्वेन तु मूलगुणोपघाती ततः किमेष भुज्यताम् ? उत प्रतिदिवसं लभ्यमानमाधाकर्म ? अत्रोच्यते-अध्वकल्पो भुज्यतां नाधाकर्म ॥ ननु दोषद्वयदुष्टोऽसौ ? सूरिराह-

[भा.३१००] कामं कम्मं तु सो कप्पो, निसिं च परिवासितो।
तहा वि खलु सो सेओ, न य कम्मं दिने दिने ॥

वृ- 'कामम्' अनुमतम्-यदसावध्वकल्प एकं तावदाधाकर्म अपरं च 'निशि' रात्रौ परिवासितः,

तथापि 'खलु' निश्चितं 'स एव' अध्वकल्पः श्रेयान्, न चाधाकर्म दिने दिने लभ्यमानं वरम् ॥ कुतः ? इति चेद् उच्यते-

[भा.३१०१] आधाकम्माऽसतिं घातो, सइं पुव्वहते त्ति य ।
जे उ ते कम्ममिच्छंति, निग्घिणा ते न मे मता ॥

वृ- यदाधाकर्म दिने दिने लभ्यते तत्र 'असकृद्' अनेकवारं जीवोपघातः, अध्वकल्पे तु यदाधाकर्म तत्र 'सकृद्' एकमेव वारं जीवोपघातः, पूर्वहताश्च ते जीवा न दिने दिने हन्यन्ते, अतोऽध्वकल्प एव वरं नाधाकर्म । ये पुनः 'ते' अविदितप्रवचनरहस्या अध्वकल्पं मूलोत्तरगुणोपघातिनं मत्वा न भुञ्जते, आधाकर्म तु केवलोत्तरगुणोपघातकमिति मत्वा दिने दिने भोक्तुमिच्छन्ति, तेऽत्यन्तनिर्घृणाः सत्त्वेषु, अत एव न ते मम सम्मता इति ॥

भक्तद्वार एवं विशेषं दर्शयति-

[भा.३१०२] कालुट्ठाईमादिसु, भंगेसु जतंति बितियभंगादी ।
लिंगविवेगोकंते, चुडलीए मग्गतो अभए ॥

वृ-कालोत्थायिप्रभृतिषु भङ्गेषु द्वितीयभङ्गादौ कृत्वा यतन्ते । तथाहि-कालोत्थायी कालनिवेशी स्थानस्थायी कालभोजी इत्यत्र प्रथमभङ्गे नास्ति यतना, सर्वथाऽपि शुद्धत्वात्; द्वितीयादिषु तु सम्भवति । तत्र द्वितीयभङ्गे अकालभोजीति कृत्वा खलिङ्गविवेकं विधाय रात्रौ परलिङ्गेन गृह्णन्ति। तृतीयचतुर्थभङ्गयोरस्थायीति कृत्वा यद् गवादिभिराक्रान्तं स्थानं तत्र तिष्ठन्ति । पञ्चमादिषु चतुर्षु भङ्गेष्वकालनिवेशीति कृत्वा कालिकायां तिष्ठन्तश्चुडलिकया संस्तारकभूम्यादिषु बिलादिकं गवेषयन्ति । नवमादिषु षोडशान्तेष्वसु भङ्गेषु अकालोत्थायीति कृत्वा रात्रौ गन्तव्ये उपस्थिते 'मार्गतः' पृष्ठतः स्थिता गच्छन्ति । क्व सति ? इत्याह-'अभये' यदि पृष्ठतो गच्छतां स्तेनादिभयं न भवेत् । भक्तार्थनं तु यः सार्थोऽकालस्थायी तत्र निर्भये पुरतो गत्वा समुद्दिशन्ति यथा समुद्दिष्टे सार्थस्तत्र प्राप्नोति, वसतिं च मध्ये गृह्णन्ति ॥ तथा-

[भा.३१०३] सावय अन्नट्ठकडे, अट्ठा सुक्खे सयं जोइ जतणाए ।
तेने वयणचडगरं, तत्तो व अवाउडा होंति ॥

वृ-श्वापदभयेऽन्यैः-सार्थिकैरात्मार्थं यो वृतिपरिक्षेपः कृतस्तत्र तिष्ठन्ति । तदभावे "अट्ठ" त्ति साधूनामर्थाय कृते वृतिपरिक्षेपे तिष्ठन्ति । तदभावे "सुक्खे सय" त्ति शुष्ककण्टिकाभिः स्वयमेव वृतिपरिक्षेपं कुर्वन्ति । "जोइ जयणाए" त्ति यदि श्वापदभये ज्योतिषा-अग्निना कार्यं ततः परकृतमग्निं सेवन्ते । अथ ते तं सेवितुं न प्रयच्छन्ति ततः परकृतमेवाग्निं गृहीत्वा प्राशुकदारुभिः प्रज्वालयन्ति । यत्र तु स्तेनभयं तत्र तथा 'वचनचटकरं' वागाडम्बरं कुर्वन्ति यथा ते स्तेना भयादेव शीघ्रं नश्यन्ति । अथवा यतः-यस्या दिशस्ते समागच्छन्ति तदभिमुखीभूय अप्रावृता भवन्ति ॥ एवंविधं विधिं कुर्वाणा अध्वनो निस्तरन्ति । अथायं व्याघातो भवेत्-

[भा.३१०४] सावय-तेनपरद्धे, सत्थे फिडिया ततो जति हवेज्जा ।
अंतिमवइगा विंटिय, नियट्टनय गोउलं कहणा ॥

वृ-महाटव्यां सिंहादिभिः श्वापदैः स्तेनैर्वा सार्थः प्रारब्धः सन् दिशोदिशि विप्रणष्टः, साधवोऽप्येकां दिशं गृहीत्वा विप्रणष्टाः 'ततः' सार्थात् स्फिटिता यदि भवेयुः, ततो दिग्भागमजानन्तो वनदेवतायाः

कायोत्सर्गं कुर्वन्ति, सा च व्रजिका विकुर्वति, अन्तिमायां च व्रजिकायामुपकरणविण्टिकां विस्मायति, तस्या ग्रहणार्थं साधूनां निवर्त्तनम्, यावत् तत्रागताः तावद् गोकुलं न पश्यन्ति, ततो गुरुणां समीपे कथनम्, यथा-नास्ति सा व्रजिकेति ॥ इदमेव स्पष्टयति-

[भा.३१०५] अद्धाणम्मि महंते, वट्टंतो अंतरा तु अडवीए।
सत्थो तेनपरद्धो, जो जत्तो सो ततो नट्ठो ॥

वृ- अध्वनि महति वर्त्तमानः सार्थ सर्वोऽप्यन्तरा महाटव्यां स्तेनैः प्रारब्धः, ततश्च यो यत्र वर्त्तते स तत एव 'नष्टः' पलायितः ॥

[भा.३१०६] संजयजणो य सव्वो, कंची सत्थिलुयं अलभमाणो।
पंथं अजाणमाणो, पविसेज्ञ महाडविं भीमं ॥

वृ- संयतजनश्च सर्व कश्चिदपि सार्थिकमलभमानः पन्थानं चाजानन् भीमां महाटवीं प्रविसेत्॥ ततः किं कर्तव्यम्? इत्याह-

[भा.३१०७] सव्वत्थामेण ततो, वि सव्वकज्जुजया पुरिससीहा।
वसभा गणीपुरोगा, गच्छं धारिंति जतणाए ॥

वृ- ततः 'सर्वस्थाम्ना' सर्वादरेण वृषभाः 'सर्वकार्योद्यताः' सकलगच्छकार्यैकबद्धकक्षाः 'पुरुषसिंहाः' सातिशयपराक्रमतया पुरुषाणं मध्ये सिंहकल्पाः 'गणिपुरोगाः' आचार्यपुरस्सस ईदृश्यां विषमदशायां प्रपतन्तं गच्छं यतनया धारयन्ति ॥ तामेवाह-

[भा.३१०८] जइ तत्थ दिसामूढो, हवेज्ञ गच्छो सबाल-वुड्ढो उ।
वनदेवयाए ताहे, नियमपगंपं तह करेंति ॥

वृ-यदि 'तत्र' अटव्यां सबाल-वृद्धोऽपि गच्छो दिङ्मूढो भवेत् ततो नियमेन-निश्चयेन प्रकम्पः-देवताया आकम्पो यस्मादिति नियमप्रकम्पः-कायोत्सर्गस्तं वनदेवताया आकम्पनार्थं तथा कुर्वन्ति यथा सा आकम्पिता सती दिग्भागं वा पन्थानं वा कथयति ॥ यतः-

[भा.३१०९] सम्मद्दिट्ठी देवा, वेयावच्चं करेंति साहूणं।
गोकुलविउव्वणाए, आसास परंपरा सुद्धा ॥

वृ- ये सम्यग्दृष्टयो देवास्ते साधूनां 'वैयावृत्त्यं' भक्तपानोष्णादिना द्रव्यापदायुद्धरणात्मकं कुर्वन्तीति स्थिति। ततः सम्यग्दृष्टिदेवता काचिद् गोकुलं विकुर्वति। साधूनां तद्दर्शनेनाश्वासः। ततस्तया देवतया साधवो गोकुलपरम्परया तावद् नीता यावज्जनपदं प्राप्ताः। तया एवं नीता अपि ते 'शुद्धाः' निर्दोषाः ॥ अमुमेवार्थं सविशेषमाह-

[भा.३११०] सावय-तेनपरद्धे, सत्थे फिडिया तो जइ हविज्ञा।
अंतिमवईगा विंटिय, नियट्टणय गोउलं कहणा ॥

वृ- श्वापदैः स्तेनैश्च प्रारब्धे नष्टे च सार्थे 'ततः' सार्थात् स्फिटिता यदि भवेयुः ततः कायोत्सर्गेण देवताकम्पयेत्। आकम्पिता च काचित् पन्थानं कथयेत्, काचिद् व्रजिकाः परम्परया विकुर्व्य जनपदं प्रापयेत्। अन्तिमायां च व्रजिकायामुपकरणविण्टिकामुपधिं (वा) विस्मारयेत्। तदर्थं साधूनां निवर्त्तना। यावत् तत्रागतास्तावद् गोकुलं न पश्यन्ति। ततो गुरुणां समीपे कथनम्, यथा-नास्ति सा व्रजिकेति। गुरुभिश्च ज्ञातम्, यथा-एतत् सर्वं देवताकृतमिति ॥

[भा.३११९] भंडी-बहिलग-भरवाहिगेसु एसा तु वण्णिया जतणा ।
ओदरिय विवित्तेसु य, जयण इमा तत्थ नातव्वा ॥

वृ- भण्डी-बहिलक-भारवाहिसार्थेषु 'एषा' अनन्तरोक्ता यतना वर्णिता । अथौदरिकेषु 'विविक्तेषु च' कार्पटिकेष्वियं यतना ज्ञातव्या ॥ तामेवाह-

[भा.३११२] ओदरिपत्थयणाऽसइ, पत्थयणं तेसि कंद-मूल-फला ।
अग्गहणम्मि य रज्जू, वलिंति गहणं च जयणाए ॥

वृ- आगाढे राजद्विष्टादिकार्ये औदरिकादिभिः सह गम्यमाने 'पथ्यदनस्य' शम्बलस्याऽभावे यदि 'तेषाम्' औदरिकादीनां कन्द-मूल-फलान्याहारो भवेत् ततः साधूनामपि तमेवाहारं स्वयं प्रयच्छन्ति । ये च तत्रापरिणतास्ते कन्दादि न गृह्णन्ति । अग्रहणे च ते सार्थिका अपरिणतानां भीषणार्थं रज्जुर्वलयन्ति, ततो यतनया ग्रहणं कुर्वन्ति ॥ इदमेव स्पष्टयति-

[भा.३११३] कंदाइ अभुंजंते, अपरिणए सत्थिगाण कहयंति ।
पुच्छा वेधासे पुन, दुक्खिहरा खाइउं पुरतो ॥

वृ- अपरिणते कन्दादिकमभुञ्जाने वृषभाः सार्थिकानां कथयन्ति-एतान् तथा भापयत यथा खादन्ति । ततस्ते सार्थिका रज्जुवलनं कुर्वन्ति । ततो गीतार्था कृतसङ्केताः पृच्छन्ति- कथयत, किमेताभी रज्जुभि प्रयोजनम् ? । सार्थिका भणन्ति-वयमेकनाचारुदाः, अतो योऽस्माकं कन्दादीनी न भक्षयति तं वयमेताभिर्विहायसि लम्बयामः, 'इतरथा' तस्य बुभुक्षार्तस्य पुरतः खादितुं 'दुःखं' दुष्करम्, न वयं भक्षयितुं शक्नुम इति भावः ॥

[भा.३११४] इहरा वि मरति एसो, अम्हे खायामो सो वि तु भएण ।
कंदादि कज्जगहणे, इमा उ जतणा तहिं होति ॥

वृ- कन्दादीन्यभक्षयन्नितरथाऽप्यस्यामटव्यामवश्यमेष म्रियते अतो विहायसि लम्बनेन तं मारयित्वा सुखेनैव वयं भक्षयामः इत्युक्ते 'सोऽपि' अपरिणतो भयेन कन्दादिभक्षणं करोति । एवमादिषु कार्येषु कन्दादिग्रहणे प्राप्ते इयं यतना भवति ॥ तामेवाह-

[भा.३११५] फासुग जोनिपरित्ते, एगट्ठिगऽबद्ध भिन्नऽभिन्ने अ ।
बद्धट्ठिए वि एवं, एमेव य होइ बहुबीए ॥

[भा.३११६] एमेव होइ उवरिं, एगट्ठिय तह य होइ बहुबीए ।
साहारणस्सभावा, आईए बहुगुणं जं च ॥

वृ- द्वे अपि व्याख्यातार्थे ॥ पानकयतनामाह-

[भा.३११७] तुवरे फले य पत्ते, रुक्ख-सिला-तुप्प-मद्दणादीसु ।
पासंदणे पवाते, आतवतत्ते वहे अवहे ॥

वृ- एषाऽपि गतार्था ॥ गता अशिवविषया यतना । अथावमौदर्यविषयां यतनामाह-

[भा.३११८] ओमे एसणसोहिं, पजहति परिताविती दिगिंछाए ।
अलभंते वि य मरणे, असमाही तित्थवोच्छेदो ॥

वृ- अवमौदरिकं विज्ञायानागतमेव द्वादशभिर्वर्षैर्निर्गन्तव्यम् । अथ न निर्गच्छन्ति ततश्चतुर्गुरु आज्ञादयश्च दोषाः । तत्र च तिष्ठन् 'दिगिञ्छया' क्षुधा परितापितः सन्नेषणाशुद्धिं प्रजहाति,

अथवा भक्त-पानमलभमानो मरणमाप्नोति। असमाधिना च म्रियमाणो देवदुर्गतिं दुर्लभबोधिकत्वं च प्राप्नोति। एवं चान्याऽन्यसाधुषु म्रियमाणेषु तीर्थस्य व्यवच्छेदो भवति॥ यत एवमतः-

[भा.३११९] ओमोदरियागमने, मग्गे असती य पंथे जयणाए।
परिपुच्छिऊण गमनं, चउव्विहं रायदुट्ठं च॥

वृ-अवमौदरिकायां गमने प्राप्ते पूर्वं मार्गेण गन्तव्यम्। मार्गस्याभावे पथाऽपि 'किं छिन्नोऽच्छिन्नो वाऽयं पन्थाः ?' इति परिपृच्छ्य 'यतनया' अशिवद्वारोक्तया गमनं विधेयम्। अथ राजद्विष्टद्वारम्-तच्च निर्विषयादिभिर्वक्ष्यमाणभेदैश्चतुर्विधम्॥ तत्र स राजा कथं प्रद्वेषमापन्नः ?

इत्याशङ्कावकाशमवलोक्येदमाह-

[भा.३१२०] ओरोहधरिसणाए, अब्भरहितसेहदिक्खणाए वा।
अहिमर अनिट्ठदरिसण, वुग्गाहणया अनायारे॥

वृ- अवरोधः-अन्तःपुरं तस्य लिङ्गस्थेन केनाप्याघर्षणा कृता, राज्ञो वाऽभ्यर्हितः-गौरविको राजा-ऽमात्यादिपुत्रः शैक्षो दीक्षितो भवेत्, साधुवेषेण वा केचिदभिमराः प्रविष्टाः, अनिष्टं वा साधुदर्शनं स्वयमेव पुरोहितप्रभृतिभिर्वा व्युद्ग्राहितो मन्यते, संयतो वा कयाचिदविरतिकया सममनाचारं प्रतिसेवमानो दृष्टः। एवमादिभि कारणैः प्रद्विष्ट इत्थं चतुर्विधं दण्डं प्रयुङ्क्ते॥

[भा.३१२१] निव्विसउ त्ति य पढमो, बितिओ मा देह भत्त-पानं से।
ततितो उवकरणहरो, जीय चरित्तस्स वा भेतो॥

वृ- प्रथमो राजदण्डो निर्विषयाऽऽज्ञापनलक्षणः। द्वितीयो मा भक्तपानममीषां प्रयच्छतेत्येवंलक्षणः। तृतीयः पुनरुपकरणहरः। चतुर्थो जीवितस्य चारित्रस्य वा भेदः कर्त्तव्यः॥ एवंविधे चतुर्विधे राजद्विष्टे आज्ञातिक्रमं कुर्वाणानां प्रायश्चित्तमाह-

[भा.३१२२] गुरुगा आणालोवे, बलियतरं कुप्पे पढमए दोसो।
गिण्हंत-देंतदोसा, बितिय-तिए चरिमे दुविह भेतो॥

वृ-येन राज्ञा निर्विषया आज्ञप्तास्तदाज्ञालोपं विधाय तिष्ठतां चत्वारो गुरुकाः। अन्यच्चाज्ञातिक्रमे राजा 'बलिकतरं' गाढतरं कुप्यति, एष प्रथमभेदे दोषोऽभिहितः। द्वितीयतृतीयभेदयोर्येन राज्ञा ग्राम-नगरादिषु भक्त-पानमुपकरणं वा वारितं तत्र ये साधवो गृह्णन्ति ये च गृहस्थास्तेषां प्रयच्छन्ति तेषामुभयेषामपि दोषाः-ग्रहणा-ऽऽकर्षणादयो भवन्ति। चरमः-चतुर्थो भेदः तत्र द्विविधो भेदो भवति, जीवितभेदश्चारित्रभेदश्चेत्यर्थः॥ अथ निर्विषयाज्ञप्तानां गमनविधिमाह-

[भा.३१२३] सच्छंदेण य गमनं, भिक्खे भत्तट्ठणे य वसहीए।
दारे व ठितो रुंभति, एगट्ठ ठितो व आणावे॥

वृ- यत्र राज्ञा भणिताः-स्वच्छन्दं गच्छन्तु भवन्तः, नाहं गच्छतां कमपि निरोधं कुर्वे; तत्र भैक्षे भक्तार्थने वसतिविषयां च सामाचारीं न परिहापयन्ति। अथ 'द्वारे' ग्रामादिप्रवेशमुखे स्थितो राजपुरुषैः साधून् भिक्षमाणान् निरुध्य 'एकत्र च' स्थापयित्वा स्वकुलादेः भिक्षाः साधून् भोक्तुमात्मसमीपे आनाययति ततो वक्ष्यमाणां यतनां कुर्वन्तीति निर्युक्तिगाथासमासार्थः॥

साम्प्रतमिदमेव व्यक्तीकुर्वन्नाह-

[भा.३१२४] सच्छंदेण उ गमनं, सयं व सत्थेण वा वि पुव्वुत्तं।

तत्थुग्गमादिसुद्धं, असंथरे वा पनगहानी ॥

वृ- यत्र राज्ञा स्वच्छनेदन गमनमनुज्ञातं तत्र स्वयं वा सार्थेन वा सहिता गच्छन्तः 'पूर्वोक्तम्' इहैवाशिवद्वारे ओघनिर्युक्तौ वा भणितं भैक्ष-षट्काययतनादिकं कर्त्तव्यम्। नवरं तत्र स्वच्छन्दगमने उद्‌गमादिशुद्धं भक्तपानं ग्राह्यम्। असंस्तरणे पञ्चकपरिहाण्या गृह्णन्ति। अथ राजा 'मा अत्रैव जनपदे कचित् प्रदेशे निलीय स्थास्यन्ति' इति बुध्या पुरुषान् सहायान् प्रयच्छति, ततस्ते पुरुषा भणन्ति-यूयं ग्रामं प्रविश्य तत्र भिक्षामटित्वा भुक्त्वा च प्रत्यागच्छत, वयमिहैव ग्रामद्वारे स्थिताः प्रतीक्षामहे; ततस्ते तत्र स्थिता यो य साधुः समागच्छति तं तथा निरुन्धते यावता सर्वेऽपि मिलिताः। अथवा ते राजपुरुषाः सभायां देवकुले वा स्थिता ब्रुवते-यूयं भिक्षामटित्वा गृहीत्वा चेह समागच्छत, अस्माकं समीपे समुद्दिशतेति ॥ ततश्च-

[भा.३१२५]　　तिण्हेगयरे गमने, एसणमादीसु होति जतियव्वं।
　　　　　　भत्तट्ठण थंडिल्ले, असती वसहीए जं जत्थ ॥

वृ- त्रयाणां प्रकाराणामेकतरस्मिन् गमने एषणायाम् आदिशब्दादुद्‌गमोत्पादनयोश्च यतितव्यम्। भक्तार्थनं तु द्वयोराद्यगमनयोर्मण्डल्यादिविधिनैव कुर्वन्ति, तृतीये तु गमने राजपुरुषसमीपे भुञ्जानानां न मण्डल्या विनियमः। स्थण्डिलसामाचारीं तु त्रिष्वपि न हापयन्ति, राजपुरुषसमीपस्थिता वा कुरुकुचां कुर्वन्ति। यदि ते ब्रवीरन्-'अस्मत्समीपे वस्तव्यम्' ततो वसतावसत्यां यद् यत्राल्पदोषतरं कार्यं तत् तत्र कर्त्तव्यम् ॥ अथ प्रकारत्रयमेव व्यक्तीकुर्वन्नाह-

[भा.३१२६]　　सच्छंदओ य एक्तं, बितियं अन्नत्थ भोत्तिहं एह।
　　　　　　ततिए भिक्खं घेत्तुं, इह भुंजह तीसु वी जतणा ॥

वृ- एकं स्वच्छन्दत गमनम्, द्वितीयं पुनरन्यत्र भुक्त्वेह समागच्छत, तृतीयं भिक्षां गृहीत्वा इह समागत्य भोजनं कुरुत, एषु त्रिष्विप भैक्षादियतना कर्त्तव्या ॥ अत्रैव विशेषं दर्शयति-

[भा.३१२७]　　सबिइज्जए व मुंचति, आणावेत्तुं व चोल्लए देति।
　　　　　　अब्भुग्गमाइसुद्धं, अनुसट्ठि अनिच्छे जं अंतं ॥

वृ- वाशब्दाः प्रकारान्तरोपन्यासे। कश्चिदतिप्रान्तः सद्वितीयान् साधून् मुञ्चति। किमुक्तं भवति?-साधूनां भिक्षामटतां राजपुरुषान् पृष्ठतः स्थितान् हिण्डापयति, ते च यद्युत्सुकाय्यमाना अनेषणीयं ग्राहयन्ति; यदि वा स राजपुरुष एकत्र स्थाने साधून् निरुध्य 'चोल्लकं' भोजनमानाय्य ददाति, यथा-सर्वेऽप्येतदाहारयत; ततोऽसौ वक्तव्यः-अस्माकमुद्‌गमादि शुद्धं ग्रहीतुं कल्पते। एवमुक्तो यद्युत्सङ्कलयति ततो भिक्षां हिण्डन्ते। अथ नोत्सङ्कलयति ततोऽनुशिष्टि कर्त्तव्या। तथापि मोक्तुमनिच्छति यत् चोलकं 'अन्तं' पिण्याक-दोषान्नादि तद् गृह्णन्ति ॥

[भा.३१२८]　　पुव्वं व उवक्खडियं, खीरादी वा अनिच्छे जं दिंति।
　　　　　　कमढग भुत्ते सण्णा, कुरुकुय दुविहेण वि दवेण ॥

वृ- अथवा चोल्लके आनीते तन्मध्याद् पूर्वमात्मार्थं तैः 'उपस्कृतं' राद्धं क्षीर-दध्यादि वा तद् भुञ्जते। यदि पूर्वराद्धं नेच्छित प्रदातुम्, ब्रवीति च-यदहं भोजयामि भणामि वा तत् समुद्दिशत; ततः शुद्धमशुद्धं वा यत् ते प्रयच्छन्ति तद् भुञ्जते। तत्र चेयं यतना-कमढकेषु परस्परं सान्तरमुपविष्टाः सन्तो भुञ्जते, भुक्तोत्तरकालं संज्ञाव्युत्सर्जनानन्तरं च प्राशुकमृत्तिकया द्रवेण च 'द्विविधेनापि'

सचित्ता-ऽचित्तभेदभिन्नेन संज्ञाव्युत्सर्जनानन्तरं च प्राशुकमृत्तिकया द्रवेण च 'द्विविधेनापि' सचित्ता-ऽचित्तभेदभिन्नेन कुरुकुचां कुर्वन्ति । तत्र पूर्वमचित्तेन, पश्चात् सचित्तेनापिः पूर्वं मिश्रेण, पश्चाद् व्यवहारसचित्तेनेति (वा) ॥ गतं निर्विषयाज्ञपनद्वारम् ।

अथ भक्त-पाननिवारणाद्वारं व्याचष्टे-

[भा.३१२९] बिइए वि होइ जयणा, भत्ते पाने अलब्भमाणम्मि ।
दोसीण-तक्क-पिंडी, एसणमादीसु जतितव्वं ॥

वृ-द्वितीयेऽपि राजद्विष्टे भक्त-पानेऽलभ्यमाने इयं यतना भवति-यावदद्यापि जनो न सञ्चरति तावत् प्रत्यूषवेलायां दोषान्नं तक्रं च गृह्णन्ति, पिण्याकपिण्डिकां वायसपिण्डिकां वा गृह्णन्ति, ततः पञ्चकपरिहाणिक्रमेणएषणादिषु यतितव्यम् ॥ केषु पुनस्तद् गृह्यते ? इत्याह-

[भा.३१३०] पुराणादिं पन्नवेउं, निसिं पि गीतत्थे होंति गहणं तु ।
अग्गीते दिवा गहणं, सुण्णघरे वा इमेहिं वा ॥

वृ-पुराणं वा श्रावकं वा साधुसामाचारीकुशलं प्रज्ञाप्य यदि सर्वेऽपि गीतार्थास्ततः 'निश्यपि' रात्रावपि ग्रहणं कुर्वन्ति । अगीतार्थमिश्रेषु तु पुराणादि प्रज्ञापितः सन् शून्यगृहे वाशब्दाद् देवकुलादौ बलिनिवेदनलक्ष्येण मोद्गलिकादिकं स्थापयति तस्य दिवा ग्रहणं कर्त्तव्यम् । एतेषु वा स्थानेषु स्थापितं गृह्णन्ति ॥ तान्येवाह-

[भा.३१३१] उंबर कोट्टिंबेसु व, देवउले वा निवेदनं रन्नो ।
कतकरणे करणं वा, असती नंदी दुविहदव्वे ॥

वृ-देवकुलादिषु ये उदुम्बरास्तेष्वर्चनिकालक्ष्येणोपढौकितं कूरादिकं गृह्णन्ति । कोट्टिम्बा नामयत्र गोभक्तं दीयते तत्र गोभक्तलक्ष्येण स्थापितं गृह्णन्ति । अरण्ये वा यद् देवकुलं तत्र बलिनिवेदनं गृह्णन्ति । राजानं च सदैव स्वयं परेण वा भणन्तो भाणयन्तश्च तिष्ठति (न्ति), यदि राजा बहुभिरप्युपायैरुपशम्यमानोऽपि नोपशाम्यति ततो यः संयतः 'कृतकरणः' इषुशास्त्रे कृताभ्यासः सहयोधी वा स करणं करोति, तं राजानं बद्ध्वा शास्तीत्यर्थः । विद्याबलेन वा वैक्रियलब्धिसम्पन्नो वा विष्णुकुमारादिरिव तस्य शिक्षां करोति । "असइ" त्ति यदा कृतकरणादयो न प्राप्यन्ते तदाऽध्वानं गच्छद्भि 'नन्दि' प्रमोदो येन द्रव्येण गृहीतेन स्यात् तद् द्विविधमपि ग्रहीतव्यम् तद्यथा-प्राशुकमप्राशुकं वा, परित्तमनन्तं वा, परिवासितमपरिवासितं वा, एषणीयमनेषणीयं वेति ॥ गतं भक्त-पानप्रतिषेधद्वारम् । अथोपकरणहरद्वारं व्याख्यानयति-

[भा.३१३२] तइए वि होति जतण, वत्थेपादे अलब्भमाणम्मि ।
उच्छुद्ध विप्पइण्णे, एसणमादीसु जतितव्वं ॥

वृ- 'तृतीयं राजद्विष्टं नाम' यत्र राज्ञा प्रतिषिद्धम्-'माऽमीषां वस्त्रं पात्रं वा कोऽपि दद्याद् अपहर्त्तव्यं वा; तत्र वस्त्रे वा पात्रे वा अलभ्यमाने यतना कर्त्तव्या । कथम् ? इत्याह-देवकुलादिषु कार्पटिकैर्यद् वस्त्रादिकम् 'उच्छुद्धं' परित्यक्तं यच्च 'विप्रकीर्णम्' उत्कुरुटिकादिस्थापितं तद् गृह्णन्ति । एषणादिदोषेषु वा यतितव्यम्, वस्त्रग्रहणे पञ्चकपरिहाण्या यतना कर्त्तव्येति ॥

[भा.३१३३] हियसेसगाण असती, तण अगनी सिक्कगा व वागा वा ।
पेहुण-चम्मग्गहणं, भत्तं तु पलास पाणिसु वा ॥

वृ- राज्ञा साधूनामुपकरणानि हृतानि, ततः तच्छेषाणां-तदुद्धरितानामभावः संवृत्तः किञ्चिदप्यवशिष्यमाणं नास्तीति भावः। ततः शीताभिभूताः सन्तस्तृणानि गृह्णन्ति अग्निं वा सेवन्ते। पात्रकबन्धाभावे सिक्ककानि, प्रावरणाभावे तु शणादिवल्कानि गृह्णन्ति। "पेहुणं" ति मयूराङ्गमयी पिच्छिका रजोहरणस्थाने कर्तव्या। चर्मणो वा प्रस्तरण-प्रावरणार्थं ग्रहणं कार्यम्। भक्तं तु पलाशपत्रादिषु, तेषामभावे पाणिष्वपि गृह्णीयाद्वा भुञ्जीत वा॥

[भा.३१३४] असई य लिंगकरणं, पन्नवणट्ठा सयं व गहणट्ठा।
आगाढे कारणम्मि, जहेव हंसादिणं गहणं॥

वृ- यदि राजा स्वलिङ्गेनोपशाम्यमानोऽपि नोपशाम्यति, उपकरणं वा स्वलिङ्गेन मृग्यमाणं न लभ्यते, ततः परलिङ्गं कुर्वन्ति। किमर्थम्? इत्याह-प्रज्ञापनार्थं स्वयं वा ग्रहणार्थम्। किमुक्तं भवति?-बौद्धादिना राज्ञोऽनुमतेन परलिङ्गेन स्थिताः स्वसमय-परसमयवेदिनो वृषभायुक्ति-युक्तैर्वचोभिस्तं राजानं प्रज्ञापयन्ति, तेन वा परलिङ्गेन स्थिता उपकरणं स्वयमेवोत्पादयन्ति। ईदृशे आगाढेकारणे यथैव हंसतैलादीनां ग्रहणं तथा वस्त्र-पात्रादेरप्यवस्वापन-तालोद्घाटनादिप्रयोगैः कर्तव्यमिति॥ गतमुपकरणहरद्वारम्।

अथ जीवित-चारित्रभेदद्वारं भावयति-

[भा.३१३५] दुविहम्मि भेरवम्मि, विज्ज निमित्ते य चुण्ण देवी य।
सेट्ठिम्मि अमच्चम्मि य, एसणमादीसु जतितव्वं॥

वृ- 'द्विविधे' जीवित-चारित्रव्यपरोपणात्मके भैरवे समुत्पन्ने तं राजानं विद्यया निमित्तेन वा चूर्णैर्वा वशीकुर्यात्, या वा देवी तस्य राज्ञा इष्टा सा विद्याभिरावर्त्यते। एवमप्यनुपशान्तौ श्रेष्ठिनममात्यं वा उपलक्षणत्वात् पाषण्डिगणं वा प्रज्ञापयन्ति, ततस्तद्वारेणोपशमयन्ति। अथवा यावद् नृपतिमुपशमयन्ति तावत् श्रेष्ठिनोऽमात्यस्य वा अवग्रहे तिष्ठन्ति। एषणादिषु च प्राग्वदेव यतितव्यम्॥

[भा.३१३६] आगाढे अन्नलिंगं, कालक्खेवो व होति गमनं वा।
कयकरणे करणं वा, पच्छादण थावरादीसु॥

वृ- आगाढे राजद्विष्टेऽन्यलिङ्गं विधायाज्ञायमानैस्तत्रैव कालक्षेपः कर्तव्यः विषयान्तरगमनं वा कर्तव्यम्। यो वा कृतकरणः स करणं करोति, विष्णुकुमारादिरिव नृपतेः शिक्षां करोतीत्यर्थः। अथ तदपि नास्ति ततः स्थावराः-वृक्षास्तेषां गहनेषु आदिशब्दात् पद्मसरःप्रभृतिषु वा आत्मानं प्रच्छाद्य दिवा निलीना आसते रात्रौ च व्रजन्ति॥

गतं राजद्विष्टद्वारम्। अथ भयादिद्वाराणि युगपदाह-

[भा.३१३७] बोहिय-मिच्छादिभए, एमेव य गम्ममाण जतणाए।
दोण्हऽट्ठा व गिलाणे, नाणादट्ठा व गम्मंते॥

वृ- बोधिकाः-मालवस्तेनाः, म्लेच्छाः-पारसीकादयः, तदादीनां भये समुपस्थिते शीघ्रं देशान्तरं गन्तव्यम्। तत्र च गम्यमाने 'एवमेव' अशिवादिद्वारवद् भैक्षादिकं यतनया कर्तव्यम्। आगाढं गन्तव्यम्। ग्लानत्वे वा द्वयोरर्थाय गम्यते, वैद्यस्यौषधानां च हेतोरित्यर्थः। उत्तमार्थे तु निर्यापणार्थं प्रतिचरको गच्छेत्। उत्तमार्थं प्रतिपित्सुर्वा विशोधिकरणार्थं गीतार्थसमीपं गच्छेत्। ज्ञान-दर्शन-

चारित्रार्थं वा गन्तव्यम् । एतैः कारणैर्गम्यमाने पूर्वं मार्गेण पश्चादच्छिन्नेन छिन्नेन वा पथाऽपि गन्तव्यम् ॥ अत्र यतनामाह-

[भा.३१३८] एपागन्नं च सता, वीसं चऽद्धाणनिग्गमा नेया ।
एत्तो एक्केक्कम्मि य, सतग्गसो होइ जतणाओ ॥

वृ- सार्थपथ्यदनकालसंस्थानभिक्षुभृतिभिश्चतुर्भिः सार्थवाहैरष्टभिश्चादियात्रिकैरेकपञ्चाशच्छतानि विंशत्यधिकानि अध्वनिर्गमप्रकारा भवन्ति । एते च प्राक् सप्रपञ्चं भाविताः । एतेषु भङ्गकेष्वेकैकस्मिन् भङ्गकेऽशिवादिकारणेऽध्वनि गच्छतां शताग्रशः प्रागुक्तनीत्या यतना भवन्ति ॥

मू. *(४७) संखडिं वा संखडियपडिया इत्तए ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.३१३९] दुविहाऽवाता उ विहे, वुत्ता ते होज्ज संखडीए तु ।
तत्थ दिया वि न कप्पति, किमु रातिं एस संबंधो ॥

वृ- 'विहे' अध्वनि गच्छतां संयमा-ऽऽत्मविराधनाभेदाद् द्विविधाः प्रत्यपाया उक्ताः । सङ्खड्यामपि गच्छतां त एव प्रत्यपाया भवेयुः । अतस्तत्र दिवाऽपि गन्तुं न कल्पते किमुत रात्रौ? एष सम्बन्धः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-"संखडिं वा" इति वाशब्दाद् "न कल्पते" इत्यादिपदान्यनुवर्तनीयानि । तद्यथा-न केवलमध्वानं रात्रौ वा विकाले वा गन्तुं न कल्पते, किन्तु सङ्खडिमपि रात्रौ वा विकाले वा सङ्खडिप्रतिज्ञया 'एतुं' गन्तुं न कल्पते । एष सूत्रसङ्क्षेपार्थः ॥ अथ भाष्यकारो विस्तरार्थं विभणिषुराह-

[भा.३१४०] संखंडिज्जंति जहिं, आऊणि जियाण संखडी स खलु ।
तप्पडिताए न कप्पति, अन्नत्थ गते सिया गमणं ॥

वृ- सम्-इति सामस्त्येन खण्डयन्ते-त्रोटयन्ते, 'जीवानां' वनस्पतिप्रभृतीनामायूंषि प्राचुर्येण 'यत्र' प्रकरणविशेषे सा खलु सङ्खडिरित्युच्यते, "स्वरेभ्य इः" इत्यौणादिक इप्रत्ययः, पृषोदरादित्वादनुस्वारलोपः, तां सङ्खडिं 'तत्प्रतिज्ञया' 'सङ्खडिमहं गमिष्यामि' इत्येवंलक्षणया गन्तुं न कल्पते । एवं ब्रुवता सूत्रेणेदं सूचितम्-'अन्यार्थम्' अपरकार्यनिमित्तं सङ्खडिग्रामं गतस्य सङ्खड्यामपि गमनं स्यादिति ॥ अथात्रैव प्रायश्चित्तमाह-

[भा.३१४१] राओ व दिवसतो वा, संखडिगमणे हवंतऽणुग्घाया ।
संखडि एगमनेगा, दिवसेहि तहेय पुरिसेहिं ॥

वृ- रात्रौ वा दिवसतो वा सङ्खड्यां-सङ्खडिग्राममुद्दिश्य गमने चत्वारोऽनुद्घाताः प्रायश्चित्तम् । सा च सङ्खडी दिवसैः पुरुषैश्चैका अनेका च भवति ॥ इदमेव स्पष्टयति-

[भा.३१४२] एगो एगदिवसियं, एगोऽनेगाहियं व कुज्जाहि ।
नेगा व एगदिवसिं, नेगा च अनेगदिवसं तु ॥

वृ- एकपुरुष एकदैवसिकीं सङ्खडीं कुर्यात्, एकः 'अनेकाहिकाम्' अनेकदैवसिकीम्, अनेके पुरुषाः सम्भूयैकदैवसिकीम्, अनेके पुरुषा अनेकदैवसिकीं सङ्खडीं कुर्वन्ति ॥

[भा.३१४३] एक्केक्का सा दुविहा, पुरसंखडि पच्छसंखडी चेव ।
पुव्वा-ऽवरसूरम्मि, अहवा वि दिसाविभागेणं ॥

वृ- 'एकैका' एकदैवसिकी अनेकदैवसिकी च 'सा' सङ्खडि प्रत्येकं द्विधा-पुरःसङ्खडी पश्चात्सङ्खडी च। या 'पूर्वसूर्ये' पूर्वदिग्विभागमध्यासीने रवौ क्रियते सा पुरःसङ्खडी, या पुनरपरसूर्ये सा पश्चात्सङ्खडी। अथवा दिग्विभागेनानयोः पुरः-पश्चाद्विभागो विज्ञेयः-या विवक्षितग्रामादेः सकाशात् पूर्वस्यां दिशि भवति सा पूर्वसङ्खडी, या तु तस्यैवापरस्यां दिशि सा पश्चात्सङ्खडी ॥ अत्र प्रायश्चित्तमाह-

[भा.३१४४] दुविहाए वि चउगुरु, विसेसिया भिक्खुमादिणं गमने।
गुरुगादि व जा सपदं, पुरिसेगा-ऽनेग-दिन-रातो ॥

वृ- द्विविधायामप्यनन्तरोक्तायां सङ्खड्यां गमने चतुर्गुरुकाः। एते च भिक्षुप्रभृतीनां तपःकालविशेषिताः-भिक्षोस्तपसा कालेन च लघवः, वृषभस्य तपसा लघवः, उपाध्यायस्य कालेन लघवः, आचार्यस्य तपसा कालेन च गुरवः। अथवा चतुर्गुरुकमादौ कृत्वा एकानेक-पुरुषकृतैकानेकदैवसिकसङ्खडीषु रात्रौ गच्छतः 'स्वपदं' छेदादिकं यावन्नेतव्यम्। तद्यथा-भिक्षुरेक-पुरुषकृतामेकदैवसिकीं सङ्खडीं व्रजति चतुर्गुरवः, एकपुरुषकृतानेकदैवसिक्यां षड्लघवः, अनेकपुरुषकृतायामेकदैवसिक्यां षड्गुरवः, अनेकपुरुषकृतानेकदैवसिक्यां छेदः। एवं भिक्षु-विषयमुक्तम्। वृषभस्य षड्लघुकादारब्धं मूले, उपाध्यायस्य षड्गुरुकादारब्धमनवस्थाप्ये, आचार्यस्य च्छेदादारब्धं पाराञ्चिके निष्ठामुपयाति ॥ प्रकारान्तरेण प्रायश्चित्तमेवाह-

[भा.३१४५] आयरियगमने गुरुगा, वसभाण अवारणम्मि चउलहुगा।
दोण्ह वि दोन्नि वि गुरुगा, वसभ बला तेतरे सुद्धा ॥

वृ- आचार्यस्य 'सङ्खड्यां गच्छामः' इति ब्रुवाणस्य चत्वारो गुरवः। तमेवं ब्रुवाणं वृषभा न वारयन्ति चतुर्लघुकाः। अथाचार्येण 'सङ्खडीं व्रजामः' इत्युक्ते वृषभा अपि 'व्रजामः' इति भणन्ति ततः 'द्वयोरपि' वृषभा-ऽऽचार्ययोर्ये चत्वारो मासास्ते द्वयेऽपि गुरुकाः कर्त्तव्याः, वृषभाणामपि चतुर्गुरुका भवन्तीति भावः। अथ वृषभैर्वारिता अप्याचार्या बलामोटिकया गच्छन्ति ततः 'ते' आचार्या प्रायश्चित्ते लग्नाः, 'इतरे' वृषभास्ते 'शुद्धाः' न प्रायश्चित्तभाज इति ॥

[भा.३१४६] सव्वेसि गमने गुरुगा, आयरियअवारणे भवे गुरुगा।
वसभे गीता-ऽगीए, लहुगा गुरुगो य लहुगो य ॥

वृ- यदि सर्वेऽपि साधवो भणन्ति 'सङ्खड्यां गच्छामः' इति ततस्तेषां चत्वारो गुरुकाः। आचार्यास्तान्न वारयति चतुर्गुरवः। वृषभो न वारयति चतुर्लघवः। गीतार्थो भिक्षुर्न वारयति गुरुको मासः। अगीतार्थो न वारयति लघुको मासः ॥

[भा.३१४७] एगस्स अनेगाण व, छंदेन पहाविया तु ते संता।
वत्तमवत्तं सोच्चा, नियत्तणे होंति चउगुरुगा ॥

वृ- 'एकस्य' आचार्यादेः 'अनेकेषां वा' बहूनां 'छन्देन' अभिप्रायेण 'ते' सङ्खड्या उपरि प्रधाविताः सन्तोवृत्तामवृत्तां वा सङ्खडीं श्रुत्वा यदि निवर्त्तन्ते ततश्चतुर्गुरुका भवन्ति ॥

इदमेव भावयति-

[भा.३१४८] वेलाए दिवसेहि व, वत्तमवत्तं निसम्म पच्चेति।
होहिइ अमुगं दिवसं, सा पुन अन्नम्मि पक्खम्मि ॥

वृ- वेलया दिवसैर्वा प्रतिनियतां सङ्खडीं श्रुत्वा प्रस्थिताः, गच्छद्भिश्चापान्तराले श्रुतम्, यथा-

सा सङ्खडी 'वृत्ता' समाप्ता 'अवृत्ता वा' अन्यस्यां वेलायामन्यस्मिन् दिवसे भाविनी; एवं वृत्तामवृत्तां वा 'निशम्य' श्रुत्वा 'प्रत्यायान्ति' प्रतिनिवर्त्तन्ते । तत्र वेलामङ्गीकृत्य यथा कैश्चिदपि साधुभिः श्रुतम्-अद्यामुकगृहे पूर्वाह्णवेलायां सङ्खडी भविष्यति; ततस्ते पात्राण्युद्ग्राह्य तस्यां गन्तुं प्रस्थिताः, अपान्तराले च तैः श्रुतम्, यथा-अतिक्रान्ता सा सङ्खडी । एवमपराह्णवेलाभाविनीं सङ्खडीं श्रुत्वा प्रस्थिताः, अपान्तराले चाकर्णितम्, यथा- नाद्यापि तत्र वेला; एवं श्रुत्वा प्रतिनिवर्त्तन्ते । दिवसमधिकृत्य पुनरित्थम्-"होहिइ" इत्यादि पश्चार्द्धम् । कश्चिद् ग्रामे स्थितैः श्रुतम्-अमुकग्रामे 'अमुकदिवसे' पञ्चमीप्रभृतिके सङ्खडिर्भविष्यति; इत्याकर्ण्य ते तं ग्रामं प्रस्थिताः, तत्र च गच्छद्भिरन्तरा श्रुतम्, यथा-वृत्ता सा सङ्खडी भविष्यति वा । कथम् ? इत्याह-"सा पुन अन्नम्मि पक्खम्मि" त्ति यस्यां पञ्चम्यां भाविनी सङ्खडी साधुभिः श्रुता सा पुनः 'अन्यस्मिन्' अतीतेऽनागते वा पक्षे भता वा भविष्यति वा, न तत्पक्षवर्तिनीति भावः ॥

अथ सङ्खडी कथं कुत्र वा भवति ? इत्युच्यते-

[भा.३१४९] आदेसो सेलपुरे, आदानऽट्ठाहियाए महिमाए ।
तोसलिविसए विन्नवणहा तह होति गमणं वा ॥

वृ- 'आदेशः' सङ्खडिविषये दृष्टान्तोऽयम्- तोसलिविषये शैलपुरे नगरे ऋषितडागं नाम सरः। वर्षे वर्षे भूयान् लोकोऽष्टाहिकामहिमां करोति । तत्रोत्कृष्टावगाहिमादिद्रव्यस्यादानं-ग्रहणं तदर्थं कोऽपि लुब्धो गन्तुमिच्छति । ततः स गुरूणां विज्ञपनां सङ्खडिगमनार्थं करोति । आचार्या वारयन्ति। तथापि यदि गमनं करोति ततस्तस्य प्रायश्चित्तं दोषाश्च वक्तव्या इति पुरातनगाथासमासार्थः ॥

अथैनामेव विवणोति-

[भा.३१५०] सेलपुरे इसितलागम्मि होति अट्ठाहिया महामहिमा ।
कोंडलमेंढ पभासे, अब्बुय पादीणवाहम्मि ॥

वृ-तोसलिदेशे शैलपुरे नगरे ऋषितडागे सरसि प्रतिवर्षं महता विच्छर्देनाऽष्टाहिकामहामहिमा भवति । तथा कुण्डलमेण्ठनाम्नो वानमन्तरस्य यात्रायां भरुकच्छपरिसरवर्ती भूयान् लोकः सङ्खडिं करोति । प्रभासे वा तीर्थे अर्बुदे वा पर्वते यात्रायां सङ्खडि क्रियते । 'प्राचीनवाहः' सरस्वत्याः सम्बन्धीपूर्वदिगभिमुखः प्रवाहः, तत्राऽऽनन्दपुरवास्तव्यो लोको गत्वा यथाविभवं शरदि सङ्खडिं करोति ॥ एवमादिषु सङ्खडीषु कोऽप्युत्कृष्टद्रव्यलुब्धो गुरून् सङ्खडिगमनार्थं विज्ञपयति । गुरवो ब्रुवते-आर्य ! न कल्पते सङ्खडिं गन्तुम्, ततोऽसौ मायया ब्रवीति-

[भा.३१५१] अत्थि य मे पुव्वदिट्ठा, चिरदिट्ठा ते अवस्स दट्ठव्वा ।
मायागमने गुरुगो, तहेव गामाणुगामम्मि ॥

वृ- सन्ति मे तत्र ग्रामे 'पूर्वदृष्टाः' पूर्वपरिचिताः सुहृदादयः, ते च 'चिरदृष्टाः' प्रभूतकालस्तेषां मिलितानमभवदिति भावः, अत इदानीमवश्यं द्रष्टव्यास्ते मया । एवं मायया गुरूनापृच्छय यदि गच्छति तदा गुरुको मासः । ग्रामानुग्रामेऽपि विहरतां सङ्खडिं श्रुत्वा गच्छतां तथैव मासगुरुकम्॥

इदमेव व्याचष्टे-

[भा.३१५२] गामानुगामियं वा, रीयंता सोउ संखडिं तुरियं ।
छड्डेंति व सति काले, गामं तेसिं पि दोसा उ ॥

वृ- ग्रामानुग्रामिकं वा 'रीयमाणाः' विहरन्तः क्वापि ग्रामे सङ्खडिं श्रुत्वा ये त्वरितं गच्छन्ति; सति वा भिक्षाकाले तं ग्रामं परित्यजन्ति, परित्यज्य च सङ्खडिग्रामं गच्छन्ति, तेषामपि 'दोषाः' वक्ष्यमाणा भवन्ति ॥

[भा.३१५३] गंतुमणा अन्नदिसिं, अन्नदिसि वयंति संखडिनिमित्तं ।
मूलग्गामे व अडं, पडिवसभं गच्छति तदट्ठा ॥

वृ- भिक्षाचर्यायामन्यस्यां दिशि गन्तुमनसः सङ्खडिं श्रुत्वा तन्निमित्तमन्यस्यां दिशि व्रजन्ति । मूलग्रामे वा अटन् सङ्खडिमाकर्ण्य प्रतिवृषभग्रामे 'तदर्थं' सङ्खडिहेतोर्गच्छति ॥

एतेषु सर्वेष्वपि गमनप्रकारेषु दोषानुपदिदर्शयिषुराह-

[भा.३१५४] एगाहि अनेगाहिं, दिया व राओ य गंतु पडिसिद्धं ।
आणादिणो य दोसा, विराधना पंथि पत्ते य ॥

वृ- एकाहिकीमनेकाहिकीं वा तां सङ्खडीं गन्तुं दिवा रात्रौ वा प्रतिषिद्धां यदि गच्छति तत आज्ञादयो दोषाः, विराधना च संयमा-ऽऽत्मविषया पथि वर्त्तमानानां तत्र प्राप्तानां च भवति ॥

तत्र पथि वर्त्तमानानां तावद् दोषानभिधित्सुराह-

भा (३१५५] मिच्छत्ते उड्डाहो, विराधना होति संजमाऽऽयाए ।
रीयादि संजमम्मि य, छक्काय अचक्खुविसयम्मि ॥

वृ-सङ्खडिं गच्छतः साधून् दृष्ट्वा यथाभद्रकादयो मिथ्यात्वे स्थिरतरीभवेयुः, उड्डाहो वा भवेत्। तथा संयमा-ऽऽत्मविराधना भवति । तत्र संयमविराधना भाव्यते-'मा सङ्खडिदिवसो व्यतिक्रामतु' इति कृत्वा रात्रौ गच्छन् ईर्यादिसमितीर्न शोधयति । अचक्षुर्विषये च गच्छतां षट्कायविराधना। आत्मविराधना तु पुरस्ताद् वक्ष्यते ॥ अथ मिथ्यात्वोड्डाहद्वारे व्याचष्टे-

[भा.३१५६] जीहादोसनियत्ता, वयंति लूहेहि तज्जिया भोज्जे ।
थिरकरणं मिच्छत्ते, तप्पक्खियखोभणा चेव ॥

वृ-लोको ब्रूयात्-अहो ! अमी श्रमणाः 'जिह्वादपनिवृत्ताः' रसगृद्धिरहिता अपि 'रूक्षैः' चन-चणकादिभिराहारैस्तर्जिताः सन्तः सम्प्रति 'भोज्यार्थं' सङ्खडिहेतोर्गच्छन्ति इत्युड्डाहो भवेत् । तथा यथैतदमीषामसत्यं तथा अन्यदपि मिथ्या प्रलपितमिति मिथ्यात्वे स्थिरीकरणं भवति । ये च तत्पाक्षिकाः-साधुपक्षबहुमानिनः श्रावकास्तेषां क्षोभना-मिथ्यादृष्टिभिः सम्यक्त्वाच्चालना भवति॥

अथाऽऽत्मविराधनामाह-

[भा.३१५७] वाले तेने तह सावते य विसमे य खाणु कंटे य ।
अकम्हाभयं आतसमुत्थं, रत्तिमादी भवे दोसा ॥

वृ- रात्रौ सङ्खडिगमने 'व्यालः' सर्पस्तेन दश्येत, स्तेनैरुपकरणमपह्रियेत, 'श्वापदैः' सिंहादिभिरुपद्रूयेत, 'विषमे च' निम्नोन्नते प्रपतेत्, स्थाणुना वा कण्टकेन वा विध्येत, अकस्माद्भयं चात्मसमुत्थं भवति । रात्रावेवमादयो दोषा भवेयुः ॥

एवं तावत् पथि गच्छतां दोषा अभिहिताः। अथ तत्र प्राप्तानामाह-

[भा.३१५८] वसहीए जे दोसा, परउत्थियतज्जणा य बिलधम्मो ।
आतोज्ज-गीतसद्दे, इत्थीसद्दे य सविकारे ॥

वृ- वसतेः सम्बन्धिनो ये आधाकर्मादयो दोषास्तेषु लगन्ति। परतीर्थिकाश्च तत्र गतानां तर्जनां कुर्वन्ति। 'विलधर्मो नाम' एकस्यामेव वसतौ गृहस्थैः समं संवर्त्तयैकत्रावस्थानम्, तत्रासङ्खडं स्यात्। तत्र च सङ्खड्यामातोद्य-गीतशब्दाद्यान् स्त्रीशब्दाँश्च सविकारान् श्रुत्वा चशब्दादविरतिका अलङ्कृता दृष्ट्वा स्मृतिकरणादयो दोषा इति द्वारगाथासमासार्थः॥ साम्प्रतमेनामेव विवृणोति-

[भा.३१५९] आहाकम्मियमादी, मंडवमादीसु होति अणुमन्ना।
रुक्खे अब्भावासे, उवरिं दोसे परूवेस्सं॥

वृ- सङ्खडीकर्त्ता दानश्राद्धो यथाभद्रको वा साधूनां निमित्तमाधाकर्मिकान् मण्डपान् कारयेत्, आदिशब्दाद् यावन्तिकादिपरिग्रहः। तेषु मण्डपेषु आदिशब्दात् पटकुटीप्रभृतिषु च तिष्ठतामनुमतिदोषः प्राप्नोति। अथैतद्दोषभयान्न तत्र तिष्ठन्ति ततोऽन्यत्र वसतिमलभमाना वृक्षमूलेऽभ्रावकाशे वा वसन्ति। तत्र च वसतां ये दोषास्तानुपरिष्टादस्मिन्नेव सूत्रे प्ररूपयिष्यामि॥ परतीर्थिकतर्जनाद्वारमाह-

[भा.३१६०] इंदियमुंडे मा किंचि बेह मा ने डहेज्ज सावेणं।
पेहा-सोयादीसु य, असंखडं हेउवादो य॥

वृ- ये तत्र सङ्खडीं श्रुत्वा शाक्य-भौत-भागवतादयः परतीर्थिकाः समायातास्ते साधून् तर्जयन्त इत्थं ब्रुवते-इन्द्रियमुण्डा अमी सङ्खडिप्राप्ताः श्रमणाः, 'मा किञ्चिदमून् ब्रूत' न किमप्यमीषां सम्मुखं विरूपकं भाषणीयम्, मा "ने" युष्मान् अमी तपस्विन आक्रुष्टाः सन्तः शापेन दहेयुः। एवं तर्जनामसहमाना अपरिणतास्तैः सहासङ्खडं कुर्युः। तथा प्रेक्षा-प्रत्युपेक्षणा तां कुर्वतो दृष्ट्वा शौचं वा स्वल्पकलुषादिना पानकेन विधीयमानं दृष्ट्वा आदिशब्दात् संयतभाषया भाषमाणान् श्रुत्वा परतीर्थिका उड्डुञ्चकान् कुर्वन्ति, तत्र तथैवासङ्खडं भवेत्। हेतुना वा ते परतीर्थिका वादं मार्गयेयुः। यदि दीयते ततस्तेषामात्मनो वा पराजये यथाक्रमं प्रद्वेषगमन-प्रवचनलाघवादयो दोषाः। अथ न दीयते ततस्ते लोकसमक्षवर्णवादं कुर्यु-बठरशिरःशिखरा एते न किमपि जानन्तीत्यादि॥

विलधर्मद्वारमाह-

[भा.३१६१] भिंगारेण न दिन्ना, न य तुज्झं पेतिगी सभा एसा।
अतिबहुओ ओवासो, गहितो णु तुए कलहो एवं॥

वृ- साधारणे सभादौ पिण्डीभूय साधवो गृहस्थाश्च यदेकत्रावतिष्ठन्ते स बिलधर्मः। तेन वसतां साधुभिः परभूतेऽवकाशे मालिते सति गृहस्था ब्रुवते-भो श्रमण! एषा सभा तुभ्यं न भृङ्गारेण दत्ता, उदकेन न कल्पितेति भावः; न च तवेयं 'पैतृकी' पितृपरम्परागता, अतः किन्नु नाम अतिबहुकोऽवकाशस्त्वया गृहीतः? एवं कलहो भवति॥

[भा.३१६२] तत्थ य अतिंत नेंतो, संविट्ठो वा छिवेज्ज इत्थीओ।
इच्छमनिच्छे दोसा, भुत्तमभुत्ते य फासादी॥

वृ- 'तत्र च' सभादौ कोऽपि साधुरतिगच्छन् निर्गच्छन् वा समुपविष्टो वा स्त्रीः स्पृशेत् तत आत्मपरोभयसमुत्था दोषाः। तत्र च यदि तामविरतिकां प्रतिसेवितुमिच्छति तदा संयमविराधना। अथ नेच्छति ततः सा उड्डाहं कुर्यात्। स्त्रीणां च स्पर्शादिषु तथा आतोद्य-गीतशब्दान् स्त्रीसम्बन्धिनश्च हसित-कूजितादिशब्दान् श्रुत्वा भुक्ता-ऽभुक्तसमुत्था दोषाः॥ भूयोऽपि दोषदर्शनार्थमाह-

[भा.३१६३] आवासग सज्झाए, पडिलेहण भुंजणे य भासाए ।
वीयारे गेलण्णे, जा जहि आरोवणा भणिया ॥

वृ- आवश्यके १ स्वाध्याये २ प्रत्युपेक्षणायां ३ भोजने ४ च भाषायां ५ विचारे ६ ग्लानत्वे च ७ या यत्रारोपणा भणिता सा तत्र ज्ञातव्येति द्वारगाथासमासार्थः ॥

साम्प्रतमेनामेव प्रतिपदं विवृणोति-

[भा.३१६४] आवासगं तत्थ करेंति दोसा, सज्झाय एमेव य पेहणम्मि ।
उड्डंच वारेंतमवारणे य, आरोवणा तानि अकुव्वओ जा ॥

वृ- 'तत्र' सभादौ गृहस्थैः सह वसन्तो यद्यावश्यकं स्वाध्यायं वा कुर्वन्ति तदा ते कर्णाघाटकेमागमयन्ति उड्डञ्चकान् वा कुर्वन्ति, एवमादयो दोषाः । प्रत्युपेक्षणायामपि 'एवमेव' उड्डञ्चकान् कुर्वन्ति । यदि वार्यन्ते तदा साधुभि सहासङ्खडं कुर्यु । अथ न वार्यन्ते ततो भगवत्प्रवचनस्य भक्ति कृता न स्यात् । अथैतद्दोषभयादावश्यकादीनि न कुर्वन्ति ततस्तान्यकुर्वतो या काचिदारोपणा सा द्रष्टव्या । तद्यथा-कायोत्सर्गं न करोति, वन्दनकं न ददाति, स्तुतिप्रदानं न करोति, सूत्रपौरुषीं न करोति, सर्वेष्वपि मासलघु । अर्थपौरुषीं न करोति मासगुरु । जघन्यमुपधिं न प्रत्युपेक्षते रात्रिन्दिवपञ्चक् । मध्यमं न प्रत्युपेक्षते मासलघु । उत्कृष्टं न प्रत्युपेक्षते चतुर्लघु ॥ व्याख्यातमावश्यक-स्वाध्याय-प्रत्युपेक्षणालक्षणं द्वारत्रयम् । अथ भोजनभाषाद्वारे विवृणोति-

[भा.३१६५] जं मंडलिं भंजई तत्थ मासो, गारत्थिभासासु य एवमेव ।
चत्तारि मासा खलु मंडलीए, उड्डाहो भासासमिए वि एवं ॥

वृ- भोजनं कुर्वन् सागारिकमिति मत्वा यद् मण्डलीं भनक्ति तत्र मासलघु । अगारस्थभाषासु च भाष्यमाणासु 'एवमेव' मासलघु । अथैतत्प्रायश्चित्तभयाद् मण्डल्यां समुद्दिशन्ति तदा चत्वारो मासा लघवः, 'उड्डाहश्च' प्रवचोपघातो मण्डल्यां समुद्देशने भवति । एवं भाषासमितेऽपि मन्तव्यम्, संयतभाषया भाषमाणस्य चत्वारो लघुमासा भवन्तीति भावः ॥ अथ विचारद्वारं विवृणोति-

[भा.३१६६] थोवे घणे गंधजुते अभावे, दवस्स वीयारगताण दोसा ।
वायसंलोगगया य दोसा, करेंतऽकुव्वं परितावणादी ॥

वृ- विचारभूमौ गतानां 'स्तोके' स्वल्पे 'घने' कलुषे 'गन्धयुते' दुर्गन्धिनि द्रवेऽभावे वा सर्वथैव द्रवस्य 'दोषाः' अवर्णवाद-भक्तपानप्रतिषेधादयो भवन्ति । तथा पुरुषादीनामापाते संलोके वा संज्ञां कायिकीं वा कुर्वन्ति तदा तद्गता दोषा यथा पीठिकायां विचारकल्पिकद्वारे उक्तास्तथा द्रष्टव्याः । अथैतद्दोषभयात् कायिकीं वा संज्ञां वा न करोति किन्तु धारयति तदा परितापना-महादुःख-मूर्च्छादयो दोषाः ॥ अथ ग्लानद्वारं व्याख्याति-

[भा.३१६७] गिलाणतो तत्थऽतिभुंजणेण, उच्चारमादीण व सन्निरोधा ।
अगुत्तसिज्जासु य सन्निवासा, उड्डाह कुव्वंतिमकुव्वतो य ॥

वृ- 'तत्र' सङ्खड्यात्कृष्टद्रव्यलोभादतिमात्रभोजनेन यद्वा सागारिकाकीर्णतया तत्रोच्चारादीनां सन्निरोधाद् ग्लानो भवेत् । अथवा अगुप्ताः-असंवृता याः शय्याः-वसतयस्तासु सन्निवासाद् ग्लानत्वमुपजायते, प्रतिश्रयशीतलया भक्तस्याजीर्यमाणत्वात् । स च ग्लानो यदि तत्रोच्चारप्रश्रवणा-दि करोति तदा सागारिका उड्डाहं कुर्युः । अथ न करोति ततः परितापनादयो दोषाः ॥ अथैतद्दोषभयाद्

ग्रामाद् बहिर्वसन्ति ततः को दोषः स्यात् ? इति प्रश्नावकाशमाशङ्क्याह-

[भा.३१६८] बहिया य रुक्खमूले, छक्काया साण-तेन-पडिनीए ।
मत्तुम्मत्त विउव्वण, वाहण जाणे सतीकरणं ॥

वृ-ग्रामादेर्बहिर्वृक्षमूले आकाशे वा पृथिवीकायः सचित्तरजःप्रभृतिकः, अप्कायः स्नेहकणिकादि, तेजःकायो विद्युदादि, वायुकायो महावातादि, वनस्पतिकायो विवक्षितवृक्षवल्कपुष्प-फलादि, त्रसकायो वृक्षनिश्रितद्वीन्द्रियादिरूपः सम्भवति; एते षट्कायास्तत्र तिष्ठतां विराध्यन्ते, असंवृते च तत्र श्वानो भाजनमपहरेत्, स्तेनावा उपद्रवेयुः, प्रत्यनीको वा विजनं मत्वा हन्याद्वा मारयेद्वा। तथा 'मत्ताः' मदिरामदभाविताः 'उन्मत्ताः' मन्मथोन्मादयुक्ता विटा इत्यर्थः ते 'विकुर्वणां' भूषणादिभिरलङ्करणं विधाय तत्रागच्छन्ति, 'वाहनानि' हस्त्यश्वादीनि 'यानानि' शिबिका-रथादीनि, तानि दृष्ट्वा भुक्तभोगिनां स्मृतिकरणमभुक्तभोगिनां तु कौतुकमुपजायत इति निर्युक्ति-गाथासमासार्थः ॥ अथैनामेव भाष्यकारो विवृणोति-

[भा.३१६९] मा होज्ज अंतो इति दोसजालं, तो जाति दूरं बहि रुक्खमूले ।
अभुज्जमाणे तहियं तु काया, अवाउते तेन सुणा य नेगे ॥

वृ- 'अन्तः' ग्रामाभ्यन्तरे सभादौ वसताम् 'इति' अनन्तरोक्तं दोषजालं मा भूदित्यभिसन्धाय 'ततः' ग्रामाद् बहिर्दूरे वृक्षमूले याति । तत्र च 'अभुज्यमाने' अव्याप्रियमाणे प्रदेशे पूर्वोक्तनीत्या षडपि काया विराध्यन्ते । अपावृते च तत्र स्तेनाः श्वानश्चानेके उपद्रवं विदधति ॥

[भा.३१७०] उम्मत्तगा तत्थ विचित्तवेसा, पढंति चित्ताऽभिनया बहूनि ।
कीलंति मत्ता य अमत्तगा य, तत्थित्थि-पुंसा सुतलंकिता य ॥

वृ- 'तत्र' उद्याने 'उन्मत्ताः' विटाः 'विचित्रवेषाः' विविधवस्त्रादिनेपथ्यधारिणः 'चित्राभिनयाः' नानाप्रकारहस्ताद्यभिनया बहूनि शृङ्गारकाव्यानि पठन्ति । तथा मत्ता अमत्ता वा तत्र स्त्री-पुरुषाः सुष्ठु-वस्त्रा-ऽऽभरणैरलङ्कृताः सन्तः क्रीडन्ति ॥

[भा.३१७१] आसे रहे गोरहगे य चित्ते, तत्थाभिरूढा डगणे य केइ ।
विचित्तरूवा पुरिसा ललंता, हरंति चित्ताणऽविकोविताणं ॥

वृ- 'तत्र' उद्याने केचित् पुरुषा अश्वान् अपरे रथान् तदन्ये 'गोरथकान्' कल्होडकान् केचित् 'चित्राणि' नानाप्रकाराणि युग्यादीनि यानानि 'डगणानि च' यानविशेषरूपाण्यधिरूढाः सन्तो विचित्ररूपाः पुरुषाः श्रेष्ठिपुत्रादयः 'ललन्तः' क्रीडन्तो 'अविकोविदानाम्' अगीतार्थानां चित्तानि हरन्ति । ततश्च भुक्ता-ऽभुक्तसमुत्था दोषाः ॥

[भा.३१७२] सामिद्धिसंदंसणवावडेन, विप्पस्सता तेसि परेसि मोक्खे ।
तत्थोतपोतम्मि समंततेणं, भिक्खा-वियारादिसु दुप्पयारं ॥

वृ- समृध्द्याः-वस्त्रा-ऽऽभरणादिरूपायाः सम्-इति सामस्त्येन यद् दर्शनम्-अवलोकनं तत्र व्यापृतेन-'इदं पश्यामि, इदं वा पश्यामि' इति व्याक्षिप्तचेतसा, तथा 'तेषां परेषां' श्रेष्ठिप्रभृतीनां यान-वाहनादीनि 'मुख्यानि' प्रधानानि विविधम्-अनेकप्रकारं पश्यता सूत्रार्थयोः परिमन्थः कृतः स्यादिति शेषः । तत्र च स्त्री-पुरुषैः समन्ततः 'उअपोते' देशीपदत्वाद् आकीर्णे भिक्षायां विचारभूमौ आदिशब्दाद् विहारभूम्यादौ च दुष्प्रचारं भवति । यत एते दोषा अतः सङ्खड्यां न

गन्तव्यम् ॥ अथ परः प्राह-

[भा.३१७३]　　दोसेहि एत्तिएहिं, अगेण्हंता चेव लग्गिमो अम्हे ।
गेण्हामु य भुंजामु य, न य दोस जहा तहा सुणसु ॥

वृ- सङ्खडिगमने यावन्त एते भवद्भिर्दोषा उक्ता एतावद्भिर्वयं सङ्खडिभक्तमगृह्णाना एव लगामः, ततो न कार्यमस्माकं ग्रामादिमध्याध्यासनेन । सूरिराह-वयं सङ्खडिभक्तं गृह्णीमो वा भुञ्ज्महे वा न च 'दोषाः' पूर्वोक्ता यथा भवन्ति तथाऽभिधीयमानं शृणु । इयं पुरातना गाथा ॥ अथैनामेव व्याख्यानयति-

[भा.३१७४]　　होहिंति न वा दोसा, ते जाण जिनो न चेव छउमत्थो ।
पाणियसद्देण उवाहणाउ नाविब्भलो मुयति ॥

वृ- हे नोदक ! नायं नियमो यत् सङ्खडिं गच्छतामवश्यमनन्तरोक्ता दोषा भवन्ति, कारणे यतनया गच्छतस्तेषामसम्भवात्; ततः 'ते दोषा भविष्यन्ति वा' इत्येवं जिनो जानाति नैव छद्मस्थो भवादृशः । अतो यदुक्तं भवता-''इत्थं गते सुविहिता अरण्ये गत्वा वसन्तु'' तदेतदज्ञानविजृम्भितम्, यतः पानीयशब्देनोपानही न 'अविह्वलः' अमूर्खो मुञ्चति, यो मूर्खो भवति स एव मुञ्चतीति भावः; एवं भवानपि सङ्खडिगमनमात्रे दोषोपप्रदर्शनं श्रुत्वा यदेवं ग्रामादीन् परित्यज्यारण्यवा-समभ्युपगच्छति तद् नूनमबुधचक्रवर्तीति हृदयम् ॥ अपि च–

[भा.३१७६]　　दोसे चेव विमग्गह, गुणदेसित्तेन निच्चमुज्जुत्ता ।
न हु होति सप्पलोद्धी, जीविउकामस्स सेयाए ॥

वृ- हे नोदक ! यद्यपि कारणे वक्ष्यमाणयतनया सङ्खडिगमने प्रत्युत बहवो गुणा भवन्ति तथापि गुणद्वेषित्वेन यूयं नित्यमुद्युक्ताः सन्तो गुणान्वेषणबुद्ध्या दोषानेव विमार्गयथ न गुणान्; भवन्ति चेदृशा अपि केचिदस्मिन् जगति ये दोषानेव केवलान् पश्यन्ति न गुणनिवहम् । उक्तञ्च-

गुणोन्नये सत्यपि सुप्रभूते, दोषेषु यत्नः सुमहान् खलानाम् ।
क्रमेलकः केलिवनं प्रविश्य, निरीक्षते कण्टकजालमेव ॥

यतः 'न हि' नैव 'सर्पलुब्धिः' सर्पग्राहकत्वं जीवितुकामस्य पुरुषस्य श्रेयसे भवति, किन्तु प्रत्युत मरणाय; एवं भवतोऽपि संयमगुणान्वेषणबुध्या अरण्यवसनं तत्र श्रेयसे सम्पद्यते, प्रत्युताहाराभावेनार्त्तध्यानादिपरिणामसम्भवात् कन्द-मूल-फलादिभक्षणाद्वा तस्यैव संयमस्योपघातं जनयति ॥ आह यद्येवं ततो निरूप्यतां कथमत्र दोषा भवन्ति ? कथं वा न भवन्ति ? इति उच्यते-

[भा.३१७७]　　भण्णति उवेच्च गमने, इति दोसा दप्पदो य जहिं गंतुं ।
कम गहण भुंजणे या, न होंति दोसा अदप्पेणं ॥

वृ- भण्यतेऽत्र प्रतिवचनम्-यदि 'उपेत्य' आकुट्टिकया सङ्खड्यां गच्छति, 'दर्पतश्च' गुरुग्लानादिकारणाभावेन यत्र गत्वा गृह्णाति भुङ्क्ते वा तत्रानन्तरोक्ता दोषा मन्तव्याः । अथ 'क्रमेण' गृहपरिपाट्या सङ्खडिगृहं प्राप्तः ततस्तत्र ग्रहणं भोजनं वा कुर्वाणस्य न दोषा भवन्ति । 'अदर्पेण वा' पुष्टालम्बनेन सङ्खडिप्रतिज्ञयाऽपि गच्छतो न दोषा भवन्ति ॥ इदमेव भावयति-

[भा.३१७८]　　पडिलेहियं च खेत्तं, पंथे गामे व भिक्खवेलाए ।
गामानुगामियम्मि य, जहि पायोग्गं तहिं लभते ॥

वृ- मासकल्पस्य वर्षावासस्य वा योग्यं क्षेत्रं प्रत्युपेक्षितम्, तत्र च गन्तुं प्रस्थितानां 'पथि' मार्गे वर्त्तमानानां यद्वा तस्मिन्नेव ग्रामे प्राप्तानां सङ्खडिरुपस्थिता, उभयत्रापि यदि भिक्षावेलायां भक्तपानं प्राप्यते तदा कल्पते गन्तुम्। ग्रामानुग्रामिकेऽप्यनियतविहारे विहरतां यत्र भिक्षावेलायां प्रायोग्यं प्राप्यते तत्र ग्रहीतुं लभते नान्यत्रेति ॥ अथैनामेव गाथां व्याचष्टे-

[भा.३१७९] वासाविहारखेत्तं, वच्चंताऽनंतरा जहिं भोज्जं।
अत्तट्ठठिताण तहिं, भक्खमडंताण कप्पेज्जा ॥

वृ- वर्षाविहारो नाम-वर्षावासस्तत्प्रायोग्यं क्षेत्रं व्रजताम् 'अन्तरा' पथि यत्र 'भोज्यं' सङ्खडी भवति। आह च चूर्णिकृत्- भोज्जं ति वा संखडि त्ति वा एगट्ठं। 'तत्र' ग्रामादौ 'आत्मार्थस्थितानां' स्वार्थमवस्थितानां न तु सङ्खडिनिमित्तं गृहपरिपाट्या च भिक्षामटतां सङ्खडिं गत्वा भक्त-पानं ग्रहीतुं कल्पते ॥ कुतः ? इति चेद् उच्यते-

[भा.३१८०] नत्थि पवत्तणदोसो, परिवाडीपडित मो न याऽऽइन्ना।
परसंसट्ठं अविलंबियं च गेण्हंति अनिसन्ना ॥

वृ- नास्ति तत्र सङ्खड्यां गमने प्रवर्त्तनादोषः, 'परिपाट्यापतितं' प्राप्तावसरं यतस्तत्र भक्त-पानं गृह्णाति, न तदेवैकं गृहमुद्दिश्य गत्वेति। "मो" इति पादपूरणे। न च सा सङ्खडी 'आकीर्णा' जनाकुला, 'परसंसृष्टं च' गृहस्थादिपरिवेषणनिमित्तं हस्तो वा मात्रकं वा संसृष्टम्, अविलम्बितं च तत्रानिषण्णाः सन्तो गृह्णन्ति, भिक्षावेलायां गमनात् तत्क्षणादेव भक्त-पानं लभन्ते, न पुनरुपविष्टाः प्रतीक्षन्ते इति भावः ॥ किञ्च-

[भा.३१८१] संतऽनने वऽवराधा, कज्जम्मि जतो न दोसवं जेसु।
जो पुन जतनारहितो, गुणो वि दोसायते तस्स ॥

वृ- 'सन्ति' विद्यन्ते 'अन्येऽपि' अनेषणीयग्रहणादयोऽपराधा येषु 'कार्ये' ज्ञानादौ 'यतः' प्रयत्नं कुर्वन् प्रतिसेवमानोऽपि न दोषवान् भवति, यः पुनर्यतनारहितः प्रवर्त्तते तस्य गुणोऽपि 'दोषायते' दोष इव मन्तव्य इत्यर्थः ॥ इदमेव सविशेषमाह-

[भा.३१८२] असढस्सऽपडिकारे, अत्थे जततो न कोइ अवराधो।
सप्पडिकार अजतो, दप्पेण व दोसु वी दोसो ॥

वृ- 'अशठस्य' राग-द्वेषरहितस्य 'अप्रतिकारे' प्रतिसेवनां बिना नास्त्यन्यो यस्य प्रतिकार इत्येवंलक्षणे 'अर्थे' सङ्खडिगमनादौ 'यतमानस्य' यतनां कुर्वतो न कोऽप्यपराधो भवति। यस्तु 'सुप्रतिकारे' परिहर्त्तुं शक्येऽर्थे 'अयतः' न यतनां करोति दर्पेण वा प्रतिसेवते तस्य 'द्वयोरपि' अयतना-दर्पयोर्दोषो भवति, कर्मबन्ध इत्यर्थः ॥ यत एवमतः-

[भा.३१८३] निद्दोसा आदिन्ना, दोसवती संखडी अणाइन्ना।
सुत्तमणाइन्नाते, तस्स विहाणा इमे होंति ॥

वृ- 'निर्दोषा' वक्ष्यमाणदोषरहिता सङ्खडी 'आचीर्णा' साधूनां गन्तुं कल्पनीया। या तु दोषवती सा अनाचीर्णा। तत्र सूत्रमनाचीर्णायामवतरति, न तत्र सङ्खडिप्रतिज्ञया रात्रौ वा विकाले वा गन्तव्यम्। 'तस्याश्च' अनाचीर्णाया अमूनि 'विधानानि' भेदा भवन्ति ॥ तानेवाह-

[भा.३१८४] जावंतिया पगणिया, सक्खित्ताऽखित्त बाहिराऽऽइण्णा ।
अविसुद्धपंथगमना, सपच्चवाता य भेदाय ।।

वृ- 'यावन्तो भिक्षाचरा आगमिष्यन्ति तावतां दातव्यम्' एवमादिगणनया यत्र दीयते सा यावन्तिका । 'दश शाक्या दश परिव्राजका दश श्वेतपटाः' एवमादिगणनया यत्र दीयते सा प्रगणिता । ''सक्खेत्ते''त्ति सक्रोशयोजनक्षेत्राभ्यन्तरवर्तिनी । ''अक्खेत्ते''ति सचित्तपृथिव्यादावक्षेत्रे-अस्थण्डिले स्थिता । ''बाहिर''त्ति सक्रोशयोजनक्षेत्रबहिर्वर्त्तिनी । 'आकीर्णा नाम' चरक-परिव्राजकादिभिराकुला । अविशुद्धेन-पृथिव्यप्कायादिसंसक्तेन पथा गमनं यस्यां साऽविशुद्ध-पथगमना । तथा यत्र स्तेन-श्वापदादयो दर्शनादिविषयाश्च प्रत्यपाया भवन्ति सा सप्रत्यपाया । सा च जीवितभेदाय चरणभेदाय वा भवेदिति द्वारगाथासमासार्थः ।। अथैनामेव प्रतिपदं विवृणोति-

[भा.३१८५] आचंडाला पढमा, बितिया पासंडजाति-नामेहिं ।
सक्खेत्ते जा सकोसं, अक्खित्ते पुढविमाईसु ।।

वृ- 'प्रथमा' यावन्तिकी सा 'आचण्डाला' यावन्तः केचन तटिका-कार्पटिकादयो भिक्षाचरा यावदपश्चिमश्चाण्डालस्तावतां दातव्यमिति लक्षणा । 'द्वितीया' प्रगणिता प्रकर्षेण पाषण्डिनो जात्या नाम्ना वा गणयित्वा यत्र दीयते । तत्रजातिं प्रतीत्य गणना यथा-दश भौता दश भागवता दश श्वेताम्बरा इत्यादि । नाम प्रतीत्य गणना यथा-अमुकः श्वेतपटोऽमुकश्च रक्तपट इत्यादि । स्वक्षेत्रसङ्खडी नाम या सक्रोशयोजनक्षेत्राभ्यन्तरे भवति । अक्षेत्रसङ्खडी तु या सचित्तपृथिवी-वनस्पतिकायादिष्वनन्तरं परम्परं वा प्रतिष्ठिता ।। एतासु गच्छतः प्रायश्चित्तमाह-

[भा.३१८६] जावंतिगाए लहुगा, चउगुरु पगणीए लहुग सक्खेत्ते ।
मीसग-सचित्त-ऽनंतर-परंपरे कायपच्छित्तं ।।

वृ- यावन्तिकायां चतुर्लघवः । प्रगणितायां चतुर्गुरवः । स्वक्षेत्रसङ्खड्यां गच्छतश्चतुर्लघु । अक्षेत्रसङ्खड्यां मिश्र-सचित्ता-ऽनन्तर-परम्परप्रतिष्ठितायां कायप्रायश्चित्तम् । तत्र पृथिव्यादिषु प्रत्येकवनस्पतिपर्यन्तेषु मिश्रेषु परम्परप्रतिष्ठितायां लघुपञ्चकम्, अनन्तरप्रतिष्ठितायां मासलघु; एतेष्वेव सचित्तेषु परम्परप्रतिष्ठितायां मासलघु, अनन्तरप्रतिष्ठितायां चतुर्लघु; अनन्तवनस्-तिष्वेतान्येव प्रायश्चित्तानि गुरुकाणि कर्त्तव्यानि ।।

अथ सक्रोशयोजनबहिर्वर्तिनीप्रभृतिषु सङ्खडीषु प्रायश्चित्तमाह-

[भा.३१८७] बहि वुड्ढि अद्धजोयण, गुरुगादी सत्तहिं भवे सपदं ।
चरगादी आइण्णा, चउगुरु हत्थाइभंगो य ।।

वृ- क्षेत्राद् बहि सङ्खड्यां गच्छतश्चतुर्लघु, ततः परमर्द्धयोजनवृध्या चतुर्गुरुकमादौ कृत्वा सप्तभिर्वृद्धिभिः 'स्वपदं' पाराञ्चिकं भवेत् । तद्यथा-क्षेत्राद् बहिरर्द्धयोजने चतुर्गुरु, योजने षड्लघु, सार्द्धयोजने षड्गुरु, द्वयोर्योजनयोश्छेदः, अर्द्धतृतीययोजनेषु मूलम्, त्रिषु योजनेषु नवमम्, अर्द्धचतुर्थयोजनेषु पाराञ्चिकम् । तथा या चरक-परिव्राजक-कार्पटिकादिभिराकुला सा आकीर्णा तां गच्छतश्चतुर्गुरुकम् । तत्र चातिसम्मर्देन हस्त-पाद-पात्रादिभङ्गो भवेत् ।।

अथाविशुद्धपथगमनादीनि द्वाराणि व्याख्याति-

[भा.३१८८] काएहऽविसुद्धपहा, सावय-तेना पहे अवाया उ ।

दंसण-बंभवता-ऽऽता, तिविधा पुन होंति पत्तस्स ॥

वृ- 'कायैः' पृथिव्यादिभिरविशुद्धः पन्थाः-मार्गो यस्याः सङ्खडेः सा तथा, अस्यां च कायनिष्पन्नं प्रायश्चित्तम् । प्रत्यपायाश्च द्विविधाः- पथि वर्त्तमानस्य तत्र प्राप्तस्य च । तत्र पथि वर्त्तमानस्य श्वापद-स्तेन-कण्टकादयः । तत्र प्राप्तस्य तु त्रिविधाः प्रत्यपाया भवन्ति-दर्शन-ब्रह्मव्रता-ऽऽत्मापायभेदात् । तत्र सङ्खडिं गतस्य चरक-शाक्यादिभिर्व्युद्ग्राहणा दर्शनापायः । चरिका-तापसीप्रभृतिभिरन्याभिर्वा मत्तप्रमत्ताभि स्त्रीभिर्ब्रह्मव्रतापायः । आत्मापायस्तु पूर्वोक्त एव हस्तभङ्गादिकः । एवंविधापायसहिता सप्रत्यपाया ॥

[भा.३१८९] दंसणवादे लहुगा, सेसावादेसु चउगुरू होंति ।
जीविय-चरित्तभेदा, विस-चरिगादीहि गुरुका उ ॥

वृ- अत्र च दर्शनापाये चतुर्लघुकाः । शेषेषु-स्तेन-श्वापदादिषु ब्रह्मव्रता-ऽऽत्मविषयेषु प्रत्यपायेषु चतुर्गुरवो भवन्ति । तथा सौगतोपासकादि सङ्खडिकर्त्ता विषं वा गरं वा प्रदद्यात्, एवं जीवितभेदः । चरिकादिभिश्चारित्रभेदः । एतयोर्जीवित-चारित्रभेदयोः प्रत्येकं चतुर्गुरवः । एषा यावन्तिकादिदोषदुष्टा सङ्खडिरनाचीर्णा । एतद्विपरीता आचीर्णेति ॥ द्वितीये पदे एतैः कारणैः सङ्खडिमपि गच्छेत्-

[भा.३१९०] कप्पइ गिलाणगट्ठा, संखडिगमणं दिया व रातो वा ।
दव्वम्मि लब्भमाणे, गुरुउवदेसो त्ति वत्तव्वं ॥

वृ- ग्लानार्थं सङ्खडिगमनं दिवा रात्रौ वा कल्पते । तत्र च द्रव्ये ग्लानप्रायोग्ये लभ्यमाने यावन्मात्रं ग्लानस्योपयुज्यते तावति प्रमाणप्राप्ते सति प्रतिषेधयन्ति । यद्यसौ दाता ब्रूयात्-किमिति न गृह्णीथ? ततः 'वक्तव्यं' भणनीयम्-गुरु-वैद्यस्तस्योपदेशोऽयम्-यदेतावतः प्रमाणादूर्ध्वं ग्लानस्य पथ्यादिकं न दातव्यम् ॥ इदमेव भावयति-

[भा.३१९१] पुव्विं ता सक्खेत्ते, असंखडी संखडीसु वी जतति ।
पडिवसभमलब्भंते, ता वच्चति संखडी जत्थ ॥

वृ- ग्लानस्य प्रायोग्यं पूर्वं तावत् 'स्वक्षेत्रे' स्वग्रामेऽसङ्खड्यां गवेषयितव्यम् । यद्यसङ्खड्यां न प्राप्यते ततः स्वग्राम एव याः सङ्खड्यस्तासु ग्लानप्रायोग्यग्रहणाय यतते । तदभावे प्रतिवृषभग्रामेष्वपि प्रथममसङ्खड्यां ततः सङ्खड्यामपि । अथ तत्रापि न लभ्यते ततो यत्र ग्रामादौ सङ्खडी भवति तत्र व्रजन्ति ॥ ताश्च सङ्खड्यो द्विधा-सम्यग्दर्शनभाविततीर्थविषया मिथ्यादर्शनभाविततीर्थविषयाश्च । तत्र प्रथममाद्यासु गन्तव्यम्, यत आह-

[भा.३१९२] उज्जेंत णायसंडे, सिद्धिसिलादीन चेव जत्तासु ।
सम्मत्तभाविएसुं, न हुंति मिच्छत्तदोसा उ ॥

वृ- उज्जयन्ते ज्ञातखण्डे सिद्धशिलायामेवमादिषु सम्यक्त्वभावितेषु तीर्थेषु याः प्रतिवर्षं यात्राः-सङ्खड्यो भवन्ति तासु गच्छतो मिथ्यात्वस्थिरीकरणादयो दोषा न भवन्ति ॥

[भा.३१९३] एतेसिं असईए, इतरीउ वयंति तत्थिमा जतणा ।
पुट्ठो अतिक्कमिस्सं, कुणतिं व अन्नावदेसं तु ॥

वृ- 'एतेषां' सम्यक्त्वभावितानामभावे 'इतरा अपि' मिथ्यात्वभाविततीर्थविषयाः सङ्खडीर्व्रजन्ति । तत्र च गच्छत इयं यतना-यदि केनापि पृच्छयते 'किं सङ्खडीं गमिष्यथ ?' इति ।

ततः पृष्टः सन्नेवं ब्रूयात्- अतिक्रमिष्याम्यहं सङ्खडीम्, अग्रतो गमिष्यामीत्यर्थः; अथवा अन्यापदेशं करोति, अन्यत् किमपि प्रतिवचनं ब्रूत इति भावः ॥

[भा.३१९४] तहियं पुव्वं गंतुं, अप्पोवासासु ठंति वसहीसु ।
जे य अविपक्कदोसा, न नेंति ते तत्थ अगिलाणे ॥

वृ- 'तत्र' सङ्खडिग्रामे पूर्वमेव गत्वा या अल्पावकाशा वसतयस्तासु तिष्ठन्ति । गाथायां "ठाइ" त्ति एकवचननिर्देशः प्राकृतत्वात्, एवमन्यत्रापि वचनव्यत्ययो यथायोगं द्रष्टव्य इति । विस्तीर्णावकाशासु पुनः स्थितानां गृहस्थादिभिः पश्चादागतैः सह त एवासङ्खडादयो दोषाः । ये च तत्र 'अविपक्वदोषाः' इन्द्रिय-कषायान् निग्रहीतुमसमर्था अविकोविदा वा साधवः, आह च चूर्णिकृत्- अविपक्वदोसा नाम जे असमत्था निगिण्हिउं इंदिय-कसाए अविकोविया वा । ते तत्रालङ्कृतस्त्रीदर्शनादिसमुत्थदोषपरिजिहीर्षया 'अग्लाने' ग्लानकार्याभावे न निर्गच्छन्ति ॥

अथ ग्लानस्य प्रायोग्यग्रहणे विधिमाह-

[भा.३१९५]विना उ ओभासित-संथवेहिं, जं लब्भती तत्थ उ जोग्गदव्वं ।
गिलाणभुतुव्वरियं तगं तु, न भुंजमाणा वि अतिक्कमंति ॥

वृ- अवभाषणमवभाषितं-याचनमित्यर्थः, संस्तवनं संस्तवः-दातुर्गुणविकत्थनं तेन सहात्मनः सम्बन्धविकत्थनं वा, ताभ्यां विनाऽपि 'तत्र' सङ्खड्यां यत् प्रायोग्यद्रव्यं लभ्यते तत् प्रथमतो ग्लानस्य दातव्यम् । ततो ग्लानेन तन्मध्याद् यद् भुक्तं तत उद्धरितं भुञ्जाना अपि साधवः 'नातिक्रामन्ति' न भगवदाज्ञां विलम्पन्ति ॥

[भा.३१९६] ओभासियं जं तु गिलाणगट्ठा, तं मानपत्तं तु निवारयंति ।
तुब्भे व अन्ने व जया तु बेंति, भुंजेत्थ तो कप्पति नऽन्नहा तू ॥

वृ- 'यत्तु' यत्पुनः प्रायोग्यद्रव्यं ग्लानार्थमवभाषितं तद् यदा 'मानप्राप्तं' वैद्योपदिष्टपथ्यमात्राप्राप्तं भवति तदा 'निवारयन्ति' पर्याप्तमायुष्मन् । एतावता अतः परं ग्लानस्य नोपयोक्ष्यते । एवमुक्ते यदा ते गृहस्था एवं ब्रूवते-'यूयं वा अन्ये वा साधवो भुञ्जीध्वम्' तदा ग्लानप्रायोग्यप्रमाणादधिकमपि ग्रहीतुं कल्पते नान्यथा । तुः पादपूरणे ॥ इदमेव स्फुटतरमाह-

[भा.३१९७]दिने दिने दाहिसि थोव थोवं, दीहा रुया तेन न गिण्हिमोऽम्हे ।
न हावयिस्सामो गिलाणगस्सा, तुब्भे व ता गिण्हह गिण्हणेवं ॥

वृ- भोः श्रावक ! ग्लानस्य 'दीर्घा' चिरकालस्थायिनी 'रुग्' रोगः समस्ति, अतो दिने दिने स्तोकं स्तोकमिद ग्लानयोग्यं द्रव्यं दास्यसि, तेन कारणेन वयमिदं न गृह्णीमः । ततो यदि ते गृहस्था ब्रूवेत-वयं प्रतिदिनं ग्लानस्य प्रायोग्यं न हापयिष्यामः, यूयमपि च तावत् प्रसादं कृत्वा गृह्णीत । एवमुक्ते प्रमाणप्राप्तादधिकस्यापि ग्रहणं कर्तव्यम् ॥ एवं तावत् साधूनां प्रवेशे लभ्यमाने विधिरुक्तः । अथ यत्र साधवः प्रवेशं न लभन्ते तद्विषयं विधिमाह-

[भा.३१९८] न वि लब्भई पवेसो, साधूणं लब्भएत्थ अज्जाणं ।
वावारण परिकिरणा, पडिच्छणा चेव अज्जाणं ॥

वृ- यत्रान्तःपुरादौ 'नापि' नैव साधूनां प्रवेशो लभ्यते किन्तु लभ्यते तत्रार्यिकाणां प्रवेशः, कर्मकर्त्तर्ययं प्रयोगः ततः षष्ठी विभक्तिरदुष्टा, तत्रार्यिकाणां व्यापारणा विधेया । ततस्ता अन्तः-

पुरादौ प्रविश्य प्रज्ञापयन्ति । तथापि चेत्र प्रवेशो लभ्यते ततः "परिकिरण" त्ति ता आर्यिका ग्लानप्रायोग्यं गृहीत्वा साधूनां पात्रेषु चेत्र परिकिरन्ति-प्रक्षिपन्ति । तत आर्यिकाणा हस्ताद् ग्लानप्रायोग्यं प्रतीच्छन्ति ।। इदमेव स्पष्टयति-

[भा.३१९९] अलब्भमाणे जतिणं पवेसे, अंतेपुरे इब्भधरेसु वा वि ।
उज्जाणमाईसु व संठियाणं, उज्जाउ कारिंति जतिप्पवेसं ।।

वृ- राजादिनामन्तःपुरे वा इभ्यगृहेषु वा यतीनां प्रवेशेऽलभ्यमाने उद्यानादिषु वा संस्थितानां साधूनामनागन्तुकानामित्यर्थः, आर्यास्तत्र यतीनां प्रवेशं कारयन्ति । कथम् ? इति चेद् उच्यते ता आर्यिका अन्तःपुरादौ गत्वा प्रज्ञापयन्ति-यथैते भगवन्तो महातपस्विनो निस्पृहाः, एतेभ्यो दत्तं बहुफलं भवति । एवमादिप्रज्ञापनया यदा तानि कुलानि भावितानि भवन्ति तदा साधवः प्रविशन्ति ।। अथ तथापि प्रवेशो न लभ्यते ततः किं कर्त्तव्यम् ? इत्याह-

[भा.३२००] पुराणमाईसु व नीणवेंति, गिहत्थभाणेसु सयं व ताओ ।
अगारिसंकाए जतिग्गएही, हिड्ढोवभोगेहि अ आनवेंती ।।

वृ- आर्यिका गृहस्तभाजनेषु ग्लानप्रायोग्यं गृहीत्वा पुराणादिभिर्गृहस्थैः साधुसमीपं 'नाययन्ति' प्रापयन्तीत्यर्थः । अथ ताध्शो गृहस्थो न प्राप्यते ततः स्वयमेव ता आर्यिका गृहिभाजनेषु गृहीत्वा साधुसमीपं नयन्ति । अथागारिणः शङ्कां कुर्युः-'नूनमेता गृहस्थभाजनेष्वेवंविधमुत्कृष्टद्रव्यं गृहीत्वा केषाञ्चिदविरतिकानां प्रयच्छन्ति' ततो यतीनां सत्कानि यानि अधस्तादुपभोग्यानि- असम्भोग्यानि भाजनानि उपहतानीत्यर्थः तेषु गृहीत्वा साधूनां समीपमानाययन्ति आनयन्ति वा ।।

अथ न सन्ति साधूनामसम्भोग्यानि भाजनानि ततः-

[भा.३२०१]तेसामभावा अहवा वि संका, गिण्हंति मानेसु सएसु ताओ ।
अभोइमाणेसु उ तस्स भोगो, गारत्थि तेसेव य भोगिसू वा ।।

वृ- 'तेषां' संयतभाजनानामभावात्, अथवा तेषु गृह्यमाणे गृहस्थानां 'शङ्का भवेत्' 'एतानि संयतभाजनानि, तदवश्यमेताः संयतानां प्रयच्छन्ति' ततः 'ताः' आर्यिका स्वकेषु भाजनेषु गृह्णन्ति । ततः साधवोऽसम्भोग्यभाजनेषु गृहीत्वा 'तस्य' प्रायोग्यद्रव्यस्य भोगं कुर्वते । असम्भोग्यभाजनाभावे गृहस्थभाजनेषु । अथ तान्यपि न सन्ति ततः 'तेष्वेव' संयतीभाजनेषु भुञ्जते । अथ संयतीनां तैर्भाजनैः शीघ्रं प्रयोजनं ततः साम्भोगिकेष्वपि भाजनेषु प्रतिप्यते । एवं तावद् ग्लाननिमित्तं यथा गृह्यते तथा भणितम् ।। अथ सङ्खडीगमने कारणान्तराण्याह-

[भा.३२०२] अद्धाणनिग्गयादी, पविसंता वा वि अहव ओमम्मि ।
उवधिस्स गहण लिंपण, भावम्मि य तं पि जयणाए ।।

वृ- अध्वनो निर्गताः आदिशब्दादशिवादिनिर्गता वा, अध्वनि वा प्रविशन्तः, अथवा 'अवमे' दुर्भिक्षे वर्त्तमानाः सङ्खडिं गच्छेयुः । अथवा यत्र ग्रामादौ सङ्खडिस्तत्र 'उपधिः' वस्त्रपात्रादिकः सुलभस्तस्य ग्रहणार्थं गन्तव्यम्; पात्रकाणि वा लेपनीयानि सन्ति, तत्र च लेपः प्रचुरः सुप्रापश्च; भावो वा शैक्षस्य सङ्खडिगमने समुत्पन्नः; एतैः कारणैः 'तदपि' सङ्खडिगमनं यतनया कर्त्तव्यमिति सङ्ग्रहगाथासमासार्थः ।। साम्प्रतमेनामेव विवृणोति-

[भा.३२०३]पविट्ठुकामा व विहं महंतं, विनिग्गया वा वि ततोऽधवोमे ।

अप्पायणट्ठाय सरीरगाणं, अत्ता वयंती खलु संखडीओ ॥

वृ- 'विहम्' अध्वानं 'महान्तं' विप्रकृष्टं प्रवेष्टुकामाः, 'ततो वा' अध्वनो निर्गता जनपदं प्राप्ताः, अथवा 'अवमे' दुर्भिक्षे चिरमटन्तोऽपि न पर्याप्तं लभन्ते, अतस्ते शरीराण्येव दुर्बलाहारदग्धान्त्रतया कुत्सितत्वात् शरीरकाणि तेषामाप्यायनार्थम्; 'आत्ताः' प्रथम-द्वितीयपरीषहपीडिताः, अथवा 'आप्ताः' राग-द्वेषरहिताः, यद्वा "भीमो भीमसेनः" इति न्यायत् आत्तः- गृहीतः सूत्रार्थो यैस्ते आत्ताः- गीतार्था सङ्खडीर्व्रजन्ति ॥

[भा.३२०४] वत्थं य पत्तं व तहिं सुलंभं, नाणादिसिं पिंडियवाणिएसु ।

पवत्तिसं तत्थ कुलादिकज्जे, लेवं व घेच्छामो अतो वयंति ॥

वृ- 'तत्र' क्षेत्रे नानाप्रकाराभ्यो दक्षिणापथादिरूपाभ्यो दिग्भ्यो वस्त्रादिविक्रयार्थं समागत्य पिण्डिताः- मिलिता ये वणिजस्तेषु वस्त्रं वा पात्रं वा सुलभम् । अथवा तत्र क्षेत्रे प्राप्ताः 'कुलादिकार्याणि' कुल-गण-सङ्घप्रयोजनानि प्रवर्त्तयिष्यामः, लेपं वा तत्र प्राप्ताः सन्तो ग्रहीष्यामः । अत एवंविधं पुष्टालम्बनमवलम्ब्य सङ्खडीं व्रजन्ति ॥

अथ "शैक्षस्य सङ्खडिगमने भावः समुत्पन्न" इति पदं विवृणोति-

[भा.३२०५] सेहं विदित्ता अतितिव्वभावं, गीया गुरुं विन्नवयंति तत्थ ।

जे तत्थ दोसा अभाविंसु पुव्विं, दिवेत्तु ते तस्स हिता वयंति ॥

वृ- 'शैक्षम्' अभिनवप्रव्रजितम् 'अतितीव्रभावं' सङ्खडिग्रामे गमनेऽतीवतीव्राभिलाषं विदित्वा गीतार्था गुरुं विज्ञपयन्ति, तत आचार्यास्तं शैक्षं भणन्ति-एते वृषभास्ते सहायाः समर्पिताः, एतैः समं भवता सङ्खड्यां गन्तव्यमिति । ततस्ते वृषभाः 'तत्र' सङ्खड्यां गच्छतां पथि वर्त्तमानानां तत्र प्राप्तानां च दोषाः पूर्वमभवन् अभिहिता इति भावः तान् 'तस्य' शैक्षस्य 'हिताः' मातृवदनुकूलाः सन्तो दीपयन्ति । दीपयित्वा च ततस्तं गृहीत्वा व्रजन्ति ॥

[भा.३२०६] पुव्वोदितं दोसगणं च तं तू, वज्जेंति सेज्जाइजुतं जताए ।

संपुण्णमेवं तु भवे गणित्तं, जं कंखियाणं पविणेति कंखं ॥

वृ- 'पूर्वोदितं' प्राग्भणितं शय्या-वसति तदादिभिर्युतं-सम्बद्धं दोषगणं 'यतनया' प्रागुक्तलक्षणया वर्जयन्ति । आह किमेवं शैक्षस्यानुवर्त्तनां कृत्वा सङ्खडिगमनमाचार्या अनुजानन्ति ? इत्याह- 'सम्पूर्णम्' अखण्डमेवंविदधानस्याचार्यस्य 'गणित्वम्' आचार्यकं भवति, यत् 'काङ्क्षितानां' सङ्खडिगमनाद्यभिलाषवतां शिष्याणां काङ्क्षां प्रकर्षेण-तदीप्सितसम्पादनलक्षणेन विनयति-स्फेटयति। उक्तञ्च दशाश्रुतस्कन्धे गणिसम्पद्वर्णनाप्रक्रमे- कंखियस्स कंखं पविणित्ता भवइ त्ति ।

*मू. (४८) नो कप्पइ निग्गंथस्स एगानियस्स राओ वा वियाले वा बहिया वियारभूमिं वा विहारभूमिं वा निक्खमित्तए वा पविसित्तए वा । कप्पइ से अप्पबिइयस्स वा अप्पतइयस्स वा राओ वा वियाले वा बहिया वियारभूमिं वा विहारभूमिं वा निक्खमित्तए वा पविसित्तए वा ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.३२०७] आहारा नीहारो, अवस्समेसो तु सुत्तसंबंधो ।

तुं पुन न प्पडिसिद्धं, वारे एगस्स निक्खमणं ॥

वृ- पूर्वसूत्रे सङ्खडिप्ररुपणाद्वारेणाहार उक्तः, तस्माच्चाहारादवश्यम्भावी नीहार इत्यतस्तद्विषयो

विधिरनेन सूत्रेणोपदर्श्यते। कथम्? इत्याह-'तत् पुनः' नीहारकरणमाहारानन्तरमवश्यम्भावित्वान्न प्रतिषिद्धमे, किन्तु तदर्थं यद् 'एकस्य' एकाकिनो निष्क्रमणं तदत्र सूत्रे वारयतीति। एष सूत्र-सम्बन्धः॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते 'निर्ग्रन्थस्य' साधोरेकाकिनो रात्रौ वा विकाले वा बहिर्विचारभूमिं वा विहारभूमिं वा उद्दिश्य प्रतिश्रयाद् निष्क्रमितुं वा प्रवेष्टुं वा। कल्पते "से" तस्य निर्ग्रन्थस्यात्मद्वितीयस्य वा आत्मतृतीयस्य वा रात्रौ वा विकाले वा बहिर्विचारभूमिं वा विहारभूमिं वा निष्क्रमितुं वा प्रवेष्टुं वा इति सूत्रसमासार्थ॥ अथ निर्युक्तिविस्तरः-

[भा.३२०८] रत्तिं वियारभूमी, निग्गंथेगाणियस्स पडिकुट्ठा।
लहुगो य होति मासो, तत्थ वि आणाइणो दोसा॥

वृ-रात्रौ उपलक्षणत्वाद् विकाले वा विचारभूमी निर्ग्रन्थस्यैकाकिनो गन्तव्ये प्रतिकुष्टा। सा च द्विविधा-कायिकीभूमि उच्चारभूमिश्च। कायिकीभूमिं यदि रात्रावेकाकी गच्छति ततो लघुमासः प्रायश्चित्तम्, तत्राप्याज्ञादयो दोषाः॥ तथा-

[भा.३२०९] तेना-ऽऽरक्खिय-सावय-पडिनीए थी-नपुंस-तेरिच्छ।
ओहाणपेहि वेहानसे य वाले य मुच्छा य॥

वृ- स्तेनैरुपधिः संयतो वा ह्रियते। आरक्षिका एकाकिनं दृष्ट्वा चौर इति बुद्ध्या ग्रहणा-ऽऽकर्षणादिकं कुर्युः। श्वापदा वा सिंह-व्याघ्रादयो भक्षयेयुः। प्रत्यनीको वा तमेकाकिनं मत्वा प्रान्तापनादिकं कुर्यात्। स्त्री वा नपुंसको वा तमेकाकिनमुदारशरीरं दृष्ट्वा बलादपि गृह्णीयात्। तिर्यञ्चो वा दुष्टगवादयस्तमभिघातयेयुः, तिर्यग्योनिकां वा स एकाकी प्रतिसेवेत। यो वा अवधावनप्रेक्षी स एकाकी निर्गतः सन् तत एव पलायेत। स्त्रिया वा पण्डकेन वा प्रतिस्खलितः सन् 'भग्नव्रतोऽहं जातः' इति बुद्ध्या 'वैहायसम्' उद्बन्धनं कुर्यात्। 'व्यालेन वा' सर्पेण वा दश्येत। मूर्च्छा वा तत्र गतस्य भवेत्, तद्वशेन भूमौ प्रपतितस्य परिताप-महादुःखप्रभृतयो दोषाः॥ अस्या एव गाथाया लेशतो व्याख्यानमाह-

[भा.३२१०] थी पंडे तिरिगीसु व, खलितो वेहानसं व ओधावे।
सेसोवधी-सरीरे, गहणादी मारणं जोए॥

वृ- स्त्रियां पण्डके तिर्यग्योनिकायां वा 'स्खलितः' मैथुनप्रतिसेवनया अपराधमापन्नः सन् 'भग्नव्रतस्य किं मे जीवितेन?' इति बुद्ध्या वैहायसमभ्युपगच्छेत्। यो वा अवधावनप्रेक्षी स तत एवावधावेत्। 'शेषाणि' सप्त द्वाराणि तेषु यथाक्रममेते दोषाः। तद्यथा-स्तेनेषूपधि-शरीरह-रणम्, आरक्षिकेषु ग्रहणा-ऽऽकर्षणादि, शेषेषु तु श्वापदादिषु 'मारणम्' उपघातः संयतस्य भवतीति 'यजयेत्' योजनं कुर्यात्॥ यत एवमतः-

[भा.३२११] दुप्पभिई उ अगम्मा, न य सहसा साहसं समायरति।
वारेति च णं बितिओ, पंच य सक्खी उ धम्मस्स॥

वृ- द्विप्रभृतयः साधवो रात्रौ कायिकीभूमी गच्छन्तः स्तेना-ऽऽरक्षिकादीनामगम्या भवन्ति। न च द्वितीये साधौ तटस्थे सति सहसा 'साहसं' मैथुनप्रतिसेवन-वैहायसादि समाचरति। समाचरितुकाममपि च "णं" एनं द्वितीयः साधुर्वारयति। यतः 'धर्मस्य' पञ्चमहाव्रतरूपस्य पञ्च साक्षिणो भवन्ति, तद्यथा-अर्हन्तः सिद्धाः साधवः सम्यग्दृष्टयो देवा आत्मा चेति। अतः साधौ

तृतीयसाक्षिणि पार्श्ववर्तिनि न सहसा साहसं समाचरति ॥ एवं तावत् कायिकीभूमिमङ्गीकृत्योक्तम्।

अथोच्चारभूमिमधिकृत्याह-

[भा.३२१२] एए चेव य दोसा, सविसेसुच्चारमायरंतस्स ।
सबितिज्जगनिक्खमणे, परिहरिया ते भवे दोसा ॥

वृ- 'एत एव' स्तेना-ऽनन्तरोक्ता दोषाः [illegible] 'सविशेषाः' समधिका रजन्यामेकाकिनमुच्चारमाचरतो मन्तव्याः । यदा तु विचारभूमौ गच्छन् सद्वितीयः प्रतिश्रयाद् निष्क्रमणं करोति तदा 'ते' स्तेनादयो दोषाः परिहृता भवेयुः ॥ कथम् ? इत्याह-

[भा.३२१३] जति दोन्नि तो निवेदित्तु नेंति तेनभए ठाति दारेक्को ।
सावयभयम्मि एक्को, निसिरति तं रक्खती बितिओ ॥

वृ- यदि द्वौ संयतौ कायिकीभूमौ निर्गच्छतः तदा यस्तत्र जागर्ति तस्य निवेद्य द्वावपि निर्गच्छतः। स्तेनभये तु तयोर्द्वयोर्मध्यादेको द्वारे तिष्ठति द्वितीयः कायिकीं व्युत्सृजति । अथ श्वापदभयं त एकस्तत्र कायिर्यी निसृजति, द्वितीयो दण्डकहस्तः 'तं' कायिकीं व्युत्सृजन्तमात्मानं च रक्षति ॥

अथैकाकिनो यतना प्रतिपाद्यते-

[भा.३२१४] सभयाऽसति मत्तस्स उ, एक्को उपओग डंडओ हत्थे ।
वति-कुड्डंतेण कडी, कुणति य दारे वि उपयोगं ॥

वृ- यदि सभयं द्वितीयस्य च संयतस्य तत्राभावस्ततो मात्रके व्युत्सर्जनीयम् । अथ मात्रकं न विद्यते तत उपयोगं कृत्वा दण्डकं हस्ते गृहीत्वा वृतेर्वा कुडयस्य वा अन्तेत-पार्श्वेन कटीं कृत्वा कायिकीं व्युत्सृजति । द्वारेऽपि च स्तेनादिप्रवेशविषयमुपयोगं करोति ॥

[भा.३२१५] बितियपदे उ गिलाणस्स कारणा अहव होज्ज एगागी ।
पुव्व ट्ठिय निद्दोसे, जतणाए निवेदिउच्चारे ॥

वृ- द्वितीयपदेन तु ग्लानस्य कारणादेकोऽपि निर्गच्छेत्, अथवा स साधुरशिवादिभि कारणैरेकाकी भवेत्, यद्वा तत्र पूर्वं निर्दोष-निर्भयमिति मत्वा स्थिताः पश्चात् सभयं सञ्जातं तत्रापि यतनया निवेद्य तथैवोच्चारभूमौ प्रश्रवणभूमौ वा गच्छन्ति ॥

अथ "ग्लानस्य कारणात्" इति पदं व्याख्यानयति-

[भा.३२१६] एगो गिलाणपासे, बितिओ आपुच्छिऊण तं नीति ।
चिरगते गिलाणमितरो, जग्गंतं पुच्छिउं नीति ॥

वृ- इह ते त्रयो जनाः, तेषां च मध्ये एको ग्लानो विद्यते, एकश्च तस्य ग्लानस्य पार्श्वे तिष्ठति, द्वितीयस्तमापृच्छ्य कायिक्यादिभूमौ निर्गच्छति । स च यदि चिरगतो भवति ततः 'इतरः' ग्लानपार्श्वस्थितो ग्लानं जाग्रतमापृच्छ्य निर्गच्छति ॥ एवं स्तेनादीनां सम्भवे विधिरुक्तः ।

अथ तदसम्भवे विधिमाह-

[भा.३२१७] जहितं पुन ते दोसा, तेनादीया न होज्ज पुव्वुत्ता ।
एक्को वि निवेदेतुं, निंतो वि तहिं नऽतिक्कमति ॥

वृ- यत्र पुनः 'ते' पूर्वोक्ताः स्तेनादयो दोषा न भवन्ति तत्रैकोऽपि शेषसाधूनां जाग्रतां निवेद्य निर्गच्छत् स भगवदाज्ञामतिक्रामति ॥

एवं विचारभूमिविषयो विधिरुक्तः । अथ विहारभूमिविषयमाह-

[भा.३२१८] बहिया वियारभूमी, दोसा ते चेव अधिय छक्काया ।
पुव्वद्दिट्ठे कप्पइ, बितियं आगाढ संविग्गो ॥

वृ- प्रतिश्रयाद् बहि 'विहारभूमौ' स्वाध्यायभूमौ रात्रावेकाकिनो गच्छतः 'त एव' स्तेनाऽऽरक्षिकादयो दोषा भवन्ति, 'अधिकाश्च' अतिरिक्ताः षट्कायविराधनानिष्पन्नाः । 'द्वितीयम्' अपवादपदमत्रोच्यते-कल्पते रात्रावपि स्वाध्यायभूमौ 'पूर्वदृष्टायां' दिवाप्रत्युपेक्षितायां गन्तुम् । गाथायां पुंस्त्वनिर्देशः प्राकृतत्वात्, एवमन्यत्रापि लिङ्गव्यत्ययो द्रष्टव्य इति । तत्राप्यागाढे कारणे यः 'संविग्नः' मोक्षाभिलाषी अत एव वक्ष्यमाणजितेन्द्रियादगुणोपेतः साधुः स गच्छति ॥

अथागाढपदं व्याचष्टे-

[भा.३२१९] ते तिन्नि दोन्नी अह विक्कतो उ, नवं च सुत्तं सपगासमस्स ।
सज्झातियं नत्थि रहं च सुत्तं, न यावि पेहाकुसलो स साहू ॥

वृ- 'ते' साधवो रात्रौ विहारभूमौ गच्छन्त उत्सर्गतस्त्रयो जना गच्छन्ति । त्रयाणामभावे द्वौ गच्छतः । अथ ग्लानादिकार्यव्यापृततया द्वितीयोऽपि न प्राप्यते एवमेकाक्यपि गच्छेत् । किमर्थम्? इत्याह-'अस्य' विवक्षितसाधोः 'नवम्' अधुनाऽधीतं 'सप्रकाशं' सूत्रस्पर्शिकनिर्युक्तिरूपेणार्थेन सहितं परावर्त्तनीयं वर्त्तते, स्वाध्यायिकं च वसतौ तदानीं नास्ति । अथवा 'रहस्यसूत्रं' निशीथादिकं तद् यथा द्वितीयो न श्रृणोति तथा परावर्त्तयितव्यम्, न चासौ साधुरनुप्रेक्षाकुशलः । एतेनागाढकारणेन रात्रावपि विहारभूमौ गन्तुं कल्पते ॥

तत्र कीदृशे गृहे कीदृशेन वा साधुना गन्तव्यम् ? इति दर्शयति-

[भा.३२२०] आसन्नगेहे दियदिट्ठभोम्मे, घेत्तूण कालं तहिं जाइ दोसं ।
वसिंदिओ दोसविवज्जितो य, निद्दा-विकारा-ऽऽलसवज्जितप्पा ॥

वृ- कालं गृहीत्वा "दोसं"ति प्रादोषिकं स्वाध्यायं कर्त्तुमासन्नगेहे 'दिवादृष्टभौमे' दिवाप्रत्युपेक्षितोच्चार-प्रश्रवणभूमिके 'याति' गच्छति । स च 'वश्येन्द्रियः' इष्टा-ऽनिष्टविषयेषु वर्तमानानामिन्द्रियाणां निग्रहीता, दोषाः-क्रोधादयस्तैर्विवर्जितः, तथा निद्रया विकारेण च-हास्यादिना आलस्येन च वर्जित आत्मा यस्य स तथा एवंविधस्तत्र गन्तुमर्हति नानीदृशः ॥

[भा.३२२१] तब्भावियं तं तु कुलं अदूरे, किच्चाण झायं निसिमेव एति ।
वाघाततो वा अहवा वि दूरे, सोऊण तत्थेव उवेइ पादो ॥

वृ-यस्मिन् श्रावकादिकुले स गच्छति तत् तस्यां वेलायां प्रविशद्भि साधुभिर्भावितं तद्भावितम्, तदपि 'अदूरे' न दूरदेशवर्त्ति, एवंविधे गृहे प्रादोषिकं स्वाध्यायं 'कृत्वा' परिवर्त्तय निशायामेव प्रतिश्रयमागच्छति । अथ रजन्यामागच्छतोऽपान्तराले दुष्टश्वान-गवादिभि स्तेनादिभिर्वा व्याघातः अथवा 'दूरे' दूरदेशवर्त्तिनी सा विहारभूमि ततस्तत्रैव गृहे सुप्तवा 'प्रातः' प्रभाते प्रतिश्रयमुपैति॥

मू. (४९) *नो कप्पइ निग्गंथीए एगाणियाए राओ वा वियाले वा बहिया वियारभूमिं वा विहारभूमिं वा निक्खमित्तए वा पविसित्तए वा । कप्पइ से अप्पबिइयाए वा अप्पतइयाए वा अप्पचउत्थीए वा राओ वा वियाले वा बहिया वियारभूमिं वा विहारभूमिं वा निक्खमित्तए वा पविसित्तए वा ॥*

वृ- अस्य व्याख्या प्राग्वत् ॥ अथ भाष्यम्-

[भा.३२२२] सो चेव य संबंधो, नवरि पमाणम्मि होइ नाणत्तं ।
जे य जतीणं दोसा, सविसेसतरा उ अज्जाणं ॥

वृ- 'स एव' निर्ग्रन्थसूत्रोक्तः सम्बन्ध इहापि सूत्रे ज्ञातव्यः । 'नवरं' केवलं प्रमाणे निर्ग्रन्थेभ्यो निर्ग्रन्थीनां नानात्वम्, निर्ग्रन्थानां द्वयोस्त्रयाणां वा निर्गन्तुं कल्पते, निर्ग्रन्थीनां तु द्वयोस्तिसृणां चतसृणां वा इत्ययं सङ्ख्याकृतो विशेष इति भावः । 'ये च' स्तेना-ऽऽरक्षिकादयो यतीनामेकाकिनिर्गमने दोषाः पूर्वसूत्रे उक्ताः आर्याणामपि त एव सविशेषतरा मन्तव्याः, तरुणाद्युपद्रवसहिता इति भावः ॥

[भा.३२२३] बहिया वियारभूमी, निग्गंथेगाणियाए पडिसिद्धा ।
चउगुरुगाऽऽयरियादी, दोसा ते चेव आणादी ॥

वृ- रात्रौ बहिर्विचारभूमौ गमनमेकाकिन्या निर्ग्रन्थ्याः प्रतिषिद्धम् । अत एवैतत् सूत्रमाचार्य प्रवर्त्तिन्या न कथयति चतुर्गुरवः । प्रवर्त्तिनी भिक्षुणीनां न कथयति चतुर्गुरवः । भिक्षुण्यो न प्रतिशृण्वन्ति मासलघु । प्रवर्त्तिनीवचनमतिक्रम्य भिक्षुण्यो बलामोटिकया एकाकिन्यो गच्छन्ति चतुर्गुरवः । दोषाश्च त एवाज्ञादयो द्रष्टव्याः ॥

[भा.३२२४]भीरू पकिच्चेवऽबला चला य, आसंकितेगा समणी उ रातो ।
मा पुप्फभूयस्स भवे विनासो, सीलस्स थोवाण न देंति गंतुं ॥

वृ-इह स्त्री 'प्रकृत्यैव' स्वभावेनैव 'भीरु' अल्पसत्त्वा, पुरुषं च प्राप्य सा 'अबला' अकिञ्चित्करी, अत एव तस्या अबलेति नाम, अबला च स्वभावादेव चञ्चला, अत एव एकाकिनी श्रमणी रात्रौ विचारभूमौ गच्छन्ती आशङ्किता स्यात्-अवश्यमेषा व्यभिचारिणीति । अतो म 'पुष्पभूतस्य' शिरीषपुष्पसुकुमारस्य शीलस्य विनाशो भवेदिति कृत्वा स्तोकानामार्याणां रात्रौ विचारभूमौ गन्तुं भगवन्तः 'न ददति' नानुजानन्तीत्यर्थः ॥ उपाश्रयेऽपि ताभिरीदृशे वस्तव्यमिति दर्शयति-

[भा.३२२५] गुत्ते गुत्तदुवारे, कुलपुत्ते इत्थिमज्झे निद्दोसे ।
भीतपरिस मद्दविदे, अज्जा सिज्जायरे भणिए ॥

वृ- 'गुप्तो नाम' वृत्यादिपरिक्षिप्तः, 'गुप्तद्वारः' सकपाटः, ईदृशे उपाश्रये स्थातव्यम् । शय्यातरश्च तासां कुलपुत्रको गवेषणीयः । तस्यैव शय्यातरस्य या भगिनीप्रभृतयः स्त्रियस्तासां सम्बन्धि यद् गृहं तन्मध्यवर्ती संयतीनामुपाश्रयो भवति । सोऽपि 'निर्दोषः' पुरुषसागारिकादिदोषरहितः । कुलपुत्रकश्च भीतपर्षद् मार्दविकश्चान्वेषणीयः । भीतपर्षद् नाम-यद्भयात् तदीयः परिवारो न कमप्यनाचारं कर्तुमुत्सहते । मार्दविको नाम-मधुरवचनः । ईदृश आर्यायाः शय्यातरो भणितः ॥

रात्रौ च प्रतिश्रये ताभिरियं यतना कर्त्तव्या-

[भा.३२२६] पत्थारो अंतो बहि, अंतो बंधाहि चिलिमिली उवरिं ।
तं तह बंधति दारं, जह णं अन्ना न याणाई ॥

वृ- 'प्रस्तारः' कटः स एकः प्रतिश्रयाभ्यन्तरे द्वितीयस्तु प्रतिश्रयाद् बहि कर्त्तव्यः । 'अन्तश्च' अभ्यन्तरे कटस्योपरि चिलिमिलिकां 'बधान' नियन्त्रय । तत्र च प्रतिहारी तथा बध्नाति द्वारं यथा "णं" इति 'तान्' बन्धान् नान्या संयती मोक्तुं जानाति ॥

[भा.३२२७] संथारेगंतरिया, अभिक्खणाऽऽउज्जणा य तरुणीणं ।
पडिहारि दारमूले, मज्झे अ पवत्तिनी होति ॥

वृ- 'संस्तारकः' प्रस्तरणमेकान्तरितानां तरुणी-वृद्धानां भवति । अभीक्ष्णं च तरुणीनां यतनया प्रवर्त्तिन्या प्रतिहारिकया च 'उपयोजना' सङ्घट्टना कर्त्तव्या । प्रतिहारी च द्वारमूले स्वपिति । 'मध्ये' सर्वमध्यवर्त्तिनि प्रदेशे प्रवर्त्तिनी भवति ॥

[भा.३२२८] निक्खमण पिंडियाणं, अग्गद्दारे य होइ पडिहारी ।
दारे पवत्तिणी सारणा य फिडिताण जयणाए ॥

वृ- रात्रौ विचारभूमौ निष्क्रमणं 'पिण्डितानां' समुदितानां त्रि-चतुःप्रभृतीनामित्यर्थः । प्रतिहारी द्वारमुद्घाट्य प्रथमत एवाग्रद्वारे तिष्ठति । प्रवर्त्तिनी पुनर्द्वारे स्थिता संयती या यदा प्रविशति तां शिरसि कपोलयोर्वक्षसि च स्पृष्ट्वा प्रवेशयति । याश्च तत्र स्फिटिताः-द्वारविप्रनष्टा इतस्ततः परिभ्रमन्ति तासां यतनया यथा अप्रीतिकं न भवति तथा स्मारणा कर्त्तव्या, यथा-आर्ये! इहागच्छ, इतो न भवति द्वारम् ॥ अथ द्वितीयपदमाह-

[भा.३२२९] बिइयपद गिलाणाए, तु कारणा अहव होज्ज एगागी ।
आगाढे कारणम्मिं, गिहिनीसाए वसंतीणं ॥

वृ- द्वितीयपदे ग्लानाया- संयत्याः कारणादेकाकिन्यपि विचारभूमौ गच्छेत् । कथम् ? इति चेद् उच्यते-इह प्रवर्त्तिनी यदा आत्मतृतीया भवति, तत्राप्येका ग्लाना तत एका ग्लानायाः पार्श्वे तिष्ठति, द्वितीया तु निवेद्य निर्गच्छति । अथवा सा अशिवादिभिः कारणैरेकाकिनी भवेत् । तत्र च 'आगाढे' आत्यन्तिके कारणे गृहिनिश्रया वसन्तीनामेकाकिनीनां संयतीनां विधिरभिधीयते ॥

[भा.३२३०] एगा उ कारण ठिया, अविकारकुलेसु इत्थिबहुलेसु ।
तुब्भवसीहं नीसा, अज्जा सेज्जातरं भणति ॥

वृ- एका आर्यिका 'कारणेन' पुष्टालम्बनेन 'अविकारकुलेषु' हास्यादिविकारविरहितेषु स्त्रीबहुलेषु कुलेषु स्थिता सती शय्यातरमित्थं भणति-अहं युष्मन्निश्रया वसामि, यच्च मम किञ्चित् क्षूणमायाति तत्राहं भवद्भिः स्मारणीया ॥ इदमेव स्फुटतरमाह-

[भा.३२३१] अपुव्वपुंसे अवि पेहमाणी, वारेसि धूतादि जहेव भज्जं ।
तहाऽवराहेसु ममं पि पेक्खे, जीवो पमादी किमु जोऽबलाणं ॥

वृ- भोः श्रावक ! यथा त्वम् 'अपूर्वपुंसः' अदृष्टपूर्वपुरुषान् पश्यन्तीमपि, आस्तां तैः सह सम्भाषणादि कुर्वाणामित्यपिशब्दार्थः, दुहितरम् आदिशब्दाद् भगिनीप्रभृतिकां भार्यां वा यथा वारयसि; तथा 'अपराधेषु' स्खलितेष्वनुचितसन्दर्शनादिषु 'मामपि प्रेक्षस्व' अहमपि तथैव वारणीया, यतो जीवः सर्वोऽपि प्रायः 'प्रमादी' अनादिभवाभ्यस्तप्रमादबहुलः, किं पुनर्यः 'अबलानां' स्त्रीणां सम्बन्धी ? स चपलस्वभावतया सुतरां प्रमादीति भावः ॥ किञ्च-

[भा.३२३२] पायं सकज्जग्गहणालसेयं, बुद्धी परत्थेसु उ जागरूका ।
तमाउरो पस्सति नेह कत्ता, दोसं उदासीनजनो जगं तु ॥

वृ- येयं प्रतिप्राणि स्वसंवेदनप्रत्यक्षा बुद्धि सा प्रायः स्वं-स्वकीयं यत् कार्य-हिता-ऽहितप्रवृत्तिनिवृत्तिरूपं तद्ग्रहणे-तत्परिच्छेदेऽलसा-जडा, 'परार्थेषु तु' परप्रयोजनेषु 'जागरूका'

जागरणशीला, अत एव 'तं' दोषम् 'उदासीनजनः' मध्यस्थलोकः तटस्थः पश्यति । अतोऽहं भवतां पार्श्वादात्मनमहितेषु प्रवर्त्तमानं निवारयामीति प्रक्रमः ॥

[भा.३२३३]तेनिच्छिए तस्स जहिं अगम्मा, वसंति नारीतो तहिं वसेज्जा ।
ता बेति रत्तिं सह तुब्भ नीहं, अनिच्छमाणीसु बिभेमि बेति ॥

वृ- एवमुक्ते सति यद्यसौ श्रावक इच्छति-तदुक्तं प्रतिपद्यते तदा 'तस्य' शय्यातरस्य यत्र 'अगम्याः' माता-भगिनीप्रभृतयो नार्यो वसन्ति तत्र सा एकाकिनी संयती वसेत् । ताश्च स्त्रियो ब्रूते-रात्री युष्माभिः सहाहं कायिक्याद्यर्थं निर्गमिष्यामि, अतो यदा भवत्य उत्तिष्ठन्ते तदा मामप्युत्थापयत । यदि ता इच्छन्ति ततो लष्टम्, अथ नेच्छन्ति ततः 'अहं रात्रावेकाकिनी निर्गच्छन्ती विभेमि' इत्येवं ब्रवीति ॥ एवमप्युक्ता यदि ता द्वितीया नागच्छन्ति तदा किं कर्त्तव्यम् ? इत्याह-

[भा.३२३४] मत्तासईए अपवत्तणे वा, सागारिए वा निसि निक्खमंती ।
तासिं निवेदेतु ससद्द-दंडा, अतीति वा नीति व साधुधम्मा ॥

वृ- रात्रौ मात्रके कायिकी व्युत्सर्जनीया, तत उद्गते सूर्ये सा मात्रककायिकी बहिश्छर्दनीया। अथ मात्रकं नास्ति, यद्वा तस्या मात्रके कायिक्याः प्रवर्त्तनम्-आगमनं न भवति, सागारिकबहुलं वा तद् गृहम्, एतैः कारणैः 'निशि' रात्रावेकाकिनी निष्क्रामन्ती 'तासां' शय्यातरीणां निवेद्य सशब्दा-कासितादिशब्दं कुर्वती दण्डकं हस्ते कृत्वा 'साधुधर्मा' शोभनसमाचारा 'अत्येति वा' प्रविशति वा 'निरेति वा' निर्गच्छति वा ॥ एवं तावद् विचारभूमिविषयो विधिरुक्तः ।

अथ विहारभूमिविषयमाह-

[भा.३२३५] एगाहि अनेगाहि व, दिया व रातो व गंतु पडिसिद्धं ।
चउगुरु आयरियादी, दोसा ते चेव जे भणिया ॥

वृ- एकाकिनीनाम् 'अनेकाकिनीनां वा' बह्वीनामपि, गाथायां षष्ठ्यर्थे तृतीया, दिवा वा रात्रौ वा विहारभूमौ संयतीनां गन्तुं 'प्रतिषिद्धं' न कल्पते । अत एव यद्येनमर्थमाचार्या प्रवर्त्तिन्या न कथयन्ति तदा चतुर्गुरवः । प्रवर्त्तिनी भिक्षुणीनां न कथयति चतुर्गुरवः । भिक्षुण्यो न प्रतिश्र ण्वन्ति लघुमासः । दोषाश्च त एव द्रष्टव्या ये पूर्वं विचारभूमौ भणिताः ॥

द्वितीयपदे गन्तव्यमपीति दर्शयति-

[भा.३२३६] गुत्ते गुत्तदुवार, दुज्जणवज्जे निवेसणस्संतो ।
संबंधि निए सण्णी, बितियं आगाढ संविग्गे ॥

वृ- गुप्ते गुप्तद्वारे 'दुर्जनवर्जे' दुःशीलजनरहिते गृहे स्वाध्यायकरणार्थं गन्तव्यम्, तच्च गृहं यदि 'निवेशनस्य' पाटकस्य 'अन्तः' अभ्यन्तरवर्त्ति भवति । अथ निवेशनान्तर्न प्राप्यते ततोऽन्यस्मिन्नपि पाटके यः संयतीनां पितृ-भ्रात्रादिरशङ्कनीयः सम्बन्धी, यो वा शय्यातरस्य 'निजः' सुहृदादि, यो वा 'संज्ञी' श्रावको माता-पितृसमानस्तस्य गृहे गन्तव्यम् । एतच्च द्वितीयपदमागाढे संविग्नाया आर्यिकाया मन्तव्यम् । किमुक्तं भवति ? -व्याख्याप्रज्ञप्तिप्रभृतिश्रुतसम्बन्धिनमागाढयोगं काचिदार्यिका प्रतिपन्ना, सा च यदि 'संविग्ना' हास्यादिविकारवर्जिता, ततस्तस्या आत्मतृतीयाया आत्मचतुर्थ्याया आत्मपञ्चमाया वा पूर्वोक्तगुणोपेतं गृहं गत्वा स्वाध्यायः कर्त्तुं कल्पते ॥

तत्रैव गमने विधिं दर्शयति-

[भा.३२३७] पडिवत्तिकुसल अज्जा, सज्झायज्झाणकारणुज्जुत्ता ।
मोत्तूण अब्भरहितं, अज्जाण न कप्पती गंतुं ॥

वृ- प्रतिपत्ति-उत्तरप्रदानं तत्र कुशला-निपुणा या काचिदार्या सा तस्याः सहाया समर्पणीया । तथा या सा आगाढयोगं प्रतिपन्ना सा स्वाध्यायस्य यद् ध्यानम्-एकाग्रतया करणं तन्निदशे कारणे उद्युक्ता भवेत् । "मोत्तूण अब्भरहियं" ति येषु कुलेषु यथाभद्रकादिषु संयतीनामागमनम् 'अभ्यर्हितं' गौरवार्हं तानि मुक्त्वाऽन्यत्र कुले आर्यिकाणां न कल्पते गन्तुम् ॥ एवंविधे कुले गत्वा स्वाध्यायं कुर्वतीनां यद्यसौ गृहपति प्रश्नयेत्-किमर्थं भवत्य इहागताः ? ततः प्रतिपत्तिकुशलया वक्तव्यम्-

[भा.३२३८]सज्झाइयं नत्थि उवस्सए ऽम्हं, आगाढजोगं च इमा पवण्णा ।
तरेण सोहद्दमिदं च तुब्भं, संभावणिज्जातो न अन्नहा ते ॥

वृ- हे श्रावक ! योऽयमस्माकमुपाश्रयः तत्र स्वाध्यायिकं नास्ति । इयं च संयती आगाढयोगं प्रतिपन्ना वर्त्तते । "तरेण" त्ति शय्यातरेण सह युष्माकम् 'इदम्' ईदृशं सकलजनप्रतीतं सौहार्दं तद् मत्वा वयमत्र समागताः । अतो नान्यथा त्वया वयं सम्भावनीयाः ॥ अपि च-

[भा.३२३९]खुद्दो जनो नत्थि न यावि दूरे, पच्छण्णभूमी य इहं पकामा ।
तुब्भेहि लोएण य चित्तमेतं, सज्झाय-सीलेसु जहोज्जमो मे ॥

वृ- 'क्षुद्रो जनः' दुर्जनलोक इह नास्ति, न चेदं युष्मद्गृहं 'दूरे' अस्मत्प्रतिश्रयाद् दूरवर्त्ति, प्रच्छन्नभूमिश्च 'इह' युष्मद्गृहे 'प्रकामा' विस्तृता, अतोऽत्रास्माकं स्वाध्यायो निर्व्याघातं निर्वहति। किञ्च युष्माकं लोकस्य च 'चित्तं' प्रतीतमेतत्, यथा-"मे" अस्माकं स्वाध्याय-शीलयोर्गाढतरः 'उद्यमः' प्रयत्नो भवति ॥

मू. (५०) *कप्पइ निग्गंथाण वा निग्गंथीण वा पुरत्थिमेणं जाव अंग-मगहाओ एत्तए, दक्खिणेणं जाव कोसंबीओ, पच्चत्थिमेणं जाव थूणाविसयाओ, उत्तरेणं जाव कुणालाविसयाओ एत्तए । एताव ताव कप्पइ । एताव ताव आरिए खेत्ते । नो से कप्पइ एत्तो बाहिं । तेन परं जत्थ नाण-दंसण-चरित्ताइं उस्सप्पंति त्ति बेमि ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.३२४०] इति काले पडिसेहो, परूवितो अह इदानि खेत्तम्मि ।
चउदिसि समणुन्नायं, मोत्तूण परेण पडिसेहो ॥

वृ- 'इति' अमुना प्रकारेण रात्रिलक्षणो यः कालस्तद्विषयः प्रतिषेधः पूर्वसूत्रे प्ररूपितः, 'अथ' अनन्तरमिदानीं क्षेत्रविषयः प्ररूप्यते । कथम् ? इत्याह-चतसृषु दिक्षु यावत् क्षेत्रमत्र सूत्रे समनुज्ञातं तावद् मुक्त्वा 'परेण' बहि-क्षेत्रेषु विहारस्य प्रतिषेधो मन्तव्यः ॥ किञ्च-

[भा.३२४१] हेट्ठा वि य पडिसेहो, दव्वादी दव्वे आदिसुत्तं तु ।
घडिमत्त चिलिमिणीए, वत्थादी चेव चत्तारि ॥

[भा.३२४२] वगडा रच्छा दगतीरगं च विह चरमगं च खित्तम्मि ।
सारिय पाहुड भावे, सेसा काले य भावे य ॥

वृ- अधस्तनसूत्रेष्वपि 'द्रव्यादि' द्रव्य-क्षेत्र-काल-भावविषयः प्रतिषेधो मन्तव्यः । तत्र द्रव्यप्रतिषेधपरम् 'आदिसूत्रं' प्रलम्बप्रकृतमित्यर्थः तथा घटीमात्रसूत्रं चिलिमिलिकासूत्रं च ।

वस्त्रादिप्रतिषेधकानि च चत्वारि सूत्राणि- एकं तावत् "निग्गंथं च णं गाहावइकुलं० अनुप्पविट्ठं केइ वत्थेण वा पाएण वा०" इत्यादिलक्षणम्, द्वितीयमिदमेव "बहिया वियारभूमिं वा विहारभूमिं वा०" इति विशेषितम्, तृतीय-चतुर्थे त्वेवमेव निर्ग्रन्थीविषये, एतान्यपि द्रव्यप्रतिषेधपराणि। तथा वगडासूत्रं रथ्यामुखाऽऽपणगृहादिसूत्रं दकतीरसूत्रं 'विहं' अध्वा तद्विषयं सूत्रं एतदेव च प्रस्तुतं चरमसूत्रं एतानि क्षेत्रप्रतिषेधपराणि। तथा यान्योघतो विभागतश्च सागारिकसूत्राणि यच्च 'प्राभृतम्' अधिकरणं तद्विषयं सूत्रं एतानि भावप्रतिषेधपराणि। 'शेषाणि तु' मास-कल्पप्रकृतप्रभृतीनि सर्वाण्यपि सूत्राणि 'काले च भावे च' उभयोरपि प्रतिषेधकानि भवन्ति ॥

[भा.३२४३] अहवण सुत्ते सुत्ते, दव्वाईणं चउण्हमोआरो।
सो य अधीनो वत्तरि, सोतरि य अतो अनियमोऽयं ॥

वृ- अथवा न पृथग् द्रव्यादिविषयाणि सूत्राणि, किन्तु सूत्रे सूत्रे 'चतुर्णां' द्रव्य-क्षेत्र-कालभावानामवतारः प्रदर्शयितव्यः। 'स च' अवतारो वक्तरि श्रोतरि च 'अधीनः' आयत्तः, यदि वक्ता तथाविधप्रतिपादनशक्तिसमन्वितः श्रोता च ग्रहण-धारणालब्धिसम्पन्नः तदा भवति सूत्रे सूत्रे चतुर्णां द्रव्यादीनामवतारः, अन्यदा तु नेति भावः। अतो नायं नियमो यदवश्यं प्रतिसूत्रं द्रव्यादिचतुष्टयमवतारणीयमिति ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा पूर्वस्यां दिशि यावदङ्ग-मगधान् 'एतुं' विहर्तुम्। अङ्गा नाम-चम्पाप्रतिबद्धो जनपदः। मगधा-राजगृहप्रतिबद्धो देशः। दक्षिणस्यां दिशि यावत् कौशाम्बीमेतुम्। प्रतीच्यां दिशि स्थूणाविषयं यावदेतुम्। उत्तरस्यां दिशि कुणालाविषयं यावदेतुम्। सूत्रे पूर्व-दक्षिणादिपदेभ्यस्तृतीयानिर्देशो लिङ्गव्यत्ययश्च प्राकृतत्वात्। एतावत् तावत् क्षेत्रमवधीकृत्य विहर्तुं कल्पते। कुतः ? इत्याह- एतावत् तावद् यस्मादार्यं क्षेत्रम्। नो "से" तस्य निर्ग्रन्थस्य निर्ग्रन्थ्या वा कल्पते 'अतः' एवंविधात् आर्यक्षेत्राद् बहिर्विहर्तुम्। 'ततः परं' बहिर्देशेषु अपि सम्प्रतिनृपतिकालादारभ्य यत्र ज्ञान-दर्शन-चारित्राणि 'उत्सर्पन्ति' स्फातिमासादयन्ति तत्र विहर्त्तव्यम्। 'इति' परिसमाप्तौ। ब्रवीमि इति तीर्थकर-गणधरोपदेशेन, न तु स्वमनीषिकयेति सूत्रार्थः ॥ अथ निर्युक्तिविस्तरः-

[भा.३२४४] जो एतं न वि जाणइ, पढमुद्देसस्स अंतिमं सुत्तं।
अहवण सव्वऽज्झयणं, तत्थ उ नायं इमं होइ ॥

वृ- 'यः' आचार्य 'एतत्' प्रस्तुतं प्रथमोद्देशकस्यान्त्यं सूत्रं न जानाति, अथवा सर्वमपीदं कल्पाध्ययनं यो न जानाति, 'तत्र' आचार्ये तद्विषयमित्यर्थः 'इदं' वक्ष्यमाणं 'ज्ञातम्' उदाहरणं भवति ॥ आह किमर्थं प्रथमोद्देशकस्यान्त्यं सूत्रं न जानातीत्युक्तम् ? उच्यते-

[भा.३२४५] उज्जालितो पदीवो, चाउस्सालस्स मज्झयारम्मि।
पमुहे वा तं सव्वं, चाउस्सालं पगासेति ॥

वृ- 'चतुःशालस्य' गृहस्य 'मध्यारे' मध्यभागे 'प्रमुखे वा' प्रवेश-निर्गममुखे प्रदीप उज्वालितः सन् 'तत्' चतुःशालं सर्वमपि प्रकाशयति; एवमत्रापि सकलाध्ययनमध्यवर्तिनि प्रस्तुतसूत्रे यदिदं प्रथमोद्देशकस्यान्त्यसूत्रं न जानातीत्युक्तं तद् मध्यदीपकमवगन्तव्यम्। यद्वा यस्मादत्र प्रथमोद्देशके समासतः सर्वाऽपि सामाचारी समर्थिता ततश्चतुःशालप्रमुखोज्वालितप्रदीप इवेदमन्त्यदीपकमवसात्यम्। ततश्चेदमुक्तं भवति ?-य एतत् कल्पाध्ययनं प्रथमोद्देशकं वा न

जानाति स गणपरिवर्ती भगवद्भिर्नानुज्ञातः ॥

इदमेव प्रचिकटयिषुः "तत्राचार्ये ज्ञातमिदं भवति" इति पदं व्याख्यानयति-

[भा.३२४६] जो गणहरी न याणति, जाणंतो वा न देसती मग्गं ।
सो सप्पसीसगं पिव, विनस्सती विज्ञपुत्तो वा ॥

वृ- यः कश्चिद् गणधरः 'मार्गं' यथोक्तसामाचारीरूपं न जानाति, जानाति वा परं न शिष्याणां तं मार्गमुपदिशति स सर्पशीर्षकमिव वैद्यपुत्र इव वा विनश्यति ॥ तत्थ इमं कप्पियं उदाहरणं- एगो सप्पो निच्चं पलोएंतो अप्पणो जहासुहं विहरइ । ताहे से पुंछडा भणति-तुमं निच्चमेव पुरतो गच्छसि । अन्यच्च-

[भा.३२४७]सी-उण्ह-वासे य तमंधकारे, निच्चं पि गच्छामि जतो मि नेसी ।
गंतव्वए सीसग ! कंचि कालं, अहं पि ता होज्ज पुरस्सरा ते ॥

वृ- भोः शीर्षक ! नित्यमप्यहं भवत्पृष्ठलग्ना सती यतो यतो मां नयसि तत्र तत्र शीते वा उष्णे वा वर्षे वा निपतति 'तमोऽन्धकारे वा' बहलतमःपटलविलुप्ते प्रदेशे गच्छामि, किं करोमि ? परं साम्प्रतं कञ्चित् कालं 'गन्तव्ये' गमनेऽहमपि तावत् 'ते' तव पुरस्सरा भवेयम् ॥ शीर्षकं प्राह-

[भा.३२४८] ससक्करे कंटइल्ले य मग्गे, वज्जेमि मोरे नउलादिए य ।
बिले य जाणामि अदुट्ठ दुट्ठे, मा ता विसूराहि अजाणि एवं ॥

वृ- हे पुच्छिके ! अहं पुरस्सरं गच्छन् सन् 'सशर्करान्' कर्करयुक्तान् कण्टकाकुलाँश्च मार्गान् वर्जयामि । यत्र च मयूरान् नकुलादींश्चात्मोपद्रवकारिणः पश्यामि तत्र न गच्छामि । बिलानि चामूनि अदुष्टानि अमूनि च दुष्टानि इत्येवमहं सम्यग् जानामि । त्वं पुनरेतेषां मध्यादेकमपि न जानासि । अतस्त्वमेवमज्ञा सती मा तावत् "विसूराहि" त्ति "खिदेर्जूर-विसूरौ" इति प्राकृतलक्षणबलाद् मा खेदमनुभवेत्यर्थः ॥ पुच्छिका प्राह-

[भा.३२४९] तं जाणगं होहि अजाणिगा हं, पुरस्सरं ताव भवाहि अज्ज ।
एसा अहं नंगलिपासएणं, लग्गा दुअं सीसग ! वच्च वच्च ॥

वृ- शीर्षक ! त्वं ज्ञायकं भव, अहमज्ञायिकाऽपि स्थास्यामि, 'पुरस्सरम्' अग्रगामुकं तावत् त्वमद्य भव, अहं पुनरेषा नङ्गलिपाशकेन लग्ना अत्रैव स्थिता, त्वं पुनः 'द्रुतं' शीघ्रं व्रज व्रजेति ॥

शीर्षकमाह-

[भा.३२५०] अकोविए ! होहि पुरस्सरा मे, अलं विरोहेण अपंडितेहिं ।
वंसस्स छेदं अमुने ! इमस्स, दट्ठुं जति गच्छसि तो गता सि ॥

वृ- 'अकोविदे !' मूर्खे ! भव 'मे' मम पुरस्सरा, अलमपण्डितैः सह विरोधेन चलितेन, परं 'हे अमुने !' अज्ञे ! अस्य मदीयवंशस्य च्छेदमपि दृष्ट्वा यदि गच्छसि ततस्त्वमपि 'गताऽसि' विनष्टाऽसीत्यर्थः, अस्य कार्यस्य पर्यवसानं पश्चात् त्वमपि द्रक्ष्यसीति भावः ॥ अपि च-

[भा.३२५१] कुलं विनासेइ सयं पयाता, नदीव कुलं कुलडा उ नारी ।
निब्बंध एसो नहि सोभनो ते, जहा सियालस्स व गाइतव्वे ॥

वृ- 'स्वयम्' आत्मच्छन्देन 'प्रयाता' प्रवृत्ता 'कुलटा' स्वैरिणी नारी 'कुलं' पितृकुलं श्वशुरकुलं च विनाशयति । केव किम् ? इत्याह-नदीव कुलम्, यथा नदी स्वैरं महापूरप्रवृत्ता सती कुलमुभयमपि

पातयति तथैषाऽपि कुलद्वयमित्यर्थः । न चायमीदृशः 'निर्बन्धः' कदाग्रहः 'ते' तव 'शोभनः' परिणामसुन्दरो भविता । यथा श्रृगालस्य 'गातव्ये' उन्नदितव्ये निर्बन्धो न शोभनः सञ्जात इति। अत्र खसद्रुमाख्यानकम्- एक्को सियालो रत्तिं घरं पविट्ठो । घरमानुसेहिं चेतितो निच्छुभउमाढत्तो। सो सुणगाईहिं पारद्धो नीलीरागरंजने पडितो, किह वि ततो उत्तिण्णो, नीलवण्णो जातो । तं अनेन सरभतरक्ख-सियालाई पासिउं भणंति-को तुमं एरिसो ? । सो भणइ-अहं सव्वाहिं मिगजाईहिं खसद्दुमो नाम मिगराया कतो, ततो अहं एत्थमागतो, पासामि ताव को मं न नमति ? । ते जाणंति-अपुव्वो एयस्स वण्णो, अवस्सं एस देवेहि अणुग्गहितो । तओ भणंति-अम्हे तव किंकरा, संदिसह, किं करेमो ? ,। खसद्दुमो भणति-हत्थिवाहणं देह । दिन्नो, विलग्गो वियरति । अन्नया सियालेहिं उण्णईयं । ताहे खसद्दुमेणं तं सियालसहावमसहमाणेण उण्णईयं । ततो हत्थिणा 'सो सियालो' त्ति नाउं सोंडाए घेत्तुं मारितो । जहा सो सियालो उन्नईयं सोउं उन्नइए विनट्ठो एवं तुमं पि विनस्सिहिसि त्ति ॥ किञ्च-

[भा.३२५२]उल्लत्तिया भो ! मम किं करेसी, थामं सयं सुट्ठु अजाणमाणी ।
सुतं तया किण्ण कताइ मूढे !, जं वाणरो कासि सुगेहियाए ॥

वृ-हे पुच्छिके ! यदि नाम त्वं 'उल्लत्तिता' मम सम्मुखं वलिता ततः स्वकं 'स्थाम' वीर्यमजानती मम किं करिष्यसि ? न किमपीति भावः । परं मूढे ! त्वया किं न कदाचिदप्येतत् संविधानकं श्रुतं यद् वानरः सुगेहिकायाः शकुनिकायाः सम्मुखमावृतः सन् कृतवान् ? । अत्र कथानकम्-

वासेण झडिज्जंतं, रुक्खग्गे वानरं थरथरेंतं ।
सुघरा नाम सउणिया, भणति तयं निड्डए संती ॥
छेत्तूण मे तणाइ, आनेऊणं च रुक्खसिहरम्मि ।
वसही कता निवाता, तत्थ वसामिं निरुव्विग्गा ॥
एत्थहसामि रमामि य, वासारत्ते य न वि य उल्लामि ।
अंदोलयामि वानर !, वसंतमासं विलंबेमि ॥
हत्था तव मानुसगस्स जारिसा हिदयए य विन्नाणं ।
हत्था विन्नाणं जीवितं च मोहप्फलं तुज्झ ॥
विसहसि धारपहारे, न य इच्छसि गेहमप्पणो काउं ।
वानर ! तुमे असुहिते, अम्हे वि रतिं न विंदामो ॥
तह दोब्बं तह तच्चं, रोसवितो तीए वानरो पावो ।
रोसेण धमधमेंतो, उप्फिडितो तं गतो सालं ॥
आकंपितम्मि तो पादवम्मि फिरडि त्ति निग्गता सुघरा ।
अन्नम्मि दुमम्मि ठिता, झडिज्जते सीत-वातेणं ॥
इतरो वि य तं नेड्डं, घेत्तूणं पादवस्स सिहराओ ।
तणय एक्केक्कं अंछिऊण तो उज्झती कुवितो ॥
भूमीगतम्मि तो निड्डयम्मि अह भणति वानरो पावो ।
सुघरे ! अवहितहिदए !, सुण ताव जहा अहिरिया सि ॥

व सि ममं मयहरिया, न व सि ममं सोहिया व निद्धा वा ।
सुघरे ! अच्छसु विघरा, जा वट्टसि लोगतत्तीसु ।।

जहा सो वानरो सुघराए पडिचोइओ समाणो तीसे चेव पडिनीऊभूओ, एवं तुमं पि मए हितोवएसेनानुसासियावि मम चेवोपरि भूय त्ति । अत एवोक्तम्-

उपदेशो न दातव्यो, यादृशे तादृशे जने ।
पश्य वानरमूर्खेण, सुगृही निगृही कृता ।।

–किञ्चान्यत्-

[भा.३२५३] न चित्तकम्मस्स विसेसमंधो, संजाणते नावि मंयककंतिं ।
किं पीढसप्पी कह दूतकम्मं, अंधो कहिं कत्थ य देसियत्तं ।।

वृ-यथा अन्धश्चित्रकर्मणः 'विशेषं' रामणीयकं न जानीते, नापि मृगाङ्कस्य-चन्द्रमसः कान्तिम्, एवं त्वमपि चक्षूरहिततया मार्गे गन्तुं न जानासीति भावः । तथा क पीठेन सर्पितुं-गन्तुं शीलमस्येति पीठसर्पी-पङ्गु ? क्व च 'दूतकर्म' सन्देशहारकत्वम् ?, क्व चान्धः ? क्व च 'देशकत्वं' मार्गदर्शकत्वम् ?, यथा सर्वथैवाघटमानकमिदं तथा भवत्या अपि निष्प्रत्यूहं गमनमिति भावः ।।

एवं शीर्षकेणोक्ते सति वा ब्रवीति-

[भा.३२५४] बुद्धीबलं हीनबला वयंति, किं सत्तजुत्तस्स करेइ बुद्धी ।
किं ते कहा नेव सुता कतायी, वसुंधरेयं जह वीरभोज्जा ।।

वृ- बुद्धिलक्षणं यद् बलं तद् 'हीनबलाः' निसत्त्वा एव वदन्ति । यतः सत्त्वयुक्तस्य बुद्धि किं करोति ? सत्त्वेनैव सर्वकार्यसिद्धेः । किं वा त्वया कदाचिदियं कथा नैव श्रुता-यथा वसुन्धरेयं वीरभोज्या । तदुक्तम्-

नेयं कुलक्रमायाता, शासने लिखिता न वा ।
खड्गेनाक्रम्य भुञ्जीत, वीरभोज्या वसुन्धरा ।।

–अथ शीर्षकमाह-

[भा.३२५५] असंसयं तं अमुणाण मग्गं, गता विधाने दुरतिक्कमम्मि ।
इमं तु मे बाहति वामसीले !, अन्ने वि जं काहिसि एक्कघातं ।।

वृ- 'असंशयं' निस्संदेहं त्वम् 'अज्ञानां' मूर्खाणां 'मार्गम्' आत्मोपघातरूपं गता । क्व सति ? इत्याह-विधाने दुरतिक्रमे सति । विधानं नाम-यद् येन यदा प्राप्तव्यं तद् दुरतिक्रमम्, नान्यथा कर्तुं शक्यते । उक्तञ्च-

बुद्धिरुत्पद्यते तादृग्, व्यवसायश्च तादृशः ।
सहायास्तादृशा ज्ञेयाः, यादृशी भवितव्यता ।।

अत एव तद् अवश्यम्भावितया नास्मन्मतो दुनोति, परं 'वामशीले !' प्रतिकूलपथगामिनि ! मामिदमेव बाधते यद् 'अन्यानपि' आत्मव्यतिरिक्तानस्मादृशानेकघातं करिष्यसि, आत्मना सह मारयसीति भावः ।।

[भा.३२५६] सा मंदबुद्धी अह सीसकस्स, सच्छंद मंदा वयणं अकाउं ।

पुरस्सरा होतु मुहुत्तमेत्तं, अपेयचक्खू सगडेण खुण्णा ।।

वृ- 'सा' पुच्छिका 'मन्दबुद्धि' सद्बुद्धिविकला 'अथ' अनन्तरं शीर्षकस्य वचनमकृत्वा 'स्वच्छन्दा' स्वमतिप्रवृत्ता 'मन्दा' गमनक्रियायामलसा बलामोटिकया पुरस्सरा भूत्वा गन्तुं प्रवृत्ता । ततः किमभूत् ? इत्याह-'अपेतचक्षु' लोचनरहिता सा पुरो गच्छन्ती मुहूर्तमात्रेण शकटेन 'क्षुण्णा' आक्रान्ता विपत्तिमुपागता ।। एष दृष्टान्तः, अयमर्थोपनयः-

[भा.३२५७]जे मज्झदेसे खलु देस गामा, अतिपपितं तेसु भयंतु ! तुज्झं ।

लुक्खण्ण-हिंडीहि सुताविया मो, अम्हं पि ता संपइ होउ छंदो ।।

वृ- 'ये' अगीतार्था शिष्यास्ते आचार्यान् भणन्ति-भदन्त ! ये खलु 'मध्यदेशे' आर्यक्षेत्रे देशाः-मगधादयो ग्रामाश्च-तत्प्रतिबद्धास्तेषु भगवताम् 'अतिप्रियम्' अतीव विहर्त्तुं रोचते, परं वयमेषु दिवसेषु रूक्षान्नमात्रलाभेन हिण्ड्या च-इतस्ततः परिभ्रमणरूपया सुष्ठु-अतिशयेन तापिताः-दग्धान्त्रदेहाः सञ्जाताः, अतोऽस्माकमपि तावत् सम्प्रति छन्दो भवतु, स्वच्छन्देन यत्र यत्र रोचते तत्र तत्र विहरिष्याम इति ।। गुरवो ब्रुवते-

[भा.३२५८] देहोवहीतेणग-सावतेहिं, पदुट्ठमेच्छेहि य तत्थ तत्थ ।

जता परिब्भस्सध अंतदेसे, तदा विजानिस्सह मे विसेसं ।।

वृ- भो भद्राः ! यूयं प्रत्यन्तदेशे विहरन्तो यदा देहस्तेनैः-शरीरहरैः उपधिस्तेनैः-उपकरणहरैः श्वापदैः-सिंह-व्याघ्रादिभिः प्रद्विष्टम्लेच्छैश्च तत्रतत्रोपहताः सन्तः संयमा-ऽऽत्मविराधनादिना परिभ्रंशमाप्स्यथ तदा विज्ञास्यथ 'मे' मदीयं विशेषम्, यथा-हा ! न शोभनं कृतमस्माभि यदेवं गुरूणां वचनमवगणय्य स्वच्छन्दसा विहारः कृत इति । यस्तु गणधरो न जानाति, जानानो वा शिष्याणां मार्गं नोपदिशति, स तेषामनुवृत्त्या सन्मार्गमतिक्रम्यानार्यदेशे विहरन् तैरेव शिष्यैः सह विनाशमाविशति; यथा सर्पशीर्षकं पुच्छिकासहितं विनष्टमिति ।। अथ वैद्यपुत्रदृष्टान्तमाह-

[भा.३२५९] वेज्जस्स एगस्स अहेसि पुत्तो, मतम्मि ताते अनधीयविज्जो ।

गंतुं विदेसं अह सो सिलोगं, घेत्तूणमेगं सगदेसमेति ।।

वृ- एकस्य वैद्यस्य पुत्र आसीत् । स च 'ताते' पितरि मृते सति अनधीतविद्य इति कृत्वा राज्ञः सकाशाद् वृत्तिं न लभते । ततो वैद्यकशास्त्रपठनार्थं विदेशं गत्वा तत्र कस्यापि वैद्यस्य पार्श्वे एकं श्लोकं शृणोति स्म-

पूर्वाह्णे वमनं दद्यादपराह्णे विरेचनम् ।

वातिकेष्वपि रोगेषु, पथ्याहुर्विशोषणम् ।।

ततस्तेन चिन्तितम्-हुं ज्ञातं वैद्यकरहस्यम्, अतः किमर्थमत्र तिष्ठामि ? इति । 'अथ' अनन्तरमसौ श्लोकं गृहीत्वा 'स्वकम्' आत्मीयं देशमुपैति ।।

[भा.३२६०]अहाऽऽगतो सो उ सयम्मि देसे, लद्धूण तं चेव पुराणवित्तिं ।

रन्नो नियोगेण सुते तिगिच्छं, कुव्वंतु तेनेव समं विनट्ठो ।।

वृ- 'अथ' अनन्तरं 'सः' वैद्यपुत्रः स्वके देशे समागतः सन् राज्ञः समीपे तामेव पुराणां वृत्तिं लब्ध्वा अन्यदा राज्ञो नियोगेन 'सुतस्य' राज्ञः पुत्रस्य पूर्वोक्तश्लोकप्रमाणेन चिकित्सां कर्तुमारब्धवान् । ततोऽसौ राजपुत्रस्तदीयया अपप्रयोगक्रियया विनष्टः । राज्ञा चापरे वैद्याः पृष्टाः- किमेतेन

सम्यक्प्रयोगेण क्रिया कृता ? उतापप्रयोगेण ? । तैरुक्तम्-अपप्रयोगेणेति । ततोऽसौ तेन राज्ञा शारीरेण दण्डेन दण्डितः । एवमसावपि 'तेन' राजपुत्रेण समं विनष्ट इति उक्तम् । एष दृष्टान्तः, अयमर्थोपनयः-यथाऽसौ वैद्यपुत्र एकभविकं मरणमनुप्राप्तः एवं य आचार्य इदं कल्पाध्ययनं न जानाति एकदेशं वा जानन् गणं परिवर्त्तयति स गम्भीरसंसारसागरं परिभ्रमन्ननेकानि जनितव्य-मर्त्तव्यानि प्राप्नोति ॥ अथेदं सूत्रं भगवता यत्र क्षेत्रे यं च कालं प्रतीत्य प्रज्ञप्तं तदेवाह-

[भा.३२६१] साएयम्मि पुरवरे, सभूमिभागम्मि वद्धमाणेण ।
सुत्तमिणं पन्नत्तं, पडुच्च तं चेव कालं तु ॥

वृ- साकेते पुरवरे सभूमिभागे उद्याने समवसृतेन भगवता वर्द्धमानस्वामिना सूत्रमिदं 'तमेव' वर्त्तमानं कालं प्रतीत्य निर्ग्रन्थ-निर्ग्रन्थीनां पुरतः प्रज्ञप्तम् ॥ कथम् ? इत्याह-

[भा.३२६२] मगहा कोसंबी या, थूणाविसओ कुणालविसओ य ।
एसा विहारभूमी, एतावंताऽऽरियं खेत्तं ॥

वृ- पूर्वस्यां दिशि मगधान् दक्षिणस्यां दिशि कौशाम्बीं अपरस्यां दिशि स्थूणाविषयं उत्तरस्यां दिशि कुणालाविषयं यावद् ये देशा एतावदार्यक्षेत्रं मन्तव्यम् । अत एव साधूनामेषा विहारभूमी। इतः परं निर्ग्रन्थ-निर्ग्रन्थीनां विहर्त्तुं न कल्पते ॥ अथार्यपदस्य निक्षेपनिरूपणायाह-

[भा.३२६३] नामं ठवणा दविए, खेत्ते जाती कुले य कम्मे य ।
भासारिय सिप्पारिय, नाणे तह दंसण चरित्ते ॥

वृ- नामार्या स्थापनार्या द्रव्यार्या क्षेत्रार्या जात्यार्या कुलार्या कर्मार्या भाषार्या शिल्पार्या ज्ञानार्या दर्शनार्याश्चारित्रार्याश्चेति । तत्र नाम-स्थापने सुप्रतीते । द्रव्यार्या नामनादियोग्याः तिनिशवृक्षप्रभृतयः । क्षेत्रार्या अर्द्धषड्विंशतिर्जनपदाः तद्वासिनो वा । ते च जनपदा राजगृहादिनगरोपलक्षिता मगधा-दयः । उक्तञ्च-

रायगिह मगह १ चंपा, अंगा २ तह तामलित्ति वंगा य ३ ।
कंचनपुरं कलिंगा ४, वाणारसि चेव कासी य ५ ॥
साकेत कोसला ६ गयपुरं च कुरु ७ सोरियं कुसट्ठा य ८ ।
कंपिल्लं पंचाला ९, अहिछत्ता जंगला चेव १० ॥
बारवई य सुरट्ठा ११, विदेह मिहिला य १२ वच्छ कोसंबी १३ ।
नंदिपुरं संडिब्भा १४, भद्दिलपुरमेव मलया य १५ ॥
वेराड वच्छ १६ वरणा, अच्छा १७ तह मत्तियावइ दसन्ना १८ ।
सुत्तीवई य चेदी १९, पाव भंगी य २२, मास पुरिवट्टा २३ ।
सावत्थी य कुणाला २४, कोडीवरिसं च लाढा य २५ ॥
सेयविया वि य नगरी, केगइअद्धं च आरियं भणियं ।
जत्थुप्पत्ति जिणाणं, चक्कीणं राम-कण्हाणं ॥

-सम्प्रति जात्यार्यानाह-

[भा.३२६४] अंबट्ठा य कलंदा, विदेहा विदका ति य ।
हारिया तुंतुणा चेव, छ एता इब्भजातिओ ॥

वृ- इह यद्यप्याचारादिषु शास्त्रान्तरेषु बहवो जातिभेदा उपवर्ण्यन्ते तथापि लोके एता एवाम्बष्ठ-कलिन्द-वैदेह-विदक-हारित-तुन्तुणरूपाः 'इभ्यजातयः' अभ्यर्चनीया जातयः प्रसिद्धाः । तत एताभिर्जातिभिरुपेता जात्यार्या, न शेषजातिभिरिति ॥ अथ कुलार्यान् निरूपयति-

[भा.३२६५] उग्गा भोगा राइण्ण खत्तिया तह य नात कोरव्वा ।
इक्खागा वि य छट्ठा, कुलारिया होंति नायव्वा ॥

'उग्राः' उग्रदण्डकारित्वादारक्षिकाः । 'भोगाः' गुरुस्थानीयाः । 'राजन्याः' वयस्याः । 'क्षत्रियाः' सामान्यतो राजोपजीविनः । 'ज्ञाताः' उदारक्षत्रियाः, 'कौरवाः' कुरुवंशोद्भवाः, एते द्वयेऽप्येक एव भेदः । 'इक्ष्वाकवः' ऋषभनाथवंसजाः षष्ठाः । एते कुलार्या ज्ञातव्याः ॥ 'भाषार्या' अर्धमागधभाषाभाषिणः । 'शिल्पार्या' तुण्णाक-तन्तुवायादयः । ज्ञानार्या पञ्चधा-आभिनिबोधिक-श्रुता-ऽवधि-मनः पर्यय-केवलज्ञानार्यभेदात् । दर्शनार्या द्विधा सरागवीतरागदर्शनार्यभेदात् । तत्र सरागदर्शनार्या क्षायोपशमिकौपशमिकसम्यग्दृष्टिभेदाद् द्विधा । वीतरागदर्शनार्या उपशान्तमोहादयः । चारित्रार्या पञ्चविधाः-सामायिक-च्छेदोपस्थाप्य-परिहारविशुद्धिक-सूक्ष्मसम्पराय-यथाख्यातभेदात् । अत्र च क्षेत्रार्यैरधिकारः ॥ अथार्यक्षेत्रविहारे कारणमाह-

[भा.३२६६] जम्मण-निक्खमणेसु य, तित्थकराणं करेंति महिमाओ ।
भवणवइ-वाणमंतर-जोइस-वेमाणिया देवा ॥

वृ- इहार्यक्षेत्रे भगवतां तीर्थकृतां जन्म निष्क्रमणयोः चशब्दाद् ज्ञानोत्पत्तौ च भवनपति-वानमन्तर-ज्योतिष्क-वैमानिका देवाः 'महिमाः' सातिशयपूजाः कुर्वन्ति । ताश्च दृष्ट्वा बहवो भव्या विबुध्यन्ते, प्रव्रज्यां च प्रतिपद्यन्ते, चिरप्रव्रजिता अपि स्थिरतरा भवन्ति ॥

[भा.३२६७] उप्पन्ने नाणवरे, तम्मि अनंते पहीणकम्माणो ।
तो उवदिसंति धम्मं, जगजीवहियाय तित्थकरा ॥

वृ- 'तस्मिन्' तद्देशे 'अनन्ते' अपर्यवसिते 'ज्ञानवरे' मति-श्रुतादिशेषज्ञानप्रधाने केवलाख्ये 'उत्पन्ने' तदावारककर्मक्षयादाविर्भूते सति 'प्रहीणकर्माणः' प्रक्षीणघातिकर्मांशास्तीर्थकराः 'ततः' ज्ञानोत्पत्त्यनन्तरं 'धर्मं' श्रुत-चारित्ररूपं जगज्जीवहितायोपदिशन्ति ॥

[भा.३२६८] लोगच्छेरयभूतं, ओवयणं निवयणं च देवाणं ।
संसयवाकरणाणि य, पुच्छंति तहिं जिनवरिंदे ॥

वृ- लोकस्य-मनुष्यलोकस्य आश्चर्यभूतं-विस्मयकारि देवानामुत्पतनं निपतनं च दृष्ट्वा बहवो जीवाः प्रतिबुध्यन्ते । तथा देव-मनुष्य-तिर्यग्रूपा असङ्ख्येयाः संज्ञिनः स्वस्वसंशयानां व्याकरणानि-निर्वचनानि जिनवरेन्द्रान् 'तत्र' आर्यजनपदे पृच्छन्ति । भगवन्तोऽपि च सातिशयत्वात् तेषामसङ्ख्येयानामपि युगपदेव संशयानुन्मूलयन्ति ॥ अपि च-

[भा.३२६९] समणगुणविदुऽत्थ जनो, सुलभो उवधी सतंतमविरुद्धो ।
आरियविसयम्मि गुणा, नाण-चरण-गच्छवुड्ढी य ॥

वृ- श्रमणगुणाः-मूलोत्तरगुणरूपाः, तत्र पञ्च महाव्रतानि मूलगुणाः, उद्गमोत्पादनैषणा-दोषविशुद्धिः अष्टादश शीलाङ्गसहस्राणि चोत्तरगुणाः, तान् वेत्ति-जानातीति श्रमणगुणविद्, ईदृशः 'अत्र' आर्यजनपदे 'जनः' लोकः । अत्र च 'उपधिः' औधिक औपग्रहिकश्च 'स्वतन्त्रेण'

स्वसिद्धान्तोक्तेन प्रकारेण 'अविरुद्धः' अदूषितः 'सुलभः' सुखेनैव लभ्यते। एते आर्यविषये विहरतां गुणा भवन्ति। तथा ज्ञानस्य चरणस्य उपलक्षणत्वाद् दर्शनस्य चात्र वृद्धिर्भवति, व्याघाताभावाद् ज्ञान-दर्शन-चारित्राणि स्फातिमुपगच्छन्तीति भावः। गच्छस्य चात्र वृद्धिर्भवति, बहूनां भव्यजन्तूनां प्रव्रज्याप्रतिपत्ति (तेः)॥

[भा.३२७०] एत्थकिर सण्णि सावग, जाणंति अभिग्गहे सुविहियाणं।
एतेहि कारणेहिं, बहिगमने होंति5णुग्घाया॥

वृ- 'अत्र किल' आर्यक्षेत्रे संज्ञानं संज्ञा-देव-गुरु-धर्मपरिज्ञानं सा विद्यते येषां ते संज्ञिनः-अविरतसम्यग्दृष्टयः, 'श्रावकाः' प्रतिपन्नाणुव्रताः, एते 'सुविहितानां' साधूनामभिग्रहान् जानन्ति। अभिग्रहा नाम-यथेत्थमाहारादिकममीषां कल्पते इत्थं च न कल्पते, अथवा अभिग्रहाः-द्रव्यक्षेत्र-कालभावविषयाः प्रागुक्तस्वरूपाः तान् ज्ञात्वा ते संज्ञि-श्रावकास्तथैव प्रतिपूरयन्ति। एतैः कारणैरार्यजनपदे विहारः कर्त्तव्य इति वाक्यशेषः। यद्यार्यक्षेत्राद् बहिर्गच्छति ततश्चत्वारो अनुद्घाता मासाः प्रायश्चित्तम्॥

[भा.३२७१] आणादिणो य दोसा, विराधना खंदएण दिट्ठंतो।
एतेण कारणेणं, पडुच्च कालं तु पन्नवणा॥

वृ- आज्ञादयश्च दोषाः। विराधना चात्म-संयमविषया। तत्र च स्कन्दकाचार्येण दृष्टान्तः कर्त्तव्यः। अत एतेन कारणेन बहिर्न गन्तव्यम्। एतद् भगवद्वर्धमानस्वामिकालं प्रतीत्योक्तम्। इदानीं तु सम्प्रतिनृपतिकालं प्रतीत्य प्रज्ञापना क्रियते-यत्र यत्र ज्ञान-दर्शन-चारित्राण्युत्सर्पन्ति तत्र तत्र विहर्त्तव्यम्॥ अथ स्कन्दकाचार्यदृष्टान्तमाह-

[भा.३२७२] दोह्रेण आगतो खंदएण वादे पराजितो कुवितो।
खंदगदिक्खा पुच्छा, निवारणा55राध तव्वज्जा॥

[भा.३२७३] उज्जाणा55युध नूमण, निवकहणं कोव जंतयं पुव्वं।
बंध चिरिक्क निदाने, कंबलदाने रयोहरणं॥

[भा.३२७४] अग्गिकुमारुववातो, चिता देवीय चिण्ह रयहरणं।
खिज्जण सपरिसदिक्खा, जिन साहर वात डाहो य॥

वृ- सावत्थी नयरी। जियसत्तू राया। धारिणी देवी। तेसिं पुत्तो खंदतो कुमारो जुवराया। भगिणी से पुरंदरजसा। सो य खंदतो सावतो अभिगतो। इओ य उत्तरावहे पञ्चंते कुंभकारकडं नगरं। दंडती राया। तस्स पुरोहितो पालतो। सा पुरंदरजसा दंडतिस्स रन्नो दिन्ना। अन्नया पालओ दूतो आगतो। खंदयकुमारेण रायपरिसाए वाए पराजिओ पदुट्ठो सविसयं गतो। खंदतो पंचहिं सएहिं सद्धिं पव्वतिओ मुनिसुव्वयसामिणो अंतिए। तस्सेव ते सीसा जाया। अन्नया तित्थयरं आपुच्छति-पंचहिं सएहिं सद्धिं कुंभकारकडं वच्चामि?। भगवया वारितो 'सोवसग्गं' ति। पुनो पुच्छति-आराहया? विराहया?। तुमं मोत्तुं सेसा आराहया। एवं सो गतो कुंभकारकडं। तस्स अग्गुज्जाणे ठितो। पालगेण य दिट्ठो। ताहे तेनं पुव्ववेरेणं दंडती वुग्गाहितो-एस परीसहपराजितो पंचहिं सएहिं सद्धिं तव रज्जं घेच्छिहिति। सो य न पत्तियाइ। ताहे नेन आउहाणि अग्गुज्जाणे ठवियाणि दंसेऊण वुग्गाहितो। तओ भणति-तुमं चेव से जं जानसि तं करेहि। तेन पुरिसजंतं

कयं । सव्वे साहू पीलिउं । खंदएण भणियं-ममं पढमं मारेहि । ताहे सो भणति-तुमं पिच्छाहि ताव सीसे वहिज्जंते । एवं ते सव्वे वहिया सिद्धा य । पच्छा खंदयस्स बद्धस्स रुहिरचिरिक्काहि य सिञ्चमाणस्स सीसेसु य खंडिज्जंतेसु असुहो परिणामो जातो । तेन नियाणं कयं । अग्गिकुमारेसु उववन्नो । भगिनीय से कंबलरयणं दिन्नयं, ततोहिंतो रयहरणं कयं । तं रुहिरावलित्तं सेणाय 'मंसं'ति काउं गहियं । देवीए अग्गतो पडियं । 'कतो एयं रयहरणं ? किं मम भाया मारिउ ?' त्ति ताए राया भणितो- अहो ! विनट्ठो सि । ताहे सो अग्गिकुमारेसु पन्नत्तो जातो । ताहे नगरस्स सव्वतो जोयणपरिमंडले जं किंचि तणं वा कट्ठं वा तं साहरिउं दड्ढं सजणवयं नगरं । सो य पालओ अनेन सपुत्त-दारओ सह सुणएणं कुंभीए पक्को । पुरंदरजसा य मुनिसुव्वयतित्थयरपायमूले साहरिया सपरिसा ॥

अथ गाथात्रयस्याक्षरयोजना-श्रावस्त्यां पालको दौत्येनागतः । स च वादे स्कन्दकेन पराजितः। ततोऽसौ तस्योपरि कुपितः । इतश्च स्कन्दकस्य सुव्रतस्वामिपार्श्वे दीक्षा । अधीतसूत्रार्थस्य च तस्यान्यदा भगवतः समीपे पृच्छा-व्रजाम्यहं कुम्भकारकृतं नगरम् । भगवता तु 'सोपसर्गम्' इति भणित्वा निवारणा कृता, तथा 'त्वद्वर्जा सर्वेऽप्याराधकाः' इति च भणितम् । ततस्तं कुम्भकारकृतपुरमागच्छन्तं पालकेन श्रुत्वा यत्रोद्यानेऽसौ स्थितः तत्रायुधानां "नूमन"ति प्रच्छन्नं स्थापना । ततो नृपस्य कथना, यथा-एष परीषहपराजितस्त्वां मारयित्वा त्वदीयं राज्यमधिष्ठास्यतीत्यादि । ततो राज्ञः कोपोऽभवत्, भणितं च-यत् ते रोचते तदमीषां कुरुष्वेति । ततस्तेन पुरुषयन्त्रं कृत्वा पीडयितुमारब्धाः साधवः । स्कन्दकेनोक्तम्-पूर्वं मां यन्त्रमध्ये प्रक्षिप । ततस्तेन पापात्मना स्कन्दकस्य स्तम्भे गाढतरं बन्धनम् । ततो निष्पीड्यमानसाधुसम्बन्धिनीभिः शोणितचिरक्काभिः सिक्तेन स्कन्दकेन निदानं कृतम् । भगिन्या च तस्य कम्बलरत्नदानं कृतमासीत्, तेन च रजोहरणं कृतम् । स्कन्दकस्य विपद्याग्निकुमारेषूपपातः । ततो रजोहरणं शोणितलिप्तं चिह्नमवलोक्य देव्याश्चिन्ता-नूनमपद्राविताः साधवः पापात्मनेति । ततः प्रभूतं राज्ञः पुरतः खेदनम् । ततः 'सपरिषदः' सपरिवारायास्तस्या दीक्षादापनार्थं जिनसमीपे 'संहरणं' नयनम् । संवर्त्तकवातं विकुर्व्य सकलस्यापि पुरस्य 'दाहः' दहनम् । यत एवमादयो दोषास्ततो नानार्यक्षेत्रे विहर्त्तव्यम् । अथ "यत्र ज्ञान-दर्शन-चारित्राण्युत्सर्पन्ति तत्र विहर्त्तव्यम्" इति यदुक्तं तद्विषयमभिधित्सुः सम्प्रतिनृपतिदृष्टान्तमाह-

[भा.३२७५] कोसंबाऽऽहारकते, अज्जसुहत्थीण दमगपव्वज्जा ।
अव्वत्तेणं सामाइएण रन्नो घरे जातो ॥

वृ- कौशाम्ब्यामाहारकृते आर्यसुहस्तिनामन्तिके द्रमकेण प्रव्रज्या गृहीता । स तेनाऽव्यक्तेन सामायिकेन मृत्वा राज्ञो गृहे जात इत्यक्षरार्थः । भावार्थस्तु कथानकगम्यः ।। तच्चेदम्- कोसंबीए नयरीए अज्जसुहत्थी समोसढा । तया य अंचितकालो । साधुजणो य हिंडमाणो फव्वति । तत्थ एगेन दमएण ते दिट्ठा । ताहे सो भत्तं जायति । तेहिं भणियं-अम्हं आयरिया जाणंति । ताहे सो गतो आयरियसगासं । आयरिया उवउत्ता । तेहिं नायं-एस पवयणउवग्गहे वट्टिहिति । ताहे भणिओ-जति पव्वयसि तो दिज्जए भत्तं । सो भणइ-पव्वयामि त्ति । ताहे पव्वाइतो, सामाइयं कारिओ । तेन अतिसमुद्दिट्ठं, तओ कालगतो । तस्स अव्वत्तसामाइयस्स पभावेण कुणालकुमारस्स

अंधस्स रन्नो पुत्तो जातो ॥ को कुणालो ? कहिं वा अंधो ? त्ति-पाडलिपुत्ते असोगसिरी राया। तस्स पुत्तो कुणालो। तस्स कुमारभुत्तीए उज्जेनी दिन्ना। सो य अट्ठवरिसो। रन्ना लेहो विसज्जितो-शीघ्रमधीयतां कुमारः। असंवत्तिए लेहे रन्नो उट्ठितस्स माइसवत्तीए कतं-अन्धीयतां कुमारः। सयमेव तत्तसलागाए अच्छीणि अंजियाणि। सुतं रन्ना। गामो से दिन्नो। गंधव्वकलासिक्खणं। पुतस्स रज्जत्थी आगतो पाडलिपुत्तं। असोगसिरिणो जवनियंतरिओ गंधव्वं करेइ। आउट्टो राया भणइ-मग्गसु जं ते अभिरुइयं ति। तेण भनियं-

[भा.३२७६] चंदगुत्तपपुत्तो य, बिंदुसारस्स नत्तुओ।
असोगसिरिणो पुत्तो, अंधो जायति काकणिं ॥

वृ- चन्द्रगुप्तस्य राज्ञः प्रपौत्रो बिन्दुसारस्य नृपतेः नप्ता पौत्रोऽशोकश्रियो नृपस्य पुत्रः कुणालनामा अन्धः 'काकणीं' राज्यं याचते ॥ तओ राइणा भणितो-किं ते अंधस्स रज्जेणं ? । तेन भणियं-पुतस्स मे कज्जं ति। राइणा भणियं-कहिं ते पुत्तो ? त्ति। तेन आनिता दाइओ-इमो मे संपइ जाओ पुत्तो त्ति। तं चेव नामं कयं। तओ संवड्ढिओ। दिन्नं रज्जं। तेन संपराइणा उज्जेनिं आइं काउं दक्खिणावहो सव्वो तत्थ ट्ठिएणं ओअविओ। सव्वे पच्चंतरायाणो वसीकया। तओ सो विउलं रज्जसिरिं भुंजइ। किञ्च-

[भा.३२७७] अज्जहत्थाऽऽगमणं, दट्ठुं सरणं च पुच्छणा कहणा।
पावयणम्मि य भत्ती, तो जाता संपतीरन्नो ॥

वृ- जीवन्तस्वामिप्रतिमावन्दनार्थमुज्जयिन्यामार्यसुहस्तिन आगमनम्। तत्र च रथयात्रायां राजाङ्गणप्रदेशे रथपुरतः स्थितानार्यसुहस्तिगुरून् दृष्ट्वा नृपतेर्जातिस्मरणम्। ततस्तत्र गत्वा गुरुपदकमलमभिवन्द्य पृच्छा कृता-भगवन्! अव्यक्तस्य सामायिकस्य किं फलम् ?। सूरिराह-राज्यादिकम्। ततोऽसौ सम्भ्रान्तः प्रगृहीताञ्जलिरानन्दोदकपूरपूरितनयनयुगः प्राह-भगवन्! एवमेवेदम्, परमहं भवद्भिः कुत्रापि दृष्टपूर्वो न वा ? इति। ततः सूरय उपयुज्य कथयन्ति-महाराज! दृष्टपूर्वः, त्वं पूर्वभवे मदीयः शिष्य आसीदित्यादि। ततोऽसौ परमं संवेगमापन्नस्तदन्तिके सम्यग्दर्शनमूलं पञ्चाणुव्रतमयं श्रावकधर्मं प्रपन्नवान्। ततश्चैवं प्रवचने सम्प्रतिराजस्य भक्तिः सञ्जाता॥ किञ्च-

[भा.३२७८] जवमज्झ मुरियवंसे, दाने वणि-विवणि दारसंलोए।
तसजीवपडिक्कमओ, पभावओ समणसंघस्स ॥

वृ- यथा यवो मध्यभागे पृथुल आदावन्ते च हीनः एवं मौर्यवंशोऽपि। तथाहि-चन्द्रगुप्तस्तावद् बल-वाहनादिविभूत्या हीन आसीत्, ततो बिन्दुसारो बृहत्तरः, ततोऽप्यशोकश्रीबृहत्तमः, ततः सम्प्रति सर्वोत्कृष्टः, ततो भूयोऽपि तथैव हानिवक्तव्या, एवं यवमध्यकल्पः सम्प्रतिनृपतिरासीत्। तेन च राज्ञा 'द्वारसंलोके' चतुर्ष्वपि नगरद्वारेषु दानं प्रवर्त्तितम्। "वणि-विवणि" त्ति इह ये बृहत्तरा आपणास्ते पणय इत्युच्यन्ते, ये तु दरिद्रापणास्ते विपणयः; यद्वा ये आपणस्थिता व्यवहरन्ति ते वणिजः, ये पुनरापणेन विनाऽप्यूर्ध्वस्थिता वाणिज्यं कुर्वन्ति ते विवणिजः। एतेषु तेन राज्ञा साधूनां वस्त्रादिकं दापितम्। स च राजा वक्ष्यमाणनीत्या त्रसजीवप्रतिक्रामकः प्रभवकश्च श्रमणसङ्घस्यासीत्॥ अथ "दाने वणि-विवणिदारसंलोए" इति भावयति-

[भा.३२७९] ओदरियमओ दारेसुं पि महानसे स कारेति ।
निंताऽऽणिंते भोयण, पुच्छा सेसे अभुत्ते य ॥

वृ- औदरिकः-द्रमकः पूर्वभवेऽहं भूत्वा मृतः सन् इहायात इत्यालीयं वृत्तान्तमनुस्मरन् नगरस्य चतुर्ष्वपि द्वारेषु स राजा सत्रकारमहानसानि कारयति । ततो दीना-ऽनाथादिपथिकलोको यस्तत्र निर्गच्छन् वा प्रविशन् वा भोक्तुमिच्छति स सर्वोऽपि भोजनं कार्यते । यत् तच्छेषमुद्धरति तद् महानसिकानामाभवति, । ततो राज्ञा ते महानसिकाः पृष्टाः-यद् युष्माकं दीनादिभ्यो ददतामवशिष्यते तेन यूयं किं कुरुथ ? । ते ब्रुवते-अस्माकं गृहे उपयुज्यते । नृपतिराह-यद् दीनादिभिरभुक्तं तद् भवद्भि साधूनां दातव्यम् ॥ एतदेवाह-

[भा.३२८०] साहूण देह एयं, अहं भे दाहामि तत्तियं मोल्लं ।
नेच्छंति घरे घेत्तुं, समणा मम रायपिंडो त्ति ॥

वृ- साधूनामेतद् भक्तपानं प्रयच्छत, अहं "मे" भवतां तावन्मात्रं मूल्यं दास्यामि, यतो मम गृहे श्रमणा राजपिण्ड इति कृत्वा ग्रहीतुं नेच्छन्ति ॥

[भा.३२८१] एमेव तेल्लि-गोलिय-पूविय-मोरंड-दुस्सिए देह ।
जं देह तस्स मोल्लं, दलामि पुच्छा य महगिरिणो ॥

वृ- एवमेव तैलिकास्तैलम्, गोलिकाः-गथितविक्रायिकास्तक्रादिकम्, पौपिका अपूपादिकम्, मोरण्डकाः-तिलादिमोदकाः तद्विक्रायिकास्तिलादिमोदकान्, दौष्यिका वस्त्राणि च दापिताः । कथम् ? इत्याह-यत् तैल-तक्रादि यूयं साधूनां दत्थ तस्य मूल्यमहं भवतां प्रयच्छामीति । ततश्चाहार-वस्त्रादौ किमीप्सिते लभ्यमाने श्रीमहागिरिरार्यसुहस्तिनं पृच्छति-आर्य ! प्रचुरमाहार-वस्त्रादिकं प्राप्यते ततो जानीष्व मा राज्ञा लोकः प्रवर्त्तितो भवेत् ॥

[भा.३२८२] अज्जसुहत्थि ममत्ते, अनुरायाधम्मतो जणो देती ।
संभोग बीसुकरणं, तक्खण आउट्टणे नियत्ती ॥

वृ- आर्यसुहस्ती जानानोऽप्यनेषणामात्मीयशिष्यममत्वेन भणति-क्षमाश्रमणाः । 'अनुराजधर्मतः' राजधर्ममनुवर्त्तमान एष जन एवं यथेप्सितमाहारादिकं प्रयच्छति । तत आर्यमहागिरिणा भणितम्-आर्य ! त्वमपीदृशो बहुश्रुतो भूत्वा यद्येवमात्मीयशिष्यममत्वेनेत्थं ब्रवीपि, ततो मम तव चाद्यप्रभृति विष्वकसम्भोगः-नैकत्र मण्डल्यां समुद्देशनादिव्यवहार इति; एवं सम्भोगस्य विष्वककरणमभवत् । तत आर्यसुहस्ती चिन्तयति-'मया तावदेकमनेषणीयमाहारं जानताऽपि साधवो ग्राहिताः, स्वयमपि चानेषणीयं भुक्तम्, अपरं चेदानीमहमित्थमपलपामि, तदेतद् मम द्वितीयं बालस्य मन्दत्वमित्यापन्नम्; अथवा नाद्यापि किमपि विनष्टं भूयोऽप्यहमेत-स्मादर्थात् प्रतिक्रमामि' इति विचिन्त्य तत्क्षणादेवावर्त्तनमभवत् । ततो यथावदाचना दत्त्वा स्वापराधं सम्यक् क्षामयित्वा तस्या अकल्पप्रतिसेवनायास्तस्य निवृत्तिरभूत् । ततो भूयोऽपि तयोः साम्भोगिकत्वमभवत् ॥ अथ "त्रसजीवप्रतिक्रामकः" इत्यस्य भावार्थमाह-

[भा.३२८३] सो रायाऽवंतिवती, समणाणं सावतो सुविहिताणं ।
पच्चंतियरायाणो, सव्वे सद्दाविया तेणं ॥

वृ- 'सः' सम्प्रतिनामा राजा अवन्तीपति श्रमणानां 'श्रावकः' उपासकः पञ्चाणुव्रतधारी

अभवदिति शेषः। ते च शाक्यादयोऽपि भवन्तीत्यत आह-'सुविहितानां' शोभनानुष्ठानानाम्। ततस्तेन राज्ञा ये केचित् प्रात्यन्तिकाः-प्रत्यन्तदेशाधिपतयो राजानस्ते सर्वेऽपि 'शब्दापिताः' आकारिताः ॥ ततः किं कृतम् ? इत्याह-

[भा.३२८४] कहिओ य तेसि धम्मो, वित्थरतो गाहिता य सम्मत्तं।
अप्पाहिता य बहुसो, समणाणं भद्दगा होह ॥

वृ- कथितश्च 'तेषां' प्रात्यन्तिकराजानां तेन विस्तरतो धर्म। ग्राहिताश्च ते सम्यक्त्वम्। ततः स्वदेशं गता इमे त बहुशस्तेन राज्ञा सन्दिष्टाः, यथा-श्रमणानां 'भद्रकाः' भक्तिमन्तो भवत ॥ अथ कथमसौ श्रमणसङ्घप्रभावको जातः ? इत्याह-

[भा.३२८५] अनुजाने अनुजाती, पुप्फारुहणाइ उक्किरणगाइं।
पूयं च चेइयाणं, ते वि सरज्जेसु कारिंति ॥

वृ- अनुयानं-रथयात्रा तत्रासौ नृपति 'अनुयाति' दण्ड-भट-भोजिकादिसहितो रथेन सह हिण्डते। तत्र च पुष्पारोपणम् आदिशब्दाद् माल्य-गन्ध-चूर्णा-ऽऽभरणारोपणं च करोति। 'उक्किरणगाइं'ति रथपुरतो विविधफलानि खाद्यकानि कपर्दक-वस्त्रप्रभृतीनि चोल्किरणानि करोति। आह च निशीथचूर्णिकृत्- रहग्गतो य विविहफले खज्जगे य कवड्डग-वत्थमादी य ओकिरणे करेइ त्ति ॥ अन्येषां च चैत्यगृहस्थितानां 'चैत्यानां' भगवद्बिम्बानां पूजां महता विच्छर्दन करोति। तेऽपि च राजान एवमेव स्वराज्येषु रथयात्रामहोत्सवादिकं कारयन्ति। इदं च ते राजानः सम्प्रतिनृपतिना भणिताः ॥

[भा.३२८६] जति मं जाणह सामिं, समणाणं पणमहा सुविहियाणं।
दव्वेण मे न कज्जं, एयं खु पियं कुणह मज्झं ॥

वृ- यदि मां स्वामिनं यूयं 'जानीथ' मन्यध्वे ततः श्रमणेभ्यः सुविहितेभ्यः 'प्रनमत' प्रणता भवत। 'द्रव्येण' दण्डदातव्येनार्थेन मे न कार्यम्, किन्त्वेतदेव श्रमणप्रणमनादिकं मम प्रियम्, तदेतद् यूयं कुरुत ॥

[भा.३२८७] वीसज्जिया य तेनं, गमनं घोसावणं सरज्जेसु।
साहूण सुहविहारा, जाता पच्चंतिया देसा ॥

वृ- एवं 'तेन' राज्ञा शिक्षां दत्त्वा विसर्जिताः। ततस्तेषां स्वराज्येषु गमनम्। तत्र च तैः स्वदेशेषु सर्वत्राप्यमाघातघोषणं कारितम्, चैत्यगृहाणि च कारितानि। तथा प्रात्यन्तिका देशाः साधूनां सुखविहाराः सञ्जाताः। कथम् ? इति चेदुच्यते-तेन सम्प्रतिना साधवो भणिताः-भगवन्तः! एतान् प्रत्यन्तदेशान् गत्वा धर्मकथया प्रतिबोध्य पर्यटत। साधुभिरुक्तम्-राजन्! एते साधूनामाहार-वस्त्र-पात्रादेः कल्प्या-ऽकल्प्यविभागं न जानन्ति ततः कथं वयमेतेषु विहरामः ?। ततः सम्प्रतिना साधुवेषेण स्वभटाः शिक्षां दत्त्वा तेषुप्रत्यन्तदेशेषु विसर्जिताः ॥ ततः किमभूत् ? इत्याह-

[भा.३२८८] समणभडभाविएसुं, तेसू रज्जेसु एसणादीसु।
साहू सुहं विहरिया, तेनं चिय भद्दगा ते उ ॥

वृ- श्रमणवेषधारिभिर्भटैरेषणादिभिः शुद्धमाहारादिग्रहणं कुर्वाणैः साधुविधिना भावितेषु तेषु राज्येषु साधवः सुखं विहृताः। तत एव च सम्प्रतिनृपतिकालात् 'ते' प्रत्यन्तदेशा भद्रकाः

सञ्जाताः ॥ इदमेव स्पष्टयति-

[भा.३२८९] उदिन्नजोहाउलसिद्धसेणो, स पत्थिवो निज्जियसत्तुसेनो ।

समंततो साहुसुहप्पयारे, अकासि अंधे दमिले य घोरे ॥

वृ- 'उदीर्णा-प्रबला' ये योधास्तैराकुला सङ्कीर्णा सिद्धा-प्रतिष्ठिता सर्वत्राप्यप्रतिहता सेना यस्य स तथा, अत एव च 'निर्जितशत्रुसेनः' स्ववशीकृतविपक्षनृपतिसैन्यः एवंविधः स सम्प्रतिनामा पार्थिवः अन्धान् द्रविडान् चशब्दाद् महाराष्ट्र-कुडुक्कादीन् प्रत्यन्तदेशान् 'घोरान्' प्रत्यपायबहुलान् समन्ततः 'साधुसुखप्रचारान्' साधूनां सुखविहरणान् 'अकार्षीत्' कृतवान् ॥

कल्पे माणिक्यकोशे जिनपतिनृपतेः सूरिभिस्तन्नियुक्तैस्तस्यैवाज्ञीकतानैर्नयपथनिपुणैश्चिन्त्यमानाधिकारे ।

पेटा उद्देशकाः स्युः षडिह गहनतामुद्रिता अर्थरत्नैः,

पूर्णास्तत्राऽऽद्यपेटा प्रकटनविधये कुञ्चिकैषाऽस्तु टीका ॥

उद्देशकः-१ समाप्तः

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता बृहत्कल्पसूत्रे प्रथमोद्देशकस्य (भद्रबाहुस्वामि रचिता निर्युक्ति युक्तं) संघदासगणि विरचितं भाष्यं एवं मलयगिरि क्षेमकीर्ति आचार्याभ्यां विरचिता टीका परिसमाप्ता ।**

## उद्देशकः-२

वृ- व्याख्यातः प्रथम उद्देशकः, सम्प्रति द्वितीयः प्रारभ्यते, तस्य चेदमादिसूत्रम्-

मू. (५१) *उवस्सयस्स अंतोवगडाए सालीणि वा वीहीणि वा मुग्गाणि वा मासाणि वा तिलाणि वा कुलत्थाणि वा गोहूमाणि वा जवाणि वा जवजवाणि वा उक्खित्ताणि वा विक्खित्ताणि विइकिन्नाणि वा विप्पकिन्नाणि वा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.३२९०] एरिसए खेत्तम्मी, उवस्सए केरिसम्मि वसितव्वं ।

पुव्वुत्तदोसरहिते, बीयादिजढेस संबंधो ॥

वृ- 'ईदृशे' प्रथमोद्देशकान्त्यसूत्रवर्णिते आर्यक्षेत्रे विहरद्भिरुपाश्रये कीदृशे वस्तव्यम् ? इति चिन्तायामनेन सूत्रेणोपवर्ण्यते । पूर्वम्-आद्योद्देशके ये उपाश्रयस्य दोषाः-सागारिकत्वादय उक्ताः तैः रहितो बीजादिपरित्यक्तश्च य उपाश्रयस्तत्र वस्तव्यमिति । एष पूर्वसूत्रेण सहास्य सम्बन्धः॥

[भा.३२९१] अहवा पढमे सुत्तम्मि पलंबा वन्निया न भोत्तव्वा ।

तेसिं चिय रक्खट्ठा, तस्सहवासं निवारेति ॥

वृ- 'अथवा' इति सम्बन्धस्य प्रकाशान्तरताद्योतकः । प्रथमोद्देशके 'प्रथमे' प्रलम्बसूत्रे सविस्तरं प्रलम्बान्युपवर्णितानि, तानि च न भोक्तव्यानीति प्रतिषिद्धानि; अतो द्वितीयोद्देशकेऽपि प्रथमसूत्रे 'तेषामेव' प्रलम्बानां रक्षार्थं तैः-बीजाख्यैः प्रलम्बैः सह वासम्-अवस्थानं निवारयति ॥

[भा.३२९२] अवि य अनंतरसुत्ते, उवस्सतो अधिकतो निसिं जत्थ ।

समणाण न निग्गंतुं, कप्पति अह तेन जोगो उ ॥

वृ- 'अपि च' इत्यभ्युच्चये, न केवलं पूर्वोक्तं सम्बन्धद्वयम्, तृतीयोऽपि सम्बन्धोऽस्तीति भावः । पूर्वसूत्रस्याधस्ताद् 'अनन्तरसूत्रे' "नो कप्पइ निग्गंथस्स एगानियस्स राओ वा वियाले वा" इत्यादिलक्षणे उपाश्रयोऽधिकृतः, यत्रैकाकिनां श्रमणानां 'निशि' रात्रौ विचारभूम्याद्यर्थं न निर्गन्तुं कल्पते । 'अथ' अयं तेन सूत्रेण सह 'योगः' सम्बन्धः ॥

इत्यनेकैः सम्बन्धैरायातस्यास्य व्याख्या-उपाश्रयस्य या 'अन्तर्वगडा' वगडाया अभ्यन्तरम्, तच्च प्रतिश्रयमध्यं वा स्यात् प्राङ्गणं वा । तत्र "सालीणि व" त्ति शालिबीजानि वा "वीहीणि व" त्ति व्रीहिबीजानि वा, एवं मुद्ग-माष-तिल-कुलत्थ-गोधूम-(यव-) यवयवैरपि तत्तद्बीजान्युच्यन्ते, यवयव... विशेषास्तद्बीजानि वा । एतानि बीजानि उपाश्रये उत्क्षिप्तानि वा विक्षिप्तानि वा व्यतिकीर्णानि वा विप्रकीर्णानि वा तत्र नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथालन्दमपि वस्तुम् । इह यथालन्दं त्रिधा-जघन्यं मध्यममुत्कृष्टं च । यावता कालेनोदकार्द्रो हस्तः शुष्यति तद् जघन्यम्, पञ्चरात्रिन्दिवान्युत्कृष्टम्, तयोरपान्तराले सर्वमपि मध्यम् । अत्र जघन्य-मध्यमयोः सूत्रावतारः । अपिशब्दः सम्भावनायाम् । जघन्यमपि मध्यममपि वा यथालन्दं नो कल्पते वस्तुम्, किं पुनरुत्कृष्टम् ? इति भावः । अत्र चोत्क्षिप्तादीनि पदानि भाष्यगाथयैव व्याख्यास्यन्त इत्यभिप्रायेणात्र न व्याख्यातानीति सूत्रसंक्षेपार्थः ॥ अथ निर्युक्तिविस्तरः-

[भा.३२९३] नामं ठवणा दविए, भावे य उवस्सओ मुनेयव्वो ।
एएसिं नाणत्तं, वोच्छामि अहानुपुव्वीए ॥

वृ- नामोपाश्रयः स्थापनोपाश्रयो द्रव्योपाश्रयो भावोपाश्रयश्चेति उपाश्रयश्चतुर्द्धा मन्तव्यः । एतेषामुपाश्रयाणां 'नानात्वं' विशेषमहमानुपूर्व्या वक्ष्यामि ॥ तत्र नाम-स्थापने क्षुण्णत्वादनादृत्य द्रव्य-भावोपाश्रयौ प्रतिपादयति-

[भा.३२९४] दव्वम्मि ऊ उवस्सओ, कीरइ कड चुत्थमेव सुन्नम्मि ।
भावम्मि निसिट्ठे संजएसु दव्वम्मि इयरेसु ॥

वृ- 'द्रव्ये तु' द्रव्यविषयः पुनरुपाश्रयो यः संयतार्थं 'क्रियते' क्रियमाणो वर्त्तते, कृतो वा परमद्यापि न संयतेभ्यो वितीर्यते, अथवा यो गृहस्थैरात्मार्थं निष्पादितः परं तत्र संयता मासकल्पं वर्षाकल्पं वा "वृत्थ" त्ति उषित्वा अन्यत्र गताः, साम्प्रतं स उपाश्रयः शून्यस्तिष्ठति एष द्रव्योपाश्रयः । भावोपाश्रयो नाम यः संयतेभ्यः 'निसृष्टः' प्रदत्तः, तैः परिभुज्यमान इत्यर्थः । यः पुनः 'इतरेषां' पार्श्वस्थादीनां निसृष्टः सोऽपि द्रव्योपाश्रयो विज्ञेयः । आह च बृहद्भाष्यकृत्-

जो समणट्ठाए कतो, वुत्था वा आसि जत्थ समणा उ ।
अहवा दव्वउवस्सओ, पासत्थादीपरिग्गहिओ ॥

अथोपाश्रयस्यैकार्थिकान्याह-

[भा.३२९५] उवसग पडिस सेज्जा, आलय वसधी निसीहिया ठाणे ।
एगट्ठ वंजणाई, उवसग वगडाय निक्खेवो ॥

वृ- उपेत्य-आगत्य साधुभिराश्रीयत इत्युपाश्रयः । एवं प्रतिश्रीयत इति प्रतिश्रयः । शेरते साधवोऽस्यामिति शय्या । आलीयन्ते साधवोऽत्रेत्यालयः । वसन्ति साधवोऽस्यामिति वसतिः । निषेधः-गमनादिव्यापारपरिहारः स प्रयोजनमस्याः तमर्हतीति वा नैषेधिकी । तिष्ठन्ति साधवोऽत्रेति

स्थानम्। एतान्येकार्थानि 'नानाव्यञ्जनानि' पृथगक्षराण्युपाश्रयस्य नामानि। अथ वगडाया निक्षेपः कर्त्तव्यः ॥ तमेवातिदेशेनाह-

[भा.३२९६] एमेव होंति वगडा, चउव्विहा सा उ वतिपरिक्खेवो।
दव्वम्मि तिप्पगारा, भावे समणेहि भुज्जंती ॥

वृ- 'एवमेव' उपाश्रयवद् वगडा अपि नामादिभेदात् चतुर्विधा भवति। तत्र द्रव्यवगडा गृहसम्बन्धी वृतिपरिक्षेपो मन्तव्यः। स च त्रिप्रकारा, तद्यथा-सचित्ता अचित्ता मिश्रा च। इयं त्रिप्रकाराऽपि यथा मासकल्पप्रकृते द्रव्यपरिक्षेपः उक्तस्तथैव वक्तव्या। 'भावे' भाववगडा 'श्रमणैः' साधुभिर्यो वृतिपरिक्षेपः परिभुज्यते सा मन्तव्या ॥

अथ कोऽसावुपाश्रयो यस्यैषा वगडा वर्णिता ? उच्यते-

[भा.३२९७] वलया कोट्ठागारा, हेट्ठा भूमी य होइ रमणिज्जा।
वीएहिं विप्पमुक्को, उवस्सओ एरिसो होइ ॥

वृ- 'वलयानि' कटपल्यादीनि 'कोष्ठागाराणि च' सुप्रतीतानि यत्र भवन्ति, अधस्ताच्च तत्र भूमिर्भवति 'रमणीया' बीजाद्यभावेन प्रशस्या, ईदृश उपाश्रयो बीजैर्विप्रमुक्तो भवति ॥

इदमेव व्याख्यानयति-

[भा.३२९८] कडपल्लाणं सन्ना, तणपल्लाणं च देसितो वलया।
निप्परिसाडिमभुज्जंतगा य कयभूमिकम्मंता ॥

वृ- 'देशीत' देशीभाषामाश्रित्य कटपल्यानां तृणपल्यानां च वलयानीति संज्ञा। तेषां मालेषु बद्धेषु धान्यानि क्रियन्ते। तानि च यत्र 'निपरिशाटीनि' परिशाटिरहितानी, 'अभुज्यमानानि' अव्यापार्यमाणानि, तथा कृतं भूमिकर्म-छगणलेपनादिकम् अन्तेषु-प्रान्तप्रदेशेषु येषां तानि कृतभूमिकर्मान्तानि, अधस्ताच्च भूमिका बीजादिविप्रमुक्ता, ईदृशे प्रतिश्रये वस्तुं कल्पते ॥

अथ कोष्ठगाराणि व्याचष्टे-

[भा.३२९९] चाउस्सालघरेसु व, जत्थोव्वर-कोट्ठएसु धन्नाइं।
निच्छड्डइतमभोग्गा, तेसु निवासं न वारेइ ॥

वृ- अथवा चतुःशालादिगृहेषु यत्रोपाश्रयेऽपवरकेषु वा इष्टकादिमयेषु कोष्ठकेषु वा मृत्तिकामयेषु धान्यानि 'निच्छस्थगितानि' सदापिहितानी 'अभोग्यानि' परिभोगरहितानी तिष्ठन्ति तत्र ये शेषा अपवरकाः कोष्ठका वा तेषु निवासं न वारयति ॥ क्व पुनस्तर्हि वस्तुं न कल्पते ? इत्याह-

[भा.३३००] सालीहिं वीहीहिं, तिल-कुलत्थेहिं विप्पकिन्नेहिं।
आदिन्ने वितिकिन्ने, अहलंद न कप्पती वासो ॥

वृ- शालिभिर्व्रीहिभिस्तिलैः कुलत्थैः उपलक्षणत्वाद् मुद्ग-माषादिभिश्च विप्रकीर्णैरा-कीर्णैर्व्यतिकीर्णै उपलक्षणत्वाद् विकीर्णैश्च सङ्कुले उपाश्रये निर्ग्रन्थानां निर्ग्रन्थीनां च यथालन्दमपि कालं न कल्पते वासः। एषा श्रीभद्रबाहुस्वामिकृता गाथा। अनया सूत्रपदानि संगृहीतानि-आकीर्णग्रहणेन च उत्क्षिप्तपदं विकीर्णग्रहणे तु विक्षिप्तपदं गृहीतं मन्तव्यम् ॥ अत्र परः प्राह-ननु जातिवाचकाः शब्दाः 'सम्पन्नः शालि' इत्यादिवदेकवचननिर्देशेन व्यवह्रियमाणा उपलभ्यन्ते, ततः किमर्थमत्र "शालिभिर्व्रीहिभिः" इत्यादौ बहुवचनेन निर्देशः कृतः उच्यते-

[भा.३३०१] सालीहिं व वीहीहिं व, इति उत्ते होति एतदुत्ते तु ।
सालीमादीयाणं, होंति पगारा बहुविहाउ ॥

वृ-शालिभिर्वा व्रीहिभिर्वा 'इत्युक्ते' एवं बहुवचननिर्देशे कृते एतद् 'उक्तम्' अभिहितं भवति-शाल्यादीनां धान्यानां बहुविधाः प्रकाश भवन्ति । तद्यथा-कलमशालि रक्तशालिर्महाशालिरित्यादि॥ उत्क्षिप्तादिपदानां व्याख्यानमाह-

[भा.३३०२] उक्खित्त भिन्नरासी, विकिक्खत्ते तेसि होति संबंधो ।
वितिकिन्ने सम्मेलो, विपइन्ने संथडं जाणे ॥

वृ- उत्क्षिप्तानि नाम येषां धान्यानां राशयो भिन्नाः । विक्षिप्तानि नाम त एव धान्यराशयो भिन्नाः परमेकतः सम्बद्धाः, अत एवाह-विक्षिप्तपदे व्याख्यायमाने 'तेषां' भिन्नराशीनां सम्बन्धो भवति । व्यतिकीर्णानि तु तानि सर्वाण्यपि धान्यान्येकतः सम्मिलितानि, आह च-व्यतिकीर्णपदे तेषां धान्यानां सम्मीलको भवति । व्यतिकीर्णानि तु तानि सर्वाण्यपि धान्यान्येकतः सम्मिलितानि, आह च-व्यतिकीर्णपदे तेषां धान्यानां सम्मीलको भवति । विप्रकीर्णानि तु सर्वतः संस्तृतानि पुष्पप्रकरवत्, अत एवाह-विप्रकीर्णपदे 'संस्तृत' विप्रकिरणं जानीयात् ॥

अथ यथालन्दपदं व्याचष्टे-

[भा.३३०३] तिविहं च अहालंदं, जहन्नयं मज्झिमं च अक्कोसं ।
उदउल्लं च जहन्नं, पनगं पुन होइ उक्कोसं ॥

वृ- 'त्रिविधं च' त्रिप्रकारं यथालन्दम्, तद्यथा-जघन्यं मध्यममुत्कृष्टं च । तत्रोदकार्द्रः करो यावत कालेन शुष्यति तावन्मात्रं जघन्यम् । 'पञ्चकं' पञ्चरात्रिन्दिवानि पुनरुत्कृष्टम् । अर्थादापन्नं तयोरपान्तरालवर्ति सर्वमपि मध्यमम् ॥ अथात्र बीजाकीर्णे प्रतिश्रये तिष्ठतां प्रायश्चित्तमाह-

[भा.३३०४] बीयाईआइन्ने, लहुओ मासो उ ठायमाणस्स ।
आणादिणो अ दोसा, विराधना संजमाऽऽताए ॥

वृ- "बीयाइ" त्ति आदिशब्दः स्वगतानेकभेदसूचकः । ततश्च बीजैः- शाल्यादिभेदादनैकप्रकारैराकीर्णे उपाश्रये तिष्ठत आचार्यादिर्लघुको मासः प्रायश्चित्तम्, अयं च तपः-कालविशेषितः। तद्यथा-आचार्यस्य तपसा कालेन च गुरुकः, उपाध्यायस्य तपसा गुरुकः, वृषभस्य कालेन गुरुकः, भिक्षोस्तपसा कालेन च लघुकाः । एतत् प्रत्येकबीजविषयं प्रायश्चित्तमुक्तम् । अनन्तबीजेष्वप्येवमेव । नवरं मासलघुस्थाने मासगुरुकम् । संयतीनामपि प्रवर्त्तिनी-गणावच्छेदिन्यभिषेका-भिक्षुणीनामेवमेव वक्तव्यम् । आज्ञादयश्च दोषा अत्र भवन्ति । तथा विराधना संयमे आत्मनि च मन्तव्या । इयं द्विधाऽपि पुरस्तादभिधास्यते ॥ प्रकारान्तरेण प्रायश्चित्तमेवाह-

[भा.३३०५] उक्खित्तमाइएसुं, थिरा-ऽथिरेसुं तु ठायमाणस्स ।
पनगादी जा भिन्नो, विसेसितो भिक्खुमाईणं ॥

वृ-उत्क्षिप्तादिषु पदेषु स्थिरा-ऽस्थिरभेदभिन्नेषु तिष्ठतां भिक्षुप्रभृतीनां पञ्चकादारभ्य भिन्नमासं यावत् तपः-कालविशेषितं प्रायश्चित्तम् । तद्यथा-उत्क्षिप्तेषु स्थिरसंहननिषु बीजेषु तिष्ठति लघुदशरात्रिन्दिवानि, अस्थिरसंहननिषु लघु दशरात्रिन्दिवानि; विक्षिप्तेषु स्थिरेषु तिष्ठति लघुदशरात्रिन्दिवानि, अस्थिरेषु लघुपञ्चदशरात्रिन्दिवानि; व्यतिकीर्णेषु स्थिरेषु तिष्ठति

लघुपञ्चदशरात्रिन्दिवानि, अस्थिरेषु लघुविंशतिरात्रिन्दिवानि; विप्रकीर्णेषु स्थिरेषु तिष्ठति लघुविंशतिरात्रिन्दिवानि, अस्थिरेषु लघुपञ्चविंशतिरात्रिन्दिवानि । एतत् सर्वमपि प्रायश्चित्तं भिक्षोस्तपसा कालेन च लघुकम्, वृषभस्य कालेन गुरुकम्, उपाध्यायस्य तपसा गुरुकम्, आचार्यस्य तपसा कालेन च गुरुकम् । एतत् प्रत्येकबीजविषयं प्रायश्चित्तमुक्तम् ॥

[भा.३३०६]　साहारणम्मि गुरुगा, दसादिगं मासे ठाति समणीणं ।
मासो निक्खित्तो वा, लहुओ साहरणे गुरुओ ॥

वृ-साधारणबीजेषु त्वेतदेव गुरुकं कर्तव्यम्, गुरुपञ्चकादारभ्य गुरुपञ्चविंशतिकान्तीमित्यर्थः। श्रमणीनां तु लघुदशरात्रिन्दिवेभ्यः प्रारब्धं लघुमासे तिष्ठति । तत्रापि भिक्षुण्या उभयघुकम्, अभिषेकायाः कालगुरुकम्, गणावच्छेदिन्यास्तपोगुरुकम्, प्रवर्त्तिन्या उभयगुरुकम् । एवं प्रत्येकबीजवियमुक्तम् । अनन्तबीजेषु त्वेवमेव गुरुदशरात्रिन्दिवेभ्यः प्रारब्धं गुरुमासान्तं वक्तव्यम्। अथवा भिक्षुप्रभृतीनां चतुर्णामप्यविशेषेणोत्कीर्णादिषु चतुर्ष्वपि तपः-कालविशेषितो मासलघुकः, तद्यथा-उत्कीर्णेषु तपसा कालेन च लघुकः, विकीर्णेषु कालेन गुरुकः, व्यतिकीर्णेषु तपसा गुरुकः, विप्रकीर्णेषु तपसा कालेन च गुरुकः । अनन्तबीजेष्वप्युत्कीर्णादिष्वेवमेव तपः-कालविशेषितं मासगुरुकम् । द्विविधा च विराधना संयमा-ऽऽत्मविषयाऽत्र मन्तव्या । तत्र संयमविराधना निर्गच्छन् वा प्रविशन् वा बीजानां सङ्घट्टनं परितापनमपद्रावणं वा कुर्यात्, ये च तदाश्रिताः प्राणिनस्तेषामपि सङ्घट्टनादिकं कुर्यात् तन्निष्पन्नं प्रायश्चित्तम् ॥ अथात्मविराधनां भावयति-

[भा.३३०७] सालि-जव अच्छि सालुग, निस्सरणं मास-मुग्गमादीसु ।
सस्सू गुज्झ कुतूहल, विप्पइरण मास निस्सरणं ॥

वृ- तत्र स्थितानां साधूनां शालि-यवानां शालुकान्यक्ष्णोः प्रविशन्ति । तैश्च प्रविष्टैश्चक्षुषी अनागाढमागाढं वा परिताप्येते । तथा मुद्ग-माषादिषु विप्रकीर्णेषु गमना-ऽऽगमने विदधानानां 'निस्सरणं' प्रस्खलनं भवति, ततश्च हस्तभङ्गादयो दोषाः । अत्र श्वश्रूदृष्टान्तः-एगो अगारो चिंतेइ-जइ सस्सुगाए गुज्झोरुगाइ पेच्छामि । ताहे मासा अइग्गमननिग्गमणपहे विप्पकिन्ना । सा तत्थ वच्चंती फिल्लसिया गलियवसणा उत्तानिया पडिया ॥ इदमेवाह-"सस्सू" इत्यादि । श्वश्र्वाः सम्बन्धि यद् गुह्यं तदवलोकने यत् कुतूहलं तद्वशाद् माषाणां विप्रकिरणम्, ततस्तस्याः श्वश्र्वाः 'निस्सरणं' प्रस्खलनमभवत् । एवं तत्र स्थितानां साधूनामप्यात्मविराधना भवेत् ॥ द्वितीयपदमाह-

[भा.३३०८]　बिइयपय कारणम्मि, पुव्विं वसभा पमज्ज जतणाए ।
विक्खिरणम्मि वि लहुओ, तत्थ वि आणादिणो दोसा ॥

वृ- द्वितीयपदे 'कारणे' अध्वनिर्गमनादौ शुद्धोपाश्रयालाभे बीजाकीर्णेऽप्युपाश्रये तिष्ठन्ति। कथम् ? इत्याह-पूर्वं वृषभा दण्डप्रोञ्छनकं गृहीत्वा तत्र गत्वा यतनया यथा तेषां बीजानां परितापनादि न भवति तथा प्रमृज्य ततः सबाल-वृद्धमपि गच्छमानीय यथालन्दं कालं तिष्ठन्ति। यदि प्रमार्जनां विदधाना बीजानां विकिरणम्-इतस्ततो विक्षेपणं कुर्वते तदा लघुमासः प्रायश्चित्तम्। तत्राप्यविधिप्रमार्जने आज्ञादयो दोषाः ॥ अथैतदेव स्पष्टयति-

[भा.३३०९]गीया पुरा गंतु समिक्खियम्मि, थिरे पमज्जितुमहाथिरे वा ।
साहट्टुमेगंति वसंति लंदं, उक्कोसयं जाणिय कारणं वा ॥

**वृ-** केचिदध्वनिर्गतादयः सहसा विवक्षितं ग्रामं प्राप्ताः, तत्र च गीतार्थाः पुरतो गत्वा निपुणाः शुद्धां वसतिं समीक्षन्ते-प्रत्युपेक्षन्ते । यदि तथासमीक्षिते न प्राप्यते तदा शाल्यादिबीजेषूत्कीर्णेषु प्रथमं स्थिरसंहननिषु तिष्ठन्ति, तदभावेऽस्थिरसंहननिष्वपि । तानि च बीजानि यतनया प्रमृज्य तत एकान्ते संहरन्ति-संस्थापयन्ति । संहृत्य च तत्र जघन्यं वा मध्यमं वा यथालन्दं वसन्ति । 'कारणं वा' अध्वपरिश्रमादिकं ज्ञात्वोत्कृष्टमपि यथालन्दं वसन्ति । अत्र पाठान्तरम्-"साहट्टुमेगं तु" त्ति तानि बीजानि संहृत्य ततः 'एकम्' इति जघन्यं यथालन्दं वसन्ति, शेषं प्राग्वत् । उत्कीर्णानामभावे विकीर्णेषु, तेषामभावे व्यतिकीर्णेषु तदप्राप्तौ विप्रकीर्णेष्वपि तिष्ठन्ति । तत्रापि प्रथमं प्रत्येकेषु, ततः साधारणेष्वपि । अथोत्क्रमेण तिष्ठन्ति ततो मासलघु । संयतीनामप्येवमेव द्वितीयपदं मन्तव्यम् ॥

**मू. (५२)** *अह पुन एवं जाणिज्जा-नो उक्खित्ताइं नो विक्खित्ताइं नो विइकिन्नाइं नो विप्पकिन्नाइं रासिकडाणि वा पुंजकडाणि वा भित्तिकडाणि वा कुलियाकडाणि वा लंछियाणि वा मुद्दियाणि वा पिहिताणि वा कप्पइ निग्गंथाण वा निग्गंथीण वा हेमंतगिम्हासु वत्थए ॥*

**वृ-** अथ पुनरेवं जानीयात्-तानि शाल्यादीनि बीजानि तत्रोपाश्रये नो उत्क्षिप्तानि नो विक्षिप्तानि नो विकीर्णानि नो विप्रकीर्णानि, किन्तु राशीकृत्वानी वा पुञ्जीकृतानि वा भित्तिकृतानि वा कुलिकाकृतानि वा लाञ्छितानि वा मुद्रितानि वा पिहितानि वा, तत एवं कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा हेमन्त-ग्रीष्मेषु वस्तुमिति सूत्राक्षरार्थः ॥ अत्र भाष्यम्-

[भा.३३१०] रासीकडा य पुंजे-कुलियकडा पिहित मुद्दिते चेव ।
ठायंतगाण लहुगा, कास अगीतत्थ सुत्तं तु ॥

**वृ-** यत्रोपाश्रये राशीकृतानि पुञ्जीकृतानि पिहितानि मुद्रितानी चशब्दाद् भित्तिकृतानि लाञ्छितानि च बीजानि तत्र तिष्ठतां चतुर्लघुकाः । कस्य पुनरेतत् प्रायश्चित्तम् ? उच्यते-अगीतार्थस्य । 'सूत्रं तु' सूत्रं पुनर्गीतार्थविषयं द्रष्टव्यमिति वाक्यशेषः ॥ अथ राशीकृतादिपदानां व्याख्यानमाह-

[भा.३३११] पुंजो य होति वट्टो, सो चेव य ईसिआयतो रासी ।
कुलिया कुड्डलीणा, भित्तिकडा संसिया भित्ती ॥

**वृ-** 'वृत्तः' वृत्ताकारो धान्योत्करः पुञ्ज इत्युच्यते । स एव 'ईषदायतः' मनाग् दीर्घो राशिः । अपुञ्जः पुञ्जः कृतानीति व्युत्पत्त्या पुञ्जीकृतानि, एवं राशीकृतानीत्यपि । तथा कुलिका कुड्यमुच्यते, ततः कुलिकाकृतानि नाम कुड्यालीनानि कृत्वा स्थापितानि । भित्तिकृतानि तु भित्तौ संश्रितानि, भित्तिनिश्रया स्थापितानीत्यर्थः । अथ कुड्य-भित्त्योः कः प्रतिविशेषः ? उच्यते- इष्टकादिरचिता भित्तिः, मृत्पिण्डादिनिर्मितं कुड्यम् ॥

[भा.३३१२] छारेण लंछिताइं, मुद्दा पुन छाणपानियं दिन्नं ।
परिकलाइँ करेत्ता, किलिंजकडएहि पिहिताइं ॥

**वृ-** लाञ्छितानि नाम 'क्षारेण 'भस्मना चिह्नितानि । तथा मुद्रा पुनः छगणपानीयं तद् यत्र प्रदत्तं तानि मुद्रितानि । "परिकलाइं" ति यानि नापि लाञ्छितानि नापि मुद्रितानि तानि पिहितान्युच्यन्ते । एवंविधेषु बीजेषु हेमन्त-ग्रीष्मयोर्गीतार्थस्य वस्तुं कल्पते नागीतार्थस्येति ॥

परः प्रेरयति-

[भा.३३१३] नत्थि अगीतत्थो वा, सुत्ते गीतो व वन्नितो कोइ ।
जा पुन एगाणुन्ना, सा सेच्छा कारणं किं वा ॥

वृ- सूत्रे अगीतार्थो वा गीतार्थो वा न कश्चिद् निर्द्धार्य 'वर्णितः' निर्दिष्टोऽस्ति, अतो येयं भवद्भिः एकस्य-गीतार्थपक्षस्यानुज्ञा अपरस्यागीतार्थपक्षस्य प्रतिषेधः क्रियते सैषा युष्माकं व्याख्यातृणां स्वेच्छा, न पुनर्भगवदुक्तमिति भावः । अथ कारणं किमप्यत्रास्ति ततोऽभिधीयताम्॥ सूरिराह-

[भा.३३१४] एयारिसम्मि वासो, न कप्पती जति वि सुत्तऽणुन्नातो ।
अव्वोकडो उ भणितो, आयरिओ उवेहती अत्थं ॥

वृ- 'एतादृशे' उपाश्रयेवासो यद्यपि सूत्रेऽनुज्ञातस्तथापि न कल्पते, यतः 'अव्याकृतः' अविशेषित एवार्थ सूत्रे भणितः, परमाचार्यस्तमर्थम् 'उत्प्रेक्षते' विषयविभागप्रकटनेनोन्मीलयति। यथा किलैकस्माद् मृत्पिण्डात् कुलालोऽनेकानि घट-शरावादिरूपाणि निष्पादयति, एवमाचार्योऽप्येकस्मात् सूत्रपदादभ्यूह्यानेकेषामर्थविकल्पानामुपदर्शनं करोति । यथा वा सान्धकारे गृहादौ विद्यमाना अपि घटादयः पदार्था प्रदीपं विना न विलोक्यन्ते, तथा सूत्रेऽप्यर्थविशेषा आचार्येणाप्रकाशिताः सन्तोऽपि नोपलभ्यन्ते ॥ किञ्च-

[भा.३३१५] जं जह सुत्ते भणितं, तहेव तं जइ वियालणा नत्थि ।
किं कालियानुओगो, दिट्ठो दिट्ठिप्पहाणेहिं ॥

वृ- 'यद्' वस्तु 'यथा' येन विधिरूपेण प्रतिषेधरूपेण वा प्रकारेण सूत्रे भणितं तत् तथैव यदि प्रतिपत्तव्यं 'विचारणा' विषयविभागव्यवस्थापना युक्ता-ऽयुक्तविमर्शो वा 'नास्ति' न क्रियते ततः 'किं' केन हेतुना कालिकश्रुतस्यानुयोगः 'दृष्टः' विधेयतयोपलब्धः 'दृष्टिप्रधानैः' केवलज्ञान-श्रुतज्ञानरूपलोचनप्रवरैस्तीर्थकर-गणधरैः ?; अथवा 'दृष्टिप्रधानैः' नैगमादिनयमत-विशारदैः श्रीभद्रबाहुस्वामिभि किमिति निर्युक्तिकरणद्वारेण कालिकश्रुतानुयोगो 'दृष्टः' प्रतिपादितः? ॥ अपि च-

[भा.३३१६] उस्सग्गसुतं किंची, किंची अववातियं भवे सुत्तं ।
तदुभयसुत्तं किंची, सुत्तस्स गमा मुनेयव्वा ॥

वृ- किञ्चिदुत्सर्गसूत्रम् १, किञ्चित् पुनरापवादिकं सूत्रम् २, किञ्चित् तदुभयसूत्रम्, तच्च द्विधा-उत्सर्गापवादिकम् अपवादौत्सर्गिकम् ३-४ । एते सूत्रस्य 'गमाः' प्रकाराश्चत्वारो ज्ञातव्याः । अथवा 'गमा नाम' द्विरुच्चारणीयानि पदानि । तद्यथा-उत्सर्गौत्सर्गिकम् ५ अपवादापवादिकम् ६ एवमेतौ द्वौ भेदौ चत्वारश्च प्रागुक्ता इत्येवं सूत्रस्य षड् भेदाः सञ्जाताः । एते च पुरस्तादुदा-हरिष्यन्ते ॥ अन्येऽपि च सूत्रस्य भेदा भवन्तीति दर्शयति-

[भा.३३१७] नेगेसु एगगहणं, सलोम निल्लोम अकसिणे अइणे ।
विहिभिन्नस्स य गहणं, अववाउस्सग्गियं सुत्तं ॥

'अनेकेषु' कषायेन्द्रिया-ऽऽश्रवादिष्वर्थेषु क्वापि सूत्रे एकस्य-अन्यतरस्य ग्रहणं भवेत्, यथा-यत्र सूत्रे क्रोधनिग्रहः साक्षादुपदिष्टस्तत्र माननिग्रहादयोऽप्यर्थत उक्ता द्रष्टव्याः । एवमिन्द्रिया-ऽऽश्रवादिष्वपि भावनीयम् ।

कानिचित्तु सूत्राणि साधूनां साध्वीनां च प्रत्येकविषयाणि । यथैहैव कल्पाध्ययने सलोमसूत्रं निर्लोमसूत्रं वा । तद्यथा-"नो कप्पइ निग्गंथाणं अलोमाइं चम्माइं धारित्तए । कप्पइ निग्गंथाणं सलोमाइं चम्माइं धारित्तए । नो कप्पइ निग्गंथीणं सलोमाइं चम्माइं धारित्तए । कप्पइ निग्गंथीणं अलोमाइं चम्माइं धारित्तए । कानिचित्तु सामान्यसूत्राणि भवन्ति, यथा अकृत्स्नाजिनविषयं सूत्रम्। तच्चेदम्-"कप्पइ निग्गंथाण वा निग्गंथीण वा अकसिणाइं चम्माइं धारित्तए" । अथ "अनानुपूर्व्यपि व्याख्याङ्गम्" इति न्यायोपदर्शनार्थं प्रागुक्तसूत्रषट्कमध्यात् चतुर्थभेदमुदाहरति-"विहिभिन्नस य" इत्यादि । इहैव ग्रन्थे यद् विधिभिन्नस्य ग्रहणमुक्तं तदपवादौत्सर्गिकं सूत्रम् । तच्चेदम्-"कप्पइ निग्गंथीणं पक्वे तालपलंबे भिन्ने पडिगाहित्तए, से वि य विहिभिन्ने नो चेव णं अविहिभिन्ने" ॥ आह यद्यपवादेनानुज्ञातं तर्हि भूयः कथं प्रतिषिध्यते ? इत्याह-

[भा.३३१८] उस्सग्गठिई सुद्धं, जम्हा दव्वं विवज्जयं लभति ।
न य तं होइ विरुद्धं, एमेव इमं पि पासामो ॥

वृ- 'उत्सर्गस्थितौ' उत्सर्गपदे 'शुद्धम्' उद्गमादिदोषरहितं यत् भक्त-पानादिद्रव्यं ग्रहीतुं कल्पते तदेवापवादपदे यस्माद् 'विपर्ययं' वैपरीत्यं लभते, अशुद्धमप्युपादातुं कल्पते इत्यर्थः । 'न च' नैव तत् तथा गृह्यमाणं विरुद्धं भवति, ज्ञानादिगुणोपकारकत्वादविरुद्धमेवेति भावः । एवमेव 'अमुमपि' प्रकृतमर्थं "कल्पते निर्ग्रन्थीनां पक्वं तालप्रलम्बं भिन्नं प्रतिग्रहीतुम्" इत्यपवादेनानुज्ञातस्याप्यविधिभिन्नप्रतिषेधरूपमविरुद्धमेव पश्यामः ॥ अथोत्सर्गसूत्रादीनामुदाहरणान्याह-

[भा.३३१९] उस्सग्ग गोयरम्मी, निसेज्ज कप्पाऽववादतो तिण्हं ।
मंसं दल मा अट्ठी, अववादुस्सग्गियं सुत्तं ॥

वृ- उत्सर्गसूत्रं गोचरं पर्यटतः साधोर्गृहद्वयापान्तराले या 'निषद्या' निषदनं तद्विषयम् । तच्चेदम्-"नो कप्पइ निग्गंथाण वा निग्गंथीण वा अंतरगिहंसि आसइत्तए वा जाव काउस्सग्गं वा ठाणं वा ठाइत्तए त्ति ।" यत्तु 'त्रयाणां' जराभिभूतादीनां निषद्या कल्पते इत्येवंलक्षणं सूत्रं तदापवादिकम्। तच्चेदम्- "अह पुन एवं जाणिज्ञा जराजुन्ने १ वाहिए २ तवस्सी ३ मुच्छिज्ज वा पवडिज्ज वा एवण्हं कप्पइ अंतरगिहंसि आसइत्तए ।" इदं पुनरपवादौत्सर्गिकम्-"मंसं दलमा अट्ठि"त्ति पुद्गलं प्रयच्छ मा अस्थीनीति ॥

[भा.३३२०] नो कप्पति य अभिन्नं, अववातेनं तु कप्पती भिन्नं ।
कप्पति पक्कं भिन्नं, विधीय अववायउस्सग्गं ॥

वृ- "नो कल्पतेऽभिन्नमामप्रलम्बं प्रतिग्रहीतुम्" एतद्धा उत्सर्गसूत्रम् । यत् पुनः 'अपवादपदेन' अध्वा-ऽवमौदर्यादिषु भिन्नं प्रतिग्रहीतुं कल्पते इत्येवंरूपं तदापवादिकम् । यत् पुनः "निर्ग्रन्थीनां कल्पते पक्वं प्रलम्बं विधिभिन्नं नाविधिभिन्नम्" इति सूत्रं तदपवादौत्सर्गिकम् । एतत् प्रागुक्तमपि स्पष्टीकरणार्थमिहाभिहितम् । इदं त्वौत्सर्गापवादिकम्-"नो कप्पइ० राओ वा वियाले वा सेज्जा-संथारयं पडिगाहित्तए । नऽन्नत्थ एगेणं पुव्वपडिलेहिएणं सिज्जा-संथारएणं । इदं पुनरुत्सर्गौत्सर्गिकम्-"नो कप्पइ० असणं वा ४ पढमाए पोरिसीए पडिगाहित्ता पच्छिमं पोरिसिं उवाइणावित्तए । से य आहच्च उवाइणाविए सिया, जो तं भुंजइ भुंजंतं वा साइज्जइ से आवज्जइ चाउम्मासियं परिहारट्ठाणं

उग्घाइयं । तथा येषु सूत्रेष्वपवादो भणितस्तेष्वेवार्थतः पुरनुज्ञा प्रवर्तते तान्यपवादापवादिकानि ॥

किञ्चान्यत्-

[भा.३३२१] कत्थइ देसग्गहणं, कत्थति भन्नंति निरवसेसाइं ।

उक्कम-कमजुत्ताइं, कारणवसतो निजुत्ताइं ॥

वृ- क्वचित् सूत्रेऽभिधेयपदानां देशतो ग्रहणं क्रियते, कुत्रापि च निरवशेषाण्यभिधेयपदानि भण्यन्ते, तथा कानिचित् सूत्राण्युत्क्रमयुक्तानि, कानिचित्तु क्रमयुक्तानि 'कारणवशतः' कारणविशेषमाश्रित्य 'नियुक्तानि' गणधरादिभि श्रुतधरैर्विरचितानि ॥ एतदेव विवृणोति-

[भा.३३२२] देसग्गहणे बीएहि सूयिया मूलमादिणो हुंति ।

कोहादिअनिग्गहिया, सिंचंति भवं निरवसेसं ॥

वृ- देशग्रहणे कृते सति तज्जातीयानां सर्वेषामपि ग्रहणं भवति, यथा-"सालीणि वा वीहीणि वा" इत्यादावस्मिन्नेव सूत्रे बीजैर्गृहीतैर्मूलादयोऽपि भेदाः सूचिता भवन्ति । कुत्रापि च सूत्रे निरवशेषाण्यभिधेयपदानि गृह्यन्ते, यथा दशवैकालिके क्रोधादयोऽनिगृहीताः सन्तः 'भवं' संसारं 'निरवशेषं' चतुर्गतिकमपि सिञ्चन्तीत्युक्तम् । तथा च तत्सूत्रम्-

कोहो य मानो य अनिग्गहीया, माया य लोभो अ पवड्ढमाणा ।

चत्तारि एए कसिणा कसाया, सिंचंति मूलाइं पुनब्भवस्स ॥

अथोत्क्रम-क्रमयुक्तानि सूत्राणि दर्शयति-

[भा.३३२३] सत्थपरिन्नादुक्कमे, गोयर पिंडेसणा कमेणं तु ।

जं पि य उक्कमकरणं, तमभिनवधम्ममादऽट्ठा ॥

वृ- शस्त्रपरिज्ञाध्ययने तेजःकायोद्देशकानन्तरं वायुकायोद्देशकः क्रमप्राप्तोऽपि नोक्तः, किन्तु वनस्पति-त्रसकायोद्देशकौ प्ररूप्य पर्यन्तेऽसौ भणितः, एवमादिकमुत्क्रमयुक्तं सूत्रमुच्यते । क्वचित्तु सूत्रे क्रमेणैवार्थपदानि भवन्ति, यथा-अट्ठ गोचरभूमयः, तद्यथा-"पेडा अद्धपेडा गोमुत्तिया पतंगवीहिया अंतोसंवुक्का बाहिंसंवुक्का उज्जुगी गंतुंपच्चागता ।" तथा सप्तपिण्डैषणासूत्रमपि क्रमनिबद्धं मन्तव्यम् । तद्यथा-"असंसट्ठा संसट्ठा उद्धडा अप्पलेवा उग्गहिता पग्गहिता उज्झितधम्मिया ॥" अथवा 'पिण्डैषणा' इति प्रथमं पिण्डपदं तत एषणापदं यत्र ओघनिर्युक्त्यादौ सूत्रे यथाक्रमं प्ररूप्यते तत् क्रमनिबद्धम् ।

यदपि चोत्क्रमकरणं शस्त्रपरिज्ञादावध्ययने तदभिनवधर्माद्यर्थम् । किमुक्तं भवति ?- अभिनवधर्मा शैक्षः, स ह्यद्याप्यपरिणतजिनवचनतया वायुकायं परिस्फुटमनुपलभ्यमानतया प्रथमतः प्ररूप्यमाणं न सम्यक् प्रतिपद्यते, अतो वनस्पति-त्रसान् प्ररूप्य यदा तेषु सम्यग् जीवत्वं प्रतिपन्नस्तदा वायुकायं जीवत्वेन प्ररूप्यमाणं सुखेनैव श्रद्धत्ते, एवमादिभि कारणैरुत्क्रमकरणं मन्तव्यम् ॥ अथ "बीएहिं सूइया मूलमाइणो" त्ति पदं व्याचष्टे-

[भा.३३२४] बीएहि कंदमादी, वि सूयिया तेहिं सव्व वणकाओ ।

भोम्मादिगा वणेण तु, सभेद सारीवणा भणिता ॥

वृ- इहैव सूत्रे बीजैर्गृहीतैः कन्द-मूलादयोऽपि भेदाः सूचिताः, तेष्वपि तिष्ठतः प्रायश्चित्तं भवतीति भावः । 'तैश्च' कन्दादिभिः सर्वोऽपि 'वनस्पतिकायः' परीत्ता-ऽनन्तभेदभिन्नः सूचितः ।

'वनेन तु' वनस्पतिना 'भौमादयः' पृथिव्यप्कायादयः कायाः सूचिताः । एवं 'सभेदाः' भेद-प्रभेदसहिताः षडपि कायाः 'सारोपणाः' सप्रायश्चित्ता भणिता अवसातव्याः ॥

[भा. ३३२५] जत्थ उ देसग्गहणं, तत्थऽवसेसाइं सूइयवसेणं ।
मोत्तूणं अहिगारं, अनुयोगधरा पभासंति ॥

वृ- एवमत्रापि यत्र देशग्रहणं तत्रावशेषाण्यार्थपदानि, सूचितं सूचा, भावे क्तप्रत्ययः, तद्वशेनावगन्तव्यानि । तथा कुत्रापि सूत्रेऽनुयोगधराः 'अधिकारं' प्रस्तुतार्थं मुक्त्वा सूत्रानुपाति प्रसङ्गागतमर्थं प्रथमतः प्रभाषन्ते, यथा पिण्डाधिकारे प्रस्तुते-

"पुढवी आउक्काए, तेऊ वाऊ वणस्सई चेव ।
बिइ तिय चउरो पंचिंदिया य लेवो दसमओ अ ॥"

इत्यादिनौघनिर्युक्तौ सविस्तरं कायप्ररूपणा कृता । एवं विचित्राणि सूत्राणि भवन्ति, अत एव यावदमीषामर्थ सूरिणा न व्यक्तीकृतस्तावन्न सम्यगवगमपथमुपगच्छति ॥

अथौत्सर्गिका-ऽऽपवादिकसूत्रयोर्विषयविभागमाह-

[भा. ३३२६] उस्सग्गेणं भणियाणि जानि अववादतो तु जानि भवे ।
कारणजातेन मुनी !, सव्वाणि वि जाणितव्वाणि ॥

वृ- उत्सर्गेण यानि सूत्राणि भणितानि यानि चापवादतः सूत्राणि तानि हे मुने ! कारणजातेन सर्वाण्यपि ज्ञातव्यानि । किमुक्तं भवति ?-प्रतिषिद्धस्य आचरणहेतुः कारणम्, तच्च ज्ञानादि, तत्र चोत्सर्गसूत्रेषु साक्षादुत्सर्गविषयो निबन्धः, अर्थतस्तु कारणजाते तत्राप्यनुज्ञा मन्तव्याः अपवादसूत्रेषु पुनः कारणजातमुद्दिश्य साक्षादपवादविषयो निबन्धः, अर्थतस्तु तत्राप्युत्सर्गो द्रष्टव्यः। एवं सर्वसूत्रेषु तत्त्व उत्सर्गा-ऽपवादावुभावपि निबद्धाववगन्तव्यौ ॥ अथ किं पुनरनयोः स्वस्थानम्? इत्याह-

[भा. ३३२७] उस्सग्गेण निसिद्धाइं जाइं दव्वाइं संथरे मुणिणो ।
कारणजाते जाते, सव्वाणि वि नि कप्पंति ॥

वृ- 'उत्सर्गेण' संस्तरणमाश्रित्य यानि 'द्रव्याणि' प्रलम्बादीनि 'मुनेः' संयतस्य प्रतिषिद्धानि तान्येव 'कारणजाते' विशुद्धालम्बनप्रकारे 'जाते' समुत्पन्ने सति सर्वाण्यपि कल्पन्ते ॥

अत्र परः प्रश्नयति-

[भा. ३३२८] जं चिय पए निसिद्धं, तं चिय जति भूतो कप्पती तस्स ।
एवं होतऽनवत्था, न य तित्थं नेव सच्चं तु ॥

वृ- 'यदेव' प्रलम्बादिकं 'प्राक्' पूर्वं निषिद्धं तदेव यदि 'भूयः' पुनरपि 'तस्य' साधोः कल्पते, तत एवं सूत्रार्थस्य यदृच्छाप्रवृत्तौ चरण-करणास्यानवस्था भवति । ततश्च न तीर्थमनुस(ष]जति, नैव च प्रतिषिद्धं समाचरतः 'सत्यं' संयमो भवति, तदभावे दीक्षा निरर्थिका, तन्निरर्थकतायां मोक्षस्याप्यभावः प्राप्नोति ॥ अपि च-

[भा. ३३२९] उम्मत्तवायसरिसं, खु दंसणं न वि य कप्पऽकप्पं तु ।
अध ते एवं सिद्धी, न होज्ज सिद्धी उ कस्सेवं ॥

वृ-आचार्य ! पूर्वमेकत्र सूत्रे प्रतिषिध्य पुनस्तदेवानुजानत इदं भवतो दर्शनमुन्मत्तवाक्यसदृशं

प्राप्नोति, तथा नापि च 'इदं कल्प्यम्, इदमकल्प्यम्' इति व्यवस्था भवति, यदि चैवमपि ब्रुवतस्तवाभिप्रेतार्थसिद्धिर्भवति तर्हि कस्य न सा भवेत् ? चरक-परिव्राजकादीनामप्यसमञ्जस प्रलापिनां सा भविष्यतीति भावः ।। सूरिराह-

[भा.३३३०] न वि किंचि अनुन्नायं, पडिसिद्धं वा वि जिनवरिंदेहिं ।
एसा तेसिं आणा, कज्जे सच्चेण होतव्वं ।।

वृ- हे नोदक ! यदेतद् भवता प्रलपितं तत् प्रवचनरहस्यानभिज्ञतासूचकम्, यतो जिनवरेन्द्रैस्तथाविधकारणाभावे नापि 'किञ्चिद्' अकल्पनीयमनुज्ञातम्, कारणे च समुत्पन्ने नापि किञ्चित् प्रतिषिद्धम्, किन्तु एषा 'तेषां' तीर्थकृतां निश्चय-व्यवहारनयद्वयाश्रिता सम्यगाज्ञा मन्तव्या-यदुत 'कार्ये' ज्ञानादावालम्बने 'सत्येन' सद्भावसारेण साधुना भवितव्यम्, न मातृस्थानतो यत्किञ्चिदालम्बनीयमित्यर्थः । अथवा सत्यं नाम-संयमः तेन कार्ये समुत्पन्ने भवितव्यम्, यथा यथा संयम उत्सर्पति तथा तथा कर्त्तव्यमिति भावः । आह च बृहद्भाष्यकारः-

कज्जं नाणादीयं, सच्चं पुन होइ संजमो नियमा ।
जह जह सो होइ थिरो, तह तह कायव्वयं होइ ।।

इदमेव भावयति-

[भा.३३३१] दोसा जेन निरुब्भंति जेन खिज्जंति पुव्वकम्माइं ।
सो सो मोक्खोवाओ, रोगावत्थासु समणं वा ।।

वृ- 'येन' अनुष्ठानविशेषेण 'दोषाः' रागादयो निरुध्यन्ते, पूर्वोपचितानि च कर्माणि येन क्षीयन्ते, 'स सः' अनुष्ठानविशेषो मोक्षोपायो ज्ञातव्यः । 'रोगावस्थासु' ज्वरादिरोगप्रकारेषु 'शमनमिव' उचितौषधप्रदानापथ्यपरिहाराद्यनुष्ठानमिव; यथा तेन विधीयमानेन ज्वरादिरोगः क्षयमुपगच्छति, एवमुत्सर्गे उत्सर्गमपवादेऽपवादं समाचरतो रागादयो दोषा निरुध्यन्ते पूर्वकर्माणि च क्षीयन्ते । अथवा यथा कस्यापि रोगिणः पथ्यौषधादिकं प्रतिषिध्यते कस्यापि पुनस्तदेवानुज्ञायते, एवमत्रापि यः समर्थस्तस्याकल्प्यं प्रतिषिध्यतेऽसमर्थस्य तु तदेवानुज्ञायते । उक्तञ्च भिषग्वरशास्त्रे-

उत्पद्येत हि साऽवस्था, देश-काला-ऽऽमयान् प्रति ।
यस्यामकार्यं कार्यं स्यात्, कर्म कार्यं च वर्जयेत् ।।

एवंविधं चोत्सर्गा-ऽपवादविभागमगीतार्थो न जानाति ।। अतः -

[भा.३३३२] अगीयस्स न कप्पइ, तिविहं जयणं तु सो न जाणाइ ।
अनुन्नवणाए जयणं, सपक्ख-परपक्खजयणं च ।।

वृ- अगीतार्थस्य प्रस्तुतसूत्रविषयभूतं वस्तु न कल्पते, यतोऽसौ त्रिविधां यतनां न जानीते । तद्यथा-अनुज्ञापनायतनां स्वपक्षयतनां परपक्षयतनां चेति । तिस्रोऽप्येता वक्ष्यमाणस्वरूपाः । परः प्राह-अगीतार्थेनापि तावत् सूत्रमधीतम् अतः कथमसौ न जानीते ? उच्यते-इह सर्वेषामप्यागमानामर्थपरिज्ञानमाचार्यसहायकादेवोपजायते, न यथाकथञ्चित् । उक्तञ्च-

सत्स्वपि फलेषु यद्वन्न ददातिफलान्यकम्पितो वृक्षः ।
तद्वत् सूत्रमपि बुधैरकम्पितं नार्थवद् भवति ।।

इदमेवाह-

[भा.३३३३] निउणो खलु सुत्तत्थो, न हु सक्को उपडिबोधितो नाउं ।
ते सुणह तत्थ दोसा, जे तेसिं तहि वसंताणं ॥

वृ- 'निपुणः' सूक्ष्मः खलु सूत्रस्यार्थो भवति, अत एव न शक्योऽसवाचार्येणाप्रतिबोधितः सम्यक् परिज्ञातुम्; अतोऽगीतार्थ सूत्रमात्रेण पठितेन न यतनामवबुध्यते, अतः 'तेषाम्' अगीतार्थानां 'तत्र' बीजाकीर्णोपाश्रये वसतां ये दोषा भवन्ति तान् शृणुत ॥

[भा.३३३४] अगीयत्था खलु साहू, नवरिं दोसे गुणे अजाणंता ।
रमणिज्जभिक्ख गामो, ठायंतऽह धन्नसालाए ॥

वृ- अगीतार्थाः खलु, के ? 'साधवः' साधुक्रियासु उद्यताः 'नवरं' केवलं सदोषाया निर्दोषाया वा वसतेरनुज्ञापने दोषान् गुणाँश्चाजानन्तः क्वापि ग्रामे भैक्षं प्रभूतं लब्ध्वा भिक्षया 'रमणीयोऽयं ग्रामः' इति कृत्वा 'अथ' अनन्तरं धान्यशालायां तिष्ठन्ति ॥ इदमेव स्पष्टतरमाह-

[भा.३३३५] रमणिज्जभिक्ख गामो, ठायामो इहेव वसहि झोसेह ।
धन्नधराणुन्नवणा, जति रक्खह देमु तो भंते ! ॥

वृ- कश्चिदगीतार्थगच्छो ग्रामानुग्रामिकं विहरन् कमपि ग्रामं सम्प्राप्तः । तत्र बहिर्देवकुलादौ स्थित्वा भिक्षां पर्यटन् प्रभूतम् इष्टं च भैक्षं लब्धवान् । ततस्तैः साधुभि परस्परमुक्तम्-रमणीयोऽयं ग्रामः अत इहैव मासकल्पं तिष्ठामः, परं वसतिरद्यापि न गवेषिता अतस्तां "झोसेह"त्ति देशीवचनत्वाद् गवेषयत । ततस्तैर्वसतिं प्रत्युपेक्षमाणैः कस्याप्यगारिणो धान्यगृहं दृष्टम्, ततस्तस्यानुज्ञापना कृता । गृहपति प्राह-यदि भदन्त ! मदीयं धान्यगृहं तस्कर-गवादिभिरुपद्रूयमाणं रक्षत ततोऽहं प्रयच्छामि नान्यथा ॥ अपि च-

[भा.३३३६] वसहीरक्खणवग्गा, कम्मं न करेमो नेव पवसामो ।
निच्चिंतो होहि तुमं, अम्हे रत्तिं पि जग्गामो ॥

वृ- वयमस्या वसतेः-धान्यशालारूपाया रक्षणे व्यग्राः सन्तः कृष्यादिकं कर्मापि न कुर्महे, न च सुहृदादिभिरामन्त्रिताः क्वापि विवाहादौ कार्ये ग्रामान्तरे प्रवसामः । ततस्तेऽगीतार्था वसत्यनुज्ञापनाविधिमजानन्तो ब्रुवते-निश्चिन्तस्त्वमत्रार्थे भव, वयं रात्रिमपि प्रहरकेण जागरिष्यामः॥

[भा.३३३७] जोतिस-निमित्तमादी, छंदं गणियं व अम्ह साधेत्था ।
अक्खरमादी डिंभे, गाधेस्सह अजतणा सुणणे ॥

वृ- ज्योतिषं निमित्तम् आदिशब्दादन्यदपि गन्धर्वविद्यादिकं तथा छन्दःशास्त्रं गणितशास्त्रं वा वयस्माकं कथयिष्यथ, अक्षराणि नाम-लिपिविज्ञानं तद् आदिशब्दाद् व्याकरणादिकं वा यद्यस्माकं 'डिम्भानि' बालकानि ग्राहयिष्यथ ततस्तिष्ठन्तु भवन्त इति । एवं वसतिस्वामिनोक्ते सति यदि तेऽगीतार्थास्तत् 'प्रतिशृण्वन्ति' 'आमम्, कथयिष्यामो ग्राहयिष्यामो वा' इत्यनुमन्यन्ते ततोऽनुज्ञापनाया अयतना कृता भवति ॥ तत्र चामी दोषाः-

[भा.३३३८] अनुन्नवण अजतणाए, पउत्थ सागारिए घरे चेव ।
तेसिं पि य चीयत्तं, सागारियवज्जियं जातं ॥

वृ-एवमयतनानुज्ञापनया तत्र तेषु स्थितेषु सागारिकश्चिन्तयति-'एते साधवस्तावद् मदीयं धान्यगृहं रक्षन्ति अतः कस्मादहं स्वजनादिकार्ये न गच्छामि ?' इति परिभाव्य कुत्रचिद् ग्रामादौ

प्रवसति। प्रोषिते च तस्मिन् गृह एव वा निश्चिन्ततया धान्यानां व्यापारमवहमाने तेषामपि संयतानां प्रीतिकं भवति-साधु साधु सागारिकवर्जितं जातम् ॥ अस्या एव गाथायाः पूर्वार्द्धं व्याचष्टे-

[भा.३३३९] तेसु ठिएसु पउत्थो, अच्छंतो वा वि न वहती तत्तिं।
जति वि य पविसितुकामो, तह वि य न चएति अतिगंतुं ॥

वृ- 'तेषु' संयतेषु तत्र स्थितेषु स सागारिको निश्चिन्ततया प्रोषितो गृहे वा तिष्ठन् धान्यानां 'तत्तिं' व्यापारं न वहति। यद्वा धान्यं सम्भालयितुं यद्यप्यसौ तत्र प्रवेष्टुकामः तथापि 'नातिगन्तुं' न प्रवेष्टुं शक्नोति ॥ कुतः ? इति चेद् उच्यते-

[भा.३३४०] संथारएहि य तहिं, समंततो आतिकिन्न विइकिन्नं।
सागारितो न एती, दोसे य तहिं न जाणाती ॥

वृ- संस्तारकैः 'तत्र' उपाश्रये समन्ततः 'अतिकीर्णं' परिपाट्या प्रसृतैर्मीलितं 'व्यतिकीर्णं' तैरेवानानुपूर्व्या प्रसृतैर्व्यापृतं दृष्ट्वा सागारिकः 'नैति' नागच्छति, ततो ये तत्र धान्यपरिशटनादयो दोषास्तानसौ न जानीते ॥ गता अनुज्ञापनाया अयतना। अथ संयतलक्षणस्वपक्षविषयां यतनामाह-

[भा.३३४१] ते तत्थ सन्निविट्ठा, गहिया संथारगा जधिच्छाए।
नानादेसी साधू, कासइ चिंता समुप्पन्ना ॥

वृ- 'ते' अगीतार्था 'तत्र' उपाश्रये 'सन्निविष्टाः' स्थिताः, यदृच्छया च तैस्तत्र संस्तारका गृहीताः, न गणावच्छेदिकेन यथारत्नाधिकं प्रदत्ता इति भावः, नानादेशीयाश्च तत्र साधवः, तेषां मध्ये "कासइ"त्ति कस्यचिद् मन्दधर्मणश्चिन्ता समुत्पन्ना ॥ यथा-

[भा.३३४२] अनुहूया धन्नरसा, नवरं मोत्तूण सेडगतिलाणं।
काहामि कोउहल्लं, पासुत्तेसु समारद्धो ॥

वृ- अनुभूतास्तावदपरेषां धान्यानां रसाः, 'नवरं' केवलं "सेडगतिलाणं"ति श्वेतकतिलानां रसं मुक्त्वा, अत एतद्विषयं 'कौतुकम्' अभिलाषं 'करिष्यामि' पूरयिष्यामीत्यर्थः। एवं विचिन्त्य शेषसाधुषु रात्रौ प्रसुप्तेषु समारब्धस्तान् तिलान् भक्षयितुम् ॥ ततश्च-

[भा.३३४३] विगयम्मि कोउहल्ले, छट्ठवतविराधन त्ति पडिगमनं।
वेहानस ओहाणे, गिलाण सेधेण वा दिट्ठो ॥

वृ- 'विगते' व्यतीते सति कौतुके 'षष्ठव्रतस्य विराधना ममाभूत्, एकव्रतभङ्गे च सर्वव्रतभङ्गः' इति कृत्वा 'प्रतिगमनं' भूयोऽपि गृहवासाश्रयणं कुर्यात्, वैहायसं वा मरणमभ्युपगच्छेत्, 'अवधावनं वा' संविग्नविहारं कुर्वीत, पार्श्वस्थादिविहारमाद्रियेत इत्यर्थः। अथवा स संयतस्तिलभक्षणं विदधानो ग्लानेन वा शैक्षेण वा दृष्टो भवेत् ॥ ततश्च-

[भा.३३४४] दट्ठूण वा गिलाणो, खुधितो भुंजेज्ज जा विराधनत।
एणेव सेधमादी, भुंजे अप्पच्चयो वा सिं ॥

वृ- तं साधुं तिलान् भक्षयन्तं दृष्ट्वा ग्लानः क्षुधितः सन् तांस्तिलान् भुञ्जीत, ततश्चापथ्यप्रतिसेवनेन या तस्य परितापनादिका विराधना तन्निष्पन्नं प्रायश्चित्तम्। एवमेव शैक्षादयोऽपि तं तिलान् भुञ्जानं दृष्ट्वा तथैव भुञ्जीरन्, अप्रत्ययो वा तेषां भवेत्-यथैतद् मृषा तथाऽन्यदप्यमीषामेवंविधमिति ॥

[भा.३३४५] उड्डाहं व करेज्ञा, विप्परिणामो व होज्ञ सेहस्स ।
गेण्हंतेन व तेनं, सव्वो पुंजो समारद्धो ॥

वृ- स शैक्षस्तं तिलान् भक्षयन्तं विलोक्यापरापरजनेभ्यः कथयन्नुड्डाहं वा कुर्यात्, विपरिणामो वा शैक्षस्य भवेत्, विपरिणतश्च सम्यक्त्वं चारित्रं लिङ्गं वा परित्यजेत् । तेन च साधुना 'गृह्णता' भक्षयता सर्वोऽपि तिलपुञ्जः खादितुं समारब्धः ॥ ततश्च-

[भा.३३४६] फोडिय मुद्दा तेनं, कज्जे सागारियस्स अतिगमनं ।
केन इमं तेनेहिं, तेनाणं आगमो कत्तो ॥

वृ- तिलपुञ्जस्य या छगणपानीयादिना मुद्रा कृताऽऽसीत् सा 'तेन' तिलान् भक्षयता 'स्फेटिता' अपनीता । तत्र च क्वचित् कार्ये 'सागारिकस्य' शय्यातरस्य 'अतिगमनं' प्रवेशो भवेत् । दृष्टश्च तेन खण्डितस्तिलपुञ्जः । ततः पृष्टाः-केनेदं धान्यं विलुप्तम् ? । साधवो भणन्ति-स्तेनैः । सागारिकः प्राह-स्तेनानामागमः कुतो नामास्मद्गृहे सञ्जातो येनास्माभिर्न ज्ञातः ? इति । ततः सागारिकेण चेतसि निश्चितम्-नूनमेतैरेव भक्षितमिदं धान्यमिति ॥ स च भद्रको वा स्यात् प्रान्तो वा । भद्रकस्तावदिदं ब्रूयात्-

[भा.३३४७] इहरा वि ताव अम्हं, भिक्खं व बलिं व गिण्हह न किंचि ।
एण्हिं खु तारितो मी, गिण्हह छंदेन जा अट्ठो ॥

वृ- इतरथाऽपि तावदस्माकं गृहे भिक्षां वा 'बलिं वा' देवतानिवेदनमुद्धरितं गृह्णीथ, अत इदानीं संसारसागरात् तारतोऽसम्यहम्, अन्येनापि येन भवताम् 'अर्थ' प्रयोजनं तद् भगवन्तः 'छन्देन' स्वेच्छया गृह्णीध्वम् ॥

[भा.३३४८] लहुगा अनुग्गहम्मी, अप्पत्तिग धम्मकंचुए गुरुगा ।
कडुग-फरुसं भणंते, छम्मासा करभरे छेदो ॥

वृ- यद्येवं भद्रकोऽनुग्रहं मन्यते तदा चतुर्लघवः । अथ प्रान्तोऽसौ ततोऽप्रीतिकं कुर्यात्-एते धर्मकञ्चुकप्रविष्टा लोकं मुष्णन्ति; एवमप्रीतिके चतुर्गुरवः । अथासौ 'कटुक-परुषं' 'चौरस्त्वम्, धिग् मुण्ड !, दुरात्मन् !' इत्यादि वचनं भणति तदा षड्गुरवः । अथैवं ब्रूयात्-अहो ! राजकरभरभग्नैरस्माभिरिदानीं श्रमणकरो वोढव्यः; तदा छेदः प्रायश्चित्तम् ॥

[भा.३३४९] मूलं सएज्झएसुं, अनवठ्ठप्पो तिए चउक्के य ।
रच्छा-महापथेसु य, पावति पारंचियं ठाणं ॥

वृ- सइज्झका नाम-सहवासिनः, प्रातिवेश्मिका इत्यर्थः, तैः परिज्ञातम् यथा-श्रमणैर्धान्यं स्तैन्येन भक्षितम्; ततो मूलम् । अथ त्रिके चतुष्के व साधूनां स्तेनवादः प्रसरमुपगतः ततोऽनवस्थाप्यम् । अथ रथ्यासु महापथेषु वा स्तैन्यापयशः समुच्छलितं ततः पाराञ्चिकं स्थानमाचार्यादि प्राप्नोति ॥ अथ कटुक-परुष-करभरपदानि व्याचष्टे-

[भा.३३५०] चोरु त्ति कडुय दुब्बोडितो त्ति फरुसं हतो सि पव्वावी ! ।
समणकरो वोढव्वो, जातो ने करभरहताणं ॥

वृ- 'चौरस्त्वम्' इत्यादि वचनं कटुकम् । यत्तु 'दुर्मुण्डः' इति वा 'हतोऽसि प्रव्राजित !' इति वा वचनं तत् परुषं मन्तव्यम् । तथा स शय्यातरो ब्रूयात्-अस्माकं करभरहतानां सम्प्रति श्रमणानां

करो वोढव्यः सञ्जातः ॥ एषा स्वपक्षविषया अयतनाऽभिहिता । अथ परपक्षविषयामयतनामाह-

[भा.३३५१] परपक्खम्मि अजयणा, दारे उ अवंगुतम्मि चउलहुगा ।
पिहणे वि होंति लहुगा, जंते तसपाणघातो य ॥

वृ- मनुष्य-गवादयो येऽसंयतास्ते परपक्षः तद्विषया अयतना भाव्यते-इह कोलिकादि-जीवविराधनाभयाद् यदि द्वारमपावृतं करोति-न स्थगयतीत्यर्थः ततश्चतुर्लघवः । अथ द्वारस्य पिधानं कुर्वन्ति तदापि चतुर्लघवः । 'यन्त्रे' चंचुइआरकाख्ये सञ्चारिमानामुद्देहिकादीनां त्रसप्राणिनां घातो भवतीति तन्निष्पन्नं प्रायश्चित्तम् ॥

[भा.३३५२] गोणे य साणमादी, वारण लहुगा य जं च अधिकरणं ।
खरए तेनए या, गुरुगा य पदोसओ जं च ॥

वृ- अपिहिते द्वारे गौः प्रविष्टो धान्यं भक्षयेत्, श्वानो वा आदिशब्दाद् मार्जारो वा प्रविश्य धान्यं विकिरेत् खादेद्वा, ते च यदि वार्यन्ते तदा चतुर्लघवः । ते च वारिताः प्रतिनिवृत्य व्रजन्तो हरितमर्दनादिरूपं यदधिकरणं कुर्वन्ति तन्निष्पन्नम्; चशब्दादन्तरायं च तेषां कृतं भवति । तथ शय्यातरस्य यद् व्यक्षरकं-दास-दासीरूपं ये च स्तेनकास्ते धान्यं हर्तुकामा यदि वार्यन्ते तदा चतुर्गुरुकाः । ते च वारिताः प्रद्वेषतो यदभ्याख्यान-परितापनादिकं करिष्यन्ति तन्निष्पन्नं प्रायश्चित्तम्

[भा.३३५३] तेसि अवारणे लहुगा, गोसे सागारियस्स सिट्ठम्मि ।
लहुगा [illegible] जत्तो, असिट्ठे संकणाई [illegible] ॥

वृ- अथैतद्दोषभयात् 'तेषां' व्यक्षरकादीनां वारणं न करोति तदा चतुर्लघवः । ते चावारिताः सन्तः प्रविश्य धान्यं भक्षयेयुरपहरेयुर्वा ततो यदि 'गोसे' प्रत्युषे सागारिकस्य कथयन्ति यथा 'अमुकेनामुकेन च रात्रौ धान्यमपहृतम्' ततश्चतुर्लघुकाः । 'शिष्टे' कथिते सति स रुष्टः सन् यद् दृव्यक्षरकादीनां परितापनादि 'यतः' बन्धन-घातनविशेषतः करिष्यति तन्निष्पन्नं प्रायश्चित्तम् । अथ न कथयन्ति ततोऽपि चतुर्लघुकाः । यच्च साधूनामुपरि शङ्कापदं शय्यातरः करोति-'नूनमेतैरपहृतं यदेवं न कथयन्ति' तत्र चतुर्लघु । निशङ्किते चतुर्गुरु ॥

गवादीनां वारणे दोषानुपदर्शयति-

[भा.३३५४] तिरियनिवारण अभिहनन मारणं जीवघातो नासंते ।
खरिया छोभ विसाऽगणि, खरए पंतावणादीया ॥

वृ- गवादीनां तिरश्चां निवारणे शृङ्गादिना संयतानामभिघातो मारणं वा भवेत् । ते च निवारिता नश्यन्त जीवघातं कुर्युः । दृव्यक्षरिका च निवारिता संयताना 'छोभम्' अभ्याख्यानं दद्यात्-एष श्रमणो मां प्रार्थयते; विषं वा दद्यात्, वसतिं वाऽग्निना प्रज्वालयेत् । दृव्यक्षरको वा प्रद्विष्टः प्रान्तापनादिकं कुर्यात् ॥ अथ स्तेनका येन कारणेन धान्यमपहरन्ति तत् प्रतिपादयति-

[भा.३३५५] आसन्नो य छनूसवो, कज्जं पि य तारिसेण धन्नेणं ।
तेनाण य आगमनं, अच्छह तुण्हिक्कका तेना ॥

वृ- क्षणः-एकदैवसिकः, उत्सवः-बहुदैवसिकः, क्षणयुक्त उत्सवः क्षणोत्सवः, शाकपार्थि-'वादिवद् मध्यपदलोपी समासः, क्षण उत्सवो वा इत्यर्थः । स स्तेनानां प्रत्यासन्नो वर्त्तते, तत्र च तेषां तादृशेन धान्येन कार्यमस्ति ततः स्तेनानामागमनम्, ततश्चागीतार्था भणन्ति-भदन्त ! स्तेनाः

समायाताः सन्ति अतस्तूष्णीकास्तिष्ठथ । न कल्पते साधूनामेवमाख्यातुम्-अयं स्तेनः, अयं चोपचरक इति । अथवा संयतैः 'स्तेना आयाताः सन्ति' इत्युक्ते स्तेना ब्रुवते- संयताः ! तूष्णीकास्तिष्ठथ, अन्यथा युष्मानपद्रावयिष्यामः ॥ एवमुक्त्वा तैः किं कृतम् ? इत्याह-

[भा.३३५६] गहियं च तेहिं धन्नं, घेत्तूण गता जहिं सि गंतव्वं ।
सागारिओ य भणती, सउणी वि य रक्खए नेड्डं ॥

वृ- गृहीतं च 'तैः' स्तेनकैर्धान्यम्, गृहीत्वा च ते गतास्तत्र स्वस्थाने यत्र तेषां गन्तव्यम् । सागारिकश्चात्मीयकार्येण प्रभाते समागतो मुद्राभेदं दृष्ट्वा भणति-भगवन् ! 'शकुनिकाऽपि' पक्षिण्यपि तावदात्मनः 'नीडम्' आश्रयं रक्षति, भवद्भिः पुनरेतदपि न रक्षितमिति भावः ॥

[भा.३३५७] रासी ऊने दट्ठुं, सव्वं नीतं व धन्नखेरिं वा ।
केन इमं तेनेहिं, असिट्ठे भद्देतर इमं तु ॥

वृ- स सागारिकस्तत्र धान्यराशीन् 'ऊनान्' तुच्छान् दृष्ट्वा, सर्वं वा धान्यं 'नीतम्' अपहृतं विलोक्य, यद्वा धान्यस्य खेरिं-परिशाटिं दृष्ट्वा पृच्छति-केनेदमपहृतम् ? । साधवो ब्रुवते-स्तेनैः। स भूयः पृच्छति-के पुनः स्तेनाः ? । ततो यदि नाम्ना वर्णेन वयसा वा निर्दिश्य कथयन्ति ततः स्तेनानां ग्रहणा-ऽऽकर्षणादयो दोषाः । 'असिष्टे' अकथिते 'एतैरेव हृतम्' इति शङ्का स्यात् तत्र भद्रकेतरदोषा भवन्ति । यद्यसौ सागारिको भद्रकस्तदा अनुग्रहं मन्येत । अथ 'इतरः' अभद्रकस्ततोऽप्रीतिकादयो दोषाः ॥ तेषु च भद्रकेतरदोषेष्विदं प्रायश्चित्तम्-

[भा.३३५८] लहुगा अनुग्गहम्मि, गुरुगा अप्पत्तियम्मि कायव्वा ।
कडुग-फरुसं भणंते, छम्मासा करभरे छेदो ॥

[भा.३३५९] मूलं सएज्झएसुं, अणवठ्ठप्पो तिए चउक्के य ।
रच्छा-महापहेसु य, पावति पारंचियं ठाणं ॥

वृ- गाथाद्वयस्य व्याख्या प्राग्वत्

[भा.३३६०] एगमनेगे छेदो, दिय राती विनास-गरहमादीया ।
जं पाविहिंति विहनिग्गतादि वसधिं अलभमाणा ॥

वृ- सागारिकः प्रद्विष्टः सन् एकेषां-तेषामेव अनेकेषां वा-सर्वसाधूनाम्, यद्वा एकस्य-तद्द्रव्यस्य अनेकेषां वा-तद्द्रव्या-ऽन्यद्रव्याणां व्यवच्छेदं विदध्यात् । अथवा दिवा निष्काशयति चतुर्लघु, रात्रौ निष्काशयति चतुर्गुरु । निष्काशिताश्च स्तेन-श्वापदादिभिर्विनाशं लोकाद्वा गर्हामासादयन्ति, 'एते स्तेनाः' इति कृत्वा निष्काशिताः, आदिग्रहणेन ग्रहणा-ऽऽकर्षणादयो दोषाः । यच्च विधं-अध्वा ततो निर्गता आदिशब्दादशिवादिनिर्गता वा तदीयदोषेण वसतिमलभमाना आत्मविराधनादिकं प्राप्स्यन्ति तन्निष्पन्नम् । एतेऽगीतार्थानां दोषा उक्ताः । अथ गीतार्थानधिकृत्य विधिमाह-

[भा.३३६१] गीयत्थेसु वि एवं, निक्कारण कारणे अजतणाए ।
कारणे कडजोगिस्सा, कप्पति तिविहाए जतणाए ॥

वृ- गीतार्था अपि यदि निष्कारणे धान्यशालायां तिष्ठन्ति, कारणे वा स्थिता यतनां न कुर्वन्ति ततस्तेष्वप्येवमेव दोषाः । अथ 'कृतयोगी' गीतार्थ कारणे तिष्ठति तदा तस्य 'त्रिविधया यतनया' अनुज्ञापनादिविषयया वक्ष्यमाणया तत्र स्थातुं कल्पते ॥ इदमेव स्पष्टतरमाह-

[भा.३३६२] निक्कारणम्मि दोसा, पडिबद्धे कारणम्मि निद्दोसा।
ते चेव अजतणाए, पुनो वि सो लग्गती दोसे ॥

वृ- धान्यप्रतिबद्धे गृहे निष्कारणे तिष्ठतामेते दोषा मन्तव्याः । कारणे तु यतनया तिष्ठन्तो निर्दोषाः । अथ कारणे स्थितो यतनां न करोति तदा 'तानेव' पूर्वोक्तान् दोषान् 'लगति' प्राप्नोति। किं पुनस्तत् कारणम् ? इत्याह-

[भा.३३६३] अद्धाणनिग्गतादी, तिक्खुत्तो मग्गिऊण असतीए।
गीतत्था जतणाए, वसंति तो धन्नसालाए ॥

अध्वनिर्गतादयः 'त्रिकृत्वः' त्रीन् वारान् विशुद्धां वसतिं मार्गयित्वा यदि न प्राप्नुवन्ति तदा गीतार्था यतनया धान्यशालायां वसन्ति ॥ तामेव यतनामाह-

[भा.३३६४] तुस-धन्नाइं जहियं, निप्परिसाड-परिसाडगाइं वा।
तेसु पढमं तु ठायति, तेसऽसती दंतखज्जेसु ॥

वृ- येषूपाश्रयेषु 'तुषधान्यानि' व्रीहि-यवादीनि निष्परिशाटीनि परिशाटीनि वा भवन्ति तेषु प्रथमतस्तिष्ठन्ति । तषामभावे यत्र 'दन्तखाद्यानि' तिलादीनि धान्यानि तत्र तिष्ठन्ति ॥ तिष्ठतां च यदि वसतिस्वामी ब्रूयात्-यद्यस्माकम् अस्मद्बालकानां वा ज्योतिषादिकमक्षरादिविज्ञानं वा कथयिष्यथ गृहादिकं वा रक्षिष्यथ ततो वसतिं प्रयच्छाम इति । तत्र साधुभिर्वक्तव्यम्-

[भा.३३६५]न वि जोइसं न गणियं, न अक्खरे न वि य किंचि रक्खामो।
अप्पस्सगा असुणगा, भातणखंभोवमा वसिमो ॥

वृ- वयं नापि ज्योतिषं न गणितं नाक्षराणि वा शिक्षयामो न वा जानीमः, नापि च किञ्चिद् गृहादिकं रक्षामः, किन्तु भाजनस्तम्भोपमा वसामः । यथा भवतां भाजन-स्तम्भ-कुड्यादीनि सौस्थ्य-दौःस्थ्यव्यापारं न वहन्ति, एवं वयमपि भवद्भिर्मन्तव्याः । अत एव भवद्गृहे कस्यापि कार्यस्य विपत्तिं पश्यन्तोऽप्यपश्यकाः । यदा च कोऽपि ब्रूयात्-इदं शय्यातरस्य कथयत तदा वयं शृण्वन्तोऽप्यश्रोतारो मन्तव्याः । यदेयवमभ्युपगच्छति तदा स्थातव्यम् ॥ अत एवाह-

[भा.३३६६] निक्कारणम्मि एवं, कारणे दुलभे भणंतिमं वसभा।
अम्हे ठितेल्लग च्चिय, अधापवत्तं वहह तुब्भे ॥

वृ- 'निष्कारणे' कारणाभावे एवं तिष्ठन्ति । अथाशिवादौ कारणे शुद्धा वसतिर्दुर्लभा ततो धान्यशालायां तिष्ठन्त इत्थं साधारणवचनं वृषभा भणन्ति-वयं तावदत्र स्थिता एव, यूयमपि यथाप्रवृत्तं दिवसदैवसिकं व्यापारं वहथैव ॥ गता अनुज्ञापनायतना । अथ स्वपक्षयतनामाह-

[भा.३२६७] आमं ति अब्भुवगते, भिक्ख-वियारादि निग्गत मिएसु।
भणति गुरू सागारिय, नाउं जे कत्थ किं धन्नं ॥

वृ- 'आमम्' इत्यनुमतार्थद्योतकमव्ययम् । यदि सागारिकेणानुमतम्-मम निश्रयुपकारिणो भूत्वा यूयं तिष्ठत; ततस्तत्र स्थातव्यम् । स्थितानां च तत्रायं विधि-यदा सर्वेऽपि मृगाः-अगीतार्था भिक्षायां विचारभूम्यादौ वा निर्गता भवन्ति तदा 'गुरु' आचार्य सागारिकमन्यव्यपदेशेन भणति। किमर्थम् ? इत्याह-कुत्र किं धान्यं वर्त्तते ? इति ज्ञातुम् । "जे" इति पादपूरणे ॥

[भा.३३६८] सालीणं वीहीणं, तिल-कुलत्थाण मुग्ग-मासाणं।

दिट्ठ मए सन्निचया, अन्ने देसे कुडुंबीणं ॥

वृ- शालीनां व्रीहीणां तिल-कुलत्थानां मुद्गानां माषाणां च सन्निचया अन्यस्मिन् देशे कुटुम्बिनां गृहेषु मया दृष्टाः ॥

[भा.३३६९] एवं च भणितमित्तम्मि कारणे सो भणाति आयरियं ।
अत्थि महं सन्निचया, पेच्छह नानाविहे धन्ने ॥

वृ- एवं चाचार्येण भणितमात्रेऽपि स सागारिकः कथनकारणे क्रमप्राप्ते सति आचार्यं भणति-भगवन् ! सन्ति मे बहवः सन्निचयाः, पश्यत नानाविधानि धान्यानि । एवं ब्रुवन् हस्तसंज्ञया निर्दिशति, यथा-अत्र शालयः सन्ति, अत्र गोधूमाः, अत्र तिला इत्यादि ॥

[भा.३३७०] उवलक्खिया य धन्ना, संथाराणं जहाविधि ग्गहणं ।
जो जस्स उ पाउग्गो, सो तस्स तहिं तु दायव्वो ॥

वृ- आचार्येणोपलक्षितानि तानि धान्यानि, ततः संस्तारकाणां 'यथाविधि' यथारत्नाधिकं ग्रहणे प्राप्तेऽपि तत्र सूरय औत्पत्तिकीं सामाचारीं स्थापयन्ति । कथम् ? इत्याह-यः 'यस्य' शैक्ष-ग्लानादेर्गीतार्थदेर्वा धान्यस्य दूरेऽदूरे वा यत्र संस्तारकः प्रायोग्यः स तस्य तत्रावकाशे दातव्यः॥

[भा.३३७१] निक्खम-पवेसवज्जण, दूरेण अभाविया तु धन्नाणं ।
धन्नंतेन परिणता, चिलिमिणि दिवरत्तऽसुन्नं तु ॥

वृ- यत्र सागारिको धान्यग्रहणार्थं निष्क्रामति प्रविशति वा तमवकाशं वर्जयित्वा साधुभिरासितव्यं शयितव्यं वा । ये पुनः 'अभाविताः' अगीतार्थास्ते धान्यानां दूरेण स्थाप्यन्ते । ये तु 'परिणताः' धर्मश्रद्धालवः स्थिरचेतसश्च ते धान्यानाम् अन्तेन-पार्श्वेन क्रियन्ते । धान्यानां चापान्तराले चिलिमिलिका दातव्या । गीतार्थपरिणामकैश्च दिवा च रात्रौ चाशून्यं कर्त्तव्यम् ॥

[भा.३३७२] ते तत्थ सन्निविट्ठा, गहिया संथारगा विहीपुव्वं ।
जग्गमाण वसंती, सपक्खजतणाए गीयत्था ॥

वृ- 'ते' साधवः 'तत्र' उपाश्रये सन्निविष्टाः सन्तः स्वाध्यायादिकं कुर्वन्तीति वाक्यशेषः । तैश्च संस्तारकाः 'विधिपूर्वं' यथा पूर्वोक्ता दोषा न भवन्ति तथा गृहीताः । तत्र च गीतार्था 'स्वपक्षयतनायै' स्वपक्षविषयरक्षार्थं 'जाग्रतः' सजागराः 'वसन्ति' स्वपन्ति ॥

[भा.३३७३] ठाणं वा ठायंती, निसिज्ज अहवा सजागर सुवंति ।
बहुसो अभिद्दवेंते, वयणमिणं वायणं देमि ॥

वृ- ये वा दृढसंहननास्ते 'स्थानं तिष्ठन्ति' कायोत्सर्गं कुर्वन्तीत्यर्थः । अथवा ''निसिज्ज''त्ति निषन्नाः ते सूत्रार्थमनुप्रेक्षमाणास्तिष्ठन्ति । यश्च शैक्षादिरपरिणतस्तेषां धान्यराशीनां समीपे व्रजति तत्र गुरवो वृषभा वा सजागराः स्वपन्तस्तथा काशितादिसब्दं कुर्वन्ति यथाऽसौ प्रतिनिवर्त्तते । अथासौ 'बहुशः' भूयो भूयोऽभिद्रवति ततो गुरुभि सामान्यत इदं वचनं वक्तव्यम्-आर्या ! उत्तिष्ठत येन युष्मभ्यं वाचनां प्रयच्छामि । यद्वा तमेव साधुं भणन्ति- आर्य ! तुभ्यमहं वाचनां प्रयच्छामि ? ॥

[भा.३३७४] फिडियं धन्नहुं वा, जतणा वारेंति न उ फुडं बेंति ।
मा नं सोही अन्नो, नित्थक्को लज्ज गमनादी ॥

वृ- 'स्फिटितं' दिङ्मूढतया द्वारात् परिभ्रष्टं 'धान्यार्थिनं वा' धान्यभक्षणाभिलाषिणं साधुं यतनया वारयन्ति, न पुनस्तस्य सम्मुखं 'स्फुटं' रूक्षवचनं ब्रुवते । कुतः ? इत्याह-मा स्फुटमभिधीयमानमन्यः श्रोष्यति, स च श्रुत्वा अन्येषां कथयेत्, ततश्च परम्परया सर्वैरपि साधुभिर्ज्ञाते 'नित्थक्कः' निर्लज्जो भवेत् । यद्वा 'ज्ञातोऽस्यहम्' इति लज्जया प्रतिगमन-वैहायसादीनि विदध्यात् ।। कथं पुनर्वारयन्ति ? इत्याह-

[भा.३३७५] दारं न होइ एत्तो, निद्दामत्ताणि पुंछ अच्छीणि ।
भण जं व संकियं ते, गिण्हह वेरत्तियं भंते ! ।।

वृ- यः स्फिटितो धान्यार्थी वा साधुः स वक्तव्यः-आर्य ! यत्र भवान् गच्छति इतो द्वारं न भवति, निद्राप्रमत्ते वाऽक्षिणी 'प्रोञ्छ' हस्तेन परिस्पृश्योन्मीलयेत्यर्थः, यच्च किमपि ते सूत्रेऽर्थे वा शङ्कितं तदस्माकमग्रे भण यएन निःशङ्कितं कुर्महे । यद्वा साधवो वक्तव्याः-'भदन्ताः !' आर्या! गृह्णीध्वं वैरात्रिकं कालं येन स्वाध्यायः क्रियते ।। गता स्वपक्षयतना । अथ परपक्षयतनामाह-

[भा.३३७६] परपक्खम्मि वि दारं, पिहंति जतणाए दो वि वारेंति ।
तह वि य अठायमाणे, उवेह पुट्ठा व साहिंति ।।

वृ- 'परपक्षे' गो-श्वान-मार्जारादौ प्रतिश्रयं प्रविशति यतनया द्वारं पिदधति । अथ द्वारं पिधातव्यं न भवति ततः 'द्वावपि' तिर्यङ्-मनुष्यौ दासी-दासौ वा स्त्री-पुरुषौ वा आक्रान्तिका-ऽनाक्रान्तिकस्तेनौ वा प्रविशन्तौ निवारयन्ति । यदि तथापि 'न तिष्ठन्ति' धान्यग्रहणाद् नोपरमन्ते तत उपेक्षां कुर्वन्ति, तूष्णीकास्तिष्ठन्तीति भावः । सागारिकेण च 'केनेदं धान्यं नीतम् ?' इति पृष्टाः सन्तः कथयन्ति-अमुकेनामुकया वा इति सङ्ग्रहगाथासमासार्थः ।। अथैनामेव विवरीषुराह-

[भा.३३७७] पेहिय पमज्जिया णं, उवओगं काउं सणिय ढक्केंति ।
तिरिय नर दोन्नि एते, खर-खरि पुं-थी निसिट्ठितरे ।।

वृ- चक्षुषा प्रत्युपेक्ष्य रजोहरणेन प्रमृज्य शनैर्यथा जीवानां विराधना न स्यात् तथा 'तं' द्वारं 'ढक्कयन्ति' स्थगयन्ति । अथ तदानीमचक्षुर्विषयं ततः श्रोत्रादिभिरिन्द्रियैरुपयोगं कृत्वा द्वारपिधानं कुर्वन्ति । तथा द्वौ नाम-तिर्यङ्-नरौ, अथवा खरः-दासः खरिका-दासी एतौ, यद्वा पुरुष-स्त्रीरूपौ, अथवा निसृष्टः इतरश्च-अनिसृष्टः । निसृष्टो नाम-यस्य शय्यातरेण प्रवेशोऽनुज्ञातः, अनिसृष्टस्तद्विपरीतः । अथवा निसृष्टाः-आक्रान्तिकाः स्तेनाः, अनिसृष्टाः अनाक्रान्तिकाः । एते धान्यग्रहणं कुर्वन्तो वारणीयाः ।। कथम् ? इत्याह-

[भा.३३७८] गेण्हंतेसु य दोसु वि, वयणमिणं तत्थ बिंति गीयत्था ।
बहुगं च नेसि धन्नं, किं पगतं होहिती कल्लं ।।

वृ- स्त्री-पुरुषादिरूपयोर्द्वयोरपि धान्यं गृह्णानयोर्गीतार्था इदं वचनं ब्रुवते-भो भद्र ! बह्विदं धान्यमद्य नयसि किं कल्ये 'प्रकृतं' प्रकरणं भविष्यति ? ।।

[भा.३३७९] नीसट्ठेसु उवेहं, सत्थेण व तासिता उ तुण्हिक्का ।
बहुसो भणाति महिलं, जह तं वयणं सुणति अन्नो ।।

वृ- निसृष्टाः-आक्रान्तिकस्तेनाः ये बलादपि हरन्ति तेषु समागतेषु उपेक्षां कुर्वन्ति-तूष्णीकास्तिष्ठन्ति । अथवा खड्गादिना शस्त्रेण त्रासिताः सन्त इतरेष्वप्यनाक्रान्तिकेषु तूष्णीका

भवन्ति । अथ महिला काचित् तत्र धान्यं नयति ततस्तां महिलां तथा भणन्ति यथा तद् वचनमन्यः शृणोति ।। इदमेव व्यक्तीकरोति-

[भा.३३८०]	साहूणं वसहीए, रत्तिं महिला न कप्पती एंती ।
बहुगं च नेसि धन्नं, किं पाहुणगा विकालो य ।।

वृ- साधूनां वसतौ रात्रौ 'महिला' स्त्री न कल्पते ''एंती'' आगच्छन्ती, त्वं च बहिदं धान्यं गृह्णासि किं प्राघुणकाः समायाताः ? विकालश्च सम्प्रति वर्त्तते ततो नेदानीं ते ग्रहीतुमवसर इति।।

[भा.३३८१]	तेनेसु निसट्ठेसुं, पुव्वा-ऽवररत्तिमल्लियंतेसु ।
तेनबियरक्खणट्ठा, वयणमिणं बेंति गीतत्था ।।

वृ- 'निसृष्टेषु' आक्रान्तिकेषु स्तेनेषु पूर्वरात्रमपररात्रं वा तत्राऽऽलीयमानेषु स्तेनेभ्यः सकाशाद् बीजानां रक्षणार्थं गीतार्था उच्चशब्देनेदं वचनं ब्रुवते ।। किं तत् ? इत्याह-

[भा.३३८२]	जागरह नरा ! निच्चं, जागरमाणस्स वड्ढते बुद्धी ।
जो सुवति न सो धन्नो, जो जग्गति सो सया धन्नो ।।

वृ- भो नराः ! नित्यं 'जागृत' जाग्रतस्तिष्ठत, यतो जाग्रतो बुद्धि सूत्रा-ऽर्थानुप्रेक्षादिना वर्द्धते, अत एव यः स्वपिति नासौ 'धन्यः' ज्ञानादिधनार्हः, यस्तु जागर्त्ति स सदा धन्यः ।।

[भा.३३८३]	सीतंति सुवंताणं, अत्था पुरिसाण लोगसारत्था ।
तम्हा जागरमाणा, विधुनय पोराणयं कम्मं ।।

वृ- स्वपतां पुरुषाणाम् 'अर्था' ज्ञानादयः 'लोकसारार्था' त्रैलोक्यप्रधानप्रयोजनभूताः 'सीदन्ति' हानिमुपगच्छन्ति । यत एवं तस्माद् जाग्रतः सन्तः पुरातनं कर्म विधूनयत ।।

[भा.३३८४]	सुवति सुवंतस्स सुतं, संकित खलियं भवे पमत्तस्स ।
जागरमाणस्स सुतं, थिर-परिचितमप्पमत्तस्स ।।

वृ- 'स्वपतः' निद्रायमाणस्य 'श्रुतम्' आचारादिकं 'स्वपिति' विस्मरति । 'प्रमत्तस्य' विकथादिप्रमादनिमग्नस्य 'शङ्कितं' 'किमत्र प्रदेशे इदमालापकपदमर्थपदं वा भवति ? उत न?' इति संशयक्रोडीकृतम्; स्खलितं वा भवति, न परावर्त्तयतः शीघ्रमागच्छति किन्तु संस्मरणेनेति भावः । 'जाग्रतस्तु' विकथादिप्रमादेनाप्रमत्तस्य श्रुतं स्थिर-परिचितं भवति । स्थिरं नाम-निशङ्कितम् अविस्मरणधर्मकं वा, परिचितं नाम-परावर्त्तयमानं क्रमेणोत्क्रमेण वा समागच्छति द्रुतं वा समाप्तिं याति ।।

[भा.३३८५]	नालस्सेण समं सुक्खं, न विज्जा सह निद्दया ।
न वेरग्गं ममत्तेणं, नारंभेण दयालुया ।।

वृ- नालस्येन समं सौख्यं, न विद्या सह निद्रया ।
न वैराग्यं ममत्वेन, नारम्भेण दयालुता ।। इति ।। अपि च-

[भा.३३८६]	जागरिया धम्मीणं, आहम्मीणं च सुत्तया सेया ।
वच्छाहिवभगिणीए, अकहिंसु जिनो जयंतीए ।

वृ- धार्मिकाणां जागरिका श्रेयसी, अधार्मिकाणां तु सुप्तता श्रेयसी, एवं वत्साधिपस्य-शतानीकनृपतेर्भगिन्याः जयन्तीनामिकायाः 'जिनः' वर्द्धमानस्वामी कथितवान् ।

अत्र कथानकम्- वच्छाजनवए कोसंबी नयरी। सयानिओ राया। तस्स जयंती नाम भगिनी परमसाविया। अन्नया तत्थ भगवं वद्धमाणसामी समोसढो। यंती हट्ठ-तुट्ठा निग्गया भगवंतं वंदित्ता पुच्छइ-सुत्तया भंते! सेया? जागरिया सेया?। भगवया वागरियं-जयंती! धम्मियाणं जागरिया सेया न सुत्तया, अधम्मियाणं सुत्तया सेयान जागरिया। एवं पन्नत्तीए आलावगा भाणियव्व। किञ्च-

[भा.३३८७] सुवइ य अयगरभूओ सुयं च से नासई अमयभूयं।
होहिइ गोणब्भूओ, नट्ठम्मि सुए अमयभूए॥

वृ- यः खलु अजगरभूतः स निश्चिन्तः निर्भरं स्वपिति नान्यः। तस्य च एवंस्वपतः श्रुतमपि 'अमृतभूतं' माधुर्यादिगुणैः सुधासहोदरं नश्यति। नष्टे च श्रुतेऽमृतभूते 'गोभूतः' बलीवर्दकल्पोऽसौ भविष्यति॥ एवमादीनि वाक्यानि गीतार्थास्तत्र महता शब्देनोद्घोषयन्ति। यद्येवमुपरताः स्तेनास्ततो लष्टम्, अथ नोपरतास्ततः किं कर्त्तव्यम्? इत्याह–

[भा.३३८८] तासेऊण अवहिए, अचेइय हिए व गोसि साहंति।
जाणंता वि य तेनं, साहंति न वन्न-रूवेहिं॥

वृ- यद्याक्रान्तिकस्तेनैः साधून् खड्गादिशस्त्रेण त्रासयित्वा धान्यमपहृतम्, अनाक्रान्तिकस्तेना वा समागच्छन्तः संयतैः न चेतिताः-न ज्ञाताः एवं तैरप्यपहृते 'गोसे' परभाते शय्यातरस्य कथयन्ति, यथा-स्तेनैर्धान्यमपहृतम्। अथासौ भूयः प्रश्नयेत्-के पुनः स्तेनाः?। ततो यद्यपि तान् वर्ण-रूपादिभिर्जानन्ति तथापि न कथयन्ति, मा भूवन् ग्रहणा-ऽऽकर्षणादयस्तेषामुपद्रवाः। अथ वर्णादिभिरकथितेषु तेषु साधवः स्तैन्यार्थकारितया शङ्क्यन्ते ततो यतनया कथयितव्याः॥

इदमेव भावयति-

[भा.३३८९] सुन सावग! जं वत्तं, तेनाणं संजयाण इह अज्ज।
तेनेहि पविट्ठेहिं, जाहे नीएक्कसिं धन्नं॥

[भा.३३९०] ताहे उवगरणाणिं, भिन्नाणि हियाणि चेव अन्नाणि।
हरिओवही वि जाहे, तेमा न लभंति ते पसरं॥

[भा.३३९१] गहियाऽऽउह-प्पहरणा, जाधे वधाए समुट्ठिया अम्हं।
नत्थि अकम्मं ति ततो, एतेसि ठिता मु तुण्हिक्का॥

वृ- हे श्रावक! शृणु स्तेनानां संयतानां च इह अद्य यद् वृत्तम्-यदा किल स्तेनैः प्रविष्टैरेकशो धान्यं 'नीतं' बहिर्निष्काशितं तत उपकरणान्यप्यस्मत्सम्बन्धीनि तैः कानिचिद् भिन्नानि, अन्यानि पुनरपहृतानि। ततो हृतोपधयोऽपि ते स्तेना यदा द्वितीयं वारं धान्यं हर्तुकामा अप्यस्माकं पार्श्वतः प्रसरं न लभन्ते तदा गृहीतायुध-प्रहरणा अस्माकं वधाय ते समुत्थिताः। अभिहितं च तैः-श्रमणाः! तूष्णीम्भावमास्थायापसरत यूयम्, अन्यथा सर्वानपद्रावयिष्याम इति। ततश्चिन्तितमस्माभि-र्नास्त्यमीषां पापकर्मकारिणामकर्मेति। ततो वयमेतेषु तूष्णीकाः स्थिताः॥

एवमाचार्येणोक्ते सति शय्यातरः किमुक्तवान्? इत्याह-

[भा.३३९२] सेज्जायरो य भणती, अन्नं धन्नं पुनो वि होहिति ने।
एसो अनुग्गहो मे, जं साधु न दुक्खविओ को वि॥

**वृ-** शय्यातरः सूरीन् भणति-भगवन् ! अस्माकमन्यदपि धान्यं पुनरपि भविष्यति, परमेष महाननुग्रहो मे संवृत्तः, यत् कोऽपि युष्मदीयः साधुः स्तेनैर्न दुःखापित इति ॥

**मू. (५३)** *अह पुन एवं जाणिज्जा नो रासिकडाइं नो पुंजकडाइं नो भित्तिकडाइं नो कुलियकडाइं कोट्ठाउत्ताणि वा पल्लाउत्ताणि वा मंचाउत्ताणि वा मालाउत्ताणि वा ओलित्ताणि वा लित्ताणि वा पिहियाणि वा लंछियाणि वा मुद्दियाणि वा, कप्पइ निग्गंथाण वा निग्गंथीण वा वासावासं वत्थए।*

**वृ-** अथ पुनरेवं जानीयात्-नो राशीकृतानि नो पुञ्जीकृतानि नो भित्तिकृतानि नो कुलिकाकृतानि कोष्ठागुप्तानि वा पल्यागुप्तानि वा मञ्चागुप्तानि वा मालागुप्तानि वा अवलिप्तानि वा लिप्तानि वा पिहितानि वा लाञ्छितानि वा मुद्रितानि वा । तत्र कोष्ठे-कुशूले आगुप्तानि-प्रक्षिप्य रक्षितानि कोष्ठागुप्तानि । एवमुत्तरत्रापि भावनीयम् । नवरं पल्यं-वंशकटकादिकृतो धान्याधारविशेषः, मञ्च-स्थूणानामुपरिस्थापितवंशकादिमयो लोकप्रसिद्धः, मालकः-गृहस्योपरितनो भागः, 'अवलिप्तानि नाम' द्वारदेशे पिधानेन सह गोमयादिना कृतोपलेपानि, 'लिप्तानि' मृत्तिकया सर्वतः खरण्टितानि, 'पिहितानि' स्थगितानि, 'लाञ्छितानि' रेखा-ऽक्षरादिभिः कृतलाञ्छनानि, 'मुद्रितानि' मृत्तिकादिमुद्रायुक्तानि । एवंविधेषु धान्येषु कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा वर्षावासं वस्तुमिति सूत्रार्थ ॥ अथ भाष्यम्-

[भा.३३९३] कोट्ठाउत्ता य जहिं, पल्ले माले तधेव मंचे य ।
ओलित्त पिहिय मुद्दिय, एरिसए न कप्पती वासो ॥

**वृ-** यत्रोपाश्रये कोष्ठागुप्तानि पल्यागुप्तानि मालागुप्तानि मञ्चागुप्तानि अवलिप्तानि पिहितानि मुद्रितानि, उपलक्षणत्वाद् लिप्तानि लाञ्छितानि वा धान्यानि सम्भवन्ति, ईदृशे न कल्पते वासः । अथ सूत्रस्यैव विषमपदानि व्याचष्टे-

[भा.३३९४] छगणादी ओलित्ता, लित्ता मट्टियकता उ ते चेव ।
कोट्ठियमादी पिहिता, लित्ता वा पल्ल-कडपल्ला ॥

[भा.३३९५] ओलिंपिऊण जहिं अक्खरा कया लंछियं तयं बिंति ।
जहियं मुद्दा पडिया, होति तगं मुद्दियं धन्नं ॥

**वृ-** द्वारदेशे यानि छगणादिना लिप्तानि तान्यवलिप्तानि । यानि तु मृत्तिकया कृतानि-खरण्टितानि तानि लिप्तानि । कोष्ठिकादीनि यानि द्वारदेशे स्थगितानि तानि पिहितानि । पल्यकटपल्यानि तु लिप्तानि भवन्ति । इह पल्यात् कटपल्यमुच्चतरं भवतीति विशेषः ॥ अवलिप्य 'यत्र' धान्येऽक्षराणि कृतानि तद् लाञ्छितमिति ब्रुवते । यत्र तु धान्ये मुद्रा पतिता तद् मुद्रितं भवति ॥

[भा.३३९६] उडुबद्धम्मि अतीए, वासावासे उवट्ठिते संते ।
ठायंतगाण लहुगा, कास अगीयत्थ सुत्तं तु ॥

**वृ-** ऋतुबद्धे कालेऽतीते वर्षावासे उपस्थिते सति यदि कोष्ठागुप्तादिधान्यकुक्ते प्रतिश्रये तिष्ठन्ति तदा चतुर्लघवः । कस्य पुनरेतत् प्रायश्चित्तम् ? । सूरिराह-अगीतार्थस्य 'सूत्रं तु' "कल्पते कोष्ठागुप्तादिधान्येषु वर्षावासे वस्तुम्" इतिलक्षणं गीतार्थविषयं मन्तव्यमिति वाक्यशेषः ॥ इत ऊर्ध्वम्- "नत्थि अगीयत्थो वा, गीतो वा कोऽपि वज्जिओ सुत्ते ।" पादिका गाथाः पूर्वोक्ता एव तावदध्येतव्याः यावत्-

ते तत्थ सन्निविट्ठा, गहिता संथारगा जहिच्छाए ।
नानादेसी साधू, कासइ इच्छा समुप्पन्ना ॥

कीदृशी पुनरिच्छा तस्य समुद्भूता ? इत्युच्यते-

[भा.३३९७] अनुभूता धन्नरसा, नवरं मुत्तूण गंधसालीणं ।
काहामि कोउहल्लं, थेरीए परंधनं भणियं ॥

वृ- अनुभूतास्तावत् सर्वेषामपि धान्यानां रसाः, नवरं गन्धशालीनां रसं मुक्त्वा, तेऽद्यापि नास्वादिता इति भावः । अतः 'करिष्यामि' पूरयिष्यामि कौतूहलमिति विचिन्त्य तेन कोष्ठपल्यादेः शालीनाकृष्य स्थविराया अग्रे 'प्ररन्धनं' 'पाकं कुरुष्व' इति वचो भणितम् ॥ इदमेव स्पष्टयति-

[भा.३३९८] इहरा कहासु सुणिमो, इमे हु ते कलमसालिणो सुरभी ।
थोवे वि नत्थि तित्ती, को य रसो अन्नमन्नाणं ॥

वृ- 'इतरथा' अद्यदिनात् पूर्वं वयं गन्धशालीन् 'कथासु' वार्तान्तरेषु शृणुमः, इमे तु प्रत्यक्षमुपलभ्यमानाः 'ते' कथान्तरश्रुताः कलमशालयः सुरभयः, तथा स्तोकेऽप्यत्र कलमशाली नास्ति तृप्तिः, कश्च 'रसः' आस्वादोऽन्योऽन्यमिश्रितानाममीषाम् ? । इत्थं विचिन्त्य पल्यात् तान् शालीनाकृष्य स्थविरायाः समर्पयति । साऽप्युपस्कृत्य तस्य संयतस्य दत्वा शेषमात्मना भुङ्क्ते । ततोऽसौ लब्धास्वादो दिवसे दिवसे एवमेव विदधाति ॥ ततः किमभूद् ? इत्याह-

[भा.३३९९] निग्घोलियं च पल्लं, कज्जे सागारियस्स अतिगमनं ।
सागारिओ विसन्नो, भीतो पुन पासए कूरं ॥

वृ- तेन संयतेनैवं शालीनपहरता तत् पल्यं 'निर्घोलितं' रिक्तीकृतम् । ततः कचिदात्मीयकार्ये सागारिकस्य तत्र 'अतिगमनं' प्रवेशोऽभवत् । ततः सागारिकः पल्यं रिक्तीकृत दृष्ट्वा 'विषन्नः' विषादमुपगतवान् । भीतश्च 'मा स्तेनादयोऽत्र प्रविष्टा भवेयुः' इति शङ्कया तत्र परिभ्रमन् शालिकूरमानीतं पश्यति ॥

[भा.३४००] सो भणइ कओ लद्धो, एसो अम्हं खु लद्धिसंपन्नो ।
ओभावणं व कुज्जा, धिरत्थु ते एरिसो लाभो ॥

वृ- 'सः' सागारिको भणति-कुत एष शालिकूरो लब्धः ? । ततः साधवस्तदीयं वृत्तान्तमजानाना ब्रुवते-एष साधुरस्माकं लब्धिसम्पन्नोऽतः प्रतिदिनमीदृशं शालिकूरमानयति । ततः सागारिकस्तं साध्वाभासं ब्रूते-धिगस्तु मुण्ड ! तवेदृशं लाभं येन प्रतिदिवसं शालीनपहृत्यास्माकं पल्यं रिक्तीकृतमिति । अपभ्राजनां वाऽसौ लोकमध्ये कुर्यात्, यथा-स्तेनका अमी । अत्र च भद्रक-प्रान्तकृता दोषा भवन्ति ॥ भद्रकस्तावदिदमभिदध्यात्-

[भा.३४०१] इहरह वि ताव अम्हं, भिक्खं व बलिं व गिण्हह न किंचि ।
इण्हिं खु तारिओ मि, ठवेमि अन्ने वि जा धन्ने ॥

वृ- उक्तार्था ॥ यस्तु प्रान्तो भवति स ब्रूयात्-अहो ! धर्मकञ्चुकप्रविष्टा अमी लोकं मुष्णन्तीत्यादि । अत्र- "लहुगा अनुग्गहम्मी, अप्पत्तिय धम्मकंचुए गुरुगा ।" इत्यारभ्य

"सेज्जायरो पभणई, अन्नं धन्नं पुनो वि होहिइ ने ।
एसो अनुग्गहो मे, जा साहु न दुक्खविओ कोइ ॥

इति पर्यन्ता गाथास्तदवस्था एवात्र द्रष्टव्याः ॥

**मू. (५४)** *उवस्सयस्स अंतोवगडाए सुरावियडकुंभे वा सोवीरकवियडकुंभे वा उवनिक्खित्ते सिया, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए। हुरत्था य उवस्सयं पडिलेहमाने नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए। जे तत्थ एगरायाओ वा दुरायाओ वा परं वसइ से संतरा छेए वा परिहारे वा ॥*

**वृ-** एवमुदकादिसूत्राण्यप्युच्चारणीयानि। अथामीषां कः सम्बन्धः? इत्याह-

**[भा.३४०२]** पगयं उवस्सएहिं, वाघाया तेसि होंति अन्नोन्ना।
साहारण-पत्तेगा, जा पिंडो एस संबंधो ॥

**वृ-** इहोपाश्रयैः 'प्रकृतम्' अधिकारो वर्तते। 'तेषां च' उपाश्रयाणां 'व्याघाताः' दोषाः 'अन्योऽन्ये' अपरापरे बीज-विकटोदकप्रतिबद्धतादयो भवन्ति। तेषु च यत्राल्पतरा दोषाः भवन्ति तत्र स्थातव्यम् इति ज्ञापनार्थं साधारणसूत्र-प्रत्येकसूत्राणामारम्भः क्रियते-"जा पिंडो"त्ति "उवस्सयस्स अंतोवगडाए पिंडए वा लोयए वा०" इत्यादिकं वक्ष्यमाणं पिण्डसूत्रं यावद् एष सम्बन्धो मन्तव्यः। साधारणसूत्राणि नाम-यत्रैकसूत्रे द्व्यादिप्रभृतीनि बहूनि पदानि भवन्ति। प्रत्येकसूत्राणि तु-यत्रैकसूत्रे एकमेव पदम्। ततश्चात्र विकटसूत्रमुदकसूत्रं पिण्डसूत्रमित्येतानि त्रीणि साधारणसूत्राणि, प्रदीपसूत्रं ज्योतिसूत्रं च प्रत्येकसूत्रे॥ एष पञ्चानामपि सूत्राणां सम्बन्धः सामान्यत उक्तः। अथ विशेषतः सम्बन्धमाह-

**[भा.३४०३]** सालुच्छूहि व कीरति, विगडं भुत्त तिसितोदयं पिबति।
आहारिमम्मि दोसा, जह तह पिज्जे वि जोगोऽयं ॥

**वृ-** शालिभिरिक्षुभिर्वा विकटं क्रियते, अतो धान्यसूत्रानन्तरमिदं विकटसूत्रमारभ्यते। शालिकूरादिकमाहारं भुक्त्वा तृषितो भवेत्, तृषितश्चोदकं पिबतीति उदकसूत्रं निरूपणीयम्। यद्वा 'आहारिमे' तिलादौ भुक्ते सति यथा दोषा भवन्ति तथा 'पेयेऽपि' मद्यादौ पीयमाने दोषा भवन्त्येवेति तत्प्रतिबद्धे प्रतिश्रयेऽपि न स्थातव्यमिति॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-सुराविकटं पिष्टनिष्पन्नम्, सौवीरकविकटं तु पिष्टवर्जैर्गुडादिद्रव्यैर्निष्पन्नम्। ततः सुराविकटकुम्भो वा सौवीरकविकटकुम्भो वा यत्रोपाश्रयस्यान्तर्वगडायामुपनिक्षिप्तः स्यात् तत्र नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथालन्दमपि कालं वस्तुम्। "हुरत्था य"त्ति देशीपदं बहिरर्थाभिधायकम्, चशब्दो वाक्यभेदद्योतकः, ततोऽयमर्थः- अथ बहिरन्योपाश्रयं प्रत्युपेक्षमाणोऽपि नो लभेत तत एवं "से" तस्य साधोः कल्पते एकरात्रं वा द्विरात्रं वा तत्र वस्तुम्। यस्तत्रैकरात्राद्वा द्विरात्राद्वा 'परम्' ऊर्ध्वं वसति "से" तस्य संयतस्य 'स्वान्तरात्' स्वस्वकृतं यदन्तरं-त्रिरात्र-चतूरात्रादिकालावस्थानरूपं तस्मात् 'छेदो वा' पञ्चरात्रिन्दिवादि 'परिहारो वा' मासलघुकादिस्तपोविशेषो भवतीति सूत्रार्थः॥ अथ विस्तरार्थं भाष्यकृद् बिभणिषुराह-

**[भा.३४०४]** देसीभासाई कयं, जा बहिया सा भवे हुरत्था उ।
बंधऽनुलोमेण कयं, परिहारो होइ पुव्वं तु ॥

**वृ-** "हुरत्था" इति यत् पदं तद् देशीभाषया 'कृतं' निबद्धं बहिरर्थाभिधायकम्। ततो या

विवक्षितोपाश्रयाद् बहिर्वर्तिनी वगडा सा "इुरत्था" इति शब्देनोच्यते । अथ परः प्राह-परिहारस्तावत् तपोविशेष उच्यते, छेदस्तु पर्यायच्छेदरुपः, ततः सूत्रे "से संतरा परिहारे वा छेए वा" इति पठितुमुचितम्, किमर्थं व्यत्यासेन पाठः ? इत्याशङ्कयाह-बन्धानुलोम्येन सूत्रे परिहारपदात् पूर्वं छेदपदं कृतम् । किमुक्तं भवति ? -एवंविधो हि पाठः सुललितपदविन्यासतया सुश्लिष्टो भवतीति कृत्वा सूत्रकृता प्रथमं छेदपदमुपन्यस्तम् ॥

[भा.३४०५] अहवण वारिज्जंतो, निक्कारणओ व तिण्ह व परेणं ।
छेयं चिय आवज्जे, छेयमओ पुव्वमाहंसु ॥

वृ- अथवा यदि तत्र विकटयुक्तोपाश्रये गुर्वादिना वार्यमाणः 'निष्कारणतो वा' दर्पतस्तिष्ठति, त्रयणां वाऽहोरात्राणां परतस्तिष्ठति, ततः छेदाख्यमेव प्रायश्चित्तमापद्यते, अतश्छेदपदं 'पूर्वं' प्रथममुक्तवन्तो भगवन्तो भद्रबाहुस्वामिनः ॥ अथ सुरा-सौवीरकपदे व्याचष्टे-

[भा.३४०६] पिट्ठेण सुरा होती, सोवीरं पिट्ठवज्जियं जाणे ।
ठायंतगाण लहुगा, कास अगीयत्थ सुत्तं तु ॥

वृ- व्रीह्यादिसम्बन्धिना पिष्टेन यद् विकटं भवति सा सुरा । यत्तु पिष्टवर्जितं द्राक्षा-खर्जूरादिभिर्द्रव्यैर्निष्पाद्यते तद् मद्यं सौवीरकविकटं जानीयात् । एतद् द्विविधमपि यत्रोपनिक्षिप्तं भवति तत्रोपाश्रये तिष्ठतां चतुर्लधुकाः । कस्य पुनरेतत् प्रायश्चित्तम् ? इत्याह-अगीतार्थस्य । 'सूत्रं तु' "कप्पइ एगरायं वा दुरायं वा वत्थए" इत्यादिलक्षणं गीतार्थविषयं मन्तव्यम् ॥ इत ऊर्ध्वं "नत्थि अगीयत्थो वा०" इत्यादिकाः "कासइ इच्छा समुप्पन्ना" इतिपर्यन्ता गाथास्तदवस्था एवात्र द्रष्टव्याः । अथ कीदृशी तस्येच्छा समुत्पन्ना ? इत्याह-

[भा.३४०७] अनुभूआ मज्जरसा, नवरिं मुत्तूनिमेसि मज्जनं ।
काहामि कोउहल्लं, पासुत्तेसुं समारद्धो ॥

वृ- अनुभूता मया बहवो मद्यरसाः परममीषां मद्यानां रसान् मुक्त्वा, अतः 'करिष्यामि' पूरयिष्यामि कौतूहलमिति विचिन्त्य प्रसुप्तेषु शेषसाधुषु समारब्धोऽसौ तद्भाजनमुद्घाट्य विकटपानं कर्तुम् ॥ ततश्च-

[भा.३४०८] इहरा कहासु सुणिमो, इमं खु तं काविसायणं मज्जं ।
पीते वि जायति सती, तज्जुसिताणं किमु अपीते ॥

वृ- 'इतरथा' अद्यदिनात् पूर्वं कथास्वेव शृणुमः, परमिदं 'तत्' कथान्तरश्रुतं कापिशायनं नाम मद्यम् । एवं तद्-मद्य जुषितं-सेवितं यैस्ते तज्जुषिताः, गृहवासे विकटपायिन इत्यर्थः, तेषां पीतेऽपि विकटे स्मृतिरुपजायते, किं पुनरपीते ? ॥

[भा.३४०९] विगयम्मि कोउहल्ले, छड्डयविराधन त्ति पडिगमनं ।
वेहानस ओहाणे, गिलाणसेहेण वा दिट्ठो ॥

[illegible] गाथार्थः ॥

[भा.३४१०] उड्डाहं च करिज्जा, विप्परिणामो व हुज्ज सेहस्स ।
गिण्हंतेन व तेनं, खंडिय विद्धे व भिन्ने वा ॥

वृ- [illegible] संयतं विकटपानं कुर्वाणं दृष्ट्वा लोकस्य पुरत उड्डाहं कुर्यात्, विपरिणामो वा

शैक्षस्य भवेत्, विपरिणतश्च सम्यग्दर्शनं चारित्रं लिङ्गं वा परित्यजेत् । तथा 'तेन' संयतेन विकटभाजनं गृह्णता वाशब्दाद् मुञ्चता वा तद् भाजनं 'खण्डितम्' एकदेशभग्नं 'विद्धं वा' पातितच्छिद्रं 'भिन्नं वा' द्विधाकृतं भवेत् ॥ इत ऊर्ध्वं "फेडिय मुद्दा तेनं" इत्यारभ्य "अम्हे ठिएल्लग च्चिय, अहापवत्तं वहह तुब्भे" इतिपर्यन्तं गाथाकदम्बकं तथैवाध्येतव्यम् । नवरं मद्याभिलापः कर्त्तव्यः । ततश्च-

[भा.३४११] आमं ति अब्भुवगए, भिक्ख-वियाराइनिग्गयमिएसु ।
भणइ गुरु सागारिय, कहि मज्जं जाणणट्ठाए ॥

वृ- यदि शय्यातरेण 'आमम्' इत्यभ्युपगतं 'यूयं निश्चिन्तास्तिष्ठथ, वयं यथाप्रवृत्तं व्यापारं चिन्तयिष्यामः' इति ततः 'गुरु' आचार्यो भिक्षाचर्या-विचारभूम्यादिनिर्गतेषु मृगेषु-अगीतार्थसाधुषु सागारिकं भणति 'कुत्र मद्यमस्ति ?' इत्येवं परिज्ञानार्थम् ॥ किं भणति ? इत्याह–

[भा.३४१२] गोडीणं पिट्ठीणं, वंसीणं चेव फलसुराणं च ।
दिट्ठ मए सन्निचया, अन्ने देसे कुडुंबीणं ॥

वृ- 'गौडीनां' गुडनिष्पन्नानां 'पैष्टीनां' व्रीह्यादिधान्यक्षोदनिष्पन्नानां 'वांशीनां' वंशकरीलकनिष्पन्नानां 'फलसुराणां च' तालफल द्राक्षा-खर्जूरादिनिष्पन्नानाम् एवंविधानां सुराणां सन्निचया अन्यस्मिन् देशे मया कुटुम्बिनां गृहेषु दृष्टाः ॥

"एवं च भणियमित्तम्मि कारणे सो भणाइ आयरियं ।
अत्थि महं सन्निचया, पिच्छह नाणाविहे मज्जे ॥"

इत्यादिकाः "दारं न् होइ इत्तो०" इतिपर्यन्ता गाथाः प्राग्वदत्र सव्याख्याना द्रष्टव्याः । अथात्रैव या विशेषतो यतना कर्त्तव्या तामभिधित्सुराह-

[भा.३४१३] गहियम्मि व जा जयणा, गेलन्ने अथव तेन गंधेनं ।
सागारियादिगहणं, नेयव्वं लिंगभेयाई ॥

वृ- शैक्षकेण विकटे 'गृहीत' पीते सति या यतना कर्त्तव्या सा वक्तव्या । ग्लानत्वे वा वैद्योपदेशेन विकटं ग्रहीतव्यम्, अथवा 'तेन' विकटसम्बन्धिना गन्धेन कस्यापि गृहवासे विकटभावितस्याध्युपपातो भवेत्, ततः सागारिकः-शय्यातरः स आदिशब्दात् श्रावको वा यो मातापितृसमानस्ततो विकटस्य ग्रहणं कर्त्तव्यम् । यदि स्वलिङ्गेन न प्राप्यते उड्डाहो वा भवति ततो लिङ्गभेदादिकमपि 'नेतव्यं' कर्त्तव्यमिति यावत् । एष निर्युक्तिगाथासमासार्थः ॥ अथैनामेव विवरीषुराह–

[भा.३४१४] पीयं जया होज्जऽविगोविएणं, तत्थाऽऽनइत्ताण रसं छुभंति ।
भिन्ने उ गोणादिपए करेंति, तेसिं पवेसस्स उ संभवम्मि ॥

वृ- यदा किल 'अविकोविदेन' शैक्षकेण शेषसाधुषु प्रसुप्तेषु तद् विकटं पीतं भवेत् तदा गीतार्था 'तत्र' विकटभाजने 'रसम्' इक्षुरसादिकमानीय प्रक्षिपन्ति । अथ कथमपि तद् भाजनं गृह्यमाणं मुच्यमानं वा भिन्नं ततो भिन्ने सति तस्मिन् गवादीनां पदानि प्रतिश्रयप्राङ्गणे प्रविशन्ति निर्गच्छन्ति च 'कुर्वन्ति' आलिखन्तीत्यर्थः, येन सागारिको जानीते, यथा- गवादिना प्रविश्य भग्नमिदं भाजनमिति । परं यदि 'तेषां' गवादीनां तत्र प्रवेशः सम्भवति; अन्यथा हि सागारिकः प्रद्वेषं यायात्-एकं तावदमी इत्थं स्तेनकर्मकारिणः अपरं च तदपह्नवनायेत्थं प्रपञ्चमुपरचयन्ति,

धिगमीषां पाषण्डिनां धर्ममिति ॥

[भा.३४१५]बंधित्तु पीए जयणा ठवेंति, मुद्दा जहा चिट्ठइ अक्खुया से ।
ऊणम्मि दिट्ठम्मि भणेंति पुट्ठा, नूनं परिस्संदति भाणमेयं ॥

वृ- विकटे पीते तद् भाजनं द्वारदेशे वस्त्रादिना बद्ध्वा 'जतुना' लाक्षया स्थगयन्ति, यथा "से" तस्य भाजनस्य मुद्रा अक्षता तिष्ठति । अथ सागारिकः तद् भाजनमूनं दृष्ट्वा पृच्छति-किमर्थमिदं न्यूनमवलोक्यते ? । एवं पृष्टाः सन्तो भणन्ति-नूनं भाजनमिदं परिस्यन्दति ॥

[भा.३४१६]सव्वम्मि पीए अहवा बहुम्मि, संजोगपढी व ठवेंति अन्नं ।
अन्नं व मग्गित्तु छुहंति तत्था, कीयंकयं वा गिहिलिंगमाई ॥

वृ- सर्वस्मिन् अथवा बहुके विकटे पीते सति ये 'संयोगपाठितः' विकटनिष्पत्ति-योग्यद्रव्यसंयोगवेदिनस्ते तथाविधानि द्रव्याणि संयोज्य अन्यद् विकटं स्थापयन्ति । अथ न सन्ति संयोगपाठिनस्ततोऽन्यद् विकटं मार्गयित्वा तत्र प्रक्षिपन्ति । तच्च प्रथमतः शुद्धम्, तदभावे पञ्चकपरिहाण्या चतुर्लघुकं प्राप्तेन क्रीतकृतमपि ग्रहीतव्यम् । यदि स्वलिङ्गेन गृह्णतामुड्डाहो भवति, न वा तेन प्राप्यते ततो गृहिलिङ्गम् आदिशब्दात् अन्यतीर्थिकलिङ्गं वा कर्त्तव्यम् ॥

अथ "गेलन्ने अहव तेन गंधेनं" इत्यादिपदानि व्याख्याति-

[भा.३४१७]तब्भावियड्डा व गिलाणए वा, पुराण सागारिय सावए वा ।
वीसंभणीआण कुलाणऽभावा, गिण्हंति रुवस्स विवज्जएणं ॥

वृ-तेन-विकटेन पूर्वं भावितस्तद्भावितः स तत्र विकटेनाभ्युपपन्नो भवति; ग्लानो वा कश्चित् तनैवोपयुक्तेन प्रगुणीभवति नान्यथा; ततस्तदर्थं 'पुराणस्य' पश्चात्कृतस्य सकाशात्, तदभावे माता-पितृसमानो यः सागारिकस्तस्य हस्तात्, तदप्राप्तौ प्रतिपन्नाणुव्रतस्य माता-पितृसमानस्य श्रावकस्य पार्श्वाद् ग्रहीतव्यम् । अमीषामभावे यथाभद्रकाण्यपि यानि विश्रम्भणीयानि कुलानि, नोड्डाहकारीणीत्यर्थः, तेषु ग्रहीतव्यम् । तेषामभावे यदि स्वलिङ्गेनगृह्यते ततः प्रवचनोपघातो भवेत् ततो रूपस्य विपर्ययेण गृह्णन्ति, लिङ्गविवेकं कृत्वा विकटमुत्पादयन्तीति भावः ॥

[भा.३४१८]अच्चाउरं वा वि समिक्खिऊणं, खिप्पं तओ घेत्तु दलित्तु तस्स ।
अन्नं रसं वा वि तहिं छुभंती, संगं च से तं हवयंति तत्तो ॥

वृ- अत्यातुरं वा तं ग्लानं समीक्ष्य 'क्षिप्रं' शीघ्रं 'ततः' प्रतिश्रयवर्तिनो विकटभाजनाद् गृहीत्वा 'तस्य' ग्लानस्य दत्त्वा गीतार्थास्तत्रान्यं वा रसं प्रक्षिपन्ति ततश्च "से" तस्य ग्लानस्य 'तं' विकटविषयं सङ्गं हापयन्ति, कार्ये निष्ठिते सति विकटप्रसङ्गं निवारयन्तीति भावः ॥ गता स्वपक्षयतना । अथ परपक्षयतनामाह-

"परपक्खम्मि वि दारं, पिहंति जयणाए दो वि वारिंति ।
तह वि य अठायमाणे, उवेह पुट्ठा व साहंति ॥"

इत्यादिका मद्याभिलापविशेषिता गाथाः सर्वा अपि तथैवात्र वक्तव्याः ॥

मू. (५५) *उवस्सयस्स अंतो वगडाए सीओदगवियडकुंभे वा उसिणोदगवियडकुंभे वा उवनिक्खित्ते सिया, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए । हुरत्था य उवस्सयं पडिलेहमाणे नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए । जे तत्थ परं*

*एगरायाओ वा दुरायाओ वा वसइ से संतरा छेए वा परिहार वा ॥*

**वृ-** अथास्य सम्बन्धमाह-

**[भा. ३४१९]** छोढूण दवं पिज्जइ, गालिंति दवं व छोढुणं तं तु ।
पातुं मुहं व धोवइ, तेनऽहिकारो सजीवं वा ॥

**वृ-** यतः 'द्रवं' पानीयं प्रक्षिपय विकटं पीयते, अतो विकटसूत्रानन्तरमुदकसूत्रम् । यद्वा द्रवं प्रक्षिप्य 'तद्' विकटं गालयन्ति, अथवा विकटं पीत्वा तज्जनितदौर्गन्ध्यव्यपगमार्थमुदकेन मुखं धावति तेन कारणेन विकटानन्तरमुदकाधिकारः प्रारभ्यते । यद्वा तद् विकटं निर्जीवम् इदं तु सजीवं निर्जीवं वा भवेदितिर ॥ अनेकैः सम्बन्धैरायातस्यास्य व्याख्या प्राग्वत् । नवरं विकृत-शीतोष्णादिशस्त्रेण विकारं प्रापितम्, प्राशुकीकृतमित्यर्थः, शीतोदकं च तद् विकृतं च शीतोदकविकृतं तस्य कुम्भः-घटः । एवमुष्णोदकविकृतकुम्भोऽपि ॥ अथ भाष्यम्-

**[भा. ३४२०]** सीतोदे उसिणोदे, फासुगमफासुगे य चउभंगो ।
ठायंतगाण लहुगा, कास अगीतत्थ सुत्तं तु ॥

**वृ-** शीतोदकोष्णोदक-प्राशुका-ऽप्राशुकपदैश्चतुर्भङ्गी भवति । गाथायां प्राकृतत्वात् पुंस्त्वनि-र्देशः । तद्यथा-शीतोदकं प्राशुकं १ शीतोदकमप्राशुकम् २ उष्णोदकं प्राशुकम् ३ उष्णोदकमप्राशुकम् ४ । तत्र प्रथमभङ्गे उष्णोदकमेव शीतीभूतं तन्दुलधावनादिकं वा, द्वितीयभङ्गे शीतोदकमेव स्वभावस्थम्, तृतीयभङ्गे उष्णोदकमुद्वृत्तत्रिदण्डम्, चतुर्थभङ्गे तापोदकादिकं मन्तव्यम् । एवंविधोदकप्रतिबद्धे प्रतिश्रये तिष्ठतां चतुर्लघुकाः । एवमविशेषेणोक्तावप्ययं विशेषः-प्रथमतृतीयभङ्गयोर्मासलघु । द्वीतीयचतुर्थभङ्गयोश्चतुर्लघवः आह च निशीथचूर्णिकृत्- पढमतइयभंग ठायंतस्स मासलहुं । बीयचउत्थेसु चउलहुं । आह कस्य पुनरेतत् प्रायश्चित्तम् ? गुरुराह-अगीतार्थस्य । सूत्रं पुनरनुज्ञाविषयं गीतार्थमधिकृत्य प्रवृत्तमित्युपस्कारः ॥ इत उर्ध्वम् "नत्थि अगीयत्थो वा०" इत्यारभ्य "कासइ इच्छा समुप्पन्ना" इतिपर्यन्तं भाष्यमुदकाभिलापविशेषितं वक्तव्यम् ॥

कीदृशी पुनरिच्छा तस्य समुत्पन्ना ? उच्यते-

**[भा. ३४२१]** अनुभूया उदगरसा, नवरं मोत्तुं इमेसि उदगाणं ।
*काहामि कोउहल्लं, पासुत्तेसुं समारद्धो ॥*

**वृ-** 'अनुभूता मया उदकानां रसाः, नवरं मुक्त्वा अमीषामुदकानां रसान्, अतः करिष्याम्यहमेतद्विषयं कुतूहलं सफलम्' इति विचिन्त्य प्रसुप्तेषु शेषसाधुषु समारब्ध उदकपानं कर्तुम् ॥ कानि पुनस्तान्युदकानि ? इत्याह-

[भा. ३४२२] धारोदए महासलिलजले संभारिते व्व दव्वेहिं ।
तण्हातियस्स व सती, दिया व राओ व उप्पज्जे ॥

**वृ-** 'धारोदकं नाम' गिरिनिर्झरजलम्, यथा उज्जयन्तादौ, आन्तरिक्षं वा धारोदकम् । तथा महासलिलाः-गङ्गा-सिन्धुप्रभृतयो महानद्यः तासां जलं महासलिलाजलम् । 'द्रव्यैः' कर्पूर-पाटलादिभिः 'सम्भारितं' वासितं द्रव्यसम्भारितम् । एषु पानीयेषु तृष्णायितस्याभिलाषो भवति । पूर्वानुभूतेषु तु दिवा वा रात्रौ वा 'स्मृति' संस्मरणमुत्पद्यते ॥

ततश्चोदकमापिबन्नात्मनो हृदयस्य प्रत्यक्षमिदमाह-

[भा.३४२३] इहरा कहासु सुणिमो, इमं खु तं विमलसीतलं तोयं ।
विगयस्स वि नत्थि रसो, इति सेवे धारतोयादी ॥

**वृ-** इतरथा कथान्तरेषु शृणुमः, परमिदमद्य विमलशीतलं 'तत्' कथान्तरश्रुतं तोयमास्वादितम्। यच्चोष्णोदकादिकं विकृतं-व्यपगतजीवमुदकमापिबामः तस्यापि शस्त्रोपहतत्वेनान्यथाभूतस्य रसो नास्तीति मत्वा धारातोयादिकं जलं सेवते ॥

[भा.३४२४] विगयम्मि कोउयम्मी, छट्ठवयविराधन त्ति पडिगमनं ।
वेहानस ओहाणे, गिलाणसेहेण वा दिट्ठो ॥

**वृ-** विगते उदकपानकौतुके स संयतः 'षष्ठव्रतविराधना मया कृता' इति मत्वा प्रतिगमनं वा वैहायसं वा मरणं संविग्नविहाराद्वा अवधावनं कुर्वीत । ग्लानेन वा शैक्षेण वा स दृष्टो भवेत्॥ ततश्च-

[भा.३४२५] तण्हाइओ गिलाणो, तं दट्ठु पिएज्ज जा विराधनया ।
एमेव सेहमादी, पियंति अप्पच्चओ वा सिं ॥

**वृ-** ग्लानस्तृष्णायितः 'तं' संयतमुदकमापिबन्तं दृष्ट्वा पानीयं पिबेत् । तेन चापथ्येन या तस्यानागाढपरितापनादिका विराधना तन्निष्पन्नं प्रायश्चित्तम् । एवमेव च शैक्षादयोऽप्यपरिणतास्तदुदकमापिबन्ति, अप्रत्ययो वा अमीसां भवेत्-यथैतद् मृषा तथाऽन्यदपि सर्वममीषामुन्मत्तप्रलपितमिति ॥

"उड्डाहं व करिज्जा, विप्परिणामो व हुज्ज सेहस्स ।
गिण्हंतेन व तेनं, खंडिय विद्धे व भिन्ने वा ॥"

इतिपर्यन्ता गाथा गतार्था ॥ अथ यैः कारणैः स्तेना उदकमपहरन्ति तानि दर्शयति-

[भा.३४२६] ऊसव-छणेसु संभारियं दगं तिसिय-रोगियट्ठाए ।
दोहल कुतूहलेण व, हरंति पडिवेसयाईया ॥

**वृ-** उत्सवाः क्षणाश्च पूर्वोक्ताः, तेषु प्रत्यासन्नेषु स्तेना उदकमपहरेयुः । यद्वा तृषिताः सन्तः स्वयं पानार्थं 'सम्भारितं' कर्पूर-पाटलादिवासितं चतुर्मूलं पञ्चमूलकृतं वा तद् उदकमपहरन्ति । यद्वा रोगी कश्चित् तेषामस्ति तस्य तत् पानीयं पथ्यं तदर्थम्, अथवा गुर्विण्यास्तादृशमुदकमापातुं दोहदः समुत्पन्नः, यदि वा कुतूहलं तेषामुदपादि 'कीदृशोऽस्य पानीयस्य रसः ?' । एवमेभिः कारणैः प्रतिवेश्मिकादयः स्तेना अपहरेयुः ॥

[भा.३४२७] गहियं च तेहिं उदगं, घित्तूण गया जहिं सि गंतव्वं ।
सागारिओ व भणई, सउणी वि य रक्खई निड्डं ॥

उक्तार्था ॥

[भा.३४२८] दगभानूने दट्ठुं, सजलं व हियं दगं च परिसडियं ।
केन इमं तेनेहिं, असिट्ठे भद्दयर इमे उ ॥

**वृ-** सागारिको दकभाजनानि न्यूनानि सजलं वा भाजनमपहृतं दकं वा परिशटितं दृष्ट्वा पृच्छति-केनेदं जलमपहृतम् ? । साधवो ब्रुवते-स्तेनैः । ततोऽसौ भूयः प्रश्नयति-के पुनः स्तेनाः? । ततो यदि नाम्ना वर्णेन वा तान् कथयन्ति ततस्तेषां बन्धनादयो दोषाः । अथ न कथयन्ति ततः

'अशिष्टे' अकथिते भद्रक-प्रान्तकृता इमे दोषाः

"लहुगा अनुग्गहम्मी, गुरुगा अप्पत्तियम्मि कायव्वा ।
कडुग-फरुसं भणंते, छम्मासा करभरे छेओ ॥" इत ऊर्ध्वम्-
"आमं ति अब्भुवगए, भिक्ख-वियाराइ निग्गयमिएसुं ।
भणइ गुरू सागरियं, कत्थ दगं जाणणट्ठाए ॥"

इतिपर्यन्तं गाथकदम्बकं प्राग्वत् ॥ कथं पुनः सूरयः सागारिकं प्रश्नयन्ति ? इत्याह-

[भा.३४२९] चउमूल पंचमूलं, तालोदानं च तावतयाणं ।
दिट्ठ मए सन्निचया, अन्ने देसे कुडुंबीणं ॥

वृ- 'चतुर्मूलं नाम' चतुर्भिः सुरभिमूलैर्भावितम् । एवं यत् पञ्चभिः सुरभिमूलैर्भावितं तत् पञ्चमूलम्। तालोदकानि यथा तोसलिविषये । तापतोयानि राजगृहादौ । एवंविधानामुदकानां सन्निचया मयाऽन्यस्मिन् देशे कुटुम्बिनां गेहेषु दृष्टाः ॥

"एवं च भणियमेत्तम्मि कारणे सो भणाइ आयरिए ।
अत्थि महं सन्निचया, पेच्छह नानाविहे उदए ॥"

इत आरभ्य "जाणंता वि य तेनं, न वन्न-रूवेण साहंति ॥" इतिपर्यन्तं भाष्यं तथैवात्र वक्तव्यम्। नवरमुदकाभिलापः कर्तव्यः ॥

मू. (५६) *उवस्सयस्स अंतो वगडाए सव्वराईए जोई झियाएज्जा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए । हुरच्छा य उवस्सयं पडिलेहमाने नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए । जे तत्थ एगरायाओ वा दुरायाओ वा परं वसइ से संतरा छेए वा परिहारे वा ॥*

वृ- एवं प्रदीपसूत्रमप्युच्चारणीयम् । अथास्य सूत्रद्वयस्य कः सम्बन्धः ? इत्याह-

[भा.३४३०] उदगानंतरमग्गी, सो उ पईवो व होज्ज जोई वा ।
पडिवक्खेणं व गयं, समागमो एस सुत्ताणं ॥

वृ- प्रवचने ह्यप्कायप्ररूपणानन्तरमग्निकायः प्ररूप्यते, अतोऽत्राप्युदकसूत्रानन्तरमग्निसूत्रमारभ्यते । 'स च' अग्नि प्रदीपो वा स्याद् ज्योतिर्वा । "पडिवक्खेणं व गयं" ति भावप्रधानत्वान्निर्देशस्य प्रतिपक्षतया वा इदं सूत्रमागतम् । किमुक्तं भवति ?-अप्कायस्याग्निकायः शस्त्रम्, अग्निकायस्याप्यप्कायः, अत एतौ परस्परं प्रतिपक्षौ, प्रतिपक्षत्वेन चाप्कायानन्तरं साम्प्रतमग्निकायः प्ररूपणीयः । एषः 'समागमः' सम्बन्धो द्वयोरपि सूत्रयोर्मन्तव्य इति ॥ अनेन सम्बन्धेनायातस्यास्य प्रथमसूत्रस्य तावद् व्याख्या-सा च प्राग्वत् । नवरं सार्वरात्रिकं 'ज्योति' अग्निर्यत्रोपाश्रये 'ध्यायेत्' धातूनामनेकार्थत्वात् प्रज्वलेत् तत्र साधु-साध्वीनां वस्तुं न कल्पते॥

अथ भाष्यविस्तरः-

[भा.३४३१] देसीभासाए कयं, जा बहिया सा भवे हुरच्छा उ ।
बंधऽनुलोमेण कयं, छेए परिहार पुव्वं तु ॥

[भा.३४३२] अहवण वारिज्जंतो, निक्कारणओ व तिण्ह व परेणं ।
छेयं चिय आवज्जे, छेयमओ पुव्वमाहंसु ॥

**वृ-** गाथाद्वयमपि गतार्थम् ॥ ज्योतिस्वरूपं निरूपयति-

**[भा.३४३३]** दुविहो य होइ जोई, असव्वराई य सव्वराई य ।
ठायंतगाण लहुगा, कास अगीयत्थ सुत्तं तु ॥

**वृ-** 'ज्योति' अग्निकायोद्दीप्तं तद् द्विविधं भवति-'असार्वरात्रिकं' कियतीमपि रात्रिं यत् प्रज्वलति, तद्विपरीतं सार्वरात्रिकम् । उभयोरपि तिष्ठतां चतुर्लघुकाः । आह कस्य पुनरेतत् प्रायश्चित्तम् ? उच्यते-अगीतार्थस्य । सूत्रं तु गीतार्थमधिकृत्य प्रवृत्तम् ॥ इत ऊर्ध्वम्-''नत्थि अगीयत्थो वा०'' इतिपर्यन्तं भाष्यं तथैवात्र वक्तव्यम् ॥ अथ तत्र स्थितानां दोषानुपदर्शयति-

**[भा.३४३४]** उवगरणे पडिलेहा, पमज्जणाऽऽवास पोरिसि मने य ।
निक्खमणे य पवेसे, आवडणे चेव पडणे य ॥

**वृ-** सज्योतिषि वसतौ स्थितानामुपकरणप्रत्युपेक्षणे, वसतेः प्रमार्जने, आवश्यकस्य सूत्रार्थपौरुष्योर्वा करणे, ''मने य''त्ति मनसा राग-द्वेषगमने, निष्क्रमणे च प्रवेशे च क्रमेण नैषेधिक्यावश्यक्योः करणे, 'आपतने च' गच्छतामुल्मुकादिषु प्रस्खलने, 'पतने च' प्रतीते, एतेषु या तेज-कायस्य आत्मनो वा विराधना तन्निष्पन्नं प्रायश्चित्तम् । अथैतद्दोषभयात् प्रतिलेखनाप्रमार्जनादि न करोति ततोऽपि प्रायश्चित्तम् ॥ किं पुनस्तद् ? इत्यत आह-

**[भा.३४३५]** पनगं लहुओ लहुया, चउरो लहुगा य चउसु ठाणेसु ।
लहुगा गुरुगा य मने, सेसेसु वि होंति चउलहुगा ॥

**वृ-** यदि ज्योतिशालायां स्थिताः 'अग्निसङ्घट्टो मा भूत्' इति कृत्वा वस्त्राद्युपकरणं न प्रत्युपेक्षन्ते ततो जघन्ये पञ्चकं मध्यमे मासलघु उत्कृष्टे चत्वारो लघवः । वसतिं न प्रमार्जयन्ति यद्वा निर्गच्छन्तः प्रविशन्तो वाऽग्निविराधनाभयान्न प्रमार्जयन्ति उभयत्रापि मासलघु । आवश्यकं न कुर्वन्ति चतुर्लघु। सूत्रपौरुषीं न कुर्वन्ति मासलघु । अर्थपौरुषीं न कुर्वन्ति मासगुरु । अथैतद्दोषभयादुपकरणप्रत्युपेक्षणां वसतिप्रमार्जनामावश्यकं सूत्रार्थपौरुष्यौ च कुर्वन्ति तत एतेषु चतुर्ष्वपि स्थानेषु प्रत्येकं चत्वारो मासा लघवः । यस्तु 'शोभनं समजनि यदेवं सप्रकाशे स्थाने स्थिताः' इत्येवं रागं करोति, यस्य वा सप्रकाशे निद्रा नागच्छति स यदि तत्र द्वेषं करोति, तत एवं मनसा राग-द्वेषकरणे यथाक्रमं चतुर्गुरवश्चतुर्लघवश्च । 'शेषेष्वपि' आवश्यकी-नैषेधिकीकरमादिषु स्थानेषु प्रत्येकमग्निविराधना-निष्पन्नं चतुर्लघु ॥ अमुमेवार्थं स्फुटतरमाह-

**[भा.३४३६]** पेह पमज्जण वासग अग्गी, तानि अकुव्वओ जा परिहानी ।
पोरिसिभंगे अभिगं सजोई, होंति मने उ रती यऽरई वा ॥

**वृ-** उपकरणप्रत्युपेक्षां वसतिप्रमार्जनां ''वासय''त्ति आकारलोपादावासकं च यदि करोति तदाऽग्निविराधनानिष्पन्नं चतुर्लघु । अथैतद्दोषभयादेतानि न करोति ततो या संयमपरिहा-निस्तन्निष्पन्नम् । सूत्रपौरुषीभङ्गे मासलघु, अर्थपौरुषीभङ्गे मासगुरु । ''अभंगि''त्ति तयोः करणेऽ-ग्निविराधना । अथ 'सज्योतिरुपाश्रयः' इति मनसि रतिर्भवति तदा चतुर्गुरु, अरतिर्भवति चतुर्लघु॥

**[भा.३४३७]** जइ उस्सग्गे न कुणइ, तइ मासा सव्व अकरणे लहुगा ।
वंदण-थुईअकरणे, मासो संडासकाईसु ॥

**वृ-** आवश्यके 'यति' यावतः कायोत्सर्गान् न करोति 'तति' तावन्तो लघुमासाः । अथ

सर्वमप्यावश्यकं न करोति ततश्चतुर्लघु । अथ वन्दनकं न ददाति स्तुतिमङ्गलं वा न करोति ततो यावन्ति वन्दनकानि यावतीः स्तुतीर्वा न प्रयच्छति तावन्ति मासलघूनि । अथ ददाति ततश्चतुर्लघु। उपविशन् सन्दशकं न प्रमार्जयति मासलघु, अथ प्रमार्जयति ततश्चतुर्लघु ॥

अथ निष्क्रमणादिपदेषु प्रायश्चित्तमाह-

[भा.३४३८] आवस्सिगा-निसीहिग-पमज्ज-आसज्जअकरणे इमं तु ।
पनगं पनगं लहु लहु, आवडणे लगु जं चऽन्नं ॥

वृ- निष्क्रामन्तो यथावश्यिकीं न कुर्वन्ति पञ्चकम् । प्रविशन्तो नैषेधिकीं न कुर्वन्ति पञ्चकम्। निर्गम-प्रवेशौ कुर्वाणा न प्रमार्जयन्ति मासलघु । आसज्जशब्दस्याकरणे मासलघु । आपतनं नाम- यद् भूमिमसम्प्राप्तस्य प्राप्तस्य वा जानु-कूर्पराभ्यां प्रस्खलनम्, पतनं-सर्वगात्रेण भूमौ प्रपातः, द्वयोरपि चत्वारो लघुमासाः । यच्चापतितः पतितो वा आत्मविराधनादिकमापद्यते तन्निष्पन्नम् । अथवा यच्चान्यदग्नौ प्रतापनादि करोति तदत्र द्रष्टव्यम् ॥ तदेव दर्शयति-

[भा.३४३९] सेहस्स विसीयणया, ओसक्कऽतिसक्क अन्नहिं नयनं ।
विज्झविऊण तुअट्टण, अहवा वि भवे पलीवणया ॥

वृ- शैक्षस्य शीतार्त्तस्य विशीतना स्यात्, अग्नौ प्रताप्य स विगतशीतमात्मानं कुर्यादिति भावः। अत्र च यावतो वारान् हस्त पादौ वा प्रतापयन् परावर्त्तयति तावन्ति चतुर्लघूनि । तथा 'अवष्वष्कणं' शीघ्रविध्यापनार्थं ज्वलतामुल्मुकानामपकर्षणम् । 'अतिष्वष्कणं तु' तेषामेव प्रज्वालनार्थमुदीरणम्। 'अन्यत्र नयनं नाम' शयनस्थानभावादग्नेः स्थानान्तरसङ्क्रमणम् । तथा प्रदीपनकभयादग्निं क्षारेण धूल्या वा विध्याप्य त्वग्वर्त्तनम् । एतेषु प्रत्येकं चतुर्लघुकम् ॥ अथवा प्रतापयतः प्रमादतः प्रदीपनकं भवेत् तत्रेदं प्रायश्चित्तम्-

[भा.३४४०] गाउअ दुगुणादुगुणं, बत्तीसं जोयणाइं चरिमपदं ।
चत्तारि छ च लहु गुरु, छेओ मूलं तह दुगं च ॥

वृ- गव्यूतादारभ्य द्विगुणाद्विगुणवृध्या द्वात्रिंशद्योजनलक्षणं चरमपदं यावदिदं प्रायश्चित्तम्- यद्येकं गव्यूतं दह्यते ततश्चत्वारो लघुमासाः, अर्द्धयोजनं दह्यते चत्वारो गुरुमासाः, योजनं दह्यते षण्मासा लघवः, योजनद्वये षण्मासा गुरवः, चतुर्षु योजनेषु छेदः, अष्टसु मूलम्, षोडशसु अनवस्थाप्यम्, द्वात्रिंशद्योजनेषु दग्धेषु पाराञ्चिकम् ॥ तथा-

[भा.३४४१] गोणे य साणमाई, वारणे लहुगा य जं च अहिगरणं ।
लहुगा अवारणम्मि, खंभ-तणाई पलीवेज्जा ॥

वृ- तत्र प्रविशतो गो-श्वानादीन् यदि वारयति तदा चतुर्लघुकाः, यच्च ते वारिताः सन्तो हरितकायादिविराधनारूपमधिकरणं कुर्वन्ति तन्निष्पन्नम् । अथ न वारयति ततोऽपि चतुर्लघवः। प्रविष्टाश्च प्रज्वलदिन्धनचालनेन स्तम्भ-तृणादीनि प्रदीपयेयुः तत्रापि गव्यूतादारभ्य द्विगुणद्विगुणवृध्या द्वात्रिंशद्योजनेषु पाराञ्चिकम् । यत एते दोषा अतो न ज्योतिशालायां स्थातव्यम्। भवेत् कारणं येन तत्रापि तिष्ठेयुः ॥ किं पुनस्तत् ? इति चेद् उच्यते-

[भा.३४४२] अद्धाणनिग्गयाई, तिक्खुत्तो मग्गिऊण असतीए ।
गीयत्था जयणाए, वसंति तो अगनिसालाए ॥

वृ- अध्वा-महदरण्यं ततो निर्गता आदिशब्दादशिवा-ऽवमौदर्यादिषु वर्त्तमाना विकालवेलायां तं ग्रामं प्राप्ताः 'त्रिकृत्वः' त्रीन् वारान् शुद्धां वसतिं मार्गयन्ति । यदि न प्राप्यते ततो गीतार्था यतनया अग्निशालायां वसन्ति ॥ एतदेव स्पष्टयति-

[भा.३४४३] अद्धाणनिग्गयाई, तिण्हं असईए फरुससालाए ।
गीयत्था जयणाए, वसंति तो पयणसालाए ॥

वृ- अध्वनिर्गतादयः 'तिसृणां' पणितशाला-भाण्डशाला-कर्मशालानामन्यतरस्याः 'परुष-शालायाः' कुम्भकारशालाया अभावे ततो गीतार्था यतनया 'पचनशालायां' भाजनपाकशालायां वसन्ति । इह शालात्रयग्रहणादन्या अपि कुम्भकारशालाः सूचिताः ॥ तासां स्वरूपमुपदर्शयितुमाह-

[भा.३४४४] पणिए य भंडसाला, कम्मे पयणे य वग्घरणसाला ।
इंधनसाला गुरुगा, सेसासु वि होंति चउलहुगा ॥

वृ- पणितशाला भाण्डशाला कर्मशाला पचनशाला व्याघरणशाला इन्धनशाला चेति । अत्र निष्कारणे इन्धनशालायां तिष्ठतां चतुर्गुरुकाः । 'शेषासु' पणितशालाप्रभृतिषु चतुर्लघुकाः ॥

अथैतासामेव व्याख्यानमाह-

[भा.३४४५] कोलालियावणो खलु, पणिसाला भंडसाल जहिं भंडं ।
कुंभारकुडी कम्मे, पयणे वासासु आवाओ ॥

वृ- कौलालिकाः-कुलालक्रय-विक्रयिणस्तेषामापणः पणितशाला मन्तव्या । किमुक्तं भवति? - यत्र कुम्भकारा भाजनानि विक्रीणते, वणिजो वा कुम्भकारहस्ताद् भाजनानि क्रीत्वा यत्रापणे विक्रीणन्ति सा पणितशाला । भाण्डशाला यत्र घट-करकादिभाण्डजातं सङ्गोपितमास्ते । कर्मशाला कुम्भकारकुटी, यत्र कुम्भकारो घटादिभाजनानि करोतीत्यर्थः । पचनशाला नाम यत्रापाकस्थाने वर्षासु भाजनानि पच्यन्ते । इन्धनशाला तु यत्र तृण-करीष-कचवरास्तिष्ठन्ति ॥

[भा.३४४६] तोसलिए वग्घरणा, अग्गीकुंडं तहिं जलति निच्चं ।
तत्थ सयंवरहेउं, चेडा चेडी य छुब्भंति ॥

वृ- व्याघरणशाला नाम तोसलिविषये ग्राममध्ये शाला क्रियते, तत्राग्निकुण्डं स्वयंवरहेतोर्नित्यमेव प्रज्वलति, तत्र च बहवश्चेटकाः एका च स्वयं वरा चेटिका 'प्रक्षिप्यन्ते' प्रवेश्यन्ते इत्यर्थः । यस्तेषां मध्ये तस्यै प्रतिभाति तमसौ वृणीते, एषा व्याघरणशाला । एतासु तिष्ठतां चत्वारो लघुकाः ॥ नवरम्-

[भा.३४४७] इंधनसाला गुरुगा, आदित्ते तत्थ नासिउं दुक्खं ।
दुविह विराधन झुसिरे, सेसा अगनी य सागरिए ॥

वृ- इन्धनशालायां तिष्ठतां चत्वारो गुरुकाः । कुतः ? इत्याह-तत्र तृण-करीषादौ 'आदीप्ते' प्रदीप्ते सति नंष्टुं 'दुःखं' दुष्करम् । शुषिरं च तत् तृणादि भवति, ततस्तत्र 'द्विविधा विराधना' संयमा-ऽऽत्मविषया । 'शेषासु' पणितशालादिषु भाजनविक्रयिक-क्रयिकादिना जनेन सागारिकम्। पचनशालायां पुनरग्निदोषो भवति ॥ एतासु द्वितीयपदे तिष्ठतां विधिमाह-

[भा.३४४८] पढमं तु भंडसाला, तहि सागरि नत्थि उभयकालं पि ।
कम्मा-ऽऽपणि निसि नत्थी, सेस कमेनेंधनी जाव ॥

**वृ-** शुद्धोपाश्रयालाभे प्रथमं भाण्डशालायां तिष्ठन्ति, यतस्तत्र 'उभयकालेऽपि' दिवा रात्रौ च सागारिकं नास्ति। तदभावे कर्मशालायाम्। तदप्राप्तौ आपणशालायामपि, यतस्तत्र 'निशि' रात्रौ सागारिकं नास्ति। तदभावे 'शेषासु' पचनशालादिषु क्रमेण स्थातव्यं यावदिन्धनशाला। तद्यथा-प्रथमं पचनशालायाम्, ततो व्याघरणशालायाम्, गत इन्धनशालायामपि ॥

तत्र स्थितानां यतनामाह-

**[भा.३४४९]** ते तत्थ सन्निविट्ठा, गहिया संथारगा विहीपुव्वं।
जागरमाण वसंती, सपक्खजयणाए गीतत्था ॥

**वृ-** 'ते' साधवः 'तत्र' उपाश्रये सन्निविष्टाः सन्तः स्वाध्यायं कुर्वन्ति। 'विधिपूर्वं' यथारत्नाधिकं संस्तारकास्तैस्तत्र गृहीताः। ततश्च गीतार्थाः स्वपक्षयतनां कुर्वाणा जाग्रतः सन्तः 'वसन्ति' तिष्ठन्तीत्यर्थः ॥ कथम्? इत्याह-

**[भा.३४५०]** पासे तणाण सोहण, अहिसक्कोसक्क अन्नहिं नयनं।
संवरणा लिंपणया, छुक्कारण वारणाऽऽगड्ढी ॥

**वृ-** अग्नेः पार्श्वे यदि तृणानि भवन्ति ततस्तेषां शोधना कर्त्तव्या। श्वापदभयेऽनाक्रान्कस्तेनसम्भवे वा अग्नेरभिष्वष्कणं कुर्वन्ति। यदि तत्र आक्रान्तिकस्तेनानां सम्भवस्तदा तमग्निमवष्वष्कयन्ति, स्वप्तुकामा वा तमन्यत्र नयन्ति, बहिः सङ्क्रामयन्तीत्यर्थः। कृते कार्ये क्षारेण मल्लकेन वा तस्याग्नेः 'संवरणम्' आच्छादनं कर्त्तव्यम्। ततो यथाऽऽयुष्कमनुपाल्य स्वयमेव विध्यायति। प्रदीपनकभयात् तत्र स्तम्भस्य छगणादिना लेपनं कर्त्तव्यम्। श्वानो वा गौर्वा यदि तत्र प्रविशति स्तेनो वा ढौकते तदा "छुक्कारण"त्ति छिछिक्कारः कर्त्तव्यः। अथ तथापि न तिष्ठन्ति ततो निवारणा तेषां कर्त्तव्या। सहसा च प्रदीपनके लग्ने कटादेराकर्षणं कर्त्तव्यम्। यद्वा तत् प्रदीपनकं धूल्यादिना विध्यापयितव्यम् ॥ अथोपकरणप्रत्युपेक्षणादिषु द्वारेषु यतनामाह-

**[भा.३४५१]** कडओ व चिलिमीणी वा, असती सभए व बाहि जं अंतं।
ठाणाऽसति य भयम्मि व, विज्झायऽगणिम्मि पेहिंति ॥

**वृ-** अग्नेरन्तरे-वंशमयः कटो वस्त्रमयी वा चिलमिलिका दातव्या। ततः प्रत्युपेक्षणा-प्रमार्जनादीनि सर्वाण्यपि पदानि कुर्वन्ति। कटक-चिलिमिलिकयोरभावे प्रतिश्रयाद् बहिरुपकरणं प्रत्युपेक्षणीयम्। अथ बहि 'सभयं' स्तेनभययुक्तं ततो यदन्त्यं परिजीर्णमुपकरणं तद् बहिः प्रत्युपेक्षन्ते, सारोपकरणं तु विध्याते ज्योतिषि प्रत्युपेक्षितव्यम्। अथ बहिः स्थानं नास्ति यद्वाऽन्त्योपकरणस्यापि तत्रापहरणभयं ततः सर्वमप्युपधिं विध्यातेऽग्नौ प्रत्युपेक्षन्ते ॥

**[भा.३४५२]** निंता न पमज्जंती, मूगाऽऽवासं तु वंदनगहीणं।
पोरिसि बाहि मनेन व, सेहाण य दिंति अनुसट्ठिं ॥

**वृ-** निर्गच्छन्तः प्रविशन्तो वा तत्र भुवं न प्रमार्जयन्ति, वसतिमपि न प्रमार्जयन्ति, आवश्यकमपि 'मूकं' वाग्योगविरहितं वन्दनकहीनं च कुर्वन्ति, सूत्रार्थपौरुष्यौ बहिर्विदधति, बहि स्थानाभावे मनसैव सूत्रमर्थं वाऽनुप्रेक्षन्ते, ये च शैक्षाः ज्योति प्रकाशे रागमुपगच्छन्ति तेषां गीतार्था अनुशिष्टिं प्रयच्छन्ति ॥ कथम्? इत्याह-

**[भा.३४५३]** नाणुज्जोया साहू, दव्वुज्जोयम्मि मा हु सज्जित्था।

जस्स वि न एइ निद्दा, स पाउय निमीलिओ गिम्हे ॥

वृ- 'ज्ञानोद्योताः' सकलजीवादिपदार्थसार्थप्रकाशकज्ञानलक्षणभावोद्योतकलिताः साधवो भवन्ति, अतः 'द्रव्योद्योते' कतिपयपदार्थपरकाशके ज्योतिप्रभृतिके 'मा सजत' मा रागमुपगच्छत। यस्य वा साधोः सप्रकाशे निद्रा नागच्छति स कल्पेन प्रावृतः स्वपिति। अथ ग्रीष्मकाले प्रावृतस्य धर्मो भवति ततो निमीलितलोचनः स्वपिति ॥

अथ ''मूकावश्यकं वन्दनकहीनम्''इति पदं व्याचष्टे-

[भा.३४५४] आवास बाहि असई, ठिय वंदन विगड जयण थुइहीनं।

सुत्तत्थ बाहि अंतो चिलिमिणि काऊण व झरंति ॥

वृ- आवश्यकं बहिः कुर्वन्ति। अथ बहि स्थानं नास्ति ततो यो यत्र स्थितः स तत्रैव स्थितो मनसैव करोति। द्वादशावर्तवन्दनकं न प्रयच्छन्ति। 'विकटनाम्' आलोचनां यतनया वर्षाकल्पप्रावृता निश्शब्दा एव कुर्वन्ति। 'स्तुतिहीनं नाम' स्तुतिमङ्गलं मनसैव कुर्वन्ति। अथ ''पोरिसि बाहि'' त्ति पदंव्याख्यायते-सूत्रार्थपौरुष्यौ बहि कुर्वन्ति। अथ बहि स्थानं नास्ति ततः प्रतिश्रयस्याभ्यन्तरेऽपि चिलिमिलिकां कृत्वा 'झरन्ति' स्वाध्यायं कुर्वन्ति। वा विकल्पोपदर्शने, चिलिमिलिकाया अभावे मनसैव सूत्रमर्थं वाऽनुप्रेक्षन्ते इत्यर्थः ॥

[भा.३४५५] मूगा विसंति निंति व, उम्मुगमाई कओ वि अछिवंता।

सेहा य जोइ दूरे, जग्गंति य जा धरइ जोई ॥

वृ- 'मूकाः' तूष्णीकाः प्रविशन्ति निर्गच्छन्ति वा, नैषेधिकीमावश्यिकीं च मनसैव कुर्वन्तीत्यर्थः। 'उल्मुकम्' अलातम् आदिशब्दादग्निशकटिकां वा कचिदप्यस्पृशन्तः तथा निर्गच्छन्ति वा प्रविशन्ति-वा यथाऽऽपतन-प्रपतने न भवतः। ये च शैक्षा अगीतार्थाश्च निर्धर्माणस्ते ज्योतिषो दूरे स्थापयितव्याः। गीतार्थवृषभाश्च तावद् जाग्रति यावद् 'ज्योति' अग्निर्ध्रियते, न विध्यायतीति भावः, मा शैक्षादयः प्रतापयेयुरिति कृत्वा ॥

[भा.३४५६] अद्धाणाई अइनिद्दपिल्लिओ गीओसक्किउं सुवइ।

सावयभय उस्सक्के, तेनभए होइ भयणा उ ॥

वृ-अध्वादिपरिश्रान्तोऽतिनिद्राप्रेरितो वा गीतार्थस्तमग्निमपसर्प्य स्वपिति। सिंह-व्याघ्रादिश्वा-पदभये यतनया तान्युल्मुकान्युत्सर्पयति। स्तेनभये तु भजना भवति-यद्याक्रान्तिकस्तेनास्ततः 'मा ज्योति प्रज्वलदवलोक्यागमनं कार्षु' इति कृत्वा तमग्निमपसर्पयति, अथाना-क्रान्तिकास्ततो ज्वलन्तमग्निं दृष्ट्वा 'जाग्रत्यमी' इति बुध्या ते नाभिद्रवन्ति अतस्तेषु तमग्निमुत्सर्पयतीति ॥

[भा.३४५७] अद्धाणविवित्ता वा, परकड असती यं तु जालेंति।

सूलाई व तवेउं, कयकज्जा छार अक्कमणं ॥

वृ-अध्वनि विविक्ताः-मुषिताः 'परकृतम्' अन्यप्रज्वालितमग्निं सेवन्ते। अथ परकृतो वह्निर्न प्राप्यते ततः 'स्वयम्' आत्मनैव ज्वालयन्ति, शीतार्त्तास्तत्रेन्धनं प्रक्षिपन्तीत्युक्तं भवति। शूलम् आदिशब्दाद् विसूचिकां वा तापयितुं परकृताभावे स्वयं ज्वालयन्ति, 'कृतकार्या' निष्ठिते कार्ये क्षारेणाक्रमणं कुर्वन्ति, मा प्रदीपनकं भविष्यतीति कृत्वा ॥

[भा.३४५८] सावयभय आनिंति व, सोउमणा वा वि बाहि नीनिंति।

बाहिं पलीवणभया, छारे तस्सऽसति निव्वावे ॥

**वृ-** श्वापदभयेऽन्यतः स्थानादग्निमानयन्ति । स्वप्नुमनसो वा तस्मात् स्थानाद् बहिर्नयन्ति । अथ बहिः प्रदीपनकभयान्न नयन्ति । ततस्तत्र स्थितमेव क्षारेण छादयन्ति । 'तस्य' क्षारस्याभावे 'निर्वापयन्ति' विध्यापयन्तीत्यर्थः ॥

**मू. (५७)** *उवस्सयस्स अंतो वगडाए सव्वराईए पईवे दिप्पेज्जा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए । हुरच्छा य उवस्सयं पडिलेहमाने नो लभेज्जा, एवं से कप्पइ एगरायं वा दुरायं वा वत्थए । जे तत्थ परं एगरायाओ वा दुरायाओ वा वसइ से संतरा छेए वा परिहारे वा ॥*

**वृ-** अस्य व्याख्यानं ज्योतिसूत्रवद् मन्तव्यम् ॥ अथ भाष्यम्-

**[भा.३४५९]** देसीभासाय कयं, जा बहिया सा भवे हुरच्छा उ ।
बंधऽनुलोमेन कयं, छेया परिहार पुव्वं तु ॥

**[भा.३४६०]** अहवन वारिज्जंतो, निक्कारणओ व तिण्ह व परेणं ।
छेयं चिय आवज्जे, छेयमओ पुव्वनाहंसु ॥

**वृ-** गाथाद्वयमपि गतार्थम् ॥

**[भा.३४६१]** दुविहो य होइ दीवो, असव्वराई य सव्वराई य ।
ठायंते लहु लहुगा, कास अगीयत्थ सुत्तं तु ॥

**वृ-** द्विविधश्च भवति दीपः, तद्यथा-असार्वरात्रिकश्च सार्वरात्रिकश्च । तत्रासार्वरात्रिकप्रदीपयुक्तायां वसतौ तिष्ठतां मासलघु, सार्वरात्रिकप्रदीपयुक्तायां तु चत्वारो लघवः । कस्य पुनरेतत प्रायश्चित्तम् ? । सूरिराह-अगीतार्थस्य ॥ इत ऊर्ध्वम्-''नत्थि अगीयत्थो वा-'' इत्यारभ्य ''ठायंति पईवसा लाए'' इतिपर्यन्तं भाष्यं प्राग्वदत्र वक्तव्यम् ॥ अथ तत्र स्थितानां दोषानाह-

**[भा.३४६२]** उवगरणे पडिलेहा, पमज्जणाऽऽवास पोरिसि मने य ।
निक्खमणे य पवेसे, आवडणे चेव पडणे य ॥

**[भा.३४६३]** पनगं लहुओ लहुगा, चउरो लहुगा य चउसु ठाणेसु ।
लहुगा गुरुगा य मने, सेसेसु वि होंति चउलहुगा ॥

**वृ-** द्वे अपि प्राग् व्याख्याते ॥ मनोद्वारे विशेषमाह-

**[भा.३४६४]** गुरुगा य पगासम्मि उ, लहुगा ते चेव अप्पगासम्मि ।
सायम्मि होंति गुरुगा, अस्साए होंति चउलहुगा ॥

**वृ-** प्रदीपस्य प्रकाशेऽभिरोच्यमाने चत्वारो गुरुकाः । अप्रकाशे चत्वारो लघुकाः । एतदेवोत्तरार्द्धेन व्याचष्टे-सातं सुखं रतिरित्येकोऽर्थ, यदि प्रकाशे रतिं मन्यते तदा चत्वारो गुरवः । अथ असातम्-अरतिं मन्यते ततश्चत्वारो लघुकाः ॥ तथा-

**[भा.३४६५]** पडिमाए झामियाए, लड्डाहो तणाणि वा भवे हेट्ठा ।
साणाइ चालणा लाल, मूसए खंभ तणाइं पलीवेज्जा ॥

**वृ-** देवकुलादौ प्रदीपशालायां या स्कन्द-मुकुन्दादिप्रतिमा तस्यां प्रदीपेन 'ध्यामितायां' दग्धायामुड्डाहो भवेत्-अमीभि श्रमणकैः प्रत्यनीकतयास्क न्दादिप्रतिमा दग्धेति । 'अधस्ताद्वा'

संस्तारकादौ तृणानि भवेयुः तानि दह्येरन् । श्वानादिना वा प्रदीपस्य चालना भवेत्, मूषको वा 'लालां' वर्त्तिमपहरेत् ततः स्तम्भः प्रदीप्येत तृणानि वा प्रदीप्येरन् ॥ ततश्च-

[भा.३४६६] गाउय दुगुणादुगुणं, बत्तीसं जोयणाइं चरिमपदं ।
चत्तारि छ च्च लहु गुरु, छेदो मूलं तह दुगं च ॥

वृ- उक्तार्था ॥ द्वितीयपदे प्रदीपशालायामपि वसेयुः । कथम् ? इत्याह-

[भा.३४६७] अद्धाणनिग्गयाई, तिक्खुत्तो मग्गिऊण असईए ।
गीयत्था जयणाए, वसंति तो दीवसालाए ॥

वृ- अध्वनिर्गतादयस्त्रिकृत्वः शुद्धां वसतिं मार्गयन्ति । यदि न प्राप्यते ततो गीतार्था यतनया प्रदीपशालायां वसन्ति ॥ कथं पुनर्यतना कर्त्तव्या ? इत्याह-

[भा.३४६८] ते तत्थ सन्निविट्ठा, गहिया संथारगा विहीपुव्वं ।
जागरमाण वसंती, सपक्खजयणाए गीतत्था ॥

प्राग्वत् ॥ विशेषयतनामाह-

[भा.३४६९] पडिमाझामण ओरुभण, लिंपणा दीवगस्स ओरुभणं ।
ओसक्कण उस्सक्कण, छुक्कारण वारणोकड्ढी ॥

वृ- यत्र प्रतिमाध्यापनभयं तत्र तस्मादवकाशात् प्रतिमायाः 'अवरोहणम्' अन्यत्र सङ्क्रामणं कर्त्तव्यम् । अथ प्रतिमा सङ्क्रामयितुं न शक्यते ततः स्तम्भ-कुड्यादीनां लिम्पनं प्रदीपस्य च ततः स्थानाद् 'अवरोहणं' सङ्क्रामणं विधेयम् । अथ शृङ्खलादीपोऽसौ न ततः स्थानादवतारयितुं शक्यते ततो लालाया अवसर्पणमुत्सर्पणं वा कुर्यात् । श्वान-गवादीनां च 'छुक्कारणं' छिछिरिति प्रतिषेधकरणेन, वारणं वा दण्डादिदर्शनेन, अपकर्षणं वा वर्त्तेः कर्त्तव्यम् ॥

अथोत्सर्पणमवसर्पणं च व्याख्यानयति-

[भा.३४७०] संकलदीवे वत्तिं, उव्वत्ते पीलए व मा डज्झे ।
रूएण व तं नेहं, घेत्तूण दिवा विगिंचिंति ॥

वृ- 'शृङ्खलादीपे' स्थानान्तरं सङ्क्रामयितुमशक्ये वर्त्तिमुद्वर्त्तयेद्वा निष्पीडयेद्वा, 'मा दह्यतां' मा प्रदीप्यतामिति कृत्वा । रूतेन वा 'तं' प्रदीपवर्त्तिनं 'स्नेहं' तैलं गृहीत्वा ततो दिवा "विगिंचंते" परिष्ठापयन्ति ॥

[भा.३४७१] हेट्ठा तणाण सोहण, ओसक्कऽभिसक्क अन्नहिं नयनं ।
आगाढे कारणम्मि, ओसक्कऽहिसक्कणं कुज्जा ॥

वृ- प्रदीपस्याधस्तात् तृणानां शोधनं कर्त्तव्यम् । यद्वा तं प्रदीपमवसर्पयति वा अभिसर्पयति वा अन्यत्र वा नयति सङ्क्रामयतीत्यर्थः । एतच्चावसर्पणमभिसर्पणं वा आगाढे कारणे समुत्पन्ने गीतार्थः कुर्यात्, नानागाढे ॥

[भा.३४७२] मज्झे व देउलाई, बाहिं व ठियाण होइ अतिगमनं ।
जे तत्थ सेहदोसा, ते इह आगाढे जयणाए ॥

वृ- ते साधवो विकाले सम्प्राप्ताः सन्तः सप्रदीपे देवकुले स्थिता भवेयुः । यद्वा ग्रामादेर्मध्ये देवकुलम्, आदिशब्दात् प्रपा-सभादिकं वा, तच्च दिवा सागारिकाकुलं तत्र प्रभातेऽपि समागता

दिवा बहिः स्थित्वा सन्ध्यायां तत्र प्रविशन्ति । यद्वा बहिः स्थितानां 'स्तेन-श्वापदादिभयमत्र रात्रौ भवति' इति श्रुत्वा ग्राममध्ये 'अतिगमनं' प्रवेशो भवति, तत्र च सप्रदीपायां वसतौ स्थितैर्ये पूर्वं शैक्षविषयाः प्रतापनादयो दोषा उक्ताः ते इहागाढे कारणे यतनया परिहर्त्तव्याः ॥

यदि प्रमादतः प्रदीपनकं भवेत् ततः को विधि ? इत्याह-

[भा.३४७३] अन्नाए तुसिणीया, नाए दट्ठूण करण सविउलं ।
बाहिं देउल सद्दो, समागयाणं खरंटो य ॥

वृ- यदि केनापि न ज्ञातम् यथा-'अत्र संयताः स्थिताः सन्ति' ततस्तूष्णीका भूत्वा पलायन्ते। अथ ज्ञातम्-'संयता अत्र स्थिताः सन्ति' इति ततः प्रदीप्तं दृष्ट्वा महता शब्देन 'सविउलं' बोलं कुर्वन्ति यावद् भूयान् जनो मिलितः । ततो बहुजनस्य पुरतो भणन्ति-पश्यत पश्यत केनापि पापेन प्रदीपनकं कृतमिति । यद्वा देवकुलाद् बहिर्निर्गत्य तथैव 'शब्दः' बोलः क्रियते, समागतानां लोकानां खरण्टना कर्त्तव्या-नूनं युष्माभिरेवैतत् प्रदीपितं येनैते श्रमणा दह्यन्ते, अस्माकं चोपकरणं सर्वमप्यत्र दग्धम् । एवं खरण्टिताः सन्तो न किञ्चिदुड्डहन्ति ॥

*मू. (५८) उवस्सगस्स अंतो वगडाए पिंडए वा लोयए वा कीरे वा दहिं वा नवनीए वा सप्पिं वा तेल्ले वा फाणिए वा पूवे वा सक्कुली वा सिहरिणी वा उक्खित्ताणि वा विक्खित्ताणि वा विइकिन्नाणि वा विप्पइन्नाणि वा, नो कप्पइ निग्गंथाण वा निग्गंथीण वा अहालंदमवि वत्थए ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.३४७४] देहोवहीण डाहो, तदन्नसंघट्टणाय जोतिम्मि ।
संगाल चरणडाहो, एसो पिंडस्सुवग्घाओ ॥

वृ- तेन-शैक्षेण अन्येन वा-श्वान-गवादिना ज्योतिषः सङ्घट्टने कृते देहस्य वा उपधेर्वा दाहो भवति इति पूर्वसूत्रे उक्तम् । अत्रापि पिण्डादियुक्तोपाश्रये स्थितस्य 'साङ्गारं' सरागं "रागेण सइंगालं" ति वचनात् पिण्डादिकं समुद्दिशतश्चरणस्य दाहो भवतीति । एष पिण्डसूत्रस्य पूर्वसूत्रेण सह 'उपोद्घातः' सम्बन्धः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-उपाश्रयस्यान्तर्वगडायां पिण्डको वा लोचकं वा क्षीरं वा दधि वा नवनीतं वा सर्पिर्वा तैलं वा फाणितं वा पूपो वा शष्कुलिका वा शिखरिणी वा, एतान्युक्षिप्तानि वा विक्षिप्तानि वा व्यतिकीर्णानि वा विप्रकीर्णानि वा भवेयुः, नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथालन्दमपि वस्तुमिति सूत्रार्थः ॥ अथ भाष्यम्-

[भा.३४७५] पिंडो जं संपन्नं, पिंडग्गेज्झं व पिंडविगई वा ।
जं तु सभावा लुक्खं, तं जाणसु लोयगं नाम ॥

वृ- पिण्डो नाम-यदशनादिकं 'सम्पन्नं' विशिष्टाहारगुणयुक्तं षड्रसोपेतमिति यावत्, यद्वा यत् 'पिण्डग्राह्यं' पिण्डरूपतया हस्ते ग्रहीतुं शक्यते, 'पिण्डविकृतिर्वा' गुडादिघनविकृतिरूपा पिण्डोऽभिधीयते । 'यत्तु' यत् पुनरशनादि स्वभावादेव 'लूक्षम्' आहारगुणैरनुपेतं तद् लोचकं नाम जानीहि क्षीर-दधि-नवनीत-सर्पि-तैलादीनि सुप्रसिद्धानीति ॥

[भा.३४७६] पूवो उ उल्लखज्जं, कुट्टगुलो फाणियं तु दविओ वा ।
सक्कुलिगाई सुक्कं, तु खज्जगं सूयिअं सव्वं ॥

वृ- 'पूपः' आर्द्रखाद्यकविशेषः, तद्ग्रहणेन लपनश्रीप्रभृतिकं सर्वमप्यार्द्रखाद्यकं गृहीतम् ।

"मुद्दगुलो"त्ति आर्द्रो गुडः, 'द्रविकः' पिण्डगुड एव पानीयेन द्रावितः, एतदुभयमपि फाणितमुच्यते। शष्कुलिकाग्रहणेन शष्कुलिका-मोदकादिकं सर्वमपि शुष्कखाद्यकं सूचितम् ॥

[भा.३४७७] जा दहिसरम्मि गालियगुलेण चउजायसुगयसंभारा ।
कूरम्मि छुब्भमाणी, बंधति सिहरं सिहरिणी उ ॥

वृ- दध्नः शरे गालितेन गुडेन या निष्पन्ना, अपरं च 'चतुर्जातकसुकृतसम्भारा' एलात्वक्‌तमालपत्र-नागकेसराख्यैश्चतुर्भिर्गन्धद्रव्यैराधिक्येनोपजनितवासा, कूरमध्ये प्रक्षिप्यमाणा शिखरं बध्नाति सा शिखरिणी उच्यते । उत्क्षिप्त-विक्षिप्तादिपदव्याख्या प्राग्वत् ॥

अथैतेषु तिष्ठतां प्रायश्चित्तमाह-

[भा.३४७८] पिंडाईआइन्ने, निग्गंथाणं न कप्पई वासो ।
चउरो य अनुग्घाया, तत्थ वि आणाइणो दोसा ॥

वृ- पिण्डादिभिः शिखरिणीपर्यन्तैराकीर्णे प्रतिश्रये निर्ग्रन्थानाम् उपलक्षणत्वाद् निर्ग्रन्थीनां च न कल्पते वासः । अथ तिष्ठन्ति ततश्चत्वारोऽनुद्धाता मासाः । तत्राप्याज्ञादयो दोषा मन्तव्याः।

[भा.३४७९] चउरो विसेसिया वा, दोण्ह वि वग्गाण ठायमाणाणं ।
अहवा चउगुरुगाई, नायव्वा छेयपज्जंता ॥

वृ- अथवा 'द्वयोरपि' निर्ग्रन्थ-निर्ग्रन्थीवर्गयोस्तत्र तिष्ठतोश्चतुर्गुरुकास्तपः-कालविशेषिताः। तद्यथा-भिक्षोश्चतुर्गुरुकं तपसा कालेन च लघु, वृषभस्य कालगुरु, उपाध्यायस्य तपोगुरु, आचार्यस्य तपसा कालेन च गुरुकम् । एवं भिक्षुणीप्रभृतीनामपि मन्तव्यम् । अथवा चतुर्गुरुकमादौ कृत्वा छेदपर्यन्ता चतुर्णामपि यथाक्रमं शोधिर्ज्ञातव्या ॥

मू. (५९) *अह पुन एवं जाणेज्जा-नो उक्खित्ताइं नो विक्खित्ताइं नो विइकिन्नाइं नो विप्पकिन्नाइं रासिकडाणि वा पुंजकडाणि वा कुलियाकडाणि वा भित्तिकडाणि वा लंछियाणिवा मुद्दियाणि वा पिहियाणि वा कप्पइ निग्गंथाण वा निग्गंथीण वा हेमंत-गिम्हासु वत्थए ॥*

वृ- अस्य व्याख्या प्राग्वत् । नवरं यत्र पिण्डादीनि राशीकृतादिरूपाणि तत्र गीतार्थानां कल्पते ऋतुबद्धे वस्तुमिति सूत्रद्वयम् ॥ अत्र- "पुंजो उ होइ वट्टो, सो चेव य ईसि आयओ रासी ।" इत्यादिभाष्यगाथाः पिण्डाद्यभिलापेन प्राग्वद् मन्तव्याः यावत् "कासय इच्छा समुप्पन्न" इति । कीदृशी पुनरिच्छा समुत्पन्ना ? इत्युच्यते-

[भा.३४८०] अनुभूया पिंडरसा, नवरं मुत्तूनिमेसि पिंडाणं ।
काहामो कोउहल्लं, तहेव सेसा वि भणियव्वा ॥

वृ- अनुभूतास्तावदन्येषां पिण्डानां रसाः परममीषां पिण्डानां रसान् मुक्त्वा, अतः 'करिष्यामः' पूरयिष्यामः कौतूहलमिति विचिन्त्य प्रसुप्तेषु शेषसाधुषु तानि भोज्यानि भुङ्क्ते । 'शेषाण्यपि' क्षीरादीनि "अनुभूया खीररसा" इत्याद्यभिलापेन तथैव भणितव्यानि यावद् द्वितीयपदे तत्रापि प्रतिश्रये स्थिता अगीतार्थसाधुषु भिक्षाचर्यादिनिर्गतेषु सूरयः सागारिकमित्थं ब्रुवते ॥

[भा.३४८१] तेल्ल-गुड-खंड-मच्छंडियाण महु-पान-सक्कराईणं ।
दिट्ठ मए सन्निचया, अन्ने देसे कुडुंबीणं ॥

वृ- तैल-गुड-खण्ड-मत्स्यण्डिकानां मधु-पान-शर्करादीनां च सन्निचया मयाऽन्यस्मिन् देशे

कुटुम्बिनां गृहेषु दृष्टाः । शेषं सर्वमपि पिण्डाभिलापेन प्राग्वदवसातव्यम् ॥

**मू. (६०)** *अह पुन एवं जाणिज्जा-नो रासिकडाइं जाव नो भितिकडाइं कोट्ठाउत्ताणि वा पल्लाउत्ताणि वा मंचाउत्ताणि वा मालाउत्ताणि वा कुंभिउत्ताणि वा करभिउत्ताणि वा ओलित्ताणि वा विलित्ताणि वा लंछियाणि वा मुद्दियाणि वा पिहियाणि वा कप्पइ निग्गंथाण वा निग्गंथीण वा वासावासं वत्थए ॥*

**वृ-** अस्य व्याख्या प्राग्वत् । नवरं कुम्भी-मुखाकारा कोष्ठिका, करभी-घटसंस्थानसंस्थिता, तयोरागुप्तानि-प्रक्षिप्य रक्षितानि कुम्भ्यागुप्तानि करभ्यागुप्तानि वा ॥ अत्र भाष्यम्-

**[भा.३४८२]** कुंभी करहीए तहा, पल्ले माले तहेव मंचे य ।
ओलित्त पिहिय मुद्दिय, एरिसए न कप्पती वासो ॥

**वृ-** यत्रोपाश्रये कुम्भ्यां वा करभ्यां वा पल्ये वा माले वा मञ्चे वा चशब्दात् कोष्ठे वा प्रक्षिप्तानि पिण्डप्रभृतीनि भवन्ति, तानि चावलिप्तानि पिहितानि मुद्रितानि वा भवेयुः, ईदृशे न कल्पते वस्तुम् ॥ तथा चाह–

**[भा.३४८३]** उडुबद्धम्मि अईते, वासावासे उवट्ठिए संते ।
ठायंतगाण गुरुया, कास अगीतत्थ सुत्तं तु ॥

**वृ-** ऋतुबद्धे काले व्यतीते वर्षावासे चोपस्थिते यद्यपि सूत्रेण तत्रोपाश्रये स्थातुमनुज्ञातं तथापि न कल्पते, यदि तिष्ठन्ति ततश्चतुर्गुरुकाः । शिष्यः पृच्छति-कस्य पुनरेतत् प्रायश्चित्तम् ? । सूरिराह-अगीतार्थस्य । सूत्रं पुनर्गीतार्थमधिकृत्य प्रवृत्तम् । शेषं पिण्डाभिलापेन तथैव वक्तव्यम् ॥

**मू. (६१)** *नो कप्पइ निग्गंथीणं अहे आगमनगिहंसि वा वियडगिहंसि वा वंसीमूलंसि वा रुक्खमूलंसि वा अब्भावगासियंसि वा वत्थए ॥*

**वृ-** इह निर्ग्रन्थ-निर्ग्रन्थीनां सामान्यतः सदोषा उपाश्रया उक्ताः, अथ केवलानामेव निर्ग्रन्थीनामभिधीयन्त इत्यनेन सम्बन्धेनायातस्य अस्य व्याख्या-अध-शब्द इह अवशब्दार्थे । पथिकादीनामागमनेनोपेतं तदर्थं वा गृहमागमनगृहम् । विवृतम्-अनावृतं गृहं विवृतगृहम् । वंसीमूलं नाम-गृहाद् बहिस्थितमलन्दकादिकम् । वृक्षमूलं तु वृक्षस्य-सहकारादेः मूलम्-अधोभागः । अभ्रावकाशमाकाशमुच्यते । एतेषु प्रतिश्रयेषु निर्ग्रन्थीनां वस्तुं न कल्पते इति सूत्रसङ्क्षेपार्थः ॥

अत्र भाष्यविस्तरः–

**[भा.३४८४]** आगमने वियडगिहे, वंसीमूले य रुक्खमब्भासे ।
ठायंतिकाण गुरुगा, तत्थ वि आणादिणो दोसा ॥

**वृ-** आगमनगृहे विवृतगृहे वंसीमूले वृक्षमूलेऽभ्रावकाशे च तिष्ठन्तीनां निर्ग्रन्थीनां चत्वारो गुरुकाः । तत्राप्याज्ञादयो दोषा मन्तव्याः ॥ अथवा-

**[भा.३४८५]** आगमगिहादिएसुं, भिक्खुणिमादीण ठायमाणीणं ।
गुरुगादी जा छेदो, विसेसितं चउगुरू वा सिं ॥

**वृ-** आगमनगृहादिषु भिक्षुण्यादीनां तिष्ठन्तीनां चतुर्गुरुकमादौ कृत्वा छेदं यावत् प्रायश्चित्तम् । तद्यथा-भिक्षुण्याश्चतुर्गुरुकम्, अभिषेकायाः षड्लघुकम्, गणावच्छेदिन्याः षड्गुरुकम्,

प्रवर्त्तिन्याश्छेदः । यद्वा "सिं" आसां चतसृणामपि तपः-कालविशेषितं चतुर्गुरुकं भवति । तत्र भिक्षुण्यास्तपसा । कालेन च लघुकम्, अभिषेकायाः कालेन गुरुकम्, गणावच्छेदिन्यास्तपसा गुरुकम्, प्रवर्त्तिन्यास्तपसा कालेन च गुरुकम् ॥ अथागमनगृहं व्याचष्टे-

[भा.३४८६] आगंतुगारत्थिंजणो जहिं तु, संठाति जं चाऽऽगमनम्मि तेसिं ।

तं आगमोगं तु विऊ वदंति, सभा पवा देउलमादियं वा ॥

वृ- आगन्तुकः-पथिकादिरगारस्थजनो यत्रागत्य सन्तिष्ठते, यच्च 'तेषां' पथिकादीनामागमने वर्त्तते, तद् 'आगमीकः' आगमनगृहं 'विद्वांसः' श्रुतधरा वदन्ति । तच्च सभा वा प्रपा वा देवकुलादिकं वा मन्तव्यम् ॥ तत्र तिष्ठन्तीनां दोषानाह-

[भा.३४८७] आगमनगिहे अज्जा, जनेन परिवारिया अनज्जेण

दट्ठुं कुलप्पसूता, संजमकामा विरज्जंति ॥

वृ- आगमनगृहे स्थिता आर्या अनार्येन जनेन परिवारिता दृष्ट्वा कुलप्रसूताः स्त्रियः 'संयमकामाः' प्रव्रज्यां ग्रहीतुमनसो विरज्यन्ते ॥ कथम् ? इत्याह-

[भा.३४८८] उवस्सए एरिसए ठियाणं, न सीलभारा सगला भवंति ।

को दानि हंसेण किणेज्ज काकं, एवं नियत्तंति कुलप्पसूया ॥

वृ- ईदृशे उपाश्रये स्थितानामार्यिकाणां शीलं-ब्रह्मचर्यं तत्प्रधाना भाराः-संयमयोगधुरालक्षणाः 'सकलाः' सम्पूर्णा न भवन्ति, किन्तु खण्डित-विराधिताः; अस्माकं च सुसंवृतगृहमध्य-मध्यावसन्तीनां प्रत्यपायाभावाद् निष्कलङ्कं शीलमनुपालयन्तीनां हंसकल्पो गृहवासः, एवंविधे तु तरुणादिप्रत्यपायबहुले प्रतिश्रये तिष्ठन्तीनां या प्रव्रज्या सा बहुदोषमलीमसतया काककल्पा, अतः क इदानीं हंसेन काकं क्रीणीयात् ? । एवं विचिन्त्य कुलप्रसूताः स्त्रियः प्रव्रज्याग्रहणाद् निवर्त्तन्ते ॥ अथात्रैव विशेषदोषानभिधित्सुराह-

[भा.३४८९] काइय पडिलेह सज्झाए, भुंजणे वीयारमेव गेलन्ने ।

साणादी उवगरणे, तरुणाई जे भणिय दोसा ॥

वृ- कायिक्यां प्रत्युपेक्षणायां स्वाध्याये भोजने विचारे ग्लानत्वे च दोषा भवन्ति । श्वानादिना चोपकरणमपह्रियते । तरुणादयश्च दोषा ये प्रथमोद्देशके भणितास्तेऽत्र मन्तव्या इति निर्युक्तिगाथासमासार्थः ॥ अथ व्यासार्थं प्रतिद्वारं बिभणिषुराह-

[भा.३४९०] मोयस्स वायस्स य सन्निरोहे, गेलन्न नीसट्ठमसन्निरोहे ।

पलोट्टणा घाण ससद्द मत्ते, आतोभया तत्थ भवंति कीवे ॥

वृ- यद्यागमनगृहे स्थिताः सागारिकमिति कृत्वा मोकस्य वातस्य वा सन्निरोधं कुर्वन्ति ततो 'ग्लान्यं' ग्लानत्वं भवति । अथ तयोः सन्निरोधं न कुर्वते ततो 'निसृष्टाः' निर्लज्जा भवेयुः । अथ मात्रके कायिकीं व्युत्सृजन्ति ततो मात्रकस्य प्रलोटनायां दुर्भिगन्धघ्राणि समुच्छलति । मात्रके च सशब्दं प्रश्रवणमागच्छति, तं च श्रुत्वा सागारिका उड्डाहं कुर्वन्ति । आत्म-परोभयसमुत्थाश्च तत्र दोषा भवन्ति । तत्रात्मसमुत्थदोषा नाम-सा संयती स्वयं क्षुभ्येत । परसमुत्थस्तु "कीवे" त्ति शब्दक्लीबः संयत्याः कायिकीशब्दं श्रुत्वा क्षुभ्येत । उभयसमुत्थस्तु द्वावपि क्षुभ्येताम् ॥

[भा.३४९१] पेहिंति उड्डाह पवंच तेना, अपेहणे सोहि तिहोवहिस्सा ।

कीरंतऽकीरंत सुते य दोसा, न निंति भिक्खस्स निरुद्धमग्गा ॥

वृ- यदि संयत्यः सागारिके पश्यति स्वकीयमुपकरणं प्रत्युपेक्षन्ते तत उड्डाहो भवति, प्रपञ्चं वा स सागारिकः कुर्वीत, तथैव स्वकीयं वस्त्रं प्रत्युपेक्षेत इत्यर्थः। स्तेना वा तं सारोपधिं प्रत्युपेक्ष्यमाणं दृष्ट्वा हरेयुः। अथैतद्दोषभयाद् न प्रत्युपेक्षन्ते ततस्त्रिविधोपधेः 'शोधि' प्रायश्चित्तम्। तद्यथा- जघन्ये पञ्चकम्, मध्यमे मासलघु, उत्कृष्टे चतुर्लघु। 'श्रुते' स्वाध्याये क्रियमाणे सागारिका आलपकान् आगमय्य तथैव उड्डयेयुः। अथ स्वाध्यायो न क्रियते ततः सूत्रार्थनाशादयो दोषाः। तथा सागारिकैर्निष्क्रमण-प्रवेशस्थानोपविष्टैर्निरुद्धमार्गा सत्यो न भैक्षाय 'निर्गच्छन्ति' निर्गन्तुं शक्नुवन्तीति भावः ॥

[भा.३४९२]दुक्खं च भुंजंति सति ठितेसु, तक्किंति देंते य अदेंति दोसा।

भुंजंति गुत्ता अधिकारिया उ, कुलुग्गया किं पुन जा अतोया ॥

वृ- सागारिकेषु तत्र 'सदा' नित्यमेव स्थितेषु संयत्यो दुःखं भुञ्जते। अथ तेषां मध्यात् कश्चिद् द्रमकप्रायः 'तर्कयति' आहारयाच्ञां करोति ततो यदि दीयते तदा असंयतपोषणादधिकरणम्; अथ न दीयते ततोऽसौ प्रद्वेषं गच्छेत्, प्रद्विष्टश्च प्रान्तापनम् उड्डाहम् अभ्याख्यानप्रदानं वा कुर्यात्; एवमुभयथाऽपि दोषाः। किञ्च कुलोद्गताः स्त्रियः 'गुप्ताः' एकान्ते स्थिता अधिकारिण्यश्च भुञ्जते, किं पुनर्या 'अतोयाः' शीतोदकविरहिताः संयत्यः काञ्जिकेनाचमनकारिण्य इत्यर्थः ? ताभिः सुतरामेकान्ते भूत्वा भोक्तव्यमिति ॥

[भा.३४९३]वीयारभोमे बहि दोसजालं, निसट्ठ-बीभच्छकया य अंतो।

कीरंत किच्चे य गिलाण दोसा, कालादिवत्ती य तद्दोसहस्स ॥

वृ- यदि सागारिकमिति मत्वा विचारभूमौ बहिर्गच्छन्ति ततः 'दोषजालं' मासकल्पप्रकृताभिहितं दूषणनिकुरुम्बं ढौकते। अथैतद्दोषभयादन्तः संज्ञां व्युत्सृजेयुः ततः सागारिकालोके व्युत्सृजन्त्यो निसृष्टाः-निर्लज्जा बीभत्साश्च गण्यन्ते, तत्कृताश्चोड्डाहादयो दोषाः। ग्लानायाश्च संयत्याः 'कृत्ये' अकल्प्यपथ्यौषधप्रदानादौ क्रियमाणे सागारिका वदेयुः-एतदमूषामकल्पनीयं परमेतदपि प्रतिसेवन्ते, नूनं सर्वमप्यलीकममूषामित्यादयो दोषाः। अथ सागारिकमिति मत्वा न क्रियते तत औषधस्य कालातिपत्ति स्यात्, कालातिक्रमेण चौषधे दीयमाने ग्लाना परितापमश्नुयात् ॥

[भा.३४९४]हरंति भाणाइ सुणादिया य, सयंति भीया व वसंति निच्चं।

निच्चाउले तत्थ निरुद्धचारे, नेगग्गया होति कओ सि झाओ ॥

वृ- तत्रागमनगृहे शुनकादयः प्रविश्य भाजनादिकं हरन्ति। ततः 'नित्यम्' अहोरात्रमपि तत्र श्वानादिभयभीताः शेरते वा वसन्ति वा। 'नित्याकुले च' सदैव सागारिकैराकीर्णेऽत एव 'निरुद्धचारे' गमा-ऽऽगमरहिते तत्रैकाग्रता न भवति, कुतः स्वाध्यायः "सिं" अमूषां भविष्यति?

[भा.३४९५] तरुणा-वेसित्थि-विवाह-रायमादीसु होति सतिकरणं।

इच्छमनिच्छे तरुणा, तेना ताओ व उवहिं वा ॥

वृ- तत्रागमनगृहे बहवस्तरुणा वेश्यास्त्रियो वा कामुकवृन्दपरिवृताः, विवाहो वा महता विच्छर्देन विधीयमानः, राजादयो वा निर्गच्छन्तः प्रविशन्तो विलोक्यन्ते ततः स्मृतिकरण-कौतुके भुक्ता-ऽभुक्तानां जायेते। तथा यदि तरुणान् अवभाषमाणान् इच्छति ततो व्रतविराधना, अथ नेच्छति

ततस्ते उड्डाहं कुर्युः। स्तेना वा ताः संयतीरपहरेयुः 'उपधिं वा' वस्त्रादिकं वा हरेयुः ॥ तदेवं व्याख्याता "काइय पडिलेह" इत्यादिका निर्युक्तिगाथा। अथागमनगृह एव दोषान्तराण्याह-

[भा.३४९६] ओभावणा कुलघरे, ठाणं वेसित्थि-खंडरक्खाणं।
उद्धंसणा पवयणे, चरित्तभासुंडणा सज्जो ॥

वृ- धूर्तैः परिवारितासु तासु कुलगृहस्यापभ्राजना स्यात्, अन्यच्च तद् आगमनगृहं वेश्यास्त्रीणां 'खण्डरक्षाणां च' डिण्डिकानां स्थानं वर्तते, तत्र स्थितानाम् 'उद्धर्षणा' प्रवचनविषया हीला चारित्रस्य च भ्रंशना 'सद्यः' शीघ्रं भवति। तथा तरुणादीन् दृष्ट्वा कस्याश्चिद् दश कामवेगा भवेयुः ॥ ते च सप्रायश्चित्ता अमी-

[भा.३४९७] चिंताइ दट्ठुमिच्छइ, दीहं नीससति तह जरे डाहे।
भत्तारोयग मुच्छा, उम्मत्तो न याणती मरणं ॥

[भा.३४९८] मासो लहुओ गुरुओ, चउरो लहुगा य होंति गुरुगा य।
छम्मासा लहु-गुरुगा, छेदो मूलं तह दुगं च ॥

वृ- द्वे अपि प्राग् व्याख्याते ॥ उक्ता आगमनगृहे दोषाः, अथ विवृतगृह-वंशीमूलयोर्दोषानाह-

[भा.३४९९] एए चेव य दोसा, सविसेसतरा हवंति विगडगिहे।
वंसीमूलट्ठाणे, पडिबद्धे जे भणिय दोसा ॥

वृ- 'एत एव' आगामनगृहोक्ता दोषाः सविशेषतरा विवृतगृहे तिष्ठन्तीनां भवन्ति। वंसीमूलस्थाने तु ते दोषा द्रष्टव्याः ये द्रव्यतो भावतश्च प्रतिबद्धे प्रतिश्रयेऽप्काययन्त्रयोजनादय आत्मपरोभयसमुत्थाश्च दोषाः प्रथमोद्देशके भणिताः ॥ अथैनामेव गाथां व्याख्यानयति-

[भा.३५००]अवाउडं जं तु चउद्दिसिं पि, तीसुं दुसुं वा वि तहेकतो वा।
अहे भवे तं वियडं गिहं तु, उड्ढं अमालं च अछण्णगं वा ॥

वृ- विवृतगृहं द्विधा-अधोविवृतम् ऊर्ध्वविवृतं च। यत् पार्श्वतश्चतसृषु तिसृषु वा दिक्षु द्वयोर्वा दिशोरेकस्यां वा दिशि 'अपावृतं' कुड्यरहितं परमुपरि च्छन्नं तदधोविवृतगृहं भवेत्। यत् पुनः 'अमालं' मालरहितम् अच्छन्नं वा छादरहितं परं पार्श्वतः कुड्ययुक्तं तदूर्ध्वविवृतं भवति ॥

[भा.३५०१]अजंतिया तेन-सुणा उवेंति, गोणादि निस्संकमभिद्दवंति।
तेनादिया तत्थ चिलीय दोसा, कडादिकम्मं तु सजीवघातं ॥

वृ- 'तत्र' विवृतगृहे 'अयन्त्रिताः' कुड्याद्यभावादनिरुद्धप्रचाराः स्तेन-शुनका उपायान्ति, ततश्चोपकरणहरणादयो दोषाः। गवादयश्च शृङ्गाद्यभिघातेन निशङ्कमभिद्रवन्ति। अथ तत्र पार्श्वतश्चिलिमिलिका दीयते ततः "चिलीए"त्ति "सूचनात् सूत्रम्" इति कृत्वा चिलिमिलिकायाः स्तेनादयो दोषाः, ते तामपहृत्य गच्छेयुरिति भावः। "कडाइ"त्ति अथ कटं किलिञ्चं वा कारयित्वा तत्र स्थापयन्ति तत आधाकर्मदोषनिष्पन्नं प्रायश्चित्तं 'सजीवघातम्' इति कटादौ निष्पाद्यमाने येषां जीवानामुपघातो भवति तन्निष्पन्नं पृथक् प्रायश्चित्तम् ॥ अथ वंशीमूलं व्याचष्टे-

[भा.३५०२]जाओ[जो आ]वने वी य बहिं घरस्स, अलिंदओ वा अवसारिगा वा।
गेहस्स पासे पुर पिट्ठओ वा, तं वंसिमूलं कुसला वदंति ॥

वृ- यो गृहाद् बहिर्द्वाराग्रवर्तिस्थण्डिकारूप अलिन्दकः, या वा 'अपसारिका' पटालिका, कुत्र?

इत्याह-गेहस्य पार्श्वे वा पुरतोवा पृष्ठतो वा तद् वंशीमूलं नाम गृहं 'कुशलाः' तीर्थकरादयो वदन्ति। अत्र तिष्ठन्तीनां प्रतिबद्धसूत्रोक्ता दोषाः ।। अथ वृक्षमूला-ऽभ्रावकाशयोर्दोषानाह-

[भा.३५०५] अट्ठि व दारुगादी, सउणगपरिहार पुप्फ-फलमादी ।
एवं तु रुक्खमूले, अब्भावासम्मि सिण्हाई ।।

वृ- अस्थि वा दारुकं वा आदिशब्दाद् लेष्टुकादिकं वा वातेन चालितं सत् प्रपतेत्, शकुनाः-पक्षिणस्तेषां सम्बन्धी परिहारः-पुरीषमुपरि निपतेत्, पुष्पाणि वा फलानि वा आदिशब्दाद् पत्राणि वा पतेयुः, एषु यथायोगमात्म-संयमविराधना मन्तव्या । एवं वृक्षमूले वृक्षस्याधोवर्तिनि वा गृहे तिष्ठन्तीनां दोषाः । अभ्रावकाशे तु सिण्हा-अवश्यायो भवेत्, आदिशब्दात् सचितं रजः प्रपतेदित्यादिपरिग्रहः । अवश्यायेनार्द्रीभूतानां विसूचिकादिभिरात्मविराधना मन्तव्या । यत एते दोषा अतो न आगमनगृहादिषु स्थातव्यम् । भवेत् कारणं येन तत्रापि स्थीयते ।। किम् ? इत्याह-

[भा.३५०४] अद्धाणनिग्गयादी, तिक्खुत्तो मग्गिऊण असतीये ।
वाडगआगमणगिहे, इयरम्मि य निग्गहसमत्थे ।।

वृ- अध्वनिर्गतादयस्त्रिकृत्वो निर्दोषां वसतिं मार्गयित्वा यदि न प्राप्नुवन्ति ततो वाटकस्य मध्यवर्त्ति यद् आगमनगृहं-देवकुलादिकं तत्र वसन्ति । कथम् ? इत्याह-इतरः-शय्यातरः स यदि निग्रहसमर्थ-जितेन्द्रियः प्रत्यनीकनिवारणक्षमश्च भवति ततस्तत्र वस्तव्यम्, नान्यथा ।।

अथेदमेव स्फुटतरमाह-

[भा.३५०५] जं देउलादी उ निवेसणस्सा, मज्झम्मि गुत्तं सुपुरोहडं च ।
अदुट्ठगम्मं न य दुट्ठमज्झे, अदूरगेहं तहियं वसंति ।।

वृ- 'निवेशनस्य' वाटकस्य मध्ये यद् देवकुलादि 'गुप्तं' वृत्या फलिहकेन वा आवृतम्, 'सुपुरोहडं' रमणीयसंयतीप्रायोग्यविचारभूमिकम्, अदुष्टानां-शिष्टजनानां गम्यम्-आश्रयः, न च दुष्टजनमध्ये तद् वर्त्तते, 'अदूरगेहं' प्रत्यासन्नप्रातिवेशिमिकगृहं तत्र प्रथमतो वसन्ति ।।

[भा.३५०६] जुवाणगा जे सविगारगा य, पुत्तादओ तुज्झ इहं वसंति ।
मा ते वि अम्हं इह संवयंतु, इच्छंत सत्ते य वसंति तत्थ ।।

वृ- तत्र यः सागारिकस्तं ब्रुवते-ये युवानः सविकाराः पुत्रादयस्त्वत्सम्बन्धिनः 'इह' अस्मिन् गृहे वसन्ति मा तेऽप्यस्माकं प्रतिश्रये सम्प्रति 'संव्रजन्तु' समायान्तु । एवमुक्ते यद्यसौ 'इच्छति' प्रतिशृणोति, यदि च स्वयं 'शक्तः' तन्निवारणक्षमः ततस्तत्र वसन्ति ।।

[भा.३५०७] भोइयकुले व गुत्ते, दुज्जणवज्जे वसंत उ पउत्थे ।
महतरगादिसुगुत्ते, वंसीमूलम्मि ठायंति ।।

वृ- अथेदृशमागमनगृहं न प्राप्यते ततो भोजिकस्य-ग्रामस्वामिनः कले-गृहे 'गुप्ते' वृत्या फलिहकेन वा सुसंवृते 'दुर्जनवर्जे' दुःशीलजनप्रवेशरहिते यदलिन्दकादि तत्र वसन्ति । स च भोजिको यदि प्रोषितस्तदा महत्तरकादिभि-प्रधानपुरुषैस्तद् गृहं यदि सुगुप्तं-सुरक्षितं भवति तत एवंविधे वंशीमूलगृहे तिष्ठन्ति ।।

[भा.३५०८] तस्सऽसइ उद्धवियडे, वसंति कडगादि छोढुणं उवरिं ।
तस्सऽसति पासवियडे, कडगादी पंतवत्थेहिं ।।

**वृ-** 'तस्य' यथोक्तगुणोपेतस्य वंशीमूलगृहस्याभावे ऊर्ध्वविवृतगृहे उपरि कटादिकं प्रक्षिप्य तिष्ठन्ति, आदिशब्दाद् वस्त्रचिलिमिलिकया वाऽऽच्छादनं कुर्वन्ति। तस्याभावे पार्श्वविवृतेऽपि तिष्ठन्ति, अधोविवृते इत्यर्थः। तत्रच कट-किलिञ्चादिभिश्चिलिमिलिकां कृत्वा पार्श्वतः पदघात्। अथ कटादयो न प्राप्यन्ते ततः 'प्रान्तवस्त्रैः' परिजीर्णचीवरैः पार्श्वानि च्छादयितव्यानि ॥

**[भा.३५०९]** विहं पवन्ना घनरुक्खहेट्ठे, वसंति उस्सा-ऽवणिरक्खणट्ठा।
तस्साऽसती अब्भगवासिए वि, सुवंति चिट्ठंति व उन्निछन्ना ॥

**वृ-** अथ 'विहं' अध्वानं प्रपन्नास्ताः संयत्यस्तत्र चाधोविवृतमपि गृहं न प्राप्यते ततो घनः-बहलो निश्छिद्रो यो वृक्षः-वटादिस्तस्याधस्ताद् अवश्यायस्य-अन्तरिक्षसूक्ष्माप्कायस्य अवनेश्चसचित्तपृथिवीकायस्य रक्षणार्थं वसन्ति। तस्याप्यभावे 'अभ्रावकाशकेऽपि' आकाशे और्णिककल्पच्छन्नाः स्वपन्ति वा तिष्ठन्ति वा ॥

**मू. (६२)** *कप्पइ निग्गंथाणं अहे आगमनगिहंसि वा वियडगिहंसि वा वंसीमूलंसि वा रुक्खमूलंसि वा अब्भावगासंसि वा वत्थए ॥*

**वृ-** अस्य व्याख्या प्राग्वत् ॥ अथ भाष्यम्-

**[भा.३५१०]** एसेव गमो नियमा, निग्गंथाणं पि नवरि चउलहुगा।
नवरिं पुन नाणत्तं, अब्भावासम्मि वतिगादी ॥

**वृ-** 'एष एव' निर्ग्रन्थीसूत्रोक्तो गमः आगमनगृहादिविषयो नियमाद् निर्ग्रन्थानामपि भवति, नवरं प्रायश्चित्तं चतुर्लघुकाः, शेषं तु सर्वमपि दोषजालं तथैव वक्तव्यम्। नवरं पुनरत्र द्वितीयपदे तिष्ठतां नानात्वम्। किम्? इत्याह-व्रजिका-गोकुलं तस्यां ग्लानार्थं गताः सन्त आदिशब्दादध्वनि वा वर्त्तमाना अभ्रावकाशे वसेयुः। उत्सर्गतस्तु निर्ग्रन्थानामप्यागमनगृहादिषु स्थातुं न कल्पते॥ आह सूत्रेणानुज्ञातमवस्थानमतस्तेन सह विरोधः प्राप्नोति? सूरिराह-

**[भा.३५११]** सुत्तनिवाओ पोराण आगमे भोइए व रक्खंते।
आराम अहेवियडे, वंसीमूले व निद्दोसे ॥

**वृ-** पुराणं-चिरन्तनं यदागमनगृहं तत्र सागारिकः सम्प्रति कोऽपि नागच्छति, यद्वा यत्रागमनगृहे स्थितानां भोजिकः-ग्रामस्वामी जनमुपागच्छन्तं रक्षति, ईदृशे 'सूत्रनिपातः' सूत्रावतारो मन्तव्यः। तथा य आरामो नवमालिकागुल्मादिभिर्गुप्तस्तत्राधोविवृते सूत्रमवतरति। वंशीमूलमपि यद् निर्दोषं तत्रसूत्रावतारः ॥ अथैनामेव निर्युक्तिगाथां भाष्यकारः स्पष्टयति-

**[भा.३५१२]** अभुज्जमाणी उ सभा पवा वा, गामेगपासम्मि न याऽनुपंथे।
पभू व वारेति जनं उवेंतं, न कुप्पती सो य तहिं तु ठंति ॥

**वृ-** सभा वा प्रपा वा या अपरिभुज्यमाना ग्रामस्यैकपार्श्वे भवति, 'न च' नैव 'अनुपथे' मार्गाभ्यर्णे यद्वा भुज्यमानायामपि यत्र स्थितानां 'प्रभुः' ग्रामस्वामी सम्यग्दृष्टिर्भद्रको वा जनमुपयान्तं निवारयति, 'स च' जनो वार्यमाणः साधूनां ग्रामस्वामिनो वा न कुप्यति 'तत्र' ईदृशे आगमनगृहेऽपि तिष्ठन्ति ॥

**[भा.३५१३]** गुम्मेहि आरामघरम्मि गुत्ते, वईय तुंगाय व एगदारे।
अहे अगुत्ते छइतम्मि ठंती, न जत्थ लोगो बहु सन्निलेति ॥

**वृ-** 'गुल्मैः' नवमालिका-कोरिण्टकादिभिर्गुप्ते, वृत्या वा 'तुङ्गया' उच्चैस्तरया परिक्षिप्ते, एकद्वारे आरामगृहे अधोऽगुप्तेऽप्युपरि 'छादिते' स्थगिते तिष्ठन्ति, परं यत्र 'बहुः' भूयान् लोको न 'सन्निलीयते' न समायाति ॥

**[भा.३५१४]** जं वंसिमूलऽन्नमुहं च तेनं, पिहद्दुवारं न तओ उ छिंडी ।
सुणेति सद्दं न परोप्परस्स, न काइयं नेव य दिट्ठिवातो ॥

**वृ-** यद् 'वंशीमूलम्' अलिन्दकादि 'तेन' मूलगृहेन सहान्यतोमुखं पृथग्द्वारं च, अत एव 'ततः' तदभिमुखा छिण्डिका न भवति, यत्र च परस्परं संयता अविरतिकाश्च शब्दं न शृण्वन्ति, न चैकत्र कायिकीं कुर्वते, नैव च परस्परं दृष्टिपातः, केवलं मूलगृहेण सह द्रव्यतः प्रतिबद्धम्, न चाप्काययोजनादयो दोषाः, एवंविधे कल्पते वस्तुम् ॥

**[भा.३५१५]** असई य रुक्खमूले, जो दोसा तेहि वज्जिए ठंति ।
अद्धाणमब्भवासे, गेलन्नागाढ वइगादी ॥

एतेषामागमनगृहादीनामभावे ये पूर्वमस्थि-दारुकादयो दोषा उक्तास्तैर्वर्जिते वृक्षमूले तिष्ठन्ति। तथा अध्वानं प्रतिपन्ना अपरप्रतिश्रयाभावे आगाढे वा ग्लानत्वे व्रजिकादौ सम्प्राप्ता अभ्रावकाशे वसन्ति ॥ अथ वृक्षमूले तिष्ठतां विशेषमुपदर्शयति-

**[भा.३५१६]** कडं कुणंतेऽसति मंडवस्सा, कडाऽसती पोत्तिमतेनगम्मि ।
सद्दोवओगो धनुतासणा य, सोट्टादि पाडिंति य पुव्वलग्गे ॥

**वृ-** यत्र वृक्षमूलेऽधस्ताद् मण्डपो भवति तत्र प्रथमतः स्थातव्यम् । तदभावे कटं कुर्वन्ति, कटचिलिमिलिकां ददतीति भावः । अथ कटो न प्राप्यते ततः पोतं-वस्त्रं तैश्चिलिमिलिकाः कुर्वन्ति यदि 'अस्तेनकं' स्तेनभयं न स्यात् । अथ स्तेनभयं तत्र वर्त्तते सागारिका वा ब्रुवते 'श्रमणकाः पटमण्डपं कुर्वन्ति' ततः शब्दः कर्त्तव्यः, पक्षिणां 'छिछिका' इत्यादिना शब्देन निवारणं कार्यमिति भावः । उपयोगो वा दातव्यः । धनुषा वा पाषाणैर्वा पक्षिणां त्रासनां कुर्वन्ति, भयमुपजनयन्तीत्यर्थः। सोट्टा नाम-शुष्ककाष्ठानि तानि आदिशब्दाद् लेष्टुकादानि च पूर्वलग्नानि पातयन्ति । एषा वृक्षमूले तिष्ठतां यतना भणिता । अथाभ्रावकाशे तिष्ठतां प्रतिपाद्यते-आगाढे ग्लानत्वे दुग्धादिना प्रयोजनं भवेत् तत्राभ्रावकाशे वसनं सम्भवेत् ॥ कथम् ? इत्याह-

**[भा.३५१७]** विसोहिकोडिं हवइत्तु गामे, चिरं व कज्जं ति वयंति घोसं ।
अब्भासगामाऽसति तत्थ गंतुं, पडालि-रुक्खाऽसतिए अछन्ने ॥

**वृ-** यदा स्वग्रामे शुद्धं दुग्धादि न प्राप्यते तदा स्वग्राम एव ये विशोधिकोटिदोषास्तान् पञ्चकादिप्रायश्चित्तक्रमेण हापयित्वा दुग्धादिकं गृह्णन्ति । अथ तथापि न लभ्यते 'चिरं वा' प्रभूतदिवसान् तेन ग्लानस्य कार्यमिति कृत्वा 'घोषं' गोकुलं व्रजन्ति । कथम् ? इत्याह-'अभ्यासे' गोकुलप्रत्यासन्ने ग्रामे स्थित्वा गोकुलाद् दुग्धादिकमानेतव्यम् । अथ नास्ति प्रत्यासन्नग्रामस्ततः 'तत्र' व्रजिकायां गत्वा पटालिकायां तिष्ठन्ति । तस्या अभावे वृक्षमूले । तस्याप्यभावेऽच्छन्नेऽभ्रावकाशेऽपि तिष्ठन्ति ॥

**मू. (६३)** *एगे सागारिए पारिहारिए, दो तिन्नि चत्तारि पंच सागारिया पारिहारिया, एगं तत्थ कप्पागं ठवयित्ता अवसेसे निव्विसेज्जा ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.३५१८] जहुलदोसेहिं विवज्जिया जे, उवस्सगा तेसु जती वसंता ।
एगं अनेगे व अनुन्नविता, वसंति सामिं अह सुत्तजोगो ॥

वृ- यथोक्तैः-बीज-विकटादिभिरप्रावकाशतापर्यन्तैर्दोषैर्विवर्जिताः ये उपाश्रयास्तेषु यतयो वसन्त एकं वा अनेकान् वा गृहस्वामिनोऽनुज्ञाप्य वसन्तीत्यनेन सूत्रेण प्रतिपाद्यते । 'अथ' अयं पूर्वसूत्रैः सहास्य सूत्रस्य योग-सम्बन्धः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-एकः 'सागारिकः' वसतिस्वामी परिहारं-परित्यागमर्हतीति व्युत्पत्त्या 'पारिहारिकः' भिक्षाग्रहणे परिहर्त्तव्य इत्यर्थः । यथा चैकः सागारिकः पारिहारिकः तथा द्वौ त्रयश्चत्वारः पञ्च सागारिकाः पारिहारिकाः, न तेषां बहूनामपि गृहेषु प्रवेष्टव्यमिति भावः । अथ सूत्रेणैव सूत्रमपवदति-"एगं तत्थ कप्पागं" इत्यादि। बहुजनसाधारणे देवकुलादौ स्थिताः 'तत्र' तेषु बहुषु सागारिकेषु मध्ये येन सागारिकतया स्थापितेन शेषगृहेषु प्रवेष्टुं कल्पते तमेकं कल्पकं स्थापयित्वा शेषेषु सागारिककुलेषु 'निर्विशेयुः' प्रविशेयुरिति सूत्रसङ्क्षेपार्थः ॥ विस्तरार्थं भाष्यकृद् बिभणिषुराह-

[भा.३५१९] सागारिउ को पुन, काहे वा कतिविहो व से पिंडो ।
असिज्जायरो व काहे, परिहरियव्वो व सो कस्सा ॥

[भा.३५२०] दोसा वा के तस्सा, कारणजाए व कप्पती कम्मि ।
जयणाए वा काए, एगमनेगेसु घेत्तव्वो ॥

वृ- सागारिक इति पदमेकार्थिकनामभि प्ररुपणीयम् । कः पुनः सागारिको भवति ? इति चिन्तनीयम् । कदा वा स शय्यातरो भवति ? । कतिविधो वा "से" तस्य पिण्डः ? । अशय्यातरो वा कदा भवति ? । कस्य वा संयतस्य सम्बन्धी 'सः' सागारिकः परिहर्त्तव्यः ? । के वा 'तस्य' सागारिकपिण्डस्य ग्रहणे दोषाः ? । कस्मिन् वा कारणजातेऽसौ कल्पते ? । कया वा यतनया स पिण्ड एकस्मिन् वा सागारिके 'अनेकेषु वा' द्विप्र्यादिषु सागारिकेषु ग्रहीतव्यः ? इति द्वारगाथाद्वयसमासार्थः ॥ अथ व्यासार्थं प्रतिद्वारमभिधित्सुराह-

[भा.३५२१] सागारियस्स नामा, एगट्ठा नाणवंजणा पंच ।
सागारिय सेज्जायर, दाता य तरे घरे चेव ॥

वृ-सागारिकस्य नामानि शक्रेन्द्र-पुरन्दरादिवदेकार्थानि 'नानाव्यञ्जनानि' पृथगक्षराणि पञ्च भवन्ति । तद्यथा-सागारिकः १ शय्याकरः २ शय्यादाता ३ शय्यातरः ४ शय्याधरः ५ चेति ॥ अथैतेषामेव व्याख्यानमाह-

[भा.३५२२] अगमकरणादगारं, तस्सहजोगेन होइ सागारी ।
सेज्जाकरणे सेज्जाकरो उ दाता तु तद्दाना ॥

[भा.३५२३] गोवाइऊण वसहिं, तत्थ वि ते यावि रक्खिउं तरइ ।
तद्दानेन भवोघं, च तरति सेज्जातरो तम्हा ॥

[भा.३५२४] जम्हा धारइ सिज्जं, पडमाणिं छज्ज-लेपमाईहिं ।
जं वा तीए धरेती, नरगा आयं धरो तम्हा ॥

वृ- न गच्छन्तीत्यगमाः-वृक्षास्तैः कृतमगारम्, पृषोदरादित्वादिष्टरुपनिष्पत्ति, तेन-अगारेन

सह यस्य योगो विद्यते स सागारिकः, सर्वधनादेराकृतिगणत्वाद् मत्वर्थीय इकप्रत्ययः। यतश्चासौ शय्यां-प्रतिश्रयं करोति अतः शय्याकरः। तस्याः-शय्याया दानाच्च शय्यादाता भण्यते। यतश्चासौ वसतिं 'गोपासियतुं' संरक्षितुं 'तरति' शक्नोति ततः शय्यातरः; यद्वा 'तत्र' तस्यां-शय्यायां स्थितान् साधून् स्तेनादिप्रत्यपायेभ्यो रक्षितुं तरति ततोऽसौ शय्यातरः; अथवा तस्याः-शय्याया दानेन 'भवौघं' संसारप्रवाहं तरति अतः शय्यातर उच्यते। यस्माच्च शय्यां पतन्ती छादन-लेपनाभ्याम् आदिशब्दात् स्थूणादानादिभिश्च धारयति अतः शय्याधरः; यद्वा तया-शय्याया साधूनां वितीर्णया नरकादात्मानं धारयतीति शय्याधरः॥ गतं सागारिकद्वारम्। अथ 'कः पुनः सागारिको भवति?' इति प्रश्नस्य निर्वचनमाह-

[भा.३५२५] सेज्जायरो पभू वा, पभुसंदिट्ठो व होइ कायव्वो।
एगमनेगे च पभू, पभुसंदिट्ठे वि एमेव॥

वृ-शय्यातरः प्रभुर्वा प्रभुसन्दिष्टो वा कर्त्तव्यो भवति। तत्र प्रभुः-उपाश्रयस्वामी। प्रभुसन्दिष्टस्तु तेनैव प्रभुणा यत् कृतप्रमाणतया निर्दिष्टः। यः प्रभुः स एको वा स्यादनेको वा, प्रभुसन्दिष्टोऽपि 'एवमेव' एकोऽनेको वो भवति॥ अमुमेवार्थं विशेषत आह-

[भा.३५२६] सागारिय संदिट्ठे, एगमणेगे चउक्कभयणा तु।
एगमनेगा वज्जा, नेगेसु उ वज्जए एक्कं॥

वृ- सागारिके सन्दिष्टे च एकानेकपदनिष्पन्ना चतुष्कभजना कर्त्तव्या। सा चेयम्-एकः प्रभुरेकं सन्दिशति एष प्रथमो भङ्गः १ एकः प्रभुरनेकान् सन्दिशति इति द्वितीयः २ अनेके प्रभव एकं सन्दिशन्ति इति तृतीय ३ अनेके प्रभवोऽनेकान् सन्दिशन्ति इति चतुर्थ ४। अत्र चैको वा अनेके वा शय्यातरा वर्ज्याः। अपवादपदे पुनरनेकेषु शय्यातरेष्वेकं सागारिकं स्थापयित्वा वर्जयेत्, शेषेषु तु प्रविशेत्। एतदुपरिष्टाद् व्यक्तीकरिष्यते॥ अथ 'कदा सागारिको भवति?' इति प्रश्नस्य प्रतिवचनमाह-

[भा.३५२७] अनुनविय उग्गहंगण, पायोग्गाणुन्न अतिगते ठविते।
सज्झाय भिक्ख भुत्ते, निक्खित्ताऽऽवाए एक्को॥

वृ- अत्र नैगमनयाश्रिता बहव आदेशाः। तत्रैका आचार्यदेशीयो ब्रूते-क्षेत्रे प्रत्युपेक्षिते सति यदा प्रतिश्रयोऽनुज्ञापितस्तदा सागारिको भवति १। अपरो भणति-यदा सागारिकस्यावग्रहं प्रविष्टाः २। अन्यो ब्रूते-यदा तस्य गृहस्याङ्गणं प्रविष्टाः ३। अपरः प्राह-यदा तृणडगलादिकं प्रायोग्यमनुज्ञापितम् ४। अन्यो भणति-यदा वसतिम् 'अतिगताः' प्रविष्टाः ५। अपरो ब्रूते-दण्डकाद्युपकरणे स्थापिते दानश्राद्धादिकुलानां वा स्थापेन स्थापिते ६। तदपरः प्राह-यदा स्वाध्यायः कर्त्तुमारब्धः ७। अन्यो भणति-यदा गुरूणां पार्श्वे उपयोगं कृत्वा भिक्षां पर्यटितुं लग्नाः ८। अपरो ब्रूते-यदा भोक्तुमारब्धाः ९। अन्यो भणति-भाजनेषु निक्षिप्तेषु १०। एको ब्रूते-यदा दैवसिकमावश्यकं कृतम् ११॥

[भा.३५२८] पढमे बितिए ततिए, चउत्थ जामे व होज्ज वाधातो।
निव्वाघाए भयणा, सो वा इतरो व उभयं वा॥

वृ- अपरो भणति-रात्रौ प्रथम यामे गते सति शय्यातरो भवति १२। तदपरः-द्वितीययामे

गते १३। अन्यः प्राह-एते सर्वेऽप्यनादेशाः। कुतः ? इत्याह-अनुज्ञापितावग्रहादिषु निक्षिप्तान्तेषु दिवसत एव व्याघातो भवेत्, व्याघाताच्चान्यां वसतिमन्यद्वा क्षेत्रं गताः ततः कस्यासौ शय्यातरो भवतु ? । आवश्यकादिषु च भवितुमर्हति ? । आदेशः पुनरयम्-'निव्वाघति' व्याघाताभावे यद्यन्यां वसतिं न गताः तत्रैव रात्रावुषितास्ततो भजना कर्त्तव्या। स वा शय्यातरो भवेत् 'इतरो वा' अन्य उभयं वा ॥ इदमेव भावयति-

[भा.३५२९] जइ जग्गंति सुविहिया, करेंति आवासगं च अन्नत्थ।
सेज्जातरो न होती, सुत्ते व कए व सो होती ॥

वृ- 'यदि' इत्यभ्युपगमे, रात्रेश्चतुरोऽपि प्रहारन् 'सुविहिताः' शोभनानुष्ठानाः साधवो यदि जाग्रति प्राभातिकं चावश्यकमन्यत्र गत्वा कुर्वन्ति तदा स मूलोपाश्रयस्वामी शय्यातरो न भवति, किन्तु 'सुप्ते वा' शयिते कृते यदि कृते वा प्राभातिकावश्यके स शय्यातरो भवति। अथ शय्यातरगृहे रात्रौ सुप्त्वा प्राभातिकप्रतिक्रमणं तत्रैव कुर्वन्ति तदा परिस्फुटं स एव शय्यातर इति ॥

[भा.३५३०] अन्नत्थ व सेऊणं, आवासग चरममन्नहिं तु करे।
दोन्नि वि तरा भवंती, सत्थादिसु इधरधा भयणा ॥

वृ- अन्यत्र स्थाने सुप्त्वा 'चरमं' प्राभातिकमावश्यकमन्यत्र कुर्वन्ति तदा यस्यावग्रहे रात्रौ सुप्ता यदवग्रहे च प्राभातिकप्रतिक्रमणं कृतं तौ द्वावपि शय्यातरौ भवतः। इदं प्रायः सार्थादिषु सम्भवति, आदिशब्दात् चौरावस्कन्दभयादिपरिग्रहः। 'इतरथा तु' ग्रामादिषु वसतां 'भजना' विकल्पना ॥ तामेवाह-

[भा.३५३१] असइ वसहीय वीसुं वसमाणाणं तरा तु भयितव्व।
तत्थऽन्नत्थ व वासे, छत्तच्छायं तु वज्जेंति ॥

वृ- यत्र सङ्कीर्णायां वसतौ सर्वेऽपि साधवो न मान्ति तत्र 'विष्वग्' अन्यस्यां वसतौ वसतां साधूनां शय्यातरा भक्तव्याः। तत्र हि यदि साधवः पृथग्वसतावुष्वा द्वितीयदिने सूत्रपौरुषीं कृत्वा समागच्छन्ति ततो द्वावपि शय्यातरौ। अथ मूलवसतिमागम्य सूत्रपौरुषीं कुर्वन्ति तत एक एव मूलवसतिदाता शय्यातरः। लाटाचार्याभिप्रायः पुनरयम्-शेषाः साधवः 'तत्र वा' मूलवसतौ 'अन्यत्र वा' प्रतिवसतौ वसन्तु,न तेषां सम्बन्धिना सागारिकेणेहाधिकारः, किन्तु सकलगच्छस्य छत्रकल्पत्वात् छत्रः-आचार्यस्तस्य च्छायां वर्जयन्ति, मौलशय्यातरगृहमित्यर्थः इति विशेषचूर्णिः-निशीथचूर्ण्योरभिप्रायः। मूलचूर्ण्यभिप्रायः पुनरयम्-विस्तीर्णाया वसतेरभावे विष्वग्वसतौ वसतां शय्यातरा भजनीयाः, यदि संस्तरति ततः सर्वेऽपि शय्यातराः परिह्रियन्ताम्, अथ न संस्तरति तत एकं शय्यातरकुलं निर्विशन्ति शेषाणि परिहरन्ति। तथाऽप्यसंस्तरणे द्वित्र्यादिक्रमेण तावद् वक्तव्यं यावद् यस्य वसतावाचार्या स एको वर्जनीयः, शेषाः सर्वेऽप निर्वेशनीयाः। तथा ''तत्थऽन्नत्थ व वासे'' इत्यादि। कितैकस्याचार्यस्य बहव आचार्या श्रुतार्थमुपसम्पन्नाः, ते चैकस्यां वसतावमान्तः पृथक्पृथग्वसतिषु स्थिताः सन्तः 'तत्र' मूलाचार्यसमीपे 'अन्यत्र वा' आत्मीयासु वसतिषु वसन्तु सर्वेषामपि शय्यातराः परिहर्त्तव्याः। असंस्तरणे तु पूर्वोक्तक्रमेण तावद् वक्तव्यं यावत् छत्रच्छायां वर्जयन्ति, मौलाचार्यशय्यातरगृहमित्यर्थः ॥

गतं 'कदा सागारिकः ?' इति द्वारम्। अथ 'कतिविधः शय्यातरपिण्डः ?' इति द्वारमाह-

[भा.३५३२] दुविह चउव्विह, अट्ठविहो होति बारसविहो य ।
सेज्ञातरस्स पिंडो, तव्विवरीओ अपिंडो उ ॥

वृ- द्विविधो वा चतुर्विधो वा षड्विधो वा अष्टविधो वा द्वादशविधो वा शय्यातरस्य पिण्डो भवति । तद्विपरीतः पुनः 'अपिण्डः' शय्यातरपिण्डो न भवति ॥ अथैनामेव गाथां विवृणोति-

[भा.३५३३] आहारोवहि दुविहो, बिदु अन्ने पान ओहुवग्गहिए ।
असनादिचउर ओहे, उवग्गहे छव्विहो एस ॥

वृ- द्विविधः शय्यातरपिण्डो भवति, तद्यथा-आहार उपधिश्च । ''बिदु'' त्ति द्विगुणितौ द्वौ चत्वारो भवन्तीति कृत्वा चतुर्विधः शय्यातरपिण्डः पुनरयम्-अन्नं पानं औधिकोपकरणं औपग्रहिकोपकरणं चेति । तथा अशनादयश्चत्वार औधिकोपधि औपग्रहिकोपधिश्चेति षड्विधः॥

[भा.३५३४] अन्ने पाने वत्थे, पादे सूयादिया य चउरट्ठ ।
असनादी वत्थादी, सूयादि चउक्कका तिन्नि ॥

वृ- अन्नं पानं वस्त्रं पात्रं 'शूच्यादयः' शूची-पिप्पलक-नखरदनिका-कर्णशोधनरुपाश्चत्वार इत्यष्टविधः । तथाऽशनादीनि वस्त्रादीनि सूच्यादीनि चेति त्रीणि चतुष्कानि द्वादश भवन्ति । तद्यथा-अशनं १ पानं २ खादिमं ३ स्वादिमं ४ वस्त्रं ५ पात्रं ६ कम्बलं ७ पादप्रोञ्छनं ८ सूची ९ पिप्पलको १० नखच्छेदनकं ११ कर्णशोधनकं १२ चेति ॥

[भा.३५३५] तण-डगल-छार-मल्लग-सेज्ञा-संथार-पीढ-लेवादी ।
सेज्ञातरपिंडो सो, न होति सेहो य सोवहिओ ॥

वृ- तृण-डगल-क्षार-मल्लक-शय्या-संस्तारक-पीठ-लेपा आदिशब्दात् कुटमुखादिकं च एष शय्यातरपिण्डो न भवति । यदि च शय्यातरस्य पुत्रादि शैक्षो वस्त्र-पात्रसहितः प्रव्रजितुमुपतिष्ठते तदा स सागारिकपिण्डो न भवति, अतः कल्पते सोपधिरप्यसौ प्रव्राजयितुम् ॥ गतं 'कतिविधः सागारिकपिण्ड ?' इति द्वारम् । अथ '(अ) शय्यातरः कदा भवति ?' इति द्वारं निरुपयितुमाह-

[भा.३५३६] आपुच्छिय उग्गाहिय, वसहीतो निग्गतोग्गहे एगे ।
पढमादि जाव दिवसं, वुत्थे वज्जेज्जऽहोरत्तं ॥

वृ- अत्र नैगमनयाश्रितानि बहूनि मतान्तराणि । तत्रैको ब्रूते-सूरिभिः शय्यातरो यदा ''उच्छू वोलिंति वई'' इत्यादिवचोभिरापृष्टस्तदाऽसावशय्यातरो भवति । अपरः प्राह-यदा निर्गन्तुकामैः पात्राद्युपकरणमुद्ग्राहितं तदा अशय्यातरः । अन्यो ब्रूते-यदा वसतेर्निर्गता भवन्ति । तदपरो भणति-यदा सागारिकस्यावग्रहाद् निर्गताः । एको ब्रूते-सूर्योद्गमे निर्गतानां प्रथमपौरुष्यामतीतायामशय्यातरः । अन्योऽभिधत्ते-द्वितीयस्या पौरुष्यां गतायाम् । अपरो ब्रूते-तृतीयस्याम् । तदन्यः प्राह-'यावद् दिवसं' दिवससत्काश्चतस्त्रः पौरुष्यः तावतः कालादूर्ध्वमशय्यातरः । एते सर्वेऽप्यनादेशाः । सिद्धान्तः पुनरयम्-''वुत्थे वज्जेज्जऽहोरत्तं'' ति यस्यां वसतावुषितास्ततो यस्यां वेलायां निर्गताः तत ऊर्ध्वमहोरात्रं यावत् तद्गृहेऽशनादिकं वर्जयेयुः, ततः परं तु कल्पते । आपृष्टादिषु तु सागारिकावग्रहनिर्गतान्तेष्वादेशेषु यदि कथमपि गमनविघ्नमुत्पन्नं ततो भूयोऽपि तस्यामेव वसतौ स्थितेषु कथमशय्यातरो भवितुमर्हति ? । ये पुनः प्रथमादिप्रहरविभागेनाशय्यातरमिच्छन्ति तेषां सूर्यास्तमननिर्गतानां रात्रौ प्रथमादिपौरुषीविभागेनाशय्यातरः प्राप्नोति

तच्च न युज्यते ॥ कुतः ? इति चेद् उच्यते-

[भा.३५३७] अग्गहणं जेन निसि, अनंतरंगतरं दुहिं च ततो ।
गहणं तु पोरिसीहिं, चोदग ! एते अनादेसा ॥

वृ- 'येन' हेतुना 'निशि' रजन्यामस्माकं भक्त-पानादेरग्रहणं [illegible] रध्यन्तराभिर्वा पौरुषीभि शय्यातरपिण्डस्य ग्रहणमिच्छन्ति, हे नोदक ! त एते सर्वेऽप्यनादेशाः। आदेशः पुनरयम्-सन्ध्यायां दिवा निर्गतानां रजन्याश्चतुरो यामान् शय्यातरः, ततः परं सूर्योद्भेऽशय्यातरः ॥ एवं जघन्यत उक्तम् । उत्कर्षतः पुनरित्थम्-

[भा.३५३८] सूरत्थमणम्मि उ निग्गयाण दोण्ह रयणीण अट्ठ भवे ।
देवसिय मज्झ चउ दिननिग्गति बितियम्मि सा वेला ॥

वृ- 'सूर्यास्तमनसमये' रात्रौ निर्गतानां तामेव रात्रिमपर चाहोरात्रं शय्यातरो भवति । ततो द्वयो रजन्योरष्टौ यामाः दैवसिकाश्च रजनीद्वयमध्यवर्तिनश्चत्वारो यामाः एवं द्वादशानां यामानामन्ते उत्कर्षतोऽशय्यातरो भवति, एष एक आदेशः । द्वितीयः पुनरयम्-''दिननिग्गए बिइयम्मि सा वेल'' त्ति सूर्योदये दिवा यदि निर्गतास्तदा द्वितीये दिने तस्यामेव वेलायामशय्यातरः, एवमहोरात्रं वर्जितं भवति ॥ गतम् 'अशय्यातरो वा कदा ?' इति द्वारम् । अथ 'शय्यातरः कस्य परिहर्त्तव्यः ?' इति द्वारनिरुपणायाह–

[भा.३५३९] लिंगत्थस्स उ वज्जो, तं परिहरतो व भुंजतो वा वि ।
जुत्तस्स अजुत्तस्स व, रसावणो तत्थ दिट्ठंतो ॥

वृ- 'लिङ्गस्थस्य' साधुलिङ्गधारिणः 'तं' शय्यातरपिण्डं परिहरतो वा भुञ्जानस्य वा साधुगुणैर्युक्तस्य वा अयुक्तस्य वा शय्यातरः 'वर्ज्यः' वर्जनीयः । अत्र 'रसापणः' मद्यहट्टो दृष्टान्तः । यथा-महाराष्ट्रदेशे रसापणे मद्यं भवतु वा मा वा तथापि तत्परिज्ञानार्थं तत्र ध्वजो बध्यते, तं ध्वजं दृष्ट्वा सर्वे भिक्षाचरादयः परिहरन्ति । एवमस्माकमपि साधुगुणैर्युक्तोऽयुक्तो वा भवतु परं रजोहरणध्वजो दृश्यते इति कत्वा लिङ्गस्थस्यापि शय्यातरः परिह्रियते ॥

अथ 'के दोषाः ?' इति द्वारमाह-

[भा.३५४०] तित्थंकरपडिकुट्ठो, आणा अन्नाय उग्गमो न सुज्झे ।
अविमुत्ति अलाघवता, दुल्लभ सेज्जा य वोच्छेदो ॥

वृ- तीर्थकरैः प्रतिक्रुष्टः-निषिद्धः शय्यातरपिण्डोऽतस्तं गृह्णता तेषामाज्ञा न कृता भवति । ''अन्नाय'' त्ति 'अज्ञातोञ्छम्' आसन्ननिवासवशाद् ज्ञातस्वरुपतया न शुध्यति । प्रत्यासन्नतया तत्रैव पुनः पुनः भैक्ष-पानादिनिमित्तं प्रविशत उद्गमोऽपि न शुध्यति । 'अविमुक्तिर्नाम' स्वाध्यायश्रवणादिना आवर्जितः शय्यातरो दुग्ध-दध्यादि प्रणीतद्रव्यं ददाति, तद्ग्रहणलोलुपतया तद्गृहं न विमुञ्चति । 'अलाघवता तु' विशिष्टाहारलाभेन उपचितगल-कपोलतया शरीरलाघवं प्रचुरवस्त्रादिलाभेन उपकरणलाघवं च न भवेत् । दुर्लभा च शय्या भवति, येन किल शय्या दत्ता तेनाहारद्यपि देयमिति भयाद् भूयः शय्यामगारिणो न प्रयच्छन्तीति भावः । 'व्यवच्छेदश्च' विनाशः शय्यायाः क्रियेत, अथवा भक्त-पानादिप्रतिषेध इह व्यवच्छेदशब्देनोच्यते । एष निर्युक्तिगाथासमासार्थः ॥ अथैनामेव प्रतिपदं विवृणोति-

**[भा.३५४१]** पुर-पच्छिमवज्जेहिं, अवि कम्मं जिनवरेहिं लेसेणं ।
भुत्तं विदेहएहि य, न य सागरियस्स पिंडो उ ॥

**वृ-** पूर्वस्तीर्थकरः- ऋषभस्वामी पश्चिमः-श्रीमन्महावीरः एतद्वर्जैरजितादिभिर्मध्यमजिन-वरैर्विदेहजैश्च तीर्थकरैराधाकर्मापि 'लेशेन' सूत्रादेशतः 'भुक्तं' भोक्तुमनुज्ञातमिति भावः, 'न च' नैव सागारिकस्य पिण्डः । इयमत्र भावना-मध्यमतीर्थकृतां विदेहतीर्थकृतां च ये साधवस्तेषां यस्तैः योग्यमाधाकर्म कृतं तत्तेषां न कल्पते शेषाणां तु कल्पते इति तैराधार्मीभोजनमपि कथञ्चिदनुज्ञातम्, न पुनः शय्यातरपिण्डः,

सेज्जायरपिंडम्मी, चाउज्जामे य पुरिसजिट्ठे य ।
किइकम्मस्स य करणे, चत्तारि अवट्ठिया कप्पा ॥

इति वचनात् ॥ अथाज्ञाद्वारमज्ञातोञ्छद्वारं चाह–

**[भा.३५४२]** सव्वेसि तेसि आणा, तप्परिहारीण गेण्हता न कता ।
अन्नायं च न जुज्जति, जहिं ठितो गेण्हतो तत्थ ॥

**वृ-** सर्वेषामपि 'तेषां' तीर्थकृतां 'तत्परिहारिणां' शय्यातरपिण्डप्रतिषेधकारिणामाज्ञा तत्पिण्डं गृह्णता न कृता भवति । तथा यत्रैव गृहे स्थितस्तत्रैव भिक्षां गृह्णतोऽज्ञातोञ्छं 'न युज्यते' न घटते, न शुध्यतीत्यर्थः, अज्ञातस्य-अविदितस्य यद् उञ्छं-भैक्षग्रहणं तदज्ञातोञ्छमिति व्युत्पत्तेः॥

उद्गमाशुद्धिद्वारमाह-

**[भा.३५४३]** बाहुल्ला गच्छस्स उ, पढमालिय-पानगादिकज्जेसु ।
सज्झायकरणआउट्टिता करे उग्गमेगतरे ॥

**वृ-** गच्छस्य यद् बाहुल्यं-साधूनां प्राचुर्यं तस्माद्धेतोः प्रथमालिका-पानाकौषधादिकार्येषु पुनः पुनः प्रविशतां तथा स्वाध्यायश्रवणेन करणेन च-यथोक्तक्रियाकलापानुष्ठानेन आवर्त्तिताः-आवार्जिता उद्भमदोषाणामेकतरान् कुर्युः ॥ अविमुक्तिद्वारमाह-

**[भा.३५४४]** दव्वे भावऽविमुत्ती, दव्वे वीरल्ल ण्हारुबंधनता ।
सउणग्गहणे कड्डण, पइल्ल मुक्को वि आनेइ ॥

**वृ-** अविमुक्तिर्द्विधा-द्रव्यतो भावतश्च । द्रव्याविमुक्तौ 'वीरल्लः' ओलायकः पक्षी दृष्टान्तः । स स्नायुः-तन्त्री तद्बन्धनेन पादे बद्धवा यत्र तित्तिरिप्रभृतिकः पक्षी दृश्यते तत्र मुच्यते, ततस्तेन यदा तस्य शकुनकस्य ग्रहणं कृतं स्यात् तदा भूयोऽपि तयैव तन्त्रया तस्य कर्षणं क्रियते, तत आगतस्य हस्ततले मांसं दीयते, ततो मांसे 'प्रगृद्धः' आसक्तः सन् मुक्तोऽपि स्नायुबन्धनमन्त-रेणापि शकुनिमानयति, आनीय च तत्रैवावतिष्ठते । एषा द्रव्याविमुक्ति । अथ भावाविमुक्तिमाह-

**[भा.३५४५]** भावे उक्कोस-पनीयगेहितो तं कुलं न छड्डेति ।
ण्हाणादी कज्जेसु व, गतो वि दूरं पुनो एति ॥

**वृ-** 'भावे' भावाविमुक्ति पुनरियम्-उत्कृष्टद्रव्यं-शाल्योदनादि प्रणीतं-घृतादि तयोर्या गृद्धि-लौल्यं ततः 'तत् कुलं' शय्यातरसम्बन्धि न परित्यजति । अथवा स्नान-रथयात्रादौ पर्वणि कार्येषु च-कुल-गण-सङ्घप्रयोजनेषु दूरमपि गतो भूयः तत् कुलमागच्छति ॥ अथालाघवतां व्याचष्टे-

**[भा.३५४६]** उवहि सरीमलाघव, देहे निद्धाईविधियसरीरो ।

संयसग-सासभया, न विहरइ विहारकामो वि ॥

वृ- 'अलाघवं' गौरवं तच्च द्विधा-उपधौ शरीरे च। तत्र 'देहे' देहविषयमलाघवमिदम्-स्निग्धं-घृतादि तेन आदिशब्दाद् गुड-शर्करादिमधुरद्रव्यैः प्रतिदिनमभ्यवह्रियमाणैर्बृंहितशरीरः सन् मार्गे गच्छतां शरीरजाड्यसमुत्थो यो गात्रसङ्घर्षो यश्च श्वासः तद्भयाद् विहरयणकामोऽपि न विहरति॥ अथोपकरणालाघवमाह-

[भा.३५४७] सागारि-पुत्त-भाउग-नत्तुग दान अतिखद्ध भारभया।
न विहरति ओम सावय, नियडाऽगणि भाण एज्ज त्ति ॥

वृ- सागारिकेण-शय्यातरेण तदीयैश्च पुत्रैर्भ्रातृभिर्नप्तृभिश्च-पौत्रैः कस्यापि साधोरतिखद्धस्य-अतीवप्रभूतस्य कम्बलाद्युपकरणस्य दानमकारि, स च साधुस्तद्भारभयान्न विहरति। अन्यदा च तत्र 'अवमं' दुर्भिक्षं सञ्जातम्, स च तदापि न विहरति। "सावय" त्ति श्रावकेण चिन्तितम्-एष साधुः किमद्यापि न विहरति? नूनं बहूपकरणप्रतिबद्धोऽयम्। ततस्तेन श्रावकेण तस्य संयतस्य भिक्षाद्यर्थं विनिर्गतस्य सर्वमप्युपकरणं निष्काश्यान्यत्र सङ्गोप्य 'निकृत्या' मायया तदीय उपाश्रयः सर्वोऽपि "अगनि" त्ति अग्निना प्रदीपितः। ततः समायातः संयतः, दृष्टः प्रतिश्रयो दग्धः, कृतवान् 'हा कष्टम्! हा हा कष्टम्!! बहूपकरणं दग्धम्!!!' इति परिखेदम्। पृष्टश्च श्रावकः-किञ्चिदुपकरणं निष्काशितं न वा? इति। स प्राह-न शक्तं किमपि निष्काशयितुम् परं "भाण" त्ति भाजनद्वयं महता कष्टेन निष्काशितम्। ततः साधुना भणितम्-विहरामि सम्प्रति यस्यां दिशि सुभिक्षम्। श्रावकः प्राह-"एज्ज" त्ति सुभिक्षीभूते भूयोऽप्यागच्छेत्। ततः प्रतिपन्नं साधुना तद्वचनम्। समागतः कालान्तरेण पुनरपि तत्रैवासौ। निवेदितः श्रावकेण यथावस्थितो व्यतिकरः, क्षमयित्वा च दत्तं सर्वमपि तदीयमुपकरणम्। एवमादयो दोषा उपकरणालाघवे भवन्ति॥

अथ दुर्लभशय्याद्वारमाह-

[भा.३५४८] भिक्खा पयरणगहणं, दोगच्चं अन्नआगमे न देमो।
पयरण नत्थि न कप्पति, असाहु तुच्छे य पन्नवणा ॥

वृ- कस्यापि श्रेष्ठिनो गृहे पञ्चशतिको गच्छो वर्षासु स्थितः। स च शय्यातरो गृहमानुषाण्यादिशति-यदि साधवो गृहात् तुच्छैर्भाजनैर्निर्गच्छन्ति ततो महदमङ्गलं स्यात्, अतो दिने दिनेऽमीषां प्रथममेव भिक्षा दातव्या। ततस्ते साधवः सर्वेऽपि तस्मिन् गृहे प्रतिदिनं प्रथमतः प्रतरणभिक्षां गृह्णन्ति। ततश्च शय्यातरस्य कालान्तरेण 'दौर्गत्यं' दरिद्रता। अन्येषां च साधूनां तत्रागमनम्। ते च तं श्रेष्ठिनं वसतिं याचन्ते। स प्राह-विद्यते वसति परं न प्रयच्छामः। साधुभिरुक्तः-किं कारणं न प्रयच्छसि?। स प्राह-'प्रतरणं' प्रथमदातव्यभिक्षारूपं नास्ति। साधवो ब्रुवते-न कल्पतेऽस्माकं प्रतरणं ग्रहीतुम्। स प्रतिब्रूते-'असाधु' अमङ्गलमिदं यद् मम गृहात् तुच्छैर्भाजनैर्निर्गच्छन्ति। ततस्तस्य साधुभि प्रज्ञापना कृता-आयुष्मन्! इदमेव भवतः परमं मङ्गलं यदेवं साधूनां वसतिरुपयुज्यते, अनया हि दत्तया भवता सर्वमपि भक्त-पानादिकं दत्तमेव भवति। इत्थं प्रज्ञापितः स तेषां वसतिं प्रदत्तवान्। एवं दुर्लभा शय्या भवति॥ अथ व्यवच्छेदद्वारमाह-

[भा.३५४९] थल देउलिया ठाणं, सतिकालं दट्ठु दट्ठु तहिं गमनं।
निग्गए वसहीभंजन, अन्ने उब्भामगाऽऽउट्टा ॥

वृ- कस्यापि ग्रामस्य मध्ये स्थलम्। तत्र च ग्रामेण मिलित्वा देवकुलिका कारिता। तत्र साधवः स्थिताः। ते च तत्रोद्वततरे देवकुले स्थिताः 'सत्कालं' भिक्षाया देशकालं दृष्ट्वा दृष्ट्वा 'तत्र' तेषु कुलेषु भिक्षार्थं गच्छन्ति, न चैकमपि कुलं तेषां भिक्षां गृह्णतामुद्धरति। एवं च निर्विण्णाः सर्वेऽपि गृहस्थाः। ततो निर्गतेषु साधुषु 'वसतेः' देवकुलिकायास्तैर्भञ्जनम् 'मा अन्योऽप्येवमागत्य स्थास्यति' इति। इतश्चान्यस्मिन्नीदृशे स्थलग्रामेऽन्ये केचन साधवो देवकुलिकायां स्थिताः। ते च भगवन्तो निस्पृहाः बहिर्ग्रामेषूद्भ्रामकभिक्षाचर्यया गच्छन्ति स्वाध्यायपराश्च तिष्ठन्ति। ततस्ते गृहस्था आवृताः सम्भूय तान् साधून् निमन्त्रयन्ति। साधवो ब्रुवते-बाल-वृद्धादीनां कार्ये ग्रहीष्यामः। एवं घृतादि दुर्लभद्रव्यमपि सुलभं भवति, न च शय्याया व्यवच्छेदो जायते॥ गतं 'दोषा वा के तस्य ?' इति द्वारम्। अथ 'कारणजाते कस्मिन् कल्पते ?' इति द्वारमाह-

[भा.३५५०] दुविहे गेलन्नम्मी, निमंतणे दव्वदुल्लभे असिवे।
ओमोदरिय पओसे, भए व गहणं अनुन्नायं॥

वृ- 'द्विविधे' आगाढे अनागाढे च ग्लानत्वे १ तथा निमन्त्रणे २ दुर्लभद्रव्ये ३ अशिवे ४ अवमौदर्ये ५ 'प्रद्वेषे वा' राजद्विष्टे ६ 'भये वा' बोधिकस्तेनादिसमुत्थे ७, साम्प्रतमेनामेव विवृणोति-

[भा.३५५१] तिपरिरयमनागढे, आगाढे खिप्पमेव गहणं तु।
कज्जम्मि छंदिया घेच्छिमो त्ति न य बेंति उ अकप्पं॥

वृ- 'त्रिपरिरयं' त्रीन् वारान् परिभ्रमणं तदनागाढे ग्लानत्वे कर्त्तव्यम्। यदि तथापि ग्लानप्रायोग्यं न लभ्यते ततः पञ्चकपरिहाण्या मासलघुप्राप्ताः शय्यातरपिण्डं गृह्णन्ति। आगाढे तु ग्लानत्वे क्षिप्रमेव ग्रहणं कार्यम्। तथा शय्यातरेण 'भक्त-पानमस्मद्गृहे गृह्णीत' एवं 'छन्दिताः' निमन्त्रिताः सन्तो भणन्ति-कार्ये समुत्पन्ने ग्रहीष्याम इति। न च ब्रुवते-युष्मदीयं भक्तपानमस्माकं न कल्पते॥

[भा.३५५२] जं वा असहीणं तं, भणंति तं देह तेन जे कज्जं।
निब्बंधे चेव सइं, घेत्तूण पसंग वारेंति॥

वृ- यद् वा द्रव्यं तस्य गृहे 'अस्वाधीनं' नास्तीत्यर्थः तद् 'भणन्ति' याचन्ते इत्यर्थः। यथा-अमुकं द्रव्यं प्रयच्छत तेनास्माकं गुरुतरं कार्यम्। अथ शय्यातरो निर्बन्धम्-अतीवाग्रहं करोति ततः 'सकृद्' एकवारं गृहीत्वा भूयः प्रसङ्गं निवारयन्ति॥

[भा.३५५३] दुल्लभदव्वं च सिया, संभारघयादि घेप्पती तं तु।
ओमऽसिवे पनगादिसु, जतिऊणमसंथरे गहणं॥

वृ- दुर्लभद्रव्यं वा सम्भारघृतादिकं शय्यातरगृहे स्यात्, सम्भारः-बहुद्रव्यसंयोगस्तत्प्रधानं घृतं सम्भारघृतम्, आदिशब्दात् शतपाकतैलादि, तच्च ग्लानादिनिमित्तं शय्यातरगृहे गृह्यते। अवमौदर्या-ऽशिवयोरसंस्तरणे पञ्चकहान्या यतित्वा मासलघुप्राप्ताः शय्यातरकुले ग्रहणं कुर्वन्ति॥

[भा.३५५४] उवसमणट्ठ पदुट्ठे, सत्थो वा जा न लब्भते ताव।
अच्छंता पच्छन्नं, गेण्हंति भए वि एमेव॥

वृ- प्रद्विष्टस्य राज्ञ उपशमनार्थं तिष्ठन्तः, यद्वा राज्ञा निर्विषया आज्ञप्ताः सन्तो यावत् तत्र सार्थो न लभ्यते तावत् प्रच्छन्नं तिष्ठन्तः शय्यातरकुले भक्त-पानं गृह्णन्ति, मा पर्यटतो राजा वा राजपुरुषा वा द्राक्षन्निति कृत्वा। भयं-बोधिकस्तेनादिप्रभवं तत्र बहिर्ग्रामेषु भिक्षां गन्तुं न शक्यते

स्वग्रामे च न लभ्यते अतः 'एवमेव' शय्यातरकुले गृह्णन्ति ॥

अथ 'कया यतनया ग्रहीतव्यः ?' इति द्वारमाह-

[भा.३५५५] दिक्खुत्तो सक्खेत्ते, चउद्दिसिं मग्गिऊण कडयोगी ।
दव्वस्स य दुल्लभया, सागारियसेवणा दव्वे ॥

वृ- 'स्वक्षेत्रे' सक्रोशयोजनाभ्यन्तरे स्वग्राम-परग्रामयोः 'त्रिकृत्वः' त्रीन् वारान् चतसृष्वपि दिक्षु शुद्धं भैक्षं दुर्लभद्रव्यं वा मार्गयित्वा यदि न प्राप्नोति ततः 'कृतयोगी' गीतार्थ 'द्रव्यस्य' शुद्धभक्त-पानादेर्दुर्लभतां मत्वा सागारिकद्रव्यस्य-शय्यातर पिण्डस्य पतिसेवनां करोति ॥ उक्त एकशय्यातर विषयो विधिः । अथानेकशय्यातरविषयं विधिमाह-

[भा.३५५६] नेगेसु पिया-पुत्ता, सवत्ति वणिए घडा वए चेव ।
एएसिं नाणत्तं, वोच्छामि अहानुपुव्वीए ॥

वृ- अनेकेषु शय्यातरेष्वमी भेदाः-पिता-पुत्री सपल्यो वा वणिजो वा घटा वा-गोष्ठी व्रजो वा-गोकुलम् । एतेषां द्वाराणां 'नानात्वं' विभागं 'वक्ष्यामि' प्ररूपयिष्यामि यथानुपूर्व्या ॥ प्रतिज्ञातमेव निर्वाहयति-

[भा.३५५७] पित-पुत्त थेरए या, अप्पभु दोसा य तम्मि उ पउत्थे ।
जेट्ठातिअनुन्नवणा, पाहुणए जं विधिग्गहणं ॥

वृ- यदि पिता पुत्रश्च द्वावपि प्रभू तत उभावपि अनुज्ञापयितव्यौ । अथ पिता स्थविर इति कृत्वा चशब्दात् पुत्रोऽप्यतिबाल इति कृत्वा यद्यप्रभुस्तदा नानुज्ञापनीयः । दोषाश्चानुज्ञापनायां निष्काशनादयः प्रभुकृता भवन्ति । अथ स प्रभुः प्रोषितस्ततस्तस्यैव यो ज्येष्ठः पुत्र आदिशब्दादनुज्येष्ठादयो वा तेषामनुज्ञापना कर्त्तव्या, प्राघुणको वा यस्तस्याभ्यर्हितः सोऽनुज्ञापनीयः । सर्वत्र यद् विधिना ग्रहणं तदेवानुज्ञातं भगवद्भिर्नाविधिनेति ॥

अथैनामेव व्याख्यानयति-

[भा.३५५८] दुप्पभिइ पिया-पुत्ता, जहि होंति पभू ततो भणइ सव्वे ।
नातिक्कमंति जं वा, अपभुं व पभुं व तं पुव्वं ॥

वृ- द्विप्रभृतयोऽनियताः पितापुत्रा यत्र प्रभवो भवन्ति तत्र सर्वानपि तान् मिलितान् 'भणति' अनुज्ञापयति । यं वा प्रभुमप्रभुं वा 'नातिक्रामन्ति' नाप्रमाणयन्ति तं पूर्वमनुज्ञापयति ॥

[भा.३५५९] अप्पभु लहुओ दिय निसि, पभुनिच्छूढे विनास गरहा य ।
असहीणम्मि पभुम्मि उ, सहीणजेट्ठादऽणुन्नवणा ॥

वृ- यद्यप्रभुमनुज्ञापयन्ति ततो मासलघु । प्रभुश्च समागतो दिवा निष्काशयति चतुर्लघु । निशायां निष्काशयति चतुर्गुरु । रात्रौ निष्काशिताः स्तेन-श्वापदादिभिर्विनाशं प्राप्नुवन्ति । अन्यत्र वसतिमलभमाना लोकतो गर्हामासादयन्ति, यथा-किं यूयं शोभनैः कर्मभिर्निर्घाटिताः ? वयमपि न प्रयच्छाम इति । अथ 'प्रभुः' पिता न स्वाधीनः किन्तु प्रोषितः ततो यः स्वाधीनः ज्येष्ठादि पुत्र आदिशब्दादनुज्येष्ठादिकोऽपि यः प्रभुः सोऽनुज्ञापयितव्यः । अथ सर्वेऽपि प्रभवः ततो युगपत् ते सर्वेऽप्यनुज्ञापनीयाः ॥

[भा.३५६०] पाहुणयं च पउत्थे, भणंति मेत्तं व नातगं वा से ।

तं पि य आगतमेत्तं, भणंति अमुगेण ने दिन्नं ॥

वृ- प्रभौ प्रोषिते सति प्राघुणको यस्तस्याभ्यर्हितः समायातः तं वा मित्रं वा तदीयं 'ज्ञातकं वा' स्वजनं 'भणन्ति' अनुज्ञापयन्ति । 'तं च' प्रभुमागतमात्रमेव भणन्ति-'अमुकेन' युष्मन्मित्रादिना अस्माकमिदं गृहं प्रदत्तम् । स चामीष्टनामग्रहणे कृते न निर्घाटयति ॥ अप्रभुविषयं विधिमाह-

[भा.३५६१] अप्पभुणा उ विदिन्ने, भणंति अच्छामु जा पभू एती ।
पत्ते उ तस्स कहणं, सो उ पमाणं न ते इतरे ॥

वृ- अप्रभुरनुज्ञापितो भणति-अहं न जानामि । ततः साधवो भणन्ति-यावत् प्रभुरागच्छति तावद् वयं तिष्ठामः । एवमनुज्ञापितेनाप्रभुणा प्रतिश्रये यदा प्रभुः प्राप्तो भवति तदा तस्याग्रे यथाभूतं कथयितव्यम् । कथिते च स ददाति वा निष्काशयति वा स एव तत्र प्रमाणम्, न 'ते' पूर्वानुज्ञापिताः 'इतरे' अप्रभवः । एवमुक्तेन विधिना यद् वसतेर्ग्रहणं तदेवानुज्ञातमिति ॥

[भा.३५६२] इय एसाऽणुन्नवणाजतणा पिंडो पभुस्स ऊ वज्जो ।
सेसाणं तु अपिंडो, सो वि य वज्जो दुविहदोसा ॥

वृ- 'इति' एवमुक्तप्रकारेण एषा प्रतिश्रयानुज्ञापनायां यतना प्रोक्ता । अथ शय्यातरपिण्ड-परिहरणे यतनाऽभिधीयते-यः प्रभुः स शय्यातर इति कृत्वा तद्गृहे पिण्डो वर्ज्यः । 'शेषाणाम्' अप्रभूणाम् 'अपिण्डः' शय्यातरपिण्डो न भवति, परं सोऽपि 'द्विविधदोषात्' भद्रक-प्रान्तकृतदोषपरिहारार्थं वर्जनीयः ॥ गतं पितापुत्रद्वारम् । अथ सपत्नीद्वारम्-

[भा.३५६३] एगे महानसम्मी, एक्कतो उक्खित्ते सेसपडिनीए ।
जेट्ठाए अनुन्नवणा, पउत्थे सुय जेट्ठ जाव पभू ॥

वृ- शय्यातरे प्रोषिते सति यास्तदीयाः पत्न्यस्तासां यद् भोजनं तत्र चतुर्भङ्गी-एकत्र राद्धमेकत्र भुक्तं १ एकत्र राद्धं विष्वग् भुक्तं २ विष्वग् राद्धमेकत्र भुक्तं ३ विष्वग् राद्धं विष्वग् भुक्तम् ४ । तत्र "एगे महानसम्मी एगतो"त्ति एकस्मिन् महानसे राद्धमेकतो भुक्तमिति प्रथमभङ्गो गृहीतः । "उक्खित्तं"ति एकत इति पदमनुवर्त्तते, एकतः-एकस्मिन् स्थाने 'उत्क्षिप्तं' भोजनभूमिकां नीतं भुक्तमिति यावत् अर्थादापन्नं विष्वग् राद्धम्, एतेन तृतीयभङ्ग उपात्तः । द्वितीय-चतुर्थभङ्गौ पुनरवर्जनीयाविति कृत्वा न गृहीतौ । "सेसपडिनीए"त्ति यद् एकत्र राद्धमेकत्र भुक्तं तत्र भुतशेषं यद्यपि शेषसपत्नीभिः स्वगृहं प्रत्यानीतं तथापि भद्रक-प्रान्तदोषपरिहारार्थं वर्जनीयम् । तथा प्रभौ प्रोषिते तदीया ज्येष्ठभार्या वसतिमनुज्ञाप्यते । अथ सा न सुतमाता ततोऽनुष्ठाऽपि या पुत्रवती । द्वयोर्वा पुत्रवत्योर्या ज्येष्ठपुत्रा, यत्पुत्रो वा प्रभुः, या वा स्वयं गृहे 'प्रभुः' प्रमाणभूता सा अनुज्ञापनीया । एषा चिरन्तनगाथा ॥ अथैनामेव विवृणोति-

[भा.३५६४] तम्मि असाहीणे जेट्ठपुत्तमाया व जा व से इट्ठा ।
अह पुत्तमाय सव्वा, जीसे जेट्ठो पभू वा वि ॥

वृ- 'तस्मिन्' गृहस्वामिनि 'अस्वाधीने' असन्निहिते ज्येष्ठा भार्या पुत्रमाता वा या वा "से" तस्य गृहपतेः 'इष्टा' वल्लभा सा वसतिमनुज्ञापनीया । अथ सर्वा अपि पुत्रमातरोऽभीष्टाश्च ततो यस्याः पुत्रो ज्येष्ठस्तामनुज्ञापयन्ति । अथ ज्येष्ठः पुत्रो न प्रभुः ततः कनिष्ठोऽपि यस्याः पुत्रः

प्रभुः सा अनुज्ञापयितव्या ॥ पिण्डग्रहणे विधिमाह–

[भा.३५६५] असहीणे पभुपिंडं, वज्जंती सेसए तु भद्दादी ।
साहीणे जहि भुंजइ, सेसे वि उ भद्द-पंतेहिं ॥

वृ- अस्वाधीने गृहस्वामिनि या तत्पली प्रभुस्तस्याः पिण्डं साधवो वर्जयन्ति । शेषसपत्नीगृहेषु शय्यातरपिण्डः परं भद्रक-प्रान्तकृता दोषा भवन्ति अतस्तासामपि पिण्डः परिहर्त्तव्यः । अथ स्वाधीनः शय्यातरः ततो यस्या गृहे भुङ्क्ते तत्र शय्यातरपिण्ड इति कृत्वा वर्जयन्ति । शेषाण्यपि सपत्नीगृहाणि भद्रक-प्रान्तदोषपरिहारार्थं वर्जयन्ति ॥

[भा.३५६६] एगत्थ रंधणे भुंजणे य वज्जेंति भुत्तसेसं पि ।
एमेव वीसु रद्धे, भुंजंति जहिं तु एगत्था ॥

वृ- एकत्र राद्धमेकत्र भुक्तमित्यादिचतुर्भङ्ग्यां यत्रैकत्र रन्धनं भोजनं वा तत्र भुक्तशेषमपि वर्जयन्ति, प्रथमभङ्गे इत्यर्थः । एवमेव विष्वग् राद्धेऽपि यत्रैकत्र भुञ्जते तत्र भुक्तशेषमपि न गृह्णन्ति, तृतीयभङ्गे इति भावः ॥ एवमस्वाधीनभर्तृकाणां विधिरुक्तः । अथ स्वाधीनभर्तृकाणां यो विधिस्तमाह-

[भा.३५६७] नियय व अनियय वा, जहिं तरो भुंजती तु तं वज्जं ।
सेसासु वि न य गिण्हति, मा छोभगमादि भद्दाई ॥

वृ- नियतं वा अनियतं वा यत्र शय्यातरो भुङ्क्ते तद् गृहं वर्जनीयम् । नियतं नाम-यदेकस्या एव गृहे प्रतिदिनं भुङ्क्ते । अनियतं तु-वारकेण सर्वासामपि गृहे भुङ्क्ते । शेषपत्नीगृहेषु यद्यपि शय्यातरपिण्डो न भवति तथापि गृह्णाति, मा भद्रक-प्रान्तकृता छोभकादयो दोषा भवेयुः । छोभकः-प्रक्षेपकः तं शेषपत्नीगृहे भद्रकः शय्यातरः कुर्यात् 'मम गृहे तावदमी न गृह्णन्ति अत एवमपि दत्त्वा पुण्यमुपार्जयामि' इति बुध्या । यस्तु प्रान्तः स द्वेषं यायात्- अहो ! दुर्दृष्टधर्माणोऽमी, यदि मदीयगृहे न कल्पते तत एतासां मद्दत्तोपजीविनीनां गृहे कथं कल्पते ? इति; प्रद्विष्टश्च प्रतिश्रयाभिष्काशयेत् ॥ गतं सपत्नीद्वारम् । अथ वणिग्द्वारमाह-

[भा.३५६८] दोसु वि अव्वोच्छिन्ने, सव्वं जंतम्मि जं च पाउग्गं ।
खंधे संखडि अडवी, असती य घरम्मि सो चेव ॥

वृ- कोऽपि शय्यातरो देशान्तरं गन्तुकामो नगरादेर्बहिः स्थितो वर्त्तते, तस्य च 'द्वयोरपि गृहयोः' अन्तर्गृहाद् बहिर्गृहे बहिर्गृहाच्चाभ्यन्तरगृहे भक्तादिकमव्यवच्छिन्नं यद् आनीयते तत्र कल्पते । अथासौ शय्यातरस्ततः स्थानात् प्रस्थितः ततः 'याति' गच्छति तस्मिन् 'सर्वं' तद्दिवसनीत-मन्यदिवसनीतं च भक्त-पानं न कल्पते । सर्वमित्युक्ते मा भूदतिप्रसङ्ग इत्याशङ्कयाह-यच्च 'प्रायोग्यं' यतिजनयोग्यम्, एषणीयं प्रासुकं चेत्यर्थः, "खंधे"त्ति स्कन्धप्रदेशे मोट्टां कृत्वा बहिर्ग्रामेषु व्यवहरन् शय्यातरः साधूनां दधि-दुग्धादिकं दद्यात्, "संखडि"त्ति सङ्खडीं कुर्वन् साधूनामपि दद्यात्, "अडवि"त्ति अटवीं वा काष्ठच्छेदनादिनिमित्तं गृहीतशम्बलो गच्छन् साधून् दृष्ट्वा तन्मध्यात् तेषामपि दद्यात्, एतेषु त्रिष्वपि न कल्पते । "असई य घरम्मि सो चेव" त्ति यदि शय्यातरः सपुत्र-पशु-बान्धवो गृहे नास्ति किन्तु देशान्तरं प्रोषितः तदा देशान्तरस्थितोऽपि स एव शय्यातरो नान्य इति निर्युक्तिगाथासमासार्थः ॥ अथैनामेव विवरीषुराह-

[भा.३५६९] निग्गमगाइ बहि ठिए, अंतो खेत्तस्स वज्जए सव्वं ।
बाहिं तद्दिननीए, सेसेसु पसंगदोसेण ॥

वृ- शय्यातरो वाणिज्येन देशान्तरं गन्तुकामो निर्गमकः-प्रस्थानं स शुभमुहूर्ते क्रियते इत्यादिकारणेन नगरादेर्बहिर्गत्वा सक्रोशयोजनक्षेत्रस्याभ्यन्तरे बहिर्वा स्थितो भवेत् । यदि 'अन्तः' क्षेत्राभ्यन्तरे स्थितः तदा 'सर्वं' तद्दिवसा-ऽन्यदिवसनीतं शय्यातरपिण्ड इति कृत्वा वर्जयेत् । अथासौ क्षेत्राद् बहि स्थितस्ततस्तद्दिवसनीतं शय्यातरपिण्डः, शेषदिवसनीतं तु यत् परिवासितं यद् वा तत्रैवोपस्कृतं तन्न शय्यातरपिण्डः, परं तदपि 'प्रसङ्गदोषेण' 'मा भद्रक-प्रान्तकृतदोषाणां प्रसङ्गो भवेत्' इति कृत्वा न ग्रहीतव्यम् ॥

[भा.३५७०]ठितो जया खेत्तबहिं सगारो, भत्तादियं तस्स दिने दिने य ।
अच्छिन्नमाणिज्जति निज्जती य, गिज्झा तदा होंति तहिं वि वज्जे ॥

वृ- यदा सागारिकः क्षेत्राद् बहि स्थितस्तदा तस्य भक्तादिकमव्यवच्छिन्नं दिने दिने गृहाद् बहिरानीयते बहिस्थानाच्च गृहं नीयते तत् सर्वमपि तत्र स्थितस्य तस्य वर्जयेत् ॥

[भा.३५७१] बाहिं ठिय पठियस्स उ, सयं व संपत्थिया उ गेण्हंति ।
तत्थ उ भद्दगदोसा, न होंति न य पंतदोसा उ ॥

वृ- शय्यातरः क्षेत्राद् बहि स्थितो यस्यां वेलायामग्रतो गन्तुं प्रस्थितः, स्वयं वा साधवः पूर्णे मासकल्पे सम्प्रस्थिताः तदा तद्दिवसा-ऽन्यदिवसानीतं सर्वमपि प्रायोग्यं भक्त-पानं गृह्णन्ति । कुतः ? इत्याह-'तत्र' तस्यां वेलायां गृह्यमाणे भद्रकदोषाः प्रान्तदोषाश्च न भवन्ति, पुनर्ग्रहणाभावादिति भावः ॥ अथ स्कन्धपदं सङ्खडिपदमडवीपदं च व्याख्याति-

[भा.३५७२] अंतो बहि कच्छउडियादि ववहरंते पसंगदोसा उ ।
देउल-जन्नगमादी, कट्ठादऽडविं व वच्चंते ॥

वृ- क्षेत्रस्यान्तर्बहिर्वा शय्यातरः 'कक्षापुटिकादि' कक्षाप्रदेशे पुटा यस्य स कक्षापुटिकः-गृहीतोभयमोक्षक इत्यर्थः, आदिशब्दात् कौतुपिकादिर्वा बहिर्ग्रामेषु व्यवहरन् साधूनां दधिदुग्धादिकं दापयति । तत्र क्षेत्रस्यान्तस्तद्दिननीतमन्यदिननीतं च शय्यातरपिण्डः । बहि पुनस्तद्दिवसनीतं शय्यातरपिण्डः, शेषदिवसनीतं न शय्यातरपिण्डः, परं भूयः प्रसङ्गदोषान्न गृह्यते । एवं देवकुल-तडाग-यज्ञादिकां सङ्खडीं कुर्वता काष्ठादिनिमित्तं च शम्बकं गृहीत्वाऽटवीं व्रजता क्षेत्रान्तर्दीयमानं शय्यातरपिण्डः । क्षेत्रबहिस्तद्दिवसनीतं शय्यातरपिण्डः, न द्वितीयादिदिवसनीतम्, परं तदपि न ग्रहीतव्यम्, मा भूयः सङ्खडिकरणमटवीगमनं वा साधूनां दानार्थं कार्षीदिति कृत्वा ॥

अथ 'गृहे असन् स एव शय्यातरः' इति पदं व्याचष्टे-

[भा.३५७३] मुत्तूण गेहं तु सपुत्त-दारो, वाणिज्जमादी जति कारणेहिं ।
सयं व अन्नं व वएज्ज देसं, सेज्जातरो तत्थ स एव होति ॥

वृ- 'मुक्त्वा' परित्यज्य गेहं साधूनर्पयित्वेत्यर्थः सपुत्र-दारः शय्यातरो वाणिज्यादिभि कारणैर्यदि स्वकमन्यं वा देशं व्रजति तत्रापि स एव शय्यातरो भवति, न पुनर्दूरदेशान्तरस्थितत्वात् तस्य शय्यातरत्वमपगच्छतीति ॥ गतं वणिग्द्वारम् । घटाद्वारमाह-

[भा.३५७४] महतर अनुमहत्तरए, ललियासण कडुअ दंडपतिए य ।

एतेहि परिग्गहिया, होंति घडातो तदा काले ॥

वृ- महत्तरोऽनुमहत्तरको ललितासनिकः कटुको दण्डपतिकश्चेति, एतैः पञ्चभि परिगृहीतास्तदा पूर्वकाले 'घटाः' गोष्ठ्यः 'भवन्ति' बभूवुरित्यर्थः ॥ अथामूनेव महत्तरादीन् व्याख्यानयति-

[भा.३५७५] सव्वत्थ पुच्छणिज्जो, तु महत्तरो जेट्ठआसण धुरे य ।
तहियं तु असन्निहिए, अनुमहत्तरतो धुरे ठाति ॥

वृ- यः 'सर्वत्र' सर्वेषु गोष्ठिकार्येषूत्पद्यमानेषु सर्वैरपि गोष्ठिपुरुषैः प्रच्छनीयः, यस्य च ज्येष्ठं बृहत्तरमासनम्, 'धुरि च' सर्वेषामादौ स्थाप्यते स महत्तरः । ततः 'तस्मिन्' मूलमहत्तरेऽसन्निहिते यस्तत्र सर्वैरपि प्रच्छनीयः 'धुरि च' प्रथमं तिष्ठति सोऽनुमहत्तरः ॥

[भा.३५७६] भोयणमासणमिट्ठं, ललिए परिवेसिया दुगुणभागो ।
कडुओ उ दंडकारी, दंडपती उग्गमे तं तु ॥

वृ- यस्य भोजनमासनं च 'इष्टम्' मनोभिरुचितं क्रियते, परिवेषिका च स्त्री तस्याभीष्टा क्रियते, इष्टभोजनस्य द्विगुणो भागो दीयते स ललितमशनमासनं वाऽस्येति व्युत्पत्त्या ललिताशनिको ललितासनिको वा । अपराधापन्नस्य गोष्ठिकस्य यो दण्टपरिच्छेदकारी स कटुको भण्यते । यः पुनस्तं दण्डमुद्गमयति स दण्डपति ॥ एतेषां महत्तरादीनां यद् देवकुल-सभादिकं तस्य कथमनुज्ञापना विधेया ? इत्याह-

[भा.३५७७] उल्लोमाऽणुन्नवणा, अप्पभुदोसा य एक्कओ पढमं ।
जेट्ठादिअनुन्नवणा, पाहुणए जं विहिग्गहणं ॥

वृ- महत्तरादिक्रममुल्लङ्घ्य यदि उल्लोमं-प्रतीपक्रमेणानुज्ञापनां करोति तदा मासलघु, 'अप्रभुदोषाश्च' निष्काशनादयो भवेयुः, अतः सर्वेऽप्येकतो मिलिताः प्रथममनुज्ञापनीयाः । अथ सर्वे मिलिता नावाप्यन्ते ततो ज्येष्ठमहत्तरस्य, तदभावे यथाक्रममनुमहत्तरादीनामनुज्ञापना विधेया । अथ महत्तरादीनामेकोऽपि गृहे न प्राप्यते ततो यस्तेषामभ्यर्हितः प्राघुणकस्तमनुज्ञापयन्ति। एवंविधेन विधिना यदुपाश्रयस्य ग्रहणं तदेवानुज्ञातम्, नाविधिग्रहणम् ॥ अमुमेवार्थं स्फुटतरमाह-

[भा.३५७८] उल्लोम लहू दिय निसि, तेनेक्कहि पिंडिए अनुन्नवणा ।
असहीणे जेट्ठादि य, जइ य समाणा महतरं वा ॥

वृ- यदि 'उल्लोमं' महत्तरादिक्रमव्यत्यासेनानुज्ञापयन्ति तदा मासलघु । तेनैकत्र 'पिण्डितानां मिलितानां पञ्चानामप्यनुज्ञापना कर्त्तव्या । अथ सर्वेऽपि मिलिता अस्वाधीनाः-न प्राप्यन्ते इत्यर्थः ततो ज्येष्ठ-महत्तरादिगृहेषु गत्वा अनुज्ञापना विधेया । 'यति वा' यावतः त्रिप्रभृतीन् तत्र सतः-स्वाधीनान् पश्यन्ति तावतामनुज्ञापनां कुर्वन्ति । महत्तरं वा एकमप्यनुज्ञापयन्ति, तस्य प्रमाणभूततया सर्वेषामनतिक्रमणीयत्वात् ॥ गतं घटाद्वारम्, व्रजद्वारमाह-

[भा.३५७९] बाहिं दोहणवाडग, दुद्ध-दही-सप्पि-तक्क-नवनीते ।
आसन्नम्मि न कप्पति, पंच पए उप्परिं वोच्छं ॥

वृ- कस्यापि शय्यातरस्य सम्बन्धी ग्रामाद् बहिर्गवां दोहनवाटको भवेत्, तस्मिन् दुग्ध-दधिसर्पिस्तक्र-नवनीताख्यानि पञ्च 'पदानि' द्रव्याणि भवन्ति । एतच्च द्रव्यपञ्चकम् 'आसन्ने' क्षेत्राभ्यन्तरे दीयमानं न कल्पते, शय्यातरपिण्डत्वात् । अथैतानि दुग्धादीनि क्षेत्रस्य 'उपरि'

बहिर्वर्त्तन्ते ततस्तद्विषयं ग्रहणविधिमहं वक्ष्यामि ।। प्रतिज्ञातमेव निर्वाहयति-

[भा.३५८०] निज्जंतं मोत्तूणं, वारग भति दिवसए भवे गहणं ।
छिन्नं भतीय कप्पति, असती य धरम्मि सो चेव ।।

वृ- गोकुलाद् दुग्धादिपञ्चकं शय्यातरगृहे यद् नीयते स शय्यातरपिण्डो भवति, अतस्तद् दुग्धादिकं नीयमानं मुक्त्वा यदन्यत् तत्रैव गोकुले परिभुज्यते तन्न भवति शय्यातरपिण्डः, परं तदपि भद्रक-प्रान्तदोषपरिहारार्थं न गृह्यते । यस्मिन् पुनर्दिवसे 'भृतकस्य' गोपालस्य वारकस्तस्मिन् दुग्धादिकं शय्यातरपिण्डो न भवति, परं शय्यातरस्यापश्यतो ग्रहणं भवेद् न पश्यतः । तथा भृतिर्नाम-गोपालकस्य दुग्धचतुर्थभागादि परिभाषिता दिवसदैवसिकी वृत्ति तया 'छिन्नं' विभक्तं यद् दुग्धादिकं तद् गोपालसत्कमिति कृत्वा कल्पते ग्रहीतुं यदि शय्यातरो न पश्यति । तथा यदि साधूनां शय्यां समर्प्य शय्यातरः सपुत्र-दारो व्रजिकायां गच्छेत् ततो गृहेऽविद्यमानोऽपि स एव शय्यातरो भवति ।। अथास्या एव विषमपदानि विवृणोति-

[भा.३५८१] बाहिरखेत्ते छिन्ने, वारगदिवसे भतीय छिन्ने य ।
सो उन सागरिपिंडो, वज्जो पुन दिट्ठि भद्दादि ।।

वृ- सक्रोशयोजनक्षेत्रस्य बहिर्यश्छिन्नो विभागः शय्यातरगृहे न नीयते, गोपालकवारकदिवसे वा यः सर्वोऽपि दोहो गोपसत्कः, प्रतिदिवसलभ्यो वा भृत्या छिन्नो यो दुग्धचतुर्थभागादिरूपो विभागः स एष सर्वोऽपि सागारिकपिण्डो न भवति, परं 'भद्रक-प्रान्तकृता दोषा दृष्टे सति मा भूवन्' इति कृत्वा शय्यातरस्य पश्यतः सोऽपि वर्जनीयः ।। अथ यदुक्तं सूत्रे-''एगं तत्थ कप्पागं ठवइत्ता अवसेसे निव्विसिज्जा'' तदेतद् विभावयिषुराह–

[भा.३५८२] एगं ठवे निव्विसए, दोसा पुन भद्दए य पंते य ।
निस्साए वा छुभणं, विनास गरहं व पावंति ।।

वृ- यद्यनेकेषु शय्यातरेषु निष्कारणे एकं सागारिकं स्थापयन्ति शेषान् 'निर्विशन्ति' उपभुञ्जते ततो भद्रक-प्रान्तविषया दोषा भवन्ति । भद्रको निर्विश्यमानशय्यातरस्य निश्रया तदीय-भक्त-पानमध्ये प्रक्षेपं कुर्यात्, 'मम गृहे तावदमी न गृह्णन्ति अतो मदीयमिदं भवद्भि संयतानां दातव्यम्' इति कृत्वा । यस्तु प्रान्तः स एक एव स्थाप्यमानः प्रद्वेषं यायात्, प्रद्विष्टश्च वसतेर्निष्काशनं कुर्यात्, निष्काशिताश्च स्तेन-श्वापदादिभिर्विनाशं लोकाद् वा गर्हामासादयन्ति । कारणे पुनरेकमपि स्थापयन्तो निर्दोषाः ।। कथम् ? इत्याह-

[भा.३५८३] सड्ढेहि वा वि भणिया, एग ठवेत्ताण निव्विसे सेसे ।
गणदेउलमादीसु व, दुक्खं खु विवज्जिउं बहुगा ।।

वृ- वाशब्द उत्सर्गपदे तावन्न कल्पते एकः सागारिकः स्थापयितुम्, द्वितीयपदे तु कल्पतेऽपीत्यस्यार्थस्य सूचनार्थः । ये श्राद्धाः-साधुसामाचारीकोविदास्तैः साधवो भणिताः- आर्या ! एकं शय्यातरं स्थापयित्वा शेषान् निर्विशत, मा सर्वानपि परिहरत । एवमुक्ता एकं स्थापयित्वा शेषान् निर्विशन्ति । अथवा गणस्य-बहुजनसमूहस्य सामान्ये देवकुल-सभादौ स्थिता अनुक्ता अप्येकं स्थापयित्वा शेषान् निर्विशन्ति । कुतः ? इत्याह-'दुःखं' दुष्करं तत्र बहून् वर्जयितुम् ।।

[भा.३५८४] गिण्हंति वारएणं. अनुग्गहत्थीसु जह रुई तेसिं ।
पक्कन्नपरीमाणं, संतमसंतेयरे दव्वे ॥

वृ- यद्वा ते सर्वेऽपि शय्यातरा अनुग्रहार्थिनः ततो यथा तेषं रुचिरुपजायते तथा वारकेण गृह्णन्ति । तत्र च पक्के-उपस्कृते अन्ने परिमाणं ज्ञातव्यम्-किं परिमितानामुपस्क्रियते ? उतापरिमितानाम् ? इति । तदपि द्रव्यं तस्य गृहे तत्र देशे वा 'सद्' विद्यमानम् ? उत 'असद्' अविद्यमानम् ? । यदि पूर्वपरिणामेन सद् द्रव्यमुपस्कुर्वन्ति तदा कल्पते, अन्यथा भजनीयम् । एवं तस्य शय्यातरस्य द्रव्ये सम्यगुपयोगो दातव्यः ॥

मू. (६४) *नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियपिंडं बहिया अनीहडं संसट्ठं पडिग्गाहित्तए ॥*

मू. (६५) *नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागरिय पिंडं बहिया अनीहडं असंसट्ठं पडिग्गाहेत्ता ॥*

[भा.३५८५] अंतो नून न कप्पइ, कप्पइ निक्खामिवो हु मा एवं ।
पत्तेय विमिस्सं वा, पिंडं गेण्हेज्जऽतो सुत्तं ॥

वृ- नूनम् 'अन्तः' गृहाभ्यन्तरे शय्यातरपिण्डो न कल्पते, गृहाद् बहिर्निष्कामितस्तु कल्पते। एवं विचिन्त्य मा 'प्रत्येकम्' असंसृष्टं 'विमिश्रं वा' संसृष्टं पिण्डं गृह्णीयात्, अत एतत् सूत्रमारभ्यते। वक्ष्यमाणसूत्रद्वयस्याप्ययमेव सम्बन्धो द्रष्टव्यः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा सागारिकपिण्डं बहिर्वाटकाद् 'अनिर्हतम्' अनिष्कामितम् 'असंसृष्टं वा' अन्यदीयपिण्डैः सहामीलितं 'संसृष्टं वा' अन्यदीयपिण्डैः समं मीलितं प्रतिग्रहीतुमिति सूत्रार्थः॥

अथ भाष्यविस्तरः-

[भा.३५८६] वाडगदेउलियाए, इच्छा देंतम्मि गहण तह चेव ।
नीसट्ठमणीसट्ठे, गहणा-ऽगहणे इमे दोसा ॥

वृ- शय्यातरवाटकस्य मध्ये काचिद् देवकुलिका तस्या यद् वानमन्तरं तदर्थं वाटकवास्तव्या अगारिणः सङ्खडीं कुर्वन्ति । तत्र च भिक्षाचरेभ्यो दातुं तेषामिच्छा समजनि । ततो वाटकवास्तव्यजने 'ददति' दातुमुपस्थिते ग्रहणं तथैव मन्तव्यं यथा पूर्वसूत्रे अभिहितम् । तथा निसृष्टं नाम-यद् वल्यादिकं वानमन्तरस्य निवेदितम्, अनिसृष्टं तु तद्विपरीतम्, तयोर्ग्रहणेऽग्रहणे च 'अमी' वक्ष्यमाणा दोषा भवन्तीति सङ्ग्रहगाथासमासार्थः ॥ अथैनामेव विवृणोति-

[भा.३५८७]उप्पत्तियं वा वि धुवं व भोज्जं, तस्सेव मज्झम्मि उ वाडगस्स ।
अमिस्सिते सागरिचोल्लगम्मि, अन्नेहिं सो चेव उ तस्स पिंडो ॥

वृ- 'तस्यैव' सागारिकसत्कस्य वाटकस्य मध्ये वानमन्तरमुद्दिश्य 'भोज्यं' सङ्खडिर्भवेत्, तच्चौत्पत्तिकं वा स्याद् ध्रुवं वा । औत्पत्तिकं नाम-पर्वतिथिमन्तरेणाकस्मिकम् । ध्रुवं तु-पर्वतिथिभावि, यथा नवम्यां दशम्यां वा । तत्रान्यैश्चोल्लकैः सममिश्रितो यः सागारिकचोल्लकस्तस्मिन् सङ्खड्यां दीयमाने स एव तस्य शय्यातरस्य पिण्डो भवति ॥

अस्य निवेदितस्यानिवेदितस्य वा ग्रहणे तावदिमे दोषाः-

[भा.३५८८] भद्दो तन्नीसाए, पंतो घेप्पंते दट्ठूणं भणइ ।

अंतोघरे न इच्छह, इह गहणं दुट्ठधम्मो त्ति ॥

**वृ-** यः सागारिको भद्रकः सः 'तन्निश्रया' वानमन्तरनिवेदनाव्याजेनान्यदप्यात्मीयमाहारजातं तत्र प्रक्षिपेत् । यस्तु प्रान्तः स तथा गृह्यमाणं दृष्ट्वा भणति-'अन्तर्गृहे' गृहाभ्यन्तरे दीयमानं मदीयं पिण्डं नेच्छथ, इह पुनरेवं दीयमानस्य ग्रहणं कुरुथ, अहो ! दुष्टधर्माणो यूयमिति ॥

तथैतद्दोषभयान्न गृह्णन्ति ततः किं भवति ? इत्याह-

**[भा.३५८९]** तेसु अगिण्हंतेसु य, तीसे परिसाए एवमुप्पज्जे ।
को जाणइ किं एते, साहू घेत्तुं न इच्छंति ॥

**वृ-** 'तेषु' साधुषु तं शय्यातरसत्कं निवेदनापिण्डमगृह्णानेषु 'तस्याः' सङ्खडिकारिण्याः पर्षद एवं चिन्ता समुत्पद्यते, यथा-'को जानाति' को नामामुमर्थं सम्यग् वेत्ति किम् 'एते' साधव इदं शय्यातरसत्कमाहारजातं ग्रहीतुं नेच्छन्ति ? ॥

**[भा.३५९०]** नूनं से जाणंति कुलंव गोत्तं, आगंतुओ सो य तहिं सगारो ।
भूणग्घऽसोयं व ततो चएवि, जं अम्ह इच्छंति न सेज्जदातुं ॥

**वृ-** नूनं "से" तस्य शय्यास्वामिनो जानन्त्यमी कुलं वा गोत्रं वा, यथाऽयं नीचकुलोत्पन्नो हीनगोत्रो वेति । स च सागारिकः 'तत्र' ग्रामादावागन्तुकः अतो न तदीयं कुलादि तत्र कोऽपि वेत्ति । यद्वा ते गृहस्थाश्चिन्तयेयुः-'भ्रूणघ्नः' बालमारकोऽयं शौचं वा-शुचिसमाचारतारूपमस्य नास्ति, तत एतदीयं पिण्डं त्यक्त्वा यदमी अस्माकं चोल्लकं ग्रहीतुमिच्छन्ति, न शय्यादातुः सम्बन्धिनम् ॥ ततः सागारिक इत्थं चिन्तयेत्-

**[भा.३५९१]** ओभामिओ नेहि सवासमज्झे, चंडालभूतो य कतो इमेहिं ।
गेहे वि निच्छंति असाधुधम्मा, अतो परं किं व करेज्ज अन्नं ॥

**वृ-** अपभ्राजितोऽहम् 'अमीभि' श्रमणकैः 'स्ववासमध्ये' स्वकीयसहवासिजनमध्ये, चाण्डालभूतश्च कृतोऽहममीभिर्मुण्डैः, गेहेऽपि च मदीये नेच्छन्त्यमी असाधुधर्माणः पिण्डं ग्रहीतुम्, अतः परं किं वा मम 'अन्यद्' अपरं कुर्यु ? यत् कर्तु योग्यं तदमीभि कृतमिति भावः ॥ ततश्च-

**[भा.३५९२]** राओ दियावा वि हु नेच्छुभेज्जा, एगस्सऽणेगाण व सेज्जछेदं ।
अद्धाण निंता व अलंभे जं तू, पावेज्ज तं वा वि अगिण्हमाणा ॥

**वृ-** रात्रौ वा दिवा वा साधून् प्रतिश्रयाद् निष्काशयेत् । 'एकस्य वा' तस्यैव गच्छस्य 'अनेकेषां वा' बहूनां गच्छानां शय्यादानव्यवच्छेदं कुर्यात् । ततोऽध्वनि वहमाना निर्गच्छन्तोवा साधवस्तदीयदोषेण वसतिमलभमाना यत्परितापनादिकं प्राप्नुयुः तत् ते शय्यातरचोल्लकमगृह्णानाः प्राप्नुवन्ति, तन्निष्पन्नं तेषां प्रायश्चित्तमिति भावः ॥

एवमसंसृष्टपिण्डविषया दोषा उक्ताः । अथ संसृष्टपिण्डविषयानाह-

**[भा-३५९३]** संसट्ठस्स उ गहणे, तहियं दोसा इमे पसज्जंति ।
तन्नीसाए अभिक्खं, संखडिकारावणं होज्जा ॥

**वृ-** यद्यन्यदीयचोल्लकैः संसृष्टं सागारिकपिण्डं गृह्णन्ति तदा तत्रैते दोषाः प्रसजन्ति-'तन्निश्रया' 'यद्यन्यदीयपिण्डसंसृष्टो मदीयः पिण्डो अमीषां कल्पते तत इत्थं कृत्वा भूयो भूयो दापयिष्यामि' इत्यालम्बनेन वाटकवास्तव्यजनैरभीक्ष्णं सङ्खडीकारापणं भवेत् ॥

[भा.३५९४]अलऽम्ह पिंडेण इमेण अज्जो !, भुज्जो न आनेति जहेस इत्थं ।
साहू न इच्छंति इमस्स दोसा, अम्हे वि वज्जेमु न को वि एस ॥

वृ- अथ भूयो यथैष सागारिकोऽत्र पिण्डं नानयतीत्येवमर्थं साधवो गृहस्थान् ब्रुवते-आर्या! अलमस्माकमनेन संसृष्टपिण्डेनेति । ततस्तेऽगारिणश्चिन्तयेयुः-अस्य सागारिकस्य दोषाद् यदि साधवोऽमुं पिण्डं नेच्छन्ति ततो वयमपि दान-ग्रहणादिव्यवहारमनेन सह वर्जयामः, यतो न कोऽप्येष विशेषतो ज्ञायते, आगन्तुकत्वात् ॥

[भा.३५९५]अगम्मगामी किलिबो।ऽहाऽयं, बोट्टी व हुज्जा से सुणादिणा वा ।
दोसा बहू तेन जहिं सगारो, पिंडं नए तत्थ उ नाभिगच्छे ॥

वृ- अथवाऽयमगम्यगामी 'क्लीबो वा' नपुंसकः किल भविष्यति, 'बोट्टी वा' विट्टालना "से" तस्य शय्यातरपिण्डस्य शुनकादिना कृता भवेत् । एवमादयो बहवो दोषा यतो भवन्ति तेन यत्र सङ्खडीकरणे सागारिकः स्वकीयं पिण्डं नयति तत्र प्रथमत एव नैवाभिगच्छेत् ॥

मू. (६६) *नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारयपिंडं बहिया नीहडं असंसट्टं पडिग्गाहित्तए ।*

मू. (६७) *कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियपिंडं बहिया नीहडं संसट्टं पडिग्गाहित्तए ।*

वृ- अस्य व्याख्या प्राग्वत् । नवरं सागारिकपिण्डो वाटकाद् बहिर्निष्कामितोऽपि 'असंसृष्टः' अन्यपिण्डैः सममंमीलितो न कल्पते, संसृष्टस्तु कल्पते इति ॥ अथ भाष्यम्-

[भा.३५९६] बहिया उ असंसट्ठे, दोसा ते चेव मोत्तु संसट्ठं ।
संसट्ठमणुन्नायं, पेच्छउ सागारितो मा वा ॥

वृ- सागारिकवाटकाद् बहिर्निष्कामिते असंसृष्टे गृह्यमाणे 'त एव' पूर्वसूत्रोक्ता भद्रक-प्रान्तदोषाः, परं मुक्त्वा संसृष्टम्, तत्र दोषा न भवन्तीति भावः । अत एव यद् वाटकाद् बहिर्निष्कामितं संसृष्टं तदत्र सूत्रेऽनुज्ञातम्, सागारिकः पश्यतु वा मा वा । इदं पुरस्ताद् व्यक्तीकरिष्यते ॥

[भा.३५९७] नीसट्ठमसंसट्ठो, वि अपिंडो किमु परेहिं संसट्ठो ।
अप्पत्तियपरिहारी, सगारदिट्ठं परिहरंति ॥

वृ- निसृष्टो नाम-बहिर्निष्काश्य वानमन्तरस्य निवेदितः, यस्य वा याचकादेरर्थाय निष्काशितस्तस्मै प्रदत्तः, स यद्यप्यन्यैश्चोल्लकैरसंसृष्टस्तथापि 'अपिण्डः' न सागारिकपिण्डः, किं पुनः 'परैः' अन्यैश्चोल्लकैः समं संसृष्टः ? स सुतरां सागारिकपिण्डो न भवतीत्यर्थः, परमप्रीतिकपरिहारिणः सन्तः सागारिकदृष्टं तमपि परिहरन्ति ॥ इदमेव सापवादमाह-

[भा.३५९८] अदिट्ठस्स उ गहणं, असती तव्वज्जितेन दिट्ठस्स ।
दिट्ठे व पत्थियाणं, गहणं अंतो व बाहिं वा ॥

वृ- प्रथमं सागारिकेण सकुटुम्बेनादृष्टस्य, ततः "असइ"त्ति संस्तरणाभावे 'तद्विर्जितेन' तमेकं सागारिकं वर्जयित्वा शेषकुटुम्बेन दृष्टस्य संसृष्टपिण्डस्य ग्रहणमनुज्ञातम् । अथ ते साधवो ग्रामान्तरं प्रस्थिताः ततः सागारिकेणापि दृष्टस्य संसृष्टस्य वा असंसृष्टस्य वा वाटकस्यान्तर्वा बहिर्वा सर्वत्र ग्रहणमनुज्ञातम्, पुनर्ग्रहणाभावेन भद्रक-प्रान्तदोषाणामभावात् ॥

[भा.३५९९] पाहुणगा वा बाहिं, घेत्तुमसंसट्ठगं च वच्चंति ।
अंतो वा उभयं पी, तत्थ पसंगादओ नत्थि ॥

वृ- अथवा प्राघुणकाः साधवः केचित् तत्र समायाताः, ते च तं ग्रामं व्यतीत्याग्रतो गन्तुकामाः वाटकाद् बहिर्निष्कासितं निसृष्टमनिसृष्टमपि गृहीत्वा समुद्दिश्य च व्रजन्ति । तदभावे 'अन्तः' वाटकाभ्यन्तरे वर्त्तमानमुभयमपि प्राघुणकाः साधवो गृह्णन्ति, प्रथमं संसृष्टं तदप्राप्तावसंसृष्टम-पीत्यर्थः। कुतः ? इत्याह-'तत्र' एवंविधे प्राघुणकानां ग्रहणे प्रसङ्गादयो दोषाः भद्रक-प्रान्तकृताः पुनर्ग्रहणाभावान्न सन्ति । प्रसङ्गो नाम-तन्निश्रया भूयः सङ्खडीकारापणम्, आदिशब्दाद् निष्कासनादिपरिग्रहः ॥ अथ "संसट्ठमणुन्नायं" इत्यादिपदानां भावार्थं गाथात्रयेणाह-

[भा.३६००] जो उ महाजनपिंडेन मेलितो बाहि सागरियपिंडो ।
तस्स तहिं अपभुत्ता, न होति दिट्ठे वि अचियत्तं ॥

वृ- यस्तु सागारिकपिण्डो महाजनपिण्डेन सह वाटकाद् बहिर्मीलितः स साधूनां कल्पते । कुतः ? इत्याह-'तस्य' सागारिकस्य तत्राप्रभुत्वाद् महाजनस्यैव च प्रभुत्वाद् दृष्टेऽपि सागारिकस्य नाप्रीतिकं भवति ॥

[भा.३६०१] जं पुन तेसिं चिय भायणेसु अविमिस्सियं भवे दव्वं ।
तं दिस्समाण गहियं, करेज्ज अप्पत्तियं पभुणो ॥

वृ- यत् पुनर्द्रव्यं 'तेषामेव' शय्यातरमानुषाणां भाजनेषु 'अविमिश्रितम्' असंसृष्टं भवति तद् दृश्यमानं गृहीतं सत् 'प्रभोः' शय्यातरस्याप्रीतिकं कुर्याद् अतो न ग्राह्यम् ॥

[भा.३६०२] जं पुन तेन अदिट्ठे, दुघाण गहणं तु होतऽसंसट्ठे ।
तहियं तानि कधिज्जा, न यावि न य आयरा तत्थ ॥

वृ- यत् पुनः 'तेन' सागारिकेणादृष्टस्यासंसृष्टस्यापि "दुघाणे" दुर्भिक्षे संस्तरणाभावाद् ग्रहणं क्रियते तत्र 'तानि' शय्यातरमानुषाणि गत्वा शय्यातरस्य कथयेयुर्न वा; कथितेऽपि 'न च' नैव 'तत्र' दुर्भिक्षे शय्यातरस्य तथाविध आदरो भवति, येन भूयः सङ्खडीं कुर्यादिति भावः ॥

मू. (६८) *खलु निग्गंथो वा निग्गंथी वा सागारियपिंडं बहिया नीहडं असंसट्ठं संसट्ठं करेइ, करेंतं वा साइज्जइ, से दुहओ वीइक्कममाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अनुग्घाइयं ॥*

वृ- यः खलु निर्ग्रन्थो निर्ग्रन्थी वा सागारिकपिण्डं बहिर्निर्गतमसंसृष्टं संसृष्टं करोति, कुर्वन्तं वा 'खादयति' कारयति कुर्वन्तमनुमन्यते वेत्यर्थः, सः 'द्विधा' लौकिक-लोकोत्तरिकभेदाद् द्विप्रकारां मर्यादां व्यतिक्रामन् आपद्यते चातुर्मासिकं परिहारस्थानमनुद्धातिकम्, चतुरो गुरुमासानित्यर्थः। एष सूत्रसङ्क्षेपार्थः ॥ अथ भाष्यविस्तरः-

[भा.३६०३] संसट्ठस्स उ करणे, चउरो मासा हवंतऽनुग्घाता ।
आणादिणो य दोसा, विराधना संजमा-ऽऽदाए ॥

वृ- असंसृष्टमस्माकं ग्रहीतुं न कल्पते इति कृत्वा यदि संसृष्टं करोति, तुशब्दस्यानुक्त-समुच्चयार्थत्वात् कारयति वा कुर्वन्तमनुमोदयति वा, ततश्चत्वारो मासा अनुद्धाताः प्रायश्चित्तं भवति, आज्ञादयश्च दोषाः, विराधना च संयमा-ऽऽत्मविषया ॥

[भा.३६०४] सयमेव उ करणम्मी, उदगप्फुस भंडपुण्हवण पंते ।

तेना चारभडा वा, कम्मबंधे पसज्जणया ॥

**वृ-** स्वयमेव करणे तावदिमे दोषाः-'संयतेनाशुचिना स्पृष्टमिदं भाजनम्' इति विचिन्त्य उदकेन स्पर्शनं-प्रक्षालनम्, तथा 'किमस्मदीयानि भाजनानि स्पृशसि ?' इति 'भण्डनं' कलहम्, "उण्हवण" त्ति तेषां भाजनानामग्निकायेनाङ्गारणम्,एतानि प्रान्तः सङ्खडिकारिणः कुर्वन्ति। तथा 'स्तेनाः' चौराः 'चारभटाः' राजपुरुषा एते तत्रागत्य तं संयतसंसृष्टं पिण्डं अपहरेयुः, ततश्च कर्मबन्धस्य प्रसजना भवति यावदसौ संयतो भूयो नावर्त्तते ॥ किञ्च-

**[भा.३६०५]** भिंदेज्ज भाणं दवियं व उज्झे, डज्झेज्ज उण्हेण कडी व भुज्जे।
संसत्तगं तं व जहिं व छुब्भे, विरोहि दव्वं व जहिं व छड्डे ॥

**वृ-** संयतः सागारिकपिण्डमन्यत्र प्रक्षिपन् तद् बाजनं प्रमादतो भिन्द्यात्, तत्र पश्चात्कर्माऽन्यप्रवाहनादयो दोषाः। यद्वा तत्र भाजने यद् 'द्रव्यं' शालि-दाल्यादि तद् अन्यत्र सञ्चारयन् 'उज्झेत्' परित्यजेत्। अथवा तद् द्रव्यमतीवोष्णं तेनासौ दह्येत, कटी वा तथाकुर्वतो 'भुज्येत' वक्रीभवेत्। यत्र वाऽसौ सागारिकपिण्डं प्रक्षिपति 'तद्' द्रव्यं 'संसक्तं' जन्तुसंसक्तियुक्तम्, ततः संयमविराधना। विरोधी वा तद् द्रव्यम्, प्रक्षेपणीयद्रव्येण सह भुज्यमानं रोगादिविकारकारकमित्यर्थः, तत्रात्मविराधना। 'यत्र वा' भूभागे तद् द्रव्यं प्रक्षिपन् प्रमादतः छर्दयति तत्र षट्कायविराधना ॥ अथ "तेना चारभडा वा, कम्मबंधे पसज्जणया ॥" इति व्याचष्टे-

**[भा.३६०६]** तं तेन छूढं तहिगं च पत्ता, तेना भडा घोड कुकम्मिगा य।
आसत्त नामऽट्ठिति आउ मंसा, न जिन्नऽनादेस न जा विउट्टे ॥

**वृ-** 'तद्' द्रव्यं 'तेन' संयतेन 'तत्र' भाजने प्रक्षिप्तम्, तत्र च प्राप्ताः 'स्तेनाः' चौराः 'भटाः' राजपुरुषाः 'घोटाः' पश्चालचट्टाः 'कुकर्मिणश्च' कुकर्मकारिणः एते तद् भाजनमुत्कृष्टशालिदाल्यादिद्रव्यभूतमपहृत्य गच्छेयुः। तत्र केचिदाचार्यदेशीया ब्रुवते-यावत् तेषामासप्तमं कुलमनुवर्त्तते तावत् तस्य संयतस्य कर्मबन्धः। अपरे-तेषां यावद् नाम-गोत्रमनुवर्त्तते। अन्ये-यावत् तेषामस्थीनि सन्ति। अपरे पुनराहुः-यावत् ते आयुर्धारयन्ति। एके भणन्ति-यावत् तेषां तद्द्रव्याभ्यवहारप्रत्ययो मांसोपचयः। अन्ये तु ब्रुवते-यावत् तेषां तद् भक्तं भुक्तं सद् नाद्यपि जीर्णं तावत् प्रतिसमयं तस्य कर्मबन्धः। सूरिराह-एते सर्वेऽप्यनादेशाः। सिद्धान्तपक्षः पुनरयम्-यावदसौ संयतः 'न व्यावर्त्तते' न तस्मात् स्थानादालोचनाप्रदानादिना प्रतिक्रामति तावत् कर्मबन्धो मन्तव्यः ॥ किञ्च-

**[भा.३६०७]** निच्छंति व मरुगादी, ओभावण जं च अंतरायं तु।
कुज्जा व पच्छकम्मं, पवत्तणं घाय बंधं वा ॥

**वृ-** संयतेन स्पृष्टमिति कृत्वा तद् भक्तं मरुकादयो भोक्तुं नेच्छन्ति। ततश्च 'अहो ! अमी अशुचयो यैः स्पृष्टमन्नमुच्छिष्टमिति कृत्वा ब्राह्मणादयो न भुञ्जते' इति महती साधूनामपभ्राजना स्यात्। यच्च मरुकादीनां तद् भक्तमभुञ्जानानामन्तरायं तन्निष्पन्नं प्रायश्चित्तम्। पश्चात्कर्म वा स गृहपति कुर्यात्, मरुकादिभोजनार्थं भूयोऽप्यभिनवं भक्तपाकं कारयेदिति भावः। यद्वा 'साधुभिरिदं पवित्रीकृतम्' इति मत्वा भद्रकास्तस्यान्नादेः स्वगृहे प्रवर्त्तनं कुर्यु। अथ ते प्रान्तास्ततो घातं वा बन्धं वा कुपिताः सन्तः संयतानां कुर्युः ॥ एते तावत् स्वयं करणे दोषा अभिहिताः। अथ स्वयं संसृष्टं कर्त्तुमसमर्थो अन्यैः कारयन्ति यो वा कोऽप्यन्यः प्रक्षिपति तमनुमोदयन्ति तत इमे दोषा-

[भा.३६०८] कारावणमन्नेहिं, अनुमोदन उम्हमादिणो दोसा ।
दुविहे वतिक्कम्मिं, पायच्छित्तं भवे तिविहं ॥

**वृ-** अन्यैः कारापणे कुर्वतो वा अनुमोदने उष्मादयो दोषा भवन्ति । उष्मा नाम-तेनात्युष्णद्रव्येण तस्य अगारिणो हस्तादौ परितापः, आदिशब्दाद् यदीयं द्रव्यमसौ तत्र प्रक्षिपति स तेन सहासङ्खडं कुर्यात्-कस्मान्मदीयं स्पृशसि ? इति । एवमादयो दोषाः । अत्र च 'द्विविधे व्यतिक्रमे' लौकिक-लोकोत्तरिकमर्यादातिक्रमरुपे प्रायश्चित्तं त्रिविधं भवति । तत्रैकं स्वयं करणे, द्वितीयं कारापणे, तृतीयमनुमताविति ॥ इदमेवोत्तरार्द्धं व्याचष्टे-

[भा.३६०९] लोउत्तरं च मेरं, अतिचरई लोइयं च मेलंतो ।
अहवा सयं परेहि य, दुविहो तु वतिक्कमो होति ॥

**वृ-** सागारिकचोल्लकमितरेषां चोल्लकैः समं मीलयन् 'लोकोत्तरिकीं मर्यादां' "न कल्पते सागारिकपिण्डोऽसंसृष्टः संसृष्टः कर्तुम्" इति भगवदाज्ञालक्षणां 'लौकिकीं च' 'न मीलनीया अस्माकं चोल्लकाः' इत्येवंरुपां मर्यादाम् 'अतिचरति' अतिक्रामतीत्यर्थः । अथवा स्वयं करणं परैश्च क्रियमाणस्य खादनमित्येवं द्विविधो व्यतिक्रमो भवति ॥

[भा.३६१०] पढमिल्लुगम्मि ठाणे, दोहि वि गुरुगा तवेण कालेण ।
बितियम्मि य तवगुरुगा, कालगुरु होति ततियम्मि ॥

**वृ-** तत्र 'प्रथमस्थाने' स्वयंकरणलक्षणे चत्वारो गुरवो द्वाभ्यामपि गुरुकाः, तद्यथा-तपसा कालेन च । 'द्वितीये' कारापणे त एव चत्वारो गुरवस्तपोगुरुकाः । 'तृतीये' अनुमोदनालक्षणे स्थाने त एव चतुर्गुरुकाः कालगुरवो भवन्ति ॥ किञ्च-

[भा.३६११] अम्हच्चयं छूढमिणं किमट्ठा, तं केन उत्ते कहिते जतीहिं ।
ते चेव तोयादि पवत्तणा य, असिट्ठ तेने व असंखडादी ॥

**वृ-** अस्मदीयं तदिदं किमर्थं केनान्यत्र प्रक्षिप्तम् ?, इत्थं सङ्खडिकरिभि साक्षेपमुक्ते रक्षपालो ब्रवीती-यतिभिरिदमेकत्र मीलितम् । एवं कथिते सति त एव 'तोयादयः' उदकस्पर्शन-मण्डनादयो दोषाः । अथ ते भद्रकास्ततः 'साधुहस्तेन पवित्रीभूतमिदम्' इति मत्वा प्रवर्तनं कुर्यु । अथासौ रक्षपालो न कथयति ततः 'अशिष्टे' अकथिते 'तेनैव' रक्षपालेन सममसङ्खडं कुर्यु, आदिशब्दाद् वधं वा बन्धं वा ते तस्य कुर्वन्ति । यत एते दोषा अतो नासंसृष्टं संसृष्टं कर्त्तव्यं कारयितव्यं क्रियमाणमनुमोदयितव्यं चेति ॥ अथ द्वितीयपदमाह-

[भा.३६१२] अद्धाणनिग्गयादी, पविसंता वा वि अहव ओमम्मि ।
अनुमोदण कारावण, पभुनिक्खंतस्स वा करणं ॥

**वृ-** अध्वनो निर्गता आदिशब्दाद् अशिवादिविनिर्गता अध्वनि वा प्रविशन्तोऽथवाऽवमौदर्ये वर्त्तमानाः संसृष्टं पिण्डं कुर्वन्तः प्रथममनुमोदनं ततः कारापणमपि प्रतिसेवन्ते । यो वो प्रभुः-बलवान् राज-गणसम्मतो वा निष्क्रान्तः-प्रतिपन्नदीक्षस्तस्य स्वयमपि करणं भवतीति सङ्ग्रहगाथासमासार्थः । अथ विस्तरार्थोऽभिधीयते-ते साधवो विप्रकृष्टादध्वनो निर्गतास्तं वा प्रविशन्तोऽवमौदर्ये वा अन्यत्र पर्याप्तमलभमानास्तत् सागारिकसत्कं द्रव्यं स्निग्धं शरीरोपष्टम्भकं मत्वा प्रथमं तावदन्यं संसृष्टं कुर्वन्तमनुमोदयन्ति । अथान्यः संसृष्टं कुर्वन्न प्राप्यते ततः कारयेयुरपि॥

कथम् ? इत्याह–

[भा.३६१३] पुराण सागं च महत्तरं वा, अन्नं व गोहेंति तहिं च छोढुं ।
सागारिओ वा वि विगोविदितो जो, स पिंडमन्नेसु तु संदधाति ॥

वृ- 'पुराणं' पश्चात्कृतम्, तदप्राप्तौ प्रतिपन्नाणुव्रतं श्रावकम्, तदभावे यस्तत्र महत्तरस्तम्, 'अन्यं वा' प्रमाणभूतं 'तत्र' अन्यपिण्डेषु सागारिकपिण्डं प्रक्षेप्तुं 'ग्राहयन्ति' प्रज्ञापयन्तीत्यर्थः । यो वा सागारिकः 'विकोविदः' विशेषेण साधुसामाचारीकुशलः स स्वकीयं पिण्डमन्येषु पिण्डेषु 'सन्दधाति' मिश्रयतीत्यर्थः ॥

[भा.३६१४]सम्मिस्सियं वा वि अमिस्सियं वा, गिण्हंति गीता इतरेहिं मिस्सं ।
कारेंतऽदिट्ठं चेऽविगोवितेसु, दिट्ठं च तप्पच्चयकारि गीता ॥

वृ- यदि सर्वेऽपि गीतार्थास्ततः सम्मिश्रितं वा अमिश्रितं वा सागारिकपिण्डं गृह्णन्ति । अथ 'इतरैः' अगीतार्थैर्युक्तास्ततः 'मिश्रं' संसृष्टं गृह्णन्ति नासंसृष्टम् । अथासंसृष्टं (अथ संसृष्टं) न प्राप्यते अविकोविदाश्च-अगीतार्थास्तत्र सन्ति ततः 'अदृष्टं' यथा ते न पश्यन्ति तथा पुराणादिना संसृष्टं कारयन्ति । अथाऽदृष्टे कार्यमाणे तेषामप्रत्यय उत्पद्यते, यथा-एतैः सागारिकपिण्ड एवासंसृष्ट आनीतः; ततस्तत्प्रत्ययकारिणो गीतार्थास्तैर्दृष्टमपि संसृष्टं कारयन्ति ॥

अथ ''पभुनिक्खंतस्स वा करणं'' इति पदं व्याख्यानयति-

[भा.३६१५]जो उज्जिओ आसी पभू व पुव्वं, तप्पक्खिओ राय-गणज्झिओ वा ।
सवीरिओ पक्खिवती इमं तु, वोत्तूण किं अच्छइ एस वीसुं ॥

वृ- यस्तत्र ग्रामे पूर्वम् 'ऊर्जितः' बलवान् 'प्रभुर्वा' अधिपतिरासीत्, 'तत्पाक्षिको वा' तस्य ग्रामस्य हितैषी 'राज-गणाश्रितो वा' राजसम्मतो मल्लादिगणसम्मतो वा आसीत्, एवंविधोऽपि यः 'सवीर्यं' शक्तिमान्, भाजनभेदादयो दोषा यस्य न भवन्तीति भावः; सः 'एनं' सागारिकपिण्ड-मन्यपिण्डेषु प्रक्षिपति, परमिदं वचनमुक्त्वा, यथा-किमेषः 'विष्वक्' पृथक् तिष्ठतीति ॥

मू. (६९) *सागारियस्स आहडिया सागारिएण पडिग्गाहिया, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए ।*

मू. (७०) *सागारियस्स आहडिया सागारिएण अप्पडिग्गाहिया, तम्हा दावए एवं से कप्पइ पडिग्गाहित्तए ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह–

[भा.३६१६] नीहडसागारिपिंडस्स विवक्खो आहडो अह उ जोगो ।
नीहडसुत्ते पुनरवि, जोगो संदट्ठओ नाम ॥

वृ- पूर्वसूत्रे निर्हतः सागारिकपिण्ड उक्तः, इह तु तद्विपक्ष आहृत उच्यते । 'अथ' एष प्रस्तुतसूत्रस्य 'योगः' सम्बन्धः । तथा इतः सूत्रादनन्तरं पुनरपि निर्हतसूत्रं भविष्यति ततोऽयं सूत्रत्रयस्य 'योगः' सम्बन्धः सन्दष्टको नाम मन्तव्यः । किमुक्तं भवति ?-आदौ निर्हतसूत्रम्, मध्ये आहृतसूत्रम्, अवसाने तु भूयोऽपि निर्हृतसूत्रम्; एष ईदृशः सम्बन्धः सदृशपूर्वापरसूत्रद्वयेन सन्दंशकेनेव गृहीतत्वात् सन्दष्टक इत्यभिधीयते । अनेन वक्ष्यमाणसूत्रस्याप्यत्रैव सम्बन्धोऽभिहित इति ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-'आहृतिका' प्रहेणकं सा सागारिकस्य गृहे कुतोऽपि

गृहान्तरादागता, सा च सागारिकेण 'प्रतिगृहीता' स्वीकृता, 'ततः' तस्या मध्याद् दद्याद् नो "से" तस्य साधोः कल्पते प्रतिग्रहीतुम् । सागारिकस्याहृतिका सागारिकेण 'अप्रतिगृहीता' न स्वीकृता तस्या मध्याद् दद्यादेवं "से" तस्य साधोः कल्पते प्रतिग्रहीतुमिति सूत्रसङ्क्षेपार्थः ॥

साम्प्रतं निर्युक्तिविस्तरः-

[भा.३६१७] आहडिया उ अभिधरा, कुलपुत्तरा भगिनि मट्टिगालित्ते ।
दव्वे खेत्ते काले, भावम्मिय होइ आहडिया ॥

वृ- अभिशब्दोऽत्र पृथगर्थवाचकः । ततश्च 'अभिगृहाद्' अपरस्माद् वेश्मनो यद् विशिष्टं स्वाद्यकद्रव्यमागतं सा आहृतिका भण्यते । सा चैवं सम्भवति-कश्चिद् कुलपुत्रकः कचिद् ग्रामे परिवसति, तस्य चान्यदा प्राघूर्णकः समागतः तदर्थं विविधभोजनादि द्रव्यमुपस्कृतम्, कुलपुत्रस्य च भगिनी तत्रैव ग्रामे परिणीता तदर्थं स्वकीयभार्याहस्ते धृतपूरादिकं प्रेषयति, सा च भगिनी तदानीं मृत्तिकालिप्तहस्ता ततस्तां भ्रातृजायां ब्रवीति-स्थापय त्वमिदममुकत्र प्रदेशे, अहमिदानीमक्षणिका तिष्ठामीति । सा चाहृतिका चेति ॥ अथैनामेव निर्युक्तिगाथां विवरीषुराह-

[भा.३६१८] आएसड विसेस, सति काले भगिनि संभरित्ताणं ।
भज्जि भज्जाहत्थे, कुलओ पेसेति भगिनीए ॥

वृ- आदेशः-प्राघूर्णकस्तदर्शं धृतपूर-लपनश्रीप्रभृतेः स्वाद्यकद्रव्यस्य विशेषे सञ्जाते सति 'काले' भोजनदेशकाले भगिनी संस्मृत्य भार्याहस्ते 'भर्जिकां' प्रहेणकं 'कुलजः' कुलपुत्रको भगिनीनिमित्तं प्रेषयति एषा आहृतिकोच्यते । अस्यां च चत्वारो भङ्गाः, तद्यथा-द्रव्यतः प्रतिगृहीता न भावतः १ भावतः प्रतिगृहीता न द्रव्यतः २ द्रव्यतोऽपि भावतोऽपि प्रतिगृहीता ३ नापिद्रव्यतो नापि भावतः प्रतिगृहीता ४ ॥ एषां यथाक्रमं भावनामाह-

[भा.३६१९] उच्छंगे अनिच्छाए, ठविया दव्वगहिया न पुन भावे ।
एत्थ पुन भद्द-पंता, अचियत्तं चेव घेप्पंते ॥

वृ- यदर्थं सा भर्जिका प्रेषिता सा भगिनी तं भ्रातरं प्रति केनापि कारणेन रुष्टा सती भ्रातृजायया समर्प्यमाणामपि तां न गृह्णाति, ततस्तया ननान्दुरुत्सङ्गेऽनिच्छयाऽपि सा भर्जिका स्थापिता, एषा द्रव्यतः प्रतिगृहीता न पुनर्भावतः । इयं च शय्यातरपिण्डो न भवति, भावतोऽगृहीतत्वात् । परमत्र पुनर्भद्रक-प्रान्तदोषा भवन्ति, भद्रकस्तन्निश्रया प्रक्षेपं प्रान्तस्तु निष्काशनव-सतिव्यवच्छेदादिकं कुर्यादिति भावः । अप्रीतिकं चैवं गृह्णमाणे भवति-किमेष मदीयः पिण्डो न भवति येनैवममी इदं गृह्णन्ति ? ॥

[भा.३६२०] वावार मट्टिया-असुइलित्तहत्था उ बिइयओ भंगो ।
दोसु वि गहिए तइओ, चउत्थभंगे उ पडिसेहो ॥

वृ- तथा सा भगिनी यदा कमपि दलन-पेषणादिव्यापारं कुर्वाणा मृत्तिकया वा अशुच्या वा लिप्तहस्ता भवति तदा ब्रवीति-स्थापय त्वममुकत्र प्रदेशे, एषा भावतः प्रतिगृहीता न द्रव्यत इति द्वितीयो भङ्गः 'द्वाभ्यामपि' द्रव्य भावाभ्यां प्रतिगृहीता । चतुर्थभङ्गे 'द्वाभ्यामपि' द्रव्य-भावाभ्यां प्रतिषेधः । किमुक्तं भवति ? -सा भगिनी रुष्टा सती बलादर्प्यमाणामपि तां भर्जिकां हस्ताभ्यामपि न स्पृशतीति । सा चाहृतिका द्रव्य क्षेत्र-काल-भावभेदात् चतुर्विधा । पुनरेकैका द्विविधा-छिन्ना

अच्छिन्ना च ।। अथैता एव भावयति-

[भा.३६२१] संकप्पियं व दव्वं, छिन्ना खेत्तेण कालतो छिन्न ।
दोसु उ पसंगदोसा, सागारिए भावतो दुविहो ।।

वृ- यद् द्रव्यं सङ्कल्पितम् यथा-अमुकं घृतपूरादिकं तत्र गृहे नेतव्यम्, वाशब्दस्यानुक्तप्रकारान्तरद्योतकत्वाद् यद् वा तत्र गृहे नयनार्थं पृथक् स्थापितम्, तदुभयमपि द्रव्यतश्छिन्नम् । या घृतसाहृतिका स्वगृहमानीयमाना सागारिकेण दृष्टा सा क्षेत्रतश्छिन्ना । तथा 'अमुकस्यां वेलायांनेतव्यम्' इति निर्दिष्टं द्रव्यं कालतश्छिन्नम् । उपलक्षणमिदम्, तेन 'न नेष्यामि' इति यत्र भावो निवृत्तस्तद् भावतश्छिन्नम् । अच्छिन्ना त्वाहृतिका चतुर्द्धाऽप्येतद्विपरीता । तथा 'द्वयोर्भङ्गयोः' 'द्रव्यतः प्रतिगृहीता न भावतः, नापि द्रव्यतो नापि भावतः प्रतिगृहीता न द्रव्यतः' इत्येवंरूपो यो भङ्गः, यश्च 'द्रव्यतोऽपि भावतोऽपि प्रतिगृहीता' इत्येवंलक्षणो द्विविधः प्रतिगृहीतो भङ्गः, एतयोः सागारिकपिण्ड इति कृत्वा न कल्पते ।। अथैनामेव निर्युक्तिगाथां व्याचष्टे-

[भा.३६२२] संकप्पियं वा अहवेगपासे, सगारिदिट्ठं अमुगं तु वेलं ।
नियइ भावे नऽमुगं अदिट्ठा, काले न निद्देस अछिन्न भावे ।।

वृ- यद् घृतपूरादि तत्र गृहे नयनाय सङ्कल्पितम्, अथवा यदेकपार्श्वे विश्वक् स्थापितं तदेतद् द्रव्यतश्छिन्नम् । सागारिकेण स्वगृहमानीयमानं यद् दृष्टं तत् क्षेत्रतश्छिन्नम् । 'अमुकस्यां' मध्याह्नादिलक्षणायां वेलायां नेतव्यमिति निर्दिष्टं कालतश्छिन्नम् । यत्र तु 'न नेष्यामि' इति भावो निवृत्तस्तद् भावतश्छिन्नम् । एवं चतुर्द्धाऽपि छिन्नं व्याख्यातम् । अथाच्छिन्नं व्याख्याति-''नऽमुगं'' इत्यादि । यद् द्रव्यममुकं नेतव्यमिति न सङ्कल्पितं न वा पृथक् स्थापितं तद् द्रव्यतोऽच्छिन्नम् । या वा आहृतिका सागारिकेणानीयमाना न दृष्टा तत् क्षेत्रतोऽच्छिन्नम् । कालेऽच्छिन्नं यत्र प्रतिनियताया वेलाया निर्देशो नास्ति । भावेऽच्छिन्नं तु यत्राद्यापि 'नेष्यामि' इति भावोऽव्यवच्छिन्नः, न निवर्त्तते इत्यर्थः ।। अथात्रैव ग्रहणविधिमाह-

[भा.३६२३] भावो जाव न छिज्जइ, विप्परिणय गेण्ह मोत्तु खेत्तं तु ।
खेत्ते वि होति गहणं, अदिट्ठे विप्परिणतम्मि ।।

वृ- भावो यावदद्यापि न व्यवच्छिद्यते तावन्न कल्पते । यदा तु 'न नेष्यामि' इति भावः 'विपरिणतः' व्यवच्छिन्नस्तदा क्षेत्रच्छिन्नं मुक्त्वा यदन्यत् क्षेत्रतोऽच्छिन्नं यच्च द्रव्यतः कालतश्च छिन्नमच्छिन्नं वा तद् ग्रहीतुं कल्पते, क्षेत्रच्छिन्नस्यापि ग्रहणं भवति यदि स तद् द्रव्यं नयन्नपान्तराले 'न नेष्यामि' इति विपरिणतो भवति, तच्च सागारिकेण अदृष्टम्-अदृश्यमानं ग्रहीतव्यम् ।। यतः-

[भा.३६२४] पुरतो पसंग-पंता, अचियत्तं चेव पुव्वभणियं तु ।
बितिय-ततिया उ पिंडो, पढम-चउत्था पसंगेहिं ।।

वृ- अथ सागारिकस्य पुरतो गृह्णन्ति ततो भद्रकः प्रसङ्गः तन्निश्रया तत्र प्रक्षेपम्, प्रान्तश्च निष्काशनादिकं कुर्यात्, अप्रीतिकं च पूर्वभणितं तस्य तथापश्यतो गृह्यमाणे भवति, ततः पुरतो न ग्रहीतव्यम् । तथा द्वितीय-तृतीयौ भङ्गौ शय्यातरपिण्ड इति कृत्वा परिहर्त्तव्यौ । प्रथम चतुर्थौ तु न शय्यातरपिण्डः, परं प्रसङ्गदोषभयात् तावपि परिहर्त्तव्यौ ।। अथाचार्यो विनेयवर्गव्युत्पादनार्थमाक्षेप-परिहारौ निरुपयितुकाम इदमाह-

[भा.३६२५] कप्पइ अपरिग्गहिया, निक्खेवे चउ दुगं अजाणंता ।
जाणंता वि य केई, सम्मोहं काउ लोभा वा ॥

वृ- केचिदाचार्या निक्षेपचतुष्कस्य-'द्रव्यतः प्रतिगृहीता न भावतः' इत्यादिलक्षणभङ्गचतुष्टयस्य 'द्विकं' प्रथम-चतुर्थभङ्गद्वयमाश्रित्येदं सूत्रं प्रवृत्तमित्येवंविधमर्थमजानन्तः, यद्वा जानन्तोऽपि तदर्थं केचिदगीतार्थानां सम्मोहं कृत्वा लोभाद् ब्रुवते-कल्पते सागारिकेणापरिगृहीता आहृतिका॥

इदमेव स्पष्टयति-

[भा.३६२६] जं आहडं होइ परस्स हत्थे, जं नीहडं वा वि परस्स दिन्नं ।
तं सुत्तछंदेण वयंति केई, कप्पं न चे सुत्तमसुत्तमेवं ॥

वृ- यद् 'आहृतक' प्रहेणकं शय्यातरगृहमानीयमानं परस्य हस्ते भवति, एतेन प्रस्तुतमेव सूत्रं गृहीतम्; यच्च 'निर्हृतं' सागारिकगृहाद् निष्काशितं परस्य दत्तम्, अनेन च वक्ष्यमाणं सूत्रमुपात्तम्, तदेवंविधं द्रव्य 'सूत्रच्छन्देन' सूत्राभिप्रायेण 'कल्प्यं' कल्पनीयम् 'न' नैव 'चेद्' यदि आचार्य! एवमस्मदुक्तं मन्यसे ततः सूत्रमसूत्रमेव प्राप्नोति, अप्रमाणमित्यर्थः । एवं केचिदाचार्यदेशीया वदन्ति ॥ अत्र सूरि प्रतिवचनमाह-

[भा.३६२७] सुत्तं पमाणं जति इच्छितं ते, न सुत्तमत्थं अतिरिच्च जाती ।
अत्थो जहा पस्सति भूतमत्थं, तं सुत्तकारीहिँ तहा निबद्धं ॥

वृ- यदि 'ते' तव सूत्रं प्रमाणत्वेन 'इष्टम्' अनुमतं तत इदमप्यक्षिणी निमील्य विचारयतु देवानांप्रियः-सूत्रं तावद् 'अर्थं' व्याख्यानमतिरिच्य 'न याति' न प्रवर्त्तते, नावबुध्यते इत्यर्थः; अत एव 'अर्थ' निर्युक्ति-भाष्यादिरुपः 'यथा' येन प्रकारेण 'भूतं' सद्भूतम् 'अर्थम्' अभिधेयं पश्यति 'सूत्रकारिभिरपि' गणधर-स्थविरैः 'तत्' सूत्रम् 'तथा' तेनैवाभिप्रायेण निबद्धमवसातव्यम्॥

अमुमेवार्थं द्रढयति-

[भा.३६२८] छाया जहा छायवतो निबद्धा, संपत्थिए जाति ठिते य ठाति ।
अत्थो तहा गच्छति पज्जवेसु, सुत्तं पि अत्थानुचरं तहेव ॥

वृ- 'छाया' प्रतीता, सा यथा 'छायावतः' पुरुषादेः 'निबद्धा' परतन्त्रा सती तस्मिन् सम्प्रस्थिते याति, स्थिते च तस्मिन् साऽपि तिष्ठति; तथाऽत्रापि छायावत्पुरुषस्थानीयोऽर्थो येषु 'पर्यायेषु' भङ्गकादिविषयेषु प्रकारेषु गच्छति सूत्रमपि छायास्थानीयं तस्यैवार्थस्यानुचरं सत् 'तथैव' तेषु तेषु पर्यायेषु गच्छति ॥ इदमेव स्पष्टतरमाह-

[भा.३६२९] जं केणई इच्छइ पज्जवेण, अत्थो न सेसेहि उ पज्जवेहि ।
विही व सुत्ते तहि वारणा वा , उभयं व इच्छंति विकोवणट्ठा ॥

वृ- 'अर्थ' व्याख्यानविधिर्येन केनचित् पर्यायेण यत् सूत्रं ग्रहीतुमिच्छति न 'शेषैः' अपरैः पर्यायैः, तत्र स एव प्रमाणयितव्यो न शेषा इति वाक्यशेषः ।यथैव सूत्रे यथाभावेन विपरिणते आनेतरि यदि सागारिको न पश्यति ततः कल्पते प्रतिग्रहीतुं तद् द्रव्यम् । एतेन पर्यायेण अर्थ आहृतिकामिच्छति, न शेषैरविपरिणत-क्षेत्रच्छिन्नतादिभि पर्यायैः । एवमर्थेनेप्सितेऽनीप्सिते वा वस्तुनि सूत्रकारः कथं सूत्रं बध्नीयात् ? इत्याह-विधिर्वा तत्र सूत्रे वक्तव्यः, यथा अत्रैवा-ऽऽहृतिकासूत्रे द्वितीये आलापके; 'वारणा वा' प्रतिषेधः, यथैव प्रथमे आलापके; 'उभयं वा'

विधि-प्रतिषेधरूपं कचिदेकत्रापि सूत्रे शिष्यमतिविकोपनार्थं सूरय इच्छन्ति, यथा "कप्पइ निग्गंथाणं पक्के तालपलंबे भिन्ने पडिग्गाहित्तए, से वि य विहिभिन्ने नो चेव नं अविहिभिन्ने ।" ॥ अपि च-

[भा.३५३०]उस्सग्गओ नेव सुतं पमाणं, न वाऽपमाणं कुसला वयंति ।
अंधो य पंगुं वहते स चावि, कहेति दोण्हं पि हिताय पंथं ॥

वृ- 'उत्सर्गतः' सामान्येन 'श्रुतं' सूत्रं नैव प्रमाणं न वा अप्रमाणम्, किन्तु पूर्वापराविरुद्ध-वृद्धसम्प्रदायागतेनार्थेन युक्तं प्रमाणम्, अन्यथा पुनरप्रमाणम्, इत्येवं 'कुशलाः' तीर्थकरगणधरा वदन्ति । तथाहि-यथा किल कश्चिदन्धो देशान्तरं गन्तुमनाः स्वयं मार्गमपश्यन् पङ्गुं गन्तुमशक्तं चक्षुष्मत्तया स्कन्धे विन्यस्य वहति, 'स चापि' पङ्गुः 'द्वयोरपि' आत्मनस्तस्य च 'हिताय' गर्ता-प्रपाताद्युपद्रवरक्षणाय 'पन्थानं' मार्गं कथयति । एवमर्थेनाप्रबोधितं सद् अन्धस्थानीयं सूत्रम्, तद् यदा पङ्गुस्थानीयमर्थमात्मन उपरिकृतं वहति तदा सोऽप्यर्थ सूत्रनिश्रया गच्छन् सम्यग्विषयविभागदर्शितया निष्प्रत्यपायं मुक्तिमार्गमुपदिशतीति, अतोऽर्थसव्यपेक्षमेव सूत्रं प्रमाणमिति स्थितम् ॥ अथ "जाणंता वि य केई, सम्मोहं काउ लोभा वा ।" इति पश्चार्द्धं व्याचष्टे-

[भा.३३३१]अप्पस्सुया जे अविकोविता वा, ते मोहइत्ता इमिणा सुएण ।
तेसिं पगासो वि तमंतमेति निसाविहंगेसु व सूरपादा ॥

वृ- ये 'अल्पश्रुताः' अधीतस्वल्पसूत्रा ये वा 'अविकोविदाः' अगीतार्थास्तान् अनेन सूत्रेण मोहयित्वा विजानन्तोऽपि लोभबहुलतया सागारिकस्याहृतिकापिण्डं ग्राहयन्तीति वाक्यशेषः । 'तेषां च' एवं मोहितानां 'प्रकाशः' प्रस्तुतसूत्रस्यार्थ कथ्यमानोऽपि 'तमस्तमायते' प्रबलान्धकारतया परिणमते । यथा 'निशाविहङ्गाः' उलूहाकाद्यास्तेषु सूर्यस्य पादाः-किरणाः प्रकाशरूपा अपि महान्धकारीभवन्ति ॥ आह-यद्येवं ततः "कल्पते सागारिकेणापरिगृहीता आहृतिका" इति प्रस्तुतसूत्रं कथं नीयते ? अत्रोच्यते-

[भा.३६३२] अहभावविप्परिणए, अहिट्ठ सुयं तु तम्मि उ पउत्थे ।
नीहडियाए पुरओ, संछोभगमादिणो दोसा ॥

वृ- यस्तामाहृतिकां प्रहिणोति नयति वा तस्मिन् यथाभावं-स्वयमेव विपरिणते-न प्रहेष्यामि न नेष्यामीति वा विपरिणाममापन्ने कल्पते । यद्वा तेन तत्रागच्छता श्रुतम्-यस्य सकाशमहमिदं नयामि स प्रोषितः-ग्रामान्तरं गतः, ततस्तस्मिन् प्रोषिते सति स नेता 'न नयामि' इति विपरिणतः, अत्रान्तरे साधवः समायाताः ततः सागारिकेणादृष्टं कल्पते प्रतिग्रहीतुम्, अत्र सूत्रनिपातः । तथा वक्ष्यमाणसूत्रे भणिष्यमाणायां निर्हृतिकायां सागारिकस्य पुरतो गृह्यमाणायां संछोभकः-प्रक्षेपक आदिशब्दाद् निष्काशन-शय्याव्यवच्छेदादयश्च दोषा भवन्ति, अतः सागारिकस्य पुरतः सा न ग्रहीतव्या ॥ अत्र कथं स तत्राहृतिकां नयन् विपरिणमति ? इत्युच्यते-

[भा.३६३३] नीयं पि मे न घेच्छति, धम्मो य जतीण होति देंतस्स ।
वसणऽब्भुदओ वा सिं, भंडणकम्मे व अद्दन्ना ॥

वृ- मया तत्र नीतमप्येतद् घृतपूरादिकं स न ग्रहीष्यति, यद्वा यतीनामेवंविधं द्रव्यं ददतो मम धर्मो महान् भवति, अथवा येषां समीपे तद् नीयते तेषां स्वजनमरण-धनहरणादिकं व्यसनं शोककारणमजनिष्ट, 'अभ्युदयो वा' कोऽप्युत्सवविशेषस्तेषां वर्त्तते, 'भण्डनं वा' कलहस्तदानीं

महता भरेण वर्त्तते, 'कर्मणि वा' कृष्यादौ ते 'अद्दन्नाः' अक्षणिकाः सन्ति ततो नीतमपि नामी ग्रहीष्यन्ति ॥

[भा.३६३४] इति भावम्मि नियत्ते, तेहि अदिन्नस्स कप्पती गहणं ।
छेत्तादिनिग्गतेसु व, कप्पति गहणं जहिं सुत्तं ॥

वृ- 'इति' अनन्तरोक्तप्रकारेण भावे निवृत्ते सति येषां समीपे तद् नीयते 'तैः' शय्यातरमानुषैरदत्तस्य कल्पते ग्रहणम् । यद्वा क्षेत्र-खलाद निर्गतेषु तेषु ग्रहणं कल्पते । एवं यत्र सूत्रमवतरति स एष विषय उक्त इति ॥

मू. (७१) *सागारियस्स नीहडिया परेण अपडिग्गाहिता, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए।*

मू. (७२) *सागारियस्स नीहडिया सपरेण पडिग्गाहिया, तम्हा दावए एवं से कप्पइ पडिग्गाहित्तए ॥*

वृ- अस्य सम्बन्धः प्रागेवोक्तः । व्याख्याऽपि प्राग्वत् । नवरं सागारिकद्रव्यं यदन्यत्र नीयते सा निर्हृतिकेत्युच्यते । सा यस्य समीपे [illegible] तेनाप्रतिगृहीता न कल्पते, प्रतिगृहीता तु कल्पते॥

अथ भाष्यम्-

[भा.३६३५]पढम-चउत्था पिंडो, बितिओ ततिओ य होति उ अपिंडो ।
पुरतो ते वि विवज्जे, भद्दग-पंतेहि दोसेहिं ॥

वृ- निर्हृतिकायामपि द्रव्यतः प्रतिगृहीता न भावत इत्यादयश्चत्वारो भङ्गाः । नवरमत्र प्रथमचतुर्थौ भङ्गौ शय्यातरपिण्डः, एकत्र भावतोऽपरत्र तु द्रव्यतो भावतश्च परेणाप्रतिगृहीतत्वात् । द्वितीयस्तृतीयश्च भङ्गौ न भवति शय्यातरपिण्डः, परं सागारिकस्य पुरतः 'तावपि' द्वितीयतृतीयभङ्गौ भद्रक-प्रान्तदोषभयाद् विवर्जयेयुः ॥

तत्र भद्रकस्तन्निश्रया प्रक्षेपं कुर्यात, यस्तु प्रान्तः स इदं ब्रूयात्-

[भा.३६३६] केनावि अभिप्पाएण दिज्जमाणं पि नेच्छिउं पुव्विं ।
अम्हे ओभावेंता, पुरओ च्चिय ने पडिच्छंति ॥

वृ- अमी श्रमणकाः केनाप्यभिप्रायेण पूर्वमस्माभिर्दीयमानमपि 'अनीप्सित्वा' अप्रतिगृह्य साम्प्रतं बहुजनमध्येऽस्मानपभ्राजयन्त इत्थमस्माकमेव पुरत इदमेव द्रव्यं प्रतीच्छन्ति ॥

[भा.३६३७] किं तं न होति अम्हं, खेत्तंतरियं व किं विसमदोसं ।
सुव्वत्त सोत्तिगादिव, चरेंति जतिणो वि डंभेणं ॥

वृ- किमेतद् द्रव्यमिदानीमस्माकं सत्कं न भवति ?, अथ 'क्षेत्रान्तरमागतम्' इति कृत्वा कल्पते तदप्यसङ्गतम्, यतः क्षेत्रान्तरितं विषं किमदोषं भवति ? तदमी सुव्यक्तं 'श्रोत्रिया इव' धिग्जातीया इव यतयोऽपि सन्तो दम्भेन चरन्ति । किमुक्तं भवति ? -धिग्जातीयाः 'अशूद्रान्निका वयम्' इति कृत्वा शूद्रगृहे न समुद्दिशन्ति परं तन्दुलादीनि गृह्णन्ति; यथा तेषामशूद्रान्नव्रतं दम्भ एवममीषामपि शय्यातरपिण्डपरिहारादिव्रतं दम्भ इव लक्ष्यते ॥ अथाहृतिका निर्हृतिका वा येषु कारणेषु गृह्यते तान्याह-

[भा.३६३८] दुविहे गेलन्नम्मी, निमंतणे दव्वदुल्लभे असिवे ।

ओमोदरिय पओसे, भए य गहणं अनुन्नायं ॥

अस्य व्याख्या प्राग्वत् ॥ अत्र निमन्त्रणापदं विशेषतो भावयति-

[भा.३६३९] निब्बंधनिमंतेंते, भणंति भज्जिं दलाहि जा एसा ।
तं पुन अविगीतेसुं, गीया इतरं पि गेण्हंति ॥

वृ- शय्यातरं महता निर्बन्धेन निमन्त्रयमाणं साधवो भणन्ति-या तवैषा भर्जिका-प्रहेणकं आहृतिका निर्हृतिका वा तां प्रयच्छ । 'तत् पुनः' आहृतिकाया निर्हृतिकाया वा ग्रहणमगीतार्थेषु कुर्वन्ति । ये तु गीतार्थास्ते 'इतरमपि' सागारिकपिण्डमपि गृह्णन्ति ॥

[भा.३६४०] नेच्छंतमगीतं एतिनेव सुत्तेण पत्तियवेंति ।
सच्छंदेन न भणिमो, फुड-वियडमिणं भणति सुत्तं ॥

वृ- अथागीतार्थ आहृतिकां निर्हृतिकां वा नेच्छति ग्रहीतुं तत एतेनैव सूत्रेण प्रत्याययन्ति, यथा-आर्या ! वयं 'स्वच्छन्देन' स्वाभिप्रायेण न भणामः, किन्तु 'स्फुट-विकटम्' अतीवव्यक्ताक्षरमिदमेव सूत्रं भणति, यथा-कल्पते सागारिकेणाप्रतिगृहीता आहृतिका परेण च प्रतिगृहीता निर्हृतिकेति ॥ अपि च-

[भा.३६४१] जो तं जगप्पदीवेहि पणीयं सव्वभावपन्नवणं ।
न कुणति सुतं पमाणं, न सो पमाणं पवयणम्मि ॥

वृ- 'तत्' सकलत्रिलोकीप्रसिद्धं 'जगत्प्रदीपैः' भगवद्भिस्तीर्थकरैः प्रणीतं सर्वेषाम्- उत्सर्गाऽपवाद-निश्चय-व्यवहारादीनां भावानां प्रज्ञापना-प्ररूपणा यत्र तत् तथाविधं श्रुतं यः कश्चित् प्रमाणं न करोति नासौ 'प्रवचने' चतुर्वर्णसङ्घमध्ये प्रमाणं भवति ॥

अमुमेवार्थमन्योक्तिभङ्ग्या द्रढयति-

[भा.३६४२] जस्सेव पभावुम्मिल्लिताइं तं चेव हयकतग्घाइं ।
कुमुदाइं अप्पसंभावियाइं चंदं उवहसंति ॥

वृ- यस्यैव प्रभावेणोन्मीलितानि-प्रबुद्धानि तमेव चन्द्रं कुमुदान्युपहसन्तीति सण्टङ्कः । कथम्भतानि ? इत्याह-हतकृतघ्नानि,हतशब्दो निन्दावाचकः, कृतघ्नतया पापानीत्यर्थः । आत्मानं सम्भावयन्ति-'वयमेव शोभनानि' इत्यभिमन्यन्ते तच्छीलानि च यानि तान्यात्मसम्भावीनि, कुत्सितान्यात्मसम्भावीनि आत्मसम्भाविकानि । एवंविधानि परमोपकारिणमपि चन्द्रं 'वयमतीवावदातानि, भवाँस्तु सकलङ्कत्वान्न तथा' इति स्वकीयश्वेतप्रभापटलेनोपहसन्तीवोपहसन्तीत्युच्यते । एवमार्या ! भवन्तोऽपि यस्यैव प्रभावेणोन्मीलितविवेकलोचनाः सञ्जाताः तदेव श्रुतं साम्प्रतमप्रमाणयन्तो हतकृतघ्ना इव लक्ष्यन्ते । एवं प्रज्ञापिताः सन्तः प्रतिपद्यन्ते सूत्राशातनापातकभयादगीतार्था अप्याहृतिकादिग्रहणम् ॥

*मू. (७३) सागारियस्स अंसियाओ अविभत्ताओ अव्वोच्छिन्नाओ अव्वोगडाओ अनिज्जूढाओ, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए ।*

*मू. (७४) सागारियस्स अंसियाओ विभत्ताओ वोच्छिन्नाओ वोगडाओ निज्जूढाओ, तम्हा दावए एवं से कप्पइ पडिग्गाहित्तए ॥*

[भा.३६४३] छिन्नममत्तो कप्पति, अच्छिन्नो न कप्पती अह तु जोगो ।

पत्तेगं वा भणितो, इयाणि साहारणं भणिमो ॥

**वृ-** आहृतिका-निर्हृतिकापिण्डवदंशिकापिण्डोऽपि सागारिकेण 'छिन्नममत्वः' 'ममायम्' इति भावाद् निवर्त्तितः कल्पते, अच्छिन्नममत्वस्तु न कल्पते। अथैष: 'योगः' सम्बन्धः। यद्वा 'प्रत्येकम्' एकस्यैव सागारिकस्य सत्कं पिण्डमाश्रित्य विधिर्भणितः। इदानीं तु सागारिकस्यान्येषां च साधारणं पिण्डमधिकृत्य विधिं भणामः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्याः सागारिकस्य या अंशिका तस्या अन्येषामंशिकाभ्योऽविभक्ताया अव्यवच्छिन्नाया अव्याकृताया अनिर्गूढाया मध्यात् कश्चिद् भक्त-पानं दद्यात्, नो "से" तस्य साधोः कल्पते प्रतिग्रहीतुम्। सागारिकस्यांशिका विभक्ता व्यवच्छिन्ना व्याकृता निर्गूढा च यस्माद् राशेर्भवति तस्माद् दद्यात्, एवं "से" तस्य कल्पते प्रतिग्रहीतुमिति सूत्रसङ्क्षेपार्थ ॥ अथ निर्युक्तिविस्तरः-

**[भा.३६४४]** सागारियस्स अंसिय, अविभत्ता खेत्त-जंत-भोज्जेसु।
खीरे मालाकारे, सगारादिट्ठं परिहरंति ॥

**वृ-** सागारिकस्यांशिका अविभक्ता न कल्पते। सा च क्षेत्रे वा यन्त्रे वा भोज्येषु वा क्षीरे वा मालाकारे वा सम्भवति। अत्र च सागारिकदृष्टं सर्वत्रापि परिहरन्तीति निर्युक्तिगाथासमासार्थः॥

अथैनामेव विवरीषुः सूत्रस्य विषमपदानि तावद् विवृणोति-

**[भा.३६४५]** अंसो ति व भागो ति व, एगट्ठा पुंज एव अविभत्ता।
कतभागो वि न सव्वो, वोच्छिज्जति सा अवोच्छिन्ना ॥

**वृ-** अंश इति वा भाग इति वा एकार्थे पदे। अंश एवांशिका, स्वार्थे कः प्रत्ययः। तत्र यावान् सागारिकादीनां साधारणश्चोल्लक उपस्कृतस्तावानप्रविभक्तखण्डः पुञ्ज एव यदाऽऽस्ते न भागादिविवक्षा कृता सा अंशिका अविभक्तेत्युच्यते। यत्र तु भागाः कृताः परं मूलराशिः कृतभागोऽपि न सर्वो व्यवच्छिद्यते सा अव्यवच्छिन्ना ॥

**[भा.३६४६]** अव्वोगडा उ तुज्झं, ममं तु वा जा न ताव निद्दिसति।
तत्थेव अच्छमाणी, होति अनिज्जूहिया अंसी ॥

**वृ-** सर्वेषामपि समा भागाः स्थापिताः परम् 'एष भागस्तव, एष पुनर्मम' इत्येवं या न तावद् निर्दिशति साऽव्याकृताऽभिधीयते। या तु निर्दिष्टा परमद्यापि न ततोऽन्यत्र नीयते सा अंशिका तत्रैव तिष्ठन्ती अनिर्गूढा भवति। एवंविधा न कल्पते प्रतिग्रहीतुमिति ॥ अथ क्षेत्रद्वारं व्याचष्टे-

**[भा.३६४७]** सीताइ जन्नो पहुगादिगावा, जे कप्पणिज्जा जतिणो भवंति।
साली-फलादीण व निक्कयम्मि, पडेज्ज तेल्लं लवणं गुलो वा ॥

**वृ-** सागारिकस्यान्येषां च साधारणे क्षेत्रे 'सीतायाः' हलपद्धतिदेवतायाः 'यज्ञः' पूजा भवेत् तत्र साल्यादिद्रव्यं यद् उपस्कृतम्, पृथुकादयो वा ये तत्र क्षेत्रे यतीनां कल्पनीया भवन्ति, यद् वा तत्र शालीनां-कलमादीनां फलानां-चिर्भटादीनाम् आदिशब्दाद् यौवारिप्रभृतीनां धान्यानां विक्रीयमाणानां निष्क्रये तैलं वा लवणं वा गुडो वा पतेत्, एषा सर्वाऽपि क्षेत्रविषया सागारिकांशिका ॥ यन्त्रद्वारमाह-

**[भा.३६४८]** जंते रस गुलो वा, तेल्लं चक्कम्मि तेसु दा जं तु।
विक्केज्जंते पडितं, पयत्तणंते य पगयं वा ॥

**वृ-** यन्त्रमपि सागारिकस्यान्यैः सह साधारणं स्यात् । तच्च द्विधा-इक्षुयन्त्रं तिलयन्त्रं च । तत्रेक्षुयन्त्रे कोल्लुकाख्ये रसो गुडो वा भवेत् । तिलयन्त्रं तु चक्रमुच्यते, तत्र तैलं तिला-ऽतसीसर्षपादीनां भवेत् । 'तेषु वा' रसादिषु विक्रीयमाणेषु 'यत् तु' तन्दुल-घृत-वस्त्रादिकमापतितम्, अथवा यन्त्रस्य प्रवर्त्तने-प्रथमप्रारम्भे 'अन्ते वा' परिसमाप्तौ यत् ते सम्भूय 'प्रकृतं' प्रकरणं कुर्वन्ति, एषा यन्त्रविषया अंशिका ।। अथ भोज्य-क्षीरद्वारे व्याख्यानयति-

[भा.३६४९] गण-गोट्ठिमादि भोज्जा, भुत्तुव्वरियं व तत्थ जं किंचि ।

माउगमादीन पओ, अविभत्तं जं व गोवेणं ।।

**वृ-** गणः-मल्लादिगणरूपः गोष्ठी-महत्तरादिपुरुषपञ्चकपरिगृहीता तयोः, आदिशब्दादन्यस्यापि महाजनस्य साधारणानि यानि भोज्यानि-सङ्खडयः यद् वा किञ्चिद् मोदकचूर्णप्रभृतिकं तत्र भुक्तोद्धरितं द्रव्यम्, एषा भोज्यविषया सागारिकांशिका । तथा सागारिकसम्बन्धिनां भ्रातृभ्रातृव्यादीनां 'पयः' दुग्धं यावदद्यापि सागारिकेण सहाविभक्तम्, यद् वा दुग्धं वृत्तिच्छिन्नं सागारिकदुग्धमध्यादद्यापि गोपेनाविभक्तम्, एषा क्षीरविषया सागारिकांशिका ।।

मालाकारद्वारमाह-

[भा.३६५०] पुप्फपणिण आरामिगाण पडियं न जाव उ विरिक्कं ।

पक्खेवगादि समुहं, अचियत्तादी य पुव्वुत्ता ।।

**वृ-** पुष्पाणां पणितेन-विक्रयेण यद् 'आरामिकाणां' मालिकानां घृतादिकं पतितं तद् आरामस्वामिना सागारिकेण यावदद्यापि न 'विरक्तं' विभक्तं तावदेषाऽपि सागारिकांशिका । अथ च क्षेत्रादिषु मालाकारान्तेषु द्वारेषु यदि सागारिकस्य सम्मुख पश्यतस्तदीयायामंशि-कायामविभक्तायां साधवो भक्तादिकं गृह्णन्ति तदा भद्रककृताः प्रक्षेपकादयः प्रान्तकृताः पुनरप्रीतिकादयः पूर्वोक्ता दोषा मन्तव्याः ।। मालाकारद्वारं प्रकारान्तरेणाह-

[भा.३६५१] अहवा वि मालकारस्स अंसियं अवनयंति भुज्जेसु ।

सो य सगारो तेसिं, तं पि न इच्छंति अविभत्तं ।।

**वृ-** अथवा मालाकारस्य पुष्पावचयनादिनिर्विष्टामंशिकां 'भोज्येषु' शालि-दाल्यादिषु यावत् तस्य आभाव्यं तावन्मात्रामगारिणः प्रागेवापयन्ति, स च मालाकारः 'तेषां' साधूनां सागारिकः, अतो यावदसौ मालाकारांशिका अविभक्ता तावत् तामपि ग्रहीतुं नेच्छन्ति ।। द्वितीयपदमाह-

[भा.३६५२] गेलन्नमाईसु उ कारणेसु, माऽदिप्पसंगी न य सव्वे गीता ।

गिण्हंति पुंजा अविरेडियातो, तस्सऽन्नतो वा वि विरेडियाओ ।।

**वृ-** ग्लानत्वा-ऽवमौदर्यादिषु कारणेषु संस्तरणाभावे 'मा प्रथमत एव शय्यातरपिण्ड-ग्रहणेऽतिप्रसङ्गो भवतु' इति कृत्वा, न च ते सर्वेऽपि गीतार्था अतः प्रथमम् 'अविरिक्ताद्' अन्यैः समं साधारणात् पुञ्जात्, ततः 'अन्यस्मादपि' विरिक्तात् 'तस्य' सागारिकस्य सत्कात् पुञ्जाद् गृह्णन्ति ।।

**मू. (७५)** *सागारियस्स पूयाभत्ते उद्देसिए चेइए पाहुडियाए, सागारियस्स उवगरणजाए निट्ठिए निसट्ठे पाडिहारिए, तं सागारिओ देइ सागारियस्स परिजणो देइ, तम्हा दावए नो से कप्पइ पडिगाहित्तए ।।*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.३६५३] दव्वे छिन्नमछिन्नं, न कप्पती कप्पए य इति वुत्तं ।
इदमन्नं पुन भावे, अव्वोच्छिन्नम्मि पडिसिद्धं ।।

वृ- द्रव्यतः 'छिन्नं' विभक्तं सद् अंशिकाद्रव्यं कल्पते, तदेव 'अच्छिन्नं' 'अविभक्तं' न कल्पते इति प्रोक्तम् । इदं पुनरन्यद् अस्मिन् सूत्रे सागारिकस्याव्यवच्छिन्ने भावे प्रतिषिद्धम्, न कल्पते इत्यर्थः ।।

[भा.३६५४] अविसेसिओ व पिंडो, हेट्ठिमसुत्तेसु एसमक्खातो ।
इह पुन तस्स विभागो, सो पुन उवकरण भत्ते वा ।।

वृ- अथवा अधस्तनसूत्रेषु 'अविशेषितः' विभागरहितः 'एषः' सागारिकपिण्ड आख्यातः। 'इह पुनः' प्रस्तुतसूत्रे 'तस्य' सागारिकपिण्डस्य विभाग उच्यते । कथम् ? इत्याह-'स पुनः' पिण्ड उपकरणं वा भवेद् भक्तं वा इति ।। अनेन सम्बन्धेनायातस्यास्यव्याख्या-सागारिकस्य ये पूज्याः-स्वामि-कलाचार्यादयस्तदर्थं भक्तम्-अशनादि पूज्यभक्तम्, तथोद्देशः-सङ्कल्पस्तेन निर्वृत्तमौद्देशिकम्, तानेव पूज्यानुद्दिश्य कृतमित्यर्थः । ततस्तेषामेव प्राभृतिकायां 'चेतितं' ढौकनीकृतम्, उपनीतमिति भावः । तथा सागारिकस्य उपकरणजातं-वस्त्र-कम्बलादिकं पूज्यानामर्थाय 'निष्ठितं' निष्पादितम्, ततः 'निसृष्टं' पूज्येभ्यः प्रदत्तम् । 'तच्च' भक्तमुपकरणं वा तेभ्यः प्रातिहारिकं दत्तम्, भुक्तावशेषं सदिदं भूयोऽप्यस्माकं प्रत्यर्पणीयमिति भावः । तद् एवंप्रकारं संयतानां सागारिको वा दद्यात् सागारिकस्य परिजनो वा दद्यात् किं कल्पते ? न वा? इत्याह- 'तस्मात्' पूज्यभक्तात् पूज्योपकरणाद्वा प्रातिहारिकाद् दद्यात् परं न कल्पते प्रतिग्रहीतुमिति सूत्रार्थः ।। अथ भाष्यम्-

[भा.३६५५] संबंधी सामि गुरू पासंडी वा वि तं समुद्दिस्स ।
पूया उक्खित्तं ति य, पट्टगभत्तं च एगट्ठा ।।

वृ-सागारिकस्यैव यः 'सम्बन्धी' पितृव्य-मातुलादिर्यो वा तस्य 'स्वामी' प्रभुः 'गुरुर्वा' कलाचार्य यस्य वा पाषण्डिनो भक्तः स पूज्य उच्यते तं समुद्दिश्य कृतं पूज्यभक्तमुच्यते । ''तत्त्व-भेद-पर्यायैर्व्याख्या'' इति वचनादेकार्थिकान्याह-पूज्यभक्तम् उक्षिप्तभक्तं पट्टकभक्तम्, एतान्येकार्थानि पदानि ।।

[भा.३६५६] चेइयकडमेगट्ठं, पाहुडिय पहेणगं च एगट्ठा ।
उवगरणं वत्थादी, जाव विभागो व जोग्गं वा ।।

वृ- चेतितं कृतं चेत्येकार्थम् । प्राभृतिका प्रहेणकमिति च एकार्थे । उपकरणं वस्त्रादिकम् । वस्त्रं चेह क्षौमिकं गृह्यते, तच्च परिधानं पावरणं वा पूज्यानां दातव्यम्, आदिग्रहणात् पाषण्डिनः प्रतिग्रहो वा कम्बलं वा एकादशप्रतिमां प्रतिपित्सोर्वा रजोहरणं दातव्यम्, एवमादिको यावान् विभागोऽत्र घटते यद् वा यस्योपकरणं योग्यं तद् वक्तव्यम् ।।

[भा.३६५७] निट्ठिय कडं च उक्कोसकं च दिन्नं तु जाणसु निसट्ठं ।
भुत्तुव्वरियं पडिहारियं तु इयरं पुनो चत्तं ।।

वृ- निष्ठितं कृतमित्येकोऽर्थः । यद्वा यद् उत्कृष्टं वस्त्रादितद् निष्ठां प्राप्तमिति कृत्वा निष्ठितमुच्यते।

यत्तु दत्तं तद् निसृष्टं जानीहि । भुक्तोद्धरितं भूयोऽस्माकं प्रत्यर्पणीयमिति यत् प्रतिज्ञातं तत् प्रातिहारिकम् । 'इतरत् पुनः' अप्रातिहारिकं सागारिकेण भक्तमुपकरणं वा यत् 'त्यक्तं' निर्दयतया दत्तमित्यर्थः । एवंविधं प्रातिहारिकदत्तं शय्यातरपिण्ड इति कृत्वा न ग्रहीतव्यम् ॥

**मू. (७६)** *सागारियस्स पूयाभत्ते उद्देसिए चेइए जाव पाडिहारिए, तं नो सागारिओ देइ नो सागारियस्स परिजणो देज्ञा, सागारियस्स पूया देइ, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए ॥*

**वृ-** अस्य व्याख्या प्राग्वत् । नवरम्-अत्र न सागारिको न वा सागारिकस्य परिजनो दद्यात् किन्तु सागारिकस्य 'पूज्यः' सम्बन्धि-स्वाम्यादिर्दद्यात् तथापि न कल्पते, प्रातिहारिकतया दत्तमिति कृत्वा सागारिकपिण्डत्वात् ॥

**मू. (७७)** *सागारियस्स पूयाभत्ते उद्देसिए चेइए पाहुडियाए सागारियस्स उवगरणजाए निट्ठिए निसट्ठे अपाडिहारिए, तं सागारिओ देइ सागारियस्स परिजनो देइ, तम्हा दावए नो से कप्पइ पडिग्गाहित्तए ॥*

**वृ-** अयमप्रातिहारिकतया सागारिकपिण्डो न भवति, परं सागारिकस्तत्परिजनो वा ददातीति कृत्वा प्रक्षेपकादिदोषसद्भावाद् न कल्पते ॥

**मू. (७८)** *सागारियस्स पूयाभत्ते जाव अपाडिहारिए, तं नो सागारिओ देइ, नो सागारियस्स परिजणो देइ, सागारियस्स पूया देइ, तम्हा दावए एवं से कप्पइ पडिग्गाहित्तए ॥*

**वृ-** अत्र सागारिकेणाहृष्टं तत्पूज्योऽप्रातिहारिकं ददातीति कृत्वा कल्पते, परं द्वितीयपदे, नोत्सर्गतः ॥ यत आह-

[भा.३६५८] पूयाभत्ते चेतिए, उवकरणे निट्ठिते निसट्ठे य ।
तं पि न कप्पति घेत्तुं, पक्खेवगमादिनो दोसा ॥

**वृ-** पूज्यानामर्थाय यद् भक्तं 'चेतितं' कृतम्, यच्चोपकरणं निष्ठितं तत् तेभ्यः 'निसृष्टम्' अप्रातिहारिकतया प्रदत्तं तदपि न कल्पते प्रतिग्रहीतुम्, प्रक्षेपकादयो दोषा भद्रक-प्रान्तकृता मा भूवन्निति ॥

**मू. (७९)** *कप्पइ निग्गंथाण वा निग्गंथीण वा इमाइं पंच वत्थाइं धारित्तए वा परिहरित्तए वा, तंजहा- जंगिए भंगिए साणए पोत्तए तिरीडपट्टे नामं पंचमे ॥*

**वृ-** अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.३६५९] उवगरणं चिय पगयं, तस्स विभागो उ बितिय-चरिमम्मि ।
याहारो वा वुत्तो, इदाणि उवधिस्स अधिकारो ॥

**वृ-** पूर्वसूत्रे तावदुपकरणमेव प्रकृतम्, अतः 'तस्य' उपकरणस्य 'विभागः' विशेषप्ररूपणं द्वितीयोद्देशकस्य चरमे अन्त्ये सूत्रद्वये क्रियते । अथवा पूर्वसूत्रेषु सप्रपञ्चमाहार उक्तः, इदानीं त्वस्मिन् सूत्रे 'उपधि(धे)रधिकारः' यादृश उपधिर्ग्रहीतुं कल्पते तादृक् प्रतिपाद्यते इति भावः ॥

[भा.३६६०] ताइं विरूवरूवाइं देइ वत्थानि तानि वा घेत्तुं ।
सेस जतीणं देज्ञा, तत्थ इमे पंच कप्पंति ॥

**वृ-** अथवा 'तानि' परिधान-प्रावरण-कम्बलादीनि विरूपरूपाणि वस्त्राणि यदा सागारिकोऽप्रातिहारिकतया ददाति तदा तानि गृहीत्वा पूज्यः कलाचार्यादि 'शेषाणि'

भुक्तोद्वरितानि यतीनां दद्यात्, 'तत्र' तेषु दीयमानेष्वमूनि पञ्च वस्त्राणि कल्पन्ते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा इमानि पञ्च वस्त्राणि 'धारयितुं वा' परिग्रहे धर्तुं 'परिहर्तुं वा' परिभोक्तुम् । तद्यथा-जङ्गमाः-त्रसाः तदवयवनिष्पन्नं जाङ्गमिकम्, सूत्रे प्राकृतत्वाद् मकारलोपः, भङ्गा-अतसी तन्मयं भाङ्गिकम्, सनसूत्रमयं सानकम्, 'पोतकं' कार्पासिकम्, तिरीटः-वृक्षविशेषस्तस्य यः पट्टो वल्कलक्षणस्तन्निष्पन्नं तिरीटपट्टकं नाम पञ्चमम्। एष सूत्रसङ्क्षेपार्थः ॥ अथ विस्तरार्थं भाष्यकृद् बिभणिषुराह-

[भा. ३६६१] जंगमजायं जंगिय, तं पुन विगलिंदियं च पंचिंदी ।
एक्केक्कं पि य एत्तो, होति विभागेनऽनेगविहं ॥

वृ- जङ्गमेभ्यो जातं जाङ्गिकम्, तत् पुनर्विकलेन्द्रियनिष्पन्नं पञ्चेन्द्रियनिष्पन्नं च । अनयोर्मध्ये एकैकमपि विभागेन चिन्त्यमानमनेकविधं भवति ॥ तद्यथा-

[भा. ३६६२] पट्ट सुवन्ने मलए, अंसुग चीणंसुके च विगलेंदी ।
उन्नोट्टिय मियलोमे, कुतवे किट्टे च पंचेंदी ॥

वृ- "पट्ट"त्ति पट्टसूत्रजम्, "सुवन्ने"त्ति सुवर्णवर्णं सूत्रं केषाञ्चित् कृमीणां भवति तन्निष्पन्नं सुवर्णसूत्रजम्, मलयो नाम-देशस्तत्सम्भवं मलयजम्, अंशुकः-श्लक्ष्णपट्टः तन्निष्पन्नमंशुकम्, चीनांशुको नाम-कोशिकाराख्यः कृमि तस्माद् जातं चीनांशुकम्, यद्वा चीना नाम जनपदः तत्र यः श्लक्ष्णतरः पट्टस्तस्माद् जातं चीनांशुकम्, एतानि विकलेन्द्रियनिष्पन्नानि । तथा और्णिकमौष्ट्रिकं मृगरोमजं चेति प्रतीतानि, पञ्चेन्द्रियनिष्पन्नानि द्रष्टव्यानि ॥

अथ भाङ्गिकादीनि चत्वार्यप्येकगाथया व्याचष्टे-

[भा. ३६६३] अतसी-वंसीमादी, उ भंगियं साणियं च सणवक्के ।
पोत्तय कप्पासमयं, तिरीडरुक्खा तिरिडपट्टो ॥

वृ- अतसीमयं वा "वंसि"त्ति वंशकरीलस्य मध्याद् यद् निष्पद्यते तद् वा, एवमादिकं भाङ्गिकम्। यत् पुनः सनवृक्षवल्काद् जातं तद् वस्त्रं सानकम् । पोतकं कर्पासमयम् । तिरीटवृक्षवल्काद् जातं तिरीटपट्टकम् ॥

[भा. ३६६४] पंच परुवेऊणं, पत्तेयं गेण्हमाण संतम्मि ।
कप्पासिगा य दोन्नि उ, उन्निय एक्को य परिभोगो ॥

वृ- एवं पञ्च वस्त्राणि प्ररूप्य सम्प्रति ग्रहणविधिरभिधीयते-'प्रत्येकम्' एकैकस्य साधोः प्रायोग्याणि वस्त्राणि गृह्णता 'सति' विद्यमाने लाभे द्वौ कल्पौ कार्पासिकौ एकश्चौर्णिक इत्येवं त्रयः कल्पा ग्रहीतव्याः । परिभोगश्चामीषां वक्ष्यमाणविधिना विधातव्यः । एषा पुरातना गाथा॥

अथैनामेव विवृणोति-

[भा. ३६६५] एक्कोन्नि सोत्ति दोन्नी, तिन्नि वि गेण्हिज्ज उन्निए लहुओ ।
पाउरमाणे चेवं, अंतो मज्झे व जति उन्नी ॥

वृ- एक और्णिकः कल्पो द्वौ वा सौत्रिकौ प्रत्येकं ग्रहीतव्यौ । अथ त्रीनपि कल्पान् सौत्रिकान् और्णिकान् वा गृह्णाति ततो मासलघु । प्रावृण्वन्नपि यद्येकमौर्णिकं प्रावृणोति ततः 'एवमेव' मासलघु । 'अन्तर्वा' शरीरानन्तरितं 'मध्ये वा' द्वयोः सौत्रिकयोर्मध्यभागे यद्यौर्णिकं प्रावृणोति

तदाऽपि मासलघु ॥ इदमेव भावयति-

[भा.३६६६] अब्भिंतरं च बाहिं, बाहिं अब्भिंतरं करेमाणे ।
परिभोगविवच्चासे, आवज्जइ मासियं लहुअं ॥

वृ- अभ्यन्तरपरिभोग्यं-सौत्रिकं कल्पं बहिः 'कुर्वन्' प्रावृण्वन् बहिःपरिभोग्यं वा-और्णिकमभ्यन्तरं कुर्वन् परिभोगव्यत्यासं करोति, तत्र चापद्यते लघुकम् । यत एवमतः सौत्रिकं कल्पमन्तः प्रावृणुयात्, और्णिकं तु बहि । एष विधिपरिभोग उच्यते ॥ अत्र विधीयमाने गुणानुपदर्शयति-

[भा.३६६७] छप्पइय-पनगरक्खा, भूसा उज्झायणा य परिहरिया ।
सीतत्ताणं च कतं, खोम्मिय अब्भितरे तेने ॥

वृ- और्णिके ह्यन्तः परिभुज्यमाने षट्पदिकाः संसज्येरन्, ताः सौत्रिकमन्तः प्रावृण्वता रक्षिता भवन्ति । और्णिकं चान्तः परिभुज्यमानं मलीमसं भवति, तत्र च पनकः संसज्यते, अतो विधिपरिभोगे पनकस्यापि रक्षा कृता भवति । सौत्रिकेण च बहि प्रावृतेन विभूषा भवेत् । तथावस्त्रमहर्निशमपि परिभुज्यमानं मलक्षमं-न मलीमसं भवति, कम्बली तु परिभुज्यमाना मलीमसाजायते, मलीमसतया च दुर्गन्धा, अतो विधिपरिभोगे "उज्झायणा" दुर्गन्धता साऽपि परिहृता । सौत्रिककल्पगर्भया च कम्बलिकया प्राव्रियमाणया शीतत्राणं कृतं स्यात् । एतेन कारणकलापेन 'क्षौमिकं' न प्राप्यते ततः किं कर्त्तव्यम् ? इत्याह-

[भा.३६६८] कप्पासियस्स असती, वागय पट्टे य कोसियारे य ।
असती य उन्नयस्सा, वागत कोसेज्ज पट्टे य ॥

वृ- कार्पासिकस्याभावे वल्कजम्, तस्याभावे पट्टवस्त्रम्, तदप्राप्तौ कौशिकारवस्त्रमपि ग्रहीतव्यम् । अथौर्णिकं न प्राप्यते तत और्णिकस्य स्थाने प्रथमं वल्कजं ततः कौशेयं ततः पट्टजमपि ग्राह्यम् । यद्वा पट्टशब्देनात्र तिरीटपट्टकमुच्यते । चशब्दादतसी-वंशीयमयमपि ग्रहीतव्यम् ॥

अथ प्रावरणे गणनाविधिमाह-

[भा.३६६९] न उन्नियं पाउरते तु एक्कं, दोन्नी जता खोम्मिय उन्नियं च ।
दो सुत्ति अंतो बहि उन्नि तीसु, दुगादि उन्नी वि बहिं परेणं ॥

वृ- और्णिकं कल्पमेकं न प्रावृणुते, अर्थादापन्नं सौत्रिकमेकमपि प्रावृणुयात् । यदा तु द्वौ कल्पौ प्रावृणोति तदा 'क्षौमिकं' सौत्रिकमन्तः द्वितीयं पुनरौर्णिकं बहि प्रावृणुयात् । त्रिषु कल्पेषु प्रावरीतुमिष्टेषु द्वौ सौत्रिकावन्तः एकं त्वौर्णिकं बहि प्रावृणुयात् । अथौर्णिकान् द्व्यादीनपि प्रावरीतुमिच्छति ततो द्वित्रिप्रभृतयोऽप्यौर्णिका बहि सौत्रिकात् परतः प्रावरणीयाः ॥

अथ वस्त्रग्रहणे विधिमाह-

[भा.३६७०] पंचण्हं वत्थाणं, परिवाडीगाए होइ गहणं तु ।
उप्परिवाडी गहणे, पच्छित्ते मग्गणा होइ ॥

वृ- 'पञ्चानां' जङ्गिकादीनां वस्त्राणां परिपाट्या ग्रहणं कर्त्तव्यम् । परिपाटिर्नाम-पूर्वं कार्पासिकमौर्णिकं च, तदभावे वल्कज-पट्टजादिकमित्यादिरनन्तरोक्तः क्रमः । तामुल्लङ्घ्य उत्परिपाट्या ग्रहणे प्रायश्चित्तस्य मार्गणा भवति । तद्यथा-जघन्यमुपधिमुत्परिपाट्या गृह्णाति पञ्चरात्रिन्दिवानि, मध्यमे मासलघु, उत्कृष्टे चतुर्लघवः ॥ एतदेव भावयति-

[भा.३६७१]अलंभऽहाडस्स उ अप्पकम्म, अलंभे तस्सावि उ जं सकम्मं ।
एतं अकाउं चउरो उ मासा, भवंति वत्थे परिवाडिहीणे ॥

वृ- इह छेदन-सीवन-सन्धानादेरेकमपि परिकर्म यत्र न भवति, यद् वा बहुधा सीवितव्यं तद् वस्त्रं बहुपरिकर्मोच्यते । तत्रप्रथमं यथाकृतं मार्गयितव्यम्, तस्यालाभेऽल्पपरिकर्म, तस्याप्यभावे यत् 'सकर्म' बहुपरिकर्मकम् । अथैवंविधं योगमकृत्वा प्रथममेवाल्पपरिकर्म बहुपरिकर्म वा गृह्णाति ततश्चत्वारो मासा लघवः । तुशब्दो विशेषणे, तद्यथा-उत्कृष्टस्य वस्त्रस्य यथाकृतादि-विपर्यासग्रहणे चतुर्लघवः, मध्यमस्य विपर्यासे मासिकम्, जघन्यस्य व्यत्यासे पञ्चकम् । एवं 'परिपाटीहीन' यथोक्तग्रहणक्रमरहिते वस्त्रे गृह्यमाणे प्रायश्चित्तम् ॥ अथ द्वितीयपदमाह-

[भा.३६७२] अद्धाणमाईसु उ कारणेसुं, कुज्जा अलंभम्मि उ उक्कमं पि ।
गेलन्नमादीसु विवज्जयं वा, असतीय कुज्जा खलु खुम्मियस्स ॥

वृ- अध्वा-विप्रकृष्टो मार्गस्तं प्रपन्नानां ततो वा निर्गतानां दुर्लभं वस्त्रं भवेत्, एवमादिषु कारणेषु वस्त्रस्यालाभे उत्क्रममपि कुर्यात्, यथाकृतादिक्रमव्यत्यासेनापि गृह्णीयादिति भावः । तथा ग्लानत्वा-ऽनात्मवशतादिषु कारणेषु 'विपर्ययमपि' परिभोगविपर्यासमपि कुर्यात्, अन्तःपरिभोग्यं बहि बहि परोभोग्यं चान्तः प्रावृणुयादिति भावः । क्षौमिकस्य वा कल्पस्याभावे खल्वेकमप्यौर्णिकं प्रावृणुयात् ॥

मू. *(८०) कप्पइ निग्गंथाण वा निग्गंथीण वा इमाइं पंच रयहरणाइं धारित्तए वा परिहरित्तए वा, तंजहा- उन्निए उट्टिए साणए वच्चाचिप्पए मुंजचिप्पए नाम पंचमे ॥*

वृ- अथास्य सम्बन्धमाह-

[भा.३६७३] उदितो खलु उक्कोसो, उवही मज्झिममिदाणि वोच्छामि ।
संखा व एस सरिसी, पाउंछण सुत्तसंबंधो ॥

वृ- 'उदितः' भणितः खल्वनन्तरसूत्रे 'उत्कृष्टः' औणिक-सौत्रिककल्परूप उपधि । इदानीं तु 'मध्यममुपधिं' रजोहरणमहमस्मिन् सूत्रे वक्ष्ये । यद्वा अनयोः सूत्रयोर्या पञ्चलक्षणा सङ्ख्या एषा 'सदृशी' वस्त्राणां रजोहरणानां च तुल्या, अत इदं 'पादप्रोञ्छनं' रजोहरणं तद्विषयं सूत्रमा-रभ्यते । एष सम्बन्धः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा इमानि पञ्चरजोहरणानि धारयितुं वा परिहर्तुं वा । 'तद्यथा' इति उपप्रदर्शनार्थ । 'औणिकम्' ऊरणिकानामूर्णाभिर्निर्वृत्तम्, 'औष्ट्रिकं' उष्ट्ररोमभिर्निर्वृत्तम्, 'सानकं' सनवृक्षवल्काद् जातम्, वच्चकः-तृणविशेषस्तस्य चिप्पकः-कुट्टितः त्वग्रूपः तेन निष्पन्नं वच्चकचिप्पकम्, मुञ्जः-शरस्तम्बस्तस्य चिप्पकाद् जातं मुञ्जचिप्पकं नाम पञ्चममिति सूत्रार्थः ॥ अथ भाष्यविस्तरः-

[भा.३६७४] अब्भितरं च बज्झं, हरति रयं तेन होइ रयहरणं ।
तं उन्नि उट्टि सणयं, वच्चयचिप्पं च मुंजं च ॥

वृ- यस्मादाभ्यन्तरं बाह्यं च रजो हरति तेन रजोहरणं भवति । तत्र बाह्यं रजो हरतीति सुप्रतीतम्, आभ्यन्तरं कथं पुनरपहरति ? इति उच्यते-रजोहरणेन प्रमार्जिते भूभागे ये आदाननिक्षेपादयः संयमव्यापारा विधीयन्ते ते तदष्टकर्मरूपमाभ्यन्तरं रजोऽपहरन्ति, अतः कारणे कार्याध्यारोपं विधाय तदप्याभ्यन्तररजोहरणमुच्यते । उक्तं च-

संजमजोगा एत्थ, रओहरा तेसि कारणं जेणं ।
रयहरणं उवयारा, तेनं भण्णइ रओ कम्मं ॥

तच्च पञ्चविधम्-और्णिकमौष्ट्रिकं शनकं वच्चकचिप्पकं मुञ्जचिप्पकं चेति ॥ तत्राद्यानि त्रीणि सुप्रसिद्धानि, अन्त्यद्वयं व्याख्यानयति-

**[भा.३६७५]** वच्चक मुंजं कत्तंति चिप्पिउं तेहि वूयए गोणी ।
पाउरणऽत्थुरणाणि य, करेंति देसिं समासज्ज ॥

**वृ-** क्वचिद्धर्मचक्रभूमिकादौ देशए 'वच्चकं' दर्भाकारं तृणविशेषं 'मुञ्जं च' शरस्तम्बं प्रथमं 'चिप्पित्वा' कुट्टयित्वा तदीयो यः क्षोदस्तं कर्त्तयन्ति । ततः 'तैः' वच्चकसूत्रैर्मुञ्जसूत्रैश्च 'गोणी' बोरको व्यूयते, प्रावरणा-ऽऽस्तरणानि च 'देशीं' देशविशेषं समासाद्य कुर्वन्ति । अतस्तन्निष्पन्नं रजोहरणं वच्चकचिप्पकं मुञ्जचिप्पकं वा भण्यते ॥

**[भा.३६७६]** रयहरणपंचगस्सा, परिवाडीयाए होंति गहणं तु ।
उप्परिवाडी गहणे, आवज्जति मासियं लहुअं ॥

**वृ-** 'रजोहरणपञ्चकस्य' अनन्तरोक्तस्य परिपाटिकया ग्रहणं भवति । उत्परिपाट्या तु ग्रहणे आपद्यते मासिकं लघुकम् ॥ का पुनः परिपाटि ? इत्याह-

**[भा.३६७७]** तिविहोन्नय असतीए, उट्टियमादीण गहण धरणं तु ।
उप्परिवाडी गहणे, तत्थ वि सट्ठाणपच्छेत्तं ॥

**वृ-** यथाकृतादिभेदात् त्रिविधं यदौर्णिकं तत् प्रथमतो ग्रहीतव्यम् । यथाकृतादिलाभचर्चा प्राग्वद् द्रष्टव्यः । अथौर्णिकं न प्राप्यते तत औष्ट्रिकादीनामपि चतुर्णां यथाक्रमं ग्रहणं धारणं वा कर्त्तव्यम् । अथ 'उपरिपाट्या' यथोक्तक्रमव्यत्यासेन ग्रहणं करोति ततस्तत्रापि स्वस्थानप्रायश्चित्तम्, मध्यमोपधिनिष्पन्नं लघुमासिकमिति भावः ॥ आह-किमर्थं प्रथममौर्णिकं गृह्यते ? उच्यते-

**[भा.३६७८]** उट्ट-सणा कुच्छंती, उल्ला इयरेसु मद्दवं नत्थि ।
तेनोन्नियं पसत्थं, असतीय उ उक्कमं कुज्जा ॥

**वृ-** "उट्ट-सण"त्ति औष्ट्रिक-शनजे रजोहरणे वर्षाकाले वर्षाकाले व्याघारितवृष्टिकायेनार्द्रीभूते सती कुथ्यतः । ततश्च पनकसम्मूर्च्छनादयो दोषाः प्रमार्जनाकार्यं च न भवति । अथार्द्रेणापि प्रमार्जयन्ति ततो दशिकान्तेषु गोलकाः प्रतिबध्यन्ते, मलिनीभूते च तत्राप्कायविराधना । तथा 'इतरयोः' वच्चक-मुञ्जचिप्पकाख्ययो रजोहरणयोर्मार्दवं नास्ति, स्वभावत एव कठिनत्वात् । तेन कारणेनौर्णिकरजोहरणमौष्ट्रिकादिभ्यः प्रशस्तम् । और्णिकस्य 'असति' अभावे उत्क्रमं कुर्यात्, औष्ट्रिकादीन्यपि यथालाभं गृह्णीयादिति भावः ॥

द्वैतीयीकोद्देशकोऽयं मयाऽपि, स्पष्टीचक्रे सद्गुरूणां प्रसादात् ।
सूते नाम्भोबिन्दुनिस्यन्दमिन्दुग्रावा चन्द्रज्योत्स्नया चुम्बितः किम् ? ॥

<u>उद्देशकः-२ समाप्तः</u>

**मुनिदीपरत्नसागरेण संशोधिता सम्पादिता बृहतकल्पसूत्रे द्वितीयोदेशकस्य**
**भद्रबाहु स्वामि रचित निर्युक्तियुक्तं संघदासगणि विरचितं भाष्यं**
**एवं मलयगिरि क्षेमकीर्ति आचार्याभ्यां विरचिता टीका परिसमाप्ता ।**

## उद्देशकः-३

व्याख्यातो द्वितीय उद्देशकः, अथ तृतीयः प्रारभ्यते, अस्य चेदमादिसूत्रम्-

**मू. (८१)** *नो कप्पइ निग्गंथाणं निग्गंथीणं उवस्सयंसि चिट्ठित्तए वा निसीइत्तए वा तुयट्टित्तए वा निद्दाइत्तए वा पयलाइत्तए वा, असनं वा ४ आहारं आहारित्तए, उच्चारं वा पासवणं वा खेलं वा सिंघाणं वा परिट्ठवित्तए, सज्झायं वा करित्तए, झाणं वा झाइत्तए, काउस्सग्गं वा ठाणं ठाइत्तए।।*

**वृ-** अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

**[भा.३६७९]** वत्थाणि एवमादीणि गणहरो गेण्हिउं सयं चेव ।
वच्चति वतिणीवसहिं, पवत्तिनीए पणामेउं ।।

**वृ-** 'एवमादीनि' द्वितीयोद्देशकचरमसूत्रद्वयोक्तानि निर्ग्रन्थीप्रायोग्याणि वस्त्राणि गृहीत्वा 'गणधरः' निर्ग्रन्थीवर्त्तापकः प्रवर्तिन्यास्तानि वस्त्राणि स्वयमेव "पणामेउं" ति अर्पयितुं व्रतिनीनां वसतिं व्रजति, अतस्तद्विषयो विधिरनेन सूत्रेण प्रतिपाद्यते ।। प्रकारान्तरेण सम्बन्धमाह-

**[भा.३६८०]** बीएहि उ संसत्तो, बितियस्सातिम्मि इह उ इत्थीहिं ।
बितिए उवस्सगा वा, पगता इहइं पि सो चेव ।।

**वृ-** द्वितीयोद्देशकस्यादिसूत्रे बीजैः संसक्त उपाश्रयो भणितः, 'इह तु' तृतीयोद्देशकस्यादिसूत्रे स्त्रीभिः संसक्त उच्यते । यद्वा द्वितीये उद्देशके बहुषु सूत्रेषूपाश्रयाः प्रकृता येषु साधूनां वस्तुं न कल्पते, अत इहाप्यादिसूत्रे स एवोपाश्रयः प्रोच्यते ।।

**[भा.३६८१]** तत्थ अकारण गमनं, पडुच्च सुत्तं इमं समुदियं तु ।
कज्जेण वा गते तू, तुयट्टमादीणि वारेति ।।

**वृ-** 'तत्र' निर्ग्रन्थीनामुपाश्रयेऽकारण-वक्ष्यमाणकारणकलापं विना यद् गमनं तत् प्रतीत्य इदं सूत्रं 'समुदितं' समायातम्, तदनेन प्रतिषिध्यते इति भावः । अथ कार्येण तत्र गताः ततः 'गते तु' गमने पुनः सञ्जाते त्वग्वर्त्तनादीनि कर्तुं वारयति ।। अनेन सम्बन्धेनायातस्यास्य व्याख्या- नो कल्पते निर्ग्रन्थानां निर्ग्रन्थीनामुपाश्रये स्थातुं वा निषत्तुं वा त्वग्वर्त्तयितुं वा निद्रायितुं वा प्रचलायितुं वा, अशनं वा पानं वा खादिमं वा स्वादिमं वा चतुर्विधमप्याहारमाहर्तुम्, उच्चारं वा प्रश्रवणं वा खेलं वा सिंघाणं वा परिष्ठापयितुम्, स्वाध्यायं वा कर्तुम्, ध्यानं वा ध्यातुम्, कायोत्सर्गं वा स्थानं स्थातुमिति सूत्रसङ्क्षेपार्थः ।। अथ विस्तरार्थं भाष्यकृद् विभणिषुराह-

**[भा.३६८२]** आपुच्छमनापुच्छा, व अकज्जे चउगुरुं तु वच्चंते ।
आपुच्छिय पडिसिद्धे, सुद्धा लग्गा उवेहंता ।।

**वृ-** स्थविराणामापृच्छयाऽनापृच्छया वा यदि अकार्ये निर्ग्रन्थीनामुपाश्रयं व्रजति ततश्चतुर्गुरुकम् । स्थविरा आपृष्टाः सन्तो यदि प्रतिषेधं कुर्वन्ति-'मा व्रज, न वर्त्तते निष्कारणं निर्ग्रन्थीनामुपाश्रयं गन्तुम्' एवं प्रतिषिद्धे स्थविराः 'शुद्धाः' न प्रायश्चित्तभाजः । अत स्थविरा उपेक्षन्ते ततस्तेऽपि लग्नाः, चतुर्गुरुकमापन्ना इत्यर्थः ।। अथवा-

**[भा.३६८३]** चउरो गुरुगा लहुगा, मासो गुरुगो य होंति लहुगो य ।
आयरिए अभिसेगे, भिक्खुम्मि य गीलऽगीतत्थे ।।

वृ-आचार्यो यदि निष्कारणं निर्ग्रन्थीप्रतिश्रयं गच्छति ततश्चत्वारो गुरवः । अभिषेको व्रजति चत्वारो लघवः । गीतार्थभिक्षुर्व्रजति गुरुको मासः । अगीतार्थभिक्षुर्व्रजति लघुको मासः ॥ यद्वा-

[भा.३६८४] गमने दूरे संकिय, निस्संकऽभिलाव कक्ख सतिकरणं ।
ओभासण पडिसुणणे, संपत्ताऽऽरोवणा भणिता ॥

वृ- निष्कारणं संयतीनामुपाश्रये गच्छति १ तत्र गतो दूरे स्थितः संयतीः पश्यति एतास्ता इति २ कतरा कतरा पुनरियम् ? इत्येवं शङ्कां करोति ३ अमुका अमुकावा इयमिति निशङ्कितं जानाति ४ संयतीभि समम् 'अभिलापं' संलापं करोति ५ कक्षान्तरादीनि विलोकयति ६ 'स्मृतिकरणम्' 'ईदशी ममाप्यासीत्' इति लक्षणं करोति ७ तामवभाषते ८ अवभाषिता सती सा प्रतिश्रृ णोति ९ सम्पत्तिं तया सह करोति १०, एतेषु दशसु स्थानेषु आरोपणा वक्ष्यमाणा भणिता ॥ अथात्र स्मृतिकरणपदं व्याचष्टे-

[भा.३६८५] भावम्मि उ संबंधो, सतिकरणं एरिसा व सा आसि ।
अहवा नं इणमट्ठं, पणएमि सती भवति एसा ॥

वृ- 'भावे' भावतः-प्रतिसेवनाभिप्रायेण तया सह यः सम्बन्धः क्रियते, यादशी त्वं ईदशी 'सा' मद्भार्या आसीत्, एतत् स्मृतिकरणमुच्यते । अथवा 'एतां' संयतीमहम् 'अमुमर्थं' प्रतिसेवनालक्षणं 'प्रणयामि' प्रार्थयामीत्येषा स्मृतिरुच्यते ॥

अथानन्तरोक्तेषु दशसु स्थानेषु प्रायश्चित्तमाह-

[भा.३६८६] चउरो य अनुग्घाया, लहुगो लहुगा य होंति गुरुगा य ।
छम्मासा लहु-गुरुगा, छेदो मूलं तह दुगं च ॥

वृ- संयतीप्रतिश्रयगमने चत्वारोऽनुद्धाता मासाः । दूरदर्शने मासलघु । शङ्कायां चतुर्लघवः। निशङ्किते चतुर्गुरवः । आलापे षण्मासा लघवः । कक्षान्तराद्यवलोकने षण्मासा गुरवः । स्मृतिकरणे छेदः । अवभाषणे मूलम् । प्रतिश्रवणेऽनवस्थाप्यम् । सम्पत्त्यां पाराञ्चिकम् ॥ एवं तावदोघतः प्रायश्चित्तमुक्तम् । अथ विभागतस्तदेव दर्शयितुमाह-

[भा.३६८७] निक्कारणगमणम्मि, बहवे दोसा य पच्चवाता य ।
जिन-थेरपडिकुट्ठा, तेसिं चाऽऽरोवणा इणमो ॥

वृ- निष्कारणगमने बहवो दोषाश्च प्रत्यपायाश्च भवन्ति । तत्र दोषा आत्म-परोभयसमुत्थाः पारलौकिकाः, प्रत्यपायाश्च भोगिनी-घाटिकादय ऐहलौकिकाः । ते चोभयेऽपि जिनैः-तीर्थकृद्भिः स्थविरैश्च-गणधरादिभिः परतिक्रुष्टाः, यथाऽमी भवन्ति तथा न विधेयमित्युपदिष्टमिति भावः । तेषां च दोषाणाम् 'इयं' वक्ष्यमाणा 'आरोपणा' प्रायश्चितम् ॥ तच्चैतेषु सूत्रोक्तपदेषु भवति-

[भा.३६८८] चिट्ठित्ति निसीइत्ता, तुयट्ट निद्दा य पयल सज्झाए ।
झाणा-ऽऽहार-विहारे, पच्छित्ते मग्गणा होइ ॥

वृ- स्थातुं निषत्तुं त्वग्वर्तनं निद्रां प्रचलां स्वाध्यायं ध्यानमाहारं वा कर्तुं विहारं-चङ्क्रमणम् उपलक्षणत्वाद् उच्चार-प्रश्रवणे कायोत्सर्गं वा कर्तुं न कल्पते । अथ करोति ततः प्रायश्चित्तस्य मार्गणा भवति ॥ इदमेव प्रकटयति-

[भा.३६८९] एतेसिं तु पयाणं, पत्तेय विभागो य ।

जो एत्थं आवन्नोऽणावन्नो वा वि जो एत्थं ॥

**वृ-** 'एतेषां' स्थानादीनां पदानां प्रत्येकं प्ररूपणा 'विभागश्च' दोषाणां विभाषालक्षणः कर्त्तव्यः। कथम् ? इत्याह-यः 'अत्र' दोषजाले प्रायश्चित्तजाते वाऽऽपन्नो यो वाऽनापन्नः तदेतद् वक्तव्यम्॥

यथाप्रतिज्ञातमेव निर्वाहयति-

[भा.३६९०] निक्कारणमविहीए, निक्कारणओ तहेव य विहीए।
कारणओ अविहीए, कारणतो चेव य विहीए॥

[भा.३६९१] आदिभयणाण तिण्हं, अन्नतरीए उ संजतीसेज्जं।
जे भिक्खू पविसेज्जा, सो पावति आणमादीणि॥

**वृ-** साध्वीप्रतिश्रये प्रविशतां चत्वारो भङ्गाः, तद्यथा-निष्कारणेऽविधिना साध्वीप्रतिश्रये १ निष्कारणं विधिना २ कारणतोऽविधिना ३ कारणतो विधिना प्रविशति ४ ॥ अत्र 'आदिभजनानाम्' आद्यानां त्रयाणां भङ्गानाम् अन्यतरया भजनया-भङ्गकेन संयतीनां शय्यां-वसतिं यो भिक्षु प्रविशति स आज्ञादीनि दूषणानि प्राप्नोति ॥ तत्र प्रथमभङ्गव्याख्यानार्थमाह-

[भा.३६९२] निक्कारणम्मि गुरुगा, तीसु वि ठाणेसु मासियं गुरुगं।
लहुगा य दारमूले, अतिगयमेत्ते गुरू पुच्छा॥

**वृ-** निष्कारणे संयतीवसतिं गच्छतश्चतुर्गुरुकाः। अविधिना च प्रविशतस्त्रिष्वपि स्थानेषु मासिकं गुरुकम्। त्रीणि स्थानानि नाम-अग्रद्वार-मध्या-ऽऽसन्नलक्षणानि, एतेषु नैषेधिकीम-कुर्वतस्त्रीणि मासगुरुकाणि भवन्ति। यदि 'द्वारमूले' मूलद्वारसमीपे बहिस्तिष्ठति ततःचतुर्लघवः। अथैकमपि पदमुपाश्रयमध्येऽतिगतः-प्रविष्टस्तदा अतिगतमात्रे चतुर्गुरु। "पुच्छि"त्ति नोदकः पृच्छां करोति॥ कथम् ? इत्याह-

[भा.३६९३] पाणाइवायमादी, असेवतो केन होंति गुरुगा उ।
कीस व बाहिं लहुगा, अंतो गुरु चोलग ! सुणेहिं॥

**वृ-** प्राणातिपातादिकमपराधमसेवमानस्य केन कारणेन चतुर्गुरुका भवन्ति ? कस्माद्वा 'बहि': द्वारमूले चतुर्लघुकाः ? कस्माच्चान्तःप्रविष्टमात्रस्य चतुर्गुरुकम् ? । आचार्य प्राह-हे नोदक ! 'शृणु' निशमयात्र कारण येनैवं प्रायश्चित्तं दीयते॥ किं तत् ? इत्याह-

[भा.३६९४] वीसत्था य गिलाणा, खमिय वियारे य भिक्ख सज्झाए।
पालीय होइ भेदो, अप्पाण परे तदुभए य॥

**वृ-** काचिदार्यिका तत्र 'विश्वस्ता' अपावृतशरीरा भवेत् सा संक्षोभमुपयायात्। ग्लाना वा क्षपिका वा संयतसंक्षोभेण न भुञ्जीत। विचारभूमौ भिक्षायां स्वाध्यायभूमौ वा प्रस्थितानां तासां व्याघातो भवेत्। पाली नाम-संयममहातडागस्यानतिक्रमलक्षणः सेतुः तस्या आत्म-परोभयसमुत्थो भेदो भवति; यद्वा "पालि"त्ति वसतिपालिका भण्यते, तया सार्द्धमालापादि कुर्वत आत्मसमुत्थः परसमुत्थ उभयसमुत्थो वा भेदो भवतीति द्वारगाथासमासार्थः॥ साम्प्रतमेनामेव विवृणोति-

[भा.३६९५] काई सुहवीसत्था, दरजिमिय अवाउडा य पयलाति।
अतिगतमेत्ते य तहिं, संकिय पपलाइया थद्धा॥

**वृ-** काचिदार्यिका वसतेरन्तःस्थिता 'सुखविश्वस्ता' आत्मसुखेनापावृतशरीरा तिष्ठति,

दरजिमिता वा-अर्धभुक्ता दरनिवसिता काचिदास्ते, अपावृतनिषन्ना वा काचित् प्रचलायते । ततः 'तस्मिन्' संयतेऽकस्माद् 'अतिगतमात्रे' प्रविष्टमात्र व 'दृष्टाऽहमनेनापावृता' इति 'शङ्किता' शङ्काकुला सती प्रपलायते, सहसैव नश्यतीत्यर्थः । प्रपलायिता च सती संक्षोभतः स्तब्धगात्रा सा भवेत् ॥ अथेदमेव व्याचष्टे-

[भा.३६९६] वीरल्लसउणवित्तासियं जहा सउणिवंदयं वुन्नं ।
वच्चति निरावयक्खं, दिसि-विदिसाओ विभज्जंतं ॥

वृ- वीरल्लशकुनः-हुलायकः, तेन समागच्छता वित्रासितं सद् यथा शकुनिकाना-पक्षिणीनां वृन्दं ''वुन्नं'' विषन्नं सद् 'निरपेक्षं' पुत्रभाण्डाद्यपेक्षारहितं दिशो विदिशश्च 'विभज्यमानं' वियुज्यमानं 'व्रजति' सहसैव पलायते ॥ एष दृष्टान्तः, अयमर्थोपनयः-

[भा.३६९७] तम्मि य अतिगतमित्ते, वित्तत्थाओ जहेव ता सउणी ।
गेण्हंति य संघाडिं, रयहरणे यावि मग्गंति ॥

वृ- 'तस्मिन्' संयतेऽतिगतमात्र एव यथैव ताः शकुनिकास्तथैव ता अपि संयत्यो वित्रस्ता भवन्ति । ततश्च काचिदपावृतगात्रा त्वरितं प्रावृणोति, अन्याः काश्चन सङ्घाटिका गृह्णन्ति, यास्तु संयतं सहसा समागतं दृष्ट्वा रजोहरणं मुक्त्वा नष्टाः ताः पश्चात् सुस्थीभूताः सत्यो रजोहरणानि मार्गयन्तीति ॥ यच्च नोदकेनोक्तम् ''प्राणातिपातादिकमसेवमानस्य कस्माच्चतुर्गुरुकं दीयते ?'' तदेतत् परिहरन्नाह-

[भा.३६९८] छक्कायाण विराधन, पक्खुलणं खाणु कंटए विलिया ।
थद्धा य पेच्छिउं भावभेओ दोसा उ वीसत्थे ॥

वृ- ताः संयत्यः कुम्भकारशालादौ स्थिता भवेयुः, तत्र च निरपेक्षा नश्यन्त्यो मृत्तिकामर्दनेन पृथिवीकायम्, उदककुम्भप्रलोटनेनाप्कायम्, उल्मुकघट्टनेनाग्निकायम्, ''यत्राग्निस्तत्र नियमाद् वायुः'' इति कृत्वा वायुकायम्, बीज-हरितमर्दनेन वनस्पतिम्, कुन्थु-कीटिकादिमर्दनेन त्रसकायं च विराधयेयुः; एषआ षट्कायविराधना, सा च तत्त्वतस्तेनैव साधुना कृता । प्रस्खलनं नामअधस्तादुपरि वा आस्फालनं यद् वा तासां नश्यन्तीनां भवेत् । स्थाणुना कण्टकेन वा पादयोरपघातः स्यात् । ''विलिया'' 'व्रीडिता' अकस्मात् तद्दर्शनाद् लज्जिता सती काचिद् वैहायसोद्बन्धनादि कुर्यात् । भयातिरेकतो वा स्तब्धा भवेत् । तां च तथाभूतां दृष्ट्वा भावभेदो भवति, 'सात्त्विकभावप्रभवोऽयमस्य शरीरे स्तम्भः' इत्येवमितराः संयत्यश्चिन्तयेयुरिति भावः। एवमादयो दोषा विश्वस्तार्यिकाविषया मन्तव्याः ॥ गतं विश्वस्ताद्वारम् । अथ ग्लानाद्वारमाह-

[भा.३६९९] कालाइक्कमदाने, गाढतरं होज्ज नेव पउणेज्जा ।
संखोभेण निरोधो, मुच्छा मरणं व असमाही ॥

वृ- ग्लाना संयती तस्य संयतस्य सङ्क्षोभेण न भुङ्क्ते, प्रतिचरिका वा तदर्थं भिक्षां न गच्छति। ततः कालातिक्रमेण तस्या भक्त-पानप्रदाने गाढतरं ग्लानत्वं भवेत, न वा सा प्रगुणीभवेत् । अथवा तदीयसङ्क्षोभेण तस्या वातकर्मणः कायिक्याः संज्ञाया वा निरोधो भवेत्, ततस्तद्बाधया मूर्च्छा सञ्जायेत, निरोधेन वा मरणमाप्नुयात्, असमाधिर्वा तस्या भवेत्, तत्रानागाढपरिताप-नादिनिष्पन्नं प्रायश्चित्तम् ॥ अथ क्षपिकाद्वारमाह-

[भा.३७००] पारणगपट्ठिया आनियं च अविगडियऽदंसिय न भुंजे ।
अच्छियत्त अंतराए, परिताव असब्भवयणे य ॥

वृ- क्षपिका चतुर्थादितपःकर्मकारिणी पारणकार्थं प्रस्थिताऽपि 'ज्येष्ठार्य आगतः' इति मत्वा निवर्त्तते । प्रवर्त्तिनी वा तस्य समीपे निविष्टा वर्त्तते, तया च क्षपिकया पारणकमानीतम्, परम् 'अविकटितम्' अनालोचितम् 'अर्शितं वा' अनालोकितं सा न भुङ्क्तं इति कृत्वा प्रवर्त्तिनीं प्रतिपालयन्ती तिष्ठति । ततश्च तस्या अप्रीतिकमन्तरायोऽनागाढमागाढं वा परितापो भवेत् । असभ्यवचनं वा सा ब्रूयात्-अहो ! अयमस्मत्कार्याणां कीलक इव साम्प्रतमुपस्थित इति ॥

विचारद्वारमाह-

[भा.३७०१] नोल्लेऊण न सक्का, अंतो वा होज्ज नत्थि वीयारो ।
संते वा न पवत्तति, निच्छुभण विनास गरिहा य ॥

वृ- स साधुर्द्वारमूले उपविष्टत्वाद् 'नोदयितुं' लङ्घयितुं न शक्यते, तासां च संयतीनामन्तः विचारभूमिर्नास्ति, अस्तिवा परं तस्यां संज्ञा न प्रवर्त्तते, शय्यातरेण वा सा नानुज्ञाता, तस्यां व्युत्सर्जने निष्काशनमसौ कुर्यात्, निष्काशिताश्च श्वापदाभिर्विनाशं लोकाच्च गर्हामासादयन्ति, तन्निष्पन्नं तस्य संयतस्य प्रायश्चित्तम् ॥ अथ भिक्षाद्वारमाह-

[भा.३७०२] सइकालफेडणे एसणादिपेल्लंतऽपेल्लणे हानी ।
संकायऽभाविएसु य, कुलेसु दोसा चरंतीणं ॥

वृ- संयत्यो भिक्षायां प्रस्थिताः, स च साधुः समायातः, ततस्तस्य दाक्षिण्येन तावत् स्थिता यावद् भिक्षायाः सत्कालः-देशकालः स्फिटितः । ततोऽवेलायां भिक्षामटन्त्य एषणाशुद्धेः आदिशब्दाद् उद्गमोत्पादनाशुद्धेश्च प्रेरणं कुर्युः । अथ न प्रेरयेयुः ततस्तासामात्मनो हानि परिताप-महादुःखादिना भवेत् । अभावितकुलेषु चाऽकाले चरन्तीनां शङ्कादयो दोषा भवेयुः । शङ्का मैथुनार्थविषया, आदिशब्दाद् भोजिका-घाटिकादिदोषपरिग्रहः ॥ अथ स्वाध्यायद्वारमाह-

[भा.३७०३] सज्झाए वाघातो, विहारभूमिंव पत्थिय नियत्ता ।
अकरण नासाऽऽरोवण, सुत्तऽत्थ विना य जे दोसा ॥

वृ- 'ज्योष्ठार्य आगतः' इति कृत्वा ताः पठनं परावर्त्तनं वा न कुर्वन्ति, एवं स्वाध्यायव्याघातो भवेत् । वसतौ वा अस्वाध्यायिके जाते 'विहारभूमिं' स्वाध्यायभुवं प्रस्थिताः भूयस्तं समागतं दृष्ट्वा निवृत्ताः, ततः "अकरणे"ति सूत्रपौरुषीं न कुर्वन्ति मासलघु, अर्थपौरुषीं न कुर्वन्ति मासगुरु । सूत्रा-ऽर्थनाशनिष्पन्ना चारोपणा, सा चेयम्-सूत्रं नाशयति चतुर्लघु, अर्थं नाशयति चतुर्गुरु । सूत्रा-ऽर्थाभ्यां च विना ये 'दोषाः' चरण-करणहान्यादयस्तन्निष्पन्नं सर्वमपि संयतस्य प्रायश्चित्तम् ॥ पालीभेदद्वारमाह-

[भा.३७०४] संजममहातलागस्स नाणवेरग्गसुपडिपुन्नस्स ।
सुद्धपरिणामजुत्तो, तस्स उ अणइक्कमो पाली ॥

वृ- संयमः-पञ्चाश्रवादिविरमणात्मकः स एव महद्-विस्तीर्णं यत् तडागं तस्य, 'ज्ञानवैराग्यसुप्रतिपूर्णस्य' ज्ञानम्-आचारादिश्रुतं तत्प्रमुखं यत् वैराग्यं-प्रतिसमयविशुद्धयमानो भवनिर्वेदः तेन जलस्थानीयेन सुष्ठु-अतीव प्रतिपूर्णस्य, यः शुद्धपरिणामयुक्तस्तस्यानतिक्रमः

स पालिरित्युच्यते ॥ तस्य भेदः कथं भवति ? इत्याह-

[भा.३७०५] संजमअभिमुहस्स वि, विसुद्धपरिणामभावजुत्तस्स ।
विकहादिसमुप्पन्नो, तस्स उ भेदो मुणेयव्वो ॥

वृ- संयमाभिमुखस्यापि तस्य विशुद्धिपरिणामभावयुक्तस्य पालिस्थानीयस्यानतिक्रमस्य यः 'विकथादिसमुत्पन्नः' मिथःकथादिकरणसमद्भूतः 'भेदः' विनाशः स इह पालीभेदो ज्ञातव्यः । स चाऽऽत्म-परोभयसमुत्थो भवेत् ॥

[भा.३७०६] अहवा पालयतीति, उवस्सयं तेन होति सा पाली ।
तीसे जायति भेदो, अप्पाण-परोभयसमुत्थो ॥

वृ- अथवा या तत्रोपाश्रयं पालयति सा ''सत्यभामा भामा'' इति न्यायत् पाली भण्यते । तस्या एकाकिन्यास्तं संयतं दृष्ट्वा आत्मसमुत्थः परसमुत्थ उभयसमुत्थो वा भेदो जायते ॥

कथम् ? इति चेद् उच्यते-

[भा.३७०७] मोहतिगिच्छ खमणं, करेमि अहमवि य बोहि पुच्छा य ।
मरणं वा अचियत्ता, अहमवि एमेव संबंधो ॥

वृ- स संयतस्तं संयतीप्रतिश्रयं गतो यावदेका वसतिपालिका तिष्ठति, ततस्तेन सा पृष्टा-आर्ये ! किमिति भवती भिक्षां नाटसि ? । सा प्रतिब्रूते-मोहचिकित्सार्थम् । तयाऽपि स संयत एवमेव पृष्टो ब्रवीति- अहमपि मोहचिकित्सार्थं क्षपणं करोमि । ततस्तेन पृच्छा कृता-आर्ये ! भवत्या कथं बोधिरासादिता ? । सा प्राह-मरणं मदीयभर्तुरजनिष्ट, तस्य वा अहम् 'अप्रीतिका' द्वेष्या पूर्वमभुवं अतः प्रव्रजिता । ततस्तया सोऽप्येमेव पृष्टः प्राह-अहमपि 'एवमेव' अभीष्टकलत्रवियोगादिना प्राव्राजियम् । एवं भिन्नकथासद्भावकथनैर्भावसम्बन्धो भवति ॥

इदमेव स्फुटतरमाह-

[भा.३७०८] ओमानस्स व दोसा, तस्स व गमनेन सग्गलोगस्स ।
महतरियपभावेण य, लद्धा मे संजमे बोही ॥

वृ- अपमानं नाम-ससापत्न्यतायां यद् भर्त्ता माम् अवमतया पश्यति स्म तस्य दोषादहं प्रवव्राज। अथवा मदीयो भर्त्ता मय्येकान्तानुरक्त आसीत्, अतस्तस्य स्वर्गलोकस्य गमनेन तथा महत्तरिकया यद् ममानवरतं धर्माख्यानकानि कथितानि तत्प्रभावेण च लब्धा मया संयमे बोधि, संयमं प्रतिपन्नवतीत्यर्थः ॥ यद्वा-

[भा.३७०९] पदूमिता मि घरासे, तेन हतासेन तो ठिता धम्मे ।
सिट्ठं दाइ रहस्सं, न कहिज्जइ जं अनत्तस्स ॥

वृ- 'प्रदुमिता' प्रकर्षेण क्लेशिताऽस्मि अहं ''घरासे'' गृहवासे, प्राकृतत्वाद् वाशब्दलोपः, तेन 'हताशेन' कुपतिना, ततः स्थिताऽहमेवंविधे धर्मे । इदं च रहस्यमिदानीं मया भवतां 'शिष्टं' कथितम्, यद् 'अनाप्तस्य' भवद्व्यतिरिक्तस्य कस्यापि पुरतो न कथ्यते ॥

[भा.३७१०] रिक्खस्स वा वि दोसा, अलक्खणो सो अभागधिज्जो नु ।
न य निग्गुणा मि अज्जो ! तुब्भे चि य नाहिह विसेसं ॥

वृ- मम पाणिग्रहणदिवसे यद् ऋक्षं-नक्षत्रं तस्य वा कोऽपि दोष आसीत्, तेन स तादृशो

निस्नेहोऽलक्षणोऽभागधेयश्च मम भर्ता अभवत्, न चाहं 'निर्गुणा' गुणविकला, यद्वा आर्य ! यूयमपि ज्ञास्यथ मदीयं 'विशेषं' सगुण-निर्गुणताविभागम् ॥ एवमुक्ते संयतो ब्रूयात्-

[भा.३७११] इट्ठकलत्तविओगे, अन्नम्मि य तारिसे अविज्जंते ।
महतरयपभावेण य, अहमवि एमेव संबंधो ॥

वृ- इष्टकलत्रस्य वियोगे सञ्जातेऽन्यस्मिंश्च तादृशे कलत्रेऽविद्यमाने महत्तरः-आचार्यो मम धर्ममाख्याति स्म, ततस्तत्प्रभावेणाहमपि प्रव्रजितः । ''एमेव'' त्ति यथा तया सविकारमात्मीयं चरितमाख्यातं तथा संयतोऽप्येवमेव कथयति । एवं तयोः परस्परं भावसम्बन्धो भवति ॥

किञ्चान्यत्-

[भा.३७१२] किं पिच्छह सारिक्खं, मोह मे नेति मज्झ वि तहेव ।
उच्छंगगता मि मता, इहरा न वि पत्तियंतो मि ॥

वृ- संयतस्तां संयतीं निश्चलया दृष्ट्या निरीक्षते, ततः सा ब्रवीति-किमेवं पश्यथ ? । स प्राह-मदीयभोगिन्या सह यद् भवत्याः सर्वथैव सादृश्यं तद् मां मोहं नयति, किमेषा सैव ? इत विभ्रमं जनयतीत्यर्थः । सा ब्रवीति-ममापि त्वं तथैव मोहं जनयसि । स प्राह-किं करोमि ? ममोत्सङ्गे गता-स्थिता सती सा मृता, 'इतरथा' यदि परोक्षं सा मृताऽभविष्यत् ततो देवानामपि वचनेन प्रत्ययं नागमिष्यम्, यथा-त्वं सा मम पत्नी न भवसीति ॥

[भा.३७१३] इय संदंसन-संभासणेहिं भिन्नकध-विरहजोएहिं ।
सेज्जातरादिपासण, वोच्छेद दुदिट्ठधम्म त्ति ॥

वृ- ''इय'' एवं यत् परस्परं सन्दर्शनं यच्च सम्भाषणं-'किमिति त्वमद्य भिक्षां न गता ?' इत्यादिपृच्छारूपं ताभ्याम्, तथा यास्तया सह भिन्नकथाः, यश्च विरहे-एकान्ते योगः, एतैश्चारित्रस्य भेद उपजायते । तथा शय्यातर आदिशब्दादन्यो वा यः तत्परिजनादिस्तयोस्तथाविधं चेष्टितं पश्यति स तद्रव्या-ऽन्यद्रव्योद्रव्यवच्छेदं कुर्यात् । 'दुर्दृष्टधर्माण एते' इत्येवं विपरिणाममुपगच्छेत्। अथासौ तया सह सम्पत्तिं गच्छति ततो नरकायुर्बन्धाति, तीर्थकृतां सङ्घस्य च महतीमाशातनां विधाय बोधिलाभप्रतिबन्धकं कर्मजालमुपचिनोति । उक्तं च-

लिंगेन लिंगिनीए, संपत्तिं जइ निगच्छई मूढो ।
निरयाउयं निबंधइ, आसायणया अबोही य ॥

एतत् सर्वं स्थानं निषदनं चाश्रित्योक्तम् । अथ त्वग्वर्त्तनादीनि पदान्यङ्गीकृत्याह-

[भा.३७१४] पयला निद्द तुअट्टे, अच्छि दिट्ठम्मि चमढणे मूलं ।
पासवणे सच्चित्ते, संका वुच्छामि उड्डाहो ॥

वृ- प्रचलायनं नाम-निषण्णस्य सुप्तजागरावस्था, निद्रायणं तु-निषण्णस्यैव स्वपनम्, त्वग्वर्त्तनं-संस्तारकं प्रस्तीर्य शयनम्, अक्षिचमढनं-चक्षुषोर्मलिनम् । एतानि कुर्वाणो यद्यपि सागारिकादिना न दृष्टस्तथापि चतुर्गुरु, दृष्टे तु शङ्कायां चतुर्गुरु, निःशङ्किते मूलम्, प्रश्रवणं संयतीनां कायिकाभूमौ करोति चतुर्लघु । ''सच्चित्ते'' त्ति संयत्याः कायिका व्युत्सृजत्या योनौ संयतनिसृष्टं शुक्रबीजमवगाहेत ततो मूलम् । ''संका वुच्छम्मि'' ति तं संयतं तत्र कायिकां व्युत्सृजन्तं दृष्ट्वा सागारिकादि शङ्कां

कुर्यात्-किं मन्ये एष श्रमणको रजन्यामत्रैवोषितः ?, ततो महानुड्डाहः प्रवचनस्य भवतीति। एषा पुरातना गाथा ॥ अथास्या एव व्याख्यानमाह-

[भा.३७१५] पयला निद्द तुअट्टे, अच्छीणं चमढणम्मि चउगुरुगा।
दिट्ठे वि य संकाए, गुरुगा सेसेसु वि पदेसु ॥

वृ-प्रचलां निद्रां त्वग्वर्त्तनमक्षिचमढनं च कुर्वाणं यदि परो न पश्यति ततश्चतुर्गुरुकाः, दृष्टेऽपि प्रचलादौ शङ्कायां चतुर्गुरुकाः, निशङ्किते मूलम्। 'शेषेष्वपि' अशनादिसमुद्देशन-स्वाध्यायकरणादिषु सूत्रोक्तपदेषु परेणादृष्टेषु चत्वारो गुरवः, दृष्टेष्वपि शङ्कायां चतुर्गुरु, निशङ्किते मूलम् ॥

का पुनः शङ्का भवेत् ? इति चेद् उच्यते-

[भा.३७१६] सज्झाएण नु खिन्नो, आउं अन्नेनं जेन पयलाति।
संकाए हुंति गुरुगा, मूलं पुन होति निस्संके ॥

वृ- 'नुः' इति वितर्के, किमेष संयतः स्वाध्यायजागरेण खिन्नः ? आहोश्विदन्येन सागारिक-प्रसङ्गेन रात्रौ खिन्नः ? येनैवं प्रचलायते, एवं शङ्कायां चतुर्गुरुकाः, निशङ्किते तु मूलं भवति ॥

[भा.३७१७] अन्नत्थ मोय गुरुओ, संजतिवोसिरणभूमिए गुरुगा।
जोणोगाहण बीए, केयी धाराए मूलं तु ॥

वृ- संयतीकायितकाभूमिं विमुच्यान्यत्र मोकस्य व्युत्सर्जने मासगुरु। अथ संयतीव्युत्सर्जनभूमौ व्युत्सृजति ततश्चतुर्गुरु। तत्र च कदाचिद् दृष्टिक्लीबस्यान्यस्य वा बीजनिसर्गो भवेत्, तच्च बीजं संयतीधाराहतं सद् ऊर्ध्वमुखमुच्छावितं योनावदवगाहेत तत्र संयतस्य मूलम्, वाहाडितायां च तस्यामुड्डाहादयो दोषाः। केचिदाचार्या ब्रुवते-धारया स्पृष्टमात्र एव बीजे मूलं भवति। यत एते दोषा अतो निष्कारणे संयतीवसतिमविधिना न प्रविशेत् ॥ गतः प्रथमो भङ्गः। द्वितीयभङ्गमाह-

[भा.३७१८] निक्कारणे विधीय वि, दोसा ते चेव जे भणिय पुव्विं।
वीसत्थाई मुत्तुं, गेलन्नाई उवरिमा उ ॥

वृ- निष्कारणे 'विधिनाऽपि' नैषेधिकीत्रयकरणरूपेण प्रवेशे त एव दोषाः ये 'पूर्वं' प्रथमभङ्गे सप्रपञ्चमुक्ताः। नवरं विश्वस्ताविषया ये दोषा उक्ताः, आदिशब्दस्तेषामेवानेकभेदसूचकः, तान् मुक्त्वा ये ग्लान्यादिविषया उपरितना दोषास्ते द्वितीयभङ्गे सम्भवन्ति, विश्वस्तादोषास्तु नैषेधिकीत्रयकरणेन न सम्भवन्तीति भावः ॥

[भा.३७१९] निक्कारणे विधीय वि, तिट्ठाणे गुरुगो जेन पडिकुट्ठं।
कारणगमने सुद्धो, नवरिं अविधीय मासतियं ॥

वृ- निष्कारणे विधिनाऽपि प्रविशन् यस्त्रिषु स्थानेषु नैषेधिकीं प्रयुङ्क्ते तस्यापि मासगुरुकम्। कुतः ? इत्याह-येन प्रतिक्रुष्टं भगवता निष्कारणमार्यिकावसतौ गमनम्। अथ तृतीयभङ्गमाह- "कारण" इत्यादि। कारणे यः संयतीवसतौ गच्छति स शुद्धः। नवरम् 'अविधिना' असामाचार्या प्रवेशनिष्पन्नं त्रिषु स्थानेषु यदि नैषेधिकीत्रयं न करोति ततो मासलघुत्रयम्, द्वयोः स्थानयोर्न करोति मासलघुद्वयम्, एकस्मिन् स्थाने न करोति एकं मासलघुकम् ॥

[भा.३७२०] कारणतो अविधीए, दोसा ते चेव जे भणिय पुव्विं।
कारणे विधीय सुद्धो, इच्छं तं कारणं किंतु ॥

वृ- कारणतोऽविधिना प्रविशतो दोषास्त एव भवन्ति ये विश्वस्तादिविषयाः पूर्वं भणिता इति । कारणे तु 'विधिना' त्रिषु स्थानेषु नैषेधिकीत्रयं कृत्वा प्रविशन् शुद्धः । शिष्यः पृच्छति-इच्छाम्यहं ज्ञातुम् किं तत् कारणम् ? येन तत्र गम्यते ।। सूरिराह-

[भा.३७२१] गम्मइ कारणजाए, पाहुणए गणहरे महिड्ढीए ।
पच्छादणा य सेहे, असहुस्स चउक्कभयणा उ ।।

वृ- गम्यते संयतीनां प्रतिश्रये 'कारणजाते' उपाश्रय-संस्तारकप्रदानादिके ।। प्राघुणको वा साधुः संयतीनामनाबाधपृच्छानिमित्तं गच्छेत् । गणधरो वा मूर्च्छा-विसूचिकादौ संयतीनामागाढे कारणे समुत्पन्ने दिवा रात्रौ वा गच्छेत् । 'महर्द्धिको वा' राजा-ऽमात्यादिप्रव्रजितः संयतीनां तेजो-गौरवादिजननार्थं यायात् । "सेहे" त्ति शैक्षस्य राजपुत्रप्रव्रजितादेरमात्यादिभिरुन्निष्क्रामयि-तुमारब्धस्य प्रच्छादना संयतीप्रतिश्रये नीत्वा कर्त्तव्या । काचिद्वा संयती ग्लाना तस्याश्चिकित्सा कर्त्तव्या, तत्रासहिष्णोः साधोः साध्व्या (श्च] श्चतुष्कभजना भवति, चतुर्भङ्गीत्यर्थः । सा चेयम्-साध्वी सहिष्णः साधुरपि सहिष्णुः १ साध्वी सहिष्णुः साधुरसहिष्णुः २ साध्वी असहिष्णुः साधुः सहिष्णुः ३ साध्वी असहिष्णुः साधुः सहिष्णुः ३ साध्वी साधुश्च द्वावप्यसहिष्णू ४ । एष द्वारगाथासङ्क्षेपार्थः ।। अथ विस्तरार्थमभिधित्सुः प्रथमद्वारमङ्गीकृत्याह-

[भा.३७२२] उवस्सए य संथारे, उवही संघपाहुणे ।
सेहट्ठवणुद्देसे, अनुन्ना भंडणे गणे ।।

[भा.३७२३] अणप्पज्झ अगणि आऊ, वीआर पुत्त संगमे ।
संलेहण वोसिरणे, वोसट्ठे निट्ठिए तिहं ।।

वृ- उपाश्रयस्य संस्तारकस्योपधेर्वा प्रदानार्थं संयतीप्रतिश्रयं गच्छेत् । काश्चिद्वा संयत्यः परीषहपराजिता अवधावनाभिमुख्यो वर्त्तन्ते तासां स्थिरीकरणार्थं सङ्घप्राघुणो गच्छेत् । इह कुल-स्थविरो गणस्थविरः सङ्घस्थविरो वा स्थापनां कुर्तुं तत्र व्रजेत् । वसतावस्वाध्यायिके श्रुतस्योद्देशमनुज्ञां वा कर्त्तुं तत्र गच्छेत् । 'भण्डनं' कलहः तद् वा तासां परस्परमुत्पन्नं तदुपशमनार्थं गन्तव्यम् । "गणे" त्ति प्रवर्त्तिन्यां कालगतायां गणचिन्तार्थं गच्छेत् ।।

"अणप्पज्झ" त्ति देशीपदमनात्मवशवाचकम्, ततश्चानात्मवशायाः- यक्षाविष्टादिरूपाया आर्यिकाया मन्त्र-तन्त्रादिप्रयोगेणात्मवशतां कुर्त्तुं गच्छेत् । अग्निना वा संयतीवसतिर्दग्धा, अप्कायपूरेण वा प्लाविता, विचारभूमौ वा गच्छन्तीनां तासां सोपसर्गम्, "पुत्ते" त्ति पुत्रः उपलक्षणत्वात् पिता भ्राता वा तासां कालगतो भवेत्, "संगमे" त्ति पुत्र-भ्रात्रादिरेव तासां सज्ञातकश्चिरादागतो भवेत् तस्य यः सङ्गमः-मीलकस्तदर्थम्, तथा 'संलेखनं' भक्तप्रत्याख्यानाय परिकर्मणां काचिदार्यिका करोति, 'व्युत्सर्जनं वा' भक्तप्रत्याख्यानं कर्तुकामा काचिद् विद्यते, 'व्युत्सृष्टं वा' कयाचिद् भक्तं प्रत्याख्यातम् अनशनं प्रतिपन्नमित्यर्थः, एतेषु कारणेषु गच्छेत् । अथ काचिद् 'निष्ठिता' कालगता ततः शेषसंयतीनां शोकापदनयनार्थं 'त्र्यहं' त्रीन् दिवसान् यावदुपर्युपरि सूरिणा गन्तव्यमिति श्लोकद्वयसङ्क्षेपार्थः ।। अथैतदेव प्रतिपदं विभावयिषुराह–

[भा.३७२४] अन्नाणं पडिकुट्ठं, वसही-संथारगाण गहणं तु ।
ओभासिउं दाउं वा, वच्चेज्जा गणहरो तेनं ।।

**वृ-** आर्याणां स्वयं वसतेः संस्तारकाणां च ग्रहणं भगवता 'प्रतिक्रुष्टं' प्रतिषिद्धम्, अतो वसतिमवभाषितुं गणधरो गच्छति । संस्तारकांश्च तासां प्रायोग्यानुत्पाद्य तान् प्रदातुं गणधरस्तत्र व्रजेत् ॥ अथोपधिद्वारमाह-

[भा.३७२५] पडियं पम्हुट्ठं वा, पलावियं अवहियं व उग्गमियं ।
उवहिं भाएतुं जे, दाएउं वा वि वच्चेज्जा ॥

**वृ-** भिक्षादौ पर्यटन्तीनां तासामुपधि पतितः, स्वाध्यायभूमौ वा गतानां ''पम्हुट्ठं'' ति विस्मृतः, उदकेन वा प्लावितः, स्तेनैर्वाऽपहृतः, स च भूयोऽपि साधुभिर्लब्धः; अपूर्वो वा उपधिस्तैः 'उद्गमितः' उत्पादितः, अतस्तमुपिधं भाजयितुं वा दातुं वा गणधरो व्रजेत् । तत्र पतित-विस्मृतादेरुपकरणस्य यद् यस्याः सत्कं तस्य एव यद् विभज्य समर्पणं तद् भाजनमुच्यते, यत् पुनरपूर्व उपधिरुत्पाद्य तासां दीयते तद् दानम् । अथवा भाजनं प्रवर्त्तिन्या अभावे शेषसंयतीनां विभज्य समर्पणम्, यत्तु प्रवर्त्तिन्या हस्ते समर्प्यते तद् दानम् ॥ अथ सङ्घप्राघुणद्वारमाह-

[भा.३७२६] ओहाणाभिमुहीणं, थिरकरणं काउ अज्जियाणं तु ।
गच्छेज्जा पाहुणओ, संघ-कुलथेर-गणथेरो ॥

**वृ-** अवधावनाभिमुखीनां परीषहपराजितानामार्यिकाणां स्थिरीकरणं कर्तुं प्राघूणको गच्छेत्। कः पुनः प्राघुणकः ? इत्याह-सङ्घस्थविरः कुलस्थविरो गणस्थविरो वा, उपलक्षणमिदम्, तेनान्योऽपि यः स्थिरीकरणलब्धिसम्पन्नः स गच्छति ॥ अथ शैक्षद्वारमाह-

[भा.३७२७] अन्नत्थ अप्पसत्था, होज्ज पसत्था य अज्जिगोवसए ।
एएण कारणेणं, गच्छेज्ज उवट्ठवेउं जे ॥

**वृ-** अन्यत्र विधीयमाना उपस्थापना क्षारा-ऽङ्गार-कचवराद्यप्रशस्तद्रव्ययुक्तत्वादप्रशस्ता भवेत्, आर्यिकोपाश्रये तु प्रशस्ता, एतेन कारणेन शैक्षमुपस्थापयितुं ''जे'' इति पादपूरणे आर्यिकावसतिं गच्छेत् ॥ स्थापनाद्वारमाह-

[भा.३७२८] ठवणकुलाइ ठवेउं, तासिं ठवियाणिवा निवेएउं ।
परिहरिउं ठवियाणि, ठवणाऽऽदियणं व वोत्तुं जे ॥

**वृ-** दानश्राद्धादीनि स्थापनाकुलानि तासां समक्षं स्थापयितुम्, यद्वा तानि स्ववसतौ स्थापितानि परं तासां 'निवेदयितुम्' 'अमुकममुकं च कुलं स्थापितम्' इत्येवं ज्ञापयितुम्, इदानी वा तानि कुलानि स्थापितानी ततः 'परिहर्त्तुं' 'न निर्वेष्टव्यानि' इत्येवं निवारायितुम्, येषु जन्मसूतकमृतसूतकादियुक्तेषु कुलेषु पूर्वमित्वरस्थापना कृता तेषु विवक्षितावधिपरिपूर्त्यनन्तरं भूयोऽपि 'आदानं' ग्रहणं कुरुतेत्यनुज्ञावचनं वक्तुं गन्तव्यम् ॥ अथोद्देशा-ऽनुज्ञाद्वारद्वयमाह-

[भा.३७२९] वसहीए असज्झाए, गोरव भय सद्ध मंगले चेव ।
उद्देसादी काउं, वादेउं वा वि गच्छेज्जा ॥

**वृ-** वसतावस्वाध्यायिके जाते संयतीवसतिमुद्देशमनुज्ञां वा कर्तुं गच्छेत् । अथवा यद्याचार्य स्वयं तासामुद्देशादिकं करोति ततस्ता आचार्यविषयं यद् गौरवं यच्च तदीयं भयं ताभ्यां शीघ्रं तदङ्ग-श्रुतस्कन्धादिकमधीयते, आचार्येण वस्वयमुद्दिष्टे तासां महती श्रद्धोपजायते, प्रशस्तद्रव्यादिगुणक्तत्वाच्च तत्रोद्देशादौ विधीयमाने मङ्गलं भवेत् एतैः कारणैरुद्देशादिकं कर्तुं

तत्र गच्छेत् । प्रवर्त्तिन्यां वा कालगतायामन्या काचित् तासां वाचनादात्री न विद्यते ततो गणधरो वाचयितुं गच्छेत् ॥ भण्डनद्वारमाह-

[भा.३७३०] अप्पन्ने अहिगरणे, विओसवेउं तहिं पसत्थं तु ।
अच्छेंति खउरियाओ, संजमसारं ठवेउं जे ॥

वृ- संयतीवसती गणधरस्यान्यस्य वा तथा विधोपशमनालब्धिसम्पन्नस्य गमनं प्रशस्तं भवति॥ गणधरद्वारमाह-

[भा.३७३१] जइ कालगया गणिणी, नत्थि उ अन्ना उ गणहरसमत्था ।
एतेन कारणेणं, गणचिंताए वि गच्छेज्ञा ॥

वृ- यदि 'गणिनी' प्रवर्त्तिनी कालगता, नास्ति चान्या संयती गणधरोद्वहनसमर्था, अत एतेन कारणेन गणचिन्ताकरणार्थमपि गच्छेत् ॥ अथानात्मवशाद्वारमाह-

[भा.३७३२] अन्नं जक्खाइट्ठं, (व) खित्तचित्तं व दित्तचित्तं वा ।
उम्मायं पत्तं वा, काउं गच्छेज्ञ अप्पज्झं ॥

वृ- यक्षेण आविष्टा-गृहीता यक्षाविष्टा । अपमाननया क्षिप्तं-नष्टं चित्तं यस्याः सा क्षिप्तचित्ता । या तु हर्षातिरेकेणापहृतचित्ता सा दीप्तचित्ता भण्यते । या तु मोहनीयकर्मोदयेन चित्तशुन्यतामुपगता सा उन्मादप्राप्ता । ईदृशामार्यां विज्ञायाचार्यो मन्त्रेण वा तन्त्रेण वा "अप्पज्झं" ति 'आत्मवशां' स्वस्थचित्तां कर्तुं संयतीवसतिं गच्छेत् ॥ अग्निद्वारमाह-

[भा.३७३३] जइ अगनिना उ वसही, दड्ढा डज्झइ व डज्झिहिति व त्ति ।
नाऊण व सोऊण व, उवघेत्तुं जे व जाएज्ञा ॥

वृ- यद्यग्निना संयतीवसतिर्दग्धा, दह्यते वा सम्प्रतिकाले, अथवा प्रत्यसन्नाग्निप्रदीपनदर्शनेन धक्ष्यते इति ज्ञात्वा वा स्वयं 'श्रुत्वा वा' परमुखेनाकर्ण्य तां वसतिम् 'उपग्रहीतुं' संस्थापयितुं निर्वापयितुं वा "जे" इति पादपूरणे संयतीवसतिं 'यायात्' गच्छेत् ॥ अथाप्कायद्वारमाह-

[भा.३७३४] नइपूरेण व वसही, वुज्झइ वूढा व वुज्झिहिति व त्ति ।
उदगभरियं व सोच्चा, उवघेत्तुं तं तु वच्चेज्ञा

वृ- नदीपूरेण प्रसरता वसति साम्प्रतम् 'उह्यते' नीयते, 'व्यूढा वा' नीता, 'वक्ष्यते वा' नेष्यते, उदकेन वा वसतिर्भृता, एवं श्रुत्वा 'तां' वसतिम् 'उपग्रहीतुम्' उत्सिञ्चनादिकं कर्तुं व्रजेत् ॥

विचारद्वारमाह-

[भा.३७३५] घोडेहि व धुत्तेहि व, अहवा वि जतीवियारभूमीए ।
जयणाए व करेउं, संठवणाए व वच्चेज्ञा ॥

वृ- घोडाः-चट्टाः धूर्ता-द्यूतकारादयः, तैर्वसत्याः पुरोहडे गच्छन्त्यस्ता उपसर्ग्यन्ते ततस्तेषां सानुनयनिवारणार्थं गच्छेत् । अथवा यतीनां विचारभूमौ ताः समागच्छन्ति तन्निवारणार्थं गच्छति। अथवा यतनया तासां कायिकाभूमिं विचारभूमिं वा कर्तुं पूर्वकृताया वा संस्थापनानिमित्तं व्रजेत्॥

पुत्रद्वारमाह-

[भा.३७३६] पुत्तो वा भाया वा, भगिनी वा होज्ज तान कालगया ।
अन्नाए दुक्खियाए, अनुसट्ठीए वि गच्छेज्ञा ॥

वृ- पुत्री वा भ्राता वा भगिनि वा तासां कालगता भवेत् ततो या तत्रार्यिका 'दुःखिता' शोकसागरावगाढा भवति तस्या अनुशिष्टयर्थमपि सूरि स्वयमेव गच्छेत् ।। तस्याश्चेयमनुशिष्टिर्दातव्या-

[भा.३७३७] तेलोक्कदेवमहिया, तित्थयरा नीरया गया सिद्धिं ।
थेरा वि गया केई, चरणगुणपभावया धीरा ।।

वृ- येऽपि तावत् 'त्रैलोक्यदेवमहिताः' भुवनत्रयवासिभि सुरा-ऽसुरैरभ्यर्चितास्तीर्थकरास्तेऽपि भगवन्तः 'नीरजसः' सकलकर्मनिर्मुक्ताः 'गताः' प्राप्ताः सिद्धिम्, तथा 'स्थविरा अपि' ऋषभसेन-गौतमादयः केचित् चरमदेहधारिणो गताः सिद्धिम्। कथम्भूताः ? चरगुणानां-मूलोत्त-रगुणरूपाणां स्वयमेव चरणेनान्येषां चोपदेशद्वारेण प्रभावकाः-प्रकर्षेण स्फातिं नेतारश्चरणगुणप्रभावकाः, 'धीराः' परीषहोपसर्गैरक्षोभ्याः, यद्येवंविधा अपि महापुरुषाः कालगतास्ततः शेषजनमरणे किमाश्चर्यम्? इति भावः ।। तथा-

[भा.३७३८] बंभी य सुंदरी या, अन्ना वि य जाउ लोगजेट्ठाओ ।
ताओ वि य कालगया, किं पुन सेसाउ अज्जाउ ।।

वृ- ब्राह्मी च सुन्दरी च अन्या अपि च या लोकज्येष्ठा आर्यचन्दना-मृगावतीप्रभृतय आर्यिकास्ता अपि कालगताः, किं पुनः शेषा आर्यिकाः ? ।। ततः-

[भा.३७३९] न हु होइ सोइयव्वो, जो कालगओ दढो चरित्तम्मि ।
सो होइ सोतियव्वो, जो संजमदुब्बलो विहरे ।।

वृ- 'न हु' नैवासौ साधु-साध्वीजनः शोचितव्यो भवति, यश्चारित्रे 'दृढः' निष्प्रकम्पः सन् भक्तप्रत्याख्यानादिविधिना कालगतः; किन्तु स वराकः शोचनीयो भवति यः पृथिव्याद्युपमर्दनमनेषणीयपिण्डादिग्रहणं वा कुर्वन् संयमेन दुर्बलो विहरति ।। अपि च-

[भा.३७४०] लद्धूण मानुसत्तं, संजमसारं च दुल्लभं जीवा ।
आणाइ पमाएणं, दोग्गइभयवड्ढणा होंति ।।

वृ- 'लब्ध्वा' प्राप्य मानुषत्वं तथा संयम एव सारः-प्रधानं मोक्षाङ्गं तं च 'दुर्लभं' महानीरधि-निमग्नानर्घ्यरत्नमिव दुःप्रापं लब्ध्वा ये जीवा भागवत्याः 'आज्ञायाः' विधि-प्रतिषेधरूपायाः प्रमादेन कालं गमयन्ति ते दुर्गतिभयवर्धना भवन्ति, आत्मनो देवादिदुर्गतिपरिभ्रमणजनितं भयं वर्द्धयन्तीति भावः । एवमनुशिष्टिस्तासां दातव्या । अथ सङ्क्रमद्वारमाह-

[भा.३७४१] पुत्तो पिया च भाया, अज्जाणं आगओ तहिं कोई ।
घित्तूण गणहरो तं, वच्चति तो संजतीवसहिं ।।

वृ- पुत्रः पिता वा भ्राता वा आर्याणां सम्बन्धी चिरप्रोषितस्तत्र कश्चिदागतो भवेत्, ततस्तं गृहीत्वा गणधरः संयतीवसतिं व्रजति, येन तासां तस्मिन् संज्ञातकसाधौ दृष्टे समाधिरुपजायते।। अथ संलेखन-व्युत्सर्जन-व्युत्सृष्ट-निष्ठितद्वाराणि युगपदाह-

[भा.३७४२] संलिहियं पि य तिविहं, वोसिरियव्वं च तिविह वोसट्ठं ।
गाकलगय त्ति य सोच्चा, सरीरमहिमाइ गच्छेज्जा ।।

वृ- इह संलेखितम् अपिशब्दात् संलेख्यमानं वस्तु त्रिधा-आहारः शरीरमुपकरणं च, यद्वोपधिः शरीरं कषायाश्चेति । व्युत्स्रष्टव्यमप्येवमेव त्रिविधम्, अनशनप्रतिपत्तिकाले एतदेव त्रयं

व्युत्सर्जनीयमिति भावः । एवं व्युत्सृष्टमपि त्रिविधम् । एषु त्रिष्वपि तस्याः स्थिरीकरणार्थं सूरिणा गन्तव्यम् । यावत् 'कालगता सा संयती' इति वार्त्ता श्रुता, तां च श्रुत्वा तस्याः शरीरमहिमार्थं गणधरः स्वयमेव गच्छेत् ॥

[भा.३७४३] जाहे वि य कालगया, तेहा वि य दुन्नि तिन्नि वा दिवसे ।
गच्छेज्ज संजईणं, अनुसट्ठिं गणहरो दाउं ॥

वृ- यदापि च प्रवर्त्तिनीप्रभृतिका महानिनादसंयती कालगता भवति तदा द्वौ त्रीन् वा दिवसान् संयतीनामनुशिष्टिं प्रदातुं गणधरो गच्छेत् ॥ गतं "गम्यते कारणजाते" इति मूलद्वारम् । अथ प्राघुणकद्वारमाह-

[भा.३७४४] अप्पबिति अप्पतितिया, पाहुणया आगया सउवचारा ।
सिज्जायर मामाए, पडिकुट्ठद्देसिए पुच्छा ॥

वृ- प्राघुर्णकाः साधव आत्मद्वितीया आत्मतृतीया वा तत्रागताः, तैश्च तत्र श्रुतम्, यथा-अत्र संयत्यस्तिष्ठन्ति ततस्ते तासां वसतिं सोपचाराः प्रविशन्ति । सोपचारा नाम-त्रिषु स्थानेषु । प्रयुक्तनैषेधिकीशब्दाः, यद्वा संयतीभिर्वक्ष्यमाण उपचारः प्रयुक्तस्ते सोपचारा उच्यन्ते । तेषु समागतेषु प्रवर्त्तिनी यदि स्थविरा तत आत्मद्वितीया निर्गच्छति, अथ तरुणी तत आत्मतृतीया। या च तत्र स्थविरा सा पुरतस्तिष्ठत । ततः साधवः शय्यातरकुलं मामाककुलं प्रतिकुष्टकुलानि च-रजकादिसम्बन्धीनि औद्देशिकं च येषु कुलेषु क्रियते तानि प्रवर्त्तिन्याः समीपे पृच्छन्ति ॥

अथोपचारं व्याख्याति-

[भा.३७४५] आसंदग कट्ठमओ, भिसिया वा पीढगं व कट्ठमयं ।
तक्खणलंभे असई, पडिहारिग पेहऽभोगऽन्ने ॥

वृ- यदि साधुषु समागतेषु तत्क्षणादेव काष्ठमय आसन्दकोऽशुषिरादिगुणोपेतः प्राप्यते, वृषिका व काष्ठमयं वा पीठकं लभ्यते ततस्तदानीमेव तद् ग्रहीतव्यम् । अथ तत्क्षणादेवासन्दकादि न लभ्यते ततोऽनागतं प्रातिहारिकं गृहीत्वा स्थापयन्ति । "पेह"त्ति तच्चोभयसन्ध्यं प्रत्युपेक्षन्ते। "भोगऽन्ने"त्ति अकारप्रश्लेषादन्यो नाम-संयतीजनस्तस्य प्रातिहारिकस्य भोगं न करोति । ततस्ते तत्रोपविष्टाः संयतीनां निराबाधादिवार्त्तां पृष्ट्वा शय्यातरकुलादीनि पृच्छन्ति ॥ अथ केन विधिना ते पृच्छन्ति ? केन वा विधिना तास्तेषां दर्शयन्ति ? इत्युच्यते -

[भा.३७४६] बाहाइ अंगुलीइ व, लट्ठीइ व उज्जुअं ठिओ संतो ।
न पुच्छेज्ज न दाएज्जा, पच्चावाया भवे तत्थ ॥

वृ- शय्यातरादिकुलं पृच्छन् दर्शयन् वा 'बाहया' बाहुं प्रसार्य, एवमङ्गुल्या वा यष्ट्या वा गृहस्य 'ऋजुकं' सम्मुखं स्थितः सन् न पृच्छेद् न वा दर्शयेत् । कुतः ? इत्याह-यतस्तत्रैवं पृच्छ्यमाने दर्श्यमाने वा प्रत्यपायाः बहवो भवन्ति ॥ तानेवाह-

[भा.३७४७] तेनेहि अगनिना वा, जीवियववरोवणं व पडिनीए ।
खरए खरिया सुण्हा, नट्ठे वट्टक्खुरे संका ॥

वृ- बाह्वादिकं प्रसार्य साधुना यद् गृहं पृष्टम् संयत्या वा दर्शितम् ततः स्तेनैः किञ्चिदपहृतं भवेत्, अग्निना वा तद् गृहं दग्धम्, प्रत्यनीकेन वा तस्मिन् गृहे कस्यापि जीवितव्यपरोपणं कृतम्,

द्व्यक्षरको वा व्यक्षरिका वा केनचिदपहृता, स्नुषा वा केनचिद् धूर्तेन सह पलायिता, 'वृत्तखुरो वा' प्रधानस्तुरङ्गमो नष्टो भवेत् ततः साधु-साध्वीविषया शङ्का भवेत्-नूनमेतैरेवापहृतम् दग्धमित्यादि; ततो नाविधिना पृच्छेत् न वा दर्शयेत् ॥ तत्र चाऽऽसीनास्ते साधवो न हसन्ति न वा कन्दर्पं कुर्वन्ति, किन्तु-

[भा.३७४८]　　सेज्जायराण धम्मं, कहिंति अज्जाण देंति अनुसट्ठिं ।
　　　　धम्मम्मि य कहियम्मि य, सव्वे संवेगमावन्ना ॥

वृ- शय्यातराणां धर्मं कथयन्ति, आर्याणां चोद्यतानां स्थिरीकरणार्थं सीदन्तीनां पुनरुद्यमनार्थमनुशिष्टिं प्रयच्छन्ति । धर्मे च कथिते 'सर्वे' आर्याः संयताश्च संवेगमापन्ना भवन्ति, आत्मनश्च निर्जरा भवति ॥ प्राघुणकद्वारमेव प्रकारान्तरेण व्याचष्टे-

[भा.३७४९]　अन्नो वि अ आएसो, पाहुणग अभासिया उ तेनभए ।
　　　　चिलिमिणिअंतरिया खलु, चाउस्साले वसेज्जा नं ॥

वृ- अयम् 'अन्यः' अपर आदेशः प्राघुणकद्वारे समस्ति-ते प्राघुणकाः 'अभाषिकाः' द्रविडादिदेशोद्भवाः, ततस्तत्र तेषामुपाश्रयो दुर्लभः, अतस्तदर्थं संयत्यो वसतिं मार्गयन्ति । यदि ताभिरपि गवेषयन्तीभिर्न लब्धा ततो वृक्षमूलादिषु बहिर्वसन्ति । अथ बहिः स्तेनभयं ततो यत्रार्याः स्थिताः सन्ति तत् चतुःशालं भवेत्, तत्रान्यस्यां शालायां साधवश्चिलिमिलिकया अन्तरिता वसेयुः ॥ चतुःशालस्याभावे विधिमाह-

[भा.३७५०]　　कुड्डंतरस्स असती, कडओ पुत्ती व अंतरे थेरा ।
　　　　तेसंतरिया खुड्डा, समणीण वि मग्गणा एवं ॥

वृ- अन्यस्या वसतेरभावे संयताः सयत्यश्चैकस्मिन् गृहे वसन्तः कुड्यान्तरिते वसन्ति । कुड्यान्तरस्याभावे कटकोऽपान्तराले दीयते । कटकस्याभावे पोतं-वस्त्रं तन्मयी चिलिमिलिका। अथ चिलिमिलिकायाः स्तेनभयं ततो यस्मिन् पार्श्वे संयत्यस्ततः प्रथमं स्थविराः, तैरन्तरिताः क्षुल्लकाः, ततो मध्यमाः, ततस्तरुणा इति । एवं श्रमणीनामपि मार्गणा कर्त्तव्या, तद्यथा-स्थविर-साधूनामासन्ने क्षुल्लिकाः, ततः स्थविराः, ततो मध्यमाः, ततो दृढकुड्यासन्ने तरुण्यः स्थाप्यन्ते॥ तत्रस्थितानां विधिमाह-

[भा.३७५१]　　अन्नाए आभोगं, नाए ससद्दं करेंति सज्झायं ।
　　　　अन्नुव्वाया व सुवे, अच्छंति व अन्नहिं दिवसं ॥

वृ- यदि तत्र जनेनाज्ञाताः स्थितास्ततो रात्री 'आभोगम्' उपयोगं कुर्वते, तूष्णीका आसते इत्यर्थः । अथ ज्ञातास्ततः 'सशब्दं' महता शब्देन युक्तं स्वाध्यायं कुर्वन्ति । अथातीवोद्वाताः-परिश्रान्तास्ततः स्वपन्ति । कारणतश्चैकं द्वौ त्रीन् वा दिवसान् तत्रैव यदि स्थास्नवः ततो दिवसम् 'अन्यत्र' उद्यानादिषु स्थित्वा रात्री तत्र वसन्ति । कारणाभावे तु तत्रैकरात्रमुषित्वा प्रभाते व्रजन्ति॥

[भा.३७५२]　समणी समण पविट्ठे, निसंत उल्लाव ऽकारणे गुरुगा ।
　　　　पयला निद्द तुयट्टे, अच्छीमलणे गिही मूलं ॥

वृ- श्रमणीजने श्रमणजने च कायिकां कृत्वा प्रविष्टे सति यद्येको वाऽनेके वा एकया वाऽनेकाभिर्वा संयतीभिः समं 'निशान्ते' निसंचरवेलायामुल्लापम् 'अकारणे' आगाढकारणाभावे

कुर्वन्ति ततश्चतुर्गुरुकम् । तथाऽन्यत्रोद्यानादिषु श्वापद-स्तेनादिभयाद् दिवाऽपि तत्रैव तिष्ठन्तो यदि प्रचलायन्ते निद्रायन्ते त्वग्वर्तयन्ति वा अक्षिणी वा मलयन्ति तत्र चतुर्गुरुकम् । अथ गृही प्रचलादि विदधानं तं दृष्ट्वा शङ्कां करोति-किमेष स्वाध्यायजागरेण खिन्नः प्रचलायते ? उत सागारिकजागरेण ? इत्यादि ततश्चतुर्गुरु । निशङ्किते मूलम् ॥

[भा.३७५३] उच्चारं पासवणं, व अन्नहिं मत्तएसु व जयंति ।
अदिट्ठ पविट्ठा वा, अदिट्ठ निंतेधरा भयिता ॥

वृ- उच्चारं प्रश्रवणं वा संयतीकायिकाभूमिं विमुच्यान्यत्र कुर्वन्ति, मात्रकेषु वा कृत्वा बहिः परिष्ठापनायां यतन्ते । तत्र च यदि गृहिभिरदृष्टाः प्रविष्टास्ततोऽदृष्टा एव निर्गच्छन्ति, अथ दृष्टाः प्रविष्टास्ततः 'भक्ताः' विकल्पिताः, दृष्टा अदृष्टा वा निर्गच्छन्तीति भावः ॥

[भा.३७५४] तत्थऽन्नत्थ व दिवसं, अच्छंता परिहरंति निद्दाई ।
जयणाए व सुविंती, उभयं पि य मग्गए वसहिं ॥

वृ- तत्र रजन्यामुषित्वा दिवसतः 'तत्र वा' संयतीवसतौ 'अन्यत्र वा' उद्यानादिषु तिष्ठन्तो निद्रा-प्रचलादिकं परिहरन्ति, यवनिकान्तरिता वा यतनया स्वपन्ति यथा सागारिको न पश्यति। यदि ते तत्र कियन्तमपि कालं स्थातुकामास्ततः 'उभयमपि' साधवः साध्व्यश्चान्यां वसतिं मार्गयन्ति। लब्धायां च तत्र साधवस्तिष्ठन्ति ॥ गतं प्राघुणकद्वारम् । अथ गणधरद्वारमाह-

[भा.३७५५] अहिणा विसूइका वा, सहसा डाहो व होज्ज सासो वा ।
जति आगाढं अज्जाण होइ गमनं गणहरस्स ॥

वृ- 'अहिना' सर्पेण काचिदार्यिका दष्टा अतिमात्रे वा भुक्ते विशूचिका कस्याश्चिदजनिष्ट, सहसा पित्तेनाग्निना वा 'दाहः' दाहज्वरो वाऽभवत्, श्वासो वा कस्याश्चिदकस्मादजनि, एवमादिकं यदि आगाढं कार्यमार्याणां भवति ततो दिवा रात्रौ वा गणधरस्य गमनमनुज्ञातम् ॥ अथवा-

[भा.३७५६] पडिनीय मेच्छ मालव, गय गोणा महिस तेनगाई वा ।
आसन्ने उवसग्गे, कप्पइ गमनं गणहरस्स ॥

वृ- प्रत्यनीक-म्लेच्छ-मालवस्तेन-गज-गो-महिष-स्तेनकादयो वा संयतीनामुपसर्गं कर्तुमारब्धाः, यद्वा न तावत् ते उपसर्गयन्ति परं तेषामासन्न उपसर्गो वर्त्तते तत्क्षणादेव भावीत्यर्थः, ततः कल्पते गणधरस्यान्यस्य वा समर्थस्य तन्निवारणार्थं गमनम् ॥ गतं गणधरद्वारम् । अथ महर्द्धिकद्वारमाह-

[भा.३७५७] रायाऽमच्चे सेट्ठी, पुरोहिए सत्थवाह पुत्ते य ।
गामउडे रट्ठउडे, जे य गणहरे महिड्ढीए ॥

वृ- 'राजा' पृथिवीपति । 'अमात्यः' मन्त्री । अष्टादशानां प्रकृतीनां महत्तरः श्रेष्ठी । पौर-जनपदयुक्तस्य राज्ञो होमादिनाऽशिवाद्युपद्रवप्रशमनः पुरोहितः । यस्तु क्रयाणकजातं गृहीत्वा लाभार्थमन्यदेशं व्रजन् सार्थवाहयति-योग-क्षेमचिन्तया पालयति स सार्थवाहः । पुत्रशब्दः प्रत्येकमभिसम्बध्यते, यथा-राजा राजपुत्र इत्यादि । तथा 'ग्रामकूटः' ग्राममहत्तरः, 'राजकूटः' राष्ट्रमहत्तरः, एते प्रव्रजिता इह गृह्यन्ते । यश्च गणधरो राजादिबहुमतो विद्यातिशयसम्पन्नो वा, एते सर्वेऽपि महर्द्धिका उच्यन्ते ॥ एतेषां संयतीवसतिं गच्छताममी गुणा भवन्ति-

[भा.३७५८] अज्जाण तेयजननं, दुज्जन सचमकारया य गोरवया ।

तम्हा समणुन्नायं, गणहर गमनं महिड्ढीए ॥

वृ-आर्याणां 'तेजोजननं' महात्म्योत्पादनम् । दुर्जनानां च 'सचमत्कारता' साशङ्कता भवति, न किञ्चित् प्रत्यनीकत्वं कुर्वन्तीत्यर्थ. । अन्यच्च आर्याणां गौरवमुपजायते । तस्माद् गणधरस्य 'महर्द्धिकस्य च' राजप्रव्रजितादेर्गमनमार्यिकाप्रतिश्रये समनुज्ञातम् ॥ ताश्चार्यिकास्तान् राजादिदीक्षितान् दृष्ट्वा इत्थं चिन्तयन्ति-

[भा.३७५९] संतविभवा जइ तवं, करेंति अवउज्झिऊण इड्ढीओ ।

सीयंतथिरीकरणं, तित्थविवड्ढी य वन्नो य ॥

वृ- सद्विभवा अप्यमी यदि 'ऋद्धीः' राज्यादिसम्पदः 'अपोज्झ्य' परित्यज्य तपः कुर्वन्ति ततो वयमसतीं सम्पदं प्रार्थयमानाः किमेवं प्रमादमग्नास्तिष्ठामः इत्येवं सीदन्तीनामार्यिकाणां स्थिरीकरणं कृतं भवति । स्थिरीकरणे च क्रियमाणे तीर्थस्य विवृद्धि । तीर्थवृद्धौ च प्रवचनस्य 'वर्ण' यश-प्रवादः प्रभावितो भवति ॥ गतं महर्द्धिकद्वारम् । अथ 'प्रच्छादना च शैक्षे' इति द्वारमाह-

[भा.३७६०] वीसुंभिओ य राया, लक्खणजुत्तो न विज्जती कुमरो ।

पडिनीएहि य कहिए, आहावंती दवदवस्स ॥

वृ- कस्यापि नृपतेस्त्रयः पुत्राः सम्यग्दर्शनलब्धबुद्धयो दीक्षां कक्षीकृतवन्तः । कालान्तरेण च स राजा 'विश्वग्भूतः' शरीरात् पृथग्भूतः, कालगत इत्यर्थः । ततोऽमात्यादयः 'वयमराजकाः सन्तोऽनाथाः' इति परिभाव्य राज्यलक्षणोपेतं कुमारं प्रयत्नेन गवेषितवन्तः, परं न विद्यते कोऽपि लक्षणयुक्तः कुमारः । ततः कथितं 'प्रत्यनीकैः' तज्जन्निकादिभि, यथा-येषां मध्येऽस्यैव नृपतेः पुत्राः प्रव्रजिताः सन्ति ते साधवो विहरमाणा इहैवोद्याने सम्प्राप्ताः । ततस्तेऽमात्यादयः सम्यग् ज्ञात्वा छत्र-चामर-खड्गादिकं राजार्हं वस्तु गृहीत्वा द्रुतद्रुतम् 'आधावन्ति' साधूनां समीपमागच्छन्ति ॥ अथ प्रत्यनीकाः केन कारणेन कथयन्ति ? इत्युच्यते-

[भा.३७६१] अइ सिं जनम्मि वन्नो, य आयति इड्ढिमंतपूया य ।

रायसुयदिक्खिएणं, तित्थविवड्ढी य लद्धी य ॥

वृ-अमुना राजसुतेन दीक्षितेन 'सिं' अमीषां श्रमणानाम् 'अति' अतीव 'जने' लोके 'वर्णः' यशःप्रवादो विजृम्भते, यथा-अहो ! अमीषामेव धर्म प्रतपति यत्रेदृशाः प्रव्रजन्ति । 'आयतिश्च' सन्ततिरमीषामनेनाव्यवच्छिन्ना भविष्यति । ऋद्धिमन्तश्च-श्रेष्ठ्यादय एतत्प्रभावेणामीषांपूजां कुर्वन्ति । तथा 'राजसुतोऽत्र प्रव्रजितः' इति कृत्वाऽन्येऽपि बहव इभ्यपुत्रादयः प्रव्रजन्तीति तीर्थवृद्धिः । लब्धिश्चाहार-वस्त्रादीनां प्रचुरा भवति । उत्प्रव्रजितेन पुनरमुना वर्णादयो न भविष्यन्तीति बुध्या प्रत्यनीकाः कथयन्ति ॥ ततस्तानमात्यादीनुत्प्रव्राजनार्थमागच्छतः श्रुत्वा ते राजपुतराः किं कुर्वन्ति ? इत्याह–

[भा.३७६२] दट्ठूण य राइड्ढिं, परीसहपराइतो तहिं कोइ ।

आपुच्छइ आयरिए, सम्मत्ते अप्पमाओ हु ॥

वृ- तां राजसमृद्धिमागच्छन्तीं दृष्ट्वा तत्र कोऽपि राजपुत्रः परीषहपराजितः सन्नाचार्यानापृच्छते-भगवन् ! अशक्तोऽहं प्रव्रज्यामनुपालयितुम् । तत आचार्या भणन्ति-सौम्य ! सम्यक्त्वे भवता 'हु' निश्चितमप्रमादः कर्त्तव्यः ॥

[भा.३७६३] नाऊण य मानुस्सं, सुदुल्लभं जीवियं च निस्सारं ।
संघस्स चेतियाण य, वच्छलत्तं करेज्जाहि ॥

वृ- ज्ञात्वा 'मानुष्यं' मनुष्यभवं दुर्लभं जीवितं च निस्सारं मत्वा सङ्घस्य चैत्यानां च 'वत्सलत्वं' भक्तिं कुर्या इति ॥ द्वितीयः पुनराह-

[भा.३७६४] किं काहिंति ममेते, पडलग्गतणं व मे जढा इड्ढी ।
को वाऽनिट्ठफलेसुं, विभवेसु चलेसु रज्जेज्जा ॥

वृ- किं करिष्यन्ति मम 'एते' अमात्यादयः ? पटलग्नतृणमिव मया राज्यऋद्धि "जढा" परित्यक्ता, अपि च राज्यादिविभवानां भुक्तानां ध्रुवं नरकपातः फलम्, चलाश्चामी सन्ध्याभ्ररागवत्, अतः को वाऽनिष्टफलेषु च विभवेषु 'रज्येत' रागमनुबध्नीयात् ? । एवमुक्त्वा प्रकट एव प्रदेशे स्थितः सर्वानुपसर्गानभिभूय स संयममनुपालयति ॥

यस्तु तृतीयः स किं करोति? इत्याह-

[भा.३७६५] तइओ संजमअट्ठी, आयरिए पणमिऊण तिविहेणं ।
गेलन्नं नियडीए, अज्जाण उवस्सगमतीति ॥

वृ- तृतीयो राजपुत्रः संयमार्थी स गुरुभिरभिहितः-आर्य ! संयतीप्रतिश्रये निलीयस्व । स प्राह-इच्छाम्यहं भगवद्वचनम्, निस्तारयत मां येन केनापि प्रकारेणास्मादुपसर्गसमुद्रात् । एवमुक्त्वा स आचार्यान् 'त्रिविधेन' मनो-वाक्-कायकर्मणा प्रणम्य निकृत्या ग्लानत्वं कृत्वाऽऽर्याणामुपाश्रयं प्रविशति ॥

[भा.३७६६] अंतद्धाणा असई, जइ मंसू लोय अंबिलीबीए ।
पीसित्ता देंति मुहे, अपगासे ठवेंति य विरेगो ॥

वृ- यद्यन्तर्धानकारणमञ्जन-मन्त्रादि विद्यते ततः सोऽन्तर्हितः कृत्वा तत्रैव स्थाप्यते । अथ नास्त्यन्तर्धानकरणं ततः संयतीनेपथ्यं कारयित्वा तद्वसतिं नेतव्यः । यदि तस्य 'श्मश्रु' कूर्चं विद्यते ततो लोचः क्रियते । अम्लिनीबीजानि च पिष्ट्वा तस्य मुखे ददति, तैर्मुखमालिम्पन्तीत्यर्थः । अप्रकाशे च प्रदेशे संयतीवसती तं स्थापयन्ति । विरेकश्च विरेचनकारकौषधप्रयोगेण क्रियते ॥

[भा.३७६७] संथार कुसंघाडी, अमणुन्ने पानए य परिसेओ ।
घंसण पीसण ओसह, अद्धिति खरकम्मि मा बोलं ॥

वृ- संस्तारके स संयः शाय्यते । मलिनां त्रुटितां च कुसङ्घाटीं स प्रावरणं कार्यते । 'अमनोज्ञं' दुर्गन्धि पानकं तेन तस्य परिषेकः क्रियते । तथा काश्चन संयत्यस्तत्र चन्दनस्य घर्षणम् अन्यास्तु पेषणं औषधस्य कुर्वन्ति । अपराः पुनः करतलपर्यस्तमुखा भूमिगतदृष्ट्योऽधृतिं कुर्वाणास्तिष्ठन्ति, 'खरकर्मिकेषु च' राजपुरुषेषु समागतेषु भणन्ति-मा बोलं कुरुत, एषा प्रवर्त्तिनी ग्लाना न युष्मदीयं बोलं सहते । एवमसौ तत्र संयतीवेषेण तिष्ठन् सर्वाण्यपि स्थाननिषदनादीनि पदानि कुर्यात् ॥

गतं 'प्रच्छादना च शैक्षे' इति द्वारम् । अथ 'असहिष्णोश्चतुष्कभजना' इति द्वारं बिभावयिषुराह-

[भा.३७६८] दोन्नि वि सहू भवंती, सो वऽसहू सा व होज्ज ऊ असहू ।
दोण्हं पि उ असहूणं, तिगिच्छ जयणाय कायव्वा ॥

वृ- यस्या ग्लानसाध्व्याश्चिकित्सा क्रियते यश्च तस्याः प्रतिचरकः तौ द्वावपि सहिष्णू भवतः,

एषप्रथमो भङ्गः । "सो वऽसहु"त्ति साध्वी सहिष्णुः 'स च' साधुरसहिष्णुरिति द्वितीयः । "सा व होज्ज ऊ असहु"ति 'सा' साध्वी असहिष्णुः साधुः सहिष्णुः, एष तृतीयः । साध्वी साधुश्च द्वावप्यसहिष्णू इति चतुर्थः । एतेषु चतुर्षु भङ्गेषु यतनया चिकित्सा कर्त्तव्या ॥ तत्र प्रथमभङ्गं तावद् भावयति-

[भा.३७६९] सोऊण ऊ गिलाणं, पंथे गामे व भिक्खवेलाए ।
जइ तुरियं नागच्छइ, लग्गइ गुरुए चउम्मासे ।

वृ- श्रुत्वा ग्लानां संयतीं पथि वा परिभ्रमन् ग्रामे वा तिष्ठन् भिक्षावेलायां वा पर्यटन् यदि त्वरितं ग्लानासमीपं नागच्छति ततश्चतुरो मासान् गुरुकान् 'लगति' प्राप्नोति, अतो ग्लानां श्रुत्वा निर्जरसमभिलषता सर्वेणाप्यक्षेपेणैव तस्याः समीपं गन्तव्यम् ॥ कथं पुनस्तस्याः श्रवणं भवति? उच्यते-यत्र ग्रामे ग्लाना विद्यते तस्य बहिरदूरसमीपे व्यतिव्रजन्तं संयतं गृहस्थः कोऽपि ब्रूते-युष्माकं ग्लानायाः प्रतिजागरणं क्रियते ? न क्रियते ? । साधुराह-सुष्ठु क्रियते ? । गृही ब्रवीति-यद्येवं ततः-

[भा.३७७०] लोलंती छग-मुत्ते, सोउं घेत्तुं दवं तु आगच्छे ।
तूरंतो तं वसहिं, निवेयणं छायणऽऽ्जाए ॥

वृ- एकाकिनी संयती 'छगण-सूत्रे' आत्मीय एव पुरीष-प्रश्रवणे 'लोलन्ती' विलुठन्ती अत्र ग्रामे तिष्ठति । एवं श्रुत्वा तत एव 'द्रवं' पानकं गृहीत्वा त्वरमाणः संयतीवसतिमागच्छति । ततो बहिः स्थित्वा शय्यातरीपार्श्वादार्यिकाया निवेदनं कारयति, यथा-बहि साधुरागतोऽस्तीति । सा च शय्यातरी तस्या आर्यिकाया दुर्निवसितगात्राणां छादनं कुर्यात् । अथ सा न करोति तत आत्मनाऽपि यतनया तां छादयति ॥ ततः स साधुस्तस्या इत्थं स्थिरीकरणं करोति-

[भा.३७७१] आसासो वीसासो, मा भाहि इति थिरीकरण तीसे ।
धुविउं चीरऽत्थुरणं, तीसेऽप्पण बाहि कप्पो य ॥

वृ- 'आश्वासो नाम' धीरा भव, अहं ते सर्वमपि वैयावृत्त्यं करिष्ये । 'विश्वासस्तु' त्वं मम माता भगिनी दुहिता वा अतो मा भैषीः, एवं वयोऽनुरूपमविरुद्धं वचनं ब्रवीति । इत्थं तस्याः स्थिरीकरणं कृत्वा छगण-मूत्रलुलितां तां धावित्वा तस्या एवौपग्रहिकाणि चीवराणि तेषामभावे आत्मीयान्यपि संस्तारके आस्तृणाति तां वा परिधापयति । ततः खरण्टितचीवराणां प्रतिश्रयाद् बहि कल्पो दातव्यः । भूमेरपि तस्या उपलेपनं कर्त्तव्यम् ॥ अथ प्रवेशविधिं विशेषत आह-

[भा.३७७२] एएहि कारणेहिं, पविसंते ऊ निसीहिया तिन्नि ।
ठिच्चाणं कायव्वा, अंतर दूरे पवेसे य ॥

वृ- 'एतैः' ग्लानत्वादिभिः कारणैः संयतीवसतौ प्रविशता तिो नैषेधिक्यः कर्त्तव्याः । कथम्? इत्याह-'स्थित्वा' प्रथमनैषेधिकीकरणानन्तरं कियन्तमपि कालं प्रतीक्ष्य द्वितीया नैषेधिकी, ततो द्वितीयानन्तरं तृतीयाऽप्येवमेव कर्त्तव्या । तत्र प्रथमा नैषेधिकी 'दूरे' अग्रद्वारे, द्वितीया 'अन्तरे' मध्यभागे, तृतीया 'प्रवेशे' मूलद्वारे विधातव्या ॥ ततः-

[भा.३७७३] पडिहारिए पवेसो, तक्कज्जसमाणणा य जयणाए ।
गेलन्ने चिट्ठणादी, परिहरमाणो जतो खिप्पं ॥

**वृ-** शय्यातरीभिः 'प्रतिहारिते' आर्यायां ज्ञापिते सति प्रवेशः कर्त्तव्यः । प्रविष्टेन च तस्य-विवक्षितस्य ग्लानकार्यस्य पूर्वोक्तया वक्ष्यमाणया च यतनया समापना कर्त्तव्या । एवं ग्लानत्वे तत्र स्थानादीनि पदानि कुर्यात् । तथा ग्लानकृत्यान्युत्सर्गतोऽशुद्धं परिहरन् करोति । अथ शुद्धं न प्राप्यते ततः ''जउ''त्ति अनागाढे पञ्चकहान्या 'यतः' यतमानः करोति, ''खिप्पं''ति आगाढे क्षिप्रमेव करोति । अथवाऽऽत्म-परोभयसमुत्थदोषान् परिहरमाणो ग्लानकृत्यं करोति, कुतः ? इत्याह-''जतो खिप्पं''ति यत आत्मसमुत्थादिदोषान् अपरिहरतः क्षिप्रमेव संयमविराधना भवति।। कीदृशः पुनस्तां प्रतिजागर्ति ? इत्युच्यते-

**[भा. ३७७४]** पियधम्मो दढधम्मो, मियवादी अप्पकोतुहल्लो य ।
अज्जं गिलाणियं खलु, पडिजग्गति एरिसो साहू ।।

**वृ-** प्रियः-इष्टो धर्मो यस्य स प्रियधर्मा । धर्मे यः दृढः-निश्चलो दृढधर्मा, राजदन्तादित्वाद् दृढशब्दस्य पूर्वनिपातः । मितं-परिमिताक्षरं वदितुं शीलमस्येति मितवादी । अल्पशब्दस्य इह अभाववचनत्वाद् अल्पम्-अविद्यमानं कौतूहलं स्त्रीरूपदर्शनादिषु यस्य सोऽल्पकौतूहलः । ईदृशः साधुरार्यां ग्लानां प्रतिजागर्त्ति ।।

**[भा. ३७७५]** सो परिणामविहिन्नू, इंदियदारेहि संवरियदारो ।
जं किंचि दुब्भिगंधं, सयमेव विगिंचणं कुणति ।।

**वृ-** 'सः' वैयावृत्यकरः 'वर्ण-गन्धादिभिः शुभा अपि भावा भूयोऽप्यशुभा भवन्ति, अशुभा अपि च संस्कारविशेषतो विश्रसया वा शुभा जायन्ते' इत्येवं पुद्गलानां परिणामविधिं जानातीति परिणामविधिज्ञः । तथा इन्द्रियद्वारेभ्यः संवृतद्वारः, इह ''गम्ययपः कर्माधारे'' इत्यनेन पञ्चमी, ततोऽयमर्थ-इन्द्रियरूपाणि द्वाराण्यधिकृत्य संवृतद्वारः, न पुनर्बाह्यद्वाराणि । ईदृशः साधुर्यत् किञ्चिदार्यिकायाः संज्ञादिकं दुरभिगन्धं तस्य स्वयमेव 'विवेचनं' स्फेटनं परिष्ठापनं वा करोति।।

संवृतद्वारपदस्य सफलीकरणार्थमाह-

**[भा. ३७७६]** गुज्झंग-वदन-कक्खोरुअंतरे तह थणंतरे दट्टुं ।
साहरति ततो दिट्ठिं, न य बंधति दिट्ठिए दिट्ठिं ।।

**वृ-** गुह्याङ्गस्य वदनस्य कक्षाया ऊर्वोश्च यान्यन्तराणि-अवकाशास्तानि तथा स्तनान्तराणि च दृष्ट्वा 'संहरति' भास्करादिव ततो दृष्टिं निवर्त्तयति, 'न च' नैव आर्यिकाया दृष्टौ दृष्टिं 'बध्नाति' मीलयतीत्यर्थः ।। अथ 'यत् किञ्चिद् दुरभिगन्धम्' इत्यादि व्याचष्टे-

**[भा. ३७७७]** उच्चारे पासवणे, खेले सिंघाणए विगिंचणया ।
उव्वत्तण परियत्तण, नंतग निल्लेवण सरीरे ।।

**वृ-** उच्चारस्य प्रश्रवणस्य खेलस्य सिङ्घानस्य च विवेचनं करोति । उद्वर्त्तनं नाम-तस्या उत्तानायाः पार्श्वतः करणम्, तत इतरस्यां दिशि स्थापनं परिवर्त्तनम्, ते अपि करोति । 'नन्तकं' वस्त्रं तथा शरीरं च यदि संज्ञया मूत्रेण वा लिप्तं ततस्तदपि निर्लेपयितव्यम् ।।

**[भा. ३७७८]** किरियातीतं नाउं, जं इच्छति एसणाए जं तत्थ ।
सब्भावणा परिन्ना, पडियरण कहा नमोक्कारो ।।

**वृ-** क्रियायां क्रियमाणायामपि या न प्रगुणीभवति सा क्रियातीता, तां ज्ञात्वा सा प्रष्टव्या-

केन भवत्याः समाधिरुत्पद्यते ? । ततो यद् द्रव्यमिच्छति तदेषणया शुद्धं शुद्धस्यालाभे पञ्चकहानि यतनयाऽपि गृहीत्वा दातव्यम् । ततः सा तथा श्रद्धाप्यते यथा 'परिज्ञाम्' अनशनं प्रतिपद्यते । अनशनप्रतिपन्नायाश्च सर्वप्रयत्नेन प्रतिचरणम् । धर्मकथा च तथा कर्त्तव्या यथा सम्यगुत्तमार्थमाराधयति । नमस्कारश्च तस्या मरणवेलायां दातव्य इत ।। क्रियासाध्याया विधिमाह-

[भा.३७७९] दव्वं तु जाणियव्वं, समाधिकारं तु जस्स जं होति ।
नायम्मि य दव्वम्मि, गवेसणा तस्स कायव्वा ।।

वृ- यस्य रोगस्य यद् द्रव्यं पथ्यं यस्या वा ग्लानाया यत् समाधिकारकं तत् प्रथमत एव ज्ञातव्यम्। ज्ञाते च तस्मिन् द्रव्ये सर्वप्रयत्नेन तस्य गवेषणा कर्त्तव्या ।।

[भा.३७८०] सयमेव दिट्ठपाढी, करेति पुच्छति अजाणओ वेज्जं ।
दीवन दव्वादिम्मि य, उवदेसे ठाति जा लंभो ।।

वृ- वैद्यकशास्त्ररूपो दृष्टः पाठो येन स एवंविधः स्वयमेव चिकित्सां करोति । अथ 'अज्ञः' वैद्यकशास्त्राभिप्रायं न जानाति ततो वैद्यं पृच्छति । तस्य च वैद्यस्य दीपनं करोति, यथा-अहं कारणत एकाकी सञ्जातः, अतो मा अपशकुनं गृह्णीध्वम् । ततो वैद्येन द्रव्य-क्षेत्र-काल-भावभेदात् चतुर्विधे उपदेशे दत्ते सति ब्रवीति-यदि वयमेतन्न लभामहे ततः किं प्रयच्छामः ? । एवं पृष्टे भूयो द्रव्यान्तरे उपदिष्टे ब्रूते-यद्येतदपि न लभामहे ततः किं कर्त्तव्यम् ? । एवं तावत् पृच्छति यावद् यस्य द्रव्यस्य ध्रुवो लाभः । तदुपदेशे च पृच्छा 'तिष्ठति' उपरमत इत्यर्थः ।।

अथ रात्रौ विधिमाह-

[भा.३७८१] अब्भासे व वसेज्जा, संबद्ध उवस्सगस्स वा दारे ।
आगाढे गेलन्ने, उवस्सए चिलिमिणिविभत्ते ।।

वृ- संयतीप्रतिश्रयस्य 'अभ्यासे' समीपे यदसम्बद्धमन्यगृहं तत्र वसेत्, तस्याभावे सम्बद्धेऽप्यन्यगृहे, तदभावे उपाश्रयस्य वा द्वारे । अथागाढं ग्लानकार्यं भवति तत उपाश्रयेऽपि चिलिमिलिकाविभक्ते वसति ।। किमर्थं पुनरुपाश्रयस्यान्तर्वसति ? इत्याह-

[भा.३७८२] उव्वत्तण परियत्तण, उभयविगिंचट्ठ पानगट्ठा वा ।
तक्करभय भीरू अथ, नमोकारट्ठा वसे तत्थ ।।

वृ- तस्या उद्वर्त्तनं परिवर्तनं वा कर्तुम्, उभयस्य वा-कायिकी-संज्ञालक्षणस्य विवेचनार्थम्, तृष्णार्त्ताया वा रात्रौ पानकदानार्थम्, यद्वा तत्र तस्करभयं सा च संयती स्वाभावेनैव भीरु ततो भयरक्षणार्थम्, 'अथ' इति अथवा मरणवेलायाः प्रत्यासन्नत्वाद् नमस्कारदानार्थं वा तत्र रात्रौ वसेत् ।।

[भा.३७८३] धिइ-बलजुतो वि मुनी, सेज्जातर-सन्नि-सिज्झगादिजुतो ।
वसति परपच्चयट्ठा, सलाहणट्ठा अवराणं ।।

वृ- यद्यपि स मुनि सहिष्णुत्वाद् धृति-बलयुक्तस्तथापि शय्यातरेण संज्ञिना वा-श्रावकेण सिज्झकेन वा-सहवासिना युतः-सहितः संयतीप्रतिश्रये वसति । तं च शय्यातरादिकमित्थं भणति-न वर्त्तते ममैकाकिनः संयतीप्रतिश्रये रात्रौ वस्तुम्, अतो मम द्वितीयेन भवता भवितव्यम् । अथ किमर्थमेवं करोति ? इति चेद् इत्याह-'परप्रत्ययार्थं' परेषाम्-अगारिणां प्रतीत्युत्पादननिमित्तम्,

यथा-नैष विरुद्धाभिप्रायेणात्र वसति। 'अपरेषां च' साधूनां श्लाघनार्थम्, धन्या अमी येषामेवंविधः सुदृष्टो धर्म इति ॥

[भा.३७८४] सो निज्जराए वट्टति, कुणति य आण अनंतनाणीणं।
स बितिज्जओ कहेती, परियट्टेगागि वसमाणो ॥

वृ- 'सः' साधुरेवं कुर्वन् विपुलायां निर्जरायां वर्त्तते, आज्ञां च 'अनन्तज्ञानिनां' तीर्थकृतां करोति। स च सद्वितीयो वसन् तस्य द्वितीयस्य धर्मं कथयति, अथैकाकी वसति ततः सर्वामपि रात्रिं परिवर्त्तयति ॥

[भा.३७८५] पडिजग्गिया य खिप्पं, दोण्ह सहूणं तिगिच्छ जतणाए।
तत्थेव गणहरो अन्नहिं व जयणाए तो नेइ ॥

वृ- एवं तेन साधुना प्रतिजागरिता सा 'क्षिप्रं' शीघ्रं प्रगुणीभवेत्। इत्थं द्वयोः सहिष्ण्वोर्यतनया चिकित्साकरणमुक्तम्। तां च प्रगुणीभूतां गृहीत्वा यदि तस्या गणधरः 'तत्रैव' आसन्ने समस्ति ततस्तं गाढं खरण्टयित्वा तस्य समर्पयति। अथ 'अन्यत्र' दूरदेशे ततः सार्थेन सह तां तत्र प्रस्थापयति, स्वयं वा यतनया तत्र नयति ॥ कथम् ? इत्याह-

[भा.३७८६] निक्कारणिंगि चमढण, कारणिगिं नेति अहव अप्पाहे।
गमणित्थि मिस्स संबंधि वज्जिते असति एगागी ॥

वृ- यदि सा ग्लाना संयती निष्कारणं गणाद् निष्क्रम्यैकाकिनी भूता ततस्तां 'चमढयति' निर्भर्त्सयतीत्यर्थः। अथ कारणिका ततस्तां स्वयं नयति, येषां वा आचार्याणां सा संयती तेषां सन्दिशति, यथा-युष्माकं संयती साम्प्रतमत्र तिष्ठति, अस्या आनयनकृते सङ्घाटकः प्रहेयः। यदा पुनः स स्वयं नयति तदा इयं यतना-''गमणित्थि'' इत्यादि। स्त्रीसार्थेन सम्बन्धिना समं प्रथमतो नयति, ततः स्त्रीसार्थेनैवसम्बन्धिमिश्रेण, ततः स्त्रीसार्थेनैवासम्बन्धिना। ततः पुरुषमिश्राभिरपि स्त्रीभिः-प्रथमं सम्बन्धिपुरुषयुक्ताभि, ततोऽसम्बन्धिमिश्रपुरुषयुक्ताभिः, ततोऽसम्बन्धिभिरपि। ततः पुरुषैरेव केवलैः-प्रथमं सम्बन्धिभि, ततोऽसम्बन्धिमिश्रैः, ततोऽसम्बन्धिभिरपि समं नयति। एषां प्रकाराणामभावे स साधुरेकाक्यपि तां नयति, तत्र चात्मना पुरतो गच्छति, संयती तु नासन्ने नातिदूरे पृष्ठतः स्थिता आगच्छति ॥

गतः प्रथमो भङ्गः। अथ द्वितीयं भङ्गं विभावयिषुराह-

[भा.३७८७] न वि य समत्थो सव्वो, हवेज्ज एतारिसम्मि कज्जम्मि।
कायव्वो पुरिसकारो, समाहिसंधाणणट्ठाए ॥

वृ- 'साध्वी सहिष्णुः साधुरसहिष्णुः' इत्ययं भङ्गो भाव्यते-'नापि च' नैव सर्वोऽपि साधुः 'एतादृशे' स्त्रियाः स्पर्शादावपि मनोनिग्रहात्मके कार्ये समर्थो भवेत् ततः किं सा ग्लाना सती तेन परित्यक्तव्या ? न इत्याह-ज्ञान-दर्शन-चारित्राणां यः समाधि-अन्योऽन्याविरोधेनैकत्रावस्थानं तस्य सन्धानार्थं तथा साधुना पुरुषकारः कर्तव्यः यथा तस्याश्चिकित्सा क्रियते आत्मनश्च शीलखण्डना न भवति ॥ स पुनः साधुः कथमसहिष्णुर्भवति ? इत्युच्यते-

[भा.३७८८] सोऊण य पासित्ता, संलावेणं तहेव फासेणं।
एतेहि असहमाणे, तिगिच्छ जयणाइ कायव्वा ॥

वृ- स्त्रियाः शब्दं श्रुत्वा रूपं वा तदीयं दृष्ट्वा तथा सार्द्धं वा यः संलापो यो वा तस्याः स्पर्शस्तेन वा तस्य मोहोद्भवः समुच्छलति । एतैः प्रकारैः 'असहमानः' इन्द्रियनिग्रहं कर्तुमक्षमो यस्तेन यतनया चिकित्सा कर्त्तव्या । तद्यथा-प्रथमं सा ग्लाना प्रष्टव्या-आर्ये ! भवती किं सहिष्णुः ? उतासहिष्णुः ? । सा च गीतार्था वा भवेदगीतार्था वा ॥ तत्र-

[भा.३७८९] अविकोविया उ पुट्ठा, भणाइ किं मं न पाससी नियए ।
छग-मुत्ते लोलंतिं, तो पुच्छसि किं सहू असहू ॥

वृ- 'अविकोविदा' अगीतार्था पृष्टा इदं भणति-किं मां न पश्यसि निजके छगण-मूत्रे लोलन्तीम्? तत एवं पृच्छसि किं सहिष्णुः ? असहिष्णुः ? इति ॥ साधुराह-

[भा.३७९०] पासामि नाम एतं, देहावत्थं तु भगिनि ! जा तुज्झं ।
पुच्छामि धितिबलं ते, मा बंभविराहणा होज्जा ॥

वृ- 'नाम' इति कोमलामन्त्रणे, भगिनि ! पश्याम्यहमेनां देहावस्थां या साम्प्रतं तव वर्त्तते, परमहं 'ते' तव धृतिबलं पृच्छामि, मा मम तव च ब्रह्मव्रतविराधना भवेदिति कृत्वा ॥

ततः साध्वी ब्रूते-

[भा.३७९१] इहरा वि ताव सद्दे, रूवाणि य बहुविहाणि पुरिसाणं ।
सोऊण व दट्ठूण व, न मनक्खोभो महं कोति ॥

वृ- 'इतरथाऽपि' नीरोगाया अपि मम तावत् पुरुषाणां गीतादीन् शब्दान् श्रुत्वा रूपाणि च 'बहुविधानि' विशिष्टनेपथ्यालङ्कृतानि दृष्ट्वा 'कोऽपि' मनागपि न मनःक्षोभो भवति ॥ किञ्च-

[भा.३७९२] संलवमाणी वि अहं, न यामि विगतिं न संफुसित्ताणं ।
हट्ठा वि किंतु एण्हिं, तं पुन नियगं धितिं जाण ॥

वृ- अहं सकलमपि दिवसं पुरुषेण सह संलपन्ती 'विकृतिं' विकारं न यामि, न वा पुरुषस्य हस्ताद्यवयवं संस्पृश्यापि विकारं गच्छामि । तदेवं 'हृष्टाऽपि' नीरोगाऽप्यहमेवं सहिष्णुः, किं पुनः 'इदानीं' ग्लानाद्यवस्थां प्राप्ता ? त्वं पुनः 'निजकाम्' आत्मीयां धृतिं जानीहि ॥

एवमुक्ते स किं करोति ? इत्याह-

[भा.३७९३] सो मग्गति साहम्मिं, सन्निं अहाभद्दिगं व सूइं वा ।
देति य से वेदनगं, भत्तं पानं व पाउग्गं ॥

वृ- 'सः' असहिष्णुः साधुस्तत्रान्यत्र वा ग्रामे 'साधर्मिकीं' संयतीं मार्गयति, तत्र च प्रथमं संविग्नां गीतार्थाम्, तदभावे संविग्नामगीतार्थाम्, तदलाभे पार्श्वस्थां गीतार्थाम्, तदप्राप्तौ पार्श्वस्थामेवागीतार्थाम् । अथ संयती न प्राप्यते ततः 'संज्ञिनीं' श्राविकाम्, तामपि प्रथमं गृहीताणुव्रताम्, ततो दर्शनश्राविकामपि; तदप्राप्तौ यथाभद्रिकामपि गवेषयति । तदलाभे 'सूतिकां' नवप्रसुतस्त्रीसूतिकर्मकारिणीं मार्गयति । सा च धर्मकथया प्रज्ञाप्यते यथा मुधिकयैव संयत्या वैयावृत्त्यं करोति । अथासौ मुधिकया नेच्छति ततो वेतनमपि तस्यै भक्तं पानं वा प्रायोग्यं ददाति॥

[भा.३७९४] एयासिं असतीए, न कहेति जहा अहं खु मिं असहू ।
सद्दादीजयणं पुन, करेमो एसा खलु जिनाणा ॥

वृ- 'एतासाम्' अनन्तरोक्तस्त्रीणामभावे स साधुस्तस्याः पुरतो नैवं कथयति, यथा-

अहमसहिष्णुरस्मि; परमेवं स्वचेतसि निश्चिनोति, यथा-शब्दादिविषयां यतनां कुर्मः । एषा 'खलु' निश्चितं जिनानामाज्ञा ।। यतनामेवाह-

[भा.३७९५] सद्दम्मि हत्थ-वत्थादिएहि दिट्ठिम्मि चिलिमिनंतरिओ ।
संलावम्मि परम्मुहो, गोवालगकंचुलो फासे ।।

वृ- यद्यसौ साधुः शब्देऽसहिष्णुस्ततस्तां ग्लानां भणति-मा वचनेन मां व्यापारयेः, किन्तु हस्तेन वा वस्त्रेण वा अङ्गुल्या वा संज्ञां कुर्याः । यस्तु दृष्टिक्लीबः स सर्वमपि वैयावृत्त्यं चिलिमिलिकया अन्तरितः करोति । अथासौ संलापक्लीबस्ततोऽवश्यसंलपनीये पराङ्मुखः संलापं करोति । स्पर्शक्लीबस्तु गोपालककञ्चुकमात्मना प्रावृत्य तस्याः सर्वमप्युद्वर्त्तनादिकृत्यं करोति ।। गतो द्वितीयभङ्गः । अथ तृतीय-चतुर्थभङ्गयोरतिदेशमाह-

[भा.३७९६] एसेव गमो नियमा, निग्गंथीए वि होति असहूए ।
दोण्हं पि हु असहूणं, तिगिच्छ जयणाए कायव्वा ।।

वृ- 'एष एव' द्वितीयभङ्गोक्तः 'गमः' प्रकारो नियमाद् निर्ग्रन्थ्यामप्यसहिष्णौ कर्त्तव्यः । नवरं यां शब्दादियतमामसावात्मना कृतवान् तां सा संयती कारयितव्या । 'द्वयोरपि च' संयती-संयतयोरसहिष्ण्वोः 'यतनया' द्वितीय-तृतीयभङ्गोक्त्या चिकित्सा कर्त्तव्या ।।

प्रगुणीभूता च काचिदिदं ब्रूयात्-

[भा.३७९७] आयंकविप्पमुक्का, हट्ठा बलिया य निव्वुया संती ।
अज्जा भणेज्ज काई, जेट्ठज्जा ! वीसमामो ता ।।

वृ- आतङ्केन-रोगेण विप्रमुक्ता सती हृष्टा सञ्जाता, तथा बलिका-उपचितमांस-शोणिता, निर्वृता-स्वस्थीभूतन्द्रिया, एवंविधा सती काचिदार्यिका ब्रूयात्-ज्येष्ठार्य ! चिरं संयमभाराक्रान्तावावाम् अत एनं भारं परित्यज्य यथासुखं किञ्चित् कालं तावद् 'विश्राम्याव:' विश्रामं गृह्णीवः ।। किञ्च-

[भा.३७९८] दिट्ठं च परामुट्ठं, च रहस्सं गुज्झ एक्कमेक्कस्स ।
तं वीसमामो अम्हे, पच्छा वि तवं चरिस्सामो ।।

वृ- 'रहस्यम्' एकान्तयोर्यद् गुह्यं तद् मदीयं भवात मयाऽपि भवदीयमुद्वर्त्तन-परिवर्त्तनादिक्रियासु बहुश एकैकस्य दृष्टं परामृष्टं च, 'तत्' तस्माद् विश्राम्यावः किञ्चित् कालं 'पश्चात्' पश्चिमे काले तपश्चरिष्यावः ।।

[भा.३७९९] तं सोच्चा सो भगवं, संविग्गोऽवज्जभीरु दढधम्मो ।
अपरिमियसत्तजुत्तो, निक्कंपो मंदरो चेव ।।

वृ- 'तत्' तस्या आर्यिकाया वचनं श्रुत्वा स भगवान् 'संविग्नः' मोक्षाभिलाषी, अवद्यं-पापं ततो भीरु-चकितः, 'दृढधर्मा' चारित्रे स्थिरः, अपरिमितम्-इयत्तारहितं यत् सत्त्वं-धृतिबलं तेन युक्तः, अत एव निष्कम्पः 'मन्दर इव' मेरुगिरिरिव । यथा हि मन्दरो वायुना न कम्प्यते एवं परिभोगनिमन्त्रणवायुना स भगवान् न कम्पितवान् ।। किन्तु-

[भा.३८००] उद्धंसिया य तेनं, सुट्ठु वि जाणाविया य अप्पाणं ।
चरसु तवं निस्संका, उ सासियं सो उ थेलेइ ।।

वृ- 'उद्धर्षिता' खरण्टिता गाढं तेन भगवता सा संयती, यथा-निर्धर्मे ! ईदृशं दुःखमनुभूय भवत्या वैराग्यमपि न सञ्जातम्, मयाऽपि साधर्मिकेति कृत्वा भवती चिकित्साकरणेन प्रगुणीकृता, इतरथा मृता अभविष्यत् । एवं 'सुट्ठु अतीव ज्ञापिता सा 'आत्मानं' आत्मनो निरभिलाषतामित्यर्थः । ततश्च चर सम्प्रति निशङ्का तपःकर्म, एवं शासित्वा 'सः' साधुः आवश्यकीं 'चेतयति' गमनं करोतीत्यर्थः ॥ अथ द्वितीयपदमाह-

[भा.३८०१] बिइयपयमणप्पज्झे, पविसे अविकोविए व अप्पज्झे ।
तेन-ऽगनि-आउसंभम, बोहिकतेनेसु जाणमवि ॥

वृ- द्वितीयपदे संयतीवसतौ 'अनात्मवशः' क्षिप्तचित्तादिको नैषेधिकीत्रयकरणमन्तरेणापि प्रविशेत् । आत्मवशो वा यः 'अविकोविदः' शैक्षः सोऽप्यविधिना प्रविशेत् । यद्वा स्तेनाऽग्न्यप्कायसम्भ्रमेषु बोधिकस्तेनेषु वा 'जानन्नपि' गीतार्थोऽपि सहसा प्रविशेत् ॥

मू. (८२) नो कप्पइ *निग्गंथाणं निग्गंथीउवस्सयंसि चिट्ठित्तए वा जाव काउस्सग्गं वा ठाणं ठाइत्तए ॥*

वृ- अस्य सम्बन्धमाह-

[भा.३८०२] पडिवक्खेणं जोगो, तासिं पि न कप्पती जतीणिलयं ।
निक्कारणगमणादी, जं जुज्जति तत्थ तं नेयं ॥

वृ- "पडिवक्खेणं" ति भावप्रधानत्वाद् निर्देशस्य प्रतिपक्षतया 'योगः' सम्बन्धः क्रियते-यथा निर्ग्रन्थानां निर्ग्रन्थ्युपाश्रये गमनादिकं कर्तुं न कल्पते तथा 'तासामपि' निर्ग्रन्थीनां 'यतिनिलयं' निर्ग्रन्थोपाश्रये निष्कारणे गमनादिकं कर्तुं न कल्पते । एतदर्थप्रतिपादनार्थमिदं सूत्रमारभ्यते । अत्र च 'यत्' प्रायश्चित्त-दोषजालादि पूर्वसूत्रोक्तं 'यत्र' निष्कारणगमनादौ युज्यते तत्र तद् 'ज्ञेयं' स्वबुद्धयाऽभ्यूह्य ज्ञातव्यम् ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या प्राग्वत् ॥ अथ भाष्यम्-

[भा.३८०३] एसेव गमो नियमा, पन्नवण-परुवणासु अज्जाणं ।
पडिजग्गती गिलाणं, साहुं जतणाए अज्जा वि ॥

वृ- 'एष एव' पूर्वसूत्रोक्तो गमो नियमात् प्रज्ञापना-प्ररुपणयोरार्याणामपि मन्तव्यः । प्रज्ञापना नाम-निष्कारणेऽविधिना प्रविशतीत्याद्युल्लेखेन चतुर्भङ्ग्याः सामान्यतः कथनम् । प्ररुपणा-पृथगेकैकभङ्गकस्य स्वरुपनिरुपणम् । तथा साधुं ग्लानमार्याऽपि यतनया तथैव प्रतिजागर्ति ॥ नवरम्-

[भा.३८०४] सा मग्गइसाधम्मिं, सण्णि अहाभद्द संवरादी वा ।
देति य से वेदनयं, भत्तं पानं च पायोग्गं ॥

वृ- द्वितीय-तृतीय-चतुर्थभङ्गेषु 'सा' संयती 'साधर्मिकं' साधुं मार्गयति, तदप्राप्तौ 'संज्ञिनं' श्रावकम्, तदलाभे यथाभद्रकम्, तदभावे संवरं-स्नानिकाशोधकम्, आदिशब्दादन्यमपि तथाविधं मार्गयति । यदि चासौ मुधिकया नेच्छति ततस्तस्य वेतनकमपि ददाति । भक्तं पानं च तस्य ग्लानस्य प्रायोग्यमुत्पादयति ॥

मू. (८३) नो कप्पइ *निग्गंथीणं सलोमाइं चम्माइं अहिट्ठित्तए ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.३८०५] बंभवयपालणट्ठा, अन्नोन्नउवस्सयं न गच्छंति ।
उवकरणं पि न इच्छति, जहिं पीला तस्स जोगोऽयं ॥

वृ- ब्रह्मव्रतपालनार्थं निर्ग्रन्थ्यश्चान्योऽन्योपाश्रयं न गच्छन्ति । अत उपकरणमपि तादृशं साधुः साध्वी वा नेच्छति ग्रहीतुम्, यत्र गृहीते 'तस्य' ब्रह्मचर्यस्य पीडा भवति । अयं 'योगः' सम्बन्धः ॥

[भा.३८०६] सतिकरणादी दोसा, अन्नोन्नउपस्सगाभिगमनेन ।
सतिकरण-कोउहल्ला, मा होज्जा सलोमए अहवा ॥

वृ- स्मृतिकरण-कौतुकादयो दोषा अन्योऽन्योपाश्रयाभिगमनेन भवन्ति । अतः सलोमनि चर्मणि गृहीते संयतीनां स्मृतिकरण-कौतूहले मा भूतामिति प्रकृतं सूत्रमारभ्यते । 'अथवा' इत्ययमपरः सम्बन्धः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थीनां सलोमानि चर्माणि 'अधिष्ठातुं' निषदनादिना परिभोक्तुमिति सूत्रार्थः ॥ अथ भाष्यविस्तरः-

[भा.३८०७] चम्मम्मि सलोमम्मि, निग्गंथीणं उवेसमाणीणं ।
चउगुरुगाऽऽयरियादी, तत्थ वि आणादिणो दोसा ॥

वृ- सलोमनि चर्मणि निर्ग्रन्थीनामुपविशन्तीनां चतुर्गुरुकाः । अत एवाचार्य एतत् सूत्रं प्रवर्त्तिन्या न कथयति चतुर्गुरवः प्रवर्त्तिनी श्रमणीनां न कथयति चतुर्गुरुकाः, श्रमण्यो न प्रतिशृण्वन्ति मासलघु । 'तत्रापि' अकथनेऽश्रवणे सलोमचर्मोपवेशने चाज्ञादयो दोषाः ॥

अथानन्तरोक्तमेव प्रायश्चित्तं विशेषयन्नाह-

[भा.३८०८] गहणे चिट्ठ निसीयण, तुयट्टणे य गुरुगा सलोमम्मि ।
निल्लोमे चउलहुगा, समणीनणारोवणा चम्मे ॥

वृ- सलोमचर्मणो ग्रहणं कुर्वन्ति चतुर्गुरुकाः तपसा कालेन च लघवः । गृहीत्वा तत्र 'स्थानम्' ऊर्ध्वस्थानरूपं कुर्वन्ति चतुर्गुरुकाः तपसा लघवः कालेन गुरवः, निषदनं कुर्वन्ति चतुर्गुरुकाः तपसा गुरवः कालेन लघवः त्वग्वर्त्तनं कुर्वन्ति तपसा कालेन च गुरवः । निर्लोमचर्मणि तु चतुर्लघुकाः । एवमेव चतुर्षु स्थानेषु तपः-कालविशेषिता एषा श्रमणीनां 'चर्मणि' चर्मविषयाऽऽरोपणा मन्तव्या ॥

अत्र दोषान् दर्शयति-

[भा.३८०९] कुंथु-पणगाइ संजमे, कंटग-अहि-विच्छुगाइ आयाए ।
भारो भयभुत्तियरे, पडिगमणाई सलोमम्मि ॥

वृ- सलोमचर्मणि कुन्थु-पनकादयो वर्षासु सम्मूर्च्छेयुः, तेषु स्थान-निषदनादिना विराध्यमानेषु संयमविराधना । कण्टकेन अहिना वृश्चिकादिना वा तत्रोपविष्टाः सुप्ता वा यद् उपघातमाप्नुवन्ति सा आत्मविराधना । भारश्च मार्गे गच्छन्तानां तस्य महान् भवति । भयं च स्तेनादिभ्यस्तद्विषयं भवति । भुक्तभोगिनीनां च स्मृतिकरणम् इतरासां तु कौतुकमुपजायते । ततश्च प्रतिगमनं-भूयोऽपि गृहवासाश्रयणम्, आदिशब्दादन्यतीर्थिकगमनादि वा कुर्युः ॥

अथैनामेव निर्युक्तिगाथां व्याख्यानयति-

[भा.३८१०] तसपानविराधनया, चम्म सलोमे उ होंति अहिकरणं ।
निल्लोमे तसपाणा, संकुयमाणे य करणं वा ॥

वृ- सलोमनि चर्मणि संसक्तानां कुन्थुप्रभृतीनां त्रसप्राणिनां विराधना भवति ।

तस्मातिरिक्तोपकरणत्वादधिकरणं भवति । निर्लोमन्यपि चर्मणि परिभुज्यमाने त्रसप्राणिनो विराध्यन्ते । सङ्कुचति च तस्मिन् 'करणं' पादकर्म संयती कुर्यात् ॥

[भा.३८११] अविदिन्नोवधि पाणा, पडिलेहा वि य न सुज्झते सलोमे ।
वासासु य संसज्जति, पतावमपतावणे दोसा ॥

वृ- तीर्थकरैः अवितीर्ण-अदत्तोऽयं सलोमचर्मलक्षण उपधिः । शुषिरतया च तत्र रोमान्तरेषु प्राणिनः सम्मूर्च्छन्ति, प्रत्युपेक्षणाऽपि च न शुध्यति । वर्षासु च कुन्थु-पनकादिभिस्तत् चर्म संसज्यते। यदि संसजनभयात् प्रतापयति ततोऽग्निविराधना, अथ न प्रतापयति ततस्त्रसप्राणिनः संसजन्ति, एवमुभयथाऽपि दोषा भवन्ति ॥

[भा.३८१२] आगंतु तदुब्भूया, सत्ताऽझुसिरे वि गिण्हितुं दुक्खं ।
अह उज्झति तो मरणं, सलोम-निल्लोमचम्मेयं ॥

वृ- 'आगन्तुकास्तदुद्भूताश्च' कुन्थु-पनकादयः सत्त्वा अशुषिरेऽपि ग्रहीतुं दुःखेन शक्यन्ते किं पुनः शुषिरे सलोमचर्मणि ? । ततो यत् तेषां भूयोभूयः सङ्घट्यमानानां परितापनं तन्निष्पन्नं प्रायश्चित्तम् । अथ तदुद्भवान् जन्तूनुज्झति ततस्तेषां मरणं भवेत् । एतत् सलोम चर्माश्रित्योक्तम्। अथ सलोम-निर्लोम्नोरुभयोरपि दोषा उच्यन्ते ॥

[भा.३८१३] भारो भय परितावण, मारण अहिकरणमेव अविदिन्ने ।
तित्थकर-गणहरेहिं, सतिकरणं भुत्तभोगीणं ॥

वृ- सलोम्ना निर्लोम्ना वा चर्मणा मार्गे गच्छन्तीनां भारो भयं चोत्पद्यते । कुन्थ-पनकादिजीवानां परितापनं मारणं वा भवति । अथैतद्दोषभयात् परित्यजति ततोऽसंयतैर्गृहीतेऽधिकरणम् । तीर्थकर-गणधरैश्च 'अवितीर्ण' अदत्तोऽयमुपधि । सलोमनि च परिभुज्यमाने स्मृतिकरणं भुक्तभोगिनीनाम्, इतरासां कौतुकमुपजायते ॥ कथम् ? इत्याह-

[भा.३८१४] जइ ता अचेतनम्मि, अयिणे फरिसो उ एरिसो होति ।
किमुया सचेतनम्मिं, पुरिसे फरिसो उ गमनादी ॥

वृ- यदि तावदचेतने 'अजिने' चर्मणि ईदृशः स्पर्शो भवति ततः किं पुनः सचेतनस्य पुरुषस्य स्पर्शो भवति ? । एवं विचिन्त्य काचिदार्यिका 'गमनम्' अवधावनं कुर्यात्, आदिशब्दाद् वैहायसमरणं वा प्रतिपद्यते ॥ द्वितीयदमाह-

[भा.३८१५] बिइयपय कारणम्मिं, चम्मुव्वलणं तु होति निल्लोमं ।
आगाढ कारणम्मिं, चम्म सलोमं पि जतणाए ॥

वृ- द्वितीयपदे कारणे चर्मापि गृह्णीयात् । कथम् ? इत्याह-'उद्वलनम्' अभ्यङ्गनं कस्याश्चिदार्यिकायाः कर्त्तव्यं तदर्थं निर्लोम चर्म गृह्यते । अथागाढं कारणं ततः सलोमचर्मणोऽपि यतनया परिभोगः कर्त्तव्य इति ॥ अथैनामेव निर्युक्तिगाथां विवृणोति-

[भा.३८१६] उड्डम्मि वातम्मि धणुग्गहे वा, अरिसासु सूले व विमोइते वा ।
एगंग-सव्वंगगए व वाते, अब्भंगिता चिट्ठति चम्मऽलोमे ॥

वृ- यस्याः संयत्याः प्राचुर्येणोर्द्धववात उच्छलति, 'धनुर्ग्रहोऽपि' वातविशेषो यः शरीरं कुब्जीकरोति स वा यस्या अजनिष्ट, अर्शांसि वा सञ्जातानि, शूलं वा अभीक्ष्णमुद्धावति,

पाणिपादाद्यङ्गं वा 'विमोचितं' स्वस्थानात् चलितम्, एकाङ्गतो वा सर्वाङ्गगतो वा कस्याश्चिद् वातः समुत्पन्नः सा निर्लोमचर्मणि अभ्यङ्गिता तिष्ठति ॥ अथ सलोमविषयं विधिमाह-

[भा.३८१७]तरच्छचम्मं अनिलामइस्स, कडिं व वेढेंति जहिं व वातो ।
एरंड-ऽनेरंडसुणेण डक्कं, वेढेंति सोविंति व दीविचम्मे ॥

वृ- 'अनिलामयी'वातरोगिणी तस्याः कटीं तरक्षचर्मणा वेष्टयन्ति । 'यत्र वा' हस्तादौ वातो भवति तं वेष्टयन्ति । एरण्डेन वा-हडक्कितेन अनेरण्डेन वा शुना या दष्टा तां वा चर्मणा वेष्टयन्ति, द्वीपिचर्मणि वा तां स्वापयन्ति ॥

[भा.३८१८]पुया व घस्संति अणत्थुयम्मि, पासा व घस्संति व थेरियाए ।
लोहारमादीहि दिवसेभुत्ते, लोमाणि मग्गं अइ संधेहिंति ॥

वृ- स्थविरायाः संयत्या अनास्तृते प्रदेशे उपविशन्त्याः पुतौ घृष्येते, सुप्ताया वा पार्श्वौ घृष्येते, ततः सलोम चर्मापि यद् दिवसतो लोहारादिभिरुपविशद्भिरुपभुक्तं तत् प्रातिहारिकं दिने दिने मार्गयित्वा लोमान्यधः कृत्वा 'सम्पिदधति' परिभुञ्जते इत्यर्थः ॥

[भा.३८१९] दिवसे दिवसे व दुल्लभे, उद्धता घेत्तुं तमाइणं ।
लोमेहिं उन संविजोअए, मउअट्ठा व न ते समुद्धरे ॥

वृ- अथ प्रातिहारिकं दिवसे दिवसे गवेष्यमाणं दुर्लभं-न लभ्यते इत्यर्थः, ततः 'उद्धतया' निर्देजत्वेन "णं" इति तदजिनं गृहीत्वा रोमभि 'संवियोजयेत्' रोमाण्युत्खनेदिति भावः । अथ तेषूत्खातेषु तदजिनं परुषस्पर्शं भवति मृदुतार्थं न 'तानि' रोमाणि समुद्धरेत् ॥

*मू. (८४) कप्पइ निग्गंथाणं सलोमाइं चम्माइं अहिट्ठित्तए, से वि य परिभुत्ते नो चेव णं अपरिभुत्ते, से वि य पडिहारिए नो चेव णं अप्पडिहारिए, से वि य एगराईए नो चेव णं अनेगराईए ॥*

वृ- कल्पते निर्ग्रन्थानां सलोमानि चर्माणि 'अधिष्ठातुं' परिभोक्तुम् । तत्रापि यत् चर्म परिभुक्तं तदेव ग्राह्यं नापरिभुक्तम् । तदपि च प्रातिहारिकं नाप्रातिहारिकम् । तदपि चैकरात्रिकं नैवानेकरात्रिकमिति सूत्रार्थः । एतद् निर्ग्रन्थानामपवादसूत्रम् ॥

अत्र शिष्यः प्राह-निर्ग्रन्थीनां किं कारणं न कल्पते ? सूरिराह-

[भा.३८२०]दोसा तु जे होंति तवस्सिणीणं, लोमाइणे ते न जतीण तम्मि ।
तं कप्पती तेसि सुतोवदेसा, जं कप्पती तासि न तं जतीणं ॥

वृ- ये 'दोषाः' स्मृतिकरणादयस्तपस्विनीनां लोमयुक्तोऽजिने-चर्मणि भवन्ति ते यतीनां 'तस्मिन्' सलोमचर्मणि न भवन्ति । अतस्तत् कल्पते तेषां 'श्रुतोपदेशात्' प्रस्तुतसूत्रवचनात् । यच्च निर्लोम चर्म तासां कल्पते न तद् यतीनाम्, स्मृतिकरणादिदोषप्रसङ्गादिति ॥

सलोमापि चर्म निर्ग्रन्थानामुत्सर्गतो न कल्पते, यत आह-

[भा.३८२१] निग्गंथाण सलोमं, न कप्पती झुसिर तं तु पंचविहं ।
पोत्थग-तणपण दूसं, दुविहं चम्मम्मि पनगं च ॥

वृ- सलोम चर्म निर्ग्रन्थानां न कल्पते, शुषिरं जीवाश्रयस्थानमिति कृत्वा । अथ कतिविधं शुषिरम् ? इति प्रश्नावकाशमाशङ्क्याह-'तत्तु' शुषिरं पञ्चविधम्, तद्यथा-पुस्तकपञ्चकं तृणपञ्चकं दूष्यं-वस्त्रं तत्पञ्चकं 'द्विविधं' अप्रत्युपेक्ष्यदूष्यपञ्चकं दुःप्रत्युपेक्ष्यदूष्यपञ्चकं च चर्मपञ्चकं चेति ॥

एतान्येव यथाक्रमं व्याचष्टे-

[भा.३८२२] गंडी कच्छवि मुट्ठी, छिवाडि संपुडग पोत्थगा पंच ।
तिण सालि-वीहि-कोद्दव-रालग-आरन्नगतणं च ॥

वृ- गण्डीपुस्तकः कच्छपीपुस्तकः मुष्टिपुस्तकः सम्पुटफलकपुस्तकः छेदपाटीपुस्तकश्चेति पञ्च पुस्तकाः । एतेषां च स्वरुपमित्थमुक्तं पूर्वसूरिभिः-

बाहल्ल-पुहत्तेहिं, गंडीपोत्थो उ तुल्लगो दीहो ।
कच्छवि अंते तनुओ, मज्झे पिहुलो मुनेयव्वो ॥
चउरंगुलदीहो वा, वट्टागिइ मुट्ठिपुत्थगो अहवा ।
चउरंगुलदीहो च्चिय, चउरंसो होइ विन्नेओ ॥
संपुडगो दुगमाई, फलगा वोच्छं छिवाडिमेत्ताहे ।
तनुपत्तूसियरुवो, होइ छिवाडी बुहा बिंति ॥
दीहो वा हस्सो वा, जो पिहुलो होइ अप्पबाहुल्लो ।
तं मुनियसमयसारा, छिवाडिपोत्थं भणंतीह ॥

तथा शालीनां १ व्रीहीणां २ कोद्रवस्य ३ रालकस्य च ४ यानि पलालप्रायाणि तृणानि पञ्च 'आरण्यकतृणं' श्यामाकादि, एतत् तृणपञ्चकम् ॥ अथ दूष्यपञ्चकद्वयं चर्मपञ्चकं चाह-

[भा.३८२३] कोयव पावारग दाढिआलि पूरी तधेव विरली य ।
एयं दुपेहपणयं, इणमन्नं अपडिलेहाणं ॥

[भा.३८२४] उवहाण तूलि आलिंगणी उ गंडोवहाण य मसूरा ।
गो-माहिस-अय-एलग-रन्नमियाणं च चम्मं तु ॥

वृ- 'कोयविर्नाम' रुतपूरितः पटः, या लोके 'माणिकी' इति प्रसिद्धा । 'प्रावारकः' नेपालादिरुल्वणरोमा बृहत्कम्बलः । "दाढिगालि" त्ति यथा मुखमध्ये यमलितोभयदन्तपङ्क्तिरुपा दाढिकालि-दन्तावलिर्निरीक्ष्यते एवं धौतपोतिकाऽपि द्विजसत्कसदशवस्त्रपरिधानरुपा दृश्यमाना दाढिकालिरिव प्रतिभातीति कृत्वा दाढिकालिरिव प्रतिभातीति कृत्वा दाढिकालिरुच्यते । पूर्यते-स्तोकैरपि तन्तुभिः पूर्णीभवतीति पूरिका-स्थूलशणगुणमयपटात्मिका, यया धान्यगोणिकाः क्रियन्ते हस्त्याद्यास्तरणानि वा । विरलिका नाम-द्विसरसूत्रपाटी । एतानि पञ्चापि सम्यक् प्रत्युपेक्षितुं न शक्यन्त इति दुःप्रत्युपेक्ष्यदूष्यपञ्चकमुच्यते । इदमन्यद् 'अप्रत्युपेक्ष्याणां' सर्वथाऽपि प्रत्युपेक्षितुमशक्यानां दूष्याणां पञ्चकं भवति ॥ तद्यथा 'उपधानं' हंसरोमादिपूर्णमुच्छीर्षकम् । 'तूली' संस्कृतरुतादिभृता अर्कतूलादिभृता वा प्रतीता । आलिङ्गनिका पुरुषप्रमाणा, या शयानैर्जानु-कूर्परादिषु दीयते । 'गण्डोपधानं' गल्लमसूरिका । 'मसूरकं नाम' चर्मकृतं वस्त्रकृतं वा वृत्तं चूयादिपूर्णं चक्कल-गद्दिकादि । चर्मपञ्चकं पुनरिदम्-गोचर्म, माहिषचर्म, अजाः-छगलिकास्तासां चर्म, एडकाः-अजविशेषास्तच्चर्म, आरण्यकाश्च ये मृगाः- हरिण-शशकादयः तेषां चर्म पञ्चमं ज्ञातव्यम् ॥

अथात्रैव प्रायश्चित्तमाह-

[भा.३८२५] जहिं गुरुग तहिं लहुगा, जहिं लहुगा चउगुरु तहिं ठाणे ।
दोहिं लहु कालगुरु, तवगुरुगा दोहि वी गुरुगा ॥

वृ- 'यत्र' सलोमचर्मणि पुरुषतुल्यस्पर्शत्वाद् निर्ग्रन्थीनां चतुर्गुरुकाः प्रायश्चित्तमुक्तं तत्र निर्ग्रन्थानां चतुर्लघुकाः। 'यत्र तु' निर्लोमचर्मणि निर्ग्रन्थीनां चतुर्लघुकाः तत्र निर्ग्रन्थानां चतुर्गुरुकाः, स्त्रीतुल्यस्पर्शत्वात्। परमुभयेऽपि प्रथमे ग्रहणाख्ये स्थाने द्वाभ्यां लघवः, तपसा कालेन चेत्यर्थः। ऊर्ध्वस्थाने कालगुरवः। निषदने तपोगुरवः। त्वग्वर्त्तने 'द्वाभ्यामपि' तपः-कालाभ्यां गुरवः। पुस्तकपञ्चके तृणपञ्चके दूष्यपञ्चकद्वये च निर्ग्रन्थानां निर्ग्रन्थीनां च चतुर्लघवः। आह च चूर्णिकृत्- "पोत्थग-तण-दूसेसु चउलहुगा।" अथ पुस्तकपञ्चके तावद् दोषानुपदर्शयति-

[भा.३८२६] संघंस अपडिलेहा, भारो अहिकरणमेव अविदिन्नं।
संकामण पलिमंथो, पमाए परिकम्मणा लिहणा॥

वृ- पुस्तकादिकं ग्रामान्तरं नयतः स्कन्धे सङ्घर्ष स्यात्, ततश्च व्रणोत्पत्त्यादयो दोषाः। शुषिरत्वाच्च तत्र प्रत्युपेक्षणा न शुध्यति। भारो मार्गे गच्छतां भवेत्। अधिकरणं च कुन्थु पनकादिसंसक्तिलक्षणं भवति; यद्वा तत् पुस्तकं स्तेनैरपह्रियेत ततोऽधिकरणम्। तीर्थकरैरदत्तश्चायमुपधिः। स्थानान्तरे च पुस्तकं सङ्क्रामयतः पलिमन्थः। 'प्रमादो नाम' पुस्तके लिखितमस्तीति कृत्वा न गुणयति, अगुणनाच्च सूत्रनाशादयो दोषाः। परिकर्मणायां च सूत्रार्थपरिमन्थो भवति। अक्षरलेखनं च कुर्वतः कुन्थुप्रभृतित्रसप्राणव्यपरोपणेन कृकाटिकादिबाधया च संयमा-ऽऽत्मविराधना॥ किञ्च-

[भा.३८२७] पोत्थग जिन दिट्ठंतो, वग्गुर लेवे य जाल चक्के य।
लोहित लहुगा आणादि मुयण संघट्टणा बंधे॥

वृ- पुस्तके शुषिरतया यो जन्तूनामुपघातस्तत्र 'जिनैः' तीर्थकृद्भिर्वागुरया लेपेन जालेन चक्रेण च दृष्टान्तः कृतः। "लोहिय"त्ति यदि तेषां पुस्तकान्तर्गतानां जन्तूनां 'लोहितं' रुधिरं भवेत् ततः पुस्तकबन्धनालेऽक्षराणि परिस्पृश्य तद् रुधिरं भवेत् ततः पुस्तकबन्धनकालेऽक्षराणि परिस्पृश्य तद् रुधिरं परिगलेत्। "लहुग"त्ति यावतो वारांस्तत् पुस्तकं बध्नाति मुञ्चति वा अक्षराणि वा लिखति तावन्ति चतुर्लघूनि, आज्ञादयश्च दोषाः। पुस्तकस्य मोचने बन्धे च सङ्घट्टनम्, उपलक्षणत्वात् परितापनमपद्रावणं वा यद् आपद्यते तन्निष्पन्नं प्रायश्चित्तमिति निर्युक्ति-गाथासमासार्थः॥ साम्प्रतमेनामेव विवृणोति-

[भा.३८२८] चउरंगवग्गुरापरिवुडो वि फिट्टेज्ज अवि मिगो रन्ने।
छीर खउर लेवे वा, पडिओ सउणो पलाएज्जा॥

वृ- चतुरङ्गसेनारूपा या वागुरा तया परिवृतोऽपि-समन्ताद् वेष्टितोऽपि मृगः, 'अपि' इति सम्भावनायाम्, सम्भाव्यते अयमर्थ-यत् तथाविधदक्षतादिगुणोपेतो मृगोऽरण्ये तादृशादपायात् स्फिटेत्, न पुनः पुस्तकपत्रान्तरप्रविष्टा जीवाः स्फिटेयुः। तथा 'शकुनः' पक्षी, स चेह मक्षिकादि, 'क्षीरे वा' दुग्धे 'खपुरे वा' चिक्कणद्रव्ये 'लेपे वा' अवश्रावणादौ पतितोऽपि पलायेत, न पुनः पुस्तकजीवास्ततः पलायितुं शक्नुयुः॥

[भा.३८२९] सिद्धत्थगजालेण व, गहितो मच्छो वि निप्फिडेज्जा हि।
तिलकीडगा व चक्के, तिला व न य ते ततो जीवा॥

वृ- सिद्धार्थकाः-सर्षपास्तेऽपि येन जालेन गृह्यन्ते तत् सिद्धार्थकजालम् तेनापि गृहीतो मत्स्यः कदाचिद् निस्फिटेत्। तथा 'चक्रे' तिलपीडनयन्त्रे प्रविष्टास्तिलकीटका वा तिला वा निर्गच्छेयुः,

न च ते जीवाः 'ततः' पुस्तकाद् निर्गन्तुं शक्नुयुः ॥

[भा.३८३०] जइ तेसिं जीवाणं, तत्थ गयाणं तु लोहियं होज्जा ।
पीलिज्जंते धनियं, गलेज्ज तं अक्खरे फुसितं ॥

वृ- यदि तेषां 'तत्रगतानां' पुस्तक-पत्रान्तरस्थितानां 'जीवानां' कुन्थुप्रभृतीनां लोहितं भवेत् ततः पुस्तकबन्धनकाले तेषां 'धनियं' गाढतरं पीड्यमानानां 'तद्' अनन्तरोक्तं रुधिरमक्षराणि स्पृष्ट्वा बहि परिगलेत् ॥ अत एव-

[भा.३८३१] जत्तियमेत्ता वारा, उ मुंचई बंधई व जति वारा ।
जति अक्खराणि लिहति व, तति लहुगा जं च आवज्जे ॥

वृ- यावन्मात्रान् वारान् पुस्तकं 'मुञ्चति' छोटयि, यति वारांश्च बध्नाति, 'यति वा' यावन्ति अक्षराणि लिखति 'तति' तावन्ति चतुर्लघूनि । यच्च कुन्थु-पनकादीनां सङ्घट्टनं परितापनमपद्रावणं वा आपद्यत तन्निष्पन्नं प्रायश्चित्तम् ॥ अथ तृणपञ्चकादिषु दोषानाह-

[भा.३८३२] तणपनगम्मि वि दोसा, विराधना होंति संजमा-ऽऽताए ।
सेसेसु वि पनगेसुं, विराधना संजमे होति ॥

वृ- तृणपञ्चकेऽपि 'दोषाः' आज्ञाभङ्गादयो भवन्ति, विराधना च संयमा-ऽऽत्मविषया । 'शेषेष्वपि' दूष्यपञ्चकादिषु संयमविषया विराधना भवति ॥ इदमेव भावयति-

[भा.३८३३] अहि-विच्चुग-विसकंडगमादीहि खयं व होज्ज आयाए ।
कुंथादि संजमम्मि, जति उव्वत्तावि तति लहुगा ॥

वृ- तृणादिषु शुषिरत्वादहिर्वा वृश्चिको वा विनिषकण्टको वा भवेद् एतैः आदिशब्दात् मत्कोटकादिभिश्च तत्र शयान आसीनो वोपद्रूयेत, क्षतं वा दर्भादिषु सुप्तस्य भवेत्, एषाऽऽत्मविराधना । कुन्थु-पनकादिप्राणिव्यपरोपणं तु संयमविराधना । तृणेषु च प्रसुप्तः 'यति' यावतो वारानुद्वर्त्तनं परिवर्त्तनमाकुञ्चनं प्रसारणं वा करोति 'तति' तावन्तश्चतुर्लघुकाः ॥

अत्र परः प्राह-

[भा.३८३४] दिट्ठ सलोमे दोसा, निल्लोमं नाम कप्पती घेत्तुं ।
गिण्हणे गुरुगा पडिलेह पनग तसपान सतिकरणं ॥

वृ- सलोमचर्मणि यतो दोषा दृष्टाः अतो निर्ग्रन्थानां निर्लोम चर्म 'नाम' इति सम्भावयामः कल्पते ग्रहीतुम् । सूरिराह-यदि निर्लोमचर्मणो ग्रहणं करोति ततश्चतुर्गुरुकाः, यतस्तत्र प्रत्युपेक्षणा न शुध्यति, पनकत्रसप्राणिनो वा सम्मूर्च्छन्ति, सुकुमारतया भुक्तभोगिनः स्मृतिकरणं भवति अभुक्तभोगिनस्तु कौतुकम् ॥ इदमेव स्पष्टयति-

[भा.३८३५] भुत्तस्स सतीकरणं, सरिसं इत्थीण एयफासेणं ।
जति ता अचेयणम्मि, फासो किमु चेयणे इतरे ॥

वृ- भुक्तभोगिनः स्मृतिकरणं भवति-अहो ! स्त्रीणां सम्बन्धी यः स्पर्शोऽस्माभिरनुभूतपूर्व तेन सदृशमेतत् चर्मानुभूयते । अभुक्तभोगिनः कौतुकम्, यथा-यदि तावदचेतनेऽपि चर्मण्येतादृशः सुखस्पर्शोऽनुभूयते किं पुनः सचेतने 'इतरस्मिन्' स्त्रीशरीरे भविता ? । एवं विचिन्त्य प्रतिगमनादीनि कुर्युः । यत एते दोषा अतो निर्लोमापि न ग्रहीतव्यम् ॥ आह यदि निर्लोम ग्रहीतुं

न कल्पते नर्हि मा कल्पताम्, ननु सलोमकं तत् अनन्तरसूत्रेणानुज्ञातम्, भवद्भिस्तु तदपि प्रतिषिद्धम् तदेतत् कथम् ? इति अत्रोच्यते-

**[भा.३८३६]** सुत्तनिवाओ वुड्ढे, गिलाण तद्दिवस भुत्त जतणाए ।
आगाढ गिलाणे मक्खणड्ड, घट्ठे भिन्ने व अरिसाउ ॥

**वृ-** सूत्रनिपातो वृद्धे ग्लाने वा भवति, वृद्धस्य ग्लानस्य वा परुषस्पर्शमसहिष्णोरास्तरणार्थं सलोम चर्म ग्राह्यमिति भावः । तच्च 'तद्दिवसमुक्तं' कुम्भकारादिभिस्तस्मिन्नेव दिवसे परिभुक्तम्, तत्र हि त्रसादयः प्राणिनो न भवन्ति, तच्च गृहीत्वा 'यतनया' रोमाण्युपरि कृत्वा परिभोक्तव्यम्। आगाढे च ग्लानत्वे यत् तैलेन म्रक्षणं तदर्थम्, यस्य वा गुदादिपार्श्वाणि घृष्टानि, यो वा साधुर्भिन्नकुष्ठी, यस्य वा अर्शांसि समुद्भूतानि तदर्थं वा निर्लोम चर्म ग्रहीतव्यमिति सङ्ग्रहगाथासमासार्थः ॥ अथैनामेव विवृणोति-

**[भा.३८३७]** संथारट्ठ गिलाणे, अभिलादीचम्म घेप्पति सलोमं ।
वुड्ढा-ऽसहु-बालाण व, अच्छुरणट्ठा वि एमेव ॥

**वृ-** ग्लानस्य संस्तारकार्थमभिलादिसम्बन्धि सलोम चर्म गृह्यते । वृद्धा-सहिष्णु-बालाना-मप्यास्तरणार्थम् 'एवमेव' सलोम चर्म ग्राह्यम् ॥ तच्च कीदृशम् ? इत्याह-

**[भा.३८३८]** कुम्भार-लोहकारेहि दिवसमलियं तु तं तसविहूणं ।
उवरिं लोमे काउं, सोत्तुं गोसे समप्पेंति ॥

**वृ-** कुम्भकार-लोहकारादिभि स्वस्वकर्म कुर्वाणैर्यद् दिवसतो 'मलितं' परिभुक्तं तत् त्रसविहीनं भवति । अतः सन्ध्यासमये तेषु उत्थितेषु तत् प्रातिहारिकं गृहीत्वा लोमान्युपरि कृत्वा रात्रौ तत्र सुप्त्वा 'गोसे' प्रभाते प्रत्यर्पयन्ति ॥

**[भा.३८३९]** अवताणगादि निल्लोम तेल्ल वम्मट्ठ घेप्पती चम्मं ।
घट्ठा व जस्स पासा, गलंतकोढेऽरिसासुं वा ॥

**वृ-** अवयाणादितैलेन वा ग्लानस्याभ्यङ्गे विधातव्ये निर्लोम चर्म ग्रहीतव्यम् । अध्वानादौ वा वर्मार्थम्, यस्य वा पार्श्वाणि घृष्टानि तस्यास्तरणार्थम्, यो वा गलत्कुष्ठः साधुस्तस्य परिधानार्थमास्तरणार्थं वा, अर्शांसि वा यस्य समुत्पन्नानि तस्योपवेशनार्थं निर्लोम चर्म गृह्यते ॥

**[भा.३८४०]** सोणिय-पूयालित्ते, दुक्खं धुवणा दिने दिने चीरे ।
कच्छुल्ले किडिभिल्ले, छप्पतिगिल्ले व निल्लोमं ॥

**वृ-** शोणितेन पूयेन वा आलिप्तस्य चीवरस्य दिने दिने धावना दुष्करा, अतः कच्छूवतः किटिभवतश्च निर्लोम चर्म कल्पते । कच्छूः-पामा, किटिभं-शरीरैकदेशभावी कुष्ठभेदः । तथा यस्य षट्पदिकाः प्राचुर्येण सम्मूर्च्छन्ति स षट्पदिकावान् निर्लोमचर्मपरिधानं गृह्णाति ॥

**[भा.३८४१]** जह कारणे निल्लोमं, तु कप्पती तह भवेज्ज इयरं पि ।
आगाढि सलोमं आदिकाउ जा पोत्थए गहणं ॥

**वृ-** यथा कारणे निर्लोम चर्म कल्पते तथा 'इतरदपि' शुषिरमपि ग्रहीतुं कल्पते । किं बहुना? आगाढे कारणे सलोम चर्म आदौ कृत्वा पश्चानुपूर्व्या तावद् नेतव्यं यावत् पुस्तकस्यापि ग्रहणं कर्त्तव्यम् ॥ एतदेव स्पष्टयति-

[भा.३८४२] भत्तपरिण्ण गिलाणे, कुसमाइ खराऽसती तु झुसिरा वि ।
अप्पडिलेहियदूसाऽसती य पच्छा तणा होंती ।।

वृ- 'भक्तपरिज्ञावतः' प्रतिपन्नानशनस्य तथा ग्लानस्यास्तरणार्थं कुशादीन्यशुषिरतृणानि गृह्यन्ते । अथ तानि 'खराणि' कर्कशानि न वा तानि प्राप्यन्ते ततः शुषिराण्यपि तृणानि ग्रहीतव्यानि। अथवा भक्तप्रत्याख्यानिनो ग्लानस्य वा सुखशयनार्थं ततः शुषिराण्यपि तृणानि ग्रहीतव्यानि । अथवा भक्तप्रत्याख्यानिनो ग्लानस्य वा सुखशयनार्थं प्रथमतः 'अप्रत्युपेक्ष्यदूष्यम्' उपधानतूल्यादि ग्रहीतव्यम्, तदभावे यथाक्रममशुषिर-शुषिराणि पश्चात् तृणानि भवन्ति, तानि प्रस्तीर्यन्त इत्यर्थः।।

[भा.३८४३] दुप्पडिलेहियदूसे, अद्धाणादी विवित्त गेण्हंति ।
घेप्पति पोत्थगपणगं, कालिय-निज्जुत्तिकोसट्ठा ।।

वृ- अध्वादी 'विविक्ताः' मुषिताः सन्तो यथोक्तमुपधिमलभमानाः 'दुष्प्रत्युपेक्ष्यदूष्याणि' कोयवि-प्रावारप्रभृतीनि गृह्णन्ति । तथा मति-मेधादिपरिहाणिं विज्ञाय कालिकश्रुतस्य उपलक्षणत्वाद् उत्कालिकश्रुतस्य वा निर्युक्तीनां चाऽऽवश्यकादिप्रतिबद्धानां दान-ग्रहणादौ कोश इव-भाण्डागारमिवेदं भविष्यतीत्येवमर्थं पुस्तकपञ्चकमपि गृह्यते ।।

*मू. (८५) नो कप्पइ निग्गंथाण वा निग्गंथीण वा कसिणाइं चम्माइं धारित्तए वा परिहरित्तए वा ।।*

वृ- अस्य सम्बन्धमाह-

[भा.३८४४] चम्मं चेवाहिकय, तस्स पमाणमिह मिस्सिए सुत्ते ।
अपमाणं पडिसिज्झति, न उ गहणं एस संबंधो ।।

वृ- इह पूर्वसूत्रे चर्मैव तावदधिकृतम् अतः 'तस्य' चर्मणः प्रमाणमिह 'मिश्रिते' निर्ग्रन्थ-निर्ग्रन्थीप्रतिबद्धे सूत्रे प्ररूप्यते, 'अप्रमाणं' प्रमाणातिरिक्तं तत् प्रतिषिध्यते, न पुनः सर्वथा चर्मणो ग्रहणम् । एष सम्बन्धः ।।

[भा.३८४५] अहवा अच्छुरणट्ठा, तं वुत्तमिदं तु पादरक्खट्ठा ।
तस्स वि य वण्णमादी, पडिसेहेती इहं सुत्ते ।।

वृ- अथवा 'तत्' पूर्वसूत्रोक्तं चर्म आस्तरणार्थमुक्तम्, 'इदं तु' प्रस्तुतसूत्रे पादरक्षार्थमुच्यते। 'तस्यापि च' चर्मणो ये वर्णादयो गुणास्तद्युक्तमिह सूत्रे प्रतिषेधयतीति ।। अनेन सम्बन्धेनाया-तस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'कृत्स्नानि' वर्ण प्रमाणादिभिः प्रतिपूर्णानि चर्माणि धारयितुं वा परिहर्तुं वेति सूत्रार्थः ।। अथ भाष्यविस्तरः-

[भा.३८४६] सगल प्पमाण वण्णे, बंधकसिणे य होइ नायव्वे ।
अकसिणमट्ठारसगं, दोसु वि पासेसु खंडाइं ।।

वृ- कृत्स्नं चतुर्धा-सकलकृत्स्नं १ प्रमाणकृत्स्नं २ वर्णकृत्स्नं ३ बन्धनकृत्स्नं ४ चेति भवति ज्ञातव्यम् । एतच्चतुर्विधमपि न कल्पते प्रतिग्रहीतुम् । परः प्राह-यद्येवं ततो यद् अकृत्स्नं चर्म तद् 'अष्टादशकम्' अष्टादशभिः खण्डैः कर्त्तव्यमित्यर्थः । तानि च खण्डानि द्वयोरपि पार्श्वयोः परिधातव्यानि इति सङ्ग्रहगाथासमासार्थः ।। अथैनामेव विवरीषुराह-

[भा.३८४७] एगपुड सकलकसिणं, दुपुडादीयं पमाणतो कसिणं ।

खल्लग खउसा वग्गुरि, कोसग जंघद्धजंघा य ॥

**वृ-** 'एकपुटम्' एकतलं चर्म सकलकृत्स्नमुच्यते। 'द्विपुटादिकं' द्वि-त्रिप्रभृतितलं तु प्रमाणतः कृत्स्नम्। तथा खल्लका द्विधा-अर्धखल्लका समस्तखल्लका च। या पादार्द्धं छादयति साऽर्धखल्लका, या पुनरुपानत् सम्पूर्णं पादं स्थगयति सा समस्तखल्लका। या तु घुण्टकं पिदधाति सा खपुसा। या पुनरङ्गुलीश्छादयित्वा पादावप्युपरि च्छादयति सा वागुरा। यत्र तु 'पाषाणादिषु प्रतिस्फलिताः पादनखाः मा भज्यन्ताम्' इति बुध्या अङ्गुल्योऽङ्गुष्ठो वा प्रक्षिप्यन्ते स कोशकः। या तु सम्पूर्णां जङ्घां पिदधाति सा जङ्घा। जङ्घार्धपिधयिनी सैवार्धजङ्घा। एतान्यपि प्रमाणकृत्स्नानि ॥

अथैतदेव स्पष्टयति-

[भा.३८४८] पायस्स जं पमाणं, तेन पमाणेन जा भवे कमणी।
मज्झम्मि तु अक्खंडा, अन्नत्थ व सकलकसिणं तु ॥

**वृ-** पादस्ययत् प्रमाणं तेन प्रमाणेन या युक्ता क्रमणिका मध्यप्रदेशेऽन्यत्र वाऽखण्डा भवति तदेतत् सकलकृत्स्नमुच्यते ॥

[भा.३८४९] दुपुडादि अद्धखल्ला, समत्तखल्ला य वग्गुरी खपुसा।
अद्धजंघ समत्ता य, पमाणकसिणं मुनेयव्वं ॥

**वृ-** 'द्विपुटादिका' द्वि-त्रिप्रभृतितलोपेता या उपानद् या वाऽर्धखल्ला समस्तखल्ला वागुरा खपुसा अर्धजङ्घा समस्तजङ्घा चेति सर्वमप्येतत् प्रमाणकृत्स्नं ज्ञातव्यम् ॥

तत्रैव कानिचिद् विषमपदानि व्याचष्टे-

[भा.३८५०] उवरिं तु अंगुलीओ, जा छाए सा तु वग्गुरी होति।
खपुसा य खलुगमेत्तं, अद्धं सव्वं च दो इयरे ॥

**वृ-** या पादयोरङ्गुलीश्छादयित्वोपर्यपि छादयति सा वागुरा भवति। खलुकः-घुण्टकः तन्मात्रं यावदाच्छादयन्ती खपुसा। 'इतरे तु द्वे' जङ्घा-ऽर्धजङ्घालक्षणे अर्धां सर्वां च जङ्घां यथास्वं छादयत इति ॥ गतं प्रमाणकृत्स्नम्, अथ वर्णकृत्स्न-बन्धनकृत्स्ने प्रतिपादयति-

[भा.३८५१] वन्नड्ढ वन्नकसिणं, तं पंचविहं तु होइ नायव्वं।
बहुबंधनकसिणं पुन, परेण जं तिण्ह बंधाणं ॥

**वृ-** यत् चर्म वर्णेन आढ्यम्-उज्ज्वलमित्यर्थः तद् वर्णकृत्स्नम्। तच्च कृष्णादिवर्णभेदात् पञ्चविधं ज्ञातव्यम्। यत्तु त्रयाणां बन्धानां 'परतः' बहुभिर्बन्धैर्बद्धं तद् बन्धनकृत्स्नमुच्यते ॥

अथैतेष्वेव प्रायश्चित्तमाह-

[भा.३८५२] लहुओ लहुगा दुपुडादिएसु गुरुगा य खल्लगादीसु।
आणादिणो य दोसा, विराधना संजमा-ऽऽदाए ॥

**वृ-** सकलकृत्स्नं गृह्णतां लघुमासः। द्विपुटादिषु चत्वारो लघवः। 'खल्लकादिषु' समस्ता-ऽर्धखल्लकाखपुसा-वागुरा-जङ्घा-ऽर्धजङ्घासु चत्वारो गुरुकाः। आज्ञादयश्च दोषाः, विराधना च संयमा-ऽऽत्मविषया भवति। तत्र क्रमणिकादिभि पिनद्धाभिः कीटिकादिव्यपरोपणात् संयमविराधना, आत्मविराधना तु बन्धे छिन्ने सति प्रस्खलनं भवेत् प्रमत्तं वा देवता छलयेत् ॥

[भा.३८५३] अंगुलिकोसे पनगं, सगले सुक्के य खल्लगे लहुओ।

बंधण वन्न पमाणे, लहुगा तह पूरपुन्ने य ॥

वृ- अङ्गुलिकोशे अङ्गुष्ठकोशके च पञ्चकम् । सकलकृत्स्ने 'शुष्के च' पूरपूरणविरहिते खल्लके मासलघु । बन्धनकृत्स्ने वर्णकृत्स्ने 'प्रमाणकृत्स्ने च' द्विपुटादिरूपे वूरपूर्णे च खल्लके चतुर्लघवः॥ अर्धखल्लकादिषु यत् पूर्वं चतुर्गुरुकमुक्तं तदेव विशेषयन्नाह-

[भा.३८५४]　अद्धे समत्त खल्लग, वग्गुरि खपुसा य अद्धजंघा य ।
गुरुगा दोहि विसिट्ठा, वग्गुरिए अन्नतरएणं ॥

वृ- 'अर्द्धखल्लकायाम्' उपानहि यच्चतुर्गुरु तत् तपसा कालेन च लघुकम् । समस्तखल्लकायां कालगुरुकम् । वागुरिकायाम् 'अन्यतरेण' तपसा कालेन वा गुरुकम् । खपुसायां तपोगुरुकम् । अर्धजङ्घायां समस्तजङ्घायां च तपसा कालेन च गुरुकम् ॥ किञ्च-

[भा.३८५५]　जत्तियमित्ता वारा, तु बंधते व जति वारा ।
सट्ठाणं तति वारे, होति विवड्ढी य पच्छित्ते ॥

वृ- यावन्मात्रान् वारान् अङ्गुलीकोश-सकलकृत्स्नादिकं बध्नाति, मुञ्चति वा 'यति' यावतो वारान् तति तावन्तो वाराः स्वस्थानं मन्तव्यम् । 'स्वस्थानं नाम' यद् यत्र पञ्चकादिचतुर्गुरुकान्तं प्रायश्चित्तमुक्तम् । तथाऽऽज्ञाभङ्गे चतुर्गुरु, अनवस्थायां चतुर्लघु, मिथ्यात्वे चतुर्लघु, आत्मविराधनायां चतुर्गुरु, संयमविराधनायां कायनिष्पन्नम्, एवमाज्ञादिभि पदैरभीक्ष्णसेवानिष्पन्ना वा प्रायश्चित्तस्य विवृद्धिर्भवति ॥ अथोपानहोर्दोषप्रदर्शनार्थमिदमाह-

[भा.३८५६]　गव्वो निम्मद्दवता, निरवेक्खो निद्दतो निरंतरता ।
भूताणं उवघाओ, कसिणे चम्मम्मि छद्दोसा ॥

वृ- उपानहोः पिनद्धयोर्गर्वो निर्मार्दवता च भवेत्, जीवेषु निरपेक्षो निर्दयश्चासौ भवति, 'निरन्तरता' निरन्तरभूमिस्पर्शिता, 'भूतानां तु' प्राणिनामुपघातश्चोपजायते । एवं कृत्स्ने चर्मणि षड् दोषा भवन्तीति द्वारगाथासङ्क्षेपार्थः ॥ साम्प्रतमेनामेव प्रतिपदं विवृणोति-

[भा.३८५७]　आसगता हत्थिगतो, गव्विज्जइ भूमितो य कमनिट्ठो ।
पादो उ सभाउक्को, कमणीउ खरा अवि य भारो ॥

वृ 'अश्वगताद्' अश्वारूढाद् हस्तिगतः पुरुषो यथा गर्वायते एवं भूमिगतात् क्रमणिकावान् गर्वं करोति-अहो ! अहं सोपानत्को व्रजामीति । तथा पादः स्वभावेनैव समार्दवस्ततः स न तथा जीवोपघातं करोति यथा क्रमणिकाः 'खराः' कर्कस्पर्शा जीवोपघातं कुर्वन्ति । अपि च भारस्तासां महान् भवति, ततस्तदाक्रान्ता बहवो जीवा विनाशमश्नुवते ॥ निरपेक्षद्वारमाह--

[भा.३८५८]　कंटाई देहंतो, जीवे वि हु सो तहेव देहिज्जा ।
अत्थि महं ति य कमणी, नावेक्खइ कंटएण जिए ॥

वृ- अनुपानत्को गच्छन् कण्टकादीन् मार्गे प्रेक्षते, ततस्तान् प्रेक्षमाणो जीवानपि तथैवासौ प्रेक्षेत । सोपानत्कस्तु गच्छन् विद्येते मम क्रमणिके इति कृत्वा निरपायत्वादात्मनो न कण्टकादिकमपेक्षते, ततश्चासौ जीवेष्वपि निरपेक्षो भवति ॥ अथ निर्दयद्वारमाह–

[भा.३८५९]　पुव्विं अदया भूएसु होति बंधति कमेसु तो कमणी ।
जायति हु तदब्भासा, सुदयालुस्सावि निद्दयया ॥

वृ- पूर्वं तावद् 'आदया' निर्दयत्वं भूतेषु मनसि सञ्जातं भवति, ततः क्रमयोः क्रमणिके बध्नाति। तदभ्यासाञ्च सुदयालोरपि प्रायो निर्दयतैव भवति ।। निरन्तरद्वारमाह-

[भा.३८६०] अवि यं ऽवखुअपादेण पेल्लितो अंतरंगुलगतो वा ।
मुच्चेज्ज कुलिंगादी, न य कमणीपेल्लितो जियती ।।

वृ- कुशब्दस्येषदर्थवाचकतया असम्पूर्णानि लिङ्गानि-इन्द्रियाणि यस्यासौ कुलिङ्गी-विकलेन्द्रियः स आदिशब्दाद् मण्डूक्यादिश्च अनुपानत्कस्य पादेन प्रेरितः, 'अपि' इति सम्भावनायाम्, सम्भाव्यतेऽयमर्थ-यदाप्रकुब्दं पादतलमध्यं तत्र तथा अन्तराङ्गुलम्-अङ्गुलीनामङ्गुष्ठस्य चापान्तरालं तत्र वा गतः सन् 'मुच्येत' न म्रियेत, सोपानत्कस्य तु निरन्तरभूमिस्पर्शिनीभि क्रमणीभि प्रेरितः-आक्रान्तो न जीवति, अवश्यं मरणमाप्नोतीत्यर्थः ।। भूतोपघातद्वारमाह-

[भा.३८६१] किह भूताणुवघातो, न होहिती पगतिपेलवतणूणं ।
सभराहि पेल्लियाणं, कक्खडफासाहि कमणीहिं ।।

वृ- 'कथं' केन प्रकारेण 'भूतानां' प्राणिनां प्रकृत्या-स्वभावेनैव पेलवतनूनाम्-अदृढशरीराणां 'सभारामि' पुरुषभाराक्रान्ताभि कर्कशस्पर्शाभिः क्रमणीभिः प्रेरितानामुपघातो न भविष्यति ? भविष्यत्येवेत्यर्थः । यत एते दोषा अतः क्रमणिका न परिधातव्याः । कारणे तु प्राप्ते परिदध्यादपि।। किं पुनस्तत् कारणम् ? इत्याह-

[भा.३८६२] विह अतराऽसहु संभम, कोड्डाऽरिस चक्खुदुब्बले बाले ।
अज्जा कारणजाते, कसिणग्गहणं अनुन्नायं ।।

वृ- विहं-अध्वा, अतरः-ग्लानः, असहिष्णुर्नाम-राजादिदीक्षितः सुकुमारपादः, सम्भ्रमः-चौर-श्वापदादिसंक्षोभः, कुष्ठरोगी अर्शोरोगी चक्षुषा वा दुर्बलः कश्चिद् भवति, बालो वा यदि यत्र तत्र पादौ निक्षिपति, आर्या वा अध्वानं नीयन्ते, कारणजातं वा-कुल-गण-सङ्घविषयमुपस्थितम्। एतेषु कृत्स्नस्य चर्मणो ग्रहणमनुज्ञातमिति द्वारगाथासमासार्थः ।। अथैनामेव विवृणोति-

[भा.३८६३] कंटा-ऽहि-सीयरक्खट्ठता विहे खबुसमादि जा गहणं ।
ओसहपान गिलाणे, अहुणुट्ठियभेसयट्ठा वा ।।

वृ- 'विहे' अध्वनि प्रतिपद्यमाने कण्टकस्य अहेः शीतस्य च रक्षार्थमङ्गुलिकोशकं खल्लकादि वा गृह्णन्ति । किं बहुना ? खपुसामादी कृत्वा यावदर्धजङ्घा-समस्तजङ्घयोरपि ग्रहणम् । तथा ग्लान औषधपानं कृत्वा वैद्योपदेशेन पृथिव्यां पादौ न स्थापयति । अधुनोत्थितो वा ग्लानः क्रमयोः क्रमणिके आविध्यति, मा शीतानुभावेन भक्तं न जरिष्यतीति कृत्वा । ग्लानस्य वा भेषजार्थं त्वरितं ग्रामान्तरं गन्तव्यम् ततः क्रमणिकाः पिनद्धव्याः ।।

[भा.३८६४] अरिसिल्लस्स व अरिसा, मा खुब्भे तेन बंधते कमणी ।
असहुमवंताहरणं, पादो घट्ठो तु गिरिदेसे ।।

वृ- अर्शोवतः पादतलदौर्बल्यादर्शांसि मा क्षुभ्येरन्निति कृत्वा क्रमणिके असौ बध्नाति । असहिष्णुर्नाम-मार्गे गच्छन्नुपानद्भिर्विना गन्तुं न शक्नोति यदि गच्छति ततः पादाभ्यां रुधिरं परिगलति; अत्र अवन्तीसुकुमारोदाहरणं भवति, तच्चाऽऽवश्यकाद् विज्ञेयम्; स क्रमणिके बध्नीयात् । उदका-ऽग्निस्तेन-श्वापदादौ वा सम्भ्रमे क्रमणिकाः परिभोक्तव्याः । गिरिदेशे वा

पर्यटतः कस्यापि पादतलं घृष्टं तत उपानहौ पिनह्य पर्यटति ॥

[भा.३८६५] कुट्ठिस्स सक्करादीहि वा वि भिन्नो कमो मधूला वा ।
बालो असंफरो पुन, अज्जा विहि दोस पासादी ॥

वृ- कुष्ठिनः सम्बन्धी शोणित-पूयेन 'भिन्नः' स्फटितः क्रमः शर्करा-कण्टकादिभिराक्रान्तो महतीं पीडामुपजनयति, 'मधूला वा' पादगण्डं कस्यापि समजनि ततः क्रमणिके बध्नाति । बालो वा कश्चिद् 'असंस्फरः' असंवृतो यत्र तत्र पादं मुञ्चन् कण्टकादिभिरुपद्रूयेत्, अतोऽसौ क्रमणिके परिधाप्यते । आर्या वा 'विधम्' अध्वानं नेतव्याः, तत्र च "दोस"त्ति चौरादिभयम्, ततो वृषभाः क्रमणिकाः पिनह्य पन्थानं मुक्त्वा पार्श्वस्थिता गच्छन्ति, आदिशब्दात् सर्वाणि वा तत्रोत्पथेन व्रजन्ति । यो वा चक्षुषा दुर्बलः स वैद्योपदेशेनोपानहौ पिनह्यति, यतः पादयोरभ्यङ्गनोपानद्बन्धनादिपरिकर्म यत् क्रियते तत् चक्षुष उपकाराय परिणमते । यत उक्तम्-

दन्तानामञ्जनं श्रेष्ठं, कर्णानां दन्तधावनम् ।
शिरोऽभ्यङ्गश्च पादानां, पादाभ्यङ्गश्च चक्षुषोः ॥

कारणजातद्वारमाह-

[भा.३८६६] कुलमाइकज्ज दंडिय, पासादी तुरियधावणट्ठा वा ।
कारणजाते वऽन्ने, सागारमसागरे जतना ॥

वृ- कुलादिषु-कुल-गण-सङ्घविषयेषु कार्येषु दण्डिकावलगनार्थम्, पार्श्वस्थितैः आदिशब्दात् पुरः पृष्ठतो वा गच्छद्भिः, त्वरितं वा धावनार्थम्, कारणजाते वा 'अन्यस्मिन्' आगाढे समुत्पन्ने उपानहः परिभोक्तव्याः । तत्र च सागारिका-ऽसागारिकविषया यतना, यत्र सागारिकदोषो नास्ति तत्र नास्ति यतनाक्रमः, यत्र पुनः सागारिका उड्डाहं कुर्वन्ति तत्र ग्रामादिषु क्रमणिका अपनीय प्रविशन्तीति भावः ॥ एवमध्वादिषु कारणेषु कृत्स्नचर्मणो ग्रहणे प्राप्ते विधिमाह-

[भा.३८६७] पंचविहम्मि वि कसिणे, किण्हग्गहणं तु पढमतो कुज्जा ।
किण्हम्मि असंतम्मि, विवन्नकसिणं तहिं कुज्जा ॥

वृ- पञ्चविधे वर्णकृत्स्ने प्रथमतः कृष्णवर्णकृत्स्नग्रहणं कुर्यात् । ततः कृष्णे वर्णकृत्स्ने 'असति' अलभ्यमाने लोहितादिवर्णकृत्स्नमपि गृह्णीयात् । तच्च कृत्स्नमूष-तैलादिभिः 'विवर्णं' विरूपवर्णं कुर्याद् यथा लोको नोड्डाहं कुरुते आत्मनो वा न तत्र रागो भवति ॥

[भा.३८६८] किण्हं पि गेण्हमाणो, झुसिरग्गहणं तु वज्जए साहू ।
बहुबंधनकसिणं पुन, वज्जेयव्वं पयत्तेणं ॥

वृ- कृष्णवर्णमपि गृह्णन् शुषिरग्रहणं साधुः प्रयत्नतो वर्जयेत् । अत्र पाठान्तरम्-"कसिणं पि गिण्हमाणो"त्ति, 'कृत्स्नं' सकलकृत्स्नं प्रमाणकृत्स्नं वा द्वितीयपदे गृह्णन् शुषिरग्रहणं साधुर्वर्जयेत् । यत्तु बहुबन्धनकृत्स्नं तत् प्रयत्नतो वर्जयितव्यम् ॥ अथ किं तद् बन्धनम् ? इत्याशङ्क्याह-

[भा.३८६९] दोरेहि व वज्झेहि व, दुविहं तिविहं व बंधणं तस्स ।
अनुमोदन कारावण, पुव्वकतम्मि अधीकारो ॥

वृ- दवरकैर्वा वध्रैर्वा द्विविधं त्रिविधं वा बन्धनं तस्य चर्मणो भवति, द्वौ वा त्रयो वा बन्धा दातव्या इत्यर्थः । एवंविधं बन्धनकृत्स्नमनुज्ञातम्, न चतुरादिबहुबन्धनबद्धम् । तथा कृत्स्नमकृत्स्नं

वा चर्म साधुना स्वयं न कर्त्तव्यम्, अन्येन न कारापयितव्यम्, अन्यस्य कुर्वतो नानुमोदना कर्त्तव्या, किन्तु यत् पूर्वमेव गृहस्थैर्यथाभावेन कृतं तस्मिन् 'अधिकारः' प्रयोजनम्, तस्य ग्रहणं कर्त्तव्यमिति भावः ॥ अथ द्वौ त्रयो वा बन्धाः कुत्र भवन्ति ? इति उच्यते–

[भा.३८७०] खुलए एगो बंधो, एगो पंचंगुलस्स दोन्नेते ।
खुलए एगो अंगुट्ठ बितिय चउरंगुले ततितो ॥

वृ- 'खुलके' घुण्टके एको वध्रबन्धो भवति, 'एकस्तु' द्वितीयो बन्धः 'पञ्चाङ्गुलस्य' चतसृणामङ्गुलीनामङ्गुष्ठस्य चेत्यर्थः, एतौ द्वौ बन्धौ मन्तव्यौ । यदा तु त्रयो बन्धा भवन्ति तदा खुलके एकः अङ्गुष्ठे द्वितीयः चतसृणामङ्गुलीनां तृतीयः ॥ अथ स्वयङ्करणादिषु प्रायश्चित्तमाह-

[भा.३८७१] सयकरणे चउलहुगा, परकरणे मासियं अनुग्घायं ।
अनुमोदने वि लहुओ, तत्थ वि आणादिणो दोसा ॥

वृ- स्वयं यदि चर्म करोति तदा चतुर्लघवः । अथ परेण कारयति तदा मासिकमनुद्धातम्, मासगुरुकमित्यर्थः । अनुमोदनायां मासलघु । तत्रापि स्वयङ्करणादावाज्ञादयो । तत्रापि स्वयङ्करणादावाज्ञादयो दोषा उड्डाहश्च भवति, तथाहि-तं संयतं स्वयमेव चर्म कुर्वाणं दृष्ट्वा लोको ब्रवीति-अहो ! चर्मकरोऽयमिति । अथ पूर्वकृतं न लभ्यते ततोऽनुमोदनया गृह्णीयात् । कथम्? इति चेद् उच्यते-यदि कोऽपि ब्रूयात्-अहं ते उपानहौ करोमि ? ततः प्रतिशृणुयात् तूष्णीको वा तिष्ठेत् । अथानुमोदनया न प्राप्यते ततोऽन्येन कारयेत् । एवमप्यलाभे आत्मनाऽपि यतनया कुर्यात् ॥

मू. (८६) *कप्पइ निग्गंथाण वा निग्गंथीण वा अकसिणाइं चम्माइं धारित्तए वा परिहरित्तए वा ॥*

वृ- कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा (अकृत्स्नानि) चर्माणि धारयितुं वा परिहर्तुं वा इति सूत्रार्थः ॥ अथ भाष्यम्--

[भा.३८७२] अकसिणचम्मग्गहणे, लहुओ मासो उ दोस आणादी ।
बितियपद घेप्पमाणे, अट्ठारस जाव उक्कोसा ॥

वृ- यद्यपि सूत्रेऽनुज्ञातं तथापि न कल्पते अकृत्स्नचर्म प्रतिग्रहीतुम् । यदि गृह्णाति ततो लघुको मासः प्रायश्चित्तम्, आज्ञादयश्च दोषाः । 'द्वितीयपदे तु' पूर्वोक्तैरध्वादिभि कारणैरकृत्स्ने गृह्यमाणे विधिरभिधीयते । तत्र नोदकः प्राह-यद्यकृत्स्नं ग्रहीतुं कल्पते ततो द्वयोरुपानहोरुत्कर्षतोऽष्टादश खण्डानि यावत् कर्त्तव्यानि ॥ इदमेव व्याचष्टे-

[भा.३८७३] अकसिणमट्ठारसगं, एगपुड विवन्न एगबंधं च ।
तं कारणम्मि कप्पति, निक्कारण धारणे लहुओ ॥

वृ- अकृत्स्नं नाम अष्टादशकम्' अष्टादशभिः खण्डैः कृतम् १ तदपि 'एकपुटम्' एकतलं २ 'विवर्णं' न वर्णाढ्यं ३ 'एकबन्धं च' न व्यादिबन्धनोपेतम् ३, एभिश्चतुर्भि पदैर्यथाक्रमं सकलप्रमाण-वर्ण-बन्धनैः कृत्स्नता परिहृता । तदेवंविधमकृत्स्नं चर्म कारणे धारयितुं कल्पते । अथ निष्कारणे धारयति ततो लघुमासः । एषा पुरातना गाथा ॥ अथैना व्याख्याति-

[भा.३८७४] जइ अकसिणस्स गहणं, भाए काउं कमेण अट्ठदस ।

एगपुड-विवन्नेहि य, तहिं तहिं बंधते कज्जे ॥

**वृ-** यद्यकृत्स्नस्य चर्मणो ग्रहणं कर्त्तव्यं तत उपानहावष्टादश भागान् वक्ष्यमाणक्रमेण कृत्वा तैः खण्डैरेकपुटैर्विवर्णै चशब्दादेकबन्धैश्च यत्र यत्र पादप्रदेशे आबाधा तत्र तत्र कार्ये समुत्पन्ने बध्नीयात् ॥ कथं पुनरष्टादश खण्डानि भवन्ति ? इत्युच्यते–

**[भा.३८७५]** पंचंगुल पत्तेयं, अंगुट्ठमज्झे य छट्ठ खण्डं तु ।
सत्तममग्गतलम्मी, मज्झऽट्ठम पण्हिया नवमं ॥

**वृ-** इहैक्य पादस्य पञ्चानामङ्गुलीनां बन्धनाय प्रत्येकमेकैकं खण्डं कर्त्तव्यम्, अङ्गुष्ठस्य चाधः षष्ठं खण्डम्, अग्रतले सप्तमम्, मध्यतलेऽष्टमम्, पार्ष्णिकायां नवमम्, एवं द्वितीयस्याप्युपानहो नव खण्डानि, सर्वाण्यप्येवमष्टादश खण्डानि भवन्ति ॥ एवं परेणोक्ते सति सूरिराह-

**[भा.३८७६]** एवइयाणं गहणे, मासो मुञ्चंति होति पलिमंथो ।
बितियपदे घेप्पमाणे, दो खंडा मज्झपडिबंधा ॥

**वृ-** एतावतां खण्डानां ग्रहणे मासलघु प्रायश्चित्तम्, असामाचारीनिष्पन्नमित्यर्थः । मुच्यमानेषु चैतावत्सु खण्डेषु महान् सूत्रा-ऽर्थयोः परिमन्थो भवति । आह-यद्येवं ततः कियन्ति खण्डानि क्रियन्ते ? इत्याह-द्वितीयपदे यदा चर्म गृह्यते तदा मध्यप्रतिबद्धे द्वे खण्डे कर्त्तव्ये, मध्यभागात् त्रोटयित्वा खण्डद्वयं विधाय मध्ये वर्ध्रादिना बन्धनीयमित्यर्थः । अत्र पूर्वार्द्धस्येदं पाठान्तरम्- "मुयंते पलिमंथो, जत्तियमित्तं तु तत्तिए गहणं ।" अष्टादश खण्डानि मुञ्चति साधोर्महान् पलिमन्थः, ततो यावन्मात्रपरिमन्थाय भवति तावन्मात्रं ग्रहीतव्यम् । उत्तरार्द्धं प्राग्वत् ॥

अथाष्टादशानां खण्डानां करणे कीदृशः परिमन्थो भवति ? इत्याह–

**[भा.३८७७]** पडिलेहा पलिमंथो, नदिमादुदए य मुंच-बंधंते ।
सत्थफिडनेन तेना, अंतरवेधो य डंकणता ॥

**वृ-** यावदष्टादश खण्डानि द्विसन्ध्यं प्रत्युपेक्षते तावत् सूत्रार्थयोः परिमन्थो भवति । नद्याद्युदकमवतितीर्षुश्च यावदष्टादश खण्डानि मुञ्चति उत्तीर्णश्च यावत् तानि भूयोऽपि बध्नाति तावत् सार्थात् स्फिटति, स्फिटितश्च स्तेनानां गम्यो भवति । बहूनां खण्डानामन्तरेषु च कण्टकैर्विध्येत । बहुबन्धघर्षेण वा पादयोर्डङ्को भवेत् । यत एवमतः पूर्वोक्तनीत्या खण्डद्वयं विधेयम्॥

कथं पुनस्तद् बन्धनीयम् ? इत्याह–

**[भा.३८७८]** तज्जायमतज्जायं, दुविहं व बंधनं तस्स ।
तज्जायम्मि वि लहुओ, तत्थवि आणादिणो दोसा ॥

**वृ-** 'तस्य' चर्मखण्डद्वयस्य तज्जातं वा बन्धनं भवति अतज्जातं वा बन्धनं भवति । तज्जातं नाम तस्मिन्-चर्मणि जातम् वर्ध्रादिबन्धनमित्यर्थः, तद्विपरीतं दवरकादिकमतज्जातम् । एतच्च द्विविधं त्रिविधं वा भवति, द्वौ वा त्रयो वा बन्धा दातव्या इति भावः । अत्र प्रथममतज्जातेन दवरकादिना बन्धनीयम् । यदि तज्जातेन वर्ध्रादिना बध्नाति ततो मासलघु, तत्राप्याज्ञादयो दोषा भवन्ति ॥

*-**मू.** (८७) नो कप्पइ निग्गंथाण वा निग्गंथीण वा कसिणाइं वत्थाइं धारित्तएवा परिहरित्तए वा । कप्पइ निग्गंथाण वा निग्गंथीण वा अकसिणाइं वत्थाइं धारित्तए वापरिहरित्तए वा ॥*

[भा.३८७९] पडिसिद्धं खलु कसिणं, चम्मं वत्थकसिणं पि नेच्छामो ।
अववादियं तु चम्मं, न वत्थमिति जोगनाणत्तं ॥

वृ-प्रतिषिद्धं खल्वनन्तरसूत्रे चर्मकृत्स्नम्, यथा च तत्र कल्पते तथा वस्त्रकृत्स्नमपि नेच्छामः प्रतिग्रहीतुम् । यद्वा पूर्वसूत्रे चर्म आपवादिकमुक्तम्, इदं तु वस्त्र नापवादिकं किन्तु सदैव साधुभिः परिभुज्यमानत्वेनौत्सर्गिकम्, अत इदं प्रतिपक्षतया सूत्रमारभ्यते इति योगस्य-सम्बन्धस्य नानात्वं-प्रकारान्तरतेत्यर्थः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-''नो कप्पइ''त्ति आर्षत्वादेकवचनम्, नो कल्पन्ते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'कृत्स्नानि' सकलकृत्स्नादिरूपाणि वस्त्राणि 'धारयितुं वा' परिग्रहे धर्तुं 'परिहर्तुं वा' परिभोक्तुम्, अकृत्स्नानि तु कल्पन्त इति सूत्रसङ्क्षेपार्थः ॥

अथ निर्युक्ति-भाष्यविस्तरः-

[भा.३८८०] कसिणस्स उ वत्थस्सा, निक्खेवो छव्विहो तु कातव्वो ।
नामं ठवणा दविए, खेत्ते काले य भावे य ॥

वृ- कृत्स्नस्य वस्त्रस्य निक्षेपः षड्विधः कर्तव्यः । तद्यथा-नामकृत्स्नं १ स्थापनाकृत्स्नं २ द्रव्यकृत्स्नं ३ क्षेत्रकृत्स्नं ४ भावकृत्स्नं ६ चेति । तत्र नाम-स्थापने गतार्थे ॥ द्रव्यकृत्स्नमाह-

[भा.३८८१] दुविहं तु दव्वकसिणं, सकलकसिणं पमाणकसिणं च ।
एतेसिं दोण्हं पी, पत्तेय परूवणं वोच्छं ॥

वृ- 'द्विविधं' द्विप्रकारं द्रव्यकृत्स्नम्, तद्यथा-सकलकृत्स्नं प्रमाणकृत्स्नं चेति । एतयोर्द्वयोरपि 'प्रत्येकं' पृथक् प्ररूपणां वक्ष्ये ॥ प्रतिज्ञातमेव निर्वाहयति-

[भा.३८८२] घन मसिणं निरवहयं, जं वत्थं लब्भते सदसियागं ।
एतं तु सकलकसिणं, जहन्नगं मज्झिमुक्कोसं ॥

वृ- 'घनं' तन्तुभिः सान्द्रं 'मसृणं' सुकुमारस्पर्शं 'निरुपहतम्' अञ्जन-खञ्जनादिदोषरहितम्, एवंविधं यद् वस्त्र सदशाकं लभ्यते एतत् सकलकृत्स्नमुच्यते । तच्च जघन्यं मध्यममुत्कृष्टं वा ज्ञातव्यम् । जघन्यं मुखपोतिकादि, मध्यमं पटकादि, उत्कृष्टं कल्पादि ॥

[भा.३८८३] वित्थारा-ऽऽयामेणं, जं वत्थं लब्भए समतिरेगं ।
एयं पमाणकसिणं, जहन्नयं मज्झिमुक्कोसं ॥

वृ- विस्तारश्च-पृथुत्वं आयामश्च-दैर्घ्यं विस्तारा-ऽऽयामम्, द्वन्द्वैकवद्भावः, तेन, यद् वस्त्र यथोक्तप्रमाणतः समतिरिक्तं लभ्यते एतत् प्रमाणकृत्स्नं भण्यते । तच्च जघन्य-मध्यमोत्कृष्टभेदात् त्रिविधं प्राग्वद् द्रष्टव्यम् ॥ क्षेत्र कृत्स्नमाह-

[भा.३८८४] जं वत्थ जम्मि देसम्मि दुल्लहं अच्चियं व जं जत्थ ।
तं खित्तजुयं कसिणं, जहन्नयं मज्झिमुक्कोसं ॥

वृ- यद् वस्त्र यस्मिन् देशे दुर्लभम्, यत्र वा यद् 'अर्चितं' सुमहार्धम्, यथा-पूर्वदिशजं वस्त्र लाटविषयं प्राप्य महार्ध्यम्, तत् क्षेत्रयुतं कृत्स्नमुच्यते, क्षेत्रकृत्स्नमित्यर्थः । तदपि जघन्यमध्य-मोत्कृष्टभेदात् त्रिविधम् ॥ कालकृत्स्नमाह-

[भा.३८८५] जं वत्थ जम्मि कालम्मि अग्घितं दुल्लभं व जं जत्थ ।

तं कालजुतं कसिणं, जहन्नयं मज्झिमुक्कोसं ॥

वृ-यद् वस्त्र यस्मिन् काले 'अर्घितं' बहुमूल्यम्, यद्य यत्र दुर्लभम्, यथा-ग्रीष्मे काषायिकादि, शिशिरे प्रावारादि, वर्षासु कुङ्कुमखचितादि, तदेतत् कालकृत्स्नम् । एतदपि जघन्यमध्यमोत्कृष्टभेदात् त्रिविधम् ॥ भावकृत्स्नमाह–

[भा.३८८६] दुविहं च भावकसिणं, वन्नजुतं चेव होति मोल्लजुयं ।
वन्नजुयं पंचविहं, तिविहं पुन होइ मोल्लजुतं ॥

वृ-द्विविधं च भावकृत्स्नम्, तद्यथा-वर्णयुतं मूल्ययुतं च, वर्णतो मूल्यतश्चेत्यर्थः । तत्र वर्णयुतं 'पञ्चविधं' कृष्णादिवर्णभेदात् पञ्चप्रकारम् । मूल्ययुतं पुनः 'त्रिविधं' जघन्यादिभेदात् त्रिप्रकारम् ॥ इदमेव स्पष्टयति–

[भा.३८८७] पंचण्हं वन्नाणं, अन्नतराएण जं तु वण्णड्ढं ।
तं वण्णजुयं कसिणं, जहन्नयं मज्झिमुक्कोसं ॥

वृ-'पञ्चानां' कृष्णादीनां वर्णानामन्यतरेण वर्णेन यद् आढ्यं-समृद्धं तदेतद् वर्णयुतं कृत्स्नमुच्यते। इदमपि जघन्यं मध्यमुत्कृष्टं चेति । मूल्ययुतं सभेदमप्युपरि वक्ष्यते ॥

अथानन्तरोक्तकृत्स्नेषु प्रायश्चित्तमाह-

[भा.३८८८] चाउम्मासुक्कोसे, मासो मज्झे य पंच य जहन्ने ।
तिविहम्मि वि वत्थम्मि, तिविधा आरोवणा भणिया ॥

वृ-'उत्कृष्टे' कल्पादौ कृत्स्ने चतुर्लघवः । 'मध्यमे' पटलकादौ लघुमासः । 'जघन्ये' मुखवस्त्रिकादौ पञ्चरात्रिन्दिवानि । एवं त्रिविधेऽपि कृत्स्नवस्त्र यथाक्रमं त्रिविधा आरोपणा भणिता ॥

[भा.३८८९] दव्वाइतिविहकसिणे, एसा आरोवणा भवे तिविहा ।
एसेव वन्नकसिणे, चउरो लहुगा व तिविधे वि ॥

वृ-एषा च त्रिविधाऽप्यारोपणा द्रव्यादौ त्रिविधकृत्स्ने भवति, द्रव्यकृत्स्ने क्षेत्रकृत्स्ने कालकृत्स्ने चेत्यर्थः । एषैव च वर्णकृत्स्नेऽपि मन्तव्या । अथवा वर्णकृत्स्ने जघन्यादिभेदात् त्रिविधेऽपि चतुर्लघुकमेव । नवरं तपः-कालविशेषोऽत्र क्रियते-उत्कृष्टे यत् चतुर्लघु तत् तपसा कालेन च गुरुकम्, मध्यमे तदेव तपोगुरुकम्, जघन्य कालगुरुकम्; यद्वा उत्कृष्टे द्वाभ्यां गुरुकम्, मध्यमेऽन्यतरगुरुकम्, जघन्ये द्वाभ्यामपि लघुकम् ॥ अथ मूल्ययुतं व्याख्यानयति–

[भा.३८९०] मुल्लजुयं पि य तिविहं, जहन्नगं मज्झिमं च उक्कोसं ।
जहन्नेणऽट्ठारसगं, सतसाहस्सं च उक्कोसं ॥

वृ-मूल्ययुतमपि कृत्स्नं त्रिविधम्-जघन्यं मध्यममुत्कृष्टं च । यस्य रूपकाणामष्टादशकं मूल्यं तद् जघन्यम्, शतसहस्ररूपकमूल्यमुत्कृष्टम्, शेषमष्टादशकादूर्ध्वं शतसहस्रादर्वाग्मूल्यलभ्यं सर्वमपि मध्यमम् ॥ अथ कतमेन रूपकेणेदं प्रमाणं निरूप्यते ? इत्याह–

[भा.३८९१] दो साभरगा दीविच्चगा तु सो उत्तरापथे एक्को ।
दो उत्तरापहा पुन, पाडलिपुत्तो हवति एक्को ॥

वृ- 'द्वीपं नाम' सुराष्ट्राया दक्षिणस्यां दिशि समुद्रमवगाह्य यद् वर्त्तते तदीयौ द्वौ 'साभरकौ' रूपकौ स उत्तरापथे एको रूपको भवति । द्वौ च उत्तरापथरूपकौ पाटलिपुत्रक एको रूपको

भवति ॥ अथवा–

भा. [३८९२] दो दक्खिणावहा तु, कंचीए नेलओ स दुगुणो य ।
एगो कुसुमनगरगो, तेन पमाणं इमं होति ॥

वृ- दक्षिणापथौ द्वौ रूपकौ काञ्चीपुर्या द्रविडविषयप्रतिबद्धाया एकः 'नेलकः' रूपको भवति। 'सः' काञ्चीपुरीरूपको द्विगुणितः सन् कुसुमनगरसत्क एको रूपको भवति । कुसुमपुरं पाटलिपुत्रमभिधीयते । 'तेन च' रूपकेणेदमनन्तरोक्तमष्टादशकादिप्रमाणं प्रतिपत्तव्यं भवति॥ अथ मूल्यवृध्या प्रायश्चित्तवृद्धिमुपदर्शयति–

[भा.३८९३] अट्ठारस वीसा या, अगुणापन्ना य पंच य सयाइं ।
एगूनगं सहस्सं, दस पन्नासं सतसहस्सं ॥

[भा.३८९४] चत्तारि छच्च लहु गुरु, छेदो मूलं च होइ बोद्धव्वं ।
अणवट्ठप्पो य तहा, पाति पारंचियं ठाणं ॥

वृ- अष्टादशरूपकमूल्यं वस्त्रं गृह्णाति चत्वारो लघवः । विंशतिरूपकमूल्ये चत्वारो गुरवः । एकोनपञ्चाशन्मूल्ये षड्लघवः । पञ्चशतमूल्ये षड्गुरवः । एकोनसहस्रमूल्ये छेदः । दशसहस्रमूल्ये मूलम् । पञ्चाशत्सहस्रमूल्येऽनवस्थाप्यम् । शतसहस्रमूल्ये पाराञ्चिकं स्थानं प्राप्नोति ॥

प्रकारान्तरेणात्रैव प्रायश्चित्तमाह–

[भा.३८९५] अट्ठारस वीसा या, सयमड्ढाइज्ज पंच य सयाइं ।
सहस्सं च दससहस्सा, पन्नास तधा सतसहस्सं ॥

[भा.३८९६] लहुगो लहुगा गुरुगा, छम्मासा होंति लहुग गुरुगा य ।
छेदो मूलं च तहा, अणवट्ठप्पो य पारंची ॥

वृ- अष्टादशरूपकमूल्ये वस्त्रं गृह्यमाणे लघुमासः । विंशतिमूल्ये चतुर्लघवः । शतमूल्ये चतुर्गुरवः। अर्धतृतीयशतमूल्ये षड्लघवः । पञ्चशतमूल्ये षड्गुरवः । सहस्रमूल्ये छेदः । दशसहस्रमूल्ये मूलम्। पञ्चाशत्सहस्रमूल्येऽनवस्थाप्यम् । शतसहस्रमूल्ये पाराञ्चिकम् ॥ अथवा–

[भा.३८९७] अट्ठारस वीसा या, पन्नास तधा सयं सहस्सं च ।
पन्नासं च सहस्सा, तत्तो य भवे सयसहस्सं ॥

[भा.३८९८] चउगुरुग छच्च लहु गुरु, छेदो मूलं च होंति बोद्धव्वं ।
अणवट्ठप्पो य तहा, पावति पारंचियं ठाणं ॥

वृ- अष्टादशरूपकमूल्ये चतुर्गुरवः । विंशतिमूल्ये षड्लघवः । पञ्चाशन्मूल्ये षड्गुरवः । शतमूल्ये छेदः । सहस्रमूल्ये मूलम् । पञ्चाशत्सहस्रमूल्येऽनवस्थाप्यम् । शतसहस्रमूल्ये पाराञ्चिकम् ॥

प्रकारान्तरेण भावकृत्स्नमुपदर्शयति-

[भा.३८९९] अहवा रागसहगतो, वत्थं धारेति दोससहितो वा ।
एयं तु भावकसिणं, तिविहं परिणामनिष्फन्नं ॥

वृ- अथवा 'अहो ! रमणीयं वस्त्रम्' इत्येवं रागसहगतो यद्वा 'अहो ! मे मलिनं कुथितं वस्त्रम्' इत्येवं द्वेषसहितो यद् वस्त्र धारयति तदेतद् भावकृत्स्नं मन्तव्यम् । इदं च परिणामनिष्पन्नं त्रिविधम्, तद्यथा-जघन्येन राग-द्वेषपरिणामेन जघन्यम्, मध्यमेन मध्यमम्, उत्कृष्टेनोत्कृष्टम् ॥

अथ द्रव्यादिकृत्स्नेषु दोषानाह-

[भा.३९००] भारो भय परियावण, मारण अहिगरण दव्वकसिणम्मि ।
पडिलेहाऽऽनालोवो, मनसंतावो उवायाणं ॥

वृ- प्रमाणातिरिक्तं वस्त्र वहत आत्मन एव भारो भवति, अध्वप्रपन्नानां संकलकृत्स्नादौ स्तेनेभ्यो भयं भवेत्, ते च साधूनां बन्धनादिरूपं परितापनं मारणं वा कृत्वा तादृशं वस्त्रमपहरेयुः, अविरतकैश्च गृहीतेऽधिकरणं भवेत्, एते द्रव्यकृत्स्ने गृह्यमाणे दोषाः । तथा 'क्षेत्र-काल कृत्स्नोपधिं मा सागारिको प्राक्षीत्' इति कृत्वा यदि न प्रत्युपेक्षन्ते तत उपधिनिष्पन्नं तीर्थकृतां चाज्ञालोपः कृतो भवति । अथ प्रत्युपेक्षन्ते ततः स्तेनास्तादृशं वस्त्र दृष्ट्वा हरेयुः, पन्थानं वा बद्ध्वा तिष्ठेयुः। हृते च तस्मिन् महान् मनः सन्तापो भवति । यद्वा तत् कृत्स्नं वस्त्र शैक्षस्योत्प्रव्रजितुकामस्योपादानं भवति, तदपहृत्योत्प्रव्रजेदित्यर्थः ॥

[भा.३९०१] गहणं च गोम्मिएहिं, परितावण धोव कम्मबंधो य ।
अन्ने वि तत्थ रुंभए, तेणग ते वा अहव अन्ने ॥

वृ- कृत्स्नवस्त्रनिमित्तं 'गौल्मिकैः' शुल्कपालैर्ग्रहणं प्राप्नुवन्ति, 'कुतोऽमीषामीदृशानि वस्त्राणि? नूनं कस्यापि गृहादपहृतानि इति कृत्वा । ते च गृहीत्वा बन्धनादिभिः परितापनां कुर्वन्ति, ततस्तानि वस्त्राण्यपहृत्य प्रावृण्वन्ति, मलिनीभूतानि च तानि धावन्ति । तत्र कर्मबन्धस्तावद् भवति यावत् तस्मात् स्थानान्न प्रतिक्रामति । यद्वा "परितावण धोव्व कम्मबंधो य" त्ति प्रमाणातिरिक्तवस्त्राणि धावनकाले महता प्रयासेन धाव्यन्ते, तत्र परितापनादयो दोषाः । प्रभूतेन च पानकेन वस्त्रधावनेऽनुपदेशकारितया कर्मबन्धो भवति । तथा गौल्मिका अन्यानपि साधून् निरुन्धन्ति, सर्वेषामपीदृशानि वस्त्राणि सन्तीति कृत्वा । 'त एव य' गौल्मिका अपरेण मार्गेण गत्वा स्तेनका भवन्ति, अथवा तैः प्रेरिताः सन्तोऽन्येऽपहरन्ति ॥

[भा.३९०२] भावकसिणम्मि दोसा, ते च्चेव उ नवरि तेनदिट्ठंतो ।
देसी गिलाण जावोग्गहो उ दव्वम्मि बितियपयं ॥

वृ- 'भावकृत्स्नेऽपि' वर्णयुत-मूल्ययुतलक्षणे 'त एव' भार-भय-परितापनादयो दोषाः । 'नवरं' केवलमत्र स्तेनदृष्टान्तो भवति, स चानन्तरमेव वक्ष्यते । कारणे तु प्राप्ते कृत्स्नमपि गृह्णीयात् । कथम् ? इत्याह-"देसी" इत्यादि । देशविशेषं ग्लानं वा प्रतीत्य सकलकृत्स्नं प्रमाणकृत्स्नं वा गृह्णीयात् । आचार्या वा कुलादिकार्येषु निर्गताः ततः "जावोग्गहो" त्ति यावत् तेषां समीपे वस्त्रस्यावग्रहो नानुज्ञापितस्तावत् तस्य दशिका न वि (छि) द्यन्ते इत्येवमत्र द्रव्यकृत्स्ने द्वितीयपदं मन्तव्यमिति सङ्ग्रहगाथासमासार्थः ॥ अथैनामेव विवरीषुः स्तेनदृष्टान्तमाह-

[भा.३९०३] उवसामिओ नरिंदो, कंबलरयणेहि छंदए गच्छं ।
निब्बंध एगगहणं, निवयणे पाउतो नीति ॥

[भा.३९०४] तेनाऽऽलोग निसिज्जा, रत्तिं तेनागमो गुरुग्गहणं ।
दरिसणमपत्तियंते, तिव्वावणया य रोसेणं ॥

वृ- एगेणं आयरिएणं धम्मकहालद्धिसंपन्नेणं राया उवसामिओ । सो सव्वं गच्छं कंबलरयणेहिं पडिलाभिउ उवट्ठिओ आयरिएहिं निसिद्धो-न वट्टइ एयारिसं मुल्लकसिणं गिण्हिउं ति । तहा वि

अतिनिबंधेणं एगं गहियं । राया भणइ-पाउया हङ्गमग्गेणं गच्छह । तहा कयं । तेनगेन दिट्ठा । तेहिं वसहिं आगंतुं निसिज्जाओ कयाओ । सो तेणओ रत्तिं आगंतुं आयरियाणं उवरिं छुरियं कड्ढिऊण भणइ-देहि मे तं वत्थं, अन्नहा मारिस्सामि । ते भणंति-इमाणि खंडाणि अत्थि । सो भणाइ-सिव्वित्ता मे देह, अन्नहा ते उद्दविस्सामि । तेहिं सिव्वित्ता दिन्नं ।।

अथ गाथाद्वयस्याक्षरार्थः-केनचिदाचार्येणोपशामितो नरेन्द्रः कम्बलरत्नैर्गच्छं 'छन्दयति' निमन्त्रयते । तत आचार्यो महति निर्बन्धे एकस्य कम्बलरत्नस्य ग्रहणं कृत्वा नृपवचनात् तेन प्रावृतो निर्गच्छति । ततः स्तेनेन 'आलोकः' अवलोकनं कृतम् । आचार्यश्च वसतिमागम्य कम्बलरत्नेन निषद्याः कृताः । रात्रौ स्तेनस्यागमः । गुरोश्च तेन छुरिकामाकृष्य ग्रहणं कृत्वा भणितम्-प्रयच्छत मम तत् कम्बलरत्नम् । सूरिभिरुक्तम्-खण्डितं तदस्माभि । स प्राह-दर्शयत । ततस्तत्र 'अप्रत्ययति' प्रत्ययमकुर्वाणे खण्डानां दर्शनम् । रोषाच्च तेन भूयः सीवनं कारयित्वा कम्बलरत्नं गृहीतम् । यत्र एवमादयः कृत्स्ने दोषाः अतो द्रव्यतः स्थूरमदशाकं यथोक्तप्रमाणोपेतं क्षेत्रतः कालतश्च सर्वजनभोग्यं भावतो वर्णहीनमल्पमूल्यं च वस्त्र ग्रहीतव्यम् ।। अथ द्वितीयपदं बिभावयिषुः सङ्ग्रहगाथोक्तं देशीपदं व्याख्यानयति–

[भा.३९०५] न पारदोच्चा गरिहा व लोए, थूणाइएसुं विहरिज्ज एवं ।
भोगाऽइरित्ताऽऽरभडा विभूसा, कप्पेज्जमिच्चेव दसाउ तत्थ ।।

वृ- ''पारदोच्च'' त्ति चौरभयं तद् यत्र नास्ति, यत्र च तथाविधे वस्त्र प्राव्रियमाणे लोके गर्हा नोपजायते तत्र स्थूणादिविषयेषु 'एवं' सकलकृत्स्नमपि वस्त्र प्रावृत्य विहरेत्, परं तस्य दशाश्छेत्तव्याः । कुतः ? इत्याह-''भोग''त्ति तासां दशानां शुषिरतया परिभोगः कर्तुं न कल्पते, अतिरिक्तश्चोपधिर्भवति, प्रत्युपेक्ष्यमाणे च दशिकाभिरारभडादोषाः, विभूषा च सदशाके वस्त्र प्राव्रियमाणे भवति । 'इत्येवम्' एभि कारणैस्तत्र दशाः 'कल्पयेत्' छिन्द्यात् ।।

कारणतो न छिन्द्यादपीति दर्शयति-

[भा.३९०६] पासगंतेसु बद्धेसु, दढं होहिति तेन तु ।
नातिदिग्घदसं वा वि, न तं छिंदिज्ज देसिओ ।।

वृ- किञ्चिद् वस्त्र प्रथमत एव दुर्बलम् ततः पार्श्वा-ऽन्तेषु दशिकाभिर्बद्धेषु 'दृढं' चिरकालवहनक्षमं भविष्यतीति कृत्वा तेन कारणेन दशिकास्तस्य न कल्पयेत् । यद्वा 'देशीतः' सिन्ध्वादिदेशमाश्रित्य यत्रातिदीर्घदशाकं वस्त्र तत्र छिन्द्यात्, तस्य दशिका न कल्पयितव्या इति भावः ।। अथ ग्लानद्वारं व्याचष्टे–

[भा.३९०७] असंफुरगिलाणट्ठा, तेन मानाधियं सिया ।
सदसं वेज्जकज्जे वा, विसकुंभट्टयाति वा ।।

वृ-असंस्फरो नाम-ग्लानो यः क्षीणबलतया सङ्कुचितपादः स्वप्तुं न शक्नोति, तस्य प्रमाणयुक्तं वस्त्र प्राव्रियमाणं ह्रसति, तेन तदर्थं 'मानाधिकमपि' प्रमाणातिरिक्तमपि वस्त्र स्यात् । यद्वा ग्लानचिकित्सको यो वैद्यः 'तत्कार्ये' तस्य दानार्थम्, अथवा दीर्घजातीयेन कश्चिद् दष्टो भवेत् ततस्तस्य 'विद्याकार्ये' विद्यायां प्रयुज्यमानायामपमार्जनाय सदशं वस्त्रमुपयुज्यते । विषकुम्भः-स्फोटिकाविशेषस्तस्यापमार्जनाय वा सदशं वस्त्र ग्रहीतव्यम् ।। अथ यावदवग्रहद्वारमाह-

[भा.३९०८] अविभत्ता न छिज्जंति, लाभो छिज्जिज्ज मा खलु ।
पारदोझावववादस्स, पडिपक्खो व होज्ज उ ॥

वृ- आचार्या कुलादिकार्येषु निर्गतास्ततो यावदद्यापि तैः प्रतिनिवृत्य वस्त्राणि न विभक्तानि तावत् तानि प्रमाणातिरिक्तान्यपि न छिद्यन्ते, 'मा खलु लाभश्छिद्येत्' मा भूयो वस्त्रलाभव्यवच्छेदो भवेदिति भावः । तथा "न पारदुद्या" इत्युक्तम् एष तस्य पारदोझापवादस्य प्रतिपक्ष उच्यते स चात्र यावदवग्रहद्वारे भवेत्, अविभक्तानामपि तेषां वस्त्राणां दशिकाश्छेत्तव्या इति भावः ॥

[भा.३९०९] अववायाववादो वा, एत्थ जुज्जइ कारणे ।
सट्ठाणं व तमब्भेति, अच्छिज्जं जं उदाहडं ॥

वृ- अपवादापवादो वा अत्र कारणे युज्यते । किमुक्तं भवति ? -'स्थूणाविषयादि प्रतीत्य यत् कृत्स्नं वस्त्र कल्पते' एष तावदपवादः, यत्तु तत्र 'दशिकाश्छेत्तव्याः' इत्युक्तम् एष भूयोऽपि तत्रापवादे उत्सर्गो मन्तव्यः, अयमप्यपोद्यते-यदा 'तत् पार्श्वान्तेषु दशिकाभिर्बद्धेषु दृढं भविष्यति' इति मत्वा सिन्धुविषये वा नातिदीर्घदशाकस्य वस्त्रस्य यद् दशा अपि न छिद्यन्ते, एतनापवादे य उत्सर्गा सोऽप्यपोदित इति कृत्वा अपवादापवाद उच्यते, सोऽप्यत्र घटते । एवं च 'स्वास्थानं वा' कृत्स्नत्वमेव 'तद्' वस्त्रम् 'अभ्येति' प्राप्नोति यद् 'अच्छेद्यम्' अच्छेदनीयम् 'उदाहृतम्' उक्तम्। इयमत्र भावना-प्रमाणातिरिक्तं दशिकाश्च यस्य न छिद्यते तत् कृत्स्नमेव ज्ञातव्यं नाकृत्स्नमिति ॥ गतं द्रव्यकृत्स्ने द्वितीयपदम् । अथ भावकृत्स्ने द्विती[illegible]

[भा.३९१०] देसी गिलाण जावोग्गहो उ भावम्मि होति बितियपदं ।
तेब्भाविते य तत्तो, ओमादिउवग्गहट्ठा वा ॥

वृ- देशी-ग्लान-यावदवग्रहविषयं भावकृत्स्ने द्वितीयपदं भवति । 'ततः' तदनन्तरं तैः-भाव-कृत्स्नैर्गृहवासे भावितस्तद्भावितस्तद्विषयं द्वितीयपदम्, सोऽपि भावकृत्स्नानि परिभुञ्जीतेत्यर्थः। अवमौदर्यादिषु वा गच्छस्योपग्रहार्थं तानि धारयेदिति सङ्ग्रहगाथासमासार्थः ॥ अथैनामेव विवृणोति–

[भा.३९११] देसी गिलाण जावोग्गहो उ दव्वकसिणम्मि जं वुत्तं ।
तह चेव होति भावे, तं पुन सदसं व अदसं वा ॥

वृ- देशी-ग्लान-यावदवग्रहद्वारेषु यदेव द्रव्यकृत्स्ने द्वितीयपदमुक्तं तदेव 'भावकृत्स्नेऽपि' वर्णाढ्ये बहुमूल्ये वा वस्त्रे मन्तव्यम् । नवरं तत् पुनः सदशमदशं वा भवेत्, उभयमप्यपवादपदे ग्राह्यमिति भावः ॥ अथ क्षेत्रकृत्स्नमपवदति–

[भा.३९१२] नेमालि तामलित्तीय, सिंधूसोवीरमादिसू ।
सव्वलोकवभोज्जाइं, धरिज्ज कसिणाइ वा ॥

वृ- नेपालविषये ताम्रलिप्त्यां नगर्यां सिन्धुसौवीरादिषु च विषयेषु सर्वलोकोपभोज्यानि कृत्स्नान्यपि वस्त्राणि धारयेत् ॥ कुतः ? इत्याह–

[भा.३९१३] आइन्नता न चोरादी, भयं नेव य गारवो ।
उज्झाइयत्थवं चेव, सिंधूमादीसु गरहितो ॥

वृ- नेपालादौ देशे सर्वलोकेनापि तादृग्वस्त्राणामाचीर्णता, न च तत्र चौरादिभयम्, नैव च 'गौरवम्' 'अहो ! अहमीदृशानी वस्त्राणि प्रावृणोमि' इत्येवंलक्षणम्, अपि च उज्झाइतं-विरूपं

यद् वस्त्र तद्वान् सिन्धुसौवीरकादिषु गर्हितो भवति, अतस्तत्र कृत्स्नान्यपि परिभोक्तव्यानि ॥

अथ कालकृत्स्नमपवदति–

[भा.३९१४] नीलकंबलमादी तु, उन्नियं होति अग्घियं ।
सिसिरे तं पि धारेज्जा, सीतं नऽन्नेण रुब्मति ॥

वृ-नीलकम्बलादिकमौर्णिकं महाराष्ट्रविषये 'अर्चितं' महार्घ्यं भवति, तदपि तत्र प्राप्तः 'शिशिरे' शीतकाले 'धारयेत्' प्रावृणुयादित्यर्थः, शीतं यतो नान्येन वस्त्रण निरुध्यते ॥

अथ तद्भावितपदं व्याख्याति–

[भा.३९१५] न लभइ खरेहिँ निद्दं, अरतिं च करिंति से दिवसतो वि ।
उज्झाइगं व मन्नति, थूलेहिँ अभावितो जाव ॥

वृ- 'खरैः' स्थूलतया कठिनस्पर्शैश्चीवरै राजादिप्रव्रजितः कश्चिद् निद्रां न लभते, तानि च तस्य दिवसतोऽप्यरतिं कुर्वन्ति, "उज्झाइयं वा" जुगुप्सां मन्यते तैः, ततः स्थूलैर्यावदद्याप्य-भावितस्तावत् तस्य भावकृत्स्नवस्त्रमनुज्ञातम् ॥ 'अवमादिषु गच्छोपग्रहार्थम्' इति भावयति-

[भा.३९१६] ओमा-ऽसिव-दुट्ठेसू, सीमट्ठेऊण तं असंथरणे ।
गच्छो नित्थारिज्जति, जाव पुनो होति संथरणं ॥

वृ-अवमौदर्या-ऽशिव-राजद्विष्टेषु भुक्त-पानालाभे गच्छस्यासंस्तरणं भवेत्, ततः शतसहस्त्र-मूल्यं वस्त्र "सीमट्ठेऊण" त्ति चूर्णिकारवचनाद् विक्रीय गच्छो निस्तार्यते यावत् पुनरपि संस्तरण भवति । विशेषचूर्णौ तु-"सीमट्ठेऊण" इत्यस्य स्थाने "उवक्कमट्ठा व" त्ति पाठः, तत्रोपक्रमः-कालगमनं तदर्थम् । किमुक्तं भवति ? -कस्यापि साधोरतार्कितं कालगमनं भवेत् तस्याच्छादनार्थं 'भावकृत्स्नं' वर्णाढ्यं वस्त्र प्रागेव ग्रहीतव्यम् ॥ अथवा द्रव्यकृत्स्नं भावकृत्स्नं चेति द्विविधमेवेह कृत्स्नम् । कथम् ? इति चेद् उच्यते –

[भा.३९१७] मानाहियं दसाधिय, एताइ पडंति दव्वकसिणम्मि ।
तस्सेव य जो वन्नो, मुल्लं च गुणो य तं भावे ॥

वृ- क्षेत्रकृत्स्ने कालकृत्स्ने च यद् 'मानाधिकं' यथोक्तप्रमाणातिरिक्तम्, यच्च 'दशाधिकं' सदशाकं वस्त्रम्, एते द्वे अपि द्रव्यकृत्स्ने निपततः । यस्तु तस्यैव वस्त्रस्य 'वर्ण' कृष्णत्वादिकः, यच्च 'मूल्यम्' अष्टादशरुपकादि, यश्च 'गुणः' मृदुत्वादि, तदेतत् सर्वमपि भावकृत्स्नेऽवतरति ॥

मू. *(८८) नो कप्पइ निग्गंथाण वा निग्गंथीण वा अभिन्नाइं वत्थाइं धारित्तए वा परिहरित्तए वा कप्पइ निग्गंथाणं वा निग्गंथीण वा भिन्नाइं वत्थाइं धारित्तएवा परिहरित्तएवा ॥*

वृ- नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'अभिन्नानि' अच्छिन्नानि वस्त्राणि धारयितुं वा परिहर्तुं वेति ॥ अथ भाष्यम्–

[भा.३९१८] अकसिण भिन्नमभिन्नं, होज्ज भिन्नं तु अकसिणे भइतं ।
कसिणा-ऽकसिणे य तदा, भिन्नमभिन्ने य चउभंगो ॥

वृ- यत् पूर्वसूत्रेऽकृत्स्नमुक्तं तद् भिन्नं वा स्याद् अभिन्नं वा । भिन्नमपि अकृत्स्ने 'भक्तं' विकल्पितम्, अकृत्स्नं वा कृत्स्नं वा भवतीत्यर्थः । अत एव कृत्स्ना-ऽकृत्स्नपदेन द्रव्य-क्षेत्राद्यविशिष्टं सामान्यतः कृत्स्नं गृहीतम्, अभिन्नपदेन तु सकलम् । आह च बृहद्भाष्यकृत्-

दव्वईअविसिट्ठं, कसिणग्गहणेण होइ गहियं तु ।
गहणेन अभिन्नस्स उ, सगलग्गहणं कयं होइ ॥

एव द्वितीयभङ्गे द्रव्य-क्षेत्रादिकृत्स्नमसकलं गृहीतम् । तृतीयभङ्गे तु क्षेत्र-काल-भावैरकृत्स्नं परं सकलम् । चतुर्थभङ्गे क्षेत्रादिभिरकृत्स्नमसकलम् ॥ अत्र विधिमतिदिशन्नाह–

[भा.३९१९] तम्मि वि सो चेव गमो, उस्सग्ग-ऽववादतो जहा कसिणे ।
भिन्नग्गहणं तम्हा, असती य सयं पि भिंदिज्जा ॥

वृ- 'तस्मिन्नपि' अभिन्ने स एव उत्सर्गतोऽपवादतश्च 'गमः' प्रकारो यथा कृत्स्ने भणितः । तथाहि-कृत्स्नवद् द्रव्या (दि) भिन्नमपि चतुर्धा, तत्र द्रव्याभिन्नं गणनया प्रमाणश्चातिरिक्तम्, क्षेत्राभिन्नं यद् यस्मिन् क्षेत्रे महार्घ्यम्, कालाभिन्नं यद् यस्मिन् कालेऽर्चितम्, भावाभिन्नं तथैव वर्णयुतं मूल्ययुतं च; या च कृत्स्ने आरोपणा सैवाभिन्नेऽपि द्रष्टव्या, परमिदं चतुर्ष्वपि द्रव्यादिषु सकलमेव प्रतिपत्तव्यम् । यत एवं तस्माद् भिन्नस्य वस्त्रस्य ग्रहणं कर्तव्यम् । अथ भिन्नं न प्राप्यते ततः स्वयमपि भिन्द्यात्, यावता प्रमाणेनातिरिक्तं तावत् छित्त्वा प्रमाणयुक्तं कुर्यादिति भाव ॥

परः प्राह-यदि पुर्वसूत्रोक्त एव गम इहापि सूत्रे वक्तव्यः ततः-

[भा.३९२०] पुनरुत्तदोसो एवं, पिट्ठस्स व पीसणं निरत्थं तु ।
कारणमवेक्खति सुतं, दुविहपमाणं इहं सुत्ते ॥

वृ- पुनरुक्तदोष एवं प्राप्नोति, एतच्च पुनर्भणनं पिष्टस्येव पेषणं 'निरर्थकं' परिफल्गुप्रायमेव पश्यामः, अतो नेदं सूत्रमारम्भणीयमिति भावः । सूरिराह-सूत्रमिदं कारणमपेक्षते । किं पुनस्तत् कारणम् ? इत्याह-इह सूत्रे वस्त्रणां 'द्विविधप्रमाणं' गणनालक्षणं १ प्रमाणलक्षणं २ नियम्यते, कियन्ति किंप्रमाणानि वा तानि ग्रहीतव्यानि ? इत्येवं निरुप्यत इत्यर्थः ॥

[भा.३९२१] तम्हा उ भिंदियव्वं, केई पम्हेहि अह व तह चेव ।
लोगंते पाणादीविराधना तेसि पडिघातो ॥

वृ- यस्मादभिन्नस्य धारणे पूर्वसूत्रोक्ता दोषास्तस्मात् प्रमाणातिरिक्तं वस्त्र 'भेत्तव्यं' छेदनीयम्, न तदवस्थं धारयितव्यम् । अथवाऽत्र 'केचिद्' नोदकाः प्रेरयन्ति-वस्त्र छिद्यमाने यानि पक्ष्माण्युड्डयन्ते तैर्लोकान्तं यावद् गच्छद्भिर्बहूनां प्राणादीनां-त्रसप्राणिप्रभृतीनां सूक्ष्मजन्तूनां विराधना भवति, अतः ''तह चेव'' त्ति यथा लब्धं तथैवाधितिष्ठेत् । एवं वदतां 'तेषां' नोदकानां 'प्रतिघातः' निराकरणं विधेयमिति पुरातनगाथासमासार्थः ॥

अथैनामेव विवरीषुः परप्रेर्यमेव प्रयञ्चयन्नाह-

[भा.३९२२] सद्दो तहिं मुच्छति छेदणा वा, धावंति ते दो वि उ जाव लोगो ।
वत्थस्स देहस्स य जो विकंपो, ततो वि वादादि भरिंति लोगं ॥

वृ- भो आचार्य ! 'तत्र' वस्त्र छिद्यमाने शब्दः सम्मूर्च्छति, 'छेदनका वा' सूक्ष्मपक्ष्मावयवा उड्डीयन्ते, एते च द्वयेऽपि ततो निर्गता लोकान्तं यावद् 'धावन्ति' प्राप्नुवन्ति । तथा वस्त्रस्य देहस्य च यः 'विकम्पः' चलनं ततोऽपि विनिर्गता वातादयः प्रसरन्तः सकलमपि लोकमापूरयन्ति ॥

[भा.३९२३] अहिच्छसे जंति न ते उ दूरं, संखोभिया तेहऽवरे वयंति ।
उड्ढं अधे यावि चउद्दिसिं पि, पूरिंति लोगं तु खणेण सव्वं ॥

वृ-अथ आचार्य ! त्वम् 'इच्छसि' मन्यसे 'ते च' वस्त्रच्छेदनसमुत्थाः शब्द-पक्ष्म-वातादिपुद्गला न 'दूरं' लोकान्तं यान्ति तर्हि तैः 'संक्षोभिताः' चालिताः सन्तोऽपरे व्रजन्ति, एवमपराऽपरपुद्गलप्रेरिताः पुद्गलाः प्रसरन्तः क्षणेनोर्द्धमधस्तिर्यक् चतसृष्वपि दिक्षु सर्वमपि लोकमापूरयन्ति॥ यत एवमतः-

[भा.३९२४] विन्नाय आरंभमिणं सदोसं, तम्हा जहालद्धमधिट्ठिहिआ।
वुत्तं सएयो खलु जाव देही, न होति सो अंतकरी तु ताव ॥

वृ- 'इमम्' अनन्तरोक्तं सर्वलोकपुरणात्मकमारम्भं 'सदोषं' सूक्ष्मजीवविराधनया सावद्यं विज्ञाय 'तस्मात्' कारणाद् यथालब्धं वस्त्रमधितिष्ठेत्, न छेदनादिकं कुर्यात् । यतः 'उक्तं' भणितं व्याख्याप्रज्ञप्ती-यावदयं 'देही' जीवः 'सैजः' सकम्पः चेष्टावानित्यर्थः तावदसौ कर्मणो सकलस्य वा अन्तकारी न भवति । तथा च तदालापकः-जाव णं एस जीवे सया समियं एयइ वेयइ चलइ फंदइ घट्टइ खुब्भइ उदीरइ तं तं भावं परिणमइ ताव नं तस्स जीवस्स अंते अंतकिरिया न भवति । अथेत्थं भणिष्यथ एवं तर्हि भिक्षादिनिमित्तमपि चेष्टा न विधेया इति, नैवम्, यतः-

[भा.३९२५]जा यावि चिट्ठा इरियाइआओ, संपस्सहेताहिं विना न देहो।
संचिट्ठए नेवमछिज्जमाणे, वत्थम्मि संजायइ देहनासो ॥

वृ-याश्चापि चेष्टा ईर्यादिकाः सम्पश्यत, तत्रेरणमीर्या-भिक्षा-संज्ञाभूम्यादौ गमनम्, आदिशब्दाद् भोजन-शयनादयो गृह्यन्ते, एताभिर्विना देहः पौद्गलिकत्वात् 'न सन्तिष्ठते' न निर्वहति, देहमन्तरेण च संयमस्यापि व्यवच्छेदः प्राप्नोति, वस्त्र पुनरच्छिद्यमाने नैवं देहनाशः सञ्जायते, अतो न तत् छेदनीयम् ॥ किञ्च-

[भा.३९२६] जहा जहा अप्पतरो से जोगो, तहा तहा अप्पतरो से बंधो।
निरुद्धजोगिस्स व से न होति, अछिद्दपोतस्स व अंबुनाधे ॥

वृ-यथा यथा "से" तस्य जीवस्याल्पतरो योगस्तथा तथा "से" तस्याल्पतरो बन्धो भवति, यो वा निरुद्धयोगी-शैलेश्यवस्थायां सर्वथा मनो-वाक्कायव्यापारविरहति तस्य 'सः' कर्मबन्धो न भवति । दृष्टान्तमाह-अच्छिद्रपोतस्येव 'अम्बुनाथे' समुद्रे । यथा किल निश्छिद्रप्रवहणं सलिलसञ्चयसम्पूर्णेऽपि जलधौ वर्त्तमानं स्वल्पमपि जलं नाश्रवति, एवं निरुद्धयोग्यपि जन्तुः कर्मवर्गणापुद्गलैरञ्जन चूर्णसमुद्गकवद् निरन्तरनिचितेऽपि लोके वर्त्तमानः स्वल्पीयोऽपि कर्म नोपादत्ते । अतः कर्मबन्धस्य योगान्वय-व्यतिरेकानुविधायितया तत्परिजिहीर्षुणा वस्त्रच्छेदनादिव्यापारो न विधेयः ॥ इत्यर्थं परेण स्वपक्षे स्थापिते सति सूरिराह-

[भा.३९२७]आरंभमिट्ठो जति आसवाय, गुत्तीय सेआय तधा तु साधू !।
मा फंद वारेहि व छिज्जमाणं, पतिन्नहाणी व अतोऽन्नहा ते ॥

वृ- "आरंभमिट्ठो" त्ति मकारोऽलाक्षणिकः, हे नोदक ! यद्यारम्भस्तव 'आश्रवाय' कर्मोपादानाय 'इष्टः' अभिप्रेतः 'गुप्तिश्च' तत्परिहाररुपा 'श्रेयसे' कर्मानुपादानायाभिप्रेता, तथा च सति हे साधो ! मा स्पन्द मा वा वस्त्र छिद्यमानं वारय । किमुक्तं भवति ? -यदि वस्त्रच्छेदनमारम्भतया भवता कर्मबन्धनिबन्धनमभ्युपगम्यते ततो येयं वस्त्रच्छेदनप्रतिषेधाया हस्तस्पन्दनादिका चेष्टा क्रियते यो वा तत्प्रतिषेधको ध्वनिरुच्चार्यते तावप्यारम्भतया भवता न कर्त्तव्यौ । 'अतः'

मदुक्तादुपदेशादन्यथा चेत् करोषि ततस्ते 'प्रतिज्ञाहानि' स्ववचनविरोधलक्षणं दूषणमापद्यते इत्यर्थः ॥ अथ ब्रवीथाः-योऽयं मया वस्त्रच्छेदनप्रतिषेधको ध्वनिरुच्चार्यते स आरम्भप्रतिषेधकत्वान्निर्दोष इति अत्रोच्यते–

[भा.३९२८] अदोसवं ते जति सद्दो, अन्नो वि कम्हा न भेव अदोसो ।
अधिच्छया तुज्झ सदोस एक्को, एवं सती कस्स भवे न सिद्धी ॥

वृ-यद्येष त्वदीयः शब्दोऽदोषवान् ततः 'अन्योऽपि' वस्त्रच्छेदनादिसमुत्थः शब्दः कस्माददोषो न भवेत् ? तस्यापि प्रमाणातिरिक्तपरिभोग-विभूषादिदोषपरिहारहेतुत्वात् । अथ 'इच्छया' स्वाभिप्रायेण तव 'एकः' वस्त्रच्छेदनशब्दः सदोषः अपरस्तु निर्दोषः एवं सति कस्य न स्वपक्षसिद्धिर्भवेत् ? सर्वस्यापि वागाडम्बरमात्रेण भवत इव स्वाभिप्रेतार्थसिद्धिर्भवेदिति भावः। ततश्चास्माभिरप्येवं वक्तु शक्यम्-योऽयं वस्त्रच्छेदनसमुत्थः शब्दः स निर्दोषः, शब्दत्वात्, भवत्परिकल्पितनिर्दोषशब्दवदिति ॥ किञ्च–

[भा.३९२९]तं छिंदओ होज्ज सतिं तु दोसो, खोभादि तं चेव जतो करेति ।
जं पेहतो होंति दिने दिने तु, संपाउणंते य निबुज्झ ते वी ॥

वृ-यतः 'तदेव' वस्त्र छिद्यमानं कुण्डलानां क्षोभादि करोति अतः 'तद्' वस्त्र छिन्दतः 'सकृद्' एकवारं दोषो भवेत् । अच्छिद्यमाने तु वस्त्र प्रमाणातिरिक्तं तत् प्रत्युपेक्षमाणस्य ये भूमिलोलनादयः प्रत्युपेक्षणादोषा दिने दिने भवन्ति, ये च तद् वस्त्र सम्प्रावृण्वतो विभूषादयो बहवो दोषाः, तानपि 'निबुध्यस्व' अक्षिणी निमील्य सम्यग् निरुपयेति भावः ॥ आह-यदि वस्त्रच्छेदने युष्मन्मतेनापि सकृद् दोषः सम्भवति ततः परिह्रियतामसौ. गृहस्थैः स्वयोगेनैव यद् भिन्नं वस्त्रं तदेव गृह्यताम्, उच्यते–

[भा.३९३०]घेत्तव्वगं भिन्नमहिच्छितं ते, जा मग्गते हानि सुतादि ताव ।
अप्पेस दोसो गुणभूतिजुत्तो, पमाणमेवं तु जतो करिंति ॥

वृ-अथ 'ते' तव 'इष्टं' मतं यथा चिरमपि गवेष्य भिन्नं ग्रहीतव्यम् तत उच्यते-यावत तद् भिन्नं वस्त्रं मार्गयति तावत् तस्य 'श्रुतादौ' सूत्रा-ऽर्थपौरुष्यादौ हानिर्भवति । अपि च य एष वस्त्रच्छेदनलक्षणो दोषः स प्रत्युपेक्षणाशुद्धि-विभूषापरिहारप्रभृतीनां गुणानां भूत्या-सम्पदा युक्तः, बहुगुणकलित इति भावः । कुतः ? इत्याह-यतः प्रमाणमेव वस्त्रस्य तदानीं साधवः कुर्वन्ति, न पुनस्तत्राधिकं किमपि सूत्रा-ऽर्थव्याघातादिकं दूषणमस्तीति ॥

अथ "जा यावि चिट्ठा इरियाइयाओ" इत्यादि परोक्तं परिहरन्नाह -

[भा.३९३१]आहार-नीहारविहीसु जोगो, सव्वो अदोसाय जहा जतस्स ।
हियाय सस्सम्मि व सस्सियस्स, भंडस्स एयं परिकम्मणं तु ॥

वृ- यथा 'यतस्य' प्रयत्नपरस्य साधोराहार-नीहारादिविधिविषयः सर्वोऽपि योगो भवन्मतेनाप्यदोषाय भवति तथा 'भाण्डस्य' उपकरणस्य 'परिकर्मणमपि' छेदनादिकम् 'एवमेव' यतनया क्रियमाणं निर्दोषं द्रष्टव्यम् । दृष्टान्तमाह- "हियाय सस्सम्मि व सस्सियस्स" त्ति सस्येन चरतीति सास्यिकः-कृषीवलस्तस्य यथा सस्यविषयं परिकर्मणं-निद्दिणनादिकं हिताय भवति तथेदमपि भाण्डपरिकर्मणम् । तथा चोक्तम्–

यद्वत् सस्यहितार्थं, सस्याकीर्णेऽपि विचरतः क्षेत्रे ।
या भवति सस्यपीडा, यत्नवतः साऽल्पदोषाय ॥
तद्वज्जीवहितार्थं, जीवाकीर्णेऽपि विचरतो लोके ।
या भवति, जीवपीडा, यत्नवतः साऽल्पदोषाय ॥

[भा.३९३२] अप्पेव सिद्धंतमजाणमाणो, तं हिंसगं भाससि जोगवंतं ।
दव्वेण भावेण य संविभत्ता, चत्तारि भंगा खलु हिंसगत्ते ॥

वृ- 'अपि' इत्यभ्युच्चये, अस्त्यन्यदपि वक्तव्यमिति भावः, यदेवं 'योगवन्तं' वस्त्रच्छेदनादिव्यापारवन्तं जीवं हिंसकं त्वं भाषसे तद् निश्चीयते सम्यक् सिद्धान्तमजानान एवं प्रलपसि । नहि सिद्धान्ते योगमात्रप्रत्ययादेव हिंसोपवर्ण्यते, अप्रमत्तसंयतादीनां सयोगिकेवलिपर्यन्तानां योगवतामपि तदभावात् । कथंतर्हि सा प्रवचनेप्ररुप्यते? इत्याह-द्रव्येण भावेन च संविभक्ताश्चत्वारो भङ्गाः खलु हिंसकत्वं भवन्ति । तथाहि-द्रव्यतो नामैका हिंसा न भावतः १ भावतो नामैका हिंसा न द्रव्यतः २ एका द्रव्यतोऽपि भावतोऽपि ३ एका न द्रव्यतो नापि भावतः ४ ॥

अथैषामेव यथाक्रमं भावतां कुर्वन्नाह-

[भा.३९३३]आहच्च हिंसा समितस्स जा तु, सा दव्वतो होति न भावतो उ ।
भावेन हिंसा तु असंजतस्सा, जे वा वि सत्ते दव्वतो होति न भावतो उ ॥

[भा.३९३४]संपत्ति तस्सेव जदा भविज्ञा, सा दव्वहिंसा खलु भावतो य ।
अज्झत्थसुद्धस्स जदा न होज्जा, वधेन जोगो दुहतो वऽहिंसा ॥

वृ- 'समितस्य' ईर्यासमितावुपयुक्तस्य या "आहच्च" कदाचिदपि हिंसा भवेत् सा द्रव्यतो हिंसा, इयं च प्रमादयोगाभावात् तत्त्वतोऽहिंसैव मन्तव्या, "प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा" इति वचनात्; न भावत इति । 'भावेन' भावतो या हिंसा न तु द्रव्यतः सा 'असंयतस्य' प्राणातिपातादेरनिवृत्तस्य उपलक्षणत्वात् संयतस्य वा अनुपयुक्तगमना-ऽऽगमनादि कुर्वतो यानपि सत्त्वानसौ सदैव न हन्ति तानप्याश्रित्य मन्तव्या, "जे वि न वाविज्जंती, नियमा तेसिं पि हिंसओ सो उ" इति वचनात् ॥ यदा तु तस्यैव प्राणिव्यपरोपणसम्प्राप्तिर्भवति तदा सा द्रव्यतो भावतोऽपि हिंसा प्रतिपत्तव्या । यः पुनरध्यात्मना-चेतःप्रणिधानेन शुद्धः-उपयुक्तगमना-ऽऽगमनादिक्रियाकारीत्यर्थः तस्य यदा 'वधेन' प्राणिव्यपरोपणेन सह 'योगः' सम्बन्धोन न भवति तदा 'द्विधाऽपि' द्रव्यतो भावतोऽपि च अहिंसा, हिंसा न भवतीति भावः । तदेवं भगवत्प्रणीते प्रवचने हिंसाविषयाश्चत्वारो भङ्गा उपवर्ण्यन्ते । अत्र चाद्यभङ्गे हिंसायां व्याप्रियमाणकाययोगोऽपि भावत उपयुक्ततया भगवद्भिरहिंसक एवोक्तः । ततो यदुक्तं भवता-'वस्त्रच्छेदनव्यापारं कुर्वतो हिंसा भवति' इति तत् प्रवचनरहस्यानभिज्ञतासूचकमिति ॥ किञ्च-

[भा.३९३५] रागो य दोसो य तहेव मोहो, ते बंधहेतू तु तओ वि जाणे ।
नाणत्तगं तेसि जधा य होति, जाणाहि बंधस्स तहा विसेसं ॥

वृ- 'रागश्च' अभिष्वङ्गलक्षणः 'द्वेषश्च' अप्रीतिकरूपः तथैव 'मोहः' अज्ञानलक्षणः, एतान् त्रीनपि बन्धहेतून् जानीहि । 'नानात्वं' विशेषो यथा 'तेषां' रागादीनां भवति तथा कर्मबन्धस्यापि विशेषं जानीहि ॥ इदमेव विभावयिषुर्द्वारगाथामाह-

[भा.३९३६] तिव्वे मंदे नातमणाए भावाधिकरण विरिए य।
जह दीसति नामत्तं, तह जाणसु कम्मबंधे वि ॥

वृ- हिंसादिकं पापं कुर्वतो रागादिपरिणामस्तीव्रो वा भवेद् मन्दो वा। "नायमनाए" त्ति एको हिंसादिफलविपाके व्यापाद्ये वा जीवे जीवतया ज्ञाते हिंसा करोति, अपरस्तु न जानाति यथैवमेव जन्तून् हिनस्ति। तथा भावः-औदयिकादि, अधिकरणं-निर्वर्त्तनादिरूपं प्रागुक्तम्, 'वीर्यं' देहबलं बाल-पण्डितादिसामर्थ्यं वा। एवं तीव्र-मन्दादिकं नानात्वं यथा रागादिषु दृश्यते तथा कर्मबन्धेऽपि नानात्वं जानीहि इति द्वारगाथासमासार्थः ॥ अथैनामेव विवरीषुराह-

[भा.३९३७] तिव्वेहि होति तिव्वो, रागादीएहि उवचओ कम्मे।
मंदेहि होति मंदो, मज्झिमपरिणामतो मज्झो ॥

वृ- पापं विदधानस्य यदि 'तीव्राः' सङ्क्लिष्टपरिणामा रागादयो भवन्ति ततस्तैस्तीव्रः कर्मणामुपचयो भवति। यदा तु त एव मन्दाः-प्रतनुपरिणामाः तदा कर्मोपचयोऽपि मन्दो भवति। यदा तेषां मध्यमः परिणामः-नातितीव्रो न चातिमन्द इत्यर्थः तदा मध्यमः कर्मोपचयो भवति ॥

अथ ज्ञाताज्ञातद्वारमाह-

[भा.३९३८] जाणं करेति एक्को, हिंसमजाणमपरो अविरतो य।
तत्थ वि बंधविसेसो, महंतरं देसितो समए ॥

वृ- इह द्वावविरतौ, तत्रैकस्तयोर्जानन् हिंसा करोति, विचिन्त्येत्यर्थः; अपरःपुनरजानन्। 'तत्रापि' तयोरपि बन्धविशेषः "महंतरं" ति महता अन्तरेण देशितः 'समये' सिद्धान्ते। तथाहि-यो जानन् जीवहिंसां करोति स तीव्रानुभावं बहुतरं पापकर्मोपचिनोति, इतरस्तु मन्दतर-विपाकमल्पतरं तदेवोपादत्ते ॥

[भा.३९३९] विरतो पुण जो जाणं, कुणति अजाणं व अप्पमत्तो वा।
तत्थ वि अज्झत्थसमा, संजायति निज्जरा न चयो ॥

वृ- यः पुनः 'विरतः' प्राणातिपातादेर्निवृत्तः सः 'जानानोऽपि' सदोषमित्यवबुध्यमानोऽपि गीतार्थतया द्रव्य-क्षेत्राद्यागाढेषु प्रलम्बादिग्रहणेन हिंसा करोति, यद्वा न जानाति परम् 'अप्रमत्तः' विकथादिप्रमादरहित उपयुक्तः सन् यत् कदाचित् प्राण्युपघातं करोति तत्रापि 'अध्यात्मसमा' चित्तप्रणिधानतुल्या निर्जरा सञ्जायते, यस्य यादृशस्तीव्रो मन्दो मध्यमो वा शुभाध्यवसायस्तस्य तादृश्येव कर्मनिर्जरा भवतीति भावः। "न चउ" त्ति न पुनः 'चयः' कर्मबन्धः सूक्ष्मोऽपि भवति, प्रथमस्य भगवदाज्ञया यतनया प्रवर्त्तमानत्वात्, द्वितीयस्य तु प्रमादरहितस्याजानतः कथञ्चिद् प्राण्युपघातसम्भवेऽप्यदुष्टत्वात् ॥ अथ भावद्वारमाह-

[भा.३९४०] एगो खओवसमिए, वट्टति भावेऽवरो उ ओदइए।
तत्थ वि बंधविसेसो, संजायति भावनाणत्ता ॥

वृ- 'एकः' कोऽपि क्षायोपशमिके भावे वर्त्ततेष अपरश्चौदयिके, तत्रापि बन्धविशेषः सञ्जायते, भावनानात्वात्। तथाहि-य औदयिके भावे वर्त्तते स तीव्रतरं कर्मोपचिनोति, यस्तु क्षायोपशमिके स मन्दतरमिति ॥

[भा.३९४१] एमेव ओवसमिए, खओवसमिए तहेव खइए य।

बंधा-ऽबंधविसेसो, न तुल्लबंधा य जे बंधी ॥

वृ- एवमेवौपशमिके क्षायोपशमिके तथैव क्षायिके च भावे बन्धा-ऽबन्धविशेषः सम्यगुपयुज्य वक्तव्यः। येऽपि 'बन्धिनः' कर्मबन्धका जीवास्तेऽपि न तुल्यबन्धकाः, किन्तु प्रकृति-स्थित्यनुभाव-प्रदेशैः परस्परविसदृशकर्मबन्धकाः ॥ अथाधिकरणद्वारमाह–

[भा.३९४२] अहिकरणं पुव्वुत्तं, चउव्विहं तं समासओ दुविहं।
निव्वत्तणताए वा, संजोगे चेवऽनेगविधं ॥

वृ- अधिकरणं पूर्वं प्रथमोद्देशके यथा निर्वर्त्तना-निक्षेपणा-संयोजना-निसर्जनाभेदात् चतुर्विध मुक्तं तथैव ज्ञातव्यम्। नवरं 'तद्' अधिकरणं समसतो द्विविधं भवति। तद्यथा-निर्वर्त्तनायां 'संयोगे चैव' संयोजनायां च। पुनरेकैकमनेकविधं भवति ॥

तत्र निर्वर्त्तनाधिकरणमनेकविधमुपदर्शयति-

[भा.३९४३] एगो करेति परसुं, निव्वत्तेति नखछेदनं अवरो।
कुंत-कणगे य वेज्झे, आरिय सूई अ अवरो उ ॥

वृ- 'एकः' लोहकारः 'पर्शुं' कुठारं करोति। अपरस्तु नखच्छेदनम्, तथा कुन्तः-प्रतीतः कणकः-बाणविशेषः, तौ, चकारादपराण्यपि शक्ति-शूलप्रभृतीनि 'वेधकानि' परशरीरवेधकारीणि शस्त्राणि करोति। अपरस्तु लोहकार आरिकां सूचीं वा करोति। तत्र यः कुठार-कुन्तकणकादीनि करोति स तीव्रकर्मबन्धभाक्, यस्तु नखच्छेदना-ऽऽरिका-सूच्यादि निर्वर्त्तयति स स्वल्पकर्मबन्धक इति॥

[भा.३९४४] सूईसुं पि विसेसो, कारणसूईसु सिव्वणीसुं च।
संगामिय परियाणिय, एमेव य जाणमादीसु ॥

वृ- सूचीष्वपि विशेषो विद्यते-एकाः कारणसूच्योऽपराः सीवनसूच्यः। तत्र याः परव्यपरोपणादिकारणमुद्दिश्य कारयित्वा परस्य नखमूलादौ कुट्यन्ते ताः कारणसूच्य उच्यन्ते, तासु विधीयमानासु महान् कर्मबन्धो वति। यास्तु वस्त्रसीवनार्थं क्रियन्ते तासु स्वल्पतरः कर्मबन्धः। एवमेव च यानादिष्वपि वक्तव्यम्। तथाहि-किमपि यानं साङ्ग्रामिकं भवति, यत्रारूढैः सङ्ग्रामः क्रियते; अपरं तु 'पारियानिकं' परियानं-गमनं तत् प्रयोजनमस्येति पारियानिकम्, उद्यानादौ यस्मिन्नारूढैर्गम्यते। तत्र साङ्ग्रामिकयानादीनि कुर्वतो महान् कर्मबन्धः, पारियानिकानि तु कुर्वाणस्याल्पतरः ॥ आह यदि नाम अधिकरणमनेकविधम् ततस्तन्निमित्तः कर्मबन्धविशेषः कथमुपपद्यते ? यावता परिणामवैचित्र्यप्रत्यय एवासाविष्यत इत्याह–

[भा.३९४५] कारगकरेंतगाणं, अधिकरणं चेव तं तहा कुणति।
जह परिणामविसेसो, संजायति तेसु वत्थूसु ॥

वृ- कारापक-कुर्वतोस्तदधिकरणमेव 'तथा' तेन रूपेण 'करोति' बुद्धिमुपजनयति यथा 'तेषु' पर्शु-नखच्छेदनादिषु वस्तुषु कार्यमाणेषु क्रियमाणेषु च 'परिणामविशेषः' सङ्क्लिष्टा-ऽसङ्क्लिष्टरूपमध्यवसायवैचित्र्यं सञ्जायते, यथा-कारयाम्यहमिदं पर्शु-कुन्त-कणकादिकम्, ततोऽनेन वैरिणं व्यापाद्य आत्मनः सुखमुत्पादयिष्यामीत्यादि। अतस्तत्त्वतः परिणामवैचित्र्यप्रत्यय एवात्रापि कर्मबन्धविशेष इति न किञ्चिदनुपपन्नम् ॥

उक्तं निर्वर्त्तनाधिकरणम्। अथ संयोजनाधिकरणमाह-

[भा.३९४६] संजोययते कूडं, हलं पडं ओसढे य अन्नोन्ने ।
भोयणविहिं च अन्ने, तत्थ वि नाणत्तगं बहुहा ॥

वृ- कश्चिद् लुब्धको मृगादीनां बन्धनाय कूटं रज्ज्वादिना संयोजयति, अपरो हालिकादि क्षेत्रकर्षणाय हलं युगादिना योजयति, अन्यस्तु पटं पटान्तरेण सह सीवनप्रयोगेण संयुनक्ति, कश्चित्तु वैद्यादि 'औषधानि' हरीतकी-पिप्पलीप्रभृतीन्यन्यान्यानि परस्परमेकतर मीलयति, अन्यस्तु 'भोजनविधिं' शालि-दालि-घृत-शालनकादिकं संयुनक्ति, तत्रापि कर्मबन्धविशेषस्य बहुधा नानात्वं प्रतिपत्तव्यम् । तथाहि-यः कूटं संयोजयति तस्य सङ्क्लिष्टपरिणामतया तीव्रतरः कर्मबन्धः, तदपेक्षया हलं संयोजयतः स्वल्पतरः, पटं संयोजयतः स्वल्पतम इत्यादि तरः कर्मबन्धः, तदपेक्षया हलं संयोजयतः स्वल्पतरः, पटं संयोजयतः स्वल्पतम इत्यादि स्वबुध्या सम्यगुपयुज्य वक्तव्यम् ॥

अथ निर्वर्त्तना-संयोजने द्वे अपि यत्र सम्भवतः तान्युपदर्शयति-

[भा.३९४७] निव्वत्तणा य संयोजणा य सगडाइएसु अ भवंति ।
आसज्जुत्तरकरणं, निव्वत्ती मूलकरणं तु ॥

वृ- निर्वर्त्तना च संयोजना च शकटादिषु द्वे अपि भवतः । तथाहि-शकटाङ्गानाम्-उद्धिचक्रप्रभृतीनां या प्रथमतो घटना सा निर्वर्त्तना, या पुनस्तेषामेव निर्वर्तितानामेकत्र सङ्घातना सा संयोजना । अत्र च 'उत्तरकरणं' संयोजनारूपामुत्तरक्रियाम् 'आसाद्य' प्रतीत्य 'निर्वृत्तिः' प्रथमतो निर्वर्त्तना मूलकरणं प्रतिपत्तव्यम् ॥ गतमधिकरणद्वारम् । अथ वीर्यद्वारमाह-

[भा.३९४८] देहबलं खलु विरियं, बलसरिसो चेव होति परिणामो ।
आसज्ज देहविरियं, छट्ठाणगया तु सव्वत्तो ॥

वृ- यद् 'देहबलं' संहननजनितं शरीरसामर्थ्य तत् खलु वीर्यं मन्तव्यम् । तस्य च बलस्य सदृश एव प्राणिनां परिणामो भवति । तथाहि- यः सेवार्त्तसंहननी जघन्यबलो जीवस्तस्य परिणामोऽपि शुभोऽशुभो वा मन्द एव भवति न तीव्रः, ततः शुभा-ऽशुभकर्मबन्धोऽपि तस्य स्वल्पतर एव, अत एवास्योर्द्धगतौ कल्पचतुष्टयादूर्द्धम् अधोगतौ नरकपृथ्वीद्वयादध उपपातो न भवतीति प्रवचने प्रतिपाद्यते । एवं कीलिकादिसंहननिष्वपि भावना कार्या । इदं च देहवीर्यम् 'आसाद्य' प्राप्य षट्स्थानगताः 'सर्वत-' सर्वेष्वपि संहननेषु प्राणिनः परं भवन्ति । तथाहि-सेवार्त्तसंहननिषु ये सर्वजघन्यबलास्तदपेक्षया अपरेऽनन्तभागवृध्या असङ्ख्यातभागवृध्या सङ्ख्यातभागवृध्या सङ्ख्यातगुणवृध्या असङ्ख्यातगुणवृध्या अनन्तगुणवृध्या वा भवन्ति, एवं कीलिकादिष्वपि । यतः षट्स्थानपतिताः प्राणिनोऽतो देहबलवैचित्र्येण परिणामवैचित्र्यात् कर्मबन्धोऽपि विचित्रो भवतीति स्थितम् ॥ बलद्वारमेव प्रकारान्तेन व्याचष्टे-

[भा.३९४९] अहवा बालादीयं, तिविहं विरियं समासतो होति ।
बंधविसेसो तिण्ह वि, पंडिय बंधी अबंधी य ॥

वृ- अथवा वीर्यं बालादिभेदात् त्रिविधम् । तत्र बालस्य-असंयतस्य प्राणातिपाताद्यसंयमकरणे यद् वीर्यं तद् बालवीर्यम्, बालपण्डितस्य-देशविरतस्य संयमा-ऽसंयमविषयं वीर्यं बालपण्डि-तवीर्यम्, पण्डितस्य-सर्वविरतस्य सर्वसंयमविषयं वीर्यं पण्डितवीर्यम् । एतत् त्रिविधं वीर्यं समासतो भवति । एषां त्रयाणामपि बन्धविशेषः, तद्यथा-बालवीर्यवान् प्रभूततरं कर्म बध्नाति, बालपण्डित-

वीर्यवान् अल्पतरम्, पण्डितवीर्यवान् अल्पतमम् । स च पण्डितो द्विधा-बन्धी अबन्धी च । प्रमादादीनां कर्मबन्धहेतूनां कापि कियतां सद्भावादवश्यं बध्नातीति बन्धी, "णिन् चावश्यकाधमर्ण्ये" इति णिन्प्रत्ययः, तद्विपरीतो अबन्धी । तत्र प्रमत्तसंयतमादौ कृत्वा संयोगिकेवलिनं यावद् बन्धकः, अयोगिकेवली तु नियमादबन्धकः ॥

गतं वीर्यद्वारम् । अथोपसंहरन्नाह-

[भा.३९५०] तम्हा न सव्वजीवा, उ बंधगा नेव बंधना तुल्ला ।
अधिकिच्च संपरागं, इरियावहिबंधगा तुल्ला ॥

वृ-यत एवं तस्मान्न सर्वेऽपि जीवा बन्धकाः । येऽपि बन्धकास्तेषामपि 'साम्परायं' कषायप्रत्ययं कर्माधिकृत्य बन्धनं नैव तुल्यम्, रागादिवैचित्र्यतः कर्मबन्धविशेषस्यानन्तरमेव प्रसाधितत्वात्। ये तूपशान्तमोह-क्षीणमोह-सयोगिकेवलिन एर्यापथस्य-योगमात्रप्रत्ययस्य कर्मणो बन्धकास्ते परस्परं तुल्याः, एकस्यैव सातवेदनीयस्य द्विसमयस्थितिकस्य सर्वेषामपि बन्धनात् । तदेवं न योगप्रत्ययः कर्मबन्धस्याल्पबहुत्वविशेषः, किन्तु रागादितीव्र-मन्दताप्रत्ययः, ततो वस्त्रच्छेदनं कुर्वतां न कश्चिद् दोषः ॥ अपि च-

[भा.३९५१] संजमहेऊ जोगो, पउज्जमाणो अदोसवं होइ ।
जह आरोग्गनिमित्तं, गंडच्छेदो व विज्जस्स ॥

वृ-संयमः-प्रत्युपेक्षणादिशुद्धिरूपस्तद्धेतुः 'योगः' वस्त्रच्छेदनादिव्यापारः प्रयुज्यमानोऽदोषवान् भवति । यथा 'आरोग्यनिमित्तं' रोगिणो रोगव्यपगमार्थं वैद्यस्य गण्डच्छेऽदुष्ट इति ॥ परः प्राह-यद्येवं ततो यथाऽहं भणामि तथा वस्त्र छिद्यताम् । कथम् ? इति चेद उच्यते-

[भा.३९५२] भिन्नम्मि माउगंतम्मि केइ अहिकरण गहिय पडिसेहो ।
एवं खु भिज्जमाणं, अलक्खणं होइ उड्ढं च ॥

वृ-इह वस्त्र यतो व्यूयते तदादिभूतत्वाद् मातृकेव मातृका, अन्तश्चेह दशान्त उच्यते, मातृका चान्तश्च मातृकान्तम्, द्वन्द्वैकवद्भावः, तस्मिन् भिन्ने सति वस्त्र यद्यपि स्तेनैरपह्रियेत तथापि तैर्गृहीते सति नाधिकरणं भवति, उभयपार्श्वयोश्छिन्नत्वेन परिभोगाभावादित्यभिप्रायः । एवं केचिदाचार्यदेशीया भणन्ति तेषामेवं वदतां प्रतिषेधः कर्त्तव्यः । कथम् ? इत्याह-'एवम्' अमुना प्रकारेण 'खुः' अवधृतार्थे, अवधारितोऽयमर्थ, परमेवं भिद्यमानं वस्त्रमलक्षणं भवति । भूयोऽपि परः प्राह-यद्येवं तत ऊर्द्ध्वं कृत्वा तद् वस्त्र द्विधा छिद्यताम् । सूरिराह-एवमप्यलक्षणदोषाश्चापरे बहवो भवन्ति, अतो नैवं छेदनीयमिति सङ्ग्रहगाथासमासार्थः ॥ अथैनामेव विवृणोति-

[भा.३९५३] उभओ पासिं छिज्जउ, मा दसिया उक्किरिज्ज एगत्तो ।
अहिकरणं नेवं खलु, उड्ढो फालो व मज्झम्मि ॥

वृ- परः प्राह-उभयपार्श्वयोर्वस्त्र छिद्यताम् । किं कारणम् ? इति चेद् अत आह-यद्येकपार्श्वतश्छिद्यते तदा कदाचित् स्तेनैरपह्रियेत, ततस्ते तत्रैकतश्छिन्ने दशिका उत्किरेयुः, उत्कीर्य च तद् वस्त्र विक्रीणन्तः सदशाकतया प्रभूतं मूल्यं प्राप्नुयुः, स्वयं या तत् परिभुञ्जीरन्, ततो द्वयोरपि पार्श्वयोश्छेदनीयम्, एवंविधीयमानेऽधिकरणं न भवति । अथ नैवं भवतां विचारचर्यायां सङ्गच्छते ततो मध्ये गृहीत्वोर्ध्वः फालो विधीयताम्, उर्ध्वं द्विधा फाल्यतामिति

भावः ॥ अथ सूरि प्रथमं परोक्तमाद्यप्रकारं दूषयन्नाह–

[भा.३९५४] भन्नइ दुहतो छिन्ने, उभतो दसियाइं किन्न जायंति।
कुप्पासए करेंति य, अदसाणि व किं न भुंजंति ॥

वृ- भण्यते अत्रोत्तरम्-त्वदुक्तनीत्या द्विधा छिन्ने वस्त्र किमुत्कीर्यमाणा उभयतो दशिका न जायन्ते य जायन्त एव। अथवा तेनोभयतश्छिन्नेन वाससा ते स्तेनाः 'कूर्पासकान्' कञ्चुकान् कुर्वन्ति। अथवा ते किमदशाकानि वस्त्राणि न भुञ्जते? येनैवमुच्यते-उभयतश्छेत्तव्यमिति ॥ अथ द्वितीयं प्रकारमङ्गीकृत्य परिहरन्नाह–

[भा.३९५५] उद्धफालाणि करेंति अणिहुआ दुब्बलं च तं होति।
कज्जं तं च न पुस्सति, असिव्व-सिव्वंतदोसा य ॥

वृ- इह 'अनिभृता नाम' त्रिदण्डिनः, त एव प्रय ऊर्ध्वफालानि वस्त्राणि वसितुं प्रावरीतुं वा कुर्वन्ति नान्ये। तथा 'तद्' ऊर्ध्वफालितं वस्त्र दुर्बलं भवति। दुर्बलत्वादेव च 'तद्' विवक्षितं 'कार्यं' प्रावरणादिकं 'न पुष्यति' न पूरयति, परिभुज्यमानमचिरादेव स्फटतीति भावः। स्फटितं च यदि न सीव्यते ततो बहुतरं स्फटति, ततश्च वस्त्रभावे ये तृणग्रहणादयो दोषास्तान् प्राप्नुवन्ति। अथ सीव्यते ततः सूत्रा-ऽर्थपरिमन्थादयो दोषाः ॥ अपि च–

[भा.३९५६] छिन्नम्मि माउगंते, अलक्खणं मज्झफालियं चेव।
गुणबुद्धा जं गहियं, न करेंति गुणं अलं तेनं ॥

वृ- 'मातृकान्ते' उभयपार्श्वरूपे छिन्ने सति वस्त्रमलक्षणं भवति। मध्यस्फाटितमपि तदलक्षणमेवोपजायते। अलक्षणे च वस्त्र प्रत्युत ज्ञानादीनामुपघातो भवति, न पुनः कोऽपि गुणः। अतो गुणबुध्या यद् वस्त्र गृहीतं सत् तमेव गुणं न करोति अलं 'तेन' वस्त्रेण, न तद् ग्रहीतुमुचितमिति भावः ॥ अथ भूयोऽपि परः प्रेरयति-

[भा.३९५७] किं लक्खणेण अम्हं, सव्वणियत्ताण पावविरयाणं।
लक्खणमिच्छंति गिही, धण-धन्न-कोसपरिवुड्ढी ॥

वृ- अस्माकं सर्वस्माद्-धन-धान्यादिपरिग्रहाद् निवृत्तानां पापात्-प्राणातिपातादेर्विरतानां किं वस्त्रादिलक्षणेनान्वेषितेन? न किञ्चिदित्यर्थः। ये तु गृहिणः सारम्भाः सपरिग्रहास्ते धन-धान्य-कोशपरिवृद्धिनिमित्तं लक्षणमिच्छन्ति, अस्माकं तु धन-धान्याद्यभावान्न किमपि वृद्धिं प्रापणीयमस्तीति परस्याभिप्रायः ॥ सूरिराह–

[भा.३९५८] लक्खणहीनो उवही, उवहणती नाण-दंसण-चरित्ते।
तम्हा लक्खणजुत्तो, गच्छ दमएम दिट्ठंतो ॥

वृ- लक्षणैः-प्रशस्तवर्ण-संस्थानादिभिर्हीन उपधि साधूनां ज्ञान-दर्शन-चारित्राण्युपहन्ति, तस्माद् लक्षणयुक्तोऽसौ धारयितव्यः। तेन हि धार्यमाणेन गच्छे महती ज्ञानादिस्फातिरुपजायते। तथा चात्र द्रमकेण दृष्टान्तः क्रियते॥ तमेवाह-

[भा.३९५९] थाइणि वलवा वरिसं, दमओ पालेति तस्स भाएणं।
चेडीघडण निकायण, उविट्ठ दुम चम्म भेसणया ॥

[भा.३९६०] दुण्ह वि तेसिं गहणं, अलं मि अस्सेहिं अस्सिगं भणइ।

वड्डइ मग्गइ धूयापयाण कुलएण ओवम्मं ॥

वृ- इह पारसविषये कस्यचिद् गृहे प्रभूताः प्रतिवर्षप्रसविन्यो वडवाः सन्ति । तत एव च तुरङ्गमा अपि तस्य बहवः समजायन्त । तेन चाश्वस्वामिना 'एतावदश्वसमूहमध्ये त्वया वर्षान्ते अश्वद्वयं भृतौ ग्राह्यम्' इत्युक्त्वा कश्चिद् द्रमकोऽश्व-वडवारक्षणार्थं धृतः । तस्य च तत्पुत्र्या सार्धं सङ्गतिरभूत् । भृतिकाले च समायाते तेनाश्वरक्षकेण सा तद्दुहिता पृष्टा-कथय, अमीषां मध्ये किमपि लक्षणयुक्तमश्वद्वयं येन तद् गृह्णामि । ततस्तयाऽभिहितोऽसौ-सर्वेष्वश्वेष्वरण्ये वृक्षच्छायायां विश्रब्धमुपविष्टेषु चर्ममयं कुतपं पाषाणखण्डानां भृत्वा वृक्षशिखरमारुह्य ततः स चर्मकुतपः खडक्खडारवं कुर्वन्नधस्तताद् मोक्तव्यः, पटहश्च तदग्रतो वादनीयः, एवंकृते यौ न समुत्रस्यतः तथा खुरुखुरकेण चर्ममयेण पाषाणखण्डभृतेन पृष्ठतो वाद्यमानेन सर्वानपि वाहय, यौ शेषाश्ववाहनिकातोऽधिकं निर्वहतः तौ द्वावपि गृहाणेति । तेन सर्वं तथैव कृतम् । मूल्यकाले च तेनाश्वस्वामी याचितः-ममामुकममुकं चाश्वं देहि । तुरङ्गमस्वामी तु 'समस्तलक्षणयुक्ता-विमावश्वौ' इति कृत्वा ब्रवीति-शेषान् द्वौ त्रीन् सर्वान् वा गृहाण, किमेताभ्यां करिष्यसि ? । सोऽपि तदश्वद्वयवर्जमपरं कथमपि नेच्छति । ततश्चाश्वस्वामिना स्वभार्याऽभिहिता-प्रदीयतामस्मै स्वपुत्रिका येन गृहजामातृत्वं प्रतिपन्नो न सलक्षणा वश्वौ गृहीत्वाऽन्यत्र व्रजति । सा च 'हीनोऽसौ' इति नेच्छत्यमुमर्थम् । ततोऽश्वस्वामी भार्यावबोधाय वर्द्धकिसुतं दृष्टान्तीकरोति, यथा-

केनापि वर्द्धकिना भागिनेयः स्वसुतां दत्त्वा गृहजामाता कृतः । स च कमपि व्यवसायं न करोति ततो वर्द्धकिदुहित्र्या प्रेरितः-किमिति पुरुषव्रतरहितः परदत्तमुपजीवंस्तिष्ठसि ? विधेहि किञ्चित् कर्मान्तरमिति । ततः कुठारं गृहीत्वा काष्ठकर्त्तनार्थमटवीं गतः । स्वाभिलषितकाष्ठप्राप्त्य-भावाच्च प्रतिदिवसं रिक्त एव निवर्त्तते । षष्ठे च मासे लब्धं कृष्णचित्रककाष्ठम् । घटितस्तत्र कुलकः-कलसिकाचतुर्थांशरूपो धान्यमानविशेषः । ततः प्रेषित स्वभार्या 'द्रव्यलक्षेण यो गृह्णाति तस्मै प्रदातव्यः' इत्युक्त्वा हट्टमार्गे विक्रयार्थम् । सा च तन्मूल्ये लक्षं याचमाना लोकैरुपहस्यते । समायातश्च तत्र कश्चिद् बुद्धिमान् वणिक्, परिभावितं च तेन स्वचेतसि-नूनमत्र कारणेन भवितव्यम्, यदेवमियमस्य काष्ठस्य मूल्ये लक्षं याचते । ततो यावत् तेन धान्यं मिमीते तावन्न कथञ्चित् क्षीयते । अतो धान्याद्यक्षयनिमित्तं लक्षमपि दत्त्वा गृहीतस्तेन कुलकः । ततः प्रभृति तेन सलक्षण-जामातृकेण गृहे धृतेन सर्वमपि वर्द्धकिकुटुम्बं धन-धान्यादीना वृद्धिमुपययौ ॥ तथा त्वमपि निजदुहितरं यद्यस्मै प्रयच्छसि ततोऽनेनास्मद्गृहे तिष्ठता समस्तलक्षणोपेतमद्वयमपि तिष्ठति । ततोऽश्वद्वयमाहात्म्येन च सर्वा सम्पदः करस्था एवास्माकं भवन्ति इत्यादि बहुविधमुक्त्वा दापिता तस्मै दुहिता ॥

अथ गाथाद्वयस्याक्षरार्थ-स्थायिन्यो नाम वडवास्ता उच्यन्ते या वर्षे वर्षे विजायन्ते । ताश्च वर्षमेकं कश्चिद् द्रमकः पालयति, उपलक्षणमिदम्, तेनाश्वानपि पालयतीत्यादि द्रष्टव्यम् । कथं पालयति ? इत्याह-'तस्य' अश्वाधिपतेः 'भागेन' वेतनभूताश्वद्वयलक्षणेन । ततश्च तस्य तत्राश्वडवं पालयतश्चेटिकया समं घटना । तया च स निकाचनां कारितः- एवंविधलक्षणोपेतमेवाश्वद्वयं ग्रहीतव्यं समं घटना । तया च स निकाचनां कारितः- एवंधलक्षणोपेतमेवाश्वद्वयं ग्रहीतव्यं

नान्यदिति। किं पुनस्तल्लक्षणम्? इत्याह-उपविष्टेष्वश्वेषु द्रुममारुह्य चर्मकुतपस्य पाषाणभृतस्य भूमौ पातनेन भेषणा कर्त्तव्या, यौ न त्रस्यतस्तौ लक्षणयुक्तौ। ततो भृतिकाले 'द्वयोरपि तयोः' सलक्षणयोरश्वयोरसौ ग्रहणं करोति। 'अलं मे परैरश्वैः, इदमेवाश्वद्वयं समर्पय' इत्येवम् 'आश्विकम्' अश्वस्वामिनं भणति। स च स्वभार्यावबोधाय 'वर्द्धकेः' रथकारस्य 'भद्रकः' भागिनेयस्तस्य यद् वर्द्धकिना दुहितुः प्रदानं ततः स्वभार्यया प्रेरितेन तेन कृष्णचित्रकाष्ठमानीय यत् कुलको घटितस्तेनोपलक्षितम् 'औपम्यं' दृष्टान्तं कृतवान्। एवं गच्छेऽपि लक्षणयुक्ते नोपधिना ज्ञानादीनां वृद्धिरुपजायते। ततश्च स्थितमेतत्-विधिनैव तथा वस्त्र छेदनीयं यथा प्रमाणयुक्तं भवति॥

अथ प्रमाणादिस्वरूपनिरूपणाय द्वारगाथामाह-

[भा.३९६१] दव्वप्पमाण अतिरेग हीन, परिकम्म विभूसणा य मुच्छा य।
उवहिस्स य प्पमाणं, जिन थेर अहक्कमं वोच्छं॥

वृ- इह द्रव्यं-वस्त्र तस्य प्रमाणं गणनया प्रमाणेन च द्विविधं वक्तव्यम्। अतिरिक्ते हीने वा वस्त्र दोषा अभिधातव्याः। परिकर्मणं सीवनमित्येकोऽर्थ, तन्निरूपयितव्यम्। "विभूसणा य" त्ति विभूषार्थं यदि वस्त्र क्षालयति वा रजति वा घर्षति वा सम्प्रमार्ष्टि वा तदा प्रायश्चित्तं भवतीति वक्तव्यम्। "मुच्छा य" त्ति मूर्च्छया यदि वस्त्र न परिभुङ्क्ते तदाऽपि प्रायश्चित्तं वक्तव्यम्। तत्र प्रथमद्वारे तावदुपधेः प्रमाणं जिनकल्पिक-स्थविरकल्पिकानङ्गीकृत्य यथाक्रममहं वक्ष्ये॥

प्रतिज्ञातमेव निर्वाहयितुं जिनकल्पिकानामुपधिं गणनाप्रमाणतो निरूपयति-

[भा.३९६२] पत्तं पत्ताबंधो, पायट्ठवणं च पायकेसरिया।
पडलाई रयत्ताणं, च गोच्छओ पायनिज्जोगो॥

वृ- 'पात्रं' प्रतिग्रहः, 'पात्रबन्धः' येन वस्त्रखण्डेव चतुरस्त्रेण पात्रकं धार्यते, 'पात्रस्थापनं' कम्बलमयं यत्र पात्रकं स्थाप्यते, 'पात्रकेसरिका' यया पात्रं प्रत्युपेक्ष्यते, 'पटलकानि' यानि भिक्षां पर्यटद्भिः पात्रोपरि स्थाप्यन्ते, 'रजस्त्राणं' पात्रवेष्टकम्, 'गोच्छकः' कम्बलमयो यः पात्रकोपरि दीयते। एष सप्तविधः 'पात्रनिर्योगः' पात्रपरिकरभूत उपकरणकलाप इत्यर्थः॥

[भा.३९६३] तिन्नेव य पच्छागा, रयहरणं चेव होइ मुहपोत्ती।
एसो दुवालसविहो, उवही जिनकप्पियाणं तु॥

वृ-तथा-'त्रय एव' न चतुः-पञ्चप्रभृतयः, क एते? इत्याह-'प्रच्छादकाः' प्रावरणरूपाः कल्पाः, द्वौ सौत्रिकावेकश्चौर्णामय इत्यर्थः। 'रजोहरणं' प्रतीतम्। 'चः' समुच्चये। एव शब्दः पादपूरणे। 'मुखपोतिका' प्रसिद्धा। एष द्वादशविध उपधिर्जिनकल्पिकानां मन्तव्यः। तुशब्दो विशेषणे, स चैतद् विशिनष्टि-जिनकल्पिका द्विविधाः-पाणिपात्राः प्रतिग्रहधारिणश्च। पुनरेकैके द्विविधाः- अप्रावरणाः सप्रावरणानां तु त्रिविधो वा चतुर्विधो वा पञ्चविधो वा-तत्र त्रिविधो रजोहरणं मुखवस्त्रिका एकः सौत्रिकः कल्पः, चतुर्विधः स एवौर्णिककल्पसहितः, पञ्चविधश्चतुर्विध एव द्वितीयसौत्रिककल्पेन सहितः। प्रतिग्रहधारिणां प्रावरणवर्जितानां च नवविध उपधि, तद्यथा- पात्रं १ पात्रकबन्धः २ पात्रस्थापनं ३ पात्रकेसरिका ४ पटकलानि ५ रजस्त्राणं ६ गोच्छकः ७ रजोहरणं ८ मुखवस्त्रका ९ चेति। ये तु प्रावरणसहितास्तेषामत्रैव नवविधे एककल्पप्रक्षेपे दशविधः, कल्पद्वयप्रक्षेपे एकादशभेदः, कल्पत्रयप्रक्षेपे तु द्वादशविधः। तदेवमुत्कर्षतो जिन-

कल्पिकानां द्वादशविध उपधि सम्भवति, एष तुशब्दसूचितो विशेषार्थः । ''एकग्रहणे तज्जातीयानां सर्वेषां ग्रहणम्'' इति न्यायाद् अन्येऽपि ये गच्छनिर्गतास्तेषां यथायोगमिदमेवोपकरण-प्रमाणमवसातव्यम् ।। अथ स्थविरकल्पिकानङ्गीकृत्याह-

[भा.३९६४] एए चेव दुवालस, मत्तग अइरेग चोलपट्टो य ।
एसो उ चउदसविहो, उवही पुन थेरकप्पम्मि ।।

वृ- 'एत एव' अनन्तरोक्ता द्वादशोपधिभेदा अपरं चातिरिक्तं मात्रकं चोलपट्टकश्च, एष चतुर्दशविध उपधिः स्थविरकल्पे भवति ।। अनन्तरोक्तमेवार्थमुपसंहरन्नाह–

[भा.३९६५] जिना बारसरुवाई, थेरा चउदसरुविणो ।
ओहेण उवहिमिच्छंति, अओ उड्ढं उवग्गहो ।।

वृ- 'जिनाः' जिनकल्पिका उपकरणानां द्वादशरुपाणि धारयन्तीति शेषः । स्थविरास्तु 'चतु-र्दशरुपिणः' उपकरणचतुर्दशकधारिण इत्यर्थः । एवम् 'ओधेन' सामान्येनोपधिमिच्छन्ति तीर्थकराः, औघोपधिमित्यर्थः । 'अत ऊर्ध्वम्' अतिरिक्तो दण्डक-चिलिमिलिकादि स्थविरकल्पिकानां सर्वोऽप्युपग्रहोपधिर्मन्तव्यः ।। अथ जिनकल्पिकानामुपधेरुत्कृष्टादिविभागं प्रमाणप्रमाणं चाह-

[भा.३९६६] चत्तारि य उक्कोसा, मज्झिमग-जहन्नगा वि चत्तारि ।
कप्पाणं तु पमाणं, संडासो दो य रयणीओ ।।

वृ- जिनकल्पिकानां चत्वार्युपकरणान्युत्कृष्टानि भवन्ति, त्रयः कल्पाः प्रतिग्रहश्चेति । मध्यमजघन्यान्यपि प्रत्येकं चत्वारि-तत्र पटलकानि रजस्त्राणं रजोहरणं पात्रकबन्धश्चेति मध्यमानि, मुखवस्त्रिका पात्रकेसरिका पात्रस्थापनं गोच्छकश्चेति जघन्यानि । एतेषां च ये कल्पास्तेषां 'सन्दंशकः' कुरण्टको द्वौ च 'रत्नी' हस्तौ दीर्घत्वेन प्रमाणे भवति, विस्तरतस्तु सार्धं हस्तमेकम्।। अथवा-

[भा. ३९६७] अन्नो वि य आएसो, संडासी सत्थिए जुवन्नेय ।
जं खंडियं दढं तं, छम्मासे दुब्बलं इयरं ।।

वृ- अन्योऽपि च 'आदेशः' प्रकारोऽस्ति । कः ? इत्याह-सन्दंशः स्वस्तिकश्च । तत्र जिनकल्पिकस्योत्कटुकनिविष्टस्य जानुसन्दंशकादारभ्य पुतौ पृष्ठं च छादयित्वा स्कन्धोपरि यावता प्राप्यते एतावत् तदीयकल्पस्य दैर्घ्यप्रमाणम्, अयं च सन्दंशक उच्यते । तथा तस्यैव कल्पस्य द्वावपि पृथुत्कर्णौ हस्ताभ्यां गृहीत्वा द्वे अपि बाहुशीर्षे यावत् प्राप्यते, तद्यथा-दक्षिणेन हस्तेन वामं बाहुशीर्षं वामेन दक्षिणम्, एष द्वयोरपि कलाचिकयोर्हृदये यो विन्यासविशेषः स स्वस्तिकाकार इति कृत्वा स्वस्तिक उच्यते, एतत् पृथुत्वप्रमाणमवसातव्यम् । ''जुवन्ने य'' त्ति निपन्नः-त्वग्वति-तस्तद्विषयं स्थविरकल्पिकानामादेशद्वयं तच्चाग्रे वक्ष्यते । जिनकल्पिकश्च यद् वस्त्र 'खण्डितम्' एकस्मात् पार्श्वतश्छिन्नं प्रमाणयुक्तं च यदि च तत् परिभुज्यमानं षण्मासान् यावद् ध्रियते तदीदृशं दढमिति ज्ञात्वा गृह्णाति, 'इतरद् नाम' षण्मासानपि यावन्न निर्वाहक्षमं तद् दुर्बलमिति कृत्वा न गृह्णाति ।। अथ किमर्थमसौ स्वस्तिकं करोति ? इत्याह–

[भा.३९६८] संडासछिड्डेण हिमादी एति, गुत्ता वऽगुत्ता वि य तस्स सेज्जा ।
हत्थेहि सो सोत्थिकडेहि घेत्तुं, वत्थस्स कोणे सुवई व झाति ।।

वृ- 'तस्य' जिनकल्पिकस्य शय्या 'गुप्ता वा' घनकुड्य-कपाटयुक्ता अगुप्ता वा भवेत्, अतः सन्दंशकच्छिद्रेण 'हिमादिकं' शीत-वात-सर्पादिकम् 'एति' आगच्छति, ततस्तस्य रक्षणार्थं 'स्वस्तिककृताभ्यां' स्वस्तिकाकारनिवेशिताभ्यां हस्ताभ्यां द्वावपि वस्त्रस्य कोणौ गृहीत्वा उत्कुटक एव स स्वपिति वा [illegible]ति वा । तत्र प्रायेण सर्व[illegible]रिकया जागर्त्ति पर केचिदाचार्या ब्रुवते-उत्कुटक एव तृतीये यामे क्षणमात्रं स्वपितीति ॥ अथ गच्छवासिनां कल्पप्रमाणमाह-

[भा.३९६९] कप्पा आयपमाणा, अड्ढाइज्जा उ वित्थडा हत्था ।
एयं मज्झिम मानं, उक्कोसं होंति चत्तारि ॥

वृ- कल्पाः 'आत्मप्रमाणाः' सार्धहस्तत्रयप्रमाणायामाः, अर्धतृतीयांश्च हस्तान् 'विस्तृताः' पृथुला विधेयाः, एतद् मध्यमं 'मानं' प्रमाणं भवति । उत्कर्षतो दैर्घ्येण चत्वारो हस्ताः । एतदादेशद्वयं मन्तव्यम् ॥ अत्रैव कारणमाह-

[भा.३९७०] संकुचिय तरुण आयप्पमाण सुयणे न सीयसंफासो ।
दुहओ पेल्लण थेरे, अनुचिय पाणाइरक्खाऽऽया ॥

वृ- यो भिक्षुस्तरुणो बलवान् स सङ्कुचितपाद स्वप्तुं शक्नोति, तस्य तथा स्वपने शीतस्पर्शो न भवति, अतस्तस्य आत्मप्रमाणाः कल्पा अनुज्ञाताः । यस्तु स्थविरो वयसा वृद्धः स क्षीणबलत्वान्न शक्नोति सङ्कुचितपादः शयितुम्, अतस्तस्यानुग्रहार्थं दैर्घ्येणात्मप्रमाणादूर्ध्व षडङ्गुलानि विस्तरतोऽप्यर्धतृतीयहस्तप्रमाणादभ्यधिकानि षडङ्गुलानि । एवं विधीयमाने गुणमुपदर्शयति- "दुहओ पेल्लण" त्ति शिरः-पादान्तलक्षणयोर्द्वयोरपि पार्श्वयोर्यत् कल्पस्य 'प्रेरणम्' आक्रमणं तेन स्थविरस्य शीतं न भवति । 'अनुचितः' अभावितः शैक्ष इत्यर्थः, तस्यापि स्वपनविधावनभिज्ञस्य कल्पप्रमाणमेवमेव ज्ञातव्यम् । अपि च एवं प्राणिनां रक्षा कृता भवति, न मण्डूकप्लुत्या कीटिकादयः प्राणिनः प्रविशन्तीति भावः, आदिशब्दाद् दीर्घजातीयादयोऽपि न प्रविशन्ति, तेनात्मनोऽपि रक्षा कृता भवति ॥

[भा.३९७१] पत्ताबंधपमाणं, भाणपमाणेन होइ कायव्वं ।
चउरंगुलं कमंता, पत्ताबंधस्स कोणा उ ॥

वृ- पात्रकबन्धप्रमाणं भाजनप्रमाणेन कर्त्तव्यं भवति । यदि मध्यमं जघन्यं वा पात्रं भवति तदा पात्रकबन्धोऽपि तदनुसारेण करणीयः, अथोत्कृष्टप्रमाणं पात्रं तदा सोऽपि गुरुतरः कार्यः । किं बहुना ? यथा ग्रन्थी कृते सति पात्रकबन्धस्य कोणाश्चतुरङ्गुलमूर्ध्वं क्रामन्तो भवन्ति, ग्रन्थेरतिरिक्ताश्चतुरङ्गुला अञ्चला यथा भवन्तीति भावः, तथा पात्रकबन्धप्रमाणं विधेयन् ॥

[भा.३९७२] रयताणस्स पमाणं, भाणपमाणेन होंति कायव्वं ।
पायाहिनं करिंति, मज्झे चउरंगुलं कमति ॥

वृ- रजस्त्राणस्य प्रमाणं भाजनप्रमाणेन कर्त्तव्यं भवति । कथम् ? इत्याह-प्रादक्षिण्येन वेष्टनं कुर्वत् पात्रस्य मध्ये 'चतुरङ्गुलं' चत्वार्यङ्गुलानि यथा रजस्त्रणमतिक्रामति तथा रजस्त्राणप्रमाणं विधेयम् ॥ पटलकानां प्रमाणमाह-

[भा.३९७३] तिविहम्मि कालछेए, तिविहा पडला उ होंति पायस्स ।
गिम्ह-सिसिर-वासासुं, उक्कोसा मज्झिम जहन्ना ॥

वृ- त्रिविधे 'कालच्छेदे' कालविभागे त्रिविधानि पटलकानि पात्रस्य भवन्ति। इदमेव व्याचष्टे-ग्रीष्म-शिशिर-वर्षासु प्रत्येकमुत्कृष्टानि मध्यमानि जघन्यानि च। तत्र यानि अत्यन्तदृढानि तान्युत्कृष्टानि, दृढ-दुर्बलानि मध्यमानि, दुर्बलानि जघन्यानि ॥ इदमेव भावयति-

[भा.३९७४] गिम्हासु तिन्नि पडला, चउरो हेमंते पंच वासासु।
उक्कोसगा उ एए, एत्तो वोच्छामि मज्झिमए ॥

वृ- 'ग्रीष्मेषु' चतुर्ष्वप्युष्णर्तुमासेषु त्रीणि पडलानि भवन्ति, कालस्यात्यन्तरुक्षतया त्वरितमेव पृथ्वीरजःप्रभृतीनां परिणतेस्तैः पटलकानां भेदासम्भवात्। चत्वारि पटलकानि 'हेमन्ते' शीतकाले भवन्ति, कालस्य स्निग्धतया विमर्दने पृथिवीरजःप्रभृतीनां परिणतेः। पञ्च पटलकानि वर्षासु भवन्ति, कालस्यात्यन्तस्निग्धत्वात्। एतान्युत्कृष्टानि मन्तव्यानि। अत ऊर्ध्वं मध्यमानि वक्ष्ये। प्रतिज्ञातमेवाह-

[भा.३९७५] गिम्हासु होंति चउरो, पंच य हेमंते छच्च वासासु।
मज्झिमगा खलु एए, एत्तो उ जहन्नए वोच्छं ॥

वृ- ग्रीष्मेषु चत्वारि पटलकानि, हेमन्ते पञ्च, वर्षासु षट्, मनाग् जीर्णतया प्रभूततराणामेव स्वकार्यसाधनात्। एतानि खलु मध्यमकानि मन्तव्यानि। अत ऊर्ध्वं जघन्यानि वक्ष्ये ॥

[भा.३९७६] गिम्हासु पंच पडला, हेमंते छच्च सत्त वासासु।
तिविहम्मि कालछेए, तिविहा पडला उ पायस्स ॥

वृ-ग्रीष्मेषु पञ्च पटलकानि, हेमन्ते षट्, वर्षासु सप्त। एतानि जघन्यानि। एवं त्रिविधे कालच्छेदे त्रिविधानि पटलकानि पात्रस्य भवन्ति ॥ उक्तं पटलकानां गणनाप्रमाणम्, अथ प्रमाणप्रमाणम्-तत्र च विशेषचूर्णि-गच्छनिग्गयाणं चउरंसा पडला, जं भाणे मज्झे कए हेट्ठा अट्ठ अंगुलाइं लंबंति। गच्छवासीणं जं उग्गाहिए समाणे चउहिं अंगुलेहिं जन्नुए न पावति; अहवा दीहत्तणेण अड्ढाइज्जा हत्था, रुंदत्तणेण दिवड्ढो हत्थो ॥ रजोहरणप्रमाणमाह-

[भा.३९७७] घनं मूले थिरं मज्झे, अग्गे मद्दवजुत्तया।
एगंगियं अझुसिरं, पोरायामं तिपासियं ॥

वृ- 'मूले' हस्तग्रहणप्रदेशे रजोहरणं 'घनं' निविडवेष्टितम्, 'मध्ये' मध्यभागे 'स्थिरं' दृढम्, 'अग्रे' दशिकापर्यन्ते 'मार्दवयुक्तता' दशिका मृदुस्पर्शा विधेया इत्यर्थः। 'एकाङ्गिकं नाम' तज्जातदशिकं न वा व्यादिखण्डनिष्पन्नम्, 'अशुषिरं' न रोमबहुलं न वा ग्रन्थिलम्, ''पोरायामं'' ति पर्वायामं अङ्गुष्ठपर्वणि प्रतिष्ठितायाः प्रदेशिन्या यावदपान्तरालं तावत्प्रमाणायामम्, ''तिपासियं'' ति त्रिभिर्दवरकवेष्टकैः पाशितं-बद्धम्, एवंविधं रजोहरणं कर्त्तव्यम् ॥ इदमेव स्पष्टतरमाह-

[भा.३९७८] अप्पोलं मिउपम्हं च, पडिपुन्नं हत्थपूरिमं।
तिपरियल्लमणीसट्ठं, रयहरणं धारए मुनी ॥

वृ- 'अप्पोलं' दृढवेष्टनादशुषिरमशुषिरदण्डं वा, तथा मृदूनि-कोमलानि पक्ष्माणि-दशिकारोमाग्रभागरूपाणि यस्य तद् मृदुपक्ष्मकम्, 'प्रतिपूर्णं' बाहुल्येन निषद्याद्वयेन युक्तं सद् 'हस्तपूरिमं' यथा हस्तं पूरयति तथा कर्त्तव्यमित्यर्थः, 'त्रिपरिवर्त्तं' त्रीन् वारान् वेष्टनीयम् 'अनिसृष्टं नाम' हस्तप्रमाणादवग्रहादस्फोटितम्, एवंविधं रजोहरणं मुनिर्धारयेत् ॥

[भा.३९७९] उण्णियं उट्टियं चेव, कंबलं पायपुंछणं।
रयणीपमाणमित्तं, कुज्जा पोरपरिग्गहं ॥

वृ- 'और्णिकम्' ऊर्णामयं 'औष्ट्रिकं वा' उष्ट्ररोममयं यत् कम्बलं तत् 'पादप्रोञ्छनं' रजोहरणं कर्त्तव्यम्। 'रत्निप्रमाणमात्रं' हस्तप्रमाणायामदण्डकं 'पर्वपरिग्रहम्' अङ्गुष्ठपर्वलग्नप्रदेशिनी-शुषिरपूरकम् एवंविधं रजोहरणं कुर्यात् ॥ औपग्रहिकोपधिविशेषभूतानां संस्तारकादीनां प्रमाणमाह-

[भा.३९८०] संथारुत्तरपट्टा, अड्डाइज्जा उ आयया हत्थे।
तेसिं विक्खंभो पुन, हत्थं चतुरंगुलं चेव ॥

वृ- संस्तारकोत्तरपट्टकावर्धतृतीयान् हस्तान् 'आयतौ' दीर्घौ भवतः, तयोः 'विष्कम्भः' विस्तारः पुनरेकं हस्तं चतुरङ्गुलं च भवति, चतुर्भिरङ्गुलैरधिको हस्त इत्यर्थः ॥

[भा.३९८१] दुगुणो चतुग्गुणो वा, हत्थो चतुरंसो चोलपट्टो उ।
एगगुणा उ निसेज्जा, हत्थपमाणा सपच्छाया ॥

वृ- द्विगुणश्चतुर्गुणो वा कृतः सन् यथा हस्तप्रमाणश्चतुरस्त्र भवति तथा चोलपट्टकः कर्त्तव्यः। तत्र द्विगुणः स्थविराणाम्, चतुर्गुणस्तरुणानाम्। तथा रजोहरणपट्टस्यौर्णिकी निषद्या 'एकगुणा' गुणनया एकत्वसङ्ख्यायुक्ता प्रमाणेन च हस्तप्रमाणा 'सप्रच्छादका' तावत्प्रमाणयैव सौत्रिकया प्रच्छादकनिषद्यया सहिता भवति ॥ मुखवस्त्रिकाप्रमाणमाह-

[भा.३९८२] चउरंगुलं विहत्थी, एयं मुहणंतगस्स उ पमाणं।
बितियं पि य प्पमाणं, मुहप्पमाणेण कायव्वं ॥

वृ- 'चतुरङ्गुलं' चत्वार्यङ्गुलानि वितस्तिश्चैका एतद् 'मुखानन्तकस्य' मुखवस्त्रकायाः प्रमाणम्। द्वितीयमप्यत्र प्रमाणं भवति, किम्? इत्याह-मुखप्रमाणेन मुखानन्तकं कर्त्तव्यम्। किमुक्तं भवति?-वसतिं प्रमार्जयन् रजःप्रवेशरक्षणार्थं कोणद्वये गृहीत्वा नासिकां मुखं च प्रच्छाद्य कृकाटिकायां यावता ग्रन्थिं दातुं शक्नोति तावत्प्रमाणा मुखवस्त्रका कर्त्तव्या ॥

[भा.३९८३] गोच्छक पडिलेहणिया, पायट्ठवणं च होइ तह चेव।
तिण्हं पि य प्पमाणं, विहत्थि चउरंगुलं चेव ॥

वृ- गोच्छकः पात्रप्रत्युपेक्षणिका पात्रकस्थापनं च तथैवात्र प्रमाणतो निरुपणीयं भवति। कथम्? इत्याह-'त्रयाणामपि' गोच्छकादीनां प्रमाणं वितस्तिश्चतुरङ्गुलं च भवति, षोडशाङ्गुल-प्रमाणानि चतुरस्त्राणि त्रीण्यपि भवन्तीति भावः ॥ तदेवमुक्तं पात्र-मात्रकवर्जितानां शेषोपकरणानां प्रमाणम्, पात्र-मात्रकयोस्तु वस्त्राधिकारादत्र न क्रियते, पुरस्ताद् विधास्यते। इह स्थविरकल्पिकानां त्रयः प्रच्छादका भवन्तीति पूर्वमुक्तं तदिदानीं प्रकटयन्नाह-

[भा.३९८४] जो वि तिवत्थ दुवत्थो, एगेन अचेलगो व संथरइ।
न हु ते खिंसंति परं, सव्वेण वि तिन्नि घेत्तव्वा ॥

वृ- योऽपि साधुः त्रिवस्त्र द्विवस्त्र वा संस्तरति, त्रिभिर्द्वाभ्यां वा कल्पैरित्यर्थः, स त्रीन् द्वौ वा कल्पान् परिभुङ्क्ताम्, योऽप्येकेन कल्पेन संस्तरति स एकमेव परिभुङ्क्ताम्, यो वा जिनकल्पिकादिरचेलकः संस्तरति स एकमपि कल्पं मा गृह्णातु, परं 'नहि' नैव 'ते' स्वल्पतरवस्त्र अचेलका वा 'परम्' अन्यमधिकतरवस्त्र खिंसन्ति। कुतः? इति चेद् उच्यते-सर्वेणापि

स्थविरकल्पिकेन त्रयः कल्पा नियमाद् ग्रहीतव्याः । यद्यपि शीतपरीषहसहिष्णुतया कश्चिदेकेनापि कल्पेनाप्रावृतः संस्तरति तथापि भागवतीमाज्ञामनुवर्त्तमानः सोऽपि त्रीन् कल्पान् गृह्णाति ॥ किमर्थं पुनरीदृशी भगवताऽऽज्ञा ? इति उच्यते-

[भा.३९८५] अप्पा असंथरंतो, निवारिओ होइ तीहि वत्थेहिं ।
गिण्हति गुरुविदिन्ने, पगासपडिलेहणे सत्त ॥

वृ- 'आत्मा' शरीरं स शीतादिना 'असंस्तरन्' त्रिभिर्वस्त्रैर्निवारितो भवति । तथा चात्र विशेषचूर्णिलिखितो भावार्थ- उस्सग्गेणं न चेव पाउरियव्वं । जाहे न संथरइ ताहे एक्कं पाउणइ । जाहे तेन वि न संथरेज्जा ताहे बिइयं पि उन्नियं पाउणेयं पाउणेज्जा । जाहे तेन वि न संथरेज्जा ताहे तइयं पि पाउणिज्जा । जइ नाम तह वि न संथरेज्जा ताहे तिन्नि वि घेत्तूणं बाहिं पडिमाए ठाइ, ताव अच्छइ जाव सीएणं नीसट्ठं द्राविती, पच्छा तम्मि चेव निवेसइ । जइ तत्थ न संथरेज्जा ताहे अंतो पडिमं ठाइ, तत्थ झाणोवगओ चिट्ठइ । जइ न संथरइ ताहे बिइयं, ततो तइयं, तत्थ से अईव सायं भवइ । एवं अप्पा तिहिं वत्थेहिं निवारिओ हवइ त्ति । अथ तानि परिजीर्णानि ततो न त्रिभिः शीतं निवारयितुं पार्यते तत आह-गुरुभिः- आचार्यैर्वितीर्णानि 'प्रकाशप्रत्युपेक्षणानि' जीर्णत्वादचौरहरणीयानि सप्त वस्त्राण्युत्कर्षतो गृह्णाति इदमेव स्पष्टयति-

[भा.३९८६] तिन्नि कसिणे जहन्ने, पंच य दढदुब्बलाइं गेण्हेज्जा ।
सत्त य परिजुन्नाइं, एयं उक्कोसगं गहणं ॥

वृ- कृत्स्नानि नाम-घनमसृणानि यैरन्तरितः सविता न दृश्यते ईदृशानि त्रीणि वस्त्राणि जघन्यतो गृह्णीयात्, यानि तु दृढदुर्बलानि तानि पञ्च गृह्णीयात्, यानि परिजीर्णानि तानि सप्त । एतदुत्कृष्टं ग्रहणं मन्तव्यम् ॥ कीदृशं पुनरुपधिं भिक्षुर्धारयति ? इत्याह-

[भा.३९८७] भिन्नं गणनाजुत्तं, पमाण इंगाल-धूमपरिसुद्धं ।
उवहिं धारए भिक्खू, जो गणचिंतं न चिंतेइ ॥

वृ- 'भिन्नं नाम' सदशं सकलं वा यन्न भवति, 'गणनायुक्तं' गणनाप्रमाणोपेतम्, प्रमाणेन च-यथोक्तदैर्ध्य-विस्तरविषयमानेन युक्तमित्यनुवर्तुति, तथा 'अङ्गार-धूमाभ्यां' राग-द्वेषपरिणामाभ्यां परि-समन्तात् शुद्धं-विरहितम्, एवंविधमुपधिं स भिक्षुर्धारयेत्, यो गणचिन्तां न चिन्तयति, सामान्यसाधुरिति भावः । यस्तु गणचिन्तकस्तस्य न प्रतिनियतमुपधिप्रमाणम् ॥ तथा चाह-

[भा.३९८८] गणचिंतगस्स एत्तो, उक्कोसो मज्झिमो जहन्नो य ।
सव्वो वि होई उवही, उवग्गहकरो महानस्स ॥

वृ- गणचिन्तकः- गणावच्छेदिकादिस्तस्य सत्तायामत ऊर्द्ध उत्कृष्टो मध्यमो जघन्यश्च 'सर्वोऽपि' औघिक-औपग्रहिकश्चोपधिर्महाजनस्योपग्रहकरो भवति ॥ इदमेव भावयति-

[भा.३९८९] आलंबने विसुद्धे, दुगुणो तिगुणो चउग्गुणो वा वि ।
सव्वो वि होइ उवही, उव्वग्गहकरो महानस्स ॥

वृ- आलम्बनं द्विधा-द्रव्यतो गर्त्तादौ निमज्जतो रज्ज्वादि, भावतः संसारगर्त्तायां निपततां ज्ञानादि। इह पुनर्यत्र क्षेत्रे काले वा दुर्लभं वस्त्र तदादिकमालम्बनं गृह्यते, तत्र 'विशुद्धे' प्रशस्ते सति द्विगुणो वा त्रिगुणो वा चतुर्गुणो वा औघिक औपग्रहिकश्चोपधि सर्वोऽपि 'महाजनस्य'

गच्छस्योपग्रहकरो भविष्यतीति कृत्वा गणचिन्तकस्य परिग्रहे भवतीति ॥

गतं प्रमाणद्वारम्, अथातिरिक्त-हीनद्वारमाह-

[भा.३९९०] पेहा-ऽपेहादोसा, भारो अहिकरणमेव अतिरित्ते ।
एए भवंति दोसा, कज्जविवत्ती य हीनम्मि ॥

वृ- अतिरिक्तमुपधिं यदि प्रत्युपेक्षते तदा सूत्रा-ऽर्थयोर्महान् परिमन्थः, अथ न प्रत्युपेक्षते तत उपधिनिष्पन्नम्, एवं प्रेक्षा-ऽप्रेक्षयोरुभयोरपि दोषाः । भारश्च महान् मार्गे गच्छतां भवति । अपरिभोग्यस्य चोपधेर्धारणे अधिकरणम् । एतेऽतिरिक्ते दोषा भवन्ति । अथ 'हीनं' यथोक्तप्रमाणाद् न्युनमुपकरणं भवति ततः कार्यस्य विपत्ति, यत् तेन कल्पादिना कार्यं तन्न सिध्यतीति भावः ॥ अथ परिकर्मणिद्वारमाह—

[भा.३९९१]परिकम्मणि चउभंगो, कारणे विहि बितिओं कारणे अविहिं ।
निक्कारणम्मि उ [illegible], चउत्थो निक्कारणे अविहिं ॥

वृ- परिकर्मणायां चतुर्भङ्गी, गाथायां पुंस्त्वं प्राकृतत्वात् । सा चेयम्-कारणे विधिना परिकर्मणमित्येको भङ्गी, कारणेऽविधिनेति द्वितीयः, निष्कारणे विधिनेति तृतीयः, निष्कारणे-ऽविधिनेति चतुर्थः ॥

[भा.३९९२] कारणे अणुन्न विहिना, सुद्धो सेसेसु मासिका तिन्नि ।
तव-कालेसु विसिड्डा, अंते [illegible] दोहिं [illegible] ॥

वृ- कारणे विधिना परिकर्मणमनुज्ञातम्, अत एवायं प्रथमो भङ्गः शुद्धः । 'शेषेषु' त्रिषु भङ्गेषु त्रीणि मासिकानि भवन्ति, नवरं तपः-कालयोर्विशिष्टानि-तत्र द्वितीयभङ्गे कालगुरुकम्, तृतीये तपोगुरुकम्, 'अन्त्ये' चतुर्थभङ्गे 'द्वाभ्यामपि' तपः-कालाभ्यां गुरुकम् । अत्र च गर्गरसीवनादिकम् अविधिपरिकर्मणं मन्तव्यम् । एकसरा द्विसरा ऋषकण्टका च सीवनिका विधिपरिकर्मणं समनुज्ञा-तम् ॥ विभूषाद्वारमाह-

[भा.३९९३] उदाहडा जे हरियाहडिए, परेहि धोयाइपया उ वत्थे ।
भूसानिमित्तं खलु ते करिंति, उग्घातिमा वत्थे सवित्थरा उ ॥

वृ- प्रथमोद्देशके हृताहृतिकासूत्रे 'परैः' स्तेनैः कृतानि धौतादिपदानि यानि वस्त्रे उदाहृतानि तानि यद्यात्मनो विभूषानिमित्तं करोति तदा सविस्तराश्चत्वार उद्घातिमा मासा भवन्ति । इयमत्र भावना-विभूषानिमित्तं यद्यात्मीयं वस्त्रं प्रक्षालयति रजति घृष्टं मृष्टं वा करोति पटवासादिना वा वासयति तदा चतुर्लघुकम् । सविस्तरग्रहणाद् धौतादिपदानि कुर्वतो या आत्मविराधना तन्निष्पन्नमपि प्रायश्चित्तम् ॥ किमर्थं पुनर्विभूषामासेवते ? इत्याह-

[भा.३९९४] मलेन घत्थं बहुना उ वत्थं, उज्झाइगो हं चिमिणा भवामि ।
हं तस्स धोव्वम्मि करेमि तत्तिं, वरं न जोगो मलिनान जोगो ।

वृ- इदं मदीयं वस्त्र बहुना मलेन 'ग्रस्तम्' आपूरितम्, अतोऽनेनाहं "उज्झाइओ" विरुपो भवामि । यतश्चाहं विरुप उपलभ्ये ततः 'तस्य' वस्त्रस्य धौतव्ये तप्तिमहं करोमि, येन गोमूत्रादिना शुध्यति तदानयामीत्यर्थः । कुतः ? इत्याह-वरं मे वस्त्रेण सह न योगः, परं मलिनवस्त्रेणं योगो न वरम्, मलिनवस्त्रप्रावरणादप्रावरणमेव श्रेय इति भावः । कारणे तु वस्त्र धावन्नपि शुद्धः ॥

परः प्राह-ननु वस्त्रधावने विभूषा भवति, सा च साधूनां कर्तुं न कल्पते, ''विभूसा इत्थिसंसग्गी'' इत्यादिवचनात्; सूरिराह-

[भा.३९९५]कामं विभूजा खलु लोभदोसो, तहा वि तं पाउणओ न दोसो ।
मा हीलणिज्जो इमिणा भविस्सं, पुव्विड्डिमाई इय संजई वि ॥

वृ- 'कामम्' अनुमतमेतत्, 'खलुः' अवधारणे, यैषा विभूषा सा लोभदोष एव, तथापि 'तद्' वस्त्रं शुचि भूतं कारणे कृत्वा प्रावृण्वतो न दोषः । कस्य ? इत्याह-यः पूर्वं राजादिक ऋद्धिमानासीत् स तादृशीमृद्धिं विहाय प्रव्रजितः सन् चिन्तयति-माऽमुना मलक्लिन्नवाससा अबुधजनस्येहलोक-प्रतिबद्धस्य हीलनीयो भविष्यामि, यथा-नूनं केनापि देवादिना शापशप्तोऽयम्, यदेवं तादृशीं विभूतिं विहाय साम्प्रतमीदृशीमवस्थां प्राप्तः । आदिशब्दादाचार्यादिरप्येवमेव शुचिभूतं वस्त्रं प्रावृणोति । संयत्यपि ऋद्धिमत्प्रव्रजिता नित्यं पाण्डुरपटप्रावृता तिष्ठति पर्यटति वा ॥

शुचिभूतं वस्त्र प्रावृण्वतस्तस्य कथं रागो भवति ? इत्याह-

[भा.३९९६] न तस्स वत्थाइसु कोइ संगो, रज्जं तणं चेव जढं तु तेनं ।
जो सो उ उज्झाइय वत्यजोगो, तं गारवा सो न चएति मोत्तुं ॥

वृ- योऽसौ ऋद्धिमान् प्रव्रजितस्तस्य वस्त्रादिषु 'कोऽपि' स्वल्पोऽपि 'सङ्गः' रागो नास्ति, यतः 'तेन' महात्मना राज्यं तृणमिव परित्यक्तम्; यः पुनरसौ ''उज्झाइओ'' विरूपोऽहममुना मलविलीनेन वाससा इत्येवमभिप्रायेण धौतादिगुणोपेतस्य वस्त्रस्य योगस्तमसौ विभूषाप्रियः संयतः ''गारव'' त्ति ऋद्धिगौरवान्न मोक्तुं शक्नोति, अतस्तस्य प्रायश्चित्तमुक्तमिति भावः ॥

गतं विभूषाद्वारम् । अथ मूर्च्छाद्वारमाह-

[भा.३९९७]महद्धने अप्पधने व वत्थे, मुच्छिज्जती जो अविवित्तभावो ।
सतं पि नो भुंजति मा हु झिज्झे, वारेति चऽन्नं कसिणा दुगा दो ॥

वृ- 'महाधने' महामूल्ये 'अल्पधने वा' अल्पमूल्ये वस्त्रे यः 'अविविक्तभावः' विवेकविकलाशयः 'मूर्च्छति' मूर्च्छा करोति; कथमेतद् ज्ञायते ? इत्याह-स्वयमपि तत् प्रधानं वस्त्र न परिभुङ्क्ते 'मा क्षीयतां' मा परिभुज्यमानं सत् परिजीर्यतामिति कृत्वा, 'अन्यं' परिभुञ्जानं च वारयति, तस्य प्रायश्चित्तम् 'कृत्वाः' सम्पूर्णा ''दुगा दो'' त्ति चत्वारो मासाः, चतुर्गुरुकमित्यर्थः ॥

अथ किमर्थं वस्त्र मूर्च्छा करोति ? इत्याह-

[भा.३९९८] देसिल्लगं वन्नजुयं मणुन्नं, चिरादनं दाइ सिनेहओ वा ।
लब्भं च अन्नं पि इमप्पभावा, मुच्छिज्जई ईय भिसं कुसत्तो ॥

वृ- ''देसिल्लगं'' देशविशेषोद्भवम्, 'वर्णयुतं' वर्णाढ्यम्, स्वदेशीयं परदेशीयं वा श्लक्ष्णं स्थूलं वा यद् मनसो रुच्यते तद् मनोज्ञम्, 'चिरन्तनं नाम' यदाचार्यपरम्परागतम्, ''दाइ'' ति निपातो विकल्पार्थे, येन वा तत् प्रदत्तं तस्योपरि महान् स्नेहः, यद्वाऽमुना वस्त्रेण तिष्ठताऽहमन्यदपि वस्त्रमेतत्प्रभावादेव लप्स्ये, एवमेभिः कारणैः 'भृशम्' अत्यर्थं 'कुसत्त्वः' तुच्छधृतिबलो मूर्च्छति, मूर्च्छतश्च न विवक्षितं वस्त्र परिभुङ्क्ते ॥

उक्तो वस्त्रविषयो विधिः, अथ पात्रविषयं तमेवाभिधित्सुराह-

[भा.३९९९] दव्वप्पमाणअतिरेगहीनदोसा तहेव अववाए ।

लक्खणमलक्खणं तिविह उवहि वोच्चत्थ आणादी ।।

[भा.४०००]　को पोरुसी य कालो, आगर चाउल जहन्न जयणाए ।

चोदग असती असिवे, पमाण उवओग छेयण मुहे य ।।

वृ- द्रव्यमिह-पात्रं तस्य यद् वक्ष्यमाणं प्रमाणं ततोऽतिरिक्ते हीने च पात्रे दोषा वक्तव्याः वा अलक्षणम् ? ३ । 'त्रिविधः' उत्कृष्टादिभेदाद् यथाकृतादिभेदाद्वा त्रिप्रकार उपधिर्यथा गृह्यते ४। यथोक्तक्रमाच्च विपर्यस्तेन ग्रहणे प्रायश्चित्तमाज्ञादयश्च दोषाः ५ ।। तथा ''को'' त्ति कः पात्रं गृह्णाति ? ६ । ''पोरिसि'' त्ति बहुबन्धनबद्धं पात्रं धारयता सूत्राऽर्थपौरुष्यौ द्वे अपि हापयित्वाऽपरं पात्रं गवेषणीयम् ७ । ''कालो'' त्ति तस्य च गवेषणे कियान् कालः ? इति ८ । 'आकरः' कुत्रिकापणादि यत्र पात्रं गवेष्यमाणं लभ्यते ९ । ''चाउल'' त्ति तन्दुलधावनेन उपलक्षणत्वादुष्णोदकादिना वा भावितं किं कल्पते ? न वा ? इति १० । ''जहन्न जयण'' त्ति जघन्यं पञ्चकप्रायश्चित्तम्, जघन्यानि वा-सर्षपादीनि बीजानि तद्युक्तमपि पात्रं यतनया ग्रहीतव्यम् ११ । नोदकः प्रेरयति-कथं बीजभृतमपि पात्रमनुज्ञायते ? १२ । सूरिराह-यदेतद् बीजयुक्तपात्रग्रहणमनुज्ञातं तद् 'असत्तायां' पात्रकस्याभावे, यत्र वा भाजनानि लभ्यन्ते तत्र अपान्तराले वा अशिवम् १३ । ''पमाण उवओग छेयण'' त्ति यदि प्रमाणयुक्तं पात्रं न लभ्यते तत उपयोगपूर्वकं पात्रस्य छेदनं विधाय प्रमाणं विधेयम् १४ । ''मुहे'' त्ति अल्पपरिकर्म-सपरिकर्मकयोर्मुखकरणं सम्भवति न यथाकृते १५ । एवमेतानि द्वाराणि प्ररुपणीयानीति द्वारगाथाद्वयसङ्क्षेपार्थः ।।

साम्प्रतमेतदेव विवरीषुराह-

[भा.४००१]　पमाणातिरेगधरणे, चउरो मासा हवंति उग्घाया ।

आणाइणो य दोसा, विराधना संजमा-ऽऽयाए ।।

वृ- प्रमाणातिरिक्तपात्रकस्य धारणे चत्वारो मासा उद्घातिका भवन्ति, आज्ञादयश्च दोषाः, विराधना च संयमा-ऽऽत्मविषया ।। इदमेव भावयति-

[भा.४००२]　गणनाए पमाणेण य, गणनाए समत्तओ पडिग्गहओ ।

पलिमंथ भेरुड्डुंग, अतिप्पमाणे इमे दोसा ।।

वृ- गणनया प्रमामेन च पात्रकस्य प्रमाणं द्विविधम् । तत्र गणनायां 'समात्रकः' मात्रकसहितः प्रतिग्रहो मन्तव्यः । अथ इत ऊर्ध्वं तृतीयादिकं पात्रं धारयति ततः परिकर्मण-रञ्जनादौ प्रत्युपेक्षणादिषु च महान् परिमन्थो भवति, अध्वनि बहूनि पात्राणि बहमानस्य भारः, बहूपकरणश्च 'उड्डुण्डुकः' जनोपहास्यो भवति, अहो ! भारवाहकोऽयमिति । तत्र च 'अतिप्रमाणे' प्रमाणद्वयातिरिक्ते पात्रे एते दोषाः ।। तद्यथा-

[भा.४००३]　भारेण वेयणा वा, अभिहणमाई न पेहए दोसा ।

रीयाइ संजमम्मि य, छक्काया भाणभेओ य ।।

वृ- प्रभूतपात्रवहने भारेणाक्रान्तस्य वेदना, तयाऽर्दितो गो-हस्ति-तुरङ्गमादीनभिघातं-प्रहारं प्रयच्छति, न पश्यति, आदिशब्दात् स्थाणु-कण्टकादीनि न प्रेक्षते, एवमात्मविराधनायां दोषाः। संयमविराधनायाम् ईर्यादिकं न शोधयति, ततश्च षट्कायविराधना, अनुपयुक्तो वा प्रस्खलितो भाजनभेदमपि विदध्यात् ।। एते गणनातिरिक्ते दोषा उक्ताः, प्रमाणातिरिक्ते तु पात्रे इमे दोषाः-

[भा.४००४] भाणऽप्पमाणगहणे, भुंजणे गेलन्नऽभुंज उज्झिमिगा।
एसणपेल्लण भेओ, हानि अडंते दुविह दोसा ॥

वृ- "भाणऽप्पमाण" त्ति अकारप्रश्लेषाद् 'अप्रमाणस्य' अतिबृहत्तरप्रमाणस्य भाजनस्य, ग्रहणे इमे दोषाः-तदतिबृहत्तरं भाजनं परिपूर्णमपि भृत्वा यदि सर्वमपि भुङ्क्ते ततो ज्वरादिकं ग्लानत्वं भवेत्। अथ न भुङ्क्ते ततः 'उज्झिमिका' परिष्ठापनिका भवति। अतिबृहत्तरं च पात्रं यदा चिरेणापि न पूर्यते तदा एषणाप्रेरणं कृत्वाऽपि बिभृयात्। भरितं चातिभारेण प्रतिस्खल्य भेदमुपगच्छेत्। ततो भाजनेन विना या आत्मनः कार्यपरिहाणिस्तन्निष्पन्नं प्रायश्चित्तम्। गुरुत्वेन चात्म-संयमविराधनालक्षणा द्विविधा दोषा भवन्ति-तत्रात्मविराधनायां पर्यटतोऽतिभारेण कटी-स्कन्धादिकं परिताप्येत, संयमविराधनायामीर्यामशोधयन् षट्कायान् विराधयेत् ॥

गतमतिरिक्तद्वारम्। अथ हीनद्वारमाह-

[भा.४००५] हीनप्पमाणधरणे, चउरो मासा हवंति उग्घाया।
आणादियो य दोसा, विराधना संजमा-ऽऽयाए ॥

वृ- यत् प्रतिग्रहस्य मात्रकस्य वा प्रमाणं वक्ष्यते ततो हीनं यदि धारयति तदा चत्वारो मासा उद्घातिमा भवन्ति, एतच्च प्रतिग्रहे मन्तव्यम्। मात्रके तु मासलघु। आह च निशीथचूर्णिकृत्- पडिग्गहगे चउलहुं, मत्तगे मासलहुं। आज्ञादयश्च दोषाः, विराधना च संयमा-ऽऽत्मविषया ॥

इदमेव भावयति-

[भा.४००६] ऊनेन न पूरिस्सं, आकंठा तेन गेण्हती उभयं।
मा लेवकडं ति पुनो, तत्थुवओगो न भूमीए ॥

वृ- अनेन प्रमाणहीनेन 'ऊनेन' अभरितेन नाहमात्मानं पूरयिष्ये, तत आकण्ठात् तत्र भाजने 'उभयमपि' कूरं कुसणं च गृह्णाति। ततो मा पात्रबन्धो लेपकृतो भवत्विति कृत्वा 'तत्रैव' पात्रकबन्धखरण्टने उपयोगो भवति, न पुनर्भूमौ ॥ अनुपयुक्तस्य चेमे दोषाः-

[भा.४००७] खाणू कंटग विसमे, अभिहणमाई न पेहए दोसे।
रीया पगलिय तेनग, भायणभेए य छक्काया ॥

वृ- ईर्यायामनुपयुक्तः स्थाणुना कण्टकेन वा विध्यते, विषमे वा भूभागे निपतेत्, गवादिकृताभिघातादींश्च दोषान् न प्रेक्षते, इयमात्मविराधना। संयमविराधना त्वेवम्-अनुपयुक्त ईर्यां न शोधयते, भाजनाच्च भक्तं पानकं वा परिगलेत्, तच्च प्रगलितं विलोक्य स्तेनाः 'परिपूर्ण भृतमिदं भाजनमस्ति' इति परिभाव्यापहरेयुः। अथ कुत्रापि प्रस्खलितस्ततो भाजनभेदः षट्कायविराधना वा भवेत् ॥

[भा.४००८] गुरु पाहुण खम दुब्बल, बाले वुड्ढे गिलाण सेहे य।
लाभाऽऽलाभऽद्धाणे, अनुकंपा लाभवोच्छेदो ॥

वृ- प्रमाणहीनं भाजनं धारयता गुरु-प्राघुणक-क्षपक-दुर्बला बालो वृद्धो ग्लानः शैक्षश्च परित्यक्ता मन्तव्याः। तथा क्षेत्रप्रत्युपेक्षणार्थं प्रेषितस्तेन लघीयसा भाजनेन कथं लाभा-ऽलाभपरीक्षां करोतु? छिन्नाध्वनि वा कश्चिद् दानश्रद्धालुरनुकम्पया यद् यदुपस्थाप्यते तत् तद् भाजनं भरति, तत्र गच्छसाधारणं भाजनमुपस्थापयितव्यम्। हीनभाजने पुनरुपस्थाप्यमानेतस्य लाभस्य व्यवच्छेदो

भवति, निर्जरायाश्च लाभो न भवतीति सङ्क्षेपेण गाथासमासार्थः ॥

अथैनामेव विवरीषुः प्रथमतः प्रायश्चित्तमाह-

[भा.४००९] गुरुगा य गुरु-गिलाणे, पाहुण-खमए य चउलहू होंति ।
सेहस्स होइ गुरुओ, दुब्बल जुयले य मासलहु ॥

वृ- गुरूणां ग्लानस्य चोपष्टम्भमकुर्वतश्चतुर्गुरुकाः । प्राघुणकस्य क्षपकस्य चोपष्टम्भाकरणे चतुर्लघवो भवन्ति । शैक्षस्यादाने मासगुरुकः । दुर्बलस्य 'युगलस्य च' बाल-वृद्धलक्षणस्यादाने मासलघु ॥

[भा.४०१०] अप्प-परपरिच्चाओ, गुरुमाईणं अदेंत-देंतस्स ।
अपरिच्छिए य दोसा, वोच्छेओ निज्जराऽलाभे ॥

वृ- लघुतरभाजनगृहीतं गुर्वादीनां यदि ददाति तत आत्मपरित्यागः, अथ स्तोकमिति कृत्वा न ददाति ततो गुर्वादीनां परेषां परित्यागः कृतो भवति । तथा प्रमाणहीनं भाजनं गृहीत्वा क्षेत्रप्रत्युपेक्षणार्थं गतः कथं लाभा-ऽलाभं परीक्षताम् ? ततोऽपरीक्षिते क्षेत्रे ये दोषास्ते मन्दपरीक्षिते मन्तव्याः । अध्वनि प्रपन्नानां च सङ्खडिर्भवेत्, दानश्राद्धो वा कश्चिदनुकम्पया प्रभूतं भक्त-पानं दद्यात् यद्वा स्वस्थानेऽपि घृतादि साधारणद्रव्यं लभ्येत तत्र लघुतरभाजने भक्त-पान-लाभस्य निर्जरायाश्च व्यवच्छेदो भवति ॥ अथ क्षुल्लकभाजनस्यैव दोषान्तराभिधानायाह–

[भा.४०११] लेवकडे वोसट्ठे, सुक्खे लग्गे य कोडिते सिहरे ।
एए हवंति दोसा, डहरे भाणे य उड्डाहो ॥

वृ- तक्रादिना तदवमप्रमाणं भाजनमाकण्ठमापूरितं ततो "वोसट्ठे" त्ति प्रलुठिते तक्रादौ तद् भाजनं लेपकृतं क्रियते । अथ पात्रलेपनभयात् तत्र शुष्कमेव भक्तं गृह्णाति ततस्तद् भक्तं भुञ्जानस्य गलके उदरे वा लगेत्, लग्ने च तत्राजीर्णं भवेत् । "कोडियं" ति गाढचम्पितं चम्प्यमानं वा पात्रकं भज्येत । 'शिखरं वा' पात्रस्योपरि भक्तस्य शिखां कुर्वन्तं दृष्ट्वा लोको ब्रूयात्-अहो ! असन्तुष्टा बहुभक्षका अमी; एवमुड्डाहो भवेत् । एते डहरे भाजने दोषाः ॥ अथैनामेव भावयति-

[भा.४०१२] धुवणा-ऽधुवणे दोसा, वोसट्ठंते य काय आउसिणे ।
सुक्खे लग्गाऽजीरग, कोडिय सिहरे य उड्डाहो ॥

वृ- अतिभृतत्वेन तक्र-तीमनादीनी प्रलोठ्यता यत् पात्रकं लेपकृतीकृतं तस्य धावना-ऽधावनयोरुभयोरपि दोषाः । तत्र धावने प्लावनादयः, अधावने तु रात्रिभोजनव्रतभङ्गः । "वोसट्ठंते य" परिगलति भक्त-पाने षण्णां कायानां विराधना । अथवा तेनोष्णेन परिगलता दिग्धशरीरस्यात्मविराधना । शुष्के च भक्तेऽतिमात्रं भुज्यमाने गलके उदरे वा लग्नेऽजीर्णं भवेत्, तत्र च ग्लानारोपणा । "कोडितं" गाढं चम्पितं सन् तत् पात्रकं भज्येत । 'शिखरे च' भक्तस्योपरि शिखायां विधीयमानायां उड्डाहो भवति । यत एवमादयो दोषास्ततः प्रमाणयुक्तमेव ग्रहीतव्यम् ॥ कीदृशं पुनस्तत् प्रमाणम् ? इत्याशङ्क्य प्रमाणमाह-

[भा.४०१३] तिन्नि विहत्थी चउरंगुलं च भाणस्स मज्झिमपमाणं ।
एत्तो हीन जहन्नं, अतिरेगयरं तु उक्कोसं ॥

वृ- पात्रस्य परिधिर्दवरकेण मीयते, तत्र च मिते यदा स मानदवरकस्तिस्त्र वितस्त-

यश्चत्वार्यङ्गुलानि च भवन्ति तदा तस्य 'भाजनस्य' पात्रकस्य तद् मध्यमप्रमाणम् । 'ऊनं' मध्यम-प्रमाणाद् हीनं यत् पात्रं तद् जघन्यम् । 'अतिरिक्ततरं तु' मध्यमप्रमाणाद् बृहत्तरमुत्कृष्टम् ॥ अथवा-

[भा.४०१४] उक्कोसतिसामासे, दुगाउअद्धाणमागओ साहू ।
चउरंगुलवज्जं भत्त-पान पज्जत्तियं हेट्ठा ॥

वृ-उत्कृष्टस्तृड्मासः स उच्यते यस्मिन् अतीवप्रबला पिपासा समुल्लसति, स च ज्येष्ठ आषाढो वा; तस्मिन् काले द्विगव्यूतप्रमाणादध्वन आगतो यः साधुः तस्येदृशकाला-ऽध्वखिन्नस्य यत् 'चतुरङ्गुलवर्जम्' उपरितनैश्चतुर्भिरङ्गुलैर्न्यूनमधस्ताद् भक्त-पानस्य भृतं पर्याप्तं भवति तदित्थम्भूतं पात्रकस्य प्रमाणं मन्तव्यम् ॥

[भा.४०१५] एयं चेव पमाणं, सविसेसयरं अनुग्गहपवत्तं ।
कंतारे दुब्भिक्खे, रोहगमाईसु भइयव्वं ॥

वृ- एतदेव प्रमाणं 'सविशेषतरं' समधिकतरं यस्य भाजनस्य भवति तद् 'अनुग्रहप्रवृत्तं' गच्छस्यानुग्रहार्थं प्रवर्त्तते । कथम् ? इत्याह-'कान्तारे' महत्यामटव्यां वर्त्तमानस्य तदुत्तीर्णस्य वा गच्छस्यानुग्रहार्थं तद् गृहीत्वा वैयावृत्यकरः पर्यटति, दुर्भिक्षेऽप्यलभ्यमानयां भिक्षायां तद् गृहीत्वा चिरमटित्वा बालादिभ्यो ददाति, एवं नगरस्य रोधके सञ्जाते आदिशब्दादपरेषु वा भयविशेषेषु कश्चिद् दानश्रद्धालुर्यावदेकस्मिन् भाजने माति तावत् प्रचुरतरमपि भक्त-पानं दद्यात्, तत्र तद् अतिरिक्तभाजनं 'भक्तव्यं' सेवनीयम् ॥ अथापवादद्वारमभिधित्सुर्यैः कारणैरधिकं हीनं वा धारयति तानि तावद् दर्शयति-

[भा.४०१६] अज्ञाणे गारवे लुद्धे, असंपत्ती य जाणए ।
लहुओ लहुया गुरुगा, चउत्थो सुद्धो उ जाणओ

वृ-यदि अज्ञानेन हीना-ऽधिकप्रमाणं भाजनं धारयति ततो लघुमासः । गौरवेण धारयतश्चत्वारो लघवः । लोभनं-लुब्धं लोभ इत्यर्थः, तेन धारयतश्चत्वारो गुरवः । असम्प्राप्तिर्नाम-प्रमाण-युक्तस्य पात्रस्याप्राप्तिस्तस्यां यो हीना-ऽतिरिक्तं धारयति सः 'चतुर्थ' असम्प्राप्तिधारकः शुद्धः । तथा ज्ञायको नाम-पात्रलक्षणा-ऽलक्षणवेदी स लक्षणयुक्तं हीना-ऽधिकप्रमाणमपि धारयन् शुद्ध इति द्वारश्लोकसमासार्थः ॥ अथैनमेव विवृणोति-

[भा.४०१७] हीना-ऽदिरेगदोसे, अजाणओ सो धरिज्ज हीन-ऽहियं ।
पगईय थोवभोगी, सति लाभे वा करेतोमं ॥

वृ- पात्रस्य ये हीना-ऽतिरिक्तविषया दोषाः पूर्वमुक्तास्तान् यो यतिर्न जानीते स हीना-ऽधिकप्रमाणं धारयेत् । तथा कश्चिद् ऋद्धिगौरवगुरुकः सत्यपि भक्त-पानलाभे प्रकृत्यैव स्तोकभोजी 'स्वल्पाहारोऽयं महात्मा' इति ख्यापनार्थम् 'नवमं' हीनप्रमाणं भाजनं करोति ॥

किं पुनस्तस्य ऋद्धिगौरवम् ? इत्याह-

[भा.४०१८] ईसरनिक्खंतो वा, आयरिओ वा वि एस डहरेणं ।
इति गारवेण ओमं, अइप्पमाणं चिमेहिं तु ॥

वृ- 'ईश्वरनिष्क्रान्तो वा' राजादिमहर्द्धिकप्रव्रजितः, आचार्यो वा एष साधुर्यदिदं 'डहरेण'

लघुना भाजनेन भिक्षां पर्यटति, 'इति' एवं 'गौरवेण' यशःप्रवादलिप्सालक्षणेनावमं भाजनं करोति । अतिप्रमाणं पुनः पात्रममुना कारणेन करोति ॥

[भा.४०१९] अनिगूहियबल-विरिओ, वेयावच्चं करेति अहो ! समणो ।
मम तुल्लो न य कोयी, पसंसकामी महल्लेणं ॥

वृ- 'अथ' इत्युपन्यासे । अहो ! अयं श्रमणः पुण्यात्मा अनिगूहितबल-वीर्यो महता भाजनेन सकलस्यापि गच्छस्य वैयावृत्यं करोति, एवं प्रशंसाकामी नास्ति कोऽपि मम बाहुबलमङ्गीकृत्य 'तुल्यः' सदृश इति ख्यापनार्थमतिरिक्तं भाजनं करोति ॥ अथ लुब्धपदं व्याचष्टे-

[भा.४०२०] अंतं न होइ देयं, थोवासी एस देह से सुद्धं ।
उक्कोसस्स व लंभे, कहि घेच्छ महल्ल लोभेणं ॥

वृ- क्षुल्लकभाजनेन गृहाङ्गणस्थितं साधुं दृष्ट्वा गृहस्वामी भणति-'स्तोकाशी' स्तोकाहारोऽयं मुनि अतोऽस्यान्तप्रान्तं भक्तं न देयम्, किन्तु शुद्धम् उत्कृष्टद्रव्यम् अस्य प्रयच्छथ, एवं विचिन्त्य लुब्धतया हीनप्रमाणं करोति । तथा 'उत्कृष्टस्य' शालि-मुद्गदाल्योदेर्द्रव्यस्य प्रभूतस्य लाभे सति चिन्तयति-अनेन प्रमाणोपेतभाजनेन पूर्वं सामान्यभक्तस्य भृतेन पश्चादुत्कृष्टद्रव्यं लभ्यमानं कुत्र ग्रहीष्यामि ? इति विचिन्त्य लोभेन महत्तरं भाजनं गृह्णाति ॥ अथासम्प्राप्ति-ज्ञायकपदे व्याख्याति-

[भा.४०२१] जुत्तपमाणस्सऽसती, हीन-ऽतिरित्तं चउत्थो धारेति ।
लक्खणजुय हीन-ऽहियं, नंदी गच्छट्ठ वा चरिमो ॥

वृ-युक्तप्रमाणं-यथोक्तप्रमाणोपेतं तद् अनेकशो गवेष्यमाणमपि न प्राप्यते, अतस्तस्याभावे हीनं वाऽतिरिक्तं वा पात्रं चतुर्थः सङ्ग्रह गाथोक्त कमप्रामाण्यादसम्प्राप्तिमान् धारयति । तथा यद् लक्षणयुक्तं तद् लक्षणा ऽ लक्षणवेदी हीनाधिक प्रमाणामपि ज्ञानादिवृद्धिनिमित्तं धारयति । यद्वा गच्छस्योपग्रहकरं यद् नन्दी भाजनं तद् गच्छार्थं 'चरमः' चरमद्वारवर्त्ती-ज्ञायको धारयति ॥

गतमपवाद द्वारम्, अथ लक्षणाऽ लक्षण द्वारमाह-

[भा.४०२२] वट्टं समचउरंसं, होइ थिरं थावरं च वन्नड्ढं ।
हुंड वायाइद्धं, भिन्नं च अधारणिज्जाइं ॥

वृ- 'वृत्तं' वर्तुलं तदपि 'समचतुरस्रं' उच्छ्रयपरिधिना कुक्षिपरिधिना च तुल्यं 'स्थिरं' सुप्रतिष्ठानं दृढं वा 'स्थावरम्' अप्रातिहारिकं 'वर्णाढ्यं' स्निगधवर्णोपेतं पाठान्तरेण ''धन्नं तु'' त्ति एतैर्गुणैर्युक्तं 'धन्यं' एवंविधं लक्षणयुक्तमुच्यते । तथा 'हुण्डं' विषमसंस्थितं क्वचिद् निम्नं क्वचिदुन्नतमित्यर्थः, 'वाताविद्धं' निष्पत्तिकालमन्तरेणार्वागपि शुष्कम् अत एव सङ्कुचितं वलिभृतं च सञ्जातम्, 'भिन्नं नाम' सच्छिद्रं राजियुक्तं वा, एतान्यलक्षणतयाऽधारणीयानि ॥

अथ लक्षणा-ऽलक्षणयुक्तयोरेव गुण-दोषानाह-

[भा.४०२३] संठियम्मि भवे लाभो, पतिट्ठा सुपतिट्ठिए ।
निव्वणे कित्तिमारोग्गं, वन्नड्ढे नाणसंपया ॥

वृ- 'संस्थिते' वृत्त-समचतुरस्त्र पात्रे धार्यमाणे विपुलो भक्त-पानादिलाभो भवति । 'सुप्रतिष्ठिते' स्थिरे पात्रे चारित्रे गणे आचार्यादिपदे वा 'प्रतिष्ठा' स्थिरता सञ्जायते । 'निर्व्रणे' व्रणविकले कीर्तिरारोग्यं च भवति । 'वर्णाढ्ये' स्निग्धवर्णोपेते 'ज्ञानसम्पत्' प्रभूतसूत्रा-ऽर्थलाभरूपा भवति॥

[भा.४०२४] हुण्डे चरित्तभेओ, सबलम्मि य चित्तविब्भमं जाणे ।
दुप्पुते खीलसंठाणे, नत्थि ट्ठाणं ति निद्दिसे ।।

वृ- 'हुण्डे' विषमसंस्थिते 'चारित्रस्य भेदः' मूलोत्तरगुणविषयाश्चारित्रातिचारा इत्यर्थः । शबलं-विचित्रवर्णं तत्र 'चित्तविभ्रमं' क्षिप्तचित्ततादिरुपं सम्भवन्तं जानीयात् । दुप्पुयं नामपुष्पकमूले न प्रतिष्ठितम्, कीलकसंस्थानं तु-कर्पराकारं कीलकवद् दीर्घम्, ईदृशे पात्रे गणे चरणे वा स्थानं नास्तीति निर्दिशेत् ।।

[भा.४०२५] पउमुप्पले अकुसलं, सव्वणे वणमाइसे ।
अंतो बहिं च दड्ढे, मरणं तत्थ निद्दिसे ।।

वृ- 'पद्मोत्पले' अधः पद्मोत्पलाकारपुष्पकयुक्ते साधूनामकुशलं भवति । सव्रणे व्रणमादिशेत्, पात्रकस्वामिनो व्रणो भवतीति भावः । अन्तर्बहिर्वा दग्धे सति पात्रके मरणं निर्दिशेत् ।।

अत्रैव प्रायश्चित्तमाह-

[भा.४०२६] दड्ढे पुप्फगभिन्ने, पउमुप्पल सव्वणे य चउगुरुगा ।
सेसगभिन्ने लहुगा, हुंडादीएसु मासलहु ।।

वृ- अन्तर्बहिर्वा दग्धे पात्रे तथा पुष्कं-पात्रकस्य नाभि तत्र यद् भिन्नं तस्मिन् तथा पद्मोत्पलाकारपुष्पकयुक्ते सव्रणे च प्रत्येकं चतुर्गुरुकाः । शेषेषु-पुष्पकव्यतिरिक्तेषु कुक्ष्यादिस्थानेषु भिन्ने चतुर्लघुकाः । हुण्डे आदिशब्दाद् वाताविद्धे दुष्पुते कीलकसंस्थाने अवर्णाढ्ये शबले च मासलघु ।। गतं लक्षणा-ऽलक्षणद्वारम्, अथ त्रिविधोपधिद्वारमाह-

[भा.४०२७] तिविहं च होइ पायं, अहाकडं अप्प-सपरिकम्मं च ।
पुव्वमहाकडगहणं, तस्सऽसति कमेण दोन्नियरे ।।

वृ- त्रिविधं च भवति पात्रम्-अलाबुमयं दारुमयं मृत्तिकामयम् । पुनरेकैकं त्रिविधम्-यथाकृतमल्पपरिकर्म सपरिकर्म च । पूर्वं यथाकृतस्य ग्रहणम्, तस्याभावे क्रमेणेतरे द्वे पात्रके ग्रहीतव्ये, प्रथममल्पपरिकर्म तदप्राप्तौ बहुपरिकर्मापीत्यर्थः ।। विपर्यस्तद्वारमाह-

[भा.४०२८] तिविहे परूवियम्मि, वोच्चत्थे गहणे लहुगा आणादी ।
छेदन-भेदनकरणे, जा जहिं आरोवणा भणिता ।।

वृ- यथाकृतादिभेदात् त्रिविधे पात्रे प्ररूपिते सति ततो विपर्यस्तग्रहणे चतुर्लघुकाख्यं प्रायश्चित्तम्, आज्ञादयश्च दोषा वक्तव्याः । तत्र यथाकृतादिप्ररूपणं तावद् विधीयते-यथाकृतं नाम-पूर्वकृतमुखंप्रदत्तलेपं च सर्वथा परिकर्मरहितम्, अल्पपरिकर्म तु पात्रं तदुच्यते यदर्धाङ्गुलं यावत् छिद्यते, अर्धाङ्गुलात् परतिश्छिद्यमानं बहुपरिकर्मकम् । पुनरेकैकं त्रिधा उत्कृष्ट-मध्यम-जघन्यभेदात् । तत्रोत्कृष्टस्य यथाकृतस्योत्पादनाय निर्गतस्तस्य योगमकृत्वाऽल्पपरिकर्म गृह्णाति चतुर्लघवः, बहुपरिकर्म गृह्णाति चतुर्लघवः । यदा यथाकृतं योगे कृतेऽपि न प्राप्यते तदाऽल्पपरिकर्मणो योगमकृत्वा बहुपरिकर्म गृह्णाति चतुर्लघव आज्ञादयश्च दोषाः, एवं मध्यम-जघन्ययोरपि भावना कर्तव्या । नवरं मध्यमस्य विपर्यासेन ग्रहणे मासलघु, जघन्यस्य विपर्यासग्रहणे पञ्चकम् । अपि च सपरिकर्मणि पात्रे छेदन-भेदनादि कुर्वतो या यत्रारोपणा पीठिकायां पात्रकल्पिकद्वारे भणिता सैवेहापि मन्तव्या ।। अथ 'कः' इति द्वारं विवृणोति-

[भा.४०२९] को गेण्हति गीयत्थो, असतीए पायकप्पिओ जो उ ।
उस्सग्ग-ऽववाएहिं, कहिज्जती पायगहणं से ॥

वृ- कः संयतः पात्रं गृह्णाति ? सूरिराह-'गीतार्थः' परिज्ञातसकलच्छेदश्रुतार्थ पात्रकं गृह्णाति। अथ नास्ति गीतार्थस्ततो यः 'पात्रकल्पिकः' गृहीतपात्रैषणासूत्रार्थ स गृह्णाति । तस्याप्यभावे यो मेधावी तस्य पात्रग्रहणुत्सर्गतोऽपवादतश्च कथ्यते ततोऽसौ पात्रं गृह्णीयात् ॥

अथ पौरुषीद्वारमाह-

[भा.४०३०] हुंडादि एकबंधे, सुत्तत्थे करेंते मग्गणं कुज्जा ।
दुग-तिगबंधे सुत्तं, तिण्हुवरिं दो वि वज्जेज्जा ॥

वृ- यत् पात्रं हुण्डम्, आदिशब्दाद् दुष्पुतं कीलकसंस्थितं शबलं च, यच्चैकबन्धम्, एतानि परिभुञ्जानः सूत्रा-ऽर्थपौरुष्यौ द्वे अपि कुर्वन् यथाकृतादेः पात्रस्य मार्गणां कुर्यात् । अथ द्विविधं त्रिविधं (द्विबन्धं त्रिबन्धं] वा पातरं परिभुज्यमानमस्ति ततः सूत्रपौरुषीं कृत्वाऽर्थपौरुषीं हापयित्वा मार्गयति । अथ त्रयाणां बन्धानामुपरि चतुःप्रभृतिस्थानेषु तत् पात्रं बद्धमस्ति ततः सूत्रार्थपौरुष्यौ द्वे अपि वर्जयेत्, सूर्योदयादारभ्यैवापरं पात्रकं मार्गयतीति ॥ अथ कालद्वारमाह-

[भा.४०३१] चत्तारि अहाकडए, दो मासा होंति अप्पपरिम्मे ।
तेन पर मग्गियम्मि य, असति ग्गहणं सपरिकम्मे ॥

वृ- हुण्ड-शबलताद्यलक्षणयुक्तं पात्रं धारयता चतुरो मासान् यथाकृतं मार्गयितव्यम् । चतुर्षु मासेषु पूर्णेष्वपि यदा यथाकृतं न प्राप्यते तदा द्वौव मासावल्पपरिकर्मगवेषणे भवतः । ततः परं मार्गितेऽप्यल्परिकर्मण्यप्राप्ते षण्मास्यां पूर्णायां सपरिकर्मणो ग्रहणं करोति ॥ तच्च कियन्तं कालं गवेषणीयम् ? इत्याह-

[भा.४०३२] पणयालीसं दिवसे, मग्गित्ता जा न लब्भए ततियं ।
तेन परेण न गिण्हइ, मा पक्खेणं न रज्जेज्जा ॥

वृ- पञ्चचत्वारिंशतं दिवसान् 'तृतीयं' बहुपरिकर्म मार्गयित्वा यदि न लभ्यते ततः किम् ? इत्याह-"तेन परेण"त्ति प्राकृतत्वात् पञ्चम्यर्थे तृतीया, ततः पञ्चचत्वारिंशतो दिवसेभ्यः परं बहुपरिकर्म न गृह्णाति । कुतः ? इति चेद् उच्यते-यथाकृतगवेषणकालादारभ्य सार्धसप्तसु मासेषु गतेषु पञ्चदशभिर्दिवसैर्वर्षारात्री भवति, तेन च पक्षमात्रेण कालेन मा तत् पात्रकं 'न रज्येत' मा लितं सत् प्रगुणीभवेत् । किमुक्तं भवति ? -वर्षाकाले पात्रस्य परिकर्म कर्तुं न लभ्यते, बहुपरिकर्मणि च पात्रे छेदन-भेदनादि प्रभूतं परिकर्म विधेयम्, तच्च पक्षमात्रेण न कर्त्तुं पार्यते, अतः पञ्चचत्वारिंशद्दिवसेभ्यः परतो न ग्रहीतव्यमिति ॥ गतं कालद्वारम्, अथाकरद्वारमाह-

[भा.४०३३] कुत्तीय सिद्ध-निण्हग-पवंच-पडिमाउवासगाईसु ।
कुत्तियवज्जं बितियं, आगरमाईसु वा दो वि ॥

वृ- यथाकृतं पात्रकं कुत्रिकापणे मार्गयितव्यम् । सिद्धपुत्रकस्य वा निह्नवस्य वा प्रपञ्चश्रमणस्य वा एकादशीं प्रतिमां पूरयित्वा वा श्रमणोपासको गृहं प्रत्यागतस्तदादेर्वा पार्श्वे यथाकृतं पात्रं प्राप्यते । 'कुत्रिकापणवर्जं' शेषेषु सिद्धपुत्रकादिषु 'द्वितीयम्' अल्पपरिकर्म प्राप्यते । अथवा आकरादिषु 'द्वे अपि' अल्पपरिकर्म-सपरिकर्मणी प्राप्येते ॥ तद्यथा-

[भा.४०३४] आगर नई कुडंगे, वाहे तेने य भिक्ख जंत विही।
कय कारियं व कीतं, जइ कप्पइ घेप्पतू अज्जो ! ॥

वृ- 'आकरः' भिल्लपल्ल्यादि यत्रालाबूनि प्राप्यन्ते, नद्यो यास्तुम्बकैस्तीर्यन्ते, 'कुडङ्गं नाम' यत्र वनखण्डे तमुम्बकानि जायन्ते, "वाहे तेने य"त्ति व्याधपल्लयां स्तेनपल्लयां वाऽलाबूनि यत्र वनखण्डे तुम्बकानि जायन्ते, "वाहे तेने य"त्ति व्याधपल्लयां स्तेनपल्लयां वाऽलाबूनि लभ्यन्ते, "भिक्ख"त्ति ये भिक्षाचा अलाबुकानि गृहीत्वा भिक्षां पर्यटन्ति, "जंत"त्ति यन्त्रशालासु गुडादीनामुत्सेचनार्थमलाबूनि धार्यन्ते, एतेषु स्थानेषु "विहि"त्ति विधिना पात्रकं ग्रहीतव्यम्। कः पुनर्विधि ? इति चेद् उच्यते-तत्राकरादिषु गत्वाऽवभाषणे कृते दायकेन च पात्रके दर्शिते प्रष्टव्यम्-कस्यार्थमेतत् कृतम् ? । ततस्तेऽभिदध्यु-युष्माकमर्थाय कृतं कारितं क्रीतं वा, यदि कल्पते तत आर्य ! गृह्यताम्। एवमुक्ते सति गृह्णातीति सङ्ग्रहगाथासमासार्थः ॥

अथैनामेव गाथाद्वयेन विवृणोति-

[भा.४०३५] आगर पल्लीमाई, निच्चुदग नदी कुडंगमुस्सरणं।
वाहे तेने भिक्खे, जंते परिभोगऽसंसत्तं ॥

वृ- आकरो नाम भिल्लपल्ली भिल्लकोट्टं वा, तत्र प्रायोऽलाबूनि प्रभूतानि प्राप्यन्ते। तथा नित्योदकाः-अगाधजला महानद्यो यत्र ग्रामादौ अलाबुभिस्तीर्यन्ते तत्र पात्राणि प्राप्यन्ते। 'कुडङ्गं' वृक्षगहनं तत्र तुम्बिकानाम् 'उत्सरणं' वापनं क्रियते, यद्वा तासामेव नदीनां कूलेषु ये वृक्षकुडङ्गास्तेषु तुम्बिका वाप्यन्ते। व्याधपल्लयां स्तेनपल्लयां च तुम्बकेषु काञ्जिक-पानीयादीनि प्रक्षिप्यन्ते, तत्र कौलालभाजनाभावात्। भिक्षाचरा भिक्षार्थमलाबूनि गृह्णन्ति। यन्त्रशालादिषु च गुडोत्सेच-नादिहेतोरलाबूनि गृह्यन्ते। एतेष्वाकरादिषु यस्य प्रतिदिवसं परिभोगः क्रियमाणो विद्यते तत् पात्रकं जन्तुभिरसंसक्तं भवतीति कृत्वा ग्रहीतव्यम् ॥

[भा.४०३६] तुब्भऽट्ठाए कयमिणं, अन्नेसऽट्ठाए अहवण सअट्ठा।
जो घेच्छति व तदट्ठा, एमेव य कीय-पामिच्चे ॥

वृ- पात्रे च दर्शिते कस्यार्थमेतत् कृतम् य इति पृष्टो दाता ब्रूयात्-युष्माकमर्थाय कृतमिदं कारितं वा, अथवाऽन्येषां साधूनामर्थाय कृतम्, "अहवण"त्ति निपातोऽथवार्थे, 'स्वार्थम्' आत्मनोऽर्थाय कृतमिदमस्माभि, यद्वा य एव भिक्षाचरो ग्रहीष्यति तस्यार्थाय कृतमिदम् यावन्तिकमित्यर्थः। एवमेव च क्रीत-प्रामित्यादिकमपि वक्तव्यम्। यच्चात्रात्मार्थं कृतादिकं तत् कल्पते, आधाकर्मिकादिकं तु न कल्पते ॥ गतमाकरद्वारम्। अथ चाउलद्वारमाह-

[भा.४०३७] चाउल उण्होदग तुयरे कुसणे तहेव तक्के य।
जं होइ भावियं तं, कप्पति भइयव्वगं सेसं ॥

वृ- "चाउल"त्ति तन्दुलधावनम्, 'उष्णोदकं' प्रतीतम्, 'तुवरं' कुसुम्भोदकादि, 'कुसणं' मुद्गदाल्यादि तस्य यदुदकं तदपि कुसणम्, तक्रं प्रतीतम्, एतैर्यद् भावितं तत् कल्पते। 'शेषम्' एतद्विपरीतजलभावितं 'भक्तव्यं' विकल्पनीयम् ॥ भजनामेवोपदर्शयति-

[भा.४०३८] सीतजलभावियं अविगते तु सीतोदए न गिण्हंति।

मज्ज-वस-तेल्ल-सप्पी-महुमादीभावियं भयितं ॥

वृ- शीतजलभावितं यत् पात्रं तद् 'अविगते' अपरिणते शीतोदके न गृह्णन्ति । मद्य-वसा-तैल-सर्पिर्मध्वादिभिस्तु भावितं 'भक्तं' विकल्पितम् । तथाहि-यदि तेषां मद्यादीनामवयवा निशेषा अपनेतुं शक्यन्ते ततो गृह्यते, इतरथा न गृह्यते; अथवा विकटादिभावितं यत्र जुगुप्सितं तत्र न गृह्यते, अजुगुप्सितं तु गृह्यते ॥ पात्रग्रहण एव विधिमाह–

[भा.४०३९] ओभासणा य पुच्छा, दिट्ठे रिक्के मुहं वहंते य ।
संसट्ठे निक्खित्ते, सुक्खे य पगास दट्ठूणं ॥

[भा.४०४०] ओमंथ पाणमाई, पुच्छा मूलगुण उत्तरगुणे य ।
ठिइए तिक्खुत्तो, दुद्धो पसिणिकणगाईसु ॥

[भा.४०४१] दाहिणकरेण कोणं, घेत्तुत्ताणेण वाममणिबंधे ।
घट्टेइ तिन्नि वारे, तिन्नि तले तिन्नि भूमीय ॥

[भा.४०४२] तस बीयम्मि वि दिट्ठे, न गेण्हती गेण्हती तु अदिट्ठे ।
गहणम्मि उ परिसुद्धे, कप्पति दिट्ठेहि वि बहूहिं ॥

वृ- एताश्चतस्रोऽपि गाथाः पीठिकायां सविस्तरं व्याख्याताः इति नेह भूयो व्याख्यायन्ते ॥ गतं पाउलद्वारम् । अथ घन्ययतनाद्वारमाह-

[भा.४०४३] पच्छित्त पण जहन्नं, तेन उ तव्वुड्ढिए य जयणाए ।
जहन्ना व सासवादी, तेहि उ जयणेयर कलादी ॥

वृ- जघन्यं प्रायश्चित्तं पञ्चकम् तेन यतना जघन्ययतना । कथम् ? इत्याह-'तद्वृध्या' पञ्चकादिवृद्धिरूपया यतनया पात्रकास्तलायां यतन्ते । अथवा सर्षपादीनि बीजानि 'जघन्यानि' सूक्ष्माणीत्यर्थः, तैर्युक्तं पात्रकं वक्ष्यमाणया षड्भागकरवृद्धियतनया गृह्णन्ति, 'इतराणितु' बादराणि बीजानि कलाः-चणकास्तदादीनि, आदिशब्दाद् मसूरादीनि च ॥ अमुमेवार्थं विवरीषुराह-

[भा.४०४४] छब्भागकए हत्थे, सुहुमेसु पढमपव्व पनगं तू ।
दस बितिए राइदिना, अंगुलिमूलेसु पन्नरस ॥

[भा.४०४५] वीसं तु आउलेहा, अंगुट्ठंतो य होइ पणुवीसा ।
पसयम्मि होइ मासो, चाउम्मासा भवे चउसु ॥

वृ- इह हस्तः षड् भागाः क्रियते-तत्र प्रथमपर्वण्येको भागः, द्वितीयपर्वणि द्वितीयः, अङ्गुलिमूलानि तृतीयः, आयुषो रेखा चतुर्थः, अङ्गुष्ठबुध्नं पञ्चमः, अङ्गुष्ठमतिक्रम्य सेषः सर्वोऽपि षष्ठो भागः । एवं षड्भागीकृते हस्ते प्रथमपर्वमात्रेषु सूक्ष्मबीजेषु 'पञ्चकं' पञ्चरात्रिन्दिवानि प्रायश्चित्तम्, द्वितीयपर्वमात्रेषु दशरात्रिन्दिवानि, अङ्गुलिमूलेषु पञ्चदशरात्रिन्दिवानि ॥ आयूरेषामात्रेषु विंशतिरात्रिन्दिवानि, अङ्गुष्ठबुध्नमात्रेषु पञ्चविंसतिरात्रिन्दिवानि, प्रसृतिप्रमाणेषु मासलघु, चतुःप्रसृतिप्रमाणेषु चत्वारो मासा लघवः ॥ एवं सूक्ष्मबीजेषु प्रायश्चित्तमुक्तम्, अथ बादरबीजेषु तदेवातिदिशन्नाह–

[भा.४०४६] एसेव कमो नियमा, थूलेसु वि बीयपव्वमारद्धो ।
अंजलि चउक्क लहुगा, ते च्चिय गुरुगा अनंतेसु ॥

वृ- एष एव क्रमो नियमात् 'स्थूलेष्वपि' चणकादिबीजेषु मन्तव्यः । नवरं द्वितीयपर्वाण्यादी कृत्वाऽत्र प्रायश्चित्तक्रमः प्रारभ्यते, तद्यथा-द्वितीयपर्वमात्रेषु बादरबीजेषु पञ्चकम्, अङ्गुलिमूलमात्रेषु दशकम्, आयूरेषामात्रेषु पञ्चदशकम्, अङ्गुष्ठमूलमात्रेषु विंशति, प्रसृतिप्रमाणेषु भिन्नमासः, अञ्जलिमात्रेषु मासलघु, अञ्जलीचतुष्कपरिमाणेषु चतुर्लघु, एतत् प्रत्येकबीजविषयं भणितम् । अनन्तबीजेषु सूक्ष्म-स्थूरेषु यथाक्रममेतान्येव प्रायश्चित्तानि गुरुकाणि कर्त्तव्यानि ॥

[भा.४०४७] निक्कारणम्मि एए, पच्छित्ता वण्णिया उ बीएसु ।
नायव्वा अनुपुव्वी, एसेव उ कारणे जयणा ॥

वृ-एतानि प्रायश्चित्तानि निष्कारणे 'बीजेषु' बीजयुक्ते पात्रके गृह्यमाणे वर्णितानि । 'कारणे तु' पात्रकस्यासत्तालक्षणे 'आनुपूर्व्या' प्रथमपर्वादिरूपया 'एषैव' पञ्चकादिका यतना कर्त्तव्या॥ अथ यथाकृते प्रथमपर्वप्रमाणानि बीजान्यल्पपरिकर्मकं च शुद्धं प्राप्यतेऽनयोः कतरद् ग्रहीतव्यम्? उच्यते-यथाकृतं ग्राह्यं नाल्पपरिकर्म । एवं द्वितीयपर्वादिष्वपि वक्तव्यम्, यावद् बीजैरा-कण्ठभृतमपि यथाकृतं ग्राह्यम् । तथा चाह-

[भा.४०४८] वोसट्ठं पि हु कप्पइ, बीयाईणं अधाकडं पायं ।
न य अप्प-सपरिकम्मा, तहेव अप्पं सपरिकम्मा ॥

वृ- आगन्तुकानां बीजादीनां 'वोसट्ठमपि' आकण्ठभृतमपि यथाकृतं पात्रं कल्पते न चाल्पपरिकर्म-सपरिकर्मणी शुद्धे अपि । 'तथैव' एवमेवाल्पपरिकर्मकमागन्तुकबीजानां भृतमपि कल्पते, न च सपरिकर्मकं शुद्धमपि ।। अत्रैवैदम्पर्यमाह-

[भा.४०४९] थूला वा सुहुमा वा, अवहंते वा असंथरंतम्मि ।
आगंतुअ संकामिय, अप्पबहु असंथरंतम्मि ॥

वृ- यथाकृते 'स्थूलानि वा' चणकादीनि बीजानि भवन्तु 'सूक्ष्माणि वा' सर्षपादीनि, यदि तस्य प्राक्तनं भाजनं नवरङ्गत्वादवहमानकम्, तेन वा भाजनेन न संस्तरति, सर्वथा वा भाजनं तस्यन नास्ति, एवमसंस्तरतोऽल्पबहुत्वं तोलयित्वा बहुगुणकरमिति कृत्वा यथाकृतमागन्तुकबीजानां भृतमपि बीजानि यतनयाऽन्यत्र सङ्क्रमय्य ग्रहीतुं कल्पते ॥

गतं जघन्ययतनाद्वारम् । अथ "चोयग असई असिव" त्ति द्वारद्वयमाह-

[भा.४०५०] थूल सुहुमेसु वुत्तं, पच्छित्तं तेसु चेव भरिओ वि ।
जं कप्पइ त्ति भणिअं, न जुज्जई पुव्वमवरेणं ॥

वृ- स्थूल-सूक्ष्मेषु जेषु पूर्वं सप्रपञ्चं प्रायश्चित्तमुक्तम्, सम्प्रति 'तैरेव' बीजैर्भृतोऽपि यथाकृतप्रतिग्रहो ग्रहीतुं कल्पते, 'इति' एवं यद् भणितं तदेतद् युष्माकं पूर्वमपरेण न युज्यते ॥ गुरुराह-

[भा.४०५१] चोयग ! दुविहा असई, संताऽसंता य संत असिवादी ।
इयरा उ झामियाई, संते भणिया उ सा सोही ॥

वृ- हे नोदक ! द्विविधा असत्-सदसत्ता असदसत्ता च । तत्र सदसत्ता नाम यत्र ग्रामे नगरे वा भाजनानि सन्ति तत्र अपान्तराले वा विघ्नन्ते, अथवा अस्ति भाजनं परं नवरङ्गत्वाद् न तावद् वहति, यद्वा तद् भाजनमतिलघुसरमतो न तेन संस्तीर्यते । 'इतरा' असदसत्ता सा पुनरियम्-पात्रं

'ध्यामित' प्रदीपकेन दग्धम्, आदिशब्दात् संभवोऽपहृतं भग्नं वा । एवंविधयोर्द्वयोरप्यसत्त-योर्यथाकृतमागन्तुकबीजानां भृतमपि कल्पते, न पुनः शुद्धमल्पपरिकर्म । यत् पुनरस्माभि 'शोधि' प्रायश्चित्तमुक्तं सा द्विविधाया असत्ताया अभावे सति पात्रे यो गृह्णाति तद्विषया मन्तव्या ॥किञ्च-

[भा.४०५२] जो उ गुणो दोसकरो, न सो गुणो दोसमेव तं जाणे ।
अगुणो वि होति उ गुणो, विनिच्छयो सुंदरो जस्स ॥

वृ- 'यस्तु' यः पुनर्गुणः 'दोषकरः' आत्मोपघातादिदोषजनकः स परमार्थतो गुण एव न भवति किन्तु दोषमेव तं जानीयात्, दोषकारणत्वात्; यस्य तु 'विनिश्चयः' निर्वाहः सुन्दरः स कथञ्चिदगुणोऽपि परिणासुन्दरतया गुण एव भवति, गुणकारणत्वात्; एवमिहापि यथाकृते यद्यपि तान्यागन्तुकबीजानि यतनयाऽन्यत्र सङ्क्रामयतः स्वल्पः सङ्घट्टनदोषस्तथापि न तत्र सूत्रार्थयोः परिमन्थः, न च छेदन-भेदनादिना आत्मोपघातः, अपि च तद् गृहीतं सत् तस्यामेव वेलायां भक्त-पानग्रहणे उपयुज्यते, एवं सदोषमपि तद् बहुगुणम् । अल्पपरिकर्मादौ तु परिकर्म्यमाणे सूत्रार्थपरिमन्थः, छेदनादिनाऽऽत्मोपघात इत्यादयो बहवो दषाः, अतः सगुणमपि तद् बहुदोषतरम्॥

अथ "पमाण उवओग छेयण";' त्ति द्वारमाह-

[भा.४०५३] असइ तिगे पुन जुत्ते, जोगे ओहोवही उवग्गहिए ।
छेयण-भेयणकरणे, सुद्धो जं निज्जरा विउला ॥

वृ- यथाकृतं त्रीन् वारान् मार्गितं परं न लब्धम्, ततो वारत्रिकं 'योगे' व्यापारे 'युक्ते' कृतेऽपि यथाकृतस्य 'असति' अप्राप्तौ, 'पुनःशब्दः' अवधआरणे, स चैतदवधारयति-वारत्रयात् परतोऽल्पपरिकर्मकमेव ग्रहीतव्यम् । अथ तदपि न प्राप्यते ततो बहुपरिकर्मापि ग्राह्यम् । एष ओधोपधौ औपग्रहिकोपधौ च सर्वस्मिन्नपि विधिरवसातव्यः । एवं च क्रमागतमल्पपरिकर्मादि गृहीत्वा तत्रोपयुक्तो यः छेदन-भेदने करोति सः 'शुद्धः' न प्रायश्चित्तभाग्, कुतः ? इत्याह 'यद्' यस्माद् यथोक्तक्रमागतं विधिं विदधानस्य निर्जरा विपुला भवति ॥ ननु चाल्पपरिकर्मादौ छेदनादिपरिकर्मसम्भवादात्म-संयमविराधना भवति ततः कथं तस्य ग्रहणमनुज्ञायते ? उच्यते-

[भा.४०५४] चोयग ! एताए च्चिय, असईय अहाकडस्स दो इयरे ।
कप्पंति छेयणे पुन, उवओगं मा दुवे दोसा ॥

वृ- हे नोदक ! या पूर्वं द्विविधा असत्ता प्ररूपिता 'एतयैव' यथाकृतस्यासत्तया 'द्वे इतरे' अल्पपरिकर्म-सपरिकर्मणी कल्पेते प्रतिग्रहीतुम्, परं तयोश्छेदनादौ महता प्रयत्नेनोपयोगं करोति, मा 'द्वौ' संयमा-ऽऽत्मविराधनालक्षणौ दोषौ भूतामिति कृत्वा ॥

[भा.४०५५] अहवा वि कतो नेनं, उवओगो न वि य लब्भती पढमं ।
हीणाहीयं व लब्भति, सपमाणा तेन दो इयरे ॥

वृ- अथवा कृतः 'अनेन' साधुना 'उपयोगः' मार्गणव्यापारः परं न लभ्यते 'प्रथमं' यथाकृतं पात्रम्, अथवा लभ्यते परं स्वप्रमाणतो हीनाधिकं तेन कारणेन 'द्वे इतरे' अल्पपरिकर्म-सपरिकर्मणी यथाक्रमं गृह्णाति ॥ कुतः ? इति चेद् उच्यते-

[भा.४०५६] जह सपरिकम्मलंभे, मग्गंते अहाकडं भवे विपुला ।
निज्जरमेवमलंभे, बितियस्सियरे भवे विउला ॥

वृ- यथा 'सपरिकर्मणः' अल्पपरिकर्मपात्रकस्य लाभेऽपि यथाकृतं मार्गयो विपुला निर्जरा भवति, तथा यथाकृतालाभे 'इतरस्मिन्' बहुपरिकर्मणि लभ्यमानेऽपि 'द्वितीयस्य' अल्पपरिकर्मणो मार्गणे उपलक्षणत्वादल्पपरिकर्मणोऽप्यलाभे बहुपरिकर्ममार्गणे विपुलैव निर्जरा द्रष्टव्या ।। अथवा-

[भा.४०५७] असिवे ओमोदरिए, रायदुट्ठे भए व गेलन्ने ।
सेहे चरित्त सावयभए य ततियं पि गिण्हिज्जा ।।

वृ- यत्र यथाकृतमल्पपरिकर्म वा भाजनं प्राप्यते तत्र अपान्तराले वाऽशिवमवमौदर्यं राजद्विष्टं 'भयं वा' बोधिकस्तेनादिसमुत्थं वर्त्तते, ग्लानत्वं वा कस्यापि साधोः सञ्जातं तत्प्रतिबन्धेन न शक्यते तत्र गन्तुम्, शैक्षस्य वा तत्र सागारिकम्, चारित्रस्य वा धरिकाद्युपसर्गसमुत्थो भेदः, श्वापदाः-सिंहादयस्तेषां वा भयम्, एवमादिभि कारणैः 'तृतीयमपि' बहुपरिकर्म पात्रं स्वस्थाने गृह्णीयात् ।। उक्तमेवार्थं सिंहावलोकितेनाह-

[भा.४०५८] आगंतुगाणि ताणि य, चिरपरिकम्मे य सुत्तपरिहाणी ।
एएण कारणेणं, अहाकडे होति गहणं तु ।।

वृ-यथाकृते यानि बीजानि तान्यागन्तुकानि, चिरकालपरिकर्मणि च क्रियमाणे सूत्रार्थपरिहाणि, एतेन कारणेन यथाकृतस्य ग्रहणं कार्यम्, नाल्पपरिकर्मादिः ।। अथ मुखद्वारमाह-

[भा.४०५९] बितिय-ततिएसु नियमा, मुहकरणं होज्ज तस्सिमं मानं ।
तं चिय तिविहं पायं, करंडगं दीह वट्टं च ।।

वृ- 'द्वितीय तृतीययोः' अल्पपरिकर्म-सपरिकर्मणोर्नियमात् मुखकरणं भवेत् । 'तस्य च' मुखस्य 'इदं' वक्ष्यमाणं मानम् । तत्र यस्य पात्रस्य मुखं विचारयितव्यं तत् त्रिविधम्- करण्डकं दीर्घं वृत्तं च । 'करण्डकं' करण्डकाकारं बहुपृथुत्वमल्पोच्छ्रयम्, 'दीर्घम्' अल्पपृथुत्वं बहूच्छ्रयम्, 'वृत्तं' चतुरस्रम् ।। एतेषां मुखप्रमाणमाह-

[भा.४०६०] अकरंडगम्मि भाणे, हत्थो उट्ठं जहा न घट्टेति ।
एयं जहन्नगमुहं, वत्थुं पप्पा विसालतरं ।।

वृ- 'अकरण्डके' करण्डकाकाररहिते दीर्घे समचतुरस्र वा भाजने हस्तः प्रविशन् निर्गच्छन् वा यथा 'ओष्ठं' कर्णं 'न घट्टयति' न स्पृशति एतत् सर्वजघन्यं मुखप्रमाणम् । अतः परं 'वस्तु' बृहत्तरपात्रादिकं 'प्राप्य' प्रतीत्य विशालतरं मुखं क्रियते । यत् पुनः करण्डकाकारं पात्रं तस्य विशालमेव मुखं कर्त्तव्यम्, अन्यथा तद् दुःप्रत्युपेक्षं भवति ।। एष प्रतिग्रहविधिरुक्तः । इदानीं मात्रकविधि, तत्र परः प्रेरयति-ननु तीर्थकरैस्तावद् मात्रकं नानुज्ञातम्, कथम्? इति चेद् उच्यते-

[भा.४०६१] दव्वे एगं पायं, भणिओ तरुणो य एगपाओ उ ।
अप्पोवही पसत्थो, चोएति न मत्तओ तम्हा ।।

वृ- उपकरणद्रव्यावमौदरिकायामेकमेव पात्रमुक्तम् । तथा चागमः एगे वत्थे एगे पाए चियत्तोवगरणसाइज्जणया । तथा यो भिक्षुस्तरुणो युगवान् बलवान् स एकपात्रो भवेत् । तथा च आचारसूत्रम्-जे भिक्खू तरुणे जुगवं बलवं० से एगं पायं धारेज्जा । अल्पोपधिश्च प्रशस्तः । तथा च दशवैकालिकसूत्रम्-अप्पोवही कलहविवज्जणा य, विहारचरिया इसिणं पसत्था । यत एवमतो न मात्रकं ग्रहीतव्यम्, गाथायां पुंस्त्वं प्राकृतत्वाद् इति परः प्रेरयति ।। अथ सूरिराह-

[भा.४०६२] जिनकप्पे तं सुत्तं, सपडिग्गहकस्स तस्स तं एगं ।
नियमा थेराण पुनो, बितिज्ञाओ मत्तओ होइ ।।

वृ- हे नोदक ! यदेकपात्राभिधायकं सूत्रं तद् जिनकल्पिकविषयं मन्तव्यम् ! तथाहि-यः सप्रतिग्रहो जिनकल्पिकस्तस्य 'तत्' प्रतिग्रहलक्षणमेकं पात्रं भवति, स्थविराणां पुनर्नियमाद् द्वितीयं मात्रकं भवति, "एगं पायं जिणकप्पियाण थेराण मत्तओ बीओ ।" इति वचनात् ।।

[भा.४०६३] ननु दव्वोमोयरिया, तरुणाइविसेसओ य मत्तो वि ।
अप्पोवही दुपत्तो, जेनं तिप्पमिति बहुसद्दो ।।

वृ- यच्च द्रव्यावमौदरिकायामेकं पात्रमुक्तं तत्र द्वयोः पात्रयोर्धारणे ननु द्रव्यावमौदरिका किं न भवति ? त्रिप्रभृतीनामग्रहणाद् भवत्येवेति भावः । यच्चाभिहितम् "जे भिक्खू तरुणे" इत्यादि तत्र यदि सर्वेणापि साधुनैकमेव पात्रकं धारयितव्यं ततः किं तरुणादिभिर्विशेषणैरभिहितैः ? अतो ज्ञायते तरुणादिविशेषणाभिधानाद् मात्रकमपि सामर्थ्यादनुज्ञातम् । यदपि "अप्पोवही" इत्यादौ अभिहितं तत्र तु 'द्विपात्रः' पात्रद्वयोपेतोऽल्पोपधिरेव भवति, यतस्त्रप्रभृतिष्वेव पदार्थेषु बहुशब्दो वर्त्तते, अतो ग्रहीतव्यं मात्रकम् ।। अथ न गृह्णाति तत इमे दोषाः-

[भा.४०६४] अग्गहणे वारत्तग, पमाण हीनाऽधि सोहि अववाए ।
परिभोग गहण-बितियपय-लक्खणाई मुहं जाव ।।

वृ- मात्रकस्याग्रहणे दोषा वक्तव्याः । वारत्तगदृष्टान्तश्चात्र भवति । प्रमाणम् हीना-ऽधिकप्रमाणे च दोषाः । 'शोधिः' मात्रकपरिभोगे प्रायश्चित्तम् । 'अपवादः' हीना-ऽधिकधारणालक्षणः । परिभोगः कारणे मात्रकस्य यथा विधीयते । ग्रहण-द्वितीयपद-लक्षणादीनि मुखं यावद् यानि प्रतिग्रहद्वाराण्यभिहितानि तदेतत् सर्वं वक्तव्यमिति द्वारगाथासङ्क्षेपार्थ ।। अथैनामेव विवरीषुराह-

[भा.४०६५] मत्तअगेण्हणे गुरुगा, मिच्छत्ते अप्प-परपरिच्चाओ ।
संसत्तगहणम्मिं, संजमदोसा सवित्थारा ।।

वृ- मात्रकं यदि न गृह्णाति ततश्चतुर्गुरुकाः । येऽभिनवश्राद्धास्ते तेनैव प्रतिग्रहेण भोजनं पुनर्निर्लेपनं च कुर्वाणं दृष्ट्वा 'दुर्दृष्टधर्माणोऽमी' इति मिथ्यात्वं गच्छेयुः । यदि प्रतिग्रहे आचार्यादीनामर्थाय गृह्णाति तत आत्मपरित्यागः । अथात्मनो गृह्णाति ततः परेषाम्-आचार्यादीनां परित्यागः कृतो भवति । संसक्तभक्त-पानं चाप्रत्युपेक्षितं यदि प्रतिग्रहे गृह्णाति ततः संयमदोषाः सविस्तराः "छक्काय चउसु लहुगा" इत्यादिविस्तरसहिता वक्तव्याः ।। अथ वारत्तगदृष्टान्तमाह-

[भा.४०६६] वारत्तग पव्वज्जा, पुत्तो तप्पडिम देवयलि साहू ।
पडियरणेगपडिग्गह, आयमनुव्वालणा छेओ ।।

वृ- वारत्तगपुर नगरं । तत्थ य अभयसेनो राया । तस्स अमच्चो वारत्तगो नाम, सो पत्तेगबुद्धो घरसारं पुत्तस्स निसिरियं पव्वइओ । तस्स पुत्तेण पिउभत्तीए देवकुलं कारेत्ता रयहरण-मुहपोत्तिय-पडिग्गहधारिणी पिउ पडिमा ठाविया, तत्थ य सत्तागारो पवत्तिओ । तत्थ य एगो साहू एगपडिग्गहधारी पडिग्गहए भिक्खं घेत्तुं तं भोत्तुं तत्थेव पडिग्गहे पुनो पानगं घेत्तुं सन्नं वोसिरिउं तेनेव पडिग्गहेणं निल्लेवेइ । तेसिं सत्ताकारनिउत्ताणं चिंता जाया-'कहं निल्लेवेइ ?' त्ति पडियरिओ । दिट्ठो तेहिं, निच्छूढो । तस्स अन्नेसिं च साहूणं वोच्छेओ तत्थ जाओ ।।

अथ गाथाक्षरार्थः– वारत्तकेन प्रव्रज्यायां गृहीतायां पुत्रस्तस्य-वारत्तकस्य प्रतिमां देव-कुलेऽचीकरत्। तत्र च स्थली प्रवर्तिता। साधुश्चैकेन प्रतिग्रहेण भिक्षार्थमायातः। प्रतिचरणं च कर्वाणैस्तेनैव प्रतिग्रहेण 'आचमनं' निर्लेपनं कुर्वाणं दृष्ट्वा तस्य 'उद्दालना' निष्काशना कृता। तस्यान्येषां च साधूनां व्यवच्छेदः कृतः। एवं मात्रकस्याग्रहणे उड्डाहो भवेत्॥ अथ प्रमाणद्वारमाह-

[भा.४०६७] जो मागहओ पत्थो, सविसेसतरं तु मत्तगपमाणं।
दोसु वि दव्वग्गहणं, वासावासासु अहिकारो॥

वृ- यो 'मागधः' मगधदेशोद्भवः 'प्रस्थः' "दो असईओ पसई, दो पसईओ य सेइया होति। चउसेइयाहि पत्थो" इति क्रमनिष्पन्नः, ततो मागधप्रस्थात् सविशेषतरं मात्रकप्रमाणं भवति। तेन च मात्रकेण 'द्वयोरपि' ऋतुबद्ध-वर्षावासयोर्गुरु-ग्लानादियोग्यस्य भक्त-पानद्रव्यस्य ग्रहणं क्रियते। अन्ये तु व्याचक्षते-"दोसु वि" त्ति प्रतिग्रहे भक्तं मात्रके पानकं गृह्यते। वर्षावासे तु विशेषतो मात्रकेणाधिकारः, यतो वर्षासु प्रथममेव यत्र धर्मलाभयति तत्र पानकं गृह्णाति, यतः कदाचिद् व्याधारितं वर्षं निपतेद् येन गृहाद् गृहं सञ्चरितुं न शक्यते ततः पानकेन विना प्रतिग्रहो लेपकृतो भवति। अथवा वर्षावासे भक्त-पानं संसज्यत इति कृत्वा मात्रकेण तस्य शोधनं कार्यम्॥ प्रकारान्तरेण मात्रकप्रमाणमाह-

[भा.४०६८] सुक्खोल्लओदणस्सा, दुगाउतद्धाणमागओ साहू।
भुंजति एगट्ठाणे, एतं खलु मत्तगपमाणं॥

वृ- शुष्कौदनस्यान्यभाजनगृहीतेन तीमनेनार्द्रस्य भृतं यद् 'एकस्थाने' एकवारं द्विगव्यूतमात्रादध्वन आगतः साधुर्भुङ्क्ते एतत् खलु मात्रकप्रमाणं मन्तव्यम्॥ यदि वा-

[भा.४०६९] भत्तस्स व पानस्स व, एगतरागस्स जो भवे भरिओ।
पज्जत्तो साहुस्स उ, बितियं पि य मत्तयपमाणं॥

वृ- भक्तस्य वा पानकस्य वाऽनयोरेकतरस्य यद् भृतं सद् एकस्य साधोः पर्याप्तं भवति एतद् द्वितीयमपि मात्रकप्रमाणमवगन्तव्यम्॥ अथ हीनद्वारमाह–

[भा.४०७०] डहरस्सेसे दोसा, ओभावण खिंसणा गलंते य।
छण्हं विराधना भाणभेदो जं वा गिलाणस्स॥

वृ- 'डहरस्य' यथोक्तप्रमाणाद् लघुतरस्य मात्रकस्येमे दोषाः, तद्यथा-'अपभ्राजना' तद् लघुतरं मात्रकमतीव भ्रियमाणं दृष्ट्वा लोको ब्रूयात्-अहो! अमी बुभुक्षादुःखभग्नाः प्रव्रजन्ति। अथवा भक्त-पानं परिगलद् विलोक्य 'अहो! अमी असन्तुष्टा एवं सिच्यमाना अपि न गणयन्ति' इति खिंसां कुर्यात्। अतिभृते च गलति षट्कायानां विराधना। अथ परिगलनभयात् तत्रैवोपयोगं ददाति ततः स्थाण्वादौ प्रस्खलितस्य भाजनभेदो भवेत्। यद्वा ग्लानस्य उपलक्षणत्वाद् बालवृद्धादीनां च तेन डहरमात्रकेणापर्याप्तं भवति तन्निष्पन्नं प्रायश्चित्तम्॥ तथा–

[भा.४०७१] पडणं अवंगुतम्मि, पुढवी-तसपान-तरुगणादीणं।
आनिज्जंते गामंतरा गलणे य छक्काया॥

वृ- डहरमात्रके आकण्ठभृते लेपकृतीकरणभयाद् 'अपावृते' उद्घाटिते पृथिवीरजः-त्रसप्राणितरुगणादीनां पतनं भवेत्। अथवा ग्रामान्तरादतिभृते तस्मिन् आनीयमाने परिगलति

षट्काया विराध्यन्ते ॥ अथाधिकद्वारमाह-

[भा.४०७२] अहियस्स इमे दोसा, एगतरस्सोग्गहम्मि भरितम्मि ।
सहसा मत्तगभरणे, भारादि विगिंचणियमादी ॥

वृ- प्रमाणाधिकस्य मात्रकस्येमे दोषाः-'एकतरस्य' भक्तस्य वा पानकस्य वा प्रतिग्रहे भृते सति पश्चाद् मात्रके ग्रहणं कुर्यात् । सहसा वा तस्य मात्रकस्य भरणे कृते भारेण स्थाणु-कण्टकादीनि न प्रेक्षते तत्रात्मविराधना, ईर्यायां अशोधने संयमविराधना । अन्यच्च द्वयोरपि प्रतिग्रह-मात्रकयोर्भृतयोः 'विवेचनं' परिष्ठापनं भवेत् तत्र षट्कायविराधना । अथ न परिष्ठापयति ततोऽतिप्रचुरेण भक्षितेन ग्लानत्वं भवेत् । यत एवमादयो दोषाः अतः प्रमाणयुक्तं ग्रहीतव्यम् ॥

अथ शोधिद्वारमाह-

[भा.४०७३] जइ भोयणमावहती, दिवसेणं तत्तिया चउम्मासा ।
दिवसे दिवसे तस्स उ, बितिएणारोवणा भणिया ॥

वृ- 'यति' यावतो वारान् एकदिवसेन मात्रके 'भोजनं' भक्त-पानम् आत्मनो योग्यम् 'आवहति' आनयतीत्यर्थः तावन्ति चतुर्लघूनि । अथ दिवसे मात्रकं परिभुङ्क्ते ततो द्वितीयप्रायश्चित्तेनारोपणा भणिता । किमुक्तं भवति ? -द्वितीयदिवसे मात्रकं यावतो वारान् परिभुङ्क्ते तावन्ति चतुर्गुरुकाणि, एवं तृतीये षड्लघु, चतुर्थे षड्गुरु, पञ्चमे छेदः षष्ठे मूलम्, सप्तमेऽनवस्थाप्यम्, अष्टमे पाराञ्चिकम् ॥

गतं शोधिद्वारम् । अथापवादद्वारमाह-

[भा.४०७४] अग्गाणे गारवे लुद्धे, असंपत्ती य जाणए ।
लहुगो लहुगा गुरुगा, चउत्थो सुद्धो उ जाणओ ॥

वृ- इयं यथा प्रतिग्रहे तथा मात्रकेऽपि वक्तव्या ॥ परिभोगद्वारमाह-

[भा.४०७५] बाले वुड्ढे सेहे, आयरिय गिलाण खमग पाहुणए ।
दुल्लभ संसत्त असंथरंत अद्धाणकप्पम्मि ॥

वृ- बालस्य वृद्धस्य शैक्षस्याचार्यस्य ग्लानस्य क्षपकस्य प्राघुणकस्य च प्रायोग्यं मात्रके गृह्यते। यद्वा बाल-वृद्धादयः प्रतिग्रहं हिण्डापयितुं न शक्नुवन्ति अतस्ते मात्रके भक्त-पानमानयेयुः भुञ्जीरन् वा । गच्छसाधारणं वा दुर्लभद्रव्यं घृतादिकं मात्रके गृह्णीयात् । यत्र वा भक्त-पानं संसज्यते तत्र मात्रके गृह्यते, तद्धि संसक्तं मात्रके शोधयित्वा पश्चात् प्रतिग्रहे प्रक्षिप्यते । अवम-राजद्विष्टादिषु वा असंस्तरणे प्रतिग्रहे भृतेऽन्यस्मिन् लभ्यमाने मात्रके गृह्यते । अध्वनि कल्पोऽध्वकल्पः, कल्पग्रहणं कारणे विधिना अध्वा प्रतिपन्न इति ख्यापनार्थम्, तत्रासंस्तरणे प्रतिग्रहे भृते सति मात्रकेऽपि गृह्यते ॥ अथ ग्रहण-द्वितीयपदद्वारे व्याख्यायेते-ग्रहणं नाम को मात्रकं गृह्णति ? तत्र निर्वचनं यथा प्रतिग्रहे । द्वितीयपदं पुनरशिवादिभि कारणैः यथाकृतमात्रकस्य यत्र सम्भवस्तत्र गन्तुमशक्तौ स्वस्थान एवाल्पपरिकर्म-बहुपरिकर्मणी ग्रहीतव्ये । लक्षणादीनि द्वाराणि प्रतिग्रह इव मन्तव्यानि ॥ अल्पपरिकर्मणि सपरिकर्मणि च पात्रे लेपप्रदानं सम्भवति। अतस्तद्विषयं विधिमाह-

[भा.४०७६] हरिए बीए चले जुत्ते, वच्छे साणे जलट्ठिए ।
पुढवी संपातिमा सामा, महावाए महियाऽमिते ॥

[भा.४०७७] पुव्वण्हे लेवदानं, लेवग्गहणं सुसंवरं काउं ।
लेवस्स आणणा लिंपणा य जतणाय कायव्वा ॥

वृ- गाथाद्वयमपि पीठिकायां सप्रपञ्चं व्याख्यातमिति ॥

-''कप्पइ निग्गंथाणं'' सूत्रार्थम् उच्यते-

[भा.४०७८] अव्वोगडो उ भणितो, उवधिविभागो उ आदिसुत्तेसु ।
सो पुन विभज्जमाणो, उवरिसुए वोगडो होति ॥

वृ- 'अव्याकृतः' 'अयं जिनकल्पिकानाम्, अयं स्थविरकल्पिकानाम्, अयमार्यिकाणाम्' इत्येवमविशेषित एवोपधिविभागः 'आदिसूत्रेषु' अनन्तरोक्तेषु भणितः, 'स पुनः' उपधिविभागो जिनकल्पिकादिविभागैर्विभज्यमानोऽस्मिन् प्रस्तुते उपरिसूत्रे 'व्याकृतः' स्फुटो भवति, अत इदं सूत्रमारभ्यते ॥ तमेवोपधिविभागं प्रचिकटयिषुराह-

[भा.४०७९] चोद्दसग पन्नवीसो, ओहोवधुवग्गहो अनेगविधो ।
संथारपट्टमादी, उभयोपक्खम्मि नेयव्वो ॥

वृ- इह जिनकल्पिकानामौधिक एवोपधिर्भवति नौपग्रहिकः, स्थविरकल्पिकानां तु द्विविधोऽपि भवति । तत्रौघोपधिर्द्विधा-चतुर्दशविधः पञ्चविंशतिविधश्च । चतुर्दशविधः साधूनाम्, पञ्चविंशतिविधस्तु साध्वीनाम् । उपग्रहोपधि पुनरनेकविधः, स च संस्तारपट्टादिरुपः 'उभयपक्षे' साधु-साध्वीजनलक्षणे ज्ञातव्यः ॥ तत्र स्थविरकल्पिकानां चतुर्दशविध ओघोपधिः प्रागनन्तरसूत्र एवोक्तः, अथार्याणां पञ्चविंशतिविधं तमेवाह-

[भा.४०८०] पत्तं पत्ताबंधो, पायट्ठवणं च पायकेसरिया ।
पडलाइं रयत्ताणं, च गोच्छओ पायनिज्जोगो ॥

[भा.४०८१] तिन्नेव य पच्छाया, रयहरणं चेव होइ मुहपोत्ती ।
तत्तो य मत्तए खलु, चोद्दसमे कमढए होति ॥

[भा.४०८२] उग्गहनंतग पट्टो, अड्ढोरुअ चलणिया य बोधव्वा ।
अब्भिंतर-बाहिनियंसणी य तह कंचुए चेव ॥

[भा.४०८३] उक्कच्छिय वेकच्छिय, संघाडी चेव खंधकरणी य ।
ओहोवहिम्मि एते, अज्जाणं पन्नवीसं तु ॥

वृ- पात्रकादीनि त्रयोदशोपकरणानि साधूनामिव द्रष्टव्यानि । चतुर्दशं तु चोलपट्टकस्थाने तासां कमठकं भवति, तच्चाष्टकमयमेकैकं संयतीनां निजोदरप्रमाणेन विज्ञेयम् १४ । तथाऽवग्रहानन्तकं १५ पट्टः १६ अर्द्धोरुकं १७ चलनिका च बोद्धव्या १८, अभ्यन्तरनिवसनी १९ बहिर्निवसनी २० तथा कञ्चुकश्चैव २१ औपकक्षिका २२ वैकक्षिकी २३ सङ्घाटी २४ स्कन्धकरणी २५ । एवमेतान्योघोपधौ आर्यिकाणां पञ्चविंशतिरुपकरणानि भवन्तीति ॥

अथैतान्येव विवृणोति-

[भा.४०८४] नावनिभो उग्गहनंतओ उ सो गुज्झदेसरक्खट्ठा ।
सो य पमाणेणेक्को, घन-मसिणो देहमासज्ज ॥

वृ- इह 'अवग्रहः' इति योनिद्वारस्य सामयिकी संज्ञा, तस्यानन्तकं-वस्त्रमवग्रहानन्तकम्,

गाथायां पुंस्त्वं प्राकृतत्वात्, तच्च 'नौनिभं' मध्यभागे विशालं पर्यन्तभागयोस्तु तनुकं गुह्यदेशरक्षार्थं क्रियते। तच्च गणनया एकम्, आर्त्तव-बीजपातसंरक्षणार्थं च धनं-धनवस्त्रेण, पुरुषसमानक-र्कशस्पर्शपरिहरणार्थं च मसृणं-मसृणवस्त्रेण क्रियते। प्रमाणेन च 'देहं' स्वशरीरमासाद्य तद् विधीयते, देहो हि कस्याश्चित् तनुः कस्याश्चित्तु स्थूलः ततस्तदनुसारेण विधेयमित्यर्थः ॥

[भा.४०८५] पट्टो वि होइ एक्को, देहपमाणेण सो उ भइयव्वो।
छादंतोग्गहणंतं, कडिबद्धो मल्लकच्छा वा ॥

वृ-पट्टोऽपि गणनयैको भवति। स च पर्यन्तभागवर्त्तिवीटकबन्धबद्धः, पृथुत्वेन चतुरङ्गुलप्रमाणः समतिरिक्तो वा, दैर्घ्येण तु स्वकटीप्रमाणः। स च देहप्रमाणेन भक्तव्यः, पृथुलकटीभागाया दीर्घ सङ्कीर्णकटीभागायास्तु ह्रस्व इत्यर्थः। स चावग्रहानन्तकमुभयान्तयोराच्छादयन् कटीबद्धः सन् मल्लकक्षावद् ज्ञायते ॥

[भा.४०८६] अड्ढोरुगो वि ते दो, वि गिण्हिउं छादए कडीभागं।
जाणुप्पमाणा चलणी, असिव्विया लंखियाए व ॥

वृ- अर्धोरुकोऽपि 'तौ द्वावपि' अवग्रहानन्तक-पट्टावुपरिष्टाद् गृहीत्वा सर्वं कटीभाग-माच्छादयति, स च मल्लचलनाकृति केवलमूर्वोरन्तरे ऊरुद्वये च कसाबद्धः। चलनिकाऽप्येवमेव, नवरमधो जानुप्रमाणा अस्यूता लङ्खिकापरिधानवत्-वंशाग्रनर्त्तकीचलनकवदसौ मन्तव्या ॥

[भा.४०८७] अंतोनियंसणी पुन, लीनतरा जाव अद्धजंघातो।
बाहिर खुलगपमाणा, कडीय दोरेण पडिबद्धा ॥

वृ-अन्तर्निवसनी पुनरुपरि कटीभागादारभ्याधोऽर्धजङ्घा यावद् भवति। सा च परिधानकाले लीनतरा परिधीयते, मा भूदनावृता जनोपहास्येति। बहिर्निवसनी पुनरुपरि कटीभागादारभ्याधः 'खुलकप्रमाणा' चरणगुल्फं यावदित्यर्थं, कट्यां च दवरकेण प्रतिबद्धा ॥ इदमधःशरीरस्य षड्विधमुपकरणमुक्तम्। अथोर्ध्वकायोपयोगि कञ्चुकादिकं व्याख्याति-

[भा.४०८८] छादेति अनुक्कुयिते, उरोरुहे कंचुओ असिव्वितओ।
एमेव य उक्कच्छी, सा नवरं दाहिणे पासे ॥

वृ- दर्घ्यमाश्रित्य स्वहस्तेनार्धतृतीयहस्तप्रमाणः पृथुत्वेन तु हस्तमानः 'असीवितः' उभयतः कटीदेशे कसाबबद्धः कञ्चुकः क्रियते। स च उरोरुहौ छादयति, किम्भूतौ ? 'अनुत्कुचितौ' (अ) श्लथौ; गाढपरिधाने हि विविक्तविभागौ भवेताम्। कक्षायाः समीपमुपकक्षम्, तत्र भवा औप-कक्षिकी, अध्यात्मादित्वादिकणप्रत्ययः, 'एवमेव च' कञ्चुकवत् तस्या अपि स्वरूपं वक्तव्यम्। सा नवरं दक्षिणे पार्श्वे समचतुरस्र स्वहस्तेन सार्धहस्तप्रमाणा उरोभागं पृष्ठं च प्रच्छादयन्ती वामस्कन्धे वामपार्श्वे च वीटकबद्धा परिधीयते ॥

[भा.४०८९] वेगच्छिया उ पट्टो, कंचुकमुक्कच्छियं च छादेति।
संघाडीओ चउरो, तत्थ दुहत्था उ वसधीए ॥

वृ- औपकक्षिकीविपरीतो वैकक्षिकीनामकः पट्टः कञ्चुकमौपकक्षिकीं च छादयन् वामपार्श्वे परिधीयते। तथोपरि परिभाग्याः सङ्घाटिकाश्चतस्र भवन्ति-एका द्विहस्ता, द्वे त्रिहस्ते, एका च चतुर्हस्ता; दैर्घ्येण चतस्रोऽपि सार्धहस्तत्रयप्रमाणाश्चतुर्हस्ता वा मन्तव्याः। तत्र 'द्विहस्ता'

द्विहस्तविस्तृता सङ्घाटिका वसत्यां परिधीयते, न तां विहाय प्रकटदेहया कदाचिदासितव्यमिति भावः ॥

[भा.४०९०] दुन्नि तिहत्थायामा, भिक्खट्ठा एग एग उच्चारे ।
ओसरणे चउहत्था ऽनिसन्नपच्छाइणी मसिणा ॥

वृ- ये च द्वे 'त्रिहस्तायामे' त्रिहस्तविस्तृते तयोर्मध्ये एका भिक्षार्थं गच्छन्त्या प्राव्रियते, एका उच्चारभूमिं व्रजन्त्या । तथा 'समवसरणे' व्याख्यानश्रवणादौ गच्छन्ती चतुर्हस्तां प्रावृणोत, सा च प्राक्तनसङ्घाटीभ्यो बृहत्तरप्रमाणा अनिषन्नप्रच्छादनार्थं क्रियते; यतो न तत्र संयतीभिरुपवेष्टव्यम्, किन्तूर्ध्वस्थिताभिरनुयोगश्रवणादि विधेयम्, ततस्तया स्कन्धादारभ्य पादौ यावद् वपुः प्रच्छाद्य तिष्ठन्ति । एताश्च पूर्वप्रावृतवेषप्रच्छादनार्थं प्रवचनवर्णप्रभावनार्थं च मसृणाः क्रियन्ते । चतस्रोऽपि च गणनाप्रमाणेनैकमेव रूपं गण्यते, युगपत् परिभोगाभावात् ॥

[भा.४०९१] खंधकरणी उ चउहत्थवित्थरा वायविहुतरक्खट्ठा ।
खुज्जकरणी उ कीरति, रूववतीणं कुडुहहेउं ॥

वृ-स्कन्धकरणी चतुर्हस्तविस्तरा समचतुरस्रो प्रावरणस्य वातविधुतरक्षणार्थं चतुष्फला स्कन्धे कृत्वा प्राव्रियते । रुपवतीनां च संयतीनां कुटुम्भहेतोः कुब्जकरण्यपि क्रियते, पृष्ठदेशे संवर्त्तितया औपकक्षिकी-वैकक्षिकीनिबद्धया तया विरुपतापादनाय कुटुंभं विधीयत इति भावः ॥ उपसंहरन्नाह-

[भा.४०९२] संघातिमेतरो वा, सव्वोऽवेसो समासओ उवधी ।
पासगबद्धमझुसिरो, जं चाऽऽइन्नं तगं नेयं ॥

वृ- सर्वोऽपि 'एषः' अनन्तरोक्त उपधि समासतो द्विधा-सङ्घातिम इतरश्च । द्वित्र्यादिखण्डानां मीलनेन निष्पन्नः सङ्घातिमः, 'इतरः' तद्विपरीतोऽसङ्घातिमः । अयं च 'पाशकबद्धः' कसाबद्धः तथा 'अशुषिरः' गृहिसीवनिकारहितः प्रतिथिग्गलवर्जितो वा । यच्चात्र द्रव्य-क्षेत्रकाल-भावेषु संविग्नगीतार्थैः पूर्वसूरिभिराचीर्णं तत् सर्वमपि 'ज्ञेयं' सम्यगुपादेयतया मन्तव्यम् ॥

अथ जिनकल्पिकादीनामुपधेरुत्कृष्टादिविभागमाह-

[भा.४०९३] उक्कोसओ जिनाणं, चउव्विहो मज्झिमो वि य तहेव ।
जहन्नो चउव्विहो खलु, एत्तो थेराण वोच्छामि ॥

वृ- त्रयः कल्पाः प्रतिग्रहश्चेति जिनकल्पिकानामुत्कृष्ट उपधिश्चतुर्विधः । एवं मध्यमोऽपि रजोहरण-पटलक-पात्रबन्ध-रजस्त्राणभेदात् चतुर्विधः । जघन्योऽपि मुखपोतिका-पादकेसरि-कागोच्छक-पात्रस्थापनभेदात् चतुर्विधः । इत ऊर्ध्वं स्थविरकल्पिकानां वक्ष्यामि ॥

[भा.४०९४] उक्कोसो थेराणं, चउव्विहो छव्विहो य मज्झिमओ ।
जहन्नो चउव्विहो खलु, एत्तो अज्जाण वोच्छामि ॥

वृ- उत्कृष्टो जघन्यश्च जिनकल्पिकानामिव द्रष्टव्यः । नवरं मध्यमः षड्विध इत्थम्-रजोहरणं पटलकानि पात्रकबन्धो रजस्त्राणं मात्रकं चोलपट्टकश्चेति । (इत ऊर्ध्वमार्याणां वक्ष्यामि) ॥

[भा.४०९५] उक्कोसो अट्ठविहो, मज्झिमओ होइ तेरसविहो उ ।
जहन्नो चउव्विहो खलु, एत्तो उ उवग्गहं वोच्छं ॥

वृ- आर्याणामुत्कृष्ट उपधिरष्टविधः-त्रयः कल्पाः ३ प्रतिग्रहः ४ अभ्यन्तरनिवसनी ५

बहिर्निवसनी ६ सङ्घाटिका ७ स्कन्धकरणी ८ चेति । मध्यमस्त्रयोदशविधो भवति, तद्यथा-रजोहरणं १ पटलकानि २ पात्रकबन्धः ३ रजस्त्राणं ४ मात्रकं ५ कमठकम् ६ अवग्रहानन्तकं ७ पट्टः ८ अर्धोरुकः ९ कञ्चुकः १० चलनिका ११ औपकक्षिकी १२ वैकक्षिकी १३ चेति । जघन्यश्चतुर्विधः-मुखपोतिका पात्रकेसरिका गोच्छकः पात्रस्थापनं चेति । इत ऊर्ध्वमतिरिक्तो य उपधिः स उपग्रहोपधिरुच्यते, तमपि जघन्यादिविभागनिरूपणेनाहं वक्ष्ये । तत्र जघन्यं तावदाह-

[भा.४०९६] पीढग निसिज्ज दंडगपमज्जणी घट्टए डगलमादी ।
पिप्पलग सूयि नहरणि, सोहणगदुगं जहन्नो उ ॥

वृ- पीठकं काष्ठमयं छगणमयं वा । निषद्या रजोहरणस्य सौत्रिकी और्णिकी चेति द्विविधा । 'दण्डकप्रमार्जनी नाम' यया वसति प्रमार्ज्यते । 'घट्टकः' लिप्तपात्रमसृणताकारकः पाषाणः । डगलगाः-पुतप्रोञ्छनोपयोगिनो लेष्टवाः, आदिशब्दात् कुटमुख-क्षारादिपरिग्रहः । 'पिप्पलकः' क्षुरप्रः । 'सूची' यया वस्त्रं सीव्यते । 'नखहरणी' यया नखा उद्ध्रियन्ते । 'शोधनकद्विकं तु' कर्णशोधनं दन्तशोधनं चेति । एष जघन्य औपग्रहिकोपधि ॥ अथ मध्यममाह-

[भा.४०९७] वासत्ताणे पनगं, चिलिमिणिपनगं दुगं च संथारे ।
दंडादीपनगं पुन, मत्तगतिग पादलेणिया ॥

वृ- वर्षात्राणानां पञ्चकम्-वालमयं सूत्रमयं सूचीमयं कुटशीर्षकं छत्रकं चेति । तत्र वालमयं सूत्रमयं च प्रतीतम्, सूची-ताडपत्रसूच्यादिखुम्पकः, कुटशीर्षकं पलाशपत्रमयम्, छत्रकं वंशमयम्। चिलमिलिपञ्चकम्-वालमयी सूत्रमयी वल्कमयी कटमयी दण्डमयी चेति, पञ्चापि प्रथमोद्देशके विख्याताः । संस्तारकद्विकं शुषिरा-ऽशुषिरभेदात् । शुषिरस्तृणादिमयः, अशुषिरः काष्ठमयः । दण्डादिपञ्चकम्-दण्डको विदण्डको यष्टिर्वियष्टिर्नालिका चेति । मात्रकत्रिकं तु खेल-प्रश्रवणोच्चार-मात्रकभेदात् । पादलेखनिका वटोदुम्बरप्लक्षा-ऽम्लिकाकाष्ठमयी वर्षासु कर्दमापनयनी ॥

[भा.४०९८] चम्मतिगं पट्टदुगं, नायव्वो मज्झिमोवही एसो ।
अज्जाण वारए पुन, मज्झिमए होति अतिरित्तो ॥

वृ- चर्मत्रिकं पुनरिदम्-आस्तरणं प्रावरणमुपवेशनं च । दवानलादिभये यद् भूमावास्तीर्यते प्रलम्बादिविकरणाय वा तदास्तरणम्, षट्पदिकाभये यत् प्राव्रियते तत् प्रावरणम्, यत्रार्शोरोगादिभि करणैरुपविश्यते तदुपवेशनम् । अथवा कृत्ति तलि वद्धश्चेति चर्मत्रिकम् । पट्टद्विकम्-संस्तारपट्ट उत्तरपट्टश्च, अथवा पर्यस्तिकापट्टः सन्नाहपट्टश्चेति । तत्र पर्यस्तिकापट्टो योगपट्ट उच्यते, सन्नाहपट्टस्तु विहारे उपधेः शरीरेण सह बन्धनार्थः । एष मध्यम उपग्रहोपधि साधूनां ज्ञातव्यः । आर्याणामप्येवमेव, नवरम्-तासां जनमध्य एवोपाश्रयस्यानुज्ञातत्वात् ससागारिके वसन्तीनां प्रश्रवणव्युत्सर्जनानन्तर-मुदकस्पर्शनार्थं वारको मध्यमोपधावतिरिक्तो भवति ॥ अथोत्कृष्टमाह-

[भा.४०९९] अक्खा संथारो या, दुविहो एगंगिएतरो चेव ।
पोत्थगपनगं फलगं, बितियपदे होति उक्कोसो ॥

वृ- 'अक्षाः' अनुयोगदाने गुरूणां मञ्चारणिकार्थमुपकरणम् । संस्तारको द्विविधः-एकाङ्गिक इतरश्च । तत्रैकाङ्गिकः-तिनिशादिकाष्ठपट्टरूपः, इतरः-दवरकावबद्धकम्बिकामयः । प्रथमपदमुत्सर्ग तदपेक्षया द्वितीयपदम्-अपवादस्तत्र प्रागुक्तस्वरूपं पुस्तकपञ्चकं गृह्यते, 'फलकं नाम' पट्टिका

यस्यां लिखित्वा पठ्यते । एष उत्कृष्ट औपग्रहिकोपधिर्मन्तव्यः ॥

**मू. (८९)** *नो कप्पइ निग्गंथाणं उग्गहनंतगं वा उग्गहपट्टगं वा धारित्तए वा परिहरित्तए वा ॥*

**वृ-** अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

**[भा.४१००]** उभयम्मि वि अविसिट्ठं, वत्थग्गहणं तु वन्नियं एयं ।
जं जस्स होति जोग्गं, इदानि तं तं परिकहेति ॥

**वृ-** उभयं-भिन्ना-ऽभिन्नसूत्रद्वयम् एतस्मिन् 'अविशिष्टम्' 'इदं साधूनां कल्पते न कल्पते वा' इत्यादिविशेषरहितम् 'इदम्' 'एतत्' अनन्तरोक्तं वस्त्रग्रहणं वर्णितम् । इदानीं तु यद् यस्य संयतस्य संयत्या वा योग्यं तत् तत् सूत्रेणैव साक्षात् परिकथयतीति । अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानाम् 'अवग्राहनन्तकं वा' गुह्यदेशपिधानवस्त्रम् 'अवग्रहपट्टकं वा' तस्यवाच्छादकपट्टं धारयितुं वा परिहर्तुं वा इति सूत्रसङ्क्षेपार्थः ॥ अथ निर्युक्तिविस्तरः-

**[भा.४१०१]** निग्गंथोग्गहधरणे, चउरो लहुगा य दोस आणादी ।
अतिरेगउवहि तह लिंगभेद बितियं अरिसमादी ॥

**वृ-** निर्ग्रन्थानामवग्राहनन्तक-पट्टयोर्धारणे चत्वारो लघुमासाः आज्ञादयश्च दोषाः, अतिरिक्तोपिधित्वादधिकरणं भवेत् । तथा लिङ्गभेदः कृतो भवति, साध्वीनां लिङ्गमाश्रितं भवतीत्यर्थः । द्वितीयपदविषयम् अर्शोरोगादिकं तत्रावग्रहानन्तकं पट्टकं वा धारयेत् ॥

द्वितीयपदमेव भावयति-

**[भा.४१०२]** भगंदलं जस्सऽरिसा व निच्चं, लगंति पूयं लसि सोणियं वा ।
उड्डाह-सज्झाय-दयानिमित्तं, सो उग्गहं बंधति पट्टगं च ॥

**वृ-** 'भगन्दरः' पुतसन्धौ व्रणविशेषोऽर्शांसि वा यस्य नित्यं पूयं वा रसिकां वा शोणितं वा गलन्ति सः 'उड्डाह-स्वाध्याय-दयानिमित्तम्' 'अहो ! अमी ईदृशा एव पापोपहता रोगाभिभूतवपुषः प्रव्रज्यां प्रतिपद्यन्ते' इत्यादिक उड्डाहो मा भूत्, तथा शोणिते परिगलति स्वाध्यायः कर्तुं न कल्पते, पूय-रसिका-शोणितगन्धाघ्राणाच्च कीटिकादिप्राणिनामभिलीयमानानामुपघातो भवेत्, अतोऽवग्रहानन्तकं पट्टकं वा बध्नाति ॥ तत्र च बद्धे पूयादिभिरुपलिप्ते धावनविधिमाह-

**[भा.४१०३]** पूय-लसिगा उवस्सए, धोव्वति असहुस्स पट्टो रुहिरं च ।
उग्गह पट्टं च सहू, वीयारे लोहियं धुवति ॥

**वृ-** पूय-रसिके अस्वाध्यायिकं न भवतीति कृत्वा ते उपाश्रय एव धाव्येते । यो भगन्दरादिरोगवान् बहिर्गन्तुमसहिष्णुस्तस्य पट्टो रुधिरं चोपाश्रये कश्चिद् मात्रके धाव्यते, ततस्तद्धावनं हस्तशताद् बहिः परिष्ठाप्यते । अथासौ बहिर्गन्तुं सहिष्णुस्ततो विचारभूमौ गः स्वयमेवावग्रहपट्टकं रुधिरं च धावति ॥ पट्टबन्धने विधिमाह-

**[भा.४१०४]** ते पुन होंति दुगादी, दिवसंतरिएहि बज्झए तेहिं ।
अरुगं इहरा कुच्छइ, ते वि य कुच्छंति निच्चोल्ला ॥

**वृ-** 'ते पुनः' अवग्रहान्तक-पट्टाः 'द्विकादयः' द्वि-त्रिप्रभृतिसङ्ख्याकाः कर्त्तव्याः, तैर्दिवसान्तरितैर्व्रणो बध्यते । किमुक्तं भवति ? -येनावग्रहानन्तकेन पट्टकेन वा अद्य व्रणो बद्धः द्वितीयदिने स उन्मोच्य प्रक्षाल्य चापरिभोग्य विधेयः, यः पुनराद्यदिने न परिभुक्तः तेन तस्मिन् दिने व्रणो

बन्धनीयः । 'इतरथा' प्रतिदिनं तेनैव पट्टेन बन्धे दीयमाने 'अरुकं' व्रणः 'कुथ्यति' पूतिभावमुपगच्छति, 'तेऽपि च' पट्टाः प्रतिदिनं बध्यमानतया नित्यं-सदैवार्द्राः सन्तः कुथ्यन्ति, अतो द्व्यादयः पट्टाः कर्त्तव्याः ॥

**मू.** *(९०) कप्पइ निग्गंथीणं उग्गहणंतगं वा उग्गहपट्टगं वा धारित्तए वा परिहरित्तए वा ॥*

**वृ-** अस्य व्याख्या प्राग्वत् ॥ अथ भाष्यविस्तरः-

**[भा.४१०५]** निग्गंथीण अगिण्हणे, चउरो गुरुगा य आयरियमादी ।
तच्चिय ओगाहण, निवारणऽन्नेसि ओहसणं ॥

**वृ-** निर्ग्रन्थीनामवग्रहानन्तकस्य पट्टकस्य वा अग्रहणे चतुर्गुरुकाः । इदं सूत्रमाचार्य प्रवर्त्तिन्या न कथयति चत्वारो गुरवः । प्रवर्त्तिनी संयतीनां न कथयति चत्वारो गुरवः । आर्यिका न प्रतिशृण्वन्ति मासलघु । भिक्षादौ गच्छन्ती यदयवग्रहानन्तकं पट्टकं वा न गृह्णाति तत एते दोषाः-तच्चिकस्य-रुधिरस्य भिक्षां गच्छन्त्याः 'अवगाहनं' प्रसरणम् अन्येषु दिवसेष्ववग्रहानन्तक-पट्टाभ्यां निवारितमासीत् परं तद्दिवसमगृहीतयोस्तयो रुधिरमवगाढम्, ततो लोकस्तद् दृष्ट्वा उपहसनं कुर्यात् ॥ कथम् ? इति चेद् उच्यते–

**[भा.४१०६]** भिक्खाइ गयाए निग्गयं, रुहिरं दट्ठुमसंजता वदे ।
धिगहो ! बत ! खएणऽयं जनो, दोसमिणं असमिक्ख दिक्खिओ ॥

**वृ-** भिक्षायां गतायास्तस्या रुधिरं निर्गतं दृष्ट्वा असंयता वदेयुः-'बत !' इत्यामन्त्रणे, भो भो लोकाः ! धिगहो ! कष्टम्, केनायं स्त्रीलक्षणो जनोऽमुं दोषमसमीक्ष्य दीक्षितः ॥ अपि च–

**[भा.४१०७]** छक्कायाण विराधन, पडिगमनादीणि जाणि ठाणाणि ।
तब्भाव पिच्छिऊणं, बितियं असती अहव जुन्ना ॥

**वृ-** शोणिते परिगलति षट्कायानां विराधना भवति । सा च 'यद् द्रष्टव्यं तद् दृष्टम्' इति कृत्वा प्रतिगमना-ऽन्यतीर्थिकगमनादीनि यानि स्थानानि कुर्यात् तन्निष्पन्नं प्रवर्त्तिन्याः प्रायश्चित्तम् । स चासौ-शोणितपरिगलनलक्षणो भावश्च तद्भावस्तं 'प्रेक्ष्य' विलोक्य तरुणा उपसर्गयेयुरिति वाक्यशेषः । द्वितीयपदमत्राभिधीयते-''असइ''त्ति नास्त्यवग्रहानन्तकम्, अथवा जीर्णा स्थविरा सा संयती अतो विद्यमानमपि न गृह्णीयादपि ॥ अथेदमेव भावयति–

**[भा.४१०८]** दिट्ठं अदिट्ठव्वं महं जनेनं, लज्जाए कुज्जा गमनाइगाइं ।
लज्जाए भंगो व हवेज्ज तीसे, लज्जाविनासे व स किं न कुज्जा ॥

**वृ-** 'यद् ममाद्रष्टव्यं तद् दृष्टं तावद् जनेन, अतो नाहमत्र स्थातुं शक्नोमि' इति कृत्वा लज्जया 'गमनादीनि' गृहवासाश्रयणादीनि कुर्यात्, यद्वा 'तस्याः' संयत्या लज्जाया भङ्गो भवेत्, लज्जाविनाशे च सा किं नामाकृत्यं न कुर्यात् ? ॥ तथा–

**[भा.४१०९]** तं पासिउं भावमुदिन्नकम्मा, पेल्लेज्ज सज्जेज्ज व सा वि तत्थ ।
तं लोहियं वा वि सरक्खमादी, घेत्तुं समालब्भऽभिजोययंति ॥

**वृ-** 'तं' रुधिरपरिगलनरूपं भावं दृष्ट्वा केचित् तरुणा उदीर्णकर्माणश्चतुर्थप्रतिसेवनार्थं प्रेरयेयुः । 'साऽपि च' संयती तत्र 'सजेत्' सङ्गं कुर्यात् । यद्वा यद् लोहितं 'सरजस्कादयः' कापालिकप्रभृतयः 'समालभ्य' गृहीत्वा विद्याप्रयोगेण 'अभियोजयन्ति' वशीकुर्वन्ति ॥ यत एवमतः-

[भा.४११०] अंतो घरस्सेव जतं करेती, जहा नडी रंगमुवेउकामा।
लज्जापहीणा अह सा जणोघं, संपप्प ते ते पकरेति हावे ॥

वृ- यथा 'नटी' रङ्गनर्त्तकी 'रङ्गं' नाट्यस्थानमुपैतुकामा गृहस्यैव 'अन्तः' मध्ये 'जयं' लज्जाया अभिभवं करोति, 'अथ' अनन्तरं सा लज्जाप्रहीणा सती 'जनौघं' जनसमुदायं सम्प्राप्य 'तान् तान् भावान्' अङ्गविक्षेपादीन् प्रकरोति; एवं संयत्यपि भिक्षां गन्तुमनाः प्रतिश्रयमध्य एवावग्रहानन्तकादिभिरुपकरणैरात्मानं सुप्रावृतं करोति, ततो भिक्षां पर्यटन्ती तरुणादिष्वलोकमानेष्वपि सुखेनैव लज्जां पराजयते ॥ अथ द्वितीयपदमाह-

[भा.४१११] असईय नंतगस्स उ, पणवन्नुत्तिण्णिगा व न उ गिण्हे।
निग्गमनं पुन दुविहं, विधि अविही तत्थिमा अविही ॥

वृ- अवग्रहानन्तकस्याभावे पञ्चपञ्चाशद्वर्षेभ्य उत्तीर्णा वा संयती प्रम्लानयोनिकतया न गृह्णीयादपि। इह च भिक्षाया निर्गमनं द्विविधम्-विधिना अविधिना च। तत्र तावदयमविधिः ॥

[भा.४११२] उग्गहमादीहि विना, दुनियत्था वा वि उक्खुलणियत्था।
एक्कादुवे य अविही, चउगुरु आणा य अणवत्था ॥

वृ- अवग्रहानन्तकादिभिर्विना भिक्षां निर्गच्छति, दुर्निवसिता वा उखुलनिवसिता वा भिक्षां पर्यटति, एका वा द्वे वा भिक्षायां गच्छतः, एष सर्वोऽप्यविधिरुच्यते। अत्र च चतुर्गुरुकाः, आज्ञा च भगवतां विराधिता स्यात्, 'अनवस्था च' एकामविधिना निर्गचछन्तीं दृष्ट्वा अन्याऽपि निर्गच्छतीत्येवंलक्षणा भवति ॥ तथा-

[भा.४११३] मिच्छत्त पवडियाए, वाएण य उद्धुयम्मि पाउरणे।
गोयरगया व गहिया, धरिसणदोसे इमे लहति ॥

वृ-अवग्रहानन्तकादिभिर्विना भिक्षां गतासहसा मूर्च्छादिना प्रपतेत्। ततः प्रपतिताया वातेन वा प्रावरणे समुद्धुतेऽप्रावृतत्वं दृष्ट्वा लोको मिथ्यात्वं गच्छेत्, यथा-नास्त्यमीषामपुष्य दोषस्य प्रतिषेधः, कथमन्यथेयमित्थं निर्गच्छेत्? । गोचरगता वा काचिदविधिनिर्गता केनचिद् विटेन गृहीता घर्षणदोषान् 'अमून्' वक्ष्यमाणान् लभते। ते चोपरि दर्शयिष्यन्ते ॥

अथ विधिनिर्गमे गुणमाह-

[भा.४११४]अड्डोरुगा-दीहणियासणादी, सारक्खिया होति पदे वि जाव।
तिण्हं पि बोलेण जनोऽभिजातो, एक्कंबरा खिप्पमुवेति नासं ॥

वृ-याऽर्धोरुक-दीर्घनिवसन्यादिभि सुप्रावृता निर्गता सा केनचिद् घर्षितुमारब्धाऽपि पदावपि यावत् संरक्षिता भवति, तिसृणां च संयतीनां बोलेन 'अभिजातः' शिष्टो जनो भूयान् मिलतीति शेषः। या पुनरेकाम्बरा निर्गच्छति सा 'क्षिप्रं' शीघ्रं 'विनाशं' संयमपरिभ्रंशमुपैति ॥

[भा.४११५] उव्वेल्लिए गुज्झमपस्सतो से, हाहक्कितस्सेव महाजनेनं।
धिद्धि त्ति ओथुक्कित-तालियस्सा, पत्तो समं रन्नदवो व वेदो ॥

वृ- विधिनिर्गतायाः केनचित् प्रत्यनीकेन 'उद्वेल्लिते' उत्सारितेऽपि बाह्योपकरणे यावदसौ गुह्यं न पश्यति तावद् महाजनेन हाहाकृतो धिगधिगिति भणनपूर्वकं च ओथुक्कितः-गाढं जुगुप्सितस्ताडितश्चासौ, ततस्तस्यैवंविधां विडम्बनां प्रापितस्य 'वेदः' मोहोदयोऽरण्यदव इव

सद्यः शमं प्राप्तः ।। अथाविधिनिर्गमने दोषानाह-

[भा.४११६] तत्थेव य पडिबंधो, पडिगमनादीनि जानि ठाणानि ।
डिंडी य बंभचेरे, विधिनिग्गमणे पुनो वोच्छं ।।

वृ- येन सा अविधिनिर्गता धर्षिता तत्रैव 'प्रतिबन्धः' अनुरागो भवेत् । तदनुरक्ता च सती प्रतिगमनादीनि यानि स्थानानि करोति तन्निष्पन्नं प्रवर्तिन्याः प्रायश्चित्तम् । ऋतुसमयगृहीतायाश्च कस्याश्चिद् डिण्डिमबन्धो भवेत्, ततश्च महती प्रवचनापभ्राजना । ब्रह्मचर्यविराधना च परिस्फुटैव तस्याः सञ्जायते । विधिनिर्गमने च 'पुनः' भूयोऽपि गुणातन् वक्ष्ये ।।

एतच्च सांन्यासिकीकृत्य प्रथममविधिनिर्गमने दोषशेषमाह-

[भा.४११७]न केवलं जा उ विहम्मिआ सती. सवच्चतामेति मधूमुहे जने ।
उवेति अन्ना वि उ वच्चपत्ततं, अपाउता जा अनियंसिया य ।।

वृ-न केवलं सैव 'सती' साध्वी 'विधर्मिता' शीलधर्मात् च्याविता सैव 'मधुमुखे जने' दुर्जनलोके 'सवाच्यतां' सकलङ्कतामुपगच्छति, 'अन्याऽपि' एतद्व्यतिरिक्ताऽपि 'वाच्यपात्रतां' वचनीय-योग्यतामुपैति या 'अप्रावृता' औपकक्षिक्याद्युपरितनोपकरणरहिता 'अनिवसिता च' अवग्रहानन्त-काद्यधस्तोपकरणवर्जिता भवति ।। किञ्च-

[भा.४११८] न भूसणं भूसयते सरीरं, विभूसणं सील हिरी य इत्थिए ।
गिरा हि संखारजुया वि संसती, अपेसला होइ असाहुवादिनी ।।

वृ- 'भूषणं' हारादिकं पिनह्यमानं शरीरं न भूषयति, किन्तु 'शीलं' ब्रह्मचर्यं 'ह्रीश्च' लज्जा एतदेव द्वयं स्त्रया विभूषणम् । अमुमेवार्थं प्रतिवस्तूपमया द्रढयति-'गीः' वाणी सा संस्कारयुक्ताऽपि 'संसदि' सभायां यदि 'असाधुवादिनी' जकार-मकाराद्यसभ्यप्रलापिनी तदा 'अपेशला' शिष्टजनजुगुप्सनीयतया न शोभना भवति; एवमियमपि स्त्री हारादिविभूषिताऽपि यदि शील-लज्जाविकला तदा शिष्टजनस्य जुगुप्सनीया भवति, अतः स्त्रियाः शीलं लज्जा च विभूषणम् । एतच्च शील-लज्जाद्वयं संयत्या विधिप्रावरणे भवति ।। अतस्तदेवाभिधित्सुराह-

[भा.४११९] पट्टऽड्डोरुय चलणी, अंतो तह बाहिरा नियंसणिया ।
संघाडि खुज्जकरणी, अनागते चेव सतिकाले ।।

वृ- पट्टकोऽर्धोरुकश्चलनिका अन्तर्निवसनी बहिर्निवसनी सङ्घाटिका कुब्जकरणी उपलक्षणत्वादवग्रहानन्तकं कञ्चुक औपकक्षिकी वैकक्षिकी चानागत एव 'सत्काले' भिक्षासमये दृढतरमेतान्युपकरणानि साध्व्या प्रावरणीयानि ।। इदमेव विभावयिषुराह-

[भा.४१२०] उग्गहणमादिएहिं, अज्जाओ अतुरियाउ भिक्खस्स ।
जोहो व्व लंखिया वा, अगिण्हणे गुरुग आणादी ।।

वृ- अवग्रहानन्तकादिभिरुपकरणैः 'आर्या' संयत्यो भिक्षाऽत्वरिता आत्मानं भावयन्ति । क इव ? इत्याह-योध इव लङ्खिकेव वा । यथा योधः सङ्ग्रामशिरसि । प्रवेष्टुमनाः सन्नाहं पिनह्यति, यथा च लङ्खिका रङ्गभुवं प्रविशन्ती पूर्वं चलनिकादिना गुडापिनद्धमिवात्मानं करोति, एवमार्याऽप्यवग्रहानन्तकादिसुप्रावृता निर्गच्छति । अथैतान्युपकरणानि न गृह्णाति ततश्चतुर्गुरुका आज्ञादयश्च दोषाः ।। अथ विशेषज्ञापनार्थमिदमाह-

[भा.४१२१] जोहो मरुंडजङ्घो, नाडइणी लंखिया कतलिखंभो ।
अज्जाभिक्खग्गहणे, आहरणा होंति नायव्वा ॥

वृ- आर्याया भिक्षाग्रहणे यद् उपकरणप्रावरणं तत्रैतान्युदाहरणानि ज्ञातव्यानि । तद्यथा- 'योधः' प्रतीतः १ 'मरुण्डजङ्घो' मरुण्डस्य राज्ञो हस्ती २ 'नाटकिनी' नर्तकी ३ 'लङ्खिका' वंशाग्रनर्त्तकी ४ 'कदलीस्तम्भः' प्रतीतः ५ ॥ तत्रयोधदृष्टान्तमाह-

[भा.४१२२] वणिओ पराजितो मारिओ य संखे अवम्मितो जोहो ।
सावरणे पडिपक्खो, भयं च कुरुते विवक्खस्स ॥

वृ- योधः 'सङ्ख्ये' सङ्ग्रामे अवर्मितः प्रविशन् व्रणितः पराजितो मारितो वा जायते । 'व्रणितो नाम' परैः प्रहारजर्जरीकृतः, 'पराजितः' पराभग्नः, 'मारितः' पञ्चत्वं प्रापितः । यस्तु सावरणस्तस्य प्रतिपक्षो वक्तव्यः । किमुक्तं भवति ? -यः सन्नाहं पिनह्य रणशिरसि प्रविशति स न प्रहारैर्जर्जरी- भवति, न वा पराजीयते, न वा मरणमासादयति, प्रत्युत विपक्षस्य भयं कुरुते; एवमार्याऽपि यथोक्तोपकरणप्रावरणमन्तरेण भिक्षां प्रविष्टा तरुणैरुपद्रूयते, सुप्रावृता तु सर्वथैव तेषामगम्या भवति ॥ उक्तो योधदृष्टान्तः । सम्प्रति मुरुण्डजङ्घदृष्टान् गाथाचतुष्टयेनाह-

[भा.४१२३] विहवससा उ मुरुंडं, आपुच्छति पव्वयामऽहं कत्थ ।
पासंडे य परिक्खति, वेसग्गहणेण सो राया ॥

[भा.४१२४] डोंबेहिं य धरिसमा, माउग्गामस्स होइ कुसुमपुरे ।
उब्भावणा पवयणे, निवारणा पावकम्माणं ॥

[भा.४१२५] उज्झसु चीरे सा यावि निवपहे मुयति जे जहाबाहिं ।
उच्छूरिया नडी विव, दीसति कुप्पासगादीहिं ॥

[भा.४१२६] धिद्धिक्कतो य हाहक्कतो य लोएण तज्जतो मेंठो ।
ओलोयणट्ठितेन य, निवारितो रायसीहेण ॥

वृ- कुसुमपुरे नगरे मरुण्डो राया । तस्स भगिनी विहवा । सा अन्नया रायं पुच्छइ- अहं पव्वइउकामा, तो आइसह कत्थ पव्वयामि ? त्ति । तओ राया पासंडीणं वेसग्गहणेण परिक्खं करेइ । हत्थिमिंठा संदिट्ठा, जहा-पासंडिमाउग्गामेसु हत्थिं सन्निआह, भणिज्जाह य-पोत्तं मुयाहि, अन्नहा इमिणा हत्थिणा उवद्दवेस्सामि त्ति, एक्कम्मि य मुक्के मा ठाहिह, ताव गहग्गहावेह जाव सव्वे मुक्का । तओ एगेण मिंठेण चरियाए रायपहे तहा कयं जाव नग्गीभूया । रन्ना सव्वं दिट्ठं । नवरं अज्जा विहीए पविट्ठा । रायपहोत्तिआए हत्थी सन्निओ- मुयसु पुत्तं ति । तीए पढमं मुहपोत्तिया मुक्का, ततो निसिज्जा, एवं जानि जानि बाहिरिल्लाणि चीवराणि तानि तानि पढमं मुयइ, जाव बहूहिं वि मुक्केहिं नडी विव कंचुकादीहिं सुप्पाउया दीसइ ताहे गोलेण अक्कंदो कओ-हा पाव ! किमेयं महासइतवस्सिणिं अभिद्दवेसि ? त्ति । रन्ना वि ओलोयणट्ठिएण वारिओ, चिंतियं च-एस धम्मो सव्वन्नुदिट्ठो । अन्नेण य बहुजनेन कया सासनस्स पसंसा ॥

अथाक्षरार्थः-विधवा स्वसा मुरुण्डं राजानमापृच्छति-कुत्राहं प्रव्रजामि ? इति । ततः स राजा वेषग्रहणेन पाषण्डिनः परीक्षते । परीक्षार्थमेव च 'डोम्बैः' हस्तिमिण्ठैः कुसुमपुरे 'मातृग्रामस्य'

पार्श्वस्थस्त्रीजनस्य दर्शनं भवति, परं नाभिनिर्दिष्टाऽऽकारा दृष्टा। तदानीं च प्रवचनस्य 'उद्भावना' प्रभावना समजनि। ये च पापकर्माणः संयतीरभिद्रवितुमिच्छन्ति तेषां निवारणा जाता, 'न-शक्यन्ते अमूरेवंविधेन वेषेण छलयितुम्' इति कृत्वा। कथं पुनरेतत् संवृत्तम्? इत्याह-''उज्झसु चीरे'' इत्यादि, विधिनिर्गता संयती मिण्ठेनाभिहिता-'उज्झ' परित्यज चीवराणि। साऽप्येवमभिहिता 'नृपपथे' राजमार्गे यानि यथाबहिरुपकरणानि तानि तथा मुञ्चति। एवं बहुषु वस्त्रेषु मुक्तेष्वपि यदा सा नटीवत् 'कूर्पासकादिभिः' कञ्चुकादिभिर्वस्त्रैः 'उच्छूरिता' सुप्रावृता दृश्यते तदा लोकेन स मिण्ठो धिग्धिक्कृतश्च हाहाकृतश्च तथा 'तर्जितः' गाढं निर्भर्त्सितः। ततश्च 'ओवलोकनस्थितेन' गवाक्षोपविष्टेन राजसिंहेनासौ निवारितः। 'सर्वज्ञदृष्टश्चायं धर्म' इति कृत्वा साधूनां समीपे भगिनी प्रव्रज्याग्रहणार्थं विसर्जितेति ॥ उक्तो मरुण्डजदृष्टान्तः। अथ नर्त्तकी-लङ्खिकादृष्टान्तद्वयमाह-

[भा.४१२७] पाए वि उक्खिवंती, न लज्जती नट्टिया सुणेवत्था।
उच्छूरिया व रंगम्मि लंखिया उप्पयंती वि ॥

वृ-यथा नर्त्तकी सुनेपथ्या सती पादावप्युत्क्षिपन्ती न लज्जते, लङ्खिका वा रङ्गभूमौ 'उत्पतन्त्यपि' करणशतान्यपि कुर्वती यथा 'उच्छूरिता' सुप्रावृता सती न लज्जते, एवं संयत्यपि सुप्रावृता न लज्जत इत्युपनयः ॥ अथ कदलीस्तम्भदृष्टान्तमाह-

[भा.४१२८] कयलीखंभो व जहा, उव्वेल्लेउं सुदुक्करं होति।
इय अज्जाउवसग्गे, सीलस्स विराधना दुक्खं ॥

वृ- कदलीस्तम्भो वा यथा पटलबहलत्वाद् 'उद्वेल्लयितुम्' उद्वेष्टयितुं सुदुष्करो भवति, एवमार्यिकाऽपि बहूपकरणप्रावृता नोद्वेष्टयितुं शक्या। ''इय'' एवं योधादिभिर्दृष्टान्तैर्विधिनिर्गताया आर्यायाः केनचिदुपसर्गे क्रियमाणेऽपि शीलस्य विराधना 'दुःखं' दुष्करा मन्तव्या ॥ किञ्च-

[भा.४१२९] एक्का मुक्का एक्का य धरिसिया निवेदन जत्तणाय होति कायव्वा।
वाहाड न जहितव्वा, सेज्जतरादी सयं वा वि ॥

वृ- 'एका' काचिद् विधिनिर्गता गृहीताऽपि मुक्ता, 'एका च' अपरा धर्षिता, ततः 'यतनया' यथा शेषसंयत-संयतीजनो न जानाति तथा गुरूणां निवेदना कर्त्तव्या। अथ सा वाहाडिता ततो न परित्यक्तव्या किन्तु शय्यातरादिना स्वयं वा तस्या वर्त्तापनं विधेयमिति निर्युक्तिगाथासमासार्थः ॥

अथैनामेव विवृणोति-

[भा.४१३०] विहिनिग्गता उ एक्का, गोयरियाए गहिता गिहत्थेहिं।
संवरियपभावेण य, फिडिया अविराहियचरित्ता ॥

वृ- 'एका' काचिद् विधिनिर्गता गोचरचर्यां पर्यटन्ती गृहस्थैर्गृहीता, परं 'संवृतप्रभावेन' सुप्रावरणमाहात्म्येन सा अविराधितचारित्रा स्फिटिता ॥

[भा.४१३१] लोएण वारितो वा, दट्ठूण सयं व तं सुणेवत्थं।
सुदिट्ठं तुवसंतो, सविम्हओ खामयति पच्छा ॥

वृ-येन सा धर्षितुमारब्धा स लोकेन वा धिक्कारपुरस्सरं वारितः, स्वयं वा 'तां' संयतीं 'सुनेपथ्यां' सुप्रावृतां दृष्ट्वा 'सुदृष्टममीषां धर्मरहस्यम्' इति कृत्वोपशान्तः सन् सविस्मयः पश्चात् तां संयतीं क्षामयति ॥

[भा.४१३२] नाभोग पमादेण व, असती पट्टस्स निग्गया गहणे।
विहिणिग्गतमाहड्ड व, बाहाडितधाडणे गुरुगा ॥

वृ- सा कदाचिद् 'अनाभोगेन' अत्यन्तविस्मृत्या 'प्रमादेन वा' विकथा-निद्रादिप्रमत्ततया अवग्रहपट्टस्य वा अभावे एवमेव भिक्षार्थं निर्गता, एवम् विधिनिर्गता केनचिद् धर्षिता, विधिनिर्गता वा "आहृद्य" कदाचित् प्रच्छन्नेऽवकाशे गृहीता ततो गुरूणां यतनया निवेदनीयम्। अथ सा कदाचिद् बाहाडिता ततो यस्तां घाटयति-निष्काशयतीत्यर्थः तस्य चतुर्गुरुकाः॥ कुतः ? इत्याह-

[भा.४१३३] निज्जूढ पदुठा सा, भणेइ एतेहि चेव कतमेतं।
राय-गिहीहि सयं वा, तं चपसासंति मा बितियं ॥

वृ- सा 'निर्यूढा' निष्काशिता सती साधूनामुपरि प्रद्वेषं यायात्, प्रद्विष्टा च भणति-एतैरेव श्रमणैरित्थं ममैतत् कृतमिति, ततो न परित्यक्तव्या। येन च धर्षिता तमनवस्थाप्रसङ्गवारणार्थं राज्ञा प्रशासयन्ति, गृहिभिर्वा शिक्षयन्ति। यदि प्रभवस्ततः स्वयमपि शासन्ते, 'मा द्वितीयं वारमित्थं प्रवर्त्तामयम् इति कृत्वा ॥ अथ तस्याः सारणविधिमाह-

[भा.४१३४] दुविहा नायमणाया, अगीयअन्नाय सन्निमादीसु।
सब्भावे सिं कहिते, सारिंती जा थणं पियती ॥

वृ- या बाहाडिता सा द्विविधा-ज्ञाता अज्ञाता ज, ज्ञातगर्भा अज्ञातगर्भा चेत्यर्थः। तत्र या अज्ञाता सा अगीतार्था यथा न जानन्ति तथा संज्ञी-श्रावकस्तदादिकुलेषु स्थाप्यते, तेषां संज्ञिप्रभृतीनां सद्भावः प्रथममेव कथयितव्यः, कथिते च सद्भावे ते माता-पितृसमानतया तां तावत् 'सारयन्ति' प्राशुकेन प्रत्यवतारेण पालयन्ति यावत् तदीयं कल्पस्यभाण्डं स्तन्यं पिबति, स्तन्यपानान्न निवर्त्तत इत्यर्थः ॥

[भा.४१३५] जत्थ उ जनेन नातं, उवस्सए चेव तत्थ न य भिक्खं।
किं सक्का उड्डेउं, बेंति अगीते असति सड्ढे ॥

वृ- यत्र तु जनेन ज्ञातम् यथा-एषा बाहाडिता, तत्रोपाश्रय एव स्थाप्यते, न श्रावकादिकुलेषु। न च सा भिक्षां हिण्डापयितव्या, किन्तु शेषसाध्वीभि साधुभिर्वा तस्याः प्रायोग्यं भक्त-पानमानीय दातव्यम्। यद्यगीतार्था भणन्ति-किमेवमीदृश्याः सङ्ग्रहः क्रियते ?; ततः सूरयो ब्रुवते-यदि नाम न सङ्गृह्यते ततः कथयत किं साम्प्रतमेषा शक्या परित्युक्तुम् ?। अथैवं प्रज्ञापितं अपि ते न प्रतिपद्यन्ते ततः श्राद्धान् प्रज्ञापयन्ति ॥ यथा-

[भा.४१३६] दुरतिक्कमं खु विधियं, अवि य अकामा तवस्सिणी गहिता।
को जानति अन्नस्स वि, हवेज्ज तं सारवेमो नं ॥

वृ-खुरवधारणे, 'दुरतिक्रममेव' प्रतिकर्त्तुमशक्यमेव, केनाप्यनार्येणेदमकार्यं विहितम् अतः किं क्रियते ?, अपि च 'अकामा' अनिच्छन्ती बलादेव तेन पापात्मना तपस्विनी गृहीता, ततः को जानाति अन्यस्या अप्येवंविधो वृत्तान्तः परवशतया भवेत्, तदेनां सम्प्रति 'सारयामः' परिपालयाम इत्यर्थः ॥

[भा.४१३७] मा य अवन्नं काहिह, किं न सुतं केसि-सच्चईणं भे।
जम्मं न य वयभंगो, संजातो तासि अज्ञाणं ॥

वृ- 'दुःशीलेयम्' इत्येवमस्याः 'अवर्णम्' अवज्ञां वा मा कार्षुः, किं न श्रुतं भवद्भिः केशि-सत्यकिनोर्जन्म ? यथा-तौ आर्यिकाभ्यां पुरुषसंवासमन्तरेणापि कथञ्चिदुपात्तबीज-पुद्गलाभ्यां प्रसुषुवाते, न च 'तयोः' आर्यिकयोर्व्रतभङ्गः सञ्जातः, विशुद्धपरिणामत्वात्। अनयोः कथानके यथाक्रमं पञ्चकल्पा-ऽऽवश्यकटीकाभ्यामवसातव्ये ॥

[भा.४१३८] अवि य हु इमेहि पंचहि, ठाणेहिं थी असंवसंती वि।
पुरिसेन लभति गब्भं, लोएण वि गाइयं एयं ॥

वृ- अपि चेत्यभ्युच्चये, 'हुः' निश्चितमेतत्-एतैः पञ्चभि स्थानैः स्त्री पुरुषेण सममसंवसन्त्यपि गर्भं लभते। न केवलमस्माभिरेवैतदुच्यते किन्तु लोकेनापि 'गीतं' संशब्दितमेतत् ॥

तान्येवोपदर्शयति-

[भा.४१३९] दुव्वियड-दुन्निसन्ना, सयं परो वा सि पोग्गले छुभति।
वत्थे वा संसट्ठे, दगआयमनेन वा पविसे ॥

वृ- विवृता-अनावृता, सा चोत्तरीयापेक्षयाऽपि स्याद् अतो दुःशब्देन विशेष्यते-दुष्ठु विवृता दुर्विवृता-परिधानवर्जितेत्यर्थः, एवंदुर्विवृता सती दुर्निषन्ना-दुष्ठु-विरूपतयोपविष्टा दुर्विवृत-दुर्निषन्ना सा शुक्रपुद्गलान् कथञ्चित् पुरुषनिसृष्टान् आसन्नस्थान् सङ्गृह्णीयात् १, स्वयं वा पुत्रार्थितया शीलरक्षकतया च शुक्रपुद्गलान् योनावनुप्रवेशयेत् २, 'परो वा' श्वश्रूप्रभृतिकः पुत्रार्थमेव "से" तस्या योनौ प्रक्षिपेत् ३, वस्त्रं वा शुक्रपुद्गलसंसृष्टम् उपलक्षणत्वात् तथाविधमन्यदपि केशिमातुः केशवत् कण्डूयनार्थं रक्तनिरोधार्थं वा तया प्रयुक्तं तद अनुप्रविशेत्, अनाभोगेन वा तथाविधं वस्त्रं परिहितं सद् योनिमनुप्रविशेत् ४, दकं-पानीयं तेन वा तस्या आचमन्त्याः पूर्वपतिता उदकमध्यवर्तिनः शुक्रपुद्गला अनुप्रविशेयुः ५। एवं पुरुषसंवासमन्तरेणापि गर्भसम्भवे भवन्तो नास्या अवज्ञां कर्तुमर्हन्ति। एवं प्रज्ञाप्य तेषां श्राद्धानां गृहे तां स्थापयन्ति ॥

गता ज्ञातविषया यतना। अथाज्ञातविषयां तामाह-

[भा.४१४०] अविदिय जन गब्भम्मि य, सन्नीमादीसु तत्थ वऽन्नत्था।
लाढेंति फासुएणं, लिंगविवेगो य जा पिबति ॥

वृ- जनेनाविदितो यो गर्भस्तत्र ये माता-पितृसमानाः संज्ञिनः आदिशब्दाद् यथाभद्रका वा तेषां गृहेषु तत्र वा अन्यत्रवा ग्रामे स्थापयन्ति। ते च संज्ञिप्रभृतयस्तां प्राशुकेन प्रत्यवतारेण 'लाढयन्ति' यापयन्तीत्यर्थः। यावन्नापत्यमाण्डं स्तन्यं पिबति तावत् तया लिङ्गविवेकः कर्तव्यः।

[भा.४१४१] एएसिं असतीए, सन्नायग-नालबद्धकिढ फासुं।
अन्नो वि जो परिणतो, स सिद्धवेसेतरीऽगारी ॥

वृ- 'एतेषां' संज्ञिप्रभृतीनामभावे ये तस्याः संयत्याः संज्ञातकास्तेषां गृहेषु स्थाप्यते। संज्ञातकगृहाणाम् अभावे यः संयतो नालबद्धः सोऽपि यदि किढः-वृद्धस्तदाऽसौ श्राद्धवेषं कार्यते, इतराऽपि गृहिलिङ्गं करोति, ततस्तौ प्राशुकाहारेण यापयन्तौ तिष्ठतः। नालबद्धस्याभावे अन्योऽपि यो वयसा परिणतः स सिद्धपुत्रवेषं कार्यते, इतरा अगारीवेषं करोति ॥

अत्रेयं प्रायश्चित्तमार्गणा-

[भा.४१४२] मूलं वा जाव थणा, छेदो छग्गुरुग जं चऽधालहुअं।

वितियपदे असतीए, उवस्सए वा अहव जुण्णा ॥

वृ- यदि तया प्रतिसेव्यमानया स्वादितं ततो मूलम् । वाशब्द उत्तरापेक्षया विकल्पार्थः । "जाव थण" त्ति पश्चाद् व्याख्यास्यते । गर्भमाहूतं दृष्ट्वा स्वादयति छेदः । अपत्यं जातं दृष्ट्वा 'सहायकं मे भविष्यति' इति स्वादयन्त्याः षड्गुरवः । यया तु न स्वादितं तस्याः परप्रत्ययनिमित्तं यत् किमपि यथालघु प्रायश्चित्तं दातुं युज्यते तद् दातव्यम् । "जाव थण" त्ति यावत् तस्या अपत्यं स्तन्यपानोपजीवि भवति तावत् तपोर्हं प्रायश्चित्तं न दातव्यम् । द्वितीयपदे अवग्रहानन्तकस्याभावे उपाश्रये वा तिष्ठन्ती अथवा 'जीर्णा' स्थविरा सा संयती अतोऽवग्रहानन्तकं न गृह्णात्यपि ॥

अथास्या एव पूर्वार्धं व्याख्याति-

[भा.४१४३] सेविज्जंते अनुमए, मूलं छेओ तु डिंडिमं दिस्स ।
होहिति सहातगं मे, जातं दट्ठूण छग्गुरुगा ॥

वृ- सेव्यमानया यद्यनुमतं ततो मूलम् । अथ 'डिण्डिमं' गर्भं दृष्ट्वा हर्षमुद्वहति छेदः । पुत्रभाण्डं दृष्ट्वा 'सहायकं मे भविष्यति' इत्यनुमन्यते षड्गुरवः ॥

[भा.४१४४] तेन परं चउगुरुगा, छम्मासा जा न ताव पूरिंति ।
जा तु तवारिह सोही, अणवत्थणिते न तं देंती ॥

वृ- 'ततः परं' जन्मानन्तरं यावत् षण्मासा न पूर्यन्ते तावद् यत्र यत्र स्वादयति तत्र तत्र चतुर्गुरवः । या च तस्याः तपोर्हा शोधिरुक्ता ताम् 'अनपस्तनिते' स्तन्यपानादनुपरते अपत्यभाण्डे न ददति, मा स्तन्यं न भविष्यतीति कृत्वा ॥

[भा.४१४५] मेहुन्ने गब्भे आहिते य सातिज्जियं जति न तीए ।
परपच्चया लहुसगं, तहा वि से दिंति पच्छित्तं ॥

वृ- मैथुने प्रतिसेव्यमाने गर्भे च आहूते यद्यपि तया न स्वादितं तथापि 'परप्रत्ययार्थं' मा भूदगीतार्थानामप्रत्यय इत्यर्थः, यथालघुकं प्रायश्चित्तं तस्याः सूरयः प्रयच्छन्ति ॥

अथ यस्तस्याः खिंसां करोति तस्य प्रायश्चित्तमाह-

[भा.४१४६] खिंसाए होंति गुरुगा, लज्जा निच्छक्कतो य गमनादी ।
दप्पकते वाऽऽउट्टे, जति खिंसति तत्थवि तहेव ॥

वृ- यस्तस्याः 'खिंसां' 'विध्वस्तशीलत्वाद् मलिना इयम्' इत्येवं करोति तस्य संयतस्य संयत्या वा चतुर्गुरुकाः प्रायश्चित्तम् । सा च खिंसिता सती लज्जया प्रतिगमनादीनि कुर्यात्, निच्छक्का वा-निर्लज्जा वा भवेत्, तत एव सर्वजनप्रकटमात्मानं प्रतिसेवयेत् । अथ दर्पतस्तया मैथुनं प्रतिसेवितं परं पश्चाद् आवृत्ता-आलोचना-प्रायश्चित्तप्रतिपत्त्यादिना प्रतिनिवृत्ता तामपि यः खिंसति तस्यापि तथैव चतुर्गुरु ॥ किं कारणम् ? इति चेद् अत आह-

[भा.४१४७] उम्मग्गेन वि गंतुं, न होति किं सोतवाहिणी सलिला ।
कालेण फुंफुगा वि य, विलीयते हसहसेऊणं ॥

वृ- उन्मार्गेणापि गत्वा 'सलिला' नदी पश्चात् किं 'श्रोतोवाहिनी' मार्गगामिनी न भवति ? भवत्येवेति भावः । 'फुम्फुका' करीषाग्नि सोऽपि च "हसहसेऊणं" ति जाज्वलित्वा भृशमुद्दीप्तो भूत्वेत्यर्थः कालेन गच्छता 'विलीयते' विलयं याति । उपनययोजना सुगमा ॥

*मू. (९१) निग्गंथीए अ गाहावइकुलं पिंडवायपडियाए अनुप्पविट्ठाए चेलट्ठे समुप्पज्जेज्जा, नो से कप्पइ अप्पणो नीसाए चेलं पडिग्गाहित्तए, कप्पइ से पवत्तिनिनीसाए चेलं पडिग्गाहित्तए। नो य से तत्थ पवत्तिनी सामाणा सिया जे से तत्थ सामाणे आयरिए वा उवज्झाए वा पवित्ती वा थेरे वा गणी वा गणधरे वा गणावच्छेइए वा जं चऽन्नं कट्टु पुरतो विहरइ कप्पइ से तन्नीसाए चेलं पडिग्गाहित्तए॥*

**वृ-** अथास्य सूत्रस्यकः सम्बन्धः ? इत्याह-

**[भा.४१४८]** नियमा ससेचल इत्थी, चालिज्जति संजमा विना तेनं।
उग्गहमादीचेलाण गेण्हणे तेन जोगोऽयं॥

**वृ-** 'नियमाद्' अवश्यन्तया 'स्त्री' निर्ग्रन्थी सचेला भवति। यतः 'तेन' चेलेन विना सा संयमात् चाल्यते इत्यनन्तरसूत्रे उक्तम्। तेन कारणेनावग्रहानन्तकादीनां चेलानां ग्रहणे विधिरभिधीयते। अयं 'योगः' प्रकृतसूत्रस्य सम्बन्धः। अथवा-

**[भा.४१४९]** चेलेहि विना दोसं, नाउं मातानि अप्पणा गेहो
तत्थ वि तेच्चिय दोसा, तव्वारणकारणा सुत्तं॥

**वृ-** चेलैर्विना भिक्षामटन्त्या संयत्या महान् दोषो भवतीति ज्ञात्वा मा 'तानि' चेलान्यात्मना गृह्णीयात्। कुतः ? इत्याह-'तत्रापि' आत्मना चेलग्रहणेऽपि त एव दोषा भवन्ति ये पूर्वं चेलस्याग्रहणे प्रोक्ताः। अतः 'तद्वारणकारणात्' स्वयङ्ग्रहणप्रतिषेधार्थमिदं सूत्रमारभ्यते॥

इदमेव सोपपत्तिकमाह-

**[भा.४१५०]** सयगहणं पडिसेहति, चेलग्गहणं न सव्वसो तासिं।
संडासतिरो वण्ही, न डहति कुरुए य किच्चाइं॥

**वृ-** स्वयङ्ग्रहणमत्र सूत्रे सूत्रकृत् प्रतिषेधयति, न पुनः सर्वथा 'तासां' संयतीनां चेलग्रहणम्। यतः सन्दंशकेन तिरोहितो वह्निर्गृह्यमाणो न दहति 'कृत्यानि च' धान्यपाकादीनि कार्याणि कुरुते; एवं संयतीनामपि साधुभिस्तिरोहितं चेलग्रहणं न दुष्यति, कार्यं च संयमपालनात्मकं करोति अत इदमारभ्यते॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-निर्ग्रन्थ्या गृहपतिकुलं पिण्डपातप्रतिज्ञया अनुप्रविष्टायाश्चेलेनार्थः-प्रयोजनं चेलार्थः स समुत्पद्येत। नो "से" तस्याः कल्पते आत्मनो निश्रया चेलं प्रतिग्रहीतुम्, किन्तु कल्पते "से" तस्याः प्रवर्तिनीनिश्रया चेलं प्रतिग्रहीतुम्। अथ न तत्र प्रवर्तिनी "सामाणा" सन्निहिता ततो यस्तत्राचार्यो वा उपाध्यायो वा प्रवर्ती वा स्थविरो वा गणी वा गणधरओ वा गणावच्छेदको वा सन्निहितो भवेत्। 'गणी' गणाधिपतिराचार्यः, 'गणधरः' संयतीपरिवर्तकः, शेषाः सर्वेऽपि प्रतीताः। एतेषां निश्रया यं वा 'अन्यं' गीतार्थं साधुं पुरतः कृत्वा विहरति तन्निश्रया कल्पते "से" तस्याश्चेलं प्रतिग्रहीतुमिति सूत्रसङ्क्षेपार्थः॥

अथ विस्तरार्थं भाष्यकारो बिभणिषुराह-

**[भा.४१५१]** चेलट्ठे पुव्व भणिते, पडिसेहो कारणे जहा गहणं।
नवरं पुन नाणत्तं, नीसागहणं न उ अनीसा॥

**वृ-**चेलार्थः 'पूर्वः' प्रथमोद्देशके "निग्गंथिं च नं केइ वत्थेण वा पाएण वा निमंतिज्जा" इत्यादिसूत्रे यथा भणितः, यथा च तत्र संयतीनां स्वयं वस्त्रग्रहणप्रतिषेधः, यथा च कारणे ग्रहणमुक्तं तथैवात्रापि

वक्तव्यम्। 'नवरं' केवलं पुनरत्र 'नानात्वं' विशेषो वस्त्रग्रहणं ताभिर्निश्रया कर्तव्यम् न पुनरनिश्रया। निश्रा नाम-संज्ञातकादिना वस्त्र दीयमानं प्रवर्तिन्या निवेदयति, प्रवर्त्तिनी गणधरस्य निवेदयति, ततो गणधरः स्वयमागत्य परीक्षाशुद्धं कृत्वा गृह्णाति। अथ नास्ति तत्र प्रवर्तिनी ततस्तद् वस्त्र वर्णेन रूपेण चिह्नेन चोपलक्ष्य गणधरस्य कथयति, स चागत्य स्वयं गृह्णाति। एतन्निश्राग्रहणमुच्यते॥

[भा.४१५२] आयरिओ गणिणीए, पवत्तिणी भिक्खुणीण न कधेति।
गुरुगा लहुगा लहुगो, तासिं अप्पडिसुणंतीणं॥

वृ- आचार्य एतत् सूत्रं गणिन्या न कथयति चत्वारो गुरवः। प्रवर्तिनी भिक्षुणीनां न कथयति चत्वारो लघवः। 'तासां' भिक्षुणीनामप्रतिशृण्वतीनां मासलघु॥ अथ स्वयं वस्त्रग्रहणे दोषानाह-

[भा.४१५३] मिच्छत्ते संकादी, विराधना लोभे आभियोगे य।
तुच्छा न सहति गारव, भंडण अट्ठाणठवणं च॥

वृ- पुरुषेण संयत्याः वस्त्र दीयमानं दृष्ट्वा अभिनवधर्माणो मिथ्यात्वं गच्छेयुः 'दुर्दृष्टधर्माणोऽमी' इति। शङ्कादयश्चव दोषा भवन्ति। 'विराधना च' संयमा-ऽऽत्मविषया। "लोभे" त्ति स्तोकेनापि वस्त्रादिप्रदानेन स्त्री प्रलोभ्यते। "आभियोगे" त्ति आभियोगिकवस्त्रप्रदानेन कश्चित् कार्मणं कुर्यात्। स्त्री च प्रायेण तुच्छा भवति, तुच्छत्वेन च "गौरवं" लब्धिमाहात्म्यं न सहते, ततश्च 'भण्डनं' कलहो अस्थानस्थापनं च भवतीति सङ्ग्रहगाथासमासार्थः॥ अथैनामेव विवरीषुराह-

[भा.४१५४] इत्थी वि ताव देंती, संकिज्जइ किं केनति पयुत्ता।
किं पुन पुरिसो देंतो, परिजुण्णाइं पि जुण्णाए॥

वृ- 'स्त्री' अविरतिका साऽपि वस्त्रं संयत्याः प्रयच्छन्ती शङ्क्यते- किं केनचित् कामुकेन प्रयुक्ता सती प्रयच्छति? उत स्वयमेव धर्मार्थम्? इति; किं पुनः पुरुषः परिजीर्णान्यपि वस्त्राणि जीर्णाया अपि आर्यिकायाः प्रयच्छन्? स सुतरां शङ्क्यते इति भावः। तत्र शङ्कायां चतुर्गुरु। चतुर्थार्थभेवेति निशङ्किते मूलम्। एवं मिथ्यात्वं शङ्कादयश्च दोषा भवेयुः। विराधना च संयमा-ऽऽत्मविषया अभ्युह्य वक्तव्या॥ लोभद्वारमभियोगद्वारं चाह-

[भा.४१५५] नामिज्जइ थोवेणं, जच्चसुवन्नं व सारणी वा वि।
अभियोगियवत्थेण व, कड्ढिज्जइ पट्टए नातं॥

वृ- यथा जात्यं सुवर्णं 'सारणी वा' कुल्या स्तोकेनापि प्रयत्नेन नाम्यते तथा संयत्यपि स्तोकेनापि वस्त्रादिप्रदानेन नाम्यते। यद्वा तद् वस्त्र केनापि विद्या-मन्त्रादिबलेनाभियोगिकं-वशी-करणकर्मक्षमं कृतमस्ति ततस्तेन सा 'कृष्यते' येन कार्मण कृतं तदभिमुखं नीयते। पट्टकेन चात्र 'ज्ञातं' दृष्टान्तो भवति, स च यथा प्रथमोद्देशके॥ अथ गौरवादिद्वारत्रयं युगपदाह-

[भा.४१५६] वत्थेहि वन्नाणी, दाएंती वा वि उयध वत्थे मे।
मच्छरियाओ बेंती, धिरत्थु वत्थाण तो तुज्झं॥

[भा.४१५७] हिंडामो सच्छंदा, नेव सयं गेण्हिमो य पवयामो।
न य जं जनो वियाणति, कम्मं जाणामो तं काउं॥

वृ- काचिदार्यिका तुच्छतया गौरवमसहिष्णुर्वस्त्रेभ्यो व्रजन्ती आत्मानं ख्यापयति-अहमीदृशानि ईदृशानि वस्त्राणि गृहीत्वा समागमिष्यामि; यद्वा स्वयमानीतानि वस्त्राणि दर्शयन्ती ब्रूयात्- "उयह"

पश्यत मदीयानि वस्त्राणि इति। तत इतराः संयत्यो मत्सरिता ब्रुवते- धिगस्तु भवदीयानि वस्त्राणि भवतीं च यदेवमात्मानं विकत्थयसि; अपि च यथा यूयं स्वच्छन्दाः पर्यटथ न तथा वयं हिण्डामः, नैव च स्वयं गृह्णीमः, न वाऽऽत्मानं 'प्रवदामः' प्रकर्षेण श्लाघामहे, न च यत् कुण्टलादिकं कर्म कर्तुं युष्मादृशो जनो जानाति तद् वयं कर्तुं जानीमः ॥

[भा.४१५८] जम्हा य एवमादी, दोसा तासिं तु गिण्हमाणीणं।
तम्हा तासि निसिद्धं, वत्थग्गहणं अनीसाए ॥

वृ- यस्मादेवमादयो दोषास्तासां गृह्णतीनां भवन्ति तस्मात् तासामनिश्रया वस्त्रग्रहणं निषिद्धम्॥ परः प्राह-

[भा.४१५९] सुत्तं निरत्थगं खलु, कारणियं तं च कारणमिणं तु।
असति पाउग्गे वा, मग्नक्खो वा इमा जतना ॥

वृ- यदि संयतीनामनिश्रया वस्त्रग्रहणं न कल्पते ततः सूत्रं निरर्थकं प्राप्नोति। सूरिराह- कारणिकं सूत्रम्। तच्च कारणमिदम्-न सन्ति संयतीनां वस्त्राणि, सन्ति वा परं न प्रायोग्याणि, "मग्नक्खो वा" महद् दौर्भनस्यं संज्ञातकादीनां संयतीभिर्वस्त्रेऽगृह्यमाणे भवति तत्रेयं यतना ॥

तामेवाभिधित्सुराह-

[भा.४१६०] तरुणीण य पव्वज्जा, नियएहिं निमंतणा य वत्थेहिं।
पडिसेहण निब्बंध, लक्खण गुरुणो निवेदेज्जा ॥

वृ- कस्याप्याचार्यस्य पार्श्वे महर्द्धिकानां बहुजनपाक्षिकाणां तरुणीनां प्रवज्या समजनि, ताश्च कियन्तमपि कालमन्यस्मिन् देशे विहृत्य सूरिभिः सार्धं तत्रैव समायाताः, ततः 'निजकैः' सज्ञातकैस्तासां वस्त्रैर्निमन्त्रणा कृता, ततः 'न कल्पते अस्माकं वस्त्रग्रहणं कर्तुम्' इति प्रतिषेधः कर्तव्यः। अथ गाढतरं निर्बन्धं कुर्वन्ति तत इदं वक्तव्यम्-अस्माकं गुरव एव वस्त्रस्य लक्षणं जानते ततो गुरूणां निवेदयाम इति, अनुज्ञाते तेषां निवेदयेयुः ॥ इदमेव व्याख्याति-

[भा.४१६१]थेरा परिच्छंति कथेमु तेसिं, नाहेंति ते दिस्स अजोग्ग जोग्गं।
पिच्छामु ता तस्स पमाण-वन्ने, तो नं कधेस्सामो तहा गुरूणं ॥

[भा.४१६२] सागारऽकडे लहुगो, गुरुगो पुन होति चिंधऽकरणम्मि।
गणिणीअसिट्ठे लहुगा, गुरुगा पुन आयनीसाए ॥

वृ- 'स्थविराः' आचार्या अस्मत्प्रायोग्यं वस्त्रं परीक्षन्ते अतः कथयामस्तेषाम्, ज्ञास्यन्ति ते दृष्ट्वैव वस्त्रमयोग्यं योग्यं वा, परं वयं तावदिदानीं तस्य वस्त्रस्य प्रमाणं वर्णं च पश्यामः, ततः "ण" मिति तद् वस्त्रं 'तथा' तेन प्रमाण-वर्णादिना प्रकारेण गुरूणां कथयिष्यामः; एवं यद् वस्त्रं साकारत्वेन व्यवस्थापितं तत् साकारकृतम्। तच्च यदि न कुर्वन्ति ततो मासलघु। साकारकृतं कृत्वा प्रमाण-वर्णाभ्यां चिह्नं न कुर्वन्ति मासगुरु। यदि गणिन्या अग्रे एतद्वस्त्रप्रमाणादि न कथयन्ति ततश्चतुर्लघवः। अथात्मनिश्रया स्वयमेव गृह्णन्ति चतुर्गुरवः ॥ अथ गृहस्था एवं ब्रूयुः-

[भा.४१६३] जइ मे रोयति गिण्हथ, न वयं गणिणिं गुरुं व जाणामो।
इय वि भणिया वि गणिणो, कधेंति न य तं पडिच्छंति ॥

वृ- यदि "भे" भवतीनां रोचते ततो गृह्णीध्वमेतद् वस्त्रम्, न वयं 'गणिनीं' प्रवर्तिनीं 'गुरुं वा'

आचार्यं जानीमः, इत्यपि भणिताः संयत्यः 'गणिनः' सूरेः कथयन्ति, न पुनः 'तद्' वस्त्रं प्रतीच्छन्ति॥

सूरिभिश्च संयतीमुखाद् वस्त्रवृत्तान्तं श्रुत्वा इत्थं वक्तव्यम्-

[भा.४१६४] कतरो भे नत्थुवधी, जो दिज्जउ भणह मा विसूरित्था।
पुव्वुप्पन्नो दिज्जति, तस्सऽसतीए इमा जयणा॥

वृ- 'भणत' प्रतिपादयत वर्षाकल्पा-ऽन्तरकल्पादीनां मध्यात् कतरः "भे" भवतीनां नास्त्युपधिर्यः साम्प्रतं दीयताम्, मा यूयमुपधिना विना 'विसूरयथ' खेदमुद्वहथ, इत्युक्ते यस्योपधेरभावस्तं निवेदयन्ति। स यदि पूर्वोत्पन्नो वर्तते ततो दीयते। अथ पूर्वोत्पन्नो नास्ति ततस्तस्याभावे इयं यतना॥

[भा.४१६५] नाऊण या परीत्तं, वावारे तत्थ लद्धिसंपन्ने।
गंधड्ढे परिभुत्ते, कप्पकते दान गहणं वा॥

वृ- "परीत्तं" स्तोकम्, अभावोपलक्षणं चेदम्, ततोऽयमर्थ-परीत्तं नाम न सन्ति संयतीनां वस्त्राणि इति ज्ञात्वा ये तत्र लब्धिसम्पन्नाः साधवस्तान् व्यापारयेत्, यथा-आर्या! संयतीनां प्रायोग्याणि वस्त्राणि गवेषयत। ततस्ते वस्त्राणि गृहीत्वा गुरुणां समर्पयन्ति, तानि च गन्धाढ्यानि परिभुक्तानि वा भवेयुः ततः कल्पे कृते सति दानं ग्रहणं वा कर्तव्यम्। किमुक्तं भवति?-तानि वस्त्राणि प्रक्षाल्य सप्त दिवसानि स्थापयित्वा यदि नास्ति कोऽपि विकारस्ततो गणधरेण प्रवर्तिन्या दातव्यानि। प्रवर्तिनीहस्ताच्च संयतीभिर्ग्रहीतव्यानि इति सङ्ग्रहगाथासमासार्थः॥

साम्प्रतमेनामेव विवृणोति-

[भा.४१६६] गुरुस्स आणाए गवेसिऊणं, वावारिता ते अहछंदिया वा।
दुधापमाणेण जहोदियाई, गुरुण पाएसु निवेदयंति॥

वृ- ये 'व्यापारिताः' गुरुभिर्वस्त्रग्रहणाय प्रवर्तिताः, ये वा 'यथाच्छन्दिकाः' अव्यापारिता एव गुरुणां पुरतो भणन्ति-वयं वस्त्राणि गवेषयिष्यामः, आभिग्रहिका इति भावः; ते द्वयेऽपि गुरोराज्ञया वस्त्राणि 'द्विधाप्रमाणेन' गणनाप्रमाणेन प्रमाणप्रमाणेन च यथा भगवद्भिस्तीर्थकरैः 'उदितानि' भणितानि तथा गवेषयित्वा गुरुणां 'पादयोः' पुरतस्तानि 'निवेदयन्ति' निक्षिपन्तीत्यर्थः॥

ततश्च-

[भा.४१६७] गंधड्ढ अपरिभुत्ते, वि धोविउं देति किमुअ पडिपक्खे।
गणिणीए निवेदेज्जा, चतुगुरु सय दान अट्ठाणे॥

वृ- यानि गन्धाढ्यानि तानि यद्यपि अपरिभुक्तानि तथापि 'धावित्वा' प्रक्षाल्य संयतीनां ददाति 'किमुत' किं पुनः 'पतिपक्षान्' परिभुक्तान्? इत्यर्थः, तानि सुतरां प्रक्षालनीयानीति भावः। उपलक्षणमिदम्, तेन यद्यपि तानि न गन्धाढ्यानि तथापि धावनीयान्येव, धावित्वा च तानि सप्त दिवसानि स्थापयित्वा स्थविरः प्रावरणं कार्यते। यदि नास्ति कोऽप्यभियोगविकारस्ततो गणधरः 'गणिन्याः' प्रवर्तिन्यास्तानि 'निवेदयेद्' अर्पयेदित्यर्थः। सा च संयतीनां ददाति। अथ गणधरः स्वयं तासां ददाति ततश्चतुर्गुरु, अस्थाने च शेषसंयतीभि स्थाप्येत। शुद्धभावेनापि हि यदि काचिदार्यिका विशेष्य आलप्यते तथापि काचिदपरा संयती तत्र विरुपकाभिप्रायतया शङ्कां करोति, किं पुनः स्वयं वस्त्रप्रदाने?॥

अपि च—

[भा.४१६८] इहरह वि ताव मेहा, माणं मंजंति पणइणिजनस्स।
किं पुन बलाग-सुरचाव-विज्जुपज्जोविया संता ॥

वृ- 'इतरथाऽपि च' बलाका-सुरचापादिविशेषमन्तरेणापि तावद् मेघा गगनमण्डलमापूर्य गर्जयन्तः 'प्रणयिनीजनस्य' मानवतीलोकस्य मानं भञ्जन्ति, किं पुनः बलाका-सुरचाप-विद्युत्प्रद्योतिताः सन्तः ?, एवंविधाः सुतरां मानमुन्मूलयन्ति; एवमियमपि 'अतिप्रौढा समर्था चाहम्' इति कृत्वा अस्माकं मानभङ्गं पुराऽपि करोति, साम्प्रतं तु गुरुभि स्वयं पूजित-सत्कारिता विशेषतः करिष्यतीति शेषसाध्व्याश्चिन्तयेयुः ॥

[भा.४१६९] दुल्लभवत्थे व सिया, आसन्ननियाण वा वि निब्बंधे।
पुच्छंतऽज्जं थेरा, वत्थपमाणं च वण्णं च ॥

वृ- अथ स देशो दुर्लभवस्त्रो भवेद्, ततो ये स्वजातीयास्तैरपि न लब्धानि वस्त्राणि, अथवा यैः 'निजैः' सज्ञातकैस्ता निमान्त्रितास्ते तासाम् 'आसन्नाः' अतीवप्रत्यासन्नसम्बन्धास्ततो न तन्निर्बन्धो अप्रमाणीकर्तुं शक्यते, एवमादौ कारणे समुत्पन्ने 'स्थविराः' आचार्या 'आर्यां' प्रवर्तिनीं वस्त्रस्य प्रमाणं वर्णं च पृच्छन्ति-कीदृशैर्वस्त्रैर्यूयं निमन्त्रिताः? किं वा तेषां प्रमाणम् ?

ततः संयत्यो ब्रुवते-

[भा.४१७०] सेयं व सिंधवन्नं, अहवा मइलं च ततियगं वत्थं।
तस्सेव होति गहणं, विवज्जए भाव जाणित्ता ॥

वृ- एकं वस्त्र 'श्वेतं' शरदिन्दु-कुन्दावदातम्, द्वितीयं 'सैन्धववर्णं' पाण्डुरम्, अथवाशब्दो वर्णप्रकारान्तरताद्योतकः, तृतीयं परिमलितत्वाद् मलिनम्, प्रमाणमपि च तस्य वस्त्रस्य ईदृशमस्तीति ताभिरुक्ते गुरुभिस्तत्र गत्वा तस्यैव वस्त्रस्य ग्रहणं कर्तव्यम्। अथ ते गृहस्थास्तत्र गतानामाचार्याणामन्यानि वस्त्राणि दर्शयन्ति तत एवं विपर्यये 'भावं' भद्रक-प्रान्तगतमभिप्रायं ज्ञात्वा ग्रहणं कर्तव्यं न वा ॥ इदमेव स्पष्टयन्नाह—

[भा.४१७१] पुव्वगता भे पडिच्छह, अम्हे वि य एमु ता तहिं गंतुं।
गुरुआगमन कथेत्ता, नीनावेंताऽऽगते तम्मि ॥

वृ- सूरयः प्रवर्तिनीं भणन्ति-यूयं तत्र पूर्वगताः प्रतीक्षत, वयमपि युष्माकमनुमार्गीत एवागच्छामः। ततस्ताः संयत्यः 'तत्र' गृहस्थकुले गत्वा गुरुणामागमनं कथयन्ति। ततः 'तस्मिन्' गुरावागते संयत्यो भणन्ति-निष्काशयत तानि वस्त्राणि यैर्वयं निमन्त्रिताः। एवमुक्ते यदि तान्येव दर्शयन्ति ततो गृह्णन्ति ॥ अथान्यानि ततः सूरिभिरिदं वक्तव्यम्-

[भा.४१७२] अन्नं इदं ति पुट्ठा, भणंति किह तुब्भ तारिसं देमो।
इति भद्दे पंतेसु तु, धुणंति सीसं न तं एतं ॥

वृ- येन भवद्भिः संयत्यो निमन्त्रिता नेदं तद् वस्त्रम् किन्तु प्रमाणेन वर्णेन वा अन्यादृशत्वेनान्यदिदमिति पृष्टाः सन्तस्ते गृहस्था यदि भद्रकास्ततत इदं भणन्ति-कथं वयं युष्माकं स्वयमेवागतानां 'तादृशं' सामान्यवर्णादियुक्तं प्रयच्छामः ? इदं तु ततो विशिष्टतरवर्णादिगुणोपेतम्, अत इदं गृह्णीत इति भद्रका ब्रूयुः। ये तु प्रान्तास्तेषु सूरयः शीर्षं धूनयन्ति, इदं च वचनं ब्रुवते-येन

संयत्यो निमन्त्रितास्तदिदं वस्त्रं न भवति ।। एवमुक्ते ते चिन्तयेयुः-

[भा.४१७३] बहु जाणिया न सक्का, वंचेउं तेसि जाणिउं भावं ।
नेच्छंति भद्दएसु तु, पहट्ठभावेसु गेण्हंति ।।

वृ- अये ! अमीभिराचार्यैः 'बहु' प्रभूतं 'ज्ञाताः' उपलक्षिता वयम्-यदेते आभियोगिकानी वस्त्राणि प्रयच्छन्तीति, अतो न शक्या अमी वञ्चयितुम् ? इत्यादिकं तेषां 'भावम्' अभिप्रायं मुखविकारादिभिराकारैर्ज्ञात्वा नेच्छन्ति । भद्रकेषु तु प्रहृष्टभावेषु गृह्णन्ति ।।

भद्रकेष्वेव विशेषमुपदर्शयति-

[भा.४१७४] न वि एयं तं वत्थं, जं तं अज्जाण नीणियं भे त्ति ।
तुब्भे इमं पडिच्छध, तं चिय एताण दाहामो ।।

वृ- नाप्येतत् तद् वस्त्र यत् तद् आर्यिकाणामर्थाय निष्काशितं भवद्भिः इत्युक्ते यदि गृहस्था ब्रुवते-यूयं तावदिदं वस्त्र प्रतीच्छत, एतासां तु वयं तदेव दास्यामः ।। ततो वक्तव्यम्-

[भा.४१७५] अन्नेण ने न कज्जं, एतक्का चेव गेण्हिमो अम्हे ।
जति तानि वि इति वुत्ते, नीणेंति दुए वि गिण्हंति ।।

वृ- अन्येन वस्त्रेण "ने" अस्माकं न कार्यम्, एतासामेवार्थाय वयं सम्प्रति गृह्णीमः; इत्युक्ते यदि 'तान्यपि' प्राक्तनानि वस्त्राणि आनयन्ति ततः 'द्वयान्यपि' प्राक्तन-पश्चात्तनानि गृह्णन्ति ।।

[भा.४१७६] तानि वि उवस्सयम्मि, सत्त दिने ठविय कप्प काऊणं ।
थेरा परिच्छिऊणं, विहिना अप्पेंति तेनेव ।।

वृ- तान्यपि वस्त्राणि गृहीत्वा उपाश्रये आनीय सप्त दिनानि स्थापयित्वा कल्पं कृत्वा स्थविरप्रावरणद्वारेण परीक्ष्य यदि नास्ति कोऽप्यभियोगविकारस्ततः 'स्थविराः' आचार्यास्तेनैव विधिना संयतीनामर्पयन्ति ।।

एवमाचार्यनिश्रया ग्रहणमुक्तम् । अथोपाध्यायादिनिश्रया तदेवाह-

[भा.४१७७] आयरिए उवज्झाए, पवत्ति थेरे गणी गणधरे य ।
गणवच्छेइयणीसा, पवित्तिनी तत्थ आनेति ।।

वृ- आचार्यस्याभावे उपाध्यायस्य प्रवर्तिनः स्थविरस्य गणिनो गणधरस्य गणावच्छेदिनो वा निश्रया वस्त्रग्रहणं कर्तव्यम् । एतेषामभावे प्रवर्तिनी 'तत्र' गृहस्थकुले गत्वा स्वयमानयति ।।

इदमेव व्याख्यानयति-

[भा.४१७८] आयरिए असधीणे, साहीणे वा वि वाउल गिलाणे ।
एक्केक्कगपरिहाणी, एमादीकारणेहिं तु ।।

वृ- यदि तत्राचार्यो अस्वाधीनः स्वाधीनो वा परं 'व्याकुलः' कुलादिकार्येषु व्यापृतः ग्लानो वा तत उपाध्यायनिश्रया ग्रहणं विधेयम् । तत्रापि स एव विधि । अथोपाध्यायोऽस्वाधीनो व्याकुलो वा, तत एकैकपरिहाण्या तावद् नेयं यावत् प्रवर्तिनीनिश्रयाऽपि ग्रहीतव्यम् । एवमादिभिः कारणैः संयतीनां वस्त्रग्रहणं भवतीति ।।

[भा.४१७९] सुत्तनिवातो थेरी, गहणं तु पवत्तिनीय नीसाए ।
तरुणीण य अग्गहणं, पवत्तिणी तत्थ आनेति ।।

वृ- अत्र पुनः सूत्रनिपात इत्थं मन्तव्यः-आचार्यादीनां गणावच्छेदिकान्तानामभावे प्रवर्तिन्या निश्रया स्थविरा आर्यिकाः स्वयं वस्त्रग्रहणं कुर्वन्ति। तरुणीनां तु सर्वथैव वस्त्रस्याग्रहणमुत्सर्गतः, प्रवर्तिनी स्वयं तत्र गत्वा आनयति ।। इदमेव भावयति--

[भा.४१८०]साहू जया तत्थ न होज्ज कोई, छंदेज्ज नीया तरुणी जया य।
पवत्तिनी गंतु सयं तु गेण्हे, आसंकभीया तरुणी न नेति ।।

वृ- यदा तत्राचार्यादीनां मध्यात् कोऽपि गीतार्थः साधुर्न भवति, यदा च 'निजकाः' संज्ञातकास्तरुणीः 'छन्दयेयुः' निमन्त्रयेरन् तदा प्रवर्तिनी स्वयं तत्र गत्वा गृह्णाति। 'आशङ्काभीता च' प्रत्यपायशङ्कया चकिया तरुणीरात्मना सार्धं न नयति ।।

[भा.४१८१] असती पवत्तिनीए, आयरियादी व्व जं व नीसाए।
आगाढकारणम्मि उ, गिहिनीसाए वसंतीणं ।।

वृ- अथ नास्ति प्रवर्तिनी तत आचार्योपाध्यायादीन् 'यं वा' सामान्यसाधुमपि 'निश्राय' निश्रां कृत्वा विहरति तन्निश्रया ग्रहणं कर्तव्यम्। आगाढे तु कारणे गृहिनिश्रया वसन्तीनां स्वयमपि ग्रहणं भवतीति वाक्यशेषः ।। इदमेव सविशेषमाह-

[भा.४१८२] असती पवत्तिनीए, अभिसेगादी विवज्जए नीसा।
गेण्हंते थेरिया पुन, दुगमादी दोण्ह वी असती ।।

वृ- प्रवर्तिन्या अभावे अभिषेका-गणावच्छेदिनीप्रभृतयो या गीतार्था संयत्यस्ताः स्वयं गत्वा गृह्णन्ति। ''विवज्जए नीस'' त्ति विपर्ययो नाम-अभिषेकादयोऽपि न सन्ति ततः परस्परनिश्रया स्थविरा आर्यिका गृह्णन्ति। ताश्च 'द्विकादयः' द्वि-त्रिप्रभृतिसङ्ख्याकाः पर्यटन्ति। अथ द्वे अपि न भवतस्ततो वक्ष्यमाणविधिना ग्रहीतव्यम् ।। कथं पुनर्द्वयोरप्यभावः ? इत्याशङ्कयाह-

[भा.४१८३] दुब्भूइमाईसु उ कारणसुं, गिहत्थणीसा वइणी वसंती।
जे नालबद्धा तह भाविया वा, निद्दोस सन्नी व तहिं वसेज्जा ।।

वृ- 'दुर्भूतिः' अशिवम्, आदिशब्दादवमौदर्यादिपरिग्रहः, तेषु कारणेषु गृहस्थनिश्रया एकाकिनी व्रतिनी वसन्ती ये 'नालबद्धाः' तस्या एव सज्ञातकाः, ये वा 'अनालबद्धा अपि भाविताः साधुसामाचारी परिकर्मितमतयो यथाभद्रकाः ये वा निर्दोषाः' हास्य-कन्दर्पादिदूषणरहिताः संज्ञिनस्तेषां गृहे वसेत् ।।

तत्र च स्थिता भिक्षां पर्यटन्तीं यदा कोऽपि वस्त्रेण निमन्त्रयेत् तदा वक्तव्यम्-

[भा.४१८४] सेज्जायरो व सन्नी, व जाणति वत्थलक्खणं अम्हं।
तेन परिच्छियमेतं, तदनुन्नातं परिग्घेच्छं ।।

वृ- शय्यातरो वा संज्ञी वा अस्माकं प्रायोग्यस्य वस्त्रस्य लक्षणं जानाति, अतस्तेन परीक्षितं तदनुज्ञातं च सद् अहमिदं परिग्रहीष्यामि ।।

[भा.४१८५] पंतो दट्ठूण तंग, संकाए अवनयं करेज्जाहि।
अन्नासिं वा दिन्नं, वइतं नीयं व हसिता व ।।

वृ- ततः संयत्वा समानीनं 'तकं' शय्यातरं संज्ञिनं वा दृष्ट्वा प्रान्तः शङ्कया 'अपनयं' वस्त्रस्यैकान्ते स्थापनं कुर्यात्; यद्वा ब्रूयात्-अन्यासां संयतीनां दत्तं व्रजिका वा नीतं हसेद्वा ।। अथवा-

[भा.४१८६] तुब्भे वि कहं विमुहे, काहामो तेन देमो से अन्नं ।
इति पंते वज्जणता, भद्देसु तधेव गेण्हंती ॥

वृ- युष्मानपि कथं विमुखान् करिष्यामः ? अतः 'तस्याः' अपरस्याः संयत्या अन्यद् वस्त्र दास्यामः, इदं तु यूयं गृह्णीत, इति ब्रुवाणे प्रान्ते वर्जनं कर्तव्यम्, न तदीयं वस्त्र ग्रहीतव्यमिति भावः । भद्रेषु तु 'तथैव' पूर्वोक्तप्रकारेण गृह्णन्ति ॥

[भा.४१८७] अंबा वि सेचिया, पियरो वि य तप्पिया वदे भद्दो ।
धम्मो य ने भविस्सति, तुब्भं च पियं अतो अन्नं ॥

वृ- भद्रक इत्थं वदेत्-आम्रा अपि सिक्ता भवन्ति, पितरोऽपि च तर्पिता भवन्ति; एवं "ने" अस्माकं धर्मो भविष्यति, युष्माकं च प्रियम्, अतो अन्यद् वस्त्र दास्याम इत्युक्ते गृह्यते ॥ अथ ये चतुर्थावभाषणनिमित्तं प्रयच्छन्ति ते कथं ज्ञातव्याः ? इत्याह-

[भा.४१८८] वेवहु चला य दिट्ठी, अन्नोन्ननिरिक्खियं खलति वाया ।
देन्नं मुहवेवन्नं, न यानुरागो उ कारीणं ॥

वृ- ये कारिणः-चतुर्थनिमित्तं वस्त्रदायिनस्तेषां शरीर 'वेपथुः' कम्पश्चला च दृष्टिर्भवति, 'अन्यान्यनिरीक्षितं' 'कस्को नाम मां जनाति ?' इति बुद्धया अन्यस्यान्यस्य च सम्मुखं निरीक्षन्त इति भावः, वाक् च तेषां स्खलति, ज्ञाते च तदभिप्राये तेषां दैन्यं मुखवैवर्ण्य चोपजायते, न च तेषां वस्त्र ददानानाम् 'अनुरागः' हृष्टप्रहृष्टतालक्षणो भवति ॥

मू. (९२) *निग्गंथस्स तप्पढमयाए संपव्वयमाणस्स कप्पइ रयहरण-गोच्छ-पडिग्गहमायाए तिहिं कसिणेहिं वत्थेहिं आयाए संपव्वइत्तए । से अ पुव्वोवट्ठिए सिया एवं से नो कप्पइ रयहरण-पडिग्गह-गोच्छय-मायाए तिहि य कसिणेहिं वत्थेहिं आयाए संपव्वइत्तए । कप्पइ से अहापरिग्गहियाइं वत्थाइं गहाय आयाए संपव्वइत्तए ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.४१८९] निग्गंथिचेलगहणं, भणियं समणाणिदानि वोच्छामि ।
निक्खंते वा वुत्तं, निक्खममाणे इमं सुत्तं ॥

वृ- निर्ग्रन्थीविषयं चेलग्रहणं भणितम्, इदानी श्रमणानां यथा वस्त्रं ग्रहीतुं कल्पते तथाऽभिधीयते। यद्वा 'निष्क्रान्तः' दीक्षितस्तद्विषयं वस्त्रग्रहणमुक्तम्, इदं तु 'निष्क्रामति' दीक्षामाददाने वस्त्रग्रहणाभिधायकं सूत्रमारभ्यते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-निर्ग्रन्थस्य तत्प्रथमतया सम्-इति सम्यक् प्रकर्षेणपुनरनङ्गीकारलक्षणेन व्रजतः-गृहवासाद् निर्गच्छतः सम्प्रव्रजतः कल्पते रजोहरण-गोच्छक-प्रतिग्रहमादाय त्रिभि कृत्स्नैर्वस्त्ररात्मना सम्प्रव्रजितुम् । इह रजोहरणग्रहणेन मध्यमोपधि गोच्छकग्रहणेन जघन्योपधि प्रतिग्रहणेनोत्कृष्टोपधि सर्वो गृहीतः, ततोऽयमर्थः-जघन्य-मध्यमोत्कृष्टोपधनिष्पन्ना ये त्रयः कृत्स्नाः-प्रतिपूर्णा वस्त्र-पात्रप्रत्यवतारास्तैरात्मना सहितैः प्रव्रज्या ग्रहीतुं कल्पते । "से य" त्ति चशब्दो अथशब्दार्थः, अथासौ प्रव्रज्याप्रतिपत्ता पूर्वम् उपस्थितः- दीक्षितः स्यात् ततो नो कल्पते "से" तस्य पूर्वोपस्थितस्य रजोहरण-गोच्छक-प्रतिग्रहमादाय त्रिभः कृत्स्नैर्वस्त्रैरात्मना सम्प्रव्रजितुम्; किन्तु कल्पते "से" तस्य 'यथापरिगृहीतानि' क्रीतकृतादिदोषरहितानि वस्त्राणि गृहीत्वा आत्मना सम्प्रव्रजितुम् इति सूत्रसङ्क्षेपार्थः ॥

अथ विस्तरार्थोऽभिधीयते-आह-न तावदद्याप्ययं प्रव्रजितः ततः कथं निर्ग्रन्थो भवति ? इति उच्यते-

[भा.४११०] दव्वम्मि य भावम्मि य, पव्वइए एत्थ होंति चउभंगो।
दव्वेण लिंगसहितो, ओहावति जो उ नीसंको ॥

[भा.४१११] पवज्जए अभिमुहो, परलिंगे कारणेन वा बितिओ।
ततितो उ उभयसहितो, उभओविजढे चरिम भंगो ॥

वृ- द्रव्ये च भावे च प्रव्रजित इत्यत्र चतुर्भङ्गी भवति। तद्यथा-द्रव्यतो निर्ग्रन्थो न भावतः १ भावतो निर्ग्रन्थो न द्रव्यतः २ एको द्रव्यतोऽपि भावतोऽपि ३ अपरो न द्रव्यतो न भावतः ४। तत्र द्रव्यतो निर्ग्रन्थः स उच्यते यः 'लिङ्गसहितः' द्रव्यलिङ्गयुक्तो निशङ्कः सन् 'अवधावति' उत्प्रव्रजतीत्यर्थः ॥ यस्तु प्रव्रज्यायामभिमुखो न तावदद्यापि प्रव्रजति कारणेन वा यः साधुः परलिङ्गे वर्तते सः 'द्वितीयः' द्वितीयभङ्गवर्ती। यस्तु 'उभयविमुक्ते तु' द्रव्य-भावलिङ्गरहिते गृहस्थादौ 'चरमः' चतुर्थो भङ्गो भवति ॥

अत्राचार्यो देवस्य मानुष्या सह संवासलक्षणं दृष्टान्तं कर्तुकामः प्रथमतः सिद्धान्तं प्रज्ञापयति-

[भा.४११२] चउधा खलु संवासो, देवाऽसुर रक्खसे मनुस्से य।
अन्नोन्नकामणेण य, संजोगा सोलस हवंति ॥

वृ- देवसंवासः असुरसंवासो राक्षससंवासो मनुजसंवासश्चेति संवासश्चतुर्धा। अत्र चान्योन्यकाम्यया षोडश संयोगा भवन्ति, तद्यथा-देवो देव्या सार्धं संवसति १ देवो असुर्या सार्धम् २ देवो मनुष्या सार्धम् ३ देवो राक्षस्या सार्धम् ४, असुरो देव्या समं संवसति ५ असुरोऽसुर्या ६ असुरो मनुष्या ७ असुरो राक्षस्या ८, राक्षसो देव्या ९ राक्षसोऽसुर्या १० राक्षसो मनुष्या ११ राक्षसो राक्षस्या १२, मनुष्यो देव्या १३ मनुष्योऽसुर्या १४ मनुष्यो राक्षस्या १५ मनुष्यो मनुष्या १६ चेति। अत्र देवशब्देन वैमानिको ज्योतिष्को वा, असुरशब्देन भवनवासी, राक्षसशब्देन तु सामान्यतो व्यन्तरः परिगृह्यते ॥ अथमूनेव षोडश भङ्गान् चतुर्षु भङ्गेष्ववतारयन्नाह-

[भा.४११३/१] अधवण देव-छवीणं, संवासे एत्थ होंति चउभंगो।

वृ- "अहवण" त्ति प्रकारान्तरद्योतकः। देव-च्छविमतोः संवासे चतुर्भङ्गी भवति-देवो देव्या सार्धं संवसति १ देवः छविमत्या सार्धम् २ छविमान् देव्या सार्धम् ३ छविमान् छविमत्या ४। अत्र देवशब्देन सामान्यतो भवनपत्यादिनिकायचतुष्टयाभ्यन्तरवर्ती गृह्यते, छविमांश्च मनुष्य उच्यते। अत एतेषु चतुर्षु भङ्गेषु पूर्वोक्ताः षोडशापि भङ्गा अन्तर्भूताः ॥

एवं सिद्धान्तं प्रज्ञाप्य प्रस्तुतार्थसाधकं दृष्टान्तमाह-

[भा.४११३/२] पव्वज्जाभिमुहंतर, गुज्झग उब्भामिया वासो ॥

[भा.४११४] बितियनिसाए पुच्छा, एत्थ जती आसि तेन मि न आतो।
जतिवेसोऽयं चोरो, जो अज्ज तुहं वसति दारे ॥

वृ- "पव्वज्जा" इत्यादि। एकः कश्चित् तरुणः प्रव्रज्याभिमुखो गुरुणां पार्श्वे प्रस्थितः। अन्तरा च कस्मिंश्चिद् ग्रामे एकस्या वरतरुण्या गृहे वासार्थमुपगम्य द्वारमूले सुप्तः। सा च तरुणी 'उद्भ्रामिका' कुशीला। 'गुह्यकश्च' कश्चिद् यक्षः तया उद्भ्रामिकया सह रात्रौ वासं कृत्वा प्रभाते स्वस्थानं

गच्छति । एवं दिवसे दिवसे करोति । तस्मिंश्च दिवसे स यक्षो नोपागमत् । द्वितीये च दिवसे कोऽपि सलिङ्गावधावी चौर्यं कर्तुकामस्तस्मिन्नेव ग्रामे तस्या एव तरुण्या गृहे तथैव द्वारमूले प्रसुप्तः, यक्षश्च तद्दिवसमागतः । यस्मिन् दिवसे यक्षो नायातः ततो यो द्वितीयो दिवसस्तत्र निशायामागतस्य यक्षस्य पार्श्वे पृच्छा कृता-कल्ये किं नागतोऽसि ? । यक्षः प्राह-अत्र कल्ये यतिरासीत् तेन कारणेन अहमत्र नायातः, अपि च साधुसम्बन्धिना तेजसैव तमुल्लङ्घ्य गन्तुं न शक्यते । सा प्राह-किमेवं मृषा भाषसे ? अयमपि तावदन्यः साधुर्द्वारमूले सुप्तस्तिष्ठति अत एनमुल्लङ्घ्य कथमद्यागतोऽसि ? इति । यक्षः प्राह-एष चारित्रं प्रति विपरिणतश्चौर्यं कर्तुकामः, अतो यतिवेषेण चौरोऽयं मन्तव्यः यस्तव अद्य द्वारे वसतीति ॥

तदेवमनेन दृष्टान्तेन प्रव्रज्यायामभिमुखः प्रव्रजित एवोच्यते । उक्तं च नैश्चयिकनयवक्तव्यता-मङ्गीकृत्य भगवत्याम्- नेरईए नं भंते ! नेरईएसु उववज्जइ ? अनेरईए नेरईएसु उववज्जइ ? गोयमा! नेरईए नेरईएसु उववज्जइ, नो अनेरईए नेरईएसु उववज्जइ । अथ रजोहरणादिपदानि व्याचष्टे-

[भा.४१९५] रयहरणेण विमज्झो, गुच्छगगहणे जहन्नगहणं तु ।
भवति पडिग्गहणे, गहणं उक्कोसउवधिस्स ॥

वृ- रजोहरणग्रहणेन विमध्यमोपधिर्ग्रहीतः, गोच्छकग्रहणेन जघन्योपधिग्रहणं भवति, प्रतिग्रहग्रहणेन चोत्कृष्टस्योपधेर्ग्रहणं मन्तव्यम् ॥

[भा.४१९६] पडिपुन्ना पडुकारा, कसिणग्गहणेण अप्पणो तिन्नि ।
पुव्विं उवट्ठितो पुन, जो पुव्वं दिक्खितो आसी ॥

वृ-कृत्स्नवस्त्रग्रहणेनेदमुक्तं भवति-तेन प्रव्रजता आत्मनो योग्यास्त्रयः प्रत्यवताराः प्रतिपूर्णा ग्रहीतव्याः । पूर्वमुपस्थितः पुनः स उच्यते यः पूर्वं दीक्षित आसीत् ॥

एष सूत्रार्थः । अथ निर्युक्तिविस्तरः-

[भा.४१९७] सोऊण कोइ धम्मं, उवसंतो परिणओ य पव्वज्जं ।
पुच्छति पूयं आयरिय उवज्झाए, पवत्ति संघाडए चेव ॥

वृ-इह कश्चित् तथारूपाणां स्थविराणामन्तिके धर्मं श्रुत्वा 'उपशान्तः' प्रव्रज्यायां च परिणतः । ततः स आचार्यान् पृच्छति-आदिशत क्षमाश्रमणाः ! किं मया कर्तव्यम् ? । सूरयस्तस्य सारसम्भवं ज्ञात्वा ब्रुवते-''पूयं'' ति चैत्यानां विपुलां पूजां कुरु श्रमणसङ्घस्य च वस्त्रादिभि प्रतिलाभनं कुरु। एवमुक्ते स तथैव चैत्यानां श्रमणसङ्घस्य च पूजां करोति । अथ श्रमणसङ्घं न पूजयितुमीशस्तत आचार्यस्योपाध्यायस्य प्रवर्तिनः सङ्घाटकसाधोश्च वस्त्रादिभिः पूजा विधातव्या ॥

इदमेव भावयति-

[भा.४१९८] नंतग-घत-गुल-गोरस, फासुग पडिलाभणं समणसंघे ।
असति गणि-वायगाणं, तदसति सव्वस्स गच्छस्स ॥

वृ-स प्रविव्रजिषुः श्रमणसङ्घस्य सकलस्यापि 'प्राशुकैः' शुद्धैर्वस्त्र-घृत-गुड-गोरसादिभिर्द्रव्यैः प्रतिलाभनां करोति । अथ नास्त्येतावत् सारं ततो ये गणिनः-आचार्या ये वा वाचकाः-उपाध्यायास्तेषां सर्वेषामपि करोति । अथ नास्त्येतावती शक्तिस्ततो यस्मिन् गच्छे असौ प्रव्रजिष्यति तस्य सर्वस्यापि प्रतिलाभनां विधत्ते ॥

[भा.४१९९] तदसति पुव्वुत्ताणं, चउण्ह सीसति य तेसि वावारो।
हानी जा तिन्नि सयं, तदभावें गुरु उ सव्वं पि ॥

वृ- तस्या अपि-सकलगच्छपूजाममाया: सामग्र्या अभावे ये पूर्वमाचार्योपाध्याय-प्रवर्ति-सङ्घाटकसाधुलक्षणाश्चत्वार उक्तास्तेषां पूजा करोति। 'तेषां च' आचार्यादीनां 'व्यापार:' अर्थकथनादिस्तस्य पुरत: 'शिष्यते' कथ्यते, यथा-आचार्योऽर्थं व्याख्यानयति, उपाध्याय: सूत्रं वाचयति, प्रवर्ती तप:संयमादौ प्रवृत्तिं कारयति, सङ्घाटकसाधुर्भिक्षा-विचारभूम्यादौ गच्छतां साहाय्यं विधत्ते, अत एतेषां पूजां विधेहीति। अथ नास्त्येतावती शक्तिस्ततो यथाक्रमं हान्या प्रथममाचार्योपाध्याय-प्रवर्तिनाम्, तदभावे आचार्योपाध्याययो:, तथाप्यशक्तौ केवलस्यैवाचार्यस्य पूजां करोति। एवमप्यशक्तौ स्वयमात्मनो योग्यान् त्रीन् प्रत्यवतारान्, तदभवे द्वौ, द्वयोरभावे एकमपि प्रत्यवतारमादाय प्रव्रजति। अथ नास्ति तस्यैकोऽपि प्रत्यवतारस्तत: सर्वमपि पात्रनिर्योगादिकं तस्य गुरव: प्रयच्छन्ति ॥

अथास्य विद्यमानविभवस्योद्गमकोटिदोषैर्विशोधिकोटि-दोषैर्वा अविशुद्धानि वस्त्राणि प्रयच्छतो ग्रहीतुं कल्पन्ते न वा? इति चिन्तां चिकीर्षुराह-

[भा.४२००] अप्पणो कीतकडं वा, आहाकम्मं व घेत्तु आगमनं।
संजोए चेव तधा, अनिदिट्ठे मग्गणा होति ॥

वृ- स गृहस्थशैक्ष आत्मनो योग्यं वस्त्र-पात्रादि क्रीतकृतं वा आधाकर्म वा गृहीत्वा गुरुणामन्तिके दीक्षाग्रहणायागमनं कुर्यात्। अत्र क्रीतकृतग्रहणेन विशोधिकोटिदोषा गृहीता:, आधाकर्मग्रहणेन चाविशोधिकोटिदोषा गृहीता:। अमीषां च दोषाणामनिर्दिष्टे उपलक्षणत्वाद् निर्दिष्टे च ये संयोगा:-भङ्गकास्तेषां मार्गणा कर्तव्या भवतीति द्वारगाथासमासार्थ:॥ साम्प्रतमेनामेव विवृणोति-

[भा.४२०१] कीयम्मि अनिद्दिट्ठे, तेनोग्गाहियम्मि सेसगा कप्पे।
निद्दिट्ठम्मि न कप्पति, अहव विसेसो इमो तत्थ ॥

वृ- क्रीतकृतं द्विधा-निर्दिष्टम् अनिर्दिष्टं च। निर्दिष्टं नाम-वस्त्र-पात्रादिकं क्रीणान इत्थं निर्देशं करोति-अमूनि मम भविष्यन्ति अमूनि साधूनां दास्यामि। तद्विपरीतमनिर्दिष्टम्। एवमन्येष्वपि दोषेषु भावना कर्तव्या। तत्र यानि वस्त्राणि तेनानिर्दिष्टानि क्रीतानि तेषां मध्ये यत् तस्याभिरुचितं तत्र वस्त्रजाते तेनावगृहीते सति शेषाणि साधूनां कल्पन्ते। 'निर्दिष्टे तु' साधूनामर्थाय यत् क्रीतं तत् किमपि न कल्पते। अथवा 'तत्र' निर्दिष्टेऽयं विशेषोऽभिधीयते॥

[भा.४२०२] मज्झंतिगामि गिण्हह, अहगं तुज्झच्चए परिग्घिच्छं।
सेहे दिंति य वत्थं, तदभावे वा विगिंचंति ॥

वृ- 'मदीयानि' मया आत्मार्थं क्रीतानि वस्त्राणि यूयं गृह्णीथ, अहं तु 'युष्मदीयानि' युष्मदर्थं मयैव क्रीतानि वस्त्राणि परिग्रहीष्ये। एवं तेनोक्ते तान्यात्मार्थक्रीतानि कल्पन्ते। अथवा स ब्रूयात्-मया तावद् युष्मदर्थमेतानि क्रीतानि, इत ऊर्ध्वं यद् जानीथ तत् कुरुथ। तत: तद् निर्दिष्टं 'वस्त्रं' वस्त्रप्रत्यवतारं 'शैक्षे' शैक्षस्यानुपस्थापितस्य प्रयच्छन्ति। अथ नास्ति शैक्ष:, अस्ति वा परं 'किमहं साधुर्न भवामि यदेवमेतानि मम दीयन्ते?' इति कृत्वा नेच्छति ततस्तानि "विगिंचंति" परिष्ठापयन्ति॥ एवं परिष्ठाप्यमानेषु स शैक्षो ब्रूयात्-

[भा.४२०३]एतं पि मा उज्झह देह मज्झं, मज्झट्ठगा गेण्हह एक दो वा।
अत्तट्ठिए होति कदायि सव्वे, सव्वे वि कप्पंति विसोधि एसा॥

वृ- 'एनमपि' वस्त्रप्रत्यवतारमकल्पनीयतया मा यूयमुज्झत किन्तु मह्यं प्रयच्छत, मदीयप्रत्यवतारात् चैकं द्वौ वा यूयं गृह्णीत। अथ तेन बहवः प्रत्यवताराः क्रीतास्ततः को विधिः? इत्याह-यान् प्रत्यवतारान् एकं वा द्वौ वा त्रीन् वा स दाता आत्मार्थयति सर्वान् वा कदाचिदात्मार्थं करोति तदा सर्वेऽपि कल्पन्ते। एष विशोधिकोटिविषयो विधिरुक्तः॥

अथाविशोधिकोटिविषयं तमेवाह-

[भा.४२०४] उग्गमकोडीए वि हु, संछोभो तहेव होतऽनिद्दिट्ठे।
इयरम्मि वि संछोभो, जइ सो सेहो सयं भणइ॥

वृ-उद्गमकोटिर्नाम-आधाकर्मादयो अविशोधिकोटयो दोषाः तेष्वपि यद् 'अनिर्दिष्टम्' 'इदं साधूनां दास्यामि इदं मम भविष्यति' इति निर्देशमन्तरेण वस्त्रादि कृतं तत् कल्पते। "संछोभ तहेव होअनिद्दिट्ठि" त्ति अनिर्दिष्टेऽपि यद्यसौ दाता ब्रूयात्-यैर्वस्त्रैर्यूयं निमन्त्रिता यदि तानि नेच्छथ तत इमानि मत्परिगृहीतानि गृह्णीत, यानि युष्माभि प्रतिषिद्धानि तानि मम भविष्यन्ति। एवमसौ "संछोभं" प्रक्षेपकं कृत्वा यदि ददाति तर्हि सर्वाण्यपि कल्पन्ते। "इतरम्मि वि संछोभो" त्ति इतरद् नाम-निर्दिष्टं तत्रापि संछोभो यदि स्यात् ततः कल्पते। संछोभः पुनरयम्-यद्यसौ गृहस्थशैक्षः 'स्वयम्' अन्येनानुपदिष्ट आत्मनेवत्थं भणति॥

[भा.४२०५] उक्कोसगा व दुक्खं, वुवज्झिया केसितोऽहं मि विधेव।
इति संछोभं तहियं, वदंति निद्दिट्ठगेसुं पि॥

वृ-यानि वस्त्राणि मया युष्मदर्थं कारितानि तानि 'उत्कृष्टानि' बहुमूल्यानि ततः कथं परित्यज्यन्ते?; 'दुःखं वा' महता प्रयासेन वा (व्या) यितानि अतः 'क्लेशितः' क्लेशं प्रापितोऽहं वृथैवामीभिः, युष्माकमनुपकरणात्; अतो मदीयानि यूयं गृह्णीथ युष्मदीयानि च मम भवन्तु, 'इति' एवं तत्र 'निर्दिष्टेष्वपि' संयतनिमित्तं निर्दिश्य कृतेष्वेपि संछोभं कल्पनीयताकारणं वदन्ति तीर्थकरादयः, संयतनिर्दिष्टान्यपि कल्पन्त इति भावः॥

अत्र मतान्तरमुपन्यस्य दूषयन्नाह-

[भा.४२०६] जह अतट्ठा कम्मं, परिभुत्तं कप्पते उ इतरेसिं।
इय तेन परिग्गहियं, कप्पइ इयरं पि इयरेसिं॥

वृ- या अविशोधिकोटि 'संयतनिर्दिष्टा' साधून् निर्दिश्य कृता सा संछोभे कृतेऽपि न कल्पते; एवं केचिदाचार्या ब्रूयते तत् तु न युज्यते। यस्मात् 'शैक्षस्य' अनुपस्थापितस्य 'अविशुद्धम्' अनेषणीयं वस्त्र-पात्रादि दीयते इति अत्रैव चतुर्थोद्देशके वक्ष्यति। तत्र शैक्षयोग्यमविशुद्धं साधुभिः परिगृहीतं भवति, अतो ज्ञायते-अविशोधिकोटिदोषदुष्टमपि वस्त्रादिकं संछोभे कृते कल्पते॥ किञ्चान्यत्-

[भा.४२०७] जय अतट्ठा कम्मं, परिभुत्तं कप्पते उ इतरेसिं।
इय तेन परिग्गहियं, कप्पइ इयरं पि इयरेसिं॥

वृ- यथा गृहस्थेनात्मनोऽर्थाय आधाकर्म कृतं तद् 'इतरेषां' संयतानां परिभोक्तुं कल्पते, 'इति' अमुनैव ज्ञापकेन अस्माकमपि स शैक्षो गृहस्थ एवेति कृत्वा 'तेन परिगृहीतं' ममेदमिति बुद्धया स्वीकृतम् 'इतरदपि' संयतनिर्दिष्टमपि कल्पते 'इतरेषां' साधूनाम् ॥ ये पुनराचार्या अविशोधिकोटिनिर्दिष्टं संछोभेऽपि कृते नेच्छन्ति ते इदं कारणमुपवर्णयन्ति-

[भा.४२०८]　　सहसानुवादिनातेन केइ निदिट्ठके न इच्छंति ।
　　　　अनिदिट्ठे पुन छोभं, वदंति परिफग्गुमेतं पि ॥

वृ- यथा सहस्रानुपाति विषं भक्ष्यमाणं सहस्रान्तरितमपि पुरुषं मारयति, एवमाधाकर्माऽप्युपभुज्यमानं सहस्रान्तरितमपि साधुं संयमजीविताद् व्यपरोपयतीति सहस्रानुपातिविपज्ञातेन केचिदाचार्या साधुनिमित्तं निर्दिष्टे संछोभेऽपि कृते नेच्छन्ति, अनिर्दिष्टे पुनः छोभं कृत्वा ददानस्य कल्पनीयं वदन्ति एतदपि 'परिफल्गु' निस्सारं मन्तव्यम् ॥ कथम् ? इत्याह-

[भा.४२०९]　　एयं पि सघरमीसेण सरिसगं तेन फग्गुमिच्छामो ।
　　　　दुविधं पि ततो गहियं, कप्पति रतणुच्चओ नातं ॥

वृ- यत् ते आचार्यदेशीया अनिर्दिष्टं संछोभे कृते कल्पनीयं ब्रुवते एतदपि स्वगृहयतिमिश्रेण सदृशम्, तेन कारणेन परिफल्गु वयमिच्छामः । त्वदीयाभिप्रायेण ह्येतदपि स्वगृहयतिमिश्रमिति कृत्वा अकल्पनीयं प्राप्नोति, तच्चानिष्टम्; ततः 'द्विविधमपि' निर्दिष्टा-ऽनिर्दिष्टभेदाद् द्विप्रकारमपि तेन शैक्षेण संछोभकरणेन 'अथगृहीतम्' आत्मीकृतं सत् कल्पते । तथा चात्र 'रत्नोच्चयः' मेरुमहीधरः 'ज्ञातं' दृष्टान्तः । यथा हि तत्र प्रक्षिप्तं तृणादिकमपि सुवर्णीभवति, एवं शैक्षगृहस्थेन परिगृहीतं सर्वमपि कल्पनीयं भवति ॥ अपि च -

[भा.४२१०]　जह उ कडं चरिमाणं, पडिसिद्धं तं हि मज्झिमोग्गहियं ।
　　　　पडिवन्नपंचजामे, कप्पति तेसिं तहऽन्नेसिं ॥

वृ-यथा 'चरमाणां' चरमतीर्थकृत्तीर्थवर्तिनां पञ्चयामिकानां साधूनामर्थाय किमपि वस्त्रं वा पात्रं वा कृतं तच्च तैः 'प्रतिषिद्धं' न गृहीतम्, 'मध्यमैश्च' श्री पार्श्वनाथतीर्थवर्तिसाधुभिश्चतुर्यामिकैस्तत् प्रतिगृहीतम् । ते च चतुर्यामिकाः पञ्चयामधर्मं प्रतिपन्नाः ततस्तद्वस्त्रादिकं तेषामन्येषामपि पञ्चयामिकानां परिभोक्तुं यथा कल्पते, एवमत्रापि साधूनामर्थाय कृतं तैः प्रतिषिद्धं शैक्षगृहस्थेनात्मार्थीकृतं सद् दीयमानं कल्पते ॥ अथ संयोगद्वारं व्याख्याति-

[भा.४२११]　　उग्गम-विसोधिकोडी, दुगादिसंजोगओ बहू एत्थं ।
　　　　पत्तेग-मीसिगासु य, निद्दिट्ठ तधा अनिद्दिट्ठा ॥

वृ-इह उद्गमकोटिभेदाः-आधाकर्म-मिश्रजातादयस्तेषां 'द्विकादिसंयोगतः' द्विकत्रिकचतुष्कादिसंयोगनिष्पन्ना बहवोऽत्र भङ्गका भवन्ति, ते च सुगमतया स्वयमभ्युह्य मन्तव्याः; एवं विशोधिकोटिभेदानामपि-क्रीतकृतादीनां द्विकादिसंयोगनिष्पन्नास्तथैव बहवो भङ्गकाः; एते च प्रत्येकभङ्गका उच्यन्ते । एतेषामेवोद्गमकोटिभेदानां विशोधिकोटिभेदानां च परस्परं द्विकादिसंयोगनिष्पन्ना एवमेव बहवो भङ्गका भवन्ति, ते च मिश्रभङ्गका भण्यन्ते । सर्वेऽप्येते द्विधा-निर्दिष्टा अनिर्दिष्टाश्च । एतासु प्रत्येक-मिश्रासु भङ्गपङ्क्तिषु कल्प्या-ऽकल्प्यविभागः प्रागुक्तप्रकारेणावसातव्यः ॥ अथ वक्ष्यमाणार्थसम्बन्धनाय प्रस्तावनां करोति-

निउणतरं व रयोहरादी, कोइक किणे कुत्तियआवणातो ॥

वृ- वस्त्राणि वा पात्राणि वा प्रायो गृहेऽपि भवेयुः । यत् तु 'निर्युक्तभाण्डं' पात्रनिर्योगोपकरणं वाशब्दस्य व्यवहितसम्बन्धतया रजोहरणादिकं वा यदन्यत्र दुर्लभमुपकरणं तत् कश्चिद् 'निपुणः' बुद्धिमान् साधूनां समीपे दृष्ट्वा तदनुसारेण स्वयमपि कुर्यात्, कश्चित् तु तदेव कुत्रिकापणात् क्रीणीयात् ॥ अनेन सम्बन्धेन कुत्रिकापणवक्तव्यतामभिधित्सुराह-

[भा.४२१३] कुत्तीयपरूवणया, उक्कोस-जहन्न-मज्झिमट्ठाणा ।
कुत्तिय मंडकिणणा, उक्कोसं हुंति सत्तेव ॥

वृ- प्रथमतः कुत्रिकापणस्य प्ररूपणा कर्तव्या । तत उत्कृष्ट-जघन्य-मध्यमानि मूल्यस्थानानि वक्तव्यानि । एतावता मूल्येन कुत्रिकापणे भाण्डस्य-उपकरणस्य क्रयणं भवतीति निरूपणीयम्। "उक्कोसं" ति उत्कर्षतः सकलस्यापि श्रमणसङ्घस्य योग्या वस्त्र-पात्रप्रत्यवतारा ग्रहीतव्याः । "होंति सत्तेव" त्ति सप्त निर्योगास्तेन ग्रहीतव्या भवन्ति, जघन्यत इति वाक्यशेषः । एष चूर्ण्यभिप्रायः। विशेषचूर्ण्यभिप्रायेण तु-जघन्यत एक आत्मनो योग्यो निर्योगो ग्रहीतव्यः । उत्कर्षतस्तु सप्त निर्योगाः, तेषां च त्रय आत्मनो योग्याः चत्वार आचार्यप्रभृतीनां पूजनीयानां पूजायोग्याः । एष द्वारगाथासमासार्थः ॥ अथैनामेव विवृणोति-

[भा.४२१४] कु ति पुढवीय सन्ना, जं विज्जति तत्थ चेदनमचेयं ।
गहणुवभोगे य खमं, न तं तहिं आवणे नत्थि ॥

वृ- 'कुः' इति पृथिव्याः संज्ञा, तस्याः त्रिकं कुत्रिकं-स्वर्ग-मर्त्य-पाताललक्षणं तस्यापणः-हट्टः कुत्रिकापणः किमुक्तं भवति ? इत्याह-'तत्र' पृथिवीत्रये यत् किमपि चेतनमचेतनं वा द्रव्यं सर्वस्यापि लोकस्य ग्रहणोपभोगक्षमं विद्यते तत् 'तत्र' आपणे न नास्ति, "द्वौ नञौ प्रकृत्यर्थं गमयतः" इति वचनाद् अस्त्येवेति भावः ॥

अथोत्कृष्ट-मध्यम-जघन्यमूल्यस्थानानि प्रतिपादयति-

[भा.४२१५] पनतो पागतियाणं, साहस्सो होति इब्भमादीणं ।
उक्कोस सतसहस्सं, उत्तमपुरिसाण उवधी उ ॥

वृ- प्राकृतपुरुषाणां प्रव्रजतमुपधि कुत्रिकापणसत्कः 'पञ्चकः' पञ्चरूपकमूल्यो भवति । 'इभ्यादीनां' इभ्य-श्रेष्ठि-सार्थवाहादीनां मध्यमपुरुषाणां 'साहस्रः' सहस्रमूल्य उपधिः । 'उत्तमपुरुषाणां' चक्रवर्ति-माण्डलिकप्रभृतीनामुपधि शतसहस्रमूल्यो भवति । एतच्च मूल्यमानं जघन्यतो मन्तव्यम्, उत्कर्षतः पुनस्त्रयाणामप्यनियतम् । अत्र च पञ्चकं जघन्यम्, सहस्रं मध्यमम्, शतसहस्रमुत्कृष्टम् ॥ कथं पुनरेकस्यापि रजोहरणादिवस्तुन इत्थं विचित्रं मूल्यं भवति ?

इत्युच्यते-

[भा.४२१६] विक्किंतगं जधा पप्प होइ रयणस्स तव्विहं मुल्लं ।
कायगमासज्ज तहा, कुत्तियमुल्लस्स निक्कं ति ॥

वृ- यथा 'रत्नस्य' मरकत-पद्मरागादेर्विक्रेतारं 'प्राप्य' प्रतीत्य त्विधं मूल्यं भवति, यादृशो मुग्धः प्रबुद्धो वा विक्रेता तादृशमेव स्वल्पं बहु वा मूल्यं भवतीति भावः; एवं 'क्रायकं' ग्राहकमासाद्य

कुत्रिकापणे भाण्डमूल्यस्य 'निष्कं' परिमाणं भवति, न प्रतिनियतं किमपीति भावः । इतिशब्दः स्वरूपोपदर्शने ॥

[भा.४२१७] एवं ता तिविह जणे, मोल्लं इच्छाए दिज्ज बहुयं पि ।
सिद्धमिदं लोगम्मि वि, समणस्स वि पंचगं भंडं ॥

वृ- एवं तावत् 'त्रिविधे' प्राकृत-मध्यमोत्तमभेदभिन्ने जने 'मूल्यं' पञ्चरूपकादिरूपकपरिमाणं जघन्यतो मन्तव्यम् । इच्छया तु 'बह्वपि' यथोक्तपरिमाणादधिकमपि प्राकृतादयो दद्युः, न कोऽप्यत्र प्रतिनियमः । न चैतदत्रैवोच्यते, किन्तु लोकेऽपि 'सिद्धं' प्रततमिदम्, यथा-श्रमणस्यापि 'पञ्चकं' पञ्चरूपकमूल्यं भाण्डं भवति । इह च रूपको यस्मिन् देशे यद् नाणकं व्यवह्रियते तेन प्रमाणेन प्रतिपत्तव्यः ॥ अथ कुत्रिकापणः कथमुत्पद्यते ? इत्याह-

[भा.४२१८] पुव्वभविगा उ देवा, मनुयाण करिंति पाडिहेराइं ।
लोगच्छेरयभूया, जह चक्कीणं महानिहयो ॥

वृ- 'पूर्वभविकाः' भवान्तरसङ्गतिका देवाः पुण्यवतां मनुजानां 'प्रातिहार्याणि' यथाभिलषितार्थोपढौकनलक्षणानि कुर्वन्ति । यथा लोकाश्चर्यभूताः 'महानिधयः' नैसर्पप्रभृतयः 'चक्रिणां' भरतादीनां प्रातिहार्याणि कुर्वन्ति । वर्तमाननिर्देशस्तत्कालमङ्गीकृत्याविरुद्धः । एवं कुत्रिकापणा उत्पद्यन्ते ॥ ते चैतेषु स्थानेषु पुरा बभूवुः इति दर्शयति-

[भा.४२१९] उज्जेनी रायगिहं, तोसलिनगरे इसी य इसिवालो ।
दिक्खा य सालिभद्दे, उवकरणं सयसहस्सेहिं ॥

वृ- उज्जयिनी राजगृहं च नगरं कुत्रिकापणयुक्तमासीत् । तोसलिनगवास्तव्येन च वणिजा ऋषिपालो नाम वानमन्तर उज्जयिनीकुत्रिकापणात् क्रीत्वा स्वबुद्धिमाहात्म्येन सम्यगाराधितः, ततस्तेन ऋषितडागं नाम सरः कृतम् । तथा राजगृहे श्रेणिके राज्यमनुशासति शालिभद्रस्य सुप्रसिद्धचरितस्य दीक्षायां शतसहस्राभ्याम् 'उपकरणं' रजोहरण-प्रतिग्रहलक्षणमानीत्, अतो ज्ञायते यथा राजगृहे कुत्रिकापण आसीदिति पुरातनगाथासमासार्थः ॥

साम्प्रतमेनामेव विवृणोति-

[भा.४२२०] पज्जोए नरसीहे, नव उज्जेनीय कुत्तिया आसी ।
भरुयच्छवणियऽसद्दह, भूयऽट्ठम सयसहस्सेणं ॥

[भा.४२२१] कम्मम्मि अदिज्जंते, रुट्ठो मारेइ सो य तं घेत्तुं ।
भरुयच्छाऽऽगम, वावारदान खिप्पं च सो कुणति ॥

[भा.४२२२] भीएण खंभकरणं, एत्थुस्सर जा न देमि वावारं ।
निज्जित भूततलागं, आसेन न पेहसी जाव ॥

चू- चण्डप्रद्योतनाम्नि नरसिंहे अवन्तिजनपदाधिपत्यमनुभवति न कुत्रिकापणा उज्जयिन्यामासीरन् । तदा किल भरुयच्छाओ एगो वाणियओ असद्दहंतो उज्जेनीए आगंतुन कुत्तियावणाओ भूयं मग्गइ । तेन कुत्तियावणवाणिएण चिंतियं-'एस ताव मं पवंचेइ ता एयं मोल्लेण वारेमि' त्ति भणियं-जइ सयसहस्से देसि तो देमि भूयं । तेन तं पि पडिवन्नं ताहे तेन भन्नइ- पंचरत्तं उदिक्खाहि तओ दाहामि । तेन अट्ठमं काऊण देवो पुच्छिओ । सो भणइ-देहि, इमं च भणिहिज्ज-जइ कम्मं न

देसि तो भूओ तुमं उच्छाएहिइ । 'एवं भवउ'त्ति भणित्ता गहिओ तेन भूओ भणइ-कम्मं मे देहि । दिन्नं, तं खिप्पमेव कयं । पुनो मग्गइ, अन्नं दिन्नं । एवं सव्वम्मि कम्मे निट्ठि पुनो भणइ-देहि कम्मं। तेन भन्नइ-एत्थं खंभे चडुत्तरं करेहि जाव अन्नं किंचि कम्मं न देमि । भूओ भणइ-अलाहि, पराजितो मि, चिंधं ते करेमि-जाव नावलोएसि तत्थ तलागं भविस्सइ । तेन अस्से विलग्गिऊण बारस जोयणाइं गंतूण पलोइयं जाव तक्खणमेव कयं तेन भरुयच्छस्स उत्तरे पासे भूयतलागं नाम तलागं ॥ अमुमेवार्थमभिधित्सुराह-"भरुयच्छ" इत्यादि । भरुकच्छवणिजा अश्रद्दधता 'भूतः' पिशाचविशेषः कुत्रिकापणे मार्गितः । ततोऽर्घं कृत्वा शतसहस्रेण भूतः प्रदत्तः, इदं च भणितम्-कर्मण्यदीयमाने अयं 'रुष्टः' कुपितो मारयतीति । स च भूतं गृहीत्वा भरुकच्छे आगमनं कृत्वा व्यापारदानं तस्य कृतवान् । स भूतस्तं व्यापारं क्षिप्रमेव करोति । ततः सर्वकर्मपरिसमाप्तौ वणिजा भीतेन भूतस्य पार्श्वात् स्तम्भ एकः कारयाञ्चक्रे । ततस्तं भूतमभिहितवान्- यावद परं व्यापारं न ददामि तावद् 'अत्र' स्तम्भे 'उत्तर' आरोहा-ऽवरोहक्रियां कुरु इति भावः । ततः स भूत उक्तवान्-निर्जितोऽहं भवता, अत आत्मनः पराजयचिह्नं करोमि । अश्वेन गच्छन् यावद् 'न प्रेक्षसे' न पश्चादवलोकसे तत्र प्रदेशे तडागं करिष्यामि इति भणित्वा तथैव कृते भूततडागं कृतवान् ॥

[भा.४२२३] एमेव तोसलीए, इसिवालो वाणमंतरो तत्थ ।
निज्जित इसीतलागे, रायगिहे सालिभद्दस्स ॥

वृ- 'एवमेव' तोसलिनगरवास्तव्येन वणिजा उज्जयिनीमागम्य कुत्रिकापणाद् ऋषिपालो नाम वानमन्तरः क्रीतः । तनापि तथैव निर्जितेन ऋषितडागं नाम सरश्चक्रे । तथा राजगृहे शालिभद्रस्य रजोहरणं प्रतिग्रहश्च कुत्रिकापणात् प्रत्येकं शतसहस्रेण क्रीतः ॥ अथ सप्त निर्योगान् व्याचष्टे-

[भा.४२२४] तिन्नि य अत्तट्ठेती, चत्तारि य पूयणारिहे देति ।
दिंतस्स य घित्तव्वो, सेहस्स विविंचणं वा वि ॥

वृ- सप्त निर्योगान् गृहीत्वा प्रव्रजतोऽयं गुणः- तेषां सप्तानां निर्योगाणां मध्यात् त्रीन् स शैक्षः 'आत्मार्थयति' आत्मनोऽर्थाय गृह्णातीत्यर्थः; चतुरश्च निर्योगान् 'पूजनार्हाणाम्' आचार्योपाध्याय-प्रवर्ति-सङ्घाटकसाधूनां प्रयच्छति । तस्य चैवं प्रयच्छतो यद्यसौ निर्योगः शुद्धः ततो ग्रहीतव्यः । अथाशुद्धस्ततः शैक्षस्य दातव्यः । शैक्षस्याभावे 'विवेचनं' परिष्ठापनं तस्य क्रियते ॥

एवं तस्य त्रीन् निर्योगान् गृहीत्वा प्रव्रजितस्य यद् भवति तद् दर्शयति-

[भा.४२२५] सज्झाए पलिमंथो, पडिलेहणियाए सो हवइ सिग्गो ।
एगं च देति तहितं, दोन्नि य से अप्पणो हुंति ॥

वृ- तस्य त्रीन् निर्योगान् उभयकालं प्रत्युपेक्षमाणस्य महान् स्वाध्यायविषयः परिमन्थो भवति। तया च महत्या प्रत्युपेक्षणया सः 'सिग्गः' परिश्रान्तो भवति । तत एवं निर्विण्णः सन् स एकं निर्योगं सूरीणां ददाति । प्रदत्ते च तस्मिन् तस्य द्वौ निर्योगावात्मनः सत्तायां भवतः ॥

एवमप्यसौ द्वाभ्यां निर्योगाभ्यां शेषसाधुभ्यो अन्यादृश इव दृश्यते ततः-

[भा.४२२६] निग्गमने बहुभंडो, कत्तो कतरो व वाणिओ एइ ।
बितियं पि देति तहियं, मा भंते ! दुलहं होज्जा ॥

वृ- मासकल्पे पूर्णे ततः क्षेत्राद् निर्गच्छतां स एवैकः 'बहुभाण्डः' बहूपकरणो दृश्यते ततो

लोकस्तमुद्दिश्य ब्रवीति-अहो! कुतः कतरो वा अयं वाणिज एवमुपस्करसम्भारभारितः समुपैति? एवमुपहासमाकर्ण्य स द्वितीयमपि निर्योगं गुरूणां ददाति। तत्र च गुरुभिर्वक्तव्यम्-'हे भदन्त!' आर्य! मा 'ते' तव भूयो दुर्लभमुपकरणं भवेद् अत आत्मपार्श्वे एव तावद् धारय॥ स प्राह-

[भा.४२२७] भारेण खंधं च कडी य बाहा, पीलिज्जए निस्ससए य उड्ढं।

तेना य उवधीणमभिद्दवेज्जा, न इत्तिया इंति ममोवभोगं॥

वृ- मम मार्गं गच्छतो द्वयोः प्रत्यवतारयोर्महान् भारो भवति, तेन स्कन्धः कटी बाहा च गाढतरं पीड्यते, ततश्च 'उड्ढम्' ऊर्ध्वं निश्वसीम्यहम्, निश्वासेनाकुलो भवामीत्यर्थः। स्तेनाश्च मामुपकरणमालितं दृष्ट्वा उपधिकारणादभिद्रवेयुः, एतावन्ति च वस्त्र-पात्राणि ममोपभोगं नायान्ति॥ यच्च भगवद्भिरुक्तम्-'मा भूयो दुर्लभं भवेत्' तत्रोच्यते-

[भा.४२२८] जं होहिति बहुगाणं, इमम्मि धम्मचरणं पवन्नाणं।

तं होहिति अम्हं पी, तुम्हेहि समं पवन्नाणं॥

वृ- यद् युष्माकं बहूनाम् 'अस्मिन्' भागवते शासने धर्मचरणं प्रपन्नानामुपकरणं भविष्यति तदस्माकमपि युष्माभि समं हिण्डमानानां चारित्रं प्रपन्नानां भविष्यति॥

एष तत्प्रथमतया प्रव्रजतो विधिरुक्तः। अथ पूर्वोपस्थितविषयं तमेवाह-

[भा.४२२९] सिद्धी वीरणसढए, अब्भुट्ठाणं पुनो अजाणंते।

कत कारितं च कीतं, जाणंते अधापरिग्गहिते॥

वृ- यश्चारित्रं परित्यज्य गृहवासमुपगतस्तस्य कथं पुनरपि प्रव्रज्यायामभ्युत्थानसिद्धि सञ्जाता? अत्र वीरणसढकदृष्टान्तो वक्तव्यः, एवं तस्य पुनरभ्युत्थानं भवति। स च द्विधा-जानानो अजानानश्च। यः कल्पा-ऽकल्पविभागं जानाति स जानानः, तद्विपरीतो अजानानः, अगीतार्थः इत्यर्थः। अजानति भूयः प्रव्रज्यायामभ्युत्तिष्ठमाने कृतं वा कारितं वा क्रीतं वा दीयमानं पूर्वोक्तविधिना कल्पते। यस्तु जानानस्तस्य 'यथापरिगृहीतानि' शुद्धान्येव ग्रहीतुं कल्पन्ते, न कृत-कारितादीनि॥ अथ वीरणसढकदृष्टान्तमाह-

[भा.४२३०] जह सो वीरणसढओ, नइतीररुहो जलस्स वेगेणं।

थोवं थोवं खणता, छूढो सोयं ततो वूढो॥

वृ- यथा 'सः' कश्चिद् विवक्षितः 'वीरणसढकः' वीरणानां-तृणविशेषाणां स्तम्बो नद्यास्तीरे रोहति स्म-जायते स्मेति नदीतीररुहः, नद्याः प्रत्यासन्नतया जलस्य वेगेन स्तोकं स्तोकेन खनता भूमिकानिहितमूलजालोऽप्यचिरादेव स्रोतसि प्रक्षिप्तः। ततश्च स्रोतसा 'व्यूढः' वाहयित्वा समुद्रं प्रापित इति भावः॥ एष दृष्टान्तः। अयमर्थोपनयः-

[भा.४२३१] ठिय-गमिय-दिट्ठ-ऽदिट्ठेहि साधुहिं अहरिहं समणुसट्ठो।

उण्हेहुण्हतरेहि य, चालिज्जति बद्धमूलो वि॥

वृ- कश्चित् पश्चात्कृतः सिद्धपुत्रकादिविशेषेण, साधूनामागमनमार्गभूते क्वचिद् ग्रामे गृहवासमध्यास्य तिष्ठन् ये तत्र मासकल्पं वर्षाकल्पं वा स्थिताः साधवः, ये च "गमि"त्ति तत्र गच्छन्त आगच्छन्तो वा द्वित्राणि दिनानि तिष्ठन्ति, तैर्दृष्टैरदृष्टैश्च साधुभिः 'यथार्हं' यथायोग्यं 'समनुशिष्टः सन्' उष्णैरुष्णतरैश्च वचनैरुदकवेगस्थानीयैरनेकशः प्रेर्यमाणः कलत्रादिपरिग्रहप्रवि-

स्तारेण बद्धमूलोऽपि चाल्यते, गृहवासं त्याजयित्वा संयमरूपे स्रोतसि प्रक्षिप्य गच्छरत्नाकरं प्राप्यत इति भावः ॥ अथ जानाना-ऽजानानविषयं विधिविभागमाह-

[भा.४२३२] कप्पा-ऽकप्पविसेसे, अणधीए जो उ संजमा चलिओ ।
पुव्वगमो तस्स भवे, जाणंते जाइनं सुद्धाइं ॥

वृ- वस्त्र-पात्रादिविषये कल्पा-कल्पविशेषे अनधीते सति यः संयमात् चलितस्तस्य पूर्व-प्राक्तनो गमः-प्रकारो भवति यथा शैक्षगृहस्थस्योक्तः । यस्तु कल्पा-ऽकल्पविधिं जानाति तस्य सर्वाणि शुद्धान्येव ग्रहीतुं कल्पन्ते, न क्रीतादिदोषदुष्टानि ॥

मू. (९३) *निग्गंथीए णं तप्पढमयाए संपव्वयमाणीए कप्पइ रयहरण-गोच्छ-पडिग्गहमायाए चउहिं कसिणेहिं वत्थेहिं आयाए संपव्वइत्तए । सा य पुव्वोवट्ठिया सिया एवं से नो कप्पइ रयहरण-गोच्छ-पडिग्गहमायाए चउहिं कसिणेहिं वत्थेहिं आयाए संपव्वइत्तए । कप्पइ से अहापरिग्गहिएहिं वत्थेहिं आयाए संपव्वइत्तए ॥*

वृ- अस्य व्याख्या प्राग्वत् । नवरं निर्ग्रन्थ्याश्चतुर्भि प्रत्यवतारैः सहितायाः प्रव्रजितुं कल्पते इति विशेषः ॥ अथ भाष्यम्-

[भा.४२३३] एसेव गमो नियमा, निग्गंथीणं पि होइ नायव्वो ।
जाणंतीणं कप्पंति, घेत्तुं जे अहापरिग्गहिते ॥

वृ- एष एव गमो निर्ग्रन्थीनामपि भवति ज्ञातव्यः । सा च पूर्वोपस्थिता स्यादिति अत्र सूत्रे तासां कल्पा-ऽकल्पविभागं जानतीनां यानि 'यथापरिगृहीतानि' शुद्धानि तानि कल्पन्ते ग्रहीतुम् । ''जे'' इति वाक्यालङ्कारे ॥

[भा.४२३४] समणीणं नाणत्तं, निज्ञोगा तासि अप्पणो चउरो ।
चउरो पंच व सेसा, आयरिगादीण अट्ठाए ॥

वृ-निर्ग्रन्थेभ्यः सकाशात् श्रमणीनामिदं 'नानात्वं' विशेष उच्यते-'तासां' प्रव्रजन्तीनामात्मनो योग्याश्चत्वारो निर्योगा भवन्ति, शेषास्तु आचार्यादीनामर्थाय चत्वारो वा पञ्च वा । तत्र यदा चत्वारस्तदा एकमाचार्यस्य द्वितीयं प्रवर्तिन्याः तृतीयं गणावच्छेदिन्याः चतुर्थं सङ्घाटकसाध्व्याः प्रयच्छति । यदा तु पञ्च तदा चत्वारस्तथैवाचार्यादीनां पञ्चमः पुनरुपाध्यायस्य योग्य इति चूर्ण्यभिप्रायः । बृहद्भाष्यकारः पुनराह-

चत्तारि अप्पणो से, चउरो पंचऽहव सेसगा हुंति ।
आयरिय उवज्झाए, पवत्तिनिऽभिसेय संघाडे ॥
पंचेए निज्ञोगा, अभिसेगा वज्र हुंति चत्तारि । त्ति ॥

मू. (९४) *नो कप्पइ निग्गंथाण वा निग्गंथीण वा पढमसमोसरणुद्देसपत्ताइं चेलाइं पडिग्गाहित्तए। कप्पइ निग्गंथाण वा निग्गंथीण वा दोच्चसमोसरणुद्देसपत्ताइं चेलाइं पडिग्गाहित्तए ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.४२३५] दिट्ठं वत्थग्गहणं, न य वुत्तो तस्स गहणकालो उ ।
ओसरणम्मि अगेज्झं, तेन समोसरणसुत्तं तु ॥

वृ- पर्वसूत्रे वस्त्रग्रहणं दृष्टम्, न च 'तस्य' वस्त्रस्य ग्रहणकाल उक्तः, कदा कल्पते कदा च न?

इति। अतो वर्षाकालाख्ये प्रथमे 'ओसरणे' समवसरणे अग्राह्यं तद् वस्त्रम्, द्वितीये तु ऋतबद्धाख्ये ग्राह्यमिति निरूपणाय इदं समवसरणसूत्रमारभ्यते ॥

[भा.४२३६] अहया वि सउवधीओ, सेहो दव्वं तु एयमक्खायं।
तं काले खित्तम्मि य, गज्झं कहियं अगज्झं वा ॥

वृ- अथवा पूर्वसूत्रे सोपधिकशैक्षलक्षणं द्रव्यमेतदाख्यातम्। 'तद्' द्रव्यं कुत्र काले क्षेत्रे वा ग्राह्यम्? कुत्र वा अग्राह्यम? इत्यधुना प्रतिपाद्यते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या- "नो कप्पइ" त्ति आर्षत्वादेकवचनम्। नो कल्पन्ते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा प्रथमसमवसरणे-वर्षाकाले उद्देशः-क्षेत्र-कालविभागस्तं प्राप्तानि प्रथमसमवसरणोद्देशप्राप्तानि 'चेलानि' वस्त्राणि प्रतिग्रहीतुम्। किमुक्तं भवति? - इह साधवो यत्र वर्षावासं चिकीर्षवस्तत् क्षेत्रं यावद् नाद्यापि प्राप्नुवन्ति प्राप्ता वा परं नाद्याप्याषाढपूर्णिमा लगति तावत् कल्पन्ते वस्त्राणि प्रतिग्रहीतुम्। अथ वर्षावासप्रायोग्यं क्षेत्रं प्राप्ताः आषाढपूर्णिमा च सञ्जाता तत इयन्तं क्षेत्र-कालविभागं प्राप्तानि वस्त्राणि न कल्पन्ते। द्वितीयसमोसरणोद्देशप्राप्तानि तु कल्पन्ते। इति सूत्रसङ्क्षेपार्थः ॥

साम्प्रतं [illegible] आह-

[भा.४२३७] पढमम्मि समोसरणे, उद्देसकडं न कप्पती जस्स।
तस्स उ किं कप्पंती, उग्गमदोसा उ अवसेसा ॥

वृ- इह परः प्रस्तुतसूत्रस्य सूरिपरम्परायातमनन्तरोक्तमर्थमनवबुध्यमानः प्रेरयति-ननु च सूत्रे "उद्देसपत्ताइं" ति यत् पदं तस्यायमर्थ-उद्देशनमुद्देशः-औद्देशिकाख्यो द्वितीय उद्गमदोषस्तं प्राप्तानि वस्त्राणि न कल्पन्ते, एतच्च न युज्यते, यतो यस्य साधोः प्रथमसमवसरणे उद्देशकृतं वस्त्रादि न कल्पते तस्य अवशेषाः आधाकर्मादयः पञ्चदशोद्गमदोषाः किं कल्पन्ते? यदेवमुद्देशकृतमेव प्रतिषिध्यते ॥ पर एव सूरीणामभिप्रायमाशङ्क्य परिहरति-

[भा.४२३८] उद्देसग्गहणेण व, उग्गमदोसा उ सव्वे जति गहिता।
उप्पादणादि सेसा, तम्हा कप्पंति किं दोसा ॥

वृ-अथ "एकग्रहणे तज्जातीयग्रहणम्" इति न्यायाद् उद्देशग्रहणेन सर्वेऽप्युद्गमदोषा गृहीताः; एव तर्हि उत्पादनादयः शेषा दोषाः किं कल्पन्ते? येनोद्गमदोषा एव गृह्यन्ते ॥

पर एवाचार्यस्याशयमाशङ्कमान इदमाह

[भा.४२३९] अहवा उद्दिस्स कता, एसणदोसा वि होंति गहिता तु।
आदीअंतग्गहणे, गहिया उप्पादना वि तहिं ॥

वृ-अथवा यस्मादेषणादोषा अपि साधून् 'उद्दिश्य' प्रणिधाय कृताः अत उद्देशग्रहणेन तेऽपि गृहीताः। एवं च आद्यस्य-उद्गमदोषकलापस्य अन्त्यस्य च-एषणादोषजालस्य ग्रहणे उत्पादनादोषा अपि गृहीता अत्र मन्तव्याः, "आद्यन्तग्रहणे मध्यस्यापि ग्रहणम्" इति न्यायात्। अतो द्वाचत्वारिंशदपि दोषा न कल्पन्ते इति सिद्धम् ॥ एवमाचार्यस्याकूतमाशङ्क्य दूषणान्तरमाह-

[भा.४२४०] एए अ तस्स दोसा, उडुबद्धे जं च कप्पते घित्तुं।
कोई भणिज्ज दोसु वि, न कप्पति सुतं तु सूएति ॥

वृ- यद्येवं सामर्थ्याकर्षता द्वाचत्वारिंशदपि दोषाः प्रथमसमवसरणे प्रतिषिद्धास्तर्हि ऋतुबद्धाख्ये

द्वितीयसमवसरणे एते सर्वेऽपि दोषास्तस्य साधोः कल्पन्ते; यथा अत्रैव सूत्रेऽभिहितम्- "कल्पन्ते द्वितीयसमवसरणे उद्देशप्राप्तानि चेलानि प्रतिग्रहीतुम्" अतोऽपि ज्ञायते द्वितीयसमवसरणे द्वाचत्वारिंशद्दोषदुष्टमपि कल्पते । एवं कश्चित् परो भणेत् तत्र सूरिराह-द्वयोरपि समवसरणयोर्न कल्पन्ते । भूयोऽपि परः प्राह-यद् यूयं द्वितीयेऽपि समवसरणे प्रतिषेधयथ तन्न युज्यते, यतः 'श्रुतं' सूत्रमेव "कल्पते" इति ब्रुवाणमनुज्ञां सूचयति ।। अपि च-

[भा.४२४१] एवं सुत्तविरोधो, दोसम्मि कप्पति त्ति जं भणितं ।
सुत्तनिवातो जम्मि त, तं सुण वोच्छं समासेणं ।।

वृ- एवं भवतां सूत्रेण समं विरोधः प्राप्नोति, यतः सूत्रे "द्वितीये समवसरणे कल्पते" इति भणितम् । अथ गुरुराह-सर्वमप्येतदाकाशरोमन्थनमिव लक्ष्यते, सूत्राभिप्रायमनवबुध्यैव यथातथाप्रलपनात् । कः पुनः सूत्राभिप्रायः ? इति चेद् अत आह-यस्मिन्नर्थे सूत्रस्य निपातः- अवतारस्तं शृणु 'समासेन' सङ्क्षेपेण वक्ष्येऽहम् ।।

[भा.४२४२] समोसरणे उद्देसे, छव्विधे पत्ताण दोण्ह पडिसेधो ।
अप्पत्ताण उ गहणं, उवधिस्सा सातिरेगस्स ।।

वृ- प्रथमसमवसरणं ज्येष्ठावग्रहो वर्षावास इति चैकार्थम् । द्वितीयसमवसरणम् ऋतुबद्ध इति चैकार्थम् । तत्र उद्देशस्तद्विषयः षड्विधो निक्षेपः कर्तव्यः । "पत्ताण दुण्ह पडिसेहो" त्ति आर्षत्वाद् विभक्तिव्यत्यये 'द्वाभ्यां' क्षेत्र-कालाभ्यां प्राप्तानां वस्त्रादिग्रहणे प्रतिषेधो भवति, अप्राप्तानां तु सातिरेकस्योपधेर्ग्रहणं भवति इति निर्युक्तिगाथासमासार्थः ।। अथ विस्तरार्थ उच्यते-तत्रोद्देशः षोढा-नामोद्देशः स्थापनोद्देशः द्रव्योद्देशः क्षेत्रोद्देशः कालोद्देशो भावोद्देशश्चेति । नामोद्देशो यस्योद्देश इति नाम क्रियते । स्थापनोद्देश उद्देशवतः पुरुषादेः स्थापना । द्रव्योद्देशं ज्ञ-भव्यशरीरव्यतिरिक्तं स्वयमेव भाष्यकृदाह -

[भा.४२४३] दव्वेणं उद्देसो, उद्दिस्सति जो व जेन दव्वेणं ।
दव्वं वा उद्दिसते, दव्वब्भूओ तदट्ठी वा ।।

वृ- 'द्रव्येण' रजोहरणादिना यद् उद्देशः क्रियते स द्रव्योद्देशः । यो वा 'येन' सचित्तादिना द्रव्येणोद्दिश्यते, तत्र सचित्तेन यथा-गोभिर्गोमान्, तुरगैस्तुरगपति, गजैर्गजपतिरिति; अचित्तेन यथा-दण्डेन दण्डी, छत्रेण छत्री, कपालेन कपालीत्यादि; मिश्रेण यथा- शकटेन शाकटिकः, रथेन रथिक इत्यादि । द्रव्यं वा व्याधिप्रशमनं यदुद्दिशति, अमुकमौषधद्रव्यं भवता ग्रहीतव्यमिति। 'द्रव्यभूतो वा' ज्ञाता अनुपयुक्तो यद् अङ्ग-श्रुतस्कन्धादिकमुद्दिशति । 'द्रव्यार्थी वा' द्रव्यनिमित्तं धनुर्वेदादिकं यदुद्दिशति एष सर्वोऽपि द्रव्योद्देशः ।।

[भा.४२४४] खित्तम्मि जम्मि खित्ते, उद्दिस्सति जो व जेन खेत्तेन ।
एमेव य कालस्स वि, भावो उ पसत्थमपसत्थो ।।

वृ- क्षेत्रोद्देशे चिन्त्यमाने यस्मिन् क्षेत्रे अङ्ग-श्रुतस्कन्धादेरुद्देशः क्रियते व्याख्यायते वा; यो वा येन क्षेत्रेणोद्दिश्यते-अभिधीयते, यथा-भरते भवो भारतः, सुराष्ट्रायां भवः सौराष्ट्रः, मगधेषु भवो मागध इत्यादि । एवमेव च यस्मिन् काले अङ्गादिकमुद्दिश्यते, येन वा कालेनोद्दिश्यते, यथा- सुषमायां भवः सौषमः, शरदि जातः शारद इत्यादि; एष कालोद्देशः । भावोद्देशो द्विधा-

प्रशस्तोऽप्रशस्तश्च ।। उभयमपि दर्शयति-

[भा.४२४५] कोहाई अपसत्थो, नाणमादी य होइ उ पसत्थो ।
उदओ वि खलु पसत्थो, तित्थकरा-ऽऽहारउदयादी ।।

वृ- क्रोध-मानादिरौदयिको भावो अप्रशस्तो भावोद्देशः । ज्ञान-दर्शनादि क्षायोपशमिक औपशमिकः क्षायिको वा भावः प्रशस्तो भावोद्देशो भवति । 'उदयोऽपि' औदयिकभावोऽपि तीर्थकरा-ऽऽहारक-यशःकीर्त्यादिनामकर्मोदयरुपः प्रशस्तो भवति । आदिशब्दस्य गाथायां व्यत्ययेन निर्देशो बन्धानुलोम्यात् । अत्र क्षेत्रोद्देशेन कालोद्देशेन चाधिकारः, शेषास्तु विनेयव्युत्पादनार्थमुच्चरितार्थसदृशा इति कृत्वा प्ररुपिताः । तदत्र परेण यद् उद्गमौद्देशिकं प्रतिपादितं तद् नाधिकृतमिति स्थितम् ।। अथ "प्राप्तानाम्" इति पदं व्याख्याति-

[भा.४२४६] खित्तेण य कालेण य, पत्ता-ऽपत्ताण होंति चउभंगो ।
दोहि वि पत्तो ततिओ, पढमो बितिओ य एक्केणं ।।

वृ- क्षेत्रेण कालेन च प्राप्ता-ऽप्राप्तानां चतुर्भङ्गी भवति-क्षेत्रेण प्राप्ता न कालेन १ काले प्राप्ता न क्षेत्रेण २ कालेन च प्राप्ताः ३ नापि क्षेत्रेण नापि कालेन ४ । अत्र तृतीयो भङ्गो द्वाभ्यामपि क्षेत्र-कालाभ्यां प्राप्तः, चतुर्थ पुनरुभाभ्यामप्यप्राप्तः ।। अथामूनेव भङ्गान् भावयति-

[भा.४२४७] वासाखित्त पुरोखड, उडुबद्ध ठियाण खेत्तओ पत्तो ।
अद्धाणमादिएहिं, दुल्लभखित्ते य बीओ उ ।।

वृ- वर्षाक्षेत्रे 'पुरस्कृतं' प्रथमत ऋतुबद्धकाले स्थितानां 'क्षेत्रतः प्राप्ताः' इति प्रथमो भङ्गो भवति । इयमत्र भावना-ऋतुबद्धे चरमो मासकल्पो यत्र कृतः अन्यत्र वर्षावासप्रायोग्यं क्षेत्रं नास्ति ततस्तत्रैव वर्षावासं कर्तुकामा आषाढपूर्णिमामद्याप्यप्राप्नुवन्तः क्षेत्रतः प्राप्ता न कालत इत्याद्यो भङ्गो भवति । अध्वप्रतिपन्नतादिभि कारणैर्दुर्लभे वा वर्षावासप्रायोग्ये क्षेत्रेऽपान्तराल एव आषाढपूर्णिमा सञ्जाता एवं द्वितीयो भङ्गो भवति ।।

[भा.४२४८] आसाढपुन्निमाए, ठिया उ दोहिं पि होंति पत्ता उ ।
तत्थेव य पडिसिज्झइ, गहणं न उ सेसभंगेसु ।।

वृ- वर्षाक्षेत्रे आषाढपूर्णिमायां ये स्थितास्ते द्वाभ्यामपि क्षेत्र-कालाभ्यां प्राप्ता भवन्ति । आषाढपूर्णिमामप्राप्तानामन्तरा अध्वनि वर्त्तमानानां ऋतुबद्धे मासकल्पेन वा अन्यत्र क्षेत्रे स्थितानां चतुर्थो भङ्गो भवति । अत्र च 'तत्रैव' तृतीयभङ्ग एव वस्त्रादीनां ग्रहणं प्रतिषिध्यते, न 'शेषेषु' प्रथम-द्वितीय-चतुर्थभङ्गेषु, एकतरेण द्वाभ्यां वा अप्राप्तत्वात् ।। एतेन "दोण्ह पडिसेहो" त्ति व्याख्यातम् । अथ "अप्पत्ताण तु गहणं, उवहिस्सा साइरेगस्स" त्ति पश्चार्धं व्याचिख्यासुराह-

[भा.४२४९] दुण्ह जओ एगस्सा, निप्फज्जति जं व होति वासासु ।
अग्गहणम्मि वि लहुगा, तत्थ वि आणादिणो दोसा ।।

वृ- इह वर्षाकाले क्षेत्र-कालाभ्यामप्राप्तैरेव सातिरेक उपधिर्ग्रहीतव्यः । कियत्प्रमाणः ? इति चेद् उच्यते-द्वयोर्जनयोः सम्बन्धिना यावतोपकरणेनैकस्य साधोर्योग्यः परिपूर्ण प्रत्यवतारोऽतिरिक्तो निष्पद्यते, यच्च वर्षासु वर्षाकल्पादिकमुपयुज्यते तदात्मनो योग्यं द्विगुणं भवति, इयत्प्रमाणं ग्रहीतव्यम् । इदमुक्तं भवति-एकैकः साधुरर्धतृतीयान् प्रत्यवतारान् गृह्णाति । किं कारणम् ?

कदाचिदध्वनिर्गताः साधवो विविक्ता आगच्छेयुः ततो द्वौ साधू एकस्य साधोः सम्पूर्ण प्रत्यवतारं प्रयच्छतः, तयोश्चात्मनः प्रत्येकं द्विगुणाः प्रत्यवतारास्तिष्ठन्ति। यद्येवं न गृह्णन्ति ततश्चतुर्लघुकाः, तत्राप्याज्ञादयो दोषा भवन्ति ॥

वर्षास्वतिरिक्तोपकरणग्रहणे कारणमुपदर्शयितुं दृष्टान्तमाह-

[भा.४२५०] दव्वोवक्खर-णेहादियाण तह खार-कडुय-भंडाणं।
वासरत्त कुडुंबी, अतिरेगं संचयं कुणइ ॥

वृ- द्रव्यं-हिरण्यादि, उपस्करः-सूर्पादि, स्नेहः-घृतं तैलं वा, आदिशब्दादेरण्डादितैलपरिग्रहः, क्षारः-वस्तुलादिलवणं वा, कटुकं-शुण्ठी पिप्पल्यादि, भाण्डानि-घट-पिठरादीनि, अथवा कटुभाण्डं-वेसण-मरिच-हिङ्गुप्रभृतिद्रव्यजातम्। एतेषां द्रव्योपस्करादीनां कुटुम्ब्यपि वर्षारात्रेऽतिरिक्तं सञ्चयं करोति ॥ किं कारणम्? इति चेद् उच्यते-

[भा.४२५१] वणिया न संचरंती, हट्टा न वहंति कम्मपरिहानी।
गेलन्नाऽऽएसेसु व, किं काहिति अगहिते पुव्विं ॥

वृ- वर्षाकाले वणिजो ग्रामेषु क्रयविक्रयार्थं न सञ्चरन्ति, पत्तनेष्वपि वर्ष-वर्दलवसेन हट्टा न वहन्ति, अपि च यदि कुटुम्बी द्रव्योपस्करादीनामतिरिक्तं सञ्चयं न कुर्यात् तत उत्पन्ने प्रयोजने क्रयविक्रयार्थं तेन आपणवीथ्यां गन्तव्यम्, ततश्च हलकर्षणप्रभृतीनां कर्मसंयोगानां परिहानिर्भवति, ग्लानत्वे वा सञ्जाते 'आदेशेषु वा' प्राघूर्णकेष्वागतेष्वतिरिक्तसञ्चये पूर्वमगृहीते किं पथ्यभोजन-प्राघूर्णकभक्त्यादिकं करिष्यति? ॥

[भा.४२५२] तह अन्नतित्थगा वि य, जो जोरिसो तस्स संचयं कुणति।
इह पुन छण्ह विराधन, पढमम्मि य जे भणिय दोसा ॥

वृ- 'तथा' इति दृष्टान्तान्तरोपन्यासे। 'अन्यतीर्थिका अपि' सरजस्कादयः 'यो यादृशः' यस्य येनोपकरणेन प्रयोजनमित्यर्थः स तस्यातिरिक्तं सञ्चयं वर्षासु करोति, यथा-सरजस्का रक्षायाः, दकसौकरिका मृत्तिकायाः, बोटिकाश्छगण-लवणयोरित्यादि। 'इह' इति अस्मिन् पुनर्जैनशासने यद्यतिरिक्तमुपकरणं न गृह्णन्ति ततः षण्णां जीवनिकायानां विराधना भवति। अथातिरि-क्तोपकरणाभावाद् वर्षासूपधिं गृह्णन्ति ततो ये प्रथमे समवसरणे उपकरणं गृह्णतो दोषा भणितास्तान् प्राप्नुवन्ति ॥ कथं पुनः षण्णां कायानां विराधना भवति? इति उच्यते-

[भा.४२५३] रयहरणेनोल्लेणं, पमज्जणे फरुससाल पुढवीए।
गामंतरिंत गलने, पुढवी उदगं च दुविहं तु ॥

वृ- "फरुससाल" त्ति कुम्भकारशाला तस्यां वर्षासु स्थितानां द्वितीयरजोहरणाभावे यद् वर्षेणार्द्रीभूतं रजोहरणं तेनैव प्रमार्जने पृथिवीकायस्य विराधना। ग्रामान्तरं वा भिक्षाचर्यादिकार्येण "इंत" त्ति गच्छत आगच्छतो वा अन्तरा गाढतरं वर्षितुमारब्धे मलिनरजोहरणे परिगलति पृथिवीं 'द्विविधं च' भौमा-ऽऽन्तरिक्षभेदाद् द्विप्रकारमुदकं विराधयति ॥

[भा.४२५४] अहवा अंबीभूए, उदगं पणओ य तावणे अगनी।
उल्लंडगबंध तसा, ठाणाइसु केण व पमज्जे ॥

वृ- अथवा द्वितीयरजोहरणाभावे यदाऽऽर्द्रं रजोहरणं शोषयति ततोऽवग्रहात् स्फिटति।

अथ न शोष्यते ततोऽम्लीभवति । एवमम्लीभूते तस्मिन्नुदकं विराध्यते, पनकश्च सम्मूर्च्छति। अथैतद्दोषपरिहारार्थमग्नौ तापयति ततोऽग्निविराधना। अथार्द्रेण प्रमार्जयति ततो दशिकान्तेषु उल्लण्डका:-मृत्प्रोलकाः प्रतिबध्यन्ते। तेषु प्रतिबद्धेषु यदि प्रमार्जनं करोति ततस्त्रसविराधना, अथ न प्रमार्जयति ततः संयमविराधना। स्थान-निषदनादिषु वा केन प्रमार्जयतु ? ॥

[भा.४२५५] एमेव सेसगम्मिं, संजमदोसा उ भिक्खणिज्जोए।
चोल-निसिज्जा उल्ले, अजीर गेलन्नमायाए ॥

वृ- एवमेव वर्षाकल्पादावपि शेषोपकरणे 'भिक्षानिर्योगे च' पटलक-पात्रबन्धरूपे द्विगुणेऽगृहीते 'संयमदोषाः' षट्कायविराधनालक्षणा रजोहरणवद् वक्तव्याः। चोलपट्टे रजोहरणनिषद्यायां च द्विगुणायामगृह्यमाणायां बहिर्गतानां वर्षेणार्द्रीभावे सञ्जाते नित्यपरिभोगेन भक्तं न जीर्यति, अजीर्यमाणे च भक्ते ग्लानत्व भवति, ततश्च 'आत्मविराधना' परिताप-महादुःखादिका ॥

किञ्च-

[भा.४२५६] अद्धाणनिग्गतादि, परिता वा अहव नट्ठ गहणम्मि।
जं च समोसरणम्मिं, अगेण्हणे जं च परिभोगो ॥

वृ- छिन्नादच्छिन्नाद्वा अध्वनो निर्गताः आदिशब्दादशिवादिकारणविनिर्गता वा ये 'परीताः' परिमितोपकरणाः अथवा "नट्ठ" त्ति नष्टोपकरणा हारितोपधय इत्यर्थः "गहणम्मि" त्ति प्रत्यनीकेन वा उपधेर्ग्रहणे कृते विविक्ता आगच्छेयुः। एतेषामागतानामतिरिक्तोपकरणाभावाद् यद्युपग्रहं न करोति तत उपधिनिष्पन्नं प्रायश्चित्तम्। अथ तदर्थं नूतनमुपधिं गृह्णन्ति ततोऽप्युपधिनिष्पन्नम्, यच्च प्रथमे समवसरणे उपकरणग्रहणे दोपजालं तत् प्राप्नुवन्ति। अथ गृह्णन्ति तत उपकरणं विना यत् तृणादिपरिभोगे दूषणकदम्बकं तद् आसादयन्ति ॥

अमुमेवार्थं व्याख्याग्रन्थेन स्पष्टयति-

[भा.४२५७] अद्धाणनिग्गयादीनमदेंते होति उवधिनिष्फन्नं।
जं ते अनेसणऽग्गिं, सेवे देंतऽप्पणा जं च ॥

वृ- अध्वनिर्गतादीनामतिरिक्ताभावे उपकरणं यदि न प्रयच्छन्ति तत उपधिनिष्पन्नं भवति, प्रायश्चित्तमिति शेषः। तच्च जघन्ये पञ्चकम्, मध्यमे मासलघुकम्, उत्कृष्टे चतुर्लघवः। 'ते च' अध्वादिनिर्गता अनेषणीयोपकरणमग्निं वा यद् आसेवन्ते तन्निष्पन्नमप्रयच्छतां प्रायश्चित्तम्। अथात्मीयमुपकरणं तेषां प्रयच्छन्ति तत आत्मनः परिहाणि, यच्चात्मना तृणादिसेवनं कुर्वन्ति तन्निष्पन्नम् ॥

के पुनः प्रथमसमवसरणे वस्त्रग्रहणे दोषाः ? इत्याह-

[भा.४२५८] अत्तट्ठ परट्ठा वा, ओसरणे गेण्हमाणे पन्नरस।
दाउ परिभोग छप्पति, डउरं उल्ले य गेलन्नं ॥

वृ- अथात्मनो वा परेषां वा-अध्वनिर्गतादीनामर्थाय प्रथमसमवसरणे उपधिं गृह्णन्ति तत आधाकर्मादयः पञ्चदशोद्गमदोषा भवन्ति। आत्मोपधिमध्वनिर्गतादीनां दत्त्वा तमेवैकं प्रत्यवतारं नित्यं परिभुञ्जानस्य षट्पदिकाः सम्मूर्च्छन्ति। तासु चान्न-पानमध्ये पतितासु भक्षितासु च "डउरं" ति जलोदरं भवति। एकप्रत्यवतारेण चार्द्रेण रात्रौ प्रावृतेन सुप्तस्य भक्तं न जीर्यति, अजीर्यति च

ग्लानत्वमुपजायते ॥

[भा.४२५९] तम्हा उ गेण्हियव्वं, बितियपदम्मि जहा न गेण्हेज्जा।
अद्धाणे गेलन्ने, अहवा वि भवेज्ज असतीए ॥

वृ- यत एवं तस्मात् कारणादात्मनो द्विगुणप्रत्यवतारादतिरिक्तं ग्रहीतव्यम्। द्वितीयपदे यथा न गृह्णीयुस्तथाऽभिधीयते-अध्वनि वहमानानां ग्लानत्वे वा द्विविधायामसत्तायां वा वर्त्तमानानामग्रहणं भवेत्।

इदमेव व्याख्याति-

[भा.४२६०] कालेनेवदिएणं, पाविस्सामंतरेण वाघातो।
गेलन्ने वाऽऽत-परे, दुविधा पुन होति असती उ ॥

वृ- ग्रीष्मस्य चरमे मासि केचिदध्वानं प्रतिपन्नाश्चिन्तितवन्तश्च-यावदाषाढपूर्णिमा नोपैति तावदेतावता कालेन वर्षाक्षेत्रं प्राप्स्यामः, अन्तरा च नद्यादिव्याघातो भवेद् अत आषाढपूर्णिमाकाले अतिक्रान्ते प्राप्ताः ततो द्विगुणोऽतिरिक्तो वा उपधिर्न गृहीतः।

अथवा आत्मनो ग्लानत्वेन परस्य वा-ग्लानस्य व्यावृततया नातिरिक्तो गृहीतः। असत्ता पुनर्द्विविधा भवति-सदसत्ता असदसत्ता च। सदसत्तायामनेषणीयं लभ्यते, अथवा बहवः साधवो वस्त्रग्रहणस्याकल्पिका एकः कल्पिकः अतः सर्वेषां योग्योऽतिरिक्तोपधिगृहीतेऽपि शुद्धः ॥

[भा.४२६१] गहिए व अगहिए वा, अप्पत्ताणं तु होति अतिगमनं।
उवही-संथारग-पादपुंछणादीण गहणट्ठा ॥

वृ- एवं गृहीतेऽगृहीते वा वर्षावासप्रायोग्ये उपधौ कालतोऽप्राप्तोनामाषाढपूर्णिमाया अर्वाक् पञ्चभिर्दिवसैर्वर्षाक्षेत्रे 'अतिगमनं' प्रवेशो भवति। किमर्थम्? इत्याह-उपधिः-वर्षाकल्पादिकः संस्तारकः-काष्ठमयः कम्बिकामयो वा पादप्रोञ्छनं-रजोहरणम् आदिशब्दात् तृण-डगलादिपरिग्रहः, एतेषां ग्रहणार्थमप्राप्ते काले प्रवेष्टव्यम् ॥

इदमेव व्यक्तिकरोति-

[भा.४२६२] कालेण अपत्ताणं, पत्ता-ऽपत्ताण खेत्तओ गहणं।
वासाजोगोवधिणो, खेत्तम्मि तु डगलमादीनि ॥

वृ- कालतो नियमादप्राप्तानां क्षेत्रतः प्राप्तानामप्राप्तानां वा वर्षावासयोग्यपटलक-पात्रबन्धादेरुपधेर्ग्रहणं भवति, एतेन प्रथम-चरमभङ्गौ सूचितौ। कालतः प्राप्तैरप्राप्तैर्वा क्षेत्रतो नियमात् प्राप्तैर्डगलादीनि ग्रहीतव्यानि, अनेन तु द्वितीय-तृतीयभङ्गौ गृहीताविति ॥

तान्येव डगलादीनि दर्शयति-

[भा.४२६३] डगल-ससरक्ख-कुडमुह-मत्तगतिग-लेव-पादलेहनिया।
संथार-पीढ-फलगा, निज्जोगो चेव दुगुणो तु ॥

वृ- इष्टका-चीरादिमयानि डगलानि पुतप्रोञ्छनार्थं गृह्यन्ते। सरजस्कः-क्षारः, स संज्ञा-खेलादिनिसर्जनार्थम्। कुटमुखं-घटकण्ठकः, तत्र ग्लानयोग्यमौषधं कायिकीमात्रकं वा स्थाप्यते। मात्रकत्रिकं-खेलमात्रकं कायिकीमात्रकं संज्ञामात्रकं चेति। लेपः-प्रतीतः, स विनष्टभाजन-संस्थापनार्थम्। पादलेखनिका वर्षासु कर्दमानर्लेखनार्थम्। संस्तारकः परिशाटी अपरिशाटी

चेति द्विविधः,उभयोऽपि शयनार्थं जीवादिरक्षणार्थं च गृह्यते। पीठं-छगणादिमयम्, उपवेशनार्थम्। फलकः-चम्पकपट्टादिमयः, शयनोपयोगी। पात्रसत्कश्च 'निर्योगः' प्रत्यवतारो द्विगुणः। एतानि सर्वाण्यपि तदानीं गृह्यन्ते।

अथ शिष्यः प्रश्नयति-

[भा.४२६४] चत्तारि समोसरणे, मासा किं कप्पती न कप्पति वा।
कारणिग पंच रत्ता, सव्वेसिं मल्लगादीणं॥

वृ- आषाढपूर्णिमानन्तरं ये चत्वारः प्रथमसमवसरणे मासास्तेषु ग्रहीतुं कल्पते वा न वा ?। सूरिराह-उत्सर्गतो न कल्पते, द्वितीयपदे क्षेत्रस्याप्राप्तौ अध्वनिर्गता वा आषाढपूर्णिमायां प्राप्तास्ततः संस्ताराद्युपधिं डगलादीनी च पञ्च रात्रिन्दिवानि गृह्णन्ति, पर्युषणाकल्पं च रजन्यामाकर्षन्ति, ततः पञ्चम्यां पर्युषणं कुर्वन्ति। अथ पूर्वोक्तकारणात् पञ्चम्यामेव ते प्राप्ताः ततः पञ्चरात्रं तथैव संस्तारक-डगलादीनि गृह्णन्ति, दशम्यां पर्युषणयन्ति। विशेषचूर्णिकृत् पुनराह-ते खेत्ताणं अलंभे आसाढपुन्निमाए चेव ठिया, तेहि य उवही न गहिओ संथारगाई ताहे जाव पंचरत्तं ताव गेण्हंति, पच्छा पंच दिवसे पज्जोसवणाकप्पं कड्ढंति, दसमीए पज्जोसवेंति, एवं कारणेणं कप्पइ पंचरत्तं, अह पंचमीए पत्ता ताहे तहेव पंच रत्तगा वड्ढंति (जाव भद्दवयसुद्धपंचमी) त्ति।

एवं सर्वेषां मल्लकादीनामुपकरणानामर्थाय कारणिकानि पञ्च रात्रिन्दिवानि प्रवर्धमानानि तावद् मन्तव्यानि यावद् भाद्रपदशुद्धपञ्चम्यां गृहीतेऽगृहीते वा डगल-मल्लकादौ नियमात् पर्युषणं विधेयम्॥

[भा.४२६५] तेसिं तत्थ ठिताणं, पडिलेहुच्छुद्ध चारणादिसु।
लेवाईण अगहणे, लहुगा पुव्विं अगहिते वा॥

वृ- 'तेषां' साधूनां 'तत्र' वर्षाक्षेत्रे स्थितानामियं सामाचारी-सभा-प्रपा-ऽऽराम-देवकुल-शून्य-गृहादिषु यद् वस्त्रम् 'उत्सुद्धं' पथिकादिभिः परित्यक्तं तत् प्रत्युपेक्षन्ते, यदा किल कार्यमुत्पत्स्यते तदा ग्रहीष्यते। तदभावे चारणादिषु प्रत्युपेक्षन्ते। वर्षासु यदि लेपम् आदिशब्दात् पात्रं वा वस्त्रं वा गृह्णन्ति ततश्चतुर्लघुकाः। पूर्वं वा लेपादीनि यदि न गृहीतानि तदाऽपि चतुर्लघु॥

इदमेव व्याख्याति-

[भा.४२६६] वासाण एस कप्पो, ठायंता चेव जाव उ सकोसं।
परिभुत्त विप्पइन्नं, वाघातट्ठा निरिक्खंति॥

वृ-''वासाण'' त्ति विभक्तिव्यत्ययाद् वर्षासु तिष्ठतामेषः 'कल्पः' सामाचारी-सर्वतः सक्रोशं योजनं यावद् यत् कार्पटिकैः परिभुक्तं 'विप्रकीर्णं' पूर्वं परिभुज्य ततोऽकिञ्चित्करमिति मत्वा परिष्ठापितं तत् तिष्ठन्त एव व्याघातार्थं निरीक्षन्ते॥ कः पुनर्व्याघातः ?

इति चेद् उच्यते-

[भा.४२६७] अद्धाणनिग्गतादि, झामिय वूढे व सेह परिजुन्ने।
आगंतु बाहि पुव्विं, दिट्ठं अस्सन्नि-सन्नीसु॥

वृ-अध्वनिर्गतादयः साधव आगच्छेयुः, आत्मीयो वा उपधिः 'ध्यामितः' दग्धो भवेत्, उदकेन वा व्यूढः, ''शैक्षो वा'' अवश्यप्रव्राजनीयः पुराणादिरुपस्थितः, परिजीर्णो वा उपधिः, एतैः कारणै-

रागन्तुकेषु तालाचरादिषु पूर्वं मार्गयन्ति । ततः क्षेत्रबहिरसंज्ञिषु पूर्वदृष्टम्, ततः संज्ञिषु पूर्वदृष्टं गृह्णन्ति ॥

अथेदमेव विभावयिषुरागन्तुकान् व्याख्याति-

[भा.४२६८] तालायरे य धारे, वाणिय खंधार सेण संवट्टे ।
लाउलिग-वइग-सेवग-जामाउग-पंथिगादीसुं ॥

वृ- 'तालाचराः' नट-नर्तक-चट्टादयः, "धारे" त्ति देवच्छत्रधारकाः, 'वणिजः' वालिञ्जुकाः, राजबिम्बसहितं स्वचक्रं परचक्रं वा स्कन्धावार उच्यते, राजबिम्बविरहिता सेना, चौरधाटीभयेन बहवो ग्रामा नायकाधिष्ठिता एकत्र स्थिताः संवर्त्तः, लाकुटिकाः-डङ्गराः, व्रजिकाः-गोकुलिकाः, सेवकाः-चारभट्टकाः, जामातृकाः प्रसिद्धाः, पथिकाः-ये बहुवस्त्र देशं प्रति प्रस्थिताः । एवमादिषु पूर्वं मार्गयन्ति ॥

कथम्? इत्याह-

[भा.४२६९] आगंतुगेसु पुव्वं, गवेसती चारणादिसू बाहिं ।
पच्छा जे सग्गामं, तालायरमादिणो एंति ॥

वृ- "बाहिं" ति सक्रोशयोजनान्तर्वर्त्तिष्वन्तरपल्लिकासहितेषु बाह्यग्रामेषु ये 'आगन्तुकाः' चारणादयस्तेषु पूर्वं गवेषयन्ति। 'पश्चाद्' बाह्यग्रामेषु चारणादीनामभावे ये तालाचरादयः स्वग्राममायान्ति तेषु गवेषयितव्यम् ॥

कथमेतेषु वस्त्रसम्भवः? इत्याह-

[भा.४२७०] लद्धूण नवे इतरे, समणाणं देज्ज सेव-जामादी ।
चारण-धार-वणीणं, पडंति इयरे उ सड्ढितगा ॥

वृ- सेवक-जामातृका नवानि वस्त्राणि लब्ध्वा 'इतराणि' पुराणानि श्रमणानां दद्युः । चारणानां "धार" त्ति देवच्छत्रधाराणां राजादयः प्रसादतो वस्त्राणि प्रयच्छन्ति तानि पुराणानि वा ते साधुनां दद्यु। "वणीणं" ति वालिञ्जुकवणिजां वलञ्जे वस्त्राणि पतन्ति। 'इतरे तु' पथिकादयः 'श्राद्धाः' श्रावका भवेयुः ॥

बहिर्ग्राम-स्वग्रामेषु चारणादीनामभावे विधिमाह-

[भा.४२७१] बहिं-अंत-ऽसन्निसु, जं दिट्ठं तेसु चेव जमदिट्ठं ।
केयि दुहओ वऽसन्निसु, गहिते सन्नीसु दिट्ठितरे ॥

वृ- "बहिः" त्ति क्षेत्राभ्यन्तरे प्रतिवृषभग्रामेषु येऽसंज्ञिनस्तेषु पूर्वदृष्टं वस्त्रं मार्गयन्ति, तदभावे बहिर्ग्रामेष्वेव संज्ञिषु पूर्वदृष्टम्, तदप्राप्तौ बाह्यग्रामेष्वेवासंज्ञिषु पूर्वदृष्टम्, तदसत्त्वे मूलग्राम एव संज्ञिषु पूर्वदृष्टम्; तदभावे अन्तः-मूलग्रामेऽसंज्ञिषु पूर्वदृष्टम्, तदसत्त्वे मूलग्राम एव संज्ञिषु पूर्वदृष्टम्, तदसम्भवे मूलग्राम एवासंज्ञिषु यत् पूर्वमदृष्टम्, तदभावे मूलग्राम एव संज्ञिषु पूर्वमदृष्टं वस्त्रं मार्गयन्ति । केचिदाचार्या इत्थं ब्रुवते-'द्वयोरपि' बहिरन्तर्लक्षणयोः स्थानयोः प्रथमसंज्ञिषु गृहीते सि ततो बहिरन्तर्वर्त्तिष्वेव संज्ञिषु यथाक्रमं दृष्टम् इतरच्च-अदृष्टं गृह्णन्तीति । किं पुनः कारणं पूर्वदृष्टं प्रथमं गृह्यते? उच्यते-तत्र हि पूर्वप्रत्युपेक्षितत्वेनाधाकर्मादय उत्क्षेप-निक्षेपादयश्च दोषाः परिहृता भवन्ति ॥

[भा.४२७२] कोई तत्थ भणेज्जा, बाहिं खेत्तस्स कप्पती गहणं।
गंतुं ता पडिसिद्धं, कारण गमने बहुगुणं तु ॥

वृ- कश्चिद् नोदकः 'तत्र' इति अनन्तरोक्तव्याख्याने इदं भणेत्-यदि पूर्वं प्रतिवृषभग्रामेषु ग्रहीतव्यं ततो मूलग्रामे, एवं तर्हि दूरत्वात् क्षेत्राद् बहिर्ग्रहणं सुतरां कल्पते। गुरुराह- क्षेत्राद् बहिर्वर्षासु गन्तुमपि तावत् प्रतिषिद्धं किं पुनर्वस्त्रग्रहणम्? । अथ कारणे वर्षासु क्षेत्रबहिर्गमनं करोति तत्र गतश्च वर्षाकल्पादिना निमन्त्र्यते तदा संयमस्य बहुगुणमिति कृत्वा तदपि ग्रहीतव्यम्॥

इदमेव व्याचिख्यासुः प्रथमतः परवचनं व्याख्याति-

[भा.४२७३] एवं नामं कप्पति, जं दूरे तेन बाहि गिण्हंतु।
एवं भणंति गुरुगा, गमने गुरुगा व लहुगा वा ॥

वृ- यद् 'दूरे' ग्रामाद् बहिर्वस्त्र तद् यदि प्रथमं कल्पते तत एवं नाम क्षेत्राद् बहि सुतरां प्रथमतरं गृह्णन्तु। सूरिराह-एवं भणतो भवतश्चतुर्गुरुकाः। अथ क्षेत्राद् बहिर्गच्छति ततो गुरुका वा लघुका वा प्रायश्चित्तम्। तत्र नवप्रावृषि चत्वारो गुरवः, शेषे वर्षाकाले चत्वारो लघवः॥

"कारण गमने बहुगुण" मिति पदं व्याचष्टे-

[भा.४२७४] संबद्ध-भाविएसु, कप्पति जा पंच जोयणे कज्जे।
जुन्ने व वासकप्पं, गेण्हति जं बहुगुणं चऽन्नं ॥

वृ- यानि साधर्मिकसम्बन्धेन सम्बद्धानि परस्परं गमना-ऽऽगमनभावितानि च क्षेत्राणि तेषु वर्षासु कल्पते साधर्मिकाणामुदन्तवहनार्थं चत्वारि पञ्च योजनानि वा यावद् गन्तुं वस्तुं वा। एवं कार्ये गतस्य तस्यापान्तराले वर्षात्राणेन कश्चिद् निमन्त्रणां कुर्यात्, तस्य च प्राक्तनो वर्षाकल्पः परिजीर्णः, तच्च वर्षात्राणं घन-मसृणमभिनवं च, ततो वर्षासु बहुगुणमिति कृत्वा गृह्णाति। कारणतः 'अन्यदपि' पटलकादिकं घन-मसृणादिगुणोपेतमाचार्यप्रायोग्यं वा यद् वस्त्र लभ्यते तदपि 'भूयान् गुणोऽत्र गृहीते भविष्यति' इति कृत्वा गृह्यते। एवं कारणे गमनं ग्रहणं चोभयमपि दृष्टम्, कारणाभावे तु न कल्पते गन्तुं ग्रहीतुं वा॥

अथ गृह्णाति ततोऽमून् षोडश दोषान् प्राप्नोति-

[भा.४२७५] आहाकम्मुद्देसिय, पूतीकम्मे य मीसजाए य।
ठवणा पाहुडियाए, पादोकर कीत पामिच्चे ॥

[भा.४२७६] परियट्टिए अभिहडे, उब्भिन्ने मालोहडे इ य।
अच्छिज्जे अणिसिट्ठे, धोते रत्ते य घट्ठे य ॥

वृ- आधाकर्म १ औद्देशिकं २ पूतिकर्म ३ मिश्रजातं ४ स्थापना ५ प्राभृतिका ६ प्रादुष्करणं ७ क्रीतं ८ प्रामित्यं ९ परिवर्त्तितम् १० अभ्याहृतम् ११ उद्भिन्नं १२ मालापहृतम् १३ आच्छेद्यम् १४ अनिसृष्टं चेति १५ पञ्चदश दोषाः। "धोए रत्ते य घट्ठे य" त्ति साधूनामर्थाय मलिनवस्त्र 'धौतं' चौक्षं कृतमित्यर्थः, एवं 'रक्तं' प्रदत्तरागम्, 'घृष्टं' मसृणपाषाणादिनोत्तेजितम्, एते त्रयोऽप्येक एव दोष इति॥

[भा.४२७७] एते सव्वे दोसा, पढमोसरणे न वज्जिता होंति।
जिनदिट्ठेहि अगहिते, जो गेण्हति तेहि सो पुट्ठो ॥

वृ- एते सर्वेऽप्याधाकर्मादयो दोषाः प्रथमे समवसरणे वस्त्रादिकं गृह्णता न वर्जिता भवन्ति। अथ पूर्वं दर्पतो न ग्रहीतमुपकरणं ततः प्रथमे समवसरणे यो गृह्णाति सोऽपि जिनैः-तीर्थकरैर्ये दृष्टाः कर्मबन्धदोषास्तैः स्पृष्टो मन्तव्यः, भावतस्तेन दोषाणामङ्गीकृतत्वात् ॥

[भा.४२७८] पढमम्मि समोसरणे, जावतियं पत्त-चीवरं गहियं।
सव्वं वोसिरियव्वं, पायच्छित्तं च वोढव्वं ॥

वृ- प्रथमे समवसरणे दर्पतो यावत् पात्र-चीवरं गृहीतं तावत् सर्वमपि व्युत्स्रष्टव्यम्, प्रायश्चित्तं च गुरुप्रदत्तं यथोक्तं वोढव्यम्। अथवा कार्ये समुत्पन्ने यत् पात्रं वा चीवरं वा-चारणादिषु गृहीतं तत् सर्वं कृते कार्ये परिष्ठापनीयम्, अपरिणामकप्रत्ययनिमित्तं च यथालघीयः प्रायश्चित्तं वोढव्यम्॥

[भा.४२७९] सज्झायट्ठा दप्पेण वा वि जाणंतए वि पच्छित्तं।
कारण गहियं तु विदू, धरेंतऽगीएसु उज्झंति ॥

वृ- स्वाध्यायार्थं दर्पेण वा यदि "बहि-अंत-ऽसन्नि-सन्निसु, जं दिट्ठं तेसु चेव जमदिट्ठं।" इत्यादिकं क्रममुल्लङ्घ्य गृहीतं तत्र 'जानतोऽपि' गीतार्थस्यापि प्रायश्चित्तम्। यत्तु कारणे क्रमेण विधिना गृहीतं तद् यदि सर्वेऽपि 'विदः' गीतार्थास्तदा धारयन्ति। अथागीतार्थमिश्रास्ततोऽन्यस्मिन्नुपकरणे लब्धे तद् उज्झन्ति ॥

अथ यस्मिन् काले वर्षावासे स्यातव्यं यावन्तं वा कालं येन वा विधिना तदेतदुपदर्शयति-

[भा.४२८०] आसाढपुन्निमाए, वासावासासु होति अतिगमनं।
मग्गसिरबहुलदसमी, उ जाव एक्कम्मि खेत्तम्मि ॥

वृ- आषाढपूर्णिमायां वर्षावासप्रायोग्ये क्षेत्रे 'अतिगमनं' प्रवेशः कर्त्तव्यो भवति। तत्र चापवादतो मार्गशीर्षबहुलदशमीं यावदेकत्र क्षेत्रे वस्तव्यम्। एतच्च चिक्खल्ल-वर्षादिकं वक्ष्यमाणं कारणमङ्गीकृत्योक्तम्। उत्सर्गतस्तु कार्त्तिकपूर्णिमायां निर्गन्तव्यम् ॥

इदमेव भावयति-

[भा.४२८१] बाहि ठिया वसभेहिं, खेत्तं गाहेत्तु वासपाउग्गं।
कप्पं कथेत्तु ठवणा, सावणबहुलस्स पंचाहे ॥

वृ- यत्राषाढमासकल्पः कृतस्तत्र अन्यत्र वा प्रत्यासन्नग्रामे स्थिता वर्षाक्षेत्रं वृषभैः साधुसामाचारी ग्राहयन्ति। ते च वृषभा वर्षाप्रायोग्यं संस्तारक-तृण-डगल-क्षार-मल्लकादिकमुपधिं गृह्णन्ति। तत आषाढपूर्णिमायां प्रविष्टाः प्रतिपद आरभ्य पञ्चभिरहोभि पर्युषणाकल्पं कथयित्वा श्रावणबहुलपञ्चम्यां वर्षाकालसामाचार्या स्थापनां कुर्वन्ति, पर्युषणयन्तीत्यर्थः ॥

[भा.४२८२] एत्थ य अनभिग्गहियं, वीसतिरायं सवीसगं मासं।
तेन परमभिग्गहियं, गिहिणातं कत्तिओ जाव ॥

वृ- 'अत्र' इति श्रावणबहुलपञ्चम्यादावात्मना पर्युषितेऽपि 'अनभिगृहीतम्' अनवधारितं गृहस्थानां पुरतः कर्त्तव्यम्। किमुक्तं भवति?-यदि गृहस्थाः पृच्छेयुः-आरयाः! यूयमत्र स्थिता वा? न वा? इति; एवं पृष्टे सति 'स्थिता वयमत्र' इति सावधारणं न वक्तव्यम्, किन्तु साकारम्, यथा-नाद्यापि कोऽपि निश्चयः स्थिता अस्थिता वेति। इत्थमनभिगृहीतं कियन्तं कालं वक्तव्यम्?

उच्यते-यद्यभिवर्धितोऽसौ संवत्सरस्ततो विंशतिरात्रिन्दिवानि, अथ चान्द्रोऽसौ ततः सविंशतिरात्रं मासं यावदनभिगृहीतं कर्त्तव्यम् ।

"तेनं"ति विभक्तिव्यत्ययात् 'ततः परं' विंशतिरात्रात् सविंशतिरात्रमासाद्य ऊर्ध्वम् 'अभिगृहीतं' निश्चितं कर्त्तव्यम् 'गृहिज्ञातं च' गृहस्थानां पृच्छतां ज्ञापना कर्त्तव्या, यता-वयमत्र वर्षाकालं स्थिताः । एतच्च गृहिज्ञातं कार्तिकमासं यावद् कर्तव्यम् ॥

किं पुनः कारणम् इयति काले व्यतीत एव गृहिज्ञातं क्रियते ? नार्वाग् ? इति अत्रोच्यते-

[भा.४२८३] असिवाइकारणेहिं, अहवण वासं न सुट्ठु आरद्धं ।

अभिवड्ढियम्मि वीसा, इयरेसु सवीसती मासे ॥

वृ- कादाचित् तत्र क्षेत्रेऽशिवं भवेत्, आदिशब्दाद् राजद्विष्टादिकं वा भयमुपजायेत, एवमादिभिः कारणैः; अथवा तत्र क्षेत्रे ना सुष्ठु वर्षं वर्षितुमारब्धं येन धान्यनिष्पत्तिरुपजायते, ततश्च प्रथममेव 'स्थिता वयम्' इत्युक्ते पश्चादशिवादिकारणे समुपस्थते यदि गच्छन्ति ततो लोको ब्रूयात्-अहो ! एते आत्मानं सर्वज्ञपुत्रतया ख्यापयन्ति परं न किमपिनते, मृषावादं वा भाषन्ते, 'स्थिताः स्मः' इति भणित्वा सम्प्रति गच्छन्ति इति कृत्वा ।

अथाशिवादिकारणेषु सञ्जातेष्वपि तिष्ठन्ति तत आज्ञादयो दोषाः । अपि च 'स्थिताः स्मः' इत्युक्ते गृहस्थाश्चिन्तयेयुः-अवश्यंवर्षं भविष्यति येनैते वर्षारात्रमत्र स्थिताः; ततो धान्यं विक्रीणीयुः गृहं वा छादयेयुः हलादीनि वा सस्थापयेयुः ।

यत एवमतोऽभिवर्धितवर्षे विंशतिरात्रे गते 'इतरेषु च' त्रिषु चन्द्रसंवत्सरेषु सविंशतिरात्रे मासे गते गृहिज्ञातं कुर्वन्ति ॥

[भा.४२८४] एत्थ उ पनगं पनगं, कारणियं जा सवीसती मासो ।

सुद्धदसमीठियाण य, आसाढीपुन्निमोसरणं ॥

वृ- 'अत्र' इति आषाढपूर्णिमायां स्थिताः पञ्चाहं यावद् दिवा संस्तारक-डगलादि गृह्णन्ति, रात्रौ च पर्युषणाकल्पं कथयन्ति, ततः श्रावणबहुलपञ्चम्यां पर्युषणं कुर्वन्ति । अथाषाढपूर्णिमायां क्षेत्रं न प्राप्तास्तत एवमेव पञ्चरात्रं वर्षावासप्रायोग्यमुपधिं गृहीत्वा पर्युषणाकल्पं च कथयित्वा दशम्यां पर्युषणयन्ति । एवं कारणिकं रात्रिन्दिवानां पञ्चकं पञ्चकं च वर्धयता तावद् नेयं यावत् सविंशतिरात्रो मासः पूर्णः ।

अथवा ते आषाढशुद्धदशम्यामेव वर्षाक्षेत्रे स्थितास्ततस्तेषां पञ्चरात्रेण डगलादौ गृहीते पर्युषणाकल्पे च कथिते आषाढपूर्णिमायां 'समवसरणं' पर्युषणं भवति, एष उत्सर्गः । शेषं कालं पर्युषणमनुतिष्ठतां सर्वोऽप्यपवादः । अपवादेऽपि सविंशतिरात्राद् मासात् परतो नातिक्रमयितुं कल्पते । यद्येतावत्यपि गते वर्षाक्षेत्रं न लभ्यते ततो वृक्षमूलेऽपि पर्युषणयि-तव्यम् ॥

अथ पञ्चकपरिहाणिमधिकृत्य ज्येष्ठकल्पावग्रहप्रमाणमाह-

[भा.४२८५] इय सत्तरी जहन्ना, असिती नउई दसुत्तर सयं च ।

जति वासति मग्गसिरे, दस राया तिन्नि उक्कोसा ॥

वृ- 'इति' उपप्रदर्शने । ये किल आषाढपूर्णिमायाः सविंशतिरात्रे मासे गते पर्युषणयन्ति तेषां सप्ततिदिवसानि जघन्यो वर्षावासावग्रहो भवति भाद्रपदशुद्धपञ्चम्या अनन्तरं कार्तिकपूर्णिमायां

प्रसतिदिनसद्भावात्। एवं ये भाद्रपदबहुलदशम्यां पर्युषणयन्ति तेषामशीतिर्दिवसा मध्यमो वर्षाकालावग्रहः, श्रावणपूर्णिमायां नवतिर्दिवसाः, श्रावणशुद्धपञ्चम्यां दिवसशतम्, श्रावण-बहुलदशम्यां दशोत्तरं दिवसशतं मध्यम एव वर्षाकालावग्रहो भवति। शेषान्तरेषु दिवसपरिमाणं गाथायामनुक्तमपि इत्थं वक्तव्यम्-भाद्रपदामावास्यां पर्युषणे क्रियमाणे पञ्चसप्ततिर्दिवसाः, भाद्रपदबहुलपञ्चम्यां पञ्चदशोत्तरं शतम्, आषाढपूर्णिमायां तु पर्युषिते विंशत्युत्तरं दिवसशतं भवति। एवमेतेषां प्रकाराणामन्यतरेण वर्षावासमेकक्षेत्रे स्थित्वा कार्त्तिकचातुर्मासिकप्रतिपदि निर्गन्तव्यम्। अथ मार्गशीर्षे गाढं वर्षं वर्षति कर्दमजलाकुलाश्च पन्थानः ततोऽपवादेनैकं दशरात्रमवतिष्ठन्ते, अथ तथापि वर्षं नोपरमते ततो द्वितीयं दशरात्रं तत्रासते, अथैवमपि वर्षं न तिष्ठति ततस्तृतीयमपि दशरात्रमासते, एवं त्रीणि दशरात्राण्युत्कर्षतस्तत्र क्षेत्रे आसितव्यम्, मार्गशिरःपौर्णमासीं यावदित्यर्थः। तत ऊर्ध्वं यद्यपि कर्दमाकुलाः पन्थानः, वर्षं चागाढमनुपरतं वर्षति, यद्यपि च पानीये प्लवमानैस्तदानीं गम्यते तथाप्यवश्यं निर्गन्तव्यम्। एवं पाञ्चमासिको ज्येष्ठकल्पावग्रहः सम्पन्नः॥

अथ तमेव षाण्मासिकमाह-

[भा.४२८६] काऊण मासकप्पं, तत्थेव ठिताणऽतीते मग्गसिरे।
सालंबणाण छम्मासिओ उ जेट्ठोग्गहो होति॥

वृ- यस्मिन् क्षेत्रे आषाढमासकल्पः कृतस्तद् वर्षावासयोग्यम् अन्यत्र तथाविधं क्षेत्रं नास्ति ततो मासकल्पं कृत्वा तत्रैव वर्षावासं स्थितानां ततश्चतुर्मासानन्तरं कर्दम-वर्षादिभिः कारणैरतीते मार्गशीर्षमासे निर्गच्छतां 'सालम्बनानाम्' एवंविधालम्बनसहितानां षाण्मासिको ज्येष्ठावग्रहो भवति, एकक्षेत्रेऽवस्थानमित्यर्थः॥

[भा.४२८७] अह अत्थि पदवियारो, चउपाडिवयम्मि होति निग्गमनं।
अहवा वि अनिंताणं, आरोवण पुव्वनिद्दिट्ठा॥

वृ- अथास्ति कर्दम-वर्षादिकारणाभावात् पदविचारः ततश्चतुर्णां मासानां पर्यन्ते या प्रतिपत् तस्यां निर्गमनं कर्त्तव्यम्। अथ ते पदप्रचारसम्भवेऽपि न निर्गच्छन्ति ततोऽनिर्गच्छतां 'पूर्वनिर्दिष्टा' मासकल्पप्रकृते प्रागभिहिता चतुर्लघुकाख्या आरोपणा मन्तव्या॥

अथ निर्गतानां सामाचारीमुपदर्शयति-

[भा.४२८८] पुन्नम्मि निग्गयाणं, साहम्मियखेत्तवज्जिते गहणं।
संविग्गाण सकोसं, इयरे गहियम्मि गेण्हंति॥

वृ- पूर्णे वर्षावासावग्रहे निर्गतानां यत्र साधर्मिकैर्वर्षावासः कृतस्तत् क्षेत्रं वर्जयित्वा अन्येषु ग्राम-नगरादिषूपकरणस्य ग्रहणं भवति। ये संविग्नाः साम्भोगिका असाम्भोगिका वा तेषां यद् वर्षाक्षेत्रं तत् सक्रोशयोजनं परिहृत्य गृह्णन्ति। इतरे-पार्श्वस्थादयस्तेषां यद् वर्षावासक्षेत्रं तत्र तैर्गृहीते उपकरणे पश्चात् संविग्ना गृह्णन्ति, तेषां च क्षेत्रं मासद्वयं न परिह्रियते॥

कुतः ? इति चेद् उच्यते-

[भा.४२८९] वासासु वि गिण्हंती, नेव य नियमेण इतरे विहरंती।
तहिइं सुद्धमसुद्धे, गहिए गिण्हंति जं सेसं॥

वृ- 'इतरे' पार्श्वस्थादयो वर्षास्वपि वस्त्राणि गृह्णन्ति, न च नियमेनैव चतुर्मासानन्तरं ते विहरन्ति, अतस्तैः शुद्धे अशुधे वा उपकरणे गृहीते यत् शेषं वस्त्रादिकं श्राद्धाः प्रयच्छन्ति तद् मासद्वयमध्येऽपि गृह्णन्ति ॥

[भा.४२९०] सक्खेत्ते परखेत्ते वा, दो मासा परिहरेत्तु गेण्हंति ।
जं कारणं न निग्गय, तं पि बहिंझोसियं जाणे ॥

वृ- स्वक्षेत्रं-यत्रात्मना वर्षाकल्पः कृतः परक्षेत्रं-यत्रापरे संविग्ना वर्षाकल्पं स्थितास्तत्र स्वक्षेत्रे परक्षेत्रे वा द्वौ मासौ परिहृत्य तृतीयमासि गृह्णन्ति । अथ चतुर्मासानन्तरं कर्दमादिभि कारणैर्न निर्गतास्ततः 'यं' यावन्तं कालं कारणमपेक्ष्य न निर्गतास्तमपि कालं 'बहिर्जोषितं' बहिःक्षिप्तं 'जानीयाद्' गणयेत्, तावन्तमपि कालं बहिर्निर्गता इव मन्तव्या इति भावः ॥

—कैः पुनः कारणैर्न निर्गताः ? इत्याह-

[भा.४२९१] चिक्खल्ल-वास-असिवादिएसु जहि कारणेसु उ न निंति ।
दिंते पडिसेधेत्ता, गेण्हंति उ दोसु पुन्नेसु ॥

वृ- चिक्खल्लः-कर्दमस्तदाकुलाः पन्थानः, वर्षं वा नोपरमते, अशिव-दुर्भिक्षादीनि वा बहिरुपस्थितानि, एवमादिभि कारणैर्यत्र न निर्गच्छन्ति तत्र यदि केचिद् वस्त्रादिना निमन्त्रयन्ति तदा तान् ददतः प्रतिषिध्य द्वयोस्तु मासयोः पूर्णयोर्वस्त्रादिकं गृह्णन्ति ॥

कुतः ? इत्याह-

[भा.४२९२] भावो उ निग्गतेहिं, वोच्छिज्जइ देंति ताइं अन्नस्स ।
असड्ढेति व ताइं, एमेव य कारणमनिंते ॥

वृ- 'ये साधव इह क्षेत्रे वर्षावासं स्थितास्तेषां वस्त्राणि दास्यामः' इत्येवं यः श्राद्धानां भावः स निर्गतेषु साधुषु व्यवच्छिद्यते, यानि वा वस्त्राणि दातुं सङ्कल्पितानि तानि 'अन्यस्य' पार्श्वस्थादेः प्रयच्छन्ति स्वयमेव वा 'आत्मार्थयन्ति' परिभुञ्जत इत्यर्थः । अथ चतुर्मासानन्तरं कारणमपेक्ष्य न निर्गच्छन्ति ततो मासद्वयमध्ये श्राद्धानामभ्यर्थनायामप्यगृह्णत्स्वेवमेव भावो व्यवच्छिद्यते, अतो द्वौ मासौ परिहृत्य ग्रहीतव्यम् । कारणे तु मासद्वयमध्येऽपि गृह्णीयात् ॥

तदेव दर्शयति-

[भा.४२९३] गच्छे सबाल-वुड्ढे, असती परिहर दिवड्ढमासं तु ।
पणतीसा पणुवीसा, पन्नरस दसेव एक्कं य ॥

वृ- सबाल-वृद्धे गच्छे वस्त्रभावे शीतं सोढुमसमर्थे सार्धं मासं 'परिहर' वर्जय, परिहृत्य च तत ऊर्ध्वं गृह्णीयात् । अथ सार्धमासमपि परिहर्तुं न शक्तस्ततः पञ्चत्रिंशतं दिनानि परिहर, अथैवमपि गच्छो न संस्तरति ततः पञ्चविंशतिदिनानि, तथाप्यसंस्तरणे पञ्चदश दिनानि, तथाप्यशक्तौ दश दिवसान्, तथाप्यसामर्थ्ये एकमपि दिनं परिहरेदिति सङ्ग्रहगाथासमासार्थः ॥

अथैनामेव विवृणोति-

[भा.४२९४] बाल-ऽसहु-वुड्ढ-अतरंत-खमग-सेहाउलम्मि गच्छम्मि ।
सीतं अविसहमाणे, गेण्हंति इमाए जयणाए ॥

वृ- तथाविधवस्त्राभावाद् बाला-ऽसहिष्णु-वृद्ध-ग्लान-क्षपक-शैक्षाकुले गच्छे शीतम्

'अविषहमाणे' सोढुमशक्ते साधवोऽनया यतनया स्वक्षेत्रे परक्षेत्रे वा वस्त्राणि गृह्णन्ति ॥

[भा.४२९५] पंचूने दो मासे, दसदिवसूने दिवड्डमासं वा।
दस-पंचऽधियं मासं, पणुवीसदिने य वीसं वा ॥

[भा.४२९६] पन्नरस दस य पंच व, दिनानि परिहरिय गेण्ह एगं वा।
अहवा एक्केक्कदिणं, अउनट्ठिदिणाइं आरब्भ ॥

वृ- आगाढे कारणे पञ्चभिर्दिवसैरूनौ द्वौ मासौ परिहृत्य वस्त्र ग्रहीतव्यम्। अथ तावन्तं कालं यावद् बाल-वृद्धादयः शीतेन परिताप्यमाना न संस्तरन्ति ततो दशदिवसोनौ द्वौ मासौ परिहृत्य वस्त्रं ग्राह्यम्। एवं सार्धमासं दशदिवसाधिकं वा पञ्चदिवसाधिकं वा अन्यूनाधिकं वा मासं पञ्चविंशतिदिनानि विंशतिदिनानि पञ्चदशदिनानि दशदिनानि पञ्च वा दिनानि यथाक्रमं परिहृत्य वस्त्र गृह्णीयात्। अथ पञ्च दिवसानपि वस्त्रभावे बाल-वृद्धादयो नात्मानं निर्वाहयितुमीशास्ततश्चत्वारि त्रीणि द्वे यावदेकमपि दिनं परिहृत्य ग्रहीतव्यम्।

अथवा एकैकदिनहानिरत्र द्रष्टव्या, तद्यथा-यत्र वर्षावासं स्थितास्तत्र षष्टिदिनानि परिहृत्य उत्सर्गतो वस्त्रग्रहणं कर्तव्यम्, कारणे पुनरेकोनषष्टिदिनान्यारभ्यैकैकदिनं हापयता तावद् वक्तव्यं यावदेकमपि दिनं परिहृत्य वस्त्रग्रहणं कार्यम् ॥

व्याख्यातं प्रथमसमवसरणसूत्रम्, सम्प्रति द्वितीयसमवसरणसूत्रं व्याख्याति-

[भा.४२९७] बिइयम्मि समोसरणे, मासा उक्कोसगा दुवे होंति।
ओमत्थगपरिहाणीय पंच पंचेव य जहन्ने ॥

वृ- द्वितीयं समवसरणं नाम-ऋतुबद्धकालः, तत्र मासकल्पेन स्थिता वस्त्रादिकमुपकरणमुत्पादयन्ति, मासकल्पानन्तरं च तत्र द्वौ मासावुत्कर्षतः परिहर्त्तव्यौ भवतः।

कारणे तु तथैवावाङ्मुखपरिहाण्या पञ्च पञ्च दिनानि हापयता तावद् नेयं यावद् जघन्यत एकंदिनं परिहर्त्त-व्यम् ॥

अमुमेवार्थं स्फुटतरमाह-

[भा.४२९८] अपरिहरंतस्सेते, दोसा ते च्चेव कारणे गहणं।
बाल-वुड्ढाउले गच्छे, असती दस पंच एक्को य ॥

वृ- यत्र क्षेत्रे मासकल्पः कृतस्तत्र द्वौ मासावपरिहरतस्त एव दोषा मन्तव्या ये वर्षावासमासद्वयमपरिहरत उक्ताः। कारणे तु ग्रहणं कर्त्तव्यम्, कथम् ? इत्याह-बाल-वृद्धाकुले गच्छे वस्त्राभावे पञ्चकपरिहाण्या एकैकपरिहाण्या वा तावद् वक्तव्यं यावद् दश वा पञ्च वा एको वा दिवसः परिहर्त्तव्यः। यत्र संविग्नैर्मासकल्पो वर्षाकल्पो वा कृतस्तत्र मासद्वयादुपरि पञ्चसु दिवसेष्वपूर्णेष्वन्येषां न कल्पते किञ्चिदपि ग्रहीतुम् ॥

यो गृह्णाति तस्य दोषानुपदर्शयति-

[भा.४२९९] करणानुपालयाणं, भगवतो आणं पडिच्छमाणाणं।
जो अंतरा उ गेण्हति, तह्वाणारोवणमदत्तं ॥

वृ- करणस्य-पिण्डविशुध्यादेः अनु-पश्चात् पूर्वऋषिपरम्पराक्रमेण पालकाः करणानुपालकास्तेषाम्, करणस्य च चरणाविनाभावित्वात् चरणानुपालकानामित्यपि द्रष्टव्यम्, एतेन

शीतलविहारितादोषस्तेषां परिहृतो भवति; 'भगवतः' वर्द्धमानस्वामिनो या आज्ञा तां तथेति प्रतिपत्त्या प्रतीच्छताम्, अनेन यथाच्छन्दतादोषस्तेषां नास्तीत्युक्तं भवति; एवंविधानां साधूनां क्षेत्रे 'अन्तरा' तैरगृहीते उपकरणे यो वस्त्रादि गृह्णाति तस्य 'तत्स्थानारोपणा' स्वस्थानप्रायश्चित्तम्, तद्यथा-उत्कृष्टे चतुर्लघवः, मध्यमे मासिकम्, जघन्ये पञ्चकम्; सूत्रादेशेन वा साधर्मिकस्तैन्यमिति कृत्वाऽनवस्थाप्यम् ।

"अदत्तं"ति भगवता नानुज्ञातमिति कृत्वा तीर्थकरदत्तमपि भवति ।।

[भा.४३००]　　उवरिं पंचमपुन्ने, गहणमदत्तं गत त्ति गेण्हंति ।
　　अनपुच्छ दुपुच्छा वा, त पुन्ने गत त्ति गेण्हंति ।।

वृ- परक्षेत्रे द्वयोर्मासयोरुपरि पञ्चसु दिनेष्वपूर्णे, यदि ग्रहणं करोति तदा अदत्तादानदोषः प्रसज्यते । अथ जानन्ति गता अन्यदेशं क्षेत्रस्वामिनस्ततोऽपूर्णेष्वपि पञ्चरात्रिन्दिवेषु गृह्णन्ति । अथ शङ्कितं ततो न गृह्णन्ति । अथ ते परदेशं न गतास्ततो यद्यनापृच्छया दुःपृच्छया वा वस्त्रं गृह्णन्ति ततस्तथैवादत्तादानदोषं प्राप्नुवन्ति । यत एवमतः 'तद्' वस्त्रादिकमुपकरणं 'गता निशिङ्कतमन्यदेशं क्षेत्रिकाः' इति विज्ञाय पूर्णे मासद्वये गृह्णन्ति । अत्रानापृच्छा नाम-'क्षेत्रिकैर्वस्त्रग्रहणं कृतं न वा' इति न पृच्छति, दुःपृच्छा पुनः-अविधिना प्रच्छनं ।।

सा चेयम्-

[भा.४३०१]　　गोवाल-वच्छवाला-कासग-आदेस-बालव-वुड्ढाई ।
　　अविधी विही उ सावग-महतर-धुवकम्मि-लिंगत्था ।।

वृ- ये गोपाल-वच्छपाल-कर्षकाः प्रभाते निर्गताः सन्तो भूयः प्रदोषे ग्रामं प्रविशन्ति, ये वा तत्रादिशाः-प्राघूर्णका अन्यग्रामादायाताः, ये वा बाल-वृद्धाद्योऽत्यन्तमुग्धा विस्मरणशीलाश्च तान् पृच्छति-किं श्रमणैः कृतं वस्त्रग्रहणं न वा ? इति; एषा अविधिपृच्छा । विधिपृच्छा पुनरियम्-श्रादका ग्राममहत्तरा वा प्रच्छनीया येषु साधूनां वस्त्रग्रहणसम्भवो भवति, ये वा ध्रुवकर्मिकाः-लोहकार-रथकारादयः ये वा लिङ्गस्थाः-लिङ्गधारिणस्तान् पृच्छति 'वस्त्रादिग्रहणं साधुभिः कृतं न वा ?' इति ।।

परक्षेत्रे वस्त्रग्रहणविधिमभिधित्सुराह-

[भा.४३०२]　　गंतूण पुच्छिऊण य, तेसिं वयणे गवेसणा होति ।
　　तेसाऽऽगतेसु सुद्धेसु जत्तियं सेस अग्गहणं ।।

वृ- क्षेत्रस्वामिनां समीपे गत्वा विधिवद् आपृच्छ्य तेषां साधूनां 'वचने' अनुज्ञायां तदीये क्षेत्रे वस्त्रगवेषणा कर्त्तव्या भवति । अथ न ज्ञायन्ते ते कुत्रापि गता अमीभिश्च साधुभिस्तत्र वस्त्रग्रहणं कियदपि कृतं ते च क्षेत्रस्वामिन आगताः ततस्तेषु 'शुद्धेषु' विधिना आगतेषु यावद् वस्त्रादि गृहीतं तावत् तेषां प्रत्यर्पयितव्यम्, शेषस्य चोपकरणस्य ग्रहणं न कर्त्तव्यम् ।।

इदमेव सविशेषमाह-

[भा.४३०३]　　उप्पन्न कारणाऽऽगंतु पुच्छिउं तेहि दिन्न गेण्हंति ।
　　तेसाऽऽगयेसु सुद्धेसु जत्तियं सेस अग्गहणं ।।

वृ- बाल-वृद्ध-शैक्षादीनां शीतपरितापनालक्षणे वस्त्रग्रहणकारणे उत्पन्ने स्वक्षेत्रे वस्त्रदुर्लभतां

सम्यग निश्चित्य परक्षेत्रे वस्त्रग्रहणं कर्तुकामाः क्षेत्रस्वामिनामन्तिके गत्वा पृष्ट्वा च तैः 'दत्तम्' अभ्यनुज्ञातं यावत्प्रमाणं वस्त्रादि तावदेव गृह्णन्ति, नातिरिक्तम् । अथ न ज्ञायन्ते ते कुत्रापि गतास्ततो विधिपृच्छया उपकरणे गृहीते यदि ते क्षेत्रिकाः शुद्धा आगच्छेयुः ततः शुद्धेषु तेष्वागतेषु ततो यावद् गृहीतं तावत् तेषां प्रत्यर्पयन्ति, शेषस्य चाग्रहणम् ॥

कथं पुनस्ते क्षेत्रिका आगताः शुद्धा अशुद्धा वा भवन्ति ? इति उच्यते–

[भा.४३०४] पडिजग्गंति गिलाणं, ओसहहेऊहि अहव कज्जेहिं ।
एतेहि होंति सुद्धा, अह संखडिमादि तह चेव ॥

वृ- क्षेत्रिका मासद्वये पूर्णेऽपि अमीभि कारणैर्न समागन्तुं शक्नुयुः-ग्लानं प्रतिजाग्रतः स्थिताः, ग्लानस्य वा औषधम्-अगदं तन्मीलनहेतोः स्थिताः, कुल-गण-सङ्घकार्येषु वा व्यापृताः; एवमादिभिः कारणैरनागच्छन्तः शुद्धाः । अथ सङ्खडिनिमित्तं स्थिता व्रजिकादिषु वा प्रतिबध्यमाना आगताः ततः 'तथैव' मासद्वयं यावत् तदीयं क्षेत्रम्, उपरि तु पञ्चरात्रं न ते प्रभवः, ततो यत् तैस्तत्र क्षेत्रे गृहीतं तद् गृहीतमेव, न क्षेत्रिकाणां प्रयच्छन्ति ॥

अमुनि तु विशुद्धकरणानि-

[भा.४३०५] तेनभय सावयभया, वासेण नदीय वा वि(नि)रुद्धाणं ।
दायव्वमदेताणं, चउगुरुतिविहं च नवमं वा ॥

वृ- स्तेनभयाद्वा श्वापदभयाद्वा वर्षेण वा नद्या वा निरुद्धानां चिरादागमनमभूत् ततो यद् गृहीतं तत् तेषामागतानां दातव्यम् । अथ न ददति ततश्चतुर्गुरुकम्, उपकरणनिष्पन्नं वा [त्रिविधं] पञ्चक-मासिक-चतुर्लघुकलक्षणम्, 'नवमं वा' सूत्रादेशेनानवस्थाप्यम् ॥

[भा.४३०६] परदेसगते नाउं, सयं व सेज्जातरं व पुच्छित्ता ।
गेण्हंति असढभावा, पुन्नेसु तु दोसु मासेसु ॥

वृ- स्वयमपि क्षेत्रिकान् परदेशगतान् ज्ञात्वा शय्यातरं वा पृष्ट्वा परदेशगतान् निश्चित्य द्वयोर्मासयोः पूर्णयोः 'अशठभावाः' शुद्धपरिणामा गृह्णन्ति ॥

[भा.४३०७] बिइयपदमणाभोगे, सुद्धा देंता अदेंते ते च्चेव ।
आउट्टिया गिलाणादि जत्तियं सेस अग्गहणं ॥

वृ- द्वितीयपदमत्रोच्यते-'अनाभोगो नाम' 'किमत्र साधवो वर्षाकल्पं मासकल्पं वा कृतवन्तो न वा ?' इति न सम्यक् परिज्ञातं ततः परक्षेत्रेऽपि गृह्णीयुः, पश्चाद् ज्ञाते क्षेत्रिकाणां प्रयच्छन्तः शुद्धाः, अप्रयच्छतां त एव दोषाः । अथ 'आकुट्टिकया' आभोगेन गृहीतं परं ग्लानादीनामर्थे ततो यावत् तेषामुपयुज्यते तावद् गृह्णन्ति, 'शेषम्' अतिरिक्तं न गृह्णन्ति ॥

मू. *(९५) कप्पइ निग्गंथाण वा निग्गंथीण वा अहाराइणियाए चेलाइं पडिग्गाहित्तए ॥*

[भा.४३०८] दिट्ठं वत्थग्गहणं, तेसिं परिभायणे इमं सुत्तं ।
अविनय असंविभागा, अधिकरणादी य नेवं तु ॥

वृ- द्वितीयसमवसरणे दृष्टं तावद् वस्त्रग्रहणम् । सम्प्रति तेषां वस्त्राणां 'परिभाजने' विभज्य प्रदाने यो विधिस्तदभिधायकमिदं सूत्रमारभ्यते । इत्थं विभज्य प्रदाने किं प्रयोजनम् ? इति चेद् अत आह-'एवं' यथारत्नाधिकं वस्त्राणां विभज्य दानेऽविनयोऽसंविभागोऽधिकरणादयश्च

दोषा न भवन्तीति ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'यथारात्निकं' यो यो रात्निकः- भावरत्नैरधिकस्तदनतिक्रमेण चेलानि प्रतिग्रहीतुमिति सूत्रार्थः॥

अथ निर्युक्तिविस्तरः-

[भा.४३०९] संघाऽएण एक्कतो, हिंडंती वंदएन जयणाए।
साधारणऽनापुच्छा, उ अदत्तं एक्कओ भागा॥

वृ- सङ्घाटकेन 'एकतः' एकस्यां दिशि साधवो वस्त्रग्रहणार्थं हिण्डन्ते। अथ सङ्घाटकेन न प्राप्यते ततो वृन्देनापि यतनया पर्यटन्ति। अथ 'साधारणं' बहूनामाचार्याणां सामान्यं तत् क्षेत्रं ततो यदि तत्रापरेषामाचार्याणामनापृच्छया गृह्णन्ति तदा "अदत्तं" ति साधर्मिकस्तैन्यं भवति, अतस्तानापृच्छय ग्रहीतव्यानि, गृहीत्वा च तेषां वस्त्रणाम् 'एकतः' एकसदृशा भागाः कर्त्तव्या न विसदृशा इति सङ्ग्रहगाथासमासार्थः॥

साम्प्रतमेनामेव विवृणोति-

[भा.४३१०] निस्साधारण खेत्ते, हिंडंतो चेव गीतसंघाडो।
उप्पादयते वत्थे, असती तिगमादिवंदेनं॥

वृ- 'निस्साधारणे' एकाचार्यप्रतिबद्धे क्षेत्रे गीतार्थसङ्घाटको भिक्षां हिण्डमान एव वस्त्रण्युत्पादयति। अथ सङ्घाटकेन हिण्डमाना न प्राप्नुवन्ति ततः 'त्रिकादिवृन्देन' त्रिचतुःपञ्चादिसाधुसमूहेन पर्यटन्त उत्पादयन्ति॥

साधारणक्षेत्रे पुनरयं विधिः-

[भा.४३११] दुगमादीसामन्ने, अणपुच्छा तिविह सोधि नवमं वा।
संभोइयसामन्ने, तह चेव जहेक्कगच्छम्मि॥

वृ-द्विकादीनां-द्वित्रिप्रभृतीनामाचार्याणां सामान्ये क्षेत्रे तेषामनापृच्छया गृह्णतस्त्रिविधा 'शोधिः' प्रायश्चित्तम्-जघन्ये पञ्चकम्, मध्यमे मासिकम्, उत्कृष्टेः; 'नवमं वा' सूत्रादेशेनानवस्थाप्यम्। ते चाचार्या परस्परं साम्भोगिका असाम्भोगिका वा। तत्र साम्भोगिकसामान्ये क्षेत्रे वस्त्रग्रहणे तथैव विध्यवसातव्यो यथा एकस्मिन् गच्छे सङ्घाटकादिक्रमेण अनन्तरगाथायामुक्तः॥

असाम्भोगिकेषु विधिमाह-

[भा.४३१२] अमणुन्नकुलविरेगे, साही पडिवसभ-मूलगामे य।
अहवा जो जं लाभी, ठायंति जधासमाधीए॥

वृ- अमनोज्ञाः-असाम्भोगिकास्तैः सह यत् क्षेत्रं साधारणं तत्र कुलादीनां विरेकः- विभजनं कर्त्तव्यम्, यथा-एतेषु कुलेषु युष्माभिर्वस्त्राणि ग्रहीतव्यानि, एतेषु पुनरस्माभि, यद्वाऽस्यां साहिकायां-गृहपङ्क्तिरुपायां भवद्भिः, अस्यां पुनरस्माभि; अथवा प्रतिवृषभग्रामेषु यूयं ग्रहीष्यथ, वयं मूलग्रामे ग्रहीष्यामः; मूलग्रामे वा यूयं, वयं प्रतिवृषभग्रामेषु; अथवा यो यद् वस्त्र कुलादौ पर्यटन् "लाभी" लप्स्यते तेन तस्य ग्रहणं कर्त्तव्यम्। एतेषामन्यतमेन प्रकारेण व्यवस्थां स्थापयित्वा यथासमाधिना तत्र तिष्ठन्ति॥

एवमसाधारणे वा क्षेत्रे वस्त्राणि गृहीत्वा किं कर्त्तव्यम्? इत्याह -

[भा.४३१३] वत्थेहि आनितोहिं, देंति अहारातिणिं तहिं वसभा।

अदाणे गुरुणो लहुगा, सेसे लहुओ इमे होंति ॥

**वृ-** वस्त्रेषु समानीतेषु ये वृषभास्ते यथारत्नाधिकं तत्र वस्त्राणि प्रयच्छन्ति । यदि तत्र गुरुणां प्रथमतो वस्त्रदानं न कुर्वन्ति तदा चतुर्लघुकाः । शेषाणां यथारत्नाधिकं विभज्य न प्रयच्छन्ति लघुमासः । ते च रत्नाधिकाः 'इमे' वक्ष्यमाणा भवन्ति ॥ तत्र गुरूणां यादृशानि वस्त्राणि दीयन्ते तदेतत् प्रतिपादयति–

**[भा.४३१४]** विदु क्खमा जे य मनानुकूला, जे योवजुंजंति असंथरंते ।
गुरुस्स सानुग्गहमप्पिणित्ता, भाएंत सेसाणि उ झंझहीणा ॥

**वृ-** साधुभिर्यथाविधि गृहीत्वा भूयांसि वासांसि वृषभाणां समर्पितानि, ततो वृषभा ''विदु'' त्ति 'विदित्वा' सुन्दरा-ऽसुन्दरताविभागं विज्ञाय यानि 'क्षमाणि' दृढानि यानि च 'मनोऽनुकूलानि' गुरुणां मनसोऽभिरुचितानि यानि चाऽसंस्तरति गच्छे गुरुपरिभुक्तान्यपि शेषसाधूनामुपयुज्यन्ते तानि गुरोः 'सानुग्रहं' सविशेषं यथा भवति एवमर्पयित्वा शेषाणि वस्त्राणि झञ्झा-कलहस्तेन हीनाः-विरहिताः सन्तो यथारत्नाधिकं परिभाजयन्ति ॥

अथ तानेव रत्नाधिकानाह–

**[भा.४३१५]** उवसंपज्ज गिलाणे, परित्त सुत सोअव्वए य जाती य ।
तव भासा लद्धीए, ओमे दुविहस्स अरिहा उ ॥

**वृ-** ''उवसंपज्ज'' त्ति यः तत्प्रथमतया उपसम्पदं प्रतिपद्यते । 'ग्लानः' मन्दः, स च द्विधा-आगाढोऽनागाढश्च । 'परीत्तः' परिमितोपधिः । ''सुत'' त्ति बहुश्रुतः । ''सोअव्वए'' त्ति यो व्याख्यानमण्डल्या उत्थितानां सूत्रार्थे श्रोतव्ये ज्येष्ठतया व्यवह्रियते । ''जाइ'' त्ति जातिस्थविरः षष्टिवर्षपर्यायः । ''तव'' त्ति तपस्वी । ''भास'' त्ति यः अभाषिकः-तद्देशभाषायामनभिज्ञः । ''लद्धीए'' त्ति यस्य लब्ध्या वस्त्राणि लभ्यन्ते ।

एतेषामुपसम्पद्यमानादीनां यथाक्रमं दत्वा ततो यो यः पर्यायरत्नाधिकः स स प्रथमं गृह्णाति, ''ओमि'' त्ति अवमरात्निकः पश्चाद् गृह्णाति ।

एते यथाक्रमं 'द्विविधस्य' ओघोपधेरौपग्रहिकोपधेश्च ग्रहणे 'अर्हा' योग्या मन्तव्याः ॥

**[भा.४३१६]** एएसि परुवणया, जा य विना तेहिं होति परिहानी ।
अहवा एक्केक्कस्स उ, अह्रोकंतीक्कमो होति ॥

**वृ-** 'एतेषाम्' उपसम्पद्यमानादीनां 'प्ररुपणा' व्याख्या कर्तव्या, सा चानन्तरमेव कृता । यद्येतेषां यथाक्रमं वृषभा न प्रयच्छन्ति ततो या तेषां 'तैः' वस्त्रैर्विना 'परिहानि' संयमविराधनादिका भवति तन्निष्पन्नं प्रायश्चित्तम् । अथवा 'एकैकस्य' उपसम्पद्यमानादेः प्रत्येकं ग्लानादिविषयोऽयमर्द्धापक्रान्तिक्रमो भवति ॥ तद्यथा–

**[भा.४३१७]** उवसंपज्ज गिलाणो, अगिलाणो वा वि दोन्नि वि गिलाणा ।
तत्थ वि य जो परित्तो, एस गमो सेसगेसुं पि ॥

**वृ-** उपसम्पद्यमानो द्विविधः-ग्लानोऽग्लानश्च । तत्र यो ग्लानस्तस्य दातव्यम् । अथ द्वावपि ग्लानावग्लानौ वा ततो यस्तत्र परीत्तोपधिस्तस्मै दातव्यम् । एवमेषः 'गमः' प्रकारः 'शेषेष्वपि' बहुश्रुतादिपदेषु मन्तव्यः, तद्यथा-द्वावपि परीत्तोपधी अपरीत्तोपधी वा ततो यो बहुश्रुतस्तस्मै

देयम्। अथ द्वावपि बहुश्रुतौ ततो यश्चिन्तनिकाकारकस्तस्य दातव्यम्। अथ द्वावपि चिन्तनिकाकारकौ ततो यस्तत्र जातिस्थविरस्तस्य दातव्यम्। अथ द्वावपि जातिस्थविरौ ततो यस्तपस्वी तस्य दातव्यम्। अथोभावपि तपस्विनौ ततो योऽभाषिकस्तस्मै दातव्यम्। अथ द्वावप्यभाषिकौ भाषिकौ वा ततो यो लब्धिमान् तस्मै प्रदातव्यम्।

प्रकारान्तरेण यथारत्नाधिकपरिपाटीमाह-

[भा.४३१८] आयरिए य गिलाणे, परित्त पूया पवत्ति थेर गणी।
सुत भासा लद्धीए, ओमे परियागरातिनिए॥

वृ- आचार्यस्य पूर्वं विशिष्टानि वस्त्राणि दत्वा ततो ग्लानस्य दातव्यानि। ततः परीत्तोपधेः, ततः "पूय" त्ति चूर्ण्यभिप्रायेण 'पूजनार्हस्य' उपाध्यायस्य बृहद्भाष्याभिप्रायेण तु 'पूजनार्हस्य' गुरुसम्बन्धिपितृ-पितृव्यादेः, ततः प्रवर्त्तिनः, तदनन्तरं स्थविरस्य, ततः "गणि" त्ति गणावच्छेदिकस्य, ततः श्रुतसम्पन्नस्य, ततोऽभाषिकस्य, ततो लब्धिमतो यथाक्रमं दातव्यम्। अर्द्धापक्रान्तिधारणिका प्राग्वत् कर्त्तव्या। तदनन्तरं यो यः पर्यायरात्निकस्तस्य तस्य प्रथमम्, अवमरात्निकस्य तु पश्चाद् यथाक्रमं दातव्यम्॥

एवं तावत् सङ्घाटकेनानीतानां विधिरुक्तः। अथ वृन्देनानीतानां यो विधिस्तमभिलुराह-

[भा.४३१९] नेगेहिं आनियाणं, परित्त परियाग खुभिय पिंडेत्ता।
आवलिया मंडलिया, लुद्धस्स य सम्मता अक्खा॥

वृ-अनेकैः साधुभिरानीतानां वस्त्राणां परिभाजने विधिरुच्यते-आचार्यादिक्रमेण परीत्तोपधीनां यावद् दत्त्वा ततो ये पर्यायरात्निकास्तेषामहिण्डमानानामपि प्रथमतो दातव्यम्। तत्र च यैस्तानि वस्त्राणि समानीतानि ते 'पिण्डित्वा' सम्भूय 'क्षुभितं' क्षोभं कुर्वीरन्, कलहमिति यावत्। कश्चित्तु ब्रूयात्-आवलिकया मण्डलिकया वा विभजनं विधीयताम्। "लुद्धस्स य सम्मता अक्ख" त्ति कस्यापि पुनर्लुब्धस्याक्षान् पातयित्वा वस्त्रविभजनमभिमतम्। एष सङ्ग्रहगाथासङ्क्षेपार्थः॥

साम्प्रतमेनामेव विवरीपुराह–

[भा.४३२०] गेण्हंतु पूया गुरवो जदिट्ठं, सच्चं भणामऽम्ह वि एयदिट्ठं।
अणुण्हसंवट्टियऽकक्कसंगा, गिण्हंति जं अन्नि न तं सहामो॥

वृ- अहिण्डमानानां वस्त्रेषु दीयमानेषु ये वस्त्राणामानेतारस्ते ब्रवीरन्-यद् 'इष्टं' मनोऽनुकूलं वस्त्रं गुरवो गृह्णन्ति तत् ते सकलगच्छस्वामितया पूज्या इति कृत्वा गृह्णन्तु, यद् गुरूणामुत्कृष्टं वस्तु दीयते तत् 'सत्यम्' अवितथमिति वयमपि भणामः, न केवलं वचसैव भणामः किन्तु मनसाऽप्यस्माकमेतदिष्टमेव, परमनुष्णेन-भिक्षापरिभ्रमणाभावादुष्णलगनाभावेन संवर्त्तितानि-वर्तुलीभूतानि अत एवाकर्कशानि अङ्गानि-पाणि-पाद-पृष्ठोदरप्रभृतीनि येषां तेऽनुष्णसंवर्त्तिताकर्कशाङ्गा एवंविधाः सन्तो यद् 'अन्ये' अहिण्डमानाःप्रथमं गृह्णन्ति न तद् वयं सहामहे॥

[भा.४३२१] आगंतुगमाईनं, जइ दायव्वाइं तो किणा अम्हे।
कम्मारभिक्खुयाणं, गाहिज्जामो गइमसग्घं॥

वृ- आगन्तुकाः-उपसम्पत्तारस्तेषाम् आदिशब्दाद् ग्लानादीनां च यदि दातव्यानि वस्त्राणि ततः "किण" त्ति केन कारणेन वयं 'कर्मकारभिक्षुकाणां' देवद्रोणीवाहकभिक्षुविशेषाणां गतिम्

'अश्लाध्यां' निन्दनीयां ग्रह्यामहे ? । किमुक्तं भवति ? -'यदि नामास्मदानीतानां वस्त्राणामेते आगन्तुकादयः स्वामिभावं भजन्ते ततः किमेवं वयं देवद्रोणीवाहकभिक्षुकवद् मुधैव वस्त्राद्यानयनकर्म कार्यामहे ?' इति वस्त्राण्यानेतारश्चिन्तयेयुः ॥

[भा.४३२२] विरिच्चमाणे अहवा विरिक्के, खोभं विदित्ता बहुगाण तत्थ ।
ओमेण कारिंति गुरु विरेगं, विमज्झिमो जो व तहिं पडू य ॥

वृ- एवं 'विरिच्यमाने' विभज्यमानेऽथवा 'विरिक्ते' विभक्ते उपकरणे बहूनामनन्तरोक्तं क्षोभं विदित्वा यस्तत्र 'अवमः' सर्वेषामपि पर्यायलघुः यो वा विमध्यमोऽपि तत्र वस्त्रविभजने 'पटुः' कुशलस्तेन गुरवो विभजनं कारयन्ति ॥

अथ कोऽपि लुब्ध एवमप्यपरितुष्यन् ब्रूयात्-आवलिकया मण्डलिकया वा वस्त्राणि विभज्यन्ताम्; ततः को विधिः ? इत्याह-

[भा.४३२३] आवलियाए जतिट्ठं, तं दाऊणं गुरुण तो सेसं ।
गेण्हंति कमेणेव उ, उप्परिवाडी न पूर्येति ॥

वृ- आवलिका नाम-ऋज्वायतश्रेण्या वस्त्राणां व्यवस्थापनम्, तथा समभागीकृत्य वस्त्रेषु स्थापितेषु यद् इष्टं वस्त्रं तद् गुरुणां दत्त्वा शेषाणि यथारत्नाधिकं गृह्णन्ति यावदावलिका निष्ठामुपगच्छति ।

उत्परिपाट्या तु ग्रहणं 'न पूजयन्ति' न प्रशंसन्ति, तीर्थकरादय इति गम्यते ॥

[भा.४३२४] मंडलियाए विसेसो, गुरुगहिते सेसगा जहावुड्ढं ।
भाए समे करेत्ता, गेण्हंति अनंतर उभओ ॥

वृ- मण्डलिकायामप्येवमेव, नवरं तस्यां विशेषोऽयमुपदर्श्यते-पूर्वं गुरुभिर्गृहीते ततः शेषाः 'यथावृद्धं' यो यः पर्यायवृद्धस्तदनतिक्रमेण समान् भागान् कृत्वा 'उभयोरपि' आद्यन्तलक्षणयोः पार्श्वयोः 'अनन्तरम्' अव्यवहितं वस्त्राणि गृह्णन्ति ।

इयमत्र भावना-मण्डलिकया वस्त्रेषु स्थापितेषु प्रथममाचार्येण गृहीते ततो यः शेषाणां मध्ये रत्नाधिकः स मण्डलिकया धुरि स्थापितं वस्त्रं गृह्णाति, अवमरात्निकस्तु पर्यन्तस्थापितं-सर्वान्तिकम्, ततोऽपि योऽवमपर्यायः स धुरि स्थापितादनन्तरं गृह्णाति, तदपेक्षया लघुतरः पर्यन्तपार्श्वादुपान्त्यं गृह्णाति; एवं तावद् गृह्णन्ति यावद् मण्डलिका निष्ठिता भवति ॥

एवमपि विभज्यमाने कोऽपि लोभाभिभूतमानसो ब्रूयात्-अक्षान् पातयित्वा यद् यस्य भागे समायाति तत् तस्य दीयताम्; एवं ब्रुवाणोऽसौ प्रज्ञापयितव्यः। कथम् ? इति चेद् उच्यते-

[भा.४३२५] जइ ताव दलंतऽगारिणो, धम्मा-ऽधम्मविसेसबाहिला ।
बहुसंजयविंदमज्झके, उवकलणे सि किमेव मुच्छितो ॥

वृ- यदि तावदगारिणो धर्मा-ऽधर्मविशेषबाह्या अपि मूर्च्छां परित्यज्य साधूनामित्थमात्मीयानि वस्त्राणि ''दलंति'' प्रयच्छन्ति, ततः 'बहुसंयतवृन्दमध्यके' प्रभूतसाधुजनमध्यभागे त्वमेवैक उपकरणे किमेवं सम्यक्परिज्ञातजिनवचनोऽपि मूर्च्छितोऽसि ? नैतद् भवतो युज्यत इति भावः ॥

एवमप्युक्तो यद्यसौ नोपशाम्यति ततो वक्तव्यम्-

[भा.४३२६] अज्जो ! तुमं चेव करेहि भागे, ततो नु घेच्छामो जहक्कमेणं ।

गिण्हाहि वा जं तुह एत्थ इट्ठं, विनासधम्मीसु हि किं ममत्तं ॥

**वृ-** आर्य ! त्वमेव समान् भागान् कुरु, ततो यथाक्रमेण वयं ग्रहीष्यामः । यद्वा गृहाण यत् तवामीषां वस्त्राणां मध्ये 'इष्टम्' अभिरुचितम्, विनाशधर्मीणि हि-विनश्वरस्वभावानि वस्त्रादीनि वस्तूनि, अतः किं नाम तेषु ममत्वं विधीयते ? ॥

अवमप्युक्तो यदि नोपरमते ततः को विधिः ? इत्याह–

[भा.४३२७] तह वि अठियस्स दाउं, विगिंचणोवट्ठिए खरंटणया ।

अक्खेसु होंति गुरुगा, लहुगा सेसेसु ठाणेसु ॥

**वृ-** तथाप्यस्थितस्य तस्य तद् अभीष्टं वस्त्रं दत्वा विवेचनं कर्त्तव्यम्, 'निर्गच्छ मदीयाद् गच्छात्' इति भणनीयमिति भावः । ततो यदि भूयोऽप्युपति-मिथ्या मे दुष्कृतम्, न पुनरेवं विधास्यामीति; ततः 'खरण्ट ना' वक्ष्यमाणा कर्त्तव्या, प्रायश्चित्तं च दातव्यम् । किम् ? इत्याह-'अक्षेषु गुरुका भवन्ति' यो ब्रवीति 'अक्षान् पातयित्वा विभजत' तस्य चतुर्गुरुकम् । 'शेषेषु स्थानेषु' क्षोत्रकरणा-ऽऽवलिका-मण्डलिकाविभाजनलक्षणेषु चतुर्लघुकम् ॥

अथ खरण्टनामुपदर्शयति–

[भा.४३२८] हिरन्न-दारं पसु-पेसवग्गं, जदा व उज्झित्तु दमे ठितो सि ।

किलेसलद्धेसु इमेसु गेही, जुत्ता न कत्तुं तव खिंसणेवं ॥

**वृ-** हिरण्यं च-सुवर्णं दाराश्च-कलत्रं हिरण्य-दारम्, पशवश्च-गो-महिषीप्रभृतयः प्रेष्याश्चकर्मकरास्तेषां वर्ग-समूहः, तमेवमादिकं परिग्रहं 'उज्झित्वा' तृणवत् परित्यज्य यदा किल त्वमेवंविधे 'दमे' संयमे स्थितोऽसि तदा साम्प्रतमेषु वस्त्रेषु 'क्लेशलब्धेषु' प्रभूत-गृहपरिभ्रमणादिप्रयासप्राप्तेषु तव गृद्धिं कर्तुं न युक्ता । एवं खिंसना तस्य कर्त्तव्या ॥

[भा.४३२९] सम्मं विदित्ता समुवट्ठियं तु, थेरा सि तं चेव कदाइ देज्जा ।

अन्नेसि गाहे बहुदोसले वा, छोढूण तत्थेव करिंति भाए ॥

**वृ-** 'सम्यग्' अपुनः करणेन समुपस्थितं विदित्वा 'स्थविराः' सूरयः कदाचित् तस्यैव 'तद्' वस्त्रं दद्युः । अथान्येषामपि बहूनां तद्वस्त्रग्रहणे 'ग्राहः' महान् निर्बन्धः, "बहुदोसले वा" प्रभूत-दोषवानसौ संयतो बहुभिः सह द्वेषवान्-विरोधविधायी यः स बहुद्वेषवानिति वा, ततस्तस्य दीयमानेऽन्येषां महदप्रीतिकमुपजायते; एवंविधं कारणं विचिन्त्य 'तत्रैव' तेषु वस्त्रेषु मध्ये प्रक्षिप्य एकसदृशान् भागान् कुर्वन्ति, ततो यथारत्नाधिकं गृह्णन्ति ॥

एवं तावदनेकैरानीतानां वस्त्राणां परिभाजने विधिरुक्तः, अथ क्षपकेणानीतानां तेषामेव विधिमभिधित्सुराह–

[भा.४३३०] खमए लद्धूण अंबले, दाउ गुलूण य सो वलिट्ठए ।

बेइ गुलुं एमेव सेसए, देह जईण गुलूहिं वुच्चई ॥

[भा.४३३१] सयमेव य देहि अंबले, तव जे लोयइ इत्थ संजए ।

इइ छंदिय-पेसिओ तहिं, खमओ देइ लिसीण अंबले ॥

**वृ-** कोऽपि क्षपकः कुत्रापि भावितकुलादौ 'अम्बराणि' वस्त्राणि लब्ध्वा यानि 'वरिष्ठानि' सर्वप्रधानानि वासांसि तानि गुरुणां दत्त्वा ततो गुरुं ब्रवीति-एवमेव शेषाण्यपि मदानीतानि

वस्त्राणि यतीनां प्रयच्छत । ततो गुरुभिरसावुच्यते-स्वयमेव त्वमभूनि अम्बराणि देहि यस्तवात्र संयतः 'रोचते' वस्त्रदानयोग्यतया रुचिगोचरीभवति । 'इति' अमुना प्रकारेण 'छन्दित-प्रेषितः' पूर्वं छन्दितः-यस्य रोचते तस्मै दातव्यानीत्येवमनुज्ञातच्छन्दः ततः प्रेषितः-मुत्कलितः सन् स क्षपकस्तत्रावसरे ऋषीणामम्बराणि प्रयच्छति । इह सर्वत्रापि रकारस्य लकारादेशः 'र-सोर्ल-शौ' इति मागधभाषालक्षणवशात् ॥ ततश्च–

[भा.४३३२] खमएण आनियाणं, दिज्जंतेगस्स वारणावयणं ।
गहणं तुमं न याणसि, वंदिय पुच्छा तओ कहणं ॥

वृ- क्षपकेणानीतानां तेनैव दीयमानानां वस्त्राणम् 'एकस्य' कस्यचिद् लुब्धस्य वारणावचनम्, 'एवममीषां रत्नाधिकानां दीयमानानि मां यावद् न समागमिष्यन्ति' इति बुद्ध्या वस्त्रग्राहकसाधून् 'मा आर्याः ! गृह्णीध्वम्' इत्येवं कोऽपि निवारितवानिति भावः ।

ततः क्षपकः प्राह-किं मदीयानि वस्त्राणि न गृह्यन्ते ? इतरः प्राह-ग्रहणमेव तावत् त्वं न जानीषे । क्षपको ब्रवीत-जानामि । इतरो भणति-यद्येवं ततः कीदृशम् ? । क्षपक आह-वन्दित्वा विनयेन पृच्छ येनाहं कथयामि । ततस्तेन क्षपको वन्दित्वा पृष्टः सन् कथयितुमारब्धवान् ॥

[भा.४३३३] तिविहं च होइ गहणं, सच्चित्ताऽचित्त मीसगं चेव ।
एएसिं नाणत्तं, वोच्छामि अहानुपुव्वीए ॥

वृ- त्रिविधं च भवति ग्रहणम्, तद्यथा-सचित्तग्रहणमचित्तग्रहणं मिश्रग्रहणं चेति । एतेषां त्रयाणामपि नानात्वं यथाऽऽनुपूर्व्या वक्ष्यामि ॥

तत्र सच्चित्तग्रहणं तावदाह-

[भा.४३३४] सच्चित्तं पुन दुविहं, पुरिसाणं चेव तह य इत्थीणं ।
एक्केक्कं पि य इत्तो, पंचविहं होइ नायव्वं ॥

वृ- सचित्तग्रहणं पुनर्द्विविधम्, तद्यथा-'पुरुषाणां च' आचार्यादीनां 'स्त्रीणां च' प्रवर्त्तिनी-प्रभृतीनाम् । एकैकमपि 'इतः' मूलभेदापेक्षया 'पञ्चविधं' वक्ष्यमाणनीत्या पञ्चप्रकारं भवति ज्ञातव्यम् ॥

कुतः पुनस्तेषां पुरुषाणां स्त्रीणां वा ग्रहणं क्रियते ? इत्याह-

[भा.४३३५] उदगाऽगनि तेनोमे, अद्धाण गिलाण सावय पदुट्ठे ।
तित्थानुसज्जणाए, अइसेसिगमुद्धरे विहिणा ॥

वृ-उदके वाहकेन आचार्यादयो नेतुमारब्धाः, "अगनि" त्ति महानगरप्रदीपनके वा दाहस्तेषां समुपस्थितः, "तेन" त्ति शरीरस्तेना आचार्यादीन् व्यपरोपयितुमिच्छन्ति, अवमं-दुर्भिक्षं तत्र भक्त-पानलाभाभावात् प्राणसंशयस्तेषामुपतस्थे, अध्वा नाम-छिन्नापातं महदरण्यं तं प्रपन्नानाम-पान्तराले बुभुक्षा-परिश्रमादिभिरग्रतो गन्तुमशक्नुवतां जीवितं संशयतुलामधिरुढम्, "गिलाण" त्ति शूल-विष-विशूचिकादिकमागाढग्लानत्वमुदपादि, श्वापदाः-सिंह-व्याघ्रादयस्तैरुपद्रोतुमारब्धाः, प्रद्विष्टः-प्रद्वेषमापन्नो राजा साधूनां प्राणापहारं कर्तुमभिलषति । एतेष्वागाढकारणेषु 'तीर्थानुषजनार्थं' तीर्थस्याव्यवच्छेदेनानुवर्त्तनाय योऽतिशानी-विशिष्टपात्रभूतः प्रवचनाधारः पुरुषस्तं 'विधिना' वक्ष्यमाणनीत्या समुद्धरेत् ॥

अथ यदुक्तम्-'एकैकं पञ्चविधं ग्रहणं भवति' तत्र पुरुषविषयं तावदाह-

[भा.४३३६] आयरिए अभिसेगे, भिक्खू खुड्डे तहेव थेरे य।
गहणं तेसिं इणमो, संजोगगमं तु वोच्छामि ॥

वृ- 'आचार्य' गच्छाधिपति 'अभिषेकः' सूत्रा-ऽर्थ-तदुभयोपेत आचार्यपदस्थापनार्ह 'भिक्षुः' प्रतीतः 'क्षुल्लकः' बालः 'स्थविरः' वृद्धः, एतेषां पञ्चानामपि ग्रहणम् 'इदम्' अनन्तरमेव वक्ष्यमाणं 'संयोगगमं' संयोगतो गमाः-प्रकारा यस्य तत् तथा वक्ष्यामि ॥

प्रतिज्ञातमेव निर्वाहयति-

[भा.४३३७] सव्वे वितारणिज्जा, संदेहाओ परक्कमे संते।
एक्केक्कं अवणिज्जा, जाव गुरू तत्थिमो भेदो ॥

वृ- 'पराक्रमे' शक्तौ सत्यां 'सर्वेऽपि' आचार्यादयः तादृशात् 'सन्देहाद्' नद्याद्युदकनिमज्जनलक्षणा तत् तारणीयाः। अथ नास्ति तादृशः पराक्रमस्ततः स्थविरवर्जाश्चत्वारस्तारणीयाः, तत्राप्यशक्तौ क्षुल्लक-स्थविरवर्जास्त्रयः, तत्राप्यसामर्थ्ये आचार्या-ऽभिषेकौ द्वौ, तत्राप्यशक्तौ एक एव आचार्यस्तारयितव्यः।

आह च-''एक्केक्कं'' इत्यादि, सर्वान् तारयितुमशक्तौ स्थविरादिक-मेकैकमपनयेद् यावद् 'गुरु' आचार्य। तत्र चायं वक्ष्यमाणो भेदो भवति ॥

[भा.४३३८] तरुणे निप्फन्न परिवारे, सलद्धिए जे य होंति अब्भासे।
अभिसेगम्मि य चउरो, सेसाणं पंच चेव गमा ॥

वृ-इह द्वावाचार्यौ-एकस्तरुणोऽपरः स्थविरः। यद्यस्ति शक्तिस्ततो द्वावपि तारणीयौ। अथ नास्ति ततस्तरुणो निस्तारणीयः। अथ द्वावपि तरुणौ ततो यस्तयोः 'निष्पन्नः' सम्यक् सूत्रार्थकुशलः स तारयितव्यः। अथ द्वावपि निष्पन्नावनिष्पन्नौ वा ततो यः सपरिवारः स तारणीयः। अथ द्वावपि सपरिवारावपरिवारौ वा ततो यातत्र 'सलब्धिकः' लब्धिसम्पन्नस्तं तारयेत्। अथ द्वावपि सलब्धिकावलब्धिकौ वा ततो यः 'अभ्यासे' आसन्ने स्थितः स निस्तारणीयः। अत्रायं विशेषसम्प्रदायः-द्वयोरभ्यासस्थितयोर्यस्तरीतुमशक्तः स तारणीयः। एवमेते आचार्यस्य पञ्च गमा अभिहिताः। अभिषेकस्तु नियमाद् निष्पन्नो भवति, अन्यथा तत्वत आचार्यपदस्थापनायोग्यत्वानुपपत्तेः। ततस्तस्मिन्नभिषेके निष्पन्ना-ऽनिष्पन्नगमाभावात् शेषाश्चत्वारो गमा एवमेव वक्तव्याः। 'शेषाणां' भिक्षु-क्षुल्लक-स्थविराणां पञ्चापि गमा भवन्ति, ते चाचार्यवद् वक्तव्याः। नवरं बालस्य निष्पन्नता श्री वज्रस्वामिन इव भावनीया, तरुणता तु प्रथमकुमारत्वे वर्त्तमानस्यावसातव्या। एवं स्थविरस्यापि जघन्यवृद्धत्वे वर्त्तमानस्य तरुणता, शेषस्य तु वृद्धता मन्तव्या। त्रयाणामपि च भिक्षुप्रभृतीनां परिवारो गुरुप्रदत्तो माता-पितृ-भातृ-भगिनीप्रभृतिप्रव्रजितस्वजनवर्गो वा द्रष्टव्यः ॥

अथ स्त्रीविषयं पञ्चविधं ग्रहणमुपदर्शयति-

[भा.४३३९] पवत्तिनि अभिसेगपत्ता, थेरी तह भिक्खुणी य खुड्डी य।
गहणं तासिं इणमो, संजोगक(क)मं तु वोच्छामि ॥

वृ- 'प्रवर्त्तिनी' सकलसाध्वीनां नायिका, 'अभिषेकप्राप्ता' प्रवर्त्तिनीपदयोग्या, 'स्थविरा'

वृद्धा, 'भिक्षुणी' प्रतीता, 'क्षुल्लीका' बाला । एतासां पञ्चानामपि ग्रहणम् 'इदम्' अनन्तरमेव 'संयोगगमं' संयोगतोऽनेकप्रकारं वक्ष्यामि ।।

यथाप्रतिज्ञातमेवाह–

[भा.४३४०] सव्वा वि तारणिज्ञा, संदेहाओ परक्कमे संते ।
एक्केक्कं अवणिज्ञा, जा गणिणी तत्थिमो भेदो ।।

[भा.४३४१] तरु निप्फन्न परिवारा, सलद्धिया जा य होइ अब्भासे ।
अभिसेगाए चउरो, सेसाणं पंच चेव गमा ।।

वृ- इदं गाथाद्वयं साधुगतगाथाद्वयमिव व्याख्येयम् ।। परः प्रेरयन्नाह–

[भा.४३४२] बाला य वुड्ढा य अजंगमा य, लोगे वि एते अनुकंपणिज्ञा ।
सव्वानुकंपाए समुज्जएहिं, विवज्जओऽयं कहमीहितो मे ।।

वृ- बालाश्च वृद्धाश्चाजङ्गमाश्चेति लोकेऽपि तावदेतेऽनुकम्पनीया इष्यन्ते, अतः सर्वेषामपि निर्विशेषमनुकम्पायां समुद्यतैः कथमयं "भे" भवद्भिः 'विपर्ययः' वैपरीत्यम् 'ईहितम्' अङ्गीकृतम्? यदेवं बाल-स्थविरौ परित्यज्य आचार्यादयो निस्तार्यन्ते, वृद्धं वाऽजङ्ग[illegible]यंते ।। पर एव प्रत्युत्तरमाशङ्क्य परिहरन्नाह–

[भा.४३४४] जइ बुद्धी चिरजीवी, तरुणो थेरो य अप्पसेसाऊ ।
सोवक्कमम्मि देहे, एयं पि न जुज्जए वोत्तं ।।

वृ- 'यदि' इति अथशब्दार्थे, अथैव भवतां बुद्धि स्यात्- 'चिरजीवी' प्रभूतवर्षजीवितस्तरुणः, स्थविरः पुनः 'अल्पशेषायुः' स्तोकावशेषायुष्कः, अतः स्थविरं विमुच्य तरुणं तारयामः, एतदप्यसमीचीनम् । कुतः ? इत्याह-'सोपक्रमे' अध्यवसान-निमित्तादिभिरायुष्कोपक्रमकारणैः सप्रत्यपाये देहे सति 'एतदपि' चिरजीवितादिकं वक्तुं न युज्यते ।।

[भा.४३४४] अवि य हु असहू थेरो, पयरेज्ञियरो कदाइ संदेहं ।
ओरालमिदं बलवं, जं घेप्पइ मुच्चई अबलो ।।

वृ- 'अपि च' इत्यभ्युच्चये, 'हुः' निश्चये । स्थविरो वृद्धत्वादेव 'असहिष्णुः' न तरीतुं शक्नोति, 'इतरस्तु' तरुणः समर्थतया कदाचित् स्वमेव 'सन्देहम्' उदकवाहकहरणरूपं प्राणसन्देहकारणं प्रतरेत्, अतः 'उदारं' परिस्थूरम् 'इदं' भवदीयं वचनम्-यद् 'बलवान्' तरुणो गृह्यते 'अबलस्तु' स्थविरो मुच्यते ।।

इत्थं परेणोक्ते सूरिराह–

[भा.४३४५] आय-परे उवगिण्हइ, तरुणो थेरो उ तत्थ भयणिज्ञो ।
अनुवक्कमे वि थेवो, चिट्ठइ कालो उ थेरस्स ।।

वृ- तरुण आचार्यादिरपूर्वसूत्रा-ऽर्थग्रहण-तपःकर्मकरणादिना वस्त्र-पात्रादिसम्पादन-सूत्रार्थप्रदानादिना वाऽऽत्मानं परांश्चोपगृह्णाति । स्थविरस्तु तत्राऽऽत्म-परोपग्रहकरणे भजनीयः, कदाचित् तं कर्तुं समर्थ कदाचिन्न नेति भावः । तथा 'अनुपक्रमेऽपि' आयुष उपक्रममन्तरेणापि स्थविरस्य स्तोक एव कालोऽवशेषस्तिष्ठति, तरुणस्य तु सोपक्रमायुषोऽपि स्तोको वा भवेद् द्राघीयान् वा, ततः "सोवक्कमम्मि देहे" इत्यादि त्वदुक्तं यत्किञ्चि देतत् ।।

अथ यदुक्तम् 'बाल-वृद्धादयो लोकेऽप्यनुकम्पनीयाः' ति तत्परिहाराय लौकिकमेव दृष्टान्तमाह-

[भा.४३४६]　　दुब्भासे खीरवती, गावी पुस्सइ कुडुंबभरणट्ठा ।
　　　　मोत्तु फलदं च रुक्खं, को मंदफला-ऽफले पोसे ॥

वृ- दुर्ग्रासं-दुर्भिक्षं तत्र यथा 'क्षीरवती' भूम्नि मतुप्रत्ययविधानाद् बहुक्षीरा गौः कुटुम्बभरणार्थं 'पोष्यते' चारीप्रदानादिना पुष्टिं नीयते, एवमस्माकमपि य आचार्यादिस्तरुणादिगुणोपेततयाऽऽत्मनः परेषां चोपग्रहं कर्तुं समर्थः स निस्तार्यते । तन्निस्तारणे हि बहूनां बाल-वृद्धादीनामपि तदाश्रितानामनुकम्पा कृता भवति । अथ तं परित्यज्य क्षुल्लक-स्थविरादिस्तस्या आपदस्तार्यते ततो बहवो बालादयस्तदाश्रिताः परित्यक्ता भवन्ति । अपि च-'फलदं' प्रभूतफलदायिनं वृक्षं मुक्त्वा को नाम मन्दफलान् अफलान् वा वृक्षान् 'पुष्णीयात्' सारणीसलिलसेचनादिना पुष्टिं प्रापयेत् ? न कोऽपीत्यर्थः । उपनययोजना प्राग्वद् द्रष्टव्या ॥

उक्तं सचित्तग्रहणम् । अथ मिश्रग्रहणमाह-

[भा.४३४७]　　एमेव मीसए वी, नेयव्वं होइ आनुपुव्वीए ।
　　　　वोच्चत्थे चउगुरुगा, तत्थ वि आणाइणो दोसा ॥

वृ- एवमेव मिश्रविषयमपि ग्रहणम् 'आनुपूर्व्या' आचार्य-प्रवर्तिन्यादिपरिपाट्या ज्ञातव्यं भवति । अथ यथोक्तक्रममुल्लङ्घ्य विपर्यासेन पुरुषाणां स्त्रीणां वा ग्रहणं करोति ततश्चतुर्गुरुकाः । तत्रापि चाज्ञादयो दोषा भवन्ति ॥

अथ मिश्रग्रहणं कीदृशं प्रतिपत्तव्यम् ? इति उच्यते-

[भा.४३४८]मीसगगहणं तत्थ उ, विनिवाओ जो सभंड-मत्ताणं ।
　　　　अहवा वि मीसयं खलु, उभओपक्खऽच्चओ घोरो ॥

वृ- इह यः 'सभाण्ड-मात्राणां' पात्र-मात्रकाद्युपकरणसहितानां साधूनां साध्वीनां वा 'विनिपातः' उदकवाहके निमज्जनं 'तत्र' तद्विषयं यद् ग्रहणं तद् मिश्रग्रहणमुच्यते । अथवा यद् उभयोरपि-साधु-साध्वीलक्षणयोः पक्षयोः 'घोरः' रौद्रो युगपदुदकवाहकेनापहरणलक्षणः 'अत्ययः' प्रत्यपायस्ततो यद् ग्रहणं तद् मिश्रग्रहणमिति मन्तव्यम् ॥

अथामुमेव द्वितीयव्याख्यानपक्षमङ्गीकृत्य निस्तारणविधिमाह-

[भा.४३४९]　　सव्वत्थ वि आयरिओ, आयरियाओ पवत्तिनी होइ ।
　　　　तो अभिसेगप्पत्तो, सेसेसु तु इत्थिया पढमं ॥

वृ- द्वयोरपि पक्षयोरुदकेन ह्रियमाणयोर्यद्यस्ति शक्तिस्ततो युगपद् निस्तारणं कार्यम् । अथ नास्ति युगपद् निस्तारणसामर्थ्यं ततः सर्वत्रापि प्रथममाचार्यो निस्तारणीयः । आचार्यानन्तरं प्रवर्त्तिनी तारयितव्या भवति । 'ततः' प्रवर्त्तिन्या अनन्तरमभिषेकपदप्राप्तः । ततः 'शेषेषु तु' भिक्षुप्रभृतिषु पदेषु प्रथमं स्त्री निस्तारयितव्या, ततः पुरुषः । तथाहि-भिक्षु-भिक्षुण्योर्मध्ये प्रथमं भिक्षुणी ततो भिक्षुस्तारणीयः, क्षुल्लक-क्षुल्लिकयोर्मध्ये प्रथमं क्षुल्लिका ततः क्षुल्लकः, स्थविर-स्थविरयोः प्रथमं स्थविरा ततः स्थविर इति ॥

अथ किमर्थमेषु प्रथमं स्त्र निस्तार्यते ? इत्याह-

[भा.४३५०]　　अन्नस्स वि संदेहं, दट्ठुं कंपंति जा लयाओ वा ।

अबलाओ पगइभयालुगाउ रक्खा अतो इत्थी ॥

वृ- 'अन्यस्यापि' पुरुषादेः 'सन्देहम्' आपदं दृष्ट्वा याः स्त्रियः पवनसम्पर्कतो लता इव कम्पन्ते, याश्चाबलाः प्रकृत्या-स्वभावेनैव च "भयालुयाउ" त्ति भयबहुलाः, अतस्ताः स्त्रियः प्रथमं रक्षणीयाः ॥

आह-साधु-साध्वीनां निस्तारणे किमेष एवाचार्य-प्रवर्त्तिन्यादिकः क्रमः ? उतान्यथाऽप्यस्ति? उच्यते-अस्तीति ब्रूमः । तथा चाह-

[भा.४३५१] जं पुन संभावेमो, भाविणमहियममुकातो वत्थूओ ।

उक्कमं पि कुणिमो, छेओदइए वणियभूता ॥

वृ- 'यं पुनः' क्षुल्लकादिकमपि 'अमुकाद्' आचार्यादिर्वस्तुनः सकाशात् प्रवचनप्रभावनादिभिर्गुणैः 'अधिकं' सातिशयं 'भाविनं' भविष्यन्तं सम्भावयामः तत्र वयम् 'उत्क्रममपि' यथोक्तक्रमोल्लङ्घनमपि कुर्महे, क्षुल्लकादिकमपि प्रथमं तारयाम इत्यर्थः । कथम्भूताः ? इत्याह-छेदश्च-व्यय औदयिकश्च-लाभः छेदौदयिकं तत्र वणिग्भूताः सन्तः । किमुक्तं भवति ? - यथा वणिग् यदेव प्रभूतलाभमल्पव्ययं वस्तु तस्य ग्रहणं करोति, एवं वयमपि यत्र विशिष्टपात्रभूते वस्तुनि गृहीते प्रवचनप्रभावना-तीर्थाव्यवच्छेदादिको भूयान् लाभः समुज्जृम्भते स्वल्पश्चेतरपरित्यागलक्षणो व्ययः तं क्षुल्लकादिकमपि गृह्णीम इति ॥

एवं तावदुदकविषयं ग्रहणमभिहितम्, अथाग्नि-स्तेनादिविषयं तदेवातिदिशन्नाह-

[भा.४३५२] अगनी सरीरतेने, ओमऽद्धाणे गिलाणमसिवे य ।

सावयभय रायभए, जहेव आउम्मि गहणं तु ॥

वृ- अग्निसम्भ्रमे शरीरस्तेनभये अवमे अध्वनि ग्लानत्वे अशिवे श्वापदभये राजभये च यथैवाप्काये ग्रहणमभिहितं तथैवैतेष्वपि सचित्त-मिश्रभेदाद् द्विविधमपि वक्तव्यम् ॥

अथाचित्तग्रहणमभिधित्सुराह-

[भा.४३५३] अच्चित्तस्स उ गहणं, अभिनवगहणं पुराणगहणं च ।

उवठावणाए गहणं, तह य उवट्ठविए गहणं ॥

वृ- अचित्त-वस्त्र-पात्रादिकमुपकरणं तस्य ग्रहणं द्विधा-अभिनवग्रहणं पुराणग्रहणं च । तत्राभिनवं-प्रथममेव यद् वस्त्रादेर्ग्रहणं तदभिनवग्रहणम्, पुराणस्य-प्राग्गृहीतस्य चोलपट्टकादेः कूर्परादिना ग्रहणं पुराणग्रहणम् । तच्च द्विधा-उपस्थापनायां ग्रहणम् उपस्थापिते ग्रहणं च । तत्रोपस्थापनायां विधीयमानायां हस्तिदन्तोन्नतकरहस्तादिभिर्यद् रजोहरणादि गृह्यते तद् उपस्थापनाग्रहणम् । उपस्थापितस्य-छेदपस्थापनीयचारित्रं प्रापितस्य यद् उपधेर्धारणं परिभोगो वा तद् उपस्थापितग्रहणम् ॥

एनामेव गाथां व्याख्यानयति-

[भा.४३५४] ओहे उवग्गहम्मि य, अभिनवगहणं तु होइ अच्चित्ते ।

इयरस्स वि होइ दुहा, गहणं तु पुराणउवहिस्स ॥

वृ- अचित्तस्य वस्त्र-पात्रादेरभिनवग्रहणं द्विधा-ओघोपधिविषयम् औपग्रहिकोपधिविषयं च । 'इतरस्यापि' पुराणोपधेर्ग्रहणं द्विधा, उपस्थापनाग्रहणमुपस्थापितग्रहणं चेत्यर्थः ॥

अथवा अभिनवग्रहणमिदमनेकविधम्-

[भा.४३५५] जायण निमंतणुवस्सय, परियावन्नं परिट्ठविय नट्ठं ।
पम्हुट्ठ पडिय गहियं, अभिनवगहणं अनेगविहं ॥

वृ- याच्ञा-अवभाषणम्, निमन्त्रणा-गृहस्थानामभ्यर्थना, तत्पुरस्सरं यद् वस्त्रादेर्ग्रहणम्, यच्चोपाश्रये 'पर्यापन्नस्य' पथिकादिभिर्विस्मृत्या परित्यक्तस्य वस्त्रादेर्ग्रहणम्, यच्च परिष्ठापितस्य भूयः कारणे ग्रहणम्, एवं 'नष्टं' हारितं ''पम्हुट्ठं'' विस्मृतं 'पतितं' हस्तात् परिभ्रष्टं 'गृहीतं' प्रत्यनीकेन बलादाच्छिद्य स्वीकृतम्। एतेषां पुनर्लब्धानां यद् ग्रहणमेवमादिकमनेकविधमभिनव-ग्रहणं मन्तव्यम् ॥

अथ याच्ञा-निमन्त्रणाग्रहणयोर्विधिमतिदिशन्नाह-

[भा.४३५६] जो चेव गमो हेट्ठा, उस्सग्गाई वन्निओ गहणे ।
दुविहोवहिम्मि सो च्चिय, कास त्ति य किं ति कीस त्ति ॥

वृ- य एव 'गमः' प्रकारः 'अधस्तात्' पीठीकायाम् उत्सर्गादिको वस्त्रग्रहणविषयो वर्णितः स एवात्र 'द्विविधोपधेः' ओघिकौपग्रहिकलक्षणस्य ग्रहणे 'कस्य सत्कमेतद् वस्त्र-पात्रादिकं पूर्वमासीद्? भविष्यति वा? कस्माद्वा प्रयच्छसि?' इति पृच्छात्रयपरिशुद्धो द्रष्टव्यः। उपाश्रय-पर्यायपन्नवस्त्रादिग्रहणविषयस्तु विधिरिहैवोद्देशके पुरस्तादभिधास्यते। परिष्ठापितादेस्तु यथा कारणतो भूयोऽपि ग्रहणं क्रियते तथा व्यवहाराध्ययने भणिष्यते ॥

गतमभिनवग्रहणम्। अथ पुराणग्रहणम्, तच्च द्विधा-उपस्थापनाग्रहणं उपस्थापितग्रहणं च। तत्राद्यं तावदाह-

[भा.४३५७] कोप्परपट्टगगहणं, वामकराणामियाए मुहपोत्ती ।
रयहरण हत्थिदंतुन्नएहि हत्थेहवुट्ठाणं ॥

वृ- कूर्पराभ्यां चोलपट्टकस्य ग्रहणं कृत्वा वामकरसत्कयाऽनामिकया मुखपोतिकां गृहीत्वा रजोहरणं हस्तिदन्तोन्नताभ्यां हस्ताभ्यामादायोपस्थापनं कर्तव्यम्, शैक्षस्य व्रतस्थापना विधेयेत्यर्थः ॥

अथोपस्थापितग्रहणमाह-

[भा.४३५८] उवठावियस्स गहणं, अहभावे चेव तह य परिभोगे ।
एक्केक्कं पायादी, नेयव्वं आनुपुव्वीए ॥

वृ- उपस्थापितस्य यद् उपकरणग्रहणं तद् द्विधा-यथाभावः परिभोगश्च। अनेन च द्विविधेनापि ग्रहणेनैकैकं पात्रादिकम् 'आनुपूर्व्या' परिपाट्या 'नेतव्यं' ग्रहीतव्य ॥

इदमेव भावयति-

[भा.४३५९] पडिसामियं तु अच्छइ, पायाइं एस होतऽहभावे ।
सद्दव्व पाण भिक्खा निल्लेवण पाय परिभोगो ॥

वृ-यत् पात्रादिकं 'प्रतिस्वामितं' विवक्षितसाधुलक्षणेन स्वामिना प्रतिगृहीतं सद् आस्ते न तदानीं परिभुज्यते एष यथाभावो भवति, स्वपरिग्रहे धारणमित्यर्थः। परिभोगो नाम यत् पात्रादि यस्यां वेलायां परिभुज्यते तत्र सत्-शोभनमाचार्यादिप्रायोग्यं यद् द्रव्यं यच्च पानकं भैक्षं चात्मनो योग्यं तत्पात्रे गृह्यते निर्लेपनं च-आचमनं च तेन विधीयते एष पात्रस्य परिभोगः। इह च पात्रशब्देन

प्रतिग्रहो मात्रकं वा गृहीतम् ॥ तथा–

[भा.४३६०] पाणदय सीयमत्थुय, पमज्ज चिलिमिलि निसिज्ज कालगते ।
गेलन्न लज्ज असहू, छेअण सागारिए भोगो ॥

वृ- वर्षाकल्पादिकं 'प्राणिदयार्थम्' अप्कायादिजीवरक्षानिमित्तं परिभोक्तव्यम् । कल्पत्रयं शीतरक्षार्थम् । संस्तारकोत्तरपट्टकौ आस्तरणमास्तृतं तदर्थम् । रजोहरणं च प्रमार्जनार्थं गृह्यते । चिलिमिलिका प्रतिश्रय-द्वारादावुपभुज्यते । रजोहरणस्य निषद्याद्वयं निषदनार्थमादीयते। ''कालगए''त्ति कालगतस्याच्छादनार्थं नन्तकादिकं गृह्यते । ग्लानत्वं वा कस्यापि सञ्जातं सः अप्रावृतः सुखेनास्तामिति कृत्वा तस्याग्रे चिलिमिलिका दीयते । ''लज्ज''त्ति लज्जाव्यपगमार्थं चोलपट्टकः परिभुज्यते । ''असहु''त्ति राजादिप्रव्रजिता असहिष्णवः ते कल्पादिकं प्रावृणीयुः। ''छेदन''त्ति नखहरणिका-पिप्पलकादिना नखप्रलम्बादीनां छेदनं क्रियते । 'सागारिए'त्ति शैक्षस्य त्ति नखहरणिका-पिप्पलकादिना नखप्रलम्बादीनां छेदनं क्रियते । ''सागारिए''त्ति शैक्षस्य सज्ञातकानां सागारिकं ततः कल्पादिकं प्रावार्य प्रच्छन्ने स्थाप्यते । एवमादिकः सर्वोऽपि यथायोगमौधिकस्यौपग्रहिकस्य चोपधेः परिभोगो मन्तव्यः ॥

उक्तं पुराणग्रहणम् । तदुक्तौ च समर्थितमचित्तग्रहणम् । एवं क्षपकेण त्रिविधे ग्रहणे प्ररूपिते सति इतरः प्राह–

[भा.४३६१] उवरिं कहेसि हिट्ठा, न याणसी वयणं न होइ एवं तु ।
चतुरो गुरुगा पुच्छा, नासेहिसि तं जहा वेज्जो ॥

वृ- यद् उपरि कथयितुं योग्यं तत् त्वम् 'अधस्तात्' पूर्वं कथयसि । इयमत्र भावना-यद् भवता प्रथममेवाचार्यादिविषयं पुराणसचित्तग्रहणमभिहितं तदशैक्षलक्षणाभिनवसचित्त-ग्रहणप्ररूपणादूर्ध्वं प्ररूपयितुं योग्यमासीत्, अभिनव-पुराणपर्याययोः पूर्व-पश्चात्कालभावित्वेन भावात्; तस्य चाभिनवसचित्तग्रहणस्य भवता प्ररूपणैव न कृता, अत एव न जानासि ग्रहणस्वरूपम्। यथा च ''वन्दित्वा विनयेन पृच्छ'' इत्येवमहङ्कारदूषितं वचनं त्वयोक्तम् एवमभिधियमानं न भवति, सतां पूजनीयमिति वाक्यशेषः । एवं च ब्रुवाणस्य भवतश्चत्वारो गुरुकाः । क्षपकः पृच्छति-किमत्र मम क्षूणमापतितं येनैवं प्रायश्चित्तं ? । इतरः प्राह-त्वं पल्लवग्राहितया सम्यक् सिद्धान्ताभिप्रायमविज्ञाय जल्पसि । एवं च प्रज्ञापयन् त्वमात्मना नष्टोऽन्यानपि नाशयिष्यसि, यथा स प्रथमोद्देशकभणितो वैद्यः पूर्वाह्णे वमनं दद्यादपराह्णे विरेचनम् । वातिकेष्वपि रोगेषु, पत्यमाहर्विशोषणम् ॥

इति श्लोकमात्रं गृहीत्वा चिकित्सां कुर्वन् विनष्टः एवं भवानपीति चिरन्तनगाथासमा-सार्थः ॥ अथैनामेव किञ्चिद् विवृणोति-

[भा.४३६२] वयणं न वि गव्वभालियं, एलिसयं कुसलेहि पूजियं ।
अहवा न वि एत्थ लूसिमो, पगई एस अजाणुए जने ॥

वृ- इतरः क्षपकं ब्रूते-'ईदृशं' 'मां वन्दित्वा विनयेन पृच्छ' इत्येवंरूपं 'गर्वभारितम्' अहङ्कारभारगुरुकं वचनं 'कुशलैः' विद्वद्भिः 'न पूजितं' न श्लाघितम्, अतो नैव भवतो वक्तुं युज्यते । अथवा नाप्यत्र वयं 'रुष्यामः' रोषं कर्तुमर्हामः । कुतः ? इत्याह-'अज्ञे' मूर्खे जने

प्रकृतिरेषा यत् तथाविधज्ञानविकलोऽप्येष औद्धत्यमुद्वहति ॥ क्षपकः प्राह-

[भा.४३६३] मूलेण विना हु केलिसे, तलु पवले य घने य सोभई ।
न य मुलविभिन्नए घडे, जलमादीणि धलेइ कुण्हुई ॥

वृ-मूलेन विना 'तरु' वृक्षः चशब्दावपिशब्दार्थौ, 'प्रवरोऽपि' प्रधानोऽपि सहकारादिरपीत्यर्थः, 'घनोऽपि' पत्रबहलोऽपि कीदृशः शोभते ? न कीदृगपीति भावः; एवं विनयमूलविकलो धर्मोऽपि न शोभां बिभर्त्ति । तथा 'न च' नैव मूले-बुध्ने विभिन्नो घटो जलादीनि वस्तूनि क्वचिदपि धारयति, एवं धर्मघटोऽपि विनयमूले सञ्जातछिद्रो न किमपि ज्ञानादिजलं धारयितुमिष्टे ।

अतोऽहं विनयं कारयामीति प्रक्रमः ॥

[भा.४३६४] किं वा मए न नायं, दुविहे गहणम्मि जं जहिं कमती ।
भन्नइ अभिनवगहणं, सच्चित्तं तेण न विन्नायं ॥

वृ- सचित्ता-ऽचित्तभेदाद् द्विविधेऽपि ग्रहणे यद् यत्राभिनवं पुराणं वा क्रामति तत् तत्र मया किं वा न ज्ञातं येनैवं 'न जानासि ग्रहणस्वरूपम्' इत्याद्यभिधीयते ? । इतरः प्रतिब्रूते-भण्यते अत्रोत्तरम्-अभिनवं सचित्तग्रहणं त्वया न विज्ञातम् ॥ तच्चेदम्-

[भा.४३६५] अट्ठारस पुरिसेसुं, वीसं इत्थीसु दस नपुंसेसु ।
पव्वावणाअनरिहा, अनला एएत्तिया वुत्ता ॥

[भा.४३६६] अडयालीसं एते, वज्जित्ता सेसगाण तिण्हं पि ।
अभिनवगहणं एयं, सच्चित्तं ते न विन्नायं ॥

वृ- 'पुरुषेषु' पुरुषविषयाः "बाले वुड्ढे नपुंसे य०" इत्यादिगाथाद्वयोक्ता अष्टादश भेदाः, स्त्रीषु त एव गुर्विणी-बालवत्सासहिता विंशतिर्भेदाः, नपुंसकेषु तु "पंडए वाइए कीवे०" इत्यादयो दश भेदाः प्रव्राजनाया अनर्हा-अयोग्याः । अत एव "एएत्तिय" त्ति एते एतावन्तो भेदा अनला इति निशीथाध्ययने उक्ताः, "अली भूषण-पर्याप्ति-वारणेषु" इति धातुपाठाद् अपर्याप्ताः, प्रव्रज्यापरिपालनेऽसमर्था इत्यर्थः ॥ एतान् सर्वसङ्ख्यया अष्टचत्वारिंशतं भेदान् वर्जयित्वा शेषाणां 'त्रयाणामपि' पुरुष-स्त्री-नपुंसकानां प्रव्राजनं कर्त्तुं कल्पते । एतदभिनवग्रहणं सचित्तं "ते" त्वया न विज्ञातम् । एवं तेनोक्ते सति क्षपकः 'सती नोदना' इत्यभिधाय प्रवृत्तस्तथैव यथारत्नादिकं वस्त्रप्रदानं कर्त्तुमिति ॥

मू. (९६) *कप्पइ निग्गंथाण वा निग्गंथीण वा आहारायणियाए सेज्जासंथारए पडिग्गाहित्तए॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.४३६७] घेत्तुं जहक्कमेणं, उवही संथारएसु ठवयंति ।
तेसिं पि जदा गहणं, तं पि हु एमेव संबंधो ॥

वृ- यथारत्नाधिकक्रमेणोपधिं गृहीत्वा ततस्ते स्वस्वसंस्तारकभूमीषु स्थापयन्ति । 'तेषामपि च' संस्तारकाणां यदा ग्रहणं तदा तदपि 'एवमेव' यथारत्नाधिकं कर्तव्यम् । एष पूर्वसूत्रेण सह सम्बन्धः ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या- कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा यथारत्नाधिकं शय्यासंस्तारकान् प्रतिग्रहीतुमिति सूत्रसङ्क्षेपार्थः ॥

अथेदमेव सूत्रं विवरीषुराह-

[भा.४३६८] सेज्जासंथारो या, सेज्जा वसही उ थाण संथारो।
पुव्वण्हम्मि उ गहणं, अगेण्हणे लहुगो आणादी ॥

वृ- शय्यासंस्तारो नाम शय्या-वसतिस्तस्यां यत् 'स्थानं' शयनयोग्यावकाशलक्षणं स शय्यासंस्तारक उच्यते। तस्य च शय्यासंस्तारकस्योपाश्रयं प्राप्तैः पूर्वाह्णवेलायामेव ग्रहणं कर्त्तव्यम्। अग्रहणे मासलघु प्रायश्चित्तम्, आज्ञादयश्च दोषाः ॥

[भा.४३६९] चोयगपुच्छा दोसा, मंडलिबंधम्मि होइ आगमनं।
संजम-आयविराधन, वियालगहणे य जे दोसा ॥

वृ- अत्र नोदकः पृच्छां करोति-यदि पूर्वाह्ण एव ग्रामं प्राप्तास्ततस्तदैव शय्यासंस्तारकमपि गृह्णन्तु, वयमप्येतत् प्रतिपद्यामहे; परं यदि भक्तवेलायां प्राप्तास्तदा प्रथमं भिक्षां पर्यटन्तु, ततो बहिरेव समुद्दिश्य चरमपौरुषीप्रत्युपेक्षणां कृत्वा स्वाध्यायं च विधाय विकालवेलायां ग्रामं प्रविशन्तु। सूरिराह-"दोस"त्ति बहिर्भुञ्जानानां बहवो दोषाः। कथम ? इत्याह-'मण्डलीबन्धे' चिलिमिलिकां दत्त्वा मण्डलीरचनया भोजने विधीयमाने कुतूहलेन सागारिकाणामागमनं भवति, तैः सहासङ्खडे क्रियमाणे संयमा-ऽऽत्मविराधना। विकाले च वसतेर्ग्रहणे ये दोषा भवन्ति तन्निष्पन्नं प्रायश्चित्तं भवतीति द्वारगाथासमासार्थः ॥

सम्प्रतमेनामेव विवरीषुराह-

[भा.४३७०] अइभारेण व इरियं, न सोहए कंटगाइ आयाए।
भत्तट्ठिय-वोसिरिया, अतिंतु एवं जढा दोसा ॥

वृ-परः प्राह-भक्तवेलायां प्राप्तैस्तावत् प्रथमतो भक्तं ग्रहीतव्यम्, अन्यथा वेलातिक्रमे भक्त-पानलाभो न भवेत्। ततो भक्त-पानं गृहीत्वा वसतिं गवेषयित्वा यदि तदानीमेव तत्र प्रवेशः क्रियते तदा भक्त-पानोपकरणसत्को यो अतिभारस्तेन वाशब्दस्यानुक्तसमुच्चयार्थतया बुभुक्षया तृष्परितापनया चोपयोगमप्रयच्छन्तः संयमे ईर्यां न शोधयेयु-, आत्मनि कण्टकादिकं न पश्येयुः, एवं च यथाक्रमं संयमा-ऽऽत्मनोर्विराधना। ततः 'भक्तार्थि-व्युत्सृष्टाः' पूर्वं भक्तार्थिताः-बहिरेव समुद्दिष्टास्ततो व्युत्सृष्टाः-कृतपुरीष-प्रश्रवणोत्सर्गा सन्तो ग्रामम् 'अतियन्तु' प्रविशन्तु, एवं हि 'दोषाः' संयमा-ऽऽत्मविराधनालक्षणाः परित्यक्ता भवन्ति ॥

अथाचार्य प्रत्युत्तरयति-

[भा.४३७१] आयरियवयण दोसा, दुविहा नियमा उ संजमा-ऽऽयाए।
वच्चह को वा सामी, असंकडं मंडलीए वा ॥

वृ- आचार्यस्य वचनमिदम्-त्वदुक्तनीत्या बहिर्भुञ्जानानां नियमाद् 'द्विविधाः' संयमा-ऽऽत्मविराधना (लक्षणाः) दोषा भवन्ति। तथाहि-तैस्तत्र भक्त-पानमानीतं सागारिकाश्च कुतूहलवशात् तद्दर्शनार्थमागताः, ततो यदि तावन्तं कालं भक्त-पानं धारयन्तस्तिष्ठन्ति तदा भारेण महती परितापना भवेत् सूत्रार्थयोश्च परिहाणिरुपजायेत। अथ सागारिकान् ब्रुवते-'व्रजतयूयम्' ततोऽधिकरणं भवति। अथवा ते सागारिका एवमुच्यमाना ब्रवीरन्-कोऽस्य वृक्षस्य देवकुलस्य वा स्वामी ये चास्माकं सम्मुखं 'व्रजत' इति भणत ? । एवमसङ्खडे तैः सह सञ्जाते

ततश्च भाजनभेदादयो दोषाः । अथ मण्डल्यां रचितायां सागारिकाः समागच्छन्ति ततो महान्तमुड्डाहं कुर्युः ॥ अमुमेवार्थं सविशेषमाह–

[भा.४३७२] भत्तट्ठण सज्झाए, पडिलेहण रत्तिगेण्हणे जं च ।
पुव्वण्हम्मि उ गहणे, परिहरिया ते भवे दोसा ॥

वृ- 'भक्तार्थनं' मण्डल्या भोजनं स्वाध्यायं प्रत्युपेक्षणां वा क्रियमाणां विलोक्य ते उड्डाहं उड्डञ्चकान् वा कुर्वीरन्, तत्रापि तथैवासङ्खडदोषः । अथ ते सागारिकाः प्रद्विष्टाः सन्तो वसतिं न प्रयच्छन्ति ततोऽपरं ग्रामं गच्छेयुः, तत्र च विकाले प्राप्ताः सन्तो रात्रौ वसतिग्रहणं कुर्वन्तो यद् दोषजालमापद्यन्ते तन्निष्पन्नं प्रायश्चित्तम्, अतः पूर्वाह्ने एव वसतेर्ग्रहणं कर्त्तव्यम् । ततश्च 'ते' पूर्वोक्ता दोषाः परिहृता भवन्ति ॥ किञ्च–

[भा.४३७३] कोतूहल आगमनं, संखोहेणं अकंठगमणादी ।
ते चेवऽसंखडादी, वसहिं च न देंति जं चऽन्नं ॥

वृ-मण्डल्यां सागारिकाः कौतूहलेनागमनं कुर्युः तत्र कस्यापि संयतस्य संक्षोभेण भक्त-पानस्य 'अकण्ठगमनादिकम्' अश्रोतोगमनप्रभृतिकं भवेत् । अथवा कोऽप्यसहिष्णुर्ब्रूयात्-किमेवं प्रलोकयथ ?; ततस्त एवासङ्खडादयो दोषाः । अथ 'सागारिकम्' इति कृत्वा अभुक्ता एव भक्त-पानव्यग्रहस्ता ग्रामं प्रविशन्ति तत्र च यैः सममसङ्खडं कृतं ते वसतिं न प्रयच्छेयुः, अन्यानपि च ददतो निवारयेयुः । ''जं चऽन्नं'' ति वसतावप्राप्यमाणायां यदन्यद् दोषजातमापद्यन्ते तन्निष्पन्नम्॥

अथ वसत्यभावकृतभाजना एवान्य ग्रामं गच्छेयुः, तत इमे दोषाः-

[भा.४३७४] भारेण वेयणाए, न पेहई खाणुमाइए दोसे ।
इरियाइ संजमम्मी, परिगलमाणे य छक्काया ॥

वृ-भक्त-पानस्योपकरणस्य च सम्बन्धिना भारेण वेदना या भवेत् तया च स्थाणु-कण्टकादीन् दोषान् न प्रेक्षते, ततश्चात्मविराधना । यत् पुनरीर्याया अशोधनं सा संयमविराधना । परिगलति च भक्त-पाने षट्कायविराधना ॥

तत्रप्राप्तानां दोषानभिधित्सुराह–

[भा.४३७५] पविसण मग्गण ठाणे, वेसित्थि दुगंछिए य सुन्ने य ।
सज्झाए संथारे, उच्चारे चेव पासवणे ॥

वृ- अन्यस्मिन् ग्रामे विकालवेलायां प्रवेशे कृते वसतेर्मार्गणे परस्परस्फिटितानामाकारणेन महानधिकरणदोषो भवति । वेश्यास्त्रपाटके चर्मकरादिस्थाने वा जुगुप्सिते तिष्ठतां वक्ष्यमाणं दोषजातं 'शून्यगृहादौ च' अप्रत्युपेक्षितायां वसतौ स्वाध्यायं संस्तारकमुच्चारं प्रश्रवणं च कुर्वतामकुर्वतां च बहवो दोषा भवन्तीति द्वारगाथासमासार्थः ॥

अथैनामेव विवृणोति-

[भा.४३७६] सावय तेना दुविहा, विराधना जा य उवहिणा उ विना ।
गुम्मिय गहणा-ऽऽहणणा, गोणादी चमढणा रत्तिं ॥

वृ-विकाले प्रविशतां श्वापदभयं भवति । 'स्तेना द्विविधाः' शरीरापहारिण उपकरणापहारिणश्च, ते तदानीमभिद्रवन्ति । उपघातपहते या तेन विना तृणग्रहणा-ऽग्निसेवनादिका संयमविराधना

तन्निष्पन्नम् । अथवा स प्रत्यन्तप्रदेशवर्ती ग्रामः ततस्तत्र बद्धस्थानकाः 'गौल्मिकाः' आरक्षिकपुरुषाः स्तेनादीनभिलीयमानान् रक्षन्ति, ते विकालवेलायां प्राप्तानां 'स्तेना अमी' इति बुध्या ग्रहणाऽऽहननादिकं कुर्युः ।

अथवा विकाले प्रविशन्तो गवादिभि पादप्रहारादिकां चमढनामासादयन्ति । एते रात्रौ प्राप्तानां दोषाः ।। किञ्च–

[भा.४३७७] फिडियऽन्नोन्नाऽऽगारण, तेनय रत्तिं दिया व पंथम्मि ।
साणाइ वेस कुच्छिय, तवोवनं मूसिगा जं च ।।

वृ- विकाले वसतिगवेषणार्थं पृथक् पृथग् गताः, ततः 'स्फिटिताः' परस्परपरिभ्रष्टाः सन्तोऽन्योऽन्यम् आकारणं-व्याहारणं कुर्युः । स्तेनकास्तद्वचनं श्रुत्वा रात्रौ मुषितमभिलषेयुः, दिवा वा द्वितीये दिवसे 'पथि' मार्गे गच्छतस्तान् स्तेनका मुषेयुः । श्वानादयो वा रात्रौ वसतिगवेषणार्थं पर्यटतस्तान् उपद्रवेयुः । "वेस कुच्छिय" त्ति रात्रौ च वसतमन्वेषयन्तो न जानन्ति किमेतद् गृहं वेश्यापाटकस्य प्रत्यासन्नम्? उत न? इति, यद्वा किमेतत् चर्मकार-रजकादिजुगुप्सितकुलासन्नम्? आहोश्विद् न? इति । एवं चाजानानास्ते वेश्यापाटकासन्ने प्रतिश्रये वसेयुः ततो लोको ब्रूयात्-अहो! तपोवनमध्यासते जितेन्द्रिया अमी महर्षय इति । अथ जुगुप्सितस्थानासन्ने स्थितास्ततो लोको ब्रवीत-स्वस्थानं मूषिकाः समागताः, एतेऽप्येवंजातीया इति भावः ।

"जं च" त्ति यच्च रात्रावन्योऽन्यालपनेऽप्कायानयनादिकमधिकरणं तन्निष्पन्नं प्रायश्चित्तम् । तथा तत्रोपाश्रये रात्रौ प्राप्ताः सन्तः 'कालभूमी न प्रत्युपेक्षिता' इति कृत्वा यदि स्वाध्यायं न कुर्वन्ति ततः सूत्रा-ऽर्थनाशादयो दोषाः । अथ कुर्वन्ति ततः सामाचारीविराधना ।।

अथ संस्तारकद्वारं व्याख्याति-

[भा.४३७८] अप्पडिलेहिय कंटा, बिलं व संथारगम्मि आयाए ।
छक्कायाण विराधन, विलीण सेहऽन्नहाभावो ।।

वृ- अप्रत्युपेक्षितायां वसतौ कण्टका भवेयुः, बिलं वा सर्पादिसम्बन्धि, ततः संस्तारके प्रस्तीर्यमाणे आत्मनि विराधना भवेत् । पृथिव्यादयो वा षड्कायास्तत्र भवेयुः, तेषां संस्तारकेणाक्रम्यमाणानां विराधना भवति । 'विलीनं वा' जुगुप्सितं सञ्ज्ञा-कायिक्यादिकं तत्र भवेत्, ततः शैक्षस्य जुगुप्सया 'अन्यथाभावः' उन्निष्क्रमणाभिप्रायो भवेत् ।।

अथोच्चार-प्रश्रवणद्वारद्वयं युगपदाह-

[भा.४३७९] खाणुग-कंटग-वाला बिलम्मि जइ वोसिरिज्ज आयाए ।
संजमओ छकाया, गमने पत्ते अइंते य ।।

वृ- अप्रत्युपेक्षिते प्रतिश्रये स्थाणु-कण्टक-व्याला भवेयुः, तदाकुले बिलसमाकुले वा प्रदेशे यदि व्युत्सृजति तत आत्मविराधना । अथ पृथिव्यादिषट्कायवति भूभागे व्युत्सृजति ततः संयमविराधना । एते द्वे अपि विराधने "गमने" त्ति संज्ञा-कायिकीव्युत्सर्जनार्थं गच्छतः "पत्ते" ति संज्ञाभुवं कायिकीभुवं वा प्राप्तस्य "अइंते अ" त्ति संज्ञां कायिकीं वा व्युत्सृज्य भूयोऽपि वसतिं प्रविशतो यथासम्भवं मन्तव्ये ।।

अथ विराधनाभयाद् न व्युत्सृजति तत इमे दोषाः-

[भा.४३८०] मुत्तनिरोहे चक्खुं, वच्चनिरोहेण जीवियं चयइ
उड्ढनिरोहे कोढ्ढं, गेलन्नं वा भवे तिसु वि ॥

वृ- मूत्रस्य निरोधे विधीयमाने चक्षुरुपहन्यते। वर्च-पुरीषं तस्य निरोधेन जीवितं परित्यजति, अचिरादेव मरणं भवतीत्यर्थः। ऊर्ध्व-वमनं तस्यन निरोधे कुष्ठं भवति। 'ग्लान्यं वा' सामान्यतो मान्द्यं 'त्रिष्वपि' मूत्र-पुरीष-वमनेषु निरुध्यमानेषु भवेत् ॥

यत एते दोषा अतः-

[भा.४३८१] पढम-बिइयाए तम्हा, गमनं पडिलेहणा पवेसो य।
पुव्वठियाऽसइ गच्छं, ठवेत्तु बाहिं इमे तिन्नि ॥

वृ- तस्मात् प्रथमायां द्वितीयस्यां वा पौरुष्यां विवक्षितग्रामे गमनं कृत्वा ततो वसतेः प्रत्युपेक्षणा प्रवेशश्च तस्यां कर्त्तव्यः । कथम् ? इत्याह-यदि तत्र केऽपि साधवः पूर्वस्थिताः सन्ति तदा सर्वेऽपि प्रविशन्ति। अथ न सन्ति पूर्वस्थिताः ततो गच्छं क्वचिद् वृक्षादौ बहिः स्थापयित्वा 'इमे' ईदृशास्त्रयः साधवो ग्रामं प्रविशन्ति ॥

[भा.४३८२] परिणयवय गीयत्था, हयसंका पुंछ चिलिमिली दोरे।
तिन्नि दुवे एक्को वा, वसहीपेहड्या पविसे ॥

वृ- ये गीतार्था परिणतवयसो अत एव 'हतशङ्काः' अशङ्कनीयाः ते गुरुमापृच्छय दण्डप्रोञ्छनकं चिलिमिलीं दवरकांश्च गृहीत्वा त्रयो जनास्तदभावे द्वौ जनौ तदप्राप्तावेको वा वसतिप्रत्युपेक्षणार्थं ग्रामं प्रविशन्ति। ततो वसतिं गृहीत्वा प्रमृज्य च चिलिमिलिकां च दत्त्वा सबालवृद्धमपि गच्छं तत्र प्रवेशयन्ति ॥

अथ 'विकालवेलायां न प्रवेष्टव्यम्' इति यदुक्तं तदपवदन्नाह-

[भा.४३८३] बिइयं ताहे पत्ता, पए य पत्ता उवस्सयं न लभे।
सुन्नघर देउले वा, उज्जाने वा अपरिभोगे ॥

वृ- द्वितीयपदमत्राभिधीयते-'तदानीं' विकालवेलायामेव प्राप्ताः, यद्वा 'प्रगे' प्रभाते प्राप्ताः परमुपाश्रयं न लभन्ते ततो विकालेऽपि प्रविशेयुः। प्रभातप्राप्ताश्च दिवा शून्यगृहे देवकुले वा उद्याने वा 'अपरिभोग्ये' जनोपभोगरहिते तिष्ठन्ति, तत्रैव च समुद्देशनं कुर्वन्ति ॥

[भा.४३८४] आवाय चिलिमिणीए, रन्ने वा निब्भये समुद्दिसणं।
सभए पच्छन्नाऽसइ, कमढग कुरुया य संतरिया ॥

वृ- अथ शून्यगृहादौ सागारिकाणामापातो भवति ततश्चिलिमिलिकां दत्त्वा समुद्देष्टव्यम्। अरण्यं व यदि निर्भयं ततस्तत्र गत्वा समुद्दिशन्ति। अथारण्यं सभयं ततो ग्रामसमीपे एव यः प्रच्छन्नः प्रदेशस्तत्र समुद्देशनं कर्त्तव्यम्। अथ प्रच्छन्नस्थानं नास्ति ततस्तत्रैव शून्य गृहादौ 'कमठकेषु' शुक्ललेपेन सबाह्याभ्यन्तरं लिप्तेषु कांस्यकरोटकाकारेषु समुद्दिशन्ति, 'कुरुकुचा च' समुद्देशनानन्तरं पादप्रक्षालनादिका बहुना द्रवेण कर्त्तव्या, समुद्दिशन्तश्च 'सान्तराः' सावकाशा बृहदन्तराला उपविशन्ति। एवं भुक्त्वा बहिरेव संज्ञादि व्युत्सृज्य ततो ग्रामं प्रविशन्ति। प्रविष्टाश्च या पूर्वं भिक्षां हिण्डमानैर्वसति प्रत्युपेक्षिता तस्यां वसन्ति ॥

कथम् ? इत्याह-

[भा.४३८५]　कोट्ठग सभा व पुव्वं, काल-वियाराइभूमिपडिलेहा ।
पच्छा अतिंति रत्तिं, अहवण पत्ता निसिं चेव ॥

वृ- 'कोष्ठकः' आवासविशेषः 'सभा' प्रतीता, एवमादिकं यत् 'पूर्वं' भिक्षां पर्यटद्भिः प्रत्युपेक्षितं तत्र कालग्रहणयोग्यां भूमिं विचारस्य च-संज्ञाया आदिशब्दात् कायिक्याश्च भूमिं सूर्ये ध्रियमाण एव प्रत्युपेक्षन्ते । ततः पश्चात् सर्वेऽपि वसतौ 'रात्रौ' प्रदोषसमये 'अतियन्ति' प्रविशन्ति । ''अहवण''त्ति अथवा ते साधवस्तत्र निशायामेव प्राप्ता भवेयुः ॥

ततः को विधिः ? इत्याह-

[भा.४३८६]गोम्मिय भेसण समणा, निब्भय बहि ठाण वसहिपडिलेहा ।
सुन्नघर पुव्वभणिए, कंचग तह दारुदंडे य ॥

वृ-गुल्मेन-समुदायेन चरन्तीति 'गौल्मिकाः' स्थानरक्षपालाः ते यदि 'भेषणं' वित्रासनं कुर्वन्ति ततो वक्तव्यम्-श्रमणा वयं न स्तेनाः । यदि च स सन्निवेशो निर्भयो भवति तदा ''बहि ठाण''ति बहिरेव गच्छस्तावदवस्थानं करोति, वृषभास्तु वसतिप्रत्युपेक्षणार्थं ग्रामं प्रविशन्ति । तत्र च शून्यगृहं पूर्वभणितेन विधिना प्रत्युपेक्ष्य [illegible] कञ्चुकं परिधाय 'दारुदण्डेन' दण्डप्रोञ्छनकेन वसतिमुपरि प्रस्फोटयन्ति, ततो गच्छः प्रविशति ॥

अथ संस्तारकग्रहणविधिमाह-

[भा.४३८७]　संथारगभूमितिगं, आयरिए सेसगाण एक्केकं ।
रुंदाए पुप्फकिन्ना, मंडलिया आवली इतरे ॥

वृ- ''आयरिए''त्ति षष्ठी-सप्तम्योरर्थं प्रत्यभेदादाचार्यस्य योग्य संस्तारकभूमित्रयं प्रथमतो निरूपणीयम्-तत्रैका निवाता संस्तारकभूमि, अपरा प्रवाता, अन्या निवात-प्रवाता । शेषाणां साधूनां योग्यामेकैकां संस्तारभूमिमन्वेषयेत् । इह च वसतिस्त्रिधा-विस्तीर्णा क्षुल्लिका प्रमाणयुक्ता च । तत्र रुन्दा नाम-विस्तीर्णा घट्टशालादिरित्यर्थः तस्यां 'पुष्पावकीर्णा' पुष्पप्रकरवदवकीर्णा-अनियतक्रमा अयथायथं स्वपन्ति येन सागारिकाणामवकाशो न भवति । अथ क्षुल्लिका ततो मध्ये पात्रकाणि कृत्वा मण्डलिकाकारेण पार्श्वतः शेरते । 'इतरा नाम' प्रमाणयुक्ता तस्याम् 'आवल्या' पङ्क्त्या स्वपन्ति ॥

अत्रैव विधिविपर्यासे प्रायश्चित्तमाह-

[भा.४३८८]　सीसं इतो य पादा, इहं च मे वेंटिया इहं मज्झं ।
जइ अगहियसंथारो, भणाइ लहुगोऽहिकरणादी ॥

वृ-इतो मे शीर्षं भविष्यति, इह मे पादौ भविष्यतः, इह च मे वेण्टिका भाजनानि वा स्थास्यन्ति, एवं यद्यगृहीतसंस्तारको आत्मीयया इच्छया भणति विण्टिकादिकं च स्थापयति तदा लघुमासः प्रायश्चित्तम्; अधिकरणादयश्च दोषा भवन्ति । अधिकरणं नाम-द्वितीयोऽपि साधुरेवमेव ब्रूयात्-ममाप्यत्रैव शीर्षादि भविष्यतीति; ततश्चास्थिभङ्गादयो दोषाः ॥

यत एवमतः-

[भा.४३८९]　संथारग्गहणीए. वेंटियउक्खेवणं तु कायव्वं ।
संथारो घेत्तव्वो, माया-मयविप्पमुक्केणं ॥

वृ- "संथारग्गहणीए" त्ति आर्षत्वात् स्त्रीत्वम्, संस्तारकग्रहणकाले वेण्टिकाया उत्क्षेपणं कर्त्तव्यं येन सुखेनैव दृष्टायां भुवि संस्तारका विभक्तुं शक्यन्ते। स च संस्तारको यो यस्मै साधवे दीयते स तेन माया-मदविप्रमुक्तेन ग्रहीतव्यः। माया नाम-'अहं वातार्थी, ममात्रावकाशं प्रयच्छत' इत्यादिका सुन्दरतरावकाशलोभेनासद्भूतकारणनिवेदनलक्षणा, मदः-अहङ्कारः 'अहो ! किमर्थं संस्तारकग्रहणकाले वेण्टिका उत्क्षिप्यन्ते ? उच्यते-

[भा.४३९०] सम-विसमाइं न पासइ, दुक्खं च ठियम्मि ठायई अन्नो।
नेव य असंखडादी, विनयो अममिज्जया चेव ॥

वृ- विण्टिका यदि नोत्क्षिप्यन्ते तदा गणावच्छेदिकादिसंस्तारकान् विभजमानः सम-विषमाणि स्थानानि न पश्यति, अवकाशानित्यर्थः। तथा एकस्मिन् साधौ विण्टिकासहिते पूर्वस्थिते सति अन्यो न तिष्ठति, स्थातुं न शक्नोतीति भावः। अपि च वेण्टिकासूत्क्षिप्तासु असङ्खडादयो दोषा नैव भवन्ति। यथारत्नाधिकं च संस्तारकग्रहणे विनयः कृतो भवति। 'अममता च' ममत्वं संस्तारकभूमिविषयं परिहृतं भवति। अतः साधुभि स्वस्वोपकरणे प्रत्येक्षिते उपाश्रये च प्रमार्जिते सति सूरिभिर्वक्तव्यम्-आर्या ! उत्क्षिपत स्वाः स्वा विण्टिकाः। एवमुक्ते यो नोत्क्षिपति तस्य मासलघु ॥

अथ वेण्टिकासूत्क्षिप्यमाणासु कश्चिदिमां मायां कुर्यात्-

[भा.४३९१] संथारग्गहणीए, कंटग वीयार पासवण धम्मे।
पयलणे मासो गुरुओ, सेसेसु वि मासियं लहुग ॥

वृ- संस्तारग्रहणकाले सम-सुन्दरभूमिलोभेन कण्टकोद्धरणमहं सम्प्रति करिष्यामि, 'विचारं वा' संज्ञां वा व्युत्सृष्टुं प्रश्रवणं वा कर्तुं बहिर्गमिष्यामि, धर्मं वा शय्यातरादेरग्रे कथयिष्यामि इत्यादि ब्रूयात्, प्रचलायनं वा तदानीं विदध्यात्, एवं मायायाः करणे आज्ञादयो दोषाः। अत्र च प्रचलायने मासगुरु। 'शेषेषु' कण्टकादिषु मायाभेदेषु मासलघुकम् ॥

अथ कण्टकादिपदानि विवृणोति-

[भा.४३९२] दुक्खं ठिओ व निज्जइ, न यानुवाएण पेल्लिउं सक्का।
जो वि य ने अवनेहिइ, तं पि य नाहामि इति मंता ॥

[भा.४३९३] संथारभूमिलुद्धो, भणाइ छंदेण भंते ! गिण्हित्तो।
संथारगभूमीओ, कंटगमहमुद्धरामेणं ॥

वृ- कोऽपि सम-सुन्दरे अवकाशे संस्तारकं कर्तुकामः, तत्र चापरः कोऽपि साधुः स्थित उपविष्टो वर्तते, स च 'दुःखं' दुःखेन 'नीयते' अन्यत्र स्थाप्यते, न च 'अनुपायेन' कण्टकोद्धरणादि व्याजमन्तरेण प्रेरयितुं शक्यः, योऽपि च "णे"

इति मदीयं कण्टकमपनेष्यति तमप्यहं ज्ञास्यामीति मत्वा संस्तारकभूमिलुब्धो भणति-भदन्त! इतः संस्तारकभूमीत उत्थाय 'छन्देन' स्वाभिप्रायेण 'गृह्णीत' संस्तारकम्, अहं पुनरत्र कण्टकमेनमुद्धरामीति। एवं मायाकरणे मासलघु प्रायश्चित्तम्॥ अथ सद्भावादेव कण्टको लग्नः ततः किम् ? इति अत आह-

[भा.४३९४] लग्गे व अनहियासम्मि कंटए उक्खिवावे अन्नेणं।

मज्झक्कगमवणेत्ता, कमागयं गेण्हह ममं पि ॥

वृ- 'वा' इत्यथवा सद्भावेनैव तस्य कण्टको लग्नः स च अनधिसह्यः-सोढुमशक्यः ततो वेण्टिकामन्येनोत्क्षेपयेत्। उत्क्षेप्य च ब्रूयात्-मदीयं कण्टकमपनीय क्रमागतं ममापि योग्यं संस्तारकं गृह्णीत; एष शुद्धः ॥

अथ विचारादिद्वाराण्यतिदिशन्नाह–

[भा.४३९५] एमेव य वीयारे, उज्जु अनुज्जू तहेव पासवणे।
धम्मकह लक्खेण य, आवज्जइ मासियं माई ॥

वृ- एवमेव विचारविषयेऽपि ऋजुरनृजुश्च वक्तव्यः, मायी अमायी चेत्यर्थः। तथैव प्रश्रवणद्वारेऽपि विभाषा कर्त्तव्या। धर्मकथाया वा लक्ष्येण-व्याजेन कश्चित् क्रमागतसंस्तारकव्यत्या- संकरोति सोऽपि 'मायी' मायावानिति कृत्वा मासिकं लघुकमापद्यते। अथ सद्भावतो धर्मकथां करोति ततः शुद्ध एव ॥

अपि च-तदानीं सद्भावतो धर्मकथायां विधीयमानायाममी गुणाः-

[भा.४३९६] दुवियड्ढबुद्धिमलणं, सड्ढा सेज्झायरेयराणं च।
तित्थविवड्ढि पभावण, असारियं चेव कहयंते ॥

वृ- श्रोतृणां या दुर्विदग्धा-विपरीतशास्त्रपक्षग्राहिणी बुद्धिस्तस्या मलनं-मर्दनं कृतं भवति। शय्यातरस्य इतरेषां च-श्राद्धानां श्रद्धा वर्धिता भवति। धर्मश्रवणानन्तरं च बहुषु भव्येषु प्रव्रज्यां प्रतिपद्यमानेषु तीर्थस्य विवृद्धि कृता भवति, प्रभावना च प्रवचनस्य जायते-अहो ! विजयते जैनेन्द्रशासनं यत्रेदृशा धर्मकथालब्धिसम्पन्ना इति। अपि च-सागारिका बहिर्धर्मश्रवणव्याक्षिप्ताः सन्तः प्रतिश्रयमध्ये न प्रविशेयुः, ततश्च साधूनामुपकरणं प्रत्युपेक्षमाणानामसागारिकं भवति। एवमेते गुणा धर्मं कथयति भवन्ति ॥

अथ प्रचलायनद्वारं भावयति-

[भा.४३९७] मा पयल गिण्ह संथारगं ति पयलाइ इय वि जइ वुत्तो।
को नाम न निग्गिण्हइ, खणमित्तं तेन गुरुओ से ॥

वृ- गणावच्छेदिकाना कश्चित् प्रचलायमानो भणितः-मा प्रचलाय, गृहाण संस्तारकम्; इति उक्तोऽपि यद्यसौ प्रचलायते ततो ज्ञातव्यम्-शठ एषः। कुतः ? इत्याह-'को नाम' महानिद्रालुरपि 'क्षणमात्रं' यावता संस्तारको गृह्यते तावन्मात्रं कालं निद्रां न निगृह्णाति ? स तु तावन्तमपि कालं निद्रानिरोधमकुर्वाणः परिस्फुटं मायावानेव मन्तव्यः। अत एव "से" तस्य तीव्रतरमायाविनो मासगुरु प्रायश्चित्तम् ॥

अथ संस्तारकग्रहणे विधिमाह–

[भा.४३९८] विच्छिन्न कोट्टिमतले, डहराए विसमए अ घेप्पंति।
होइ आहाराइणियं, राइणिया ते इमे होंति ॥

वृ- विस्तीर्णायां वा 'डहरायां वा' सङ्कीर्णायां वसतौ कुट्टिमतले वा विषमे वा भूभागे यथारत्नाधिकं संस्तारका गृह्यन्ते। ते च रत्नाधिका इमे भवन्ति ॥

[भा.४३९९] उवसंपज्ज गिलाणे, परित्त खमए अवाउडिय थेरे।

तेन परं विच्छिन्ने, परियाए मोत्तिमे तिन्नि ॥

**वृ**-प्रथमतो गुरूणां संस्तारकत्रयं दत्त्वा ततो यो ज्ञानाद्यर्थमुपसम्पदं प्रतिपन्नस्तस्य संस्तारको दातव्यः । ततो ग्लानस्य, ततः परीत्तोपधेः, ततः क्षपकस्य, ततो 'अपावृतिकस्य' 'अपावृतेन मया सकलाऽपि रजनी गमनीया' इत्येवं प्रतिपन्नाभिग्रहस्य, तदनन्तरं 'स्थविरस्य' श्रुतेन वयसा वा वृद्धस्य, ततः परं विस्तीर्णे प्रतिश्रये पर्यायरत्नाधिकक्रमेण संस्तारका ग्रहीतव्याः, परं मुक्त्वा 'अमून् त्रीन्' क्षुल्लक-शैक्ष-वैयावृत्यकरान् वक्ष्यमाणगाथायामभिधास्यमानान् ॥

आह उपसम्पन्न-ग्लानादीनां क्रियतां प्रथमं संस्तारकप्रदानेनानुग्रहः, यस्तु तपस्वी विपुलां निर्जरामभिलषन् स्वयमेव 'अपावृतेन मया स्थातव्यम्' इत्येवमभिग्रहं गृह्णाति तस्य किमर्थं स्थविरादिभ्यः प्रथमं संस्तारको दीयते ? उच्यते-

**[भा.४४००]** कामं सकामकिच्चो, अभिग्गहो न उ बलाभिओगेणं ।

तनुसाहारणहेतुं, तह वि निवाएण्हि ठावेंति ॥

**वृ**- 'कामम्' अनुमतमिदम्-स्वकामेन-स्वकीययैव इच्छया कृत्यः-कर्तव्यो अभिग्रहो न तु बलाभियोगेन, परं तथापि 'तनुसाधारणहेतोः' शरीरस्य शीतोपद्रवसंरक्षणनिमित्तं निवाते प्रदेशे तं स्थापयन्ति ॥

कुतः ? इति चेद् इत्याह-

**[भा.४४०१]** अन्नोन्नकारेण विनिज्जरा जा, न सा भवे तस्स विवज्जयेणं ।

हा तवस्सी धुणते तवेणं, कम्मं तहा जाण तवोऽनुमंता ॥

**वृ**- अन्योन्यकारो नाम-परस्परं वैयावृत्यकरणं तेन या 'विनिर्जरा' विशिष्टकर्मक्षयरूपा सा 'तस्य' अन्योन्यंकारस्य 'विपर्ययेण' व्यतिरेकेण न भवति । यथा किल तपस्वी तपसा 'कम ज्ञानावरणादि धुनोति तथा यस्तस्य साहाय्यकरणेन तदीयतपसो अनुमन्ता तमपि तथैव कर्मक्षयकारिणं जानीहि । अकतो युक्तमेवापावृताभिग्रहिकस्यानुग्रहविधानम् ॥

अथ यदुक्तम्-'अमून् त्रीन् मुक्त्वा इति तस्य व्याख्यानार्थमाह-

**[भा.४४०२]** बीभेंत एव खुड्डे, वेयावच्चकरे सेहे जस्स पासम्मि ।

विसमऽप्पे तिन्नि गुरुणो, इतरे गहियम्मि गिण्हंति ॥

**वृ**- क्षुल्लकः स्वभावादेव बिभ्यन् भवति, ततो बहि स्थाप्यमानः कूजित-रुदितादि कुर्यात्, अतो यस्तं परिवर्तयति तस्य समीपे स्थाप्यते । 'वैयावृत्यकरः' ग्लानस्य प्रतिचरकः स ग्लानस्यैव पार्श्वे क्रियते । शैक्षो यस्य पार्श्वे शिक्षां गृह्णाति तस्यान्तिके स्थापनीयः । तथा विषमे वा 'अल्पे वा' सङ्कीर्णे प्रतिश्रये त्रीन् संस्तारकान् गुरूणां द्वा ततः 'इतरे' उपसम्पन्नादयो गुरुभिर्गृहीते सति संस्तारकत्रये यथोक्तक्रमेण गृह्णन्ति । एष सङ्ग्रहगाथासमासार्थः ॥

अथास्या एव पूर्वार्धं बिभावयिषुराह-

**[भा.४४०३]** बीभेज्ज बाहिं ठवितो उ खुड्डो, तेनाइगम्मो य अजग्गिरो य ।

सारेइ जो तं उभयं च नेई, तस्सेव पासम्मि करेंति तं तु ॥

**वृ**- क्षुल्लको वहि स्थापितः सन् बिभियात्, स्तेनादिगम्यो वा भवेत्, 'अजागरणशीलश्च' असौ बहि सुप्तः सरन् केनाप्यनुत्थापितः प्रतिक्रमणवेलायामपि नजागृयात्, ततो यः 'तं' क्षुल्लकं 'सारयति'

शिक्षां ग्राहयति 'उभयं च' संज्ञा-कायिकीलक्षणं तदीयं यः 'नयति' परिष्ठापयति तस्यैव पार्श्वे तं कुर्वन्ति ॥

[भा.४४०४] संथारगं जो इतरं व मत्तं, उव्वत्तमादी व करेइ तस्स ।
गाहेइ सेहं खलु जो व मेरं, करेंति तस्सेव उ तं सगासे ॥

वृ- ग्लानस्य संस्तारकं यः करोति, 'इतरद्वा' संज्ञाद्युत्सर्जनां यो ग्लानं कारयति, मात्रकं वा परिष्ठापयति, उद्वर्त्तन-परावर्त्तनादीनि वा 'तस्य' ग्लानस्य यः करोति तं वैयावृत्यकरं तस्यैव पार्श्वे स्थापयन्ति ! यो वा शैक्षं 'मेरां' सामाचारीं ग्राहयति तं तस्यैव सकाशे कुर्वन्ति ॥

एवं विस्तीर्णायां वसतौ तावद् विधिरुक्तः, अथ सङ्कीर्णायां विधिमभिधित्सुराह—

[भा.४४०५] सम-विसमा थेराणं, आवलिया तत्थ अप्पणो इच्छा ।
खेल पवाय निवाए, पाहुणए जं विहिग्गहणं ॥

वृ- सङ्कीर्णायां वसतौ सर्वत्रापि संस्तारणीयम्, न पुनर्विषम इति कृत्वा कश्चिदप्यवकाशः शून्यो मोक्तव्यः । ततः 'आवलिकया' पङ्क्त्या यथारत्नाधिकं विभज्यमाना संस्तारकभूमि 'स्थविराणां' वृद्धानां समा वा समागच्छेद् विषमा वा । 'तत्र' विषमायां तेषामात्मीया इच्छा, कोऽर्थः ? यदि सहिष्णुतया विषमेऽपि संस्तारयितुं शक्नुवन्ति ततस्तत्रैव संस्तारयन्ति, अथासहिष्णवस्ततस्तरुणान् समां भूमिमनुज्ञापयन्ति । ''खेल''त्ति यस्य खेलः स्पन्दते तस्य मध्येऽवकाशः समायातः, ततस्तेन विविक्तेऽवकाशे यस्य संस्तारकः सोऽनुज्ञापनीयः । यः पित्तलः स प्रवाते स्थातुमभिलषति, यस्तु वातलः स निवाते, एतयोः परस्परं संस्तारकपरावर्त्तो भवति । 'प्राघुणकः' आचार्यादि समागतस्तस्यापि यद् विधिना वक्ष्यमाणेन संस्तारकग्रहणं तदनुज्ञातमिति पुरातनगाथासमासार्थः ॥

अथैनामेव विभावयिषुराह—

[भा.४४०६] विसमो मे संथारो, गाढं पासा मि एत्थ भज्जंति ।
को देज्ज मज्झ ठाणं, समं ति तरुणा सयं बेंति ॥

वृ- संस्तारकभूमि स्थविराणां विषमा तरुणानां समा समायाता, ततो यः स्थविरोऽसहिष्णुः स ब्रूयात्-विषमः 'मे' मदीयः संस्तारकः, पार्श्वाणि च 'अत्र' विषमे शयानस्य गाढं मम भज्यन्ते, अतः को नाम मह्यं समं स्थानं दद्यात् ? इति । ततो ये तरुणास्ते स्वयमेव गुरुभिरनुक्ता ब्रुवते-अस्माकमवकाशे यूयं संस्तारयतेति ॥

[भा.४४०७] जइ पुन अत्थिज्जंता, न देंति ठाणं बला न दावेंति ।
देंति तहिं पुंछणादी, बहिभावाऽसंखडं मा वा ॥

वृ- यदि पुनस्तरुणाः समं भूमागमर्थ्यमाना अपि न प्रयच्छन्ति ततो वृषभाः सूरयो वा न तैर्बलाद् दापयन्ति, मा बलाद् दाप्यमानास्ते बहिर्भावं गच्छेयुः असङ्खडं वा कुर्युः । स्थविराश्च 'तत्र' विषमेऽवकाशे पादप्रोञ्छनादिकं ददति येन सुखेनैव संस्तारयितुं शक्यते ॥

खेलद्वारमाह-

[भा.४४०८] मज्झम्मि ठाओ मम एस जातो, पासंदए निच्च ममं च खेलो ।
ठाओ सरावस्स य नत्थि एत्थं, सिंचिज्ज खेलेण य मा हु सुते ॥

वृ- श्लेष्मलो ब्रूयात्-मम तावदेषः 'स्थायः' अवकाशो मध्ये सञ्जातः, मम च 'खेलः' श्लेष्मा नित्यं प्रस्यन्दते, अत्र चोभयतोऽपि पार्श्ववर्त्तिसंस्तारकाकीर्णे 'शरावस्य' खेलमल्लकस्य न्यवकाशः, अत्र च संस्तारयन्नहं प्रत्यासन्नसुप्तान् शेषसाधूनपि मा श्लेष्मणा सिञ्चेयमिति। ततो तस्य विविक्ते प्रदेशे संस्तारकः स तस्यात्मीयमवकाशं प्रयच्छति ॥

प्रवातनिवातद्वारमाह-

[भा.४४०९] निद्दं न विंदामि उ उव्वरेणं, को मे पवायम्मि दइज्ज भूमिं।
सीएण वाएण य मज्झ बाहिं, न पच्चए अन्नमहऽन्न आह ॥

वृ- पित्तलो ब्रूयात्-अहम् 'इह' निवाते संस्तारयन् 'उद्वरेण' धर्मोपतापेन निद्रां 'न विन्दामि' न लभे, अतः को नाम मे प्रवाते भूमिकां दद्यात् ? ; 'अथ' अनन्तरम् 'अन्यः' वातलः सः 'आह' ब्रूयात्-शीतेन वातेन च पीड्यमानस्य मम बहि प्रसुप्तस्यान्नं 'न पच्यते' नो जीर्यति; तत एतौ परस्परं संस्तारकं परिवर्त्तयतः ॥

इह सङ्ग्रहगाथायां खेल-प्रवात-निवातग्रहणमुपलक्षणं तेनेदमभिधीयते-

[भा.४४१०] जोइंति पक्कं न उ पक्कलेणं, ठावेंति तं सूरहगस्स पासे।
एक्कम्मि खंभम्मि न मत्तहत्थी, बज्झंति वग्घा न य पंजरे दो ॥

वृ- यः 'पक्वः' असङ्खडिकः कलहनशील इत्यर्थः तं पक्केन सह न योजयन्ति, किन्तु यः 'शूरहकः' कलहादिकुर्वतां शिक्षां कर्त्तुं समर्थस्तस्य पार्श्वे तं स्थापयन्ति। यत एकस्मिन्नालानस्तम्भे द्वौ मत्तहस्तिनौ न बध्येते, परस्परं भण्डनसम्भवात्; एवमेकस्मन् पञ्जरे द्वौ व्याघ्रौ न प्रक्षिप्येते ॥

अथ "पाहुणए जं विहिग्गहणं" ति पदं व्याख्यातुमाह-

[भा.४४११] रायणिओ आयरिओ, आयरियस्सेव अक्कमइ ठाणं।
इतरो वसभट्ठाए, ठायइ जे ते व दो ठाणा ॥

वृ- यदि प्राघूर्णक आचार्यो रत्नाधिकस्ततोऽसावाचार्यस्यैव 'स्थानम्' अवकाशमाक्रामति, वास्तव्याचार्यस्थाने संस्तारयतीत्यर्थः।

'इतरः' वास्तव्याचार्य 'वृषभस्य' उपाध्यायस्य 'स्थाने' अवकाशे 'तिष्ठति' संस्तारयति; अथवा यद् आचार्यसत्कं संस्तारकत्रयं तन्मध्यादेकस्मिन् प्राघुणकाचार्य प्रसुप्तः, "जे ते व दो ठाण" त्ति ततो यौ तौ द्वावशिष्यमाण संस्तारकौ तयोरेकस्मिन् वास्तव्याचार्य संस्तारयति ॥

[भा.४४१२] ओमो पुन आयरिओ, वसभोगासे अनंतरे वसभो।
संछोभपरंपरओ, चरिमं सेहं च मोत्तूणं ॥

वृ- अथासौ प्राघुणक आचार्य 'अवमः' पर्यायलघुस्ततोऽसौ वृषभस्यावकाशे संस्तारयति। वृषभस्तु तदनन्तरे-अवमरात्निकस्थाने स्वपिति। एवं संस्तारकाणां 'संछोभपरम्परकः' परम्परया स्थानान्तरसङ्क्रमणरूपः तावद् मन्तव्यो यावद् द्विचरमः साधुः। यस्तु चरमः-सर्वपाश्चात्यावकाशशायी तं शैक्षं च मुक्त्वा, तयोः संस्तारको नान्यत्र सङ्क्रामयितव्य इति भावः ॥

इदमेवव्याचष्टे-

[भा.४४१३] चरिमो बहिं न कीरइ, सेहं न सहायगा विजुयलेंति।

रंगिड्ढिपुरिसनायं, सव्वे तत्थेव मावेंति ॥

वृ- 'चरमः' पर्यन्तवर्ती बहिर्न क्रियते, शैक्षमपि 'सहायकात्' शिक्षाग्राहकात्र 'वियुगलयन्ति' युगलात्र स्फेटयन्ति, बहिर्निष्काश्यमानौ हि तौ बहिर्भावं गच्छेताम्, बहिर्भावगमनतः प्रतिगमनादीनि कुर्याताम्, अतः संस्तारकाः संक्षिप्य तथा प्रस्तरणीयाः यथा 'तयोरपि' चरम शैक्षयोः संस्तारकौ प्रतिश्रयमध्य एव पूर्येते । तथा चात्र रङ्गे ये ऋद्धिमन्तः पुरुषास्तैर्ज्ञातम्- दृष्टान्तः कर्त्तव्यः-यथा रङ्गभूमौ पूर्वं प्राकृतजनैराकीर्णायामपि ये राजा-ऽमात्य-श्रेष्ठिप्रभृतयः प्रधानपुरुषाः पश्चादागच्छन्ति तेषामुपवेशनयोग्यान् अवकाशान् दत्त्वा संक्षिप्ततरावकाशस्थापनेन प्रागुपविष्ठ अपि तत्रैव माप्यन्ते; एवमस्माकमपि प्राघूर्णकाः प्रधानपुरुषकल्पाः, ततस्तेषां यथायोग्यमवकाशान् दत्त्वा वृषभाः संस्तारकभूमीः संक्षिप्य प्रयच्छन्तः सर्वानपि साधून् तत्रैव मापयन्ति ॥

---------x---------x---------

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता बृहत्कल्पसूत्रे तृतीयोद्देशकस्य मूलं-९६ पर्यन्ता (भद्रबाहुस्वामिना स्वोपज्ञनिर्युक्ति युक्तं) सङ्घदासगणि विरचितं भाष्यं एवं मलयगिरि-क्षेमकीर्ति आचार्याभ्यां विरचिता वृत्तिः समाप्त ॥**

| ३५/२ | द्वितीयं छेदसूत्रं-'बृहत्कल्प' अपूर्णः |
|---|---|

नमो नमो निम्मल दंसणस्स

पंचम गणधर श्री सुधर्मास्वामिने नमः

# ३५/३ बृहत्कल्प -छेदसूत्रम्

## सटीकं

### [द्वितीयं छेद सूत्रम्]

उद्देशकः -३, सू. ९७..आरंम्मात् उद्देशकः - ६- सम्पूर्णम्

[भद्रबाहुस्वामि रचितं मूलं + (स्वोपज्ञनिर्युक्तियुक्तं) संघदासगणि विरचितं भाष्यं
एवं मलयगिरि-क्षेमकीर्ति आचार्याभ्याम् विरचिता वृत्तिः]

मू. (९७) *कप्पइ निग्गंथाण वा निग्गंथीण वा अहारायणियाए किइकम्मं करित्तए ॥*

वृ. अथ कोऽस्य सूत्रस्य सम्बन्धः ? इत्याह—

[भा.४४१४] संथारं दुरुहंत, किइकम्मं कुणइ वातिगं सायं।
पातो वि य पणिवायं, पडिबुद्धो एक्कमेक्कस्स ॥

वृ- 'सायं' प्रदोषसमये पौरुष्यां पूर्णायां गुरुप्रदत्तायां भुवि प्रस्तीर्य संस्तारकमारोहन् 'वाचिकं कृतिकर्म' 'नमः क्षमाश्रमणेभ्यः' इति लक्षणं वाचनिकं प्रणामं करोति, 'प्रातरपि च' प्रभातेऽपि प्रतिबुद्धः सन्नेकैकस्य साधोः 'प्रणिपातं' वन्दनं यथारत्नाधिकं करोति, अत इदं कृतिकर्मसूत्रमारभ्यते। अनेन सम्बन्धेनायातस्यास्य व्याख्या-कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'यथारात्निकं' यो यो रत्नाधिकस्तदनतिक्रमेण कृतिकर्म कर्तुमिति सूत्रसङ्क्षेपार्थः ॥ अथ विस्तरार्थं भाष्यकार आह-

[भा.४४१५] किइकम्मं पि य दुविहं, अब्भुट्ठाणं तहेव वंदनगं।
वंदनगं तहि ठप्पं, अब्भुट्ठाणं तु वोच्छामि ॥

वृ- कृतिकर्म द्विविधम्, तद्यथा-अभ्युत्थानं वन्दनकं च। 'तत्र' तयोर्द्वयोर्मध्ये वन्दनकं 'स्थाप्यं' पश्चाद् भणिष्यत इत्यर्थः। अभ्युत्थानं तु साम्प्रतमेव वक्ष्यामि ॥ प्रतिज्ञातमेव निर्वाहयन्नाह-

[भा.४४१६] अब्भुट्ठाणे लहुगा, पासत्थाद-ऽन्नतित्थि-गिहिएसु।
अहछंद अन्नतित्थिणि, संजइवग्गे अ गुरुगा उ ॥

वृ- साधुभिः साधूनामेवाभ्युत्थानं विधेयं न गृहस्थादीनाम्, तत्रापि संविग्नानामेव न पार्श्वस्थादीनाम्। अथ पार्श्वस्थादीनामन्यतीर्थिकानां गृहिणां च अभ्युत्थानं करोति तदा चत्वारो लघवः। यथाच्छन्दानामन्यतीर्थिनीनां संयतीवर्गस्य चाभ्युत्थाने चतुर्गुरवः ॥

अथात्रैव दोषानुपदर्शयति-

[भा.४४१७] उट्ठेइ इत्थि जइ एस एंतिं, धम्मे ठिओ नाम न एस साहू।
दक्खिन्नपन्ना वसमेइ चेवं, मिच्छत्तदोसा य कुलिंगिणीसु ॥

वृ- संयतं कस्या अपि स्त्रिय अभ्युत्तिष्ठन्तं दृष्ट्वा श्रावकादिश्चिन्तयेत्-यथैष साधुः स्त्रियमायातीं

दृष्ट्वाऽभ्युत्तिष्ठति तथा 'नाम' इति सम्भावनायाम्, सम्भावयाम्यहम्-नैष सम्यग् 'धर्मे' श्रुतचारित्रात्मके स्थितः, अन्यता किमेवमेनामभ्युत्तिष्ठति ?, अपि च-एवं स्त्रिया अभ्युत्तिष्ठन् दाक्षिण्यवान् भवति, दाक्षिण्यपण्याच्च तस्याः 'वशम्' आयत्ततामुपैति, ततश्च ब्रह्मचर्यविराधनादयो दोषाः। यास्तु कुलिङ्गिन्यः-तापसी-ऽपरिव्राजिकाप्रभृतयः तास्वभ्युत्थीयमानासु यथाभद्रकादीनां मिथ्यात्वगमनादयो दोषा भवन्ति ॥ अन्यतीर्थिकेषु पुनरिमे दोषाः-

[भा.४४१८] ओभावणा पवयणे, कुतित्थ उब्भावणा अबोही य।
खिसिज्जंति य तप्पक्खिएहि गिहिसुव्वया बलियं ॥

वृ- भौत-भागवत-सौगतादीनामन्यतीर्थिकानामभ्युत्थाने प्रवचनस्य महती अपभ्राजना भवति-अहो ! निसारं प्रवचनममीषाम् यदेवमन्यदर्शनिनामभ्युत्थानं विदधतीति। तदीयस्य च कुतीर्थस्य 'उद्भावना' प्रभावना भवति-एतदेव दर्शनं शोभनतरं यदेवं जैना अप्येतत्प्रतिपन्नानभ्युत्तिष्ठन्तीति। "अबोही य" त्ति प्रवचनलाघवप्रत्ययं मिथ्यात्वमोहनीयं कर्मोपचित्य भवोदधौ परिभ्रमन् बोधिलाभं नासादयति। ये च गृहिणः सुव्रताः-शोभनाणुव्रतधारकाः सुश्रावका इत्यर्थः ते 'तत्पाक्षिकैः' शाक्यादपक्षपातिभिरुपासकैः 'बलिकम्' अत्यर्थं खिंस्यन्ते-अस्माकमेव दर्शनं सर्वोत्तमम्, भवदीयगुरूणामपि गौरवार्हत्वात् ॥

[भा.४४१९] एए चेव य दोसा, सविसेसयरऽन्नतित्थणीसुं पि।
लाघव अनुज्जियत्तं, तहागयाणं अवन्नो य ॥

वृ- एत एव 'दोषाः' प्रवचनापभ्राजनादयोऽन्यतीर्थिकीष्वपि भवन्ति, नवरं 'सविशेषतराः' शङ्कादिभिर्दोषैः समधिकतरा मन्तव्याः। गृहिणामन्यतीर्थिकादीनां चाभ्युत्थाने सामान्यत इमे दोषाः, तद्यथा-'लाघवम्' 'एतेभ्योऽप्ययं हीनः' इत्येवंलक्षणो लघुभाव उपजायते। 'अनूर्जितत्वं' वराकत्वमुपदर्शितं भवति, तथाहि लोको ब्रूयात्-अहो ! अदत्तदाना श्वाना इव वराका अमी, यदेवमाहारादिनिमित्तमविरतकानामपि चाटूनि कुर्वन्ति। तथा-तेन यथावस्थितपदार्थोपलम्भ-कात्मकेन प्रकारेण गतं-ज्ञानमेषां ते 'तथागताः' सद्भूतार्थवेदिनः तीर्थकर-गणधरा इत्यर्थः तेषामवर्णवादो भवति, यथा-नामी सम्यग् मोक्षमार्गं दृष्टवन्त इति ॥

अथ संयतीनामभ्युत्थाने दोषं विशेषतो दर्शयन्नाह-

[भा.४४२०] पायं तवस्सिणीओ, करेंति किइकम्म मो सुविहियाणं।
एसुत्तिट्ठइ वतिणिं, भवियव्वं कारणेणेत्थं ॥

वृ- संयतीमभ्युत्तिष्ठन्तं दृष्ट्वा कश्चिदभिनवधर्मा चिन्तयेत्-प्रायः 'तपस्विन्यः' संयत्यः सुविहितानां कृतिकर्म कुर्वन्ति, "मो" इति पादपूरणे, एष पुनर्व्रतिनीमुत्तिष्ठति, तद् भवितव्यमत्र कारणेनेति। एवं शङ्कायां चतुर्गुरु, निःशङ्किते मूलम्। यत एते दोषास्ततो नैषामभ्युत्थानं विधेयम्। अथ येषामभ्युत्थातव्यं तदभ्युत्थानाकरणे प्रायश्चित्तमभिधित्सुराह-

[भा.४४२१] आयरिए अभिसेगे, भिक्खुम्मि तहेव होइ खुड्डे य।
गुरुगा लहुगा लहुगो, भिन्ने पडिलोम विइएणं ॥

वृ- आचार्येऽभिषेके भिक्षौ तथैव क्षुल्लके आचार्यादीन् प्राघुणकान् यथाक्रममनभ्युत्तिष्ठति गुरुका लघुका लघुको भिन्नमासश्चेति प्रायश्चित्तानि। द्वितीयादेशेनेदमेव प्रायश्चित्तं 'प्रतिलोमं'

प्रतीपक्रमेणाचार्यादीनांवक्तव्यम्, आचार्यस्य भिन्नमासः, अभिषेकस्य लघुमासः, भिक्षोश्चतुर्लघवः, क्षुल्लकस्य चतुर्गुरु इति भावः । एष सङ्ग्रहगाथासमासार्थः ॥ अथैनामेव विवृणोति-

[भा.४४२२] आयरियस्सायरियं, अनुट्ठियंतस्स चउगुरू होंति ।
वसभे भिक्खू खुड्डे, लहुगा लहुगो य भिन्नो य ॥

वृ- आचार्यस्याचार्यं प्राघूर्णकमायान्तमनुत्तिष्ठतश्चतुर्गुरवो भवन्ति, वृषभमनभ्युत्तिष्ठतश्चतुर्लघुकाः, भिक्षुमनत्तिष्ठतो लघुमासः, क्षुल्लकमनुत्तिष्ठतो भिन्नमासः ॥

एवमाचार्यास्य प्रायश्चित्तमुक्तम् । अथ शेषाणामतिदिशति-

[भा.४४२३] सट्ठाण परट्ठाणे, एमेव य वसह-भिक्खु-खुड्डाणं ।
जं परठाणे पावइ, तं चेव य सोहि सट्ठाणे ॥

वृ-एवमेव वृषभ-भिक्षु-क्षुल्लकानामपि स्वस्थान-परस्थानप्रायश्चित्तं वक्तव्यम् । स्वस्थानं नाम-वृषभस्य वृषभः, परस्थानं वृषभस्याचार्य-भिक्षु-क्षुल्लकाः; एवं भिक्षु-क्षुल्लकयोरपि स्वस्थान-परस्थानभावना कर्तव्या । अत्र च यत् परस्थाने आचार्यं प्राप्नोति तदसावपि वृषभादि स्वस्थाने प्राप्नोति । किमुक्तं भवति ? -वृषभस्य प्राघूर्णकचार्यमनभ्युत्तिष्ठतश्चतुर्गुरुकाः वृषभस्यानभ्युत्थाने चतुर्लघवः, भिक्षोरनभ्युत्थाने मासलघु, क्षुल्लकस्यानभ्युत्थाने भिन्नमासः; एवं भिक्षु-क्षुल्लकयोरपि मन्तव्यम् । अत्र परस्थानमाचार्यस्य वृषभादयः, तेषामनभ्युत्थाने यथाऽसौ चतुर्लघुकादिकमापन्नवान् तथा वृषभादयोऽपि स्वस्थानमनभ्युत्तिष्ठन्तस्तदेव प्राप्नुवन्ति ॥

अथैतदेव प्रायश्चित्तं तपः-कालाभ्यां विशेषयन्नाह-

[भा.४४२४] दोहि वि गुरुगा एते, आयरियस्सा तवेन कालेनं ।
तवगुरुगा कालगुरू, दोहि वि लहुगा य खुड्डस्स ॥

वृ- आचार्यस्य 'एतानि' चतुर्गुरुकादीनि प्रायश्चित्तानि द्वाभ्यामपि गुरुकाणि कर्त्तव्यानि, तद्यथा-तपसा कालेन च । वृषभस्य तपोगुरुकाणि, भिक्षोः कालगुरुकाणि, क्षुल्लकस्य 'द्वाभ्यामपि' तपः-कालाभ्यां लघुकानि ॥

[भा.४४२५] अहवा अविसिट्ठं चिय, पाहुणयाऽऽगंतुए गुरुगमादी ।
पावेंति अनुट्ठिंता, चउगुरु लहुगा लहुग भिन्नं ॥

वृ- 'अथवा' इति प्रायश्चित्तस्य प्रकारान्तरताद्योतकः । 'अविशिष्टमेव' आचार्यादिविशेषैर्विरहितं प्राघूर्णकमागन्तुकमनत्तिष्ठन्तः 'गुर्वादयो' आचार्यप्रभृतयो यथाक्रमं चतुर्गुरुक-चतुर्लघुक लघुमास-भिन्नमासान् प्राप्नुवन्ति । तद्यथा-आचार्यस्य यं वा तं वा प्रघूर्णकमागतमनभ्युत्तिष्ठतशचतुर्गुरु वृषभस्य चतुर्लघु, भिक्षोर्लघुमासः, क्षुल्लकस्य भिन्नमास इति ॥

[भा.४४२६] अहवा जं वा तं वा, पाहुणगं गुरुमनुट्ठिहें पावे ।
भिन्नं वसभो सुक्कं, भिक्खु लहू खुड्डए गुरुगा ॥

वृ-अथवा यं वा तं वा प्राघूर्णकमनुत्तिष्ठन् 'गुरु' आचार्यो भिन्नमासं प्राप्नोति, वृषभः 'शक्लमासं' लघुमासमित्यर्थः, भिक्षुश्चतुर्लघुकम्, क्षुल्लकश्चतुर्गुरुकम् । एतेन "पडिलोम विइएणं" ति पदं व्याख्यातम् ॥ अथ किमर्थमयं द्वितीयादेशः प्रवृत्तः ? इत्याह-

[भा.४४२७] वायण-वायारण-धम्मकहण-सुत्तत्थचिंतणासुं च ।

वाउलिए आयरिए, विइयादेसो उ भिन्नाई ॥

वृ- इहाचार्यस्यानेकधा व्याक्षेपः, तद्यथा-वाचना नाम-अनुयोगः सा विनेयानां दातव्या, व्यापारणं साधूनां वैयावृत्त्यादिषु यथायोग्यं विधेयम्, श्राद्धानां धर्मकथनं विधातव्यम्, स्वयं च सूत्रा-ऽर्थयोश्चिन्तना-अनुप्रेक्षा कर्त्तव्या । एवमादिषु कार्येषु निरन्तरमाचार्यो व्याकुलितो भवति, वृषभादयस्तु न तथा व्याकुला इत्यतोऽयं भिन्नमासादिर्द्वितीय आदेशः प्रवृत्त । इयमत्र भावना-आचार्यो बहुव्याकुलतया प्राघुण मागच्छन्तं दृष्ट्वाऽपि नाभ्युत्थातुं पारयेत्, अतस्तस्य स्वल्पतरं प्रायश्चित्तम् । वृषभ-भिक्षु-क्षुल्लकास्तु यथाक्रममल्पा-ऽल्पतरा-ऽल्पतमव्याक्षेपाः, ततो लघुमासादीनि प्रभूत-प्रभूततर-प्रभूततमानि तेषां प्रायश्चित्तानीति ॥

अथ क्षुल्लकस्य गुरुतमप्रायश्चित्तदाने विशेषकारणमाह-

[भा.४४२८] वेसइ लहुमुट्ठेइ य, धूलीधवलो असंफुरो खुड्डो ।
इति तस्स होंति गुरुगा, पालेइ हु चंचलं दंडो ॥

वृ- 'क्षुल्लकः' बालः स लघुशरीरतया सुखैनैवोपविशति उत्तिष्ठति च, क्रीडनशीलतया च प्रायेण 'धूलीधवलः' रजोगुण्डितदेहः 'असंस्फुरश्च' असंवृतोऽसौ भवति, अतो यद्यसावपि प्राघुणकमागतं नोत्तिष्ठति तदा महद् दूषणमाप्नोति, अत एतस्य चतुर्गुरुकाः प्रायश्चित्तम् । किञ्च-यश्चञ्चलः-स्वभावातो चपलोऽपि सन् गुर्वादीनां नाभ्युत्तिष्ठति तं 'दण्डः' प्रायश्चित्तलक्षणो दीयमानः पालयति, चञ्चलत्वमपनयतीत्यर्थः ॥ अपि च-

[भा.४४२९] जइ ता दंडत्थाणं, पावइ बालो वि पयणुए दोसे ।
ह नु दानि अक्खमं ने पमाइउं रक्खाणा सेसे ॥

वृ- बालस्यापि गुरुके प्रायश्चित्ते दत्ते सति शेषसाधवश्चिन्तयेयुः-यदि तावदयं बालोऽपि 'प्रतनुके' अनभ्युत्थानमात्रलक्षणे स्वल्पेऽप्यपराधे एवं दण्डस्थानं प्राप्नोति "ह नु दाणि" त्ति तत इदानीमस्माकं 'प्रमत्तुम्' अभ्युत्थाने प्रमादं कर्तुम् 'अक्षमम्' अनुचितमिति शेषसाधुवर्गतत इदानीमस्माकं कृतं भवति ॥ आह-अभ्युत्थानमकुर्वतामात्म-संयमयोस्तावत् काचिदपि विराधना नास्ति ततः किं कारणमेवमेव प्रायश्चित्तं दीयते ? उच्यते-

[भा.४४३०] दिट्ठंतो दुवक्खरए, अब्भुट्ठिंतेहि जह गुणो पत्तो ।
तम्हा उट्ठेयव्वो, पाहुणओ गच्छे आयरिओ ॥

वृ- इह प्राघुणकमाचार्यमनुत्तिष्ठन् भगवतामाज्ञामतिक्रामति । तथा चात्र 'द्व्यक्षरकेण' दासेन दृष्टान्तः- एगो राया, सो केणइ दुअक्खरएणं आराहिओ । रन्ना से पट्टं बंधिउं पहाणं रज्जं दिन्नं । तत्थ दंड-भड-भोइयाइणो 'दुअक्खरो' त्ति काउं परिभवेणं तस्स अब्भुट्ठाणाइयं न करेंति, ताहे तेन ते अणब्भुट्ठेंता दंडिया मारिया य । जे विनीया ते अब्भुट्ठिंति, तेसिं तेन परितुट्ठेण रज्जसंविभागो दिन्नो ॥ अथार्थोपनयः-यथा तैरभ्युत्तिष्ठद्भिरिहलोके गुणः प्राप्तः तथा साधवोऽपि प्राघुणकमाचार्यमभ्युत्तिष्ठन्त इह परत्र च गुणानासादयन्ति । तस्मात् प्राघुणक आचार्य सकलेनापि गच्छेनाभ्युत्थातव्यः ॥ अमुमेव द्व्यक्षरकदृष्टान्तं व्याख्यानयति-

[भा.४४३१] आराहितो रज्ज सपट्टबंधं, कासी य राया उ दुवक्खरस्स ।
पसासमाणं तु कुलीयमादी, नाढंति तं तेन य ते विनीया ॥

वृ- 'आराधितः' केनापि गुणविशेषेण परितोषं प्रापितः सन् राजा द्व्यक्षरकस्य सपट्टबन्धं राज्यमकार्षीत्, पट्टबन्धनृपतिं तं विहितवानिति भावः । ततस्तं द्व्यक्षरकराजं राज्यं प्रशासतं 'कुलीनादयो नाद्रियन्ते' 'वयं कुलीनाः, अयं तु हीनकुलोत्थः, आदिशब्दाद् वयं प्रधानपुरुषाः, अयं पुनः कर्मकरः' इत्यादिपरिभवबुध्या नाभ्युत्थानादिकमादरं तस्य कुर्वन्ति । ततस्ते तेन राज्ञा 'विनीताः' शिक्षां प्रापिताः, "विनयः शिक्षा-प्रणत्योः" इति वचनात् । कथं शिक्षिताः ? इत्याह-

[भा.४४३२] सव्वस्स हाऊणं, निच्छूढा मारिया य विवदंता ।
भोगेहिं संविभत्ता, अनुकूल अनुव्वणा जे उ ॥

वृ-सर्वस्वमपहृत्य ते स्वनगराद् "निच्छूढा" निष्काशिताः । ये च तत्र निष्काश्यमाना विवदन्ते- 'किमस्माभिरपराद्धम् ? यो यो द्व्यक्षरो भविष्यति तस्य तस्य किं वयमभ्युत्थानं करिष्यामः ?' इत्यादि कलहायन्ते ते विवदमाना मारिताः । ये तु तत्र 'अनुकूलाः' अभ्युत्थानादिकारिणः 'अनुल्बणाः' अगर्वितास्ते भोगैः 'संविभक्ताः' राज्यभोगसंविभागस्तेषां कृतः ॥

एष दृष्टान्तः, अयमर्थोपनयः-

[भा.४४३३] अहिराया तित्थयरो, इयरो उ गुरू उ होइ नायव्वो ।
साहू जहा य दंडिय, पसत्थमपसत्थगा होंति ॥

वृ- यथा 'अधिराजः' मौलः पृथिवीपति तथा तीर्थकरः । यथा 'इतरः' द्व्यक्षरकराजः तथा तीर्थकराधिराजेनैवानुज्ञाताचार्यपदपट्टबन्धसहितगणाधिपत्यराज्यः 'गुरु' आचार्यो ज्ञातव्यो भवति। यथा च ते प्रशस्ता-ऽप्रशस्तरूपा दण्डिकास्तथा साधवोऽप्युभयस्वभावा भवन्ति ॥ तत्र-

[भा.४४३४] जह ते अनुट्ठिहंता, हियसव्वस्सा उ दुक्खमाभागी ।
इय नाणे आयरियं, अनुट्ठिहंताण वोच्छेदो ॥

वृ- यथा ते दण्ड-भट-भोजिकादयो द्व्यक्षरकनृपतिमनुत्तिष्ठन्तो हृतसर्वस्वा ऐहिकस्य दुःखस्याभागिनः सञ्जाताः 'इति' एवमाचार्यमप्यनुत्तिष्ठतां दुर्विनीतसाधूनां ज्ञाने उपलक्षणत्वाद् दर्शनचारित्रयोश्च व्यवच्छेदो भवति । ततश्चानेकेषां जन्म-जरा-मरणादिदुःखानामाभागिनस्ते सञ्जायन्ते ॥ एषोऽप्रशस्तोपनयः, अथ प्रशस्तोपनयः-

[भा.४४३५] उट्ठाण-सेज्जा-ऽऽसनमाइएहिं, गुरुस्स जे होंति सयाऽनुकूला ।
नाउं विनीए अह ते गुरू उ, संगिण्हई देइ य तेसि सुत्तं ॥

वृ- उत्थानं-गुरुमागच्छन्तं दृष्ट्वा ऊर्ध्वीभवनम्, शय्या-सम-सुन्दरावकाशे गुरूणां संस्तारकरचनम्, आसनम्-उपवेशनयोग्यनिषद्यादिरचनम्, यद्वा "सेज्जा-ऽऽसणं"ति गुरूणां शय्याया आसनाच्च नीचतरशय्या-ऽऽसनयोराश्रयणम्, आदिशब्दादञ्जलिप्रग्रहादिपरिग्रहः । एवमादिभिर्विनयभेदैर्ये शिष्याः सदैव गुरोरनुकूला भवन्ति तान् विनीतान् ज्ञात्वा 'अथ' अनन्तरं गुरु 'संगृह्णाति' 'मयैते सम्यक् पालनीयाः' इत्येवं सङ्ग्रहबुध्या स्वीकरोति सूत्रं च तेषां प्रयच्छति। ततश्च ते इह परत्र च कल्याणपरम्पराभाजनं जायन्ते ॥ अथाप्रशस्तोपनयं विशेषतो भावयन्नाह-

[भा.४४३६] पज्जाय-जाई-सुततो य वुड्ढा, जच्चन्निया सीससमिड्ढिमंता ।
कुव्वंतऽवन्नं अह ते गणाओ, निच्छूहई नो य ददाइ सुत्तं ॥

वृ- पर्यायतो ये वृद्धास्ते 'अवमरात्निकोऽयम्' इति बुध्या, जातिमधिकृत्य ये वृद्धाः-

षष्टिवर्षजन्मपर्याया इत्यर्थःस्ते 'बालकोऽयम्' इति बुध्या, 'श्रुततश्च' श्रुतमङ्गीकृत्य ये वृद्धास्ते 'अल्पश्रुतोऽयम्' इति कृत्वा, 'जात्यन्विताः' विशिष्टजातिसम्भूताः 'हीनजात्युद्भवोऽयम्' इति मत्वा, 'शिष्यसमृद्धिमन्तः' परिवारसम्पदुपेताः 'अल्पपरिवारोऽयम्' इति बुध्या गुरोः 'अवज्ञाम्' अनभ्युत्थानलक्षणां कुर्वन्ति ।अथैवमवज्ञाकरणानन्तरं गुरुस्तान् स्वगच्छनगराद् निर्यूहति । ये च बहुपाक्षिकत्वादिभि कारणैर्निर्यूहितुं न शक्यन्ते तेषां भोगसंविभागकल्पं 'सूत्रं' श्रुतं न प्रयच्छति। एवं तावत् प्राघुणकमाचार्यमङ्गीकृत्याभ्युत्थाना-ऽनभ्युत्थानयोर्गुण-दोषा उपवर्णिताः । अथ सामान्यतो गच्छमध्यस्थितस्यैवाचार्यस्यानभ्युत्थाने दोषमाह-

[भा.४४३७] मज्झत्थ पोरिसीए, लेवे पडिलेह आइयण धम्मे ।
पयल गिलाणे तह उत्तिमट्ठ सव्वेसि उट्ठाणं ॥

वृ- आचार्यमागच्छन्तं दृष्ट्वा गच्छसाधवो मध्यस्थास्तिष्ठन्ति न पुनरभ्युत्तिष्ठन्ति पूर्वोक्तमेव प्रायश्चित्तम् । सूत्रा-ऽर्थपौरुषीं लेपप्रदानं प्रतिलेखनां "आइयणं"ति समुद्देशनं धर्मकथां वा विदधानाः प्रचलायमाना वा नाभ्युत्तिष्ठन्ति अत्रापि 'तदेव' वृषभादिविषयं प्रायश्चित्तम् । ग्लानो वा उत्तमार्थप्रतिपन्नो वा शक्तौ सत्यां यदि नोत्तिष्ठति तदा तत्रापि प्रायश्चित्तम् । यत एवमतः सर्वेषामप्यभ्युत्थानं भवति । इदमत्र हृदयम्-आचार्याणामनभ्युत्थाने सूत्रपौरुषीकरणादीनि कदालम्बनानि नालम्बनीयानि, यथा-ममायमालापकोऽर्धपठितो वर्त्तते, लेपो वा पात्रके नाद्यापि परिपूर्णो दत्तः, प्रतिलेखनादिकं वा सम्प्रति कुर्वाणोऽस्मि, ग्लानो वा कृतभक्तप्रत्याख्यानो वा अहमस्मीति; किन्तु सर्वैरपि सूत्राध्ययनादिव्यापारं परिहृत्याभ्युत्थातव्यम् ॥ एवं तावदुपाश्रये विधिरभिहितः, अथान्यत्र गृहादौ रथ्यादिषु वा यत्र दृश्यते तत्रायं विधिः-

[भा.४४३८] दूरागयमुट्ठेउं, अभिनिग्गंतुं नमंति णं सव्वे ।
दंडगहणं च मोत्तुं, दिट्ठे उट्ठाणमन्नत्थ ॥

वृ- दूरादाचार्यमागतं दृष्ट्वा अभि-आभिमुख्येन निर्गत्य सर्वेऽपि साधवः "न"मिति एनमाचार्यं 'नमन्ति' शिरसा वन्दन्ते । यदा च गुरव उपाश्रयं प्रविशन्ति तदा दण्डकग्रहणमपि कर्त्तव्यम् । 'अन्यत्र तु' गृहादौ दृष्टे गुरौ दण्डकग्रहणं मुक्त्वा अभ्युत्थानमेव कर्त्तव्यम् ॥

एवमभ्युत्थाने के गुणाः ? इत्याह-

[भा.४४३९] परपक्खे य सपक्खे, होइ अगम्मत्तणं च उट्ठाणे ।
सुयपूयणा थिरत्तं, पभावना निज्जरा चेव ॥

वृ- परपक्षः-परपाषण्डिनः स्वपक्षः-पार्श्वस्थादिवर्गस्तयोः 'अगम्यत्वम्' अनभिभवनीयता गुरोरभ्युत्थाने भवति । तथा गुरवो बहुश्रुता भवन्तीति श्रुतपूजनमपि कृतं स्यात् । अन्येषामभ्युत्थानादौ विनये सीदतां स्थिरत्वमनुष्ठितं भवति । प्रभावना च शासनस्यैवं कृता भवेत्-अहो ! शोभनमिदं प्रवचनं यत्रैवंविधो विनयो विधीयते । निर्जरा च कर्मक्षयरूपा विपुला भवति, विनय-स्याभ्यन्तरतपोभेदत्वात्, तस्य च निर्जरानिबन्धनतया सुप्रतीत्वात् ॥

आह- यः प्रव्रजितः सर्वपापोरतस्तस्य किं नाम विनयेन कार्यम् ? इति उच्यते-

[भा.४४४०] अकारणा नत्थिह कज्जसिद्धी, न यानुवाएण वदेंति तज्ञा ।
उवायवं कारणसंपउत्तो, कज्जाणि साहेइ पयत्तवं च ॥

चू- अकारणा कार्यस्य सिद्धिः 'इह' अस्मिन् जगति नास्ति, यद् यस्य कार्यस्योपादानं कारणं तत् तेन विना न सिध्यतीत्यर्थः, यथा मृत्पिण्डं विना घट इति कारणसद्भावेऽपि 'न च' नैव 'अनुपायेन' उपायाभावेन कार्यं भवतीति 'तज्ज्ञाः' कार्यसिद्धिवेदिनो वदन्ति, यथा मृत्पिण्डसद्भावेऽपि चक्र-चीवरोदकाद्युपायमन्तरेण घटो न सिध्यति। यः पुनरुपायवान् कारणसम्प्रयुक्तः प्रयत्नवांश्च भवति स कार्याणि साधयति, यथा कुम्भकारो मृत्पिण्डमासाद्य चक्रचीवराद्युपायसाचिव्यजनितोपष्टम्भः स्वहस्तव्यापारणरूपं प्रयत्नं कुर्वन् घटमिति ॥ आह-यद्येवमुपायकारणयुक्तः कार्याणि साधयति ततः प्रस्तुते किमायातम् ? इत्याह-

[भा.४४४१] धम्मस्स मूलं विनयं वयंति, धम्मो य मूलं खलु सोग्गईए।
सा सोग्गई जत्थ अवाहया ऊ, तम्हा निसेव्वो विनयो तदट्ठा ॥

चू- 'धर्मस्य' श्रुत-चारित्ररूपस्य 'मूलं' प्रथममुत्पत्तिकारणं 'विनयम्' अभ्युत्थानादिरूपं वदन्ति तीर्थकरादय इति गम्यते। स च धर्म 'खलु' अवधारणे सुगतेः 'मूलं' कारणं मन्तव्यम्, दुर्गतौ प्रपतन्तं प्राणिनं धारयति सुगतौ च स्थापयतीति निरुक्तिसिद्धत्वात् तस्येति भावः। अथ सुगतिरिह कीदृशी गृह्यते ? इत्याह-सा सुगतिरभिधीयते यत्र 'अबाधता' क्षुत्पिपासारोग-शोकादीनां शारीर-मानसानां बाधानामभावः, सिद्धिरित्यर्थः। यत एवं तस्मात् 'तदर्थं' सुगतिनिमित्तं विनयो निषेव्यः। इदमत्र हृदयम्-इह कार्यं तावदव्याबाधसुखलक्षणो मोक्षः, तस्य च कारणं श्रुत-चारित्ररूपः सर्वज्ञभाषितो धर्मो, स च गुरोरभ्युत्थान-वन्दनादिविनयलक्षणमुपायमन्तरेण न साधयितुं शक्यते, अतः परम्परया मोक्षकारणमेवायमिति मत्वा तदर्थं विनय आसेवितव्य इति ॥ आह-य युक्तं पौरुषी-लेपप्रदानादिकारिणामभ्युत्थानम्, ग्लानोत्तमार्थप्रतिपन्नयोस्तु किमर्थमभ्युत्थानम् ? उच्यते-

[भा.४४४२] मंगल-सद्धाजननं, विरियायारो न हाविओ चेवं।
एएहिं कारणेहिं, अतरंत परिन्न उट्ठाणं ॥

चू- 'अतरन्तः' ग्लानः ''परिन्न''त्ति मतप्रत्ययलोपात् 'परिज्ञावान्' अनशनी, एतयोर्गुरूणा-मभ्युत्थाने मङ्गलं भवति, ततश्च ग्लानस्याचिरादेव प्रागुणीभवनं कृतभक्तप्रत्याख्यानस्य तु निर्विघ्न-मुत्तमार्थसाधनं स्यात्। तथा ग्लाने परिज्ञावति वा गुरुमभ्युत्तिष्ठति शेषाणामप्यभ्युत्थाने श्रद्धाजननं विहितं भवति, यदेषोऽप्येवं गुरूनभ्युत्तिष्ठति ततोऽस्माभि सुतरामभ्युत्थातव्यम्। अपि च-एवं कुर्वता ग्लानेन परिज्ञावता च वीर्याचारो न हापितो भवति। अत एतैः कारणैरेताभ्यामभ्युत्थातव्यम्। प्रकारान्तरेण प्रायश्चित्तमुपदर्शयन्नाह-

[भा.४४४३] चंकमणे पासवणे, वीयारे साहु संजई सन्नी।
सन्निणि वाइ अमञ्चे, संघे वा रायसहिए वा ॥

[भा.४४४४] पनगं च भिन्नमासो, मासो लहुगो य होइ गुरुगो य।
चत्तारि छ च्च लहु गुरु, छेदो मूलं तह दुगं च ॥

चू- इह प्रथमगाथाया द्वितीयगाथायाश्च पदानां यथासङ्ख्येन योजना। तद्यथा-आचार्यं चङ्क्रमणं कुर्वाणं दृष्ट्वा नाभ्युत्तिष्ठति 'पञ्चकं' पञ्चरात्रिन्दिवानि प्रायश्चित्तम्। प्रश्रवणभूम्याआगतं नाभ्युत्तिष्ठति भिन्नमासः। 'विचारः' संज्ञा तां कृत्वा समागतस्यानभ्युत्थाने मासलघु। अन्यैः साधुभिः समागतस्यानभ्युत्थाने मासगुरु। संयतीभि सार्धमागतस्यानुत्थाने षड्लघु। संज्ञिनः-

श्रावकास्तैः सममायातमनुत्तिष्ठतश्चतुर्गुरु । असंज्ञिभिः सममायातस्यानभ्युत्थाने षड्लघु । संज्ञिनीभिरसंज्ञिनीभिश्च स्त्रीभिः सममायान्तमनभ्युत्तिष्ठतः षड्गुरु । वादिना सार्धमायातेऽनभ्युत्थिते छेदः । अमात्येन सार्धमागते मूलम् । सङ्घेन सार्धमायातेऽनुत्थितेऽनवस्थाप्यम् । राज्ञा सहितं सूरिमागतमनुत्तिष्ठतः पाराञ्चिकम् ॥ अथ किमर्थं स्त्रीभिः सममायाते पाराञ्चिकम् ॥ अथ किमर्थं स्त्रीभिः सममायाते गुरुतरं प्रायश्चितम् ? उच्यते-

[भा.४४४५] पूएंति पूइयं इत्थियाउ पाएण ताओ लहुसत्ता ।
एएण कारणेणं, पुरिसेसु इत्थिया पच्छा ॥

वृ- इह स्त्रियः प्रायेण 'पूजितं पूजयन्ति' यमेवाचार्यादिकं साधु-श्रावकादिभिरभ्युत्थानादिना पूज्यमानं पश्यन्ति तस्यैव पूजां विदधति, ताश्च स्त्रियः प्रायेण 'लघुसत्त्वाः' तुच्छाशया भवन्ति, ततः साधुभिरनभ्युत्थीयमानमाचार्यं गाढतरं परिभवबुध्या पश्यन्ति-न किमप्येष आचार्यो जानाति, न चायं विशिष्टगुणवान् सम्भाव्यते, अन्यथा किमेते साधवो नाभ्युत्तिष्ठन्ति ? । एवमेतेन कारणेन 'पुरुषेषु' साधु-श्रावकादिषु पूर्वं लघुतरप्रायश्चित्तमुक्त्वा पश्चात् स्त्रियोऽधिकृत्य गुरुतरमुक्तम्। अथ राज्ञा सार्धं समागतस्यानभ्युत्थाने किं कारणं पाराञ्चिकम् ? इत्याह-

[भा.४४४६] पाएणिड्ढा एंति महानेन समं तु, फातिं दोसो गच्छइ एएसु तनू वि ।
गज्झं वक्कं होज्ज कहं वा परिभूतो, वेडुज्जं वा कुच्छियवेसम्मि मनूसे ॥

वृ- 'ऋद्धा-' राजादय ऋद्धिमन्तः 'प्रायेण' बाहुल्येन 'महाजनेन' सामन्त-मन्त्रि-महत्तमादीनां महता समवायेन समं समागच्छन्ति, तत एतेषु 'तनुरपि' स्वल्पोऽप्यनभ्युत्थानमात्रलक्षणो दोषः स्फातिं गच्छति, सर्वत्र विस्तरतीति भावः । अप च-साधुभिरनभ्युत्थीयमान आचार्य परिभूतो भवति, परिभवपदमुपगच्छतीत्यर्थः । परिभूतस्य च 'वाक्यं' वचनं कथं नाम राजादीनां 'ग्राह्यम्' उपादेयं भवेत् ? । वैडूर्यमिव रत्नं 'कुत्सितवेषे' कार्पटिकवेषधारिणि मनुष्ये वर्तमानम्; यथा तदीये हस्ते स्थितं सद् अनर्घ्यमपि तद् न जनस्योपादेयम्, एवं गुरूणामपि धर्मकथावाक्यं गाम्भीर्य-माधुर्यादिगुणैरनघ्र्यमपि परिभूततया न राजादीनामुपादेयं भवति । तदनुपादेयतायां च तेषां सम्यग्दर्शनादिप्रतिपत्तिरपि न भवति । अतो राज्ञा सार्धं समायातेऽनभ्युत्थीयमाने पाराञ्चिकम् । परः प्राह-युक्तं प्रश्रवणभूम्यादेरागतस्याभ्युत्थानम्, यत्तु चङ्क्रमणं कुर्वतोऽभ्युत्थानं तद् नास्माकं युक्तिक्षमं प्रतिभाति, यतः-

[भा.४४४७] अवस्सकिरियाजोगे, वट्टंतो साहु पुज्जया ।
परिफग्गुं तु पासामो, चंकम्मंते वि उट्ठणं ॥

वृ- विचार-विहारादिको योऽवश्यं कर्त्तव्यः क्रियायोगस्तत्र वर्त्तमानो यदा समागच्छति तदा 'साध्वी' श्रेयसी तस्य पूज्यता । यदा तु चङ्क्रमणं करोति तदा निरर्थके योगे वर्त्तते अतश्चङ्क्रमत्यपि गुरौ यद् उत्थानं तत् 'परिफल्गु' निष्फलमेव पश्यामः । यत उक्तं भगवत्याम्- जावं च नं से जीवे सयासमियं एयइ० तावं च नं से जीवे आरंभे वट्टइ संरंभे वट्टइ० । जावं च नं से जीवे आरंभे वट्टइ० तावं च नं तसस जीवस्स अंतकिरिया न भवइ ॥ अत्र सूरिः प्रतिविधानमाह-

[भा.४४४८] कामं तु एअमाणो, आरंभाईसु वट्टई जीवो ।
सो उ अणट्ठा नेट्ठो, अवि बाहूणं पि उक्खेवो ॥

वृ- 'कामम्' अनुमतमिदं यदुएष जीवः 'एजमानः' स्पन्दमानः 'आरम्भादिषु' कर्मबन्धकारणेषु वर्त्तते, 'स तु' स पुनः परिस्पन्द 'अनर्थं' निष्कारणं 'नेष्टः' नाभिमतः अपि 'बाहोरुत्क्षेपः' बाहूत्क्षेपमात्रोऽपि, किं पुनश्चचङ्क्रमणादिरित्यपिशब्दार्थः, अर्थादापन्नम्-यः सार्थकश्चङ्क्रमणादिव्यापारः स इष्ट एवेति ॥ अथ सार्थकोऽपि व्यापारः कथमिष्टः ? इत्यस्यां जिज्ञासायां यथा योगत्रयेऽपि व्यापार्यमाणे दोषा यथा च गुणा भवन्ति तदेतत् प्रतिपादयति-

[भा.४४४९] मनो य वाया काओ अ, तिविहो जोगसंगहो ।
ते अजुत्तस्स दोसाय, जुत्तस्स उ गुणावहा ॥

वृ- मनोयोगो वाग्योगः काययोगश्चेति त्रिविधो योगसङ्ग्रहो भवति, सङ्क्षेपतस्त्रिधा योगो भवतीत्यर्थः । 'ते च' मनो-वाक्-काययोगाः 'अयुक्तस्य' अनुपयुक्तस्य 'दोषाय' कर्मबन्धाय भवन्ति, युक्तस्य तु त एव 'गुणावहाः' कर्मनिर्जराकारिणः सम्पद्यन्ते ॥ इदमेव भावयति-

[भा.४४५०] जह गुत्तस्सिरियाई, न होंति दोसा तहेव समियस्स ।
गुत्तीट्ठिय प्पमायं, रुंभइ समिई सचेट्ठस्स ॥

वृ- यथा किल मनो-वाक्-कायगुप्तस्य ईर्यादिप्रत्यया अनुपयुक्तगमना-ऽऽगमनादिक्रिया-समुत्थादोषा न भवन्ति तथैव 'समितस्यापि' चङ्क्रमणं कुर्वत ईर्यादिप्रत्यया दोषा न भवन्त्येव । किं कारणम् ? इत्याह-यदा किल गुप्तिषु-मनोगुप्त्यादिषु स्थितो भवति तदा योऽगुप्तिप्रत्ययः प्रमादस्तं निरुणद्धि, तन्निरोधाच्च तत्प्रत्ययं कर्मापि न बध्नाति । यस्तु समितौ स्थितः स सचेष्टस्य यः प्रमादो यश्च तत्प्रत्ययः कर्मबन्दस्तयोर्निरोधं विदधाति ॥ परः प्राह-यो गुप्तः स समितो भवति उत न ? इति यो वा समितः स गुप्तो भवति उत न ? इति अत्रोच्यते-

[भा.४४५१] समितो नियमा गुत्तो, गुत्तो समियत्तणम्मि भइअव्वो ।
कुसलवइमुदीरंतो, जं वइसमितो वि गुत्तो वि ॥

वृ- इह समितयः प्रवीचाररूपा इष्यन्ते, गुप्तयस्तु प्रवीचारा-ऽप्रवीचारोभयरूपाः । प्रवीचारो नाम-कायिको वाचिको वा व्यापारः । ततो यः 'समितः' सम्यग्गमन-भाषणादिचेष्टायां प्रवृत्तः स नियमाद् 'गुप्तः' गुप्तियुक्तो मन्तव्यः, यस्तु गुप्तः स समितत्वे 'भक्तव्यः' विकल्पनीयः । तत्र समितः कथं नियमाद् गुप्तः ? इत्याह- 'कुशलां' निरवद्यादिगुणोपेतां वाचमुदीरयन् 'यद्' यस्माद् वाक्समितोऽपि गुप्तोऽपि । किमुक्तं भवति ?-यः समयगनुविचिन्त्य निरवद्यां भाषां भाषते स भाषासमितोऽपि वाग्गुप्तोऽपि वाग्गुप्तोऽपि च भवति, गुप्तेः प्रवीचाररूपतयाऽप्यभिधानात्; अतः समितो नियमाद् गुप्त इति ॥ गुप्तः समितत्वे कथं भजनीयः ? इत्याह-

[भा.४४५२] जो पुन काय-वतीओ, निरुज्झ कुसलं मणं उदीरेइ ।
चिट्ठइ एकग्गमणो, सो खलु गुत्तो न समितो उ ॥

वृ- यः पुनः काय-वाचौ निरुध्य 'कुशलं' शुभं मन उदीरयन् एकाग्रमना धर्मध्यानाद्युपयुक्तचित्तस्तिष्ठति स खलु गुप्त उच्यते, न समितः, समितेः प्रवीचाररूपत्वात् । यस्तु काय-वाचौ सम्यक् प्रयुङ्क्ते स गुप्तोऽपि समितोऽपि मन्तव्यः ॥ अथ समिति-गुप्तीनां परमवतारं दर्शयन्नाह-

[भा.४४५३] वाइगसमिई बिइया, तइया पुन मानसा भवे समिई ।
सेसा उ काइयाओ, मनो उ सव्वासु अविरुद्धो ॥

वृ- 'वाचिकसमितिर्नाम' भाषासमिति सा द्वितीया वाग्गुप्तिर्मन्तव्या। यदा किल भाषासमितो भवति तदाथा भाषाया असमितिप्रत्ययं सा द्वितीया वाग्गुप्तिर्मन्तव्या। यदा किल भाषासमितो भवति तदा यथा भाषाया असमितिप्रत्ययं कर्मबन्धं निरुणद्धि तथा वाग्गुप्तिप्रत्ययमपि कर्मबन्धं निरुणद्धि, एवं भाषासमिति-वाग्गुप्तयोरेकत्वम्। 'तृतीया पुनः' एषणाख्या समिति 'मानसी' मानसिकोपयोगनिष्पन्ना। किमुक्तं भवति ?-यदा साधुरेषणासमितो भवति तदा श्रोत्रादिभिरिन्द्रियैर्हस्त-मात्रकधावनादिसमुत्थेषु शब्दादिषूपयुज्यते, अत एवास्या मनोगुप्तेश्चैकत्वम्। 'शेषास्तु समितयः' ईर्या-ऽऽदाननिक्षेपोच्चारादिपारिष्ठापनिकाख्याः 'कायिक्यः' कायचेष्टानिष्पन्ना, अत एवासां तिसृणामपि कायगुप्तया सहैकत्वम्।

''मणो उ सव्वासु अविरुद्धो'' त्ति मानसिक उपयोगः 'सर्वासु' पञ्चस्वपि समितिषु 'अविरुद्धः' समितिपञ्चकेऽप्यस्तीति भावः। अत एव मनोगुप्तस्य सचेष्टस्य सर्वासां समितीनां मनोगुप्तया सहैकत्वं मन्तव्यम्॥ आह-भिक्षार्थं गृहद्वारे स्थितस्य तत्राहारादीनि कल्पनीयानि मार्गयतः श्रोत्रादिभिरुपयुक्तस्य भाषासमिति-मनोगुप्त्येषणासमितीनां तिसृणामपि सम्भवो दृश्यते अतः किमासामेकत्वम् उतान्यत्वम् ? इत्याशङ्क्याह-

[भा.४४५४] वयसमितो च्चिय जायइ, आहारादीणि कप्पणिज्जाणि।
एसणउवओगे पुन, सोयाई माणसा न वई॥

वृ- 'शङ्कित-म्रक्षितादिदशदोषरहितं मया ग्राह्यम्' इत्येषणासमितिभावसंयुक्तो यदा साधुराहारादीनि कल्पनीयानि मार्गयति तदा वाक्समित एवासौ जायते, न पुनर्मनोगुप्त इत्येवकारार्थः। यदा तु श्रोत्रादिभिरेषणायामुपयोगं करोति तदा मानसी नाम गुप्तिर्भवेत्, मनोगुप्तिरित्यर्थः, न पुनः 'वाग्' भाषासमिति। इदमत्र तात्पर्यम्-भाषासमितिर्मनोगुप्तिश्चेति द्वे समिति-गुप्ती युगपन्न भवतः किन्तु भिन्नकालम्, यद्यपि च ''मनो य सव्वत्थ अविरुद्धो'' त्ति वचनाद् भाषासमितावपि मानसिकोपयोगः समस्ति तथापि गौणत्वादसौ सन्नपि न विवक्ष्यत इति॥ अपि च-

[भा.४४५५] जा वि य ठियस्स चेट्ठा, हत्थादीणं तु भंगियाईसु।
सा वि य इरियासमिती, न केवलं चंकमंतस्स॥

वृ-न केवलं 'चङ्क्रमतः' चङ्क्रमणं कुर्वत एव ईर्यासमिति किन्तु 'स्थितस्य' गमना-ऽऽगमनक्रियामकुर्वतः 'भङ्गिकादिषु' भङ्गबहुल-गमबहुलादिश्रुतेषु परावर्त्त्यमानेषु भङ्गकादिरचनाय याऽपि हस्तादीनां चेष्टा साऽपि परिस्पन्दरूपत्वादीर्यासमिति प्रतिपत्तव्या॥ यच्च परेण प्रागुक्तम् ''चङ्क्रमणं निरर्थकम्'' इत्यादि तत्परिहाराय चङ्क्रमणगुणानुपदर्शयति-

[भा.४४५६] सायाई सट्ठाणं, वयंति कुविया उ सन्निरोहेणं।
लाघवमग्गिपडुत्तं, परिस्समजतो य चंकमतो॥

वृ-अनुयोगदानादिनिमित्तं यश्चिरमेकस्थानोपवेशनलक्षणः सन्निरोधस्तेन 'कुपिताः' स्वस्थानात् चलिता ये वातादयो धातवस्ते चङ्क्रमतो भूयः स्वस्थानं व्रजन्ति। 'लाघवं' शरीरे लघुभावऽपजायते। 'अग्निपटुत्वं' जाठरानलपाटवं च भवति। यश्च व्याख्यानादिजनितः परिश्रमस्तस्य जयः कृतो भवति। एते चङ्क्रमतो गुणा भवन्ति अतो न निरर्थकं चङ्क्रमणम्॥ आह-यद्येवं तत किमवश्यं तत्राभ्युत्थानं कर्त्तव्यम् उत न ? इति अत्रोच्यते-

[भा.४४५७] चंकमणे पुन भइयं, मा पलिमंथो गुरूविदिन्नम्मि ।
पणिवायवंदनं पुन, काऊण सई जहाजोगं ॥

वृ- पुनःशब्दो विशेषणे, स चैतद् विशिनष्टि-प्रश्रवण-विचारभूम्यादेरागतस्य गुरोः कर्त्तव्यमेवाभ्युत्थानम्, चङ्क्रमणे पुनः 'भक्तं' विकल्पितम् । कथम् ? इति अत आह-मा सूत्राऽर्थपरावर्त्तनयोः 'परिमन्थः' व्याघातो भवत्विति कृत्वा यदि गुरवोऽनभ्युत्थानं वितरन्ति तदानाभ्युत्थातव्यम्, परमेवं गुरुभिर्वितीर्णेसति 'सकृद्' एकवारमभ्युत्थानं विधाय 'प्रणिपातवन्दनं' शिरःप्रणामलक्षमं कृत्वा 'भगवन् ! अनुजानीध्वम्' इति भणित्वा 'यथायोगं' यथेप्सितं सूत्रार्थगुणनादिकं व्यापारं कुर्यात् । अथ गुरवो न वारयन्ति ततो नियमादभ्युत्थातव्यम् ॥ पुनरपि परः प्रेरयति-यदि चङ्क्रमणेऽनभ्युत्थाने सूत्रार्थपरिमन्थदोषो भवति तत इदमस्माभिरुच्यते–

[भा.४४५८] अइमुद्धमिदं वुच्चइ, जं चंकमणे वि होइ उट्ठाणं ।
एवमकारिज्जंता, भद्दगभोई व मा कुज्जा ।.

वृ- 'अतिमुग्धम्' अतीवाप्रबुद्धजनोचितमिदं भवद्भिरुच्यते-यत् चङ्क्रमणेऽप्यभ्युत्थानं कर्त्तव्यं भवति । सूरिराह-एवं चङ्क्रमणविषयमभ्युत्थानमकार्यमाणा भद्रकभोजिकस्येव प्रसङ्गतो मा शेषमप्यविनयं कार्षुरिति कृत्वा चङ्क्रमणेऽप्यभ्युत्थानं कार्यन्ते । अथ कोऽयं भद्रकभोजिकः? इति उच्यते- जहा-एगो भोइतो । तस्स रन्ना तुट्ठेणं गामंडलं पसाएण दिन्नं । सो तत्थ गतो ताहे ते गामिल्लगा तुट्ठा 'भद्दओ सामी लद्धो' त्ति, ऋजुरित्यर्थः । तओ ते भोइयं विन्नवेंति-अम्हे तव पुत्तानुपुत्तियं भिद्दा जाया तो अम्हे 'चिंतणिज्ज'त्ति काउं करं पुव्वपरिमाणाओ थोवतरं करेहि । भोइएण अब्भुवगयं । अन्नया जं जं ते विन्नवेंति तं तं सो भद्दतो भोइतो तेसिं गामिल्लयाणं अनुग्गहं करेइ । अइवीसत्थत्तणेण लद्धपसरा ते जहारिहं विनयं भंसिउमाढत्ता । ततो भोइएण रुट्ठेण ते गामिल्लया दंडिया, केइ उद्दविया । एस दिट्ठंतो । अयमत्थोवणओ-चंकमणअणब्भुट्ठाणे सेसं पि विनयं परिहविज्जा ततो रुट्ठो आयरिओ पच्छित्तदंडेण दंडिज्जा । जे य तत्थ अच्चंतावराहिणो ते गच्छाओ निच्छुभिज्जा । विनयमकारिज्जंता य ते इहलोए परलोए य परिच्चत्ता भवंति । आयरिओ य सरणमुवगयाणं तेसिं न सारक्खणकारी भवइ अओ चंकमणे वि ते अब्भुट्ठाणं कारिज्जंति ॥ अपि

[भा.४४५९] वसभाण होंति लहुगा, असारणे सारणे अपच्छित्ता ।
ते वि य पुरिसा दुविहा, पंजरभग्गा अभिमुहा य ॥

वृ- ये ते गुरुचङ्क्रमणादिषु नाभ्युत्तिष्ठन्ति तान् यदि वृषभाः 'न सारयन्ति' 'कस्मादार्या ! नाभ्युत्तिष्ठथ ?' ततो वृषभाणां चतुर्लघवः । अथ वृषभैः प्रतिनोदिताः परं ते न प्रतिशृण्वन्ति ततः सारणे कृते सति वृषभा अप्रायश्चित्ता इतरे प्रायश्चित्तमापद्यन्ते । अनभ्युत्थाने असारणायां चामी दोषा भवन्ति-ये प्रतीच्छका उपसम्प्रतिपत्त्यर्थमायातास्ते द्विविधाः पुरुषा भवन्ति-पञ्जरभग्नाः संयमाभिमुखाश्च । तत्र गच्छे वसतां यद् आचार्योपाध्याय-प्रवर्तक-स्थविर-गणावच्छेदिकाख्यपदस्यपञ्चकस्य पारतन्त्र्यं या परस्परं प्रतिनोदना एतत् पञ्जरमुच्यते, एतस्मात् पञ्जराद् भग्नाः-निर्विण्णाः पञ्जरभग्नाः । संयमाभिमुखास्तु-पार्श्वस्थादवमग्नविहारिगच्छात् चारित्राभिलाषिणः संविग्नगच्छं प्रवेष्टुकामाः ॥ तत्र ये पञ्जरभग्ना आगतास्ते तामनभ्यु-त्थानविषयामप्रतिनोदनां दृष्ट्वा चिन्तयन्ति-

[भा.४४६०] भग्गऽम्ह कडी अब्भुट्ठणेण देइ य अनुट्ठणे सोही ।
अनिरोहसुहो वासो, होहिइ ने इत्थ अच्छामो ।।

वृ- अस्माकं पूर्वस्मिन् गच्छे वसतामाचार्यस्य चङ्क्रमणादिषु वारंवारमभ्युत्थानेन कटी भग्ना, अथासौ नाभ्युत्थीयते ततः 'शोधिं' प्रायश्चित्तं प्रयच्छति गाढं च खर-परुषैः खरण्टयति, अस्मिंस्तु गच्छे न प्रायश्चित्तं न च खरण्टना, तोऽनिरोधः-अनियन्त्रणा तेन सुखः-सुखदायी वासोऽत्र "ने" अस्माकं भविष्यति, तिष्ठामो वयमत्रेति कृत्वा तत्रैव तिष्ठेयुः, न भूयः स्वगच्छं गच्छेयुः ।।

[भा.४४६१] जे पुन उज्जयचरणा, पंजरभग्गो न रोयए ते उ ।
अन्नत्थ वि सइरत्तं, न लब्भई एति तत्थेव ।।

वृ- ये पुनः 'उद्यतचरणाः' स्वल्पेऽप्यनभ्युत्थानादावपराधे सम्यक् प्रतिनोदनाकारिणस्तान् पञ्जरभग्नः 'न रोचयति' न रुचिपथं प्रापयति, चिन्तयति च-'अन्यत्रापि' गच्छान्तरे 'स्वैरित्वं' स्वातन्त्र्यं न लभ्यते इति विचिन्त्य 'तत्रैव' स्वगच्छे 'एति' समागच्छति ।।

अथ संयमाभिमुखोऽसौ समागतस्ततः किम् ? इत्याह-

[भा.४४६२] चरणोदासीणे पुन, जो विप्पजहाय आगतो समणो ।
सो तेसु पविसमाणो, सद्धं वड्ढेइ उभओ वि ।।

वृ-यः पुनः श्रमणः 'चरणोदासीनान्' पार्श्वस्थादीन् सुखशीलविहारिणो विप्रहाय संयमाभिमुखः समागतः सः 'तेषु' गच्छान्तरीयेषु साधुषु प्रविशन् उभयेषामपि साधूनां श्रद्धां वर्धयति । तथाहि-यत्र गच्छेऽसौ प्रविशति तदीयाः साधवश्चिन्तयन्ति-एषः 'सुन्दरा अमी' इति परिभाव्यास्माकं मध्ये प्रविशति अतः सुन्दरतरं कुर्महे । यस्मादपि गच्छादायातास्तदीया अपि चिन्तयन्ति-अस्मान् 'सुखशीलान्' इति विज्ञायैष गच्छान्तरं गच्छति अतो वयमुद्यता भवाम इति ।। अथासौ संयमाभिमुखस्तत्रापि सामाचारीहापनं प्रतिनोदनाया अभावं च पश्यति ततश्चिन्तयति-

[भा.४४६३] इत्थ वि मेराहानी, एते वि हु सार-वारणामुक्का ।
अन्नं वयइ अभिमुहो, तप्पच्चयनिज्जराहानी ।।

वृ- अत्रापि गच्छे न केवलं पूर्वस्मिन् इत्यपिशब्दार्थ, मर्यादायाः-अभ्युत्थानादिसामाचार्या हानिरवलोक्यते, 'एतेऽपि च' साधवः स्मारणा-वारणामुक्ताः परिस्फुटं प्राक्तनगच्छसाधव इव निर्गलाः समीक्ष्यन्ते, अतः को नामामीषां समीपे स्थास्यति ? इति मत्वा स संयमाभिमुखः साधुः 'अन्यान्' गच्छान्तरीयान् साधून् 'व्रजति' प्रविशति । प्रविशतु नाम गच्छान्तरं का नो हानि ? इति चेद् अत आह-'तत्प्रत्यया' तस्य-साधोः संयमानुपालनोपष्टम्भकरणहेतुका या निर्जरा तस्या हानि प्राप्नोति, सा न भवतीत्यर्थः ।। आह किं कारणमसौ तेषु न प्रविशति ? इत्याह-

[भा.४४६४] जहिं नत्थि सारणा वारणा य पडिचोयणा य गच्छम्मि ।
सो उ अगच्छो गच्छो, संजमकामीण मोत्तव्वो ।।

वृ- विस्मृते क्वचित् कर्त्तव्ये 'भवतेदं न कृतम्' इत्येवंरूपा स्मारणा सारणा, अकर्त्तव्यनिषेधो वारणा, उपलक्षणत्वाद् अन्यथा कर्त्तव्यमनाभोगादिना अन्यथा कुर्वतः सम्यक्प्रवर्त्तना प्रेरणा, निवारितस्यापि पुनः पुनः प्रवर्त्तमानस्य खर-परुषोक्तिभि शिक्षणं प्रतिनोदना । एताः सारणादयो यत्र गच्छे न सन्ति स गच्छो गच्छकार्याकरणादगच्छो मन्तव्यः, अत व 'संयमकामिना'

संयमाभिमुखेन साधुना मोक्तव्योऽसौ, नाश्रयणीय इति भावः। गाथायां प्राकृतत्वाद् इकारस्य दीर्घत्वम् ॥ प्रकारान्तरेण प्रायश्चित्तमभिधित्सुः प्रस्तावनामाह-

[भा.४४६५] अयमपरो उ विकप्पो, पुव्वावरवाहय त्ति ते बुद्धी।
लोए वि अनेगविहं, ननु भेसज मो रुजोवसमे ॥

वृ- 'अयम्' अग्रेतनगाथायां वक्ष्यमाणोऽपरः प्रायश्चित्तस्य 'विकल्पः' प्रकारः। अत्र परः प्राह-'पूर्वापरव्याहतमिदं' पूर्वमन्यादृशं प्रायश्चित्तमुक्त्वा यदिदानीमन्यादृशमभिधीयते तदेतत् पूर्वापरविरुद्धम् इति 'ते' तव बुद्धि स्यात् तत्रोच्यते-ननु लोकेऽपि रुजोपशमे विधातव्ये तथाविधे त्रिफला-त्रिकटुकादिभेदादनेकविधं भेषजं "मो" इति पादपूरणे प्रयुज्यमानं दृष्टमेव, एवमत्राप्येकस्यैवानभ्युत्थानस्य तथातथाक्षेत्र-महाजनादिभेदेनानेकविधं प्रायश्चित्तमभिधीयमानं न विरुध्यते ॥ इत्थं पराभिप्रायं परिहृत्य प्रायश्चित्तमाह-

[भा.४४६६] वीयार-साहु-संजइ-निगम-घडा-राय-संघ-सहिते तु।
लहुगो लहुगा गुरुगा, छम्मासा छेद मूल दुगं ॥

वृ-आचार्यं विचारभूमेरागतंनाभ्युत्तिष्ठन्ति मासलघु, साधुभि सममायामनभ्युत्तिष्ठतां चतुर्लघवः, संयतीभिः समं चतुर्गुरवः, निगमैः-पौरवणिग्विशेषैः षड्लघवः, घटया-महत्तरा-ऽनुमहत्तरा-दिगोष्ठीपुरुषसमवायलक्षणया समं छेदः, सङ्घेन समं मूलम्, राज्ञा सममनवस्थाप्यम्, "सहिए तु"त्ति सङ्घसहितेन राज्ञा सममायातमनभ्युत्तिष्ठतां पाराञ्चिकम् ॥

गतमभ्युत्थानम्। अथ वन्दनकमभिधित्सुराह-

[भा.४४६७] देसिय राइय पक्खिय, चाउम्मासे तहेव वरिसे य।
लहु गुरु लहुगा गुरुगा, वंदनए जानि य पदाणि ॥

वृ-दैवसिके रात्रिके वा आवश्यके वन्दनकं न ददति मासलघु। पाक्षिके वन्दनकं न प्रयच्छन्ति मासगुरु। चातुर्मासिके वन्दनकमददतां चतुर्लघु। सांवत्सरिके वन्दनकादाने चतुर्गुरु। चशब्दाद् विपरीतं न्यूनाधिकं च कुर्वतां लघुमासः। यानि च वन्दनके व्यवनत-यथाजातादीनि पदानि तेषामप्यकरणेऽसामाचारीनिष्पन्नं मासलघु ॥ अथैतदेव प्रायश्चित्तं विशेषयन्नाह-

[भा.४४६८] आयरियाइचउण्हं, तव-कालविसेसियं भवे एयं।
अहवा पडिलोमेयं, तव-कालविसेसओ होइ ॥

वृ- आचार्यादीनां चतुर्णामपि 'एतद्' अनन्तरोक्तं प्रायश्चित्तं तपः-कालविशेषितं भवति-तत्राचार्यस्य द्वाभ्यामपि तपः-कालाभ्यां गुरुकम्, वृषभस्य तपोगुरुकम्, भिक्षोः कालगुरुकम्, क्षुल्लकस्य तपसा कालेन च लघुकम्। अथवा तपः-कालविशेषत एतदेव 'प्रतलोमं' पश्चानुपूर्व्या वक्तव्यम्-आचार्यस्य द्वाभ्यामपि लघुकम्, वृषभस्य कालगुरुकम्, भिक्षोस्तपोगुरुकम्, क्षुल्लकस्य द्वाभ्यामपि गुरुकम् ॥ अथ "देसिय-राइय"त्ति पदद्वयं विशेषतो भावयति-

[भा.४४६९] दुगसत्तगकिइकम्मस्स अकरणे होइ मासियं लहुगं।
आवासगविवरीए, ऊणऽहिए चेव लहुओ उ ॥

वृ- "दुगसत्तग"त्ति द्वे सप्तके चतुर्दश भवन्तीति कृत्वा पूर्वाह्ना-ऽपराह्णयोश्चतुर्दश वन्दनकानि भवन्ति। कथम्? इति चेद् उच्यते-इह रात्रिप्रतिक्रमणे चत्वारि वन्दनकानि-तत्रैकमालोचनायाम्,

द्वितीयं त्रामणके, तृतीयं षाण्मासिकतपश्चिन्तनकायोत्सर्गार्थम्, चतुर्थं प्रत्याख्यानग्रहणार्थमिति। तथा स्वाध्याये त्रीणि वन्दनकानि, तत्र च वृद्धसम्प्रदायः- सज्झाए वंदित्ता पट्ठवेइ, एयं पढमं। पवेयंतस्स बिइयं, पच्छा उद्दिट्ठं समुद्दिट्ठं पढइ, उद्देस समुद्देसनंदनस्सामिहेवंतब्भावो। तओ जाहे चउभागावसेसा पोरिसी ताहे पाए पडिलेहेइ, जइ न पढिउकामो तो वंदइ, अह पढिउकामो ताहे अवंदित्ता पाए पडिलेहेइ, पडिलेहित्ता पच्छा पढइ, कालवेलाए वंदिउं पडिक्कमइ, एयं तइयं।

एवं पूर्वाह्णे सप्त वन्दनानि अपराह्णेऽप्येवमेव सप्त भवन्ति-तत्र चत्वारि दैवसिकप्रतिक्रमणे, त्रीणि स्वाध्याये, अनुज्ञावन्दनानां स्वाध्यायवन्दनेष्वेवान्तर्भावादिति सर्वसङ्ख्यया चतुर्दशवन्दनकानि भवन्ति। एतश्चाभक्तार्थिकमङ्गीकृत्योक्तम्। यस्तु भक्तार्थिकस्तस्य भोजनान्तरभाविप्रत्याख्यानवन्दनकसहितानि पञ्चदश भवन्तीति। एतेषां मध्यादेकतरस्यापि कृतिकर्मणोऽकरणे मासिकं लघुकं प्रायश्चित्तं भवति। तथा आवश्यं कुर्वन् विपरीतमालापकोच्चारणं करोति, तद्यथा- दैवसिके आवश्यके 'क्षामयामि क्षमाश्रमण ! रात्रिकं व्यतिक्रमम्' इत्युच्चरति, रात्रिके वा दैवसिकाभिलापं करोति, एवं पाक्षिक-चातुर्मासिक-सांवत्सरिकेष्वपि प्रतिक्रमणेषु वक्तव्यम्, अत्र सर्वत्राप्यसामाचारीनिष्पन्नं मासलघु। "ऊणऽहिए चेव" त्ति ऊनानि वा- एकद्व्यादिभिर्वन्दकैर्हीनानि अधिकानि। वा-यथोक्तप्रमाणादतिरिक्तानि दैवसिकादिप्रतिक्रमणेषु वन्दनकानि प्रयच्छतो मासलघु॥ अथ "वंदनए जाणि य पयाणि" त्ति पदेन यानि द्व्यवनतादीनि पञ्चविंशतिर्वन्दनकस्यावश्यकपदानि सूचितानि तानि दर्शयति-

[भा.४४७०] दुओणयं अहाजायं, किइकम्मं बारसावयं।
चउसिरं तिगुत्तं च, दुपवेसं एगनिक्खमणं॥

वृ-अवनतिरवनतम्-उत्तमाङ्गप्रधानं प्रणमनम्, द्वे अवनते यस्मिन् तद् द्व्यवनतम्-एकं यदा प्रथममेव "इच्छामि खमासमणो ! वंदिउं जावणिज्जाए निसीहियाए" इत्यभिधाय छन्दोऽनुज्ञापनायावनमति, द्वितीयं पुनरेवमेव द्वितीयप्रवेशे इति २। 'यथाजातं नाम' यथा प्रसूतो जननीजठरान्निर्गतो यथा च श्रमणो जातस्तथैव वन्दनकं दातव्यम्-तत्र रजोहरणमुखवस्त्रिकाचोलपट्टकमात्रया श्रमणः सञ्जातः, रचितकरसम्पुटस्तु योन्या विनिर्गतः, एवम्भूत एव वन्दनकं दत्ते ३। 'कृतिकर्म' वन्दनकं "बारसावयं" ति द्वादशावर्त्तं भवति-इह प्रथमतः प्रविष्टस्य "अहो-कायं, काय, जत्ता भे, जवणि-ज्जं च भे" इति सूत्राभिधानगर्भा गुरुचरणन्यस्तहस्तशिरःस्थापनरूपाः षडावर्त्ता भवन्ति, अवग्रहान्निर्गत्य पुनःप्रविष्टस्याप्येवमेव षडिति द्वादशावर्तवन्दनकमुच्यते १५। चत्वारि शिरांसि-उपचारात् शिरोऽवनमनानि यस्मिन् तत् चतुःशिरः - तत्र संफासनमने एगं, खामणानमणे सीसस्स बीयं, एवं बीयपवेसे वि दोन्नि त्ति १९। तथा त्रयः-मनो-वाक्-काययोगा गुप्ताः-सुप्रणिहिता यस्मिन् तत् त्रिगुप्तम्, इयमत्र भावना-मनसा सम्यक्प्रणिहितो वाचा अस्खलितानि सूत्रपदानि विकथाविनिरोधेनोच्चारयन् कायेनावर्त्तान् सम्यक् प्रयुञ्जानो वन्दनं ददाति २२। द्वौ प्रवेश गुरोरवग्रहादावश्यिकया निर्गच्छतो यत्र तद् एकनिष्क्रमणम् २५। एतेषां पञ्चविंशतेरावश्यकानामकरणे प्रत्येकं मासलघु प्रायश्चित्तम्। अथवा "वन्दनके यानि पदानि" इत्यत्र अनाढ्तादीनि द्वात्रिंशत्सङ्ख्याकानि दोषपदानि मन्तव्यानि॥ तानि चामूनि-

[भा.४४७१] अनाढियं च थद्धं च, पविद्धं परिपिंडियं।

टोलगइ अंकुसं चेव, तहा कच्छभरिंगियं ॥

वृ- अनादृतं च स्तब्धं च प्रवृद्धं परिपिण्डितं टोलगति अङ्कुशं चैव तथा कच्छपरिङ्गितमिति प्रथमगाथायां सप्त दोषा- ॥

[भा.४४७२] मच्छुव्वत्तं मनसा, य पउट्ठं तह य वेइयाबद्धं ।
भयसा चेव भयंतं, मित्ती-गारव-कारणा ॥

वृ- मत्स्योद्वृत्तं मनसा प्रद्विष्टं तथा च वेदिकाबद्धं "भयसा चेव"त्ति भयेनैव "भयंतं" ति भजतो वन्दनमपि भजेत् तथा मैत्रीं गौरवं कारणं चाश्रित्य वन्दनकमिति द्वितीयगाथायामष्टौ दोषाः ॥

[भा.४४७३] तेनियं पडिनियं चेव, रुट्ठं तज्जियमेव य ।
सढं च हीलियं चेव, तहा विप्पलिउंचियं ॥

वृ- स्तैन्येन-चौर्येण कृतं वन्दनमपि स्तैन्यं प्रत्यनीकवन्दनं रुष्टवन्दनं तर्जयन् वन्दत इति तर्जितवन्दनं शठवन्दनं हीलितवन्दनं तथा विपरिकुञ्चितमिति तृतीयगाथायां सप्त दोषाः ॥

[भा.४४७४] दिट्ठमदिट्ठं च तहा, सिंगं च कर मोअणं ।
आलिद्धमनालिद्धं, ऊनं उत्तरचूलियं ॥

वृ- दृष्टादृष्टं तथा शृङ्गं करो मोचनम आश्लिष्टा-ऽनाश्लिष्टं न्यून उत्तरचूलिकमिति चतुर्थगाथायां सप्त दोषाः ॥

[भा.४४७५] मूयं च ढड्ढरं चेव, चुडलिं च अपच्छिमं ।
बत्तीसदोसपरिसुद्धं, किइकम्मं पउंजए ॥

वृ- मूक ढड्ढरं चुडलिकम् 'अपश्चिमं' पर्यन्तवर्ति इति पञ्चमगाथार्धे त्रयो दोषाः । एवं द्वात्रिंशद्दोषपरिशुद्धं कृतिकर्म प्रयुञ्जीत साधुरिति दोषनामोत्कीर्त्तनायां पञ्च गाथाः ॥

इदानीमेतानेव यथाक्रमं व्याचष्टे-

[भा.४४७६] आयरकरणं आढा, तव्विवरीयं अनाढियं होइ ।
दव्वे भावे थद्धो, चउभंगो दव्वतो भइतो ॥

वृ- आदरः-सम्भ्रमस्तत्करणमादृतता सा यत्र न भवति तदनादृतमुच्यते । द्वितीयं दोषमाह- स्तब्धस्तावद् द्रव्यतो भावतश्च भवति । अत्र चतुर्भङ्गिका, तद्यथा-द्रव्यतः स्तब्धो न भावतः १ भावतः स्तब्धो न द्रव्यतः २ अपरो द्रव्यतो भावतश्च ३ अन्यस्तु न द्रव्यतो नापि भावतः ४ इति। अत्र चरमो भङ्गः शुद्धः । शेषभङ्गकेष्वपि भावतः स्तब्धोऽशुद्ध एव, द्रव्यतस्तु 'भक्तः' विकल्पितः, उदर-पृष्ठशूल्यव्यथादिबाधितोऽवनामं कर्त्तुमशक्तः कारणिकः स्यादपि स्तब्धो न तु निष्कारणिक इति भावः ॥ तृतीयं दोषमाह-

[भा.४४७७] पविद्धमनुवयारं, जं अप्पिंतो न जंतितो होति ।
जत्थ व तत्थ व उज्झति, कतकिच्चो वक्खरं चेव ॥

वृ- प्रवृद्धं नाम यद् उपचाररहितम् । एतदेव व्याचष्टे-यद् वन्दनकं गुरुभ्यः 'अर्पयन्' ददद् न यन्त्रितो भवति । अयन्त्रितत्वेन यत्र तत्र वा स्थने प्रथमप्रवेशादिलक्षणे असमाप्तमपि वन्दनकमुज्झति।

क इव यथा किमुज्झति ? इत्याह-''कयकिच्चो वक्खरं चेव''त्ति, एतदुक्तं भवति-यथा केनचिद् भाटिकेन कुतश्चिद् नगराद् नगरान्तरे 'वक्खरं' भाण्डमुपनीतम् । वक्खरस्वामिना च भाटिकोऽभिहितः-प्रतीक्षस्व कञ्चित् कालं यावदस्य वक्खरस्यावतारणस्थानं किञ्चिदन्वेषयामि। स प्राह-'मयाऽस्मिन्नेव नगरे समानेतव्यमिदमित्येवोक्तम्, अतः कृतकृत्यत्वाद् नातः परं प्रतीक्षेऽहम्' इत्युक्त्वाऽस्थान एव तद् भाण्डमुज्झित्वा गच्छति । एवं साधुरप्यस्थान एव वन्दनकं परित्यज्य नश्यतीत्येतावता दृष्टान्त इति ।। चतुर्थं दोषमाह-

[भा.४४७८] परिपिंडिए व वंदइ, परिपिंडियवयण-करणओ वा वि ।
टोलो व्व उप्फिडंतो, ओसक्क-ऽहिसक्कणं दुहओ ।।

वृ- यत्र 'परिपिण्डितान्' एकत्र मिलितानाचार्यादीनेकवन्दनकेनैव वन्दते न पृथक् पृथक् तत् परिपिण्डितमुच्यते; अथवा वचनानि-सूत्रोच्चारणगर्भाणि, करणानि-कर-चरणादीनि, परिपिण्डितानि-अव्यवच्छिन्नानि वचन-करणानि यस्य स तथा, ऊर्वोरुपरि हस्तौ व्यवस्थाप्य सम्पिण्डितकर-चरणोऽव्यक्तसूत्रोच्चारणपुरःसरं यत्र वन्दते तद् वा परिपिण्डितमिति भावः । पञ्चमं दोषमाह-उत्ष्वष्कणम्-अग्रतः सरणम् अभिष्वष्कणं-पश्चादपसरणं ''दुहओ''त्ति ते द्वे अपि टोलवद् उत्प्लुत्योत्प्लुत्य करोति यत्र तत् टोलगतिवन्दनकमिति ।। षष्ठं दोषमाह-

[भा.४४७९] उवगरणे हत्थम्मि व, घित्तु निवेसेति अंकुसं बिंति ।
ठिय रिंगणं जं, तं कच्छभरिंगियं नाम ।।

वृ- यत्राङ्कुशेन गजमिव शिष्य आचार्यमूर्द्धस्थितं शयितं प्रयोजनान्तरव्यग्रं वा 'उपकरणे' चोलपट्ट-कल्पादौ हस्ते वा अवज्ञया समाकृष्य वन्दनकदानार्थमासने उपवेशयति तद् अङ्कुशं ब्रुवते । नहि पूज्याः कदाचिदप्युपकरणाद्याकर्षणमर्हन्ति अविनयत्वात्, किन्तु प्रणामं कृत्वा कृताञ्जलिपुटैर्विनयपूर्वकमिदमुच्यते-उपविशन्तु भगवन्तो येन वन्दनकं प्रयच्छामीति; अतो दोषदुष्टमिदम् । सप्तमं दोषमाह-स्थितस्योर्द्धस्थानेन ''तित्तीसन्नयराए'' इत्यादिसूत्रमुच्चारयत उपविष्टस्य वा-आसीनस्य ''अहो-कायंकाय'' इत्यादिसूत्रं भणतः कच्छपस्येव जलचरजीवविशेषस्य रिङ्गणम्-अग्रतोऽभिमुखं यत्किञ्चित् चलनं तद् यत्र करोति शिष्यस्तदिदं कच्छपरिङ्गितं नामेति।। अष्टमं दोषमाह-

[भा.४४८०] उट्ठिंत निवेसंतो, उव्वत्तति मच्छउ व्व जलमज्झे ।
वंदिउकामो वऽन्नं, झसो व्व परियत्तती तुरियं ।।

वृ- उत्तिष्ठन् निविशमानो वा जलमध्ये मत्स्य इव 'उद्वर्त्तते' उद्वेल्लयति यत्र तद् मत्स्योद्वृत्तम्; अथवा एकमाचार्यादिकं वन्दित्वा तत्समीप तत्समीप एवापरं वन्दनार्हं कञ्चन वन्दितुमिच्छंस्तत्समीपं जिगमिषुरुपविष्ट एव 'झष इव' मत्स्य इव त्वरितमङ्गं परावर्त्तयं यत्र गच्छति तद् वा मत्स्योद्वृत्तम्।।

नवममाह-

[भा.४४८१] अप्प-परपत्तिएणं, मणप्पदोसो अनेगउट्ठाणो ।
पंचेव वेइयाओ, भयं तु निज्जूहणाईयं ।।

वृ- मनःप्रद्वेषः 'अनेकोत्थानः' अनेकनिमित्तो भवति, स च सर्वोऽप्यात्मप्रत्ययेन परप्रत्ययेन वा स्यात् । तत्रात्मप्रत्ययेन यदा शिष्य एव गुरुणा किञ्चित् परुषमभिहितो भवति, परप्रत्ययेन तु

यदा तस्यैव शिष्यस्य सम्बन्धिनः सुहृदादेः सम्मुखं सूरिणा किमप्यप्रियमुक्तं भवतीति । एवंप्रकारैरन्यैरपि स्व-परप्रत्ययैः कारणान्तरैः [illegible] प्रद्वेषो [illegible] । दशमं दोषमाह-''पंचेव वेइयाउ''त्ति जानुनोरुपरि हस्तौ निवेश्याधो वा पार्श्वयोर्वा उत्सङ्गे वा एकं वा जानुं दक्षिणं वामं वा करद्वयान्तः कृत्वा वन्दनकं यत्र करोति तद् वेदिकाबद्धम्। एकादशं दोषमाह-''भयं तु निज्जूहणाईयं'' ति निर्यूहणं-गच्छान्निष्काशनं तदादिकं यद् भयं तेन यत्र वन्दते तद् भयवन्दनकम् ।। द्वादशं दोषमाह–

[भा.४४८२] भयति भयस्सति व ममं, इइ वंदति ण्होरगं निवेसंतो ।
एमेव य मेत्तीए, गारव सिक्खाविनीतोऽहं ।।

वृ- 'स्मर्तव्यं भो आचार्य ! भवन्तं वन्दमाना वयं तिष्ठामः' इत्येवं निहोरकं निवेसयन् वदन्ते। किमिति ? इत्याह-एष तावद् 'भजते' अनुवर्त्तयति माम्, सेवायां पतितो मे वर्त्तत इत्यर्थ, अग्रे वा मम भजनं करिष्यत्यसौ, ततश्चाहमपि वन्दनकसत्कं निहोरकं निवेशयामीत्यभिप्रायवान् यत्र वन्दते तथा मैत्र्याऽपि हेतुभूतया कश्चिद् वन्दते, आचार्येण समं मैत्री मम भविष्यतीत्यर्थ, तदिदं मैत्रीवन्दनकम् । चतुर्दशं दोषमाह-''गारव''त्ति सूचामात्रत्वाद् गर्ववन्दनकमिति प्रत्येयम् । कथम्भूतं तत् ? इत्याह-''सिक्खाविणीओ हं'' ति शिक्षा-वन्दनकप्रदानादिसामाचारीविषया तस्यां विनीतः-कुशलोऽहमित्यवगच्छन्त्वमी शेषसाध्वादय इत्यभिप्रायवान् 'यथावद्' आवर्त्ताद्याराधयन् यत्र वन्दत इति ।। पञ्चदशं दोषमाह-

[भा.४४८३] नाणाइतिगं मुत्तुं, कारणमिहलोगसाहगं होइ ।
पूया-गारवहेउं, नाणग्गहणे वि एमेव ।।

वृ-ज्ञान-दर्शन-चारित्रत्रयं मुक्त्वा यत् किमप्यन्यद् 'इहलोकसाधकं' वस्त्रादिकं वन्दनकदानात् साधुरभिलषति तत् कारणं भवतीति प्रतिपत्तव्यम् । ननु ज्ञानादिग्रहणार्थं यदा वन्दते तदा किमेकान्तेनैव कारणं न भवति ? इत्याशङ्क्याह-यदि पूजार्थं गौरवार्थं वा वन्दनकं दत्त्वा विनयपूर्वकं ज्ञानं-श्रुतं गृह्णाति, येन लोके पूज्योऽन्येभ्यश्च श्रुतधरेभ्योऽधिकतरो भवामीति तदा तदपि 'एवमेव' कारणवन्दनकं भवतीति ।। तत्र किमभिप्रायवत् इहलोकसाधकं कारणं भवति ? इत्याह-

[भा.४४८४] आयरतरेण हंदिं, वंदामि णं तेन पच्छ पणयिस्सं ।
वंदनग मोल्लभावो, न कारस्सइ मे पणयभंगं ।।

वृ- 'हन्दि' इतीहलोकसाधककारणोपप्रदर्शने । अतिशयादरेण 'वन्दे' प्रणमामि ''ण'' मिति एनमाचार्यम्, 'तेन च' वन्दनकप्रदानेन हेतुभूतेन पश्चादमुं किञ्चिद् वस्त्रादि 'प्रणयिष्ये' याचिष्ये, न चासौ मम 'प्रणयभङ्गं' प्रार्थनाभङ्गं करिष्यति । कथम्भूतः सन् ? इत्याह-वन्दनकमेव मूल्यं तत्र भावः-अभिप्रायो यस्य सूरेः स तथाभूतः, वन्दनकमूल्यवशीकृत इत्यर्थः, इत्यभिप्रायवतः कारणवन्दनकं भवतीति ।। षोडशं दोषमाह-

[भा.४४८५] हाउं परस्स चक्खुं, वंदंते तेणियं हवइ एतं ।
तेनो इव अत्ताणं, गूहइ ओभावणा मा मे ।।

वृ- 'हापयित्वा' वञ्चयित्वा 'परस्य' साधु-श्रावकादेः 'चक्षु' दृष्टिं गुरुं वन्दमानस्य शिष्यस्य स्तैन्यं वन्दनकं भवति । एतदेव स्पष्टतरं व्याचष्टे-'स्तेन इव' तस्कर इवान्यसाध्वाद्यन्तर्धानेनात्मानं

गूहयति, कस्मात् ? इत्याह-"ओभावना मा मे"त्ति असावप्यतिविद्वान् किमन्येषां वन्दनकं प्रयच्छति ? इत्येवम्भूताऽपभ्राजना मम मा भूदिति ॥ सप्तदशं दोषमाह-

[भा.४४८६]　आहारस्स उ काले, नीहारुभयो य होइ पडिनीयं ।
रोसेण धमधमेंतो, जं वंदति रुट्ठमेयं तु ॥

वृ-आहारस्य नीहारस्य वा 'उभयस्य' मूत्र-पुरीषलक्षणस्य काले यत्र वन्दते तत् प्रत्यनीकम्। अष्टादशं दोषमाह-'रोषेण' स्वविकल्पजनितेन क्रोधेन 'धमद्धमन्' जाज्वल्यमानो यद् वन्दते तद् रुष्टं वन्दनकमिति ॥ एकोनविंशं दोषमाह-

[भा.४४८७] न वि कुप्पसि न पसीयसि, कट्ठसिवो चेव तज्जियं एयं ।
सीसंगुलिमादीहि व, तज्जेति गुरुं पणिवयंतो ॥

वृ-काष्ठघटितशिवदेवताविशेष इवावन्द्यमानो न कुप्यसि, तथा वन्द्यमानोऽप्यविशेषज्ञतया न प्रसीदसीत्येवं तर्जयन्-निर्भर्त्सयन् यत्र वन्दते तत् तर्जितम् । यदि वा 'मेलापकमध्ये वन्दनकं मां दापयैँस्तिष्ठस्याचार्य ! परं ज्ञास्यते तवैकाकिनः' इत्यभिप्रायवान् यदा शीर्षेण अङ्गुल्या वा-प्रदेशिनीलक्षणया गुरुं 'प्रणिपतन्' वन्दमानस्तर्जयति तद् वा तर्जितम् ॥ विंशतितमं दोषमाह-

[भा.४४८९]　वीसंभट्ठाणमिणं, सब्भावजढे सढं हवइ एतं ।
कवडं ति कययवं ति य, सढया वि य होंति एगट्ठा ॥

वृ-विश्रम्भः-विश्वासस्तस्य स्थानमिदं वन्दनकम्, एतस्मिन् यथावद् दीयमाने श्रावकादयो विश्वसन्तीत्यभिप्रायेणैव 'सद्भावरहिते' अन्तर्वासनाशून्ये वन्दमाने शिष्ये शठमतद् वन्दकं भवति । शठशब्दमेव पर्यायशब्दैर्व्याचष्टे-कपटमिति वा कैतवमिति वा शठताऽपि वा इति एकार्था शब्दा भवन्ति ॥ एकविंशं दोषमाह-

[भा.४४८९] गणि ! वायग ! जिट्ठज्ज !, त्ति हीलियं किं तुमे पणमितेन ।
देसीकहवित्तंते, कधेति दरवंदिए कुंची ॥

वृ-गणिन् ! वाचक ! ज्येष्ठार्य ! किं त्वया वन्दितेन ? इत्यादि सोप्रासं हीलयित्वा यत्र वन्दते तद् हीलितवन्दनकम् । द्वाविंशं दोषमाह-'दरवन्दिते' अर्धवन्दनके दत्ते सति देशीकथावृत्तान्तान् यत्र करोति तद् विपरिकुञ्चितम् ॥ दृष्टादृष्टदोषं शृङ्गदोषं चाह-

[भा.४४९०]　अंतरितो तमसे वा, न वंदती वंदती उ दीसंतो ।
एयं दिट्ठमदिट्ठं, सिंगं पुन कुंभगणिवातो ॥

वृ-बहुषु वन्दमानेषु साध्वादिना केनचिदन्तरितः 'तमसि वा' सान्धकारप्रदेशे व्यवस्थितो मौनं विधाय उपविश्य वाऽऽस्ते न तु वन्दते, दृश्यमानस्तु वन्दते यत्र तद् दृष्टादृष्टवन्दनकम् । तथा कुम्भशब्देनेह लाटमुच्यते, तस्य वम-दक्षिणपार्श्वयोर्यो निपातः-हस्ताभ्यां स्पर्शनं तद्युक्तं वन्दनकं शृङ्गमुच्यते । एतदुक्तं भवति-'अहोकायं'' इत्याद्यावर्त्तान् कुर्वन् कराभ्यां न ललाटस्य मध्यदेशं स्पृशति किन्तु वामपार्श्वं दक्षिणपार्श्वं वा स्पृशतीति ॥

गाथापूर्वार्धेन करलक्षणं पश्चार्धेन तु मोचनलक्षणं दोषमाह-

[भा.४४९१]　करमिव मन्नइ दिंतो, वंदनगं आरहंतिय करु त्ति ।
लोइयकरस्स मुक्का, न मुच्चिमो वंदनकरस्स ॥

वृ- वन्दनकं ददत् 'करमिव' राजदेयभागमिव मन्यते, आर्हतोऽयं कर इति। गृहीतव्रताश्च वयं लौकिककराद् मुक्तास्तावन्न मुच्यामहे वन्दनकरस्यार्तस्येति ॥ सप्तविंशं दोषमाह-

[भा.४४९२] आलिद्धमनालिद्धे, रयहर सीसे य होंति चउभंगो।
वयण-करणेहि ऊणं, जहन्नकाले सेसेहिं ॥

वृ- आश्लिष्टमनाश्लिष्टं चेति पदद्वयमाश्रित्य रजोहरण-शिरसोर्विषये चतुर्भङ्गिका भवति, सा च "अहोकायं काय" इत्याद्यावर्त्तकाले सम्भवति-रजोहरणं कराभ्यामाश्लिष्यति शिरश्चेत्येकः, रजोहरणं श्लिष्यति न शिर इति द्वितीयः, शिरः श्लिष्यति न रजोहरणमिति तृतीयः, न रजोहरणं न शिरश्च श्लिष्यति इति चतुर्थो भङ्ग इति। अत्राद्यो भङ्गः शुद्धः, शेषभङ्गत्रये आश्लिष्टानाश्लिष्टदोषदुष्टं प्रकृतवन्दनमवतरति। अष्टाविंशं दोषमाह-वचनैः-आलापकैः करणैर्वा-अवनामादिभिरावश्यकैः 'न्यूनं' हीनं यद् वन्दते, यद्वा कश्चिदत्युत्सुकतया 'जघन्येनैव' स्वल्पेनैव कालेन वन्दनं समापयति शेषैर्वा साधुभिर्वन्दिते सति पश्चाद् वन्दते तद् न्यूनं नाम वन्दनकम् ॥ एकोनत्रिंशं त्रिंशं च दोषमाह-

[भा.४४९३] दाऊण वंदनं मत्थएण वंदामि चूलिया एसा।
तुसिणी आवत्ते पुन, कुणमाणो होइ मूयं तु ॥

वृ- यद् वन्दनकं दत्त्वा पश्चाद् महता शब्देन "मस्तकेन वन्दे" इति ब्रूते एषा उत्तरचूलिका मन्तव्या। यत् 'तूष्णीकतया' मौनेन आवर्त्तान् द्वादशापि कुर्वाणो वन्दते तद् मूकवन्दनकं भवति॥ एकत्रिंशं द्वात्रिंशं च दोषमाह-

[भा.४४९४] उच्चसरेणं वंदइ, ढड्डर एयं तु होइ बोधव्वं।
चुडुलि व्व गिण्हिऊणं, रयहरणं होइ चुडुलीओ।

वृ- 'उच्चस्वरेण' महता शब्देन वनद्नकसूत्रमुच्चारयन् यद् वन्दते तदेतद् ढड्डरमिति बोद्धव्यम्। चुडली नाम-उल्का तामिव पर्यन्ते गृहीत्वा रजोहरणं भ्रामयन् यद् वन्दते स चुडुलिका नाम द्वात्रिंशो दोष इति ॥ साम्प्रतमेतेष्वेव प्रायश्चित्तमाह-

[भा.४४९५] थद्धे गारव तेनिय, हीलिय रुट्ठ लहुगा सढे गुरुगो।
दुट्ठ पडिनीय तज्जित, गुरुगा सेसेसु लहुगो तु ॥

वृ- स्तब्ध-गौरव-स्तेनित-हीलित-रुष्टेषु प्रत्येक चतुर्लघवः। शठे मायादोषप्रत्ययं मासगुरुकम्। दुष्ट-प्रत्यनीक-तर्जितेषु चत्वारो गुरुकाः। 'शेषेषु' अनाढ्त-प्रविद्ध-परिपिण्डितादिषु त्रयोविंशतौ दोषेषु प्रत्येकमसमाचारीनिष्पन्नं मासलघु ॥ अथ कृतिकर्मकरणविधिमाह-

[भा.४४९६] आयरिय-उवज्झाए, काऊणं सेसगाण कायव्वं।
उप्परियाडी मासिग, मदरहिए तिन्नि य थुतीओ ॥

वृ- प्रतिक्रमणसूत्राकर्षणानन्तरमाचार्योपाध्याययोः प्रथमं कृतिकर्म कृत्वा ततः शेषसाधूनां यथारत्नाधिकक्रमं कर्त्तव्यम्। अथोत्परिपाट्या वन्दते ततो लघुमासिकम्। तेनापि चाचार्यादिना मदरहितेन वन्दनकं प्रतीच्छनीयम्। प्रतिक्रमणे च समापिते तिस्रः स्तुतयः स्वरेण छन्दसा च प्रवर्धमाना दातव्याः ॥ आह-शेषसाधूनां किं सर्वेषामपि वन्दनं विधेयम्? उत न? इति अत्रोच्यते-

[भा.४४९७] जा दुचरिमो त्ति ता होइ वंदनं तीरिए पडिक्कमणे।
आइन्न पुन तिण्हं, गुरुस्स दुण्हं च देवसिए ॥

वृ- 'प्रतिक्रमणे' प्रतिक्रमणसूत्रे 'तीरते' पारं प्रापिते सति वन्दनं भवति यावद् द्विचरमः साधुः, द्वौ साधू अवशिष्यमाणौ यावत् सर्वेषामपि वन्दनं कृत्वा क्षामणकं कर्त्तव्यमिति भावः । एष विधि पूर्वं चतुर्दशपूर्वधर-दशपूर्वधरादिकाले आसीत्, सम्प्रति पुनः पूर्वाचार्यैराचीर्णमिदम्-त्रयाणां साधूनां वन्दनकं कर्त्तव्यम्, तत्रैकस्य गुरोर्द्वयोश्च शेषसाध्वोः पर्यायज्येष्ठयोर्दैवसिके उपलक्षणत्वाद् रात्रिके चावश्यकेऽयं विधिरवगन्तव्यः । पाक्षिके तु पञ्च साधवो वन्दित्वा क्षमयितव्याः, चतुर्मासिए संवत्सरे य सत्त अवस्सं ति ॥ आह-किमत्र कारणं मौलं विधिमुल्लङ्घ्य पूर्वसूरय इत्थमभिनवां सामाचारीं स्थापयन्ति ? इति उच्यते-

[भा.४४९८] धिइ-संघयणादीनं, मेराहानिं च जाणिउं थेरा ।
सेह-अगीतट्ठा वि य, ठवणा आइन्नकप्पस्स ॥

वृ- धृतिः-मानसावष्टम्भरूपा संहननं-वज्रऋषभनाराचादि तयोः आदिशब्दाद् द्रव्य-क्षेत्रकालादीनां च या परिहानिर्या च मर्यादायाः-सिद्धान्ताभिहितनिरपवादसामाचारीरूपाया हानिस्तां ज्ञात्वा पूर्वसूरय ऐदंयुगीनसाधुजनोचितस्याचीर्णकल्पस्य स्थापनां कुर्वन्ति । किमर्थम्? इत्याह-शैक्षाणामगीतार्थानां चानुग्रहार्थम्, मा भूदमीषां बहुतरसाधून् वन्दित्वा क्षमयतां विशिष्टधृति-संहननादिबलाभावात् परिभग्नानां विपरिणाम इति ॥ अथाचीर्णस्यैव लक्षणमाह-

[भा.४४९९] असढेन समाइन्नं, जं कत्थइ कारणे असावज्जं ।
न निवारियमन्नेहि य, बहुमनुमयमेतमाइन्नं ॥

वृ- 'अशठेन' राग-द्वेषरहितेन कालिकाचार्यादिवत् प्रमाणस्थेन सता 'समाचीर्णम्' आचरितं यद् भाद्रपदशुद्धचतुर्थीपर्युषणापर्ववत् 'कुत्रचिद्' द्रव्य-क्षेत्र-कालादौ 'कारणे' पुष्टालम्बने 'असावद्यं' प्रकृत्या मूलोत्तरगुणाराधनाया अबाधकम्, 'न च' नैव निवारितम् 'अन्यैः' तथाविधैरेव तत्कालवर्तिभिर्गीतार्थैः, अपि तु बहु यथा भवति एवमनुमतमेतदाचीर्णमुच्यते ॥ अथ ये आचार्यस्यापि पर्यायज्येष्ठास्तैः किमाचार्यस्य वन्दनकं कर्त्तव्यम् ? उत न ? इति अत्रोच्यते-

[भा.४५००] वियडण पच्चक्खाणे, सुए य रादीनिगा वि हु करिंति ।
मज्झिल्ले न करिंती, सो चेव करेइ तेसिं तु ॥

वृ- विकटनम्-आलोचनं प्रत्याख्यानं प्रतीतं तयोः तथा श्रुते च उद्दिश्यमान-समुद्दिश्यमानादौ 'रात्निका अपि' ज्येष्ठार्या अभ्युपसम्पदं प्रतिपन्ना अवमरात्निकस्याचार्यस्य वन्दनकं कुर्वन्ति । यत्तु मध्यमं क्षामणकवन्दनं तन्न कुर्वन्ति, किन्तु स एवाचार्यस्तेषां रात्निकानां करोति ॥ अथ यदुक्तम् 'तिस्रः स्तुतयो दातव्याः' इति तत्र विधिमाह-

[भा.४५०१] थुइमंगलम्मि गणिणा, उच्चारिते सेसगा थुती बेंति ।
पम्हुट्ठमेरसारण, विनयो य न फेडितो एवं ॥

वृ- पाक्षिकादिषु यद्यप्याचार्योऽवमरात्निकस्तथापि सएवावश्यके समापिते प्रथमतस्तिस्रः स्तुतीर्ददाति, दैवसिक-रात्रिकयोरपि प्रथममाचार्येण स्तुतिमङ्गलं प्रारम्भणीयम्, ततः शेषैः । अत एवाह-स्तुतिमङ्गले 'गणिना' आचार्येणोच्चारिते सति शेषाः साधवः स्तुतीर्ब्रुवते, ददतीत्यर्थः, दत्त्वा च गुरुपादमूल एव कियन्तमपि कालं तिष्ठन्ति । किमर्थम् ? इति चेद् अत आह-काचिद् मर्यादा-सामाचारी "पम्हुट्ठा" विस्मृता भवेत् तस्याः स्मारणं गुरवः कुर्वीरन् । परमोपकारिणश्च

गुरवः, तत एव प्रतिक्रमणानन्तरं कियन्तमपि कालं तेषु पर्युपास्यमानेषु विश्रामणादिविधानेन विनयोऽपि 'न स्फेटितः' न हापितो भवति ॥ अथ के पुनस्ते ये आचार्यस्यापि रत्नाधिका भवन्ति? इति उच्यते-

[भा.४५०२] अन्नेसिं गच्छाणं, उवसंपन्नाण वंदनं तहियं ।
बहुमान तस्स वयणं, ओमे वाऽऽलोयणा भणिया ॥

वृ- अन्येषां गच्छानां सम्बन्धिन आचार्या रत्नाधिकतराः सूत्रार्थनिमित्तं कमप्यवमरात्निकमाचार्यमुपसम्पन्नास्तेषां मध्यमवन्दनकमवमरात्निकेन दातव्यम् । सेषकालं तेऽपि रात्निकाः 'तस्य' अवमरात्निकस्य 'बहुमानं' 'पूज्योऽयमस्माकं गुणाधिकतया' इति लक्षणं 'वचनं च' आज्ञानिर्देशं कुर्वन्ति । अवमेऽपि च तत्रालोचना भणिता भगवद्भिः । किमुक्तं भवति ? -तस्य पुरत आलोचनं प्रत्याख्यानं च वन्दनकं दत्त्वा विधेयमिति भगवतामुपदेशः ॥

अथ परः प्राह-कस्यपुनः कृतिकर्म कर्त्तव्यम् ? कस्य वा न ? इति उच्यते-

[भा.४५०३] सेढीठाणठियाणं, कितिकम्मं बाहिराण भयितव्वं ।
सुत्त-ऽत्थजाणएणं, कायव्वं आनुपुव्वीए ॥

वृ- संयमश्रेण्याः सम्बन्धीनि विशुद्धिप्रकर्षापकर्षकृतस्वरूपभेदरूपाणि यानि स्थानानि तेषु स्थितानां साधूनां कृतिकर्म कर्त्तव्यम् । ये तु संयमश्रेणिस्थानेभ्यो बाह्यास्तेषां 'भक्तव्यं' कर्त्तव्यं वा न वेति भावः । तत्र कारणे समुत्पन्ने 'सूत्रार्थज्ञेन' गीतार्थेन 'आनुपूर्व्या' ''चाम्माइ नमोक्कारे'' इत्यादिकया वक्ष्यमाणपरिपाट्या कर्त्तव्यम्, अन्यथा तु नेति पुरातनगाथासमासार्थः ॥

साम्प्रतमेनामेव विवरीषुराह-

[भा.४५०४] सेढीठाणठियाणं, कितिकम्मं सेढि इच्छिमो नाउं ।
तम्हा खलु सेढीए, कायव्व परूवणा इणमो ॥

वृ- संयमश्रेणिस्थानस्थितानां कृतिकर्म कर्त्तव्यमित्युक्ते कश्चिद् विनेयो ब्रूयात्-वयं तामेव श्रेणिं प्रथमतो ज्ञातुमिच्छामः । सूरिराह-यत एवं भवतः श्रेणिविषया जिज्ञासा तस्मादस्माभिरपि कर्त्तव्या श्रेणेः प्ररूपणा 'इयं' वक्ष्यमाणलक्षणा ॥

अतस्तामेव चिकीर्षु प्रथमतः श्रेणिस्थितानां कृतिकर्मकरणे विधिमाह—

[भा.४५०५] पुव्वं चरित्तसेढीठियस्स पच्छाठिएण कायव्वं ।
सो पुन तुल्लचरित्तो, हविज्ज ऊनो व अहिओ वा ॥

वृ- 'पूर्वं' प्रथमं यः सामायिकस्य छेदोपस्थापनीयस्य वा प्रतिपत्त्या चारित्रश्रेण्यां स्थितस्तस्य पश्चात्स्थितेन कृतिकर्म कर्त्तव्यम् । 'स पुनः' पूर्वस्थितस्तं पश्चात्स्थितमपेक्ष्य निश्चयतस्तुल्यचारित्रो न्यूनो वाऽधिको वा भवेत् ॥ यतः-

[भा.४५०६] निच्छयओ दुन्नेयं, को भावे कम्मि वट्टई समणो ।
ववहारओ य कीरइ, जो पुव्वठिओ चरित्तम्मि ॥

वृ- 'निश्चयतः' तत्त्ववृत्त्या कः पूर्वस्थितः पश्चात्स्थितो वा श्रमणः कस्मिन् 'भावे' चारित्राध्यवसायरूपे मन्दे मध्ये तीव्रे वा वर्त्तते इति दुर्ज्ञेयम्, तदपरिज्ञानाच्च कथं निश्चयनयाभिप्रायेण कृतिकर्म कर्त्तुं शक्यम् ? । 'व्यवहारतस्तु' व्यवहारनयमङ्गीकृत्य पुनः क्रियते कृतिकर्म यः पूर्वं

चारित्रे स्थितस्तस्येति ॥ ननु फलसाधकत्वाद् निश्चयस्यैव प्रामाण्यं न व्यवहारस्य इत्याह-

[भा.४५०७] ववहारो वि हु बलवं, जं छउमत्थं पि वंदई अरिहा ।
जा होइ अनाभिन्नो, जाणंतो धम्मयं एयं ॥

वृ-व्यवहारोऽपि, आस्तां निश्चय इत्यपिशब्दार्थ, 'हुः' निश्चितं बलवान्, यद् यस्मात् छद्मस्थमपि स्वगुरुप्रभृतिकं वन्दते 'अरहाः' केवली । कियन्तं कालम् ? इत्याह-यावदसौ 'अनाभिज्ञोऽस्ति' केवलितया अनभिज्ञातो भवति तावद् 'एतां' व्यवहारनयबलवत्त्वलक्षणां धर्मतां जानन् छद्मस्थमपि वन्दते इति ॥ कथं पुनरसौ केवलितया ज्ञायते ? इत्याह–

[भा.४५०८] केवलिना वा कहिए, अवंदमानो व केवलिं अन्नं ।
वागरणपुव्वकहिए, देवयपूयासु व मुणंति ॥

वृ-अन्येन केनापि केवलिना 'कथिते' 'अयं केवली जातः' इत्याख्याते सति, अवन्दमानो वा केवलिमनमन्यं केवलितया ज्ञायते । व्याकरणपूर्वं वा-अतिशयिज्ञानगम्यार्थकथनपुरःसरं तेनैव केवलिना स्वयमेव कथिते सति, 'दैवतपूजासु वा' यथासन्निहितदेवैः क्रियमाणां महिमां दृष्ट्वा गुरुप्रभृतयस्तं केवलिनं विदन्ति ॥ अथ श्रेणिप्ररूपणामाह-

[भा.४५०९] अवभागपलिच्छेया, ठाणंतर कंडए य छट्ठाणा ।
हिट्ठा पज्जवसाणे, वुड्ढी अप्पाबहुं जीवा ॥

वृ- अविभागपरिच्छेदप्ररूपणा स्थानान्तरप्ररूपणा कण्डकप्ररूपणा षट्स्थानप्ररूपणा अधःप्ररूपणा पर्यवसानप्ररूपणा वृद्धिप्ररूपणा अल्पबहुत्वप्ररूपणा जीवप्ररूपणा चेति ॥

[भा.४५१०] आलाव गणण विरहियमविरहियं फासणापरूवणया ।
गणणपय सेढिअवहार भाग अप्पाबहुं समया ॥

वृ- जीवप्ररूपणायां चामूनि प्रतिद्वाराणि, तद्यथा-आलापप्ररूपणा श्रेण्यपहारप्ररूपणा भागप्ररूपणा अल्पबहुत्वप्ररूपणा श्रमण(समय) प्ररूपणा चेति द्वारगाथाद्वयम् ॥

तत्राविभागपरिच्छेदपररूपणां तावत् करोति-

[भा.४५११] अविभागपलिच्छेदं, चरित्तपज्जव-पएस-परमाणू ।
परमाणुस्स प्ररूवण, चउव्विहा भावओऽनंता ॥

वृ- इह संयमस्थानं केवलिप्रज्ञाच्छेदनकेन छिद्यमानं निरंशतया यदा विभागं न यच्छति तदाऽसावन्तिमो अंशो अविभागपरिच्छेद उच्यते, स चारित्रपर्यायश्चारित्रप्रदेशश्चारित्रपरमाणुर्वा भण्यते । परमाणोश्च सामान्यतश्चतुर्विधा प्ररूपणा द्रव्य-क्षेत्र-काल भावभेदात् । द्रव्यत एकोऽणुकः, क्षेत्रत आकाशप्रदेशः, कालतः समयः, भावतस्त्वेकगुणकालकादि । अत एव वा चारित्राविभाग-परिच्छेदाः, ते च 'अनन्ताः' अनन्तानन्तकप्रमाणाः ॥ तथा चाह-

[भा.४५१२] ते कित्तिया पएसा, सव्वागासस्स मग्गणा होइ ।
ते जत्तिया पएसा, अविभाग तओ अनंतगुणा ॥

वृ- 'ते' चारित्रस्य प्रदेशाः 'कियन्तः' किंप्रमाणा इति चिन्तायां निर्वचनमाह-सर्वस्य-लोका-ऽलोकगतस्याकाशस्य मार्गणा भवति । यावन्तः किल 'ते' सर्वाकाशस्य प्रदेशाः 'ततः' तेभ्यः सर्वाकाशप्रदेशेभ्यश्चारित्रस्य अविभागपरिच्छेदा अनन्तगुणाः सर्वजघन्येऽपि संयमस्थाने

प्रतिपत्तव्याः । एषा अविभागपरिच्छेदप्ररूपणा १ । सर्वजघन्यात् संयमस्थानाद् यद् द्वितीयं संयमस्थानं तत् तस्मादनन्तभागवृद्धम् । किमुक्तं भवति ? -प्रथमसंयमस्थानगतनिर्विभागभागपेक्षया द्वितीये संयमस्थाने निर्विभागा भागा अनन्ततमेन भागेनाधिका भवन्तीति । एषा स्थानान्तरप्ररूपणा २ । तस्मादपि यदनन्तरं तृतीयं तत् ततोऽनन्तभागवृद्धम्, एवं पूर्वस्मादुत्तरोत्तराणि अनन्ततमेन भागेन वृद्धानि निरन्तरं संयमस्थानानि तावद् वक्तव्यानि यावदङ्गुलमात्रक्षेत्रासङ्ख्येय-भागगतप्रदेशराशिप्रमाणानि भवन्ति । एतावन्ति च समुदितानि स्थानानि कण्डकमित्युच्यते । एषा कण्डकप्ररूपणा ३ ।

अस्माच्च कण्डकात् परतो यदन्यदनन्तरं संयमस्थानं भवति तत् पूर्वस्मादसङ्ख्येयभागाधिकम् । एतदुक्तं भवति-पाश्चात्यकण्डकसत्कचरमसंयमस्थानगतनिर्विभागभागापेक्षया कण्डकानन्तरे संयमस्थाने निर्विभागा भागा असङ्ख्येयतमेन भागेनाधिकाः प्राप्यन्ते । ततः पराणि पुनरपि कण्डकमात्राणि संयमस्थानानि यथोत्तरमनन्तभागवृद्धानि भवन्ति, ततः पुनरेकमसङ्ख्येयभागाधिकं संयमस्थानम्; भूयोऽपि ततः पराणि कण्डकमात्राणि संयमस्थानानि यथोत्तरमनन्तभागवृद्धानि भवन्ति, ततः पुनरप्येकमसङ्ख्येयभागाधिकं संयमस्थानम्; एवमनन्तभागाधिकैः कण्डकप्रमाणैः संयमस्थानैर्व्यवहितानि असङ्ख्येयभागाधिकानि संयमस्थानानि तावद् वक्तव्यानि यावत् तान्यपि कण्डकप्रमाणानि भवन्ति । ततश्चरमादसङ्ख्येयभागाधिकसंयमस्थानात् पराणि यथोत्तरमनन्तभाग-वृद्धानि कण्डकमात्राणि संयमस्थानानि प्रागतिक्रान्तानि तावन्ति भूयोऽपि तेनैव क्रमेणाभिधाय पुनरप्येकं सङ्ख्येयभागाधिकं संयमस्थानं वक्तव्य, इदं द्वितीयं सङ्ख्येयभागाधिकं संयमस्थानम्; अनेनैव क्रमेण तृतीयम्, यावत् सङ्ख्येयभागाधिकानि संयमस्थानानि कण्डकमात्राणि भवन्ति तावद् वाच्यम् । तत उक्तक्रमेण भूयोऽपि सङ्ख्येयभागाधिकसंयमस्थानप्रसङ्गे सङ्ख्येयगुणाधिकमेकं संयमस्थानं वक्तव्यम्, ततः पुनरपि मूलादारभ्य यावन्ति संयमस्थानानि प्रागतिक्रान्तानि तावन्ति भूयोऽपि वक्तव्यानि, ततः पुनरप्येकं सङ्ख्येयगुणाधिकं संयमस्थानं वक्तव्यम्; ततो भूयोऽपि मूलादारभ्य तावन्ति संयमस्थानानि तथैव वक्तव्यानि, ततः पुनरप्येकं सङ्ख्येयगुणाधिकं संयमस्थानम्; अमून्यप्येवं सङ्ख्येयगुणाधिकानि संयमस्थानानि तावद् वक्तव्यानि यावत् कण्डकमात्राणि भवन्ति । तत उक्तक्रमेण पुनरपि सङ्ख्येयगुणाधिकसंयमस्थानप्रसङ्गेऽ-सङ्ख्येयगुणाधिकं संयमस्थानं वक्तव्यम्, ततः पुनरपि मूलादारभ्य यावन्ति संयमस्थानानि प्रागतिक्रान्तानि तावन्ति तेनैव क्रमेण भूयोऽपि वक्तव्यानि, ततः पुनरप्येकमसङ्ख्येयगुणाधिकं संयमस्थानं वक्तव्यम्; ततो भूयोऽपि मूलादारभ्य तावन्ति संयमस्थानानि तथैव वक्तव्यानि, ततः पुनरप्येकमसङ्ख्येयगुणाधिकं संयमस्थानं वक्तव्यम्; अमूनि चैवमसङ्ख्येयगुणाधि-कसंयमस्थानानि तावद् वक्तव्यानि यावत् कण्डकप्रमाणानि भवन्ति । ततः पूर्वपरिपाट्या पुनरप्यसङ्ख्येयगुणाधिकसंयमस्थानप्रसङ्गे अनन्तगुणाधिकं संयमस्थानं वक्तव्यम्, ततो भूयोऽपि मूलादारभ्य यावन्ति संयमस्थानानि प्रागतिक्रान्तानि तावन्ति तथैव क्रमेण भूयोऽपि वक्तव्यानि, ततः पुनरप्येकमनन्तगुणाधिकं संयमस्थानं वक्तव्यम्; ततो भूयोऽपि मूलादारभ्य तावन्ति संयमस्थानानि तथैव वक्तव्यानि, ततः पुनरप्येकमनन्तगुणाधिकं संयमस्थानं वक्तव्यम्; एवमनन्तगुणाधिकानि तावद् वक्तव्यानि यावत् कण्डकमात्राणि भवन्ति । ततो भूयोऽपि तेषामुपरि

पञ्चवध्यात्मकानि संयमस्थानानि मूलादारभ्य तथैव वक्तव्यानि, यत् पुनरनन्तगुणवृद्धिस्थानं तत्र, प्राप्यते, षट्स्थानस्य परिसमाप्तत्वात् । इत्थम्भूतान्यसङ्ख्येयानि कण्डकानि समुदितानि षट्स्थानकं भवति । तस्माच्च प्रथमषटस्थानकादूर्ध्वमुक्तक्रमेणैव द्वितीयं षटस्थानकमुत्तिष्ठति, एवमेव च तृतीयम्, एवं षटस्थानकान्यपि तावद् वाच्यानि यावदसङ्ख्येयलोकाकाशप्रदेशप्रमाणानि भवन्ति । उक्तं च-

छट्ठाणगअवसाणे, अन्नं छट्ठाणयं पुनो अन्नं ।
एवमसंखा लोगा, छट्ठाणाणं मुणेयव्वा ।।

इत्थम्भूतानि चासङ्ख्येयलोकाकाशप्रदेशप्रमाणानि षटस्थानकानि संयमश्रेणिरुच्यते । तथा चोक्तम्- छट्ठाणा उ असंखा, संजमसेढी मुणेयव्वा ।। तदेवं कृता अविभागपरिच्छेद-स्थानान्तर-कण्डक-षटस्थानकानां प्ररूपणा ४ ।

साम्प्रतमधःस्थानप्ररूपणा क्रियते- प्रथमादसङ्ख्येयभागवृद्धात् स्थानादधः कियन्ति संयमस्थानान्यनन्तभावृद्धानि ? उच्यते- कण्डकमात्राणि । तथा प्रथमात् सङ्ख्येयभागवृद्धात् स्थानादधः कियन्ति असङ्ख्येयभागवृद्धानि स्थानानि ? उच्यते-कण्डकमात्राणि । एवमुत्तरोत्तर-स्थानादधोऽध आनन्तर्येण तावद् मार्गणा कर्त्तव्या यावत् प्रथमादनन्तगुणवृद्धानि स्थानानि ? उच्यते-कण्डकवर्ग कण्डकं च । तथा प्रथमात् सङ्ख्येयगुणवृद्धात् स्थानादधः कियन्ति असङ्ख्येय-गुणवृद्धात् स्थानानि ? उच्यते- कण्डकवर्ग कण्डकं च । तथा प्रथमादनन्तगुणवृद्धात् स्थानादधः कियन्ति सङ्ख्येयगुणवृद्धानि स्थानानि ? उच्यते-कण्डकवर्गकण्डकं च । एवमुक्तप्रकारेण यान्तरिता त्र्यन्तरिता चतुरन्तरिता च मार्गणा स्वधिया परिभावनीया । अथ पर्यवसानद्वारम्-तत्रानन्त-गुणवृद्धकण्डकादुपरि पञ्चवृध्यात्मकानि सर्वाणि स्थानानि गत्वा पुनरनन्तगुणवृद्धं स्थानं न प्राप्यते, षट्स्थानस्य परिसमाप्तत्वात् । ततस्तदेव सर्वान्तिमं स्थानं षट्स्थानकस्य पर्यवसानम् ।। अथ भाष्यकारः प्रकारान्तरेणाधः-पर्यवसानद्वारयोर्युगपत् प्ररूपणामाह-

[भा.४५१३] एयं चरित्तसेढिं, पडिवज्जइ हिट्ठ कोइ उवरिं वा ।
जो हिट्ठा पडिवज्जइ, सिज्झइ नियमा जहा भरहो ।।

वृ- एतां चारित्रश्रेणिं कश्चिद् जीवः 'अधस्ताद्' जघन्यसंयमस्थानेषु प्रतिपद्यते, कश्चित् पुनः 'उपरि' उपरितनेषु पर्यन्तवर्तिषु, उपलक्षणत्वाद् मध्यमेषु वा संयमस्थानेषु प्रतिपद्यते । तत्र योऽधस्तनेषु संयमस्थानेषु चारित्रश्रेणिं प्रतिपद्यते स नियमात् तेनैव भवग्रहणेन सिध्यति, यथा भरतश्चक्रवर्ती ।।

[भा.४५१४] मज्झे वा उवरिं वा, नियमा गमनं तु हिट्ठिमं ठाणं ।
अंतोमुहुत्त वुड्ढी, हानी वि तहेव नायव्वा ।।

वृ- यः पुनः 'मध्ये वा' मध्यमेषु 'उपरि वा' उपरितनेषु संयमस्थानेषु चारित्रश्रेणिं प्रतिपद्यते तस्यन नियमाद् 'अधस्तनं' सर्वजघन्यं संयमस्थानं यावद् गमनं भवति, ततोऽसौ तेनान्येन वा भवग्रहणेन सर्वाणि संयमस्थानानि स्पृष्ट्वा सिध्यति । या पुनरधस्तनसंयमस्थानेभ्य उपरितनसंयमस्थानारोहणलक्षणा वृद्धिः साऽन्तर्मुहूर्तमात्रं भवति । या चोपरितनसंयम-स्थानेभ्योऽधस्तनसंयमस्थानेष्ववरोहणरूपा हानि साऽपि 'तथैव' अन्तर्मुहूर्तमात्रैव ज्ञातव्या

५-६ । एतेन वृद्धिद्वारप्ररूपणाऽपि कृता ७ । सम्प्रति अल्पबहुत्वद्वारं प्ररूप्यते-तत्र सर्वस्तोकान्यनन्तगुणवृद्धानि स्थानानि, कण्डकमात्रत्वात् तेषाम् । तेभ्योऽसङ्ख्येयगुणवृद्धानि स्थानानि असङ्ख्येयगुणानि, गुणकारश्चेह कण्डकप्रमाणो ज्ञातव्यः, एकैकस्यानन्तगुणवृद्धस्य स्थानस्याधस्तात् प्रत्येकमसङ्ख्येयगुणवृद्धानि स्थानानि कण्डकमात्राणि प्राप्यन्त इति कृत्वा; अनन्तगुणवृद्धस्थानकण्डकस्य चोपरि कण्डकमात्राण्यसङ्ख्येयगुणवृद्धानि प्राप्यन्ते, न त्वनन्तगुणवृद्धं स्थानम्, तेनोपरितादेकस्यं कण्डकस्याधिकस्य प्रक्षेपः । तेभ्योऽप्यसङ्ख्येयगुण-वृद्धेभ्यः स्थानेभ्यः सङ्ख्येयगुणवृद्धानि स्थानानि असङ्ख्येयगुणानि, तेभ्योऽपि सङ्ख्येयभागाधिकानि स्थानान्यसङ्ख्येयगुणानि, तेभ्योऽपि असङ्ख्येयभागाधिकानि स्थानान्यसङ्ख्येयगुणानि, तेभ्योऽप्यनन्तभागवृद्धानि स्थानानि असङ्ख्येयगुणानि । गुणकारश्च सर्वत्रापि कण्डकमुपरि चैककण्डकप्रक्षेपः । प्ररूपितमल्पबहुत्वद्वारम् ८ । जीवपदप्रतिबद्धानां त्वालाप-गणनादीनां द्वाराणां प्ररूपणा सम्प्रदायाभावाद् न क्रियते ९ ।। अथ प्रस्तुतयोजनां कुर्वन्नाह-

[भा.४५१५] सेढीठाणठियाणं, किइकम्मं बाहिरे न कायव्वं ।
पासत्थादी चउरो, तत्थ वि आणादिणो दोसा ।।

वृ-अनन्तरोक्तायाः श्रेणेः सम्बन्धिषु संयमस्थानेषु स्थितानां साधूनां कृतिकर्म कर्त्तव्यम्, ये तु श्रेणेर्बाह्यास्तेषां न कर्त्तव्यम् । के पुनस्ते ? इत्याह-पार्श्वस्थादयश्चत्वारः । तत्र पार्श्वस्था-ऽवसन्न-कुशील-संसक्त-यथाच्छन्दाः पञ्चाप्येको भेदः, काथिक-प्राश्निक-मामाक-सम्प्रसारका द्वितीयः, अन्यतीर्थिकास्तृतीयः, गृहस्थाश्चतुर्थः; एते चत्वारोऽपि श्रेणिबाह्या मन्तव्याः । 'तत्रापि' एतेषां कृतिकर्मकरणेऽपि, न केवलमभ्युत्थाने इत्यपिशब्दार्थः, आज्ञादयो दोषाः प्रायश्चित्तं च प्राग् यथाऽभ्युत्थाने पार्श्वस्था-ऽन्यतीर्थिकादिविषयं वर्णितं तथैव वक्तव्यम् ।। शिष्यः पृच्छति-

[भा.४५१६] लिंगेन निग्गतो जो, पागडलिंगं धरेइ जो समणो ।
किध होइ निग्गतो त्ति य, दिट्ठंतो सक्करकुडेहिं ।।

वृ- 'लिङ्गेन' रजोहरणादिना यो मुक्तः स संयमश्रेण्या निर्गतः प्रतीयते, यस्तु श्रमणः प्रकट मेव लिङ्गं धारयति स कथं 'निर्गतः' श्रेणिबाह्यो भवति ?, श्रमणलिङ्गस्योपलभ्यमानत्वाद् न भवतीति भावः । अत्र सूरिराह-दृष्टान्तः शर्कराकुटाभ्यामत्र क्रियते- जहा कस्सइ रन्नो दो घडया सक्कराभरिया । ते अन्नया मुद्दं दाऊण दोण्हं पुरिसाणं समप्पिया भणिता य, जहा-सारक्खह, जया मग्गिज्जइ तया दिज्जाह ।। ततः किमभूत् ? इत्याह-

[भा.४५१७] दाउं हिट्ठा छारं, सव्वत्तो कंटियाहि वेढित्ता ।
सकवाडमनाबाधे, पालेति तिसंझमिक्खंतो ।।

वृ- तयोरेकः पुरुषस्तं राज्ञा समर्पितं घटं गृहीत्वा तस्याधः क्षारं दत्त्वा यथा कीटिका नागच्छेयुरिति भावः, ततः सर्वतः कण्टिकाभिस्तं वेष्टयित्वा 'सकपाटे' कपाटपिधानयुक्तेऽनाबाधे प्रदेशे स्थापयित्वा त्रिसन्ध्यमीक्षमाणः सम्यक् पालयति ।। द्वितीयः पुनः किं कृतवान् ? इत्याह-

[भा.४५१८] मुद्दं अविद्दवंतीहिं कीडियाहिं स चालनी चेव ।
जज्जरितो कालेणं, पमायकुडए निवे दंडो ।।

वृ- द्वितीयः पुरुषस्तं घटं कीटिकानगरस्यादूरे स्थापयित्वा मध्यंमध्येनावलोकते, ततः

शर्करागन्धाघ्राणतः समायाताभि कीटिकाभिर्मुद्रामविद्रवन्तीभिः 'सः' घटोऽधस्तात् कालेन जर्जरितः कृतः, शर्करा सर्वाऽपि भक्षिता । अन्यदा राज्ञा तौ पुरुषौ घटं याचितौ, ततो द्वाभ्यामप्यानीय दर्शितयोर्घटयोः "पमायकुडए" त्ति येन कुटरक्षणे प्रमादः कृतस्तस्य नृपेण दण्डः कृतः । उपलक्षणमिदम्, तेन यस्तं सम्यक् पालितवान् तस्य विपुला पूजा विदधे । एष दृष्टान्तः, अयमर्थोपनयः-राजस्थानीया गुरवः, पुरुषस्थानीयाः साधवः, शर्करास्थानीयं चारित्रम्, घटस्थानीय आत्मा, मुद्रास्थानीयं रजोहरणम्, कीटिकास्थानीयान्यपराधपदानि, दण्डस्थानीया दुर्गतिप्राप्ति, पूजास्थानीया स्वर्गादिसुखपरम्पराप्राप्ति ॥ तथा चामुमेवोपनयं लेशतो भाष्यकारोऽप्याह-

[भा.४५१९] निवसरिसो आयरितो, लिंगं मुद्दा उ सक्करा चरणं ।
पुरिसा य होंति साहू, चरित्तदोसा मुयिंगाओ ॥

वृ- गतार्था । नवरं 'मुयिङ्गाः' कीटिकाः । यथा तस्य प्रमत्तपुरुषस्य मुद्रासद्भावेऽप्यधःप्रविशन्तीभिः कीटिकाभिर्घटं विभज्य शर्करा विनाशिता, एवं साधोरपि प्रमादिनो रजोहरणमुद्रासद्भावेऽप्यपराधपदैरात्मनि जर्जरिते शर्करातुल्यं चारित्रं कालेन वा सद्यो वा विनाशमाविशति ॥ तत्र कालेन यथा विनश्यति तथा दर्शयति-

[भा.४५२०] एसणदोसे सीयइ, अनानुतावी न चेव वियडेइ ।
नेव य करेइ सोधिं, न त विरमति कालतो भस्से ॥

वृ- एषणादोषेषु सीदति, [illegible] गृह्णातीत्यर्थः । एवं कुर्वन्नपि पश्चात्तापं करिष्यति इत्याह-'अननुतापि' पुरःकर्मादिदोषदुष्टाहारग्रहणाद् अनु-पश्चात् तापं-'हा ! दुष्ठु कृतं मया' इत्यादिमानसिकतापं धर्तुं शीलमस्येत्यनुतापी, न तथा अननुतापी । कथमेतद् ज्ञायते ? इत्याह- 'न चैव विकटयति' गुरूणां पुरतः स्वदोषं न प्रकाशयति, विकटयति वा परं तस्य 'शोधिं' प्रायश्चित्तं गुरुप्रदत्तं नैव करोति, 'न च' नैव अशुद्धाहारग्रहणाद् विरमति । एवं कुर्वन् 'कालतः' कियताऽपि कालेन चारित्रात् परिभ्रश्येत् । यस्तु मूलगुणान् विराधयति स सद्यः परिभ्रश्यति ॥

अमुमेवार्थं सविशेषमाह-

[भा.४५२१] मूलगुण उत्तरगुणे, मूलगुणेहिं तु पागडो होइ ।
उत्तरगुणपडिसेवी, संचयऽवोच्छेदतो भस्से ॥

वृ- इह प्रतिसेवको द्विधा-मूलगुणप्रतिसेवक उत्तरगुणप्रतिसेवकश्च । तत्र मूलगुणप्रतिसेवायां वर्त्तमानः प्रकट एव प्रतीयते यथा चारित्रात् परिभ्रश्यति । उत्तरगुणप्रतिसेवी तु सञ्चयेन-बह्वपराधमीलकेन योऽशुद्धाहारग्रहणादेरव्यवच्छेदः-परिणामस्यानुपरमस्ततः 'भ्रश्येत्' चारित्रात् परिभ्रंशमाप्नुयात् ॥ अत्रैवार्थे दृष्टान्तमाह-

[भा.४५२२] अंतो मयणा बाहिं, तु निग्गते तत्थ मरुगादिट्ठंतो ।
संकर सरिसव सगडे, मंडव वत्थेण दिट्ठंतो ॥

वृ- इह सम्बन्धानुलोम्यतः प्रथममुत्तरार्धं व्याख्यायते- सङ्करः-तृणादिकचवरः तद्दृष्टान्तो यथा-आरामो सारणीए पाइज्जइ । ताए वहंतीए एगं तणं सयं लग्गं तं न अवणीयं, अन्नं लग्गं तं पि न अवनीयं, एवं बहूहिं लग्गंतेहिं तत्थ तेम आश्रयेण चिक्खल्लधूलीए संचओ जाओ । तेनं संचयेणं तं पानियं रुद्धं अन्नओ गंतुं पयट्टं, ताहे सो आरामो सुक्को । एवमभिक्खणमभिक्खणं

उत्तरगुणपडिसेवाए अवराहसंचओ भवइ, तेन संजजलं पवहमाणं निरुज्झइ, तओ चारित्तारामो सुक्कइ ॥ सर्षपशकट-मण्डपदृष्टान्तो यथा-शकटे मण्डपे वा काप्येकः सर्षपः प्रक्षिप्तः स तत्र मातः, अन्यः प्रक्षिप्तः सोऽपि मातः, एवं प्रक्षिप्यमाणैः सर्षपैर्भविष्यति स सर्षपो यस्तं शकटं मण्डपं वा भनक्ति । एवं चारित्रेऽप्यशुद्धाहारग्रहणादिरेकोऽपराधः प्रक्षिप्तः स तत्रावस्थितिं कृतवान्, द्वितीयः प्रक्षिप्तः सोऽपि मातः, एवं प्रक्षिप्यमाणै- सर्षपैर्भविष्यति स सर्षपो यस्तं शकटं मण्डपं वा भनक्ति । एवं चारित्रेऽप्युद्धाहारग्रहणादिरेकोऽपराधः प्रक्षिप्तः स तत्रावस्थितिं कृतवान्, द्वितीयः प्रक्षिप्तः सोऽप्यवस्थितः, एवमपरापरैरुत्तरगुणापराधैः प्रक्षिप्यमाणैर्भविष्यति स उत्तरगुणापराधो येन चारित्रं सर्वथा भङ्गमुपगच्छति ॥

अथ वस्त्रदृष्टान्तो भाव्यते-वस्त्रे क्वचिदेकस्तैलविन्दुः कथमपि लग्नः स न शोधितः, एवमन्यान्यैस्तैलबिन्दुभिर्लगद्भिरप्यशोध्यमानैः सर्वमपि तद् वस्त्र मलिनीभूतम् । एवं चारित्रवस्त्रमप्यपरापरैरुत्तरगुणापराधैरुपलिप्यमानमचिरादेव मलिनीभवतीति ॥ तदेवमुत्तर-गुणप्रतिसेवी कालेन चारित्रात् परिभ्रश्यतीति स्थितम् । अथ कृतिकर्मविषयं विशेषं विभणिषुराह- "अंतो भयणा" इत्यादि पूर्वार्धम् । यः संयमश्रेणेः 'अन्तः' मध्ये स्थितस्तस्य कृतिकर्मकरणे भजना, सा चाग्रे दर्शयिष्यते । यस्तु श्रेणेर्बहिर्निर्गतस्तस्य कृतिकर्म न कर्त्तव्यम् । तथा च मरुकः-ब्राह्मणस्तस्य दृष्टान्तोऽत्र भवति ॥ तमेव दर्शयति-

[भा.४५२३]　　पक्कणकुले वसंतो, सउणीपारो वि गरहिओ होइ ।
इय गरहिया सुविहिया, मज्झि वसंता कुसीलाणं ॥

वृ-पक्कणकुलं-मातङ्गगृहं तत्र वसन् 'शकुनीपारगोऽपि' द्विजो गर्हितो भवति । शकुनीशब्देन चतुर्दश विद्यास्थानानि गृह्यन्ते, तानि चामूनि-

अङ्गानि वेदाश्चत्वारो, मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च, स्थानान्याहुश्चतुर्दश ॥

तत्राङ्गानि षट्-शिक्षा व्याकरणं कल्पः छन्दो निरुक्तिर्ज्योतिषमिति । "इय" एवं 'सुविहिताः' साधवः 'कुशीलानां' पार्श्वस्थादीनां मध्ये वसन्तो गर्हिता भवन्ति, अतो न तेषु वस्तव्यं न वा कृतिकर्मादि विधेयम् ॥ ननु च 'पार्श्वस्थादीनां कृतिकर्म न कर्त्तव्यम्' इति भवद्भिरभिहितम् तत्र पार्श्वस्थादीनां लक्षणं क्वचिदग्रपिण्डभोजित्वादि स्वल्पदोषरूपं क्वचित्तु स्त्रीसेवादि महादोषरूपमावश्यकादिशास्त्रेष्वभिधीयते तदत्र वयं तत्त्वं न जानीमहे कस्य कर्त्तव्यं कृतिकर्म? कस्य वा न ? इत्याशङ्कावकाशमवलोक्य विषयविभागमुपदर्शयति-

[भा.४५२४]　　संकिन्नवराहपदे, अनानुतावी अ होइ अवरद्धे ।
उत्तरगुणपडिसेवी, आलंबनवज्जिओ वज्जो ॥

वृ-इह यो मूलगुणप्रतिसेवी स नियमादचारित्रीति कृत्वा स्फुटमेवावन्दनीय इति न तद्विचारणा; परं य उत्तरगुणविषयैर्बहुभिरपराधपदैः सङ्कीर्णः-शबलीकृतचारित्रः, अपरं च 'अपराद्धे' अशुद्धाहारग्रहणादावपराधे कृतेऽपि 'अननुतापी' 'हा ! दुष्ठु कृतम्' इत्यादि पश्चात्तापं न करोति, निशङ्को निर्दयश्च प्रवर्तत इत्यर्थः । एवंविध उत्तरगुणप्रतिसेवी यदि आलम्बनेन- ज्ञान-दर्शन-चारित्ररूपविशुद्धकारणेन वर्जितः, कारणमन्तरेण प्रतिसेवत इति यः, तदाऽसौ 'वर्ज्यः'

कृतिकर्मकरणे वन्दनीयः । शिष्यः प्राह-ननु एवमालम्बनसहित उत्तरगुणप्रतिसेव्यपि वन्दनीयः । सूरिराह-न केवलमुत्तरगुणप्रतिसेवी मूलगुणप्रतिसेव्यप्यालम्बनसहितः पूज्यः ॥

कथम् ? इति चेद् उच्यते-

[भा.४५२५]　　हिट्ठट्ठाणठितो वी, पावयणि-गणट्ठया उ अधरे उ ।
　　　　　　कडजोगि जं निसेवइ, आदिनिगंठो व्व सो पुज्जो ॥

वृ- 'अधस्तनस्थानेषु' जघन्यसंयमस्थानेषु स्थितोऽपि, मूलगुणप्रतिसेव्यपीति भावः, 'कृतयोगी' गीतार्थ प्रावचनिकस्य-आचार्यस्य गणस्य च-गच्छस्य अनुग्रहार्थम् ''अधरे'' आत्यन्तिके कारणे समुपस्थिते यद् निषेवते तत्रासौ संयमश्रेण्यामेव वर्तते इति कृत्वा पूज्यः । क इव ? इत्याह-'आदिनिर्ग्रन्थ इव' इह पुलाक-बकुश-कुशील-निर्ग्रन्थ-स्नातकाख्याः पञ्च निर्ग्रन्थाः, तेषामादिभूतः पुलाकः तद्वत्; तस्य ह्येतादृशी लब्धिर्यया चक्रवर्तिस्कन्धावारमपि अभिवादनादौ कुलादिकार्ये स्तम्भीयाद् वा विनाशयेद् वा, न च प्रायश्चित्तमाप्नुयात् ॥ तथा चाह-

[भा.४५२६]　　कुणमाणो वि य कडणं, कतकरणो नेव दोसमब्भेति ।
　　　　　　अप्पेण बहुं इच्छइ, विसुद्धआलंबणो समणो ॥

वृ- ''कडणं'' कटकमर्दं कुर्वाणोऽपि 'कृतकरणः' पुलाको नैव स्वल्पमपि दोषम् 'अभ्येति' प्राप्नोति । कुतः ? इत्याह-यतोऽसौ श्रमणो विशुद्धालम्बनः सन् अल्पेन संयमव्ययेन बहुं संयमलाभमिच्छति ॥ अमुमेवार्थं समर्थयन्नाह-

[भा.४५२७]　　संजमहेउं अजतत्तणं पि न हु दोसकारगं बिंति ।
　　　　　　पायण वोच्छेयं वा, समाहिकारो वणादीणं ॥

वृ- प्रावचनिकादेः प्राणव्यपरोपणाद्युपद्रवरक्षणेन यः संयमस्तद्धेतोः-तन्निमित्तं पुलाकादेरयतत्वमपि 'नहि' नैव दोषकारकं ब्रुवते । यथा 'समाधिकारः' वैद्यो व्रणादीनां यत् तथाविधौषधप्रलेपनेन पाचनं यच्च शस्त्रादिना विच्छेदनं यद् वा 'व्यवच्छेदं' लङ्घनं कारयति तत् तदानीं पीडाकरमपि परिणामसुन्दरमिति कृत्वा न सदोषम् एवमिदमपीति ॥

अथ परस्याभिप्रायमाशङ्कमान आह-

[भा.४५२८]　　तत्थ भवे जति एवं, अन्नं अन्नेण रक्खए भिक्खू ।
　　　　　　अस्संजया वि एवं, अन्नं अन्नेण रक्खंति ॥

वृ- 'तत्र' इत्यनन्तरोक्तेऽर्थेऽभिहिते सति भवेत् परस्याभिप्राय इति वाक्यशेषः-यद्येवं 'भिक्षु' पुलाकादि 'अन्यम्' आचार्यादिकम् 'अन्येन' स्कन्धावारादिना कृत्वा रक्षति, एकस्य विनाशेनापरं पालयतीति भावः, तत एवम् 'असंयताः' गृहस्था अप्यन्यमन्येन रक्षन्त्येव, अतो न कश्चिदसंयतानां संयतानां च प्रतिविशेषः ॥ एवं परेणोक्ते सूरिराह-

[भा.४५२९]　　न हु ते संजमहेउं, पालिंति असंजता अजतभावे ।
　　　　　　अच्छित्ति-संजमट्ठा, पालिंति जती जतिजनं तु ॥

वृ- 'नहि' नैव 'ते' असंयताः 'अयतभावव्यवस्थितान्' गृहस्थान् संयमहेतोः पालयन्ति, किन्तु स्वात्मनो जीविकादिनिमित्तम् । ये तु यतयस्ते या तीर्थस्याव्यवच्छित्तिर्यश्च तेषां रक्ष्यमाणानामात्मनश्चान्योऽन्योपकारद्वारेण संयमस्तदर्थं यतिजनं पालयन्ति । तुशब्दो विशेषणार्थः,

एष विशेषः साधूनां गृहस्थानां चेति ॥ किञ्च-

[भा.४५३०] कुणइ वयं धनहेउं, धनस्स धनितो उ आगमं नाउं ।
इय संजमस्स वि वतो, तस्सेवऽट्ठा न दोसाय ॥

वृ- यथा धनिको वाणिज्यं कुर्वन् 'आगमं' लाभं ज्ञात्वा 'धनहेतोः' द्रव्योपार्जनार्थं शुल्क-कर्मकरवृत्ति-भाटकादिप्रदानेन धनस्य व्ययं करोति, "इय" एवं पुलाकादेर्मूलगुणप्रतिसेवनां कुर्वाणस्य यः कोऽपि संयमस्य व्ययः सः 'तस्यैव' संयमस्यार्थाय विधीयमानो न दोषाय सञ्जायते, ततः पुष्टालम्बनसहितो मूलगुणप्रतिसेव्यपि शुद्ध इति स्थितम् ॥ अथापुष्टालम्बनो निरालम्बनो वा प्रतिसेवते ततः संसारोपनिपातमासादयति, तथा चात्र दृष्टान्तमाह-

[भा.४५३१] तुच्छमवलंबमानो, पडति निरालंबणो य दुग्गम्मि ।
सालंब-निरालंबे, अह दिट्ठंतो निसेवंते ॥

वृ- इहालम्बनं द्रव्य-भावभेदाद् द्विधा । तत्र गर्त्तादौ पतद्भिर्यद् द्रव्यमालम्ब्यते तद् द्रव्यालम्बनम्। तच्च द्विधा-पुष्टमपुष्टं च । अपुष्टं-दुर्बलं कुश-वल्ककादि, पुष्टं-बलिष्ठं तथाविधकठोरवल्ल्यादि । एवं भावालम्बनमपि पुष्टा-ऽपुष्टभेदाद् द्विधा । पुष्टं तीर्थाव्यवच्छित्ति-ग्रन्थाध्ययनादि, अपुष्टं शठतया स्वमतिमात्रोत्प्रेक्षितमालम्बनमात्रम् । ततश्च द्रव्यालम्बनं 'तुच्छम्' अपुष्टमवलम्बमानो निरालम्बनो वा यथा 'दुर्गे' गर्त्तादौ पतति, यस्तु पुष्टालम्बनमवलम्बते स सुखेनैवात्मानं गर्त्तादौ पतन्तं धारयति, एवं साधोरपि मूलगुणाद्यपराधान् निषेवमाणस्य सालम्ब-निरालम्बविषयः 'अथ' अयं दृष्टान्तो मन्तव्यः । किमुक्तं भवति ? -यो निरालम्बनोऽपुष्टालम्बनो वा प्रतिसेवते स आत्मानं संसारगर्त्तायां पतन्तं न सन्धारयितुं शक्नोति, यस्तु पुष्टालम्बनः स तदवष्टम्भादेव संसारगर्त्तां सुखेनैवातिलङ्घयति। यत एवमतः पुष्टालम्बनवर्जितः कृतिकर्मणि वर्जनीय इति ॥ अथ श्रेणिस्थानस्थिता अपि ये कृतिकर्मणि नियमेन भजनया वा न व्यवह्रियन्ते तान् प्रतिपादयति-

[भा.४५३२] सेढीठाणे सीमा, कज्जे चत्तारि बाहिरा होंति ।
सेढीठाणे दुयभेयया‍ए चत्तारि भइयव्वा ॥

वृ- श्रेणिस्थानं सीमास्थानमित्यनर्थान्तरम्, तत्र वर्तमाना अपि 'चत्वारो जनाः' प्रत्येकबुद्धादयो वक्ष्यमाणाः कार्ये बाह्या भवन्ति । इह कार्यं द्विधा-वन्दनकार्यं कार्यकार्यं च । तत्र वन्दनकार्यं द्विधा-अभ्युत्थानं कृतिकर्म च । कार्यकार्यं कुलकार्यादिभेदादनेकविधम्, कार्यम्-अवश्यकर्तव्यरूपं यत् कार्यं तत् कार्यकार्यमिति व्युत्पत्तेः । एतद् द्विविधमपि प्रत्येकबुद्धादयो न कुर्वन्तीति भावः। तथा श्रेणिस्थाने वर्त्तमाना अपि गच्छप्रतिबद्धयथालन्दिकादयश्चत्वारो जनाः "दुयभेदयाए" त्ति द्विकभेदम् अनन्तरोक्तकार्यद्विविधानमङ्गीकृत्य भक्तव्याः, तत्र व्यवह्रियन्ते वा न वेति भावः । इदमेव स्फुटतरमाह-

[भा.४५३३] पत्तेयबुद्ध जिनकप्पिया य सुद्धपरिहारऽहालंदे ।
एए चउरो दुगभेदयाए कज्जेसु बाहिरगा ॥

वृ- प्रत्येकबुद्धा जिनकल्पिकाः शुद्धपरिहारिणो अप्रतिबद्धयथालन्दिकाश्च, एते चत्वारो जना द्विकभेदान्तर्गतेषु कृतिकर्म-कुलकार्यादिषु कार्येषु बाह्या भवन्ति, न तद्विषयं व्यवहारपथमवतरन्तीति भावः ॥

[भा.४५३४] गच्छम्मि नियमकज्जं, कज्जे चत्तारि होंति भइयव्वा।
गच्छपडिबद्ध आवन्न पडिम तह संजतीतो य ॥

वृ- गच्छे नियमाद्-अवश्यन्तया कर्त्तव्यं यत् कार्यं-कुल-गण-सङ्घविषयं तत्र कार्ये चत्वारो जना भक्तव्या भवन्ति-गच्छप्रतिबद्धयथालन्दिकाः "आवन्न" त्ति आपन्नपरिहारिकाः प्रतिमाप्रतिपन्नाः संयत्यश्चेति। यदा सङ्घः कुलादिकार्यं कर्तुं न शक्नोति तदा एतेऽपि कुर्वन्तीति। वन्दनकार्यं तु गच्छप्रतिबद्धयथालन्दिका यस्यावमरत्नस्य पार्श्वे सूत्रार्थग्रहणं कुर्वते तस्यावमस्यापि कुर्वन्ति, शेषसाधूनां तु न कुर्वन्ति। आपन्नपरिहारिणां प्रतिमाप्रतिपन्नानां संयतीनां च कृतिकर्म क्रियते वा न वा, तेऽपि कुर्वन्ति वा न वेति ॥ इदमेव सविशेषमाह-

[भा.४५३५] अंतो वि होइ भयणा, ओमे आवन्न संजतीओ य।
बाहिं पि होइ भयणा, अतिबालगवायगे सीसा ॥

वृ- 'अन्तरपि' श्रेणेरभ्यन्तरतः स्थितानामपि वन्दनकं प्रतीत्य भजना भवति। कथम्? इत्याह- "ओमि"त्ति योऽवमरात्निकः स आलोचनादी-कार्ये वन्द्यते, अन्यदा तु नेति। "आवन्नि"त्ति आपन्नपरिहारिको न वन्द्यते, स पुनराचार्यान् वन्दते। "संजईउ"त्ति संयत्योऽपि उत्सर्गतो न वन्द्यन्ते, अपवादपदे तु यदि बहुश्रुता महत्तरा काचिदपूर्वश्रुतस्कन्धं धारयति ततस्तस्याः सकाशात् तत्र ग्रहीतव्ये उद्देश-समुद्देशादिषु सा फेटावन्दनकेन वन्दनीया। न केवलमन्तः किन्तु श्रेणेर्बहिरपि स्थितानां कृतिकर्मणि भजना मन्तव्या, कारणे तेषामपि कृतिकर्म विधेयमिति भावः। अथ न कुर्वन्ति ततो महान् दोषो भवति, यथा अजापालकवाचकमवन्दमाना अगीतार्था शिष्या दोषं प्राप्तवन्त इति वाक्यशेषः। अथवा "सीस" त्ति संविग्नविहाराद् लिङ्गाद्वा परिच्युतं स्वगुरुं रहसि शीर्षेण प्रणम्य वक्तव्यम्-भगवन्! युष्माभिः परित्यक्ताः सन्तः साम्प्रतमनाथा वयम्, अतः कुरुतोद्यमं भूयश्चरणकरणानुपालनायामिति ॥

अथ "ओमे आवन्न संजईओ"त्ति गाथावयवं विवृणोति-

[भा.४५३६] आलोयण-सुत्तड्ढा, खामण ओमे य संजतीसुं च।
आवन्नो कज्जकज्जं, करेइ न य वंदती अगुरुं ॥

वृ- आलोचनानिमित्तं सूत्रार्थग्रहणार्थं चावमस्यापि वन्दनकं दातव्यम्। क्षामणके तु सएव रत्नाधिकानां वन्दनकं दद्यात्। संयतीनामप्यालोचना-सूत्रार्थनिमित्तं कृतिकर्म कर्त्तव्यम्। यः पुनरापन्नपरिहारिकः सः 'कार्यकार्यं' कुलकार्यादि करोति। "अगुरुं"त्ति गुरुं मुक्त्वा न कमपि साधुं वन्दते। उपलक्षणमिदम्, तेन न चासौ केनापि साधुना वन्द्यते ॥ अथ अजापालकदृष्टान्तमाह-

[भा.४५३७] पेसविया पच्चंतं, गीतासति खित्तपेहग अगीया।
पेहियखित्ता पुच्छंति वायगं कत्थ रन्ने त्ति ॥

[भा.४५३८] ओसक्कंते दट्ठुं, संकच्छेती उ वातगो कुविओ।
पल्लिवति कहण रुंभण, गुरु आगम वंदणं सेहा ॥

वृ- केनचिदाचार्येण गीतार्थाभावेऽगीतार्था साधवः प्रत्यन्तपल्ल्यां क्षेत्रप्रत्युपेक्षकाः प्रेषिताः। तत्र च प्रव्रजित एको वाचको राजकुले यत्कृतप्रमाणः परिवसति। ते च प्रत्युपेक्षितक्षेत्राः साधवस्तं वाचकं लोकस्य समीपे पृच्छन्ति-कुत्रासौ तिष्ठति?। लोकेनोक्तम्-अरण्ये। तत स्तेऽपि तत्र

गताः, तं चाजारक्षणप्रवृत्तं प्रव्रजितं दृष्ट्वा 'अद्रष्टव्योऽयम्' इति विमृश्यागीतार्थत्वेन शनैः शनैरवष्वष्कन्ति। तांश्च तथा दृष्ट्वा वाचकस्य शङ्का-किमेतेऽपसर्पन्ति ? इति, नूनं मां प्रव्रजितं ज्ञात्वा। ततः शङ्काच्छेदी स वाचकः कुपितः सन् पल्लीपतेः कथयित्वा तेषामगीतार्थानां ''रुम्मणं'' गुप्तौ प्रक्षेपणं कृतवान्। ततस्तदन्वेषणार्थं गुरूणां [illegible] वन्दित्वा '[illegible]' अगीतार्था एते इत्याद्युक्त्वा स्वशिष्यान् मोचितवन्तः। एवं श्रेणिबाह्यानामपि वन्दनकं कर्त्तव्यम्। अथ ''सीस''त्ति पदं प्रकारान्तरेण व्याचष्टे-

[भा.४५३९] अहवा लिंग-विहाराओ पच्चुयं पणिवयत्तु सीसेणं।
भणति रहे पंजलिओ, उज्जम भंते ! तव-गुणेहिं ॥

वृ-अथवा लिङ्गाद् वा संविग्नविहाराद् वा प्रच्युतं स्वगुरुं रहसि शीर्षेण प्रणिपत्य 'प्राञ्जलिकः' रचिताञ्जलिपुटो भणति-भदन्त ! प्रसादं विधाय उद्यच्छ तपो-गुणेषु, अनशनादौ तपःकर्मणि मूलगुणोत्तरगुणेषु च प्रयत्नं कुर्विति भावः । एवमादिके कारणे श्रेणिबाह्यानामपि 'कृतिकर्म' वन्दनकं कर्त्तव्यम् ॥ अथ न करोति तत इदं प्रायश्चित्तम्-

[भा.४५४०] उप्पन्न कारणम्मि, कितिकम्मं जो न कुज्ज दुविहं पि।
पासत्थादीयाणं, उग्घाया तस्स चत्तारि ॥

वृ-उत्पन्ने वक्ष्यमाणे कारणे यः कृतिकर्म 'द्विविधमपि' अभ्युत्थान-वन्दनकरूपं पार्श्वस्थादीनां न कुर्यात् तस्य चत्वार उद्घाता मासा भवन्ति, चतुर्लघुकमित्यर्थः ॥ शिष्यः प्राह-

[भा.४५४१] दुविहे किइकम्मम्मि, वाउलिया मो निरुद्धबुद्धीया।
आतिपडिसेहितम्मि, उवरिं आरोवणा गुविला ॥

वृ- एवं 'द्विविधे' अभ्युत्थान-वन्दनलक्षणे कृतिकर्मणि पूर्वं प्रतिषिध्य पश्चादनुज्ञाते सति 'व्याकुलिताः' आकुलीभूता वयम्, अत एव निरुद्धा-संशयक्रोडीकृता बुद्धिर्येषां ते निरुद्धबुद्धिकाः सञ्जाता वयम्। कुतः ? इत्याह-आदौ-प्रथमं प्रतिषिद्धं-'द्विविधमपि कृतिकर्म न वर्तते पार्श्वस्थादीनां कर्तुम्' आरोपणा च महती तत् कुर्वतो निर्दिष्टा; ''उवरिं''ति इदानीं पुनस्तेषां वन्दनकमप्रयच्छतो वा चतुर्लघुकाख्या आरोपणा प्रतिपाद्यते सा 'गुपिला' गम्भीरा, नास्या भावार्थं वयमवबुध्यामहे इति भावः ॥ सूरिराह-उत्सर्गतो न कल्पते पार्श्वस्थादीन् वन्दितुम्, परम्-

[भा.४५४२] गच्छपरिरक्खणट्ठा, अनागतं आउवायकुसलेण।
एवं गणाधिवतिणा, सुहसीलगवेसणा कज्जा ॥

वृ-अवम-राजद्विष्टादिषु ग्लानत्वे वा यदशन-पानाद्युपग्रहकरणेन गच्छस्य परिपालनं तदर्थम् 'अनागतम्' अवमादिकारणे अनुत्पन्न एव 'आयोपायकुशलेन' आयो नाम-पार्श्वस्थादेः पार्श्वाद् निप्रत्यूहसंयमपालनादिको लाभः उपायो नाम-तथा कथमपि करोति यथा तेषां वन्दनकमददान एव शरीरवार्त्तां गवेषयति; न च तथा क्रियमाणे तेषामप्रीतिकमुपजायते प्रत्युत स्वचेतसि ते चिन्तयन्ति-अहो ! एते स्वयं तपस्विनोऽपि एवमस्मासु स्निह्यन्ति; तत एतयोरायोपाययोः कुशलेन गणाधिपतिना 'एवं' वक्ष्यमाणप्रकारेण सुखशीलानां-पार्श्वस्थादीनां गवेषणा कार्या ॥

तत्र येषु स्थानेषु कर्त्तव्या तानि दर्शयति-

[भा.४५४३] यहिं आगमनपहे, उज्जाने देउले सभाए या।
रच्छ उवस्सय बाहिया, अंतो जयणा इमा होइ ।।

वृ- यत्र ते ग्राम-नगरादौ तिष्ठन्ति तस्य बहि स्थितो यदा तान् पश्यति तदा निराबाधवार्त्ता गवेषयति। यदा वा ते भिक्षाचर्यादौ तत्रागच्छन्ति तदा तेषामागमनपथे स्थित्वा गवेषणं करोति। एवमुद्याने ध्स्थानाम्, चैत्यवन्दनिमित्तं गतैर्देवुले वा समवसरणे या ध्स्थानाम्, रथ्यायां वा भिक्षामटतामभिमुखागमन मिलितानां वार्त्ता गवेषणीया। कदाचित् ते पार्श्वस्थादयो ब्रवीरन्-अस्माकं प्रतिश्रयं कदाऽपि नागच्छत; ततस्तदनुवृत्त्या तेषां प्रतिश्रयमपिगत्वा तत्रोपाश्रयस्य बहि स्थित्वा सर्वमपि निराबाधतादिकं गवेषयितव्यम्। अथ गाढतरं निर्बन्धं ते कुर्वन्ति तत उपाश्रयस्य 'अन्तः' अभ्यन्तरतोऽपि प्रविश्य गवेषयतां साधूनाम् 'इयं' वक्ष्यमाणा पुरुष-विशेषवन्दनविषया यतना भवति ।। पुरुषविशेषं तावदाह-

[भा.४५४४] मुक्कधुरा संपागडअकिच्चे चरण-करणपरिहीने।
लिंगावसेसमित्ते, जं कीरइ तारिसं वोच्छं ।।

वृ-धूः-संयमधुरा सा मुक्ता-परित्यक्ता येन स मुक्तधुरः, सम्प्रकटानि-प्रवचनोपघातनिरपेक्षतया समस्तजनप्रत्यक्षाणि अकृत्यानि-मूलोत्तरगुणप्रतिसेवनारूपाणि यस्य स सम्प्रकटाकृत्यः, अत एव चरणेन-व्रतादिना करणेन च-पिण्डविशुध्यादिना परिहीनः, एताध्शे 'लिङ्गावशेषमात्रे' केवलद्रव्यलिङ्गयुक्ते 'यद्' याध्शं वन्दनं क्रियते ताध्शमहं वक्ष्ये ।।

[भा.४५४५] वायाए नमोक्कारो, हत्थुस्सेहो य सीसनमनं च।
संपुच्छणऽच्छणं छोभवंदनं वंदनं वा वि ।।

वृ- बहिरागमनपथादिषु ध्ष्टस्य पार्श्वस्थादेर्वाचा नमस्कारः क्रियते, 'वन्दामहे भवन्तं वयम्' इत्येवमुच्चार्यत इत्यर्थः। अयासौ विशिष्टतर उग्रतरस्वभावो वा ततो वाचा नमस्कृत्य 'हस्तोत्सेधम्' अञ्जलिं कुर्यात्। ततोऽपि विशिष्टतरेऽत्युग्रस्वभावे या द्वावपि वाङ्नमस्कार-हस्तोत्सेधौ कृत्वा तृतीयं शिरःप्रणामं करोति। एवमुत्तरोत्तरविशेषकरणे पुरुष-कार्यभेदः प्राक्तनोपचारानुवृत्तिश्च द्रष्टव्या। "संपुच्छणं"ति पुरतः स्थित्वा भक्तिमिव दर्शयता शरीरवार्त्तायाः सम्प्रच्छनं कर्त्तव्यम्, कुशलं भवतां वर्त्तत इति। "अच्छणं"ति शरीरवार्त्तां प्रश्नयित्वा क्षणमात्रं पर्युपासनम्। अथवा पुरुषविशेषं ज्ञात्वा तदीयं प्रतिश्रयमपि गत्वा छोभवन्दनं सम्पूर्णं वा वन्दनं दातव्यम् ।।

अथ किमर्थं प्रथमतो वाचैव नमस्कारः क्रियते? कारणाभावे वा किमिति मूलत एव कृतिकर्म न क्रियते? इत्याशङ्क्याह-

[भा.४५४६] जइ नाम सूइओ मि, त्ति वज्जितो वा वि परिहरति कोयी।
इति वि हु सुहसीलजनो, परिहज्जो अनुमती मा य ।।

वृ-यदि नाम कश्चित् पार्श्वस्थादिर्वाङ्नमस्कारमात्रकणेन अहो! 'सूचितः' तिरस्कृतोऽहममुना भङ्ग्यन्तरेणेति, सर्वथा कृतिकर्माकरणेन वा 'वर्जितः' परित्यक्तोऽहममीभिरिति पराभवं मन्यमानः सुखशीलविहारितां परिहरति। "इय" एवंविधमपि कारणमवलम्ब्य परिहार्य कृतिकर्मणि सुखशीलजनः, न केवलं पूर्वोक्तं दोषजालमाश्रित्येत्यपिशब्दार्थः। अपि चतस्य कृतिकर्मणि विधीयमाने तदीयायाः सावद्यक्रियाया अप्यनुमति कृता भवति, अतः सा मा भूदिति बुध्याऽपि

न वन्दनीयोऽसौ ॥ किञ्च–

[भा.४५४७] लोए वेदे समए, दिट्ठो दंडो अकज्जकारीणं ।
दम्मंति दारुणा वि हु, दंडेन जहावराहेन ॥

वृ- 'लोके' लोकाचारे 'वेदे' समस्तदर्शनिनां सिद्धान्ते 'समये' राजनीतिशास्त्रे 'अकार्यकारिणां' चौरिकाद्यपराधविधायिनां 'दण्डः' असम्भाष्यता-शलाका-निर्यूहणादिलक्षणः प्रयुज्यमानो दृष्टः। कुतः पुनरसौ प्रयुज्यते ? इत्याह- 'दारुणाः' रौद्रास्तेऽपि 'यथापराधेन' अपराधानुरूपेण दण्डेन दीयमानेन 'दम्यन्ते' वशीक्रियन्ते । अत इहापि मूलगुणाद्यपराधकारिणां कृतिकर्मवर्जनादिको दण्डः प्रयुज्यते । एतच्च कारणाभावमङ्गीकृत्योक्तम्, कारणे तु वाङ्नमस्कारादिकं वन्दनकपर्यन्तं सर्वमपि कर्तव्यम् ॥ यत आह-

[भा.४५४८] वायाए कम्मुणा वा, तह चिट्ठति जह न होति से मन्नुं ।
पस्सति जतो अवायं, तदभावे दूरतो वज्जे ॥

वृ- 'यतः' पार्श्वस्थादेः सकाशाद् कृतिकर्मण्यविधीयमाने 'अपायं' संयमा-ऽऽत्मविराधनादिकं पश्यति तं प्रति 'वाचा' मधुरसम्भाषणादिना 'कर्मणा' शिरःप्रणामक्रियया तथा चेष्टते यथा तस्य 'मन्यु' स्वल्पमप्यप्रीतिकं न भवति । अथावन्दनेऽपि संयमोपघातादिरपायो न भवति ततस्तस्य- अपायस्याभावे दूरतस्तं सुखशीलजनं वर्जयेत्, एष विषयविभागः कृतिकर्मकरणाऽकरणयोरिति भावः ॥

[भा.४५४९] एताइं अकुव्वंतो, जहारिहं अरिहदेसिए मग्गे ।
न भवति पवयणभत्ती, अभत्तिमंतादिया दोसा ॥

वृ- 'एतानि' वाङ्नमस्कारादीनि पार्श्वस्थादीनां 'यथाऽर्हं' यथायोग्यमर्हद्देशिते मार्गे स्थितः सन् कषायोत्कटतया यो न करोति तेन प्रवचने भक्ति कृता न भवति, किन्तु अभक्तिमत्त्वादयो दोषा भवन्ति; तत्राऽऽज्ञाभङ्गेन भगवतामभक्तिमत्त्वं भवति, आदिशब्दात् स्वार्थपरिभ्रंशः चारिक-हेरिकाद्यभ्याख्यानप्राप्ति बन्धनादयश्च दोषा भवन्ति ॥ कानि पुनस्तेषां वन्दने कारणानि ? इत्याह-

[भा.४५५०] परिवार परिस पुरिसं, खित्तं कालं च आगमं नाउं ।
कारणजाते जाते, जहारिहं जस्स कायव्वं ॥

वृ- परिवारं पर्षदं पुरुषं क्षेत्रं कालं च आगमं ज्ञात्वा तथा कारणानि-कुल-गणादिप्रयोजनानि तेषां जातं-प्रकारः कारणजातं तत्र 'जाते' उत्पन्ने सति 'यथार्हं' यस्य पुरुषस्य यद् वाचिकं कायिकं वा वन्दनमनुकूलं तस्य तत् कर्त्तव्यम् ॥ अथ परिवारादीनि पदानि व्याचष्टे-

[भा.४५५१] परिवारो से सुविहितो, परिसगतो साहती व वेरग्गं ।
मानी दारुणभावो, निसंसं पुरिसाधमो पुरिसो ॥

वृ- "से" तस्य पार्श्वस्थादेर्य परिवारः सः 'सुविहितः' विहितानुष्ठानयुक्तो वर्तते । 'पर्षदि गतो या' सभायामुपविष्टः 'वैराग्यम्' इति कारणे कार्योपचारात् संसारवैराग्यजनकं धर्मं स कथयति येन प्रभूताः प्राणिनः संसारविरक्तचेतसः सञ्जायन्ते । तथा कश्चित् पार्श्वस्थादि स्वभावादेव 'मानी' साहङ्कारः तथा 'दारुणभावः' रौद्राध्यवसायः 'नृशंसो नाम' क्रूरकर्मा अवन्द्यमानो वध-बन्धादिकं कारयतीत्यर्थः, अत एव पुरुषाणां मध्येऽधमः पुरुषाधमः एतादृशः पुरुष इह गृह्यते॥

[भा.४५५२] लोगपगतो निवे वा, अहवण रायादिदिक्खितो होज्जा।
खित्तं विहमादि अभावियं व कालो यऽनाकालो ॥

वृ- यद्वा 'लोकप्रकृतः' बहुलोकसम्मतः, 'नृपप्रकृतो वा' धर्मकथादिलब्धिसम्पन्नतया राजबहुमतः, "अहवण" त्ति अथवा राजादिदीक्षितोऽसौ शैलकाचार्यादिवद्, एवंविधः पुरुष इह प्रतिपत्तव्यः। क्षेत्रं नाम विहादिकमभावितं वा। विहं-कान्तारम्, आदिशब्दात् प्रत्यनीकाद्युपद्रवयुक्तम्, तत्र वर्त्तमानानां साधूनामसावुपग्रहं करोति। 'अभावितं नाम' संविग्नसाधुविषयश्रद्धाधिकलम्, पार्श्वस्थादिभिर्भावितमित्यर्थः, तत्र तेषामनुवृत्तिं विदधानैः स्थातव्यम्। कालश्च "अनागालो" दुष्काल उच्यते, तत्र साधूनां वर्त्तापनं करोति। एवं परिवारादीनि कारणानि विज्ञाय कृतिकर्म विधेयम् ॥

आगमग्रहणेन च द्वारगाथायां दर्शन-ज्ञानादिको भावः सूचितः, अतस्तमङ्गीकृत्य विधिमाह-

[भा.४५५३] दंसण-नाण-चरित्तं, तव-विनयं जत्थ जत्तियं जाणे।
जिनपन्नत्तं भत्तीइ पूयए तं तहिं भावं ॥

वृ- दर्शनं च-निशङ्कितादिगुणोपेतं सम्यक्त्वं ज्ञानं च-आचारादि श्रुतं चारित्रं च-मूलोत्तरगुणानुपालनात्मकं दर्शन-ज्ञान-चारित्रम्, द्वन्द्वैकवद्भावः। एवं तपश्च-अनशनादि विनयश्च अभ्युत्थानादि तपो-विनयम्। एतद् दर्शनादि 'यत्र' पार्श्वस्थादौ पुरुषे 'यावद्' यत्परिमाणं' स्वल्पं बहु वा जानीयात् तत्र तमेव भावं जिनप्रज्ञप्तं स्वचेतसि व्यवस्थाप्य तावत्येव 'भक्त्या' कृतिकर्मादिलक्षणया पूजयेत् ॥

*मू. (९८) नो कप्पति निग्गंथाण वा निग्गंथीण वा अंतरगिहंसि चिट्ठित्तए वा निसीयत्तए वा जाव काउस्सग्गं वा ठाणं ठाइत्तए। अह पुन एवं जाणिज्जा-वाहिए जराजुन्ने तवस्सी दुब्बले किलंते मुच्छिज्ज वा पवडिज्ज वा, एवं से कप्पइ अंतरगिहंसि चिट्ठित्तए वा जाव ठाणं ठाइत्तए ॥*

[भा.४५५४] राइनिओ य अहिगतो, स चाव थेरो अनंतरे सुत्ते।
तस्संतराणि कप्पंति चिट्ठणादीणि संबंधो ॥

वृ-वस्त्रपरिभाजनसूत्रादारभ्य पूर्वसूत्रेषु 'रात्निकोऽधिकृतः' रत्नाधिकस्याधिकारोऽनुवर्त्तते। 'स चापि' रात्निकः कृतिकर्मसूत्रादनन्तरस्मिन् सूत्रे शय्यासंस्तारकविषये 'स्थविरः' षष्टिवर्षपर्याय उक्तः। उपलक्षणमिदम्, तेन ग्लानस्तपस्वी च यः पूर्वं रात्निकतया व्याख्यातः सोऽप्यत्राधिक्रियते। 'तस्य च' स्थविरादेः 'आन्तराणि' गृहद्वयान्तरालभावीनि स्थानादीनि कर्तुं कल्पन्ते, न शेषस्य तरुणादेः समर्थशरीरस्येत्येतदत्र सूत्रे प्रतिपाद्यते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'अन्तरगृहे' गृहस्य गृहयोर्वा अन्तराले, राजदन्तादित्वाद् आर्षत्वाद् वा अन्तरशब्दस्य पूर्वनिपातः, स्थातुं वा निषत्तुं वा; यावत्करणात् त्वग्वर्त्तयितुं वा निद्रायितुं वा प्रचलायितुं वा, अशनं वा पानं वा स्वादिमं वा स्वादिमं वा (आहारं] आहर्तुम्, उच्चारं वा प्रश्रवणं वा खेलं वा सिङ्घानं वा परिष्ठापयितुम्, स्वाध्यायं वा कर्तुम्, ध्यानं वा ध्यातुम्, "काउस्सग्गं" ति कायोत्सर्गलक्षणं वा स्थानं 'स्थातुं' कर्तुम्। सूत्रेणैवापवादं दर्शयति-अथ पुनरेवं जानीयात् "वाहिए" इत्यादि 'व्याधितः' ग्लानः 'जराजीर्णः' स्थविरः 'तपस्वी' क्षपकः 'दुर्बलः' ग्लानत्वादधुनैवोत्थितोऽसमर्थशरीरः, एतेषां मध्यादन्यतमस्तपसा भिक्षापर्यटनेन वा

'क्लान्तः' परिश्रान्तः सन् मूर्च्छेद्वा प्रपतेद्वा; एवं कारणमुद्दिश्य कल्पते अन्तरगृहे स्थातुं वा यावत् कायोत्सर्गं वा कर्तुमिति सूत्रार्थः ॥ अथ भाष्यविस्तरः-

[भा.४५५५] सब्भावमसब्भावे, दुण्ह गिहानंतरं तु सब्भावं ।
पास पुरोहड अंगन, मज्झम्मि य होतऽसब्भावं ॥

वृ- गृहान्तरं द्विधा-गृहान्तरं द्विधा-सद्भावतोऽसद्भावतश्च । द्वयोर्गृहयोर्यद् 'अन्तरं' मध्यं तत् सद्भावगृहान्तरम् । यत्तु गृहस्य पार्श्वतः पुरोहडेऽङ्गणे गृहमध्ये वा तद् असद्भावगृहान्तरं भवति । एतस्मिन् द्विविधेऽपि भिक्षाद्यर्थं निर्गतस्य स्थानादि कर्तुं न कल्पते ॥

[भा.४५५६] कुड्डंतर भित्तीए, निवेसन गिहे तहेव रच्छाए ।
ठायंतगाण लहुगा, तत्थ वि आणादिणो दोसा ॥

वृ-द्वयोः कुड्ययोरन्तरे, "भित्तीए" त्ति शटित-पतितस्याभिनवक्रियमाणस्य वा गृहस्य भित्तौ, 'निवेशने वा' त्रिप्रभृतीनां गृहाणामाभोगे, "गिहि" त्ति गृहपार्श्वे, 'रथ्यायां' प्रतीतायाम्; एतेषु स्थानेषु तिष्ठतश्चतुर्लघुकाः, तत्राप्याज्ञादयो दोषा मन्तव्याः, तन्निमित्तं प्रायश्चित्तं प्रायश्चित्तं पृथग् भवतीति भावः ॥ तथा-

[भा.४५५७] खरए खरिया सुण्हा, नट्ठे वट्टक्खुरे व संकिज्जा ।
खन्ने अगनिक्काए, दारे वति संकणा तिरिए ॥

वृ- 'खरकः' दासः 'खरिका' दासी 'स्नुषा' वधुः 'वृत्तखुरः' तरङ्गमः, एतेषु नष्टेषु साधुः शङ्कयेत-यः श्रमणकः कल्येऽत्र गृहान्तरे उपविष्ट आसीत् तेन हृतं भविष्यति, द्वारे वा श्रमणेनोद्घाटिते स्तेनः प्रविश्य हृतवनिति । "खन्नि" त्ति खत्रं केनचित् खातम् दत्तमित्यर्थः, अग्निकायो वा केनापि दत्तो भवेत्, द्वारेण वा प्रविश्य वृतिं वा छित्वा केनापि सुवर्णादिकमपहृतं स्यात्, तिर्यग्योनीयो वा गो-महिषीप्रभृतिको हृतो भवेत्, तत्रापि शङ्कायां ग्रहणाऽऽकर्षणादयो दोषाः । यत एवमतो गृहान्तरे न स्थातव्यम् ॥ अथ सूत्रोक्तं द्वितीयपदं भावयति-

[भा.४५५८] उच्छुद्धसरीरे वा, दुब्बल तवसोसिते व जो होज्जा ।
थेरे जुन्न-महल्ले, वीसंभणवेस हतसंके ॥

वृ-उच्छुद्धं-रोगाघ्रातं शरीरं यस्य स उच्छुद्धशरीरः, वाशब्द उत्तरापेक्षया विकल्पार्थे, 'दुर्बलः' अधुनोत्थितग्लानः, 'तपःशोषितो वा' विकृष्टतपोनिष्टप्तदेहो यो भवेत्, यो वा स्थविरः 'जीर्णः' षष्टिवर्षातिक्रान्तजन्मपर्यायः सोऽपि यदि 'महान्' सर्वेभ्योऽपि वृद्धतरः; एते विश्रामग्रहणार्थं गृहान्तरे तिष्ठेयुः । इह च व्याधितादय उत्सर्गतो भिक्षाटनं न कार्यन्ते, परम् आत्मलब्धिका-दिकारणापेक्षया भिक्षामटतां प्रकृतसूत्रावतारो मन्तव्यः । स च व्याधितादिः 'विश्रम्भणवेषः' संविग्नवेषधारी 'हतशङ्कश्च' हास्यादिविकारविकलतया असम्भावनीयव्यलीकशङ्कः सन् तत्र स्थानादीनि पदानि कुर्यात् ॥

[भा.४५५९] अहवा ओसहहेउं, संखडि संघाडए व वासासु ।
वाघाए वा तत्थ उ, जयणाए कप्पती ठातुं ॥

वृ- सूत्रोक्तस्तावदपवादो दर्शितः, अथार्थतः प्रकारान्तरेणाप्युच्यते इत्ययवाशब्दार्थः । औषधहेतोर्दातारं गृहेऽस्वाधीनं प्रतीक्षते, सङ्खड्यां वा यावद् वेला भवति, सङ्घाटकसाधुर्वा

यावद् भक्त-पानभृतं भाजनं वसती विमुच्य समागच्छति, वर्षासु वा गृहं प्रविष्टानां वर्षं निपतेत्, वधु-वराद्यागमनेन वा रथ्यायां व्याघातो भवेत् तावत् तत्रैव गृहान्तरे 'यतनया' वक्ष्यमाणया स्थातुं कल्पते। एष द्वारगाथासमासार्थः ।। अथैनामेव विवरीषुरौषध-सङ्खडिद्वारे व्याख्यानयति-

[भा.४५६०] पीसंति ओसहाइं, ओसहदाता व तत्थ असहीणो।
संखडि असतीकालो उट्ठिंते वा पडिच्छंति ।।

वृ-ग्लानस्यौषधानि पेष्टव्यानि, तत्र पेषणशिला प्रतिश्रये नेतुं न लभ्यते ततस्तेषामेवागारिणां गृहान्तरे स्थित्वा तानि पिंषन्ति। औषधमार्गणार्थं वा कस्यापि गृहं गताः, स चौषधदाता तदानीं तत्रास्वाधीनः, अतस्तं प्रतीक्षमाणैः स्थातव्यम्। सङ्खडी च क्वापि वर्त्तते, तत्र च 'असत्कालः' अद्यापि देशकालो न भवति, गृहस्वामिना चोक्तम्-प्रतीक्षध्वं क्षणमेकं यावद् वेला भवति, ततस्तस्मिन्नन्यस्मिन् वा गृहे प्रतीक्षणीयम्; अगारिणो वा तदानीं गृहाङ्गणमापूर्य भोक्तुमुपविष्टाः सन्ति ततस्तान् उत्तिष्ठतः प्रतीक्षन्ते ।। सङ्घाटकद्वारमाह-

[भा.४५६१] एगयर उभयओ वा, अलंभे आहच्च वा उभयलंभो।
वसहिं जा नेएगो, ता इअरो चिट्ठई दूरे ।।

वृ-'एकतरस्य' भक्तस्य वा पानकस्य वा उभयोर्वा 'अलाभे' दुर्लभतायामित्यर्थ, "आहच्च" कदाचिदुभयमपि प्रचुरतरं लब्धम्, तेन च भाजनमापूरितम्, ततः सङ्घाटकस्य मध्याद् यावदेकः तद् भाजनं वसतिं नयति तावदितरः साधुरगारिणां दूरे भूत्वा तिष्ठति। एष चूर्ण्यभिप्रायः। पुनरयम्-भक्तस्य पानस्य वा उभयस्य वा दुर्लभस्य लाभः समुपस्थितः, मात्रकं च तस्मिन् दिने अनाभोगेन न गृहीतम् ततो यावदेको मात्रकं वसतेरानयति तावदितरस्तत्र गृहीणां दूरे तिष्ठतीति।

वर्षाद्वारमाह-

[भा.४५६२] वासासु व वासंते, अनुन्नवित्ताण तत्थऽनाबाहे।
अंतरगिहे गिहे वा, जयणाए दो वि चिट्ठंति ।।

वृ-वर्षासु वा क्वापि गृहे गतानां वर्षे वर्षति गृहस्वामिनमनुज्ञाप्य तत्रानाबाधेऽवकाशेऽन्तरगृहे वा गृहे वा 'द्वावपि' सङ्घाटकसाधू 'यतनया' विकथादिपरिहारेण तिष्ठतः ।। प्रत्यनीकद्वारमाह-

[भा.४५६३] पडिनीय निवे एंते, तस्स व अंतउरे गते फिडिए।
वुग्गह निव्वहणाती वाघातो एवमादीसु ।।

वृ-प्रत्यनीकं समागच्छन्तं दृष्ट्वा यावदसौ व्यतिव्रजति तावदेकान्ते निलीय तिष्ठन्ति। नृपो वा सम्मुखमेति, तस्य वा नृपस्यान्तःपुरं 'गजो वा' हस्ती निर्गच्छति, ततो यावदसौ स्फिटितो भवति तावत् तत्रैवासते। "वुग्गह" त्ति दण्डिकौ द्विजौ वा द्वौ परस्परं विग्रहं कुर्वन्तौ समागच्छतः, "निव्वहणं" ति वधु-वरं तद् महता विच्छर्देन समायाति, आदिशब्देन गौष्ठिका गीतं गायन्तः समायान्ति, एवमादिषु कारणेषु 'व्याघातः' तत्रैव प्रतीक्षणलक्षणो भवति ।।

तत्र च तिष्ठतामियं यतना-

[भा.४५६४] आयाणगुत्ता विकहाविहीना, अच्छन्न छन्ने व ठिया विट्ठा।
अच्छंति ते संतमुहा निविट्ठं, भजंति वा सेसपदे जहुत्ते ।।

वृ-आदानैः-इन्द्रियैर्गुप्ताः तथा विकथया-भक्तकथादिरुपया विशेषेण हस्तसंज्ञादेरपि परिहारेण

हीनाः-त्यक्ताः तत्र गृहान्तरेऽच्छन्ने वा छन्ने वा प्रदेशे ऊर्द्धवस्थिता उपविश्य वा 'ते' साधवः शान्तमुखा आसते। 'निविश्य च' उपविश्य शेषाण्यपि-स्वाध्यायविधानादीनि यथोक्तानि पदानि यथायोगं भजन्ते, न च दोषमापद्यन्ते ॥ कथम् ? इति चेद् उच्यते-

[भा.४५६५] थाणं च कालं च तहेव वत्थुं, आसज्ज जे दोसकरे तु ठाणे।
ते चेव अन्नस्स अदोसवंते, भवंति रोगिस्स व ओसहाई ॥

वृ-'स्थानं च' स्त्री-पशु-पण्डकसंसक्तभूभागादि 'कालं च' ऋतुबद्धादिकं तथैव 'वस्तु' तरुण-नीरोगादिकं पुरुषद्रव्यमासाद्य यान्येकस्य गृहान्तरे स्थान-निषदनादीनि स्थानानि दोषकारीणि भवन्ति तान्येवान्यस्य पूर्वोक्तविपरीतस्थान-काल-पुरुषवस्तुसाचिव्याद् अदोषवन्ति भवन्ति। रोगिण इवौषधानि-यथा किल यान्यौषधान्येकस्य पित्तरोगिणो दोषाय भवन्ति तान्येवापरस्य वातरोगिणो न कमपि दोषमुपजनयन्ति, एवमत्रापि भावनीयम् ॥

मू. (९९) *नो कप्पति निग्गंथाण वा निग्गंथीण वा अंतरगिहंसि जाव चउगाहं वा पंचगाहं वा आइक्खित्तए वा विभावित्तए वा किट्टित्तए वा पवेइत्तए वा; नऽन्नत्थ एगनाएण वा एगवागरणेन वा एगगाहाए वा एगसिलोएण वा; से वि य ठिच्चा नो चेव नं अट्ठिच्चा ॥*

[भा.४५६६]अइप्पसत्तो खलु एस अत्थो, जं रोगिमादीण कता अणुन्ना।
अन्नो वि मा भिक्खगतो करिज्जा, गाहोवदेसादि अतो तु सुत्तं ॥

वृ-अतिप्रसक्तः खल्वेषोऽर्थः, यदनन्तरसूत्रे रोगिप्रभृतीनामन्तरगृहे स्थानादीनामनुज्ञा कृता। एवं हि तत्र स्थानादिपदानि कुर्वन् कश्चिद् धर्मकथामपि कुर्वीत, ततश्चातिप्रसङ्गो भवति, अतोऽन्योऽपि भैक्षगतो मा गाथोपदेशादिकं कार्षीदितीदं सूत्रमारभ्यते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां अन्तगृहे यावत् चतुर्गाथं वा पञ्चगाथं वा आख्यातुं वा विभावयितुं वा कीर्त्तयितुं वा प्रवेदयितुं वा। एतदेवापवदन्नाह-"नऽन्नत्थ" इत्यादि, "न कल्पते" इति योऽयं निषेधः स एक ज्ञाताद्वा एकव्याकरणाद्वा एकगाथाया वा एकश्लोकाद्वा अन्यत्र मन्तव्यः। सूत्रे च पञ्चम्याः स्थाने तृतीयानिर्देशः प्राकृतत्वात्। तदपि च एकज्ञातादिव्याख्यानं स्थित्वा कर्त्तव्यम्, नैव 'अस्थित्वा' भिक्षां पर्यटतोपविष्टेन वा इति सूत्रार्थः॥

अत्र विषमपदानि भाष्यकृद् विवृणोति-

[भा.४५६७] संहियकड्ढणमादिक्खणं तु पदछेद मो विभागो उ।
सुत्तत्थोकिट्टणया, पवेतणं तप्फलं जाणे ॥

वृ-इह संहितायाः-अस्खलितपदोच्चारणरूपाया यद् आकर्षणं तद् आख्यानमुच्यते; तच्चेदम्-

व्रत-समिति-कषायाणां, धारण-रक्षण-विनिग्रहाः सम्यक्।
दण्डेभ्यश्चोपरमो, धर्म पञ्चेन्द्रियदमश्च ॥

एवं भिक्षां गतो गृहस्थानां धर्मकथनार्थं संहिताकर्षणं करोति। यस्तु पदच्छेदः "मो" इति पादपूरणे सः 'विभागः' विभावना भण्यते, यथा-व्रतानां धारणं समितीनां रक्षणं कषायाणां निग्रह इत्यादि। यत्तु सूत्रार्थकथनं सा उत्कीर्तना, सा चेयम्-व्रतानि-प्राणातिपातादिविरमणरूपाणि तेषां सम्यग्-अप्रमत्तेन धारणं कर्त्तव्यम्, समितयः-ईर्यासमित्यादयस्तासामेकाग्रचेतसा रक्षणं विधेयमित्यादि। तस्य-धर्मस्य यत् फलम्-ऐहिका-ऽऽमुष्मिकलाभलक्षणं तत्प्ररूपणं प्रवेदनं

जानीयात्, यथा-भगवत्प्रणीतममुं धर्ममनुतिष्ठत इहैव भुवनवन्दनीयतायशःप्रवादादयो गुणा उपढौकन्ते, परत्र च स्वर्गा-ऽपवर्गसौख्यप्राप्तिर्भवतीति ॥

एवं श्लोकादेराख्यानादिषु भिक्षां गतेन विधीयमानेषु दोषानाह-

[भा.४५६८]　एक्का वि ता महल्ली, किमंग पुन होंति पंच गाहाओ ।
साहणे लहुगा आणादिदोस ते चेविमे अन्ने ॥

वृ- एवं संहितादिविस्तरेण व्याख्यायमाना तावदेकाऽपि गाथा 'महती' महाप्रमाणा भवति, किमङ्ग पुनः पञ्च गाथाः ? । अतो यद्येकामपि गाथां कथयति तदा चतुर्लघुका आज्ञादयश्च दोषाः, तथा तुरङ्गमादिहत-नयशङ्कादयः 'त एव' अन्तरगृहोक्ता दोषा भवन्ति, 'इमे च' वक्ष्यमाणा अन्ये दोषाः ॥ तानेवाह-

[भा.४५६९]　गाहा अ[illegible]ग, पो[illegible] ।
साहारण पडिणत्ते, गिलाण लहुगाइ जा चरिमं ॥

वृ- भिक्षां पर्यटन् कमप्यगारिणमशुद्धां गाथां पठन्तं श्रुत्वा ब्रवीति-विनाशितेयं त्वया गाथा, तथा "अद्धीकारग" त्ति गाथाया अर्धमहं करोमि अर्धं पुनस्त्वया कर्तव्यम्, "पुत्थग" त्ति पुस्तकादेव भवता शास्त्रमधीतं न पुनर्गुरुमुखात्, "खररडणं" ति किमेवं खर इवारटनं करोषि? "अक्खरा चेव" त्ति अक्षराण्येव तावद् भवान् जानीते अतः पट्टिकामानय येनाहं भवन्तं तानि शिक्षयामि । इत्यादि ब्रुवाणो यावत् तत्र व्याक्षेपं करोति तावदिमे दोषाः-"साहारणं" ति "साधारणं" सर्वेषु मिलितेषु यद् मण्डल्यां भोजनं तन्निमित्तमितरे साधवस्तं प्रतीक्षमाणास्तिष्ठन्ति । "पडिणत्ति" त्ति तेन साधुना कश्चिद् ग्लानः 'प्रतिज्ञप्तः' अद्याहं भवतः प्रायोग्यमानेष्यामीति, ततस्तेन वेलाविलम्बेन यदसौ ग्लानः परितापादि प्राप्नोति तत्र चतुर्लघुकादि 'चरमं' पाराञ्चिकं यावत् प्रायश्चित्तमिति द्वारगाथासमासार्थः ॥ साम्प्रतमेनामेव व्याख्याति-

[भा.४५७०]　भग्गविभग्गा गाहा, भणिइहीना व जा तुमे भणिता ।
अद्धं से करेमि अहं, तुमं से अद्धं पसाहेहि ॥

वृ- साधुर्भिक्षां गतः स्वपाण्डित्यख्यापनार्थं गृहस्थं पठन्तं श्रुत्वा ब्रवीति-येयं त्वया गाथा भणिता सा भग्नविभग्ना भणितिहीना वा कृता, यद्वा अर्धं "से" तस्या गाथाया अहं करोमि अर्धं पुनस्त्वं प्रसाधय इत्येवमभिनवा गाथा क्रियते ॥

[भा.४५७१]　पोत्थगपच्चयपढियं, किं रडसे रासहु व्व असिलायं ।
अकयमुह ! फलयमानय, जा ते लिक्खंतु पंचग्गा ॥

वृ- पुस्तकप्रत्ययादेव भवता पठितं न गुरुमुखाद् अतः किमेतेन प्रयासेन ?, किं वा त्वमेवं रासभ इव "असिलायं" विस्वरमारटसि ?, यद्वा अकृतम्-अक्षरसंस्कारेणासंस्कृतं मुखं यस्यासावकृतमुखस्तस्यामन्त्रणं हे अकृतमुख ! पठितशिक्षित एव भवान् किमपि ज्ञास्यति, अतः 'फलकं' पट्टिकामानय येन तव योग्यानि 'पञ्चाग्राणि' अक्षराणि लिख्यन्तामस्माभि ॥

एवं भिक्षां पर्यटन् यदि विकत्थते तत इदं प्रायश्चित्तम्-

[भा.४५७२]　लहुगादी छग्गुरुगा, तव-कालविसेसिया व चउलहुगा ।
अधिकरणमुत्तरुत्तर, एसण-संकाइ फिडियम्मि ॥

वृ- गाथायाम् अधीकारके च चतुर्लघु, पुस्तके चतुर्गुरु, अक्षरशिक्षणे षड्लघु, स्वररटने षड्गुरु। अथवा तपः-कालविशेषिताश्चतुर्लघुकाः, तद्यथा-गाथा-ऽधीकारकयोस्तपः-कालाभ्यां लघुकाः, पुस्तके कालेन गुरुकाः, अक्षरेषु तपसा गुरुकाः, स्वररटने तपसा कालेन च गुरुकाः। 'अधिकरणं च' कलहस्तेन समं भवति, 'उत्तरोत्तराः' उक्तिप्रत्युक्तीः कुर्वाणस्य च तस्य भिक्षाया देशकालः स्फिटति, तस्मिन् स्फिटिते पर्यटनैषणायाः प्रेरणं कुर्यात्, अकालचारिणश्च शङ्कादयो दोषा भवन्ति ॥

[भा.४५७३] वामद्दति इय सो जाव तेन ता गहियभोयणा इयरे ।
अच्छंते अंतरायं, एमेव य जो पडिन्नत्तो ॥

वृ-यावदसौ तेन सममुत्तरप्रत्युत्तरिकां कुर्वन् 'व्यामृद्राति' व्याक्षेपेण वेलां गमयति तावदितरे साधवो गृहीतभोजनाः सन्त आसते, ततोऽन्तरायदोषः। एवमेव च यो ग्लानः 'प्रतिज्ञप्तः' 'त्वद्योग्यं प्रायोग्यमद्य मया आनेतव्यम्' इत्यभ्यर्थितः तस्मिन्नपि तावन्तं कालं बुभुक्षिते तिष्ठति तस्य साधोरन्तरायं भवति ॥

[भा.४५७४] कालाइक्कमदाने, होइ गिलाणस्स रोगपरिवुड्ढी ।
परितावऽनगाढाती, लहुगाती जाव चरिमपदं ॥

वृ- कालातिक्रमेण च ग्लानस्य भक्त-पानदाने रोगपरिवृद्धिर्भवति। ततश्च यदसावनागाढ-परितापनादिकं प्राप्नोति तत्र चतुर्लघुकादि प्रायश्चित्तं यावत् कालगते 'चरमपदं' पाराञ्चिकम्। द्वितीयपदे गोचरप्रविष्टोऽपि परेण पृष्टः सन् कथयेत् ॥ किं कारणम् ? इति चेद् उच्यते-

[भा.४५७५] किं जाणंति वरागा, हलं जहित्ताण जे उ पव्वइया ।
एवंविधो अवन्नो, मा होहिइ तेन कहयंति ॥

वृ- यदा परेण प्रश्निता अपि न कथयन्ति तदा स चिन्तयति-किमेते वराका जानन्ति ये हलं परित्यज्य प्रव्रजिताः ? । एवंविधोऽवर्ण प्रवचनस्य मा भूत् तेन कारणेन कथयन्ति ॥ अथ "एगनाएण वा" इत्यादिसूत्रपदव्याचिख्यासयाऽऽह-

[भा.४५७६] एगं नायं उदगं, वागरणमहिंसलक्खणो धम्मो ।
गाहाहिं सिलोगेहि व, समासतो तं पि ठिच्चाणं ॥

वृ-परप्रश्नितेन विवक्षितार्थसमर्थनार्थमेकं ज्ञातमभिधातव्यम्, तत्र च उदकदृष्टान्तो भवति। 'व्याकरणं' निर्वचनम्, यथा-केनचिद् धर्मलक्षणं पृष्टस्ततः प्रतिब्रूयात्-अहिंसालक्षणो धर्म इति; अथवा गाथाभिः श्लोकैर्वा समासतो धर्मकथनं कर्त्तव्यम्। तदपि च स्थित्वा नोपविष्टेन न वा भिक्षां हिण्डमानेनेति निर्युक्तिगाथासमासार्थः। अथैनामेव विवृणोति-

[भा.४५७७] नज्जइ अनेन अत्थो, नायं दिट्ठंत इति व एगट्ठं ।
वागरणं पुन जा जस्स धम्मता होति अत्थस्स ॥

वृ- ज्ञायतेऽनेन दार्ष्टान्तिकोऽर्थ इति ज्ञातं दृष्टान्त इति चैकार्थम्। व्याकरणं पुनर्या यस्य मोक्षादेरर्थस्य 'धर्मता' स्वभावस्तस्य निर्वचनम् ॥ अथोदकदृष्टान्तो भाव्यते-एगो साहू उब्भामगभिक्खायरियाए अन्नं गामं वच्चइ। तत्थ अंतरा गिहत्थो मिलितो। ते दो वि वच्चंता अंतरापहे उदगं उत्तिन्ना। सो अगारो गामं वच्चइ। तत्थ अंतरा गिहत्थो मिलितो। ते दो वि वच्चंता

अंतरापहे उदगं उत्तिन्ना। सो अगारो गामं पविट्ठो। तत्थ य तस्स भगिनी अत्थि तीए घरं पाहुणगो गतो। साहू वि भिक्खं हिंडंतो तं घरं गतो। भगिनीए से पुरेकम्मं कयं। साहुणा पडिसिद्धं। कीस न गिण्हसि ? साहू भणइ-उदगसमारंभो, न वट्टइ। अगारो भणति-जं मए समं पंथे उदगं उत्तिन्नो सि तं किह कप्पइ ? अहो ! मायाविनो दुद्दिट्ठधम्माणो त्ति। साहू भणति-न वयं मायाविनो न वा दुद्दिट्ठधम्माणो। किन्तु-

[भा.४५७८] पप्पं खु परिहरामो, अप्पप्पविवज्जओ न विज्जति हु।
पप्पं खलु सावज्जं, वज्जेंतो होइ अणवज्जो ॥

वृ- 'प्राप्यमेव' परिहर्तुं शक्यमेव वयं परिहरामः, अप्राप्यस्य-परिहर्तुमशक्यस्य मार्गक्रमायातोदकवाहकादेः विवर्जकः-परिहर्ता न विद्यते। अत एव प्राप्यं 'सावद्यं' पुरःकर्मादिकं वर्जयन् 'अनवद्यः' निर्दोषो भवति ॥ अपि च नायमेकान्तो यदेकत्रानवद्यतया दृष्टं तदन्यत्राप्यनवद्यमेव भवति, तथाहि-

[भा.४५७९] चिरपाहुणतो भगिनिं, अवयासितो अदोसवं होति।
तं चेव मज्झ सक्खी, गरहिज्जइ अन्नहिं काले ॥

वृ-चिरकालादायातः प्राघूर्णको भगिनीम् 'अवकाशमानः' सस्नेहमालिङ्गन् अदोषवान् भवति, तथा चात्र त्वमेव मम 'साक्षी' प्रमाण, साम्प्रतमेव भवता चिरप्राघूर्णकतया भगिनीपरिष्वङ्गस्य कृतत्वादिति भावः। तामेव च भगिनीमन्यस्मिन् काले परिष्वजन् 'गर्ह्यते' निन्द्यते, अत्रापि त्वमेव प्रमाणमिति ॥ तथा-

[भा.४५८०] पादेहिं अधोतेहि वि, अक्कमिऊणं पि कीरती अच्चा।
सीसेण वि संकिज्जति, स च्चेव चितीकया छिविउं ॥

वृ- 'अर्चा' प्रतिमा सा यावद् नाद्यापि प्रतिष्ठिता तावदधौतैरपि पादैः 'आक्रम्य' उपरि चटित्वाऽपि क्रियते। सैव प्रतिमा 'चितीकृता' चैत्यत्वेन व्यवस्थापिता शीर्षेणापि स्प्रष्टुं शङ्क्यते, शिरसा स्पृशद्भिरपि शङ्का विधीयत इति भावः ॥

[भा.४५८१] केइ सरीरावयवा, देहत्था पूइया न उ विउत्ता।
सोहिज्जंति वनमुहा, मलम्मि वूढे न सव्वे तु ॥

वृ- 'केचित् शरीरावयवाः' दन्त-केश-नखादयो देहस्थाः सन्तः 'पूजिताः' प्रशस्ता भवन्ति, न पुनः 'वियुक्ताः' शरीरात् पृथग्भूताः। तथा 'व्रणमुखान्यपि' श्रोत्र-चक्षु-पायुप्रभृतीनि मले व्यूढे सति न सर्वाण्यपि शोध्यन्ते किन्तु कानिचिदेवेति ॥

[भा.४५८२] जइ एगत्थुवलद्धं, सव्वत्थ वि एव मन्नसी मोहा।
भूमीतो होति कनगं, किन्न सुवन्ना पुनो भूमी ॥

वृ-यदि नाम एकत्र यद् उपलब्धं सर्वत्रापि तेन भवितव्यम् इत्येवं 'मोहाद्' अज्ञानाद् मन्यसे, ततः कथय भूमीतः कनकमुत्पद्यमानं दृश्यते ततः सुवर्णात् पुनरपि किं न भूमिरुत्पद्यते ? ॥

[भा.४५८३] तम्हा उ अनेगंतो, न विङ्गमेगत्थ सव्वहिं होति।
लोए भक्खमभक्खं, पिज्जमपिज्जं च दिट्ठाइं ॥

वृ- तस्माद् 'अनेकान्तः' अनियमोऽयम्, कीदृशः ? इत्याह-नैकत्र दृष्टं सर्वत्रापि भवतीति।

तथा च लोके प्राण्यङ्गत्वे समानेऽप्योदन-पक्वान्नादिकं भक्ष्यं मांस-वसादिकमभक्ष्यम्, तक्र-जलादिकं पेयं मद्य-रुधिरादिकमपेयम्, इत्यादीनि पृथग् व्यवस्थान्तराणि दृष्टानि; तथाऽत्राप्युदकसमारम्भादौ मन्तव्यानि ॥ गतमेकज्ञातम्, अथैकव्याकरणेन यथा धर्मोऽभिधीयते तथा दर्शयति-

[भा.४५८४] जं इच्छसि अप्पणतो, जं च न इच्छसि अप्पणतो ।
तं इच्छ परस्स वि या, एत्तियगं जिनसासनयं ॥

वृ-यद् 'आत्मनः' स्वजीवस्य सुखादिकमिच्छसि यच्च दुःखादिकमात्मनो नेच्छसि तत् 'परस्यापि' आत्मव्यतिरिक्तस्य जन्तोः इच्छ, आत्मवत् परमपि पश्येति भावः । 'एतावद् जिनशासनं' इयन्मात्रो जिनोपदेश इति ॥ गाथया पुनरित्थं धर्म उपदिश्यते-

[भा.४५८५] सव्वारंभ-परिग्गहनिक्खेवो सव्वभूतसमया य ।
एक्कग्गमनसमाहाणया य अह एत्तिओ मोक्खो ॥

वृ-सर्वस्य-सूक्ष्म-बादराद्यशेषजीवविषयस्यारम्भस्य सर्वस्य च-सचित्ता-ऽचित्त-मिश्रभेदभिन्नस्य परिग्रहस्य यो निक्षेपः- संन्यासो या च सर्वभूतेषु समता या चैकाग्रमनःसमाधानता 'अथ' एष एतावान् मोक्ष उच्यते, कारणे कार्योपचाराद् एष मोक्षोपाय इत्यर्थ ॥ श्लोकेन यथा-

[भा.४५८६] सव्वभूतऽप्पभूतस्स, सम्मं भूताइं पासओ ।
पिहियासवस्स दंतस्स, पावं कम्मं न बंधई ॥

वृ- पाठसिद्धः । ये तु संस्कृतरुचयस्तेषामित्थं गाथया श्लोकेन वा धर्मकथा क्रियते-

व्रत-समित-कषायाणां, धारण-रक्षण-विनिग्रहाः सम्यक् ।
दण्डेभ्यश्चोपरमो, धर्म पञ्चेन्द्रियदमश्च ॥
यत्र प्राणिवधो नास्ति, यत्र सत्यमनिन्दितम् ।
यत्रात्मनिग्रहो दृष्टस्तं धर्ममभिरोचयेत् ॥

वृ- अथ किं कारणं स्थित्वा धर्म कथनीयः ? इत्याशङ्कयाह-

[भा.४५८७] इरियावहियाऽवन्नो, सिट्ठं पि न गिण्हए अतो ठिच्चा ।
महिड्डी पडिनीए, अभियोगे चउण्ह वि परेण ॥

वृ- ईर्यापथिकी-चङ्क्रमणक्रिया तां कुर्वन् यदि कथयति तदा लोकेऽवर्णो भवति-दुर्दृष्टधर्माणोऽमी यदेवं गच्छन्तो धर्मं कथयन्ति । अपि च-'शिष्टमपि' कथितमपि धर्ममेवं श्रोता न गृह्णाति अतः स्थित्वा एकश्लोकादि कथनीयम् । अथापवादापवाद उच्यते-कश्चिद् भद्रको धर्मश्रद्धालुर्ऋद्धिमान् धर्मं पृच्छति ततः सत्त्वानुकम्पया 'प्रवचनोपग्रहकरश्च भविष्यति' इति कृत्वा तिस्रश्चतस्रः पञ्च वा बहुतरा वा गाथा उपविश्य कथयितव्याः । प्रत्यनीको वा कश्चिद् व्यतिव्रजति तं प्रतीक्षमाणस्तावद् धर्मं कथयेद् यावदसौ व्यतीतो भवति । यद्वा स प्रत्यनीकः सहसा दृष्टो भवेत् ततो यः सलब्धिकः स उपशामनानिमित्तं बहुविधमुपदेशं दद्यात् । दण्डिकस्य वा 'अभियोगः' बलात्कारो भवेत् । किमुक्तं भवति ? -एकश्लोकेन धर्मे उपदिष्टे दण्डिको ब्रूयात्- कथय कथय मम सम्प्रति महती श्रद्धा वर्त्तते; ततश्चतुर्णां श्लोकानां परतोऽपि कथयेत् ॥ आह- कीदृशी पुनः कथा कथयितव्या ? कीदृशी वा न ? इति उच्यते-

[भा.४५८८] सिंगाररसुत्तुइया, मोहमई फुंफुका हसहसेति ।

जं सुणमाणस्स कहं, समणेण न सा कहेयव्वा ॥

वृ- यां कथां शृण्वतः श्रोतुः स्त्रीवर्णकादिश्रवणजनितो यः शृङ्गारो नाम रसस्तेनोत्तेजिता सती मोहमयी फुम्फुका 'हसहसति' जाज्वल्यते सा कथा श्रमणेन न कथयितव्या ॥

[भा.४५८९] समणेण कहेयव्वा, तव-नियमकहा विरागसंजुत्ता ।
जं सोऊण मनूसो, वच्चइ संवेग-निव्वेयं ॥

वृ- तपः-अनशनादि नियमाः-इन्द्रिय-नोइन्द्रियनिग्रहास्तत्प्रधाना कथा तपो-नियमकथा 'विरागसंयुक्ता' न निदानादिना रागादिसङ्गता श्रमणेन कथयितव्या, यां श्रुत्वा 'मनुष्यः' श्रोता संवेग-निर्वेदं व्रजति । संवेगः-मोक्षाभिलाषः, निर्वेदः-संसारवैराग्यम् ॥

*मू. (१००) नो कप्पति निग्गंथाण वा निग्गंथीण वा अंतरगिहंसि इमाइं पंच महव्वयाइं सभावणाइं आइक्खित्तए वा विभावित्तए वा किट्टित्तए वा पवेयत्तए वा, नऽन्नत्थ एगनाएण वा जाव सिलोएण वा, से वि य ठिच्चा नो चेव नं अठिच्चा ॥*

वृ- अस्य व्याख्या प्राक्सूत्रवद् द्रष्टव्या । नवरम् 'इमानि' स्वयमनुभूयमानानि पञ्च महाव्रतानि 'सभावनानि' प्रतिव्रतं भावनापञ्चकयुक्तान्याख्यातुं वा विभावयितुं वा कीर्त्तयितुं वा प्रवेदयितुं वा न कल्पन्ते । आख्यानं नाम-साधूनां पञ्च महाव्रतानि पञ्चविंशतिभावनायुक्तानि षट्कायरक्षणसाराणि भवन्ति । विभावनं तु-प्राणातिपाताद् विरमणं यावत् परिग्रहाद् विरमणमिति । भावनास्तु-"इरियासमिए सया जए०" इत्यादिगाथोक्तस्वरूपाः । षट्कायास्तु-पृथिव्यादयः । कीर्त्तनं नाम-या प्रथमव्रतरूपा अहिंसा सा भगवती सदेव-मनुजा-ऽसुरस्य लोकस्य पूज्या द्वीपः त्राणं शरणं गति प्रतिष्ठेत्यादि, एवं सर्वेषामपि प्रश्नव्याकरणाङ्गोक्तान् गुणान् कीर्त्तयति । प्रवेदनं तु-महाव्रतानुपालनात् स्वर्गोऽपवर्गो वा प्राप्यत इति सूत्रार्थः ॥ परः प्राह-ननु पूर्वसूत्रेण गतार्थमिदम् अतः किमर्थमारभ्यते ? उच्यते-

[भा.४५९०] गहिया-ऽगहियविसेसो, गाथासुत्तातो होति वयसुत्ते ।
निद्देसकतो च भवे, परिमाणकतो व विन्नेतो ॥

वृ- गाथासूत्राद् व्रतसूत्रे ग्रथिता-ऽग्रथितविशेषो मन्तव्यः । किमुक्तं भवति ?-अनन्तरसूत्रे "चउगाहं वा पंचगाहं वा" इत्युक्तं ताश्च गाथा ग्रथिता भवन्ति, इमानि तु महाव्रतानि ग्रथितानि अग्रथितानि वा भवेयुः । ग्रथितानि नाम-पद-पाठबन्धेन वा श्लोकबन्धेन वा बद्धानि, अग्रथितानि तु-मुत्कलैरेव वचनैर्यान्यभिधीयन्ते । यद्वा निर्देशकृतोऽत्र विशेषो भवति-अनन्तरसूत्रे "चतुर्गाथं पञ्चगाथं वा कथयितुं न कल्पते" इत्युद्देशमात्रमेव कृतम्, अत्र तु "महाव्रतानि सभावनाकानि" इत्यनेन तस्यैव विशेषनिर्देशः क्रियते । परिमाणकृतो वा विशेषो विज्ञेयः-यदधस्तनसूत्रे धर्मस्वरूपमुक्तं तदेवात्र "महाव्रतपञ्चकम्" इति सङ्ख्यया विशेषितं निरूप्यते ॥ अथात्रैव दोषानाह-

[भा.४५९१] पंचमहव्वयतुंगं, जिनवयणं भावनापिणिद्धागं ।
साहणे लहुगा आणाइ दोस जं वा निसिज्जाए ॥

वृ- इह जिनवचनं मेरुसदृशं पञ्चभिर्महाव्रतैस्तुङ्गम्-उच्छ्रितम्, पञ्चमहाव्रतमयोच्छ्रयमित्यर्थः । तस्यैव च महाव्रतोच्छ्रयस्य रक्षणार्थं भावनाभि पञ्चविंशतिसङ्ख्याकाभि पिनद्धं-गाढतरं नियन्त्रितम् । ईदृशं जिनवचनमन्तरगृहे उपविश्य कथयतश्चतुर्लघुकाः आज्ञादयश्च दोषाः । यद् वा गृहनिषद्यायां

वाहितायां प्रायश्चित्तं यच्च दोषजालं तद् आपद्यते । तथा महाव्रतपञ्चकविषया दोषा भवन्ति, तथाहि-प्राणवधमापद्येत प्राणवधे वा शङ्क्येत, एवं यावत् परिग्रहमापद्येत परिग्रहे वा शङ्क्येत ॥

तथाहि-

[भा.४५९२] पाणवहम्मि गुरुव्विणि, कप्पट्ठोद्दाणए य संका उ ।
मपिओ न ठाइ कोवी, मोसम्मि य संकणा साणे ॥

वृ- गृहे उपविश्य साधुर्धर्मं कथयति, गुर्विणी च तस्यान्तिके उपविश्य शृणोति, यावच्चासौ तत्र तिष्ठति तावत् तदीयगर्भस्य आहारव्यवच्छेदेन विपत्तिर्भवति, एवं प्राणवधे लगति । तथा धर्मं कथयतः काचिदविरतिका शृण्वत्येवापान्तराले कायिकाभूमिं गच्छेत्, तस्याः पुत्रस्तत्रैवास्ते, ततः सपत्नी छिद्रं लब्ध्वा तमुत्क्षेपणमिषेण साधोरग्रतो निपात्यापद्रावयति, एवं प्राणातिपातविषया शङ्का भवेत् । तथा 'यत् तीर्थकरैः प्रतिषिद्धं तद् मया न कर्त्तव्यम्' इति प्रतिज्ञाय तैः प्रतिषिद्धां निषद्यां वाहयतो मृषावादो भवति । यद्वा स्वमुखेनैव गृहनिषद्यां निषिध्य पश्चादात्मनैव तां परिभुञ्जानो मृषावादमापद्यते । अथवा स दिने दिने तस्या अविरतिकाया अग्रे धर्मं कथयति ततो गृहस्वामिना भणितः-मा मम गृहमायासीरिति; साधुना भणितम्- आगमिष्यन्ति ते गृहं पाणशुनकाः; एवमुक्त्वाऽपि जिह्वालोलतादोषेण तदेव गृहं व्रजन् 'भणितोऽपि' तेन गृहस्थेन वारितोऽपि कश्चिद् न तिष्ठति, एवं मृषावादमाप्नोति; स च गृहस्थो ब्रूयात्-किं पाणशुनकः संवृत्तोऽसि ? इति । यद्वा गृहस्थो भोजन कुर्वन धर्मं शृण्वतीमगारीं किमप्युत्कृष्टं द्वितीयाङ्ग याचेत, सा ब्रूयात्-शुना भक्षितम्; अगारो ब्रूयात्-जानाम्यहं तं श्वानं येन भक्षितमिति; एवं मृषावादविषया शङ्का भवेत् ॥ अथास्या एव पूर्वार्धं व्याचष्टे-

[भा.४५९३] खुहिया पिपासिया वा, मंदक्खेणं न तस्स उट्ठेइ ।
गब्भस्स अंतरायं, बाधिज्जइ सन्निरोधेणं ॥

वृ- गुर्विणी धर्मकथां शृण्वती क्षुधिता वा पिपासिता वा भवेत्, सा च तस्य साधोः सम्बन्धिना 'मन्दाक्षेण' लज्जया नोत्तिष्ठति, ततो गर्भस्यान्तरायं भवति । तेन चाऽऽहारव्यवच्छेदलक्षणेन सन्निरोधेन स गर्भो बाध्यते, ततो विपत्तिमप्यसौ प्राप्नुयादिति प्राणवधमापद्यते ॥

अथ प्राणिवधविषयां शङ्कां दर्शयति-

[भा.४५९४] उक्खिवितो सो हत्था, चुतो त्ति तस्सऽग्गतो निवाडित्ता ।
सोतार वियारगते, हा ह त्ति सवित्तिणी कुणती ॥

वृ- अविरतिकाया अग्रे स धर्मं कथयति, सा चापान्तराले कायिक्यर्थं निर्गता, ततस्तस्यां 'श्रोत्र्यां' श्राविकायां विचारभूमौ गतायां सपत्नी तदीयं पुत्रं तस्य साधोरग्रत उत्क्षिप्य भूमौ सहसैव निपातयति, निपात्य च 'अहो ! अनेन श्रमणेनायं पुत्र उत्क्षिप्तः सन्नेतदीयहस्ताच्च्युतो विपन्नः' इति महता शब्देन 'हा हा !' इति पूत्कारं करोति, ततो भूयांल्लोको मिलितस्तं साधुं तत्र स्थितं दृष्ट्वा शङ्कां कुर्यात्-किं मन्ये सत्यमेवेदम् ? इति । मृषावाददोषः प्राक् सप्रपञ्चमुक्तं इति इति न भूयो भाव्यते ॥ अथादत्तादान-मैथुनयोर्दोषानाह-

[भा.४५९५] सयमेव कोइ लुद्धो, अवहरती तं पडुच्च कम्मकरी ।
वाणिगिणी मेहुन्ने, बहुसो य चिरं च संका य ॥

वृ- कश्चिद् व्रतीलुब्धः सन् विजनं मत्वा स्वयमेव सुवर्णसङ्कलिका-मुद्रिकादिकमपहरति, एवमदत्तादानमापद्यते; तं वा संयतं प्रतीत्य 'साधुरत्रार्थे शङ्किष्यते नाहम्' इति कृत्वा कर्मकरी काचिदपहरेत्। वाणिजिका वा काचित् प्रोषितभर्तृका तया समं मैथुनविषया आत्म-परोभयसमुत्था दोषा भवन्ति; अथवा यत्र प्रोषितपतिकास्तिष्ठन्ति तत्रासौ 'बहुशः' वारं वारं व्रजति चिरं च ताभि सह कन्दर्पं कुर्वाणस्तिष्ठति ततश्चतुर्थविषये शङ्केत ॥ अथ परिग्रहदोषानाह-

[भा.४५९६] धम्मं कहइ जस्स उ, तम्मि उ वीयारए गए संते।
सारक्खणा परिग्गहो, परेण दिट्ठम्मि उड्डाहो ॥

वृ- 'यस्य' श्रावकादेरग्रे धर्मं कथयति स ब्रूयात्-यावदहं कायिकां व्युत्सृज्य समागच्छामि तावद् भवता गृहं रक्षणीयम्; एवमुक्त्वा तत्र विचारभूमी गते स संयतो तावत् तद् गृहं संरक्षति तावत् परिग्रहदोषमापद्यते। तदेवं गृहं रक्षन् परेण दृष्टः स शङ्कां कुर्यात्-नूनमेतस्यापि हिरण्यं सुवर्णं वा विद्यते; उड्डाहं च स कुर्यात्-अहो! अयं श्रमणकः सपरिग्रह इति। यत एते दोषा अतो नान्तरगृहे धर्मकथा कर्त्तव्या ॥ द्वितीयपदमाह-

[भा.४५९७] एगं नायं उदगं, वागरणमहिंसलक्खणो धम्मो।
गाहाहि सिलोगेहि य, समासतो तं पि ठिच्चाणं ॥

वृ- गतार्था ॥

मू. (१०१) *नो कप्पति निग्गंथाण वा निग्गंथीण वा पाडिहारियं सिज्ञा-संथारयं आयाए अपडिहट्टु संपव्वएत्तए ॥*

[भा.४५९८] अविदिन्नमंतरगिहे, परिकहणमियं पऽदिन्नमिइ जोगो।
निग्गमणं व समाणं, बहिं व वुत्तं इमं अंतो ॥

वृ-अन्तरगृहे यत् 'परिकथनम्' उपदेशप्रदानं तद् 'अवितीर्णं' तीर्थकरैर्गृहपतिना वा नानुज्ञातम्। 'इदमपि' प्रातिहारिकशय्या-संस्तारकस्याप्रत्यर्पणम् 'अदत्तम्' अननुज्ञातम् 'इति' अयं 'योगः' सम्बन्धः। यद्वा निर्गमनं प्रतिश्रयाद् द्वयोरपि सूत्रयोः 'समानं' तुल्यम्। अथवा पूर्वसूत्रे प्रतिश्रयाद् 'बहिः' भिक्षायां निर्गतस्य धर्मकथनं न कल्पते इत्युक्तम्, इदं पुनः 'अन्तः' प्रतिश्रयमध्ये संस्तारकस्य यद् निक्षेपणं तत्र कल्पते इत्यत्र प्रतिपाद्यते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा प्रतिहरणं प्रतिहारः-प्रत्यर्पणं तमर्हतीति प्रातिहारिकं शय्या च-सर्वाङ्गीणा संस्तारकः-अर्धतृतीयहस्तमानः शय्या-संस्तारकं तद् 'आदाय' गृहीत्वा कार्यसमाप्ती 'अप्रतिहृत्य' प्रत्यर्पणमकृत्वा 'सम्प्रतव्रजितुं' ग्रामान्तरं विहर्तुमिति सूत्रार्थ ॥ अथ भाष्यविस्तरः-

[भा.४५९९] सिज्ञा संथारो या, परिसाडी अपरिसाडि मो होइ।
परिसाडि कारणम्मिं, अणप्पिणे मासो आणादी ॥

वृ- शय्या संस्तारको वा परिशाटी अपरिशाटी च भवति। परिशाटी तृणादिमयः, अपरिशाटी फलकादिमयः। तत्र परिशाटीसंस्तारकः कारणवशाद् ऋतुबद्धे गृहीतो भवेत् तं मासकल्पे पूर्णेऽनर्पयित्वा व्रजतो मासलघु आज्ञादयो दोषाः ॥ एते चापरे-

[भा.४६००] सोच्चा गत त्ति लहुगा, अप्पत्तिय गुरुग जं च वोच्छेओ।
कप्पट्ठ खेल्लणे नयन डहण लगु लहुग गुरुगा य ॥

वृ- संस्तारकस्वामिना श्रुतम्-संस्तारकमनर्पयित्वा गतास्ते संयताः; एवं श्रुत्वा यदि प्रीतिकं करोति-'अनर्पितेऽप्यनुग्रह एवास्माकम्' इति ततश्चतुर्लघवः । अथाप्रीतिकं करोति-मदीयानि तृणानि हारितानि विनाशितानि वा इति तदा चतुर्गुरवः । यच्च तद्द्रव्यस्यान्यद्रव्यस्य वा व्यवच्छेदस्तदाऽपि चतुर्गुरुकम् । अथवा तस्मिन् संस्तारके शून्ये "कप्पट्ठ"त्ति बालकानि खेलन्ते ततो मासलघु, अथान्यत्र तं नयन्ति ततश्चतुर्लघु, अथाग्नौ प्रक्षिप्य दहन्ति चतुर्लघवः, दह्यमाने च तस्मिन्नन्येषां प्राणजातीयानां विराधना भवेत् तन्निष्पन्नं प्रायश्चित्तम् ॥ अथाप्रीतिकपदं व्याचष्टे-

[भा. ४६०१] दिज्जंते वि तयाऽनिच्छिऊण अप्पेंसु भे त्ति नेऊणं ।
कयकज्जा जनभोग्गं, काऊण कहिं गया भच्छा ॥

वृ- ग्रहणकाले निर्देजमपि दीयमानं तदानीं नेच्छन्ति स्म । 'अनिष्य च' अनभिकाङ्क्ष्य मासकल्पे पूर्णे "भे" भवतामर्पयिष्याम इति भणनपूर्वकं नीत्वा साम्प्रतं 'कृतकार्या' विहितात्मप्रयोजनाः शून्ये जनभोग्यं कृत्वा कुत्र ग्रामेनगरे वा गताः ? । "भच्छे"त्ति नैपातिकं पदं कुत्सायां वर्त्तते, क्व पुनस्ते दुर्दृष्टधर्माणो गताः ? इत्यर्थः ॥ अथ "कप्पट्ठ खेल्लणे" इत्यादि विवृणोति-

[भा. ४६०२] कप्पट्ठ खेल्लण तुअट्टणे य लहुगो य होति गुरुगो य ।
इत्थी-पुरिसतुयट्टे, लहुगा गुरुगा अनायारे ॥

वृ- तत्र संस्तारके कल्पस्थकानि खेलन्ते लघुको मासः । अथ तान्येव त्वग्वर्त्तयन्ति गुरुको मासः । अथ महती स्त्री महान् पुरुषो वा त्वग्वर्त्तयति चतुर्लघु । अथैतावनाचारमाचरतस्तदा चतुर्गुरुकाः ॥

[भा. ४६०३] वोच्छेदे लगु-गुरुगा, नयने डहणे य दोसु वी लहुगा ॥
विहनिग्गयादऽलंभे, जं पावे सयं व तु नियत्ता ॥

वृ- तस्यैवैकस्य साधोः तस्यैव चैकस्य द्रव्यस्य व्यवच्छेदे चतुर्लघु । अनेकेषां साधूनामन्यद्रव्याणां च व्यवच्छेदे चतुर्गुरु । संस्तारकस्य कल्पस्थकैरन्यत्र नयेन दहने च द्वयोरपि चतुर्लघवः । व्यवच्छेद-करणाच्च संस्तारकादेरलाभे विहम्-अधवा तन्निर्गतादयो यत् परितापनादि प्राप्नुवन्ति स्वयं वा निवृत्तास्तत्र प्राप्ताः संस्तारकादिकमलभमाना यां विराधनामासादयन्ति तन्निष्पन्नं प्रायश्चित्तम् ॥

[भा. ४६०४] माइस्स होति गुरुगो, जति एक्कतो भागऽनप्पिए दोसा ।
अह होंति अन्नमन्ने, ते च्चेव य अप्पिणणे सुद्धो ॥

वृ- 'मायिनः' मायावतो गुरुको मासो भवति । कथं पुनर्मायां करोति ? इत्याह-यदि 'अकतः' एकस्माद् गृहादनेकैः साधुभिरनेके संस्तारका आनीतास्तदा "भाग"त्ति प्रत्यर्पणकाले तेषु पृथग्भागीकृतेषु च आत्मीयं भागं 'तत्रैव गृहे नेतव्यः' इति कृत्वा तेषां मध्ये प्रक्षिपति नात्मना तत्र नयति एष मायी भण्यते । अस्य च येऽनर्पिते संस्तारके दोषाः ते सर्वेऽपि मन्तव्याः । अथान्यान्येभ्यो गृहेभ्य आनीताः संस्तारका भवन्ति तदापि मायाकरणे त एव दोषाः । तस्माद् यतो गृहादानीतस्तत्र विधिना प्रत्यर्पणे शुद्ध इति सङ्क्षेपगाथासमासार्थः ॥ अथैनामेव विवृणोति-

[भा. ४६०५] संथारेगमनेगे, भयणऽट्ठविहा उ होइ कायव्वा ।
पुरिसे घर संथारे, एगमनेगे तिसु पतेसु ॥

वृ- संस्तारके गृह्यमाणे एका-ऽनेकपदाभ्यामष्टविधा भजना कर्त्तव्या भवति, अष्टौ भङ्गा इत्यर्थः ।

सा चैतेषु त्रिषु पदेषु, तद्यथा-पुरुषे गृहे संस्तारके च । एतेषु एका-ऽनेकपदाभ्यामष्टौ भङ्गाः, यथा-एकेन साधुना एकस्माद् गृहाद् एकः संस्तारकः आनीतः १ एकेनैकस्मादनेके २ एकेनानेकेभ्यो गृहेभ्य एकः ३ एकेनानेकेभ्यो गृहेभ्योऽनेके संस्तारका आनीताः ४; एवमेकेन साधुना चत्वारो भङ्गा लब्धाः, अनेकैरपि साधुभिरेवमेव चत्वारो भङ्गा लभ्यन्ते, सर्वसङ्ख्ययैतेऽष्ट भङ्गाः ॥

[भा.४६०६] आनयने जा भयणा, सा भयणा होति अप्पिणंते वि ।
वोच्चत्थ मायसहिए, दोसा य अनप्पिणंतम्मि ॥

वृ- संस्तारकस्यानयने या 'भजना' अष्टभङ्गी भणिता सैव भजना संस्तारकमर्पयतोऽपि भवति, यथैवानीतस्तथैव प्रत्यर्पयितव्य इति भावः । अथ विपर्यस्तं प्रत्यर्पयति मायां वा करोति न वा सर्वथैवार्पयति ततो विपर्यस्ते मायासहितेऽनर्पयति च दोषा व्यवच्छेदादयो भवन्ति । तत्र ये आद्याश्चत्वारो भङ्गास्तेषु यथैव ग्रहणं तथैवार्पयन्ति । पञ्चमभङ्गे ग्रहणकाले 'अस्माकमन्यतरः समर्पयिष्यति' इत्येष विधिर्न विहितस्ततो यद्येकः प्रत्यर्पयति तदा विपर्यस्तं भवति । षष्ठभङ्गे एकः साधुः प्रत्यर्पयितुं प्रस्थितः अपरश्चिन्तयति 'मदीया अपि तृणकम्बिकास्तत्रैव नेतव्या' इति कृत्वा तदीयानां तृणादीनां मध्ये प्रक्षिपति, एषा माया भण्यते । सप्तमे भङ्गे तृतीयभङ्गे वा कम्बिकास्तृणानि वा एकस्मिन् गृहेऽर्पयतोऽनर्पणं भवति । यत एते दोषास्तस्मात् पृथक् पृथक् सर्वैरपि प्रत्यर्पणीयाः । कारणे पुनर्विपरीतमर्पयति न वा अर्पयति ॥ तदेव कारणमाह-

[भा.४६०७] बिइयपय झामिते वा, देसुट्ठाणे व बोधिकभए वा ।
अद्धाणसीसए वा, सत्थो व पधावितो तुरियं ॥

वृ- द्वितीयपदे संस्तारको ध्यामितो भवेत्, देशोत्थाने वा संस्तारकस्वामी कुत्रापि गत इति न ज्ञायते, बोधिकभये संस्तारकस्वामीसाधवो वा नष्टाः, अध्वशीर्षके वा सार्थस्त्वरितं प्रधावितो यावत् संस्तारकं प्रत्यर्पयति तावत् सार्थो दूरं गच्छति अपरश्च सार्थो दुर्लभः ॥

[भा.४६०८] एतेहि कारणेहिं, वच्चंते को वि तस्स उ निवेदे ।
अप्पाहंति व सागारियाइ असदऽन्नसाहूणं ॥

वृ- एतैः कारणैर्न प्रत्यर्पयेयुः-अध्वशीर्षके च त्वरितं व्रजतामेकः कोऽपि साधुर्गत्वा तस्य संस्तारकस्वामिनो निवेदयति-सार्थस्त्वरितं प्रधावितस्ततो नास्माभि प्रत्यर्पितः, यूयं पुनस्तं संस्तारकमानयध्वम् । अन्यसाधूनां वा निवेदयन्ति-अमुकस्मिन् कुले संस्तारकः प्रत्यर्पणीयः । अन्यसाधूनाम् 'असति' अभावे सागारिकादीन् "अप्पाहन्ति" सन्दिशन्ति-एष संस्तारकोऽमुकस्यार्पणीयः । एष तृणकम्बिकासु विधिरुक्तः ॥

[भा.४६०९] एसेव गमो नियमा, फलएसु वि होइ आनुपुव्वीए ।
चउरो लहुगा माई, य नत्थि एयं तु नाणत्तं ॥

वृ- एष एव गमो नियमात् फलकेष्वप्यानुपूर्व्या वक्तव्यो भवति । नवरम्-प्रायश्चित्ते विशेषः। फलकमयस्य संस्तारकस्याप्रत्यर्पणे चतुर्लघुकाः । मायी च नास्ति, यथा तृणेषु कम्बिकासु वा अपरास्तृणकम्बिकाः प्रक्षिप्यन्ते तथा फलकानां नास्ति प्रक्षेप इति भावः । एतद् नानात्वमत्र मन्तव्यम् ॥

मू. *(१०२) नो कप्पइ निग्गंथाण वा निग्गंथीण वा सागारियसंतियं सेज्जासंथारयं आयाए*

*अविकरणं कट्टु संपव्वइत्तए ॥*

[भा.४६१०] संथारगअहिगारो, अहवा पडिहारिए उ सागारी।
नीहारिमो अनीहारिमो यइति एस संबंधो ॥

वृ-संस्तारकस्याधिकारोऽयमनुवर्त्तते, तत इदमपि संस्तारकसूत्रमारभ्यते। अथवा पूर्वसूत्रे प्रातिहारिकः संस्तारक उक्तः, अत्र तु सागारिकसत्कोऽभिधीयते। यद्वा निर्हारिमो अनिर्हारिमश्चेति द्विधा संस्तारकः। तत्र निर्हरणम्-अन्यत्र नयनं तेन निर्वृत्तो निर्हारिमः, अन्यत्र नीत्वा प्रत्यर्पणीय इत्यर्थः। तद्विपरीतोऽनिर्हारिमः। तत्र निर्हारिम उक्तः, इह पुनरनिर्हारिम उच्यते। एष सम्बन्धः। अथ सूत्रस्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा सागारिकः-शय्यातरस्तस्य सत्कं शय्यासंसतारकम् 'आदाय' गृहीत्वा 'अविकरणं कृत्वा' अविकरणं नाम-यत् साधुना करणं कृतम्-तृणानां प्रस्तरणं कम्बिकानां बन्धनं फलकस्य स्थापनम्, तद् अनपनीय 'सम्प्रव्रजितुं' विहर्तुमिति सूत्रार्थः ॥ अथ निर्युक्त्या विस्तारयितुमाह-

[भा.४६११] सागारिसंति विकरण, परिसाडिय अपरिसाडिए चेव।
तम्मि वि सो चेव गमो, पच्छित्तुस्सग्ग-अववाए ॥

वृ- सागारिकसत्कस्यसंस्तारकस्य विकरणं कृत्वा गन्तव्यम्। स च परिशाटी अपरिशाटी चेति द्विविधः। तत्रापि स एव प्रायश्चित्तोत्सर्गा-ऽपवादेषु गमो मन्तव्यः। अविकरणे चेमे दोषाः

[भा.४६१२] किड्डं तुअट्टण बाले, नयने डहणे य होइ तह चेव।
विकरण पासुद्धं वा, फलग तणेसुं तु साहरणं ॥

वृ- बालानां-कल्पस्थकानां क्रीडने त्वग्वर्त्तनेऽन्यत्र नयने दहने च दोषास्तथैव भवन्ति ततो विकरणं कर्त्तव्यम्। कथम्? इत्याह-फलकस्य पार्श्वतः स्थापनमूर्द्धकरणं वा, तृणेषु तु 'संहरणम्' एकत्र मीलनम्, तुशब्दात् कम्बिकासु बन्धनच्छोटनम्, एतद् विकरणम् ॥ इदमेव व्याख्याति-

[भा.४६१३] पुंजे वा पासे वा, उवरिं पुंजेसु विकरण तणेसु।
फलगं जत्तो गहियं, वाघाए विकरणं कुज्जा ॥

वृ- यानि तृणानि पुञ्जाद् गृहीतानि तानि पुञ्जेष्वेव निक्षेपणीयानि, यानि पार्श्वतस्तानि पार्श्वे स्थापनीयानि, एवं तृणेषु विकरणं भवति। फलकं यतो गृहीतं तत्रैव नीत्वा यदि पार्श्वतः स्थापितमासीत् तदा पार्श्वे, अथोर्ध्वं स्थापितमासीत् तत ऊर्ध्वं स्थाप्यते। कम्बिका अपि यतो गृहीतास्तत्र बन्धान् छोटयित्वा निक्षेपणीयाः। अथ व्याघातेन तत्र नेतुं न पार्यन्ते तदा तत्रैव स्थापयित्वा नियमाद् विकरणं कुर्यात् ॥

[भा.४६१४] बितियमहसंथडे वा, देसुट्ठाणादिसू व कज्जेसु।
एएहि कारणेहिं, सुद्धो अविकरणकरणे वि ॥

वृ- द्वितीयपदे यथासंस्तृते विकरणं न कुर्यात् न च प्रायश्चित्तमाप्नुयात्। यथसंस्तृतं नाम-निष्प्रकम्पं चम्पकपट्टादि। 'देशोत्थानादिषु वा' पूर्वसूत्रोक्तेषु कार्येषु विकरणं न कुर्यात्। एतैः कारैरविकरणकरणेऽपि शुद्धः ॥

*मू. (१०३) इह खलु निग्गंथाण वा निग्गंथीण वा पाडिहारिए वा सागारियसंतिएवा सेज्जासंथारए*

*विप्पणसिज्जा से य अनुगवेसियव्वे, सिया से अ अनुगवेस्समाणे लभेज्जा तस्सेव पडिदायव्वे, सिया से अ अनुगवेस्समाणे नो लभिज्जा एवं से कप्पइ दोच्चं पि उग्गहं अनुन्नवित्ता परिहारं परिहरित्तए ॥*

[भा.४६१५] दोण्हेगयरं नट्ठं, गवेसियं पुव्वसामिणो देंति।
अपमादट्ठा अहिए, हिए य सुत्तस्स आरंभो ॥

वृ- 'द्वयोः' प्रातिहारिक-सागारिकसत्कयोः परिशाट्यपरिशाटिनोर्वा संस्तारकयोरेकतरं संस्तारकं नष्टं गवेषयित्वा पूर्वस्वामिनः प्रयच्छन्ति, अतः 'अहृते' अनष्टेऽप्रमादार्थं हृते च गवेषणादिसामाचारीप्रदर्शनार्थमस्य सूत्रस्यारम्भः क्रियते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या- 'इह' अस्मिन् मौनीन्द्रे प्रवचने स्थितानां 'खलुः' वाक्यालङ्कारे निर्ग्रन्थानां वा निर्ग्रन्थीनां वा प्रातिहारिको वा सागारिकसत्को वा शय्यासंस्तारकः 'विप्रणश्येत्' विविधैः प्रकारैः प्रकर्षेण रक्ष्यमाणोऽपि नश्येत्, स च 'अनुगवेषयितव्यः' विप्रणाशानन्तरं पृष्ठत एव गवेषयितव्यः। 'स्याद्' भवेत् स चानुगवेष्यमाणो लभ्येत तस्यैव संस्तारकस्वामिनः 'प्रतिदातव्यः' प्रत्यर्पणीयः। स्यात् स चानुगवेष्यमाणो नो लभ्येत तत एवं "से" तस्य कल्पते 'द्वितीयमप्यवग्रहमनुज्ञाप्य' एकं तावत् प्रथमं यदा गृहीतस्तदाऽनुज्ञापितः, ततो विप्रनष्टः सन् गवेष्यमाणोऽपि यदा न लब्धस्तदा संस्तारकस्वामिनः कथिते सति यदसावन्यं संस्तारकं ददाति, यद्वा स एव संस्तारकस्वामिना मृग्यमाणो लब्धः ततस्तद्विषयं द्वितीयमवग्रहमनुज्ञाप्य 'परिहारं' धारणा-परिभोगलक्षण 'परिहर्तुं' धातूनामनेकार्थत्वात् कर्तुमिति सूत्रार्थः ॥ अथ निर्युक्तिविस्तरः-

[भा.४६१६] संथारो नासिहिती, वसहीपालस्स मग्गणा होति।
सुत्ताई उ विभासा, जहेव हेट्ठा तहेव इहं ॥

वृ- शून्यायां वसतौ कृतायां संस्तारको नङ्क्ष्यतीति मत्वा प्रथमत एव वसतिरशून्या कर्त्तव्या येनासौ न नश्यति, अत एवात्र वसतिपालस्य मार्गणा भवति। कथम्? इत्याह-"सुत्ताई" इत्यादि, यथैव 'अधस्तात्' पीठिकायां शय्याकल्पिकद्वारे "सुत्ते बाल गिलाणे" इत्यादिका विभाषा कृता तथैवेहापि मन्तव्या ॥ स्थानाशून्यार्थं पुनरिदमाह-

[भा.४६१७] पढमम्मि य चउलहुगा, सेसेसुं मासियं तु नाणत्तं।
दोहि गुरू एक्केणं, चउत्थपदे दोहि वी लहुगा ॥

वृ- 'प्रथमे स्थाने' वसतेः शून्यताकरणलक्षणे चतुर्लघुकाः 'द्वाभ्यां' तपः-कालाभ्यां गुरुकाः। 'शेषेषु' बाल-ग्लाना-ऽव्यक्तस्थापनलक्षणेषु त्रिषु लघुमासिकम्। तत्र बालस्थापने तपसा गुरुकम्, ग्लानस्थापने कालेन गुरुकम्, 'चतुर्थपदे' अव्यक्तस्थापनात्मके 'द्वाभ्यामपि' तपः-कालाभ्यां लघुकम् ॥ अत्र दोषानुपदर्शयति-

[भा.४६१८] मिच्छत्त-बडुग-चारण-भडाण मरणं तिरिक्ख-मनुयाणं।
आएस बाल निक्केयणे य सुत्ते भवे दोसा ॥

[भा.४६१९] वलि धम्मकहा किड्डा, पमज्जणाऽऽवरिसणा य पाहुडिया।
खंधार अगनि भंगे, मालवतेना य नाई य ॥

वृ- गाथाद्वयं पीठिकायां सविस्तरं व्याख्यातम्। यत एते दोषा अतो वसति शून्या न कर्त्तव्या,

न वा बालो ग्लानोऽव्यक्तो वा वसतिपालः स्थापनीयः ॥

[भा.४६२०]　　संथारविप्पनासो, एवं खु न विज्झतीति चोएति ।
　　　　　　सुत्तं होइ य अफलं, अह सफलं उभयहा दोसा ॥

वृ- 'नोदयति' परः प्रेरयति-एवं 'खुः' अवधारणे सुरक्षिते क्रियमाणे संस्तारकस्य विप्रणाशो न भवति, तथा च "[illegible]" इत्यादिलक्षणं सूत्रमफलं भवति; अथ सूत्रं सफलं मनध्वेततः 'बालादिदोषरहितो वसतिपालः स्थापनीयः' इति यदुक्तं तदफलं प्राप्नोति; एवमुभयथाऽपि दोषा भवन्ति ॥ सूरिराह-यथा द्वयमपि सफलं भवति तथाऽभिधीयते-

[भा.४६२१]　　निज्जंताऽऽनिज्जंता, आयावणनीणितो व हीरेज्जा ।
　　　　　　तेन-ऽगनि-उदगसंभम, बोहिकभय रट्ठउट्ठाणे ॥

वृ- प्रत्यर्पणार्थं नीयमानः संस्तारको राजपुरुषैरन्तरा ह्रियेत, "आनिज्जंतो"त्ति गृहपति-गृहादानीयमानो वा राजपुरुषैर्बलादपह्रियेत, आतापनम्-आतपे संस्तारकस्य प्रदानं तदर्थं वा बहिर्निष्काशितः केनापि ह्रियेत, स्तेना-ऽग्न्युदकसम्भ्रमेषु वा बोधिकभये वा राष्ट्रस्य-देशस्य यद उत्थानम्-उद्वसीभवनं तत्र ह्रियेत ॥

[भा.४६२२]　　पडिसेहेन व लद्धो, पडिलेहणमादिविरहिते गहणं ।
　　　　　　अनुसट्ठी धम्मकहा, वल्लभो वा निमित्तेणं ॥

वृ- प्रतिषेधो नाम-संस्तारको मार्ग्यमाणस्तेन स्वामिना 'नाहं प्रयच्छामि' इति प्रतिषिद्धः; ततः स केनचिद् भद्रकेणानुशिष्टः-किं न प्रयच्छसि ? इति; स प्राह-विप्रणाशभयात्; इतरो ब्रवीति-नामीषां हस्ताद् विप्रणङ्क्ष्यति; एवंविधेन प्रतिषेधेन वा लब्धः स प्रयत्नेन रक्ष्यमाणोऽपि प्रत्युपेक्षणानिमित्तं बहिर्नीतः, साधुश्च विस्मृतरजोहरणार्थं मध्ये प्रविष्टः, स च 'उत्कृष्टोऽयम्' इति कृत्वा विरहितं मत्वा केनापि गृहीतः, आदिग्रहणाद् उपाश्रयस्यान्तरपि राजवल्लभेन दृष्ट्वा बलामोटिकया ग्रहणं कृतम् । एवं विप्रणष्टे सति येन हृतस्तस्य पार्श्वाद् मार्गयितव्यः । अथ मार्गितोऽपि न ददाति ततोऽनुशिष्टि क्रियते । तथाप्यप्रयच्छति धर्मकथा कर्त्तव्या । एवमप्यददाने यो द्रमकस्तस्यम भापनं क्रियते । यस्तु राजवल्लभः स निमित्तेनावर्त्तनीयः ॥

कथं पुनरनुशिष्टि क्रियते ? इत्युच्यते-

[भा.४६२३]　　दिन्नो भवव्विहेनेव एस नारिहसि ने न दाउं जे ।
　　　　　　अन्ने वि ताव देयो, दे जाणमजाणयाऽऽनीयं ॥

वृ-य एष भवता संस्तारको गृहीतः स भवद्विधेनैव विशिष्टपुरुषेण दत्तः, ततः "ने" अस्माकं न नार्हसि दातुम्, अन्योऽपि तावद् भवता संस्तारको देयः, किं पुनर्योऽन्यदत्तः ?, ततो जानता-ऽजानता वा आनीतममुमस्माकं प्रयच्छ ॥ एवमनुशिष्ट्या यदि न प्रयच्छति ततोऽयं विधिः-

[भा.४६२४]　　मंत निमित्तं पुन रायवल्लभे दमग भेसणमदेंते ।
　　　　　　धम्मकहा पुन दोसु वि, जति अवराहो दुहा वऽधिओ ॥

वृ- राजवल्लभेऽददति मन्त्रो निमित्तं वा प्रयोक्तव्यम् । द्रमकस्य तु भेषणं कर्त्तव्यम् । धर्मकथा पुनर्द्वयोरपि द्रमक राजवल्लभयोः प्रयुज्यते, यथा-यतयः-साधवस्तेषामुपरणापहारादिरपराधः 'द्विधाऽपि' इहलोके परलोके चाहितो भवति ॥ इदमेव व्यनक्ति-

[भा.४६२५] अन्नं पि ताव तेन्नं, इह परलोकेऽपहारिणामहियं ।
परओ जायितलद्धं, किं पुन मन्नुप्पहरणेसु ॥

वृ- 'अन्यदपि' प्राकृतजनविषयमपि यत् स्तैन्यं तत् तावदिह परलोके चाऽपहारिणामहितं भवति, किं पुनः परतो याचितं यद् लब्धं तदपह्रियमाणं 'मन्युप्रहरणेषु' साधुषु ? किमुक्तं भवति ? -मन्यु-क्रोधस्तत्प्रहरणाः-तदायुधा एव ऋषयः, ततस्तेषां ह्रियमाणमिह-परलोकयोः सुतरामहितं भवति ॥ एवमप्युक्तो यदि न दद्यात् ततः-

[भा.४६२६] खंते व भूणए वा, भोइग-जामाउगे असइ साहे ।
सिट्ठम्मि जं कुणइ सो, मग्गण दानं च ववहारे ॥

वृ- ''खंते''त्ति पिता तेन गृहीते पुत्रस्य निवेद्यते । भ्रूणकः-पुत्रस्तेन गृहीते पिता प्रज्ञाप्यते । यद्वा या तस्य 'भोजिका' भार्या यो वा जामाता ताभ्यामसौ भाणयितव्यः । ''असइ साहे''त्ति सर्वथाऽपि यदि न ददाति तदा महत्तरादीनां निवेद्यते । तस्य 'शिष्टे' कथिते यदसौ महत्तरादि करोति तत् प्रमाणम् । एवं प्रणष्टस्य संस्तारकस्य मार्गणम् । एवमप्यलभ्यमाने प्रान्तस्य संस्तारकस्वामिनः ''दानं'' ति वेतनं दीयते, व्यवहारो वा करणं प्रविश्य कर्त्तव्य इति सङ्ग्रहगाथासमासार्थः ॥ अथैनामेव विवृणोति-

[भा.४६२७] भूणगगहिए खंतं, भणाइ खंतगहिते य से पुत्तं ।
असति त्ति न देमाणे, कुणति दवावेति व न वा उ ॥

वृ- भ्रूणकेन गृहीतं 'खन्तं' पितरं 'भणति' प्रज्ञापति । खन्तेन तु गृहीते ''से'' तस्य पुत्रं भणति। उपलक्षणमिदम्, तेन भोजिकादिनाऽपि भाणयति । ''असइ''त्ति एतद् ग्रहणपदम् अतो व्याचष्टे-''न देमाणे''त्ति एवमप्यददाने भोजिकादेर्निवेद्यते । ततो यदसौ बन्धनरोधनादि करोति दापयति वा न वा तत् प्रमाणम् ॥

[भा.४६२८] भोइय उत्तरउत्तर, नेयव्वं जाव पच्छिमो राया ।
दानं विसज्जणं वा, दिट्ठमदिट्ठे इमं होइ ॥

वृ- प्रथमं भोगिकस्य निवेद्यते । यद्यसौ न दापयति ततो यस्तत्र देशारक्षकः स ज्ञाप्यते । एवमुत्तरोत्तरं तावद् नेतव्यम् यावदपश्चिमो राजा । ततो ''दानं''ति भोजिकादयश्चौरसकाशाद् गृहीत्वा साधूनां संस्तारकं दद्युः । ''विसज्जणं व''त्ति यद्वा ते भोगिकादयो भणेयुः-गच्छत यूयम्, वयं संस्तारकं संस्तारकस्वामिनः समर्पयिष्याम इति । एष विधिर्दृष्टे संस्तारकस्तेनके मन्तव्यः । अदृष्टे 'इदं' वक्ष्यमाणं भवति ॥ अथैनामेव गाथां व्याचष्टे-

[भा.४६२९] खंताइसिट्ठऽदिंते, महतर किच्चकर भोइए वा वि ।
देसारक्खियऽमच्चे, करणनिवे मा गुरू दंडो ॥

वृ- ''खंत''त्ति पिता तदादीनामनन्तरोक्तनीत्या शिष्टे-कथितेऽप्यददाने 'महत्तरस्य' ग्रामप्रधानपुरुषस्य कथयन्ति । 'कृत्यकरः' ग्रामकृत्ये नियुक्तः 'भोगिकः' ग्रामस्वामी तयोर्वा कथयन्ति । 'देशारक्षकः' महाबलाधिकृतः 'अमात्यः' राजमन्त्री तयोर्वा यथाक्रमं निवेद्यते । तथाऽप्यददाने करणेऽपि निवेदयन्ति । नृपस्य तु न निवेद्यते, 'गुरुः' गरीयान् सर्वस्वहरणादिको दण्डो भवेदिति कृत्वा ॥

[भा.४६३०] एए उ दवावेंती, अहव भणेज्ञा स कस्स दायव्वो ।
अमुगस्स त्ति य भणिए, वच्चह तस्सऽप्पिणिस्सामो ॥

वृ- 'एते' भोगिकादयो यदि दापयन्ति ततो लष्टम् । अथवा ते भणेयुः-स संस्तारकः कस्य दातव्यः ? इति; ततः साधुभिः 'अमस्य' इति भणिते ते ब्रुवते-व्रजत यूयम्, वयमेव तस्यार्पयिष्याम इति ॥

[भा.४६३१] जति सिं कज्जसमत्ती, वयंति इहरा उ घेत्तु संथारं ।
दिट्ठे नाते चेवं, अदिट्ठऽनाए इमा जयणा ॥

वृ- यदि "सिं" तेषां साधूनां तेन संस्तारकेण कार्यसमाप्तिः सञ्जाता मासकल्पश्च पूर्णस्ततो भोगिकादिभिर्विसर्जिता व्रजन्ति, 'इतरथा' संस्तारककार्येऽसमाप्तेऽपूर्णे मासकल्पे तं वाऽन्यं वा संस्तारकं गृहीत्वा परिभुञ्जते । एवं दृष्टे संस्तारके ज्ञाते वा स्तेने विधिरुक्तः । अदृष्टेऽज्ञाते चेयं यतना भवति ॥

[भा.४६३२] विज्ञादीहि गवेसण, अदिट्ठे भोइयस्स व कथेंति ।
जो भद्दओ गवेसति, पंते अनुसट्ठिमाईणि ॥

वृ- विद्यादिभिः संस्तारकस्तेनस्य गवेषणा कर्त्तव्या । अथ न सन्ति विद्यादयस्ततोऽदृष्टेऽज्ञाते स्तेने भोगिकस्य कथयन्ति । ततो यो भद्रको भवति स स्वयमेव गवेषयति, यस्तु प्रान्तः स स्वयं न गवेषयति, ततस्तत्रानुशिष्ट्यादीनि पदानि प्रयोक्तव्यानि एषा । पुरातन गाथा, अत एनां व्याख्यानयति-

[भा.४६३३] आभोगिनीय पसिणेन देवयाए निमित्ततो वा वि ।
एवं नाए जयणा, स च्चिय खंतादि जा राया ॥

वृ- आभोगिनी नाम विद्या सा भण्यते या परिजपिता सती मानसं परिच्छेदमुत्पादयति, सा यद्यस्ति ततस्तया यन संस्तारको गृहीतः स आभोग्यते । एवं 'प्रश्नेन' अङ्गुष्ठ-स्वप्नप्रश्नादिना, देवतया वा क्षपकपृष्टया, निमित्तेन वा अविसंवादिना तं स्तेनं जानन्ति । एवं ज्ञाते सति सैव यतना कर्त्तव्या या खन्तादिगृहीते संस्तारके भणिता यावदपश्चिमो राजा ॥ एतेषामभावे विधिमाह-

[भा.४६३४] विज्ञादऽसई भोयादिकहण केन गहिओ न जाणऽम्हे ।
दीहो दु रायहत्थो, भद्दो आमं ति मग्गति य ॥

वृ- विद्यादीनामभावे न ज्ञायते केनापि गृहीत इति ततो भोगिकादीनां कथयन्ति-संस्तारकोऽस्माकं नष्टो वर्त्तते, यूयं तं गवेषयत । भोगिकः प्राह-केन गृहीतः ? । साधवो ब्रुवते-न जानीमो वयम् । भोगिकः प्राह-अज्ञायमानं कथं गवेषयामि ? । साधुभिर्वक्तव्यम्-दीर्घो हि राजहस्तो भवति, तेन हि गवेष्यमाणः सुखेनैव स्तेनः प्राप्येत । ततो यो भद्रको भवत सः 'आमं' सत्यमिदम् इति भणित्वा मार्गयति ॥ प्रान्तः पुनरिदमाह-

[भा.४६३५] जाणह जेन हडो सो, कत्थ विमग्गामि णं अजाणंतो ।
इति पंते अनुसट्ठी-धम्म-निमित्ताइ तह चेव ॥

वृ- यः प्रान्तः स ब्रूयात्-'जानीत यूयं येनासौ संस्तारको हृतः, अजानानस्तु कुत्राहं मार्गयामि अदेशकवद् अन्धवद्वा ?' इति प्रान्ते ब्रुवाणेऽनुशिष्टि-धर्मकथा-निमित्तादि तथैव प्रयोक्तव्यम् ।

[भा.४६३६] असतीय भेसणं वा, भीया वा भोइयस्स व भएणं ।
साहित्य दारमूले, पडिनीय इमेसु वि छुभेज्जा ॥

वृ-अथ नास्ति तत्र भोगिकोऽस्ति वा परं न दापयति तदा साधवो भेषणं कुर्वन्ति । ततो भीता वा भोगिकस्य वा भयेन द्वारमूले 'संहरन्ति' संस्तारकं स्थापयन्तीत्यर्थः । यस्तु प्रत्यनीकः सः 'एतेष्वपि' पृथिव्यादिषु कायेषु प्रक्षिपेत्, 'यद्यस्माकं न जातस्तत एतेषामपि मा भूत्' इति कृत्वा। एष पुरातनगाथासमासार्थः ॥ अथैनामेव व्याख्याति-

[भा.४६३७] भोइयमादीनऽसती, अदवावेंते व विंति जनपुरओ ।
मुञ्झीहामो सकज्जे, किह लोगमयाइं जाणंता ॥

वृ- भोगिकादीनामभावे तेषु वा संस्तारकमदापयत्सु साधवो बहुजनस्य पुरतो ब्रुवते-वयं लोकमतानि जानन्तः स्वकार्ये कथं मुह्यामहे ? . ये हि लोकस्य नष्टं विनष्टं विस्मृतं वा जानीमस्ते कथमात्मीयं न ज्ञास्यामः ? इति भावः, अतो यद्यस्माकं संस्तारकं नार्पयथ ततो वयं जनपुरतस्तं हस्ते गृहीत्वा दापयिष्यामः ॥ अथ यूयं न प्रतीथ ततः पश्यथ-

[भा.४६३८] पेहुणतंदुल पच्चय, भीया साइंति भोइगस्सेते ।
साहत्थि साहरंति व, दोण्ह वि मा होउ पडिणीए ॥

वृ- तन्दुला द्विविधाः क्रियन्ते-एके पेहुणमिश्रिता अपरे केवला एव । पेहुणं नाम-मयूराङ्गिरः। तत एकः साधुः साधूनां मध्यादपसरति गृहस्थांश्च भणति-युष्माकं मध्यादेकः किमप्युपकरणं गृह्णातु । ततो गृहीते सति स साधुरागत्य भणति-पङ्क्त्या सर्वेऽपि तिष्ठत । स्थितेषु च स नैमित्तिकसाधुरुदकं तेषामञ्जलौ ददाति, ततो नैमित्तिकसाधुस्तानि पेहुणानि दृष्ट्वा भणति- अनेन गृहीतमिति । एवं प्रत्यये उत्पन्ने भीताश्चिन्तयन्ति-नूनमेते एवं ज्ञात्वा भोगिकस्य कथयिष्यन्ति, राजानं वा प्रत्याययिष्यन्ति । एवं विचिन्त्य-नूनमेते एवं ज्ञात्वा भोगिकस्य कथयिष्यन्ति, राजानं वा प्रत्याययिष्यन्ति । एवं विचिन्त्य स्वहस्तेन प्रतिश्रयद्वारमूले संस्तारकं स्थापयन्ति । प्रत्यनीका वा 'द्वयोरपि वर्गयोः' अस्माकममीषां च मा भूदिति बुध्या एतेषु गत्वा संहरन्ति ॥

[भा.४६३९] पुढवी आउक्काए, अगड वणस्सइ-तसेसु साहरइ ।
घित्तूण य दायव्वो, अदिट्ठ दड्ढे य दोच्चं पि ॥

वृ-कश्चित् प्रत्यनीकः साधुसामाचारीकोविदः 'सचित्तपृथिव्यप्काय-त्रसेषु प्रक्षिप्तं न ग्रहीष्यन्ति' इति बुध्या तेषु 'अगडे वा' गर्त्तायां प्रक्षिपति । यद्यप्येतेषु प्रक्षिप्तस्तथापि ततो गृहीत्वा संस्तारकस्वामिनो दातव्यः । अथ प्रयत्नेन गवेषितोऽपि न कुत्रापि दृष्टः, यद्वा स प्रत्यनीकतया तेन दग्धः ततः "दोच्चं पि"त्ति द्वितीयमपि वारमवग्रहमनुज्ञापयेत् ॥

परः प्राह-यथाऽहं भणामि तथा द्वितीयावग्रहोऽनुज्ञापनीयः ।.कथम् ? इति चेद् उच्यते-स संस्तारकस्वामी न ज्ञाप्यते, यथा-नष्टः संस्तारकः, किन्तु गत्वा भणितव्यम्- देहि तं संस्तारकं निर्देजमिदानीम्, एष द्वितीयावग्रह उच्यते । गुरुराह-

[भा.४६४०] दिट्ठंत पडिहणेत्ता, जयणाए भद्दतो विसज्जेती ।
मग्गंते जयणाए, उवहिग्गहणे ततो विवाओ ॥

वृ- दृष्टान्तो नाम-नोदकेन स्वमत्या योऽभिप्रायो दृष्टः तं 'प्रतिहन्य(त्य)' निराकृत्य

संस्तारकस्वामिनो यतनया। सद्भावः कथनीयः, कथिते च भद्रको [illegible]-गच्छत नाहं किञ्चिदपि भणामि । यः प्रान्तः स संस्तारकं मार्गयति तत्रानुशिष्टि कर्त्तव्या । अथ नेच्छति तदा यतनया प्रान्तोपधिर्दातव्यः । अथ बलादेव सारोपधेर्ग्रहणं करोति ततो राजकुले विवादः कार्यः ।

अमुमेवार्थं व्याख्याति-

[भा.४६४१] परवयणाऽऽउट्टेउं, संथारं देहि तं तु गुरु एवं ।
आनेह भणति पंतो, तो नं दाहं न दाहं वा ॥

वृ- परः-प्रेरकस्तस्य वचनमत्र भवति-"आउट्टेउं"ति धर्मकथया संस्तारकस्वामी आवर्त्य याच्यते-तं संस्तारकं निर्देजं प्रयच्छ । गुरुराह-एवं मायया याच्यमानस्य चतुर्गुरुकम्, भद्रक-प्रान्तकृताश्च दोषा भवन्ति । प्रान्तो भणति-आनयत तं संस्तारकं ततो दास्यामि वा न वा ॥ किञ्च-

[भा.४६४२] दिज्रंतो वि न गहिओ, किं सुहसेज्जो इयाणि सो जाओ ।
हिय नट्ठो वा नूनं, अयक्कजायाइ सूएमो ॥

वृ- दीयमानोऽपि तदा निर्देजो न गृहीतः, किमसौ संस्तारकः इदानीं सुखशय्यः सञ्जातः ? । अन्यया 'अयक्कयाच्जया' अकालप्रार्थनया 'सूययामः' सूचां कुर्म स नूनं हृतो वा नष्टो वा ॥

[भा.४६४३] भद्दो पुन अग्गहणं, जाणंतो वा वि विप्परिणमेज्ना ।
किं फुडमेव न सीसइ, इमे हु अन्ने वि संथारा ॥

वृ- यः पुनर्भद्रकः स साधुषु 'अग्रहणम्' अनादरं कुर्यात्, यो वा जानाति 'संस्तारको हृतो नष्टो वा' इति स सम्यग्दर्शन-प्रव्रज्याद्यभिमुखो विपरिणमेत्-अहो ! मायाविनोऽमी । विपरिणतश्च ब्रूयात्-किं स्फुटमेवास्माकं 'न शिष्यते' न कथ्यते यथा संस्तारको नष्टः ?, किमेवं मायया याच्यते ?, इमे 'हुः' इति प्रत्यक्षमुपलभ्यमाना अन्येऽपि संस्तारकाः सन्ति ॥

[भा.४६४४] इइ चोयगदिट्ठंतं, पडिहंतुं सिस्सते से सब्भावो ।
भद्दो सो मम नट्ठो, मग्गामि न तो पुनो दाहं ॥

वृ- 'इति' उपप्रदर्शने । एवं भद्रक-प्रान्तदोषोपदर्शनेन 'नोदकदृष्टान्तं' पराभिप्रायं प्रतिहत्य तत्त्वमुच्यते-'तस्य' संस्तारकस्वामिनः सद्भावः 'शिष्यते' निवेद्यते । निवेदिते च भद्रको भणति-स संस्तारतो मम नष्टो न युष्माकम्, अद्य प्रभृति नाहं मार्गयामि, लब्धं तु तं पुनरपि युष्मभ्यं दास्यामि ॥

[भा.४६४५] तुब्भे वि ताव मग्गह, अहं पि झोसेमि मग्गह व अन्नं ।
नट्ठे वि तुब्भऽणट्ठा, वदंति पंतेऽनुसट्ठादी ॥

वृ- यूयमपि तावत् तं संस्तारकं मार्गयत, अहमपि तं "झोसेमि" त्ति गवेषयामि, अथ युष्माकं त्वरितं संस्तारकेण प्रयोजनं तदा यावदसौ लभ्यते तावदन्यं मार्गयत । यस्तु प्रान्तः स सद्भावे कथिते भणति-नष्टेऽपि संस्तारके यूयं मम न नष्टाः, यतो जानीथ ततः संस्तारकमानयत मूल्यं वा प्रयच्छत । एवं प्रान्ते 'वदति' ब्रुवाणेऽनुशिष्टि-धर्मकथा-विद्या-मन्त्रादि तथैव प्रयोक्तव्यम् ॥ तथाऽप्यतिष्ठति विद्यादीनामभावे वा मूल्यं मार्गयत इयं यतना-

[भा.४६४६] मोल्लं नत्थऽहिरन्ना, उवधिं मे देह पंतदायणया ।
अन्नं व देति फलगं, जयणाए मग्गिउं तस्स ॥

वृ-अहिरण्या वयम्, नास्ति मूल्यम्। स ब्रूयात्-उपधिं प्रयच्छत। ततो येन साधुना स संस्तारक आनीतः तस्य सत्कमन्तप्रान्तमुपकरणं दर्शनीयम्। अन्यं वा फलकं यतनया मार्गयित्वा ददति। तच्च प्रथमतः शुद्धम्, तदभावे पञ्चकपरिहाण्या, राजकुले वा गत्वा व्यवहारः क्रियते- दत्त्वा दानमनीश्वर० ।। इति। एतेन "मग्ग दानं च ववहारे" त्ति पदं व्याख्यातम् ।।

[भा.४६४७] सव्वे वि तत्थ रुंभति, भद्दो मुल्लेण जाव अवरण्हे।
एगं ठवेउ गमनं, सो वि य जावऽट्ठमं काउं ।।

वृ-कोऽपि राजवल्लभादिः सर्वानपि साधूंस्तत्र निरुणद्धि ततो यदि कश्चिद् यथाभद्रको मूल्येन मोचयति स न प्रतिषेद्धव्यः। अथ प्रतिषेधं कुर्वन्ति तदा चतुर्गुरु। अथ नास्ति मोचयिता ततोऽपराह्णं यावत् सर्वेऽपि सबाल-वृद्धास्तिष्ठन्ति। यदि न मुञ्चति तत एकं क्षपकादिकं स्थापयित्वा शेषाः सर्वेऽपि गच्छन्ति। सोऽपीदृशः स्थाप्यते योऽष्टमं कर्तुं समर्थो भवति। असमर्थस्थापने चतुर्गुरु। ततोऽसावष्टमं कृत्वा पलायते ।।

[भा.४६४८] लद्धे तीरियकज्जा, तस्सेवऽप्पेंति जइव भुंजंति।
पभुलद्धे यऽसमत्ते, दोच्चोग्गह तस्स मूलाओ ।।

वृ- लब्धे संस्तारके यदि 'तीरितकार्याः' समाप्तप्रयोजनास्ततः 'तस्यैव' संस्तारकस्वामिनो अर्पयन्ति। अथ कार्यमसमाप्तं ततो भुञ्जते। अथ प्रभुणा-संस्तारकस्वामिना लब्धः साधूनां च कार्यमद्याप्यसमाप्तं ततस्तस्य मूलाद् यद् द्वितीयं वारमवग्रहोऽनुज्ञाप्यते एष सूत्रोक्तो द्वितीयावग्रहः।। अथ द्वितीयपदमाह-

[भा.४६४९] बितियं पभुनिव्विसए, नट्ठुट्ठिय सुन्न मयमणप्पज्झे।
असहू य रायदुट्ठे, बोहिकभय सत्थ सीसे वा ।।

वृ- द्वितीयपदमत्र भवति - संस्तारकेण कार्यं समाप्तम्, योऽपि संस्तारकस्य प्रभुः स राज्ञा निर्विषय आज्ञप्तः, देशभङ्गे वा नष्टः, दुर्भिक्षे वा 'उत्थितः' उद्वसितः, "सुन्ने" त्ति सपुत्र-दारः कुत्राप्यामन्त्रितः सन् गतो गृहं शून्यं सञ्जातम्, 'मृतो वा' कालगतः; एतानि गृहस्थकारणानि। अमूनि तु संयतकारणानि-स साधुरसहिष्णुर्न शक्नोति गवेषयितुम्, राजद्विष्टे बोधिकभये वा अध्वशीर्षके वा सार्थवशगः। एतैः कारणैर्विप्रणष्टं संस्तारकं न गवेषयेत्, न च प्रायश्चित्तमाप्नुयात्।

*मू. (१०४) जद्दिवसं समणा निग्गंथा सिज्ञा-संथारयं विप्पजहंति तद्दिवसं अवरे समणा निग्गंथा हव्वमागच्छिज्ञा स च्चेव उग्गहस्स पुव्वाणुन्नवणा चिट्ठइ अहालंदमवि उग्गहे ।।*

वृ-अस्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.४६५०] उग्गह एव उ पगतो, सागारियउग्गहाउ साहम्मी।
रहितं च होइ खित्तं, केवतिकालेस संबंधो ।।

वृ-पूर्वसूत्रे तावदवग्रह एव 'प्रकृतः' प्रस्तुतो वर्त्ते, "दोच्चं पि उग्गहं अनुन्नविता" इति वचनात्, इदमपि प्रकृतसूत्रमवग्रहविषयम्। यद्वा पूर्वसूत्रद्वये सागारिकावग्रह उक्तः, इह तु सागारिकावग्रहादनन्तरं साधर्मिकावग्रहः प्रतिपाद्यते। अथवा पूर्वसूत्रेषु संस्तारकं प्रत्यर्प्य विहारः कर्त्तव्य इत्युक्तम्, अत्र तु विहारे कृते तैः साधुभिर्विरहितमपि तत् क्षेत्रं कियन्तं कालमवग्रहयुक्तं भवति ? इति निरूप्यते। एष सम्बन्धः ।।

अनेनायातस्यास्य व्याख्या-''जद्दिवसं'ति प्राकृतत्वात् सप्तम्यर्थे द्वितीया, ततो यस्मिन् दिवसे श्रमणा निर्ग्रन्थाः शय्या च-वसति संस्तारकश्च-तृण-फलकात्मकः शय्या-संस्तारकम् । अत्र शय्याग्रहणेन ऋतुबद्धकालः सूचितः, संस्तारकग्रहणेन तु वर्षाकालः, अथवा कारणजाते ऋतुबद्धेऽपि संस्तारको गृह्यते इति कृत्वा संस्तारकग्रहणेन द्वावपि गृहीतौ; ततो मासकल्पे वर्षावासे वा पूर्णे शय्यां संस्तारकं वा यस्मिन् दिवसे पूर्वस्थिताः साधवः 'विप्रजहति' परित्यजन्ति तद्दिवस एवापरे श्रमणा निर्ग्रन्थास्तत्र क्षेत्रे ''हव्वं'' शीघ्रमागच्छेयुः ततः तेषामवग्रहस्य पूर्वानुज्ञापना तिष्ठति। किमुक्तं भवति ? -य एव ततः क्षेत्राद् निर्गतास्तेषामेवावग्रहे तत् क्षेत्रम्, ये तु तद्दिवसमन्ये आगतास्ते क्षेत्रोपसम्पन्ना इति कृत्वा यत् त्र सचित्तादिकं तत् पूर्वस्थितानामाभाव्यम् । कियन्तं कालं यावद्? इत्याह-''अहालंदमवि उग्गहे'' इह यस्यां वेलायां ते साधवो निर्गतास्तावतीं वेलां यावद् द्वितीयेऽप्यह्नि तेषामेवावग्रहो भवतीति वक्ष्यते, ततः यथालन्दम् इहाष्टपौरुषीप्रमाणं मध्यमं गृह्यते, एतावन्तमपि कालं तदीय एवावग्रहे तत क्षेत्रम्, अतो यद्यागन्तुकास्तत्र सचित्तादिग्रहणं कुर्वन्ति तदा साधर्मिकस्तैन्यप्रत्ययं प्रायश्चित्तमापद्यन्ते । अत्र तु सचित्तेनाधिकार इति सूत्रार्थः ॥ अथ निर्युक्तिविस्तरः, तत्र सचित्तावग्रहः शैक्षविषय इति कृत्वा प्रथमतस्तदुत्पत्तिं दर्शयति-

[भा.४६५१] सुत्त-ऽत्थ-तदुभयविसारए य खमए य धम्मकहि वाई ।
कालदुअम्मि वसंते, उवसंतो स-अन्नगामजनो ॥

वृ- 'कालद्वये' ऋतुबद्ध-वर्षावासलक्षणे कचित् क्षेत्रे वसतां स्वग्रामजनः-सक्रोशयोजनाभ्यन्तरवर्ती अन्यग्रामजनश्च 'उपशान्तः' प्रतिबुद्धः । कथम् ? इत्याह-सूत्रार्थतदुभयविशारद आचार्य सातिशयं प्रवचनव्याख्यानं करोति, क्षपको मासक्षपणादि तपस्तप्यते, धर्मकथी क्षीराश्रवादिलब्धिसम्पन्नतया वैराग्यजननीं धर्मकथां विदधाति, वादी परवादिनं निरुत्तरीकरोति। एवमादिभिः प्रभावकैः स्वग्रामीणोऽन्यग्रामीणश्च भूयान् जनः प्रव्रज्यायां परिणतः कृतः ॥

[भा.४६५२] नीरोगेण सिवेण य, वासावासासु निग्गया साहू ।
अन्ने वि य विहरंता, तं चेव य आगया खित्तं ॥

वृ- 'नीरोगेण' ग्लान्याभावेन 'शिवेन च' राजदौस्थ्याद्युपप्लवाभावेन वर्षावासं कृत्वा ते साधवो निर्गताः । इह 'वर्षावासे भूयान् काल एकत्र स्थीयते, ततः प्रभूतलोकस्योपशमो भवति' इत्यभिप्रायेण वर्षावासग्रहणं कृतम्, अन्यथा ऋतुबद्धेऽपि मासकल्पानन्तरमेव विहारः सम्भवति । एवं ते ततः क्षेत्राद् निर्गता अन्ये च साधवो विहरन्तस्तदेव क्षेत्रमागताः ॥ तत्रावग्रहचिन्तां चिकीर्षुराह-

[भा.४६५३] खित्तोग्गहप्पमाणं, तद्दिवसं केति केतऽहोरत्तं ।
जं वेल निग्गयाणं, तं वेलं अन्नदिवसम्मि ॥

वृ- इह केचिदाचार्याः क्षेत्रावग्रहस्य कालप्रमाणं ब्रुवते-यस्मिन् दिवसे ते निर्गतास्तमेवैकं दिवसमवग्रहः, तत ऊर्ध्वं रात्राववग्रहो व्यवच्छिद्यते । केचित्तु भणन्ति-अहोरात्रमवग्रहः, द्वितीयेऽह्नि सूर्योदयेऽवग्रहो व्यवच्छिद्यत इति भावः । सूरिराह-द्वावप्येतावनादेशौ, अयं पुनरादेशः-यस्यां वेलायां निर्गतास्तामेव वेलां यावदन्यस्मिन् दिवसेऽवग्रहो भवति, ततः परं व्यवच्छिद्यते । इत्थं कालतः प्रमाणमुक्तम् । क्षेत्रतस्तु सर्वतः सक्रोशं योजनमवग्रहः, तत ऊर्ध्वमनवग्रह इति ॥

[भा.४६५४] खेत्तम्मि य वसहीय य, उग्गहो तहिं सहमग्गणा होइ ।

ते वि य पुरिसा दुविहा, रूवं जाणं अजाणं च ॥

वृ- इहावग्रहः क्षेत्रे वा भवेद् वसतौ वा । यद् इन्द्रकीलादिवर्जितं ग्राम-नगरादि तदिह क्षेत्रं मन्तव्यम्, तत्रावग्रहं प्रतीत्य शैक्षमार्गणा कर्त्तव्या, कस्या ऽऽभवति ? कस्य वा न ? इति विचारयितव्यमित्यर्थः । यत् पुनरिन्द्रकीलादियुक्तं तदवग्रहयोग्यं क्षेत्रं न भवतीत्यक्षेत्रमभिधीयते, तत्र वसतिविषया शैक्षमार्गणा भवति, सा चोपरिष्टात् करिष्यते । क्षेत्रविषयं तावत् करोति- "ते वि य" इत्यादि, ये पुरुषास्तत्र क्षेत्रे प्रव्रज्यां ग्रहीतुमायातास्ते द्विविधाः-एके रूपं जानन्तो-ऽपरेऽजानन्तः ॥ इदमेव व्यक्तीकरोति-

[भा.४६५५] जाणंतमजाणंता, चउव्विहा तत्थ होंति जाणंता ।
उभयं रूवं सद्दं, चउत्थओ होइ जसकित्ति ॥

वृ- जानन्तोऽजानन्तश्चेति शैक्षा द्विविधाः । तत्र जानन्तस्तावत् चतुर्विधाः, तद्यथा-एकः शैक्षो विवक्षितक्षेत्रस्थितस्याचार्यादेः 'उभयं' रूपं शब्दं च जानाति, धर्मकथाश्रवणार्थं समागतो रूपेण स्वरेण च तमुपलक्षयतीत्यर्थः । द्वितीयो रूपं जानाति न शब्दम्, तृतीयः शब्दं न रूपम्, चतुर्थकः पुनर्यशःकीर्तिं जानाति । यशः-सर्वदिग्गामिनी प्रसिद्धिः, सैवैकदिग्गामिनी कीर्तिः, यशउपलक्षिता कीर्तिः यशःकीर्तिरिति समासः । यस्तु रूप-शब्द-यशःकीर्त्तीनामेकमपि न जानाति सोऽजानान उच्यते ॥ अथ द्वितीयभङ्गमादौ कृत्वा यथाक्रममसूनेव भङ्गान् व्याचष्टे-

[भा.४६५६] उच्चार-चेइगातिसु, पासति रूवं विनिग्गयस्सेगो ।
रतिं उवित णिंतो, कासगमादी सुणति सद्दं ॥

वृ-उच्चारभूमि-चैत्यवन्दनादिषु कार्येषु विनिर्गतस्याचार्यादे रूपम् 'एकः' द्वितीयः शैक्षः पश्यति न पुनः स्वरेण जानीते, उपाश्रये तस्यानागमनात् । तृतीयस्तु शैक्षः 'कर्षकादि' कर्षकः-कृषीवलस्तत्प्रभृतिकः सकलमपि दिवसं क्षेत्रादौ स्थित्वा 'रात्रौ' प्रदोषे गृहमुपागच्छन् प्रभाते च भूयोऽपि निर्गच्छन् धर्मकथायाः परिवर्त्तनाया वा शब्दं शृणोति न तु रूपमवलोकते ॥

[भा.४६५७] चउथो पुन जसकिर्त्ति, सुणेइ सग्गाम-वसभवासी वा ।
उभयं रूवं सद्दं, कित्तिं व न जाणते चरिमो ॥

वृ- चतुर्थस्तु शैक्षः स्वग्रामवासी प्रतिवृषभग्रामवासी वा दूरस्थः सन् न रूपं पश्यति न च धर्मकथादिशब्दं शृणोति, किन्तु लोकमुखेन तेषामाचार्यादीनां यशःकीर्तिं शृणोति । यस्तु 'चरमः' अजानानः शैक्षः स रूप-शब्दात्मकमुभयं कीर्त्तिं च न जानाति, परं गृहवासनिर्विण्णतया प्रव्रज्यां ग्रहीतुमायातः । एवं वास्तव्यशैक्षः पञ्चविध उक्तः ॥

[भा.४६५८] वायाहडो वि एवं, पंचविहो होइ आनुपुव्वीए ।
एएसिं सेहाणं, पत्तेयं मग्गणा इणमो ॥

वृ- 'वाताहृतो नाम' आगन्तुकशैक्षः सोऽपि 'एवमेव' वास्तव्यशैक्षवत् पञ्चविधः 'आनुपूर्व्या' यथोक्तपरिपाट्या वक्तव्यः । अथैतेषां दशानामपि शैक्षाणां 'प्रत्येकं' पृथक् पृथग् 'इयम्' एतेषु द्वारेषु 'मार्गणा' विचारणा भवति ॥ तान्येव द्वाराण्यभिधित्सुः श्लोकचतुष्टयमाह-

[भा.४६५९] अव्वाघाए पुनो दाइं, जावज्जीव पराजिए ।
पढम-विइयदिवसेसुं, कहं कप्पो उ जाणते ॥

वृ- न विद्यते व्याघातः-प्रव्रज्याविघ्नो यस्य सोऽव्याघातः शैक्षः, पूर्वसाधुषु क्षेत्रान्निर्गतेष्वपि प्रव्रज्यां गृह्णाति न पुन कालक्षेपं करोतीति भावः । "पुनो दाइं" ति 'पुनः' 'भूयोऽपि यदा किल ते साधवः समायास्यन्ति तदा प्रव्रजिष्यामि' इति कश्चित् शैक्षो ब्रूयात् । "जावज्जीव पराजिए" त्ति 'यदा यदाऽहं प्रव्रजितुमभिलषामि तदा तदा नवैर्नवैर्विघ्नैरुत्तिष्ठमानैर्यावज्जीमहं पराजितः, अत एव मे साम्प्रतमपि व्याघात उत्थितो येवं साधवो विहारं कृतवन्तः' इति कश्चिद् ब्रूयात् । एषां शैक्षाणामेकतरे प्रथम-द्वितीयदिवसयोः प्रव्रजितुमुपस्थिते 'ज्ञायके' रूपशब्दादिज्ञे 'कथं' केन प्रकारेण 'कल्पः' पूर्वसाधुसमीपप्रेषणादिको विधिर्विधीयते ? ॥

[भा.४६६०] जाणाविए कहं कप्पो, वत्थव्वे वाताहडे ति य ।
उज्जू अनुज्जुए या वि, कहं कप्पोऽभिधारणे ॥

वृ- तथा वास्तव्ये वा वाताहृते वा 'त्वमस्माकं नामवसि' इति ज्ञापिते कथं कल्पो भवेत् ? । ऋजुर्नाम-य आचार्यादिरेतान् शैक्षान् पूर्वसाधुसमीपे प्रहिणोति, तद्विपरीतोऽनृजुः, एतयोश्चिन्ता कर्त्तव्या । अभिधारणम्-एकमनेकान् वा साधून् मनस्याधाय शैक्षस्य गमनम्, तत्र कथमाभाव्या-ऽनाभाव्यतायाः कल्पः क्रियते ? ॥

[भा.४६६१] एगग्गामे अतिच्छंते, कहं कप्पो विहिज्जते ।
दुविहा मग्गणा सीसे, एगविहा य पडिच्छए ॥

वृ- "एगग्गामे" त्ति यत्र ग्रामे क्षेत्रिकाः स्थितास्तत्रैव केनापि धर्मकथिना कोऽपि मिथ्यादृष्टिरुपशमितः स कस्याऽऽभवति ? । "अइच्छंते" त्ति कमप्याचार्यमभिधार्यातिक्रामति विवक्षितक्षेत्रमतीत्याग्रतो गच्छति शैक्षे कथं कल्पो विधीयते ? । तथा 'शिष्ये' शिष्यविषया 'द्विविधा' सञ्ज्ञातका-ऽसञ्ज्ञातकशैक्षभेदाद् द्विप्रकारा मार्गणा भवति । प्रतीच्छके च 'एकविधा' केवलसंज्ञातकविषया मार्गणा ॥

[भा.४६६२] पडिसेहियवच्चंते, कहं कप्पो विहिज्जइ ।
संगारादिन्नते या वि, कहं कप्पो विहिज्जइ ॥

वृ- "पडिसेहियवच्चंते" त्ति भगवता प्रतिषिद्धम्-ग्लानप्रतिचरणाव्यापृतैः शैक्षो न प्रव्राजनीयः, ये तु तं प्रव्राज्यान्यत्र प्रेषयन्ति तैः प्रेषिते तस्मिन् गच्छान्तरं व्रजति कथं कल्पो विधीयते ? । सङ्गारः-सङ्केतः स दत्तो यस्य शैक्षस्य स सङ्गारदत्तः, आहिताग्न्यादेराकृतिगणत्वात् क्तान्तस्य परनिपातः, तस्मिन्नपि कथं कल्पो विधीयते ? इति । एतत् सर्वं निरूपणीयमिति द्वारश्लोक-चतुष्टयसमासार्थः ॥ अथ विस्तरार्थं विभणिषुः प्रथमतो ये पूर्वमभयज्ञादयः पुरुषा उक्तास्त-द्विषयकवक्ष्यमाणप्रेषणभेदसङ्ग्रहायाह-

[भा.४६६३] चत्तारि नवग जाणंतगम्मि जाणाविए वि चत्तारि ।
अभिधारणम्मि एए, खित्तम्मि विपरिणया वा वि ॥

वृ- यः पूर्वमुभयज्ञ-रूपज्ञादिभेदात् चतुर्धा ज्ञायक उक्तः तत्र प्रत्येकं चत्वारः 'नवकाः' प्रेषणविषया नवप्रकाररूपा भवन्ति । तथा योऽजानानः सन् साधुभिः 'त्वमस्माकं नामवसि किन्तु पूर्वसाधूनाम्' इत्येवं ज्ञापितस्तत्रापि चत्वारो नवकाः । अभिधारणं नाम-मनसिकरणम्, ततः क्षेत्रिकं मनसिकृत्य यदि 'एते' अव्याघातदय आगतास्तदा विपरिणता अपि क्षेत्रस्वामिन

एवाभाव्या इति सङ्ग्रहगाथासमासार्थः ॥ अथैनामेव विवरीषुर्व्याघातद्वारमङ्गीकृत्य तावदाह-

[भा.४६६४]　पियमप्पियं से भावं, दट्टुं पुच्छित्तु तस्स साहंति ।
कत्थ गता ते भगवं, पुट्ठा व भणंति किं तेहिं ॥

वृ- क्षेत्रिकेषु निर्गतेषु योऽसावुभयज्ञः शैक्षः सः 'प्रव्रजामि' इत्यभिप्रायेणागतो यावदागन्तुकान् साधून् पश्यति ततस्ते साधवस्तस्य प्रियमप्रियं वा भावं प्रहसितमुखतया दीनमुखतया वा दृष्ट्वा पृच्छन्ति-किमेवं प्रहृष्टवदनश्चिन्तापरो वा दृश्यसे ? । एवं पृष्ट्वा तेन स्वस्वरूपे कथिते सति "साहंति" सद्भावं कथयन्ति, यथा-गतास्तेऽन्यत्र विहारेणेति । यद्वा स स्वयमेव पृच्छेत्- कुत्र गतास्ते भगवन्तः ? । एवं पृष्टाः सन्तो भणन्ति-किं तैर्भवतः प्रयोजनम् ? ॥ स प्राह-

[भा.४६६५]　पव्वइहं ति य भणिते, अमुगत्थ गया वयं ति दिक्खेउं ।
तेसि समीवं नेमो, न य वाहणते तयं सो य ॥

वृ- 'प्रव्रजिष्याम्यहम्' इति तेन भणिते साधवो वदन्ति-ते क्षेत्रिका अमुकत्र ग्रामादौ गताः, वयं भवन्तं 'दीक्षयित्वा' प्रव्राज्य तेषां समीपे नयामः, स च 'तकम्' अनन्तरोक्तं वचनं 'न च' नैव व्याहन्ति, न विकुट्टयति-तथेति प्रतिपद्यते इत्यर्थ, एषोऽव्याघात उच्यते ॥

[भा.४६६६]　संघाडग एगोणं, पंथुवएसे व मुंडिए तिन्नि ।
इइ तरुण मज्झ थेरे, एक्केक्के तिन्नि नव एते ॥

वृ- ततः साधवस्तं प्रव्राज्य सङ्घाटकेन सह क्षेत्रिकाणामन्तिके प्रेषयन्ति १, अथ सङ्घाटको न पूर्यते तत एकं साधुं सहायं दत्त्वा मुत्कलयन्ति २, तस्याप्यभावे एकाकिनमपि विसर्जयन्ति परं पन्थानमुपदिशेयुः ३, एते तरुणस्य त्रयः प्रकाराः, मध्यम-स्थविरयोरप्येवमेव प्रत्येकं त्रयः, एते नव भवन्ति ९ । एष प्रथमो नवकः ॥

[भा.४६६७]　पढमदिने सग्गामे, एगो नवगो बितिज्जए बितिओ ।
एमेव परग्गामे, पढमे बितिए य बे नवगा ॥

वृ- एषः 'एकः' प्रथमो नवकः प्रथमदिने स्वग्रामे प्रव्राज्य प्रेषयतां मन्तव्यः द्वितीये दिवसे एवमेव द्वितीयो नवकः, एवं स्वग्रामे द्वौ नवकावुक्तौ । परग्रामेऽपि 'एवमेव' प्रथम-द्वितीयदिवसयोर्द्वौ नवकौ । एवमेते चत्वारो नवका मुण्डितं प्रेषयतां भवन्ति ॥

[भा.४६६८]　एमेव अमुंडिस्स वि, चउरो नवगा हवंति कायव्वा ।
एमेव य इत्थीण वि, नवगाण चउक्कगा दुन्नि ॥

वृ- एवमेवामुण्डितस्यापि प्रेष्यमाणस्य चत्वारो नवकाः कर्त्तव्या भवन्ति । एवमेते द्वे नवकचतुष्के पुरुषाणामुक्ते । स्त्रीणामप्येवमेव द्वौ नवकानां चतुष्कौ सङ्घाटका-ऽऽत्मद्वितीयादिभि प्रकारैः कर्त्तव्यौ । अथ क्षेत्रिकाणामन्तिके न प्रेषयन्ति किन्तु स्वयमेव स्वीकुर्वन्ति ततश्चत्वारो गुरुकाः ॥ अथ किमर्थममुण्डितं प्रेषयन्ति ? इति उच्यते-

[भा.४६६९]　सागारियसंकाए, निच्छति पिच्छंति वा सयं मा मे ।
ते य अदट्ठुं पुनरवि, पच्चेहमभुंडितो एवं ॥

वृ- सागारिकाः-सज्ञातकास्तेषां शङ्कया-'माममी उत्प्रव्राजयेयुः' इति बुध्वा स्वग्रामे नेच्छति स शैक्षः प्रव्रजितुम् । यद्वा अमी साधवः प्रव्राज्य मा मां ग्रहीष्यन्ति, यदि च तान् साधून् न

द्रक्ष्यामि ततः पुनरप्यत्रैव 'प्रत्येष्यामि' प्रत्यागमनं करिष्ये इति बुध्या नागन्तुकैरात्मानं मुण्डापयति, एवमपुण्डित प्रेषयन्ति ॥

एवं तावदुभयज्ञविषयो विधिरुक्तः, अथ रूपज्ञादिविषयं तमेवातिदिशन्नाह-

[भा.४६७०] एसेव य नवगकमो, सद्दं रूवं व होइ जाणंते।
जो पुन किर्तिं जाणति, न ते वयं सिस्सते तस्स ॥

वृ- एष एव नवकक्रमः शब्दं रूपं च जानति शैक्षे वक्तव्यः, शब्दज्ञे रूपज्ञे चेत्यर्थः । यः पुनः शैक्षः कीर्तिमेव जानाति न रूपं न वा शब्दं तस्य 'शिष्यते' निवेद्यते-ते वयं न भवामो येषां सकाशे भवान् प्रव्रजितुमायात इति ॥ ततो ब्रूयात्-

[भा.४६७१] किं व न कप्पइ तुब्भं, दिक्खेउं तेसि तं न अम्हं ति ।
तत्थ वि सो चेव गमो, नवगाणं जो पुरा भणितो ॥

वृ- किं वा युष्माकं दीक्षयितुं न कल्पते ? । ततः साधुभिर्वक्तव्यम्-तेषामेव त्वमाभवसि नास्माकम् । एवमुक्ते यद्यसौ भणति-यद्येवं तर्हि मां प्रव्राज्य तत्र प्रेषयत अमुण्डितं वा विसर्जयत; ततस्तत्रापि स एव 'गमः' प्रकारो यः सन्नादका-ऽऽत्मद्वितीयादिभिर्भेदैर्निष्पन्नानां नवकानां पुरा भणितः ॥ अथ "पुनो दाइं" ति द्वारमाह-

[भा.४६७२] विप्परिणाया वि जति ते अम्हे तुज्झं भणंतऽलं तेहिं ।
तह वि य न वि ते तेसिं अव्वाहयमादिया होंति ॥

वृ- ये अव्याघातादयो वाताहतान्ता शैक्षा अत्र प्रस्तुतास्ते क्षेत्रिकमभिधार्य प्रथमागता अपि कुताऽपि हेतोस्तं प्रति विपरिणताः सन्तो यद्यागन्तुकान् भणन्ति-वयं युष्माकं सकाशे प्रव्रजिष्यामः 'अलं' पर्याप्तं 'तैः' पूर्व साधुभिरितिः 'तथाऽपि' एवं ब्रुवाणा अपि 'ते' अव्याहतादयः तेषाम् आगन्तुकानां न भवन्ति किन्तु क्षैत्रिकस्यैवेतिः गतम् व्याघात शरम् । अथ "पुणोदाइं" ति द्वारमाह-

[भा.४६७३] एहिंति पुनो दाइं, पुट्ठे सिट्ठंसि ईय भणमाणा ।
बहुदोसे माणुस्से, अनुसासण नवग तह चेव ॥

वृ- आगन्तुकसाधूनां समीपे 'कुत्र गताः ?' इति पृष्टे ततस्तैः 'शिष्टे' 'अमुकत्र गताः' इति कथिते स शैक्षो ब्रूयात्-"एहिंति पुनो दाइं" ति यदा ते पुनरत्रागमिष्यन्ति तदा प्रव्रजिष्यामि "ईय" एवं भणन् स वक्तव्यः-सौम्य ! 'बहुदोषे' बह्वन्तराये मानुष्ये मा प्रमादं कृथाः । एवमनुशासनं कृत्वा 'तथैव' नवकगमेन प्रेषणं कर्त्तव्यम् ॥ अनुशासनमेव विशेषत उपदर्शयति-

[भा.४६७४] जं कल्ले कायव्वं, नरेण अज्जेव तं वरं काउं ।
मच्चू अकलुणहिअओ, न हु दीसइ आवयंतो वि ॥

वृ- 'यद्' दीक्षाग्रहणादि कार्यं 'कल्ये' द्वितीयदिने नरेण कर्त्तव्यं तदद्यैव कर्तुं 'वरं' प्रशस्यम्, यतो मृत्यु 'अकरुणहृदयः' स्वभावादेव कठोराशयः तथा कथमप्यापतति यथा आपतन्नपि न दृश्यते । उक्तं च-

श्वःकार्यमद्य कुर्वीत, पूर्वाह्णे चापराह्णिकम् ।
को हि तद् वेत्ति कस्याद्य, मृत्युसेनाऽऽपतिष्यति ? ॥

[भा.४६७५] तूरह धम्मं काउं, मा हु पमायं खणं पि कुव्वित्था ।

बहुविग्घो हु मुहुत्तो, मा अवरण्हं पडिच्छाहि ॥

वृ- भो भव्याः ! त्वरध्वं धर्मं कर्त्तुम्, मा क्षणमपि प्रमादं कुरुध्वम् । कुतः ? इत्याह-बहवः-शूल-विष-विसूचिका-शस्त्रघाता-ऽग्निदाहादिभेदादनेके विघ्नाः-जीवितान्तराया यत्रासौ बहुविघ्नः, हुशब्दो यस्मादर्थे, अपिशब्दस्य चानुक्तस्यापि गम्यमानत्वाद् यस्माद् मुहूर्त्तोऽपि बहुविघ्नः, आस्तां प्रहर-दिवसादि अतो महाभाग ! मा प्रव्रज्याग्रहणेऽपराह्णमपि प्रतीक्षिष्ठाः । एवमनुशासनं कृत्वा चतुर्भिर्नवकैस्तथैव प्रेषणीयम् ॥ गतं "पणो दाइं" ति द्वारम् । अथ यावज्जीवपराजितद्वारमाह-

[भा.४६७६] बहुसो उवट्ठियस्सा, विग्घा उट्ठिंति जज्जिय जितो मि ।
अनुसासन पत्थवणं, नवगा य भवे समुंडियरे ॥

वृ- क्षेत्रिकाणां गमनवृत्तान्तं ज्ञात्वा कोऽपि शैक्षो ब्रूयात्-'बहुशः' अनेकशः प्रव्रज्या-ग्रहणायोपस्थितोऽहम्, परं वारंवारं विघ्ना नवनवा उत्तिष्ठन्ते, अतो "जज्जियं" यावज्जीवमहं विघ्नैर्जितोऽस्मि, यदेवं ते साधवो विहृतवन्तः, अतः परं तेषु समागतेषु प्रव्रजिष्यामि । एवं ब्रुवाणस्यानुशासनं कर्त्तव्यम्-भद्र ! साम्प्रतं तव चारित्रावारककर्मणानुदयो वर्त्तते, अतो मा प्रमादीः, को जानाति भूयोऽपि तेषामुदयो भवेत् ? ; आवश्यकाभिहितश्च कूर्मचर्मदृष्टान्तस्तत्पुरतः प्ररूपणीयः । एवमनुशिष्य प्रस्थापनं कर्त्तव्यम् । तत्र च तथैव मुण्डितेतरयोः प्रत्येकं चत्वारो नवका भवन्ति । एवं प्रथमद्वितीयदिवसयोरव्याहतानां कल्पो विधीयते ॥ अथ "ज्ञापिते कथं कल्पो वास्तव्ये वाताहृतेऽपि च" इति द्वारमाह-

[भा.४६७७] वाताहडे वि नवगा, तहेव जाणाविए य इयरे य ।
एमेव य वत्थव्वे, नवगाण गमो अजाणंते ॥

वृ- वाताहृतो द्विधा-ज्ञापित इतरश्च । यः क्षेत्रिकाणां यशःकीर्त्तिमपि न जानाति स आगन्तुकसाधुभि 'त्वमस्माकं नाभवसि, ये गतास्तेषामेवाभवसि' इति सद्भावावगमं कारितो ज्ञापित उच्यते, इतरो नाम-यशःकीर्त्तिज्ञः । तत्र ज्ञापिते 'इतरस्मिंश्च' वाताहृते प्रव्रजितुमायाते तथैव चत्वारो नवका भवन्ति । वास्तव्योऽपि शैक्षो यः क्षेत्रिकाणां यशः कीर्त्तिमपि न जानाति तत्रापि नवकानां गम एवमेव मन्तव्यः ॥ अथ वास्तव्यो वाताहृतो वा यशःकीर्त्तिमपि न जानाति स कीदृशो भवेत् ? उच्यते-

[भा.४६७८] वत्थव्वे वायाहड, सेवग परतित्थि वणिय सेहे य ।
सव्वेते उज्जुगो अप्पिणाइ मेलाइ वा जत्थ ॥

वृ- वास्तव्यो वा वाताहृतो वा यो राजकुलसेवको यो वा परतीर्थिको यश्च वणिग् एते असन्निहितत्वेन यश-कीर्त्तिमपि गुरूणां न जानीयुः, परं प्रथमद्वितीयदिवसयोः प्रव्रजितुमा-यातास्तेऽपि क्षेत्रिकाणामाभाव्याः । अथ ऋजु-अनृजुद्वारचिन्ता क्रियते-य आचार्य ऋजुर्भवति स सर्वानप्येतान् क्षेत्रिकाणामर्पयति, यत्र वा क्षेत्रिका भवन्ति तत्र सङ्घाटकादिभि प्रकारैः प्रेषयित्वा तैः सह मीलयति ॥

[भा.४६७९] माइल्ले बारसगं, जाणग जाणाविए य चत्तारि ।
वत्थव्वे वायाहड, न लभति चउरो अनुग्घाया ॥

वृ-यस्तु 'मायावी' अनृजुः स न प्रेषयति, तत्र च प्रकाराणां द्वादशकं भवति, तच्चाग्रे वक्ष्यते।

तथा ज्ञायके ज्ञापिते च समुदिताश्चत्वारः प्रकारा भवन्ति, तद्यथा-ज्ञायकं प्रथमदिवसे न प्रेषयति १, द्वितीये तमेव न प्रेषयति, २, एवं ज्ञापितस्यापि द्वौ प्रकारौ। एतैर्वक्ष्यमाणैश्च प्रकारैर्वास्तव्यं वाताहतं वाऽप्रेषयतश्चत्वारोऽनुद्धाता मासाः, न च तान् शिष्यान् लभते, कुलस्थविरादिभिर्बलात् क्षेत्रिकाणां दाप्यते इत्यर्थः।। अथात्रैव प्रायश्चित्तवृद्धिमाह-

[भा.४६८०] सत्तरत्तं तवो होती, ततो छेदो पहावई।
छेदेन छिन्नपरियाए, तओ मूलं तओ दुगं।।

वृ-प्रागिव द्रष्टव्यम्।। प्रकारद्वादशकमाह-

[भा.४६८१] तरुणे मज्झिम थेरे, तद्दिन बितिए य छक्कगं इक्कं।
एमेव परग्गामे, छक्कं एमेव इत्थीसु।।

वृ-तरुण-मध्यम-स्थविरान् प्रत्येकं तद्दिवसे द्वितीयदिने वाऽप्रेषयत एकं प्रकारषट्कं भवति, एतच्च स्वग्रामविषयम्, परग्रामेऽपि एवमेव प्रकारषट्कम्; सर्वेऽप्येते द्वादश प्रकाराः पुरुषेषु भणिताः। एवमेव च स्त्रीष्वपि प्रकारद्वादशकं भवति।।

[भा.४६८२] पुरिसित्थिगाण एते, दो बारसगा उ मुंडिए होंति।
एमेव य ससिहम्मि य, जाणग जाणाविए भयणा।।

वृ- एते द्वे द्वादशके पुरुष-स्त्रीणां मुण्डितविषये भवतः। एवमेव च सशिखाकेऽपि शैक्षे द्वादशकद्वयम्। तदेवं ज्ञायके ज्ञापिते च प्रत्येकं "भयण"त्ति भङ्गकविकल्पास्तेषां चत्वारि द्वादशकानि भवन्ति।। अथवा-

[भा.४६८३] अव्वाहए पुनो दातिं, जावज्जीवपराजिए।
तद्दिन बीयदिने या, सग्गामियरे य बारसहा।।

वृ-अव्याहतः पुनरागतप्रव्रजितो यावज्जीवपराजितश्चेति त्रयः शैक्षाः। एतान् तद्दिने द्वितीयदिने वाऽप्रेषयतः प्रकारषट्कम्। एतच्च स्वग्रामे 'इतरस्मिंश्च' परग्रामे भवतीति कृत्वा द्वाभ्यां गुणितं द्वादशधा भवति।। अथ ऋजु-अनृजुलक्षणमाह-

[भा.४६८४] जाणंतमजाणंते, नेइ व पेसेइ वा अमाइल्लो।
सो चेव उज्जुओ खलु, अनुज्जुतो जो न अप्पेति।।

वृ-जानतो अजानतो वा शैक्षान् योऽमायावी स क्षेत्रिकाणां समीपे स्वयं नयति वा परहस्तेन वा प्रेषयति स एव ऋजुक उच्यते। अनृजुस्तु सोऽभिधीयते यो नार्पयति न वा प्रेषयति।। अथैते वास्तव्या वाताहता जानन्तोऽजानन्तो वाऽनृजुभिः प्रव्राजिताः कथं पश्चात् परिज्ञायन्ते? उच्यते-स्नाना-ऽनुयानादिषु यत्र मिलितास्तत्र क्षेत्रिकैः कश्चिदनृजुप्रव्रजितो वाताहतः पृष्टः-कथं भवान् प्रव्रजितः?, स भणति-

[भा.४६८५] तुब्भ च्चिय नीसाए, मि आगतो दिक्खितो बला नेहिं।
अम्हे किमपव्वइया, पुट्ठा व न ते परिकहेंसु।।

वृ- युष्माकमेव निश्रया अहमागतः अमीभिश्च बलाद् दीक्षितः, मया भृशममी पृष्टास्तत एभिराख्यातम्-वयं किं प्रव्रजिता न भवामो यदेवं तान् मार्गयसि? यद्वा न ते पृष्टाः सन्तः किमप्याख्यातवन्तः। एवं रूप-शब्द-यशः कीर्त्तिश्च वक्तव्ये। यस्तु कीर्तिमपि न जानाति स ब्रूयात्-

[भा.४६८६] वायाहडो तु पुट्ठो, भणाइ अमुगदिन अमुगकालम्मि।
एतेहि दिक्खितोऽहं, तुम्हे वि सुणामि तत्थाऽऽसी ॥

वृ- तुशब्दस्य विशेषणार्थतया यो वाताहृतो यशःकीर्तेरप्यज्ञायकः स पृष्टो भणति-'अमुकदिने' प्रतिपदादौ अमुष्मिन् काले-मार्गशीर्षादौ मासे दीक्षितोऽहमेतैः, दीक्षानन्तरं च शृणोमि, यथा-यूयमपि तत्रासीरन्निति ॥

[भा.४६८७] एमेव य जसकित्तिं, जाणंतो जो य तं न जाणाति।
तस्स वि तहेव पुच्छा, पावयणी वा जदा जातो ॥

वृ- एवमेव शास्त्रव्योऽपि यो यशःकीर्तिं जानाति यश्च तां न जानाति तस्यापि तथैव स्नानादौ यदा पृच्छा कृता भवति तदा ज्ञायते। यदा वाऽसौ 'प्रावचनिकः' बहुश्रुतो जातः तदा स्वयमेव जानाति-नाहममीषामाभाव्यः ॥

एवं तावत् सचित्तविषयो विधिरुक्तः। अथाचित्तादिविषयं तमेवातिदिशन्नाह-

[भा.४६८८] एमेव य अचित्ते, दुविहे उवधिम्मि मीसते चेव।
पुच्छा अपुव्वमुवहिं, दट्ठूण अनुज्जुभूयाणं ॥

वृ- एवमेवाचित्ते 'द्विविधे' ओघोपग्रहोपधिभेदाद् द्विप्रकारे उपधौ 'मिश्रके च' सोपधिकशैक्षे विधिर्मन्तव्यः। कथं पुनरसावाभाव्योऽनाभाव्यो वा ज्ञायते ? इत्याह-'अपूर्वं' सारतरमुपधिं दृष्ट्वा अनृजुभूतानां तेषामन्तिके पृच्छा भवति, 'क्षेत्रिकैरयं कदा कुत्र वा गृहीतः ?' इत्येवं ते प्रष्टव्या इति भावः ॥

[भा.४६८९] एवं वासावासे, उडुबद्धे पंथे जत्थ वा ठाति।
सव्वत्थ होति उग्गहो, केसिंचि पतीवदिट्ठंतो ॥

वृ- एवं वर्षावासे ऋतुबद्धे वा विधिर्मन्तव्यः। एतच्च सचित्तमङ्गीकृत्योक्तम्। अचित्ते तु वर्षावासे वा ऋतुबद्धे वा मासद्वयं दिवसपञ्चकं च पूर्वावग्रह इति, पथि वा व्रजतां यत्र क्वाप्याचार्यस्तिष्ठति तत्र सर्वतः सक्रोशं योजनमवग्रहो भवति, तत्राप्येवमेव सचित्तादीनामाभाव्याऽनाभाव्यविधिरवसातव्यः। केषाञ्चिदाचार्याणामयमभिप्रायः-मार्गं गच्छतां पृष्ठतो वा नास्त्यवग्रहः; अयं चानादेशः। कुतः ? इत्याह-प्रदीपदृष्टान्तोऽत्र भवति। यथा हि प्रदीपः सर्वतः प्रकाशयति नैकामपि दशां प्रकाशशून्यां करोति, एवमवग्रहोऽपि सर्वतो भवति, न कुत्रचिन्न भवत्यपीति ॥

एवं तावत् क्षेत्रे सचित्तादिविषयो विधिरुक्तः। अथाक्षेत्रे तमेवातिदिशति-

[भा.४६९०] अक्खित्ते वसधीए, जाणग जाणाविए वि एमेव।
उज्जुगमनुज्जुगे या, सो चेव गमो हवइ तत्थ ॥

वृ- 'अक्षेत्रे' इन्द्रकीलादियुक्ते नगरादौ सक्रोशं योजनमवग्रहो न भवति, किन्तु तत्र यस्यां वसतौ यः पूर्वं स्थितस्तस्यां सचित्तादिकं यदुपतिष्ठते तत् तस्य आभवति, न पश्चादागतानाम्। तत्रापि य एव क्षेत्रे गम उक्तः स एव सर्वोऽपि ज्ञायके ज्ञापिते च ऋजुकेऽनृजुके च वक्तव्य इति। अथ "कथं कल्पोऽभिधारणे" इति निर्वचनमाह-

[भा.४६९१] अनिदिट्ठ सन्नऽसन्नी, गहिता-गहिए य ओह सच्छंदो।
निद्दिट्ठ लिंगसहितो, सन्नी तस्सेव नऽन्नस्स ॥

वृ- 'अभिधारणं' प्रव्रज्यार्थमाचार्यादेर्मनसा सङ्कल्पनम्, तच्च द्विधा-अनिर्दिष्टं निर्दिष्टं च। अनिर्दिष्टं नाम-अभधारयन् कमप्याचार्यं विशेषतो न निर्दिशति। स चाभिधारको द्विधा- संज्ञी असंज्ञी च। पुनरेकैको द्विधा-गृहीतलिङ्गोऽगृहीतलिङ्गश्च। एष सर्वोऽप्योघतः-सामान्येनाचार्यविशेषमनिर्दिश्य व्रजन् स्वच्छन्द आभाव्यो भवति, यस्यान्तिके प्रव्रजति तस्यैवासौ शिष्य इत्यर्थः। निर्दिष्टं पुनः-अभिधारणं तदुच्यते यत्र 'अमुकस्याचार्यस्य समीपे प्रव्रजिष्यामि' इति निर्देशं करोति। एषोऽपि द्विधा-संज्ञी असंज्ञी च। भूय एकैको द्विधा- लिङ्गसहितो लिङ्गरहितश्च। तत्र लिङ्गसहितः संज्ञी यमाचार्यमभिधार्य गच्छति विपरिणतोऽपि तस्यैवासी भवति, नान्यस्य॥

[भा.४६९२] निद्दिट्ठे अस्सन्नी, गहिया-ऽगहिए य अगहिए सन्नी।
तस्सेव अविपरिणते, विपरिणते जस्स से इच्छा॥

वृ- योऽसंज्ञी स गृहीतलिङ्गो अगृहीतलिङ्गो वा भवतु, यस्तु 'संज्ञी' श्रावकः सोऽगृहीतलिङ्गः; एते त्रयोऽप्यविपरिणते भावे यं निर्दिष्टमाचार्यमभिधार्य गच्छन्ति तस्यैवाभवन्ति। अथ तं प्रति भावो विपरिणतस्ततो यस्य सकाशे तेषां प्रव्रजितुमिच्छा तस्यैव ते शिष्याः॥

अथ किं कारणं लिङ्गसहितो व्रजति? इत्याह-

[भा.४६९३] चारिय-समुदाणट्ठा, तेनग गिहिपंत धम्मसड्ढा वा।
एएहि लिंगसहितो, सन्नी व सिया असन्नी वा॥

वृ- चारिकः-हेरिकस्तद्विषया शङ्का मा भूदिति बुध्या लिङ्गं गृहीत्वा व्रजति, तथा समुदानं-भैक्षं तदर्थं लिङ्गं गृह्णाति, गृहीतलिङ्गो हि सुखेनैव भिक्षामाप्नोति। स्तेना वाऽपान्तराले गृहिप्रान्ता धर्मश्रद्धालवो वा तिष्ठन्ति। एतैः कारणैः संज्ञी वा असंज्ञी वा साधुसामाचारीनिपुणो लिङ्गसहितः स्यादिति॥ इह यो निर्दिश्य व्रजति स एकमनेकान् वा निर्दिशेत्। तत्र यो अनेकान् निर्दिशति स एवं सङ्कल्पयति-'यो मे प्रतिभासिष्यते तस्य सकाशे प्रव्रजिष्यामि' तद्विषयं विधिमाह-

[भा.४६९४] नेगा उद्दिस्स गतो, लिंगेणऽप्फालितो तु एक्केणं।
दट्ठुं च अचक्खुस्सं, निद्दिट्ठऽन्नं गतो तस्स॥

वृ- अनेकानाचार्यानुद्दिश्य लिङ्गेन सहितो बहूनां निर्दिष्टानामन्तिके गतः। तत्र चैकेन 'आस्फालितः' सादरमाभाषितो यदि तमभ्युपगतस्तदा तस्यैवासौ शिष्यः। अथाभाषितोऽपि तम् 'अचक्षुष्यम्' अनिर्दिष्टं दृष्ट्वा निर्दिष्टमेवान्यं कमप्यभ्युपगतस्तदा तस्याभवति॥

इदमेव सविशेषमाह-

[भा.४६९५] निद्दिट्ठमनिद्दिट्ठं, अब्भुवगय लिंगि नो लभइ अन्नो।
लिंगी व अलिंगी वा, स च्छंदेण अनिद्दिट्ठो॥

वृ- निर्दिष्टमनिर्दिष्टं वा आचार्यमभिधार्य गच्छन् 'लिङ्गी' लिङ्गसहितः शैक्षो यमाचार्यमभ्युगतस्तस्यैवाभवति, 'नो' नैवान्यस्तं लभते। यस्तु 'अनिर्दिष्ट' नाद्यापि कमप्यभ्युपगतः स लिङ्गी वा भवतु अलिङ्गी वा सः 'छन्देन' यमभिरोचयति तस्याभवति॥

[भा.४६९६] एमेव असिहसन्नी, निद्दिट्ठस्सुवगतो न अन्नस्स।
अब्भुवगतो वि ससिहो, अस्सिच्छति दो व अस्सन्नी॥

वृ- यथा लिङ्गसहितः संज्ञी निर्दिष्टानां बहूनां मध्ये यमेवाभ्युपगतस्तस्यैवाभवति, एवमेवाशिखाकोऽपि संज्ञी बहून् निर्दिश्यागतो यस्यैव निर्दिष्टस्यान्तिके 'उपगतः' प्रव्रजितुं परिणतस्तस्यैवासौ शिष्यो भवति नान्यस्य। यस्तु सशिखाकः संज्ञी स कमप्यभ्युपगतोऽपि यदि पश्चाद् विपरिणतस्तदा यस्यान्तिके प्रव्रजितुमिच्छति तस्याभवति। ''दो व असन्नि''त्ति 'द्वौ वा' अशिखाक-सशिखाकलक्षणौ यौ असंज्ञिनौ तावपि पूर्वं कञ्चनाभ्युपगतौ पश्चाद् विपरिणतौ स्वच्छन्देन यदुपकण्ठे प्रव्रजतस्तस्याभाव्यौ ॥ अस्यैवार्थस्य सुखावबोधाय भङ्गकानाह-

[भा.४६९७] निद्दिट्ठ सन्नि अब्भुवगतेतरे अट्ठ लिंगिणो भंगा।
एवमसिहे वि ससिहे, वि अट्ठ सव्वे वि चउवीसं ॥

वृ- कमप्याचार्यं निर्दिश्य गच्छन् निर्दिष्टः, 'संज्ञी' श्रावकः, 'अभ्युपगतः' प्रव्रजितुं परिणतः; एतैस्त्रिभिः पदैः ''इयरे''त्तिप्रतिपक्षपदसहितैरष्टौ भङ्गाः 'लिङ्गिनः' लिङ्गसहितस्य गच्छतो भवन्ति। तथाहि-निर्दिष्टः संज्ञी अभ्युपगतः १ निर्दिष्टः संज्ञी अनभ्युपगतः २ निर्दिष्टोऽसंज्ञी अभ्युपगतः ३ निर्दिष्टोऽसंज्ञी अनभ्युपगतः ४, अनिर्दिष्टपदेनाप्येवमेव चत्वारो भङ्गा लभ्यन्ते, एते अष्टौ भङ्गा लिङ्गिन् उक्ताः। अशिखाके सशिखाकेऽपि चैवमेव प्रत्येकमष्टौ भङ्गा भवन्ति। सर्वेऽप्येते मीलिताश्चतुर्विंशतिरुपजायन्ते ॥ एतेषु विधिमाह-

[भा.४६९८] पढम-विति-ततिय-पंचम-सत्तम-नव-तेरसेसु भंगेसु।
विप्परिणतो वि तस्सेव होइ सेसेसु सच्छंदो ॥

वृ-प्रथम-द्वितीय-तृतीय-पञ्चम-सप्तम-नवम-त्रयोदशेषु भङ्गेषु विपरिणतोऽपि यं निर्दिश्यागतो यं वा अभ्युपगतस्तस्यैवाभवति। 'शेषेषु' चतुर्थ-षष्ठा-ऽष्टम-दशमैकादश-द्वादश-चतुर्दशादिषु चतुर्विंशान्तेषु सप्तदशसु भङ्गेषु 'स्वच्छन्दः' स्वेच्छा, यः प्रतिभाति तस्यैवाभवतीत्यर्थः ॥

इदमेव व्यक्तीकुर्वन्नाह-

[भा.४६९९] सव्वो लिंगी असिहो, य सावतो जस्स अब्भुवगतो सो।
निद्दिट्ठसन्निलिंगी, तस्सेवाणब्भुवगतो वि ॥

वृ- सर्वो लिङ्गी अशिखाकश्च श्रावको यस्यान्तिकेऽभ्युपगतः स एव तं लभते। किमुक्तं भवति ?-यो लिङ्गसहितोऽभ्युपगतः स निर्दिष्टोऽनिर्दिष्टो वा संज्ञी वा भवतु, यश्चाशिखाकः श्रावकोऽभ्युपगतः सोऽपि निर्दिष्टोऽनिर्दिष्टो वा भवतु, एष सर्वोऽपि यमेवाभ्युपगतो विपरिणतोऽपि तस्यैवाभवति। एतेन प्रथम-तृतीय-पञ्चम-सप्तम-नवम-त्रयोदशभङ्गाः सूचिताः। तथा यो लिङ्गी निर्दिष्टः संज्ञी च स यद्यप्यनभ्युपगतस्तथापि यमेव निर्दिश्यागतः तस्यैवाभवति, न पुनर्विपरिणतोऽप्यन्यस्य, अनेन द्वितीयो भङ्गो गृहीतः। शेषेषु तु सप्तदशस्वपि भङ्गेषु यत्राभ्युपगतस्तत्राविपरिणतस्तस्यैव, विपरिणतस्तु स्वेच्छया; यत्र तु नाभ्युपगतस्तत्र विपरिणतोऽविपरिणतो वा यथास्वच्छन्दमाभाव्य इति ॥

गतं ''कथं कल्पोऽभिधारणे'' इति द्वारम्। अथैकग्रामे इति द्वारमाह-

[भा.४७००] अस्सन्नी उवसमितो, अप्पणो इच्छाइ अन्नहिं तस्स।
दट्ठूणं च परिणए, उवसामिते जस्स वा खित्तं ॥

वृ- केनचिद् धर्मकथिना कश्चिद् 'असंज्ञी' मिथ्यादृष्टि 'उपशमितः' प्रव्रज्याभिमुखीकृतः स

यावद् नाद्यापि सम्यक्त्वं प्रतिपद्यते तावत् प्रव्रजन क्षेत्रिकस्याभवति । अथ सम्यक्त्वं प्रतिपन्नः तच्च क्षेत्रमन्यस्याचार्यस्य सत्कं ततोऽसावात्मन इच्छया आभवति; यदि क्षेत्रिकस्योपतिष्ठते ततस्तस्यैव, अथोपशमयत उपस्थितस्तत उपशामयत एव, एतौ द्वौ मुक्त्वाऽन्यस्य नाभवति । "अन्नहिं" ति अथ 'अन्यत्र' क्षेत्राद् बहिरुपशमितस्तदा तस्योपशमकस्याभवति । अथ धर्मकथिनाऽपि नोपशामितः उपशमिन आभवति, मूर्त्तिदर्शनद्वारेणोपशमनकारिण इत्यर्थः । अथ क्षेत्रान्तरुपशान्तस्ततो यस्य सत्कं क्षेत्रं तस्याभाव्यः ।। अमुमेवार्थं सविशेषमाह-

[भा.४७०१] परखित्ते वसमाणो, अइक्कमंतो व न लभति असन्निं ।
छंदेण पुव्वसन्निं, गाहितसम्माति सो लभति ।।

वृ- परक्षेत्रे मासकल्पेन वर्षावासेन वा वसन् 'अतिक्रामन् वा' परक्षेत्रमग्रतो गन्तुमनास्तत्रावस्थितः 'असंज्ञिनम्' अप्रतिपन्नसम्यक्त्वं स्वयमुपशमितमपि न लभते । अथ कश्चिन्मिथ्यादृष्टिं सम्यक्त्वम् आदिशब्दादणुव्रतानि वा ग्राहयित्वा क्षेत्रान्तरं गतः भूयोऽप्यन्यदा तदेव क्षेत्रमायातः, स च प्रागुपशामित इदानीं पूर्वसंज्ञी लभ्यते, ततस्तं पूर्वसंज्ञिनं सम्यक्त्वादिग्राहितं 'सः' उपशमकश्छन्देन लभते । किमुक्तं भवति ? -उपशमिकं क्षेत्रिकं वा यमसावभिरोचयति तस्याभवति। एवंत्रयाणां वर्षाणामारतो मन्तव्यः, त्रिषु वर्षेषु पूर्णेषु स पूर्वसंज्ञी क्षेत्रिकस्यैवाभाव्यः, नोपशामयतः। आह च चूर्णिकृत्-"तिसु वरिसेसु पुन्नेसु खेत्तियस्सेवाभवति, न उवसामितस्स" त्ति ।।

गतमेकग्रामद्वारम् । अथ 'अतिक्रामन्' द्वारमाह-

[भा.४७०२] मग्गंतो अन्नखित्ते, अभिधारंतो उ भावतो तस्स ।
खित्तम्मि खित्तियस्सा, बाहिं वा परिणतो तस्स ।।

वृ- शैक्षः कश्चिदाचार्यं मार्गयन् व्रजति, तस्य च 'अन्यक्षेत्रे' परकीयक्षेत्राभ्यन्तरे पथि गच्छतः कश्चिद् धर्मकथी मिलितः, स यद्याकर्षणहेतोस्तस्य धर्मं कथयति तदा यमाचार्यमभिधारयन् व्रजति तस्याभवति, न कथयतः । अथ 'भावतः' स्वभावादेव कथयति ततस्तस्य धर्मकथिकस्याभवति । तुशब्दो विशेषणे, स चैतद् विशिनष्टि-यदि क्षेत्राभ्यन्तरे स्वभावतः कथयति ततः क्षेत्रिकस्याभाव्यः, अथ क्षेत्राद् बहिस्ततो धर्मकथिनः । अथान्तराऽन्तरा तस्य भावः परिणमते निवर्त्तते च ततः क्षेत्रे 'परिणतः' प्रव्रज्याभिमुखीभूतः क्षेत्रिकस्याभवति, बहिस्तु परिणतः 'तस्य' कथयत आभाव्य इति ।। इदमेव व्याचष्टे-

[भा.४७०३] अभिधारिंतो वच्चति, पुच्छित्ता साहु वच्चतो तस्स ।
परिसागतो व कहई, कहणहेउं न तं लभति ।।

वृ- कश्चिदाचार्यमभिधारयन् शैक्षो व्रजति, तस्य कोऽपि साधुः पथि गच्छन् मिलितः, तेन च पृष्टः-अमुक आचार्य कुत्राऽऽस्ते ? ; साधुराह-किं तेन भवतः प्रयोजनम् ? ; स प्राह-तस्यान्तिके प्रव्रजितुकामोऽहम्; एवं पृष्ट्वा तस्य व्रजत एवाकर्षणहेतोः "साहु"त्ति धर्मं कथयति । यद्वा ग्रामे क्वापि पर्षदन्तर्गतस्य धर्मं कथयत उपस्थितस्ततो वन्दित्वा तथैव स्वाभिप्राये कथिते स आकर्षणहेतोर्विशेषतो धर्मं कथयति, कथिते च यद्यसौ प्रव्रजितुमभिलषति ततो न तं शैक्षं लभते, अभिधारिताचार्यस्यैव स आभवति ।।

[भा.४७०४] उज्जु कहए परिणतं, अंतो खित्तस्स खित्तिओ लभइ ।

खित्तबहिं तु परिणयं, लभतुज्जु कही न खलु मादी ॥

वृ- अथासौ 'कथकः' धर्मकथी ऋजुकः सद्भावतः कथयति नाकर्षणहेतोः, स च प्रव्रज्यायां परिणतः ततः क्षेत्रान्तः परिणतं क्षेत्रिको लभते, क्षेत्रबहिः परिणतं तु ऋजुतो धर्मकथी लभते न खलु 'मायी' मायावान् ॥

[भा.४७०५] परिणमइ अंतरा अंतरा य भावो नियत्तति [illegible] ।
खित्तम्मि खेत्तियस्सा, बाहिं तु परिणतो तस्स ॥

वृ- अथान्तराऽन्तरा तस्य भावः प्रव्रज्यां प्रति परिणमते निवर्त्तते वा ततः क्षेत्रे परिणतः क्षेत्रकस्याभवति बहिस्तु परिणतः 'तस्य' धर्मकथिन आभवतीति ॥ गतम् 'अतिक्रामन्' द्वारम्। अथ "द्विविधा मार्गणा शिष्ये एकविधा च प्रतीच्छके" इति यदुक्तं तत्र प्रतीच्छकविषयां तावदेकविधां केवलसज्ञातकविषयां मार्गणामाह-

[भा.४७०६] माया पिया व भाया, भगिनी पुत्तो तहेव धूता य ।
छप्पेते नालबद्धा, सेसे पभवंति आयरिया ॥

वृ- माता पिता भ्राता भगिनी पुत्रस्तथैव दुहिता च, षडप्येतेऽनन्तरवल्लीमधिकृत्य नालबद्धा मन्तव्याः । एते चाभिधारयन्तः प्रतीच्छकस्याभवन्ति । उपलक्षणमिदम्, तेन परम्परावल्लीबद्धा अपि वक्ष्यमाणाः षोडश जना अभिधारयन्तास्तस्यैवाभवन्ति । शेषास्तु-ये नालबद्धा न भवन्ति तेषु आचार्या प्रभवन्ति, न प्रतीच्छकः ॥ इदमेव व्यक्तीकुर्वन् परम्परावल्लीं प्रतिपादयति-

[भा.४७०७] माउम्माया य पिया, भाया भगिनी य एव पिउणो वि ।
भातादिपुत्त-धूता, सोलसगं छ च्च बावीसं ॥

[भा.४७०८] बावीस लभति एए, पडिच्छओ जति य तमभिधारंती ।
अभिधारमनभिधारे, नायमनातेतरे न लभे ॥

वृ- मातुः सम्बन्धिनो माता पिता भ्राता भगिनी चेति चत्वारो जनाः ४, पितुः सम्बन्धिनोऽप्येवमेव चत्वारो जनाः ८, "भायाइपुत्त-धूय" त्ति भ्रातुः सम्बन्धी पुत्रो दुहिता चेति जनद्वयम् १०, आदिशब्दाद् भगिन्या अप्यपत्यं भागिनेयो भागिनेयी चेति द्वयम् १२, पुत्रस्यापत्यं पौत्रः पौत्री चेति द्वयम् १४, दुहितुरपत्यं दौहित्रो दौहित्री चेति द्वयम् १६, सर्वसङ्ख्यया षोडशकं भवति । षट् चाऽनन्तरवल्लीजना अत्र प्रक्षिप्यन्ते, ततो द्वाविंशतिर्भवति ॥ द्वाविंशतिमप्येतान् जनान् प्रतीच्छको लभते यदि च 'तं' प्रतीच्छकम् 'अभिधारयन्ति' मनसि कुर्वन्ति, अनभिधारयन्तस्तु तेऽप्याचार्यस्यैवाभाव्या इति भावः । इतरे-उक्तव्यतिरिक्तास्तानभिधारयतो वा अनभिधारयतो वा ज्ञातकान् वाऽज्ञातकान् वा प्रतीच्छको न लभते ॥ अथ शिष्यविषयां द्विविधां मार्गणामाह-

[भा.४७०९] नायगमनायगा पुन, सीसे अभिधारमनभिधारे य ।
दोक्खर-खरदिट्ठंता, सव्वे वि भवंति आयरिए ॥

वृ- द्विविधा मार्गणा नाम-ये शिष्यस्य 'ज्ञातकाः' स्वजना ये च 'अज्ञातकाः' अस्वजनास्ते तमभिधारयन्तो वाऽनभिधारयन्तो वा सर्वेऽप्याचार्यस्याभवन्ति न शिष्यस्य । कुतः ? इत्याह- 'द्व्यक्षर-खरदृष्टान्तात्' "दासेन मे खरो कीओ, दासो वि मे खरो वि मे ।" इति निदर्शनात् ॥

अथ 'पडिसेहिय वच्चंते कहं कप्पो विहिज्जइ" इति द्वारं निरूपयन्नाह-

[भा.४७१०] पुव्वुप्पन्नगिलाणे, असंथरंते य चउगुरू छण्हं ।
वयमाण एगे संघाडए य छप्पेते न लभंति ॥

वृ- एकत्र ग्रामे गच्छः स्थितः, तेषां च ग्लान उत्पन्नः, तत्प्रतिचरणे साधवो व्यापृताः सन्तः सर्वेऽपि भिक्षामटितुं न प्रभवन्ति, ततश्चासंस्तरणं सञ्जातम् । एवं ग्लाने पूर्वोत्पन्ने असंस्तरतां शैक्ष उपस्थितः,ते च ग्लानकार्यव्यापृततया शैक्षं वर्त्तापयितुं न पारयन्ति, अतो भगवद्भिः प्रतिषिद्धम्-न तैः शैक्षो दीक्षणीयः, यदि दीक्षयन्ति ततश्चतुर्गुरुकाः । अथ लोभदोषेणामीषां षण्णां प्रकाराणामन्यतरेण प्रेषयन्ति- "वयमाण" इत्यादि, तं शैक्षं मुण्डयित्वा 'व्रजत्वमेकाक्येवामुकाचार्यसन्निधौ' इति वदन्तो विसर्जयन्ति, यद्वा तस्यैकं कमपि सहायं सङ्घाटकं वा समर्पयन्ति, एते त्रयः प्रकारा मुण्डितस्य भवन्ति; अमुण्डितस्याप्येत एव त्रयः; एते षडपि तं शैक्षं न लभन्ते, षड्भिः प्रकारैः प्रेषयन्त इत्यर्थः । येषां समीपे प्रेषयन्ति तेषामेवासौ शिष्यः ॥

अथान्यसमीपे स्थापयन्ति तत इमे दोषाः-

[भा.४७११] आयरिय-गिलाणे गुरुगा, सेहस्सा अकरणम्मि चउलहुगा ।
परितावणणिप्फन्नं, दुहतो भंगे य मूलं तु ॥

वृ- शैक्षं प्रव्राज्य तद्वैयावृत्यव्याकुलाः सन्तो यद्याचार्याणां ग्लानस्य वा वैयावृत्यं न कुर्वन्ति चतुर्गुरुकाः । अथ शैक्षस्य न कुर्वन्ति चतुर्लघुकाः । अथ ग्लानादीनामनागाढमागाढं वा परितापना भवति ततस्तन्निष्पन्नम् । "दुहतो भंगे य" त्ति शैक्षस्य यदुन्निष्क्रमणं ग्लानस्य यद् मरणम् एष द्विधा भङ्ग उच्यते तत्र मूलं भवति ॥ अथ द्वितीयपदमाह-

[भा.४७१२] संथरमाणे पच्छा, जायं गहिते व पच्छ गेलन्नं ।
अपव्वइए पव्वइए, संघाडेगे व वयमाणे ॥

वृ- इह गच्छे ग्लानो विद्यते परं नागाढं ग्लानत्वम्, ततः संस्तरति तैः शैक्षमपि वर्त्तापयितुमाचार्याणामपि कर्तुमेवं प्रव्राजितः शैक्षः, पश्चाच्च ग्लानत्वमागाढं समजनि, तत्रोद्वर्तनपरिवर्त्तनादिव्यापृता एके तावद् भिक्षां न हिण्डन्ते, येऽपि हिण्डन्ते तेऽपि न शक्नुवन्ति सर्वेषामपि पर्याप्तमानेतुम्, एवमसंस्तरणं जातम्; यद्वा मूलत एव ग्लानत्वं पूर्वं नासीत् किन्तु पश्चाच्छैक्षे 'गृहीते' प्रव्राजिते सति ग्लानत्वमुत्पन्नं ततोऽसौ षड्भिः प्रकारैः प्रेषणीयः । तद्यथा-'अप्रव्रजितः' मुण्डितः, 'प्रव्रजितः' मुण्डितः । एष द्विविधोऽपि त्रिधा-सङ्घाटकेन एकसाधुना "वयमाणे" त्ति एकाकी व्रजेति ब्रुवाणैः, एकाकित्वेनेत्यर्थः ॥

अथ "संथरमाणे पच्छा जायं" ति पदं विशेषतो व्याचष्टे-

[भा.४७१३] नागाढं पउणिस्सइ, अचिरेणं तं च जायमागाढं ।
सेहं वट्टावेउं, न तरंति गिलाणकिच्चं च ॥

वृ- पूर्वमनागाढं ग्लानत्वं भवेत्, ततः शैक्षे उपस्थिते चिन्तितम्-अचिरेणैवायं ग्लानः प्रगुणीभविष्यति; ततः शैक्षे प्रव्राजिते तद् ग्लानत्वमागाढं जातम्, ततस्ते शैक्षं वर्त्तापयितुं ग्लानकृत्यं च कर्तुं समकमेव "न तरंति" न शक्नुवन्ति, अतोऽन्येषां समीपे प्रेषयन्तः शुद्धाः ॥

[भा.४७१४] अपडिच्छनेतरेसिं, जं सेहवियावडा उ पावंति ।
तं चेव पुव्वभणियं, परितावण-सेहभंगाइ ॥

वृ- इतरे नाम-येषां समीपे प्रेष्यते यदि ते न प्रतीच्छन्ति तदा चतुर्गुरुकाः, यच्च ते शैक्षव्यापृताः प्राप्नुवन्ति तन्निष्पन्नं तेषामप्रतीच्छतां प्रायश्चित्तम्। किं पुनस्तद् यत् ते प्राप्नुवन्ति ? इत्याह- तदेव पूर्वभणितं परितापन-शैक्षभङ्गादिकमत्र दोषजातं मन्तव्यम्। किमुक्तं भवति ?- ग्लानोऽप्रतिचर्यमाणः परिताप्येत, शैक्षो वैयावृत्येऽविधीयमाने प्रतिभज्येत, आदिशब्दाद् ग्लानस्य मरणं वा भवेत्॥

[भा.४७१५] संखडिए वा अट्ठा, अमुंडियं मुंडियं व पेसंती।
वयमाणे एग संघाए य छप्पेए न लभंति॥

वृ- सङ्खडि-प्रकरणं तस्या वाऽर्थाय मनोज्ञाहारलम्पटतया क्वापि ग्रामे व्रजन्तः सागारिकमिति कृत्वा शैक्षममुण्डितं मुण्डितं वा प्रेषयन्ति। तत्रापि "वयमाणि" त्ति एकाकितया प्रेषणेन एकसाधुना सङ्घाटकेन च षट् प्रकारा भवन्ति। एतैः षड्भिरपि प्रेषयन्तो न लभन्ते॥ इदमेव व्याख्याति-

[भा.४७१६] होहिंति नवग्गाइं, आवाह-विवाह-पव्वयमहादी।
सेहस्स य सागरियं, विद्दाहिति मा व पेसिंति॥

वृ-इह शैक्षः केषाञ्चिदुपस्थितः, तत्र च आवाह-विवाह-पर्वतमहादीनि प्रकरणानि 'नवाग्राणि' प्रत्यासन्नानि भविष्यन्ति। आवाहः-वध्वा वरगृहानयनम्, विवाहः-पाणिग्रहणम्, पर्वतमहः प्रतीतः, आदिशब्दात् तडाग-नदीमहादिपरिग्रहः। शैक्षस्य च तत्र 'सागारिकम्' उत्प्रव्राजनभयम्, यद्वा यद्येष शैक्षोऽत्र स्थास्यति तदा सङ्खडिभोजनगृद्धः 'मा विद्रास्यति' मा विनङ्क्ष्यति, यदि च वयमनेनैव सह गच्छामस्ततः सङ्खडेः स्फिटामः अत एनमन्यत्र प्रेषयाम इति विचिन्त्य षड्भिः प्रकारैस्तं प्रेषयन्ति न च लभन्ते, येषामन्तिके प्रेषयन्ति तेषामेवासावाभवतीति॥ गतं 'प्रतिषिद्धे व्रजति कथं कल्पो विधीयते ?' इति द्वारम्। सम्प्रति 'सङ्गारदत्ते कथं कल्पो विधीयते ?' इति द्वारमाह-

[भा.४७१७] गिहियाणं संगारो, संगारं संजते करेमाणे।
अनुमोयति सो हिंसं, पव्वावितो जेन तस्सेव॥

वृ- गृहिणां सम्बन्धी यः 'सङ्गारः' 'युष्मदन्तिकेऽस्माभिरियतः कालादूर्ध्वं प्रव्रज्या ग्रहीतव्या' इति सङ्केतस्तं प्रतीच्छन् संयतः स्वयं च तैः सार्द्धं 'सङ्गारं' 'अहममुष्मिन् दिने युष्मान् प्रव्राजयिष्यामि' इति लक्षणं कुर्वन् 'हिंसा' यावदसौ न प्रव्रजति तावन्तं कालं षट्कायविराधनालक्षणामनुमोदयति। स च शैक्षस्तं प्रति विपरिणतो येन प्रव्राजितस्तस्यैवाभवति न सङ्केतदायिन इति॥ किञ्च-

[भा.४७१८] विप्परिणमइ सयं वा, परओ ओसन्न अन्नतित्थी वा।
मोत्तुं वासावासं, न होइ संगारतो इहरा॥

वृ- सङ्केतकरणानन्तरं स शैक्षः स्वयं वा विपरिणमति, 'परतो वा' परेण-स्वजनादिना स विपरिणाम्येत, अवसन्नविहारिषु वा प्रव्रजेत्, अन्यतीर्थिको वा भवेत्; अतो वर्षावासं मुक्त्वा 'इतरथा' पुष्टालम्बनं विना सङ्गारो न प्रतीच्छनीयो न वा कर्तव्यः॥

किमर्थं पुनः सङ्गारमसौ करोति ? इत्याह-

[भा.४७१९] संखडि सन्नाया वा, खित्तं मोत्तव्वयं व मा होज्जा।
एएहिं कारणेहिं, संगार करेंते चउगुरुगा॥

वृ- सङ्खडिस्तत्र ग्रामे उपस्थितानां परिहर्तुं न शक्नोति, सञ्ज्ञातका वा तस्य तत्र

भूयांसस्तेषामाग्रहात् तदानीं न शक्नोति गन्तुम्, क्षेत्रं वा तदतीवस्निग्ध-मधुराहारादिलाभसम्पन्नं शैक्षस्य च तत्र सागारिकम् अतस्तद् मोक्तव्यम् मा भूत्, 'एतैः' एवमादिभि कारणैः शैक्षस्य सङ्गारं यः करोति तस्य चतुर्गुरु ॥ अथ गृहस्था किमर्थं सङ्गारं कुर्वन्ति ? इत्याह-

[भा.४७२०] रिण वाहिं मोक्खेउं, कुडुंबवित्तिं चऽतिच्छिते गिम्हे ।
एमादिअनाउत्ते, करिंति गिहिणो उ संगारं ॥

वृ- ऋणं वा व्याधिं वा 'मोक्षयितुम्' अपनेतुम्, कुटुम्बस्य वा पश्चान्निर्वहणयोग्यां वृत्तिं सम्पादयितुम्, यद्वा ग्रीष्मस्तदानीमतिक्रान्तो वर्षावास आयातः, एवमादिभि कारणैः अनायुक्ते-अक्षणिकतायां गृहिणः सङ्गारं कुर्वन्ति ॥ अथ द्वितीयपदेन सङ्गारे प्रतीष्यमाणे आभाव्यविधिमाह-

[भा.४७२१] अगविट्ठो मि त्ति अहं, लब्भति असढेहिं विप्परिणतो वि ।
चोयंतऽप्पाहेंति व, ते वि य नं अंतरा गंतुं ॥

वृ- सङ्गारे कृते यदि 'अशठैः' ग्लानादिकार्यव्यापृतैः स शैक्षो न गवेषितस्तदाऽसौ 'अगवेषितः' 'नैकमपि वारमहममीभिर्गवेषितः' इति बुध्या विपरिणतोऽपि लभ्यते, तेषामेवाभवतीत्यर्थः; परतेऽपि साधवस्तमन्तराऽन्तरा गत्वा 'चोदयन्ति' सङ्केतस्मारणापुरस्सरं शिक्षयन्ति, अथ स्वयं गन्तुं न प्रभवन्ति ततः "अप्पाहेंति" सन्देशं तस्य प्रेषयन्ति ॥

[भा.४७२२] एवं खलु अच्छिन्ने, छिन्ने वेला तहेव दिवसेहिं ।
वेला पुन्नमपुन्ने, वाघाए होइ चउभंगो ॥

वृ- एवं तावद् 'अच्छिन्ने' अनियते सङ्गारे विधिरुक्तः, यस्तु छिन्नः सङ्गारस्तत्र विधिरभिधीयते-छिन्नो नाम-क्षेत्रतः कालतश्च प्रतिनियतः । क्षेत्रतो ग्राम-वनखण्डादौ प्रव्रज्यादानार्थं भवद्भिः समागन्तव्यम्, कालतो वेलया दिवसैर्मासैश्च प्रतिनियतैः । तत्र च "वेला पुन्नमपुन्ने"त्ति वेलया उपलक्षणत्वाद् दिवसैश्च पूर्णेऽपूर्णे वा सङ्गारकाले व्याघातो भवेत्, तत्र चेयं चतुर्भङ्गी-कालः पूर्णो निर्व्याघातं च प्राप्ताः, कालः पूर्ण परं व्याघातः सञ्जातः, कालोऽद्याप्यपूर्ण परं निर्व्याघातं तत्र प्राप्ताः, कालोऽप्यपूर्णो व्याघातोऽपि जात इति ४ । अथवा अन्यथा चतुर्भङ्गी-संयतस्य व्याघातो न गृहस्थस्य, गृहस्थस्य व्याघातो न संयतस्य, द्वयोरपि व्याघातः, द्वयोरपि न व्याघातः ॥

तत्र संयतस्य व्याघाते विधिमाह-

[भा.४७२३] मंदट्ठिगा ते तहियं च पत्तो, जति मन्नते ते य सढा न होंति ।
सो लब्भती अन्नगतो वि ताहे, दप्पट्ठिया जे न उ ते लभंती ॥

वृ- यत्र ग्रामादौ सङ्केतः कृत आसीत् तत्र स शैक्षः प्राप्तः साधवस्तु न प्राप्ताः, ततो यद्येवं मन्यते-'मन्दार्थिनस्ते मद्विषये, मन्दप्रयोजना अत एव नायाताः' इति बुध्या विपरिणतः, ते च साधवो यदि 'शठाः' व्रजिकादिप्रतिबन्धयुक्ता न भवन्ति, ग्लानादिकार्यव्यापृततया नायाता इति भावः; ततः स शैक्षः 'अन्यगतोऽपि' अन्यमाचार्यमभ्युपगतोऽपि तैः साधुभिर्लभ्यते । ये तु दर्पतः स्थितास्ते नैव तं लभन्ते, येन प्रव्राजितस्तस्यैवासौ शिष्य इति ॥

[भा.४७२४] पंथे धम्मकहिस्सा, उवसंतो अंतरा उ अन्नस्स ।
अभिधारिंतो तस्स उ, इयरं पुन जो उ पव्वावे ॥

वृ- यद्यसौ येन साधुना सङ्केतो दत्तस्तदभिमुखं प्रस्थितः पथि गच्छन् अन्तराऽन्यस्य धर्मकथिनः

समीपे धर्मकथामाकर्ण्योपशान्तः, स च यद्यभिधारयन् गच्छति तदा 'तस्यैव' अभिधारितस्याभवति। इतरः पुनः-अनभिधारयिता तं यो धर्मकथी प्रव्राजयति तस्याभवति ।। इदमेव व्याचष्टे-

[भा.४७२५] पुव्वेहिं पि दिनेहिं, उवसंतो अंतरा उ अन्नस्स ।
अभिधारिंतो तस्स उ, इयरं पुन जो उ पव्वावे ।।

वृ- पूर्वैः अपिशब्दादपूर्वैरपि दिवसैः 'अन्तरा' पथि वर्तमानोऽन्यस्य सकाशे उपशान्तः सन्। यद्यभिधारयति 'प्रव्रजामि तावदहममीषां समीपे, परं पूर्वेषामेवाहं शिष्यः' एवमभिधारयन् तस्यैव पूर्वाचार्यस्याभवति । इतरो नाम-यः पूर्वेषां विपरिणतस्तं यः प्रव्राजयति तस्यैव स शिष्यः।।

नियमप्रदर्शनार्तमिदमाह-

[भा.४७२६] ण्हाणादिसमोसरणे, दट्ठूण वि तं तु परिणतो अन्नं ।
तस्सेव सो न पुरिमे, एमेव पहम्मि वच्चंते ।।

वृ- स्नानादौ समवसरणे 'तं' पूर्वाचार्यं दृष्ट्वाऽपि यद्यन्यमेव 'परिणतः' प्रतिपन्नस्तदा तस्यैवासौ शिष्यो न पूर्वस्य । एवमेव पथि व्रजतामप्याभाव्या-ऽनाभाव्यविधिरवगन्तव्यः ।। अथ कः संयतस्य गृहस्थस्य वा व्याघातो भवति ? इत्याह-

[भा.४७२७] गेलन्न तेनग नदी, सावय पडिनीय वाल महि वासं ।
इइ समणे वाघातो, महिगावज्जो उ सेहस्स ।।

वृ- ग्लानत्वं तस्य साधोरुत्पन्नम्, स्तेनका वा अन्तराले द्विविधाः, नदी वा पूर्णा, 'श्वापदा वा' व्याघ्रादयः पथि तिष्ठन्ति, प्रत्यनीको वा तं प्रतिचरन्नास्ते, 'व्यालाः' सर्पास्ते वा पथि गच्छन्तं जनं दशन्ति, महिका वा वर्षं वा पतितुमारब्धम्, ''इय'' एवं श्रमणे वयाघातः सम्भवति । शैक्षस्यापि महिकावर्जं सर्वोऽप्येष एव व्याघातो वक्तव्यः ।।

पूर्वं स्वयं विपरिणतमाश्रित्य विधिरुक्तः, अथान्येन विपरिणामितस्य विधिमाह-

[भा.४७२८] विप्परिणामियभावो, न लब्भते तं च नो वियाणामो ।
विप्परिणामियकहणा, तम्हा खलु होंति कायव्वा ।।

वृ- विपरिणामितः-विवक्षिताचार्यादुत्तारितो भावो यस्य स विपरिणामितभावः, एवंविधः शैक्षो न लभ्यते, विपरिणामकस्य नाभवतीति भावः । शिष्यः प्राह-'तमेव' विपरिणामनं तावद् वयं न विजानीमः । सूरिराह-यत एवं भवतो जिज्ञासा तस्माद् विपरिणामनं विपरिणामितं तस्य कथना-प्ररूपणा कर्त्तव्या भवति ।। तामेवाह-

[भा.४७२९] दिट्ठमदिट्ठ विदेसत्थ गिलाणे मंदधम्म अप्पसुते ।
निप्फत्ति नत्थि तस्सा, तिविहं गरहं व से जणति ।।

वृ- शैक्षः कमप्याचार्यमभिधार्य गच्छन् मार्गे कमपि साधुं दृष्ट्वा पृच्छति-अमुके आचार्या भवद्भिः कदाचिद् दृष्टाः ? उताहो न दृष्टाः ?; एवं पृष्टे स साधुर्विपरिणामनबुध्या भणति- किं तैः करिष्यसि ?; शैक्षः प्राह-प्रव्रजितुकामोऽहं तेषां समीपे; एवं श्रुत्वा साधुर्दृष्टानपि तान् 'न मया दृष्टाः' इति, अथवा स्वदेशस्थानपि भणति 'विदेशस्थास्ते' । एवमग्लानानपि 'ग्लानोऽसौ, व्रज त्वमपि तस्य द्वितीयः'; अथवा ब्रवीति-यस्तस्य पार्श्वे प्रव्रजति सोऽवश्यं ग्लानो ग्लानवैयावृत्ये वा नित्यं व्यापृतो भवति । अथवा मन्दधर्माणस्ते, ततः किं तव मन्दधर्मता रोचते ? ।

यद्वाऽसावल्पश्रुतः, त्वं च ग्रहण-धारणासमर्थस्तस्य पार्श्वे गतः किं करिष्यसि ?, त्वमेव वा तं पाठयिष्यसीति । अथवा तस्य शिष्याणां निष्पत्तिरेव नास्ति, यं प्रव्राजयति स सर्वोऽपि प्रतिभज्यते म्रियते वेति । 'त्रिविधां वा' मनो-वाक्-कायभेदाद् ज्ञान-दर्शन-चारित्रभेदाद् वा त्रिप्रकारां गर्हां वक्ष्यमाणरीत्या यदसौ करोति सा विपरिणामना मन्तव्या । एनां कुर्वतश्च तुर्गुरुकम्, न च तं शैक्षं लभते, अतो नैवं कथनीयम्, किन्तु दृष्टादिपदेषु सद्भावः कथनीयः ।। कथम् ? इत्याह-

[भा.४७३०] जइ पुन तेन न दिट्ठा, नेव सुया पुच्छितो भणति अन्ने ।
जति वा गया विदेसं, तो साहइ जत्थ ते विसए ।।

वृ- योऽसौ शैक्षेण पृष्टस्तेन यदि ते सूरयो न दृष्टाः नैव श्रुतास्ततः पृष्टः सन् भणति-अहं न जानामि, 'अन्यान्' अपरान् साधून् पृच्छ । अथ जानाति ततो यथावत् कथनीयम् । यदि विदेशं गतास्ततो यत्र 'विषये' देशे ते वर्त्तन्ते तं कथयति । अथ नाख्याति हीनाधिकं वाऽऽख्याति ततो विपरिणामना भवति ।।

[भा.४७३१] सेसेसु उ सब्भावं, नातिक्खति मंदधम्मवज्जेसु ।
गूहयते सब्भावं, विप्परिणाति हीनकहणे वा ।।

वृ- 'शेषेषु' ग्लानादिषु पदेषु मन्दधर्मवर्जेषु सद्भावं नाख्याति, यद्यप्यसौ ग्लानोऽल्पश्रुतो वा शिष्यनिष्पत्तिर्वा तस्य नास्ति तथापि तत्र कथनीयम् । यस्तु मन्दधर्मा पार्श्वस्थादिस्तत्र सद्भावः कथनीयः, मा संसारपारगन्तुकामः सुतरां संसारे पतिष्यतीति कृत्वा । यस्तु ज्ञा-दर्शन-चारित्र-तपःसम्पन्नो वादी धर्मकथी सङ्ग्रहोपग्रहकारी तद्विषयं सद्भावं यदि 'गूहयति' अपलपति हीनकथनं वा करोति, अधिकमप्यन्याचार्येभ्यो हीनं कृत्वा कथयतीत्यर्थ, एषा विपरिणामना मन्तव्या ।।

अथ त्रिविधां गर्हां व्याचिख्यासुस्तत्स्वरूपं तावदाह-

[भा.४७३२] सीसोकंपण गरिहा, हत्थ विलंबिय अहो य हक्कारे ।
वेला कन्ना य दिसा, अच्छतु नामं न घेत्तव्वं ।।

वृ- गर्हा नाम शैक्षेण पृष्टः सन् शीर्षावकम्पनं करोति, हस्तौ वा धुनीते, विलम्बितानि वा करोति-हस्तौ ओष्ठौ वा विलम्बयतीत्यर्थः, यद्वा ब्रवीति-अहो ! प्रव्रज्या अहो ! प्रव्रज्या, हाकारं वा करोति-हा ! हा ! कष्टं यदेवं नष्टो लोकः, "वेल"त्ति नामापि तस्य न वर्त्ततेऽस्यां वेलायां ग्रहीतुमिति, कर्णौ वा तदीयनामग्रहणे स्थगयति, यस्यां वा दिशि स तिष्ठति तस्यां न स्थातव्यमिति ब्रवीति, उपलक्षणत्वाद् अक्षिणी वा निमीलयति, यद्वा नामापि तस्य निरन्नैर्य ग्रहीतव्यम्, अत आस्तामेतद्विषयं पृच्छादिकमिति ।।

[भा.४७३३] नाणे दंसण चरणे, सुत्ते अत्थे य तदुभए चेव ।
अहं होति तिहा गरहा, कायो वाया मणो वा वि ।।

वृ- ज्ञाने दर्शने चारित्रे चेति त्रिविधा गर्हा भवति-तत्र ज्ञानगर्हा नाम नटपठितेनेव किं तदीयेन ज्ञानेन ?, दर्शनगर्हा तु मिथ्यादृष्टिर्नास्तिकप्रायोऽसौ, चारित्रगर्हा सातिचारचारित्रोऽचारित्री वाऽसौ । अथवा सूत्रेऽर्थे तदुभये चेति त्रिविधा गर्हा-तत्र सूत्रं तस्य शङ्कित-स्खलितम् अर्थं पुनरवबुध्यते, १ यद्वाऽर्थं नावबुध्यते सूत्रं पुनरागच्छति २, उभयमपि वा तस्याविशुद्धं न जानाति वा किमपीति ३ । अथवा काय-वाङ्-मनोभेदात् त्रिधा गर्हा-तत्र कायगर्हा तेषामाचार्याणां

शरीरं हुण्डादिसंस्थानं विरूपं वा, वाग्गर्हा मन्मनं काहलं वा ते जल्पन्ति, मनोगर्हा न तेषां तथाविधमूहा-ऽपोहपाटवं न वा ग्रहण-धारणासामर्थ्यमिति। 'अथ' एषा त्रिविधा गर्हा भवति॥

प्रकारान्तरेण गर्हामेवाह-

[भा.४७३४] पव्वयसि आम कस्स, त्ति सगासे अमुगस्स निद्दिट्ठे।
आयपराधिगसंसी, उवहणति परं इमेहिं तु॥

वृ-कोऽपि शैक्षः केनापि साधुना पृष्टः-प्रव्रजसि त्वम्; स प्राह-आमम्; 'कस्य सकाशे?' इति पृष्टः सन् भूयोऽप्याह-अमुकस्याचार्यस्य समीपे, एवं 'निर्दिष्टे' उक्ते स साधुरात्मानं परस्मादधिकं शंसितुम्-आख्यातुं शीलमस्येत्यात्मपराधिकशंसी परममीभिर्वचनैरुपहन्ति॥ तद्यथा-

[भा.४७३५] अबहुस्सुताऽविसुद्धं, अधछंदा तेसु वा वि संसग्गि।
ओसन्ना संसग्गी, य तेसु एक्केक्कए दुन्नि॥

वृ-अहं बहुश्रुतः सोऽबहुश्रुतः, अहं विशुद्धपाठकः स पुनरविशुद्धपाठी, यद्वा यथाच्छन्दास्ते आचार्या 'तैर्वा' यथाच्छन्दैः सह ते गाढतरं संसर्गिणः, गाथायां तृतीयार्थे सप्तमी, अवसन्ना वा ते तैः सार्धं संसर्गिणो वा, एवं पार्श्वस्थादावपि एकैकस्मिन् भेदे द्वौ द्वौ दोषावेवमेव वक्तव्यौ॥

अथ काय-वाङ्मनोगर्हामेव प्रकारान्तरेणाह-

[भा.४७३६] सीसोकंपण हत्थे, कन्न दिसा अच्छि कायिगी गरिहा।
वेला अहो य ह त्ति य, नामं ति य वायिगी गरहा॥

वृ- शीर्षविकम्पनं हस्तविलम्बनं कर्णस्थगनम् अन्यस्यां दिशि स्थानम् अक्षिनीमीलनम् अनिमेषलोचनस्य वा क्षणमवस्थानम् एषा सर्वाऽपि कायिकी गर्हा। यत्तु अस्यां वेलायां नाम न ग्रहीतव्यम् अहो! कष्टम् हाहाकारकरणम् नाम च तस्य कदाऽपि न ग्रहीतव्यमित्यादिभाषणं सा वाचिकी गर्हा॥

[भा.४७३७] अह मानसिगी गरहा, सूतिज्जति नेत्त-वत्तरागेहिं।
धीरत्तणेण य पुनो, अभिनंदइ नेय तं वयणं॥

वृ- 'अथ' अनन्तरं मानसिकी गर्हा मनसि तमाचार्यं जुगुप्सते। कथमेद् ज्ञायते? इत्याह-नेत्र-वक्त्रयोः सम्बन्धिनो ये रागाः-मुकुलन-विच्छायीभवनादयो विकारास्तैः सूच्यते मानसिकी गर्हेति। यद्वा 'प्रव्रजामि' इति भणिते 'साध्विदम्, कृत्यमेतद् भव्यानाम्' इत्यादिवचोभिर्नैव तदीयं वचनमभिनन्दते, धीरतया वा तूष्णीक आस्ते। एवमन्यतरस्मिन् गर्हाप्रकारे कृते तस्य शङ्का भवति-अवश्यमकार्यकारी स आचार्यादि सम्भाव्यते, न चामी साधवोऽलीकं भाषन्ते, अहमपि तत्र गत आत्मानं नाशयिष्यामीति॥

[भा.४७३८] एतानि य अन्नानि य, विप्परिणामणपदाणि सेहस्स।
उवहि-नियडिप्पहाणा, कुव्वंति अनुज्जुया केई॥

वृ-'एतानि च' अनन्तरोक्तानि 'अन्यानि च' द्रव्य-क्षेत्र-कालभावैः शैक्षस्य विपरिणामनपदानि भवन्ति-तत्र द्रव्यतो मनोज्ञाहारादि ददाति, क्षेत्रतः प्रवात-निवाते मनोऽनुकूले प्रदेशे तं स्थापयति, कालतो वेलायामेव भोजयति, भावतस्तस्याकर्षणार्थं हित-मधुरमुपदेशं ददाति। एवं केचिद् 'अनृजुकाः' शठा उपधि-परवञ्चनाभिप्रायो निकृति-कैतवार्थप्रयुक्तवचना-ऽऽकाराच्छादनं ते

प्रधाने येषां ते तथाविधा विपरिणाममनपदानि कुर्वन्ति ॥ उपसंहरन्नाह-

[भा.४७३९] एएसामन्नयरं, कप्पं जो अतिचरेज्ज लोभेन ।
थेरे कुल गण संघे, चाउम्मासा भवे गुरुगा ॥

वृ- 'एतेषाम्' अव्याहताविहारकलापप्रतिपादितानां कल्पानामन्यतरं 'कल्पं' विधिं 'यः' आचार्यादिर्लोभदोषेण 'अतिचरेत्' अतिक्रामेत् तं सम्यग् ज्ञात्वा कुल-गण-सङ्घस्थविरैः कुलादिसमवायेन वा तस्य पार्श्वात् तं शैक्षमाकृष्य चत्वारो मासा गुरुकास्तस्य प्रायश्चित्तं दातव्यम्। अथ स्थविरैः समवायेन वा भणितोऽपि तं शैक्षं न समर्पयति ततः कुल-गण-सङ्घबाह्यः क्रियते ॥

*मू. (१०५) अत्थि या इत्थ केइ उवस्सयपरियावन्नए अचित्ते परिहरणारिहे स च्चेव उग्गहस्स पुव्वाणुन्नवणा चिट्ठइ अहालंदमवि उग्गहे ॥*

वृ- अस्य सम्बन्धमाह-

[भा.४७४०] असहीणेसु वि साहम्मितेसु इति एस उग्गहो वुत्तो ।
अयमपरो आरंभो, गिहिविजढे उग्गहे होइ ॥

वृ- 'अस्वाधीनेष्वपि' क्षेत्रान्तरं गतेषु साधर्मिकेषु इत्येषोऽवग्रहः प्रोक्तः । अयं पुनरपरः प्रकृतसूत्रस्यारम्भो गृहिभिर्विजढः-परित्यक्तो यः प्रतिश्रयस्तद्विषयेऽवग्रहे भवति ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-अस्ति च 'अत्र' अनन्तरसूत्रप्रस्तुते प्रतिश्रये, किम् ? 'किञ्चिद्' आहारा-ऽर्थजातादिकं गृहस्थसत्कं उपाश्रये पर्यापन्नं-विस्मृतं परित्यक्तं वा उपाश्रयपर्यापन्नम्, 'अचित्तं' प्राशुकम्, 'परिहरणार्हं' साधूनां परिभोक्तुं योग्यम्, तत्र सैवावग्रहस्य पूर्वानुज्ञापना तिष्ठति, तत्रोपाश्रये तिष्ठद्भिः पूर्वमेव 'अनुजानीत प्रायोग्यम्' इत्येवं यदवग्रहोऽनुज्ञापितः सैवानुज्ञापना पश्चादुपाश्रयपर्यापन्नग्रहणे व्यवतिष्ठते न पुनरभिनवमनुज्ञापनं कर्त्तव्यमिति भावः। कियन्तं कालम् ? इत्याह-'यथालन्दमपि' मध्यमलन्दमात्रमपि कालं यावदवग्रह इति सूत्रार्थः ॥

अथामुमेव सूत्रार्थं भाष्यकृत् प्रतिपादयति-

[भा.४७४१] आहारो उवही वा, आहारो भुंजणारिहो कोयी ।
दुविहपरिहारअरिहो, उवही वि य कोयि न वि कोयि ॥

वृ-इह सूत्रे किञ्चिद्ग्रहणेन आहार उपधिर्वा गहीतः, परिहरणार्हग्रहणेन तु स एव परिभोगार्हः। तत्राहारः कश्चिद् भोजनार्हो भवति कश्चिच्च न भवतीति, उपधिरपि कश्चिद् द्विविधपरिहारस्य-धारणा-परिभोगरूपस्यार्हो भवति कश्चिच्च न भवति ॥ तथाहि-

[भा.४७४२] संसत्ताऽऽसव पिसियं, आहारो अनुवभोज्ज इच्चादी ।
झुसिरतिण-वच्चगादी, परिहारे अणरिहो उवही ॥

वृ- 'संसक्तं' द्वीन्द्रियादिजन्तुमिश्रं भक्त-पानं 'आसवः' मद्यं 'पिशितं' पुद्गलम् इत्यादिक आहारः 'अनुपभोज्यः' साधूनामुपभोक्तुमयोग्यः, शुषिरतृण-वल्कलादिक उपधिरपि 'परिहारस्य' परिभोगस्यानर्हो मन्तव्यः, अर्थादापन्नं ओदनादिक आहारो वस्त्रादिकश्चोपधि परिभोगार्ह इति॥

[भा.४७४३] ठायंते अनुन्नवणा, पाताोग्गे होइ तप्पढमयाए ।
सो चेव उग्गहो खलु, चिट्ठइ कालो उ लंदक्खा ॥

वृ- साधुभिः प्रतिश्रये तिष्ठद्भिस्तत्प्रथमतया या प्रायोग्यस्यानुज्ञापना कृता भवति स

एवोपाश्रयपर्यापन्नस्यापि ग्रहणेऽवग्रहस्तिष्ठति, न पुनर्भूयोऽनुज्ञाप्यते। या तु सूत्रे 'लन्दाख्या' लन्द इत्यभिधानं स कालः प्रतिसव्य इति ॥ कृता सूत्रव्याख्या भाष्यकृता। सम्प्रति निर्युक्तिविस्तरः-

[भा.४७४४] पुव्विं वसहा दुविहे, दव्वे आहार जाव अवरण्हे।
उवहिस्स ततियदिवसे, इतरे गहियम्मि गिण्हंति ॥

वृ- 'पूर्वं' प्रथमं तिष्ठन्त एव वृषभाः समन्तादुपाश्रयमवलोकयन्तो द्विविधे द्रव्ये उपयोगं प्रयच्छन्ति। द्विविधं द्रव्यं नाम-आहार उपधिश्च। तत् प्राधूर्णकादयो गृहिणो विस्मृत्य परित्यज्य वा गता भवेयुः, तेषु गतेषु यावदपराह्णो न भवति तावदाहारं न गृह्णन्ति, परतस्तु गृह्णन्ति। उपधेस्तु तृतीये दिवसे गते ग्रहणं कुर्वन्ति। 'इतरद् नाम' अर्थजातं तत् कदाचिदगारिणां विस्मृतं भवेत् तदेकान्ते निक्षेपणीयम्। "गहियम्मि गिण्हंति"त्ति यदि धनिकादिभि गृहीतः-प्रारब्धः प्रातिवेश्मिको नष्टो भवेत् तदा तत्रापि यत् तेषां विस्मृतं तद् यथोक्तविधिना गृह्णन्ति। एष निर्युक्तिगाथासमासार्थः ॥

साम्प्रतमेनामेव विवृणोति-

[भा.४७४५] पायं सायं मज्झंतिए व वसभा उवस्सय समंता।
पेहंति अपेहाए, लहुगो दोसा इमे तत्थ ॥

वृ- 'प्रातः' प्रभाते 'सायं' सन्ध्यायां 'मध्यान्हे वा' मध्याह्नसमये वृषभा उपाश्रयं समन्तात् प्रत्युपेक्षन्ते। अप्रत्युपेक्षमाणानां लघुको मासः, दोषाश्चेमे 'तत्र' अप्रत्युपेक्षणे भवन्ति ॥

[भा.४७४६] साहम्मि अन्नधम्मिय, गारत्थिणि खिवण वोसिरण रज्जू।
गिण्हण-कड्ढण-ववहार-पच्छकडुड्डाह-निव्विसए ॥

वृ- 'साधर्मिणी' संयती 'अन्यधर्मिणी' परतीर्थिका 'अगारस्था' अविरतिका, एताः प्रद्विष्टाः सत्यः साधुप्रतिश्रयसमीपेऽर्थजातस्य निक्षेपणं कुर्युः, यद्वा बालकं व्युत्सृज्य गच्छेयुः, परीषहपराजितो वा कोऽपि संयतो रज्जूदन्धनेन म्रियेत, तत्र राजपुरुषैर्ज्ञाते सति ग्रहणा-ऽऽकर्षण-व्यवहार-पश्चात्कृतोड्डाह-निर्विषयाज्ञापनादयो दोषा भवन्ति ॥ इदमेव भावयति-

[भा.४७४७] चोदनकुविय सहम्मिणि, परउत्थिणिगी उ दिट्ठिरागेण।
अनुकंप जदिच्छा वा, छुभिज्ज बालं अगारी वा ॥

वृ- साधर्मिणी काचित् खण्डितशीला गर्भवती 'उड्डाहोऽयम्' इति मन्यमानैः साधुभिर्गाढं निर्भर्त्स्य रजोहरणादिलिङ्गबहिकृता भवेत्, ततः सा 'मदीयं लिङ्गमपहृतम्' इति मन्यमाना तया नोदनया कुपिता सती स्वमपत्यजातं तदाश्रयसमीपे परित्यजेत्। परतीर्थिनी तु 'दृष्टिरागेण' 'माऽस्माकमपयशःप्रवादो भविष्यति' इति कृत्वा संयतानामुपाश्रयसन्निधौ बालकं व्युत्सृजेत्; वरं लोकश्चिन्तयिष्यति-एतैरेवैतद् जनितमिति। अथवा अगारी काचिदनुकम्पया यदृच्छया वा बालकं तत्र प्रक्षिपेत्। तत्र 'अनुकम्पया नाम' दुष्कालादौ काचिद् दुःस्थयोषिद् जीवनाय स्वापत्यं तदाश्रयान्तिके त्यजति-वरमेतेऽनुकम्पापरायणा अमुं बालकं शय्यातरस्यापरस्य वा ईश्वरस्य गृहे निक्षेप्स्यन्तीति। 'यदृच्छया' अभिसन्धिमन्तरेणैवमेव व्युत्सृजति ॥

[भा.४७४८] हाउं व जरेउं वा, अवदंता तेनाति वत्थादी।
एएहिं चिय जनियं, तहिं च दोसा उ जनदिट्ठे ॥

वृ- स्तेनकादयो वस्त्रादिकं हर्तुं वा नेतुं वा 'अचयन्तः' अशक्नुवन्तः साधूनां प्रतिश्रयसन्निधौ परित्यजेयुः । उपलक्षणमिदम्, तेनान्यतीर्थिकादयः प्रत्यनीकतया हिरण्य-सुवर्णादिकमपहृत्य तत्र निक्षिपेयुः [illegible] वृषभाः [illegible] दूरतः [illegible]- एतैरेवैतदपत्यभाण्डं जनितम्, सुवर्णादिकं वा अपहृतम् । एवं तत्र जनदृष्टे सति 'दोषाः' ग्रहणा-ऽऽकर्षणादयो भवेयुः ॥

[भा. ४७४९] अहवा छुभेज्ज कोयी, उब्भामग वेरियं व हंतूणं ।
वेहानस इत्थी वा, परीसहपराजितो वा वि ॥

वृ- अथवा कश्चिद् 'उद्भ्रामकं' पारदारिकं वैरिणं वा हत्वा प्रत्यनीकतया तत्र प्रक्षिपेत्, स्त्री वा काचिदत्यन्तदुःस्थिता वैहायसमरणमुपाश्रयसमीपे कुर्यात्, परीषहपराजितो वा संयत एव कोऽपि रज्जूद्बन्धनेन म्रियेत, 'वरं प्रवेष्टुं ज्वलितं हुताशनं, न चापि भग्नं चिरसञ्चितं व्रतम् ।' इति कृत्वा ॥

[भा. ४७५०] दवियट्ठऽसंखडे वा, पुरिसित्थी मेहुणे विसेसो वि ।
एमेव य समणम्मि वि, संकाए गिण्हणादीणि ॥

वृ- कोऽपि कश्चित् पुरुषं 'द्रव्यार्थम्' अर्थजातनिमित्तं यद्वा असङ्खडं-कलहो वैरमित्यर्थः तेन वा कश्चिद् व्यपरोप्य संयतोपाश्रयसमीपे परित्यजेत् । एवं स्त्रयमपि कश्चिद् विनाश्य प्रक्षिपेत्, नवरं मैथुने विशेषः । किमुक्तं भवति ? -सपत्नू काचिदपरां सपत्नीं चतुर्थसेवाविघ्नकारिणीं मत्वा व्यपरोप्य च तत्र व्युत्सृजेत्, 'अमीषामपयशो भूयात्' इति कृत्वा । एवमेव श्रमणेऽपि मन्तव्यम्, तमपि कश्चिदुपकरण-द्रव्यार्थं वैरेण वा मारयेदित्यर्थः, तत्र साधवः शङ्क्येरन्, ततो ग्रहणा-ऽऽकर्षणादीनि पदानि प्राप्नुवन्ति ॥ यत एवमतः-

[भा. ४७५१] कालम्मि पहुप्पंते, चच्चरमादी ठवित्तु पडियरणं ।
रक्खंति साणमादी छन्ने जा दिट्ठमन्नेहिं ॥

वृ- त्रिसन्ध्यं वृषभैः समन्ततो वसति प्रत्युपेक्षणीया, प्रत्युपेक्षितायां च यदि किञ्चित् कल्पस्थकादिकं पश्यन्ति कालश्च पूर्यते ततश्चत्वरादिषु स्थापयित्वा प्रतिचरणं कुर्वाणाः प्रच्छन्नावकाशे स्थिताः श्वान-मार्जारादिना विनाश्यमानं तावद् रक्षन्ति यावत् कल्पस्थकादिकमन्यैर्दृष्टमिति ॥

[भा. ४७५२] बोलं पभायकाले, करिंति जनजाननट्ठया वसभा ।
पडियरणा पुन देहे, परोग्गहे नेव उज्झंति ॥

वृ- यत् तत्र हिरण्य-सुवर्णादि केनचित् परित्यक्तं भवति तत् प्रभातकाले एव प्रत्युपेक्षमाणाः सम्यग् निरीक्ष्य वृषभा जनज्ञापनार्थं बोलं कुर्वन्ति, यथा-केनचित् पापेनेदं हिरण्यादिकमस्मदपयशः प्रदानार्थमत्र प्रक्षिप्तमिति । यस्तु देहः-द्रव्या-ऽर्थ-वैरादिकारणव्यपरोपितस्य पुरुषादेः शरीरमित्यर्थः तत्र प्रतिचरणा कर्त्तव्या, सम्यक् प्रतिचर्य यदि कोऽपि न पश्यति तदा परिष्ठापनीयमिति हृदयम् । तच्च 'परावग्रहे' परकीयनिवेशनादौ नैव 'उज्झन्ति' परित्यजन्ति, किन्तु परैरपरिगृहीते भूभागे इति ॥

[भा. ४७५३] अप्पडिचर-पडिचरणे, दोसाय गुणा य वन्निया एए ।
एतेन सुत्त न कतं, सुत्तनिवातो इमो तत्थ ॥

वृ- 'अप्रतिचरण-प्रतिचरणयोः' प्रतिश्रयस्याप्रत्युपेक्षण-प्रत्युपेक्षणयोर्यथाक्रममेते दोषा गुणाश्च वर्णिताः, परमेतेनार्थेन सूत्रं 'न कृतं' न विहितम्, किन्तु सामाचारीप्रकाशनार्थं सर्वमेतद् व्याख्यातमिति। सूत्रनिपातः पुनरयं 'तत्रेति' सूत्रनिपातस्यैवोपदर्शनार्थः ॥

[भा.४७५४] आगंतारठियाणं, कज्जे आदेसमाइणो केई।
वसिउं विस्समिउं वा, छड्डेत्तु गया अनाभोगा ॥

वृ- इह यत्रागारिण आगत्यागत्य तिष्ठन्ति तद् आगन्तुकागारं तत्र 'कार्ये' कारणविशेषतः स्थितानां प्रकृतसूत्रमवतरति । कथम् ? इत्याह-आदेशाः-प्राघूर्णकास्तदादयः केचित् पथिका आगन्तुकागारे रजन्यां वासमुपगता दिवा वा भोजनार्थं विश्रामं कृतवन्तः, तत उषित्वा विश्रम्य वा किञ्चिद् द्रव्यजातमनाभोगात् परित्यज्य गताः ॥ किं पुनस्तत् ? इत्याह-

[भा.४७५५] समिइं-सत्तुग-गोरस-सिणेह-गुल-लोणमादि आहारे।
ओहे उवग्गहम्मि य, होउवही अट्ठजातं वा ॥

वृ- इहाहार उपधिश्चेति द्विविधं द्रव्यं भवति । तत्राहारः समिति-सक्तु-गोरस-स्नेह-गुड लवणादिकः' समिति-कणिक्का, शेषं प्रतीतम्। उपधिस्तु द्विधा भवति-ओघे उपधि उपग्रहे वा, ओघोपधिरुपग्रहोपधिश्चेत्यर्थः । 'अर्थजातं' द्रव्यं तद् वा परित्यक्तं भवेत् ॥

तत्राहारोपधिविषयं तावद् द्विविधमाह-

[भा.४७५६] काऊणमसागारिए, पडियरणाऽऽहार जाव अवरण्हे।
एमेव य उवहिस्स वि, असुन्न सेधाइ दूरे य ॥

वृ- आहारमसागारिके प्रदेशे कृत्वा तावत् प्रतिचरणं कुर्वते यावदपराह्णः सञ्जायते । एवमेवोपधेरपि प्रतिचरणं कर्त्तव्यम्, नवरमशून्ये भूभागे संस्थापनीयः। शैक्षादयश्च द्विविधस्यापि द्रव्यस्य दूरे कर्त्तव्याः ॥ किं कारणमाहारमपराह्णं यावत् प्रतिचरन्ति ? इत्युच्यते-

[भा.४७५७] वोच्छिज्जई ममत्तं, परेण तेसिं च तेन जति कज्जं।
गिण्हंता वि विसुद्धा, जति वि न वोच्छिज्जती भावो ॥

वृ- अपराह्णात् परतस्तेषां पथिकानामाहारे ममत्वं व्यवच्छिद्यते, 'तेषां च' साधूनां यदि 'तेन' आहारेण कार्यं भवति ततो गृह्णन्तोऽपि विशुद्धाः, यद्यपि च भावस्तेषां तदुपरि न व्यवच्छिद्यते तथाप्यपराह्णादूर्ध्वं गृह्णतां न कश्चिद् दोषः । उपधिं तु तृतीयदिवसे पूर्णे गृह्णन्ति, एतावता तद्विषयममत्वस्य व्यवच्छेदात् ॥

[भा.४७५८] अव्वोच्छिन्ने भावे, चिरागयाणं पि तं पदंसिंति।
पन्नवणमनिच्छंते, कप्पं तु करेंति परिभुत्ते ॥

वृ- अथ तेषामद्यापि भावो न व्यवच्छिद्यते। ततोऽव्यवच्छिन्ने भावे तेषां स्ववस्त्राणि गवेषयतां चिरादायातानामपि 'तम्' उपधिं दर्शयन्ति, एवं च तेषां प्रज्ञापनां कुर्वन्ति-अस्माभिरेतानि वस्त्राणि स्वीकृतानि, ततोऽनुग्रहं मन्यमानाः साधूनामनुजानीध । एवमुक्ते यद्यनुजानते ततः सुन्दरम्, अथ नेच्छन्त्यनुज्ञातुं तानि च वस्त्राणि परिभुक्तानि ततोऽप्कायवधरक्षणार्थं कल्पं कुर्वन्ति ॥

अथार्थजातविषयं विधिमाह-

[भा.४७५९] पच्छोनियत्तपुट्ठा, करादि दाएंति एत्थ न पेधे।

दरिसिंति अपिच्छंते, को पुच्छति केन ठवियं च ॥

वृ-इहोपाश्रये यद्यर्थजातं पतितमुपलभ्यते तदा तदप्यल्पसागारिके स्थाप्यते, शैक्षादयश्च दूरे कर्त्तव्याः, प्रत्यवनिवृत्तैश्च-भूयस्तत्रैव समायातैर्गृहिभिः पृष्टाः-'कुत्रास्माक तदर्थजातं तिष्ठति?' ततः 'करादिना' हस्ताङ्गुल्यादिसंज्ञया दर्शयन्ति-अत्र प्रदेशे "नं" एनं प्रेक्षध्वम्। अथ ते न पश्यन्ति ततः स्वयमेव तदर्थजातं दर्शयन्ति। यदि ते पृच्छेयुः-केनेदमत्र स्थापितम्?; ततो वक्तव्यम्-कः पृच्छति? केन स्थापितं च? इति॥एवं तावदुपाश्रयपर्यापन्ने आहारादौ विधिरुक्तः। अथ शय्यातरादिगृहपर्यापन्ने विधिमाह-

[भा.४७६०] भडमाइभया नट्ठे, गहिया-ऽगहिएसु तेसु सज्झादी।
गिण्हंति असंचइयं, संचइयं वा असंथरणे॥

वृ- भटाः-राजपुरुषास्तदादिभयाद् नष्टे शय्यातरादौ अथवा सज्झिकाः-प्रातिवेश्मिकास्ते गृहीतृभि-धनिकैः आगृहीताः-ऋणं दापयितुमारब्धास्ततस्तेषु सज्झिकादिषु नष्टेषु तत्र य आहारोऽसञ्चयिकः-दधि-घृतादिस्तं गृह्णन्ति। अथासंस्तरणं ततः 'सञ्चयिकमपि' अवगाहिमादिकं गृह्णन्ति॥

[भा.४७६१] साविक्खेतर नट्ठे, एमेव य होइ उवहिगहणं पि।
पच्चागएसु गहणं, भुंजति दिन्नेवमट्ठे वि॥

वृ- प्रातिवेश्मिकादिः सापेक्षो वा नष्टो भवेद् 'इतरो वा' निरपेक्षः। सापेक्षो नाम-भूयस्तत्रैवागन्तुकामः, तद्विपरीतो निरपेक्षः। तत्रोभयस्मिन्नपि नष्टे 'एवमेव' आहारवदुपधेरपि ग्रहणं कुर्वन्ति। सापेक्षनष्टेषु च प्रत्यागतेषु कथयन्ति, कथिते च दत्तमनुज्ञातं सत् परिभुञ्जते। ये तु निरपेक्षनष्टास्तेषु निर्विवादमेव परिभुञ्जते। एवं "अट्ठे वि" त्ति अर्थजातेऽपि ग्रहणं मन्तव्यम्। अत्रैवाक्षेप-परिहारावाह-

[भा.४७६२] पाउग्गमणुन्नवियं, जति मन्नसि एवमतिपसंगो त्ति।
आउरभेसज्जुवमा, तह संजमसाहगं जं तु॥

वृ- यद्येवं मन्यसे-'प्रायोग्यं' साधूनामुचितं यत् तदेव साधुभिः पूर्वमनुज्ञापितम् न पुनः 'अप्रायोग्यम्' अर्थजातादि, तत एवमनुज्ञापितमप्यर्थजातं गृह्णतामतिप्रसङ्गो भवति। तत्राभिधीयते-नैकान्तेनार्थजातमप्रायोग्यम्, यत आतुरः-रोगी तस्य भैषजोपमा कर्तव्या-यथाऽऽतुरस्याभिनवोदीर्णे ज्वरादौ यदौषधं प्रतिषिध्यते तदेवान्यस्यामवस्थायां तस्यैवानुज्ञायते, एवमर्थजातमपि पुष्टकारणाभावे प्रतिषिद्धम्, यत्तु दुर्भिक्षादौ संयमस्य साधकं तदनुज्ञातमेव॥

*मू. (१०६) से वत्थूसु अव्वावडेसु अव्वोगडेसु अपरपरिग्गहिएसु अमरपरिग्गहिएसु स च्चेव उग्गहस्स पुव्वाणुन्नवणा चिट्ठइ अहालंदमवि उग्गहे॥*

[भा.४७६३] गिहिउग्गहसामिजढे, इति एसो उग्गहो समक्खातो।
सामिजढे अजढे वा, अयमन्नो होइ आरंभो॥

वृ-स्वामिना जढः-परित्यक्तो यो गृहिणां सम्बन्धी अवग्रहस्तद्विषय इत्येषः 'अवग्रहः' ग्रहण-विधिः समाख्यातः। अयं पुनः 'अन्यः' परस्तुतसूत्रस्यारम्भः स्वामिना त्यक्तेऽत्यक्ते वा अवग्रहे भवति। अनेन सम्बन्धेनायातस्यास्य व्याख्या-"से" तस्य निर्ग्रन्थस्य 'वास्तुषु' गृहेषु। कथम्भूतेषु?

'अव्यापृतेषु' शटित-पतिततया व्यापारविरहितेषु 'अव्याकृतेषु' दायादादिभिरविभक्तेषु, अथवाऽतीतकाले केनाप्यनुज्ञातमिति न ज्ञायते यत् तदव्याकृतं तेषु, तथा 'अपरपरिगृहीतेषु' परैः-अन्यैरनधिष्ठितेषु 'अमरपरिगृहीतेषु' देवैः स्वीकृतेषु; सैवावग्रहस्य पूर्वानुज्ञापना तिष्ठति यथालन्दमप्यवग्रहे । किमुक्तं भवति ? -यावन्तं कालं तानि वास्तूनि तेषां पूर्वस्वामिनामवग्रहे वर्त्तन्ते तावन्तं कालं सैव पूर्वानुज्ञा तिष्ठति, न पुनर्भूयोऽप्यवग्रहोऽनुज्ञापनीय इति सूत्रार्थः ॥ सम्प्रति निर्युक्तिविस्तरः-

[भा.४७६४]　　खित्तं वत्थुं सेतुं, केतुं साहारणं च पत्तेयं ।
अव्वावडमव्वोअडमपरममरपरिग्गहे चेव ॥

वृ-इह वास्तु सामान्यतो द्विधा-क्षेत्रं 'वास्तु च' गृहं चेत्यर्थ । क्षेत्रं द्विधा-सेतु केतु च । यदरहट्टजलेन सिच्यते तत् सेतु, वृष्टिजलेन तु यन्निष्पाद्यते तत् केतु । गृहं पुनः खातोच्छ्रितोभयभेदात् त्रिधा वक्ष्यते । क्षेत्रं गृहं चोभयमपि द्विधा-साधारणं प्रत्येकं च । साधारणं-बहूनां सामान्यम्, प्रत्येकम्-एकस्वामिकम् । सूत्रपदानि पश्चार्धेन सङ्गहीतुमाह-'अव्यापृतमव्याकृतमपरपरिगृहीतममरपरिगृहीतं चेति ॥ अथ साधारणपदं विवृणोति-

[भा.४७६५]　　दाईय-गण-गोट्ठीणं, सेणी साहारणं व दुगमादी ।
वत्थुम्मि एत्थ पगयं, ऊसित खाते तदुभए य ॥

वृ- दायाद-गण-गोष्ठीनां श्रेणीनां वा "दुगमाइ"त्ति द्वि-त्रिप्रभृतिसङ्ख्याकानां द्वि-त्र्यादिजनप्रतिबद्धानां वा यत् क्षेत्रं वास्तु वा सामान्यं तत् साधारणमुच्यते । अत्र तु वास्तुनाऽधिकारः, न क्षेत्रेण । तच्च वास्तु त्रिधा-उच्छ्रितं खातं तदुभयं च । 'उच्छ्रितं' प्रासादः, 'खातं' भूमिगृहम्, 'तदुभयम्' अधोभूमिगृहयुक्तः प्रासादः ॥ अव्यापृतादिपदानि व्याचष्टे-

[भा.४७६६]　　सडिय-पडियं न कीरइ, जहियं अव्वावडं तयं वत्थुं ।
अव्वोगडमविभत्तं, अनहिट्ठियमन्नपक्खेणं ॥

वृ-यत् शटित-पतितं यत्र च व्यापारः कोऽपि न क्रियते तद् वास्तु अव्यापृतमुच्यते । अव्याकृतं नाम यद् दायादैरविभक्तम् । अपरपरिगृहीतं नाम यद् 'अन्यपक्षेण' अन्यदीयवंशेन नाधिष्ठितं-नान्यैः परिगृहीतम्, स्वाम्येव तस्य शय्यातर इति भावः ॥ इदमेव भावयति-

[भा.४७६७]　　अवरो सु च्चिय सामी, जेन विदिन्नं तु तप्पढमताए ।
अमरपरिग्गहियं पुन, देउलिया रुक्खमादी वा ॥

वृ- 'अपरो नाम' येन तत्प्रथमतया साधूनां तद् दत्तं स एव तस्य स्वामी नान्यः कश्चिद्, न परोऽपर इति समासाश्रयणात् । अमरपरिगृहीतं पुनर्देवकुलिका वा वृक्षादिकं वा वानमन्तराधिष्ठितं मन्तव्यम् ॥ अथाव्याकृतादिषु दृष्टान्तानुपदर्शयति-

[भा.४७६८]　　अव्वावडे कुडुंबी, काणिट्ठऽव्वोगडे य रायगिहे ।
अपरपरे सो चेव उ, अमरे रुक्खे पिसायघरे ॥

वृ- अव्यापृते गृहे कुटुम्बी दृष्टान्तः । अव्याकृते तु राजगृहे नगरे "काणिट्ठ" त्ति पाषाणमय्यः पक्वेष्टका वा बलिका महत्यश्च काणिका उच्यन्ते, तन्मयगृहकारापको वणिग् दृष्टान्तः । अपरपरिगृहीतेऽपि स एव दृष्टान्तः । अमरपरिगृहीते वृक्षः पिशाचगृहं वा निदर्शनं भवतीति

निर्युक्तिगाथासमासार्थः ॥ अथैनामेव विवरीषुः कुटुम्बिदृष्टान्तमाह-

[भा.४७६९] निम्मवणं पासाए, संखडि जक्ख सुमिणे य कंटीय।
अन्नं वा वावारं, न कुणति अव्वावडं तेनं ॥

वृ- एगेणं कुडुंबिएणं पुव्वं घरं कारियं। तस्स ते तम्मि संखडिं काउं 'कल्ले पविसामि' त्ति चिंतेइ। नवरं वाणमंतरेणं रत्तिं भन्नति-जि पविसिहिसि तो ते कुलं उच्छाएमि। तेन कंटियाहिं फलहिऊण मुक्कं, वावारं च से न करेइ। अन्नया साहूहिं आगएहिं सो कुडुम्बी अनुन्नविओ। तेन भन्नइ-देवयाए परिग्गहियं ततो मे अवाओ भविस्सइ। साहूहिं भणितो-अनुजाणसु तुमं, लभिस्सामो वयं देवयाए। तओ तेन अनुन्नाए तेहिं काउस्सग्गेण जक्खो आकंपिओ भणइ-उवरिल्लभूमियं मोत्तुं वीसत्था अच्छह। ते ठिया। तेसु गतेसु जे अन्ने साहुणो इंतिं ते तत्थेव ठायंति, स च्चेव उग्गहस्स पुव्वाणुन्नवणा ॥

अथ गाथाक्षरार्थः-कुटुम्बिना प्रासादस्य निर्मापणं कृतम्। ततः सङ्खडि कर्तुमारब्धा। यक्षेण च स्वप्ने निवेदितं-यदि प्रासादं प्रवेक्ष्यसि ततः सकुटुम्बं भवन्तं व्यपरोपयिष्यामीति। तेन कण्टिकाभिः परिक्षिप्तं तद् गृहम्, अन्यमपि च व्यापारं तत्र न करोति, तेनाव्यापृतमुच्यते ॥ अव्याकृते दृष्टान्तमाह-

[भा.४७७०] इड्ढित्तणे आसि घरं महल्लं, कालेण तं खीणधनं च जायं।
ते उम्बरीयस्स भया कुडीए, दाउं ठिया पासि घरं जईणं ॥

वृ- एगेणं इड्ढिमंतेनं वाणिएणं रायगिहे नयरे सजालमालाचोप्पालं पक्खिट्टगारहिं गिहं कारियं। सो य तम्मि निम्मविए पंचत्तीहूओ। पुत्ता से फेल्ला जाया, क्षीणविभवा इत्यर्थः। तत्थ य उंबरीओ करो घिप्पइ। ते तं दाउं अचयंता एगपासे कुडियं काउं ठिया। तं च तेहिं संजयाण दिन्नं ॥ अथाक्षरगमनिका-'ऋद्धिमत्त्वे' महर्द्धिकतायां कस्यापि वणिजो गृहं 'महल्लं' महाजनाकुलमासीत्। कालेन तत् क्षीणधनं चशब्दादल्पमानुषं च सञ्जातम्। ते च तदीयाः पुत्राः 'उम्बरीयस्य' 'प्रत्युदुम्बरं रूपको दातव्यः' इत्येवंलक्षणस्य करस्य भयादेकस्मिन् पार्श्वे कुटीं कृत्वा मीलं च गृहं यतीनां दत्त्वा कुटीरके स्वयं स्थिताः, एतदव्याकृतमुच्यते ॥ अथ पूर्वानुज्ञापनापदं व्याख्याति-

[भा.४७७१] पुव्वट्ठियऽणुन्नवियं, ठायंतऽन्ने वि तत्थ ते य गता।
एवं सुन्नमसुन्ने, सो च्चेव य उग्गहो होइ ॥

वृ- अव्यापृतेऽव्याकृते वा पूर्वं साधवोऽनुज्ञाप्य स्थिताः, तेषां मासकल्पे वर्षावासे वा पूर्णे शून्यीभूते 'तत्र' प्रतिश्रयेऽपूर्णे वा कल्पेऽशून्य एवोपाश्रयेऽन्ये साधवस्तिष्ठन्ति, 'ते च' पूर्वसाधवः कल्पं समाप्यान्यत्र गताः; एवं शून्ये अशून्ये वा तत्र तिष्ठतां तेषां स एवावग्रहो भवति, न पुनर्भूयोऽनुज्ञापयन्ति ॥ अपरपरिगृहीतं व्याचष्टे-

[भा.४७७२] अपरपरिग्गहितं पुन, अपरे अपरे जती जइ उवेंति।
अव्वोकडं पि तं चिय, दोन्नि वि अत्था अपरसद्दे ॥

वृ- पुनःशब्दो विशेषणार्थः, स चैतद्विशिनष्टि-अपरपरिगृहीतं नाम येन साधूनां तद् दत्तं स एव स्वामी नान्य इति तावदपरपरिगृहीतस्यैकोऽर्थः प्रागुक्तः; यद्वा यदि अपरेऽपरे यतयस्तत्रोपयन्ति तदपरपरिगृहीतम्। अव्याकृतमपि तदेव मन्तव्यम्, सर्वेषामपि साधूनां साधारणमिति कृत्वा।

तदेवं द्वावप्यर्थावपरशब्दे भवतः, एकः-न परोऽपरस्तेन परिगृहीतमपरपरिगृहीतम्, द्वितीयः-अपरैः साधुभिः परिगृहीतमपरपरिगृहीतमिति ॥ अमरपरिगृहीतं तु वृक्षो वृक्षस्याधस्ताद्वा गृहं मन्तव्यम्, तत्र गृहे यदि पूर्वं साधवोऽनुज्ञाप्य स्थितास्तदा शेषाणां स एवावग्रहो भवति।

अथ वृक्षविषयं विधिमाह-

[भा.४७७३] भूयाइपरिग्गहिते, दुमम्मि तमणुन्नवित्तु सज्झायं।
एगेन अनुन्नविएष सो चेव य उग्गहो सेसे ॥

वृ- भूतादिना-व्यन्तरेण परिगृहीतो यो द्रुमस्तत्र स्वाध्यायार्थं कदाचिद् मन्तव्यं भवति, तं च व्यन्तरमनुज्ञाप्य स्वाध्यायं करोति। एवमेकेनापि तस्मिन्ननुज्ञापिते शेषाणां साधूनां स एवावग्रहो भवति ॥ अथासौ वृक्षः परपरिगृहीतोऽप्यस्ति ततः-

[भा.४७७४] सामी अनुन्नविज्जइ, दुमस्स जस्सोग्गहो व्व असहीणे।
कूरसुरपरिग्गहिते, दुमम्मि काणिट्ठगाण गमो ॥

वृ- यस्तस्य द्रुमस्यस्वामी सोऽनुज्ञाप्यते। अथासौ न स्वाधीनस्ततो अस्वाधीने तस्मिन् 'यस्वायमवग्रहः सोऽनुजानीताम्' इति वक्तव्यम्। अथासौ द्रुमः क्रूरसुरपरिगृहीतस्ततो येषामगारिणां सत्कस्तेषामागन्तुमसौ न ददाति तत्र काणेष्टकागृहगमो मन्तव्यः, तं सुरं कायोत्सर्गेणाकम्प्य स्वाध्यायादि कुर्वन्तीति भावः ॥ तत्र चायं विधिः-

[भा.४७७५] नेच्छंतेन य अन्ने, ईसालुसुरेण जं अनुन्नायं।
तत्थ वि सो चेव गमो, सगारिपिंडम्मि मग्गणता ॥

वृ- ईर्ष्यालुसुरेण 'अन्यान्' गृहिणोऽनिच्छता 'यद्' वृक्षमूलादिकं साधूनामनुज्ञातं तत्रापि 'स एव गमः' पूर्वानुज्ञापनावस्थानलक्षणो विज्ञेयः। नवरं तत्र स्थितानां सागारिकपिण्डस्य मार्गणा कर्त्तव्या ॥ तामेवाह-

[भा.४७७६] जक्खो च्चिय होइ तरो, बलिमादीगिण्हणे भवे दोसा।
सुविणे ओयरिए वा, संखडिकारावणमभिक्खं ॥

वृ- येन यक्षेण स द्रुमः परिगृहीतः स एव तत्र स्थितानां 'तरः' शय्यातरो भवति। ततो यत् तस्य बलिकूरादि निवेद्यते स शय्यातरपिण्ड इति कृत्वा तस्य ग्रहणे 'दोषाः' आज्ञाभङ्गादयो भवन्ति। यद्वा यक्षो वृक्षस्वामिनः स्वप्ने रात्रावतीर्ण कथयेत्-मामुद्दिश्य भूयोभूयः प्रकरणं विधेयं ततोऽहं न किमपि भणिष्यामि। एवमभीक्ष्णसङ्खडिकारापणे यत् तत्र भक्तं पानकं वा स शय्यातरपिण्ड इति कृत्वा परिह्रियते ॥

मू. *(१०७) से वत्थूसु वावडेसु वोडेसु परपरिग्गहिएसु भिक्खुभावस्स अट्ठाए दोच्चं पि उग्गहे अनुन्नवेयव्वे सिया अहालंदमवि उग्गहे ॥*

[भा.४७७७] सागारिगी उग्गहमग्गणेयं, स केचिरं वाकह मो कहं वा।
इदानि राउग्गहमग्गणा उ, केणं चिदिन्नो स कया कहं वा ॥

वृ- 'सागारिकी' सागारिकसत्का तावदियमवग्रहमार्गणा प्रकृता। 'स च' सागारिकावग्रहः कियन्तं कालं कथं वा भवति ? इत्येतत् पूर्वसूत्रे 'व्याकृतं' व्याख्यातम्, "मो" इति पादपूरणे, इदानीं तु राजावग्रहस्य उपलक्षणत्वाद् देवेन्द्रावग्रहस्य च मार्गणा क्रियते, यथा-केन कदा कथं

वाऽसी 'वितीर्ण' अनुज्ञातः ? इति ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-"से" तस्य निर्ग्रन्थस्य 'वास्तुषु' गृहेषु 'व्यापृतेषु' व्यापारयुक्तेषु वह्यमानकेष्वित्यर्थ 'व्याकृतेषु' दायादादिभिर्विभक्तेषु 'परपरिगृहीतेषु' अन्यवंशीयैरधिष्ठितेषु 'भिक्षुभावस्यार्थाय' भिक्षुभावो नाम-ज्ञान-दर्शन-चारित्राणि तृतीयव्रतादिकं वा, तत्रैव भिक्षुशब्दस्य परमार्थत्वेन रूढत्वात्, स भिक्षुभावः परिपूर्णो भूयादित्येवमर्थं ये साधवः पश्चादागच्छन्ति तैर्द्वितीयमपि वारमवग्रहोऽनुज्ञापयितव्यः स्याद् 'यथालन्दमपि' जघन्यलन्दमात्रमपि कालमवग्रहे तत्रावस्थान इति सूत्रार्थ ॥ अथ भाष्यविस्तरः-

[भा.४७७८] अणवट्ठिया गहिं कैंति [illegible] रायमादिणो चउरो ।
पासाणम्मि व लेहा, जा तित्थं ताव सक्कस्स ॥

वृ- इह देवेन्द्रावग्रहादयः पञ्चावग्रहाः, 'तत्र' तेषां पञ्चानां मध्ये 'राजादयः' राज-गृहपतिसागारिक-साधर्मिकसम्बन्धिनश्चत्वारोऽवग्रहा अनवस्थिता भवन्ति, भूयोभूयः परावर्तन्त इत्यर्थः । शक्रस्य पुनरवग्रहः पाषाण इव रेखा यावत् तीर्थं तावदेकवारमनुज्ञापितः सन्ननुवर्त्तते। अथ यदुक्तम् 'इदानिं राउग्गहमग्गणा उ, केणं विदित्रो स कथा कहं व" त्ति तदेतन्निर्वाहयितुमाह-

[भा.४७७९] सोऊण भरहराया, सव्विड्ढी आगतो जिनसगासं ।
वंदिय नमंसिया नं, भत्तेण निमंतणं कुणइ ॥

वृ- अष्टापदे समवसृतं श्रीऋषभस्वामिनं श्रुत्वा भरतराजः साधूनामर्थाय पञ्च शकटशतानि भक्त-पानभृतानि गहीत्वा सर्वर्ध्या जिनसकाशमागतः । ततो भगवन्तं 'वन्दित्वा' स्तुत्वा 'नमस्कृत्य' शिरसा प्रणम्य भक्तेन साधूनां निमन्त्रणं करोति ॥ भगवानाह-

[भा.४७८०] पीलाकरं वताणं, एयं अम्हं न कप्पए घेत्तुं ।
अणवज्जं निरुवहयं, भुंजंति य साहुणो भिक्खं ॥

वृ- आधाकर्मा-ऽभ्याहृत-राजपिण्डदोषदुष्टतया व्रतानां पीडाकरमेतदस्माकम्, अतो न कल्पते ग्रहीतुम् । यतः 'अनवद्यां' प्राशुकां 'निरुपहताम्' एषणीयां साधवो भिक्षां भुञ्जते, नाप्राशुकामनेषणीयां वा ॥

[भा.४७८१] तं वयणं सोऊणं, महता दुक्खेण अद्दितो भरहो ।
समणा अनुग्गहं मे, न करिंति अहो ! अहं चत्तो ॥

वृ- 'तद्' अनन्तरोक्तं वचनं श्रुत्वा भरतो महता मानसिकेन दुःखेनार्दितः सञ्जज्ञे । कथम् ? इत्याह-अमी श्रमणाः 'मे' ममानुग्रहं न कुर्वन्ति, अहो ! अहमेभिस्त्यक्त इति ॥

[भा.४७८२] नाऊण तस्स भावं, देविंदो तस्स जाणणट्ठाए ।
वंदिय नमंसया नं, पंचविहं उग्गहं पुच्छे ॥

वृ-ज्ञात्वा 'तस्य' भरतस्य 'भावं' विषादात्मकं तस्यैव चावग्रहस्वरूपज्ञापनार्थं भगवन्तं वन्दित्वा नमस्कृत्य च नमिति वाक्यालङ्कारे पञ्चविधमवग्रहं पृच्छति ॥ ततश्च-

[भा.४७८३] अट्ठावयम्मि सेले, आदिकरो केवली अमियनाणी ।
सक्कस्स य भरहस्स य, उग्गहपुच्छं परिकहेइ ॥

वृ- अष्टापदे शैले आदिकरः केवली अमितज्ञानी शक्रस्य च भरतस्य च पुरतोऽवग्रहपृच्छां परिकथयति ॥ तद्यथा-

[भा.४७८४] देविंद-रायउग्गह, गहवति सागारिए य साहम्मी ।
पंचविहम्मि परूविते, नायव्वं जं जहिं कमइ ॥

वृ- देवेन्द्रावग्रहो राजावग्रहो गृहपत्यवग्रहः सागारिकावग्रहः साधर्मिकावग्रहश्चेति पञ्चधाऽवग्रहः । एतस्मिन् पञ्चविधे प्ररूपिते ज्ञातव्यं यद् 'यत्र' देवेन्द्रावग्रहादौ मनसा वचसा वा अवग्रहानुज्ञापनं 'क्रमते' अवतरतीति सङ्ग्रहगाथासमासार्थः । विस्तरार्थस्तु यथा पीठिकायां "हिट्ठिल्ला उवरिल्लेहिं बाहिया न तु लभंति पाहन्नं ।" इत्यादिगाथाभिरभिहितस्तथैवात्रापि वक्तव्य इति ॥

[भा.४७८५] तं वयणं सोऊणं, देविंदो वंदिऊण तित्थयरं ।
वितरति अप्पणगे उग्गहम्मि जं साहुपाउग्गं ॥

वृ- 'तद्' अवग्रहप्रतिपादकं भगवतो वचनं श्रुत्वा देवेन्द्रस्तीर्थकरं वन्दित्वा यदात्मीयेऽवग्रहे साधूनां प्रायोग्यं सचित्तमचित्तं मिश्रं वा तत् तदानीं सर्वमपि वितरति, अनुजानातीत्यर्थः ॥

[भा.४७८६] सोउं तुट्ठो भरहो, लद्धो मए एत्तिओ इमो लाभो ।
वितरति जं पाउग्गं, केवलकप्पम्मि भरहम्मि ॥

वृ- भरतोऽपि भगवतो वचनं श्रुत्वा 'तुष्टः' प्रमुदितः 'अहो ! मयैतावान् लाभो लब्धः' इति परिभाव्य 'केवलकल्पे' सम्पूर्णेऽपि भरते यत् 'प्रायोग्यं' साधूनामुचितं सचित्तादिकं तत् सर्वं वितरति ॥

[भा.४७८७] पंचविहम्मि परूविते, स उग्गहो जाणएण घेत्तव्वो ।
अन्नाणेणोग्गहिए, पायच्छित्तं भवे तिविहं ॥

वृ- पञ्चविधेऽवग्रहे प्ररूपिते सति सम्प्रति तात्पर्यमुच्यते-स स्वल्ववग्रहो जानता ग्रहीतव्यः। अथाज्ञानेनागृह्णाति अजानन्नित्यर्थ ततस्त्रिविधं प्रायश्चित्तं भवति ॥

[भा.४७८८] इक्कड-कढिणे मासो, चाउम्मासा य पीढ-फलएसु ।
कट्ठ-कलिंचे पनगं, छारे तह मल्लगाईसु ॥

वृ- तद्यथा-इक्कडमये कठिनमये च संस्तारके लघुमासः, पीठ-फलकेषु चत्वारो मासा लघवः, काष्ठे कलिञ्चे क्षारे मल्लकादिषु च पञ्चकम् ॥

*मू. (१०८) से अनुकुड्डेसु वा अनुभित्तीसु वा अनुचरियासु अनुफरिहासु वा अनुपंथेसु वा अनुमेरासु वा स च्चेव उग्गहस्स पुव्वानुन्नवणा चिट्ठइ अहालंदमवि उग्गहे ॥*

[भा.४७८९] जे चेव दोन्नि पगता, सागारिय-रायउग्गहा होंति ।
तेसिं इह परिमाणं, निवोग्गहम्मी विसेसेणं ॥

वृ- यावेव द्वौ सागारिक-राजावग्रहौ पूर्वसूत्रयोः प्रकृतौ तयोरेवेह सूत्रे परिमाणमुच्यते । तत्रापि नृपावग्रहे परिमाणं विशेषेणाभिधीयते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या- "से" तस्य निर्ग्रन्थस्य 'अनुकुड्येषु वा' कुड्यसमीपवर्त्तिषु वा प्रदेशेषु, एवमनुभित्तिषु वा अनुचरिकासु वा अनुपरिखासु वा अनुपथेषु वा अनुमर्यादासु वा । अत्र चरिका-नगर-प्राकारयोरपान्तराले हस्ताष्टकमाणो मार्गः, परिखाखातिका, मर्यादा-सीमा, शेषं प्रतीतम् । एतेषु सैवावग्रहस्य पूर्वानुज्ञापना तिष्ठति यथालन्दमपि कालमवग्रह इति सूत्रार्थ ॥ अथ निर्युक्तिविस्तरः-

[भा.४७९०] अनुकुड्डे भित्तीसुं, चरिया-पागारपंथ-परिहासु ।

अनुमेरा सीमाए, नायव्वं जं जहिं कमति ॥

वृ- अनुशब्दः प्रत्येकमभिसम्बध्यते, अनुकुड्या-ऽनुभित्त्योरनुचरिका-प्राकारपथ-परिखासु च, "अनुमेरा सीमाए" त्ति मर्यादा-सीमा, ततो अनुमर्यादायामनुसीमायामित्येकोऽर्थः । एतेषु ज्ञातव्यं यद् यत्र सागारिक-राजाद्यवग्रहानुज्ञापनं क्रमते ॥ एनां निर्युक्तिगाथां व्याख्यानयति-

[भा.४७९१] अनुकुड्डं उवकुड्डं, कुड्डसमीवं च होइ एगट्ठं ।
एमेव सेसएसु वि, तेसि पमाणं इमं होइ ॥

वृ- अनुशब्दः [illegible] अनुकुड्यम् उपकुड्यं कुड्यसमीपमिति वैकार्थम् । एवमेव 'शेषेष्वपि' अनुभितत्यादिषु पदेषु मन्तव्यम् । 'तेषाम्' अनुकुड्यादीनामवग्रहविषयमिदं प्रमाणं भवति ॥

[भा.४७९२] वति-भित्ति-कडगकुड्डे, पंथे मेराय उग्गहो रयणी ।
अनुपरियाए अड्ड उ, चउरो रयणीउ परिहाए ॥

वृ- वृती-बबूलादिपरिक्षेपरूपायां भित्ती-इष्टकादिनिर्मितायां कटकमये च कुड्ये पथि मर्यादायां च 'रयणि'त्ति एकहस्तमानोऽवग्रहो भवति । अनुचरिकायामष्टौ हस्ताः । परिखायां चत्वारो रत्नयः ॥ इदमेव भावयति-

[भा.४७९३] वतिसामिणो वतीतो, हत्थो सेसोग्गहो नरवतिस्स ।
तस्स तहिं ममकारो, जति वि य निम्माणि जा भूमी ॥

वृ- यो गृहपतिर्विवक्षिताया वृतेः स्वामी तस्य वृतेः परतो हस्तमात्रमवग्रहो भवति, शेषस्तु सर्वोऽपि नरपतेरवग्रहो मन्तव्यः । अथ किं कारणं वृतिस्वामिनो वृतेः परतोऽप्यववग्रहो भवति? इत्याह-'तस्य' गृहपतेः 'तत्र' वृतेः परतो हस्तप्रमाणे भूभागे ममकारो भवति, अतो यद्यपि "निम्माणि"त्ति मूलपादानेव यावद् विवक्षितगृहसत्का भूमिस्तथापि वृतेः परतो हस्तमेकं तस्यावग्रहः । एवं भित्ति-कुड्यादिष्वपि भावनीयम् ॥

[भा.४७९४] हत्थं हत्थं मोत्तुं, कुड्डादीणं तु मज्झिमो रन्नो ।
जत्थ न पूरइ हत्थो, मज्झे तिभागो तहिं रन्नो ॥

वृ- तेषामेव कुड्यादीनां हस्तं हस्तमुभयोरपि गृहयोर्मुक्त्वा मध्यमः सर्वोऽपि राज्ञोऽवग्रहः । यत्र तु गृहद्वयापान्तरालस्यातिस्तोकतया हस्तो न पूर्यते तत्र मध्यमस्त्रिभागो राज्ञः, शेषौ द्वौ गृहस्वामिनोः; एतदवग्रहपरिमाणमुक्तम् । अत्र यद्युच्चारादीनि स्थान-निषदनादीनि वा कुर्वन् यदि कुड्यादीनां हस्ताभ्यन्तरे करोति ततो गृहपत्यवग्रहो मनसि क्रियते, हस्ताद् बहिश्चरिकाप्राकार-परिखादिषु च राजावग्रहोऽनुज्ञाप्यते, अटव्यामपि यद्यसौ राजा प्रभवति तदा तस्यैवावग्रहः स्मर्यते, अथासौ तत्र न प्रभवति ततो देवेन्द्रावग्रहो मनसि क्रियते ॥

मू. (१०९) *से गामस्स वा जाव रायहाणीए वा बहिया सेणं सन्निविट्ठं पेहाए कप्पइ निग्गंथाण वा निग्गंथीण वा तद्दिवसं भिक्खायरियाए गंतुं पडिएत्तए । नो से कप्पइ तं रयणिं तत्थेव उवाइणावित्तए । जो खलु निग्गंथो वा निग्गंथी वा तं रयणिं तत्थेव उवाइणाइ, उवातिनंतं वा साइज्जति, से दुहतो वि अइक्कममाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं अनुग्घाइयं ॥*

वृ- अस्य सम्बन्धमाह-

[भा.४७९५] उवरोहभया कीरइ, सप्परिखो पुरवरस्स पागारो।
तेन र सेणासुत्तं, अनुअत्तइ उग्गहो जं च ॥

वृ- पूर्वसूत्रे प्राकारः प्राकारपरिखा चोक्ता । स च प्राकारः सपरिखोऽपि पुरवरस्योपरोधः-परचक्रेण वेष्टनं तद्भयात् क्रियते । तेन कारणेन "र" इति पादपूरणे सेनासूत्रमिदमारभ्यते । यच्चावग्रहः पूर्वसूत्रेभ्यः अनुवर्त्तते, अव्यवच्छिन्न एवागच्छन्नस्तीति भावः, अतो यथा रोधके राजावग्रहमनुज्ञाप्य बहिर्निर्गम्यते प्रविश्यते वा तथाऽभिधीयते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-सेशब्दोऽथशब्दार्थे । अथ ग्रामस्य वा यावद् राजधान्या वा, यावत्करणाद् नगरस्य वा खेटस्य वा इत्यादिपरिग्रहः, एतेषामन्यतरस्य बहि 'सेनां' राज्ञः स्कन्धावारं रोधकं कृत्वा सन्निविष्टं 'प्रेक्ष्य' दृष्ट्वा कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा तद्दिवसं भिक्षाचर्यायां गत्वा प्रत्यागन्तुम् । "नो" नैव "से" तस्य विवक्षितस्य भिक्षोः कल्पते तां रजनीं 'तत्रैव' सेनायाम् 'उपादातुम्' अतिक्रामयितुम् । यः खलु निर्ग्रन्थो वा निर्ग्रन्थी वा तां रजनीं तत्रैवोपाददाति उपाददतं वा स्वादयति सः 'द्विधाऽप्यतिक्रामन्' जिनसीमानं राजसीमानं च विलुम्पन् आपद्यते चातुर्मासिकं परिहारस्थानमनुद्घातिकमिति सूत्रार्थः ॥ अथ भाष्यविस्तरः-

[भा.४७९६] सेनादी गम्भिहिई, खित्तुप्पायं इमं वियाणित्ता ।
असिवे ओमोयरिए, भय-चक्काऽभिगमे गुरुगा ॥

वृ- क्वचित् मासकल्पक्षेत्रे स्थितैर्ज्ञातम्-सेना-परचक्रमत्र समायास्यति, आदिशब्दाद् अशिवमवमौदर्यं म्लेच्छादिभयं वा भविष्यति । एवमादौ कारणे पश्चादपि गमिष्यत इति कृत्वा अनागतमेव ततः क्षेत्राद् निर्गन्तव्यम् । कथं पुनरनागतं तद् ज्ञायते ? इत्याह-क्षेत्रस्योत्पातः क्षेत्रोत्पातः-परचक्राद्युपद्रवसूचकानि लिङ्गानीत्यर्थः, तानि च दिक्चक्रवालं धूमायते, अकाले तरूणां पुष्प-फलानि जायन्ते, महता शब्देन भूमि कम्पते, समन्ततः क्रन्दित-कूजितशब्दाः श्रूयन्ते इत्यादीनि मन्तव्यानि । एवं क्षेत्रोत्पातममुं विज्ञाय निर्गन्तव्यम् । अथ न निर्गच्छन्ति ततः अशिवे अवमौदर्ये बोधिकभये परचक्रागमने ज्ञातेऽपि निर्गमनकुर्वतां चतुर्गुरुकाः ॥

[भा.४७९७] आणाइणो य दोसा, विराधना होइ संजमा-ऽऽयाए ।
असिवादिम्मि परूविते, अधिकारो होति सेनाए ॥

वृ- आज्ञादयश्च दोषाः विराधना च संयमा-ऽऽत्मविषया भवति । संयमविराधना शुद्धे भक्तपानेऽलभ्यमानेऽनेषणीयं गृह्णीयादित्यादिका, आत्मविराधना, परिताप-महादुःखादिका। यदा चाशिवादिकं प्रतिपदं प्ररूपितं भवति तदा अत्र सेनाया अधिकारः कर्त्तव्यः । अशिवादिकं च प्रथमोद्देशकेऽध्वसूत्रे सप्रपञ्चं प्ररूपितमिति नेह भूयः प्ररूप्यते ॥

तच्च परचक्रागमनं यथा ज्ञायते तथा दर्शयति-

[भा.४७९८] अतिसेस-देवत-निमित्तमादि अतिवह पवित्ति सोतूणं ।
निग्गमन होइ पुव्वं, अनागते रुद्ध वोच्छिन्ने ॥

वृ- अवधिज्ञानाद्यतिशयेन स्वयमेव ज्ञातम्, अपरेण वा अतिशयज्ञानिना पृष्टेन कथितम्, देवतया वा कयाचिदाख्यातम्, अविसंवादिना वा निमित्तेनावगतम्, आदिग्रहणेन विद्यामन्त्रादिपरिग्रहः, अथवा प्रवृत्ति-वार्ता तामवितथां श्रुत्वा, ततः क्षेत्रात् पूर्वमेव निर्गमनं कर्त्तव्यं भवति।

अथानागतं न ज्ञातम् सहसैव तत्रगरं रुद्धं पन्थानो व्यवच्छिन्नास्ततो न निर्गच्छेयुरपि ॥

अथवा अमीभि कारणैर्ज्ञातेऽपि न निर्गता भवेयुः-

[भा.४७९९] गेलन्न रोगि असिवे, रायदुट्टे तहेव ओमम्मि ।
उवही-सरीरतेनग, नाते वि न होंति निग्गमनं ॥

वृ- 'ग्लानः' ज्वरादिपीडितः कश्चिदस्ति तत्प्रतिबन्धेन गन्तुं न शक्यते, "रोगि"त्ति दुष्टरोगेण कुष्ठादिना कश्चिदत्यन्तमभिभूतः स परित्युक्तं न पार्यते, बहिर्वा अशिवं राजद्विष्टमवमौदर्यं च विद्यते, उपधिस्तेनाः शरीरस्तेना वा बहिर्गच्छत उपद्रवन्ति, एतैः कारणैर्ज्ञातेऽपि परचक्रागमने निर्गमनं न भवति ॥

[भा.४८००] एएहि य अन्नेहि य, न निग्गया कारणेहि बहुएहिं ।
अच्छंति होइ जयणा, संवट्टे नगररोधे य ॥

वृ- एतैरन्यैश्च बहुभिः कारणैर्न निर्गता भवेयुः ततस्तत्रैव सन्तिष्ठतां संवर्त्ते नगररोधके च यतना वक्तव्या । संवर्त्तो नाम-परचक्रागमनं श्रुत्वा यत् पर्वत-नदी-दुर्गादिषु बहूनां ग्रामाणां जनः संवर्त्तीभूयैकत्र तिष्ठति । नगररोधकः प्रतीतः ॥ तत्र संवर्त्ते यतनामाह-

[भा.४८०१] संवट्टम्मि तु जयणा, भिक्खे भत्तट्ठणाए वसहीए ।
तम्मि भये संपत्ते, अवाउडा एक्कओ ठंति ॥

वृ- संवर्त्ते तिष्ठतां 'भैक्षे' भक्तार्थनायां वसतौ च यतना कर्त्तव्या । 'तस्मिंश्च' परचक्रलक्षणे भये सम्प्राप्तेऽपावृता एकतस्तिष्ठन्तीति निर्युक्तिगाथासमासार्थ ॥ साम्प्रतमेनामेव विवृणोति-

[भा.४८०२] वईयासु व पल्लीसु य, भिक्खं काउं वसंति संवट्टे ।
सव्वम्मि रज्जखोभे, तत्थेव य जाणि थंडिल्ले ॥

वृ- संवर्त्तेऽभिनवसन्निविष्टतया सचित्तः पृथिवीकायो भवतीति कृत्वा भइक्षां न हिण्डन्ते किन्तु पूर्वस्थितासु व्रजिकासु वा पल्लीषु वा भिक्षां कृत्वा तत्रैव स्थण्डिले भुक्त्वा रात्रौ संवर्त्ते समागत्य वसन्ति । अथ सर्वस्यापि राज्यस्य क्षोभः ततो व्रजिकादिकमपि नास्ति तदा 'तत्रैव' संवर्त्ते यानि कुलानि स्थण्डिले स्थितानि तेषु भिक्षां हिण्डन्ते ॥

अथ न सन्ति स्थण्डिले स्थितानि तत इयं यतना-

[भा.४८०३] पूवलिय-सत्तु-ओदनगहणं पडलोवरिं पगासमुहे ।
सुक्खादीण अलंभे, अजविंता वा वि लक्खेंति ॥

वृ- जगारि-तक्र-तीमनादौ आर्द्रे प्रपतति पृथिवीकायविराधना भवेदिति मत्वा याः पूपलिका ये च सक्तवो यश्च शुष्कौदन एवमादिकं शुष्कद्रव्यं पटलोपरिस्थिते प्रकाशमुखे भाजने गृह्णन्ति। अथ शुष्कादीना लाभो न भवति आदिशब्दः स्वगतानेकभेदसूचकः, न वा तैरात्मानं यापयन्ति तत आर्द्रेण गृह्यमाणेन यत्र पटलकादौ खरण्टको लग्नस्तं सम्यग् लक्षयन्ति ॥

गतं भिक्षाद्वारम् । अथ भक्तार्थनाद्वारमाह-

[भा.४८०४] पच्छन्नासति बहिया, अह सभयं तेन चिलिमिणी अंतो ।
असतीय व सभयम्मि व, धरंति अद्धेयरे भुंजे ॥

[भा.४८०४] पच्छन्नासति बहिया, अह सभयं तेन चिलिमिणी अंतो ।

असतीय व सभयम्मि व, धरंति अद्धेयरे भुंजे ॥

वृ- संवर्त्तस्यान्तः प्रच्छन्ने प्रदेश भक्तार्थनं कर्त्तव्यम् । अथान्तः प्रच्छन्नं नास्ति ततः संवर्तस्य बहिर्गत्वा समुद्देष्टव्यम् । अथ बहि सभयं ततः 'अन्तः' संवर्त्तस्याभ्यन्तर एव चिलिमिलिकां दत्त्वा भोक्तव्यम् । अथ नास्ति चिलिमलिका समये वा सा न प्रकटीक्रियते ततो अर्द्धे साधवो भाजनानि धारयन्ति, 'इतरे' द्वितीया अर्द्धे कमठकेषु भुञ्जते ॥

[भा.४८०५] काले अपहुच्चंते, भए व सत्थे व गंतुकामम्मि।
कप्पुवरि भायणाइं, काउं इक्को उ परिवेसे ॥

वृ- अथ वारकेण भुञ्जानानां कालो न पूर्यते, भये वा त्वरितं भोक्तव्यम्, यो वा संवर्त्ते सार्थः स गन्तुकामस्ततः कल्पस्योपरि भाजनानि 'कृत्वा' स्थापयित्वा सर्वेऽपि कमठकादिषु भुञ्जते एकश्च तेषां सर्वेषामपि परिवेषयेत् ॥

[भा.४८०६] पत्तेग वड्डगासति, सज्झिलगादेक्कओ गुरू वीसुं ।
ओमेन कप्पकरणं, अन्ने गुरुनेक्कतो वा वि ॥

वृ- प्रत्येकं यदि सर्वेषां 'वड्डकानि' कमठकानि न सन्ति ततो ये 'सज्झिलकाः' परस्परं सहोदरा भ्रातरः, आदिशब्दाद् अन्येऽपि ये प्रीतिवशेनैकत्र मिलन्ति ते एकतः समुद्दिशन्ति, गुरवः 'विष्वक्' पृथग् भुञ्जते । यदा सर्वेऽपि भुक्तास्तदा यस्तत्र 'अवमः' लघुस्तेन कमठकानां कल्पकरणं विधेयम्, गुरूणां सत्कं कमढकं तैः सह न मील्यते । अन्यस्तस्य कल्पं प्रयच्छति । अपूर्यमाणेषु च साधूनां गुरोश्च कमढकान्येकतोऽपि कल्पयन्ति ॥

[भा.४८०७] भाणस्स कप्पकरणं, दड्डिल्लग मुत्ति कडुयरुक्खे य ।
तेसऽसति कमढ कप्पर, काउमजीवे पदेसे य ॥

वृ- भाजनस्य कल्पकरणं दग्धभूमिकायां गोमूत्रभाविते वा भूभागे कटुकवृक्षस्याधस्ताद्वा कर्त्तव्यम् । 'तेषां' दग्धादिस्थण्डिलानामभावे कमढकेषु घटादिकर्परे वा भाजनस्य कल्पं कृत्वा तत् कल्पपानकमन्यत्र नीत्वा स्थण्डिले परिष्ठापयन्ति, गते वा संवर्त्ते पश्चात् परिमलितजीवप्रदेशेषु परिष्ठाप्यम् । समये वा त्वरमाणाः स्थण्डिलस्य वा अभावे 'धर्मा-ऽधर्मास्तिकायसम्बन्धिषु अजीवप्रदेशेषु परिष्ठापयामः' इति बुद्धिं विधाय अस्थण्डिले परिष्ठापयन्ति ॥

गतं भक्तार्थनद्वारम् । वसतिद्वारमाह-

[भा.४८०८] गोणादीवाघाते, अलब्भमाणे व बाहि वसमाणा ।
वातदिसि सावयभए, अवाउडा तेन जग्गणता ॥

वृ- संवर्त्तस्यान्तो निराबाधे परिमलिते प्रदेशे वसन्ति । अथ तत्र गवादिभिरितस्त-तस्तडफडायमानैर्व्याघातो यद्वा तत्र प्राशुकप्रदेशो न लभ्यते ततो बहिर्वसन्तो यतो घाटिभयं तं भूभागं वर्जयित्वा वसन्ति । अथ तत्र श्वापदभयं ततो यस्यां दिशि वातस्तां वर्जयन्ति । येन च परचक्रभयेन तत्र संवर्त्ते प्रविष्टास्तस्मिन् प्राप्ते सर्वमुपकरणं गुपिले प्रदेशे स्थापयित्वा स्वयमेकतोऽन्यत्र प्रदेशेऽप्रावृताः कायोत्सर्गेण तिष्ठन्ति स्तेरक्षणार्थं च वारकेण रजनीं सकलामपि जाग्रते ॥ अथ कस्मादप्रावृतास्तिष्ठन्ति ? इत्याह-

[भा.४८०९] जिनलिंगमप्पडिहयं, अवाउडे वा वि दिस्स वज्जंति ।

थंभणि-मोहनिकरणं, कडजोगे वा भवे करणं ॥

**वृ-** अचेलतालक्षणं जिनलिङ्गमप्रतिहतम्, एवंस्थितानां न कोऽप्युपद्रवं करोतीति भावः । अथवा ते स्तेना अपावृतान् दृष्ट्वा स्वयमेव एवंस्थितानां न कोऽप्युपद्रवं करोतीति वा तेषां स्तम्भन-मोहने कुर्वन्ति । यो वा 'कृतयोगः' सहस्रयोधी तेन तादृशे आकम्पे गच्छसंरक्षणार्थं 'करणं' शिक्षणं तेषां विधेयम् ॥ गतं संवर्त्तद्वारम् । अथ नगररोधकद्वारमाह-

[भा.४८१०] संवट्टनिग्गयाणं, नियट्टणा अट्ठ रोह जयणाए ।
वसही-भत्तट्ठणया, थंडिल्लविगिंचणा भिक्खे ॥

**वृ-** ये मासकल्पप्रायोग्यात् क्षेत्रान्निर्गत्य संवर्त्ते स्थितास्ते संवर्त्तनिर्गता उच्यन्ते, तेषां तत्र स्थितानामवस्कन्दादिभयेन भूयोऽपि संवर्त्ताद् नगरं प्रति निवर्तना भवति । यद्वा ग्लानादिभिः कारणैः प्रथममेव नगरान्न निर्गतास्ततो नगरे वसतामष्टौ मासान् रोधके यतनया वस्तव्यं भवति । सा च यतना वसति-भक्तार्थन-स्थण्डिलविवेचन-भैक्षविषया कर्त्तव्या ॥

तत्र वसतियतनां तावदाह-

[भा.४८११] हानी जावेक्का, दो दारा कडग चिलिमिणी वसमा ।
तं चेव एगदारे, मत्तग सुवणं च जयणाए ॥

**वृ-** रोधके तिष्ठद्भिरष्टौ वसतयः प्रत्युपेक्षणीयाः, तासु प्रत्येकमृतुबद्धे मासं मासमासितव्यम् । अष्टानामलाभे सप्त, एवं हान्या तावद् वक्तव्यं यावत् संयतानां संयतीनां च "एगट्ठ"त्ति एकैव वसतिर्भवति । तत्रैकस्यां वसतौ स्थितानां द्वे द्वारे भवतः, अपान्तराले कटकं चिलिमिलिकां वा वृषभाः कुर्वन्ति । अथ द्वारद्वयं न भवति तत एकद्वारेऽपि तमेव विधिं कुर्वन्ति । कायिकाभूमेश्चाभावे मात्रकेण यतन्ते, यतनया च स्वपनं कुर्वन्तीति निर्युक्तिगाथासमासार्थः ॥

अथ भाष्यकार एनामेव विवृणोति-

[भा.४८१२] रोहेउ अट्ठ मासे, वासासु सभूमि तो निवा जंति ।
परबलरुद्धे वि पुरे, हाविंति न मासकप्पं तु ॥

**वृ-** अष्टौ ऋतुबद्धिकान् मासान् 'रोधयित्वा' रोधं कृत्वा ततः वर्षासु नृपाः 'स्वभूमिम्' आत्मीयराज्यभुवं गच्छन्ति । साधवश्च रोधके वसन्तः परबलरुद्धेऽपि पुरे मासकल्पं न हापयन्ति किन्तु तत्र प्रथमत एवाष्टौ वसतयोऽष्टौ भिक्षाचर्या प्रत्युपेक्षणीयाः ॥ अथाष्टौ न प्राप्यन्ते ततः-

[भा.४८१३] भिक्खस्स व वसहीय, व असती सत्तेव चउरो आवेक्का ।
लंभालंभे एक्केक गस्स नेगा उ संजोगा ॥

**वृ-** भैक्षस्य वा वसतेर्वा असति सप्त प्रत्युपेक्षणीयाः । तदप्राप्तौ षडादिपरिहाण्या चतस्रो यावदेकाऽपि प्रत्युपेक्षणीया । किमुक्तं भवति ?-वसतयो भिक्षाचर्याश्च यद्यष्टौ न प्राप्यन्ते तत एकैकपरिहाण्या यावदेका वसतिरेका भिक्षाचर्या । अत्र चैकैकस्या लाभेऽलाभे चानेके संयोगा भवन्ति । तथाहि-अष्टौ वसतयो अष्टौ भिक्षाचर्या १, अष्टौ वसतयः सप्त भिक्षाचर्या २, अष्टौ वसतयः षड् भिक्षाचर्या ३, एवं यावदष्टौ वसतय एका भिक्षाचर्या, एवमष्टौ भङ्गा भवन्ति, एते च वसतेरष्टकममुञ्चता लब्धाः, सप्तकादिभिरप्येकैकपर्यन्तैरेवमेवाष्टावष्टौ भङ्गा लभ्यन्ते, सर्वसङ्ख्यया भङ्गकानां चतुःषष्टिरुत्तिष्ठते । चतुःषष्टितमश्च भङ्गक एका वसतिरेका भिक्षाचर्येतिलक्षणः । सा

चैका वसति संयतानां संयतीनां संयतीनां च पृथग् भवति ॥ अथोभयेषामपि योग्या वसति प्रत्येकं नावाप्यते तत एकत्रापि वस्तव्यम्, तत्र यतनामाह-

[भा.४८१४] एगत्थ वसंताणं, पिहदुयाराऽसतीय सयकरणं।
मज्झेण कडग चिलिमिणि, तेसुभयो थेर खुड्डीतो ॥

वृ- संयतानां संयतीनां च एकत्र वसतौ वसतामियं यतना-यदि चतुःशलादिकं पृथग्द्वारं तद् गृहं तदा तत्रान्तरे कटकं चिलिमिलीं वा दत्त्वा तिष्ठन्ति । पृथग्द्वारस्याभावे "सयकरणं" ति स्वयमेव कुड्यं छित्त्वा द्वितीयं द्वारं कर्त्तव्यम् । गृहमध्ये च कुड्याभावे कटश्चिलिमिलिका वा दातव्या। 'तयोश्च' कटस्य चिलिमिलिकाया वा आसन्नयोरुभयोः पार्श्वयोर्मध्यादेकस्मिन् स्थविराः साधवो द्वितीये च क्षुल्लिकाः संयत्यो भवन्ति । एतच्चाग्रे व्यक्तीकरिष्यते ॥

अथ "तं चेव एगदारे" त्ति पदं व्याख्याति-

[भा.४८१५] दारदुयस्स तु असती, मज्झे दारस्स कडग पुत्ती वा ।
निक्खम पवेसवेला, ससद्द पिंडेण सज्झातो ॥

वृ- यदि द्वारद्वयं न भवति स्वयं च पृथग् द्वारं कर्तुं न लभ्यते ततस्तस्यैकद्वारस्य मध्ये कटकं 'पोतिकां वा' चिलिमिलीं दत्त्वा द्विधा विभजनं विधेयम् । तत्रार्द्धेन साधवो निर्गच्छन्ति अर्द्धेन संयत्य इति । अथ सङ्कीर्णा सा वसतिर्न वा विभक्तुं लभ्यते ततः परस्परं निर्गमप्रवेशवेलां वर्जयन्ति, यस्यां वेलायां संयता निर्गच्छन्ति तस्या न संयत्य इति । निर्गच्छन्तश्च शब्दं कुर्वन्ति, पिण्डेन च स्वाध्यायं कुर्वन्ति, शृङ्गारकथां न कुर्वन्ति, न वा पठन्ति ॥

अथ "स्वपनं च यतनया" इति पदं व्याचष्टे-

[भा.४८१६] अंतम्मि व मज्झम्मि व, तरुणी तरुणा य सव्वबाहिरतो ।
मज्झे मज्झिम थेरी, खुड्डी खुड्डा य थेरा य ॥

वृ- यास्तरुण्यस्ता अन्ते वा मध्ये वा भवन्ति, तरुणास्तु सर्वबाह्यतः कर्त्तव्याः, ततो मध्ये मध्यमाः स्थविराः क्षुल्लिकाश्च साध्व्यः, ततः क्षुल्लकाः स्थविराः चशब्दाद् मध्यमास्तरुणाश्च भवन्तीत्यक्षरार्थः । भावार्थस्तु वृद्धविवरणादवगन्तव्यः । तच्चेदम्-तरुणीओ अंते वा ठविज्जंति मज्झे वा । तत्थ अंते ताव भन्नइ-एगम्मि अंते तरुणीओ ठविज्जंति, तासिं आरतो मज्झिमातो, तासिं आरतो थेरीओ, तासिं आरतो खुड्डीतो, खुड्डीणं आरतो थेरा, थेराणं आरतो खुड्डा, तेसिं बाहिं मज्झिमा, तेसिं परिखेवेण तरुणा, एसा रत्तिं वसंताणं जयण त्ति ॥ अथ मात्रकपदं व्याख्याति-

[भा.४८१७] पत्तेय समण दिक्खिय, पुरिसा इत्थी य सव्वे एकत्था ।
पच्छन्न कडग चिलिमिणि, मज्झे वसभा य मत्तेणं ॥

वृ- यत्रोपाश्रयाणामल्पतया राजकीय आदेशो भवेत्-ये केचित् पाखण्डिनस्ते सर्वेऽप्येकत्रावतिष्ठन्तामिति । तत्र यदि 'प्रत्येकाः' स्त्रवर्जिताः 'श्रमणाः' निर्ग्रन्थ-शाक्यादयो दीक्षितपुरुषाः सर्वेऽप्येकस्यां वसतौ स्थिताः याश्च पाखण्डिन्यः स्त्रयस्ता अपि सर्वा एकत्र स्थितास्तत इयं यतना-यः प्रच्छन्नः प्रदेशस्तत्र साधुभिः साध्वीभिश्च स्थातव्यम्, प्रच्छन्नस्याभावे मध्ये कटकं चिलिमिलिकां वा वृषभाः कुर्वन्ति, कायिकाभूमेरभावे दिवा रात्रौ च मात्रकेण वृषभा यतन्ते ॥

[भा.४८१८] पच्छन्न असति निण्हग, बोडिय भिच्छय असोय सोया य ।

पउरदव वड्डगादी, गरहा य सअंतरं एक्को ॥

वृ- प्रच्छन्नस्य कटक-चिलिमिलिकयोश्चाभावे निह्नवेषु तिष्ठन्ति, तदभावे बोटिकेषु, तदप्राप्तौ भिक्षुकेषु। एतेष्वपि पूर्वमशौचवादिषु, ततः शौचवादिषु। शौचवादिषु च स्थिता आचमनादिषु क्रियासु प्रचुरद्रवेण कार्यं कुर्वन्ति, वड्डकम्-कमढकं तत्र भुञ्जते, आदिशब्दाद् अपरेणापि येन ते शौचवादिनो जुगुप्सां न कुर्वन्ति तस्य परिग्रहः। एवं प्रवचस्य गर्हा परिहृता भवति। सान्तरं चोपविष्टा भुञ्जते। "एगो" त्ति एकः क्षुल्लकादि कमढकानां कल्पं करोति॥

अथ "पत्तेय समण दिक्खिय" त्ति पदं व्याख्याति-

[भा.४८१९] पासंडीपुरिसाणं, पासंडित्थीण वा वि पत्तेगे।
पासंडित्थि-पुमाणं, व एक्कतो होतिमा जयणा॥

वृ- पाषण्डिपुरुषाणां पाषण्डिस्त्रीणां वा प्रत्येकं स्थितानां पाषण्डिस्त्री-पुरुषाणामेकतः स्थितानां वा इयं यतना भवति॥

[भा.४८२०] जे जह असोयवादी, साधम्मी वा वि जत्थ तहि वासो।
निहुया य जुद्धकाले, न वुग्गहो नेव सज्झाओ॥

वृ- ये यथा अशौचवादिनो ये च जीवादिपदार्थास्तिक्यवादित्वेन कारुणिकत्वेन च साधूनां साधर्मिकाः 'तेषु' तेषां मध्ये साधुभिर्वासः कर्त्तव्यः। यदा च तत्र द्वयोरपि सैन्ययोर्युद्धकालो भवति तदा 'निभृताः' निर्व्यापारा भवन्ति। इदमेव व्याचष्टे-'न विग्रहः' स्वपक्षेण परपक्षेण वा सह कलहो न कर्त्तव्यः, नैव च तदानीं स्वाध्यायो विधेयः॥ गता वसतियतना। भक्तार्थनयतनाऽपि "पउरदव वड्डगाई" इत्यादिना अत्रैवोक्ता। अथ स्थण्डिलयतनामाह-

[भा.४८२१] तं चेव पुव्वभणितं, पत्तेयं दिस्समाणे कुरुया य।
थंडिल्ल सुक्ख हरिए, पवायपासे पदेसेसु॥

वृ- स्थण्डिलं तदेव पूर्वभणितं "अनावायमसंलोए" इत्यादिना यथा पीठिकायामुक्तं तथैवात्रापि मन्तव्यम्। प्रथमस्थण्डिलालाभे शेषेषु गच्छतां प्रत्येकं मात्रकग्रहणं भवति, सागारिकेण च दृश्यमाने कुरुकुचा कर्त्तव्या। एवं बहि स्थण्डिले लभ्यमाने यतना। अथ बहिर्न लभ्यते निर्गन्तुं ततो यद् नगराभ्यन्तरे स्थण्डिलमनुज्ञातं तत्र यानि तृणानि शुष्काणि तेषु व्युत्सृजति, तेषामभावे दरमलितेषु मिश्रेषु, तदप्राप्तौ हरितेषु सचित्तेष्वपि व्युत्सृजति। अत्र च प्रत्येका-ऽनन्त-स्थिरा-ऽस्थिरादियतना सर्वाऽपि कर्त्तव्या यथा ओघनिर्युक्तौ भणिता। अथ प्रपाते गर्त्तायां नदीतटे प्रकारोपरि वा राज्ञाऽनुज्ञातं तत एतेषां पार्श्वे व्युत्सृजति। यदि सर्वथैव स्थण्डिलं न लभ्यते अथशच भूमिं न पश्यति ततो धर्म-ऽधर्मादिप्रदेशेष्वपि व्युतसृजन् शुद्धः॥

अथ "पत्तेयं दिस्समाणे कुरुया य" त्ति पदं व्याख्याति-

[भा.४८२२] पढमासइ अमणुन्नेतराण गिहियाणं वा वि आलोगं।
पत्तेयमत्त कुरुकुय, दवं च पउरं गिहत्थेसुं॥

[भा.४८२३] तेन परं पुरिसाणं, असोयवादीण वच्च आवातं।
इत्थी-नपुंसकेसु वि, परम्मुहो कुरुकुया सेव॥

वृ- गाथाद्वयमपि पीठिकायां व्याख्यातम्॥

एषा उच्चारयतना भणिता। अथ शरीरविवेचनयतनामाह-

[भा.४८२४] पच्छन्न पुव्वभणियं, विदिस थंडिल्ल सुक्ख हरिए य।
अगड वरंडग दीहिय, जलणे पासे पदेसेसु ॥

वृ- यद्यसौ कालगतः साधुस्तत्र केनापि न ज्ञातस्ततोऽन्तर्मुहूर्तप्रमाणे उपयोगकालेऽतीतेऽन्यलिङ्गं कृत्वा 'प्रच्छन्नम्' अल्पसागारिकं स्थण्डिले परिष्ठाप्यते। अथ ज्ञातस्तदा "पुव्वभणिय" ति यदि नगराद् निर्गमो न लभ्यते प्रत्यपायो वा निर्गतानां भवति ततो नगराभ्यन्तरे पूर्वम्-इहैव मासकल्पप्रकृते पारिष्ठापनिकानिर्युक्तौ वा यो भणितो विधिस्तेनोपाश्रयादपरदक्षिणस्यां दिशि परिष्ठापयन्ति। अथ तस्यां न लभ्ये ततो राज्ञा 'वितीर्णम्' अनुज्ञातं यत् स्थण्डिलं तत्र परिष्ठापयन्ति। अथ स्थण्डिले हरितानि भवन्ति ततः शुष्कतृणेषु, तदभावे मिश्रेषु, तदप्राप्तौ हरितेष्वपि परिष्ठापयन्ति। अथ राज्ञाऽभिहितम्-सर्वैरपि पाखण्डिभि 'अगडे' गर्त्तायां शव परित्यक्तव्यम्, प्राकारवरण्डकं वा दीर्घिकायां वा नद्यां वा वहन्त्यां ज्वलने वा ज्वलति प्रक्षेप्तव्यं तत एतेषां पार्श्वे परिष्ठापयन्ति। अथ न लभ्यते पार्श्वतः परित्यक्तुं ततः 'धर्मास्तिकायादिप्रदेशेषु परिष्ठापयामि' इति बुद्धिं कृत्वा तत्रैव प्रक्षिपन्ति ॥

अथ राज्ञा वितीर्णे स्थण्डिले परिष्ठापयतां विधिमाह-

[भा.४८२५] अन्नाए परलिंगं, उवओगद्धं तुलेत्तु मा मिच्छं।
नाते उड्डाहो वा, अयसो पत्थारदोसो वा ॥

वृ- यद्यसौ तत्राज्ञातस्तदा परलिङ्गं क्रियते, तच्च 'उपयोगाद्धाम्' अन्तर्मुहूर्तलक्षणां 'तोलयित्वा' प्रतीक्ष्य कर्त्तव्यम्, मा मिथ्यात्वं गमिष्यतीति कृत्वा। यो जनज्ञातस्तत्र परलिङ्गं न क्रियते, मा उड्डाहो भवेत्। उड्डाहो नाम-एते मायावन्तः पापाचाराः परोपघातकारिणश्चेति। इत्थं तेषामुड्डाहे जायमाने प्रवचनस्याप्ययशः प्रवादो भवति 'प्रस्तारदोषश्च' कुल-गण-सङ्घविनाशलक्षण उपजायते। एतद्दोषपरिहरणार्थं स्वलिङ्गेनैव परिष्ठाप्यते ॥ अथ भिक्षाद्वारमाह-

[भा.४८२६] न वि को वि कंचि पुच्छति, नितमनितं व अंतो बाहिं वा।
आसंकिते पडिसेहो, निक्कारण कारणे जतणा ॥

वृ- यत्र रोधके 'अन्तः' नगराभ्यन्तराद् बहिर्निर्गच्छन्तं बहि-कटकाद्वा नगरान्तः प्रविशन्तं न कोऽपि कश्चित् पृच्छति तत्र स्वेच्छया बहिरन्तर्वा भिक्षामटन्ति। यत्र पुनराशङ्कितं-क एषः ? कुतो वा आगतः ? मैष बहिर्गतः सन् किमपि कथयिष्यति किमर्थं वा निर्गच्छति ? ईदृशे आशङ्किते निष्कारणे 'प्रतिषेधः' न गन्तव्यम्। कारणे तु यतना वक्ष्यमाणा भवति ॥

इदमेव भावयति-

[भा.४७२७] पउरन्न-पानगमने, चउरो मासा हवंतऽनुग्घाया।
सो त इयरे य चत्ता, कुल गण संघे य पत्थारो ॥

वृ- प्रचुरान्न-पाने लभ्यमाने यदि बहिर्गच्छति तदा चत्वारो मासा अनुद्घाता भवन्ति आज्ञादयश्च दोषाः। तेन साधुना 'सः' स्वकीय आत्मा 'इतरे च' अभ्यन्तरवर्त्तिनः साधवः परित्यक्ता भवन्ति। तत्र स बहि सैन्ये गतः सन् पृच्छयमानोऽपि यदा किमपि नाख्याति तदा 'चारिकोऽयम्' इति मत्वा गृह्यते, अभ्यन्तरवर्त्तिनस्तु 'अमीषां प्रव्रजितो निर्गतस्तेन भेदः प्रदत्तः' इति कृत्वा गृह्यन्ते।

एवं च कुल [illegible] सत्कारोऽपि [illegible] म् ॥

[भा.४८२८] अंतो अलब्भमाणे, एसणमाईसु होति जइतव्वं ।
जावंतिए विसोधी, अमच्चमादी अलाभे वा ॥

वृ- 'अन्तः' मध्ये प्राशुकैषणीयेऽलभ्यमाने पञ्चकपरिहाणिक्रमेणैषणादिषु दोषेषु नगराभ्यन्तर एव यतितव्यम्, यावद् यावन्तिकादिरूपेषु विशोधिकोटिदोषेषु यतमानश्चतुर्लघुप्राप्तो भवति । तथाप्यलभ्येऽमात्यं आदिशब्दाद् दानश्राद्धादीन् वा प्रज्ञापयन्ति । ते यद्यविशोधिकोटिदोषैर्दुष्टं प्रयच्छन्ति तदा तदपि गृह्यते, न पुनर्बहिर्गन्तव्यम् ॥ अथ तथापि न लभ्यते ततः-

[भा.४८२९] आपुच्छित आरक्खित, सेट्ठी सेनावती अमच्च रायाणं ।
निग्गमन दिट्ठरूवे, भासा य तहिं असावज्जा ॥

वृ- 'आरक्षिकः' कोट्टपालस्तमापृच्छन्त-वयमत्र न संस्तरामः ततो बहिर्निर्गच्छतां द्वारं प्रयच्छत। यद्यसौ ब्रूयात्-मा निर्गच्छत अहं भवतां पर्याप्तं दास्यामि ततो गृह्यते । अथ ब्रूयात्-नास्ति मे किञ्चिद् भक्तं दातव्यम्, युष्मांश्च विसर्जयन् राज्ञो बिभेमि, ततः श्रेष्ठिनं पृच्छत । ततः श्रेष्ठिनमापृच्छन्ति, एवं सेनापतिममात्यं राजानं वाऽऽपृच्छन्ति । ततो यदि राज्ञाऽपि विसर्जितास्तदा निर्गमनं कुर्वन्ति । द्वारपालानां च साधवो दर्श्यन्ते, यथा-एतान् दृष्टरूपान् कुरुत, भिक्षाग्रहणार्थमेते निर्गमिष्यन्ति प्रवेक्ष्यन्ति वा, न किञ्चिद् भवद्भिर्वक्तव्यम् । तत्र च बहिर्गतैरसावद्या भाषा भाषितव्या ॥ अमुमेवार्थं स्पष्टयति-

[भा.४८३०] मा वच्चह दाहामिं, संकाए वा न देंति निग्गंतुं ।
दानम्मि होइ गहणं, अनुसट्ठादीणि पडिसेधे ॥

वृ- आरक्षिकादयः पृष्टाः सन्तो भणन्ति-मा व्रजत, वयं भक्तं दास्यामहे । ते च भेदशङ्कया साधूनां निर्गन्तुं न ददति ततो यद्यविशुद्धमपि ते प्रयच्छन्ति तदा तस्य ग्रहणं कर्त्तव्यम् । अथ "पडिसेहे" त्ति न भक्तं न च निर्गन्तुं ददति ततोऽनुशिष्टि-धर्मकथादीनि प्रयुज्यन्ते ॥

[भा.४८३१] बहिया वि गमेतूणं, आरक्खितमादिणो तहिं निंति ।
हित-नट्ठ-चारिगादी, एवं दोसा जढा होंति ॥

वृ- बहिरपि गता एवमेवारक्षिक-श्रेष्ठिप्रभृतीन् 'गमयित्वा' प्रज्ञाप्य तत्र भिक्षामटन्ति । एवं कुर्वद्भिर्हृत-चारिकादयो दोषाः परिहृता भवन्ति ॥

ये साधवो बहि प्रस्थाप्यन्ते तेऽमीभिर्गुणैर्युक्ता भवन्ति-

[भा.४८३२] पियधम्मे दढधम्मे, संबंधऽविकारिणो करणदक्खे ।
पडिवत्तीसु य कुसले, तब्भूमे पेसए बहिता ॥

वृ- प्रियधर्मणो दृढधर्मणश्च प्रतीतान्, "संबंध" त्ति येषां अन्तर्बहिश्च स्वजनसम्बन्धो भवति 'अविकारिणो नाम' नोद्भटवेषा न वा नर्कदर्पशीलास्तान्, 'करणदक्षान्' भिक्षाग्रहणादिक्रियासु परिच्छेदवतः, प्रतिपत्ति-प्रतिवचनप्रदानं तत्र कुशलान्, "तब्भूमि" त्ति यो बहि स्कन्धावार आगतस्तस्य भूमौ जात-वर्धितान्, एवंविधान् साधून् बहि प्रेषयेत् ॥ "भासा य तहिं असावज्ज" त्ति पदं व्याचिख्यासुराह-

[भा.४८३३] केवतिय आस हत्थी, जोधा धन्नं व कित्तियं नगरे ।

परितंतमपरितंता, नागर सेना व न वि जाणे ॥

वृ- बाह्यस्कन्धावारगताः पृच्छेयुः-नगराभ्यन्तरे कियन्तोऽश्वा हस्तिनो योधा वा सज्जिताः सन्ति ? धान्यं वा कियन्नगरेऽस्ति ? 'नागराः' पौराः सेना वा 'परितान्ताः' रोधकेणोद्विग्ना उत 'अपरितान्ताः' अनुद्विग्नाः ? । एवं पृष्टे वक्तव्यम्-न जानेऽहं ॥

ते ब्रवीरन्-तत्रैव वसन्तः कथं न जानीथ ? । साधवो ब्रुवते-

[भा.४८३४] सुणमाणा वि न सुणिमो, सज्झाय-ज्झाण निच्चमाउत्ता ।

सावज्जं सोऊण वि न हु लब्भाऽऽइक्खिउं जतिणो ॥

वृ- वयं स्वाध्याय-ध्यानयोर्नित्यमायुक्ताः सन्तः शृण्वन्तोऽपि वार्त्तान्तरं न शृणुमः, अपि च सावद्यं श्रुत्वाऽपि यतीनामन्यस्याख्यातुं 'न लभ्यते' न युज्यते । अन्तःप्रविष्टस्य तु यदि कोऽपि पृच्छति तदा वक्तव्यम्-भिक्षाद्युपयोगेन न ज्ञातम् । अन्तर्बहिश्च साधारणमिदमुत्तरम्-

शृणोति बहु कर्णाभ्यामक्षिभ्यां बहु पश्यति ।

न च दृष्टं श्रुतं सर्वं, भिक्षुराख्यातुमर्हति ॥

एवं भिक्षामटित्वा पर्याप्ते सञ्जाते सति किं कर्त्तव्यम् ? इत्याह-

[भा.४८३५] भत्तट्ठणमालोए, मोत्तूणं संकिताइं ठाणाइं ।

सच्चित्ते पडिसेधो, अतिगमनं दिट्ठरूवाणं ॥

वृ- 'भक्तार्थनं' भोजनं 'आलोके' प्रकाशे भवति । यानि 'शङ्कितानि' चारिकादिशङ्काविषयभूतानि गुपिलानि स्थानानि तानि मुक्त्वा, तेषु न विधेयमित्यर्थः । यश्च सचित्तः प्रव्रजितुमुपतिष्ठते तत्र 'प्रतिषेधः' स न प्रव्राजयितव्यः किन्तु ये पूर्वं द्वारपालेन दृष्टरूपाः कृतास्तेषामेव 'अतिगमनं' भूयः प्रवेशो भवति ॥ एषा बह्वर्थसङ्ग्राहिका निर्युक्तिगाथा, अत एनां भाष्यकृद् विवृणोति-

[भा.४८३६] सावग-सन्निट्ठाणे, ओतवितेकतर इतर भत्तट्ठं ।

तेसऽसती आलोए, वड्डग-कुरुयादि स च्चेव ॥

वृ- यत्र श्रावकः श्राविका चोभयमपि ओयवितं-साधुसामाचारीकुशलं तत्र स्थाने भक्तार्थयन्ति। तदलाभे यत्रैकतरं साधुसामाचारीचतुरं तत्र समुद्देष्टव्यम् । एकतरस्यापि छेदज्ञस्याभावे 'इतरेषु' अछेदज्ञेष्वपि श्रावकेषु यथाभद्रके वा भक्तार्थयितव्यम् । तेषामभावेऽटव्याम् 'आलोके' अशङ्कनीये सप्रकाशे प्रदेशे समुद्दिशन्ति । वड्डग-कुरुकुचादिका तु सैव यतना कर्त्तव्या । शैक्षस्तु यदि कोऽप्युपतिष्ठते तदा न प्रव्राजनीयः । अथ कोऽपि स्वयमेव लिङ्गं कृत्वा प्रविशति ततो वक्तव्यम्-वयं गणिता नामाङ्किता एव द्वारेण निर्गताः, ततः त्वं तत्र गतः सन् गृहीत्वा विनाशयिष्यसे । एवमुक्तेऽपि यद्यसावागच्छति तदा द्वारं प्राप्ता द्वारपालं भणन्ति-न जानीमो वयं कमप्येनम्, अस्मानेतान् दृष्टरूपान् कुरुत ॥

[भा.४८३७] भत्तट्ठिय वाहाडा, पुनरवि घेत्तु अतिंति पज्जत्तं ।

अनुसट्ठी दारट्ठे, अन्नो वऽसतीय जं अंतं ॥

वृ- एवं भक्त-पानं पर्याप्तं गृहीत्वा 'भक्तार्थिताः' कृतभोजनाः 'वाहाडिताः' तद्भुक्तन्यून-भाजनाः पुनरपि नगरं 'अतियन्ति' प्रविशन्ति । यदि 'द्वारस्थः' द्वारपालो मार्गयति-पौद्गलिकं मे प्रयच्छत; ततोऽनुशिष्टि कर्त्तव्या । अन्यो वा यदि कोऽप्यनुकम्पया ददाति तदा न वारणीयः ।

तस्य 'असति' अभावे यद् 'अन्तम्' प्रान्तं तद् दीयते ॥

[भा.४८३८] रुद्धे वोच्छिन्ने वा, दारट्ठे दो वि कारणं दीवे।
इहरा चारियसंका, अकालओखंदमादीसु ॥

वृ- अथ निर्गतानां द्वारं रुद्धं-स्थगितं गमागमो वा व्यवच्छिन्नस्ततः 'द्वयेऽपि' आभ्यन्तरा बाह्याश्च साधवो द्वारस्थस्याग्रे कारणं दीपयन्ति। आभ्यन्तरा ब्रुवते-अस्माकं साधवो बहिर्निर्गताः बहिश्च रुद्धाः; बाह्या ब्रुवते-वयं कारणे भिक्षायां बहिर्निर्गता परं द्वाराणि निरुद्धानि। 'इतरथा' यदि न कथयन्ति ततः अकाले-रात्रौ वा विकाले वा यदवस्कन्दः-धाटी तदादीनि भवन्ति तदा चारिकशङ्का भवेत्-ये साधवो निर्गतास्ते भूयो न प्रविष्टाः, नूनं चारिकास्ते आगता आसीरन्निति।

[भा.४८३९] बाहिं तु वसिउकामं, अतिनेंती पेल्लणा अनेच्छंते।
गुरुगा परजय जये, वितियं रुद्धे व वोच्छिन्ने ॥

वृ- बहिर्निर्गतानां कोऽप्येकश्चिन्तयेत्-मुक्तोऽस्मि तावत् चारकवासात्, न भूयः प्रविशामि; अत्र सूत्रमवतरति। एवं बहिर्वसन्तं प्रज्ञापयन्ति-आर्य! सूत्रे प्रतिषिद्धम्, न वर्तते बहिर्वस्तुम्, द्वयोर्जिन-राजाज्ञयोरतिक्रमः कृतो भवति। एवं प्रज्ञाप्य नगरं प्रवेशयन्ति। अथ नेच्छति प्रवेष्टुं ततः "पेल्लण" त्ति बलामोटिकया शेषैः स प्रवेशनीयः। यदि न प्रवेशयन्ति ततश्चत्वारो गुरुकाः। कदाचिदाभ्यन्तराणां पराजयोऽपरेषां च जयो भवेत् ततः 'एभिर्भेदः प्रदत्तः' इति शङ्कया प्रस्तारदोषा भवेयुः। द्वितीयपदमत्र भवति-बहिर्निर्गतस्य सर्वतोऽपि नगरं निरुद्धम्, गमागमः सर्वथैव व्यवच्छिन्न इति कृत्वा तत्रापि वसन् शुद्धः ॥

*मू. (११०) से गामंसि वा जाव सन्निवेसंसि वा कप्पइ निग्गंथाण वा निग्गंथीण वा सव्वओ समंता सकोसं जोयणं उग्गहं ओगिण्हित्ताण चिट्ठित्तए ॥*

वृ- अस्य सम्बन्धमाह-

[भा.४८४०] गामाइयाण तेसिं, उग्गहपरिमाणजाणणासुत्तं।
कालस्स व परिमाणं, सुत्तं इहइं तु खेत्तस्स ॥

वृ- 'तेषाम्' अनन्तरसूत्रोक्तानां ग्रामादीनां कियानवग्रहो भवति ? इति शङ्कायामवग्रह-परिमाणज्ञापनार्थमिदं सूत्रमारभ्यते। यद्वा पूर्वसूत्रेषु "अहालंदमवि उग्गहे" इत्यादि भणताऽव--ग्रहविषयं कालस्य परिमाणमुक्तम्, इह तु क्षेत्रस्य तदेवोच्यते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-अथ ग्रामे वा नगरे वा यावत् सन्निवेशे वा कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'सर्वतः' सर्वासु दिक्षु 'समन्तात्' चतसृष्वपि विदिक्षु सक्रोशं योजनमवग्रहमवगृह्य स्थातुमिति सूत्रार्थः ॥

अथ भाष्यविस्तरः-

[भा.४८४१] उड्ढमहे तिरियं पि य, सकोसगं होइ सव्वतो खेत्तं।
इंदपदमाइएसुं, छद्दिसि सेसेसु चउ पंच ॥

वृ- ऊर्ध्वदिग् अधोदिग् "तिरियं पि य" त्ति तिर्यक्-पूर्व-दक्षिणाऽपरोत्तरा लक्षणा श्चतस्रो दिशः, एतासु षट्सु दिक्षु गिरिमार्गे स्थितानां सर्वतः सक्रोशं योजनं क्षेत्रं भवति, तच्च इन्द्रपदादिषु सम्भवति। इन्द्रपदो नाम-गजाग्रपदगिरिः, तत्र ह्युपरिष्टाद् ग्रामो विद्यते अधोऽपि ग्रामो मध्यमश्रेण्यामपि ग्रामः। तस्याश्च मध्यमश्रेण्याश्चतसृष्वपि दिक्षु ग्रामाः सन्ति, ततो मध्यमश्रेणिग्रामे

स्थितानां षट्सु दिक्षु क्षेत्रं भवति। आदिशब्दाद अन्योऽपि य ईदृशः पर्वतस्तस्य परिग्रहः। शेषेषु पर्वतेषु चतसृषु पञ्चसु वा दिक्षु सक्रोशं योजनं क्षेत्रं भवति॥

समभूमिकायां व्याघाताभावे दिक्चतुष्टये क्षेत्रम्, व्याघातं प्रतीत्य पुनरित्थम्-

[भा.४८४२] एगं व दो व तिन्नि व, दिसा अकोसं तु सव्वतो वा वि।
सव्वतो तु अकोसं, अणुआणाओ जा खेत्तं॥

वृ- एकदिग्भाविनां पर्वतादिव्याघातेन किञ्चिद् ग्रामादिकमेकस्यां दिशि अक्रोशं भवति, सक्रोशयोजनावग्रहरहितमित्यर्थः। एवं दिग्द्वयभाविवा व्याघातेन द्वयोर्दिशोरक्रोशम्, त्रिदिग्भाविना तिसृषु दिक्षु, दिक्चतुष्टयभाविना तु सर्वतोऽप्यक्रोशं भवति। तत्र च सर्वतोऽक्रोशे ग्रामादौ अग्रोद्यानं यावत् क्षेत्रम्, ततः परमक्षेत्रमिति॥ किञ्च-

[भा.४८४३] संजम-आयविराधन, जत्थ भवे देह-उवहितेना वा।
तं खलु न होइ खेत्तं, उग्घेयव्वं च किं तत्थ॥

वृ- यत्र ग्रामादौ प्राप्तानां संयमा-ऽऽत्मविराधना भवति, यत्र च देहोपधिस्तेषा भवन्ति तत् खलु क्षेत्रं न भवति। किं वा तत्रावग्रहीतव्यं येन क्षेत्रमुच्येत? ॥ अथ किं पुनः क्षेत्रम्? इत्याह-

[भा.४८४४] खेत्तं चलमचलं वा, इंदमनिंदं सकोसमकोसं।
वाघातम्मि अकोसं, अडवि जले सावए तेने॥

वृ- यत्रावग्रहो विचारयितुमुपक्रान्तस्तात् क्षेत्रं चलमचलं वा भवेत्। चलं व्रजिकादि, अचलं ग्रामादि। पुनरेकैकं द्विधा-'एन्द्रम्' इन्द्रकीलादियुक्तम् 'अनिन्दं वा' तद्विपरीतम्। तत्र यदचलमनिन्दं च तत् सक्रोशमक्रोशं वा। पश्चानुपूर्व्या अमूनेव भेदान् व्याचिख्यासुरिदमाह-"वाघायम्मि" इत्यादि, यत्र यस्यां दिशि व्याघातस्तत् तस्यामक्रोशं भवति। कः पुनर्व्याघातः? इति चेद् अत आह-अटवी तस्यां दिशि वर्तते, "जलं"ति समुतो नदी वा तत्राऽऽस्ते, 'श्वापदा वा' सिंह-व्याघ्रादयः तत्र सन्ति, 'स्तेना वा' उपधि-शरीरहरा विद्यन्ते। एतैः कारणैः सा दिग् निरुद्धा, ग्राम-गोकुलाद्यभावादवग्रहीतव्यं किमपि तत्र नास्ति॥ अथ सक्रोशमाह-

[भा.४८४५] सेसे सकोस मंडल, मूलनिबंधं अनुम्मुयंताणं।
पुव्वुट्ठिताण उग्गहो, समभंतरपल्लिगा दोण्हं॥

वृ- शेषं नाम-यद् अनन्तरोक्तव्याघातरहितं तत्र मूलनिबन्धं भाण्डलममुञ्चतां सार्वतः सक्रोशं योजनमवग्रहो भवति। कथम्? इति चेद् उच्यक्ते-मूलग्रामादेकैकस्यां दिशि योजनार्द्धमर्द्धक्रोशेन सधिकं तावदवग्रहो भवति, स च पूर्वा-ऽपराभ्यां दक्षिणोत्तराभ्यां वा कृत्वा सक्रोशं योजनं भवति, यद्वा गति-प्रत्यागतिभ्यामेकस्यामपि दिशि (सक्रोशं) योजनं मन्तव्यम्। तत्र सक्रोशे अक्रोशे वा येपूर्वस्थितास्तेषामवग्रहो भवति। यत्र समकमनुज्ञापितं तत् क्षेत्रं साधारणम्। अथ सम्बद्धेषु क्षेत्रेषु समकमेवानुज्ञापितं तोत यदि द्वे अन्तरपल्लिके तत एकेषामेका अपरेषामप्येका। अथैकैवान्तरपल्लिका ततो द्वयोरपि साधारणा॥

अथ बह्वयस्तत्रान्तरपल्लिकास्ततः को विधिः? इत्याह-

[भा.४८४६] खेत्तस्संतो दूरे, आसन्नं वा ठिताण समगं तु।
अद्धं अद्धद्धं वा, दुगाइसाहारणं होइ॥

वृ- द्वित्रिप्रभृतिषु सम्बद्धेषु क्षेत्रेषु समकमनुज्ञाप्य स्थितानां काश्चिदन्तरपल्लिकाः 'क्षेत्रान्तः' क्षेत्रस्याभ्यन्तरे भवन्ति, "दूरे"त्ति काश्चित्तु दूरे याभ्यः समुदानं मूलग्राममानीयमानं क्षेत्रातिक्रान्तं भवतीति कृत्वा प्रथमालिकायां तद् निर्वाह्यते, "आसन्ने"त्ति काश्चित् पुनरासन्ने याभ्यः समुदानं मूलग्राममानीयमानं क्षेत्रातिकान्तं न भवति । ततो यावन्त्यस्ता अन्तरपल्लिकास्तासां सर्वासामप्यर्द्धं वा, अर्द्धार्द्धं वा चतुर्थभाग इत्यर्थः, वाशब्दात् त्रिभागादिकं वा द्विकादीनां-द्वित्रिप्रभृतीनां गच्छानां साधारणं भवति ॥ अथात्रैवाभाव्या-ऽनाभाव्यविधिमाह-

[भा.४८४७]　　तण-डगल-छार-मल्लग-संथारग-भत्त-पानमादीणं ।
सति लंभे अस्सामी, खेत्तिय ते मोत्तऽणुन्नवणा ॥

वृ- तृण-डगल-क्षार-मल्लक-संस्तारक-भक्त-पानादीनां 'सति' विद्यमाने प्राचुर्येण लाभे क्षेत्रिका अस्वामिनः, अक्षेत्रिकाणामप्येतान्याभवन्तीत्यर्थ । "ते मोत्तऽणुन्नवण"त्ति येषां तृणादीनां क्षेत्रिकैरनुज्ञापना कृता तानि मुक्त्वा, तान्यक्षेत्रिकाणां नाभवन्तीति भावः ॥

किं पुनः क्षेत्रिकाणामाभवति ? इत्युच्यते-

[भा.४८४८]　　ओही उवग्गहो वि य, सच्चित्तं वा वि खेत्तियस्सेते ।
मोत्तूण पाडिहारिं, असंथरंते वऽणुन्नवणा ॥

वृ- ओघोपधिरुपग्रहोपधिश्च 'सचित्तं वा' शैक्षादिकम्, एतानि क्षेत्रिकस्याभवन्ति । यद्यक्षेत्रिका तेषामेकतरं गृह्णन्ति तदा प्रायश्चित्तम्, परं मुक्त्वा प्रातिहारिकं द्विविधमप्युपधिम्, तं गृहस्थेभ्यो मार्गयन्तो न प्रायश्चित्तभाज इति हृदयम् । यः पुनरप्रातिहारिकस्तं न लभन्ते । अथ शीतादिना परिताप्यन्ते तत एवमसंस्तरद्भिर्वस्त्रादेरनुज्ञापना कर्तव्या । क्षेत्रिकैरपि संस्तरणे तेषामनुज्ञातव्यम् ॥

[भा.४८४९]　　जइ पुन संथरमाणा, न दिंति इतरे व तेसि गिण्हंति ।
तिविधं आदेसो वा, तेन विना जा य परिहानी ॥

वृ- यदि पुनः संस्तरन्तः क्षेत्रिका असंस्तरतामक्षेत्रिकाणां वस्त्रादिकं न प्रयच्छन्ति, 'इतरे वा' अक्षेत्रिकाः संस्तरन्तोऽपि 'तेषां' क्षेत्रिकाणामनापृच्छया बलामोटिकया वा गृह्णन्ति ततः 'त्रिविधं' जघन्य-मध्यमोत्कृष्टनिष्पन्नं पञ्चक-मासलघु-चतुर्लघुलक्षणं प्रायश्चित्तम्, सूत्रस्यादेशाद्वा नवमम् । 'तेन च' वस्त्रादिना विना या परिहानि तन्निष्पन्नमपि तेषां प्रायश्चित्तम् ॥

इदमेव व्यक्तीकरोति-

[भा.४८५०]जे खेत्तिया मो त्ति न देंति ठागं, लंभे वि जाऽऽगंतुवयंते हानी ।
पेल्लंति वाऽऽगंतु असंथरम्मि, चिरं व दोण्हं पि विराधना उ ॥

वृ- ये 'क्षेत्रिका वयम्' इति कृत्वा भक्त-पानादेः प्राचुर्येण लाभेऽपि अन्येषां "'ठागं' अवकाशं न प्रयच्छन्ति तत आगन्तुकानां व्रजतां या परिहाणिस्तन्निष्पन्नं तेषां प्रायश्चित्तम् । अथ क्षेत्रिकाणामसंस्तरणेऽप्यागन्तुकाः 'प्रेरयन्ति' प्रेर्य तिष्ठन्ति ते चागन्तुका अदेशिकाः प्राघुणकाश्च ततः 'चिरं वा' प्रभूतं कालं वाशब्दाद् अल्पं वा कालमसंस्तरणं तेषां भवेत् ततः 'द्वयेषामपि' आगन्तुकानां वास्तव्यानां च या विराधना तन्निष्पन्नं प्रायश्चित्तम् ॥ यत एवमतः-

[भा.४८५१]　　अत्थि हु वसभग्गामा, कुदेसणगरोवमा सुहविहारा ।

बहुगच्छुवग्गहकरा, सीमच्छेदेण वसियव्वं ॥

वृ- 'सन्ति' विद्यन्ते वृषभग्रामाः । इहाचार्य आत्मद्वितीयो गणावच्छेदिक आत्मतृतीय एष पञ्चको गच्छो भवति, ईदृशास्त्रयो गच्छाः पञ्चदश जनाः, एते यत्र ऋतुबद्धे निर्वहन्ति; वर्षासु पुनः सप्तको गच्छः, तद्यथा-आचार्य आत्मतृतीयो गणावच्छेदिक आत्मचतुर्थः, ईदृशास्त्रयो गच्छा एकविंशतिर्जना भवन्ति, एते यत्र वर्षावासे जघन्येन निर्वहन्ति ते वृषभग्रामा उच्यन्ते । ते च कीदृशाः ? इत्याह-कुदेशस्य यन्नगरं तेनोपमा येषां ते कुदेशनगरोपमाः, ते च 'सुखविहाराः' सुलभभक्त-पाना निरुपद्रवाश्च, अत एव बहूनामन्तरोक्तप्रमाणनां त्रिप्रभृतीनां गच्छानामुपग्रहकराः, ततस्तेषु सीमाच्छेदेन बहुभिरपि गच्छैर्वस्तव्यम्, न कोऽपि परस्परं मत्सरो विधेय इति भावः । सीमाच्छेदो नाम-साहिका-ग्रामार्ध-वाटकादिविभजनम् । यथा-अस्यां साहिकायां भवद्भिः पर्यटनीयम् अस्या पुनरस्माभिरित्यादि । यद्वा ये तत्र क्षेत्रे समकं प्राप्तास्तैः सीमाच्छेदेन वस्तव्यम्। यथा-युष्माकं सचित्तमस्माकमचित्तम्, अथवा युष्माकमन्तः अस्माकं बहिः, युष्माकं स्त्रियः अस्माकं पुरुषाः, युष्माकं श्राद्धाः अस्माकमश्राद्धाः, अथवा यो यद् लप्स्यते तस्यैव तद् आभाव्यम् ॥ इदमेव व्याख्यानयति-

[भा.४८५२] एक्कवीस जहन्नेणं, पुव्वट्ठिते उग्गहो इतरे भत्तं ।
पल्ली पडिवसभे वा, सीमाए अंतरा गामो ॥

वृ-पूर्वोक्तनीत्या वर्षासु एकविंशतिर्जनाः उपलक्षणत्वाद् ऋतुबद्धे पञ्चदश जना यत्र जघन्येन संस्तरन्ति स वृषभग्राम उच्यते, उत्कर्षतस्तु द्वयोरपि कालयोर्द्वात्रिंशत्सहस्रसङ्ख्याको गच्छो यत्र संस्तरति स वृषभग्रामः, तत्र ये पूर्वस्थितास्तेषामवग्रहः, इतरे भक्त-पानमात्रसंतुष्टास्तिष्ठन्ति, तत्र च सीमाच्छेदो विधातव्यः । कथम् ? इत्याह-"पल्ली" इत्यादि, युष्माभिरन्तरपल्ल्यां पर्यटनीयम्, अस्माभि प्रतिवृषभग्रामे । प्रतिवृषभग्रामो नाम-मूलग्रामादर्धयोजने महान् ग्रामः । अथवा अन्तरपल्लयाः प्रतिवृषभस्य वा अर्धं युष्माकमर्धमस्माम् । एवं सीमायां मूलग्रामस्य प्रतिवृषभग्रामस्य वाऽन्तरा यो ग्रामस्तस्याप्यर्धं युष्माकमधर्मस्माकम् । एतदचलमनिन्द्रं च क्षेत्रं यन्तव्यम् ॥ अथाचलयैन्द्रं क्षेत्रमाह-

[भा.४८५३] इंदक्खीलमनोग्गहो, जत्थ य राया जहिं व पंच इमे ।
सेट्ठि अमच्च पुरोहिय, सेनावत्ति सत्थवाहे य ॥

वृ- इन्द्रकीलको नाम-इन्द्रस्थूणा सा यत्रोत्तिष्ठते इन्द्रमातृका वा तत्र 'अनवग्रहः' अवग्रहो न भवति । अनिन्द्रकीलकेऽपि यत्र राजा मूर्धाभिषिक्तः परिवसति । राजरहितेऽपि यत्रेमे पञ्च वसन्ति-श्रेष्ठी अमात्यः पुरोहितः सेनापति सार्थवाहश्चेति ॥

[भा.४८५४] अद्धाणसीसए वा, समोसरणे वा वि ण्हाण अनुयाणे ।
एतेसु नत्थि उग्गहो, वसहीए मग्गण अखेत्ते ॥

वृ- अध्वशीर्षकं नाम-यतः परं समुदायेन यन्तव्यं सम्यग् मार्गावहनात् तत्र मिलितानाम्, समवसरणं नाम-कुलसमवायो गणसमवायः सङ्घसमवायो वा (तत्र मिलितानाम्,] स्नानम्-अर्हत्प्रतिमास्नपनं तन्निमित्तमेकत्र मिलितानाम्, अनुयानं-रथयात्रा तत्र वा मिलितानाम्, एतेषु नास्त्यवग्रहः । अथ एवाक्षेत्रतया एतेषु वसतावग्रहस्य मार्गणा कर्तव्या ॥

अथ किमर्थमेतेष्ववग्रहो न भवति ? इत्युच्यते-

[भा.४८५५] बहुजनसमागमो तेसु होति बहुगच्छसन्निवातो य।
वा पुव्वं तु तदट्ठा, पेल्लेज्ज अकोविया खेत्तं ।।

वृ- 'तेषु' इन्द्रकीलकादिषु बहोः-प्रभूतस्य जनस्य समागतो भवति, अध्वशीर्षकादिषु च बहूनां गच्छानां सन्निपातः-मीलको भवति, अतः केचिदकोविदाः 'तदर्थं' 'क्षेत्रमिदमस्माकमेवाभाव्यं भवतु' इति कृत्वा 'पूर्वम्' अन्येभ्यः प्रथमं समागत्य मा क्षेत्रं प्रेरयेयुः इत्येतेषु नावग्रहोऽधिक्रियते।।

इदमेव भावयति-

[भा.४८५६] सड्ढा दलंता उवहिं निसिद्धा, सिट्ठे रहस्सम्मि करेज्ज मन्नुं।
पभावयंते य न मच्छरेणं, तित्थं सलद्धी दुहतो वि हानी ।।

वृ- तत्रेन्द्रकीलादौ श्राद्धाः केषाञ्चिदाचार्याणां 'उपधिम्' वस्त्राद्युपकरणं दातुं लग्नाः, तैश्च 'न वर्ततेऽस्माकमिदं ग्रहीतुम्' इति भणित्वा ते निषिद्धाः; ततः श्राद्धाः पृच्छेयुः-एषमीयान्यप्यमूनि वस्त्राणि किमिति न कल्पन्ते ?; ततो रहस्यम्-'नास्माकममूनि आभवन्ति' इतिलक्षणं तेषां पुरतः कथयितव्यम्, तत्र च 'शिष्टे' कथिते सति ते श्राद्धाः 'मन्युम्' अप्रीतिकं कुर्वीरन् । ये च 'सलब्धयः' धर्मकथादिलब्धिसम्पन्नास्ते मत्सरेण 'वयं किमपि तावद् न लप्स्यामहे अतः किमर्थमेवमेव प्रयासं कुर्मः ?' इत्यनुशयेन तीर्थं धर्मकथादिना न प्रभावयन्ति । ततः ''दुहतो वि हाणि'' त्ति द्वयोरपि-सचित्ता-ऽचित्तलाभयोः परिहाणिर्भवति । तत्र सचित्तहानि कोऽपि देशविरतिं सर्वविरतिं वा न प्रतिपद्यते, अचित्तहानिराहार-वस्त्रादि तथाविधं न प्राप्यते । अत एतेषु नावग्रहो भवति । वसतिं प्रतीत्य पुनरेतेष्वपि भवति ।। कथम् ? इत्याह-

[भा.४८५७] एगालयट्ठियाणं, तु मग्गणा दूरे मग्गणा नत्थि।
आसन्ने तु ठियाणं, तत्थ इमा मग्गणा होइ ।।

वृ- 'एकालये' एकस्यां वसतौ स्थितानामवग्रहस्य मार्गणा भवति । तत्र यः पूर्वं तस्यां वसतौ स्थितः तस्य सचित्तमचित्तं वा आभवति । अथ समकं द्वौ बहवो वा स्थितास्तदा साधारणा सा वसतिः । ये तु तस्या वसतेर्दूरे स्थिताः तेषामवग्रहस्य मार्गणा नास्ति । ये पुनरासन्ने स्थितास्तेषामियमवग्रहस्य मार्गणा भवति ।।

[भा.४८५८] सज्झाय काल काइय, निल्लेवण अच्छणे असति अंतो।
वसहिगमो पेल्लंते, वसही पुन जा समापुन्ना ।।

वृ- 'अन्तः' प्रतिश्रयस्याभ्यन्तरे यदि स्वाध्यभूमेः कायिकाभूमेः पात्रविर्लेपनभूमेः आसनम्-ध्यानादिनिमित्तमुपवेशनं तद्भूमेश्चाभावस्ततो या बहि स्वाध्यायभूमिप्रभृतयस्ताः समकमनुज्ञापिताः साधारणाः । अथैके पूर्वं स्थिता अपरे च पश्चात् ततः पूर्वस्थितानामवग्रहः, पश्चादागतास्तु पूर्वस्थिताननुज्ञापयन्ति । यदि ते पूर्यमाणेऽवकाशे नानुजानन्ति इतरे वा तमपूर्यमाणं प्रेरयन्ति ततो वसतिविषयोऽपि स एव प्रायश्चित्तादिर्गमो भवति यः पूर्वं क्षेत्रं प्रेरयताम् उपलक्षणत्वाद् अननुज्ञापयतां चोक्तः । वसति पुनरिह या 'समापूर्णा' श्रमणैराकुला तस्याः प्रेरणे दोषा मन्तव्याः।।

उक्तमचलक्षेत्रम् । अथ चलमाह-

[भा.४८५९] वइगा सत्थो सेना, संवट्टो चउविहं चलं खेत्तं।

एतेसिं नाणत्तं, वोच्छामि अहानुपुव्वीए ॥

वृ- व्रजिका सार्थ सेना संवर्त्त इति चतुर्विधं चलं क्षेत्रम् । एतेषां चतुर्णामपि नानात्वं वक्ष्यामि यथाऽऽनुपूर्व्या ॥ प्रतिज्ञातमेव करोति-

[भा.४८६०]　जेनोग्गहिता वइगा, पमाण तूह दुह भंडि परिभोगे ।
　　　　　समवइग पुव्व उग्गह, साहारण जं च नीसाए ॥

वृ- येन साधुना सा व्रजिका पूर्वमवगृहीता स व्रजिकावग्रहस्य स्वामी भवति । तस्य च व्रजिकावग्रहस्य किं प्रमाणम् ? इति चिन्तायां चरितुं व्रजन्ति तावान् व्रजिकाया अवग्रहः; अपरो ब्रवीति-''तूहं''ति तीर्थं जलपानस्थानमित्येकोऽर्थः, तत्र जलपानार्थं गावो यावद् गच्छन्ति; अन्यः प्राह-''दुह''त्ति यत्रोपस्थाने गावो दुह्यन्ते । आचार्य प्राह-त्रयोऽप्येतेऽनादेशाः, अयं तु समीचीन आदेशः-''भंडजि परिभोगे''त्ति यावति भूभागे 'भण्डिकाः'गन्त्रयस्तिष्ठन्ति यावच्च व्रजिकायाः समीपे गोभि परिभुक्तम्, एवाद् व्रजिकावग्रहस्य प्रमाणं मन्तव्यम् । तत्र च यदि समकं द्वौ साधुवर्गावेकस्यां व्रजिकायां स्थितौ तदा साधारणा सा व्रजिका । अथैकः पूर्व स्थितो द्वितीयस्तु व्रजिकान्तरेण समं पश्चादायातस्ततः पूर्वस्यावग्रहो भवति । अथ परस्परनिश्रया स्थितास्ततः साधारणं तत् क्षेत्रम् । यस्याश्च व्रजिकाया निश्रया द्वितीया व्रजिका स्थिता तस्यां ये साधवस्तेषामवग्रह आभवतीति सङ्ग्रहगाथासमासार्थः ॥ अथैनामेव विवरीषुरनादेशत्रयं निरस्याचार्यमतं तावद् विभावयति-

[भा.४८६१] न गोयरो नेव य गोणिपानं, नोवद्ध दुज्झंति य जत्थ गावो ।
　　　　　अब्भत्थ गोणादिसु जत्थ खुन्नं, स उग्गहो सेसमनुग्गहो तु ॥

वृ- न 'गोचरः' गवां चारिस्थानं नैव च गवां यत्र पानं न वा यत्रोपस्थाने गावो दुह्यन्ते किन्तु व्रजिकाया अभ्यासे गवादिभिर्यत्र क्षुन्नं आदिशब्दाद् गन्त्रीभिश्च यावदाक्रान्तं तावानवग्रहः 'शेषं तु' गोचरादिस्थानं सर्वमप्यनवग्रहः ॥

[भा.४८६२]　जइ समगं दो वइगा, ठिता तु साधारणं ततो खेत्तं ।
　　　　　अन्नवइगाए सहिता, तत्थेवऽन्ने ठिता अपभू ॥

वृ- यदि समकमेकस्यां व्रजिकायां द्वौ गच्छौ स्थितौ ततः साधारणं तत् क्षेत्रम् । अथ काचिद् व्रजिका पूर्वं साधुभिरवगृहीता तत्रान्ये साधवो अन्यया व्रजिकया सहिताः पश्चादागताः तत्रैव व्रजिकायां स्थितास्तदा ते पश्चादागता अप्रभवः, पूर्वस्थिता एव स्वामिन इति ॥

[भा.४८६३]　अन्नोन्नं नीसाए, ठिताण साहारणं तु दोण्हं पि ।
　　　　　नीसट्ठिताए अपभू, तत्थ व अन्नत्थ व वसंता ॥

वृ- अथ पूर्वस्थिताः पश्चादागताश्च 'अन्योन्यं' परस्परं निश्रया स्थितास्ततस्तेषां द्वयेषामपि साधारणं क्षेत्रम् । अथ पूर्वस्या व्रजिकाया निश्रया स्थितायामागन्तुकव्रजिकायां ये साधवो वर्तन्ते ते तत्र वाऽन्यत्र वा वसन्तोऽवग्रहस्य 'अप्रभवः' न स्वामिनः ॥

अथ किमर्थमन्यस्या व्रजिकाया निश्रां सा व्रजिका प्रतिपद्यते ? उच्यते-

[भा.४८६४] दुग्गट्ठिए वीरइहिट्ठिए वा, कते निवाणे व ठिएहिं पुव्वं ।
　　　　　भएण तोयस्स य कारणेणं, ठायंतगाणं खलु होइ निस्सा ॥

वृ- 'दुर्गे स्थिताः' स्तेन-परचक्राद्यगम्ये स्थाने स्थिता साऽन्या व्रजिका, यद्वा वीरेण स्वामिना सा अधिष्ठिता, अथवा तैः 'पूर्वं स्थितैः' प्रथमव्रजिकासम्बन्धिभिर्गोकुलिकैस्तत्र 'निपानं' जलपानस्थानं कृतमस्ति, ततो भयेन तोयस्य वा कारणेन तस्यां व्रजिकायां तिष्ठतामपरेषां गोकुलिकानां निश्रा भवति ॥ एवमागन्तुका व्रजिका येन कारणेन पूर्वस्या निश्रां प्रतिपद्यते तदभिहितम्। अथागन्तुकाया निश्रां यथा पूर्वा प्रतिपद्यते तथा दर्शयति-

[भा.४८६५] भयसा उट्टेतुमना, वइगा अन्ना य तत्थ जइ एज्जा।
पच्छापत्ते निस्सा, जे पुव्वठिया न ते पभुणो ॥

वृ- काचिद् व्रजिका भयेन 'उत्थातुमनाः' प्रचलितुकामा, 'अन्या च' नवा व्रजिका यदि तत्रागच्छेत्, सा च बलवता परिगृहीता, ततः पश्चात्प्राप्ताया अपि तस्या निश्रां पूर्वा प्रतिपद्यते, ततो ये पूर्वस्थिताः साधवस्तेऽवग्रहस्य न प्रभवः किन्तु पश्चात्प्राप्ता इति ॥

अथ व्रजिकाया एव प्रकारान्तरमाह-

[भा.४८६६] वइगाए उट्ठियाए, अच्छंते अहव होज्ज गेलन्नं।
अन्ने तत्थ पविट्ठा, तम्मि व अन्नम्मि वा तूहे ॥

वृ- यस्यां व्रजिकायां साधवः स्थिता सा उत्थिता अन्या च तत्रागन्तुकामा तैः श्रुता तत उत्थितायामपि व्रजिकायां तिष्ठताम् अथवा ग्लानत्वं कस्यापि साधोर्भवेत् ततस्तत्रैव स्थितानामन्ये गोकुलिकाः साधुभिः सहिताः 'तत्र' प्राचीनव्रजिकास्थाने प्रविष्टास्ते च तत्र वा "तूहे" तीर्थे गाः पानीयं पाययेयुः अन्यत्र वा ततोऽत्रावग्रहमार्गणा क्रियते ॥

[भा.४८६७] जइ वा कुडी-पडालिसु, पुव्विल्लकतासु ते ठिता संता।
अन्नमि वि पज्जेंता, तूहे अस्सामिणो होंति ॥

वृ- वाशब्दः प्रकारान्तरद्योतकः। यदि 'ते' आगन्तुका गोकुलिका पूर्वगोकुलिककृतासु कुटी-पडालिकासु स्थितास्ततोऽन्यस्मिन्नपि तीर्थे गाः पाययन्तोऽस्वामिनो भवन्ति। ततो यदि ते पूर्वस्थिताः साधवो निष्कारणिका तदा न प्रभवः। अथ ग्लानादिकारणेन स्थितास्तदा ते स्वामिनः, नागन्तुकाः तत्रावग्रहस्य प्रभवः ॥

[भा.४८६८] अन्नत्थ वा वि ठाउं, पाइंति कइल्लए जइ निवाणे।
ते खलु न होंति पहुणो, सभावतूहे पहू हुंति ॥

वृ- यद्वा पूर्वकृताः कुटी-पडालिका वर्जयित्वाऽन्यत्र स्थाने स्थित्वा आगन्तुका गोकुलिका यदि पूर्वं कृते निपाने गाः पाययन्ति तदा 'ते खलु' आगन्तुकाः साधवो न प्रभवो भवन्ति। यदि तु 'स्वभावतीर्थे' स्वाभाविके निपाने पाययन्ति तदा आगन्तुकाः साधवः प्रभव इति ॥

[भा.४८६९] एमेव मासकप्पे, अतीरिए उट्ठियाए पत्तियरा।
पुव्विल्ला हुंति पहू, पुन्ने हट्ठा य न लहंति ॥

वृ- एवमेव 'अतीरिते' असम्पूर्णे मासकल्पे उत्थितायां पूर्वव्रजिकायाम् इतरा व्रजिका तत्र प्राप्ता ततः पूर्वसाधव एव प्रभवः। अथ मासकल्पः पूर्णस्ते च 'हृष्टाः' अग्लाना अपि तत्रैव स्थितास्ततो नावग्रहं लभन्ते, पश्चात्प्राप्ता एव तत्र प्रभव इति ॥

[भा.४८७०] फासुग गोयरभूमी, उच्चारे चेव छन्न वसही य।

हट्ठा वि लभंतेवं, तदभावे पच्छ जे पत्ता ॥

वृ- अथ तत्र प्राशुका गोचरभूमिरुच्चारभूमिश्च विद्यते, वसतिश्च छन्ना प्राप्यते, अन्यत्र च तथाविधा नास्ति ततो हृष्टा अपि 'एवम्' अनन्तरोक्तयुक्त्या लभन्ते। 'तदभावे' अनन्तरोक्त-कारणाभावे ये पश्चात् प्राप्तास्त एव लभन्ते ॥ गतं व्रजिकाद्वारम्। अथ सार्थद्वारमाह-

[भा.४८७१] जेनोग्गहिओ सत्थो, जेन य सत्थाहो समग दोण्हं पि।
[illegible]इया पडिच्छा, पुव्वठिय साहारणं जं च ॥

वृ- 'येन' साधुना सार्थः पूर्वमवगृहीतो यन वा सार्थवाहः पूर्वमनुज्ञापितस्तस्यावग्रह आभवति। अथ समकमनुज्ञापितस्ततो द्वयोरप्यवग्रहः। यावन्तश्च 'प्रतिसार्थाः' मौलसार्थाद् लघुतरास्तत्र समागत्य मिलन्ति तेषु ये साधवस्ते पूर्वस्थितानामुपसम्पन्ना भवन्ति। यत्र परस्परं निश्रया द्वौ सार्थौ तिष्ठतस्तत्र साधारणं मन्तव्यमिति ॥ एतदेव स्पष्टयति-

[भा.४८७२] सत्थे अहप्पधाणा, एक्केनेक्केन सत्थवाहो उ।
आपुच्छिया विदिन्ने, दोण्ह वि मिलिया व एगट्ठा ॥

वृ- सार्थे ये केचिद् यथाप्रधानाः पुरुषास्ते एकेनानुज्ञापिताः, एकेन तु साधुना सार्थवाह आपृष्टः, ताभ्यां चोभयोरपि वितीर्णम्-अनुज्ञापितं ततो येन कृतं नातिक्रम्यते तेन यस्मै प्रदत्तं तस्यावग्रहः। अथ द्वावप्यनतिक्रमणीयौ ततो द्वयोरपि साधारणं क्षेत्रम्। अथ द्वावप्येकत्र मिलितावनुज्ञापितौ ततो येन पूर्वमनुज्ञापितस्तस्यावग्रह इति ॥

[भा.४८७३] इत्थं महल्लसत्थं, डहरागो पडिच्छए न ते पभुणो।
तुरियं वा आधावति, भएण एमेव अस्सामी ॥

वृ- महल्लं-बृहत्तरं कमपि सार्थमागच्छन्तं 'डहरकः' लघुतरः सार्थं प्रतीक्षते ततो ये लघुतरसार्थवासिनः साधवस्ते नावग्रहस्य प्रभवः। यो वा सार्थो भयेन त्वरितं बृहत्तर-सार्थमिलनायाधावति तत्रापि ये साधवस्ते 'एवमेव' अस्वामिनः, बृहत्तरसार्थवासिन एवावग्रहस्य स्वामिन इति भावः ॥

[भा.४८७४] अडवीमज्झम्मि नदी, दुग्गं वा एत्थ दो वि वसिऊणं।
वोलेहामो पभाए, निस्सा साधारणं कुणइ ॥

वृ- द्वौ सार्थावेकत्र मिलितौ परस्परमित्थं निश्रां कुरुतः, यथा-यदिदमटवीमध्ये नदी दुर्गं वा विद्यते अत्र द्वयेऽपि जना रात्रावुषित्वा प्रभाते 'वोलयिष्यामः' पुरतो गमिष्यामः इति परस्परसाधारणां निश्रां यत्र कुरुतस्तत्र सचित्तादिकं सर्वमपि साधारणम् ॥

गतं सार्थद्वारम्। अथ सेनाद्वारमाह-

[भा.४८७५] सेनाए जत्थ राया, अणोग्गहो जत्थ वा पविट्ठो सो।
सेसम्मि उग्गहो जो, गमो उ वइगाए सो इहइं ॥

वृ- 'यत्र' यस्यां सेनायां राजा भवति तत्रावग्रहो न भवति। 'यत्र वा' ग्रामादौ क्षेत्रे 'सः' राजा प्रविष्टस्तत्र यद्यप्यन्ये साधवः पूर्वस्थिताः सन्ति तथापि यावन्तं कालं स तत्रास्ते तावन्नावग्रहः। शेषं नाम-यत्र ग्रामादौ राजा न प्रविष्टो या वा मुण्डसेना अराजका इत्यर्थ तत्रावग्रहो भवति परं तत्र यो व्रजिकायां गम उक्तः स इहापि मन्तव्यः ॥ गतं सेनाद्वारम्। अथ संवर्तद्वारमाह-

[भा.४८७६] नागरगो संवट्टो, अनोग्गहो जत्थ वा पविट्ठो सो ।
सेसम्मि उग्गहो जो, गमो उ सत्थम्मि सो इह ॥

वृ- 'नागरकः' नगरसम्बन्धी संवर्त्तः 'अनवग्रहः' नतत्रावग्रहो भवति । 'यत्र वा' ग्रामादौ स नागरकः संवर्त्तः प्रविष्टस्तत्रापि नावग्रहः । शेषः-ग्रामेयकसंवर्त्तस्तत्रावग्रहो भवति परं य एव सार्थे गम उक्तः स एवेह द्रष्टव्यः ॥

चूर्णीवचोभिः फलकैः सुयोजितैर्गुरुप्रतिष्ठानयुतैः ससूत्रकैः ।
तृतीयकोद्देशकवारिधिं सतां, तरी तरीतुं विवृतिः कृता मया ॥

उद्देशकः-३ समाप्तः

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता बृहत्कल्पसूत्रे तृतीय उद्देशकस्य (भद्रबाहुस्वामि रचिता निर्युक्तियुक्तं) संघदास गणि विरचितं भाष्यं एवं मलयगिरि क्षेमकीर्ति आचार्याभ्यां विरचिता टीका परिसमाप्ता ।**

## उद्देशकः-४

व्याख्यातस्तृतीय उद्देशकः, सम्प्रति चतुर्थ आरभ्यते । तस्य चेदमादिसूत्रम्-

**मू. (१११)** *तओ अनुग्घाइया पन्नत्ता, तं जहा-हत्थकम्मं करेमाणे, मेहुणं पडिसेवमाणे, राईभोयणं भुंजमाणे ॥*

वृ- अथास्य सूत्रस्य कः सम्बन्धः ? इति चिन्तायां सम्बन्धविधिमेव तावदुपदर्शयति-

[भा.४८७७] सुत्ते सुत्तं बज्झति, अंतिमपुप्फे व बज्झती तंतू ।
इय सुत्तातो सुत्तं, गहंति अत्थातो सुत्तं वा ॥

वृ- इह सम्बन्धोऽनेकधा भवति-यथा पुष्पेषु ग्रथ्यमानेषु यदा 'सूत्रम्' तन्तुर्निष्ठितो भवति तदा तत्रैव सूत्रेऽपरं सूत्रं बध्यते, अन्तिमपुष्पे वा तन्तुर्बध्यते, बद्धवा च पुष्पाणि ग्रथ्यन्ते; एवं यस्मिन्नन्तिमसूत्रे उद्देशको निष्ठितो भवति ततः सूत्रादपरस्योद्देशकस्य यद् आद्यं सूत्रं तद् यदि सदृशाधिकारिकं भवति तदा सूत्रात् सूत्रं ग्रन्थन्तीत्युच्यते । क्वापि पुनरर्थादपरसूत्रं सम्बध्यते । वाशब्दोपादानात् क्वाप्यर्थादर्थस्य सम्बन्धः क्रियते ॥ तत्रार्थात् सूत्रसम्बन्धं तावद् दर्शयति-

[भा.४८७८] घोसो त्ति गोउलं ति य, एगट्ठं तत्थ संवसं कोई ।
खीरादिविंधियतनू, मा कम्मं कुज्ज आरंभो ॥

वृ- घोष इकति गोकुलमिति चैकार्थम् । तत्र तृतीयोद्देशकान्त्यसूत्राभिहितचलक्षेत्रद्वारावसरायाते गोकुले संवसन् कश्चित् साधुः 'क्षीरादिबृंहिततनुः' प्रचुरदुग्ध-दध्याद्युपचितशरीरो मोहोद्भवेन मा हस्तकर्म कुर्यात्, उपलक्षणमिदम्, तेने मा वा मैथुनं प्रतिसेवेत, अतस्तद्वारणार्थमादिसूत्रस्यारम्भः क्रियते ॥ अथ सूत्रात् सूत्रसम्बन्धमाह-

[भा.४८७९] हेट्ठाऽनंतरसुत्ते, वुत्तमनुग्घाइयं तु पच्छित्तं ।
तेन व सह संबंधो, एसो संदड्डओ नामं ॥

वृ- तृतीयोद्देशके यदधस्तादन्त्यसूत्रं तस्य 'अन्तरसूत्रे' रोधकाख्ये यो बहिर्भिक्षाचर्यां गतस्तां रजनीं तत्रैव बहिरावसति तस्यानुद्धातिकं प्रायश्चित्तं साक्षादेवोक्तम्, अत्रापि देवानुद्धातिकं

साक्षादेव सूत्रेणाभिधीयते, एवं 'तेन वा' रोधकसूत्रेण समं 'सन्दष्टको नाम' मध्यपूर्वापर-सूत्रद्वयसन्दंशकगृहीत इव सम्बन्धो भवति ॥ अथान्याचार्यपरिपाट्या सम्बन्धमेवाह-

[भा.४८८०] उवचियमंसा वतियानिवासिणो मा करेज्ज करकम्मं ।
इति सुत्ते आरंभो, आइल्लपदं च सूएइ ॥

वृ- व्रजिकानिवासिनः सन्तः साधव उपचितमांसाः सञ्जाताः करकर्म मा कार्षुरिति प्रस्तुतसूत्रविषय आरंभः । अयं च सम्बन्धः "हत्थकम्मं करेमाणे" इतिलक्षणं अत्राद्यपदं - सूचयति ॥

[भा.४८८१] तह वि य अठायमाणे, तिरिक्खमाईसु होइ मेहुन्नं ।
निसिभत्तं गिरिजन्ने, अरुणम्मि व दुद्धमाईयं ॥

वृ- 'तथापि' करकर्मणाऽप्यतिष्ठति परिणामे तिरश्चादिषु मैथुनप्रतिसेवनमपि कदाचिद् भवेद् इति द्वितीयपदसूचा । व्रजिकायां च गिरियज्ञादौ सायाह्नसङ्खड्यां निशिभक्तं प्रतिसेवेत अरुणोदयवेलायां वा दुग्धादिकं गृह्णीयादिति, तृतीयपदसूचा ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या-'त्रयः' त्रिसङ्ख्याकाः 'अनुद्घातिकाः' उद्घातो नाम-"अद्धेण छिन्नसेसं" इत्यादिविधिना भागपातः सान्तरदानं वा उद्घातः, स विद्यते येषु ते उद्घातिकाः, तद्विपरीता अनुद्घातिकाः 'प्रज्ञप्ताः' तीर्थकरादिभिः प्ररूपिताः । 'तद्यथा' इत्युपप्रदर्शनार्थं । हन्ति हसति वा मुखमावृत्यानेनेति हस्तः-शरीरैकदेशो निक्षेपाऽऽदानादिसमर्थः, तेन यत् कर्म क्रियते तद् हस्तकर्म, तत् कुर्वन् । तथा स्त्री-पुंसयुग्मं मिथुनमुच्यते, तस्य भावः कर्म वा मैथुनम्, तद् प्रतिसेवमानः । तथा रात्रौ भोजनम्-अशनादिकं भुञ्जानः । एष सूत्रार्थ ॥ अथ निर्युक्तिविस्तरमाह-

[भा.४८८२] एक्कस्स ऊ अभावे, कत्तो तिगं तेन एक्कगस्सेव ।
निक्खेवं काऊणं, निष्फत्ती होइ तिण्हं तु ॥

वृ- इह त्रयाणां सङ्ख्या प्रथमतो वक्तव्या । तत्रैकस्याभावे कुतस्त्रिकं सम्भवति ? तेन कारणेन प्रथमत एकस्यैव निक्षेपं कृत्वा ततस्त्रयाणां निक्षेपस्य निष्पत्ति कर्त्तव्या भवति ॥

यथाप्रतिज्ञातमेव करोति-

[भा.४८८३] नामं ठवणा दविए, मातुगपद संगहेक्कए चेव ।
पज्जव भावे य तहा, सत्तेएक्केक्कगा होंति ॥

वृ- नामैककं स्थापनैककं द्रव्यैककं मातृकापदैककं सङ्ग्रहैककं पर्यवैककं भावैककम् । एतानि सप्तैककानि भवन्ति ॥ तत्र नाम-स्थापने क्षुण्णे । द्रव्यैककं पुनर्ज्ञशरीर-भव्यशरीरव्यतिरिक्तमाह-

[भा.४८८४] दव्वे तिविहं मादुकपदम्मि उप्पन्न-भूय-विगतादी ।
सालि त्ति व गामो त्ति व, संघो त्ति व संगहेक्कं तु ॥

वृ- 'द्रव्ये' द्रव्यविषयं एककं त्रिविधम्, तद्यथा-सचित्तमचित्तं मिश्रं च । सचित्तं पुनरपि द्विपद-चतुष्पदा-ऽपदभेदात् त्रिधा । तत्र द्विपदैककं एकः पुरुषः, चतुष्पदैककं एकोऽश्व एको हस्ती, अपदैककं एको वृक्ष इत्यादि । अचित्तैककं एकः परमाणुः एकमाभरणम् । मिश्रैककं सालङ्कार एकः पुरुषः । मातृकापदे तु चिन्त्यमाने एककं उत्पन्न-भूत-विगतादिकम्, "उप्पन्ने इ वा, विगते इ वा, धुवे इ वा"" इत्यस्य पदत्रयस्यैकतरमित्यर्थः । आदिशब्दाद् अकाराद्यक्षरालिकाया वा

मातृकाया एकतरं पदम् । सङ्ग्रहैकं बहुत्वेऽप्येकवचनाभिधेयम्, यथा-शालिरिति वा ग्राम इति वा सङ्घ इति वा ॥ अथ पर्यायैककादीनि दर्शयति-

[भा.४८८५] दुविकप्पं पज्जाए, आदिट्ठं जह्न-देवदत्तो त्ति ।
अनादिट्ठं एक्को त्ति य, पसत्थमियरं च भावम्मि ॥

वृ- पर्यायैककं 'द्विविकल्पं' द्विप्रकारम्, तद्यथा-आदिष्टमनादिष्टं च, विशेषरूपं सामान्यरूपं चेत्यर्थः । तत्रादिष्टं यज्ञदत्तो देवदत्त इत्यादि, अनादिष्टमेकः कोऽपि मनुष्य इत्यादि । अथवा पर्यायैककं वर्णादीनामन्यतम एकः पर्यायः । भावैककं द्विधा-आगमतो नोआगमतश्च । आगमतो ज्ञाता उपयुक्तः । नोआगमतः प्रशस्तम् 'इतरच्च' अप्रशस्तमिति द्विधा । प्रशस्तमौपशमिकादीनामेकतरो भावः, अप्रशस्तमौदायिको भावः । अत्राप्रशस्तभावैककेनाधिकारः, हस्तकर्मादीनामप्रशस्तभावोदयादेव सम्भवात् ॥ अथ 'त्रिकस्य निक्षेपे कृते द्विकनिक्षेपः कृत एव भवति' इति मन्यमानस्त्रिकनिक्षेपज्ञापनार्थमिदमाह-

[भा.४८८६] नामं ठवणा दविए, खेत्ते काले य गणण भावे य ।
एसो उ खलु तिगस्सा, निक्खेवो होइ सत्तविहो ॥

वृ- नामत्रिकं स्थापनात्रिकं द्रव्यत्रिकं क्षेत्रत्रिकं कालत्रिकं गणनात्रिकं भावत्रिकं चेति । एष खलु त्रिकस्य निक्षेपः सप्तविधो भवति ॥

नाम-स्थापनात्रिके गतार्थे । द्रव्यत्रिकं ज्ञ-भव्यशरीरव्यतिरिक्तं ज्ञापयति-

[भा.४८८७] दव्वे सच्चित्तादी, सच्चित्तं तत्थ होइ तिविहं तु ।
दुपय चतुप्पद अपदं, परूवणा तस्स कायव्वा ॥

वृ- द्रव्यत्रिकं सचित्ता-ऽचित्त-मिश्रभेदात् त्रिधा । तत्र सचित्तत्रिकं भूयस्त्रिविधं भवति । तद्यथा-द्विपदत्रिकं चतुष्पदत्रिकं अपदत्रिकम् । तस्य च सप्रभेदस्यापि परूपणा कर्त्तव्या । सा च यथा सचित्तैककस्य कृता तथैवावगन्तव्या ॥

[भा.४८८८] परमाणुमादियं खलु, अच्चित्तं मीसगं च मालादी । ·
तिपदेस तदोगाढं, तिन्नि व लोगा उ खेत्तम्मि ॥

वृ- परमाणुत्रयम्, आदिशब्दाद् द्विप्रदेशिकत्रयं यावदनन्तप्रदेशिकत्रयम्, एतदचित्तत्रिकं द्रव्यम्। मिश्रत्रिकं तु मालात्रयं मन्तव्यम्, तत्र हि पुष्पाणि सचित्तानि सूत्रमचित्तमिति कृत्वा । आदिग्रहणेन सालङ्कारपुरुषत्रयमित्यादि गृह्यते । क्षेत्रत्रयम्-त्रय आकाशप्रदेशाः, "तदोगाढं" ति तेषु वा-त्रिषु आकाशप्रदेशेषु अवगाढं द्रव्यं क्षेत्रत्रयम्, 'त्रयो वा लोकाः' अधोलोकतिर्यग्लोकोर्ध्वलोकलक्षणाः क्षेत्रत्रयमुच्यते ॥

[भा.४८८९] तिसमय तट्ठितिगं वा, कालतिगं तीयमातिणो चेव ।
भावे पसत्थमितरं, एक्केक्कं तत्थ तिविहं तु ॥

वृ- कालत्रयं त्रयः समयाः, "तट्ठितिगं व" त्ति त्रिसमयस्थितिकं वा द्रव्यं कालत्रयम्, अथवा अतीता-ऽनागत-वर्तमानकाला एव कालत्रयम् । भावत्रयं प्रशस्तम् 'इतरद्' अप्रशस्तं चेति द्विधा। पुनरेकैकं त्रिविधम् । तत्र ज्ञानं दर्शनं चारित्रं चेति प्रशस्तम्, मिथ्यात्वमज्ञानमविरतिश्चेत्यप्रशस्तम्। अविरतिरपि हस्तकर्म-मैथुन-रात्रिभक्तप्रतिसेवाभेदादिह प्रस्तावे त्रिविधा । अत्र चानयैवाधिकारः॥

व्याख्यातं त्रय इति पदम् । अथानुद्घातिकपदं व्याख्यातुमाह-

[भा.४८९०] उग्घातमनुग्घाते, निक्खेवो छव्विहो उ कायव्वो
नामं ठवणा दविए, खेत्ते काले य भावे य ॥

वृ-इह ह्रस्वत्वाद् दीर्घत्ववद् उद्घातिकादनुद्घातिकस्य प्रसिद्धिरिति कृत्वा द्वयोरप्युद्घातिका-ऽनुद्घातिकयोः षड्विधो निक्षेपः कर्त्तव्यः । तद्यथा-नामनि स्थापनायां द्रव्ये क्षेत्रे काले भावे चेति ॥ तत्र नाम-स्थापने गतार्थे । द्रव्यादिविषयमुद्घातिकमनुद्घातिकं च दर्शयति-

[भा.४८९१] उग्घायमनुग्घाया, दव्वम्मि हलिद्दराग-किमिरागा ।
खेत्तम्मि कण्हभूमी, पत्थरभूमी य हलमादी ॥

वृ-'द्रव्ये' द्रव्यत उद्घातिको हरिद्रारागः, सुखेनैवापनेतु शक्यत्वात्; अनुद्घातिकः कृमिरागः, अपनेतुमशक्यत्वात् । क्षेत्रत उद्घातिकं कृष्णभूमम्, अनुद्घातिका प्रस्तरभूमि । कुतः ? इत्याह-''हलमादि''त्ति हल-कुलिकादिभिः कृष्णभूममुद्घातयितुं-क्षोदयितुं शक्यम्, प्रस्तरभूमिरशक्या॥
तथा-

[भा.४८९२] कालम्मि संतर निरंतरं तु समयो य होतऽनुग्घातो ।
भव्वस्स अट्ठ पयडी, उग्घातिम एतरा इयरे ॥

वृ- कालत उद्घातिकं सान्तरं प्रायश्चित्तस्य दानम्, अनुद्घातकं निरन्तरदानम् । तुशब्दाद् लघुमासादिकमुद्घातिकम्, गुरुमासादिकमनुद्घातिकम् । अथवा कालतः समयोऽनुद्घातिको भवति, खण्डशः कर्तुमशक्यत्वात्; आवलिकादय उद्घातिकाः, खण्डयितुं शक्यत्वात् । भावत उद्घातिका भव्यस्याष्टौ कर्मप्रकृतयः, उद्घातयितुं शक्यत्वात् । 'इतरस्य' अभव्यस्य सत्कास्ता एव 'इतराः' अनुद्घातिकाः ॥ कुतः ? इति चेद् उच्यते-

[भा.४८९३] जेन खवणं करिस्सति, कम्माणं तारिसो अभव्वस्स ।
न य उप्पज्जइ भावो, ति भावो तस्सऽनुग्घातो ॥

वृ- 'येन' शुभाध्यवसायेन 'कर्मणां' ज्ञानावरणादीनां क्षपणमसौ करिष्यति स तादृशो भावोऽभव्यस्य कदाचिदपि नोत्पद्यते इत्यतस्तस्य भावोऽनुद्घातः, कर्मणामुद्घातं कर्तुमसमर्थः, अत एव तस्य कर्माणि अनुद्घातिकानि भण्यन्ते । अत्र च प्रायश्चित्तानुद्घातिकेनाधिकारः ॥
तच्च कुत्र भवति ? इत्याह-

[भा.४८९४] हत्थे य कम्म मेहुण, रातीभत्ते य होंतऽनुग्घाता ।
एतेसिं तु पदाणं, पत्तेय परूवणं वोच्छं ॥

वृ-हस्तकर्मकरणे मैथुनसेवने रात्रिभक्ते, एतेषु त्रिषु सूत्रोक्तपदेषु 'अनुद्घातिकानि' गुरुकाणि प्रायश्चित्तानि भवन्ति । तत्र हस्तकर्मणि मासगुरुकम्, मैथुन-रात्रिभक्तयोश्चतुर्गुरुकाः । एतच्च प्रायश्चित्तं यदा यत्र स्थाने भवति तत् पुरस्ताद् व्यक्तीकरिष्यते । अथ 'एतेषां' हस्तकर्मादीनां त्रयाणामपि पदानां 'प्रत्येकं' पृथक् प्ररूपणां वक्ष्ये ॥

यथाप्रतिज्ञातमेव निर्वाहयितुकामो हस्तकर्मप्ररूपणां तावदाह-

[भा.४८९५] नामं ठवणाहत्थो, दव्वहत्थो य भावहत्थो य ।
दुविहो य दव्वहत्थो, मूलगुणे उत्तरगुणे य ॥

वृ- नामहस्तः स्थापनाहस्तो द्रव्यहस्तो भावहस्तश्चेति चतुर्धा हस्तः । तत्र नाम-स्थापनाहस्तौ गतार्थौ । द्रव्यहस्तो ज्ञशरीर-भव्यशरीरव्यतिरिक्तो द्विविधो भवति, तद्यथा-मूलगुणनिर्वर्तित उत्तरगुणनिर्वर्तितश्च । तत्र यो जीवविप्रमुक्तस्य शरीरस्य हस्तः स मूलस्य-जीवस्य गुणेन-प्रयोगेण निर्वर्तित इति मूलगुणनिर्वर्तितः, यस्तु काष्ठ-चित्र-लेप्यकर्मादिषु हस्तः स उत्तरगुणनिर्वर्तित उच्यते ।। अथ भावहस्तमाह-

[भा.४८९६] जीवो उ भावहत्थो, नेयव्वो होइ कम्मसंजुत्तो ।
बितियो वि य आदेसो, जो तस्स विजाणओ पुरिसो ।।

वृ- "जीवो"त्ति विभक्तिव्यत्ययाद् यो जीवस्य हस्तः 'कर्मसंयुक्तः' आदान-निक्षेपादक्रियायुक्तः सन नोआगमतो भावहस्त उच्यते । द्वितीयोऽपि चात्रादेशः समस्ति-यः 'तस्य' हस्तस्य 'विज्ञायकः' उपयुक्तः पुरुषः सोऽपि भावहस्तः, आगमत इत्यर्थः । अत्र नोआगमतो भावहस्तेनाधिकारः ।। अथ कर्मपदं व्याचष्टे-

[भा.४८९७] नामं ठवणाकम्मं दव्वकम्मं च भाव कम्मं च ।
दव्वम्मि तुण्णदसिता, अधिकारो भावकम्मेणं ।।

वृ- नामकर्म स्थापनाकर्म द्रव्यकर्म भावकर्म चेति चतुर्धा कर्मणो निक्षेपः । तत्र नाम-स्थापने क्षुण्णे द्रव्यकर्म ज्ञशरीर-भव्यशरीरव्यतिरिक्तं तुन्नणं वा दशिकानां बन्धनं वा, उपलक्षणमिदम्, तेन कुम्भकार-रथकारादिगतमपि द्रव्यकर्म मन्तव्यम् । यद्वा व्यतिरिक्तं द्रव्यकर्म द्विधा-कर्मद्रव्यं नोकर्मद्रव्यं च । कर्मद्रव्यं ज्ञानावरणादिकर्मपर्यायमनापन्नाः कर्मवर्गणापुद्गलाः, यद्वा यद् ज्ञानावरणादिकं कर्म बद्धं न तावदुदयमागच्छति तत् कर्मद्रव्यम् । नोकर्मद्रव्यं आकुञ्चन प्रसारणोत्क्षेपणा-ऽवक्षेपण-गमनभेदात् पञ्चधा । भावकर्म द्विधा-आगमतो नोआगमतश्च । आगमतः कर्मपदार्थज्ञाता उपयुक्तः, नोआगमतोऽष्टविधो ज्ञानावरणादिकर्मणामुदयः । एषां मध्येऽत्र कतमेनाधिकारः ? इति चेद् अत आह-अधिकारोऽत्र 'भावकर्मणा' मोहोदयलक्षणेन । शेषास्तु शिष्यमतिव्युत्पादनार्थं प्ररूपिताः । ततो भावहस्तेनयत् कर्म क्रियते तद् हस्तकरम भण्यते इति प्रक्रमः ।। अथ भावकर्मैव व्याचिख्यासुराह-

[भा.४८९८] दुविहं च भावकम्मं, असंकिलिट्ठं च संकिलिट्ठं च ।
ठप्पं तु संकिलिट्ठं, असंकिलिट्ठं तु वोच्छामि ।।

वृ- द्विविधं च भावकर्म, तद्यथा-असंक्लिष्टं च संक्लिष्टं च । चशब्दौ स्वगतानेकभेदसूचकौ । तत्र संक्लिष्टं 'स्थाप्यं' पश्चाद् वक्ष्यते । असंक्लिष्टं तु साम्प्रतमेव वक्ष्यामि ।।

यथाप्रतिज्ञातमेव प्रमाणयति-

[भा.४८९९] छेदने भेदने चेव, घंसणे पीसणे तहा ।
अभिघाते सिनेहे य, काये खारे त्ति यावरे ।।

वृ- छेदनं भेदनं चैव घर्षण पेषणं तथा अभिघातः स्नेहश्च कायः क्षार इति चापरः । एवमसंक्लिष्टस्य कर्मणोऽष्टौ भेदा भवन्ति ।। एतानि च छेदनादीनि शुषिरे वा कुर्यादशुषिरे वा । पुनरेकैकं शुषिरच्छेदनादि द्विधा । कथम् ? इति चेद् उच्यते-

[भा.४९००] एक्केक्कं तं दुविहं, अनंतर परंपरं च नायव्वं ।

अट्ठाऽनट्ठा य पुनो, होंति अनट्ठाय मासलहुं ॥

वृ-यदशुषिरस्य शुषिरस्य वा छेदनं तदेकैकं द्विविधम्-अनन्तरं परम्परं च ज्ञातव्यम्। पुनरेकैकं द्विधा-अर्थादनर्थाच्च, सार्थकं निरर्थकं चेत्यर्थः । अनर्थकं छेदनादिकं कुर्वतो मासलघु, असामाचारीनिष्पन्नमिति भावः ॥ कथं पुनः छेदनमनन्तरं परम्परं वा सम्भवति ? इत्याह-

[भा.४९०१] नह-दंतादि अनंतर, पिप्पलमादी परंपरे आणा ।
छप्पइगादि असंजमे, छेदे परितावणातीया ॥

वृ- नखैर्दन्तैः आदिग्रहणात् पादेन वा यत् छिद्यते तदनन्तरं छेदनमुच्यते । पिप्पलकेन आदिग्रहणात् पाइल्लक-क्षुरिका-कुठारादिभिर्यत् छिद्यते तत् परम्परच्छेदनम्। एवमनन्तरं परम्परं वा छिन्दता तीर्थकर-गणधराणामाज्ञाभङ्गः कृतो भवति । तं छिन्दन्तं दृष्ट्वाऽन्येऽपि छिन्दन्ति इत्यनवस्था। 'एते तिष्ठन्तश्छेदनादिकं सिट्टरं कुर्वन्ति न स्वाध्यायम्' एवं शय्यातरादौ चिन्तयति मिथ्यात्वम् । विराधना द्विविधा-संयमे आत्मनि च । तत्र नखादौ छिद्यमाने मत्कुणादिकादयो यद् विनाशमश्नुवते सोऽसंयमः, संयमविराधनेत्यर्थः । अथ छेदनं कुर्वतो हस्तस्य पादस्य वा छेदो भवति तत आत्मविराधना, तत्र च परिताप-महादुःखादिनिष्पन्नं पाराञ्चिकान्तं प्रायश्चित्तम् ॥

अथ शुद्धं शुद्धेन प्रायश्चित्तमाह-

[भा.४९०२] अझुसिर झुसिरे लहुओ, लहुगा गुरुगो य होंति गुरुगा य ।
संघट्टण परतावण, लहु-गुरुगऽतिवायणे मूलं ॥

वृ- अशुषिरमनन्तरं छिनत्ति मासलघु, शुषिरमनन्तरं छिनत्ति चतुर्लघुकम्। अशुषिरं परम्परं छिन्दतो गुरुको मासः, शुषिरं परम्परं छिन्दतश्चतुर्गुरुकाः भवन्ति। शुषिरे बहुतरदोषत्वाद् गुरुतरम्, परम्परे शस्त्रग्रहणे संक्लिष्टतरं चित्तमिति कृत्वा गुरुतमं प्रायश्चित्तम् । एवं शुद्धपदे षट्कायविराधनाभावे मन्तव्यम् । अशुद्धपदे पुनरिदमपरं प्रायश्चित्तम्-"संघट्टण" इत्यादि, छेदनादिकं कुर्वन् द्वीन्द्रियान् सङ्घट्टयति चतुर्लघु, परितापयति चतुर्गुरु, उपद्रावयति षड्लघु; त्रीन्द्रियान् सङ्घट्टयति चतुर्गुरु, उपद्रावयति छेदः; पञ्चेन्द्रियान् सङ्घट्टयति षड्गुरु, परितापयति छेदः, पञ्चेन्द्रियमतिपातयति मूलम् । एवमिन्द्रियानुलोम्येन सविस्तरं यथा पीठिकायामुक्तं तथैवात्रापि मन्तव्यम् ॥ अथवा द्वितीयोऽयमादेशः-

[भा.४९०३] अझुसिरऽनंतर लहुओ, गुरुगो अ परंपरे अझुसिरम्मि ।
झुसिरानंतरे लहुगा, गुरुगा तु परंपरे अहवा ॥

वृ- अशुषिरेऽनन्तरे लघुको मासः, अशुषिरे परम्परे गुरुको मासः । शुषिरेऽनन्तरे चतुर्लघु, शुषिरे परम्परे चतुर्गुरुकाः । अथवेति प्रायश्चित्तस्य प्रकारान्तरताद्योतकः ॥ एवं तावत् छेदनपदं व्याख्यातम् । अथ भेदनादीनि पदानि व्याख्यातुकाम इदमाह-

[भा.४९०४] एमेव सेसएसु वि, कर-पादादी अनंतरं होइ ।
जं तु परंपरकरणं, तस्स विहाणं इमं होति ॥

वृ-'एवमेव' छेदनवत् 'शेषेष्वपि' भेदनादिषु पदेषु प्रायश्चित्तं वक्तव्यम्। नवरं कर-पादाभ्याम् आदिशब्दाद् जानु-कूर्परादिभिः शरीरावयवैः क्रियमाणं भेदनादिकमनन्तरं भवति ॥ यत् तु भेदनादेः परम्पराकरणं तस्य विधानमिदं भवति ॥ तद्यथा-

[भा.४९०५] कुयणयमादी भेदो, घंसण मणिमादियाण कट्ठादी ।
पट्टावरादि पीसण, गोप्फण-धनुमादि अभिघातो ॥

वृ- "कुवणओ" लगुडस्तेन आदिशब्दाद् उपल-लेष्टुकाभिर्वा घटादेः 'भेदः' भेदनम्, द्विधा त्रिधा वा छिद्रपातनमित्यर्थः, एतत् परम्पराभेदनमुच्यते । एवं घर्षणं मणिकादीनां मन्तव्यम्, यथा मणिकारा लकुटव्वेधान् कृत्वा मणिकान् घर्षन्ति । आदिशब्दात् प्रवालादिपरिग्रहः । "कट्ठाइ" त्ति चन्दनकाष्ठं फलकादिकं वा यद् घर्षति तद्वा घर्षणम् । "पट्ट"त्ति गन्धपट्टकस्तत्र वराः-पधाना ये गन्धास्तदादीनां पेषणं मन्तव्यम् । गोफणा-चर्मदवरकमयी प्रसिद्धा, तया धनु-प्रभृतिभिर्वा लेष्टुकमुपलं वा यत् प्रक्षिपति एषोऽभिघात उच्यते ॥ अथवा-

[भा.४९०६] विहुवण-नंत-कुसादी, सिनेह उदगादिआवरिसणं तु ।
काओ तु बिंब सत्थे, खारो तु कलिंचमादीहिं ॥

वृ- विधुवनं-वीजनकं नन्तकं-वस्त्र कुशः-दर्भस्तत्प्रभृतिभिर्वीजयन् यत् प्राणिनोऽभिहन्ति एष वा अभिघात उच्यते । स्नेहो नाम उदकेन आदिशब्दाद् घृतेन तैलेन वा आवर्षणं करोति । कायो नाम द्विपदादीनां 'बिम्बं' प्रतिरूपमित्यर्थः तत् शस्त्रेण परम्पराकरणभूतेन पत्रच्छेद्यादिषु निर्वर्तयति । 'क्षारः' लवणं तमशुषिरे शुषिरे वा कलिञ्चादिभिः प्रक्षिपति । 'कलिञ्चः' वंशकर्परी। एषु दोषानाह-

[भा.४९०७] एक्केक्कातो पदातो, आणादीया य संजमे दोसा ।
एवं तु अणट्ठाए, कप्पइ अट्ठाए जयणाए ॥

वृ- एकैकस्माद् भेदनादपदादाज्ञाभङ्गादयो दोषाः, संयमे आत्मनि च प्रागुक्तनीत्या विराधना, एवमेते दोषा अनर्थकं छेदनादिकं कुर्वतो भवन्ति । अथ अर्थः-प्रयोजनं तस्मिन् प्राप्ते यतनया छेदनादिकं करोति तदा कल्पते ॥ इदमेव द्वितीयपदं भावयति-

[भा.४९०८] असती अधाकडाणं, दसिगादिगछेदनं व जयणाए ।
गुलमादि लाउनाले, कप्परभेदादि एमेव ॥

वृ- यथाकृतानां वस्त्राणामभावे दशिकाश्छेत्तव्याः, आदिशब्दात् प्रमाणाधिकस्य वा वस्त्रदेशछेदनं 'यतनया' यथा संयमा-ऽऽत्मविराधना न भवति तथा कर्त्तव्यम् । भेदनद्वारे-गुडादिपिण्डस्य भेदं कुर्यात्, अलाबु-तुम्बकं तस्य वा नालमधिकरणभयाद् भिन्द्यात्, कर्परं-कपालं तदादिना वा कार्यमुत्पन्नं ततो घटग्रीवादेर्भेदनम् "एवमेव यतनया कुर्यात् ॥

[भा.४९०९] अक्खाण चंदने वा, वि घंसणं पीसणं तु अगतादी ।
वग्घातीनऽभिघातो, अगतादि पताव सुणगादी ॥

वृ- घर्षणद्वारे-अक्षाः-प्रसिद्धाः तेषां विषमाणां समीकरणार्थम्, चन्दनस्य वा ग्लानादेः परिदाहोपशमनार्थं घर्षणं कर्त्तव्यम् । पेषणद्वारे-ग्लानादिनिमित्तमेव अगदादेः पेषणं विधेयम् । अभिघातद्वारे-व्याघ्रादीनामभिभवतां गोफणया धनुषा वाऽभिघातः कार्य, अगदादेर्वा प्रताप्यमानस्य शुनक-काकादयोऽभिपतन्तो लेष्टुना भेषयितव्याः ॥

[भा.४९१०] बितिय वत्थुज्झण जतणा, दाहे वा भूमि-देहसिंचनता ।
पडिनीगा-ऽसिवसमणी, पडिमा खारो तु सेल्लादी ॥

वृ- स्नेहद्वारे-'द्वितीयम्' अपवापदं प्रतीत्य स्नेहमुद्धरितं क्षारमध्ये प्रक्षिप्य परिष्ठापयेत्। द्रवं-पानकं तस्योज्झनं यतनया विधेयम्। "दाहे" त्ति लूताया उष्णस्य वा गाढतरमभितापे प्रतिश्रयभूमिकायामावर्षणं कुर्यात्, तृषाभिभूतं वा देहं सिञ्चेत्, ग्लानं भक्तप्रत्याख्यानिनं वा दाहाभिभूतं सिञ्चेत्। कायद्वारे-कश्चिद् गृहस्थः प्रत्यनीकस्तस्योपशमनीं प्रतिमां कृत्वा ततो यावदसावनुकूलो भवति तावद् मन्त्रं जपेत्, अशिवप्रशमनीं वा प्रतिमां विदध्यात्। क्षारद्वारे-अनन्तरं परम्परं वा शुषिरेऽशुषिरे वा प्रसूतिशमनार्थं क्षारं प्रक्षिपेत्। तत्र शुषिरे दर्शयति-"खारो तु सिल्हादि" त्ति सेल्लं-वालमयं सिन्दूरं तत्र क्षारः क्षेपणीयः, किं सञ्जातो न वा? इति।। उपसंहरन्नाह-

[भा.४९११] कम्मं असंकिलिट्ठं, एवमियं वन्नियं समासेणं।
कम्मं तु संकिलिट्ठं, वोच्छामि अहानुपुव्वीए।।

वृ- एवमिदमसंक्लिष्टं हस्तकर्म समासेन वर्णितम्। साम्प्रतं संक्लिष्टं हस्तकर्म यथानुपूर्व्या वक्ष्यामि।। तदेवाह-

[भा.४९१२] वसहीए दोसेणं, दट्ठुं सरितुं व पुव्वभुत्ताइं।
एतेहि संकिलिट्ठं, तमहं वोच्छं समासेणं।।

वृ- वसतेर्दोषेण वा स्त्रीणां वाऽऽलिङ्गनादिकं विधीयमानं दृष्ट्वा 'पूर्वभुक्तानि वा' स्त्रीभिः सार्धं हसित-क्रीडितादीनि स्मृत्वा एतैः कारणैः 'संक्लिष्टं' हस्तकर्म यथोत्पद्यते तदहं वक्ष्ये समासेन।। तत्र वसतिदोषं तावदाह-

[भा.४९१३] दुविहो वसहीदोसो, वित्थरदोसो य रूवदोसो य।
दुविहो य रूवदोसो, इत्थिगत नपुंसतो चेव।।

वृ- द्विविधो वसतिदोषो भवति, तद्यथा-विस्तरदोषश्च रूपदोषश्च। तत्र विस्तरदोषो घट्टशालादिका विस्तीर्णा वसतिः, स पश्चाद् वक्ष्यते। रूपदोषो द्विधा-स्त्रीरूपगतो नपुंसकरूपगतश्च।

[भा.४९१४] एक्केक्को सो दुविहो, सच्चित्तो खलु तहेव अच्चित्तो।
अच्चित्तो वि य दुविहो, तत्थगताऽऽगंतुओ चेव।।

वृ- 'सः' स्त्रीरूपगतो नपुंसकरूपगतश्च दोष एकैको द्विविधः-सचित्तोऽचित्तश्च, जीवयुतविषयोऽजीवयुतविषयश्चेत्यर्थः। अचित्तः पुनरपि द्विविधः-तत्रगत आगन्तुकश्च।।

उभयमपि व्याचष्टे-

[भा.४९१५] कट्ठे पुत्थे चित्ते, दंतोवल मट्टियं व तत्थगतं।
एमेव य आगंतुं, पालित्तय वेड्डिया जवणे।।

वृ- याः काष्ठकर्मणि वा पुस्तकर्मणि वा चित्रकर्मणि वा निर्वर्तिता स्त्रीप्रतिमा यद्वा दन्तमयमुपलमयं मृत्तिकामयं वा स्वरूपं यस्यां वसतौ वसति तत् तस्यां तत्रगतं मन्तव्यम्, तद्विषयो दोषोऽप्युपचारात् तत्रगत उच्यते। एवमेव चागन्तुकमपि मन्तव्यम्। आगन्तुकं नाम यद् अन्यत आगतम्। ततो यथा तत्रगताः स्त्रीप्रतिमा भवन्ति तथाऽऽगन्तुका अपि भवेयुः। तथा चात्र पादलिप्ताचार्यकृता "वेड्डिक" त्ति राजकन्यका दृष्टान्तः। स चायम्- पालित्तायरिएहिं रन्नो भगिनीसरिसिया जंतपडिमा कया। चंकमणुम्मेस-निमेसमयी तालविंटहत्था आयरियाणं पुरतो चिट्ठइ। राया वि अईव पालित्तगस्स सिनेहं करेइ। धिज्जाइएहिं पउट्ठेहिं रन्नो कहियं-भगिनी ते

समणएणं अभिओगिया। राया न पत्तियति, मणिओ अ-पेच्छ, दंसेमु ते। राया आगतो, पासित्ता पालित्तायरियाणं रुट्ठो पच्चोसरिओ य। तओ सा आयरिएहिं चेड त्ति विगरणी कया। राया सुट्ठुतरं आउट्टो॥ एवमागन्तुका अपि स्त्रीप्रतिमा भवन्ति। "जवणे" त्ति यवनविषये ईदृशानि स्त्रीरूपाणि प्राचुर्येण क्रियन्ते॥ व्याख्यातं द्विविधमप्यचित्तम्। अथ सचित्तं व्याख्यायते, तदपि द्विविधम्-तत्रगतमागन्तुकं च। एतदुभयमपि व्याख्यानयति-

[भा.४९१६] पडिवेसिग-एक्कघरे, सचित्तरूवं तु होति तत्थगयं।
सुन्नमसुन्नघरे वा, एमेव य होति आगंतुं॥

वृ- प्रातिवेश्मिकगृहे एकगृहे वा-एकप्रतिश्रये कारणतः स्थितानां यत् स्त्रिया रूपं दृश्यते तत् तत्रगतं सचित्तं रूपं भवति। अथवा शून्यगृहमशून्यगृहं वा प्रविष्टेन या तत्र स्थिता स्त्री विलोक्यते तदपि तत्रगतम्। एवमेव घागन्तुकमपि सचित्तं स्त्रीरूपं भवति, प्रतिश्रये या स्त्री समागच्छति तदागन्तुकमिति भावः॥ अत्र तिष्ठतां दोषानुपदर्शयति-

[भा.४९१७] आलिंगनादी पडिसेवणं वा, दट्ठुं सचित्ताणमचेदने वा।
सद्देहि रूवेहि य इंधितो तु, मोहग्गि संदिप्पति हीनसत्ते॥

वृ- तेषां तत्रगतानामागन्तुकानां वा सचित्तानां स्त्रीरूपाणामालिङ्गनादीनि प्रतिसेवनां वा कुर्वतो दृष्ट्वा, अचेतनानि वा स्त्रीरूपाणि विलोक्य, प्रतिसेव्यमानाया वा स्त्रियः शब्दान् श्रुत्वा, तैः शब्दै रूपैश्च 'इन्धितः' प्रज्वालितः 'तुः' पुनरर्थे मोहाग्नि कस्यापि हीनसत्त्वस्य भुक्तभोगिनोऽ-भुक्तभोगिनो वा सन्दीप्यते, ततः स्मृतिकरण-कौतुकदोषा भवेयुः॥ कथम्? इत्याह-

[भा.४९१८] कोतूहलं च गमनं, सिंगारे कुड्डछिड्डकरणे य।
दिट्ठे परिणय करणे, भिक्खुणो मूलं दुवे इतरे॥

वृ- कुतूहलं तस्योत्पद्यते-आसन्ने गत्वा पश्यामि, शृणोमि वा शब्दम्, एवं कुतूहले उत्पन्ने तत्र गमनं कुर्यात् शृङ्गारं वा गायन्तीं श्रुत्वा गच्छेत्, कुड्यस्य वा छिद्रं कृत्वा प्रलोकयेत्, दृष्टे च सोऽपि तद्भावपरिणतो भवेत्-अहमप्येवं करोमीति, एतद्भावपरिणतः कश्चित् तदेवालिङ्गनादिकं करणं कुर्यात्। एतेषु स्थानेषु भिक्षोर्मूलं यावत् प्रायश्चित्तम्, 'इतरयोः' उपाध्याया-ऽऽचार्ययोर्यथाक्रमं 'द्वे' अनवस्थाप्य-पाराञ्चिके चरमपदे भवतः॥ इदमेव व्याचष्टे-

[भा.४९१९] लहुतो लहुगा गुरुगा, छम्मासा छेद मूल दुगमेव।
दिट्ठे य गहणमादी, पुव्वुत्ता पच्छकम्मं च॥

वृ- तत्रगतः शृणोति मासलघु, कुतूहलं तस्योत्पद्यते मासगुरु, व्रजतश्चतुर्लघुकाः, शृङ्गारं शृण्वतश्चतुर्गुरुकाः, कुड्यस्य च्छिद्रकरणे षण्मासा लघवः, छिद्रेण पश्यन्नास्ते षड्गुरवः, तद्भावपरिणते च्छेदः, आलिङ्गनादिकरणे मूलम्, एवं भिक्षोः प्रायश्चित्तमुक्तम्। उपाध्यायस्य मासगुरुकादारब्धमनवस्थाप्ये पर्यवस्यति। आचार्यस्य चतुर्लघुकादारब्धं पाराञ्चिके तिष्ठति अन्यच्च-आरक्षिकादिभिर्दृष्टे सति ग्रहणा-ऽऽकर्षणादयः पूर्वोक्ता दोषाः। या वा प्रतिमा सा कदाचिदालिङ्ग्यमाना भज्येत ततः पश्चात्कर्मदोषः॥

एष वसतिविषयो रूपदोष उक्तः। अथ विस्तरदोषमाह-

[भा.४९२०] अप्पो य गच्छो महती य साला, निक्कारणे ते य तहिं ठिता उ।

कज्जे ठिता व जतनाए हीना, पावंति दोसं जतना इमा तु ॥

वृ- अल्पश्चासौ गच्छो यस्तत्र प्रतिश्रये स्थितः, शाला च सा 'महती' विस्तीर्णा बृहच्छालेत्यर्थः, ते च साधवो निष्कारणे 'तत्र' उपाश्रये स्थिता वर्तन्ते, अथवा कार्ये स्थिताः परं 'यतनया वक्ष्यमाणलक्षणया हीनाः, ततो वेश्याप्रभृतिषु स्त्रीषु समागच्छन्तीषु 'दोषं' कौतुकस्मृतिकरणादिकं प्राप्नुवन्ति ॥ कारणे तु तत्र तिष्ठतामियं यतना-

[भा.४९२१] असिवादिकारणेहिं, अन्नाऽसति वित्थडाए ठायंति ।

ओतप्पोत करिंती, संथारग-वत्थ-पादेहिं ॥

वृ- अशिवादिभिः कारणैः क्षेत्रान्तरेऽतिष्ठन्तस्तत्र अन्यस्या वसतेरभावे विस्तृतायामपि वसतौ तिष्ठन्ति । तत्र च संस्तारकैर्वस्त्र-पात्रैश्च भूमिकां ओतप्रोतां कुर्वन्ति, मालयन्तीत्यर्थः ॥

इदमेव व्यनक्ति-

[भा.४९२२] भूमीए संथारे, अड्डवियड्डे करेंति जह दट्ठुं ।

ठातुमणा वि दिवसओ, न ठंति रत्तिं तिमा जतना ॥

वृ- विस्तीर्णायां वसतौ तथा भूम्यां संस्तारकान् अर्दवितर्दान् कुर्वन्ति यथा तान् दृष्ट्वा स्थातुमनसोऽपि न तिष्ठन्ति । एषा दिवसतो यतना । रात्रौ पुनरियं यतना ॥

[भा.४९२३] वेसत्थीआगमणे, अवारणे चउगुरुं च आणादी ।

अनुलोमन निग्गमणं, ठाणं अन्नत्थ रुक्खादी ॥

वृ- वेश्यास्त्री यदि रात्रावागच्छति भणति च-'अहमप्यत्र वसामि' इति ततः सा वारणीया । अथ न वारयन्ति ततश्चतुर्गुरुकम् आज्ञादयश्च दोषाः । "अनुलोमणे"त्ति अनुकूलैर्वचनैः सा प्रतिषेद्धव्या न खरपरुषैः, 'मा साधूनामभ्याख्यानं दद्याद्' इति कृत्वा । "निग्गमने"त्ति यदि सा वेश्या निर्गन्तुं नेच्छति ततः साधुभिर्निर्गन्तव्यम्, 'अन्यस्मिन्' शून्यगृहादि स्थाने स्थातव्यम्, तदभावे वृक्षमूलादावपि स्थेयम्, न पुनस्तत्रेति ॥ इदमेव व्यक्तीकरोति-

[भा.४९२४] पुढवी ओस सजोती, हरिय तसा उवधितेन वासं वा ।

सावय सरीरतेनग, फरुसादी जाव ववहारो ॥

वृ- यद्यपि बहिः पृथिवीकायोऽवश्यायो वा, 'सज्योतिर्वा' साग्निका वा अन्या वसति, हरितकायस्त्रसप्राणिनो वा तत्र सन्ति तथापि निर्गन्तव्यम् । अथ बहिरुपधिस्तेनभयं वर्षं वा वर्षति श्वापदाः शरीरस्तेनका वा तत्र सन्ति ततः परुषवचनैरपि सा वेश्या भणितव्या-निर्गच्छास्मदीयात् प्रतिश्रयात् । आदिशब्दात् तथाप्यनिर्गच्छन्त्यां बन्धनादिकमपि विधीयते, यावद् व्यवहारोऽपि करणे उपस्थितायाः कर्त्तव्यः ॥ इदमेव भावयति-

[भा.४९२५] अम्हेदानि विसहिमो, इड्डिमपुत्त बलवं असहणोऽयं ।

नीहि अनिंते बंधन, निवकहण सिरिधराहरणं ॥

वृ- साधवो भणन्ति-वयं क्षमाशीला इदानीं विविधं विशिष्टं वा सहामहे, ततो यस्तत्राकारवान् साधुः स दर्श्यते-अयं तु 'ऋद्धिमत्पुत्रः' राजकुमारादि 'बलवान्' सहस्रयोधी 'असहनः' कोपनो बलादपि भवतीं निष्काशयिष्यति ततः स्वयमेव निर्गच्छ । यदि निर्गच्छति ततो लष्टम्, अथ न निर्गच्छति तदा सर्वेऽपि साधव एको वा बलवान् तां बध्नाति, ततः प्रभाते मुच्यते । मुक्ता च

यदि नृपस्यान्तिके साधूनाकर्षति तदा करणे गत्वा कारणिकादीनां व्यवहारो दीयते । तत्र च श्रीगृहोदाहरणं कर्तव्यम् । यथा- यदि राज्ञः श्रीगृहे रत्नापहारं कुर्वन् कश्चिच्चौरः प्राप्यते ततस्तस्य कं दण्डं प्रयच्छथ ? । कारणिकाः प्राहुः-शिरस्तदीयं गृह्यते । साधवो भणन्ति-अस्माकमप्येषा रत्नापहारिणी अव्यापादिता मुधैव मुक्ता । ते प्राहुः-कानि युष्माकं रत्नानि ? । साधवो भणन्ति-ज्ञानादीनि । कथं तेषामपहारः ? । अनाचारप्रतिसेवनादपध्यानगमनादिनेति ॥

अथ सस्त्रीकः पुरुषः समागच्छेत् सोऽपि वारणीयः । तथा चाह-

[भा.४९२६] अहिकारो वारणम्मि, जत्तिय अप्फुन्न तत्तिया वसही ।
अतिरेग दोस भगिनी, रत्तिं आरद्धे निच्छुभणं ॥

वृ- यत्र केवला पुरुषमिश्रिता वा स्त्री समागच्छति तत्र सर्वत्रापि वारणायामधिकारः, सा कर्तव्येति भावः । अत एव चोत्सर्गतो घट्टशालायां न वस्तव्यं किन्तु यावद्भिः साधुभिः सा "अप्फुन्न"त्ति व्याप्ता भवति 'तावती' तावत्प्रमाणा वसतिरन्वेषणीया । अथातिरिक्तायां वसतौ वसन्ति ततः 'दोषाः' पूर्वोक्ता भवन्ति । कारणतस्तस्यामपि स्थितानां कश्चित् पुरुषः स्त्रीसहितः समागच्छति स चानुकूलैर्वचोभिर्वारणीयः, वार्यमाणश्च ब्रूयात्-'एषा मे भगिनी संरक्षणीया, साधूनां समीपे चाशङ्कनीया' इति च्छद्मना भणित्वा स्थितोऽसौ, रात्रौ च आरब्धस्तां प्रतिसेवितुं ततः साधुभिर्वक्तव्यः-अरे निर्लज्ज ! किमस्मानत्र स्थितान् न पश्यसि यदेवमकार्यं करोषि ? ; एवमुक्त्वा निष्काशनं तस्य कर्तव्यम् ॥

[भा.४९२७] आवरितो कम्मेहिं, सत्तू विव उट्ठितो थरथरंतो ।
मुंचति य भेंडिताओ, एक्केक्कं भे निवादेमि ॥

वृ- अथासौ निष्काश्यमानो रुष्येद् रुष्टश्च 'कर्मभि' कषायमोहनीयादिभि 'आवृतः' आच्छादितः साधूनामुपरि शत्रुरिव रोषेण "थरथरंतो"त्ति भृशं कम्पमानः प्रहारं दातुमुत्थितः वाग्योगेन च 'भिण्डिकाः' त्राडीर्महता शब्देन मुञ्चति, यथा-"भे" युष्माकमेकैकं निपातयामि ॥

[भा.४९२८] निग्गमनं तह चेवा, निद्दोस सदोसऽनिग्गमे जतणा ।
सज्झाए झाणे वा, आवरणे सद्दकरणे वा ॥

वृ- एवं तस्मिन् विरुद्धे सञ्जाते तस्या वसतेः सञ्जाते तस्या वसतेः साधुभिर्निर्गमनं 'तथैव' कर्तव्यं यथा पूर्वं वेश्यास्त्रियामुक्तं यदि बहिर्निर्दोषम् । अथ सदोषं ततः 'अनिर्गमे' अनिर्गच्छतामियं यतना- स्वाध्यायो महता शब्देन क्रियते ध्यानं वा ध्यायते । यस्य स्वाध्याये ध्याने वा लब्धिर्न भवति सः 'आवरणं' कर्णयोः स्थगनं विदधाति 'शब्दकरणं वा' महता शब्देन बोलो विधीयते ॥ एवमपि यतमानस्य कस्यापि तत् प्रतिसेवनं दृष्ट्वा कर्मोदयो भवेत् । कथम् ? इति चेद् उच्यते-

[भा.४९२९] वडपादव उम्मूलण, तिक्खम्मि व विज्जलम्मि वच्चंतो ।
कुणमाणो वि पयत्तं, अवसो जह पावती पडणं ॥

[भा.४९३०] तह समणसुविहिताणं, सव्वपयत्तेण वी जतंताणं ।
कम्मोदयपच्चइया, विराधना कासति हवेज्जा ॥

वृ- यथा वटपादपस्यानेकमूलप्रतिबद्धस्यापि गिरिनदीसलिलवेगेनोन्मूलनं भवति, "तिक्खम्मि

व''त्ति विभक्तिव्यत्ययाद् यथा वा तीक्ष्णेन नदीपूरेण कृतप्रयत्नोऽपि पुरुषो ह्रियते, 'विजले वा' कर्दमाकुले वा व्रजन् प्रयत्नं कुर्वाणोऽप्यवशः पतनं यथा प्राप्नोति, तथा श्रमणसुविहितानां सर्वप्रयत्नेनापि निर्विकृतिकविधान-वाचनाप्रदानादिना यतमानानां वसतिदोषेणानाचारदर्शनाद् मोहोदयः सञ्जायते। ततश्च 'कर्मोदयप्रत्ययिका' वेदमोहनीयकर्मोदयहेतुका कस्यचिदनगारस्य चारित्रविराधना भवेत्।। एवमसावुदीर्णमोहो धृतिदुर्बलस्तमुदयमधिसोढुमशक्तो हस्तकर्म करोति तत्र प्रायश्चित्तमाह–

[भा.४९३१] पढमाए पोरिसीए, बितिया ततियाए तह चउत्थीए।
मूलं छेदो छम्मासमेव चत्तारि या गुरुगा।।

वृ- प्रथमायां पौरुष्यां हस्तकर्म करोति मूलम्, द्वितीयायां छेदः, तृतीयायां षण्मासा गुरवः, चतुर्थ्यां चत्वारो मासा गुरवः।। एनामेव निर्युक्तिगाथां व्याचष्टे–

[भा.४९३२] निसि पढमपोरिसुब्भव, अदढधिती सेवने भवे मूलं।
पोरिसिपोरिसिसहने, एक्केक्कं ठाणगं हसइ।।

वृ-'निशि' रात्रौ प्रथमपौरुष्यां मोहोद्भवो जातः तस्यामेवाऽदृढधृतिर्यदि हस्तकर्म सेवते तदा मूलम्। अथ प्रथमपौरुषीमधिसह्य द्वितीयायां सेवते छेदः। द्वे पौरुष्यावधिसह्य तृतीयायां सेवते षड्गुरवः। तिस्रः पौरुषीरधिसह्य चतुर्थ्यां सेवमानस्य चतुर्गुरुकाः। एवं पौरुषीपौरुषीसहने एकैकं प्रायश्चित्तस्थानं ह्रसति।।

[भा.४९३३] बितियम्मि वि दिवसम्मि, पडिसेवंतस्स मासियं गुरुअं।
छट्ठे पच्चक्खाणं, सत्तमए होति तेगिच्छं।।

वृ- एवं रात्रौ चतुरो यामानधिसह्य द्वितीये दिवसे प्रथमपौरुष्यां प्रतिसेवमानस्य मासगुरुकम्। ततः परं सर्वत्रापि मासगुरुकम्। लघूनि तु प्रायश्चित्तानि अत्र न भवन्ति, अत एवेदं हस्तकर्मसेवनमनुद्घातिकमुच्यते। एवमसौ प्रतिसेव्य सङ्घाटिकस्यान्यस्य वा कस्याप्यालोचयेत्। स च प्रागुक्तहस्तकर्मकारकसाधुपञ्चकापेक्षया षष्ठः साधुस्तं प्रति ब्रवीति-यत् कृतं तदकृतं न भवति, सम्प्रति भक्तप्रत्याख्यानमङ्गीकुरु। सप्तमके चैकित्स्यं भवति। इयमत्र भावना- सप्तमो ब्रवीति-अस्य मोहोदयस्य निर्विकृतिका-ऽवमौदरिकादिरूपा चिकित्सा कर्तव्या।। तथा–

[भा.४९३४] पडिलाभणऽट्ठमम्मि, नवमे सड्ढी उवस्सए फासे।
दसमम्मि पिता-पुत्ता, एक्कारसमम्मि आयरिए।।

वृ- अष्टमे साध्वी प्रतिलाभनाया उपदेशो भवति। नवमो ब्रूते-श्राद्धिका उपाश्रये समानीयते सा भवतः शरीरं स्पृशेत्। दशमे साध्वी-पिता पुत्री युवां सज्ञातिकग्रामं गत्वा चिकित्सां कुरुतमित्युपदिशति। एकादशे सङ्घाटिकसाध्वी आचार्या इत्युल्लेखेनोपदेशो भवति किमुक्तं भवति? - एकादशो ब्रवीति-यदाचार्या आदिशन्ति तद् विधेहि। अयं शुद्धः।। शेषेषु प्रायश्चित्तमाह-

[भा.४९३५] छट्ठो य सत्तमो या, अहसुद्धा तेसि मासियं लहुयं।
उवरिल्ल जं भणंती, थेरस्स वि मासितं गुरुगं।।

वृ- षष्ठ-सप्तमौ 'यथाशुद्धौ' न दोषयुक्तमुपदेशं ददाते, यतश्च गुरूणामुपदेशमन्तरेण स्वेच्छया भणतस्ततो मासिकं लघुकं तयोः प्रायश्चित्तम्। 'उपरितनाः' अष्टम-नवम-दशमा यत् सदोषमुपदेशं

भणन्ति तेन त्रयाणामपि मासगुरुकम् । स्थविरस्यापि पितुः पुत्रेण सह सज्ञातग्रामं गच्छतो मासगुरुकम् ॥ अथामूलेव षष्ठादिसाधूनामुपदेशान् विवृणोति-

[भा.४९३६] संघाडगादिकहणे, जं कत तं कत इदानि पच्चक्खा ।
अविसुद्धो दुट्ठवणो, न समति किरिया से कायव्वा ॥

वृ- सङ्घाटिकस्य आदिशब्दाद् अन्यस्य वा 'हस्तकर्म कृतं मया' इत्येवं कथने कृते सि स ब्रूयात्-यत् कृतं तत् कृतमेव, इदानीं भक्तं प्रत्याचक्ष्व ?, किं ते भ्रष्टप्रतिज्ञस्य जीवितेन? इति। सप्तमः प्राह-'अविशुद्धो दुष्टव्रणः' स्फकादिकः क्रियां विना न शाम्यति अतः क्रिया "से" तस्य कर्तव्या, एवं भवताऽप्यस्य मोहोदयव्रणस्य निर्विकृतिका-ऽवमौदरिकादिका क्रिया विधेया येनोपशमो भवति ॥

[भा.४९३७] पडिलाभणा उ सड्डी, कर सीसे वंद ऊरु दोच्चंगे ।
सुलादिरुयोमज्जण, ओअट्टण सड्ढिमानेमो ॥

वृ- अष्टमः प्राह-"सड्डी" श्राविका सा प्रतिलाभनां करोति, प्रतिलाभयन्त्यां चोवो पात्रके स्थिते यथाभावेनाभ्युपेत्य वा वालिते ऊरुमध्येन द्वितीयाङ्गादिकमवगलति, ततः सा श्राद्धिका करेण स्पृशति, "सीसे वंद"त्ति शीर्षेण वा वन्दमाना पादौ स्पृशेत्, ततः स्त्रीस्पर्शेन बीजनिसर्गो भवेत् । नवमः प्राह-"सूलाइरुय"त्ति शूलम् आदिग्रहणात् गण्डमन्यतरद्वा तदनुरूपं रुग्जातम-कस्मादुत्पाद्यते ततः श्राद्धिका आनीयते, सा तत् शूलादिकमपमार्जयति "ओअट्टण"त्ति गाढ-तरमुद्वर्त्तयति एवं बीजनिसर्गो भवेत् ततः श्राद्धिकामानयामः ॥

[भा.४९३८] सन्दायपल्लिं नेहिं (णं), मेहुणि खुड्डंत निग्गमोवसमो ।
अविधितिगिच्छा एसा, आयरिकहणे विधिक्कारो ॥

वृ- यस्य मोहोदयः समुत्पन्नस्तस्य पितरं प्रति दशमो भणति-'सज्ञातकपल्लिं' सज्ञातकग्रामं "णं" इति एनं आत्मीयं पुत्रं नय, तत्र मैथुनिका-मातुलदुहिता तया सह "खुड्डंत"त्ति सोपहासवचनैर्भिन्नकथाभि परस्परं हस्तसङ्घर्षेण च क्रीडतो बीजनिर्गमो भवेत्, ततश्च मोहोपशमो भवति । एषा सर्वाऽप्यविधिचिकित्सा भणिता । यस्तु ब्रवीति-आचार्याणामेतदालोचय, ततस्ते यां चिकित्सामुपदिशन्ति सा कर्तव्या । एतदेकादशस्य साधोर्विधिकथनमुच्यते ॥

अत्रैव प्रकारान्तरमाह-

[भा.४९३९] सारुवि गिहत्थ (मिच्छे), परतित्थिनपुंसगे य सूयणया ।
चउरो य हुंति लहुगा, पच्छाकम्मम्मि ते चेव ॥

वृ- कश्चिद् ब्रूयात्-'सारुपिकः' सिद्धपुत्रः तद्रूपो यो नपुंसकस्तेन हस्तकर्म कार्यताम् । द्वितीयः प्राह-गृहस्थपुराणनपुंसकेन । तृतीयो भणति-मिथ्यादृष्टिनपुंसकेन । चतुर्थो ब्रवीति-परतीर्थिकनपुंसकेन । एतेषां चतुर्णामपि "सूयणय"त्ति हस्तकर्मकरणे 'सूचनां' प्रेरणां कुर्वाणानां चत्वारो लघवस्तपः-कालविशेषिता भवन्ति । तत्र प्रथम द्वाभ्यामपि लघवः, द्वितीये तपसा लघवः, तृतीये कालने लघवः, चतुर्थे द्वाभ्यामपि गुरव इति । अथ ते हस्तकर्म कृत्वा पश्चात्कर्म कुर्वन्ति, उदकेन हस्तौ धावन्तीत्यर्थः, तत्रापि 'त एव' चतुर्लघवः ॥

[भा.४९४०] एसेव कमो नियमा, इत्थीसु वि होइ आनुपुव्वीए ।

चउरो य अनुग्घाया, पच्छाकम्मम्मि ते लहुगा ॥

वृ- 'एष एव' सारूपिकादिकः क्रमो नियमात् स्त्रीणामपि आनुपूर्व्या वक्तव्यो भवति। तद्यथा-प्रथमो ब्रवीति-सिद्धपुत्रिकया हस्तकर्म कार्यताम्, एवं द्वितीयः-गृहस्थपुराणिकया, तृतीयः-मिथ्यादृष्टिगृहस्थया, चतुर्थ-परतीर्थिक्या। चतुर्णामप्येवंभणतां स्त्रीस्पर्शकारापणप्रत्यया श्चत्वारः 'अनुद्घाताः' गुरुका मासास्तथैव तपः-कालविशेषिताः प्रायश्चित्तम्। पश्चात्कर्मणि तु 'त एव' चत्वारो मासा लघुकाः ॥ तदेवं गतं 'वसतेर्दोषेण' इति द्वारम्। 'दृष्ट्वा स्मृत्वा वा पूर्वमुक्तानि' इति द्वारद्वयं तु यथा निशीथे प्रथमोद्देशके प्रथमसूत्रे व्याख्यातं तथैवात्रापि मन्तव्यम्। तदेवमुक्तं हस्तकर्म। अथ मैथुनमभिधित्सुराह-

[भा.४९४१] मेहुन्नं पि य तिविहं, दिव्वं माणुस्सयं तिरिक्खं च।
ठाणाइं मोत्तूणं, पडिसेवणि सोधि स च्चेव ॥

वृ-मैथुनमपि त्रिविधम्। तद्यथा-दिव्यं मानुष्यं तैरश्चं च। अत्र च येषु स्तानेष्वेतानि दिव्यादीनि मैथुनानि सम्भवन्ति तानि मुक्त्वा स्थातव्यम्। यदि तेषु तिष्ठति तानि वा दिव्यदीनि प्रतिसेवते तदा तदेव स्थानप्रायश्चित्तं सैव च प्रतिसेवनायां शोधिर्या प्रथमोद्देशके सागारिकसूत्रेऽभिहिता अथ द्वितीयपदं सप्रायश्चितमुच्यते। तत्र परः प्रेरयति-

[भा.४९४२] मूलुत्तरसेवासुं, अवरपदम्मि निसिज्झती सोधी।
मेहुन्ने पुन तिविधे, सोधी अववायतो किन्नु ॥

वृ- 'मूलगुणोत्तरगुणप्रतिसेवनासु' प्राणातिपात-पिण्डविशोधिप्रभृतिविषयासु 'अपरपदे' उत्सर्गापेक्षया अन्यस्मिन्नपवादाख्ये स्थाने 'शोधि' प्रायश्चित्तं तावन्निषिध्यते, न दीयत इत्यर्थः, मैथुने पुनस्त्रिविधेऽपि किमर्थमपवादतः प्रतिसेव्यमाने शोधिरभिधास्यते ? ॥ सूरिराह-द्विविधा प्रतिसेवना-दर्पिका कल्पिका च अनयोः प्ररूपणार्थं तावदिदमाह-

[भा.४९४३] राग-द्दोसाणुगया, तु दप्पिया कप्पिया तु तदभावा।
आराधना उ कप्पे, विराधना होति दप्पेणं ॥

वृ-राग-द्वेषाभ्याम् अनुगता-सहिता या प्रतिसेवना स दर्पिका, या तु कल्पिका सा 'तदभावात्' राग-द्वेषाभावाद् भवति। शिष्यः प्राह-दर्पेण कल्पेन वाऽऽसेविते किं भवति ? इति उच्यते-कल्पेनासेविते ज्ञानादीनामाराधना भवति, दर्पेण प्रतिसेविते तेषामेव विराधना भवति ॥ आह-यदि राग-द्वेषविरहिता कल्पिका भवति तर्हि मैथुने कल्पिकाया अभावः प्राप्नोति। उच्यते-प्राप्नोतु नाम, का नो हानिः ?। तथा चाह-

[भा.४९४४] कामं सव्वपदेसु वि, उस्सग्ग-ऽववादधम्मता जुत्ता
मोत्तुं मेहुणभावं, न विना सो राग-दोसेहिं ॥

वृ- 'कामम्' अनुमतमिदमस्माकम्-'सर्वेष्वपि पदेषु' मूलोत्तरगुणरूपेषु 'उत्सर्गा-ऽपवादधर्मता युक्ता' उत्सर्ग-प्रतिषेधः अपवादः-अनुज्ञा तद्धर्मता-तल्लक्षणता सर्वेष्वपि पदेषु युज्यते; तथापि मुक्त्वा 'मैथुनभावम्' अब्रह्मासेवनम्, तत्र उत्सर्गधर्मतैव घटते नापवादधर्मता। किमर्थम् ? इत्याह-असौ मैथुनभावो राग-द्वेषाभ्यां विना न भवति, अतो द्वितीयपदेऽपि न तत्राप्रायश्चित्तीति हृदयम् ॥ अयं पुनरस्ति विशेषः-

[भा.४९४५] संजमजीवितहेउं, कुसलेनालंबनेन वऽन्नेणं ।
भयमाणे तु अकिच्चं, हानी वड्डी व पच्छित्ते ॥

वृ- 'संयमजीवितहेतोः' 'चिरकालं संयमजीवितेन जीविष्यामि' इति बुध्या 'कुशलेन वा' तीर्थाव्यवच्छित्त्यादिलक्षणेनान्येनाप्यालम्बनेन 'अकृत्यम्' अब्रह्म 'भजमानस्य' आसेवमानस्य प्रायश्चित्ते हानिर्वा वृद्धिर्वा वक्ष्यमाणनीत्या भवति ॥

आह-मैथुने कल्पिका सर्वथैव न भवति ? इति अत आह-

[भा.४९४६] गीयत्थो जतनाए, कडजोगी कारणम्मि निद्दोसो ।
एगेसिं गीत कडो, अरत्तऽदुट्ठो तु जतनाए ॥

वृ-गीतार्थ 'यतनया' अल्पतरापराधस्थानप्रतिसेवारूपया 'कृतयोगी' तपः कर्मणि कृताभ्यासः 'कारणे' ज्ञानादौ सेवते, एष प्रथमो भङ्गः, अत्र च प्रतिसेवमानः कल्पिकप्रतिसेवावानिति कृत्वा निर्दोषः । गीतार्थो यतनया कृतयोगी निष्कारणे, एष द्वितीयो भङ्गः, अत्र सदोषः । एवं चतुर्णां पदानां षोडश भङ्गाः कर्तव्याः । एकेषां पुनराचार्याणामिह पञ्च पदानि भवन्ति- गीतार्थ कृतयोगी अरक्तो अद्विष्टो यतनया सेवते, एष प्रथमो भङ्गः; गीतार्थः कृतयोगी अरक्तोऽद्विष्टोऽयतनया, एष द्वितीयो भङ्गः; एवं पञ्चभिः पदैर्द्वात्रिंशद् भङ्गा भवन्ति । अत्रापि प्रथमभङ्गे कल्पिका प्रतिसेवा मन्तव्या, न शेषेषु ॥ आह-यदि तत्र कल्पिका तर्हि निर्दोष एवासौ, उच्यते-

[भा.४९४७] जति सव्वसो अभावो, रागादीणं हविज्ज निद्दोसो ।
जतणाजुतेसु तेसु तु, अप्पतरं होति पच्छित्तं ॥

वृ-यदि 'सर्वशः' सर्वप्रकारेणैव रागादीनामभावो मैथुने भवेत् ततो भवेन्निर्दोषः, तच्च नास्ति, अतो न तत्र सर्वथा निर्दोषः, परं यतनायुतेषु 'तेषु' गीतार्थादिविशेषणविशिष्टेषु साधुष्वल्पतरं प्रायश्चित्तं भवति ॥ अथ यदुक्तम्-"हानिर्वृद्धिर्वा प्रायश्चित्ते भवति" तत्र हानिं तावद् विवरीषुराह-

[भा.४९४८] कुलवंसम्मि पहीणे, रज्जं अकुमारगं परे पेल्ले ।
तं कीरतु पक्खेवो, एत्थ य बुद्धीए पाधन्नं ॥

वृ-कश्चिद् नृपतिरनपत्यः स मन्त्रिणा प्रोक्तः-यूयमपुत्रिणस्ततः कुलवंशे प्रक्षीणे राज्यमकुमारकं मत्वा परे राजानः प्रेरयेयुः ततः क्रियतामपरपुरुषप्रक्षेपः, स चोपायेन तथा कर्तव्यः यथा लोके अपयशः प्रवादो न समुच्छलति कुमारश्चोत्पद्यते, 'अत्र च' उपायनिरूपणे बुद्धेः प्राधान्यम्, तयैवासौ सम्यक परिज्ञायते नान्यथेति भावः ॥ इदमेव सविशेषमाह-

[भा.४९४९] सामत्थ निव अपुत्ते, सचिव मुनी धम्मलक्ख वेसनता ।
अणहवियतरुणरोधो, एगेसिं पडिमदायणता ॥

वृ- 'अपुत्रे' अपुत्रस्य नृपस्य सचिवेन सह "सामत्थणं" पर्यालोचनम्, यथा-कथं नाम कुमारः सम्भाविता ? । ततो मन्त्रिणा भणितम्-यथा परक्षेत्रेऽपरेण बीजमुप्तं क्षेत्रस्वामिन आभाव्यं भवति एवं तवान्तःपुरक्षेत्रेऽन्येनापि बीजं निसृष्टं तवैव पुत्रो भवति । राज्ञा प्रतिपन्नं तद्वचनम् । भूयोऽप्यमात्यः प्राह-ये मुनयोऽयशःप्रवादाद्बिभ्यन्ते ते 'धर्मलक्ष्येण' धर्मकथाकारापणव्याजेन यद्वा "धम्मलक्खे"ति 'राजा सान्तःपुरः श्रावको गृहेऽर्हतां प्रतिमाः शुश्रूषते ताः साधवो वन्दितुमागच्छत' इत्येवं धर्मव्याजेन "वेसनय"त्ति प्रवेशनीयाः । एवममात्यवचनं प्रतिपद्य राज्ञा तथैव कृतम् । ततो राजगृहं प्रविष्टेषु

साधुषु ये तरुणाः अनघबीजाः-अविनष्टबीजास्तेषां लक्षणादिभिर्ज्ञात्वा रोधः-नियन्त्रणा कृता, शेषास्तु क्षुल्लक-स्थविरादयो विसर्जिताः। यद्वा ''तरुण रोहे''त्ति पाठः, ते तरुणाः 'अवरोधे' अन्तःपुरे तरुणस्त्रिभि सार्धं बलाद् भोगान् भोजयितुमारेभिरे। राजपुरुषाश्च घोररूपधारिणो भणन्ति-यदि भोगाश्च मोक्ष्यध्वे ततो वयं मारयिष्यामः। तत्रैकः साधुः

''वरं प्रवेष्टुं ज्वलितं हुताशनं, न चापि भग्नं चिरसञ्चितं व्रतम्।
वरं हि मृत्युः सुविशुद्धकर्मणो, न चापि शीलस्खलितस्य जीवितम्॥''

इत्यादि परिभाव्य मर्तुमध्यवसितः, तस्यैवमनिच्छतो राजपुरुषैः शिरश्छिन्नम्। ''एगेसिं पडिमदायणय''त्ति 'एकेषाम्' आचार्याणामयमभिप्रायः, यथा-मन्दरप्रकाशे प्रदेशे लेप्यप्रतिमाया लाक्षारसपूर्णायाः शीर्षं छित्त्वा दर्शितम्, ततः साधवो भणिताः-यथैतस्य शिरश्छिन्नम् एवं भवतामपि शिरश्छेदो विधास्यते॥ इदमेव भावयति-

[भा.४९५०] तरुणीण य पक्खेवो, भोगेहि निमंतणं च भिक्खुस्स।
भोत्तुं अनिच्छमाणे, मरणं च तहिं ववसियस्स॥

वृ-तरुणीनां साधुभिः सहान्तःपुरे प्रक्षेपः कृतः, भोगैश्चैकस्य भिक्षोः प्रथमतो निमन्त्रणं कृतम्, तस्य च भोक्तुमनिच्छतो मरणं च तत्र व्यवसितस्य शिरश्छेदश्चक्रे॥

[भा.४९५१] दट्ठूण तं विससणं, सहसा साभावियं कइतवं वा।
विगुरुव्विया य ललना, हरिसा भयसा व रोमंचो॥

वृ- 'तत्' तथाविधं 'विशसनं' व्यपरोपणं 'स्वाभाविकं' साधोरेव 'कैतविकं वा' प्रतिमायाः क्रियमाणं सहसा दृष्ट्वा 'विकुर्विताश्च' अलङ्कृत-विभूषिता ललना विलोक्य कस्यापि हर्षेण भयेन वा रोमाञ्चो भवेत्। सकारोऽलाक्षणिकः॥ अत्रैव प्रायश्चित्तमाह-

[भा.४९५२] सुद्धुल्लसिते भीए, पच्चक्खाणे पडिच्छ गच्छ थेर विदू।
मूलं छेदो छम्मास चउर गुरु-लहु लहुग मासो॥

वृ-यस्तावद् मरणमध्यवसितः स शुद्धः। द्वितीयः-उल्लसितः-'एतेनापि मिषेण स्त्रियं प्राप्स्यामः' इति बुध्या उल्लुषितरोमकूपः सञ्जातस्तस्य मूलम्। अपरः-यदि न प्रतिसेवे ततो मम शिरश्छिद्यते; एवं भीतस्य प्रतिसेवमानस्य च्छेदः। अपरश्चिन्तयति-अहमेवं मार्यमाणः समाधिं नासादयिष्यामि, असमाधिमरणेन च दुर्गतिगामी, अतो भक्तप्रत्याख्यानं कृत्वा मरिष्ये; एवं सेवमानस्य षड्गुरवः। अपर इदमालम्बनं करोति-अहं जीवन् प्रतीच्छकानां वाचनां दास्यामि; तस्य षड्लघवः। अपर इदमालम्बनं करोति-अहं जीवन् प्रतीच्छकानां वाचनां दास्यामि; तस्य चतुर्लघुकम्। अपरः परिभावयति-विद्वांसः-आचार्यास्तेषां वैयावृत्यकर्ता कोऽपि न विद्यते तदर्थं प्रतिसेवे; तस्य मासलघुकम्॥ इदमेव व्याख्याति-

[भा.४९५३] निरवहयजोणियीणं, विउव्वणं हरिसपुल्लसिते मूलं।
भय रोमंचे छेदो, परिन्न काहं ति छग्गुरुगा॥

वृ-पञ्चपञ्चाशतो वर्षाणामुपरिष्टादुपहतयोनिका स्त्री भवति, तेषामारतो अनुपहतयोनिका, गर्भं गृह्णातीत्यर्थः। एवं निरपहतयोनिकस्त्रीणां 'विकुर्वणं' मण्डनं दृष्ट्वा यस्य हर्ष समुल्लसति ततश्चाब्रह्म प्रतिसेवमानस्य तस्य मूलम्। यस्य तु भयेन रोमाञ्च उत्पद्यते तस्य च्छेदः। परिज्ञा-

भक्तप्रत्याख्यानं तां करिष्यामीति यः परिणतस्तस्य षड्गुरुकाः ॥

[भा.४९५४]　मा सीदेज्ज पडिच्छा, गच्छो फिट्टेज्ज थेर संघेच्छं ।
गुरुणं वेयावच्चं, काहं ति य सेवतो लहुओ ॥

वृ- 'मा प्रतीच्छकाः सीदेयुः' इति बुध्या यः सेवते तस्य षड्लघुकाः । यस्तु 'मां विना गच्छः स्फिटेत्' इत्यालम्बते तस्य चतुर्गुरु । 'स्थविरान् सङ्ग्रहीष्यामि' इति कृत्वा सेवमानस्य चतुर्लघु । 'गुरूणां वैयावृत्यं करिष्ये' इति हेतोः सेवमानस्य लघुमासः ॥

उक्ता प्रायश्चित्तस्य हानिः । अथ वृद्धिमाह-

[भा.४९५५]　लहुओ उ होति मासो, दुब्भिक्खऽविसज्जणे य साहूणं ।
नेहानुरागरत्तो, खुड्डो चिय नेच्छए गंतुं ॥

[भा.४९५६]　कालेनेसनसोधिं, पयहति परिताविलो दिगिंछाए ।
अलभंते चिय मरणं, असमाही तित्थवोच्छेदो ॥

वृ- 'इह दुर्भिक्षं भविष्यति' इति मत्वा सूरिभिरनागतमेव गच्छं गृहीत्वा निर्गन्तव्यम् । अथ स्वयं जङ्घाबलपरिक्षीणास्ततः साधवो विसर्जनीयाः । अथ न विसर्जयन्ति तत आचार्यस्या-सामाचारीनिष्पन्नो लघुको मासो भवति आज्ञादयश्च दोषाः । एते चापरे तत्र दोषा भवन्ति- स गच्छो दुर्भिक्षे भक्त-पानमलभमानः "दिगिंछाए"त्ति बुभुक्षया परितापितः सन् 'कालेन' कालक्रमेण एषणाशुद्धिमपि प्रजहाति, मरणमपि चासमाधिना भक्तमलभमानस्य भवेत्, तीर्थव्यवच्छेदश्च भवति, अतो विसर्जनीयः सर्वोऽपि गच्छः । तत्र च विसर्जिते किं भवति ? इति अत आह- "नेहानुराग" इत्यादि पूर्वगाथायाः पश्चार्द्धम् । स्नेहानुरागरक्तः कश्चित् क्षुल्लको नेच्छति गन्तुं परमनिच्छन्नपि प्रेषितः । ततोऽसौ गुरुस्नेहानुरागपरवशो देशस्कन्धात् पलायित्वा प्रतिनिवृत्तः। सूरिभिरभिहितम्-दुष्टु त्वया कृतं यदेवं भूयः प्रत्यागतः । आचार्याश्च स्वयं केषुचिन्निश्रागृहेषु यां भिक्षां लभन्ते तस्याः संविभागं क्षुल्लकस्य प्रयच्छन्ति । ततः क्षुल्लकश्चिन्तयति-अहो ! मया गुरवोऽपि क्लेशिताः । ततः स पृथग् भिक्षां हिण्डितः । तत्रैका प्रोषितपतिका क्षुल्लकमुपसर्गयन्ती भणति-यदि मया सार्धं तिष्ठसि ततो यथेष्टं ते भक्तं पूरयिष्यामीति ॥ एवं च-

[भा.४९५७]　भिक्खं पि य परिहायति, भोगेहिं निमंतणा य साहुस्स ।
गिण्हति एक्कंतरियं, लहुगा गुरुगा चउम्मासा ॥

वृ- भैक्षमपि दुर्भिक्षानुभावेन परिहीयते भोगैश्च निमन्त्रणा तस्य साधोः समजनि ततः स चिन्तयति-यद्येनां प्रतिसेवितुं नेच्छामि ततो भक्ताभावदसमाधिमरणेन म्रिये, अतः साम्प्रतं तावत् प्रतिसेवे, पश्चाद् दीर्घं कालं संयमं पालयिष्यामि सूत्रार्थौ च ग्रहीष्यामि एतत्प्रत्ययं च प्रायश्चित्तं चरिष्यामि; एवं चिन्तयित्वा यतनां करोति । कथम् ? इत्याह-"गिण्हइ" इत्यादि, एकान्तरितं भक्तं गृह्णाति प्रतिसेवते च । तत्र प्रथमदिवसे प्रतिसेवमानस्य चत्वारो लघुमासाः । द्वितीये दिनेऽभक्तार्थेन स्थित्वा तृतीये दिने प्रतिसेवमानस्य चत्वारो गुरुमासाः ॥

[भा.४९५८]　पडिसेवंतस्स तहिं, छम्मासा छेदो होति मूलं च ।
अणवट्टप्पो पारंचिओ य पुच्छा य तिविहम्मि ॥

वृ- एवमेकान्तरितं भक्तं गृह्णतस्तां च 'तत्र' तादृशे दुर्भिक्षे प्रतिसेवमानस्य पञ्चम-

सप्तमयोर्दिनयोर्यथाक्रमं षण्मासा लघवो गुरवश्च भवन्ति, ततो नवमे दिने च्छेदः, तत एकादशे मूलम्, तदनन्तरं त्रयोदशे दिवसेऽनवस्थाप्यम्, ततः पञ्चदशे दिवसे प्रतिसेवमानस्य पाराञ्चिकम्। अथ निरन्तरं प्रतिसेवते तदा द्वितीयदिवस एव मूलम्। एषा वृद्धिरभिहिता। "पुच्छा य तिविहम्मि"त्ति शिष्यः पृच्छति-'त्रिविधे' दिव्य-मानुष्य-तैरश्चलक्षणे मैथुने कथमभिलाष उत्पद्यते?॥ सूरिराह-

[भा.४९५९] वसहीए दोसेण, दट्ठु सरिउ व पुव्वभुताइं।
तेगिच्छ सद्दमादी, असज्जणा तीसु वी जतणा॥

वृ- 'वसतेर्दोषेण' स्त्री-पशु-पण्डकसंसक्तिलक्षणेन, यद्वा स्त्रयम् आलिङ्गनादिकं वा दृष्ट्वा, गृहस्थकाले वा यानि स्त्रीभि सार्धं भुक्तानि वा हसितानि वा ललितानि वा तानि स्मृत्वा मैथुनभाव उत्पद्यते। एवमुत्पन्ने किं कर्त्तव्यम्? इत्याह-"तेगिच्छ" इत्यादि, चिकित्सा कर्त्तव्या, सा च निर्विकृतिकप्रभृतिका। तामतिक्रान्तस्य शब्दादिका वा यतना कर्त्तव्या। किमुक्तं भवति? - यत्र स्थाने स्त्रीशब्दं रहस्यशब्दं वा शृ णोति तत्र स्थविरसहितः स्थाप्यते, आदिशब्दाद् यत्रालिङ्गनादिकं पश्यति तत्रापि स्थाप्यते। "असज्जण"त्ति तस्यां शब्दश्रवणादिरूपायां चिकित्सायां सजनं-सङ्गो गृद्धिरिति यावत् सा तेन न कर्तव्या। एवं 'त्रिष्वपि' दिव्यादिषु मैथुनेषु यतना मन्तव्या॥

इदमेव सविशेषमाह-

[भा.४९६०] बिइयपदे तेगिंछं, निव्वीतियमादिगं अतिक्कंते।
सनिमित्तऽनिमित्तो पुन, उदयाऽऽहारे सरीरे य॥

वृ- द्वितीयपदे निर्विकृतिका-ऽवमौदरिका-निर्वलाहारोर्ध्वस्थाना-ऽऽचाम्ला-ऽभक्तार्थ-षष्ठा-ऽष्टमादिरूपां चिकित्सामतिक्रान्तस्य शब्दादिकाऽनन्तरोक्ता यतना भवति। एषा च सनिमित्तेऽनिमित्ते वा मैथुनाभिलाषे भवति। तत्र सनिमित्तो वसतिदोषादिनिमित्तसमुत्थः, अनिमित्तः पुनः कर्मोदयेन १ आहारतः २ शरीरपरिवृद्धितश्च ३ य उत्पद्यते। सर्वमेतद् यथा निशीथे प्रथमोद्देशके भणितं तथैव द्रष्टव्यम्॥ गतं मैथुनम्। अथ रात्रिभोजनमाह-

[भा.४९६१] रातो य भोयणम्मि, चउरो मासा हवंतऽणुग्घाया।
आणादिणो य दोसा, आवज्जण संकणा जाव।

वृ- रात्रौ भोजने क्रियमाणे चत्वारो मासाः 'अनुद्धाताः' गुरवो भवन्ति आज्ञादयश्च दोषाः। ये च प्राणातिपातादिविषया आपत्ति-शङ्कादोषाः परिग्रहस्यापत्तिं शङ्कां च यावत् प्रथमोद्देशके "नो कप्पइ राओ वा वियाले वा असनं वा ४" इत्यादौ रात्रिभक्तसूत्रे इहैवाभिहितास्ते सर्वेऽपि द्रष्टव्याः॥ अथ द्वितीयपदमाह-

[भा.४९६२] निरुवद्दवं च खेमं च, होहिंति रन्नो य कीरतू संती।
अद्धाणनिग्गतादी, देवी पूयाय अज्झियगं॥

वृ- उपद्रवो नाम-अशिवं गलरोगादिकं वा, तस्याभावो निरुपद्रवम्। 'क्षेमं' परचक्राद्युपप्लवाभावः। ततः 'निरुपद्रवं च क्षेमं च मदीये देशे भविष्यति' इति परिभाव्य राजा शान्ति कर्तुकामस्तपस्विनो रात्रौ भोजयेत्। यद्वा राजपुत्रो वा नागरा वा 'राज्ञः शान्ति क्रियताम्' इति कृत्वा ये रात्रौ न भुञ्जते सुतपस्विनश्च ते रात्रौ भोजनीयाः, एष तस्या विद्याया उपचार इति

परिभावयन्ति, ते च साधवोऽध्वनिर्गतादयस्तत्र सम्प्राप्तास्ततो वक्ष्यमाणो विधिर्विधातव्यः। यद्वा राज्ञः कस्यापि देवी वानमन्तरपूजां कृत्वा तपस्विनां रात्रिभोजनलक्षणम् "अज्झियकं" उपयाचितं मन्येत ॥ कुतः ? इति चेद् उच्यते-

[भा.४९६३] अवधीरिया व पतिणा, सवत्तिनीए व पुत्तमाताए।
गेलन्नेण व पुट्ठा, वुग्गहउप्पादसमणे वा ॥

वृ- 'पतिना' भर्त्रा 'अवधीरिता' अपमानिता सा देवी, यद्वा या तस्याः सपत्नी सा पुत्रमाता तया न सुष्ठु बहुमान्यते, ग्लानत्वेन वा सा गाढतरं स्पृष्टा, विग्रहो वा तस्याः केनापि सार्धमुत्पन्नस्ततो विग्रहोत्पादस्य शमनार्थं वानमन्तरपूजा कर्तव्या, स च वानमन्तरो रात्रौ साधुषु भोजितेषु परितोषमुद्वहति ॥ ततः-

[भा.४९६४] एक्केकं अतिनेउं, निमंतणा भोयणेन विपुलेणं।
भोत्तुं अनिच्छमाणे, मरणं च तहिं ववसितस्स ॥

वृ- एकैकं साधुं बलाभियोगेन राजभवने 'अतिनीय' प्रवेश्य रात्रौ विपुलेन भोजनेन निमन्त्रणा कृता, अभिहिताश्च साधवः-यदि सम्प्रति न भोक्ष्यध्वे ततो वयं व्यपरोपयिष्यामः। एवमुक्ते तेषामेकस्य साधोस्तदानीं भोक्तुमनिच्छतो मरणं च तत्र व्यवसितस्य शिरश्छिन्नम्, द्वितीयो हर्षादुल्लसितः, तृतीयो भीत इत्यादि यथा मैथुने तथा मन्तव्यम् ॥ अत्र प्रायश्चित्तमाह-

[भा.४९६५] सुद्धुल्लसिते भीए, पच्चक्खाणे पडिच्छ गच्छ थेर विदू।
मूलं छेदो छम्मास चउरो मासा गुरुग लहुओ ॥

वृ- गतार्था ॥ अत्र यतनामाह-

[भा.४९६६] तत्थेव भोक्खामो, अनिच्छे भुंजामो अंधकारम्मि।
कोणादी पक्खेवो, पोट्टल भाणे व जति नीता ॥

वृ- रात्रौ भोज्यमानैः साधुभिरभिधातव्यम्-भाजनेषु गृहीत्वा ततः 'तत्रैव' स्वप्रतिश्रये भोक्ष्यामहे, न वर्तते गृहस्थानां पुरतो भोक्तुम्; एवमुक्त्वा ततोऽल्पसागारिकं नीत्वा परिष्ठापयन्ति। अथान्यत्र नेतुं न प्रयच्छन्ति भणन्ति च-अस्माकं पुरतो भोक्तव्यम्; ततो वक्तव्यम्-प्रदीपमपनयत, अन्धकारे भोजनं कुर्मः, ततस्तेषामपश्यतां कोणेषु आदिशब्दाद् अपरत्र वा एकान्ते कवलान् प्रक्षिपन्ति। अथवा वस्त्रेण पोट्टलकं बद्ध्वा तत्र प्रक्षिपन्ति, भाजनेषु वा प्रक्षिपन्ति यदि निजकानि अलाबूनि भवन्ति ॥ अथ प्रदीपं नापनयन्ति तत इदं वक्तव्यम्-

[भा.४९६७] गेलन्नेण व पुट्ठा, वाहाडऽरुची व अंगुली वा वि।
भुंजंता वि य असढा, सालंबाऽमुच्छिता सुद्धा ॥

वृ- यदि ते दुर्बलास्ततो भणन्ति-ग्लानत्वेन स्पृष्टा वयम्, एतच्चास्माकमपथ्यम्, यदि समुद्दिशामस्ततो म्रियामहे, तस्मान्मा ऋषिहत्यां कुरुत। अथवा भणितव्यम्-अस्माभिर्गलकं यावद् भुक्तम्, वाहाडं च-प्रभूतं भुक्तानां कुतो रुचिरुपजायते ?। यद्येवं न प्रत्यर्पयन्ति ततो मातृस्थानेनाङ्गुलीं वदने प्रक्षिप्य वमनमुत्पादयन्ति। यदि तथापि न प्रतियन्ति ततः स्तोकं तन्मध्यादास्वादयन्ति। अथ तथापि न विसर्जयन्ति तत एवं सालम्बनाः 'अशठाः' राग-द्वेषरहिता अमूर्च्छिताः स्तोकं भुञ्जाना अपि शुद्धाः ॥ उपसंहरन्नाह-

[भा.४९६८] एत्थं पुन अधिकारो, अनुग्घाता जेसु जेसु ठाणेसु।
उग्घारियसरिसाइं, सेसाइं विकोवणट्ठाए॥

वृ- 'अत्र पुनः' प्रस्तुतसूत्रे हस्तकर्म-मैथुन-रात्रिभक्तविषयैः स्थानैः 'अधिकारः' प्रयोजनम्। कैः ? इत्याह-येषु येषु स्थानेषु 'अनुद्धातानि' गुरुकाणि प्रायश्चित्तानि भणितानि तैरेवाधिकारः। 'शेषाणि' लघुप्रायश्चित्तसहितानि स्थानानि पुनरुद्धारितार्थसदृशानि शिष्याणां विकोपनार्थ-मुक्तानि॥

*मू. (११२) तओ पारंचिया पन्नत्ता, तं जहा-दुट्ठे पारंचिए, पमत्ते पारंचिए, अन्नमन्नं करेमाणे पारंचिए॥*

वृ- अस्य सम्बन्धमाह-

[भा.४९६९] वुत्ता तवारिहा खलु, सोधी छेदारिहा अध इदानिं।
देसे सव्वे छेदो, सव्वे तिविहो तु मूलादी॥

वृ- तपोर्हा शोधिः खलु पूर्वसूत्रे प्रोक्ता, अथेदानीं छेदार्हाऽभिधीयते। स च च्छेदो द्विधा-देशतः सर्वतश्च। देशच्छेदः पञ्चरात्रिन्दिवादिकः षण्मासान्तः। सर्वच्छेदः 'मूलादि' मूला-ऽनवस्थाप्य-पाराञ्चिकभेदात् त्रिविधः। अत्र सर्वच्छेदः पाराञ्चिकलक्षणोऽधिक्रियते॥ आह यद्येवं तर्हि-

[भा.४९७०] छेओ न होइ कम्हा, जति एवं तत्थ कारणं सुणसु।
अनुघाता आरुवणा, कसिणा कसिणेस संबंधो॥

वृ- छेद एव सूत्रेऽपि कस्मान्न भवति ?, "ततो छेदारिहा पन्नत्ता, तं जहा-दुट्ठे छेदारिहे" इत्यादिसूत्रं किमर्थं न पठितम् ? इति भावः। सूरिराह-यद्येवं भवदीया बुद्धिस्ततोऽत्र कारणं शृणु-या किलादिसूत्रेऽनन्तरोक्तेऽनुद्धाताख्याऽऽरोपणा भणिता सा 'कृत्स्ना' गुरुकेत्यर्थः, इयमपि पाराञ्चिकाख्याऽऽरोपणा कृत्स्नैव, अतः कृत्स्नाया आरोपणाया अनन्तरं कृत्स्नैवा-रोपणाऽभिधीयते। एष सम्बन्धः॥ अनेन सम्बन्धेनायतस्यास्य व्याख्या-त्रयः पाराञ्चिकाः प्रज्ञप्ताः। तद्यथा-दुष्टः पाराञ्चिकः, प्रमत्तः पाराञ्चिकः, 'अन्योन्यं' परस्परं मुख-पायुप्रयोगतः प्रतिसेवनां कुर्वाणः पाराञ्चिक इति सूत्रसमासार्थः॥ अथ विस्तरार्थं भाष्यकृद् विभणिषुराह-

[भा.४९७१] अंचु गति-पूयणम्मि य, पारं पुनऽनुत्तरं बुधा बिंति।
सोधीय पारमंचइ, न यावि तदपूतियं होति॥

वृ- "अञ्चु गति-पूजनयोः" इति वचनाद् अञ्चुर्धातुर्गतौ पूजने चात्र गृह्यते। तत्र गत्यर्थो यथा-पारं-तीरं गच्छति येन प्रायश्चित्तेनासेवितेन तत् पाराञ्चिकम्। अथ पारं किमुच्यते ? इत्याह-'पारं पुनः' संसारसमुद्रस्य तीरभूतम् 'अनुत्तरं' निर्वाणं 'बुधाः' तीर्थकृदादयो ब्रुवते, अनेनासेवितेन साधुर्मोक्षं गच्छतीति भावः। तद् यस्यापद्यते सोऽप्युपचारात् पाराञ्चिक उच्यते। यद्वा शोधेः 'पारं' पर्यन्तमञ्चति यत् तत् पाराञ्चिकम्, अपश्चिमं प्रायश्चित्तमित्यर्थः। पूजार्थो यथा-'न यापि' नैव 'तत्' प्रायश्चित्तपारगमनमपूजितं किन्तु पूजितमेव, ततो येन तपसा पारं प्रापितेन अञ्च्यते-श्रीश्रमणसङ्घेन पूज्यते तत् पाराञ्चिकं पाराञ्चितं वाऽभिधीयते। तद्योगात् साधुरपि पाराञ्चिकः। अथ तमेव भेदतः प्ररूपयति-

[भा.४९७२] आसायण पडिसेवी, दुविहो पारंचितो समासेणं।

एक्केक्कम्मि य भयणा, सचरित्ते चेव अचरित्ते ॥

वृ- पाराञ्चिकः समासेन द्विविधः, तद्यथा-आशातनापाराञ्चिकः प्रतिसेविपाराञ्चिकश्च । पुनरेकैकस्मिन् द्विविधा भजना कर्तव्या । कथम् ? इत्याह-द्वावप्येतौ सचारित्रिणौ वा स्यातामचारित्रिणौ वा ॥ कथं पुनरेषा भजना ? इत्याह-

[भा.४९७३] सव्वचरित्तं भस्सति, केनति पडिसेवितेन तु पदेनं ।
कत्थति चिट्ठति देसो, परिणामऽवराहमासज्ज ॥

वृ- केनचिदपराधपदेन पाञ्चिकापत्तियोग्येन प्रतिसेवितेन सर्वमपि चारित्रं भ्रश्यति, कुत्रापि पुनः चारित्रस्य देशोऽवतिष्ठते । कुतः ? इत्याह-'परिणामं' तीव्र-मन्दादिरूपम् 'अपराधं च' उत्कृष्ट-मध्यम-जघन्यरूपमासाद्य चारित्रं भवेद्वा न वा ॥ इदमेव भावयति-

[भा.४९७४] तुल्लम्मि वि अवराधे, परिणामवसेण होति नाणत्तं ।
कत्थति परिणामम्मि वि, तुल्ले अवराहनाणत्तं ॥

वृ- तुल्येऽप्यपराधे 'परिणामवशेन' तीव्र-मन्दाद्यध्यवसायवैचित्र्यबलात् चारित्रपरिभ्रंशादौ नानात्वं भवति, कुत्रचित् पुनः परिणामे तुल्येऽपि 'अपराधनानात्वं' प्रतिसेवनावैचित्र्यं भवति॥ अथाशातनापाराञ्चिकं व्याचिख्यासुराह-

[भा.४९७५] तित्थकर पवयण सुते, आयरिए गणहरे महिड्ढीए ।
एते आसायंते, पच्छित्ते मग्गणा होइ ॥

वृ- तीर्थकरं प्रवचनं श्रुतमाचार्यान् गणधरान् महर्द्धिकांश्च, एतान् य आशातयति तस्य प्रायश्चित्ते वक्ष्यमाणलक्षणा मार्गणा भवति ॥ तत्र तीर्थकरं यथाऽऽशातयति तथाऽभिधीयते-

[भा.४९७६] पाहुडियं अनुमन्नति, जाणंतो किं व भुंजती भोगे ।
थीतित्थं पि य वुच्चति, अतिकक्खडदेसणा यावि ॥

वृ- 'प्राभृतिकां' सुरविरचितसमवसरण-महाप्रातिहार्यादिपूजालक्षणामर्हन् यद् अनुमन्यते तन्न सुन्दरम् । ज्ञानत्रयप्रमाणेन च भवस्वरूपं जानन् विपाकदारुणान् भोगान् किमिति भुङ्क्ते ? मल्लिनाथादेश्च स्त्रिया अपि यत् तीर्थमुच्यते तद् अतीवासमीचीनम् । 'अतिकर्कशा' अतीवदुरनुचरा तीर्थकरैः सर्वोपायकुशलैरपि या देशना कृता साऽप्ययुक्ता ॥

[भा.४९७७] अन्नं व एवमादी, अवि पडिमासु वि तिलोगमहिताणं ।
पडिरूवमकुव्वंतो, पावति पारंचियं ठाणं ॥

वृ- अन्यमप्येवमादिकं तीर्थकृतामवर्णं यो भाषते, तथा 'अपी' त्यभ्युच्चये, 'त्रिलोकमहितानां' भगवतां याः प्रतिमास्तास्वपि यद्यवर्णं भाषते, यथा-'किमेतासां पाषाणादिमयीनां माल्याऽलङ्कारादिपूजा क्रियते ?' एवं ब्रुवन्, 'प्रतिरूपं वा विनयं' वन्दन-स्तुति-स्तवादिकं तासामवज्ञाबुध्या अकुर्वन् पाराञ्चिकं स्थानं प्राप्नोति ॥ अथ प्रवचनं-सङ्घस्तस्याशातनामाह-

[भा.४९७८] अक्कोस-तज्जणादिसु, संघमहिक्खिवति संघपडिनीतो ।
अन्ने वि अत्थि संघा, सियाल-नंतिक्क-ढंकाणं ॥

वृ- यः सङ्घप्रत्यनीकः सः "अक्कोस-तज्जणाइसु" ति विभक्तिव्यत्ययाद् आक्रोश-तर्जनादिभिः सङ्घमधिक्षिपति । यथा-सन्त्यन्येऽपि शृगाल-नान्तिक-ढङ्कप्रभृतीनां सङ्घाः, यादृशास्ते तादृ-

शोऽयमपीति भावः, एष आक्रोश उच्यते। तर्जना तु-'हुं हुं ज्ञातं भवदीयं सत्वत्वम्' इत्यादिका ॥

अथ श्रुताशातनामाह-

[भा.४९७९] काया वया य ते च्चिय, ते चेव पमायमप्पमादा य।
मोक्खाहिकारियाणं, जोतिसविज्जासु किं च पुनो ॥

वृ-दशवैकालिकोत्तराध्ययनादौ यत् त एव, षट् कायास्तान्येव च व्रतानि तावेव प्रमादाऽप्रमादौ भूयोभूय उपवर्ण्यन्ते तद् अतीवायुक्तम्। मोक्षाधिकारिणां च साधूनां ज्योतिषविद्यासु पुनः किं नाम कार्यं येन श्रुते ताः प्रतिपाद्यन्ते ? ॥ अथाऽऽचार्याशातनामाह-

[भा.४९८०] इड्डि-रस-सातगुरुगा, परोवदेसुज्जया जहा मंखा।
अत्तट्ठपोसणरया, पोसेंति दिया व अप्पाणं ॥

वृ- आचार्याः स्वभावादेव ऋद्धि-रस-सातगुरुकाः, तथा मङ्खा इव परोपदेशोद्यताः, लोकावर्जनप्रसक्ता इति भावः, 'आत्मार्थपोषणरताः' स्वोदरभरणैकचेतसः। इदमेव व्याचष्टे-द्विजा इवाऽऽत्मानममी पोषयन्ति ॥ अथ गणधराशातनामाह-

[भा.४९८१] अब्भुज्जयं विहारं देसिंति परेसि सयमुदासीना।
उवजीवंति य रिद्धिं, निस्संगा मो त्ति य भणंति ॥

वृ- गणधरा गौतमादयो 'अभ्युद्यतं विहारं' जिनकल्पप्रभृतिकं परेषामुपदिशन्ति स्वयं पुनरुदासीनास्तं न प्रतिपद्यन्ते, 'ऋद्धिं वा' अक्षीणमहानसिक-चारणादिकां लब्धिमुपजीवन्ति 'निस्सङ्गा वयम्' इति च भणन्ति ॥ अथ महर्द्धिकपदं व्याख्यानयति-

[भा.४९८२] गणधर एव महिड्डी, महातवस्सी व वादिमादी वा।
तित्थगरपढमसिस्सा, आदिग्गहणेन गहिता वा ॥

वृ- इह गणधर एव सर्वलब्धिसम्पन्नतया महर्द्धिक उच्यते, यद्वा महर्द्धिको महातपस्वी वा वादि-विद्या-सिद्धप्रभृतिको वा भण्यते, तस्य यद् अवर्णवादादिकरणं सा महर्द्धिकाशातना। गणधरास्तु तीर्थकरप्रथमशिष्या उच्यन्ते, आदिग्रहणेन वा ते गृहीता मन्तव्याः ॥

अथैतेषामाशातनायां प्रायश्चित्तमार्गणामाह-

[भा.४९८३] पढम-बितिएसु चरिमं, सेसे एक्केक्क चउगुरू होंति।
सव्वे आसादिंतो, पावति पारंचियं ठाणं ॥

वृ-" तित्थयर पवयण सुयं" इति गाथाक्रमप्रामाण्यात् प्रथमः-तीर्थङ्करो द्वितीयः-सङ्घस्तयोर्देशतः सर्वतो वाऽऽशातनायां पाराञ्चिकम्। 'शेषेषु' श्रुतादिषु एकैकस्मिन् देशतः आशात्यमाने चतुर्गुरुकाः प्रायश्चित्तं भवन्ति। अथ सर्वतस्तान्याशातयति ततस्तेष्वपि पाराञ्चिकं स्थानं प्राप्नोति ॥

[भा.४९८४] तित्थयरपढमसिस्सं, एक्कं पाऽऽसादयंतु पारंची।
अत्थस्सेव जिणिंदो, पभवो सो जेन सुत्तस्स ॥

वृ- 'तीर्थकरप्रथमशिष्यं' गणधरमेकमप्याशातयन् पाराञ्चिको भवति। कुतः ? इत्याह- 'जिनेन्द्रः' तीर्थकरः स केवलस्यैवार्थस्य 'प्रभवः' प्रथम उत्पत्तिहेतुः, सूत्रस्य पुनः स एव गणधरो येन कारणेन 'प्रभवः' प्रथमतः प्रणेता, ततस्तमेकमप्याशातयतः पाराञ्चिकमुच्यते ॥

उक्त आशातनापाराञ्चिकः सम्प्रति प्रतिसेवनापाराञ्चिकमाह-

[भा.४९८५] पडिसेवनपारंची, तिविधो सो होइ आनुपुव्वीए।
दुट्ठे य पमत्ते या, नेयव्वे अन्नमन्ने य ॥

वृ- प्रतिसेवनापाराञ्चिकः 'सः' इति पूर्वोपन्यस्तः 'त्रिविधः' त्रिप्रकारः 'आनूपूर्व्या' सूत्रोक्तपरिपाट्या भवति। तद्यथा-दुष्टः पाराञ्चिकः, प्रमत्तः पाराञ्चिकः, अन्योन्यं च कुर्वाणः पाराञ्चिको ज्ञातव्यः ॥ तत्र दुष्टं तावदाह-

[भा.४९८६] दुविधो य होइ दुट्ठो, कसायदुट्ठो य विसयदुट्ठो य।
दुविहो कसायदुट्ठो, सपक्ख परपक्ख चउभंगो ॥

वृ- द्विविधश्च भवति दुष्ट-कषायदुष्टश्च विषयदुष्टश्च। तत्र कषायदुष्टो द्विविधः-स्वपक्षदुष्टः परपक्षदुष्टश्च। अत्र चतुर्भङ्गी, गाथायां पुंस्त्वं प्राकृतत्वात्। तद्यथा-स्वपक्षः स्वपक्षे दुष्टः १ स्वपक्षः परपक्षे दुष्टः २ परपक्षः स्वपक्षे दुष्टः ३ परपक्षः परपक्षे दुष्टः ४ ॥ तत्र प्रथमभङ्गं बिभावयिषुराह-

[भा.४९८७] सासवनाले मुहनंतए य उलुगच्छि सिहरिणी चेव।
एसो सपक्खदुट्ठो, परपक्खे होति नेगविधो ॥

वृ- "सासवनाले"त्ति सर्षपभर्जिका, "मुहणंतकं" मुखवस्त्रिका, उलूकः-घूकस्तस्येवाक्षिणी यस्य स उलूकाक्षः, 'शिखरिणी' मर्जिता। एते चत्वारो दृष्टान्ताः। एष स्वपक्षकषायदुष्टो मन्तव्यः। परपक्षकषायदुष्टः पुनरनेकविधो भवतीति निर्युक्तिगाथासमासार्थः ॥

अथैनामेव विवरीषुः सर्षपनालदृष्टान्तं तावदाह-

[भा.४९८८] सासवनाले छंदन, गुरु सव्वं भुंजे एतरे कोवो।
खामणमनुवसमंते, गणिं ठवेत्तऽन्नहिं परिन्ना ॥

[भा.४९८९] पुच्छंतमणक्खाए, सोच्चऽन्नतो गंतु कत्थ से सरीरं।
गुरु पुव्व कहितऽदातन, पडियरणं दंतभंजनता ॥

वृ- इह प्रथमं कथानकम्-एगेण साहुणा सासवभज्जिया सुसंभिया लद्धा, तत्थ से अतीव गेही। आयरियस्स य आलोइयं। पडिदंसिए निमंतिए य आयरिएणं सव्वा वि समुद्दिट्ठा। इतरो पदोसमावन्नो। आयरिएणं लक्खियं, 'मिच्छामि दुक्कडं' कयं तहावि न उवसमइ, भणइ य-तुज्झ दंते भंजामि। गुरुणा चिंतियं-'मा असमाहिमरणेण मारिस्सइ'त्ति गणे अन्नं गणहरं ठवेत्ता अन्नं गणं गंतूण भत्तपच्चक्खाणं कयं। समाहीए कालगया। इयरो गवेसमाणो सज्झंतिए पुच्छइ-कत्थ आयरिया ?। तेहिं न अक्खायं। सो अन्नतो सोच्चा तत्थ गंतुं पुच्छइ-कहिं आयरिया ?। ते भणंति-समाहीए कालगया। पुनो पुच्छइ- कहिं सरीरगं परिट्ठवियं ? । आयरिएहि य पुव्वं भणियं-मा तस्स पावस्स मम सरीरपरिट्ठावणियाभूमिं कहेज्जाह, मा आगड्ढि-विगड्ढिं करेमाणो उड्डाहं काहिइ। तेहिं अकहिए अन्नतो सोउं तत्थ गंतुं उवट्ठियाओ गोलोवलं कड्ढिऊण दंते भंजंतो भणइ-एतेहिं तुमे सासवनालं खइयं। तं साहूहिं पडियरंतेहिं दिट्ठं ॥

अथाक्षरगमनिका-सर्षपनालविषयं 'छन्दनं' निमन्त्रणं गुरोः कृतम्। गुरुणा च सर्वं भुक्तम्। इतरस्य कोपः। गुरुणा क्षामणे कृतेऽपि स नोपशान्तः। ततोऽनुपशान्ते तस्मिन् 'गणिनम्' आचार्यं स्थापयित्वाऽन्यस्मिन् गच्छे 'परिज्ञा' भक्तप्रत्याख्यानमङ्गीकृतम्। तस्य च शिष्याधमस्य 'गुरवः कुत्र गताः ?' इति पृच्छतोऽपि सज्झिलकसाधुभिर्नाख्यातम्। ततोऽन्यतः श्रुत्वा तत्र

गत्वा 'कुत्र तेषां शरीरम् ?' इति पृच्छा कृता। गुरुभिश्च पूर्वमेव तदीयो वृत्तान्तः कथित आसीत्। ''दायण''त्ति अकारप्रश्लेषात् ततस्तैराचार्यशरीरपरिष्ठापनाभूमिर्न दर्शिता। स चान्यतः श्रुत्वा गतो दन्तभञ्जनं कृतवान्। साधुभिश्च गुपिलस्थाने स्थितैः प्रतिचरणं कृतमिति॥

अथ मुखानन्तकदृष्टान्तमाह–

[भा.४९९०] मुहनंतगस्स गहणे, एमेव य गंतु निसि गलग्गहणं।
सम्मूढेणियरेण वि, गलए गहितो मता दो वि॥

वृ- एकेन साधुना मुखानन्तकमतीवोज्ज्वलं लब्धम्, तस्य च गुरुभिर्ग्रहणं कृतम्। तत्रापि 'एवमेव' पूर्वाख्यानकसदृशं वक्तव्यम्। नवरं तत् पुनर्मुखानन्तकं प्रत्यर्पयतोऽपि न गृहीतम्। ततो गुरुणा स्वगण एव भक्तं प्रत्याख्यातम्। निशायां विरहं लब्ध्वा 'मुखानन्तकं गृह्णासि' इति भणता गाढतरं गले ग्रहणं कृतम्। सम्मूढेन च 'इतरेणापि' गुरुणा स गलके ग्रहीतः। एवं द्वावपि मृतौ॥ उलूकाक्षदृष्टान्तमाह-

[भा.४९९१] अत्थंगए वि सिव्वसि, उलुगच्छी ! उक्खणामि ते अच्छी।
पढमगमो नवरि इहं, उलुगच्छीउ त्ति दोक्केति॥

वृ- एकः साधुरस्तङ्गतेऽपि सूर्ये सीव्यन् अपरेण साधुना परिहासेन भणितः-उलूकाक्ष ! किमेवमस्तङ्गतेऽपि सूर्ये सीव्यसि ?। स प्राह-एवं भणतस्तव द्वे अप्यक्षिणी उत्खनामि। अत्रापि सर्वोऽपि प्रथमाख्यानकगमो मन्तव्यः। नवरमिह स्वगणे प्रत्याख्यातभक्तस्य कालगतस्य रजोहरणाद् अयोमयीं कीलिकामाकृष्य 'मां उलूकाक्षं भणसि ?' इति ब्रुवाणो द्वे अप्यक्षिणी उद्धृत्य तस्य ढौकयति, ''वैरं मया निर्यामितम्' इति कृत्वा॥ शिखरिणीदृष्टान्तमाह-

[भा.४९९२] सिहरिणिलंभाऽऽलोयण, छंदिए सव्वाइते अ उग्गिरणा।
भत्तपरिन्न अन्नहिं, न गच्छती सो इहं नवरिं॥

वृ- एकेन साधुना उत्कृष्टा शिखरिणी लब्धा। सा च गुरूणामालोचिता, तया च गुरवः 'छन्दिताः' निमन्त्रिताः। सा च तैः सर्वाऽप्यापीता। ततः स साधुः प्रद्वेषमुपगतो मारणार्थं दण्डकमुद्गीर्णवान्। स गुरुभिः क्षामितोऽपि यदा नोपशाम्यति तदा भक्तपरिज्ञा कृता। नवरमिह 'सः' आचार्योऽन्यस्मिन् गणे न गतः। तस्य च समाधिना कालगतस्य शरीरकं तेन दण्डकेन कुट्टितम्॥

यत एते दोषास्ततो लोभस्तीव्रो न कर्तव्यः। यथा चाह-

[भा.४९९३] तिव्वकसायपरिणतो, तिव्वयरागाणि पावइ भयाइं।
भयगस्सं दंतभंजन, समभरणं ढोक्कजुग्गिरणा॥

वृ- तीव्राः उत्कटा ये कषायास्तेषु परिणतो जीवस्तीव्रतराणि भयानि प्राप्नोति। यथा- प्रथम दृष्टान्तोक्तस्याचार्यस्य तीव्रलोभपरिणतस्य दन्तभञ्जनभयम्, द्वितीय दृष्टान्तोक्तयोस्तु शिष्याऽऽचार्ययोस्तीव्रक्रोधपरिणतयोः समकालं मरणम्, तृतीयदृष्टान्तोक्तस्य दण्डकोद्गिरणम्। ईदृशाः स्वपक्षकषायदुष्टा लिङ्ग पाराञ्चिकाः कर्तव्याः॥ गतः प्रथमो भङ्गः। अथ द्वितीयभङ्गमाह–

[भा.४९९४] रायवधादि परिणतो, अहवा वि हवेज्ज रायवहओ तु।
सो लिंगतो पारंची, जो विय परिकड्ढती तं तु॥

वृ- राज्ञो राजामात्यस्य वा अपरस्य वा प्राकृतगृहस्थस्य वधाय परिणतः, अथवा राजवधक

एव स भवेत् विहितराजवध इत्यर्थः, एवमनेकविधः परपक्षदुष्टः। एष सर्वोऽपि लिङ्गपाराश्चिकः कर्तव्यः। 'योऽपि च आचार्यादिकः 'तं' राजवधकं 'परिकर्षति' वर्त्तापयति सोऽपि लिङ्गपाराश्चिको विधेयः ॥ अथ तृतीयभङ्ग उच्यते-परपक्षः स्वपक्षे दुष्टः स कथं भवति ? उच्यते-पूर्वं गृहवासे वसतो वादे पराजित आसीत्, स्कन्दकाचार्येण पालकवत्, वैरिको वा स तस्याऽऽसीत्।

स पुनः कीदृशो भवेत् ? इत्याह-

[भा.४९९५] सन्नी व असन्नी वा, जो दुट्ठो होति तू सपक्खम्मि।
तस्स निसिद्धं लिंगं, अतिसेसी वा वि दिज्जाहि ॥

वृ- स च संज्ञी वा असंज्ञी वा यः स्वपक्षे दुष्टो भवति तस्य लिङ्गं निषिद्धम्, प्रव्रज्या न दातव्येति भावः। अतिशयज्ञानी वा 'उपशान्तोऽयम्' इति मत्वा तस्यापि लिङ्गं दद्यात् ॥

अथ चतुर्थभङ्गः परपक्षः परपक्षे दुष्ट इति भाव्यते-

[भा.४९९६] रन्नो जुवरन्नो वा, वधतो अहवा वि इस्सरादीणं।
सो उ सदेसि न कप्पइ, कप्पति अन्नम्मि अन्नाओ ॥

वृ- यो राज्ञो वा युवराजस्य वा वधकः अथवाऽपि ईश्वरादीनां घातकः 'स तु' स पुनः स्वदेशे दीक्षितुं न कल्पते, किन्तु कल्पतेऽन्यस्मिन् देशेऽज्ञातो दीक्षितुम् ॥

[भा.४९९७] एत्थ पुण अधीकारो, पढमिल्लुग-बितियभंगदुट्ठेहिं।
तेसिं लिंगविवेगो, दुचरिमे वा लिंगदानं तु ॥

वृ- अत्र पुनः प्रथम-द्वितीयभङ्गदुष्टैरधिकारः, 'स्वपक्षः स्वपक्षे दुष्टः, स्वपक्षः परपक्षे दुष्टः' इत्याद्यभङ्गद्वयवर्तिभिरिति भावः। एतेषां लिङ्गविवेकरूपं पाराश्चिकं दातव्यम्। अतिशयज्ञानी वा यदि जानाति 'न पुनरीदृशं करिष्यति' इति ततः सम्यगावृत्तस्य लिङ्गविवेकं न करोति। "दुचरिमे"त्ति तृतीय-चतुर्थलक्षणौ यौ द्वौ चरमभङ्गौ तयोः 'वा' विकल्पेन लिङ्गदानं कर्त्तव्यम्। किमुक्तं भवति ? -'परपक्षः स्वपक्षे दुष्टः, परपक्षः परपक्षे दुष्टः' इति भङ्गद्वये वर्त्तमानाद्युपशान्ता इति सम्यग् ज्ञायन्ते ततो लिङ्गदानं कर्त्तव्यम्, अथ नोपशान्तास्ततो न प्रव्राज्यन्ते। प्रव्राजिता अपि तानि स्थानानि परिहार्यन्ते; एष वाशब्दसूचितोऽर्थः ॥ अथ 'सर्षपनालादिदृष्टान्तप्रसिद्धा दोषा मा भूवन्' इति हेतोराचार्येण यथा सामाचारी स्थापनीया तथा प्रतिपादयन्नाह-

[भा.४९९८] सव्वेहि वि घेत्तव्वं, गहणे य निमंतणे य जो तु विही।
भुंजंती जतनाए, अजतण दोसा इमे होंति ॥

वृ- सर्वैरपि साधुभिराचार्यप्रायोग्यं स्वस्वमात्रकेषु ग्रहीतव्यम्। तथा ग्रहणे च निमन्त्रणे च यो वक्ष्यमाणो विधि स सर्वोऽपि कर्तव्यः। एवं यतनया सूरयो भुञ्जते। अयतनया तु भुञ्जानानाम् 'इमे' वक्ष्यमाणा दोषा भवन्ति ॥ एनामेव निर्युक्तिगाथां भावयति-

[भा.४९९९] सव्वेहि वि गहियम्मी, थोवं थोवं तु के वि इच्छंति।
सव्वेसिं न वि भुंजति, गहितं पि बितिज्ज आदेसो ॥

वृ- सर्वैरपि आचार्यप्रायोग्ये गृहीते केचिदाचार्या इदमिच्छन्ति, यथा-तत एकैकस्य हस्तात् स्तोकं स्तोकं गृहीत्वा गुरुणा भोक्तव्यम्; एष प्रथम आदेसः। अपरे ब्रुवते-एकेनैव गुरुयोग्यं ग्रहीतव्यम्, अथान्यैरपि गृहीतं ततस्तद्गृहीतमपि तेषां सर्वेषां हस्तात् स्तोकं स्तोकं न भोक्तव्यम्,

किन्तु तैर्निमन्त्रितेन वक्तव्यम्-पर्याप्तम्, इत ऊर्ध्वं न गच्छति; एष द्वितीय आदेशः ॥

अमुमेव व्याचष्टे-

[भा.५०००] गुरुभत्तिमं जो हियवानुकूलो, सो गिण्हती निस्समणिस्सतो वा ।
तस्सेव सो गिण्हति नेयरेसिं, अलब्भमाणम्मि व थोव थोवं ॥

वृ- यो गुरुभक्तिमान् यश्च गुरूणां 'हृदयानुकूलः' छन्दोनुवर्त्ती स गुरुप्रायोग्यं निश्रागृहेभ्योऽनिश्रागृहेभ्यो वा गृह्णाति, तस्यैव च सम्बन्धि 'सः' आचार्यो भक्त-पानं गृह्णाति, न 'इतरेषाम्' अपरसाधूनाम् । अथैकः पर्याप्तं न लभते ततोऽलभ्यमाने स्तोकं स्तोकं सर्वेषामपि गृह्णाति ॥ एष ग्रहणविधिरुक्तः । सम्प्रति निमन्त्रणे विधिमाह-

[भा.५००१] सति लंभम्मि वि गिण्हति, इयरेसिं जाणिऊण निब्बंधं ।
मुंचति य सावसेसं, जाणति उवयारभणियं च ॥

वृ- 'सति' विद्यमानेऽपि प्राचुर्येण लाभे यदि इतरे साधवो निमन्त्रयमाणा गाढं निर्बन्धं कुर्वते ततस्तं ज्ञात्वा तेषामपि गृह्णाति । तच्च तदीयं भुञ्जानः सावशेषं मुञ्चति, मा सर्वस्मिन् भुक्ते प्रद्वेषं स गच्छेत् उपचारभणितं च जानाति, 'अयमुपचारेण, अयं पुनः सद्भावेन निमन्त्रयते' इत्येवं बहिश्चिह्नैरुपलक्षयतीत्यर्थः ॥

[भा.५००२] गुरुणो भुत्तुव्वरियं, बालादसतीय मंडलिं जाति ।
जं पुन सेसगगहितं, गिलाणमादीण तं दिंति ॥

वृ-गुरूणां यद् भुक्तोद्धरितं तद् बालादीनां दीयते । तेषामभावे 'मण्डलीं याति' मण्डलीप्रतिग्रहे क्षिप्यते । यत् पुनः शेषैः-गुरुभक्तिमद्व्यतिरिक्तैः साधुभिर्मात्रके गृहीतं तद् ग्लानादीनां प्रयच्छन्ति ॥

[भा.५००३] सेसाणं संसट्ठं, न छुब्भंती मंडलीपडिग्गहए ।
पत्तेग गहित छुब्भति, ओभासणलंभ मोत्तूणं ॥

वृ- 'शेषाणां' गुरुव्यतिरिक्तानां संसृष्टं मण्डलीप्रतिग्रहे न क्षिप्यते । यत्तु ग्लानादीनामर्थाय 'प्रत्येकं' पृथक् पृथग् मात्रकेषु गृहीतं तत् तेषामुद्धरितं मण्डल्यां प्रक्षिप्यते, परमवभाषितलाभं मुक्त्वा, स न प्रक्षिप्यत इति भावः ॥

[भा.५००४] पाहुणगट्ठा व तगं, धरेत्तुमतिबाहडा विगिंचंति ।
इह गहण-भुंजणविही, अविधीए इमे भवे दोसा ॥

वृ-प्राघुणकार्थं वा 'तकं' ग्लानार्थमानीतं प्रायोग्यं 'धृतवा' स्थापयित्वा यदि 'अतिबाहडाः' अतीवध्माताः प्राघुणकाश्च नायाताः तदा 'विवेचयन्ति' परित्यजन्ति । एवमिह ग्रहण-भोजनविधिर्भवति । यद्येनं विधिं न कुर्वन्ति ततस्तस्मिन् अविधौ इमे दोषा भवेयुः ॥

[भा.५००५] तिव्वकसायपरिणतो, तिव्वतरागाइं पावइ भयाइं ।
मयगस्स दंतभंजण, सममरणं ढोक्कणुग्गिरणा ॥

वृ- व्याख्यातार्था ॥ उक्तः कषायदुष्टः । अथ विषयदुष्टमाह-

[भा.५००६] संजति कप्पट्ठीए, सिज्झायरि अन्नउत्थिनीए य ।
एसो उ विसयदुट्ठो, सपक्ख परपक्ख चउभंगो ॥

वृ- इहापि स्वपक्ष-परपक्षपदाभ्यां चतुर्भङ्गी, तद्यथा-स्वपक्षः स्वपक्षे दुष्टः १ स्वपक्षः परपक्षे

दुष्टः २ परपक्षः स्वपक्षे दुष्टः ३ परपक्षः परपक्षे दुष्टः ४ । तत्र 'कल्पस्थिकायां' तरुण्यां संयत्यां 'संयतः' अध्युपपन्न इति प्रथमो भङ्गः । संयत एव शय्यातरभूणिकायामन्यतीर्थिक्यां वाऽध्युपपन्न इति द्वितीयः । गृहस्थः संयतीकल्पस्थिकायामध्युपपन्न इति तृतीयः । गृहस्थो गृहस्थायामिति चतुर्थ । एष विषयदुष्टश्चतुर्विधो मन्तव्यः ।। अथैतेषु प्रायश्चित्तमाह-

[भा.५००७] पढमे भंगे चरिमं, अनुवरए वा वि बितियभंगम्मि ।
सेसेण न इह पगतं, वा चरिमे लिंगदानं तु ।।

वृ-प्रथमे भङ्गे 'चरमं' पाराञ्चिकम् 'अनुपरतस्य' अनिवृत्तस्य । द्वितीयेऽपि भङ्गे पाराञ्चिकम्। 'शेषेण तु' तृतीय-चरमभङ्गद्वयेन नात्र प्रकृतम्, अत्र पाराञ्चिकस्य प्रस्तुतत्वात् तस्य च परपक्षेऽघटमानत्वात् । अथवा ''वा चरिमे लिंगदानं तु'' त्ति 'वा' विकल्पेन-भजनया चरम भङ्गद्वये लिङ्गदानं कर्तव्यम्, यद्युपशान्तस्तदाऽन्यस्मिन् स्थाने लिङ्गं दातव्यम् अन्यथा तु नेति भावः ।। अथ प्रथमभङ्गे दोषं दर्शयन्नाह-

[भा.५००८] लिंगेन लिंगिनीए, संपत्तिं जइ नियच्छती पावो ।
सव्वजिनानऽज्जातो, संघो आसातिओ तेनं ।।

वृ- 'लिङ्गेन' रजोहरणादिना युक्तः 'लिङ्गिन्याः' संयत्याः सम्पत्तिं यदि अधमतया कथमपि कश्चित् पापः 'नियच्छति' प्राप्नोति तर्हि तेन पापेन सर्वजिनानाम् 'आर्या' संयत्यः सङ्घश्च भगवानाशातितो मन्तव्यः ।।

[भा.५००९] पावाणं पावयरो, दिट्ठिऽब्भासे वि सो न वट्टति हु ।
जो जिनपुंगवमुद्दं, नमिऊण तमेव धरिसेति ।।

वृ-पापानां सर्वेषामपि स पापतरः, अत एव दृष्टेः-लोचनस्याभ्यासेऽपि-समीपेऽपि कर्तुं सः 'न वर्तते' न कल्पते यः 'जिनपुङ्गवमुद्रां' श्रमणीं नत्वा तामेव धर्षयति ।।

[भा.५०१०] संसारमनवयग्गं, जाति-जरा-मरण-वेदनापउरं ।
पावमलपडलछन्ना, भमंति मुद्दाधरिसणेणं ।।

वृ-संसारम् 'अनवदग्रम्' अपर्यन्तं जाति-जरा-मरण-वेदनाप्रचुरं पापमलपटलच्छन्ना मुद्राधर्षणेन परिभ्रमन्ति ।। ततः-

[भा.५०११] जत्थुप्पज्जति दोसो, कीरति पारंचितो स तम्हा तु ।
सो पुन सेवीमसेवी, गीतमगीतो व एमेव ।।

वृ-यत्र क्षेत्रे यस्य संयतीधर्षणादिको दोष उत्पद्यते उत्पत्स्यते वा स तस्मात् क्षेत्रात् पाराञ्चिकः क्रियते । स पुनः सेवी वा स्यादसेवी वा, तेन तत् कार्यं कृतं वा भवेदकृतं वेति भावः; एवमेव गीतार्थो वा भवेदगीतार्थो वा, स सर्वोऽपि पाराञ्चिकः कर्तव्यः ।। कथम् ? इत्याह-

[भा.५०१२] उवस्सय कुले निवेसन, वाडग साहि गाम देस रज्जे वा ।
कुल गण संघे निज्जूहणाए पारंचितो होति ।।

वृ-यस्य यस्मिन्नुपाश्रये दोष उत्पन्न उत्पत्स्यते वा स तत उपाश्रयात् पाराञ्चिकः क्रियते । एवं यस्मिन् गृहस्थकुले दोष उत्पन्नः, तथा निवेशनम्-एकनिर्गम-प्रवेशद्वारो द्वयोर्ग्रामयोरपान्तराले

द्र्व्यादिगृहाणां संनिवेशः, एवंविधस्वरूप एव ग्रामान्तर्गतः पाटकः, साही-शाखारूपेण श्रेणिक्रमेण स्थिता ग्रामगृहाणामेकतः परिपाटिः, ग्रामः-प्रतीतः, देशः-जनपदः, राज्यं नाम-यावत्सु देशेषु एकभूपतेराज्ञा तावद्देशप्रमाणम् । एतेषु यत्र यस्य दोष उत्पन्न उत्पत्स्यते वा स ततः पाराञ्चिकः क्रियते । तथा कुलेन यो निर्यूढः-बाह्यः कृतः स कुलपाराञ्चिकः । गणाद् बाह्यः कृतो गणपाराञ्चिकः । सङ्घाद् यस्य निर्यूहणा कृता स सङ्घपाराञ्चिकः ॥ किमर्थमुपाश्रयादिपाराञ्चिकः क्रियते ? इत्याह-

[भा.५०१३]　उवसंतो वि समाणो, वारिज्जति तेसु तेसु ठाणेसु ।
हंदि हु पुनो वि दोसं, तट्ठाणसेवणा कुणति ॥

वृ- 'उपशान्तोऽपि' स्वलिङ्गप्रतिसेवनात् प्रतिनिवृत्तोऽपि सन् 'तेषु तेषु स्थानेषु' प्रतिश्रय-कुल-निवेशनादिषु विहरन् वार्यते । कुतः ? इत्याह-'हन्दि' इति कारणोपप्रदर्शने, 'हु'रिति निश्चये, पुनरप्यसौ तस्य स्थानस्यासेवनात् तमेव दोषं करोति ॥ इदमेव स्पष्टतरमाह-

[भा.५०१४]　जेसु विहरंति ताओ, वारिज्जति तेसु तेसु ठाणेसु ।
पढमगभंगे एवं, सेसेसु ति ताइं ठाणाइं ॥

वृ- 'येषु' ग्रामादिषु 'ताः' संयत्यो विहरन्ति तेषु तेषु स्थाने, स विहरन् वार्यते, ततः पाराञ्चिकः क्रियत इत्यर्थः । एवं 'प्रथमभङ्गे' स्वपक्षः स्वपक्षे दुष्टः' इतिलक्षणे विधिरुक्तः । 'शेषेष्वपि' द्वितीयादिषु भङ्गेषु तानि स्थानानि वर्जनीयानि । किमुक्तं भवति ?-द्वितीयभङ्गे यस्यामगार्यामध्युपपन्नस्तदीये कुल-निवेशनादौ प्रविशन् वारणीयः, तृतीय-चतुर्थभङ्गयोः 'परपक्षः स्वपक्षे परपक्षे वा दुष्टः' इतिलक्षणयोः उपशान्तस्यापि तेषु स्थानेषु लिङ्गं न दातव्यम् ॥

[भा.५०१५]　एत्थं पुन अहिगारो, पढमगभंगेन दुविह दुट्ठे वी ।
उच्चारियसरिसाइं, सेसाइं विकोवणट्ठाए ॥

वृ- अत्र पुनः 'द्विविधेऽपि' कषायतो विषयतश्च दुष्टे प्रथमभङ्गेनाधिकारः । 'शेषाणि पुनः' द्वितीयभङ्गादीनि पदानि उच्चारितसदृशानि विनेयमतिविकोपनार्थमभिहितानि ॥

गतो दुष्टः पाराञ्चिकः । सम्प्रति प्रमत्तपाराञ्चिकमाह-

[भा.५०१६]　कसाए विकहा विगडे, इंदिय निद्दा पमाद पंचविधो ।
अहिगारो सुत्तम्मि, तहिगं च इमे उदाहरणा ॥

वृ- 'कषायाः' क्रोधादयः, 'विकथा' स्त्रीकथादिका, 'विकटं' मद्यम्, 'इन्द्रियाणि' श्रोत्रादीनि 'निद्रा' वक्ष्यमाणा, एष पञ्चविधः प्रमादो भवति । अयं च निशीथपीठिकायां यथा सविस्तरं सप्रायश्चित्तोऽपि भावितस्तथैवात्रापि मन्तव्यः । नवरमिह स्वपनं सुप्तं-निद्रा इत्यर्थः, तयाऽधिकारः । सा च पञ्चविधा-निद्रा १ निद्रानिद्रा २ प्रचला ३ प्रचलाप्रचला ४ स्त्यानर्द्धिश्चेति ५ । तत्र-

सुहपडिबोहो निद्दा, दुहपडिबोहो य निद्दनिद्दा य ।
पयला होइ ठियस्सा, पयलापयला उ चंकमतो ॥

स्त्यानर्द्धिस्तु-स्त्याना-प्रबलदर्शनावरणीयकर्मोदयात् कठिनीभूता ऋद्धिः-चैतन्यशक्तिर्यस्यामवस्थायां सा स्त्यानर्द्धिः, यथा घृते उदके वा स्त्याने न किञ्चिदुपलभ्यते एवं चैतन्यऋद्धावपि स्त्यानायां न किञ्चिदुपलभ्यत इति भावः । अत्र पाराञ्चिकस्य प्रस्तुतत्वात् स्त्यानर्द्धिनिद्रयाऽधिकारः । तस्यां चामून्युदाहरणानि ॥

[भा.५०१७] पोग्गल मोयग फरुसग, दंते वडसालभंजणे सुत्ते।
एतेहिं पुनो तस्सा, विविंचणा होति जतणाए ॥

वृ- 'पुद्गलं' पिशितम्, 'मोदकः' लड्डुकः, 'फरुसकः' कुम्भकारः, 'दन्ताः' प्रतीताः, वटशालाभञ्जनम्। एतानि पञ्चोदाहरणानि 'सुत्ते' स्त्यानर्द्धिनिद्रायां भवन्ति। 'एतैः' एतद्दृष्टान्तोक्तैश्चिह्नैः स्त्यानर्द्धिं परिज्ञाय 'तस्य' स्त्यानर्द्धिमतः साधोर्यतनया 'विवेचनं' परित्यागः कर्तव्यो भवति ॥ तत्र पुद्गलदृष्टान्तमाह-

[भा.५०१८] पिसियासि पुव्व महिसं, विगचियं दिस्स तत्थ निसि गंतुं।
अन्नं हंतुं खायति, उवस्सयं सेसगं नेति ॥

वृ- एगम्मि गामे एगो कोडुंबी पक्कानि य तलियानि य तिम्मनेसु अ अनेगसो मंसप्पगारे भक्खेइ। सो अ तहारूवाणं थेराणं अंतिए धम्मं सोउं पव्वइओ गामाइसु विहरइ। तेन य एगत्थ गामे महिसो विगिच्चमाणो दिट्ठो। तस्स मंसे अभिलासो जातो। सो तेन अभिलासेण अव्वोच्छिन्नेणेव भिक्खं हिंडित्ता अव्वोच्छिन्नेणेव भुत्तो, एवं अव्वोच्छिन्नेण वियारभूमिं गतो। चरिमा सुत्तपोरिसी कया, आवस्सयं काउं पातोसिया पोरिसी विहिता। तदभिलासी चेव सुत्तो, सुत्तस्सेव थीणद्धी जाया। सो उट्ठिओ, अनाभोगनिव्वत्तिएणं करणेणं गतो महिसमंडलं, अन्नं महिसं हंतुं भक्खित्ता सेसं आगंतुं उवस्सयस्स उवरिं ठवितं। पच्चूसे गुरूणं आलोएइ-एरिसो सुविणो दिट्ठो। साहूहिं दिसावलोकं करेंतेहिं दिट्ठं कुणिमं, जाणियं जहा-एस थीणद्धी। ताहे लिंगपारंचियं पच्छित्तं से दिन्नं ॥ अथ गाथाक्षरार्थः-पिशिताशी कश्चित् 'पूर्वं' गृहवासे आसीत्। स च महिषं विकर्त्तितं दृष्ट्वा सञ्जाततद्भक्षणाभिलाषः 'तत्र' महिषमण्डले 'निशि' रात्रौ गत्वा अन्यं महिषं हत्वा खादति। 'शेषम्' उद्धरितमुपाश्रये नयति ॥ लड्डुकदृष्टान्तमाह-

[भा.५०१९] मोयगभत्तमलद्धुं, भंतु कवाडे घरस्स निसि खाति।
भाणं च भरेऊणं, आगतो आवासए विगडे ॥

वृ- एकः साधुर्भिक्षां हिण्डमानो मोदकभक्तं पश्यति। तत्र सुचिरमवलोकितमवभाषितं च, परं न लब्धम्। ततस्तदलब्ध्वा तदध्यवसायपरिणत एव प्रसुप्तः, रात्रौ तत्र गत्वा गृहस्य कपाटौ भंक्त्वा मोदकान् भक्षयति, शेषैर्मोदकैर्भाजनं भृत्वा समागतः। प्राभातिके आवश्यक विकटयति-ईदृशः स्वप्नो मया दृष्ट इति। ततः प्रभाते मोदकभृतं भाजनं दृष्ट्वा ज्ञातम्, यथा-स्त्यानर्द्धिरिति। तस्यापलिङ्गपाराञ्चिकं दत्तम्। शेषं पुद्गलाख्यानकवद् वक्तव्यम् ॥ अथ फरुसकदृष्टान्तमाह-

[भा.५०२०] अवरो फरुसग मुंडो, मट्टियपिंडे व छिंदिउं सीसे।
एगंते अवयज्झइ, पासुत्ताणं विगडणा य ॥

वृ- 'अपरः' कश्चित् 'फरुसकः' कुम्भकारः क्वापि गच्छे मुण्डो जातः, प्रव्रजित इत्यर्थः। तस्य रात्रौ प्रसुप्तस्य स्त्यानर्द्धिरुदीर्णा। स च पूर्वं मृत्तिकाच्छेदाभ्यासी ततो मृत्तिकापिण्डानिव समीपप्रसुप्तानां साधूनां शिरांसि छेत्तुमारब्धः। तानि च शिरांसि कडेवराणि चैकान्ते अपोज्झति। शेषाः साधवोऽपसृताः। स च भूयोऽपि प्रसुप्तः। ततः प्रभाते 'ईदृशः स्वप्नो मया दृष्टः' इति विकटना कृता। प्रभाते च साधूनां शिरांसि कडेवराणि च पृथग्भूतानि दृष्ट्वा ज्ञातम्, यथा-स्त्यानर्द्धिरिति। लिङ्गपाराञ्चिकं दत्तम् ॥ अथ दन्तदृष्टान्तमाह-

[भा.५०२१] अवरो वि धाडिओ मत्तहत्थिणा पुरकवाडे भंतूणं।
तस्सुक्खणित्तु दंते, वसही बाहिं विगडणा य ॥

वृ-अपरः कोऽपि साधुर्गृहस्थभावे 'मत्तहस्तिना' शुण्डामुत्क्षिप्य धावता धाटितः, पलायमानो महता कष्टेन छुटितः। एष चूर्ण्यभिप्रायः। निशीथचूर्णिकृता तु-"एगो साहू गोयरनिग्गतो हत्थिणा पक्खित्तो" इति लिखितम्। एवमुभयथाऽपि तं हस्तिकृतं पराभवं स्मृत्वा स साधुः तस्योपरि प्रद्वेषमापन्नः प्रसुप्तः। उदीर्णस्त्यानर्द्धिश्चोत्थाय पुरकपाटौ भंक्त्वा हस्तिशालां गत्वा तस्य हस्तिनो व्यापादनं कृत्वा दन्तानुत्खन्य वसतेर्बहिः स्थापयित्वा भूयोऽपि प्रसुप्तः प्रभाते च 'विकटना' स्वप्नमालोचयति। साधुभिश्च दिगवलोकनं कुर्वाणैर्गजदन्तौ वीक्षितौ। ततः 'स्त्यानर्द्धिमान् असौ' इति ज्ञात्वा लिङ्गपाराञ्चिकः कृतः ॥ वटशालाभञ्जनदृष्टान्तमाह-

[भा.५०२०] उब्भामग वडसालेन घट्टितो केइ पुव्व वणहत्थी।
वडसालभंजणाऽऽनन, उस्सग्गाऽऽलोयणा गोसे ॥

वृ- एकः साधुः 'उद्भ्रामकः' भिक्षाचर्यां गतः। तत्र ग्रामद्वयस्यापान्तराले वटवृक्षो महान् विद्यते। स च साधुर्गाढतरमुष्णाभिहतो परितभ[illegible]-बुभुक्षित[illegible]ईर्योपयुक्तो [illegible]गच्छन् "वडसालेन" त्ति लिङ्गव्यत्ययाद् वटपादपस्य शालया शिरसि घट्टितः सुष्ठुतरं परितापितः। ततो वटस्योपरि प्रद्वेषमुपगतः तदध्यवसायपरिणतश्च प्रसुप्तः। उदीर्णस्त्यानर्द्धिश्चोत्थाय तत्र गत्वा वटपादपं भंक्त्वा उन्मूल्य तदीया शालामानीयोपाश्रयोपरि स्थापितवान्। 'उत्सर्गे च' आवश्यककायोत्सर्गत्रिके कृते 'गोसे च' प्रभाते तथैव गुरूणामालोचयति। ततो दिगवलोके कृते तथैव ज्ञातम्, लिङ्गपाराञ्चिकः कृतश्च। केचिदाचार्या ब्रुवते-स पूर्वभवे वनहस्ती बभूव, ततो मनुजभवमागतस्य प्रव्रजितस्योदीर्णस्त्यानर्द्धेः पूर्वभवाभ्यासाद् वटशालाभञ्जनमभवत्। शेषं प्राग्वद् ॥ कथं पुनरसौ परित्यजनीयः ? इत्याह-

[भा.५०२३] केसवअद्धबलं पन्नवेंति मुय लिंग नत्थि तुह चरणं।
नेच्छस्स हरइ संघो, न वि एक्को मा पदोसं तु ॥

वृ- केशवः-वासुदेवस्तस्य बलादर्धबलं स्त्यानर्द्धिमतो भवतीति तीर्थकृदादयः प्रज्ञापयन्ति। एतच्च प्रथमसंहननिनमङ्गीकृत्योक्तम्, इदानीं पुनः सामान्यलोकबलाद् द्विगुणं त्रिगुणं चतुर्गुणं वा बलं भवतीति मन्तव्यम्। यत एवमतः स प्रज्ञापनीयः-सौम्य ! मुञ्च लिङ्गम्, नास्ति तव 'चरणं' चारित्रम्। यद्येवं गुरुणा सानुनयं भणितो मुञ्चति ततः शोभनम्। अथ न मुञ्चति ततः सङ्घः समुदितो लिङ्ग तस्य मोक्तुमनिच्छतः सकाशाद् 'हरति' उद्दालयति, न पुनरेकः। कुतः ? इत्याह-मा तस्यैकस्योपरि प्रद्वेषं गच्छेत्, प्रद्विष्टश्च व्यापादनमपि कुर्यात् ॥

लिङ्गापहारनियमार्थमिदमाह-

[भा.५०२४] अवि केवलमुप्पाडे, न य लिंगं देंति अनतिसेसी से।
देसवत दंसणं वा, गिण्ह अनिच्छे पलायंति ॥

वृ- 'अपिः' सम्भावने, स चैतत् सम्भावयति-यद्यपि तेनैव भवग्रहणेन केवलमुत्पादयति तथापि "से" 'तस्य' स्त्यानर्द्धिमतो लिङ्गमनतिशयी न ददाति। यः पुनरतिशयज्ञानी स जानाति-न भूय एतस्य स्त्यानर्द्धिनिद्रोदयो भविष्यति; ततो लिङ्गं ददाति, इतरथा न ददाति। लिङ्गापहारे पुनः

क्रियमाणेऽयमुपदेशो दीयते-'देशव्रतानि' स्थूलप्राणातिपातविरमणादीनि गृहाण, तानि चेत् प्रतिपत्तुं न समर्थ ततः 'दर्शनं' सम्यक्त्वं गृहाण। अथैवमप्यनुनीयमानो लिङ्गं मोक्तुं नेच्छति तदा रात्रौ तं सुप्तं मुक्त्वा 'पलायन्ते' देशान्तरं गच्छन्ति ॥

गतः प्रमत्तपाराञ्चिकः। अथान्योन्यं कुर्वाणं तमेवाह-

[भा.५०२५] करणं तु अन्नमन्ने, समणाण न कप्पते सुविहिताणं।
जे पुन करेंति नाता, तेसिं तु विगिंचणा भणिता ॥

वृ- तुशब्दस्य व्यवहितसम्बन्धतया 'अन्योन्यं' परस्परं पुनर्यत् 'करणं' मुख-पायुप्रयोगेन सेवनं तत् श्रमणानां सुविहितानां कर्तुं न कल्पते। ये पुनः कुर्वन्ति ते यदि ज्ञातास्तदा तेषां 'विवेचना' परिष्ठापना भणिता ॥ इदमेव व्याचष्टे-

[भा.५०२६] आसग-पोसगसेवी, केई पुरिसा दुवेयगा होंति।
तेसिं लिंगविवेगो, बितियपदं रायपव्वइते ॥

वृ- आस्यं-मुखं आस्यमेवास्यकम्, पोसकः-पायुः, आस्यक-पोसकाभ्यां सेवितुं शीलमेषा-मित्यासक-पोसकसेविनः; केचित् 'पुरुषाः' साधवः 'द्विवेदकाः' स्त्री-पुरुषवेदयुक्ता भवन्ति, नपुंसकवेदिन इत्यर्थः; तेषां लिङ्गविवेकः कर्तव्यः, लिङ्गपाराञ्चिकं दातव्यमित्यर्थः। द्वितीयपदमत्र भवति-यो राजप्रव्रजितस्तस्यास्यक-पोसकसेविनोऽपि लिङ्गं नापह्रियते, परं यतनया स परित्यज्यते। गतोऽन्योन्यं कुर्वाणः पाराञ्चिकः। सम्प्रति यो दुष्टादिर्यतः पाराञ्चिकः क्रियते तदेतद् दर्शयति-

[भा.५०२७] बिइओ उवस्सयाई, कीरति पारंचितो न लिंगातो।
अनुवरमं पुन कीरति, सेसा नियमा तु लिंगाओ ॥

वृ- 'द्वितीयः' विषयदुष्ट उपाश्रयादेः पाराञ्चिकः क्रियते, क्षेत्रत इत्यर्थः, 'न लिङ्गाद्' लिङ्गपाराञ्चिको न विधीयते। अथ ततो दोषान्नोपरमते तदाऽनुपरमन् लिङ्गतोऽपि पाराञ्चिकः क्रियते। 'शेषाः' कषायदुष्ट-प्रमत्ता-ऽन्योन्यसेवाकारिणो नियमाद् लिङ्गपाराञ्चिकाः क्रियन्ते ॥ किमेत एव पाराञ्चिकाः ? अस्तीति ब्रूमः। कीदृशः सः ? इति चेद् उच्यते-

[भा.५०२८] इंदिय-पमाददोसा, जो पुन अवराहमुत्तमं पत्तो।
सब्भावसमाउट्टो, जति य गुणा से इमे होंति ॥

वृ- इन्द्रियदोषात् प्रमाददोषाद्वा पाराञ्चिकापत्तियोग्याद् यः पुनः साधुः 'उत्तमम्' उत्कृष्टमपराधपदं प्राप्तः स यदि 'सद्भावसमावृत्तः' 'निश्चयेन भूयोऽहमेवं न करिष्यामि' इति व्यवसितस्तदा स तपःपाराञ्चिकः क्रियते, यदि च ''से'' तस्येमे गुणा भवन्ति ॥

के पुनस्ते ? इत्याह-

[भा.५०२९] संघयण-विरिय-आगम-सुत्त-ऽत्थ-विहीए जो समग्गो तु।
तवसी निग्गहजुत्तो, पवयणसारे अभिगतत्थो ॥

वृ- संहननं-वज्रऋषभनाराचम्, वीर्यं-धृत्या वज्रकुड्यसमानता, आगमः-जघन्येन नवम-पूर्वान्तर्गतमाचाराख्यं तृतीयं वस्तु उत्कर्षतो दशमपूर्वमसम्पूर्णम्, तच्च सूत्रतोऽर्थतश्च यदि परिजितं भवति, एतैः संहननादिभिर्विधिना च-तदुचितसमाचारेण यः 'समग्रः' सम्पूर्ण। 'तपस्वी नाम' सिंहनिक्रीडितादितपःकर्मभावितः। 'निग्रहयुक्तः' इन्द्रिय-कषायाणां निग्रहसमर्थ। 'प्रवचन-

सारेऽभिगतार्थ' परिणामितप्रवचनरहस्यार्थ इति ॥ किञ्च-

[भा.५०३०] तिलतुसतिभागमित्तो, वि जस्स असुभो न विज्जती भावो ।
निज्जूहणाइ अरिहो, सेसे निज्जूहणा नत्थि ॥

वृ- यस्य गच्छान्निर्यूढस्य तिलतुषत्रिभागमात्रोऽपि 'निर्यूढोऽहम्' इत्यशुभो भावो न विद्यते स निर्यूहणायाः 'अर्हः' योग्यः । 'शेषस्य' एतद्गुणविकलस्य निर्यूहणा नास्ति, न कर्तव्येत्यर्थः॥ इदमेव व्याचष्टे-

[भा.५०३१] एयगुणसंपजुत्तो, पावंति पारंचियारिहं ठाणं ।
एयगुणविप्पमुक्के, तारिसगम्मी भवे मूलं ॥

वृ- एतैः-संहननादिभिर्गुणैः सम्प्रयुक्तः पाराञ्चिकार्हं स्थानं प्राप्नोति । यः पुनरेतद्गुणविप्रमुक्तः 'तादृशे' पाराञ्चिकापत्तिप्राप्तेऽपि मूलमेव प्रायश्चित्तं भवति ॥ अथ पाराञ्चिकमेव कालतो निरूपयति-

[भा.५०३२] आसायणा जहन्ने, छम्मासुक्कोस बारस तु मासे ।
वासं बारस वासे, पडिसेवओ कारणे भतिओ ॥

वृ- आशातनापाराञ्चिको जघन्येन षण्मासान् उत्कर्षतश्च द्वादश मासन् भवति, एतावन्तं कालं गच्छान्निर्यूढस्तिष्ठतीत्यर्थः । प्रतिसेवनापाराञ्चिको जघन्येन संवतसरम् उत्कर्षतो द्वादश वर्षाणि निर्यूढ आस्ते । "पडिसेवओ कारणे भइओ" त्ति यः प्रतिषेवकपाराञ्चिकः सः 'कारणे' कुलगणादिकार्ये 'भक्तः' विकल्पितः, यथोक्तकालादर्वागपि गच्छं प्रविशतीति भावः ॥

अथ तस्यैव गणनिर्गमनविधिमाह-

[भा.५०३३] इत्तिरियं निक्खेवं, काउं अन्नं गणं गमित्ताणं ।
दव्वादि सुभे विगडण, निरुवस्सग्गट्ठ उस्सग्गो ॥

वृ- इह यः पाराञ्चिकं प्रतिपद्यते स नियमादाचार्य एव भवति, तेन च स्वगणे पाराञ्चिकं न प्रतिपत्तव्यम्, अन्यस्मिन् गणे गन्तव्यम् । तत इत्वरं गणनिक्षेपमात्मतुल्ये शिष्ये कृत्वा ततोऽन्यं गणं गत्वा 'द्रव्यादिषु' द्रव्य-क्षेत्र-काल-भावेषु 'शुभेषु' प्रशस्तेषु 'विकटनाम्' आलोचनां परगणाचार्यस्य प्रयच्छति । उभावपि च निरुपसर्गप्रत्ययं कायोत्सर्गं प्रकुरुतः ॥

अथ किं कारणं स्वगणे न प्रतिपद्यते ? उच्यते-

[भा.५०३४] अप्पच्चय निब्भयया, आणाभंगो अजंतणा सगणे ।
परगणे न होंति एए, आणाथिरता भयं चेव ॥

वृ- स्वगच्छ एव पाराञ्चिकप्रतिपत्तौ अगीतार्थानामप्रत्ययो भवति-नूनमकृत्यमनेन प्रतिसेवितं येन पाराञ्चिकः कृतः । ततस्तेषां निर्भयता भवति, न गुरूणां बिभ्यतीत्यर्थः । अबिभ्यतश्चाज्ञाभङ्गं कुर्वीरन् । अयन्त्रणा च स्वगणे भवति, शिष्यानुरोधादिना स्वयमेव भक्त-पानानयनादौ नियन्त्रणा वक्ष्यमाणा न भवतीत्यर्थः । परगणे चैते दोषा न भवन्ति । अपि च-तत्र गच्छता भगवतामाज्ञानुपालने 'स्थिरता' स्थैर्यं कृतं भवति, भयं चात्मनः सञ्जायते, ततः परगणं गत्वा तत्र पाराञ्चिकं पतिपद्य निरपेक्षः सक्रोशयोजनात् क्षेत्राद् बहिर्व्रजति ॥ तस्य चेयं सामाचारी-

[भा.५०३५] जिनकप्पियपडिरूवी, बाहिं खेत्तस्स सो ठितो संतो ।
विहरति बारस वासे, एगागी झाणसंजुत्तो ॥

वृ- 'जिनकल्पिकप्रतिरूपी' 'अलेपकृतं भैक्षं ग्रहीतव्यम्, तृतीयस्यां पौरुष्यां पर्यटनीयम्' इत्यादिका यादृशी जिनकल्पिकस्य चर्या तां कुर्वन् क्षेत्राद् बहि स्थितः सन् 'सः' पाराञ्चिकः एकाकी 'ध्यानसंयुक्तः' श्रुतपरावर्तनैकचित्तो द्वादश वर्षाणि विहरति ॥ यस्य चाऽऽचार्यस्य सकाशे प्रतिपद्यते तेन यत् कर्तव्यं तदाह-

[भा.५०३६] ओलोयणं गवेसण, आयरितो कुणति सव्वकालं पि ।
उप्पन्ने कारणम्मि, सव्वपयत्तेण कायव्वं ॥

वृ- आचार्य पाराञ्चिकस्य 'सर्वकालमपि' यावन्तं कालं प्रायश्चित्तं वहति तावन्तं सकलमपि कालं यावत् प्रतिदिवसमवलोकनं करोति, तत्समीपं गत्वा तद्दर्शनं करोतीत्यर्थः । तदनन्तरं 'गवेषणं' 'गतोऽल्पक्लमतया भवतां दिवसो रात्रिर्वा ?' इति पृच्छां करोति । उत्पन्ने पुनः 'कारणे' ग्लानत्वलक्षणे सर्वप्रयत्नेन भक्त-पानाहरणादिकं स्वयमाचार्येण तस्य कर्तव्यम् ॥

[भा.५०३७] जो उ उवेहं कुज्ञा, आयरिओ केणई पमाएणं ।
आरोवणा उ तस्सा, कायव्वा पुव्वनिद्दिट्ठा ॥

वृ- यः पुनराचार्य 'केनापि प्रमादेन' जनव्याक्षेपादिना 'उपेक्षां कुरुते' तत्समीपं गत्वा तच्छरीस्योदन्तं न वहति तस्याऽऽरोपणा 'पूर्वनिर्दिष्टा' ग्लानद्वाराभिहिता कर्तव्या, चत्वारो गुरुकास्तस्य प्रायश्चित्तमारोपयितव्यमिति भावः ॥

यदुक्तम् "उत्पन्ने कारणे सर्वप्रयत्नेन कर्तव्यम्" तद् भावयति-

[भा.५०३८] आहरति भत्त-पानं, उव्वत्तणमाइयं पि से कुणति ।
सयमेव गणाहिवई, अह अगिलाणो सयं कुणति ॥

वृ- अथ स पाराञ्चिको ग्लानोऽभवत् ततस्तस्य 'गणाधिपति' आचार्य स्वयमेव भक्तं पानं च 'आहरति' आनयति, उद्वर्तनम् आदिशब्दात् परावर्तनोर्ध्वकरणोपवेशनादिकं तस्य स्वयं करोति। अथ जातः 'अग्लानः' नीरोगस्तत आचार्य न किमपि कारयति किन्तु सर्वं स्वयमेव कुरुते ॥

अधुना यदुक्तम् "ओलोयणं गवेसण" त्ति तद्व्याख्यानार्थमाह-

[भा.५०३९] उभयं पि दाऊण सपाडिपुच्छं, वोढुं सरीरस्स य वट्टमाणिं ।
आसासइत्ताण तवोकिलंतं, तमेव खेत्तं समुवेंति थेरा ॥

वृ- 'स्थविराः' आचार्याः शिष्याणां प्रतीच्छकानां च 'उभयमपि' सूत्रमर्थं च, किंविशिष्टम् ? इत्याह-'सप्रतिपृच्छं' पृच्छा-प्रश्नस्तस्याः प्रतिवचनं प्रतिपृच्छा तया सहितं सप्रतिपृच्छम्, सूत्रविषयेऽर्थविषये च यद् येन पृष्टं तत्प्रतिवचनं दत्त्वा तत्सकाशमुपगम्य तदीयशरीरस्य "वट्टमाणिं"ति वर्तमाने काले भवा वार्त्तमानी-वार्त्तेत्यर्थःस्तां वहन्ति, अल्पक्लाम्यतां पृच्छन्तीति भावः । सोऽपि चाऽऽचारागतं 'मस्तकेन वन्दे' इति फेट्टावन्दनकेन वन्दते । शरीरस्य चोदन्तमूढ्वा यदि तपसा क्लाम्यति तत आश्वासयन्ति । आश्वास्य च 'तदेव क्षेत्रं' यत्र गच्छोऽवतिष्ठते तत् समुपगच्छन्ति स्थविराः ॥

अथ द्वावपि सूत्रार्थौ दत्त्वा तत्र गन्तुं न शक्नोति ततः को विधिः ? इत्याह-

[भा.५०४०] असहू सुत्तं दातुं, दो वि अदाउं व गच्छति पए वि ।
संघाडओ से भत्तं, पानं चाऽऽनेति मग्गेणं ॥

वृ- तिष्ठतु यथासुखं महान् अनुभागः-अभिकृष्टप्रभावानुगतला अचिन्त्या शक्तिर्यस्य सः तथा गुणशतानाम-अनेकेषां गुणानाम् आकरः-निधानं गुणशताकरः सङ्घः । यत इदं गुरुकमपि कार्यं मां प्राप्य लघुकं भविष्यति, समर्थोऽहमस्य प्रोयजनस्य लीलयाऽपि साधने इति भावः ॥

एवमुक्ते सोऽनुज्ञातः सन् यत् करोति तदाह-

[भा.५०४६] अभिहाण-हेउकुसलो, बहूसु निराजितो विउसभासु ।
गंतूण रायभवने, भणाति तं रायदारत्थं ॥

वृ- 'अभिधान-हेतुकुशलः' शब्दमार्गे तर्कमार्गेऽतीव क्षुन्न इत्यर्थः, अत एव बहुषु विद्वत्सभासु 'नीराजितः' निर्वटितः, इत्थम्भूतः स पाराञ्चिको राजभवेन गत्वा तं 'राजद्वारस्थं' प्रतीहारं भणति ॥ किं भणति ? इत्याह-

[भा.५०४७] पडिहाररूवी ? भण रायरूविं, तमिच्छए संजयरूवि दट्ठुं ।
निवेदयित्ता य स पत्थिवस्स, जहिं निवो तत्थ तयं पवेसे ॥

वृ- हे प्रतीहाररूपिन् ! मध्ये गत्वा 'राजरूपिणं' राजानुकारिणं भण, यथा-त्वां संयतरूपी द्रष्टुमिच्छति । एवमुक्तः सन् 'सः' प्रतीहारस्तथैव पार्थिवस्य निवेदयति । निवेद्य च राजानुमत्या यत्र नृपोऽवतिष्ठते तत्र 'तकं' साधुं प्रवेशयति ॥

[भा.५०४८] तं पूयइत्ताण सुहासनत्थं, पुच्छिंसु रायाऽऽगयकोउहल्लो ।
पण्हे उराले असुए कयाई, स चावि आइक्खइ पत्थिवस्स ॥

वृ- 'तं' साधुं प्रविष्टं सन्तं राजा पूजयित्वा 'शुभासनस्थं' शुभे आसने निषण्णमागतकुतूहलोऽप्राक्षीत् । कान् ? इत्याह-प्रश्नान् 'उदारान्' गम्भीरार्थान् कदाचिदप्यश्रुतान् "प्रतिहाररूपिन्" ! इत्येवमादिकान् । 'स चापि' साधुरेवं पृष्टः पार्थिवस्याचष्टे ॥ किमाचष्टे ? इत्याह-

[भा.५०४९] जारिसगा आयरक्खा, सक्कादीणं न तारिसो एसो ।
तुह राय ! दारपालो, तं पि य चक्कीण पडिरूवी ॥

वृ- यादृशकाः खलु शक्रादीनाम्, आदिशब्दात् चमरादिपरिग्रहः, आत्मरक्षा न तादृश एष तत्र राजन् ! द्वारपालस्तत उक्तम् "हे प्रतीहाररूपिन् !" । तथा त्वमपि यादृशश्चक्रवर्ती तादृशो न भवसि, रत्नाद्यभावात्, अत्रान्तरे चक्रवर्तिसमृद्धिराख्यातव्या, किञ्च प्रताप-शौर्य-न्यायानुपालनादिना तत्प्रतिरूपोऽसि तत उक्तम् "राजरूपिणं ब्रूहि", चक्रवर्तिप्रतिरूपमित्यर्थः ॥ एवमुक्ते राजा प्राह-त्वं कथं श्रमणानां प्रतिरूपी ? तत आह-

[भा.५०५०] समणाणं पडिरूवी, जं पुच्छसि राय ! तं कहमहं ति ।
निरतीयारा समणा, न तहाऽहं तेन पडिरूवी ॥

वृ- यत् त्वं राजन् ! पृच्छसि 'अथ। कथं त्वं श्रमणानां प्रतिरूपी ?' तदहं कथयामि-यथा श्रमणा भगवन्तो निरतिचारा न तथाऽहं तेन श्रमणानां प्रतिरूपी, न तु साक्षात् श्रमण इति ॥

प्रतिरूपित्वमेव भावयति-

[भा.५०५१] निज्जूढो मि नरीसर !, खेत्ते वि जईण अच्छिउं न लभे ।
अतियारस्स विसोधिं, पकरेमि पमायमूलस्स ॥

वृ- हे नरेश्वर ! प्रमादमूलस्यातिचारस्य सम्प्रति विशोधिं प्रकरोमि, तां च कुर्वन् 'निर्यूढोऽस्मि'

वृ- तिष्ठतु यथासुखं महान् अनुभागः-अधिकृतप्रयोजनानुकूला अचिन्त्या शक्तिर्यस्य सः, तथा गुणशतानाम-अनेकेषां गुणानाम् आकरः-निधानं गुणशताकरः सङ्घः । यत इदं गुरुकमपि कार्यं मां प्राप्य लघुकं भविष्यति, समर्थोऽहमस्य प्रोयजनस्य लीलयाऽपि साधने इति भावः ॥

एवमुक्ते सोऽनुज्ञातः सन् यत् करोति तदाह-

[भा.५०४६] अभिहाण-हेउकुसलो, बहूसु निराजितो विउसभासु ।
गंतूण रायभवने, भणाति तं रायदारत्थं ॥

वृ- 'अभिधान-हेतुकुशलः' शब्दमार्गे तर्कमार्गेऽतीव क्षुण्ण इत्यर्थः, अत एव बहुषु विद्वत्सभासु'नीराजितः' निर्वर्तितः, इत्थम्भूतः स पाराञ्चिको राजभवनेन गत्वा तं 'राजद्वारस्थं' प्रतीहारं भणति ॥ किं भणति ? इत्याह-

[भा.५०४७] पडिहाररूवी ? भण रायरूविं, तमिच्छए संजयरूवि दट्ठुं ।
निवेदयित्ता य स पत्थिवस्स, जहिं निवो तत्थ तयं पवेसे ॥

वृ- हे प्रतीहाररूपिन् ! मध्ये गत्वा 'राजरूपिणं' राजानुकारिणं भण, यथा-त्वां संयतरूपी द्रष्टुमिच्छति । एवमुक्तः सन् 'सः' प्रतीहारस्तथैव पार्थिवस्य निवेदयति । निवेद्य च राजानुमत्या यत्र नृपोऽवतिष्ठते तत्र 'तकं' साधुं प्रवेशयति ॥

[भा.५०४८] तं पूयइत्ताण सुहासनत्थं, पुच्छिंसु रायाऽऽगयकोउहल्लो ।
पण्हे उराले असुए कयाई, स चावि आइक्खइ पत्थिवस्स ॥

वृ- 'तं' साधुं प्रविष्टं सन्तं राजा पूजयित्वा 'शुभासनस्थं' शुभे आसने निषण्णमागतकुतूहलोऽप्राक्षीत् । कान् ? इत्याह-प्रश्नान् 'उदारान्' गम्भीरार्थान् कदाचिदप्यश्रुतान् "प्रतिहाररूपिन्" ! इत्येवमादिकान् । 'स चापि' साधुरेवं पृष्टः पार्थिवस्याचष्टे ॥ किमाचष्टे ? इत्याह-

[भा.५०४९] जारिसग आयरक्खा, सक्कादीणं न तारिसो एसो ।
तुह राय ! दारपालो, तं पि य चक्कीण पडिरूवी ॥

वृ- यादृशकाः खलु शक्रादीनाम्, आदिशब्दात् चमरादिपरिग्रहः, आत्मरक्षा न तादृश एष तत्र राजन् ! द्वारपालस्तत उक्तम् "हे प्रतीहाररूपिन् !" । तथा त्वमपि यादृशश्चक्रवर्ती तादृशो न भवसि, रत्नाद्यभावात्, अत्रान्तरे चक्रवर्तिसमृद्धिराख्यातव्या, किञ्च प्रताप-शौर्य-न्यायानुपालनादिना तत्प्रतिरूपोऽसि तत उक्तम् "राजरूपिणं ब्रूहि", चक्रवर्तिप्रतिरूपमित्यर्थः ॥

एवमुक्ते राजा प्राह-त्वं कथं श्रमणानां प्रतिरूपी ? तत आह-

[भा.५०५०] समणाणं पडिरूवी, जं पुच्छसि राय ! तं कहमहं ति ।
निरतीयारा समणा, न तहाऽहं तेन पडिरूवी ॥

वृ- यत् त्वं राजन् ! पृच्छसि 'अथ। कथं त्वं श्रमणानां प्रतिरूपी ?' तदहं कथयामि-यथा श्रमणा भगवन्तो निरतिचारा न तथाऽहं तेन श्रमणानां प्रतिरूपी, न तु साक्षात् श्रमण इति ॥

प्रतिरूपित्वमेव भावयति-

[भा.५०५१] निज्जूढो मि नरीसर !, खेत्ते वि जईण अच्छिउं न लभे ।
अतियारस्स विसोधिं, पकरेमि पमायमूलस्स ॥

वृ-हे नरेश्वर ! प्रमादमूलस्यातिचारस्य सम्प्रति विशोधिं प्रकरोमि, तां च कुर्वन् 'निर्यूढोऽस्मि'

निष्काशितोऽस्मि, तत आत्मानमहं, श्रेयोऽपि यतीनामद्याप्यात्तुं न लभे, ततः श्रमप्रतिरूपमहमिति। राजा प्राह-सत्त्वया कृतोऽतिचारः ? का वा तस्य विशोधि ? एवं पृष्टे यत् कर्तव्यं तदाह-

[भा.५०५२] कहणाऽऽउट्टण आगमनपुच्छणं दीवणा य कज्जस्स।
वीसज्जियं ति य मए, हासुस्सलितो भणति राया ॥

वृ- कथनं राज्ञा पृष्टस्य प्रसङ्गतोऽन्यस्यापि यथा प्रवचनभावना भवति। ततः 'आवर्तनम्' आकम्पनम्, राज्ञो भक्तीभवनमिति भावः। तदनन्तरमागमनकारणस्य प्रश्नः- केन प्रयोजनेन यूयमत्राऽऽगताः स्थ ? । अत्रान्तरेयेन कार्येणागतस्तस्य 'दीपना' प्रकाशना। ततो राजा "हासुससलिओ"त्ति हासेन युक्त उत्सृतः-हृष्टे हासोत्सृतः, हसितमुखः प्रहृष्टश्च सन्नित्यर्थः, भणति। यथा-मया 'विसर्जितं' मुत्कलितं निर्विषयाज्ञापनादिकं कार्यमिति ॥

एवं च किं सञ्जातम् ? इत्याह-

[भा.५०५३] संघो न लभइ कज्जं, लद्धं कज्जं महानुभाएणं।
तुब्भं ति विसज्जेमिं, सो वि य संघो त्ति पूएति ॥

वृ- निर्विषयत्वाज्ञापनमुत्कलनादिलक्षणं कार्यं सङ्घो न लभते किन्तु तेन पाराञ्चिकेन 'महानुभागेन' सातिशयाचिन्त्यप्रभावेन लब्धम्। न च स एवं कार्यलाभेन गर्वमुद्वहति, यत आह-"तुब्भं ति" इत्यादि, राजा प्राह-युष्माकं भणितेनाहं पूर्वग्राहं त्यक्त्वा तत् कार्यं विसर्जयामि नान्यथा। 'सोऽपि च' पाराञ्चिको ब्रूते-कोऽहम् ? कियन्मात्रो वा ? गरीयान् सङ्घो भट्टारकः, तत्प्रभावादेवाहं किञ्चिञ्जानामि, तस्मात् सङ्घमाहूय क्षमयित्वा यूयमेवं ब्रूत- मुत्कलितं मया युष्माकमिति। ततो राजाऽपि सङ्घं पूजयति ॥

[भा.५०५४] अब्भत्थितो व रन्ना, सयं व संघो विसज्जति तु तुट्ठो।
आदी मज्झऽवसाणे, स यावि दोसो धुओ होइ ॥

वृ- राजा सङ्घं ब्रूयात्-मया युष्माकं विसर्जितं कार्यम्, परं मदीयमपि कार्यमिदानीं कुरुत-मुञ्चतास्य पाराञ्चिकस्य प्रायश्चित्तम्। एवं राज्ञाऽभ्यर्थितो यदि वा स्वयमपि तुष्टः सङ्घः 'विसर्जयति' मुत्कलयति। किमुक्तं भवति ?-यद् व्यूढं तद् व्यूढमेव, शेषं तु पुनर्देशतः सर्वतो वा प्रसादेन मुञ्चति। तस्य च पाराञ्चिकतपसस्तदानीमादिर्मध्यमवसानं वा भवेत्, त्रिष्वपि सङ्घस्यादेशात् 'स चापि' पाराञ्चिकपत्तिहेतुर्दोषः 'धुतः' कम्पितः, प्रसादेन स्फेटितो भवतीत्यर्थः। तत्र देशो देशदेशो वा प्रायश्चित्तस्य तेन वोढव्यः। अथ राजा तस्यापि मोचने निर्बन्धं करोति तदा तदपि मुच्यते। देशो नाम-षड्भागः, देशदेशः-दशभागः ॥

तत्र देशे यावन्तो मासा भवन्ति तदेतत् प्रतिपादयति-

[भा.५०५५] एक्को य दोन्नि दोन्नि य, मासा चउवीस होंति छब्भागे।
देसं दोण्ह वि एयं, वहेज्ज मुंचेज्ज वा सव्वं ॥

वृ-इहाशातनापाराञ्चिको जघन्यतः षण्मासान् उत्कर्षतो वर्षं भवति इत्युक्तम्, तत्र षण्मासानां षष्ठे भागे एको मासो लभ्यते वर्षस्य तु षड्भागे द्वौ मासौ भवतः। प्रतिसेवनापाराञ्चिको जघन्यतो वर्षम् उत्कर्षतो द्वादश वर्षाणि भवतीत्युक्तम्, तत्रापि वर्षस्य षड्भागे द्वौ मासौ द्वादशवर्षाणां षष्ठे भागे चतुर्विंशतिर्मासा भवन्ति। एवंविधं देशं 'द्वयोरपि' आशातना-प्रतिसेवनापाराञ्चिकयोः

सम्बन्धिनं सङ्घस्यादेशाद् वहेत्, यद्वा सर्वमपि सङ्घो मुञ्चेत्, न किमपि कारयेदित्यर्थः ॥

अथ देशदेशमाह-

[भा.५०५६] अट्ठारस छत्तीसा, दिवसा छत्तीसमेव वरिसं च ।
बावत्तरिं च दिवसा, दसभाग वहेज्ज बितिओ तु ॥

वृ- आशातनापाराश्चिके षण्मासानां दशमे भागेऽष्टादश दिवसा वर्षस्य तु दशमे भागे षट्त्रिंशद्दिवसा भवन्ति । प्रतिसेवनापाराश्चिके संवत्सरस्य दशमे भागे षट्त्रिंशद्दिवसा द्वादशवर्षाणां दशमे भागे वर्षमेकं द्वासप्ततिश्च दिवसा भवन्ति । एतावन्तं कालं यद् वहेद् एषः 'द्वितीयः' देशदेश उच्यते ॥ उपसंहरन्नाह-

[भा.५०५७] पारंचीणं दोण्ह वि, जहन्नमुक्कोसयस्स कालस्स ।
छब्भागं दसभागं, वहेज्ज सव्वं व झोसिज्जा ॥

वृ- 'द्वयोरपि' आशातना-प्रतिसेवनापाराश्चिकयोर्जघन्य उत्कृष्टश्च यः कालस्तस्य सम्बन्धिनं षड्भागं दशभागं वाऽनन्तरोक्तं वहेत् । यद्वा 'सर्वमपि' अवशिष्यमाणं सङ्घः क्षपयेत्, प्रसादेन मुञ्चेदिति भावः ॥

**मू. (११३)** *ततो अनवट्ठप्पा पन्नत्ता, तं जहा-साहम्मियाणं तेन्नं करेमाणे, अन्नधम्मियाणं तेन्नं करेमाणे, हत्थादालं दलेमाणे ॥*

वृ- अस्य सम्बन्धमाह-

[भा.५०५८] पच्छित्तमनंतरियं, हेट्ठा पारंचियस्स अणवट्ठो ।
आयरियस्स विसोधी, भणिता इमगा उवज्झाते ॥

वृ- पूर्वसूत्रे पाराश्चिकप्रायश्चित्तमुक्तम्, तस्य 'अधस्ताद्' अनन्तरितमनवस्थाप्यप्रायश्चित्तं भवति, अतः साम्प्रतं तदभिधीयते । यद्वा पूर्वसूत्रे आचार्यस्य शोधिर्भणिता, इयं पुनरुपाध्यायविषया सैवाभिधीयते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-त्रयः 'अनवस्थाप्याः' तत्क्षणादेव व्रतेष्वनवस्थापनीयाः प्रज्ञप्ताः । तद्यथा-साधर्मिकाः-साधवस्तेषां सत्कस्योत्कृष्टोपधेः शिष्यादेर्वा 'स्तैन्यं' चौर्यं कुर्वाणः । अन्यधार्मिकाः-शाक्यादयो गृहस्था वा तेषां सत्कस्योपध्यादेः स्तैन्यं कुर्वन् । तथा हस्तेनाताडनं हस्तातालः, सूत्रे च तकारस्य दकारश्रुतिरार्षत्वात्, तं "दलमाणे" ददत्, यष्टि-मुष्टि-लकुटादिभिरात्मनः परस्य वा प्रहरन्निति भावः । अथव "हत्थालंबं" ति पाठः, हस्तालम्ब इव 'हस्तालम्बः' अशिवादिप्रशमनार्थमभिचारुकमन्त्रादिप्रयोगस्तं "हत्थालंबं" ति पाठः, हस्तालम्ब इव 'हस्तालम्बः' अशिवादिप्रशमनार्थमभिचारुकमन्त्रादिप्रयोगस्तं "दलमाणे" कुर्वन् । यद्वा "अत्थादानं दलमाणे" त्ति पाठः, तत्र 'अर्थादानम्' अर्थोपादानकारणमष्टाङ्गनिमित्तं 'ददत्' प्रयुञ्जानः । एष सूत्रसङ्क्षेपार्थः ॥ अथ विस्तरार्थं बिभणिषुराह-

[भा.५०५९] आसायण पडिसेवी, अणवट्ठप्पो वि होति दुविहो तु ।
एक्केक्को वि य दुविहो, सचरित्तो चेव अचरित्तो ॥

वृ- आशातनानवस्थाप्यः प्रतिसेव्यनवस्थाप्यश्चेत्यनवस्थाप्योऽपि द्विविधो भवति, न केवलं पाराश्चिक इति अपिशब्दार्थः । पुनरेकैकोऽपि द्विविधः-सचारित्रोऽचारित्रश्चेति । एतौ द्वावपि भेदौ पाराश्चिकवद् वक्तव्यौ ॥ अथाशातनानवस्थाप्यमाह-

[भा.५०६०]　तित्थयर पवयण सुते, आयरिए गणहरे महिड्डीए।
एते आसादेंते, पच्छित्ते मग्गणा होइ ॥

वृ- तीर्थकरः प्रवचनं श्रुतं आचार्यो गणधरो महर्द्धिकश्चेति । एतानाशातयतः प्रायश्चित्ते मार्गणा भवति । अमीषां चाशातना पाराञ्चिकवद् भावनीया ॥ प्रायश्चित्तमार्गणा पुनरियम्-

[भा.५०६१]　पढम-बितिएसु नवमं, सेसे एक्केक्क चउगुरु होंति ।
सव्वे आसादेंतो, अनवट्ठप्पो उ सो होइ ॥

वृ- 'प्रथम-द्वितीययोः' तीर्थङ्कर-सङ्घाशातनयोरुपाध्यायस्य 'नवमम्' अनवस्थाप्यं भवति । 'शेषेषु' श्रुतादिषु प्रत्येकमेकैकस्मिन् आशातनायां चतुर्गुरवो भवन्ति । अथ 'सर्वाणि' [illegible] श्रुतादी आशातयति ततोऽसौ अनवस्थाप्यो भवति ॥

उक्त आशातनानावस्थाप्यः । अथ प्रतिसेवनानवस्थाप्यमाह-

[भा.५०६२]　पडिसेवणअणवट्ठो, तिविधो सो होइ आनुपुव्वीए ।
साहम्मि अन्नधम्मिय, हत्थादालं व दलमाणे ॥

वृ- यः प्रतिसेवनानवस्थाप्यः सूत्रे साक्षादुक्तः स आनुपूर्व्या त्रिविधो भवति-साधर्मिकस्तैन्यकारी अन्यधार्मिकस्तैन्यकारी हस्तातालं च ददत् ॥ तत्र साधर्मिकस्तैन्यं तावदाह-

[भा.५०६३]　साहम्मि तेन्न उवधी, वावारण झामणा य पट्ठवणा ।
सेहे आहारविधी, जा जहि आरोवणा भणिता ॥

वृ- साधर्मिकाणाम् 'उपधेः' वस्त्र-पात्रादिलक्षणस्य स्तैन्यं करोति । "वावारण" त्ति गुरुभिरुपधेरुत्पादनाय 'व्यापारणा' प्रेषणा कृता ततस्तमुत्पाद्य गुरूणामनिवेद्यापान्तराले स्वयमेवाधितिष्ठति । "झामणा य" त्ति उपकरं सद्भावेनासद्भावेन वा 'ध्यामितं' दग्धं भवेत् तद्व्याजेन श्रावकमभ्यर्थ्य वस्त्रादिकं गृहीत्वा स्वयमेव भुङ्क्ते । "पट्ठवण" त्ति केनाप्याचार्येण कस्यापि संयतस्य हस्ते अपराचार्यस्य ढौकनाय प्रतिग्रहः प्रेषितस्तमसावन्तरा स्वयमेव स्वीकरोति। "सेहे" त्ति शैक्षविषयं स्तैन्यं करोति । "आहारविहि" त्ति दानश्राद्धादिषु स्थापनाकुलेषु गुरुभिरननुज्ञातः 'आहारविधिम्' अशनादिकमाहारप्रकारं गृह्णाति । एतेषु स्थानेषु साधर्मिकस्तैन्यं भवति। अत्र च या यत्र स्थाने 'आरोपणा' प्रायश्चित्तापरपर्याया भणिता सा तत्र वक्तव्या । एष निर्युक्ति-गाथासङ्क्षेपार्थः ॥ साम्प्रतमेनामेव विवरीषुराह-

[भा.५०६४]　उवहिस्स आसिआवण, सेहमसेथे य दिट्ठऽदिट्ठे य ।
सेहे मूलं भणितं, अणवट्ठप्पो य पारंची ॥

वृ- इहोपधेः आसिआवणं स्तैन्यमित्येकोऽर्थः, तच्च शैक्षो वा कुर्यादशैक्षो वा, उभावपि दृष्टं वा स्तैन्यं कुर्यातामदृष्टं वा । तत्र शैक्षे मूलं यावत् प्रायश्चित्तं भणितम्, उपाध्यायस्याऽनवस्थाप्यपर्यन्तम्, आचार्यस्य पाराञ्चिकान्तम् ॥ एतदेव भावयति-

[भा.५०६५]　सेहो त्ति अगीयत्थो, जो वा गीतो अणिड्ढिसंपन्नो ।
उवही पुन वत्थादी, सपरिग्गह एतरो तिविहो ॥

वृ- शैक्ष इति पदेनागीतार्थो भण्यते, यो वा गीतार्थोऽपि 'अनृद्धिसम्पन्नः' आचार्यपदादि-समृद्धिमप्राप्तः सोऽपि शैक्ष इहोच्यते । उपधि पुनर्वस्त्रादिकः, आदिशब्दात् पात्रपरिग्रहः । स च

'सपरिग्रहः' परिगृहीतः स्याद् 'इतरो वा' अपरिगृहीतः । पुनरेकैकस्त्रिविधः- जघन्यो मध्यम उत्कृष्टश्च ।। अथ ''सेहे मूलं'' इत्यादि पश्चार्द्धं व्याख्याति-

[भा.५०६६] अंतो बहिं निवेसण, वाडग गामुज्जाण सीमऽतिक्कंते ।
मास चउ छच्च लहु गुरु, छेदो मूलं तह दुगं च ।।

वृ- 'अन्तः' प्रतिश्रयाभ्यन्तरे साधर्मिकाणामुपधिमदृष्टं शैक्षः स्तेनयति मासलघु, वसतेर्बहिरदृष्टमेव स्तेनयति मासगुरु । निवेशनस्यान्तर्मासगुरु, बहिश्चतुर्लघु । वाटकस्यान्तश्चतुर्लघु, बहिश्चतुर्गुरु । ग्रामस्यान्तश्चतुर्गुरु, बहि षड्लघु । उद्यानस्यान्तः षड्लघु, बहि षड्गुरु । सीमाया अन्तः षड्गुरु, अतिक्रान्तायां तु तस्यां बहिश्छेदः । ''मूलं तह दुगं च'' त्ति मूलं तथा 'द्विकं च' अनवस्थाप्य-पाराञ्चिकयुगम् ।। एतदेव भावयति-

[भा.५०६७] एवं ता अदिट्ठे, दिट्ठे पढमं पदं परिहवेत्ता ।
ते चेव असेहे वी, अदिट्ठ दिट्ठे पुनो एक्कं ।।

वृ- एवं तावददृष्टे स्तैन्ये क्रियमाणे शैक्षस्य प्रायश्चित्तमुक्तम् । दृष्टे तु 'प्रथमं' मासलघुलक्षणं पदं 'परिहाप्य' परिहृत्य मासगुरुकादारब्धं मूलं यावद् वक्तव्यम् । अशैक्षः-उपाध्यायस्तस्याप्यदृष्टे 'तान्येव' मासगुरुकादीनि मूलान्तानि प्रायश्चित्तस्थानानि भवन्ति, दृष्टे पुनः 'एकं' मासगुरुलक्षणं पदं ह्रसति, चतुर्लघुकादारब्धमनवस्थाप्ये निष्ठां यातीत्यर्थः । आचार्यस्याप्यदृष्टेऽनवस्थाप्यान्तमेव, दृष्टे तु चतुर्गुरुकादारब्धं पाराञ्चिके तिष्ठति ।। गतं साधर्मिकोपधिस्तैन्यद्वारम् । अथ व्यापारणाद्वारमाह-

[भा.५०६८] वावारिय आनेहा, बाहिं घेत्तूण उवहि गिण्हंति ।
लहुगो अदिंति लहुगा, अणवट्ठप्पो व आदेसा ।।

वृ- 'व्यापारिता नाम' गुरुभि प्रेषिताः, यथा-''आनेह'' त्ति उपधिमुत्पाद्याऽऽनयत । ते चैवमुक्ता अनेकविधमुपधिं गृहिभ्यः 'गृहीत्वा' उत्पाद्य 'बहिरेव' आचार्यसमीपमप्राप्ता उपधिं गृह्णन्ति, 'इदं तव इदं मम' इति विभज्य स्वयमेव स्वीकुर्वन्तीत्यर्थः; एवं गृह्णतां मासलघु । आगता आचार्यस्य न ददति चतुर्लघवः, प्रस्तुतसूत्रादेशाद्वा स स्वच्छन्दवस्त्रग्राहकः साधुवर्गोऽनवस्थाप्यो भवति।।

गतं व्यापारणाद्वारम् । अथ ध्यामनाद्वारम्- सा च ध्यामना द्विविधा-सती असती च । तत्रासतीं तावदाह-

[भा.५०६९] दट्ठु निमंतण लुद्धोऽनापुच्छा तस्स गंतु नं भणति ।
झामिय उवधी अह तेहि पेसितो गहित नातो य ।।

वृ- आचार्या केनापि दानश्राद्धादिना विरूपरूपैर्वस्त्रैर्निमन्त्रिताः, तैश्च तानि प्रतिषिद्धानि । एकश्च साधुस्तां निमन्त्रणां श्रुत्वा तानि च सुन्दराणि वस्त्राणि दृष्ट्वा 'लुब्धः' लोभं गतः । तत आचार्यमनापृच्छ्य ''णं'' इति तं श्रावक तत्र गत्वा भणति-अस्माकमुपधिं 'ध्यामितः' दग्धः ततोऽहं तैराचार्यैर्युष्माकं सकाशे वस्त्रार्थं प्रेषितः; एवमुक्ते दत्तस्तेनोपधि । स च गृहीत्वा गतः, अन्ये च साधव आगताः । श्राद्धेन भणितम्-युष्माकमुपधिर्दग्ध इति कृत्वा यो भवद्भि साधुः प्रेषितस्तस्य नूतनोपधिर्दत्तो वर्तते, यदि न पर्याप्तं ततो भूयोऽपि दास्यामीति । साधवो ब्रुवते-नास्माकमुपधिर्दग्धो न वा वयं कमपि प्रेषयामः । एवं स लोभाभिभूतः साधुस्तेन श्रावकेण ज्ञातः, यथा-गुरूणां पृच्छामन्तरेणायं गृहीतवान् ।। ततश्च किं भवति ? इत्याह-

[भा.५०७०] लहुगा अनुग्गहम्मिं, गुरुगा अप्पत्तियम्मि कायव्वा ।
मूलं च तेनसद्दे, वोच्छेद पसज्जणा सेसे ॥

वृ-एवं तेन साधुना स्तैन्येन वस्त्रेषु गृहीतेषु यद्यप्यसौ श्राद्धोऽनुग्रहं मन्यते-"यथाऽपि तथाऽपि गृह्णतामभी साधवः' इति तथापि चतुर्लघवः । अथाप्रीतिकं करोति ततश्चतुर्गुरवः प्रायश्चित्तं कर्तव्याः । अथासौ 'स्तेनोऽयं स्तेनोऽयम्' इति शब्दं लोके विस्तारयति तदा मूलम् । यच्च शेषद्रव्याणां शेषसाधूनां वा व्यवच्छेदं "पसज्जण"त्ति प्रसङ्गतः करोति तन्निष्पन्नं प्रायश्चित्तम् ॥

अथ सतीं ध्यामनां दर्शयति-

[भा.५०७१] सुव्वत्त झामिओवधि, पेसण गहिते य अंतरा लुद्धो ।
लहुगो अदेंते गुरुगा, अनवट्ठप्पो व आदेसा ॥

वृ- अथ 'सुव्यक्तं' सत्येनैव ध्यामित उपधि ततो गुरुभिस्तथैव प्रेषणं कृतम्, प्रेषितश्च सन् येनाचार्या निमन्त्रितास्तस्मादन्यस्माद्वा श्रावकाद् वस्त्रादिकमुपधिं गृहीत्वा अन्तरा 'लुब्धः' लोभाभिभूतो यदि गृह्णाति तदा लघुको मासः । आगतोऽपि यदि गुरूणां न प्रयच्छति तदा चतुर्गुरवः, सूत्रादेशाद्वाऽनवस्थाप्यो भवति ॥ गतं ध्यामनाद्वारम् । अथ प्रस्थापनाद्वारमाह-

[भा.५०७२] उक्कोस सनिज्जोगो, पडिग्गहो अंतरा गहण लुद्धो ।
लहुगा अदेंते गुरुगा, अणवट्ठप्पो व आदेसा ॥

वृ- केनाप्याचार्येण कस्यापि संयतस्य हस्ते अपराचार्यस्य ढौकनहेतोः प्रतिग्रहः प्रेषितः, स च 'उत्कृष्टः' उत्कृष्टोपधिरूपो यद्वा वृत्त-समचतुरस्र-वर्णाढ्यतादिगुणोपेतः, तथा सह निर्योगेन-पात्रकबन्धादिना यः स सनिर्योगः । एवंविधस्य प्रतिग्रहस्य 'अन्तरा' अपान्तराल एवासौ लुब्धः 'ग्रहणं' स्वीकरणं करोति तत्र चतुर्लघु । तत्र गतस्तेषां सूरीणां तं प्रतिग्रहं न प्रयच्छति चतुर्गुरवः, सूत्रादेशेन वाऽनवस्थाप्यो ऽसौ द्रष्टव्यः ॥ गतं प्रस्थापनाद्वारम्, अथ शैक्षद्वारमाह-

[भा.५०७३] पव्वावणिज्ज बाहिं, ठवेत्तु भिक्खस्स अतिगते संते ।
सेहस्स आसिआवण, अभिधारेंते व पावयणी ॥

वृ- कोऽपि साधुः 'प्रव्राजनीयं' सशिखाकं शैक्षं गृहीत्वा प्रस्थितः, तं च भिक्षाकाले क्वापि ग्रामे बहिः स्थापयित्वा भिक्षार्थम् अतिगतः-प्रविष्टः, प्रविष्टे च सति तस्मिन् अपरः साधुस्तं शैक्षं दृष्ट्वा विप्रतार्य च तस्य "आसियावणं" अपहरणं करोति । साधुविरहितो वा एकाकी कमपि साधुमभिधारयन्-मनसि कुर्वन् शैक्षो स्वयमेवाऽऽत्मनो दिक्परिच्छेदं कुरुत इति सङ्ग्रहगाथासमासार्थः ॥ अथैनामेव विवृणोति-

[भा.५०७४] सन्नातिगतो अद्धाणितो व वंदनग पुच्छ सेहो मि ।
सो कत्थ मज्झ कज्जे, छात-पिवासस्स वा अडति ॥

वृ- संज्ञाभूमिगत आदिशब्दाद् भक्तादिपरिष्ठापनिकार्थं निर्गतः कोऽपि साधुः शैक्षं दृष्टवान्; अथवा 'आध्वनिकः' पथिकोऽसौ साधुस्ततः पथि गच्छन् शैक्षं दृष्टवान् । तेन च वन्दनके कृते सति साधुः पृच्छति-कोऽसि त्वम् ? कुत आगतः ? क्व वा प्रस्थितः ? । शैक्षः प्राह- अमुकेन साधुना सार्द्धं प्रस्थितः प्रव्रजितुकामः शैक्षोऽसम्यहम् । साधुः पृच्छति-स साधुः सम्प्रति क्व गतः ? शैक्षो भणति-स मम कार्ये बुभुक्षितस्य पिपासितस्य वा भक्त-पानार्थं पर्यटति ॥

[भा.५०७५] मज्झमिणमन्न-पानं, उवजीवऽनुकंपनाय सुद्धो उ।
पुट्ठमपुट्ठे कहणा, एमेव य इहरहा दोसो ॥

वृ- ततः स साधुर्यदीदमन्न-पानम् 'उपजीव' भुङ्क्ष्वेति ब्रुवाणो यदि 'साधर्मिकोऽयम्' इत्यनुकम्पया ददाति तदा शुद्धः। शैक्षेण पृष्टोऽपृष्टो वा यदि 'एवमेव' अनुकम्पया धर्मकथां करोति तदा शुद्धः। 'इतरथा' अपहरणार्थं भक्त-पानं ददतो धर्मं वा कथयतो 'दोषः' चतुर्गुरुकं प्रायश्चित्तम् ॥ अपहरणप्रयोगानेव दर्शयति-

[भा.५०७६] भत्ते पन्नवण निगूहणा य वावार झंपणा चेव।
पत्थवण-सयंहरणे, सेहे अव्यत्त वत्ते य ॥

वृ- अपहरणार्थं भक्त-पानं ददाति धर्मं वा तस्य पुरतः प्रज्ञापयति। ततः स शैक्ष आवृत्तः सन् भणति-भवत एव सकाशेऽहं प्रव्रजामि किन्तु न शक्नोमि येनाऽऽनीतस्तत्पुरतः स्थातुम्, ततो मां गुपिले प्रदेशे निगूहत; ततोऽसौ तं व्यापारयति-अमुकत्र निलीय तिष्ठेति। ततस्तं तत्र निलीनं साधुः पलालादिना झम्पयति, स्थगयतीत्यर्थः। अथवाऽन्यैः सार्धमन्यं ग्रामं प्रस्थापयति, एकाकिनं वा प्रेषयति-अमुकत्र ग्रामादौ व्रज, अहमप्यमुष्मिन् दिवसे तत्राऽऽगमिष्यामि। अथवा स्वयमेव गृहीत्वा तमपहरति। एतानि षट् पदानि भवन्ति, तद्यथा-भक्तप्रदानं १ धर्मकथा २ निगूहनावचनं ३ व्यापारणं ४ झम्पनं ५ प्रस्थापन-स्वयंहरणं ६ चेति। एतेषु षट्सु पदेषु शैक्षे व्यक्तेऽव्यक्ते च प्रायश्चित्तमिदं भवति ॥

[भा.५०७७] गुरुओ चउलहु चउगुरु, छल्लहु छग्गुरुगमेव छेदो य।
भिक्खु-गणाऽऽयरियाणं, मलूं अणवट्ठ पारंची ॥

वृ- भिक्षुर्यद्यव्यक्तशैक्षस्यापहरणार्थं भक्तं ददाति तदा मासगुरु, धर्मप्रज्ञापनायां चतुर्लघु, निगूहनवचने चतुर्गुरु, व्यापारणे षड्लघु, झम्पने षड्गुरु, प्रस्थापने स्वयंहरणे वा छेदः। एवमव्यक्ते शैक्षे भणितम्। अव्यक्तो नाम-यस्याद्यापि श्मश्रु न सञ्जातम्। यस्तु व्यक्तः-सञ्जातश्मश्रुस्तत्र चतुर्लघुकादारब्धं मूलं यावद् भिक्षोः प्रायश्चित्तम्। गणिनः-उपाध्यायस्य चतुर्लघुकादारब्धमनवस्थाप्ये तिष्ठति। आचार्यस्य चतुर्गुरुकादारब्धं पाराञ्चिके पर्यवस्यति ॥

एवं ससहाये शैक्षे भणितम्, यः पुनरसहायोऽभिधारयन् व्रजति तत्र विधिमाह-

[भा.५०७८] अभिधारंत वयंतो, पुट्ठो वच्चामऽहं अमुगमूलं।
पन्नवण भत्तदाने, तहेव सेसा पदा नत्थि ॥

वृ- कोऽपि शैक्ष एकाकी कमप्याचार्यमभिधारयन् प्रव्रज्याभिमुखो व्रजति। तेन क्वचिद् ग्रामे पथि वा साधुं दृष्ट्वा वन्दनकं कृतम्। साधुना पृष्टः-क्व गच्छसि? । स प्राह-अमुकस्याऽऽचार्यस्य पादमूले प्रव्रजनार्थं व्रजामि। एवमुक्ते यदि भिक्षुरव्यक्तशैक्षस्य भक्तदानं करोति मासगुरु, धर्मप्रज्ञापनायां चतुर्लघु; व्यक्तशैक्षस्य भक्तदाने चतुर्लघु, धर्मकथायां चतुर्गुरु। उपाध्याया-ऽऽचार्ययोर्यथाक्रमं षड्लघु षड्गुरुकं च भवति, अधस्तनमेकैकं पदं ह्रसतीति भावः। 'शेषाणि तु' निगूहन-व्यापारण-झम्पनादीनि पदानि न सन्ति, असहायत्वात्, तदभावात् प्रायश्चित्तमपि नास्तीति ॥ एते चापरे दोषाः-

[भा.५०७९] आणादऽणंतसंसारियत्त बोहीय दुल्लभत्तं च।

साहम्मियतेणम्मि, पमत्तछलणाऽधिकरणं च ॥

वृ- शैक्षमपहरत आज्ञाभङ्गादयो दोषा भवन्ति । अनन्तसंसारिकत्वं च भगवतामाज्ञाभङ्गाद् भवति । बोधेश्च दुर्लभत्वं जायते । साधर्मिकस्तैन्यं च कुर्वाणः प्रमत्तो लभ्यते । प्रमत्तस्य च प्रान्तदेवतया छलना भवति । यस्य च सम्बन्धी सोऽपह्रियते तेन समम् 'अधिकरणं' कलह उपजायते ॥ एवं तावत् पुरुषविषया दोषा उक्ताः । अथ स्त्रीविषयांस्तानेवातिदिशति-

[भा.५०८०] एमेव य इत्थी, अभिधारेंतीए तह वयंतीए ।
वत्तऽव्वत्ताए गमो, जहेव पुरिसस्स नायव्वो ॥

वृ-एवमेव स्त्रिया अपि शैक्षिकायाः अभिधारयन्त्यास्तथा ''वयंतीए''त्ति ससहायायाः प्रव्रजितुं व्रजन्त्या व्यक्ताया अव्यक्तायाश्च गमः स एव ज्ञातव्यो यथा पुरुषस्योक्तः ॥

अथ प्रावचनिकपदं व्याचष्टे-

[भा.५०८१] एवं तु सो अवधितो, जाधे जातो सयं तु पावयणी ।
निक्कारणे य गहितो, वच्चति ताहे पुरिल्लाणं ॥

वृ- 'एवम्' अन्तरोक्तैः प्रकारैः 'सः' शैक्षोऽपहृतः सन् यदा स्वयमेव प्रावचनिको जातः, अन्यो वा निष्कारणे यः केनापि गृहीतः स आत्मनो दिक्परिच्छेदं कृत्वा भूयोऽपि बोधिलाभावाप्तये पूर्वेषामेवाचार्याणामन्तिके व्रजति ॥

[भा.५०८२] अन्नस्स व असतीए, गुरुम्मि अब्भुज्जएगतरजुत्ते ।
धारेति तमेव गणं, जो य हडो कारणज्जाते ॥

वृ- येन स शैक्षो निष्कारणेऽपहृतस्तस्य गच्छेऽपरः कोऽप्याचार्यपदयोग्यो न विद्यते इत्यन्यस्याभावे यद्वा स गुरु-आचार्योऽभ्युद्यतस्यैकतरेण युक्तः, अभ्युद्यतमरणम् अभ्युद्यतविहारं वा प्रतिपन्न इत्यर्थः, ततो यदि कोऽपि शिष्यस्तेषां निष्पन्नो नास्ति तदा तमेव गणमसौ धारयति यावत् कोऽपि तत्र निष्पन्न इति । यश्च कारणजाते केनाप्याचार्येण हृतः सोऽपि तमेव गणं धारयति ॥ किं पुनस्तत कारणम् ? इत्याह-

[भा.५०८३] नाऊण य वोच्छेदं, पुव्वगते कालियानुजोगे च ।
अज्जाकारणजाते, कप्पति सेहावहारो तु ॥

वृ- कोऽप्याचार्यो बहुश्रुतस्तस्य पूर्वगते किञ्चिद् वस्तु प्राभृत वा कालिकानुयोगेऽपि श्रुतस्कन्धोऽध्ययनं वा विद्यते तच्चान्यस्य नास्ति ततो यद्यन्यस्य न सङ्क्राम्यते तदा व्यवच्छिद्यते। एवं पूर्वगते कालिकानुयोगे च व्यवच्छेदं ज्ञात्वा तं च सम्प्रस्थितं शैक्षं ग्रहण धारणासमर्थं विज्ञाय भक्तदान-धर्मकथादिभिर्विपरिणाम्य ज्ञापनादीन्यपि कुर्वाणः शुद्धः । यद्वा तस्याऽऽचार्यस्य नास्ति कोऽप्यार्याणां परिवर्तकस्ततस्तासामपि कारणजाते शैक्षमपहरेत् । एवं कल्पते शैक्षापहारः कर्तुम् ॥ तस्य च कारणेऽपहृतस्य को विधिः ? इत्याह-

[भा.५०८४] कारणजाय अवहितो, गणं धरेंतो तु अवहरंतस्स ।
जाहेगो निप्फन्नो, पच्छा से अप्पणो इच्छा ॥

वृ- यः कारणजातेऽपहृतः स तदीयं गणं धारयन् अपहरत एवाभाव्यो भवति । अथ येन कारणेनापहृतस्तत् कारणं न पूरयति तदा पूर्वेषामेवाभवति नापहरतः । स च कारणापहृतस्तस्मिन्

गणे तावदास्ते यावदेकोऽपि गीतार्थो निष्पन्नः, पश्चात् तस्याऽऽत्मीया इच्छा, तत्र वा तिष्ठति पूर्वेषां वा सकाशे गच्छति । यस्तु निष्कारणेऽपहृतः स एकस्मिन् निर्मिते नियमात् पूर्वेषामन्तिके गच्छति, न तस्याऽऽत्मीयेच्छेति भावः ॥ गतं शैक्षद्वारम् । अथाऽऽहारविधिमाह-

[भा.५०८५] ठवणाघरम्मि लहुगो, मादी गुरुगो अनुग्गहे लहुगा ।
अप्पत्तियम्मि गुरुगा, वोच्छेद पसज्जणा सेसे ॥

वृ- दानश्राद्धादिकुलं स्थापनागृहं भण्यते, तस्मिन् य आचार्यैरसन्दिष्टः अननुज्ञातो वा प्रविशति तस्य मासलघु । अथवा 'प्राघूर्णक-ग्लानार्थमहमिहाऽऽयातः' इति तेषां श्राद्धानां पुरतो मायां करोति ततो मायिनो मासगुरुकम् । एवमुक्ते यदि ते श्राद्धाः 'अनुग्रहोऽयम्' इति मन्यन्ते तदा चतुर्लघु । अथाप्रीतिकं कुर्वन्ति ततश्चतुर्गुरवः, यच्च तद्रव्यव्यवच्छेदादिशेषदोषाणां 'प्रसजना' प्रसङ्गस्तन्निष्पन्नं प्रायश्चित्तम् ॥ इदमेव व्याचष्टे-

[भा.५०८६] अज्ज अहं संदिट्ठो, पुट्ठोऽपुट्ठो य साहती एवं ।
पाहुणग-गिलाणट्ठा, तं च पलोट्टेति तो बितियं ॥

वृ- कश्चिदाचार्यैरसन्दिष्टः स्थापनाकुलेषु प्रविश्य पृष्टोऽपृष्टो वा इदं भणति-अद्याहं गुरुभिः 'सन्दिष्टः' प्रेषित इति, ततो मासलघु । यदि च पूर्वं सन्दिष्टः सङ्घाटकः प्रविष्ट आसीत् श्राद्धैश्च तस्यासन्दिष्टस्याग्रे इदं भणितं भवेत्-सन्दिष्टसङ्घाटकस्य दत्तमिति; ततो ब्रूयात्- प्राघूर्णकार्थं ग्लानार्थं वा साम्प्रतमहमागत इति, एवं 'तं' श्राद्धजनं मायया यदि प्रलोटयति प्राघूर्णकार्थं ग्लानार्थं वा साम्प्रतमहमागत इति, एवं 'तं' श्राद्धजनं मायया यदि प्रलोटयति ततो 'द्वितीयं' मासगुरु ॥

ते च श्राद्धा विपरिणमेयुः, विपरिणताश्चाऽऽचार्यादीनां प्रायोग्यं न दद्युः ततः शुद्धं शुद्धेनाप्येतत् प्रायश्चित्तम्-

[भा.५०८७] आयरि-गिलाण गुरुगा, लहुगा य हवंति खमग-पाहुणए ।
गुरुगो य बाल-वुड्ढे, सेसे सव्वेसु मासलहुं ॥

वृ- आचार्यस्य ग्लानस्य च प्रायोग्यमददानेषु श्राद्धेषु चतुर्गुरवः । क्षपकस्य प्राघुणकस्य च योग्यमददानेषु चतुर्लघवः । बालवृद्धानां योग्येऽलभ्यमाने गुरुमासः । 'शेषाणाम्' एतद्व्यतिरिक्तानां सर्वेषामपि प्रायोग्येऽलभ्यमाने मासलघु ॥ गतं साधर्मिकस्तैन्यम् ।

अथाऽन्यधार्मिकस्तैन्यमाह-

[भा.५०८८] परधम्मिया वि दुविहा, लिंगपविट्ठा तहा गिहत्था य ।
तेसिं तिन्नं तिविहं, आहारे उवधि सच्चित्ते ॥

वृ- परधार्मिका अन्यधार्मिका इत्येकोऽर्थः । ते च द्विविधाः-लिङ्गप्रविष्टा गृहस्थाश्च । 'लिङ्गप्रविष्टाः' शाक्यादयः, 'गृहस्थाः' प्रतीताः । 'तेषाम्' उभयेषामपि स्तैन्यं त्रिविधम्-आहारविषयमुपधिविषयं सचित्तविषयं चेति ॥ तत्राऽऽहारविषयं तावदाह-

[भा.५०८९] भिक्खूण संखडीए, विकरणरूवेण भुंजती लुद्धो ।
आभोगण उड्डंसण, पवयणहीला दुरप्प त्ती ॥

वृ- भिक्षवः-बौद्धास्तेषां सङ्खड्यां कश्चिद् लुब्धो "विकरणरूवेण" लिङ्गविवेकेन भुङ्क्ते,

तदीयं लिङ्गं कृत्वेति भावः । एवं भुञ्जानं यदि कोऽपि 'आभोगयति' उपलक्षयति तदा चतुर्लघवः । एवमुपलक्ष्य यद्यसौ 'उद्धर्षणं' निर्भर्त्सनं करोति ततश्चतुर्गुरुकाः । प्रवचनहीलां वा ते कुर्युः, यथा-दुरसमानोऽमी भोजननिमित्तमेव प्रव्रजिता इति ।। अपि च-

[भा.५०९०] गिहवासे वि वरागा, धुवं खु एते अदिट्ठकल्लाणा ।
गलतो नवरि न वलितो, एएसिं सत्थुणा चेव ।।

वृ- गृहवासेऽप्येते वराकाः 'ध्रुवं' निश्चितमेव अदृष्टकल्याणाः, एतेषां च 'शास्त्रा' तीर्थकृता दुश्चरतरामाहारशुध्यादिचर्यामुपदिशता गलक एव नवरं न वलितः, शेषं तु सर्वमपि कृतमिति भावः ।। गतमाहारविषयं स्तैन्यम् । अथोपधिविषयमाह-

[भा.५०९१] उवस्सए उवहिं ठवेतुं, गतम्मि भिक्खुम्मि गिण्हती लहुगा ।
गेण्हण कड्ढण ववहार पच्छकडुड्डाह निव्विसए ।।

वृ- 'उपाश्रये' मठे 'उपधिम्' उपकरणं स्थापयित्वा कश्चिद् भिक्षुकः-बौद्धो भिक्षां गतः, तस्मिन् गते यदि तदीयमुपधिं गृह्णाति तदा चतुर्लघवः । स भिक्षुकः समायातः स्वकीयमुपकरणं स्तेनितं मत्वा तस्य संयतस्य ग्रहणं करोति चतुर्गुरवः । राजकुलाभिमुखमाकर्षति षड्गुरवः । व्यवहारं कारयितुमारब्धे छेदः । पश्चात्कृते मूलम् । उड्डहनेऽनवस्थाप्यम् । निर्विषयाज्ञापने पाराञ्चिकम्। अथ सचित्तविषयं स्तैन्यमाह-

[भा.५०९२] सच्चित्ते खुड्डादी, चउरो गुरुगा य दोस आणादी ।
गेण्हण कड्ढण ववहार पच्छकडुड्डाह निव्विसए ।।

वृ- सचित्तस्तैन्ये चिन्त्यमाने भिक्षुकादेः सम्बन्धिनं क्षुल्लकम् आदिशब्दाद् अक्षुल्लकं वा यद्यपहरति तदा चत्वारो गुरुकाः आज्ञादयश्च दोषाः । ग्रहणा-ऽऽकर्षण-व्यवहार-पश्चात्कृतोड्डाहनि-र्विषयाज्ञापनादयश्च दोषाः प्राग्वद् मन्तव्याः ।। अथैतेष्वेव प्रायश्चित्तमाह-

[भा.५०९३] गेण्हणे गुरुगा छम्मास कड्ढणे छेओ होइ ववहारे ।
पच्छाकडम्मि मूलं, उड्डहण विरंगणे नवमं ।।

[भा.५०९४] उद्दावण निव्विसए, एगमनेगे पदोस पारंची ।
अणवट्ठप्पो दोसु य, दोसु उ पारंचितो होइ ।।

वृ- गाथाद्वयं गतार्थम् ।।

[भा.५०९५] खुड्डं व खुड्डियं वा, नेंति अवत्तं अपुच्छियं तेने ।
वत्तम्मि नत्थि पुच्छा, खेत्तं थामं च नाऊणं ।।

वृ- क्षुल्लको वा क्षुल्लिका वा योऽद्यापि अव्यक्तः स यस्य शाक्यादेः सम्बन्धी तमपृष्ट्वा यदि तं क्षुल्लकं क्षुल्लिकां वा नयति ततः 'स्तेनः' अन्यधार्मिकस्तैन्यकारी स मन्तव्यः, चतुर्गुरुकं च तस्य प्रायश्चित्तम् । यस्तु व्यक्तस्तत्र नास्ति पृच्छा, तामन्तरेणापि स प्रव्राजनीयः । किं सर्वथैव ? उत न ? इत्याशङ्क्याऽऽह-क्षेत्रं स्थाम च ज्ञात्वा । किमुक्तं भवति ? -यदि विवक्षितं क्षेत्रं शाक्यादिभावितं राजवल्लभतादिकं वा तेषां तत्र बलं तदा पृच्छामन्तरेण व्यक्तोऽपि प्रव्राजयितुं न कल्पते, अन्यथा तु कल्पत इति ।। एवं तावल्लिङ्गप्रविष्टानां स्तैन्यमुक्तम् । अथ गृहस्थानां तदेवाह-

[भा.५०९६] एमेव होंति तेन्नं, तिविहं गारत्थियाण जं वुत्तं ।

गहणादिगा य दोसा, सविसेसतरा भवे तेसु ॥

वृ- एवमेवागारस्थानामपि 'त्रिविधम्' आहारादिभेदात् त्रिप्रकारं स्तैन्यं भवति यदनन्तरमेव परतीर्थिकानामुक्तम्। 'तेसु च' गृहस्थेषु आहारादिकं स्तेनयतां ग्रहणादयो दोषाः सविशेषतरा भवेयुः। ते हि राजकुले करादिकं प्रयच्छन्ति, ततस्तद्बलेन समधिकतरान् ग्रहणा-ऽऽकर्षणादीन् कारयेयुः॥ कथं पुनरमीषामाहारादिकं स्तेनयति ? इति उच्यते-

[भा.५०९७] आहारे पिट्ठाती, तंतू खुड्डावे जं भणिल पुव्वं।

पिट्ठंडिय कव्वट्ठी, संखुभण पडिग्गहे कुसला॥

वृ-आहारे-पिष्टादिकं बहिर्विरल्लितं दृष्ट्वा क्षुल्लिकाः स्तेनयति। उपधौ-''तंतु' 'त्ति सूत्राण्टिकाम् उपलक्षणत्वाद् वस्त्रादिकं वाऽपहरति। सचित्ते-क्षुल्लकः-बालकस्तम् आदिशब्दाद् अक्षुल्लकं वा स्तेनयति। इत्याह-''पिट्ठंडि''इत्यादि, काश्चित् क्षुल्लिका भिक्षामटन्त्यः किञ्चिद् गृहं प्रविष्टाः, तत्र च बहिः पिष्टं विसारितमास्ते, तच्च दृष्ट्वा तासां मध्यादेका कल्पस्थिका पिष्टपिण्डिकां गृहीत्वा पतद्ग्रहे प्रक्षिप्तवती, सा चाविरतिकया दृष्टा ततो भणितम्-एनां पिष्टपिण्डिकां गृहीत्वा पतद्ग्रहे प्रक्षिप्तवती, सा चाविरतिकया दृष्टा ततो भणितम्-एनां पिष्टपिण्डिकामत्रैव स्थापयत; ततस्तया क्षुल्लिकया कुशलत्वेनान्यस्याः सङ्घाटिकाया अन्तरे प्रक्षिप्ता। एवं सूत्राण्टिकामपि दक्षत्वेनापरेत्॥

अथ सचित्तविषयं विधिमाह-

[भा.५०९९] अपरिग्गहा उ नारी, न भवति तो सा न कप्पति अदिन्ना।

सा वि य हु काय कप्पति, जह पउमा खुड्डमाता वा॥

वृ- 'नारी' स्त्री सा प्रायेणापरिग्रहा न भवति, पितृ-पतिप्रभृतीनामन्यतरेण परिगृहीता भवतीति भावः। उक्तं च-

पिता रक्षति कौमारे, भर्ता रक्षति यौवने।

पुत्राश्च स्थाविरे भावे, न स्त्री स्वातन्त्र्यमर्हती॥

ततो नासावदत्ता सती कल्पते प्रव्राजयितुम्। साऽपि च कचिददत्ताऽपि कल्पते, यथा पद्मावतीदेवी करकण्डुमाता प्रव्राजिता, यथा वा क्षुल्लककुमारमाता योगसङ्ग्रहाभिहिता यशोभद्रा नाम्नी प्रव्राजिता॥ अथ द्वितीयपदमाह-

[भा.५१००] बिइयपदं आहारे, अद्धाणे हंसमादिणो उवही।

उवउज्जिऊण पुव्विं, होहिंति जुगप्पहाण त्ति॥

वृ- द्वितीयपदमाहारादिषु त्रिष्वपि अभिधीयते-तत्राऽऽहारेऽध्वानं प्रवेष्टुकामास्ततो वा उत्तीर्णा उपलक्षणत्वाद् अशिवादौ वा वर्तमाना असंस्तरणे अदत्तमपि भक्त-पानं गृह्णीयुः। आगाढे कारणे उपधिमपि हंसादेः सम्बन्धिना प्रयोगेणोत्पादयेत्। सचित्तविषयेऽपि-'भविष्यन्त्यमी युगप्रधानाः' इत्यादिकं पुष्टालम्बनं 'पूर्वं' प्रथममेव 'उपयुज्य' परिभाव्य गृहस्थक्षुल्लकान् अन्यतीर्थिकक्षुल्लकान् वा हरेत्॥ इदमेव भावयति-

[भा.५१०१] असिवं ओम विहं वा, पविसिउकामा ततो व उत्तिन्ना।

थलि लिंगि अन्नतित्थिग, जातितु अदिन्ने गिण्हंति॥

वृ- अशिवगृहीते विषये स्वयं वा साधवोऽशिवगृहीता भक्त-पानलाभाभावात्र संस्तरेयुः,

अवमंदुर्भिक्षं तत्र वा भक्त-पानं न लभेरन्, 'विहम्' अध्वानं वा प्रवेष्टुकामास्ततो वा उत्तीर्णा न संस्तरेयुः, ततः स्वलिङ्गिनां या स्थलिका-देवद्रोणी तस्यां याचन्ते, यदि ते न प्रयच्छन्ति तदा बलादपि गृह्णन्ति। अथ बलवन्तस्ते दारुणप्रकृतयो वा ततोऽन्यतीर्थिकानामपि स्थलीषु याच्यते, यदि न प्रयच्छन्ति ततः स्वयमेव प्रकटं प्रच्छन्नं वा गृह्णीयुः। एवं गृहस्थेष्वपि याचितमलभमानाः स्वयमपि गृह्णन्ति। असंस्तरणे उपधिरप्येवमेव स्तैन्यप्रयोगेण ग्रहीतव्यः॥

[भा.५१०२] नाऊण य वोच्छेदं, पुव्वगते कालियानुतोगे य।
गिहि अन्नतित्थियं वा, हरिज्ज एतेहि हेतूहिं॥

वृ-पूर्वगते कालिकानुयोगे वा व्यवच्छेदं ज्ञात्वा यो गृहस्थक्षुल्लकोऽन्यतीर्थिकक्षुल्लको वा ग्रहण-धारणामेधावी स याचितो यदा न लभ्यते तदा स्वयमपि गृह्णीयात्। 'एतैः' एवमादिभिः 'हेतुभिः' कारणैर्गृहस्थमन्यतीर्थिकं वा हरेत्॥ गतमन्यधार्मिकस्तैन्यम्। अथ 'हत्थादालं दलेमाणे'' इत्यादि पाठत्रयं विवरीषुराह-

[भा.५१०३] हत्थाताले हत्थालंबे, अत्थादाने य होति बोधव्वे।
एतेसिं नाणत्तं, वोच्छामि अहानुपुव्वीए॥

वृ-हस्तातालो हस्तालम्बोऽर्थादानं चेति त्रिधा पाठोऽत्र बोद्धव्यः। एतेषां त्रयाणामपि नानात्वं वक्ष्यामि यथाऽऽनुपूर्व्याऽहम्॥ तत्र हस्तातालं तावद् विवृणोति-

[भा.५१०४] उग्गिन्नम्मि य गुरुगो, दंडो पडियम्मि होइ भयणा उ।
एवं खु लोइयाणं, लोउत्तरियाण वोच्छामि॥

वृ-इह हस्तेन उपलक्षणत्वात् खड्गादिभिश्च यद् आताडनं स हस्तातालः। स च द्विधा-लौकिको लोकोत्तरिकश्च। तत्र लौकिके हस्तातालं पुरुषवधाय खड्गादावुद्गीर्णे 'गुरुकः' रूपकाणाम-शीतिसहस्रलक्षणो दण्डो भवति। पतिते तु प्रहारे यदि कथमपि न मृतस्तदा 'भजना' देशे देशेऽपरापरदण्डलक्षणा भवति। अथ मृतस्तदा तदेवाशीतिसहस्रं दण्डः। एवं 'खुः' अवधारणे, लौकिकानां दण्डो भवति। लोकोत्तरिकाणां तु दण्डमतः परं वक्ष्यामि॥

[भा.५१०५] हत्थेण व पादेण व, अणवट्ठप्पो उ होति उग्गिन्ने।
पडियम्मि होति भयणा, उद्दवणे होति चरिमपदं॥

वृ-हस्तेन वा पादेन वा उपलक्षणत्वाद् यष्टि-मुष्ट्यादिना वा यः साधुः स्वपक्षस्य परपक्षस्य वा प्रहारमुद्गिरति सोऽनवस्थाप्यो भवति। पतिते तु प्रहारे भजना, यदि न मृतस्ततोऽनवस्थाप्य एव, अथापद्राणः-मृतः तदा 'चरमपदं' पाराञ्चिकं भवति॥ अत्रेदं द्वितीयपदम्-

[भा.५१०६] आयरिय विनयगाहण कारणजाते व बोधिकादीसु।
करणं वा पडिमाए, तत्थ तु भेदो पसमणं च॥

वृ- आचार्य क्षुल्लकस्य विनयग्राहणं कुर्वन् हस्तातालमपि दद्यात्। 'कारणजाते वा' गुरुगच्छप्रभृतीनामात्यन्तिके विनाशे प्राप्ते बोधिकस्तेनादिष्वपि हस्तातालं प्रयुञ्जीत। पश्चार्द्धेन हस्तालम्बमाह-''करणं वा'' इत्यादि, अशिव-पुररोधादौ तत्प्रशमनार्थं 'प्रतिमां' पुत्तलकं करोति, तत अभिचारुकमन्त्रं परिजपन् 'तत्रैव' प्रतिमायां भेदं करोति, ततस्तस्योपद्रवस्य प्रशमनं भवति॥

एषा निर्युक्तिगाथा अत एनां विवृणोति-

[भा.५१०७] विनयस्स उ गाहणया, कन्नामोड-खड्डुगा-चवेडाहिं ।
सावेक्ख हत्थतालं, दलाति मम्माणि फेडिंतो ॥

वृ- इह विनयशब्दः शिक्षायामपि वर्तते, यत उक्तम्-"विनयः शिक्षा प्रणत्योः" इति । ततोऽयमर्थः-'विनयस्य' ग्रहणशिक्षाया आसेवनाशिक्षाया वा ग्राहणायां क्रियमाणायां कर्णामोटकेन खड्डुकाभिः चपेटाभिर्वा 'सापेक्षः' जीवितापेक्षां कुर्वन् अत एव 'मर्माणि स्फेटयन्' येषु प्रदेशेष्वाहतः सन् म्रियते तानि परिहरन् आचार्यं क्षुल्लकस्य हस्तातालं ददाति ॥ अत्र परः प्राह-ननु परस्य परितापे क्रियमाणेऽसातवेदनीयकर्मबन्धो भवति तत् कथमसायनुज्ञायते ? उच्यते-

[भा.५१०८] कामं परपरितावो, असायहेतू जिनेहि पन्नत्तो ।
आत-परहितकरो पुन, इच्छिज्जइ दुस्सले स खलु ॥

वृ- 'कामम्' अनुमतमिदमस्माकम्-परपरितापो जिनैरसातहेतुः प्रज्ञप्तः, परं 'सः' परपरितापः 'दुःशले' वाक्छिक्षया दुर्ग्राहे दुर्विनीते शिष्ये 'खलु' निश्चितमिष्यत एव । कुतः ? इत्याह-"आय-परहियकरो" त्ति हेतौ प्रथमा भावप्रधानश्च निर्देशः, ततोऽयमर्थ-आत्मनः परस्य च हितकरत्वात्। तत्राऽऽत्मनः शिष्यं शिक्षां ग्राहयतः कर्मनिर्जरालाभः, परस्य तु सम्यग्गृहीतशिक्षस्य यथावत् चरम-करणानुपालनादयो भूयांसो गुणाः । पुनःशब्दो विशेषणे, स चैतद् विशिनष्टि-यो दुष्टाध्यवसायतया परपरितापः क्रियते स एवासातहेतुः प्रज्ञप्तः, यस्तु शुद्धाध्यवसायेनाऽऽत्म-परहितकरः क्रियते स नैवासातहेतुरिति ॥ अमुमेवार्थं दृष्टान्तेन द्रढयति-

[भा.५१०९] सिप्पंनेउणियट्ठा, घाते वि सहंति लोइया गुरुणो ।
न य मधुरनिच्छया ते, न होंति एसेविहं उवमा ॥

वृ- "सिप्पं"ति मकारोऽलाक्षणिकः, शिल्पानि-रथकारकर्मप्रभृतीनि नैपुण्यानि च-चिलि-गणितादिकलाकौशलानि तदर्थं लौकिकाः शिक्षकाः 'गुरोः' आचार्यस्य घातानपि सहन्ते, न च 'ते' घातास्तदानीं दारुणा अपि 'मधुरनिश्चयाः' सुन्दरपरिणामा न भवन्ति, किन्तु शिल्पादिपरिज्ञाने वृत्तिलाभ-जनपूजनीयतादिनापरिणामस्तेषां सुन्दरो भवतीति भावः । एषैवोपमा 'इह' प्रस्तुतार्थे मन्तव्या, यथा तेषां ते घाता हितास्तथा प्रस्तुतस्यापि दुर्विनीतस्य शिष्यस्येति भावः । अत्रायं बृहद्भाष्योक्तः सोपनयोऽपरो दृष्टान्तः-

अहवा वि रोगियस्सा, ओसह चाडूहि पिज्जए पुव्विं ।
पच्छा तालेतुमवी, देहहियट्ठाए दिज्जइ से ॥
इह भवरोगत्तस्स वि, अनुकूलेणं तु सारणा पुव्विं ।
पच्छा पडिकूलेन वि, परलोहियट्ठ कायव्वा ॥

"ओसह"त्ति विभक्तिलोपादौषधमिति मन्तव्यम् ॥ अत एव साधुरेवंविधो भवेत्-

[भा.५११०] संविग्गो मद्दविओ, अमुई अनुयत्तओ विसेसन्नू ।
उज्जुत्तमपरितंतो, इच्छियमत्थं लहइ साहू ॥

वृ- 'संविग्नः' मोक्षाभिलाषी, 'मार्दविकः' स्तब्धताविकलः, 'अमोचि' गुरूणाममोचनशीलः, 'अनुवर्तकः' तेषामेव छन्दोऽनुवर्ती, 'विशेषज्ञः' वस्त्ववस्तुविभागवेदी, उद्युक्तः स्वाध्यायादौ, अपरितान्तो वैयावृत्यादौ, एवंविधः साधुरीप्सितमर्थमिह परत्र च लभते ॥

अथ ''कारणजाते व बोहिगाईसु'' त्ति पदं व्याचष्टे-

[भा.५१११] बोहिकतेनमयादिसुं, गणस्स गणिणो व अच्चए पत्ते ।
इच्छंति हत्थतालं, कालातिचरं व सज्जं वा ॥

वृ- बोधिकस्तेनभये आदिशब्दात् श्वापदादिभयेषु वा यदि 'गणिस्य' गच्छस्य 'गणिनो वा' आचार्यस्य 'अत्ययः' आत्यन्तिको विनाशः प्राप्तस्तदा 'कालातिचरं वा' कालातिक्रमेण 'सद्यो वा' तत्कालमेव हस्ततालमिच्छन्ति, गीतार्था इति गम्यते ॥ अथ हस्तालम्बं व्याख्यानयति-

[भा.५११२] असिवे पुरोवरोधे, एमादीवइससेसु अभिभूता ।
संजायपच्चया खलु, अन्नेसु य एवमादीसु ॥

वृ- अशिवेन लोको भूयान् म्रियते, परबलेन वा पुरं समन्तादुपरुद्धम्, तत्र बहिकटकयोधैः आभ्यन्तराणां कटकमर्द क्रियते, अन्नक्षयाद्वा क्षुधा म्रियते, आदिशब्दाद् गलगण्डादिभिर्वा रोगैर्दिने दिने प्रभूतो जनो मरणमश्नुते, एवमादिभिः 'वैशसैः' दुःखैरभिभूतास्ते पौरजनाः सञ्जातप्रत्ययाः' 'योऽत्र पुरे आचार्यो बहुश्रुतो गुणवांस्तपस्वी स शक्तो वैशसमिदं निरोद्धुम्, नान्यः कश्चिद्' इति समिति-सम्यग् जातः प्रत्ययो येषां ते तथा, न केवलमत्रैव किन्तु अन्येष्वप्येवमादिषु सञ्जातप्रत्ययास्ते सम्भूय तमाचार्यं 'त्रायस्व' इति शरणमुपगताः प्राञ्जलिपुटाः पादपतितास्तिष्ठन्ति॥

[भा.५११३] मरणभएणऽभिभूते, ते नातुं देवतं वुवासंते ।
पडिमं काउं मज्झे, विंधति मंते परिवजवेंतो ॥

वृ- ततः स आचार्यस्तान् पौरजनान् मरणभयेनाभिभूतान् देवतामिवाऽऽत्मानं पर्युपासीनान् ज्ञात्वा तदनुकम्पापरीतचित्तः प्रतिमां कृत्वा तत अभिचारुकमन्त्रान् परिजपन् तां प्रतिमां मध्यमागे विध्यति, ततो नष्टा सा कुलदेवता, प्रशमितः सर्वोऽप्युपद्रवः । एवंविधहस्तालम्बदायी यदाऽभ्युत्तिष्ठते तदा तत्कालमेव नोपस्थाप्यते किन्तु कियन्तमपि कालं गच्छ एव वसन् व्यामर्दनं कार्यते ॥ अथाऽर्थादानमाह-

[भा.५११४] अनुकंपणा निमित्ते, जायण पडिसेहणा सउनिमेव ।
दायण पुच्छा य तहा, सारण उब्भावण विनासे ॥

वृ- कस्याप्याचार्यस्य भागिनेयो व्रतं परित्यज्य मुत्कलापयति, तत आचार्यस्य 'अनुकम्पा' 'कथमयं द्रव्यमन्तरेण गृहवासमध्यासिष्यते ?' इत्येवंलक्षणा बभूव । स च 'निमित्ते अतीव कुशलः' इति कृतवा तेनैवावर्जितयोर्द्वयोर्वणिजोरन्तिके तं भागिनेयं रूपकयाचनाय प्रेषितवान्। स च तत्रैकेन वणिजा 'किं मम शकुनिका रूपकान् हदते ?' एवमुक्त्वा प्रतिषिद्धः, द्वितीयेन तु रूपकनवलकानां दर्शना कृता। द्वितीये च वर्षे द्वाभ्यामपि वणिग्भ्यां पृच्छा कृता। तत आचार्येण 'सारणा' क्रयाणकग्रहणविषया शिक्षा दत्ता । ततो येन रूपका न दत्तास्तस्य सर्वस्वविनाशः समजनि, येन तु दत्तास्तस्य 'उद्भावनं' महर्द्धिकतासम्पादनं कृतवान् । एष निर्युक्तिगाथाक्षरार्थः। भावार्थस्तु कथानकादवसेयः । तच्चेदम्-

उज्जेनीए एगो ओसन्नायरिओ नेमित्तितो । तस्स य दुन्नि मित्ता वाणियगा, ते तं आपुच्छिउं आपुच्छिउं ववहरंति-किं भंडं गिण्हामो मुयामो वा ? । एवं ते इस्सरीभूया । तस्स य आयरियस्स भागिनेज्जो भोगाभिलासी आगम्म तं आयरियं तं आयरियं केवइए मग्गति ताहे आयरियेणं

खुड्डएण समंतेसिं दोण्हं पि मित्ताणं सगासं पेसवितो-रूवगसहस्सं देहि। तेन गंतुं आयरियवयणेणं मग्गितो-देहि। भणइ-किं मम सउणी रूवगा हगंति ? नत्थि मम एत्तिया, वीसमेत्ते देमि। तेन नेच्छियं, आयरियस्स य निवेदियं। ताहे आयरिएण बितियमित्तस्स सगासं पेसवितो, मग्गितो य आरयिवयणेणं। तेन चंगोडए काउं बहू नवलया दंसिया- एत्तो जावतिएहिं भे रूवएहिं इच्छा तावति गिण्हह। तेहिं आगंतुं आयरियस्स उवनीतो नउलगो; ताहे भाइणिज्जस्स दिन्नो। बितियवरिसे ते वणियगा दो वि आयरियं पुच्छंति-एसमंवरिसे केरिसं भंडं गेण्हामो ? । आयरिएहिं सउनिवाइत्तो भणितो-जत्तितो ते घरसारो तेन कप्पास-घय-गुले घेत्तुं अंतोघरे संगोवेह। बितिओ अप्पसारियं भणितो-तुमं सुबहुं तण-कट्ठ-वंसे धन्नं च घेत्तुं बाहिं नगरस्स निरग्गेयट्ठाणे संगोवाहि। तदा य अनवुट्ठी जाया, अह अग्गी उट्ठितो, सव्वं नगरं दड्ढं। सउनीइत्तस्स सव्वं कप्पासाति दड्ढं, बितियस्स न दड्ढं, ताहे तेन तं तण-कट्ठं धन्नं च सुमहग्घं विक्किये, अगाणं सयसहस्साणं आभागी जातो। तओ सउनियाइत्तो आयरियं भणति-किह भे निमित्तं विसंवतियं ? । आयरिएणं भणियं-किं मम निमित्तं सउणया हगइ ? । तओ पायपडिएणं खामिओ। ॥ अमुमेवार्थं गाथात्रयेण भाष्यकार आह-

[भा.५११५] उज्जेनी ओसन्नं, दो वणिया पुच्छियं ववहरंति।
भोगाभिलास भद्दय, मुंचंति न रूवए सउनी।

[भा.५११६] चंगोड नलदायण, बितितेनं जलिए तहिं एक्को।
अन्नम्मि हायणम्मि य, गिण्हामो किं ति पुच्छंति॥

[भा.५११७] तण-कट्ठ-नेह-धन्ने, गिण्हह कप्पास-दूस-गुलमादी।
अंतो बहिं च ठवणा, अग्गी सउणी न य निमित्तं॥

वृ- तिस्रोऽपि व्याख्यातार्थाः। नवरं भद्रको भागिनेय उच्यते। "जत्तिय तहिं एक्को" त्ति 'यावन्तो युष्मभ्यं रोचन्ते तावतो नवलकान् गृह्णीत' एवं द्वितीयेन वणिजा भणितम् 'तत्र' तेषां मध्ये एको नवलको गृहीतः। अन्यस्मिन् 'हायने' वर्षे इत्यर्थः। 'दूष्यं' वस्त्रमुच्यते। "सउनी न य निमित्तं" ति 'न च' नैव मम शकुनिका निमित्तं हदते॥

[भा.५११८] एयारिसो उ पुरिसो, अनवट्ठप्पो उ सो सदेसम्मि।
नेतूण अन्नदेसं, चिट्ठउवट्ठावणा तस्स॥

वृ- 'एतादृशः' अर्थादानकारी यः पुरुषोऽभ्युत्तिष्ठते स स्वदेशे 'अनवस्थाप्यः' न महाव्रतेषु स्थाप्यते किन्तु तमन्यदेशं नीत्वा तस्य च तत्र तिष्ठत उपस्थापना कर्तव्या॥

कुतः ? इति चेद् उच्यते-

[भा.५११९] पुव्वब्भासा भासेज्ज किंचि गोरव सिनेह भयतो वा।
न सहइ परीसहं पि य, नाणे कंडुं व कच्छुल्लो॥

वृ- तं नैमित्तिकं तत्रस्थितं लोकः पूर्वाभ्यासाद् निमित्तं पृच्छेत्, सोऽपि ऋद्धिगौरवतः स्नेहाद्वा भयाद्वा 'किञ्चिद्' लाभा-ऽलादिकं तत्रस्थितो भाषेत। अपि च-स ज्ञानविषयं परीषहं तत्र न सहते, सोढुं न शक्नोतीत्यर्थः। यथा कच्छुः-पामा तद्वान् पुरुषः 'कण्डूं' खर्जितं विना स्थातुं न शक्नोति एवमेषोऽपि तत्र निमित्तकथनमन्तरेण न स्थातुं शक्त इति भावः॥

अथ पूर्वोक्तमप्यर्थं विशेषज्ञापनार्थं भूयोऽप्याह-

[भा.५१२०] लइयस्स दोन्नि मोत्तुं, दव्वे भावे य सेस भयणा उ।
पडिसिद्ध लिंगकरणं, कारणे अन्नत्थ तत्थेव॥

वृ-इह "साधम्मियेतणियं करेमाणे" इत्यादिसूत्रक्रमप्रामाण्येन हत्थायालस्तृतीय उच्यते, स त्रिधा-हस्तातालो हस्तालम्बोऽर्थादानं चेति। तत्राऽऽद्ये द्वे पदे मुक्त्वा यत् शेषम्-अर्थादानाख्यं तृतीयं पदं तत्र द्रव्यतो भावतश्च लिङ्गप्रदाने भजना भवति। कथम्? इत्याह-"पडिसिद्ध" इत्यादि, उत्तरत्र "कारणे" इत्यभिधास्यमानत्वाद् इह निष्कारणमिति गम्यते, ततो निष्कारणे प्रतिषिद्धमर्थादानकारिणो 'लिङ्गकरणं' द्रव्यलिङ्गस्य भावलिङ्गस्य वा तत्र क्षेत्रे प्रदानम्। 'कारणे तु' भक्तप्रत्याख्यानप्रतिपत्तिलक्षणेऽन्यत्र वा तत्र वाऽनुज्ञातमेव॥

एषा पुरातना गाथा, अत एनां विवरीषुराह-

[भा.५१२१] हत्थातालो ततिओ, तस्स उ दो आइमे पदे मोत्तुं।
अत्थायाणे लिंगं, न दिंति तत्थेव विसयम्मि॥

वृ- हस्तातालः सूत्रक्रमप्रामाण्येन तृतीयः, तस्य द्वे आदिमे हस्ताताल-हस्तालम्बलक्षणे पदे मुक्त्वा यद् अर्थादानाख्यं पदं तत् वर्तमानस्य तत्रैव 'विषये' देशे लिङ्गं न ददति॥

स च अर्थादानकारी गृहिलिङ्गीवा स्यादवसन्नलिङ्गी वा। तत्र-

[भा.५१२२] गिहिलिंगस्स उ दोन्नि वि, ओसन्ने न दिंति भावलिंगं तु।
दिज्जंति दो वि लिंगा, उवट्ठिए उत्तिमट्ठस्स॥

वृ-यो गृहिलिङ्गी प्रव्रज्यार्थमभ्युत्तिष्ठते तस्य 'द्वे अपि' द्रव्य-भावलिङ्गे तस्मिन् देशे न दीयेते। यः पुनरवसन्नस्तस्य द्रव्यलिङ्गं विद्यत एव परं भावलिङ्गं तस्य तत्रैव न ददति। यदा पुनरसावुत्तमार्थप्रतिपत्त्यर्थमुपतिष्ठते तदा तस्मिन्नपि देशे द्वयोरपि गृहस्था-ऽवसन्नयोर्द्वे अपि लिङ्गे दीयेते॥ अथचेदं कारणम्-

[भा.५१२३] ओमा-ऽसिवमाईहि व, तप्पिस्सति तेन तस्स तत्थेव।
न य असहाओ मुच्चइ, पुट्ठो य भणिज्ज वीसरियं॥

वृ-अवमा-ऽशिव-राजद्विष्टादिषु वा समुपस्थितेषु गच्छस्य 'प्रतितर्पिष्यति' उपग्रहं करिष्यति तेन कारणेन तत्रैव क्षेत्रे तस्य लिङ्गं प्रयच्छन्ति। तत्र चेयं यतना-"न य असहाओ" इत्यादि, स तत्रारोपितमहाव्रतः सन् 'असहायः' एकाकी न मुच्यते, लोकेन च निमित्तं पृष्टो भणति-विस्मृतं मम साम्प्रतं तद् निमित्तमिति॥ अथ साधर्मिकादिस्तैन्येषु प्रायश्चित्तमुपदर्शयति-

[भा.५१२४] साहम्मिय-ऽन्नधम्मियतेन्नेसु उ तत्थ होतिमा भयणा।
लहुगो लहुगा गुरुगा, अणवट्ठप्पो व आएसा॥

वृ- साधर्मिकस्तैन्या-ऽन्यधार्मिकस्तैन्ययोस्तत्र तावदियं 'भजना' प्रायश्चित्तरचना भवति-आहारं स्तेनयतो लघुमासः, उपधिं स्तेनयतश्चतुर्लघु, सचित्तं स्तेनयतश्चतुर्गुरवः। आदेशेन वाऽनवस्थाप्यम्॥

[भा.५१२५] अहवा अनुवज्झाओ, एएसु पएसु पावती तिविहं।
तेसुं चेव पएसुं, गणि-आयरियाण नवमं तु॥

वृ- अथवा 'अनुपाध्यायः' य उपाध्यायो न भवति किन्तु सामान्यभिक्षु सः 'एतेषु पदेषु'

आहारोपधि-सचित्तस्तैन्यरूपेषु यथाक्रमं 'त्रिविधं' लघुमास-चतुर्लघु-चतुर्गुरुलक्षणं प्रायश्चित्तं प्राप्नोति । 'एतेष्वेव च' आहारादिषु पदेषु गणिनः-उपाध्यायस्याऽऽचार्यस्य च 'नवमम्' अनवस्थाप्यं भवति ॥ अत्र परः प्राह-ननु सूत्रे सामान्येनानवस्थाप्य एव भणितः न पुनर्लघुमासादिकं त्रिविधं प्रायश्चित्तम् तत् कथमिदमर्थेनाभिधीयते ? उच्यते-आर्हतानामेकान्तवादः क्वापि न भवति । तथा चाह-

[भा.५१२६] तुल्लम्मि वि अवराहे, तुल्लमतुल्लं व दिज्जए दोण्हं ।
पारंचिके वि नवमं, गणिस्स गुरुणो उ तं चेव ॥

वृ- तुल्यः-सदृशोऽपराधः द्वाभ्यामपि-आचार्योपाध्यायाभ्यां सेवितस्तत्र द्वयोरपि तुल्यमतुल्यं वा प्रायश्चित्तं दीयते । तत्र तुल्यदानं प्रतीतमेव, अतुल्यदानं पुनरिदम्-'पाराञ्चिकेऽपि' दीयते न पाराञ्चिकम्, 'गुरोः' आचार्यस्य पुनः 'तदेव' पाराञ्चिकं दीयते । ततो यद्यपि सूत्रे सामान्येनाऽनवस्थाप्यमुक्तं तथापि तत् पुरुषविशेषापेक्षं प्रतिपत्तव्यम्, यद्वाऽभीक्ष्णसेवानिष्पन्नम् ॥

तथा चाह-

[भा.५१२७] अहवा अभिक्खसेवी, अनुवरमं पावई गणी नवमं ।
पावंति मूलमेव उ, अभिक्खपडिसेविणो सेसा ॥

वृ- अथवा साधर्मिकस्तैन्यादेः 'अभीक्ष्णसेवी' पुनः पुनः प्रतिसेवां यः करोति स ततः स्थानाद् 'अनुपरमन्' अनिवर्त्तमानः 'गणी' उपाध्यायो नवमं प्राप्नोति । 'शेषास्तु' ये उपाध्यायत्वमाचार्यत्वं वा न प्राप्तास्तेऽभीक्ष्णप्रतिसेविनोऽपि मूलमेव प्राप्नुवन्ति नानवस्थाप्यम् ॥

[भा.५१२८] अत्थादानो ततिओ, अणवट्ठो खेत्तओ समक्खाओ ।
गच्छे चेव वसंता, निज्जूहिज्जंति सेसा उ ॥

वृ- अष्टाङ्गनिमित्तप्रयोगेण अर्थं-द्रव्यमादत्ते इति अर्थादानः, ततोऽर्थादानाख्यो यस्तृतीयोऽनवस्थाप्यः स क्षेत्रतः समाख्यातः, तत्र क्षेत्रे नोपस्थाप्यत इत्यर्थः । 'शेषास्तु' हस्तातालकारिप्रभृतयो गच्छ एव वसन्तो निर्यूह्यन्ते, आलापनादिभि पदैः बहिः क्रियन्ते इत्यर्थः । अथ कीदृशगुणयुक्तस्यानवस्थाप्यं दीयते ? इत्याह-

[भा.५१२९] संघयण-विरिय-आगम-सुत्तत्थविहीय जो समग्गो तु ।
तवसी निग्गहजुत्तो, पवयणसारे अभिगयत्थो ।

[भा.५१३०] तिलतुसतिभागमेत्तो, वि जस्स असुभो न विज्जती भावो ।
निज्जूहणाए अरिहो, सेसे निज्जूहणा नत्थि ॥

[भा.५१३१] एयगुणसंपउत्तो, अणवट्ठप्पो य होति नायव्वो ।
एयगुणविप्पमुक्के, तारिसम्मी भवे मूलं ॥

[भा.५१३२] आसायणा जहन्ने, छम्मासुक्कोस बारस उ मासा ।
वासं बारस वासे, पडिसेवओ कारणे भइओ ॥

[भा.५१३३] इत्तिरियं निक्खेवं, काउं चऽन्नं गणं गमित्ताणं ।
दव्वाइ सुद्धे वियडण, निरुवसग्गट्ठ उस्सग्गो ॥

[भा.५१३४] अप्पच्छय निच्छयया, आणाभंगो अजंतणा सगणे ।

परगणे न होंति एए, आणाथिरया भयं चेव ॥

वृ- गाथाषट्कं यथा पाराञ्चिके व्याख्यातं तथैव मन्तव्यम् । नवरं "दव्वाइ सुभे वियडण"त्ति द्रव्य-क्षेत्र-काल-भावेषु 'शुभेषु' प्रशस्तेषु; द्रव्यतो वटव-क्षादौ क्षीरवृक्षे, क्षेत्रत इक्षुक्षेत्रादौ, कालतः पूर्वाह्णे, भावतः प्रशस्तेषु चन्द्र-तारादिबलेषु; गुरूणां 'विकटनाम्' आलोचनां ददाति । तत आचार्या भणन्ति-"एयस्स साहुस्स अणवट्ठप्पतवस्स निरुवसग्गनिमित्तं ठामि काउस्सग्गं अन्नत्थूससिएणं इत्यादि वोसिरामि" इति यावत् चतुर्विंशतिस्तवमुच्चार्याऽऽचार्या भणन्ति-एष तपः प्रतिपद्यते ततो न भवद्भिः सार्धमालापादिकं विधास्यति, यूयमप्येतेन सार्धमालापादिकं परिहरध्वमिति। एवं तपः प्रतिपद्य यदसौ विदधाति तद् उपदर्शयति-

[भा.५१३५] सेहाई वंदंतो, पग्गहियमहातवो जिनो चेव ।
विहरइ बारस वासे, अणवट्ठप्पो गणे चेव ॥

वृ- शैक्षादीनपि वन्दमानः 'जिन इव' जिनकल्पिक इव च प्रगृहीतमहातपाः, 'पारणके निर्लेपं भक्त-पानं ग्रहीतव्यम्' इत्याद्यनेकाभिग्रहयुक्तं चतुर्थ-षष्ठादिकं विपुलं परिहारतपः कुर्वन्निति भावः । एवंविधोऽनवस्थाप्यः 'गण एव' गच्छान्तर्गत एवोत्कर्षतो द्वादश वर्षाणि विहरति ॥

इदमेव भावयति-

[भा.५१३६] अणवट्ठं वहमाणो, वंदइ सो सेहमादिणो सव्वे ।
संवासो से कप्पइ सेसा उ पया न कप्पंति ॥

वृ- परगणेऽनवस्थाप्यं वहमानः 'सः' उपाध्यायादि शैक्षादीनपि सर्वान् साधून् वन्दते । तस्य च गच्छेन सार्धमेकत्रोपाश्रये एकस्मिन् पार्श्वे शेषसाधुजनापरिभोग्ये प्रदेशे संवासः कर्तुं कल्पते। शेषाणि तु पदानि न कल्पन्ते ॥ कानि पुनस्तानि ? इत्याह-

[भा.५१३७] आलावण पडिपुच्छन, परियट्टुट्ठाण वंदनग मत्ते ।
पडिलेहण संघाडग, भत्तदान संभुंजणा चेव ॥

वृ- आलपनं स साधुभिः सह न करोति तेऽपि तं नाऽऽलपन्ति । सूत्रार्थयोः शरीरोदन्तस्य वा प्रतिप्रच्छनं स तेषां न करोति तेऽपि तस्य न कुर्वन्ति । एवं 'परिवर्तनम्' एकतो गुणनम् 'उत्थानम्' अभ्युत्थानं ते अपि न कुर्वन्ति । वन्दनकं तु सर्वेषामपि स करोति तस्य पुनः साधवो न कुर्वन्ति । "मत्ते"त्ति खेलमात्रादिप्रत्यर्पणं तस्य न क्रियते सोऽपि तेषां न करोति । उपकरणं परस्परं न प्रत्युपेक्षन्ते । सङ्घाटकेन परस्परं न भवन्ति । भक्तदानमन्योऽन्यं न कुर्वन्ति । एकत्र मण्डल्यां न सम्भुञ्जते । यच्चाऽन्यत् किञ्चित् करणीयं तत् तेन सार्धं न कुर्वन्ति ॥ "संघो न लभइ कज्जं-" इत्यादिगाथाः पाराञ्चिकवद् द्रष्टव्याः ॥

**मू. *(११४) तो नो कप्पंति पव्वावितए, तं जहा-पंडए वाईए कीवे ॥***

**वृ-** अस्य सम्बन्धमाह-

[भा.५१३८] न ठविज्जई वएसुं, सज्जं एएण होति अणवट्ठो ।
दुविहम्मि वि न ठविज्जइ, लिंगे अयमन्न जोगो उ ॥

वृ- येन तद्दोषोपरतोऽपि 'सद्यः' तत्क्षणादेवानाचरिततपोविशेषो भावलिङ्गरूपेषु महाव्रतेषु न स्थाप्यते एतेन कारणेनानवस्थाप्य इत्युच्यते, स चानन्तरसूत्रे भणितः । अयं पुनः 'अन्यः'

पण्डकादिर्द्विविधेऽपि द्रव्य-भावलिङ्गे यो न स्थाप्यते स प्रतिपाद्यते । एष 'योगः' सम्बन्धः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-त्रयो नो कल्पन्ते प्रव्राजयितुम् । तद्यथा- 'पण्डकः' नपुंसकः । 'वातिको नाम' यदा स्वनिमित्ततोऽन्यथा वा मेहनं काषायितं भवति तदा न शक्नोति वेदं धारयितुं यावन्न प्रतिसेवा कृता । 'क्लीबः' असमर्थः, स च धर्षितक्लीबादिलक्षणः । एष सूत्रार्थः । अथ भाष्यविस्तरः-

[भा.५१३९] वीसं तु अपव्वज्जा, निज्जुत्तीए उ वत्रिया पुव्विं ।
इह पुन तिहि अधिकारो, पंडे कीवे य वाईया ॥

वृ- 'विंशतिः' बाल-वृद्धादिभेदाद् विंशतिसङ्ख्याः अप्रव्राज्याः 'पूर्वं' नामनिष्पन्ने निक्षेपे 'निर्युक्तौ' पञ्चकल्पे सप्रपञ्चं वर्णिताः । इह पुनस्त्रिभिरेवाधिकारः-पण्डकेन क्लीबेन वातिकेन चेति, गुरुतरदोषदुष्टा अमी इति कृत्वा ॥ अथ प्रव्राजनाविधिमेव तावदाह-

[भा.५१४०] गीयत्थे पव्वावण, गीयत्थे अपुच्छिऊण चउगुरुगा ।
तम्हा गीयत्थस्स उ, कप्पइ पव्वावणा पुच्छा ॥

वृ- गीतार्थेनैव प्रव्रजना कर्तव्या नागीतार्थेन यद्यगीतार्थ प्रव्राजयति तदा चतुर्गुरुकम् । गीतार्थोऽपि यदि 'अपृष्ट्वा' पृच्छामन्तरेण प्रव्राजयति तथा तस्यापि चतुर्गुरुकाः । तस्माद् गीतार्थेन पृच्छाशुद्धं कृत्वा प्रव्रजना कर्तुं कल्पते । पृच्छाविधिश्चायतम्-कोऽसि त्वम् ? को वा ते निर्वेदो येन प्रव्रजसि ? ॥ एवं पृष्टे सति-

[भा.५१४१] सयमेव कोति साहति, मित्तेहि व पुच्छिओ उवाएणं ।
अहवा वि लक्खणेहिं, इमेहि नाउं परिहरेज्जा ॥

वृ-स्वयमेव 'कोऽपि' पण्डकः कथयति, यथा-सदृशे मनुष्यत्वे ममेदृशः त्रैराशिकवेदः समुदीर्ण इति । यद्वा मित्रैस्तस्य निर्वेदकारणमभिधीयेत । प्रव्राजकेन वा स एवोपायपूर्वं पृष्टः कथयेत् । अथवा 'लक्षणैः' महिलास्वभावादिभि 'एभि' वक्ष्यमाणैर्ज्ञात्वा तं परिहरेत् ॥

तत्र पृच्छां तावद् भावयति-

[भा.५१४२] नज्जंतमनज्जंते, निव्वेयमसड्ढे पढमयो पुच्छे ।
अन्नाओ पुन मन्नइ, पंडाइ न कप्पई अम्हं ॥

वृ- यः प्रव्रजितुमुपस्थितः स ज्ञायमानो वा स्यादज्ञायमानो वा । ज्ञायमानो नाम-अमुकोऽमुकपुत्रोऽयम्, तद्विपरीतोऽज्ञायमानः । तत्र यो ज्ञायमानः स यदि श्राद्धः-श्रावको न भवति ततः प्रथमतस्तं निर्वेदं पृच्छेत् । यः पुनरज्ञातः स समासेन भण्यते-न कल्पतेऽस्माकं पण्डकादि प्रव्राजयितुम् ॥ स च यदि पण्डकस्तत एवं चिन्तयति-

[भा.५१४३] नाओ मि त्ति पणासइ, निव्वेयं पुच्छिया व से मित्ता ।
साहंति एस पंडो, सयं व पंडो त्ति निव्वेयं ॥

वृ-ज्ञातोऽस्म्यमीभिरिति मत्वा प्रणश्यति । अथवा यानि "से" तस्य मित्राणि तानि पृच्छ्यन्ते-एष तरुण ईश्वरो नीरोगश्च विद्यते ततः केन निर्वेदेन प्रव्रजति ? । एवं पृष्टानि तानि ब्रुवते-एष पण्डक इति । स्वयं वा सः 'पण्डकोऽस्म्यहम्' इति निर्वेदं कथयति ॥ अथ पूर्वोद्दिष्टानि पण्डकलक्षणानि निरूपयति-

[भा.५१४४] महिलासहावो सर-वन्नभेओ, मेण्ढं महंतं मउता य वाया।
ससद्दगं मुत्तमफेणगं च, एयाणि च प्पंडगलक्खणाणि ॥

वृ- पण्डको वक्ष्यमाणनीत्या महिलास्वभावो भवति। स्वर-वर्णभेदश्च तस्य भवति। स्वरभेदो नाम-पुरुषस्य स्त्रियाश्च स्वराद् विलक्षणस्तस्य स्वरो भवति। वर्णग्रहणेन गन्ध-रस-स्पर्शा अपि गृह्यन्ते, ततो वर्णभेदो नाम-वर्णादयः तस्य स्त्र-पुरुषविलक्षणा अन्यादृशा भवन्ति। 'मेढम्' अङ्गादानं तच्च 'महत्' प्रलम्बं भवति। वाक् च 'मृदुका' कोमला भवति। मूत्रं सशब्दमफेनकं च भवति। एतानि षट् पण्डकलक्षणानि मन्तव्यानि॥ 'महिलास्वभावः' इति पदं व्याचष्टे-

[भा.५१४५] गती भवे पच्चवलोइयं च, मिदुत्तया सीयलगत्तया य।
धुवं भवे दोक्खरनामधेज्जो, सकारपच्चंतरिओ ढकारो॥

वृ- गति स्त्रीवद् मन्दा सविभ्रमा च भवति। पार्श्वतः पृष्ठतश्च प्रत्यवलोकितं कुर्वन् गच्छति। शरीरस्य च त्वग् मृद्वी भवति। 'शीतलगात्रता च' अङ्गोपाङ्गानां शीतलः स्पर्शो भवति। एतानि स्त्रिया इव लक्षणानि दृष्ट्वा मन्तव्यम्-'ध्रुवं' निश्चितमयं व्यक्षरनामधेयो भवेत्। तच्चाक्षरद्वयं सकारप्रत्यन्तरितो ढकार इति प्रतिपत्तव्यम्, प्राकृतशैल्या 'संढः' संस्कृते तु 'षण्ढः' इति भावः।

किञ्च-

[भा.५१४६] गइ भास वत्थ हत्थे, कडि पट्ठि भुमा य केसऽलंकारे।
पच्छन्न मज्जणाणि य, पच्छन्नयरं च नीहारो॥

वृ- "गइ"त्ति यथा स्त्री तथा शनैः सविकारं गच्छति। स्त्रीवद् भाषां भाषते। तथा वस्त्र यथा स्त्री तथा परिधत्ते, शिरो वा वस्त्रेण स्थगयति। "हत्थे"त्ति हस्तौ कूर्पराधो विन्यस्य कपोलयोर्वा निवेश्य जल्पति। अभीक्ष्णं च कटीभङ्गं करोति, पृष्ठं वा वस्त्रण सुस्थगितं करोत। भाषमाणश्च सविभ्रमं भ्रुयुगलमुत्क्षिपति, भ्रू-रोमाणि वास्त्रसदृशानि। स्त्रवत् केशानामोटयति। महिलाना-मलङ्कारान् पिनह्यति। प्रच्छन्ने च प्रदेशे 'मज्जनानि' स्नानादीनि करोति। प्रच्छन्नतरं च 'नीहारः' उच्चार-प्रश्रवणात्मकस्तेन क्रियते॥

[भा.५१४७] पुरिसेसुभीरु महिलासु संकरो पमयकम्मकरणो य।
तिविहम्मि वि वेदम्मि, तियभंगो होइ कायव्वो॥

वृ- 'पुरुषेषु' पुरुषमध्ये 'भीरु' सभयः शङ्कमान आस्ते। महिलासु 'सङ्करः' सम्मिलनशीलो निशङ्को निर्भयस्तिष्ठति। प्रमदाः-स्त्रियः तासां यत् कर्म-ण्डन-दलन-पचन-परिवेषणोदकाहरण-प्रमार्जनादिकं तत् स्वयमेव करोतिति प्रमदाकर्मकरणः, कृत् "बहुलम्" इति वचनात् कर्तरि अनट्प्रत्ययः। एवमादिकं बाह्यलक्षणं पण्डकस्य मन्तव्यम्। आभ्यन्तरं तु लक्षणं तस्य तृतीयवेदो-दयः। स च नपुंसकवेदस्त्रिविधेऽपि वेदे भवति, यत आह-त्रिविधेऽपि वेदे प्रत्येकं त्रिकभङ्गः कर्तव्यो भवति। कथम्? इति चेद् उच्यते- पुरुषः पुरुषवेदं वेदयति, पुरुषः स्त्रीवेदं वेदयति, पुरुषो नपुंसकवेदं वेदयति, एवं स्त्री-नपुंसकयोरपि वेदत्रयोदयो मन्तव्यः॥

आह यद्येवं ततो यदुच्यते 'स्त्र-पुरुष-नपुंसकवेदा यथाक्रमं फुम्फका-दवाग्नि-महानगर-दाहसमानाः' तदेतद् व्या-हन्यते? अत्रोच्यते-

[भा.५१४८] उस्सग्गलक्खणं खलु, फुंफग तह वनदवे नगरदाहे।

अववादतो उ भइओ, एक्केको दोसु ठाणेसु ॥

वृ- इह विवक्षितस्य वस्तुनः कारणनिरपेक्षं सामान्यस्वरूपमुत्सर्ग उच्यते, ततस्त्रयाणामपि वेदानामिदमुत्सर्गलक्षणमेव मन्तव्यम् । यथा-स्त्रीवेदः फुम्फकाग्निसमानः, पुरुषवेदो वनदवाग्निसमानः, नपुंसकवेदो महानगरदाहसमान इति । अपवदतस्तु त्रिविधोऽपि वेदः 'भक्तः' विकल्पितः । कथम् ? इत्याह-एकैको वेद आत्मगतं मुक्त्वा द्वयोरपि इतरयोः स्थानयोर्वर्तते । यथा-स्त्री स्त्रीवेदसमाना वा पुरुषवेदसमाना वा नपुंसकवेदसमाना वा भवेत्, एवं पुरुष-नपुंसकयोरपि वक्तव्यम् ॥ अथ प्रकारान्तरेण पण्डकलक्षणमाह-

[भा.५१४९] दुविहो उ पंडओ खलु, दूसी-उवघायपंडओ चेव ।
उवघाए वि य दुविहो, वेए य तहेव उवकरणे ॥

वृ- द्विविधः खलु पण्डकः, तद्यथा-दूषितपण्डक उपघातपण्डकश्च । दूषितपण्डको द्विविधः-आसिक्त उपसिक्तश्च । एतच्च भेदद्वयमर्थाद् व्याख्यातम् । उपघातपण्डकोऽपि द्विविधः-वेदोपघाते उपकरणोपघाते च ॥ तत्र दूषितपण्डकं तावद् व्याख्यानयति-

[भा.५१५०] दूसियवेओ दूसिय, दोसु व वेएसु सज्जए दूसी ।
दूसेति सेसए व, दोहि व सेविज्जए दूसी ॥

वृ- दूषितो वेदो यस्य स दूषितवेदः, एष दूषित उच्यते । 'द्वयोर्वा' नपुंसक-पुरुषवेदयोः अथवा नपुंसक-स्त्रीवेदयोर्यः 'सजति' प्रसङ्गं करोति स प्राकृतशैल्या दूसी भण्यते । यो वा 'शेषौ' स्त्री-पुरुषवेदौ 'दूषयति' निन्दति स दूषी । 'द्वाभ्यां वा' आस्यक-पोसकाभ्यां यः सेव्यते सेवते व स दूषी ॥ अस्यैव भेदानाह-

[भा.५१५१] आसित्तो ऊसित्तो, दुविहो दूसी उ होइ नायव्वो ।
आसित्तो सावच्चो, अणवच्चो होइ ऊसित्तो ॥

वृ- स दूषी द्विविधो ज्ञातव्यो भवति-आसिक्त उपसिक्तश्च । आसिक्तो नाम 'सापत्यः' यस्यापत्यमुत्पद्यते, सबीज इति भावः । यस्तु 'निरपत्यः' अपत्योत्पादनसामर्थ्यविकलः, निर्बीज इत्यर्थः, स उपसिक्त उच्यते ॥ व्याख्यातो दूषिपण्डकः, अथोपघातपण्डकमाह-

[भा.५१५२] पुव्विं दुच्चिन्नाणं, कम्माणं असुभफलविवागेणं ।
तो उवहम्मइ वेओ, जीवाणं पावकम्माणं ॥

वृ- पूर्वं 'दुश्चीर्णानां' दुराचारसमाचरणेनार्जितानां कर्मणामशुभफलः 'विपाकः' उदयो यदा भवति ततो जीवानां पापकर्मणां वेद उपहन्यते ॥ तत्र चायं दृष्टान्तः

[भा.५१५३] जह हेमो उ कुमारो, इंदमहे भूणियानिमित्तेणं ।
मुच्छिय गिद्धो य मओ, वेओ वि य उवहओ तस्स ॥

वृ- यथा हेमो नाम कुमार इन्द्रमहे समागता या भूणिकाः-बालकास्तासां निमित्तेन 'मूर्च्छितो गृद्धः' अत्यन्तमासक्तः सन् 'मृतः' पञ्चत्वमुपगतः, वेदोऽपि च तस्योपहतः सञ्जात इत्यक्षरार्थः। भावार्थः कथानकादवसेयः । तच्चेदम्- हेमपुरे नगरे हेमकूडो राया । हेमसंभवा भारिया । तस्स पुत्तो वरतवियहेमसन्निभो हेमो नाम कुमारो । सो य पत्तजोव्वणो अन्नया इंदमहे इंदट्ठाणं गओ, पेच्छइ य तत्थ नगरकुलबालियाणं रूववईणं पंचसे बलि-पुप्फ-धूवकडुच्छयहत्थे । ताओ दट्ठुं

सेवगपुरिसे भणइ-किमेयाओ आगयाओ ? किं वा अभिलसंति ? । तेहिं लवियं-इदं मग्गंति वरं सोभग्गं च अभिलसंति । भणिया य तेन सेवगपुरिसा-अहमेएसिं इंदेन वर दत्तो, नेह एयाओ अंतेउरम्मि । तेहिं ताओ घेत्तुं सव्वाओ अंतेउरे छूढाओ । ताहे नागरजनो रायाणं उवट्ठिओ-मोएह त्ति । तओ रन्ना भणियं-किं मज्झ पुत्तो न रोयति तुहं जामाउओ ? । तओ नागरा तुण्हिक्का ठिया। 'एयं रन्नो सम्मतं'ति अविन्नप्प गया नागरा । कुमारेण ता सव्वा परिणीया । सो य तासु अतीव पसत्तो । पसत्तस्स य तस्स सव्वबीयनीगालो जाओ । तओ तस्स वेओवघाओ जाओ मओ य । अन्ने भणंति-ताहिं चेव 'अप्पडिसेवगो'त्ति रूसियाहिं अद्दाएहिं मारिओ ।।

एष वेदोपघातपण्डक उच्यते । अथोपकरणोपघातपण्डकमाह-

भा [५१५४] उवहय उवकरणम्मि, सेज्झायरभूणियानिमित्तेणं ।
तो कविलगस्स वेओ, ततिओ जाओ दुरहियासो ।।

वृ- शय्यातरभूणिकानिमित्तेन पूर्वम् 'उपकरणे' अन्नादानाख्ये 'उपहते' छिन्ने सति ततः क्रमेण कपिलस्य दुरधिसहस्तृतीयो वेदो जात इत्यक्षरार्थः । भावार्थस्तु कथानकेनोच्यते- सुट्ठिया आयरिया। तेसिं सीसो कविलो नाम खुड्डगो । सो सिज्झायरस्स भूणियाए सह खेड्डं करेति । तस्स तत्थेव अज्झोववाओ जाओ । अन्नया सा सिज्झातरभूणिया एगागिणी नातिदूरे गावीणं दोहणवाडगं गया । सा तत्थो दुद्ध-दहिं घेत्तूणाऽऽगच्छति । कविलो य तं चेव वाडगं भिक्खायरियं गच्छति । तेनंतरा असारिए अनिच्छमाणी बला मारिया उप्पाइया । तीए कव्वट्ठियाए अदूरे पिया छित्ते किसिं करेइ । तीए तस्स कहियं । तेन सा दिट्ठा जोणिब्भेइ रुहिरोक्खित्ता महीए लोलिंतिया य । सो य कोहाऊहत्थगओ रुट्ठो । कविलो य तेनकालेण भिक्खं अडितुं पडिनियत्तो, तेन य दिट्ठो । मूलाओ से सागारियं सह जलधरेहिं निकंतियं । सो य आयरियसमीवं न गओ, उन्निक्खंतो । तस्स य उवगरणोवघाएण ततिओ वेदओ उदिन्नो । सो जुन्नकोट्टिणीए संगहिओ । तत्थ से इत्थीवेओ वि उदिन्नो ।। एष उपहतोपकरण उच्यते । अयं च पुं-नपुंसकवेदोदयाद् आस्य-पोसकप्रतिसेवी भवति,, वेदोदयं च निरोद्धुं न शक्नोति ।। तथा चात्र दृष्टान्तः-

[भा.५१५५] जह पढमपाउसम्मिं, गोणो धाओ तु हरियगतणस्स ।
अनुसज्जति कोट्टिंविं, वावन्नं दुब्भिगंधीयं ।।

[भा.५१५६] एवं तु केइ पुरिसा, भोत्तूण वि भोयणं पतिविसिट्ठं ।
ताव न होंति उ तुट्ठा, जाव न पडिसेविओ भावो ।।

वृ- यथा प्रथमे प्रावृषि 'गौः' बलवर्दो हरिततृणस्य घ्रातो दुरभिगन्धां व्यापन्नां च 'कोट्टिम्बिनीं' गामनुसजति, एवं 'केचिद्' उत्कटवेदाः पुरुषा भोजनं 'प्रतिविशिष्टं' स्निग्ध-मधुरं भुक्त्वाऽपि तावत् तुष्टा न भवन्ति यावदास्य-पोसकलक्षणो भावो न प्रतिसेवितो भवति ।। एवंविधः कदाचिदनाभोगेन प्रव्राजितो भवेत् ततः केन हेतुना पश्चाद् ज्ञायते ? इत्याह-

[भा.५१५७] गहणं तु संजयस्सा, आयरियाणं व खिप्पमालोए ।
कड्ढिया व निग्गयाणं, चरित्तसंभेयणी विकहा ।।

वृ- स पण्डकः प्रव्रजितः सन् प्रतिसेवनाभिप्रायेण संयतस्य ग्रहणं कुर्यात् । स च संयतः क्षिप्रमाचार्याणामालोचयेत् । यदि नालोचयति ततश्चतुर्गुरु । अथवा प्रतिश्रयान्तर्बहिरलभमानः

'बहिः' विचारभूमौ गतानां चारित्रसम्भेदिनीं विकथां कुर्यात् ॥ इदमेव भावयति-

[भा.५१५८] छंदिय गहिय गुरूणं, जो न कहे जो व सिट्ठवेहेज्जा ।
परपक्ख सपक्खे वा, जं काहिति सो तमावज्जे ॥

वृ- 'छन्दितो नाम' तेन पण्डकेन 'मां प्रतिसेवस्व, अहं वा त्वां प्रतिसेवे' इत्येवं यो निमन्त्रितो यश्च साधुस्तेन गृहीतः, एतौ द्वावपि यदि गुरूणां न कथयतः 'शिष्टे वा' कथिते यदि गुरव उपेक्षां कुर्वन्ति तदा सर्वेषामपि चतुर्गुरु । यश्च परपक्षे स्वपक्षे वा प्रतिसेवनां कुर्वन् स पण्डक उड्डाहादिकं करिष्यति तत् ते 'आपद्यन्ते' प्राप्नुवन्ति ॥ ''चरित्तसंभेयणी विकह'' त्ति पदं व्याचष्टे-

[भा.५१५९] इत्थिकहाउ कहित्ता, तासि अवन्नं पुनो पगासेति ।
समलं सावि अगंधिं, खेतो य न एयरे ताइं ॥

वृ- स पण्डकः स्त्रीकथाः कथयति, यथा ताः परिभुज्यन्ते यद् वा सुखं तत्र भवति । एवं कथयित्वा पुनस्तासामवर्णं प्रकाशयति, यथा-समलं श्रावि 'अगान्धं च' दुर्गन्ध तदीयं लिङ्गम्, तासु च परिभुज्यमनासु पुरुषस्य खेदो जायते, ''एतरे''त्ति अस्माकं पुनरास्यके 'तानि' दूषणानि न भवन्ति ॥ स च पण्डक एवंविधैः कुचेष्टितैर्लक्षयितव्यः-

[भा.५१६०] सागारियं निरिक्खति, तं च मलेऊण जिंघई हत्थं ।
पुच्छति सेविमसेवी, अतिव सुहं अहं चिय दुहा वि ॥

वृ- सागारिकमात्मनः परस्य वा सत्कमभीक्ष्णं निरीक्षते । 'तच्च' सागारिकं हस्तेन मलयित्वा तं हस्तं जिघ्रति । भुक्तभोगिनं च साधुं रहसि पृच्छति-नपुंसकस्य यूयं गृहवासे सेविनो वा न वा ?, तस्मिन् सेव्यमाने अतीव सुखमुत्पद्यते । ततस्तस्य साधोराशयं ज्ञात्वा भणति-अहमेव नपुंसकः 'द्विधाऽपि' आस्यक-पोसकाभ्यां प्रतिसेवनीयः । एवं तं पण्डकं ज्ञात्व गुरूणामालोच-नीयमिति प्रक्रमः ॥

[भा.५१६१] सो समणसुविहिलेसुं, पवियारं कत्थई अलभमाणो ।
तो सेविउमारद्धो, गिहिणो तह अन्नतित्थी य ॥

वृ- 'सः' पण्डकः 'श्रमणसुविहितेषु' स्वाध्याय-ध्याननिरतेषु साधुषु मैथुनप्रविचारं कुत्राप्यलभमानस्ततो गृहिणस्तथाऽन्यतीर्थिनश्च प्रतिसेवितुमारब्धः ॥ तत्रैते दोषा भवेयुः-

[भा.५१६२] अयसो य अकित्तीया, तम्मूलागं तहिं पवयणस्स ।
तेसिं पि होइ संका, सव्वे एयारिसा मन्ने ॥

वृ- ''तहिं''ति 'तत्र' विवक्षिते ग्रामादौ 'तन्मूलं' तद्धेतुकं प्रवचनस्यायशश्चाकीर्तिश्च भवति। तत्रायशो नाम-छायाघात, अकीर्ति-अवर्णवादभाषणम् । ये च भट्ट-चट्ट-नर्तकप्रभृतयस्तं प्रतिसेवन्ते तेषामपि शङ्का भवति-सर्वेऽप्यमी श्रमणा 'ईदृशा एव' त्रैराशिका भविष्यन्ति । 'मन्ये' इति निपातो वितर्कार्थः ॥ अयशःपदमकीर्तिपदं च व्याचष्टे-

[भा.५१६३] एरिससेवी सव्वे, वि, एरिसा एरिसो व पासंडो ।
सो एसो न वि अन्नो, असंखडं घोडमाईहिं ॥

वृ- प्रभूतजनमीलके लोक एवं ब्रूयात्-ईदृशं-नपुंसकं सेवितुं शीलं येषां ते ईदृशसेविनः, सर्वेऽप्येते 'ईदृशाः' त्रैराशिकाः, 'ईदृशो वा' दम्भबहुल एष पाखण्डः । एवमयशःकीर्तिशब्दः सर्वत्रापि

प्रवर्तते। साधून् वा भिक्षा-विचारादिनिर्गतान् दृष्ट्वा युवानः केलिप्रिया ब्रुवते-अरे अरे भट्टिन्! गोमिन्! स एष श्रीमन्दिरकारकः। अन्यः प्राह-नाप्येष स इति। अथवा ते ब्रवीरन्-समागच्छत समागच्छत श्रमणाः! यूयमपि तादृशं तादृशं कुरुत। एवमुक्तः कश्चिदसहिष्णुस्तैर्घोटादिभिः सहासङ्खडं कुर्यात्। घोटाः-चट्टाः, आदिशब्दाद् आरामिक-मिण्ठ-गोपालादिपरिग्रहः॥

उक्तः पण्डकः, अथ क्लीबमाह-

[भा.५१६४]　कीवस्स गोत्र नामं, कम्मुदय निरोहे जायती ततिओ।
तम्मि वि सो चेव गमो, पच्छत्तुस्सग्ग अववादे॥

वृ-क्लीबस्य 'गौणं' गुणनिष्पन्नं नाम, क्लिश्यते इति क्लीबः। किमुक्तं भवति? -मैथुनाभिप्राये वयस्याह्लादानं विकारं भजति बीजबिन्दूंश्च परिगलति स क्लीबः। अयं च मोहमोहकर्मोदयेन भवति। यदा च परिगलतस्तस्य निरोधं करोति तदा निरुद्धवस्ति कालान्तरेण तृतीयवेदो जायते। स च चतुर्धा-दृष्टिक्लीबः शब्दक्लीब आदिग्धक्लीबो निमन्त्रणाक्लीबश्चेति। तत्र यस्यानुरागतो विवस्त्राद्यवस्थं विपक्षं पश्यतो मेहनं गलति स दृष्टिक्लीबः। यस्य तु सुरतादिशब्दं शृण्वतः स द्वितीयः। यस्तु विपक्षेणोपगूढो निमन्त्रितो वा व्रतं रक्षितुं न शक्नोति स यथाक्रममादिग्धक्लीबो निमन्त्रणाक्लीबश्चेति। चतुर्विधोऽप्ययमप्रतिसेवमानो निरोधेन नपुंसकतया परिणमति। 'तस्मिन्नपि' क्लीबे 'स एव' प्रायश्चित्तोत्सर्गा-ऽपवादेषु गमो भवति यः पण्डक स्योक्तः॥

गतः क्लीबः, अथ वातिकं व्याचष्टे-

[भा.५१६५]　उदएण वादियस्सा, सविकारं जा न तस्स संपत्ती।
तच्चनि-असंवुडीए, दिट्ठंतो होइ अलभंते॥

वृ-यद् सनिमित्तेनानिमित्तेन वा मोहोदयेन सागारिकं 'सविकारं' काषायितं भवति तदा न शक्नोति वेदं धारयितुं यावन्न 'तस्य' प्रतिसेवमानस्य सम्प्राप्तिर्भवति, एष वातिक उच्यते। अत्र च तच्चनिकेनासंवृताया अगार्या प्रतिसेवकेन दृष्टान्तो भवति- एगो तच्चनिओ जलथरनावारूढो। तत्थ तस्स पुरओ अहाभावेण अगारी असंवुडा निविट्ठा। तस्स य तच्चनियस्स तं दट्ठुं सागारियं थद्धं। तेण वेयउक्कडयाए असहमाणेण जनपुरओ पडिगाहिया अगारी। तं च पुरिसा हंतुमारद्धा तहावि तेन न मुक्का। जाहे से बीयनिसग्गो जाओ ताहे मुक्का॥ अयमपि 'अलभमानः' अप्राप्नुवन् निरुद्धवेदो नपुंसकतया परिणमति॥ उक्तो वातिकः। "एकग्रहणेन तज्जातीयानां सर्वेषामपि गहणम्" इति कृत्वा अपरानपि नपुंसकभेदान् निरूपयति-

[भा.५१६६]　पंडए वाइए कीवे, कुंभी ईसालुए ति य।
सउनी तकम्मसेवी य, पक्खियापक्खिते ति य॥

वृ- पण्डक-वातिक-क्लीबा अनन्तरमेव व्याख्याताः। कुम्भी द्विधा-जातिकुम्भी वेदकुम्भी च। यस्य सागारिकं भ्रातृद्वयं वा वातदोषेण शूनं महाप्रमाणं भवति स जातिकुम्भी। अयं च प्रव्राजनायां भजनीयः-यदि तस्यातिमहाप्रमाणं सागारिकादिकं तदा न प्रव्राज्यते, अथेषच्छूनं ततः प्रव्राज्यते। वेदकुम्भी नाम-यस्योत्कटमोहतया प्रतिसेवनामलभमानस्य मेहनं वृषणद्वयं वा शूयते स एकान्तेन निषिद्धः, न प्रव्राजनीय इति। 'ईर्ष्यालुर्नाम' यस्य प्रतिसेव्यमानं दृष्ट्वा ईर्ष्या-मैथुनाभिलाष उत्पद्यते सोऽपि निरुद्धवेदः कालान्तरेण त्रैराशिको भवति। 'शकुनी' वेदत्कटतया

गृहधट्टक इवाऽभीक्ष्णं प्रतिसेवनां करोति। 'तत्कर्मसेवी नाम' यदा प्रतिसेविते बीजनिसर्गो भवति तदा श्वान इव तदेव जिह्वया लेढि, एवं विलीनभावमासेवमानः सुखमिति मन्यते। पाक्षिकापाक्षिकस्तु स उच्यते यस्यैकस्मिन् शुक्ले कृष्णे वा पक्षेऽतीव मोहोदयो भवति, द्वितीयपक्षे तु स स्वल्पो भवति ॥

[भा.५१६७] सोगंधिए य आसित्ते, वद्धिए चिप्पिए ति य।
मंतोसहिओवहते, इसिसत्ते देवसत्ते य ॥

वृ- 'सौगन्धिको नाम' सागारिकस्य गन्धं शुभं मन्यते, स च सागारिकं जिघ्रति मलयित्वा वा हस्तं जिघ्रति। "आसित्तो नाम" स्त्रशरीरासक्तः, स मोहोत्कटतया योनौ मेहनमनुप्रविश्य नित्यमास्ते। एते सर्वेऽपि निरुद्धवस्तयः कालान्तरेण नपुंसकतया परिणमन्ति। एते च पण्डकादयो दशापि प्रव्राजयितुमयोग्याः। तथा 'वर्द्धितो नाम' यस्य बालस्यैव च्छेदं दत्त्वा द्वौ भ्रातरावपनीतौ। 'चिप्पितस्तु' यस्य जातमात्रस्यैवाङ्गुष्ठ-प्रदेशिनी-मध्यमाभिर्मलयित्वा वृषणद्वयं गालितम्। अपरस्तु मन्त्रेणोपहतो भवति। अन्यः पुनरौषध्या उपहतः। कश्चिद् ऋषिणा शप्तो भवति-मम तपःप्रभावात् पुरुषभावस्ते मा भूयात्। एवमपरो देवेन रुष्टेन शप्तः। एते वर्द्धितादयः षडपि यद्यप्रतिसेवकास्तदा प्रव्राजयितव्याः ॥

अथैतेषां प्रव्राजने प्रायश्चित्तमाह-

[भा.५१६८] दससु वि मूलाऽऽयरिए, वयमाणस्स वि हवंति चउगुरुगा।
सेसाणं छण्हं पी, आयरिए वदंति चउगुरुगा ॥

वृ- पण्डकादीन् आसिक्तान्तान् दशापि नपुंसकान् यः प्रव्राजयति तस्याऽऽचार्यस्य दशस्वपि प्रत्येकं मूलम्। तेष्वेव दशसु यो वदति 'प्रव्राजयत' तस्याऽपि चतुर्गुरुका भवन्ति। 'शेषाणां' वर्द्धितादीनां षण्णामपि प्रतिसेवकानां प्रव्राजने आचार्यस्य चतुर्गुरुकम्। यो वदति 'प्रव्राजयत' तस्यापि चतुर्गुरुकम् ॥ अथ शिष्यः प्रश्नयति-

[भा.५१६९] थी-पुरिसा जह उदयं, धरेंति झाणोववास-नियमेहिं।
एवमपुमं वि उदयं, धरिज्ज जति को तहिं दोसो ॥

वृ- यथा स्त्री-पुरुषा ध्यानोपवास-नियमैरुपयुक्ता वेदोदयं धारयन्ति, एवम् 'अपुमान्' नपुंसकोऽपि यदि वेदोदयं धारयेत् ततः 'तत्र' प्रव्राजिते को दोषः स्यात् ? ॥

[भा.५१७०] अहवा ततिए दोसो, जायइ इयरेसु किं न सो भवति।
एवं खु नत्थि दिक्खा, सवेययाणं न वा तित्थं ॥

वृ- अथवा युष्माकमभिप्रायो भवेत्-'तृतीये' नपुंसके वेदोदये चारित्रभङ्गलक्षणो दोषो भवेत्, तत उच्यते-'इतरयोः' स्त्र-पुरुषयोरपि वेदोदये स दोषः किं न भवति ? । अपि च-क्षीणमोहादीन् मुक्त्वा शेषाः सर्वेऽपि संसारस्था जीवाः सवेदकाः, तेषां च दोषदर्शनादेव भवदुक्तनीत्या नास्ति दीक्षा, तदभावाच्च 'न तीर्थं' न तीर्थस्य सन्ततिर्भवति ॥ सूरिराह-

[भा.५१७१] थी-पुरिसा पत्तेयं, वसंति दोसरहितेसु ठाणेसु।
संवास फास दिट्ठी, इयरे वत्थंवदिट्ठंतो ॥

वृ-स्त्री प्रव्राजिता स्त्रीणां मध्ये नियसति, पुरुषः प्रव्राजितः पुरुषमध्ये वसति, एवं तौ प्रत्येकं दोषरहितेषु स्थानेषु वसतः। इतरस्तु-पण्डको यदि स्त्रीणां मध्ये वसति तदा संवासे स्पर्शतो दृष्टितश्च दोषा भवन्ति, एवं पुरुषेष्वपि संवसतस्तस्य दोषा भवन्ति। वत्सा-ऽऽम्रदृष्टान्तश्चात्र भवति-यथा वत्सो मातरं दृष्ट्वा स्तन्यमभिलषति, माताऽपि पुत्रं दृष्ट्वा प्रस्नौति; आम्रं वा खाद्यमानमखाद्यमानं वा दृष्ट्वा यथा मुखं क्लिद्यति; एवं तस्य संवासादिना वेदोदयेनाभिलाष उत्पद्यते ॥ मुक्ता-ऽमुक्तभोगिनः साधवो वा तमभिलषेयुः। यत एवमतः पण्डको न दीक्षणीयः। द्वितीयपदे एतैः कारणैः प्रव्राजयेऽपि-

[भा.५१७२] असिवे ओमोयरिए, रायदुट्ठे भए व आगाढे।
गेलन्न उत्तिमट्ठे, नाणे तह दंसण चरित्ते ॥

वृ- स प्रव्राजितः सन् अशिवमुपशमयिष्यति, अशिवगृहीतानां वा प्रतितर्पणं करिष्यति। एवमवमौदर्ये राजद्विष्टे बोधिकादिभये वा आगाढे ग्लानत्वे उत्तमार्थे वा ज्ञाने दर्शने चारित्रे वा साहायकं करिष्यति। एतैः कारणैः पण्डकं प्रव्राजयेत् ॥ अथैनामेव गाथां व्याख्याति-

[भा.५१७३] रायदुट्ठ-भएसुं, ताणट्ठ निवस्स चेव गमनट्ठा।
विज्जो व सयं तस्स व, तप्पिस्सति वा गिलाणस्स ॥

वृ-राजद्विष्टे बोधिकादिभये च त्राणार्थं नृपस्य वा अभिगमनार्थम्। किमुक्तं भवति?-राजद्विष्टे समापतिते देशान्तरं गच्छतां तन्निस्तारणक्षमं भक्त-पानाद्युपष्टम्भं करिष्यति, राजवल्लभो वा स पण्डकस्ततो राजानमनकूलयिष्यति, बोधिकादिभये वा स बलवान् गच्छस्य परित्राणं विधास्यति। ग्लानत्वद्वारे-स पण्डकः स्वयमेव वैद्यो भवेत् ततो ग्लानस्य चिकित्सां करिष्यति, यद्वा सः 'तस्य' वैद्यस्य ग्लानस्य वा वेतन-भेषजादिना 'प्रतितर्पिष्यति' उपकरिष्यति। वाशब्दाद् उत्तमार्थप्रतिपन्नस्य वा भमासहायस्य साहाय्यं करिष्यति, स्वयमेव वाऽसावुत्तमार्थं प्रतिपत्स्यते ॥

[भा.५१७४] गुरुणो व अप्पणो वा, नाणादी गिण्हमाण तप्पिहिति।
चरणे देसावक्कमि, तप्पे ओमा-ऽसिवेहिं वा ॥

वृ- तथा गुरोरात्मनो वा ज्ञानम् आदिशब्दाद् दर्शनप्रभावकानि शास्त्राणि गृह्णतोऽसौ भक्तपानादिभिर्वस्त्रादिभिश्चोपकरिष्यति। चरणे-यत्र चारित्रं पालयितुं न शक्यते ततो देशादपक्रमणं कुर्वतां मार्गग्रामादिषु स्वजनादिबलाद् भक्त-पानादिभिस्तस्करादिरक्षणतश्चोपकरिष्यति। अवमा-ऽशिवयोर्वा प्रतितर्पिष्यति। अत्र चानानुपूर्व्या अपि वस्तुत्वख्यापनार्थं अवमा-ऽशिवद्वारयोः पर्यन्ते व्याख्यानम् ॥

[भा.५१७५] एएहि कारणेहिं, आगाढेहिं तु जो उ पव्वावे।
पंडाईसोलसगं, कए उ कज्जे विगिंचणया ॥

वृ- एतैः कारणैरागाढैः समुपस्थितैर्य पण्डकादिषोडशकस्यान्यतरं नपुंसकं प्रव्राजयति तेनाऽऽचार्येण 'कृते' समापिते कार्ये तस्य नपुंसकस्य 'विवेचनं' परिष्ठापनं कर्तव्यम् ॥

तत्र प्रव्राजनायां तावद् विधिमाह-

[भा.५१७६] दुविहो जानमजानी, अजानगं पन्नवेंति उ इमेहिं।
जनपच्चयट्ठयाए, नज्जंतमणज्जमाणे वि ॥

वृ- द्विविधो नपुंसकः-ज्ञायकोऽज्ञायकश्च । तत्र यो जानाति 'साधूनां त्रैराशिकः प्रव्राजयितुं न कल्पते' स ज्ञायकः, तद्विपरीतोऽज्ञायकः । तत्र ज्ञायकमुपस्थितं प्रज्ञापयन्ति- भवान् दीक्षाया अयोग्यः, ततोऽणुव्रतादिधारी श्रावकधर्मं प्रतिपद्यस्व, अन्यथा ज्ञानादीनां विराधना ते भविष्यति। अज्ञायकमप्येवमेव प्रज्ञापयन्ति । अथैनां प्रज्ञापनां नेच्छति प्रव्रज्यामेवाभिलषति आत्मनश्च किञ्चिदशिवादिकं कारणमुपस्थितं ततस्तमज्ञायकं जनप्रत्ययार्थम् 'अमीभिः' कटीपट्टकादिभिः प्रज्ञापयन्ति । स चाज्ञायकस्तत्र जनेन ज्ञायमानोऽजायमानो वा स्यादुभयत्राप्ययं विधि कर्तव्यः ।।

[भा.५१७७] कडिपट्टए य छिहली, कत्तरिया भंड लोय पाढे य ।
धम्मकह सन्नि राउल, ववहार विगिंचणा विहिना ।।

वृ- कटीपट्टकं स परिधापयितव्यः । 'छिहली' शिखा तस्य सिरसि धारणीया । अथ नेच्छति ततः कर्त्तर्या 'भाण्डेन वा' क्षुरेण मुण्डनं विधेयम्, लोचो वा विधातव्यः । ''पाढि''त्ति परतीर्थिकमतादीनि स पाठनीयः । कृते कार्ये धर्मकथा कर्तव्या येन लिङ्गं परित्यज्य गच्छति । अथैवं लिङ्गं न मुञ्चति ततः 'संज्ञिभिः' श्रावकैः प्रज्ञापनीयः । अथ राजकुलं गत्वा कथयति ततो व्यवहारोऽपि कर्तव्यः । एवं तस्य 'विगिञ्चना' परिष्ठापना 'विधिना' वक्ष्यमाणनीत्या विधेया । एष द्वारगाथासमासार्थः ।। साम्प्रतमेनामेव विवृणोति-

[भा.५१७८]कडिपट्टओ अभिनवे, कीरइ छिहली य अम्हऽवेवाऽऽसी ।
कत्तरिया भंडं वा, अनीच्छे एक्केकपरिहानी ।।

वृ- कटीपट्टकोऽभिनवप्रव्रजितस्य तस्य क्रियते न पुनरग्रावपूरकः, शिरसि च 'छिहली नाम' शिखा ध्रियते । यदि ब्रूयात्-किं ममाग्रावपूरकं सर्वमुण्डनं वा न कुरुत ? ; ततो वृषभा भणन्ति- अस्माकमपि प्रथममेवमेव कृतमासीत् । तत्र मुण्डनं कर्तर्या कर्तव्यम्, अथ नेच्छति ततः 'भाण्डेन' क्षुरेण, क्षुरमप्यनिच्छतो लोचः कर्तव्यः । एवमेकैकपरिहाणिर्मन्तव्या । शिखा तु सर्वत्रापि धारणीया।

[भा.५१७९] छिहलिं तु अनीच्छंते, भिक्खुगमादीमतं पऽनीच्छंते ।
परउत्थियवत्तव्वं, उक्कमदानं ससमए वि ।।

वृ- अथ शिखामपि नेच्छति ततः सर्वमुण्डनमपि विधीयते । पाठस्तु-द्विविधा शिक्षा- ग्रहणे आसेवने च । आसेवनाशिक्षायां क्रियाकलापमसौ न ग्राह्यते । ग्रहणशिक्षायाम्-भिक्षुकाः- सौगतास्तेषाम् आदिशब्दात् कपिलादीनां च परतीर्थिकानां मतमध्याप्यते; अथ तदपि नेच्छति ततः शृङ्गारकाव्यं पाठ्यते, तदप्यनिच्छन्तं द्वादशाङ्गे यानि परतीर्थिकवक्तव्यतानिबद्धानि सूत्राणि तानि पाठयन्ति, तान्यप्यनिच्छतः स्वसमयस्यालापका उत्क्रमेण विलुलिता दीयन्ते ।।

आसेवनाशिक्षायां विधिमाह-

[भा.५१८०] वीयार-गोयरे थेरसंजुओ रत्तिं दूरे तरुणाणं ।
गाहेह ममं पि ततो, थेरा गाहेंति जत्तेणं ।।

वृ- विचारभूमिं गच्छन् गोचरं वा पर्यटन् स्थविरसाधुसंयुक्तो हिण्डाप्यते । रात्रौ तरुणानां दूरे क्रियते । तं च साधवो न पाठयन्ति ततो यदि ब्रूयात्-मामपि पाठं ग्राहयत, ततः स्थविराः साधवो यत्नेन ग्राहयन्ति ।। किं तत् ? इत्याह-

[भा.५१८१] वेरग्गकहा विसयाण निंदणा उट्ठ-निसियणे गुत्ता ।

घुक्क-खलिएसु बहुसो, सरोसमिव चोदए तरुणा ॥

वृ-यानि सूत्राणि वैराग्यकथायां विषयनिन्दायांच निबद्धानि तानि ग्राह्यते, अथवा वैराग्यकथा विषयनिन्दा च तस्य पुरतः कथनीया। उत्तिष्ठन्तो निषीदन्तश्च साधवः 'गुप्ताः' सुसंवृता भवन्ति यथाऽऽदानं स न पश्यति। तस्य यदि सामाचार्यां घुक्क-स्खलितानि भवन्ति; घुक्कं नाम-विस्मृतं किञ्चित् कार्यम्, स्खलितं-तदेव विनष्टम्; ततो ये तरुणास्ते सरोषमिव तं परुषवचोभिर्बहुशो नोदयन्ति येन तरुणेषु नानुबन्धं गच्छति ॥ अथ धर्मकथापदं व्याचष्टे-

[भा.५१८२] धम्मकहा पाढिज्जति, कयकज्जा वा से धम्ममक्खंति।
मा हन परं पि लोगं, अनुव्वता दिक्ख नो तुज्झं ॥

वृ- धर्मकथाः वा स पाठ्यते। 'कृतकार्या वा' येन कार्येण दीक्षितस्तं समापितवन्तः "से" तस्य धर्ममाख्यान्ति, यथा-महाभाग! रजोहरणादि लिङ्गं धारयन् परभवे बोधेरुपघातकरणाय त्वं वर्तसे, ततो मा परमपि लोकं 'हन' विनाशय, मुञ्च रजोहरणादि लिङ्गम्, तवाणुव्रतानि धारयितुं युज्यन्ते न दीक्षा ॥ एवं प्रज्ञापितो यदि मुञ्चति तदा लष्टम्, अथ न मुञ्चति ततः-

[भा.५१८३] सन्नि खरकम्मिओ वा, भेसेति कतो इधेस कंचिक्को।
निधरिहे वा दिक्खितो, एतेहिं अन्नातो पडिसेहो ॥

वृ- यः खरकर्मिकः संज्ञी स पूर्वं प्रज्ञाप्यते-अस्माभि कारणे त्रैराशिकः प्रव्राजितः, स इदानीं लिङ्गं नेच्छति परित्यक्तुं ततो यूयं प्रज्ञापयत। एवमुक्तोऽसावागत्य गुरून् वन्दित्वा सर्वानपि साधून् निरीक्षते, ततस्तं पण्डकं पूर्वकथितचिह्नैरुपलक्ष्य भूमितलास्फालन-शिरःकम्पन-खरदृष्टिनिरीक्षण-परुषवचनैर्भेषयति-कुत एषः 'इह' युष्माकं मध्ये 'कश्चिल्कः' नपुंसकः ? इति; तं च ब्रवीति-अपसर साम्प्रतमितः, अन्यथा व्यपरपयिष्यामि भवन्तम्। एवमुक्तोऽपि यदि लिङ्गं न मुञ्चति, खरकर्मिकस्य वा श्रावकस्याभावे यदि नृपस्य कथयति-अहमेतैर्दीक्षितः साम्प्रतं पुनः परित्यजन्ति; ततो व्यवहारेण जेतव्यः। कथम् ? इत्याह- यद्यसौ जनेनाज्ञातो दीक्षितस्ततः प्रतिषेधः क्रियते, 'नास्माभिर्दीक्षितः' इति अपलप्यत इत्यर्थः ॥ अथासौ ब्रूयात्-

[भा.५१८४] अज्झाविओ मि एतेहि चेव पडिसेधो किं वऽधीयं ते।
छलियातिकइं कड्ढति, कत्थ जती कत्थ छलियाइं ॥

वृ-अहमेतैरेवाध्यापितस्ततोऽपि प्रतिषेधः कार्य, न किमप्यस्माभिरध्यापित इत्यर्थः। अथवा वक्तव्यम्-किं त्वयाऽधीतम् ? । ततोऽसौ छलितकाव्यादिकथामाकर्षेत् तत्र वक्तव्यम्-कुत्र यतयः ? कुत्र च छलितादिकाव्यकथा ?, साधवो वैराग्यमार्गस्थिताः शृङ्गारकथां न पठन्ति न वा पाठयन्ति ॥ वयमीदृशं सर्वज्ञभाषितं सूत्रं पठामः-

[भा.५१८५] पुव्वावरसंजुत्तं, वेरग्गकरं सतंतमविरुद्धं।
पोराणमद्धमागहभासानियतं हवति सुत्तं ॥

वृ- यत्र पूर्वसूत्रनिबन्धः पाश्चात्यसूत्रेण न व्याहन्यते तत् पूर्वापरसंयुक्तम्। 'वैराग्यकरं' विषयसुखवैमुख्यजनकम्। स्वतन्त्रेण-स्वसिद्धान्तेन सहाविरुद्धं स्वतन्त्रविरुद्धम्, 'सर्वथा सर्वकालं सर्वत्र नास्त्यात्मा' इत्यादिस्वसिद्धान्तविरोधरहितमित्यर्थः। 'पोराणं नाम' पुराणैः-तीर्थकर-गणधरलक्षणैः पूर्वपुरुषैः प्रणीतम्। अर्धमागधभाषानियतमिति प्रकटार्थम्।

एवंविधमस्मदीयं सूत्रं भवति ॥ किञ्च-

[भा.५१८६] जे सुत्तगुणा भणिया, तव्विवरीयाइं गाहए पुव्विं ।
निच्छिन्नकारणाणं, सच्चेव विगिंचणे जयणा ॥

वृ- ये सूत्रस्य गुणाः "निद्दोसं सारवंतं च, हेउजुत्तमलंकियं ।" इत्यादयः पीठिकायां भणिताः 'तद्विपरीतानि' तद्‌गुणविकलानि सूत्राणि पूर्वमेव तं ग्राहयेत् । ततः 'निस्तीर्णकारणानां' समाप्तविवक्षितप्रयोजनानां सैव 'विवेचने' परिष्ठापने यतना भवति ॥ एवं व्यवहारेण परिष्ठापनविधिरुक्तः । यस्तु व्यवहारेण न शक्यते परित्यक्तुं तस्यायं विधिः-

[भा.५१८७] कावालिए सरक्खे, तच्चन्निय वसम लिंगरूवेणं ।
वडुंबगपव्वइए, कायव्व विहीए वोसिरणं ॥

वृ- गीतार्था अविकारिणो वृषमा उच्यन्ते, ते कापालिक-सरस्क-तच्चन्निकवेषग्रहणेन तं परिष्ठापयन्ति । यः वडुम्बकः-बहुस्वजनःप्रव्राजितस्तस्यैवंविधेन विधिना व्युत्सर्जनं कर्तव्यम् ॥ एतदेव भावयति-

[भा.५१८८] निववल्लह बहुपक्खम्मि वा वि तरुणवसहामिणं बिंति ।
भिन्नकहा ओभट्ठा, न घडइ इह वच्च परतित्थि ॥

वृ- यो नृपस्य वल्लभो बहुपाक्षिको वा-प्रभूतस्वजन-मित्रवर्गस्तयोरयं परिष्ठापने विधिः-यदा नपुंसको रहसि तरुणभिक्षुमवभाषते भिन्नकथां वा करोति तदा ते तरुणवृषभा इदं ब्रुवते- "इह यतीनां मध्ये ईदृशं न घटते, यदि त्वमीदृशं कर्तुकामोऽसि तत उन्निष्क्रमणं कुरु परतीर्थिकेषु वा व्रज ॥ ततो यदि ब्रूयात्-

[भा.५१८९] तुमए समगं आमं, ति निग्गओ भिक्खमाइलक्खेणं ।
नासति भिक्खुगमादिसु, छोढूण ततो वि हि पलाति ॥

वृ- 'त्वया सममहं परतीर्थिकेषु गमिष्यामि' एवमुक्तः स तरुणवृषभ आममिति भणित्वा निर्गच्छति । निर्गतश्च भिक्षुकादिवेषेण गत्वा तेषु भिक्षुकादिषु प्रक्षिप्य नश्यति । यः पुनस्तत्र नीतोऽपि तं साधुं न मुञ्चति तं रात्रौ सुप्तं मत्वा 'तत एव' भिक्षुकादिस्थानात् पलायते, भिक्षादिलक्ष्येण वा निर्गतो नश्यति ॥ तओ नो कप्पंति-

मू. (११५) *एवं मुंडावित्तए सिक्खावित्तए उवट्ठावित्तए संभुंजित्तए संवासित्तए तंजहा-पंडए वाइए कीवे-*

वृ- यथैते पण्डकादयस्त्रयः प्रव्राजयितुं न कल्पन्ते एवमेत एव कथञ्चित् छलितेन प्रव्राजिता अपि सन्तः 'मुण्डापयितुं' शिरोलोचेन लुञ्चितुं न कल्पन्ते । एवं 'शिक्षापयितुं' प्रत्युपेक्षणादिसामाचारीं ग्राहयितुम् 'उपस्थापयितुं' महाव्रतेषु व्यवस्थापयितुं 'सम्भोक्तुम्' एकमण्डलीसमुद्देशादिना व्यवहारयितुं 'संवासयितुम्' आत्मसमीपे आसयितुमिति सूत्रार्थः ॥ अथ भाष्यम्-

[भा.५१९०] पव्वाविओ सिय त्ति उ, सेसं पनगं अनायरणजोग्गो ।
अहवा समायरंते, पुरिमपदऽनिवारिता दोसा ॥

वृ-स पण्डकः 'स्यात्' कदाचिदनाभोगादिना प्रव्राजितो भवेत्, इतिशब्दः स्वरूपपरामर्शार्थः । एवं प्रव्राजितोऽपि यदि पश्चाद् ज्ञातस्तदा "सेसं पणगं" ति विभक्तिव्यत्ययात् 'शेषपञ्चकस्य'

मुण्डापनादिलक्षणस्यानाचरणयोग्यः, न तदाचरणीयमिति भावः । अथ लोभाद्यभिभूततया तदपि समाचरति ततः पूर्वस्मिन्-प्रव्राजनाख्ये पदे ये प्रवचनापयशःप्रवादादयो दोषा उक्तास्ते अनिवारिताः, तदवस्था एव मन्तव्या इति भावः ॥

[भा.५१९१] मुंडाविओ सिय त्ती स सेसचउक्कं अणायरणजोग्गो ।
अहवा समायरंते पुरिमपदऽनिवारिया दोसा ॥

वृ- अनाभोगादिना मुण्डापितोऽपि स्यात् ततः 'शेषचतुष्कस्य' शिक्षापनादिलक्षणस्याचरणे अयोग्यः । अथ समाचरति ततः पूर्वपददोषा अनिवारिताः ॥ एवं तिस्रो गाथा वक्तव्याः, यथा-

[भा.५१९२] सिक्खाविओ सिय त्ती, सेसतिगस्सा अनायरणजोग्गो ।
अहवा समायरंते, पुरिमपदऽनियारिया दोसा ॥

[भा.५१९३] उवट्ठाविओ सिय त्ती, सेसदुगस्सा अनायरणजोग्गो ।
अहवा समायरंते, पुरिमपदऽनिवारिया दोसा ॥

[भा.५१९४] संभुंजिओ सिय त्ती, संवासेउं अनायरणजोग्गो ।
अहवा संवासिंते, पुरिमपदऽनिवारिया दोसा ॥

वृ- एवं षड्विधसचित्तद्रव्यकल्पसूत्राणि क्रमेण भवन्ति ॥ तथा चात्रामी दृष्टान्ताः-

[भा.५१९५] मूलातो कंदादी उच्छुविकारो य जह रसादीया ।
मिप्पिंड-गोरसाण य, होंति विकारा जह कमेणं ॥

[भा.५१९६] जह वा निसेगमादी, गब्भे जातस्स नाममादीया ।
होंति कमा लोगम्मि, तह छव्विह कप्पसुत्ता उ ॥

वृ- यथा मूलात् कन्द-स्कन्ध-शाखादयो भेदाः क्रमेण भवन्ति, इक्षुविकाराश्च रस-कक्कबादयो यथा क्रमेण जायन्ते, मृत्पिण्डस्य वा यथा स्थाश-कोश-कुशूलादयो गोरसस्य च दधि-नवनीतादयो विकारा यथा क्रमेण भवन्ति, यथा वा गर्भे प्रविष्टस्य जीवस्य निषेकः-ओजः-शुक्रपुद्गला-हरणलक्षणस्तदादयः आदिशब्दात् कलला-ऽर्बुद-पेशीप्रभृतयः पर्याया भवन्ति, जातस्य वा तस्यैव 'नामादयः' नामकरण-चूडाकरणप्रभृतयः क्रमाद् यथा लोके भवन्ति, तथा षड्विधकल्पसूत्राणि यथाक्रमभाविप्रव्राजनादिषट्कविषयाणि क्रमेण भवन्ति ॥

*मू. (११६) तओ नो कप्पंति वाइत्तए, तं जहा-अविनीए, विगईपडिबद्धे, अविओसवियपाहुडे। तओ कप्पंति वाइत्तए, तं जहा-विनीए, नोविगईपडिबद्धे, विओसवियपाहुडे ॥*

अस्य सम्बन्धमाह-

[भा.५१९७] पंडादी पडिकुट्ठा, छव्विह कप्पम्मि मा विदित्तेवं ।
अविनीयमादितितयं, पवादए एस संबंधो ॥

वृ- पण्डकादयस्त्रय एव षड्विधे सचित्तद्रव्यकल्पे प्रतिकुष्टाः नापरे केचित्, एवं विदित्वा 'मा अविनीतादित्रितयं प्रवाचयेद्' इति कृत्वा प्रस्तुतसूत्रमारभ्यते । एष सम्बन्धः ॥

प्रकारान्तरेण सम्बन्धमाह-

[भा.५१९८] सिक्खावणं च मोत्तुं, अविनियमादीण सेसगा ठाणा ।
नेगंता पडिसिद्धास अयमपरो होइ कप्पो उ ॥

वृ- ये पूर्वसूत्रे षट् प्रव्राजनादयो द्रव्यकल्पाः प्रतिपादिताः तेषां मध्यादेकां ग्रहणशिक्षापणां मुक्त्वा शेषाणि स्थानानि अविनीतादीनां त्रयाणां नैकान्तेन प्रतिषिद्धानि । ग्रहणशिक्षाप्रतिषेधार्थं तु प्रस्तुतं सूत्रमारभ्यते । अयमपरः सम्बन्धस्य 'कल्पः' प्रकारो भवति ॥ अनेनायातस्यास्य व्याख्या-त्रयो नो कल्पन्ते 'वाचयितुं' सूत्रं पाठयितुमर्थं वा श्रावयितुम् । तद्यथा-'अविनीतः' सूत्रा-ऽर्थदातुर्वन्दनादिविनयरहितः । 'विकृतिप्रतिबद्धः' घृतादिरसविशेषगृद्धः, अनुपधानकारीति भावः । अव्यवशमिम्-अनुपशान्तं प्राभृतमिव प्राभृतं-नरकपालकौशलिकं तीव्रक्रोधलक्षणं यस्यासौ अव्यवशमितप्राभृतः ॥ एतद्विपरीतास्तु त्रयोऽपि कल्पन्ते वाचयितुम् । तद्यथा-विनीतो नोविकृतिप्रतिबद्धो व्यवशमितप्राभृतश्चेति सूत्रार्थः ॥ अथ निर्युक्तिविस्तरः-

[भा.५१९९] विगइ अविनीए लहुगा, पाहुड गुरुगा य दोसा आणादी ।
सो य इयरे य चत्ता, वितियं अद्धाणमादीसु ॥

वृ- विकृतिप्रतिबद्धमविनीतं च वाचयतश्चतुर्लघुकाः । अव्यवशमितप्राभृतं वाचयतश्चतुर्गुरुकाः । आज्ञादयश्च दोषाः । स च 'इतरे च' साधवः परित्यक्ता भवन्ति । तत्र स तावद् विनयमकुर्वन् ज्ञानाचारं विराधयतीति कृत्वा परित्यक्तः, इतरे च तानविनीतं दृष्ट्वा विनयं न कुर्वन्तीति परित्यक्ताः । द्वितीयपदमत्र भवति-अध्वादिषु वर्तमानानां योऽविनीतादिरप्युपग्रहं करोति स वाचनीयः । एषा निर्युक्तिगाथा ॥ एनामेव भाष्यकृद् विवृणोति-

[भा.५२००] अविनीयमादियाणं, तिण्ह वि भयणा उ अट्ठिया होंति ।
पढमगभंगे सुत्तं, पढमं वितियं तु चरिमम्मि ॥

वृ- अविनीतादीनां त्रयाणामपि पदानां अष्टिका भजना भवति, अष्टभङ्गीत्यर्थः । यथा-अविनीतो विकृतिप्रतिबद्धोऽव्यवशमितप्राभृतः १ अविनीतो विकृतिप्रतिबद्धो व्यवशमितप्राभृतः २ इत्यादि यावदष्टमो भङ्गो विनीतो विकृत्यप्रतिबद्धो व्यवशमितप्राभृतश्चेति । अत्र च प्रथमे भङ्गे प्रथमसूत्रं निपतति, 'चरमे' अष्टमे भङ्गे द्वितीयं सूत्रमिति ॥ अथ त्रयाणामपि वाचने यथाक्रमं दोषानाह-

[भा.५२०१] इहरा वि ताव थब्भति, अविनीतो लंभितो किमु सुएण ।
मा नट्ठो नासिहिती, खए व खारावसेओ तु ॥

वृ- 'इतरथाऽपि' श्रुतप्रदानमन्तरेणापि तावदविनीतः 'स्तभ्यते' स्तब्धो भवति किं पुनः श्रुतेन लम्भितः सन् ?, महिमानमिति शेषः । अतः स्वयं नष्टोऽसौ अन्यानपि मा नाशयिष्यति, क्षते वा क्षारावसेको मा भूदिति कृत्वा नासौ वाचनीयः ॥ अपि च-

[भा.५२०२] गोजूहस्स पडागा, सयं पयातस्स वड्डयति वेगं ।
दोसोदए य समणं, न होइ न निदानतुल्लं वा ॥

वृ- इह गोपालको गवामग्रतो भूत्वा यदा पताकां दर्शयति तदा ताः शीघ्रतरं गच्छन्तीति श्रुतिः; ततो गोयूथस्य स्वयं प्रयातस्य यथा पताका वेगं वर्धयति तथा दुर्विनीतस्यापि श्रुतप्रदानमधिकतरं दुर्विनयं वर्धयति । तथा दोषाणां-रोगाणामुदये 'चः' समुच्चये 'शमनम्' पथ्यं न दीयते, यतश्च निदानादुत्थितो व्याधि तत्तुल्यं-तत्सदृशमपि वस्तु रोगवृद्धिभयान्न दीयते; यद्वा दोषोदये दीयमानं शमनं न निदानतुल्यं भवति, किन्तु भवत्येव, ततो न दातव्यम्; एवमस्यापि दुर्विनयदोषभरे वर्तमानस्य श्रुतौषधमहितमिति कृत्वा न देयम् ॥

[भा.५२०३] विनयाहीया विज्ञा, देंति फलं इह परे य लोगम्मि ।
न फलंति विनयहीना, सस्साणि व तोयहीणाइं ॥

वृ- विनयेनाधीता विद्या इह परत्र च लोके फलं ददति, जनपूजनीयता-यशः प्रवाद-लाभादिकमैहिकं निश्रेयसादिकं चाऽऽमुष्मिकं फलं ढौकयन्तीति हृदयम् । विनयहीनास्तु ता अधीता न फलन्ति, सस्यानीव तोयहीनानि-यथा जलमन्तरेण धान्यानि न फलन्ति ॥

अथ विकृतिप्रतिबद्धमाह-

[भा.५२०४] रसलोलुताइ कोई, विगतिं न मुयति दढो वि देहेणं ।
अब्भंगेण व सगडं, न चलइ कोई विना तीए ॥

वृ- रसलोलुपतया कश्चिद् देहेन दृढोऽपि विकृतिं न मुञ्चति स वाचयितुमयोग्यः । कश्चित् पुनरभ्यङ्गेन विना यथा शकटं न चलति तथा 'तया' विकृत्या विना निर्वोढुं न शक्नोति तस्य गुरूणांमनुज्ञया विधिना गृह्णतो वाचना दातव्येति ॥ किञ्च-

[भा.५२०५] उस्सग्गं एगस्स वि, ओगाहिमगस्स कारणा कुणति ।
गिण्हति व पडिग्गहए, विगतिं वर मे विसज्जिंता ॥

वृ- योगं वहमानः कश्चिदेकस्याप्यवगाहिमस्य कारणाद् विकृत्यनुज्ञापनाविषयं कायोत्सर्गं करोति । प्रतिग्रहे वा विकृतिं गृह्णाति, वरममुनाऽप्युपायेन मे विकृतिं विसर्जयितारः ॥ एवं मायां कुर्वतः किं भवति ? इत्याह-

[भा.५२०६] अतवो न होति जोगो, न य फलए इच्छियं फलं विज्ञा ।
अवि फलति विउलमगुणं, साहनहीना जहा विज्ञा ॥

वृ- 'अतपाः' तपसा विहीनः 'योगः' श्रुतस्योद्देशनादिव्यापारो न भवति । न च तपसा विना गृह्यमाणा 'विद्या' श्रुतज्ञानरूपा 'ईप्सितं' मनोऽभिप्रेतं फलं फलति, 'अपि' इति अभ्युच्चये, प्रत्युत विपुलम् 'अगुणम्' अनर्थं फलति । यथा साधनहीना विद्या, यस्याः प्रज्ञप्तिप्रभृतिकाया विद्याया उपवासादिको यः साधनोपचारः सा तमन्तरेण गृह्यमाणेति भावः ॥

अथाव्यवशमितप्राभृतं व्याचष्टे-

[भा.५२०७] अप्पे वि पारमाणिं, अवराधे वयति खामियं तं च ।
बहुसो उदीरयंतो, अविओसियपाहुडो स खलु ॥

वृ- 'अल्पेऽपि' परुषभाषणादावपराधे "पारमाणिं" परमं क्रोधसमुद्घातं यो व्रजति, 'तच्च' अपराधजातं क्षामितमपि यो बहुश उदीरयति स स्वल्वव्यवशमितप्राभृत उच्यते ॥

अस्य वाचने दोषानाह-

[भा.५२०८] दुविधो उ परिच्चाओ, इह चोदण कलह देवयच्छलना ।
परलोगम्मि य अफलं, खित्तम्मि व ऊसरे बीजं ॥

वृ- दुर्विनीतादेरपात्रस्य वाचनादाने 'द्विविधः परित्यागः' इह-परलोकभेदाद् भवति । तत्रेहलोकपरित्यागो नाम-स यदि स्मारणादिना प्रेर्यते तदा कलहं करोति, अपात्रवाचनेन च प्रमत्तं प्रान्तदेवता छलयेत् । परलोके तु परित्यागः-तस्य श्रुतप्रदानं 'अफलं' सुगति-बोधिकालाभादिकं पारत्रिकं फलं न प्रापयति, ऊषर इव क्षेत्रे बीजमुप्तं यथा निष्फलं भवति ॥

"सो य इयरे य चत्ता" इति पदं व्याख्याति-

[भा.५२०९] वाइज्जंति अपत्ता, हनुदानि वयं पि एरिसा होमो।
इय एस परिच्चातो, इह-परलोगेऽनवत्था य ॥

वृ- स तावद् ज्ञानाचारविराधकतया संसारं परिभ्रमतीति परित्यक्तः। इतरेऽपि साधवस्तान् वाच्यमानान् दृष्ट्वा चिन्तयन्ति-अहो! अपात्राण्यपि यदि वाच्यन्ते "हनुदानि"त्ति ततः साम्प्रतं वयमपीदृशा भवामः; "इय" एवं तेषामपि दुर्विनयादौ प्रवर्तमानानामिह-परलोकयोः परित्यागः कृतो भवति। अनवस्था चैवं भवति, न कोऽपि विनयादिकं करोतीत्यर्थः ॥

अथ "द्वितीयपदमध्यादिषु भवति" इति यदुक्तं तद् व्याचष्टे-

[भा.५२१०] अद्धाण-ओमादि उवग्गहम्मि, वाए अपत्तं पि तु वट्टमाणं।
वुच्छिज्जमाणम्मि व संथरे वी, अन्नासतीए वि तु तं पि वाए ॥

वृ- अध्वनि वा अवमौदर्ये वा आदिशब्दाद् राजद्विष्टादिषु या भक्त-पानादिना गच्छस्योपग्रहे वर्तमानम् 'अपात्रमपि' दुर्विनीतादिकं लब्धिसम्पन्नं वाचयेत्। अथवा किमप्यपूर्वं श्रुतं तस्याऽऽचार्यस्य समस्ति, पात्रभूतश्च शिष्यो न प्राप्यते, तच्चान्यत्रासङ्क्राम्यमाणं व्यवच्छिद्यते, ततःसंस्तरणेऽपि अपात्रं वाचयेत्। यद्वा नास्ति तस्यान्यः कोऽपि शिष्यस्ततोऽन्यस्याभावे 'मा सूत्रार्थौ विस्मरताम्' इति कृत्वा 'तमपि' अपात्रभूतं वाचयेत्॥

मू. (११७) *तओ दुसन्नप्पा पन्नत्ता, तं जहा-दुट्ठे मूढे वुग्गाहिए ॥*

वृ- अस्य सम्बन्धमाह-

[भा.५२११] सम्मत्ते वि अजोग्गा, किमु दिक्खण-वायणास दुट्ठादी।
दुसन्नप्पारंभो, मा मोह परिस्समो होज्जा ॥

वृ- दुष्टादयस्त्रयः सम्यक्त्वग्रहणेऽप्ययोग्याः किं पुनर्दीक्षण-वाचनयोः?, अतस्तेषां प्रज्ञापने 'मोघः' निष्फलः प्रज्ञापकस्य परिश्रमो मा भूदिति दुःसंज्ञाप्यसूत्रमारभ्यते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-त्रयः दुःखेन-कृच्छ्रेण संज्ञाप्यन्ते-प्रतिबोध्यन्त इति दुःसंज्ञाप्याः प्रज्ञप्ताः। तद्यथा-'दुष्टः' तत्त्वं प्रज्ञापकं वा प्रति द्वेषवान्, स चाप्रज्ञापनीयः, द्वेषेणोपदेशाप्रतिपत्तेः। एवं 'मूढः' गुण-दोषानभिज्ञः। 'व्युद्ग्राहितो नाम' कुप्रज्ञापकदृढीकृतविपरीतावबोधः। एष सूत्रार्थः। अथ भाष्यविस्तरः-

[भा.५२१२] दुसन्नप्पो तिविहो, दुट्ठाती दुट्ठो वन्नितो पुव्विं।
मूढस्स य निक्खेवो, अट्ठविहो होइ कायव्वो ॥

वृ- दुःसंज्ञाप्यो दुष्टादिभेदात् त्रिविधः। तत्र दुष्टः 'पूर्वं' पाराञ्चिकसूत्रे यथा वर्णितः तथाऽत्रापि मन्तव्यः। मूढस्य पुनरष्टविधो निक्षेपो वक्ष्यमाणनीत्या कर्तव्यो भवति ॥

तत्र पदत्रयनिष्पन्नामष्टभङ्गीं तावदाह-

[भा.५२१३] दुट्ठे मूढे वुग्गाहिए य भयणा उ अट्ठिया होइ।
पढमगभंगे सुत्तं, पढमं बिइयं तु चरिमम्मि ॥

वृ- दुष्टो मूढो व्युद्ग्राहित इति त्रिभिः पदैरष्टिका भजना भवति, अष्टौ भङ्गा इत्यर्थः। अत्र च प्रथमे भङ्गे प्रथमं सूत्रं निपतति, 'चरमे' अष्टमे भङ्गे 'अदुष्टोऽमूढोऽव्युद्ग्राहितः' इत्येवंलक्षणे

'द्वितीयं' क्ष्यमाणं सूत्रमिति ॥ अथ मूढस्याष्टधा निक्षेपमाह-

[भा.५२१४] दव्व दिसि खेत्त काले, गणणा सारिक्ख अभिभवे वेदे ।
वुग्गाहणमन्नाणे, कसाय मत्ते य मूढपदा ॥

वृ-द्रव्यमूढो दिग्मूढः क्षेत्रमूढः कालमूढो गणनामूढः सादृश्यमूढोऽभिभवमूढो वेदमूढश्चेत्यष्टधा मूढः । तथा "वुग्गाहण"त्ति व्युद्ग्राहणामूढो व्युद्ग्राहित इति चैकोऽर्थः, स च वक्ष्यमाणद्वीपजातवणिक्सुतादिवत् । "अन्नाणि"त्ति नञः कुत्सार्थत्वाद् 'अज्ञानं' मिथ्याज्ञानम्, तच्च भारत-रामायणादिकुशास्त्रश्रुतिसमुत्थम्, तेन यो मूढः सोऽपि व्युद्ग्राहितो भण्यते । 'कषायमूढः' तीव्रकषायवान्, स च कषायदुष्टे सर्षपनालादिदृष्टान्तसिद्धेऽन्तर्भवति । 'मत्तो नाम' यक्षावेशेन मोहोदयेन वा उन्मत्तीभूतः, स च अभिभवमूढ-वेदमूढावावतरतीति । एतानि मूढपदानि भवन्तीति द्वारगाथासङ्क्षेपार्थः ॥ साम्प्रतमेनामेव विवृणोति-

[भा.५२१५] धूमादी बाहिरतो, अंतो धत्तूरगादिणा दव्वे ।
जो दव्वं व न जाणति, घडिगावोद्रो व्व दिट्ठं पि ॥

वृ- इह यो बाह्येनाभ्यन्तरेण वा द्रव्येण मोहमुपगतः स द्रव्यमूढ उच्यते । तत्र बाह्यतो धूमादिनाऽऽकुलितो यो मुह्यति, 'अन्तः' अभ्यन्तरे च धत्तूरकेण मदनकोद्रवोदनेन वा भुक्तेन यो मुह्यति । अथवा यः पूर्वदृष्टं द्रव्यं कालान्तरे दृष्टमपि न जानीते स द्रव्यमूढः । घटिकावोद्रवत्-

एगस्स वाणियस्स पवसियस्स भज्जा पंडरंगेण समं संपलग्गा । पंडरंगेण भन्नति-अनिव्वुयए हियए केरिसी रती ?, विविक्तविस्रम्भरसो हि कामः, तो नस्सामो । 'मा य अयसो होहिति' त्ति अनाहमडवं छोढुं पलीवित्ता नट्ठाणि गंगातडं गयाइं । सो वणितो अन्नया आगओ घरं दड्ढं पासित्ता तानि य अट्ठियाणि रोविउमाढत्तो । भज्जासिनेहानुरागेणं 'एयाणि अट्ठीणि से गंगं नेमि' त्ति तानि अनाहमडयऽट्ठियाणि घडियाए छोढुं गंगं गतो । तीए भज्जाए य दिट्ठो, न य संजाणति । ताए पुच्छिओ-को तुमं ? । तेन अक्खायं-पवसियस्स घरं दड्ढं, भज्जा य मे दड्ढा, ततो मए भज्जानुरागेणं 'तानि अट्ठियाणि गंगं नेमि' त्ति आगतो, 'गंगाए छूढेहिं सुगतिं जाहिति' एवं पि त से सेयं करेमि। तीसे अनुकंपा जाया । तीए भणियं-अहं सा तव भज्जा । न पत्तियति । एयाणि अट्ठियाणि किं अलिक्कयाणि ? । बहुविहं भन्नमाणो जाहे न पत्तियति ताहे तीए जं पुव्विं कीलियं जंपियं भुत्तं एवमाद सव्वं साभिन्नाणं संवादियं ताहे पत्तिज्जिओ । एस दव्वमूढो ॥

अथ दिग्मूढ-क्षेत्रमूढ-कालमूढानाह-

[भा.५२१६] दिसिमूढो पुव्वाऽवर, मन्नति खेत्ते तु खेत्तवच्चासं ।
दिव-रातिविवच्चासो, काले पिंडारदिट्ठंतो ॥

वृ- दिग्मूढो नाम-विपरीतां दिशं मन्यते, यथा-पूर्वामपरामिति । क्षेत्रमूढः-क्षेत्रं न जानाति, क्षेत्रस्य वा विपर्यासं करोति, विपरीतमवबुध्यते इत्यर्थः, रात्रौ वा परसंस्तारकमात्मीयं मन्यते, एष क्षेत्रमूढः । कालमूढो दिवसं रात्रिं मन्यते । अत्र पिण्डारदृष्टान्तः- एगो पिंडारगो उब्भामिगासुतो अब्भवद्दले माहिसदधि-दुद्धं निसढं पाउं दिवसतो सुत्तो । तओ उट्ठिओ निद्दाचमढितो जोण्हं मन्नमाणो दिवा चेव महिसीओ घेत्तुं छोढूण उब्भामिगाघरं पट्ठितो । 'किमेयं ?' ति जणकलकलो जातो तओ विलक्खीभूओ त्ति । एवं दिय-राइविवच्चासं कुणंतो कालमूढो भन्नइ ॥ गणनामूढं

साध्श्यमूढं चाह-

[भा.५२१७] ऊनाधिय मन्नंतो, उट्टारूढो व गणणतो मूढो ।
सारिक्ख थाणु पुरिसो, कुडुंबिसंगामदिट्ठंतो ॥

वृ-यो गणयन् ऊनमधिकं वा मन्यते स उष्ट्रारूढ इव गणनामूढो भण्यते । जहा-एगो उट्टपालो उट्टीओ एगवीसं रक्खइ । अन्नया उट्टीए आरूढो गणितो जत्थ आरूढो तं न गणेइ, सेसा वीसं गणेइ । पुनो वि गणेइ वीसं । 'नत्थि मे एगो उट्टो' त्ति अन्ने पुच्छइ । तेहिं भणितो-जत्थारूढो सि एस ते इगवीसइमो ॥ साध्श्यमूढो यथा स्थाणुं पुरुषं मन्यते । अत्र च कुटुम्बिनी-महत्तर-सेनापती तयोः सङ्ग्रामेण ध्ष्टान्तः- एगो गामो चोरसेणावइणा चोरेहिं समं आगंतूण रत्तीए हतो । तत्थ य गामे जो महत्तरो सो तत्थ चोरसेणावइस्स सरिसो । तओ संगामे उवट्ठिए चोरसेनावई मारितो, गामिल्लएहिं 'महयरो' त्ति मन्नमाणेहिं दड्ढो । चोरेहि य गाममहयरो 'सेनावइ' त्ति काउ पल्लिं नीओ। सो भणति-नाहं सेणाहिवो । चोरा भणंति-एस रणपिसइओ त्ति पलवइ । अन्नया सो नासिउं सगामं गतो । ते भणंति-को सि तुमं ? पेतो पिसाओ वा तेन पडिरूवेण आगओ ? । तओ साभिन्नाणे कहिए पच्छा संगहिओ । उभओ वि सयणा सारिक्खमूढा ॥ अथाभिभवमूढमाह-

[भा.५२१८] अभिभूतो सम्मुज्झति, सत्थ-ऽग्गी-वादि-सावयादीहिं ।
अब्भुदय अनंगरती, वेदम्मि तु रायदिट्ठंतो ॥

वृ- सङ्ग्रामादौ खड्गादिना शस्त्रेण, प्रदीपनके वा अग्निना, वादकाले वा वादिना, अरण्ये वा श्वापद-स्तेनादिभिश्चाभिभूतो यः सम्मुह्यति सोऽभिभवमूढः । वेदमूढस्तु स उच्यते यः 'अभ्युदयेन' अतीववेदोदयेन 'अनङ्गरतिम्' अनङ्गक्रीडां करोति । राजध्ष्टान्तश्चात्रभवति- जहा आनंदपुरं नगरं । जितारी राया । वीसत्था भारिया । तस्स पुत्तो अनंगो नाम बालत्ते अच्छिरोगेण गहितो निच्चं रुयंतो अच्छति । अन्नया जननीते नगिनियाए अहाभावेन जानु-ऊरुअंतरे छोढुं उवगूहितो । दो वि तेसिं गुज्झा परोप्परं समप्फिडिता, तहेव तुण्हिक्को ठितो । लद्धोवाया रुवंतं पुनो पुनो तहेव करेति । सो वि ट्ठायति रुयंतो । पवड्ढमाणो तत्थेव गिद्धो । मातुए वि अनुप्पियं । पिता से मतो । सो रज्जे ठितो तहावि तं मायरं परिभुंजति । सचिवादीहिं वुच्चमाणो वि नो ठितो ॥

पूर्वोक्तं वक्ष्यमाणं चार्थं सङ्ग्रहीतुमिमां गाथामाह-

[भा.५२१९] राया य खंतियाए, वणि महिलाए कुला कुडुंबिम्मि ।
दीवे य पंचसेले, अंधलग सुवन्नकारे य ॥

वृ- 'राजा' अनन्तरोक्तः खन्तिकायामनुरक्तो वेदमूढः । 'वणिग्' घटिकावोद्राख्यः स्वमहिलायां रक्तः स्वमहेलामनुपलक्षयन् द्रव्यमूढः । 'कुटुम्बिनः' सेनापतेर्महत्तरस्य च कुलानि साध्श्यमूढे उदाहरणम् ॥ ''दीवे'' त्ति द्वीपजातः पुरुषः । ''पंचसेले'' त्ति पञ्चशैलवास्तव्याभिरप्सरोभिर्व्युद्ग्राहितः सुवर्णकारः । ''अंधलग'' त्ति धूर्तव्युद्ग्राहिता अन्धाः । ''सुवन्नगारे'' त्ति सुवर्णकारव्युद्ग्राहितः पुरुषः । एते चत्वारोऽपि वक्ष्यमाणलक्षणा व्युद्ग्राहणामूढा मन्तव्याः । एष सङ्ग्रहगाथासमासार्थ ॥ साम्प्रतमेनामेव विवृणोति-

[भा.५२२०] बालस्स अच्छिरोगे, सागारिय देवि संफुसे तुसिणी ।
उभय चियत्तऽभिसेगे, न ठाति वुत्तो वि मंतीहिं ॥

वृ- इदं गाथात्रयं गतार्थम् । नवरम्-''उभय चियत्तऽभिसेगे''त्ति 'उभयोरपि' देवी-कुमारयोः प्रीतिकरं तद् विषयसेवनम् । राज्याभिषेकेऽपि सञ्जाते तामसौ न मुञ्चति ॥

[भा.५२२१] छोढूणऽनाहमडयं, झामिउं घरं पतिम्मि उ पउत्थे ।
धुत हरणुज्झ पतिं अट्ठि गंग कहिते य सद्दहणा ॥

वृ- द्वितीयगाथायाम्-''धुत हरणुज्झ''त्ति धूर्तेन तस्या वणिग्भार्याया अपहरणम् । तस्या अपि पतिमुज्झित्वा गङ्गातटे गमनम् ॥

[भा.५२२२] सेनावतिस्स सरिसो, वणितो गामिल्लतो निओ पल्लिं ।
नाहं ति रणपिसाई, घरे वि दट्ठो त्ति नेच्छंति ॥

वृ- तृतीयगाथायाम्-''नाहंति'' इत्यादि, महत्तरेण 'नाहं सेनापतिः' इत्युक्ते चौराश्चिन्तयन्ति-एष रणपिशाचकी तेनैवं वक्ति । गृहेऽपि गतं तं महत्तरं ते ग्रामेयकाः 'दग्धः' इति कृत्वा नेच्छन्ति सङ्ग्रहीतुम् ॥ व्याख्यातो मूढः । सम्प्रति व्युद्ग्राहितं व्याचिख्यासुर्द्वीपजातदृष्टान्तमाह-

[भा.५२२३] पोतविवत्ती आवन्नसत्त फलएण गाहिया दीवं ।
सुतजम्म वड्ढि भोगा, वुग्गाहण नाववणियाऽऽया ॥

वृ- एगो वणितो । तस्स भज्जा अईव इट्ठा । सो वाणिज्जेण गंतुकामो तं आपुच्छति । तीए भणियं-अहं पि आगच्छामि । तेन सा नीला । सा गुव्विणी । समुद्दमज्झे विनट्ठं जाणवत्तं । सा फलगं विलग्गा अंतरदीवे पत्ता । तत्थेव पसूता दारगं । सो वणिओ समुद्दे मओ । सा भाउेला तम्मि चेव दारए संपलग्गा । ताए सो वुग्गाहितो-जइ माणुसं पिच्छिज्जासि तो नासेज्जासि, ते मानुसरूवेण रक्खसा । अन्नया दुव्वायहयपोएण वाणिया आगया । ते दट्ठुं सो नासेइ । तेहिं नायं वुग्गाहिओ केणावि । कह वि अल्लीणो पुच्छिओ सव्वं कहेइ । तेहिं बहुसो पन्नविओ-एयं महापावं, परिच्चयाहि । तहा वि नो परिच्चयति ॥ अथाक्षरार्थः-'पोतः' प्रवहणं तस्य विपत्ति । आपन्नसत्त्वा च सा फलकेन द्वीपं ग्राहिता । सुतस्य जन्म वृद्धिश्चाभवत्, भोगांश्च तेन सह भोक्तुमारब्धा । व्युद्ग्राहणकं च कृतम् । नौवणिजश्च चिरादायाताः । एवंविधा व्युद्ग्राहिताः प्रज्ञापनाया अयोग्याः ॥ तथा चाह-

[भा.५२२४] पुव्विं वुग्गाहिया, केई, नरा पंडियमानिनो ।
निच्छंति कारणं किंची, दीवजाते जहा नरे ॥

वृ- पूर्वं व्युद्ग्राहिताः केचिद् नराः पण्डितमानिनो नेच्छन्ति कारणं किञ्चित् श्रोतुमिति शेषः, द्वीपजातो यथा नरः ॥ अथ पञ्चशैलदृष्टान्तमाह-

[भा.५२२५] चंपा अनंगसेनो, पंचऽच्छर थेर नयन दुम वलए ।
विहपास नयन सावग, इंगिनिमरणे य उववातो ॥

वृ- चम्पायामनङ्गसेनः सुवर्णकारः, कुमारनन्दीति तस्य नामान्तरम् । तस्य च पञ्चशैलद्वीपवास्तव्याभ्यामप्सरोभ्यां व्युद्ग्राहितस्य स्थविरेण तत्र नयनम् । 'द्रुमश्च' वटवृक्षोऽपान्तराले दृष्टः तत्राऽऽरोहणम् । स्थविरस्य 'वलये' आवर्ते गत्वा मरणम् । 'विहपास'त्ति 'विहगाः' भारण्डनामानः पक्षिणस्तेषां दर्शनम् । तैः पञ्चशैलद्वीपे नयनम् । हास-प्रहासाभ्यां भूय इहानीतस्य श्रावकेण च बहुतरं प्रज्ञाप्यमानस्य तस्येङ्गिनीमरणप्रतिपत्ति । ततः पञ्चशैलद्वीपे उपपात इत्यक्षरार्थः । कथानकं तु सुप्रतीतं बहुविस्तरं चेति कृत्वा न लिख्यते ॥ अन्यदृष्टान्तमाह-

[भा.५२२६] अंधलगभत्त पत्थिव, किमिच्छ सेज्जऽन्न धुत्त वंचणता ।
अंधलभत्तो देसो, पच्चयसंघाडणा हरणा ॥

वृ- अन्धभक्तः कश्चित् पार्थिवः । स किमीप्सितं शय्या-ऽन्नादिदानं ददाति । धूर्तेन च तेषां वञ्चना । कथम् ? इत्याह- 'अन्धलगभक्तोऽमुको देशः, प्रवसित तत्र युष्मान् नयामः' इत्युक्त्वा पर्वते सङ्घाटना कृता, परस्परं लगयित्वा तत्र भ्रामिता इत्यर्थः । ततः 'हरणं' तदीयं द्रव्यं हृत्वा गत इत्यक्षरार्थ । भावार्थ पुनरयम्- अंधपुरं नगरं । तत्थ अनंधो राया । सो य अंधभत्तो तेन सभ काउं अंधलयाणं अग्गाहारो दिन्नो । तत्थ खाण-पाणाइए सुपरिग्गहिया सुस्सूसिज्जंता अच्छंति । तेसिं सुबहुं दव्वं अत्थि । अन्नया य एगेन धुत्तेण दिट्ठा । तओ 'एए मुसामि'त्ति मिच्छोवयारेणं ते अतीव उवचरति । अन्नया तेन अंधलया भणिया-अम्हे अंधलगदासा, जत्थ अम्हे वसामो सो सव्वो विदेसो अंधलगभत्तो, राया य तत्थ अंधलाणं अम्मापियरं, तुब्भे एत्थ दुहिया, जइ इच्छह तो तत्थ नेमो । तेहिं इच्छियं । तओ रातो नीणेत्ता नाइदूरेण भणिया-इहऽत्थि चोरा, जइ मे किंचि अंतद्धणं अत्थि तो अप्पेह । तेहिं वीसंभेण अप्पियं । तओ तेन ते पुरिल्लं मग्गिल्लस्स लाइत्ता अन्नोन्नलग्गा महंतं सिलं छिन्नटंकं डोंगरसमं भामिया भणिया य- पत्थरे गेण्हह, जो भे अल्लियइ तं पहणेज्जाह, जइ भे कोइ भणेज्जा-'मुसिया केन वि अंधा डोंगरं भामिया' जाणह ते चोरे, तओ पहणिज्जाह । एवं भणित्ता पलामो । ते य गोवालमाईहिं दिट्ठा, भणंति य-मुद्धा वरागा डोंगरं भामिया धुत्तेणं । तओ 'एते ते चोर'त्ति काउं पत्थरे खिवंति ढोयं च न देंति ॥ सुवर्णकारदृष्टान्तमाह-

[भा.५२२७] लोभेण मोरगाणं, भच्चग ! छेज्जेज्ज मा हु ते कन्ना ।
छादेमि णं तंबेणं, जति पत्तियसे न लोगस्स ॥

वृ-कश्चिद् चोद्रः सुवर्णकारेण मणितः, यथा-'मच्चक !' भागिनेय ! "मोरगाणं" ति कुण्डलानां लोभेन मा 'ते' तव कर्णौ छिद्येताम्, अतो यदि लोकस्य न प्रत्ययसे ततः "ण"मित एतद् कुण्डलयुगलं ताम्रेण छादयाम्यहमित्यक्षरार्थ । भावार्थस्त्वयम्- एगस्स चोद्दस्स जच्चसुवन्नघडियाणि कुंडलानि कन्नेसु सुवन्नकारेण दिट्ठाणि । तओ तेन भन्नइ-भागिणेज्ज ! अहं तव एते एवं करेमि जहा एगानियस्स पंथे वच्चमाणस्स न कोइ हरइ, अन्नहा ते सुवन्नलोभेण चोरेहिं कन्ना छेज्जेस्संति । तेन भणियं-एवं होउ त्ति । कलाएण ते कुंडले घेत्तुं अन्ने सुवन्नरीरियामया कां दिन्ना, भणिओ अ-जणो भणिहिइ-कलाएण मुट्ठो वराओ, न य ते पत्तिज्जियव्वं । 'एवं' पडिवज्जित्ता निग्गओ । लोगो जो जो पासइ सो सो भणइ-सुंदरा रीरिया । सो भणइ-सोवन्निया एए, तुब्भे विसेसं न याणह ॥ किञ्च-

[भा.५२२८] जो इत्थं भूतत्थो, तमहं जाणे कलायमामो य ।
वुग्गाहितो न जाणति, हितएहि हितं पि भन्नंतो ॥

वृ- योऽत्र कोऽपि 'भूतार्थः' परमार्थ तमहं जाने कलादमामकश्च जानाति । एवमसौ तेन सुवर्णकारेण व्युद्ग्राहितो हितैः पुरुषैः हितमपि भण्यमानो न जानाति । ईदृशा व्युद्ग्राहणामूढा मन्तव्याः । अज्ञानमूढादयस्तु सुगमत्वाद् भाष्यकृता न व्याख्याताः, अत एवास्माभिर्द्वारगाथायामेव व्याख्याता इति ॥ अथैषां मध्ये के मूढाः ? के वा व्युद्ग्राहिता ? इति दर्शयन्नाह-

[भा.५२२९] रायकुमारो वणितो, एते मूढा कु य ते दो वि ।
वुग्गाहिया य दीवे, सेलंधल-भच्चए चेव ॥

वृ-यो राजकुमारो मातृप्रतिसेवकः, यश्च वणिग् घटिकावोद्राख्यः, ये च 'ते' सेनापति-महत्तरसत्के द्वे अपि कुले, एते मूढा मन्तव्याः । यस्तु द्वीपजातः, यश्च पञ्चशैलसुवर्णकारः, ये चान्याः यश्च 'भद्रकः' सुवर्णकारभागिनेयः, उपलक्षणत्वाद् ये च भारतादिकुशास्त्रश्रुतिभावितास्ता अज्ञानमूढाः, एते व्युद्ग्राहिता मन्तव्याः ॥ अथैषां मध्ये के प्रव्राजयितुं योग्याः ? के वा न ? इत्याह-

[भा.५२३०] मोत्तूण वेदमूढं, अप्पडिसिद्धा उ सेसा मूढा ।
वुग्गाहिता य दुट्ठा, पडिसिद्धा कारणं मोत्तुं ॥

वृ-वेदमूढं मुक्त्वा ये 'शेषाः' द्रव्य-क्षेत्रमूढादयस्तेऽप्रतिषिद्धाः, प्रव्राजयितुं कल्पन्त इत्यर्थः। ये तु व्युद्ग्राहिताः 'दुष्टाश्च' कषायदुष्टादयस्ते कारणं मुक्त्वा प्रतिषिद्धाः, कारणे तु कल्पन्त इति भावः ॥ किमर्थमेते प्रतिषिद्धाः ? इत्याह-

[भा.५२३१] जं तेहिं अभिग्गहियं, आमरणंताए तं न मुंचंति ।
सम्मत्तं पि न लग्गति, तेसिं कत्तो चरित्तगुणा ॥

वृ-यत् 'तैः' व्युद्ग्राहितादिभिः किमपि शाक्यादिदर्शनम् अन्यद्वा भारतादिकं मिथ्याश्रुतम् 'अभिगृहीतम्' आभिमुख्येनोपादेयतया स्वीकृतं तद् आमरणान्तं न मुञ्चन्ति । अत एवैतेषां सम्यक्त्वमपि न लगति, कुतश्चारित्रगुणाः ? इति ॥

कथं पुनरमीषां सम्यक्त्वमपि न लगति ? इत्याह-

[भा.५२३२] सोय-सुय-घोररणमुह-दारभरण-पेयकिच्चमइएसु ।
सग्गेसु देवपूयण-चिरजीवन-दानदिट्ठेसु ॥

वृ-इह भारतादौ शौच-सुत-घोररणमुख-दारभरण-प्रेतकृत्यमयेषु देवपूजन-चिरजीवन-दानदृष्टेषु च स्वर्गेषु ये भाविता भवन्ति, यथा-शौचविधानात् पुत्रोत्पादनाद् घोरसमरशिरःप्रवेशाद् धर्मपत्नीपोषणात् पिण्डप्रदानादिप्रेत्यकर्मविधानाद् वैश्वानरादिदेवपूजनात् चन्द्रसहस्रादि-रूपचिरकालजीवनाद् धेनु धरित्र्यादिदानात् स्वर्गा अवाप्यन्ते ॥

[भा.५२३३] इच्चेवमाइलोइयकुस्सुइवुग्गाहणाकुहियकन्ना ।
फुडमवि दाइज्जंतं, गिण्हंति न कारणं केई ॥

वृ-इत्येवमादिलौकिककुश्रुतिव्युद्ग्राहणाकुथितकर्णा सन्तस्तस्याः कुश्रुतेरघटनायां स्फुटमपि दर्श्यमानं 'कारणम्' उपपत्तिं 'केचिद्' गुरुकर्माणो न प्रतिपद्यन्ते अतस्ते दुःसंज्ञाप्या मन्तव्याः ॥

मू. *(११८) तओ सुसन्नप्पा पन्नत्ता, तं जहा-अदुट्ठे अमूढे अवुग्गाहिए ॥*

वृ-त्रयः 'सुसंज्ञाप्याः' सुखप्रज्ञापनीयाः प्रज्ञप्ताः । तद्यथा-अदुष्टोऽमूढोऽव्युद्ग्राहितश्चेति ॥ आह-पूर्वसूत्रेणैवार्थापत्त्या इदमवसीयते-यदेतद्विपरीता अदुष्टादयः सुसंज्ञाप्यः ततः किमर्थमिदमारब्धम् ? उच्यते-

[भा.५२३४] कामं विपक्खसिद्धी, अत्थावत्तीइ होतऽवुत्ता वि ।
तह वि विवक्खोवुच्चति, कालियसुयधम्मता एसा ॥

वृ-'कामम्' अनुमतमिदम्-विपक्षस्य-प्रतिपक्षार्थस्य सिद्धिरनुक्ताऽप्यर्थापत्त्या भवति तथापि विपक्षः साक्षादुच्यते । कुतः ? इत्याह-कालिकश्रुतस्य 'धर्मता' स्वभावः शैली एषा-यदर्थापत्ति-लब्धोऽप्यर्थः साक्षादभिधीयते ॥ तथा च तल्लक्षणान्येव दर्शयति-

[भा.५२३५] ववहारे नऽत्थवत्ती, अणप्पिए य चउत्थमासाए।
मूढनय अगमितेन य, कालेन य कालियं नेयं ॥

वृ- ''ववहारे''ति नैगम-सङ्ग्रह-व्यवहाराख्यास्त्रयो व्यवहारनय उच्यते, ऋजुसूत्राद्यास्तु चत्वारो निश्चयनयः। तत्र 'व्यवहारेण' व्यवहारनयसमतेन कालिकश्रुते प्रायः सूत्रार्थनिबन्धो भवति, ''अहिगारो तीहि ओसन्नं''ति वचनात्। ''नऽत्थवत्ती''ति अर्थापत्ति कालिकश्रुते न व्यवह्रियते किन्तु तया लभ्योऽप्यर्थः प्रपञ्चितज्ञविनेयजनानुग्रहाय साक्षादेवाभिधीयते, यथा उत्तराध्ययनेषु प्रथमाध्ययने ''आणानिद्देसकरे'' इत्यादिना विनीतस्वरूपमभिधायार्थापत्तिलब्धमप्यविनीत-स्वरूपम् ''आणाअनिद्देसकरे'' इत्यादिना भूयः साक्षादभिहितमिति। ''अणप्पिएण य''त्ति 'अनर्पितं-विषयविभागस्यानर्पणं तेन कालिकश्रुतं रचितम्, विशेषाभिधानरहितमित्यर्थः, यथा-''जे भिक्खू हत्थकम्मं करेइ से आवज्जइ मासियं परिहारट्ठाणं अनुग्घाइयं'' अत्र च यस्मिन्नवसरे यथा हस्तकर्म सेवमानस्य मासगुरुकं भवति स विशेषः सूत्रे साक्षान्नोक्तः परमर्थादवगन्तव्यः, एवमन्यत्रापि द्रष्टव्यम्। ''चउत्थमासाए''त्ति इह-सत्या-मृषा-मिश्रा-ऽसत्यामृषाभेदात् चतस्रः भाषा-। तत्र परेण सह विप्रतिपत्ती सत्यां वस्तुनः साधकत्वेन बाधकत्वेन वा प्रमाणान्तरैरबाधिता या भाषा भाष्यते सा सत्या, सैव प्रमाणैर्बाधिता मृषा, सैव बाध्यमाना-ऽबाध्यमानरूपा मिश्रा या वस्तुसाधकत्वाधविवक्षया व्यवहारपिता स्वरूपमात्राभिधित्सया प्रोच्यते सा पूर्वोक्त-भाषात्रयविलक्षणा असत्यामृषा नाम चतुर्थभाषा भण्यते, सा चामन्त्रण्या-ऽऽज्ञापनीप्रभृतिस्वरूपा, तया कालिकश्रुतं निबद्धम्; यथा-''गोयमा!'' इत्यामन्त्रणी, ''सव्वे जीवा न हंतव्वा'' इत्याज्ञापनी इत्यादि। दृष्टिवादस्तु नैगमादिनयमतप्रतिबद्धनिपुनयुक्तिभिर्वस्तुत-त्वव्यवस्थापकतया सत्यभाषानिबद्ध इति भावः। तथा मूढाः-विभागेनाव्यवस्थापिता नया यस्मिन् तद् मूढनयम्, भावप्रधानश्चायं निर्देशः, ततो मूढनयत्वेन कालिकं विज्ञेयम्। तथा गमाः-भङ्गगणितादयः सदृशपाठा वा तैर्युक्तं गमिकम्, तद्विपरीतमगमिकम्, तेनागमिकत्वेन कालिकश्रुतं ज्ञेयम्, ''गमियं दिट्ठिवाओ, अगमियं कालियं'' (नन्दी) इति वचनात्। कालेन हेतुभूतेन निर्वृतं कालिकम्, काले-प्रथम-चरमपौरुषीलक्षणे पठ्यत इति व्युत्पत्तेः। एतैर्लक्षणैः कालिकश्रुतं ज्ञेयम्।

मू. (११९) *निग्गंथिं च णं गिलायमाणिं पिता वा भाया वा पुत्तो वा पलिस्सएज्जा, तं च निग्गंथी साइज्जेज्जा, मेहुणपडिसेवणपत्ता आवज्जइ चाउम्मासियं परिहारट्ठाणं अनुग्घाइयं ॥*

मू. (१२०) *निग्गंथं च नं गिलायमाणं माया वा भगिनी वा धूता वा पलिस्सएज्जा, तं च निग्गंथे साइज्जेज्जा, मेहुणपडिसेवणपत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अनुग्घाइयं ॥*

वृ- अथास्य सूत्रद्वयस्य कः सम्बन्धः? इत्याह-

[भा.५२३६] उवहयभावं दव्वं, सच्चित्तं इति निवारियं सुत्ते।
भावाऽसुभसंवरणं, गिलाणसुत्ते वि जोगोऽयं ॥

वृ- दुष्टाभिदोषैः उपहतः-दूषितः भावः-परिणामो यस्य तदुपहतभावम्, एवंविधं सचित्तं द्रव्यं प्रव्राजनादौ ''इय'' एवमनन्तरसूत्रे निवारितम्। इहापि ग्लानसूत्रेऽशुभभावस्य परिष्वजनानु-मोदनलक्षणस्य 'संवरणं' निवारणं विधीयते। अयं 'योगः' सम्बन्धः॥ अनेनायातस्यास्य व्याख्या-'निर्ग्रन्थी' प्रागुक्तशब्दार्थम्, चशब्दो वाक्यान्तरोपन्यासे, ''णं'' इति वाक्यालङ्कारे, ''गिलायमाणिं''

ति 'ग्लायन्तीं' ''ग्लै हर्षक्षये'' शरीरक्षयेण हर्षक्षयमनुभवन्तीं पिता वा भ्राता वा पुत्रो वा निर्ग्रन्थः सन् 'परिष्वजेत्' प्रपतन्ती धारयन् निवेशयन् उत्थापयन् वा शरीरे स्पृशेत्, 'तं च' पुरुषस्पर्शं सा निर्ग्रन्थी मैथुनप्रतिसेवनप्राप्ता 'स्वादयेत्' अनुमोदयेत् तत आपद्यते चातुर्मासिकं परिहार-स्थानमनुद्धातिकम् ॥ एवं निर्ग्रन्थसूत्रमपि व्याख्येयम् । नवरम्-माता वा भगिनी वा दुहिता वा परिष्वजेत्; एष सूत्रार्थः ॥ अथ निर्युक्तिविस्तरः-तत्र परः प्राह-ननु 'पुरुषोत्तमो धर्म' इति कृत्वा प्रथमं निर्ग्रन्थस्य सूत्रमभिधातव्यं ततो निर्ग्रन्थ्याः, अतः किमर्थं व्यत्यासः ? इत्याह-

[भा.५२३७] कामं पुरिसादीया, धम्मा सुत्ते विवज्जतो तह वि ।
दुब्बल-चलस्सभावा, जेणित्थी तो कता पढमं ॥

वृ- 'कामम्' अनुमतमिदम्-यत् 'पुरुषादयः' पुरुषमुख्या धर्मा भवन्ति, तथापि सूत्रे विपर्ययः कृतः । कुतः ? इत्याह-दुर्बला-धृतिबलविकला चलस्वभावा च स्त्री येन कारणेन भवति ततः प्रथमसौ कृता इत्यदोषः ॥

[भा.५२३८] वइणि त्ति नवरि नेम्मं, अन्ना वि न कप्पती सुविहियाणं ।
अवि पसुजाती आलिंगिउं पि किमु ता पलिस्सइउं ॥

वृ- इह सूत्रे यद् 'व्रतिनी' निर्ग्रन्थी भणिता तद् नवरं 'नेमं' चिह्नम् उपलक्षणं द्रष्टव्यम्, तेनान्याऽपि स्त्री सुविहितानां न कल्पते परिष्वक्तुम् । इदमेव व्याचष्टे-'पशुजातिरपि' छागिकाप्रभृति-पशुजातीयस्त्ररपि आलिङ्गितुं न कल्पते, किमु तावत् परिष्वक्तुम् ? ॥

यत् तु सूत्रे परिष्वजनमभिहितं तत् कारणिकम् अत एवाह-

[भा.५२३९] निग्गंथो निग्गंथिं, इत्थि गिहत्थं च संजयं चेव ।
पलिसयमाणे गुरुगा, दो लहुगा आणमादीणि ॥

वृ- निर्ग्रन्थो निर्ग्रन्थीं परिष्वजति चतुर्गुरुकाः तपसा कालेन च गुरवः । 'स्त्रियम्' अविरतिकां परिष्वजति त एव तपसा गुरवः । गृहस्थं परिष्वजति चतुर्लघुकाः कालेन गुरवः । संयतं परिष्वजति त एव 'द्वाभ्यामपि लघवः' तपसा कालेन च । सर्वत्र चाज्ञादीनि दूषणानि भवन्ति ॥

इदमेव व्याचष्टे-

[भा.५२४०] निग्गंथी थी गुरुगा, गिहि पासंडि-समणे य चउलहुगा ।
दोहि गुरू तवगुरुगा, कालगुरू दोहि वी लहुगा ॥

वृ- निर्ग्रन्थस्य निर्ग्रन्थीं परिष्वजतः चतुर्गुरवो द्वाभ्यामपि गुरुकाः । स्त्रियं परिष्वजतस्त एव तपोगुरवः । गृहस्थं परिष्वजतः चतुर्लघवः कालगुरवः । पाषण्डिपुरुषं 'श्रमणं वा' परिष्वजत-श्चतुर्लघव एव 'द्वाभ्यामपि' तपः-कालाभ्यां लघवः ॥

[भा.५२४१] मिच्छत्ते उड्डाहो, विराधना फास भावसंबंधो ।
आतंको दोण्ह भवे, गिहिकरणे पच्छकम्मं च ॥

वृ- निर्ग्रन्थं निर्ग्रन्थीं परिष्वजन्तं दृष्ट्वा यथाभद्रकादयो मिथ्यात्वं गच्छेयुः, एते यथा वादिनस्तथा कारिणो न भवन्ति । उड्डाहो वा भवेत्, एते संयतीभिरपि सममब्रह्मचारिणः । एवं शङ्कायां चतुर्गुरु, निशङ्किते मूलम् । एवं प्रवचनस्य विराधना भवेत् । तेन वा स्पर्शेन द्वयोरपि मोहोदये सञ्जाते भावसम्बन्धोऽपि स्यात्, ततश्च प्रतिगमनादयो दोषाः । आतङ्को वा द्वयोरन्यतरस्य भवेत् स

परिष्वजने सङ्क्रामेत् ! गृहस्थस्य चपरिष्वजनकरणे पश्चात्कर्मदोषो भवेत् ॥

इदमेव पश्चार्द्धं व्याचष्टे-

[भा.५२४२] कोढ खए कच्छु जरे, अवरोप्पर संकमंते चउभंगो।
इत्थीणाति सुहीण य, अचियत्तं गिण्हणादीया ॥

वृ- कुष्ठ-क्षत-कच्छू-ज्वरप्रभृतिके रोगे परस्परं सङ्क्रामति चतुर्भङ्गी भवति-संयतस्य सम्बन्धी कुष्ठादि संयत्याः सङ्क्रामति १ संयत्याः सम्बन्धी वा संयतस्य सङ्क्रामति २ द्वयोरप्यन्योन्यं सङ्क्रामति ३ द्वयोरपि न सङ्क्रामति ४। अत्राद्यभङ्गत्रये रोगसङ्क्रमणकृताः परितापनादयो दोषाः। तथा "इत्थी" इत्यादि, तस्याः स्त्रियः सम्बन्धिनो ये ज्ञातयो ये च सुहृदस्तेषामप्रीतिकं भवति- किमयं श्रमणोऽस्मत्सम्बन्धिनीमित्यमालिङ्गति ? इति। ततश्च ग्रहणाऽऽकर्षणादयो दोषाः ॥

[भा.५२४३] गिहिएसु पच्छकम्मं, भंगो ते चेव रोगमादीया।
संजय असंखडादी, भुत्ता-ऽभुत्ते य गमनादी ॥

वृ- गृहिषु परिष्वज्यमानेषु पश्चात्कर्म भवति, "संयतेन स्पृष्टोऽहम्' इति कृत्वा गृहस्थः स्नानं कुर्यादिति भावः। अविरतिकायाः परिष्वङ्गे मानसम्बन्धोऽपि जायेत, ततश्च 'भङ्गः' ब्रह्मचर्यविराधना भवेत्, रोगसङ्क्रमणादयश्च त एव दोषाः। संयतं तु परिष्वजतस्तेन सहासङ्खडादयो दोषाः। भुक्तभोगिनश्च स्मृतिकरणेनाभुक्तभोगिनः कौतुकेन प्रतिगमनादयो दोषाः। एवं तावन्नि-ष्कारणेऽग्लानायाश्चोक्तम् ॥

[भा.५२४४] एमेव गिलाणाए, सुत्तऽफलं कारणे तु जयणाए।
कारणे एग गिलाणा, गिहिकुल पंथे व पत्ता वा ॥

वृ- एमवमेव ग्लानाया अपि संयत्याः परिष्वजने क्रियमाणे दोषजालं मन्तव्यम्। परः प्राह- नन्वेवं सूत्रमफलं प्राप्नोति, तत्र हि परिष्वजनमनुज्ञातं स्वादनं पुनः प्रतिषिद्धम्। सूरिराह- कारणे यतनया क्रियमाणे परिष्वजने सूत्रमवतरति। कथं पुनस्तस्य सम्भवः ? इत्याह-कारणे काचिदार्यिका "एग"त्ति एकाकिनी संवृत्ता, सा च पश्चाद् ग्लानीभूता, "गिहिकुल"त्ति गृहस्थकुलानिश्रया सा स्थिता, अथवा "गिहिकुल"त्ति सा तस्यैककुलसमुद्भूता भगिन्यादिसम्बन्धेन निजका गृहस्थतां परित्यज्य तदन्तिके प्रव्रजिता, सा चानीयमाना पथि वा वर्तमाना विवक्षितग्रामं वा प्राप्ता ग्लाना जाता ॥ तत्रेयं यतना-

[भा.५२४५] माता भगिनी धूता, तधेव सन्नातिगा य सड्ढी य।
गारत्थि कुलिंगी वा, असोय सोए य जयणाए ॥

वृ- तस्याः संयत्या या माता भगिनी दुहिता वा तया तस्या उत्थापनादिकं कार्यते। एतासामभावे या तस्याः 'संज्ञातिका' भागिनेयी-पौत्रीप्रभृतिका तया कार्यते। तस्या अभावे श्राद्धिकया। तदभावे गृहस्थया यथाभद्रिकया कुलिङ्गिन्या वा कार्यते। तास्वपि प्रथममशौचवादिनीभि, ततः शौचवादिनीभिरपि यतनया कारयितव्यम् ॥

[भा.५२४६] एयासिं असतीए, अगार सन्नाय नालबद्धो य।
समणो वऽनालबद्धो, तस्सऽसति गिही अवयतुल्लो ॥

वृ- एतासां स्त्रीणामभावे योऽगारः 'संज्ञातकः' तस्याः स्वजनः, स च मातुल-पुत्रादिरपि स्याद् अतस्तत्प्रतिषेधार्थमाह-'नालबद्ध–' वल्लीबद्धः, पित-भ्रात-पुत्रप्रभृतिक इत्यर्थः, स उत्थापनादिकं तस्याः कार्यते। तदभावे श्रमणोऽपि यस्तस्या नालबद्धो असमानवयाः। तस्यासति अनालबद्धोऽपि यो गृही वयसा अतुल्यः स कार्यते ॥

[भा.५२४७] दोन्नि वि अनालबद्धा उ, जुज्जंती एत्थ कारणे।
किढी कन्ना विमज्झा वा, एमेव पुरिसेसु वि ॥

वृ- नालबद्धाभावे 'द्वावपि' स्त्री-पुरुषावनालबद्धावपि 'कारणे' आगाढे उत्थापनादिकं कारयितुं युज्यन्ते। तत्रापि प्रथमं "किढि"त्ति स्थविरा स्त्री कार्यते। तदभावे कन्यका। तदप्राप्तौ मध्यमा। एवं पुरुषेष्वपि वक्तव्यम् ॥ अमुमेवार्थं पुरातनगाथया व्याख्यानयति-

[भा.५२४८] असईय माउवग्गे, पिता व भाता व से करेज्जाहि।
दोण्ह वि तेसिं करणं, अहि पंथे तेण जयणाए ॥

वृ- मातृवर्गो नाम-स्त्रीजनः तस्याभावे यः तस्याः संयत्याः सम्बन्धी पिता वा भ्राता वा स उत्थापनादिकं करोति। "दोण्ह वि" इत्यादि, द्वयोरपि तयोः करणम्, किमुक्तं भवति? - पथि वर्तमानायाः प्राप्ताया वा अथवा निजकाया वा अनिजकाया वा अनन्तरोक्तविधिना तस्या उत्थापनादिकं कर्तव्यम्। यदा च पथि ग्लाना संवृत्ता तदा स्वयमेव 'यतनया' गोलकञ्चुकतिरोधानरूपया तस्याः परिकर्म करोति ॥ अथवा "दोण्ह वि"त्ति विभक्तिव्यत्ययाद् द्वाभ्यामपि द्रष्टव्यम्। तत्रायमर्थः–

[भा.५२४९] थी पुरिस नालऽनाले सपक्ख परपक्ख सोयऽसोये य।
आगाढम्मि उ कज्जे, करेंति सव्वेहि जतणाए ॥

वृ- आगाढे कार्ये स्त्रिया वा पुरुषेण वा नालबद्धेन वा अनालबद्धेन वा स्वपक्षेण वा परपक्षेण वा शौचवादिना वाऽशौचवादिना वा सर्वैरपि यतनया कारयति ॥

[भा.५२५०] पंथम्मि अपंथम्मि व, अन्नस्सऽसती सती वऽकुणमाणो।
अंतरियकंचुकादी, स च्चिय जतना तु पुव्वुत्ता ॥

वृ- पथि अपथि वा वर्तमानाया अन्यस्याभावे यद्वा विद्यतेऽन्यः परं स भणितोऽपि न करोति ततः स्वयमेव कुर्वन् गोपालकञ्चुकादिभिरन्तरितः करोति। अत्र च सैव पूर्वोक्ता यतना मन्तव्या या तृतीयोद्देशके प्रथमसूत्रे ग्लानसंयत्याः प्रतिचरणे प्रतिपादिता ॥

एवं तावदेकाकिनः साधोर्विधिरुक्तः। अथ गच्छे तमेवाह-

[भा.५२५१] गच्छम्मि पिता पुत्ता, माता वा अज्जगो व नत्तू वा।
एतेसिं असतीए, तिविहा वि करेंति जयणाए ॥

वृ- गच्छे वसतां यदि तस्याः पिता पुत्रो भ्राता वा 'आर्यको वा' पितामहादि 'नप्ता वा' पौत्रोऽस्ति ततः संयतीनामपरस्य वा स्त्रीजनस्याभावे तैः कर्त्तव्यम्। 'एतेषां' पितृप्रभृतीनामभावे 'त्रिविधा अपि' स्थविर-मध्यम-तरुणाः साधवः 'यतनया' गोपालकञ्चुकतिरोहिताः कुर्वन्ति ॥

इदं गच्छे प्राप्ताया अभिहितम्, अथ पथि वर्तमानाया उच्यते-

[भा.५२५२] दोन्नि वि वयंति पंथं, एक्कतरो दोन्नि वा न वच्चंती।

तत्थ वि स एव जतणा, जा वुत्ता नायगादीया ॥

वृ- 'द्वे अपि' निजका-ऽनिजके संयत्यौ पन्थानं व्रजतः, एकतरा वा व्रजति, द्वे अपि न व्रजतः, एवमेते त्रयः प्रकाराः । अत्र तृतीयः प्रकारः शून्यः, स्थानस्थितानां वा अशक्नुवतां गच्छमप्राप्तानां वा भवति । त्रिष्वपि चामीषु यतना सैव मन्तव्या या पूर्वं ज्ञातकादिक्रमेण गच्छे प्राप्तायाः प्रोक्ता ॥

[भा.५२५३] एवं वि कीरमाणे, सातिज्जने चउगुरू ततो पुच्छा ।
तम्मि अवत्थाय भवे, तहिगं च भवे उदाहरणं ॥

वृ- 'एवमपि' यतनया क्रियमाणे परिकर्मणि यदि सा निर्ग्रन्थी पुरुषस्पर्शं स्वादयति तदा चतुर्गुरवो द्वाभ्यामपि तपः-कालाभ्यां गुरवः । "ततो पुच्छ"त्ति ततः शिष्यः पृच्छति- यस्यां ग्लानावस्थायामुत्थातुमपि न शक्यते तस्यामपि मैथुनाभिलाषो भवतीति कथं श्रद्धेयम् ? । सूरिराह-'तत्र' इति तादृगवस्थायामपि मोहोदये इदमुदाहरणं भवेत् ॥

[भा.५२५४] कुलवंसम्मि पहीणे, सस-भसएहिं च होइ आहरणं ।
सुकुमालियपव्वज्जा, सपच्चवाता य फासेणं ॥

वृ- शशक-भसकाभ्यामाहरणं भवति । कथम् ? इत्याह-कुलवंशे सर्वस्मिन् अशिवेन प्रक्षीणे सति सुकुमारिकायाः प्रव्रज्या ताभ्यां दत्ता । सा चातीव सुकुमारा रूपवती च । ततस्तेन स्पर्शदोषेण उपलक्षणतया रूपदोषेण च सप्रत्यपाया जाता ॥ एनामेव निर्युक्तिगाथां व्याख्याति-

[भा.५२५५] जियसत्तुनरवरिंदस्स अंगया सस-भसा य सुकुमाली ।
धम्मे जिनपन्नत्ते, कुमारगा चेव पव्वइता ॥

[भा.५२५६] तरुणाइन्ने निच्चं, उवस्सए सेसिगाण रक्खट्ठा ।
गणिणि गुरु-भाउकहणं, पिहुवसए हिंडए एक्को ॥

[भा.५२५७] इक्खागा दसभागं, सव्वे वि य वण्हिणो उ छब्भागं ।
अम्हं पुन आयरिया, अद्धं अद्धेण विभयंति ॥

[भा.५२५८] हत-महित-विप्परद्धे, वण्हिकुमारेहि तुरुमिणीनगरे ।
किं काहिति हिंडंतो, पच्छा ससतो व भसती वा ॥

[भा.५२५९] मायऽनुकंप परिन्ना, समोहयं एगो भंडगं बितितो ।
आसत्थ वणिय गहणं, भाउग सारिक्ख दिक्खा य ॥

वृ- इहेव अड्डभरहे वनवासीए नगरीए वासुदेवजेट्ठभाउणो जराकुमारस्स पउप्पए जियसत्तू राया । तस्स दुवे पुत्ता ससओ भसओ य, धूया य सुकुमालिया नामेणं । अन्नया ते भाउणो दो वि पव्वइया, गीयत्था जाया, सन्नागदंसणत्थं आगया । नवरं सव्वो वि कुलवंसो पहीणो सुकुमालियं एक्कं मोत्तुं । सा तेहिं पव्वाविया, तुरमिणिं नगरिं गया, महयरियाए दिन्ना । सा अतीव रूववई जओ जओ भिक्खा-वियारादिसु वच्चइ तओ तओ तरुणजुवाना पिट्ठतो वच्चंति । वसहीए पविट्ठए वि तरुणा उवस्सयं पविसित्ता चिट्ठंति । संजईओ न तरंति पडिलेहणाइ किंचि काउं ताहे ताए महयरियाए गुरूणं कहियं-सुकुमालियाए तणएणं मम अन्नातो वि विणस्सिहिंति । ताहे गुरुणा ससग-भसगा भणिता-सारक्खह एतं भगिनिं । ते तं घेत्तुं वीसुं उवस्सए ठिया । तेसिं एगो भिक्खं

हिंडइ, एगो तं पयत्तेण रक्खइ । दो वि भायरो साहस्समल्ला जे तरुणा अहिवडंति ते हत-महिते काउं धाडेंति । ते य विराहिया भिक्खं न देंति । तओ सो एगो भिक्खं हिंडंतो तिण्हं पज्जत्तं न लहइ। बिइओ पच्छा देसकाले फिडिए हिंडंतो न संथरइ ताहे सा भणइ-तुब्भे दुक्खिया मा होह, अहं भत्तं पच्चक्खामि । पच्चक्खाए मारणंतियसमुग्घाएणं समोहया । तेहिं नायं-कालगय त्ति । ताहे एगेणं उवगरणं गहियं, बिइएणं सा गहिया । गच्छंताणं ताए ईसि त्ति पुरिसफासो वेइओ साइज्जियं च । तओ ते तं परिठवित्ता गया गुरुसगासं । इयरी त्तीए सीयलवाएणं समासत्था वणियगस्स जाया । गोसे एगेणं सत्थवाहपुत्तेणं दिट्ठा । ताए सो भणिओ-जइ ते भए कज्जं तो सारवेहिं । सा तेन सारविया महिला से जाया । ते भायरो अन्नया भिक्खं हिंडंते दट्ठुं पाएसु पडिया परुन्ना । सा तेहिं सारिक्खेण पच्चभिन्नाया पुनो पव्वाविया । एवं जइ ताव तीए समुग्घायगयाए साइज्जियं, किमंग पुन इयरी गिलाणी न साइज्जिज्जा ? ॥

अथाक्षरार्थः-जितशत्रुनरवरेन्द्रस्य 'अङ्गजौ' पुत्रौ शशक-भसकौ सुकुमारिका च दुहिता । ततो जिनप्रणीते धर्मे कुमारकावेव तौ प्रव्रजितौ । क्रमेण च ताभ्यां भगिन्यपि प्रव्राजिता ॥ ततस्तस्या रुपदोषेण तरुणैराकीर्णे नित्यमुपाश्रये शेषसाध्वीनां रक्षणार्थं गणिन्या गुरवे निवेदितम्। गुरुभिश्च भ्रात्रोः कथितम् । ततः पृथगुपाश्रये तां गृहीत्वा स्थितौ । तयोर्मध्यादेको भिक्षार्थं हिण्डते, एकस्तां रक्षति ॥ किमर्थं पुनस्तस्या रक्षणमेवं तौ कृतवन्तौ ? इत्याह-"इक्खागा" इत्यादि । 'इक्ष्वाकवः' इक्ष्वाकुवंशनृपतयः प्रजाः सम्यक् पालयन्तोऽपालयन्तश्च यथाक्रमं तदीयपुण्यपापयोर्दशभागं लभन्ते । सर्वेऽपि च 'वृष्णयः' हरिवंशनृपतय एवमेव षड्भागं लभन्ते । अस्माकं पुनः प्रवचने आचार्याः साधु-साध्वीजनं संयमा-ऽऽत्म-प्रवचनविषयप्रत्यपायेभ्यः सम्यक् पालयन्तो अपालयन्तो वा यथाक्रमं पुण्यं पापं चार्द्धमर्द्धेन विभजन्ति, अत एव तौ तां रक्षितवन्ताविति भावः ॥

ततश्च-"विण्हिकुमारेहिं" त्ति वृष्णयः-यादवास्तेषां कुमारौ वृष्णिकुमारौ, शशकभसकावित्यर्थः, ताभ्यां तुरुमिणीनगर्यां उपसर्गकारि तरुणजनो भूयान् हत-मथित-विप्रारब्धः कृतः । तत्र हतश्चपेटादिना, मथितः-मानम्लानिं प्रापितः, विप्रारब्धः-विविधं-खर-परुषवचनैः प्रकर्षेण निवारितः। तत एवं प्रभूतलोके विराधिते सति किं करिष्यति पश्चाद् भिक्षां हिण्डमानः शशको भसको वा भक्त-पानलाभाभावात् ? , न किमपीति भावः ॥ ततः सुकुमारिकाया भ्रात्रोरनुकम्पया 'परिज्ञा' भक्तप्रत्याख्यानम् । ततो मरणसमुद्घातेन 'समहवहता' कालगतेयमिति ज्ञात्वा एकः 'भाण्डम्' उपकरणं द्वितीयस्तां गृहीतवान् । ततः शीतलवातेन आश्वस्तायाः तस्या वणिजा ग्रहणम्, कालान्तरेण च भ्रातृभ्यां साधर्म्येण प्रत्यभिज्ञाय दीक्षा प्रदत्तेति ॥

व्याख्यातं निर्ग्रन्थीसूत्रं । अथ निर्ग्रन्थसूत्रं व्याचष्टे-

[भा.५२६०]　　एसेव गमो नियमा, निग्गंथीणं पि होति नायव्वो ।
　　　　　　　　　　तासिं कुल पव्वज्जा, भत्तपरिन्ना य मातुम्मि ॥

वृ-एष एव गमो निर्ग्रन्थस्य परिष्वजनं कुर्वतीनां निर्ग्रन्थीनां ज्ञातव्यो भवति । नवरम्- 'तासां' निर्ग्रन्थीनां सम्बन्धी "कुल" त्ति एककुलोद्भवो भ्राता रूपवान् प्रव्रजितस्तस्यापि क्रमेण भक्तपरिज्ञा सञ्जाता ॥ इदमेव व्याचष्टे-

[भा.५२६१]　　विउलकुले पव्वइते, कप्पट्ठग किढियकालकरणं च ।

जोव्वण तरुणी पेल्लण, भगिनी रक्खणा वीसुं ॥

[भा.५२६२] सो चेव य पडियरणे, गमतो जुवतिजन वारण परिन्ना ।
कालगतो त्ति समोहतो, उज्झण गणिया पुरिसवेसी ॥

वृ- क्वापि विपुलकुले समुद्भूतं भगिनीद्वयं प्रव्रजितम् । ततः कुलवंशस्तथैव सर्वोऽपि प्रक्षीणः । नवरमेकः कल्पस्थको जीवति । ततः संज्ञातकदर्शनायागतेन तेनार्यिकाद्वयेन किढिका-स्थविरा मातेत्यर्थः तत्प्रभृतिकुटुम्बस्य कालकरणं श्रुतम् । स च कल्पस्थकः प्रव्राज्य गुरूणां दत्तः । यौवनं च प्राप्तोऽसावतीव रूपवान् समजनि, ततस्तरुणीभिः प्रेर्यते । ततो गुरूणामाज्ञया ते भगिन्यौ विष्वगुपाश्रये नीत्वा संरक्षितवत्यौ ॥ कथम् ? इत्याह-स एव 'प्रतिचणे' रक्षणे गमो भवति यः सुकुमारिकाया उक्तः एवं युवतिजनवारणे क्रियमाणे तस्य भगिनीदुःखं तथाविधं दृष्ट्वा भक्तपरिज्ञा। ततः 'समवहतः' कालगत इति विज्ञाय 'उज्झनं' परिष्ठापनम् । तस्य च स्त्रस्पर्शेन समाश्वासितस्य पुनश्चैतन्ये सञ्जाते पुरुषद्वेषिण्या गणिकया ग्रहणम् । ततस्तस्याः पति सञ्जातः । कियत्यपि काले गते समागताभ्यां भगिनीभ्यां प्रत्यभिज्ञाय भूयः प्रव्राजित इति ॥

मू. (१२१) *नो कप्पइ निग्गंथाण वा निग्गंथीण वा असनं वा पानं वा खाइमं वा साइमं वा पढमाए पोरिसीए पडिग्गाहित्ता पच्छिमं पोरिसिं उवाइणावित्तए । से य आहच्च उवाइणाविए सिया तं नो अप्पणा भुंजिज्जा, नो अन्नेसिं अनुप्पएज्जा, एगंते बहुफासुए थंडिले पडिलेहित्ता पमज्जित्ता परिट्ठवेयव्वे सिया । तं अप्पणा भुंजमाणे अन्नेसिं वा दलमाणे आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ॥*

मू. (१२२) *नो कप्पइ निग्गंथाण वा २ असनं वा ४ परं अद्धजोयणमेराए उवायणावित्तए । से य आहच्च उवाइणाविए सिया तं नो अप्पणा भुंजिज्जा जाव आवज्जइ चाउम्मासियं परिहारट्ठाणं उग्घाइयं ॥*

वृ- अस्य सूत्रद्वयस्य सम्बन्धमाह-

[भा.५२६३] भावस्स उ अतियारो, मा होज्ज इती तु पत्थुते सुत्ते ।
कालस्स य खेत्तस्स य, दुवे उ सुत्ता अनतियारे ॥

वृ- 'भावस्य' ब्रह्मव्रतपरिणामस्य 'अतिचारः' अतिक्रमो मा भूदिति अनन्तरप्रस्तुते सूत्रे प्रतिपादिते । अथ कालस्य च क्षेत्रस्य चातिचारः-अतिक्रमो मा भूदिति द्वे सूत्रे प्रारभ्येते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा अशनं वा पानं वा खादिमं वा स्वादिमं वा प्रथमायां पौरुष्यां प्रतिगृह्य पश्चिमां पौरुषीं "उवाइणावित्तए" त्ति 'उपानाययितुं' सम्प्रापयितुमिति । तच्च "आहच्च" कदाचिद् उपानायितं स्यात् ततः 'तद्' अशनादिकं नाऽऽत्मना भुञ्जीत न वा अन्येषां साधूनामनुप्रदद्यात् । किं पुनस्तर्हि विधेयम् ? इत्याह-एकान्ते बहुप्राशुके स्थण्डिले प्रत्युपेक्ष्य चक्षुषा प्रमृज्य रजोहरणेन परिष्ठापयितव्यं स्यात् । तद् आत्मना भुञ्जानोऽन्येषां वा ददान आपद्यते चातुर्मासिकं परिहारस्थानमुद्घातिकम् ॥ एवं क्षेत्रातिक्रान्तसूत्रमपि वक्तव्यम्। नवरम्-अर्द्धयोजनलक्षणाया मर्यादाया अतिक्रामयितुमशनादिकं न कल्पते । स्यात् तदुपानायितं भवेत् ततो यः स्वयं तद् भुङ्क्तेऽन्येषां वा ददाति तस्य चतुर्लघुकमिति सूत्रद्वयार्थः ॥

अथ निर्युक्तिविस्तरः-

[भा.५२६४] बितियाउ पढम पुव्विं, उवातिणे चउगुरुं च आणादी।
दोसा संचय संसत्त दीह साणे य गोणे य ॥

वृ-आस्तां तावत् पश्चिमा चतुर्थी पौरुषी किन्तु द्वितीयायाः पौरुष्याः प्रथमाऽपि पूर्वा भण्यते प्रथमायाश्च द्वितीया पाश्चात्या, एवं तृतीयाया द्वितीया पूर्वा द्वितीयायास्तृतीया पाश्चात्या, चतुर्थ्यास्तृतीया पूर्वा तृतीयस्याश्चतुर्थी पश्चिमा। ततः प्रथमायाः पौरुष्या द्वितीयायाम-शनादिकमतिक्रामयतश्चतुर्गुरुकम्, आज्ञादयश्च दोषाः। तथा सञ्चयो भवति। चिरं चावतिष्ठमानं तदशनादिकं प्राणिभि संसक्तं भवति। दीर्घजातयो वा श्वा वा समागच्छेत् ततः स द्रवभाजनव्यग्रहस्त उत्थातुमशक्नुवन् ताभ्यां खाद्येत। 'गौः' बलीवर्दस्तेन वा हन्येत। अत्राऽऽत्मविराधनानिष्पन्नं चतुर्गुरु। तद्भयेन च इतस्ततः स्पदमानो भाजनं भिन्द्यात् तत्र चतुर्लघु। तेन च विना या परिहाणि-स्तन्निष्पन्नम्। अथैतेषां भयान्निक्षिपति ततश्चतुर्लघु॥

[भा.५२६५] अगनि गिलाणुच्चारे, अब्भुट्ठाणे य पाहुण निरोधे।
सज्झायविणय काइय, पयलंत पलोट्टणे पाणा॥

वृ- "अगनि" त्ति अग्नावुत्थिते भाजनभारव्यापृतेनानिर्गच्छन् दह्येत, तत्प्रतिबन्धेन वा उपधेर्दाहो भवेत् तत्रोपधिनिष्पन्नं प्रायश्चित्तम्। ग्लानस्य वैयावृत्यमुद्वर्तनादिकं भारव्यापृतो न करोति, अक्रियमाणे परितापनादिकं स प्राप्नुयात् तन्निष्पन्नं चतुर्लघुकादि पाराञ्चिकान्तम्, अथ निक्षिप्य करोति ततो मासलघु। तेन परिगृहीतेनोच्चारं व्युत्स्रष्टु न शक्नोति ततो धारयतो ग्लानत्वारोपणा, अथ गृहीतेन व्युत्सृजति तत उड्डाहः। गुरूणां प्राघुणकस्य चाऽभ्युत्थानं न करोति चतुर्लघु, अथ करोति ततो भाजनभेदादयो दोषाः। मूलभाजनधारणे गात्रनि-रोधेनासमाधिर्भवेत्। तथा स्वाध्यायं न प्रस्थापयति। आचार्यादीनां पादप्रक्षालनादिकं विनयं न करोति। कायिकीं न व्युत्सृजति, गृहीतेन वा व्युत्सृजति। प्रचलायमानस्य वा भाजनं प्रलुठेत्, तस्य च प्रलोठने पानकादिना प्लाव्यमानाः प्राणिनो विपद्यन्ते॥

अथामूनेव सञ्चयादिदोषान् व्याचष्टे-

[भा.५२६६] निस्संचया उ समणा, संचयि तु गिहीव होंति धारेंता।
संत्ते अनुवभोगो, दुक्खं च विगिंचिउं होति॥

वृ- निस्सञ्चयाः श्रमणा उच्यन्ते, ततो यदि तेऽपि गृहीत्वा धारयन्ति तदा गृहिण इव सञ्चयिनो भवन्ति। चिरं चावतिष्ठमानं तद् भक्त-पानं संसज्येत। संक्तं च साधूनामुपभोक्तुं न कल्पते, 'विवेक्तुं च' परिष्ठापयितुं तद् दुःखं भवति, यतस्तत्र परिष्ठाप्यमाने यैः प्राणिभि संसक्तं ते विनाशमश्नुवते॥

[भा.५२६७] एमेव सेसएसु वि, एगतर विराधना उभयतो वि।
असमाधि विनयहानी, तप्पच्चयनिज्जराए य॥

वृ-एवमेव 'शेष्वपि' दीर्घादिषु द्वारेषु भावना कर्तव्या, सा च प्रागेव कृता। तथा 'एकतरस्य' साधोर्भाजनस्यवा विराधनआ श्वईरअघजातीयदिषु भवति। उभयम्-आत्मा संयमश्चेति द्वयं तस्य विराधना उभयविराधना। "असमाहि" त्ति अग्निना दह्यमानस्यासमाधिमरणं भारेणाक्रान्तस्य वा असमाधि-दुःखेनावस्थानं भवेत्। गुरुप्रभृतीनां च विनयहानिं कुर्वतस्तत्प्रत्ययनिर्जराया

अपि हानिर्भवति ॥

[भा.५२६८] पच्छित्तपरूवणता, एतेसि ठवेंतए य जे दोसा ।
गहितकरणं य दोसा, दोसा य परिट्ठवेंतस्स ॥

वृ- 'एतेषां' सञ्चयादीनां सर्वेषामपि प्रायश्चित्तप्ररूपणा कर्तव्या, सा च प्रागेव लेशतः कृता । 'स्थापयतः' निक्षिपतश्च ये दोषाः, ये च गृहीतेन कार्याणि कुर्वतो भाजनभेदप्रभृतयो दोषाः, ये च परिष्ठापयतो दोषास्तेऽपि वक्तव्या इति ॥

[भा.५२६९] तम्हा उ जहिँ गहितं, तहिँ भुंजणे वज्जिया भवे दोसा ।
एवं सोदि न विज्जति, गहणे वि य पावती बितियं ॥

वृ- यत एतावन्तो दोषाः तस्माद् यस्यामेव पौरुष्यां गृहीतं तस्यामेव भोक्तव्यम् । एवं कुर्वता दोषाः पूर्वोक्ता वर्जिता भवन्ति । परः प्राह-नन्वेवं शोधिर्न विद्यते यतः 'गहणे वि'ति यावद् भिक्षां गृह्णाति तावदेव द्वितीयां पौरुषीं प्राप्नोति ॥ सूरिराह-

[भा.५२७०] एवं ता जिनकप्पे, गच्छम्मि चउत्थियाए जे दोसा ।
इतरासि किन्न होंती, दव्वे सेसम्मि जतणाए ॥

वृ- एवं तावज्जिनकल्पिकानामुक्तं यदुत 'यस्यामेव गृहीतं तस्यामेव भोक्तव्यम्' । गच्छवासिनस्तु प्रथमायां गृहीत्वा यदि चतुर्थीमतिक्रामयन्ति तदा ये सञ्चयादयो दोषा उक्तास्तान् प्राप्नुवन्ति । भूयोऽपि परः प्रेरयति-'इतरयोः' द्वितीय-तृतीययोः पौरुष्योरशनादि द्रव्यं वारयतां किमेते दोषा न भवन्ति ? । गुरुराह-भवन्ति, परं द्रव्ये भुक्तशेषे कारणे यतनया धार्यमाणे दोषा न भवन्ति ॥ कथं पुनस्तदुद्धरितं भवति ? इत्याह-

[भा.५२७१] पडिलाभणा बहुविहा, पढमाए कदाचि नासिमविणासी ।
तत्थ विनासिं भुंजेऽजिण्णे परिण्णे य इतरं पि ॥

वृ-अभिगतश्राद्धेन दानश्राद्धेन वा कचित् प्रकरणे प्रथमपौरुष्यां बहुविधा प्रतिलाभना कृता, बहुभिर्भक्ष्य-भोज्यद्रव्यैरित्यर्थः । तच्च द्रव्यं द्विधा-विनाशि अविनाशि च । क्षिरादिकं विनाशि, अवगाहिमादिकमविनाशि । तत्र यद् विनाशि द्रव्यं तद् नमस्कार-पौरुषीप्रत्याख्यानवान्तो भुञ्जते। शेषसाधूनां यद्यजीर्णं यदि वा तैः परिज्ञातं-तस्या नमस्कार-पौरुषीप्रत्याख्यानवान्तो भुञ्जते । शेषसाधूनां यद्यजीर्णं यदि वा तैः परिज्ञातं-तस्या विकृतेः प्रत्याख्यानं कृतम् अभक्तार्थो वा प्रत्याख्यातः आत्मार्थिका वा ते ततः 'इतरदपि' अविनाशि द्रव्यमपि भुञ्जते॥ अमुमेवार्थं व्याचष्टे-

[भा.५२७२] जइ पोरिसिल्लया तं, गमेंति तो सेसगाण न विसज्जे ।
अगमेंताऽजिण्णे वा, धरंति तं मत्तगादीसु ॥

वृ- यदि पौरुषीप्रत्याख्यानवन्तस्तद् द्रव्यं सर्वमपि 'गमयन्ति' निर्वाहयितुं शक्नुवन्ति ततः 'शेषाणां' पूर्वार्द्धप्रत्याख्यानिनां 'न विसर्जयेयुः' न दद्युः । अथ ते सर्वमपि न गमयन्ति ततः पूर्वार्द्धप्रत्याख्यानिनामपि दीयते। अथ तेषामप्यजीर्णं ततो मात्रकादिषु 'तद्' अशनादिकं धारयन्ति॥

अथवाऽमुना कारणेन धारयेत्-

[भा.५२७३] तं काउ कोइ न तरइ, गिलाणमादीण दाउमझुण्हे ।
नाउं य बहुं वियरइ, जहासमाहिं धरिमवज्जं ॥

वृ- 'तद्' अशनादिकं 'कृत्वा' मुक्त्वा कश्चिद् ग्लानादीनां प्रायोग्यमानीय दातुम् 'अत्युष्णे' अतीवातपे चटिते न शक्नोति, एतेन कारणेन धारयेत् । यद्वा 'बहु' प्रभूतं भैक्षं लब्धं ततः 'मा परिष्ठापयितव्यं भवेद्' इति ज्ञात्वा गुरवोऽशनादेर्धरणं वितरन्ति, अनुजानन्तीत्यर्थः । गाथायामेकवचनं प्राकृतत्वात् । अथवा ''जहासमाहिं'' ति प्रथमपौरुष्यां लब्धं परमद्याप्यजीर्णं ततो यावज्जीर्यते तावद्धारयेदपि । एवं यथा यथा समाधिर्भवति तथा भुञ्जीत परं चरमावर्जम्, चतुर्थी पौरुषीं नातिक्रामयेदिति भावः ।। तत्र च धार्यमाणे इयं यतना-

[भा.५२७४] संसज्जिमेसु छुब्भइ, गुलाइ लेवाडे इयरे लोणाई ।
जं च गमिस्संति पुणो, एसेव य भुत्तसेसे वि ।।

वृ- 'संसजिमेषु' संसक्तियोग्येषु 'लेपकृतेषु' गोरसादिद्रव्येषु गुडादिकं प्रक्षिप्यते येन न संसज्यन्ते। इतरग्राम-अलेपकृतं तद् यदि संसक्तियोग्यं तदा तत्र लवणादिकं प्रक्षिपेद् न गुडम् । यत्र प्रथमपौरुष्यां द्वितीयपौरुष्यां वा भुक्त्वा पुनः गमयिष्यन्ति, कियतीमपि वेलां प्रतीक्ष्य भूयो भोक्ष्यन्त इत्यर्थः, तत्रापि भुक्तशेषे धार्यमाणे 'एष एव' गुडादिप्रक्षेपणारूपो विधिर्भवति ।।

[भा.५२७५] चोएइ धरिज्जंते, जइ दोसा गिण्हमाणि किन्न भवे ।
उस्सग्ग वीसमंते, उब्भामादी उदिक्खंते ।

वृ- 'नोदयति' प्रेरयति परः-यद्येवं भक्त-पाने धार्यमाणे दोषास्ततो भक्तादौ गृह्यमाणे किमेते श्वान-गवादयो दोषा न भवन्ति ? भवन्त्येव । तथा कायोत्सर्गं कुर्वतोऽपि त एव बाहुपरितापनादयश्च दोषाः, एवं विश्राम्यतोऽपि त एव दोषाः, उद्भामकभिक्षाचर्यायै गतास्तदादीनपि ''उदिक्खंते'' त्ति प्रतीक्षमाणस्य त एव दोषाः ।। पर एव प्राह-

[भा.५२७६] एवं अवातदंसी, थूले वि कहं न पासह अवाये ।
हंदि हु निरंतरोऽयं, भरितो लोगो अवायाणं ।।

वृ- यद्येवं यूयमपि 'अपायदर्शिनः' सूक्ष्मानप्यपायान् प्रेक्षध्वे ततः स्थूलानपि भिक्षाचर्यादिविषयानपायान् कथं न पश्यथ ?, 'हन्दीति' उपदर्शने, 'हु' निश्चितम्, पश्यन्तु भगवन्तो यद् एवं निरन्तरोऽप्ययं लोकोऽपायानां भृतः ।। कथम् ? इति चेद् उच्यते-

[भा.५२७७] भिक्खादि-वियारगते, दोसा पडिनीय-साणमादीया ।
उप्पज्जंते जम्हा, न हु लब्भा हिंडिउं तम्हा ।।

वृ- भिक्षा-विचारादौ गतानां साधूनां प्रत्यनीक-श्वान-गवादयो बहवो दोषा यस्मादुत्पद्यन्ते तस्माद् 'नहि' नैव साधुना हिण्डितुं लभ्यम् ।।

[भा.५२७८] अहवा आहारादी, न चेव नियमं हवंति घेत्तव्वा ।
नेवाऽऽहारेयव्वं, तो दोसा वज्जिया होंति ।।

वृ- अथवाऽऽहारादयः 'नियतं' सर्वदा न ग्रहीतव्या भवन्ति किन्तु चतुर्थ-षष्ठादिकं कृत्वा सर्वथैवाशक्तेनाहारो ग्राह्यः । यद्वा नैव कदाचिदप्याहारयितव्यम् । एवं 'दोषाः' अपायाः सर्वेऽपि वर्जिता भवन्ति ।। एवं परेणोक्ते सूरिराह-

[भा.५२७९] भण्णति सज्झमसज्झं, कज्जं सज्झं तु साहए मतिमं ।
अविसज्झं साधेंतो, किलिस्सति न तं च साधेति ।।

वृ- भण्यतेऽत्र प्रतिवचनम्-कार्यं द्विविधम्-साध्यमसाध्यं च । तत्र मतिमान् साध्यमेव कार्यं साधयति नासाध्यम् । तुशब्द एवकारार्थः । यस्तु युष्मादृशोऽविसाध्यं साधयति स केवलं क्लिश्यति न च तत् कार्यं साधयति, यथा मृत्पिण्डेन पटादिसाधनाय प्रवर्तमानः पुरुष इति, अतस्त्रयं धात्र भिक्षाचर्यादावपर्यटनम् ॥ कुतः ? इति चेद् उच्यते-

[भा.५२८०] जति एयविप्पहूणा, तव-नियमगुणा भवे निरवसेसा ।
आहारमादियाणं, को नाम कहं पि कुव्वेज्ञा ॥

वृ-यदि एतैः-आहारादिभिर्विविधं प्रकर्षेण हीनाः-रहितास्तपो-नियमगुणा निरवशेषा भवेयुः तत आहारादीनां को नाम कथामपि कुर्यात् ? अत आहारग्रहणार्थं भिक्षायामटनीयमिति प्रक्रमः। एतेन ''अहवा आहारादी'' इत्याद्यपि प्रत्युक्तं द्रष्टव्यम् ॥ इदमेव सविशेषमाह-

[भा.५२८१] मोक्खपसाहणहेतू, णाणाती तप्पसाहणो देहो ।
देहट्ठा आहारो, तेन तु कालो अनुन्नातो ॥

वृ-इह मोक्षप्रसाधनहेतवः 'ज्ञानादीनि' ज्ञान-दर्शन-चारित्राणि, तेषां च प्रसाधनो देहो भवति, अतो देहार्थमाहार इष्यते । स च काले गृह्यमाणो धार्यमाणो वा चारित्रस्यानुपघातको भवति, तेन कारणेन कालोऽनुज्ञातः ॥ कथम् ? इत्याह-

[भा.५२८२] काले उ अनुन्नाए, जति वि हु लग्गेज्ञ तेहि दोसेहिं ।
सुद्धो उवादिनंतो, लग्गति उ विवज्ञए परेणं ॥

वृ-आद्यप्रहरत्रयलक्षणो द्वितीयादिपौरुषीत्रयात्मको वा कालो भक्त-पानादेर्धारणेऽनुज्ञातः। एवंविधेऽनुज्ञाते काले यद्यपि 'तैः' पूर्वोक्तैर्दोषैः 'लग्येत' स्पृश्यते तथापि शुद्धः । अनुज्ञातकालात् परेण 'उपानाययन्' अतिक्रामयन् 'विपर्यये' अविद्यमानेष्वपि दोषेषु 'लगति' सप्रायश्चित्तो मन्तव्यः ॥

[भा.५२८३] पढमाए गिण्हितूणं, पच्छिमपोरिसि उवादिणति जो उ ।
ते चेव तत्थ दोसा, बितियाए जे भणिय पुव्विं ॥

वृ-प्रथमायां पौरुष्यां गृहीत्वा पश्चिमां पौरुषीं योऽतिक्रामयति तत्र त एव दोषा ये पूर्वं प्रथमायां गृहीत्वा द्वितीयायामतिक्रामयतो जिनकल्पिकस्य भणिताः ॥ अमूनि चातिक्रमणकारणानि-

[भा.५२८४] सज्झाय-लेव-सिव्वण-भायणपरिकम्म-सड्डरादीहिं ।
सहस अनाभोगेण व, उवादियं होज्ज जा चरिमं ॥

वृ-स्वाध्यायेऽतीवोपयोगाद् विस्मृतम् । एवं लेपपरिकर्मणं कुर्वतः, वस्त्रं वा सीव्यतः, भाजनं वा परिकर्मयतः, देशकथादिकं वा सड्डरम्-आलजालं कुर्वतः, आदिशब्दः सड्डरस्यानेकभेदसूचकः। एतेषु यद् अत्यन्तव्यग्रत्वं स सहसाकारः, 'अनाभोगः' अत्यन्तविस्मृतिः । एवं सहसाकारेणानाभोगेन वा 'चरमां' चतुर्थीं यावदतिक्रामितं भवेत् ॥

[भा.५२८५] आहच्चुवाइणाविय, विगिंचण परिन्नऽसंथरंतम्मि ।
अन्नस्स गेण्हणं भुंजणं च असतीए तस्सेव ॥

वृ- एतैः कारणैः ''आहच्च'' कदाचिदतिक्रामितं भवेत् ततः 'विवेच्य' परित्यज्य 'परिज्ञा' दिवसचरमप्रत्याख्यानं कर्तव्यम् । अथ न संस्तरन्ति ततः काले पूर्यमाणे 'अन्यस्य' अशनादेर्ग्रहणं

भोजनं च कर्तव्यम् । अथ कालो न पूर्यते न वा तदानीं पर्याप्तं लभ्यते ततः यतनया यथा अगीतार्था 'तदेवेदमशनादिकम्' इति न जानन्ति तथा तस्यैव परिभोगः कर्तव्यः ॥

[भा.५२८६] बिइयपएण गिलाणस्स कारणा अधवुवातिणे ओमे ।
अद्धाण पविसमाणो, मज्झे अहवा वि उत्तिण्णो ॥

वृ- द्वितीयपदे ग्लानस्य कारणात् प्रायोग्यं भक्तादिकमतिरिक्तमपि कालं धारयेत्, ग्लानकृत्ये वा तावद् व्यापृताः यावत् चरमपौरुषी जाता, अथवा अवमे पर्यटत एव चतुर्थी सञ्जाता, अध्वनि वा प्रविशन् सार्थवशगोऽतिक्रामयेत्, एवमध्वनो मध्ये वर्तमानस्ततो वा उत्तीर्णोऽसंस्तरन् अतिक्रामयेद् भुञ्जीत वा न कश्चिद् दोषः ॥

व्याख्यातं कालातिक्रान्तसूत्रम् । अथ क्षेत्रातिक्रान्तसूत्रं व्याख्यानयति-

[भा.५२८७] परमद्धजोयणाओ, उज्जाण परेण चउगुरू होंति ।
आणादिणो य दोसा विराधना संजमा-ऽऽयाए ॥

वृ- अर्धयोजनं-द्विगव्यूतं ततः परमशनादिकमतिक्रामयतश्चतुर्गुरु । आस्तां तावद् अर्धयोजनम् अग्रोद्यानादपि परेणातिक्रामयतश्चतुर्गुरुकाः । आज्ञादयश्च दोषाः, संयमा-ऽऽत्मनोश्च विराधना ॥

तामेवाह-

[भा.५२८८] भारेण वेदनाए, न पेहती खाणुमादि अभिघातो ।
इरिया पगलिय तेनग, भायणभेदी य छक्काया ॥

वृ- भारेणाक्रान्तो वेदनाभिभूतः स्थाणु-कण्टकादीनि न प्रेक्षते, अश्वादिभिर्वाऽभिहन्यते, अथवा "अभिघाउ" त्ति वटशाखादिना शिरसि घट्यते, ईर्यां वा न शोधयति, दूरनयनेन च भक्तपाने परिगलिते पृथिव्यादिविराधना, स्तेनैर्वा समुद्देशो ह्रियेत । क्षुधा-पिपासार्तस्य वा क्षीणबलस्य भाजनभेदो भवेत् तत्र षट्कायविराधना । आत्मनः परस्य च तेन विना परिहाणि ॥

परः प्राह-

[भा.५२८९] उज्जान आरएणं, तहियं किं ते न जायते दोसा ।
परिहरिया ते होज्जा, जति वि तहिं खेत्तमावन्ने ॥

वृ- उद्यानादारतो ग्रामादेरानीयमाने भक्त-पाने किं ते दोषा न जायन्ते यदेवमुद्यानात् परत इत्यभिधीयते ? । सूरिराह-'ते' दोषास्तीर्थकरवचनप्रामाण्येन परिहृता भवन्ति यद्यप्यनुज्ञातक्षेत्रे तान् दोषानापद्यते ॥ पुनरपि परः प्रेरयति-

[भा.५२९०] एवं सुत्तं अफलं, सुत्तनिवातो इमो तु जिनकप्पे ।
गच्छम्मि अद्धजोयण, केसिंची कारणे तं पि ॥

वृ- ननु यद्युद्यानात् परतो नातिक्रामयितव्यम् ततो यत् "परमद्धजोयणमेराओ" त्ति सूत्रं भणितं तद् अफलं प्राप्नोति । आचार्य प्राह-यद् 'अग्रोद्यानात् परतो नातिक्रामयितव्यम्' इत्युच्यते स एष सूत्रार्थनिपातः 'जिनकल्पे' जिनकल्पिकविषयो मन्तव्यः, यत् पुनः "अर्द्धयोजनात् परतः" इत्यादि सूत्रं तद् गच्छवासिविषयम्, कारणे तु तदप्यर्धयोजनं नेतव्यम्, एवमापवादिकं सूत्रम् । यद्वा "केसिंची कारणे तं पि" त्ति अन्यथा व्याख्यायते- 'केषाञ्चिद्' आचार्य-बाल-वृद्धादीनां कारणे 'तदपि' अर्धयोजनं गम्यते ॥ इदमेव भावयति-

[भा.५२९१] सक्खेत्ते जदा न लभति, तत्तो दूरे वि कारणे जतति ।
गिहिणो वि चिंतणमनागतम्मि गच्छे किमंग पुन ॥

वृ- 'स्वक्षेत्रे' स्वग्रामे यदा न लभते तदा दूरेऽप्याचार्यादीनां कारणे भक्त-पानग्रहणार्थं यतते, अर्धयोजनमपि गच्छतीति भावः । अपि च-यद्यपि स्वग्रामे प्राचुर्येण लभ्यते तथाऽप्युत्सर्गतस्तत्र न हिण्डनीयम् । कुतः ? इत्याह-यदि तावद् गृहिणोऽपि क्रयविक्रयसम्प्रयुक्ता अनागतं प्राघूर्णकाद्यर्थं घृत-गुड-लवण-तन्दुलादीनां चिन्तां कुर्वन्ति किमङ्ग पुनर्गच्छे सबाल-वृद्धे येषां क्रयविक्रयः सञ्चयश्च नास्ति तैः प्राघूर्णकाद्यर्थमनागतं च चिन्तनीयम् ॥ ततः-

[भा.५२९२] संघाडेगो ठवणाकुलेसु सेसेसु बाल-वुड्डादी ।
तरुणा बाहिरगामे, पुच्छा दिट्ठंतऽगारीए ॥

वृ- स्वग्रामे यानि दानश्राद्धादीनि स्थापनाकुलानि तेषु गुरूणां सङ्घाटक एकः प्रविशति । यानि स्वग्रामे शेषाणि कुलवानि तेषु बाल-वृद्धा-ऽसहिष्णुप्रभृतयो हिण्डन्ते । ये तु तरुणास्ते बहिर्ग्रामे पर्यटन्ति । शिष्यः पृच्छति-किमादरेण क्षेत्रं प्रत्युपेक्ष्य रक्षथ ? । गुरुराह- अगार्या दृष्टान्तोऽत्र क्रियते ॥

[भा.५२९३] परिमियभत्तपदाने, नेहादवहरति थोवथोवं तु ।
पाहुण वियाल आगत, विसन्न आसासणा दानं ॥

वृ- एगो किविणवणिओ अगारीए अविस्ससंतो तंदुल-घत-लवण-कडुभंडादियं दिवसपरिव्वयं परिमितं देति, आवणातो घरे न किंचि तंदुलादि धारेति । अगारीए चिंता-जदि एयस्स अब्भरहितो मित्तो वा अन्नो वा पदोसादिअवेलाए आगमिस्सति तो किं दाहं ? । तओ अप्पणो बुद्धिपुव्वगेण वणियस्स अजानतो नेह-तंदुलादियाण थोवथोवं फेडेति । कालेन बहुमुससन्नं । अन्नया तस्स मित्तो पदोसकाले आगतो । आवणं आरक्खियभया गंतुं न सक्कति । वणियस्स चिंता जाता, विसन्नो 'कहमेतस्स भत्तं दाहामि ?' त्ति । अगारी वणियस्स मनोगतं भावं जाणित्ता भणति-मा विसादं करेहि, सव्वं से करिमे । तीए अब्भंगादिणा ण्हावेउं विसिट्ठमाहारं भुंजाविओ । तुट्ठो मित्तो पभाए पुनो जेमेउं गतो । वणिओ वि तुट्ठो भारियं भणइ-अहं ते परिमियं देमि, कतो एतं ? ति । तीए सव्वं कहियं । तुट्ठेण वणिएण 'एसा घरचिंतिय' त्ति सव्वो घरसारो समप्पिओ ॥ अथाक्षरार्थः- परिमितभक्तप्रदाने सति स्नेहादेर्मध्यादगारी स्तोकस्तोकमपहरति । प्राघूर्णकस्य च विकाले आगमनम्, ततो गृहपतिर्विषण्णः । तया तस्याश्वासना कृता । ततः प्राघूर्णकस्य भक्त-पानदानमकारि ॥

[भा.५२९४] एवं पीईवड्डी, विवरीयऽन्नेण होइ दिट्ठंतो ।
लोगुत्तरे विसेसा, असंचया जेन समणा तु ॥

वृ- एवं क्रियमाणे तयोः सुहृदोः परस्परं प्रीतिवृद्धिरुपजायते । विपरीतश्चान्येन प्रकारेण दृष्टान्तो भवति-तत्र परिमितभक्तमध्यादगारी स्तोकस्तोकं नापहरति ततः सुहृदादेः प्राघुणकस्य स्नेहच्छेदो भवति । एवं यदि गृहस्था अप्यनागतं चिन्तयन्ति ततः कुक्षिशम्बलैः साधुभिः सुतरामनागतं चिन्तनीयम् । अपि च-लोकोत्तरे येन असञ्चयाः श्रमणास्तेन कारणेन विशेषतः क्षेत्रं रक्षणीयम् ॥

[भा.५२९५] जनलाबो परगामे, हिंडित्ताऽऽनेंति वसहिं इह गामे ।
देज्जह बालादीणं, कारणजाते य सुलभं तु ॥

वृ-जनस्यालीयालीयगृहेषु ग्राममध्ये वा मिलितस्यालापः-प्रवादो भवति-अमी साधवः परग्रामे हिण्डित्वा भिक्षामिहानयन्ति ततः केवलं वसतिरेवेह ग्रामे अमीषाम् । एवं श्रुत्वा गृहपतयः स्वस्वमहेला आदिशन्ति-ये बालादयोऽत्र बालादयोऽत्र हिण्डन्ते तेषामादरेण सविशेषं प्रयच्छत। एवं विधायां चिन्तायां प्राघूर्णकादिकारणजाते यदि देशकालेऽदेशकाले वा हिण्डन्ते तदाऽपि सुलभं भवति ।

[भा.५२१६] पाहुणविसेसदाने, निज्जर कित्ती य इहर विवरीयं ।
पुव्विं चमढणसिग्गा, न देंति संतं पि कज्जेसु ॥

वृ-प्राघुर्णकस्य 'विशेषेण' आदरेण भक्त-पाने दीयमाने परलोके निर्जरा इहलोके च कीर्तिर्भवति, चशब्दात् प्रीतिवृद्धि परस्परोपकारिता च भवति । 'इतरथा' प्राघुणकस्याक्रियमाणे एतदेव विपरीतं भवति, निर्जरादिकं भवतीत्यर्थः । कथं पुनस्तद् दानं न भवति ? इत्याह- पूर्वं चमढनया-दिने दिने प्रविशद्भिः साधुभिः सिग्गानि-परिश्रान्तानि स्थापनाकुलानि 'सदपि' गृहे विद्यमानमपि घृतादिकं द्रव्यं प्राघूर्णकादिकार्येषु उत्पन्नेषु न प्रयच्छन्ति । एवं गुण-दोषान् विज्ञाय क्षेत्रं प्रयत्नेन रक्षणीयमिति प्रक्रमः ॥ अयं चापरस्तत्र गुणो भवति-

[भा.५२१७] बोरीइ य दिट्ठंतो, गच्छे वायामो तहि च पतिरिक्कं ।
केइ पुण तत्थ भुंजण, आणेमाणे भणिय दोसा ॥

वृ- बहिर्ग्रामे भिक्षाटने क्रियमाणे प्रभूतं दुग्ध-दध्यादिकं प्रायोग्यं प्राप्यते, तथा चात्र बदर्या दृष्टान्तो भवति । अपि च गच्छे एवैव सामाचारी गणधरभणिता-यद् बहिर्ग्रामे तरुणैर्भिक्षायामटनीयम्। व्यायामश्च मोहचिकित्सानिमित्तं तैः कृतो भवति । 'तत्र' बहिर्ग्रामे चशब्दाद् इह च ग्रामे "पइरिक्कं" एकान्तं भवति, मुत्कलमित्यर्थः । यद्वा "पइरिक्कं" ति पचुरं भक्त-पानं तत्रावाप्यते । केचित् पुनराचार्यदेशीया ब्रुवते-'तत्रैव' बहिर्ग्रामे भोजनं कर्तव्यम्, यतो ये पूर्वमानयतो भार-वेदनादयो दोषा भणितास्ते एवं परिहृता भवन्ति । एतत् परमतमुत्तरत्र निराकरिष्यते ॥ अथ बदरीदृष्टान्तमाह-

[भा.५२१८] गामऽब्भासे बदरी, नीसंदकडुप्फला य खुज्जा य ।
पक्काऽऽमाऽलस चेडा, खायंतियरे गता दूरं ॥

वृ- कस्यापि ग्रामस्य 'अभ्यासे' प्रत्यासत्तौ बदरी । सा ग्रामनिस्यन्दपानीयेन संवर्धिता ततः कटुकफला संवृत्ता । अन्यच्च सा स्वभावत एव कुब्जा ततः सुखारोहा । तस्यां न कानिचित् फलानि पक्वानि कानिचिदामानि, अथवा "पक्वाऽऽम"त्ति मन्दपक्वानि । तत्र ये अलसाः 'चेटकाः' बालकास्ते तां बदरीं सुखारोहामारुह्य कटुकान्यपि बदराणि भक्षयन्ति, तान्यपि स्वल्पतया न पर्याप्तानि भवन्ति । 'इतरे नाम' अनलसाः-उत्साहवन्तो बालकास्ते दूरमटवीं गताः, तत्र च महाबदरीवनेषु परिपक्वानि बदराणि यथेच्छं खादन्ति ॥

[भा.५२१९] सिग्घतरं ते आता, तेसिऽन्नेसिं च दिंति सयमेव ।
खायंति एव इहइं, आय-परसुवहा तरुणा ॥

वृ- ततो यावत् तेऽलसास्तस्यां कटुकबदर्यां क्लिश्यमाना आसते तावत् 'ते' दूरगामिनो बालका आत्मनः पर्याप्तं कृत्वा बदरपोट्टलकभाराक्रान्ताः शीघ्रतरमागताः 'तेषाम्' अलसानाम् 'अन्येषां च' गृहे स्थितानां स्वजनानां बदराणि पर्याप्तया ददति, स्वयमेव च भक्षयन्ति । एवम्

'इहापि' गच्छवासे तरुणा भिक्षवो वीर्यसम्पन्ना उत्साहवन्तो बाह्यग्रामे हिण्डमाना आत्मनः परेषां च-बाल-वृद्धादीनां सुखावहा भवन्ति ॥ कथम् ? इति चेद् उच्यते-

[भा.५३००] खीरं-दहीमादिण य, लंभो सिग्घतर पढम पइरिक्के ।
उग्गमदोसा विजढा, भवंति अनुकंपिया चितरे ॥

वृ- यथा तेऽलसाश्चेटकास्तथा बाल-वृद्धादयोऽपि कुब्जबदरीकल्पे तस्मिन् मूलग्रामे प्रत्यहमुद्धेज्यमानतया चिरमपि हिण्डमानाः कोद्रव-कूरादिकमेव लभन्ते, तदपि न पर्याप्तम् । ये तु तरुणा बहिर्ग्रामे गच्छन्ति तेऽनलसचेटकल्पाः, ततः क्षीर-दध्यादीनां प्रायोग्यद्रव्याणां लाभस्तेषां बहिर्ग्रामे भवति, शीघ्रतरं च ते स्वगरामे आगच्छन्ति । "पढम" ति प्रतमालिकां च स्वयं कुर्वन्ति, बालादिभ्यः प्रथमतरं वा समागच्छन्ति । "पइरिक्कं" ति प्रचुरं भक्त-पानमुत्पादयन्ति । उद्गमदोषाश्च 'विजढाः' परित्यक्ता भवन्ति। 'इतरे च' बालादयोऽनुकम्पिता भवन्ति ॥ अमुमेवार्थं सविशेषमाह-

[भा.५३०१] एवं उग्गमदोसा, विजढा पइरिक्कया अनोमानं ।
मोहतिगिच्छा य कता, विरियायारो य अनुचिन्नो ॥

वृ- 'एवं' बहिर्ग्रामे गच्छद्भिस्तैः 'उद्गमदोषाः' आधाकर्मादयः परित्यक्ता भवन्ति । "पइरिक्कय" त्ति प्रचुरस्य भक्त-पानसय लाभो भवति । 'अनपमानं' स्वपक्षापमानं न भवति । 'मोहचिकित्सा च' परिश्रमा-ऽऽतप-वैयावृत्यादिभिर्मोहस्य निग्रहः कृतो भवति । वीर्याचारश्च 'अनुचीर्णः' अनुष्ठितो भवति ॥ अथ परः प्राह-

[भा.५३०२] उज्जानतो परेणं, उवातिणंतम्मि पुव्व जे भणिता ।
भारादीया दोसा, ते च्चेव इहं तु सविसेसा ॥

वृ- ननु शोभनमिदम्-यद् अर्धोजनं गम्यते, किन्तु तेषां भरितभाराणामाचार्यसकाशमागच्छतां ये पूर्वमुद्यानात् परेण 'उपानाययति' अतिक्रामयति भारादयो दोषा भणितास्त एवेह सविशेषा भवन्ति ॥ ततः किं कर्तव्यम् ? इत्याह-

[भा.५३०३] तम्हा तु न गंतव्वं, तहि भोत्तव्वं न या वि भोत्तव्वं ।
इहरा भे ते दोसा, इति उदिते चोदगं भणति ॥

वृ- तस्मादाचार्यसमीपे भक्त-पानेन गृहीतेन न गन्तव्यं किन्तु 'तत्रैव' बहिर्ग्रामे भोक्तव्यम्, एवं भारादयो दोषाः परिहृता भवन्ति । "न वा वि भोत्तव्वं" ति वाशब्दः पक्षान्तरद्योतकः, अथ भवन्तो भणिष्यन्ति-नैव बहिर्ग्रामे भोक्तव्यम्, तत एवमितरथा "भे" भवतां 'त एव' भारादयो दोषाः । एवं 'उदिते' भणिते सति सूरिर्नोदकं भणति-यदि तत्र समुद्दिशन्ति ततो मासलघु, भवतोऽप्येवं भणतो मासलघु, तैश्च तत्र प्रायोग्यं समुद्दिशद्भिराचार्यादयः परित्यक्ता मन्तव्याः, तेषां प्रायोग्यमन्तरेण परितापनादिसम्भवात् ॥

आह किमिवाचार्यमन्तरेण न सिध्यति यदेवं तदर्थं प्रायोग्यमानीयते ? इत्याह-

[भा.५३०४] जइ एयविप्पहूणा, तव-नियमगुणा भवे निरवसेसा ।
आहारमाइयाणं, को नाम कहं पि कुव्वेज्जा ॥

वृ- यदि एतेन-आचार्येण विप्रहीणाः-एनमन्तरेणेत्यर्थः तपो-नियमगुणा निरवशेषा भवेयुः तत आचार्यप्रायोग्याणामाहारादीनामन्वेषणे को नाम कथमपि कुर्वीत ?, न कश्चित् । इदमत्र

हृदयम्-सर्वोऽपि तपो-नियमादिकः प्रयासोऽस्माकं संसारनिस्तरणार्थम्, ते च तपःप्रभृतयो गुणा गुरूपदेशमन्तरेण न सम्यगवगम्यन्ते, न वा निरवशेषा अपि यथावदनुष्ठातुं शक्यन्ते, अतः संसारनिस्तरणार्थमाचार्याणां प्रायोग्यानयनादिना कर्तव्यमेव वैयावृत्यमिति ॥ अपि च-

[भा.५३०५] जति ताव लोइय गुरुस्स लहुओ सागारिओ पुढविमादी ।
आनयने परिहरिया, पढमा आपुच्छ जतणाए ॥

वृ- यदि तावल्लौकिका अपि यो गुरु-पिता ज्येष्ठावन्धुर्वा कुटुम्बं धारयति तस्मिन्नभुक्ते न भुञ्जते, यच्चोत्कृष्टं शाल्योदनादिकं तत् तस्य प्रयच्छन्ति; ततः किं पुनर्यस्य प्रभावेन संसारो निस्तीर्यते तस्य प्रायोग्यमदत्त्वा एवमेव भुज्यते ? । यस्तु भुङ्क्ते तस्य मासलघु । वसतेरभावाच्च तत्र भुञ्जानान् सागारिको यदि पश्यति तदा चतुर्लघु, आज्ञादयश्च दोषाः । अस्थण्डिले च समुद्दिशतां पृथिव्यादिविराधना । आनयने तु सर्वेऽप्येते दोषाः परिहृता भवन्ति, अतो गुरुसमीपमानेतव्यम् । द्वितीयपदे प्रथमालिकां कुर्वन्तो गुरुमापृच्छ्य गच्छन्ति । यतनया च यथा संसृष्टं न भवति तथा प्रथमालिका कर्तव्या ॥

[भा.५३०६] चोगवयणं अप्पाऽनुकंपिओ ते य भे परिच्चत्ता ।
आयरिए अनुकंपा, परलोए इह पसंसणया ॥

वृ- 'नोदकवचनं नाम' परः प्रेरयति-यावत् ते ततो ग्रामात् प्रत्यागच्छन्ति तावत् तृष्णाक्षुधाक्लान्ता अतीव परिताप्यन्ते, एवं प्रस्थापयद्भिर्भवद्भिरात्मा अनुकम्पितः 'ते च' साधवः परित्यक्ता भवति । गुरुराह-ननु मुग्ध ! त एवानुकम्पिताः, कथम् ? इत्याह-"आयरिए" इत्यादि, यद् आचार्यवैयावृत्ये नियुक्ता एषा पारलौकिकी तेषामनुकम्पा; इहलोकेऽपि तेऽनुकम्पिताः, यतो बहुभ्यः साधु-साध्वीजनेभ्यः प्रशंसामासादयन्ति ॥ परः प्राह-

[भा.५३०७] एवं पि परिच्चत्ता, काले खमए य असहुपुरिसे य ।
कालो गिम्हो उ भवे, खमओ वा पढम-बितिएहिं ॥

वृ- यतस्ते बुभुक्षित-तृषिता भाराक्रान्ताः शीत-वाता-ऽऽतपैरभिहताः पन्थानं वहन्ति, यूयं तु शीतलच्छायायां तिष्ठथ, तत एवमपि ते परित्यक्ताः । सूरिराह-तेषामपि कालं क्षपकमसहिष्णुपुरुषं च प्रतीत्य प्रथमालिकाकरणमनुज्ञातम् । तत्र कालः-ग्रीष्मलक्षणस्तस्मिन् प्रथमालिकां कृत्वा पानकं पिबन्ति, क्षपको वा प्रथम-द्वितीयपरीषहाभ्यामतीव बाधितः प्रथमालिकां करोति, एवमसहिष्णुरपि बुभुक्षार्तः प्रथमालिकां कुर्यात् ॥ अत्र परः प्राह-

[भा.५३०८] जइ एवं संसट्ठं, अप्पत्ते दोसियाइणं गहणं ।
लंबण भिक्खा दुविहा, जहन्नमुक्कोस तिय पनए ॥

वृ- यद्येवमसौ बहिरेव प्रथमालिकां करोति ततो भक्तं संसृष्टं भवति, संसृष्टे च गुर्वादीनां दीयमानेऽभक्ति कृता भवति । गुरुराह-अप्राप्ते देश-काले दोषान्नादेर्ग्रहणं कृत्वा येषु वा कुलेषु प्रभाते वेला तेषु पर्यटय प्रथमालिकां कुर्वन्ति, भाजनस्य च कल्पं कुर्वन्ति । प्रथमालिकाप्रमाणं च द्विधा-लम्बनतो भिक्षातश्च । तत्र जघन्येन त्रयः 'लम्बनाः' कवलास्तिस्रश्च भिक्षाः, उत्कर्षतः पञ्च लम्बनाः पञ्च वा भिक्षाः । शेषं सर्वमपि मध्यमं प्रमाणम् ॥

अथ तैः कुत्र किं ग्रहीतव्यम् ? इति निरूपयति-

[भा.५३०९] एगत्थ होइ भत्तं, बितियम्मि पडिग्गहे दवं होति ।
गुरुमादीपाउग्गं, मत्तए बितिए य संसत्तं ॥

वृ- साधुद्वयस्य द्वौ प्रतिग्रहौ द्वौ च मात्रकौ भवतः । तत्रैकस्मिन् प्रतिग्रहे भक्तं ग्रहीतव्यम्, द्वितीये च 'द्रवं' पानकं भवति । तथैकस्मिन् मात्रके आचार्यादीनां प्रायोग्यं गृह्यते, द्वितीये तु संसक्तं भक्तं वा पानकं वा प्रत्युपेक्षते । यदि शुद्धं ततः प्रतिग्रहे प्रक्षिप्यते ॥

[भा.५३१०] जति रिक्को तो दवमत्तगम्मि पढमालियाए गहणं तु ।
संसत्त गहण दवदुल्लभे य तत्थेव जं पंतं ॥

वृ- यदि रिक्तोऽसौ द्रवमात्रकः ततस्तत्र प्रथमालिकाया ग्रहणं कर्तव्यम्, एवं संसृष्टं न भवति। अथवा तस्मिन् द्रवमात्रके संसक्तं द्रवं गृहीतम्, द्रवं वा तत्र क्षेत्रे दुर्लभं ततः 'तत्रैव' भक्तप्रतिग्रहे यत् प्रान्तं तद् एकेन हस्तेनाकृष्य अन्यस्मिन् हस्ते कृत्वा समुद्दिशति, एवं संसृष्टं न भवति ॥

[भा.५३११] बिइयपदं तत्थेवा, सेसं अहवा वि होइ सव्वं पि ।
[illegible] गंतव्वं आणेयं, च जति वि भुंज तह वि सुद्धो ॥

वृ- द्वितीयपदमत्रोच्यते-अतीव बुभुक्षितास्तत्रैवात्मनः संविभागं भुञ्जते, शेषं सर्वमप्यानयन्ति, अथवा तत्रैव सर्वमात्म-परसंविभागं भुञ्जते । यत एष एवंविधो विधिस्स्माद् विधिना गन्तव्यं विधिना आनेतव्यं विधिना तत्रैव भोक्तव्यम् । एवं सर्वत्र विधिं कुर्वन् यद्यपि दोषैः स्पृष्टो भवति तथापि शुद्धः ॥ कथं पुनः सर्वमसर्वं वा भिक्षाचर्यागतेन भोक्तव्यम् ? इत्याह-

[भा.५३१२] अंतरपल्लीगहितं, पढमागहियं व भुंजए सव्वं ।
संखडि धुवलंभे वा, जं गहियं दोसिणं वा वि ॥

वृ- यद् अन्तरपल्लिकायां गृहीतं प्रथमपौरुषीगृहीतं वा तत् सर्वमपि भुङ्क्ते । यत्र वा जानन्ति सङ्खड्यां ध्रुवो लाभो भविता तत्र यत् पूर्वं गृहीतं तत् सर्वमपि भोक्तव्यम् । यद् वा दोषान्नं गृहीतं तदशेषमपि भोक्तव्यम् ॥

[भा.५३१३] दरहिंडिएव भाणं, भरियं भोत्तुं पुनो वि हिंडिज्जा ।
कालो वाऽतिक्कमई, भुंजेज्जा अंतरा सव्वं ॥

वृ- अथवा 'दरहिण्डिते' अर्धपर्यटित एव भाजनं भृतं ततोऽल्पसागारिके तत् पर्याप्तं भुक्त्वा पुनरपि भिक्षां हिण्डेत । अथवा यावद् आचार्यान्तिके आगच्छन्ति तावत् कालोऽतिक्रामति, चतुर्थपौरुषी लगति सूर्यो वाऽस्तमेतीत्यर्थः, ततः सर्वमपि 'अन्तरा' तत्रैव भुञ्जीत ॥

[भा.५३१४] परमद्धजोयणातो, उज्जाण परेण जे भणिय दोसा ।
आहच्चुवातिणाविए, ते चेवुस्सग्ग-अववाता ॥

वृ-अथार्धयोजनात्परेण अतिक्रामयति तदा ये उद्यानात् परतोऽतिक्रामणे दोषाः पूर्वं भणितास्त एव द्रष्टव्याः । अथ "आहच्च" कदाचिदनाभोगादिनाऽतिक्रामितं ततस्तावेवोत्सर्गाऽपवादौ, उत्सर्गतस्तद् न भोक्तव्यम् अपवादतः पुनरसंस्तरणे भोक्तव्यमिति भावः ॥

*मू. (१२३) निग्गंथेण य गाहावइकुलं पिंडवायपडियाए अनुप्पविट्ठेणं अन्नतरे अचित्ते अनेसणिज्जे पान-भोयणे पडिग्गाहिए सिया, अत्थि या इत्थ केइ सेहतराए अनुवट्ठावियए कप्पइ से तस्स दाउं अनुप्पदाउं वा; नत्थि य इत्थ केइ सेहतराए अनुवट्ठावियए तं नो अप्पणा भुंजेज्जा, नो अन्नेसिं*

*दायए, एगंते बहुफासुए पएसे पडिलेहित्ता पमज्जित्ता परिट्ठवेयव्वे सिया ॥*

वृ- अस्य सम्बन्धमाह-

[भा.५३१५] आहार एव पगतो, तस्स उ गहणम्मि वन्निया सोही ।
आहच्च पुन असुद्धे, अचित्त गहिए इमं सुत्तं ॥

वृ- आहार एवानन्तरसूत्रे प्रकृतः । 'तस्य च' आहारस्य ग्रहणे शोधिर्वर्णिता, यथा शुद्ध आहारो ग्रहीतव्यः तथा भणितमिति भावः । "आहच्च" कदाचित् पुनरशुद्धो अचित्त आहारो गृहीतो भवेत् तत्र को विधिः ? इत्यस्यां जिज्ञासायामिदं सूत्रमारभ्यते ॥

[भा.५३१६] अहवण सचित्तदव्वं, पडिसिद्धं दव्वमादिपडिसेहे ।
इह पुन अचित्तदव्वं, वारेति अनेसियं जोगो ॥

वृ- अथवा पूर्वतरसूत्रेषु "तओ नो कप्पंति पव्वावित्तए" इत्यादिषु सचित्तद्रव्यं 'द्रव्यादि-प्रतिषेधेन' द्रव्यं-पण्डकादिकं तदाश्रित्य प्रतिषेधो द्रव्यप्रतिषेधस्तेन, आदिशब्दाद् "दुट्ठे मूढे" इत्यादिषु च भावप्रतिषेधेन प्रतिषिद्धम् । 'इह पुनः' प्रकृतसूत्रेऽचित्तद्रव्यमनेषणीयं वारयति । एष 'योगः' सम्बन्धः ॥ अनेनायातस्यास्य व्याख्या-निर्ग्रन्थेन च गृहपतिकुलं पिण्डपातप्रतिज्ञयाऽनुप्रविष्टेन "अन्नतरे"त्ति उद्गमोत्पादनैषणादोषाणामन्यतरेण दोषेण दुष्टम् 'अनेषणीयम्' अशुद्धम् 'अचित्तं' निर्जीवं पान-भोजनमनाभोगेन प्रतिगृहीतं स्यात्, तच्चोत्कृष्टं न यतस्ततः परित्यक्तुं शक्यते, अस्ति चात्र कश्चित् 'शैक्षतरकः' लघुतरः 'अनुपस्थापितकः' अनारोपितमहाव्रतः कल्पते "से" 'तस्य' निर्ग्रन्थस्य 'तस्मै' शैक्षाय दातुमनुप्रदातुं वा । तत्र दातुं प्रथमतः, 'अनुप्रदातुं' तेनान्यस्मिन्नेषणीये दत्ते सति पश्चात् प्रदातुम् । अथ नास्त्यत्र कोऽपि शैक्षतरकोऽनुपस्थापितकस्ततस्तद् दत्ते सति पश्चात्प्रदातुम् । अथ नास्त्यत्र कोऽपि शैक्षतरकोऽनुपस्थापितकस्ततस्तद् नैव आत्मना भुञ्जीत न वाऽन्येषां दद्यात् किन्तु एकान्ते बहुप्राशुके प्रदेशे प्रत्युपेक्ष्य प्रमृज्य च परिष्ठापयितव्यं स्यादिति सूत्रार्थ ॥ अथ निर्युक्तिविस्तरः-

[भा.५३१७] अन्नतरऽनेसणिज्जं, आउट्टिय गिण्हणे तु जं जत्थ ।
अनभोग गहित जतणा, अजतण दोसा इमे होंति ॥

वृ- 'अन्यतरद्' उद्गमादीनामेकतरदोषदुष्टमनेषणीयमाकुट्टिकया यो गृह्णाति । आकुट्टिका नाम-स्वयमेव भोक्ष्ये शैक्षस्य वा दास्यामि ! एवमुपेत्य ग्रहणे येन दोषेणाशुद्धं तमापद्यते, यत्र यत्र दोषे प्रायश्चित्तं तत् तस्य भवति । अथानाभोगेनानेषणीयं गृहीतं ततो यतनया शैक्षस्य दातव्यम् । यदि अयतनया ददाति तत इमे दोषा भवन्ति ॥

[भा.५३१८] मा सव्वमेयं मम देहमन्नं, उक्कोसएणं व अलाहि मज्झं ।
किं वा ममं दिज्जति सव्वमेयं, इच्चेव वुत्तो तु भणाति कोई ॥

वृ- तेन अनेषणीयमिति कृत्वा शैक्षस्य दत्तम्, स च शैक्षो ब्रूयात्-मा सर्वमेतद् 'अन्नं' भक्तं मम दत्त, अथोत्कृष्टमिति कृत्वा मे दीयते तत्रोत्कृष्टेन भक्तेन ममालम्, किं वा सर्वमेतद् मम दीयते ? इति । एवं शैक्षेणोक्तः कश्चिद् भणति ॥

[भा.५३१९] एतं तुब्भं अम्हं, न कप्पति चउगुरुं च आणादी ।
संका व अभिओगे, एगेन व इच्छियं होज्जा ॥

वृ- 'एतत् तव कल्पते, अस्माकं तु न कल्पते' एवं भणतश्चतुर्गुरुकम् आज्ञादयश्च दोषाः। शङ्का च तस्य शैक्षस्य अभियोगः-कार्मणं तद्विषया भवति। 'एकेन वा' केनचित् शैक्षेण तद् दीयमानमीप्सितं भवेत् तस्य च ग्लानत्वे यथाभावेन जाते सति द्वितीयशैक्ष उड्डाहं कुर्यात्॥ इदमेव भावयति-

[भा.५३२०] कम्मोदय गेलन्ने, दट्ठूण गतो करेज्ज उड्डाहं।
एगस्स वा वि दिन्ने, गिलाण वमिऊण उड्डाहो॥

वृ-कर्मोदयाद् यथाभावेनैव ग्लानत्वे जाते सति स चिन्तयेत्-एतैः 'मा व्रतादयं प्रतिभज्यताम्' इति कृत्वा ममाभियोग्यं दत्तम्। एवं 'दृष्ट्वा' ज्ञात्वा स भूयो गृहवासं गतः सन् उड्डाहं कुर्यात्-एतैः कार्मणं मम दत्तमिति। एकस्य वा दत्ते सति यदा ग्लानत्वं जातं तदा द्वितीयः शैक्षो व्रतं वमित्वा प्रभूतजनसमक्षमुड्डाहं कुर्यात्॥ किं पुनश्चिन्तयित्वा स व्रतं वमति? इत्याह-

[भा.५३२१] मा पडिगच्छति दिन्नं, से कम्मण तेन एस आगल्लो।
जाव न दिज्जति अम्ह वि, हन्नु दानि पलामि ता तुरियं॥

वृ- मा प्रतिगमिष्यतीति बुध्या कार्मणमस्य दत्तं तेनायं "आगल्लो" ग्लानः सञ्जातः, अतो यावदस्माकमपि कार्मणं न दीयते तावत् त्वरितमिदानीमहमपि पलाये॥

अथवा कश्चिदिदं ब्रूयात्-

[भा.५३२२ भत्तेण मे न कज्जं, कल्लं भिक्खं गतो व भोक्खामि।
अन्नं व देह मज्झं, इय अजते उज्झिणिगदोसा॥

वृ- भक्तेन 'मे' मम न कार्यम्, कल्ये वा भिक्षां गतो वा भोक्ष्ये, अन्यद्वा भक्तं मह्यं प्रयच्छत। "इय" एवमयतनया दीयमाने 'उज्झिनिका' पारिष्ठापनिका भवेत्। तस्यां च दोषाः कीटिका-मक्षिकादिविराधनारूपा मन्तव्याः॥ अथवा एकस्य ग्लानत्वे जातेऽपरश्चिन्तयेत्-

[भा.५३२३] ह नु व असंदेहं, एस मओ हं तु ताव जीवामि।
वग्धा हु चरंति इमे, मिगचम्मगसंवुता पावा॥

वृ- "ह नु" त्ति 'हः' इति खेदे 'नुः' इति वितर्के। एष तावद् असन्देहं मृतः, अहं तु तावदिदानीं जीवामि, इमे च पापाः श्रमणका मृगचर्मसंवृता व्याघ्राश्चरन्ति, बहिः साधुवेशच्छन्ना हिंसका अमी इति भावः। अतो यावद् एते मां जीविताद्व्यपरोपयन्ति तावत् प्रतिगच्छामीति॥ किञ्च-

[भा.५३२४] अभिओगपरज्झस्स हु, को धम्मो किं व तेन नियमेणं।
अहियक्करगाहीण व, अभिजोएंताण को धम्मो॥

वृ-अभियोगेन-कार्मणेन "परज्झस्स" त्ति परवशीकृतस्य मम को नाम धर्मो भविष्यति?, किं वा तेन नियमेन मम कार्यम्?, तथा अधिककरग्राहिणामिवामीषामप्येवमभियोजयतां को धर्म? न कश्चिदित्यर्थः। एवं विचिन्त्य गृहवासं भूयोऽपि कुर्यात्॥

यो ग्लानीभूयोऽप्रव्रजितः स प्रव्रजन्तमित्थं विपरिणमयेत्-

[भा.५३२५] किच्छाहि जीवितो हं, जति मरिउं इच्छसी तहिं वच्च।
एस तु भणामि भाउग!, विसकुंभा ते महुपिहाणा॥

वृ- 'कृच्छ्राद्' अतिदुःखेनाहं तावद् जीवितः, अतो यदि त्वमपि मर्तुमिच्छसि तदा 'तत्र' तेषां साधूनामन्तिके व्रज, येन भवतोऽप्येवं सम्पद्यत इति भावः। अपि च-हे भ्रातः! एषोऽहमेकान्तहितो भूत्वा भवन्तं भणामि-ते साधवो विषकुम्भा मधुपिधानाः सन्ति, मुखेन जीवदयाद्युपदेशकं मधुरं वचो जल्पन्ति, चेतसा तु विषवत् परव्यपरोपणादिदारुणपरिणामा इति हृदयम्। एवं विपरिणामितोऽसौ प्रव्रज्यामप्रतिपद्यमानः षट्कायविराधनादिकं यत् करोति तन्निष्पन्नं अयतनादायिनः प्रायश्चित्तम्॥ किञ्च-

[भा.५३२६] वातादीनं खोभ, जलन्नकालुस्थिए विसाऽऽसंका।
अवि जुज्जति अन्नविसे, नेव य संकाविसे किरिया॥

वृ- तस्य शुद्धाहारदानानन्तरं वातादीनां क्षोभे 'जलान्नकालुष्यात्' तत्क्षणादेवोत्थिते विषाशङ्का भवति-मन्ये विषममीभिर्मम दत्तं येनैवं मे सहसैव धातुक्षोभः समजनि। एवं चिन्तयतस्तस्याचिरादेव मरणं भवेत्। कुतः? इत्याह-"अवि" इत्यादि, 'अपि' सम्भावनायाम्, सम्भाव्यते अयमर्थ-यद् अन्यस्य सर्वस्यापि विषस्य मन्त्रादिक्रिया युज्यते, शङ्काविषस्य तु 'क्रिया' चिकित्सा नैव भवति, मानसिकत्वेन तस्य प्रतिकर्तुमशक्यत्वात्। यत एते दोषा अतो नायतनया दातव्यम्॥

अत्र परमतमुपन्यस्य दूषयति-

[भा.५३२७] केइ पुन साहियव्वं, अस्समणो हं ति पडिगमो होज्ज।
दायव्वं जतणाए, नाए अनुलोमणाऽऽउट्टी॥

वृ- केचित् पुनराचार्या ब्रुवते-स्फुटमेव तस्य कथयितव्यम्-भवत एवेदं कल्पते; एतच्च न युज्यते। यत एवमुक्ते कदाचिदसौ ब्रूयात्-यत् श्रमणानां न कल्पते तद् मम यदि कल्पते तत एवमहम् 'अश्रमणः' न श्रमणो भवामि, अश्रमणस्य न निरर्थकं मे शिरस्तुण्डमुण्डनम्; इति विचिन्त्य प्रतिगमनं कुर्यात्। यत एवमतो यतनया दातव्यम्। यतनया च दीयमानं यदि ज्ञातं भवति तदा वक्ष्यमाणवचनैः 'अनुलोमना' प्रज्ञापना तथा कर्तव्या यथा तस्य 'आवृत्ति' समाधानं भवति॥ प्रज्ञापनाविधिश्चायम्-

[भा.५३२८] अभिनवधम्मो सि अभावितो सि बालो व तं सि अनुकंपो।
तव चेवऽट्ठा गहितं, भुंजिज्जा तो परं छंदा॥

वृ- 'अभिनवधर्मा' अधुनैव गृहीतप्रव्रज्योऽसि त्वम्, अत एव 'अभावितोऽसि' नाद्यापि भैक्षभोजनेन भावितः, बालश्च त्वमसि अत एव 'अनुकम्प्यः' अनुकम्पनीयः, तत इदमुत्कृष्ट-द्रव्यमशुद्धमपि तवैवार्थाय गृहीतम्, अतः परं 'छन्दात्' स्वच्छन्देन भुञ्जीथाः॥

[भा.५३२९] कप्पो च्चिय सेहाणं, पुच्छसु अन्ने वि एस हु जिनाणा।
सामाइयकप्पठिती, एसा सुत्तं चिमं बेंति॥

वृ- अपि च-कल्प एवैष शैक्षाणां यदनेषणीयमपि भोक्तुं कल्पते, यदि भवतो न प्रत्ययस्ततः पृच्छ 'न्यानपि' गीतार्थसाधून्। तेऽपि तेन पृष्टाः सन्तो ब्रुवते-एषा 'हु' निश्चितं 'जिनाज्ञा' तीर्थकृतामुपदेशः, सामायिककल्पस्य चैषैव स्थिति। सूत्रं च ते साधवः। सूत्रं च ते साधवः 'इदं' प्रस्तुतं "अत्थि या इत्थ केइ सेहतराए" इत्यादिरूपं ब्रुवते। भवेत कारणं येनाकुड्डिकयाऽपि दद्यात्॥ कथम्? इत्याह-

[भा.५३३०] परतित्थियपूयातो, पासिय विविहातो संखडीतो य।
विप्परिणमेज्ज सेधो, कक्खडचरियापरिस्संतो ॥

वृ- क्वापि क्षेत्रे परतीर्थिकानां पूजाः-सादरस्निग्ध-मधुरभोजनादिरूपास्तदुपासकैर्विधीयमाना दृष्ट्वा विविधाश्च सङ्खडीरवलोक्य शैक्षः कर्कशचर्यापरिश्रान्तः सन् विपरिणमेत ॥ ततः-

[भा.५३३१] नाऊण तस्स भावं, कप्पति जतणाए ताहे दाउं जे।
संथरमाणे देंतो, लग्गइ सट्ठाणपच्छित्ते ॥

वृ- ज्ञात्वा 'तस्य' शैक्षस्य 'भावं' स्निग्ध-मधुरभोजनविषयमभिप्रायमेषणीयालाभे यतनया तस्यानेषणीयमपि दातुं कल्पते। अथ संस्तरतोऽपि ददाति ततः स्वस्थानप्रायश्चित्ते लगति, येन दोषेणाशुद्धं तन्निष्पन्नं प्रायश्चित्तमापद्यत इति भावः ॥

[भा.५३३२] सेहस्स व संबंधी, तारिसमिच्छंते वारणा नत्थि।
कक्खडे य महिड्ढीए, बितियं अद्धाणमादीसु ॥

वृ- शैक्षस्य वा सम्बन्धिनः केऽपि स्नेहातिरेकत उत्कृष्टं भक्तमानीय दद्युः, तस्य च तादृशं भोक्तुमिच्छतः 'वारणा' प्रतिषेधो नास्ति "कक्खडे व" ति कर्कशम्-अवमौदर्यं तत्रासंस्तरणेऽशुद्धं शैक्षस्य दातव्यम्, शुद्धमात्मना भोक्तव्यम्। "महिड्ढीए" त्ति कर्कशम्-अवमौदर्यं तत्रासंस्तरणेऽशुद्धं शैक्षस्य नाद्यापि भावितः तावत् प्रायोग्यमनेषणीयं दीयते। "बिइयं अद्धाणमादीसु" त्ति अध्वादिषु कारणेषु द्वितीयपदं भवति, स्वयमप्यनेषणीयं भुञ्जानाः शुद्धा इति भावः। एषा पुरातनी गाथा ॥ साम्प्रतमेनामेव विवृणोति-

[भा.५३३३] नीया व केई तु विरूवरूवं, आनेज्ज भत्तं अनुवट्ठियस्सा।
स यावि पुच्छेज्ज जता तु थेरे, तदा न वारेंति णं मा गुरुगा ॥

वृ- निजकाः केचिद् 'विरूपरूपं' मोदका-ऽशोकवर्ति-शाल्योदनप्रभृतिकमुत्कृष्टं भक्त-मनुपस्थितस्य शैक्षस्यार्थायानयेयुः। स च तैर्निमन्त्रितो यदा 'स्थविरान्' आचार्यान् पृच्छेत्-गृह्णाम्यहमिदम्? न वा? इति; तदा गुरवो "ण" मिति 'तं' शैक्षं न वारयन्ति। कुतः? इत्याह-"मा गुरुग" त्ति मा वारयतां चत्वारो गुरुकाः प्रायश्चित्तं भवेत् ॥ किमर्थं पुनर्न वार्यते? इत्याह-

[भा.५३३४] लोलुग सिनेहतो वा, अन्नहभावो व तस्स वा तेसिं।
गिण्हह तुब्भे वि बहुं, पुरिमड्ढी निव्विगतिगा भो ॥

वृ- लोलुपतया संज्ञातकस्नेहतो वा स तद् भक्तं भोक्तुमभिलषेत् ततो यदि वार्यते तदा 'तस्य' शैक्षस्य 'तेषां वा' संज्ञातकानाम् 'अन्यथाभावः' विपरिणमनं भवेत्। संज्ञातकाश्च यदि साधूनामन्त्रयन्ते-बह्वेतद् भक्तम् अतो यूयमपि गृह्णीत; ततो वक्तव्यम्-"भो" इति वयं पूर्वार्द्धप्रत्याख्यानिनो निर्विकृतिका वा ॥ अथ ते संज्ञातका ब्रवीरन्-

[भा.५३३५] मंदक्खेण न इच्छति, तुब्भे से देह वेह नं तुब्भे।
किं वा वारेमु वयं, गिण्हतु छंदेण तो बिंति ॥

वृ- एष युष्माभिरनुज्ञातः 'मन्दाक्षेण' लज्जया न ग्रहीतुमिच्छति ततो यूयं तस्य प्रयच्छत, भणत वा यूयम्-गृहाणेति। तत्र ब्रुवते-किं वा वयं वारयामः? गृह्णातु स्वयमेव छन्देन यदि रोचते। अथ "कक्खडे य महिड्ढीए" त्ति पदद्वयं व्याख्याति-

[भा.५३३६] वीसुं चोमे घेत्तुं, दिंति य से संथरे व उज्झंति ।
भावेंता विड्डिमतो, दलंति जा भावितोऽनेसिं ॥

वृ- 'अवमे' दुर्भिक्षे यावन्तिकादिकमनेषणीयं 'विष्वक्' पृथग् गृहीत्वा शैक्षस्यार्थायाऽऽनीतं तस्यैव प्रयच्छन्ति, संस्तरन्तो वा उज्झन्ति । यो वा ऋद्धिमत्प्रव्रजितस्तं 'भावयन्तः' भैक्ष-भोजनभावनां ग्राहयन्तो यावद् भावितो न भवति तावद् येन वा तेन वा दोषेणानेषणीयं प्रायोग्यं लब्ध्वा ददति। यद्येवं ऋद्धिमत्प्रव्रजितं नानुवर्तयन्ति ततश्चतुर्गुरुकम् ॥ कुतः ? इति चेद् उच्यते-

[भा.५३३७] तित्थविवड्ढी य पभावना य ओभावणा कुलिंगीणं ।
एमादी तत्थ गुणा, अकुव्वतो भारिया चतुरो ॥

वृ- ऋद्धिमति प्रव्रजिते तीर्थविवृद्धिर्भवति, 'यदीदृशा अप्येतेषां सकाशे प्रव्रजन्ति ततो वयं द्रमकप्रायाः किमेवं गृहवासमधिवसामः ?' इति बुध्या भूयांसः प्रव्रजन्तीति भावः । प्रभावना च प्रवचनस्य भवति कुलिङ्गिनां चापभ्राजना भवति, तेषां मध्ये ईदृशामृद्धिमतामभावात् । एवमादयः 'तत्र' राजादिप्रव्रजिते यतो गुणा भवन्ति अतस्तस्यानुवर्तनामकुर्वतश्चत्वारो भारिका मासाः प्रायश्चित्तम् ॥ अथ द्वितीयपदमाह-

[भा.५३३८] अद्धाणाऽसिवे ओमे, रायदुट्ठे असंथरेंता उ ।
सयमवि य भुंजमाणा, विसुद्धभावा अपच्छित्ता ॥

वृ- अध्वा-ऽशिवा-ऽवम-राजद्विष्टेषु असंस्तरन्तः स्वयमप्यनेषणीयं विशुद्धभावा भुञ्जाना अप्रायश्चित्ता मन्तव्याः ॥

*मू. (१२४) जे कडे कप्पट्ठियाणं कप्पइ से अकप्पट्ठियाणं, नो से कप्पइ कप्पट्ठियाणं । जे कडे अकप्पट्ठियाणं नो से कप्पइ कप्पट्ठियाणं कप्पइ से अकप्पट्ठियाणं । कप्पे ठिया कप्पट्ठिया, अकप्पे ठिया अकप्पट्ठिया ॥*

वृ- अस्य सम्बन्धमाह-

[भा.५३३९] सुत्तेनेव उ जोगो, मिस्सियभावस्स पन्नवणहेउं ।
अक्खेव निन्नओ वा, जम्हा तु ठिओ अकप्पम्मि ॥

वृ- सूत्रेणैव 'योगः' सम्बन्धः क्रियते- 'मिश्रितभावस्य' 'किमर्थमिदमशुद्धं मम दीयते ?' इत्येवं कलुषितपरिणामस्य शैक्षस्य प्रज्ञापनाहेतोरिदं सूत्रमारभ्यते । यद्वा 'कथं शैक्षस्यानेषणीयं कल्पते?' इत्येवं केनापि 'आक्षेपे' पूर्वपक्षे कृते 'निर्णयः' निर्वचनमनेन क्रियते । कथम् ? इत्याह-यस्माद् असौ शैक्षः 'अकल्पे' सामायिकसंयमलक्षणे स्थितः ततः कल्पते तस्यानेषणीयमिति ॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या-'यद्' अशनादिकं 'कृतं' विहितं कल्पस्थितानामर्थाय कल्पते तद् अकल्पस्थितानाम्, नो तत् कल्पते कल्पस्थितानाम् । इहाचेलक्यादौ दशविधे कल्पे ये स्थितास्ते कल्पस्थिता उच्यन्ते, पञ्चयामधर्मप्रतिपत्तार इत्यर्थः । ततः पञ्चयामिकानुद्दिश्य कृतं चातुर्यामिकानां कल्पत इत्युक्तं भवति । तथा यद् 'अकल्पस्थितानां' चातुर्यामिकानामर्थाय कृतं नो तत् कल्पते 'कल्पस्थितानां' पञ्चयामिकानां किन्तु कल्पते तद् 'अकल्पस्थितानां' चतुर्यामिकानाम् । अत्रैव व्युत्पत्तिमाह-'कल्पे' आचेलक्यादौ दशविधे स्थिताः कल्पस्थिताः । 'अकल्पे' अस्थितकल्परूपे स्थिता अकल्पस्थिताः । एष सूत्रार्थः ॥ अथ निर्युक्तिविस्तरः-

[भा.५३४०] कप्पठिइपरूवणत्ता, पंचेव महव्वया चउज्जामा।
कप्पट्ठियाण पणगं, अकप्प चउजाम सेहे य ॥

वृ- कल्पस्थितेः प्रथमतः प्ररूपणा कर्तव्या। तद्यथा-पूर्व-पश्चिमसाधूनां कल्पस्थितिः पञ्चमहाव्रतरूपा, मध्यमसाधूनां महाविदेहसाधूनां च कल्पस्थितिश्चतुर्यामलक्षणा। ततो ये कल्पस्थितास्तेषां "पनगं" ति पञ्चैव महाव्रतानि भवन्ति। अकल्पस्थितानां तु 'चत्वारो यामाः' चत्वारि महाव्रतानि भवन्ति, 'नापरिगृहीता स्त्री भुज्यते' इति कृत्वा चतुर्थव्रतं परिग्रहव्रत एव एषामन्तर्भवतीति भावः। यश्च पूर्व-पश्चिमतीर्थकरसाधूनामपि सम्बन्धी शैक्षः सोऽपि समायिकसंयत इति कृत्वा चतुर्यामिकोऽकल्पस्थितश्च मन्तव्यः, यदा पुनरुपस्थापितो भविष्यति तदा कल्पस्थित इति ॥ प्ररूपिता कल्पस्थिति। इह "जे कडे कप्पट्ठियाणं" इत्यादिनाऽऽधाकर्म सूचितम् अतस्तस्योत्पत्तिमाह-

[भा.५३४१] साली घय गुल गोरस, नवेसु वल्लीफलेसु जातेसु।
पुन्नट्ठ करण सड्ढा, आहाकम्मे निमंतणता ॥

वृ- कस्यापि दानरुचेरभिगमश्राद्धस्य वा नवः शालिर्भूयान् गृहे समायातस्ततः स चिन्तयति- 'पूर्व यतीनामदत्त्वा ममात्मना परिभोक्तुं न युक्तः' इति परिभाव्याऽऽधाकर्म कुर्यात्। एवं घृते गुडे गोरसे नवेषु वा तुम्ब्यादिवल्लीफलेषु जातेषु [illegible] "करणं" ति [illegible]कर्म कृत्वा साधूनां निमन्त्रणं कुर्यात् ॥ तस्य आधाकर्मणोऽमून्येकार्थिकपदानि-

[भा.५३४२] आहा अहे य कम्मे, आताहम्मे य अत्तकम्मे य।
तं पुन आहाकम्मं, नायव्वं कप्पते कस्स ॥

वृ- आधाकर्म अधःकर्म आत्मघ्नम् आत्मकर्म चेति चत्वारि नामानि। तत्र साधूनामाधया-प्रणिधानेन यत् कर्म-षट्कायविनाशेनाशनादिनिष्पादनं तद् आधाकर्म। तथा विशुद्धसंयमस्थानेभ्यः प्रतिपात्य आत्मानं अविशुद्धसंयमस्थानेषु यद् अधोऽधः करोति तद् अधःकर्म। आत्मानं-ज्ञान-दर्शन-चारित्ररूपं हन्ति-विनाशयतीति आत्मघ्नम्। यत् पाचकादेः सम्बन्धि कर्म-पाकादिलक्षणं ज्ञानावरणीयादिलक्षणं वा तद् आत्मनः सम्बन्धि क्रियते अनेनेति आत्मकर्म। तत् पुनराधाकर्म कस्य पुरुषस्य कल्पते ? न वा ? यद्वा कस्य तीर्थे कथं कल्पते ? न कल्पते वा ? इत्यमीभि-द्वरैर्ज्ञातव्यम् ॥ तान्येव दर्शयति-

[भा.५३४३] संघस्स पुरिम-पच्छिम-मज्झिमसमणाण चेव समणीणं।
चउण्हं उवस्सयाणं, कायव्वा मग्गणा होति ॥

वृ- आधाकर्मकारी सामान्येन विशेषेण वा सङ्घस्योद्देशं कुर्यात्। तत्र सामान्येन-अविशेषितं सङ्घमुद्दिशति, विशेषेण तु पूर्वं वा मध्यमं वा पश्चिमं वा सङ्घं चेतसि प्रणिधत्ते। श्रमणानामप्योघतो विभागतश्च निर्देशं करोति। तत्रौघतः-अविशेषितश्रमणानाम्, विभागतः पञ्चयामिकश्रमणानां चतुर्यामिकश्रमणानां वा। एवं श्रमणीनामपि वक्तव्यम्। तथा चतुर्णामुपाश्रयाणामप्येवमेव सामान्येन विशेषेण च मार्गणा कर्तव्या भवति। तत्र चत्वार उपाश्रया इमे-पञ्चयामिकानां श्रमणानामुपाश्रयमुद्दिशतीति एकः, पञ्चयामिकानामेव श्रमणीनां द्वितीयः, एवं चतुर्यामिक श्रमण-श्रमणीनामप्येवमेव द्वावुपाश्रयौ मन्तव्यौ ॥ इदमेव भावयति-

[भा.५४४०] चरित्तट्ठ देसे दुविहा, एसणदोसा य इत्थिदोसा य ।
गच्छम्मि य सीयंते, आयसमुत्थेहिं दोसेहिं ।।

वृ- चारित्रार्थं गमनं द्विधा-देशदोषैरात्मसमुत्थदोषैश्च । देशदोषा द्विविधाः-एषणादोषाः स्त्री-दोषाश्च । आत्मसमुत्था अपि द्विधा-गुरुदोषा गच्छदोषाश्च । तत्र गच्छो यदि 'आत्मसमुत्थैः' चक्रवालसामाचारीवितथकरणलक्षणैर्दोषैः सीदेत् तत्र पक्षमापृच्छन्नास्ते, तत ऊर्ध्वं गच्छति ।। इदमेव व्याचष्टे-

[भा.५४४१] जहियं एसणदोसा, पुरकम्माई न तत्थ गंतव्वं ।
उदगपउरो व देसो, जहिं व चरिगाइसंकिन्नो ।।

वृ- यत्र देशे पुरः कर्मादय एषणादोषा भवेयुः तत्र न गन्तव्यम् । यो वा उदकप्रचुरो देशः सिन्धुविषयवद् यो वा चरिकादिभिः-परिव्राजिका-कापालिकी-तच्चनिकादिभिर्बहुमोहाभिराकीर्णो विषयस्तत्रापि न गन्तव्यम् ।। अथाशिवादिभिः कारणैस्तत्र गता भवेयुस्ततः-

[भा.५४४२] असिवाईहि गता पुन, तक्कज्जसमाणिया तओ निंति ।
आयरियम[illegible], आपुच्छिउ [illegible] निंति ।।

वृ- अशिव-दुर्भिक्ष-परचक्रादिभिः कारणैस्तत्र गता अपि ''तक्कज्जसमाणिय'' त्ति प्राकृते पूर्वापरनिपातस्यातन्त्रत्वात् समापिततत्कार्या, संयमक्षेत्रे यदाऽशिवादीनि स्फिटितानि भवन्तीति भावः, तदा 'ततः' असंयमक्षेत्राद् 'निर्यन्ति' निर्गच्छन्ति । यद्याचार्या केनापि प्रतिबन्धेन सीदन्तो न निर्गच्छेयुः ततो ये एको द्वौ बहवोऽसीदन्तस्ते गुरुमापृच्छय आत्मना निर्गच्छन्ति ।।

तत्र चायं विधिः-

[भा.५४४३] दो मासे एसणाए, इत्थि वज्जेज्ज अट्ठ दिवसाइं ।
गच्छम्मि होइ पक्खो, आयसमुत्थेगदिवसं तु ।।

वृ- एषणायामशुध्यमानायां यतनयाऽनेषणीयमपि गृह्णन् द्वौ मासौ गुरुमापृच्छन् प्रतीक्षते । अथ स्त्री-शय्यातरीप्रभृतिका उपसर्गयति आत्मनश्च दृढं चित्तं ततोऽष्टौ दिवसान् गुरुमापृच्छय ततस्तत् क्षेत्रं वर्जयेत् । यत्र च गच्छः सीदति तत्र पक्षमापृच्छय गन्तव्यम् । अथ स्त्रियां स्वयमध्युपपन्नस्तत ईदृशो आत्मसमुत्थे आगाढदोषे एकदिवसमापृच्छय गच्छति ।।

[भा.५४४४] सेज्जयरिमाइ सएज्झए य आउत्थ दोस उभए वा ।
आपुच्छइ सन्निहियं, सन्नाइगतं व तत्तो उ ।।

वृ- अथात्मना शय्यातर्यादी स्त्रियां 'सज्झिकायां वा' प्रातिवेश्मिक्यामतीवाध्युपपन्नः, 'उभयं वा' परस्परमध्युपपन्नं ततो यद्याचार्य सन्निहितस्तदा तमापृच्छय गच्छति । अथासन्निहितः संज्ञाभूम्यादौ गत आचार्यस्तदा तत एवानापृच्छया गच्छति, अपरं वा सन्निहितसाधुं भणति-मम वचनेन गुरुणामाप्रच्छनं निवेदनीयम् ।।

[भा.५४४५] एयविहिमागयं तू, पडिच्छ अपडिच्छणे भवे लहुगा ।
अहवा इमेहिं आगय, एगागि (दी) पडिच्छणे गुरुगा ।।

[भा.५४४६] एगे अपरिणए या, अप्पाहारे य थेरए ।
गिलाणे बहुरोगी य, मंदधम्मे य पाहुडे ।।

[भा.५४४७] एयारिसं विओसज्ज, विप्पवासो न कप्पई।
सीस-पडिच्छ-ऽऽयरिए, पायच्छित्तं विहिज्जई ॥

वृ- गाथात्रयमपि गतार्थम् भवेत् कारणं येन न पृच्छेत्-

[भा.५४४८] बिइयपदमसंविग्गे, संविग्गे चेव कारणागाढे।
नाऊण तस्स भावं, अप्पणो भावं अनापुच्छा ॥

वृ- द्वितीयपदमत्रोच्यते-आचार्यादिरसंविग्नो भवेत्, अथवा संविग्नः परम् अहिदष्टादि-कमागाढकारणमवलम्ब्य न पृच्छेत्, 'तस्य वा गुरोः 'भावं' 'सुचिरेणापि न विसर्जयति' इति लक्षणं ज्ञात्वा, आत्मीयं च 'भावम्' 'अहमिह तिष्ठन्नवश्यं विनस्यामि' इति ज्ञात्वाऽनापृच्छयाऽपि व्रजेत् ॥ अथ गुरोः चारित्रे सीदतो विधिमाह-

[भा.५४४९] सेज्जायरकप्पट्ठी, चरित्तठवणाए अभिगया खरिया।
सारुविओ गिहत्थो, सो वि उवाएण हायव्वो ॥

वृ-शय्यातरस्य कल्पस्थिकायां आचार्येण चारित्रस्य स्थापना कृता, तां प्रतिसेवत इति भावः, तस्यां चारित्रस्थापनायां जातायाम्, द्व्यक्षरिका वा काचिद् 'अभिगता' जीवाद्यधिगमोपेता श्राविकेत्यर्थः तस्यामाचार्योऽध्युपपन्नः, स च चारित्रवर्जितो वेषधारी भवेत्, सारुपिको वा गृहस्थो वा उपलक्षणत्वात् सिद्धपुत्रको वा। तत्र मुण्डितशिराः शुक्लवासःपरिधायी कच्छा-मबध्नानोऽभार्यको भिक्षां हिण्डमानः सारुपिक उच्यते। यस्तु मुण्डः सशिखाको वा सभार्यकः स सिद्धपुत्रकः। एवमेषामन्यतर उपायेन हर्तव्यः। कथम्? इति चेद् उच्यते-पूर्वं तावद् गुरवो भण्यन्ते-वयं युष्मद्विरहिता अनाथा अतः प्रसीद गच्छामोऽपरं क्षेत्रम्। एवमुक्ते यदि नेच्छन्ति ततो यस्यां स प्रतिबद्धः सा प्रज्ञाप्यते-एष बहूनां साधूनामाधारः, एतेन विना गच्छस्य ज्ञानादीनां परिहानि, अतो मा नरकादिकं संसारमात्मनो वर्धय। यदि सा स्थिता ततः सुन्दरम्। अथ न तिष्ठति ततो विद्या-मन्त्रादिभिरावर्त्यते। तदभावे केवयिका अपि तस्या दीयन्ते, गुरुश्च पूर्वक्रमेण रात्रौ हर्तव्यः। एवं तावद् भिक्षुमङ्गीकृत्य विधिरुक्तः ॥

मू. (१२६) *गणावच्छेइए य गणाओ अवक्कम्म इच्छेज्जा अन्नं गणं उवसंपज्जित्ताणं विहरित्तए, कप्पति गणावच्छेइयस्स गणावच्छेइयत्तं निक्खिवित्ता अन्नं गणं उवसंपज्जित्ताणं विहरित्तए। नो से कप्पइ अणापुच्छित्ता आयरियं वा जाव अन्नं गणं उपसंपज्जित्ताणं विहरित्तए; कप्पइ से आउच्छित्ता आयरियं वा जाव विहरित्तए। ते य से वितरंति एवं से कप्पइ जाव विहरित्तए; ते य से नो वितरंति एवं से नो कप्पइ जाव विहरित्तए*

मू. (१२७) *आयरिय-उवज्झा य गणाओ अवक्कम्म इच्छेज्जा अन्नं गणं उवसंपज्जित्ताणं विहरित्तए, कप्पइ आयरिय-उवज्झायस्स आयरिय-उवज्झायत्तं निक्खिवित्ता अन्नं गणं उवसंपज्जित्ताणं विहरित्तए। नो से कप्पइ अनापुच्छित्ता आयरियं वा जाव अन्नं गणं उवसंपज्जित्ताणं विहरित्तए; कप्पति से आपुच्छित्ता जाव विहरित्तए। ते य से वितरंति एवं से कप्पति अन्नं गणं उवसंपज्जित्ताणं विहरित्तए; ते य से नो वियरंति एवं से नो कप्पति अन्नं गणं उवसंपज्जित्ताणं विहरित्तए ॥*

वृ- अस्य सूत्रद्वयस्य व्याख्या प्राग्वत्। नवरम्-गणावच्छेदिकत्वमाचार्योपाध्यायत्वं च निक्षिप्य गन्तव्यमिति विशेषः ॥ अथ भाष्यम्-

[भा.५४५०] एमेव गणावच्छे, गणि-आयरिए वि होइ एमेव ।
नवरं पुन नाणत्तं, ते नियमा हुंति वत्ता उ ॥

वृ- 'एवमेव' भिक्षुवद् गणावच्छेदिकस्य ज्ञान-दर्शन-चारित्रार्थमन्यं गणं गच्छतो विधिर्द्रष्टव्यः। गणिनः-उपाध्यायस्याचार्यस्य चैवमेव विधिः । नवरं पुनरिदं नानात्वम्-नियमात् 'ते' गणावच्छेदिकादयो व्यक्ता एव भवन्ति नाव्यक्ताः ॥

[भा.५४५१] एसेव गमो नियमा, निग्गंथीणं पि होइ नायव्वो ।
नाणट्ठ जो उ नेई, सच्चित्त न अप्पिणे जाव ॥

वृ- 'एष एव' भिक्षुसूत्रोक्तो गमो निर्ग्रन्थीनामप्यपरं गणमुपसम्पद्यमानानां ज्ञातव्यः । नवरम्-नियमेनैव ताः ससहायाः । यः पुनः ज्ञानार्थं ता आर्यिका नयति स यावदद्यापि न वाचनाचार्यस्यार्पयति तावत् सचित्तादिकं तस्यैवाभवति । अर्पितासु पुनर्वाचनाचार्यस्याभाव्यम् ॥

कः पुनस्ता नयति? इत्याह-

[भा.५४५२] पंचण्हं एगयरे, उग्गहवज्जं तु लभति सच्चित्तं ।
आपुच्छ अट्ठ पक्खे, इत्थीसत्थेण संविग्गो ॥

वृ- 'पञ्चानाम्' आचार्योपाध्याय-प्रवर्तक-स्थविर-गणावच्छेदकानामेकतरः संयतीर्नयति । तत्र सचित्तादिकं परक्षेत्रावग्रहवर्जं स एव लभते । निर्ग्रन्थी च ज्ञानार्थं व्रजन्ती अष्टौ पक्षानापृच्छति-तत्राचार्यमेकं पक्षमापृच्छति, यदि न विसर्जयति तत उपाध्यायं वृषभं गच्छं चैवमेव पृच्छति; संयतीवर्गेऽपि प्रवर्तिनी-गणावच्छेदिका-ऽभिषेका-शेषसाध्वीर्यथाक्रममेकैकं पक्षमापृच्छति । ताश्च स्त्रीसार्थेन समं संविग्नेन परिणतवयसा साधुना नेतव्याः ॥

मू. (१२८) *भिक्खू य गणाओ अवक्कम्म इच्छेज्जा अन्नं गणं संभोगपडियाए उवसंपज्जित्ताणं विहरित्तए, नो से कप्पइ अनापुच्छित्ता आयरियं वा जाव अन्नं गणं संभोगवियाए उवसंपज्जित्ताणं विहरित्तए; कप्पइ स आपुच्छित्ता आयरियं वा जाव विहरित्तए । ते य से वियरंति एवं से कप्पइ जाव विहरित्तए; ते य से नो वियरेज्जा एवं से नो कप्पइ जाव विहरित्तए । जत्थुत्तरियं धम्मविनयं लभेज्जा एवं से कप्पइ अन्नं गणं संभोगपडियाए उवसंपज्जित्ताणं विहरित्तए; जत्थुत्तरियं धम्मविनयं नो लभेज्जा एवं से नो कप्पइ अन्नं गणं जाव विहरित्तए ॥*

वृ-अस्य व्याख्या प्राग्वत् । नवरम्-सम्भोगः-एकमण्डल्यां समुद्देशनादिरूपः तत्प्रत्ययं-तन्निमित्तम् । "जत्थुत्तरियं" इत्यादि, 'यत्र' गच्छे उत्तरं-प्रधानतरं 'धर्मविनयं' स्मारणावारणादिरूपां धार्मिकीं शिक्षां लभेत एवं "से" तस्य कल्पते अन्यं गणमुपसम्पद्य विहर्तुम् । यत्रोत्तरं धर्मविनयं नो लभेत एवं "से" तस्य नो कल्पते उपसम्पद्य विहर्तुमिति सूत्रार्थः ॥ अथ भाष्यम्-

[भा.५४५३] संभोगो वि हु तिहि कारणेहि नाणट्ठ दंसण चरित्ते ।
संकमणे चउभंगो, पढमो गच्छम्मि सीयंते ॥

वृ- सम्भोगोऽपि त्रिभिः कारणैरिष्यते । तद्यथा-ज्ञानार्थं दर्शनार्थं चारित्रार्थं च । तत्र ज्ञानार्थं दर्शनार्थं वा यस्योपसम्पदं प्रतिपन्नस्तस्मिन् सूत्रार्थदानादौ सीदति गणान्तरसङ्क्रमणे स एव विधिर्य पूर्वसूत्रे भणितः । चारित्रार्थं तु यस्योपसम्पन्नस्तत्र चरण-करणक्रियायां सीदति चतुर्भङ्गी भवति-गच्छः सीदति नाचार्य १ आचार्य सीदति न गच्छः २ गच्छोऽप्याचार्योऽपि सीदति ३ न

गच्छो नाप्याचार्य ४ इति । अत्र प्रथमो भङ्गो गच्छे सीदति वक्तव्यः । तत्र च गुरुणा स्वयं वा गच्छस्य नोदना कर्तव्या ।। कथं पुनः स गच्छः सीदेत् ? इत्याह–

[भा.५४५४] पडिलेह दियतुअट्टण, निक्खिव आदान विनय सज्झाए ।
आलोग-ठवण-भत्तट्ठ-भास-पडल-सेज्जातराईसु ।।

वृ-ते गच्छसाधवः प्रत्युपेक्षणां कालेन कुर्वन्ति, न्यूना-ऽतिरिक्तादिदोषैर्विपर्यासेन वा प्रत्युपेक्षन्ते, गुरु-ग्लानादीनां वा न प्रत्युपेक्षन्ते । निष्कारणे दिवा त्वग्वर्तयन्ति । दण्डकादिकं निक्षिपन्त आददतो वा न प्रत्युपेक्षन्ते, न वा प्रमार्जयन्ति, दुष्प्रत्युपेक्षितं दुष्प्रमार्जितं वा कुर्वन्ति । यथार्हं विनयं न प्रयुञ्जते । स्वाध्याये-सूत्रपौरुषीमर्थपौरुषीं वा न कुर्वन्ति, अकालेऽस्वाध्याये वा कुर्वन्ति । पाक्षिकादिषु आलोचनां न प्रयच्छन्ति, अथवा "आलोय"त्ति "ठाणदिसिपगासणया" इत्यादिकं सप्तविधमालोकं न प्रयुञ्जते, सङ्खडीं वा आलोकन्ते । स्थापनाकुलानि न स्थापयन्ति । 'भक्तार्थ' मण्डल्यां समुद्देशनं न कुर्वन्ति । गृहस्थभाषाभिर्भाषन्ते, सावद्यं वा भाषन्ते । पटलकेषु आनीतं भुञ्जते । शय्यातरपिण्डं भुञ्जते । आदिग्रहणेन उद्गमाद्यशुद्धं गृह्णन्ति ।। एतेषु गच्छस्य सीदतो विधिमाह-

[भा.५४५५] चोयावेइ य गुरुणा, विसीयमानं गणं सयं वा वि ।
आयरियं सीयंतं, सयं गणेणं च चोयावे ।।

वृ-प्रथमभङ्गे सामाचार्यां विषीदन्तं गच्छं गुरुणा नोदयति, अथवा स्वयमेव नोदयति । द्वितीयभङ्गे आचार्यं सीदन्तं स्वयं वा गणेन वा नोदयति ।।

[भा.५४५६] दुन्नि वि विसीमाणे, सयं व जे वा तहिं न सीयंति ।
ठाणं ठाणाऽऽसज्ज उ, अनुलोमाईहि चोएति ।।

वृ- तृतीयभङ्गे गच्छा-ऽऽचार्यौ द्वावपि सीदन्तौ स्वयमेव नोदयति, ये वा तत्र न सीदन्ति तैर्नोदयति, किं बहुना ? स्थानं स्थानम् 'आसाद्य' प्राप्यानुलोमादिभिर्वचोभिर्नोदयति । किमुक्तं भवति ?-आचार्योपाध्यायादिकं भिक्षु-क्षुल्लकादिकं वा पुरुषवस्तु ज्ञात्वा यस्य यादृशी नोदना योग्या यो वा खरसाध्यो मृदुसाध्यः क्रूरोऽक्रूरो वा यथा नोदनां गृह्णाति तं तथा नोदयेत् ।।

[भा.५४५७] भणमाणे भणाविंते, अयाणमाणम्मि पक्खो उक्कोसो ।
लज्जाए पंच तिन्नि व, तुह किं ति व परिणय विवेगो ।।

वृ- गच्छमाचार्यमुभयं वा सीदन्तं स्वयं भणन् अन्यैश्च भाणयन्नास्ते । यत्र न जानाति एते भण्यमाना अपि नोद्यमं करिष्यन्ति तत्रोत्कर्षतः पक्षमेकं तिष्ठति । गुरुं पुनः सीदन्तं लज्जया गौरवेण वा जानन्नपि पञ्च त्रीन् वा दिवसानभणन्नपि शुद्धः । अथ नोद्यमानो गच्छो गुरुरुभयं वा भणेत्-तव किं दुःखयति ? यदि वयं सीदामस्तर्हि वयमेव दुर्गतिं गमिष्यामः । एवंविधे भावे तेषां परिणते तेषां 'विवेकः' परित्यागो विधेयः । ततश्चान्यं गणं सङ्क्रमति । तत्र चतुर्भङ्गी-संविग्नः संविग्नं गणं सङ्क्रामति १ संविग्नोऽसंविग्नम् २ असंविग्नः संविग्नम् ३ असंविग्नोसंविग्नम् ४।। तत्र प्रथमो भङ्गस्तावदुच्यते-

[भा.५४५८] संविग्गविहाराओ, संविग्गा दुन्नि एज्ज अन्नयरे ।
आलोइयम्मि सुद्धो, तिविहोवहिमग्गणा नवरिं ।।

वृ- संविग्नविहाराद् गच्छात् संविग्नौ द्वौ 'अन्यतरौ' गीतार्था-ऽगीतार्थौ संविग्ने गच्छे

समागच्छेताम्, स च गीतार्थोऽगीतार्थो वा यतो दिवसात् संविग्नेभ्यः स्फिटितः तद्दिनादारभ्य सर्वमभ्यालोचयति, आलोचिते च शुद्धः । नवरम्-त्रिविधोपधेः-यथाकृतादिरूपस्य मार्गणा कर्तव्या॥

इदमेव व्याचष्टे-

[भा.५४५९] गीयमगीतो गीते, अप्पडिबद्धे न होइ उवघातो ।
अविगीयस्स वि एवं, जेन सुता ओहनिज्जुत्ती ॥

वृ- स संविग्नो गीतार्थो वा स्यादगीतार्थो वा । यदि गीतार्थो व्रजिकादिषु अप्रतिबद्ध आयातः तत उपधेरुपघातो न भवति, न प्रायश्चित्तम् । 'अविगीतस्य' अगीतार्थस्यापि येन जघन्यत ओघनिर्युक्तिः श्रुता तस्यापि 'एवमेव' अप्रतिबध्यमानस्य नोपधिरुपहन्यते ॥

[भा.५४६०] गीयाण विमिस्साण व, दुण्ह वयंताण वइयमाईसु ।
पडिबज्झंताणं पि हु, उवहि न हम्मे न वाऽऽरुवणा ॥

वृ- 'द्वयोः' गीतार्थयोर्गीतार्थविमिश्रयोर्वा व्रजतोर्व्रजिकादिषु प्रतिबध्यमानयोरप्युपधिर्नोपहन्यते, न वा 'आरोपणा' प्रायश्चित्तं भवति । एवमेकोऽनेके वा विधिना समागता यत्प्रभृति गणाद् निर्गतास्तत आरभ्यालोचनां ददति ॥ अथ त्रिविधोपधिमार्गणामाह-

[भा.५४६१] आगंतुमहागडयं, वत्थव्वअहाकडस्स असईए ।
मेलिंति मज्झिमेहिं, मा गारवकारणमगीए ॥

वृ- तस्य गीतार्थस्यागीतार्थस्य वा त्रिविध उपधिर्भवेत् । तद्यथा-यथाकृतोऽल्पपरिकर्मा सपरिकर्मा च । वास्तव्यानामप्येवमेव त्रिविध उपधिर्भवति । तत्र यथाकृतो यथाकृतेन सह मील्यते, अल्पपरिकर्मा अल्पपरिकर्मणा, सपरिकर्मा सपरिकर्मणा । अथ वास्तव्यानां यथाकृतो नास्ति तत आगन्तुकस्य यथाकृतं वास्तव्यमध्यमैः-अल्पपरिकर्मभि सह मीलयन्ति । किं कारणम्? ति चेद् अत आह-मा सोऽमीलितः सन्नगीतार्थस्य 'मदीय उपधिरुत्तमसम्भोगिकोऽतोऽहमेव सुन्दरः' इत्येवं गौरवकारणं भवेदिति ॥

[भा.५४६२] गीयत्थे न मेलिज्जइ, जो पुन गीओ वि गारवं कुणइ ।
तस्सुवही मेलिज्जइ, अहिकरणं अपच्चओ इहरा ॥

वृ- गीतार्थो यदि अगौरवी ततस्तदीयो यथाकृतः प्रतिग्रहो वास्तव्ययथाकृताभावेऽल्पपरिकर्मभिः सह न मील्यनेत किन्तु उत्तमसम्भोगिकः क्रियते । यस्तु गीतार्थोऽपि गौरवं करोति तस्य यथाकृतो वासत्वायल्पपरिकर्मभि सह मील्यते । किं कारणम् ? इति चेद् अत आह-''इहर''त्ति यदि यथाकृतपरिभोगेन परिभुज्यते तदा केनाप्यजानता अल्पपरिकर्मणा समं मेलितं दृष्ट्वा स गीतार्थः 'अधिकरणम्' असङ्खडं कुर्यात्, किमर्थं मदीय उत्कृष्टोपधिरशुद्धेनसह मीलितः ? इति । अप्रत्ययो वा शैक्षाणां भवेत्, अयमेतेषां सकाशादुद्यततरविहारी येनोपधिमुत्कृष्टपरिभोगेन परिभुङ्क्ते, एते तु हीनतरा इति ॥

[भा.५४६३] एवं खलु संविग्गे, संविग्गे संकमं करेमाणे ।
संविग्गमसंविग्गे, असंविग्गे यावि संविग्गे ॥

वृ- एवं खलु संविग्नस्य संविग्नेषु सङ्क्रमं कुर्वाणस्य विधिरुक्तः । अथ संविग्नस्यासंविग्नेषु सङ्क्रामतोऽसंविग्नस्य वा संविग्नेषु सङ्क्रामतो विधिरुच्यते ॥ तत्र संविग्नस्यासंविग्नसङ्क्रमणे

विधिरुच्यते ।। तत्र संविग्नस्यासंविग्नसङ्क्रमणे तावदिमे दोषाः-

[भा.५४६४] सीहगुहं वग्घगुहं, उदहिं व पलित्तगं व जो पविसे ।
अंसिवं ओमोयरियं, धुवं से अप्पा परिच्चत्तो ।।

वृ- सिंहगुहां व्याघ्रगुहां 'उदधिं वा' समुद्रं नदीपतिं वा नगराग्निं वा यः प्रविशति, अशिवमवमौदर्यं वा यत्र देशे तत्र यः प्रविशति तेन ध्रुवमात्मा परित्यक्तः ।।

[भा.५४६५] चरण-करणप्पहीने, पासत्थे जो उ पविसए समणो ।
यतमाणए पजहिउं, सो ठाणे परिच्चयइ तिन्नि ।।

वृ- एवं सिंहगुहादिस्थानीयेषु चरण-करणप्रहीणेषु पारश्वस्थेषु यः श्रमणः 'यतमानान्' संविग्नान् 'प्रहाय' परित्यज्य प्रविशति स मन्दधर्मा 'त्रीणि स्थानानि' ज्ञान-दर्शन-चारित्ररूपाणि परित्यजति। अपि च-सिंहगुहादिप्रवेशे एकभविकं मरणं प्राप्नोति, पार्श्वस्थेषु पुनः प्रविशन्ननेकानि मरणानि प्राप्नोति ।।

[भा.५४६६] एमेव अहाछंदे, कुसील-ओसन्न-नीय-संसत्ते ।
जं तिन्नि परिच्चयई, नाणं तह दंसण चरित्तं ।।

वृ- 'एवमेव' पार्श्वस्थवद् यथाच्छन्देषु कुशीला-ऽवसन्न-नित्यवासि-संसक्तेषु च प्रविशतो मन्तव्यम् । यच्च त्रीणि स्थानानि परित्यजतीत्युक्तं तद् ज्ञानं दर्शनं चारित्रं चेति द्रष्टव्यम् ।।

गतो द्वितीयभङ्गः । अथ तृतीयभङ्गमाह-

[भा.५४६७] पंचण्हं एगयरे, संविग्गे संकमं करेमाणे ।
आलोइए विवेगो, दोसु असंविग्गे सच्छंदो ।।

वृ- पार्श्वस्था-ऽवसन्न-कुशील-संसक्त-यथाच्छन्दानामेकतरः संविग्नेषु सङ्क्रमं कुर्वन् प्रथममालोचनां ददाति, तत आलोचितेऽविशुद्धोपधेर्विवेकं करोति । स च यदि चारित्रार्थमुपसम्पद्यते ततः प्रतीच्छनीयः । यस्तु 'द्वयोः' ज्ञान-दर्शनयोरर्थायासंविग्न उपसम्पद्यते तस्य 'स्वच्छन्दः' स्वाभिप्रायः, नासौ प्रतीच्छनीय इति भावः । अथवा "दोसु असंविग्गे" त्ति 'असंविग्नोऽसंविग्ने सङ्क्रामति' इति रूपे द्विधाऽप्यसंविग्ने चतुर्थभङ्गे 'स्वच्छन्दः' स्वेच्छा, अवस्तुभूतत्वाद् न कोऽपि तत्र विधिरिति भावः ।।

[भा.५४६८] पंचेगतरे गीए, आउभियवते जयंतए तम्मि ।
जं उवहिं उप्पाए, संभोइत सेसमुज्झंति ।।

वृ- तेषां पञ्चानां-पार्श्वस्थादीनामेकतर आगच्छन् यदि गीतार्थस्ततः स्वयमेव महाव्रतान्युच्चा-र्यारोपितव्रतो यतमानः-व्रजिकादावप्रतिबध्यमानो मार्गे यमुपधिमुत्पादयति स साम्भोगिकः, "सेसमुज्झंति" त्ति यः प्राक्तनः पार्श्वस्थोपधिरशुद्धस्तं परिष्ठापयन्ति । यः पुनरगीतार्थस्तस्य व्रतानि गुरवः प्रयच्छन्ति, उपधिश्च तस्य चिरन्तनोऽभिनवोत्पादितो वा सर्वोऽपि परित्यज्यते ।।

तेषु चायमालोचनाविधिः-

[भा.५४६९] पासत्थाईमुंडिए, आलोयण होइ दिक्खपभिइं तु ।
संविग्गपुराणे पुन, जप्पभिई चेव ओसन्नो ।।

वृ- यः पार्श्वस्थादिभिरेव मुण्डितः-प्रव्राजितस्तस्य दीक्षादिनादारभ्य आलोचना भवति ।

यस्तु पूर्वं संविग्नः पश्चात् पार्श्वस्थो जातः तस्य संविग्नपुराणस्य यत्प्रभृति अवसन्नो जातस्तद्दिनादारभ्याऽऽलोचना भवति ॥

**मू. (१२९)** *गणावच्छेइए य गणादवक्कम्म इच्छेज्जा अन्नं गणं संभोगपडियाए उवसंपज्जित्ताणं विहरित्तए, नो से कप्पति गणावच्छेइयत्तं अनिक्खिवित्ता संभोगपडियाए जाव विहरित्तए; कप्पति से गणावच्छेइअत्तं निक्खिवित्ता जाव विहरित्तए। नो से कप्पइ अनापुच्छित्ता आयरियं वा जाव विहरित्तए; कप्पति से आपुच्छित्ता आयरियं वाजाव विहरित्तए। तं य से वितरंति एवं से कप्पइ अन्नं गणं संभोगपडियाए जाव विहरित्तए; ते य से नो वितरंति एवं से नो कप्पइ जाव विहरित्तए। जत्युत्तरियं धम्मविनयं लभेज्जा एवं से कप्पति अन्नं गणं संभोगपडियाए जाव विहरित्तए; जत्युत्तरियं धम्मविणयं नो लभेज्जा एवं से नो कप्पति जाव विहरित्तए ॥*

**मू. (१३०)** *आयरिय-उवज्झाए य गणादवक्कम्म इच्छेज्जा अन्नं गणं संभोगपडियाए जाव विहरित्तए, नो से कप्पति आयरिय-उवज्झायत्तं अनिक्खिवित्ता अन्नं गणं सं० जाव विहरित्तए; कप्पति से आयरिय-उवज्झायत्तं निक्खिवित्ता जाव विहरित्तए। नो से कप्पइ अणापुच्छित्ता आयरियं वा जाव विहरित्तए; कप्पति से आपुच्छित्ता आयरियं वा जाव विहरित्तए। ते य से वितरंति एवं से कप्पति जाव विहरित्तए; ते य से नो वितरंति एवं से नो कप्पति जाव विहरित्तए। जत्युत्तरियं धम्मविमयं लभेज्जा एवं से कप्पइ जाव विहरित्तए; जत्युत्तरियं धम्मविनयं नो लभेज्जा एवंसे नो कप्पति जाव विहरित्तए ॥*

**वृ-** अस्य सूत्रद्वयस्य व्याख्या पूर्ववत् ॥ अथ भाष्यम्-

**[भा.५४७०]** एमेव गणावच्छे, गणि-आयरिए वि होइ एमेव।
नवरं पुन नाणत्तं, एते नियमेन गीया उ ॥

**वृ-** एवमेव गणावच्छेदिकस्य तथा गणिनः-उपाध्यायस्याचार्यस्य च सूत्रं मन्तव्यम्। नवरं पुनरत्र नानात्वम्-एते नियमतो गीतार्थो भवन्ति नागीतार्थाः ॥

**मू. (१३१)** *भिक्खू य इच्छिज्जा अन्नं आयरिय-उवज्झायं उद्दिसावित्तए, नो से कप्पइ अनापुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा अन्नं आयरिय-उवज्झायं उद्दिसावित्तए; कप्पइ से आपुचछिता आयरियं वा जाव गणावच्छेइयं वा अन्नं आयरिय-उवज्झायं उद्दिसावित्तए। ते य से वियरिज्जा एवं से कप्पइ अन्नं आयरिय-उवज्झायं उद्दिसावित्तए; ते य से नो वियरेज्जा एवं से नो कप्पइ अन्नं आयरिय-उवज्झायं उद्दिसावित्तए। नो से कप्पइ तेसिं कारणं अदीवित्ता अन्नं आयरिय-उवज्झायं उद्दिसावित्तए; कप्पति से तेसिं कारणं दीवित्ता अन्नं आयरियउवज्झायं उद्दिसावित्तए ॥*

**वृ-** अस्य व्याख्या प्राग्वत्। नवरम्-अन्यम् 'आचार्योपाध्यायमुद्देशयितुम्' आचार्यश्चोपाध्यायश्चाचार्योपाध्यायम्, समाहारद्वन्द्वः, यद्वा आचार्ययुक्त उपाध्याय आचार्योपाध्यायः, शाकपार्थिववद् मध्यपदलोपी समासः, आचार्योपाध्यायावित्यर्थः, तावन्यावुद्देशयितुमात्मन इच्छेत्। ततो नो कल्पते अनापृच्छ्याचार्यं वा यावद् गणावच्छेदिकं वा इत्यादि प्राग्वद् द्रष्टव्यम्। तथा न कल्पते 'तेषाम्' आचार्यादीनां कारणम् 'अदीपयित्वा' अनिवेद्य अन्यमाचार्योपाध्यायम् 'उद्देशयितुम्' आत्मनो गुरुतया व्यवस्थापयितुम्। कारणं दीपयित्वा तु कल्पते। एष सूत्रार्थ ॥

अथ भाष्यम्-

[भा.५४७१] सुत्तम्मि कड्डियम्मी, आयरि-उज्झाय उद्दिसाविंति ।
तिण्हऽट्ठ उद्दिसिज्जा, नाणे तह दंसण चरित्ते ॥

वृ- 'सूत्रे' सूत्रार्थे 'आकृष्टे' उक्ते सति निर्युक्तिविस्तर उच्यते-आचार्योपाध्यायमभिनवमुद्देशयन् त्रयाणामर्थायोद्दिशेत् । तद्यथा-ज्ञानार्थं दर्शनार्थं चारित्रार्थं चेति ॥

[भा.५४७२] नाणे महकप्पसुतं, सिस्सत्ता केइ उवगए देयं ।
तस्सऽट्ठ उद्दिसिज्जा, सा कलु सेज्झाण जिनआणा ॥

वृ- ज्ञाने तावदभिधीयते-केषाञ्चिदाचार्याणां कुले गणे वा महाकल्पश्रुतमस्ति, तैश्च गणसंस्थितिः कृता-योऽस्माकं शिष्यतयोपगच्छति तस्यैव महाकल्पश्रुतं देयं नान्यस्य । तत्र चोत्सर्गतो नोपसम्पत्तव्यम्, यदि अन्यत्र नास्ति तदा 'तस्य' महाकल्पश्रुतस्यार्थाय तमप्याचार्यमुद्दिशेत्, उद्दिश्य चाधीते तस्मिन् पूर्वाचार्याणामेवान्तिके गच्छेत्, न तत्र तिष्ठेत् । कुतः ? इत्याह-सा खलु तेषामाचार्याणां स्वेच्छा, 'न जिनाज्ञा' न हि जिनैरिदं भणितम्-शिष्यतयोपगतस्य श्रुतं दातव्यमिति।

अथ दर्शनार्थमाह-

[भा.५४७३] विज्जा-मंत-निमित्ते, हेऊसत्थट्ठ दंसणट्ठाए ।
चरित्तट्ठा पुव्वगमो, अहव इमे हुंति आएसा ॥

वृ- विद्या-मन्त्र-निमित्तार्थं 'हेतुशास्त्राणां च' गोविन्दनिर्युक्तिप्रभृतीनामर्थाय यद् अन्य आचार्य उद्दिश्यते तद् दर्शनार्थं मन्तव्य । चारित्रार्थं पुनरुद्देशने 'पूर्व' प्रागुक्त एव गमो भवति । अथवा तत्रैते 'आदेशाः' प्रकारा भवन्ति ॥

[भा.५४७४] आयरिय-उवज्झाए, ओसन्नोहाविते व कालगते ।
ओसन्न छव्विहे खलु, वत्तमवत्तस्स मग्गणया ॥

वृ- आचार्य उपाध्यायो वा अवसन्नः सञ्जातः "अवधावितो वा गृहस्थीभूतः कालगतो वा । यदि अवसन्नस्ततः षड्विधो भवेत्-पार्श्वस्थोऽवमग्नः कुशीलः संसक्तो नित्यवासी यथाच्छन्दश्चेति। यश्च तस्य शिष्य आचार्यपदयोग्यः स व्यक्तोऽव्यक्तो वा भवेत् तत्रेयं मार्गणा ॥

[भा.५४७५] वत्ते खलु गीयत्थे, अव्वत्ते वएण अहव अगीयत्थे ।
वत्तिच्छ सार पेसण, अहवाऽऽसन्ने सयं गमनं ॥

वृ- अत्र चत्वारो भङ्गाः-तत्र वयसा व्यक्तः षोडशवार्षिकः श्रुतेन च व्यक्तो गीतार्थः, एष प्रथमो भङ्गः । वयसा व्यक्तः श्रुतेनाव्यक्तः, एषोऽर्थतो द्वितीयः । वयसाऽव्यक्तः श्रुतेन व्यक्तः, अयमर्थतस्तृतीयः । "अव्वत्ते वएण अहव अगीयत्थि" त्ति चतुर्थो भङ्गो गृहीतः, स चायम्-वयसाऽप्यव्यक्तः श्रुतेन चाव्यक्त इति ४ । अत्र प्रथमे भङ्गे द्विधाऽपि व्यक्तस्य 'इच्छा' अन्यमाचार्यमुद्दिशति वा न वा । यावन्नोद्दिशति तावत् तमवसन्नीभूतमाचार्यं दूरस्थं सारयितुं साधुसङ्घाटकं प्रेषयति । अथासन्ने स आचार्यस्ततः स्वयमेव गत्वा नोदयति ॥

नोदनायां चैवं कालपरिमाणम्-

[भा.५४७६] एगाह पनग पक्खे, चउमासे वरिस जत्थ वा मिलइ ।

चोएइ चोयवेइ य, नेच्छंते सयं तु वट्टावे ॥

वृ- 'एकाहंनाम' दिने दिने नित्यं नोदयति, एकान्तरितं वा तथा 'पक्खाहं' पक्षान्ते दिवसानामन्ते, एवं पक्षे चतुर्मासे वर्षान्ते वा 'यत्र वा' समवसरणादौ मिलति तत्र स्वयमेव नोदयति, अपरैर्वा स्वगच्छीय-परगच्छीयैर्नोदनां कारयति। यदि सर्वथाऽपि नेच्छति ततः स्वयमेव तं गणं वर्तापयति॥

[भा.५४७७] उद्दिसइ व अन्नदिसं, पयावणट्ठा न संगहट्ठाए।
जइ नाम गारवेण वि, मुएज्ज निच्छे सयं ठाई॥

वृ- अथवा स उभयव्यक्तः 'अन्यां दिशम्' अपरमाचार्यमुद्दिशति तच्च तस्यावसन्नाचार्यस्य 'प्रतापनार्थम्' उत्तेजनार्थं न पुनर्गणस्य सङ्ग्रहोपग्रहनिमित्तम्। स च तत्र गत्वा भणति- अहमन्यमाचार्यमुद्दिशामि यदि यूयमितः स्थानाद् नोपरमध्वे। ततः स चिन्तयेत्-अहो! अमी मयि जीवत्यपि अपरमाचार्यं प्रतिपद्यन्ते, मुञ्चामि पार्श्वस्थताम्। यदि नामैवं गौरवेणापि पार्श्वस्थत्वं मुञ्चेत् ततः सुन्दरम्, अथ सर्वथा नेच्छत्युपरन्तुं ततः स्वयमेव गच्छाधिपत्ये तिष्ठति॥

गतः प्रथमो भङ्गः। अथ द्वितीयमाह-

[भा.५४७८] सुअवत्तो वतवत्तो, भणइ गणं ते न सारितुं सत्तो।
सारेहि सगणमेयं, अन्नं व वयामो आयरियं॥

वृ- यः श्रुतेन व्यक्तो वयसा पुनरव्यक्तः स स्वयं गच्छं वर्तापयितुमसमर्थ तमाचार्यं भणति- अहमप्राप्तवयस्त्वेन त्वदीयं गणं सारयितुं न शक्तः, अतः सारय स्वगणमेनम्, अहं पुनरन्यस्य शिष्यो भविष्यामि, अथवा अहमेते वाऽन्यमाचार्यं व्रजामः, उद्दिसाम इत्यर्थः॥

[भा.५४७९] आयरिय-उवज्झायं, निच्छंते अप्पणा य असमत्थे।
तिगसंवच्छरमद्धं, कुल गण संघे दिसाबंधो॥

वृ- एवंभणित आचार्य उपाध्यायो वा यदि नेच्छति संयमे स्थातुम्, स चात्मना गणं वर्तापयितुमसमर्थः, ततः कुलसत्कमाचार्यमुपाध्यायं वा उद्दिशति। तत्र त्रीणि वर्षाणि तिष्ठति, तं चाचार्यं सारयति। ततः 'त्रयाणां वर्षाणां परतः सचित्तादिकं कुलाचार्यो हरति' इति कृत्वा गणाचार्यमुद्दिशति॥ तत्र संवत्सरं स्थित्वा सङ्घाचार्यस्य दिग्बन्धं प्रतिपद्य 'वर्षार्द्ध' षण्मासान् तत्र तिष्ठति॥ कुलाद् गणं गणाच्च सङ्घं सङ्क्रामन्नाचार्यमिदं भणति-

[भा.५४८०] सच्चित्तादि हरंती, कुलं पि नेच्छामो जं कुलं तुब्भं।
वच्चामो अन्नगणं, संघं व तुमं जइ न ठासि॥

वृ- यत् त्वदीयं कुलं तदीया आचार्या अस्माकं वर्षत्रयादूर्ध्वं सचित्तादिकं हरन्ति अतः कुलमपि नेच्छामः, यदि त्वमिदानीमपि न तिष्ठसि ततो वयं गणं सङ्घं वा व्रजामः॥

[भा.५४८१] एवं पि अठायंते, ताहे तू अद्धपंचमे वरिसे।
सयमेव धरेइ गणं, अनुलोमेणं च सारेइ॥

वृ- एवमर्द्धपञ्चमैर्वर्षैः पूर्वाचार्यो नोदनाभिः प्रतापितोऽपि यदि न तिष्ठति तत एतावता कालेन स श्रुतव्यक्तो वयसाऽपि व्यक्तो जात इति कृत्वा स्वयमेव गणं धारयति। यत्र च पूर्वाचार्यं पश्यति तत्र अनुलोमवचनैस्तथैव सारयति॥

[भा.५४८२] अहव जइ अत्थि थेरा, सत्ता परियट्टिऊण तं गच्छं।

दुहओवत्तसरिसगो, तस्स उ गमओ मुणेयव्वो ॥

वृ- अथवा यदि तस्य श्रुतव्यक्तस्य स्थविरास्तं गच्छं परिवर्तयितुं शक्ताः सन्ति ततः कुलगण-सङ्घेषु नोपतिष्ठते किन्तु स स्वयं सूत्रार्थौ शिष्याणां ददाति, स्थविरास्तु गच्छं परिवर्तयन्ति । एवं च द्विधाव्यक्तसदृशस्तस्य गमो ज्ञातव्यो भवति ॥ गतो द्वितीयभङ्गः । अथ तृतीयभङ्गमाह-

[भा.५४८३] वत्तवओ उ अगीओ, जइ थेरा तत्थ केइ गीयत्था ।
तेसंतिगे पढंतो, चोएइ स असइ अन्नत्थ ॥

वृ- यो वयसा व्यक्तः परमगीतार्थः, तस्य च गच्छे यदि केऽपि स्थविरा गीतार्थाः सन्ति ततः 'तेषां' स्थविराणामन्तिके पटन् गच्छमपि परिवर्तयति, अवसन्नाचार्यं चान्तराऽन्तरा नोदयति । तेषां गीतार्थस्थविराणामभावे गणं गृहीत्वाऽन्यत्रोपसम्पद्यते । गतस्तृतीयो भङ्गः । अथ चतुर्थभङ्गमाह-

[भा.५४८४] जो पुन उभयअवत्तो, वट्टावग असइ सो उ उद्दिसई ।
सव्वे सि उद्दिसंता, मोत्तूणं उद्दिसंति इमे ॥

वृ- यः पुनः उभयथा-श्रुतेन वयसा चाव्यक्तस्तस्य यदि स्थविराः पाठयितारो विद्यन्ते अपरे च गच्छवर्तापकास्ततोऽसावपि नान्यमुद्दिशति । स्थविराणामभावे स नियमादन्यमाचार्यमुद्दिशति। 'सर्वेऽपि' भङ्गचतुष्टयवर्तिनोऽप्यन्यमाचार्यमुद्दिशन्तोऽमून् मुक्त्वा उद्दिशन्ति ॥ तद्यथा-

[भा.५४८५] संविग्गमगीयत्थं, असंविग्गं खलु तहेव गीयत्थं ।
असंविग्गमगीयत्थं, उद्दिसमाणस्स चउगुरुगा ॥

वृ- संविग्नमगीतार्थं असंविग्नं गीतार्थं असंविग्नमगीतार्थं चेति त्रीनप्याचार्यत्वेनोद्दिशतश्चतुर्गुरुकाः । एते च यथाक्रमं कालेन तपसा तदुभयेन च गुरुकाः कर्तव्याः ॥

अत्रैव प्रायश्चित्तवृद्धिमाह-

[भा.५४८६] सत्तरत्तं तवो होइ, तओ छेओ पहावई ।
छेदेन छिन्नपरियाए, तओ मूलं तओ दुगं ॥

वृ- एतानयोग्यानुद्दिश्यानावर्तमानस्य प्रथमं सप्तरात्रं दिने दिने चतुर्गुरु, द्वितीयं सप्तरात्रं षड्लघु, तृतीयं षड्गुरु, चतुर्थं चतुर्गुरुकच्छेदः, पञ्चमं षड्लघुकः, षष्ठं षड्गुरुकः, तत एकदिवसे मूलम्, द्वितीयेऽनवस्थाप्यम्, तृतीये पाराञ्चिकम् । अथवा षड्गुरुकतपोऽनन्तरं प्रथमत एव सप्तरात्रं षड्गुरुकच्छेदः, ततः मूला-ऽनवस्थाप्य-पाराञ्चिकानि प्राग्वत् । यद्वा तपोऽनन्तरं पञ्चकादिच्छेदः सप्त सप्त दिनानि भवति, शेषं पूर्ववत् । एवं प्रायश्चित्तं विज्ञाय संविग्नो गीतार्थ उद्देष्टव्यः ॥ तत्रापि विशेषमाह-

[भा.५४८७] छट्ठाणविरहियं वा, संविग्गं वा वि वयइ गीयत्थं ।
चउरो य अनुग्घाया, तत्थ वि आणाइणो दोसा ॥

वृ- षड्भिः स्थानैर्वक्ष्यमाणैर्विरहितमपि संविग्नं गीतार्थं यदि 'सदोषं' काथिकादिदोषसहितं 'वदति' आचार्यत्वेन उद्दिशति तदा चत्वारोऽनुद्धाताः । तत्राप्याज्ञादयो दोषाः ॥ इदमेव व्याचष्टे-

[भा.५४८८] छट्ठाणा जा नियगो, तव्विरहिय काहियाइत्ता चउरो ।
ते वि य उद्दिसमाणे, छट्ठाणगयाण जे दोसा ॥

वृ- 'षट्स्थानानि नाम' पार्श्वस्थोऽवसन्नः कुशीलः संसक्तो यथाच्छन्दो नित्यवासी चेति,

एतैः षड्भिर्विरहिता ये 'काथिकादयः' काथिक-प्राश्निनक-मामाक-सम्प्रसारकाख्या चत्वारस्तानप्युद्दिशतस्त एव दोषा ये पद्स्थानेषु-पार्श्वस्थादिषु गतानां-प्रविष्टानां भवन्ति ॥

एष सर्वोऽप्यवसन्ने आचार्ये विधिरुक्तः । अथावधावित-कालगतयोर्विधिमाह-

[भा.५४८९] ओहाविय कालगते, जाधिच्छा ताहि उद्दिसावेइ ।
अव्वत्ते तिविहे वी, नियमा पुन संगहट्ठाए ॥

वृ- अवदाविते कालगते वा गुरौ 'त्रिविधेऽपि' प्रतमभङ्गावर्जे भङ्गत्रयेऽपि योऽव्यक्तः स यदा इच्छा भवति तदाऽन्यमाचार्यमुद्देशयति । अथवा 'त्रिविधेऽपि' कुलसत्के गणसत्के सङ्घसत्के च आचार्योपाध्याये आत्मन उद्देशं कारयति । स चाव्यक्तत्वाद् नियमात् सङ्ग्रहोपग्रहार्थमेवोद्दिशति। आचार्यं गृहीभूतमवसन्नं वा यदा पश्यति तदेत्थं भणति-

[भा.५४९०] ओहाविय ओसन्ने, भणइ अनाहा वयं विना तुज्झे ।
कम सीसमसागरिए, दुप्पडियरगं जतो तिण्हं ॥

वृ- अवधावितस्यावसन्नस्य वा गुरोः 'क्रमयोः' पादयोः शीर्षमसागारिके प्रदेशे कृत्वा भणति-भगवन् ! अना वयं युष्मान् विना, अतः प्रसीद, भूयः संयमे स्तित्वा सनाथीकुरु डिम्भकल्पानस्मान्। शिष्यः पृच्छति-तस्य गृहीभूतस्य अचारित्रिणो [illegible] चरणयोः कथं शिरो दीयते ? गुरुराह- 'दुष्प्रतिकरं' दुःखेन प्रतिकर्तुं शक्यं यतस्त्रयाणा, तद्यथा-माता-पित्रोः स्वामिनो धर्माचार्यस्य च । यदुक्तम्-''तिण्हं दुप्पडियारं समणाउसो !-अम्मा-पियस्स भट्टिस्स धम्मायरियस्स य'' इत्यादि। तत एवमवसन्नेऽवधाविते वा गुरौ विनयो विधीयते ॥ किञ्च-

[भा.५४९१] जो जेन जम्मि ठाणम्मि ठाविओ दंसणे च चरणे वा ।
सो तं तओ चुतं तम्मि चेव काउं भवे निरिणो ॥

वृ- यः 'येन' आचार्यादिना यस्मिन् स्थाने स्थापितः, तद्यथा-दर्शने वा चरणे वा, 'सः शिष्यः 'तं' गुरुं 'ततः' दर्शनात् चरणाद्वा च्युतं 'तत्रैव' दर्शने चरणे वा 'कृत्वा' स्थापयित्वा 'निर्ऋणः' ऋणमुक्तो भवति कृतप्रत्युपकार इत्यर्थः ॥

अथ ''कप्पइ तेसिं कारणं दीवित्ता'' इत्यादिसूत्रवयवं व्याचष्टे-

[भा.५४९२/१]तीसु वि दीवियकज्जा, विसज्जिता जइ य तत्थ तं नत्थि ।

वृ- 'त्रिष्वपि' ज्ञान-दर्शन-चारित्रेषु व्रजन्तो भिक्षुप्रभृतयः 'दीपितकार्या' पूर्वोक्तविधिना निवेदितस्वप्रयोजना गुरुणा विसर्जिता गच्छन्ति । यदि च 'तत्र' गच्छे 'तद्' अवसन्नतादिकं कारणं नास्ति तत उपसम्पद्यते, नान्यथेति ॥

**मू. (१३२)** *गणावच्छेइए य इच्छिज्जा अन्नं आयरिय-उवज्झायं उद्दिसावित्तए, नो से कप्पइ गणावच्छेइयत्तं अनिक्खिवित्ता अन्नं आयरिय-उवज्झायं उद्दिसावित्तए; कप्पइ से गणावच्छेइयत्तं निक्खिवित्ता अन्नं आयरिय-उवज्झायं उद्दिसावित्तए । नो से कप्पइ अणापुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा अन्नं आयरिय-उवज्झायं उद्दिसावित्तए; कप्पइ से आपुच्छित्ता जाव उद्दिसावित्तए । नो से कप्पति तेसिं कारणं अदीवित्ता अन्नं आयरिय-उवज्झायं उद्दिसावित्तए; कप्पइ से तेसिं कारणं दीवित्ता अन्नं जाव उद्दिसावित्तए ॥*

**मू. (१३३)** *आयरिय-उवज्झाए इच्छिज्जा अन्नं आयरिय-उवज्झायं उद्दिसावित्तए, नो से*

*कप्पइ आयरिय-उवज्झायत्तं अनिक्खिवित्ता अन्नं आयरिय-उवज्झायं उद्दिसावित्तए; कप्पइ से आयरिय-उवज्झायत्तं निक्खिवित्ता अन्नं आयरिय-उवज्झायं उद्दिसावित्तए नो से कप्पति अनापुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा अन्नं आयरिय-उवज्झायंउद्दिसावित्तए; कप्पति से आपुच्छित्ता आयरियं वा जाव गणावच्छेइयं वा अन्नं आयरिय-उवज्झायं उद्दिसावित्तए। ते य से वितरंति एवं से कप्पति जाव उद्दिसावित्तए; ते य से नो वियरंति एवं से नो कप्पइ जाव उद्दिसावित्तए। नो से कप्पइ तेसिं कारणं अदीवित्ता अन्नं आयरिय-उवज्झायं उद्दिसावित्तए; कप्पइ से तेसिं कारणं दीवित्ता जाव उद्दिसावित्तए ॥*

**वृ-** सूत्रद्वयस्य व्याख्या प्राग्वत् ॥ अथ भाष्यम्-

**[भा.५४९२/२]** निक्खिविय वयंति दुवे, भिक्खू किं दानि निक्खिवतू ॥

**वृ-** "निक्खिविय वयंति दुवे" इत्यादि पश्चार्द्धम्। 'द्वौ' गणावच्छेदिक आचार्योपाध्यायश्च यथाक्रमं गणावच्छेदिकत्वमाचार्योपाध्यायत्वं च निक्षिप्य व्रजतः। यस्तु भिक्षु स किमिदानीं निक्षिपतु? गणाभावाद् न किमपि तस्य निक्षेपणीयमस्ति, अत एव सूत्रे तस्य निक्षेपणं नोक्तमिति भावः ॥ अथ गणावच्छेदिका-ऽऽचार्ययोर्गणनिक्षेपे विधिमाह-

**[भा.५४९३]** दुण्हऽट्ठाए दुण्ह वि, निक्खिवणं होइ उज्जमंतेसु।
सीअंतेसु अ सगणो, वच्चइ मा ते विनासिज्जा ॥

**वृ-** 'द्वयोः' ज्ञान-दर्शनयोरर्थाय गच्छतोः 'द्वयोरपि' गणावच्छेदिका-ऽऽचार्ययोः स्वगणस्य निक्षेपणं ये 'उद्यच्छन्तः' संविग्ना आचार्यास्तेषु भवति। अथ सीदन्तस्ते ततः 'सगणः' स्वगणं गृहीत्वा व्रजति न पुनस्तेषामन्तिके निक्षिपति। कुतः? इत्याह-मा 'ते' शिष्यास्तत्र मुक्ता विनश्येयुः ॥ इदमेव भावयति-

**[भा.५४९४]** वत्तम्मि जो गमो खलु, गणवच्छे सो गमो उ आयरिए।
निक्खिवणे तम्मि चत्ता, जमुद्दिसे तम्मि ते पच्छा ॥

**वृ-** यो गम उभयव्यक्ते भिक्षावुक्तः स एव गणावच्छेदिके आचार्ये च मन्तव्यः। नवरम्-गणनिक्षेपं कृत्वा तौ आत्मद्वितीयौ आत्मतृतीयौ वा व्रजतः। तत्र स्वगच्छ एव यः संविग्नो गीतार्थ आचार्यादिस्तत्रात्मीयसाधून् निक्षिपति। अथासंविग्नस्य पार्श्वे निक्षिपति ततः ते साधवः परित्यक्ता मन्तव्याः, तस्माद् न निक्षेपणीयाः किन्तु येन तेन प्रकारेणात्मना सह नेतव्याः। ततो यमाचार्यं स गणावच्छेदिक आचार्यो वा उद्दिशति तस्मिन् 'तान्' आत्मीयसाधून् पश्चाद् निक्षिपति, यथा अहं युष्माकं शिष्यस्तथा इमेऽपि युष्मदीयाः शिष्या इति भावः ॥ इदमेवाह-

**[भा.५४९५]** जहअप्पगं तहा ते, तेन पहुप्पंते ते न घेत्तव्वा।
अपहुप्पंते गिण्हइ, संघाडं मुत्तु सव्वे वा ॥

**वृ-** यथा आत्मानं तथा तानपि साधून् निवेदयति। 'तेनापि' आचार्येण पूर्यमाणेषु साधुषु 'ते' प्रतीच्छकाचार्यसाधवो न ग्रहीतव्याः, तस्यैव तान् प्रत्यर्पयति। अथ वास्तव्याचार्यस्य साधवो न पूर्यन्ते तत एकं सङ्घाटकं तस्य प्रयच्छति, तं मुक्त्वा शेषानात्मना गृह्णाति। अथ वास्तव्याचार्य सर्वथैवासहायस्ततः सर्वानपि गृह्णाति ॥

**[भा.५४९६]** सहु असहुस्स वि तेन वि, वेयावच्चाइ सव्व कायव्वं।

ते तेसि अनाएसा, वावारेउ न कप्पंति ॥

वृ- 'तेनापि' प्रतीच्छकाचार्यादिना तस्याचार्यस्य सहिष्णोरसहिष्णोर्वा वैयावृत्यादिकं सर्वमपि कर्तव्यम् । 'तेऽपि' साधवः 'तेषां' आचार्याणामादेशमन्तरेण व्यापारयितुं न कल्पन्ते ॥

*मू. (१३४) भिक्खू य रातो वा वियाले वा आहच्च वीसुं भिज्जा, तं च सरीरगं केइ वेयावच्चकरे भिक्खू इच्छिज्जा एगंते बहुफासुए पएसे परिट्ठवित्तए, अत्थि याइं थ केइ सागारियसंतिए उवगरणजाए अचित्ते परिहरणारिहे, कप्प से सागारिकडं गहाय तं सरीरगं एगंते बहुफासुए पएसे परिट्ठवित्ता तत्थेव उवनिक्खिवियव्वे सिया ॥*

वृ- अस्य सम्बन्धमाह-

[भा.५४९७]　तिहिं कारणेहिं अन्नं, आयरियं उद्दिसिज्ज तहि दुन्नि ।

मुत्तुं तइए पगयं, वीसुंभणसुत्तजोगोऽयं ॥

वृ- 'त्रिभिः कारणैः' अवसन्नतादिभिरन्यमाचार्यमुद्दिशेदित्युक्तम् । तत्राद्ये 'द्वे' अवसन्ना-ऽवधावितलक्षणे मुक्त्वा 'तृतीयेन' कालगतरूपेण कारणेन प्रकृतम्, तद्विषयो विधिरनेनाभिधीयत इति भावः । एष विष्वग्भवनसूत्रस्य 'योगः' सम्बन्धः ॥

[भा.५४९८]　अहवा संजमजीविय, भवग्गहणजीवियाउ विगए वा ।

अन्नुद्देसो वुत्तो, इमं तु सुत्तं भवच्चाए ॥

वृ-अथवा संयमजीवितादू भवग्रहणजीविताद्वा विगतेऽन्यस्याचार्यस्य उद्देशः पूर्वसूत्रे उक्तः। इदं तु सूत्रं भवजीवितपरित्यागविषयमारभ्यते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-भिक्षु चशब्दाद् आचार्योपाध्यायौ वा रात्रौ वा विकाले वा "आहच्च" कदाचिद् 'विष्वग् भवेत्' जीव-शरीरयोः पृथग्भावमाप्नुयात्, म्रियत इत्यर्थः । तच्च शरीरकं 'कश्चिद्' वैयावृत्यकरो भिक्षुरिच्छेत् 'एकान्ते' विविक्ते 'बहुप्राशुके' कीटिकादिसत्त्वरहिते प्रदेशे परिष्ठापयितुम् । अस्ति चात्र किञ्चित् सागारिकसत्कं 'अचित्तं' निर्जीवं 'परिहरणार्हं' परिभोगयोग्यमुपकरणजातम्, वहनकाष्ठमित्यर्थः। कल्पते "से" तस्य भिक्षोस्तत् काष्ठं 'सागारिककृतं' 'सागारिकस्यैव सत्कमिदं नास्माकम्' इत्येवं गृहीत्वा तत् शरीरमेकान्ते बहुप्राशुके प्रदेशे परिष्ठापयितुम् । तच्च परिष्ठाप्य यतो गृहीतं तत् काष्ठं तत्रैवोपनिक्षेप्तव्यं स्यादिति सूत्रार्थः ॥ सम्प्रति निर्युक्तिविस्तरः-

[भा.५४९९]　पुव्विं दव्वोलोयण, नियमा गच्छे उवक्कमनिमित्तं ।

भत्तपरिन्न गिलाणे, पुव्वुग्गहो थंडिलस्सेव ॥

वृ- यत्र साधवो मासकल्पं वर्षावासं वा कर्तुकामास्तत्र पूर्वमेव तिष्ठन्तः द्रव्यस्य-वहनकाष्ठादेरवलोकनं नियमाद् गच्छवासिनः कुर्वन्ति । किमर्थम् ? इत्याह-उपक्रमः-मरणं तत् कस्यापि संयतस्य भवेदित्येवमर्थम् । तच्च मरणं कदाचिद् भक्तपरिज्ञावतो भवेत्, कदाचित् तु ग्लानस्य, उपलक्षणमिदम्, तेनाशुकारेण वा मरणं भवेत्, ततः पूर्वमेव महास्थण्डिलस्य वहनकाष्ठदेश्च 'अवग्रहः' प्रत्युपेक्षणं विधेयम् ॥ अथ द्वारगाथात्रयमाह-

[भा.५५००]　पडिलेहणा दिसा नंतए य काले दिया व राओ य ।

जग्गण-बंधन-छेयण, एयं तु विहिं तहिं कुज्जा ॥

[भा.५५०१]　कुसपडिमाइ नियत्तण, मत्तग सीसे तणाइं उवगरणे ।

काउस्सग्ग पदाहिण, अब्भुट्ठाणे य वाहरणे ॥

[भा.५५०२] काउस्सग्गे सज्झाइए य खमणस्स मग्गणा होइ ।
वोसिरणे ओलोयण, सुभा-ऽसुभगइ-निमित्तट्ठा ॥

**वृ-** वहनकाष्ठस्य स्थण्डिलस्य च प्रथमत एव प्रत्युपेक्षणं विधेयम् । "दिस"त्ति दिग्भागो निरूपणीयः । "णंतए य"त्ति औपग्रहिकान्तकं मृताच्छादनार्थं गच्छे सदैव धारणीयम्; जातिप्रधानश्चायं निर्देशः, ततो जघन्यतोऽपि त्रीणि वस्त्राणि धारणीयानि । "काले दिया व राओ अ"त्ति दिवा रात्री वा कालगते विषादो न विधेयः । रात्री च स्थाप्यमाने मृतके जागरणं बन्धनं छेदनं च कर्तव्यम् । एवं विधिं तत्र कुर्यात् ॥ तथा नक्षत्रं विलोक्य कुशप्रतिमाया एकस्या द्वयोर्वा करणमकरणं वा । "नियत्तणि"त्ति येन प्रथमतो गताः न तेनैव पथा निवर्तनीयम् । मात्रके पानकं गृहीत्वा पुरत एकेन साधुना गन्तव्यम् । यस्यां दिशि ग्रामस्ततः शीर्षं कर्तव्यम् । तृणानि समानि विस्तरणीयानि । 'उपकरणं' रजोहरणादिकं तस्य पार्श्वे धारणीयम् । अविधिपरिष्ठापनायाः कायोत्सर्गस्थण्डिले स्थितैर्न कर्तव्यः । निवर्तमानैः प्रादक्षिण्यं न विधेयम्। शबस्य चाभ्युत्थाने वसत्यादिकं परित्यजनीयम् । यस्य च संयतस्य 'व्याहरणं' नामग्रहणं स करोति तस्य लोचः कर्तव्यः ॥ गुरुसकाशमागतैः कायोत्सर्गो विधेयः । स्वाध्यायकस्य क्षपणस्य च मार्गणा कर्तव्या । उच्चारादिमात्रकाणां व्युत्सर्जनं कर्तव्यम् । अपरेऽह्नि तस्यावलोकनं शुभा-ऽशुभगतिज्ञानार्थं निमित्तग्रहणार्थं च विधेयमिति द्वारगाथात्रयसमासार्थः ॥ अथैतदेव विवरीषुराह-

[भा.५५०३] जं दव्वं घनमसिणं, वावारजढं च चिट्ठए बलियं ।
वेणुमय दारुगं वा, तं वहणट्ठा पलोयंत ॥

**वृ-** यद् द्रव्यं वेणुमयं दारुकं वा घनमसृणं 'व्यापारमुक्तम्' अवहमानकं 'बलीयः' दृढतरं सागारिकस्य गृहे तिष्ठतितत् कालगतस्य वहनार्थं प्रथममेव प्रलोकयन्ति, महास्थण्डिलं च प्रत्युपेक्षणीयम् ॥ अथ न प्रत्युपेक्षन्ते तत इमे दोषाः-

[भा.५५०४] अत्थंडिलम्मि काया, पवयणघाओ य होइ आसन्ने ।
छड्डावण गहणाई, परुग्गहे तेन पेहिज्जा ॥

**वृ-** अस्थण्डिले परिष्ठापयन् षट् कायान् विराधयति । प्रवचनघातश्च ग्रामादेरासन्ने परिष्ठापयतो भवति । परावग्रहे च परिष्ठापयतः छर्दापनं भवेत् । छर्दापनं नाम-ते बलादपि साधुपार्श्वादन्यत्र तं शवं परित्याजयेयुः । ग्रहणा-ऽऽकर्षणादयो दोषा भवेयुः । ततो महास्थण्डिलमवश्यं प्रागेव प्रत्युपेक्षेत ॥ गतं प्रत्युपेक्षणाद्वारम् । अथ दिग्द्वारमाह-

[भा.५५०५] दिस अवरदक्खिणा दक्खिणा य अवरा य दक्खिणापुव्वा ।
अवरुत्तरा य पुव्वा, उत्तर पुव्वुत्तरा चेव ॥

**वृ-** प्रथमम् 'अपरदक्षिणा' नैर्ऋती दिग् निरीक्षणीया, तदभावे दक्षिणा, तस्या अभावेऽपरा, तदप्राप्तौ 'दक्षिणपूर्वा' आग्नेयी, तदलाभे 'अपरोत्तरा' वायवी, तस्या अभावे पूर्वा, तदभावे उत्तरा, तदभावे उत्तरपूर्वा ॥ सम्प्रति प्रथमायां दिशि सत्यां शेषदिक्षु परिष्ठापने दोषानाह-

[भा.५५०६] समाही य भत्त-पाने, उवकरणे तुमंतुमा य कलहो य ।
भेदो गेलन्नं वा, चरिमा पुन कड्ढए अन्नं ॥

वृ- प्रथमायां दिशि शवस्य परिष्ठापने प्रचुरान्न-पान-वस्त्रलाभतः समाधिर्भवति। तस्यां सत्यां यदि दक्षिणस्यां परिष्ठापयन्ति तदा भक्त-पानं न लभन्ते, अपरस्यामुपकरणं न प्राप्नुवन्ति, दक्षिणपूर्वस्यां तुमन्तुमा परस्परं साधूनां भवति, अपरोत्तरस्यां कलहः संयत-गृहस्था-ऽन्यतीर्थिकैः समं भवति, पूर्वस्यां गणभेदश्चारित्रभेदो वा भवेत्, उत्तरस्यां ग्लानत्वम्, 'घरणा' पूर्वोत्तरा सा कृतमृतकपरिष्ठापना अन्यं साधुमाकर्षति, मारयतीत्यर्थः ॥

[भा.५५०७] आसन्न मज्झ दूरे, वाघातट्ठा तु थंडिले तिन्नि।
खेत्तुदय-हरिय-पाणा, निविट्ठमादी व वाघाए॥

वृ- प्रथमायामपि दिशि त्रीणि स्थण्डिलानि प्रत्युपेक्षणीयानि-ग्रामादेरासन्ने मध्ये दूरे च। किमर्थं पुनस्त्रीणि प्रत्युपेक्ष्यन्ते ? इत्याह-व्याघातार्थम्, व्याघातः कदाचिद् भवेदित्यर्थः। स चायम्-क्षेत्रं तत्र प्रदेशे कृष्टम्, उदकेन वा भावितम्, हरितकायो वा जातः, त्रसप्राणिभिर्वा संसक्तं समजनि, ग्रामो वा निविष्टः, आदिग्रहणेन सार्थो वा आवासितः। एवमादिको व्याघातो यदि आसन्नस्थण्डिले भवति तदा मध्ये परिष्ठापयन्ति, तत्रापि व्याघाते दूरे परिष्ठापयन्ति। अथ प्रथमायां दिशि विद्यमानायां द्वितीयायां तृतीयायां वा प्रत्युपेक्षन्ते ततश्चतुर्गुरुकाः ॥ एते च दोषाः-

[भा.५५०८] एसणपेल्लण जोगाण व हानी भिन्न मासकप्पो वा।
भत्तोवधीअभावे, इति दोसा तेन पढमम्मि॥

वृ- भक्त-पानालाभाद् उपधेरलाभाच्च एषणाप्रेरणं कुर्युः। अथैषणां न प्रेरयेयुः ततः 'योगानाम्' आवश्यकव्यापाराणां हानिः। अपरं वा क्षेत्रं गच्छतां मासकल्पो भिन्नो भवेत्। एवमादयो दोषा भक्तोपध्योरभावे भवन्ति ततः प्रथमे दिग्भागे महास्थण्डिलं प्रत्युपेक्षणीयम् ॥

[भा.५५०९] एमेव सेसियासु वि, तुमंतुमा कलह भेद मरणं वा।
जं पावंत सुविहिया, गणाहिवो पाविहिति तं तु॥

वृ- यथा द्वितीयायां तृतीयायां च दोषा उक्ता एवमेव 'शेषास्वपि' चतुर्थ्यादिषु यत् तुमन्तुमाकरणं कलहं गणभेदं मरणं वा सुविहिताः प्राप्नुवन्ति तद् गणाधिपः सर्वमपि प्राप्स्यति। अथ प्रथमायां व्याघातस्ततो द्वितीयायामपि प्रत्युपेक्षणीयम्। तस्यां च स एव भक्त-पानलाभलक्षणो गुणो भवति यः प्रथमायामुक्तः। अथ द्वितीयस्यां विद्यमानायां तृतीयायामां प्रत्युपेक्षन्ते ततः स एव प्रागुक्तो दोषः, एवमष्टमीं दिशं यावद् नेतव्यम्। अथ द्वितीयस्यां व्याघातस्ततस्तृतीयस्यां प्रत्युपेक्षणीयम्, तस्यां च स एव गुणो भवति। एवमुत्तरोत्तरदिक्ष्वपि भावनीयम् ॥

गतं दिग्द्वारम्। अथ नन्तकद्वारमाह-

[भा.५५१०] वित्थारा-ऽऽयामेणं, जं वत्थं लब्भती समतिरेगं।
चोक्ख सुतिगं च सेतं, उवक्कमट्ठा धरेतव्वं॥

वृ- विस्तारेणायामेन च यद् वस्त्रप्रमाणमर्द्धतृतीयहस्तादिकं तृतीयोद्देशके भणितं ततो यद् वस्त्रं समतिरेकं लभ्यते। कथम्भूतम्? "चोक्खं" धवलितं 'शुचिकं नाम' सुगन्धि 'श्वेतं' पाण्डुरम्। एवंविधं जीवितोपक्रमार्थं गच्छे धारयितव्यम् ॥ गणनाप्रमाणेन तु तानि त्राणि भवन्ति, तद्यथा-

[भा.५५११] अत्थुरणट्ठा एगं, बिइयं छोढुमुवरिं घनं बंधे।
उक्कोसयरं उवरिं, बंधादीछादणट्ठाए॥

वृ- एकं तस्य मृतकस्याध आस्तरणार्थं द्वितीयं पुनः प्रक्षिप्योपरि घनं बध्नीयात् । किमुक्तं भवति ? -द्वितीयेन तद् मृतकं प्रावृत्योपरि दवरकेण घनं बध्यते । तृतीयम् 'उत्कृष्टतरम्' अतीवोज्ज्वलं बन्धादिच्छादनार्थं तदुपरि स्थापनीयम् । एवं जघन्यतस्त्राणि वस्त्राणि ग्रहीतव्यानि । उत्कर्षतस्तु गच्छं ज्ञात्वा बहून्यपि गृह्यन्ते ॥

[भा.५५१२] एतेसिं अग्गहणे, चउगुरु दिवसम्मि वन्निया दोसा ।
रत्तिं च पडिच्छंते, गुरुगा उट्ठाणमादीया ॥

वृ- 'एतेषाम्' एवंविधानां त्रयाणां वस्त्रणामग्रहणे चतुर्गुरु प्रायश्चित्तम् । मलिनवस्त्रप्रावृते च तस्मिन् दिवसतो नीयमाने 'दोषाः' अवर्णवादादयो वर्णिताः । अथैतद्दोषभयाद् 'रात्रौ परिष्ठापयिष्यामि' इति बुध्ध्या मृतकं प्रतीक्षापयति ततश्चतुर्गुरुका उत्थानादयश्च दोषाः ॥

कथं पुनरवर्णवादादयो दोषाः ? इत्याह-

[भा.५५१३] उज्झाइए अवन्नो, दुविह नियत्ती य मइलवसणाणं ।
तम्हा उ अहत कसिणं, धरेंति पक्खस्स पडिलेहा ॥

वृ- "उज्झाइए" मलिनकुचेले तस्मिन् नीयमानेऽवर्णो भवति-अहो अमी वराका मृता अपि शोभां न लभन्ते । मलिनवस्त्राणां च दर्शने द्विविधा निवृत्तिर्भवति, सम्यक्त्वं प्रव्रज्यां च ग्रहीतुकामाः प्रतिनिवर्तन्ते । शुचि-श्वेतवस्त्रदर्शने तु लोकः प्रशंसति-अहो ! शोभनो धर्म इति । यत एवं तस्माद् 'अहतम्' अपरिभुक्तं 'कृत्स्नं' प्रमाणतः प्रतिपूर्णं वस्त्रत्रिकं धारणीयम् । पक्षस्य चान्ते तस्य प्रत्युपेक्षणा कर्तव्या, दिवसे दिवसे प्रत्युपेक्षमाणं हि मलिनीभवेत् ॥

गतं नन्तकद्वारम् । अथ "दिवा रात्रौ वा कालगतः" इति द्वारमाह-

[भा.५५१४] आसुक्कार गिलाणे, पच्चक्खाए व आनुपुव्वीए ।
दिवसस्स व रत्तीइ व, एगतरे होज्जऽवक्कमणं ॥

वृ- आशु-शीघ्रं सजीवस्य निर्जीवीकरणमाशुकारः, तत्कारणत्वाद् अहि-विष-विशूचिकादयोऽप्याशुकारा उच्यन्ते, तैः 'अपक्रमणं' मरणं कस्यापि भवेत् । 'ग्लानत्वेन वा' मान्धेन कोऽपि म्रियेत । 'आनुपूर्व्या वा' शरीरपरिकर्मणाक्रमेण भक्ते प्रत्याख्याते सति कश्चित् कालधर्मं गच्छेत् । एवं दिवस-रजन्योरेकतरस्मिन् काले जीवितादपक्रमणं भवेत् ॥

[भा.५५१५] एव य कालगयम्मि, मुनिना सुत्त-ऽत्थगहितसारेणं ।
न विसातो गंतव्वो, कातव्व विधीय वोसिरणं ॥

वृ- 'एवम्' एतेन प्रकारेण कालगते सति साधौ सूत्रा-ऽर्थगृहीतसारेण मुनिना न विषादो गन्तव्यः, किन्तु कर्तव्यं तस्य कालगतस्य विधिना व्युत्सर्जनम् ॥ कथम्? इत्याह-

[भा.५५१६] आयरिओ गीतो वा, जो व कडाई तहिं भवे साहू ।
कायव्वो अखिलविही, न तु सोग भया व सीतेज्जा ॥

वृ- यस्तत्राचार्योऽपरो वा गीतार्थो यो वा अगीतार्थोऽपि 'कृतादि' ईदृशे कार्ये कृतकरणः आदिशब्दाद् धैर्यादिगुणोपेतः साधुर्भवति तेनाखिलोऽपि विधिः कर्तव्यः, न पुनः शोकाद् भयाद्वा तत्र 'सीदेत्' यथोक्तविधिविधाने प्रमादं कुर्यात् ॥ किमालम्ब्य शोक-भये न कर्तव्ये ? इत्याह-

[भा.५५१७] सव्वे वि मरणधम्मा, संसारी तेन कासि मा सोगं ।

जं चऽप्पणो वि होहिति, किं तत्थ भयं परगयम्मि ॥

वृ- सर्वेऽपि संसारिणो जीवा मरणधर्माण इत्यालम्ब्य शोकं मा कार्षीः । यच्च मरणमात्मनोऽपि कालक्रमेण भविष्यति तत्र 'परगते' परस्य सञ्जाते किं नाम भयं विधीयते ? न किञ्चिदित्यर्थः ॥ गतं "दिवा रात्रौ वा" इति द्वारम् । अथ जागरण-बन्धन-च्छेदनद्वारमाह-

[भा.५५१८] जं वेलं कालगतो, निक्कारण कारणे भवे निरोधो ।
जग्गण बंधन छेदन, एतं तु विहिं तहिं कुज्जा ॥

वृ- दिवा रजन्यां वा यस्यां वेलायां कालगतस्तस्यामेव वेलायां निष्काशनीयः । एवं निष्कारणे उक्तम् । कारणे तु निरोधोऽपि भवेत् । निरोधो नाम-कियन्तमपि कालं प्रतीक्षाप्यते । तत्र च जागरणं बन्धनं छेदनं 'एतम्' एवमादिकं विधिं वक्ष्यमाणनीत्या कुर्यात् ॥

कैः पुनः कारणैः स प्रतीक्षाप्यते ? इत्याह-

[भा.५५१९] हिम-तेन-सावयभया, पिहिता दारा महानिनादो वा ।
ठवणा नियगा व तहिं, आयरिय महातवस्सी वा ॥

वृ- रात्रौ दुरधिसहं हिमं पतति, स्तेनभयात् श्वापदभयाद्वा न निर्गन्तुं शक्यते । नगरद्वाराणि वा तदानीं पिहितानि । 'महानिनादो वा' महाजनज्ञातः स तत्र ग्रामे नगरे वा । 'स्थापना वा' तत्र ग्रामादौ ईदृशी व्यवस्था, यथा-रात्रौ मृतकं न शिष्काशनीयम् । 'निजका वा' संज्ञातकास्तत्र सन्ति ते भणन्ति-अस्माकमनापृच्छया न निष्काशनीयः । आचार्यो वा स तत्र नगरेऽतीव लोकविख्यातः । 'महातपस्वी वा' प्रभूतकालपालितानशनो मासादिक्षपको वा । एतैः कारणै रजन्यां प्रतीक्षाप्यते ॥ दिवा पुनरेभि कारणैः प्रतीक्षापयेत्-

[भा.५५२०] नंतक असती राया, वऽतीति संतेपुरो पुरवती तु ।
नीति व जननिवहेणं, दार निरुद्धाणि निसि तेनं ॥

वृ- 'नन्तकानां' शुचि-श्वेतवस्त्राणामभावे दिवा न निष्काश्यते । राजा वा सान्तःपुरः पुरपतिर्वा नगरम् 'अतियाति' प्रविशति 'जननिवहेन वा' महता भट-भोजिकादिवृन्देन नगराद् निर्गच्छति ततो द्वाराणि निरुद्धानि, तेन निशि निष्काश्यते । एवं दिवाऽपि प्रतीक्षापणं भवेत् ॥

अत्र चायं विधिः-

[भा.५५२१] वातेन अनक्कंते, अभिनवमुक्कस्स हत्थ-पादे उ ।
कुव्वंतऽहापणिहिते, मुह-नयनाणं च संपुडणं ॥

वृ- वातेन यावद् अद्यापि शरीरकम् आक्रान्तं-स्तब्धं न भवति तावद् अभिनवजीवितमुक्तस्य हस्त-पादान् 'यथाप्रणिहितान्' प्रगुणतया लम्बमानान् कुर्वन्ति, मुख-नयनानां च 'सम्पुटनं' सम्मीलनं कुर्वन्ति ॥ जागरणादिविधिमाह-

[भा.५५२२] जितनिद्दुवायकुसला, ओरस्सबली य सुत्तजुत्ता य ।
कतकरण अप्पमादी, अभीरुगा जागरंति तहिं ॥

वृ- जितनिद्रा उपायकुशलाः 'औरसबलिनः' महापराक्रमाः 'सत्त्वयुक्ताः' धैर्यसम्पन्नाः कृतकरणा अप्रमादिनोऽभीरुकाश्च ये साधवस्ते तत्र तदानीं जाग्रति ॥

[भा.५५२३] जागरणट्ठाए तहिं, अन्नेसिं वा वि तत्थ धम्मकहा ।

सुत्तं धम्मकहं वा, मधुरगिरो उच्चसद्देणं ॥

वृ- जागरणार्थं तत्र तैरन्योन्यं 'अन्येषां वा' श्राद्धादीनां धर्मकथा कर्तव्या । स्वयं वा सूत्रं 'धर्मकथां वा' धर्मप्रतिबद्धामाख्यायिकां मधुरगिर उच्चशब्देन गुणयन्ति ॥

अथ बन्धन-च्छेदनपदे व्याख्याति-

[भा.५५२४] कर-पायंगुट्ठे दोरेण बंधिउं पुत्तीए मुहं छाए ।
अक्खयदेहे खननं, अंगुलिविच्चे न बाहिरतो ॥

वृ- 'कर-पादाङ्गुष्ठान्' कराङ्गुष्ठद्वयं पादाङ्गुष्ठद्वयं च दवरकेण बद्ध्वा मुखपोतिकया मुखं छादयेत्, एतद् बन्धनमुच्यते । तथा अक्षतदेहे तस्मिन् ''अंगुलीविच्चे'' अङ्गुलीमध्ये चीरके 'खननम्' ईषत्फालनं क्रियते न बाह्यतः, एतत् छेदन मन्तव्यम् ॥

[भा.५५२५] अन्नाइट्ठसरीरे, पंता वा देवतऽत्थ उट्ठेज्जा ।
परिणामि डव्वहत्थेण बुज्झ मा गुज्झगा ! मुज्झ ॥

वृ- एवमपि क्रियमाणे यदि 'अन्याविष्टशरीरः' सामान्येन व्यन्तराधिष्ठितदेहः 'प्रान्ता वा' प्रत्यनीका काचिद् देवता 'अत्र' अवसरे तत्कलेवरमनुप्रविश्योत्तिष्ठेत् ततः 'परिणामिनीं' कायिकीं ''डव्वहत्थेणं'' ति वामहस्तेन गृहीत्वा तत् कडेवरं सेचनीयम् । इदं च वक्तव्यम्-बुध्यस्व बुध्यस्व गुह्यक ! 'मा मुह्य' मा प्रमादीः, संस्तारकाद् मा उत्तिष्ठेति भावः ॥

[भा.५५२६] वित्तासेज्ज रसेज्ज व, भीमं वा अट्टहास मुंचेज्जा ।
अभिएण सुविहिएणं, कायव्व विहीय वोसिरणं ॥

वृ- अन्याधिष्ठितं तत् कडेवरं 'वित्रासयेत्' विकरालरूपं दर्शयित्वा भापयेद् 'रसेद्वा' आरारटिं मुञ्चेद् 'भीमं वा' रोमहर्षजनकं अट्टहासं मुञ्चेत् तथापि तत्राभीतेन सुविहितेन 'विधिना' पूर्वोक्तेन वक्ष्यमाणेन च व्युत्सर्जनं कर्तव्यम् ॥ गतं जागरणादिद्वारम् । अथ कुशप्रतिमाद्वारमाह-

[भा.५५२७] दोन्नि य दिवड्ढखेत्ते, दब्भमया पुत्तगऽत्थ कायव्वा ।
समखेत्तम्मि य एक्को, अवड्ढ अभिए न कायव्वो ॥

वृ- कालगते सति संयते नक्षत्रं विलोक्यते । यदि न विलोकयति ततश्चतुर्गुरु । ततो नक्षत्रे विलोकिते यदि सार्द्धक्षेत्रं तदानीं नक्षत्रम्, सार्द्धक्षेत्रं नाम-पञ्चचत्वारिंशन्मुहूर्तभोग्यं सार्द्धदिनभोग्यमिति यावत्, तदा दर्भमयौ द्वौ पुत्रकौ कर्तव्यौ । यदि न करोति तदाऽपरं साधुद्वयमाकर्षति । तानि च सार्द्धक्षेत्राणि नक्षत्राणि षड् भवन्ति, तद्यथा-उत्तराफाल्गुन्य उत्तराषाढा उत्तराभद्रपदाः पुनर्वसू रोहिणी विशाखा चेति । अथ समक्षेत्रं-त्रिंशन्मुहूर्तभोग्यं यदा नक्षत्रं तत एकः पुत्तलकः कर्तव्यः 'एष ते द्वितीयः' इति च वक्तव्यम् । अकरणेऽपरमेकमाकर्षति । समक्षेत्राणि चामूनि पञ्चदश-अश्विनी कृत्तिका मृगशिरः पुष्यो मघाः पूर्वाफाल्गुन्यो हस्तश्चित्रा अनुराधा मूलं पूर्वाषाढाः श्रवणो धनिष्ठाः पूर्वभद्रपदा रेवती चेति । अथापार्द्धक्षेत्रं-पञ्चदशमुहूर्तभोग्यं तद् नक्षत्रम् अभीचिर्वा तत एकोऽपि पुत्तलको न कर्तव्यः । अपार्द्धक्षेत्राणि चामूनि षट्-शतभिषग् भरणी आर्द्रा स्वातिर्ज्येष्ठा चेति ॥ अथ निवर्तनद्वारमाह-

[भा.५५२८] थंडिलवाघाएणं, अहवा वि अतिच्छिए अनाभोगा ।
भमिऊण उवागच्छे, तेनेव पहेण न नियत्ते ॥

वृ- तत्र नीयमाने स्थण्डिलस्योदक-हरितादिभिर्व्याघातो भवेत्, अनाभोगेन वा स्थण्डिल-मतिक्रान्तं भवेत्, ततः 'भ्रमित्वा' प्रदक्षिणामकुर्वाणा उपागच्छेयुः, तेनैव पथा न निवर्तेरन् ॥ जइ तेनेव मग्गेण नियत्तंति तो असमायारी, कयाइ उट्ठेज्जा, सो य जओ चेव उट्ठइ तओ चेव पहावइ, तत्थ जओ गामो ततो धाविज्जा तत एवं कर्तव्यम्-

[भा.५५२९] वाघायम्मि ठवेउं, पुव्वं व अपेहियम्म थंडिल्ले ।
तह नेंति जहा से कमा, न होंति गामस्स पडिहुत्ता ॥

वृ- स्थण्डिलस्य व्याघाते पूर्वं वा स्थण्डिलं न प्रत्युपेक्षितं ततस्तद् मृतकमेकान्ते स्थापयित्वा स्थण्डिलं च प्रत्युपेक्ष्य तथा भ्रमयित्वा नयति यथा तस्य 'क्रमौ' पादौ ग्रामं प्रति अभिमुखौ न भवतः ॥ अथ मात्रकद्वारमाह-

[भा.५५३०] सुत्त-ऽत्थतदुभयविऊ, पुरतो घेत्तूण पानग कुसे य ।
गच्छति जइ सागरियं, परिट्ठवेऊण आयमनं ॥

वृ- सूत्रा-ऽर्थ-तदुभयवेदी मात्रकेऽसंसृष्टपानकं 'कुशांश्च' दर्भान् 'समच्छेदान्' परस्पर-मसम्बद्धान् हस्तचतुरङ्गुलप्रमाणान् गृहीत्वा पृष्ठतोऽनपेक्षमाणः 'पुरतः' अग्रतः स्थण्डिलाभिमुखो गच्छति । दर्भाणामभावे चूर्णानि केशराणि वा गृह्यन्ते । यदि सागारिकं ततः शवं परिष्ठाप्य 'आचमनं' हस्त-पादशौचादिकं कर्तव्यम् । आचमनग्रहणेनेदं ज्ञापयति-यथा यथा प्रवचनोड्डाहो न भवति तथा तथा अपरमपि विधेयम् ॥ अथ शीर्षद्वारमाह-

[भा.५५३१] जत्तो दिसाए गामो, तत्तो सीसं तु होइ कायव्वं ।
उट्ठेंतरक्खणट्ठा, अमंगलं लोगगरिहा य ॥

वृ- यस्यां दिशि ग्रामस्ततः शीर्षं शवस्य प्रतिश्रयाद् नीयमानस्य परिष्ठाप्यमानस्य च कर्तव्यम्। किमर्थम् ? इत्याह-उत्तिष्ठतो रक्षणार्थम्, यदि नाम कथञ्चिदुत्तिष्ठते तथापि प्रतिश्रयाभिमुखं नागच्छतीति भावः । अपि च-यस्यां दिशि ग्रामस्तदभिमुखं पादयोः क्रियमाणयोरमङ्गलं भवति, लोकश्च गर्हां कुर्यात्-अहो ! अमी श्रमणका एतदपि न जानन्ति यद् ग्रामाभिमुखं शवं न क्रियते॥

अथ तृणादिद्वारमाह-

[भा.५५३२] कुसमुट्ठिएण एक्केणं, अव्वोच्छिन्नाए तत्थ धाराए ।
संथार संथरिज्जा, सव्वत्थ समो य कायव्वो ॥

वृ-यदा स्थण्डिलं प्रमार्जितं भवति तदा कुशमुष्टिनैकेनाव्यवच्छिन्नया धारया संस्तारकं संस्तरेत्, स च सर्वत्र समः कर्तव्यः ॥ विषमे एते दोषाः-

[भा.५५३३] विसमा जति होज्ज तणा, उवरिं मज्झे तहेव हेट्ठा य ।
मरणं गेलन्नं वा, तिण्हं पि उ निद्दिसे तत्थ ॥

वृ- 'विषमाणि' तृणानि यदि तस्मिन् संस्तारके उपरि वा मध्ये वाऽधस्ताद्वा भवेयुः तदा त्रयाणामपि मरणं ग्लानत्वं वा निर्दिशेत् ॥ केषां त्रयाणाम् ? इत्याह-

[भा.५५३४] उवरिं आयरियाणं, मज्झे वसभाण हेट्ठि भिक्खूणं ।
तिण्हं पि रक्खणट्ठा, सव्वत्थ समा य कायव्वा ॥

वृ- उपरि विषमेषु तृणेषु आचार्याणां मध्ये वृषभाणामधस्ताद् भिक्षूणां मरणं ग्लानत्वं वा

भवेत्, अतस्त्रयाणामपि रक्षणार्थं सर्वत्र समानि तृणानि कर्तव्यानि ॥

[भा.५५३५] जत्थ य नत्थि तिणाइं, चुन्नेहिं तत्थ केसरेहिं वा ।
कायव्वोऽत्थ ककारो, हेट्ठ तकारं च बंधेज्जा ॥

वृ- यत्र तृणानि न सन्ति तत्र चूर्णैर्वा नागरकेशरैर्वाऽव्यवच्छिन्नया धारया ककारः कर्तव्यः तस्याधस्तात् तकारं च बध्नीयात्, क्त इत्यर्थः । चूर्णानां केशराणां चाभावे प्रलेपकादिभिरपि क्रियते ॥ अथोपकरणद्वारमाह-

[भा.५५३६] चिंधट्ठा उवगरणं, दोसा तु भवे अचिंधकरणम्मि ।
मिच्छत्त सो व राया, कुणति गामाण वहकरणं ॥

वृ- परिष्ठाप्यमाने चिह्नार्थं यथाजातमुपकरणं पार्श्वे स्थापनीयम् । तद्यथा-रजोहरणं मुखपोतिका चोलपट्टकः । यदि एतद् न स्थापयन्ति ततश्चतुर्गुरु । आज्ञादयश्च दोषाः चिह्नस्याकरणे भवन्ति । 'स वा' कालगतो मिथ्यात्वं गच्छेत् । राजा वा जनपरम्परया तं ज्ञात्वा 'कश्चिद् मनुष्योऽमी-भिरपद्रावितः' इति बुध्या कुपितः प्रत्यासन्नवर्तिनां डिम्भादीनां ग्रामाणां वधं कुर्यात् ॥

अथैतदेव भावयति-

[भा.५५३७] उवगरणमहाजाते, अकरणे उज्जेनिभिक्खुदिट्ठंतो ।
लिंगं अपेच्छमाणो, काले वइरं तु पाडेति ॥

वृ- यथाजतमुपकरणं यदि तस्य पार्श्वे न कुर्वन्ति ततोऽसौ देवलोकगतः प्रयुक्तावधि 'अहमनेन गृहलिङ्गेन परलिङ्गेन वा देवो जातः' इति मिथ्यात्वं गच्छेत् । उज्जयिनीभिक्षुदृष्टान्तश्चात्र भवति, स चावश्यकटीकातो मन्तव्यः । यस्य वा ग्रामस्य पार्श्वे परिष्ठापितः तत्र तत्पार्श्वे लिङ्गमपश्यन् लोको राजानं विज्ञपयेत् । स च 'केनाप्यपद्रावितोऽयम्' इति मत्वा कालेन प्रतिवैरं पातयति, वैरं निर्यातयतीति भावः ॥ कायोत्सर्गद्वारमाह-

[भा.५५३८] उट्ठाणाई दोसा, हवंति तत्थेव काउसग्गम्मि ।
आगम्मुवस्सयं गुरुसमीव अविहीय उस्सग्गो ॥

वृ- 'तत्रैव' परिष्ठापनभूमिकायां कायोत्सर्गे क्रियमाणे उत्थानादयो दोषा भवन्ति, अत उपाश्रयमागम्य गुरुसमीपेऽविधिपरिष्ठापनिकायाः कायोत्सर्ग कर्तव्यः ॥ प्रादक्षिण्यद्वारमाह-

[भा.५५३९] जो जहियं सो तत्तो, नियत्तइ पयाहिणं न कायव्वं ।
उट्ठाणादी दोसा, विराधना बाल-वुड्ढाणं ॥

वृ- शवं परिष्ठाप्य यो यत्र भवति स ततो निवर्तते, प्रादक्षिण्यं न कर्तव्यम् । यदि कुर्वन्ति तत उत्थानादयो दोषा बाल-वृद्धानां च विराधना भवति ॥ अथाभ्युत्थानद्वारमाह-

[भा.५५४०] जइ पुन अनीनिओ वा, नीनिज्जंतो विविंचिओ वा वि ।
उट्ठेज्ज समाइट्ठो, तत्थ इमा मग्गणा होति ॥

वृ- यदि पुनः स कालगतोऽनिष्काशितो वा निष्काश्यमानो वा 'विविक्तो वा' परिष्ठापितो व्यन्तरसमाविष्ट उत्तिष्ठेत् ततस्तत्रेयं मार्गणा भवति ॥

[भा.५५४१] वसहि निवेसन साही, गाममज्झे य गामदारे य ।
अंतर उज्जानंतर, निसीहिया उट्ठिते वोच्छं ॥

वृ- वसतौ वा स उत्तिष्ठेत्, 'निवेशने वा' पाटके 'साहिकायां वा' गृहपङ्क्तिरूपायां ग्राममध्ये वा ग्रामद्वारे वा ग्रामोद्यानयोरन्तरा वा उद्याने वा उद्यान-नैषेधिक्योरन्तरा वा 'नैषेधिक्यां वा' शवपरिष्ठापनभूम्याम्, एतेषु उत्थिते यो विधिस्तं वक्ष्यामि ॥ प्रतिज्ञातमेव करोति-

[भा.५५४२] उवस्सय निवेसन साही, गामद्धे दारे गामो मोत्तव्वो ।
मंडल कंड देसे, निसीहियाए य रज्जं तु ॥

वृ- तत् कडेवरं नीयमानं यदि वसतावुत्तिष्ठति तत उपाश्रयो मोक्तव्यः । अथ निवेशने उत्तिष्ठति ततो निवेशनं मोक्तव्यम् । साहिकायामुत्थिते साहिका मोक्तव्या । ग्राममध्ये उत्थिते ग्रामार्द्धं मोक्तव्यम् । ग्रामद्वारे उत्थिते ग्रामो मोक्तव्यः । ग्रामस्य चोद्यानस्य चान्तरा यदि उत्तिष्ठति तदा विषयमण्डलं मोक्तव्यम् । उद्याने उत्थिते 'कण्डं' देशखण्डं मण्डलाद् बृहत्तरं परित्यक्तव्यम् । उद्यानस्य नैषेधिक्याश्चान्तराले उत्तिष्ठति देशः परिहर्तव्यः । नैषेधिक्यामुत्थिते राज्यं परिहरणीयम् ॥ एवं तावन्नीयमानस्योत्थाने विधिरुक्तः । परिष्ठापिते च तस्मिन् गीतार्था एकस्मिन् पार्श्वे मुहूर्तं प्रतीक्षन्ते, कदाचित् परिष्ठापितोऽप्युत्तिष्ठेत् तत्र चायं विधिः-

[भा.५५४३] वच्चंते जो उ कमो, कलेवरपवेसणम्मि वोच्चत्थो ।
नवरं पुन नाणत्तं, गामद्दारम्मि बोद्धव्वं ॥

वृ- 'व्रजतां' निर्गच्छतां कडेवरस्योत्थाने यः क्रमो भणितः स एव विपर्यस्तः कडेवरस्य परिष्ठापितस्य भूयः प्रवेशने विज्ञेयः । नवरं पुनरत्र नानात्वं ग्रामद्वारे बोद्धव्यम्, तत्र वैपरीत्यं न भवति किन्तु तुल्यतैवेति भावः । तथा चात्र वृद्धसम्प्रदायः- निसीहियाए परिट्ठविओ जइ उट्ठेत्ता तत्थेव पडिओ ताहे उवस्सओ मोत्तव्वो । निसीहियाए उज्जानस्स य अंतरा पडइ निवेसनं मोत्तव्वं । उज्जाने पडइ साही मोत्तव्वा । उज्जानस्स य गामस्स य अंतरा पडइ गामद्धं मोत्तव्वं । गामद्दारे पडइ गामो मोत्तव्वो । गाममज्झे पडइ मंडलं मोत्तव्वं । साहीए पडइ देसखंडं मोत्तव्वं । निवेसने पडइ देसो मोत्तव्वो । वसहीए पडइ रज्जं मोत्तव्वं ॥ अत्र निर्गमने प्रवेशने च ग्रामद्वारोत्थाने ग्रामत्याग एवोक्त इति ग्रामद्वारे तुल्यतैव न वैपरीत्यम् ॥

अथ परिष्ठापितो द्व्यादिवारान् वसतिं प्रविशति ततोऽयं विधिः-

[भा.५५४४] बिइयं वसहिमतिंते, तगं च अन्नं च मुच्चते रज्जं ।
तिप्पभिर्ति तिन्नेव उ, मुयंति रज्जाइं पविसंते ॥

वृ- निर्व्यूढो यदि द्वितीयं वारं वसतिं प्रविशति तदा तच्चान्यच्च राज्यं मुच्यते, राज्यद्वयमित्यर्थः । अथ 'त्रिप्रभृतीन्' त्रीन् चतुरो बहुशो वा वारान् वसतिं प्रविशति तदा त्रीण्येव राज्यानि मुञ्चति ॥

[भा.५५४५] असिवाई बहिया कारणेहिं, तत्थेव वसंति जस्स जो उ तवो ।
अभिगहिया-ऽनभिगहितो, सा तस्स उ जोगपरिवुड्ढी ॥

वृ- यदि बहिरशिवादिभिः कारणैर्न निर्गच्छन्ति ततस्तत्रैव वसतां यस्य यत् तपोऽभिगृहीतमनभिगृहीतं वा तेन तस्य वृद्धिः कर्तव्या, सा च योगपरिवृद्धिरभिधीयते । किमुक्तं भवति ? - येन नमस्कारप्रत्याख्यायिनस्ते पौरुषीं कुर्वन्ति, पौरुषीप्रत्याख्यायिनः पूर्वार्द्धं कृत्वा शक्तौ सत्यामाचाम्लं पारयन्ति, शक्तेरभावे निर्विकृतिकमेकासनकं यावद् द्व्यासनकमपि । यदाह चूर्णिकृत्- सइ सामत्थे आयंबिलं पारेंति, असइ निव्वीयं एक्कासनयं, असमत्था सबीइयं पि त्ति।

एवं पूर्वार्द्धप्रत्याख्यानिनश्चतुर्थम्, चतुर्थप्रत्याख्यातारः षष्ठम्, षष्ठप्रत्याख्यायिनोऽष्टमम्, एवं विस्तरेण विभाषा कर्तव्या ॥

एवं योगपरिवृद्धिं कुर्वतामपि यदि कदाचिदुत्थाय आगच्छेत् तदाऽयं विधिः-

[भा.५५४६] अन्नाइट्ठसरीरे, पंता वा देवतऽत्थ उट्ठिज्जा ॥
काईय डब्बहत्थेण, भणेज्ज मा गुज्झया ! मुज्झा ॥

वृ- गतार्था ॥ अथ व्याहरणद्वारमाह-

[भा.५५४७] गिण्हइ नामं एगस्स दोण्ह अहवा वि होज्ज सव्वेसिं ।
खिप्पं तु लोयकरणं, परिन्न गणभेद बारसमं ॥

वृ- एकस्य द्वयोः सर्वेषां वा साधूनामसौ नाम गृह्णाति 'भवेत्' कदाचिदप्येवं तदा तेषां लोचः कर्तव्यः । "परिन्न"त्ति प्रत्याख्यानं-तपः, तच्च 'द्वादशम्' उपवासपञ्चकरूपं ते कारापणीयाः । अथ द्वादशं कर्तुं कश्चिदसहिष्णुर्न शक्नोति ततो दशममष्टमं षष्ठं चतुर्थं वा काराप्यते । गणभेदश्च क्रियते, गच्छान्निर्गत्य ते पृथग् भवन्तीति भावः ॥ अथ कायोत्सर्गद्वारमाह-

[भा.५५४८] चेइधरुवस्से वा, हायंतीतो थुतीओ तो बिंति ।
सारवणं वसहीए, करेति सव्वं वसहिपालो ॥

[भा.५५४९] अविधिपरिट्ठवणाए, काउसग्गो य गुरुसमीवम्मि ।
मंगल-संतिनिमित्तं, थओ तओ अजितसंतीणं ॥

वृ- चैत्यगृहे उपाश्रये वा परिहीयमानाः स्तुतीस्ततः 'ब्रुवते' भणन्ति । यावच्च तेऽद्यापि नागच्छन्ति तावद् वसतिपालो वसतेः 'सारवणं' प्रमार्जनं तदादिकं सर्वमपि कृत्यं करोति । अविधिपरिष्ठापनानिमित्तं च गुरुसमीपे कायोत्सर्गः कर्तव्यः । ततो मङ्गलार्थं शान्तिनिमित्तं चाऽजितशान्तिस्तवो भणनीयः । अत्र चूर्णिः-ते साहुणो चेइयघरे वा उवस्सए वा ठिया होज्जा । जइ चेइयघरे तो परिहायंतीहिं थुईहिं चेइयाइं वंदित्ता आयरियसगासे इरियावहियं पडिक्कमिउं अविहिपरिट्ठावणियाए काउसग्गं करिंति । ताहे मंगल-संतिनिमित्तं अजियसंतिथओ । तओ अन्ने वि दो थए हायंते कड्ढंति । उवस्सए वि एवं चेव चेइयवंदनवज्जं ॥ विशेषचूर्णिः पुनरित्थम्-तओ आगम्म चेइयघरं गच्छंति । चेइयानि वंदित्ता संतिनिमित्तं अजितसंतियओ परियट्टिज्जइ तिन्नि वा थुईओ परिहायंतीओ कड्ढिज्जंति । तओ आगंतु आयरियसगासे अविहिपरिट्ठावणियाए काउस्सग्गो कीरइ ॥

अथ क्षपण-स्वाध्यायमार्गणाद्वारमाह-

[भा.५५५०] खमणे य असज्झाए, रातिनिय महानिनाय नितए वा ।
सेसेसु नत्थि खमणं, नेव असज्झाइयं होइ ॥

वृ- यदि 'रात्निकः' आचार्यादि अपरो वा 'महानिनादः' लोकविश्रुतः कालगतो भवति, 'निजका वा' संज्ञातकास्तत्र तदीयाः सन्ति ते महतीमधृतिं कुर्वन्ति, तत एतेषु क्षपणमस्वाध्यायिकं च कर्तव्यम् । 'शेषेषु' साधुषु कालगतेषु क्षपणमस्वाध्यायिकं च न भवति ॥ व्युत्सर्जनद्वारमाह-

[भा.५५५१] उच्चार-पासवण-खेलमत्तगा य अत्थरण कुस-पलालादी ।
संथारया बहुविधा, उज्झंति अणन्नगेलन्ने ॥

वृ- यानि तस्योच्चार-प्रश्रवण-खेलमात्रकाणि ये चास्तरणार्थं कुश-पलालादिमया बहुविधाः

संस्तारकास्तान् सर्वानपि उज्झन्ति ''अणन्नगेलन्न'' त्ति यद्यन्यस्य ग्लानत्वं नास्ति, अथापरोऽपि ग्लानः कश्चिदस्ति ततस्तदर्थं तानि मात्रकादीनि ध्रियन्त इति भावः ॥

[भा.५५५२] अहिगरणं मा होहिति, कोइ संथारगं विकरणं तु ।
सव्वुवहि चिगिंचंती, जो छेवइतस्स छित्तो वि ॥

वृ- ''छेवइओ'' अशिवगृहीतः स यदि मृतः तदा येन संस्तारकेण स नीतः तं विकरणं कुर्वन्ति, खण्डशः कृत्वा परिष्ठापयन्तीत्यर्थः । कुतः ? इत्याह-अधिकरणं गृहस्थेन गृहीते प्रान्तदेवतया वा पुनरप्यानीते मेवत् तद् मा भूदिति कृत्वा विकरणीक्रियते । यश्च तदीय उपधिरपरो वा तेन स्ववपुषा छुप्तस्तं सर्वमपि परिष्ठापयन्ति ॥

[भा.५५५३] असिवम्मि नत्थि खमणं, जोगविवड्ढी य नेव उस्सग्गो ।
उवयोगद्धं तुलितुं, नेव अहाजायकरणं तु ॥

वृ-अशिवे मृतस्य क्षपणं न कर्तव्यम्, योगवृद्धिस्तु क्रियते । न चाविधिपरिष्ठापनायाः कायोत्सर्गः क्रियते । उपयोगाद्धां चान्तर्मुहूर्तमानां तोलयित्वा यथाजातं तस्य नैव कर्तव्यम् । किमुक्तं भवति? - अशिवमृतस्य समीपे यथाजातं न स्थाप्यते, अतो देवलोकं गतो यावदुपयुक्तो भवति तावत् तदीयं वपुः प्रतिश्रय एव प्रतीक्षाप्यते येन प्रतिश्रयस्थितं स्वं वपुर्दृष्ट्वा 'संयतोऽहमभूवम्' इति जानीते ॥ अथावलोकनद्वारमाह-

[भा.५५५४] जं दिसि विगड्ढितो खलु, देहेणं अक्खुएण संचिक्खे ।
तं दिसि सिवं वदंती, सुत्त-ऽत्थविसारया धीरा ॥

वृ-यस्यां दिशि स शिवादिभिराकर्षितोऽक्षतेन देहेन सन्तिष्ठेत् तस्यां दिशि सूत्रा-ऽर्थविशारदा धीराः 'शिवं' सुभिक्षं सुखविहारं च वदन्ति ॥

[भा.५५५६] जति दिवसे संचिक्खति, तति वरिसे धातगं च खेमं च ।
विवरीए विवरीतं, अकड्ढिए सव्वहिं उदितं ॥

वृ- 'यति' यावतो दिवसान् यस्यां दिशि अक्षतदेहस्तिष्ठति 'तति' तावन्ति वर्षाणि तस्यां दिशि ध्रातं च क्षेमं च भवति । ध्रातं नाम-सुभिक्षम्, क्षेमं तु-परचक्राद्युपप्लवाभावः । अथ क्षतदेहः सञ्जातः ततः 'विपरीते' क्षतदेहे विपरीतं मन्तव्यम्, यस्यां दिशि क्षतदेहो नीतस्तस्यां दुर्भिक्षादिकं भवतीति भावः । अथ नान्यत्राकृष्टः किन्तु तत्रैवाक्षतस्तिष्ठति ततः सर्वत्र 'उदितं' सुभिक्षं सुखविहारं च द्रष्टव्यम् ॥ एतद् निमित्तं कस्य गृह्यते ? इत्याह-

[भा.५५५७] खमगस्साऽऽयरियस्सा, दीहपरिन्नस्स वा निमित्तं तू ।
सेसे तधऽन्नधा वा, ववहारवसा इमा य गती ॥

वृ-क्षपकस्य आचार्यस्य वा 'दीर्घपरिज्ञायतो वा' प्रभूतकालपालितानशनस्येदं निमित्तं ग्रहीतव्यम् । 'शेषे' एतद्व्यतिरिक्ते तथा वाऽन्यथा वा भवेत्, न कोऽपि नियमः । व्यवहारवशाच्चेयं गति प्रतिपत्तव्या ॥

[भा.५५५८] थलकरणे वेमानितो, जोतिसिओ वाणमंतर समम्मि ।
गड्डाए भवनवासी, एस गती से समासेणं ॥

वृ- यदि तस्य शरीरकं स्थले कृतं-शिवादिभिरारोपितं तदा वैमानिकः सञ्जात इति मन्तव्यम् ।

समभूभागे नीतस्य ज्योतिष्केषु व्यन्तरेषु वा उपपातो ज्ञेयः। गर्तायां नीते भवनवासिषु गत इति अवमन्तव्यम्। एषा गति समासेन तस्याभिहिता॥

व्याख्यातास्तिस्रोऽपि द्वारगाथाः। अथात्रैव प्रायश्चित्तमाह-

[भा.५५५९] एक्केक्कम्मि उ ठाणे, हुंति विवज्जासकारणे गुरुगा।
आणाइणो य दोसा, विराधना संजमा-ऽऽयाए॥

वृ- एषां प्रत्युपेक्षणादीनामेकैकस्मिन् स्थाने विपर्यासं कुर्वता चत्वारो गुरुकाः, आज्ञादयश्च दोषाः, संयमा-ऽऽत्मविराधना च द्रष्टव्या॥

[भा.५५६०] एतेन सुत्त न गतं, सुत्तनिवातो तु दव्व सागारे।
उड्डवणम्मि वि लहुगा, छड्डणे लहुगा अतियणे य॥

वृ- यद् एतद् द्वारकदम्बकमनन्तरं व्याख्यातम् एतेन सूत्रं न गतं किन्तु सामाचारीज्ञापनार्थं सर्वमेतदुक्तम्। किं पुनस्तर्ह्यत्र सूत्रे प्रकृतम् ? इत्याह-सूत्रनिपातः पुनः सागारिकसत्के वहनकाष्ठलक्षणे द्रव्ये भवति। रात्रौ कालगते यदि वहनकाष्ठानुज्ञापनाय सागारिकमुत्थापयन्ति तदा चतुर्लघु अरहट्टयोजनादयश्च दोषाः तस्मान्नोत्थापनीयः किन्तु यदि एकोऽपि कश्चिद् वैयावृत्यकरः समर्थस्तद् वोढुं ततः काष्ठं न गृह्यते। अथासमर्थस्ततो यावन्तः शक्नुवन्ति तावन्तः तेन काष्ठेन वहन्ति। अथ वहनकाष्ठं तत्रैव परिष्ठाप्यागच्छन्ति तदापि चतुर्लघु, अपरेण च गृहीतेऽधिकरणम्, सागारिको वा तद् अपश्यन् 'एतैः [illegible] वहनार्थं नीतं तत्रैव परित्यक्तम्' इति मत्वा प्रद्विष्ट व्यवच्छेद-कटकमर्यादिकं कुर्यात्, तस्मादानेतव्यम्। यदि पुनरानीय तेन गृहीतेनैव अतिगमनं-प्रवेशं कुर्वन्ति तदाऽपि चतुर्लघु॥ एते च दोषाः-

[भा.५५६१] मिच्छत्तऽदिन्नदानं, समलावन्नो दुगुंछितं चेव।
दिय रातो आसितावण, वोच्छेओ होति वसहीए॥

वृ- सागारिकस्तत् काष्ठं प्रवेश्यमानं दृष्ट्वा मिथ्यात्वं गच्छेत्, एते भणन्ति-अस्माकमदत्तस्यादानं न कल्पते; यथैतदलीकं तथा अन्यदप्यलीकमेव। अथवा ब्रूयात्-समला अमी, अस्थिसरजस्कानामप्युपरिवर्तिनः; एवमवर्णो भूयात्। 'जुगुप्सितं वा' जुगुप्सां स कुर्यात्- मृतकमूढवा मम गृहमानयन्ति। ततो दिवा रात्रौ वा साधूनां ''आसियावणं'' निष्काशनं कुर्यात्, वसतेश्च व्यवच्छेदं 'नातः परं ददामि' इत्येकस्यानेकेषां वा कुर्यात्॥ यत एते दोषा अतोऽयं विधिः-

[भा.५५६२] अइगमनं एगेणं, अन्नाए पतिडुवेंति तत्थेव।
नाए अनुलोमण तस्स वयण बितियं उड्डाण असिवे वा॥

वृ- एकेन साधुना प्रथमम् 'अतिगमनं' प्रवेशनं कार्यम्, यदि सागारिको नाद्याप्युत्तिष्ठते त एवमज्ञाते काष्ठमानीय ततो गृहीतं तत्रैव प्रतिष्ठापयन्ति। अथ सागारिक उत्थितस्ततस्तस्याग्रे निवेद्यते-यूयं प्रसुप्ता इति कृत्वा नास्माभिरुत्थापिताः, रात्रौ साधुः कालगतः युष्मदीयकाष्ठेन निष्काशितः, साम्प्रतं तदानीयतां उत परिष्ठाप्यताम् ?। एवमुक्ते यद् असौ भणति तत् प्रमाणम्। अथ तैः पूर्वमज्ञायमानैः स्थापितं सागारिकेण च पश्चात् कथमपि ज्ञातं ततः कुपितस्यानुलोमनं विधेयम्। अथ प्रज्ञाप्यमानस्यापि तस्य वक्ष्यमाणं वचनं भवति तदा गुरुभि स साधुर्निष्काशनीय

इति शेषः । द्वितीयपदे उत्थितोऽसौ ग्रामः अशिवगृहीतो वाऽसौ ततस्तत्रैव परिष्ठापयेत्, न सागारिकस्य प्रत्यर्पयेत् ।। अथ सागारिकवचनं दर्शयति-

[भा.५५६३] जइ नीयमनापुच्छा, आनिज्जति किं पुनो घरं मज्झ ।
दुगुणो एसऽवराधो, न एस पाणालओ भगवं ! ।।

वृ- यदि अस्माकमनापृच्छया नीतं ततः किमर्थमिदानीं पुनरपि मदीयगृहमानीयते ? एष द्विगुणोऽपराधः, न चैष भगवन् ! मदीय आवासः पाणानां-मातङ्गानामालयो यदेवं मृतकोपकरणमत्रानीतम् ।। एवमुक्ते गुरुभिर्वक्तव्यम्-

[भा.५५६४] किमियं सिट्ठम्मि गुरू, पुरओ तस्सेव निच्छुभंति तयं ।
अविजाणंताण कयं, अम्ह वि अन्ने वि णं बेंति ।।

वृ- किमिदं वृत्तान्तजातमभूत् ? । ततः शेषसाधुभिः शय्यातरेण वा गुरूणां शिष्टम्-अमुकेन साधुना अनापृच्छया काष्ठं नीतम् । ततो गुरवः 'तस्यैव' शय्यातरस्य पुरतः 'तं' साधुं 'किमनापृच्छया नयसि ?' इति निर्भर्त्स्य कैतवेन निष्काशयन्ति । अन्येऽपि साधवः "ण"मिति तं शय्यातरं ब्रुवते-अस्माकमप्यविजानतामेवममुना कृतम्, अन्यथा जानन्तो वयमपि कर्तुं न दद्म इति ।।

[भा.५५६५] वारेति अनिच्छुभणं, इहरा अन्नाए ठाति वसहीए ।
मम नीतो निच्छुभई, कइतव कलहेन वा बितिओ ।।

वृ- यदि सागारिकः 'वारयति' 'मा निष्काशयत, नैवं भूयः करिष्यति' इति ततः 'अनिष्काशनं' न निष्काश्यते । 'इतरथा' अवारयति सागारिकेऽन्यस्यां वसतौ तिष्ठति । द्वितीयश्च साधुः 'कैतवेन' मातृस्थानेन भणति-मम निजको यदि निष्काश्यते ततोऽहमपि गच्छामि । सागारिकेन वा समं कोऽपि कलहयति ततः कोऽपि कलहयति ततः सोऽपि निष्काश्यते, स च तस्य द्वितीयो भवति।

मू. (१३५) *भिक्खू य अहिकरणं कट्टु तं अहिगरणं अविओसवित्ता नो से कप्पइ गाहावइकुलं भत्ताए वा पानाए वा निक्खमित्तएवा पविसित्तए वा, बहिया वियारभूमिं वा विहारभूमिं वा निक्खमित्तए वा पविसित्तए वा, गामानुगामं वा दूइज्जित्तए, गणातो वा गणं संकमित्तए, वासावास वा वत्थए । जत्थेव अप्पणो आयरिय-उवज्झायं पासेज्जा बहुस्सुयं बब्भागमं तस्संतिए आलोइज्जा पडिक्कमिज्जा निंदिज्जा गरहिज्जा विउट्टेज्जा विसोहेज्जा अकरणयाए अब्भुट्ठिज्जा आहारिहं तवोकम्मं पायच्छित्तं पडिवज्जेज्जा । से य सुएण पट्ठविए आईयव्वे सिया, से य सुएण नो पट्ठविए नो आदिइतव्वे सिया, से य सुएणं पट्ठवेज्जमाणे नो आइयइ से निज्जूहियव्वे सिया ।।*

वृ- अस्य सम्बन्धमाह-

[भा.५५६६] केन कयं कीस कयं, निच्छुब्भऊ एस किं इहानेती ।
एमादि गिहीतुदितो, करेज्ज कलहं असहमाणो ।

वृ- केनेदं वहनकाष्ठानयनं कृतम् ? कस्माद्वा कृतम् ? निष्काश्यतामेषः, किमर्थमिहानयति ?; एवमादिभिर्वचोभिर्गृहिणा तुदितः-व्यथितः कश्चिदसहमानः कलहं कुर्यात् । अत इदमधिकरणसूत्रमारभ्यते ।।

अनेन सम्बन्धेनायातस्यास्य व्याख्या-'भिक्षुः' प्रागुक्तः, चशब्दाद् उपाध्यायादिपरिग्रहः, 'अधिकरणं' कलहं कृत्वा नो कल्पते तस्य तदधिकरणमव्यवशमय्य गृहपतिकुलं भक्ताय वा

पानाय वा निष्क्रमितुं वा प्रवेष्टुं वा, बहिर्विचारभूमौ वा विहारभूमौ वा निष्क्रमितुं वा प्रवेष्टुं वा, ग्रामानुग्रामं वा 'द्रोतुं' विहर्तुम्, गणाद्वा गणं सङ्क्रमितुम्, वर्षावासं वा वस्तुम्। किन्तु तत्रैवात्मन आचार्योपाध्यायं पश्येत्; कथम्भूतम्? 'बहुश्रुतं' छेदग्रन्थादिकुशलं 'बह्वागमम्' अर्थतः प्रभूतागमम्; तत्र तस्यान्तिके 'आलोचयेत्' स्वापराधं वचसा प्रकटयेत्, 'प्रतिक्रामेत्' मिथ्यादुष्कृतं तद्विषये दद्यात्, 'निन्द्याद्' आत्मसाक्षिकं जुगुप्सेत, 'गर्हेत' गुरुसाक्षिकं निन्द्यात्। इह च निन्दनं गर्हणं वा तात्त्विकं तदा भवति तदा तत्करणतः प्रतिनिवर्तते तत आह-'व्यावर्तेत' तस्मादपराधपदाद् निवर्तेत। व्यावृत्तावपि कृतात् पापात् तदा मुच्यते यदाऽऽत्मनो विशोधिर्भवति तत आह-आत्मानं 'विशोधयेत्' पापमलस्फेटनतो निर्मलीकुर्यात्। विशुद्धिः पुनरपुनः करणतायामुपपद्यते तत [illegible]-अकरण[illegible]तुिष्ठेत्। [illegible]करणतया अभ्युत्थानेऽपि विशोधिः प्रायश्चित्तप्रतिपत्त्या भवति तत आह-'यथार्हं' यथायोग्यं तपःकर्म प्रायश्चित्तं प्रतिपद्येत। 'तच्च' प्रायश्चित्तमाचार्येण 'श्रुतेन' श्रुतानुसारेण यदि 'प्रस्थापितं' प्रदत्तं तदा 'आदातव्यं' ग्राह्यं 'स्याद्' भवेत्, अथ श्रुतेन न प्रस्थापितं तदा नादातव्यं स्यात्, 'स च' आलोचको यदि श्रुतेन प्रस्थाप्यमानमपि तत् प्रायश्चित्तं 'नाददाति' न प्रतिपद्यते ततः सः 'निर्यूहितव्यः' 'अन्यत्र सोधिं कुरुष्व' इति निषेधनीयः स्यादिति सूत्रार्थः ॥ अथ भाष्यविस्तरः-

[भा.५५६७] अचियत्तकुलपवेसे, अतिभूमि अनेसणिज्जपडिसेहे।
अवहारऽमंगलुत्तर, सभावअचियत्त मिच्छत्ते ॥

वृ- कथमधिकरणमुत्पन्नम्? इत्यस्यां जिज्ञासायामभिधीयते-कस्मिंश्चित् कुले साधवः प्रविशन्तोऽप्रीतिकराः तत्राजानतामनाभोगाद्वा प्रवेशे स गृहपतिराक्रोशेद्वा हन्याद्वा, साधुरप्यसहमानः प्रत्याक्रोशेत् ततोऽधिकरणमुत्पद्यते। एवमतिभूमिं प्रविष्टे, अनेषणीयभिक्षाया वा प्रतिषेधे, शैक्षस्य वा संज्ञातकस्यापहारे, यात्राप्रस्थितस्य वा गृहिणः साधुं दृष्ट्वाऽमङ्गलमिति प्रतिपत्तौ, समयविचारेण वा प्रत्युत्तरं दातुमसमर्थे गृहस्थे, स्वभावेन क्वाऽपि साधौ 'अचियत्ते' अनिष्टे दृष्टे, अभिग्रहमिथ्यादृष्टेर्वा सामान्यतः साधौ अवलोकिते अधिकरणमुत्पद्येत ॥

[भा.५५६८] पडिसेधे पडिसेधो, भिक्ख वियारे विहार गामे वा।
दोसा मा होज्ज बहू, तम्हा आलोयणा सोधी ॥

वृ- भगवद्भिः प्रतिषिद्धम्-न वर्तते साधूनामधिकरणं कर्तुम्। एवंविधे प्रतिषेधे भूयः प्रतिषेधः क्रियते-कदाचित् तद् अधिकरणं गृहिणा समं कृतं भवेत्, कृत्वा च तस्मिन् अनुपशमिते भिक्षायां न हिण्डनीयम्, विचारभूमौ विहारभूमौ वा न गन्तव्यम्, ग्रामानुग्रामं वा न विहर्तव्यम्। कुतः? इत्याह-मा 'बहवः' बन्धन-कटकमर्दादयो दोषा भवेयुः। तस्मात् तं गृहस्थमुपशमय्य गुरूणामन्तिके आलोचना दातव्या। ततः शोधिः प्रतीच्छनीया॥ इदमेव भावयति-

[भा.५५६९] अहिगरण गिहत्थेहिं, ओसार विकड्डणा य आगमनं।
आलोयण पत्थवणं, अपेसणे होंति चउलहुगा ॥

वृ- गृहस्थैः सममधिकरणे उत्पन्ने द्वितीयेन साधुना तस्य साधोरपसारणं कर्तव्यम्। अथ नापसरति ततः ''विकड्डणा य''त्ति बाहौ गृहीत्वाऽऽकर्षणीयः, इदं च वक्तव्यम्-न वर्तते मम त्वया साधिकरणेन समं भिक्षामटितुम् अतः प्रतिश्रयोपरि निवर्तावहे। एवमुक्त्वा प्रतिश्रयमागम्य

गुरूणामालोचनीयम् । ततो गुरुभिरुपशमनार्थं वृषभास्तस्य गृहस्थस्य मूले प्रेषणीयाः । यदि न प्रेषयन्ति तदा चतुर्लघु ॥

[भा.५५७०] आणादिणो य दोसा, बंधन निच्छुभण कडगमद्दो य ।
वुग्गाहण सत्थेण व, अगनुवगरणं विसं वारे ॥

वृ- आज्ञादयश्च दोषाः । स च गृहस्थो येन साधुना सहाधिकरणं जातं तस्य अनेकेषां वा साधूनां बन्धनं निष्काशनं वा कुर्यात् । 'कटकमर्दो नाम' सर्वानपि साधून् कोऽपि व्यपरोपयेत् । व्युद्ग्राहणं वा लोकस्य कुर्यात्-नास्त्यमीषां दत्ते परलोकफलम्, यद्वा अमी संज्ञां व्युत्सृज्य विकिरन्ति न च निर्लेपयन्ति । खड्गादिना वा शस्त्रेण साधूनाहन्यात्, अग्निकायेन वा प्रतिश्रयं दहेत्, उपकरणं वा अपहरेत्, विष-गरादिकं वा दद्यात्, भिक्षां वा वारयेत् ॥ तच्च वारणमेतेषु स्थानेषु कारयेत्-

[भा.५५७१] रज्जे देसे गामे, निवेसण गिहे निवारणं कुणति ।
जा तेन विना हानी, कुल गण संघे य पत्थारो ॥

वृ- राज्ये सकलेऽपि निवारणं कारयेत्-एतेषां भक्तमुपधिं वसतिं वा मा दद्यात् । एवं देशे ग्रामे निवेशने गृहे वा निवारणं करोति । ततो या 'तेन' भक्तादिना विना परिहाणि तां वृषभान् अप्रेषयन् गुरु प्राप्नोति । अथवा यः प्रभवति स कुलस्य गणस्य सङ्घस्य वा 'प्रस्तारं' विस्तरेण विनाशं कुर्यात् ॥

[भा.५५७२] एयस्स नत्थि दोसो, अपरिक्खियदिक्खगस्स अह दोसो ।
पभु कुज्जा पत्थारं, अपभु वा कारवे पभुणा ॥

वृ- गृहस्थश्चिन्तयति-'एतस्य साधोर्नास्ति दोषः किन्तु य एनमपरीक्ष्य दीक्षितवान् तस्यायं दोषः, अतस्तमेव घातयामि' इति विचिन्त्य प्रभुः स्वयमेव प्रस्तारं कुर्यात् । अप्रभुरपि द्रव्यं राजकुले दत्त्वा प्रभुणा कारापयेत् ॥ यत एते दोषाः-

[भा.५५७३] तम्हा खलु पट्ठवणं, पुव्वं वसभा समं च वसभेहिं ।
अनुलोमण पेच्छामो, नेंति अनिच्छं पि तं वसभा ॥

वृ- तस्माद् वृषभाणां तत्र प्रस्थापनं कर्तव्यम् । "पुव्वं" ति येन साधुनाऽधिकरणं कृतं तं तावद् न प्रेषयन्ति यावद् वृषभाः पूर्वं प्रज्ञापयन् । किं कारणम् ? उच्यते-स गृहस्थस्तं दृष्ट्वा कदाचिदाहन्यात् । अथ ज्ञायते 'नाहनिष्यति' ततो वृषभैः समं तमपि प्रेषयन्ति । तत्र गताश्चानुकूलवचोभि 'अनुलोमनं' प्रगुणीकरणं तस्य कुर्वन्ति । अथासौ गृहस्थो ब्रूयात्-आनयत तावत् तं कलहकारिणं येनैकवारं पश्यामः पश्चात् क्षमिष्ये न वा । ततो वृषभास्तदभिप्रायं ज्ञात्वा तं साधुं गृहिणः समीपमानयन्ति । अथासौ साधुर्नेच्छति ततो बलादपि वृषभास्तं तत्र नयन्ति ॥

ते च वृषभा ईदृशगुणयुक्ताः प्रस्थाप्यन्ते-

[भा.५५७४] तस्संबंधि सुही वा, पगता ओयस्सिणो गहियवक्का ।
तस्सेव सुहीसहिया, गमेंति वसभा तगं पुव्वं ॥

वृ- तस्य-गृहिणः संयतस्य वा सम्बन्धिनः सुहृदो वा ते भवेयुः, 'प्रगताः' लोकप्रसिद्धाः 'ओजस्विनः' बलीयांसः 'गृहीतवाक्याः' आदेयवचसः, ईदृशा वृषभाः 'तस्यैव' गृहिणः सुहृद्भिः सहिताः 'तकं' गृहस्थं पूर्वं 'गमयन्ति' प्रज्ञापयन्ति ॥ कथम् ? इत्याह-

[भा.५५७५] सो निच्छुब्भति साहू, आयरिए तं च जुज्जसि गमेतुं ।
नाऊण वत्थुभावं, तस्स जती निंति गिहिसहिया ॥

वृ- येन साधुना त्वया सह कलहितं स साधुराचार्यै साम्प्रतं निष्काश्यते, अस्मदीयं च वचो गुरवो न सुष्ठु शृण्वन्ति, अत आचार्यान् गमयितुं त्वं 'युज्यसे' युक्तो भवसि । एवमुक्ते यद्याचार्यं गमयति क्षामयति च ततो लष्टम् । अथ ब्रूते-पश्यामस्तावत् तं कलहकारिणम्; ततो ज्ञात्वा वस्तुनः-गृहस्थस्य भावं-'किमयं हन्तुकामस्तमानाययति ? उत क्षामयितुकामः ?' एवमभिप्रायं ज्ञात्वा तस्य ये सुहृदस्तैर्गृहिभिः सहिता यतयस्तं साधुं तत्र नयन्ति ॥ अथासौ गृही तीव्रकषायतया नोपशाम्यति ततस्तस्य साधोर्गच्छस्य च रक्षणार्थमयं विधिः-

[भा.५५७६] वीसुं उवस्सए वा, ठवेंति पेसंति फड्डपतिणो वा ।
देंति सहाते सव्वे, व नेंति गिहिते अनुवसंते ॥

वृ- 'विष्वग्' अन्यस्मिन्नुपाश्रये तं साधुं स्थापयन्ति, अन्यग्रामे वा यः स्पर्द्धकपतिस्तस्यान्तिके प्रेषयन्ति । निर्गच्छतश्चतस्य सहायान् ददति । अथ मासकल्पः पूर्णस्ततः सर्वेऽपि 'निर्यन्ति' निर्गच्छन्ति ॥ एष गृहस्थेऽनुपशान्ते विधिः । अथ गृहस्थ उपशाम्यति न साधुस्तदा तस्येदं प्रायश्चित्तम्-

[भा.५५७७] अविओसियम्मि लहुगा, भिक्ख वियारे य वसहि गामे य ।
गणसंकमणे भन्नति, इहं पि तत्थेव वच्चाहि ॥

वृ- अधिकरणेऽव्यवशमिते यदि भिक्षां हिण्डते, विचारभूमिं विहारभूमिं वा गच्छति, वसतेर्निर्गत्यापरसाधुवसतिं गच्छति, ग्रामानुग्राम विहरति; एतेषु सर्वेषु चतुर्लघु । अथापरं गणं सङ्क्रामति ततस्तैरन्यगणसाधुभिर्भण्यते-इहापि गृहिणः क्रोधनाः सन्ति ततस्तत्रैव व्रज ॥

इदमेव सुव्यक्तमाह-

[भा.५५७८] इह वि गिही अविसहणा, न य वोच्छिन्ना इहं तुह कसाया ।
अन्नेसिं पाऽऽयासं, जनइस्ससि वच्च तत्थेव ॥

वृ- 'इहापि' ग्रामे गृहिणः 'अविषहणाः' क्रोधनाः सन्ति, न चेह समागतस्य तव कषाया व्यवच्छिन्नाः, अतः 'अन्येषामपि' अस्मदादीनामायासं जनयिष्यसि तस्मात तत्रैव व्रज ॥

[भा.५५७९] सिट्ठम्मि न संगिण्हति, संकंतम्मि उ अपेसणे लघुगा ।
गुरुगा अजयणकहणे, एगतरपदोसतो जं च ॥

वृ- अनुपशान्ते साधौ गणान्तरं सङ्क्रान्ते मूलाचार्येण साधुसङ्घाटकस्तत्र प्रेषणीयः । तेन च सङ्घाटकेन 'शिष्टे' कथिते सति द्वितीयाचार्यो न सङ्गृह्णीयात् । अथ मूलाचार्यः सङ्घाटकं न प्रेषयति तदा चतुर्लघु । सङ्घाटको यद्ययतनया कथयति ततश्चतुर्गुरु । अयतनाकथनं नाम-बहुजनमध्ये गत्वा भणति-एष निर्धर्मा गृहिभिः सममधिकरणं कृत्वा समायातः, सकलेनापि गच्छेन भणितो नोपशान्तः । एवमयतनया कथिते स साधुरेकतरस्य-गृहिणः साधुसङ्घाटकस्य मूलाचार्यस्य वा प्रद्वेषतो यत् करिष्यति तन्निष्पन्नं प्रायश्चित्तम् ॥ तस्मादयं विधि-

[भा.५५८०] उवसामितो गिहत्थो, तुमं पि खामेहि एहि वच्चाहि ।
दोसा हु अनुवसंते, न य सुज्झति तुज्झ सामइगं ॥

वृ- पूर्वं गुरूणामेकान्ते कथयित्वा ततः स्वयमेकान्ते स भण्यते-उपशामितः स गृहस्थः, एहि

व्रजामः, त्वमपि तं गृहस्थं क्षामय, अनुपशान्तस्येह परत्र च बहवो दोषाः, समभावः सामायिकं तच्चैवं सकषायस्य भवतः 'न शुध्यति' न शुद्धं भवति। एवमेकान्ते भणित यदि नोपशाम्यति ततो गणमध्येऽप्येवमेव भणनीयः ॥ ततोऽपि कश्चिन्नोपशाम्येत् प्रत्युत स्वचेतसि चिन्तयेत् 'तस्य गृहिणो निमित्तेनेहाप्यवकाशं न लभे' ततः-

[भा.५५८१] तमतिमिरपडलभूतो, पावं चिंतेइ दीहसंसारी।
पावं ववसिउकामे, पच्छित्ते मग्गणा होति ॥

वृ- कृष्णचतुर्दशीरजन्यां भास्वरद्रव्याभावस्तम उच्यते, तस्यामेव च रात्रौ यदा रजो-धूमधूमिका भवति तदा तमस्तिमिरं भण्यते, यदा पुनस्तस्यामेव रजन्यां रजःप्रभृतयो मेघदुर्दिनं च भवति तदा तमस्तिमिरपटलमभिधीयते। यथा तत्रैवान्धकारे पुरुषः किञ्चिदपि न पश्यति एवं यस्तीव्र-तीव्रतर-तीव्रतमेन कषायोदयेनान्धीभूतः स तमस्तिमिरपटलभूतो भण्यते, भूतशब्दस्येहोपमार्थ-वाचकत्वात्। एवम्भूतश्चेह-परलोकहितमपश्यन् दीर्घसंसारी तस्य गृहस्थस्योपरि 'पापम्' 'ऐश्वर्याद् जीविताद्वा भ्रंशयिष्यामि' इति रूपं चिन्तयति। एवं च पापं कर्तुं व्यवसिते तस्मिन्निदं प्रायश्चित्ते मार्गणा भवति ॥

[भा.५५८२] वच्चामि वच्चमाणे, चउरो लहुगा य होंति गुरुगा य।
उग्गिण्णम्मि य छेदो, पडियम्मि मूलं च जं जत्थ ॥

वृ- 'व्रजामि, तं गृहस्थं व्यपरोपयामि' इति सङ्कल्पे चतुर्लघवः। पदभेदादारस्य पथि व्रजतश्चतुर्गुरवः। यष्टि-लोष्टादिकं प्रहरणं मार्गयति षड्लघवः प्रहरणे लब्धे गृहीते च षड्गुरवः। उद्गीर्णे प्रहारे छेदः। प्रहारे पतिते यदि न म्रियते ततश्छेद एव। अथ मृतस्ततो मूलम्। यच्च तत्र परितापनादिकं सम्भवति तत् तत्र वक्तव्यम् ॥ एते चापरे दोषाः-

[भा.५५८३] तं चेव निट्ठवेती, बंधन निच्छुभण कडगमद्दो य।
आयरिए गच्छम्मि य, कुल गण संघे य पत्थारो ॥

वृ- स गृहस्थः 'तं' संयतं वधार्थमागतं दृष्ट्वा कदाचित् तत्रैव 'निष्ठापयति व्यापादयति, पाशैर्वा बन्धापयति ग्राम-नगरादेर्वा निर्धाटयति, कटकमर्देन वा मृद्नाति, अथवा "कटकमर्द एकस्य रुष्टः सर्वमपि गच्छं व्यापादयति, यथा पालकः स्कन्दकार्यगच्छम्। अथवा बन्धन-निष्काशनादिकमाचार्यस्यापरगच्छस्य वा करोति। तथा कुलसमवायं कृत्वा कुलस्य बन्धनादिकं कुर्यात्, एवं गणस्य वा सङ्घस्य वा। एष प्रस्तारः ॥ एवमेकाकिनो व्रजत आरोपणा दोषाश्च भणिताः। अथ सहायसहितस्यारोपणामाह-

[भा.५५८४] संजतगणे गिहिगणे, गामे नगरे च देस रज्जे य।
अहिवति रायकुलम्मि य, जा जहिं आरोवणा भणिया ॥

वृ- बहवः संयता- संयतगणः तं सहायं गृह्णाति। एवं गृहिगणं वा सहायं गृह्णाति। स च गृहिगणो ग्रामं वा नगरं वा देशो वा राज्यं वा भवेत्, ग्रामदिवास्तव्यजनसमुदाय इत्यर्थः। एतेषां वा संयतादीनां येऽधिपतयस्तान् वा सहायत्वेन गृह्णाति, अन्यद्वा राजकुलं गहीत्वा गच्छति, यथा कालकाचार्येण शकराजवृन्दम्। अत्र चैकाकिनो या 'यत्र' सङ्कल्पादावारोपणा भणिता सैवेहापि द्रष्टव्या ॥ एतदेव व्याचष्टे-

[भा.५५८५] संजयगणो तदधिवो, गिही तु गाम पुर देस रज्जे वा ।
एतेसिं चिय अहिवा, एगतरजुतो उभयतो वा ॥

वृ- 'संयतगणः' प्रतीतः । तेषां-संयतानामधिपः तदधिपः, आचार्य इत्यर्थः । ये तु गृहिणस्ते ग्राम-पुर-देश-राज्यवास्तव्याः एतेषामधिपतयो वा भवेयुः । तत्र ग्रामादिपति-भोगिकादिकः, पुराधिपति-[illegible], देशाधिपति-[illegible], राज्याधिपति-महामन्त्री राजा वा । एतेषामेकतरेणोभयेन वा युक्तो व्रजति ॥ तत्रेयं प्रायश्चित्तमार्गणा-

[भा.५५८६] तहि वच्चंते गुरुगा, दोसु तु छल्लहुग गहणे छग्गुरुगा ।
उग्गिणि पहरणे छेदो, मूलं जं जत्थ वा पंथे ॥

वृ- संयतगणेन तदधिपेन वा उभयेन वा सहाहं व्रजामि' इति सङ्कल्पे चतुर्लघु । पदभेदमादी कृत्वा तत्र व्रजतश्चतुर्गुरु । प्रहरणस्य मार्गणे दर्शने च द्वयोरपि षड्लघु । प्रहरणस्य ग्रहणे षड्गुरु । उद्गीर्णे प्रहरणे छेदः । प्रहारे दत्ते मूलम् । 'यद् वा' परितापनादिकं पृथिव्यादिविनाशनं 'यत्र' पथि ग्रामे वा करोति तन्निष्पन्नमपि मन्तव्यम् । तथा गृहस्थवर्गेऽपि 'ग्रामेण वा ग्रामाधिपतिना यावद् राज्येन वा राज्याधिपतिना वा उभयेन वा सह व्रजामि' इति सङ्कल्पे चतुर्गुरु । पथि गच्छतः प्रहरणं च गृह्णतः षड्लघु । गृहीते षड्गुरु । शेषं प्राग्वत् । एवं भिक्षोः प्रायश्चित्तमुक्तम् ॥

[भा.५५८७] एसेव गमो नयमा, गणि आयरिए य होति नायव्वो ।
नवरं पुन नाणत्तं, अणवठ्ठप्पो य पारंची ॥

वृ- एष एव गमो नियमाद् 'गणिनः' उपाध्यायस्य आचार्यस्य चशब्दाद् गणावच्छेदिकस्य वा मन्तव्यः । नवरं पुनरत्र नानात्वम्-अधस्तादेकैकपदह्रासेन यत्र भिक्षोर्मूलं तत्रोपाध्यायस्यानवस्थाप्यम्, आचार्यस्य पाराञ्चिकम् ॥ तपोर्हे च प्रायश्चित्तमित्थं शेषयितव्यम्-

[भा.५५८८] भिक्खुस्स दोहि लहुगा, गणवच्छे गुरुग एगमेगेणं ।
उज्झाए आयरिए, दोहि वि गुरुगं च नाणत्तं ॥

वृ- भिक्षोरेतानि प्रायश्चित्तानि 'द्वाभ्यामपि' तपः-कालाभ्यां लघुकानि, गणावच्छेदिकस्यैकतरेण तपसा कालेन वा गुरुकाणि, उपाध्यायस्याचार्यस्य च 'द्वाभ्यामपि' तपः-कालाभ्यां गुरुकाणि । एतद् 'नानात्वं' विशेषः ॥

[भा.५५८९] काऊण अकाऊण व, उवसंत उवठ्ठियस्स पच्छित्तं ।
सुत्तेण उ पट्ठवणा, असुत्ते रागो व दोसो वा ॥

वृ- गृहस्थस्य प्रहारादिकमपकारं कृत्वाऽकृत्वा वा यदि उपशान्तः-निवृत्तः प्रायश्चित्तप्रतिपत्त्यर्थं चालोचनाविधानपूर्वकमपुनः करणेनोपस्थितस्तदा प्रायश्चित्तं दातव्यम् । कथम् ? इत्याह- सूत्रेण प्रायश्चित्तं प्रस्थापनीयम् । असूत्रोपदेशेन तु प्रस्थापयतो रागो वा द्वेषो वा भवति, प्रभूतमापन्नस्य स्वल्पदाने रागः स्तोकमापन्नस्य प्रभूतदाने द्वेषः ॥ एवं राग-द्वेषाभ्यां प्रायश्चित्तदाने दोषमाह-

[भा.५५९०] थोवं जति आवन्ने, अतिरेगं देति तस्स तं होति ।
सुत्तेण उ पट्ठवणा, सुत्तमनिच्छंते निज्जुहणा ॥

वृ- स्तोकं प्रायश्चित्तमापन्नस्य यदि अतिरिक्तं ददाति ततो यावताऽधिकं तावत् 'तस्य' प्रायश्चित्तदातुः प्रायश्चित्तम् आज्ञादयश्च दोषाः, अथोनं ददाति ततो यावता न पूर्यते तावद्

आत्मना प्राप्नोति, अतः सूत्रेण प्रस्थापना कर्तव्या । यस्तु सूत्रोक्तं प्रायश्चित्तं नेच्छति स वक्तव्यः- अन्यत्र शोधिं कुरुष्व । एषा निर्यूहणा भण्यते ॥ अस्या एव पूर्वार्द्धं व्याचष्टे-

[भा.५५९१] जेनऽधियं ऊनं वा, ददाति तावतिअमप्पणा पावे ।
अहवा सुत्तादेसा, पावंति चतुरो अनुग्घाता ॥

वृ- 'येन' यावता अधिकं ऊनं वा ददाति तावद् आत्मना प्राप्नोति । अथवा सूत्रादेशादूनाऽतिरिक्तं ददानश्चतुरोऽनुद्धातान् मासान् प्राप्नोति । तच्चेदं निशीथदशमोद्देशकान्तर्गतं सूत्रम्-

जे उग्घाइए अनुग्घाइयं देइ जे अनुग्घाइए उग्घाइयं देइ से आवज्जइ चाउम्मासियं परिहारट्ठाणं अनुग्घाइयं ॥ अथ द्वितीयपदमाह-

[भा.५५९२] बितियं उप्पाएउं, सासनपंते असज्झे पंच वि पयाइं ।
आगाढे कारणम्मि, रायसंसारिए जतणा ॥

वृ- द्वितीयपदं नाम-अधिकरणमुत्पादयेदपि । सः 'शासनप्रान्तः' प्रवचनप्रत्यनीकः 'असाध्यश्च' न यथा तथा शासितुं शक्यते ततस्तेन सममधिकरणमुत्पाद्य शिक्षणं कर्तव्यम् । तत्र च स्वयमसमर्थ संयत-ग्राम-नगर-देश-राज्यलक्षणानि पञ्चापि पदानि सहायतया गृह्णीयात् । आगाढे कारणे राजसंसारिका-राजान्तरस्थापना तामपि यतनया कुर्यात् । तथाहि-यदि राजाऽतीव प्रवचनप्रान्तः अनुशिष्ट्यादिभिरनुकूलोपायैर्नोपशाम्यति ततस्तं राजानं स्फेटयित्वा तद्वंशजमन्यवंशजं वा भद्रकं राजानं स्थापयेत् ॥ यश्च तं स्फेटयति स ईदृशगुणयुक्तो भवति-

[भा.५५९३] विज्जा-ओरस्सबली, तेयसलद्धी सहायलद्धी वा ।
उप्पादेउं सासति, अतिपंतं कालकज्जो वा ॥

वृ- यो विद्याबलेन युक्तो यथा आर्यखपुटः, औरसेन वा बलेन युक्तो यथा बाहुबली, तेजोलब्ध्या वा सलब्धिको यथा ब्रह्मदत्तः सम्भूतभवे, सहायलब्धियुक्तो वा यथा हरिकेशबलः । ईदृशोऽधिकरणमुत्पाद्य 'अतिप्रान्तम्' अतीवप्रवचनप्रत्यनीकं शास्ति, 'कालिकाचार्य इव' यथा कालकाचार्यो गर्दभिल्लराजानं शासितवान् । कथानकं सुप्रतीतत्वान्न लिख्यते ॥

मू. (१३६) *परिहारकप्पट्ठियस्स नं भिक्खुस्स कप्पइ आयरियउवज्झाएणं तद्दिवसं एगगिहंसि पिंडवायं दवावित्तए, तेन परं नो से कप्पइ असनवा पानं वा खाइमं वा साइमं वा दाउं वा अनुप्पदाउं वा । कप्पइ से अन्नयरं वेयावडियं करित्तए, तं जहा-उट्ठावणं वा निसिआवणं वा तुयट्टावणं वा उच्चारपासवण-खेल-सिंघाणविगिंचणं वा विसोहणं वा करित्तए । अह पुन एवं जाणिज्जा-छिन्नावाएसु पंथेसु आउरे झिंझिए पिवासिए, तवस्सी दुब्बले किलंते मुच्छिज्ज वा पवडिज्ज वा एवं से कप्पइ असणं वा ४ दाउं वा अनुप्पदाउं वा ।*

वृ- अस्य सम्बन्धमाह-

[भा.५५९४] पच्छित्तमेव पगतं, सहुस्स परिहार एव न उ सुद्धो ।
तं वहतो का मेरा, परिहारियसुत्तसंबंधो ॥

वृ- प्रायश्चित्तमेवानन्तरसूत्रे प्रकृतम्, तच्च 'सहिष्णोः' समर्थस्य प्रथमसंहननादिगुणयुक्तस्य परिहारतपोरूपमेव दातव्यम्, न पुनः शुद्धतपोरूपम्, अतः 'तत्' परिहारतपो वहतः 'का मर्यादा' का सामाचारी ? इति । अस्यां जिज्ञासायामिदं परिहारिकसूत्र मारभ्यते । एष सम्बन्धः ॥

[भा.५५९५] बीसुंभणसुत्ते वा, गीतो बलवं च तं परिट्ठप्पा ।
चोयण कलहम्मि कते, तस्स उ नियमेण परिहारो ॥

वृ- अथवा 'विष्वग्भवनसूत्रे' मरणसूत्रे गीतार्थ 'बलवांश्च' प्रथमसंहननयुक्तः 'तद्' मृतकं परिष्ठाप्य काष्ठमानयन् गृहस्थेन नोदितो यदि कलहं करोति तदा तस्य नियमेन परिहारो दातव्यः, तस्य च विधिरनेनाभिधीयते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-परिहारकल्पस्थितस्य भिक्षोः कल्पते आचार्योपाध्यायेन 'तद्दिवसम्' इन्द्रमहाद्युत्सवदिने एकस्मिन् गृहे 'पिण्डपातं' विपुलमवगाहिमादिभक्तलाभं दापयितुम् । ततः परं "से" तस्य नो कल्पते अशनं वा पानं वा खादिमं वा स्वादिमं वा दातुमनुप्रदातुं वा । तत्र दातुं एकशः, अनुप्रदातुं पुनः पुनः । किन्तु कल्पते "से" तस्य परिहारिकस्यान्यतरद् वैयावृत्यं कर्तुम् । तद्यथा-उत्थापनं वा निषादनं वा त्वग्वर्तापनं वा उच्चार-प्रश्रवण-खेल-सिङ्घानादीनां च विवेचनं वा-परिष्ठापनं 'विशोधनं वा' उच्चारादिखरण्टितोपकरणादेः प्रक्षालनं कर्तुम् । अथ पुनरेवं जानीयात्-'छिन्नापातेषु' व्यवच्छिन्नगमा-ऽऽगमेषु पथिषु 'आतुरः' ग्लानः 'झिञ्झितः' बुभुक्षार्त्त 'पिपासितः' तृषितो न शक्नोति विवक्षितं ग्रामं प्राप्तुम, अथवा ग्रामादावपि तिष्ठतां सः 'तपस्वी' षष्ठा-ऽष्टमादिपरिहारतपःकर्म कुर्वन् दुर्बलो भवेत्, ततो भिक्षाचर्यया क्लान्तः सन् मूर्च्छेद्वा प्रपदेद्वा, एवं "से" तस्य कल्पते अशनादिकं दातुमनुप्रदातुं वा । एष सूत्रार्थः ॥ अथ निर्युक्तिविस्तरः-

[भा.५५९६] कंटगमादीसु जहा, आदिकडिल्ले तहा जयंतस्स ।
अवसं छलणाऽऽलोयण, ठवणा जुत्ते य वोसग्गो ॥

वृ- ननु स भगवान् 'प्रमादो न कर्तव्यः' इत्युपदेशेन संयमाध्वनि गच्छन् कथं परिहारकल्पं प्राप्तः ? इति उच्यते-यथा कण्टकाकीर्णे मार्गे उपयुक्तस्यापि कण्टको लगति, आदिशब्दाद् विषमे वा यथोपयुक्तोऽप्यागच्छन् प्रपतति, कृतप्रयत्नो वा यथा नदीवेगेन ह्रियते, सुशिक्षितोऽपि यथा स्वङ्गेन लाञ्छयते; एवं कण्टकादिस्थानीयमादिकडिल्लम्-आद्यगहनं यद् उद्गमोत्पादनैषणारूपं ज्ञानादिरूपं वा तत्र यतमानस्याप्यवश्यं कस्यापि च्छलना भवति, छलितेन चावश्यमालोचना दातव्या । ततो यः संहनना-ऽऽगमादिभिर्गुणैर्युक्तः-सहितस्तस्य 'स्थापना' परिहारतपः प्रायश्चित्तदानं कर्तव्यम् । तत्र चायं विधिः-प्रशस्तेषु द्रव्य-क्षेत्र-काल-भावेषु तस्य साधोर्निर्विघ्नतपः कर्मसमाप्तये शेषसाधूनां च भयजननार्थं सकलेनापि गच्छेन 'व्युत्सर्गः' कायोत्सर्गः कर्तव्यः । तत्राचार्यो भणति-"एस साधुस्स निरवसग्गनिमित्तं ठामि काउस्सग्गं जाव वोसिरामि" ततश्चतुर्विंशतिस्तवमनुप्रेक्ष्य "नमो अरिहंताणं" इति भणित्वा चतुर्विंशतिस्तवं मुखेनोच्चार्य भणति ॥

भा. (५५९७)एस तवं पडिवज्जति, न किंचि आलवति मा न आलवहा ।
अत्तट्ठचिंतगस्सा, वाघातो भे न कायव्वो ॥

वृ- 'एषः' आत्मविशुद्धिकारकः परिहारतपः प्रतिपद्यते अतो न किञ्चिद् युष्मानालपति, अत्र "सत्सामीप्ये सद्वद्वा" इति सूत्रेण भविष्यदर्थे वर्तमाना, ततो नालप्स्यतीत्यर्थः; यूयमपि "णं" एनं माऽऽलपत । एष युष्मान् सूत्रा-ऽर्थौ शरीरोदन्तं वा न पृच्छति, यूयमप्येनं मा पृच्छत। एवमन्येष्वपि परिवर्तनादिपदेषु भावनीयम्। इत्थमात्मार्थचिन्तकस्यास्य ध्यानस्य परिहारतपसश्च व्याघातः "भे" भवद्भिर्न कर्तव्यः ॥

अथ यानि पदानि तेन साधुभिश्च परस्परं परिहर्तव्यानि तानि दर्शयति-

[भा.५५९८]　　आलावण पडिपुच्छण, परियट्टुट्ठाण वंदनग मत्ते ।
　　　　पडिलेहण संघाडग, भत्तदान संभुंजणा चेव ॥

वृ- 'आलपनं' सम्भाषणमनेन युष्माकं न कर्तव्यं युष्माभिरप्यस्य न विधेयम् । एवं सूत्रा-ऽर्थयोः शरीरवार्तायां वा प्रतिप्रच्छनम्, पूर्वाधीतस्य श्रुतस्य परिवर्तनम्, कालग्रहणनिमित्तं ''उट्ठाणं''ति उत्थापनम्, रात्रौ सुप्तोत्थितैर्वन्दनककरणम्, खेल-कायिका-संज्ञामात्रकाणां समर्पणम्, उपकरणस्य प्रत्युपेक्षणं भिक्षा-विचारादौ गच्छतां सङ्घाटकेन भवनम्, भक्तस्य वा पानकस्य वा दानम्, एकमण्डल्यां वा सम्-एकीभूय भोजनं न कर्तव्यम् ॥ अथ कुर्वन्ति तत इदं प्रायश्चित्तम्-

[भा.५५९९]　　संघाडगओ जाव उ, लहुओ मासो दसण्ह उ पयाणं ।
　　　　लहुगा य भत्तदाणे, संभुंजण होंतऽणुग्घाता ॥

वृ- एतेषामालपनादीनां दशानां पदानां मध्यादालपनादारभ्य यावत् सङ्घाटकपदं तावद् अष्टानां पदानां करणे गच्छसाधूनां प्रत्येकं मासलघु । अथ भक्तदानं कुर्वन्ति ततश्चतुर्लघु । एकमण्डल्यां सम्भुञ्जते ततस्तेषामेव चत्वारोऽनुद्धाता मासाः ॥ परिहारकस्य इदं प्रायश्चित्तम्-

[भा.५६००]　　अट्ठण्हं तु पदाणं, गुरुओ परिहारियस्स मासो उ ।
　　　　भत्तपदाने संभुंजणे य चउरो अनुग्घाया ॥

वृ- पारिहारिकस्याष्टानां पदानां सङ्घाटकान्तानां करणे मासगुरु । भक्तप्रदानं सम्भोजनं वा कुर्वतश्चत्वारो मासा अनुद्धाताः ॥ इमे च दोषाः-

[भा.५६०१]　　कुव्वंताणेयाणि उ, आणादि विराधना दुवेण्हं पि ।
　　　　देवय पमत्त छलणा, अधिगरणादी य उदितम्मि ॥

वृ- 'एतानि' आलपनादीनि कुर्वतामाज्ञादयो दोषाः, विराधना च 'द्वयोरपि' पारिहारिकगच्छ-साधुवर्गयोर्भवति । प्रमत्तस्य च देवतया छलनम् । अन्येन वा साधुना भणितः- 'किमित्यालपनादीनि करोषि ?' एवं 'उदिते' भणिते सति अधिकरणादयो दोषा भवन्ति ॥

अथ ''कप्पइ० एगगिहंसि'' इत्यादि सूत्रं व्याख्यानयति-

[भा.५६०२]　　विउलं व भत्त-पानं, दट्ठूण साहुवज्जणं चेव ।
　　　　नाऊण तस्स भावं, संघाडं देंति आयरिया ॥

वृ- सङ्खड्यामुत्सवे वा विपुलं भक्त-पानं साधुभिरानीतं दृष्ट्वा तद्विषय ईषदभिलाषो भवेत्, 'साधुवर्जनां च' 'साधुभिः खदुश्चरितैः परित्यक्तोऽहम्' इत्येवं मनसि चिन्तयेत् । एवं ज्ञात्वा तदीयं भावमाचार्या सङ्घाटकं ददति ॥ अथेदमेव भावपदं व्याचष्टे-

[भा.५६०३]　　भावो देहावत्था, तप्पडिबद्धो व ईसि भावो से ।
　　　　अप्पातित हयतण्हो, वहति सुहं सेसपच्छित्तं ॥

वृ- भावो नाम 'देहावस्था' देहस्य दुर्बलता 'तत्प्रतिबद्धो वा' विपुलभक्त-पानविषय ईषद् 'भावः' अभिलाषः तस्य सञ्जातः, ततश्च यथाभिलषिताहारेणाप्यायितो हततृष्णश्च सन् सुखेनैव शेषं प्रायश्चित्तं वहतीति मत्वा सङ्घाटको दीयते ॥

अमुमेवार्थमन्याचार्यपरिपाट्या किञ्चिद् विशेषयुक्तमाह-

[भा.५६०४] देहस्स तु दोबल्लं, भावो ईसिं व तप्पडीबंधो ।
अगिलाए सोहिकरणेण वा वि पावं पहीणं से ॥

वृ- देहस्य दौर्बल्यम् ईषद्वा मनोज्ञाहारविषयप्रतिबन्धः, एष भाव उच्यते । यद्वा अग्लान्या शोधिकरणेन पापं तस्य प्रक्षीणप्रायम् एवंविधं भावमाचार्या जानीयुः ॥

कतं पुनरेतद् जानन्ति ? इति उच्यते-

[भा.५६०५] आगंतु एयरो वा, भावं अतिसेसिओ से जाणिज्ञा ।
हेऊहि व से भावं, जाणिज्ञा अनतिसेसी वि ॥

वृ- आगन्तुकः 'इतरो वा' वास्तव्यः 'अतिशयी' नवपूर्वधरादिरवधिज्ञानादियुक्तो वा स एवंविधं भावं "से" तस्य जानीयात् । अथवा अनतिशयज्ञान्यपि बाह्यैराकारादिभिर्हेतुभिस्तस्य भावं जानीयात् ॥ ततः-

[भा.५६०६] सक्कमहादी दिवसो, पनीयभत्ता व संखडी विपुला ।
धुवलंभिग एगघरं, तं सागकुलं असागं वा ॥

वृ- शक्रमहादेर्दिवसो यदा सञ्जातस्तदा तं क्वापि श्राद्धगृहे नयन्ति, प्रणीतभक्ता वा काचिद् विपुला सङ्खडिस्तत्र वा विसर्जयन्ति । तत्र 'ध्रुवलम्भिकम्' अवश्यसम्भावनीयलाभमेकमेव गृहं विद्यते । इदं च श्रावकगृहमश्रावकगृहं वा भवेत् उभयत्रापि गुरवः स्वयं प्रथमतो गच्छन्ति, तं च पिहारिकं-आर्य ! समागन्तव्यममुकगृहे पात्रकमुद्ग्राह्य त्वयेति । ततस्तत्र प्राप्तस्य विपुलमवगाहिमादिकं भक्तं दापयन्ति । अथासौ तत्र गन्तुं न शक्नोति ततो भाजनानि गृहीत्वा स्वयमानीय गुरवो ददति ॥ एतावता "कप्पइ आयरि-उवज्झाएणं तद्दिवसं एगगिहंसि पिंडवायं दवावित्तए" इति सूत्रं व्याख्यातं मन्तव्यम् । अथ "तेन परं नो से कप्पइ" इत्यादि सूत्रं व्याख्याति-

[भा.५६०७] भत्तं वा पानं वा, न दिंति परिहारियस्स न करेंति ।
कारणे उट्ठवणादी, चोयग गोणीय दिट्ठंतो ॥

वृ- भक्तं वा पानकं वा ततः परं परिहारिकस्य निष्कारणे न प्रयच्छन्ति, न वा किमप्यालपनादिकं कुर्वन्ति । 'कारणे तु' यदा उत्थानादिकं कर्तुं क्षीणदेहतया न शक्नोति तत उत्थापनादिकं कारयन्ति। अत्र नोदकः प्राह-किं प्रायश्चित्तं राजदण्ड इवावशेन वोढव्यं येनेऽशीमवस्थां प्राप्तस्यापि भक्तपानमानीय न दीयते ? । सूरिराह-गोदृष्टान्तोऽत्र क्रियते-यथा नवप्रावृषि या गौरुत्थातुं न शक्नोति तां गोप उत्थापयति अटवीं च चारिचरणार्थं नयति, या तु गन्तुं न शक्नोति तस्या गृहे आनीय प्रयच्छति । एवं पारिहारिकोऽपि यत् कर्तुं शक्नोति तत् कार्यते, यत् पुनरुत्थानादिकं कर्तुं न शक्नोति तद् अनुपारिहारिकः करोति ॥

कथं पुनरसौ करोति ? इत्याह-

[भा.५६०८] उट्ठेज्ञ निसीएज्ञा, भिक्खं हिंडेज्ञ भंडगं पेहे ।
कुवियपियबंधवस्स व, करेइ इयरो वि तुसिणीओ ॥

वृ- स परिहारिकस्तपसा क्लान्तो ब्रवीति-उत्तिष्ठेयं निषीदेयं भिक्षां हिण्डेयं भाण्डकं प्रत्युपेक्षेयम्; एवमुक्तेऽनुपारिहारिक उत्थापनादिकं सर्वमपि करोति । कथम् ? इत्याह-यथा प्रियबान्धवस्य कुपितः कश्चिद् बन्धुर्यत् करणीयं तत् तूष्णीकः करोति, एवम् 'इतरोऽपि' अनुपारिहारिकः

सर्वमपि तूष्णीकभावेन करोति ॥ अथ भिक्षाहिण्डनादौ विधिमाह-

[भा.५६०९] नीनेंति पवेसेंति व, भिक्खगए उग्गहं तउग्गहियं ।
रक्खति य रीयमाणं, उक्खिवइ करे य पेहाए ॥

वृ- भिक्षां गतस्य पारिहारिकस्य 'अवग्रहं' प्रतिग्रहं तेन-पारिहारिकेण गृहीतमनुपारिहारिकः पात्रबन्धाद् निष्काशयति तत्र वा प्रवेशयति, 'रीयमाणं च' पर्यटन्तं श्वान-गवाद्युपद्रवात् प्रपतनादेर्वा रक्षति, भाण्डप्रत्युपेक्षणायामशक्तस्य 'करौ' हस्तावनुपरिहारिक उत्क्षिपति येन स्वयमेव प्रत्युपेक्षते। आह-यदि नामाऽशक्तस्तर्हि कस्मादसौ भिक्षाहिण्डनादिकं विधाप्यते ? इत्याह-

[भा.५६१०] एवं तु असढभावो, विरियायारो य होति अनुचिन्नो ।
भयजननं सेसाण य, तवो य सप्पुरिसचरियं च ॥

वृ- 'एवं' यथाशक्ति कुर्वतस्तस्याशठभावो भवति, वीर्याचारश्चानुचीर्णो भवति, 'शेषाणामपि' साधूनां भयजननं कृतं भवति, तपः सम्यगनुपालितं भवति, सत्पुरुषचरितं च कृतं भवति ॥ अथ "छिन्नवाएसु पंथेसु" इत्यादि सूत्रं व्याचष्टे-

[भा.५६११] छिन्नावात किलंते, ठवणा खेत्तस्स पालणा दोण्हं ।
असहुस्स भत्तदानं, कारणे पंथे व पत्ते वा ॥

वृ- छिन्नापातेऽध्वनि गच्छन् परिहारिको यदि बुभुक्षया तृषा वा क्लान्तो ग्रामं प्राप्तुं न शक्नोति ततोऽनुपारिहारिको भक्त-पानं गृहीत्वा तस्यान्तरग्रामे ददाति । अथवा स भगवान् अनिगूहितबल-वीर्यो बहिर्ग्रामे भिक्षां पर्यटि, तत्र हिण्डित्वा तपःक्लान्तो यदा न शक्नोत्यागन्तुं तत आगन्तुमसमर्थे तस्मिन् क्षेत्रस्य स्थापना कर्तव्या, मूलग्राम एव स हिण्डते न बहिर्भिक्षाचर्यां गच्छतीत्यर्थः । "पालणा दोण्हं"ति 'द्वयोरपि' पारिहारिका-ऽनुपारिहारिकयोः पालना कर्तव्या । कथम् ? इत्याह-"असहुस्स भत्तदानं कारणे" त्ति यदि स पारिहारिकः स्वग्रामेऽपि हिण्डितुं न शक्नोति ततोऽनुपारिहारिको हिण्डित्वा तस्य प्रयच्छति अनुपारिहारिकस्तु मण्डलीतः समुद्दिशति; अथानुपारिहारिकोऽपि ग्लानत्वेनासहिष्णुर्भिक्षां गन्तुं न शक्नोति तत एवंविधे कारणे द्वयोरपि गच्छसत्काः साधवः प्रयच्छन्ति; एवं द्वावपि पालितौ-अनुकम्पितौ भवतः । एवं स्थानस्थितानां यतना भणिता । सम्प्रति पूर्णे मासे वर्षावासे वा ग्रामानुग्रामं विहरतां "पंथे व पत्ते व"त्ति पथि वा ग्रामे प्राप्तानां वा यतनाऽभिधीयते ॥

[भा.५६१२] उवयंति डहरगामं, पत्ता परिहारिए अपावंते ।
तस्सऽट्ठा तं गामं, ठविंति अन्नेसु हिंडंति ॥

वृ- पथि व्रजन्तो डहरं-लघुतरं ग्रामं प्राप्ताः परिहारिकश्चाद्यापि न प्राप्नोति ततस्तस्यार्थं तं ग्रामं स्थापयन्ति । स्वयं तु गच्छसाधवोऽन्येषु ग्रामेषु भिक्षां हिण्डन्ते ॥

[भा.५६१३] वेलइवाते दूरम्मि य गामे तस्स ठाविउमद्धं ।
अद्धं अडंति सो वि य, अद्धमडे तेहि अडिते वा ॥

वृ- अथ यावत् ते गच्छन्ति तावदन्यग्रामेषु वेलाया अतिपातो भवति दूरे वा स ग्रामस्ततः 'तस्यैव' मूलग्रामस्यार्द्धं परिहारिकस्यार्थाय स्थापयित्वा द्वितीयमर्द्धं स्वयमटन्ति । एवं तावत् पथि वर्तमाने पारिहारिके भणितम् । यत्र तु साधवः पारिहारिकश्च समकमेव प्राप्तास्तत्राप्यर्द्धे ग्रामे

साधवो हिण्डन्तेऽर्द्धं पारिहारिकः । अथ साधूनामर्द्धं पर्यटतां न पूर्यते ततस्तैः सर्वस्मिन् ग्रामे पर्यटिते पारिहारिकः पश्चात् पर्यटति ॥

अथ पारिहारिको यथा कारणे गच्छसाधूनां वैयावृत्यं करोति तथाऽभिधीयते-

[भा.५६१४] बिइयपय कारणम्मि, गच्छे वाऽऽगाढे सो तु जयणाए ।
अनुपरिहारिओ कप्पट्ठितो व आगाढ संविग्गो ॥

वृ-द्वितीयपदे 'कारणे' कुलादिकार्ये पारिहारिकोऽपि साधूनां वैयावृत्यं करोति, यथा पाराञ्चिकः "अच्छउ महानुभागो, जहासुहं गणसयागरो संघो ।" इत्यादि भणित्वा वैयावृत्यं कृतवान् । तथा गच्छे वा आगाढं कारणं समजनि ततः सोऽपि 'यतनया' वक्ष्यमाणया भक्त-पानाहरणादिकं वैयावृत्यं करोति । 'अनुपरिहारिय" इत्यादि पश्चार्द्धम्-अथ गच्छसाधवः प्रज्ञप्तिमहाश्रुतादीनामन्यतरमागाढयोगं प्रतिपन्ना उपाध्यायश्च ग्लानः कालगतो वा ततोऽनुपारिहारिकः कल्पस्थितो वा वाचनां गच्छस्य ददाति । अथ तावप्यशक्तौ ततः परिहारिकोऽपि वाचनां ददाति । स च तां ददानोऽपि संविग्न एव मन्तव्यः । इह मा भूत् कस्यापि मति-पूर्वसूत्रेण प्रतिषिद्धं सूत्रार्थदानादिकमनेनानुज्ञातम्, एवं पूर्वापरविरुद्धमाचरन् असंविग्नोऽसाविति तन्मतिव्यपोहार्थं संविग्नग्रहणम् ॥

अथ गच्छस्यागाढकारणं व्याचष्टे-

[भा.५६१५] मयण च्छेव विसोमे, देंति गणे सो तिरो व अतिरो वा ।
तब्भाणेसु सएसु व, तस्स वि जोगं जनो देति ॥

वृ-मदनकोद्रवकूरेण गच्छः सर्वोऽपि ग्लानः जातः, छेवकम्-अशिवं तेन वा गृहीतः, प्रत्यनीकेन वा विषं दत्तम्, अवमौदर्ये वा न संस्तरति; तत एवमागाढे कारणे 'सः' पारिहरिको भक्त-पानमौषधानि वा 'तद्भाजनेषु' गच्छसत्केषु पात्रकेषु तेषामभावे स्वभाजनेषु वा गृहीत्वा तिरोहितमतिरोहितं वा 'गणे' गच्छस्य प्रयच्छति । तिरोहितं नाम-स आनीयानुपारिहारिकस्य ददाति सोऽपि गच्छस्यार्पयति, अथानुपारिहारिकोऽपि ग्लानस्तदा कल्पस्थितस्य ददाति सोऽपि तथैव गच्छस्यार्पयति । कल्पस्थितस्यापि ग्लानत्वेऽतिरोहितं-स्वयमेव गच्छस्य ददाति । यच्च तेषां योग्यं जनो ददाति तत् तेषामर्थाय गृह्णाति, यत् तु तस्य योग्यं तद् आत्मनो गृह्णाति ॥

[भा.५६१६] एवं ता पंथम्मि, जत्थ वि य ठिया तहिं पि एमेव ।
बाहिं अडती डहरे, इयरे अद्धद्ध अडिते वा ॥

वृ- एवं यत् पथि गच्छतामभिहितम् । यत्रापि च ग्रामादौ स्थितास्तत्राप्येवमेव मन्तव्यम् । मार्गे च यत्र गच्छो न प्राप्तस्तत्र डहरे ग्रामे पारिहारिकः प्राप्तो बहिर्ग्रामे पर्यटति । "इतरे" ति अथ वेलातिक्रमो दूरे वा स ग्रामः ततस्तत्रैव मूलग्रामेऽर्द्धं पारिहारिकः पर्यटति अर्द्धं गच्छसाधवः, तेन वा अटिते गच्छः पर्यटति ॥ किं बहुना ? पक्षद्वयस्याप्ययं परमार्थ उच्यते-

[भा.५६१७] कप्पट्ठिय परिहारी, अनुपरिहारी व भत्त-पानेनं ।
पंथे खेत्ते व दुवे, सो वि य गच्छस्स एमेव ॥

वृ- पथि वा क्षेत्रे वा द्वयोरपि वर्तमानो ग्लानत्वादौ कारणे कल्पस्थितोऽनुपारिहारिको वा पारिहारिकस्य भक्त-पानेनोपग्रहं करोति । सोऽपि च पारिहारिको गच्छस्यैवमेवोपग्रहं करोति ।

*मू. (१३७) नो कप्पइ निग्गंथाण वा निग्गंथीण वा इमाओ पंच महन्नवाओ महानदीओ*

*उद्दिट्ठाओ गणियाओ वंजियाओ अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा संतरित्तए वा। तं जहा-गंगा जउणा सरऊ कोसिया मही॥*

वृ- अस्य सम्बन्धमाह-

[भा.५६१८] अद्धाणमेव पगतं, तत्थ थले पुव्ववण्णिया मेरा।
जति होज्ज तत्थ तोयं, तत्थ उ सुत्तं इमं होति॥

वृ-अनन्तरसूत्रे "छिन्नावाएसु पंथेसु" इति वचनाद् 'अध्वा' मार्ग एव तावत् प्रकृतः। तत्र च स्थले गच्छतां 'पूर्ववर्णिता' प्रथमोद्देशके अध्वसूत्रे भणिता मर्यादा अवधारणीया। यत्र तु मार्गे तोयं भवति तद्विषयविधिप्रतिपादकमिदं सूत्रं भवति॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या- 'नो कल्पन्ते' न युज्यन्ते, सूत्रे एकवचननिर्देशः प्राकृतत्वात्, निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'इमाः' प्रत्यक्षासन्नाः पञ्च 'महार्णवाः' बहूदकतया महार्णवकल्पा महासमुद्रगामिन्यो वा 'महानद्यः' गुरुनिम्नगाः 'उद्दिष्टाः' सामान्येनाभिहिता यथा महानद्य इति, गणिता यथा पञ्चेति, 'व्यञ्जिताः' व्यक्तीकृता यथा गङ्गेत्यादि, 'अन्तर' मध्ये मासस्य द्विकृत्वो वा त्रिकृत्वो वा उत्तरीतुं वा बाहु-जङ्घादिना सन्तरीतुं वा नावादिना। तद्यथा-गङ्गा १ यमुना २ सरयूः ३ कोशिका ४ मही ५। एष सूत्रार्थः॥ अथ भाष्यकारः कानिचिद् विषमपदानि विवृणोति-

[भा.५६१९] इमाउ त्ति सुत्तउत्ता, उद्दिट्ठ नदीउ गणिय पंचेव।
गंगादि वंजिताओ, बहुओदग महन्नवातो तु॥

वृ- इमा इति प्रत्यक्षवाचिना सर्वनाम्ना सूत्रोक्ता उच्यन्ते। उद्दिष्टा नद्य इति। गणिताः पञ्चेति। व्यञ्जिता गङ्गादिभिः पदैर्व्यक्तीकृताः। यास्तु बहूदकास्ता महार्णवा उच्यन्ते॥

कृता विषमपदव्याख्या भाष्यकृता। अथ निर्युक्तिविस्तरः-

[भा.५६२०] पंचण्हं गहणेणं,सेसा वि उ सूइया महासलिला।
तत्थ पुरा विहरिंसु य, न य तातो कयाइ सुक्खंति॥

वृ- 'पञ्चानां' गङ्गादीनां ग्रहणेन शेषा अपि याः 'महासलिलाः' बहूदका अविच्छेदवाहिन्यस्ताः सूचिता मन्तव्याः। स्याद् बुद्धिः किमर्थं गङ्गादीनां ग्रहणम्? इत्याह-"तत्थ" इत्यादि, येषु विषयेषु गङ्गादयः पञ्च महानद्यो वहन्ति तेषु पुरा साधवो विहृतवन्तो न च ताः कदाचनापि शुष्यन्ति अतस्तासां ग्रहणम्॥

[भा.५६२१] पंच परूवेतूणं नावासंतारिमे उ जं जत्थ।
उत्तरणम्मि वि लहुगा, तत्थ वि आणाइणो दोसा॥

वृ- पञ्चापि महानदीः प्ररूप्य या यादृशी यत्र विषये तां तथा वर्णयित्वा प्रस्तुतमभिधातव्यम्। तच्चेदम्-नौसन्तारिमे यत्रोदकं तत्र यत् षट्कायविराधनामात्मविराधनां वा प्राप्नोति तन्निष्पन्नं प्रायश्चित्तम्। यत्रापि जङ्घादिनोत्तरणं भवति तत्रापि चतुर्लघुकाः, अपिशब्दात् सन्तरणेऽपि चतुर्लघु। 'तत्रापि' उत्तरणे आज्ञादयो दोषाः, किं पुनः सन्तरणे? इत्यपिशब्दार्थः॥

तत्र सन्तरणे तावद्दोषानाह-

[भा.५६२२] अनुकंपा पडिनीया, व होज्ज बहवो उ पच्चवाया ऊ।
एतेसि नाणत्तं, वोच्छामि अहानुपुव्वीए॥

वृ- अनुकम्पादोषाः प्रत्यनीकदोषा बहवो वा प्रत्यपाया नावमारूढानां भवन्ति। एतेषां च 'नानात्वं' विभागं यथाऽऽनुपूर्व्या वक्ष्यामि ॥ तदेवाह-

[भा.५६२३] छुभणं जले थलातो, अन्ने वोयारिता छुभंति साहू।
ठवणं व पत्थिताए, दट्ठुं नावं व आनेती ॥

वृ- साधुं तरणार्थिनं ज्ञात्वा नौवाणिजो नाविको वा अनुकम्पया नावं स्थलाद् जले प्रक्षिपेत्, ये वा पूर्वं नावमारोपितास्तानुदके तटे वा अवतार्य साधून् प्रक्षिपेद् नावमारोपयेदित्यर्थः, सम्प्रस्थितां वा नावं 'साधव उत्तरिष्यन्ति' इति कृत्वा स्थापयेत्, साधून् वा दृष्ट्वा परकूलाद् नावमानयेत् ॥ अत्र चामी दोषाः-

[भा.५६२४] नाविक-साधुपदोसो, नियत्तणऽच्छंतगा य हरियादी।
जं तेन-सावएहि य, पवहण अन्नाए किणणं वा ॥

वृ- ये बेडिकाया अवस्थितास्ते नाविकस्य वा साधूनां वा उपरि प्रद्वेषं गच्छेयुः, यद्वा ते निवर्तमानाः तटे वा तिष्ठन्तो हरितादीनां विराधनामन्यद्वाऽधिकरणं यत् कुर्वन्ति, यद्वा स्तेनश्वापदेभ्य उपद्रवं प्राप्नुवन्ति, अवहन्तीं वा नावं यत् प्रवर्यिष्यन्ति, अन्यस्या वा नावः क्रयणं करिष्यन्ति तन्निष्पन्नं प्रायश्चित्तम् ॥ परकूलाद् नावानयने दृष्टान्तमाह-

[भा.५६२५] मज्जणगतो मुरुंडो, नावं दट्ठूण अप्पणा नेति।
कहिगा जति अक्खेवा, तत लहुगा मग्गणा पच्छा ॥

वृ- 'मज्जनगतः' स्नानं कुर्वन् मुरुण्डो राजा साधून् दृष्ट्वा नावमात्मना नयति, ततो नावारूढः साधुः कथिकाः कथयितुं लग्नः, यावन्तश्च तत्रावक्षेपास्तावन्ति चतुर्लघूनि, पश्चाच्च साधूनां मार्गणा तेनान्तःपुरे धर्मकथनार्थं कृता इत्यक्षरार्थः। भावार्थस्त्वयम्- पाडलिपुत्ते मरुंडो राया गंगाए नावारूढो उदगे ण्हायंतो अभिरमइ। साहुणो परकूले पासित्ता सयमेव नावं नेउं साहुणो विलग्गावित्ता भणइ-कहं कहेह जाव न उत्तरामो। अक्खेवणाइकहालद्धिजुत्तो साहू कहेउमारद्धो। तेन कहिंतेन अक्खित्तो नाविय सन्नेइ-सणियं कड्ढेहि जेण एस साहू चिरं कहेइ। साहूण कारणे सणियं गच्छंताणं जत्तिया आवक्खेवा तत्तिया चउलहु। उत्तिन्नेण रन्ना अंतेउरे कहियं, जहा- सुंदराओ कहाओ तरङ्गवत्याद्याः कथयन्ति साधवः। अंतेउरियां कोउगं जायं। रायाणं विन्नवेंति- जइ ते साहुणो इहमाणिज्जिज्ज तो अम्हे वि सुणेज्जामो। रन्ना गवेसित्ता पवेसिया साहुणो अंतेउरे ॥ तत्र च प्रविष्टानामेते दोषाः-

[भा.५६२६] सुत्त-ऽत्थे पलिमंथो, नेगा दोसा य निवघरपवेसे।
सइकरण कोउएण व, भुत्ता-ऽभुत्ताण गमनादी ॥

वृ- सूत्रा-ऽर्थयोः परिमन्थः, स्मृतिकरणेन कौतुकेन च भुक्ता-ऽभुक्तानां प्रतिगमनादयोऽनेके दोषा नृपगृहप्रवेशे भवन्ति ॥ एते अनुकम्पायां दोषा उक्ताः। अथ प्रत्यनीकतायां दोषानाह-

[भा.५६२७] वुब्भण सिंचण बोलण, कंबल-सबला य घाडितिनिमित्तं।
अनुसट्ठा कालगता, नागकुमारेसु उववन्ना ॥

वृ- वाहनं सेचनं बोलनं वा प्रत्यनीकेन साधूनां क्रियते तत्र सामान्येन दृष्टान्तोऽयम्-मथुरायां भण्डीरयक्षयात्रायां कम्बल-शबलौ वृषभौ घाटिकेन-मित्रेण जिनदासस्यानापृच्छया वाहितौ,

तन्निमित्तं सञ्जातवैराग्यौ श्रावकेणानुशिष्टौ भक्तं प्रत्याख्याय कालगतौ नागकुमारेषूपपन्नौ ॥ ततस्ताभ्यां किं कृतम् ? इत्याह—

[भा.५६२८] वीरवरस्स भगवतो, नावारूढस्स कासि उवसग्गं ।
मिच्छद्दिट्ठि परद्धो, कंबल-सबलेहिं तारिओ भगवं ॥

वृ- वीरवरस्य भगवतो नावारूढस्य सुदाढो नागकुमार उपसर्गमकार्षीत् । तेन मिथ्यादृष्टिना प्रारब्धो जले बोलयितुं कम्बल-शबलाभ्यां मोचितो भगवान् । कथानकमावश्यकादवधारणीयम् । एवं नावारूढस्य साधोर्बोलनादिकं सम्भवतीति ॥ अथ वाहनादिपदानि व्याचष्टे-

[भा.५६२९] सीसगता वि न दुक्खं, करेह मज्झं ति एवमवि वोत्तुं ।
जा छुब्भंतु समुद्दे, मुंचति नावं विलग्गेसु ॥

वृ- 'सिद्धार्थका इव शिरसि गता अपि मम दुःखं न कुरुथ' एवमप्युक्त्वा कश्चित् प्रत्यनीको यदा साधवो नावं विलग्नास्तदा । नावं नदीमुखेषु मुञ्चति येन समुद्रे प्रक्षिप्यन्ते, तत्र पतिताः क्लिश्यन्तां म्रियन्तां चेति कृत्वा ॥ गतं वाहनम् । अथ सेचनं बोलनं चाह-

[भा.५६३०] सिंचति ते उवहिं वा, ते चेव जले छुभेज्ज उवधिं वा ।
मरणोवधिनिप्फन्नं, अनेसिग तणादि तरपन्नं ॥

वृ-नाविकोऽन्यो वा प्रत्यनीकस्तान् साधूनुपधिं वासिञ्चति, तानेव साधूनुपधिं वा जले प्रक्षिपेत्, बोलयेदित्यर्थः । तत्र चात्मविराधनायां मरणनिष्पन्नम्, उपधिनाशे उपधिनिष्पन्नम् । यच्चानेषणीयमुपधिं ग्रहीष्यन्ति तृणानि वा सेविष्यन्ते तन्निष्पन्नं सर्वमपि प्राप्नोति । तरपण्यं वा स मार्गयेत्, अदीयमाने चिरं निरुन्ध्यात्, दीयमानेऽधिकरणम् ॥

गताः प्रत्यनीकदोषाः । अथ 'बहवः प्रत्यपायाः' इति व्याचष्टे-

[भा.५६३१] संघट्टणाऽऽयसिंचण, उवगरणे पडणं संजमे दोसा ।
सावत तेने तिण्हेगतर, विराधना संजमा-ऽऽयाए ॥

वृ- त्रसादीनां सङ्घट्टना, जलेन वा सेचनमुपकरणस्यात्मनो वा, पतनं वा, एते संयमे दोषाः । श्वापदकृता स्तेनकृता वा आत्मविराधना । ''तिण्हेगयर'' ति अनुकम्पा-प्रत्यनीकता-तदुभयादिरूपाणां त्रयाणामेकतरस्मिन् संयमविराधनाऽऽत्मविराधना च भवति । एष सङ्ग्रहगाथासमासार्थः ॥ अथैनामेव विवृणोति-

[भा.५६३२] तस-उदग-वणे घट्टण, सिंचण लोगे अ नावि सिंचणता ।
वुब्भण उवधाऽऽतुभये, मगरादि समुद्दतेना य ॥

वृ- जलोद्भवानां त्रसानाम् उदकस्य वा सेवालादिरूपस्य वनस्पतेर्वा सङ्घट्टनं भवेत् । लोकेन नाविकेन वा साधोरुपकरणस्य वा सेचनं क्रियेत । अतिसम्बाधे वा उपधेरात्मनस्तदुभयस्य वा स्ताधेऽस्ताधे वा जले ''वुब्भणं'' बोलनं भवति । मकरादयः श्वापदाः समुद्रस्तेनाश्च तत्र भवेयुः । इदमेव व्याचष्टे-

[भा.५६३३] ओहार-मगरादीया, घोरा तत्थ उ सावया ।
सरीरोवहिमादीया, नावातेना य कत्थई ॥

वृ- ओहार-मकरादयः 'तत्र' नद्यां घोराः श्वापदा भवन्ति । ओहारः-मत्स्यविशेषः, स किल

नावमधस्तले जलस्य नयति। शरीरहरा उपधिहरा वा आदिशब्दादुभयहरा वा नौस्तेनाः कुत्रापि भवेयुः, एतैरात्मन उपधेर्वा विनाशे तन्निष्पन्नं प्रायश्चित्तम्॥ अथ ''तिण्हेगयर''त्ति पदं व्याख्याति-

[भा.५६३४] सावय तेने उभयं, अनुकंपादी विराधना तिन्नि।
संजम आउभयं वा, उत्तर-नावुत्तरंते वा॥

वृ- श्वापदाः १ स्तेनाः २ श्वापदा अपि स्तेना अपि ३ एतत् त्रयम्। अथवा अनुकम्पया १ प्रत्यनीकतया २ अनुकम्पा-प्रत्यनीकार्थतया वा ३। अथवा तिस्रः विराधनाः, तद्यथा- संयमविराधना १ आत्मविराधना २ उभयविराधना वा ३। यदि वा उदकमवतरतः १ नावारूढस्य २ नाव उत्तरतश्चेति ३। एतेषां त्रयाणामेकतरस्मिन् बहवः प्रत्यपाया भवन्ति॥

उक्तं सन्तरणम्। अथोत्तरणमाह-

[भा.५६३५] उत्तरणम्मि परूविते, उत्तरमाणस्स चउलहू होंति।
आणाइणो य दोसा, विराधना संजमा-ऽऽताए॥

वृ- उत्तरणं नाम-यद् नावं विना वक्ष्यमाणैः सङ्घट्टादिभिः प्रकारैरुत्तीर्यते, तस्मिन्नुत्तरणे प्ररूपिते सति दमभिधीयते-यदि जङ्घादिनाऽप्युत्तरति तदा चतुर्लघु, आज्ञादयश्च दोषाः, संयमा-ऽऽत्मविराधना च भवति॥ तस्य चोत्तरणस्यैते भेदाः-

[भा.५६३६] जंघद्धा संघट्टो, संघट्टुवरिं तु लेवो जा नाभी।
तेन परं लेवोवरि, तुंबोडुव नाववज्जेसु॥

वृ- यस्मिन् जले उत्तरतां पादतलादारभ्य जङ्घाया अर्द्धं ब्रुडति स सङ्घट्टः। तस्यैव सङ्घट्टस्योपरि यावद् नाभिरेतावद् यत्र प्रविशति स लेपः। 'ततः परं' नाभेराभ्योपरि सर्वमपि लेपोपरि भण्यते। तच्च द्विधा-स्ताधमस्ताधं च। यत्र नासिका न ब्रुडति तत् स्ताधम्, यत्र तु नासिका ब्रुडति तद् अस्ताधम्। तच्च तुम्बोडुपादिभिर्नौवर्जितैर्यद् उत्तीर्यते तद् उत्तरणं मन्तव्यम्। तत्रोत्तरणे एते संयमा-ऽऽत्मविराधनादोषाः॥

[भा.५६३७] संघट्टणा य सिंचण, उवगरणे पडण संजमे दोसा।
चिक्खल्ल खाणु कंटग, सावत भय वुब्भणे आया॥

वृ- लोकेन साधोः सङ्घट्टनं भवेत्, साधुर्वा जलं सङ्घट्टयेत्, सङ्घट्टनग्रहणात् परितापनमपद्रावणं च सूचितम्, एतेषु कायनिष्पन्नं प्रायश्चित्तम्। प्रत्यनीकः साधुमुपधिं वा सिञ्चति, स्वयं वा साधुरात्मानं सिञ्चेत्, साधोरुपकरणस्य जले पतनम्, एते संयमे दोषाः। तथा चिक्खल्ले यद् निमज्जति, जलमध्ये वा चक्षुरविषयतया स्थाणुना कण्टकेन वा यद् विध्यते, मकरादिश्वापदभयं वा भवति, नदीवाहेन वा वाहनम्, एषा सर्वाऽप्यात्मविराधना॥

*मू. (१३८) अह पुन एवं जाणिज्जा-एरवइ कुणालाए जत्थ चक्किया एगं पायं जले किच्चा एगं पायं थले किच्चा एवण्हं कप्पइ अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा संतरित्तए वा; एवं नो चक्किया एवण्हं नो कप्पइ अंतो मासस्स दुक्खुत्तो वा तिक्खुत्तो वा उत्तरित्तए वा संतरित्तए वा॥*

वृ- अथ पुनरेवं जानीयात्-ऐरावती नाम नदी कुणालाया नगर्याः समीपे जङ्घार्द्धप्रमाणेनोद्वेधेन

वहति तस्यामन्यया वा यत्रैवं "चक्किया" शक्नुयात् उत्तरीतुमिति शेषः । कथम् ? इत्याह-एकं पादं जले कृत्वा एकं पादं 'स्थले' आकाशे कृत्वा, "एवण्ह"मिति वाक्यालङ्कारे, यत्रोत्तरीतुं शक्नुयात् तत्र कल्पते अन्तर्मासस्य द्विकृत्वो वा त्रिकृत्वो वा 'उत्तरीतुं' लङ्घयितुं 'सन्तरीतुं वा' भूयः प्रत्यागन्तुम् । यत्र पुनरेवमुत्तरीतुं न शक्नुयात् तत्र नो कल्पते अन्तर्मासस्य द्विकृत्वो वा त्रिकृत्वो वा उत्तरीतुं वा सन्तरीतुं वा इति सूत्रार्थः ॥ अथ भाष्यकृद् विषमपदानि व्याचष्टे-

[भा.५६३८] एरवइ जम्हि चक्किय, जल-थलकरणे इमं तु नाणत्तं ।
एगो जलम्मि एगो, थलम्मि इहइं थलाऽऽगासं ॥

वृ-ऐरावती नाम नदी, यस्यां जल-स्थलयोः पादकरणेनोत्तरीतुं शक्यम् । इहैव चात्र नानात्वम्-यत्पूर्वसूत्रोक्तासु महानदीषु मासान्तर्द्वौ त्रीन् वा वारान् उत्तरीतुं न कल्पते, अस्यां तु कल्पते । यच्चात्र 'एको जले एकश्च पादः स्थले' इत्युक्तं तद् इह स्थलमाकाशमुच्यते ॥

[भा.५६३९] एरवइ कुणालाए, वित्थिन्ना अद्धजोअणं वहति ।
कप्पति तत्थ अपुन्ने, गंतुं जा वेरिसी अन्ना ॥

वृ-ऐरावती नदी कुणालानगर्या अदूरेऽर्द्धयोजनं विस्तीर्णा वहति, सा चोद्वेधेन जङ्घार्द्धप्रमाणा, तत्र ऋतुबद्धे काले मासकल्पे अपूर्णे त्रिकृत्वो भिक्षाग्रहण-लेपानयनादौ कार्ये यतनया गन्तुं कल्पते । या वा ईदृशी अन्याऽपि नदी तस्यामपि त्रिकृत्वो गन्तुं कल्पते ॥

कृता विषमपदव्याख्या भाष्यकृता । सम्प्रति निर्युक्तिविस्तरः-

[भा.५६४०] संकम थले य नोथल, पासाणजले य वालुगजले य ।
सुद्धुदग पंकमीसे, परित्तऽणंते तसा चेव ॥

वृ-नदीमुत्तरतस्त्रयः पन्थानः, तद्यथा-सङ्क्रमः १ स्थलं २ नोस्थलं ३ च । तत्र यद् एकाङ्गिकादिना सङ्क्रमेण गम्यते स सङ्क्रमः । स्थलं नाम-नद्याः कूर्परेण वरणेन वा यद् नदीजलं परिहृत्य गम्यते । नोस्थलं चतुर्विधम्-पाषाणजलं वालुकाजलं शुद्धोदकं पङ्कमिश्रजलम् । एतेषु चतुर्ष्वपि गच्छतां यथासम्भवं परीत्ता-ऽनन्तकायास्त्रसाश्च विराधनां प्राप्नुवन्ति ॥ तथा-

[भा.५६४१] उदए चिक्खल्ल परित्त-ऽणंतकाइग तसे त मीसे त ।
अक्कंतमणक्कंते, संजोए होंति अप्पबहुं ॥

वृ-उदके चिक्खल्लादिकः पृथिवीकायः वनस्पतयश्च परीत्तकायिका अनन्तकायिका वा त्रसाश्च द्वीन्द्रियादयो भवेयुः । एते च सर्वेऽपि यथासम्भवं मिश्रा सचित्ता वा आक्रान्ता अनाक्रान्ता वा स्थिरा अस्थिरा वासप्रत्यपाया निष्प्रत्यपाया वा भवेयुः । एतेषु च बहवः संयोगा उपयुज्य वक्तव्याः । तेषु यत्राल्पबहुत्वं भवति, अल्पतराः संयमा-ऽऽत्मविराधनादोषा बहवश्च गुणा भवन्तीत्यर्थः तत्र कारणे समुत्पन्ने गन्तव्यम् ॥ यत्र च सङ्क्रमो भवति तत्रामी भङ्गविकल्पा भवेयुः-

[भा.५६४२] एगंगिय चल थिर पारिसाडि सालंब वज्जि सभए ।
पडिपक्खेसु त गमनं, तज्जातियरे व संडेवा ॥

वृ-सङ्क्रम एकाङ्गिको वा स्यादनेकाङ्गिको वा । एकाङ्गिकः-य एकेन फलकादिना कृतः, अनेकाङ्गिकः-अनेकफलकादिनिर्मितः । अत्रैकाङ्गिकेन गन्तव्यं नानेकाङ्गिकेन, एवं स्थिरेण न च चलेन, अपरिशाटिना न परिशाटिना, सालम्बेन गन्तव्यं न 'वर्जितेन' निरालम्बेनेत्यर्थः । सालम्बोऽपि

द्विधा-एकतः सालम्बो द्विधा सालम्बश्च । पूर्वं द्विधा सालम्बेन, तत एकतः सालम्बेनापि तथा निर्भयेन गन्तव्यं न सभयेन । अत एवाह-"पडिपक्खेसु य गमणं" ति अनेकाङ्गिक-चल-परिशाटि-निरालम्ब-समयाख्यानां पञ्चानां पदानां ये एकाङ्गिकादयः प्रतिपक्षास्तेषु गमनं कर्तव्यम् । अत्र पञ्चभि पदैर्द्वात्रिंशद् भङ्गाः-एकाङ्गिकः स्थिरोऽपरिशाटी सालम्बो निर्भय इत्यादि । एषु प्रथमो भङ्गः शुद्धः शेषा अशुद्धाः, तेष्वपि बहुगुणरेषु गमनं यतना च कर्तव्या । सण्डेवका अपि सङ्क्रमभेद एव, अत आह-तज्जातकाः 'इतरे वा' अथज्जातकाः सण्डेवका भवेयुः । तत्रैव जातास्तज्जाताः शिलादयः, अन्यतः स्थानादानीय स्थापिता अतज्जाताः इष्टालकादयः । तेष्वपि चा-ऽचला-ऽऽक्रान्ता-ऽना-क्रान्तादयो भेदाः कर्तव्याः ॥ उक्तः सङ्क्रमः । अथ स्थलमाह-

[भा.५६४३] निदकोप्पर वरणेण व, थलमुदयं नोथलं तु तं चउहा ।
उवलजल वालुगजलं, सुद्धमही पंकमुदगं च ॥

वृ-नद्या आकुण्टितकूर्पराकारं वलनं नदीकूर्परमुच्यते । जलोपरि कपाटानि मुक्त्वा पालिबन्धः क्रियते स वरण उच्यते । एताभ्यां यदुदकंपरिहृत्य गम्यते तत् स्थलं द्रष्टव्यम् । अथ नोस्थलं तत् चतुर्विधम्-'उपलजलम्' अधः पाषाणा उपरि जलं १ 'वालुकाजलम्' अधो वालुका उपरि पानीयं २ 'शुद्धोदकं' अधः शुद्धा मही उपरि जलं ३ 'पङ्कोदकं' अधः कर्दम उपरि जलम् ४ ॥

पङ्कोदकस्य चामूनि विधानानि-

[भा.५६४४] लत्तगपहे य खुलए, तहऽद्धजंघाए जानुउवरिं य ।
लेवे य लेवउवरिं, अक्कंतादी उ संजोगा ॥

वृ-यावन्मात्रमलक्तकेन पादो रज्यते तावन्मात्रो यत्र पथि कर्दमः स लत्तकपथः । खुलकमात्रः-पादघुण्टकप्रमाणः । अर्द्धजङ्घामात्रः-जङ्घार्द्धं यावद् भवति । 'जानूपरि' जानुमात्रं यावद् भवति। 'लेपः' नाभिप्रमाणः । तत ऊर्ध्वं सर्वोऽपि लेपोपरि । एते सर्वेऽपि कर्दमप्रकाराः । चतुर्विधे नोस्थले कर्दमे चाक्रान्ता-ऽनाक्रान्त-सभय-निर्भयादयः संयोगा यथासम्भवं वक्तव्याः । अमुना दोषेण युक्तः पन्थाः परिहर्तव्यः ॥

[भा.५६४५] जो वि य होतऽक्कंतो, हरियादि-एतेहि चेव परिहीनो ।
तेन वि तु न गंतव्वं, जत्थ अवाया इमे होंति ॥

वृ-योऽपि च पन्थाः 'आक्रान्तः' दरमलितो हरितादिभिस्त्रसैश्च परिहीणो भवति तेनापि न गन्तव्यम् । यत्र अमी अपाया भवन्ति ॥

[भा.५६४६] गिरिनदि पुन्ना वाला-ऽहि-कंटगा दूरपारमावत्ता ।
चिक्खल्ल कल्लुगाणि य, गारा सेवाल उवला य ॥

वृ-यत्र पथि गिरिनदी 'पूर्णा' तीव्रवेगा वहति, मकरादयो व्याला अहयो वा यत्र जलमध्ये भवन्तु, कण्टका वा पूरेणानीताः, दूरपारम् आवर्तबहुलं वा जलं भवेत्, चिक्खल्लो वा नदीषु तादृशो यत्र पादो निमज्जति, 'कल्लुकाः' गाथायां नपुंसकत्वं प्राकृतत्वात् पाषाणेषु द्वीन्द्रियजातिविशेषा भवन्ति ते पादौ छेदयन्ति, 'गाराः' पाषाणशृङ्गिकाः, 'सेवालः' प्रसिद्धः 'उपलाः' छिन्नपाषाणाः एभिरपायैर्वर्जितेन पूर्वं स्थलेन गन्तव्यम्, तदभावे सङ्क्रमेण, तदभावे नोस्थलेनापि ॥

तत्र चतुर्विधे नोस्थले पूर्वममुना गन्तव्यम्-

[भा.५६४७] उवलजलेण तु पुव्वं, अक्कंत-निरच्चएण गंतव्वं।
तस्सऽसति अनक्कंते, निरच्चएणं तु गंतव्वं॥

वृ- उपलजले कर्दमो न भवति, स्थिरसंहननं च तद् भवति, अतः पूर्वं तेन 'आक्रान्त-निरत्येन' क्षुन्न-निष्प्रत्यपायेन गन्तव्यम्। तस्याभावे अनाक्रान्त-निरत्ययेनापि गन्तव्यम्॥

भा (५६४८] एमेव सेसएसु वि, सिगतजलादीहि होंति संजोगा।
पंक महुसित्थ लत्तग, खुलऽद्धजंघा य जंघा य॥

वृ- उपलाद् वालुका अल्पसंहनना, तत उपलजलाभावे वालुकाजलेन गन्तव्यम्। वालुकायाः शुद्धपृथिवी स्वल्पतरसंहनना, ततो वालुकाजलानन्तरं शुद्धोदकेन गम्यते। तेष्वपि सिकताजलादिषु शेषपदेषु 'एवमेव' प्राग्वद् आक्रान्ता-ऽनाक्रान्तादयः संयोगा भवन्ति। पङ्कजलं बहुप्रत्यपायम्, अतः सर्वेषामुपलजलादीनामभावे तेन गम्यते। स च यः 'मधुसिक्थाकृतिं' क्रमतलयोरेव केवलं लगति यो वा अलक्तकमात्रस्तेन पूर्वं गम्यते, पश्चात् खुलकमात्रेण, पश्चादर्द्धजङ्घामात्रेण, ततो जङ्घामात्रेण जानुप्रमाणेनेत्यर्थः॥ यस्तु जानुप्रमाणादुपरि पङ्कस्तेन न गन्तव्यम्, यत आह-

[भा.५६४९] अद्धोरुतमित्तातो, जो खलु उवरिं तु कद्दमो होति।
कंटादिजढो वि य सो, अत्थाहजलं व सावायं॥

वृ- 'अर्द्धोरुकमात्राद्' जानुप्रमाणादुपरि यः कर्दमो भवति स कण्टकाद्यपायवर्जितोऽप्य-स्ताघजलमिव गन्तुमशक्यत्वात् सापायो मन्तव्यः॥ एष विधिः सर्वोऽपि सचित्तपृथिव्यामुक्तः। अथाचित्तपृथिव्यां तमेवाह-

[भा.५६५०] जत्थ अचित्ता पुढवी, तहियं आउ-तरुजीवसंजोगा।
जोनिपरित्त-थिरेहि य, अक्कंत-निरच्चएहिं च॥

वृ-यत्र पृथिवी अचित्ता तत्राप्कायजीवानां तरुजीवानां च संयोगाः कर्तव्याः। तद्यथा-पृथिवी सर्वत्राप्यचित्ता किमप्कायेन गच्छतु? किं वा वनस्पतिना? उच्यते-अप्काये नियमाद् वनस्पतिरस्ति तस्मात् तेन मा गात्, वनस्पतिना गच्छतु, तत्रापि परीत्तयोनिकेन स्थिरसंहननेन आक्रान्तेन निरत्ययेन च-निष्प्रत्यपायेन। अत्र षोडश भङ्गाः, तद्यथा-प्रत्येकयोनिकः स्थिर आक्रान्तो निप्रत्यपायः, एष प्रथमो भङ्गः, सप्रत्यपायेन द्वितीयः, अनाक्रान्तेऽप्येवमेव द्वौ विकल्पौ, एवं स्थिरे चत्वारो विकल्पाः लब्धाः, अस्थिरेऽप्येवं चत्वारः, एते प्रत्येकयोनिकेनाष्टौ भङ्गा लब्धाः,अनन्तयोनिकेऽप्येवमेवाष्टौ लभ्यन्ते, एवं सर्वसङ्ख्यया वनस्पतिकाये परीत्तादिभिः पदैः षोडश भङ्गा भवन्ति॥ अथाप्कायस्य त्रसानां च संयोगानाह-

[भा.५६५१] एमेव य संजोगा, उदगस्स चउव्विहेहि तु तसेहिं।
अक्कंत-थिरसरीरे-थिरच्चएहि तु गंतव्वं॥

वृ- चतुर्विधास्त्रसाः-द्वीन्द्रियास्त्रीन्द्रियाश्चतुरिन्द्रियाः पञ्चेन्द्रियाश्चेति। एतैश्चतुर्विधैरपि त्रसैराक्रान्तादिभिः पदैरेवमेव उदकेन सह संयोगाः कार्या, तद्यथा-आक्रान्ताः स्थिरा निप्रत्यपायाः १ आक्रान्ताः स्थिराः सप्रत्यपायाः २ एवं त्रिभिः पदैरष्टौ भङ्गा भवन्ति, एते च द्वीन्द्रियादिषु चतुर्ष्वपि प्रत्येकमष्टावष्टौ लभ्यन्ते, जाता भङ्गकानां द्वात्रिंशत्। अथ सान्तरनिरन्तरविकल्पविवक्षा क्रियते ततश्चतुःषष्टिः संयोगा उत्तिष्ठन्ते। अत्र चाक्रान्त-स्थिरशरीरनिरत्ययैः सान्तरैस्त्रसैर्गन्तव्यं

नाप्कायेन ॥

[भा.५६५२] तेऊ-वाउविहूणा, एवं सेसा वि सव्वसंजोगा।
उदगस्स उ कायव्वा, जेनऽहिगारो इहं उदए ॥

वृ- 'तेजो-वायुकाययोर्गमने न सम्भवति' इति कृत्वा तेजो-वायुविहीना एवं शेषा अपि संयोगाः सर्वेऽपि कर्तव्याः। तत्राप्कायस्य वनस्पतिना त्रसैश्च सह भङ्गका उक्ताः, अथ वनस्पति-त्रसानां द्विकसंयोगेन भङ्गा उच्यन्ते-किं वनस्पतौ गम्यताम्? उत त्रसेषु? उच्यते-त्रसेषु सान्तरेषु गन्तव्यम्, पुनर्वनस्पतौ, तत्र हि नियमेन त्रसा भवेयुः। आह च निशीथचूर्णिकृत्- पुव्वं तसेसु थिराइसु गंतव्वं, जतो वने वि नियमा तसा अत्थि। पृथिव्यप्काय-वनस्पतित्रयसम्भवे कतमेन गम्यताम्? उच्यते-पूर्वं पृथिवीकायेन, ततो वनस्पतिना, ततोऽप्कायेनापि। पृथिव्युदक-वनस्पति-त्रसलक्षणचतुष्कसंयोगसम्भवे कथमेन गन्तव्यम्? उच्यते-पूर्वमचित्तपृथिव्यां प्रविरलत्रसेषु, ततः सचित्तपृथिव्याम्, ततो वनस्पतिना, ततोऽप्कायेनापि गम्यम्। एवमिह बहुभङ्गविस्तरे बीजमात्रमिदमुक्तम्। इह च उदकपदममुञ्चता ये भङ्गाः प्राप्यन्ते ते कर्तव्याः, येनेह सूत्रे उदकस्याधिकारः। शेषास्तु विनेयव्युत्पादनार्थमभिहिताः ॥

''अंतो मासस्स दुक्खुत्तो वा'' इत्यादि सूत्रं व्याख्याति-

[भा.५६५३] एरवइ जत्थ चक्किय, तारिसए न उवहम्मती खेत्तं।
पडिसिद्धं उत्तरणं, पुन्नासति खेत्तऽणुन्नायं ॥

वृ- या एरावती नदी कुणालाजनपदे योजनार्द्धविस्तीर्णा जङ्घार्द्धमानमुदकं वहति तस्याः केचित् प्रदेशाः शुष्का न तत्रोदकमस्ति, तामुत्तीर्य यदि भिक्षाचर्यां गम्यते तदा ऋतुबद्धे त्रय उदकसङ्घट्टाः, ते च गता-ऽऽगतेन षड् भवन्ति; वर्षासु सप्त दकसङ्घट्टाः, ते च गता-ऽऽगतेन चतुर्दश भवन्ति। एवमीदृशे सङ्घट्टप्रमाणे क्षेत्रं नोपहन्यते, इत एकेनाप्यधिके सङ्घट्टे उपहन्यते। अन्यत्रापि यत्राधिकतराः सङ्घट्टास्तत्रोत्तरणं प्रतिषिद्धम्। पूर्णे मासकल्पे वर्षावासे वा यद्यनुत्तीर्णानामपरं मासकल्पप्रायोग्यं क्षेत्रमस्ति ततो नोत्तरणीयम्। अथानुत्तीर्णानामन्यत् क्षेत्रं नास्ति ततोऽसति क्षेत्रे उत्तरणमनुज्ञातम् ॥ इदमेव व्याचष्टे-

[भा.५६५४] सत्त उ वासासु भवे, दगघट्टा तिन्नि होंति उडुबद्धे।
जे तु न हणंति खेत्तं, भिक्खायरियं व न हणंति ॥

वृ- सप्तोदकसङ्घट्टा वर्षासु त्रयः शङ्घट्टा ऋतुबद्धे भवन्ति एतावन्तः क्षेत्रं नोपघ्नन्ति, न वा भिक्षाचर्यामुपघ्नन्ति ॥

[भा.५६५५] जह कारणम्मि पुन्ने, अंतो तह कारणम्मि असिवादी।
उवहिस्स गहण लिंपण, नावोयग तं पि जतणाए ॥

वृ- यथा कारणे पूर्णे मासकल्पे वर्षावासे वाऽपरक्षेत्राभावे ष्टमुत्तरणं तथा मासस्यान्तरप्यशिवादिभि कारणैरुपधेर्वा ग्रहणार्थं लेपस्यानयनार्थं वा उत्तरणीयम्। कारणे यत्र नावाऽप्युदकं तीर्यते तत्रापि यतनया सन्तरणीयम् ॥ तत्र चायं विधि-

[भा.५६५६] नाव थल लेवहेट्ठा, लेवो वा उवरि एव लेवस्स।
दोन्नी दियड्ढमेक्कं, अद्धं नावाए परिहाती ॥

वृ- अत्र पूर्वार्द्ध-पश्चार्द्धपदानां यथासङ्ख्येन योजना-नावुत्तरणस्थानाद् यदि द्वे योजने वक्रं स्थलेन गम्यते तेन गन्तव्यं न च नौरारोढव्या, "लेवहिट्ठ"त्ति लेपस्याधस्ताद् दकसङ्घट्टेन यदि सार्द्धयोजनपरिरयेण गम्यते ततस्तत्र गम्यतां न च नावमधिरोहेत्, एवं योजनपर्यहारेण लेपेन गच्छतु मा च नावमधिरुहत्, अर्द्धयोजनपर्यवहारेण लेपोपरिणा गच्छेत् न च नावमधिरोहेत्; एवं नावुत्तरणस्थानात् स्थलादिषु योजनद्वयादिकं परिहीयते । एवमेव लेपोपरिस्थानात् सार्द्धयोजनपरिहारेण स्थलेन, एकयोजनपरिरयेण सङ्घट्टेन, अर्द्धयोजनपरिहारेण वा लेपेन गम्यतां न च लेपोपरिणा । लेपोत्तरणस्थानादेकयोजनपर्यवहारेण स्थलेन, अर्द्धयोजनपरिहारेण वा सङ्घट्टेन गन्तव्यं न लेपेन । सङ्घट्टोत्तरणस्थानादर्द्धयोजनपर्यवहारेण स्थलेन गम्यतां न च सङ्घट्टेन । एतेषां परिहारपरिमाणानामभावे नावा लेपोपरिणा लेपेन सङ्घट्टेन वा गम्यते न कश्चिद्दोषः ॥

अत्र "नाव थल"त्ति पदं व्याचष्टे-

[भा.५६५७] दो जोयणाइं गंतुं, जहियं गम्मति थलेण तेन वए ।
मा य दुरूहे नावं, तत्थावाया बहू वुत्ता ॥

वृ- द्वे योजने गत्वा यत्र स्थलेन गम्यते तेन पथा व्रजेद् मा च नावमारोहत् । यतस्तत्र बहवोऽपायाः पूर्वमेवोक्ताः । कारणे तु तत्रापि गम्यते ॥ तत्र सङ्घट्टे गच्छतां तावद् यतनामाह-

[भा.५६५८] थलसंकमणे जयणा, पलोयणा पुच्छिऊण उत्तरणं ।
परिपुच्छिऊण गमनं, जति पंथो तेन जतनाए ॥

वृ- स्थलसङ्क्रमणे यतना कार्या, एकं पादं जले एकं च पादं स्थले कुर्यादित्यर्थः । प्रलोकना नाम-लोकमुत्तरन्तं प्रलोकयति, यस्मिन् पार्श्वे जङ्घार्द्धमात्रमुदकं तत्र गच्छति । अथोत्तरतो न पश्यति ततः प्रातिपथिकमन्यं वा पृच्छति, ततो यत्र नीचतरमुदकं तत्रोत्तरणं विधेयम् । "परिपुच्छिऊण" इत्यादि, यदि तस्योदकस्य परिहारेण पन्था विद्यते तदा तं परित्यज्य यतनया तेन गन्तव्यम् ॥ अथ स्थलपथेऽमी दोषा भवेयुः-

[भा.५६५९] समुदानं पंथो वा, वसही वा थलपथेण जति नत्थि ।
सावत-तेनभयं वा, संघट्टेणं ततो गच्छे ॥

वृ- 'समुदानं' भिक्षा तत्र नास्ति, स्थलपथ एव वा नास्त, वसतिर्वा स्थलपथे यदि न समस्ति, श्वापभयं स्तेनभयं वा तत्र विद्यते ततः स्थलपथं मुक्त्वा सङ्घट्टेन प्रथमतो गच्छेत्, तदभावे लेपेन । तत्रेयं यतना-

[भा.५६६०] निभये गारत्थीणं, तु मग्गतो चोलपट्टमुस्सारे ।
समए अत्थग्घे वा, उत्तिन्नेसुं घनं पट्टं ॥

वृ- यदि स साधुर्गृहिसार्थसहायस्तत उदकसमीपं गत्वोर्द्धकायं मुखवस्त्रिकयाऽधःकायं रजोहरणेन प्रमार्ज्योपकरणमेकतः कृत्वा यदि निर्भयं-चौरभयं नास्ति ततो गृहस्थानां 'मार्गतः' सर्वपश्चादुदकमवतरति । यथा यथा चोण्डमुण्डतरं जलमवगाहते तथा तथोपर्युपरि चोलपट्टकमुत्सारयेद् येन न तीम्यते । अथ तत्र सभयम् अस्ताघं वा जलं ततो यदा कियन्तोऽपि गृहस्था अग्रतोऽवतीर्णास्तदा मध्ये साधुनाऽवतरणीयम् चोलपट्टकं च 'घनं' दृढं बध्नीयात् ॥ एतेन विधिनोत्तीर्णस्य यदि चोपट्टकोऽन्यद्वा किञ्चिदुपकरणजातं तीमितं तदाऽयं विधिः-

[भा.५६६१] दगतीरे वा चिट्ठे, निप्पगलो जाव चोलपट्टो तु।
समए पलंबमाणं, गच्छति काएण अफुसंतो ॥

वृ- 'दकतीरे' स्निग्धपृथिव्यामप्कायरक्षणार्थं तावत् तिष्ठेत् यावत् चोलपट्टकोऽन्यद्वोपकरणं निष्प्रगलं भवति। अथ तत्र तिष्ठतः सभयं ततः प्रगलन्तमेव तं चोलपट्टकं कायेनास्पृशन् बाहायां प्रलम्बमानं नयन् गच्छति ॥ यत्र सार्थविरहित एकाकी समुत्तरति तत्रायं विधिः-

[भा.५६६२] असइ गिहि नालियाए, आणक्खेउं पुनो वि पडियरणं।
एगाभोगं च करे, उवकरणं लेव उवरिं वा ॥

वृ-गृहिणामभावे सर्वोपकरणमवतरणतीरे मुक्त्वा नालिकां-आत्मप्रमाणात् चतुरङ्गुलातिरिक्तां यष्टिं गृहीत्वा तया "आनक्खेउं" अस्ताघतामनुमीय परतीरात् पुनरपि जले प्रतिचरणं करोति, प्रत्यागच्छतीत्यर्थः; आगत्य च तदुपकरणमेकाभोगं करोति, एकत्र नियन्त्रयतीत्यर्थः; ततस्तद् गृहीत्वा तेन परीक्षितजलपथेनोत्तरति। एष लेपे लेपोपरी वा विधिरुक्तः ॥

अथ नावं यैः कारणैरारोहेत् तानि दर्शयति-

[भा.५६६३] बिइयपथ तेन सावय, भिक्खं वा कारणे व आगाढे।
कज्जुवहि मगर छुब्भण, नावोदग तं पि जतनाए ॥

वृ-द्वितीयपदमत्रोच्यते-स्थल-सङ्कटादिपथेषु शरीरोपधिस्तेनाः सिंहादयो वा श्वापदा भवेयुः, भैक्षं वा न लभ्यते, आगाढं वा कारणम्-अहिदष्ट-विष-विसूचिकादिकं भवेत् तत्र त्वरितमौषधान्यानेतव्यानि, कुलादिकार्यं वा अक्षेपेण करणीयमुपस्थितम्, उपधेरुत्पादनार्थं वा गन्तव्यम्, लेपे लेपोपरी वा मकरभयं ततो नावमारोहेत्। तत् च प्रथममेवोपकरणमेकाभोगं कुर्यात्। कुतः? इत्याह-"छुब्भण"त्ति कदाचित् प्रत्यनीकेन उदके प्रक्षिप्येत, तत एकाभोगकृतेषु भाजनेषु विलग्नस्तरतीति। "नावोदग तं पि जयणाए"त्ति यदि बलाभियोगेन नावुदकस्योत्सेचापनं कार्यते तदा तदपि यतनया कर्तव्यम् ॥ कथं पुनरेकाभोगमुपकरणं करोति? इत्याह-

[भा.५६६४] पुरतो दुरुहणमेगतो, पडिलेह पुव्व पच्छ समगं वा।
सीसे मग्गतो मज्झे, बितियं उवकरण जयणाए ॥

वृ- गृहिणां पुरत उपकरणं न प्रत्युपेक्षते, न वा एकाभोगं करोति। "दुरुहण"त्ति नावमारोढुकामेन एकान्तमपक्रम्योपकरणं प्रत्युपेक्षणीयम्। "पडिलेह"त्ति ततोऽधःकायं रजोहरणेन उपरिकायं मुखानन्तकेन प्रमृज्य भाजनान्येकत्र बध्नाति, तेषामुपरिष्टादुपधिं सुनियन्त्रितं करोति। "पुव्व पच्छ समगं व" त्ति किं गृहिभ्यः पूर्वमारोढव्यम्? उत पश्चात्? उताहो समकम्? अत्रोत्तरम्-यदि भद्रका नाविकादयो यदि च स्थिरा नौर्न दोलायते ततः पूर्वमारोढव्यम्; अथ प्रान्ताः ततः पूर्वं नारुह्यते, मा 'अमङ्गलम्' इति कृत्वा प्रद्वेषं गमन्, तेषां प्रान्तानां भावं ज्ञात्वा समकं पश्चाद्वा आरोहणीयम्। "सीसे"त्ति नावः शिरसि न स्थातव्यम्, देवतास्थानं तदिति कृत्वा; मार्गतोऽपि न स्थातव्यम्, निर्यामकस्तत्र तिष्ठतीति कृत्वा; मध्येऽपि यत्र कूपकस्थानं तत्र न स्थातव्यम्, तद् मुक्त्वा यद् अपरं मध्ये स्थानं तत्र स्थेयम्। अथ मध्ये नास्ति स्थानं ततः शिरसि पृष्ठतो वा यत्र ते स्थापयन्ति तत्र निराबाधे स्थीयते। साकारं सक्तं प्रत्याख्याय नमस्कारपरस्तिष्ठति। उत्तरन्नपि न पूर्वमुत्तरति न वा पश्चात् किन्तु मध्ये उत्तरति। सारोपधिश्च पूर्वमेवाल्पसागारिकः

क्रियते, यद् अन्तप्रान्तं चीवरं तत् प्रावृणोति। यदि च तरपण्यं नाविको मार्गयति तदा धर्मकथाऽनुशिष्टिश्च क्रियते। अथ न मुञ्चति ततो द्वितीयपदे यद् अन्तप्रान्तमुपकरणं तद् यतनया दातव्यम्। अथ तद् नेच्छति निरुणद्धि वा ततोऽनु कम्पया यदि अन्यो ददाति तदा न वारणीयः।

*मू. (१३९) से तणेसु वा तणपुंजेसु वा पलालेसु वा पलालपुंजेसु वा अप्पंडेसु अप्पपाणेसु अप्पबीएसु अप्पहरिएसु अप्पुस्सेसु अप्पुत्तिंग-पणग-दगमट्टिय-मक्कडगसंताणएसु अहेसवणमायाए नो कप्पइ निग्गंथाण वा निग्गंथीण वा तहप्पगारे उवस्सए हेमंतगिम्हासु वत्थए ॥*

*मू. (१४०) से तणेसु वा जाव संताणएसु उप्पिंसवणमायाए कप्पइ निग्गंथाण वा निग्गंथीण वा तहप्पगारे उवस्सए हेमंत-गिम्हासु वत्थए ॥*

*मू. (१४१) से तणेसु वा जाव संताणएसु अहेरयणीमुक्कमउडेसु नो कप्पइ निग्गंथाण वा निग्गंथीण वा तहप्पगारे उवस्सए वासावासं वत्थए ॥*

*मू. (१४२) से तणेसु वा जाव संताणएसु उप्पिंरयणीमुक्कमउडेसु कप्पइ निग्गंथाण व निग्गंथीण व तहप्पगारे उवस्सए वासावासं वत्थए ॥*

वृ-अस्य सूत्रचतुष्टयस्य सम्बन्धमाह-

[भा.५६६५] अद्धाणातो निलयं, उविंति तहियं तु दो इमे सुत्ता।
तत्थ वि उडुम्मि पढमं, उडुम्मि दूइज्जणा जेनं ॥

वृ- पूर्वसूत्रे 'अध्वा' जलपथलक्षणः प्रकृतस्तत उत्तीर्णा 'निलयम्' उपाश्रयमुपागच्छन्ति। तद्विषये च ऋतुबद्ध-वर्षावासयोः प्रत्येकमिमे द्वे सूत्रे आरभ्येते। तत्रापि प्रथमं सूत्रद्वयमृतुबद्धविषयं द्वियं वर्षावासविषयम्। कुतः? इत्याह-ऋतुबद्धे येन कारणेन "दूइज्जणा" विहारो भवते नवर्षावासे, पूर्वसूत्रे च विहारोऽधिकृतः, अतः सम्बन्धानुलोम्येन पूर्वमृतुबद्धसूत्रद्वयं ततो वर्षावाससूत्रद्वयमिति।

[भा.५६६६] अहवा अद्धाणविही, वुत्तो वसहीविहिं इमं भणई।
सा वी पुव्वं वुत्ता, इह उ पमाणं दुविह काले ॥

वृ-अथवाऽध्वनि विधिः पूर्वसूत्रे उक्तः, इमं तु परस्तुतसूत्रे वसतिविधिं भणति। साऽपि च वसति 'पूर्वं' प्रथमोद्देशकादिष्वनेकशः प्रोक्ता, इह तु 'द्विविधेऽपि' ऋतुबद्ध-वर्षावासलक्षणे काले तस्याः प्रमाणमुच्यते॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-अथ तृणेषु वा तृणपुञ्जेषु वा पलालेषु वा पलालपुञ्जेषु वा अल्पाण्डेषु अल्पप्रणाणेषु। इह अण्डकानि पिपीलिकादीनाम्, प्राणाः-द्वीन्द्रियादयः, बीजम्-अनङ्कुरितम्, तदेवाङ्कुरितोद्भिन्नं हरितम्, अवश्यायः-स्नेहः, उत्तिङ्ग-कीटिकानगरम्, पनकः-पञ्चवर्ण- साङ्कुरोऽनङ्कुरो वाऽनन्तवनस्पतिविशेषः, दकमृत्तिका-सचित्तो मिश्रो वा कर्दमः, मर्कटकः-कोलिकस्तस्य सन्तानकं-जालकम्। अल्पशब्दश्चेह सर्वत्राभाववचनः, ततोऽण्डरहितेषु प्राणरहितेषु इत्यादि मन्तव्यम्। "अहेसवणमायाए" ति "अधःश्रवणमात्रया श्रवणयोरधस्ताद् यत्र छादनतृणादीनि भवन्ति तथाप्रकारे उपाश्रये नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा हेमन्त-ग्रीष्मेषु वस्तुम्, अष्टावृतुबद्धमासानित्यर्थः॥

एवं प्रतिषेधसूत्रमभिधाय प्रपञ्चितज्ञविनेयानुग्रहार्थं विधिसूत्रमाह- अथ तृणेषु वा यावदल्प० सन्तानकेषु उपरिश्रवणमात्रया युक्तेषु तथाविधोपाश्रये कल्पते हेमन्त-ग्रीष्मेषु वस्तुम्॥

एवमृतुबद्धसूत्रद्वयं व्याख्यातम्। अथ वर्षावाससूत्रद्वयं व्याख्यायते- अथ तृणेषु वातृणपुञ्जेषु

वा यावदल्प- सन्तानकेषु "अधेरयणीमुक्कमउडेसु" त्ति अञ्जलिमुकुलितं बाहुद्वयमुच्छ्रितं मुकुट उच्यते स च हस्तद्वयप्रमाणः। यदाह बृहद्भाष्यकृत्- मउडो पुन दो रयणी, पमाणतो होइ द्दुपुणेयव्वो।

रत्निभ्यां-हस्ताभ्यां मुक्ताभ्यां-उच्छ्रिताभ्यां यो निर्मितो मुकुटः स रत्निमुक्तमुकुटः। एतत्प्रमाणमधस्तादुपरि च [illegible]न्तरालं न प्राप्यते [illegible] रत्निमुक्तमुकुटेषु तृणादिषु न कल्पते वर्षावासे वस्तुम् ॥ अथ तृणेषु वा यावदल्प० सन्तानकेषु उपरि रत्निमुक्तमुकुटेषु यथोक्तप्रमाणेषु मुकुटोपरिवर्तिषु संस्तारके निविष्टस्य साधोरर्धतृतीयहस्ताद्यपान्तरालयुक्तेष्वित्यर्थः। ईदृश्यां वसतौ कल्पते वर्षावासे वस्तुमिति सूत्रचतुष्टयार्थः ॥ अथ भाष्यकारः प्रथमसूत्रं विवरीषुराह-

[भा.५६६७] तणगहणाऽऽरन्नतणा, सामगमादी उ सूइया सव्वे।
सालीमाति पलाला, पुंजा पुन मंडवेसु कता ॥

वृ- तृणग्रहणाद् आरण्यकानि श्यामाकादीनि सर्वाण्यपि तृणानि सूचितानि। पलालग्रहणेन शाल्यादीनि पलालानि गृहीतानि। पुञ्जाः पुनस्तृणानां पलालानां वा उपरिमण्डपेषु कृता भवन्ति। येषु हि देशेषु स्वल्पानि तृणानि तेषु पुञ्जरूपतया तानि मण्डपेषु सङ्गृह्यन्ते, अधस्ताद्भूमौ स्थापितानि मा विनश्येयुरिति कृत्वा ॥

[भा.५६६८] पुंजा उ जहिं देसे, अप्पप्पाणा य होंति एमादी।
अप्प तिग पंच सत्त य, एतेन य वच्चती सुत्तं ॥

वृ- एवं यत्र देशे मण्डपेषु पुञ्जाः कृता भवन्ति तत्र विवक्षितायां वसतौ ते पुञ्जा अल्पप्राणा अल्पबीजा एवमादिविशेषयुक्ता भवेयुः, अत्र कस्याप्येवं बुद्धि स्यात्-अल्पाः प्राणास्त्रयः पञ्च सप्त वा मन्तव्याः, अत आह-न 'एतेन' परोक्तेनाभिप्रायेण सूत्रं व्रजति, किं तर्हि ? अल्पशब्दोऽत्राभाववाचको द्रष्टव्यः, प्राणादयस्तेषु न सन्तीति भावः ॥ अत्र परः प्राह-

[भा.५६६९] वत्तव्वा उ अपाणा, बंधनुलोमेणिमं कयं सुत्तं।
पाणादिमादिएसुं, ठंते सट्ठाणपच्छित्तं ॥

वृ-यदि अभावार्थोऽल्पशब्दस्तत एवं सूत्रालापका वक्तव्याः-"अपानेसु अबीएसु अहरिएसु" इत्यादि। गुरुराह-बन्धानुलोम्येनेत्थं सूत्रं कृतम् "अप्पपानेसु" इत्यादि, एवंविधो हि पाठः सुललितः सुखेनैवोच्चरितुं शक्यते। यदि पुनर्द्वौ त्रयः पञ्च वा द्वीन्द्रियादयः प्राणिन आदिशब्दादण्डादीनि वा यत्र भवन्ति तत्र तिष्ठन्ति ततस्तेषां विराधनायां स्वस्थानप्रायश्चित्तं द्रष्टव्यम् ॥

कथं पुनरल्पशब्दोऽभावे वर्तते ? तत आह-

[भा.५६७०] थोवम्मि अभावम्मि य, विनिओगो होति अप्पसद्दस्स।
थोवे उ अप्पमाणो, अप्पासी अप्पनिद्दो य ॥

वृ- स्तोकेऽभावे च अल्पशब्दस्य 'विनियोगः' व्यापारो भवति। तत्र स्तोकार्थवाचको यथा- अल्पमानो अल्पाशी अल्पनिद्रोऽयम् ॥ अभाववाचको यथा-

[भा.५६७१] निस्सत्तस्स उ लोए, अभिहाणं होइ अप्पसत्तो त्ति।
लोउत्तरे विसेसो, अप्पाहारो तुअट्टिज्जा ॥

वृ- यः किल निसत्त्वः पुरुषस्तस्य लोकेऽल्पसत्त्वोऽयमित्यभिधानं भवति। लोकोत्तरेऽप्ययं विशेषः समस्ति, यथा-अल्पाहारो भवेद् अल्पं च त्वग्वर्तयेत्। अभावेऽपि दृश्यते, यथा- "अप्पायंके"

नीरोग इत्यर्थः ।। अथ बीजादियुक्तेषु तिष्ठतां प्रायश्चित्तमाह-

[भा.५६७२] बिय-मट्टियासु लहुगा, हरिए लहुगा व होंति गुरुगा वा ।
पानुत्तिग-दएसुं, लहुगा पनए गुरू चउरो ।।

वृ- बीज-मृत्तिकायुक्तेषु तृणादिषु तिष्ठतां चतुर्लघुकाः । हरितेषु प्रत्येकेषु चतुर्लघु, अनन्तेषु चतुर्गुरु । प्राणेषु-द्वीन्द्रियादिषु अत्तिङ्गोदकयोश्चतुर्लघु । पनके चतुर्गुरवः ।।

उक्तः सूत्रार्थः । अथ निर्युक्तिविस्तरः-

[भा.५६७३] सवणपमाणा वसही, अथिठंते चउलहुं च आणादी ।
मिच्छत्त अपाउड पडिलेह भाव सीसे य वाले य ।।

वृ- श्रवणप्रमाणा वसतिः कर्णयोरधस्तात् तृणादियुक्ता य भवति तस्यामधःश्रवणमात्रायां तिष्ठतश्चतुर्लघु, आज्ञादयश्च दोषा मिथ्यात्वं च बवति । कथम् ? इति चेद् इत्याह-येषां साधूनां सागारिकमपावृतं वैक्रियं वा तान् प्रविशतो दृष्ट्वा लोको ब्रूयात्-अहो ! ह्रीप्रच्छादनमपि तीर्थकरेण नानुज्ञातम्, लज्जामयश्च पुरुष-स्त्रियोरलङ्कारः, तद् नूनमसर्वज्ञ एवासी; एवं मिथ्यात्वगमनं भवेत्। "पडिलेह"त्ति उपर्यप्रत्युपेक्षिते शीर्षमास्फिटति, तत्र प्राणविराधनानिष्पन्नम्; अवनतानां च प्रविशतां निर्गच्छतां च कटी पृष्ठं वा वातेन गृह्यते । अवनतस्य च प्रविशतः सागारिकं लम्बमानं पृष्ठतः श्वानो मार्जारो वा त्रोटयेत् । "वाले य" त्ति उपरि सीर्षे आस्फिटिते सर्पो वृश्चिको वा दशेत् । यत एते दोषा अतोऽधःश्रवणमात्रायां वसतौ न स्थातव्यम् । द्वितीयपदे तिष्ठेयुरपि ।।

[भा.५६७४] सवणपमाणा वसही, खेत्ते ठायंते बाहि वोसग्गो ।
पाणादिमादिएसुं, वित्थिन्नाऽऽगाढ जतनाए ।।

वृ- परेषु क्षेत्रेष्वशिवादीनि भवेयुः ततः क्षेत्राभावेऽधः श्रवणमात्रायामप्यल्पप्राणादियुक्तायां तिष्ठतामियं यतना-वसतेर्बहिरावश्यकं कुर्वन्ति । अन्योऽपि य- 'व्युत्सर्ग' कायोत्सर्गः स बहिः क्रियते । द्वितीयपदे सप्राणेषु आदिसब्दाद् बीजादिष्वपि वसतौ विधानेषु तिष्ठेयुः तत्र यतनया विस्तीर्णायां तिष्ठन्ति । सा येष्ववकाशेषु संसक्ता तान् क्षारेण लक्षयन्ति, कुटमुखेन वा हरितादिकं स्थगयन्ति, दकमृत्तिका-बीजादीन्येकान्ते वृषभाः स्थापयन्ति । एवमागाढेकारणेस्थितानां यतना विज्ञेया ।।

[भा.५६७५] वेउव्व-ऽवाउडाणं, वुत्ता जयणा निसिज्ज कप्पो वा ।
उवओग निंतऽइंते, हु छिंदना नामना वा वि ।।

वृ- ये विकुर्विता-ऽपावृतसागारिकास्तेषां प्रथमोद्देशकोक्ता यतनाऽवधारणीया । प्रविशन्तो निर्गच्छन्तश्च पृष्ठतो निषद्यां कल्पं वा कुर्वन्ति । श्वानादीनामुपयोगं ददाना नित्यं निर्गच्छन्ति प्रविशन्ति च । यान्युपरि तृणान्यवलम्बन्ते तेषां प्रमार्ज्य छेदनं नामनं वा कुर्वन्ति ।। व्याख्यातं ऋतुबद्धसूत्रद्वयम् । अथ वर्षावाससूत्रद्वयं विवृणोति-

[भा.५६७६] अंजलिमउलिकयाओ, दोन्नि वि बाहा समूसिया मउडो ।
हेट्ठा उवरिं च भवे, मुक्कं तु तओ पमाणाओ ।।

अञ्जलिमुकुलीकृतौ द्वावपि बाहू समुच्छ्रितौ मुकुट उच्यते । मुक्तमुकुटं पुनः 'ततः प्रमाणात् तावत्प्रमाणमङ्गीकृत्य संस्तारकनिविष्टस्य उपरि च यत्रान्तरालं प्राप्यते ईदृश्यामुपरिरत्निमुक्त-मुकुटायां वसतौ वर्षाकाले स्थातव्यम् । कुतः ? इति चेद् उच्यते-

[भा.५६७७] हत्थो लंबइ हत्थं, भूमीओ सप्पो हत्थमुट्ठेति ।
सप्पस्स य हत्थस्स य, जह हत्थो अंतरा होइ ॥

वृ- फलकादी संस्तारके सुप्तस्य 'हस्तः' हस्तमेकं अधो लम्बते, भूमितश्च सर्पो हस्तमुत्तिष्ठति, ततः सर्पस्य च हस्तस्य च यथा हस्तो अन्तरा भवति तथा कर्तव्यम् ॥ तथा-

[भा.५६७८] माला लंबति हत्थं, सप्पो संथारए निविट्ठस्स ।
सप्पस्स य सीसस्स य, जह हत्थो अंतरा होइ ॥

वृ- संस्तारके निविष्टस्य मालात् सर्पो हस्तं लम्बते, ततः सर्पस्य च शीर्षस्य च यता हस्तो अन्तरा भवति तथा विधेयम्, ईदृक्प्रमाण उपाश्रयो ग्रहीतव्य इत्यर्थः ॥

[भा.५६७९] काउस्सग्गं तु ठिए, मालो जइ हवइ दोसु रयणीसु ।
कप्पइ वासावासो, इय तणुंजेसु सव्वेसु ॥

वृ- कायोत्सर्गं स्थितस्य मालो यदि द्वयो रत्नोरुपरि भवति तदा कल्पते तस्यां वसतौ वर्षावासः कर्तुम् । "इय" एवं सर्वेष्वपि तृणपुञ्जेषु विधिर्द्रष्टव्यः ॥

[भा.५६८०] उप्पिं तु मुक्कमउडे, अहि ठंते चउलहुं च आणाई ।
मिच्छत्ते वालाई, बीयं आगाढ संविग्गो ॥

वृ- अत उपरिमुक्तमुकुटे प्रतिश्रये स्थातव्यम् । अथाधोमुक्तमुकुटे तिष्ठति ततश्चतुर्लघु आज्ञादयो मिथ्यात्वं व्यालादयश्च दोषाः पूर्वसूत्रोक्ता भवन्ति । द्वितीयपदमप्यागाढे कारणे तथैव मन्तव्यम्। तत्र च तिष्ठन् संविग्न एव भवति ॥ अत्रेयं यतना-

[भा.५६८१] दीहाइमाईसु उ चिलबंधं, कुव्वंति उल्लोय कडं च पोत्तिं ।
कप्पाऽसईए खलु सेसगाणं, मुत्तुं जहन्नेण गुरुस्स कुज्जा ॥

वृ- दीर्घजातीयादिषु वसतौ विद्यमानेषु तेषां चिल्या बन्धं कुर्वन्ति । चिलाया अभावे उपरिष्टादुल्लोचं कुर्वन्ति । उल्लोचाभावे कटम् । कटाभावे "पोत्तिं"ति चिलिमिलिकां सर्वसाधूनामुपरि कुर्वन्ति । अथ तावन्तः कल्पा न विद्यन्ते ततः शेषाणां मुक्त्वा जघन्येन गुरोरुपरिष्टादुल्लोचं कुर्यात् ॥

श्रीचूर्णिकारवदनानवचोमरन्दनिष्यन्दपारणकपीवरपेशलश्रीः ।
उद्देशके मम मतिभ्रमरी तुरीये, टीकामिषेण मुखरत्वमिदं वितेने ॥

उद्देशकः-४ समाप्तः

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता बृहत् कल्पसूत्रे चतुर्थोद्देशकस्य (भद्रबाहु स्वामि रचिता निर्युक्ति युक्त) संघदासगणि विरचितं भाष्यं एवं मलयगिरि क्षेमकीर्तिआचार्याभ्यां विरचिताटीका परिसमाप्ता ।**

## उद्देशकः-५

व्याख्यातश्चतुर्थोद्देशकः । सम्प्रति पञ्चम आरभ्यते । तस्य चेदमादिसूत्रचतुष्टयम्-

**मू. (१४३)** *देवे य इत्थिरूवं विउव्वित्ता निग्गंथं पडिगाहिज्जा, तं च निग्गंथे साइज्जेज्जा, मेहुणपडिसेवणपत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अनुग्घाइयं ॥*

**मू. (१४४)** *देवी य इत्थिरूवं विउव्वित्ता निग्गंथं पडिगाहिज्जा, तं च निग्गंथे साइज्जेज्जा,*

*मेहुणपडिसेवणप्पत्ते आवज्जइ चाउम्मासियं परिहारट्ठाणं अनुग्घाइयं ॥*

**मू. (१४५)** *देवी य पुरिसरूवं विउव्विता निग्गंथिं पडिगाहेज्जा, तं च निग्गंथी साइज्जेज्जा, मेहुणपडिसेवणपत्ता आवज्जइ चाउम्मासियं अनुग्घाइयं ॥*

**मू. (१४६)** *देवे य पुरिसरूवं विउव्वित्ता निग्गंथिं पडिगाहिज्जा, तं च निग्गंथी साइज्जिज्जा, मेहुणपडिसेवणपत्ता आवज्जइ चाउम्मासियं अनुग्घाइयं ॥*

**वृ-** अथास्य सूत्रचतुष्टयस्य कः सम्बन्धः ? इत्याह–

**[भा.५६८२]** पाएण होंति विजणा, गुज्झगसंसेविया य तणपुंजा ।
होज्ज मिह संपयोगो, तेसु य अह पंचमे जोगो ॥

**वृ-** प्रायेण तृणपुञ्जाः 'विजनाः' जनसम्पातरहिताः गुह्यकैश्च-व्यन्तरैः सेविताः-अधिष्ठिता भवन्ति, ततस्तेषु तिष्ठतां तैः सह मिथः सम्प्रयोगोऽपि भवेत्, अत इदं सूत्रमारभ्यते ।
'अथ' एष पञ्चमोद्देशके आद्यसूत्रचतुष्टयस्य सम्बन्धः ॥

**[भा.५६८३]** अवि य तिरिओवसग्गा, तत्थुदिया आयवेयणिज्जा य ।
इमिगा उ होंति दिव्वा, ते अडिलोमा इमे इयरे ॥

**वृ-** 'अपि च' इति सम्बन्धस्य प्रकारान्तराभ्युच्चये । 'तत्र' इति अनन्तरसूत्रे 'तिर्यगुपसर्गा' व्यालादिकृताः 'आत्मसंवेदनीयाश्च' वातेन कटीग्रहणादयः 'उदिताः' भणिताः, एतेषु प्रस्तुतसूत्रेषु दिव्या उपसर्गा उच्यन्ते । उपसर्गाश्च द्विधा-'प्रतिलोमाः' प्रतिकूलाः 'इतरे च' अनुकूलाः । तत्र प्रतिकूलाः पूर्वसूत्रोक्ताः, इहानुकूला भण्यन्ते ॥

**[भा.५६८४]** अहवा आयावाओ, चउत्थचरिमम्मि पवयणे चेव ।
इमओ बंभावाओ, तस्स उ भंगम्मि किं सेसं ॥

**वृ-** अथवा चतुर्थोद्देशकचरमसूत्रे आत्मापायः प्रवचनापायाश्चोक्तः, अयं पुनः प्रस्तुतसूत्रेषु ब्रह्मव्रतापाय उच्यते । तस्य हि भङ्गे किं नाम शेषमभग्नम् ? अतस्तद्भङ्गो मा भूदिति प्रकृतसूत्रारम्भः । अथवा चतुर्थेन प्रकारेण सम्बन्धः, तमेवाह-

**[भा.५६८५]** सरिसाहिकारियं वा, इमं चउत्थस्स पढमसुत्तेणं ।
अन्नहिगारम्मि वि पत्थुतम्मि अन्नं पि इच्छंति ॥

**वृ-** अथवा इदं सूत्रं चतुर्थोद्देशकस्य 'प्रथमसूत्रेण' "तओ अनुग्घाइया पन्नत्ता" इत्यादिरूपेण समं सदृशाधिकारिकम्, तत्राप्यनुद्घातिकाधिकार उक्त इहापि स एवाभिधीयत इति भावः । आह-चतुर्थप्रथमसूत्रानन्तरमपराणि भूयांसि सूत्राणि गतानि तेषु चापरापरेऽधिकारास्ततः कथमयं सम्बन्धो घटते ? इत्याह-अन्यस्मिन्नधिकारे प्रस्तुतेऽप अन्यमधिकारमिच्छन्ति सूरयः ॥
तथा चात्र दृष्टान्तः-

**[भा.५६८६]** जह जाइरूवधातुं, खणमाणो लभिज्ज उत्तमं वयरं ।
तं गिण्हइ न य दोसं, वयंति तहियं इमं पेवं ॥

**वृ-** यथा जातरूपं-सुवर्णं तस्य धातुं खनमानो यदि उत्तमं वज्रं लभेत ततस्तं गृह्णाति न च तस्य वज्रं गृह्णतः कमपि दोषं वदन्ति । एवम् 'इदमपि' प्रस्तुतमपराधिकारे प्रस्तुतेऽपराधिकारग्रहणं

न विरुध्यते ॥ अत्र परः प्राह-ननु चानेन सुवर्ण-वज्रदृष्टान्तेनेदमापन्नम्-अधस्तनसूत्रेभ्यः पञ्चमस्यादिसूत्रं प्रधानतरम्। सूरिराह-नैवम्, प्राधान्यस्योभयोरप्यापेक्षिकतया तुल्यत्वात्। तथाहि-

[भा.५६८७] कणएण विना वइरं, न भायए नेव संगहमुवेइ।
न य तेन विना कणगं, तेन र अन्नोन्न पाहन्नं ॥

वृ-कनकेन विना वज्रं 'न भाति' न शोभते न च 'सङ्ग्रहं' सम्बन्धमुपैति, आश्रयाभावात्; न च 'तेन' वज्रेण विना कनकं शोभते, तेन कारणेन 'र' इति निपातः पादपूरणे उभयोरप्यन्योन्यं प्राधान्यम्। एवमधस्तनसूत्राणां कनकतुल्यानां पञ्चमोद्देशकादिसूत्रस्य च वज्रतुल्यस्य पापप्रतिषेधकत्वात् तुल्यमेव प्राधान्यम् ॥ अनेन सम्बन्धचतुष्टयेनापतितस्यास्य व्याख्या-देवश्च स्त्रीरूपं विकुर्व्य निर्ग्रन्थं प्रतिगृह्णीयात, तत्र निर्ग्रन्थो मैथुनप्रतिसेवनप्राप्तो यदि 'स्वादयेद्' अनुमोदयेत् तत आपद्यते चातुर्मासिकं परिहारस्थानमनुद्घातिकम् ॥

एवं द्वितीयसूत्रं देवी स्त्रीरूपं विकुर्व्य निर्ग्रन्थं प्रतिगृह्णीयादित्याद्यपि मन्तव्यम् ॥ तृतीयसूत्रम्-देवी पुरुषस्य रूपं विकुर्व्य निर्ग्रन्थीं प्रतिगृह्णीयात्, तत्र निर्ग्रन्थी स्वादयेद्, मैथुनप्रतिसेवनप्राप्ता आपद्यते चातुर्मासिकमनुद्घातिकं स्थानम् ॥ एवं देवः पुरुषरूपं विकुर्व्य निर्ग्रन्थीं प्रतिगृहणी-यादित्याद्यपि चतुर्थसूत्रं वक्तव्यम्। सूत्रचतुष्टयार्थः ॥ अथाद्यसूत्रद्वयं यावद् विवरीषुराह-

[भा.५६८८] देवे य इत्थिरूवं, काउं गिण्हे तहेव देवी य।
दोसु वि य परिणयाणं, चाउम्मासा भवे गुरुगा ॥

वृ-देवो देवी वा स्त्रीरूपं कृत्वा निर्ग्रन्थं गृह्णीयात्। ततः किम्? इत्याह-'द्वयोरपि' देवदेवीस्त्रियोः प्रतिसेवने परिणतानां चत्वारो मासा गुरुकाः प्रायश्चित्तं भवेत् ॥ अथैतयोः सूत्रयोर्विषयसम्भवमाह-

[भा.५६८९] गच्छगय निग्गए वा, होज्ज तगं तत्थ निग्गमो दुविहो।
उवएस अनुवएसे, सच्छंदेणं इमं तत्थ ॥

वृ- गच्छगतस्य गच्छनिर्गतस्य वा 'तद्' अनन्तरोक्तं वृत्तान्तजातं भवेत्। तत्र गच्छाद् निर्गमो द्विविधः-उपदेशेन अनुपदेशेन च। अनुपदेशः स्वच्छन्द इति चैकोऽर्थः। तत्र स्वच्छन्देन इदं गच्छाद् निर्गमनमभिधीयते ॥

[भा.५६९०] सुत्तं अत्थो य बहु, गहियाइं नवरि मे झरेयव्वं।
गच्छम्मि य वाघायं, नाईऊण इमेहिं ठाणेहिं ॥

वृ- कश्चिद् गृहीतसूत्रार्थश्चिन्तयति-सूत्रमर्थश्च मया 'बहू' प्रभूतौ गृहीतौ, नवरमिदानीं मया पूर्वगृहीतं ''झरेयव्वं''ति 'स्मर्तव्यं' परिजितं कर्तव्यम्, गच्छे च स्मरणस्यामीभि 'स्थानैः' कारणैर्व्याघातं ज्ञात्वा निर्गमने मतिं करोति ॥ कानि पुनस्तानि स्थानानि ? इत्याह-

[भा.५६९१] धम्मकह महिड्ढीए, आवास निसीहिया य आलोए।
पडिपुच्छ वादि पाहुण, महान गिलाणे दुलभभिक्खं ॥

वृ- स धर्मकथालब्धिसम्पन्नस्ततो भूयान् जनः श्रोतुमागच्छतीति धर्मकथया व्याघातः। 'महर्द्धिकः' राजादिर्धर्मश्रवणाय समायाति तस्य विशेषतः कथनीयम्, तदावर्जने भूयसामावर्जनात्। तथा महति गच्छे बहवो निर्गच्छन्त आवश्यिकीं कुर्वन्ति प्रविशन्तो नैषेधिकीं कुर्वन्ति ते सम्यग् निरीक्षणीयाः। चशब्दाद् असङ्खडव्यवशमनादौ वा भूयसी वेला लगेत्। ''आलोए'' त्ति भिक्षामटित्वा

समागतानामन्यसाधूनामालोचयतां [illegible] वर्त्तते [illegible]। तथा गच्छे [illegible] बहवः प्रतिपृच्छानिमित्तमागच्छन्ति तेषां प्रत्युत्तरदाने व्याघातः। तं च बहुश्रुतं तत्र स्थितं श्रुत्वा वादिनः समागच्छन्ति ततस्तेऽपि निग्रहीतव्याः, अन्यथा प्रवचनोपघातः। तथा "महाजने"त्ति 'महाजने' महति गणे बहवः प्राघूर्णकाः समागच्छन्ति तेषां विश्रामणया पर्युपासनया च व्याघातः। तथा बहवो महति गणे ग्लानास्तदर्थमौषधादिकमानेतव्यम्। दुर्लभं वा तत्र क्षेत्रे भैक्षं तदर्थं चिरमटनीयम्। एवंविधो व्याघातो गच्छे भवतीति सङ्ग्रहगाथासमासार्थः ॥

साम्प्रतं विस्तरार्थ-मभिधित्सुर्धर्मकथाद्वारं सुगममित्यनादृत्य महर्द्धिकद्वारं व्याख्याति-तत्र यो राजा राजामात्योऽपरो वा महर्द्धिको धर्मश्रवणायागच्छति तस्यावश्यं विशेषेण च धर्म कथनीयः। परः प्राह-किं कारणं महर्द्धिकस्य विशेषतो धर्मकथा क्रियते ? ननु भगवद्भिरित्थमुक्तम्-"जहा पुन्नस्स कत्थई तहा तुच्छस्स कत्थई" अत्रोच्यते-

[भा.५६९२] कामं जहेव कत्थति, पुन्ने तह चेव कत्थई तुच्छे।
वाउलणाय न गिण्हइ, तम्मि य रुट्ठे बहू दोसा ॥

वृ- 'कामम्' अनुमतमिदं यथैव 'पूर्णस्य' महर्द्धिकस्य धर्म कथ्यते तथैव 'तुच्छस्य' अल्पर्द्धिकस्यापि कथ्यते, परं स महर्द्धिको व्याकुलनातो यथातथा धर्मं कथ्यमानं सम्यग् 'न गृह्णाति' न प्रतिपद्यते रोषं च गच्छति, 'तस्मिंश्च' राजेश्वर-तलवरादिके रुष्टे 'बहवः' निर्विषयाज्ञापनादयो दोषाः, अतोऽवश्यं विशेषेण वा तस्य धर्म कथनीयः; एवं सूत्रार्थस्मरणव्याघातः। अथवा गुरवो महर्द्धिकाय धर्मं कथयन्ति तदानीमपि तूष्णीकैर्भवितव्यम्, मा भूत् कोलाहलतस्तस्य सम्यग्धर्माप्रतिपत्तिरिति कृत्वा ॥ आवश्यिकी-नैषेधिकीपदे चशब्दसूचितं चार्थं व्याचष्टे-

[भा.५६९३]आवासिगा-ऽऽसज्ज-दुपेहियादी, विसीयते चेव सवीरिओ वि।
विओसणे वा वि असंखडाणं, आलोयणं वा वि चिरेण देती ॥

वृ- आवश्यकीकरणे उपलक्षणत्वाद् नैषेधिकीकरणे आसन्नकरणे दुःप्रत्युपेक्षित-दुःप्रमार्जनादिकरणे च 'सवीर्योऽपि' समर्थोऽपि यः प्रमादबहुलतया विषीदति स सम्यग् निरीक्ष्य शिक्षणीयः। असङ्खडानि च साधूनामुत्पद्येरन् तेषां व्युपशमने भूयसी वेला लगति। प्रतिक्रमणे वा प्रभूतसाधुसमूहः क्रमेणालोचयन् चिरेणालोचनां ददाति ॥

[भा.५६९४] मेरं ठवंति थेरा, सीदंते आवि साहति पवत्ती।
थिरकरण सड्ढहेउं, तवोकिलंते य पुच्छंति ॥

वृ- 'स्थविराः' आचार्या यावद् 'मर्यादां' सामाचारीं स्थापयन्ति तावत् चिरीभवति। यो वा कोऽपि सामाचार्यां सीदति तस्य प्रवृत्तिर्यावद् आचार्याणां निवेद्यते तावत् स्वाध्यायपरिमन्थः। अभिनवश्राद्धस्य वा स्थिरीकरणार्थं धर्म कथनीयः। ये च तपस्विनो विकृष्टतपसा क्लान्तास्ते 'सुखतपः समस्ति भवताम् ?' इति भूयोभूयः प्रष्टव्याः ॥

[भा.५६९५] आवासिगा निसीहिगमकरेंते असारणे तमावज्जे।
परलोइगं च न कयं, सहायगत्तं उवेहाए ॥

वृ- अनावश्यिकी-नैषेधिक्यादिसामाचारीमकुर्वतामाचार्य सारणां न करोति ततो यत् तदकरणे प्रायश्चित्तं तद् उपेक्षमाण आचार्य आपद्यते। उपेक्षायां च पारलौकिकं सहायत्वं तेषामाचार्येण

कृतं न भवति। तदकरणाच्च नासौ तत्त्वतस्तेषां गुरु। तथा चोक्तम्-

अशासितारं च गुरुं मन्दस्नेहं च बान्धवम्।
अदातारं च भर्तारं, जनस्थाने निवेशयेत्॥

"आलोए" त्ति पदं व्याख्याति-

[भा.५६९६] सम्मोहो मा दोण्हवि, वियडिज्जंतम्मि तेन न पढंति।
पडिपुच्छे पलिमंथो, असंखडं नेव वच्छल्लं॥

वृ- ये भिक्षाचर्यां गतास्ते आगत्य यावद् आलोचयन्ति तावत् पूर्वागतानां परिवर्तनव्याघातः। अथालोचयतामपि परिवर्तयन्तिततं आचार्या आलोच्यमानं नावधारयन्ति। आलोचकोऽपि सम्यग् हस्तं मात्रकं व्यापारं वा तेन व्याक्षेपेण न स्मरति। एवं 'द्वयेषामपि सम्मोहो मा भूत्' इति कृत्वा 'विकटय्यमाने' आलोच्यमाने यन्न पठन्ति एष व्याघातः। "पडिपुच्छ" त्ति द्वारं व्याख्यायते-तस्यान्तिके ये सूत्रार्थप्रतिपृच्छां कुर्वते तेषां प्रत्युत्तरं ददतः स्वाध्यायपरिमन्थः। अथ प्रत्युत्तरं न ददाति ततस्ते रुष्येयुः-'स्तब्धस्त्वम्, कस्तवान्तिके प्रश्नयिष्यति?' इत्यादि च जल्पन्ति; ततोऽसङ्खडं भवति। न च प्रतिवचनमप्रयच्छता साधर्मिकवात्सल्यं कृतं भवति॥

अथ वादि-प्राघुणक-महाजन-ग्लान-दुर्लभभैक्षद्वाराणि व्याचष्टे-

[भा.५६९७] चिंतेइ वादसत्थे, वादिं पडियरति देति पडिवायं।
महइ गणे पाहुणगा, वीसामण पज्जुवासणया॥

वृ- वादिनमागच्छन्तं श्रुत्वा वादशास्त्राणि चिन्तयति। तं च वादितं यावत् प्रतिचरतिप्रतिवादं च यावत् तस्य प्रयच्छति तावद् व्याघातः। तथा महति गणे प्राघुणका आगच्छेयुः तेषां विश्रामणा पर्युपासना च कर्तव्या॥

[भा.५६९८] आलोयणा सुणिज्जति, जाव य दिज्जइ गिलाण-बालाणं।
हिंडंति चिरं अन्ने, पाओगुभयस्स वा अट्ठा॥

वृ- आलोचना च यावत् तेषां श्रूयते, यावच्च ग्लान-बालानां दीयते, तथा प्राघुणकादीनां प्रायोग्यस्य उभयस्य-भक्तस्य पानकस्य चार्थाय चिरमेके पर्यटन्ति, 'अन्ये च' निवृत्ता अपि तानागच्छतो यावत् प्रतीक्षन्ते॥

[भा.५६९९] पाउग्गोसह-उव्वत्तणादि अतरंति जं च वेज्जस्स।
किमहिज्जउ खलुभिक्खे, केसवितो भिक्ख-हिंडीहिं॥

वृ- 'अतरतः' ग्लानस्य प्रायोग्यौषधादिकं यावद् आनयन्ति, उद्वर्तनादिकं वातस्य कुर्वन्ति, वैद्यस्य वा 'यद्' मज्जनादिकं परिकर्म कुर्वन्ति तावद् व्याघातः। खलुक्षेत्रे वा स्वल्पया भिक्षया बाह्यया च हिण्डया चिरं क्लेशितः सन् किमधीताम्? न किञ्चिदित्यर्थः॥

[भा.५७००] ते गंतुमना बाहिं, आपुच्छंती तहिं तु आयरियं।
भणिया भणंति भंते!, न ताव पज्जत्तगा तुब्भे॥

वृ- एतैः कारणैः 'तत्र' गच्छे व्याघातं मत्वा 'ते' गृहीतसूत्रार्था साधवो बहिर्गन्तुमनस आचार्यमापृच्छन्ति। तत आचार्येण वारिता दिव्य-मानुष्य-तैरश्चोपसर्गसहने विहारे च न तावद् अद्यापि यूयं पर्याप्ताः। एवं भणितास्ते भणन्ति-भदन्त! युष्मच्चरणप्रसादेनेदृशा भविष्यामः॥

[भा.५७०१] उप्पन्ने उवसग्गे, दिव्वे माणुस्सए तिरिक्खे य ।
इंदि ! असारं नाउं, मानुस्सं जीवलोगं च ॥

वृ- दिव्य-मानुष्य-तैरश्चान् उपसर्गान् उत्पन्नान् सम्यगधिसहिष्याम इत्युपस्कारः । कुतः ? इत्याह-'इन्दि' इति हेतूपदर्शने, वयं मानुष्यं जीवलोकं चासारमेव जानीमस्ततस्तदद् ज्ञात्वा कथमुपसर्गान् न सहिष्यामः ? ॥

[भा.५७०२] ते निग्गया गुरुकुला, अन्नं गामं कमेण संपत्ता ।
काऊण विद्दरिसणं, इत्थीरूवेणुवस्सग्गो ॥

वृ- एवमुक्त्वा 'ते' साधवः स्वच्छन्देन गुरुकुलाद् निर्गताः क्रमेणान्यं ग्रामं सम्प्राप्ताः, तत्र चैकस्यां देवकुलिकायां स्थिताः । तेषां मध्ये यो मुख्यः स प्रतिश्रयपालः स्थितः, शेषा भिक्षार्थं प्रविष्टाः । ततः कयाचिद् देवतया 'विदर्शनं' विशेषेण दर्शनीयं रूपं कृत्वा स्त्रीरूपेणोपसर्ग कृतः।
इदमेव सुव्यक्तमाह-

[भा.५७०३] पंता व नं छलिज्जा, नाणादिगुणा व होंतु सिं गच्छे ।
न नियत्तिहिंतऽछलिया, मद्दयर भोग वीमंसा ॥

वृ- सम्यग्दष्टिरेका देवता चिन्तयति-एते तावद् अनुपदेशेन प्रस्थिताः अतो माऽमून् प्रान्ता देवता छलयेद्, ज्ञानादयो वा गुणाः "सिं" अमीषां गच्छे वसतां भवन्तु इति कृत्वा केनाप्युपसर्गेणाच्छलिताः सन्तो न नि[illegible] इतिबुद्ध्या [illegible] । इतरा तु प्रान्ता भोगार्थिनी 'विमर्शं वा' परीक्षां कर्तुकामा छलयेत् ॥ कतं पुनः स्त्रीरूपेणोपसर्गयेत् ? इत्याह-

[भा.५७०४] भिक्ख गय सत्थ चेडी, गुज्झक्खिणी अम्ह साविया कहणं ।
विहवारूवविउव्वण, किइकम्माऽऽलोयणा इणमो ॥

वृ- सा देवता भिक्षां गतेषु साधुषु सार्थं विकुर्व्य तां देवकुलिकां परिक्षिप्यावासिता । ततश्चेटिकारूपं विकुर्व्य प्रतिश्रयमागत्य साधुं वन्दित्वा भणति-'गोज्झक्खिणी' स्वामिनी मदीया श्राविका, सा न जानाति अत्र साधून् स्थितान्, ततोऽहं स्वामिन्याः कथयामि येन सा युष्मान् वन्दितुमायाति। ततः सा निर्गत्य विधवारूपं विकुर्व्य चेटिकाचक्रवालपरिवृता प्रतिश्रयमागत्य 'कृतिकर्म' वन्दनं कृत्वा पर्युपास्ते ततः साधुना भणिता-कुतः श्राविका समायाता ? । ततः सा इमामालोचनां ददाति ॥

[भा.५७०५] पाडलिपुत्ते जम्मं, साएतगसेट्ठिपुत्तभज्जत्तं ।
पइमरण चेइवंदनछोम्मेण गुरू विसज्जणया ॥

[भा.५७०६] पव्वज्जाए असत्ता, उज्जेनिं भोगकंखिया जामि ।
तत्थ किर बहू साधू, अवि होज्ज परीसहजिय त्था ॥

वृ-पाटलिपुत्रे नगरे मम जन्म समजनि, साकेतवास्तव्यस्य श्रेष्ठिपुत्रस्य च भार्यात्वम्, पतिमरणे च सञ्जाते चैत्यवन्दनच्छद्मना 'गुरुभ्यः' श्वशुरादिभ्य आत्मनो विसर्जनं कृत्वा सम्प्रति प्रव्रज्यायामशक्ता सती उज्जयिन्यां भोगानां काङ्क्षिका गच्छामि । 'तत्र' उज्जयिन्यां किल इति श्रूयते-बहवः साधवः परीषहपराजिताः सन्ति, 'थ' इति निपातः पादपूरणे, अमुनाऽभिप्रायेण निर्गताऽहम्, साम्प्रतं तु युष्मासु दृष्टेषु मदीयं मनो नाग्रतो गन्तुं ददाति ॥ ततः-

[भा.५७०७] दूरे मज्झ परिजणो, जोव्वणकंडं चऽतिच्छए एवं ।
पेच्छह विभवं मे इमं, न दानि रूवं सलाहामि ॥

[भा.५७०८] पडिरूववयत्थाया, किणा वि मज्झं मणिच्छिया तुब्भे ।
भुंजामु ताव भोए, दीहो कालो तव-गुणाणं ॥

वृ- दूरे तावद् मदीयः परिजनः, 'यौवनकाण्डं च' तारुण्यावसर आवयोरेवमतिक्राम्द वर्तते, पश्यत मदीयम् 'एनम्' एतावत्परिस्पन्दरूपं विभवम्, रूपं पुनरात्मीयं नेदानीमहं श्लाघे प्रत्यक्षोपलभ्यमानत्वान्न तद् वर्णयितुमुचितमित्यर्थः, यूयं च मम प्रतिरूपवयस्थायाः केनापि कारणेनात्यन्तं मनस ईप्सितास्ततो भुञ्जीवहि तावद् भोगान्, तपो-गुणानां तु पालने दीर्घ पश्चादपि कालो वर्तते ॥

[भा.५७०९] भणिओ आलिद्धो या, जंघा संफासणाय ऊरूयं ।
अवतासिओ विसन्नो छट्ठो पुण निप्पकंपो उ ॥

वृ-एवं तया भणितमात्रे एव प्रथमः 'विषन्नः', पराभग्नः, प्रतिसेवितुं परिणत इत्यर्थः । द्वितीयो भणितोऽपि यदा नेच्छति तदा सुकुमारहस्तैराश्लिष्टस्ततो विषन्नः । तृतीय आश्लिष्टोऽप्यनिच्छन् जङ्घाभ्यां संस्पृष्टो विषन्नः । एवं चतुर्थ ऊरुभ्यां संस्पृष्टो विषन्नः । पञ्चमः 'अवतासितः' बलामोटिकया आलिङ्गितो विषन्नः । षष्ठः पुनः सर्वप्रकारैः क्षोभ्यमानोऽपि निष्प्रकम्पः ॥ अथ एषु प्रायश्चित्तमाह-

[भा.५७१०] पढमस्स होइ मूलं, बितिए छेओ य छग्गुरुगमेव ।
छल्लहुगा चउगुरुगा, पंचमए छट्ठ सुद्धो उ ॥

वृ- अत्र प्रथमस्य मूलम्, द्वितीयस्य च्छेदः, तृतीयस्य षड्गुरु, चतुर्थस्य षड्लघु, पञ्चमस्य चतुर्गुरु, अत्र च सूत्रनिपातः । षष्ठस्तु शुद्धः ॥

[भा.५७११] सव्वेहि पगारेहिं, छंदणमाईहि छट्ठओ सुद्धो ।
तस्स वि न होइ गमनं, असमत्तसुए अदिन्ने य ॥

वृ-सर्वैरपि प्रकारैः छन्दनादिभिर्निष्प्रकम्पत्वात् षष्ठो यद्यपि शुद्धस्तथापि तस्याप्यसमाप्तश्रुतस्य गुरुभि 'अदत्ते' अननुज्ञाते गणाद् निर्गमनं 'न भवति' न कल्पते ॥ यैः प्रथमादिभिः पञ्चमान्तैर्नाधिसोढं ते भद्रिकया देवतया भणिताः-अहो ! भवद्भि प्रतिज्ञा निर्वाहिता, गर्जित्वा निर्गतानां दृष्टा भवदीयाऽवस्था ?, मयैतद् युष्माकमनुशासनाय कृतम् 'मा प्रान्ता देवता छलयिष्यति' इति कृत्वा, ततो नाद्यापि किमपि विनष्टम्, गच्छत भूयोऽपि गच्छम् । एवमुक्त्वा सा प्रतिगतेति।

[भा.५७१२] एए अन्ने य बहू, दोसा अविदिन्ननिग्गमे भणिया ।
मुच्चइ गणममुयंतो, तेहिं लभते गुणा चेमे ॥

वृ- एते अन्ये च बहवो दोषाः अवितीर्णस्य-अननुज्ञातस्य गणाद् निर्गमे भणिताः । यस्तु गणं न मुञ्चति स तैर्दोषैर्मुच्यते, गुणांश्चामून् लभते ॥

[भा.५७१३] नाणस्स होइ भागी, थिरयरओ दंसणे चरित्ते य ।
धन्ना गुरुकुलवासं, आवकहाए न मुंचंति ॥

वृ- 'ज्ञानस्य' अपूर्वश्रुतस्य आभागी भवति, दर्शने च सम्मत्यादिशास्त्रवगाहनादिना चरणे

च सारणादिना स्थिरतरो भवति, अत एव 'धन्याः' धर्मधनं लब्धारः शिष्या गुरुकुलवासं 'यावत्कथया' यावज्जीवं न मुञ्चन्ति ।। किञ्च-

[भा.५७१४] गीतावासो रई धम्मे, अनाययणवज्जणा ।
निग्गहो य कसायाणं, एयं धीराण सासनं ।।

वृ- गच्छे 'भीतावासो भवति' आचार्यादिभयभीतैः सदैवाऽऽसितव्यम्, न किमप्यकृत्यं प्रतिसेवितुं लभ्यत इति भावः । 'धर्मे च' वैयावृत्य-स्वाध्यायादिरूपे रतिर्भवति, 'अनायतनस्य च' स्त्रीसंसर्गप्रभृतिकस्य वर्जनं भवति, कषायाणां चोदीर्णानां आचार्यादीनामनुशिष्ट्या 'निग्रहः' विध्यापनं भवति । 'धीराणां' तीर्थकृतामेतदेव 'शासनम्' आज्ञा, यथा-गुरुकुलवासो न मोक्तव्यः ।

अपि च-

[भा.५७१५] जइमं साहुसंसग्गिं, न विमोक्खसि मोक्खसि ।
उज्जतो व ते निच्चं, न होहिसि न होहिसि ।।

वृ- यदि एनां साधुसंसर्गिं 'न विमोक्ष्यसि' न परित्यक्ष्यसि ततः 'मोक्ष्यसि' मुक्तो भविष्यसि । यदि च 'तपसि' अनशनादौ सुखलम्पटतया नोद्यतो भविष्यसि ततोऽव्याबाधसुखी न भविष्यसि ।

[भा.५७१६] सच्छंदवत्तिया जेहिं, सग्गुणेहिं जढा जढा ।
अप्पणो ते परेसिं च, निच्चं सुविहिया हिया ।।

वृ- यैः साधुभिः स्वच्छन्दवर्तिता 'जढा' परित्यक्ता । कथम्भूता ? सद्भि-शोभनैर्ज्ञानादिभिर्गुणैः 'जढा' रहिता, आत्मनः 'परेषां च' षण्णां जीवनिकायानां नित्यं ते सुविहिता हिता इति प्रकटार्थम् ।

[भा.५७१७] जेसिं चाऽयं गणे वासो, सज्जणानुमओ मओ ।
दुहाऽवाऽऽराहियं तेहिं, निव्विकप्पसुहं सुहं ।।

वृ- 'येषां च' साधूनाम् 'अयम्' इत्यात्मनाऽनुभूयमानो गणे वासः 'मतः' अभिरुचितः कथम्भूतः ? सज्जनाः-तीर्थकरादयस्तेषामनुमतः सज्जनानुमतः । 'तैः' साधुभिः 'निर्विकल्पसुखं' निरुपमसौख्यं 'सुखम्' इति सुखेनैव द्विधाऽप्याराधितम्, तद्यथा-श्रमणसुखं निर्वाणसुखं च । अत्र श्रमणसुखं निरुपममित्थं मन्तव्यम्-

नैवास्ति राजराजस्य तत् सुखं नैव देवराजस्य ।
यत् सुखमिहैव साधोर्लोकव्यापाररहितस्य ।।

निर्वाणसुखं तु निरुपमं प्रतीतमेवेति ।।

[भा.५७१८] नवधम्मस्स हि पाएण, धम्मे न रमती मती ।
वहए सो वि संजुत्तो, गोरिवाविधुरं धुरं ।।

वृ- नवधर्मणो हि प्रायेण 'धर्मे' श्रुत-चारित्ररूपे न रमते मति, परं गच्छे वसतस्तस्यापि धर्मे रतिर्भवति । तथा चाह-'सोऽपि' नवधर्मा साधुभिः संयुक्तः संयमधुरामविधुरां वहेति । गौरिव द्वितीयेन गवा संयुक्तः 'अविधुरां' अविषमां 'धुरं' शकटभारं वहति, एकस्तु वोढुं न शक्नोति ।

[भा.५७१९] एगागिस्स हि चित्ताइं, विचित्ताइं खणे खणे ।
उप्पज्जंति वियंते य, वसेवं सज्जने जने ।।

वृ- एकाकिनो हि 'चित्तानि' मनांसि 'विचित्राणि' शुभा-ऽशुभाध्यवसायपरिणतानि क्षणे

क्षणे उत्पद्यन्ते व्ययन्ते च, यत एवमतः 'सज्जने' सुसाधुजनसमूहरूपे जने वसेदिति । एते गुणागच्छे वसतामुक्ताः ॥ एवं गच्छनिर्गतस्य प्रस्तुतसूत्रसम्भव उक्तः । सम्प्रति गच्छान्तर्गतस्य तमाह-

[भा.५७२०] अहवा निग्गयस्सा, भिक्ख वियारे य वसहि गामे य ।
जहि ठाणे साइज्जति, चउगुरु बितियम्मि एरिसगो ॥

वृ- 'अथवा' इति न केवलं गच्छाद् निर्गतस्य प्रायश्चित्तं किन्तु गच्छादनिर्गतस्यापि भिक्षाचर्यां विचारभूमिं वा गतस्य वसतौ वा तिष्ठतो ग्रामबहिर्वा यत्र स्थाने देवः स्त्रीरूपेण निर्ग्रन्थं गृह्णाति तत्र यद्यसौ स्वादयति तदा तस्यापि चतुर्गुरु । एतावता प्रथमसूत्रं [illegible] । द्वितीयसूत्रेऽपि यत्र देवी स्वरूपं विकुर्व्य निर्ग्रन्थं गृह्णीयादित्युक्तं तत्राऽपीदृश एव गमः ॥

अथ निर्ग्रन्थीसूत्रद्वयं व्याख्याति-

[भा.५७२१] एसेव गमो नियमा, निग्गंथीणं पि होइ नायव्वो ।
नवरं पुन नाणत्तं, पुव्वं इत्थी ततो पुरिसो ॥

वृ- एष एव गमो निर्ग्रन्थीनामपि ज्ञातव्यः । नवरमत्र नानात्वम्-पूर्वं "देवी य पुरिसरूवं विउव्वित्ता निग्गंथिं पडिगाहेज्जा" इति स्त्रसूत्रम्, ततः "देवे य पुरिसरूवं" इत्यादिकं द्वितीयं पुरुषसूत्रम् । अनयोरपि सम्भवो धर्मकथादिभिर्व्याघातनिर्गमनाद् निर्गमने तथैव मन्तव्यो यावत् ता अप्यार्यिका देवकुलिकायां स्थिताः ॥ ततः-

[भा.५७२२] विगुरुव्विऊण रूवं, आगमनं डंबरेण महयाए ।
जिन-अज्ज-साहुभत्ती, अज्जपरिच्छा वि य तहेव ॥

वृ- सम्यग्दृष्टिदेवतायाः पुरुषरूपं विकुर्व्य आगमनम् । ततो महता आडम्बरेण देवकुलिकायाः पार्श्वे सार्थमावास्य मायया श्राद्धवेषं विधाय वन्दनकं विस्तरेण कृत्वा भणति-युष्माभिः काचित् पुराणिका संयती वा विषयपराजिता दृष्टा ? युष्माकं वा यद्यर्थस्ततो भोगान् भुञ्जीमहि, भुञ्जानाश्च जिनचैत्यानामार्यिकाणां साधूनां च भक्तिं करिष्यामस्ततो निस्तरिष्यामः । एवमार्यापरीक्षाऽपि तथैव मन्तव्या यथा निर्ग्रन्थानामुक्ता ॥

अथ किमर्थं निर्ग्रन्थेषु प्रथमं देवसूत्रं निर्ग्रन्थीषु च प्रथमं देवीसूत्रम् ? इत्याह-

[भा.५७२३] वीसत्थया सरिसए, सारुप्पं तेन होइ पढमं तु ।
पुरिसुत्तरिओ धम्मो, निग्गंथो तेन पढमं तु ॥

वृ- 'सदृशे' स्वपक्षजातौ 'विश्वस्तता' विश्वासो भवति तेन प्रथममुभयोरपि पक्षयोः सारूप्यसूत्रमभिहितम् । 'पुरुषोत्तरो धर्म' इति कृत्वा च प्रथमं निर्ग्रन्थानां सूत्रद्वयमुक्तम्, ततो निर्ग्रन्थीनाम् ॥ एतेषु विशेषतो विराधनामाह-

[भा.५७२४] खित्ताइ मारणं वा, धम्माओ भंसणं करे पंता ।
भद्दाए पडिबंधो, पडिगमनादी व निंतीए ॥

वृ-या प्रान्तदेवता सा तं साधुं प्रतिसेवनापरिणतं क्षिप्तचित्तादिकं कुर्यात्, मारणं धर्माद् भ्रंशनं या कुर्वीत । या भद्रा तस्यामसौ प्रतिबन्धं कुर्यात्, निर्गच्छन्त्यां वा तस्यां प्रतिगमनादीनि स विदधीत ॥ अत्रेदं द्वितीयपदम्-

[भा.५७२५] बितियं अच्छित्तिकरो, बहुवक्खेवे गणम्मि पुच्छित्ता ।

सुत्त-ऽत्थज्झरणहेतुं, गीतेहि समं स निग्गच्छे ॥

वृ- योऽव्यवच्छित्तिकरो भविष्यति स सूत्रार्थौ गृहीत्वा बहुव्याक्षेपे 'गणे' गच्छे गुरूनापृच्छ्य तेषामुपदेशेन गीतार्थैः साधुभिः समं सूत्रा-ऽर्थस्मरणहेतोर्गणाद् निर्गच्छेत् । एतद् द्वितीयपदमत्र मन्तव्यम् ॥

मू. *(१४७) भिक्खू य अहिगरणं कट्टु तं अहिगरणं अविओसवित्ता इच्छिज्जा अन्नं गणं उवसंपज्जित्ताणं विहरित्तए, कप्पइ तस्स पंचराइंदियं छेयं कट्टु, परिनिव्वविय परिनिव्वविय दोच्चं पि तमेव गणं पडिनिज्जाएअव्वे सिया, जहा वा तस्स गणस्स पत्तियं सिया ॥*

वृ- अस्य सम्बन्धमाह-

[भा.५७२६] एगागी मा गच्छसु, चोइज्जंते असंखडं होज्जा ।
ऊणाहिगम्मि ठवणे, अहिगरणं कुज्ज संबंधो ॥

वृ- एकाकी मा गच्छ इत्येवं नोद्यमानो यदा न प्रतिपद्यते तदाऽसङ्खडं भवेत् । अथवा स निर्ग्रन्थो भूयो गच्छं प्रविशन् ऊनायामधिकायां वाऽऽरोपणायां दीयमानायामधिकरणं कुर्यात्। एष सम्बन्धः ॥ अनेनायातस्यास्य व्याख्या-भिक्षु चशब्दाद् आचार्य उपाध्यायो वाऽधिकरणं कृत्वा तदधिकरणमव्यवशमय्य इच्छेद् अन्यं गणमुपसम्पद्य विहर्तुम्, ततः कल्पते 'तस्य' अन्य-गणसङ्क्रान्तस्य पञ्चरात्रिन्दिवं छेदं कर्तुम्, ततः 'परिनिर्वाप्य परिनिर्वाप्य' कोमलवचः-सलिलसेकेन कषायाग्निसन्तप्तं सर्वतः शीतलीकृत्य द्वितीयमपि वारं तमेव गणं सः 'प्रतिनिर्यातव्यः' नेतव्यः स्यात् । यथा वा तस्य गणस्य प्रीतिकं स्यात् तथा कर्त्तव्यम् ॥ एष सूत्रार्थः ॥ अथ भाष्यविस्तरः-

[भा.५७२७] सच्चित्तऽचित्त मीसे, वओगत परिहारिए य देसकहा ।
सम्ममणाउट्टंते, अधिकरण ततो समुप्पज्जे ॥

[भा.५७२८] आभव्वमदेमाणे, गिण्हंते तमेव मग्गमाणे वा ।
सच्चित्तेयरमीसे, वितहापडिवत्तितो कलहो ॥

[भा.५७२९] विच्चामेलण सुत्ते, देसीभासा पवंचणे चेव ।
अन्नम्मि य वत्तव्वे, हीनाहिय अक्खरे चेव ॥

[भा.५७३०] परिहारियमठवेंते, ठविते अनट्ठाइ निव्विसंते वा ।
कुच्छितकुले व पविसति, चोदितऽनाउट्टणे कलहो ॥

[भा.५७३१] देसकहापरिकहणे, एक्के एक्के व देसरागम्मि ।
मा कर देसकहं वा, को सि तुमं मम त्ति अधिकरणं ॥

[भा.५७३२] अह-तिरिय-उड्डकरणे, बंधन निव्वत्तणा य निक्खिवणं ।
उवसम-खएण उड्ढं, उदएण भवे अहेकरणं ॥

[भा.५७३३] जो जस्स उ उवसमती, विज्झवणं तस्स तेन कायव्वं ।
जो उ उवेहं कुज्जा, आवज्जति मासियं लहुगं ॥

[भा.५७३४] लहुओ उ उवेहाए, गुरुओ सो चेव उवहसंतस्स ।
उत्तुयमाणे लहुगा, सहायगत्ते सरिसदोसो ॥

[भा.५७३५] एसो वि ताव दमयतु, हसति व तस्सोमताइ ओहसणा ।

उत्तरदानं मा ओसराहि अह होइ उत्तुयणा ॥
[भा.५७३६] वायाए हत्थेहि व, पाएहि य दंत-लउडमादीहिं ।
जो कुणति सहायत्तं, समाणदोसं तगं बेंति ॥
[भा.५७३७] परपत्तिया न किरिया, मोत्तु परट्ठं च जयसु आयट्ठे ।
अवि य उवेहा वुत्ता, गुणो वि दोसायते एवं ॥
[भा.५७३८] जति परो पडिसेविज्ञा, पावियं पडिसेवनं ।
मज्झ मोनं करेंतस्स, के अट्ठे परिहायई ॥
[भा.५७३९] नागा ! जालवासीया !, सुणेह तस-थावरा ! ।
सरडा जत्थ भंडंति, अभावो परियत्तई ॥
[भा.५७४०] वनसंड सरे जल-थल-खहचर वीसमण देवता कहणं ।
वारेह सरडुवेक्खण, धाडण गयणास मूरणाता ॥
[भा.५७४१] तावो भेदो अयसो, हानी दंसण-चरित्त-नाणाणं ।
साहुपदोसो संसारवड्ढणो साहिकरणस्स ॥
[भा.५७४२] अतिभणित अभणिते वा, तावो भेदो य जीव चरणे वा ।
रूवसरिसं न सीलं, जिम्हं व मने अयसो एवं ॥
[भा.५७४३] अक्कुट्ठ तालिए वा, पक्खापक्खि कलहम्मि गणभेदो ।
एगतर सूयएहि व, रायादीसिट्ठे गहणादी ॥
[भा.५७४४] वत्तकलहो उ न पढति, अवच्छलत्ते य दंसणे हानी ।
जह कोहादिविवड्ढी, तह हानी होइ चरणे वि ॥
[भा.५७४५] आगाढे अहिगरणे, उवसम अवकड्ढणा य गुरुवयणं ।
उवसमह कुणह झायं, छड्डणया सागपत्तेहिं ॥
[भा.५७४६] जं अज्जियं समीखल्लएहि तव-नियम-बंभमइएहिं ।
तं दाइं पच्छ नाहिसि, छड्डेंतो सागपत्तेहिं ॥
[भा.५७४७] जं अज्जियं चरित्तं, देसूणाए वि पुव्वकोडीए ।
तं पि कसाइयमेत्तो, नासेइ नरो मुहुत्तेणं ॥
[भा.५७४८] आयरिओ एग न भणे, अह एग निवारे मासियं लहुगं ।
राग-द्दोसविमुक्को, सीतघरसमो उ आयरिओ ॥
[भा.५७४९] वारेति एस एतं, ममं न वारेति पक्खराएणं ।
बाहिरभावं गाढतरगं च मं पेक्खसी एक्कं ॥

वृ-एताः सर्वा अपि गाथा यथा प्रथमोद्देशके व्याख्यातास्तथैव द्रष्टव्याः ॥

एवमधिकरणं कृत्वा यः प्रज्ञापितोऽपि नोपशाम्यति स किं करोति ? इत्याह-

[भा.५७५०] खर-फरुस-निट्ठुराइं, अध सो भणिउं अभाणियव्वाइं ।
निग्गमण कलुसहियए, सगणे अट्ठा परगणे वा ॥

वृ-अथासौ खर-परुष-निष्ठुराणि अभणितव्यानि वचनानि भणित्वा कलुषितहृदयः स्वगच्छाद्

निर्गमनं करोति ततो निर्गतस्य तस्य स्वगणे परगणे च प्रत्येकमष्टौ स्पर्द्धकानि वक्ष्यमाणानि भवन्ति ।। खर-परुष-निष्ठुरपदानि व्याख्याति-

[भा.५७५१] उच्चं सरोस भणियं, हिंसग-मम्मवयणं खरं तं तू ।
अक्कोस निरुवयारिं, तमसब्भं निट्ठुरं होती ।।

वृ- 'उच्चं' महता स्वरेण सरोषं यद् भणितं हिंसकं मर्मघट्टनवचनं वा तत् तु खरं मन्तव्यम् । जकारादिकं यद् आक्रोसवचनं यच्च 'निरुपचारि' विनयोपचाररहितं तत् परुषम् । यद् 'असभ्यं' सभाया अयोग्यं 'कोलिकस्त्वम्' इत्यादिकं वचनं तद् निष्ठुरं भण्यते ।। ईदृशानि भणित्वा गच्छाद् निर्गतस्याचार्य प्रायश्चित्तविभागं दर्शयितुकाम इदमाह-

[भा.५७५२] अट्ठऽट्ठ अद्धमासा, मासा होंतऽट्ठ अट्ठसु पयारो ।
वासासु असंचरणं, न चेव इयरे वि पेसंति ।।

वृ- स्वगणे यान्याचार्यसत्कानि अष्टौ स्पर्धकानि तेषु पक्षे पक्षे अपरापरस्मिन् स्पर्द्धके संचरतोऽष्टावर्द्धमासा भवन्ति, परगणसत्केष्वप्यष्टसु स्पर्द्धकेषु पक्षे पक्षे संचरतोऽष्टावर्द्धमासाः, एवमुभयेऽपि मीलिता अष्टौ मासा भवन्ति । अष्टसु च ऋतुबद्धमासेषु साधूनां 'प्रचारः' विहारो भवतीति कृत्वा अष्टग्रहणं कृतम् । वर्षासु चतुरो मासान् तस्याधिकरणकारिणः साधोः संचरणं नास्ति, वर्षाकाल इति कृत्वा । 'इतरेऽपि' येषां स्पर्द्धके सङ्क्रान्तस्तेऽपि तं प्रज्ञाप्य वर्षावास इति कृत्वा यतो गणादागतस्तत्र न प्रेषयन्ति । तत्र यानि स्वगणेऽष्टौ स्पर्द्धकानि तेषु सङ्क्रान्यस्य तैः स्वाध्याय-भिक्षा-भोजन-प्रतिक्रमणवेलासु प्रत्येकं सारणा कर्तव्या-आर्य ! उपशमं कुरु । यदि एवं न सारयन्ति ततो मासगुरुकम् ।। तस्य पुनरनुपशाम्यत इदं प्रायश्चित्तम्-

[भा.५७५३] सगणम्मि पंचराइंदियाइं दस परगणे मणुन्नेसु ।
अन्नेसु होइ पनरस, वीसा तु गयस्स ओसन्ने ।।

वृ- स्वगणस्पर्द्धकेषु सङ्क्रान्तस्यानुपशाम्यतो दिवसे दिवसे पञ्चरात्रिन्दिवच्छेदः । परगणे 'मनोज्ञेषु' साम्भोगिकेषु सङ्क्रान्तस्य दशरात्रिन्दिवः, अन्यसाम्भोगिकेषु पञ्चदशरात्रिन्दिवः । अवसन्नेषु गतस्य विंशतिरात्रिन्दिवच्छेदः ।। एवं भिक्षोरुक्तम् । अथोपाध्याया-ऽऽचार्ययोरुच्यते-

[भा.५७५४] एमेव य होइ गणी, दसदिवसादी उ भिन्नमासंतो ।
पन्नरसादी तु गुरू, चतुसु वि ठाणेसु मासंतो ।।

वृ- एवमेव 'गणिनः' उपाध्यायस्यापि अधिकरणं कृत्वा परगणं सङ्क्रान्तस्य मन्तव्यम् । नवरम्- दशरात्रिन्दिवमादौ कृत्वा भिन्नमासान्तस्तस्य च्छेदः । एवमेव 'गुरोरपि' आचार्यस्य 'चतुर्षु' स्वगण-परगण साम्भोगिका- ऽन्यसाम्भोगिका- ऽवसन्नेषु पञ्चदशरात्रिन्दिवादिको मासिकान्तश्छेदः ।। एतत् पुरुषाणां स्वगणादिस्थानविभागेन प्रायश्चित्तमुक्तम् । अथैतेष्वेव स्थानेषु पुरुषविभागेन प्रायश्चित्तमाह-

[भा.५७५५] सगणम्मि पंचराइंदियाइं भिक्खुस्स तद्दिवस छेदो ।
दस होंति अहोरत्ता, गणि आयरिए य पन्नरस ।।

वृ- स्वगणे सङ्क्रान्तस्य भिक्षोस्तद्दिवसादारभ्य दिने दिने पञ्चरात्रिन्दिवच्छेदः । 'गणिनः' उपाध्यायस्य दशरात्रिन्दिवः । आचार्यस्य पञ्चदशरात्रिन्दिवः ।।

सर्वेऽप्राप्तभूमिकाः ॥

[भा.५८३८] खेत्तंतो खेत्तबहिया, अप्पत्ता बाहि जोयण दुगे य ।
चत्तारि अट्ठ बारसऽजग्ग सुव विगिंचणाऽऽदियणा ॥

वृ- सङ्खडीं श्रुत्वा क्षेत्रान्तः क्षेत्रबहिर्वा आगच्छेयुः । ये क्षेत्रान्तः सार्धक्रोशद्वयादागच्छन्ति ते प्राप्तभूमिकाः । ये पुनः क्षेत्रबहि योजनाद् योजनद्वयात् चतुर्योजनादष्टयोजनाद् यावद् द्वादशयोजनादागच्छन्ति तेऽप्राप्तभूमिकाः । एते सर्वेऽपि सङ्खड्यामतिमात्रं भुक्त्वा प्रदोषे "जग्ग" त्ति अकारप्रश्लेषाद् न जाग्रति, "सुव" त्ति वैरात्रिककालवेलायामपि 'स्वपन्ति' नोत्तिष्ठन्ते, "विगिंचण" त्ति उद्गारमुद्गीर्य परित्यन्ति, "आइयण" त्ति तमेव 'आपिबन्ति' प्रत्यवगिलन्त ॥

एतेषु चतुर्षु पदेषु इयमारोपणा-

[भा.५८३९] वत्थव्व जयणपत्ता, सुद्धा पणगं च भिन्नमासो य ।
तव-कालेहि विसिट्ठा, अजतणमादी वि उ विसिट्ठा ॥

वृ- सङ्खड्यप्रलोकिनो वास्तव्या यतनया प्राप्तश्चागन्तुकाः सङ्खड्यां यावद् द्रवं भुक्त्वा प्रादोषिकीं पौरुषीं न कुर्वन्ति 'मा न जरिष्यति' इति कृत्वा तत आचार्यानापृच्छय स्वपन्तः शुद्धाः । त एव यदि वैरात्रिकं स्वाध्यायं न कुर्वन्ति तदा पञ्चरात्रिन्दिवानि तपोलघूनि कालगुरूणि । अथोद्गार आगतस्तं च यदि विविश्चन्ति ततो भिन्नमासस्तपोगुरु काललघुः । अथ तमुद्गारमापिबन्ति ततो मासलघु तपसा कालेन च गुरुकम् । येऽयतनाप्राप्ता ये च वास्तव्याः सङ्खडिप्रलोकिनः एते द्वयेऽपि सङ्खड्यां भुक्त्वा प्रादोषिकं स्वाध्यायं न कुर्वन्ति मासलघु द्वाभ्यामपि लघुकम् । वैरात्रिकं स्वाध्यायं न कुर्वन्ति मासलघु कालगुरुकम् । उद्गारमागतं परित्यजन्ति मासलघु तपोगुरुकम् । उद्गारं प्रत्यवगिलन्ति मासगुरु तपसा कलेन च गुरुकम् ॥ अत एवाह-

[भा.५८४०] तिसु लहुओ गुरु एगो, तीसु य गुरुओ उ चउलहू अंते ।
तिसु चउलहुगा चउगुरु, तिसु चउगुरु छल्लहू अंते ॥

वृ- 'त्रिषु स्थानेषु' प्रादोषिकस्वाध्याय-वैरात्रिकाकरणोद्गारविवेचनरूपेषु लघुको मासः, 'एकस्मिन्' चतुर्थे प्रत्यवगिलनाख्ये स्थाने मासगुरु । येऽन्यत्र गन्तुकामाः प्राप्तभूमिकाः सङ्खडिहेतोरर्द्धयोजनादागतास्तेषां प्रादोषिकस्वाध्यायाकरणादिषु त्रिषु स्थानेषु मासगुरु, अन्त्यस्थाने चतुर्लघु । येऽप्राप्तभूमिकाः सङ्खडिनिमित्तं योजनादागतास्तेषां प्रादोषिकादिषु त्रिषु पदेषु चतुर्लघु, अन्त्यपदे चतुर्गुरु । ये तु योजनद्वयादायातास्तेषामादिपदेषु त्रिषु चतुर्गुरु, अन्त्यपदे षडलघु ॥

[भा.५८४१] तिसु छल्लहुगा छग्गुरु, तिसु छग्गुरुगा य अंतिमे छेदो ।
छेदादी पारंची, बारसगा दीसु त चउक्कं ॥

वृ- ये योजनचतुष्टयादागतास्तेषां त्रिष्वाद्यपदेषु षडलघु, अन्त्यपदे षड्गुरु । ये योजनाष्टकादागतास्तेषां त्रिषु षड्गुरु, अन्त्यपदे छेदः । ये द्वादशयोजनादागतास्ते प्रादोषिकं स्वाध्यायं न कुर्वन्ति छेदः, आदिशब्दाद् वैरात्रिकमकुर्वतां मूलम्, उद्गारं विविञ्चतामनवस्थाप्यम्, प्रत्यापिबतां पाराञ्चिकम् । "बारसगादी य चउक्कं" ति प्रतीपक्रमेण यानि द्वादशयोजनप्रभृतीनि स्थानानि तेषु सर्वेष्वपि प्रत्येकं प्रत्येकं प्रादोषिकादिचतुष्कं मन्तव्यम् । चतुर्ष्वपि पदेषु तपोर्हाणि प्रायश्चित्तानि प्राग्वत् तपः-कालविशेषितानि कर्तव्यानि ॥

अस्यैवार्थस्य सुखावबोधार्थमिमां प्रस्तारचनामाह-

[भा.५८४२] खेत्तंतो खेत्तबहिया, अप्पत्ता बाहि जोयण दुगे य।
चत्तारि अट्ठ बारसऽजग्ग सुव विगिंचणाऽऽदियणा ॥

वृ- इहोर्ध्वाधःक्रमेणाष्टौ गृहाणि स्थापनीयानि, तिर्यक् पुनश्चत्वारि, एवं द्वात्रिंशद् गृहकाणि कर्तव्यानि। प्रथमगृहाष्टकपङ्क्त्यामधोऽध एतेऽष्टौ पुरुषविभागा लेखितव्याः-ये तत्रैव गन्तुकामा यतनाप्राप्ता ये च वास्तव्याय यतनाकारिण एष एकः पुरुषविभागः १। ये तु तत्रैव गन्तुकामा एवायतनया प्राप्ता वास्तव्यश्चायतनाकारिण एष द्वितीयः २। ये तु अन्यत्र गन्तुकामास्ते क्षेत्रान्तः क्षेत्रबहिर्वा आगता भवेयुः। ये क्षेत्रान्तस्ते प्राप्तभूमिका उच्यन्ते एष तृतीयः ३। ये तु क्षेत्रबहिस्तेऽप्राप्तभूमिका उच्यन्ते, ते च योजनादागताः षष्ठः। अष्टयोजनादायाताः सप्तमः ७। द्वादसयोजनादागता अष्टमः ८। उपरितनतिर्यगायाचतुष्कपङ्क्त्या उपरिक्रमेणामी चत्वारो विभागा लेखितव्याः-प्रदोषेऽजागरणं १ वैरात्रिकस्वाध्यायवेलायां स्वपनम् २ उद्गारविवेचनम् ३ उद्गारप्रत्यवगिलनम् ४॥

आदिमचतुष्कपङ्क्त्यां द्वितीयगृहादमूनि प्रायश्चित्तानि क्रमेण स्थापयितव्यानि-

[भा.५८४३] पनग च भिन्नमासो, मासो लहुओ उ पढमतो सुद्धो।
मासो तव-कालगुरू, दोहि वि लहुओ अ गुरुओ य॥

वृ- द्वितीयगृहे पञ्चकम्, तृतीयगृहे भिन्नमासः, चतुर्थे मासलघु। प्रथमगृहे शुद्धः, चतुर्थे तु पदे मासः तपसा कालेन च गुरुकः। यत्र चादिपदेऽपि प्रायश्चित्तं भवति तत्र द्वाभ्यामपि लघुकम्, मध्यपदयोर्द्वयोरपि यथासङ्ख्यं तपसा कालेन च गुरुकम्॥

[भा.५८४४] लहुओ गुरुओ मासो, चउरो लहुगा य होंति गुरुगा य।
छम्मासा लहु-गुरुगा, छेदो मूलं तह दुगं च॥

वृ- द्वितीयादिचतुर्षु गृहपङ्क्त्यः सर्वा अमुना प्रायश्चित्तेन पूरयितव्याः- द्वितीयस्यां पङ्क्तौ त्रिषु गृहेषु लघुमासः, चतुर्थे गुरुमासः। तृतीयस्यां त्रिषु गुरुमासः, चतुर्थे चतुर्लघु। चतुर्थ्यां त्रिषु चतुर्लघु, चतुर्थे चतुर्गुरु। पञ्चम्यां त्रिषु चतुर्गुरु, चतुर्थे षड्लघु। षष्ठयां त्रिषु षड्लघु, चतुर्थे षड्गुरु। सप्तम्यां त्रिषु षड्गुरु, चतुर्थे छेदः। अष्टम्यां पङ्क्तौ चतुर्षु गृहेषु छेद-मूल-ऽनवस्थाप्य-पाराञ्चिकानि॥ तथा चाह-

[भा.५८४५] जह भणिय चउत्थस्स य, तह इयरस्स पढमे मुणेयव्वं।
पत्ताण होइ भतणा, जे जतणा जं तु वत्थव्वे॥

वृ- यथा पूर्वस्यां पङ्क्तौ चतुर्थे स्थाने भणितम्, गाथायां सप्तम्यर्थे षष्ठी, तथा 'इतरस्याः' अग्रेतन्यः पङ्क्तेः प्रथमेषु त्रिषु स्थानेषु प्रायश्चित्तं ज्ञातव्यम्, अन्त्यपदे पुनस्ततोऽग्रेतनम्। यथा-यतनाप्राप्ता येऽध्वप्रपन्ना ये च वास्तव्या यतनाकारिणः तेषां चतुर्थे स्थाने मासलघुरूपं 'यत्तु' यत् पुनः प्रायश्चित्तमुक्तं तदेव तेषामेवायतनावतामाद्येषु त्रिषु स्थानेषु भवति, अन्त्यपदे तु मासगुरुकमिति। एवं प्राप्तभूमिकादिष्वपि 'भजना' प्रायश्चित्तरचना विज्ञेया। नवरम्- अन्त्यपङ्क्त्यां छेद-मूला-ऽनवस्थाप्य-पाराञ्चिकानि भवन्ति॥

[भा.५८४६] एएण सुत्त न गतं, सुत्तनिवाते इमे तु आदेसा।

लोही अ ओम पुन्ना, केइ पमाणं इमं बेंति ॥

वृ- एतत् सर्वमपि प्रसङ्गतो विनेयानुग्रहार्थमुक्तम्, नैतेन सूत्रं गतम्। यत्र च सूत्रस्य निपातो भवति तत्रामी आदेशा भवन्ति-''लोही अ ओमपुन्न''त्ति गुरुर्भणति-गुणकारित्वाद् अवमं भोक्तव्यं यथोद्गारो नागच्छति। तथा चात्र लोही-कवल्ली तद् दृष्टान्तः- यथा कवल्लयां यद्यवमं स्वप्रामाणादूनमाद्रह्यते ततोऽन्तरन्तः उद्गर्तते, उपरिमुखं न निर्गच्छति; अथ 'पूर्णा' आकण्ठं भृता तत उद्वर्तिता सर्वमपि परित्यजति, अग्निमपि विध्यापयति। एवमेव यद्यवममाह्रियते ततो वातः शरीरान्तः सुखेनैव प्रविचरति, प्रविचरिते च तस्मिन्नुद्गारो नायाति; अथातिमात्रं समुद्दिश्यते ततोऽन्तर्वायुपूरप्रेरित उद्गार आगच्छति॥ तस्मनादवममेव भोक्तव्यम्। केचित् पुनराचार्यदेश्याः 'इदं' वक्ष्यमाणं प्रमाणं ब्रुवते तत्रानन्तरोक्तं कवल्ली दृष्टान्तं भावयति॥

[भा.५८४७]　अतिभुत्ते उग्गालो, तेनोमं भुंज जन्न उग्गिलसि।
छड्डिज्जति अतिपुन्ना, तत्ता लोही न पुन ओमा॥

वृ- गतार्था॥ नैगमपक्षाश्रिताः पुनराचार्यदेशीया इत्थं वदन्ति-

[भा.५८४८]　तत्तऽत्थमिते गंधे, गलग पडिगते तहा अणाभोए।
एते न होंति दोन्नि वि, मुहनिग्गत नातुमोगिलणा॥

वृ- एको नैगमपक्षाश्रितो भणति-तप्ते कविल्ले बिन्दुः पतितो यथा तत्क्षणादेव नश्यति तथा यद् भुक्तमात्रं जीर्यति ईदृशमवमाहरणीयम्। एवमपरः-अस्तमिते रवौ यद् जीर्यते। तृतीयः- गन्धेन रहितः सहितो वा यथोद्गार एते। चतुर्थ-गलकं यावदुद्गार आगम्य 'अनाभोगेन' अजानत एव 'प्रतिगच्छति' भूयः प्रविशति ईदृशं समुद्दिश्यताम्। गुरुराह- एते द्वयेऽपि प्रकारा न भवन्ति। द्वये नाम-ये प्रथम-द्वितीया दिवाऽप्युद्गारं प्रतिषेधयन्ति ये च तृतीय-चतुर्था रात्रावुद्गारमनुमन्यते एते द्वयेऽपि न घटन्ते, किन्तु येनाऽऽवश्यकयोगानां न हानिस्तावदाहारयितव्यम्। मुखनिर्गतं वोद्गारं ज्ञात्वा यः प्रत्यवगिलति तत्र सूत्रनिपातः॥ एनां सङ्ग्रहगाथां विवरीषुराह-

[भा.५८४९]　भणति जति ऊणमेवं, तत्तकवल्ले य बिंदुनासणता।
बितिओ न संथरेवं, तं भुंजसु सूरे जं जिज्जे॥

वृ- एको नैगमनयाश्रितो भणति-यद्यूनं भोक्तव्यं ततस्तप्ते कवल्ले प्रक्षिप्तस्योदकबिन्दोस्तत्कालमेव यथा नशनं भवति तथा यद् भुक्तमात्रमेव जीर्यति ईदृशं भोक्तव्यम्। द्वितीयः प्राह- 'एवम्' ईदृशे भुक्ते न संस्तरति तस्मात् तदीदृशं भुक्ष्व यत् सूर्येऽस्तमयति जीर्यते॥

[भा.५८५०]　निग्गंधो उग्गालो, ततिए गंधो उ एति न उ सित्थं।
अविजाणंत चउत्थे, पविसति गलगं तु जो पप्प॥

वृ- गन्धे द्वावादेशौ। एको भणति-सूर्यास्तमने जीर्णे आहारे रात्रावसंस्तरणं भवति तस्मादीदृशं भुङ्क्तां येनास्तमितेऽपि 'निर्गन्धः' अन्नगन्धरहित उद्गार एति। द्वितीयः प्राह-यदि गन्ध उद्गारस्य 'एति' आगच्छति तत आगच्छतु यथा सिक्थं नागच्छति तथा भुङ्क्ताम्। एतौ द्वावप्येक एव तृतीय आदेशः। चतुर्थो भणति-ससिक्थ उद्गारो गलकं प्राप्याविजानत एव यावद् भूयः प्रविशति तावद् भुङ्क्ताम्। एते चत्वारोऽप्यनादेशाः॥ तथा चाह-

[भा.५८५१]　पढम-बितिए दिया वी, उग्गालो नत्थि किं पुन निसाए।

गंधे य पडिगते या, ते पुन दो वी अनाएसा ॥

वृ- प्रथम-द्वितीययोरादेशयोर्दिवाऽप्युद्गारो नास्ति किं पुनर्दिशायाम् ? इत्यतस्यावनादेशौ। यस्तृतीयो गन्धादेशो यश्च चतुर्थ उद्गारस्य गलके प्रतिगमनादेशः एतौ द्वावपि सूत्रार्थभिप्राय-बहिर्भूतत्वादनादेशौ ॥ कः पुनरादेशः ? इत्याह-

[भा.५८५२] पडुपन्नऽनागते वा, संजमजोगाण जेन परिहानी ।
न वि जायति तं जाणसु, साहुस्स पमाणमाहारे ॥

वृ- 'प्रत्युत्पन्ने' वर्तमानेऽनागते वा काले 'येन' यावता भुक्तेन 'संयमयोगानां' प्रत्युपेक्षणादीनां परिहाणिर्न जायत तदाहारस्य प्रमाणं साधोर्जानीहि ॥

[भा.५८५३] एवं पमाणजुत्तं, अतिरेगं वा वि भुंजमाणस्स ।
वायादीखोभेण व, एज्जाहि कहंचि उग्गालो ॥

वृ- एवंविधं प्रमाणयुक्तं कारणे वाऽतिरिक्तमपि आहारं भुञ्जानस्य वातादिक्षोभेण वा कथञ्चिदुद्गार आगच्छेत् ॥ ततः किम् ? इत्यत आह-

[भा.५८५४] जो पुन समोयणं तं, दवं व नाऊण निग्गतं गिलति ।
तहियं सुत्तनिवाओ, तत्थाऽऽएसा इमे होंति ॥

वृ- पुनःशब्दो विशेषणे, स चैतद् विशिनष्टि-यः 'तम्' उद्गारमागतं परित्यजति तस्य न प्रायश्चित्तम्। यस्तु 'तम्' उद्गारं सभोजनमच्छं वा द्रवमागतं ज्ञात्वा मुखाद् निर्गतं गिलति तत्र 'सूत्रनिपातः' प्रस्तुतसूत्रस्यावतारः । तत्र चेमे आदेशाः भवन्ति ॥

[भा.५८५५] अच्छे ससित्थ चव्विय, मुहनिग्गतकवल भरियहत्थे य ।
अंजलि पडिते दिट्ठे, मासादारोवणा चरिमं ॥

वृ- अच्छं द्रवमागतं यदि परेणादृष्टमापिबति ततो मासलघु, अथ दृष्टं ततो मासगुरु । ससिक्थमागतं परेणादृष्टमाददानस्य मासगुरु, दृष्टे चतुर्लघु । अथ तं ससिक्थमदृष्टं चर्वयति ततश्चतुर्लघु, दृष्टे चतुर्गुरु । मुखाद् निर्गतं कवलमेकहस्तेन प्रतीष्यादृष्टमापिबति चतुर्गुरु, दृष्टे षड्लघु । अथैकं हस्तपुटं भरितमदृष्टमापिबति ततः षड्लघु, दृष्टे षड्गुरु । अथाञ्जलिं भरितम-दृष्टमापिबति छेदः, दृष्टे मूलम् । एवं भिक्षोरुक्तम् । उपाध्यायस्य मासगुरुकादारब्धमनवस्थाप्ये तिष्ठति । आचार्यस्य चतुर्लघुकादारब्धं चरमे तिष्ठति । एवं मासादिका चरमं यावदारोपणा मन्तव्या।

प्रकारान्तरेण प्रायश्चित्तमाह-

[भा.५८५६] दिय रातो लहु-गुरुगा, बितियं रयणसहितेन दिट्ठंतो ।
अद्धाणसीसए वा, सत्थो व पहावितो तुरियं ॥

वृ- अथवा ससिक्थमसिक्थं वा दृष्टमदृष्टं वा दिवा प्रत्यवगिलतश्चतुर्लघु, रात्रौ चतुर्गुरु । द्वितीयपदमत्र भवति-कारणे वान्तमप्यापिबेद् न च प्रायश्चित्तमाप्नुयात् । तत्र च रत्नसहितवणिजा दृष्टान्तः कर्तव्यः । कथं पुनरिदं सम्भवति ? इत्याह-अध्वशीर्षके मनोज्ञं भक्तं भुक्तं तच्च वान्तम् अन्यच्च न लभ्यते, सार्थो वा त्वरितं प्रधावितः, ततस्तदेव सुगन्धिद्रव्येण वासयित्वा भुङ्क्ते ॥

अथ रत्नसहितवणिग्दृष्टान्तमाह-

[भा.५८५७] जल-थलपहेसु रयणाणुवज्जणं तेन अडविपच्चंते ।

निक्खणणं फुट्टपत्थर, मा मे रयणे हर पलावो ॥

[भा.५८५८] घेत्तूण निसि पलायण, अडवी मडदेहभावितं तिसितो ।
पिबिउ रयणाण भागी, जातो सयणं समागम्म ॥

वृ- जहा एगो वणिओ कहिंचि जलपहेण कहिंचि थलपहेण महता किलेसेण सतसहस्समोल्लाइं पंच रयणाइं उवज्जिणित्ता परदेसे पच्छा सदेसं पत्थितो । तत्थ य अंतरा पच्चंतविसए एगा अडवी सबर-पुलिंद-चोरसंकिन्ना । सो चिंतेति-कहमविग्घेण तित्थरिज्जामि ? त्ति । ते रयणे एक्कम्मि विजणे पदेसे निक्खणति, अन्ने फुट्टपत्थरे घेत्तुं उम्मत्तगवेसं करेति, चोराकुलं च अडविं पविसइ, तक्करे एज्जमाणे पासित्ता भणेति-अहं सागरदत्तो नाम रयणवाणिओ, मा मे दुक्कह, मा मे रयणे हरीहह। सो पलवंतो चोरेहिं गहितो पुच्छितो-कतरे ते रयणा ? । सो फुट्टपत्थरे दंसेति । चोरेहिं नातं-केनावि एयस्स रयणा हरिता तेन उम्मत्तगो जातो । मुक्को य । एवं तेन तण-पत्त-पुप्फ-फल-कंद-मूलहारेण सा अडवी पंथो य आगम-गमं करेंतेन जाते भाविता ताहे ते रयणे निसाए घेत्तुं अडविं पवन्नो । जाहे अडवीए बहुमज्झदेसभागं गतो ताहे तण्हाए पारब्भमाणो एगम्मि सिलातलकुंडे गवयादिमडयदेहभावितं विवन्न-गंध-रसं उदगं दट्ठुं चिंतेति-जति एयं नातियामि तो मे रयणोवज्जणं सव्वं निरत्थयं कामभोगाण य अनाभागी भवामि । ताहे तं पिबित्ता अडविं निच्छिन्नो, सयण-धण-कामभोगाण य सव्वेसिं आभागी जाओ ॥

अक्षरगमनिका-कस्या वणिजो जल-स्थलपथयो रत्नानमुपार्जनं कृत्वा 'प्रत्यन्तविषयेऽटव्यां बहवः स्तेनाः सन्ति' इति कृत्वा रत्नां कथित् प्रदेशे निखननं स्फुटितप्रस्तराणां च ग्रहणम् । 'मा मदीयानि रत्नानि हरत' इति प्रलापेन च भावयित्वा निशि रात्रौ रत्नानि गृहीत्वा पलायनम् । अटव्यां तृषितो मृतदेहभावितं जलं पीत्वा स्वजनवर्गं समागम्य रत्नाभाभागी जातः ॥

एष दृष्टान्तः, अयमर्थोपनयः-

[भा.५८५९] वणियत्थाणी साहू, रतनत्थाणी वता तु पंचेव ।
उदयसरिसं च वंतं, तमादितुं रक्खते तानि ॥

वृ- वणिक्स्थानीयाः साधवः, रत्नस्थानीयानि पञ्च महाव्रतानि, तुशब्दस्यानुक्तसमुच्चयार्थत्वात् तस्करस्थानीया उपसर्गा अटवीस्थानीया द्रव्यापदादय इत्यपि द्रष्टव्यम्, मृतोदकसदृशं वान्तम्, तत् कारणे आपिबन् 'तानि' महाव्रतान्यात्मानं च रक्षति ॥ कथं पुनरापिबेद् ? इत्याह-

भा.य (५८६०] दियरातो अन्न गिण्हति, असति तुरंते व सत्थे तं चेव ।
निसि लिंगेणऽन्नं वा, तं चेव सुगंधदव्वं वा ॥

वृ- अध्वशीर्षके मनोज्ञं भुक्तं परं वान्तं ततो दिवा रात्रौ वाऽन्यद् गृह्णाति । अलभ्यमानेदा 'निशि' रात्रावन्यलिङ्गेनान्यद् गृह्णाति । तस्याप्यभावे सार्थे वा त्वरमाणे 'तदेव' वान्तं गृहीत्वा चातुर्जातकादिना सुगन्धिद्रव्येण वासयित्वा भुङ्क्ते, न कश्चिद् दोषः ॥

*मू. (१५३) निग्गंथस्स य गाहावइकुलं पिंडवायपडियाए अनुप्पविट्ठस्स अंतोपडिग्गहंसि पाणाणि वा बीयाणि वा रए वा परियावज्जेज्जा, तं च संचाएइ विगिंचित्तए वा विसोहित्तए वा तं पुव्वामेव लाइया विसोहिया विसोहिया ततो संजतामेव भुंजेज्ज वा पिबेज्ज वा । तं च नो संचाएइ विगिंचित्तए वा विसोहित्तए वा तं नो अप्पणा भुंजेज्जा नो अन्नेसिं दावए, एगंते बहुफासुए पएसे*

*पडिलेहित्ता पमज्जित्ता परिट्ठवियव्वे सिया ॥*

वृ- अस्य सम्बन्धमाह-

[भा.५८६१] वंतादियणं रत्तिं, निवारितं दिवसतो वि अत्थेणं ।
वंतमनेसियगहणं, सिया उ पडिवक्खओ सुत्तं ॥

वृ- रात्रौ वान्तापानं पूर्वसूत्रे निवारितम्, दिवसतोऽपि अर्थेन निवारितम् । अनेषणीयग्रहणमपि साधुभिर्वान्तमेव, अतस्तदिह प्रतिषिध्यते । "सिया उ पडिवक्खओ सुत्तं"ति 'स्याद्' भजनया प्रतिपक्षतो वा एतत् सूत्रं भवति अप्रतिपक्षतो वा । थयअर फअरयइफक्षतो यथा-पूर्वसूत्रे रात्रौ वान्तापानं निवारितम्, इदं तु दिवाऽनेषणीयं वान्तं निवार्यते । अप्रतिपक्षतो यथा-पूर्वसूत्रे वान्त न वरतते प्रत्यापातुमित्युक्तम्, इहाप्यनेषणीयं वान्तं न वर्तते ग्रहीतुमित्युच्यते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-निर्ग्रन्थस्य गृहपतिकुलं पिण्डपातप्रतिज्ञया अनुप्रविष्टस्यान्तःप्रतिग्रहे प्राणा वा बीजानि वा रजो वा परि-समन्तादापतेयुः । 'तत्र' प्राणादिकं यदि शक्नोति विवेक्तुं वा विशोधयितुं वा ततः 'तत्' प्राणादितादिकं 'लात्वा' हस्तेन गृहीत्वा 'विशोध्य विशोध्य' सर्वथैवापनीय ततः 'संयत एव' प्रयत्नपर एव भुञ्जीत वा पिबेद्वा । तत्र न शक्नोति विवेक्तुं वा विशोधयितुं वा तद् नात्मना भुञ्जीत न वाऽन्येषां दद्यात्, किन्तु एकान्ते बहुप्राशुके प्रदेशे प्रत्युपेक्ष्य प्रमृज्य परिष्ठापयितव्यं स्यादिति सूत्रार्थः ॥ अथ भाष्यकृद् विषमपदानि विवृणोति-

[भा.५८६२] पाणग्गहणेण तसा, गहिया बीएहि सव्व वणकाओ ।
रतगहणा होति मही, तेऊ व न सो चिरट्ठाई ॥

वृ-इह प्राणग्रहणेन त्रसाः गृहीताः । बीजग्रहणेन तु सर्वोऽपि वनस्पतिकायः सूचितः । रजोग्रहणेन च 'मही' पृथिवीकायो गृहीतः, तेजःकायो वा, परं स चिरस्थायी न भवतीति कृत्वा विवेचनादिकं तत्र न घटते ॥

[भा.५८६३] ते पुन आनिज्जंते, पडेज्ज पुव्विं व संसिया दव्वे ।
आगंतु तुब्भवा वा, आगंतूहिं तिमं सुत्तं ॥

वृ- 'ते पुनः' त्रसादय आनीयमाने वा भक्ते पतेयुः, पूर्वं वा तत्र 'द्रव्ये' भक्त-पाने 'संश्रिताः' स्थिताः । ते च द्विविधाः-आगन्तुकास्तदुद्भवा वा । तत्रागन्तुकत्रसादिविषयम् इदं प्रस्तुतसूत्रं मन्तव्यम् ॥ अथ के तदुद्भवाः ? के वा आगन्तुका भवेयुः ? इत्याह-

[भा.५८६४] रसता पणतो व सिया, होज्ज अनागंतुगा न पुन सेसा ।
एमेव य आगंतू, पनगविवज्जा भवे दुविहा ॥

वृ- ये 'रसजाः' तक्र-दधि-तीमनादिरसोत्पन्नाः कृम्यादयस्त्रसा यश्च पनकः स्याद् एते 'अनागन्तुकाः' तदुद्भवा भवन्ति, न पुनः 'शेषाः' पृथिवीकायादयः । एवमेव च ये पनकविवर्जा 'द्विविधाः' त्रसा- स्थावराश्च जीवाः ते सर्वेऽप्यागन्तुकाः सम्भवन्ति ॥

[भा.५८६५] सुत्तम्मि कड्डियम्मि, जयणा गहणं तु पडितो दट्ठव्वो ।
लहुओ पएक्खणम्मि, आणादि विराधना दुविहा ॥

वृ- एवं सूत्रमुच्चार्य पदच्छेदं कृत्वा य एष सूत्रार्थो भणितः एतत् सूत्रमाकर्षितमिति भण्यते । एवं सूत्रे आकर्षिते सति निर्युक्तिविस्तर उच्यते-तेन साधुना यतनया भक्त-पानस्य ग्रहणं कर्तव्यम् ।

का पुनर्यतना ? इत्याह-पूर्वमेव गृहस्थहस्तगतः पिण्डो निरीक्षणीयः, यदि शुद्धस्ततो गृह्यते । एवं यतनया गृहीतोऽपि प्रतिग्रहे पतितो द्रष्टव्यः । यदि न प्रेक्षते ततो लघुको मासः, ज्ञादयश्च दोषाः । विराधना च द्विविधा-तत्र संयमे त्रसादय उष्णे वा द्रवे वा पतिता विराध्यन्ते, आत्मविराधना तु मक्षिकादिसम्मिश्रे भुक्ते वल्गुलीव्याधिर्मरणं वा भवेत् । तस्मात् प्रथममेव प्रतिग्रहपतितः पिण्डो द्रष्टव्यः ॥

[भा.५८६६] अहिगारो असंसत्ते, संकप्पादी तु देस संसत्ते ।
संसज्जिमं तु तहियं, ओदन-सत्तू-दधि-दवाई ॥

वृ- अत एव यस्मिन् देशे त्रसप्राणादिभिः संसक्तं भक्त-पानं न भवति तत्रासंसक्तेऽधिकारः, तस्मिन्नेव देशे विहरणीयमिति भावः । यस्तु संसक्ते देशे सङ्कल्पादीनि पदानि करोति तस्य प्रायश्चित्तम्, तच्चोत्तरत्र वक्ष्यते । तत्र च 'संसजिमं' संसक्तियोग्यमोदन-सक्तु-दधि-द्रवादिकं द्रव्यम मन्तव्यम्। अथ संसक्तदेशे सङ्कल्पादिषु प्रायश्चित्तमाह-

[भा.५८६७] संकप्पे पयभिंदण, पंथे पत्ते तहेव आवन्ने ।
चत्तारि छच्च लहु गुरु, सट्ठाणं चेव आवन्ने ॥

वृ- यस्मिन् विषये भक्तादिकं प्राणिभिः संसज्यते तत्र 'सङ्कल्पं' गमनाभिप्रायं करोति चतुर्लघु, पदभेदं करोति चतुर्गुरु, संसक्तविषयस्य पन्थानं गच्छतः षड्लघु, तं देशं प्राप्तस्य षड्गुरु । तथैव द्वीन्दिरियादेः सङ्घट्टनादिकमापन्नस्य स्वस्थानप्रायश्चित्तम् । तद्यथा-द्वीन्द्रियं सङ्घट्टयति चतुर्लघु, परितापयति चतुर्गुरु, अपद्रावयति षड्लघु, त्रीन्द्रियाणां सङ्घट्टनादिषु पदेषु चतुर्गुरुकादारब्धं षड्गुरुके तिष्ठति, चतुरिन्द्रियाणां सङ्घट्टनादिषु षड्लघुकादिकं छेदान्तमिति ॥

[भा.५८६८] असिवादिएहिं तु तहिं पविट्ठा, संसज्जिमाइं परिवज्जयंति ।
भूइट्ठसंसज्जिमदव्वलंभे, गेण्हंतुवाएण इमेण जुत्ता ॥

वृ- अथाशिवादिभिः कारणैः 'तत्र' संसक्तदेशे प्रविष्टास्ततः 'संसजिमानि' सक्थु-दधिप्रभृतीनि द्रव्याणि परिवर्जयन्ति । अथ 'भूयिष्ठानि' प्रभूततराणि संसजिमद्रव्याणि लभ्यन्ते ततोऽमुनोपायेन 'युक्ताः' प्रयत्नपरा गृह्णन्ति ॥

[भा.५८६९] गमनाऽऽगमने गहणे, पत्ते पडिए य होति पडिलेहा ।
अगहिय दिट्ठ विवज्जण, अह गिण्हइ जं तमावज्जे ॥

वृ- भिक्षार्थं दायको मध्ये गमनं कुर्वन् कीटिका मण्डुकीप्रभृतिजन्तुसंसक्तायां भूमौ मा विराधनां कुर्यादिति सम्यग् निरीक्षणीयः । एवमागमने भिक्षाया हस्तेन ग्रहणे च विलोकनीयः । प्राप्ते च दायके तदीयहस्तगतः पिण्डः प्रत्युपेक्षणीयः । पात्रे च पतितः प्रत्युपेक्षितव्यः । ततो यद्यगृहीते त्रसादिकं प्राणजातं पश्यति ततस्तस्मिन् दृष्टे विवर्जयति, न गृह्णातीत्यर्थः । अथ गृह्णाति ततो येन द्वीन्द्रियादिना संसक्तं गृह्णाति तन्निष्पन्नं प्रायश्चित्तमापद्यते ॥

अथ पुनरेवं न प्रत्युपेक्षते तत इमे दोषा--

[भा.५८७०] पाणाइ संजमम्मि, आता भयमच्छि कंटग विसं वा ।
मूइंग-मच्छि-विच्छुग-गोवालियमाइया उभए ॥

वृ- संयमे त्रसप्राण-पनकादयो विराध्यन्ते । आत्मविराधनायां मृतमक्षिकासम्मिश्रे भुक्ते

वल्गुलीव्याधिः, ततश्च क्रमेण मरणं भवेत्, कण्टको वा विषं वा समागच्छेत् । उभयविराधनायां 'मुइङ्गाः' पिपीलिका [illegible]-वृश्चिक-गो[illegible]कादयो [illegible] । गोपालिका अहिलोडिकाख्यो जीवविशेषः । एते हि जीवा भक्तेन सह भुक्ताः संयमोपघातमात्मनश्च मेधाद्युपघातं कुर्वन्ति ॥

[भा.५८७१] पवयणघातिं व सिया, तं वियडं पिसियमट्ठजातं वा ।
आदान किलेसऽयसे, दिट्ठंतो सेट्ठिकव्वट्ठे ॥

वृ- प्रवचनोपघाति वा स्यात् तद् विकटम्, पिशितं वा तत् 'स्याद्' भवेत्, 'अर्थजातं वा' सुवर्णसङ्कलिका-मुद्रिकादिकं कश्चिदनुकम्पया प्रत्यनीकतया वा दद्यात्, ततः पतितं पिण्डं प्रत्युपेक्षेत। तच्चाप्रत्युपेक्ष्य गृहीतं मन्दधर्म कस्याप्युत्प्रव्रजितुकामस्य 'आदानम्' आजीविकाकारणं भवति, तद् आदायोत्प्रव्रजतीत्यर्थः । अर्थजाते च गृहीते साधूनां रक्षणादिको महान् परिक्लेशोऽयशो वा भवेत् । तथा चात्र ''सिट्ठिकव्वट्ठे''त्ति राज्यपदोपविष्टकल्पस्थकोपलक्षितस्य काष्ठश्रेष्ठिनो दृष्टान्तः, स च आवश्यकटीकातो मन्तव्यः ॥

[भा.५८७२] तम्हा खलु दट्ठव्वो, सुक्खग्गहणं अगिण्हणे लहुगा ।
आणादिणो य दोसा, विराधना जा भणिय पुव्विं ॥

वृ- यत एते दोषास्तस्मात् 'खलु' नियमात् पात्रकपतितः पिण्डो द्रष्टव्य । संसक्ते च देशे शुष्कस्य कूरस्य पृथग्मात्रके ग्रहणं कार्यम् । अथ पृथग् न गृह्णाति ततश्चतुर्लघु आज्ञादयश्च दोषाः, विराधना च द्विधा संयमा-ऽऽत्मविषया या 'पूर्वम्' अनन्तरमेव भणिता ॥ इदमेव भावयति-

[भा.५८७३] संसज्जिमम्मि देसे, मत्तग सुक्ख पडिलेहणा उवरिं ।
एवं ताव अणुण्हे, उण्हे कुसणं च उवरिं तु ॥

वृ- संसजिमे देशे यः शुष्कः पौद्गलिकोऽनुष्णो लभ्यते स मात्रके गृहीत्वा प्रत्युपेक्ष्य यद्यसंसक्तस्तदा प्रतिग्रहोपरि प्रक्षिप्यते । एवं तावदनुष्णे विधिरुक्तः । यः पुनरुष्णः कूरः कुसणं वा तद् नियमादसंसक्तमिति कृत्वा प्रतिग्रहस्यैवोपरि गृह्यते ॥

[भा.५८७४] गुरुमादीन व जोग्गं, एगम्मितरम्मि पेहिउं उवरिं ।
दोसु वि संसत्तेसुं, दुल्लह पुव्वेतरं पच्छा ॥

वृ- गुरु-ग्लानादीनां वा योग्यमेकस्मिन् मात्रके गृह्यते, 'इतरस्मिन्' द्वितीये मात्रके संसक्तं प्रत्युपेक्ष्य पतिग्रहोपरि प्रक्षिप्यते । एवं तावद् यत्रैकं भक्तं पानकं वा संसक्तं तत्र विधिरुक्तः । यत्र तु द्वे अपि-भक्त-पानके संसक्ते भवतः तत्र यद् भक्तं पानकं वा दुर्लभं तत् पूर्वं गृह्णन्ति 'इतरत्' सुलभं पश्चाद् गृह्णन्ति ॥

[भा.५८७५] एसा विही तु दिट्ठे, आउट्टियगेण्हणे तु जं जत्थ ।
अणभोगगह विगिंचण, खिप्पमविविंचति य जं जत्थ ॥

वृ- एष विधि दृष्टे गृह्यमाणे भणितः । अथाकुट्टिकया संसक्तं गृह्णाति ततो यद् यत्र द्वीन्द्रियपरितापनादिकं करोति तत् तत्र प्राप्नोति । अथानाभोगेन संसक्तं गृहीतं ततः क्षिप्रमेव विवेचनम् । अथ क्षिप्रं न विविनक्ति ततो यावत् परिष्ठापयति तावद् तत्र यद् विनाशमश्नुते तन्निष्पन्नं प्रायश्चित्तम् ॥ कः पुनः क्षिप्रकालः ? इत्याह-

[भा.५८७६] सत्त पदा गम्मंते, जावति कालेण तं भवे खिप्पं ।
कीरंति व तालाओ, अद्दुयमविलंबितं सत्ता ॥

वृ- यावता कालेन सप्त पदानि गम्यन्ते तत् क्षिप्रं मन्तव्यम् । यावता वा कालेनाद्रुतमविलम्बितं सप्त तालाः क्रियन्ते तावान् कालविशेषः क्षिप्रम् ॥

[भा.५८७७] तम्हा विर्विचितव्वं, आसन्ने वसहि दूर जयणाए ।
सागारिय उण्ह ठिए, पमज्जणा सुत्तग दवे य ॥

वृ- तस्मात् तद् जन्तुसंसक्तमनन्तरोक्तक्षिप्रकालमध्य एव विवेचनीयम् । यदि च वसतिरासन्ना ततस्तत्र गत्वा परित्यक्तव्यम् । अथ दूरे वसति ततः शून्यगृहादिषु यतनया परिष्ठापयति । अथ सागारिके पश्यति उष्णे वा भूभागे 'स्थितो वा' ऊर्ध्वस्थितः परिष्ठापयति ततो वक्ष्यमाणं प्रायश्चित्तम् । यत्र च परिष्ठाप्यते तत्र प्रमार्जना कर्तव्या । [illegible] विधिरुक्तः । सक्तूनां द्रवस्य चैवमेवाल्पसागारिके प्रमृज्य छायायां परिष्ठापनं विधेयम् ॥ इदमेव व्याचष्टे-

[भा.५८७८] जावइ काले वसहिं, उवेंति जंति ताव ते न विद्दंति ।
तं पि अनुण्हमदवं तो, गंतूणमुवस्सए एडे ॥

वृ- यावता कालेन वसतिमुपैति तावता कालेन यदि 'ते' प्राणिनः 'न विद्रान्ति' न विनश्यन्ति तदा तद् वसतिं नीयते । तदप्यनुष्णमद्रवं च यदि भवति ततः प्रतिश्रयं नेतव्यम् । किमुक्तं भवति?-यदि उष्णः कूरो द्रवं वा संसक्तं ततः प्रतिश्रयं न नीयते, मा यावत् प्रतिश्रयं नीयते तावत् प्राणजातीया उष्णे द्रवे वा मिरष्यन्तीति कृत्वा । अथानुष्णमद्रवं च तत उपाश्रये गत्वा 'एडयेत्' परिष्ठापयेत् । यत् पुनरुष्णं द्रवं वा तत् तत्रैव शून्यगृहादौ परिष्ठापनीयम् । अथ दूरे वसतिस्ततोऽनुष्णमपि शून्यगृहादिषु परिष्ठापयितव्यम् ॥

[भा.५८७९] सुन्नघरादीणऽसती, दूरे कोण वतिअंतरीभूतो ।
उक्कुडु पमज्ज छाया, वति-कोणादीसु विक्खिरणं ॥

वृ- अथ शून्यगृहादीनि न सन्ति ततो दूरे एकान्तं गत्वा यत्र कोणस्थितो वृत्याऽन्तरितीभूतो वा सागारिको न पश्यति तत्रोत्कुटको भूत्वा प्रमृज्य छायायां वृतेः कोणके प्रक्षिपति, आदिग्रहणेन वृतेर्मध्येऽपि विकिरति, परिष्ठापयतीत्यर्थः । एवमोदनस्य सक्तूनां द्रवस्य वा परिष्ठापनं कर्तव्यम् ।

[भा.५८८०] सागारिय उण्ह ठिए, अपमज्जंते य मासयं लहुगं ।
वोच्छेदुड्डाहादी, सागारिय सेसए काया ॥

वृ- अथ सागारिके उष्णे वा प्रदेशे भूत्वा 'स्थितो वा' ऊर्द्ध्वीभूतोऽप्रमार्ज्य वा परिष्ठापयति ततश्चतुर्ष्वपि लघुमासिकम् । सागारिके च पश्यति यदि भक्तं परिष्ठाप्यते तदा स भक्तपानदान-व्यवच्छेदमुड्डाहादिकं वा कुर्यात् । 'शेषे तु' उष्णादित्रये परिष्ठापयतः पृथिव्यादिकाया विराध्यन्ते ।

[भा.५८८१] इइ ओअण सत्तुविही, सत्तू तद्दिनकतादि जा तिन्नि ।
वीसुं वीसुं गहणं, चतुरादिदिनाइ एगत्थ ॥

वृ- 'इति' एवोदनस्य संसक्तस्य विधिरुक्तः । अथ सक्तूनां संसक्तानां विधिरुच्यते-यत्र सक्तवः संसक्ता लभ्यन्ते तत्र नैव गृह्यन्ते । अथ न संस्तरन्ति ततस्तद्दिवसकृतान् सक्तून् गृह्णन्ति । आदिशब्दात् तैरप्यसंस्तरन्तो द्वितीय-तृतीयदिनकृतानपि सक्तून् गृह्णन्ति, ते पुनः पृथक् पृथग्

गृह्यन्ते। चतुर्दिवसकृतादयस्तु सर्वेऽप्येकत्र गृह्यन्ते तेषामयं प्रत्युपेक्षणाविधि-रजस्त्रणमधः पस्तीर्य तस्योपरि पात्रकबन्धं कृत्वा तत्र सक्तवः प्रकीर्यन्ते, तत ऊर्ध्वमुखं पात्रकबन्धं कृत्वा एकस्मिन् पार्श्वे नीत्वा यास्तत्र ऊरणिका लग्नास्ता उद्धृत्य कर्परे प्रक्षिप्यन्ते, एवं प्रत्युपेक्ष्य भूयोऽपि तथैव प्रत्युपेक्षन्ते ॥ ततः-

[भा.५८८२] नव पेहातो अदिट्ठे, दिट्ठे अन्नाओ होंति नव चेव।
एवं नवगा तिन्नी, तेन परं संथरे उज्झे ॥

वृ- नववाराः प्रत्युपेक्षणां कृत्वा यदि प्राणजातीया न दृष्टास्तो भोक्तव्यास्ते सक्तवः, अथ दृष्टास्ततो भूयोऽप्यन्या नववारा प्रत्युपेक्षणा भवति, तथापि यदि दृष्टास्ततः पुनरपि नववाराः प्रत्युपेक्षन्ते। ततो यद्येवं त्रिभिर्नवकैः शुद्धास्ततो भुञ्जताम्। अथ न शुद्धास्तदा ततः परं 'उज्झेत्' परिष्ठापयेत्। अथासंस्तरणं ततस्तावत् प्रत्युपेक्षन्ते यावत् शुद्धीभवन्ति ॥

प्राणजातीयानां च परिष्ठापने विधिरयम्-

[भा.५८८३] आगरमादी असती, कप्परमादीसु सुत्तए उरणी।
पिंडमलेवाडाण य, कातूण दवं तु तत्थेव ॥

वृ- या ऊरणिकाः प्रत्युपेक्षमाणेन दृष्टास्ता आकरादिषु परिष्ठापनीयाः। इह घरट्टादिसमीपे प्रभूता यत्र तुषा भवन्ति स आकर उच्यते। तस्याभावे कर्परादिषु स्तोकान् सक्तून् प्रक्षिप्य तत्रोरणिकाः स्थापयित्वा बहिरनाबाधे प्रदेशे स्थाप्यन्ते। यदि च द्रवभाजनं नास्ति ततो ये सक्तवः शुद्धा अलेपकृताश्च ते 'पिण्डं कृत्वा' भाजनस्यैकपार्श्वे चम्पयित्वा तत्रैव च द्रवं 'कृत्वा' गृहीत्वा भुञ्जते ॥ यत्र च काञ्जिकं संसज्यते तत्रायं विधिः-

[भा.५८८४] आयामु संसट्ठुसिणोदगं वा, गिण्हंति वा निव्वुत चाउलोदं।
गिहत्थभाणेसु व पेहिऊणं, मत्ते व सोहेत्तुवरिं छुभंति ॥

वृ- आयामं संसृष्टपानकमुष्णोदकं वा 'निर्वृतं वा' प्राशुकीभूतं 'चाउलोदकं' तण्डुलधावनं गृह्णन्ति। एतेषामभावे तदेवकाञ्जिकं गृहस्थभाजनेषु प्रत्युपेक्ष्य मात्रके वा सोधयित्वा यद्यसंसक्तं तदा प्रतिग्रहोपरि प्रक्षिपन्ति ॥ द्वितीयपदमाह-

[भा.५८८५] बिइयपद अपेक्खणं तू, गेलन्न-ऽद्धाण-ओममादीसु।
तं चेव सुक्खगहणे, दुल्लभ दव दोसु वी जयणा ॥

वृ- द्वितीयपदे ग्लाना-ऽध्वा-ऽवमादि कारणेषु 'अप्रेक्षणं' पिण्डस्याप्रत्युपेक्षणमपि कुर्यात्। 'तदेव च' ग्लानत्वादिकं द्वितीयपदं 'शुष्कस्य' ओदनस्य ग्रहणे मन्तव्यम्। दुर्लभं वा द्रवं पश्चान्न लभ्यते ततः पूर्वं तद् गृहीतमिति कृत्वा नास्ति तद् भाजनं यत्र पृथक् शुष्कं गृह्यते। "दोसु वी जयण" त्ति 'द्वयोरपि' अप्रत्युपेक्षणा-शुष्कग्रहणयोरेषा यतना कर्तव्या। एष सङ्ग्रहगाथासमासार्थः।

साम्प्रतमेनामेव विवृणोति-

[भा.५८८६] अद्धाउर सम्मूढो, वेलाऽतिक्कमति सीयलं होइ।
असढो गिण्हण गहिते, सुज्झेज्ज अपेक्खमाणो वि ॥

वृ-कश्चिदतीव 'आतुरत्वेन' ग्लानत्वेन 'सम्मूढः' सम्मोहं-समुद्घातमुपगतस्ततो यावत् प्रत्युपेक्षते तावद् वेलाऽतिक्रामति शीतलं वा तावता कालेन भवति, तत एवम् 'अशठः' विशुद्धभावो

गृह्णानो वा गृहीते वा पिण्डे प्रत्युपेक्षणामकुर्वाणोऽपि 'शुध्येत' प्रायश्चित्तभाग् न भवेत् ॥

[भा.५८८७] ओमाणपेल्लितो वेलऽतिक्कमो चलिउमिच्छति भयं वा ।
एवंविहे अपेहा, ओमे सतिकाल ओमाणे ॥

वृ- अध्वनि वा गच्छतां सार्थः 'अवमानप्रेरितः' प्रभूतभिक्षाचराकीर्णं, यावच्च प्रत्युपेक्षते तावद् वेलातिक्रमो भवति, स च सार्थश्चलितुमिच्छति, पृष्ठतो गच्छतां च भयम्, तत एवंविधे कारणेऽप्रेक्षा, प्रत्युपेक्षामन्तरेणापि पिण्डं गृह्णीयादित्यर्थः । अवमे च प्रत्युपेक्षमाणानां 'सत्कालः' भिक्षाया देशकालः स्फिटति सूर्यो वाऽस्तमेति अवमानं वा-भिक्षाचराकीर्णं ततोऽप्रत्युपेक्षितमपि गृह्णीयात्।

[भा.५८८८] तो कुज्जा उवओगं, पाने दट्ठूण तं परिहरेज्जा ।
कुज्जा न वा व पेहं, सुज्झइ अतिसंभमा सो तु ॥

वृ- यदि अनन्तरोक्तकारणैः प्रत्युपेक्षणं न भवति तत उपयोगं कुर्यात् । कृते चोपयोगे यदि प्राणिनः पश्यति ततस्तान् दृष्ट्वा 'तद्' भक्त-पानं परिहरेत् । अथवा अत्यातुरः 'प्रेक्षाम्' उपयोगमपि च कुर्याद् वा न वा । अनुपयुञ्जानोऽपि चातिसम्भ्रमादसौ साधुः शुध्यति । यच्चाधस्तादुक्तं "संसक्तः शुष्कौदनः पृथग् गृह्यते" तत्राप्येतेष्वेव ग्लाना-ऽध्वा-ऽवमेषु कारणेषु द्वितीयपदं मन्तव्यम् ॥ तथा चाह-

[भा.५८८९] वीसुं घेप्पइ अतरंतगस्स बितिए दवं तु सोहेति ।
तेन उ असुक्खगहणं, तं पि य उण्हेयरे पेहे ॥

वृ- 'अतरन्तगस्य' ग्लानस्य योग्यं 'विष्वग्' एकस्मिन् मात्रके गृह्यते, द्वितीये च मात्रके द्रवं शोधयति, ततो यत्र शुष्कौदनः पृथग् गृह्यते तत् तृतीयं मात्रकं नास्तीति कृत्वा शुष्कमार्द्रं वा एकत्रैव प्रतिग्रहे गृह्णीयात् । ग्लानस्यापि यद् ओदन-द्वितीयाङ्गादिकमेकस्मिन् मात्रके गृह्णाति तदपि उष्णं ग्रहीतव्यम् । 'इतरत् तु' शीतलं प्रत्युपेक्षेत, यदि असंसक्तं ततो गृह्णीयादन्यथा तु नेति भावः ॥

[भा.५८९०] अद्धाणे ओमे वा, तहेव वेलातिवातियं नातुं ।
दुल्लभदवे व मा सिं, धोवण-पियणा न होहिंति ॥

वृ- अध्वनि वाऽवमौदर्ये वा वेलाया अतिपातम्-अतिक्रमं ज्ञात्वा तथैव शुष्कं विष्वग् न गृह्णीयात् । दुर्लभं वाऽत्र ग्रामे द्रवं-पानकं ततो मा "सिं" एषां साधूनां भाजनधावन-पाने न भविष्यति इति कृत्वा पूर्वं मात्रके द्रवं गृहीतं ततो नास्ति भाजनं यत्र शुष्कं पृथग् गृह्यते अत एकत्रैव गृह्णीयात् । उक्तमोदनविषयं द्वितीयपदम् । अथ पानकविषयमाह-

[भा.५८९१] आउट्टिय संसत्ते,देसे गेलन्नऽद्धाण कक्खडे अखिप्पं ।
इयराणि य अद्धाणे, कारण गहिते य जतणाए ॥

वृ- यथा कारणे 'आकुट्टिकया' जानन्तोऽपि संसक्ते देशे गच्छन्ति तथा तत्र गताः सन्तः संसक्तमपि पानकं गृह्णन्ति । गृहीत्वा च ग्लानत्वेऽध्वनि 'कर्कशे वा' अवमे क्षिप्रं न परित्यजेयुरपि । तथाहि-ग्लानत्वे यावत् संसक्तं परिष्ठापयन्ति तावद् ग्लानस्य वेलातिक्रमो भवति, अध्वनि सार्थात् परिभ्रश्यन्ति, अवमौदर्ये भिक्षाकालः स्फिटति, ततो न क्षिप्रं परित्यजेयुः । 'इतराणि च' सागारिकस्य पश्यतः परिष्ठापनम् इत्यादीनि यानि पूर्वप्रतिषिद्धानि तान्यप्यध्वनि वर्तमानः कुर्यात्।

एष कारणे यतनया गृहीतस्य संसक्तस्य विवेचने विधिरवगन्तव्य इति सङ्ग्रहगाथासमासार्थः ॥

अथैनामेव विवृणोति-

[भा.५८९२] आउट्टि गमन संसत्त गिण्हणं न य विगिंचए खिप्पं ।
ओम गिलाणे वेला, विहम्मि सत्थो वइक्कमइ ॥

वृ- यथाऽऽकुट्टिकया संसक्तदेशे गमनं तथा तत्र गतः संसक्तमपि गृह्णीयात् न च क्षिप्रं 'विविञ्च्यात्' परिष्ठापयेत् ! कुतः ? इत्याह-अवमे भिक्षाकालः निवर्तति, ग्लाने वा ग्लानस्य वेलाऽतिक्रमेत्, 'विहे' अध्वनि सार्थो व्यतिक्रामति, ततः क्षिप्रं न परित्यजेत् ॥

[भा.५८९३] असिवादी संसत्ते, संकप्पादी पदा तु जह सुज्झे ।
संसट्ठसत्तु चाउल, संसत्तऽसती तहा गहणं ॥

वृ- असिवादिभिः कारणैर्यथा संसक्ते देशे सङ्कल्पादीनि पदानि कुर्वाणोऽपि शुध्यति तथा तत्र गतो यदि असंसक्तं पानकं न लभते ततः संसृष्टपानकं तन्दुलोदकं वा संसक्तं सक्तून् वा संसक्तान् तथैव गृह्णीयात् ॥ तेषां पुनः गृहीतानामयं विधिः-

[भा.५८९४] ओवग्गहियं चीरं, गालणहेउं घनं तु गेण्हंति ।
तह वि य असुज्झमाणे, असती अद्धाणजयणा उ ॥

वृ- औपग्रहिकं 'घनं' निश्छिद्रं चीवरं तेषां संसक्तपानकानां गालनाहेतोर्गृह्णन्ति । 'तथापि' तेनापि गाल्यमानं यदि न शुध्यति न वा तण्डुलधावनादिकमपि लभ्यते, ततो या प्रथमोद्देशकेऽध्वनि गच्छतां "तुवरे फले य रुक्खे०" इत्यादिना पानकयतना भणिता सा कर्तव्या ॥

अथ दधिविषयं विधिमाह-

[भा.५८९५] संसत्त गोरसस्सा, न गालणं नेव होइ परिभोगो ।
कोडिदुग-लिंगमादी, तहि जयणा नो य संसत्तं ॥

वृ- यदि क्वापि संसक्तो गोरसो लभ्यते ततस्तस्य न गालनं न वा परिभोगः कर्तव्यः, किन्तु "कोडिदुग-लिंगमाइ" त्ति कोटिद्वयेन-विशोधिकोट्या विशोधिकोट्या अविशोधिकोट्या च भक्त-पानग्रहणे यतितव्यं यावदाधाकर्मापि गृह्यते, अन्यलिङ्गमपि कृत्वा भक्त-पानमुत्पाद्यते, न पुनः संसक्तो गोरसो ग्रहीतव्यः ॥ अथ "इयराणि य" इत्यादिपश्चार्द्धं व्याचष्टे-

[भा.५८९६] सागारिय सव्वत्तो, नत्थि य छाया विहम्मि दूरे वा ।
वेला सत्थो व चले, न निसीय-पमज्जणे कुज्जा ॥

वृ- अध्वनि गच्छतां सर्वतोऽपि सागारिकम्, छाया च तत्र नास्ति, अस्ति वा परं दूरे, तत्र च गच्छतां वेलाऽतिक्रामति, सार्थो वा चलति, तत्र उष्णेऽपि भूभागे परिष्ठापयेत् । यत्र चोपविशतः सागारिकं शङ्कादयो वा दोषाः अशुचिकं वा स्थानं तत्र निषदन-प्रमार्जने अपि न कुर्यात् ॥

मू. (१५४) *निग्गंथस्स य गाहावइकुलं पिंडवायपडियाए अनुप्पविट्ठस्स अंतोपडिग्गहगंसि दगे वा दगरए वा दगफुसिए वा परियावज्जेज्जा, से य उसिणे भोयणजाते भोत्तव्वे सिया; से य सीए भोयणजाते तं नो अप्पणा भुंजेज्जा, नो अन्नेसिं दावए, एगंते बहुफासुए पदेसे परिट्ठवेयव्वे सिया ।*

वृ- अस्य सम्बन्धमाह-

[भा.५८९७] आहारविही वुत्तो, अयमन्नो पानगस्स आरंभो ।

कायचउक्काऽऽहारे, कायचउक्कं य पानम्मि ॥

वृ-आहारविधि पूर्वसूत्रे उक्तः, अयं पुनरन्यः पानकस्य विधिप्रतिपादनाय सूत्रारम्भः क्रियते। तथा आहारेऽनन्तरसूत्रे प्राणग्रहणेन त्रसा बीजग्रहणेन वनस्पतिकायाः रजोग्रहणेन पृथिव्यग्निकायौ गृहीताविति कायचतुष्कमुक्तम् । इहापि पानके कायचतुष्कमुच्यते-तत्र शीतोदकमप्कायः, उष्णोदकमग्निकायः, नालिकेरपानकादिकं वनस्पतिकायः, दुग्धं त्रसकायः । एवं चत्वारोऽपि काया अत्रापि सम्भवन्तीति ॥ अनेन सम्बन्धेनायातसयास्य व्याख्या- निर्ग्रन्थस्य गृहपतिकुलं पिण्डपातप्रतिज्ञया प्रविष्यान्तःप्रतिग्रहे भक्त-पानमध्ये 'दकं वा' प्रभूताप्कायरूपं 'दकरजो वा' उदकबिन्दुः 'दकस्पर्शितं वा उदकशीकराः पर्यापतेयुः । तच्चोष्णं भोजनजातं ततो भोक्तव्यं स्यात् । अथ शीतं तद् भोजनजातं ततस्तत्रात्मना भुञ्जीत, नान्येषां दद्यात्, एकान्ते बहुप्राशुके प्रदेशे परिष्ठापयितव्यं स्यादिति सूत्रार्थ ॥ अथ भाष्यम्-

[भा.५८९८] परिमाणे नाणत्तं, दगबिंदु दगरयं वियाणाहि ।
सीभरमो दगफुसितं, सेसं तु दगं दव खरं वा ॥

वृ-दकरजःप्रभृतीनां परिमाणकृतं नानात्वम् । तथाहि-यस्तावद् दकबिन्दुस्तं दकरजो विजानीहि। ये तु 'सीभराः' पानीयेऽन्यत्र प्रक्षिप्यमाणे उदकसीकरा आगत्य प्रपतन्ति ते दकस्पर्शितम् । 'शेषं तु' यत् प्रभूतमुदकं तद् दकमिति भण्यते । तच्च द्रवं वा खरं वा भवति इति विषमपदव्याख्यानं भाष्यकृता कृतम् ॥ सम्प्रति निर्युक्तिविस्तरः-

[भा.५८९९] एमेव बितियसुत्ते, पलोगणा गिण्हणे य गहिते य ।
अनभोगा अनुकंपा, पंतत्ता वा दगं देज्जा ॥

वृ-अधस्तनाहारसूत्रादिदं द्वितीयसूत्रमुच्यते । तत्र द्वितीयसूत्रेऽप्येवमेव विधिर्द्रष्टव्यः । ग्रहणे गृहीते च पानके 'प्रलोकना' प्रत्युपेक्षणा पिण्डस्येव मन्तव्या । तच्च उदकं त्रिभि कारणैर्दद्यात् । तद्यथा-"अनभोगा" इत्यादि । अनाभोगेन काचिदगारी एकत्रैव काञ्जिकं पानीयं चास्तीति कृत्वा 'काञ्जिकं दास्यामि' इति बुध्या विस्मृतिवशाज्जलं दद्यात् । अनुकम्पया वा ग्रीष्मसमये तृषाक्रान्तं साधुं दृष्ट्वा 'शीतलं जलं पिबेद्' इति बुध्या काचिदुदकं दद्यात् । प्रान्ततया प्रत्यनीकतया वा काचिद् भिक्षुकाद्युपासिका 'एतेषामुदकं न कल्पते अतो व्रतभङ्गं करोमि' इति बुध्या साधूनामुदकं दद्यात् ॥ अथात्रैव विधिमाह-

[भा.५९००] सुद्धम्मि य गहियम्मी, पच्छा नाते विगिंचए विहिणा ।
मीसे परूविते उण्ह-सीतसंजोग चउभंगो ॥

वृ-यदि तदुदकं 'शुद्धे' रिक्ते प्रतिग्रहे गृहीतं 'पश्चाच्च' ग्रहणानन्तरं ज्ञातम्, यथा-उदकमिदम्; ततः 'विधिना' वक्ष्यमाणेन 'विविञ्चयात्' परिष्ठापयेत् । "मीसे"त्ति मिश्रं नाम-यत्र प्रतिग्रहे पूर्वमन्यद् द्रवं गृहीतं पश्चाच्च पानीयं पतितम् एतद् मिश्रमुच्यते, तत्र 'मिश्रे' उष्णशीतसंयोगे चतुर्भङ्ग्याः प्ररूपणा कर्तव्या ॥ तत्र रिक्ते प्रतिगृहे यद् गृहीतं तस्यायं परिष्ठापनाविधिः-

[भा.५९०१] तत्थेव भायणम्मी, अलब्भमाणे व आगरसमीवे ।
सपडिग्गहं विगिंचइ अपरिस्सव उल्लभाणे वा ॥

वृ-यतो भाजनादविरतिकया दत्तं तत्रैव तदुदकं प्रक्षिपति । अथ सा तत्र प्रक्षेप्तुं न ददाति तत

एवमलभ्यमाने मा पृच्छयते-कुतस्त्वयेदमानीतम् ? । ततो यस्माद् कूप-सरःप्रभृतेराकरादानीतं तस्य समीपे गत्वा परिष्ठापनिकानिर्युक्तिभणितेन विधिना परिष्ठापयेत् । अथवा सप्रतिग्रहमपि क्षीरद्रुमस्य च्छायायामेकान्ते स्थापयति । अथ प्रतिग्रहकोऽन्यो न विद्यते ततो यद् अपरिश्राविघटादिकमार्द्रं जलभावितं भाजनं तत्र प्रक्षिपति ॥ अथ पूर्वमन्यद्रव्ये गृहीते पतितं तत इयं चतुर्भङ्गी-

[भा.५९०२] दव्वं तु उण्हसीतं, सीउण्हं चेव दो वि उण्हाइं ।
दुन्नि वि सीताइअ चाउलोद तह चंदन घते य ॥

वृ- इह द्रव्यं चतुर्धा, तद्यथा-किञ्चिदुष्णं शीतपरिणामम् १ अपरं शीतमुष्णपरिणामम् २ अन्यदुष्णमुष्णपरिणामम् ३ अपरं शीतं शीतपरिणामम् ४ । अथासन्नत्वात् प्रथमं चतुर्थभङ्गं व्याख्याति-''चाउलोद'' इत्यादि । तण्डुलोदक-चन्दन-घृतादीनि द्रव्याणि 'शीतानि' शीतपरिणामानि । तृतीयभङ्गमाह-

[भा.५९०३] आयाम अंबकंजिय, जति उसिणालुसिण तो विवागे वी ।
उसिणोदग-पेज्जाती, उसिणा वि तणुं गता सीता ॥

वृ-आयामा-ऽम्लकाञ्जिकादीनि द्रव्याणि यद्युष्णानि ततो 'विपाके' परिणामेऽपि तान्युष्णान्येव भवन्तीति कृत्वा तृतीयो भङ्गः । यानि पुनरुष्णोदक-पेयादीनि द्रव्याणि तान्युष्णान्यपि 'तनुं' शरीरं गतानि शीतानि भवन्तीत्यनेन प्रथमो भङ्गो व्याख्यातः ॥ अथ द्वितीयभङ्गं व्याचष्टे-

[भा.५९०४] सुत्ताइ अंबकंजिय-घनोदसी-तेल्ल-लोण-गुलमादी ।
सीता वि होंति उसिणा, दुहतो वुण्हा व ते होंति ॥

वृ- सुत्तं-मदिराखोलः देशविशेषप्रसिद्धो वा कश्चिद् द्रव्यविशेषः, तदादीनि यानि द्रव्याणि, यच्च अम्लं काञ्जिकम्, अम्ला च घनविकृति, अम्लं च उदश्चित्-तक्रम्, यच्च तैलं लवणं गुडो वा, एवमादीनि द्रव्याणि शीतान्यपि परिणामत उष्णानि भवन्तीति द्वितीयभङ्गेऽवतरन्ति । अथ तान्युष्णानि ततः 'उष्णानि' उष्णपरिणामानीति तृतीये भङ्गे प्रतिपत्तव्यानीति ॥

आह कतिविधः पुनः परिणामः ? इति उच्यते-

[भा.५९०५] परिणामो खलु दुविहो, कायगतो बाहिरो य दव्वाणं ।
सीओसिणत्तणं पि य, आगंतु तदुब्भवं तेसिं ॥

वृ- द्रव्याणां परिणामः द्विविधः-कायगतो बाह्यश्च । तत्र कायेन-शरीरेणाहारितानां द्रव्याणां यः शीतादिकः परिणामः स कायगतः, यः पुनरनाहारितानां स बाह्यः । स च बाह्यः परिणामः शीतो वा स्यादुष्णो वा । तदपि च शीतोष्णत्वं द्रव्यणां द्विधा-आगन्तुकंतदुद्भवं च ॥

उभयमपि व्याचष्टे-

[भा.५९०६] साभाविया व परिणामिया व सीतादतो तु दव्वाणं ।
असिरससमागमेण उ, नियमा परिणामतो तेसिं ॥

वृ- स्वाभाविका वा परिणामिका वा शीतादयः पर्याया द्रव्याणां भवन्ति । तत्र स्वाभाविका यथा-हिमं स्वभावशीतलम्, तापोदकं स्वभावादेवोष्णम् । परिणामिकास्तु पर्याया द्रव्यान्तरादिबाह्यकारणजनिताः, तथा चाह-''असरिस'' इत्यादि, असदृशेन वस्तुना सह यः समागमः-मीलकस्तेन नियमात् 'तेषां' द्रव्याणां 'परिणामः' पर्यायान्तरगमनं भवति, यथा-उदकादेः

शीतलस्याप्यग्नितापेन आदित्यरश्मितापेन वा उष्णतागमनम् ॥ एतदेव सुव्यक्तमाह-

[भा.५९०७] सीया वि होंति उसिणा, उसिणा वि य सीयगं पुनरुवेंति ।
दव्वंतरसंजोगं, कालसभावं च आसज्ज ॥

वृ- द्रव्यान्तरेण-अग्नि-जलादिना सयोगं-सम्बन्धं कालस्य च-ग्रीष्म-हेमन्तादेः स्वभावमासाद्य शीतान्यपि द्रव्याण्युष्णानि भवन्ति उष्णान्यपि च शीततां पुनरुपयान्ति ॥ एष आगन्तुकः परिणामो मन्तव्यः । अयं पुनस्तदुद्‌भवः

[भा.५९०८] तावोदगं तु उसिणं, सीया मीसा य सेसगा आऊ ।
एमेव सेसगाइं, रूवीदव्वाइं सव्वाइं ॥

वृ- तापोदकं स्वभावादेवोष्णम्, 'शेषा आपः' अप्कायद्रव्याणि शीतानि 'मिश्राणि वा' शीतोष्णोभयस्वभावानि मन्तव्यानि । एवमेव 'शेषाणि' अप्कायविरहितानि यानि सर्वाण्यपि रूपिद्रव्याणि तानि कानिचिदुष्णानि यथा अग्नि, कानिचित् शीतानि यथा हिमम्, कानिचित् तु शीतोष्णानि यथा पृथिवी ॥

[भा.५९०९] एएण सुत्त न गतं, जो कायगताण होइ परिणामो ।
सीतोदमिस्सियम्मि उ, दव्वम्मि उ मग्गणा होति ॥

वृ- य एष 'कायगतानाम्' आहारितानां द्रव्याणां परिणाम उक्तो नैतेन सूत्रं गतम्, किन्तु 'शीतोदकमिश्रितेन' सचित्तोदकमिश्रेण द्रव्येणेहाधिकारः । तत्र चेयं मार्गणा भवति ॥

[भा.५९१०] दुहतो थोवं एक्केकएण अंतम्मि दोहि वी बहुगं ।
भावुगमभावुगं पि य, फासादिविसेसितं जाणे ॥

वृ- इह पूर्वगृहीते द्रव्ये यदा शीतोदकं पतति तदा इयं चतुर्भङ्गी-''दुहतो थोवं'' ति स्तोके स्तोकं पतितमिति प्रथमो भङ्गः । ''एक्केकएण'' त्ति स्तोके बहुकं पतितमिति द्वितीयः, बहुनि स्तोकं पतितमिति तृतीयः । ''अंतम्मि दोहि वी बहुगं'' ति बहुनि बहुपतितमिति चतुर्थ । यद् द्रव्यं पतति यत्र वा पतति तद् भावुकम भावुकं वा स्पर्शादिविशेषितं जानीयात् । किमुक्तं भवति ? -स्पर्श-रस-गन्धैरुत्कटतया यद् अपराणि द्रव्याणि स्वस्पर्शादिभिर्भावयति-परिणामयति तद् भावुकम्, तद्विपरीतमभावुकम् । ये च स्तोक-बहुपदाभ्यां चत्वारो भङ्गाः कृतास्तेषु प्रत्येकममी चत्वारो भङ्गा भवन्ति-उष्णे उष्णं पतितम् १ उष्णे शीतं पतितम् २ शीते उष्णं पतितम् ३ शीते शीतं पतितम् ४ ॥ एतेषु विधिमाह-

[भा.५९११] चरमे विगिंचियव्वं, दोसु तु मज्झिल्ल पडिए भयणा उ ।
खिप्पं विविंचियव्वं, मायविमुक्केण समणेणं ॥

वृ- चरमं नाम-यत् शीते शीतं पतितम् तत् पुनः स्तोकं पतितं बहुके वा बहुकं पतितं भवेद् उभयमपि क्षिप्रं 'विवेक्तव्यं' परिष्ठापयितव्यम् । 'द्वयोस्तु मध्यमयोः भङ्गयोः' 'उष्णे शीतं पतितम्, शीते उष्णं पतितम्' इतिलक्षणयोर्वक्ष्यमाणा भजना भवति । यः पुनरुष्णे उष्णं पतितमि प्रथमो भङ्गः तत्र तत्क्षणादेव सचित्तभावो नापगच्छतीति कृत्वा क्षिप्रमेव मायाविमुक्तेन श्रमणेन तद् विवेचनीयम् । मायावमुक्तग्रहणेनेदं ज्ञापयति-शीघ्रं परिष्ठापयितुकामोऽपि यावत् स्थण्डिलं गच्छति तावत् तद् अचित्तीभूतं ततः परिभुङ्क्ते न परिष्ठापयति । अथ मातृस्थानेन मन्दं मन्दं

गच्छति चिन्तयति च-तिष्ठतु तावत् पश्चात् परिणतं परिभोक्ष्ये; एवं मायां कुर्वतः स्थण्डिलादर्वाक् परिणतमपि न कल्पते ॥ अथ मध्यमभङ्गद्वये भजनामाह-

[भा.५९१२] थोवं बहुम्मि पडियं, उसिणे सीतोदगं न उज्झंती ।
हंदि हु जाव विगिंचति, भावेज्जति ताव तं तेनं ॥

वृ-बहुके पूर्वगृहीते स्तोकं पतितमित्यत्र यदि उष्णे बहुनि शीतोदकं स्तोकं पतितं तदा नोज्झन्ति। कुतः ? इत्याह-'हन्दि' इत्युपप्रदर्शने, यावद् विविनक्ति तावत् 'तत्' स्तोकं शीतोदकं 'तेन' बहुकेनोष्णेन 'भाव्यते' परिणतं क्रियते, ततः परिभोक्तव्यं तदिति भावः ॥

[भा.५९१३] जं पुन दुहतो उसिणं, समपतिरेगं व तक्खणा चेव ।
मज्झिल्लभंगएसुं, चिरं पि चिट्ठे बहुं थूढं ॥

वृ- यत् पुनर्द्विधाऽप्युष्णम्-उष्णे उष्णं पतितमित्यर्थः तत् परिणामतः परस्परं 'समं' तुल्यं भवेद् 'अतिरिक्तं वा' द्वयोरेकतरमधिकतरं तत्रापि तत्क्षणादेव सचित्तभावो नापगच्छतीति वाक्यशेषः । यौ तु मध्यमौ द्वौ भङ्गौ 'उष्णे शीतं पतितम्, शीते वा उष्णं पतितम्' इति लक्षणौ तयोः स्तोके बहु प्रक्षिप्तं चिरमपि सचित्तं तिष्ठेत्, ततस्तदपि क्षिप्रं चिरेण वा विवेचनीयम् ॥

अथोदकस्यैव परिणमनलक्षणमाह-

[भा.५९१४] वन्न-रस-गंध-फासा, जह दव्वे जम्मि उक्कडा होंति ।
तह तह चिरं न चिट्ठइ, असुभेसु सुभेसु कालेणं ॥

वृ- यस्मिन् द्रव्ये यथा यथा वर्ण-गन्ध-रस-स्पर्शा उत्कटा उत्कटतरा भवन्ति तथा तथा तेन द्रव्येण सह मिश्रितमुदकं चिरं न तिष्ठति, क्षिप्रं क्षिप्रतरं परिणमतीति भावः । किमविशेषेण ? न इत्याह-येऽशुभा वर्णादय उत्कटास्तेष्वेव क्षिप्रं परिणमति, ये तु शुभा वर्णादयस्तेषूत्कटेषु कालेन परिणमति, चिरादित्यर्थः ॥ अत्रेदं निदर्शनम्-

[भा.५९१५] जो चंदने कडुरसो, संसट्ठजले य दूसणा जा तु ।
सा खलु दगस्स सत्थं, फासो उ उवग्गहं कुणति ॥

वृ-इह तण्डुलोदकं चन्दनेन क्वापि मिश्रितं तत्र च चन्दनस्य यः कटुको रसः स तण्डुलोदकस्य शस्त्र परं यस्तदीयः स्पर्श शीतलः स जलस्योपग्रहं करोतीति कृत्वा चिरेण तत् परिणमति । एवं संसृष्टजलस्यापि या 'दूषणा' अम्लरसता सा उदकस्य शस्त्रं स्पर्शस्तु शीतलत्वादुपग्रहकारी अतश्चिरेण परिणमति ॥

[भा.५९१६] घयकिट्ट-विस्सगंधा, दगसत्थं मधुर-सीतलं न घतं ।
कालंतरमुप्पन्ना, अंबिलया चाउलोदस्स ॥

वृ- घृतस्य सबन्धी यः किट्टो यश्च विस्र गन्धः तावुदकस्य शस्त्रम्, यत् तु रसेन मधुरं स्पर्शेन च शीतलं घृतं तद् उपग्रहं करोतीति शस्त्र न भवति, अतश्चिरात् परिणमति । तथा कुक्कुसैः-अतिगुलिकैस्तण्डुलोदकस्याम्लता या कालान्तरेणोत्पन्ना साऽप्युदकस्य शस्त्र भवति ॥

[भा.५९१७] अव्वुक्कंते जति चाउलोदए छुब्भते जलं अन्नं ।
दोन्नि वि चिरपरिणामा, भवंति एमेव सेसा वि ॥

वृ- 'अव्युत्क्रान्ते' अपरिणते तण्डुलोदके यद् 'अन्यद्' अपरं सचित्तं जलं प्रक्षिप्यते ततो द्वे

अप्युदके चिरपरिणामे भवतः। 'शेषाण्यपि' यानि संसृष्टपानक-फलपानकादीनि तेष्वपि सचित्तोदकं यदि प्रक्षिप्यते ततः 'एवमेव' तान्यपि चिरात् परिणमन्तीति ॥ अथ द्वितीयपदमाह-

[भा.५९१८] थंडिल्लस्स अलंभे, अद्धाणोम असिवे गिलाणे वा।
सुद्धा अविविंचंता, आउट्टिय गिण्हमाणा वा ॥

वृ- स्थण्डिलस्यालाभेऽपरिणतपानकमपरिष्ठापयन्तोऽपि शुद्धाः। अध्वा-ऽवमा-ऽशिव-ग्लानत्वेषु वा कारणेषु पानकस्य दुर्लभतायाम् 'अविविञ्चन्तः' अपरिष्ठापयन्तः 'आकुट्टिकया वा' जानन्तोऽपि गृह्णन्तः शुद्धाः ॥

*मू. (१५५) निग्गंथीए रातो वा वियाले वा उच्चारं वा पासवणं वा विगिंचमाणीए वा विसोहेमाणीए वा अन्नयरे पसुजातीए वा पक्खिजातीए वा अन्नयरं इंदियजायं परामुसेज्जा, तं च निग्गंथी साइज्जेज्जा, हत्थकम्मपडिसेवणपत्ता आवज्जइ मासियं अणुग्घाइयं ॥*

*मू. (१५६) निग्गंथीए रातो वा वियाले वा उच्चारं वा पासवणं वा विगिंचमाणीए वा विसोहेमाणीए वा अन्नयरे पसुजातीए वा पक्खिजातीए वा अन्नयरंसि सोयंसि ओगाहिज्जा, तं च निग्गंथी साइज्जेज्जा, मेहुणपडिसेवणपत्ता आवज्जइ चाउम्मासियं अणुग्घाइयं ॥*

वृ- अस्य सूत्रद्वयस्य सम्बन्धमाह-

[भा.५९१९] पढमिल्लुग-ततियाणं, चरितो अत्थो वताण रक्खट्ठा।
मेहुणरक्खट्ठा पुन, इंदिय सोए य दो सुत्ता ॥

वृ- 'प्रथम-तृतीययोर्व्रतयोः' प्राणातिपाता-ऽदत्तादानविरतिलक्षणयो रक्षणार्थं तीर्थकरानुज्ञात-शीतोदकपरिभोगे तयोर्भङ्गो मा भूदिति कृत्वा पूर्वसूत्रस्यार्थ 'चरितः' गतः, भणित इत्यर्थः। सम्प्रति तु मैथुनव्रतरक्षणार्थमिन्द्रियविषय-श्रोतोविषये द्वे सूत्रे आरभ्येते ॥ अनेन सम्बन्धेना-यातस्यास्य व्याख्या-निर्ग्रन्थ्याः रात्रौ वा विकाले वा उच्चारं वा प्रश्रवणं वा विविञ्चन्त्या वा विशोधयन्त्या वा अन्यतरः 'पशुजातीयो वा' वानरादिकः 'पक्षिजातीयो वा' मयूरादिकोऽन्यतरदिन्द्रियजातं 'परामृशेत्' स्पृशेत्, सा च निर्ग्रन्थी तं च स्पर्शं 'स्वादयेत्' 'सुन्दरोऽस्य स्पर्श' इत्यनुमन्येत, हस्तकर्मप्रतिसेवनप्राप्ता आपद्यते मासिकमनुद्धातिकं स्थानम्। इह निर्ग्रन्थीनां परिहारतपो न भवतीति कृत्वा ''परिहारट्ठाणं''ति पदं न पठनीयम् ॥ एवं द्वितीयसूत्रमपि व्याख्येयम्। नवरम्-अन्यतरस्मिन् 'श्रोतसि' योन्यादौ वानरादिरवगाहेत, सा च मैथुनप्रतिसेवनप्राप्ता यदि स्वादयेत् ततश्चतुर्गुरुकमिति सूत्रार्थः ॥ अथ भाष्यविस्तरः-

[भा.५९२०] वानर छगला हरिणा, सुणगादीया य पसुगणा होंति।
बरहिण चासा हंसा, कुक्कुडग-सुगादिणो पक्खी ॥

वृ- वानराः छगला हरिणाः शुनकादयश्च पशुगणा मन्तव्याः। बर्हिणश्चाषा हंसाः कुक्कुटशुकादयश्च पक्षिण उच्यन्ते ॥

[भा.५९२१] जहियं तु अनाययणा, पासवणुच्चार तहि पडिकुट्ठं।
लहुगो य होइ मासो, आणादि सती कुलघरे वा ॥

वृ- यत्रैते पशुजातीयाः पक्षिजातीयाश्च प्राणिनः सम्भवन्ति तद् अनायतनमुच्यते, तत्र निर्ग्रन्थीनामवस्थानं प्रश्रवणोच्चारपरिष्ठापनं च प्रतिकुष्टम्। यदि कुर्वन्ति तदा लघुमासः, आज्ञादयश्च

दोषाः । "सईकुलघरे व" त्ति भुक्तभोगिन्याश्च स्मृतिकरणं कुलगृहे वा भूयस्तासां बान्धवादिभिर्नयनं क्रियते ॥ इदमेव व्याचष्टे-

[भा.५९२२] भुत्ता-ऽभुत्तविभासा, तस्सेवी काति कुलघरे आसि ।
बंधव तप्पक्खी वा, दट्ठूण लयंति लज्जाए ॥

वृ- भुक्ता-ऽभुक्तविभाषा, भुक्तभोगिन्याः स्मृतिकरणम् [illegible] तथा "तस्सेवि" त्ति गृहवासे तैः-पशुजातीयादिभिः प्रतिसेविता काचित् कुलगृहे आसीत् सा तान् दृष्ट्वा स्मृतपूर्वरता प्रतिगमनादीनि कुर्यात् । यद्वा तासां बान्धवास्तत्पाक्षिका वा सुहृदस्ता-दृशेऽनायतने स्थितां तामार्यिकां दृष्ट्वा लज्जया भूयः स्वगृहमानयन्ति ॥ किञ्च-

[भा.५९२३] आलिंगनादिगा वा, अनिहुय-मादीसु वा निसेविज्जा ।
एरिसगाण पवेसो, न होति अंतेपुरेसुं पि ॥

वृ- ते पशुजातीयादयस्तां संयतीमालिङ्गेयुः, सा वा संयती तानालिङ्गेत्, एवमालिङ्गनादयो दोषा भवेयुः । अपि च-एते वानरादयः स्वभावादेवानिभृताः-कन्दर्पबहुला मायिनश्च भवन्ति ततस्तैरनिभृत-मायिभि सा कदाचिदात्मानं निषेवयेत् । ईदृशानां च पशु-पक्षिजातीयानां प्रवेशो राज्ञोऽन्तःपुरेष्वपि 'न भवति' न दीयते । कारणे पुनरन्यस्या वसतेरभावे तत्रापि तिष्ठेयुः ॥

[भा.५९२४] कारणे गमने वि तहिं, विविंचमाणीए आगतो लिहेज्जा ।
गुरुगो य होति मासो, आणाति सती त स च्चेव ॥

वृ- कारणे तत्रापि स्थितानामुच्चारभूमौ प्रश्रवणभूमौ वा गत्वा 'विविञ्चन्त्याः' परिष्ठापयन्त्या वानरादि समागच्छेत्, आगतश्च तामालिङ्गेत्, सा च यदि 'लिह्यात्' तं स्पर्शं स्वादयेत् ततो गुरुमासः आज्ञादयश्च दोषाः, स्मृतिश्च सा चैव पूर्वोक्ता भवति ॥

अथ न स्वादयति ततः सा शुद्धा, यतना चेयं तत्र कर्तव्या-

[भा.५९२५] वंदेण दंडहत्था, निग्गंतुं आयरंति पडिचरणं ।
पविसंते वारिंति य, दिवा वि न उ काइयं एक्का ॥

वृ- 'वृन्देन' द्वि-त्र्यादिव्रतिनीसमुदायेन दण्डकहस्ता निर्गच्छन्ति, निर्गत्य च कायिकादिक-मायरन्ति, वानरादीनां च प्रतिचरणं कुर्वन्ति । ये तत्राभिद्रवन्ति तान् दण्डकेन ताडयन्ति, प्रतिश्रये च प्रविशतो निवारयन्ति । दिवाऽपि च कायिकाभूमिम् 'एका' एकाकिनी न गच्छति ॥

व्याख्यामिन्द्रियसूत्रम् । सम्प्रति श्रोतःसूत्रं व्याचष्टे-

[भा.५९२६] एवं तु इंदिएहिं, सोते लहुगा य परिणए गुरुगा ।
बितियपद कारणम्मि, इंदिय सोए य आगाढे ॥

वृ- एवं तावद् इन्द्रियसूत्रे प्रायश्चित्तं विधिश्चोक्तः । यत्र तु पशुजातीयादयः श्रोतोऽवगाहनं कुर्वन्ति तत्र तिष्ठन्तीनां चतुर्लघु । तेषु श्रोतोऽवगाहनं कुर्वाणेषु यदि सा सुन्दरमिदमिति परिणता ततश्चतुर्गुरु । द्वितीयपदे आगाढे कारणे इन्द्रिये श्रोतसि च परामर्शं स्वादयेदपि । इदमुत्तरत्र भावयिष्यते ॥ कारणे एकाकिन्यास्तिष्ठन्त्यास्तावदियं यतना-

[भा.५९२७] गिहिणिस्सा एगागी, ताहे समं निंति रतिमुभयस्सा ।
दंडगसारक्खणया, वारिंति दिवा य पेल्लंते ॥

वृ-गृहस्थनिश्रया कारणे काचिदेकाकिनी वसन्ती 'ताभिः' अविरतिकाभि समं रात्री 'उभयस्य' प्रश्रवणोच्चारस्य व्युत्सर्जनार्थं निर्गच्छति, निर्यन्ती च वानरादीनभिद्रवतो दण्डकेन संरक्षति, दिवा च प्रतिश्रयं 'प्रेरयतः' प्रविशतो निवारयति ॥ अथागाढकारणं व्याचष्टे-

[भा.५९२८] अट्ठाण सद्द आलिंगणादिपाकम्मऽतिच्छिता संती ।
अच्चित्त बिंब अनिहुत, कुलघर सड्ढादिगे चेव ॥

वृ-कस्याश्चिद्यदि कथमपि सनिमित्तोऽनिमित्तो वा मोहोद्भवः सञ्जातस्ततो निर्विकृतिकादिकायां मोहचिकित्सायां कृतायामपि यदा न तिष्ठति तदाऽस्थाने शब्दप्रतिबद्धायां वसतौ सा स्थापनीया। ततो यत्राविरतिकानामालिङ्गनादिकं क्रियमाणं दृश्यते तत्र स्थाप्यते। तथाऽप्यनुपरते मोहे पादकर्म करोति। तदप्यतिक्रान्ता सती यद् 'अचित्तं बिम्बं' दुग्धशिवादिकं तेन प्रतिसेवयति। तथाऽप्यतिष्ठति योऽनिभृतस्तेनास्थानादिकं सर्वमपि कृत्वा ततः कुलगृहे भगिन्या भ्रातृजायाया वा आलिङ्गनादिकं क्रियमाणं प्रेक्षते। तदभावे श्राद्धिकायाः, तदप्राप्तौ यथाभद्रिकाया अपि प्रेक्षते। प्रथममिन्द्रिये, पश्चात् श्रोतस्यपि यतनयेति ॥

मू. (१५७) *नो कप्पइ निग्गंथीए एगाणियाए होत्था !*

मू. (१५८) *नो कप्पइ निग्गंथीए एगाणियाए गाहावइकुलं पिंडवायपडियाए निक्खमित्तए वा पविसित्तए वा ।*

मू. (१५९) *नो कप्पइ निग्गंथीए एगाणियाए बहिया वियारभूमिं वा विहारभूमिं वा निक्खमित्तए वा पविसित्तए वा ।*

मू. (१६०) *नो कप्पइ निग्गंथीए एगाणियाए गामाणुगामं वा दूइज्जित्तए वा ।*

मू. (१६१) *नो कप्पइ निग्गंथीए एगाणियाए वासावासं वा वत्थए ।*

वृ-एवं यावदेकपार्श्वशायिसूत्रं तावत् सर्वाण्यपि सूत्राण्युच्चारयितव्यानि। अथामीषां सूत्राणां सम्बन्धमाह-

[भा.५९२९] बंभवयरक्खणट्ठा, एगधिगारा तु होंतिमे सुत्ता ।
जा एगपाससायी, विसेसतो संजतीवग्गे ॥

वृ-ब्रह्मवतरक्षणार्थमनन्तरं सूत्रद्वयमुक्तम्, अमून्यपि सूत्राणि यावदेकपार्श्वशायिसूत्रं तावत् सर्वाण्यपि 'एकाधिकाराणि' तस्यैव ब्रह्मव्रतस्य रक्षणार्थमभिधीयन्ते। "विसेसओ संजईवग्गे" त्ति एतेषु सूत्रेषु किञ्चिद् निर्ग्रन्थानामपि सम्भवति, यथा-एकाकिसूत्रम्; परं विशेषतः संयतीवर्ग-मधिकृत्यामूनि सर्वाण्यपि द्रष्टव्यानि ॥

अनेन सम्बन्धेनायातानाममीषां प्रथमसूत्रस्य तावद् व्याख्या-नो कल्पते निर्ग्रन्थ्या एकाकिन्या गृहपतिकुलं पिण्डपातप्रतिज्ञया निष्क्रमितुं वा प्रवेष्टुं वा, बहिर्विचारभूमौ वा विहारभूमौ वा निष्क्रमितुं वा प्रवेष्टुं वा, ग्रामानुग्रामं व 'द्रोतुं' विहर्तुं वर्षावासं वा वस्तुमिति सूत्रार्थ ॥ सम्प्रति निर्युक्तिविस्तरः-

[भा.५९३०] एगागी वच्चंती, अप्पा त महव्वता परिच्चत्ता ।
लहु गुरु लहुगा गुरुगा, भिक्ख वियारे वसहि गामे ॥

वृ- एकाकिनी निर्ग्रन्थी यदि भिक्षादौ व्रजति तत आत्मा महाव्रतानि च तया परित्यक्तानि भवन्ति, स्तेनाद्युपद्रवसम्भवात्। अतो भिक्षायामेकाकिन्या गच्छन्त्या लघुमासः, बहिर्विचारभूमौ

गच्छन्त्यां गुरुमासः, ऋतुबद्धे वर्षावासे वा वसतिं एकाकिनी गृह्णाति चतुर्लघु, ग्रामानुग्राममेकाकिनी व्रजति चतुर्गुरु ॥ इदमविशेषितं प्रायश्चित्तमुक्तम् । अथ विशेषितमाह-

[भा.५९३१] मासादी जा गुरुगा, थेरी-खुड्डी-विमज्झ-तरुणीणं ।
तव-कालविसिट्ठा वा, चउसुं पि चउण्ह मासाई ॥

वृ-स्थविराया एकाकिन्या भिक्षादौ व्रजन्त्या मासलघु, क्षुल्लिकाया मासगुरु, विमध्यमायाश्चतुर्लघु, तरुण्याश्चतुर्गुरु । अथवा स्थविरा यदि एकाकिनी भिक्षायां याति ततो मासलघु तपसा कालेन च लघुकम्, बहिर्विचारभूमौ विहारभूमौ वा याति मासलघु तपसा कालेन गुरुकम्, वसतिं गृह्णाति मासलघु तपसा गुरुकम्, ग्रामानुग्रामं व्रजति मासलघु तपसा कालेन च गुरुकम् । क्षुल्लिकाया एवमेव चतुर्षु स्थानेषु चत्वारि मासगुरूणि तपः-कालविशेषितानि । तरुण्याः स्थानचतुष्टयेऽपि तथैव तपः-कालविशेषितानि चत्वारि चतुर्गुरूणि ॥ अथ दोषानाह-

[भा.५९३२] अच्छंती वेगागी, किं ण्हु हु दोसे न इत्थिगा पावे ।
आमोसग तरुणेहिं, किं पुन पंथम्मि संका य ॥

वृ-किमेकाकिनी स्त्री प्रतिश्रये तिष्ठन्ती दोषान् न प्राप्नोति येनैवं भिक्षाटनादिकमेवैकाकिन्याः प्रतिषिध्यते ? इति शिष्येण पृष्टे सूरिराह-तत्रापि तिष्ठन्ती प्राप्नोत्येव दोषान् परम् आमोषकाः-स्तेनास्तरुणाः-युवानस्तैः कृता एकाकिन्याः पथि गच्छन्त्या भूयांसो दोषाः, शङ्का च तत्र भवति-अवश्यमेषा दुःशीला येनैकाकिनी गच्छति ॥ किञ्च-

[भा.५९३३] एगानियाए दोसा, साणे तरुणे तहेव पडिनीए ।
भिक्खऽविसोहि महव्वत, तम्हा सवितिज्जियागमणं ॥

वृ- एकाकिन्या भिक्षामटन्त्या एते दोषा भवन्ति-श्वानः समागत्य दशेत्, तरुणो वा कश्चिदुपसर्गयेत्, प्रत्यनीको वा हन्यात्, गृहत्रयादानीतायां भिक्षायामनुपयुज्य गृह्यमाणायामेषणाविशुद्धिर्न भवति, कोण्टल-विण्टलप्रयोगादिना च महाव्रतानि विराध्यन्ते । यत एते दोषाः अतः सद्वितीयया निर्ग्रन्थ्या भिक्षादौ गमनं कर्तव्यम् ॥ द्वितीयपदमाह-

[भा.५९३४] असिवादि मीससत्थे, इत्थी पुरिसे य पूतिते लिंगे ।
एसा उ पंथ जयणा, भाविय वसही य भिक्खा य ॥

वृ-अशिवादिभिः कारणैः कदाचिदेकाकिन्यपि भवेत् तत्रेयं यतना-ग्रामान्तरं गच्छन्ती स्त्रीसार्थेन सह व्रजति, तदभावे पुरुषमिश्रेण स्त्रसार्थेन, तदप्राप्तौ सम्बन्धिपुरुषसार्थेन व्रजति, अथवा यत् तत्र परिव्राजकादिलिङ्गं पूजितं तद् विधाय गच्छति । एषा पथि गच्छन्त्यां यतना भणिता । ग्रामे च प्राप्ता यानि साधुभावितानि कुलानि तेषु वसतिं गृह्णाति, भिक्षामपि तेष्वेव कुलेषु पर्यटति ॥

मू. (१६२) नो कप्पइ *निग्गंथीए अचेलियाए हुंतए* ॥

वृ-नो कल्पते निर्ग्रन्थ्याः 'अचेलिकायाः' वस्त्ररहिताया भवितुम् । एष सूत्रार्थः । अथ भाष्यम्-

[भा.५९३५] वुत्तो अचेलधम्मो, इति काइ अचेलगत्तणं ववसे ।
जिनकप्पो वऽज्जाणं, निवारिओ होइ एवं तु ॥

वृ- अचेलको धर्मो भगवता प्रोक्त इति परिभाव्य काचिदार्यिका अचेलकत्वं 'व्यवस्येत्' कर्तुमभिलषेत्, अतस्तन्निषेधार्थमिदं सूत्रं कृतम् । अचेलकत्वप्रतिषेधेन आर्याणां जिनकल्पोऽपि

'एवम्' अनेनैव सूत्रेम निवारितो मन्तव्यः ॥ कुतः ? इत्याह-

[भा.५९३६] अजियम्मि साहसम्मी, इत्थी न चए अचेलिया होउं ।
साहसमन्नं पि करे, तेनेव अइप्पसंगेण ॥

वृ- 'साध्वसे' भये तरुणादिकृतोपसर्गसमुत्थेऽजिते सति अचेलिका भवितुं 'स्त्री' निर्ग्रन्थी न शक्नुयात् । अथ भवति ततः 'तेनैव अतिप्रसङ्गेन' अचेलतालक्षणेन 'अन्यदपि' चतुर्थसेवादिकं साहसं कुर्यात् ॥ तथा-

[भा.५९३७] कुलडा वि ताव नेच्छति, अचेलयं किमु सई कुले जाया ।
धिक्कारथुक्कियाणं, तित्थुच्छेओ दुलभ वित्ती ॥

वृ- कुलटाऽपि तावद् नेच्छत्यचेलताम् किं पुनः कालेजाता 'सती' साध्वी ? । अचेलताप्रतिपन्नानां चार्यिकाणां 'धिक्कारथुक्कितानां' लोकापवादजुगुप्सितानां तीर्थोच्छेदो दुर्लभा च वृत्तिर्भवति, न कोऽपि प्रव्रजति न वा भक्त-पानादिकं ददातीत्यर्थः ॥

[भा.५९३८] गुरुगा अचेलियाणं, समलं च दुगुंछियं गरहियं च ।
होइ परपत्थणिज्जा, बिइयं अद्धाणमाईसु ॥

वृ- अत एव यद्यार्यिका अचेलिका भवन्ति ततस्तासां चतुर्गुरुकाः आज्ञादयश्च दोषाः । तथा चेलरहितां संयतीं 'समलां' मलदिग्धदेहां दृष्ट्वा लोकः 'जुगुप्सितं' जुगुप्सां कुर्यात्-आः ! कष्टम्, इहलोके एवेदृश्यवस्था परलोके तु पापतरा भविष्यति, 'गर्हितं च' गर्हां प्रवचनस्य कुर्यात्-असारं सर्वमेतद् दर्शनमिति । अचेलिका च परस्य प्रार्थनीया भवति । अत्र द्वितीयपदमध्वादिषु विविक्तानां मन्तव्यम् ॥ अपि च-

[भा.५९३९] पुनरावत्ति निवारण, उदिन्नमोहो व दट्ठु पेल्लेज्जा ।
पडिबंधो गमनाई, डिंडियदोसा य निगिणाए ॥

वृ- अचेलामार्यां दृष्ट्वा प्रव्रज्याभिमुखानामपि कुलस्त्रीणां पुनरावृत्तिर्भवति, प्रव्रज्यां न गृह्णीयुरित्यर्थः । अन्यो वा कश्चिद् निवारणं कुर्यात्-किमेतासां कापालिनीनां समीपे प्रव्रजितेन ? इति । यद्वा कश्चिदुदीर्णमोहस्तामप्रावृतां दृष्ट्वा कर्मगुरुकतया प्रेरयेत् । साऽपि तत्रैव प्रतिबन्धं कुर्यात् प्रतिगमनादीनि वा विदध्यात् । 'डिण्डिमदोषाश्च' गर्भोत्पत्तिप्रभृतयो भवेयुः । यत एते नग्नाया दोषा अतोऽचेलया न भवितव्यम् । द्वितीयपदे संयत्योऽध्वनि स्तेनैर्विविक्तास्ततो न किमपि वस्त्रं भवेत्, आदिशब्दाद् क्षिप्तचित्ता यक्षाविष्टा वा वस्त्राणि परित्यजेत्, एवमचेलाऽपि भवतीति ॥

मू. *(१६३) नो कप्पइ निग्गंथीए अपाइयाए हुंतए ॥*

वृ- नो कल्पते निर्ग्रन्थ्याः 'अपात्रायः' पात्ररहिताया भवितुमिति सूत्रार्थ ॥ अथ भाष्यम्-

[भा.५९४०] गोणे साणे व्व वत्, ओभावण खिंसणा कुलघरे य ।
नीसट्ठ खइयलज्जा, सुण्हाए होति दिट्ठंतो ॥

वृ- पात्रकमन्तरेण यत्र तत्र समुद्देशनीयम् ततो लोको ब्रूयात्-यथा गौर्यत्रैव चारिं प्राप्नोति तत्रैवालज्जश्चरति, यथा वा श्वानो यत्रैव स्वल्पमप्याहारं लभते तत्रैव निस्त्रपो भुङ्क्ते, एवमेता अपि गो-श्वानसदृश्यो यत्रैव प्राप्नुवन्ति तत्रैव लोकस्य पुरतः समुद्दिशन्ति, अहो ! अमूभिर्गोव्रतं

श्वानव्रतं वा प्रतिपन्नम्; एवमपभ्राजना भवति। "खिंसणा कुलघरे य"त्ति तास्तथाभुञ्जाना दृष्ट्वा तदीयकुलगृहे गत्वा लोकः खिंसां कुर्यात्, यथा-युष्मदीया दुहितरः स्नुषा वा याः पूर्वं चन्द्र-सूर्यकिरणैरप्यस्पृष्टगात्रास्ताः साम्प्रतं सर्वलोकपुरतो गा इव चरन्त्यो हिण्डन्ते। एवमुक्ते ते भूयस्ताः स्वगृहमानयन्ति। "नीसढं" अत्यर्थं च 'स्वादितं' भक्षणं लोकस्य पुरतः कुर्वाणासु लोको ब्रूयात्-अहो! बहुभक्षका अमूः, स्त्रीणां च लज्जा विभूषणं सा चैतासां नास्तीति। अत्र च लज्जायां स्नुषादृष्टान्तो भवति। स च द्विधा-प्रशस्तोऽप्रशस्तश्च॥ प्रशस्तं तावदाह-

[भा.५९४१] उच्चासणम्मि सुण्हा, न निसीयइ न वि य भासए उच्चं।
नेव पगासे भुंजइ, गूहइ वि य नाम अप्पाणं॥

वृ-यथा 'स्नुषा' वधूरुच्चे आसने न निषीदति, नापि 'उच्चं' महता शब्देन भाषते, न च प्रकाशे भूभागे भुङ्क्ते, आत्मीयं च नाम 'गूहति' न प्रकटयति, एवं संयतीभिरपि भवितव्यम्॥ अप्रशस्तस्नुषादृष्टान्तः पुनरयम्-

[भा.५९४२] अहवा महापदानि, सुण्हा ससुरो य इक्कमेक्कस्स।
दलमाणाणि विनासं, लज्जानासेण पावंती॥

वृ- 'अथवा' प्रकारान्तरेण स्नुषादृष्टान्तः क्रियते-'महापदानि' विकृष्टतराणि पदानि स्नुषा श्वसुरश्चैकैकस्य परस्परं प्रयच्छन्ती यथा लज्जानाशेन विनाशं प्राप्नुतः तथा संयत्यपि निर्लज्जा विनश्यति इत्यक्षरार्थः। भावार्थस्त्वयम् एगस्स थिज्जाइयस्स भज्जाए मयाए पुत्तेण से अट्ठियाणि 'माय'त्ति काउं गंगं नीयाणि। इयरेहिं सुण्हा-ससुरेहिं हास खिड्डाइयं करेंतेहिं निल्लज्जत्तणओ निस्सेणिं आरुहित्ता अभिप्पायपुव्वगं विगिट्ठतराइं पयाइं देंतेहिं एक्कमेक्कस्स सागारियं पडुप्पाइयं। दो वि विनट्ठाइं। एवं निल्लज्जाए विणासो हुज्जा॥ द्वितीयपदमाह-

[भा.५९४३] पायासइ तेनहिए, झामिय वूढे य सावयभए वा।
बोहिभए खित्ताइ व, अपाइया हुज्ज बिइयपदे॥

वृ-पात्रस्याभावे, स्तेनकेन वा हृतेऽग्निना वा ध्यामिते दकपूरेण वा व्यूढे पात्रे, श्वापदभये बोधिकभये वा शीघ्रं पात्राणि परित्यज्य नष्टा सती, क्षिप्तचित्ता वा आदिशब्दाद् यक्षाविष्टा वा 'अपात्रिका' पात्ररहिता द्वितीयपदे भवेत्॥

*मू. (१६४) नो कप्पइ निग्गंथीए वोसट्ठकाइयाए हुंतए॥*

वृ-नो कल्पते निर्ग्रन्थ्याः 'व्युत्सृष्टकायिकायाः' परित्यक्तदेहाया भवितुमिति सूत्रार्थः॥

[भा.५९४४] वोसट्ठकाय पेल्लण-तरुणाई गहण दोस ते चेव।
दव्वावइ अगणिम्मि य, सावयभय बोहिए बितियं॥

वृ-व्युत्सृष्टकायिका नाम-'दिव्याद्युपसर्गा मया सोढव्याः' इत्यभिग्रहं गृहीत्वा शरीरं व्युत्सृज्य समयप्रसिद्धेनाभिभवकायोत्सर्गेण स्थिता, तथास्थितायाश्चोदीर्णमोहप्रेरण-तरुणग्रहणादयस्त एव दोषा मन्तव्याः। द्वितीयपदे तु द्रव्यापदि अग्निसम्भ्रमे श्वापदभये बोधिकभये वा गाढतरे उपस्थिते व्युत्सृष्टकायाऽपि भवेत्॥

*मू. (१६५) नो कप्पइ निग्गंथीए बहिया गामस्स वा जाव सन्निवेसस्स वा उड्ढं बाहाओ पगिज्झिय पगिज्झिय सूराभिमुहीए एगपाइयाए ठिच्चा आयावणाए आयावित्तए।*

**मू. (१६६)** *कप्पइ से उवस्सयस्स अंतोवगडाए संघाडिपडिबद्धाए पलंबियबाहियाए समतलपाइयाए ठिच्चा आयावणाए आयावित्तए ॥*

**वृ-** नो कल्पते निर्ग्रन्थ्या बहिर्ग्रामस्य वा यावत् सन्निवेशस्य वा 'ऊर्ध्वम्' उर्ध्वाभिमुखौ बाहू 'प्रगृह्य प्रगृह्य' प्रकर्षेण गृहीत्वा कृत्वेत्यर्थः सूर्याभिमुख्याः 'एकपादिकायाः' एकं पादमूर्ध्वमाकुञ्च्यापरमेकं पादं भुवि कृतवत्या एवंविधायाः स्थित्वा आतापनयाऽऽतापयितुम् । किन्तु-कल्पते "से" तस्या उपाश्रयस्यान्तर्वगडायां प्रलम्बितबाहायाः समतलपादिकायाः स्थित्वा आतापनया आतापयितुमिति सूत्रार्थः ॥ अथ भाष्यम्-

[भा.५९४५] आयावणा य तिविहा, उक्कोसा मज्झिमा जहन्ना य ।
उक्कोसा उ निवन्ना, निसन्न मज्झा ठिय जहन्ना ॥

**वृ-** आतापना त्रिविधा-उत्कृष्टा मध्यमा जघन्या च । तत्रोत्कृष्टा निपन्ना, निपन्नः-शयितो यां करोतीत्यर्थः । मध्यमा निषन्नस्य । जघन्या "ठिय" त्ति ऊर्ध्वस्थितस्य ॥ पुनरेकैका त्रिविधा-

[भा.५९४६] तिविहाहोइ निवन्ना, ओमत्थिय पास तइयमुत्ताणा ।
उक्कोसुक्कोसा उक्कोसमज्झिमा उक्कोसगजहन्ना ॥

**वृ-** या निपन्नस्योत्कृष्टातापना सा त्रिविधा भवति-उत्कृष्टोत्कृष्टा उत्कृष्टमध्यमा उत्कृष्टजघन्या च । तत्र यद् अवाङ्मुखं निपत्य आतापना क्रियते सा उत्कृष्टोत्कृष्टा । या तु पार्श्वतः शयानैः क्रियते सा उत्कृष्टमध्यमा । या पुनरुत्तानशयनेन विधीयते सा 'तृतीया' उत्कृष्टजघन्या ॥

[भा.५९४७] मज्झुक्कोसा दुहओ, वि मज्झिमा मज्झिमाजहन्ना य ।
अहमुक्कोसाऽहममज्झिमा य अहमाहमा चरिमा ॥

**वृ-** निषन्नस्य या मध्यमातापना सा त्रिधा-मध्यमोत्कृष्टा "दुहओ वि मज्झिम" त्ति मध्यममध्यमा मध्यमजघन्या च । ऊर्ध्वस्थितस्य या जघन्या साऽपि त्रिधा-अधमोत्कृष्टा अधममध्यमा अधमाधमा च चरिमेति । अधमशब्दो जघन्यवाचकोऽत्र द्रष्टव्यः ॥ एतासामिदं स्वरूपम्-

[भा.५९४८] पलियंक अद्ध उक्कुडुग, मो य तिविहा उ मज्झिमा होइ ।
तइया उ हत्थिसुंडेगपाद समपादिगा चेव ॥

**वृ-** मध्यमोत्कृष्टा पर्यङ्कासनसंस्थिता, मध्यममध्यमा अर्द्धपर्यङ्का, मध्यमजघन्या उत्कटिका । कचिदादर्शे पूर्वार्द्धमित्थं दृश्यते-"गोदोहुक्कड पलियंक मो उ तिविहा उ मज्झिमा होइ" त्ति, तत्र मध्यमोत्कृष्टा गोदोहिका, मध्यममध्यमा उत्कटिका, मध्यमजघन्या पर्यङ्कासनरूपा । मोशब्दः पादपूरणे । एवा त्रिविधा मध्यमा भवति । या तु 'तृतीया' स्थितस्य जघन्योत्कृष्टादिभेदात् त्रिधा भणिता सा जघन्योत्कृष्टा 'हस्तिशुण्डिका' पुताभ्यामुपविष्टस्यैकपादोत्पाटनरूपा, जघन्यमध्यमा 'एकपादिका' उत्थितस्यैकपादेनावस्थानम्, जघन्यजघन्या 'समपादिका' समतलाभ्यां पादाभ्यां स्थित्वा यद् ऊर्ध्वस्थितैरातप्यते ॥ कथं पुनः शयितस्योत्कृष्टातापना भवति ? इति उच्यते-

[भा.५९४९] सव्वंगिओ पतावो, पताविया धम्मरस्सिणा भूमी ।
न य कमइ तत्थवाओ, विस्सामो नेव गत्ताणं ॥

**वृ-** भूमौ निपन्नस्य सर्वाङ्गीणः 'प्रतापः' प्रकर्षेण तापो लगति, घर्मरश्मिना च भूमि प्रकर्षेण अत्यन्तं तापिता, न च 'तत्र' भूमौ वायुः 'क्रमते' प्रचरति, न च 'गात्राणाम्' अङ्गानां विश्रामो भवति,

अतो निपन्नस्योत्कृष्टातापना मन्तव्या ॥ अथामूषां मध्यादार्यिकाणां काऽऽआतापना कर्तुं कल्पते ? इत्यत आह-

[भा.५९५०] एयासि नवण्हं पी, अनुनाया संजईण अंतिल्ला ।
सेसा नाणुन्नाया, अट्ठ तु आतावणा तासिं ॥

वृ- एतेसां नवानामप्यातापनानां मध्याद् 'अन्तिमा' समपादिकाख्या आतापना संयतीनामनुज्ञाता। 'शेषाः' अष्टावातापनास्तासां नानुज्ञाताः ॥ कीदृशे पुनः स्थाने ता आतापयन्ति? इति उच्यते-

[भा.५९५१] पालीहि जत्थ दीसइ, जत्थ य सइरं विसंति न जुवाणा ।
उग्गहमादिसु सन्ना, आयावयते तहिं अज्जा ॥

वृ- यत् प्रतिश्रयपालिकाभि संयतीभिरातापयन्ती दृश्यते, यत्र च 'स्वैरं' स्वच्छन्दं युवानो न प्रविशन्ति तत्र स्थानेऽवग्रहा-ऽनन्तकादिभि सङ्घाटिकान्तैरुपकरणैः 'सन्ना' आयुक्ता आर्यिका प्रलम्बितबाहुयुगला आतापयति ॥ किमर्थमवग्रहानन्तकादिसन्ना ? इति चेद् अत आह-

[भा.५९५२] मुच्छाए निवडिताए, वातेन समुद्धुते व संवरणे ।
गोतरमजयणदोसा, जे कुत्ता ते उ पाविज्जा ॥

वृ- तस्या आतापयन्त्याः खरतरातपसम्पर्कपरितापितायाः कदाचिद् मूर्च्छा सञ्जायेत तया च निपतितायाः, वातेन वा 'संवरणे' प्रावरणे समुद्धूते, अवग्रहानन्तकादिभिर्विना गोचरचर्याया-मयतनया प्रविष्टाया ये दोषास्तृतीयोद्देशके उक्तास्तान् प्राप्नुयात्, अतस्तैः प्रावृता आतापयेत् ।

मू. (१६७) *नो कप्पइ निग्गंथीए ठाणाययाए हुंतए ॥*

मू. (१६८) *नो कप्पइ निग्गंथीए पडिमट्ठाइयाए हुंतए ॥*

मू. (१६९) *उक्कुडुगासणियाए ॥*

मू. (१७०) *एवं नेसज्जियाए ॥*

मू. (१७१) *वीरासणियाए ॥*

मू. (१७२) *दंडासणियाए ॥*

मू. (१७३) *लगंडसाइयाए ॥*

मू. (१७४) *ओमंथियाए ॥*

मू. (१७५) *उत्ताणियाए ॥*

मू. (१७६) *अंबखुज्जियाए ॥*

मू. (१७७) *एगपासियाए ॥*

वृ- नोकल्पते निर्ग्रन्थ्याः स्थानायताया भवितुम् । एवं प्रतिमास्थायिन्या नैषधिकाया उत्कटिकासनिकाया वीरासनिकाया दण्डासनिकाया लगण्डशायिन्या अवाङ्मुखाया उत्तानिकाया आम्रकुब्जिकाया एकपार्श्वशायिन्या इति सूत्राक्षरसंस्कारः ॥

अत्र भाष्यकारो विषमपदानि व्याख्यानयति-

[भा.५९५३] उद्धट्ठाणं ठाणायतं तु पडिमाउ होंति मासाई ।

पंचेव निसिज्जाओ, तासि विभासा उ कायव्वा ॥

वृ- स्थानायतं नाम ऊर्ध्वस्थानरूपमायतं स्थानं तद् यस्यामस्तिसा स्थानायतिका । केचित्तु "ठाणाइयाए" इति पठन्ति, तत्रायमर्थ-सर्वेषां निषदनादीनां स्थानानां आदिभूतमूर्ध्वस्थानम्, अतः स्थानानामादौ गच्छतीति व्युत्पत्त्या स्थानादिगं तद् उच्यते, तद्योगाद् आर्यिकाऽपि स्थानादिगति व्यपदिश्यते । प्रतिमाः मासिक्यादिकाः तासु तिष्ठतीति प्रतिमास्थायिनी । 'नेसज्जियाय'त्ति निषद्याः पञ्चैव भवन्ति तासां विभाषा कर्तव्या । सा चेयम्-निषद्या नाम-उपवेशनविशेषाः, ताः पञ्चविधाः, तद्यथा-समपादयुता गोनिषद्यिका हस्तिशुण्डिका पर्यङ्काऽर्धपर्यङ्का चेति । तत्र यस्यां समौ पादौ पुतौ च स्पृशतः सा समपादयुता, यस्यां तु गौरिवोपवेशनं सा गोनिषद्यिका, यत्र पुताभ्यामुपविश्यैकं पादमुत्पाटयति सा हस्तिशुण्डिका, पर्यङ्का प्रतीता, अर्धपर्यङ्का यस्यामेकं जानुमुत्पाटयति । एवंविधया निषद्यया चरतीति नैषधिकी । उत्कटिकासनं तु सुगमत्वाद् भाष्यकृता न व्याख्यातम् ॥

[भा.५९५४] वीरासनं तु सीहासने व जह मुक्कजाणुक निविट्ठो ।
दंडे लगंड उवमा, आयत खुज्जाय दुण्हं पि ॥

वृ- वीरासनं नाम यथा सिंहासने उपविष्टो भून्यस्तपाद आस्ते तथा तस्यापनयने कृतेऽपि सिंहासन इव निविष्टो मुक्तजानुक इव निरालम्बनेऽपि यद् आस्ते । दुष्करं चैतद्, अत एव वीरस्य-साहसिकस्यासनं वीरासनमित्युच्यते, तद् अस्या अस्तीति वीरासनिका । तथा दण्डासनिका-लगण्डशायिकापदद्वये यथाक्रमं दण्डस्य लगण्डस्य चायत-कुब्जताभ्यामुपमाकर्तव्या । तद्यथा-दण्डस्येवायतं-पादप्रसारणेन दीर्घं यद् आसनं तद् दण्डासनम्, तद अस्याय अस्तीति दण्डासनिका। लगण्डं किल-दुःसंस्थितं काष्ठम्, तद्वत् कुब्जतया मस्तकपार्ष्णिकानां भुवि लगनेन पृष्ठस्य चालगनेनेत्यर्थः, या तथाविधाभिग्रहविशेषेण शेते सा लगण्डशायिनी । अवाङ्मुखादीनि तु पदानि सुगमत्वाद् न व्याख्यातानीति द्रष्टव्यम् । एते सर्वेऽप्यभिग्रहविशेषाः संयतीनां प्रतिषिद्धाः ॥

एतान् प्रतिपद्यमानानां दोषानाह-

[भा.५९५५] जोणीखुब्भण पेल्लण, गुरुगा भुत्ताण होइ सइकरणं ।
गिरुगा सवेंटगम्मी, कारणे गहणं व धरणं वा ॥

वृ- उर्ध्वस्थानादौ स्थानविशेषे स्थिताया आर्यिकाया योनेः क्षोभो भवेत्, तरुणा वा तथास्थितां दृष्ट्वा 'प्रेरयेयुः' प्रतिसेवेरन् । अत अवैतानभिग्रहान् प्रतिपद्यमानायास्तस्याश्चतुर्गुरु । भुक्तभोगिनीनां च येन कारणेन स्मृतिकरणमितरासां कौतुकं च जायते । तथा वक्ष्यमाणसूत्रे प्रतिषेधयिष्यमाणं सवेण्टकं तुम्बकं यदि निर्ग्रन्थी गृह्णाति तदा चतुर्गुरु, स्मृतिकरणादयश्च त एव दोषाः । कारणे तु तस्यापि ग्रहणं धारणं चानुज्ञातम् । एतच्चाप्रस्तुतमपि लाघवार्थं स्मृतिकरमादिदोषसाम्यादत्र भाष्यकृताऽभिहितमिति सम्भावयामः, अन्यथा वा सुधिया परिभाव्यम् ॥

[भा.५९५६] वीरासन गोदोही, मुत्तुं सव्वे वि तान कप्पंति ।
ते पुन पडुच्च चेड्डं, सुत्ता उ अभिग्गहं पप्पा ॥

वृ- अनन्तरोक्तासनानां मध्याद् वीरासनं गोदोहिकासनं च मुक्त्वा शेषाण्यूर्ध्वस्थानादीनि सर्वाण्यपि तासां कल्पन्ते । आह-सूत्रे तान्यपि प्रतिषिद्धानि तत् कथमनुज्ञायन्ते ? इत्याह-

'तानि पुनः' शेषाणि स्थानानि चेष्टां प्रतीत्य कल्पन्ते, न पुनरभिग्रहविशेषम्; सूत्राणि पुनरभिग्रहं 'प्राप्य' प्रतीत्य प्रवृत्तानि, तत इदमुक्तं भवति-अभिग्रहविशेषादूर्ध्वस्थानादीनि संयतीनां न कल्पन्ते, सामान्यतः पुनरावश्यकादिवेलायां यानि क्रियन्ते तानि कल्पन्त एव ।। परः प्राह-ननु चाभिग्रहादिरूपं तपः कर्मनिर्जरणार्थमुक्तम् ततः किमेवं संयतीनां तत् प्रतिषिध्यते ? उच्यते-

[भा.५९५७] तवो सो उ अनुन्नाओ, जेन सेसं न लुप्पति ।
अकामियं पि पेल्लिज्जा, वारिओ तेनऽभिग्गहो ।।

वृ- तपस्तदेव भगवद्भिरनुज्ञातं येन 'शेषं' ब्रह्मचर्यादिकं गुणकदम्बकं न लुप्यते । कथं पुनः शेषं लुप्यते ? इत्याह-"अकामियं" इत्यादि, दण्डायतादिस्थानस्थितामार्यिका दृष्ट्वा कश्चिदुदीर्ण-कर्मा ताम् 'अकामिकाम्' अनिच्छन्तीमपि 'प्रेरयेत्' प्रतिसेवेत । तेन कारणेन वारित एता-दृशस्तासामभिग्रहः ।। किञ्च-

[भा.५९५८] जे य दंसादओ पाणा, जे य संसप्पगा भुवि ।
चिट्ठुस्सग्गट्ठिया ता वि, सहंति जह संजया ।।

वृ- इह द्विधा कायोत्सर्ग-चेष्टायामभिभवे च । तत्राभिभवकायोत्सर्गस्तासां प्रतिषिद्ध इति कृत्वाऽभिधीयते-ये च दंश-मशकादयः प्राणिनो ये च भुवि 'संसर्पकाः' सञ्चरणशीला उन्दुर-कीटकादयस्तैः कृतानुपद्रवान् यथा संयताः सहन्ते तथा 'ता अपि' आर्यिकाश्चेष्टाकायोत्सर्गस्थिता आवश्यकादिवेलायां सम्यक् सहन्ते, तत एवं ता अपि कर्मनिर्जरां कुर्वन्ति ।। आह-यदि उदीर्णकर्मणा तरुणादिना प्रेर्यमाणाऽपि सा संयती न स्वादयति ।। ततः किमिति येनाभिग्रहविशेषेण बहुतरा कर्मनिर्जरा भवति स वार्यते ? उच्यते-

[भा.५९५९] वसिज्जा बंभचेरंसी, भुञ्जमाणी तु कादि तु ।
तहावि तं न पूयंति, थेरा अयसभीरुणो ।।

वृ- यद्यपि 'काचिद्' आर्यिका धृति-बलयुक्ता 'भुज्यमाना' प्रतिसेव्यमानाऽपि भावतो ब्रह्मचर्ये वसेत् तथापि 'स्थविराः' गौतमादयः सूरयः प्रवचनापयशःप्रवादभीरवस्ता न पूजयन्ति, न प्रशंसन्तीत्यर्थः ।। किञ्च-

[भा.५९६०] तिव्वाभिग्गहसंजुत्ता, ठाण-मोणा-ऽऽसने रता ।
जहा सुज्झंति जयओ, एगा-ऽनेगविहारिणो ।।

[भा.५९६१] लज्जं बंभं च तित्थं च, रक्खंतीओ तवोरता ।
गच्छे चेव विसुज्झंती, तहा अनसनादिहिं ।।

वृ- तीव्रैः-द्रव्यादिविषयैरभिग्रहैः संयुक्ताः, स्थान-मौना-ऽऽसनविशेषेषु रताः, 'एका-ऽनेकविहारिणः' केचिद् एकाकिविहारिणो जिनकल्पिकादय इत्यर्थः, केचिच्चानेकविहारिणः स्थविरकल्पिका इत्यर्थः, एवंविधा यतयो यथा शुध्यन्ति तथा निर्ग्रन्थ्योऽपि लज्जां ब्रह्मचर्यं तीर्थं च सूत्रोक्तविधिना रक्षन्त्यः 'तपोरताः' स्वाध्यायादितपःकर्मपरायणा गच्छ एव वसन्त्योऽनशनादि-भिर्यथोचितैस्तपोभिः शुध्यन्ति, न तीव्रैरभिग्रहैः ।। अपि च-

[भा.५९६२] जो वि दट्ठिधणो हुज्जा, इत्थिचिंधो तु केवली ।
वसते सो वि गच्छम्मी, किमु त्थीवेदसिंधणा ।।

वृ- योऽपि 'दग्धेन्धनः' भस्मसात्कृतवेदमोहनीयकर्मा 'स्वचिह्नः' बहिःस्त्रीलक्षणलक्षितः केवली भवति सोऽपि गच्छवासे वसति किं पुनर्या संयती स्त्रवेदेन सेन्धना ?, सा सुतरां गच्छे वसेदिति भावः ॥ यदप्युक्तम्-'यदि न स्वादयति ततः को नाम तस्या अभिग्रहग्रहणे दोषः ?' तदप्ययुक्तम्, प्रतिसेव्यमानाया आस्वादस्य याहच्छिककत्वात् । कथम् ? इति चेद् उच्यते-

[भा.५९६३] अलायं घट्टियं ज्झाई, फुंफुगा हसहसायई ।
कोवितो वहती वाही, इत्थीवेदे वि सो गमो ॥

वृ- 'अलातम्' उल्मुकं 'घट्टितं' चालितं सद् यथा 'ध्यायति' प्रज्वलति, यथा वा फुम्फुका घट्टिता 'हसहसायति' भृशं दीप्यते, यथा वा व्याधिरपथ्यासेवनादिना कोपितो वर्धते, स्त्रीवेदस्यापि स एव गमो मन्तव्यः, सोऽपि घट्टितः प्रज्वलतीत्यर्थः । अतो याहच्छिकमास्वादनमिति ॥ आह-संयतीनां प्रतिषिद्धा अमी अभिग्रहाः परं संयतानां का वार्ता ? अत्रोच्यते-

[भा.५९६४] कारणमकारणम्मि य, गीयत्थम्मि य तहा अगीयम्मि ।
एए सव्वे वि पए, संजयपक्खे विभासिज्जा ॥

वृ- यानि एतानि व्युत्सृष्टकायिकत्वादीनि पदान्युक्तानि तानि 'कारणे' सिंहादिभिरभिभूतस्य देवताकम्पननिमित्तं वा गीतार्थस्यागीतार्थस्य वा कल्पन्ते । अकारणे पुनरगीतार्थस्य न कल्पन्ते, गीतार्थस्य तु निष्कारणे पि निर्जरानिमित्तं कल्पन्ते । अचेलत्वादिकमपि गीतार्थस्य जिनकल्पं प्रतिपद्यमानस्य कल्पते । एवं संयतपक्षे 'एतानि' अचेलतादीनि सर्वाण्यपि पदानि विभाषयेत् ॥

मू. *(१७८) नो कप्पइ निग्गंथीणं आकुंचनपट्टगं धारित्तए वा परिहरित्तए वा ।*

मू. *(१७९) कप्पइ निग्गंथाणं आकुंचनपट्टगं धारित्तए वा परिहरित्तए वा ॥*

वृ- एवं यावद् दारुदण्डकसूत्रम् ॥ अथामीषां सूत्राणां सम्बन्धमाह-

[भा.५९६५] बंभवयपालणट्ठा, तहेव पट्ठाइया उ समणीणं ।
बिइयपदेण जईणं, पीढग-फलए विवज्जित्ता ॥

वृ- यथा ब्रह्मव्रतपालनार्थमचेलत्वादीनि न कल्पन्ते तथा ब्रह्मचर्यरक्षणार्थमेव श्रमणीनां पट्टादयोऽपि दारुदण्डकान्ता न कल्पते । द्वितीयपदे तु यतीनां कल्पन्ते परं पीठ-फलकानि वर्जयित्वा, तानि साधूनामपवादमन्तरेणापि कल्पन्त एवेत्यर्थः । अत एतेषां सूत्राणामारम्भः ॥ अनेन सम्बन्धेनायातानाममीषां प्रथमसूत्रस्य व्याख्या-नो कल्पते निर्ग्रन्थीनाम् 'आकुञ्चनपट्टं' पर्यस्तिकापट्टं धारयितुं वा परिहर्तुं वा । कल्पते निर्ग्रन्थानामाकुञ्चनपट्टं धारयितुं वा परिहर्तुं वेति सूत्रार्थः ॥

अथ भाष्यम्-

[भा.५९६६] गव्वो अवाउडत्तं, अनुवधि पलिमंथु सत्थुपरिवाओ ।
पट्टमजालिय दोसा, गिलाणियाए उ जयणाए ॥

वृ- पर्यस्तिकापट्टं परिदधानामार्यिकां दृष्ट्वा लोको ब्रूयात्-अहो ! अस्याः कियान् गर्वो यदेवं महेलाऽपि भवन्ती पर्यस्तिकां करोति । अपावृता वा पर्यस्तिकां कुर्वाणा भवेत् । "अनुवहि" त्ति य उपकारे वर्तते स उपधिरुच्यते, स च तासामुपकारं नायातीति कृत्वाऽनुपधि । उभयकालं प्रत्युपेक्षमाणे च तस्मिन् सूत्रार्थपरिमन्थः । शास्तुश्च-तीर्थकृतः परिवादः, यथा-नूनमसर्वज्ञोऽसौ येनैतासां पर्यस्तिकापट्टो न प्रतिषिद्धः । द्वितीयपदे या संयती स्थविरा ग्लाना वा तया 'यतनया'

अल्पसागारिके पर्यस्तिकापट्टः परिधातव्यः उपरि चान्यत् प्रावरणीयम् । कारणे च गृह्यमाणो यः 'अजालिकः' जालरहितः स ग्रहीतव्यः, जालसदृशे तु शुषिरदोषाः । एवं निर्ग्रन्थानामप्यकारणे पर्यस्तिकां कुर्वाणानां चतुर्लघु गर्वादयश्च त एव दोषाः ।। कारणे पुनरयं विधिः –

[भा.५९६७] थेरे व गिलाणे वा, सुत्तं काउमुवरिं तु पाउरणं ।
साथस्सए व वेड्डी, पुव्वकतमसारिए वाए ।।

वृ- सूत्रपौरुषीम् उपलक्षणत्वाद् अर्थपौरुषीं च 'कर्तुं' शिष्याणां दातुमित्यर्थः स्थविरो ग्लानो वा वाचनार्थं पर्यस्तिकां कृत्वा उपरि प्रावृणुयात् । उत्तरार्द्धं पश्चाद् व्याख्यास्यते ।। स च पर्यस्तिकापट्टः कीदृशः ? इत्याह-

[भा.५९६८] फलो अचित्तो अह आविओ वा, चउरंगुलं वित्थडो असंधिमो अ ।
विस्सामहेउं तु सरीरगस्सा, दोसा अचट्टंभगकया न एवं ।।

वृ- फलाद् जातः फालः सौत्रिक इत्यर्थः, 'अचित्रः' अकर्बुरः । अथ सौत्रिको न प्राप्यते तत आविको वा । स च चतुरङ्गुलं 'विस्तृतः' पृथुलः 'असन्धिमश्च' अपान्तराले सन्धिरहितः, एवंविधः पर्यस्तिकापट्टः शरीरस्य विश्रामहेतोर्गृह्यते । ये चावष्टम्भगताः "संचरंयुदेहिय इत्यादिका दोषास्तेऽपि 'एवम्' आकुञ्चनपट्टे परिधीयमाने न भवन्ति ।।

*मू. (१८०) नो कप्पइ निग्गंथीणं सावस्सयंसि आसनंसि आसइत्तए वा तुयट्टित्तए वा ।*

*मू. (१८१) कप्पइ निग्गंथाणं सावस्सयंसि आसनंसि आसइत्तए वा तुट्टियत्तए वा ।।*

वृ- सावश्रयं नाम-यस्य पृष्ठतोऽवष्टम्भो भवति एवंविधे आसने निर्ग्रन्थीनां नो कल्पते आसितुं वात्वग्वर्तितुं वा । कल्पते निर्ग्रन्थानां सावश्रये आसने आसितुं वा त्वग्वर्तितुं वा निर्ग्रन्थ्यस्तु तादृशे आसने यदि उपविशन्ति शेरते वा तदा त एव गर्वादयो दोषाश्चतुर्गुरु च प्रायश्चित्तम् । द्वितीयपदेऽल्पसागारिके स्थविरा ग्लाना वा उपविशेत् । निर्ग्रन्थ्यामपि न कल्पते । यदि उपविशन्ति तदा चतुर्लघु । सूत्रं तु कारणिकम् । तदेव कारणमाह- "सावस्सए" इत्यादि पश्चार्द्धम् । यो वृद्ध आचार्य सः 'पूर्वकृते' गृहस्थैः स्वार्थं निष्पादिते सावश्रयेऽप्यासने उपविष्टः 'असागारिके' एकान्ते 'वाचयेत्' विनेयानां वाचनां दद्यात् ।।

*मू. (१८२) नो कप्पइ निग्गंथीणं सविसाणंसि पीढंसि वा फलगंसि वा आसइत्तए वा तुयट्टित्तए वा ।*

*मू. (१८३) कप्पइ निग्गंथाणं सविसाणंसि पीढंसि वा फलगंसि वा आसइत्तए वा तुयत्तिट्टए वा ।।*

वृ- सविषाणं नाम-यथा कपाटस्योभयतः शृङ्गे भवतः एवं यत्र भिसिकादौ पीठे फलके वा विषाणं-शृङ्गं भवति तत्र निर्ग्रन्थीनामासितुं वा शयितुं वा न कल्पते । निर्ग्रन्थानां तु कल्पते । निर्ग्रन्थ्यस्तु सविषाणे पीढे फलके वा यद्युपविशन्ति शेरते वा तदा चतुर्गुरु आज्ञादयश्च दोषाः ।।

[भा.५९६९] सविसाणे उड्डाहो, पाकम्मादी य तो पडिकुट्ठं ।
थेरीए वासासुं, कप्पइ छिन्ने विसाणम्मि ।।

वृ- सविषाणे आसने उपविशन्त्यामार्यिकायामुड्डाहो भवति, पादकर्मादयश्च दोषाः सम्भवन्ति, ततः प्रतिकुष्टं तत्रोपवेशनमिति गम्यते । द्वितीयपदे वर्षासु पीठ-फलकदुर्लभतायां सविषाणमपि

गृह्यते, तस्य च विषाणं छित्त्वा परिष्ठाप्यते। एवं छिन्ने विषाणे स्थविराया अन्यस्या वा कल्पते॥

[भा.५९७०] जं तु न लब्भइ छेत्तुं, तं थेरीणं दलंति सविसाणं।
छायंति य से दंडं, पाउंछण मट्टियाए वा॥

वृ-यत् 'तु' पुनश्छेत्तुं न लभ्यते ततः सविषाणमपि तदासनं स्थविरसाध्वीनां साधवः प्रयच्छन्ति, तदीयं च दण्डं पादप्रोञ्छनेन घनं छादयन्ति, तेन वेष्टयित्वा स्थूलतरं कुर्वन्तीत्यर्थः; मृत्तिकया वा परिवेष्टयन्ति। निर्ग्रन्थानां सविषाणमपि कल्पते॥ कुतः? इत्याह-

[भा.५९७१] समणाण उ ते दोसा, न होंति तेन तु दुवे अनुन्नाया।
पीढं आसनहेउं, फलगं पुन होइ सेज्जट्ठा॥

वृ-श्रमणानां पुनः 'ते' पादकर्मादयो दोषा न भवन्ति ततः 'द्वे अपि' पीढ-फलके सविषाणे अप्यनुज्ञाते। तत्र पीठमासनहेतोः फलकं पुनः 'शय्यार्थं' शयननिमित्तं वर्षासु गृह्यते॥

अथ किमर्थं वर्षासु तत्रोपवेशनं शयनं वा क्रियते? इत्याह-

[भा.५९७२] कुच्छण आय दयट्ठा, उज्झायगमरिस-वायरक्खट्ठा।
पाणा सीतल दीहा, रक्खट्ठा होइ फलगं तु॥

वृ-आर्द्रायां भूमौ स्थाप्यमानाया निषद्यायाः कोथनं भवति, शीतलायां च भूमावुपविशतां धान्यं न जीर्यति ततो ग्लानत्वेन आत्मविराधना, 'दयार्थं च' जीवदयानिमित्तं वर्षासु भूमौ नोपवेष्टव्यम्, ''उज्झायगं''ति भूमेरार्द्रभावेन मलिनीभूतस्योपधेर्जुगुप्सनीयता स्यात्, अर्शांसि वा क्षुभ्येयुः, वातो वाऽधिकतरं प्रकुप्येत्, तत एतेषां रक्षार्थं पीठकं ग्रहीतव्यम्। तथा शीतलायां भूमौ बहवः कुन्थु-पनकप्रभृतयः प्राणिनः सम्मूर्च्छेयुः ततो भूमौ शयानानां तेषां विराधना भवति, दीर्घजातीया व भूमेर्निर्गत्य दशेयुः, उपलक्षणमिदम्, तेनोपधिकोथनाऽजीर्णतादयोऽपि दोषा भवन्ति, एतेषां रक्षार्थं वर्षासु फलकं गृह्यते॥

मू. *(१८४) नो कप्पइ निग्गंथीणं सवेंटगं लाउयं धारित्तए वा परिहरित्तए वा।*

मू. *(१८५) कप्पइ निग्गंथाणं सवेंटगं लाउयं धारित्तए वा परिहरित्तए वा॥*

वृ-अस्य व्याख्या सुगमा। नवरम्-'सवेण्टकं' नालयुक्तं अलाबुकं तद् निर्ग्रन्थीनां न कल्पते। निर्ग्रन्थानां तु कल्पते॥ अत्र भाष्यम्-

[भा.५९७३] ते चेव सवेंटम्मि, दोसा पादम्मि जे तु सविसाणे।
अद्धेग अपडिलेहा, बिइय गिलाणोसहट्ठवणा॥

वृ-त एव 'सवृन्तेऽपि' सनालेऽपि अलाबुमये पात्रे दोषा मन्तव्या ये सविषाणे आसने पादकर्मादय उक्ताः। द्वितीयपदे तु धारयेऽपि। तत्राध्वनि घृतं वा तैलं वा सुखेनैवापरिगलदुह्यते, ग्लानाया वायोग्यं तत्रौषधं प्रक्षिप्तमास्ते। तच्च सवृन्तकं प्रवर्तिनी स्वयं सारयति। निर्ग्रन्थानामपि निष्कारणे न कल्पे। यदि धारयन्ति ततोऽतिरिक्तोपकरणदोषः, सवृन्तके च प्रत्युपेक्षणा न शुध्यति। द्वितयपदे ग्लानस्य योग्यमौषधं तत्र स्थापनीयमिति कृत्वा ग्रहीतव्यम्॥

मू. *(१८६) नो कप्पइ निग्गंथीणं सवेंटियं पादकेसरियं धारित्तए वा परिहरित्तए वा।*

मू. *(१८७) कप्पइ निग्गंथाणं सवेंटियं पादकेसरियं धारित्तए वा परिहरित्तए वा।*

वृ-नो कल्पते निर्ग्रन्थीनां सवृन्तिका पादकेसरिका धारयितुं वा परिहर्तुं वा। कल्पते निर्ग्रन्थानां

सवृन्तिका पादकेसरिका धारयितुं वा परिहर्तुं वा ।। अथ केयं सवृन्ता पादकेसरिका ? इत्याह-

[भा.५९७४] लाउयपमाणदंडे, पडिलेहणिया उ अग्गए बद्धा ।
सा केसरिया भन्नइ, सनालए पायपेहट्ट ।।

वृ- यत्राभिनवसङ्कटमुखे अलाबुनि हस्तो न माति तस्यालावुनो यद् उच्चत्वं तत्प्रमाणो दण्डः क्रियते, तस्याग्रभागे बद्धा या प्रत्युपेक्षणिका सा पादकेसरिका सवृन्ता भण्यते । सा च कारणगृहीतस्य सनालस्य पात्रस्य प्रत्युपेक्षणार्थं गृह्यते । तां यदि निर्ग्रन्थ्यो गृह्णन्ति तदा चतुर्गुरु, सैव च प्रतिसेवनादिका विराधना । निर्ग्रन्थानामप्युत्सर्गतो न कल्पते । द्वितीयपदे सनालमलाबुकं तया प्रत्युपेक्ष्य ततो मुखं क्रियते ।।

मू. *(१८८) नो कप्पइ निग्गंथीणं दारुदंडयं पायपुंछणं धारित्तए वा परिहरित्तए वा ।*

मू. *(१८९) कप्पइ निग्गंथाणं दारुदंडयं जाव परिहरित्तए वा ।*

वृ- अस्य व्याख्या-यत्र दारुमयस्य दण्डस्याग्रभागे ऊर्णिका दशिका बध्यन्ते तद् दारुदण्डकं पादप्रोञ्छनमुच्यते । तद् निर्ग्रन्थीनां न कल्पते, निर्ग्रन्थानां तु कल्पते ।। अत्र भाष्यम्-

[भा.५९७५] ते चेव दारुदंडे, पाउंछणगम्मि जे सनालम्मि ।
दुण्हवि कारणगहणे, चप्पडए दंडए कुज्जा ।।

वृ- ये सनाले पात्रेदोषा उक्तास्त एव दारुदण्डकेऽपि पादप्रोञ्छनके भवन्ति । 'द्वयोरपि च' सनालपात्र-दारुदण्डकयोः कारणे निर्ग्रन्थीनामपि ग्रहणं भवति । तत्र च ग्रहणे कृते 'चप्पडकान्' चतुष्फलान् दण्डकान् कुर्यात् ।।

मू. *(१९०) नो कप्पइ निग्गंथाण वा निग्गंथीण वा अन्नमन्नस्स मोयं आइयत्तए वा आइमित्तए वा, नन्नत्थ गाढाऽगाढेसु रोगायंकेसु ।*

वृ- अस्य सम्बन्धमाह-

[भा.५९७६] बंभव्वयपालणट्ठा, गतोऽहिगारो तु एगपक्खम्मि ।
तस्सेव पालणट्ठा, मोयाऽऽरंभो दुपक्खे वी ।।

वृ- ब्रह्मव्रतपालनार्थमेकस्मिन्-संयतीलक्षणे पक्षे पूर्वसूत्रेषु योऽधिकारः स गतः, समर्थित इत्यर्थः । सम्प्रति तु 'तस्यैव' ब्रह्मव्रतस्य पालनार्थं 'द्विपक्षेऽपि' संयत संयतीपक्षद्वयविषये मोकसूत्रारम्भः क्रियते ।। अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'अन्योन्यस्य' परस्परस्य मोकमापातुं वा आचमितुं वा । किं सर्वथैव ? न इत्याह-गाढाः-अहि-विषविसूचिकादयः अगाढाश्च-ज्वरादयो रोगातङ्कास्तेभ्योऽन्यत्र न कल्पते, तेषु तु कल्पत इत्यर्थः । एष सूत्रार्थः ।। सम्प्रति निर्युक्तिविस्तरः-

[भा.५९७७] मोएण अन्नमन्नस्स आयमणे चउगुरुं च आणाई ।
मिच्छत्ते उड्डाहो, विराधना भावसंबंधो ।।

वृ- 'अन्योन्यस्य' संयतः मोकेन संयती वा संयतानां मोकेन निशाकल्प इकति कृत्वा रात्रौ यद्याचमति तदा चतुर्गुरु, आज्ञादयश्च दोषाः, मिथ्यात्वं च भवेद् न यथावादी तथाकारीति कृत्वा । यद्वा कश्चिदभिनवधर्मा तद् निरीक्ष्य मिथ्यात्वं गच्छेत्-अहो ! अमी समला इति । उड्डाहश्च भोगिनी-घाटिकादिज्ञापने भवति । विराधा च संयमस्यात्मनो वा भवति । तत्र संयमविराधना

तेन स्पर्शेनैकतरस्य भावसम्बन्धो भवेत्, ततश्च प्रतिगमनादयो दोषाः । आत्मविराधना तु "चिंतेइ दद्रुमिच्छइ" इत्यादिक्रमेण ज्वर-दाहादिका ।। किञ्च-

[भा.५९७८] दिवसं पि ता न कप्पइ, किमु निसि मोएण अन्नमन्नस्स ।
इत्थंगते किमन्नं, न करेज्ज अकिञ्चपडिसेवं ।।

वृ- दिवसेऽपि तावन्न कल्पते अन्योन्यस्य मोकेनाऽऽचमितुं किं पुनः 'निशि' रात्रौ ? । 'इत्थङ्गते हि' परस्परं मोकाचमनेऽपि कृते किं नाम तदकृत्यमस्ति यस्य प्रतिसेवां न कुर्याताम् ।।

[भा.५९७९] वुत्तुं पि ता गरहितं, किं पुन घेत्तुं जे कर विलाओ वा ।
घासपइट्ठो गोणो, दुरक्खओ सस्सअब्भासे ।।

वृ- वक्तुमपि तावदेतद् मोकाचमनं गर्हितं किं पुनः संयत्याः करात् 'विलाद् वा' भगादित्यर्थः मोकं ग्रहीतुम् ? । अपि च घासः-चारी तस्याश्चरणार्थं गौः प्रविष्टः सन् 'सस्याभ्यासे' धान्यमूले चरन् दूरक्षो भवति, धान्यमदन् दुःखेन रक्ष्यत इत्यर्थः, एवमयमपि संयत्या मोकेनाचमन् प्रसङ्गतः शेषामपि क्रियां कुर्वन् न वारयितुं शक्य इति भावः ।।

[भा.५९८०]दिवसओ सपक्खे लहुगा, अद्धाणाऽऽगाढ गच्छ जयणाए ।
रत्तिं च दोहि लहुगा, बिइयं आगाढ जयणाए ।।

वृ- दिवसतः 'सपक्षेऽपि' संयतः संयतानां संयती वा संयतीनां मोकेन यदि आचमति तदा चतुर्लघु । शैक्षाणां तदवलोकनादन्यथाभावो भवेत् । गृहस्थ-परतीर्थिकाश्चोड्डाहं कुर्युः ।।

कथम् ? इत्याह-

[भा.५९८१] अट्ठिसरक्खा वि जिया, लोए नत्थेरिसऽन्नधम्मेसु ।
सरिसेण सरिससोही, कीरइ कत्थाइ सोहेज्जा ।।

वृ-अहो ! अमीभिः श्रमणकैरेवं मोकेनाचमद्भिरस्थिसरजस्का अपि जिताः, अस्मिंल्लोकेऽन्ये बहवो धर्म विद्यन्ते परं कुत्रापि ईदृशं शौचं न दृष्टम् । सदृशेन च सदृशस्य या शोधि क्रियते सा किं कुत्रचित् 'शोधयेत्' शुद्धं कुर्यात् ? अशुचिना धाव्यमानमशुचि न शुध्यतीति भावः ।। द्वितीयपदे अध्वनि वर्तमानस्य गच्छस्यापरस्मिन् वा आगाढे कारणे यतनया दिवा स्वपक्षमोकेनाचमेत् । अथ रात्रौ निष्कारणे मोकेनाचमति ततश्चतुर्लघु 'द्वाभ्यामपि' तपः-कालाभ्यां लघु । "रत्तिं दवे वि लहुग"त्ति पाठान्तरम्, तत्र रात्रौ द्रवं-पानकमाचमनार्थं यदि परिवासयति ततश्चतुर्लघु, सञ्चय-पनकसम्मूर्च्छनादयश्चानेकविधा दोषाः । आह च बृहद्भाष्यकृत-रत्तिं दयपरिवासे, लहुगा दोसा हवंतऽनेगविहा । इति । द्वितीयपदे आगाढे कारणे यतनया रात्रावपि मोकेनाचमेद् द्रवं वा परिवासयेत् ।। तत्राध्वनि द्वितीयपदं व्याचष्टे-

[भा.५९८२] निच्छुभई सत्थाओ, भत्तं वारेइ तक्करदुगं वा ।
फासु दवं च न लब्भइ, सा वि य उच्छिट्ठविज्जा उ ।।

वृ-यदि अध्वनि प्रतिपन्नं गच्छं प्रत्यनीकसार्थवाहादि सार्थाद् निष्काशयति, भक्तं वा वारयति, यद्वा 'तस्करद्विकम्' उपधि-शरीरस्तेनद्वयमुपद्रोतुमिच्छति; तत्र कस्यापि साधोराभिचारुका विद्या समस्ति यया परिजपितया स आवर्त्यते, स च साधुस्तदानीं संज्ञालेपस्तुतः, प्राशुकं च द्रवं तत्र न लभ्यते, साऽपि चोच्छिष्टविद्या, ततो मोकेनाचम्यतां परिजपेत् ।। अथागाढपदं व्याख्याति-

[भा.५९८३] अच्चुक्कडे व दुक्खे, अप्पा वा वेदना खवे आउं ।
तत्थ वि सु च्चेव गमो, उज्झिट्ठगमंत-विज्जाऽऽसु ॥

वृ-अत्युत्कटं वा सूलादिकं दुःखं कस्याप्युत्पन्नम्, 'अल्पा वा वेदना' सर्पदशनादिरूपा सञ्जाता या शीघ्रमायुः क्षिपेत्, ततस्तत्रापि स एव गमो मन्तव्यः, प्राशुकद्रवाभावे मोकेनाचमेदित्यर्थः । तत उच्छिष्टं मन्त्रं विद्यां वा परिजप्य तं साधुं आशु-शीघ्रं प्रगुणं कुर्यात् ॥ अत्र यतनामाह-

[भा.५९८४] मत्तग मोयाऽऽयमणं, अभिगए आइन्न एस निसिकप्पो ।
संफासुड्डाहादी, अमोयमत्ते भवे दोसा ॥

वृ-कायिकामात्रके मोकं गृहीत्वा तेनाचमनं कर्तव्यम्, 'अभिगतस्य' गीतार्थस्याचीर्णमेतत्, एष च निशाकल्प उच्यते, पानकाभावेन रात्रावेव प्रायः क्रियमाणत्वात् । अथ मोकमात्रकं विना मोकं स्वपक्षसागारिकाद् गृह्णन्ति ततः संस्पर्शोड्डाहादयो दोषाः । एवं रात्रौ मोकेनाचमनीयम्, न पुनस्तदर्थं द्रवं स्थापनीयम् । द्वितीयपदे स्थापयेदपि ॥ कथम् ? इत्याह-

[भा.५९८५] पिट्टं को वि य सेहो जइ सरई मा व हुज्ज से सन्ना ।
जयणाए ठवेंत दवं, दोसा य भवे निरोहम्मि ॥

वृ-यदि कोऽपि शैक्षः पिट्टं सरति, अतीव व्युत्सर्जनं करोतीत्यर्थः । स चाद्यापि मोकाचमनेना-भावित इति कृत्वा तदर्थं यतनया द्रवं स्थापयन्ति । सामान्यतो वा मा 'तस्य' शैक्षस्य रजन्यामकस्माद् व्युत्सर्जनं भवेद् इति कृत्वा द्रवं स्थापयन्ति । अथ न स्थाप्यत ततः स रात्रौ संज्ञासम्भवे पानकाभावे निरोधं कुर्यात्, निरोधे च परितापा-मरणादयो दोषा भवेयुः ॥

एवं तावदाचमने भणितम् । अथापिबतां दोषानाह-

[भा.५९८६] मोयं तु अन्नमन्नस्स, आयमणे चउगुरुं च आणाई ।
मिच्छत्ते उड्डाहो, विराधना देविदिट्ठंतो ॥

वृ-अन्योन्यस्य मोकं यदि आपिबति तदा चतुर्गुरु, आज्ञादयश्च दोषाः, मिथ्यात्वं च सागारि-कादिस्तदवलोक्य गच्छेत्, उड्डाहो वा भवेत्, विराधना च संयमस्यात्मनो वा भवति । तत्र च देवीदृष्टान्तः ॥ तमेवाह-

[भा.५९८७] दीहे ओसहभावित, मोयं देवीय पज्जिओ राया ।
आसाय पुच्छ कहणं, पडिसेवा मुच्छिओ गलितं ॥

[भा.५९८८] अह रन्ना तुरंते, सुक्खग्गहणं तु पुच्छणा विज्जे ।
जइ सुक्खमत्थि जीवइ, खीरेण य पज्जिओ न मओ ॥

वृ-एगो राया महाविसेणं अहिणा खइओ । विज्जेण भणियं-जइ परं मोयं आइयइ तो न मरइ। तओ देवीतणयं ओसहेहिं वासेऊण दिन्नं । तेन थोवावसेसं आसाइयं । तओ पउणो पुच्छइ-किं ओसहं ? । तेहिं कहियं । सो राया तेन वसीकओ दिया रत्तिं च पडिसेविउमारद्धो । देवीए नायं-'मओ होहिइ' त्ति सुक्कं कप्पाण सारवियं । अवसाने नीसहो जाओ मरिउमारद्धो । विज्जेन भणियं-जइ एयस्स चेव सुक्कं अत्थि तो जीवइ । तीए भणियं-अत्थि खीरेण समं कढेउं दिन्नं । पउणो जाओ । अथाक्षरगमनिका-'दीर्घेण' अहिना भक्षितो राजा । देव्याः सम्बन्धि मोकमौषधभावितं पायितः । तत आस्वादे ज्ञाते पृच्छा कृता । ततः कथनम् । ततो दिवा रात्रौ न प्रतिसेवां मूर्च्छितः

करोति । प्रभूतं च शुक्रं गलितम् ।। 'अथ' अनन्तरं राज्ञि मरणाय त्वरमाणे देव्या शुक्रग्रहणम् । वैद्यस्य च पृच्छा-यदि शुक्रमस्ति ततो जीवति । एवं कथिते क्षीरेण समं तदेव शुक्रं पायितस्ततो न मृतः । एवमेव संयत्याः मोकेन पीतेन साधुरपि वशीक्रियेत, वशीकृतश्चावभाषेत, प्रतिगमनादीनि वा कुर्यात्, तस्माद् नाऽऽपातव्यम् । कारणे पुनराचमनमापानं वा कुर्यात् ।। तथा चाह-

[भा.५९८९]　सुत्तेणेवऽववाओ, आमइ पियेज्ञ वा वि आगाढे ।
　　आयमन आमय अनामए य पियणं तु रोगम्मि ।।

वृ- सूत्रेणैवापवादो दर्श्यते-"आगाढे रोगातङ्के आचमेत् आपिबेद्वा" इति यदुक्तं सूत्रे तत्र 'आचमनं' निर्लेपनम् 'आमये' रोगे 'अनामये च' निशाकल्पे भवति ? पानं तु रोग एव सम्भवति नान्यदा ।। तत्रायं विधिः-

[भा.५९९०]　दीहाइयणे गमनं, सागारिय पुच्छिए य अइगमणं ।
　　तासि सगारजुयाणं, कप्पइ गमनं जहिं च भयं ।।

वृ- दीर्घेण कस्यापि साधोः अदने-भक्षणे कृते स्वपक्षमोकाभावे संयतीप्रतिश्रये गमनम् । ततस्तासां सागारिके पृष्टे सति 'अतिगमनं' प्रवेशः कर्तव्यः । अथ संयत्याः सर्पदशनं जातं ततस्तासां सागारिकयुक्तानां साधुवसतौ गमनं कल्पते । यत्र च भयं तत्र दीपको ग्रहीतव्य इति वाक्यशेषः । एष सङ्ग्रहगाथासमासार्थः ।। साम्प्रतमेनामेव विवृणोति-

[भा.५९९१]　निद्धं भुत्ता उववासिया व वोसिरितमत्तगा वा वि ।
　　सागारियाइसहिया, सभए दीवेण य ससद्दा ।।

वृ- अहिना भक्षितः साधुः स्वपक्ष एव साधूनां मोकं पाय्यते । अथ तेषां नास्ति मोकम्, कुतः ? इत्याह-स्निग्धमाहारं तद्दिवसं भुक्ता उपवासिका वा ततो नास्ति मोकम्; अथवा व्युत्सृष्टमात्रसाकास्ते, तत्क्षण एव मोकं व्युत्सृष्टमपरं च नास्तीति भावः, ततो निर्ग्रन्थीनां प्रतिश्रये गन्तव्यम् । यदि निर्भयं तत एवमेव गम्यते । अथ सभयं ततः सागारिकादिना केनचिद् द्वितीयेन दीपकेन च सहिताः सशब्दा गच्छन्ति । ततः संयीवसतिं प्रविशन्तो यदि नैषेधिकीं कुर्वन्ति ततश्चतुर्गुरु ।। तथा-

[भा.५९९२]　तुसिनीए चउगुरुगा, मिच्छत्ते सारियस्स वा संका ।
　　पडिबुद्धबोहियासु य, सागारिय कज्जदीवणया ।।

वृ- तूष्णीका अपि यदि प्रविशन्ति तदा चतुर्गुरु । मिथ्यात्वं वा कश्चित् तूष्णीभावेन प्रविशतो दृष्ट्वा गच्छेत् । सागारिकस्य वा शङ्का भवति-किमत्र कारणं यदेवममी अवेलायामागताः ? इति, 'स्तेना अमी' इति वा मन्यमानो ग्रहणा-ऽऽकर्षणादिकं कुर्याद् आहन्याद्वा । ततस्तूष्णीकैरपि न प्रवेष्टव्यं किन्तु प्रथमं सागारिक उत्थापनीयः, ततस्तेन प्रतिबुद्धेन-उत्थितेन बोधितासु संयतीषु सागारिकस्य कार्यदीपना कर्तव्या-एकः साधुरहिना दष्टः, इह चौषधं स्थापितमस्ति तदर्थं वयमागताः ।। ततः प्रवर्तिनी भणन्ति-

[भा.५९९३]　मोयं ति देइ गणिणी, थोवं चिय ओसहं लहु नेहा ।
　　मा मग्गेज्ज सगारो, पडिसेहे वा वि वुच्छेओ ।।

वृ- अहिदष्टस्यौषधं मोकमिति प्रयच्छत । ततः 'गणिनी' प्रवर्तिनी यतनया मोकं गृहीत्वा

साधूनां ददाति भणति च-स्तोकमेवेदमौषधमेतावदेवासीत्, नातः परमन्यदस्तीत्यर्थः, अतः 'लघु' शीघ्रं नयत। किमर्थमित्थं कथयति ? इत्याह-मा सागारिकः 'ममापि एतदौषधं प्रयच्छत' इत्येवं मार्गयेत्। यदा तु 'नास्त्यतः परम्' इति प्रतिषेधः कृतस्तदा व्यवच्छेदः कृतो भवति, न भूयो मार्गयतीत्यर्थः ॥

[भा.५९९४] न वि ते कहंति अमुगो, खइओ न वि ताव एय अमुईए।
घेत्तुं नयनं खिप्पं, ते वि य वसहिं सयमुवेंति ॥

वृ-ते साधवो न कथयन्ति, यथा-अमुकः साधुरहिना खादितः। ता अप्यार्यिका न कथयन्ति, यथा एतन्मोकममुकस्याः सत्कमिति। गृहीत्वा च क्षिप्रं नयनं कर्तव्यम्। पूर्वोक्तेन च विधिना ते 'स्वकाम्' आत्मीयां वसतिम् उपयान्ति॥ आह-'यदि' अमुकः साधुर्दष्टः, अमुकस्या वा मोकमिदम्' इति कथ्यते ततः को दोषः ? इत्याह-

[भा.५९९५] जायति सिनेहो एवं, भिन्नरहस्सत्तया य वीसंभो।
तम्हा न कहेयव्वं, को य गुणो होइ कहिएणं ॥

वृ- एवं कथ्यमाने तयोः स्नेहो जायते, भिन्नरहस्यता च भवति, रहस्ये च भिन्ने विश्रम्भो भवति। यत एते दोषास्तस्माद् न कथयितव्यम्। को वा गुणस्तेन कथितेन भवति ? न कोऽपीत्यर्थः। यदा संयती दीर्घजातीयेन दष्टा भवति तदाऽयं विधिः-

[भा.५९९६] सागारिसहिय नियमा, दीवगहत्था वए जईनिलयं।
सागारियं तु बोहे, सो वि जई स एव य विही उ ॥

वृ- आर्यिका नियमात् 'सागारिकसहिताः' शय्यातरसहायाः सभये च दीपकहस्ता यतीनां निलयं व्रजेयुः। स च संयतीसागारिक इतरं संयतसागारिकं बोधयति। सोऽपि प्रतिबुद्धः साधून् बोधयति। अत्रापि स एव विधिर्मोकदाने द्रष्टव्यः ॥

मू. (१९१) *नो कप्पइ निग्गंथाण वा निग्गंथीण वा पारियासियस्स आहारस्स जाव तयप्पमाणमित्तमवि भूइप्पमाणमित्तमवि बिंदुप्पमाणमितमवि आहारं आहारित्तए, नन्नत्य आगाढेसु रोगायंकेसु ॥*

वृ-अस्य सूत्रस्य सम्बन्धमाह-

[भा.५९९७] उदिओऽयमनाहारो, इमं तु सुत्तं पडुच्च आहारं।
अत्थे वा निसि मोयं, पिज्जति सेसं पि मा एवं ॥

वृ- 'अयं' मोकलक्षणोऽनाहारः पूर्वसूत्रे 'उदितः' भणितः, इदं तु सूत्रं आहारं प्रतीत्यारभ्यते। अर्थतो वा 'निशि मोकं पीयते' इत्युक्तम् अतः शेषमपि आहारादिकमेवं मा रात्रौ आहारयेदिति प्रस्तुतं सूत्रमारभ्यते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'परिवासितस्य' रजन्यां स्थापितस्याहारस्य मध्यात् त्वक्प्रमाणमात्रमपि भूतिप्रमाणमात्रमपि बिन्दुप्रमाणमात्रमपि यावदाहारमाहर्तुम्। इह त्वक्प्रमाणमात्रं नाम-तिलतुषत्रिभागमात्रम्, तच्चाशनस्य घटते, भूतिप्रमाणमात्रं सक्तुकादीनां नेयम्, बिन्दुप्रमाणमात्रं पानकस्य। इदमेवापवदति-आगाढेभ्यो रोगा-ऽऽतङ्केभ्योऽन्यत्र न कल्पते, तेषु पुनः कल्पते इति सूत्रार्थः ॥ अथ निर्युक्तिविस्तरः-

[भा.५९९८] परिवासियआहारस्स मग्गणा आहारो को भवे अनाहारो।

आहारो एगंगिओ, चउव्विहो जं वऽतीइ तहिं ॥

वृ- परिवासितस्याहारस्य 'मार्गणा' विचारणा कर्तव्या । तत्र शिष्यः प्राह-वयं तावदेतदेव न जानीमः-को नामाहारः ? को वाऽनाहारः ? इति । सूरिराह-'एकाङ्गिकः' शुद्ध एव यः क्षुधां शमयति स आहारो मन्तव्यः । स चाशनादिकश्चतुर्विधः, यद्वा तत्राहारेऽन्यद् लवणादिकं 'अतियाति' प्रविशति तदप्याहारो मन्तव्यः ॥ अथैकाङ्गिकं चतुर्विधमाहारं व्याचष्टे-

[भा.५९९९] कूरो नासेइ छुहं, एगंगी तक्क-उदग-मज्जाई ।

खाइमे फल-मंसाई, साइमे महु-फाणियाईणि ॥

वृ- अशने कूरः 'एकाङ्गिकः' शुद्ध एव क्षुधं नाशयति । पाने तक्रोदक-मद्यादिकमेकाङ्गिकमपि तृषं नाशयति आहारकार्यं च करोति । खादिमे फल-मांसादिकं स्वादिमे मधु-फाणितादीनि केवलान्यप्याहारकार्यं कुर्वन्ति ॥ "जं वऽईइ तहिं" ति पदं व्याख्याति-

भा [६०००] जं पुन खुहापसमणे, असमत्थेगंगि होइ लोणाई ।

तं पि य होताऽऽहारो, आहारजुयं व विजुतं वा ॥

वृ- यत् पुनरेकाङ्गिकं क्षुधाप्रशमनेऽसमर्थं परमाहारे उपयुज्यते तदप्याहारेण संयुक्तमसंयुक्तं वा आहारो भवति । तच्च लवणादिकम् । तत्राशने लवण-हिङ्गु-जीरकादिकमुपयुज्यते ॥

[भा.६००१] उदए कप्पूराई, फलि सुत्ताईणि सिंगबेर गुले ।

न य ताणि खविंति खुहं, उवगारित्ता उ आहारो ॥

वृ- उदके कर्पूरादिकमुपयुज्यते, आम्रादिफलेषु सुत्तादीनि द्रव्याणि, 'शृङ्गबेरे च' शुण्ठयां गुल उपयुज्यते । न चैतानि कर्पूरादीनि क्षुधां क्षपयन्ति, परमुपकारित्वादाहार उच्यते । शेषः सर्वोऽप्यनाहारः ॥

[भा.६००२] अहवा जं भुक्खत्तो, कद्दमउवमाइ पक्खिवइ कोट्ठे ।

सव्वो सो आहारो, ओसहमाई पुनो भइतो ॥

वृ- अथवा बुभुक्षया आर्तः यत् कर्दमोपमया मृदादिकं कोष्ठे प्रक्षिपति । कर्दमोपमा नाम- "अपि कर्दमपिण्डानां, कुर्यात् कुक्षिं निरन्तरम् ।" स सर्वोऽप्याहार उच्यते । औषधादिकं पुनः 'भक्तं' विकल्पितम्, किञ्चिदाहारः किञ्चिच्चानाहार इत्यर्थः । तत्र शर्करादिकमौषधमाहारः, सर्पदष्टादेर्मृत्तिकादिकमौषधमनाहारः ॥

[भा.६००३] जं वा भुक्खत्तस्स उ, संकसमाणस्स देइ अस्सातं ।

सव्वो सो आहारो, अकामऽनिट्ठं चऽनाहारो ॥

वृ- यद् वा द्रव्यं बुभुक्षार्तस्य 'सङ्कषतः' ग्रसमानस्य कवलप्रक्षेपं कुर्वत इत्यर्थः 'आस्वादं' रसनाह्लादकं स्वादं प्रयच्छति स सर्व आहारः । यत् पुनः 'अकामम्' अभ्यवहरामीत्येवमनभिलषणीयम् 'अनिष्टं च' जिह्वाया अरुच्यम् ईदृशं सर्वमनाहारो भण्यते ॥

तच्चानाहारिममिदम्-

[भा.६००४] अनहारो मोय छल्ली, मूलं च फलं च होतऽणाहारो ।

सेस तय-मूइ-तोयं विंदुम्मि व चउगुरू आणा ॥

वृ- 'मोकं' कायिकी 'छल्ली' निम्बादित्वग् 'मूलं च' पञ्चमूलादिकं 'फलं च' आमलक-हरीतक-

बिभीतकादिकम्, एतत् सर्वमनाहारो भवतीति चूर्णि। निशीथचूर्णौ तु-"या निम्बादीनां 'छल्ली' त्वग् यच्च तेषामेव निम्बोलिकादिकं फलं यच्च तेषामेव मूलम्, एवमादिकं सर्वमप्यनाहारः" इति व्याख्यातम्। "सेसं" ति 'शेषम्' आहारः। तस्याहारस्य परिवासितस्य यदि तिलतुषत्वग्मात्रमप्याहरति, सक्तुकादीनां शुष्कचूर्णानामेकस्यामङ्गु यावती मूर्तिमात्रा लगति तावन्मात्रमपि यदि अश्नाति, तोयस्य-पानस्य बिन्दुमात्रमपि यद्यापिबति तदा चतुर्गुरु, आज्ञा च तीर्थकृतां कोपिता भवति॥ एते चापरे दोषाः-

[भा.६००५] मिच्छत्ता-ऽसंचइए, विराधना सत्तु पाणजाईओ।
सम्मुच्छणा य तक्कण, दवे य दोसा इमे होंति॥

वृ- अशनादि परिवास्यमानं दृष्ट्वा शैक्षोऽन्यो वा मिथ्यात्वं गच्छेत्, उड्डाहं वा कुर्यात्- अहो! अमी असञ्चयिकाः। परिवासिते तु संयमा-ऽऽत्मविराधना भवति। सक्तुकादिषु धार्यमाणेषु ऊरणिकादयः प्राणजातयः सम्मूर्च्छन्ति, पूपलिकादिषु लालादिसम्मूर्च्छना च भवति, उन्दरो वा तत्र 'तर्कणम्' अभिलाषं कुर्वन् पार्श्वतः परिभ्रमन् मार्जारादिना भक्ष्यते, एवमादिका संयमविराधना। आत्मविराधना तु तत्राशनादौ लालाविषः सर्पो लालां मुञ्चेत्, त्वग्विषो वा जिघ्रन् निश्वासेन विषीकुर्यात्, उन्दरो वा लालां मुञ्चेत्। द्रवे चाहारे एते वक्ष्यमाणा दोषा भवन्ति॥ अथ "मिच्छत्तमसंचइय" त्ति पदं व्याख्याति-

[भा.६००६] सेह गिहिणा व दिट्ठे, मिच्छत्तं कहमसंचया समणा।
संचयमिणं करेंती, अन्नत्थ वि नून एमेव॥

वृ- शैक्षेण गृहिणा वा केनापि तत्राशनादौ परिवासिते दृष्टे मिथ्यात्वे भवेत्-एवंविधं सञ्चयं ये कुर्वन्ति कथं ते श्रमणा असञ्चया भवन्ति? । यथा "सर्वस्माद् रात्रिभोजनाद् विरमणम्" इत्यभिग्रहं गृहीत्वा लुम्पन्ति तथा 'नूनं' मिति वितर्कयाम्यहम्-"अन्यत्रापि" प्राणिवधादावेवमेव समाचरन्ति॥

अथ 'द्रवे दोषा अमी भवन्ति' इति पदं व्याचष्टे-

[भा.६००७] निद्धे दवे पणीए, आवज्जण पान तक्कणा झरणा।
आहारे दिट्ठ दोसा, कप्पइ तम्हा अनाहारो॥

वृ- इह वक्ष्यमाणे अभ्यङ्गनसूत्रे भणितं यद् घृतादिकं तैल-वसावर्जितं अद्रवं भवति तदेव स्निग्धमुच्यते। यत् तु सौवीरद्रवादिकं अलेपकृतं यच्च दुग्ध-तैल-वसा-द्रवघृतादिकं लेपकृतं तदुभयमपि द्रवमित्युच्यते॥ तथा चाह-

[भा.६००८] सुत्तभणियं तु निद्धं, तं चिय अदवं सिया अतिल्ल-वसं।
सोवीरग-दुद्धाई, दवं अलेवाड लेवाडं॥

वृ- व्याख्यातार्था॥ प्रणीतं नाम-गूढस्नेहं घृतपूरादिकं आर्द्रखाद्यकम्, यद्वा बहि स्नेहेन म्रक्षितं मण्डकादि अपरं वा स्नेहावगाढं कुसणादि प्रणीतमुच्यते। तथा चाह-

[भा.६१०९] गूढसिनेहं उल्लं, तु खज्जगं मक्खियं व जं बाहिं।
नेहागाढं कुसणं, तु एवमाई पणीयं तु॥

वृ-गतार्था॥ एवंविधे स्निग्धे द्रवे प्रणीते च रात्रौ स्थापिते कीटिकादयः प्राणजातीया आपद्यन्ते, पतन्तीत्यर्थः, तत्र गृहकोलिकादितर्कणपरम्परा वक्तव्या। "झरणा य" त्ति स्यन्दमाने

भाजनेऽधस्तात् प्राणजातीयाः सम्पतन्ति । परः प्राह-नन्वेते दोषा आहारे द्यास्तस्मादनाहारः परिवासयितुं कल्पते ।। सूरिराह-

[भा.६०१०] अनहारो वि न कप्पइ, दोसा ते चेव जे भणिय पुव्विं ।
तद्दिवसं जयणाए, बितियं आगाढ संविग्गे ।।

वृ-अनाहारोऽपि न कल्पते स्थापयितुम् । यदि स्थापयति ततश्चतुर्लघु, 'त एव च' विराधनादयो दोषा ये 'पूर्वम्' आहारे भणिताः, तस्मादनाहारमपि न स्थापयेत् । यदा प्रयोजनं तदा तद्दिवसं बिभीतक-हरीतकादिकं मार्ग्यते । अथ न लभ्यते, दिने दिने मार्गयन्तो वा गर्हितास्ततो यतनया यथा अगीतार्था न पश्यन्ति तथा द्वितीयपदमाश्रित्यागाढे कारणे संविग्नो गीतार्थ स्थापयति, घनचीरेण चर्मणा वा दर्दरयति, पार्श्वतः क्षारेणावगुण्डयति, उभयकालं प्रमार्जयति ।।

[भा.६०११] जह कारणे अनहारो, उ कप्पई तह भवेज्ज इयरो वी ।
वोच्छिन्नम्मि मडंबे, बिइयं अद्धाणमाईसु ।।

वृ- यथा कारणेऽनाहारः स्थापयितुं कल्पते तथा 'इतरोऽपि' आहारोऽपि कारणे कल्पते स्थापयितुम् । कथम् ? इत्याह-व्यवच्छिन्ने मडम्बे कारणे स्थिताः सन्तो द्वितीयपदं सेवन्ते । तथाहि-तत्र पिप्पल्यादिकं दुर्लभम् प्रत्यासन्नं ग्रामादिकं च तत्र नास्ति ततः परिवासयेदपि । यथा कारणे पिप्पल्यादिकं स्थापयन्ति तथा द्वितीयपदेऽशनादयपि स्थापयेत् । 'अद्धाणमादीसु' त्ति अध्वप्रपन्नाः सन्तोऽध्वकल्पं स्थापयेयुः, आदिशब्दात् प्रतिपन्नोत्तमार्थस्य ग्लानस्यवा योग्यं पानकादिकं स्थापयेत् ।। व्यवच्छन्नमडम्बपदं व्याख्याति-

[भा.६०१२] वुच्छिन्नम्मि मडंबे, सहसरुगुप्पायउवसमनिमित्तं ।
दिट्ठत्थाई तं चिय, गिण्हंती तिविह भेसज्जं ।।

वृ-व्यवच्छिन्ने मडम्बे वर्तमानानां सहसा शूल-विष-विसूचिकादिका रुगुत्पद्येत तस्योपशमनिमित्तं द्यार्था-गीतार्था आदिशब्दात् संविग्नादिगुणयुक्तास्तेऽनागतमेव तदेव द्रव्यं गृह्णन्ति येनोपशमो भवति । तच्च भैषजद्रव्यं 'त्रिविधम्' वात-पित्त-श्लेष्मभैषजभेदात् त्रिप्रकारं ज्ञेयम् ।।

*मू. (१९२) नो कप्पइ निग्गंथाण वा निग्गंथीण वा पारियासिएणं आलेवणजाएणं आलिंपित्तए वा विलिंपित्तए वा, नन्नत्थ आगाढेहिं रोगायंकेहिं ।।*

वृ-एवं म्रक्षणसूत्रमप्युच्चारणीयम् । अस्य सम्बन्धमाह-

[भा.६०१३] जइ भुत्तुं पडिसिद्धो, परिवासे मा हु को वि मक्खट्ठा ।
वुत्तो वा पक्खेवे, आहारो इमं तु लेवम्मि ।।

वृ- यदि परिवासित आहारो भोक्तुं प्रतिषिद्धस्ततः मा कश्चिद् म्रक्षणार्थं परिवासयेदिति प्रस्तुतसूत्रमारभ्यते । यद्वा पूर्वसूत्रे "पक्खेव"त्ति मुखप्रक्षेपणद्वारेणाहार उक्तः, इदं तु सूत्रमालेपविषयं प्रोच्यते ।।

[भा.६०१४] अब्भिंतरमालेवो, वुत्तो सुत्तं इमं तु बज्झम्मि ।
अहवा सो पक्खेवो, लोमाहारे इमं सुत्तं ।।

वृ-अथवा आभ्यन्तरः 'आलेपः' आहारलक्षणः पूर्वसूत्रे उक्तः, इदं तु सूत्रं बाह्यालेपविषयमुच्यते। अथवा 'सः' पूर्वसूत्रोक्तः प्रक्षेपाहारः, इदं तु सूत्रं लोमाहारविषयमारभ्यते ।। एभि सम्बन्धैरा-

यातस्यास्य व्याख्या-नो कल्पते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा परिवारसितेनालेपनजातेन 'आलेपयितुं वा' ईषल्लेपयितुं 'विलेपयितुं वा' विशेषेण लेपयितुम्, नान्यत्रागाढेभ्यो रोगातङ्केभ्य इति सूत्रार्थः ॥

अथ भाष्यम्-

[भा.६०१५] मक्खेऊणं लिप्पइ, एस कमो होति वणतिगिच्छाए।
जइ ते न तं पमाणं, मा कुण किरियं सरीरस्स ॥

वृ- परः प्राह-ननु व्रणचिकित्सायां पूर्वं व्रणो म्रक्षित्वा ततः पिण्डीप्रदानेन आलिप्यते, एष क्रमः, ततः प्रथमं म्रक्षणसूत्रमुक्त्वा पश्चादालेपनसूत्रं भणितुमुचितमिति भावः । यदि चैतत् 'ते' तव न प्रमाणं ततो मा शरीरस्य क्रियां कार्षीरिति ॥ सूरिराह-

[भा.६०१६] आलेवणेण पउणइ, जो उ वणो मक्खणेण किं तत्थ ।
होहिइ वणो व मा मे, आलेवो दिज्जई समणं ॥

वृ- नायमेकान्तः यद् अवश्यं व्रणे म्रक्षणमालेपनं च द्वयमपि भवति, किन्तु कुत्रचिदेकतरं कुत्राऽप्युभयम्, ततो यः किल व्रण आलेपेन प्रगुणीभवति तत्र म्रक्षणेन कार्यम्? न किञ्चिदित्यर्थः। यद्वा मा मे व्रणो भविष्यति इति कृत्वा प्रथममेवालेपः 'शमनम्' औषधं दीयते ॥ किञ्च-

[भा.६०१७] अच्चाउरे उ कज्जे, करिंति जहलाभ कत्थ परिवाडी ।
अनुपुव्वि संतविभवे, जुज्जइ न उ सव्वजाईसु ॥

वृ- 'अत्यातुरे' आगाढे कार्ये यथालाभं आलेपो म्रक्षणं वा यः प्रथमं लभ्यते तेनैव चिकित्सां कुर्वन्ति। कुत्र नाम 'परिपाटि' क्रमो विद्यते? । इदमेव व्यनक्ति-यः 'सद्विभवः' विद्यमानविभूतिस्तत्र चिकित्सायां क्रियमाणायां 'आनुपूर्वी' चिकित्साशास्त्रभणिता परिपाटि 'युज्यते' घटते, न पुनः सर्वजातिषु, अतः किमत्र क्रमनिरीक्षणेन ? इति ॥

[भा.६०१८] सुत्तम्मि कड्डियम्मि, आलेव ठविंति चउलहू होंति ।
आणाइणो य दोसा, विराधना इमेहि ठाणेहिं ॥

वृ- सूत्रार्थकथनेन सूत्रे आकृष्टे सति निर्युक्तिविस्तर उच्यते-यदि आलेपं रात्रौ स्थाप्यति तदा चतुर्लघु, आज्ञादयश्च दोषाः, विराधना चामीभि स्थानैर्भवति ॥

[भा.६०१९] निद्धे दवे पणीए, आवज्जण पाण तक्कणा झरणा ।
आयंक विवच्चासे, सेसे लहुगा य गुरुगा य ॥

वृ- स्निग्धे द्रवे प्रणीते आलेपे स्थापिते प्राणिनामापतनं तर्कणं 'क्षरणं च' तस्य द्रवादेः स्यन्दनं भवति। अत्र दोषभावना प्राग्वत्। 'आतङ्के च' रोगे विपर्यासेन क्रियाकरणे वक्ष्यमाणं प्रायश्चित्तम्। "सेसि" त्ति आगाढा-ऽनागाढकारणमन्तरेण यदि परिवासयति ततः प्राशुकादौ स्थाप्यमाने चतुर्लघु, अप्राशुकादौ चतुर्गुरु ॥ इदमेव व्याचष्टे-

[भा.६०२०] ति च्चिय संचयदोसा, तयाविसे लाल छिवण लिहणं वा ।
अंबीभूयं बिइए, उज्झमणुज्झंति जे दोसा ॥

वृ- त एव सञ्चयादयो दोषा मन्तव्याः, त्वग्विषः सर्प स्पृशेत्, लालाविषो वा जिह्वया लेहनं कुर्यात्, द्वितीये च दिनेऽम्लीभूतं तदुज्झ्यते, अनुज्झतो वा ये दोषास्तान् प्राप्नोति ॥

यत एते दोषास्ततः-

[भा.६०२१] दिवसे दिवसे गहणं, पिट्ठमपिट्ठे य होइ जयणाए ।
आगाढे निक्खिवणं, अपिट्ठ पिट्ठे य जयणाए ॥

वृ- यदा ग्लानार्थमालेपेन प्रयोजनं भवति तदा दिवसे दिवसे ग्रहणं विधेयम्। तत्र प्रथमं पिष्टस्यपश्चादपिष्टस्यापि यतनया ग्रहणं कर्तव्य भवति । आगाढे च ग्लानत्वे आलेपस्य निक्षेपणं' परिवासनमपि कुर्यात्, तदप्यपिष्टस्य पिष्टस्य वा यतनया कर्तव्यम्।। अथातङ्कव्यत्यासं व्याख्याति-

[भा.६०२२] आगाढे अनागाढं, अनगाढे वा वि कुणइ आगाढं ।
एवंतु विवच्चासं, कुणइ व वाए कफतिगिच्छं ॥

वृ- आगाढे ग्लानत्वेऽनागाढं क्रियां करोति चतुर्गुरु । अनागाढे वा आगाढं करोति चतुर्लघु । यद्वा वाते चिकित्सनीये कफचिकित्सां करोति, उपलक्षणमिदम्, तेन कफे चिकित्सनीये वातं चिकित्सते इत्याद्यपि द्रष्टव्यम् । एष विपर्यासो मन्तव्यः ॥

अथ "सेसे लहुगा य गुरुगा य" त्ति पदं व्याचष्टे-

[भा.६०२३] अगिलाणो खलु सेसो, दव्वाईतिविहआवइजढो वा ।
पच्छित्ते मग्गणया, परिवासिंतस्सिमा तस्स ॥

वृ- 'शेषो नाम' य आगाढोऽनागाढो वा ग्लानो न भवति, यो वा द्रव्य-क्षेत्र-कालापद्भेदात् त्रिविधया आपदा 'जढः' मुक्त स शेष उच्यते । तस्य परिवासयत इतं प्रायश्चित्तमार्गणा ॥

[भा.६०२४] फासुगमफासुगे वा, अचित्त चित्ते परित्तऽणंते वा ।
असिनेह सिनेहगए, अनहाराऽऽहार लहु-गुरुगा ॥

वृ- प्राशुकं स्थापयति चतुर्लघु, अप्राशुकं स्थापयति चतुर्गुरु । अचित्ते स्थाप्यमाने चतुर्लघु, सचित्ते चतुर्गुरु । परीत्ते चतुर्लघु, अनन्ते चतुर्गुरु । अस्नेहे चतुर्लघु, 'स्नेहगते' स्नेहावगाढे चतुर्गुरु । अनाहारे चतुर्लघु, आहारे चतुर्गुरु ॥

*मू. (१९३) नो कप्पइ निग्गंथाण वा निग्गंथीण वा परियासिएणं तिल्लेण वा घएण वा नवनीएण वा वसाए वा गायं अब्भंगित्तए वा मक्खित्तए वा; नन्नत्थ आगाढेहिं रोगायंकेहिं ॥*

वृ- अस्य सम्बन्धमाह-

[भा.६०२५] ससिनेहो असिनेहो, दिज्जइ मक्खित्तु वा तगं देंति ।
सव्वो वा नालिप्पइ, दुहतो वा मक्खणे सूया ॥

वृ- आलेपः स्नेहोऽस्नेहो वा दीयते, ततो यथा स्नेहेन म्रक्षणं क्रियते न वा तथाऽनेनाभिधीयते। यद्वा व्रणं म्रक्षित्वा 'तकम्' अनन्तरसूत्रोक्तमालेपं प्रयच्छन्ति । न वा सर्वोऽपि व्रण आलेप्यते । द्विधा वा म्रक्षणे सूचा कृता, व्रणोऽपि म्रक्ष्यते आलेपोऽपि म्रक्षितुं दीयत इति भावः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-नो कल्पते परिवासितेन तैलेन वा घृतेन वा नवनीतेन वा वसया वा गात्रम् 'अभ्यङ्क्तुं वा' बहुकेन तैलादिना 'म्रक्षितुं वा' स्वल्पेन तैलादिना, नान्यत्र गाढागाढेभ्यो रोगातङ्केभ्यः, तान् मुक्त्वा न कल्पते । दोषाश्चात्र त एव सञ्चयादयो मन्तव्याः ॥ आह-यद्येवं परिवासितेन न कल्पते म्रक्षितुं ततस्तद्दिवसानीतेन कल्पिष्यते ? सूरिराह-

[भा.६०२६] तद्दिवसमक्खणम्मि, लहुओ मासो उ होइ बोधव्वो ।
आणाइणो विराधन, धूलि सरक्खे य तसपाणा ॥

वृ- तद्दिवसानीतेनापि यदि म्रक्षयति तदा लघुमासः आज्ञादयश्च दोषाः, विराधना च संयमस्य भवति । तथाहि-म्रक्षिते गात्रे धूलिर्लगति, 'सरजस्को वा' सचित्तरजोरूपो वातेनोद्धूतो लगति, तेन चीवराणि मलिनीक्रियन्ते, तेषां धावने संयमविराधना, स्नेहगन्धेन वा त्रसप्राणिनो लगन्ति तेषां विराधना भवेत् ॥

[भा.६०२७] धुवणा-ऽधुवणे दोसा, निसिभत्तं उप्पिलावणं चेव ।
बउसत्त समुइ तलिया, उव्वट्टणमाइ पलिमंथो ॥

वृ- स्नेहेन मिलनीकृतानां चीवराणां गात्राणां वा धावना-ऽधावनयोरुभयोरपिदोषाः, तथाहि- यदि न धाव्यन्ते तदा निशिभक्तम्, अथ धाव्यन्ते ततः प्राणिनामुत्प्लावना भवेत्, उपकरण-शरीरयोर्वकुशत्वं च भवति । ''समुइ''त्ति स एव हेवाको लगति । म्रक्षिते च गात्रे पादयोर्मा धूली लगिष्यतीति कृत्वा तलिकाः पिनह्यति, तत्र गर्वो निर्मार्दवतेत्यादयो दोषाः । यावच्च गात्रस्योद्वर्तनादिकं करोति तावत् सूत्रार्थपरिमन्थो भवति ॥

[भा.६०२८] तद्दिवसमक्खणेण उ, दिट्ठा दोसा जहा उ मक्खिज्जा ।
अद्धाणंपुव्वाए, वाय अरु, कच्छु गहणे ॥

वृ- तद्दिवसम्रक्षणेन जनिता एते दोषा दृष्टाः । द्वितीयपदे यथा म्रक्षयेत् तथाऽभिधीयते- अध्वगमनेनातीव 'उद्धातः' परिश्रान्तः, वातेन वा कटी गृहीता, 'अरु' व्रणं तद्वा शरीरे जातम्, 'कच्छुः' पामा तया वा कोऽपि गृहीतस्ततो यतनया म्रक्षयेदपि ॥ तामेवाह-

[भा.६०२९] सन्नाईकयकज्जो, दुविउं मक्खेउ अच्छए अंतो ।
परिपीय गोमयाई, उव्वट्टण धोव्वणा जयणा ॥

वृ- संज्ञागमनम् आदिशब्दाद् भिक्षागमनादिकं च कार्यं कृतं येन स संज्ञादिकृतकार्य, सर्वाणि बहिर्गमनकार्याणि समाप्येत्यर्थः । स यावन्मात्रं गात्रं म्रक्षणीयं तावन्मात्रमेव धावित्वा प्रक्षाल्य ततो म्रक्षयति । म्रक्षयित्वा च प्रतिश्रयस्यान्तः तावदास्ते यावत् तेन गात्रेण तत् तैलादिकं म्रक्षणं परिपीतं भवति । ततो गोमयादिना तस्योद्वर्तनं कृत्वा यतनया यथा प्राणिनां प्लवना न भवति तथा धावनं कार्यम् ॥

[भा.६०३०] जह कारणे तद्दिवसं, तु कप्पई तह भवेज्ज इयरं पि ।
आयरियवाहि वसभेहि पुच्छिए विज्ज संदेसो ॥

वृ- यथा कारणे तद्दिवसानीतं म्रक्षणं कल्पते तथा 'इतरदपि' परिवासितं म्रक्षणं कारणे कल्पते। कथम् ? इति चेद् अत आह-आचार्यस्य कोऽपि व्याधिरुत्पन्नः, ततो वृषभैर्वैद्यः पूर्वोक्तेन विधिना प्रष्टव्यः । तेन च पृष्टेन 'सन्देशः' उपदेशो दत्तो भवेत्, यथा-शतपाकादीनि तैलानि यदि भवन्ति ततश्चिकित्सा क्रियते ॥ ततः किं कर्तव्यम् ? इत्याह-

[भा.६०३१] सयपाग सहस्सं वा, सयसहस्सं व हंस-मरुतेल्लं ।
दूराओ वि य असई, परिवासिज्जा जयं धीरे ॥

वृ- शतपाकं नाम तैलं तद् उच्यते यद् औषधानां शतेन पच्यते, यद्वा एकेनाप्यौषधेन शतवाराः पक्वम् । एवं सहस्रपाकं शतसहस्रपाकं च मन्तव्यम् । हंसपाकं नाम हंसेन-औषध-सम्भारभृतेन

यत् तैलं पच्यते। मरुतैलं-मरुदेशे पर्वतादुत्पद्यते। एवंविधानि दुर्लभद्रव्याणि प्रथमं तद्दैवसिकानि मार्गणीयानि। अथ दिने दिने न लभ्यन्ते ततः पञ्चकपरिहाण्या चतुर्गुरुप्राप्त दूरादप्यानीय 'धीरः' गीतार्थो 'यतनया' अल्पसागारिके स्थाने मदनचीरे वेष्टयित्वा परिवासयेत्॥ इदमेव सुव्यक्तमाह-

[भा.६०३२] एयाणि मक्खणट्ठा, पियणट्ठा एव पतिदिनालंभे।
पणहानीए जइउं, चउगुरुपत्तो अदोसाओ॥

वृ- 'एतानि' शतपाकादीनि तैलानि म्रक्षणार्थं पानार्थं वा प्रतिदिं यदि न लभ्यन्ते ततः पञ्चकपरिहाण्या यतित्वा चतुर्गुरुकं यदा प्राप्तो भवति तदा परिवासयन्नपि 'अदोषः' न प्रायश्चित्त-भाक्। सर्वथैवालाभे गुरूणां हेतोरात्मनाऽपि यतनया पचन्ति॥

*मू. (१९४) परिहारकप्पट्ठिए भिक्खू बहिया थेराण वेयावडियाए गच्छेज्जा, से य आहच्च अइक्कमिज्जा, तं च थेरा जाणिज्जा अप्पणो आगमेणं अन्नेसिं वा अंतिए सुच्चा, ततो पच्छा तस्स अहालहुसए नाम ववहारे पट्ठवेयव्वे सिया॥*

वृ- अस्य सम्बन्धमाह-

[भा.६०३३] निक्कारणपडिसेवी, अजयणकारी व कारणे साहू।
अदुवा चिअत्तकिच्चे, परिहारं पाउणे जोगो॥

वृ- निष्कारणे गात्रम्रक्षणादिकं प्रतिसेवितुं शीलमस्येति निष्कारणप्रतिसेवी सः, तथा कारणे वा यो 'अयतनाकारी' पूर्वोक्तयतनां विना गात्रम्रक्षणविधायी साधुः, अथवा यः 'त्यक्तकृत्यः' नीरुग्भूतोऽपि तदेव म्रक्षणादिकमुपजीवति स परिहारतपः प्राप्नुयादिति 'योगः' सम्बन्धः॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-परिहारकल्पस्थितो भिक्षु 'बहिः' अन्यत्र नगरादौ 'स्थविराणाम्' आचार्याणामादेशेन वैयावृत्यार्थं गच्छेत्। किमुक्तं भवति? -अन्यस्मिन् गच्छे केषाञ्चिदाचार्याणां वादी नास्तिकादिक उपस्थितः, तेषां च नास्ति वादलब्धिसम्पन्नः, ततस्ते येषामाचार्याणां स पारिहारिकस्तेषामन्तिके सङ्घाटकं प्रेषयन्ति, स च सङ्घाटको ब्रूते-वादिनं कमपि मुत्कलयत। एवमुक्ते ते आचार्या परिहारिकं परवादिनिग्रहक्षमं मत्वा तत्र प्रेषयन्ति। ततस्तदादेशादसौ परिहारतपो वहमान एव तत्र गच्छेत्। इदं च महत् प्रवचनस्य वैयावृत्यं यद् अग्लान्या परवादिनिग्रहणम्, ततस्तदर्थं गतः 'सः' परिहारिकः ''आहच्च'' कदाचिद् 'अतिक्रामेत्' पादधावनादिकं प्रतिसेवेत, 'तच्च' प्रतिसेवनं 'स्थविराः' मीलाचार्या आत्मनः 'आगमेन' अवध्याद्यतिशयज्ञानेनान्येषां वाऽन्तिके श्रुत्वा जानीयुः। 'ततः पश्चात्' तत्परिज्ञानान्तरं 'तस्य' परिहारिकस्य 'यथालघुस्वको नाम' स्तोकप्रायश्चित्तरूपो व्यवहारः प्रस्थापयितव्यः स्यादिति सूत्रार्थः॥ अथ भाष्यम्-

[भा.६०३४] परिहारिओ य गच्छे, आसन्ने गच्छ वाइणा कज्जं।
आगमनं तहि गमनं, कारण पडिसेवणा वाए॥

वृ- परिहारिकः क्वापि गच्छे विद्यते, कचिदासन्नेऽन्यगच्छे वादिनाकार्यमुत्पन्नम्, ततः 'तत्र' गच्छे 'आगमनम्' अन्यगच्छात् सङ्घाटक आगतः, तेन च 'वादी प्रेष्यताम्' इत्युक्ते गुरोरादेशात् परिहारतपोवहमानस्यैव तस्य तत्र गमनम्, तत्र गतेन तेन परवादी राजसभासमक्षं निष्पिष्टप्रश्न-व्याकरणः कृतः, ततः प्रवचनस्य महती प्रभावना समजनि, तेन च वादस्य कारणेऽमूनि प्रतिसेवितानि भवेयुः॥

[भा.६०३५] पाया व दंता व सिया उ धोया, वा-बुद्धिहेतुं व पनीयभत्तं ।
तं वातिगं वा मइ-सत्तहेउं, सभाजयट्ठा सिचयं व सुक्कं ॥

वृ- पादौ वा दन्ता वा प्रवचनजुगुप्सापरिहारार्थं धौताः 'स्यु' र्भवेयुः । 'प्रणीतभक्तं वा' घृत-दुग्धादिकं "वा-बुद्धिहेतुं व त्ति वाग्धेतोर्बुद्धिहेतोश्च भुक्तं भवेत्, "घृतेन वर्धते मेधा" इत्यादिवचनात्। 'वातिकं नाम' विकटं तद्वा मतिहेतोः सत्त्वहेतोर्वा सेवितं भवेत् । मतिर्नाम-परवाद्युपन्यस्तस्य साधनस्यापूर्वप्रवदूषमोहात्मको ज्ञानविशेषः, सत्त्वं-प्रभूत-प्रभूततरभाषणे प्रवर्द्धमान आन्तर उत्साहविशेषः । सभाजनार्थं वा सुक्लं 'सिचयं' वस्त्रं प्रावृतं भवेत्, "जिता वस्त्रवता सभा" इति वचनात् ॥

[भा.६०३६] थेरा पुन जाणंती, आगमओ अहव अन्नओ सुच्चा ।
परिसाए मज्झम्मिं, पट्ठवणा होइ पच्छित्ते ॥

वृ- एवमादिकं तेन प्रतिसेवितं 'स्थविराः' सूरयः पुनरागमतो जानीयुः, अथवा अन्यतः श्रुत्वा, ततस्तस्य भूयः समागतस्य पर्षन्मध्ये प्रायश्चित्तस्य प्रस्थापना कर्तव्या भवति ॥ इदमेव व्याचष्टे-

[भा.६०३७] नव-दस-चउदस-ओही-मननाणी केवली य आउमिउं ।
सो चेवऽन्नो उ भवे, तदनुचरो वा वि उवगो व ॥

वृ- ये स्थविरा नवपूर्विणो दशपूर्विणश्चतुर्दशपूर्विणोऽवधिज्ञानिनो मनःपर्यायज्ञानिनः केवलज्ञानिनो वा ते 'आगम्य' अतिशयेन ज्ञात्वा प्रायश्चित्तं दद्यु । अन्यो नाम 'स एव' परिहारिकस्तन्मुखादालोचनाद्वारेण श्रुत्वा, यद्वा ये तस्य-परिहारिकस्यानुचराः-सहायाः प्रेषितास्तैः कथितम्; 'उवको नाम' अन्यः कोऽपि तिर्यगापतितो मिलितः, तेषां गच्छसत्को न भवतीत्यर्थः, तेन वा कथितम्, यथा-एतेनामुकं पादधावनादिकं प्रतिसेवितम् ॥ ततः-

[भा.६०३८] तेसिं पच्चयहेउं, जे पेसविया सुयं च तं जेहिं ।
भयहेउ सेसगाण य, इमा उ आरोवणारयणा ॥

वृ- ये तेन सार्द्धं प्रेषिता यैर्वाऽप्रेषितैरपि प्रतिसेवनं श्रुतं 'तेषाम्' उभयेषामप्यपरिणामकानां प्रत्ययहेतोः 'शेषाणां च' अतिपरिणामिकानां भयोत्पादनहेतोरियम् 'आरोपणारचना' व्यवहार-प्रस्थापना सूरिभिः कर्तव्या ॥

[भा.६०३९] गुरुओ गुरुअतराओ, अहागुरूओ य होइ ववहारो ।
लहुओ लहुयतराओ, अहालहू होइ ववहारो ॥

[भा.६०४०] लहुसो लहुसतराओ, अहालहूसो अ होइ ववहारो ।
एतेसिं पच्छित्तं, वुच्छामि अहानुपुव्वीए ॥

वृ- व्यवहारस्त्रिविधः, तद्यथा-गुरुको लघुको लघुस्वकश्च । तत्र यो गुरुकः स त्रिविधः, तद्यथा-गुरुको गुरुतरको यथागुरुकश्च । लधुकोऽपि त्रिविधः, तद्यथा-लघुर्लघुतरो यथालघुश्च । लघुस्वकोऽपि त्रिविधः, तद्यथा-लघुस्वको लघुस्वतरको यथालघुस्वकश्च । एतेषां व्यवहाराणां 'यथानुपूर्व्या' यथोक्तपरिपाट्या प्रायश्चित्तं वक्ष्यामि । किमुक्तं भवति ?-एतेषु व्यवहारेषु समुपस्थितेषु यथापरिपाट्या प्रायश्चित्तपरिमाणमभिधास्ये ॥ यथाप्रतिज्ञातमेव करोति-

[भा.६०४१] गुरुगो य होइ मासो, गुरुगतरागो भवे चउम्मासो ।

अहगुरुगो छम्मासो, गुरुगे पक्खम्मि पडिवत्ती ॥

वृ- गुरुको नाम व्यवहारः 'मासः' मासपरिमाणः, गुरुके व्यवहारे समापतिते मास एकः प्रायश्चित्तं दातव्य इति भावः । एवं गुरुतरको भवति 'चतुर्मासः' चतुर्मासपरिमाणः । यथागुरुकः 'षण्मासः' षण्मासपरिमाणः । एषा 'गुरुकपक्षे' गुरुकव्यवहारे त्रिविधे यथाक्रमं प्रायश्चित्तप्रतिपत्तिः॥ सम्प्रति लघुक-लघुस्वकव्यवहारविषयं प्रायश्चित्तपरिमाणमाह-

[भा.६०४२] तीसा य पन्नवीसा, वीसा वि य होइ लहुयपक्खम्मि ।

पन्नरस दस य पंच य, अहालहुसगम्मि सुद्धो वा ॥

वृ- लघुको व्यवहारस्त्रिंशद्दिवसपरिमाणः, एवं लघुतरकः पञ्चविंशतिदिनमानः, यथालघुको विंशतिदिनमानः, एषा लघुकव्यवहारे त्रिविधे यथाक्रमं प्रायश्चित्तप्रतिपत्ति । लघुस्वको व्यवहारः पञ्चदशदिवसप्रायश्चित्तपरिमाणः, एवं लघुस्वतरको दशदिवसमानः, यथालघुस्वकः 'पञ्चदिवसानि' पञ्चदिवसप्रायश्चित्तपरिमाणः । यद्वा यथालघुस्वके व्यवहारे 'शुद्धः' न प्रायश्चित्तभाक् ॥

अथ कं व्यवहारं केन तपसा पूरयति ? इति प्रतिपादनार्थमाह-

[भा.६०४३] गुरुगं च अट्ठमं खलु, गुरुगतरागं च होइ दसमं तु ।

अहगुरुग दुवालसमं, गुरुगे पक्खम्मि पडिवत्ती ॥

वृ- गुरुकं व्यवहारं मासपरिमाणमष्टमं कुर्वन् पूरयति । किमुक्तं भवति ? -गुरुकं व्यवहारं मासपरिमाणमष्टमेन वहति । तथा गुरुकतरकं चतुर्मासप्रमाणं व्यवहारं दशमं कुर्वन् पूरयति, दशमेन वहतीत्यर्थः । यथागुरुकं षण्मासप्रमाणं 'द्वादशं कुर्वन्' द्वादशेन वन् पूरयति । एषा 'गुरुकपक्षे' गुरुव्यवहारपूरणविषये तपःप्रतिपत्ति ॥

[भा.६०४४] छट्ठं च चउत्थं वा, आयंबिल एगठाण पुरिमड्ढं ।

निव्वीयं दायव्वं, अहालहुसगम्मि सुद्धो वा ॥

वृ- लघुकं व्यवहारं त्रिंशद्दिनपरिमाणं षष्ठं कुर्वन् पूरयति, लघुतरकं पञ्चविंशतिदिवसपरिमाणं व्यवहारं चतुर्थं कुर्वन्, यथालघुकं व्यवहारं विंशतिदिवसमानमाचाम्लं कुर्वन् पूरयति । एषा लघुकत्रिविधव्यवहारपूरणे तपःप्रतिपत्ति । तथा लघुस्वकव्यवहारं पञ्चदशदिवसपरिमाणमेकस्थानकं कुर्वन् पूरयति, लघुस्वतरकं व्यवहारं दशदिवसपरिमाणं पूर्वार्द्धं कुर्वन्, यथालघुस्वकव्यवहारं पञ्चदिनप्रमाणं निर्विकृतिकं कुर्वन् पूरयति । एतेषु गुरुतरादिषु व्यवहारेष्वनेनैव क्रमेण तपो दातव्यम् । यदि वा यथालखुस्वके व्यवहारे प्रस्थापितव्ये स प्रतिपन्नपरिहारतपः- प्रायश्चित्त एवमेवालोचनाप्रदानमात्रतः शुद्धः, क्रियते, कारणे यतनया प्रतिसेवनात् ॥

एवं प्रस्तारं रचयित्वा सूरयो भणन्ति-

[भा.६०४५] जं इत्थं तुह रोयइ, इमे व गिण्हाहि अंतिमे पंच ।

हत्थं व ममाडेउं, जं अक्कमते तगं वहइ ॥

वृ- यद् 'अत्र' अमीषां प्रायश्चित्तानां मध्ये तव रोचते तद् गृहाण, अमूनि वाऽन्तिमानि पञ्चरात्रिन्दिवानि गृहाण एवमुक्ते स यथालघुस्वकं प्रायश्चित्तं गृह्णाति । अथवा हस्तं भ्रामयित्वा यात् प्रायश्चित्तं गुरव आक्रामन्ति तकद् गृह्णाति ॥ सूरयश्चेदं तं प्रति भणन्ति-

[भा.६०४६] उब्भावियं पवयणं, तोवं ते तेन मा पुनो कासि ।

अइपरिणएसु अन्नं, चेइ वहंतो तगं एयं ॥

वृ- त्वया परवादिनं निगृह्नता प्रवचनमुद्भावितं तेन स्तोकं ते प्रायश्चित्तं दत्तम्, मा पुनर्भूयोऽप्येवं कार्षीः । अथातिपरिणता अपरिणताश्च चिन्तयेयुः-'एष तावद् एतावन्मात्रेण मुक्तः' इति ततो यदि तस्य 'अन्यद्' अपरं प्राचीनं तपोऽपूर्णं तदा तदेव वहमानोऽतिपरिणामिकादीनां पुरतो गुरून् भणति-एतत् प्रायश्चित्तं युष्माभिर्दत्तं वहामीति ॥

मू. (१९५) *निग्गंथीए य गाहावइकुलं पिंडवायपडियाए अनुप्पविट्ठाए अन्नयरे पुलागभत्ते पडिग्गाहिए सिया, सा य संथरिज्ञा, कप्पइ से तद्दिवसं तेनेव भत्तट्ठेणं पज्जोसवित्तए, नो से कप्पइ दुञ्चं पि गाहावइकुलं पिंडवायपडियाए पविसित्तए; सा य नो संथरेज्ञा, यं से कप्पइ दुञ्चं पि गाहावइकुलं पिंडवायपडियाए पविसित्तए॥*

वृ- अस्य सम्बन्धमाह-

[भा. ६०४७] उत्तरियपच्चवट्ठा, सुत्तमिणं मा हु हुज्ञ बहिभावो ।
जससारक्खणमुभए, सुत्तारंभो उ दइणीए ॥

वृ- लोकोत्तरिकाणाम्-अपरिणामक-ऽतिपरिणामकानां प्रत्ययार्थं सूत्रमिदमनन्तरमुक्तम्, मा तेषां बहिर्भावो भवेदिति कृत्वा । अयं तु व्रतिनीविषयः प्रस्तुतसूत्रस्यारम्भः 'उभये' लोके लोकोत्तरे च यशःसंरक्षणार्थं क्रियते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-निर्ग्रन्थ्या गृहपतिकुलं पिण्डपातप्रतिज्ञयाऽनुप्रविष्टया 'अन्यतरद्' धान्य-गन्ध-रसपुलाकानां वल्ल-विकट-दुग्धादिरूपाणामेकतरं पुलाकभक्तं प्रतिगृहीतं स्यात्, सा च तेनैव भुक्तेन 'संस्तरेत्' दुर्भिक्षाद्यभावाद् निर्वहेत्, ततः कल्पते तस्यास्तद्दिवसं तेनैव भक्तार्थेन 'पर्युषितुं' निर्वाहयितुम् । नो "से" तस्याः कल्पते द्वितीयमपि वारं गृहपतिकुलं पिण्डपातप्रतिज्ञया प्रवेष्टुम् । अथ सा न संस्तरेत् ततः कल्पते तस्या द्वितीयमपि वारं गृहपतिकुलं पिण्डपातप्रतिज्ञया प्रवेष्टुमिति सूत्रार्थ ॥

अथ निर्युक्ति-भाष्यविस्तरः-

[भा. ६०४८] तिविहं होइ पुलागं, धन्ने गंधे य रसपुलाए य ।
चउगुरुगाऽऽयरियाई, समणीणुद्दहरग्गहणे ॥

वृ- त्रिविधं पुलाकं भवति, तद्यथा-धान्यपुलाकं गन्धपुलाकं रसपुलाकं चेति । एतत् सूत्रमाचार्यः प्रवर्तिन्या न कथयति चतुर्गुरु, आदिशब्दात् प्रवर्तिनी निर्ग्रन्थीनां न कथयति चतुर्गुरु, निर्ग्रन्थ्यो न प्रतिशृण्वन्ति मासलघु । श्रमणीनामपि ऊर्ध्वदरे-सुभिक्षे पुलाकं गृह्णतीनां चतुर्गुरु ॥

अथ त्रीण्यपि धान्यपुलाकादीनि व्याचष्टे-

[भा. ६०४९] निप्फावाई धन्ना, गंधे वाइग-पलंडु-लसुणाई ।
खीरं तु रसपुलाओ, चिंचिणि:दक्खारसाईया ॥

वृ- निष्पावाः-वल्लास्तदादीनि धान्यानि धान्यपुलाकम् । तथा वाइगं-विकटं पलाण्डु-लशुने च-प्रतीते तदादीनि यान्युत्कटगन्धानि द्रव्याणि तद् गन्धपुलाकम् । यत् पुनः क्षीरं यो वा चिञ्चिणिकायाः-अम्लिकाया रसो द्राक्षारसो वा आदिशब्दाद् अपरमपि यद् भुक्तमतिसारयति तत् सर्वमपि रसपुलाकम् ॥ अथ किमर्थमेतानि पुलाकान्युच्यन्ते ? इत्याह-

[भा. ६०५०] आहारिया असारा, करेंति वा संजमाउ निस्सारं ।

निस्सारं व पवयणं, दट्ठुं तस्सेविणिं बिंति ॥

वृ-इह पुलाकमसारमुच्यते, तत आहारितानि सन्ति वक्ष्यादीनि यतोऽसाराणि ततः पुलाकानि भण्यन्ते। 'संयमाद्वा' संयममङ्गीकृत्य यतः क्षीरादीनि निसारां साध्वीं कुर्वन्ति ततस्तान्यपि पुलाकानि। प्रवचनं वा निसारं यतः 'तत्सेविनीं' तेषां-विकटादीनां सेवनशीलां संयतीं दृष्ट्वा जना ब्रुवते ततस्तानि पुलाकानि उच्यन्ते ॥ एषु दोषानाह-

[भा.६०५१] आणाइणो य दोसा, विराधना मज्जगंध मय खिंसा।

निरोहेण व गेलन्नं, पडिगमणाईणि लज्जाए ॥

वृ- एषां त्रयाणामपि पुलाकानां ग्रहणे आज्ञादयो दोषाः, विराधना च संयमा-ऽऽत्मविषया भवति। तथा गन्धपुलाके पीते सति मद्यगन्धमाघ्राय मदविह्वलां वा तां दृष्ट्वा लोकः खिंसां कुर्यात्। धान्यपुलाके पुनराहारिते वायुकायः प्रभूतो निर्गच्छति, ततो यदि भिक्षार्थं प्रविष्टा तस्य निरोधं करोति तदा ग्लानत्वं भवेत्, अथ वायुकायं करोति तत उड्डाहो भवेत्, उड्डाहिता च लज्जया प्रतिगमनादीनि कुर्यात्। एवं रसपुलाकेऽपि क्षीरादौ पीते भिक्षां प्रविष्टा यदि संज्ञामागच्छन्तीं निरुणद्धि ततो ग्लानत्वम्, अथ न निरुणद्धि ततो व्युत्सृजन्ती केनापि दृष्टा लज्जया प्रतिगमनादीनि कुर्यात् ॥ किञ्च-

[भा.६०५२] वसहीए वि गरहिया, किमु इत्थी बहुजणम्मि सक्खीवा।

लाहुक्कं पिल्लणया, लज्जानासो पसंगो य ॥

वृ- 'स्त्र' निर्ग्रन्थी 'सक्षीबा' मद्यमदयुक्ता वसतावपि वसन्ती गर्हिता किं पुनर्बहुजने पर्यटन्ती? तथाहि-तां मदविह्वलां आपतन्तीं प्रपतन्तीं आलमालानि च प्रलपन्तीं दृष्ट्वा लोकः प्रवचनस्य "लाहुक्कं" लाघवं कुर्यात्-अहो ! मत्तवालपाखण्डमिदमित्यादि। मदेन चाचेतना सञ्जाता सती प्रार्थनीया सा भवति। तत उद्भ्रामकादयस्तस्याः 'प्रेरणां' प्रतिसेवनां कुर्युः। मदवशेन च यदपि तदपि प्रलपन्त्या लज्जानाशो भवेत्। ततश्च प्रतिसेवनादावपि प्रसङ्गः स्यात् ॥

[भा.६०५३] घुन्नइ गई सदिट्ठी, जहा य रत्ता सि लोयण-कवोला।

अरहइ एस पुताई, निसेवई सज्झए गेहे ॥

वृ- तां तथामदभावितां दृष्ट्वा लोको ब्रूयात्-यथाऽसा गति 'सदृष्टि' दृष्टियुक्ता घूर्णते, यथा चास्या लोचन-कपोला रक्ता दृश्यन्ते तथा नूनमर्हत्येषा 'पुताकी' देशीवचनत्वाद् उद्भ्रामिका ईदृशीं विडम्बनामनुभवितुम् या 'सध्वजगेहानि' कल्पपालगृहाणि निषेवते ॥ त्रिविधेऽपि पुलाके यथायोगममी दोषाः-

[भा.६०५४] छक्कायाण विराधन, वाउभय-निसग्गओ अवन्नो य।

उज्झावणमुज्झंती, सइ असइ दवम्मि उड्डाहो ॥

वृ-मदविह्वला षण्णामपि कायानां विराधनां कुर्यात्। धान्यपुलाकेन क्षीरेण वा भुक्तेन वायुकाय उभयं च-संज्ञा-कायिकीरूपं समागच्छेत्, ततो भिक्षां हिण्डमाना यदि तेषां निसर्गं करोति ततः प्रवचनस्यावर्णो भवेत्, परावग्रहे वा व्युत्सृष्टं पुरीषादिकमवग्रहस्वामिनस्तस्याः पार्श्वाद् उज्झापयन्ति स्वयमेव वा ते गृहस्था उज्झन्ति। "सइ असइ दवम्मि उड्डाहु" त्ति अस्ति द्रवं परं कलुषं स्तोकं वा नास्ति वा मूलत एव द्रवं तत उभयथाऽपि प्रवचनस्योड्डाहो भवेत् ॥

[भा.६०५५] हिज्जो अह सक्खीवा, आसि ण्हं संखवाइभज्जा वा।
भग्गा व नाए सुविही, दुद्दिट्ठ कुलम्मि गरहा य॥

वृ- 'ह्यः' कल्ये अन्यस्मिन् दिने, 'अथ' इति उपदर्शने, इयं 'सक्षीबा' मद्यमदयुक्ता आसीत्। "ण्हं" इति वाक्यालङ्कारे। एवं गन्धपुलाकं भुक्तवतीं संयतीं जना उपहसन्ति। वायुकायशब्दं च श्रुत्वा ब्रवीरन्-अहो! इयं शङ्खवादकस्य भार्या पूर्वमासीत्; यद्वा भग्नाऽनया इत्थं वायुकायेनाश्रान्तं पूयन्त्या "सुविही" अङ्गणमण्डपिका एवं प्रपञ्चयेयुः। "दुद्दिट्ठ कुलम्मि गरिहा य" त्ति दुर्दृष्टधर्माणो अमी, कुलगृहं चैताभिरात्मीयं मलिनीकृतम्, एवं गर्हा भवति। ततश्च प्रतिगमनादयो दोषाः॥

यत एवमतः-

[भा.६०५६] जहिं एरिसो आहारो, तहिं गमने पुव्ववन्निया दोसा।
गहणं च अनाभोए, ओमे तहकारणेण गया॥

वृ- यत्र विषये 'ईदृशः' पुलाक आहारो लभ्यते तत्र निर्ग्रन्थीभिर्नैव गन्तव्यम्। यदि गच्छन्ति तदा त एव पूर्ववर्णिता दोषाः अथावमा-ऽशिवादिभि कारणैर्गता भवेयुः, तत्र चानाभोगेन पुलाकभक्तस्य ग्रहणं भवेत्॥ ततः किम्? इत्याह-

[भा.६०५७] गहियमनाभोएणं, वाइग वज्जं तु सेस वा भुंजे।
भिक्खुप्पियं तु भुत्तुं, जा गंधो ता न हिंडंती॥

वृ- यदि अनाभोगेन पुलाकं गृहीतं भवति तदा "वाइगं" विकटं तद् वर्जयित्वा शेषं 'वा' विभाषया भुञ्जीरन्। किमुक्तं भवति?-यदि तदपर्याप्तमन्यच्च भक्त लभ्यते तदा न भुञ्जते किन्तु तत् परिष्ठाप्यान्यद् भक्तं गृह्णन्ति; अथ पर्याप्तं तदा भुञ्जते, भुक्त्वा च तेनैव भक्तार्थेन पर्युषयन्ति; विकटं तु सर्वथैव न भोक्तव्यम्। भिक्षुप्रियं नाम-पलाण्डु त पुनर्भुक्त्वा यावत् तदीयो गन्ध आगच्छति तावद् न हिण्डन्ते॥

[भा.६०५८] कारणगमने वि तहिं, पुव्वं घेत्तूण पच्छ तं चेव।
हिण्डन पिल्लण विइए, ओमे तह पाहुणट्ठा या॥

वृ- अवमादिकारणैर्गतानामपि मद्य-पलाण्डु-लशुनान्येकान्तेन प्रतिषिद्धानि। अथ पूर्वमनाभोगादिना गृहीत् ततस्तद् गृहीत्वा पश्चात् तदेव भुक्त्वा तेनैव भक्तार्थेन तद्दिवसमासते न भूयो भिक्षामटन्ते। द्वितीयपदे द्वितीयमपि वारं भिक्षार्थं प्रविशेत्। 'अवमं' दुर्भिक्षं तत्र पर्याप्तं न लभ्यते प्राघुणिका वा संयत्यः समायातास्ततो भूयोऽपि भिक्षाहिण्डनं कुर्वाणानामियं यतना- "पिल्लण" त्ति धान्यपुलाके आहारिते यदि वायुकाय आगच्छेत् तत्रैकं पुनः पार्श्वं प्रेर्य वायुकायं निसृजन्ति। उपलक्षणमिदम्, तेन यदा संज्ञासम्भवस्तदा यदि अन्यासां संयतीनामासन्ना वसतिस्तदा तत्र गन्तव्यम्। तदभावे भावितायाः श्राद्धिकायाः पुरोहडादौ व्युत्सर्जनीयम्॥

[भा.६०५९] एसेव गमो नियमा, तिविह पुलागम्मि होइ समणाणं।
नवरं पुन नाणत्तं, होइ गिलाणस्स वइयाए॥

वृ- एष एव 'गमः' प्रकारो नियमात् त्रिविधेऽपि पुलाके श्रमणानामपि भवति। नवरं पुनरत्र नानात्वम्-ग्लानस्य दुग्धादिकमाने तु व्रजिकायां साधवो गच्छेयुः, तत्र च गताः संस्तरन्त आत्मयोग्यं रसपुकं न गृह्णन्ति, अथ न संस्तरन्ति ततः क्षीरादिकं भुक्त्वा न भूयो भिक्षामटन्ति। कारणे तु

भूयोऽप्यटनशरादेव यतनां कुर्वन्ति ॥

श्रीमच्चूर्णिवचांसि तन्त्व इह ज्ञेयास्तथा सद्गुरो-
राम्नायो नलकस्तुरी बुधजनोपास्त्युद्भवा चातुरी ।
इत्येतैर्वितान साधकतमैः श्रीपञ्चमोद्देशके,
जाड्यापोहपटीयसीमहमिमामच्छिन्नटीकापटीम् ॥

उद्देशकः-५ समाप्तः

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता बृहत्कल्पसूत्रे पञ्चमोद्देशकस्य (भद्रबाहुस्वामि रचिता निर्युक्ति युक्तः) संघदासगणि विरचितं भाष्यं एवं मलयगिरि-क्षेमकीर्तिआचार्याभ्यां विरचिता टीका परिसमाप्ता ।**

## उद्देशकः-६

**वृ-** व्याख्यातः पञ्चमोद्देशकः, सम्प्रति षष्ठ आरभ्यते, तस्येदमादिसूत्रम्-

**मू.** *(११६) नो कप्पइ निग्गंथाण वा निग्गंथीण वा इमाइं छ अवयणाइं वइत्तए । तं जहा- अलियवयणे हीलियवयणे खिंसियवयणे फरुसवयणे गारत्थियवयणे विओसवियं वा पुनो उदीरित्तए ॥*

**वृ-** अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.६०६०] कारणे गंधपुलागं, पाउं पलविज्ज मा हु सक्खीवा ।
इइ पंचम-छट्ठाणं, थेरा संबंधमिच्छंति ॥

**वृ-** कारणे कदाचिदार्यिका गन्धपुलाकं पीत्वा सक्षीबा सती मा अलिकादिवचनानि प्रलपेत्, अत इदं सूत्रमारभ्यते । 'इति' एवं पञ्चम-षष्ठोद्देशकयोः सम्बधं 'स्थविराः' श्रीमद्भद्रबाहुस्वामिन इच्छन्ति ॥ अथ प्रकारान्तरेण सम्बन्धमाह-

[भा.६०६१] दुचरिमसुत्ते वुत्तं, वादं परिहारिओ करेमाणो ।
बुद्धी परिभूय परे, सिद्धंतावेत संबंधो ॥

पञ्चमोद्देशके द्विचरिमसूत्रे इदमुक्तम्-'परिहारिकः' प्रवचनवैयावृत्यमवलम्बमानो वादं कुर्वन् 'परस्य' वादिनो बुद्धिं 'परिभूय' पराजित्य 'सिद्धान्तापेतं' सूत्रोत्तीर्णमपि ब्रूयात्, परमिमानि षडप्यवचनानि मुक्त्वा । एष प्रकारान्तरेण सम्बन्धः ॥ अथवा-

[भा.६०६२] दिव्वेहिं छंदिओ हं, भोगेहिं निच्छिया मए ते य ।
इति गारवेण अलियं, वइज्ज आईय संबंधो ॥

**वृ-** पञ्चमोद्देशकस्यादिसूत्रं उक्तम्-"देवः स्त्रीरूपं कृत्वा साधुं भोगैर्निमन्त्रयेत्," स च तान् मुक्त्वा गुरुसकाशमागत आलोचयेत्-दिव्यैर्भोगैः 'छन्दितः' निमन्त्रितोऽहं परं मया ते भोगा नेप्सिताः 'इति' एवं गौरवेण कश्चिदलीकं वदेत् । अत इदं षष्ठोद्देशकस्यादिसूत्रमारभ्यते । एष उद्देशकद्वयस्याप्यादिसूत्रयोः परस्परं सम्बन्धः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-"नो कप्पइ" त्ति वचनव्यत्ययाद् नो कल्पन्ते निर्ग्रन्थानां वा निर्ग्रन्थीनां वा 'इमानि' प्रत्यक्षासन्नानि 'षड्' इति षटसङ्ख्याकानि 'अवचनानि' नञः कुत्सार्थत्वाद् अप्रशस्तानि वचनानि 'वदितुं' भाषितुम् ।

तद्यथा-अलीकवचनम्, हीलितवचनम्, खिंसितवचनम्, परुषवचनम्, अगारस्थिताः-गृहिणस्तेषां वचनम्, 'व्यवशमितं वा' उपशमितमधिकरणं 'पुनर' भूयोऽप्युदीरयितुं न कल्पत इति प्रक्रमः, अनेन व्यवशमितस्यपुनरुदीरणवचनं नाम षष्ठमवचनमुक्तमिति सूत्रसङ्क्षेपार्थः ॥

अथ भाष्यकारो विस्तरार्थमभिधित्सुराह-

[भा.६०६३] छ च्चेव अवत्तव्वा, अलिगे हीला य खिंस फरुसे य ।
गारत्थ विओसविए, तेसिं च परूवणा इणमो ॥

वृ-षडेव वचनानि 'अवक्तव्यानि' साधूनां वक्तुमयोग्यानि । तद्यथा-अलीकवचनं हीलितवचनं खिंसितवचनं परुषवचनं गृहस्थवचनं व्यवशमितोदीरणवचनम् । 'तेषां च' षण्णामपि यथाक्रममियं प्ररूपणा ॥ तामेव प्ररूपणां चिकीर्षुरलीकवचनविषयां द्वारगाथामाह-

[भा.६०६४] वत्ता वयणिज्जो या, जेसु य ठाणेसु जा विसोही य ।
जे य भणओ अवाया, सप्पडिपक्खा उ नेयव्वा ॥

वृ-यः 'वक्ता' अलीकवचनभाषकः, यश्च 'वचनीयः' अलीकवचनं यमुद्दिश्य भण्यते, येषु च स्थानेष्वलीकं सम्भवति, यादृशी च तत्र 'शोधिः' प्रायश्चित्तम्, ये चालीकं भणतः 'अपायाः' दोषास्ते 'सप्रतिपक्षाः' सापवादा अत्र भणनीयतया ज्ञातव्या इति द्वारगाथासमासार्थः ॥

साम्प्रतमेनामेव विवृणोति-

[भा.६०६५] आयरिए अभिसेगे, भिक्खुम्मि य थेरए य खुड्डे य ।
गुरुगा लहुगा गुरु लहु, भिन्ने पडिलोम विइएणं ॥

वृ-इहाचार्यादिर्वक्ता वचनीयोऽपि स एवैकतरस्तत इदमुच्यते-आचार्य आचार्यमलीकं भणति चतुर्गुरु, अभिषेकं भणति चतुर्लघु, भिक्षुं भणति मासगुरु, स्थविरं भणति मासलघु, क्षुल्लकं भणति भिन्नमासः । "पडिलोम विइएणं" ति द्वितीयेनाऽऽदेशेनैतदेव प्रायश्चित्तं प्रतिलोमं वक्तव्यम् । तद्यथा-आचार्य आचार्यमलीकं भणति भिन्नमासः, अभिषेकं भणति मासलघु, एवं यावत् क्षुल्लकं भणतश्चतुर्गुरु । एवमभिषेकादीनामप्यलीकं भणतां स्वस्थाने परस्थाने च प्रायश्चित्तमिदमेव मन्तव्यम् । अभिलापश्चेत्थं कर्तव्यः-अभिषेक आचार्यमलीकं भणति चतुर्गुरु, अभिषेकं भणति चतुर्लघु इत्यादि ॥ तच्चालीकवचनं येषु स्थानेषु सम्भवति तानि सप्रायश्चित्तानि दर्शयितुकामो द्वारगाथाद्वयमाह-

[भा.६०६६] पयला उल्ले मरुए, पच्चक्खाणे य गमण परियाए ।
समुद्देस संखडीओ, खुड्डग परिहारिय मुहीओ ॥

वृ-प्रचलापदमार्द्रपदं मरुकपदं प्रत्याख्यानपदं गमनपदं पर्यायपदं समुद्देशपदं सङ्खडीपदं क्षुल्लकपदं पारिहारिकपदं "मुहीउ"त्ति पदैकदेशे पदसमुदायोपचाराद् घोटकमुखीपदम् ॥

[भा.६०६७] अवस्सगमणं दिसासुं, एगकुले चेव एगदव्वे य ।
पडियाखित्ता गमणं, पडियाखित्ता य भुंजणयं ॥

वृ-अवश्यङ्गमनपदं दिग्विषयपदं एककुलगमनपदं एकद्रव्यग्रहणपदं प्रत्याख्याय गमनपदं प्रत्याख्याय भोजनपदं चेति द्वारगाथाद्वयसमासार्थः ॥ अथैतदेव प्रतिद्वारं विवृणोति-

[भा.६०६८] पयलासि किं दिवा न पयलामि लहु दुब्भनिण्हवे गुरुगो ।

अन्नद्धाइत निण्हवे, लहुगा गुरुगा बहुतराणं ॥

वृ- कोऽपि साधुर्दिवा प्रचलायते, स चान्येन साधुना भणितः-किमेवं दिवा प्रचलायसे ?; स प्रत्याह-न प्रचलाये; एवं प्रथमवारं निह्नुवानस्य मासलघु। ततो भूयोऽप्यसौ प्रचलायितुं प्रवृत्तस्तेन साधुना भणितः-मा प्रचलायिष्ठाः; स प्रत्याह-न प्रचलाये; एवं द्वितीयवारं निह्नवे मासगुरु। ततस्तथैव प्रचलायितुं प्रवृत्तस्तेन च साधुनाऽन्यस्य साधोर्दर्शितः, यथा- एष प्रचलायते परं न मन्यते; ततस्तेनान्येन साधुना भणितोऽपि यदि निह्नुते तदा चतुर्लघु। अथ तेन साधुना 'बहुतराणां' द्वि-त्रादीनां साधूनां दर्शितस्तैश्च भणितोऽपि यदि निह्नुते तदा चतुर्गुरु ॥

[भा.६०६९] निण्हवणे निण्हवणे, पच्छित्तं वड्डए य जा सपयं।
लहु-गुरुमासो सुहुमो, लहुगादी बायरो होति ॥

वृ- एवं निह्नवने निह्नवने प्रायश्चित्तं वर्द्धते यावत् 'स्वपदं' पाराश्चिकम्। तद्यथा-पञ्चमं वारं निह्नुवानस्य षड्लघु, षष्ठं वारं षड्गुरु, सप्तमं छेदः, अष्टमं वारं मूलम्, नवममनवस्थाप्यम्, दशमं वारं निह्नुवानस्य पाराश्चिकम्। अत्र च प्रचलादिषु सर्वेष्वपि द्वारेषु यत्र यत्र लघुमासो गुरुमासो वा भवति तत्र तत्र सूक्ष्मो मृषावादः, यत्र तु चतुर्लघुकादिकं स बादरो मृषावादो भवति। गतं प्रचलाद्वारम्। अथार्द्रद्वारमाह-

[भा.६०७०] किं नीसि वासमाणे, न नीमि ननु वासबिंदवो एए।
भुंजंति नीह मरुगा, कहिं ति ननु सव्वगेहेसु ॥

वृ- कोऽपि साधुर्वर्षे पतति प्रस्थितः, स चापरेण भणितः-किं 'वासमाणे' वर्षति निर्गच्छसि? स प्राह-नाहं वासन्ते निर्गच्छामि; एवं भणित्वा तथैव प्रस्थितः। तत इतरेण साधुना भणितः-कथं 'न निर्गच्छामि' इति भणित्वा निर्गच्छसि ?; स प्राह-"वासु शब्दे" इति धातुपाठात् 'वासति' शब्दायमाने यो गच्छति स वासति निर्गच्छति इत्यभिधीयते, अत्र तु न कश्चिद् वासति किन्तु वर्षबिन्दव एते तेषु गच्छामि। एवं छलवादेन प्रत्युत्तरं ददानस्य तथैव प्रथमवारादिषु मासलघुकादिकं प्रायश्चित्तम्। अथ मरुकद्वारम्-तत्र कोऽपि साधुः कारणे विनिर्गत उपाश्रयमागम्य साधून् भणति-निर्गच्छत साधवः ! यतो भुञ्जते मरुकाः; एवमुक्ते ते साधव उद्ग्राहितभाजना भणन्ति-"कहिं ति" त्ति क्व ते मरुका भुञ्जते ?; इतरः प्राह-ननु सर्वेऽप्यात्मीयगृहेषु। एवं छलेनोत्तरं प्रयच्छति ॥

अथ प्रत्याख्यानद्वारमाह-

[भा.६०७१] भुंजसु पच्चक्खातं, ममं ति तक्खण पभुंजिओ पुट्ठो।
किं व न मे पंचविहा, पच्चक्खाया अविरई उ ॥

वृ- कोऽपि साधुः केनापि साधुना भोजनवेलायां भणितः-'भुङ्क्ष्व' समुद्दिश; स प्राह-प्रत्याख्यातं मया इति; एवमुक्त्वा मण्डल्यां तत्क्षणादेव 'प्रभुक्तः' भोक्तुं प्रवृत्तः। ततो द्वितीयेन साधुना पृष्टः-आर्य ! त्वयेत्थं भणितं 'मया प्रत्याख्यातम्'; स प्राह-किं वा मया प्राणातिपातादिका पञ्चविधाऽविरतिर्न प्रत्याख्याता येन प्रत्याख्यानं न घटते ? ॥ अथ गमनद्वारमाह-

[भा.६०७२] वच्चसि नाहं वच्चे, तक्खण वच्चंति पुच्छिओ भणइ।
सिद्धंतं न विजाणसि, ननु गम्मइ गम्ममाणं तु ॥

वृ- केनापि साधुना चैत्यवन्दनादिप्रयोजने व्रजा कोऽपि साधुरुक्तः-किं त्वमपि व्रजसि ?,

आगच्छसि इत्यर्थः; स प्राह-नाहं व्रजामि; एवमुक्त्वा तत्क्षणादेव व्रजितुं प्रवृत्तः; ततस्तेन पूर्वप्रस्थितसाधुना भणितः-कथं 'न व्रजामि' इति भणित्वा व्रजसि ?; स भणति-सिद्धान्तं न विजानीषे त्वम्, 'ननु' इत्याक्षेपे, भो मुग्ध ! गम्यमानमेव गम्यते नागम्यमानम्, यस्मिंश्च समये त्वयाऽहं पृष्टस्तस्मिन्नाहं गच्छामीति ॥ अथ पर्यायद्वारमाह-

[भा.६०७२] दस एयस्स य मज्झ य, पुच्छिय परियाग बेइ उ छलेण ।
मम नव पवंदियम्मि, भणाइ बे पंचगा दस उ ॥

वृ-कोऽपि साधुरात्मद्वितीयः केनापि साधुना वन्दितुकामेन पृष्टः-कति वर्षाणि भवतां पर्यायः? इति । स एवंपृष्टो भणति-एस्य साधोर्मम च दश वर्षाणि पर्याय इति । एवं छलेन तेनोक्ते स प्रच्छकसाधुः 'मम नव वर्षाणि पर्यायः' इत्युक्त्वा 'प्रवन्दितः' वन्दितुं लग्नस्तत इतरश्छलवादी भणति-उपविशत भगवन्तः ! यूयमेव वन्दनीया इति । 'कथं पुनरहं वन्दनीयः ?' इति तेनोक्ते छलवादी भणति-मम पञ्च वर्षाणि पर्यायः, एतस्यापि साधोः पञ्च, एवं द्वे पञ्चके मीलिते दश भवन्ति, अतो यूयमावयोरुभयोरपि वन्दनीया इति भणति ॥ अथ समुद्देशद्वारमाह-

[भा.६०७४] वट्टइ उ समुद्देसो, किं अच्छह कत्थ एस गगनम्मि ।
वट्टंति संखडीओ, घरेसु ननु आउखंडणया ॥

वृ-कोऽपि साधुः कायिकादिभूमौ निर्गत आदित्यं राहुणा ग्रस्यमानं दृष्ट्वा साधून् स्वस्थानासीनान् भणति-आर्या ! समुद्देशो वर्तते, किमेवमुपविष्टास्तिष्ठथ ?; ततस्ते साधवः 'नायमलीकं ब्रूते' इति कृत्वा गृहीतभाजना उत्थिताः पृच्छन्ति-कुत्रासौ समुद्देशो भवति ?; स प्राह-नन्वेष गगनमार्गे सूर्यस्य राहुणा समुद्देशः प्रत्यक्षमेव दृश्यते । अथ सङ्खडीद्वारम्-कोऽपि साधुः प्रथममालिका-पानकादिविनिर्गतः प्रत्यातो भणति-प्रचुराः सङ्खड्यो वर्तन्ते, किमेवं तिष्ठथ ?; ततस्ते साधवो गन्तुकामाः पृच्छन्ति-कुत्र ताः सङ्खड्यः ?; स छलवादी भणति- ननु स्वेषु स्वेषु गृहेषु सङ्खड्यो वर्तन्त एव; साधवो भणन्ति-कथं ता अप्रसिद्धाः सङ्खड्य उच्यन्ते ?; छलवादी भणति-"ननु आउखंडणय"ति 'ननु' इत्याक्षेपे, पृथिव्यादिजीवानामायूंषि गृहे गृहे रन्धनादिभिरारम्भैः सङ्खण्ड्यन्ते ते कथं न सङ्खड्यो भवन्ति ? ॥ अथ क्षुल्लकद्वारमाह-

[भा.६०७५] खुड्डग ! जननी ते मता, परुन्नो जियइ त्ति अन्न भणितम्मि ।
माइत्ता सव्वजिया, भविंसु तेनेस ते माता ॥

वृ-कोऽपि साधुरुपाश्रयसमीपे मृतां शुनीं दृष्ट्वा क्षुल्लकं कमपि भणति-क्षुल्लक ! जननी तव मृता; ततः स क्षुल्लकः 'प्ररुदितः' रोदितुं लग्नः, तमेवं रुदन्तं दृष्ट्वा स साधुराह-मा रुदिहि, जीवति ते जननी; एवमुक्ते क्षुल्लकोऽपरे च साधवो भणन्ति-कथं पूर्वं मृतेत्युक्त्वा सम्प्रति जीवतीति भणसि ?; स प्राह-एषा शुनी मृता सा तव माता भवति । क्षुल्लको ब्रूते-कथमेषा मम माता ?; मृषावादिसाधुराह-सर्वेऽपि जीवा अतीते काले तव मातृत्वेन बभूवुः । तथा च प्रज्ञप्तिसूत्रम्-एगमेगस्स णं भंते ! जीवस्स सव्वजिया माइत्ताए पिइत्ताए भाइत्ताए भज्जत्ताए पुत्तत्ताए धूयत्ताए भूतपुव्वा ? हंता गोयमा ! एगमेगस्स जाव भूतपुव्वा । तेनैव कारणेनैषा शुनी त्वदीया माता इति। अथ पारिहारिकद्वारमाह-

[भा.६०७६] ओसन्ने दट्ठूणं, दिट्ठा परिहारिग त्ति लहु कहणे ।

कत्थुज्जाणे गुरुओ, वयंत-दिट्ठेसु लहु-गुरुगा ॥

वृ- कोऽपि साधुरुद्याने स्थितानवसन्नान् दृष्ट्वा प्रतिश्रयमागत्य भणति-मया पारिहारिका दृष्टा इति; साधवो जानते यथा-शुद्धपारिहारिकाः समागताः; एवं छलाभिप्रायेण कथयत एव मासलघु। भूयस्ते साधवः। पारिहारिकसाधुदर्शनोत्सुकाः पृच्छन्ति-कुत्र ते दृष्टाः ?; स प्राह-उद्याने; एवं भणतो मासगुरु। ततः साधवः पारिहारिकदर्शनार्थं चलिता व्रजन्तो यावद् न पश्यन्ति तावत् तस्य कथयतश्चतुर्लघु। तत्रगतैर्दृष्टेष्ववसन्नेषु कथयतश्चतुर्गुरु ॥

[भा.६०७७] छल्लहुगा उ नियत्ते, आलोएंतम्मि छग्गुरू होति।
परिहरमाणा वि कहं, अप्परिहारी भवे छेदो ॥

वृ- 'अवसन्ना अमी' इति कृत्वा निवृत्तेषु तेषु कथयतः षड्लघवः। ते साधव ईर्यापथिकीं प्रतिक्रम्य गुरूणामालोचयन्ति-विप्रतारिता वयमनेन साधुनेति; एवं ब्रुवाणेषु तस्य षड्गुरु। आचार्यैरुक्तम्-किमेवं विप्रतारयसि ?; स वक्रोत्तरं दातुमारब्धः-परिहरन्तोऽपि कथमपरिहारिणो भवन्ति ?; एवं ब्रुवतश्छेदः ॥

[भा.६०७८] किं परिहरंति ननु खाणु-कंटए सव्वे तुब्भे हं एगो।
सव्वे तुब्भे बाहिं पवयणस्स पारंचिओ होति ॥

वृ-साधवो भणन्ति-किं ते परिहरन्ति येन परिहारिका उच्यन्ते ?; इतरः प्राह-स्थाणुकण्टकादिकं तेऽपि परिहरन्ति; एवमुत्तरं ददतो मूलम्। ततस्तैः सर्वैरपि साधुभिरुक्तः-धृष्टोऽसि यदेवंगतेऽप्युत्तरं ददासीति; ततः स प्राह-सर्वेऽपि यूयमेकत्र भूता अहं पुनरेकोऽसहायो अतः पराजीये, न पुनः परिफल्गु मदीयं जल्पितम्; एवं भणतोऽनवस्थाप्यम्। अथ ज्ञानमदावलिप्त एवं ब्रवीति- सर्वेऽपि यूयं प्रवचनस्य बाह्याः; एवं सर्वानधिक्षिपन् पाराञ्चिको भवति ॥ इदमेवान्त्यपदं व्याचष्टे-

[भा.६०७९] किं छगलेण जंपह, किं मं होप्पेह एवऽजाणंता।
बहुएहिं को विरोहो, सलभेहि व नागपोतस्स ॥

वृ- किमेवं छागलेन न्यायेन जल्पथ ?, बोल्कटवन्मूर्खतया किमेवमेव प्रलपथ ? इत्यर्थः। किं वा मामेवमजानन्तोऽपि "होप्पेह" गले धृत्वा प्रेरयथ ?। अथवा ममापि बहुभि सह को विरोधः शलभैरिव नागपोतस्येति ॥ अथ घोटकमुखीद्वारमाह-

[भा.६०८०] भणइ य दिट्ठ नियत्ते, आलोए आमं ति घोडगमुहीओ।
मानुस सव्वे एगे, सव्वे बाहिं पवयणस्स ॥

[भा.६०८१] मासो लहुओ गुरुओ, चउरो मासा हवंति लहु-गुरुगा।
चम्मासा लहु-गुरुगा, छेओ मूलं तह दुगं च ॥

वृ- एकः साधुर्विचारभूमौ गत उद्यानोद्देशे वडवाश्चरन्तीरवलोक्य प्रतिश्रयमागतः साधूनां विस्मितमुखः कथयति-शृणुत आर्या! अद्य मया यादृशमाश्चर्यं दृष्टम्; साधवः पृच्छन्ति-कीदृशम् ?; स प्राह-घोटकमुख्यः स्त्रियो दृष्टाः; एवं भणतो मासलघु। ते साधव ऋजुस्वभावाश्चिन्तयन्ति यथा-घोटकमुख्यआ मनुष्यस्त्रियोऽनेन दृष्टा इति; ततस्ते पृच्छन्ति-कुत्र तास्त्वया दृष्टाः ? स प्राह-द्याने; एवं ब्रुवतो मासगुरु। साधवः 'द्रष्टव्यास्ताः' इत्यभिप्रायेण व्रजन्ति तदानीं कथयतश्चतुर्लघु। दृष्टासु वडवासु चतुर्गुरु। प्रतिनिवृत्तेषु साधुषु षड्लघु। गुरूणामालोचिते षड्गुरु। ततो गुरुभिः

पृष्टो यदि भणति-आमम्, घोटकमुख्य एवैताः, यतो घोटकवद् दीर्घमधोमुखं च मुखं वडवानां भवतीति; एवं ब्रवीति तदा छेदः। ततः साधुभिर्भणितः-कथं ताः स्त्रिय उच्यन्ते ?; इतरः प्राह-यदि न स्त्रयस्तर्हि किं मनुष्याः ?; एवं ब्रुवाणस्य मूलम्। 'सर्वे यूयमेकत्र मिलिताः, अहं पुनरेक एव' एवं भणतोऽनवस्थाप्यम्। 'सर्वेऽपि प्रवचस्य वाह्याः' इति भणतः पाराञ्चिकम्॥

अथान्यं प्रायश्चित्तत्रयं प्रकारान्तरेणाह-

[भा.६०८२] सव्वेगत्था मूलं, अहगं इक्कल्लगो य अणवट्ठो।
सव्वे बहिभावा पवयणस्स वयमाणे चरिमं तु॥

वृ- 'यूयं सर्वेऽप्येकत्र मिलिताः' इति भणतो मूलमेव। 'अहमेककः किं करोमि ? इति भणतोऽनवस्थाप्यम्। 'सर्वेऽपि यूयं प्रवचनस्य वाह्याः' इति वदति पाराञ्चिकम्॥

इदमेवान्त्यपदं व्याख्याति-

[भा.६०८३] किं छागलेण जंपह, किं मं हंफेह एवऽजाणंता।
बहुएहि को विरोहो, सलभेहि व नागपोयस्स॥

वृ- गतार्था॥ अथावश्यक्गमनद्वारमाह-

[भा.६०८४] गच्छसि न ताव गच्छं, किं खु न जासि त्ति पुच्छितो भणति।
वेला न ताव जायति, परलोगं वा वि मोक्खं वा॥

वृ- कोऽपि साधुः केनापि साधुना पृष्ट-आर्य! गच्छसि भिक्षाचर्याम् ?; स प्राह-अवश्यं गमिष्यामि; इतरेण साधुना भणितः-यद्येवं तत उत्तिष्ठ व्रजावः; स प्राह-न तावदद्यापि गच्छामि; इतरेण भणितम्-किं "खुः" इति वितर्के 'न यासि' न गच्छसि ? त्वया हि भणितम्-अवश्यं गमिष्यामि; एवंपृष्टो भणति-न तावदद्यापि परवलोकं गन्तुं वेला जायते अतो न गच्छामि, यद्वा मोक्षं गन्तुं नाद्यापि वेला अतो न गच्छामि; "अपि" सम्भावने, किं सम्भावयति ? अवश्यं परलोकं मोक्षं वा गमिष्यामीति॥ अथ "देसासु" त्ति पदं व्याख्याति-

[भा.६०८५] कतरिं दिसं गमिस्ससि, पुव्वं अवरं गतो भणति पुट्ठो।
किं वा न होति पुव्वा, इमा दिसा अवरगामस्स॥

वृ- एकः साधुरेकेन साधुना पृष्टः-आर्य! कतरां दिशं भिक्षाचर्यां गमिष्यसि ?; स एवंपृष्टो ब्रवीति-पूर्वां गमिष्यामि। ततः प्रच्छकः साधुः पात्रकाण्युद्ग्राह्यापरां दिशं गतः, इतरोऽपि पूर्वदिग्गमनप्रतिज्ञाता तामेवापरां दिशं गतः, तेन साधुना पृष्टः-'पूर्वां गमिष्यामि' इति भणितकस्मादपरामायातः ?; स प्राह-किं वाऽपरस्य ग्रामस्येयं दिक् पूर्वा न भवति येन मदीयं वचनं विरुध्येत ?॥ अथैककुलद्वारमाह-

[भा.६०८६] अहमेगकुलं गच्छं, वच्चह बकुलपवेसणे पुट्ठो।
भणति कहं दोन्नि कुले, एगसरीरेण पविसिस्सं॥

वृ- कश्चित् केनचिद् भिक्षार्थमुत्थितेनोक्तः-आर्य! एहि व्रजावो भिक्षाम्; स प्राह-व्रजत यूयं अहमेकमेव कुलं गमिष्यामि; एवमुक्त्वा वहुषु कुलानि प्रविशसि ?; स एवं पृष्टो भणति-द्वे कुले एकेन शरीरेण युगपत् कथं प्रवेक्ष्यामि ?, एकमेव कुलमेकस्मिन् काले प्रवेष्टुं शक्यम् न वहूनीति भावः॥ अथैकद्रव्यग्रहणद्वारमाह-

[भा.६०८७]　　चयइ एगं दव्वं, घेच्छं नेगगह पुच्छितो भणती ।
गहणं तु लक्खणं पोग्गलाण न उ सेसि तेसिं ।।

वृ- कोऽपि साधुर्भिक्षार्थं गच्छन् कमपि साधुं भणति-व्रजावो भिक्षायाम्; स प्राह-व्रजत यूयम् अहमेकमेवद्रव्यं ग्रहीष्यामि; एवमुक्त्वा भिक्षां पर्यटन् अनेकानाम्-ओदन-द्वितीयाङ्गादीनां बहूनां द्रव्याणां ग्रहण कुर्वन् साधुभि पृष्टो भणति-''गहणं तु'' इत्यादि, गतिलक्षणो धर्मास्तिकायः, स्थितिलक्षणोऽधर्मास्तिकायः, अवगाहलक्षण आकाशास्तिकायः, उपयोगलक्षणो जीवास्तिकायः, ग्रहणलक्षणः, पुद्गलास्तिकायः, एषां च पञ्चानां द्रव्याणां मध्यात् पुद्गलानामेव ग्रहणरूपं लक्षणम् नान्येषां धर्मास्तिकायादीनाम्, तेनाहमेकमेव द्रव्यं गृह्णामि न बहूनीति ।। व्याख्यातं द्वितीयद्वारगाथायाः पूर्वार्द्धम् । अथ ''पडियाखित्ता गमणं, पडियाक्खित्ता य भुंजणय'त्ति पश्चार्द्ध व्याख्यायते-'प्रत्याख्याय' 'नाहं गच्छामि' इति प्रतिषिध्य गमनं करोति, 'प्रत्याख्याय च' 'नाहं भुञ्जे' इति भणित्वा भुङ्क्ते; अपरेण च साधुना पृष्टो ब्रवीति-गम्यमानं गम्यते नागम्यमानम्, भुज्यमानमेव भुज्यते नाभुज्यमानम् । अनेन च पश्चार्द्धे गमनद्वार-प्रत्याख्यानद्वारे व्याख्याते इति प्रतिपत्तव्यम् । इह च सर्वत्रापि प्रथमवारं भणतो मासलघु । अथाभिनिवेशेन तदेव निकाचयति तदा पूर्वोक्तनीत्या पाराञ्चिकं यावद् द्रष्टव्यम् ।।

तदेवं येषु स्थानेष्वलीकं सम्भवति यादृशी च तत्र शोधिस्तदभिहितम् । सम्प्रति 'येऽपाया सापवादाः' इति द्वारम्-तत्राऽनन्तरोक्तान्यलीकानि भणतो द्वितीयसाधुना सहासङ्खडाद्युत्पत्तेः संयमा-ऽऽत्मविराधनारूपा सप्रपञ्चं सुधिया वक्तव्याः । अपवादपदं तु पुरस्ताद् भणिष्यते । गतमलीकवचनम् । अथ हीलितादीन्यभिधित्सुः प्रथमतः प्रायश्चित्तमतिदिशति-

[भा.६०८८]　　एमेव य हीलाए, खिंसा-फरुसवयणं च वदमाणो ।
गारत्थि विओसविते, इमं च जं तेसि नाणत्तं ।।

वृ- एवमेव हीलावचनं खिंसावचनं परुषवचनमगारस्थवचनं व्यवशमितोदीरणवचनं च वदतः प्रायश्चित्तं मन्तव्यम् । यच्च तेषां नानात्वं तद् इदं भवति ।।

[भा.६०८९]　　आदिल्लेसुं चउसु वि, सोही गुरुगाति भिन्नमासंता ।
पणुवीसतो विभाओ, विसेसितो बिदिय पडिलोमं ।।

वृ- 'आदिमेषु चतुर्ष्वपि' हीलित-खिंसित-परुष-गृहस्थवचनेषु शोधिश्चतुर्गुरुकादिका भिन्नमासान्ता आचार्यादीनां प्राग्वद् मन्तव्या । तद्यथा-आचार्य आचार्यं हीलयति चतुर्गुरु १ उपाध्यायं भिन्नमासः ५ । एतान्याचार्यस्य तपः-कालाभ्यां गुरुकाणि भवन्ति । एते आचार्यस्य पञ्च संयोगा उक्ताः, उपाध्यायादीनामपि चतुर्णामेवमेव पञ्च पञ्च संयोगा भवन्ति, सर्वसङ्ख्ययैते पञ्चविंशतिर्भवन्ति । अत एवाह-'पञ्चविंशतिकः' पञ्चविंशमानपरिमाणोविभागोऽत्र भवति । स च तपः-कालाभ्यां विशेषितः कर्तव्यः । द्वितीयादेशेन चैतदेव प्रायश्चित्तं प्रतिलोमं विज्ञेयम्, भिन्नमासाद्यं चतुर्गुरुकान्तमित्यर्थः । एवं खिंसित-परुष-गृहस्थवचनेष्वपि शोधिर्मन्तव्या ।।

अथ हीलितवचनं व्याख्याति-

[भा.६०९०] गणि वायए बहुस्सुए, मेहावाऽऽयरिय धम्मकहि वादी ।
अप्पकसाए थूले, तनुए दीहे य मडहे य ।।

वृ- इह गणि-वाचकादिभिः पदैः सूचयाऽसूचया वा परं हीलयति । सूचया यथा-वयं न गणि-वृषभा अतः को नाम गणि-वृषभैः सहास्माकं विरोधः ? । असूचया यथा-कस्त्वं गणीनामसि ? किं वा त्वया गणिना निष्पद्यते ?; यद्वा-गणीभवन्नपि त्वं न किञ्चिद् जानासि, केन वा त्वं गणि कृतः ? इति । एवं वाचकादिष्वपि पदेषु भावनीयम् । नवरम्-'वाचकः' पूर्वगतश्रुतधारी, 'बहुश्रुतः' अधीतविचित्रश्रुतः, 'मेधावी' ग्रहण-धारणा-मर्यादामेधाविभेदात् त्रिधा, 'आचार्य' गच्छाधिपति, 'धर्मकथी वादी च' प्रतीतः । ''अप्पकसाए'' त्ति बहुकषाया वयम्, को नामाकल्पकषायैः सह विरोधः ? । ''थूले तणुए'' त्ति स्थूलशरीरा वयम्, कस्तनुदेहैः सह विरोधः ? । ''दीहे य डहे य'' त्ति दीर्घदेहा वयं सदैवोपरि शिरोघट्टनं प्राप्नुमः, को मडभदेहैः समं विरोधः ? । एषा सूचा । असूचायां तु-बहुकषायस्त्वम्, स्थूलशरीरस्त्वम् इत्यादिकं परिस्फुटमेव जल्पति । एवमसूचया सूचया वा यत् परं हीलयति तदेतद् हीलितवचनम् ।। अथ खिंसितवचनमाह-

[भा.६०९१] गहियं च अहाघोसं, तहियं परिपिंडियाण संलावो ।
अमुएणं सुत्तत्थो, सो वि य उवजीवितुं दुक्खं ।।

वृ- एकेन साधुना 'यथाघोषं' यथा गुरुभिरभिलापा भणिताः तथा श्रुतं गृहीतम् । स चैवंगृहीतसूत्रार्थ प्रतीच्छकादीन् वाचयति । यदा च प्रतीच्छक उपतिष्ठते तदा तस्य जातिकुलादीनि पृष्ट्वा पश्चात् तैरेव खिंसां करोति । इतश्च अन्येषां साधूनां 'परिपिण्डितानां' स्वाध्यायमण्डल्या उत्थितानां संलापो वर्तते-कुत्र सूत्रार्थौ परिशुद्धौ प्राप्येते ? । तत्रैकस्तं यथाघोषश्रुतग्राहकं साधुं व्यपदिशति, यथा-अमुकेन सूत्रार्थौ शुद्धौ गृहीतौ परं स 'उपजीवितुं' सेवितुं 'दुःखं' दुष्करः ।। कथम् ? इत्याह-

[भा.६०९२] जह कोति अमयरुक्खो, विसकंटगवल्लिवेढितो संतो ।
न चइज्जइ अल्लीतुं, एवं सो खिंसमाणो उ ।।

वृ- यथा कोऽप्यमृतवृक्षो विषकण्टकवल्लीभिर्वेष्टितः सन् 'आलीतुं' आश्रयितुं न शक्यते एवमसावपि साधुः प्रतीच्छकान् खिंसन् नाश्रयितुं शक्यः ।। तथाहि-

[भा.६०९३] ते खिंसणापरद्धा, जाती-कुल-देस-कम्मपुच्छाहिं ।
आसागता निरासा, वच्चंति विरागसंजुत्ता ।।

वृ- यस्तस्योपसम्पद्यते तं पूर्वमेव पृच्छति-का तव जातिः ? किंनामिका माता ? को वा पिता? कस्मिन् वा देशे सञ्जातः ? किं वा कृष्यादिकं कर्म पूर्वं कृतवान् ?; एवं पृष्ट्वा पश्चात् तान् पठतो हीना-ऽधिकाक्षराद्युच्चारणादेः कुतोऽपि कारणात् कुपितस्तैरेव जात्यादिभिः खिंसति । ततः 'ते' प्रतीच्छका जाति-कुल-देश-कर्मपृच्छाभि पूर्वं पृष्टाः ततः खिंसनया प्रारब्धाः-त्याजिताः सन्तः 'सूत्रार्थौ ग्रहीष्यामः' इत्याशयाऽऽगताः 'निराशाः' क्षीणमनोरथा विरागसंयुक्ताः-

''दिट्ठा सि कसेरुमई, अनुभूया सि कसेरुमई ।
पीयं च ते पाणिययं, वरि तुह नाम न दंसणयं ।।''

इति भणित्वा स्वगच्छं व्रजन्ति ।।

[भा.६०९४] सुत्त-ऽत्थाणं गहणं, अहगं ततो पडिनियत्तो ।
जाति कुल देस कम्म, पुच्छति खल्लाड धन्नागं ।।

वृ- एवं तदीयृत्तान्तमाकर्ण्य कोऽपि साधुर्भणति-अहं तस्य सकाशे गत्वा सूत्रार्थयोर्ग्रहणं करिष्ये, तं चाचार्यं खिंसनादोषाद् निवर्तयिष्यामि। एवमुक्त्वा येषाचार्याणां स शिष्यस्तेषामन्तिके गत्वा पृच्छति-योऽसौ युष्माकं शिष्यः स कुत्र युष्मामि प्राप्तः ? । आचार्या प्राहुः-वइदिसनामकस्य नगरस्यासन्ने गोर्वरग्रामे। ततोऽसौ साधुस्ततः प्रतिनिवृत्तो गोर्बरग्रामं गत्वा पृच्छति-अमुकनामा युवा युष्मदीये ग्रामे पूर्वं किमासीत् ? । ग्रामेयकैरुक्तम्-आसीत्। ततः-कास्य माता ? को वा पिता ? किं वा कर्म ? । तैरुक्तम्-"खल्लाड धन्नागं" ति नापितस्य धन्निका नाम दासी, सा खल्वाटकोलिकेन सम्मुपितवती, तस्याः सम्बन्धी पुत्रोऽसौ ॥ एवं श्रुत्वा तस्य साधोः सकाशं गत्वा भणति-अहं तवोपसम्पदं प्रतिपद्ये। ततस्तेन प्रतीच्छय पृष्टः-कुत्र त्वं जातः ? का वा ते माता ? इत्यादि। एवंपृष्टोऽसौ न किमपि ब्रवीति। तत इतरश्चिन्तयति-नूनमेषोऽपि हीनजातीयः। ततो निर्बन्धे कृते स साधुः प्राह-

[भा.६०९५] थाणम्मि पुच्छियम्मिं, ह नु दानि कहेमि ओहिता सुणधा।
साहिस्सऽन्ने कस्सव, इमाइं तिक्खाइं दुक्खाइं ॥

वृ- स्थाने भवद्भिः पृष्टे सति "ह नु दानि" त्ति तत इदानीं कथयामि, अवहिताः शृणुत यूयम्, कस्यान्यस्य 'इमानि' ईदृशानि तीक्ष्णानि दुःखानि कथयिष्यामि ? ॥

[भा.६०९६] वइदिस गोब्बरगामे, खल्लाडग धुत्त कोलिय त्थेरो।
ण्हाविय धन्निय दासी, तेसिं मि सुतो कुणह गुज्झं ॥

वृ- वइदिसनगरासन्ने गोर्वरग्रामे धूर्तः कोलिकः कश्चित् खल्वाटः स्थविरः, तस्य नापितदासी धन्निका नाम भार्या, तयोः सुतोऽस्म्यहम्; एतद् गुह्यं कुरुत, मा कस्यापि प्रकाशयतेत्यर्थः ॥

[भा.६०९७] जेट्ठो मज्झ य भाया, गब्भत्थे किर ममम्मि पव्वइतो।
तमहं लद्धसुतीओ, अनु पव्वइतोऽनुरागेण ॥

वृ- मम ज्येष्ठो भ्राता गर्भस्थे किल मयि प्रव्रजित इति मया श्रुतम्। ततोऽहमेवं लब्धश्रुतिको भ्रातुरनुरागेण तमनु-तस्य पश्चात् प्रव्रजितः ॥ एवं श्रुत्वा स खिंसनकारी साधुः किं कृतवान् ?

[भा.६०९८] आगारविसंवइयं, तं नाउं सेसचिंधसंवदियं।
निउणोवायच्छलितो, आउंटण दानमुभयस्स ॥

वृ- 'न मदीयस्य भ्रातुरेवंविध आकारो भवति' इत्याकारविसंवदितं ज्ञात्वा शेषैश्च-जात्यादिभिश्चिह्नैः संवदितं ज्ञात्वा चिन्तयति-अहो ! अमुना निपुनोपायेन छलितोऽहम्, यदेवमन्यव्यपदेशेन मम जात्यादिकं प्रकटितम्। ततः 'आवर्तनं' मिथ्यादुष्कृतदानपूर्वं ततो दोषादुपरमणम्। ततस्तस्मै सूत्रा-ऽर्थरूपस्योभयस्य दानं कृतमिति ॥

गतं खिंसितवचनम्। अथ परुषवचनमाह-

[भा.६०९९] दुविहं च फरुसवयणं, लोइय लोउत्तरं समासेणं।
लोउत्तरियं ठप्पं, लोइय वोच्छं तिमं नातं ॥

वृ- द्विविधं परुषवचनं समासतो भवति-लौकिकं लोकोत्तरिकं च। तत्र लोकोत्तरिकं स्थाप्यम्, पश्चाद् भणिष्यत इत्यर्थः। लौकिकं तु परुषवचनमिदानीमेव वक्ष्ये। तत्र चेदं ज्ञातं भवति ॥

[भा.६१००] अन्नोन्न समनुरत्ता, दाहस्स कुडुंबियस्स वि य धूया।

तासिं च फरुसवयणं, आमिसपुच्छा समुप्पन्नं ॥

वृ- व्याधस्य कुटुम्बिनोऽपि च "धूताः" दुहितरौ अन्योन्यं समनुरक्ते, परस्परं सख्यौ इत्यर्थः। तयोश्च परुषवचनमामिषपृच्छया समुत्पन्नम् ॥ कथम् ? इति चेद् उच्यते-

[भा.६१०१] केनाऽऽनीतं पिसियं, फरुसं पुन पुच्छिया भणति वाही ।
किं खु तुमं पिताए, आनीतं उत्तरं वोच्छं ॥

वृ- व्याधदुहित्रा पुद्गलमानीतम्, ततः कुटुम्बिदुहित्रा सा भणिता-केनेदं पिशितमानीतम् ? ततो 'व्याधी' व्याधदुहिता पृष्टा सती परुवचनं भणति-किं खु ? त्वदीयेन पित्राऽऽनीतम् । कुटुम्बिदुहिता भणति-किं मदीयः पिता व्याधः येन पुद्गलमानयेत् ? । एवं लौकिकं परुषवचनम्। अथ 'उत्तरं' लोकोत्तरिकं वक्ष्ये ॥ प्रतिज्ञातमेवाह-

[भा.६१०२] फरुसम्मि चंडरुद्दो, अवंति लाभे य सेह उत्तरिए ।
आलत्ते वाहित्ते, वावारिय पुच्छिय निसिट्ठे ॥

वृ- परुषवचने चण्डरुद्र उदाहरणम्, अवन्त्या नगर्यां शैक्षस्य लाभः तस्य सञ्जात इति तदुदाहरमस्यैव सूचा कृता । एतल्लोकोत्तरिकं परुषवचनम् । एतच्चैतेषु स्थानेषूत्पद्यते-"आलत्ते" इत्यादि, 'आलप्तो नाम' 'आर्य ! किं तव वर्त्तते ?' इत्येवमाभाषितः १, 'व्याहृतः' 'इत एहि' इत्येवमाकारितः २, 'व्यापारितः' 'इदमिदं च कुरु' इति नियुक्तः ३, 'पृष्टः' 'किं कृतं ? किं वा न कृतम् ?' इत्यादि पर्यनुयुक्तः ४, 'निसृष्टः' 'गृहाण, भुङ्क्ष्व, पिब' इत्येवमादिष्टः ५ । एतेषु पञ्चसु स्थानेषु परुषवचनं सम्भवति इति निर्युक्तिगाथासमासार्थः ॥

अथैनां विवरीषुश्चण्डरुद्रदृष्टान्तं तावदाह-

[भा.६१०३] ओसरणे सवयंसो, इब्भसुतो वत्थभूसियसरीरो ।
दायण त चंडरुद्दे, एस पवंचेति अम्हे त्ति ॥

वृ- उज्जयिन्यां नगर्यां रथयात्रोत्सवे 'ओसरणं' बहूनां साधूनामेकत्र मीलकः समजनि । तत्र सवयस्यो वस्त्रभूषितशरीरः इभ्यसुतः साधूनामन्तिके समायातो भणति-मां प्रव्राजयत । ततः साधवश्चिन्तयन्ति-एषः 'प्रपञ्चयति' विप्रतारयत्यस्मानिति । तैश्चण्डरुद्राचार्यस्य दर्शनं कृतम् "घृष्यतां कलिना कलि" इति कृत्वा ॥

[भा.६१०४] भूतिं आनय आनीते दिक्खितो कंदिउं गता मित्ता ।
वत्तोसरणे पंथं, पेहा वय दंडगाऽऽउट्टो ॥

वृ-ततश्चण्डरुद्रस्योपस्थितः-प्रव्राजयत मामिति । ततस्तेनोक्तम्-'भूतिं' क्षारमानय । ततस्तेन भूतावानीताया लोचं कृत्वा दीक्षितः । ततस्तदीयानि मित्राणि 'क्रन्दित्वा' प्रभूतं रुदित्वा स्वस्थानं गतानि । वृत्ते च समवसरणे चण्डरुद्रेण शैक्षो भणितः-पन्थानं प्रत्युपेक्षस्व येन प्रभाते व्रजामः । ततः प्रत्युपेक्षिते पथि प्भाते पुरतः शैक्षः पृष्ठतश्चण्डरुद्रः "वय"त्ति व्रजति । स च शैक्षो गच्छन् स्थाणावास्फिटितः । ततश्चण्डरुद्रो रुष्टः 'दुष्टशैक्षः' इति भणन् शिरसि दण्डकेन ताडयति । शैक्षो मिथ्यादुष्कृतं करोति भणति च-सम्यगायुक्तो गमिष्यामि । ततश्चण्डरुद्रस्तदीयोपशमेनावृत्तश्चिन्तयति-अहो ! अस्याभिनवदीक्षितस्यापि कियान् शमप्रकर्ष ? मम तु मन्दभाग्यस्य

विप्रव्रजितस्याप्येवंविधः परमकोटिमुपगतः क्रोधः; इति परिभावयतःक्षपकश्रेणिमधिरूढस्य केवलज्ञानमुत्पेदे ॥ एवं चण्डरुद्रस्य 'दुष्टशैक्षः' इत्यादिभणनमिव परुषवचनं मन्तव्यम् । अथ 'आलपनादिषु पदेषु परुषं भवति' इति यदुक्तं तस्य व्याख्यानमाह-

[भा.६१०५] तुसिनीए हुंकारे, किं ति व किं चडगरं करेसि त्ति ।
किं निव्वुतिं न देसी, केवतियंवा वि रडसि त्ति ॥

वृ- आचार्यादिभिरालप्तो व्याहृतो व्यापारितः पृष्टो निसृष्टो वा तूष्णीको भवति, हुङ्कारं वा करोति, 'किम् ?' इति वा भणति, 'किं वा चटकरं करोषि ?' इति ब्रवीति, 'किं निर्वृतिं न ददासि ?' इति ब्रूते, 'कियद्वा रटिष्यसि ?' इति भणति । एते सर्वेऽपि परुषवचनप्रकाराः ॥

अथैतेष्वेव प्रायश्चित्तमाह-

[भा.६१०६] मासो लहुओ गुरुओ, चउरो मासा हवंति लहु-गुरुगा ।
छम्मासा लहु-गुरुगा, छेदो मूलं तह दुगं च ॥

वृ- लहुको मासो गुरुको मासश्चत्वारो मासा लघवस्चत्वारो मासा गुरवः षण्मासा लघवः षण्मासा गुरवः छेद मूलं तथा 'द्विकम्' अनवस्थाप्यं पाराश्चिकं चेति ॥

एतदेव प्रायश्चित्तं चारणिकया गाथाद्वयेन दर्शयति-

[भा.६१०७] आयरिएणाऽऽलत्तो, आयरितो चेव तुसिणितो लहुओ ।
रडसि त्ति छग्गुरुंतं, वाहिते गुरुगादि छेदंतं ॥

वृ- आचार्येण आलप्त आचार्य एव तूष्णीको भवति मासलघु । अथ हुङ्कारादिकं रटसीति पर्यन्तं करोति तदा षड्गुरुकान्तम् । तद्यथा-हुङ्कारं करोति मासगुरु, 'किम्' इति भाषते न 'मस्तकेन वन्दे' इति ब्रवीति चतुर्लघु, 'किं चटकतरं करोषि ?' इति ब्रुवाणस्य चतुर्गुरु, 'किं निर्वृतिं न ददासि ?' इति भाषमाणस्य षड्लघु, 'कियन्तं वा कालं रटसि ?' इति ब्रुवतः षड्गुरु । व्याहृतस्य तूष्णीकतादिषु पदेषु मासगुरुकादारब्धं छेदान्तं ज्ञेयम् ॥

[भा.६१०८] लहुगाई वावारिते, मूलंतं चतुगुरुगाइ पुच्छिए नवमं ।
नीसट्ठ छसु पतेसु, छल्लहुगादी तु चरिमंतं ॥

वृ- व्यापारितस्य चतुर्लघुकादारब्धं मूलान्तम् । पृष्टस्य चतुर्गुरुकादारब्धं 'नवमम्' अनवस्थाप्यम् । 'निसृष्टस्य 'इदं गृहाण, भुङ्क्ष्व' इत्यायुक्तस्य 'षट्स्वपि' तूष्णीकादिपदेषु षड्लघुकादारब्धं चरमं-पाराश्चिकं तदन्तं ज्ञातव्यम् ॥ एवमाचार्येणाचार्यस्यालपनादिपदेषु शोधिरुक्ता । अथाऽऽ-चार्येणैवालप्तादीनामुपाध्यायप्रभृतीनां शोधिं दर्शयितुमाह-

[भा.६१०९] एवमुवज्झाएणं, भिक्खू थेरेण खुड्डएणं च ।
आलत्ताइपएहिं, इक्किक्कपयं तु हासिज्जा ॥

वृ- 'एवम्' आचार्यवदुपाध्यायेन भिक्षुणा स्थविरेण क्षुल्लकेन च समं आलपनादिपदैः प्रत्येकं तूष्णीकतादिप्रकारषट्के यथाक्रममेकैकं प्रायश्चित्तपदं ह्रासयेत् । तद्यथा-आचार्य उपाध्यायमनुरूपेणाभिलापेनालपति ततो यदि उपाध्यायस्तूष्णीक आस्ते तदा गुरुभिन्नमासः, हुङ्कारं करोति मासलघु, एवं यावत् 'किमेतावन्मात्रमारटसि ?' इति भणतः षड्लघु । व्याहृतस्यैतेष्वेव तूष्णीकादिषु पदेषु लघुमासादारब्धं षड्गुरुकान्तम्, व्यापारितस्य गुरुमासादिकं छेदान्तम्, पृष्टस्य

चतुर्लघुकादिकं मूलान्तम्, निसृष्टस्य चतुर्गुरुकादिकमनवस्थाप्यान्तं द्रष्टव्यम् । एवमाचार्येणैव भिक्षोरालप्तादिषु पदेषु लघुभिन्नमासादारब्धं मूलान्तम्, स्थविरस्य गुरुर्विंशतिरात्रिन्दिवादारब्धं छेदान्तम्, क्षुल्लकस्य लघुर्विंशतिरात्रिन्दिवादारब्धं षड्गुरुकान्तं प्रायश्चित्तं प्रतिपत्तव्यम् ॥ एवं तावदाचार्यस्याचार्यादिभिः पञ्चभिः पदैः समं चारणिका दर्शिता । साम्प्रतमुपाध्यायादीनां चतुर्णामप्याचार्यादिपदपञ्चकेन चारणिकां दर्शयति-

[भा.६११०] आयरियादभिसेगो, एक्कगहीणो तदिक्किणा भिक्खू ।
थेरो तु तदिक्केणं, थेर खुड्डो वि एगेणं ॥

वृ- आचार्याद् 'अभिषेकः' उपाध्याय आलापादिपदानि कुर्वाणश्चारणिकायामेकेन प्रायश्चित्तपदेन हीनो भवति । तद्यथा-उपाध्याय आचार्यमालपति 'क्षमाश्रमणाः ! कथं वर्तते ?' इत्यादि, एवमालप्त आचार्यस्तूष्णीक आस्ते भिन्नमासो गुरुकः, हुङ्कारं करोति मासलघु, एवं तेनैव चारणिकाक्रमेण तावद् नेयं यावद् उपाध्यायेनाचार्यस्य निसृष्टस्य 'किमेतावदारटसि ?' इतिब्रुवाणस्यानवस्थाप्यम् । अथोपाध्याय उपाध्यायमालपति तत आलप्तादिषु पञ्चसु पदेषु तूष्णीकतादिभिः षड्भिः पदैः प्रत्येकं चार्यमाणैर्लघुभिन्नमासादारब्धं मूले तिष्ठति । एवमुपाध्यायेनैव भिक्षोरालप्तादिषु पदेषु तूष्णीकतादिभिरेव पदैर्गुरुविंशतिरात्रिन्दिवादारब्धं छेदान्तम्, स्थविरस्य लघुर्विंशतिरात्रिन्दिवादारब्धं षड्गुरुकानतम्, क्षुल्लकस्य गुरुपञ्चदशरात्रिन्दिवादारब्धं षड्लघुकान्तं द्रष्टव्यम् । यदा तु भिक्षुराचार्यादीनालपति तदा ततः-उपाध्यायादेकेन पदेन हीनो भवति, सर्वचारणिकाप्रयोगेण लघुपञ्चदशरात्रिन्दिवादारब्धं प्रायश्चित्तं मूले तिष्ठतीत्यर्थः । यदा तु स्थविर आलपति तदा ततः-भिक्षोरेकेन पदेन हीनो भवति, सर्वचारणिकाप्रयोगेण गुरुदशरात्रिन्दिवादारब्धं छेदे तिष्ठतीत्यर्थः । यदा तु क्षुल्लक आचार्यादीनालपति तदा सोऽप्येकेन पदेन हीनो भवति । तद्यथा-क्षुल्लक आचार्यमालपति यदि आचार्यस्तूष्णीकादीनि पदानि करोति तत आलप्तादिषु पञ्चसु पदेषु लघुर्विंशतिरात्रिन्दिवादारब्धं षड्गुरुके तिष्ठति । एवं क्षुल्लकेनैवोपाध्यायस्यालप्तादिषु पदेषु तूष्णीकतादिभिः षड्भिः पदैः प्रत्येकं चार्यमाणैर्गुरुपञ्चदशकादारब्धं षड्लघुकान्तम्, भिक्षोर्लघुपञ्चदशकादारब्धं चतुर्गुरुकान्तम्, स्थविरस्य गुरुदशकादारब्धं चतुर्लघुकान्तम्, क्षुल्लकस्य लघुदशकादारब्धं मासगुरुकान्तं प्रायश्चित्तं भवति । एवं सर्वचारणिकाप्रयोगेण लघुदशकादारब्धं षड्गुरुके तिष्ठतीति ॥ एवं तावन्निर्ग्रन्थानामुक्तम् । अथ निर्ग्रन्थीनामतिदिशन्नाह-

[भा.६१११] भिक्खुसरिसी तु गणिणी, थेरसरिच्छी तु होइ अभिसेगा ।
भिक्खुणि खुड्डसरिच्छी, गुरु-लहुपनगाइ दो इयरा ॥

वृ- इह निर्ग्रन्थीवर्गेऽपि पञ्च पदानि, तद्यथा-प्रवर्तिनी अभिषेका भिक्षुणी स्थविरा क्षुल्लिका च तत्र 'गणिनी' प्रवर्तिनी सा भिक्षुसदृशी मन्तव्या । किमुक्तं भवति ?-प्रवर्तिनी प्रवर्तिनीप्रभृतीनां पञ्चानामन्यतमामालप्तादिभिः प्रकारैरालपति, सा चाऽऽलप्यमाना तूष्णीकादिपदषट्कं करोति ततो भिक्षावालपति यदाचार्यादीनां प्रायश्चित्तमुक्तं तत् तासां प्रवर्तिनीप्रभृतीनां मन्तव्यम् । अथाभिषेका प्रवर्तिन्यादीनामन्यतरामालपति सा च तूष्णीकादिपदानि करोति ततः स्थविरे आलपति यदाचार्यादीनां प्रायश्चित्तमुक्तं तत् तासां द्रष्टव्यम्, अत एवाह-स्थविरसदृक्षा अभिषेका भवति । अत भिक्षुणी प्रवर्तिनीप्रभृतिकामालपति सा च तूष्णीकादीनि करोति ततः क्षुल्लके आलपति

यदाचार्यादीनां प्रायश्चित्तमुक्तं तत् तासामपि यथाक्रमं ज्ञेयम्, अत एवाह-भिक्षुणी क्षुल्लकसरिशी। अथ स्थविरा प्रवर्तिनीप्रभृतिकामालपति ततः प्रवर्तिन्यास्तूष्णीकादिपदषट्कं कुर्वाणाया गुरुपञ्चदशकादिकं षड्लघुकान्तम्, अभिषेकाया लघुपञ्चदशकादिकं चतुर्गुरुकान्तम्, भिक्षुण्या गुरुदशकादिकं चतुर्लघुकान्तम्, स्थविराया लघुदशकादिकं मासगुरुकान्तम्, क्षुल्लिकाया गुरुपञ्चकादिकं मासलघुकान्तं ज्ञेयम्। अथ क्षुल्लिका प्रवर्तिनीप्रभृतिकामालपति सा च तूष्णीकादीनि पदानि करोति ततः प्रवर्तिन्या लघुपञ्चदशकादिकं चतुर्गुरुकान्तम्, अभिषेकाया गुरुदशकादिकं चतुर्लघुकान्तम्, भिक्षुण्या लघुदशकादिकं मासगुरुकान्तम्, स्थविराया गुरुपञ्चकादिकं मासलघुकान्तम्, क्षुल्लिकाया लघुपञ्चकादिकं गुरुभिन्नमासान्तं मन्तव्यम्। अत एवाह-''गुरु-लहुपणगाइ दोइयर'' त्ति 'इतरे' स्थविराक्षुल्लिके तयोर्द्वयोरपि यथाक्रमं गुरुपञ्चकादिकं लघुपञ्चकादिकं च प्रायश्चित्तं भवति ॥ इह परुषग्रहणेन निष्ठुर-कर्कशे अपि सूचिते, ततस्तयोः प्रायश्चित्तं दर्शयितुं परुषस्य च प्रकारान्तरेण शोधिमभिधातुमाह-

[भा.६११२] लहुओ य लहुसगम्मि, गुरुगो आगाढ फरुस वयमाणे।
निट्ठुर-कक्कसवयणे, गुरुगा य पदोसओ जं च।

वृ- 'लहुसके' स्तोके परुषवचने सामान्यतोऽभिधीयमाने मासलघु आगाढपरुषं वदतो मासगुरु। निष्ठुरवचने कर्कशवचने चत्वारो गुरवः। यच्च ते परुषं भणिताः प्रद्वेषतः करिष्यन्ति तन्निष्पन्नं प्रायश्चित्तम् ॥ अथ किमिदं निष्ठुरं? किं वा कर्कशम्? इत्याशङ्कावकाशं विलोक्याऽऽह-

[भा.६११३] निव्वेद पुच्छितम्मिं, उब्भामइल त्ति निट्ठुरं सव्वं।
मेहुण संसट्ठं कक्कसाइं निव्वेग साहेति ॥

वृ- कयाऽपि महेलया कोऽपि साधुः पृष्टः-केन निर्वेदेन त्वं प्रव्रजितः?। स प्राह-मदीया बोजिका 'उद्भ्रामिका' दुःशीला अतोऽहं प्रव्रजितः। एवमादिकं सर्वमपि निष्ठुरमुच्यते। तथा मैथुने 'संसृष्टं' विलीनभावं दृष्ट्वा प्रव्रजितोऽहम्। एवं निर्वेदं यत् कथयति तदेवमादीनि वचांसि कर्कशानि मन्तव्यानि ॥ इदमेव व्याचष्टे-

[भा.६११४] मयं व जं होइ रयावसाणे, तं चिक्कणं गुज्झ मलं झरंतं।
अंगेसु अंगाइं निगूहयंती, निव्वेयमेवं मम जाण सोमे! ॥

वृ- यद् रतावसाने मृतमिव भवति तदेवंविधं गुह्यं चिक्कणं मलं 'क्षरत्' परिगलद्, भार्या चात्मीयेष्वङ्गेषु आत्मीयान्येवाङ्गानि जुगुप्सनीयतया निगूहयन्ती मया दृष्टा, एतद् मे 'निर्वेदं' निर्वेदकारणं हे सौम्ये! जानीहि ॥ तथा-

[भा.६११५] सखेदणीसट्ठविमुक्कगत्तो, भारेण छिन्नो ससई व दीहं।
हीओ मि जं आसि रयावसाणे, अनेगसो तेन दमं पवन्नो ॥

वृ-सखेदं ''नीसट्ठं'' अत्यर्थं विमुक्तगात्रः शिथिलीकृताङ्गो भारेण 'छिन्नः' त्रुटितो भारवाहको यथा दीर्घं निश्वासिति तथाऽहमपि रतावसाने यदनेकश एवंविधः 'आसम्' अभूवं तद् अतीव 'हीतः' लज्जितः, एतेन निर्वेदेन 'दमं' संयमं पाठान्तरेण व्रतं वा प्रपन्नोऽहम् ॥

गतं परुषवचनम्। अथागारस्थितवचनमाह-

[भा.६११६] अरे हरे बंभण पुत्ता, अव्वो बप्पो त्ति भाय मामो त्ति।

भट्टिय सामिय गोमिय, लहुओ लहुआ य गुरुआ य ॥

वृ- अरे इति वा हरे इति वा ब्राह्मण इति वा पुत्र इति वा यदि आमन्त्रणवचनं ब्रूते तदा मासलघु। अव्वो बप्पो भ्रातर् मामक उपलक्षणत्वाद् अम्ब भागिनेय इत्यादीन्यपि यदि वक्ति तदा चतुर्लघु। अथ भट्टिन् स्वामिन् गोमिन् इत्यादीनि गौरवगर्भाणि वचांसि ब्रूते तदा चतुर्गुरुकाः आज्ञादयश्च दोषाः ॥

[भा.६११७] संथवमादी दोसा, वंति धी मुंड! को व तुह बंधू।
मिच्छत्तं दिय वयणे, ओभावणता य सामि त्ति ॥

वृ- भ्रातृ-मामकादीनि वचनानि ब्रुवाणेन संस्तवः-पूर्वसंस्तवादिरूपः कृतो भवति, ततश्च प्रतिबन्धादयो बहवो दोषा भवन्ति। अम्ब तात इत्यादि ब्रुवतः श्रुत्वा लोकश्चिन्तयेत्-अहो! एतेषामपि माता-पित्रादयः पूजनीयाः। अविरतिकाश्चामन्त्रयतो भूयस्तरा दोषाः। यद्वा स गृहस्थस्तेनासद्भूत-सम्बन्धोद्घट्टनेन रुष्टो ब्रूयात्-धिग् मुण्ड! कस्तवात्र 'बन्धुः' स्वजनोऽस्ति येनैवं प्रलपसि?। उपलक्षणमिदम्, अरे हरे इत्यादि ब्रुवतः परो ब्रूयात्-त्वं तावद् मां न जानीषे कोऽप्यहमस्मि ततः किमेवम् अरे इत्यादि भणसि?। एवमसङ्खडादयो दोषाः। 'द्विजवचने च' ब्राह्मण इत्येवमभिधाने च मिथ्यात्वं भवति। स्वामिन् इत्याद्यभिधाने च प्रवचनस्यापभ्राजना भवति ॥

गतमगारस्थितवचनम्। अथ व्यवशमितोदीरणवचनमाह-

[भा.६११८] खामित-वोसविताई, अधिकरणाइं तु जे उईरेंति।
ते पावा नायव्वा, तेसिं च परूवणा इणमो ॥

वृ- क्षामितानि-वचसा मिथ्युदुष्कृतप्रदानेन शमितानि, वोसवितानि-विविधमनेकधा मनसा व्युत्सृष्टानि, क्षामितानि च तानि व्युत्सृष्टानि चेति क्षामित-व्युत्सृष्टानि। एवंविधान्यदिकरणानि ये भूय उदीरयन्ति ते 'पापाः' साधुधर्मबाह्या ज्ञातव्याः। तेषां च इयं प्ररूपणा ॥

[भा.६११९] उप्पायग उप्पन्ने, संबद्धे कक्खडे य बाहू य।
आवट्टणा य मुच्छण, समुघायऽतिवायणा चेव ॥

[भा.६१२०] लहुओ लहुगा गुरुगा, छम्मासा होंति लहुग गुरुगा य।
छेदो मूलं च तहा, अणवट्ठप्पो य पारंची ॥

वृ- द्वौ साधू पूर्वं कलहं कृतवन्तौ, तत्र च क्षामित-व्युत्सृष्टेऽपि तस्मिन्धिकरणेऽन्यदा तयोरेक एवं भणति-एवं नाम त्वया तदानीमहमित्थमित्थं च भणितः; एष उत्पादक उच्यते, अस्य च मासलघु। इतरोऽपि ब्रूते-अहमपि त्वया तदानीं किं स्तोकं भणितः?; एवमुक्त उत्पादकः प्राह-यदि तदानीं त्वमभणिष्यस्तदा किमहमेवमेव त्वामभोक्ष्यम्?; एवमधिकरणमुत्पन्नमुच्यते, तत्र द्वयोरपि चतुर्लघु। सम्बद्धं नाम-वचसा परस्परमाक्रोशनं कर्तुमारब्धं तत्र चतुर्गुरु। कर्कशं नाम-तटस्थितैरुपशम्यमानावपि नोपशाम्यतस्तदा षड्लघु। "बाहु" त्ति रोषभरपरवशतया बाहूबाहवि युद्ध कर्तुं लग्नौ तत्र षड्गुरुकाः। आवर्तना नाम-एकेनापरो निहत्य पातितस्तत्र छेदः। योऽसौ निहतः स मूर्च्छां यदि प्राप्तस्तदा मूलम्। मारणान्तिकसमुद्घातेन समवहतेऽनवस्थाप्यम्। अतिपातना-मरणं तत्र पाराञ्चिकम् ॥ अथ द्वितीयपदमाह-

[भा.६१२१] पढमं विगिंचणट्ठा, उवलंभ विविंचणा य दोसु भवे।

अनुसासनाय देसी, छट्ठे य विगिंचणा भणिता ॥

वृ- 'प्रथमम्' अलीकवचनमयोग्यशैक्षस्य विवेचनार्थं वदेत् । 'द्वयोस्तु' हीलित-खिंसितवचनयोर्यथाक्रममुपालम्भ-विवेचने कारणे भवतः, शिक्षादानमयोग्यशैक्षपरित्यागश्चेत्यर्थः। परुषवचनं तु खरसाध्यस्यानुशासनां कुर्वन् ब्रूयात्। गृहस्थवचनं पुनः 'देशी' देशभाषामाश्रित्य भणेत्। 'षष्ठे च' व्यवशमितोदीरणवचने शैक्षस्य विवेचनं कारणं भणितम्। गाथायां स्त्रीत्वनिर्देशः प्राकृतत्वादिति द्वारगाथासमासार्थः ॥ अथैनां विवरीषुराह-

[भा.६१२२] कारणियदिक्खितं तीरियम्मि कज्जे जहंति अनलं तू।
संजम-जसरक्खट्ठा, होढं दाऊण य पलादी ॥

वृ- कारणे-अशिवादौ अनलः-अयोग्यः शैक्षो दीक्षितः, ततः 'तीरिते' समापिते तस्मिन् कार्ये तं अनलं 'जहन्ति' परित्यजन्ति।कथम्? इत्याह-'संयम-यशोरक्षार्थं' संयमस्य प्रवचनयशःप्रवादस्य च रक्षणार्थं 'होढं' गाढमलीकं दत्त्वा पलायन्ते, शीघ्रमन्यत्र गच्छन्तीत्यर्थः ॥ यः पुनराचार्य सामाचार्यां सारणादिप्रदाने सीदित तमुद्दिश्यैतत् हीलितवचनं वदेत्-

[भा.६१२३] केनेस गनि त्ति कनो, अहो! गणी भणति वा गणिं अगनिं।
एवं विसीतमाणस्स कुणति गणिणो उवालंभं ॥

वृ- केनासमीक्षितकारिणैष गणी कृतः? यद्वा अहो! अयं गणी, अथवा गणिनमप्यगणिनं भणति। एवं गणिनः सामाचार्यां शिक्षादाने वा विषीदत उपालम्भं करोति ॥

[भा.६१२४] अगणिं पि भणाति गणिं, जति नाम पढेज्ज गारवेण वि ता।
एमेव सेसएसु वि, वायगमादीसु जोएज्जा ॥

वृ- यदि कोऽपि बहुशोऽपि भण्यमानो न पठति ततस्तमगणिनमपि गणिनं भणति यदि नाम गौरवेणापि पठेत्। एवमेव शेषेष्वपि वाचकादिषु पदेषु द्वितीयपदं 'योजयेत्' योजनां कुर्यात् ॥

[भा.६१२५] खिंसावयणविहाणा, जे च्चिय जाती-कुलादि पुव्वुत्ता।
कारणियदिक्खियाणं, ते च्चेव विगिंचणोवाया ॥

वृ- खिंसावचनविधानानि यान्येव जाति-कुलादीनि पूर्वमुक्तानि त एव 'कारणिकदीक्षितानां' अयोग्यानां कारणप्रव्राजितानां विवेचनं-परिष्ठापने उपाया मन्तव्याः ॥

[भा.६१२६] खरसज्झं मउयवइ, अगणेमाणं भणंति फरुसं पि।
दव्वफरुसं च वयणं, वयंति देसिं समासज्ज ॥

वृ- इह यः कठोरवचनभणनमन्तरेण शिक्षां न प्रतिपद्यते स खरसाध्य उच्यते, तं खरसाध्यं मृद्वीं वाचनमगणयन्तं परुषमपि भणन्ति। यद्वा 'देशीं' देशभाषा समासाद्य द्रव्यतः परुषवचनमपि वदन्ति। द्रव्यतो नाम-न दुष्टभावतया परुषं भणन्ति किन्तु तत्स्वाभाव्यात्, यथा मालवाः परुषवाक्या भवन्ति ॥

[भा.६१२७] भट्टि त्ति अमुगभट्टि, त्ति वा वि एमेव गोमि सामि त्ति।
जह नं भणाति लोगो, भणाति तह देसिमासज्ज ॥

वृ- भट्टिन् इति वा अमुगमभट्टिन् इति वा एवमेव गोमिन् इति वा स्वामिन् इति वा यथा यथा लोको भणति तथा तथा 'देशीं' देशभाषामाश्रित्य साधवोऽपि भणन्ति ॥

[भा.६१२८] खामिय-वोसवियाइं, उप्पाएऊण दव्वतो रुट्ठो ।
कारणदिक्खिय अनलं, आसंखडिउ त्ति घाडेति ॥

वृ- यः कारणे अनलो दीक्षितस्तेन समं समापिते कार्ये क्षामित-व्युत्सृष्टान्यधिकरणान्युत्पाद्य 'द्रव्यतः' दुष्टभावं विना 'रुष्टः' कुपितः, बहि कृत्रिमान् कोपविकारान् दर्शयन्नित्यर्थः, आसङ्खडिकोऽयं इति दोषमुत्पाद्य तमनलं शैक्षं 'घाटयति' गच्छाद् निष्काशयति ॥

मू. *(१९७) छ कप्पस्स पत्थारा पन्नत्ता, तं जहा-पाणाइवायस्स वायं वयमाणे, मुसावायस्स वायं वयमाणे, अदिन्नादाणस्स वायं वयमाणे, अविरइयावायं वयमाणे, अपुरिसवायं वयमाणे, दासवायं वयमाणे । इच्चेते छ कप्पस्स पत्थारे पत्थरित्ता सम्मं अप्पडिपूरेमाणे तट्ठाणपत्ते सिया ॥*

वृ- अस्य सूत्रस्य सम्बन्धमाह-

[भा.६१२९] तुल्लहिकरणा संखा, तुल्लहिगारो व वादिओ दोसो ।
अहवा अयमधिगारो, सा आवत्ती इहं दानं ॥

वृ- 'द्वयोरपि' अनन्तर-प्रस्तुतसूत्रयोस्तुल्याधिकरणा सङ्ख्या, समानः षट्सङ्ख्यालक्षणोऽधिकार इत्यर्थः । यद्वा वाचिको दोषस्तुल्याधिकारः, उभयोरपि सूत्रयोर्वचनदोषोऽधिकृत इति भावः । अथवाऽयमपरोऽधिकार उच्यते-'सा' पूर्वसूत्रोक्ता शोधिरापत्तिरूपा, इह तु तस्या एव शोधेर्दानमधिक्रियते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-कल्पः-साधुसमाचारस्तस्य सम्बन्धेन तद्विशुद्धिकारणत्वात् 'प्रस्ताराः' प्रायश्चित्तरचनाविशेषाः षट् प्रज्ञप्ताः । तद्यथा-प्राणातपातस्य 'वादं' वार्तां वाचं वा वदति साधौ प्रायश्चित्तप्रस्तारो भवतीत्येकः १ । एवं मृषावादस्यवादं वदति द्वितीयः । अदत्तादानस्य वादं वदति तृतीयः । अविरति-अब्रह्म, यद्वा न विद्यते विरतिरस्याः सा अविरतिका-स्त्री तद्वादं वदति चतुर्थः । अपुरुषः-नपुंसकस्तद्वादं वदति पञ्चमः । दासवादं वदति षष्ठः । 'इति' इत्युपप्रदर्शने । एवंप्रकारानेतान् षट् कल्पस्य 'प्रस्तारान्' प्रायश्चित्तरचनाविशेषान् 'प्रस्तीर्य' अभ्युपगमत आत्मनि प्रस्तुतान् विधाय 'प्रस्तारयिता वा' अभ्याख्यानदाता साधुः सम्यग् 'अप्रतिपूरयन्' अभ्याख्येयार्थस्यासद्भूततया अभ्याख्यानसमर्थनं कर्तुमशक्नुवन् तस्यैव-प्राणातिपातादिकर्तुरिव स्थानं प्राप्तस्तत्स्थानप्राप्तः स्यात्, प्राणातिपातादिकारीव दण्डनीयो भवेदिति भावः । अथवा प्रस्तारान् 'प्रस्तीर्य' विरचय्याऽऽचार्येणाभ्याख्यानदाता 'अप्रतिपूरयन्' अपरापरप्रत्ययवचनैस्तमर्थं सत्यमकुर्वन् तत्स्थानप्राप्तः कर्तव्य इति शेषः, यत्र प्रायश्चित्तपदे विवदमानोऽवतिष्ठते न पदान्तरमारभते तत् पदं प्रापणीय इति भावः । एष सूत्रार्थः ॥

अथ भाष्यकारो विषमपदव्याख्यामाह-

[भा.६१३०] पत्थारो उ विरचना, सो जोतिस छंद गणित पच्छित्ते ।
पच्छित्तेन तु पगयं, तस्स तु भेदा बहुविगप्पा ॥

वृ- प्रस्तारो नाम विरचना, स्थापना इत्यर्थः । स च चतुर्द्धा-ज्योतिषप्रस्तारः छन्दः प्रस्तारो गणितप्रस्तारः प्रायश्चित्तप्रस्तारश्चेति । अत्र प्रायश्चित्तप्रस्तारेण प्रकृतम् । 'तस्य च' प्रायश्चित्तस्यामी 'बहुविकल्पाः' अनेकप्रकारा भेदा भवन्ति ॥ तद्यथा-

[भा.६१३१] उग्घातमनुग्घाते, मीसे यपसंगि अप्पसंगी य ।
आवज्जण-दानाइं, पडुच्च वत्थुं दुपक्खे वी ॥

वृ-इह प्रायश्चित्तं द्विधा-उद्घातमनुद्घातं च। उद्घातं-लघुकम्, तच्च लघुमासादि। अनुद्घातिकं-गुरुकम्, तच्च गुरुमासादि। तदुभयमपि द्विधा-मिश्रं चशब्दाद् अमिश्रं च। मिश्रं नाम-लघुमासादिकं तपः-कालयोरेकतरेण द्वाभ्यां वा गुरुकम्, गुरुमासादिकं वा तपसा कालेन वा द्वाभ्यां वा लघुकम्। अमिश्रं तु लघुमासादिकं तपः-कालाभ्यां द्वाभ्यामपि लघुकम्, गुरुमासादिकं वा द्वाभ्यामपि गुरुकम्। उभयमपि च तपः-कालविशेषरहितं पुनरपि द्विधा-प्रसङ्गि अप्रसङ्गि च। प्रसङ्गि नाम-यद् अभीक्ष्णप्रतिसेवारूपेण शङ्का-भोजिका-घाटिकादिपरम्परारूपेण वा प्रसङ्गेन युक्तम्, तद्विपरीतमप्रसङ्गि। भूयोऽप्येतदेकैकं द्विधा-आपत्तिप्रायश्चित्तं दानप्रायश्चित्तं च। एतत् सर्वमपि प्रायश्चित्तं 'द्विपक्षेऽपि' श्रमणपक्षे श्रमणीपक्षे च वस्तु प्रतीत्य मन्तव्यम्। वस्तु नाम-आचार्यादीकं प्रवर्तिनीप्रभृतिकं च, ततो यस्य वस्तुनो यत् प्रायश्चित्तं योग्यं तत् तस्य भवतीति भावः। एष प्रायश्चित्तप्रस्तार उच्यते ॥ "सम्मं अपडिपूरेमाणे"त्ति पदं व्याचष्टे-

[भा.६१३२]　जारिसएणऽभिसत्तो, स चाधिकारी न तस्स ठाणस्स।
　　　　सम्मं अपूरयंतो, पत्थंगिरमप्पणो कुणति ॥

वृ- 'याद्दशेन' दर्दुरमारणादिनाऽभ्याख्यानेन 'सः' साधुः 'अभिशप्तः' अभ्याख्यातः स तस्यस्थानस्य 'नाधिकारी' न योग्यः अप्रमत्तत्वात्; अतोऽभ्याख्यानं दत्त्वा सम्यग् 'अप्रतिपूरयन्' अनिर्वाहयन् आत्मनः प्रत्यङ्गिरां करोति, तं दोषमात्मनो लगयतीत्यर्थः ॥ कृता विषमपदव्याख्या भाष्यकृता। सम्प्रति निर्युक्तिविस्तरः-

[भा.६१३३]　छ च्चेव य पत्थारा, पाणवह मुसे अदत्तदाने य।
　　　　अविरति-अपुरिसवाते, दासावातं च वतमाणे ॥

वृ-षडेव प्रस्ताराः भवन्ति तद्यथा-प्राणवधवादं मृषावादवादं अदत्तादानवादमविरतिकावाद-मपरुषवादं दासवादं च वदति इति ॥ तत्र प्राणवधवादे प्रस्तारं तावदभिधित्सुराह-

[भा.६१३४]　ददुर सुणए सप्पे, मूसग पाणातिवादुदाहरणा।
　　　　एतेसिं पत्थारं, वोच्छामि अहाणुपुव्वीए ॥

वृ-प्राणातिपाते एतानि 'उदाहरणानि' निदर्शनानि भवन्ति-दर्दुरः शुनकः सर्पो मूषकश्चेति। 'एतेषाम्' एतद्विषयमित्यर्थः 'प्रस्तारं' प्रायश्चित्तरचनाविशेषं यथानुपूर्व्या वक्ष्यामि ॥

तत्र दर्दुरविषयं तावदाह-

[भा.६१३५]　ओमो चोदिज्जंतो,दुपेहियादीसु संपसारेति।
　　　　अहमवि णं चोदिस्सं, न य लब्भति तारिसं छेड्डं ॥

वृ- 'अवमः' अवमरात्निको रात्निकेन दुःप्रत्युपेक्षितादिषु स्खलितेषु भूयोभूयो नोद्यमानः 'सम्प्रसारयति' मनसि पर्यालोचयति-अहमपि "णं" एनं रात्निकं नोदयिष्यामि। एवं पर्यालोच्य प्रयत्नेन गवेषयन्नपि तादृशं छिद्रं रात्निकस्य न लभते ॥

[भा.६१३६]　अन्नेण घातिए ददुरम्मि दट्ठु चलणं कतं ओमो।
　　　　उद्दवितो एस तुमे, न मि त्ति वितियं पि ते नत्थी ॥

वृ- अन्यदा च भिक्षादिपर्यटने अन्येन केनापि दर्दुरे घातिते रात्निकेन च तस्योपरि 'चलनं' पादः कृतं द्दष्ट्वाऽवमो ब्रवीति-एष दर्दुरस्त्वयाऽपद्रावितः। रात्निको वक्ति-न मयाऽपद्रावितः।

अवमः प्राह-'द्वितीयमपि'मृषावादव्रतं 'ते' तव नास्ति ।। एवंभणतस्तस्येयं प्रायश्चित्तरचना-

[भा.६१३७] वच्चति भणाति आलोय निकाए पुच्छिते निसिद्धे य ।
साहु गिहि मिलिय सव्वे, पत्थारो जाव वयमाणे ।।

[भा.६१३८] मासो लहुओ गुरुओ, चउरो लहुगा य होंति गुरुगा य ।
छम्मासा लहु-गुरुगा, छेदो मूलं तह दुगं च ।।

वृ- स एवमुक्त्वा ततो निवृत्त्याऽऽचार्यसकाशं व्रजति मासलघु । आगत्य भणति यथा-तेन दर्दुरो मारितः, एवंभणतो मासगुरु । योऽसावभ्याख्यातः स गुरूणां सकाशमागतः, आचार्यैश्चोक्तम्- "आलोय"त्ति आर्य ! सम्यगालोचय, किं सत्यं भवता दर्दुरो मारितः ?; स प्राह-न मारयामि, एवमुक्तेऽभ्याख्यानदातुश्चतुर्लघु । "निकाए"त्ति इतरो निकाचयति रात्निकस्तु भूयोऽपि तावदेव भणति तदा चतुर्गुरु । अवमरात्निको भणति-यदि न प्रत्ययस्ततस्तत्र गृहस्थाः सन्ति ते पृच्छयन्ताम्, ततो वृषभा गत्वा पृच्छन्ति, पृष्टे च सति षड्लघु । गृहस्थाः पृष्टाः सन्तः "निसिद्धं" निषेधं कुर्वन्ति- नास्माभिर्दर्दुरव्यपरोपणं कुर्वन् दृष्ट इति षड्गुरु । "साहु"त्ति ते साधवः समता आलोचयन्ति नापद्रावित इति तदा छेदः । "गिहि"त्ति अथासावभ्याख्यानदाता भणति-'गृहस्थाः' असंयता यत् प्रतिभासते तद् अलीकं सत्यं वा ब्रुवते, एवंभणतो मूलम् । अथासौ भणति-"मिलिय"त्ति गृहस्थाश्च यूयं चैकत्र मिलिता अहं पुनरेक इतिब्रुवतोऽनवस्थाप्यम् । सर्वेऽपि यूयं प्रवचनस्य बाह्या इतिभणतः पाराञ्चिकम् । एवमुत्तरोत्तरं वदतः पाराञ्चिकं यावत् प्रायश्चित्तप्रस्तारो भवति ।।

अथेदमेव भावयति-

[भा.६१३९] किं आगओ सि नाहं अडामि पाणवहकारिणा सद्धिं ।
सम्मं आलोय त्ति य, जा तिन्नि तमेव वियडेति ।।

वृ- रात्निकं विना स एकाकी समायातो गुरुभिरुक्तः-किमेकाकी त्वमागतोऽसि ? । स प्राह- नाहं प्राणवधकारिणा सार्द्धमटामि । एवमुक्ते रात्निक आगतो गुरुभिरुक्तः-सम्यगालोचय, कोऽपि प्राणी त्वया व्यपरोपितः ? न वा ? इति । स प्राह-न व्यपरोपितः । एवं त्रीन् वारान् यावदालोचाप्यते । यदि त्रिष्वपि वारेषु तदेव 'विकटयति' आलोचयति तदा परिस्फुटमेव कथ्यते।

[भा.६१४०] तुमए किर दद्दुरओ, हओ ति सो वि य भणाति न मए त्ति ।
तेन परं तु पसंगो, धावति एक्के व बितिए वा ।।

वृ- किल इति द्वितीयस्य साधोर्मुखादस्माभिः श्रुतम्-त्वया दर्दुरः 'हतः' विनाशितः । स प्राह- न मया हत इति । 'ततः परम्' एवंभणनानन्तरं 'प्रसङ्गः' प्रायश्चित्तवृद्धिरूपः 'एकस्मिन्' रात्निके 'द्वितीये वा' अवमरात्निके धावति । किमुक्तं भवति ?-यदि तेन रात्निकेन सत्यनैव दर्दुरो व्यपरोपितः ततो यदि 'सम्यगालोचय' इतिभण्यमानो भूयो भूयो निह्नुते तदा तस्य प्रायश्चित्तवृद्धिः । अथ तेन न व्यपरोपितः ततः 'इतरस्य' अभ्याख्यानं निकाचयतः प्रायश्चित्तं वर्द्धते ।।

इदमेव भावयति-

[भा.६१४१] एक्कस्स मुसावादो, काउं निण्हाइणो दुवे दोसा ।
तत्थ वि य अप्पसंगी, भवति य एक्को व एक्को वा ।।

वृ- 'एकस्य' अभ्याख्यानदातुरेक एव मृषावादलक्षणो दोषः । यस्तु दर्दुरवधं कृत्वा निह्नुते

तस्य द्वौ दोषौ-एकः प्राणातिपातदोषो द्वितीयो मृषावाददोष इति । 'तत्रापि च' अभ्याख्याने प्राणातिपाते वा कृतेऽपि 'एको वा' अवमरात्निकः 'एको वा' रात्निको यदि अप्रसङ्गी भवति तदा न प्रायश्चित्तवृद्धिः । किमुक्तं भवति ? -यदि अवमरात्निकोऽभ्याख्यानं दत्त्वा न निकाचयति यो ऽभ्याख्यातः सोऽपि न रुष्यति तदा न प्रायश्चित्तवृद्धिः । अथाभ्याख्याता भूयो भूयः समर्थयति इतरोऽपि भूयो भूयो रुष्यति तदा प्रायश्चित्तवृद्धि । एवं दर्दुरविषयः प्रस्तारो भावितः । शुनक-सर्प-मूषकविषया अपि प्रस्तारा एवमेव भावनीयाः ॥

गतः प्राणातिपातप्रस्तारः । सम्प्रति मृषावादा-ऽदत्तादानयोः प्रस्तारमाह-

[भा.६१४२] मोसम्मि संडीए, मोयगगहणं अदत्तदानम्मि ।
आरोवणपत्थारो, तं चेव इमं तु नाणत्तं ॥

वृ- मृषावादे सङ्खडीविषयं निदर्शनम् । अदत्तादाने मोदकग्रहणम् । एतयोर्द्वयोरप्यारोपणायाः प्रायश्चित्तस्य प्रस्तारः स एव मन्तव्यः । इदं तु 'नानात्वं' विशेषः ॥

[भा.६१४३] दीन-कलुणेहि जायति, पडिसिद्धो विसति एसणं हणति ।
जंपति मुहप्पियाणि य, जोग-तिगिच्छा-निमित्ताइं ॥

वृ- कस्यामपि सङ्खड्यामकालत्वात् प्रतिषिद्धौ साधू अन्यत्र गतौ, ततो मुहूर्तान्तरे रत्नाधिकेनोक्तम्-व्रजामः सङ्खड्याम्, इदानीं भोजनकालः सम्भाव्यते । अवमो भणति-प्रतिषिद्धोऽहं न व्रजामि । ततोऽसौ निवृत्त्याऽऽचार्यायेदमालोचयति, यथा-अयं दीन-करुणवचनैर्याचते, प्रतिषिद्धोऽपि च प्रविशति, एषणां च 'हन्ति' प्रेरयति, अथवा एष गृहं प्रविष्टो मुखप्रियाणि योग-चिकित्सा-निमित्तानि जल्पति । एवंविधमृषावादवादं वदतः प्रायश्चित्तप्रस्तारो भवति ॥

[भा.६१४४] वच्चइ भणाइ आलोय निकाए पुच्छिए निसिद्धे य ।
साहु गिहि मिलियसव्वे, पत्थारो जाव वदमाणे ॥

[भा.६१४५] मासो लहुओ गुरुओ, चउरो लहुगा य होंति गुरुगा य ।
छम्मासा लहु-गुरुगा, छेदो मूलं तह दुगं च ॥

गाथाद्वयमपि गतार्थम् ।। अथादत्तादाने मोदकग्रहणदृष्टान्तं भावयति-

[भा.६१४६] जा फुसति भाणमेगो, बितिओ अन्नत्थ लड्डुते ताव ।
लद्धूण नीति इयरो, ते दिस्स इमं कुणति कोई ॥

वृ- एकत्र गेहे भिक्षा लब्धा, सा चावमेन गृहीता । यावद् असौ 'एकः' अवमरात्निको भाजनं 'स्पृशति' सम्मार्ष्टि तावद् 'द्वितीयः' रत्नाधिकः 'अन्यत्र' सङ्खड्यां लड्डुका लब्धवान्, लब्ध्वा च निर्गच्छति । 'इतरः पुनः' अवमः 'तान्' मोदकान् दृष्ट्वा कश्चिदीर्ष्यालुरिदं करोति ॥

किम् ? इत्यत आह-

[भा.६१४७] वच्चइ भणाइ आलोय निकाए पुच्छिए निसिद्धे य ।
साहु गिहि मिलिय सव्वे, पत्थारो जाव वयमाणे ॥

[भा.६१४८] मासो लहुओ गुरुओ, चउरो लहुगा य होंति गुरुगा य ।
छम्मासा लहु-गुरुगा, छेदो मूलं तह दुगं च ॥

वृ- "वच्चइ" त्ति स निवृत्त्य गुरुसकाशं व्रजति । आगम्य च भणति आलोचयति-रत्नाधिकेनादत्ता

मोदका गृहीता इति। शेषं प्राग्वत्॥ अथाविरतिकावादे प्रस्तारमाह-

[भा.६१४९] रातिनितवाइतेनं, खलिय-मिलिय-पेल्लणाए उदएणं।
देउल मेहुणम्मि, अब्भक्खाणं कुडंगे वा॥

वृ- कश्चिदवमरात्निको रत्नाधिकेनाभीक्ष्णं शिष्यमाणश्चिन्तयति-एषः 'रत्नाधिकवातेन' 'रत्नाधिकोऽहम्' इति गर्वेण मां दशविधचक्रवालसामाचार्यामस्खलितमपि कषायोदयेन तर्जयति, यथा-हे दुष्टशैक्षक! स्खलितोऽसीति। तथा मां निम्नतरमपि पदं पदेन विच्छिन्नं सूत्रमुच्चारयन्तं 'हा दुष्टशैक्ष! किमिति मिलितमुच्चारयसि?' इति तर्जयति। तथा "पेल्लण"त्ति अन्यैः साधुभिर्वार्यमाणोऽपि कषायोदयतो मां हस्तेन प्रेरयति। अथवैषा सामाचारी- रत्नाधिकस्य सर्वं क्षन्तव्यमिति, ततस्तथा करोमि यथा एष मम लघुको भवन्ति। ततोऽन्यदा द्वावपि भिक्षाचर्यायै गतौ, तौ च तृषितौ बुभुक्षितौ चेत्येवं चिचिन्तवन्तौ-अस्मिन् आयदेवकुले 'कुडङ्गे वा' वृक्षविषमे प्रथमालिकां कृत्वा पानीयं पास्याम इति; एवं चिन्तयित्वा तौ तदभिमुखं प्रस्थितौ। अत्रान्तरेऽवमरत्नाधिकः परिव्राजिकामेकां तदभिमुखमागच्छन्तीं दृष्ट्वा स्थितः, 'लब्ध एष इदानीम्' इति चिन्तयित्वा तं रत्नाधिकं वदति-अहो ज्येष्ठार्य! कुरु त्वं प्रथमालिकां पानीयं वा, अहं पुनः संज्ञां व्युत्स्रक्ष्यामि॥ एवमुक्त्वा त्वरितं वसतावागत्य मैथुनेऽभ्याख्यानं दातुं यथा आलोचयति तथा दर्शयति-

[भा.६१५०] जेट्ठज्जेण अकज्जं, सज्जं अज्जाघरे कयं अज्जं।
उवजीवितो य भंते!, मए वि संसट्ठकप्पोऽत्थ॥

वृ- ज्येष्ठार्येणाद्य 'सद्यः' इदानीमार्यागृहे कृतं 'अकार्यं' मैथुनसेवालक्षणम्, ततो भदन्त! तत्संसर्गतो मयाऽपि 'संसृष्टकल्पः' मैथुनप्रतिसेवा 'अत्र' अस्मिन् प्रस्तावे उपजीवितः॥

अत्राप्ययं प्रायश्चित्तप्रस्तारः-

[भा.६१५१] वच्चति भणाति आलोय निकाए पुच्छिए निसिद्धे य।
साहु गिहि मिलिय सव्वे, पत्थारो जाव वयमाणे॥

[भा.६१५२] मासो लहुओ गुरुओ, चउरो लहुगा य होंति गुरुगा य।
छम्मासा लहु-गुरुगा, छेदो मूलं तह दुगं च॥

वृ- अवमरात्निको निवृत्त्य गुरुसकाशं व्रजति लघुमासः। आगम्य च गुरून् भणति- ज्येष्ठार्येण मया चाकृत्यमासेवितम्, अतो मम तावद् महाव्रतान्यारोपयत; एवं रत्नाधिकस्य लघूभवनाभिप्रायेण भणतो गुरुमासः। रत्नाधिक आगतः सूरिणा भणितः-किं त्वया संसृष्टकल्प आसेवितः? स प्राह-नासेवितः, ततश्चतुर्लघु। इतरो निकाचयति चतुर्गुरु इत्यादा प्राग्वद् द्रष्टव्यम्॥

गतोऽवितरिकावादः। अथापुरुषवादमाह-

[भा.६१५३] तइओ त्ति कधं जाणसि, दिट्ठा नीयो से तेहिं भी वुत्तो।
वट्टति ततिओ तुब्भं, पव्वावेतुं मम वि संका॥

वृ- कोऽपि साधुस्तथैव छिद्रान्वेषी भिक्षातो निवृत्य रत्नाधिकमुद्दिश्याऽऽचार्यं भणति- एष साधुः 'तृतीयः' त्रैराशिकः। आचार्य प्राह-कथं जानासि? । स प्राह-मयैतस्य निजका दृष्टाः तैरहमुक्तः-वर्तते युष्माकं तृतीयः प्रव्राजयितुम्?; ततो ममापि हृदये शङ्का जाता॥ अपि च-

[भा.६१५४] दीसति य पाडिरूवं, ठित-चंकम्मित-सरीर-भासाहिं।
बहुसो अपुरिसवयणे, सवित्थराऽऽरोवणं कुज्ञा ॥

वृ-अस्य साधोः 'प्रतिरूपं' नपुंसकानुरूपं रूपं स्थित-चङ्कमित-शरीर-भाषादिभिर्लक्षणैर्दृश्यते। एवं बहुशः 'अपुरुषवचने' नपुंसकवादे वर्तमानस्य सविस्तरामारोपणां कुर्यात् ॥ तद्यथा-

[भा.६१५५] वच्चति ममाति आलोय निकाए पुच्छिए निसिद्धे य।
साहु गिहि मिलिय सव्वे, पत्थारो जाव वयमाणे ॥

[भा.६१५६] मासोलहुओ गुरुओ, चउरो लहुगा य होंति गुरुगा य।
छम्मासा लहु गुरुग, छेदो मूलं तह दुगं च ॥

वृ-स निवृत्य एकाकी प्रतिश्रयं व्रजति लघुमासः। आगतो गुरून् भणति-एष साधुस्त्राशिक एतदीयसज्ञातकैरुक्तः, अत्र गुरुमासः। शेषं प्राग्वत् ॥ अथ दासवादमाह-

[भा.६१५७] खरओ त्ति कहं जाणसि, देहायारा कहिंति से हंदी!।
छिक्कोवण उब्भंडो, नीयासी दारुणसभावो ॥

वृ-कोऽपि साधुस्तथैव रत्नाधिकमुद्दिश्याचार्यं भणति-अयं साधुः 'खरकः' दास इति। आचार्य आह-कथं जानासि? । इतरः प्राह-एतदीयनिजकैर्मम कथितम्। तथा 'देहाकाराः' कुब्जतादयः "से" तस्य "हंदी" इत्युपप्रदर्शने दासत्वं कथयन्ति। तथा "छिक्कोवण" त्ति शीघ्रकोपनोऽयम्, "उब्भंडो नाम" असंवृतपरिधानादि, 'नीचासी' नीचतरे आसने उपवेशनशीलः, दारुणस्वभाव इति प्रकटार्थम् ॥ अथ "देहाकार" त्ति पदं व्याख्याति-

[भा.६१५८] देहेन वा विरूवो, खुज्ञो वडभो य बाहिरप्पादो।
फुडमेव से आयारा, कहिंति जह एस खरओ त्ति ॥

वृ-स प्राह-देहेनाप्ययं विरूपः, तद्यथा-कुब्जो वडभो बाह्यपादो वा। एवमादयस्तस्याऽऽकाराः स्फुटमेव कथयन्ति, यथा-एषः 'खरकः' दास इति ॥ अथाऽऽचार्य प्राह-

[भा.६१५९] केइ सुरूव दुरूवा, खुज्ञा वडभा य बाहिरप्पाया।
न हु ते परिभवियव्वा, वयणं व अनारियं वोत्तुं ॥

वृ-इह नामकर्मोदयवैचित्र्यतः 'केचिद्' नीचकुलोत्पन्ना अपि दासादयः सुरूपा भवन्ति, 'केचित् तु' राजकुलोत्पन्ना अपि दूरूपाः भवन्ति, तथा कुब्जा वडभा बाह्यपादा अपि भवन्ति, अतः 'नहि' नैव ते परिभवितव्याः 'अनार्यं वा वचनं' 'दासोऽयम्' इत्यादिकं वक्तुं योग्याः ॥

अत्रापि प्रायश्चित्तप्रस्तारः-

[भा.६१६०] वच्चति भणाति आलोय निकाए पुच्छिए निसिद्धे य।
साहु गिहि मिलिय सव्वे, पत्थारो जाव वयमाणे ॥

[भा.६१६१] मासो लहुओ गुरुओ, चउरो लहुगा य होंति गुरुगा य।
छम्मासा लहु गुरुगा, छेदो मूलं तहदुगं च ॥

वृ-व्याख्या प्राग्वत् ॥ गतो दासवादः। अथ द्वितीयपदमाह-

[भा.६१६२] विइयपयमणाभोगे, सहसा वोत्तूण वा समाउट्टे।
जाणंतो वा वि पुनो, विर्द्धिघणट्ठा वदेज्ञा वि ॥

वृ- द्वितीयपदे अनाभोगेन सहसा वा प्राणवधादिविषयं वादमुक्त्वा भूयः 'समावरतेत' प्रत्यावर्तेत, मिथ्यादुष्कृतमपुनः करणेन दद्यादित्यर्थः । अथवा जानन्नपि, पुनःशब्दो विशेषणे, स चैतद् विशिनष्टि-योऽयोग्यः शैक्षः । प्रव्राजितस्तस्यविवेचनार्थं प्राणातिपातादिवादमपि वदेद् येनासावुद्वेजितो गणाद् निर्गच्छति ॥

*मू. (१९८) निग्गंथस्स य अहेपादंसि खाणू वा कंटए वा हीरए वा सक्करे वा परियावज्जेज्जा, तं च निग्गंथे नो संचाइज्जा नीहरित्तए वा विसोहित्तए वा, तं निग्गंथी नीहरमाणी वा विसोहेमाणी वा नाइक्कमइ ॥*

*मू. (१९९) निग्गंथस्स य अच्छिंसि पाणे वा बीए वा रए वा परियावज्जेज्जा, तं च निग्गंथे नो संचाइज्जा नीहरित्तए वा विसोहित्तए वा, तं निग्गंथी नीहरमाणी वा विसोहेमाणी वा नाइक्कमइ ॥*

*मू. (२००) निग्गंथीए अहेपादंसि खाणू वा कंटए वा हीरए वा सक्करे वा परियावज्जेज्जा, तं च निग्गंथी नो संचाइज्जा नीहरित्तए वा विसोहित्तए वा, तं च निग्गंथे नीहरमाणे वा विसोहेमाणे वा नाइक्कमइ ॥*

*मू. (२०१) निग्गंथीए अच्छिंसि पाने वा बीए वा रए वा जाव निग्गंथे नीहरमाणे वा विसोहेमाणे वा नाइक्कमइ ॥*

वृ- अस्य सूत्रचतुष्टयस्य सम्बन्धमाह-

[भा.६१६३] पायं गता अकप्पा, इदानि वा कप्पिता इमे सुत्ता ।
आरोवणा गुरु त्ति य, तेन तु अन्नोन्न समणुन्ना ॥

वृ- 'प्रायः' प्रायेण 'अकल्पिकानि' 'नो कल्पन्ते' इति निषेधप्रतिपादकानि सूत्राणि इहाध्ययने गतानि । 'इदानीम्' इत ऊर्द्धवमिमानि कल्पिकसूत्राणि भण्यते । 'वा' विभाषायाम्, सूत्रेणानुज्ञायार्थतः प्रतिषेधः क्रियते, एवं वैकल्पिकान्यनुज्ञासूत्राणीत्यर्थः । अथ किमर्थमत्र सूत्र एवानुज्ञा कृता ? इत्याह-"आरोवणा" इत्यादि । यदि कारणे निर्ग्रन्थस्यन निर्ग्रन्थी निर्ग्रन्थ्या वा निर्ग्रन्थः कण्डकादिकं न नीहरति तदा चतुर्गुरु । एवमारोपणा 'गुरुका' महती तेन कारणेन 'अन्योन्यं' परस्परं समनुज्ञा सूत्रेषु कृता ॥

आह-यदि सूत्रेणानुज्ञातं ततः किमर्थमर्थतः प्रतिषिध्यते? इति अत आह-

[भा.६१६४] जह चेव य पडिसेहे, होंति अनुन्ना तु सव्वसुत्तेसु ।
तह चेव अनुन्नाए, पडिसेहो अत्थतो पुव्वं ॥

वृ- यथैव कण्ठतः सूत्रपदैः प्रतिषेधे कृते सर्वसूत्रेष्वप्यर्थतोऽनुज्ञा भवति तथैव येषु सूत्रेषु साक्षात् 'अनुज्ञातम्' अनुज्ञा कृता तेषु पूर्वमर्थतः प्रतिषेधस्ततोऽनुज्ञा क्रियते ॥

अथवा प्रकारान्तरेण सम्बन्धः, तमेवाह-

[भा.६१६५] तट्ठाणं वा वुत्तं, निग्गंथो वाजता तु न तरेज्जा ।
सो जं कुणति दुहट्टो, तदा तु तट्ठाणमावज्जे ॥

वृ- अथवा 'तत्स्थानं' तस्य-प्राणातिपातादिकर्तु स्थानं-प्रायश्चित्तं सम्यगप्रतिपूरयतोऽभ्याख्यानदातुर्भवति इत्युक्तम् । अत्रापि निर्ग्रन्थः कण्टकादिकं यदा उद्धर्तुं 'न तरेत्' न शक्नुयात् तदा यदि निर्ग्रन्थी तस्य कण्टकादिनीहरणं न करोति तदा स निर्ग्रन्थः 'दुःखार्त' पीडितो यद्

आत्मविराधनां संयमविराधनां वा करोति 'तत्स्थानं' तन्निष्पन्नं प्रायश्चित्तं सा निर्ग्रन्थी आपद्यते। अत इदं सूत्रमारभ्यते ।। अनेन सम्बन्धेनायातस्यास्य व्याख्या-निर्ग्रन्थस्य 'अधःपादे' पादतले स्थाणुर्वा कण्टको वा हीरो वा शर्करा वा 'पर्यापतेत्' अनुप्रविशेत्, 'तच्च' कण्टकादिकं निर्ग्रन्थो न शक्नुयात् 'नीहर्तुं वा' निष्काशयितुं वा 'विशोधयितुं वा' निशेषमपनेतुम्, तद् निर्ग्रन्थी नीहरन्ती वा विशोधयन्ती वा नातिक्रामति, आज्ञामिति गम्यते इति प्रथमसूत्रम् ।।

द्वितीयसूत्रे-निर्ग्रन्थस्य 'अक्षिण' लोचने 'प्राणा वा' मशकादयः सूक्ष्माः 'बीजानि वा' सूक्ष्माणि श्यामाकादीनि 'रजो वा' सचित्तमचित्तं वा पृथिवीरजः 'पर्यापतेत्' प्रविशेत्, 'तच्च' प्राणादिकं निर्ग्रन्थो न शक्नुयान्नीहर्तुमित्यादि प्राग्वत् ।। तृतीय-चतुर्थसूत्रे निर्ग्रन्थीविषये एवमेव व्याख्यातव्ये। इति सूत्रचतुष्टयार्थः ।। अथ निर्युक्तिविस्तरः-

[भा.६१६६] पाए अच्छि विलग्गे, समणाणं संजएहिं कायव्वं ।
समणीणं समणीहिं, वोच्चत्थे होंति चउगुरुगा ।।

वृ- पादे अक्षिण वा विलग्ने कण्टक-कणुकादौ श्रमणानां संयतैर्नीहरणं कर्तव्यम्, श्रमणीनां पुनः श्रमणीभिः कार्यम् । अथ व्यत्यासेन कुर्वन्ति तदा चतुर्गुरवः ।। एते चापरे दोषाः-

[भा.६१६७] अन्नत्तो च्चिय कुंटसि, अन्नत्तो कंटओ खतं जातं ।
दिट्ठं पि हरति दिट्ठिं, किं पुन अदिट्ठ इतरस्स ।।

वृ- संयतः संयत्याः पार्श्वात् कण्टकमाकर्षयन् कैतवेन यथाभावेन वा अपावृत उपविशेत् ततः सातं तथास्थितं पश्यन्ती कणटकस्थानादन्यत्रान्यत्र शल्योद्धरणादिना कुण्टयेत्, खन्यादित्यर्थः। ततः साधुर्ब्रूयात्-अन्यत एव त्वं कुण्टयसि कण्टकश्चान्यत्र समस्ति एवं मे क्षतं सञ्जातम् । सा प्राह-'इतरस्य' पुरुषस्य सम्बन्दि सागारिं दृष्टमपि भुक्तभोगिन्याः त्वया अनेकशो विलकितमपि दृष्टिं हरति किं पुनरदृष्टमभुक्तभोगिन्याः ?, तस्याः सुतरां दृष्टिं हरतीत्यर्थः । एवं भिन्नकथायां प्रतिगमनादयो दोषाः ।। यदा तु निर्ग्रन्थो निर्ग्रन्थ्याः कण्टकमुद्धरति तदाऽयं दोषः-

[भा.६१६८] कंटग-कणुए उद्धर, धणितं अवलंब मे भमति भूमी ।
सूलं च वत्थसीसे, पेल्लेहि घनं थणो फुरति ।।

वृ- काचिदार्यिका कैतवेनेदं ब्रूयात्-'कण्टक-कणुके' पादे कण्टकं चक्षुषि च कणुकमुद्धर, 'धनियं' अत्यर्थं मामवलम्बस्व, यतो मम भ्रमिवशेन भूमिर्भ्रमति। शूलं वा बस्तिशीर्षेमम समायाति तेन स्तनः स्फुरति, अतो घनं प्रेरय । एवं भिन्नकथायां सद्यश्चारित्रविनाशः ।।

[भा.६१६९] एए चेव य दोसा, कहिया थीवेद आदिसुत्तेसु ।
अयपाल-जंबु-सीउण्हपाडणं लोगिगी रोहा ।।

वृ- 'एत एव' अनन्तरोक्ता दोषाः स्त्रीवेदविषयाः 'आदिसूत्रेषु' सूत्रकृताङ्गान्तर्गतस्त्र-परिज्ञाध्ययनादिषु सविस्तरं कथिताः । अत्र चाजापालक-शीतोष्ण-जम्बूपातनोपलक्षिता लौकिकी रोहायाः कथा । तद्यथा- रोहा नामं परिव्वाइया । ताए अयावालगो दिट्ठो । सो ताए अभिरुईओ। तीए चिंतियं-विन्नाणं से परिक्खामि । सो य तया जंबूतरुवरारूढो । तीए फलाणि पणईओ । तेन भन्नई-किं उण्हाणि देमि ? उयाहु सीयलाणि ? त्ति । तीए भन्नइ उण्हाणि । तओ तेन धूलीए उवरिं पाडियाणि, भणिया-खाहि त्ति । तीए फूमिउं धूलिं अवनेउं खइयाणि । पच्छा सा भणइ-कहं

भणसि उण्हाणि ? । तेन भन्नइ-जं उण्हयं होइ तं फूमिउं सीयलीकज्जइ । सा तुट्ठा । पच्छा भणति माइट्ठाणेणं-कंटओ मे लग्गो त्ति । सो उद्धरिउमारद्धो । तीए सणियंसणियं हसियं । सो वि तुसिणीओ कंटगं पुलोएत्ता भणइ-न दीसइ कंटगो त्ति । तीए तस्स पण्ही दिन्ना । एवं सो कइयवकंटउद्धुरणेणं तीए खलीकओ । एवं साहुणो वि एवंविहा दोसा उप्पज्जंति ।। किञ्च-

[भा.६१७०] मिच्छत्ते उड्डाहो, विराधना फास भावसंबंधो ।
पडिगमनादी दोसा, भुत्तमभुत्ते य नेयव्वा ।।

वृ- मिथ्यात्वं नाम-निर्ग्रन्थ्याः कण्टकमुद्धरन्तं संयतं दृष्ट्वा लोको ब्रूयात्-यथा वादिनस्तथा कारिणोऽमी न भवन्ति । उड्डाहो वा भवेत्-अहो ! यद् एवमियं पादे गृहीता तद् नूनमन्यदाऽप्यनयोः साङ्गत्यं भविष्यति । विराधना वा संयमस्य भवति, कथम् ? इत्याह- 'स्पर्शतः' शरीरसंस्पर्शेनोभयोरपि भावसम्बन्धो भवति । तथा भुक्तभोगिनोऽभुक्तभोगिनो वा प्रतिगमनादयो दोषा ज्ञातव्याः। अथ मिथ्यात्वपदं भावयति-

[भा.६१७१] दिट्ठे संका भोइय, घाडिग नाती य गामबहिया य ।
चत्तारि छ च्च लहु गुरु, छेदो मूलं तह दुगं च ।।

वृ- तस्याः कण्टकमुद्धरन् केनचिद् दृष्टः, तस्य च 'शङ्का' 'किं मन्ये मैथुनार्थम् ?' इतिलक्षणा यदि भवेत् तदा चतुर्लघु । भोजिकायाः कथने चतुर्गुरु । घाटितनिवेदने षड्लघु । ज्ञातिज्ञापने षड्गुरु । ग्रामाद् बहि कथने च्छेदः ।।

[भा.६१७२] आरक्खियपुरिसणं, तु साहणे पावती भवे मूलं ।
अनवट्ठो सेट्ठीणं, दसमं च निवस्स कथितम्मि ।।

वृ- मूलादित्रयं पुनरित्थं मन्तव्यम्- आरक्षिकपुरुषाणां कथने मूलं प्राप्नोति । श्रेष्ठिनः कथितेऽनवस्थाप्यं भवेत् । नृपस्य कथने 'दशमं' पाराञ्चिकम् । एते संयतानां संयतीनां च परस्परं कण्टकोद्धरणे दोषा उक्ताः ।।

[भा.६१७३] एए चेव य दोसा, अस्संजतिकाहि पच्छकम्मं च ।
गिहिएहि पच्छकम्मं, तम्हा समणेहि कायव्वं ।।

वृ- एत एव दोषा असंयतिकाभि कण्टकोद्धरणं कारयतो मन्तव्याः, 'पश्चात्कर्म च अप्कायेन हस्तप्रक्षालनरूपं तासु भवति । गृहिभिस्तु कारयतः पश्चात्कर्म भवति न पूर्वोक्ता दोषाः । अतः श्रमणैः श्रमणानां कण्टकोद्धरणं कर्तव्यम् ।। अत्र परः प्राह-

[भा.६१७४] एवंसुत्तं अफलं, सुत्तनिवातो तु असति समणाणं ।
गिहि अन्नतित्थि गिहिणी, परउत्थिगिणी तिविह भेदो ।।

वृ- यदि संयतीभिः न कारयितव्यं तत एवं सूत्रमफलं प्राप्नोति । सूरिराह-सूत्रनिपातः श्रमणानामभावे मन्तव्यः । तत्र च प्रथमं गृहिभि कण्टकोद्धरणं कारणीयम्, तदभावेऽन्यतीर्थिकैः, तदप्राप्तौ गृहस्थाभिः, तदसम्भवे परतीर्थिकीभिरपि कारयितव्यम् । एषु च प्रत्येकं त्रिविधो भेदः। तद्यथा गृहस्थस्त्रिविधः-पश्चात्कृतः श्रावको यथाभद्रकश्च । एवं परतीर्थिकोऽपि त्रिधा मन्तव्यः। गृहस्था परतीर्थिकी च त्रिविधा-स्थविरा मध्यमा तरुणी चेति । तत्र गृहस्थेन कारयन् प्रथमं पश्चात्कृतेन, ततः श्रावकेण, ततो यथाभद्रकेणापि कारयति । स च कण्टकाकर्षणानन्तरं

प्रज्ञापनीयः-मा हस्तप्रक्षालनं कार्षी । एवमुक्ते यद्यसावशौचवादी तदा हस्तं हस्तेनैव प्रोञ्छति प्रस्फोटयति वा ॥ अथ शौचवादी ततः-

[भा.६१७५] जइ सीसम्मि न पुंछति, तनु पोत्तेसु व न वा वि पप्फोडे ।
तो सि अन्नेसि असति, दवं दलंति मा वोदगं घाते ॥

वृ- यदि हस्तं शीर्षे वा तनौ वा 'पोतेषु वा' वस्त्रेषु न प्रोञ्छति न वा प्रस्फोटयति 'गृहे गतो हस्तं प्रक्षालयिष्यामि' इति कृत्वा, ततः ''से'' तस्य अन्येषाम् 'असति' अभावे प्राशुकमात्मीयं द्रवं हस्तधावनाय ददति, मा 'उदकम्' अप्कायं घातयेदिति कृत्वा । गृहस्थानामभावे परतीर्थिकेनापि कारयन् एवमेव पश्चात्कृतादिक्रमेण कारयेत् । तेषामभावे गृहस्थाभिरपि कारयेत् ॥

कथम् ? इत्याह-

[भा.६१७६] माया भगिनि धूया, अज्जिय नत्तीय सेस तिविधाओ ।
आगाढे कारणम्मि, कुसलेहिँ दोहि कायव्वं ॥

वृ- या तस्य निर्ग्रन्थ माता भगिनी दुहिता वा 'अर्यिका वा' पितामही 'नप्त का वा' पौत्री तया कारितव्यम् । एतासामभावे याः 'शेषाः' अनालब्धाः स्त्रयस्ताभिरपि कारयेत् । ताश्च त्रिविधाः- स्थविरा मध्यमास्तरुण्यश्च । तत्र प्रथमं स्थविरया, ततो मध्यमया, ततस्तरुण्याऽपि कारयितव्यम् । आगाढे कारणे कुशलाभ्यां द्वाभ्यामपि कण्टकोद्धरणं कर्तव्यम्, कारयितव्यमित्यर्थः ॥

के पुनस्ते द्वे ? इत्याह-

[भा.६१७७] गिहि अन्नतित्थि पुरिसा, इत्थी वि य गिहिणि अन्नतित्थीया ।
संबंधि एतरा वा, वइणी एमेव दो एते ॥

वृ-गृहस्थपुरुषोऽन्यतीर्थिकपुरुषश्चेति द्वयम्, गृहस्थी अन्यतीर्थिकी चेति वा द्वयम्, सम्बन्धिनी 'इतरा वा' असम्बन्धिनी व्रतिनी एवं वा द्वयम् । एतेषां द्विकानामन्यतरेण कुशलेन आगाढे कारणे कारयितव्यम् ॥ आह-'श्रमणानामभावे सूत्रनिपातो भवति' इत्युक्तम्, कदा पुनरसौ साधूनामभावो भवति ? इत्याह-

[भा.६१७८] तं पुन सुन्नारन्ने, दुट्ठारन्ने व अकुसलेहिँ वा ।
कुसले वा दुरत्थे, न चएइ पदं पि गंतुं जे ॥

वृ- 'साधवो न भवन्ति' इति यदुक्तं तत् पुनरित्थं सम्भवति-'शून्यारण्यं' ग्रामादिभिर्विरहिता अटवी, 'दुष्टारण्यं वा' व्याघ्र-सिंहादिभयाकुलम्, एतयोः साधूनामभावो भवेत् । उपलक्षणत्वाद् अशिवादिभिः कारणैरेकाकी सञ्जात इत्यपि गृह्यते । एषा साधूनामसदसत्ता । सदसत्ता तु सन्ति साधवः परमकुशलाः-कण्टकोद्धरणेऽदक्षाः, अथवा यः कुशलः सः 'दूरस्थः' दूरे वर्तते, स च कण्टकविद्धपादः पदमपि गन्तुं न शक्नोति ततः पूर्वोक्ता यतना कर्तव्या ॥

अथ सामान्येन यतनामाह-

[भा.६१७९] परपक्ख पुरिस गिहिणी, असोय-कुसलाण मोत्तु पडिवक्खे ।
पुरिस जयंत मणुन्ने, होंति सपक्खेतरा वा तू ॥

वृ- इह प्रथमं पश्चार्द्धं व्याख्याय ततः पूर्वार्द्धं व्याख्यास्यते । ये 'यतमानाः' संविग्नाः साम्भोगिकाः पुरुषास्तैः प्रथमं कारयेत्, तदभावे अमनोज्ञैः-असाम्भोगिकैः, तदभावे ये इतरे-पार्श्वस्थादयस्तैर्वा

कारयेत् । एषा स्वपक्षे यतना भणिता । अथैष स्वपक्षो न प्राप्यते ततः "परपक्खे"त्यादि पूर्वार्द्धम्- 'परपक्षे' गृहस्था-ऽन्यतीर्थिकरूपे प्रथमं पुरुषैः, ततः 'गेहिनीभिः' स्त्रीभिरपि कारयेत्, तत्राप्यशौचवादिभि कुशलैश्च कारापणयम् । अत एवाह-अशौचवादि-कुशलानां 'प्रतिपक्षाः' ये शौचवादिनोऽकुशलाश्च तान् मुक्त्वा कारयितव्यम् । अथैतेऽपि न प्राप्यन्ते तदा संयतीभिरपि कारयेत्, तत्रापि प्रथमं मातृभगिन्यादिभिर्नालब्धाभि, तदभावेऽसम्बन्धिनीभिरि स्थविरा-मध्यमा-तरुणीभिर्यथाक्रमं कारयेत् ॥ कथं पुनस्तया कण्टक उद्धरणीयः ? इत्याह-

[भा.६१८०] सल्लुद्धर नक्खेण व, अच्छिव वत्थंतरं व इत्थीसु ।
भूमी-कट्ठ-तलोरुसु, काऊण सुसंवुडा दो वि ॥

वृ-शल्योद्धरणेन नखेन वा पादमस्पृशन्ती कण्टकमुद्धरति । अथैवं न शक्यते ततो वस्त्रान्तरितं पादं भूमौ कृत्वा यद्वा काष्ठे वा ताले पा ऊरौ वा कृत्वा उद्धरेत् । 'द्वावपि च' संयती-संयती सुसंवृतावुपविशतः । एषः 'स्त्रीषु' कण्टकमुद्धरन्तीषु विधिरवगन्तव्यः ॥

[भा.६१८१] एमेव य अच्छिम्मि,चंपादिट्ठंतो नवरि नाणत्तं ।
निग्गंथीण तहेव य, नवरिं तु असंवुडा काई ॥

वृ- एवमेव अक्षिसूत्रेऽपि सर्वमपि वक्तव्यम् । 'नवरं' नानात्वं चम्पादृष्टान्तोऽत्र भवति । यथा किल चम्पायां सुभद्रया तस्य साधोश्चक्षुषि पतितं तृणमपनीतं तथाऽन्यस्यापि साधोश्चक्षुषि प्रविष्टस्य तृणादेः कारणे निर्ग्रन्थ्याऽपनयनं सम्भवतीति दृष्टान्तभावार्थः । निर्ग्रन्थीनामपि सूत्रद्वयं तथैव वक्तव्यम् । नवरम्-काचिदसंवृता भवति ततः प्रतिगमनादयः पूर्वोक्ता दोषा भवेयुः । द्वितीयपदे निर्ग्रन्थ्यस्तासांम प्रागुक्तविधिना कण्टकादिकमुद्धरेत् ॥

*मू. (२०२) निग्गंथे निग्गंथिं दुग्गंसि वा विसमंसि वा पव्वयंसि वा पक्खुलमाणिं वा पवडमाणिं वा गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥*

*मू. (२०३) निग्गंथे निग्गंथिं सेयंसि वा पंकंसि वा पनगंसि वा उदगंसि वा ओकसमाणिं वा ओवुज्झमाणिं वा गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥*

मू. (२०४) निग्गंथे निग्गंथिं नावं आरुभमाणिं वा ओरुभमाणिं वा गिण्हमाणे वा अवलंबमाणे वा नातिक्कमइ ॥

वृ- अस्य सूत्रत्रयस्य सम्बन्धमाह-

[भा.६१८२] सो पुन दुग्गे लग्गेज्ज कंटओ लोयणम्मि वा कणुगं ।
इति दुग्गसुत्तजोगो, थला जलं चेयरे दुविहे ॥

वृ-यः पूर्वसूत्रे पादप्रविष्टः कण्टको लोचने वा कणुकं प्रविष्टमुक्तं स कण्टकस्तच्च कणुकं दुर्गे गच्छतः प्रायो लगेत्, अतो दुर्गसूत्रमारभ्यते । 'इति' एष दुर्गसूत्रस्य योगः-सम्बन्धः । दुर्गं च-स्थलं ततः स्थलाज्जलं भवतीति कृत्वा दुर्गसूत्रानन्तरम् 'इतरस्मिन्' जलप्रतिबद्धे 'द्विविधे' पङ्कविषये नौविषये च सूत्रे आरम्भः क्रियते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-निर्ग्रन्थो निर्ग्रन्थीं दुर्गे वा विषमे वा पर्वते वा "पक्खुलमाणिं व"त्ति प्रकर्षेण स्खलद्गत्या गच्छन्तीम्, भूमावसम्प्राप्तां वा पतन्तीम्, पतितुकामामित्यर्थः । "पवडमाणिं व"त्ति प्रकर्षेण-भूमौ सर्वैरपि गात्रैः पतन्तीम् ।

"गिण्हमाणे व"त्ति बाह्वादावङ्गे गृह्णन् वा, "अवलंबमाणे व"त्ति 'अवलम्बमानो वा' बाह्वादौ गृहीत्वा धारयन्; अथवा 'गृह्णन्' सर्वाङ्गीणां धारयन्, 'अवलम्बमानः' देशतः करेण गृह्णन्, साहय्यन्नित्यर्थः। नातिक्रामति स्वाचारमाज्ञां वा इति प्रथमसूत्रम् ॥

द्वितीयसूत्रमप्येवमेव। नवरम्-सेको नाम-पङ्के पनके वा सजले यत्र निमज्जयते तत्र वा, पङ्कः-कर्दमः तत्र वा, पनको नाम-आगन्तुकः प्रतनुद्रवरूपः कर्दम एव तत्र वा, उदकं प्रतीतं तत्र वा, "ओकसमाणिं व"त्ति 'अपकसन्तीं वा' पङ्क-पनकयोः परिह्रसन्तीं "ओवुज्झमाणिं व" त्ति 'अपोह्यमानां वा' सेकेन उदकेन वा नीयमानां गृह्णन् वा अवलम्बमानो वा नातिक्रामति ॥ तृतीयसूत्रे निर्ग्रन्थीमेव नावमारोहन्तीं वा अवरोहन्तीं वा गृह्णानो वा अवलम्बमानो वा नातिक्रामति इति सूत्रत्रयार्थ ॥ सम्प्रति भाष्यकारो विषमपदानि व्याचष्टे-

[भा.६१८३] तिविहं च होति दुग्गं, रुक्खे सावय मनुस्सदुग्गं य।
निक्कारणम्मि गुरुगा, तत्थ वि आणादिणो दोसा ॥

वृ-त्रिविधं च भवति दुर्गम्, तद्यथा-वृक्षदुर्गं श्वापददुर्गं मनुष्यदुर्गं च। यद् वृक्षैरतीव गहनतया दुर्गमं यत्र वा पथि वृक्षः पतितः तद् वृक्षदुर्गम्। यत्र व्याघ्र-सिंहादीनां भयं तत् श्वापददुर्गम्। यत्र म्लेच्छ-बोधिकादीनां मनुष्याणां भयं तद् मनुष्यदुर्गम्। एतेषु त्रिष्वपि दुर्गेषु यदि निष्कारणे निर्ग्रन्थीं गृह्णाति अवलम्बते व तदा चतुर्गुरु, आज्ञादयश्च दोषाः ॥

[भा.६१८४] मिच्छत्ते सतिकरणं, विराधना फास भावसंबंधो।
पडिगमणादी दोसा, भुत्ता-ऽभुत्ते व नेयव्वा ॥

वृ-निर्ग्रन्थीं गृह्णन्तं तं दृष्ट्वा कोऽपि मिथ्यात्वं गच्छेत्-अहो! मायाविनोऽमी, अन्यद् वदन्ति अन्यच्च कुर्वन्ति। स्मृतिकरणं वा भुक्तभोगिनो भवति, अभुक्तभोगिनस्तु कुतूहलम्। ततश्च संयमविराधना। स्पर्शतश्च भावसम्बन्धो भवति। ततः प्रतिगमनादयो दोषा भुक्तानामभुक्तानां वा साधु-साध्वीनां ज्ञातव्याः ॥ अथ विषमपदं व्याख्याति-

[भा.६१८५] तिविहं च होति विसमं, भूमिं सावय मनुस्सविसमं च।
तम्मि वि सो चेव गमो, नावोदग सेय जतणाए ॥

वृ-त्रिविधं च भवति विषमम्-भूमिविषमं श्वापदविषमं मनुष्यविषमं च। भूमिविषमं नाम-गर्तापाषाणाद्याकुलो भूभागः, श्वापद-मनुष्यविषमे तु श्वापद-मनुष्यदुर्गवद् मन्तव्ये। अत्र भूमविषमेणाधिकारः। पर्वतपदं तु प्रतीत्वाद् न व्याख्यातम्। 'तस्मिन्नपि' विषमे पर्वते वा निर्ग्रन्थीं गृह्णतश्चतुर्गुरुकप्रायश्चित्तादिरूपः स एव गमो भवति यो दुर्गे भणितः। तथा 'नावुदके सेकादौ च' वक्ष्यमाणस्वरूपे निर्ग्रन्थीं गृह्णतो निष्कारणे त एव दोषाः। "जयणाए"त्ति कारणे यतनया दुर्गादिषु गृह्णीयादवलम्बेत वा। यतना चाग्रतो वक्ष्यते ॥

अथ प्रस्खलन-प्रपतनपदे व्याचष्टे-

[भा.६१८६] भूमीए असंपत्तं, पत्तं वा हत्थ-जाणुगादीहिं।
पक्खुलणं नायव्वं, पवडण भूमीय गत्तेहिं ॥

वृ- भूमावसम्प्राप्तं हस्त-जानुकादिभिः प्राप्तं वा प्रस्खलनं ज्ञातव्यम्। भूमौ प्राप्तं सर्वगात्रैश्च यत् पतनं तत् प्रपतनम् ॥

[भा.६१८७] अहवा विदुग्ग विसमे, थद्धं भीतं व गीत थेरो तु ।
सिचयंतरेतरं वा, गिण्हंतो होति निद्दोसो ॥

वृ- 'अथवा' इति प्रकारान्तरद्योतकः । उक्तास्तावद् निर्ग्रन्थीं गृह्णतो दोषाः, परं द्वितीयपदे दुर्गे विषमे वा तां स्तब्धां भीतां वा गीतार्थ स्थविरः सिचयेन-वस्त्रणान्तिताम् इतरां वा गृह्णन् निर्दोषो भवति ॥ व्याख्यातं प्रथमसूत्रम् । सम्प्रति द्वितीयसूत्रं व्याख्याति-

[भा.६१८८] पंको खलु चिक्खल्लो, आगंतू पयणुओ दुओ पणओ ।
सो पुन सजलो सेओ, सीतिज्जति जत्थ दुविहे वी ॥

वृ- पङ्कः खलु चिक्खल्ल उच्यते । आगन्तुकः प्रतनुको द्रुतश्च पनकः । यत्र पुनः 'द्विविधेऽपि' पङ्के पनके वा "सीइज्जति" निमज्जते स पुनः सजलः सेक उच्यते ॥

[भा.६१८९] पंक-पनएसु नियमा, ओगसणं वुब्भणं सिया सेए ।
थिमियम्मि निमज्जणता, सजले सेए सिया दो वि ॥

वृ- पङ्क-पनकयोर्नियमाद् 'अपकसनं' ह्रसनं भवति । सेके तु "वुज्झणं" 'अपोहनं' पानीयेन हरणं स्यात् । स्तिमिते तु तत्र निमज्जनं भवेत् । सजले तु सेके 'द्वे अपि' अपवहन-निमज्जने स्याताम् ॥ अथ तृतीयं नौसूत्रं व्याख्याति-

[भा.६१९०] ओयारण उत्तारण, अत्थुरण ववुग्गहे य सतिकारो ।
छेदो व दुवेगयरे, अतपिल्लण भाव मिच्छत्तं ॥

वृ- कारणे निर्ग्रन्थीं नावम् 'अवतारयन्' आरोपयन् वा यद्यास्तरणं वपुर्ग्रहं वा करोति तदा स्मृतिकारो भुक्तभोगिनोस्तयोर्भवति । छेदो वा नखादिभिर्द्वयोरेकतरस्य भवेत् । अतिप्रेरणे च 'भावः' मैथुनाभिलाष उत्पद्येत । मिथ्यात्वं वा तद् दृष्ट्वा कश्चिद् गच्छेत् ॥ एते नावुदके निर्ग्रन्थीं गृह्णतो दोषा उक्ताः । अथ लेपोपरि सन्तारयतो दोषानाह-

[भा.६१९१] अंतोजले वि एवं, गुज्झंगप्फास इच्छऽनिच्छंते ।
मुच्चेज्जव आयत्ता, जा होउ करेतु वा हावे ॥

वृ- 'अन्तर्जलेऽपि' जलाभ्यन्तरेऽपि गच्छन्तीं गृह्णत एवमेव दोषा मन्तव्याः । तथा गुह्याङ्गस्पर्शे मोह उदियात्, उदिते च मोहे यदि इच्छति नेच्छति वा तत उभयथाऽपि दोषाः । यद्वा स उदीर्णमोहस्तां जलमध्ये मुञ्चेत्, आयत्ता यस्माद् भवतु करोतु वा 'हावान्' मुखविकारानिति । कारणे तु नावुदके लेपोपरि वा अवतारणं उत्तारणं वा कुर्वन् यतनया गृह्णीयाद् अवलम्बेत वा ॥

अथ ग्रहणा-ऽवलम्बपदे व्याख्याति-

[भा.६१९२] सव्वंगियं तु गहणं, करेहि अवलंबणेगदेसम्मि ।
जह सुत्तं तासु कयं, तहेव वतिणो वि वतिणीए ॥

वृ- ग्रहणं नाम सर्वाङ्गीणं कराभ्यां यद् गृह्यते । अवलम्बनं तु तद् उच्यते यद् एकस्मिन् देशे-बाह्वादौ ग्रहणं क्रियते । तदेवं यथा तासु निर्ग्रन्थीषु 'सूत्रं' सूत्रत्रयं कृतम् । किमुक्तं भवति ? - यथा निर्ग्रन्थो निर्ग्रन्थ्याः कारणे ग्रहणमवलम्बनं वा कुर्वन् नाऽऽज्ञामतिक्रामतीति सूत्रत्रयेऽपि भणितम्; तथैवार्थत इदं द्रष्टव्यम्-'व्रतिनोऽपि' साधोरपि दुर्गादौ पङ्कादौ नावुदकादौ वा प्रपततो व्रतिन्या कारणे ग्रहणमवलम्बनं वा कर्तव्यम् ॥ कया पुनर्यतनया ? इति चेद् अत आह-

[भा.६११३] जुगलं गिलाणगं वा, असहुं अन्नेण वा वि अतरंतं ।
गोवालकंचुगादी, सारक्खण नालवद्धादी ॥

वृ- 'युगलं नाम' बालो वृद्धश्च तद्वा, अपरं वा ग्लानम् अत एव 'असहिष्णुं' दुर्गादिषु गन्तुमशक्नुवन्तम्, 'अन्येन वा' ग्लानत्ववर्जेन कारणेन 'अतरन्तम्' अशक्तम्, गोपालकञ्चुकादिपरिधानपुरस्सरं नालवद्धा संयती, आदिग्रहणेनानालवद्धाऽपि संरक्षति, गृह्णाति अवलम्बते वा इत्यर्थः ॥

मू. *(२०५)खित्तचित्तं निग्गंथिं निग्गंथे गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥*

वृ- अस्य सूत्रस्य सम्बन्धमाह-

[भा.६११४] ओवुज्झंती व भया, संफासा रागतो व खिप्पेज्जा ।
संसग्गयिविहिं, वदंति संबंधमेयं तु ॥

वृ- पानीयेनापोह्यमाना वा भयात् क्षिप्येत, क्षिप्तचित्ता भवेदित्यर्थः । यद्वा संस्पर्शतो यो राग उत्पद्यते तस्माद्वा तत्र साधावन्यत्र गते सति क्षिप्तचित्ता भवेत् । अतः क्षिप्तचित्तासूत्रमारभ्यते । एवं सम्बन्धार्थविधज्ञाः सूरयोऽत्र सूत्रे एनं सम्बन्धं वदन्ति ॥ अनेन सम्बन्धेनायातस्यास्या व्याख्या- 'खित्तचित्तं' ति क्षिप्तं-ष्टं राग-भया-ऽपमानैश्चित्तं यस्याः सा क्षिप्तचित्ता, तां निर्ग्रन्थीं निर्ग्रन्थो गृह्णानो वाऽवलम्बमानो वा नातिक्रामति आज्ञामिति सूत्रार्थः ॥

अथैनं भाष्यकारो विस्तरेण प्ररूपयितुमाह-

[भा.६११५] रागेण वा भएण व, अहवा अवमानिया नरिंदेन ।
एतेहि खित्तचित्ता, वणितादि परूविता लोए ॥

वृ- रागेण यदि वा भयेनाथवा 'नरेन्द्रेण' प्रजापतिना, उपलक्षणमेतत्, सामान्येन वा प्रभुणा 'अपमानिताः' अपमानं ग्राहिताः, एतैः खलु कारणैः क्षिप्तचित्ता भवन्ति । ते च लोके उदाहरणत्वेन परूपिता वणिगादयः । तत्र रागेण क्षिप्तचित्ता यथा-वणिग्भार्या भर्तारं मृतं श्रुत्वा क्षिप्तचित्ता जाता ॥ भयेनापमाने च क्षिप्तचित्तत्वे उदाहरणान्याह-

[भा.६११६] भयओ सोमिलबहुओ, सहसोत्थरिया य संजुगादीसु ।
नरवतिणा व पतीण व, विमाणिता लोगी खेत्ता ॥

वृ- 'भयतः' भयेन क्षिप्तचित्तो यथा गजसुकुमालमारको जनार्दनभयेन सोमिलनामा 'बटुकः' ब्राह्मणः । अथवा 'संयुगादिषु' संयुगं-सङ्ग्रामस्तत्र, आदिशब्दात् परबलसमापतनादिपरिग्रहः, तैः, गाथायां सप्तमी तृतयार्थे, 'सहसा' अतर्कितम् 'अस्तृताः' समन्ततः परिगृहीता मनुष्या भयेन क्षिप्तचित्ता भवन्ति । एवं भयेन क्षिप्तचित्तत्वे उदाहरणमुक्तम् । सम्प्रत्यपमानत आह- नरपतिना समस्तद्रव्यापहरणतः काचिद् विमानिता पत्या वा काचिन्महेलाऽपमानिता क्षिप्तचित्ता भवेत् । एवमादिका लौकिकी क्षिप्तचित्ता मन्तव्या ॥ सम्प्रति लोकोत्तरिकीं तामेवाह-

[भा.६११७] रागम्मि रायखुड्डी, जड्डाति तिरिक्ख चरिय वातम्मि ।
रागेण जहा खेत्ता, तमहं वोच्छं समासेणं ॥

वृ- 'रागे' सप्तमी तृतीयार्थे रागेण क्षिप्तचित्ता यथा वक्ष्यमाणा राजक्षुल्लिका । भयेन यथा 'जड्डादीन्' हस्तिप्रभृतीन् तिरश्चो दृष्ट्वा । अपमानतो यथा चरिकया कयाचिद् वादे पराजिता सती काचिन्निर्ग्रन्थी क्षिप्तचित्ता जायते । तत्र रागेण यथा राजक्षुल्लिका क्षिप्तचित्ताऽभवत् तदहं

वक्ष्ये समासेन ॥

[भा.६१९८] जियसत्तू य नरवती, पव्वज्जा सिक्खणा विदेसम्मी।
काऊण पोतणम्मिं, सव्वायं निव्वुतो भगवं ॥

वृ- जितशत्रुर्नाम नरपति। तस्य प्रव्रज्याऽभवत्, धर्मं तथाविधानां स्थविराणामन्तिके श्रुत्वा प्रव्रज्यां स प्रतिपन्नवानित्यर्थः। प्रव्रज्यानन्तरं च तस्य 'शिक्षणा' ग्रहणशिक्षा आसेवनाशिक्षा च प्रवृत्ता। कालान्तरे च स विदेशं गतः। पोतनपुरे च परतीर्थिभिः सह वाद उपस्थितः। ततस्तैः सह शोभनो वादः सद्वादस्तं दत्त्वा महतीं जिनशासनप्रभावनां कृत्वा स भगवान् 'निर्वृतः' मुक्तिपदवीमधिरूढः ॥

[भा.६१९९] एक्का य तस्स भगिनी, रज्जसिरिं पयहिऊण पव्वइया।
मातुयअनुराएणं, खेत्ता जाता इमा तु विही ॥

वृ- एका च 'तस्य' जितशत्रो राज्ञो भगिनी भ्रातुरनुरागेण राज्यश्रियं प्रहाय जितशत्रु-प्रव्रज्याप्रतिपत्त्यनन्तरं कियताऽपि कालेन प्रव्रजिता। सा च तं ज्येष्ठभ्रातरं विदेशे पोतनपुरे कालगतं श्रुत्वा भ्रातुरनुरागेण 'क्षिप्ता' अपहृतचित्ता जाता। तत्र च 'अयम्' अनुशिष्टिरूपस्तस्याः प्रगुणीकरणे विधिः ॥ तमेवाह-

[भा.६२००] तेलोक्कदेवमहिता, तित्थगरा नीरता गता सिद्धिं।
थेरा वि गता केई, चरण-गुणपभावगा धीरा ॥

वृ- तस्या भ्रात्रादिमरणं श्रुत्वा क्षिप्तचित्तीभूताया आश्वासनार्थमियं देशना कर्तव्या, यथा-मरणपर्यवसानो जीवलोकः। तथाहि-ये तीर्थकरा भगवन्तः त्रैलोक्यदेवैः-त्रिभुवननिवासिभिर्भवन-पत्यादिभिः महितास्तेऽपि 'नीरजसः' विगतसमस्तकर्मपरमाणवः सन्तो गताः सिद्धिम्। तथा स्थविरा अपि केचिन्महीयांसो गौतमस्वामिप्रभृतयः 'चरण गुणप्रभावकाः' चरणं-चारित्रं गुणः-ज्ञानं ताभ्यां जिशासनस्य प्रभावकाः 'धीराः' महासत्त्वा देव-दानवैरप्यक्षोभ्याः सिद्धिं गताः। तद् यदि भगवतामपि तीर्थकृतां महतामपि च महर्षीणामीदृशी गतिस्ततः का कथा शेषजन्तूनाम्? तस्मादेतादृशीं संसारस्थितिमनुचिन्त्य न शोकः कर्तव्य इति ॥ तथा-

[भा.६२०१] बंभी य सुंदरी या, अन्ना वि य जाउ लोगजेट्ठाओ।
ताओ वि अ कालगया, किं पुन सेसाउ अज्जाओ ॥

वृ- सुगमा ॥ अन्यच्च-

[भा.६२०२] न हु होति सोतियव्वो, जो कालगतो दढो चरित्तम्मि।
सो होति सोतियव्वो, जो संजमदुब्बलो विहरे ॥

वृ- "न हु" नैव स शोचयितव्यो भवति यश्चारित्रे दृढः सन् कालगतः। स खलु भवति शोचयितव्यो यः संयमे दुर्बलः सन् विहृतवान् ॥ कतम् ? इत्याह-

[भा.६२०३] जो जह व तह व लद्धं, भुंजति आहार-उवधिमादीयं।
समणगुणमुक्कजोगी, संसारपवड्ढतो होति ॥

वृ- यो नाम यथा वा तथा वा, दोषदुष्टकतया निर्दोषतया वा इत्यर्थः, लब्धमाहारोपध्यादिकं 'भुङ्क्ते' उपभोग-परिभोगविषयीकरोति स श्रमणानां गुणाः-मूलगुणोत्तरगुणरूपाः श्रमण-गुणास्तैर्मुक्ताः-परित्यक्तास्तद्रहिता ये योगाः-मनो-वाक्कायव्यापारास्ते श्रमणगुणमुक्तयोगाः ते

यस्य सन्ति स श्रमणगुणमुक्तयोगी संसारप्रवर्धको भवति । ततो यः संयमदुर्बलो विक्षतवान् स एव शोच्यः, भवदीयस्तु भ्रात्रादि कालगतो दृढश्चारित्रे ततः स परलोकेऽपि सुगतिभागिति न करणीयः शोकः ॥ सम्प्रति "जड्डादितेरिच्छ" इत्यस्य व्याख्यानार्थमाह-

[भा.६२०४] जड्डादी तेरिच्छे, सत्थे अगनीय थणिय विज्जू य ।
ओमे पडिभेसणता, चरियं पुव्वं परूवेउं ॥

वृ- जड्डः-हस्ती, आदिशब्दात् सिंहादिपरिग्रहः, तान् तिरश्चो दृष्ट्वा । किमुक्तं भवति ? - गजं वा मदोन्मत्तं सिंहं वा गुञ्जन्तं व्याघ्रं वा तीक्ष्णनखर-विकरालमुखं दृष्ट्वा काऽपि निर्ग्रन्थी भयतः क्षिप्तचित्ता भवति । काऽपि पुनः 'शस्त्राणि' खड्गादीन्यायुधानि दृष्ट्वा, इयमत्र भावना-केनापि परिहासेनोद्गीर्णं खड्गं कुन्तं क्षुरिकादिकं वा दृष्ट्वा काऽपि 'हा ! मामेष मारयति' इति सहसा क्षिप्तचित्ता भवति । एवम् 'अग्नौ' प्रदीपनके लग्ने 'स्तनिते वा' मेघगर्जिते श्रुते विद्युतं वा दृष्ट्वा भयतः क्षिपतचित्ता भवेत् । एवंविधायां भयेन क्षिप्तचितायां को विधि ? इत्याह- 'अवमा' तस्य अपि लघुतरं क्षुल्लिका सा वक्ष्यमाणनीत्या तस्य सिंहादेः प्रतिभेषणां करोति, तत इतरा भयं मुञ्चतीति। या तु वादे पराजिताऽपमानतः क्षिप्तचित्तीभूता तस्याः प्रगुणीकरणार्थं यता चरिकया सा पराजिता तां पूर्वं 'प्ररूप्य' प्रज्ञाप्य तदनन्तरं तया स्वमुखोच्चरितेन वचसा क्षिप्तचित्तलोत्तारयितव्या ॥

अथापमनातः क्षिप्तचित्ततां भावयति-

[भा.६२०५] अवहीरिया व गुरुणा, पवत्तिनीए य कम्मि वि पमादे ।
वातम्मि वि चरियाए, परातियाए इमा जयणा ॥

वृ- 'गुरुणा' आचार्येणावधीरिता, अथवा प्रवर्तिन्या कस्मिंश्चित् प्रमादे वर्तमाना सती गाढं शिक्षिता भवेत् ततोऽपमानेन क्षिप्तचित्ता जायेत । यदि वा चरिकया वादे पराजिता इत्यपमानतः क्षिप्तचित्ता स्यात् । तस्यां च भयेन क्षिप्तचित्तायामियं यतना ॥

[भा.६२०६] कन्नम्मि एस सीहो, गहितो अह धारिओ य सो हत्थी ।
खुड्डलतरिया तुज्झं, ते वि य गमिया पुरा पाला ॥

वृ-इह "पदैकदेशे पदसमुदायोपचारात्" "पाला" इत्युक्ते हस्तिपालाः सिंहपाला वा द्रष्टव्याः। तेऽपि 'पुरा' पूर्वं 'गमिताः' प्रतिबोधिताः कर्तव्याः, यथा-अस्माकमेका क्षुल्लिका युष्मदीयं सिंहं हस्तिनं वा दृष्ट्वा क्षोभमुपागता, ततः सा यथा क्षोभं मुञ्चति तथा कर्तव्यम् । एवं तेषु प्रतिबोधितेषु सा क्षिप्तचित्तीभूता तेषामन्तिके नीयते, नीत्वा च तासां मध्ये या तस्या अपि क्षुल्लिकाया लघुतरी तया स सिंहः कर्णे धार्यते, हस्ती वा तया धार्यते । ततः सा क्षिप्तचित्ता प्रोच्यते-त्वत्तोऽपि या 'क्षुल्लकतरा' अतिशयेन लघुस्तया एष सिंहः कर्णे धृतः, अथवा हस्ती अनया घाटितः, त्वं तु बिभेषि, किं त्वमेतस्या अपि भीरुर्जाता ?, धाष्टर्यमवलम्ब्यतामिति ॥

[भा.६२०७] सत्थऽग्गी थंभेतुं, पणोल्लणं नस्सते य सो हत्थी ।
थेरी चम्म विकड्डण, अलायचक्कं तु दोसुं तु ॥

वृ- यदि शस्त्र यदि वाऽग्निं दृष्ट्वा क्षिप्ता भवेत् ततः शस्त्रमग्निं च विद्यया स्तम्भित्वा तस्य पादाभ्यां प्रनोदनं कर्तव्यम्, भणितव्यं च तां प्रति-एषोऽस्माभिरग्नि शस्त्र च पादाभ्यां प्रणुन्नः, त्वं तु ततोऽपि बिभेषीति । यदि वा पानीयेनार्द्रीकृतहस्तादिभि सोऽग्नि स्पृश्यते, भण्यते च - एतस्मादपि तव किं भयम् ? । तथा यतो हस्तिनस्तस्या भयमभूत् स हस्ती स्वयं पराङ्मुखो

गच्छन् दर्शयते, यथा-यतस्त्वं बिभेषि स हस्ती 'नश्यति' नश्यन् वर्तते ततः कथं त्वमेवं भीरोरपि भीरुर्जाता ? । तथा या गर्जितं श्रुत्वा भयमग्रहीत् तं प्रति उच्यते- स्थविरा नभसि शुष्कं चर्म विकर्षति; एवं चोक्त्वा शुष्कचर्मण आकर्षणशब्दः श्राव्यते, ततो भयं जरयति । तथा यदि अग्नेः स्तम्भनं न ज्ञायते तदा 'द्वयोः' अग्नौ विद्युति च भयं प्रपन्नाया अलातचक्रं पुनः पुनरकस्माद् दर्श्यते यावदुभयोरपि भयं जीर्णं भवति ॥

अथ वादे पराजयादपमानतः क्षिप्तचित्तीभूताया यतनामाह-

[भा.६२०८] एईए जिता मि अहं, तं पुन सहसा न लक्खियं नाए ।
धिक्कतकतितव लज्जाविताए पउणायई खुड्डी ॥

[भा.६२०९] तह वि य अठायमाणे, सारक्खमरक्खणे य चउगुरुगा ।
आणाइणो य दोसा, विराधन इमेहिं ठाणेहिं ॥

वृ- यथा चरिकया सा पराजिता सा प्रज्ञाप्यते यथोक्तं प्राक् । ततः साऽऽगत्य वदति- एतयाऽहं वादे जिताऽस्मि, 'तत् पुनः' स्वयंजयनमनया सहसा न लक्षितम्, ततो मे लोकस्य पुरतो जयप्रवादोऽभवत् । एवमुक्ते सा चरिका धिक्कृतं-धिक्कारस्तत्कैतवेन-तद्व्याजेन 'लज्जाप्यते' लज्जां ग्राह्यते, लज्जां च ग्राहिता सती साऽपसार्यते । ततः क्षिप्ता भण्यते-किमिति त्वमपमानं गृहीतवती ? वादे हि ननु त्वयैषां पराजिता, तथा च त्वत्समक्षमेव एषा धिक्कारं ग्राहितेति । एवं यतनायां क्रियमाणायां यदि सा क्षुल्लिका प्रगुणीभवति ततः सुन्दरम् ॥ 'तथापि च' एवं यतनायामपि च क्रियमाणायाम् 'अनवतिष्ठति' अनिवर्तमाने क्षिप्तचित्तत्वे संरक्षणं वक्ष्यमाणयतनया कर्तव्यम्। अरक्षणे प्रायश्चित्तं चत्वारो गुरुकाः, आज्ञादयश्च दोषाः, विराधना चामीभि 'स्थानैः' प्रकारैर्भवति। तान्येवाह-

[भा.६२१०] छक्कायाण विराधन, झामण तेने निवायणे चेव ।
अगड विसमे पडेज्ज व, तम्हा रक्खंति जयणाए ॥

वृ- तया क्षिप्तचित्तया इतस्ततः परिभ्रमन्त्या षन्नां कायानां-पृथिवीकयिकादीना विराधना क्रियते । 'ध्यामनं' प्रदीपनकं तद वा कुर्यात् । यदि वा स्तैन्यम्, अथवा निपातनमात्मनः परस्य वा विधीयते । 'अवटे' कूपेऽथवाऽन्यत्र विषमे पतेत् । तदेवमसंरक्षणे इमे दोषास्तस्माद् रक्षन्ति 'यतनया' वक्ष्यमाणया ॥ साम्प्रतमेनामेव गाथां व्याचिख्यासुराह-

[भा.६२११] सस्सगिहादीणि दहे, तेनेज्ज व सा सयं व हीरेज्जा ।
मारण पिट्टणमुभए, तद्दोसा जं च सेसाणं ॥

वृ- सस्यं-धान्यंतद्भृतं गृहं सस्यगृहं तदादीनि, आदिशब्दात् शेषगृहा-ऽऽपणादिपरिग्रहः, 'दहेत्' क्षिप्तचित्ततयाऽग्निप्रदानेन भस्मसात्कुर्यात्, एतेन ध्यामनमिति व्याख्यातम् । मारणं पिट्टनमुभयस्मिन् स्यात्, किमुक्तं भवति ? -सा क्षिप्तचित्तत्वेन परवशा इव स्वयमात्मानं मारयेत् पिट्टयेद्वा, यदि वा परं मारयेत् पिट्टयेद्वा, सा वा परेण मार्यते पिट्यते वेति । "तद्दोसा जं च सेसाणं" इति तस्याः-क्षिप्तचित्ताया दोषाद् यच्च 'शेषाणां' साध्वीनां मारणं पिट्टनं वा । तथाहि- सा क्षिप्तचित्ता सती यदा व्यापादयति पिट्टयति तदा परे स्वरूपमजानानाः शेषसाध्वीनामपि घात-प्रहारादिकं कुर्यु तन्निमित्तमपि प्रायश्चित्तमरक्षणे द्रष्टव्यम् । शेषाणि तु स्थानानि सुगमानीति न व्याख्यातानि ॥ यदुक्तं "तस्मांद् रक्षन्ति यतनया" इति तत्र यतनामाह-

[भा.६२१२] महिड्डिए उट्ठ निवेसने य, आहार विगिंचणा विउस्सग्गो ।
रक्खंताण य फिडिया, अगवेसणे होंति चउगुरुगा ॥

वृ- महर्द्धिको नाम-ग्रामस्य नगरस्यवा रक्षाकारी तस्य कथनीयम् । तथा "उट्ठ निवेसने य" त्ति मृदुबन्धैस्तथा संयतनीया यथा स्वयमुत्थानं निवेशनं च कर्तुं समर्था भवति । तथा यदि 'वातादिना धातुक्षोभोऽस्या अभूत्' इति ज्ञायते तदाऽपथ्याहारपरिहारेण स्निग्ध-मधुरादिरूप आहारः प्रदातव्यः । "विगिंचण" त्ति उच्चारादेस्तस्याः परिष्ठापनं कर्तव्यम् । यदि पुनः 'देवताकृत एष उपद्रवः' इति ज्ञायते तदा प्राशुकैषणीयेन क्रिया कार्या । तथा "विउस्सग्गो" इति 'किमयं वातादिना धातुक्षोभः ? उत देवताकृत उपद्रवः ?' इत परिज्ञानाय देवताराधनार्थं कायोत्सर्गः करणीयः । ततस्तयाऽऽकम्पितया कथिते सति तदनुरूपो यत्नो यथोक्तस्वरूपः करणीयः । एवंरक्षतामपि यदि सा कथञ्चित् स्फिटिता स्यात् ततस्तस्या गवेषणं कर्तव्यम् । अगवेषणे प्रायश्चित्तं चत्वारो गुरुकाः । एष द्वारगाथासङ्क्षेपार्थः ॥ साम्प्रतमेनामेव विवरीषुः प्रथमतो महर्द्धिकद्वारं विवृणोति-

[भा.६२१३] अम्हं एत्थ पिसादी, रक्खंताणं पि फिट्टति कताई ।
सा हु परिरक्खियव्वा, महिड्डिगाऽऽरक्खिए कहणा ॥

वृ- 'महर्द्धिके' ग्रामस्य नगरस्य वा रक्षाकारिण्यारक्षके कथना कर्तव्या, यथा-'अत्र' एतस्मिन्नुपाश्रयेऽस्माकं रक्षतामप्येषा 'पिशाची' ग्रथिला कदाचित् 'स्फिटति' अपगच्छति सा 'हुः' निश्चितं परिरक्षयितव्या, प्रतिपन्नचारित्रत्वादिति ॥

व्याख्यातं महर्द्धिकद्वारम् । अधुना "उट्ठ निवेसने य" इति व्याख्यानयति-

[भा.६२१४] मिउबंधेहि तहा नं, जमेंति जह सा सयं तु उट्ठेति ।
उव्वरग सत्थरहिते, बाहिं कुडंडे असुन्नं च ॥

वृ- मृदुबन्धैस्तथा "णं" इति तां क्षिप्तचित्तां 'यमयन्ति' बध्नन्ति यथा सा स्वयमुत्तिष्ठति, तुशब्दस्यानुक्तसमुच्चयार्थत्वाद् निविशते च । तथा सा तस्मिन्नपवरके स्थाप्यते यत्र न किमपि शस्त्र भवति, यतः सा क्षिप्तचित्ततया युक्तमयुक्तं वाऽजानती शस्त्र दृष्ट्वा तेनाऽऽत्मानं व्यापादयेत् । तस्य चापवरकस्य द्वारं बहिः 'कुडण्डेन' वंशटोकरादिना बध्यते येन न निर्गत्यापगच्छति । तथा अशून्यं यथा भवति एवं सा वारेण वारेण प्रतिजागर्यते, अन्यथा शून्यमात्मानमुपलभ्य बहुतरं क्षिप्तचित्ता भूयात् ॥

[भा.६२१५] उव्वरगस्स उ असती, पुव्वकतऽसती य खम्मते अगडो ।
तस्सोवरिं च चक्कं, न छिवति जह उप्फिडंती वि ॥

वृ- अपवरकस्य 'असति' अभावे 'पूर्वकृते' पूर्वखाते कूपे निर्जले सा प्रक्षिप्यते । तस्याभावेऽवटो नवः खन्यते, खनित्वा च तत्र प्रक्षिप्यते । प्रक्षिप्य च तस्यावटस्योपरि 'चक्रं' रथाङ्गं स्थगनाय तथा दीयते यथा सा 'उत्स्फिटन्त्यपि' उच्छलयन्त्यपि तच्चक्रं 'न च्छुपति' न स्पृशति ॥

साम्प्रतं "आहार विगिंचणा" इत्यादि व्याख्यानयति-

[भा.६२१६] निद्धं महुरं च भत्तं, करीससेज्जा य नो जहा वातो ।
देविय धाउक्खोभे, नातुस्सग्गो ततो किरिया ॥

वृ- यदि 'वातादिना धातुक्षोभोऽस्याः सञ्जातः' इति ज्ञायते तदा भक्तमपथ्यपरिहारेण स्निग्धं

मधुरं च तस्यै दातव्यम्, शय्या च करीषमयी कर्तव्या, सा हि सोष्मा भवति, उष्णे च वात-श्लेष्मापहरः, यथा च वातो न लभ्यते तथा कर्तव्यम् । तथा किमयं 'दैविकः' देवेनभूतादिना कृत उपद्रवः ? उत धातुक्षोभः ? इति ज्ञातुं देवताराधनाय 'उत्सर्ग' कायोत्सर्ग क्रियते । तस्मिंश्च क्रियमाणे यद् आकम्पितया देवतया कथितं तदनुसारेण ततः क्रिया कर्तव्या । यदि दैविक इति कथितं तदा प्राशुकैषणीयेन तस्या उपचारः, शेषसाध्वीनां तपोवृद्धिः, तदुपशमनाय च मन्त्रादिस्मरणमिति । अथ वातादिना धातुक्षोभ इति कथितं तदा स्निग्धमधुराद्युपचार इति ॥

सम्प्रति "रक्खंताण य फिडिए" त्यादि व्याख्यानयति-

[भा.६२१७] अगडे पलाय मग्गण, अन्नगणो वा वि जो न सारक्खे ।
गुरुगा जं वा जत्तो, तेसिं च निवेयणं काउं ॥

वृ-अगडे इति सप्तमी पञ्चम्यर्थे, ततोऽयमर्थः-'अवटात्' कूपाद्, उपलक्षणमेतद्, अपवरकाद्वा यदि पलायते कथमपि ततस्तस्याः 'मार्गणम्' अन्वेषणं कर्तव्यम् । तथा ये तत्राऽन्यत्र वाऽऽसन्ने दूरे वाऽन्यगणा विद्यन्ते तेषां च निवेदनाकरणम्, निवेदनं कर्तव्यमिति भावः । यथा-अस्मदीया एका साध्वी क्षिप्तचित्ता नष्टा वर्तते । ततस्तैरपि सा गवेषणीया, दृष्टा च सा सङ्ग्रहणीया । यदि पुनर्न गवेषयन्ति नापि संरक्षन्ति स्वगणवर्तिन्या अन्यगणवर्तिन्या वा तदा तेषां प्रायश्चित्तं चत्वारः 'गुरुकाः' गुरुमासाः । यच्च करिष्यति षड्जीवनिकायविराधनादिकं यच्च प्राप्स्यति मरणादिकं तन्निमित्तं च तेषां प्रायश्चित्तमिति ॥

[भा.६२१८] छम्मासे पडियरिउं, अनिच्छमाणेसु भुज्जयरओ वा ।
कुल-गण-संघसमाए, पुव्वगमेणं निवेदेंति ॥

वृ- पूर्वोक्तप्रकारेण तावत् प्रतिचरणीया यावत् षण्मासा भवन्ति । ततो यदि प्रगुणा जायते तर्हि सुन्दरम् । अथ न प्रगुणीभूता ततः 'भूयस्तरकमपि' पुनस्तरामपि तस्याः प्रतिचरणं विधेयम् । अथ ते साधवः परिश्रान्ता भूयस्तरकं प्रतिचरणं नेच्छन्ति, ततस्तेष्वनिच्छत्सु कुल-गण-सङ्घसमवायं कृत्वा 'पूर्वगमेन' ग्लानद्वारोक्तप्रकारेण तस्मै निवेदनीयम्, निवेदिते च ते कुलादयो यथाक्रमं तां प्रतिचरन्ति ॥ अथ सा राजादीनां सज्ञातका भवेत् तदा इयं यतना-

[भा.६२१९] रन्नो निवेइयम्मि, तेसिं वयणे गवेसणा होति ।
ओसह वेज्जा संबंधुवस्सए तीसु वी जयणा ॥

वृ-यदि राज्ञोऽन्येषां वा सा पुत्र्यादिका भवेत् ततो राज्ञः, उपलक्षणमेतद्, अन्येषां वा स्वजनानां निवेदनं क्रियते, यथा-युष्मदीयेयं पुत्र्यादिका क्षिप्तचित्ता जाता इति । एवं निवेदिते यदि ब्रुवते राजादयः, यथा-मम पुत्र्यादीनां क्रिया स्वयमेव क्रियमाणा वर्तते तत इहैव तामभ्यानयत इति । ततः सा तेषां वचनेन तत्र नीयते, नीतायाश्च तत्र तस्या गवेषणा भवति । अयमत्र भावार्थः-साधवोऽपि तत्र गत्वा औषध-भेषजानि प्रयच्छन्ति प्रतिदिवसं च शरीरस्योदन्तं वहन्ति । यदि पुनः 'सम्बन्धिन' स्वजना वदेयुः-वयमौषधानि वैद्यं वा सम्प्रयच्छामः, परमस्माकमासन्ने उपाश्रये स्थित्वा यूयं प्रतिचरथ । तत्र यदि शोभनो भावस्तदा एवं क्रियते । अथ गृहस्थीकरणाय तेषां भावस्तदा न तत्र नयनं किन्तु स्वोपाश्रय एव ध्रियते । तत्र च 'तिसृष्वपि' आहारोपधि-शय्यासु यतना कर्तव्या । एष द्वारगाथासङ्क्षेपार्थः ॥

साम्प्रतमेनामेव विवरीषुः प्रथमतः "रन्नो निवेइयम्मी" इत्येतद् व्याख्यानयति-

[भा.६२२०] पुत्तादीनं किरियं, सयमेव घरम्मि कोइ कारेति ।
अनुजाणंते य तहिं, इमे वि गंतुं पडियरंति ॥

वृ-यदि 'कोऽपि' राजाऽन्यो वा महर्द्धिकः तस्याः स्वजनो गृहे 'स्वयमेव' साधुनिवेदनात् प्राग् आत्मनैव पुत्र्यादीनां 'क्रियां' चिकित्सां कारयति तदा तस्मै निवेदिते-'युष्मदीया क्षिप्तचित्ता जाता' इति कथिते यदि तेऽनुजानन्ति, यथा-अत्र समानयत इति; ततः सा तत्र नीयते, नीतां च सतीम् 'इमेऽपि' गच्छवासिनः साधवो गत्वा प्रतिचरन्ति ॥

[भा.६२२१] ओसह विज्जे देमो, पडिजग्गह नं इहं ठिताऽऽसन्नं ।
तेसिं च नाउ भावं, न देंति मा नं गिहीकुज्जा ॥

वृ-कदाचित् स्वजना ब्रूयुः, यथा-औषधानि वैद्यं च वयं दद्मः, केवलम् 'इह' अस्मिन्नस्माकमासन्ने प्रदेशे स्थिताः "णं" इति एनां प्रतिजागृत । तत्र तेषां यदि भावो विरूपो गृहस्थीकरणात्मकस्ततस्तेषां तथारूपं भावमिङ्गिताकारकुशला ज्ञात्वा न ददति, न तेषामासन्ने प्रदेशे नयन्तीति भावः । कुतः? इत्याह-मा तां गृहस्थीकुर्युरिति हेतोः ॥ सम्प्रति "तीसु वी जयणे" त्येतद् व्याख्यानयति-

[भा.६२२२] आहार उवहि सिज्जा, उग्गम-उप्पायणादिसु जयंति ।
वायादी खोभम्मि व जयंति पत्तेग मिस्सा वा ॥

वृ-आहारे उपधौ शय्यायां च विषये उद्गमोत्पादनादिषु, आदिशब्दाद् एषणादिदोषपरिग्रहः, 'यतन्ते' यत्नपरा भवन्ति, उद्गमोत्पादनादोषविशुद्धाहाराद्युत्पादने प्रतिचरका अन्येऽपि च यतमानास्तां प्रतिचरन्तीति भावः । एषा यतना दैविके क्षिप्तचित्तत्वे द्रष्टव्या । एवं वातादिना धातुक्षोभेऽपि 'प्रत्येकं' साम्भोगिकाः 'मिश्रा वा' असाम्भोगिकैः सम्मिश्रा-पूर्वोक्तप्रकारेण यतन्ते।

[भा.६२२३] पुव्वुद्दिट्ठो य विही, इह वि करेंताण होति तह चेव ।
तेइच्छम्मि कयम्मि य, आदेसा तिन्नि सुद्धा वा ॥

वृ-यः पूर्वं-प्रथमोद्देशके ग्लानसूत्रे उद्दिष्टः-प्रतिपादितो विधिः स एव 'इहापि' क्षिप्तचित्तासूत्रेऽपि वैयावृत्त्य कुर्वतां तथैव भवति ज्ञातव्यः । 'चैकित्स्ये च' चिकित्सायाः कर्मणि च 'कृते' प्रगुणीभूतायां च तस्यां त्रय आदेशाः प्रायश्चित्तविषया भवन्ति । एके ब्रुवते-गुरुको व्यवहारः स्थापयितव्यः । अपरे ब्रुवते-लघुकः । अन्ये व्याचक्षते-लघुस्वकः । तत्र तृतीय आदेशः प्रमाणम्, व्यवहारसूत्रोक्तत्वात् । अथवा सा 'शुद्धा' न प्रायश्चित्तभाक्, परवशतया राग-द्वेषाभावेन प्रतिसेवनात् ॥

एतदेव विभावयिषुरिदमाह-

[भा.६२२४] चउरो य हुंति भंगा, तेसिं वयणम्मि होति पन्नवणा ।
परिसाए मज्झम्मी, पट्ठवणा होति पच्छित्ते ॥

वृ- इह चारित्रविषये वृद्धि-हान्यादिगताश्चत्वारो भवन्ति भङ्गास्तेषां प्ररूपणा कर्तव्या । नोदकवचने च 'कथं साऽप्रायश्चित्ती ?' इत्येवंरूपे 'प्रज्ञापना' सूरेः प्रतिवचनरूपा भवति । ततः पर्षदो मध्ये अगीतार्थप्रत्ययनिमित्तं 'प्रायश्चित्तस्य' लघुस्वकरूपस्य 'प्रस्थापना' प्रदानं तस्याः शुद्धाया अपि कर्तव्यमिति ॥ सम्प्रति चतुरो भङ्गान् कथयन् प्रायश्चित्तदानाभावं भावयति-

[भा.६२२५] वड्ढति हायति उभयं, अवट्ठियं च चरणं भवे चउहा ।
खइयं तहोवसमियं, मिस्समहक्खाय खेत्तं च ॥

वृ-कस्यापि चारित्रं वर्धते, कस्यापि चारित्रं हीयते, कस्यापि चारित्रं हीयते वर्धते च, कस्यापि

'अवस्थितं' न हीयते न च वर्धते, एते चत्वारो भङ्गा अनियतस्य । सम्प्रत्यमीषामेव चतुर्णां भङ्गानां यथासङ्ख्येन विषयान् प्रदर्शयति-"वड्ढ्यं" इत्यादि । क्षपकश्रेणिप्रतिपन्नस्य क्षायिकं चरणं वर्धते। उपशमश्रेणीतः प्रतिपतने औपसमिकं चरणं हानिमुपगच्छति । क्षायोपशमिकं तत्तद्राग-द्वेषोत्कर्षा-ऽपकर्षवशतः क्षीयते परिवर्धते च । यथाख्यातं 'क्षित्तं च' पदैकदेशे पदसमुदायोपचारात् क्षिप्तचित्तचारित्रं चावस्थितम्, यथाख्यातचारित्रे सर्वथा राग-द्वेषोदयाभावात् क्षिप्तचित्तचारित्रे परवशतया प्रवृत्तेः स्वतो राग-द्वेषाभावात् । तदेवं यतः क्षिप्तचित्ते चारित्रमवस्थितं अतो नासौ प्रायश्चित्तभागिति ॥ पर आह-ननु सा क्षिप्तचित्ताऽऽश्रवद्वारेषु चिरकालं प्रवर्तिता बहुविधं चासमञ्जसतया प्रलपितं लोक-लोकोत्तर विरुद्धं च समाचरितं ततः कथमेषा न प्रायश्चित्तभाक्? अत्र सूरिराह-

[भा.६२२६] कामं आसवदारेसु वट्टियं पलवितं बहुविधं च ।
लोगविरुद्धा य पदा, लोउत्तरिया य आइन्ना ॥

वृ- 'कामम्' इत्यनुमती अनुमतमेतद्, यथा-तयाऽऽश्रवद्वारेषु चिरकालं वर्तितं बहुविधं च प्रलपितं लोकविरुद्धानि लोकोत्तरविरुद्धानि च पदानि 'आचीर्णानि' प्रतिसेवितानि ॥

[भा.६२२७] न य बंधहेउविगलत्तणेण कम्मस्स उवचयो होति ।
लोगो वि एत्थ सक्खी, जह एस परव्वसा कासी ॥

वृ- तथापि 'न च' नैव तस्याः क्षिप्तचित्तायाः 'बन्धहेतुविकलत्वेन' बन्धहेतवः-राग-द्वेषादयस्तद्विकलत्वेन कर्मोपचयो भवति, कर्मोपचयस्य राग-द्वेषसमाचरिताद्यधीनत्वात्, तस्याश्च रागद्वेषविकल्यात् । तस्याश्च राग-द्वेषविकलत्वं न वचनमात्रसिद्धं किन्तु लोकोऽपि 'अत्र' अस्मिन् विषये साक्षी, यथा-एषा सर्वं परवशाऽकार्षीदिति । ततो राग-द्वेषाभावान्न कर्मोपचयः, तस्य तदनुगतत्वात् ॥ तथा चाह-

[भा.६२२८] राग-द्दोसानुगया, जीवा कम्मस्स बंधगा होंति ।
रागादिविसेसेण य, बंधविसेसो वि अविगीओ ॥

वृ- राग-द्वेषाभ्यामनुगताः-सम्बद्धा राग-द्वेषानुगताः सन्तो जीवाः कर्मणो बन्धका भवन्ति । ततः 'राग-द्वेषविशेषेण' राग-द्वेषतारतम्येन 'बन्धविशेषः' कर्मबन्धतर-तमभावः 'अविगीतः' अविप्रतिपन्नः । ततः क्षिप्तचित्ताया राग-द्वेषाभावतः कर्मोपचयाभावः ॥

अमुमेवार्थं दृष्टान्तेन द्रढयति-

[भा.६२२९] कुणमाणा वि य चेट्ठा, परतंता नट्टिया बहुविहातो ।
किरियाफलेन जुज्जति, न जहा एमेव एतं पि ॥

वृ- यथा 'नर्तकी' यन्त्रनर्तकी काष्ठमयी 'परतन्त्रा' परायत्ता परप्रयोगत इत्यर्थः, 'बहुधा अपि' बहुप्रकारा अपि, तुशब्दोऽपिशब्दार्थः, चेष्टाः कुर्वाणा 'क्रियाफलेन' कर्मणा न युज्यते; 'एवमेव' अनेनैव प्रकारेण एनामपि क्षिप्तचित्तामनेका अपि विरुद्धाः क्रियाः कुर्वाणामकर्मकोपचयां पश्यत ॥ अथात्र परस्य मतमाशङ्कमान आह-

[भा.६२३०] जइ इच्छसि सासेरा, अचेतणा तेन से चओ नत्थि ।
जीवपरिग्गहिया पुन, बोंदी असमंजसं समता ॥

वृ- यदि त्वमेतद् 'इच्छसि' अनुमन्यसे, यथा-"सासेरा" इति देशीपदत्वाद् यन्त्रमयी नर्तकी

अचेतना तेन कारणेन "से" तस्याः 'चयः' कर्मोपचयो नास्ति, 'बोन्दि' तनुः पुनः 'जीवपरिगृहीता' जीवेनाधिष्ठिता, जीवपरिगृहीतत्वाच्चवश्यं तद्विरुद्धचेष्टातः कर्मोपचयसम्भः, ततो या सासेराद्दृष्टान्तेन समता आपादिता सा 'असमञ्जसम्' अयुज्यमाना, अचेतनसचेतनयोर्दृष्टान्त-दार्ष्टान्तिकयोर्वैषम्यात्। अत्राऽऽचार्य प्राह-

[भा.६२३१]　　चेयणमचेयणं वा, परतंतत्तेण ननु हु तुल्लाइं।
न तया विसेसितं एत्थ किंचि भणती सुण विसेसं ॥

वृ- इह वस्तु चेतनं वाऽस्तु अचेतनं वा, यदि परतन्त्रं तदा ननु 'हुः' निश्चितं 'परतन्त्रत्वेन' परायत्ततया यतो द्वे अपि तुल्ये ततो न किञ्चिद् वैषम्यम्। पर आह-न त्वयाऽत्र परकर्मोपचयचिन्तायां 'किञ्चिदपि' मनागपि विशेषिते येन 'जीवपरिगृहीतत्वेऽप्येकत्र कर्मोपचयो भवति, एकत्र न' इति प्रतिपद्यामहे। अत्राचार्य 'भणति' ब्रूते-शृणु भण्यमानं विशेषम्॥ तमेवाह-

[भा.६२३२]　　ननु सो चेव विसेसो, जं एक्कमचेतणं सचित्तेगं।
जह चेयणे विसेसो, तह भणसु इमं निसामेह ॥

वृ- ननु 'स एव' यन्त्रनर्तकी-स्वाभाविकनर्तकीदृष्टान्तसूचितो विशेषः-यद् 'एकं शरीरं' यन्त्रनर्तकीसत्कं परायत्ततया चेष्टमानमप्यचेतनम्, 'एकं तु' स्वाभाविकनर्तकीशरीरं स्वायत्ततया प्रवृत्तेः 'सचित्तं' सचेतनमिति। पर आह-यथा एष चेतने विशेषो निरसन्दिग्धप्रतिपत्तिविषयो भवत तथा 'भणत' प्रतिपादयत। आचार्य प्राह-ततः 'इदं' वक्ष्यमाणं 'निशमय' आकर्णय॥

[भा.६२३३]　　जो पेल्लिओ परेणं, हेऊ वसणस्स होइ कायाणं।
तत्थ न दोसं इच्छसि, लोगेण समं तहा तं च ॥

वृ- यः परेण प्रेरितः सन् 'कायनां' पृथिव्यादीनां 'व्यसनस्य' सङ्घट्टन-परितापनादिरूपस्य 'हेतुः' कारणं भवति 'तत्र' तस्मिन् परेण प्रेरिततया कायव्यसनहेतौ यथा न त्वं दोषमिच्छसि, अनात्मवशतया प्रवृत्तेः। कथं पुनर्दोषं नेच्छामि? इत्यत आह-'लोकेन समं' लोकेन सह, लोके तथादर्शनात इत्यर्थः। तथाहि-यो यत्रानात्मवशतया प्रवर्तते तं तत्र लोको निर्दोषमभिमन्यते। अथ एव परप्रेरिततया कायव्यसनहेतुं निर्दोषमभिमन्यताम्। यथा च तं निर्दोषमिच्छसि तथा 'तामपि च' क्षिप्तचित्तां निर्दोषां पश्य, तस्या अपि परायत्ततया तथारूपासु चेष्टासु प्रवृत्तेः॥

एतदेव सविशेषं भावयति-

[भा.६२३४]　　पस्संतो वि य काए, अपच्चलो अप्पगं विधारेउं।
जह पेल्लितो अदोसो, एमेव इमं पि पासामो ॥

वृ-यथा परेण प्रेरित आत्मानं 'विधारयितुं' संस्थापयितुम् 'अप्रत्यलः' असमसर्थः सन् पश्यन्नपि 'कायान्' पृथिवीकायिकादीन् विराधयन् अन्निकापुत्राचार्य इव 'अदोषः' निर्दोषः; 'एवमेव' अनेनैव प्रकारेण परायत्ततया प्रवृत्तिलक्षणेन 'इमामपि' क्षिप्तचित्तामदोषां पश्यामः॥

इह पूर्वं प्रगुणीभूतायास्तस्याः प्रायश्चित्तदानविषये त्रय आदेशा गुरुकादय उक्ता अतस्तानेव गुरुकादीन् प्ररूपयति-

[भा.६२३५]　　गुरुगो गुरुगतरागो, अहागुरुगो य होइ ववहारो।
लहुओ लहुयतरागो, अहालहूगो य ववहारो ॥

[भा.६२३६]　　लहुसो लहुसतरागो, अहालहूसो य होइ ववहारो।

एतेसिं पच्छित्तं, वोच्छामि अहानुपुव्वीए ॥

[भा.६२३७] गुरुतो य होइ मासो, गुरुगतरागो य होइ चउमासो।
अहगुरुगो छम्मासो, गुरुगे पक्खम्मि पडिवत्ती ॥

[भा.६२३८] तीसा य पन्नवीसा, वीसा पन्नरसेव य।
दसपंच य दिवसाइं, लहुसगपक्खम्मि पडिवत्ती ॥

[भा.६२३९] गुरुगं च अट्ठमं खलु, गुरुगतरागं च होइ दसमं तु।
आहागुरुग दुवालस, गुरुगे पक्खम्मि पडिवत्ती ॥

[भा.६२४०] छट्ठं च चउत्थं वा, आयंबिल-एगठाण-पुरिमड्ढा।
निव्वियगं दायव्वं, अहलहुसगम्मि सुद्धो वा ॥

वृ- आसां षण्णामपि गाथानां व्याख्या पूर्ववत्। नवरम्- इहागीतार्थप्रत्ययार्थं यथालघुस्वको व्यवहारः प्रस्थापयितव्यः ॥

मू. (२०६) *दित्तचित्तं निग्गंथिं निग्गंथे गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥*

वृ- अस्य व्याख्या प्राग्वत्। नवरम्-दीप्तचित्ता-लाभादिमदेन परवशीभूतहृदया ॥

अथ भाष्यकारो विस्तरमभिधित्सुराह-

[भा.६२४१] एसेव गमो नियमा, दित्तादीनं पि होइ नायव्वो।
जो होइ दित्तचित्तो, सो पलवति निच्छियव्वाइं ॥

वृ- 'एष एव' अनन्तरोक्तक्षिप्तचित्तानिर्ग्रन्थीसूत्रगत एव 'गमः' प्रकारो लौकिक-लोकोत्तरिकभेदादिरूपः 'दीप्तादीनामपि' दीप्तचित्ताप्रभृतीनामपि निर्ग्रन्थीनां नियमाद् वेदितव्यः। यत् पुनर्नानात्वं तद् अभिधातव्यम्। तदेवाधिकृतसूत्रेऽभिधित्सुराह-"जो होइ" इत्यादि, यो भवति दीप्तचित्तः सोऽनीप्सितव्यानि बहूनि प्रलपति, बह्वनीप्सितप्रलपनं तस्य लक्षणम्, क्षिप्तचित्तस्त्वपहतचित्ततया मौनेनाप्यवतिष्ठत इति परस्परं सूत्रयोर्विशेष इति भावः ॥

अथ कथमेष दीप्तचित्तो भवति ? इति तत्कारणप्रतिपादनार्थमाह-

[भा.६२४२] इति स असम्माणा, खित्ता सम्माणतो भवे दित्ता।
अग्गी व इंधनेनं, दिप्पति चित्तं इमेहिं तु ॥

वृ- 'इति' अनन्तरसूत्रोक्ता 'एषा' क्षिप्तचित्ता 'असम्मानतः' अपमानतो भवति। 'दीप्ता' दीप्तचित्ता पुनः 'सम्मानतः' विशिष्टसम्मानावाप्तितो भवति। तच्च चित्तं दीप्यतेऽग्निरिवेन्धनैः 'एभिः' वक्ष्यमाणैर्लाभमदादिभिः ॥ तानेवाह-

[भा.६२४३] लाभमएण व मत्तो, अहवा जेऊण दुज्जए सत्तू।
दित्तम्मि सायवाहणो, तमहं वोच्छं समासेण ॥

वृ-लाभमदेन वा मत्तः सन् दीप्तचित्तो भवति, अथवा दुर्जयान् शत्रून् जित्वा, एतस्मिन्नुभयस्मिन्नपि 'दीप्ते' दीप्तचित्ते लौकिको दृष्टान्तः सातवाहनो राजा। 'तमहं' सातवाहनदृष्टान्तं समासेन वक्ष्ये।

यथाप्रतिज्ञातमेव करोति-

[भा.६२४४] महुराऽऽणत्ती दंडे, सहसा निग्गम अपुच्छिउं कयरं।
तस्स य तिक्खा आणा, दुहा गता दो वि पाडेउं ॥

[भा.६२४५] सुतजम्म-महुरपाडण-निहिलंभनिवेदणा जुगव दित्तो।

सयणिज्ज खंभ कुड्डे, कुट्टेइ इमाइं पलवंतो ।।

वृ- गोयावरीए नदीए तडे अ पतिट्ठाणं नगरं । तत्थ सालवाहणो राया । तस्स खरओ अमच्चो। अन्नया सो सालवाहनो राया दंडनायगमानवेइ-महुरं घेत्तूणं सिग्घमागच्छ । सो य सहसा अपुच्छिऊण दंडेहिं सह निग्गओ । तओ चिंता जाया-का महुरा घेत्तव्वा ? दक्खिणमहुरा उत्तरमहुरा वा ? । तस्स आणा तिक्खा, पुनो पुच्छिउं न तीरति तओ दंडा दुहा काऊण दोसु वि पेसिया । गहिओ दो वि महुराओ । तओ वद्धावगो पेसिओ । तेन गंतूण राया वद्धाविओ-देव ! दो वि महुराओ गहियाओ । इयरो आगओ-देव ! अग्गमहिसीए पुत्तो जाओ । अन्नो आगतो-देव ! अमुगत्थ पदेसे विपुलो निही पायडो जातो । तओ उवरुवरिं कल्लाणनिवेयणेण हरिसवसविसप्पमाणहियओ परव्वसो जाओ । तओ हरिसं धरिउमचायंतो सयणिज्जं कुट्टइ, खंभे आहणइ, कुड्डे विद्दवइ, बहूणि य असमंजसाणि पलवति । तओ खरगेणामच्चेणं तमुवाएहिं पडिबोहिउकामेण खंभा कुड्डा बहू विद्दविया । रन्ना पुच्छियं- केनेयं विद्दवियं ? । सो भणेइ-तुब्भेहिं । ततो 'मम सम्मुहमलीयमेयं भणति' रुट्ठेणं रन्ना सो खरगो पाएण तालितो । तओ संकेइयपुरिसेहिं उप्पाडिओ अन्नत्थ संगोवितो य । तओ कम्हिइ पओयणे समावडिए रन्ना पुच्छिओ-कत्थ अमच्चो चिट्ठति ? । संकेइयपुरिसेहि य 'देव ! तुम्हं तेइयं ति । तओ समावत्थो जाओ ताहे संकेइयपुरिसेहिं विन्नत्तो-देव ! गवेसामि, जइ वि कयाइ चंडालेहिं रक्खिओ होज्जा । तओ गवेसिऊण आनिओ । राया संतुट्ठो । अमच्चेण सब्भावो कहिओ । तुट्ठेन विउला भोगा दिन्ना ।। साम्प्रतमक्षरार्थो विव्रियते-सातवाहनेन राज्ञा मथुराग्रहणे "दंडि"त्ति दण्डनायकस्याज्ञप्ति कृता । ततो दण्डाः सहसा 'कां मथुरां गृह्णीमः ?' इत्यपृष्ट्वा निर्गताः । तस्य च राज्ञ आज्ञा तीक्ष्णा, ततो न भूयः प्रष्टुं शक्नुवन्ति । ततस्ते दण्डा द्विधा गताः, द्विधा विभज्य एके दक्षिण-मथुरायामपरे उत्तरमथुरायां गता इत्यर्थः । द्वे अपि च मथुरे पातयित्वा ते समागताः ।। सुतजन्म-मथुरापातन-निधिलाभानां युगपद् निवेदनायां हर्षवशात् सातवाहनो राजा 'दीप्तः' दीप्तचित्तोऽभवत् । दीप्तचित्ततया च 'इमानि' वक्ष्यमाणानि प्रलपन् शयनीय-स्तम्भकुड्यानि कुट्टयति ।। तत्र यानि प्रलपति तान्याह-

[भा.६२४६] सच्चं भण गोदावरि !, पुव्वसमुद्देण साविया संती ।
सातवाहणकुलसरिसं, जति ते कूले कुलं अत्थि ।।

वृ- हे गोदावरि ! पूर्वसमुद्रेण 'शपिता' दत्तशपथा सती सत्यं 'भण' ब्रूहि-यदि तव कूले सातवाहनकुलसदृशं कुलमस्ति ।।

[भा.६२४७] उत्तरतो हिमवंतो, दाहिणतो सालिवाहणो राया ।
समभारभरक्कंता, तेन न पल्हत्थए पुहवी ।।

वृ- 'उत्तरतः' उत्तरस्यां दिशि हिमवान् गिरि दक्षिणतस्तु सालवाहनो राजा, तेन समभारभराक्रान्ता सती पृथिवी न पर्यस्यति, अन्यथा यदि अहं दक्षिणतो न स्यां ततो हिमवद्गिरिभाराक्रान्ता नियमतः पर्यस्येत् ।।

[भा.६२४८] एयाणि य अन्नाणि य, पलवियवं सो अनिच्छियव्वाइं ।
कुसलेण अमच्चेणं, खरगेणं सो उवाएणं ।।

वृ- 'एतानि' अनन्तरोदितानि अन्यानि च सोऽनीप्सितव्यानि बहूनि प्रलपितवान् । ततः कुशलेन खरकनाम्नाऽमात्येनोपायेन प्रतिबोधयितुकामेनेदं विहितम् ।। किम् ? इत्याह-

[भा.६२४९] विद्दवितं केणं ति य, तुब्भेहिं पायतालणा खरए।
कत्थत्ति मारिओ सो, दडुं ति य दरिसिते भोगा ॥

वृ- 'विद्रवितं' विनाशितं समस्तं स्तम्भ-कुड्यादि। राज्ञा पृष्टम्-केनेदं विनाशितम्? । अमात्यः सम्मुखीभूय सरोषं निष्ठुरं वक्ति-युष्माभिः। ततो राज्ञा कुपितेन तस्य पादेन ताडना कृता। तदनन्तरं सङ्केतितपुरुषैः स उत्पाटितः सङ्गोपितश्च। ततः समागते कस्मिंश्चित् प्रयोजने राज्ञा पृष्टम्-कुत्रामात्यो वर्तते? । सङ्केतितपुरुषैरुक्तम्-देव! युष्मत्पादानामविनयकारी इति मारितः। ततः 'दुष्टं कृतं मया' इति प्रभूतं विसूरितवान्। स्वस्थीभूते च तस्मिन् सङ्केतितपुरुषैरमात्यस्य दर्शनं कारितम्। ततः सद्भावकथनानन्तरं राज्ञा तस्मै विपुला भोगाः प्रदत्ता इति ॥

उक्तो लौकिको दीप्तचित्तः। अथ तमेव लोकोत्तरिकमाह-

[भा.६२५०] महज्झयण भत्त खीरे, कंबलग पडिग्गहे य फलए य।
पासाए कप्पड्डी, वातं काऊण वा दित्ता ॥

वृ- 'महाध्ययनं' पौण्डरीकादिकं दिवसेन पौरुष्या वा कयाचिद् मेधाविन्या क्षुल्लिकया आगमितम्, अथवा भक्तमुत्कृष्टं लब्धवा 'नास्मिन् क्षेत्रे भक्तमीदृशं केनापि लब्धपूर्वम्', यदि वा क्षीरं चतुर्जातकादिभिः समवाप्य 'नैतादृशमुत्कृष्टं क्षीरं केनापि लभ्यते', यदि वा कम्बलरत्नमतीवोत्कृष्टम् अथवा विशिष्टवर्णादिकम् अथवा प्रासादे सर्वोत्कृष्टे उपाश्रयत्वेन लब्धे, "कप्पड्डी" ति ईश्वरदुहितरि रूपवत्यां प्रज्ञादिगुणयुक्तायां लब्धायां प्रमोदते, प्रमोदभरवशाच्च दीप्तचित्ता भवति। एतेन "लाभमदेन वा मत्तः" इति पदं लोकोत्तरे योजितम्। अधुना "दुर्जयान् शत्रून् जित्वा" इति पदं योजयति-वादं वा परप्रवादिन्या दुर्जयया सह कृत्वा तां पराजित्यातिदर्पतः 'दीप्ता' दीप्तचित्ता भवति ॥ एतासु दीप्तचित्तासु यतनामाह-

[भा.६२५१] दिवसेण पोरिसीए, तुमए पढितं इमाए अद्धेणं।
एतीए नत्थि गव्वो, दुम्मेहतरीए को तुज्झं ॥

वृ- दिवसेन पौरुष्या वा त्वया यत् पौण्डरीकादिकमध्ययनं पठितं तद् अनया दिवसस्य पौरुष्या वाऽर्द्धेन पठितं तथाऽप्येतस्या नास्ति गर्व, तव पुनर्दुर्मेधस्तरकायाः को गर्व?, नैव युक्त इति भावः, एतस्या अपि तव हीनप्रज्ञत्वात् ॥

[भा.६२५२] तद्दव्वस्स दुगुंछण, दिट्ठंतो भावणा असरिसेणं।
काऊण होति दित्ता, वादकरणे तस्य जा ओमा ॥

वृ- यद् उत्कृष्टं कलमशाल्यादिकं भक्तं क्षीरं कम्बलरत्नादिकं वा तया लब्धं तस्य द्रव्यस्य जुगुप्सनं क्रियते, यथा-नेदमपि शोभनम्, अमुको वाऽस्य दोष इति। यदि वा 'दृष्टान्तः' अन्येनापीदृशमानीतमिति प्रदर्शनं क्रियते। तस्य च दृष्टान्तस्य भावना 'असदृशेन' शतभागेन सहस्रभागेन वा या तस्याः सकाशाद् हीना तया कर्तव्या। या तु वादं कृत्वा दीप्ताऽभूत तस्याः प्रगुणीकरणाय्रपूर्वं चरिकादिका प्रचण्डा परवादिनी प्रज्ञाप्यते, ततः सा तस्या वादभिमानिन्याः पुरतस्ततोऽप्यवमतरा या साध्वी तया वादकरणे पराजयं प्राप्यते, एवमपभ्राजिता सती प्रगुणीभवति।

[भा.६२५३] दुल्लभदव्वे देसे, पडिसेहितगं अलद्धपुव्वं वा।
आहारोवहि वसही, अक्खतजोनी व धूया वि ॥

वृ- यत्र देशे क्षीर-घृतादिकं द्रव्यं दुर्लभं तत्र तद् अन्यासामार्यिकाणां 'प्रतिषिद्धं' 'न प्रयच्छामः'

इति दायकेन निषिद्धं 'अलब्धपूर्वं वा' कयाऽपि पूर्वं तत्र न लब्धं तत्र तद् लब्ध्वा दीप्तचित्ता भवतीति वाक्यशेषः, यद्वा सामान्येनोत्कृष्ट आहार उत्कृष्ट उपधिरुत्कृष्टा वा वसतिर्लब्धा अक्षतयोनिका वा 'दुहिता' काचीदश्वरपुत्रिका लब्धा तत्रेयं यतना ॥

[भा.६२५४] पगयम्मि पन्नवेत्ता, विज्जाति विसोधि कम्ममादी वा।
खुड्डीय बहुविहे आनियम्मि ओभावणा पउणा ॥

वृ- 'प्रकृते' विशिष्टतरे भक्त-क्षीर-कम्बल-रत्नादिकेऽवमतरायाः सम्पादयितव्ये तथाविधं श्रावकमितरं वा प्रज्ञाप्य, तदभावे कस्यापि महर्द्धिकस्य विद्यां आदिशब्दाद् मन्त्र-चूर्णादीन् यावत् 'कर्मादि' कार्मणमपि प्रयुज्य, आदिशब्दः स्वगतानेकभेदसूचकः, ततः क्षुल्लिकतराया गुणतः शतभाग-सहस्रभागादिना हीनाया विशिष्टमाहारादिकं सम्पादयन्ति । ततो विद्यादिप्रयोगजनितपापविशुद्धये 'विशोधि' प्रायश्चित्तं ग्राह्यम् । एवं क्षुल्लिकया 'बहुविधे' क्षीरादिके आनीते सति तस्या अपभ्राजना क्रियते ततः प्रगुणा भवति ॥

[भा.६२५५] अद्दिट्ठसड्ढ कहणं, आउट्टा अभिणवो य पासादो।
कयमित्ते य विवाहे, सिद्धाइसुता कतितवेणं ॥

वृ- यस्तया श्राद्धो न दृष्टः-अदृष्टपूर्वस्तस्यादृष्टस्य श्राद्धस्य 'कथनं' प्रज्ञापना, उपलक्षणमेतद्, अन्यस्य महर्द्धिकस्य विद्यादिप्रयोगतोऽभिमुखीकरणम्, ततस्ते आवृत्ताः सन्तस्तस्या लब्ध्यभिमानिन्याः समीपमागत्य ब्रुवते-वयमेतया क्षुल्लिकया प्रज्ञापितास्ततः 'अभिनव एव' कृतमात्र एव युष्माकेप प्रासादो दत्त इति । तथा कैतवेन 'सिद्धादिसुताः' सिद्धपुत्रादिदुहितरः कृतमात्र एव विवाहे उत्पादनीयाः । इयमत्र भावना-सिद्धपुत्रादीनां प्रज्ञापनां कृत्वा तद्दुहितरः कृतमात्रविवाहा एव व्रतार्थं तत्समक्षमुपस्थापनीयाः येन तस्या अपभ्राजना जायते । ततः प्रगुणीभूतायां तस्यां यदि तासां न तात्त्विकी व्रतश्रद्धा तदा शकुनादिवैगुण्यमुद्भाव्य मुच्यन्ते ॥

मू. *(२०७) जक्खाइट्ठिं निग्गंथिं निग्गंथे गिण्हमाणे वा नाइक्कमइ ॥*

वृ-अस्य सम्बन्धमाह-

[भा.६२५६] पोग्गल असुमसमुदयो, एस अनागंतुगो व दोण्हं पि।
जक्खावेसेणं पुन, नियमा आगंतुको होइ ॥

वृ- 'द्वयोः' क्षिप्तचित्ता-दीप्तचित्तयोः 'एषः' पीडाहेतुत्वेनान्तरमुद्दिष्टोऽशुभपुद्गलसमुदयः 'अनागन्तुकः' स्वशरीरसम्भवी प्रतिपादितः। यक्षावेशेन पुनर्यो यतिपीडाहेतुरशुभपुद्गलसमुदयः स नियमादागन्तुको भवति । ततोऽनागन्तुकाशुभपुद्गलसमुदयप्रतिपादनानन्तरमागन्तुकाशुभपुद्गलसमुदयप्रतिपादनार्थमेष सूत्रारम्भः ॥ प्रकारान्तरेण सम्बन्धमाह-

[भा.६२५७] अहवा भय-सोगजुया, चिंतद्दन्ना व अतिहरिसिता वा।
आविस्सति जक्खेहि, अयमन्नो होइ संबंधो ॥

वृ- 'अथवा' इति प्रकारान्तरोपदर्शने । भय-शोकयुक्ता वा चिन्तार्दिता वा, एतेन क्षिप्तचित्ता उक्ता; अतिहर्षिता वा या परवशा, अनेन दीप्तचित्ताऽभिहिता; एषा द्विविधाऽपि यक्षैः परवशहृदयतया 'आविश्यते' आलिङ्ग्यते। ततः क्षिप्त-दीप्तचित्तासूत्रानन्तरं यक्षाविष्टसूत्रमित्ययमन्यो भवति सम्बन्धः ॥ अनेन सम्बन्धेनायातस्यास्या व्याख्या-सा च प्राग्वत् । सम्प्रति यतो यक्षाविष्टा भवति तत् प्रतिपादनार्थमाह-

[भा.६२५८] पुव्वभवियवेरेणं, अहवा राएण राइया संती ।
एतेहि जक्खइट्ठा, सवत्ति भयए य सज्झिलगा ॥

वृ- 'पूर्वभविकेन' भवान्तरभाविना वैरेण अथवा रागेण रञ्जिता सती यक्षैराविश्यते। एताभ्यां द्वेष रागाभ्यां कारणाभ्यां यक्षाविष्टा भवति । तथा चात्र पूर्वभविके वैरे सपत्नीदृष्टान्तो रागे भृतकदृष्टान्तः सज्झलकदृष्टान्तश्चेति ॥ तत्र सपत्नीदृष्टान्तमाह-

[भा.६२५९] वेस्सा अकामतो निज्जराए मरिऊण वंतरी जाता ।
पुव्वसवत्ति खेत्तं, करेति सामन्नभावम्मि ॥

वृ- एगो सेट्ठी । तस्स दो महिला । एगा पिया, एगा वेस्सा, अनिष्टेत्यर्थः । तत्थ जा वेस्सा सा अकामनिज्जराए मरिऊण वंतरी जाया । इयरा वि तहारूवाणं साहुणीणं पायमूले पव्वइया । सा य वंतरी पुव्वभववेरेण छिड्डाणि मग्गइ । अन्नया पमत्तं दट्ठूण छलियाइया ॥ अक्षरार्थस्त्वयम्-श्रेष्ठिसत्का 'द्वेष्या' अनिष्टा भार्याऽकामनिर्जरया मृत्वा व्यन्तरी जाता । ततः पूर्वसपत्नीं श्रामण्यभावे व्यवस्थितां पूर्वभविकं वैरमनुस्मरन्ती 'क्षिप्तां' यक्षाविष्टां कृतवती । गाथायां वर्तमाननिर्देशः प्राकृतत्वात् ॥ अथ भृतकदृष्टान्तमाह-

[भा.६२६०] भयतो कुडुंबिनीए, पडिसिद्धो वाणमंतरो जातो ।
सामण्णम्मि पमत्तं, छलेति तं पुव्ववेरेणं ॥

वृ- एगा कोडुंबिनी ओरालसरीरा एगेन भयगेणं ओरालसरीरेणं पत्थिया । सो तीए निच्छीओ । तओ सो गाढमज्झोववन्नो तीए सह संपयोगमलभमाणो दुक्खसागरमोगाढो अकामनिज्जराए मरिऊण वंतरो जाओ । सा य कोडुंबिनी संसारवासविरत्ता पव्वइया । सा तेन आभोइया । पमत्तं दट्ठूण छलिया ॥ अक्षरार्थस्त्वयम्-'भृतकः' कर्मकरः कुटुम्बिन्या प्रतिषिद्धो वानमन्तरो जातः । ततः श्रामण्यस्थितां तां प्रमत्तां मत्वा पूर्ववैरेण छलितवान् ॥ अथ सज्झिलकदृष्टान्तमाह-

[भा.६२६१] जेट्ठो कनेट्ठभज्जाए मुच्छिओ निच्छितो य सो तीए ।
जीवंते य मयम्मी, सामन्ने वंतरो छलए ॥

वृ- एगम्मि गामे दो सज्झिलका, मायरो इत्यर्थः । तत्थ जेट्ठो कणिट्ठस्स भारियाए अज्झोववन्नो। सो तं पत्थेइ । सा नेच्छइ भणइ य-तुमं अप्पणो लहुबंधवं जीवंतं न पाससि ? । तेन चिंतियं-जाव एसो जीवए ताव मे नत्थि एसा । एवं चिंतित्ता छिद्दं लभिऊण विससंचारेण मारिओ लहुभाया । तओ भणियं-जस्स तुमं भयं कासी सो मतो, इदानिं पूरेहि मे मनोरहं । तीए चिंतियं-नूणमेतेन मारितो, धिरत्थु कामभोगाणमिति संवेगेण पव्वइया । इयरो वि दुहसंतत्तो कामनिज्जराए मओ वंतरो जातो विभंगेण पुव्वभवं पासइ । तं साहुणिं दट्ठूण पुव्वभवयं वेरमणुसरंतो पमत्तं छलियाइओ॥ अक्षरयोजना त्वियम्-ज्येष्ठः कनिष्ठभार्यायां मूर्छितः, न चासौ तया ईप्सितः किन्तु 'जीवन्तं स्वभ्रातरं न पश्यसि ? ' इति भणितवती । ततः 'अस्मिन् जीवति ममैषा न भवति' इतिबुध्या तं मारितवान्। मृते च तस्मिन् श्रामण्ये स्थितां तां व्यन्तरो जातः सन् छलितवान् ॥

अथैवंछलिताया यतनामाह-

[भा.६२६२] तस्स य भूततिगिच्छा, भूतरवावेसणं सयं वा वि ।
नीउत्तमं च भावं, नाउं किरिया जहा पुव्वं ॥

वृ-तस्या एवं 'भूतरवावेशनं' भूतरवैः-भूतप्रयुक्तासमञ्जसप्रलापैः आवेशनं-यक्षावेशनं मत्वा भूतचिकित्सा कर्तव्या कथम्? इत्याह-'तस्य' भूतस्य नीचमुत्तमं च भावं ज्ञात्वा। कथं ज्ञात्वा? इत्याह-'स्वयं वा' कायोत्सर्गेण देवतामाकम्प्य तद्वचनतः सम्यक् परिज्ञाय, अपिशब्दाद् अन्यस्माद्वा मान्त्रिकादेः सकाशाद् ज्ञात्वा। तस्याः क्रिया विधेया, यथा 'पूर्वं' क्षिप्तचित्ताया उक्ता॥ इह यक्षाविष्टा किलोन्मादप्राप्ता भवति ततो यक्षाविष्टसूत्रानन्तरमुन्मादप्राप्तासूत्रमाह-

*मू. (२०८) उम्मायपत्तिं निग्गंथिं निग्गंथे गिण्हमाणे वा नातिक्कमइ॥*

वृ-अस्य व्याख्या प्राग्वत्॥ अथोन्मादप्ररूपणार्थं भाष्यकारः प्राह-

[भा.६२६३] उम्मातो खलु दुविधो, जक्खाएसो य मोहनिज्जो य।
जक्खाएसो वुत्तो, मोहेन इमं तु वोच्छामि॥

वृ-उन्मादः 'खलु' निश्चितं 'द्विविधः' द्विप्रकारः। तद्यथा-यक्षावेशहेतुको यक्षावेशः, कार्ये कारणोपचारात्। एवं मोहनीयकर्मोदयहेतुको मोहनीयः। चशब्दौ परस्परसमुच्चयार्थौ स्वगतानेकभेदसंसूचकौ वा। तत्र यः 'यक्षावेशः' यक्षावेशहेतुकः सोऽनन्तरसूत्रे उक्तः। यस्तु 'मोहेन' मोहनीयोदयेन; मोहनीयं नाम-येनात्मा मुह्यति, तच्च ज्ञानावरणं मोहनीयं वा द्रष्टव्यम्, द्वाभ्यामप्यातमनो विपर्यासापादनात्, तेनोत्तरत्र "अहव पित्तमुच्छाए" इत्याद्युच्यमानं न विरोधभाक्; "इमं" ति अयम्-अनन्तरमेव वक्ष्यमाणतया प्रत्यक्षीभूत इव तमेवेदानीं वक्ष्यामि। प्रतिज्ञातं निर्वाहयति-

[भा.६२६४] रूवंगं दट्ठूणं, उम्मातो अहव पित्तमुच्छाए।
तद्दायणा निवाते, पित्तम्मि य सक्करादीनि॥

वृ-रूपं च-नटादिराकृति अङ्गं च-गुह्याङ्गं रूपाङ्गं तद् दृष्ट्वा कस्या अप्युन्मादो भवेत्। अथवा 'पित्तमूर्च्छया' पित्तोद्रेकेण उपलक्षणत्वाद् वातोद्रेकवशतो वा स्यादुन्मादः। तत्र रूपाङ्गं दृष्ट्वा यस्या उन्मादः सञ्जातस्तस्यातस्य-रूपाङ्गस्य विरूपावस्थां प्राप्तस्य दर्शना कर्तव्या। या तु वातेनोन्मादं प्राप्ता सा निवाते स्थापनीया। उपलक्षणमिदम्, तेन तैलादिना शरीरस्याभ्यङ्गो घृतपायनं च तस्याः क्रियते। 'पित्ते' पित्तवशादुन्मत्तीभूतायाः शर्करा-क्षीरादीनि दातव्यानि॥ कथं पुनरसौ रूपाङ्गदर्शनेनोन्मादं गच्छेत्? इत्याह-

[भा.६२६५] दट्ठूण नडं काई, उत्तरवेउव्वितं मतणखेत्ता।
तेनेव य रूवेणं, उड्डम्मि कयम्मि निव्विण्णा॥

वृ-काचिदल्पसत्त्वा संयती नटं दृष्ट्वा, किंविशिष्टम्? इत्याह-'उत्तरवैकुर्विकम्' उत्तरकालभाविवस्त्र-ऽऽभरणादिविचित्रकृत्रिमविभूषाशोभितम्, ततः काचिद् 'मदनक्षिप्ता' उन्मादप्राप्ता भवेत् तत्रेयं यतना-उत्तरवैकुर्विकापसारणेन तेनैव स्वाभाविकेन रूपेण स नटस्तस्या निर्ग्रन्थ्या दर्श्यते। अथासौ नटः स्वभावतोऽपि सुरूपस्ततोऽसौ ऊर्ध्व-वमनं कुर्वन् तस्या दर्श्यते, ततः तस्मिन्नूर्ध्वे कृते सति काचिदल्पकर्मा निर्विण्णा भवति, तद्विषयं विरागं गच्छतीत्यर्थः।

[भा.६२६६] पन्नवितो उ दुरूवो, उम्मंडिज्जति अ तीए पुरतो तु।
रूववतो पुन भत्तं, तं दिज्जति जेन छड्डेति॥

वृ-अन्यच्च-यदि नटः स्वरूपतो दुरूपो भवति ततः स पूर्वं प्रज्ञाप्यते, प्रज्ञापितश्च सन् 'तस्याः' उन्मादप्राप्तायाः पुरतः 'उन्मण्ड्यते' यत् तस्य मण्डनं तत् सर्वमपनीयते ततो विरूपरूपदर्शनतो

विरागो भवति। अथासौ नटः स्वभावत एव रूपवान्-अतिशायिना उद्भटरूपेण युक्तस्ततस्तस्य भक्तं मदनफलमिश्रादिकं तद् दीयते येन भुक्तेन तस्याः पुरतः 'छर्दयति' उद्वमति, उद्वमनं च कुर्वन् किलासौ जुगुप्सनीयो भवति ततः सा तं दृष्ट्वा विरज्यत इति ॥

[भा.६२६७] गुज्झंगम्मि उ वियडं, पज्जावेऊण खरगमादीणं।
तद्दायणे विरागो तीसे तु हवेज्ज दट्ठूणं ॥

वृ- यदि पुनः कस्या अपि गुह्याङ्गविषय उन्मादो भवति न रूप-लावण्याद्यपेक्षः ततः 'खरकादीनां' दूव्यक्षरकप्रभृतीनां 'विकटं' मद्यं पाययित्वा प्रसुप्तीकृतानां पूतिमद्योद्गालखरण्टितसर्वशरीराणामत एव मक्षिकाभिणिभिणायमानानां "तद्दायणे" त्ति तस्य-गुह्याङ्गस्य मद्योद्गालादिना बीभत्सीभूतस्य दर्शना क्रियते। तच्च दृष्ट्वा तस्या आर्यिकाया विरागो भवेत् ततः प्रगुणीभवति ॥

मू. (२०९) *उवसग्गपत्तं निग्गंथिं निग्गंथे गिण्हमाणे वा २ नातिक्कमइ ॥*

वृ- अस्य सम्बन्धमाह-

[भा.६२६८] मोहेन पित्ततो वा, आतासंवेतिओ समक्खाओ।
एसो उ उवसग्गो, अयं तु अन्नो परसमुत्थो ॥

वृ- 'मोहेन' मोहनीयोदयेनेत्यर्थः 'पित्ततो वा' पित्तोदयेन य उन्मत्तः सः 'आत्मसंवेदिकः' आत्मनैवात्मनो दुःखोत्पादकः समाख्यातः, यच्चात्मनैवात्मदुःखोत्पादनमेष आत्मसंवेदनीय उपसर्गः। ततः पूर्वमात्मसंवेदनीय उपसर्ग उक्तः। तत उपसर्गाधिकारादयमन्यः परसमुत्थ उपसर्गोऽनेन प्रतिपाद्यत इति ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-सा च प्राग्वत्। तत्रोपसर्गप्रतिपादनार्थमाह-

[भा.६२६९] तिविहे य उवसग्गे, दिव्वे मानुस्सए तिरिक्खे य।
दिव्वे य पुव्वभणिए, मानुस्से आभिओग्गे य ॥

वृ- त्रिविधः खलु परसमुत्थ उपसर्गः। तद्यथा-दैवो मानुष्यकस्तैरश्चश्च। तत्र 'दैवः' देवकृतः 'पूर्वम्' अनन्तरसूत्रस्याधस्ताद् भणितः, 'मानुष्यः पुनः' मनुष्यकृतः 'आभियोग्यः' विद्याद्यभियोग-जनितस्तावद् भण्यते ॥

[भा.६२७०] विज्जाए मंतेन व, चुन्नेण वजोतिया अणप्पवसा।
अनुसासणा लिहावण, खमए मधुरा तिरिक्खाती ॥

वृ- विद्यया वा मन्त्रेण वा चूर्णेन वा 'योजिता' सम्बन्धिता सती काचिदनात्मवशा भवेत् तत्र 'अनुशासना' इति येन रूपलुब्धेन विद्यादि प्रयोजितं तस्यानुशिष्टि क्रियते, यथा-एषा तपस्विनी महासती, न वर्तते तव तां प्रति ईदृशं कर्तुम्, एवंकरणे हि प्रभूततरपापोपचयसम्भव इत्यादि। अथैवमनुशिष्टोऽपि न निवर्तते तर्हि तस्य तां प्रतिविद्यया विद्वेषणमुत्पाद्यते। अथ नास्ति तादृशी प्रतिविद्या ततः "लिहावण" त्ति तस्य सागारिकं विद्याप्रयोगतस्तस्याः पुरत आलेखाप्यते येन सा तद् दृष्ट्वा 'तस्य सागारिकमिदमिति बीभत्सम्' इति जानाना विरागमुपपद्यते। "खमए महुरा" इति मथुरायां श्रमणीप्रभृतीनां बोधिकस्तेनकृत उपसर्गोऽभवत् तं क्षपको निवारितवान्, एषोऽपि मानुष उपसर्गः। तैरश्चमाह-"तिरिक्खाइ" त्ति तिर्यञ्चो ग्रामेयका आरण्यका वा श्रमणीनामुपसर्गान् कुर्वन्ति ते यथाशक्ति निराकर्तव्याः ॥ साम्प्रतमेनामेव गाथां विवरीषुराह-

[भा.६२७१] विज्जादऽभिओगो पुन, एसो मानुस्सओ य दिव्वो य।
तं पुन जाणंति कहं, जति नामं गेण्हए तस्स ॥

वृ- विद्यादिभिः 'अभियोगः' अभियुज्यमानता । एष पुनः 'द्विविधः' द्विप्रकारः, तद्यथा-मानुषिको दैवश्च । तत्र मनुष्येण कृतो मानुषिकः । देवस्यायं तेन कृतत्वाद् दैवः । तत्र देवकृतो मनुष्यकृतो वा विद्यादिभिरभियोग एष एव यत् तस्मिन् दूरस्थितेऽपि तत्प्रभावात् सा तथारूपा उन्मत्ता जायते । अथ 'तं' विद्याद्यभियोगं दैवं मानुषिकं वा कतं जानन्ति ? । सूरिराह-तयोर्देव-मानुषयोर्मध्ये यस्य नाम साऽभियोजिता गृह्णाति तत्कृतः स विद्याद्यभियोगो ज्ञेयः ॥

साम्प्रतं "अनुसासणा लिहावण" इत्येतद् व्याख्यानयति-

[भा.६२७२] अनुसासियम्मि अठिए, विद्देसं देंति तह वि य अठंते ।
जक्खीए कोवीणं, तीसे पुरओ लिहावेंति ॥

वृ- येन पुरुषेण विद्यादि अभियोजितं तस्यानुशासना क्रियते । अनुशासितेऽप्यस्थिते विद्याप्रयोगतस्तां विवक्षितां साध्वीं प्रति तस्य विद्याद्यभियोक्तुर्विद्वेषणं 'ददति' उत्पादयन्ति वृषभाः । तथापि च तस्मिन् अतिष्ठति 'यक्ष्या' शुन्या तदीयं कौपीनं तस्याः पुरतो विद्याप्रयोगतो लेहयन्ति येन सा तद् दृष्ट्वा तस्येदं सागारिकमिति जानाना विरज्यते ॥ सम्प्रति प्रतिविद्याप्रयोगे दृष्टान्तताख्यापनार्थमाह-

[भा.६२७३] विसस्स विसमेवेह, ओसहं अग्गिमग्गिणो ।
मंतस्स पडिमंतो उ, दुज्जनस्स विवज्जणं ॥

वृ-विषस्यौषधं विषमेव, अन्यथा विषानिवृत्तेः । एवमग्नेर्भूतादिप्रयुक्तस्यौषधमग्निः । मन्त्रस्य प्रतिमन्त्रः । दुर्जनस्यौषधं 'विवर्जनं' ग्राम-नगरपरित्यागेन परित्यागः । ततो विद्याद्यभियोगे साधु-साध्वीरक्षणाय प्रतिविद्यादि प्रयोक्तव्यमिति ॥

[भा.६२७४] जइ पु होज्ज गिलाणी, निरुज्झमाणी उ तो से तेइच्छं ।
संवरियमसंवरिया, उवालभंते निसिं वसभा ॥

वृ- यदि पुनर्विद्याद्यभियोजिता तदभिमुखं गच्छन्ती निरुध्यमाना ग्लाना भवति ततः "से" 'तस्याः' साध्व्याश्चिकित्सां 'संवृताः' केनाप्यलक्ष्यमाणाः कुर्वन्ति । तथा 'असंवृताः' येन विद्याद्यभियोजितं तस्य प्रत्यक्षीभूता वृषभाः 'निशि' रात्रौ तं उपालभन्ते भेषयन्ति पिट्टयन्ति च तावद् यावद् असौ तां मुञ्चतीति ॥ "खमए महुर"त्ति अस्य व्याख्यानमाह-

[भा.६२७५] थूभमह सड्ढिसमणी, बोहिय हरणं तु निवसुताऽऽतावे ।
मज्झेण य अक्कंदे, कयम्मि जुद्धेण मोएति ॥

वृ- महुरानयरीए थूभो देवनिम्मितो । तस्स महिमानिमित्तं सड्ढीतो समणीहिं समं निग्गयातो । रायपुत्तो य तत्थ अदूरे आयावंतो चिट्ठइ । ताओ सड्ढी-समणीओ बोहिएहिं गहियाओ तेनं-तेनं आनियाओ । ताहिं तं साहुं दट्ठूणं अक्कंदो कओ । तओ रायपुत्तेण साहुणा जुद्धं दाऊण मोइयाओ । अक्षरगमनिका त्वियम्-स्तूपस्य 'महे' महोत्सवे श्राद्धिकाः श्रमणीभि सह निर्गताः । तासां 'बोधिकैः' चौरैर्हरणम् । नृपसुतश्च तत्रादूरे आतापयति । बोधिकैश्च तास्तस्य मध्येन नीयन्ते । ताभिश्च तं दृष्ट्वाऽऽक्रन्दे कृते स युद्धेन तेभ्यस्ता मोचयति ॥ उक्तो मानुषिक उपसर्ग । सम्प्रति तैरश्चमाह-

[भा.६२७६] गामेनाऽऽरण्णे व, अभिभूतं संजतिं तु तिरिगेणं ।
थद्धं पकंपियं वा, रक्खेज्ज अरक्खणे गुरुगा ॥

वृ- ग्राम्येणाऽऽरण्येन वा तिरश्चाऽभिभूतां संयतीं यदि वा 'स्तब्धां' तद्भयात् स्तम्भीभूतां

'प्रकम्पितां वा' तदुभयप्रकम्पमानशरीरां रक्षेत्। यदि पुनर्न रक्षति सत्यपि बले ततोऽरक्षणे प्रायश्चित्तं 'गुरुकाः' चत्वारो गुरुका मासाः ॥

मू. (२१०) *साहिगरणं निग्गंथिं निग्गंथे गिण्हमाणे वा २ नातिक्कमइ ॥*

वृ- अस्य सूत्रस्य सम्बन्धमाह-

[भा.६२७७] अभिभवमाणो समणिं, परिग्गहो वा से वारिते कलहो।
'किं वा सति सत्तीए, होइ सपक्खे उविक्खाए ॥

वृ- 'श्रमणीं' साध्वीमभिभवन् गृहस्थो यदि वा "से" 'तस्य' गृहस्थस्य 'परिग्रहः' परिजनः, स चाऽभिभवन् वारितः कलहं श्रमण्या सार्द्धं कुर्यात् ततो य उपशामनालब्धिमान् साधुस्तेन कलह उपशमयितव्यः, न पुनरुपेक्षा विधेया। कुतः ? इत्याह-किं वा सत्यां शक्तौ 'स्वपक्षे' स्वपक्षस्योपेक्षया ? नैव किञ्चिदिति भावः। केवलं स्वशक्तिनैष्फल्यमुपेक्षानिमित्तप्रायश्चित्तापत्तिश्च भवति, तस्मादवश्यं स्वशक्ति परिस्फोरणीया। एतत्प्रदर्शनार्थमधिकृतसूत्रमारभ्यते ॥

अस्य व्याख्या प्राग्वत् ॥ अत्र भाष्यम्-

[भा.६२७८] उप्पन्ने अहिगरणे, ओसमणं दुविहऽतिक्कमं दिस्स।
अनुसासण भेस निरुंभणा य जो तीए पडिपक्खो ॥

वृ-संयत्या गृहस्थेन सममधिकरणे उत्पन्ने द्विविधमतिक्रमं दृष्ट्वा तस्याधिकरणस्य व्यवशमनं कर्तव्यम्। किमुक्तं भवति ?-स गृहस्थोऽनुपशान्तः सन् तस्याः संयत्याः संयमभेदं जीवितभेदं चेति द्विविधमतिक्रमं कुर्यात् तत उपशमयितव्यमधिकरणम्। कथम् ? इत्याह-यः 'तस्याः' संयत्याः 'प्रतिपक्षः' गृहस्थस्तस्य प्रथमतः कोमलवचनैरनुशासनं कर्तव्यम्, तथाऽप्यतिष्ठति 'भीषणं' भापनं कर्तव्यम्, तथाऽप्यभिभवतो 'निरुम्भणं' यस्य या लब्धिस्तेन तया निवारणं कर्तव्यम् ॥

मू. (२११) *सपायच्छित्तं निग्गंथिं निग्गंथे गिण्हमाणे वा २ नातिक्कमइ ॥*

वृ- अस्य सम्बन्धमाह-

[भा.६२७९] आहगरणम्मि कयम्मि, खामिय समुपट्ठिताए पच्छित्तं।
तप्पढमताए भएणं, होति किलंता व वहमाणी ॥

वृ- अधिकरणे कृते क्षामिते च तस्मिन् समुपस्थितायाः प्रायश्चित्तं दीयते, ततः साधिकरणसूत्रानन्तरं प्रायश्चित्तसूत्रमुक्तम् ॥ अस्य व्याख्या-प्राग्वत् ॥ सा सप्रायश्चित्ता 'तत्प्रथमतायां' प्रथमतः प्रायश्चित्ते दीयमाने 'भयेन' 'कथमहमेतत् प्रायश्चित्तं वक्ष्यामि ?' इत्येवंरूपेण विपन्ना भवेत्, यदि वा प्रायश्चित्तं वहन्ती तपसा क्लान्ता भवेत् ॥ तत्रेयं यतना-

[भा.६२८०] पायच्छित्ते दिन्ने, भीताए विसज्जणं किलंताए।
अनुसट्ठि वहंतीए, भएण खित्ताइ तेइच्छं ॥

वृ- प्रायश्चित्ते दत्ते यदि बिभेति ततस्तस्या भीतायाः क्लान्तायाश्च विसर्जनम्, प्रायश्चित्तं मुत्कलं क्रियत इत्यर्थः। अथ वहन्ती क्लाम्यति ततस्तस्या वहन्त्या अनुशिष्टिर्दीयते, यथा-मा भैषीः, बहु गतम्, स्तोकं तिष्ठति, यदि वा वयं साहाय्यं करिष्याम इति। अथवमनुशिष्यमाणाऽपि भयेन क्षिप्तचित्ता भवति ततस्तस्याः 'चैकित्स्यं' चिकित्सायाः कर्म कर्तव्यम् ॥

मू. (२१२) *भत्त-पानपडियाइक्खियं निग्गंथिं निग्गंथे गिण्हमाणे वा २ नातिक्कमइ ॥*

वृ- अस्य सूत्रस्य सम्बन्धमाह-

[भा.६२८१]　पच्छित्तं इत्तिरिओ, होइ तवो वन्निओ य जो एस।
आवकथितो पुन तवो, होति परिन्ना अनसनं तु ॥

वृ- 'प्रायश्चित्तं' प्रायश्चित्तरूपं यद् एतत् तपोऽनन्तरसूत्रे वर्णितम् एतत् तप इत्वरं भवति, यत् पुनः परिज्ञारूपं तपोऽनशनं तद् यावत्कथिकम्, तत इत्वरतपःप्रतिपादनानन्तरं यावत्कथिकतपःप्रतिपादनार्थमधिकृतं सूत्रम् ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-प्राग्वत्। नवरम्-भक्तं च पानं च भक्त-पाने ते प्रत्याख्याते यया सा तथोक्ता। क्तान्तस्य परनिपातः सुखादिदर्शनात् ॥ अत्र भाष्यम्-

[भा.६२८२]　अट्ठं वा हेउं वा, समणीणं विरहिते कहेमाणो।
मुच्छाए विपडिताए, कप्पति गहणं परिन्नाए ॥

वृ- 'श्रमणीनाम्' अन्यासां साध्वीनां 'विरहिते' अशिवादिभिः कारणैरभावे एकाकिन्या आर्यिकाया भक्त-पानप्रत्याख्याताया अर्थं वा हेतुं वा कथयतो निर्ग्रन्थस्य यदि सा मूर्च्छया विपतेत्, ततो मूर्च्छया विपतितायास्तस्याः "परिन्नाए"त्ति 'परिज्ञायाम्' अनशने सति कल्पते ग्रहणम्, उपलक्षणत्वाद् अवलम्बनं वा कर्तुम् ॥ इदमेव व्याचष्टे-

[भा.६२८३]　गीतऽज्ञाणं असती, सव्वाऽसतीए व कारण परिन्ना।
पानग-भत्त समाही, कहणा आलोत धीरवनं ॥

वृ- गीतार्थानामार्यिकाणाम् 'असति' अभावे यदि वाऽशिवादिकारणतः सर्वासामपि साध्वीनामभावे एकाकिन्या जातया 'परिज्ञा' भक्तप्रत्याख्यानं कृतम्, ततस्तस्याः कृतभक्त-पानप्रत्याख्यानायाः सीदन्त्या योग्यपानकप्रदानेन चरमेप्सितभक्तप्रदानेन च समाधिरुत्पादनीयः। 'कथना' धर्मकथना यथाशक्ति स्वशरीरानाबाधया कर्त्तव्या। तथा 'आलोकम्' आलोचनां सा दापयितव्या। यदि कथमपि चिरजीवनेन भयमुत्पद्यते, यथा-नाद्यापि म्रियते, किमपि भविष्यति इति न जानीम इति; तस्या धीरापना कर्तव्या ॥

[भा.६२८४]　जति वा न निव्वहेज्जा, असमाही वा वि तम्मि गच्छम्मि।
करणिज्जं अन्नत्थ वि, ववहारो पच्छ सुद्धा वा ॥

वृ- यदि वा प्रबलबुभुक्षावेदनीयोदयतया कृतभक्त-पानप्रयाख्याना सा न निर्वहेत्, न यावत्कथिकमनशनं प्रतिपालयितुं क्षमा इति यावत्, असमाधिर्वा तस्मिन् गच्छे तस्या वर्तते ततोऽन्यत्र नीत्वा यद् उचितं तत् तस्याः करणीयमिति। अथ पश्चादनशनप्रत्याख्यान-भङ्गविषयस्तस्याः 'व्यवहारः' प्रायश्चित्तं दातव्यः। अथ स्वगच्छासमाधिमात्रेणान्यत्र गता ततः सा मिथ्यादुष्कृतप्रदानमात्रेण शुद्धेति ॥

*मू. (२१३) अट्ठजायम्मि निग्गंथिं निग्गंथे गिण्हमाणे वा अवलंबमाणे वा नाइक्कमइ ॥*

वृ- अस्य सूत्रस्य सम्बन्धमाह-

[भा.६२८५]　वुत्तं हि उत्तमट्ठे, पडियरणट्ठा व दुक्खरे दिक्खा।
इंती व तस्समीवं, जति हीरति अट्ठजायमतो ॥

वृ- उक्तं 'हि' यस्मात् पूर्वं पञ्चकल्पे-'उत्तमार्थे' उत्तमार्थ-प्राक्सूत्राभिहितं प्रतिपत्तुकामस्य "दुक्खरे"त्ति द्व्यक्षरस्य द्व्यक्षरिकाया वा दीक्षा दातव्या, यदि वा 'प्रतिचरणाय' 'एषा दीक्षिता

मां ग्लानां सतीं प्रतिचरिष्यति' इतिनिमित्तं दूव्यक्षरिका दीक्षिता भवति, सा च पश्चाद् दायकैः प्रतिगृह्येत तस्या चोत्तमार्थप्रतिपन्नाया मूलं 'आयान्ती' आगच्छन्ती बोधिकादिना स्तेनेन यदि ह्रियते अतस्तां प्रति अर्थजातसूत्रावकाशः ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-सा च प्राग्वत्॥ साम्प्रतमर्थजातशब्दव्युत्पत्तिप्रतिपादनार्थमाह-

[भा.६२८६] अट्ठेण जीए कज्जं, संजातं एस अट्ठजाता तु।
तं पुन संजमभावा, चालिज्जंती समवलंबे ॥

वृ- 'अर्थेन' अर्थितया जातं कार्यं यस्या सा; अर्थेन-द्रव्येण जातम्-उत्पन्नं कार्यं यस्याः सा अर्थजाता, गमकत्वादेवमपि समासः। उपलक्षणमेतत्, तेनैवमपि व्युत्पत्ति कर्तव्या- अर्थ-प्रयोजनं जातोऽस्या इत्यर्थःजाता। कथंपुनरस्या अवलम्बनं क्रियते? इत्याह-'तांपुनः' प्रथमव्युत्पत्तिसूचितां संयमभावात् चाल्यमानां द्वितीय-तृतीयव्युत्पत्तिपक्षे तु द्रव्याभावेन प्रयोजनानिष्पत्त्या वा सीदन्तीं 'समवलम्बेत' साहाय्यकरणेन सम्यग् धारयेत्, उपलक्षणत्वाद् गृह्णीयादपि ॥ अथ निर्युक्तिकारो येषु स्थानेषु संयमस्थिताया अप्यर्थजातमुत्पद्यते तानि दर्शयितुमाह-

[भा.६२८७] सेवगभज्जा ओमे, आवन्न अनत्त बोहिये तेने।
एतेहि अट्ठजातं, उप्पज्जति संजमठिताए ॥

वृ-'सेवकभार्यायां' सेवकभार्याविषयम्, एवम् 'अवमे' दुर्भिक्षे, ''आवन्ने''ति दासत्वप्राप्तायाम्, ''अनत्ते''ति ऋणार्तायां परं विदेशगमनादुत्तमर्णेनानासायाम्, तथा 'बोधिका' अनार्या म्लेच्छाः 'स्तेनाः' आर्यजनपदजाता अपि शरीरापहारिणस्तैरपहरणे च, एतैः कारणैरर्थतं संयमस्थिताया अपि उत्पद्यते। एष निर्युक्तिगाथासङ्क्षेपार्थः ॥ साम्प्रतमेनामेव विवरीषुः सेवकभार्याद्वारमाह-

[भा.६२८८] पियविप्पयोगदुहिया, निक्खंता सो य आगतो पच्छा।
अगिलाणिं च गिलाणिं, जीवियकिच्छं विसज्जेति ॥

वृ- कोऽपि राजादीनां सेवकः, तेन राजसेवाव्यग्रेणात्मीया भार्या परिष्ठापिता, ततः सा प्रियविप्रयोगदुःखिता 'निष्क्रान्ता' तथारूपाणां स्थविराणामन्तिके प्रव्रजिता, स च पुरुषः पश्चात् तयाऽर्थी जातस्ततस्तस्याः सकाशमागतः पुनरपि तां मार्गयति ततः को विधि ? इत्याह- अग्लानामपि तां 'ग्लानां' ग्लानवेषां कुर्वन्ति, विरेचनादीनि च तस्याः क्रियन्ते, ततोऽसौ 'जीवितकृच्छ्रां' 'कृच्छ्रेणेयं जीवति' इतिबुद्ध्या विसर्जयति ॥ अत्रैव द्वितीयमुदाहरणमाह-

[भा.६२८९] परिग्गहियागणियाऽविसज्जिया सामिणा विनिक्खंता।
बहुगं मे उवउत्तं, जति दिज्जति तो विसज्जेमि ॥

वृ- न विद्यते परिग्रहः कस्यापि यस्याः साऽपरिग्रहा, सा चासौ गणिका चापरिग्रहगणिका, सा येन समुषितवती स देशान्तरं गतः, ततस्तेन अविसर्जिता सती 'विनिष्क्रान्ता' प्रव्रजिता। अन्यदा च स स्वामी समागतो भणति-बहुकं 'मे' मदीयं द्रव्यमनया 'उपयुक्तम्' उपयोगं नीतम्, भुक्तमित्यर्थः, तद् यदि दीयते ततो विसृजामि ॥ एवमुक्ते यत् कर्तव्यं स्थविरैस्तदाह-

[भा.६२९०] सरभेद वन्नभेदं, अंतद्धाणं विरेयणं वा वि।
वरधनुग पुस्सभूती, गुलिया सुहुमे य झाणम्मि ॥

वृ-गुटिकाप्रयोगतस्तस्या- स्वरभेदं वर्णभेदं वा स्थविराः कुर्वन्ति यथा स तां न प्रत्यभिजानाति। यदि वा ग्रामान्तरादिप्रेषणेन 'अन्तर्धानं' व्यवधानं क्रियते। अथवा तथाविधौषधप्रयोगतो विरेचनं

कार्यते येन सा ग्लानेव लक्ष्यते, ततः 'एषा कृच्छ्रेण जीवति' इति ज्ञात्वा स तां मुञ्चति । अथवा शक्तौ सत्यां यथा ब्रह्मदत्तहिण्डयां धनुपुत्रेण वरधनुना मृतकवेषः कृतस्तथा निश्चला निरुच्छ्वासा सूक्ष्ममुच्छ्वसनं तिष्ठति येन मृतेति ज्ञात्वा तेन विसृज्यते । यदि वा यथा पुष्यभूतिराचार्यः सूक्ष्मे ध्याने कुशलः सन् ध्यानवशात् निश्चलः निरुच्छ्वासः स्थितः तथा तयाऽपि सूक्ष्मध्यानकुशलया सत्या तथा स्थातव्यं यथा स मृतेत्यवगम्य मुञ्चति ।। एतेषां प्रयोगाणामभावे-

[भा.६२९१] अनुसिट्ठिमनुवरंतं, गमेंति नं मित्त-नातगादीहिं ।
एवं पि अठायंते, करेंति सुत्तम्मि जं वुत्तं ।।

वृ-अनुशिष्टिस्तस्य दीयते । तया यदि नोपरतस्ततस्तस्य पुरुषस्य यानि मित्राणि ये च ज्ञातयस्तैः आदशब्दाद् अन्यैश्च तथाविधैः स्थविरास्तं 'गमयन्ति' बोधयन्ति येन स तस्या मुत्कलनं करोति। एवमप्यतिष्ठति तस्मिन् यदुक्तं सूत्रे तत् कुर्वन्ति । किमुक्तं भवति ?-अर्थजातमपि दत्त्वा सा तस्मात् पुरुषाद् मोचयितव्य । एतत् तस्याः सूत्रोक्तमवलम्बन मन्तव्यम् ।। गतं सेवकभार्याद्वारम्। अथावमद्वारमाह-

[भा.६२९२] सकुडुंबो मधुराए, निक्खिविऊणं गयम्मि कालगतो ।
ओमे फिडित परंपर, आवन्ना तस्स आगमनं ।।

वृ- मधुरायां नगर्यां कोऽपि वणिक् सकुटुम्बोऽपि प्रविव्रजिषुरव्यक्तां दारिकां मित्रस्य गृहे निक्षिप्य ततः प्रव्रज्यां प्रतिपद्यान्यत्र गतः । गते च तस्मिन् स मित्रभूतः पुरुषः कालगतः । ततस्तस्य कालगमनानन्तरं 'अवमे' दुर्भिक्षे जाते सति तदीयैः पुत्रैरनाद्रियमाणा सा दारिका ततो गृहात् 'स्फिटिता' परिभ्रष्टा सती परम्परकेण दासत्वमापन्ना । तस्य च पितुर्यथाविहारक्रमं विहरतस्तस्यामेव मथुरायामागमनम् । तेन च तत् सर्वं ज्ञातम् ।। सम्प्रति तन्मोचने विधिमाह-

[भा.६२९३] अनुसासन कह ठवणं, भेसण ववहार लिंग जं जत्थ ।
दूराऽऽभोग गवेसण, पंथे जयणा य जा जत्थ ।।

वृ- पूर्वमनुशासनं तस्य कर्तव्यम् । ततः कथाप्रसङ्गेन कथनं स्थापत्यापुत्रादेः करणीयम् । एवमप्यतिष्ठति यद् निष्कामता स्थापितं द्रव्यं तद् गृहीत्वा समर्पणीयम् । तस्याभावे निजकानां तस्य वा 'भेषणं' भापनमुत्पादनीयम् । यदि वा राजकुले गत्वा व्यवहारः कार्यः । एवमप्यतिष्ठति यद् यत्र लिङ्गं पूज्यं तत्र तत् परिगृह्य सा मोचनीया । तस्यापि प्रयोगस्याभावे दूरेण-उच्छिन्नस्वामिकतया दूरदेशव्यवधानेन वा यद् निधानं तस्याभोगः कर्तव्यः । तदनन्तरं तस्य 'गवेषणं' साक्षान्निरीक्षणं करणीयम् । गवेषणाय च गमने 'पथि' मार्गे यतना यथा ओघनिर्युक्तौ उक्ता तथा कर्तव्या । याच यत्र यतना साऽपि तत्र विधेया यथासूत्रमिति द्वारगाथासङ्क्षेपार्थः ।।

साम्प्रतमेनामेव विवरीषः प्रथमतोऽनुशासन-कथनद्वारे आह-

[भा.६२९४] निच्छिन्ना तुज्झ घरे, इसिकन्ना मुंच होहिती धम्मो ।
सेहोवट्ठ विचित्तं, तेनय अन्नेण वा निहितं ।।

वृ- एषा ऋषिकन्या तव गृहेऽवमादिकं समस्तमपि निस्तीर्णा अधुना व्रतग्रहणार्थमुपिष्ठते अतो मुञ्चैनाम्, तव भूयान् धर्मो भविष्यति । एतावता गतमनुशासनद्वारम् । तदनन्ता कथनमिति स्थापत्यापुत्रकथा कथनीया-यथा स स्थापत्यापुत्रो व्रतं जिघृक्षुर्वासुदेवेन महतरं निष्क्रमणमहिम्ना निष्काम्य पार्श्वस्थितेन व्रतग्रहणं कारितः एवं युष्माभिरपि कर्तव्यम् ।। अथ स्थापितद्वारम्-

"सेहोवट्ठ" इत्यादि। शैक्षः कश्चिदुपस्थितः तस्य यद् 'विचित्रं' बहुविधमर्थजातं क्वापिस्थापितमस्ति, यदि वा गच्छान्तरे यः कोऽपि शैक्ष उपस्थितः तस्य हस्ते यद् द्रव्यमवतिष्ठते तद् गृहीत्वा तस्मै दीयते। अथवा 'तेनैव' पित्रा 'अन्येन वा' साधुना निष्क्रामता यद् द्रव्यजातं क्वचित् पूर्वं 'निहितं' स्थापितमस्ति तद् आनीय तस्मै दीयते ॥ तदभावे को विधिः ? इत्याह-

[भा.६२९५] नीयल्लगाण तस्स व, भेसण ता राउले सतं वा वि।
अविरिक्का मो अम्हे, कहं व लज्जा न तुज्झं ति ॥

वृ- 'निजकानाम्' आत्मीयानां स्वजनानां भेषणं कर्तव्यम्, यथा-वयं 'अविरिक्ताः' अविभक्तरिक्था वर्तामह ततो मोचयत मदीयां दुहितरम्, कथं वा युष्माकं न लज्जा अभूत् यद् एवं मदीया पुत्रिका दासत्वमापन्नाऽद्यापि धृता वर्तते ? । अथवा येन गृहीता वर्तते तस्य भेषणं विधेयम्, यथा-यदि मोचयसि तर्हि मोचय, अन्यथा भवतस्तं शापं दास्यामि येन न त्वं नेदं वा तव कुटुम्बकमिति। एवं भेषणेऽपि कृते यदि न मुञ्चति यदि वा ते स्वजना न किमपि प्रयच्छन्ति तदा स्वयं राजकुले गत्वा निजकैः सह व्यवहारः करणीयः, व्यवहारं च कृत्वा भाग आत्मीयो गृहीत्वा तस्मै दातव्यः। यद्वा स एव राजकुले व्यवहारेणाकृष्यते, तत्र च गत्वा वक्तव्यम्, यथा-इयमृषिकन्या व्रतं जिघृक्षुः केनापि कपटेन धृताऽनेन वर्तते, यूयं च धर्मव्यापारनिषण्णाः, ततो यथा इयं धर्ममाचरति यथा चामीषामृषीणां समाधिरुपजायते तथा यतध्वमिति ॥ ततः-

[भा.६२९६] नीयल्लएहि तेन व, सद्धिं ववहार कातु मोदनता।
जं अंचितं व लिंगं, तेन गवेसित्तु मोवेइ ॥

वृ-एवं निजकैस्तेन वा सार्द्धं व्यवहारं कृत्वा तस्या मोचना कर्तव्या। अस्यापि प्रकारस्याभावे यद् यत्र लिङ्गमर्चितं तत् परिगृह्णाति। ततः 'तेन अर्चितलिङ्गेन तल्लिङ्गधारिणां मध्ये य महान्तरस्तत्पार्श्वाद् गवेषयित्वा तां मोचयन्ति ॥ अथ "वूराऽऽभोगे" त्यादिव्याख्यानार्थमाह-

[भा.६२९७] पुट्ठा व अपुट्ठा वा, चुतसामिणिहिं कहिंति ओहादी।
घेत्तूण जावदट्ठं, पुनरवि सारक्खणा जतणा ॥

वृ- यदि वा 'अवध्यादयः' अवधिज्ञानिनः, 'च्युतस्वामिनिधिम्' उच्छिन्नस्वामिकं निधिं कथयन्ति, तदानीं तेषां तत्कथनस्योचितत्वात्। ततः 'यावदर्थं' यावता प्रयोजनं तावद् गृहीत्वा पुनरपि तस्य निधेः संरक्षणं कर्तव्यम्। प्रत्यागच्छता च यतना विधेया, सा चाग्रे स्वयमेव वक्ष्यते।

[भा.६२९८] सोऊण अट्ठजायं, अट्ठं पडिजग्गती उ आयरिओ।
संघाडगं च देती, पडिजग्गति नं गिलाणं पि ॥

वृ- निधिग्रहणाय मार्गे गच्छन्तं तम् 'अर्थजातं' साधुं श्रुत्वा साम्भोगिकोऽसाम्भोगिको वाऽऽचार्योऽर्थं 'प्रतिजागर्ति' उत्पादयति। यदि पुनः तस्य द्वितीयसङ्घाटको न विद्यते ततः सङ्घाटकमपि ददाति। अथ कथमपि स ग्लानो जायते ततस्तं ग्लानमपि सन्तं प्रतिजागर्ति न तूपेक्षते, जिनाज्ञाविराधनप्रसक्तेः ॥ यदुक्तमनन्तरं "यतना प्रत्यागच्छता कर्तव्या" तामाह-

[भा.६२९९] काउं निसीहियं अट्ठजातमावेदणं गुरुहत्थे।
दाऊण पडिक्कमते, मा पेहंता मिया पासे ॥

वृ-यत्रान्यगणे स प्राघूर्णिक आयाति तत्र नैषेधिकीं कृत्वा 'मः क्षमाश्रमणेभ्यः' इत्यादि कृत्वा च मध्ये प्रविशति, प्रविश्य च यद् अर्थजातं तद् गुरुभ्य आवेदयति, आवेद्य च तदर्थजातं गुरुहस्ते

दत्त्वा प्रतिक्रामति । कस्मान्न स्वपार्श्व एव स्थापयति ? इति चेद् अत आह-मा 'प्रेक्षमाणाः' निरीक्षमाणा मृगा इव मृगा अगीतार्थाः क्षुल्लकादयः पश्येयुः, गुरुहस्ते च स्थितं न निरीक्षन्ते, अस्मद्गुरूणां समर्पितमिति विरूपसङ्कल्पाप्रवृत्तेः ॥

सम्प्रति "जयणा य जा जत्थे" ति तद्व्याख्यानार्थमाह-

[भा.६३००] सन्नी व सावतो वा, केवतितो दिज्ज अट्ठजायस्स ।
पुव्वुप्पन्न निहाणे, कारणजाते गहण सुद्धो ॥

वृ- यत्र 'संज्ञी' सिद्धपुत्रः श्रावको वा वर्तते तत्र गत्वा तस्मै स्वरूपं निवेदनीयं प्रज्ञापना च कर्तव्या । ततो यत् तस्य पूर्वोत्पन्नं प्रकटं निधानं तन्मध्यादसौ सिद्धपुत्रादि प्रज्ञापितः सन् तस्य 'अर्थजातस्य' द्रव्यार्थिनः साधोः कियतोऽपि भागान् दद्यात् । अस्य प्रकारस्याभावे यद् निधानं दूरमवगाढं वर्तते तदपि तेन सिद्धपुत्रादिना उत्खन्य दीयमानमधिकृते कारणजाते गृह्णनोऽपि शुद्धः, भगवदाज्ञया वर्तनात् ॥ गतमवमद्वारम् । इदानीमापन्नाद्वारमाह-

[भा.६३०१] थोवं पि धरेमाणी, कत्थइ दासत्तमेइ अदलंती ।
परदेसे वि य लब्भतिं, वाणियधम्मे ममेस त्ती ॥

वृ- स्तोकमपि ऋणं शेषं धारयन्ती क्वचिद्देशे काऽपि स्त्री तद् ऋणमददती कालक्रमेण ऋणवृद्धया दासत्वम् 'एति' प्रतिपद्यते । तस्या एवं दासत्वमापन्नायाः स्वदेशे दीक्षा न दातव्या । अथ कदाचित् परदेशे गता सती अज्ञातस्वरूपा अशिवादिकारणतो वा दीक्षिता भवति तत्र वणिजा परदेशे वाणिज्यार्थं गतेन दृष्टा भवेत् तत्रायं किल न्यायः-परदेशेऽपि वणिज आत्मीयं लभ्यं लभन्ते । तत एवं वणिग्धर्मे व्यवस्थिते सति स एवं ब्रूयात्-ममैषा दासी इति न मुञ्चाम्यमुमिति ॥

तत्र यत् कर्तव्यं तत्प्रतिपादनार्थं द्वारगाथामाह-

[भा.६३०२] नाहं विदेसयाऽऽहरणमादि विज्ञा य मंत जोए य ।
निमित्ते य राय धम्मे, पासंड गणे धणे चेव ॥

वृ- या तव दासत्वमापन्ना वर्तते न साऽहं किन्तु अहमन्यस्मिन् विदेशे जाता, त्वं तु सदृक्षतया विप्रलब्धोऽसि । अथ सा प्रभूतजनविदिता वर्तते तत एवं न वक्तव्यं किन्तु स्थापत्यापुत्राद्याहरणं कथनीयम्, यद्यपि कदाचित् तच्छ्रवणतः प्रतिबुद्धो मुत्कलयति । आदिशब्दाद् गुटिकाप्रयोगतः स्वरभेदादि कर्तव्यमिति परिग्रहः । एतेषां प्रयोगाणामभावे विद्या मन्त्रो योगो वा ते प्रयोक्तव्या यैः परिगृहीतः सन् मुत्कलयति । तेषामप्यभावे 'निमित्तेन' अतीता-ऽनागतविषयेम राजा उपलक्षणमेतद् अन्यो वा नगरप्रधान आवर्जनीयो येन तत्प्रभावात् स प्रेर्यते । धर्मो वा कथनीयो राजादीनां येन ते आवृत्ताः सन्तस्तं प्रेरयन्ति । एतस्यापि प्रयोगस्याभावे पाषण्डान् सहायान् कुर्यात् । यद्वा यः 'गणः' सारस्वतादिको बलवांस्तं सहायं कुर्यात् । तदभावे दूराऽऽभोगादिना प्रकारेण धनुमुत्पाद्य तेन मोचयेत् । एष द्वारगाथासङ्क्षेपार्थः ॥ साम्प्रतमेनामेव गाथां विवरीषुराह-

[भा.६३०३] सारिक्खएण जंपसि, जाया अन्नत्थ ते वि आमं ति ।
बहुजनविण्णायम्मि, थावच्चसुतादिआहरणं ॥

वृ- यदि बहुजनविदिता सा न भवति, यथा-इयं तद्देशजाता इति; तत एवं ब्रूयात्- अहमन्यत्र विदेशे जाता, त्वं तु सादृश्येण विप्रलब्ध एवमसमञ्जसं जल्पसि । एवमुक्ते तेऽपि तत्रत्याः 'आमम्' एवमेतद् यथेयं वदतीति साक्षिणो जायन्ते । अथ तद्देशजाततया सा बहुजनविज्ञाता

ततस्तस्यां बहुजनविज्ञातायां पूर्वोक्तं न वक्तव्यं किन्तु स्थापत्यापुत्राद्युदाहरणं प्रतिबोधनाय कथनी-यम् । "आइरममाई" इत्यत्रादिशब्दव्याख्यानार्थमाह-

[भा.६३०४] सरभेद वन्नभेदं, अंतद्धाणं विरेयणं वा वि ।
वरधनुग पुस्सभूती, गुलिया सुहुमे य झाणम्मि ॥

वृ- गुटिकाप्रयोगतस्तस्याः स्वरभेदं वर्णभेदं वा कुर्यात् । यद्वा अन्तर्द्धानं ग्रामान्तरप्रेषणेन वा व्यवधानम् । विरेचनं वा ग्लानतोपदर्शनाय कारयितव्या येन 'कृच्छ्रेणैषा जीवति' इति ज्ञात्वा विसर्जयति । यदि वा वरधनुरिव गुटिकाप्रयोगतः गुटिकाप्रयोगतः पुष्यभूतिराचार्य इव वा सूक्ष्मध्यानवशतो निश्चला निरुच्छ्वासा तथा स्याद् यथा मृतेति ज्ञात्वा परित्यज्यते । विद्या-मन्त्र-प्रयोगा वा तस्य प्रयोक्तव्या येन तैरभियोजितो मुत्कलयति । एतेषां प्रयोगाणामभावे राजा निमित्तेन धर्मकथया वाऽऽवर्ज्यते, ततस्तस्य प्रभावेण स प्रेर्यते ॥

अस्याऽपि प्रकारस्याभावे को विधिः ? इत्याह-

[भा.६३०५] पासंडे व सहाए, गिण्हति तुज्झं पि एरिसं अत्थि ।
होहामो य सहाया, तुब्भ वि जो वा गणो बलितो ॥

वृ- पाषण्डान् वा सहायान् गृह्णाति । अथ ते सहाया न भवन्ति तत इदं तान् प्रति वक्तव्यम्-युष्माकमपीदृशं प्रयोजनं भवेद् भविष्यति तदा युष्माकमपि वयं सहाया भविष्यामः । एवं तान् सहायान् कृत्वा तद्बलतः स प्रेरणीयः । यदि वा यो मल्ल-सारस्वतादिको गणो बलीयान् तं सहायं परिगृह्णीयात् ॥

[भा.६३०६] एएसिं असतीए, संता व जता न होंति उ सहाया ।
ठवणा दूराभोगण, लिंगेण व एसिउं देंति ॥

वृ- 'एतेषां' पाषण्डानां गणानां वा 'असति' अभावे यदि वा सन्तोऽपि ते सहाया न भवन्ति तदा "ठवण"त्ति निष्क्रामता यद् द्रव्यं स्थापितं तेन सा मोचयितव्या । यदि वा 'दूराभोगनेन' प्रागुक्तप्रकारेणैव अथवा यद् यत्र लिङ्गमर्चितं तेन धनम् 'एषयित्वा' उत्पाद्य ददति तस्मै वरवृषभाः । गतमापन्नाद्वारम् । अथ ऋणार्तादिद्वाराण्याह-

[भा.६३०७] एमेव अणत्ताए, तवतुलण नवरि तत्थ नाणत्तं ।
बोहिय-तेनेहि हिते, ठवणादि गवेसणे जाव ॥

वृ- 'एवमेव' अनेनैव दासत्वापन्नागतेन प्रकारेण 'ऋणार्ताया अपि' प्रभूतं ऋणं धारयन्त्या अन्यदेशे दीक्षिताया मोक्षणे यतना द्रष्टव्या । नवरम्-अत्र धनदानचिन्तायां नानात्वम् । किं तत् ? इत्याह-तपस्तुलना कर्तव्या । तथा बोधिकाः स्तेनाश्च-प्रागुक्तस्वरूपास्तैर्हृताया आर्यिकाया गवेषणं नियमेन कर्तव्यम् । तत्र च कर्तव्येऽनुशासनादिकं तदेव मन्तव्यं यावद् अर्थजातस्य स्थापना तया आदिशब्दाद् निधानस्य दूराभोगनादिप्रयोगेणापि सा मोचयितव्या । अथ ऋणार्तायां या तपस्तुलनोक्ता सा भाव्यते-स द्रव्यं मार्गयन् वक्तव्यः-साधवस्तपोधना अहिरण्य-सुवर्णाः, लोकेऽपि यद् यस्य भाण्डं भवति स तत् तस्मै उत्तमर्णाय ददाति, अस्माकं च पार्श्वे धर्मस्तस्मात् त्वमपि धर्मं गृहाण ॥ एवमुक्ते स प्राह-

[भा.६३०८] जो नाते कतो धम्म, तं देउ न एत्तियं समं तुलइ ।
हानी जावेगाहं, तावतियं विज्झयंमणता ॥

वृ- योऽनया कृतो धर्मस्तं सर्वं मह्यं ददातु । एवमुक्ते साधुभिर्वक्तव्यम्-नैतावद् दद्मः, यतो

नैतावत् समं तुलति। स प्राह-एकेन संवत्सरेण हीन प्रयच्छतु; तदपि प्रतिषेधनीयः। ततो ब्रूयात्-द्वाभ्यां संवत्सराभ्यां हीन दत्त; तदपि निषेध्यः। एवं तावद् विभाषा कर्तव्या यावद् 'एकेन दिवसेन कृतोऽनया धर्मस्तं प्रयच्छत' ततो वक्तव्यम्-नाभ्यधिकं दद्मः किन्तु यावत् तव गृहीतं मुहूर्तादिकृतेन धर्मेण तोल्यमानं समं तुलति तावत् प्रयच्छामः। एवमुक्ते यदि तोलनाय ढौकते तदा विद्यादिभिस्तुला स्तम्भनीया येन क्षणमात्रकृतेनापि धर्मेण सह न समं तोलयतीति। धर्मतोलनं च धर्माधिकरणिक-नीतिशास्त्रप्रसिद्धमिति ततोऽवसातव्यम्। अथासौ क्षणमात्रकृतस्यापि धर्मस्यालाभात् [illegible] अर्जितुं नेच्छेद् ततो [illegible] न्यायेन शुद्धा ॥ स प्राह-कः पुनर्वणिग्न्यायो येनैषा शुद्धा क्रियते? साधवो ब्रुवते-

[भा.६३०९] वत्थाणाऽऽभरणाणि य, सव्वं छड्डेउ एगवत्थेणं।
पोतम्मि विवन्नम्मि, वाणितधम्मे हवति सुद्धो ॥

वृ- यथा कोऽपि वाणिजः प्रभूतं ऋणं कृत्वा प्रवहणेन समुद्रमवगाढः, तत्र 'पोते' प्रवहणे विपन्ने आत्मीयानि परकीयानि च प्रभूतानि वस्त्राण्याभरणानि चशब्दात् शेषमपि च नानाविधं क्रयाणकं सर्वं 'छर्दयित्वा' परित्यज्य 'एकवस्त्रेण' एकेनैव परिधानवाससा उत्तीर्ण 'वणिग्धर्मे' वणिग्न्याये 'शुद्धो भवति' न ऋणं दाप्यते। एवमियमपि साध्वी तव सत्कमात्मीयं च सारं सर्वं परित्यज्य निष्क्रान्ता संसारसमुद्रादुत्तीर्णा इति वणिग्धर्मेण शुद्धा, न धनिका ऋणमात्मीयं याचितुं लभन्ते, तस्माद् न किञ्चिदत्र तवाभाव्यमस्तीति करोत्विदानीमेषा स्वेच्छया तपोवाणिज्यम्, पोतपरिभ्रष्टवणिगिव निर्ऋणो वाणिज्यमिति ॥ सम्प्रत्युपसंहारव्याजेन शिक्षामपवादं चाह-

[भा.६३१०] तम्हा अपरायत्ते, दिक्खेज्ज अनारिए य वज्जेज्जा।
अद्धाण अनाभोगा, विदेस असिवादिसू दो वी ॥

वृ- यस्मात् परायत्तदीक्षणेऽनार्यदेशगमने चैते दोषास्तस्मादपरायत्तान् दीक्षयेत् अनार्यांश्च देशान् बोधिक-स्तेनबहुलान् वर्जयेत्। अत्रैवापवादमाह-"अद्धाण" त्ति अध्वानं प्रतिपन्नस्य ममोपग्रहमेते करिष्यन्तीति हेतोः परायत्तानपि दीक्षयेत्, यदि वाऽनाभोगतः प्रव्राजयेत्, विदेशस्था वा स्वरूपमजानाना दीक्षयेयुः। अशिवादिषु पुनः कारणेषु "दो वि" त्ति 'द्वे अपि' परायत्तदीक्षणा-ऽनार्यदेशगमने अपि कुर्यात्। किमुक्तं भवति?-अशिवादिषु कारणेषु समुपस्थितेषु परायत्तानपि गच्छोपग्रहनिमित्तं दीक्षयेत्, अनार्यानपि च देशान् विहरेदिति ॥

*मू. (२१४) छ कप्पस्स पलिमंथू पन्नता, तं जहा-कोकुइए संजमस्स पलिमंथू १ मोहरिए सच्चवयणस्स पलिमंथू २ चक्खुलोलए इरियावहियाए पलिमंथू ३ तिंतिणिए एसणागोयरस्स पलिमंथू ४ इच्छालोभए मुत्तिमग्गस्स पलिमंथू ५ भिज्जानियाणकरणे मोक्खमग्गस्स पलिमंथू ६। सव्वत्थ भगवता अनियाणया पसत्था ॥*

वृ- अस्य सूत्रस्य कः सम्बन्धः? इत्याह-

[भा.६३११] दप्पेण जो उ दिक्खेति एरिसे एरिसेसु वा विहरे।
तत्थ धुवो पलिमंथो, को सो कतिभेद संबंधो ॥

वृ- 'दर्पेण' कारणमन्तरेण य आचार्य 'ईदृशान्' परायत्तान् दीक्षयति, यो वा 'ईदृशेषु' अनार्येषु देशेषु दर्पतो विहरति, तत्र 'ध्रुवः' निश्चितोऽवश्यम्भावी परिमन्थः, अतः कोऽसौ कतिभेदो वा परिमन्थः? इत्याशङ्कानिरासाय प्रस्तुतसूत्रारम्भः। एष सम्बन्धः ॥

[भा.६३१२] अहवा सव्वो एसो, कप्पो जो वण्णिओ पलंबादी।
तस्स उ विवक्खभूता, पलिमंथा ते उ वज्जेज्जा॥

वृ- 'अथवा' इति सम्बन्ध प्रकारान्तरद्योतने। य एष षट्स्वपि उद्देशकेषु प्रलम्बादिकः 'कल्पः' समाचार उक्तः 'तस्य' कल्पस्य वपक्षभूताः 'परिमन्थाः' कौकुच्य-मौखर्यादयो भवन्ति, अतस्तान् वर्जयेदिति ज्ञापनार्थमधिकृतसूत्रारम्भः॥ अथवा वज्रमध्योऽयमुद्देशकः, तथाहि-

[भा.६३१३] आइम्मि दोन्नि छक्का, अंतम्मि य छक्कगा दुवे हुंति।
सो एस वइरमज्झो, उद्देसो होति कप्पस्स॥

वृ- अस्मिन् षष्ठोद्देशके आदौ 'द्वे षट्के' भाषाषट्क-प्रस्तारषट्कलक्षणे भवतः अन्तेऽपि च 'द्वे षट्के' परिमन्थषट्क-कल्पस्थितिषटकरूपे भवतः, ततः 'स एषः' कल्पोद्देशको वज्रमध्यो भवति, वज्रवदाद्यावन्ते च द्वयोः षटकयोः सद्भावाद् विस्तीर्ण मध्ये तु संक्षिप्त इत्यर्थः। तत्राद्यं षट्कद्वयं प्राग् अभिहितमेव, अथान्त्यं षट्कद्वयमभिधीयते। तत्रापि प्रथमं तावदिदम्॥

अनेन सम्बन्धेनायातस्यास्य व्याख्या-'षड्' इति षटसङ्ख्याः 'कल्पस्य' कल्पाध्ययनोक्तसाधुसमाचारस्य परि-सर्वतो मथ्नन्ति-विलोडयन्तीति परिमन्थवः, उणादित्वादुप्रत्ययः, पाठान्तरेण परिमन्था वा, व्याघातका इत्यर्थः, 'प्रज्ञप्ताः' तीर्थकरादिभिः प्रणीताः। तद्यथा-"कुकुइए"त्ति "कुचण् अवस्पन्दने" इति वचनात् कुत्सितम्-अप्रत्युपेक्षितत्वादिना कुचितम्-अवस्पन्दितं यस्य स कुकुचितः, स एव प्रज्ञादिदर्शनात् स्वार्थिकाणप्रत्यये कौकुचितः; कुकुचा वा-अवस्पन्दितं प्रयोजनमस्येति कौकुचिकः; स 'संयमस्य' पृथिव्यादिरक्षणरूपस्य 'परिमन्थुः' व्याघातकारी १। "मोहरिए" त्ति मुखं-प्रभूतभाषणातिशायि वदनमस्यास्तीति मुखरः, स एव मौखरिकः-बहुभाषी, विनयादेराकृतिगणत्वाद् इकणप्रत्ययः; यद्वा मुखेनारिमावहतीति व्युत्पत्त्या निपातनाद् मौखरिकः; 'सत्यवचनस्य' मृषावादविरतेः परिमन्थुः, मौखर्ये सति मृषावादसम्भवात् २। चक्षुषा लोलः-चञ्चलो यद्वा चक्षु लोलं यस्य स चक्षुर्लोलः; सखेदो हि अनेषणीयमपि गृह्णातीति भावः ४। इच्छा-अभिलाषः स चासौ लोभश्च इच्छालोभः, महालोभ इत्यर्थः, यथा निद्रानिद्रा महानिद्रेति; स च इच्छालोभः-अधिकोपकरणादिमेलनलक्षणः 'मुक्तिमार्गस्य' मुक्तिनिष्परिग्रहत्वम् अभतेत्यर्थः सैव निर्वृतिपुरस्य मार्ग इव मार्गस्तस्य परिमन्थुः ५। "भिज्ज"त्ति लोभस्तेन यद् निदानकरणं-देवेन्द्र-चक्रवर्त्यादिविभूतिप्रार्थनं तद् 'मोक्षमार्गस्य' सम्यग्दर्शनादिरूपस्य परिमन्थुः, आर्तध्यानचतुर्थभेरूपत्वात्। भिज्जाग्रहणेन यदलोभस्य भवनिर्वेद-मार्गानुसारितादिप्रार्थनं तत्र मोक्षमार्गस्य परिमन्थुरित्यावेदितं प्रतिपत्तव्यम् ६। ननु तीर्थकरत्वादिप्रार्थनं न राज्यादिप्रार्थनवद् दुष्टम्, अतस्तद्विषयं निदानं मोक्षस्य परिमन्थुर्न भविष्यति, नैवम्, यत आह- "सव्वत्थे" त्यादि 'सर्वत्र' तर्थकरत्व-चरमदेहत्वादिविषयेऽपि आस्तां राज्यादौ 'निदानता' अप्रार्थनमेव 'भगवता' समग्रैश्वर्यान्विमता श्रीमन्महावीरस्वामिना "पसत्थ" त्ति 'प्रशंसिता' श्लाघिता। एष सूत्रार्थः॥

अथ निर्युक्तिविस्तरः-

[भा.६३१४] पलिमंथे निक्खेवो, नामा एगट्ठिया इमे पंच।
पलिमंथो वक्खेवो, वक्खोड विनास विग्घो य॥

वृ- 'परिमन्थे' परिमन्थपदस्य निक्षेपश्चतुर्धा कर्तव्यः। तस्य चामूनि पञ्च एकार्थिकानि भवन्ति-परिमन्थो व्याक्षेपो व्याखोटो विनाशो विघ्नश्चेति॥ स च परिमन्थश्चतुर्द्धा-नाम-स्थापना-द्रव्य-

भावभेदात् । तत्र नाम-स्थापने सुगमे । द्रव्य-भावपरिमन्थौ प्रतिपादयति-

[भा.६३१५] करणे अधिकरणम्मि य कारग कम्मे य दव्वपलिमंथो ।
एमेव य भावम्मि वि, चउसु वि ठाणेसु जीवे तु ॥

वृ- 'करणे' साधकतमे 'अधिकरणे' आधारे कारकः-कर्ता तस्मिन् तथा 'कर्मणि च' व्याप्ये द्रव्यतः परिमन्थो भवति । तथाहि-करणे येन मन्थानादिना दध्यादिकं मथ्यते, अधिकरणे यस्यां पृथिवीकायनिष्पन्नायां मन्थन्यां दधि मथ्यते, कर्तरि यः पुरुषः स्त्री वा दधि विलोडयति, कर्मणि तन्मथ्यमानं यद् नवनीतादिकं भवति, एष चतुर्विधो द्रव्यपरिमन्थः । एवमेव 'भावेऽपि' भावविषयः परिमन्थश्चतुर्ष्वपि करणादिषु स्थानेषु भवति । तद्यथा-करणे येन कौत्कुच्यादिव्यापारेण दधितुल्यः संयमो मथ्यते, अधिकरणे यस्मिन् आत्मनि स मथ्यते, कर्तरि यः साधुः कौत्कुच्यादिभावपरिणतस्तं संयमं मथ्नाति, कर्मणि यद् मथ्यमानं संयमादिकमसंयमादितया परिणमते । एष चतुर्विधोऽपि परिमन्थो जीवादनन्यत्वाद् जीव एव मन्तव्यः ॥

अथ करणे द्रव्य-भावपरिमन्थौ भाष्यकारोऽपि भावयति-

[भा.६३१६] दव्वम्मि मंथितो खलु, तेनं मंथिज्जए जहा दधियं ।
दधितुल्लो खलु कप्पो, मंथिज्जति कोकुआदीहिं ॥

वृ-द्रव्यपरिमन्थो मन्थिकः, मन्थान इत्यर्थः, 'तेन' मन्थानेन यथा दधि मथ्यते तथा दधितुल्यः खलु 'कल्पः' साधुसमाचारः कौकुचिकादिभिः प्रकारैर्मथ्यते, विनाश्यत इत्यर्थः ॥ तदेवं व्याख्यातं परिमन्थपदम् । सम्प्रति शेषाणि सूत्रपदानि कौत्कुचिकादीनि व्याचिख्यासुराह-

[भा.६३१७] कोकुइओ संजमस्स उ, मोहरिए चेव सच्चवयणस्स ।
इरियाए चक्खुलोलो, एसणसमिईए तिंतिणिए ॥

वृ- कौकुचिकः संयमस्य, मौखरिकः सत्यवचनस्य, चक्षुर्लोलईर्यासमितेः, तिन्तिणित एषणासमितेः परिमन्थुरिति प्रक्रमादवगम्यते ॥

[भा.६३१८] नासेति मुत्तिमग्गं, लोभेण निदानताए सिद्धिपहं ।
एतेसिं तु पदाणं, पत्तेय परूवणं वोच्छं ॥

वृ-लोभेन च मुक्तिमार्गं नाशयति, निदानतया तु सिद्धिपथम् । एतेषां पदानां प्रत्येकं प्ररूपणां वक्ष्ये ॥ प्रतिज्ञातमेव करोति-

[भा.६३१९] ठाणे सरीर भासा, तिविधो पुन कुक्कुओ समासेणं ।
चलणे देहे पत्थर, सविगार कहक्कहे लहुओ ॥

[भा.६३२०] आणाइणो य दोसा, विराधना होइ संजमा-ऽऽयाए ।
जंते व नट्टिया वा, विराधन मइछए सुत्ते ॥

वृ- 'स्थाने' स्थानविषयः शरीरविषयो भाषाविषयश्चेति त्रिविधः समासेन कौकुचिकः । तत्र स्थानकौकुचिको यश्चलनम्-अभीक्ष्णं भ्रमणं करोति । देहः-शरीरं तद्विषयः कौकुचिको यः प्रस्तरान् हस्तादिना क्षिपति । यस्तु 'सविकारं' परस्य हास्योत्पादकं भाषते, 'कहकहं वा' महता शब्देन हसति स भाषाकौकुचिकः । एतेषु त्रिष्वपि प्रत्येकं मासलघु, आज्ञादयश्च दोषाः । संयमे आत्मनि च विराधना भवति । यन्त्रकवद् नर्तिकावद्वा भ्राम्यन् (स्थान-शरीर] कौकुचिक उच्यते । यस्तु महता शब्देन हसति तस्य मक्षिकादीनां मुखप्रवेशेन संयमविराधना शूलादिरोगप्रकोपेनात्मविराधना।

"मएल्लए सुत्ति"त्ति मृतदृष्टान्तः सुतदृष्टान्तश्चात्र हास्यदोषदर्शनाय भवति, स चोत्तरत्र दर्शयिष्यते॥ अथैतदेव निर्युक्तिगाथाद्वयं विभावयिषुः स्थानकौकुचिकं व्याचष्टे-

[भा.६३२१]　　आवडइ खंभकुड्डे, अभिक्खणं भमति जंतए चेव ।
कमफंदण आउंटण, न यावि बद्धासनो ठाणे ॥

वृ- इहोपविष्ट ऊर्ध्वस्थितो वास्तम्भे कुड्ये वा य आपतति, यन्त्रकमिव वाऽभीक्ष्णं भ्रमति, क्रमस्य-पादस्य स्पन्दनमाकुञ्चनं वा करोति, न च नैव 'बद्धासनः' निश्चलासनस्तिष्ठति, एष स्थानकौकुचिकः ॥ अत्रामी दोषाः-

[भा.६३२२]　　संचारोवतिगादी, संजमे आयाऽहि-विच्छुगादीया ।
दुब्बद्ध कुहिय मूले, चडफडंते य दोसा उ ॥

वृ- सञ्चारकाः-कुड्यादौ सञ्चरणशीला ये उपइकादयः-उद्देहिका-मत्कुणकीटिकाप्रभृतयो जीवास्तेषां या विराधना सा संयमविषया मन्तव्या । आत्मविराधनायामहि-वृश्चिकादयस्तत्रो-पद्रवकारिणो भवेयुः, यदि वा यत्र स्तम्भादौ स आपतति तद् दुर्बद्धं मूले वा कुथितं भवेत् ततस्तस्य पतने परितापनादिका ग्लानारोपणा,-"चडप्फडंते य"त्ति अभीक्ष्णमितस्ततो भ्राम्यतः सन्धिर्विसन्धीभवेदित्यादयो बहवो दोषाः । एवमुत्तरत्रापि दोषा मन्तव्याः ॥ अथ शरीरकौकुचिकमाह-

[भा.६३२३]　　कर-गोफण-धनु-पादादिएहइ उच्छुभति पत्थरादीए ।
भमुगा-दाढिग-थण-पुतविकंपणं नट्टवाइत्तं ॥

वृ- कर-गोफणा-धनुः-पादादिभिः प्रस्तरादीन् य उत्-प्राबल्येन क्षिपति स शरीरकौकुचिकः । भ्रू-दाढिका-स्तन-पुतानां विकम्पनं-विविधम्-अनेकप्रकारैः कम्पनं यत् करोति तद् नृत्यपातित्वमुच्यते, नर्तकीत्वमित्यर्थः । एतेन "नट्टियाव"त्ति पदं व्याख्यातं प्रतिपत्तव्यम् ॥ गतः शरीरकौकुचिकः । अथ भाषाकौकुचिकमाह-

[भा.६३२४]　　छेलिय मुहवाइत्ते, जंपति य तहा जहा परो हसति ।
कुणइ य रुए बहुविधे, वग्घाडिय-देसभासाए ॥

वृ- यः सेण्टितं मुखवादित्रं वा करोति, तथा वा वचनं जल्पति यथा परो हसति, बहुविधानि वा मयूर-हंस-कोकिलादीनां जीवानां रुतानि करोति, वग्घाडिकाः-उद्धट्टककारिणीः देशभाषा वा-मालव-महाराष्ट्रादिदेशप्रसिद्धास्तादृशीर्भाषा भाषते याभिः सर्वेषामपि हास्यमुपजायते, एष भाषाकौकुचिकः ॥ अस्य दोषानाह-

[भा.६३२५]　　मच्छिगमाइपवेसो, असंपुडं चेव सेट्ठिदिट्ठंतो ।
दंडिय घतणो हासण, तेइच्छिय तत्तफालेणं ॥

वृ- तदीयभाषणदोषेण ये मुखं विस्फाल्य हसन्ति तेषां मुखे मक्षिकादयः प्राणिनः प्रविशेयुः, प्रविष्टाश्च ते यत् परितापनादिकं प्राप्नुवन्ति तन्निष्पन्नं तस्य प्रायश्चित्तम् । हसतश्च मुखमसम्पुटमेव भवेद्, न भूयो मिलेदित्यर्थः । तथा चात्र श्रेष्ठिदृष्टान्तः- कश्चिद् 'दण्डिकः' राजा, तस्य "घयणो" भण्डः । तेन राजसभायामीदृशं किमपि 'हासनं' हास्यकारि वचनं भणितं येन प्रभूतजनस्य हास्यमायातम् । तत्र श्रेष्ठिनो महता शब्देन हसतो मुखं तथैव स्थितं न सम्पुटीभवति । वास्तव्यवैद्यानां दर्शितो नैकेनापि प्रगुणीकर्तुं पारितः । नवरं प्राघुणकेनैकेन चैकित्सिकेन लोहमयः फालः तप्तः-अग्निवर्णं कृत्वा मुखे ढौकितः, ततस्तदीयेन भयेन श्रेष्ठिनो मुखं सम्पुटं जातम् ॥

अथ प्रागुद्दिष्टं मृत-सुप्तदृष्टान्तद्वयमाह-

[भा.६३२६]　　गोयर साहू हसनं, गवक्खे दट्टुं निव भणति देवी ।
　　　　　　हसति मयगो कहं सो, त्ति एस एमेव सुत्तो वी ॥

वृ-एगो साहु गोयरचरियाए हिंडमाणो हसंतो देवीए गवक्खोवविट्ठाए दिट्ठो । राया भणिओ-सामि ! पेच्छ अच्छेरयं, मुयं मानुसं हसंतं दीसइ । राया संभंतो-कहं कहिं वा ? । सा साहुं दरिसेइ। राया भणइ-कहं मउ ? त्ति । देवी भणइ-इह भवे शरीरसंस्कारादिसकलसांसारिकसुखवर्जितत्वाद् मृत इव मृतः ॥ एवं सुत्तदिट्ठंतो वि भाणियव्वो ॥ अक्षरगमनिका त्वियम्-गोचरे साधोः पर्यटतः 'हसनं' हास्यं दृष्ट्वा देवी नृपं भणति- मृतको हसति । नृपः पृच्छति-कुत्र स मृतको हसति ? । देवी हस्तसंज्ञया दर्शयति-एष इति । 'एवमेव' मृतवत् सुप्तोऽपि मन्तव्यः, उभयोरपि निश्चेष्टतया विशेषाभावात् ॥ गतः कौकुचिकः । सम्प्रति मौखरिकमाह-

[भा.६३२७]　　मुहरिस्स गोन्नणामं आवहति अरिं मुहेन भासंतो ।
　　　　　　लहुगो य होति मासो, आणादि विराधना दुविहा ॥

वृ-मौखरिकस्य 'गौणं' गुणनिष्पन्नं नाम "मुखेन' प्रभूतभाषणादिमुखदोषेण भाषमाणः 'अरिं' वैरिणम् 'आवहति' करोतीति मौखरिकः । तस्यैवं मौखरिकत्वं कुर्वाणस्य लघुको मासः आज्ञादयश्च दोषाः । विराधना च संयमा-ऽऽत्मविषया द्विविधा । तत्र संयमविराधना मौखरिकस्य सत्यव्रतपरिमन्थुतया सुप्रतीता ॥ आत्मविराधनां तु दृष्टान्तेनाह-

[भा.६३२८]　　को गच्छेज्जा तुरियं, अमुगो त्ति य लेहएण सिट्ठम्मि ।
　　　　　　सिग्घाऽऽगतो य ठवितो, केनाहं लेहगं हणति ॥

वृ-एगो राया । तस्स किंचि तुरियं कज्जं उप्पन्नं ताहे समामज्झे भणइ-को सिग्घं वच्चेज्जा ? । लेहगो भणइ-अमुगो पवनवेगेणं गच्छइ त्ति । रन्ना सो पेसिओ तं कज्जं काऊण तद्दिवसमेव आगओ । रन्ना 'एसो सिग्घगामि' त्ति काउं धावणओ ठविओ । तेन रुट्ठेणं पुच्छियं-केणाहं सिग्घो त्ति अक्खातो ? । अन्नेण सिट्ठं-जहा लेहएणं । पच्छा सो तेन तलिच्छेण छिद्दं लद्धूण उद्दविओ । एवं चेव जो संजओ मोहरियत्तं करेइ सो आयविहणं पावेइ त्ति ॥ अक्षरार्थस्त्वयम्-'कस्त्वरितं गच्छेत् ?' इति राज्ञोक्ते लेखकेन शिष्टम्-अमुक इति । ततः स तत् कार्यं कृत्वा शीघ्रमागतः । ततः 'स्थापितः' राज्ञा दौत्यकर्मणि नियुक्तः । ततः 'केनाहं कथितः ?' इति पृष्ट्वा 'लेखकेन' इति विज्ञाय लेखकं हतवान् । गाथायामतीतकालेऽपि वर्तमाननिर्देशः प्राकृतत्वात् ॥

गतो मौखरिकः । अथ चतुर्लोलमाह-

[भा.६३२९]　　आलोयणा य कहणा, परियट्टऽनुपेहणा अनाभोए ।
　　　　　　लहुगो य होति मासो, आणादि विराधना दुविहा ॥

वृ- स्तूपादीनामालोकनां कुर्वाणः 'कथनां' धर्मकथां परिवर्तनाम् अनुप्रेक्षां च कुर्वन् यदि 'अनाभोगेन' अनुपयुक्तो मार्गे व्रजति तदा लघुमासः, आज्ञादयश्च दोषाः, द्विविधा च विराधना भवेत् ॥ इदमेव भावयति-

[भा.६३३०]　　आलोएंतो वच्चति, थूभादीणि व कहेति वा धम्मं ।
　　　　　　परियट्टणाऽनुपेहण, न यावि पंथम्मि उवउत्तो ॥

वृ- 'स्तूपादीनि' स्तूप-देवकुला-ऽऽरामादीनि आलोकमानो धर्मं वा कथयन् परिवर्तनामनुप्रेक्षां

वा कुर्वाणो व्रजति । यद्वा सामान्येन 'न च' नैवोपयुक्तः पथि व्रजति एष चक्षुर्लोल उच्यते ॥

अस्यैते दोषाः-

[भा.६३३१] छक्कायाण विराहण, संजमे आयाए कंटगादीया ।
आवडणे भाणभेदो, खद्धे उड्डाह परिहानी ॥

वृ- अनुपयुक्तस्य गच्छतः संयमे षट्कायानां विराना भवेत् । आत्मविराधनायां कण्टकादयः पदयोर्लगेयुः, विषमे वा प्रदेशे आपतनं भवेत् तत्र भाजनभेदः । 'खद्धे च' प्रचुरे भक्त-पाने भूमौ छर्दिते उड्डाहो भवेत्-अहो ! बहुभक्षका अमी इति । भाजने च भिन्ने 'परिहानि' सूत्रार्थपरिमन्थो भाजनान्तरगवेषणे तत्परिकर्मणायां च भवति ॥ गतश्चक्षुर्लोलः । अथ तिन्तिणिकमाह-

[भा.६३३२] तिंतिणिए पुव्व भणिते, इच्छालोभे य उवहिमतिरेगे ।
लहुओ तिविहं व तहिं, अतिरेगे जे भणिय दोसा ॥

वृ-तिन्तिणिक आहारोपधि-शय्याविषयभेदात् त्रिविधः, स च 'पूर्वं' पीठिकायां सप्रपञ्चमुक्त इति नेहोच्यते । च सुन्दरमाहारादिकं गवेषयन्नेषणासमितेः परिमन्थुर्भवतीति । इच्छालोभस्तु स उच्यते यद् लोभाभिभूतत्वेनोपधिमतिरिक्तं गृह्णाति, तत्र लघुको मासः । त्रिविधं वा तत्र प्रायश्चित्तम् । तद्यथा-जघन्ये उपधौ प्रमाणेन गणनया वाऽतिरिक्ते धार्यमाणे पञ्चकम्, मध्यमे मासलघु, उत्कृष्टे चतुर्लघु । ये चातिरिक्ते उपधौ दोषाः पूर्वं तृतीयोद्देशके भणितास्ते द्रष्टव्याः ॥ अथ निदानकरणमाह-

[भा.६३३३] अनियाणं निव्वाणं, काऊणमुवट्ठितो भवे लहुओ ।
पावति धुवमायतिं, तम्हा अनिदाणया सेया ॥

वृ- 'अनिदानं' निदानमन्तरेण साध्यं निर्वाणं भगवद्भिः प्रज्ञप्तम्, ततो यो निदानं करोति तस्य तत् कृत्वा पुनरकरणेनोपस्थितस्य लघुको मासः प्रायश्चित्तम् । अपि च यो निदानं करोति स यद्यपि तेनैव भवग्रहणेन सिद्धिं गन्तुकामस्तथापि 'ध्रुवम्' अवश्यम् 'आयातिं' पुनर्भवागमनं प्राप्नोति, तस्मादनिदानता श्रेयसी ॥ इदमेव व्याचष्टे-

[भा.६३३४] इह-परलोगनिमित्तं, अवि तित्थकरत्तचरिमदेहत्तं ।
सव्वत्थेसु भगवता, अनिदानत्तं पसत्थं तु ॥

वृ-इहलोकनिमित्तम्-'इहैव मनुष्यलोकेऽस्य तपसः प्रभावेण चक्रवर्त्यादिभोगानहं प्राप्नुयाम्, इहैव वा भवे विपुलान् भोगानासादयेयम्' इतिरूपम् परलोकनिमित्तं-मनुष्यापेक्षया देवभवादिकः परलोकस्तत्र 'महर्द्धिकइन्द्रसामानिकादिरहं भूयासम्' इत्यादिरूपं सर्वमपि निदानं प्रतिषिद्धम् । किं बहुना ? तीर्थकरत्वेन-आर्हन्त्येन युक्तं चरमदेहत्वं मे भवान्तरे भूयात् इत्येतदपि नासंशनीयम् । कुतः ? इत्याह-'सर्वार्थेषु' सर्वेष्वपि-ऐहिका-ऽऽमुष्मिकेषु प्रयोजनेषु नासंशनीयम् । कुतः ? इत्याह-'सर्वार्थेषु' सर्वेष्वपि-एहिका-ऽऽमुष्मिकेषु प्रयोजनेषु अभिष्वङ्गविषयेषु भगवताऽनिदानत्वमेव 'प्रशस्तं' श्लाधितम् । तुशब्द एवकारार्थः, स च यथास्थानं योजितः ॥ व्याख्याताः षडपि परिमन्थवः । साम्प्रतमेतेष्वेव द्वितीयपदमाह-

[भा.६३३५] बिइयपदं गेलन्ने, धाणे चेव तह य ओमम्मि ।
मोत्तूणं चरिमपदं, नायव्वं जं जहिं कमति ॥

वृ- द्वितीयपदं ग्लानत्वे अध्वनि तथा अवमे च भवति, तत्र 'चरमपदं' निदानकरणरूपं

मुक्त्वा ज्ञातव्यम्, तत्र द्वितीयपदं न भवतीत्यर्थः शेषेषु तु कौकुचिकादिषु यद् यत्र क्रमते तत् तत्रावतारणीयम् ।। एतदेव भावयति-

[भा.६३३६] कडिवेयणमवतंसे, गुदपागऽरिसा भगंदलं वा वि ।
गुदखील सक्करा वा, न तरति बद्धासनो होउं ।।

वृ-कटिवेदना कस्यापि दुःसहा, 'अवतंसे वा' पुंस्त्वघातिलक्षणो रोगो भवेत्, एवं गुदयोः पाकोऽर्शांसि भगन्दरं गुदकीलको वा भवेत्, 'शर्करा' कृच्छ्रमूत्रको रोगः स वा कस्यापि भवेत्, ततो न शक्नोति बद्धासनः 'भवितुं' स्थातुम् । एवंविधे ग्लानत्वेऽभीक्ष्णपरिस्पन्दनादिकं स्थानकौकुचिकत्वमपि कुर्यात् ।।

[भा.६३३७] उव्वत्तेति गिलाणं, ओसहकज्जे व पत्थरे छुभति ।
वेवति य खित्तचित्तो, बितियपदं होति दोसुं तु ।।

वृ-ग्लानम् 'उद्वर्तयति' एकस्मात् पार्श्वतो द्वितीयस्मिन् पार्श्वे करोति, 'औषधकार्ये वा' औषधदानहेतोस्तमेव ग्लानमन्यत्र सङ्क्राम्य भूयस्तत्रैव स्थापयति, यस्तु क्षिप्तचित्तः स परवशतया 'प्रस्तरान्' पाषाणान् क्षिपति वेपते वा, चशब्दात् सेण्टितं मुखवादित्रादिकं वा करोति । एतद् द्वितीयपदं यथाक्रमं 'द्वयोरपि' शरीर-भाषाकौकुचिकयोर्भवति ।। मौखरिकत्वेऽपवादमाह-

[भा.६३३८] तुरियगिलाणाहरणे, मुहरित्तं कुज्ज वा दुपक्खे वी ।
ओसह विज्जं मंतं, पेल्लिज्जा सिग्घगामि त्ति ।।

वृ-त्वरितं ग्लानिमित्तमषधादेः आहरणे कर्तव्ये 'द्विपक्षे' संयतपक्षे संयतीपक्षे च मौखरिकत्वं कुर्यात् । कथम् ? इत्याह-एष शीघ्रगामी अत औषधमानेतुं विद्यां मन्त्रं वा प्रयोक्तुं "पेल्लिज्ज"त्ति प्रेर्यताम्, व्यापार्यतामित्यर्थः ।।

[भा.६३३९] अच्चाउरकज्जे वा, तुरियं व न वा वि इरियमुवओगो ।
विज्जस्स वा वि कहणं, भए व विस सूल ओमज्जे ।।

वृ-अत्यातुरस्य वा-आगाढग्लानस्य कार्ये त्वरितं गच्छेत्, 'न वाऽपि' नैवेर्यायामुपयोगं दद्यात्, वैद्यस्य वा 'कथनं' धर्मकथां कुर्वन् गच्छेद् येन स आकृतः सम्यग् ग्लानस्य चिकित्सां करोति, भये वा मन्त्रादिकं परिवर्तयन् गच्छति, विषं वा केनापि साधुना भक्षितं तस्य मन्त्रेणापमार्जनं कुर्वन्, विषविद्या वा नवगृहीता तां परिवर्तयन् गच्छति, शूलं वा कस्यापि साधोरुद्धावति तदपमार्जयन् गच्छति ।

[भा.६३४०] तिंतिणिया वि तदट्ठा, अलब्भमाणे वि दव्वतिंतिणिता ।
वेज्जे गिलाणगादिसु, आहारुवधी य अतिरित्तो ।।

वृ- तस्य-ग्लानस्य उपलक्षणत्वाद् आचार्यादिश्चार्थाय 'तिन्तिणिकताऽपि' स्निग्ध-मधुराहारादिसंयोजनलक्षणा कर्तव्या । अलभ्यमाने वा ग्लानप्रायोग्ये औषधादौ 'द्रव्यतिन्तिणिकता' 'हा ! कष्टं न लभ्यते ग्लानयोग्यमत्र' इत्येवंरूपा कार्या । इच्छालोभे पुनरिदं द्वितीयपदम्-वैद्यस्य दानार्थं ग्लानार्थं वा आहार उपधिश्चातिरिक्तोऽपि ग्रहीतव्यः, आदिशब्दाद् आचार्यादिपरिग्रहः, गणचिन्तको वा गच्छोपग्रहहेतोरतिरिक्तमुपधिं धारयेत् ।। एवं यावद् निदानपदं वर्जयित्वा शेषेषु सर्वेष्वपि ग्लानत्वमङ्गीकृत्य द्वितीयपदमुक्तम् । सम्प्रति तदेवाध्वनि दर्शयति-

[भा.६३४१] अवयक्खंतो व भया, कहेति वा सत्थिया-ऽऽतिअत्तीणं ।
विज्जं आइसुतं वा, केद भदा वा अनाभोगा ।।

वृ- अध्वनि स्तेनानां सिंहादीनां वा भयादप्रेक्षमाण इतश्चेतश्च विलोकमानोऽपि व्रजेत् । यदि वा अध्वनि गच्छन् सार्थिकानाम् 'आयत्तिकानां वा' सार्थचिन्तकानां धर्मं कथयति येन ते आवृताः सन्तो भक्तपानाद्युपग्रहं कुर्युः । अथवा विद्या काचिदभिनवगृहीता सा 'मा विस्मरिष्यति' इति कृत्वा परिवर्तयन्ननुप्रेक्षमाणो वा गच्छेत् । 'आदिश्रुतं' पञ्चमङ्गलं तद्वा चौरादिभये परावर्तयन् व्रजेत् । 'खेदो' नाम परिश्रमः तेन आतुरो [illegible] सम्भ्रान्त ईर्यायामुपयुक्तो न भवेदपि । "अनाभोग"त्ति विस्मृतिवशात् सहसा वा नेर्यायामुपयोगं कुर्यात् ॥

[भा.६३४२] संजोयणा पलंबातिगाण कप्पादिगो य अतिरेगो ।
ओमादिए वि विहुरे, जोइज्जा जं जहिं कमति ॥

वृ- अध्वनि गच्छन्नाहारादीनां संयोजनामपि कुर्यात् । प्रलम्बादीनां विकरणकरणाय पिप्पलकादिकमतिरिक्तमप्युपधिं गृह्णीयाद् धारयेद्वा । अथवा परलिङ्गेन तानि ग्रहीतव्यानि ततः परलिङ्गमपि धारयेत् । कल्पाः-और्णिकादयस्तदादिकः आदिशब्दात् पात्रादिकश्च दुर्लभ उपधिरतिरिक्तोऽपि ग्रहीतव्यः । तदेवमध्वनि द्वितीयपदं भावितम् । एवम् अवमं-दुर्भिक्षं तत्र आदिशब्दाद् अशिवादिकारणेषु वा 'विधुरे' आत्यन्तिकायामापदि पञ्चविधं परिमन्थुभङ्गाकृत्य यद् यत्र द्वितीयपदं क्रमते तत् तत्र योजयेत् । एवं निदानपदं मुक्त्वा पञ्चस्वपि कौकुचिकादिषु परिमन्थुषु द्वितीयपदमुक्तम् ॥ आह-निदाने किमिति द्वितीयपदं नोक्तम् ? उच्यते-नास्ति । कुतः ? इति चेद् अत आह-

[भा.६३४३] जा सालंबणसेवा, तं बीयपदं वयंति गीयत्था ।
आलंबनरहियं पुन, निसेवणं दप्पियं बेंति ॥

वृ- या 'सालम्बनसेवा' ज्ञानाद्यालम्बनयुक्ता प्रतिषेवा तां द्वितीयं पदं गीतार्था वदन्ति, आलम्बनरहितां पुनः 'निषेवणां' प्रतिषेवां दर्पिकां ब्रुवते । तच्चालम्बनं निदानकरणे किमपि न विद्यते, "सव्वत्थ अनियाणया भगवया पसत्थे"ति वचनात् ॥ आह-भोगार्थं विधीयमानं निदानं तीव्रविपाकं भवतीति कृत्वा मा क्रियताम्, यत् पुनरमुना प्रणिधानेन निदानं करोति-मा मम राजादिकुले उत्पन्नस्य भोगाभिष्वक्तस्य प्रव्रज्या न भविष्यतीत्यतो दरिद्रकुलेऽहमुत्पद्येयम्, तत्रोत्पन्नस्य भोगाभिष्वङ्गो न भविष्यति; एवं निदानकरणे को दोषः ? सूरिराह-

[भा.६३४४] एवं सुनीहरो मे, होहिति अप्प त्ति तं परिहरंति ।
हंदि ! हु नेच्छंति भवं, भववोच्छित्तिं विमग्गंता ॥

वृ- 'एवम्' अवधारणे । किमवधारयति ? दरिद्रकुले उत्पन्नस्य 'मे' ममात्माऽसंयमात् 'सुनिर्हरः' सुनिर्गमो भविष्यति, सुखेनैव संयममङ्गीकरिष्यामि इत्यर्थः; 'इति' ईदृशमपि यद् निदानं तदपि साधवः परिहरन्ते । कुतः ? इत्याह-'हन्दि !' इति नोदकामन्त्रणे । हुः इति यस्मादर्थे । हे सौम्य ! यस्माद् निदानकरणेन भवानां परिवृद्धिर्भवति, सर्वोऽपि च प्रव्रज्याप्रयत्नोऽस्माकं भवव्यवच्छित्तिनिमित्तम्, ततो भवव्यवच्छित्तिं विविधैः प्रकारैर्मार्गयन्तः साधवो भवं नेच्छन्ति । अमुमेवार्थं दृष्टान्तेन द्रढयति-

[भा.६३४५] जो रयणमणग्घेयं, विक्किज्जऽप्पेण तत्थ किं साहू ।
दुग्गयभवमिच्छंते, एसो च्चिय होति दिट्ठंतो ॥

वृ- यः 'अनर्घ्यम्' इन्द्रनील-मरकतादिकं रत्नम् 'अल्पेन' स्वल्पमूल्येन काचादिना विक्रीणीयात्

तत्र 'किं साधु' किं नाम शोभनम् ? न किञ्चिदित्यर्थः । 'दुर्गतभवं' दरिद्रकुलोत्पत्तिमिच्छत एष एव दृष्टान्त उपनेतव्यो भवति । तथाहि-अनर्घ्यरत्नस्थानीयं चारित्रम्, निरुपमा-ऽनन्तानन्द-मयमोक्षफलसाधकत्वात्; काचशकलस्थानीयो दुर्गतभवः, तुच्छत्वात् । ततो यश्चारित्रविक्रयेण तत्प्रार्थनं करोति स मन्दभाग्योऽनर्घ्यरत्नं विक्रीय काचशकलं गृह्णातीति मन्तव्यम् ॥ अपि च-

[भा.६३४६] संगं अनिच्छमाणो, इह-परलोए य मुच्चति अवस्सं ।
एसेव तस्स संगो, आसंसति तुच्छतं जं तु ॥

वृ- इहलोकविषयं परलोकविषयं च 'सङ्गं' मुक्तिपदप्रतिपक्षभूतमभिष्वङ्गमनिच्छन्नवश्यं 'मुच्यते' कर्मविमुक्तो भवति । कः पुनस्तस्य सङ्गः ? इत्याह-एष एव तस्य सङ्गो यद् मोक्षाख्यविपुलफलदायिना तपसा तुच्छकं फलम् 'आशास्ते' प्रार्थयति ॥

तद् भूयोऽपि निदानस्यैव पर्यायकथनद्वारेण दोषमाह-

[भा.६३४७] बंधो त्ति नियाणं ति य, आससजोगो य होंति एगट्ठा ।
ते पुन न बोहिहेऊ, बंधावचया भवे बोही ॥

वृ- बन्ध इति वा निदानमिति वा आशंसायोग इति वा एकार्थानि पदानि भवन्ति । 'ते पुनः' बन्धादयः 'न बोधिहेतवः' न ज्ञानाद्यवाप्तिकारणं भवन्ति, किन्तु ये 'बन्धापचयाः' कारणे कार्योपचारात् कर्मबन्धस्यापचयहेतवोऽनिदानतादयस्तेभ्यो बोधिर्भवति ॥ आह-यदि नाम साधवो भवं नेच्छन्ति ततः कथं देवलोकेषूत्पद्यन्ते ? उच्यते-

[भा.६३४८] नेच्छंति भवं समणा, सो पुन तेसिं भवो इमेहिं तु ।
पुव्वतव-संजमेहिं, कम्मं तं चावि संगेणं ॥

वृ- 'श्रमणाः' साधवो नेच्छन्त्येव भवं परं स पुनः 'भवः' देवत्वरुपस्तेषाममीभि कारणैर्भवत् । तद्यथा-पूर्व-वीतरागावस्थापेक्षया प्राचीनावस्थाभावि यत् तपस्तेन, सरागावस्थाभाविना तपसा साधवो देवलोकेषूत्पद्यन्ते इत्यर्थः, एवं पूर्वसंयमेन-सरागेण सामायिकादिचारित्रेण साधूनां देवत्वं भवति । कुतः ? इत्याह-''कम्मं'' ति पूर्वतपः-संयमावस्थायां हि देवायुर्देवगतिप्रभृतिकं कर्म बध्यते ततो भवति देवेषूपपातः । एतदपि कर्म केन हेतुना बध्यते ? इति चेद् अत आह-तदपि कर्म 'सङ्गेन' संज्वलनक्रोधादिरुपेण बध्यते ॥

मू. (२१५) *छव्विहा कप्पट्ठिती पन्नत्ता, तं जहा-सामाइयसंजयकप्पट्ठिती १ छेतोवट्ठावणिय-संजयकप्पट्ठिती २ निव्विसमाणकप्पट्ठिती ३ निव्विट्ठकाइयकप्पट्ठिती ४ जिनकप्पट्ठिती ५ थेरकप्पट्ठिति ६ त्ति बेमि ॥*

वृ-अथास्य सूत्रस्य कः सम्बन्धः ? इत्याह-

[भा.६३४९] पलिमंथविप्पमुक्कस्स होति कप्पो अवट्ठितो नियमा ।
कप्पे य अवट्ठाणं, वदंति कप्पट्ठितिं थेरा ॥

वृ-अनन्तरसूत्रोक्तैः परिमन्थैर्विप्रमुक्तस्य साधोः 'अवस्थितः' सर्वकालभावी कल्पो नियमाद् भवति । यच्च कल्पेऽवस्थानं तामेव कल्पस्थितिं 'स्थविराः' श्री गौतमादयः सूरयो वदन्ति । अतः परिमन्थसूत्रानन्तरं कल्पस्थितिसूत्रमारभ्यते ॥ अनेन सम्बन्धेनायातस्यास्य व्याख्या-'षड्विधा' षट्प्रकारा कल्पे-कल्पशास्त्रोक्तसाधुसमाचारे स्थिति-अवस्थानं कल्पस्थिति कल्पस्य वा स्थिति-मर्यादा कल्पस्थिति 'प्रज्ञप्ता' तीर्थकर-गणधरैः प्ररुपिता । 'तद्यथा' इति उपन्यासार्थः । 'सामायि-

कसंयतकल्पस्थिति' समः-राग-द्वेषरहितस्तस्य आयः-लाभो ज्ञानादीनां प्राप्तिरित्यर्थः, समाय एव सामायिकं-सर्वसावद्ययोगविरतिरुपम् तत्प्रधाना ये संयताः-साधवस्तेषां कल्पस्थितिः सामायिकसंयतकल्पस्थितः १ । तथा पूर्वपर्यायच्छेदेनोपस्थापनीयम्-आरोपणीयं यत् तत् छेदोपस्थापनीयम्, व्यक्तितो महाव्रतारोपणमित्यर्थः, तत्प्रधाना ये संयतास्तेषां कल्पस्थिति छेदोपस्थापनीयसंयतकल्पस्थिति २ । निर्विशमानाः-परिहारविशुद्धिकल्पं वहमानास्तेषां कल्पस्थिति निर्विशमानकल्पस्थिति ३ । निर्विष्कायिका नाम-यैः परिहारविशुद्धिकं तपो व्यूढम्, निर्विष्टः-आसेवितो विधिक्षितचारित्रलक्षणः कायो यैस्ते निर्विष्टकायिका इति व्युत्पत्तेः तेषां कल्पस्थितिः निर्विष्टकायिककल्पस्थिति ४ । जिनाः-गच्छनिर्गताः साधुविशेषास्तेषां कल्पस्थिति जिनकल्पस्थितिः ५ । स्थविराः-आचार्यादयो गच्छप्रतिबद्धास्तेषां कल्पस्थिति स्थविरकल्पस्थितिः ६ । 'इति' अध्ययनपरिसमाप्तौ । 'ब्रवीमि' इति तीर्थकर-गणधरोपदेशेन सकलमपि प्रस्तुतशास्त्रक्तं कल्पाऽकल्पविधिं भणामि, न पुनः स्वमनीषिकया इति सूत्रसङ्क्षेपार्थः ॥ सम्प्रति विस्तरार्थं बिभणिषुर्भाष्यकारः कल्पस्थितिपदे परस्याभिप्रायमाशङ्क्य परिहरन्नाह –

[भा.६३५०] आहारो त्ति य ठाणं, जो चिट्ठति सो ठिइ त्ति ते बुद्धी ।
ववहार पडुच्चेवं, ठिइरेव तु निच्छए ठाणं ॥

वृ-सक्रियस्य जीवादिद्रव्यस्य तावदेतावदेव क्रियाद्वयं भवति-स्थानं वा गमनं वा । तत्र स्थानस्य गमनं प्रतिपक्षो भवति, तत्परिणतस्य स्थानाभावात् । एवं स्थितेरपि गति प्रतिपक्षो भवति ॥ ततः किम् ? इत्याह-

[भा.६३५२] ठाणस्स होति गमनं, पडिपक्खो तह गती ठिईए उ ।
न य गमनं तु गतिमतो, होति पुढो एवमितरं पि ॥

वृ- स्थानस्य गमनं प्रतिपक्षो भवति न स्थिति, स्थितेरपि गति प्रतिपक्षो न स्थानम्, एवं स्थिति-स्थानयोरेकत्वम् । तथा 'न च' नैव गमनं गतिमतो द्रव्यात् 'पृथग्' व्यतिरिक्तं भवति, एवम् 'इतरदपि' स्थानं स्थितिमतो द्रव्यादव्यतिरिक्तं मन्तव्यम् ॥ इदमेव व्यतिरेकद्वारेण द्रढयति-

[भा.६३५३] जय गमनं तु गतिमतो, होज्ज पुढो तेन सो न गच्छेज्जा ।
जह गमनातो अन्ना, न गच्छति वसुंधरा कसिणा ॥

वृ- यदि गमनं गतिमतः पुरुषादेः पृथग् भवेत् ततः 'असौ' गतिमान् न गच्छेत् । दृष्टान्तमाह-यथा गमनात् 'अन्या' पृथग्भूता 'कृत्स्ना' सम्पूर्णा वसुन्धरा न गच्छति । कृत्स्नाग्रहणं लेष्टुप्रभृतिकस्तदवयवो गच्छेदपि इति ज्ञापनार्थम् । एवं स्थानेऽपि भावनीयम् ॥

यत एवमतः स्थितमेतत्-

[भा.६३५४] ठाण-ट्ठिइनाणत्तं, गति-गमनानं च अत्थतो नत्थि ।
वंजणनाणत्तं पुन, जहेव वयणस्स वायातो ॥

वृ-स्थान-स्थित्योर्गति-गमनयोश्चार्थतो नास्ति नानात्वम्, एकार्थत्वात्; व्यञ्जननानात्वं पुनरस्ति । यथैव वचनस्य वाचश्च परस्परमर्थतो नास्ति भेदः, शब्दतः पुनरस्तीति ॥ अथवा नात्र स्थिति-शब्दोऽवस्थानवाची किन्तु मर्यादावाचकः । तथा चाह-

[भा.६३५५] अहवा ज एस कप्पो, पलंबमादि बहुधा समक्खातो ।
छट्ठाणा तस्स ठिई, ठिति त्ति मेर त्ति एगट्ठा ॥

वृ- अथवा य एष प्रस्तुतशास्त्र प्रलम्बादिकः 'बहुधा' अनेकविधः कल्पः समाख्यातः तस्य 'षट्स्थाना' षट्प्रकारा स्थितिर्भवति । स्थितिरिति मर्यादा इति चैकार्थौ शब्दौ ॥
भूयोऽपि विनेयानुग्रहार्थं स्थितेरेकार्थिकान्याह-

[भा.६३५६] पतिट्ठा ठावणा ठाणं, निव्विसमाणे तहेव निव्विट्ठे ।
अवट्ठाणं अवत्था य, एकट्ठा चिट्ठणाऽऽति य ॥

वृ- प्रतिष्ठा स्थापना स्थानं व्यवस्था संस्थिति स्थिति अवस्थानम् अवस्था च, एतान्येकार्थिकानि पदानि । तथा "चिट्ठणं" ऊर्ध्वस्थानम् आदिशब्दाद् निषदनं त्वग्वर्तनं च, एतानि त्रीण्यपि स्थितिविशेषरूपाणि मन्तव्यानि ॥ सा च कल्पस्थिति षोढा, तद्यथा-

[भा.६३५७] सामाइए य छेदे, निव्विसमाणे तहेव निव्विट्ठे ।
जिनकप्पे थेरेसु य, छव्विह कप्पट्ठिती होति ॥

वृ- सामायिकसंयतकल्पस्थिति छेदोपस्थापनीयसंयतकल्पस्थिति निर्विशमानकल्पस्थिति तथैव निर्विष्टकायकल्पस्थिति जिनकल्पस्थिति स्थविरकल्पस्थितिश्चेति षड्विधा कल्पस्थितिः ॥
अथैनामेव यथाक्रमं विवरीषुः प्रथमतः सामायिककल्पस्थितिं विवृणोति-

[भा.६३५८] कतिठाण ठितो कप्पो, कतिठाणेहिं अट्ठितो ।
वुत्तो धूतरजो कप्पो, कतिठाणपतिट्ठितो ॥

वृ- यः किल 'धुतरजाः' अपनीतपापकर्मा सामायिकसाधूनां 'कल्पः' आचारो भगवद्भिरुक्तः स कतिषु स्थानेषु स्थितः ? कतिस्थानप्रतिष्ठितश्चोक्तः ? ॥ सूरिराह-

[भा.६३५९] चउठाणठिओ कप्पो, छहिं ठाणेहिं अट्ठिओ ।
एसो धूयरय कप्पो, दसट्ठाणपतिट्ठिओ ॥

वृ- चतुःस्थानस्थितः कल्पः, षट्सु च स्थानेष्वस्थितः । तदेवमेष धुतरजाः सामायिकसंयतकल्पो दशस्थानप्रतिष्ठितः, केषुचित् स्थित्या केषुचित् पुनरस्थित्या दशसु स्थानेषु प्रतिबद्धो मन्तव्य इत्यर्थः ॥ इदमेव व्यक्तीकरोति-

[भा.६३६०] चउहिं ठिता छहिं अठिता, पढमा बितिया ठिता दसविहम्मि ।
वहमाणा निव्विसगा, जेहि वहं ते उ निव्विट्ठ ॥

वृ- 'प्रथमाः' सूत्रकमप्रामाण्येन सामायिकसंयतास्ते चतुर्षु स्थानेषु स्थिताः, षट्सु पुनरस्थिताः । गाथायां सप्तम्यर्थे तृतीया । ये तु 'द्वितीयाः' छेदोपस्थापनीयसंयतास्ते दशविधेऽपि कल्पे स्थिताः । पश्चार्द्धेन तृतीय-चतुर्थकल्पस्थित्योः शब्दार्थमाह- "वहमाणा" इत्यादि । ये परिहारविशुद्धिकं तपो वहन्ति ते निर्विशमानकाः । यैस्तु तदेव तपो व्यूढं ते निर्विष्टकायिका उच्यन्ते ॥ आह-कानि पुनस्तानि चत्वारि षड् वा स्थानानि येषु सामायिकसंयता यथाक्रमं स्थिता अस्थिताश्च ? इति अत्रोच्यते-

[भा.६३६१] सिज्जायरपिंडे या, चाउज्जामे य पुरिसजेट्ठे य ।
कितिकम्मस्स य करणे, चत्तारि अवट्ठिया कप्पा ॥

वृ- "सिज्जातरपिंडे" त्ति "सूचनात् सूत्रम्" इति शय्यातरपिण्डस्य परिहरणं चतुर्यामः पुरुषज्येष्ठश्च धर्म कृतिकर्मणश्च करणम् । एते चत्वारः कल्पाः सामायिकसाधूनामप्यवस्थिताः । तथाहि-सर्वेऽपि मध्यमसाधवो महाविदेहसाधवश्च शय्यातरपिण्ड परिहरन्ति, चतुर्यामं च धर्ममनुपालयन्ति, 'पुरुषज्येष्ठश्च धर्म' इति कृत्वा तदीया अप्यार्यिकाश्चिरदीक्षिता अपि

तद्दिनदीक्षितमपि साधुं वन्दन्ते, कृतिकर्म च यथारात्निकं तेऽपि कुर्वन्ति । अत एते चत्वारः कल्पा अवस्थिताः ॥ इमे पुनः षडनवस्थिताः-

[भा.६३६२] आचेलक्कुद्देसिय, सपडिक्कमणे य रायपिंडे य ।
मासं पज्जोसवणा, छऽप्येतऽनवट्ठिता कप्पा ॥

वृ-आचेलक्यमौद्देशिकं सप्रतिक्रमणो धर्मो राजपिण्डो मासकल्पः पर्युषणाकल्पश्चेति षडप्येते कल्पा मध्यमसाधूनां विदेहसाधूनां चानवस्थिताः । तथाहि-यदि तेषां वस्त्रप्रत्ययो रागो द्वेषो वा उत्पद्यते तदा अचेलाः, अथ न रागोत्पत्तिस्ततः सचेलाः, महामूल्यं प्रमाणातिरिक्तमपि च वस्त्रं गृह्णन्तीति भावः 'औद्देशिकं नाम' साधूनुद्दिश्य कृतं भक्तादिकम् आधाकर्मेत्यर्थः, तदप्यन्यस्य साधोरर्थाय कृतं तेषां कल्पते, तदर्थं तु कृतं न कल्पते । प्रतिक्रमणमपि यदि अतिचारो भवति ततः कुर्वन्ति अतिचाराभावे न कुर्वन्ति । राजपिण्डे यदि वक्ष्यमाणा दोषा भवन्ति ततः परिहरन्ति अन्यथा गृह्णन्ति । मासकल्पे यदि एकक्षेत्रे तिष्ठतां दोषा न भवन्ति ततः पूर्वकोटीमप्यासते, अथ दोषा भवन्ति ततो मासे पूर्णेऽपूर्णे वा निर्गच्छन्ति । पर्युषणायामपि यदि वर्षासु विहरतां दोषा भवन्ति तत एकत्र क्षेत्रे आसते, अथ दोषा न भवन्ति ततो वर्षारात्रेऽपि विहरन्ति ॥ गता सामायिकसंयतकल्पस्थितिः । अथ च्छेदोपस्थापनीयसाधूनां कल्पस्थितिमाह-

[भा.६३६३] दसठाणठितो कप्पो, पुरिमस्स य पच्छिमस्स य जिनस्स ।
एसो धुतरत कप्पो, दसठाणपतिट्ठितो होति ॥

वृ-दशस्थानस्थितः कल्पः पूर्वस्य च पश्चिमस्य च [illegible] च जिनस्य तीर्थे छेदोपस्थापनीयसाधूनां मन्तव्यः । तदेवमेष धुतरजाः कल्पो दशस्थानप्रतिष्ठितो भवति ॥ तान्येव दश स्थानानि दर्शयति-

[भा.६३६४] आचेलक्कुद्देसिय, सिज्जायर रायपिंड कितिकम्मे ।
वत जेट्ठ पडिक्कमणे, मासं-पज्जोसवणकप्पे ॥

वृ- आचेलक्यम् १ औद्देशिकं २ शय्यातरपिण्डो ३ राजपिण्डः ४ कृतिकर्म ५ व्रतानि ६ "जेट्ठ" त्ति पुरुषज्येष्ठो धर्मः ७ प्रतिक्रमणं ८ मासकल्पः ९ पर्युषणाकल्पश्च १० इति द्वारगाथासमासार्थः ॥ साम्प्रतमेनामेव विवरीषुराह-

[भा.६३६५] दुविहो होति अचेलो, संताचेलो असंतचेलो य ।
तित्थगर असंतचेला, संताचेला भवे सेसा ॥

वृ-द्विविधो भवत्यचेलः-सदचेलोऽसदचेलश्च । तत्र तीर्थकरा असदचेलाः, देवदूष्यपतनानन्तरं सर्वदैव तेषां चीवराभावात् । 'शेषाः' सर्वेऽपि जिनकल्पिकादिसाधवः सदचेलाः, जघन्यतोऽपि रजोहरण-मुखवस्त्रिकासम्भवात् ॥ आह-यद्येवं ततः कथममी अचेला भण्यन्ते ? उच्यते-

[भा.६३६६] सीसावेढियपुत्तं, नदिउत्तरणम्मि नग्गयं बेंति ।
जुन्नेहि नग्गिया मी, तुर सालिय ! देहि मे पोत्तिं ॥

वृ-जलतीमनभयात् शीर्षे-शिरसि आवेष्टितं पोतं-परिधानवस्त्रं येन स शीर्षवेष्टितपोतस्तम्, एवंविधं सचेलमपि 'नद्युत्तरणे' अगाधायाः कस्याश्चिद् नद्या उत्तरणं कुर्वन्तं दृष्ट्वा नग्नकं ब्रुवते, 'नग्नोऽयम्' इति लोके वक्तारो भवन्तीत्यर्थः । यथा वा काचिदविरतिका परिजीर्णवस्त्रपरिधाना प्राक्समर्पितवेतनं तन्तुवायं शाटिकानिष्पादनालसं ब्रवीति, यथा-जीर्णैर्वस्त्रं परिहितैर्नग्निकाऽहमस्मि ततस्त्वरस्व 'हे शालिक !' तन्तुवाय ! देहि मे 'पोतिकां' शाटिकाम् ॥ अथात्रैवोपनयमाह-

[भा.६३६७] जुन्नेहिं खंडिएहि य, असव्वतनुपाउतेहिं न य निच्चं ।
संतेहिं वि निग्गंथा, अचेलगा होंति चेलेहिं ॥

वृ- एवं 'जीर्णैः' पुराणैः, 'खण्डितैः' छिन्नैः, 'असर्वतनुप्रावृतैः' स्वल्पप्रमाणतया सर्वस्मिन् शरीरेऽप्रावृतैः प्रमाणहीनैरित्यर्थः, न च 'नित्यं' सदैव प्रावृतैः किन्तु शीतादिकारणसद्भावे, एवंविधैश्चेलैः 'सद्भिरपि' विद्यमानैरपि निर्ग्रन्था अचेलका भवन्ति ॥ अत्र पराभिप्रायमाशङ्क्य परिहरति-

[भा.६३६८] एवं दुग्गत-पहिता, अचेलगा होंति ते भवे बुद्धी ।
ते खलु असंततीए, धरेंति न तु धम्मबुद्धीए ॥

वृ- यदि जीर्ण-खण्डितादिभिर्वस्त्र प्रावृताः साधवोऽचेलकास्तत एवं दुर्गताश्च-दरिद्राः पथिकाश्च-पान्था दुर्गत-पथिकास्तेऽपि अचेलका भवन्तीति 'ते' तव बुद्धि स्यात् तत्रोच्यते-'ते खलु' दुर्गत-पथिकाः 'असत्तया' नव-व्यूत-सदशकादीनां वस्त्राणामसम्पत्त्या परिजीर्णादीनि वासांसि धारयन्ति, न पुनर्धर्मबुद्धया, अतो भावतस्तद्विषयमूर्च्छापरिणामस्यानिवृत्तत्वान्नैते अचेलकाः; साधवस्तु सति लाभे महाधनादीनि परिहृत् जीर्ण-खण्डितादीनि धर्मबुद्धया धारयन्तीत्यतोऽचेला उच्यन्ते। यद्येवमचेलास्ततः किम् ? इत्याह-

[भा.६३६९] आचेलक्को धम्मो, पुरिस्स य पच्छिमस्स य जिनस्स ।
मज्झिमगाण जिनानं, होति अचेलो सचेलो वा ॥

वृ- अचेलकस्य भाव आचेलक्यम्, तदत्रास्तीति आचेलक्यः, अभ्रादेराकृतिगणत्वादप्रत्ययः। एवंविधो धर्म पूर्वस्य च पश्चिमस्य च जिनस्य तीर्थे भवति । मध्यमकानां तु जिनानामचेलः सचेलो वा भवति ॥ इदमेव भावयति-

[भा.६३७०] पडिमाए पाउता वा, नऽतिक्कमंते उ मज्झिमा समणा ।
पुरिम-चरिमाण अमहद्धणा तु भिन्ना इमे मोत्तुं ॥

वृ- 'मध्यमाः' मध्यमतीर्थकरसत्काः साधवः 'प्रतिमया वा' नग्नतया 'प्रावृता वा' प्रमाणा-तिरिक्त-महामूल्यादिभिर्वासोभिराच्छादितवपुषो नातिक्रामन्ति भागवतीमाज्ञामिति गम्यते। पूर्व-चरमाणां तु प्रथम-पश्चिमतीर्थकरसाधूनां 'अमहाधनानि' स्वल्पमूल्यानि 'भिन्नानि च' अकृत्स्नानि, प्रमाणोपेतान्यदशकानि चेत्यर्थः, परमिमानि कारणानि मुक्त्वा ॥ तान्येवाह-

[भा.६३७१] आसज्ज खेत्तकप्पं, वासावासे अभाविते असहू ।
काले अद्धाणम्मि य, सागरि तेने व पाउरणं ॥

वृ- 'क्षेत्रकल्पं' देशविशेषाचारमासाद्याभिन्नान्यपि प्राव्रियन्ते, यथा सिन्धुविषये तादृशानि प्रावृत्य हिण्ड्यते । वर्षावासे वा वर्षाकल्पं प्रावृत्य हिण्ड्यते । 'अभावितः' शैक्षः कृत्स्नानि प्रावृतो हिण्डते यावद् भावितो भवति । असहिष्णुः शीतमुष्णं वा नाधिसोढुं शक्नोति ततः कृत्स्नं प्रावृणुयात् । 'काले वा' प्रत्युषे भिक्षार्थं प्रविशन् प्रावृत्य निर्गच्छेत् । अध्वनि वा प्रावृता गच्छन्ति। यदि सागारिकप्रतिबद्धप्रतिश्रये स्थितास्ततः प्रावृताः सन्तः कायिकादिभुवं गच्छन्ति । स्तेना वा पथि वर्तन्ते तत उत्कृष्टोपधिं स्कन्धे कक्षायां वा विण्टिकां कृत्वा उपरि सर्वाङ्गीणं प्रावृता गच्छन्ति। एतेषु कारणेषु कृत्स्नस्योपधेः प्रावरणं कर्तव्यम् ॥ तथा-

[भा.६३७२] निरुवहय लिंगभेदे, गुरुगा कप्पति तु कारणज्जाए ।
गेलन्न लोय रोगे, सरीरवेतावडितमादी ॥

वृ- निरुपहतो नाम-नीरोगस्तस्य लिङ्गभेदं कुर्वतश्चतुर्गुरुकाः । अथवा निरुपहतं नाम-यथाजातलिङ्गं तस्य भेदे चतुर्गुरु ॥ तस्य च लिङ्गभेदस्येमे भेदाः-

[भा. ६३७३] खंधे दुवार संजति, गरुलऽद्धंसे य पट्ट लिंगदुवे ।
लहुगो लहुगो लहुगा, तिसु चउगुरु दोसु मूलं तु ॥

वृ- स्कन्धे कल्पं करोति मासलघु । शीर्षद्वारिकां करोति मासलघु । संयतीप्रावरणं करोति चतुर्लघु । गरुडपाक्षिकं प्रावृणोति, अर्धांसकृतं करोति, कटीपट्टकं बध्नन्ती, एतेषु त्रिष्वपि चतुर्गुरु । गृहस्थलिङ्गं परलिङ्गं वा करोति द्वयोरपि मूलम् ॥ द्वितीयपदे तु-कारणजाते लिङ्गभेदोऽपि कर्तुं कल्पते । कुत्र ? इत्याह-ग्लानत्वं कस्यापि विद्यते तस्योद्वर्त्तनमुपवेशनमुत्थापनं वा कुर्वन् कटीपट्टकं बध्न्यात् । लोचं वाऽन्यस्य साधोः कुर्वाणः कटीपट्टकं बध्नाति । "रोगि"त्ति कस्यापि रोगिणोऽर्शांसि लम्बन्ते द्वौ भ्रातरौ वा शूनौ स कटीपट्टकं बध्न्यात् । "सरीरवेयावडियं" ति मृतसंयमशरीरस्य वैयावृत्यं-नीहरणं कुर्वन्, आदिग्रहणात् प्रतिश्रयं प्रमार्जयन् अलाबूनि वा विहायसि लम्बमानः कटीपट्टकं बध्नीयात् ॥ गृहिलिङ्गा-ऽन्यलिङ्गयोरयमपवादः-

[भा. ६३७४] असिवे ओमोयरिए, रायदुट्ठे य वादिदुट्ठे वा ।
आगाढ अन्नलिंगं, कालक्खेवो य गमणं वा ॥

वृ- स्वपक्षप्रान्ते आगाढे अशिवेऽन्यलिङ्गं कृत्वा तत्रैव कालक्षेपं कुर्वन्ति, , अन्यत्र वा गच्छन्ति। एवं 'राजद्विष्टे' राज्ञि साधूनामुपरि । द्वेषमापन्ने, 'वादिद्विष्टे वा' वादपराजिते क्वापि वादिनि व्यपरोपणादिकं कर्तुकामे, एवंविधे आगाढे कारणेऽन्यलिङ्गम् उपलक्षणत्वाद् गृहिलिङ्गं वा कृत्वा कालक्षेपो वा गमनं वा विधेयम् ॥ गतमाचेलक्यद्वारम् । अथौद्देशिकद्वारमाह-

[भा. ६३७५] आहा अधे य कम्मे, आयाहम्मे य अत्तकम्मे य ।
तं पुन आहाकम्मं, कप्पति न व कप्पती कस्स ॥

वृ- आधाकर्म अधःकर्म आत्मघ्नम् आत्मकर्म चेति औद्देशिकस्य-साधूनुद्दिश्य कृतस्य भक्तादश्चत्वारि नामानि । 'तत् पुनः' आधाकर्म कस्य कल्पते ? कस्य वा न कल्पते ? ॥

एवं शिष्येण पृष्टे सूरिराह-

[भा. ६३७६] संघस्सोह विभाए, समणा-समणीण कुल गणे संघे ।
कडमिह ठिते न कप्पति, अट्ठित कप्पे जमुद्दिस्स ॥

वृ- अस्या व्याख्या सविस्तरं तृतीयोद्देशके कृता अतोऽत्राक्षरार्थमात्रमुच्यते-ओघतो वा विभागतो वा सङ्घस्य श्रमणानां श्रमणीनां कुलस्य गणस्य सङ्घस्य वा सङ्कल्पेन यद् भक्तपानादिकं कृतं तत् 'स्थितकल्पिकानां' प्रथम-पश्चिमसाधूनां न कल्पते । ये पुनरस्थितकल्पे स्थिताः तेषां यमुद्दिश्य कृतं तस्यैवैकस्य न कल्पते अन्येषां तु कल्पते ॥

द्वितीयपदे तु स्थितकल्पिकानामपि कल्पते । यत आह-

[भा. ६३७७] आयरिए अभिसेए, भिक्खुम्मि गिलाणगम्मि भयणा उ ।
तिक्खुत्तऽडविपवेसे, चउपरियट्टे ततो गहणं ॥

वृ- आचार्येऽभिषेके भिक्षौ वा ग्लाने सञ्जाते सति आधाकर्मणो 'भजना' सेवनाऽपि क्रियते। तथा अटवी-विप्रकृष्टोऽध्वा तस्यां प्रवेशे कृते यदि शुद्धं न लभ्यते ततः त्रिकृत्वः शुद्धमन्वेषितमपि यदि न लब्धं ततश्चतुर्थे परिवर्ते आधाकर्मणो ग्रहणं कार्यम् ॥

गतमौद्देशिकद्वारम् । अथ शय्यातरपिण्डद्वारमाह-

[भा.६३७८]　तित्थंकरपडिकुट्ठो, आणा अन्नात उग्गमो न सुज्झे ।
　　　　अविमुत्ति अलाघवता, दुल्लभ सेज्जा विउच्छेदो ॥

वृ- आद्यन्तवर्जैर्मध्यमैर्विदेहजैश्च तीर्थकरैराधाकर्म कथञ्चिद् भोक्तुमनुज्ञातं न पुनः शय्यातरपिण्डो अतस्तैः प्रतिक्रुष्ट इति कृत्वा वर्जनीयोऽयम् । "आण" त्ति तं गृह्णता तीर्थकृतामाज्ञा कृता न भवति । "अन्नाय" त्ति यत्र स्थितस्तत्रैव भिक्षां गृह्णता अज्ञातोञ्छं सेवितं न स्यात् । "उग्गमो न सुज्झे" त्ति आसन्नादिभावतः पुनः पुनस्तत्रैव भिक्षा-पानकादिनिमित्तं प्रविशत उद्गमदोषा न शुध्येयुः । [illegible]श्रवणादिना च प्रीतः शय्यातरः क्षीरादि स्निग्धद्रव्यं ददाति, तच्च गृह्णता 'अविमुक्ति' गार्ध्याभावेन कृता स्यात् । शय्यातर-तत्पुत्र-भ्रातृव्यादिभ्यो बहूपकरणं स्निग्धाहारं च गृह्णत उपकरण-शरीरयोर्लाघवं न स्यात् । तत्रैव चाहारादि गृह्णतः शय्यातर-वैमनस्यादिकरणात् शय्या दुर्लभा स्यात्, सर्वथा तद्व्यवच्छेदो वा स्यात् । अतस्तत्पिण्डो वर्जनीयः । अथ द्वितीयपदमाह-

[भा.६३७९]　दुविहे गेलन्नम्मि, निमंतणे दव्वदुल्लभे असिवे ।
　　　　ओमोदरिय पओसे, भए य गहणं अनुन्नातं ॥

वृ- 'द्विविधे' आगाढा-ऽनागाढे ग्लानत्वे शय्यातरपिण्डोऽपि ग्राह्यः । तत्रागाढे क्षिप्रमेव अनागाढे पञ्चकपरिहाण्या मासलघुके प्राप्ते सतीति । 'निमन्त्रणे च' शय्यानिर्बन्धे सकृत् तं गृहीत्वा पुनः पुनः प्रसङ्गो निवारणीयः । दुर्लभे च क्षीरादिद्रव्येऽन्यत्रालभ्यमाने तथाऽशिवेऽवमौदर्ये राजप्रद्वेषे तस्करादिभये च शय्यातरपिण्डस्य ग्रहणमनुज्ञातम् ॥ अत्र दुर्लभद्रव्यग्रहणे विधिमाह-

[भा.६३८०]　तिक्खुत्तो सक्खेत्ते, चउद्दिसिं जोयणम्मि कडजोगी ।
　　　　दव्वस्स य दुल्लभता, सागारिनिसेवणा ताहे ॥

वृ- त्रिकृत्वः स्वक्षेत्रे चतसृषु दिक्षु सक्रोशयोजने गवेषितस्यापि घृतादेर्द्रव्यस्य यदा दुर्लभता भवति तदा सागारिकपिण्डस्य निषेवणं कर्तव्यम् ॥

गतं सागारिकपिण्डद्वारम् । अथ राजपिण्डद्वारमाह-

[भा.६३८१]　केरिसगु त्ति व राया, भेदा पिंडस्स के व से दोसा ।
　　　　केरिसगम्मि व कज्जे, कप्पति काए व जयणाए ॥

वृ- कीदृशोऽसौ राजा यस्य पिण्डः परिह्रियते ? इति । के वा 'तस्य' राजपिण्डस्य भेदाः ? । के वा "से" तस्य ग्रहणे दोषाः ? । कीदृशे वा कार्ये राजपिण्डो ग्रहीतुं कल्पते ? । कया वा यतनया कल्पते ? । एतानि द्वाराणि चिन्तनीयानि ॥ तत्र प्रथमद्वारे निर्वचनं तावदाह-

[भा.६३८२]　मुइए मुद्धभिसित्ते, मुतितो जो होइ जोनिसुद्धो उ ।
　　　　अभिसित्तो व परेहिं, सतं व भरहो जहा राया ॥

वृ- राजा चतुर्द्धा-मुदितो मूर्धाभिषिक्तश्च १ मुदितो न मूर्धाभिषिक्तः २ न मुदितो मूर्धाभिषिक्तः ३ न मुदितो न मूर्धाभिषिक्तः । तत्र मुदितो नाम-यो भवति 'योनिशुद्धः' शुद्धोभयपक्षसम्भूतः, यस्य माता-पितरौ राजवंशीयाविति भावः । यः पुनः 'परेण' मुकुटबद्धेन पट्टबद्धेन राज्ञा प्रजया वा राज्येऽभिषिक्तः । यो वा 'स्वयं' आत्मनैवाभिषिक् यथा भरतो रजा एष मूर्धाभिषिक्त उच्यते ॥ एषु विधिमाह-

[भा.६३८३]　पढमग भंगे वज्जो, होतु व मा वा वि जे तहिं दोसा ।

सेसेसु होत्तऽपिंडो, जहि दोसा ते विवज्जंति ॥"

वृ-प्रथमे भङ्गे राजपिण्डः 'वर्ज्य!' परित्यक्तव्यः, ये 'तत्र' राजपिण्डे गृह्यमाणे दोषास्ते भवन्तु वा मा वा तथापि वर्जनीयः । 'शेषेषु' त्रिषु भङ्गेषु 'अपिण्डः' राजपिण्डो न भवति तथापि येषु दोषा भवन्ति 'तान्' द्वितीयादीनपि भङ्गान् वर्जयन्ति । इयमत्र भावना-यः सेनापति-मन्त्रि-पुरोहित-श्रेष्ठि-सार्थवाहसहितो राज्यं भुङ्क्ते तस्य पिण्डो वर्जनीयः, अन्यत्र तु भजनेति ॥ गतं 'कीदृशो राजा ?' इति द्वारम् । अथ 'के तस्य भेदाः ?' इति द्वारं चिन्तयन्नाह-

[भा.६३८४] असणाईआ चउरो, वत्थे पादे य कंबले चेव ।
पाउंछणए य तहा, अट्ठविधो रायपिंडो उ ॥

वृ- 'अशनादयः' अशन-पान-खादिम-स्वादिमरूपा ये चत्वारो भेदाः ४ यच्च वस्त्र ५ पात्रं ६ कम्बलं ७ 'पादप्रोञ्छनकं' रजोहरणं ८ एषोऽष्टविधो राजपिण्डः ॥ अथ 'के तस्य दोषाः ?' इति द्वारमाह-

[भा.६३८५] अट्ठविह रायपिंडे, अन्नतरागं तु जो पडिग्गाहे ।
सो आणा अवत्थं, मिच्छत्त विराधनं पावे ॥

वृ- अष्टविधे राजपिण्डे 'अन्यतरत्' अशनादिकं यः प्रतिगृह्णाति स साधुराज्ञाभङ्गमनवस्थां मिथ्यात्वं विराधनां च प्राप्नुयात् ॥ एते चापरे दोषाः-

[भा.६३८६] ईसर-तलवर-माडंएहि सिट्ठीहि सत्थवाहेहिं ।
निंतेहि अतिंतेहि य, वाघातो होंति भिक्खुस्स ॥

वृ- ईश्वर-तलवर-माडम्बिकैः श्रेष्ठिभिः सार्थवाहैश्च निर्गच्छद्भिः 'अतियद्भिश्च' प्रविशद्भिर्भिक्षोर्भिक्षार्थं प्रविष्टस्य व्याघातो भवति ॥ एतदेव व्याचष्टे-

[भा.६३८७] ईसर भोइयमाई, तलवरपट्टेण तलवरो होति ।
वेट्टणबद्धो सेट्ठी, पच्चंतऽहिवो उ माडंबी ॥

वृ- ईश्वरः 'भोगिकादिः' ग्रामस्वामिप्रभृतिक उच्यते । यस्तु परितुष्टनृपतिप्रदत्तेन सौवर्णेन तलवरपट्टेनाङ्कितशिराः स तलवरो भवति । श्रीदेवताध्यासितः पट्टो वेष्टनकमुच्यते, तद् यस्य राज्ञाऽनुज्ञातं स वेष्टनकबद्धः श्रेष्ठी । यस्तु 'प्रत्यन्ताधिपः' छिन्नमडम्बनायकः स माडम्बिकः । सार्थवाहः प्रतीत इति कृत्वा न व्याख्यातः ॥

[भा.६३८८] जा निंति इंति ता अच्छओ अ सुत्तादि-भिक्खहानी य ।
इरिया अमंगलं ति य, पेल्लाऽऽहनना इयरहा वा ॥

वृ- एते ईश्वरादयो यावद् निर्गच्छन्ति प्रविशन्ति च तावद् असौ साधुः प्रतीक्षमाण आस्ते, तत एवमासीनस्य सूत्रार्थयोर्भैक्षस्य च परिहाणिर्भवति । अश्व-हस्त्यादिसम्मर्देन चेर्यां शोधयितुं न शक्नोति । अथ शोधयति ततस्तैरभिघातो भवति । कोऽपि निर्गच्छन् प्रविशन् वा तं साधुं विलोक्यामङ्गलमिति मन्यमानस्तेनैवाश्व-हस्त्यादिना प्रेरणं कशादिना वाऽऽहननं कुर्यात् । ''इतरहा व''त्ति यद्यपि कोऽप्यमङ्गलं न मन्यते तथापि जनसम्मर्दे प्रेरणमाहननं वा यथाभावेन भवेत् ॥

[भा.६३८९] लोभे एसणघाते, संका तेने नपुंस इत्थी य ।
इच्छंतमनिच्छंते, चाउम्मासा भवे गुरुगा ॥

वृ-राजभवनप्रविष्टः 'लोभे' उत्कृष्टद्रव्यलोभवशत एषणाघातं कुर्यात् । 'स्तेनोऽयम्' इत्यादिका च शङ्का राजपुरुषाणां भवेत् । नपुंसकः स्त्रियो वा तत्र निरुद्धेन्द्रियाः साधुमुपसर्गयेयुः तत्र

चेच्छलोऽनिच्छतश्च संयमविराधनादयो बहवो दोषाः । राजभवनं च प्रविशतः शुद्धशुद्धेनाऽपि चत्वारो मासा गुरुकाः प्रायश्चित्तम् ॥ एनामेव गाथां व्याख्यानयति-

[भा.६३९०] अन्नत्थ एरिसं दुल्लभं ति गेण्हेज्जऽनेसणिज्जं पि ।
अन्नेणावि अवहिते, संकिज्जति एस तेनो त्ति ॥

वृ- अन्तःपुरिकाभिरुत्कृष्टं द्रव्यं दीयमानं दृष्ट्वा 'नास्त्यन्यत्रेदृशम्, दुर्लभं वा' इति लोभवशतोऽनेषणीयमपि गृह्णीयात् । राज्ञश्च विप्रकीर्णे सुवर्णादौ द्रव्येऽन्येनाप्यपहृते स एव साधुः शङ्क्यते एष स्तेन इति ॥

[भा.६३९१] संका चारिग चोरे, मूलं निस्संकियम्मि अणवट्ठो ।
परदारि अभिमरे वा, नवमं निस्संकिए दसमं ॥

वृ- चारिकोऽयं चौरो वाऽयं भविष्यति इति शङ्कायां मूलम् । निशङ्कितेऽनवस्थाप्यम् । पारदारिकशङ्कायामभिमरशङ्कायां च 'नवमम्' अनवस्थाप्यम् । निशङ्किते 'दशमं' पाराञ्चिकम् ।

[भा.६३९२] अलभंता पवियारं, इत्थि-नपुंसा बला वि गेण्हेज्जा ।
आयरिय कुल गणे या, संघे य करेज्ज पत्थारं ॥

वृ- तत्र 'प्रविचारं' बहिर्निर्गममलभमानाः स्त्री-नपुंसका बलादपि साधुं गृह्णीयुः । तान् यदि प्रतिसेवते तदा चारित्रविराधना । अथ न प्रतिसेवते तदा ते उड्डाहं कुर्युः । ततः प्रान्तापनादयो दोषाः । अथवा राजा रुष्ट आचार्यस्य कुलस्य गणस्य वा सङ्घस्य वा 'प्रस्तारं' विनाशं कुर्यात् ॥

[भा.६३९३] अन्ने वि होंति दोसा, आइन्ने गुम्म रतणमादीया ।
तन्निस्साए पवेसो, तिरिक्ख मनुया भवे दुट्ठा ॥

वृ-अन्येऽपि तत्र प्रविष्टस्य दोषा भवन्ति । तद्यथा-रत्नादिभिराकीर्णे "गुम्म"त्ति 'गौल्मिकाः' स्थानपालास्ते 'अतिभूमिं प्रविष्टः' इति कृत्वा तं साधुं गृह्णन्ति प्रान्तापयन्ति वा, एवमादयो दोषाः। अथवा 'तन्निश्रया' तस्य-साधोर्निश्रया रत्नादिमोषणार्थं स्तेनकाः प्रवेशं कुर्युः । 'तिर्यञ्चः' वानरादयः 'मनुजाश्च' म्लेच्छादयो दुष्टास्तत्र राजभवने भवेयुस्ते साधोरुपद्रवं कुर्वीरन् ॥

एनामेव निर्युक्तिगाथां व्याख्याति-

[भा.६३९४] आइन्ने रतणादी, गेण्हेज्ज सयं परो व तन्निस्सा ।
गोम्मिय गहणाऽऽहणणं, रन्नो व निवेदिए जं तु ॥

वृ- रत्नादिभिराकीर्णे स प्रविष्टः स्वयमेव तद् रत्नादिकं गृह्णीयात्, परो वा तन्निश्रया गृह्णीयात्। गौल्मिकाश्च ग्रहणमाहननं वा कुर्युः । राज्ञो वाते तं साधुं निवेदयन्ति उपढौकयन्ति ततो निवेदिते सति 'यत्' प्रान्तापनादिकमसौ करिष्यति तन्निष्पन्नं प्रायश्चित्तम् ॥

[भा.६३९५] चारिय चोराऽभिमरा, कामी व विसंति तत्थ तन्नीसा ।
वानर-तरच्छ-वग्घा, मिच्छादि नरा व घातेज्जा ॥

वृ- चारिकाश्चौरा अभिमराः कामिनो वा तत्र तस्य-साधोर्निश्रया प्रविशेयुः । तथा वानर-तरक्षुव्याघ्रा म्लेच्छादयो वा नरास्तत्र साधुं घातयेयुः ॥ अथ कीदृशे कार्ये कल्पते ? कया वा यतनया ? इति द्वारद्वयमाह-

[भा.६३९६] दुविहे गेलन्नम्मी, निमंतणे दव्वदुल्लभे असिवे ।
ओमोयरिय पदोसे, भए य गहणं अनुन्नायं ॥

[भा.६३९७] तिक्खुत्तो सक्खित्ते, चउद्दिसिं जोयणम्मि कडजोगी।
दव्वस्स य दुल्लभया, जयणाए कप्पई ताहे ॥

वृ-गाथाद्वयं शय्यातरपिण्डवद् द्रष्टव्यम्। नवरम् आगाढे ग्लानत्वे क्षिप्रमेव राजपिण्डं गृह्णाति। अनागाढे तु त्रिकृत्वो मार्गयित्वा यदा न लभ्यते तदा पञ्चकपरिहाण्या चतुर्गुरुकप्राप्तो गृह्णाति। 'निमन्त्रणे तु' राज्ञा निर्बन्धेन निमन्त्रितो भणति-यदि भूयो न भणसि ततो गृह्णीमो वयम् नान्यथा। अवमेऽशिवे वाऽन्यत्रालभ्यमाने राजकुलं वा नाशिवेन गृहीतं ततस्तत्र गृह्णाति। राजद्विष्टे तु अपरस्मिन् राज्ञि कुमारे वा प्रद्विष्टे बोधिकम्लेच्छभये वा राज्ञो गृहादनिर्गच्छन् गृह्णीयात् ॥

गतं राजपिण्डद्वारम्। अथ कृतिकर्मद्वारमाह-

[भा.६३९८] कितिकम्मं पि य दुविहं, अब्भुट्ठाणं तहेव वंदनगं।
समणेहि य समणीहि य, जहारिहं होति कायव्वं ॥

वृ-कृतिकर्मापि च द्विविधम्-अभ्युत्थानं तथैव वन्दनकम्। एतच्च द्विविधमपि तृतीयोद्देशके सविस्तरं व्याख्यातम्। उभयमपि च श्रमणैः श्रमणीभिश्च 'यथार्हं' यथारत्नाधिकं परस्परं कर्तव्यम्। तथा श्रमणीनामयं विशेषः-

[भा.६३९९] सव्वाहि संजतीहिं, कितिकम्मं संजताण कायव्वं।
पुरिसुत्तरितो धम्मो, सव्वजिनानं पि तित्थम्मि ॥

वृ- सर्वाभिरपि संयतीभिश्चिरप्रव्रजिताभिरपि संयतानां तद्दिनदीक्षितादीनामपि कृतिकर्म कर्तव्यम्। कुतः ? इत्याह-'सर्वजिनानामपि' सर्वेषामपि तीर्थकृतां तीर्थे पुरुषोत्तरो धर्म इति ॥

[भा.६४००] तुच्छत्तणेण गव्वो, जायति न य संकते परिभवेणं।
अन्नो वि होज्ज दोसो, थियासु माहुज्जहज्जासु ॥

वृ-स्त्रियाः साधुना वन्द्यमानायास्तुच्छत्वेन गर्वो जायते। गर्विता च साधुं परिभवबुद्ध्या पश्यति। ततः परिभवेन 'न च' नैव साधोः 'शङ्कते' बिभेति। अन्योऽपि दोषः स्त्रीषु 'माधुर्यहार्यासु' मार्दवग्राह्यासु वन्द्यमानासु भवति, भावसम्बन्ध इत्यर्थः ॥

[भा.६४०१] अवि य हु पुरिसपणीतो, धम्मो पुरिसो य रक्खिउं सत्तो।
लोगविरुद्धं चेयं, तम्हा समणाण कायव्वं ॥

वृ- 'अपि च' इति कारणान्तराभ्युच्चये। पुरुषैः-तीर्थकर-गणधरलक्षणैः प्रणीतः पुरुषप्रणीतो धर्म। पुरुष एव च तं धर्मं 'रक्षितुं' प्रत्यनीकादिनोपद्रूयमाणं पालयितुं शक्तः। लोकविरुद्धं च 'एतत्' पुरुषेण स्त्रिया वन्दनम्। तस्मात् श्रमणानां ताभिः कर्तव्यम् ॥

गतं कृतिकर्मद्वारम्। अथ व्रतद्वारमाह-

[भा.६४०२] पंचायामो धम्मो, पुरिमस्स य पच्छिमस्स य जिनस्स।
मज्झिमगाण जिनानं, चाउज्जामो भवे धम्मो ॥

वृ-पञ्च यामाः-व्रतानि यत्र स पञ्चयामः, "दीर्घ-ह्रस्वौ मिथो वृत्तौ" इति प्राकृतलक्षणवशात् चकारस्य दीर्घत्वम्। एवंविधो धर्म पूर्वस्य च पश्चिमस्य च जिनस्य। मध्यमकानां जिनानां पुनश्चतुर्यामो धर्मो भवति, मैथुनव्रतस्य परिग्रहव्रत एवान्तर्भावविवक्षणात् ॥

कुत एवम्? इति चेद् उच्यते-

[भा.६४०३] पुरिमाण दुव्विसोज्झो, चरिमाणं दुरनुपालओ कप्पो।

मज्झिमगाण जिनानं, सुविसोज्झो सुरनुपालो य ॥

वृ- पूर्वेषां साधूनां दुर्विशोध्यः कल्पः, 'चरमाणां' पश्चिमानां दुरनुपाल्यः, मध्यमकानां तु जिनानां तीर्थे साधूनां सुविशोध्यः सुखानुपाल्यश्च भवति। इयमत्र भावना-पूर्वे साधव ऋजु-जडाः, ततः परिग्रहव्रत एवान्तर्भावं विक्षिप्त्वा यदि मैथुनव्रतं साक्षान्नोपदिश्यते ततस्ते जडतया नेदमवबुध्यन्ते, यथा-मैथुनमपि परिहर्तव्यम्; यदा तु पृथक् परिस्फुटं मैथुनं प्रतिषिध्यते ततः सुखेनैव पर्यवस्यन्ति परिहरन्ति च। पश्चिमास्तु वक्र-जडाः, ततो मैथुने साक्षादप्रतिषिद्धे परिग्रहान्तस्तदन्तर्भावं जानन्तोऽपि वक्रतया परपरिगृहीतायाः स्त्रियाः प्रतिसेवनां कुर्वीरन्, पृष्टाश्च ब्रवीरन्-नैषाऽस्माकं परिग्रह इति। तत एतेषां पूर्व-पश्चिमानां पञ्चयामो धर्मो भगवता ऋषभस्वामिना वर्द्धमानस्वामिना च स्थापितः। ये तु मध्यमाः साधवस्ते ऋजु-प्राज्ञाः, ततः परिग्रहे प्रतिषिद्धे प्राज्ञत्वेनोपदेशमात्रादपि अशेषहेयोपादेयविशेषाभ्यूहनपटीयस्तया चिन्तयेयुः-नापरिगृहीता स्त्री परिभुज्यते अतो मैथुनमपि न वर्तते सेवितुम्; एवं मैथुनं परिग्रहेऽन्तर्भाव्य तथैव परिहरन्ति ततस्तेषां चतुर्यामो धर्मो मध्यमजिनैरुक्त इति॥ अमुमेवार्थं समर्थयन्नाह-

[भा.६४०४] जड्डत्तणेण हंदिं, आइक्ख-विभाग-उवणता दुक्खं।
सुहसमुदिय दंताण व, तितिक्ख अनुसासना दुक्खं॥

वृ-सर्वेषां (पूर्वेषां) साधूनां जडतया 'हन्दि' इत्युपप्रदर्शने वस्तुतत्त्वस्याख्यानं 'दुःखं' कृच्छ्रेण, महता वचनाटोप प्रयासेन कर्तुं शक्यमित्यर्थः। एवमाख्यातेऽपि वस्तुतत्त्वे विभागः-पार्थक्येन व्यवस्थापनं महता कष्टेन कर्तुं शक्यते। विभक्तेऽपि वस्तुतत्त्वे उपनयः-हेतु-दृष्टान्तैः प्रतीतावारोपणं कर्तुं दुःशकम्। ते च प्रथमतीर्थकरसाधवः 'सुखसमुदिताः' कालस्य स्निग्धतया शीतोष्णादीनां तथाविधदुःखहेतूनामभावात् सुखेन सम्पूर्णास्ततः 'तितिक्षा' परीषहादेरधिसहनं तेषां 'दुःखं' दुष्करम्। तथा दान्ताः-एकान्तेनोपशान्तास्ते ततः क्वचित् प्रमादस्खलितादौ शिष्यमाणाना-मनुशासनाऽपि कर्तुं दुःशका॥

[भा.६४०५] मिच्छत्तभावियाणं, दुवियड्ढमतीण वामसीलाणं।
आइक्खिउं विभइउं, उवनेउं वा वि दुक्खं तु॥

वृ- ये तु चरमतीर्थकरसाधवस्ते प्रायेण मिथ्यात्वभाविता दुर्विदग्धमतयो वामशीलाश्च, ततस्तेषामपि वस्तुतत्त्वमाख्यातुं विभक्तुमुपनेतुं वा 'दुःखं' दुःखतरम्॥

[भा.६४०६] दुक्खेहिं भत्थिताणं, तनु-धितिअबलत्तओ य दुतितिक्खं।
एमेव दुरनुसासं, मानुक्कडओ य चरिमाणं॥

वृ-तथा कालस्य रूक्षतया 'दुःखैः' विविधाऽऽधि-व्याधिप्रभृतिभि शारीर-मानसैः 'भर्त्सितानाम्' अत्यन्तमुपतापितानां तनुः-शरीरं धृति-मानसोऽवष्टम्भः तद्विषयं यद् अबलत्वं-बलाभावस्ततः कारणाद् दुस्तितिक्षं तेषां परीषहादिकं भवति। एवमेव मानस्य-अहङ्कारस्य उपलक्षणत्वात् क्रोधादेश्चोत्कटतया दुरनुशासं चरमाणां भवति, उत्कटकषायतया दुःखेनानुशासनां ते प्रपद्यन्त इत्यर्थः। अत एषां पूर्वेषां च पञ्चयामो धर्म इति प्रक्रमः॥

[भा.६४०७] एए चेव य ठाणा, सुप्पन्नुज्जुत्तणेण मज्झाणं।
सुह-दुह-उभयबलाण य, विमिस्सभावा भवे सुगमा॥

वृ- 'एतान्येव' आख्यानादीनि स्थानानि मध्यमानां 'सुगमानि' सुकराणि भवेयुरिति सम्बन्धः।

कुतः इत्याह-सुप्रज्ञ-ऋजुत्वेन, प्राज्ञतया ऋजुतया चेत्यर्थः, स्वल्पप्रयत्नेनैव प्रज्ञापनीयास्ते, तत आख्यान-विभजनोपनयनानि सुकराणि। "सुह-दुह"त्ति कालस्य स्निग्ध-रूक्षतया सुख-दुःखे उभे अपि तेषां भवतः, तथा "उभयबलाण य"त्ति शारीरं मानसिकं चोभयमपि बलं तेषां भवति, तत एव सुख-दुःखोभयबलोपेतानां परीषहादिकं सुतितिक्षं भवति। "विमिस्सभाव"त्ति नैकान्तेनोपशान्ता न वा उत्कटकषायास्ते, ततो विमिश्रभावादनुशासनमपि सुकरमेव तेषां भवति, अतश्चतुर्यामस्तेषां धर्म इति ॥ गतं व्रतद्वारम्। अथ ज्येष्ठद्वारमाह-

[भा.६४०८] पुव्वतरं सामइयं, जस्स कयं जो वतेसु वा ठविओ।
एस कितिकम्मजेट्ठो, न जाति-सुततो दुपक्खे वी ॥

वृ- यस्य सामायिकं 'पूर्वतरं' प्रथमरं 'कृतम्' आरोपितम् यो वा 'व्रतेषु' महाव्रतेषु प्रथमं स्थापितः स एव कृतिकर्मज्येष्ठो भण्यते, न पुनः 'द्विपक्षेऽपि' संयतपक्षे संयतीपक्षे च जातितः-वृहत्तरं जन्मपर्यायमङ्गीकृत्य श्रुततः-प्रभूतं श्रुतमाश्रित्य ज्येष्ठ इहाधिक्रियते। इह च मध्यमसाधूनां यस्य सामायिकं पूर्वतरं स्थापितं स ज्येष्ठः, पूर्व-पश्चिमानां तु यस्य प्रथममुपस्थापना कृता स ज्येष्ठ इति ॥ अथोपस्थापनामेव निरूपयितुमाह-

[भा.६४०९] सा जेसि उवट्ठवणा, जेहि य ठाणेहि पुरिम-चरिमाणं।
पंचायामे धम्मे, आदेसतिगं च मे सुणसु ॥

वृ- सा उपस्थापना येषां भवति ते वक्तव्याः। येषु वा 'स्थानेषु' अपराधपदेषु पूर्व-चरमाणां साधूनां पञ्चयामे धर्मे स्थितानामुपस्थापना भवति तान्यपि वक्तव्यानि। तत्र येषामुपस्थापना ते तावदभिधीयन्ते, तत्रादेशत्रयम्-दश वा षड् वा चत्वारो वा उपस्थापनायामर्हा भवन्ति। तच्चाऽऽदेशत्रिकं "मे" इति मया यथाक्रमं वक्ष्यमाणं शृणु ॥

[भा.६४१०] तओ पारंचिया वुत्ता, अणवट्ठा य तिन्नि उ।
दंसणम्मि य वंतम्मि, चरित्तम्मि य केवले ॥

वृ-ये चतुर्थोद्देशके 'त्रयः' दुष्ट-प्रमत्त-अन्योन्यंकुर्वाणाख्याः पाराञ्चिका उक्ताः ३ ये च 'त्रयः' साधर्मिका-ऽन्यधार्मिकस्तैन्यकारि-हस्तातालरूपा अनवस्थाप्याः ६ येन च 'दर्शनं' सम्यक्त्वं 'केवलं' सम्पूर्णमपि वान्तं ७ येन वा चारित्रं 'केवलं' सम्पूर्णं मूलगुणविराधनया वान्तम् ८ ॥

[भा.६४११] अदुवा चियत्तकिच्चे, जीवकाए समारभे।
सेहे दसमे वुत्ते, जस्स उवट्ठावणा भणिया ॥

वृ- अथवा यः 'त्यक्तकृत्यः' परित्यक्तसकलसंयमव्यापारः आकुट्टिकया दर्पेण वा 'जीवकायान्' पृथिवीकायादीन् समारभते ९ यश्च 'शैक्षः' अभिनवदीक्षितः स दशमः १० उक्तः। एतद् दशकं मन्तव्यं यस्योपस्थापना प्रथम-चरमतीर्थकरैर्भणिता ॥ द्वितीयादेशमाह-

[भा.६४१२] जे य पारंचिया वुत्ता, अणवट्टप्पा य जे विदू।
दंसणम्मि य वंतम्मि, चरित्तम्मि य केवले ॥

[भा.६४१३] अदुवा चियत्तकिच्चे, जीवकाए समारभे।
सेहे छट्ठे वुत्ते, जस्स उवट्ठावणा भणिया ॥

वृ-ये च पाराञ्चिकाः सामान्यत उक्ताः १ ये च विद्वांसो अनवस्थाप्याः २ येन च दर्शनं केवलं वान्तं ३ येन वा चारित्रं केवलं वान्तम् ॥ अथवा यस्त्यक्तकृत्यो जीवकायान् समारभते ५ यश्च

शैक्षः षष्ठः ६ । एते षट्कं प्रतिपत्तव्यं यस्योपस्थापना द्वितीयादेशे भणिता ॥ तृतीयादेशमाह-

[भा.६४१४] दंसणम्मि य वंतम्मि, चरित्तम्मि य केवले ।
चियत्तकिच्चे सेहे य, उवट्ठप्पा य आहिया ॥

वृ- दर्शने 'केवले' निशेषे वान्ते यो वर्तते १ यो वा चारित्रे केवले वान्ते २ पाराञ्चिका-ऽनवस्थाप्ययोः अत्रैवान्तर्भावो विवक्षितः, यश्च 'त्यक्तकृत्यः' षट्कायविराधकः ३ यश्च शैक्षः ४ एते चत्वारः 'उपस्थाप्याः' उपस्थापनायोग्या आख्याताः ॥ अथ तेषां मध्ये क उपस्थापनीयः ? न वा ? इति चिन्तायामिदमाह-

[भा.६४१५] केवलगहणा कसिणं, जति वमती दंसणं चरित्तं वा ।
तो तस्स उवट्ठवणा, देसे वंतम्मि भयणा तु ॥

वृ- दर्शन-चारित्रपदयोर्यत् केवलग्रहणं कृतं तत इदं ज्ञाप्यते-यदि 'कृत्स्नं' निशेषमपि दर्शनं चारित्रं वा वमति ततस्तस्योपस्थापना भवति, 'देशे' देशतः पुनर्दर्शने चारित्रे वा वान्ते 'भजना' उपस्थापना भवेद्वा न वा ॥ भजनामेव भावयति-

[भा.६४१६] एमेव य किंचि पदं, सुयं व असुयं व अप्पदोसेणं ।
अविकोवितो कहिंतो, चोदिय आउट्ट सुद्धो तु ॥

वृ- 'एवमेव' अविमृश्य 'किञ्चिद्' जीवादिकं सूत्रार्थविषयं वा पदं श्रुतं वाऽश्रुतं वा 'अल्पदोषेण' कदाग्रहा-ऽभिनिवेशादिदोषाभावेन 'अविकोविदः' अगीतार्थ कस्यापि पुरतोऽन्यथा कथयन् आचार्यादिना 'मा एवं वितथप्ररूपणां कार्षीः' इति नोदितः सन् यदि सम्यगावर्तते तदा स मिथ्यादुष्कृतप्रदानमात्रेणैव शुद्ध इति ॥

तत्र दर्शनमनाभोगेनाभोगेन वा वान्तं स्यात्, तत्रानाभोगेन वान्ते विधिमाह-

[भा.६४१७] अनाभोएण मिच्छत्तं, सम्मत्तं पुनरागते ।
तमेव तस्स पच्छित्तं, जं मग्गं पडिवज्जई ॥

वृ- एकः श्राद्धो निह्नवान् साधुवेषधारिणो दृष्ट्वा 'यथोक्तकारिणः साधव एते' इतिबुध्या तेषां सकाशे प्रव्रजितः । स चापरैः साधुभिर्भणितः-किमेवं निह्नवानां सकाशे प्रव्रजितः ? । स प्राह-नाहमेनं विशेषं ज्ञातवान् । ततः स मिथ्यादुष्कृतं कृत्वा शुद्धदर्शनिनां समीपे उपसम्पन्नः । एवमनाभोगेन दर्शनं वमित्वा मिथ्यात्वं गत्वा सम्यक्त्वं पुनरागतस्य तदेव प्रायश्चित्तं यदसौ सम्यग् मार्गं प्रतिपद्यते, स एव च तस्य व्रतपर्यायः, न भूय उपस्थापना कर्तव्या ॥ आभोगेन वान्ते पुनरयं विधिः-

[भा.६४१८] आभोगेन मिच्छत्तं, सम्मत्तं पुनरागते ।
जिन-थेराण आणाए, मूलच्छेज्जं तु कारए ॥

वृ- यः पुनः 'आभोगेन' 'निह्नवा एते' इति जानन्नपि मिथ्यात्वं सङ्क्रान्त इति शेषः, निह्नवानामन्तिके प्रव्रजित इत्यर्थः, स च सम्यक्त्वमन्येन प्रज्ञापितः सन् 'पुनर्' भूयोऽपि यदि आगतस्ततस्तं 'जिन-स्थविराणां' तीर्थकर-गणभृतामाज्ञया मूलच्छेद्यं प्रायश्चित्तं कारयेत्, मूलत एवोपस्थापनां तस्य कुर्यादिति भावः ॥ एवं दर्शने देशतो वान्ते उपस्थापनाभजना भाविता । सम्प्रति चारित्रे देशतो वान्ते तामेव भावयति-

[भा.६४१९] छण्हं जीवनिकायाणं, अणप्पज्झो तु विराहओ ।
आलोइय-पडिक्कंतो, सुद्धो हवति संजओ ॥

वृ- षण्णां जीवनिकायानां ''अणप्पज्झो'' 'अनात्मवशः' क्षिप्तचित्तादिर्यदि विराधको भवति

ततः 'आलोचित-प्रतिक्रान्तः' गुरूणामालोच्य प्रदत्तमिथ्यादुष्कृतः संयतः शुद्धो भवति ॥

[भा.६४२०] छण्हं जीवनिकायाणं, अप्पज्झो उ विराहतो।
आलोइय-पडिक्कंतो, मूलच्छेज्जं तु कारए ॥

वृ- षण्णां जीवनिकायानां "अप्पज्झो" त्ति स्ववशो यदि दर्पेणाऽऽकुट्टिकया वा विराधको भवति तत आलोचित-प्रतिक्रान्तं तं मूलच्छेद्यं प्रायश्चित्तं कारयेत्। वाशब्दोपादानाद् यदि तपोऽर्हप्रायश्चित्तमापन्नस्ततः तपोऽर्हमेव दद्यात्, तत्रापि यद् मासलघुकादिकमापन्नस्तदेव दद्यात्। अथ हीनादिकं ददाति ततो दोषा भवन्तीति दर्शयति-

[भा.६४२१] जं जो उ समावन्नो, जं पाउग्गं व जस्स वत्थुस्स।
तं तस्स उ दायव्वं, असरिसदाने इमे दोसा ॥

वृ- 'यत्' तपोऽर्हं छेदार्हं वा प्रायश्चित्तं यः समापन्नः, यस्य वा 'वस्तुनः' आचार्यादेरसहिष्णु-प्रभृतेर्वा 'यत्' प्रायश्चित्तं 'प्रायोग्यम्' उचितं तत् तस्य दातव्यम्। अथासदृशम्-अनुचितं ददाति तत इमे दोषाः ॥

[भा.६४२२] अप्पच्छित्ते य पच्छित्तं, पच्छित्ते अतिमत्तया।
धम्मस्साऽऽसायणा तिव्वा, मग्गस्स य विराधना ॥

वृ- 'अप्रायश्चित्ते' अनापद्यमानेऽपि प्रायश्चित्ते यः प्रायश्चित्तं ददाति प्राप्ते वा प्रायश्चित्ते यः 'अतिमात्रम्' अतिरिक्तप्रमाणं प्रायश्चित्तं ददाति सः 'धर्मस्य' श्रुतधर्मस्य तीव्रामाशातनां करोति, 'मार्गस्य च' मुक्तिपथस्य सम्यग्दर्शनादेः विराधनां करोति ॥ किञ्च-

[भा.६४२३] उस्सुत्तं ववहरंतो, कम्मं बंधति चिक्कणं।
संसारं च पवड्ढेति, मोहनिज्जं च कुव्वती ॥

वृ- 'उत्सूत्रं' सूत्रोत्तीर्णं राग-द्वेषादिना 'व्यवहरन्' प्रायश्चित्तं प्रयच्छन् 'चिक्कणं' गाढतरं कर्म बध्नाति, संसारं च 'प्रवर्द्धयति' प्रकर्षेण वृद्धिमन्तं करोति, 'मोहनीयं च' मिथ्यात्वमोहादिरूपं करोति ॥ इदमेव सविशेषमाह-

[भा.६४२४] उम्मग्गदेसणाए य, मग्गं विप्पडिवातए।
परं मोहेन रंजितो, महामोहं पकुव्वती ॥

वृ- 'उन्मार्गदेशनया च' सूत्रोत्तीर्णप्रायश्चित्तादिमार्गप्ररूपणया 'मार्गं' सम्यग्दर्शनादिरूपं विविधैः प्रकारैः प्रतिपातयति-व्यवच्छेदं प्रापयति। तत एवं परमपि मोहेन रञ्जयन् महामोहं प्रकरोति। तथा च त्रिंशति महामोहस्थानेषु पठ्यते- "नेयाउयस्स मग्गस्स, अवगारम्मि वट्टई।" यत एवमतो न हीनाधिकं प्रायश्चित्तं दातव्यमिति ॥ गतं ज्येष्ठद्वारम्। अथ प्रतिक्रमणद्वारमाह-

[भा.६४२५] सपडिक्कमणो धम्मो, पुरिमस्स इ पच्छिमस्स य जिनस्स।
मज्झिमयाण जिनानं, कारणजाए पडिक्कमणं ॥

वृ- 'सप्रतिक्रमणः' उभयकालं षड्विधावश्यककरणयुक्तो धर्म पूर्वस्य पश्चिमस्य च जिनस्य तीर्थे भवति, तत्तीर्थसाधूनां प्रमादबहुलत्वात् शठत्वाच्च। मध्यमाना तु जिनानां तीर्थे 'कारणजाते' तथाविधेऽपराधे उत्पन्ने सति प्रतिक्रमणं भवति, तत्तीर्थसाधूनामशठत्वात् प्रमादरहितत्वाच्च ॥

अथास्या एव पूर्वार्द्धं व्याचष्टे-

[भा.६४२६] गमनाऽऽगमन वियारे, सायं पाओ य पुरिम-चरिमाणं।

नियमेन पडिक्कमणं, अतियारो होउ वा मा वा ॥

वृ- 'गमनाऽऽगमने' चैत्यवन्दनादिकार्येषु प्रतिश्रयाद् निर्गत्य हस्तशतात् परतो गत्वा भूयः प्रत्यागमने, "वियारे" त्ति हस्तशतमध्येऽप्युच्चारादेः परिष्ठापने कृते, तथा 'सायं' सन्ध्यायां 'प्रातश्च' प्रभाते पूर्व-चरमाणां साधूनामतिचारो भवतु वा मा वा तथापि नियमेनैतेषु स्थानेषु प्रतिक्रमणं भवति ॥ परः प्राह-

[भा.६४२७] अतियारस्स उ असती, ननु होति निरत्थयं पडिक्कमणं ।
न भवति एवं चोदग !, तत्थ इमं होति नातं तु ॥

वृ- अतिचारस्य 'असति' अभावे ननु निरर्थकं प्रतिक्रमणं भवति । सूरिराह-हे नोदक ! 'एवं' त्वदुक्तं प्रतिक्रमणस्य निरर्थकत्वं 'न भवति' न घटते, किन्तु सार्थकं प्रतिक्रमणम् । तत्र च सार्थकत्वे इदं 'ज्ञातम्' उदाहरणं भवति ॥

[भा.६४२८] सति दोसे होअगतो, जति दोसो नत्थि तो गतो होति ।
बितियस्स हणति दोसं, न गुणं दोसं व तदभावा ॥

[भा.६४२९] दोसं हंतूण गुणं, करेति गुणमेव दोसरहिते वि ।
ततियसमाहिकरस्स उ, रसातणं डिंडियसुतस्स ॥

[भा.६४३०] जति दोसो तं छिंदति, असती दोसम्मि निज्जरं कुणई ।
कुसलतिगिच्छरसायणमुवनीयमिदं पडिक्कमणं ॥

वृ- एगस्स रन्नो पुत्तो अईव वल्लहो । तेन चिंतियं-अनागयं किंचि तहाविहं रसायणं करावेमि जेन मे पुत्तस्स कयाइ रोगो न होइ त्ति । विज्जा सद्दाविया-मम पुत्तस्स तिगिच्छं करेह जेन निरुओ होइ । ते भणंति-करेमो । राया भणइ-केरिसाणि तुम्ह ओसहाणि ? । एगो भणइ-मम ओसहमेरिसं-जइ रोगो अत्थि तो उवसामेइ, अह नत्थि तं चेव जीवंतं मारेइ । बिइओ भणइ-मम ओसहं जइ रोगो अत्थि तो उवसामेइ, अह नत्थि तो न गुणं न दोसं करेइ । तइओ भणइ-जइ रोगो अत्थि तो उवसामेइ, अह नत्थि तो वन्न-रूवजोव्वण-लावन्नत्ताए परिणमइ, अपुव्वो य रोगो न पाउब्भवइ। एवमायन्निऊण रन्ना तइयविज्जेण किरिया कारिया । एवमिमं पि पडिक्कमणं जइ अइयारदोसा अत्थि तो तेसिं विसोहिं करेति, अह नत्थि अइयारो तो चारित्तं विसुद्धं करेइ अभिनवकम्मरोगस्स य आगमं निरुंभइ ॥

अथाक्षरगमनिका-प्रथमवैद्यस्यौषधेन 'सति दोषे' रोगसम्भवे उपयुज्यमानेन 'अगदः' नीरोगो भवति, यदि पुनर्दोषो नास्ति ततः प्रत्युत 'गदः' रोगो भवति । द्वितीयस्य तु वैद्यस्यौषधं 'दोषं' रोगं हन्ति, 'तदभावात्' दोषाभावान्न गुणं न वा दोषं करोति ॥ तृतीयस्य तु दोषं हत्वा गुणं करोति, दोषरहितेऽपि च 'गुणमेव' वर्णादिपुष्ट्यभिनवरोगाभावात्मकं करोति । ततः 'तृतीय-समाधिकरस्य' तृतीयस्य वैद्यस्य रसायनं दण्डिकसुतस्य योग्यमिति कृत्वा राज्ञा कारितम् । एवं प्रतिक्रमणमपि यदि अतिचारलक्षणो दोषो भवति ततस्तं छिनत्ति, अथ नास्ति दोषस्ततोऽसति दोषे महतीं कर्मनिर्जरां करोति । एवं 'कुशलचिकित्सस्य' तृतीयवैद्यस्य रसायनेन 'उपनीतम्' उपनयं प्रापितमिदं प्रतिक्रमणं मन्तव्यम् ॥ गतं प्रतिक्रमणद्वारम् । अथ मासकल्पद्वारमाह-

[भा.६४३१] दुविहो य मासकप्पो, जिनकप्पे चेव थेरकप्पे य ।
एक्केक्को वि य दुविहो, अट्ठियकप्पो य ठियकप्पो ॥

वृ- द्विविधो मासकल्पः, तद्यथा-जिनकल्पे चैव स्थविरकल्पे च । पुनरेकैको द्विविधः-

अस्थितकल्पः स्थितकल्पश्च । तत्र मध्यमसाधूनां मासकल्पोऽस्थितः, पूर्व-पश्चिमानां तु स्थितः। अतः पूर्व-पश्चिमाः साधवो नियमाद् ऋतुबद्धे मासं मासेन विहरन्ति । मध्यमानां पुनरनियमः, कदाचिद् मासमपूरयित्वाऽपि निर्गच्छन्ति कदाचित्तु देशोनपूर्वकोटीमप्येकत्र क्षेत्रे आसते ॥

गतं मासकल्पद्वारम् । अथ पर्युषणाद्वारमाह-

[भा.६४३२] पज्जोसवणाकप्पो, होति ठितो अट्ठितो य थेराणं ।
एमेव जिनानं पि य, कप्पो ठितमट्ठितो होति ॥

वृ- पर्युषणाकल्पः स्थविरकल्पिकानां जिनकल्पिकानां च भवति । तत्र स्थविराणां स्थितोऽस्थितश्च भवति । एवमेव जिनानामपि स्थितोऽस्थितश्च पर्युषणाकल्पः प्रतिपत्तव्यः ॥

इदमेव भावयति-

[भा.६४३३] चाउम्मासुक्कोसे, सत्तरिराइंदिया जहन्नेणं ।
ठितमट्ठितमेगतरे, कारणवच्चासितऽन्नयरे ॥

वृ- उत्कर्षतः पर्युषणाकल्पश्चतुर्मासं यावद् भवति, आषाढपूर्णिमायाः कार्तिकपूर्णिमां यावदित्यर्थः । जघन्यतः पुनः सप्ततिरात्रिन्दिवानि, भाद्रपदशुक्लपञ्चम्याः कार्तिकपूर्णिमां यावदित्यर्थः । एवंविधे पर्युषणाकल्पे पूर्व-पश्चिमसाधवः स्थिताः । मध्यमसाधवः पुनरस्थिताः। ते हि यदि वर्षारात्रो भवति मेघवृष्टिरित्यर्थः, तत एकत्र क्षेत्रे तिष्ठन्ति अन्यथा तु विहरन्ति । पूर्वपश्चिमा अपि 'अन्यतरस्मिन्' अशिवादौ कारणे समुत्पन्ने 'एकतरस्मिन्' मासकल्पे पर्युषणाकल्पे वा 'व्यत्यासितं' विपर्यस्तमपि कुर्युः। किमुक्तं भवति ? -अशिवादिभि कारणैर्ऋतुबद्धे मासमूनमधिकं वा तिष्ठेयुः, वर्षास्वपि तथैव कारणैश्चतुर्मासमपूरयित्वाऽपि निर्गच्छन्ति परतो वा तत्रैव क्षेत्रे तिष्ठन्ति ॥ इदमेवाह-

[भा.६४३४] थेराण सत्तरखलु, वासासु ठितो उडुम्मि मासो उ ।
वच्चासितो तु कज्जे, जिनान नियमऽट्ठ चउरो य ॥

वृ- 'स्थविराणां' स्थविरकल्पिकानां प्रथम-पश्चिमतीर्थकरसत्कानां सप्ततिर्दिनानि, खलुशब्दो जघन्यत इत्यस्य विशेषस्य द्योतनार्थ, वर्षासु पर्युषणाकल्पो भवति । तेषामेव ऋतबद्धे मासमेकमेकत्रावस्थानरूपो मासकल्पः स्थितो भवति । 'कार्ये पुनः' अशिवादौ 'व्यत्यासितः' विपर्यस्तोऽपि भवति, नाधिकप्रमाण इत्यर्थः । 'जिनानां तु' प्रथम-चरमतीर्थकरसत्कजिनकल्पिकानामृतुबद्धे नियमादष्टौ मासकल्पा वर्षासु चत्वारो मासा अन्यूनाधिकाः स्थिकल्पतया मन्तव्याः, निरपवादानुष्ठानपरत्वादेषामिति भावः ॥

[भा.६४३५] दोसाऽसति मज्झिमगा, अच्छंती जाव पुव्वकोडी वि ।
विचरंति अ वासासु वि, अकद्दमे पाणरहिए य ॥

वृ- ये तु 'मध्यमाः' अस्थितकल्पिकाः साधवस्ते दोषाणाम्-अप्रीतिक-प्रतिबन्धादीनां असति अभावे पूर्वकोटीमप्येकत्र क्षेत्रे आसते । तथा वर्षास्वपि 'अकर्दमे' प्रम्लानचिक्खल्ले प्राणरहिते च भूतल जाते सति 'विचरन्ति' विहरन्ति; ऋतुबद्धेऽपि यदि अप्रीतिकावग्रहो वसतेर्व्याघातो वा भवेत् ॥

[भा.६४३६] भिन्नं पि मासकप्पं, करेंति तनुगं पि कारणं पप्प ।
जिनकप्पिया वि एवं, एमेव महाविदेहेसु ॥

वृ- तत एवमादिकं 'तनुकमपि' सूक्ष्ममपि कारणं प्राप्य मासकल्पं भिन्नमपि कुर्वन्ति, अपूरयित्वा निर्गच्छन्तीत्यर्थः । जिनकल्पिका अपि मध्यमतीर्थकरसत्का एवमेव मासकल्पे पर्युषणाकल्पे च

अस्थिताः प्रतिपत्तव्याः । एवमेव च महाविदेहेषु ये स्थविरकल्पिका जिनकल्पिकाश्च तेऽप्य-स्थितकल्पिकाः प्रतिपत्तव्याः ॥

गतं पर्युषणाकल्पद्वारम् । अथैतस्मिन् दशविधे कल्पे यः प्रमाद्यति तस्य दोषमभिधित्सुराह-

[भा.६४३७]　　एवं ठियम्मि मेरं, अट्ठियकप्पे य जो पमादेति ।
　　　　सो वट्ठति पासत्थे, ठाणम्मि तगं विवज्जेज्जा ॥

वृ- 'एवम्' अनन्तरोक्तनीत्या या स्थितकल्पेऽस्थितकल्पे च 'मर्यादा' सामाचारी भणिता तां मर्यादां यः 'प्रमादयति' प्रमादेन परिहापयति सः 'पार्श्वस्थे' पार्श्वस्थसत्के स्थाने वर्तते; ततस्तकं विवर्जयेत्, तेन सह दान-ग्रहणादिकं सम्भोगं न कुर्यादिति भावः ॥ कुतः ? इत्यत आह-

[भा.६४३८]　　पासत्थ संकिलिट्ठं, ठाणं जिन वुत्तं थेरेहि य ।
　　　　तारिसं तु गवेसंतो, सो विहारे न सुज्झति ॥

वृ- 'पार्श्वस्थं' पार्श्वस्थसत्कं 'स्थानम्' अपराधपदं 'संक्लिष्टम्' अशुद्धं 'जिनैः' तीर्थकरैः 'स्थविरैश्च' गौतमादिभिः प्रोक्तम्, ततस्तादृशं स्थानं गवेषयन् 'सः' यथोक्तसाचमाचारीपरिहा-पयिता विहारे न शुध्यति, नासौ संविग्नविहारीति भावः ॥

[भा.६४३९]　　पासत्थ संकिलिट्ठं, ठाणं जिन वुत्तं थेरेहि य ।
　　　　तारिसं तु विवज्जेंतो, सो विहारे विसुज्झति ॥

वृ- पार्श्वस्थं स्थानं संक्लिष्टं जिनैः स्थविरैश्च प्रोक्तम्, ततस्तादृशं स्थानं विवर्जयन् 'सः' यथोक्तसामाचारीकर्ता विहारे 'विशुध्यति' विशुद्धो भवति ॥ यतश्चैवमतः-

[भा.६४४०]　　जो कप्पठितिं एयं, सद्दहमाणो करेति सट्ठाणे ।
　　　　तारिसं तु गवेसेज्जा, जतो गुणाणं न परिहानी ॥

वृ- यः 'एनाम्' अनन्तरोक्तां कल्पस्थितिं श्रद्दधानः स्वस्थाने करोति । स्वस्थानं नाम-स्थितकल्पेऽनुवर्तमाने स्थितकल्पसामाचारीम् अस्थितकल्पे पुनरस्थितकल्पसामाचारीं करोति। 'तादृशं' संविग्नविहारिणं साधुं 'गवेषयेत्' तेन सहैकत्र सम्भोगं कुर्यात्, 'यतः' यस्माद् 'गुणानां' मूलगुणोत्तरगुणानां परिहाणिर्न भवति ॥ इदमेव व्यक्तीकर्तुमाह-

[भा.६४४१]　ठियकप्पम्मि दसविधे, ठवणाकप्पे य दुविहमन्नयरे ।
　　　　उत्तरगुणकप्पम्मि य, जो सरिकप्पो स संभोगो ॥

वृ- 'स्थितकल्पे' आचेलक्यादौ दशविधे 'स्थापनाकल्पे च' वक्ष्यमाणे द्विविधान्यतरस्मिन् उत्तरगुणकल्पे च यः 'सदृक्कल्पः' तुल्यसामाचारीकः सः 'सम्भोग्यः' सम्भोक्तुमुचितः ॥ अत्र दशविधः स्थितकल्पोऽनन्तरमेवोक्तः । स्थापनाकल्पादिपदानि तु व्याख्यातुकाम आह-

[भा.६४४२]　ठवणाकप्पो दुविहो, अकप्पठवणा य सेहठवणा य ।
　　　　पढमो अकप्पिएणं, आहारादी न गिण्हावे ॥

वृ- स्थापनाकल् द्विविधः-अकल्पस्थापनाकल्पः शैक्षस्थापनाकल्पश्च । तत्र 'अकल्पिकेन' अनधीतपिण्डैषणादिसूत्रार्थेन आहारादिकं 'न ग्राहयेत्' नाऽऽनाययेत्, तेनानीतं न कल्पत इत्यर्थः । एष प्रथमोऽकल्पस्थापनाकल्प उच्यते ॥

[भा.६४४३]　　अट्ठारसेव पुरिसे, वीसं इत्थीओ दस नपुंसा य ।
　　　　दिक्खेति जो न एते, सेहट्ठवणाए सो कप्पो ॥

वृ- अष्टादश भेदाः 'पुरुषे' पुरुषविषयाः, विंशतिः स्त्रियः, दश नपुंसकाः, एतानष्टचत्वारिंशत-भनलान् शैक्षान् यो न दीक्षते स एष कल्प-कल्पवतोरभेदात् शैक्षस्थापनाकल्प उच्यते ॥

[भा. ६४४४] आहार-उवहि-सेज्जा, उग्गम-उप्पादनेसणासुद्धा ।
जो परिगिण्हति नियय, उत्तरगुणकप्पिओ स खलु ॥

वृ- य आहारोपधि-शय्या उद्गमोत्पादनैषणाशुद्धाः 'नियतं' निश्चितं परिगृह्णाति स खलूत्तरगुणकल्पिको मन्तव्यः ॥ एतेषु सदृशकल्पेन सह किं कर्तव्यम् ? इत्याह-

[भा. ६४४५] सरिकप्पे सरिछंदे, तुल्लचरित्ते विसिट्ठतरए वा ।
साहूहिं संथवं कुज्जा, नाणीहि चरित्तगुत्तेहिं ॥

वृ- 'सदृक्कल्पः' स्थितकल्प-स्थापनाकल्पादिभिरेककल्पवर्ती 'सदृक्छन्दः' समानसामाचारीकः 'तुल्यचारित्रः' समानसामायिकादिसंयमः 'विशिष्टतरो वा' तीव्रतरशुभाध्यवसायविशेषेणोत्कृष्टतरेषु संयमस्थानकण्डकेषु वर्तमानः, ईदृशा ये ज्ञानिनश्चारित्रगुप्ताश्च तैः सह 'संस्तवं' परिचयमेकत्र संवासादिकं कुर्यात् ॥

[भा. ६४४६] सरिकप्पे सरिछंदे, तुल्लचरित्ते विसिट्ठतरए वा ।
आदिज्ज भत्त-पानं, सतेन लाभेन वा तुस्से ॥

वृ- यः सदृक्कल्पः सदृक्छन्दस्तुल्यचारित्रो विशिष्टतरो वा 'तेन' एवंविधेन साधुनाऽऽनीतं भक्त-पानमाददीत्, 'स्वकीयेन वा' आत्मीयेन लाभेन तुष्येत्, हीनतरस्तकं न गृह्णीयात् ॥ तदेवमुक्ता छेदोपस्थापनीयकल्पस्थिति । अथ निर्विशमान-निर्विष्टकायिककल्पस्थितिद्वयं विवरीपुराह-

[भा. ६४४७] परिहारकप्पं पवक्खामि, परिहरंति जहा विऊ ।
आदी मज्झऽवसाने य, आनुपुव्विं जहक्कमं ॥

वृ- परिहारकल्पं प्रवक्ष्यामि, कथम् ? इत्याह-यथा 'विद्वांसः' विदितपूर्वगतश्रुतरहस्यास्तं कल्पं 'परिहरन्ति' धातूनामनेकार्थत्वाद् आसेवन्ते । कथं पुनः वक्ष्यसि ? इति अत आह- 'आदौ' तत्प्रथमतया प्रतिपद्यमानानां 'मध्ये' प्रतिपन्नानाम् 'अवसाने' प्रस्तुतकल्पमाप्तौ या 'आनुपूर्वी' सामाचार्या परिपाटि तां यथाक्रमं प्रवक्ष्यामीति सण्टङ्कः ॥

तत्र कतरस्मिन् तीर्थे एष कल्पो भवति ? इति जिज्ञासायामिदमाह-

[भा. ६४४८] भरहेरवेसु वासेसु, जता तित्थगरा भवे ।
पुरिमा पच्छिमा चेव, कप्पं देसेंति ते इमं ॥

वृ- भरतैरावतेषु वर्षेषु दशस्वपि यदा तृतीय-चतुर्थारकयोः पश्चिमे भागे पूर्वा पश्चिमाश्च तीर्थकरा भवेयुः तदा ते भगवन्तः 'इमं' प्रस्तुतं कल्पं 'दिशन्ति' प्ररूपयन्ति, अर्थादापन्नम्-मध्यमतीर्थकृतां महाविदेहेषु च नास्ति परिहारकल्पस्थितिरिति ॥ आह यदि एवं ततः-

[भा. ६४४९] केवइयं कालसंजोगं, गच्छो उ अनुसज्जती ।
तित्थयरेसु पुरिमेसु, तहा पच्छिमएसु य ॥

वृ- कियन्तं कालसंयोगं परिहारकल्पिकानां गच्छः पूर्वेषु पश्चिमेषु च तीर्थकरेषु 'अनुसजति' परम्परयाऽनुवर्तते ? ॥ एवं शिष्येण पृष्टे सति सूरिराह-

[भा. ६४५०] पुव्वसयसहस्साइं, पुरिमस्स अनुसज्जती ।
वीसग्गसो य वासाइं, पच्छिमस्सानुसज्जती ॥

वृ- पूर्वशतसहस्राणि 'पूर्वस्य' ऋषभस्वामिनस्तीर्थे परिहारकल्पोऽनुसजति। 'पश्चिमस्य तु' श्रीवर्द्धमानस्वामिनस्तीर्थे 'विंशत्यग्रशः' कतिपयविंसतिसङ्ख्यापरिच्छिन्नानि वर्षाणि परिहार-कल्पोऽनुसजति। तत्र ऋषभस्वामिनस्तीर्थे यानि पूर्वशतसहस्राण्युक्तानि तानि देशाने द्वे पूर्वकोटी मन्तव्ये। कथम्? इति चेद् उच्यते-इह पूर्वकोट्यायुषो मनुष्या जन्मत आरभ्य सञ्जाताष्टवर्षा प्रव्रजिताः, तेषां च नवमे वर्षे उपस्थापना सञ्जाता, एकोनविंशतिवर्षपर्यायाणां च दृष्टिवाद उद्दिष्टः, तस्य वर्षेण योगः समाप्तिं नीतः, एवं नव विंशतिश्च मिलिता एकोनत्रिंशद् वर्षाणि भवन्ति, एतावत्सु वर्षेषु गतेषु ऋषभस्वामिनः पार्श्वे परिहारकल्पं प्रतिपन्नाः, तत एकोनत्रिंशद्वर्षन्यूनां पूर्वकोटीं परिहारकल्पे तैरनुपालिते सति येऽन्ये तेषां मूले परिहारकल्पं प्रतिपद्यन्ते तेऽप्येवमेवैकोनत्रिंशद्वर्षन्यूनां पूर्वकोटीमनुपालयन्ति, एवं देशोने द्वे पूर्वकोटी भवतः। पश्चिमस्य तु यानि विंशत्यग्रशो वर्षाण्युक्तानि तानि देशोने द्वे वर्षशते भवतः॥ तथा चाह-

[भा.६४५१] पव्वज्ज अट्ठवास, दिट्ठिवातो उ वीसहिं।
इति एकूणतीसाए, सयमूनं तु पच्छिमे॥

[भा.६४५२] पालइत्ता सयं ऊनं, वासाणं ते अपच्छिमे।
काले देसिंति अन्नेसिं, इति ऊना तु बे सता॥

वृ- श्रीवर्द्धमानस्वामिकाले वर्षशतायुषो मनुष्याः, तत्र 'अष्टवर्षस्य' जन्मनः प्रभृति सञ्जातवर्षाष्टकस्य कस्यापि प्रव्रज्या सञ्जाता, पूर्वोक्तरीत्या च विंशत्या वर्षैर्दृष्टिवादो योगतः समर्थितः, ततः श्रीमन्महावीरसकाशे परिहारकल्पं नव जनाः प्रतिपद्य देशोनवर्षशतमनुपालयन्ति इत्येवमेकोनत्रिंशता वर्षैरूनं शतं 'पश्चिमे' पश्चिमतीर्थकरकाले भवति॥ ततस्ते वर्षाणां शतमूनं तं कल्पं पालयित्वा 'अपश्चिमे काले' निजायुषः पर्यन्तेऽन्येषां तं कल्पं 'दिशन्ति' प्ररूपयन्ति, प्रवर्तयन्तीति भावः। तेऽप्येवमेवैकोनत्रिंशद्वर्षन्यूनं शतं पालयन्ति। 'इति' एवं द्वे शते ऊने वर्षाणां भवत इति॥ किमर्थं तृतीया पूर्वकोटी तृतीयं वा वर्षशतं न भवति? इत्याह-

[भा.६४५३] पडिवन्ना जिणिंदस्स, पादमूलम्मि जे विऊ।
ठावयंति उ ते अन्ने, नो उ ठावितठावगा॥

वृ- जिनेन्द्रस्य पादमूले ये विद्वांसः प्रस्तुतं कल्पं प्रतिपन्नास्त एवान्यांस्तत्र कल्पे स्थापयन्ति, न तु 'स्थापितस्थापकाः' जिनेन स्थापिता स्थापका येषां ते स्थापितस्थापकास्तेऽमुं कल्पमन्येषां न स्थापयन्ति। इदमत्र हृदयम्-इयमेवास्य कल्पस्य स्थितिर्यत् तीर्थकरसमीपे वाऽमुं प्रतिपद्यन्ते, तीर्थकरसमीपप्रतिपन्नसाधुसकाशे वा, नाऽन्येषाम्। अतस्तृतीये पूर्वकोटि-वर्षशते न भवत इति॥ अथ कीदृग्गुणोपेता अमी भवन्ति? इत्याह-

[भा.६४५४] सव्वे चरित्तमंतो य, दंसणे परिनिट्ठिया।
नवपुव्विया जहन्नेणं, उक्कोस दसपुव्विया॥

[भा.६४५५] पंचविहे ववहारे, कप्पे त दुविहम्मि य।
दसविहे य पच्छित्ते, सव्वे ते परिनिट्ठिया॥

वृ- सर्वेऽपि ते भगवन्तश्चारित्रवन्तः 'दर्शने च' सम्यक्त्वे 'परिनिष्ठिताः' परमकोटिमुपगताः ज्ञानमङ्गीकृत्य तु नवपूर्विणो जघन्येन, उत्कर्षतः 'दशपूर्विणः' किञ्चिद् न्यूनदशपूर्वधरा मन्तव्याः। तथा- 'पञ्चविधे व्यवहारे' आगम-श्रुता-ऽऽज्ञा-धारणा-जीतलक्षणे 'द्विविधे च कल्पे' अकल्प-

स्थापना-शैक्षस्थापनाकल्परूपे जिनकल्प-स्थविरकल्परूपे वा 'दशविधे च प्रायश्चित्ते' आलोचनादौ पाराञ्चिकान्ते सर्वेऽपि ते 'परिनिष्ठिताः' परिज्ञायां परां निष्ठां प्राप्ताः ॥

[भा. ६४५६] अप्पणो आउगं सेसं, जाणित्ता ते महामुनी ।
परक्कमं च बल विरियं, पच्चवाते तहेव य ॥

वृ- आत्मन आयुः शेषं सातिशयश्रुतोपयोगेन ज्ञात्वा ते महामुनयः, 'बलं' शारीरं सामर्थ्यम्, 'वीर्यं' जीवशक्ति, तदुभयमपि दर्शितस्वफलं पराक्रमः, एतान्यात्मनो विज्ञायामुं कल्पं प्रतिपद्यन्ते। 'प्रत्यपायाः' जीवितोपद्रवकारिणो [illegible] 'तत्रैव' प्रथममेवाभोगयन्ति, किं प्रतिपन्नानां भविष्यन्ति ? न वा ? इति । यदि न भवन्ति ततः प्रतिपद्यन्ते, अन्यथा तु नेति ॥

[भा. ६४५७] आपुच्छिऊण अरहंते, मग्गं देसेंति ते इमं ।
पमाणाणि य सव्वाइं, अभिग्गहे य बहुविहे ॥

वृ- 'अर्हतः' तीर्थकृत आपृच्छय ते तेषामनुज्ञयाऽमुं कल्पं प्रतिपद्यन्ते । 'ते च' तीर्थकृतस्तेषां प्रस्तुतकल्पस्य 'इमम्' अनन्तरमेव वक्ष्यमाणं 'मार्गं' सामाचारीं देशयन्ति । तद्यथा-प्रमाणानि च सर्वाणि, अभिग्रहांश्च बहुविधान् ॥ एतान्येव व्याचष्टे-

[भा. ६४५८] गणोवहिपमाणाइं, पुरिसाणं च जाणि तु ।
दव्वं खेत्तं च कां च, भावमन्ने य पज्जवे ॥

वृ- गणप्रमाणान्युपधिप्रमाणानि पुरुषाणां च प्रमाणानि यानि प्रस्तुते कल्पे जघन्यादिभेदादनेकधा भवन्ति, यच्च तेषां 'द्रव्यम्' अशनादिकं कल्पनीयम्, यच्च 'क्षेत्रं' मासकल्पप्रायोग्यं वर्षावासप्रायोग्यं वा, यश्चैतयोरेव मासकल्प-वर्षावासयोः प्रतिनियतः कालः, यश्च 'भावः' क्रोधनिग्रहादिरूपः, ये च 'अन्येऽपि' निष्प्रतिकर्मतादयो लेश्या-ध्यानादयो वा पर्यायास्तेषां सम्भवन्ति तान् सर्वानपि भगवन्तस्तेषामुपदिशन्ति ॥

[भा. ६४५९] पंचहिं अग्गहो भत्ते, तत्थेगीए अभिग्गहो ।
उवहिणो अग्गहो दोसुं, इयरो एकतरीय उ ॥

वृ- भक्ते उपलक्षणत्वात् नके च संसृष्टा-ऽसंसृष्टाख्यमाद्यमेषणाद्वयं वर्जयित्वा पञ्चभिः उपरितनीभिरेषणाभि 'आग्रहः' स्वीकारः । तत्रापि 'एकस्याम्' एकतरस्यामभिग्रहः, एकया कयाचिद् भक्तमपरया पानकमन्वेषयन्तीत्यर्थः । आह च बृहद्भाष्यकृत्-

संसट्ठमाइयाणं, सत्तण्हं एसणाण उ ।
आइल्लाहि उ दोहिं तु, अग्गहो गह पंचहिं ॥
तत्थ वि अन्नयरीए, एगीए अभिग्गहं तु काऊणं । ति ।

उपधिः-वस्त्रादिरूपस्तस्य उद्दिष्ट-प्रेक्षा-अन्तरा-उज्झितधर्मिकाख्याः पीठिकायां व्याख्याता याश्चतस्र एषणास्तत्र 'द्वयोः' उपरितनयोः 'आग्रहः' स्वीकारः । 'इतरः' अभिग्रहः स एकतरस्यामुपरितन्यां भवति, यदा चतुर्थ्यां न तदा तृतीयायाम् यदा तृतीयायां न तदा चतुर्थ्यां गृह्णन्तीति भावः ॥ कदा पुनस्तेऽमुं कल्पं प्रतिपद्यन्ते ? इत्याह-

[भा. ६४६०] अइरोग्गयम्मि सूरे, कप्पं देसिंति ते इमं ।
आलोइय-पडिक्कंता, ठावयंति तओ गणे ॥

वृ- अचिरोद्गते सूर्ये 'ते' भगवन्तः कल्पमिमं 'देशयन्ति' स्वयं प्रतिपत्त्याऽन्येषां दर्शयन्ति ।

ततः 'आलोचित-प्रतिक्रान्ताः' आलोचनाप्रदानपूर्वं प्रदत्तमिथ्यादुष्कृतास्त्रिन् गणान् स्थापयन्ति। तेपु च त्रिषु गणेषु कियन्तः पुरुषा भवन्ति ? इत्याह-

[भा.६४६१] सत्तावीस जहन्नेणं, उक्कोसेण सहस्ससो।
निग्गंथसूरा भगवंतो, सव्वग्गेणं वियाहिया ॥

वृ- सप्तविंशतिपुरुषा जघन्येन भवन्ति, एकैकस्मिन् गणे नव जना भवन्ति इति भावः । उत्कर्षतः 'सहस्रशः' सहस्रसङ्ख्याः पुरुषा भवन्ति, शताग्रशो गणानामुत्कर्षतः वक्ष्यमाणत्वात् । एवं ते भगवन्तो निर्ग्रन्थसूराः 'सर्वाग्रेण' सर्वसङ्ख्यया व्याख्याताः ॥ गणमङ्गीकृत्य प्रमाणमाह-

[भा.६४६२] सयग्गसो य उक्कोसा, जहन्नेण तओ गणा ।
गणो य नवतो वुत्तो, एमेता पडिवत्तितो ॥

वृ- 'शताग्रशः' शतसङ्ख्या गणा उत्कर्षतोऽमीषां भवन्ति, जघन्येन त्रयो गणाः । गणश्च 'नवकः' नवपुरुषमान उक्तः । एवमेताः 'प्रतिपत्तयः' प्रमाणादिविषयाः प्रकारा मन्तव्याः ॥

[भा.६४६३] एगं कप्पट्ठियं कुज्जा, चत्तारि परिहारिए।
अनुपरिहारिगा चेव, चउरो तेसिं ठावए ॥

वृ- नवानां जनानां मध्यदेकं कल्पस्थितं गुरुकल्पं कुर्यात् । चतुरः परिहारिकान् कुर्यात् । तेषां शेषांश्चतुरोऽनुपहारिकान् स्थापयेत् ॥

[भा.६४६४] न तेसिं जायती विग्घं, जा मासा दस अट्ठ य ।
न वेयणा न वाऽऽतंको, नेव अन्ने उवद्दवा ॥

[भा.६४६५] अट्ठारससु पुन्नेसु, होज्ज एते उवद्दवा ।
ऊणिए ऊणिए यावि, गणे मेरा इमा भवे ॥

वृ- 'तेषाम्' एवं कल्पं प्रतिपन्नानां न जायते 'विघ्नः' अन्यत्र संहरणादि, यावद् मासा दशाष्टौ च, अष्टादश इत्यर्थः । न वेदना न वा आतङ्कः नैवान्ये केचनोपद्रवाः प्राणव्यपरोपणकारिण उपसर्गा । अष्टादशसु मासेषु पूर्णेषु भवेयुरपि एते उपद्रवाः उपद्रवैश्च यदि तेषामेको द्वौ त्रयो वा म्रियन्ते, अथवा तेषां कोऽपि स्थविरकल्पं जिनकल्पं वा गतो भवति, शेषास्तु तमेव कल्पमनुपालयितुकामास्तत एवमूनिते ऊनिते गणे जाते इयं 'मर्यादा' सामाचारी भवति । इहोनिते ऊनिते इति द्विरुच्चारणं भूयोऽप्यष्टादशसु मासेषु पूर्णेषु एष एव विधिरिति ज्ञापनार्थम् ॥

[भा.६४६६] एवं तु ठाविए कप्पे, उवसंपज्जति जो तहिं ।
एगो दुवे अनेगा वा, अविरुद्धा भवंति ते ॥

वृ- 'एवम्' अनन्तरोक्तनीत्या कल्पे स्थापिते सति यदि एकादयो म्रियेरन्, अन्यत्र वा गच्छेयुः, ततो यस्तत्र उपसम्पद्यते स एको वा द्वौ वाऽनेके वा भवेयुः । तत्र यावद्भिः पारिहारिकगण ऊनस्तावतामुपसम्पदर्थमागतानां मध्याद् गृहीत्वा गणः पूर्यते । ये शेषास्ते पारिहारिकतपस्तुलनां कुर्वन्तस्तिष्ठन्ति । ते च पारिहारिकैः सार्द्धं तिष्ठन्तोऽविरुद्धा भवन्ति, पारिहारिकाणामकल्पनीया न भवन्तीत्युक्तं भवति । ते च तावत् तिष्ठन्ति यावदन्ये उपसम्पदर्थमुपतिष्ठन्ते । तैः पूरयित्वा पृथग् गणः क्रियते ॥ इदमेव व्याख्याति-

[भा.६४६७] तत्तो य ऊनए कप्पे, वसंपज्जति जो तहिं ।
जत्तिएहिं गणो ऊनो, तत्तिते तत्थ पक्खिवे ॥

वृ- 'ततश्च' पूर्वोक्तकारणात् 'ऊनके' एक-द्व्यादिभिः साधुभिरपूर्णे कल्पे यस्तत्रोपसम्पद्यते तत्रायं विधि-'यावद्भिः' एकादिसङ्ख्याकैः स गण ऊनः 'तावतः' तावत्सङ्ख्याकानेव साधून् 'तत्र' गणे 'प्रक्षिपेत्' प्रवेशयेत् ॥

[भा.६४६८] तत्तो अनूणए कप्पे, उवसंपज्जति जो तहिं ।
उवसंपज्जमाणं तु, तप्पमाणं गणं करे ॥

वृ- अथ कोऽप्युपद्रवैर्न कालगतस्तत एवमन्यूनके कल्पे ये तत्रोपसम्पद्यन्ते ते यदि नव जनाः पूर्णास्ततः पृथग् गणो भवति । अथापूर्णास्ततः प्रतीक्षाप्यन्ते यावदन्ये उपसम्पदर्थमागच्छन्ति । ततस्तमुपसम्पद्यमानं साधुजनं मीलयित्वा 'तत्प्रमाणं' नवपुरुषमानं गणं 'कुर्यात्' स्थापयेत् ॥

[भा.६४६९] पमाणं कप्पट्ठितो तत्थ, ववहारं ववहरित्तए ।
अनुपरिहारियाणं पि, पमाणं होति से विऊ ॥

वृ- तेषां पारिहारिकाणां 'तत्र' कल्पे कथचित् स्खलितादावापन्ने 'व्यवहारं' प्रायश्चित्तं 'व्यवहर्तुं' दातुं कल्पस्थितः प्रमाणम्, यदसौ प्रायश्चित्तं ददाति तत् तैर्वोढव्यमिति भावः । एवमनु-पारिहारिकाणामप्यपराधपदमापन्नानां स एव 'विद्वान्' गीतार्थ प्रायश्चित्तदाने प्रमाणम् ॥

[भा.६४७०] आलोयण कप्पठिते, तवमुज्जाणोवमं परिवहंते ।
अनुपरिहारिए गोवालए, व निच्च उज्जुत्तमाउत्ते ॥

वृ- ते परिहारिका-ऽनुपरिहारिका आलोचनम् उपलक्षणत्वात् वन्दनकं प्रत्याख्यानं च कल्पस्थितस्य पुरतः कुर्वन्ति । "तवमुज्जाणोवमं परिवहंते"त्ति यथा किल कश्चिदुद्यानिकां गत एकान्तरतिप्रसक्तः स्वच्छन्दसुखं विहरमाण आस्ते एवं तेऽपि पारिहारिका एकान्तसमाधि-सिन्धुनिमग्नमनसस्तत् तपः 'उद्यानोपमम्' उद्यानिकासदृशं परिवहन्ति, कुर्वन्तीत्यर्थः । अनुपारिहारिकाश्च चत्वारोऽपि चतुर्णां परिहारिकाणां भिक्षादौ पर्यटतां पृष्ठतः स्थिता नित्यम् 'उद्युक्ताः' प्रयत्नवन्त 'आयुक्ताश्च' उपयुक्ता हिण्डन्ते, यथा गोपालको गवां पृष्ठतः स्थित उद्युक्त आयुक्तश्च हिण्डते ॥

[भा.६४७१] पडिपुच्छं वायणं चेव, मोत्तूणं नत्थि संकहा ।
आलावो अत्तनिद्देसो, परिहारिस्स कारणे ॥

वृ- तेषां च पारिहारिकादीनां नवानामपि जनानां सूत्रार्थयोः प्रतिपृच्छां वाचनां च मुक्त्वा नास्त्यन्या परस्परं सङ्कथा । पारिहारिकस्य च 'कारणे' उत्थान-निषदनाद्यशक्तिरूपे आलाप आत्मनिर्देशरूपो भवति, यथा-उत्थास्यामि, उपवेक्ष्यामि, भिक्षां हिण्डिष्ये, मात्रकं प्रेक्षिष्ये इत्यादि।

[भा.६४७२] बारस दसऽट्ठ दस अट्ठ छ च्च अट्ठेव छ च्च चउरो य ।
उक्कोस-मज्झिम-जहन्नगा उ वासा सिसिर गिम्हे ॥

वृ- परिहारिकाणां वर्षा-शिशिर-ग्रीष्मरूपे त्रिविधे काले उत्कृष्ट-मध्यम-जघन्यानि तपांसि भवन्त । तत्र वर्षारात्रे उत्कृष्टं तपो द्वादशम्, शिशिरे दशममुत्कृष्टम्, ग्रीष्मे उत्कृष्टमष्टमम्; वर्षारात्रे मध्यमं दशमम्, शिशिरेऽष्टमम्, ग्रीष्मे षष्ठम्; वर्षारात्रे जघन्यमष्टमम्, शिशिरे षष्ठम्, ग्रीष्मे चत्वारि भक्तानि, चतुर्थमित्यर्थः ॥

[भा.६४७३] आयंबिल बारसमं, पत्तेयं परिहारिगा परिहरंति ।
अभिगहितएसणाए, पंचण्ह वि एगसंभोगो ॥

वृ-परिहारिका उत्कर्षतो द्वादशं तपः कृत्वा आचाम्लेन पारयन्ति । ते च परिहारिकाश्चत्वारोऽपि 'प्रत्येकं' पृथक् पृथक् परिहरन्ति, न परस्परं समुद्देशनादिसम्भोगं कुर्वन्तीत्यर्थः । ते च परिहारिका अभिगृहीतया पञ्चानामुपरितनीनामन्यतरैषणया भक्त-पानं गृह्णन्ति । ये तु चत्वारोऽनुपारिहारिका एकश्च कल्पस्थितस्तेषां पञ्चनामप्येक एव सम्भोगः, ते च प्रतिदिवसमाचाम्लं कुर्वन्ति । यस्तु कल्पस्थितः स स्वयं न हिण्डते, तस्य योग्यं भक्त-पानमनुपारिहारिका आनयन्ति ॥

[भा.६४७४] परिहारिओ वि छम्मासे अनुपरिहारिओ वि छम्मासा ।
कप्पट्ठितो वि छम्मासे एते अट्ठारस उ मासा ॥

वृ-परिहारिकाः प्रथमतः षण्मासान् प्रस्तुतं तपो वहन्ति, ततोऽनुपरिहारिका अपि षण्मासान् वहन्ति, इतरे तु तेषामनुपारिहारिकत्वं प्रतिपद्यन्ते । तैरपि व्यूढे सति कल्पस्थितः षण्मासान् वहति, ततः शेषाणामेकः कल्पस्थितो भवति एकः पुनरनुपरिहारिकत्वं प्रतिपद्यते । एवमेतेऽष्टदश मासा भवन्ति ॥

[भा.६४७५] अनुपरिहारिगा चेव, जे य ते परिहारिगा ।
अन्नमन्नेसु ठाणेसु, अविरुद्धा भवंति ते ॥

वृ-अनुपरिहारिकाश्चैव ये च ते परिहारिकास्तेऽन्यान्येषु स्थानेषु कालभेदेन परस्परमेकैकस्य वैयावृत्यं कुर्वन्तोऽविरुद्धा एव भवन्ति ॥ ततश्च-

[भा.६४७६] गएहिं छहि मासेहिं, निव्विट्ठा भवंति ते ।
ततो पच्छा ववहारं, पट्ठवंति अनुपरिहारिया ॥

वृ- ते परिहारिकाः षड्भिर्मासैर्गतैस्तपसि व्यूढे सति 'निर्विष्टाः' निर्विष्टकायिका भवन्ति । ततः पश्चादनुपरिहारिकाः 'व्यवहारं' परिहारतपसः समाचारं 'प्रस्थापयन्ति' कर्तुं प्रारभन्ते ॥

[भा.६४७७] गएहिं छहिअ मासेहिं, निव्विट्ठा भवंति ते ।
वहइ कप्पट्ठितो पच्छा, परिहारं तहाविहं ॥

वृ-तेऽपि षड्भिर्मासैर्गतैर्निर्विष्टा भवन्ति । पश्चात् कल्पस्थितोऽपि तथाविधं परिहारं तावत एव मासान् वहति ॥ एवं च-

[भा.६४७८] अट्ठारसहिं मासेहिं, कप्पो होति समानितो ।
मूलट्ठवणाए समं छम्मासा तु अनूनगा ॥

वृ-अष्टादशभिर्मासैरयं कल्पः समापितो भवति । कथम् ? इत्याह-"मूलट्ठवणा" इत्यादि । मूलस्थापना नाम-यत् परिहारिकाः प्रथमत इदं तपः प्रतिपद्यन्ते, तस्यां षण्मासा अन्यूनास्तपो भवति, एवमनुपारिहारिकाणां कल्पस्थितस्य च मूलस्थापनया 'समं' तुल्यं तपः प्रत्येकं ज्ञेयम्, षण्मासान् यावदित्यर्थः । एवं त्रिभि षटकैरष्टादश मासा भवन्ति ॥ ते च द्विधा-जिनकल्पिकाः स्थविरकल्पिकाश्च । उभयेषामपि व्याख्यानमाह-

[भा.६४७९] एवं समानिए कप्पे, जे तेसिं जिनकप्पिया ।
तमेव कप्पं ऊना वि, पालए जावजीवियं ॥

वृ- 'एवम्' अनन्तरोक्तविधिनाऽष्टादशभिर्मासैः कल्पे समापिते सति ये तेषां मध्याद् जिनकल्पिकास्ते तमेव कल्पमूना अप्यष्टादिसङ्ख्याका अपि यावज्जीवं पालयति ॥

[भा.६४८०] अट्ठारसेहिं पुन्नेहिं, मासेहिं थेरकप्पिया ।
पुनो गच्छं नियच्छंति, एसा तेसिं अहाठिती ॥

वृ- ये स्थविरकल्पिकास्तेऽष्टादशभिर्मासैः पूर्णे 'पुनर्' भूयोऽपि गच्छं नियच्छन्ति, आगच्छन्तीत्यर्थः । एषा तेषां 'यथास्थिति' यथाकल्पः ॥ अथ षड्विधायां कल्पस्थितौ का कुत्रावतरति ? इत्याह-

[भा.६४८१] तइय-चउत्था कप्पा, समोयरंति तु बियम्मि कप्पम्मि ।
पंचम-छट्ठठितीसुं, हेट्ठिल्लाणं समोयारो ॥

वृ- 'तृतीय-चतुर्थौ' निर्विशमानक-निर्विष्टकायिकाख्यौ कल्पौ 'द्वितीये' छेदोपस्थापनीयनाम्नि कल्पे समवतरतः । तथा सामायिक-च्छेदोपस्थापनीय-निर्विशमानक-निर्विष्टकायिकाख्या आद्याश्च-तस्रः स्थितयोऽधस्तन्य उच्यन्ते, तासां प्रत्येकं 'पञ्चम-षष्ठस्थित्योः' जिनकल्प-स्थविर-कल्पस्थिति-रूपयोः समवतारो भवति ॥ गतं निर्विशमानक-निर्विष्टकायिककल्पस्थितिद्वयम्। अथ जिनकल्पस्थितिमाह-

[भा.६४८२] निज्जुत्ति-मासकप्पेसु वन्निता जो कमो उ जिनकप्पे ।
सुय-संघयणादीओ, सो चेव गमो निरवसेसो ॥

वृ- निर्युक्ति-पञ्चकल्पस्तस्यां मासकल्पप्रकृते च यः क्रमः 'जिनकल्पे' 'जिनकल्पविषयः श्रुतसंहननादिको वर्णितः स एव गमो निर्विशेषोऽत्र मन्तव्यः ॥ स्थानाशून्यार्थं पुनरिदमुच्यते-

[भा.६४८३] गच्छम्मि य निम्माया, धीरा जाहे य मुनियपरमत्था ।
अग्गह जोग अभिग्गहे, उ विंति जिनकप्पियचरित्तं ॥

वृ- यदा गच्छे प्रव्रज्या-शिक्षापदादिक्रमेण 'निर्माताः' निष्पन्नाः, 'धीराः' औत्पत्तिक्यादि-बुद्धिमन्तः परीषहोपसर्गैरक्षोभ्या वा, 'मुणितपरमार्था' 'अभ्युद्यतविहारेण विहर्तुमवसरः साम्प्रत-मस्माकम्' इत्येवमवगतार्था, तथा ययोः पिण्डैषणयोः असंसृष्टा-संसृष्टाख्ययोरग्रहस्ते परिहर्तव्ये, यास्तु उपरितन्यः पञ्चैषणास्तासाम् 'अभिग्रहः' 'एता एव ग्रहीतव्याः' इत्येवंरूपः, तत्राप्येकदैक-तरस्यां 'योगः' व्यापारः परिभोग इत्यर्थः । एवं भावितमतयो यदा भवन्ति तदा जिनकल्पिकचारित्रम् 'उपयान्ति' प्रतिपद्यन्ते ॥

[भा.६४८४] धितिबलिया तवसूरा, निंति य गच्छातो ते पुरिससीहा ।
बल-वरियसंघयणा, उवसग्गसहा अभीरू य ॥

वृ- धृति-वज्रकुड्यवदभेद्यं चित्तप्रणिधानं तया बलिकाः-बलवन्तः, तथा तपः-चतुर्थादिकं षण्मासिकान्तं तत्र शूराः-समर्था, एवंविधाः पुरुषसिंहास्ते गच्छाद् निर्गच्छन्ति । बलं-शारीरं वीर्यं-जीवप्रभवं तद्धेतुः संहननम्-अस्थिनिचयात्मकं येषां ते तथा । बल-वीर्यग्रहणं च चतुर्भङ्गीज्ञापनार्थम्, सा चेयम्-धृतिमान् नामैको न संहननवान्, संहननवान् नामैको न धृतिमा, एको धृतिमानपि संहननवानपि, एको न धृतिमान न संहननवान् । अत्र तृतीयभङ्गेनाधिकारः । उपसर्गा-दिव्यादयस्तेषां सहाः-सम्यगध्यासितारः, तथा 'अभीरवः' परीषहेभ्यो न बिभ्यति ॥

गता जिनल्पस्थितिः, सम्प्रति स्थविरकल्पस्थितिमाह-

[भा.६४८५] संजमकरणुज्जोवा, निप्फातग नाण-दंसण-चरित्ते ।
दीहाउ वुड्ढवासो, वसहीदोसेहि य विमुक्का ॥

वृ- संयमः-पञ्चाश्रवविरमणादिरूपः पृथिव्यादिरक्षारूपो वा सप्तदशविधः, तं कुर्वन्ति-यथावत् पालयन्तीति संयमकरणाः, नन्द्यादिदर्शनात् कर्तरि अनप्रत्ययः, उद्योतकाः-तपसा प्रवचनस्योज्ज्वा-लकाः, ततः संयमकरणाश्च ते उद्योतकाश्चेति विशेषणसमासः । यद्वा सूत्रा-ऽर्थपौरुषीकरणेन

संयमकरणमुद्योतयन्तीति संयमकरणोद्योतकाः । तथा ज्ञान-दर्शन-चारित्रेषु शिष्याणां निष्पाद-कालेषां वा ज्ञानादीनामव्यवच्छित्तिकारकाः, एवंविधाः स्थविरकल्पिका भवन्तीति शेषः । यदा च ते दीर्घायुषो जङ्घाबलपरिक्षीणाश्च भवन्ति तदा वृद्धावासमध्यासते । तत्रैकक्षेत्रे वसन्तोऽपि 'वसतिदोषैः' कालातिक्रान्तादिभि चशब्दाद् आहारोपधिदोषैश्च 'विमुक्ताः' वर्जिता भवन्ति, न तैर्लिप्यन्त इत्यर्थः ॥

[भा.६४८६] मोत्तुं जिनकप्पठिइं, जा मेरा एस वन्निया हेट्ठा ।
एसा तु दुपदजुत्ता, होति ठिती थेरकप्पस्स ॥

वृ- जिनकल्पस्थितिग्रहणेन उपलक्षणत्वात् सर्वेषामपि गच्छनिर्गतानां स्थिति परिगृह्यते, ततस्तां मुक्त्वा या 'अधस्ताद्' अस्मिन्नेवाध्ययने 'मर्यदा' स्थिति 'एषा' अनन्तरमेव वर्णिता; यद्वा सामायिकाध्ययमादौ कृत्वा यावदस्मिन्नेवाध्ययने इदं षड्विधकल्पस्थितिसूत्रम्, अत्रान्तरे गच्छनिर्गतसामाचारीमुक्त्वा या शेषा सामाचारी वर्णिता सा 'द्विपदयुक्ता' उत्सर्गा-ऽपवाद-पदद्वययुक्ता स्थविरकल्पस्य स्थितिर्भवति ॥ गता स्थविरकल्पस्थितिः । सम्प्रति प्रस्तुतशास्त्र-क्तविधिवैपरीत्यकारिणामपायान् दर्शयन्नाह-

[भा.६४८७] पलंबादी जाव ठिती, उस्सग्ग-ऽववातियं करेमाणो ।
अववाते उस्सग्गं, आसायण दीहसंसारी ॥

वृ- प्रलम्बसूत्रादारभ्य यावदिदं षड्विधकल्पस्थितिसूत्रं तावद् य उत्सर्गा-ऽपवादविधि सूत्रतोऽर्थतश्चोक्तस्तत्रोत्सर्गे प्राप्ते आपवादिकीं क्रियां कुर्वाणोऽपवादे च प्राप्ते उत्सर्गक्रियां कुर्वाणोऽर्हतामाशातनायां वर्तते, अर्हत्प्रज्ञप्तस्य धर्मस्याशातनायां वर्तते, आशातनायां च वर्तमानो दीर्घसंसारी भवति, तस्मात् प्रलम्बसूत्रादारभ्य षड्विधकल्पस्थितिसूत्रं यावद् उत्सर्गे प्राप्ते उत्सर्गः कर्तव्योऽपवादे प्राप्तेऽपवादविधिर्यतनया कर्तव्यः ॥ एवंकुर्वतां गुणमाह-

[भा.६४८८] छव्विहकप्पस्स ठितिं, नाउं जो सद्दहे करणजुत्तो ।
पवयणणिही सुरक्खितो, इह-परभववित्थरप्फलदो ॥

वृ- 'षड्विधकल्पस्य' सामायिकादिरूपस्य प्रस्तुतशास्त्रार्थसर्वस्वभूतस्य 'स्थितिं' कल्पनीयाचरणाऽकल्पनीयविवर्जनरूपां 'ज्ञात्वा' गुरूपदेशेन सम्यगवगम्य यः 'श्रद्दधीत' प्रतीतिपथमारोपयेत्, न केवलं श्रद्दधीत किन्तु 'करणयुक्तः' यथोक्तानुष्ठानसम्पन्नो भवेत्, तस्याऽऽत्मा एवं सम्यग्ज्ञानश्रद्धान-चारित्रसमन्वितः साक्षात् प्रवचननिधिर्भवति, यथा समुद्रो रत्ननिधि एवमसावपि ज्ञानादिरत्नमयस्य प्रवचनस्य निधिरित्यर्थः । स च प्रवचननिधि सुष्ठु-प्रयत्नेनाऽऽत्म-संयमविराधनाभ्यो रक्षितः सन् इह-परभवविस्तरफलदो भवति । इहभवे विस्तरेण चारण-वैक्रियाऽऽमर्षौषधिप्रभृतिविविधलब्धिरूपं फलं ददाति, परभवेऽप्यनुत्तरविमानाद्युपपात-सुकुलप्रत्यायातिप्रभृतिकं विस्तरेण फलं प्रयच्छति ॥ अथेदं कल्पाध्ययनं कस्य न दातव्यम् ? को वाऽपात्राय ददतो दोषो भवति ? इत्यत आह-

[भा.६४८९] भिन्नरहस्से व नरे, निस्साकरए व मुक्कजोगी य ।
छव्विहगतिगुविलम्मि, सो संसारे भमति दीहे ॥

वृ- इहापवादपदानि रहस्यमुच्यते, भिन्नं-प्रकाशितमयोग्यानां रहस्यं येन स भिन्नरहस्यः, अगीतार्थानामपवादपदानि कथयतीत्यर्थः, तत्रैवंविधे नरे । तथा निश्राकरो नाम-यः किञ्चिदप-वादपदं लब्ध्वा तदेव निश्रां कृत्वा भणति-यथा एतदेवं करणीयं तथाऽन्यदप्येवं कर्तव्यम्, तत्र ।

तथा मुक्ताः-परित्यक्ता योगाः-ज्ञान-दर्शन-चारित्र-तपोविषया व्यापारा येन स मुक्तयोगी । ईदृशेऽपात्रे न दातव्यम् । यस्तु ददाति सः 'षड्विधगतिगुपिले' पृथिवीकायादित्रसकायान्त-षट्कायपरिभ्रमणगहने 'दीर्घे' अपारे संसारे भ्राम्यति ॥ अथ कीदृशस्य दातव्यम् ? को वा पात्रे ददतो गुणो भवति ? इति अत आह-

**[भा.६४९०]** अरहस्सधारए पारए य असढकरणे तुलासमे समिते ।
कप्पानुपालना दीवणा य, आराधन छिन्नसंसारी ॥

वृ-नास्त्यपरं रहस्यान्तरं यस्मात् तद् अरहस्यम्, अतीवरहस्यच्छेदशास्त्रर्थतत्त्वमित्यर्थः, तद् यो धारयति-अपात्रेभ्यो न प्रयच्छति सोऽरहस्यधारकः । 'पारगः' सर्वस्यापि प्रारब्धश्रुतस्य परगामी, न पल्लवग्राही । 'अशठकरणो नाम' माया-मदविप्रमुक्तो भूत्वा यथोक्तं विहितानुष्ठानं करोति । 'तुलासमो नाम' यथा तुला समस्थिता न मार्गतो न वा पुरतो नमति एवं यो रागद्वेषविमुक्तो माना-ऽपमान-सुख-दुःखादिषु समः स तुलासम उच्यते । 'समितः' पञ्चभि समितिभि समायुक्तः । एवंविधगुणोपेतस्येदमध्ययनं दातव्यम् । एवं ददता कल्पस्य-भगवदुक्तस्य श्रुतदानविधेरनुपालना कृता भवति; अथवा कल्पे-कल्पाध्ययनस्य मार्मस्य प्रकाशना कृता भवति, यथाऽन्यैरपि एवंगुणवते शिष्याय श्रुतप्रदानं कर्तव्यम्; अथवा ''दीवण'' त्ति यो योग्यविनेयानां 'दीपनाम्' अनालस्येन व्याख्यानं करोति तस्येदं दातव्यम्; यदि वा दीपना नाम-उत्सर्गयोग्यानामुत्सर्गं दीपयति, अपवादयोग्यानामपवादं दीपयति, उभययोग्यानामुभावपि दीपयति, प्रमादिनां वा दोषान् दीपयति, अप्रमादिनां गुणान् दीपयति । य एतस्यां कल्पानु पालनायां दीपनायां च वर्तते तस्य ज्ञान-दर्शन-चारित्रमयी जघन्या मध्यमा उत्कृष्टा चाऽऽराधना भवति । ततश्चाराधनायाः 'छिन्नसंसारी' भवति संसारसन्ततेर्व्यवच्छेदं करोति । तस्यां च व्यवच्छिन्नायां यत् तद् अक्षयमव्याबाधमपुनरावृत्तिकं उपादेयस्थानं तत् प्राप्नोतीति ॥

<u>उद्देशकः-६ समाप्तः</u>

उक्तोऽनुगमः । सम्प्रति नयाः-ते च यद्यपि शतसङ्ख्यास्तथापि ज्ञाननय-क्रियानयद्वयेऽन्त-र्भाव्यन्ते तत्र ज्ञाननयस्यायमभिप्रायः-ज्ञानमेव प्रधानमैहिका-ऽऽमुष्मिकफलप्राप्तिकारणम् । तथा च तदभिप्रायसमर्थिकेयं शास्त्रान्तरोक्ता गाथा-

नायम्मि गिण्हियव्वे, अगिण्हियव्वम्मि चेव अत्थम्मि ।
जइयव्वमेव इइ जो, उवएसो सो नओ नाम ॥

अस्या व्याख्या-'ज्ञाते' सम्यक् परिच्छिन्ने 'ग्रहीतव्ये' उपादेये 'अग्रहीतव्ये' हेये चशब्दाद् उपेक्षणीये च । एवकारस्त्ववधारणार्थः, तस्य चैवं व्यवहितः प्रयोगः-ज्ञात एव ग्रहीतव्येऽग्रहीतव्ये उपेक्षणीये च, नाज्ञातेऽर्थे ऐहिकामुष्मिकरूपे । तत्रैहिको ग्रहीतव्यः स्रक्चन्दनादि, अग्रहीतव्यो विष-शस्त्र-कण्टकादि, उपेक्षणीयः तृणादि । आमुष्मिको ग्रहीतव्यः सम्यग्दर्शनादिवः, ग्रहीतव्यो मिथ्यादर्शनादि, उपेक्षणीयो विवक्षयाऽभ्युदयादि । तस्मिन्नर्थे यतितव्यमेवेति । अनुस्वारलोपाद् 'एवम्' अमुना क्रमेण ज्ञानपूर्वकमैहिका-ऽऽमुष्मिकफलप्राप्त्यर्थिना सत्त्वेन 'यतितव्यं' प्रवृत्त्यादिलक्षणः प्रयत्नः कार्य । इत्थं चैतदङ्गीकर्तव्यम्, सम्यग्ज्ञानमन्तरेण प्रवर्तमानस्य फलविसंवाददर्शनात् । तथा चोक्तमन्यैरपि-

विज्ञप्तिः फलदा पुंसां, न क्रिया फलदा मता ।

मिथ्याज्ञानात् प्रवृत्तस्य, फलासंवाददर्शनात् ॥

तथाऽऽमुष्मिकफलार्थिनाऽपि ज्ञान एव यतितव्यम्, आगमेऽपि तथाप्रतिपादनात् । उक्तं

पढमं नाणं तओ दया, एवं चिट्ठइ सव्वसंजए ।
अन्नाणी किं काही ?, किं वा नाही य छेय-पावगं ? ॥

इतश्चैतदेवमङ्गीकर्तव्यम्, यस्मात् तीर्थकर-गणधरैरगीतार्थानां केवलानां विहारक्रियाऽपि निषिद्धा । तथा चागमः-

गीयत्थो य विहारो, बीओ गीयत्थमीसओ भणिओ ।
एत्तो तइय विहारो, नाणुन्नाओ जिनवरेहिं ॥

न खलु अन्धेनान्धः समाकृष्यमाणः सम्यक्पन्थानं प्रतिपद्यते इत्यभिप्रायः । एवं तावत् क्षायोपशमिकं ज्ञानमधिकृत्योक्तम्, क्षायिकमप्यङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव प्रतिपत्तव्यम्, यस्मादर्हतोऽपि भवाम्भोधितटस्थस्य दीक्षाप्रतिपन्नस्योत्कृष्टचरणवतोऽपि न तावद् अपवर्गप्राप्तिरुपजायते यावद् जीवा-ऽजीवाद्यखिलवस्तुपरिच्छेदरूपं केवलज्ञानं नोत्पन्नमिति । तस्माद् ज्ञानमेव प्रधानमैहिका-ऽऽमुष्मिकफलप्राप्तिकारणमिति स्थितम् । "इति जो उवएसो सो नओ नाम" 'इति' एवम्-उक्तेन प्रकारेण च उपदेशो ज्ञानप्राधान्यख्यापनपरः स नयो नाम, ज्ञाननय इत्यर्थः । उक्तो ज्ञाननयः । सम्प्रति क्रियानयावसरः, तद्दर्शनं चेदम्-क्रियैव ऐहिका-ऽऽमुष्मिकफलप्राप्तिकारणं प्रधानम्, युक्तियुक्तत्वात् । इदं चाय[illegible] स्वपक्षसिद्धये गाथामाह-"नायम्मि गिण्हियव्वे०" इत्यादि । अस्याः क्रियानयदर्शनानुसारेण व्याख्या-ज्ञाते ग्रहीतव्येऽग्रहीतव्ये चार्थे ऐहका-ऽऽमुष्मिकफलप्रसत्यर्थिना यतितव्यमेव । यस्मात् प्रवृत्त्यादिलक्षणप्रयत्नव्यतिरेकेण ज्ञानवतोऽपि नाभिलषितार्थावाप्तिरुपजायते । तथा चोक्तमन्यैरपि-

क्रियैव फलदा पुंसां, न ज्ञानं फलदं मतम् ।
यतः स्त्री-भक्ष्यभोगज्ञो, न ज्ञानात् सुखितो भवेत् ॥

आमुष्मिकफलार्थिनाऽपि क्रियैव कर्तव्या, तथा च भगवद्वचनमप्येवमेव व्यवस्थितम् । यत उक्तम्-

चेइय कुल गण संघे, आयरियाणं च पवयणं सुए य ।
सव्वेसु वि तेन कयं, तव-संजममुज्जमंतेनं ॥

इतश्चैवमङ्गीकर्तव्यम्, यस्मात्तीर्थकर-गणधरैः क्रियाविकलानां ज्ञानमपि विफलमेवोक्तम् । तथा चागमः-

सुबहुं पि सुमहीयं, किं काही चरणविप्पहीनस्स ? ।
अंधस्स जह पलित्ता, दीवसयसहस्सकोडी वि ॥

दर्शिक्रियाविकलत्वात् तस्येत्यभिप्रायः । एवं तावत् क्षायोपशमिकं चारित्रमङ्गीकृत्योक्तम्, चारित्रं क्रियेत्यनर्थान्तरत्वात् क्षायिकमङ्गीकृत्य विशिष्टफलसाधकत्वं तस्यैव ज्ञेयम्, यस्मादर्हतो भगवतः समुत्पन्नकेवलज्ञानस्यापि न तावद् मुक्त्यवाप्ति सम्भवति यावदखिलकर्मेन्धनानलभूता ह्रस्वपञ्चाक्षरोच्चारणकालमात्रा सर्वसंवररूपा चारित्रक्रिया नावाप्यते, ततः क्रियैव प्रधानमैहिका-ऽऽमुष्मिकफलप्राप्तिकारणमिति । "इति जो उवदेसो सो नओ नाम" 'इति' एवम्-उक्तेन प्रकारेण च उपदेशः क्रियाप्राधान्यख्यापनपरः स नयो नाम, क्रियानय इत्यर्थः । उक्तः क्रियानयः ॥ इत्थं ज्ञान-क्रियानयस्वरूपं श्रुत्वा विदिततदभिप्रायो विनेयः संशयापन्नः सन् आह-किमत्र तत्त्वम् ? पक्षद्वयेऽपि युक्तिसम्भवात् । आचार्य आह-

सव्वेसिं पि नयाणं, बहुविहवत्तव्वयं निसामित्ता ।
तं सव्वनयविसुद्धं, जं चरण-गुणट्ठितो साहू ।।

सर्वेषामपि मूलनयानाम् अपिशब्दात् तद्भेदानामपि नयानां द्रव्यास्तिकादीनाम् 'बहुविधवक्तव्यतां' 'सामान्यमेव, विशेषा एव, उभयमेव वा परस्परनिरपेक्षम्' इत्यादिरूपाम्, अथवा 'नामादिनयानां मध्ये को नयः कं साधुमिच्छति ?' इत्यादिरूपां 'निशम्य' श्रुत्वा तत् 'सर्वनयविशुद्धं' सर्वनयसम्मतं वचनम्-यत् 'चरण-गुणस्थितः' चारित्र-ज्ञानस्थितः साधुः, यस्मात् सर्वेऽपि नया भावनिक्षेपमिच्छन्तीति गतं नयद्वारम् ।।

नन्दीसन्दर्भमूले सुदृढतरमहापीठिकासत्कन्धबन्धे,
तुङ्गोद्देशाख्यशाखे दल-कुसुमसमैः सूत्र-निर्युक्तिवाक्यैः ।
[illegible] भाष्यार्थमा[illegible] कलितो [illegible]
श्राकल्पं षष्ठशाखाफलनिवहमसावल्पटीवाऽस्तु टीका ।।

**मुनि दीपरत्नसागरेण संशोधिता सम्पादिता बृहत्कल्पस सूत्रस्य**
**(भद्रबाहु स्वामि रचिता स्वोपज्ञ निर्युक्ति युक्तं) संघदासगणि विरचितं भाष्यं**
**एवं मलयगिरि क्षेमकीर्ति आचार्याभ्यां विरचिता टीका परिसमाप्ता ।**

| ३५ | द्वीतीयं छेदसूत्रं बृहत्कल्पं समाप्तम् |
|---|---|

अथ प्रशस्तिः :-

सौवर्णा विविधार्थरत्नकलिता एते षडुद्देशकाः,
श्रीकल्पेऽर्थनिधौ मताः सुकशला दौर्गत्यदुःखापहे ।
दृष्ट्वा चूर्णिसुबीजकाक्षरततिं कुश्याऽथ गुर्वाज्ञया,
खानं खानमयी मया स्व-परयोरर्थे स्फुटार्थीकृताः ।।

श्रीकल्पसूत्रममृतं विबुधोपयोग योग्यं जरा-मरणदारुणदुःखहारि ।
येनोद्धृतं मतिमथा मथिताच्छुताब्धेः, श्रीभद्रबाहुगुरवे प्रणतोऽस्मि तस्मै ।।

येनेदं कल्पसूत्र कमलमुकुलवत् कोमलं मञ्जुलाभि
गोभिर्दोषापहाभि स्फुटविषयविभागस्य सन्दर्शिकाभिः ।
उत्फुल्लोद्देशपत्रं सुरसपरिमलोद्गारसारं वितेने,
तं निसम्बन्धबन्धुं नुत मुनिमधुपाः ! भास्करं भाष्यकारम् ।।

श्रीकल्पाध्ययनेऽस्मिन्नतिगम्भीरार्थभाष्यपरिकलिते ।
विषमपदविवरणकृते, श्रीचूर्णिकृते नमः कृतिने ।।

श्रुतदेवताप्रसादादमध्ययनं विवृण्वता कुशलम् । यदवापि मया तेन, प्राप्नुयां बोधिमहममलाम् ।
गम-नयगभीरनीरश्चित्रोत्सराग-ऽपवादवादोर्मि । युक्तिशतरत्नम्यो जैनागमजलनिधिर्जयति ।।
श्रीजैनशासननभस्तलतिग्मरश्मि, श्रीसद्मचान्द्रकुलपद्मविकाशकारी ।
स्वज्योतिरावृतदिगम्बरडम्बरोऽभूत्, श्रीमान् धनेश्वरुगुरु प्रथितः पृथिव्याम् ।।

श्रीमच्चैत्रपुरैकमण्डनमहावीरप्रतिष्ठाकृतस्तमास्चैत्रपुरप्रबोधतरणेः श्रीचैत्रगच्छोऽजनि।
तत्र श्रीभुवनेन्द्रसूरिसुगुरुर्भूभूषणं भासुरज्योतिसद्गुणरत्नरोहणगिरि कालक्रमेणाभवत् ॥
तत्पादाम्बुजमण्डनं समभवत् पक्षद्वयीशुद्धिमान्, नीर-क्षीरसदृक्षदूषण-गुणत्याग-ग्रहैकव्रतः।
कालुष्यं च जडोद्भवं परिहरन् दूरेण सम्मानस स्थायी राजमरालवद् गणिवरः श्रीदेवभद्रप्रभुः।
शस्याः शिष्यास्त्रयस्तत्पदसर सिरहोत्सङ्गशृङ्गारभृङ्गा,
विध्वस्तानङ्गसङ्गाः सुविहितविहितोत्तुङ्गरङ्गा बभूवुः।
तत्राद्यः सच्चरित्रानुमतिकृतमति श्रीजगच्चन्द्रसूरि,
श्रीमद्देवेन्द्रसूरि सरलतरलसिच्चित्तवृत्तिर्द्वितीयः ॥
तृतीयशिष्याः श्रुतवारिवार्धयः, परीषहाक्षोभ्यमनः समाधयः।
जयन्ति पूज्या विजयेन्दुसूरयः, परोपकारा दिगुणौघभूरयः ॥
प्रौढ मन्मथपार्थिवं त्रिजगतीजैत्रं विजित्यैषुषां, येषां जैनपुरे परेण महसा प्रक्रान्तकान्तोत्सवे।
स्थैर्यं मेरुरगाधतां च जलधि सर्वसहत्वं मही, सोमः सौम्यमहर्पति किल महतेजोऽकृत प्राभृतम्।
वापं वापं प्रवचनवचोबीजराजीं विनेय क्षेत्रवाते सुपरिमलिते शब्दशास्त्रादिसारैः।
यैः क्षेत्रज्ञैः शुचिगुरुजनाम्नायवाक्यसारीणीभिः,
सिक्त्वा तेन सुजनहृदयानन्दि सज्ज्ञानसस्यम् ॥
यैरप्रतैःशुभमन्त्रजापैर्वेतालमाधाय कलिं स्ववश्यम्।
अतुल्यकल्याणमयोत्तमार्थसत्पूरुषः स्तत्त्वधनैरसाधि ॥
ज्योत्सनामञ्जुलया यया धवलितं विश्वम्भरामण्डलं,
या निशेषविशेषविज्ञजनताचेतश्चमत्कारिणी।
तस्यां श्रीविजयेन्दुसूरिसुगुरोर्निष्कृत्रिमाया गुण
श्रेणेः स्याद् यदि वास्तवस्तवकृतौ विज्ञः स वाचांपति ॥
तत्पाणिपङ्कजरजःपरिपूतशीर्षा, शिष्यास्त्रयोय दधति सम्प्रति गच्छभारम्।
श्री वज्रसेन इति सद्गुरुरादिमोऽत्र, श्रीपद्मचन्द्रसुगुरुस्तु ततो द्वितीयः ॥
तार्तीयीकस्तेषां विनेयपरमाणुरनणुशास्त्रेऽस्मिन्।
श्रीक्षेमकीर्तिसूरिर्विनिर्ममे विवृतिमल्पमति ॥
श्रीविक्रमतः क्रामति, नयानग्निगुणेन्दुपरिमिते १३३२ वर्षे।
ज्येष्ठश्वेतदशम्यां, समर्थितैषा च हस्तार्के ॥
प्रथमादर्शे लिखिता, नयप्रभप्रभृतिभिर्यतिभिरेषा। गुरुतरगुरुभक्तिभरोद्वहनादिव नम्रितशिरोभि॥
सूत्रादर्शेषु यतो, भूयस्यो वाचना विलोक्यन्ते। विषमाश्च भाष्यगाथाः, प्रायः स्वल्पाश्च चूर्णिगिरः।
सूत्रे वा भाष्ये वा, यन्मतिमोहान्मयाऽन्यथा किमपि।
लिखितं वा विवृतं वा, तन्मिथ्या दुष्कृतं भूयात् ॥